श्रीभगवद्रामानुजमुनिविरचित

वेदान्तदीप वेदान्तसार संवलितम्

# श्रीभाष्यम्

श्रीसुदर्शनसूरिविरचितश्रुतप्रकाशिकया

श्रीमद्वेदान्तदेशिकविरचित अधिकरणसारावल्या

श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्र

परकालमहादेशिकविरचित

गूढार्थसंग्रहव्याख्यया च सहितम्

जि ज्ञा सा धि क र ण म्

श्रीः

॥ श्रीलक्ष्मीहयवदन लक्ष्मीनारायणाभ्यां नमः ॥

श्रीमते रामानुजायनमः

श्री भ ग व द्रा मा नु ज मु नि वि र चि त म्

# श्रीभाष्यम्



श्री सु द र्श न सू रि प्र णी त श्रु त प्र का शि का ख्य टी क या

श्री लक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकाल-

संयमि(३३)प्रणीतश्रीभाष्यसूक्तिगूढार्थसंग्रहेण च सहितम्

श्रीमहीशूरराजधान्यां विद्योतमानश्रीब्रह्मतन्त्रस्वतन्त्रपरकालास्थान्यां(३२)मूर्धाभिषिक्तैः

श्रीलक्ष्मीहयग्रीव दिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकाल-

महादेशिकैः-शा.१८६१.शके, बहुधान्यवत्सरे परिकल्पितया·

श्रीमद्वेदान्तदेशिकविहारसभया

स्वीयमुद्राक्षरैर्मुद्रापितं सत्

विजयतेतमाम्

१९५९



लक्ष्मीहयग्रीव दिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकाल-
महादेशिकाः

श्रीलक्ष्मीहयवदनलक्ष्मीनारायणाभ्यां नमः

॥ श्रीमते रामानुजाय नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमद्धयास्यचरणाम्बुजयुग्ममेव सेवेसदाऽखिलमनोरथकल्पवृक्षम् ।
यद्धयाननिर्मलहृदोऽखिलशास्त्रगूढसारार्थनिर्णयविधौ प्रभवन्ति सर्वे ॥

विशिष्टाद्वैतसिद्धान्तशुद्धान्ताम्बुजभास्करः ।
रामानुजमुनिश्श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

श्रीमुनित्रयसिद्धान्तप्रवर्तनधुरन्धरः ।
श्रुत्यन्तदेशिकोऽव्यान्मां गत्यन्तरकथोज्झितम् ॥

श्रीरामानुजसिद्धान्तस्थापनैकविचक्षणः । जयतान्नूतरङ्गेद्रपरकालगुरूत्तमः ॥

विदितमेवैतद्यत् श्रीमद्विशिष्टाद्वैतदर्शनमिदं पूर्वोत्तरमीमांसावृत्तिकारैरादृतं, नाथोपज्ञंप्रवृत्तं यामुनेयप्रबन्धैर्बहुभिरुपचयदशां सम्प्राप्तं श्रीमद्भिः रामानुजमुनिवरैःपरिष्कृतं हस्तापचेयफलदशामध्यारूढं सत् सर्वेषामेव चेतनानां सञ्जीवनामृतरूपं वरीवर्ति, इति । श्रीमद्रामानुजमुनयश्चेमे प्रथमं यादवप्रकाशसविधे सर्वानपि तदानीन्तनान् अद्वैतग्रन्थान् सम्यगधीत्य स्वयं च बहुधा विचार्य परग्रन्थान् पर्यालोचयन्तिस्म ॥

अत्रेदमवधेयम्—' यत्रहि द्वैतमिव भवति तदितर इतरं पश्यति । यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं विजानीयात् ' इति बृहदारण्यकोपनिषद्वाक्य कृत्स्नमेकार्थकमिति मन्वानाः परिणामाद्वैतिनः भर्तृप्रपञ्चादयः द्वैताद्वैतवादमातिष्ठन्ते स्म। यत्रत्वित्याद्युत्तरभागमेव प्राधान्येनावलम्बमानाः विवर्ताद्वैतवादिनस्सर्वेऽपि सत्यताद्वयं प्रकल्प्य निर्विशेषचिन्मात्रस्य पारमार्थिकसत्यतामातस्थिरे । नवीनास्तु (आनन्दतीर्थीयाः) 'यत्रहि' इत्यादिपूर्वभागमेव प्रधानं मन्वानाः जगद्ब्रह्मणोः अभेद निषेधपरतां प्रकल्पयन्तः द्वैतवादमातिष्ठन्ते स्म ॥

विशिष्टाद्वैतवादिनस्तु पूर्वोक्तमतत्रयमपि न श्रुतितात्पर्यविषयः किन्तु उत्तरवाक्यस्य प्राधान्यं समुचितम्। ' यस्मिन्सर्वाणि भूतानिआत्मैवाभूद्विजानतः । तत्र कोमोहःकश्शोक एकत्वमनुपश्यतः ' इति ईशावास्यवाक्ये ' एकत्वमनुपश्यत ' इत्युक्तेः, बृहदारण्यकस्यापि शुक्लयजुर्वेदान्तर्गतत्वात् । ऐतरेयोपनिषदुपक्रमे—' एष पन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम् ' इति श्रुतिपर्यालोचनायामपि कर्मकाण्डब्रह्मकाण्डप्रतिपाद्यार्थजातस्य सर्वस्यापि एकरूपमेव सत्यत्वं विवक्षितमिति प्रतीयते । सविशेषब्रह्मपरिणामाद्वैतिनः बृहदारण्यकव्याख्यातुः प्राचीनस्य भर्तृप्रपञ्चस्यापि कृत्स्नस्य वेदस्यैकरूपमेव प्रामाण्यमभिमतमिति ज्ञायते । ' एकदेशस्यचामात्वे वेदस्याप्यप्रमाणता । सर्वनाशो भवेदेवं सर्वाप्रामाण्यहेतुतः ॥' इति सुरेश्वराचार्यैः (बृ.] वार्तिके भर्तृप्रपञ्चसम्मतार्थस्य प्रकटीकरणात् । भास्करो यादवप्रकाशश्च कर्मब्रह्मणोरेकरूपसत्यतामभिप्रेत्य कर्मब्रह्मकाण्डयोरेकरूपं प्रामाण्यं मन्येते। एवंस्थिते ' यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं विजानीयात् ' इति वाक्यखण्डे, ईशावस्ये ' यस्मिन्स-

र्वाणि भूतानि आत्मैवाभूद्विजानतः' इति वाक्यात्पूर्वं 'ईशावास्यम् सर्वाणि भूतान्यात्मन्येवानुपश्यति' उत्तरत्र च 'तदन्तरस्य सर्वस्य' 'याथातथ्यतोऽर्थान् व्यदधात्' इत्युक्तेः आत्मन् शब्देनान्तर्यामी विवक्षितः। बृहदारण्यके अन्तर्यामिब्राह्मणे अन्तःप्रविश्य नियन्तृत्वरूपस्यान्तर्यामित्वस्य द्वाविंशति [चतुर्विंशति]कृत्वः अभ्यासेनाप्ययमर्थः प्रतिष्ठितोभवति 'अन्तःप्रविष्टश्शास्ताजनानाꣳसर्वात्मा' इति यजुरारण्यकश्रुत्याऽप्ययमर्थो विशदीकृतः इति वर्णयन्ति ॥

एवं पूर्वोदाहृतश्रुतिवाक्ये शब्दान्तरं विहायात्मन्शब्दनिवेशेनैवायमर्थस्स्वरसतस्सिद्ध्यति। तदिदं सर्वमभिसन्धाय देवादिशब्दानां गवादिशब्दन्यायेन चिदचिद्रूपस्य जगतः ब्रह्मणश्चापृथक्सिद्धिसम्बन्धनिबन्धनएवैकत्वव्यपदेशः, तत्रतत्र समानाधिकरणव्यपदेशः, भेदनिषेधश्चेति श्रुतिस्वरससिद्धं वृत्तिकारसम्मतञ्चार्थमेवोपपादयन्तः वेदार्थसंग्रहे श्रीभाष्ये श्रीगीताभाष्येच परकीयसिद्धान्तार्थान् सम्यगेव पर्यालोचयामासुः, श्रीमद्रामानुजाचार्याः ॥

अत्रच केचिदेवमाक्षिपन्ति परकीयसिद्धान्तानभिज्ञाः उपनिषदोऽपि सर्वा अपरिशील्यैवच औत्प्रेक्षिकान् कांश्चिदर्थान् उपन्यस्य तद्दूषणमात्रेण कृतार्थंमन्या रामानुजाचार्या जगद्व्यामोहयन्ति स्म। यदि रामानुजाचार्याः परकीयग्रन्थस्थानेवार्थान् पर्यालोचयिष्यन् तर्हि अर्वाचीनानामाचार्याणां तथा विशदीकरणे कुतो वाप्रवृत्तिः नाभविष्यत्? तत्र च किंवा निदानं भवेत्? इति ॥

सचायमाक्षेपः. श्रीरामानुजाचार्याणां दृष्टिगोचरतामापन्नाः ये ये परेषां ग्रन्थाः तत्तद्ग्रन्थानुवादपुरस्सरं श्रीभाष्यश्रीसूक्तीनामाशयविशदीकरणमन्तरा नैव शाम्यति। इतःप्राक्तनानाञ्चाचार्याणां तदानीं परकीयग्रन्थानाममुद्रणादिनिबन्धनदौर्लभ्यादिना तथा विशदीकरणे प्रवृत्तिः नैव समजायत इति पर्यालोच्यैव इदानीं तादृशग्रन्थसौलभ्येन सर्वार्थसिद्धिभावप्रकाशादिषु बहुशः पर्यालोचितपरमतप्रक्रिया अपि श्रीभाष्यगूढार्थसंग्रहाख्यविवरणे प्रावर्तन्त श्रीमदाचार्यचरणाः। अत्र च विवरणे परकीयग्रन्थानामानुपूर्व्यैवानुवादात् तत्तद्ग्रन्थेषु तेतेऽर्थाः नोपलभ्यन्त इति परेषां प्रवादोऽपि निरवकाशः। अत्र परग्रन्थानुवादबाहुल्यमेवोपलभ्यते किमर्थमिदमिति शङ्कायाश्चानुत्थितिः ॥

श्रीयामुनमुनीनां श्रीभाष्यकाराणां च परकीयग्रन्थपरिशीलने तत्पर्यालोचने च कीदृशी शक्तिरिति एतद्विवरणग्रन्थे मुहुः परिश्रमवतां स्फुटीभविष्यति। प्राक्तनानामर्वाचीनानां च परकीयग्रन्थानामनुवादे तत्पर्यालोचनप्रकारे च श्रीमदाचार्यचरणानां कीदृशःप्रतिभाविशेष इति च निर्मत्सराणां विदुषामतिरोहितं भवेत्। इदंच विवरणं श्रीमतो लक्ष्मीहयवदनस्य निरवग्रहेणानुग्रहेण अद्य आनन्दमयाधिकरणे प्रचलति। साम्प्रतं जिज्ञासाऽधिकरणभागमात्रमेकसम्पुटात्मना प्रकटीक्रियते। विषयानुक्रमणिकयैवात्र पर्यालोचितानां वैशद्यं भवतीति नात्र तद्विस्तर आदृतः। अनेन च कैङ्कर्येण प्रीणातु श्रीलक्ष्मीहयाननः इति विज्ञापयति ॥

विदुषामनुचरः श्रीदाचार्यचरणानामन्तेवासी—श्रीदेशिकदर्शनविजयध्वजः, मैसूरु
महाराजास्थान महाविद्वान् श्रीमन्महाराज संस्कृतमहापाठशालायां
निवृत्तविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायः
आत्मकूर् (दीक्षाचार्यः) 'वेङ्कटदीक्षितः'



श्रीलक्ष्मीहयवदनलक्ष्मीनारायणाभ्यां नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# श्री भा ष्य सू क्ति गू ढा र्थ सं ग्र ह वि ष या नु क्र म णि का



आखिलेत्यादिमङ्गलश्लोकस्य 'प्रकृतिपुरुष' इत्यादि (आत्मसिद्धि) यामुनार्यसूक्त्यनुसारिता ॥ पु. ३. क

'तंत्वौपनिषदं पुरुषम्' (बृ) इतिश्रुतिस्थपुरुषशब्दः तत्र 'विज्ञानमानन्दं ब्रह्म' इति तदुत्तरश्रुति-घटकब्रह्मशब्दश्चात्रेति भिदा। एतेन 'येनाक्षरं पुरुषं—तत्त्वतो ब्रह्मविद्याम्' इति श्रुतौ सूत्रेच ब्रह्मशब्दः औप-निषदपुरुषपरः। पुरुषश्च वासुदेव एवेति सिद्ध्यति। यामुनसूक्तिमूलभूतायाः 'तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयः' इति श्रुतेः अतो देवेति वर्गस्थतया तद्वर्गमन्त्राणां प्रत्येकं ऋग्विधाने विनियोगकथनेन तदु-दाहरणेन 'सदा पश्यन्तिसूरयः' इतिश्रुतौ 'पश्यन्ति सूरयश्शुद्धम्' 'यद्वैपश्यन्ति सूरयः' इति तदुपबृंहणव-चनेच ।विष्वक्सेनवैनतेयादयः विवक्षिता इति साधनम् ॥ ३. ख

'तंत्वौपनिषदं पुरुषम्' इत्यत्र उपनिषत्तात्पर्यविषयत्वेनोक्तस्य पुरुषस्य 'परात्परं पुरिशयं पुरुषमीक्षते' इत्यत्र परब्रह्मत्वेन विवक्षिततया सर्वशरीरिण एव उपनिषत्तात्पर्यविषयत्वासिद्ध्या सविशेषस्यैव परब्रह्मत्वम्। तेन निर्विशेषस्यैव परब्रह्मत्वम् सविशेषस्यापरब्रह्मत्वमित्यर्थः न श्रुतितात्पर्यविषयः। एवं 'परं पुरुषं' 'परात्परं-पुरुषमीक्षते' इति ध्यानेक्षणयोः सर्वशरीरिविषयकत्वप्रतिपादनेन ध्यानस्य नातत्वविषयकत्वं किंतु तत्त्ववि-षयकवमेवेति च सिद्ध्यति ॥ ३. ग

एवं 'परस्मिन् पूरुषे भक्तिभूमा' (आ.सि) इत्यनेन 'सवा अयं सर्वासु पूर्षु पुरिशयः' (बृ) 'इन्द्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयश्शता दश' इति श्रुत्यभिप्रेतेन 'प्रकाशयन्भ्राजते यद्वनड्वान्' (श्वे) इत्यत्र विवक्षितेन कृष्णेनोपदिष्टा गीता 'यस्य देवे परा भक्तिः' (श्वे) इति श्रुत्यभिप्रेतमर्थं सम्यग्विशद-यतीति सूचितम्। 'भक्तिभूमा' (गी.सं) इत्यत्र भूमशब्दप्रयोगेण भक्तिवृद्धिः ब्रह्मान्यतात्त्विकार्थविषयकज्ञा-नेनैव। तात्त्विकार्थविषयकज्ञानमेव मुक्तिहेतुरित्यर्थस्य गीतायां विवक्षितत्वस्य सूचनम् ॥ ३. घ

'अथातो ब्रह्मजिज्ञासा' इति सूत्रे ब्रह्मशब्दप्रयोगेण 'येनाक्षरं पुरुषं वेद—ब्रह्मविद्याम्' (मु) 'तंत्वौ पनिषदं—विज्ञानमानन्दं ब्रह्म' (बृ) इत्यादिश्रुतिषु पुरुषशब्दसमानार्थकत्वेन ब्रह्मशब्दस्य प्रयोगेण च यामुन-मुन्यभिप्रेतार्थस्सर्वोऽप्यत्रापि विवक्षित इत्यभिप्रेत्य 'प्रकृतिपुरुष' इत्यादिवत् मालिनीवृत्तेन अखिलेत्यादिम-ङ्गलश्लोकोक्तिः। अखिलेत्यादिविशेषणद्वयेन 'लोकवत्तु लीला' 'वैषम्यनैर्घृण्ये' इति सूत्रद्वयोक्तं सृष्टेःफलम् तेन सृष्टिवाक्यानां मुक्तिवाक्यानां च सामरस्यम्। राज्ञश्छत्रचामरवत् जगत्कारणत्वमुक्तिप्रदत्वरूपब्रह्मलक्षणकथ-नेन जीवस्य ब्रह्मकार्यत्वप्रतिपादनेनच द्रमिडाचार्यसंमतराजकुमारनयसूचनम्। तेन सृष्टिवाक्यानामात्मैकत्व-प्रतिपत्त्यर्थत्वमिति परसम्मतार्थस्य श्रुतितात्पर्याविषयत्वमित्याद्यर्थसिद्धिः। 'यथाऽग्नेः' (बृ) इत्येतद्भाष्ये(शं) राजकुमारनयसम्प्रदायमभिधाय सूत्रभाष्ये 'मृल्लोह' इत्यादिगौडपादोक्तेःप्राच्यसम्प्रदायविरुद्धत्वम्। राज्ञो नित्यत्वेन कुमाराभिनयासम्भवात् ॥ ३. ङ

जन्माद्यधिकरणविषयवाक्यत्वेन विवक्षितायां 'यतो वा' इत्यादिश्रुतौ जीवस्यापि कार्यत्वेन विवक्षा 'भूमिरापो' इत्यादिगीतासप्तमाध्यायवचनैः सिद्धयति । पंचदशाष्टादशवचनैः जीवस्य न स्वरूपपरिणामः, अपितु ज्ञानपरिणामएवेत्यपि सिद्धयति । जीवानां ज्ञानविकासस्य दयामूलकत्वेन सृष्टौ किञ्चिज्ज्ञानविकासः मुक्तौ पूर्णज्ञानविकास इति सृष्टिमुक्तिवाक्यैकरस्यस्यब्रह्मशब्दसूचितस्य प्रतिपादनम् ॥ ३.च

श्रुतप्रकाशिका । ३.छ

विनतशब्दे न्यासोपासनात्मकाशेषविद्यानिष्ठविवक्षायाः व्यासार्योक्तायास्साधनारम्भः । श्रीभाष्यकृत्सम्मतत्वस्य प्रमाणमूलकत्वस्य च साधनोपक्रमः । तत्र च वेदार्थसंग्रहोक्तेर्मूलता ॥ ४

मुक्तिहेतुज्ञानपरत्वेन परेषामपि संमतस्य 'दैवीह्येषा' इति गीतावचनस्य भक्तिपरत्वस्य गीताभाष्ये कथनेऽपि वेदार्थसंग्रहशरणागतिगद्ययोः शरणागतिपरत्वप्रतिपादनस्य मूलता । अहिर्बुध्न्यसंहितोक्तदिशा नित्यग्रन्थं रचयतः भगवतः नित्यग्रन्थे 'शरणमुपगच्छेदाखिल' इत्यादिना शरणागतिप्रकारश्च पूर्वोक्तः इत्युक्त्या अहिर्बुध्न्यसंहितोक्तदिशा न्यास एव शरणागतिरिति भगवत्सिद्धान्तनिर्णयः । (अ.सं) विवक्षितायाः 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इति श्रुतेः 'त्यागेनैके अमृतत्वमानशुः' इति तैत्तरीयश्रुत्यन्तरसमानार्थकत्वम् । 'त्यागेनैके' इत्यत्र बहुविधार्थनिरूपणपरराजधर्मवचनेषु आत्मत्यागस्यापि त्यागशब्दार्थत्वोक्त्या आत्मत्यागस्य न्यासरूपता । गीताभाष्ये फलसङ्गकर्तृत्वत्यागस्य 'त्यागेनैके' इत्यत्र त्यागशब्दार्थत्वोक्तिः राजधर्मे बहूनामर्थानां त्यागशब्दार्थत्वप्रतिपादनमभिप्रेत्य प्रवृत्ता, नतु 'त्यागेनैके' इत्यत्र प्रपत्तिविवक्षाऽभावाभिप्रायेणेति न विरोधः ॥ ४.क

आत्मत्यागएव अहिर्बुध्न्यसंहितायामात्मन्यासत्वेनोक्तः 'जातवेदसे सुनवाम सोमम्' 'वाचस्पते विधे नाम' इत्यादिश्रुतिषु आत्मन्यासस्यैव विवक्षितत्वम् ॥ ४.ख

गीता संग्रहः तद्विस्तरःपञ्चरात्रमिति मोक्षधर्मवचनैः निरूपणम् । चातुरात्म्यवासुदेवसमाराधनरूपत्वं पाञ्चरात्रधर्मस्येति शङ्कराचार्याणामपि संमतम् । 'यो नमसा स्वध्वरः' इति ऋग्वेदश्रुत्यर्थः ॥ ४.ग

ऋक्श्रुतिषु देवसामान्यनमस्कारस्य पापानिवर्तकत्वं देवानां स्वभूतैः परिचरणीयत्वं नमस्कारस्य देवपापसामान्यनिवर्तकत्वं च निरूपितम् । इदं च सर्वदेवश्रेष्ठे वासुदेवे नमस्कारस्यैव देवपापसामान्यनिवर्तकत्वेन तत्रैव पर्यवसानाभिप्राय एव सङ्गच्छते ॥ ४.घ

शरणागतौ नमश्शब्दः महाभारते अरण्यपर्वणि श्वेताश्वतरोपनिषदि च प्रयुक्त इतिनिरूपणम् । गीतायां तदप्रयोगे मूलंतु अरण्यपर्वणि मार्कण्डेयोपदेशानन्तरं द्रौपद्यासहितैःपञ्चभिः काम्यकवने कृष्णशरणागतिकरणेन अर्जुनस्यैतदर्थस्य ज्ञानसत्त्वमेव । 'सनायुव' इति श्रुतौ पतिपत्नीभावदृष्टान्तकथनेन शरणागतस्य पत्न्याः पत्याविव वृत्तिरिति निरूपणम् ॥ ४.ङ

रामायण (सुन्दरकाण्ड) भागवता (११.स्कन्ध) दिपर्यालोचनयाऽपि पतिपत्नीभावसंबन्धानुगुणा शरणागतिरिति निरूपणम् । 'नच सीता त्वयाहीना नचाहमपि' इति लक्ष्मणोक्तौ प्रपन्नः पत्नीतुल्यः कन्यादान शरणागत्योरेकैव रीतिश्च सूच्यतइति निरूपणम् ॥ ४.च

मुक्तिसाधनभूतयोगन्यासौ पूर्वं यौ प्रस्तुतौ तत्र योगः पूर्वमभिहितः, न्यासः अभिधेय इति प्रश्नः 'तेन तेनाप्यते तत्तन्न्यासेनैव' इति भक्तियोगादिना अलभ्यमपि फलं न्यासेन प्राप्यते इति न्यासस्यैव षाड्

विध्यं न्यासस्यैव शरणागतिरूपत्वम्। त्वमेवोपायभूतो मे भवेति प्रार्थनामतिरूपत्वंचाभिहितम्। अत्र प्रार्थनायाः इच्छात्वेन ज्ञानरूपत्वाभावेन शरणागतिशब्दार्थज्ञानरूपत्वासम्भवात् प्रार्थनायुतज्ञानविशेषस्यैव उपक्रमोक्तन्यासरूपस्य शरणागतिरूपत्वम् प्रार्थनाविषयीभूतोपायत्वमपि शरणशब्दार्थफलाव्यवहितसाधनत्वमेवेति निरूपणम्। एवमङ्गीकारेण उपसंहारे ऋग्यजुश्श्रुतिभ्यां न्यासस्यैवोपसंहारेण उपक्रमोपसंहारैकरस्यम्। मध्यग्रन्थस्य तदानुगुण्यं च। द्वितीये नमश्शब्दार्थस्याङ्गित्वं आनुकूल्यसङ्कल्पादीनामङ्गत्वं च वक्ष्यते। अतः उभयोरैकरस्यम् ॥ ४.छ

'उपायार्थैकवाचकः' (अ.सं) इत्यत्र 'सनायुत्र' इति ऋक्छ्रुत्यनुसारेण अर्थशब्दसार्थक्यार्थं च फलभिन्नोपायवाचक इत्यर्थः। तेन फलभिन्नपूर्वप्रस्तुतकर्मयोगादेर्व्युदासः, प्रार्थनामतिः शरणागतिरित्यत्र प्रार्थनायागतिशब्दार्थत्वासम्भवेन प्रार्थनायुनामतिःशरणागतिरित्येवार्थो युक्तः। 'उपायं वृणु लक्ष्मीशम्' इति वचनानुसारात्, एतदभिप्रायेणैव 'याच्ञान्वितमभिवदन्ति प्रपदनम्' इत्याचार्यपादैरनुगृहीतम् ॥ ४.ज

'अमृतस्य परं सेतुम्' इत्यत्र परशब्दप्रयोगेण शरणत्वं पापसामान्यानिवृत्त्यव्यवहितपूर्ववृत्तित्वम्। तेन शरणागतेः व्यापारवत्कारणत्वस्य न विरोधः। 'इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका' (न्या.सि) इति सूक्तौ प्रागुक्तमेवोपायत्वम्, प्रपत्तेरतादृशोपायत्वं नास्तीति तद्ग्रन्थपूर्वापरवाक्यपर्यालोचनया निष्कर्षः ॥ ४.झ

'अकिंचनः' (अ.सं) 'सर्वधर्मान् परित्यज्य' 'अकिंचनोऽनन्यगतिः' अनन्यशरणः, एवंभूतमत्कैङ्कर्यप्राप्त्युपायतयाऽवक्लृप्तसमस्तवस्तुविहीनोऽपि (स) नित्यकैङ्कर्यप्राप्त्युपायभक्तितदुपायसम्यग्ज्ञान' इत्यादिकं 'तत्प्राप्तये तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः' इत्यादिकं सर्वं स्वतन्त्रप्रपत्त्यधिकारनिरूपणपरम्। गीता अ संहितयोः कर्म—ज्ञान—भक्तियोगशून्यत्वरूपं आकिंचन्यमिति स्फुटं प्रतीयंत, अतः आकिंचन्यव्यतिरिक्तस्य नाधिकारत्वमिति कथनम् ॥ ४.ञ

कैङ्कर्यापेक्षया शरणागत्यभिधानेन 'भक्त्या परमया वाऽपि प्रपत्त्यावा महामते। प्राप्योऽहं नान्यथा प्राप्यः मम कैङ्कर्यलिप्सुभिः॥' (प.सं) इति वचनानुसारेण मुक्तिकरणत्वं शरणागतेः विवक्षितं, नत्वन्यार्थत्वेसति प्रसङ्गादुपकारकत्वादिरूपं व्याजत्वमिति निरूपणम्। शरणशब्दे ल्युडर्थकरणत्वस्य अव्यवहितोपायत्वरूपस्य स्वोत्तरचेतनव्यापारानपेक्षफलहेतुत्वस्वरूपस्य अन्तिमस्मृतिपर्यन्तभक्त्युपाये प्रतिपन्नस्य स्वतन्त्रप्रपत्ताव भावः 'त्वमेवोपायभूतो मेभव' इत्यत्र विवक्षित इति गद्यसूक्त्याशयः ॥ ४.ट

प्रपत्तौ सौलभ्योपयुक्तगुणानां तत्रापि सहजकारुण्यस्य विशेषणोपयोगः। 'तत्प्राप्तये प्रधानोऽयंपन्थाः' (अ.सं) इति वचने प्राधान्यस्य आचार्यपादोक्तस्य द्विविधस्य समर्थनम् ॥ ४.ठ

सृष्टेः सहजकारुण्यमूलकत्वस्य सृष्टिवाक्यैः राजकुमारनयसूचनस्य पुत्राणां दायधनवदविशेषेण फलदानस्य च प्रमाणसिद्धस्य पर्यालोचनपूर्वकं येषां पुरुषाणामेतदध्यवसायेन ध्यानादौ प्रवृत्तिः तेषां मुक्तिरूपं फलं तरतमभावानापन्नमेवेति शाण्डिल्यविद्यार्थनिर्णयन साधनतारतम्येन फलतारतम्यशङ्काऽनवकाशः। 'अहमस्म्यपराधानाम्' इति वचने अधिकारनिरूपणपूर्वकं सर्वापराधनिवृत्त्यव्यवहितोपायत्वरूपकरणत्वस्य शरणशब्दार्थस्य निरूपणेन गीताविस्तरत्वस्य पञ्चरात्रे उपपादनम् ॥ ४.ड

प्रपत्तेरपराधरूपत्वस्य व्यासार्यासंमतत्वम्। 'न साध्यं साधनान्तरैः तेन तेनाप्यते तत्तन्न्यासेनैव' इत्यत्र भक्त्यसाध्यफलहेतुत्वस्य न्यासे प्रतिपादनेन आचार्यनिष्ठायास्सिद्धिः, नमश्शब्दे प्रपत्तिविवक्षा। अङ्गपञ्चकस-

पन्नात्मरक्षभरन्यासस्यैव प्रपत्तिरूपता इत्यादीनामर्थानां व्यासार्यैः शुकपक्षीये समर्थनमिति निरूपणम् ॥ ४.ढ

गद्ये अङ्गपञ्चकसम्पन्नशरणागतिरेव विवक्षितेति व्यासार्यैर्निर्धारणम् । लक्ष्मीतंत्राहिर्बुध्न्यसंहितावचना नामैकरस्यम् परमपुरुषार्थसाधनप्रीतिसाधनत्वं शरणागतेरिति निरूपणेन शरणागतेरसाधनत्वव्यवच्छेदः ॥ ४.ण

'पन्था नान्योऽस्ति विज्ञानात्' (ल.तं) इत्यनेन 'तमेव विदित्वा' इत्यादौ वेदनवाचिशब्दस्यो-पासनप्रपदनसाधारण्यमिति (ता.दी) व्यासार्योक्तिः । न्यासशरणागत्योरैक्यं लक्ष्मीतन्त्रे प्राक्पञ्चाशे च निरूपितमिति न्यासभिन्नशरणागत्यभावः ॥ ४.त

लक्ष्मीतन्त्रे उपायवरणपूर्वकभरन्यासस्यैव शरणागतिशब्दार्थत्वोक्तेः अ. संहितायां 'प्रार्थनामतिः' इत्यत्र अस्यैवार्थस्य विवक्षितत्वेन गीतायामपि तस्यार्थस्य विवक्षितत्वम् ॥ ४.थ

गद्यत्रयेऽपि तस्यैवार्थस्य विवक्षा । एवमहिर्बुध्न्यसंहितोक्तदिशा नित्यग्रन्थं रचयतः भगवतः न्यास-रूपशरणागत्यनुष्ठानं तदुत्तरं नित्यग्रन्थोक्तरीत्या नित्यानुष्ठानं सम्मतमिति वात्स्यवरदगुरूपदेशानुसारिभिः व्यासार्यैराचार्यपादैश्च तदनुसरणम् । अन्यैरननुसरणेऽपि क्षत्यभावः । 'श्रुतिशिरसि विदीप्ते' इत्यनेन आन-न्दरूपस्य ब्रह्मणः मुक्तौ नैतल्लोके प्राप्तिः अपितूर्ध्वलोक एवेति आनन्दमयविद्यातात्पर्यसूचनम् ४.द

श्रुतिशिरश्शब्देन 'रातिर्दातुःपरायणं, तिष्ठमानस्य तद्विदः' इति श्रुत्यनुसारेण वेदपूर्वोत्तरभागयो-स्तात्त्विकप्रामाण्यं सूचितम् । 'विदीप्ते' इत्यत्र 'अथ यदतःपरो दिवो ज्योतिर्दीप्यते' इति श्रुतेः प्रत्यभि-ज्ञापनेन तस्यांश्रुतौ प्रकृतिमण्डलादूर्ध्वस्थानविशेषावच्छेदेन प्राप्तेर्वृत्तिकाराभिमतत्वं यत्परेषामपि संमतं तत्सूचितम् ५

'ब्रह्मणि श्रीनिवासे' इत्यनेन निश्श्रीकस्य निरतिशयबृहत्वं नास्तीति 'परस्मिन्' इत्यनेन श्रुति-गीतासूत्रेषु परशब्दप्रयोगेण प्रापकत्वप्राप्यत्वाभ्यां परत्वमिति च सूचितम् ॥ ५.क

एवं 'परात्तु तच्छ्रुतेः' 'पराभिध्यानात्' इत्यत्रेव 'न स्थानतोऽपि परस्य' इति सूत्रेऽपि परशब्दस्य सविशेष एवार्थः, 'परमतः' इत्यत्रापि परशब्दः उत्कृष्टार्थकएवेत्यपि व्यञ्जितम् ॥ ५.ख

'परमतः' इत्यत्र परशब्दः पूर्वसूत्रानुसारेणोत्कृष्टार्थकः । 'परात्तु तच्छ्रुतेः' इत्यादौ जगत्स्रष्टुरन्तर्या-मिणः बन्धमोक्षहेतोश्च प्रतिपादनेन तदतिरिक्तस्य प्राप्यत्वेनोत्कर्षशङ्कायां तत उत्कृष्टस्य निषेधः एवैतदधिक-रणे 'तथाऽन्यप्रतिषेधात्' इत्यत्र तथेत्यस्य सत्वेनान्यसामान्यानिषेधो न विवक्षितः, किंतु तत उत्कृष्टनिषेध एव, 'यस्मात्परं नापरमस्ति किंचित्' इत्यत्रान्योत्कृष्टनिषेधएव विवक्षितः अत्र परोक्तार्थः निरवकाशएव

'ततो यदुत्तरतरम्' इत्यत्र पूर्वप्रस्तुतपरभूतेशज्ञानस्य मुक्तिहेतुत्वमुपसंह्रियते । गुरुचन्द्रिकोक्तिरप्य-साधीयसी । 'अनेन सर्वगतत्वमायामशब्दादिभ्यः' इति सूत्रे आयामशब्दस्य व्याप्तिवाचकत्वस्य परेषामपि संमतत्वेन 'व्याप्यव्यापकता मिथ्या' इत्युक्तेरयोगः ॥ ५.ग

परंब्रह्म सविशेषमेवेति निगमनम्, 'शेमुषी भक्तिरूपा' इत्यत्र सविशेषज्ञानस्यैव भक्तिरूपत्वकथ-नेन सविशेषे प्रेमरूपा भक्तिः, निर्विशेषे ज्ञानरूपा भक्त्यनन्तरकालिकज्ञानमेव मुक्तिहेतुरिति परसम्मतार्थस्य वेदार्थसंग्रहान्ते भक्तेर्ज्ञानरूपत्वसाधनेन निरवकाशत्वम् ॥ ५.घ

'राजविद्या' 'सुसुखं कर्तुमव्ययम्' इत्यादौ भक्तेः स्वादुतमत्वं प्रतिपन्नमिति भवत्वित्यनेन तत्सूचनम् ६

विष्णुपुराणे उपक्रमोपसंहारयोः वासुदेवशब्दार्थस्य भगवच्छब्दार्थस्य च निर्णयेन 'यद्भूतेषु वसत्यपि' सर्वानुग्राहकत्वेन' इति श्रुतेः 'ज्ञानशक्ति' इत्यनेन 'पराऽस्य शक्तिः केवलो निर्गुणश्च' इति श्रुतेः 'तवैष

महिमा येन व्याप्तम् ' ' व्याप्तिरैश्वर्यगुणसंसूचिका ' इत्यनेन ' देवस्यैष महिमातु लोके येनेदं भ्राम्यते ' इति श्रुतेश्चार्थनिर्णयः ॥ ६.क

अस्त्रभूषणादिविशिष्टविग्रहवत्त्वं अस्त्रभूषणादीनां चतुर्विंशतितत्वात्मकत्वनिरूपणेन विभूतिद्वयानुरूप्यं तत्वानाममिथ्यात्वं प्रकृतिमण्डलादूर्ध्वस्थानस्यैव मुक्तिस्थानत्वमुपक्रमोपसंहारयोः भगवतः मुक्तिहेतुत्वं च निरूपितम् । ' अस्तिब्रह्मेतिचेद्वेद सन्तमेनम् ' इत्यादिश्रुत्यनुसारेण व्यपगतप्राणत्वं ज्ञानाभावनिबन्धनमिति निरूपणम् ॥ ७

वृत्तिकारसिद्धान्तस्य वाक्यकारादिसंमतत्वम् । परमतइव विरुद्धाभिप्रायबाहुल्यविरहः, ' निजाक्षरैः ' इत्यस्य तत्त्वटीकोक्तार्थप्रदर्शनम् । निजाक्षरैरित्यत्र गायत्र्यवयवभूताक्षरसंबन्धबोधकश्रुत्युपादानम् ॥ ८

उपात्तश्रुत्यर्थसंग्रहः । ' भौमाःपिबन्त्वन्वहम् ' इत्युक्त्या शक्तानां भाष्यार्थप्रवचनैव कालयापनम् । अशक्तानामेवेतरग्रन्थप्रवचनादिनेति निरूपणम् ॥ ८.क

परैः अध्यासाद्यवलम्बनेन वेदान्तार्थस्य बहुसूत्रेषु प्रकाशनप्रतिज्ञा कृता । वेदप्रामाण्याय अध्यासाद्यनङ्गीकर्तृवृत्तिकारमतानुसारेण सूत्रार्थप्रकाशनप्रतिज्ञेति । श्रीभाष्ये बोधायनस्योपवर्षस्य चैक्यभेदपक्षद्वयम् ॥ ८.ख

' पूर्वाचार्याः ब्रह्मनन्द्यादयः सूत्रस्थापितार्थपैर्ग्रन्थैरित्याशयः ' इति तत्त्वटीकावाक्येन वाक्यकारादिभिः सूत्रभाष्यं नैव कृतम्, किंतु वृत्तिकारसम्मसूत्रार्थ एव छान्दोग्यावाक्यभाष्यादौ स्थापितः । अतः यामुनमुनिसूक्तौ आचार्यटङ्केत्यत्र ब्रह्मनन्द्यपरनामकटङ्काचार्यस्य भर्तृप्रपञ्चवत् छान्दोवावयकृत्त्वमेव विवक्षितम् । श्रीवत्साङ्कवदन्यएव लघुसूत्रभाष्यकृत् अस्मत्सिद्धान्ते अवर्ततेति निश्चीयते । एतेन वृत्तिवाक्यकारादीनांसविशेषसिद्धान्त इति निश्चीयतइति स्थापनम् ॥ १०.क

अत इत्यत्रैतच्छब्दस्य कर्मपरत्वम् ॥ ११

' ब्राह्मणेन निष्कारणो वेदः षडङ्गो ध्येयः ' इति साङ्गाध्ययनविधिमूलकएवाध्ययने प्रवृत्तिः ॥ १२

साङ्गाध्ययनकरणेन वेदपूर्वोत्तरभागवाक्यैः यथाश्रुतार्थज्ञानं विचारात्पूर्वमेव संपन्नम्, तत्र कर्मब्रह्मणोः मुक्तिफलसाधनत्वस्य फलेच्छारहितकर्मणामुपासनाङ्गत्वस्य ज्ञानेसति कर्मणां हानार्थमुपानार्थं च अवश्यज्ञेयत्वनिश्चयेन कर्मनिर्मुक्तसिद्धौ ब्रह्मविचारे प्रवृत्तिर्मास्तु, तदसिद्धावप्यङ्गतया कर्मणां ज्ञानमावश्यकमिति कर्मविचारे प्रवृत्तिः प्रथमम् । नतु ब्रह्मविचारे, कर्मविचारानन्तरं कर्मणां नित्यफलसाधनत्वाभावनिश्चये प्रतिबन्धकविगमेन दुष्करब्रह्मविचारे प्रवृत्तिरिति प्रतिबन्धकापनोदनमुखेन ब्रह्मविचारहेतुत्वं कर्मविचारस्य, ब्रह्मविचारश्च ब्रह्मविषयकः ब्रह्मफलकश्चेति निरूपणम् ॥ १३

सकर्मकधातुसमभिव्याहारे कर्माकाङ्क्षायाः नियतत्वेन कर्मणि षष्ठ्यन्तेनैव समासः, नतु चतुर्थ्यन्तेन सन्नन्तधातुसमभिव्याहारेण महाभाष्योक्तदिशा ब्रह्मणः इच्छाविषयत्वमपि कर्मणिषष्ठीपरिग्रहे लभ्यते । एतेनैव शेषषष्ठ्यन्तेन समासो नात्र विवक्षितः । कार्यवर्गोपासनाफलानां ब्रह्मशब्दार्थान्तःपातित्वेन तन्निरूपणस्यापि प्रतिज्ञाविषयत्वं संभवतीति कर्मणि षष्ठीपरिग्रहे नानुपपत्तिः ॥ १३.ख

शङ्करभाष्यानुसारेणापि कर्मणि षष्ठीपरिग्रहस्यैव युक्तत्वं, नतु शेषषष्ठीपरिग्रहस्येति निरूपणम् । ' प्रतिपदविधाना च षष्ठी न समस्यते ' इत्यस्य अपूर्वत्वतात्पर्येण शङ्का ' कृद्योगा च षष्ठी ' इत्यस्यापि अपूर्वत्वेन समाधानम् । उभयोरपूर्वत्वं महाभाष्यकृत्सम्मतमिति (श.शे) नागेशसिद्धान्तस्यात्रानुकूलता ॥ १४

'तत्त्वमसि' इति वाक्यजन्यज्ञानादविद्यानिवृत्तिरिति विवरणकारसम्मतार्थः। मण्डनवाचस्पतिसंमत मानसापरोक्षज्ञानपक्षपरित्यागश्च। प्रथमं परोक्षं पश्चादपरोक्षं, प्रथममेवापरोक्षमिति विवरणे पक्षद्वयगुणदोषाविचारः॥ ५१

शङ्कर,पद्मपादाचार्योक्तदिशा श्रवणादिस्वरूपनिरूपणम्॥ ५२

विचारस्य श्रवणविधिमूलकत्वेन श्रवणापेक्षितनित्यानित्यवस्तुविवेकादेरेव पूर्ववृत्तत्वम्, नतु कर्मणः वाचस्पतिसंमतनित्यानित्यवस्तुविवेकः॥ ५३

नित्यानित्यवस्तुविवेकादेः श्रवणापेक्षित्वप्रतिपादकश्रुतीनां पं.पा. विवरणोक्तानामुपन्यासः॥ ५३–५४

मतत्रयसाधारण्येन (४५.पु) प्रागुक्तशङ्कायां मतद्वयसम्मतार्थस्य पं.पा.वि. उक्तसमाधानं (४७.पु) दुष्टसंभावितमपि विचारासहमित्यभिप्रायेण लघुसिद्धान्तारम्भः॥ ५६

वेदान्तेषु मोक्षोपायज्ञानविधिसत्त्वेन परसम्मतनिर्गुणविद्यावाक्येषु अविहितमुक्त्युपायविवक्षाया असम्भवेन मुक्त्युपायभूतं न निर्विशेषज्ञानमपितु सविशेषज्ञानमेवेति साधनोपक्रमः॥ ५६

वाक्यजन्यज्ञानात् प्रथममेवाविद्यानिवर्तत इति पं.पा.वि.सिद्धान्तः विवरणोपन्यस्तपक्षान्तरेऽनभ्युपगमेन सर्वासंमतः। 'बाधितस्यापि संस्कारवशादनुवृत्तिः द्विचन्द्रज्ञानादिवदनुवृत्तिः' इति (शं) हस्तामलकभाष्योक्त्यनुरोधेन शङ्का॥ ५७

अविद्यायाः आवरणविक्षेपशक्तिद्वयेन सर्वोपपत्तिः (स.वे.सि.सा.सं.सि.ले.सं)॥ ५८

प्रथममनुवृत्तायाः अविद्याशक्तेः आत्मान्यभूतायाः उत्तरकाले निवृत्तौ प्रमाणविरहः॥ ५९

द्विचन्द्रज्ञानाद्युदाहरणे तिमिरादिदोषस्य ज्ञानबाध्यत्वं नास्ति, विक्षेपशक्तेस्तु आत्मन्यध्यस्तायाः प्रथमज्ञानबाध्यत्वमेव संभवति, 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतिः 'क्षरात्मानावीशते देव एकः' 'तस्याभिध्यानाद्योजनात्तत्त्वभावात्' इति पूर्ववाक्यार्थविरोधेन न परसंमतविक्षेपशक्तिनिवृत्तौ प्रमाणं भवितुमर्हति। (भावप्रकाशे.२,३,.संपुटयोः) ब्रह्मापरोक्षज्ञानदेहधारणयोः स्वहृदयसाक्षिकत्वं परोक्तं (शां.सू.भा,. ल.चं.विचारदशायां नोपन्यासार्हम्॥ ६०

वाक्यस्यापरोक्षज्ञानजनकत्वे प्रमाणविरहेण तस्यन मुक्तिहेतुत्वं, किंतु ध्यानस्यैवेति साधनम्। उपासनस्य ज्ञानत्वं श्रुतिसिद्धमिति ब्रह्मानन्दगुरुनारायणसरस्वती वार्तिकोक्त्यनुवादः॥ ६१

स्मृतेर्ज्ञानत्वं सूत्रभाष्ये शङ्कराचार्यैः उपनिषद्भाष्ये स्मृतेर्ज्ञानत्वं भर्तृप्रपञ्चेन च' विज्ञाय प्रज्ञांकुर्वीत' इत्यत्र प्रज्ञास्मृतिरितिचोक्तम्। ध्यानस्य तत्त्वविषयकत्वे मण्डनादिसंमतिश्च। 'विज्ञाय प्रज्ञांकुर्वीत' इत्यत्र प्रज्ञास्मृतिसन्ततिरिति परैः (शं) विवरणेन ध्यानविधिस्संभवति॥ ६२

'अनुविद्य विजानाति' इत्यत्र 'तं वा एतं देवा आत्मानमुपासते' इति वाक्यानुसारेण विज्ञानं ध्यानम्। 'ओमित्येवात्मानं ध्यायथ' 'तमेवैकं जानथात्मानम्' इति पूर्ववाक्योक्तात्मन्शब्दप्रयोगेणध्यानं ज्ञानमेव। 'आनन्दरूपममृतम्' (बृ) 'तस्मिन्दृष्टे परावरे' इति समाधिर्वक्ष्यते। 'निचाय्यतम्' इत्यत्र (क) 'विद्यामेतां योगविधिं च कृत्स्नम्' (क) इति वाक्यानुसारेण समाधिर्विवक्षितः। 'आत्मेत्येवोपासीत' इति वाक्यं परित्यज्य 'आत्मानमेव लोकमुपासीत' इति वाक्योपादानेन लोकशब्दे इच्छाविषयफलत्वस्यात्मनि प्रतिपादनेन उपासनफलस्यात्मनः अनित्यत्वं न कथञ्चिदपि सम्भवतीति सूचनम्॥ ६३

अत्र एवकारघटितत्वेन विधिः न सम्भवतीति ब्रह्मसिद्धिपञ्चपादिकाद्युक्तिर्न घटते। खण्डदेवेन 'अत्र

ह्येवापतन्ति' इत्यत्र विधेरभ्युपगमादिति निरूपणम् ॥ ६४

'अनुविद्य' 'विज्ञाय' इत्यत्र 'श्रोतव्य' इत्याद्यनुसारेण श्रवणं विवक्षितम्। आगमेनानुमानेन इति श्रोतव्य इति श्रुत्युपबृंहणयोगभाष्योदाहृतवचनेन ध्यानस्य समाधिरूपयोगसाधनत्वमेव। नतु विवरणोक्तश्रवणाङ्गत्वम्। अस्यार्थस्य याज्ञवल्क्यश्रुति श्वेताश्वतरमुण्डकादिसिद्धत्वम् ॥ ६५

मुण्डकश्रुतौ 'ततस्तु तंपश्यति' इत्यत्र 'तत' इत्यस्य श्रवणादित्यर्थकल्पनस्य (अ.सि.चं) अयुक्तत्वनिरूपणम्। ध्यानस्यैवापरोक्षज्ञानजनकत्वं मण्डनानुयायिवाचस्पतेः योगसूत्रव्याख्यातॄणां मन्वादेश्च संमतत्वम्। शङ्कराचार्याणां ध्यानस्यैव निर्विकल्पकसमाधिजनकत्वं, ततएव मुक्तिरिति (स.वे.सि.सा.सं) सिद्धान्तः अतो न ध्यानस्य श्रवणाङ्गत्वम्। पूर्वभागे विचारस्योत्तरक्रतुविधिप्रयुक्तत्ववत् वेदान्तेषु विचारस्य ध्यानविधिमूलकत्वसम्भवेन श्रवणविधिमूलकत्वं च विवरणोक्तंनिरवकाशम् ॥ ६६

मूलप्रमाणदार्ढ्येण ध्यानस्य प्रमात्वम्। श्रवणविध्यभावपक्षः सिद्धान्तलेशसङ्ग्रहे तद्व्याख्यानेच साधितः एतेन (पं.पा.वृ.वा) पञ्चपादसुरेश्वरयोः श्रवणविधिसाधनप्रयासोऽपि विफलः कठश्वेताश्वतरयोः योगोक्त्या ध्यानानन्तरकालिकसमाधिरेव सर्वत्र विवक्षितः। 'तत्कारणं साङ्ख्ययोगाधिगम्यम्' इत्यत्राधिकारिद्वैविध्यं भारतीतीर्थसंमतं नघटत इति निरूपितम्। एतद्विस्तरस्तु भावप्रकाशे तृतीयसम्पुटे द्रष्टव्यः। ॥ ६७

अध्ययनविधिवत् श्रवणविध्यभावेऽपि नानुपपत्तिः, श्रुतिसूत्रयोः सनः प्रयोगः विचारस्य रागप्राप्तत्वबोधनार्थः। विचारस्य रागप्राप्तत्वविधेयत्वपक्षद्वये बालकृष्णानन्दसरस्वतीभिः ब्रह्मसूत्रभाष्यवार्तिके रागप्राप्तत्वपक्षस्यैव युक्ततेति निरूपणम् ॥ ६८

ध्यानस्यैव विधेयत्वनिरूपणम् ॥ ६९

ध्यानस्यादृष्टद्वारा मुक्तिहेतुत्वम्। शं.आवृत्त्यधिकरणे विध्युपास्योर्व्यतिकरेणोपक्रमोपसंहाराभ्यां मुक्त्युपायोपासनरूपवेदन विधेस्सूत्रकृदभिमतत्वम् ॥ ७०

व्यतिकरेणोपक्रमोपसंहारवाक्यविचारः। 'नसवेद' इत्यस्य परैरनुपादानेऽपि भर्तृप्रपञ्चेन तदुपादानादत्रोपादानम् ॥ ७१

'न सवेद' 'आत्मानमेवावेत्' (बृ) इत्यत्र विदिधातुः 'आत्मेत्येवोपासीत' इत्युक्तोपासनपरः। एवं 'मामेव विजानीहि' (बृ) 'सम आत्मेति विद्यात्' (कौ) इत्यत्र 'तं मामायुरमृतमित्युपास्व' इत्युपासनमेव विवक्षितम्। उपासनस्य मन्दाधिकारिविषयत्वे नकिमपि प्रमाणम् ॥ ७२

'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (यो) इत्यनेन 'भिद्यते हृदयग्रन्थिः' इत्यत्र 'ओमित्येवात्मानं ध्यायथ' इति पूर्वोक्तध्यानसाध्यस्यैव ग्रन्थिमोक्षस्य विवक्षितत्वम् ॥ ७३

श्रुतिषु दृश्यादिधातुप्रयोगः भावनाप्रचयेन स्मृतौ दर्शनसमानाकारत्वपरः। उक्तार्थस्य योगसूत्रैस्साधनम्। एवमङ्गीकारे समाधिरपि संगृहीतो भवति ॥ ७४

'तत्कारणं साङ्ख्ययोगाधिगम्यम्' इत्यत्र सगुणयोग एव विवक्षितः। पूर्वोत्तरश्रुत्यनुसारात्, नतु निर्गुणोपासनम् ॥ ७५

सर्वत्रोपनिषत्सु समाधिपर्यवसितध्यानस्यैव विवक्षितत्वम्। योगस्य परमहंसानामप्यावश्यकतायाश्श्रुतिसिद्धतया गीताविवरणे मधुसूदनसरस्वतीभिः योगानादरोक्तिरनादरणीया ॥ ७६

उपनिषत्सु सामान्यवाची विद्यादिधातुः वेदनविशेषएव पर्यवस्यति । 'ब्रह्मवित्' 'ब्रह्मवेद' इत्यादावुपासनतात्पर्यकशब्दसत्वेन उपासनरूपवेदन एव पर्यवसानम् । 'आचार्यवान्पुरुषो वेद' इत्यत्राप्येवमेव। 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये' इत्यत्र विद्यायाः प्रारब्धकर्मभोगकालिकत्वप्रतिपादनेन तावत्पर्यन्तस्थितिसिद्ध्या ध्यानरूपता सिद्ध्यति ॥ ७८

सद्विद्यायामेवोत्क्रान्तिप्रतिपादनेन 'अथ संपत्स्ये' इत्यत्र संपत्तिरुत्क्रान्त्यनन्तरकालिकमेव । एवं च सद्विद्या सगुणविद्यैव । उपासनंस्यात् 'ध्रुवाऽनुस्मृतिः' (वाक्यकारवाक्यं) इति वाक्ये 'सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति छान्दोग्यवाक्यस्यैव अभिप्रेतत्वेन तत्रानुशब्दे 'स्मृतिलंभ' इत्यत्र लंभपदार्थस्याभिधानेन समाधिपर्यवसितध्यानानन्तरमेव सर्वग्रन्थिविप्रमोक्षः सर्वासूपनिषत्सु विवक्षित इत्यर्थस्य बोधनेन परसंतमतमहावाक्यस्थलेऽपि इत्थमेवार्थः वाक्यकृदभिप्रेतः ॥ 'यत्रैकाग्रता तत्राविशेषात्' इत्यत्र वक्ष्यमाणैकाग्रतापरिणामस्य समाधिपरिणामसहभावेन योगसूत्रेषु निरूपणेन समाधेस्सूत्रकृदभिप्रेतत्वेन 'आवृत्तिरसकृदुपदेशात्' इत्यत्रासम्प्रज्ञातसमाधिपर्यन्ता वृत्तिः सूत्रकृतो विवक्षितेति प्रतीयते । अतस्साक्षात्काररूपत्वभक्तिरूपत्वे समाधितात्पर्येणैव मुक्त्युपायज्ञानसामान्ये सिद्ध्यतः ॥ ७९

'ध्यानार्चनप्रणामादिः' इत्यादि—अनुध्यानरूभक्त्येकलभ्यः' इत्यन्तसूक्तिविवरणे समाधिविवक्षा व्यासार्यैः स्पष्टमुक्ता । शरणागतिदीपिकायां शतदूषण्यां, तत्त्वटीकायां न्यायपरिशुद्धौ च आचार्यपादैस्समाधिः स्फुटं निरूपितः । अतः समाधिविवक्षा संप्रदायसिद्धैव ॥ 'अपवर्गसाधनभूताम्' इत्यनेन विवक्षिताप्रतीकलंबनपञ्चाग्निविद्यायाः कैवल्यानुभवानन्तरमेव गीतोक्तादिशा निरतिशयभक्तिरूपत्वम् ॥ ८०

'नायमात्मा' इति श्रुतौ भक्तिरूपतानापन्नकेवलश्रवणमननादेरेवोपायत्वनिषेधः वेदार्थसंग्रहानुसारात् ॥ ८१

वेदार्थसंग्रहोक्तार्थस्यैव मुण्डकश्रुतिपूर्ववाक्यपर्यालोचनया युक्तत्वस्थापनम् ॥ ८२

परज्ञानपरमभक्त्यादिसम्पादनमेव वरणम् ॥ ८३

'ददामि बुद्धियोगं तम्' इत्यत्र 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः' इति पूर्ववाक्यानुसारेण सविशेष योगः समाधिरूपः विवक्षितः । एतेन 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र यच्छब्दे समाधिमतो विवक्षितत्वे समाध्यनन्तरप्राप्तिपूर्वकालाक्षितयावदवस्थासंपादनमेव वरणम्, अत्र भट्टार्याणामपि संमतिः ॥ ८४

कठोपनिषदि 'तमक्रतुं पश्यति वीतशोको धातुःप्रसादात्' इत्युक्त्या ध्यानानन्तरकालिकं दर्शनं परानुग्रहमूलकमेवेति सिद्ध्या वरणश्रुत्यैकरस्यम् । एतेन 'ततस्तुतं पश्यति निष्कलं ध्यायमानः' इति मुण्डकश्रुतावपि स एवार्थः, नतु विवरणसम्मतं वाक्यजन्यापरोक्षज्ञानम् 'तंत्वौपनिषदं पुरुषम्' इत्यत्र औपनिषदमिति ताद्धितप्रत्ययस्य अपरोक्षज्ञानवाचकत्वस्य वाचस्पत्यादेरसंमतत्वाच्च । ध्यानस्य स्मृतित्वेऽपि न भ्रमत्वमिति धर्मकीर्त्यादेस्संमत एवार्थः मण्डनवाचस्पत्यादिभिस्सिद्धान्तः ॥ ८५

'तंत्वौपनिषदं पुरुषम्' इत्युक्तौपनिषदपुरुस्य 'रातिर्दातुःपरायणं तिष्ठमानतद्विदः' इत्यत्र विद्याफलप्रदत्वोक्त्या वाक्यजन्यसाक्षात्कारस्य दृष्टद्वारा मुक्तिहेतुत्वमिति विवरणसिद्धान्तः श्रुतिविरोधात् वाक्यस्यापरोक्षज्ञानजनकत्वे प्रमाणविरहात् दार्शनिकासंप्रतिपत्तेश्चानुपादेयः ॥ ८६

उपासनभक्त्योरेकव्यतिक्तत्वम् । 'तमेव विदित्वा' इत्यत्रापि (श्वे) योगस्य विवक्षितत्वम् ॥ ८७

'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुत्यर्थः । षष्ठेऽपि 'तमेव विदित्वा' इत्यत्र भक्तिरूपज्ञानस्य

विवक्षितत्वम् ॥ ८८

'तमेतं वेदानुवचनेन' इत्यत्र (शं) उपनिषद्भाष्योक्तार्थः ॥ ८९

तैत्तरीय .शं. भाष्येऽपि कर्मणां विद्यार्थत्वं एतज्जन्मन्यनुष्ठितानां जन्मान्तरानुष्ठितानामपि कर्मणां विद्याहेतुत्वम् । 'यज्ञेन दानेन' इत्यत्र तृतीयायाः करणार्थकत्वम् । (तत्त्वप्रदीपिका) यज्ञादीनां विद्यार्थत्वं च 'तमेतं वेदानुवचनेन' इति श्रुतेः ब्रह्मानन्दसरस्वत्युक्तार्थः (वे.मु) ॥ ९०

'आप्रयाणात्तत्रापिहि दृष्टम्' इति सूत्रस्य परसम्मतार्थपर्यालोचनपूर्वकं 'आवृत्तिरसकृदुपदेशात्' इति सूत्रोक्तविद्यासामान्यविषयकत्वस्थापनम् ॥ ९१

कर्मणां शमदमादीनां च विद्योत्पत्तिहेतुत्वे वाक्यकारसम्मतिः ॥ ९२

विवेकादिसाधनसप्तकपरवाक्य, द्रमिडभाष्याद्यनुवादः ॥ ९३

'क्रियावानेष ब्रह्मविदां वरिष्ठः' इतिश्रुत्यर्थः । अत्र क्रियापदेन ज्ञानातिरिक्तसर्वाश्रमिसाधारणक्रियाऽपि विवक्षिता । भूमविद्यावाक्यस्य मुण्डकवाक्यस्यचैकार्थ्यम् ॥ ९४

'क्रियावानेष' इति द्रमिडभाष्योक्तनिर्वचनस्य युक्तत्वम् ॥ ९५

'नायमात्मा बलहीनेन' इति निर्वचनवाक्येन एतदुत्तरार्धे 'एतैरुपायैर्यतते यस्तु विद्वान्' इत्यत्रोदाहरिष्यमाणपराशरवचनोपबृंहणानामपि सूचनेन 'यमेवैष' इतिपूर्वार्धे ब्रह्मव्यतिरिक्तोपायानां निषेधस्याघटनम् । 'नास्त्यकृतःकृतेन' 'नह्यध्रुवैः' इति श्रुत्योः उपासनस्य मुक्तिहेतुत्वव्यवच्छेदस्यानभिप्रेतत्वम् ॥ ९६

'परीक्ष्यलोकान्' 'मन्त्रेषु कर्माणि' इति मुण्डकश्रुतिप्रघट्टके ज्ञानपूर्वककर्मविवक्षया वाक्यार्थोऽवसेय इति निरूपणम् । अतिवादित्वविशुद्धसत्त्वत्वात्मक्रीडत्वादिप्रतिपादकभूमविद्यावाक्यमुण्डकवाक्यैकार्थ्येन ब्रह्मप्राप्तिहेतुज्ञानस्य सर्वाश्रमकर्मापेक्षत्वम् ॥ ९७

'विद्यांचाविद्यां च' इतिश्रुतेः ब्रह्मसिद्धौ भामतीविवरणे (बृ) वार्तिकेचोक्तार्थानुवादः, तत्पर्यालोचनंच ९८

(स.वे.सि.सा.सं,.ई.भा.शं.तै.उ.भा,.शं) शङ्कराचार्योक्तार्थानुवादः । तै.भाष्ये विद्वद्विषयत्वेनोक्तार्थः प्रमाणमालायामानन्दबोधयतिभिरुक्तः, सर्वापेक्षाऽधिकरणे रत्नप्रभायामपि । अपरोक्षज्ञानपर्यन्तं परमते कर्मणामुपयोगः, नतु चरमशरीरपातावधि चरमशरीरपातपर्यन्तं सिद्धान्ते ध्यानावश्यकत्वेन तावत्पर्यन्तं कर्मणामुपयोगः चरमशरीरपातपर्यन्तं प्रारब्धकर्मनाशाभावेन मुक्तिहेतुज्ञानस्यावश्यकतया तावत्पर्यन्तं कर्मोपयोगः उदाहृतश्रुतिषु विवक्षितः । विद्यायाः कर्मक्षयहेतुत्वं कर्मजन्यनिग्रहक्षयहेतुत्वमेव, तेन परानुग्रहमूलैव ब्रह्मप्राप्तिरित्यर्थोऽपि सिद्ध्यति ॥ ९९

'विद्यां च' इति श्रुतेः संहितान्तिमाध्यायस्थत्वेन प्रागुक्ताग्निहोत्रादिकर्मणां विद्याङ्गत्वमत्र विवक्षितमिति स्फुटम् । विद्याप्रतिबन्धकक्षयार्थं कर्मणामुपयोगः परैरप्युक्तः । (सू.भा) 'तमेतं वेदानुवचनेन' इत्यादिश्रुतौ सर्वाश्रमविहितकर्मणां विवक्षायाः याज्ञवल्क्यस्मृतौ प्रतिपादनेन 'शान्तोदान्त उपरत' इत्यत्रोपरतशब्दस्य बाह्यवृत्त्युपरतिकर्मोपरतिद्वयमपि प्रवृत्तिनिमित्तमभिधाय सन्न्यासिन एव विद्याऽधिकारइति (स.वे.सि.सा.सं) परसिद्धान्तस्यायोगः 'तपसा कल्मषं हन्ति' इति मनुवचनेनापि सर्वाश्रमिणां विद्याऽधिकारः ॥ १००

'विद्यां च' इति श्रुतौ अविद्याशब्दस्य 'कुर्वन्नेवेह' इति पूर्वश्रुत्युक्तसर्वकर्मपरत्वम् । अत्राद्वैतपरिभाषातद्व्याख्ययोः उपरतशब्दस्य शङ्कराचार्योक्तार्थः दूषितः 'तदेवं जन्मान्तरशतानुष्ठित' इत्यादिपूर्वपक्षे

'परीक्ष्य लोकान्' इत्यादौ गुरुमतानुसारेण श्रौतक्रमः अर्थक्रमोऽपि । (त.मा) अनुसारेण मुख्यक्रमः पाठक्रमश्च पूर्वमेवोपपादितः । परीक्ष्य लोकान्' इत्यादिप्रघट्टकस्य सिद्धान्तिसम्मतार्थपरत्वमेव, नतु परसम्मतार्थपरत्वम् ॥ ११३

नित्यानित्यवस्तुविवेकादिपरपरग्रन्था(स.वे.सि.सा.सं,.पं.पा)नुवादः ॥ ११४-—११५

भामतीग्रन्थानुवादः ॥ ११६

उक्तार्थपर्यालोचनम् । परमतेऽपि ब्रह्मज्ञानफलस्य वृत्तिरूपस्य तदन्यस्यचानित्यत्वमेव ॥ ११७

'शतंचैका च' इति श्रुतेः उपनिषद्द्वयेऽपि सत्त्वेन एकत्र (कठे) निर्गुणविद्या अन्यत्र (छां) दहरविद्या सगुणविद्येति विभागोक्तेरयोगेन गतिद्वारकब्रह्मविद्याफलस्यापि नित्यत्वमेवेष्टितव्यम । कूटस्थव्यतिरिक्तस्य न नित्यत्वमिति परसंमतार्थोऽपि तदुदाहृतश्रुतिभिर्न सिद्ध्यति ॥ ११८

'शान्तोदान्त' इत्यत्र समाधेः पूर्वं शमदमादेरपेक्षितत्वेन श्रवणे तदपेक्षोक्तिर्न घटते । तादृशसमाधेरत्रापेक्षायां प्रमाणाभावात् । 'सन्नयासयोगात्' 'त्यागेनैके' इत्यादौ सन्न्यासाश्रमो न विवक्षितः, एवमापस्तम्बधर्मसूत्रादिष्वपि । सन्न्यासस्य श्रवणाङ्गता क्वापि न प्रमाणसिद्धा ॥ ११९

परोदाहृतप्रमाणैः सन्न्यासस्य श्रवणाङ्गता न क्वापि सिद्ध्यतीति निरूपणम् । याज्ञवल्क्यस्मृतौ सर्वेषां श्रवणाधिकारः स्पष्टमुक्तः । सद्विद्यायां गृहस्थात् पितुःश्वेतकेतोः विद्याग्रहणं व्यक्तम् ॥ १२०

'वरुणं पितरमुपससार' इत्यादौ विचारविधेः विवरणे प्रतिपादनेन सन्न्यासस्य श्रवणाङ्गत्वं न संभवति, संक्षेपशारीरकेऽप्येतदर्थस्योक्त्या सन्न्यासिना गुरुणोपदिष्टस्यैव (तत्रैव)मुक्तिहेतुत्वोक्तिः अनुपादेया । अतः ब्रह्मप्राप्तिसाधनज्ञानस्य सर्वाश्रमकर्मापेक्षत्वोक्तिः युक्तैव । ज्ञानवैधुर्येण कर्मानुतिष्ठतां धूमादिमार्गेण पुनरावृत्तिः ज्ञानपूर्वकं कर्माचरतामुपासकानां अर्चिरादिद्वारा गच्छतामपुनरावृत्तिः इति प्रतिपादयन् सूत्रकारोऽपि 'तद्यथेह' इति श्रुतेः सिद्धान्तिसम्मतार्थ एव युक्तइति सूचयति । परसम्मतस्येहामुत्र फलभोगविरागादेः उत्तरमीमांसाश्रवणानन्तरमेव संपत्तिः नत्वन्यथा ॥ १२१

पञ्चपादिकोक्त अथशब्दार्थपर्यालोचनम् । देवानामुपनयनाध्ययनयोरभावेऽपि ब्रह्मविचारे प्रवृत्तिः सन्न्यासाध्ययनयोरभावेन परमतेऽपि नोपपादयितुं शक्यते ॥ १२२

सगुणब्रह्मविद्यया देवभावं गतानां सन्न्साभावेऽपि दीक्षितोक्तः ब्रह्मविचारः गीताविवरणे देवानां श्रवणाद्यभावेऽपि स्वयमाविर्भूतेन वेदान्तवाक्येन तत्त्वज्ञानादेः मधुसूदनसरस्वत्युक्त्या अनुपादेयः । अस्यार्थस्यैव शङ्करभाष्याद्युक्त्या सांप्रदायिकत्वात् ॥ १२३

उद्गीथाद्युपासनविषये विवरणोक्तस्य भास्करभाष्योक्तार्थदूषणस्य परिहारः ॥ १२४

सविशेषब्रह्मज्ञानस्य मुक्तिहेतुत्वं वृत्तिकारसम्मतमेव वाक्यकारसम्मतं युक्तमिति निगमनम् ॥ १२५

महापूर्वपक्षावतरणम् । निरवयवस्य विकारानित्यगुणादेरसंभवात् परब्रह्मणः कूटस्थत्वं न संभवति । वृत्तिकारमते परिणामिनित्यमेव परंब्रह्म स्यात्, अतः 'अद्वैतमेव परिरक्षति वाक्यकारः' इत्येव सिद्धान्तः । पूर्वमीमांसकसम्मतं विशेष्यविशेषणभावे सामानाधिकरण्यं गौणम् इति मुख्यसामानाधिकरण्यमेव 'अथातो ब्रह्मजिज्ञासा' इत्यत्र विवक्षितम् ॥ १२६

शङ्कराचार्याद्युपदर्शितमुख्यगौणसामानाधिकरण्यनिरूपणम्, परंब्रह्म निर्विशेषं परविद्या तद्विषयिणी

पराशरवचनानां 'अहमात्मा' इति गीतावचनस्यचोपादानम् ॥ १४१

'अहमात्मा' इत्यस्य वेङ्कटनाथोक्तार्थः। (ब्र.गिरि) 'अशेषविशेषप्रत्यनीकम्' इत्यत्र विवक्षितविवरणोक्तानुमानानुवादः ॥ १४२

'मिथ्यात्वं नाम प्रतीयमानत्वपूर्वक' इत्यादिवाक्यस्य न तादूप्येण मिथ्यात्वलक्षणपरत्वम्, किंतु ख्यातिबाधान्यथाऽनुपपत्त्या मिथ्यात्वमिति बोधनमुखेन पञ्चपादिकाविवरणाद्युक्तसर्वमिथ्यात्वसंग्राहकत्वम्। तत्र सदसद्विलक्षणत्वं पञ्चपादिकोक्तम्, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं विवरणोक्तं ज्ञाननिवर्त्यत्वमपि ॥ १४३

स्वात्यन्ताभाववति प्रतीयमानत्वमपि मिथ्यात्वम्। तेन 'मिथ्याशब्दो द्व्यर्थः अपह्नवचवनोऽनिर्वचनीयतावचनश्च' इति पञ्चपादिकोक्तदिशा अपह्नवघटितं त्रयमनिर्वचनीयत्वंचात्राभिप्रेतम् ॥ १४४

रज्ज्वाद्यधिष्ठानसर्पादेः मूलाज्ञानकार्यत्वमवस्थाज्ञानकार्यत्वमिति विवरणोक्तपक्षद्वयम् ॥ १४५

मण्डनमिश्रवाचस्पत्योः जीवाज्ञानस्य संमतत्वेऽपि ब्रह्माज्ञानवादस्यैव बहूनामद्वैतिनां संमतत्वात् 'एवं चिन्मात्रवपुषि' इत्यादिना ब्रह्माज्ञानवादोक्तिः। आरम्भणाधिकरणे जीवाज्ञानवादविचारः दृष्टिसृष्टिपक्षोऽपि एकः वेदार्थसंग्रहे अन्यः आरम्भणाधिकरणे। अत्र सृष्टिदृष्टिपक्ष एव। विवरणोक्तः बाधपदार्थः ॥ १४५

अविद्यायां पं.पा. उदाहृत 'अनृतेनहि प्रत्यूढाः' इति श्रुत्याद्युपादानम्। श्रुतेः भाष्य अद्वैतासिद्धि लघुचन्द्रिकोक्तार्थः ॥ १४६

'नासदासीत्' इति श्रुतेरद्वैतसिद्ध्याद्युक्तार्थः। 'मायांतु' इत्यस्याविवरणोक्तार्थः ॥ १४७

'मायांतु' इत्यस्य (अ.सि.ल.चं) उक्तार्थः ॥ १४८

'इन्द्रो मायाभिः' इत्यस्य भाष्यवार्तिकगुरुचन्द्रिकोक्तार्थः ॥ १४९

'अनादिमाययासुप्तः' इति गौडपादकारिकाऽनुवादः। 'ज्ञानस्वरूप' इत्यादीनां श्लोकानां (वि.पु) अविद्यासाधकत्वेन उपन्यासः ॥ १५०

'यदाह्येवैष एतस्मिन्' इत्यादेः (शं.उ) भाष्यानुवादः ॥ १५१

'भिद्यते हृदयग्रन्थिः' इत्यस्य (शाङ्करोपनिषद्भाष्य,ब्रह्मसिद्धि, सम्बन्धवार्तिक) परोक्तार्थानुवादः। 'प्रमादंवैमृत्युम्' इत्यस्य (शं) भाष्यानुवादः ॥ १५२

'सत्यंज्ञानम्' इत्यस्य पदार्थनिष्ठसामानाधिकरण्यवाक्यस्य शोधकवाक्यत्वम्। 'अथ योऽन्याम' इत्यादेः क्रमं विहायोपादाने बीजम्। 'तत्त्वमसि' इति तात्पर्यलिङ्गोपेता श्रुतिः नवकृत्वः अभ्यस्ता ॥ १५३

'आत्मेतितूपगच्छन्ति' इति सूत्र(शं)भाष्यम् बन्धस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वात् मोक्षोपपत्तिः जगतः सत्यत्वे अनिर्मोक्षप्रसङ्गश्च, 'ननुच सकलभेदनिवृत्तिः' इति भाष्यावतरणम् ॥ विवर्तं औत्मकत्ववादिनां सगुणात्मवादिपूर्वमीमांसकविरोध इति शङ्का ॥ शास्त्रस्य प्रत्यक्षाविरुद्धार्थप्रतिपादनम् ॥ १५४

अहमर्थस्यासम्भिन्नेदंप्रत्ययत्वम् अविद्यावादस्य सत्यद्वयस्य असत्यात्सत्यसिद्धेश्च वार्तिकोक्तानिरसनप्रकारः। वार्तिकोक्तैकात्म्यव्यवहारोपपत्तिः। बुद्धस्य सर्वज्ञत्वनिराकरणं कुर्वता तत्र तत्र वैदिकसर्वज्ञनिराकरणे न तात्पर्यम् संमार्गाधिकरणे सर्वज्ञस्य सिद्धान्तितत्वात्। आकृतिव्यक्तयोरिव शरीरशरीरिणोः शब्दाद्बोधः ॥ १५५

आकृत्यधिकरणपूर्वपक्षसिद्धान्तसूत्रयोरपि आकृतिव्यक्तयोरविभागकथनेन तस्यैव संमार्गाधिकरणे सामानाधिकरण्यप्रयोजकत्वोक्त्या विशेष्यविशेषणभावे सामानाधिकरण्यमेव मुख्यमितिसिद्धया एवं सामानाधिकरण्यस्य

गौणत्वेन 'अथातो ब्रह्मजिज्ञासा' इति मुख्यसामानाधिकरण्यार्थं सूत्रमिति (पं.पा) उक्तेः भट्टासम्मतत्वम्
आत्मवादे आत्मनः परसम्मतकोटिस्थत्वं नास्तीति, प्रत्यक्षसूत्रे मुक्तानां सर्ववस्तुविषयकप्रत्यक्षमिति च साधनम् ॥ १५६

ज्ञानमात्रात्मवादिनां मोक्षार्थप्रवृत्तिः वेदप्रामाण्यं च न घटते। मुक्तौ परमात्मप्राप्त्यवस्थानङ्गीकारेण मुक्तिरपि न घटते। उपनिषदां कर्मकर्तृप्रतिपादनेन नैराकाङ्क्ष्ये नैव तात्पर्यं भट्टपादानां, व्याकरणाधिकरणादिविरोधात्। एवं च पूर्वमीमांसकानामविद्या ऐकात्म्यवादिप्रतिपक्षितया 'ननु च सकलभेदनिवृत्तिः' इत्यादिना पूर्वमीमांसकशङ्कैव ॥ १५७

'पूर्वोत्तरयोर्दुष्टकारणजन्यत्व' इत्यादौ शाबरभाष्यमेव मूलम् ॥ १५८

प्रमाणमालायामानन्दबोधयत्युक्तप्रकारेणैव विरोधे विषयव्यवस्था। तत्र ब्रह्मसिद्धिरपि मूलम् ॥ १५९

ब्रह्मसिद्धिग्रन्थानुवादः। न्यायमकरन्दे 'मणिप्रदीपप्रभयोः' इति धर्मकीर्तिवचनमनुसृत्य तात्त्विकातात्त्विकप्रामाण्योपपादनपूर्वकं (प्रकरणपञ्चिका) शालिकानाथोक्तेः व्यामूढभाषितत्वकथनपरग्रन्थानुवादः ॥ १६०

बाधकताप्रयोजकानवकाशत्वे षड्विधतात्पर्यलिङ्गोपेतत्वं प्रयोजकं गुणवादसूत्राविरोधः भामत्यामुक्तः। प्रत्यक्षस्यातात्त्विकं प्रामाण्यमिति गुरुचन्द्रिका ॥ १६२

अपच्छेदन्यायः 'विद्वान्नमरूपाद्विमुक्तः' 'तरति शोकम्' इत्यादेरनवकाशत्वम् एतन्निश्चयेन प्रत्यक्षादीनां भ्रमत्वम् ॥ १६३

पूर्वकाण्डवाक्यवदुपनिषद्यपि सगुणब्रह्मोपासनावाक्यानां बाध्यत्वमेव निर्गुणश्रुत्या अपच्छेदन्यायेनैव बाधः १६४

'पराऽस्य शक्तिः' इति श्रुतेः अविद्यापरत्वम्। 'अपहतपाप्मा—सत्यकामस्सत्यसङ्कल्पः' इति श्रुतेः (सि.ले.सं.अ.सि.,.ल.चं.सं.शा) परोक्तार्थानुवादः ॥ १६५

जर्तिलयवाग्वधिकरणविचारः। 'अरूपवदेवहि तत्प्रधानत्वात्' इति सूत्रोदाहृत (शं.भा) श्रुतिषु आद्यायाः 'अस्थूलम्' इति श्रुतेरुपादानम् ॥ १६६

अस्थूलमिति वाक्यस्यार्थः (शं.उ,अ.र.र.ब्र.सि) 'सत्यंज्ञानं' 'निर्गुणः, निरञ्जनम्' इति श्रुत्यर्थः १६७

'निर्गुणः निरञ्जनम्' इत्युपक्रमोपसंहाराभ्यां निर्गुणत्वम्। 'सत्यंज्ञानम्' इत्यादेः सगुणपरत्वशङ्का ॥ १६८

सामानाधिकरण्यासम्भवान्निर्गुणपरत्वम्। 'अविरुद्धविशेषण' इत्यादिश्लोकस्य मधुसूदनसरस्वतीविवरणस्यानुवादः ॥ १७१

'तत्त्वमसि' इत्यत्र 'सत्यंज्ञानम्' इत्यत्रच एकएव न्यायः सक्षेपशारीरकोक्तः, अतः 'सत्यंज्ञानम्' इति श्रुतिविचारेणैव तत्त्वमसीति वाक्यं विचारितमिति 'सत्यंज्ञानम्' इत्यत्रैव भाष्ये अधिकविचारः। सामानाधिकरण्यपरसंक्षेपशारीरकश्लोकतद्व्याख्याऽनुवादः ॥ १७२

'प्रातिपदिक' इत्यादिसूत्रानुसारेण (सं.शा.,न्या.दी.ल.चं.प्र.मा.,अ.सि) अखण्डार्थत्वोपपादनम् ॥ १७३

ल. चन्द्रिकोक्तसामानाधिकरण्यानुवादः अखण्डार्थत्वपरिष्करणं च। तस्य श्रीभाष्यवावैयर्थसूचनम् ॥ १७४

सत्यादिपदानामितरव्यवच्छेदेन सार्थक्यं न्यायमकरन्दोक्तम्। इतरव्यावृत्तेरशाब्दत्वं वार्तिककल्पतरूक्तम् अद्वैतसिद्ध्युक्तार्थानुवादः ॥ १७५

सिद्धान्तबिन्दुन्यायरत्नावल्युक्तार्थानुवादः। स्वरूपलक्षणे फलतो व्युदासस्य (अ.सि) तद्व्याख्यारीत्योपपादनम्। 'सत्यंज्ञानम्' इत्यत्रोपनिषद्भाष्य.शं. तद्विवरणानुवादः ॥ १७६

'सलिल एको द्रष्टाऽद्वैतो भवति' इत्यत्र 'प्राज्ञेनात्मना संपरिष्वक्तः' 'ततोऽन्यद्विभक्तम्' इति श्रुत्याविरुद्धार्थः विवक्षितः। नतु परसंमतार्थः। 'यत्र वा अन्यदिव स्यात्' इत्यादिश्रुत्यर्थः॥ २३८

'अत्र पिता अपिता भवति' इत्यादेः पितृत्वेन ज्ञानाभावपरत्वम्, अन्यथाऽनुभवविरोधः। सुषुप्त्य नन्तरप्रबोधस्य प्रळयानन्तरसृष्टिसाम्यतात्पर्येण सुषुप्त्यनन्तरं 'यथाऽग्नेः क्षुद्राविष्फुलिङ्गाः' इति सृष्ट्युक्तिः। सुषुप्तौ शोकज्ञानमात्रविरहप्रतिपादनात्॥ २३९

'स यथा कुमारो वा' इति श्रुतौ दुःखाभाव एव विवक्षितः। सुषुप्तौ ज्ञानपूर्णविकासविरहः, सुषुप्त्यनन्तरप्रबोधे प्रलयानन्तरसृष्टौ च ऐकरूप्यस्य च पूर्वमुक्तया ज्ञानविकासस्य हयशिरोऽनुग्रहमूलकतया शिशुब्राह्मणे तद्रूपमभिधाय 'सवा अयमात्मा' इत्यादौ स्रष्टुः राजत्वं स्फुटम्' आत्मैवेदमग्र आसीत्' इत्यादावुपक्रमोक्तात्मन्शब्दप्रयोगः उपसंहारस्योपक्रमैकरूप्यबोधनार्थः॥ २४०

'स वा अयं सर्वासु पूर्षु पुरिशयः' इति वक्ष्यमाणार्थएव उपक्रमे आत्मन्शब्दे 'स एष इहप्रविष्टः इत्यत्रचोक्तः असङ्गश्रुतिः प्रधानपुरुषतत्संयोगाः इत्यादिवदाद्भिरसांख्यैः निर्गुणात्मनि संयोगं न निषेधतीति संयोगस्य परिणामत्वं नाभ्युपगतम्, किंतु जाग्रत्स्वप्नकालिकपदार्थसम्बन्धाभावम्। 'संबन्धानुपपत्तेश्च' इति सूत्र(शं) भाष्ये आगमबलेन संबन्धस्याङ्गीकारोक्त्या अन्तर्यामित्वधर्माङ्गीकारे परब्रह्मणि न बाधकम्। स्वपरनिर्वाहकत्वेन अनवस्थापरिहारः॥ २४१

(न्या.वा.टी) वाचस्पत्युक्तसंबन्धोपपत्त्यनुवादः अन्तर्यामित्वस्य श्रुत्यादिभिः ज्ञानविकासार्थत्वसिद्ध्या 'मच्चैतन्यावभास्यत्वात्' इति उक्तपुरुषशब्दार्थयोगः 'नेतिनेति' इतिश्रुत्यनन्तरं 'तंत्वौपनिषदम्' इति श्रुतिप्रवृत्त्याक्षेपः तत्परिहारश्च॥ २४२

'तस्योपनिषत्—अथ नामधेयम्' इति 'नेति नेति' इति वाक्यानन्तरवाक्ये शक्त्या प्रतिपाद्यस्य पूर्वप्रस्तुतजगत्कारणस्य सर्वान्तर्यामित्वबोधन एव राजकुमारनयेऽपि सम्यक्प्रकाशितो भवति। एवं च 'स एष इहप्रविष्ट' इत्यत्र पुरुषशब्दार्थशरीरित्वस्यैव विवक्षितत्वेनात्मन्शब्देऽपि सएवार्थोऽभिप्रेत इति राजकुमारन्यायसम्प्रदायसूचितपारतन्त्र्यप्रतिपत्तिफलकान्तर्याम्यभेदज्ञानमेव विवक्षितम्॥ २४३

'ऐतदात्म्यमिदं सर्वम्' इत्यत्र 'सर्वाःप्रजाः' इति पूर्ववाक्यप्रस्तुतजीवानामपि विवक्षितत्वेन श्वेतकेतुशब्दाभ्यासेन च 'तत्त्वमसि' इत्यत्रान्तर्याम्यभेद एव विवक्षितः। 'एषम आत्माऽन्तर्हृदये' 'ऐतदात्म्यम्' इति वाक्यद्वयस्य प्राप्तिप्रतिपादकवाक्ययोश्च ऐकरस्येन 'अर्भकौकस्त्वात्' इति सूत्रोक्तादिशा राजकुमारनयेन प्रागुक्तप्रतिपत्तेः फलत्वनिर्धारणम्। 'शब्दविशेषात्' इत्यत्र 'एषम आत्मा' इति श्रुतौ जीवब्रह्मविवक्षाबोधनेनोक्तार्थदार्ढ्यम्॥ २४४

'न वक्तुरात्मोपदेशात्' इति सूत्रे 'सम आत्मा' इत्यत्र इन्द्रान्तर्याम्येव विवक्षितः। 'मामेव विजानीहि' इत्यत्र 'शास्त्रदृष्ट्यातूपदेशः' इत्यनेन अन्तर्याम्येव विवक्षित इति निर्धारणम्। 'उभयेऽपिहि भेदेन' इति सूत्रे 'एषत आत्मा' (२२.काण्वपाठ) 'सत आत्मा' (२४.मा.पाठ) इत्यभ्यस्तवाक्ये जीवब्रह्मभेदानिर्धारणेनापि प्रागुक्तार्थः स्थापितः॥ २४५

'भिन्नमेनम्' इत्यनभिधाय 'भेदेनैनम्' इत्यभिधाने बीजम्। 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्रापि न परसम्मतार्थः, अपितु वृत्तिकारसम्तार्थ एव युक्तः। 'वैकुण्ठःपुरुषः' इति सहस्रनाम(शं)भाष्ये प्रागुदा

हृतबृहदारण्यकश्रुत्युक्तनिर्वचनत्रयस्य सिद्धान्ते स्वारस्यम् ॥ २४६

'अव्ययःपुरुषः' इत्यस्य (शं)भाष्ये 'पुरूणि फलानि सनोति ददाति' इति पुरुषशब्दार्थः 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणम्' इत्यत्र प्रतिपादितः ब्रह्मशब्दार्थबृंहणानुगुणः सिद्धान्त एव सङ्गतः । 'सवा अयमात्मा' 'तदेतद्ब्रह्म सर्वानुभूः' इति वाक्यद्वयस्य सिद्धान्त एव स्वारस्यम् ॥ २४७

कठ,छान्दोग्य, बृहदारण्यक,तलवकार,श्वेताश्वतरवाक्यानां प्रागुक्तैकार्थ्येन सिद्धान्त एव स्वारस्यम् ॥ २४८

एवं कैवल्यमुण्डकोपनिषद्वाक्यानामपि। 'सवा अयं सर्वासुपूर्षु' इति निर्वचनेन रातिर्दातुःपरायणम्' इत्युक्त्या वेदपूर्वोत्तरभागयोः तात्त्विकप्रामाण्यबीजप्रदर्शनेन 'एष पन्थाः एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इत्यत्र कर्मब्रह्मणोः तात्त्विकप्रमाविषयत्वमेव विवक्षितम् ॥ २४९

'नायमात्मा प्रवचनेन लभ्यः' इति कठश्रुतेः परोक्तार्थः, तत्पर्यालोचनं सिद्धान्तार्थश्च ॥ २५०

'नायमात्मा प्रवचनेन लभ्यः' इति मुण्डकश्रुतेः परोक्तार्थः तत्पर्यालोचनं सिद्धान्तार्थश्च । अनया श्रुत्या परप्राप्तिहेतुत्वरूपं ब्रह्मशब्दार्थबृंहणत्वं दर्शितं भवति । एवं 'एषपन्था एतत्कर्म एतद्ब्रह्म' इत्यैतरेयोपनिषदुपक्रमोक्तं ब्रह्मणः पुरुषार्थहेतुत्वं 'सएतेन प्राज्ञेनात्मना अस्माल्लोकादुत्क्रम्य' इत्यादिद्वितीयारण्यकान्त वाक्यं मोक्षहेतुत्वेनोपसंहृतम् । एतेन कार्यकारणभावस्य सांवृतत्वं परिव्राज एव ब्रह्मविद्यायामधिकार इत्यादेरनवकाशः ॥ २५१

'एतत्सत्यम्' इत्यत्र कर्मब्रह्मणोरुभयोः तात्त्विकप्रमाविषयत्वं विवक्षितम् । व्यावहारिकसत्याभ्युपगन्तृ परमते व्यवहारातीतदशैव परमार्थदशा, सुषुप्तयवस्था च सा सुषुप्तावविद्यायाः भानेन मुक्तिवैलक्षण्यं उपपादनीयं भवति प्रागुपनिषदुक्तब्रह्मप्राप्तिदशा व्यवहारातीतदशा नैव भवतीति सत्यद्वयकल्पना श्रुतिविरुद्धैव। अतः उपासनद्वारैव विचारस्य मुक्तिसाधनत्वम् । अयमर्थः 'जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यात्' इत्यत्र 'त्रैविध्यप्रसङ्गादिति' व्याख्याने दोषं मनसि निधाय उपासनात्रैविध्यपरतया परैरपि व्याख्यानकरणेन तत्रैव वृत्तिकारसम्मतत्वेन शाण्डिल्यविद्येव प्रतर्दनविद्याऽपि सगुणविद्यैव । शाण्डिल्यविद्यायां च उपासनेतरतमभावानापन्नफलस्य लाभ इत्यर्थः निर्धारयिष्यते ॥ २५२

परमात्मप्राप्त्यवस्थैव मुक्त्यवस्था । 'तंत्वौपनिषदं पुरुषम्' 'रातिर्दातुःपरायणम्' इत्यत्रापि सैवप्रतिपादिता । 'सर्वंह पश्यःपश्यति' इति भूमविद्यावाक्यानुसारेण 'यस्य देवे पराभक्तिः—तस्यैते कथिताह्यर्थाः प्रकाशन्ते' इति श्वेताश्वतरोपनिषदन्ते भक्तेःपर्वभेदेन मुक्तिहेतुत्वमपि विवक्षितम् ॥ २५३

श्रुतिषु जीवब्रह्माभेदविवक्षायाः असम्भवेन 'तेषां ज्ञानी नित्ययुक्त एकभक्तिः' इत्युक्ता भक्तिःपरमते नघटे। 'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र सविशेषविद्यैव विवक्षिता ॥ २५४

उपलक्षणधर्मस्यापि उपलक्षितबोधे प्रकारतया भानस्य सर्वसंमतत्वेन परोक्ताखण्डार्थत्वायोगः ॥ २५५

जडे आवरणकृत्याभावात् सन्मात्रग्राहिप्रत्यक्षवादः अनुभवविरोधादनुपादेयः । बौद्धोक्तधर्मधर्मिभावापलापादिः शब्दप्रामाण्यवादिभिः नाभ्युपेयः। बाह्यार्थापह्नववत् स्वप्रकाशापह्नवस्यापि संभवात्। निर्विशेषस्यैवा सिद्धिदशायां पूर्वमीमांसान्यायोऽपि न संभवति । पूर्वमीमांसायां बाधस्थले प्रामाण्यस्य न हानिः व्यावहारिक पारमार्थिकविभागाभावात् । परमतेतु बौद्धोक्तयुक्तिभिः प्रपञ्चनिषेधे स्वप्रकाशस्यापि ततएव निरासे बौद्धानभिमतपूर्वमीमांसान्यायाः परेषां न समीचीनाः ॥ २५६

प्रमाविषयत्वरूपायाः 'तत्त्वमसि' इत्यत्रापि बोधस्सम्भवतीति तत्परित्यागोऽनुचितः ॥ २६८

'तत्त्वमसि, अहंब्रह्मास्मि' इत्यत्र असि अस्मि इत्यनयोः परसम्मतार्थाङ्गीकारे पाणिनिमतविरोधः। 'कश्चन्द्र' इत्यादौ न धर्माप्रकारकबोधः। अ.सि. उक्तधर्माप्रकारकबोधरीत्यनुवादः ॥ २६९

उक्तग्रन्थार्थपर्यालोचनम्। न्यायरत्नावल्यां 'प्रत्ययप्रकृतितो बहिः' (सं.शा) इति श्लोकमुदाहृत्य अभिहितान्वयपक्षे पदेनार्थानुभवः प्रथमं जायते तद्भूताधिकरणवार्तिकोक्तपक्षेषु चरमस्यैव प्रामाणिकत्वात्' इत्याद्यनुवादः ॥ २७०

लघुचन्द्रिकाऽनुवादः। उक्तार्थपर्यालोचनम्। तन्त्रवार्तिकपर्यालोचनायामपि न्या.र. उक्तार्थतात्पर्यं नघटते २७१

भावार्थाधिकरणपर्यालोचनायामपि भावनायाः प्रत्ययार्थत्वपक्ष एव युक्तः नतु समुदायार्थत्वपक्षः। 'तदागमेहि तद्दृश्यते' इति न्यायोऽपि भावनायाः प्रत्ययार्थत्वेऽनुकूलः आकृत्यधिकरणवार्तिकेऽपि भावनायाःप्रत्ययार्थत्वमेवोक्तम्। अयमेव सिद्धान्तः न्यायसुधायामपि निरूपितः। पार्थसारथिखण्डदेवयोरप्ययमेव पक्षस्संमतः ॥ २७२

पदश्रवणसमनन्तरं पदार्थस्मृतिः शक्तिज्ञानविरहदशायां कस्यापि शाब्दबोधो नोदेति शक्तिज्ञानव्यवधानेनैव शाब्दबोधोवाच्यः। शक्तिज्ञानसत्वे स्मृतिर्नैव प्रत्याख्यातुं शक्यते 'भावनासमुदायार्थः' इत्यपि समुदायजन्यशाब्दबोधमुख्याविशेष्यतया उपपद्यते, इति प्रकृतिप्रत्ययसंसर्गस्यापि अभिहितत्वोक्तिः न भट्टसंमता वाक्याधिकरणे आकांक्षादिवशादेव तत्संसर्गभानस्य स्पष्टमुक्तेः ॥ २७३

लघुचन्द्रिकोक्तस्वसिद्धान्तोपपत्त्यनुवादः ॥ २७४

उक्तार्थपर्यालोचनम्। पार्थसारथिमतोक्तदोषस्य स्वमते वारणासंभवः प्रत्ययप्रकृतिसंसर्गस्य अभिहितान्वयवादेऽप्यङ्गीकारे अन्विताभिधानवादादविशेषः ॥ २७५

संक्षेपशारीरके अन्विताभिधानपक्षस्यैव स्वसिद्धान्तत्वबोधनेन अभिहितान्वयपक्षस्य युक्तत्वोक्तिः तद्विरुद्धा पदार्थानां करणतावादिभट्टमते पदस्य करणत्वाभावेन 'तत्त्वमसि' इति शाब्दापरोक्षे विवरणसंमते (अ.सि.३.प) शब्दस्य करणत्वोक्तेरसम्भवात् अन्विताभिधान एव लाघवम्। वार्तिककारोक्तिविरुद्धस्य वार्तिककारसिद्धान्तत्वकल्पनं 'प्रातिपदिकार्थमात्रे प्रमथा' इति पाणिनिसूत्रस्य धर्माप्रकारकबोधपरत्वकल्पनंचाप्रामणिकम् २७६

अभिहितान्वयवादे अन्विताभिधानवादे च संसर्गाविषयकशाब्दबोधः न कस्याचित्सम्मतः। मण्डन मिश्रेण ब्रह्मसिद्धौ 'तत्त्वमसि' इत्यादौ संसर्गविषयक एव शाब्दबोधोऽङ्गीकृतः, निर्विकल्पकशाब्दबोधस्य कस्याप्यसम्मतत्वम् ॥ २७७

निर्विकल्पकप्रत्यक्षस्यापि न परसंमताखण्डार्थत्वम्। अयमर्थः वार्तिकव्याख्याने न्यायरत्नाकरे काशिकायां च व्यक्तः ॥ २७८

धर्मिणीव धर्मेऽपि सन्निकर्षसद्भावेन धर्माविषयकत्वं नैव संभवति अयमर्थः भट्टप्रभाकरोभयसंमतः। अनुवृत्तिर्न भासत इत्येव तन्मतम्। नैयायिकैरपि निर्विकल्पकस्य विशिष्टबुद्धित्वमेव नाङ्गीक्रियते। प्रकारसंसर्गावगाहित्वंतु अङ्गीक्रियत एव ॥ २७९

निर्विकल्पकस्य सप्रकारकत्वसाधनम् ॥ १८०

पदानामर्थस्मृतिद्वारा शब्दबोधहेतुत्वं भट्टस्यापि संमतम् ॥ २८१

स्यैव निषेधेन 'नेह नानाऽस्ति' इत्यत्रापि विनाभूतार्थस्यैव निषेधः। अयमर्थः न्यायामृतेऽप्युक्तः, 'यथोदकं दुर्गे वृष्टम्' इति दृष्टान्तानुगुणश्च। तेन गुणगुणिनोरभेदः नानया श्रुत्या सिद्ध्यति, नापि आत्मभिन्नसामान्यमिथ्यात्वम्। अत्र गुरुचन्द्रिकोक्तिपर्यालोचनम्॥ ३०१

परमते नानाशब्दस्यैव वैयर्थ्यम्। आकाशस्य शब्दाश्रयत्वोपपत्तिः 'सत्तासती' इत्यादिव्यवहारस्य विशेषानङ्गीकारे अनुपपत्तेः अद्वैतसिद्धिलघुचन्द्रिकोक्तएवपरिहारः पृथक्स्थितियोग्यत्वतदभावाभ्यां दण्डकुण्डलादेः जातिगुणादेश्च वैलक्षण्ये वस्तुगतशक्तीनामेव मूलत्वस्याभिप्रेतत्वेन शक्तिभिन्नत्वसम्मतविशेषाङ्गीरे नकिञ्चित्प्रमाणम् ३०२

विशेषभेदतात्पर्येण 'जलं द्रव्यं न' हरिशब्दार्थविशेषे हरिर्नेति प्रयोगविरहवत् 'पटश्शुक्लो न' इति प्रयोगोऽपि न संभवति। रूपस्थले धर्मधर्मिणोरेकेन्द्रियग्राह्यतया अभेदसंभावना, गन्धादिस्थलेतु न तथेति 'व्यतिरेको गन्धवत्' इति व्यासोक्तिः। गुरुचन्द्रिकोक्तिपर्यालोचनम्। 'रूपलावण्य' इत्यादियोगसूत्रं रूपस्य द्रव्यभेदसाधकम्। विशिष्टकेवलयोर्भेदः 'अनतिरेकेतु' इति दीधितिविवरणे गदाधरेणैव दूषितः। अयमर्थः शिरोमण्यादिग्रन्थनिष्णातानां सुबोधः॥ ३०३

गुरुचन्द्रिकोक्तिपर्यालोचनम्। विठ्ठलभक्तोक्तभेदाभेदानुमानपरिष्करणमपि न घटते। नञभिलप्यतदनभिलप्याभाववैलक्षण्यमपि न युक्तम्। वस्तुतः प्रतियोगिसमानाधिकरणाभावनिश्चयस्याव्याप्यवृत्तित्वज्ञानाभावदशायां प्रतिबन्धकत्वनिश्चयेन निरवच्छिन्नविशेषणतासम्बन्धेन अभावानवगाहिज्ञानस्यापि प्रतिबन्धकत्वं बाधग्रन्थे व्यवस्थापितमिति प्रतियोगिव्यधिकरणाभावबुद्धेरेव विरोधित्वमिति चन्द्रिकोक्तनियमः निरवकाशः॥ ३०४

'गुणादिकं गुण्यादिना भिन्नाभिन्नम्' इत्यनुमानपरिष्करणस्य गुरुचन्द्रिकोक्तस्य पर्यालोचनम्। भामतीकारस्य एकावच्छेदेन भेदाभेदौ नैव संमतौ, कस्याप्यसम्मतत्वात्। एकावच्छेदेन भेदाभेदयोस्साधकासम्भवः॥ ३०५

कार्यात्मनातु नानात्वम्' इति कारिका भास्करभाष्यस्था, एतत्कारिकोपादानपूर्वकं भेदाभेदौ भामत्यां प्रतिपादितौ। भास्करमते भर्तृप्रपञ्चमते कुमारिलमते च अवच्छेदकभेदेन भेदाभेदाभ्युपगमेनैव मिथ्यात्वंदूषितम् ३०६

भामतीग्रन्थस्य एकावच्छेदेन भेदाभेदपरत्वं चन्द्रिकाकारैः स्वबुद्धिपरिकल्पितमेव। विशेषसाधनेनैव भेदाभेद इति सिद्धान्तस्य अनुव्याख्यानसुधाद्युक्तस्यानुवादः॥ ३०७

इत्थमित्यत्र इदमर्थस्य इतरव्यावर्तकप्रकारवाचि थमुप्रत्ययान्ताभिलापकशब्देन निर्देशः प्रकारप्रकारिणोः भेदावगाहित्वमेव साधयति। स्वाभावाभावयोर्न समानसत्ताकत्वं एकतरस्य बाधादर्शनात्॥ ३०८

उत्पादविनाशव्यवहारस्यावस्थाविषयकत्वेनोपादानोपादेययोरभेदः; नतु गुणगुणिनोः। 'घटश्शुक्ल' इत्यत्र मतुब्लोपेनोपपत्तौ विशेषस्य न विषयत्वम्। विशेषाङ्गीकारेऽप्यनवस्था वर्तत एव। पृथक्स्थितिप्रतिपत्तियोग्यत्वतदभावाभ्यां वैलक्षण्येन सर्वोपपत्तिः। ब्राह्मणादिपदार्थविचारः। औत्पत्तिकब्राह्मण्यस्य यावदात्मभावित्वम्॥ ३०९

सदसद्विलक्षणत्वरूपमिथ्यात्वविचारे अद्वैतसिद्धौ भेदाभेदप्रसक्तिः। तन्निषेधेन सदसद्विलक्षणत्वमपि निषिद्धम्। सदसत्त्वस्यैकत्र विरोधे विधिवन्निषेधस्याप्यनुपपत्तिः' इत्युदयनोक्तेः (आ.त.वि)। विरोधपरिहारपरपरोक्तिपर्यालोचनम्। उदयनवाक्यस्य नाद्वैतमतनिराकरणपरत्वं अद्वैतमतस्य सर्वमतश्रेष्ठतायाः 'न ग्राह्यभेदमवधूय' इत्यादौ तेनैवोक्तेः इति गुरुचन्द्रिकाऽनुवादः॥ ३१०

उक्तोदयनवाक्यस्य स्वमतप्रातिकूल्यं नास्तीति गुरुचन्द्रिकाऽनुवादः। 'न ग्राह्यभेदमवधूय' इति

श्लोके 'वेदनये' इत्यत्र बौद्धमतापेक्षया वैलक्षण्यमेव विवक्षितम् । गुरुचन्द्रिकोक्तार्थाङ्गीकारे तच्छ्लोकपूर्वापरग्रन्थविरोधादिति साधनम् ॥ ३११

उदयनग्रन्थविरोधोपपादनेन अद्वैतमतस्य बौद्धमतापेक्षया श्रेष्ठत्वस्य संमतत्वेऽपि दूष्यत्वमेवोदयनसम्मतमिति प्रागुक्तदिशोदयनोक्तिविरोधेन सदसद्विलक्षणत्वमपि नैव संभवति । सन्ध्याधिकरण(शं) भाष्योक्तदिशा स्वाप्नगजाभावस्य व्यावहारिकत्वमेव । अवयवावयविस्थलेऽभेदः गुणगुण्यादिस्थले भेदएवेति साधनेन भेदःप्रातीतिकः अभेदो व्यावहारिकः इति परोक्तकल्पना नैव घटते ॥ ३१२

इष्टसिद्धिदूषणपरयामुनार्यसूक्त्यन्तरार्थविशदीकरणम् । 'सत्त्वासत्त्वधर्मद्वयशून्यत्वेन निर्धर्मकत्वात् ब्रह्मणि मिथ्यात्वलक्षणस्यातिव्याप्तिः' इति (अ.सि) एतद्विवरणे (ल.चं) वाचस्पतिमते ब्रह्मणस्स्वप्रकाशत्वेन वृत्तिविषयत्वविरहवत् विवरणकारमते शुद्धे धर्माप्रत्ययात् धर्मः न स्वीक्रियते इत्यादिग्रन्थानुवादः ॥ ३१३

उपहितब्रह्मणः शुद्धब्रह्मणश्च तादात्म्येऽपि प्रपञ्चे सदधिष्ठानतादात्म्यसम्बन्धवत् अत्र संबन्धः नाङ्गीक्रियते, किंतु विशिष्टकेवलभावेन । ब्रह्मणस्सर्वधर्माभावरूपत्वं स्वाधिष्ठानकसर्वधर्माभावविशिष्टतादात्म्योपलक्षितस्वरूपत्वेन' इति चन्द्रिका । (अ.सि) इष्टसिद्धिपरिष्करणवाक्यानुवादः ॥ ३१४

(अ.सि) विवरणलघुचन्द्रिकाऽनुवादः । विशेषाभावादेः उपहिते अङ्गीकारे शुद्धस्य तदुपलक्षितत्वमेव तत्र विशेषोपलक्षिततदभावोपलक्षितत्वयोर्न किञ्चिद्वैषम्यमिति उभयलिङ्गाधिकरणसिद्धान्तविरोधः ॥ ३१५

शुद्धे ब्रह्मणि उपहिततादात्म्यमेव न अभावरूपधर्मः इत्यत्रापि नकिंचिन्मानम् । ब्रह्मणस्सर्वधर्माभावरूपतया' इति सिद्धिवाक्यस्य तत्पूर्वं प्रभाकरमतत्वस्य स्फुटतया ज्ञानत्वाद्युपपत्तावपीत्थमेवोक्त्या भट्टमताभिप्रायत्वकल्पनमप्यनुपादेयम् । तात्त्विकधर्मानभ्युपगमे निर्विशेषस्य प्रामाणिकत्वमेव न सिद्ध्यति । भामत्यां (१.१.४) भेदाभेदसंबन्धविकल्पेन बौद्धोक्तदिशा परिणामिनित्यदूषणं न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिनैव परिहृतम् ॥ ३१६

बौद्धाधिकारेऽपि उदयनेन तत्परिहार उक्तः । 'आनन्दं ब्रह्मणो विद्वान्' इति श्रुतिविरोधोऽपि परमते, 'राहोश्शिरः' इत्यादावपि औपाधिकभेदविवक्षयैव षष्ठीति सिद्धान्तः भाष्योद्योतमञ्जूषादिषु स्फुटः । कल्पितानन्दाधारत्वविवक्षणे भयनिवृत्तिहेत्वोक्तिरसङ्गता । अभेदेऽपि विशेषबलेन भेदव्यवहार इति नव्यमते व्यवहारस्य भ्रममूलकत्वेन श्रुतेः प्रामाण्यं कथम् ? अतः ब्रह्मणि विशेषसामान्यशून्यत्वं स्वगतविशेषशून्यत्वं च नोपनिषत्स्वभिप्रेतम् । षड्विधतात्पर्यलिङ्गोपेतत्वेन श्रुतेःप्राबल्यात् प्रत्यक्षविरोधपरिहारः निर्विशेषस्याप्रामाणिकत्वनिरूपणेन परिहारः । प्रत्यक्षस्य सन्मात्रग्राहित्वेन विरोधस्यैवासम्भव इति वादःपर्यालोच्यते ॥ ३१७

संवेदनवत् परव्यवहारहेतोः स्वव्यवहारहेतुत्वं युष्माभिरभ्युपेतमित्युक्त्या स्वप्रकाशत्वमित्थमेव परैरुपपादनीयमिति सूचितम् । 'वस्तुगतस्वभावविशेषैः' इति वाक्ये निर्विशेषत्वस्य स्वप्रकाशत्वमपि न घटते असंसृष्टत्वेन सर्वसाक्षित्वेन खण्डनोक्तयुक्तिभिर्न बाधः' इति चन्द्रिकोक्तिरपि न घटते । सर्वभासकत्वोक्त्या संसृष्टत्वात् विवरणकारमते वृत्तिविषयत्वाच्च ॥ ३१८

प्रकाशकान्तराभ्युपगमे अनवस्थादोषः बिन्दुटीकोक्तः माध्यमिकमते अद्वैतिमतवत् सांवृतत्वेन न विरुध्यते । माध्यमिकमते सर्वस्य सांवृतत्वेन बाधकज्ञानस्य प्रमात्वविरहेण बाधो न संभवतीति बिन्दुटीकोक्तिरपि निरवकाशा । परमते स्वाप्नगजतभावज्ञानयोरिव शून्यवादिमतेऽपि बाध्यबाधकभावसम्भवात्, दृष्टिसृष्टिपक्षे 'तत्त्वमसि' इति वाक्यार्थज्ञानस्यापि प्रमात्वोपपादनं न संभवति । खण्डने शून्यवादिनः सुहृत्त्वेनाङ्गीकारात् शून्य

वादानिर्वचनीयवादयोरेव निराबाधत्वस्य खण्डन एवोक्त्या च खण्डनोक्तदिशा शून्यवादएव पर्यवसानम् ॥ ३१९

हेतुत्वाङ्गीकारेणैव स्वयंप्रकाशत्वमुपपादनीयम्। कार्यकारणभावस्य शून्यवादिमतइव सांवृतत्वेन स्वप्रकाश-
स्यापि सांवृतत्वमेवस्यात्। स्वपरनिर्वाहकसमाधिना संबन्धानुपपत्तेरपि परिहारः। ब्रह्मसिद्धिखण्डनयोः बौद्धयुक्त्या
भेदापह्नवे तन्मतसिद्धव्यावहारिकपामार्थिकविभागाभ्युपगमेन 'न सत्यद्वयकल्पना' इत्यादिवदता कुमारिलेन
सत्यद्वयवादिमते वेदप्रामाण्यं न संभवतीति यदुक्तं तदवर्जनीयम् ॥ ३२०

'न सत्यद्वयकल्पना, इत्याद्युक्तिः बौद्धमत एव दोषपरा' इति गुरुचन्द्रिकोक्तिपर्यालोचनम्। अद्वैति
संमतानां बहूनामर्थानां भट्टपादैर्दूषणात् ब्रह्मसिद्धौ भट्टपादोक्तदूषणपरिहारोक्तेः खण्डनेऽपि भट्टपादोक्ति दूषण-
सद्भावाच्च गुरुचन्द्रिकोक्तभट्टपादाशयस्यायोगात्। 'प्राणावै सत्यं तेषामेष सत्यम्' इतिश्रुत्या परमते न सत्य-
द्वयसिद्धिः। प्राणेषु सत्यत्ववत् शुद्धचिति सत्यत्वविरहेण उपहित एव सत्यत्वसत्त्वेन उपहितस्य प्राणवन्मि-
थ्यात्वेन सत्यत्वोपलक्षितस्य 'तेषामेष सत्यम्' इत्यत्र विवक्षणे वाक्यस्वारस्यविरोधात् उपहिते सत्यत्वस्येव
मिथ्यात्वस्यापि सत्त्वेन मिथ्यात्वसत्यत्वोपलक्षितयोर्विशेषाभावाच्च। सत्यत्वोपहितब्रह्मतादात्म्यं प्रपञ्चे वर्तते तत्
अधिष्ठानभावनिबन्धनं, उपहितकेवलभावेन तादात्म्यं शुद्धचितीति वैषम्यकल्पनमप्रयोजकमेव। 'प्राणा वै
सत्यम्' इत्यत्र जीवविवक्षायाः सुरेश्वरवार्तिके उक्त्या जीवापेक्षयाऽतिशयितसत्यत्वमेतच्छ्रुत्यर्थ इत्युत्तरत्र स्थाप-
यिष्यते। अध्यासे सामानाधिकरण्यं नभट्टपादसम्मतम्। बौद्धसंमतनिर्विशेषवत्परसंमतनिर्विशेषमप्यप्रामाणिकम् ॥ ३२१

अनुवृत्तमेव प्रत्यक्षविषय इति साधयता मण्डनेन बौद्धसंमतव्यावृत्तस्य प्रत्यक्षविषयत्वनिराकरणार्थं
क्षणिकत्वस्योक्तावपि तन्नसर्वसंमतमित्यभिप्रेत्य एकक्षणवर्तित्वेऽपीत्यपिशब्दः ॥ ३२२

'नहि तत्क्षणमप्यास्ते' इति कुमारिलग्रन्थे मण्डनसंमतार्थो विवक्षित इति ब्रह्मसिद्धिव्याख्या, न्याय-
मकरन्दाद्युक्तिर्न घटते। श्लोकवार्तिके तद्व्याख्यानेचास्यार्थस्यानुक्तेः ॥ ३२३

धर्मकीर्तिशान्तरक्षिताभ्यां धर्मिग्रहानन्तरमेव व्यावृत्तत्वग्रहोक्त्या 'क्रमस्सङ्गच्छते युक्त्या नैकविज्ञान-
कर्मणोः' इति मण्डनोक्तदूषणस्य नावसरः। सिद्धान्ते निर्विकल्पस्य भेदत्वेन भेदविषयकत्वाभावेन प्रतियोग्य-
पेक्षा नास्त्येव। वैभाषिकमात्रसम्मतप्रत्यक्षस्य ब्रह्मसिद्धौ निरूपणपूर्वकं यद्दूषणं तद्वैभाषिकव्यतिरिक्तमते नघटते ॥ ३२४

अतः संवित्सिद्धौ 'भेदो न प्रत्यक्ष' इति मण्डनकारिकामनूद्य योभ्रमः इत्युक्तिः सङ्गता। 'घटोऽस्ति'
'आस्ति ब्रह्म' इत्यादिवाक्ये कर्तरि लकारप्रयोगेण 'अस्तिब्रह्म' इत्यादौ सद्ब्रह्माभेद एव विवक्षितः। एव-
मेव घटोऽस्तीत्यत्रापि। ब्रह्मणा एकेनैव निर्वाहे अनन्तपदार्थकल्पनाया अनुचितत्वात्' इत्यपि न; ब्रह्मणः
अनङ्गीकारेऽतीव लाघवेन शून्यवादिविजयापातात्। निषेध्यनिषेधाधिकरणयोरपारमार्थ्येऽपि भूतले घटानि-
षेधवान्निषेधस्संभवत्येवेति अधिष्ठानपारमार्थ्यमनपेक्षितम्। 'अस्तीत्येवोपलब्धव्यः' इति श्रुतेरिसद्धान्त एव
स्वारस्यम् ॥ ३२५

'अङ्गुष्ठमात्रःपुरुषोऽन्तरात्मा' इत्यत्र गीताऽनुसारेण जीवब्रह्मभेद एव विवक्षितः। प्रमाणानामज्ञात
ज्ञापकत्वेन जडे आवरणकृत्याभावात् घटादौ प्रत्यक्षं न प्रमाणम् अपितु सति ब्रह्मण्येवेति परिकल्पनाऽपि न
साधीयसी। सदंशे चिदंशे च एकाज्ञानपक्षे आवरणाभावेन परोक्तसन्मात्रग्राहित्वस्यासम्भवात्। लघुचन्द्रि
कोक्तोपपत्तेरपि पर्यालोचनम् ॥ ३२६

'घटं पश्यामि' 'ब्रह्म जानामि' 'घटं न जानामि, ब्रह्म नजानामि' इति प्रतीतिद्वयस्य विषयांशे अविशे

षस्य सर्वानुभवासिद्धतया घटविषयकाज्ञानं नास्तीत्युक्तिः कथं घटते ? ब्रह्म जानातीत्यत्र ज्ञाधात्वर्थः वृत्तिः घटं जानामीत्यत्र वृत्त्यवच्छिन्नचैतन्यमिति कल्पनेवेयमपि कल्पनाऽप्रामाणिकी । 'इदंरूप्यं, सन्घटः' इति प्रतीतिद्वये इदंशब्दस्य पुरोवर्तिबोधकत्वस्य सर्वसंमतत्ववत् सन्घट इत्यत्र सच्छब्दस्य घटाबोधकत्वस्यैव युक्ततया प्रत्यक्षस्य घटावच्छिन्नाचिद्विषयकत्वं न संभवति ॥ ३२७

सन्घट इति प्रत्यक्षदशायां शुद्धचिद्विषयकाज्ञानतद्विशेषानिवृत्त्युपपादनपराद्वैतसिद्धिगुरुचन्द्रिकाऽनुवादः ॥ ३२८

उक्तार्थपर्यालोचनम् । 'सोऽयमित्यस्याज्ञातार्थज्ञापकत्वं न संभवति । 'दण्डी कुण्डली' इत्यादौ उपलक्षणस्य प्रकारत्वेनोपलक्षितान्वयबोध एव सोऽयमित्यत्रापि तथैव, न विशिष्टान्वयबोधः । तत्तेदंतयोरपि प्रकारत्वम् । तत्तायास्संस्कारेण इदंतायास्संनिकर्षेण प्रकारतया भानम् । सप्रकारकज्ञान एव सोऽयमित्युल्लेखः नतु सिद्धिकारादिसंमतनिष्प्रकारकज्ञाने वेदान्तपरिभाषायां रामकृष्णदीक्षितैः सोऽयमिति प्रत्यक्षस्य सप्रकारकत्वमेवाङ्गीकृतम् ॥ ३२९

कदाचिदविद्यमानस्यैवोपलक्षणत्वमिति न नियमः । विद्यमानस्याप्युपलक्षणत्वं लघुचन्द्रिकायमप्यङ्गीकृतम् । 'काकवत्' इत्यत्र काकस्याप्रकारत्वेऽपि उत्तृणत्वस्य प्रकारत्वं वर्तते । धनिकमानयेत्यत्र धनस्यापि प्रकारत्वम् । स्वविशेष्यान्विते यत्र सदन्वेति तदंशे तद्विशेषणम् । एतत्प्रतिकोटिभूतोपलक्षणत्वमपि स्वविशेष्यान्वितेऽनन्वितत्वेसति स्वविशेष्यान्वितत्वम् ; नतु स्वाविषयकं स्वाश्रयस्य यत् ज्ञानं येन जन्यते तस्मिन् स्वाश्रयस्य ज्ञाने तस्योपलक्षणत्वमिति, चन्द्रिकोक्तम् कस्यापि दार्शनिकस्यासंप्रतिपत्तेः । अयं वासस्वी देवदत्तपद वाच्यः इत्यत्र वाससः उपलक्षणत्वं प्रकारत्वेनैवोपपादितं शब्दमणिव्याख्यानालोकादौ 'यद्व्यावर्तकं विशेष्यान्वयिनाऽन्वीयते तद्विशेषणं तदन्यदुपलक्षणम्' इत्येव तत्रोक्तम् ॥ ३३०

प्रत्यक्षमणौ प्रत्यभिज्ञायास्सविकल्पकत्वमेवोक्तम् । नायं सः इत्यत्र तत्तायाः अप्रकारत्वेनोपलक्षणत्वमिति गु.चं. उक्तिरपि निरवकाशा । अद्वैतरत्नरक्षणविरोधाच्च । उपहित एव सत्तायाः पूर्वमुक्त्या 'सन्घट' इत्यत्र तस्यैव भानमिति तस्य मिथ्यात्वेनाधिष्ठानत्वमपि न संभवति ॥ ३३१

उपहिते सत्वस्य सत्वेऽपि उपहितशुद्धयोस्तादात्म्येनाशुद्धोपरागेण शुद्धस्य भानम् । 'आकाशादौ' इत्यादिना सङ्क्षेपशारीरके सत्ताद्वैविध्यमेवोक्तम् , इत्यादि (अ.सि.,ल.चं) अनुवादः । एवंकल्पनायां गमकं नास्ति ३३२

उपहितशुद्धयोस्संबन्धेन शुद्धस्यापि बोधविषयत्वाङ्गीकारे सत्यादिशब्दवाच्यस्यैव तत्सम्भवतीति लक्षणाङ्गीकारोऽपि विफलः इत्याक्षेपस्य निष्प्रकारकबोधार्थं लक्षणेति समाधानमपि न घटते । तद्ज्ञानस्यैवासंप्रतिपत्तेः । उपहिते त्रिकालबाध्यत्वमित्युक्तिरपि प्रपञ्चमिथ्यात्वविशेषेण न घटते । शुद्धज्ञानात्परं उपहितप्रपञ्चयोरुभयोरप्यसत्वेन उपहितकेवलभावेन तादात्म्यमेकत्र अधिष्ठानाधिष्ठेयभावेन तादात्म्यमन्यत्रेति वैषम्यमप्रयोजकमेव । एवं ज्ञाननिवर्त्यत्वाभावेऽपि उपहितस्य मिथ्यात्वं कथम् ? 'प्राणावै सत्यं तेषामेष सत्यम्' इति श्रुतौ प्रथमसत्यपदस्य विशिष्टपरत्वं द्वितीयसत्यपदस्य उपलक्षिपरत्वमिति कल्पनमप्यौत्प्रेक्षिकमेव । विशिष्टोपलक्षितान्वयबोधद्वयमेव नतूपहितान्वयबोधः उपलक्षणस्यापि सर्वत्र प्रकारत्वमेवेति दार्शनिकसंमतम् ॥ ३३३

'घटोऽस्ति पटोऽस्ति' इत्यत्र सदर्थस्य विशेष्यत्वमेव विवरणे संक्षेपशारीरकेचोक्तम् । वे.सू.मुक्तावल्यामपि । सद्रूपस्य घटादिविशेषणतयैव व्यवहार इत्युक्तिरनुचिता । (गु.चं) मूलाज्ञानावरणेन आवरणानावरणपक्षयोर्विरोधात् । 'इदं रजम्' 'सन्घट' इति प्रतीत्योर्वैलक्षण्यमपि ॥ ३३४

चिन्दुटीकायां घटादावज्ञानविषयत्वकल्पने लाघवशङ्का तत्समाधानं च । घटादावज्ञानविषयत्वकल्पनेऽपि लाघवमेव वर्तत इति साधनम् ॥ ३३५

वृत्तौ शक्तिकल्पनेनैवोपपत्तौ चिति शक्तिकल्पनमनुचितम् । प्रमाणानामज्ञातज्ञापकत्वं मीमांसकसम्मतम्, नतु भावरूपाज्ञानविषयज्ञापकत्वं भावरूपाज्ञानस्यैव कस्याप्यसंमतस्य साधनासम्भवात् ॥ ३३६

ज्ञातार्थविषयकज्ञानस्यापि अबाधितार्थविषयकत्वं सर्वसंमतम । तत्र प्रवृत्तिबाधोऽपि नदृश्यते, अज्ञातार्थविषयकज्ञानस्य प्रमात्वमितितु स्मृतौ प्रमात्वव्यवहारविरहेण स्मृतिव्यावृत्त्युपपादनाशम । एतावदेव सर्वदार्शनिकसंमतम् । 'उष्णं जलम्' इति ज्ञानं देहात्मैक्यज्ञानं घटादिज्ञानं च आब्रह्मज्ञानमनुवर्तत' इति अ. सि) उक्तिरनुपादेया ; घटादिज्ञानवैषम्यस्यैव ज्ञानयोर्द्वयोस्सर्वसंमतत्वात् ॥ ३३७

भट्टपादग्रन्थोदाहरणपूर्वकं 'नेह नानाऽस्ति किंचन' इति श्रुतौ आत्मभिन्नसामान्यनिषेधः भट्टपादादेर्न विवक्षित इति साधनम् ॥ ३३८

स्वाप्नगजाभावस्य जाग्रद्गजाभावस्य च साक्षिभास्यत्वेन्द्रियादिभास्यत्ववैलक्षण्येन भेदोक्तिरपि (१३६) नघटते । 'अतीतेऽनागते' इत्यादिश्लोकवार्तिके योगिनां मुक्तात्मनां च ज्ञानस्य सामग्रीभेदेऽपि विषयाभेदवदत्राप्यभेदोपपत्तेः । नहि स्वाप्निकत्वमात्रं बाध्यताप्रयोजकम् । किंतु जाग्रत्काले बाधः' इति भट्टपादग्रन्थे सन्ध्याधिकरणे शङ्करभाष्यादौ च व्यक्तम् । 'इदंरूप्यम्' इत्यत्र रूप्योत्पत्त्याद्यनुरोधेनावस्थाऽज्ञानकल्पनम । घटस्सन् इत्यादौ तथोत्पत्तेरभावेन अवस्थाऽज्ञानकल्पनमपि निर्युक्तिकम् ॥ ३३९

सन्मात्रग्राहिप्रत्यक्षवादे आगमस्यानुवादकत्वमेव स्यात् ॥ ३४०

'सिद्धंतु निवर्तकत्वात्' इत्युक्तदिशाऽनुवादकत्वपरिहारस्य विवरणाद्वैतसिद्ध्याद्युक्तस्यानुवादः । अस्य वाक्यस्य श्लोकवार्तिक शास्त्रदीपिकाऽद्यनुसारेण भावप्रकाशे (२.स) अर्थउक्तः । इदंच वाक्यं द्रमिडाचार्यवाक्य नित्यानन्दगिरिः । कात्यायनवाक्यमित्यद्वैतसिद्धिकार. ॥ ३४१

'सिद्धंतूपासनशब्दात्' इति वाक्यानुगुण्येन द्रमिडाचार्योक्तराजकुमारनयानुगुण्येनचार्थद्वयनिरूपणम् ॥ ३४२

अद्वैतसिद्धि चन्द्रिकाद्युक्तप्रक्रिया न महाभाष्याद्यनुगुणा । ब्रह्मप्राप्तिप्रयोजनसम्भवेन गुरुचन्द्रिकोक्तानुमानायोगः । ब्रह्मणस्सर्वप्रत्ययवेद्यत्वेऽपि प्रपञ्चप्रविलयः शब्देन प्रतिपाद्यत इति ब्रह्मसिद्ध्यनुवादः ॥ ३४३

सप्रपञ्चब्रह्मणः प्रत्यक्षादिविषयत्वं निष्प्रपञ्चब्रह्मणस्तु श्रौतत्वमिति मण्डनमते श्रुतेरनुवादत्वं नसंभवतीतिशङ्का । सुरेश्वरादिमतेऽनुवादत्वमपरिहार्यम् । एतन्मतेऽपि 'विशिष्टविषयाप्रतीतिर्विरुध्यत' इति दूषणं वर्तत एव । अस्थूलमित्यादिवाक्यार्थोऽपि न घटते ॥ ३४४

शब्दात्संसर्गविषयकबोधस्यैव मण्डनेनाङ्गीकारेण तद्ज्ञानेन शुद्धब्रह्मविषयकमानसापरोक्षज्ञानं न युज्यत इति सुरेश्वराचार्यैरेव एतन्मतं दूषितम् । रातिर्दातुःपरायणम्' इत्यादौ ब्रह्मणः कर्मविद्याफलहेतुत्वं यदुक्तं तत सर्वाद्वैतमतेऽपि प्रतिकूलम् ॥ ३४५

मण्डनवत् मानससाक्षात्कारवादिवाचस्पतिमतानुवादः ॥ ३४६

'सर्वप्रत्ययवेद्ये' इति मण्डनकारिकायाः तन्मतविरोधेन वाचस्पतिमते (अ.सि) अर्थवर्णनं नघटते । वाचस्पतिमते स्वप्रकाशत्वं न कयाऽपि श्रुत्या सिद्ध्यति ॥ ३४७

उपहितस्य प्रपञ्चापेक्षयाऽधिकसत्ताकत्वाभावेन तद्ज्ञानस्य निवर्तकत्वं वाचस्पतिमते न संभवति ।

षिध्यमानत्वात् इति विवरणोक्तहेतुः देशकालावच्छेदकैक्यमन्तरा न मिथ्यात्वं साधयति । अवच्छेदकैक्यं च न प्रमाणतस्सिद्ध्यति ॥ ३८३

देहात्मभेदविषये अद्वैतसिद्धिग्रन्थद्वयविरोधः । बाधफलभूतायाएव विषयनिवृत्तेः व्यावृत्तिपदार्थत्वेन व्यावर्तमानत्वमात्रस्य मिथ्यात्वासाधकत्वं यदुक्तं अस्यार्थस्य बहुपरग्रन्थपर्यालोचनपूर्वकं साधनम् । इदं रजतमिति ज्ञानस्य भ्रमत्वमेव सर्वदार्शनिकसंमतम् । नहि बाधकज्ञानेन शुक्तिरूप्यस्य बाधः ॥ ३८४

संबन्धानुपपत्तिस्तु उदयनवाचस्पतिभ्यामेव परिहृता । बाधमन्तरा नैव मिथ्यात्वं, बलवत्त्वाभावे बाधकत्वमपि नैव संभवति । अतः मिथ्यात्वस्य सत्यत्वमिथ्यात्वविकल्पेन यामुनमुन्युक्तदूषणस्य नैव परिहारसंभवः । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं पर्यालोचितम् । सदसद्विलक्षणत्वमविद्यावादे पर्यालोचयिष्यते ॥ ३८५

लाघवपुरस्कारे स्वप्रकाशानभ्युपगमे लाघवं वर्तत एव । सत्यद्वयकल्पनं शब्दप्रामाण्यवादिनां नैव संमतम् । विरोध एव बाध्यबाधकभावाङ्गीकारे 'बाधगदाधर' विरोधशङ्का तत्समाधानं च । अवच्छिन्नत्वरूपाव्याप्यवृत्तित्वज्ञानस्यैव उत्तेजकत्वमिति चन्द्रिकोक्तिः 'व्याप्यवृत्तेरवच्छेदकत्वाभ्युपगमस्य' गदाधरेणोक्त्या नघटते ३८६

'सन्घटोऽनुभूयते' इति प्रतीत्या सतोऽप्यनुभूतिविषयत्वं वर्ततएवेत्यनुभूतिरेव सतीति न युज्यते ॥ ३८७

यामुनमुन्युदाहृतयोः वार्तिकष्टइसिद्धि पञ्चपादिकाऽऽदौ सोपाधिकस्य प्रत्यक्षविषयत्वोक्त्या तत्रैव स्वप्रकाशत्वं विवरणोक्तानुमानतः सिद्ध्यतीति साधनम् ॥ ३८८

'इष्टसिद्धौ संविदः संविद्विषयत्वे असंवित्त्वमेव स्यात्' इत्याद्युक्तेः आत्मसिद्धौ पर्यालोचनमनुसृत्यैवात्रापि पर्यालोचनम् ॥ ३८९

कालभेदेन विषयविषयिभावाभ्युपगमे स्थायित्वप्रसङ्गः धर्मभूतस्य परिणामिनित्यत्वेनेष्टापत्त्या परिहृतः ॥ ३९०

स्वतस्सिद्धत्वेन प्रागभावाभावस्येष्टसिद्ध्युक्तस्यानुवादः । एतदर्थसाधकसिद्धान्तबिन्दुतट्टीकाऽनुवादः ॥ ३९१

बिन्दुटीकानुवादः ॥ ३९२

परमते सिद्धान्ते च ज्ञानोत्पत्त्यादिविषये महद्वैलक्षण्यम् । मुक्तौ ज्ञानत्वानन्दत्वाद्युपलक्षितमेव नतूपहितम् ॥ ३९३

ज्ञानत्वानन्दत्वादेरुपहितवृत्तित्वाङ्गीकारे शुद्धचितः अप्रामाणिकत्वेनासिद्ध्या तस्य प्रागभावाभावसाधनं न संभवति । एतावता 'प्रमेयभेदेनोपधीयमानस्यानुभवाभिधानीयत्वम्' (पं.पा) इत्युक्तिमनुसृत्य 'तस्यैव स्वप्रकाशत्वम्' इति विवरणोक्तिः पर्यालोचिता । अथ 'प्रमेयभेदविनिर्मुक्तमेव संवेदनम्' इति विवरणवाक्यान्तर, एतदनुगुणवार्तिकादिभिः निर्विषयसंवित्सिद्धिः (४०१.पु) शङ्किष्यते' इति तत्साधकाद्वैतसिद्धेरनुवादः ॥ ३९४

गुरुचन्द्रिकाऽनुवादः ॥ ३९५,-३९६,-३९७

लघुचन्द्रिकाऽनुवादः ॥ ३९८,-३९९,-४००

'नाभाव उपलब्धेः' इति (शं) भामत्यनुवादः । उक्तार्थपर्यालोचनोपक्रमः । उक्तार्थसाधकाद्वैतसिद्धि लघुचन्द्रिकाऽनुवादः ॥ ४०१

गुरुचन्द्रिकाऽनुवादः ॥ ४०२

दीपदृष्टान्तेन प्रकाशस्य साक्षात्स्वसंसृष्टप्रकाशकत्वमित्युक्तिः (अ.सि. अनुकूलतर्कनिरूपणे) दीपस्य प्रभाद्वारा प्रकाशकत्वेनानुपपन्नाः । 'प्रमाता प्रमया प्रमेयं व्याप्नोति' इति भामत्यां प्रमाद्वारैव प्रमातुः व्याप्तिः प्रति

पादिता । प्रतिकर्मव्यवस्थायामद्वैतसिद्धिगुरुचन्द्रिकयोः स्वयंभासमानस्यैव परभासकत्वमुक्तम् ॥ ४०३

वृत्तिदशायामेव चितोऽभिव्यक्त्या विषयप्रकाशकत्वमेषितव्यमिति वृत्तिविरहदशायामज्ञातघटो भातीति न संभवति । वृत्तिद्वारकसम्बन्धवतश्चैतन्यस्य प्रकाशकत्वे वृत्तेरेव प्रकाशकत्वे पर्यवसानम् । घटविषयकवृत्ति सत्वे पूर्वकालिकज्ञानाभावतात्पर्येण अज्ञातो घटइति व्यवहारः, अतः एतद्व्यवहारोपपादनाय परसंमतचित् न सिद्ध्यति । व्यवहारशब्दस्यासत्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिदर्थ इतितु न कस्यचित्सम्मतम् । विशिष्टचितः शुद्धचित्सापेक्षत्वं घटादेरिव मिथ्यात्वं च ॥ ४०४

विशिष्टकेवलयोस्तादात्म्येन भेदस्यापि सत्वेन स्वप्रकाशत्वपरिष्करणं न संभवति । विशिष्टे विशेषणसम्बन्ध एव प्रयोजकः नतु विशेषणसम्बन्धे विशिष्टचित् । अतः शुद्धचिद्गताज्ञानविषयत्वे विशिष्टचितः प्रयोजकत्वोक्तिः निरवकाशा । सूक्ष्मवस्त्राच्छादितदीपवत् आवृतचितः अज्ञातत्वेन व्यवहारप्रयोजकत्वम्, नतुज्ञातत्वेन ' इति गुरुचन्द्रिकोक्तिपर्यालोचनम् ॥ ४०५

दीपस्याभिव्यक्तस्यैव प्रकाशकत्वम् । वृत्तिविरहदशायामनभिव्यक्तस्य प्रकाशवत्वं न संभवति अज्ञातेऽपि घटादावनुमितत्वादिना भातीति व्यवहारः न कस्यचित्संमतः । एवमेव वृत्तिविरहदशायामज्ञातघटो भातीत्यपि आदित्यप्रदीपदृष्टान्तास्सिद्धान्तेऽनुगुणः, परमतेतु न तथा । दृष्टिसृष्टिपक्षे अज्ञातसत्वैव नाङ्गीक्रियते ॥ ४०६

' त्रैकाल्याप्रतिषेधश्च ' इति न्यायसूत्रभाष्याद्युक्तरीतिः परमते प्रतिकूलेत्युपपादनम् ॥ ४०७

' स्वतोऽसिद्धेप्रमेयेतु ' इति शुद्धचित्साधकवार्तिकलघुचन्द्रिकाऽद्यनुवादः । चितः विप्रतिपत्तिदशायां अज्ञातो घटइति व्यवहारेण अज्ञानस्य ज्ञानाभावेऽज्ञाननाशार्थं प्रवृत्त्यनुपपत्तिः इति परोक्तिर्न घटते । अज्ञानस्य परसंमतस्य केनाप्यनङ्गीकारात् ॥ ४०८

ज्ञानप्रागभावस्य ज्ञानं संभवत्येव । ' निर्विशेषं न सामान्यम् ' इति भट्टपादोक्तदूषणस्य ' विशेषैरेवास्य निर्विशेषैर्व्यभिचारः ' इति मण्डनोक्तपरिहारः विशेषाणामविशेषत्वस्य प्राचीनैरेव साधनान्निरवकाशः। ' प्रत्यक्षादीनामप्रामाण्यम् ' इत्यादिना माध्यमिकमतमनूद्य ' त्रैकाल्याप्रतिषेधश्च ' इत्यादिसूत्रैः प्रमाणप्रमेयव्यवहारस्यासांवृतत्वं साधयता गौतमेन ' प्रमाणतश्चार्थप्रतिपत्तिः ' इति चतुर्थेऽपि सिद्धान्तकरणेन ' स्वप्नविषयाभिमानवत् ' इत्यादिसूत्राणां माध्यमिकमतेन पूर्वपक्षसूत्रत्वं व्यक्तीकृतम् ॥ ४०९

एतेन ' स्वप्नविषय ' इत्यादिसूत्राणां सिद्धान्तसूत्रत्वं स्वमतस्थापकत्वं च गुरुचन्द्रिकोक्तं निरवकाशम् । तत्सूत्रभाष्याद्युदाहरणेन पूर्वपक्षसिद्धान्तसूत्रत्वादिविभागः ॥ ४१०

सिद्धान्तसूत्रभाष्यादौआरम्भवाद एवसमर्थितः । ' परिणामात् ' इत्यत्र व्यासेन परिणामवादः समर्थितः । ' यदग्ने रोहितं रूपम् ' इति श्रुतौ परसंमतार्थो न विवक्षित इति साधनम् ॥ ५११

मैत्रायणीयश्रुतिवाक्येषु गुरुचन्द्रिकोक्तोऽर्थो न विवक्षितः ॥ ५१२

न्यायसूत्रेषु गुरुचन्द्रिकोक्तार्थस्य तत्सूत्रभाष्यादावेवासम्भवः व्यक्तः । अ.सिद्धि.सिद्धान्तबिन्द्वाद्युक्तप्रत्यक्षत्वज्ञानत्वादेः शुद्धचिति असंभवः । ज्ञानं ज्ञानमित्यनुगतप्रतीत्याऽपि ज्ञानस्य नैकत्वम् ॥ ५१३

ज्ञानत्वैकत्वाद्युपलक्षितचित् मुक्तावबाधितेत्युक्तिर्न घटते । तद्व्यक्तिसाधकाभावात् जडे आवरणकृत्याभावात् प्रमाणसामान्यमज्ञातार्थज्ञापकत्वेन निर्विशेषविषयकम् । अज्ञातो घट इति प्रतीत्यन्यथाऽनुपपत्त्याऽपि निर्विशेषाचित् सिद्ध्यति ' इति वार्तिकोक्तरीत्या न निर्विशेषसिद्धिरिति ' नच निर्विषया ' इति सूक्त्या निर्णीतम् ।

वृत्तिं विना चिदस्तीति व्यवहारेण तत्सिद्धिरिति चन्द्रिकोक्तरीतिः कस्याप्यसम्प्रतिपत्त्याऽनुपादेया। घटं जानामीत्येतद्वैलक्षण्येन घटःप्रकाशत इति व्यवहारे अकर्मकःप्रकाशधात्वर्थः शुद्धचिदेव ' इति (अ.सि) उक्तार्थानुवादः । त्रिष्वपि प्रकाशते इति व्यवहारः इत्यात्मशुद्धयनुसारिण्या 'प्रकाशश्च' इति भाष्यसूक्त्या अयमर्थः पर्यालोचितः । परमते घटकर्तृकत्वस्य शुद्धचित्यभावात् 'अस्तिब्रह्मेति' वाक्यवदस्याप्यस्वारस्यम् ॥ ४१४

वृत्तेः भागत्रयेण ज्ञातृज्ञेयव्यवहारः इत्युक्तिरपि न युक्ता । दीर्घदण्डस्थले भागत्रयेण तथा व्यवहाराभवात् । आदित्यप्रभयोस्तेजस्त्ववत् आत्मधर्मभूतज्ञानयोर्ज्ञानत्वं स्वप्रकाशत्वंचोपपद्यत इति सिद्धान्ते नानुपपत्तिः 'ब्रह्मवित्' इत्यादौ वृत्तिः 'घटंजानामि' इत्यादौ वृत्त्यवच्छिन्नचैतन्यं घटादेःफलव्याप्यत्वमेव ' इत्यादि (अ.सि.चं) अनुवादः ॥ ४१५

लघुचन्द्रिकाऽनुवादः । वृत्तिव्याप्यत्वेनैकेनैवोपपत्तौ स्वकल्पिताचिद्घटनया फलव्याप्यत्वपरिष्करणमप्यौत्प्रेक्षिकमेव । ज्ञाधात्वादिप्रयोगे सर्वत्र वृत्तिरूपैकार्थेनैव निर्वाहसम्भवात् ॥ ४१६

वृत्तिमन्तरा व्यवहारस्यैवाभावेन ततएव निर्वाहे शुद्धचिद्घटनेन फलव्याप्यत्वादिपरिष्करणस्यानुपादेयत्वम् ४१७

स्वप्रकाशसाधकपरग्रन्था(गु.चं)अनुवादेन शङ्का ॥ ४१८

(गु.चं) 'तमेव भान्तम्' इति श्रुत्युपपत्त्याद्यसम्भवः 'यत्साक्षादपरोक्षात्' इत्यादिश्रुत्यर्थपर्यालोचनं च ४१९

शुद्धचिति स्वप्रकाशत्वादिधर्माणामनभ्युपगमेन स्वप्रकाशत्वोपलक्षितस्यैव शुद्धचित्त्वं वाच्यम् ; एवमङ्गीकारे स्वप्रकाशज्ञानप्रतिपादकश्रुतीनां परमतेऽस्वारस्यम् ॥ ४२०

ज्ञानाभावस्यानुमानेन साधनं नसंभवतीति विवरणोक्तदूषणपरिहारः। सुषुप्तिविषये विवरणवार्तिकाद्यनुवादः ४२१

'न किंचिदहमवेदिषम्' इति प्रत्यवमर्शः अनुभवसत्वेऽपि विषयावच्छेदविगमेनोपपद्यतइति शङ्का। सुषुप्तौ सविशेषानुभवस्य स्थापयिष्यमाणत्वम् ॥ ४२२

अहं जानामीत्यादेरेकार्थविषयकत्वं परैरभ्युपगम्यते । 'योऽहमद्राक्षं सोऽहं जानामि' इत्यादिप्रतीतेरप्येकार्थविषयत्वं परेषामपि संमतम् । सुषुप्तावहमर्थाभावे सुषुप्त्यनन्तरकालिकप्रत्यभिज्ञायाः अयोगः असंप्रज्ञातसमाधिः संस्काररूपएवेति योगव्याख्यातारः । मधुसूदनसरस्वतेश्च तथैवाशयः । वृत्तिरूपएवेति शङ्कराचार्यादयः । एतत्समाधेः सविशेषविषयकत्वं भावप्रकाशे तृतीयसंपुटे निरूपितम् ॥ ४२३

प्रभायाइव धर्मभूतज्ञानस्य तात्त्विकविषयसंबन्धेनैव उत्पत्त्यादिव्यवहारः । परमतेतु दृष्टान्तानुसारो न घटते । 'नह्यजं विभागयास्ति' इति इष्टसिद्धिवाक्यपर्यालोचनम् ॥ ४२४

इष्टसिद्धौ दृग्दृश्ययोः भेददूषणमुखेन भेदस्वरूपसमर्थनासम्भवेन च दृशि विभागाभावस्साधितः । 'अबाधितप्रतिपत्तिसिद्ध' इत्यादिना तत्पर्यालोचनम्, छेदनवत् ज्ञानं सकर्मकधात्वर्थः कर्मभेदेन छेदनभेदवत् ज्ञानभेदोऽप्येषितव्यः ॥ ४२५

प्रमातृप्रमाणप्रमितीनां लघुचन्द्रिकोक्तवैषम्यासम्भवेन साम्योपपादनम् ॥ ४२६

क्तिन्प्रकृत्यर्थस्य नात्मत्वमित्युत्तरत्र स्फुटीभविष्यति, तेन इष्टसिद्धिवार्तिकोक्तरीतिर्निरवकाशा । निर्धर्मकत्वसाधनानन्तरं दृशो विभागाभावः इष्टसिद्धावुक्तः। तत्क्रमव्यत्यासेनात्रोक्तौ बीजम्। चितः तस्याः निष्प्रकारकवृत्तिविषयत्वस्य च साधनानन्तरमेव परोक्तदृश्यत्वादिपरिष्करणसम्भवः । उक्तसाधनमेव न संभवतीति पूर्वमेव निरूपितम् ॥ ४२७

संबन्धत्वव्यापकदेशकालविप्रकर्षाभावस्यातीतादावभावात् आध्यासिक एव संबन्धः दृग्दृश्ययोः इत्यद्वैत सिद्धयक्तिरनुपादेया । वृत्त्या आवरणभङ्गेनैव व्यवहारस्य परसंमतत्वेन वृत्तिविषयतात्त्विकसंबन्धेनैवोपपत्तेः धर्मिग्राहकमानेनैव तात्त्विकसम्बन्धसिद्धिसम्भवात् । योगाचारोक्तसंबन्धानुपपत्तितुल्यत्वमेव परसंमतसंबन्धानुपपत्तेरपि ४२८

परैः कार्यकारणभावस्याप्यनङ्गीकारेण तात्त्विकातात्त्विकविभागाभ्युपगमेन च स्वप्रकाशानभ्युपगमेऽप्युपपत्तेः प्रागुपपादनेन माध्यमिकमत एव पर्यवसानम् । 'नास्यामेयो धर्मोऽस्ति' (इष्टसिद्धि) इत्यत्र अप्रयोजकत्व-शङ्का संबन्धानुपपत्त्यादिना अद्वैतसिद्धौ या परिहृता सा वाचस्पतिनैव न्या.वा.ता.टीकायां परिहृतेति पूर्वमुक्तम् । 'जन्माद्यस्य यतः' इत्यत्र सूत्रकृतैव कार्यकारणभावस्य तात्त्विकत्वं साधयिष्यते ॥ ४२९

ज्ञानत्वस्वयंप्रकाशत्वादिनिरूपणम् ॥ ४३०

शुद्धे धर्मानभ्युपगमे धर्माणां ब्रह्मरूपत्वाङ्गीकारे वा संबन्धस्यासम्भवेन तद्बोधकश्रुत्यनुपपत्तिः ॥ ४३१

'सर्वतीर्थदृशां सिद्धिः' इति बृ.वार्तिकपर्यालोचनपरायाः 'सिद्धिश्चेदभ्युपेयेत' इत्यादियामुनसूक्तेः विवरणमुखेन वार्तिकपर्यालोचनम् । वृत्तेः आकाराख्यविषयत्वस्य द्वेधा परिष्करणेऽपि (अ.सि..गु.चं) कल्पितत्वेन शुद्धसिद्धिर्नैव संभवति ॥ ४३२

'घटस्य स्फुरणम्' 'चितस्स्फुरणम्' 'घटःप्रकाशते भाति, चित्प्रकाशते भाति' इति व्यवहाराणां ऐकरूप्यं न संभवति । निर्विशेषचितः शशशृङ्गतुल्यत्वमेव ॥ ४३३

संविदः आत्मत्वायोगः ॥ ४३४

अहमर्थस्यास्थिरत्वं सुषुप्तौ लयस्संविदः आत्मत्वं च प्रत्यक्षविरुद्धम् । अनुस्मृतेश्च 'सएवतु कर्मानुस्मृतिशब्दविधिभ्यः' इति सूत्रद्वये प्रत्यभिज्ञया अहमर्थस्य स्थिरत्वं परभाष्येऽप्युक्तम् । सुषुप्तावहमर्थनाशे लूनपुनर्जातकेशाङ्कुरादौ व्यक्तिभेदस्य प्रत्यक्षसिद्धत्वेन तत्र प्रत्यभिज्ञातुल्यत्वमेव स्यात् । ज्ञानोत्पत्तिनाशादयश्च प्रत्यक्षसिद्धाः ॥ ४३५

अहमर्थस्य स्थिरत्वम् । संविदः उत्पत्त्यादि प्रागुक्तमेव ॥ ४३६

उभयाभ्युपेतसंविदः आत्मत्वाभावः ॥ ४३७

चितः दण्डायमानवृत्तिभेदेन उपलब्धेरुपपत्तिर्न संभवति । दण्डमूलभागावच्छिन्नाकाशस्याग्रभागावच्छिन्नाकाशाश्रयत्वप्रतीतिव्यवहारायोगवत् परमते एतद्व्यवहारायोग एव । अहमर्थस्येदमनिदंरूपत्वं (४४०पु) आशङ्किष्यते इति तत्साधनपर अध्यासभाष्य पञ्चपादिकाऽप्यनुवादः ॥ ४३८

विवरणानुवादः ॥ ४३९

'ननुचाहंजानामि' इत्यादिभाष्यस्य पञ्चपादिकाघटकपदप्रत्यभिज्ञामुखेन पञ्चपादिकाऽनुवादरूपत्वम् । भामत्युक्तार्थानुवादश्च ॥ ४४०

४४३पु 'अहं जानामि' इत्यादिसिद्धान्तभाष्यस्यावतरणम् । विवरणोक्तानां साधकानां सर्वेषामसाधकत्वोपादनम् ४४१

अहमर्थेन प्राणमनसोः (प्रश्नोपनिषदि) सृष्टिप्रतिपादनात् । अहमर्थस्य प्राणोपाधिकत्वं मनउपाधिकत्वं च परसंमतं न घटते । 'तमुत्क्रान्तं प्राणोनूत्क्रामति' इति श्रुतौ, 'वाङ्मनसि दर्शनात्' 'तन्मनःप्राण उत्तरात्' इति सूत्रद्वये च प्राणमनउपाधिकत्वं जीवस्य न संभवतीति स्फुटम् । अहन्त्वमन्तःकरणमिति तु प्रमाणाभावादनुपादेयम् । पञ्चपादिकोक्तदृष्टान्तासम्भवश्च ॥ ४४२

'अहं जानामि' इत्यत्राहमर्थे जानात्यर्थे च चितः घटनं परसंमतम्। चितः द्वेधा भानं न कस्य चिदपि अनुभवसिद्धम्। 'न तावदयमेकान्तेनाविषयः' 'अस्मत्प्रत्ययविषयत्वात्' इति भाष्यभामत्यनुवादः॥ ४४३

कल्पतरु, परिमल, पञ्चपादिका, विवरणानुवादः॥ ४४४

आत्मसिद्धौ परोक्तप्रक्रियापर्यालोचनपूर्वकं अहमर्थात्मत्वसाधकयामुनमुन्युक्तार्थं श्लोकरूपेण प्रकाशयति 'अहमर्थो नचेदात्मा' इत्यादिना परकीयभाष्यवार्तिक (नारायणकृत) अनुवादश्च॥ ४४५

अहमर्थस्य प्रत्यक्त्वमिदमर्थस्य पराक्त्वमेव युक्तम्। 'प्रतीपमञ्चति जानाति' (४४३.पु) भामत्युक्तार्थः नयुक्तः। किंतु 'प्रतीपमञ्चतीव निर्भासते' इत्याद्यात्मसिद्ध्युक्तार्थएव युक्तः। श्रुतिसूत्रभाष्यादिभिः अहं मनुष्य' इत्यादिज्ञानद्वैविध्यसाधनम्॥ ४४६

उक्तार्थोपपादनम्। प्रत्यक्षादिप्रमाणानामविद्यावद्विषयत्वमेव इत्याद्यहमर्थाध्यासासाधनपराध्यासभाष्य पञ्चपादिकाऽनुवादः॥ ४४७

पञ्चपादिकायां 'निरतिशयसुखावाप्तये' इत्येव वक्तव्यम्। 'नत्वनर्थहेतोःप्रहाणाय' इति पूर्वपक्षोक्तार्थसाधनमुखेन अध्यासासम्भव एव 'निरस्ताखिलदुःखोऽहम्' इत्यादिना भगवता प्रतिपाद्यते 'सोऽहं भगवश्शोचामि तंमा भगवान् शोकस्य पारं तारयतु' 'तमसःपार दर्शयति' इति भूमविद्योपक्रमोपसंहारार्थ 'निरस्तातिशयाह्लाद' इत्यादिविष्णुपुराणोक्तार्थश्चात्र विवक्षितः॥ ४४८

पराशरोक्तदिशा मोक्षार्थिनः श्रवणादौ प्रवृत्तेः परमते असंभवः। 'येनाहं नामृतास्यां किमहं तेन कुर्याम्' 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यः' इति श्रुतिश्चाहमर्थस्य मोक्षान्वयित्व एव श्रवणादौ प्रवृत्तिमुपपादयन्ती परमते बाधिका। 'अहमर्थविनाशश्चेत्' इत्यनेन बृहदारण्यकवार्तिकमतमात्रेऽनुपपत्तिः, प्रागुक्तानुपपत्तिस्तु सर्वपरमतेष्वपि॥ ४४९

बिन्दुटीकोक्तोपपत्तिप्रकारः 'मद्विनाशात्फलं न स्यात्' इति भट्टपादैरेव श्लोकवार्तिके निरस्तः। सुखादेःपुमर्थत्वसाधनपराद्वैतसिद्धिचन्द्रिकानुवादः॥ ४५०

'अनन्तादन्दभाक्' इति सूक्त्यैवोक्तार्थायोगोपपादनम्। सुखस्यास्मदर्थसंबन्धित्वेनेष्टताऽवच्छेदकरूपेण च ज्ञानाभावे प्रवृत्तिर्नैव संभवति॥ ४५१

योगसूत्रभाष्ये 'मानभूवं भूयासमिति इच्छाया अप्यहंत्वविशिष्टविषयकत्वेन परमते तादिच्छया प्रवृत्तिर्न घटते। 'स्वसंबन्धितया' इत्यादिना 'नाभाव उपलब्धेः' इति सूत्रभाष्यभामतीपर्यालोचनम्॥ ४५२

'अहमर्थसाक्षिणैव निर्वाह' इति भामत्यादिपर्यालोचनम्॥ ४५३

सिद्धान्ते भामत्युक्तानवस्था नास्ति। प्रमात्रादिशब्दानामर्थोऽपि सङ्गतो भवति। 'आत्मनश्च प्रत्याख्यातुमशक्यत्वात्' इत्यादिभामतीवाक्यमपि पूर्वभाष्यवाक्यैरेव पर्यालोचितम्। 'तमेव भान्तम्' इतिकठश्रुतेः तत्पूर्वश्रुतिविरोधेन निर्विशेषपरत्वमपि न संभवति॥ ४५४

'यत्रहि द्वैतमिव' इत्याद्यनन्तरं 'विज्ञातारमरे' इतिश्रुतौ विज्ञानमेव भूतपूर्वगत्या विज्ञातारमिति निर्दिष्टम्। इति (शां) भाष्ये 'यत्रहि द्वैतमिव' इत्यत्र परमार्थतः अद्वैते भिन्नमिव इत्याद्युपनिषद्भाष्ये च विज्ञातृशब्दस्य द्वैतशब्दस्यचार्थो न घटते। द्वैतशब्दस्य 'द्विधेतम्' इत्यादिवार्तिकादौ प्रकारद्वयसत्त्वार्थ इत्युक्तेः 'यत्रत्वस्य सर्वमात्मैवाभूत्' इत्यत्र बाधायां सामानाधिकरण्यम् इत्यादिगुरुचन्द्रिकोक्तेरपि

6

अद्वैतसिद्ध्यनुवादः । लघुचन्द्रिकोक्तखण्डनव्याख्यानुवादः ॥ ५७६

प्रातीतिकेन कार्यापत्तिवारणाय व्यावहारिकत्वेनैव कारणत्वं वाच्यम्; नतु दण्डत्वादिना इति हेतुतत्व बहिर्भूतं 'सत्यम्' इत्यसाङ्गत्यनिराकरणपरचन्द्रिकाऽनुवादः ॥ ५७७

उपाधित्वं भट्टप्राभाकरतार्किकसंमतमिति मूलविवरणपरलघुचन्द्रिकाऽनुवादः । व्यावहारिकसत्त्वस्यैव साधकत्वे तन्त्रता नतु परमार्थसत्यस्य' इत्यद्वैतसिद्ध्यनुवादः ॥ ५७८

सत्यद्वयनिराकरणपरभट्टपादवचनानामन्यार्थकल्पनपरगुरुचन्द्रिकाऽनुवादः । भट्टपादसंमतान् विवर्तवादविरुद्धान् बहूनर्थान् स्थापयित्वा भट्टपादोक्तदिशा भगवता असत्यात्सत्यसिद्धिनिरसनेन परोक्तार्थस्सर्वोऽपि भट्टपादेन दूषितप्रायइति तात्पर्यसमाधानारम्भः ॥ ५७९

सत्यद्वयनिराकरणेन 'सत्यत्वं नच सामान्यम्' इत्युक्त्या च उभयसाधारणव्यावहारिकसत्त्वस्य साधकताप्रयोजकत्वं न संभवति । असतः असाधारणं साधारणं च स्वरूपमेव नास्ति अतीतादेरप्यनुभवसंस्कारद्वारा श्रुत्यादौ संबन्धः संभवत्येवेति खण्डनोक्तदूषणस्य नावसरः । 'पूर्वसंबन्धनियमे' इति खण्डनकारिकाः सर्वार्थसिद्धौ पर्यालोचिताः ॥ ५८०

खण्डनसंमतस्वकाशस्यैवासिद्ध्या तदवलम्बनेन बाधकल्पनमपि न संभवतीति खण्डनोक्तिपर्यालोचनम् ॥ ५८१

प्रमाणमूलकानवस्था नदोष इति खण्डनोक्तरीतेः बौद्धाधिकारे शिरोमणिसंमतायाः प्रागेवाभिधानात् । (शं)भाष्ये 'अवगतेः सत्यत्वोक्तिर्लौकिकाभिप्रायेण' इति भामत्युक्तिपर्यालोचनम् । धूलीपटले धूमभ्रमेन वह्न्यनुमितिः (अ.सि) नैव प्रमा । 'ज्ञानस्य स्वरूपतोऽबाधे विषयतोऽपि न बाधः' इति अ.सि.उक्तिः ज्ञानविषयजनकसामग्रीभेदेन अनुचिता । परमते लोकानुभवलोकमर्यादातिक्रमौ ॥ ५८२

स्वाप्नज्ञानस्य विषयोपलक्षितस्यैव प्रीतिभयसाधकत्वं, विशेषणत्वे बाधकसद्भावात् । विशेषणत्वाभावेनोपलक्षणत्वं किंतूपाधित्वमेवेति शब्दमणावप्युपलक्षणभिन्नोपाधिर्नैव संमतः । मणौ पङ्कजत्वस्य रूढ्यैवोपस्थितिः । अहमित्यादावुच्चारयितृत्वस्य नोपस्थितिः । गोत्वस्य शक्त्यैवोपस्थितिरिति च व्यक्तम् ॥ ५८३

उपलक्षणरूपप्रयोगोपाधित्वपरिष्करणम् । प्राभाकरमतानुवादपरशब्दमणितात्पर्यम् । एतेन चन्द्रिकोक्तेरयोगः सर्वनामस्थले गुरुचन्द्रिकोक्तप्रक्रिया ॥ ५८४

तत्पर्यालोचनम् । शक्तिवादोक्त्यनुसारेण गुरुचन्द्रिकोक्त्ययोगः । महाभाष्य उद्योतमञ्जूषाद्यनुवादेन तच्छब्दस्य नानार्थत्वायोगः, बुद्धिस्थत्वस्य बोधे अप्रकारत्वं च ॥ ५८५

सर्वनाम्नां पर्यायत्वं नानार्थत्वं च नास्तीति मञ्जूषादौ व्यक्तत्वेन इष्टापत्तिरिति गुरुचन्द्रिकोक्तिरनुपादेया । पङ्कत्वस्य प्रयोगोपाधित्वं नास्तीति पक्षधरमिश्रोक्तमेव युक्तम् । मणौ प्राभाकरमते शङ्काग्रन्थस्य तात्पर्यम् । पङ्कजशब्दवदुद्भिच्छब्दस्यापि योगरूढत्वमेवेति तन्त्ररत्नन्यायसुधयोर्व्यक्तम् । उद्भिच्छब्दस्य यौगिकत्वं खण्डदेवसंमतम् ॥ ५८६

अद्वैतसिद्ध्युक्तं प्रयोगोपाधित्वं न कस्यचित्सम्मतम् । शब्दमणौ शब्दाश्रयत्वविषये बहवः पक्षाउक्ताः तत्र मिश्रविवरणे शक्तिवादे च प्रयोगोपाधित्वं नैवोक्तम् । निर्विकल्पकत्वमपि यत्किंचिद्धर्माप्रकारकस्यैवोपपादितम् । एवंचाद्वैतसिद्ध्युक्तदृष्टान्तः कोऽपि न घटते । स्वाप्नार्थज्ञानस्यार्थोपलक्षितस्यैव सत्यस्य सत्यसिद्धिहेतुत्वम् । तेन नासत्यात्सत्यप्रतिपत्तिः ॥ ५८७

प्रतिबिम्बदृष्टान्तोऽपि न घटत इत्युपपादनाय प्रतिबिंबनिरूपणपरश्लोकवार्तिकतद्विवरणन्यायरत्नाकरयोरनुवादः । स्वदेशस्थबिम्बग्रहणस्यैव प्रतिबिंबग्रहणतया नासत्यात्सत्यासिद्धिः । एतेन प्रतिबिंबस्य सत्यत्वं बिंबप्रतिबिंबयोरैक्यं, प्रतिबिंबस्यासत्यत्वमेवेति पञ्चपादिका वार्तिककारयोर्मतं निरवकाशम् ॥ ५८८

नेत्रवृत्तिद्वैविध्यन दोषवशात्प्रत्यङ्मुखत्वादिभानम । लोहितः स्फटिकइति दृष्टान्तः यथार्थख्यातिनिरूपणावसरे भाष्य एव पर्यालोचयिष्यते । तेन पञ्चपादिकाकारप्रयासो विफलः ॥ ५८९

वाचस्पतिमतस्यापि पर्यालोचनम् ॥ ५९०

येऽपि रेखादयः इति भट्टपादोक्तदृष्टान्तस्य सम्यक्परिशोधनम् ॥ ५९१

ब्रह्मसिद्धि अद्वैतसिद्ध्यादिपर्यालोचनम ॥ ५९२

भर्तृहरिसिद्धान्तितस्फोटः ब्रह्मसिद्धिकृतो मण्डनस्यापि संमतः ॥ ५९३

स्फोटस्य महाभाष्यकृत्सम्मतत्वम् ॥ ५९४

श्लोकवार्तिकोक्तदूषणपरिहारपूर्वकं स्फोटसाधनम् ॥ ५९५

श्लोकवार्तिकोक्तदूषणपरिहारः । श्लोकवार्तिकोक्तस्फोटदूषणसाधनोपक्रमः ॥ ५९६–५९७

स्फोटस्य महाभाष्यकारासम्मतत्वस्थापनम् । 'गौरित्यत्र कश्शब्दः' इति महाभाष्ये वर्णानां विवक्षास्फुटा ५९८

'बुद्धौ कृत्वा' इति महाभाष्ये बुद्धिशब्दः धर्मभूतज्ञानपरः 'तपरं सूत्रे स्फोटश्शब्दइति महाभाष्योक्त्या स्फोटसिद्धिशङ्का ॥ ५९९

वर्णनित्यताविचारपरभाष्येण न स्फोटस्सिद्ध्यति ॥ ६००

'बुद्धौ कृत्वा' इत्यादिभाष्येणैव स्फोटनिरासः । मञ्जूषायां भाष्यविवरणस्याभिनिवेशमूलकत्वं 'प्रतीत्यप्रतीतिभ्याम्' इति सांख्यसूत्रमुपवर्षोक्तिश्च असङ्गतैवेति नागेशोक्तिः अभिनिवेशमूलैव । स्फोटसिद्धौ मण्डनमिश्रेणोपवर्षवाक्यदूषणमप्यनुपादेयम् ॥ ६०२

महाभाष्ये स्फोटो विवक्षित इति मण्डनमिश्रारोप एव नतु तत्त्वम् । 'उत त्वः पश्यन्' इति ऋग्वेदश्रुतौ वर्णातिरिक्तः स्फोटः नैवोक्त इति प्रदीपोद्योतसायणीयभाष्येषु स्फुटम् । एवं वस्तुतत्त्वे स्थिते भरतमिश्रेण स्फोटसिद्धावनया श्रुत्या स्फोटस्सिद्ध्यति । महाभाष्योक्तार्थोऽप्यसङ्गत इत्युक्तिरभिनिवेशमूलैव ॥ ६०३

'सिद्धिर्नो परमार्थेन' इति भट्टोक्तासत्यात्सत्यसिद्धिनिरसनप्रकारः परसंमतदृष्टान्तपर्यालोचनेन स्थापितः ६०४

भट्टपादोक्तदूषणं शशशृङ्गवदसत्येन सत्यसिद्ध्यङ्गीकारे आरम्भणाधिकरणे परैः प्राक् ब्रह्मज्ञानात् सत्यत्वाभ्युपगमेन न दोष इति परमते शङ्का ॥ ६०५

स्वप्नप्रकाशानङ्गीकारेऽपि माध्यमिकोक्तदिशा उपपादनसम्भवेन शून्यमेव तत्वमित्यनेनैव स्वप्रकाशस्वभावब्रह्मणोऽपि बाधः बौद्धसंमतबाह्यार्थापह्नवयुक्त्यादरे स्वप्रकाशस्याप्यसिद्धिरेव स्यात् ॥ ६०६

'यदुक्तं वेदान्तवाक्यानि' इत्यादिभाष्यस्यावतरणम् ॥ ६०७

वेदान्तवाक्यानां सविशेषपरत्वसाधनोपक्रमः । 'सदेव सोम्येदम्' इत्यत्र 'आत्मा वाइदम्' इति श्रुत्यनुसारेण 'सदेवेदमग्रे एकमेवासीत्' इत्येवोद्देश्यविधेयभावः । 'यथासौम्येकेन' इति श्रुतेरारम्भणाधिकरणे परोक्तार्थानुवादः ॥ ६०८

वेदान्तसूत्रमुक्तावल्युक्तार्थानुवादः ॥ ६०९

'सत्यंज्ञानम्' इति सामानाधिकरण्यं 'तत्पुरुषस्समानाधिकरण:' इति सूत्रमहाभाष्यप्रदीपोद्योतानुसारेण भिन्नप्रवृत्तिनिमित्तकैकार्थपरम् ॥ ६२६

सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभेदेनैकार्थपरत्वे शङ्कराचार्यसंमति: । 'समानाधिकरणे' इत्यत्राधिकरणशब्दप्रयोगेण प्रवृत्तिनिमित्तभेदसूचनम् । 'नामन्त्रिते समानाधिकरणे' इति महाभाष्ये प्रवृत्तिनिमित्तभेद: न विवक्षित इति ध्वनितामित्युद्योतानुवाद: ॥ ६२९

मञ्जूषानुवाद:, तत्पर्यालोचनम् । अखण्डार्थसामानाधिकरण्यसाधनार्थमियं प्रवृत्ति: । मञ्जूषायां विष्णुपदार्थाभिन्न: कृष्णइति बोध: पर्यायशब्देपूक्त: । एवमेव शं.भाष्योक्तोदाहरणेऽपि संभवेन प्रवृत्तिनिमित्तभेदस्संभवत्येव । 'आग्नेयेदेवि' इत्यत्र योगार्थविवक्षणेनापि प्रवृत्तिनिमित्तभेदसिद्धर्यात । 'पट्वी मृद्वी' इत्यत्र प्रदीप एव प्रवृत्तिनिमित्तभेदोपपादनेन 'चार्थे द्वन्द्व' इति सूत्रमहाभाष्यमपि न विरुध्यते ॥ ६३०

(अ.सि) परमते लक्ष्यार्थस्य निर्विशेषस्य तात्पर्यविषयत्वेन मुख्यत्वम् । सिद्धान्तेतु निर्विशेषस्याप्रामाणिकतया शक्यार्थस्यैव मुख्यत्वं तात्पर्यविषयत्वं च । विवरणन्यायरत्नावल्युक्तदिशा पदान्तरप्रयोगसार्थक्यशङ्का ॥ ६३१

उक्तार्थपर्यालोचनम् । (ल.चं) विशेष्यविशेषणभावे सामानाधिकरण्यासम्भव एवाखण्डार्थत्वमित्युक्तया विशेष्यविशेषणभावे सामानाधिकरण्यस्यैव मुख्यत्वं सिद्धम् । विशिष्टान्वयबोध: उपलक्षितान्वयबोध इति बोधो द्विविध: । उपलक्षणस्य प्रकारत्वमेव । उपहितान्वयबोधो नास्त्येवेति सर्वसम्मतम् । एवं च 'सत्यंज्ञानम्' इत्यत्रोपलक्षितान्वयबोध ऐव परैरङ्गीकारेण उपलक्षणस्याप्रकारत्वासम्भवात् । निष्प्रकारकज्ञानमभ्युपेत्य पदान्तरप्रयोगसार्थक्यं नोपपादयितुं शक्यते ॥ ६३२

'छत्री कुण्डली' इत्यादौ धर्माणां भानेन प्रतिबन्ध्यप्रतिबन्धकभावस्संभवति, परमते न तद्दृष्टान्तसंभव: । अत: पदान्तरप्रयोगसार्थक्योपपादनं न संभवति ॥ ६३३

प्राक् (७१—७२.पु) उदाहृत 'अविरुद्धविशेषण' इति सं.शा.मधुसूदनसरस्वतीविवरणपर्यालोचनम् ६३४

'भिन्नाभिन्नत्वौ' 'भेदोभिन्नश्च' इति सं.शा. उक्तदोषस्य सिद्धान्ते न प्रसर इत्युपपादनम् । स्रष्टु: राज्ञ: नित्यत्वेन राजकुमारनयस्य परमते असंभवेन सिद्धान्तएव तस्य सङ्गतिरिति तत्सम्प्रदायविरोधात्क्वापि न परसंमताखण्डार्थत्वम् । विशेष्यविशेषणभाव एव सामानाधिकरण्यं मुख्यमिति भगवद्यामुनमुनिसिद्धान्त: ॥ ६३५

'एकमेवाद्वितीयम्' इति परमतशङ्का ॥ ६३६

अस्यां श्रुतौ परोक्तार्थ: न विवक्षित इति प्रागेवोपपादनेन 'आत्मा वा' इति श्रुत्यन्तरानुसारेण परिणाम्युपादानत्वं निमित्तत्वं च विवक्षितम् ॥ ६३७

स्वरूपज्ञानेन सर्वज्ञत्वासम्भव: ॥ ६३८

'सत्यंज्ञानम्' इत्यत्र स्वरानुपपत्त्या ज्ञानशब्दस्य ज्ञानवदित्यर्थकत्वमिति यामुनसूक्त्यनुवाद: । तेन सधर्मकमेव तत्र विवक्षितं नतु निर्धर्मकम् । 'यतो वा' इति श्रुतौ जगत्कारणे एकत्वस्य विवक्षितत्वेन स्वान्यसामान्यत्वमेव विवक्षितमिति निर्गुणश्रुत्यैकरस्यशङ्का ॥ ६३९

निर्गुणश्रुते: पूर्वं परत्र च 'ज्ञ' इति सामान्यत: विशेषतश्च गुणानां प्रतिपादनेन तत्र श्रुतिषु राजकुमारनयसूचनेन सर्वेषां पुत्राणां एकपितृप्राप्ते: विवक्षया सृष्टिवाक्यानां मुक्तिवाक्यानां च सामरस्येन निर्गुणश्रुतिपूर्वापरश्रुतिपर्यालोचनया निर्गुणश्रुते: हेयगुणनिषेधपरतया सङ्कोच एव युक्त: ॥ ६४०

मुपाश्रित्य मम साधर्म्यम् ' इत्यत्र जीवस्य ब्रह्मसाधर्म्यमेव नत्वैक्यम् । सादृश्यं जीवपरभेद एव ॥ ७७२

' मद्भावं सोऽधिगच्छति ' इत्याद्युपसंहारे उपक्रमानुसारेण साधर्म्यमेव विवक्षितम् । ' जगद्व्यापारवर्जं ' ' मुक्तोपसृप्य व्यपदेशाच्च ' इत्यादौ जीवपरभेदस्यैव विवक्षितत्वसाधनम् ॥ ७७३

' जगद्व्यापारवर्जं समानो ज्योतिषा ' इति वृत्तिवाक्ये ' परंज्योतिरुपसंपद्य ' इति श्रुतिर्विवक्षिता ७७४

' य इहात्मानमनुविद्य ' इत्यादौ दहरविद्यायां राजशासनानुरोधेन फलप्रतिपादनेनापहतपाप्मत्वादि-समानधर्मवत्त्वाभिधानेन राजकुमारनयविशदीकरणम् ॥ ७७५

' ब्रह्मविदाप्नोति ' ' एतमानन्दमयमात्मानम् ' इत्याद्युपक्रमोपसंहारवाक्ययोः सिद्धान्ते अर्थस्वारस्यनिरूपणमुखेन परमते औपचारिकार्थवर्णनं निरवकाशम् । सिद्धान्तिसम्मतार्थस्यैव श्रुतितात्पर्यविषयत्वेन आनन्दमयविद्या सगुणविद्यैव, नतु निर्गुणविद्येति साधनम् ॥ ७७६

निर्गुणविद्यात्वेन परसंमतप्रजापतिविद्याया अपि मुक्तस्य संचारप्रतिपादनेन सगुणविद्यात्वम् । आनन्दमयविद्यानिष्ठस्य मुक्तावानन्दवत्त्वप्रतिपादनेन आनन्दवद्ब्रह्मविषयकत्वेन सविशेषविषयकत्वम् । ' यथा नद्य ' इति मुण्डकश्रुतौ ' नामरूपाद्विमुक्तः ' इत्यत्र ' भिद्येते तासां नामरूपे समुद्र इत्येवंप्रोच्यते' ' पुरुष इत्येवंप्रोच्यते ' इति प्रश्नवाक्यैकरस्येन जीवस्य बन्धकालिकनामरूपविमोक एव शं.भाष्योक्तः विवक्षितः । नतुनामरूपसामान्यविमोकः । तेन प्रपञ्चस्य ज्ञाननिवर्त्यत्वरूपमिथ्यात्वं नानया श्रुत्या सिद्ध्यति ॥ ७७७

अतः अस्यां श्रुतौ ' परात्परं पुरुषमुपैति ' इत्यत्र ब्रह्मप्राप्तिरेव विवक्षिता ॥ ७७८

' तदा विद्वान्—निरञ्जनःपरमं साम्यमुपैति ' इत्यत्र विद्वानित्यस्य वैयर्थ्यपरिहाराय ज्ञानसाम्यमेव विवक्षितम् । परमशब्देन कस्मिन्नपि विषये न्यूनता नास्तीति बोध्यते । प्रश्नोपनिषदि ' ससर्वज्ञः ससर्वज्ञः ' इति प्रतिपादनेन मुक्तौ सर्वज्ञत्वप्रतिपादनम् । ' पुरुषमुपैति ' इत्यत्र पुरुषशब्दप्रयोगेण अन्तर्यामित्वस्य कृपामूलकतया ज्ञानपूर्णविकासरूपैव प्राप्तिः मुक्तिः इत्यपि सूच्यते । एतेन नहि परिणामिज्ञानस्य किंचित्प्रयोजनमिति परोक्तेरनवकाशः ॥ ७७९

' इत्याद्या ' इत्यत्र ' तादृगेव भवति ' इत्यादिश्रुतयो विवक्षिताः। एतावता परसंमतकतिपयविद्यानां न निर्गुणविद्यात्वमपितु सगुणविद्यात्वमिति साधितम् ॥ ७८०

पराविद्या निर्गुणविषयिणी ज्ञानरूपा नतूपासनरूपा इति परसंमतार्थपर्यालोचनम् । ' अदृश्यत्वादिगुणक ' इत्युक्त्या पराविद्यायां सगुणस्यैव विषयत्वं सूत्रकृता स्पष्टीकृतम् ॥ ७८१

' यथाक्रतुः' ' अभिसंभविताऽस्मि ' इत्यत्रोपासनस्य तरतमभावानापन्नमेव फलं विवक्षितमिति साधनम् । ' आनन्दादयःप्रधानस्य ' इत्येतत्सूत्रभाष्यभामत्यादिषु आनन्दत्वादिगुणप्रतिपादनेन सूत्रकृतः सगुणस्यैव विवक्षितत्वं सिद्ध्यति । अत्र (वे.सू.मु) ब्रह्मानन्दोक्तिपर्यालोचनम् ॥ ७८२

' विकल्पोऽविशिष्टफलत्वात् ' इति सूत्रे उपासनफलविशेषः परेषामपि संमतः । तत्र ' एतमितःप्रेत्य अभिसंविताऽस्मि ' इति श्रुतावुपासनफलं प्राप्तिरित्येव स्पष्टम् । एतदनुरोधेन ' एवं मुक्तिफलानियमः ' इति सूत्रानुरोधेन च ' विकल्पोऽविशिष्टफलत्वात् ' इत्यत्रापि ब्रह्मप्राप्तिफलमेव विवक्षितम् । नतु (शं.सू.भा) परसंमतसाक्षात्काररूपफलम् ॥ ७८३

उपासनं मुक्तिसाधनमिति वृत्तिकारसिद्धान्तः, वाक्यकारस्तु जगदसत्यत्ववादी इति नतत्सिद्धान्तः ।

अयमर्थः ‘ अन्तर्गुणा भगवती ’ इति संक्षेपशारीरकादौ व्यक्त इति परेषामाक्षेपपरिहारायोपासनरूपैव सद्विद्या मुक्तिफलेति वाक्यकारसिद्धान्तस्थापनम् । ‘ परिणामस्तु स्याद्दध्यादिवत् ’ इति वदतः वार्तिककृतः परिणाम वाद एव संमतः न विवर्तवादः ॥ ७८४

‘ न संव्यवहारमात्रत्वात् ’ इति परोदाहृतवाक्यकारवाक्ये समित्यनेन अबाधितत्वबोधनेन परिणाम वाददृढीकरणम् । ‘ यद्यपि सचित्तः—अन्तर्गुणामेव देवतां भजते ’ इति द्रमिडभाष्यस्य वेदार्थसंग्रहे सम्यग्वि-वरणकरणेन ‘ नतु पुनस्सगुणात्मवादे ’ इति संक्षेपशारीरकवाक्यमपि पर्यालोचितम् । ‘ ब्रह्मैव सन्ब्रह्माप्येति ’ इति श्रुत्यन्तरानुरोधेन ‘ ब्रह्मवेद ब्रह्मैव भवति ’ इत्यत्राप्यभेद एव विवक्षितः । नवीनोक्तरीतिस्त्वनुपादेया इति संक्षेपशारीरकग्रन्थानुवादेन शङ्का ॥ ७८५

संक्षेपशारीरकानुवादः । श्रुत्यन्तरैकार्थ्येन ‘ ब्रह्मवेद ’ इत्यत्रान्यार्थ एव विवक्षितः नतु परसंमतार्थ इति साधनम् ॥ ७८६

अत्र परमशब्दप्रयोगेण ‘ तदेव ’ इत्यनभिधाय ‘ ब्रह्मैव ’ इत्यभिधानेन ‘ ब्रह्मवेद ’ इत्यत्र बृंहणत्वा र्थानुगुण्येन च ‘ ब्रह्मैव ’ इत्यत्र ब्रह्मशब्दः धर्मभूतज्ञानपूर्णविकासरूपबृहत्वविशिष्टपर इति साधनम् ॥ ७८७

सेयं गौरिति सविकल्पकाभिलापकशब्दवत् ‘ ब्रह्मैव भवति ’ इत्युक्तिः । सविकल्पकनिरूपणोक्तरीति-रत्रानुसंधेया ॥ ७८८

‘ क्षेत्रज्ञःकरणी ’ इत्यत्र विष्णुचित्तविवरणम् ॥ ७८९

भाष्येऽपि करणत्वेन निवृत्तिरेवात्र विवक्षिता ॥ ७९०

‘ तद्भावभावमापन्नः ’ इत्यादेः सिद्धान्तसिद्धाञ्जनोक्तार्थानुवादः ॥ ७९१

‘ परात्परं पुरुषमुपैति दिव्यम् ’ ‘ निरञ्जनःपरमंसाम्यमुपैति ’ ‘ एष आत्माऽपहतपाप्मा ’ ‘ य आत्मा अपहतपाप्मा ’ इत्यादिश्रुत्यर्थः ‘ तद्भावभावमापन्नः ’ इति श्लोके विवक्षितः । नतु (सि.सि.अं) परोक्तार्थ इति साधनम् ॥ ७९२

‘ क्षेत्रज्ञंचापि माम् ’ इत्यत्रान्तर्याम्यैक्यमेव विवक्षितमिति गीतावाक्यैरेव साधनम् ॥ ७९३

महापूर्वपक्षोपक्रमोक्तार्थद्वये प्रधानभूतनिर्विशेषस्य शास्त्रतात्पर्यविषयत्वं न संभवतीत्युपसंहारः । अय-मर्थः भट्टसम्मतः ॥ ७९४

सन्मात्रग्राहिप्रत्यक्षदूषणपरभट्टपादवाक्यानि दूषयता मण्डनमिश्रेण अविद्यावाददूषणमपि परिहृतम् । ब्रह्माज्ञानवादस्य एकजीववादस्य शङ्कराचार्यसंमतस्यानुपादेयत्वमपि सिद्धान्तितम् । शङ्कराचार्यपक्षं साधयन्तः विमुक्तात्मयतयः ब्रह्मसिद्धिकारपक्षं दूषयन्ति संक्षेपशारीरकादावपीत्थमेवेत्युपपादनम् ॥ ७९५

वाचस्पतिः मण्डनमिश्रमनुसृत्यैव जीवाज्ञानवादं साधयति । पञ्चपादसुरेश्वरादिबहुजनसम्मततया ब्रह्मा-ज्ञानवादपक्षस्यैव निरूपणमुचितमित्यत्र ब्रह्माज्ञानवादपक्षस्यैव विचारःक्रियते ॥ ७९६

पक्षद्वयविकल्पः । ब्रह्माज्ञानवादे स्वप्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वादिति मूलोक्तदूषणस्याद्वैतासि-द्धितद्व्याख्ययोः परिहारस्यानुवादः । तत्पर्यालोचनेन मूलोक्तार्थस्थापनम् ॥ ७९७

‘ ज्ञानरूपं परंब्रह्म ’ इति नाथमुन्युक्तिविवरणमुखेन ब्रह्माज्ञानवादपर्यालोचनम् ॥ ७९८

‘ ब्रह्मवित् ’ ‘ ब्रह्मवेद ’ इत्यादौ वृत्तिरेव विदिधात्वर्थः । ज्ञानविषयत्वं ज्ञानतादात्म्यम् तदेव प्रमे-

नेन प्रत्यूढत्वोपपादनं न संभवति। सुषुप्तौ कर्मसामान्यस्य नलयः, अपितु कर्मविशेषस्यैव कर्ममूलकएवज्ञानाभावः ८६९

'नासदासीत्' इति श्रुतौ 'कुहकस्य शर्मन्' 'रेतोधा आसन्महिमान आसन्' 'सतो बन्धुमसति निरविन्दन्' इत्युत्तरवाक्यानुसारेण सदसच्छब्दयोः भाष्योक्तचिदचिद्व्यष्टिपरत्वस्यैव युक्तत्वम्। 'आसीदिदं तमो भूतम्' इति मनुवचनमप्यस्मिन्पक्षेऽनुकूलम् ॥ ७७०

सदसच्छब्दयोः लघुचन्द्रिकोक्तसत्यालीकपरत्वस्यायोगः ॥ ८७१

'नासदासीन्नोसदासीत्तदानीम्' इत्यत्र तदानीमित्यस्य सिद्धान्तसिद्धार्थे एव सामञ्जस्यं नतु परमते ॥ ८७२

'मायांतु प्रकृतिं विद्यात्' इति श्रुतिरेव मायाशब्दस्य विचित्रकार्यकारित्वं प्रवृत्तिनिमित्तमिति स्थापयति। 'अस्मान्मायी' इत्यत्र मायास्वामित्वमेव विवक्षितम्। गीताविष्णुपुराणाद्युपबृंहणानुरोधेन मायातरणस्यैव विवक्षितत्वम् ॥ ८७३

'तस्याभिध्यानात्—विश्वमायानिवृत्तिः' इति श्रुतौ पूर्वार्धविरोधेन 'अहंब्रह्मास्मि' इत्येवंरूपात् ध्यानादिति सं.शा.विवरणे मधुसूदनसरस्वत्युक्तिरनुपादेया। नृसिंहतापनीयवाक्यस्य परोक्तार्थपर्यालोचनम् ॥ ८७४

'यदचरस्तन्वा वावृधानः' इति ऋग्वेदश्रुत्या मायाशब्दस्य मिथ्यार्थकत्वमिति चन्द्रिकोक्तं नघटते। तस्यांश्रुतौ तदुक्तार्थस्याविवक्षितत्वत् 'ऋतेऽर्थं यत्प्रतीयेत' इति भागवतवचनम् अष्टमोक्तप्रश्नप्रतिवचनपर्यालोचनया न चन्द्रिकोक्तदिशा मायाशब्दस्य मिथ्यार्थत्वं साधयितुमलम् ॥ ८७५

'यावनहम्' इत्यादिचतुश्श्लोक्या अपि शुकपक्षीयोक्तार्थ एव युक्त इति 'ऋतेऽर्थम्' इत्यस्यापि शुकपक्षीयोक्तार्थस्यैव युक्तत्वम् ॥ ८७६

मायायाः अस्त्रनाश्यत्वकथनेन ज्ञाननाश्यत्वरूपमिथ्यात्वासिद्धिः। 'दासानामिन्द्रो मायया' इत्यत्र मायाशब्दस्य शक्तिपरत्वं सायणीयेऽप्युक्तम् ॥ ८७७

बृ.शं.भाष्ये ऋग्वेदसायणीये च मायाशब्दस्य प्रज्ञार्थकत्वोक्त्या न मिथ्यार्थकत्वम्। परसंमताविद्यासाधकश्रुत्यन्तरविचारः ॥ ८७८

'नीहारेण प्रावृता' इति श्रुतौ नीहारशब्दस्य विवरणोक्ताज्ञानार्थकत्वं न विवक्षितम्। 'सआशिषा' इत्यत्र (सि.सि.अं) उक्तदिशाऽज्ञानं न विवक्षितम्, किंतु वासुदेवस्यान्तर्यामित्वमेव। पं.पा.उक्तदिशा ऐक्योपदेशान्यथाऽनुपपत्त्या अज्ञानकल्पनं न संभवति। ऐक्योपदेशस्यान्यार्थत्वात् ॥ ७७९

अनुप्रवेशनामरूपव्याकरणश्रुत्यनुसारेण 'अनेन जीवेन' इतिश्रुतौ परोक्तार्थः नविवक्षितः। 'सर्वाणि रूपाणि' इत्यत्र अभि इत्यनेन स्वाभिमुख्यबोधनेन भगवत्पर्यन्तत्वस्य नामरूपयोःसिद्ध्या छान्दोग्यनामरूपव्याकरणमपि स्वपर्यन्तनामरूपव्याकरणमेव विवक्षितम् ॥ ८८०

शङ्कराचार्यैः प्रस्थानत्रये विष्णुपुराणवचनानुदाहरणेऽपि सनत्सुजातीयभाष्ये पराशरस्य आत्मव्यतिरिक्तमिथ्यात्वमेवाभिप्रेतमिति विष्णुपुराणवचनैःसाधनेन परसंमतार्थविशदीकरणपूर्वकं विष्णुपुराणवचनेषु शङ्का ॥ ८८१

विष्णुपुराणस्य प्रपञ्चमिथ्यात्वे न तात्पर्यं, किंतु भुवनकोशस्वरूपादिनिरूपण एव ॥ ८८२

'तत्सर्वंवै हरेस्तनुः' इत्यस्य प्रथमत्वेऽपि 'तानि सर्वाणि तद्वपुः' इत्यस्योपादानं भगवच्छरीरत्वस्य सामानाधिकरण्यप्रयोजकतायाः अन्ते निरूपणाभिप्रायेण ॥ ८८४--८७५

'तानि सर्वाणि' इत्यनन्तरं 'सएव सर्वभूतात्मा इत्यस्योपादाने बीजनिरूपणम् ॥ ८८९

सङ्कोचविकासात्मकपरिणामशून्यस्यैव वस्तुत्वं तच्च आत्मनएव नत्वचेतनस्येत्येव पराशरवचनेष्वभिप्रेतम् नत्वात्मव्यतिरिक्तमिथ्यात्वम् ॥ ८९१

मुक्तिहेतुज्ञानस्य न निर्विशेषविषयकत्वं श्रुतिविरोधात् किंतु सविशेषविषयकत्वम् ॥ ८९२

अहमर्थाध्यासादीन्बहूनर्थान् शबराद्युक्तदिशा पर्यालोच्य शबरादिसंमतं विशेष्यविशेषणभावे सामानाधिकरण्यं मुख्यं तदेवेति च साधयितुं विशेष्यविशेषणभावे सामानाधिकरण्यस्य गौणत्वमखण्डार्थसामानाधिकरण्यस्यैव मुख्यत्वमिति परोक्तमर्थं पर्यालोच्य 'तत्त्वमसि' इत्यत्र 'नीलमुत्पलम्' इत्यत्रेव सामानाधिकरण्यमिति यामुनमुन्युक्तरीत्या साधयितुमुपक्रमः ॥ ८९३

'सोऽयं देवदत्त' इत्यत्रापि न लक्षणा इति भाष्योक्तार्थस्य प्रतिकोटिभूतः अ.सि.,गु.चं.इत्यादिषु परोक्तार्थः (३२९.पु) पर्यालोचितः ॥ ८९४

'तत्त्वमसि' इत्यत्र उपक्रमोक्तसामानाधिकरण्यप्रकारेणैव सामानाधिकरण्यम्। 'अहंब्रह्मास्मि' इत्यत्र बाधायां सामानाधिकरण्यमिति नैष्कर्म्यसिद्धिग्रन्थानुवादः। तत्र मूलं विशेष्यविशेषणभावापरित्यागइति ज्ञानोत्तममिश्रविवरणमेव ॥ ८९५

सुरेश्वरमते प्रतिबिंबासत्यत्वेन बिंबप्रतिबिंबैक्यनयेन अखण्डार्थत्वासम्भव एव मूलम्। नञः अभावाद्बाधार्थत्वं सामानाधिकरण्यस्य न संभवतीति पञ्चपादिकोक्तार्थ एव भाष्येऽभिहितः ॥ ८९६

संबन्धवार्तिकोक्तदिशा राजत्वज्ञानेनैव व्याधत्वभ्रमानिवृत्तिः व्याधभावस्यापीति दृष्टान्तवैषम्यं तत्त्वमसि इति दार्ष्टान्तिके। बाधकज्ञानस्य सप्रकारकत्वाभावात्। विशेष्यविशेषणभावे सामानाधिकरण्यस्यैव मुख्यस्य साधनोपक्रमः ॥ ८९८

सद्विद्यायाः निर्गुणविद्यात्वं शाण्डिल्यविद्यायाः सगुणविद्यात्वमिति परोक्तार्थः श्रुतौ न विवक्षितः उभयत्राप्युपादानोपादेयभावनिबन्धनैक्यस्यैव विवक्षितत्वादित्यर्थस्य साधनाय विद्याद्वयवाक्योपादानम् ॥ ९००

उपदेशसाहस्रयामुदाहृतायाः 'अन्तःप्रविष्टश्शास्ता' इति श्रुतेः परसंमतार्थो न विवक्षितइत्यभिप्रेत्य तच्छ्रुत्यर्थनिर्धारणाय तस्याश्श्रुतेरुपादानम् ॥ ९०१

शाण्डिल्यविद्यायां—'एषम आत्मा' इत्यत्र योऽयमर्थो विवक्षितः सएव 'सत आत्मा' 'एषत आत्मा' इत्यन्तर्यामिब्राह्मणेऽपि विवक्षितइति 'ऐतदात्म्यम्' इत्यत्रापि तस्यैवार्थस्य विवक्षा। अतश्च शाण्डिल्यविद्यायामभेदवाक्यवत् सद्विद्यायामभेदवाक्यमिति सिद्धान्तः ॥ ९०२

सद्विद्यायां जीवब्रह्माभेद एव विवक्षित इति ब्रह्मविद्याऽऽभरणग्रन्थानुवादः ॥ ९०३

तत्पर्यालोचनारंभः सद्विद्योपक्रमे नियमनार्थप्रवेशस्यैव विवक्षितत्वम् ॥ ९०४

'ऐतदात्म्यमिदं सर्वम्' इत्यत्र बहुव्रीह्यनन्तरभावप्रत्ययः संबन्धबोधक एव 'तत्सत्यम्' इत्यत्र सर्वसत्यत्वं विवक्षितम् 'मृत्तिकेत्येव सत्यम्' इत्युपक्रमे दृष्टान्तेऽभिहितोऽर्थः उपसंहारे दार्ष्टान्तिकेऽभिहितः ॥ ९०५

'तत्त्वमसि' इत्यत्र परमते अज्ञातार्थज्ञापकत्वाभावस्य विवरणे उक्तया 'ऐतदात्म्यम्' इत्युपक्रमोक्तार्थस्यैव 'तत्त्वमसि' इत्यत्र उपसंहार इत्येव युक्तम्। विशिष्टस्यैवाभ्यासात् ब्रह्मविद्याऽऽभरणोपात्तमहाभारतकोशद्वयमात्रोपलब्धश्वेतकेतुसुवर्चलोपाख्यानपरसंमतार्थपर्यालोचनम् ॥ ९१७

तत्पर्यालोचननिगमनम् ॥ ९१०

तत्त्वाक्येनैवावगतम् ' इत्यादिभाष्यसूक्तेरर्थः (३४३.पु) निरूपितः। सामानाधिकरण्यं प्रकारद्वयापरित्यागेवैत्यर्थः (३३०.पु) निरूतितः ॥ ९११

' शरीराकृति ' इति (वि.पु) वचने आकृतिशब्दप्रयोगेण जातिगुणयोरिव शरीरस्याप्याकृतित्वेनाकृत्यधिकरणनयेन पुमान् देवः इत्यादिशब्दानां जीवपरत्वं पराशरेण सूचितम्। अत्र गवादिशब्दैः लक्षणांविना अभेदेन व्यक्तिबोधइति भट्टसोमेश्वरः, लक्षणैवेति खण्डदेवः ॥ ९१२

शरीरशरीरिणोरुभयोरपि शब्दबोध्यत्वं भट्टसंमतम्। आकृत्यधिकरणं जातिशक्तिनिरूपणपरं व्यक्तिबोधो लक्षणयेति तत्पक्षः आकृत्यधिकरणमेव व्यक्तिपर्यन्तशक्तिनिरूपणपरमिति सिद्धान्तः। आकृत्यधिकरणारुणाधिकरणयोः शक्त्यैव व्यक्तिबोधइति वादनक्षत्रमालायामप्युक्तम् ॥ ९१५

ब्रह्मविद्याऽऽभरणोक्तस्य ब्राह्मणादिशब्दानां भ्रमसिद्धार्थानुवादित्वमेवेत्यर्थस्य पर्यालोचनम् ॥ ९१६

शरीरशब्दस्य शरीरिविवेकप्रदर्शनार्थं प्रयुक्तस्य तत्प्रयोजननिर्वहणार्थं लोकव्युत्पत्तिमात्रमेवाङ्गीक्रियते। अरुणाधिकरणसरणिविवरण्यां खण्डदेवाप्पयदीक्षिताद्युक्तिपर्यालोचनपूर्वकमाकृत्यधिकरणारुणाधिकरणसिद्धान्तो निरूपितः ॥ ९१७

अरुणाधिकरणसरणिविवरण्यां आकृत्यधिकरणसूत्रार्थाकथनेन तत्सूत्रकथनोपक्रमः। शबरादिमते जातिविशिष्टव्यक्तिशक्तिपक्षोऽपि पूर्वपक्षेऽभिहितः। जातिमात्रशक्तिश्च सिद्धान्ते। जैमिनितात्पर्यपर्यालोचनेतु जातिशक्तिपक्षः पूर्वपक्षे विशिष्टशक्तिः सिद्धान्ते ' प्रयोगचोदनाभात् ' इत्येव सिद्धान्तसूत्रम्। कौस्तुभोक्तदूषणपर्यालोचनपूर्वकं तत्सूत्रार्थवर्णनम् ॥ ९१९

आकृतिव्यक्तिरूपोभयपदार्थेऽपि शक्तौ महाभाष्यादिसंवादप्रदर्शनम्। ' अन्यदर्शनाच्च ' ' आकृतिस्तु क्रियार्थत्वात् ' इति सूत्रद्वयार्थः ॥ ९२०

' आकृतिस्तु क्रियार्थत्वात् ' इति सूत्रे आकृतिशब्दोपादानेन ' आकृत्यभिधानाद्वा एकंविभक्तौ वाजप्यायनः ' इति (सरूपसूत्रे)महाभाष्योक्तदिशा वाजप्यायनसिद्धान्त एव जैमिनिसिद्धान्तइति निर्णयः। वाजप्यायनमतेऽपि ' नह्याकृतिपदार्थस्य द्रव्यं नपदार्थ ' इत्यादिना द्रव्यस्यापि पदार्थत्वं महाभाष्यएवोक्तम्। ' न क्रियार्थत्वात् ' इत्यादिसूत्रद्वयार्थः ॥ ९२१

' अनुज्ञापरिहारौ ' इत्यादिसूत्रैः ब्राह्मणादिशब्दानां तच्छरीरसंयुक्तजीवपरत्वम्। ' तद्य इह रमणीयचरणाः ' इत्यादिश्रुतयोऽत्र मूलम्। ब्रह्मविद्याऽऽभरणोक्तिपर्यालोचनम् ॥ ९२२

' संज्ञामूर्तिक्लृप्तिः— ' ' भाक्तंवानात्मवित्वात् ' इति सूत्रद्वयेन परमात्मनः जगच्छरीरकत्वज्ञानवन्त एवात्मविदः इति बोधितम्। ' तत्स्वाभाव्यापत्तिरुपपत्तेः ' ' अविभागेन दृष्टत्वात् ' इति सूत्रद्वयेन समानाधिकरणवाक्यतात्पर्यमपि सूचितम् ॥ ९२३

प्रवेशस्य नियमनार्थत्वे ' अनेन जीवेनात्मनेति विरुध्यत ' इति ब्रह्मविद्याऽऽभरणोक्तिपर्यालोचनम्। एतच्छ्रुतिशङ्करभाष्यानन्दगिरिटीकोक्तार्थानुसारेऽपि सिद्धान्तिसंमतार्थस्यैव युक्तत्वम् ॥ ९२४

' अनुप्रविश्य ' इत्यत्र अन्वितस्य तात्पर्यम्। ' अनेन जीवेन ' इत्यत्र अनेन इत्यनेन नव्यसंमतार्थानिरुद्धोऽपि नविवक्षितः ॥ ९२५

नवीनोक्तदूषणपरिहारः ॥ ९२६

श्रीभाष्यसूक्तिगूढार्थसंग्रहविषयानुक्रमाणिका समाप्ता



श्री लक्ष्मीहयवदन लक्ष्मीनारायणाभ्यां नमः

श्रीमते रामानुजाय नमः

श्री भ ग व द्रा मा नु ज मु नि वि र चि त म्

# श्रीभाष्यम्

## सु द र्श न सू रि प्र णी त श्रु त प्र का शि का ख्य टी क या

श्री लक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकाल-

संयमिप्रणीतश्रीभाष्यसूक्तिगूढार्थसंग्रहेण च सहितम्।

## प्रथमाध्याय—प्रथमपादः

यतीन्द्रकृतभाष्यार्था यद्व्याख्यानेन दर्शिताः। वरं सुदर्शनार्यं तं वन्दे कूरकुलाधिपम्॥

### श्रुतप्रकाशिका

*वरदं द्विरदाद्रीशं श्रीनिधिं करुणानिधिम्। शरण्यं शरणं यामि प्रणतार्तिहरं *हरिम्॥ १॥

बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम्। येनाव्याहतसङ्कल्पं वस्तु लक्ष्मीधरं विदुः॥ २॥

सम्यङ्न्यायकलापेन महता भारतेन च। उपबृंहितवेदाय नमो व्यासाय विष्णवे॥ ३॥

तस्मै रामानुजार्याय नमःपरमयोगिने। यः श्रुतिस्मृतिसूत्राणा*मन्तर्ज्वरमशीशमत्॥ ४॥

वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम्। भाष्यामृतप्रदानाद्यः सञ्जीवयति मामपि॥ ५॥

*प्रपद्ये प्रणवाकारं भाष्यं रङ्गमिवापरम्। *परस्य ब्रह्मणो यत्र शेषित्वं स्फुटमीक्ष्यते॥ ६॥

*श्रुत्यन्तेषु श्रुतं भाष्ये मतं ध्यातं हृदम्बुजे। लक्ष्मीपतिं प्रपद्येऽहं दृष्टं श्रीरङ्गधामनि॥ ७॥

*प्रमाणं च प्रमेयं च प्रमातारश्च सात्त्विकाः। जयन्तु क्षपितारिष्टं सह सर्वत्र सर्वदा॥ ८॥

अविस्तृतास्सुगम्भीरा रामानुजमुनेर्गिरः। दर्शयन्तु प्रसादेन स्वं भावमखिलं द्दढम्॥ ९॥

श्रीरङ्गेशाज्ञया लब्धव्याससंज्ञं सुदर्शनम्। वाचा विजयिनःपुत्रं भाष्यभक्तिरचूचुदत्॥ १०॥

## श्रुतप्रकाशिका

गुरुभ्योऽर्थश्श्रुतश्शब्दैः तत्प्रयुक्तैश्च योजितः। सौकर्याय बुभुत्सूनां सङ्कलय्य प्रकाश्यते ॥ ११ ॥
कः कृत्स्नं वेत्ति भाष्यार्थं श्रुतांशस्थितये कृतिः। आढ्यैः काकणिकेवैषा नोपेक्ष्या भाष्यवित्तमैः ॥ १२ ॥
*भाष्यंचेच्छ्रवणोत्स्वयं यतिपतिर्व्याख्यानवाचां तथा गाम्भीर्यादनवस्थितिर्मितमतेर्दूरं जनस्तद्गिराम्।
प्रष्टव्यः कथमीश्वरः सहि न नः प्रत्यक्षरूपो दृशां तद्भाष्यं सच भाष्यकृत्स च हरिस्सम्यक्प्रसीदन्तु नः ॥ १३ ॥

## श्रीभाष्यसूक्तिगूढार्थसंग्रहः

### श्रीमते निगमान्तमहादेशिकाय नमः

### श्रीब्रह्मतन्त्रस्वतन्त्रपरकालमहादेशिकेभ्यो नमः

सत्त्वस्थं नाभिपद्मे विधिमथ दितिजं राजसं तामसंचाब्जिन्द्वोरुत्पाद्य ताभ्यामपहृतमखिलं वेदमादाय धात्रे।
दत्वा द्राक्तौ च हत्वा वरगणमदिशद्वेधसे सत्र आदौ तन्त्रंचोपादिशद्यस्समहयशिराः मानसे सन्निधत्ताम् ॥ १
अध्यास्तेऽङ्कं परा वाक् वरहयशिरसो भर्तुराचार्यके या वाञ्छावानैतरेयोपनिषदि चरमाग्प्राक्तने खण्डआदौ।
यस्या वीणां च देवीं मनसि विनिदधत्ख्यातिमित्यन्त्यमन्त्रे सेशाना सर्ववाचो मम हृदयगता चारु मां वादयेद्वाक्
अल्पज्ञानल्पशक्तीनपि बहुपुरुषान्वीक्ष्य यो द्वापरान्ते वेदं सर्वं विभज्य श्रुतिशिखरपरब्रह्मसूत्रप्रणेता।
वेदोक्तं पञ्चरात्रैकरसमकथयन्मोक्षधर्मे मुनीन्द्रः पाराशर्यो हृदीन्धां स मम बहुविधाम्नायगूढार्थबोधी ॥ ३ ॥
व्यासो जैमिनिरप्रतीपहृदयावाचार्यशिष्यौ परां मीमांसां निबबन्धतुस्तदनु तां बोधायनाद्या बुधाः।
व्याख्यन् ब्रह्मनयस्य लक्ष्मणमुनिः भाष्यादि तत्र व्यधात् तत्सर्वं सुदृढीचकार निगमान्तार्यो दयन्तामिमे ॥ ४ ॥
भाष्यं यस्य निशम्य लक्ष्मणमुनेः कौतूहलाद्भारती सूत्राणामिदमुत्तमं विवरणं निश्चित्य मानानुगम्।
वागीशस्य निजप्रियाय निखिलान् वेदान्प्रदातुश्शुभां मूर्तिं स्वेन सदाऽर्चितां समददाद्यस्मै स जीयान्मुनिः ॥ ५ ॥

वरहयवदनश्श्रीभाष्यगूढार्थजातं प्रकटयितुमभीच्छन् चालयन्मां कृपावान्।
तरुविरचितयोषित्तुल्यमात्मेष्टसिद्धिं कलयति सपरत्वं दर्शयन्भाष्यसूक्तौ ॥ ६ ॥

आसूर्याख्यान्ववाये जनिमभजत यो लक्ष्मणार्यः परेषां अभ्यस्य ग्रन्थजातं समतनुत सतां प्रीतये सूत्रभाष्यम्।
आदौ बोधायनादिप्रकटितपथगं मां स तद्वंशजातं द्वारीकुर्वन्परत्वं विशदयति बुधामोदकृद्भाष्यसूक्तौ ॥ ७ ॥
वागीशाख्या श्रुतिस्मृत्युदितशुभतनोर्वासुदेवस्य मूर्तिः ज्ञाता यद्वागुपज्ञं भुवि मनुजवरैर्वाजिवक्त्रप्रसादात्।
प्रख्याताश्चर्यशक्तिः कविकथकहरिस्सर्वतन्त्रस्वतन्त्रः त्रय्यन्ताचार्यनामा मम हृदि सततं देशिकेन्द्रस्स इन्धाम् ॥ ८
वेदान्तगुरुमुखार्चितवागीशपदारविन्दमधुपालिम्। श्रीब्रह्मतन्त्रवत्मस्वतन्त्रकलिमथनमालिकां वन्दे ॥ ९ ॥
श्रीकृष्णब्रह्मतन्त्रोत्तमगुरुवपुषा यो ममापादिशत्प्राक् मन्त्रौ स्वौ जापयित्वाऽनभिमुखमपि मामात्मसेवाधिराज्ये।
भक्त्या प्रावर्तयच्च प्रकटयति सतां वागधीशो ममासावन्तर्याम्याद्यवृत्त्याद्यनुगुणयतिराड्भाष्यगूढार्थजातम् ॥ १०

कलिशठारिपुपूर्वान् व्यासजैमिन्यभीष्टप्रचकिटयिषया स्वद्राविडाम्नायभेदैः।
श्रुतिशिरसि निगूढं पञ्चरात्रे च सारं सकलपुरुषयोग्यं कुर्वतोऽहं नमामि ॥ ११ ॥

नाथार्यं यामुनेयं यतिपरिबृढमाम्नायचूडागुरुं तं नत्वाऽऽचार्यान्समग्रानपि कलिमथनान् ब्रह्मतन्त्रस्वतन्त्रान्।
श्रीमद्वागीशपादूपरिचरणपरो नव्यरङ्गेन्द्रयोगी संगृह्णात्याद्यवृत्त्याद्यनुगुणयतिराड्भाष्यगूढार्थजातम् ॥ १२ ॥

## श्रीभाष्यम्

### अखिल

### श्रुतप्रकाशिका

*सर्वेषां पुरुषाणां प्रमाणाधीनप्रमेयनिश्चयानामुपादित्सिताजिहासितेष्टानिष्टफलतत्साधनानामलौकिके पुरुषार्थे तत्साधनरूपे च वस्तुनि शब्दैकसमधिगम्ये * तत्राप्यपुरुषशेमुषीदोषमषीमालिन्यस्य वेदाख्याक्षरराशेरेव प्रधानतःप्रमाणतयाऽऽश्रयणीयत्वे सिद्धे * तत्र च पशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकामुष्मिकार्वाचीनफलतत्साधनपरेऽवगते पूर्वभागे, परमपुरुषार्थतत्साधनावबोधके च तदुपरिभागे पूर्वाचार्याभिमतमुक्तिघण्टापथकण्टकायमानविविधकुदृष्टिजनदुर्वचनशतोपप्लुते तदुपदर्शितकुपथप्रवृत्तिनि जगति च मोमुह्यमाने तदुज्जिजीवयिषया सदसद्विवेचनचतुरपूर्वाचार्यपरिचितं प्राचीनमेव समीचीनमध्वानं निष्कण्टकीकृत्य परमपुरुषार्थाभ्यर्थिजनसार्थं कृतार्थयितुं भवभयाभितप्तजनभागधेयवैभवभावितावतरणेन परमकारुणिकेन भगवता भाष्यकारेण शारीरकशास्त्रं व्याचिख्यासितम् । * परमर्षिप्रणीतानि व्याख्येयानि तेषां च महर्षिप्रणीतानि व्याख्यानानि च सन्ति चेत् तान्येव ह्यनुरोद्धव्यानि । नह्यनृषेस्सूक्ष्मदर्शित्वम् ; ऋषेरभिप्रायं ऋषिरेव च स्वतो वेदितुमर्हति ; नतु जडमतिरितरो जनः । ऋषिवचसामेवाभिन्नवक्तृकाणां मिथो विरोधे पूर्वपक्षाभिप्रायवैभववादादिभिरविरोधो नेयः ; भिन्नवक्तृकाणांतु विरोधे दुष्परिहरे युक्तियुक्तं ग्राह्यमिति न दोषः ये पुनस्सन्त्यपि तान्यनादृत्य व्याख्येयान्तराणि व्याख्यानान्तराणि च तद्विरुद्धानि रचयन्ति, तेषामाग्रहगृहीतहृदयत्वे पण्डितमानित्वे पाण्डित्यख्यापनपरत्वे च तत्प्रवृत्तिरेव प्रमाणम् । इतरेषां च व्याख्यातॄणामार्षव्याख्यानातिलङ्घित्वं **'उपासात्रैविध्यात्' 'सर्वत्र प्रसिद्धोपदेशात्' 'भूमा सम्प्रसादादध्युपदेशात्' 'दहरउत्तरेभ्यः'** इत्यादिषु स्पष्टतरम् । इहतु वृत्त्यनुसारःप्रतिज्ञातः । नच तत्प्रतिज्ञानमहृदयमेवेति शङ्कनीयम् ; दुष्परिहरबाधकानुपलम्भात् । यद्यपि कर्ममीमांसायां क्वचित्क्वचिदर्वाचीनव्याख्यातृभिराकुलत्वमापादितम् ; तथाऽपि तत्र प्रयोगमार्गे स्खलनाभावादनुष्ठानमात्राधीनायाः स्वर्गादिफलसिद्धेर्देवतास्वरूपतद्याथात्म्यसत्कार्यवादादिज्ञाननैरपेक्ष्यम् , परमपुरुषार्थस्य ज्ञानैकसाध्यतया ज्ञानमार्गस्खलनस्यात्महानिफलकत्वेन तद्विपरीतज्ञानानामवश्यपरिहर्तव्यत्वम् उत्तरभागे च तदर्थौपयिकतया प्रसक्तानां * पूर्वभागार्थानां प्रदर्शितयैव दिशा अनुक्तानामपि*शिक्षणीयार्थान्तराणां सुकरनिर्वाहत्वं चाभिप्रेत्य ब्रह्मसूत्राण्येव भगवान् भाष्यकारः प्रारभते विवरीतुम् ॥

एवं प्रारिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपं मङ्गलं श्रौतमाचरति **अखिलेत्यादिना** श्लोकेन ।

**मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न विद्यते ॥**

### गूढार्थसंग्रहः

ईशाना सर्वस्या वाचो देवी यदङ्कमध्यास्ते । कर्णाटदेशभाग्यं वागीश्वरएष मम मनोविशतात् ॥ १३

**अखिलभुवनजन्मेति** । अथ तत्र भगवान् रामानुजमुनिः ब्रह्मसूत्राणां श्रीवत्साङ्काद्यस्मदीयभाष्ययोस्संक्षिप्ततया विस्तृतं भाष्यमवश्यंकरणीयमित्यभिप्रयद्भिः भगवद्यामुनमुनिभिः भाष्यकरणे नियुक्तः । 'मानत्वं भगवन्मतस्य महतःपुंसस्तथा निर्णयः तिस्रस्सिद्धय आत्मसंविदखिलाधीशानतत्त्वाश्रयाः । गीतार्थस्य च सङ्ग्रहस्तुतियुगं श्रीदश्रीशयोरित्यमून् यद्ग्रन्थाननुसन्दधे यतिपतिस्तं यामुनेयं नुमः ॥' (गी.सं.र) इति आचार्यपादोक्तरीत्या ग्रन्थार्थाननुसंदधानः आत्म-

## गूढार्थसङ्ग्रहः

सिद्धौ—‘प्रकृतिपुरुषकालव्यक्तमुक्ता यदिच्छामनुविदधति नित्यं नित्यसिद्धैरनेकैः। स्वपरिचरणभोगैः श्रीमतिप्रीयमाणे भवतु मम परस्मिन् पूरुषे भक्तिभूमा’ इति मङ्गलश्लोकक्रममनुस्मरन् परममनुबन्धचतुष्टयमपि सूचयन् मङ्गलमारचयति **अखिलेत्यादिना**। यामुनसूक्तौ ‘परस्मिन् पूरुषे’ इत्यत्र पुरुषशब्दप्रयोगः **तंत्वौपनिषदं पुरुषम्** (बृ) परं पुरुषमभिध्यायीत —परात्परं पुरिशयं पुरुषमीक्षते’ (प्र) इतिश्रुत्यभिप्रायेण। **अखिलेत्यादौतु**, औपनिषदपुरुषस्यैव ‘विज्ञानमानन्दं ब्रह्म’ (बृ) इत्यत्र ब्रह्मशब्देन निर्देशेन, ‘येनाक्षरं पुरुषं वेद सत्यं प्रोवाचतां तत्त्वतो ब्रह्मविद्याम्’ (मु) इति श्रुतौ पुरुषशब्दसमभिव्याहारेण च ‘**अथातो ब्रह्मजिज्ञासा**’ इत्यादौ ब्रह्मशब्दप्रयोग इति ब्रह्मशब्दः प्रयुक्तः॥

यामुनमुनिभिः—‘प्रधानपुरुषव्यक्त कालानां परमंहि यत्। पश्यन्ति सूरयश्शुद्धं तद्विष्णोःपरमं पदम्॥’ (वि.पु १.२.१८) इति श्लोकार्थं मनसि निधाय ‘प्रकृतिपुरुषकाल’ इत्यादिप्रयुक्तम्। एतत्पूर्वं ‘सर्वत्रासौ समस्तं च—विद्वद्भिः परिपठ्यते॥’ इति श्लोकः। अत्र ‘परस्मिन् पुरुषे’ इत्यत्र पुरुषशब्दस्य वासुदेवएवेत्यर्थः। ‘भगवानिति शब्दोऽयं तथा पुरुषइत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने॥’ (पा.उ.६.२५४.६६) इति प्रमाणानुसारात्। ‘अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते। नास्ति तस्मात्परतरः पुरुषाद्वै सानातनात्॥ नित्यंहि नास्ति जगति भूतं स्थावरजङ्गमम्। ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥’ (शा.प.३४७.३१,३२) इति मोक्षधर्मवचने पुरुषशब्दार्थः वासुदेवइति स्फुटं प्रतीतिश्च। पराशरेण विष्णुपुराणे उपक्रमोपसंहारयोः वासुदेवशब्दार्थनिर्वचनेन, मध्ये वासुदेवद्वादशाक्षरमन्त्रानिर्देशकरणेन ‘यज्वाभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैः। वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्म्यहम्॥’ (वि.पु.५.१७.१५) इत्यत्र पाञ्चरात्रिकैः परतत्त्वविषये वासुदेवशब्दः प्रयुज्यते इत्यादिकथनेन पञ्चरात्रश्रुत्योः ऐकरस्यं निर्धारितम्। अत्र ‘सूरयःपश्यन्ति’ इत्यनेन ‘एकान्तिनः सदा ब्रह्म ध्यायिनो योगिनोहि ये। तेषां तत्परमं स्थानं यद्वैपश्यन्ति सूरयः॥’ (वि.पु.१.६.३९) इत्युत्तरत्राभिधानेन च ‘तद्विष्णोःपरमं पदगँ्सदा पश्यन्ति सूरयः’ इति सर्ववेदपठितमन्त्रः अत्र मूलमिति प्रतीयते॥

‘अतो देवेति वर्गेवै जपं कुर्यादतन्द्रितः। ब्रह्माद्यैर्वन्दितःपश्चात् विष्णोस्सायुज्यमाप्नुयात्॥’ इति शौनकीये ऋग्विधाने विनियुक्ते ऋग्वेदे अतो देवेति वर्गे क्रमेण ‘अतो देवा अवन्तुनः, इदं विष्णुर्विचक्रमे, त्रीणि पदा विचक्रमे, विष्णोः कर्माणि पश्यत, तद्विष्णोःपरमम्’ ‘तद्विप्रासो विपन्यवः’ (१.अ.१.अ.७व) इति मन्त्रषट्कं पठितम्, तत्र ऋग्वेदे तद्विष्णोरिति मन्त्रसहपठितानां मन्त्राणां शौनकीये ऋग्विधाने पृथगपि विनियोगउक्तः। तद्विप्रासो जपेन्मन्त्रं शतवारं दिनेदिने। अन्तकाले महाविष्णुं स्मरेत्किंचिन्न सर्वथा॥ २३७॥ अतो देवेति मन्त्रं वै दिनंप्रतिजपेच्छतम्। वासं याति महाविष्णोः विष्वक्सेनादिभिस्सह॥ २३८॥ इदं विष्णुर्जपेन्मन्त्रं शतवारं दिने दिने। जयादिभिश्च (दीनांच) संयुक्तः ततस्सारूप्यमेति सः॥ २३९॥ त्रीणि पदा जपेन्मन्त्रं शतवारं दिने दिने। सान्निध्यमेति विष्णोश्च वैनतेयादिभिस्सह॥ २४०॥ विष्णोःकर्माणि मन्त्रं च दिनंप्रति जपेच्छतम्। सायुज्यादिमहाविष्णोः विष्वक्सेनादिभिस्सह॥ २४१॥’ इति॥

पञ्चरात्रस्य गीताविस्तरत्वं मोक्षधर्म एव स्पष्टमुक्तम्। तदेतन्मनसि निधाय ‘नित्यसिद्धैरनेकैरित्युक्तम्।’ ‘यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत सतेजसि सूर्ये संपन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हवै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माजीवघनात् परात्परं पुरिशयं पुरुषमीक्षते। तदेतौ श्लोकौ भवतः तिस्रो मात्रा मृत्युमत्यःप्रयुक्ताः अन्योन्यसक्ता अनविप्रयुक्ताः। क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः। ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते। तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तम॰

## गूढार्थसंग्रहः

जरममृतं अभयंपरंचेति ' इति श्रुतिक्रमः। अत्र ' परं पुरुषम् ' ' परात्परं पुरिशयं पुरुषम् ' इति उभयत्र परशब्दप्रयोगेण ' एतद्वै सत्यकाम परंचापरं च ब्रह्म ' इत्युपक्रमोक्तं परं ब्रह्मोभयत्र पुरुषशब्दार्थ इति स्फुटं प्रतीयते । एतेन ध्यानं रूर्व शरीरिविषयकं फलमपि तथैवेत्युक्तं भवति ॥

बृहदारण्यकेऽपि–' सवा अयं सर्वासु पूर्षु पुरिशयः ' इति निर्वचनमेतदेकार्थम् ' विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः ' इति तंत्वौपनिषदम् इति श्रुतिसमानार्थको तरवाक्ये ब्रह्मविद्याफलप्रापकत्वं तद्विद्याप्राप्यत्वंच इत्यर्थद्वयं विवक्षितम्। ' स सामभिरुन्नीयते ब्रह्मलोकम् स सामभिर्यत्तत्कवयो वेदयन्ते ' इत्यत्र सूरीणां सामभिर्वेदनं सामभिरेव प्राप्तिश्चेत्यर्थद्वयं प्रतिपादितम् । ' सोऽश्नुते सर्वान्कामान्सह ' इत्युपक्रमोक्तब्रह्मप्राप्तिविशदीकरणपरं ' अस्माल्लोकात्प्रेत्य ' इत्युपक्रम्य ' आनन्दमयमात्मानमुपसङ्क्रम्य कामान्नी कामरूप्यनुसञ्चरन् एतत्सामगायन्नास्ते ' इत्युक्तौ लोकान्तरे प्राप्तिः अनुसंचरणं सामगानंचेत्येतत्सर्वमुक्तम् । एतेन प्रकृतिमण्डलादूर्ध्वस्थाने मुक्तानां प्राप्तिः तत्रानुभवातिरिक्तक्रियाचेत्यादिकं सिद्धम् ॥

एतेन ' द्विरूपंहि ब्रह्मावगम्यते । नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिवर्जितम् ' इत्युपक्रम्य श्रुतीरुदाहृत्य ' एवं सहस्रशो विद्याऽविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि । तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यापारः । तत्र कानिचिद्ब्रह्मणः उपासनान्यभ्युदयार्थानि कानिचित्कर्ममुक्त्यर्थानि । तेषां गुणविशेषोपाधिभेदेन भेदः एक एवतु परमात्मेश्वरः तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति । तथाऽपि यथागुणोपासनमेव फलानि भिद्यन्ते। ' तं यथायथोपासते तदेव भवति ' (मुद्गलोपनिषत्. ३.३) इति श्रुतेः ' यथा क्रतुरस्मिन्लोके पुरुषो भवति तथेतःप्रेत्य भवति ' (छा.उ.३.१४.१) (शं.१.१.१२) इति च ॥

एवं तस्मादपरब्रह्मविषया गतिः, यत्र परापरब्रह्मविवेकानवधारणेनापरस्मिन्ब्रह्मणि वर्तमाना गतिश्श्रुतयः परस्मिन्नध्यारोप्यन्ते । किं द्वे ब्रह्मणी परमपरंचेति ? बाढं द्वे । ' एतद्वै सत्यकामपरंचापरं च ब्रह्म यदोङ्कारः ' (प्र.उ.५.२) किं पुनःपरं ब्रह्म किमपरमिति ? उच्यते ! यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधात् अस्थूलादिशब्दैः ब्रह्मोपदिश्यते तत्परम्। तदेव ब्रह्म नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते । ' मनोमयःप्राणशरीरो भारूपः ' (छा.३.१४.२) इत्यादिशब्दैः तदपरम् । नन्वेवमद्वितीयश्रुतिरुपरुध्येत–न, अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात् तस्यचापरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं ' स यदि पितृलोककामो भवति ' (छा.८.२.१) इत्यादिजगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति अनिर्वर्तितत्वादविद्यायाः ' (शं.४.३.१४) इति फलमेव गतिः अपरब्रह्मोपासनफलं ऐश्वर्यादिकं सांसारिकफलमेवेति च ॥

एवं ' यःपुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत, स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ' (प्र.उ.५.२५) इति । तत्राभिध्यायतेः अतथाभूतमपि कर्म भवति । मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वात् ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टम् ' (शं.भा.१.३.१३) इति च परोक्तौ पूर्वग्रन्थद्वये गुणविशिष्टोपासनं अपरब्रह्मविषयकं आविद्यकम्, अपरब्रह्मोपासनफलमेव गतिः । अपरब्रह्मोपासनफलमैश्वर्यादिकं सांसारिकफलमेवेति, उत्तरग्रन्थे उपासनमतत्त्वविषयकमप्रमाज्ञानमेव, तत्त्वविषयकं प्रमा, उपासनफलं तरतमभावापन्नमेव क्वचिदुपासनं क्रममुक्तिफलं साक्षाच्च न नित्यतरतमभावापन्नफलकम् इति प्रतिपादनं निरवकाशम् ॥ ' परं पुरुषमभिध्यायीत ' ' परात्परं पुरिशयं पुरुषमीक्षते ' इत्युभयत्र परशब्दप्रयोगेण उपक्रमे परंचापरं च ब्रह्मेति कोटिद्वये ध्यानेक्षणयोः परब्रह्मविषयकत्वं श्रुतौ विव-

## गूढार्थसंग्रहः

क्षितमिति निर्मत्सराणां स्फुटतया प्रतीतेः । एतदनन्तरं ‘ स सामभिरुन्नीयते ’ इति क्रियाप्रतिपादनेन ‘ कामान्नी कामरू-
प्यनुसंचरन् ’ इति ‘ सोऽश्नुते सर्वान्कामान्सह ’ इत्युपक्रमोक्तार्थविशदीकरणेन च, ‘ स यदि पितृलोककामो भवति ’
इत्यादिफलं संसारगोचरमेवेत्युक्तिरपि निरवकाशा । परैः निर्गुणविद्यात्वेन अभिमतासु इत्थमर्थस्य तत्र तत्र प्रति
पादनेन परसम्मतनिर्विशेषस्यैवाप्रामाणिकत्वेन तस्य निर्गुणविद्यास्तावकत्ववर्णनस्यायोगाच्च । अत्रोपनिषद्भाष्याद्वैत-
सिद्ध्यादिपर्यालोचनेनायं सिद्धान्तः वृत्तिकारसम्मतः न प्रत्याख्यानमर्हतीति सम्यङ्निर्णीतं भावप्रकाशे तृतीयसंपुटे ।
विस्तरस्तत्रैव द्रष्टव्यः । भामतीन्यायरक्षामण्यादौ उपासनस्यातत्त्वविषयकत्वं न सम्भवतीति साधितम् । मण्डनमिश्रसि-
द्धान्तोऽपि तथैव । स्मृतेः अबाधितार्थविषयकत्वं सर्वैरपि दार्शनिकैरभ्युपगतमिति ध्यानस्य परमते मिथ्याविषयकत्वकल्प-
नेन बाधितार्थकत्वकल्पनं न कस्यापि संमतमिति बोध्यम् ॥

एतत्सर्वमभिप्रेत्यैव ‘ परस्मिन्पूरुषे ’ इत्युक्तम् । ‘ परस्मिन् पूरुषे भक्तिभूमा ’ इत्यनेन ‘ सवा अयं सर्वासु पूर्षु
पुरिशयः ’ इत्येतदनन्तरं ‘ इन्द्रो मायाभिः ’ ‘ युक्ताह्यस्य हरयश्शता दश,–तदेतदपूर्वमनपरं–ब्रह्म सर्वानुभूः ’ इत्यत्र अव-
तारज्ञानेनैव सौलभ्यसौशील्यादिगुणगणपरिज्ञानेन सर्वेषां ब्रह्मानुभवस्सिद्ध्यति । इति सर्वेषां ब्रह्मानुभवसम्पादनापेक्षिता-
वतारसत्त्वेनापि परत्वं सूचितं भवति । कृष्णावतारे च ‘ यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैते कथि-
ताह्यर्थाः प्रकाशन्ते महात्मनः ॥ ’ इति श्रुतावर्थप्रकाशपरंपरया परभक्तेर्ज्ञानदर्शनप्राप्तिसाधनत्वं गीतायां विवक्षितमिति
प्रकटीकृतम् ‘ सर्वादिशः ऊर्ध्वमधश्च तिर्यक् प्रकाशयन्भ्राजते यद्वनड्वान् । एवं सदेवो भगवान्वरेण्यो योनिस्वभावानधि-
तिष्ठत्येकः ॥ ’ इति (श्वे.५.४) श्रुतौ ‘ यद्वनड्वान् ’ इत्यत्र यदुश्रेष्ठःकृष्णः विवक्षितः । षष्ठांते ‘ यस्य देवे ’ इतिश्रुतिः

‘ भक्तिभूमा ’ इत्यत्र ‘ स्वकल्याणगुणानन्त्यकृत्स्नस्वाधीनतामतिः । भक्त्युत्पत्तिविवृध्यर्था विस्तीर्णा दशमोदिता ॥ ’
इति गीतार्थसंग्रहोक्तविवृद्धभक्तिर्विवक्षिता । सा च ‘ एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः । सोऽविकम्प्येन योगेन
युज्यते नात्र संशयः ॥ (गी.१०.७) अहं सर्वस्य प्रभवः मत्तस्सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः
(१०.८) तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्तिते ॥ ’ (१०.१०) इति गीता
वचनेषु स्फुटा । अत्र योगंचेत्यत्र योगशब्दः काल्याणगुणयोगपरः भगवद्विभूतिप्रयोजकत्वात्तस्य, तत्त्वशब्दः धार्मिवत्
परमार्थपरः अविकम्प्ययोगश्च समाधिः । ‘ तेषां सततयुक्तानां–ददामि बुद्धियोगम् ’ इत्यत्र आविकम्प्ययोग एव समाधि-
रूपो विवक्षितः । सच गुणविभूत्योर्ब्रह्मसमपारमार्थ्यज्ञानवत एव घटत इति प्रागेवोक्तम् । स एव च मुक्तिहेतुः इत्येतत्प्र
घट्टकेन निर्णीतं भवति । एतदनुसारेण ‘ योमामजमनादिं च वेत्ति लोकमहेश्वरम् । असम्मूढस्स मर्त्येषु सर्वपापैःप्रमु-
च्यते ॥ ’ (१०.३) इतिश्लोके असम्मूढ इत्यत्र समित्येकीकारे जीवब्रह्मैक्यमोहरहित इत्यर्थः । ‘ सर्वस्यचाहं हृदि सन्निविष्टः
मत्तस्स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यः (गी.१५.१५) द्वाविमौ पुरुषौ १६ उत्तमःपुरुषस्त्वन्यः १७ यस्मा-
त्क्षरमतीतोऽहं १८ यो मामेवमसम्मूढः ’ १९ इत्यत्रापि असम्मूढ इत्यस्य पूर्ववदेवार्थः । ‘ अचिन्मिश्राद्विशुद्धाच्च चेत-
नात्पुरुषोत्तमः । व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः ॥ ’ इत्येतदर्थसंग्रहस्य यामुनमुनिभिरेवोक्तेः । ‘ भक्त्या मा
मभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ’ इति श्लोकेऽप्ययमेवार्थो विव-
क्षितः । अत्र ‘ यश्चास्मि ’ इत्यनेनैव पर्याप्तौ ‘ तत्त्वतः यावानस्मि ’ इत्यत्र विभूतिगुणयोगस्यैव विवक्षितत्वात् । उत्त-
रार्धे तत्त्वत इत्युपादानेन पूर्वार्धोक्तार्थस्यैव विवक्षायास्सूचनेन परमभक्तिपर्यन्तविवृद्धभक्तिरेव तत्रापि विवक्षिता । उपसं-
हारेऽपि ‘ य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा ’ इत्यत्रापि प्रागुक्तविवृद्धभक्तिरेव विवक्षिता

## गूढार्थसङ्ग्रहः

सैव गीतातात्पर्यविषयीभूता भक्तिः अत्रापि विवक्षितेति सूच्यते । तेन गीतायाः भक्तावेव तात्पर्यं नतु परसम्मतनिर्विशेषज्ञाने इति निर्णीतम् इत्यर्थः भावप्रकाशे तृतीयसम्पुटे 'मध्यमे भगवत्तत्त्व याथात्म्यावाप्तिसिद्धये । ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगःप्रकीर्तितः' इति गीतार्थसङ्ग्रहसूक्तिविवरणमुखेन गीताविवरण,भक्तिरसायन,लघुचन्द्रिका,सिद्धान्तबिंदुटीकादिपर्यालोचनपूर्वकं सम्यङ्निरूपितः ॥

ब्रह्मसूत्रेषु '**अथातो ब्रह्मजिज्ञासा**' इति सूत्रे ब्रह्मशब्दप्रयोगेण तल्लक्षणस्य द्वितीयसूत्रेऽभिधानेन सृष्टेः सप्रयोजनत्वस्य 'लोकवत्तु लीलाकैवल्यम्' 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यादावभिधानेन 'फलमत उपपत्तेः' 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ' इत्यत्र मुक्तिप्रदत्वस्य 'मुक्तोपसृप्यव्यपदेशाच्च' इत्यादौ मुक्तप्राप्यत्वस्य च प्रतिपादनेन 'यत्रैकाग्रता तत्राविशेषात्' इत्यत्र ध्यानसमाध्योः प्रदर्शनेन च मुक्तिहेतुभूतभक्तिरपि सूच्यत इति सविशेषौपनिषदपरमपुरुषपरत्वमेव ब्रह्मसूत्राणां वृत्तिकारसम्मतं युक्तमिति बोधनमावश्यकमित्यभिप्रेत्य तदानुगुण्येन यामुनमुन्युक्तदिशैव प्रकृतिपुरुषेत्यादिवत् मालिनीवृत्तेनैव निर्विघ्नसमाप्तिप्रचयगमनाय **अखिलेत्यादिना** मङ्गलश्लोकः भगवता विरचितः ॥

परब्रह्म निर्विशेषं अपरब्रह्मैव सविशेषं परब्रह्मणः जगत्कारणत्वं कल्पितं, परिणामज्ञानस्य प्रयोजनाभावात् कौटस्थ्यविरोधाच्च । भक्तिः प्रेमरूपा ज्ञानरूपाचेति द्विविधा, अपरब्रह्मणि प्रेमरूपा परब्रह्मणि च ज्ञानरूपा ज्ञानमेवप्रमा उपासनमपरविद्यारूपं न प्रमा, सगुणब्रह्मविद्याधर्म एव अपरमुक्तिफलजननी क्रममुक्तिफला च । अपरब्रह्मणि अवान्तरतात्पर्यमेव सूत्राणां वेदान्तानां च, मुख्यं तात्पर्यंतु परब्रह्मणि निर्विशेषे । अपरविद्याफलदातृत्वमीश्वरस्य अविद्यानिवृत्तिरूपपरममुक्तिफलंतु निर्विशेषज्ञानस्यैव तद्दातृत्वं कस्यापि नास्ति इत्यादीन्बहून्विषयान् परे कथयन्ति । अतः वेदान्तानां औपनिषदसविशेषपरब्रह्मविषयत्वमेवेति ब्रह्मसूत्राणामपि तथैवेत्यादि बहूनर्थान् वृत्तिकाराभिमतान् सूचयति—**अखिलेत्यादिना** ॥

**अखिलेत्यादि**विशेषणद्वयेन 'लोकवत्तु लीलाकैवल्यम्' 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति सूत्रद्वयाभिप्रेतं सृष्ट्यादिप्रयोजककीडाकारुण्यतन्त्रत्वं ब्रह्मणः प्रदर्शितम् । उक्तंचाचार्यपादैः–'क्रीडाकारुण्यतन्त्रः सृजति' (त.मु.क-१४६) 'मिथःकलहकल्पनाविषमवृत्तिलीलादयापरिग्रहणकौतुकप्रथितपारवश्यःप्रभुः । स्वलक्षितसमुद्गमे सुकृतलक्षणे कुत्रचित् घुणक्षतलिपिक्रमादुपनिपातिनःपातिनः ॥' (सं.सू.अ.१.६८) इति सृष्टिमूलदयायाः मुक्तिपर्यन्तफलदानमपि प्रयोजनमिति स्फुटम् । लीला स्वयंप्रयोजनव्यापारः तादात्विकानन्दः । एतेन सृष्ट्यादेः प्राधान्येन स्वार्थत्वमिति तात्पर्येण 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रं प्रथमम् । 'वैषम्यनैर्घृण्येन सापेक्षत्वात्' इत्युक्तदयाफलं 'पुरुषार्थोतश्शब्दादिति बादरायणः' 'फलमत उपपत्तेः' इत्यत्र मुक्तिपर्यन्तमपीत्युक्त्या परार्थत्वमपि सृष्ट्यादेर्दर्शितम् । इदं च फलद्वयं सृष्ट्यादौ मूलमिति 'हन्ताहमिमास्तिस्रो देवताः' इति श्रुतौ विवक्षितम् । 'हन्तहर्षेऽनुकम्पायाम्' इत्यनुशासनम् । एतद्विस्तरस्तु भावप्रकाशे (३.सं) अनुसन्धेयः । अत्रापि **औपनिषदपरमपुरुषवरणीयताहेतुः** इति महासिद्धान्तारम्भसूक्तौ दिङ्मात्रं व्यक्तीभविष्यति ॥

विशेषणद्वयेन जगत्कारणत्वमोक्षप्रदत्वाभ्यां सृष्टिवाक्यानां मुक्तिवाक्यानांचैकरस्यं प्रदर्शितम् । एतेन 'स यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्ति' इत्येतच्छ्रुतिभाष्ये (शं) द्रमिडाचार्यसंमतं राजकुमारन्यायं प्रदर्शयद्भिः 'मृल्लोहविष्फुलिङ्गाद्यैः' इति गौडपादसम्प्रदायमनुसृत्य सृष्टिवाक्यानां आत्मैकत्वप्रतिपत्त्यर्थत्वमिति कथनं प्राच्यसंप्रदायविरुद्धमिति सूचितं भवति । अतएव **तंत्वौपनिषदं पुरुषम्** 'विज्ञानमानन्दं रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' (बृ.५.९.२८)

## गूढार्थसंग्रहः

इत्यत्र औपनिषदपुरुषस्य परायणमित्यनेन ब्रह्मविद्याफलदातृत्वप्रतिपादनमपि सङ्गच्छते। तत्र फलाधिकरणार्थः विवक्षित इत्यानन्दगिरिविवरणम् । एतेन फलाधिकरणावतरणभाष्ये 'तस्यैव ब्रह्मणः व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यस्स्वभावो वर्ण्यते इत्युक्तिः एतच्छ्रुतितात्पर्यविरुद्धा राजकुमारनयोऽपि सिद्धान्त एवानुकूलइति (र.सा.उपोद्घाताधिकारे) व्यक्तम् । अयमर्थः **औपनिषदे**त्यादिविवरणावसरे निरूपयिष्यते ॥

'**जन्माद्यस्य यतः**' इति सूत्रविषयवाक्ये 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इत्यादौ भूतशब्दः न पञ्चमहाभूतपरः, किंतु योगेन अचिज्जीवरूपकार्यवर्गसामान्यपरः । अयमर्थः— 'भूमिरापोऽनलो वायुः' 'मे भिन्ना प्रकृतिरष्टधा' 'प्रकृतिं विद्धि मे परां जीवभूताम्' इत्यचिज्जीवतत्वद्वयमभिधाय 'एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवःप्रळयस्तथा ॥ मत्तःपरतरं नान्यत्किंचिदस्ति धनञ्जय' (गी.७.६.७) इत्याद्युक्तौ स्फुटः । 'येन जातानि जीवन्ति' इत्यत्र जीवधातुप्रयोगेणापि अयमर्थस्सूच्यते । जीवधातुस्तु चेतन एव स्वरसतः प्रयुज्यते । 'कोह्येवान्यात्कःप्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एषह्येवानन्दयाति ।' इत्यत्र यः स्रष्टा स एव मुक्तिदाता इत्यर्थो विवक्षित इति प्रतीयते । 'अन्यात्' इत्यत्र सृष्टजीवानां मोक्षव्यतिरिक्तफलं विवक्षितम् । 'प्राण्यात्' इत्यत्रतु मुक्तिफलम् । जीवानां ज्ञानविकासमुखादिकमेव अमरणं, ज्ञानविकाससुखादिलोप एव मरणमिति श्रुत्यादिषु व्यक्तम् । ज्ञानजन्मन्येव जन्मव्यवहारोऽपि स्मृत्यादिषु व्यक्तः । प्रळये ज्ञानसुखशून्यानां जीवानां शरीरेन्द्रियद्वारा सृष्टौ किंचिज्ज्ञानविकासेन अननं ज्ञानविकासपूर्त्या प्राणनं विवक्षितम् । 'सोऽकामयत' 'विज्ञानंचाविज्ञानं च' इति कार्यवर्गद्वयं प्रतिपादितम् । 'विज्ञानं यज्ञं तनुते' इत्यादौ विज्ञानमयशब्देन जीवो निर्दिष्टः एतेनापि ज्ञानविकासो जीवस्य विवक्षित इति प्रतीयते । 'अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसंक्रामति इमान् लोकान्कामान्नी कामरूप्यनुसञ्चरन् एतत्सामगायन्नास्ते' इत्युपसंहारे 'सोऽश्नुते सर्वान्कामान्त्सहब्रह्मणा विपश्चिता' इति ऋगुक्तस्यार्थस्य विशदीकरणेन ज्ञानादिपूर्णविकासः मुक्तावेवेति स्फुटं प्रतीयते, प्रळये अश्मेवाप्रबुद्धानां जीवानां शरीरसम्बन्धेन ज्ञानविकासयोग्यता सृष्टौ, तत्फलमेव 'अन्यात्' इत्यत्रोक्तम् तत्पूर्तिस्तु मुक्तौ सैव 'प्राण्यात्' इत्यत्रोच्यते 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते इत्यादिना आनन्दरूपस्य जगत्सृष्ट्यादिहेतुत्वं वक्ष्यते अत्रतु एतदुभयहेतुत्वं आनन्दरूपस्य सर्वान्तरत्वं प्रतिपादितम् । अन्तर्यामित्वं च निर्हेतुककृपया ज्ञानविकासादिसिद्ध्यर्थमिति श्रुत्यादिसिद्धम् । अतश्चैतत्सर्ववाक्यपर्यालोचनायां सृष्टेर्दयामूलकत्वं आनन्दमयविद्यायामपि विवक्षितमिति निश्चीयते । **भङ्गादि** इत्यत्रादिशब्देन सृष्ट्याद्यौपयिकान्तःप्रवेशनियमनादयो गृह्यन्ते । तथा च भाष्ये स्वयमेव वक्ष्यति '**जगदुद्भवस्थितिसंहारान्तःप्रवेशनियमनादिलीलमिति** ।' इति व्यासार्यैरेव विवृतम् ॥

'सृष्टौ अचितः स्वरूपपरिणामरूपविकासः जीवस्य नित्यत्वेन श्रुत्यादिसिद्धस्य धर्मभूतज्ञानविकासरूपविकारः एतदुभयावस्थापन्नस्य कार्यवर्गस्यान्तःप्रविश्य नियमनेनान्तर्यामित्वरूपावस्था परब्रह्मणि एवं विभागस्य प्रमाणतस्सिद्धेः' (अ. २.पा.३) इति सूत्रभाष्ये उत्तरत्र भगवतैव निरूपयिष्यमाणत्वेन जीवे कौटस्थ्यं स्वरूपविकारशून्यत्वं परब्रह्मणितु कर्मसङ्कुचित धर्मभूतज्ञानविकासेनापि शून्यत्वम्' इति सिद्धयति ॥

एवं **उपलक्ष्यंहि अनवधिकातिशयबृहत् बृंहणं च बृहतेर्धातोस्तदर्थत्वात्** इति जन्माद्यधिकरणभाष्यम् अत्र **श्रुतप्रकाशिका । बृहतेरिति** । बृहत्त्वस्य स्वरूपतो गुणतश्च विवक्षितत्वात् बृंहणत्वरूपबृहत्वमपि धात्वर्थान्तर्गतमिति भावः । बृंहणत्वमपिहि ब्रह्मशब्दार्थः, तच्च स्वसङ्कल्पेनाचेतनस्य स्थूलपरिणामहेतुत्वम्, चेतनानां 'रसंह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्युक्त

श्रीभाष्यम्

**भुवनजन्मस्थेमभङ्गादिलीले**

श्रुतप्रकाशिका

इति हि स्मर्यते । आचर्यते च तत्तत्प्रबन्धृभिः । श्रोतृमनस्समाधानार्थं शास्त्रार्थसंक्षेपश्चार्थितः क्रियते । *यथा चोदनासूत्रेण धर्मस्वरूपं प्रमाणं च श्रुत्यर्थाभ्यां निरूपितम् । प्रसिद्धं हि श्रोतुः प्रतिपत्तिसौकर्याय वक्तुरर्थप्रतिपादनस्य सङ्क्षेपपूर्वकत्वम् '**इष्टं हि विदुषां लोके समासव्यासधारणम्**' इति । शास्त्रार्थसंक्षेपेण वस्तुनिर्देशः भवत्वित्याशीर्वादश्च कृतौ भवतः । **विनतेति भक्तिरूपेति** ब्रह्मणि *प्रह्वीभावावगमात् प्रणतिरपि फलिता । *'णमु प्रह्वत्वे' इति हि धातुः । एवं त्रिविधं मङ्गलमाचरितं भवति ॥

श्लोकस्य प्रथमपदेन पूर्वस्याध्यायद्विकस्यार्थस्संक्षिप्तः । द्वितीयेन तूत्तरद्विकस्य । कर्ममीमांसायां प्रतिपाद्यभेदेन षट्कभेदवदत्रापि *विषयविषयिरूपप्रतिपाद्यभेदेन द्विकभेदः । शास्त्रप्रतिपाद्यमुपेयात्मकं सिद्धोपायःउपेयंच ब्रह्म । साध्योपायो भक्तिः । तत्र सप्तम्यन्तैः पदैस्सिद्धोपायरूपमुपेयं च ब्रह्मोच्यते । *भवतीति **भुवनं** कार्यवर्गः । *रूढिशक्त्या तत्कारणस्य कुलालादिव्यावृत्तिः । भुवनशब्दो हि विपुलतरकार्यविशेषे रूढः । **अखिलशब्देन** सर्वदेशकालवर्ती*ण्यण्डजातानि विवक्षितानि । तेन ब्रह्मादिव्यावृत्तिः । खिलं नास्तीत्यखिलम् । कार्येषु ब्रह्मणस्सृष्ट्यादिव्यापाराविषयभूतं न किंचित् अस्तीत्यर्थः । अनया व्यतिरेकोक्त्या प्रायिकत्वनिवृत्तिः '**अज्ञातं नास्ति ते किञ्चित्**' इतिवत् । अतस्सकलमित्यन्वयमुखेनानुक्तिः । अकारोपक्रमत्वसिद्धये निखिलेत्यनुक्तिः । '**अ इति भगवतो नारायणस्य प्रथमाभिधानं भगवतो वाचकमकारं प्रयुञ्जानेन किंनाम मङ्गलं न कृतम्.**' इति,चाभियुक्तैरभ्यधायि । अत्र भगवद्वाचित्वाविवक्षायामपि भगवद्वाचित्वशक्तियोगादकारो माङ्गलिकः ; 'अइउण्' इत्यत्राकारवत् । *नञो निषेधवाचित्वेऽपि निषेध्यवशाच्छुभत्वाशुभत्वे । अतो '**निष्प्रत्यूहमुपास्महे**' इत्यादिनिर्देशस्येव शुभतरत्वं वैकल्यनिषेधेन पौष्कल्यपरत्वात् । अखिलशब्देन *चिदचिद्भेदोऽप्यभिप्रेतः । **जन्म**- नित्यनैमित्तिकप्राकृतरूपम् । ***स्थेमा**- स्थितिः । सा चान्तर्यामिविष्ण्ववतारलोकपालमन्वादिनृपमातापित्रादिमुखेन क्रियमाणा बहुविधा विवक्षिता । **भङ्गः**- नित्यनैमित्तिकप्राकृतरूपः ॥

मोक्षस्य लयान्तर्भावेऽपि शास्त्रस्य परमप्रयोजनत्वादत्र स नान्तर्भावितः । अत एव आदिशब्देऽपि स नान्तर्भाव्यः तस्य साधारणतया स्फुटप्रतिपत्तिहेतुत्वाभावात् । पृथगेव हि पूर्वैश्च स्पष्टतरं निर्दिष्टो मोक्षः '**जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः**' इति, '**जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे**' इति च । भगवान् भाष्यकारश्च तथा निर्दिशति । यथा वेदार्थसङ्ग्रहे- '**उद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूतः**' इति । भाष्ये च '**निखिलजगदुदयविभवविलयमहानन्दैककारणम्**' इति । ***विनतेत्यादिपदेन** स्थेमान्तर्भूतस्वर्गादिसांसारिकफलप्रदत्वस्य पृथगुक्तिरनपेक्षिता ; शास्त्रासाधारणस्य परमप्रयोजनस्य मोक्षस्यैव हि पृथगुक्त्यपेक्षा । **आदिशब्देन** सृष्ट्याद्यौपाधिकान्तःप्रवेशनियमनादि गृह्यते । तथा च भाष्ये स्वयमेव वक्ष्यति '**जगदुद्भवस्थितिसंहारान्तःप्रवेशनियमनादिलीलम्**' इति । जन्मस्थेमभङ्गोक्त्यैवान्तःप्रवेशनियमनादेरर्थसिद्धत्वाश्रयणमयुक्तम् । *अध्यासपरिणामपक्षयोस्तस्यार्थवत्त्वाभावेन तद्व्यावृत्त्यर्थं स्वमते पृथग्वक्तव्यत्वात्, शाब्दत्वे सम्भवत्यार्थत्वकल्पनायोगात्, *विस्तरेणोक्तस्यार्थस्य संक्षेपोक्तौ विवक्षितत्वोपपत्तेश्च ॥

**लीला**शब्देन भगवतः परिपूर्णत्वानन्यप्रेर्यत्वस्वच्छन्दचेष्टितत्वादिकमभिप्रेतम् । यथोक्तं महाभारते—

**अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी । मोदते भगवान् भूतैः बालः क्रीडनकैरिव ॥**

इति । अप्रमेयत्वम्=परिपूर्णत्वम् । अनियोज्यत्वम्=अनितरप्रेर्यत्वम् । यत्र कामगम इत्यनेन वायूदकादिप्रेरणाधीनाबुद्धि

श्रीभाष्यम

विनतविविधभूतव्रात

श्रुतप्रकाशिका

पूर्वकपरिस्पन्दादिचेष्टाव्यावृत्तिः स्वेच्छाकृतप्रवृत्तिविघातव्युदासो वा स्वाधीनलीलोपकरणत्वं वा वशिशब्दार्थः । विश्वं वशं यस्य स वशी । इन्द्रियव्यापाराधीनचेष्टाव्यावृत्त्यर्थो वा वशिशब्दः । बालदृष्टान्तेन लीलायाः प्रयोजनान्तरनैरपेक्ष्यमभिप्रेतम् । अनेन राज्ञां पणबन्धपूर्वकद्यूतादिव्यावृत्तिः । कार्यवर्गापेक्षया भगवन्महिम्नो विपुलतरत्वं क्रीडनकैरित्यनेन फलितम् ॥

ननु *प्रयोजकव्यापारो हि लीला । अतो भङ्गस्य लीलात्वे युक्तेऽपि कथं प्रयोज्यव्यापारभूतयोर्जन्मस्थित्योर्लीलात्वम् ? उच्यते– 'बहु स्यां प्रजायेय' इति हि श्रुतिः । अतः प्रयोजकव्यापारवत् प्रयोज्यव्यापारस्यच लीलात्वकथनेनोपादानत्वं फलितम्, लीलापदेन निमित्तत्वं च । भङ्गादीत्यनेन प्रथमाध्यायार्थस्संक्षिप्तः । अवाप्तसमस्तकामस्य व्यापारानुपपत्तिं परिहरता लीलाशब्देन विरोधपरिहारपरद्वितीयलक्षणार्थस्सूचितः । एवं पूर्वद्विकोक्तं कारणत्वरूपं परत्वं संक्षिप्तम् । तस्यैव समाश्रयणीयताप्रतिपत्त्यर्थमुत्तरद्विकोक्तमभिगम्यत्वमोक्षप्रदत्वलक्षणं सौलभ्यं संक्षिप्यते विनतेत्यादिपदेन । केवलं प्रकृष्टत्वं केवलं सौलभ्यं च कनकाचलशाखाशकलयोरिव समाश्रयणीयत्वाय कल्पत इति तदुभयव्यावृत्त्यर्थमिदं पदद्वयम् । विशेषेण नताः– प्रह्वीभूताः विनताः, न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः विवक्षिताः । वैविध्यंच 'तदुपर्यपि बादरायणः ऊर्ध्वरेतस्सु च' इत्यादिना वक्ष्यमाणदेवत्वमनुष्यत्ववर्णाश्रमादिभेदेन जन्मगुणवृत्तभेदेन चाभिप्रेतम् । भगवज्ज्ञानेन लब्धसत्ताकत्वं भूतशब्दार्थः । 'अस्ति ब्रह्मेतिचेद्वेद सन्तमेनं ततो विदुरिति' इति हि श्रुतिः । * लब्धस्वरूपाणां च —

'तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थः'

'ददामि बुद्धियोगं तम्' 'अहं स्मरामि मद्भक्तम्'

इत्याद्युक्तप्रकारेण साक्षात्कारविरोधिनिवर्तनादिकं हि भगवत एव भर इति नस्वरूपप्रच्युतिसम्भवः । भूतसंबन्धी व्रातः–

गूढार्थसङ्ग्रहः

ज्ञानबृहत्वहेतुत्वं च' इति । एवं ब्रह्मशब्दार्थपरिष्करणेन सृष्टिवाक्यानां मुक्तिवाक्यैकरस्यं प्रतिपादितं भवति । 'सहयज्ञैः प्रजास्सृष्ट्वा' इति गीताभाष्ये अस्मेवाप्रबुद्धानां जीवानां ज्ञानसुखादिसंपादनेच्छया सृष्टिरिति प्रतिपादनेन सृष्टेर्दयामूलकत्वसिद्ध्या प्रयोजनत्वं सिद्धमिति राजकुमारन्यायोऽपि सङ्गतः । आम्नैक्यप्रतिपत्त्यर्थत्वं सृष्टिवाक्यानामित्युक्तिरपि निरवकाशा ॥

अत्र श्रुतकाशिकायां 'विशेषेणनताः विनताः न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः विवक्षिताः' इति 'विद्यांचाविद्यां च' इतिश्रुतिविवरणावसरे 'उपासनरूपं न्यासरूपं च उपेयविरोधिनिरासकं ज्ञानम्' इति 'नाना शब्दादिभेदात्' इतिसूत्रे 'इह ब्रह्मविद्यास्सर्वाः ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्या भूमविद्या दहरविद्या उपकोसलविद्या शाण्डिल्यविद्या वैश्वानरविद्या अक्षरविद्यादिकाः' इति भाष्यविवरणे 'आदिशब्देन न्यासो विवक्षितः' इतिच व्यासार्यैरुक्तम् ॥अत्र च न्यासस्य मुक्तिहेतुत्वं वेदार्थसङ्ग्रहे–'एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यते' इति सूक्तौ स्पष्टमिति इत्थं विनतशब्दस्य विवरणंकृतम् ॥

तत्र तात्पर्यदीपिका–'भक्तियोगनिष्ठस्यापि तन्निष्पत्त्यर्थं तदङ्गत्वेन प्रपत्तेरपेक्षितत्वात् प्रपत्तिनिष्ठस्य स्वतन्त्रतयोपायत्वाच्च प्रपत्तिमन्तरेण नोपपद्यते इत्युक्तम्' इति । वेदार्थसङ्ग्रहे अनन्तरं 'दैवीह्येषा गुणमयी मम माया

गूढार्थसंग्रहः

दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति तस्यैतस्यात्मनः कर्मकृतविचित्रगुणमयप्रकृतिसंसर्गरूपात्संसारान्मोक्षः भगवत्प्रपत्तिमन्तरेण नोपपद्यत इत्युक्तं भवति । 'नान्यः पन्था अयनाय विद्यत' इत्यादिश्रुतिभिश्च' इति सूक्तिविवरणावसरे 'प्रपत्तिमन्तरेण मोक्षासिद्धौ प्रमाणमाह दैवी इति । श्रुतिमाह-- नान्य इति । इत्यादिश्रुतिभिश्च भगवत्प्रपत्तिमन्तरेण नोपपद्यते इत्युक्तं भवतीत्यन्वयः । कथं 'तमेवंविद्वान्' इत्यादिवाक्यानां प्रपत्तिमन्तरेण मोक्षानुपपत्तिपरत्वम् ? उच्यते । 'तमेवं विद्वान्' इत्यादिवाक्यानामुपासनाविधिपरत्वात् उपासनस्य च स्वनिष्पत्त्यर्थं प्रपत्तिसापेक्षत्वाच्च उक्तार्थः फलितः । वाक्यार्थज्ञानमात्रस्योपायताऽव्यवृत्तिरभिप्रेता । यद्वा विद्वानिति वेदनवाचिशब्दः उपासनप्रपदनसाधारण इति भावः' इति च ॥

एवं शरणागतिगद्ये–'मदीयानादिकर्मप्रवाहप्रवृत्ताम्' इत्यादौ 'दैवीं गुणमयीं मायां दासभूतश्शरणागतोस्मि, तवास्मिदास इति वक्तारं मां तारय' इति सूक्तावपि दैवीह्येषेत्यस्य स्वतन्त्रप्रपत्तिपरत्वं स्फुटम् । अत्रव्यासार्यविवरणम्–'दैवीं त्वल्लीलार्थाम् । दासभूतं मामिति सम्बन्धः । शरणागतोऽस्मि तवास्मीति पूर्वोत्तरखण्डार्थः । वक्तारम्- 'भव शरणमितीरयन्ति' इतिहि उच्यते' इति ॥

ननु प्रपत्तेः मोक्षहेतुत्वसिद्धयङ्गीकारेऽपि न्यासस्य कथं मोक्षहेतुतासिद्धिः इति चेत् अत्रायमाशयः । भगवता अहिर्बुध्न्यसंहितोक्तरीत्या विरचिते नित्यग्रन्थे 'शरणमुपगच्छेदखिलेत्यादिना' 'शरणागतिप्रकारश्चपूर्वोक्तः' इत्यत्र गद्योक्तशरणागतिरेव विवक्षितेति बोधितम् । अहिर्बुध्न्यसंहितायांच 'कथं तपांसि यज्ञाश्च तीर्थदानानि सर्वशः । तस्यैव न्यासमात्रेण सिध्यन्ते तद्वद प्रभो ॥' इति प्रश्नस्य 'यानि निःश्रेयसार्थानि चोदितानि तपांसि वै । तेषांतु तपसां न्यासमतिरिक्तं तपश्श्रुतम् ॥' (अ.सं.३७.) इति प्रतिवचने तस्मान्न्यासमेषां तपसामतिरिक्तम्' इति श्रुतिर्मूलमितिप्रतीयते । 'न कर्मणा नप्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति तैत्तरीयश्रुतौ त्यागस्य मुक्तिसाधनत्वं प्रतिपाद्यते । त्यागो न्यासश्चैक एव । यद्यपि त्यागेनैक इति श्रुतिः फलसङ्गकर्तृत्वत्यागपरतया गीतायामष्टादशे भगवता व्याख्याता । अथापि 'दैवीह्येषा' इतिश्लोकस्यापि अङ्गप्रपत्तिपरतयैव भगवता तत्र व्याख्यानकरणेन तत्पक्षमनुसृत्याष्टादशे तथा विवरणकरणेऽपि वेदार्थसंग्रहगद्ययोः दैवीह्येषेति श्लोकस्य स्वतन्त्रप्रपत्तिपरतया विवरणकरणेन तदनुसारेण अत्रात्मत्याग एव विवक्षितः ॥

श्रुतौ त्यागशब्दस्य आत्मत्यागपरत्वं भारते व्यक्तम् । यथा शान्तिपर्वणि राजधर्मे—'त्यागवान् जन्ममरणे नाप्नोतीति श्रुतिर्यतः । प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥ ७–३५ स धनञ्जय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः । वनमामन्त्र्य वस्सर्वान् गमिष्यामि परन्तप ॥ ३३ ॥' इति वदन्तं युधिष्ठिरंप्रति नकुलोक्तौ बहुविधत्यागशब्दार्थनिरूपणमध्ये 'ब्राह्मणाश्श्रुतिसंपन्नास्तान्निबोध नराधिप । वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन् ॥ ७ ॥ कृतात्मा स महाराज सवै त्यागी स्मृतो नरः । अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः ॥ ८ ॥ आत्मत्यागी माहाराज स त्यागी तापसो मतः । अनिकेतः परिपतन् वृक्षमूलाश्रयो मुनिः ॥ अयाचकस्सदा योगी स त्यागी पार्थ भिक्षुकः । क्रोधहर्षावनादृत्य पैशुन्यंच विशेषतः ॥ १० ॥ विप्रो वेदानधीते यः स त्यागी गुरुपूजकः ।' इति, सहदेवोक्तौ च 'न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत । शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा नवा ॥ १३–२ ॥ द्व्यक्षरस्तु भवेन्मृत्युः त्र्यक्षरं ब्रह्म शाश्वतम् । ममेति द्व्यक्षरो मृत्युः नममेति च शाश्वतम् ॥ ४ ॥' इति, 'आत्मा राज्यं धनंचैव कळत्रं वाहनानि च । एतद्भगवते सर्वमिति तत्प्रेक्षितं सदा ॥' इति नारायणाख्याने उपरिचरवसोरनुसन्धाने, आश्वमेधिके–'आत्माऽपिचायं न-

## गूढार्थसंग्रहः

मम सर्वा वा पृथिवी मम । यथा मम तथाऽन्येषां इति मन्ये द्विजोत्तम ॥ ३३-११ ॥ कस्येदमिति कस्य स्वमिति वेदवचस्तथा । नाध्यगच्छमहं बुध्या ममेदमिति यद्भवेत् ॥' इति जनकोक्तौचात्मत्यागस्य श्रौतत्यागशब्दार्थत्वंस्पष्टम् ॥

न्यासस्य आत्मत्यागरूपत्वमहिर्बुध्न्यसंहितायामपि—'यद्वा भगवते तस्मै स्वकीयात्मसमर्पणम् ॥ ३१-४ ॥ वियुक्तं प्रकृतेश्शुद्धं दद्यादात्महविः स्वयम् । विशिष्टदैवतायास्मै चक्ररूपाय मन्त्रतः ॥ ५ ॥' इति, 'नीचीभावेन संद्योत्यमात्मनो यत्समर्पणम् । विष्ण्वादिस्था चतुर्थी तत्संप्रदानप्रदर्शिनी ॥ ५२.३५.॥ नीचीभूतोह्यसावात्मा यत्संरक्ष्यतयाऽर्प्यते तत्कस्मा इत्यपेक्षायां विष्णवे स इतीर्यते ॥ ६३ ॥' इति 'सर्वज्ञस्सर्वशक्तिश्च सर्वकृत्पुरुषोत्तमः । जातवेदास्समुद्दिष्टः आत्मा सोमस्समीरितः । सद्यविद्यावशात्सर्वयोनिस्थः सूयते सदा ॥ ५७-३३ ॥ योग्यताऽऽपादनं तस्य प्रोच्यतेऽत्र सुनोति न । पृथक्कारोहि सोमस्य स्वरसस्य सुनोतिजः ॥ ३४ ॥ रसीभूतेन सोमेन यागःकर्तुं सुशकयते । उपमा गर्भ एवायं वाक्यार्थःपूर्वपादजः ॥ ३५ ॥ सोमं यथाऽभिषुण्वन्ति ह्यध्वरे जातवेदसे । दित्समानस्तथाऽत्मानमृषिःस्वं परमात्मने ॥ ३६ ॥ देहेन्द्रियमनःप्राणधीगुणेभ्यस्स्वरूपतः । विविनक्ति प्रसङ्ख्यानैः साम्यवैषम्यहेतुजैः ॥ ३७ ॥ एवं विविच्य दत्वाऽस्मै स्वात्मानं जातवेदसे । तत्स्थः स तन्मना भूत्वा स्वेनाथो संविविक्सते ॥ ३८ ॥ नमश्शब्दार्थ एवायं प्रकारान्तरदर्शितः' इति । 'वाचस्पते विधेनामन्' इत्यादौ एतदेव पुनर्वक्ति मुनिस्स्वात्मसमर्पणम् ।' 'वाचस्पतिस्सपूर्वोक्तः सोमं सोमरसोपमम् । पित्रत्वात्मरसं स्वस्मै मयाहुतमिवाध्वरे' इत्यादिषु च व्यक्तम् ॥

गीतायां सप्तमोपक्रमे चतुर्विंशतितत्वात्मकप्रकृति जीवयोः परस्वामिकत्वं प्रदर्श्य 'मामेव येप्रपद्यन्ते' इत्युक्तया प्रपद्यन्तइत्यत्र प्रेत्युपसर्गेण पदधात्वर्थे प्रकर्ष उक्तः । सचान्यस्वामिकत्वानिवृत्तिपर्यवसितः । तेनात्र आत्मन्यासोऽपि विवक्षितः । श्वेताश्वतरोपनिषदि (१) 'क्षारात्मानावीशते देवएकः' इत्याद्युक्तरं 'तद्वोभयं वै प्रणवेन देहे' इत्यत्र परमात्मजीवौ प्रणवघटकाकारमकारार्थौ ईशेशितव्यभावसंबद्धौ विवक्षितौ । अत्रैवावधारणार्थानुसंधाने उक्तार्थः सिद्धयति । 'मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे.६) इति श्रुतौ 'प्रपद्ये' इत्येतदनुसंधानेन तदेकार्थ्येनैव 'मामेव ये प्रपद्यन्ते' इत्युक्तम् । गीतायामप्यष्टादशे 'मामेकं शरणं व्रज' इत्यत्र सैव श्रुतिर्विवक्षिता इत्यहिर्बुध्न्यसंहितोक्तार्थे श्रुतिगीतैकरस्यम् ॥

गीता सङ्ग्रहः, तद्विस्तरः पञ्चरात्रम् । पाञ्चरात्रिकैः तद्धर्मोऽनुष्ठीयत इति मोक्षधर्मे व्यक्तम् । 'य एष गुरुरस्माकं ऋषिर्गन्धवतीसुतः । तस्मात् श्रुतं मयाचेदं कथितं च तवानघ ॥ (अ.३५६. ८) नारदनतु संप्राप्तःसरहस्यस्सङ्ग्रहः । एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ९ ॥ एवमेष महान्धर्मः स ते पूर्वं नृपोत्तम । कथितो हरिगीतासु समासविधिकल्पितः ॥ १० ॥ नारायणीयमाख्यानमेतत्ते कथितं मया । पृष्टेन शौनकाद्यैश्च नैमिशारण्यवासिभिः ॥ नारदेन पुरा यद्वै गुरवेतु निवेदितम् । ऋषीणां पाण्डवानां च शृण्वतोः कृष्णभीष्मयोः ॥' इत्यभिधाय 'अहोह्येकान्तिनस्सर्वान् प्रीणाति भगवान् हरिः । विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम् ॥ (शा.मो.३५८.१) केनैष धर्मः कथितः देवेन ऋषिणाऽपि वा ॥ ६ ॥ एकान्तिनां च काचर्या कदाचोत्पादिता विभो । एतन्मे संशयं छिन्धि परं कौतूहलंहि मे ७ ॥' इति जनमेजयप्रश्नस्य प्रतिवचने 'समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे । अर्जुने विमनस्के च गीता भगवता स्वयम् ॥ ८ ॥ गहनोह्येष धर्मो वै दुर्विज्ञेयोऽकृतात्मभिः । सम्मितस्सामवेदेन पुरैवादियुगे कृतः । धार्यते स्वयमीशेन राजन्नारायणेनह ॥ १० ॥ एतदर्थं महाराज पृष्टःपार्थेन नारदः ।' इत्यत्र पुरातनस्यैकान्तिधर्मस्य गीतोक्तत्वं ब्रह्मणो मानस चाक्षुषवाचिकजन्मसु अस्य धर्मस्याविर्भावतिरोभावौ, 'ऋग्वेदपाठपठितं व्रतमेतत्सुदुश्चरम् ।' इत्यनेन ऋग्वेदपठितत्वं ब्रह्मणः श्रावणजन्मन्यपि तथैवाविर्भावतिरोभावौ 'ततो हि सात्वतो धर्मो व्याप्य लोकानवस्थितः ॥

## गूढार्थसङ्ग्रहः

इत्यनेन गीतोक्तैकान्तिधर्माभिन्नस्य सात्वतधर्मस्य कृतयुगे व्याप्तिं त्रेतायुगे ब्रह्मणोना(सिक्य) सत्यजन्मनि अण्डजजन्मनि-च्चाविर्भावतिरोभावौ 'यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप । तत्रैष धर्मः कथितः स्वयं नारायणेनह ॥ ४८ ॥ पितामहाय शुद्धाय युगादौ लोकधारिणे । पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥ ४९ ॥ ततो ज्येष्ठेतु दौहित्रे प्रादाद्दक्षो नृपोत्तम । आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः ॥ ५० ॥ त्रेतायुगादौ च ततः विवस्वान्मनवे ददौ । मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ ५१ ॥ इक्ष्वाकुणा च कथितः व्याप्य लोकानवस्थितः । ' इत्यादिना 'इमं विवस्वते योगं इति गीतोक्तादिशा सात्वतधर्मस्य परम्पराप्राप्तत्वं त्रेतायुगेऽपि व्याप्तिं 'कथितो हरिगीतासु समासविधिकल्पितः ॥ ५३ ॥ नारदेनतु संप्राप्तस्सरहस्यस्ससङ्ग्रहः । एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ५४ ॥ एवमेष महान्धर्मः आद्यो राजन्सनातनः । दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥ ५५ ॥ धर्मज्ञानेनचैतेन सुप्रयुक्तेन कर्मणा । अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥ ५६ ॥ एकव्यूहविभागोवा क्वचिद्द्विव्यूहसाशितः । त्रिव्यूहश्चापि संङ्ख्यातश्चतुर्व्यूहश्च दृश्यते ॥ ५७ हरिरेवहि क्षेत्रज्ञः निर्ममो निष्कलस्तथा । यद्येकान्तिभिरास्तीर्णं जगत्स्यात्कुरुनन्दन ॥ ५८ ॥ अहिंसकैरात्मविद्भिस्सर्वभूतहिते रतैः । भवेत्कृतयुगप्राप्तिः आशीःकर्मविवर्जिता ॥ ५९ ॥ एवं स भगवान्व्यासो गुरुर्मम विशांपते । कथयामास धर्मज्ञो धर्मराजोद्विजोत्तम ॥ ऋषीणांसन्निधौ राजन् शृण्वतोःकृष्णभीष्मयोः । तस्याप्यकथयत्पूर्वं नारदस्सुमहातपाः ' इति । इमानि वचनानि नीलकण्ठेन व्याख्यातानि प्राचीनकोशेष्वप्युपलभ्यन्ते ॥

'गीतानां मोक्षधर्माणांचैवंपरत्वादिति ' (ई.उ) भाष्ये वदद्भिः शङ्कराचार्यैस्सूत्रभाष्ये मोक्षधर्मनारायणाख्यानवचनानां बहूनामुदाहरणेन चातुरात्म्यवासुदेवाराधनरूपत्वं पाञ्चरात्रधर्मस्य तेषामपि संमतम् । एतदनन्तरकालिकजीवब्रह्माद्वैतज्ञाने एव सिद्धान्तिनां तेषांच विप्रतिपत्तिः । अतः भगवद्गीताविस्तरःपञ्चरात्रम् । गीतोक्तार्थस्य पञ्चरात्रे विस्तरेणाभिधानंच प्रामाणिकम् । एवंच 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ' इत्यत्र 'त्यागेनैकेऽमृतत्वमानशुः ' इतिश्रुतिविवक्षितात्मत्याग एव न्यासः इति मोक्षहेतुन्यासनिरूपणानन्तरं 'तेषांतु तपसां न्यासमतिरिक्तं तपश्श्रुतम् ' इत्यहिर्बुध्न्यसंहितोक्तिर्युक्तैवेति सिद्धम् ॥ एतदनन्तरं 'समिधेत्यादिऋग्वेदश्रुतिराह दयावती ' 'समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा योऽकरोद्देवे स्वध्वरइतीरितः ॥ ' (३७.३७) इत्युक्तम् । अत्र 'यस्समिधा य आहुती यो वेदेन ददाश मर्तोऽग्नये यो नमसास्वध्वरः ' (म.८'सू.१९.मन्त्र.५) इति श्रुतिर्विवक्षिता ॥

अत्राश्वालायनगृह्यसूत्रे 'अथापि ऋच उदाहरन्ति यः समिध य आहुती योवेदेनेति (१.१.४.) 'समिधमेवापि श्रद्धान आददन्मन्यत यज इदमिति नमस्तस्मै य आहुत्या यो वेदेनेति विद्ययैववाऽप्यस्ति प्रीतिः तदेतत्पश्यन् ऋषिरुवाच ' इत्युपक्रम्य, 'यो नमसा स्वध्वर ' इति नमस्कारेण खल्वपि न वै देवा नमस्कारमति यज्ञो वै नमः इति हि ब्राह्मणं भवति ' इत्यन्तमुपन्यस्तम् । अत्र सायणीये 'यश्चस्वध्वरः शोभनेनाध्वरेणः ज्योतिष्टोमादिना युक्तस्सन् नमसा अन्नेन च पुरोडाशादिना अग्नय ददाश-- अग्नयर्थंपरिचरति तस्येदर्वन्त इत्युत्तरेण संबन्धः ' इति श्रुतिद्वयमेकवाक्यतया अर्थबोधकमित्युक्तम् ॥

'तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः । न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥ ' इति समनन्तरश्रुतिः । अत्र चेत्थं सायणभाष्यम्– 'यः पूर्वोक्तः तस्येत् तस्यैव । आशवः- व्यापनशीलाः अर्वन्तः- अश्वाः । रंहयन्ते- वेगं कुर्वन्ति शत्रून् प्रसहन्त इत्यर्थः । द्युम्नितमम्- दीप्तिमत्तमम् यशः कीर्तिश्च तस्यैव भवति । यद्वा द्युम्नमिति धननाम । धनवत्तमं यशः अन्नं च तस्य भवति । अपि च देवकृतं देवैः कृतम् अंहः पापम्

## गूढार्थसंग्रहः

कुतश्चन कस्मादपि हेतोः । तं न नशत्- न प्राप्नोति । न मर्त्यकृतं मनुष्यैः कृतम् ' इति ॥ अत्रोत्तरार्धे तस्य स्वध्वरस्य पापसंबन्धप्राप्त्यभाव उक्तः । अत्र ब्राह्मणे ' न वै देवा नमस्कारमति ' इत्युक्तम् । एतत्पूर्वं (६ मं.५१ सू.) ' माव एनोऽन्यकृतं भुजेम मा तत्कर्म वसवो यच्चयध्वे । विश्वस्य हि क्षयथ विश्वदेवाः स्वयं रिपुस्तन्वं रीरिषीष्ट ॥ ' इत्यत्र देवमाहात्म्यमुक्तम् ॥

अनन्तरं ' नम इदुग्रं नम आविवासे नमो दाधार पृथिवीमुत द्याम् । नमो देवेभ्यो नम ईश एषां कृतं चिदेनोनमसा विवासे ' इतिश्रुतिः । श्रुतिद्वयं चेत्थं विवृतं सायणीये– ' हे देवाः वः युष्माकं स्वभूता वयम् अन्यकृतं अन्यैः शत्रुभिः कृतमुत्पादितम् एनः पापम् मा भुजेम- मा भुक्ष्महि । हे वसवः वासयितारः देवाः । यत्- येन कृतेन पापेन चयध्वे- अस्मान् बाधध्वे । चयतिर्हिंसाकर्म । तच्च पापं माऽकार्ष्म । करोतेर्माङि लुङि ' मन्त्रेघस ' इति च्लेर्लुक् ॥ विश्वदेवाः सर्वे देवाः । विश्वस्य सर्वस्य जगतः । यूयं हि क्षयथ- ईश्वरा भवथ । अतः कारणात् अस्मदीयः रिपुः शत्रुः तन्वं स्वशरीरम् स्वयमेव रीरिषीष्ट- हिंस्यात् । यथैवं भवति तथा कुरुतेति भावः ॥

आस्तां तावद्देवानां माहात्म्यम् तदीयनमस्कारोऽपीत्थं महाभागः इति ब्रुवाणः कैमुतिकन्यायेन देवांस्तौति– नम इत् नमस्कार एव । उग्रं उद्गूर्णबलं सर्वोत्कृष्टम् तेन हि सर्वं लभ्येत । अतः नमः नमस्कारम् आविवासे- परिचरामि । नमः नमस्कार एव पृथिवीमुत द्याम् द्युलोकं च दाधार धारयति । द्यावापृथिव्यौ प्राणिभिर्नमस्क्रियमाणे सत्यौ तदुपभोगाय चिरकालमवतिष्ठेते । अतः देवेभ्यः ईदृशं नमः करोमि । एषां देवानां नमः नमस्कारः ईशे- ईष्टे यतस्तेन ते वशीकृताः । कृतं चित् - कृतमप्याचरितमपि एनः पापं नमसा नमस्कारेण आविवासे विवासो वर्जनम् वर्जयामि विनाशयामि ' इति ॥

अत्र प्रथमश्रुतौ देवानां स्वभूतत्वमभिधाय देवानां स्वभूतानां प्रशस्ततमेन नमसा परिचरतां पापनिवृत्तिः प्रतिपादिता । ' यो नमसा स्वध्वर ' इत्येतदर्थकं ' न वै देवा नमस्कारमति ' इत्युक्तार्थः पूर्वश्रुतौ स्पष्टीकृतः । एवं स्थिते जीवसामान्यस्वामित्वेन श्रुति गीतादिप्रतिपन्ने वासुदेवे नमस्कारं कुर्वत एव स्वध्वरत्वे पर्यवसानं ' यो नमसा स्वध्वर ' इति श्रुतिवाक्यस्य युक्तम् । देवसामान्यविषये नमस्कारकर्त्रपेक्षया देवानामपि स्वामिभूते नमस्कारकर्तुः अतिशयेन स्वध्वरत्वे प्रत्याख्यानानर्हं स्वरसतास्सिध्यति । ' तस्येदर्वन्त ' इत्युत्तरश्रुतौ देवकृतपापनिवृत्तेः प्रतिपादनेन इतरदेवेषु नमस्कारस्य देवकृतपापनिवर्तकत्वशक्त्ययोगेन देवस्वामिवासुदेवनमस्कारस्यैव देवकृतपापनिवर्तकत्वसामर्थ्यमिति वासुदेवमस्कारस्यैवात्र विवक्षितत्वमकामेनापि सिध्यति ॥

एवं ' कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥ ' (म.७.अ.६.सू.९१.म.१) इति मन्त्रेऽप्ययमर्थः स्फुटः । अत्र वायुशब्दः यागे वायुदेवपर इति सायणीये व्याख्यातम् । वृद्धानां देवानां वायुदेवे नमस्कारस्य अवद्यसामान्यनिवर्तनसामर्थ्यासम्भवेन वायुशब्दः वासवन्तर्यामिपरः । योगवैष्कल्येन सर्वगतपरो वा व्याख्येयः । तेन परमात्मनि वासुदेवे नमस्कारः देवानामवद्यसामान्यनिवर्तक इति श्रुत्यर्थः अबाधितो भवति । एतेनापि ' यो नमसा स्वध्वर ' इत्यत्र वासुदेवनमस्कारविवक्षा सिद्धा ॥ भगवद्गीतायाम् ' देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ' (७.२३) ' यान्ति देवव्रता देवान्– यान्तिमद्याजिनोऽपि माम् ' (९ २५) ' आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ ' (८.१६.) इत्यादौ वासुदेवभक्तेरतिशयितफलत्वं स्पष्टम् ॥

## गूढार्थसंग्रहः

मोक्षधर्मे यज्ञाग्रहराध्याये प्रवृत्तिधर्मनिष्ठानां प्रयोजनान्तपराणामेव इतरदेवतोद्देश्यकयज्ञः निवृत्तिधर्मनिष्ठानां मुमुक्षूणांतु वासुदेवोद्देश्यक एव यज्ञ इति स्फुटम् ॥ एवंच 'सह यज्ञैः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥' (गी.३.१०) इत्येतद्भाष्ये सृष्टेर्दयामूलकत्वमभिधाय 'एष वोऽस्त्विष्टकामधुगि' ति मोक्षपर्यन्तकामानां पूरयिताभवतु ' इति भगवता विवरणकरणेन वासुदेवोद्देश्यकन्यासाख्ययज्ञस्य श्रुत्यादिसिद्धस्य अत्र भगवतः विवक्षा अकामेनापि स्वीकार्यैव ॥ 'ईश्वरस्सर्वभूतानाम्' इत्यादि 'स्थानं प्राप्स्यसि शाश्वतम्' इत्यन्तसन्दर्भे ईश्वरस्सर्वभूतानाम्' इत्यत्र सर्वजीवानां यत् स्वामित्वं परस्य सप्तमे उक्तं तदभिधाय शरणागतितत्फलयोरभिधानेन तत्राप्यात्मत्यागो विवक्षित इति स्फुटं प्रतीयते। उपायलाघवेऽपि भगवता दयादिगुणैर्मुक्तिदानं युक्तमिति वैकुण्ठगद्ये स्फुटम् ॥

यद्यपि नमश्शब्दः गीतायां न्यासाभिप्रायेण न प्रयुक्तः ; तथाऽपि अर्जुनेन प्रागेवैतदर्थः निश्चित इत्याभिप्रेत्य कृष्णेन नमश्शब्दः न प्रयुक्तः । काम्यकवने कृष्णनारदसमक्षं मार्कण्डेयेन यः परमानुग्रहेण स्वस्य सृष्टिप्रलयादि क्रममदर्शयत्सएवायं कृष्णः तत्र शरणागतिं कुरुध्वमितिपाण्डवान्प्रति कथनानन्तरं सर्वेऽपि नमश्शब्देनैव शरणागतिमकार्षुरिति अरण्यपर्वणि व्यक्तम् । 'यस्स देवो मया दृष्टः पुरा पद्मायतेक्षणः । स एष पुरुषव्याघ्र सम्बन्धी ते जनार्दनः ॥ १९२.५१. ॥ सर्वेषामेव लोकानां पिता माता च माधवः । गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः ॥' ५६ ॥ इति, 'एवमुक्तास्त्रयः पार्थाः यमौ च भरतर्षभ । द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनम् ॥' ५७॥ इति च ॥ श्वेताश्वतरोपनिषदितु द्वितीयेऽध्याये 'युजे वां ब्रह्म पूर्व्यं नमोभिः' इत्यत्र न्यासरूपा शरणागतिः विवक्षिता । श्रुत्यर्थस्तु औपनिषदमणिहारे श्वेताश्वतरसरे,हयशिरोरत्नभूषणदीधितौ च व्यक्तः ॥

एवं 'सनायुवो नमसा नव्यो अर्कैः वसूयवो मतयो दस्म दद्रुः । पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन्मनीषाः ॥' ऋ.म.१.अ.११.सू.६२.म.११. इत्यत्र सायणीयभाष्ये 'हे दस्म दर्शनीय इन्द्र ! अर्कैः- शास्त्ररूपैर्मन्त्रैः नमसा नमस्कारेण यस्त्वं नव्यः स्तुत्यो भवसि । सनायुवः सनातनमग्निहोत्रादिकं नित्यं कर्म आत्मन इच्छन्तः । वसूयवः- वसु धनमात्मन इच्छन्तः धनकामा वा । मतयः - मेधाविनः त्वां दद्रुः- बहुना प्रयासेन जग्मुः । हे शवसावन्- बलवन् इन्द्र तैः प्रयुक्ताः मनीषाः- स्तुतयः । त्वा. त्वाम् स्पृशन्ति- प्राप्नुवन्ति । तत्र दृष्टान्तः । उशतीः उशत्यः कामयमानाः पत्नीः- पत्न्यः उशन्तं कामयमानं पतिं न. यथा पतिं सम्भजन्ते तद्वत् । सनायुवः. 'सना' इत्येतदव्ययं नित्यत्वमाचष्टे । तेन च तद्वान् लक्ष्यते । सना सनातनं कर्म आत्मन इच्छन्तीति सनायुवः । 'क्याच्छन्दसि' इति उप्रत्ययः । जसि वर्णव्यत्ययेन उत्वम् । मतयः . मन ज्ञाने । मन्यन्त इति मतयः स्तोतारः । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'न क्तिचि दीर्घश्च' इति निषेधे प्राप्ते बाहुलकात् अनुदात्तोपदेश इत्यादिना अनुनासिकलोपः' इत्युक्तम् ॥

अत्र सनातनमात्मन इच्छन्त इति शब्दार्थे 'नास्ति तस्मात्परतरः पुरुषाद्वै सनातनात्' नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥' (मो.३४७.३२) इति वासुदेवस्य सनातनत्वोक्त्या तस्यैव फलत्वेन अपेक्षावतां नमसा न्यासकरणमपि विवक्षितम् । उत्तरार्धदृष्टान्तोऽपि पतिपत्नीभावरूपः आत्मन्यासे अतीव सङ्गतो भवति । 'यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥' (मु.३.२.८) इति श्रुतौ पूर्वार्धे पतिपत्नीभावसंबन्धो विवक्षितः । उत्तरार्धे च पत्न्याः पतिसमीपगमन तदनन्तरकालीनव्यापारवत् मुक्तस्य भगवत्समीपगमन तदनन्तरकालिकसेवादिकं विवक्षितम् ॥

## गूढार्थसंग्रहः

अयमर्थः वाल्मीकिनाऽपि सूचितः । यथा किष्किन्धाकाण्डे दक्षिणादिशं प्रति वानराणां प्रेषणसमये सुग्रीवोक्तौ 'ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम् । ततो द्रक्ष्यथ कावेरीं विहितामप्सरोगणैः ॥ ४१.१५. ॥ तस्यासीनं नगस्याग्रे मलयस्य महौजसम् । द्रक्ष्यथादित्यसङ्काशमगस्त्यमृषिसत्तमम् ॥ १६ ॥ ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना । ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम् ॥ १७ ॥ सा चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी । कान्तेव युवतिः कान्तं समुद्रमवगाहते ॥ १८ ॥ ' इति । अत्र ताम्रपर्णीनदीविषयमात्रे 'कान्तेव युवतिः कान्तम्' इत्युक्त्या उदाहृतश्रुतितात्पर्यसूचनेन तत्समीपस्थशठकोपमुनेः एतत्संबन्धप्रकाशन स्वानुभवपरबोधनादिकं सुस्पष्टं सरोमुनिग्रन्थेषु । एतद्दृष्टान्तार्थोऽपि तैः क्वचित् सूचितः । (पेरियतिरुवन्तादि. ६७. ) तत्र शठकोपमुनेरगस्त्यभाषात्वेन प्रसिद्धद्रामिडभाषामयग्रन्थकरणमपि एतत्पूर्वमेवागस्त्यविषयप्रतिपादनेन वाल्मीकिना सूचितम् ॥

एवं व्यासेनापि भागवते—'कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् । कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ (११.५.३८) क्वचित्क्वचिन्महाभागा: द्रामिडेषु च भूरिशः । ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ६९ ॥ कावेरीच महापुण्या प्रतीची च महानदी । ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ॥ ४० ॥ प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ।' इति ॥ अत्रापि ताम्रपर्ण्यादिनदीतीरवर्तिनां एतत्संबन्धप्रकाशनादिकमपेक्षितम् । इमानि वचनानि हेमाद्रिपरिशिष्टखण्डेऽप्युदाहृतानि ॥ एतदनन्तरं 'देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् । सर्वात्मना यश्शरणं शरण्यं नारायणं लोकगुरुं प्रपन्नः ॥' .४१ ॥ इत्युक्तौ शरणागतिकथनेन पतिपत्नीभावसंबन्धानुगुणा शरणागतिः पूर्वोक्तताम्रपर्णीनद्यादितीरवासिनः एतन्निष्ठा इति च दर्शितम् ॥ ताम्रपर्णीशब्दस्य प्रथमत उपादानं तत्समीपस्थशठकोपमुनेरेव सरोमुन्यादिविरचितग्रन्थप्रकाशनकरणेन प्राधान्यबोधनार्थम् । तेन सरोमुन्यादयोऽपि विवक्षिताः ॥

शरणागतिः पतिपत्नीभावसंबन्धप्रकाशनार्थेति लक्ष्मणचरित्रेऽपि व्यक्तम् । तथा हि अरण्यप्रस्थानसमये शरणागतिं कुर्वता लक्ष्मणेन प्रस्थानानन्तरं गङ्गासमीपे सुमन्त्रं प्रति 'अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥ इत्युक्तौ पितेत्यनेन राजकुमारनयस्सूचितः । भर्तेत्यनेन प्रपन्नस्य विवाहस्थानापन्ना शरणागतिरिति च सूचितम् । गङ्गातरणानन्तरं श्रीरामं प्रति 'नच सीता त्वया हीना नचाहमपि राघव । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥' इत्युक्तौ प्रपन्नः पत्नीतुल्यः कन्यादानं शरणागतिश्च एकप्रकारेति च व्यक्तम् ॥

भगवता देहावियोगकाले समीपस्थान् शिष्यान् दुःखितान्प्रति 'देहयात्रा कर्माधीना, आत्मयात्रा भगवदधीना प्रथमयात्रार्थं शोके नास्तिक्यम् द्वितीययात्रार्थं शोके आत्मसमर्पणस्यानृतत्वम् । अतः यात्राद्वयार्थमपि भवद्भिः शोकः न कार्यः' इत्युक्तौ आत्मसमर्पणानन्तरम् आत्मयात्रार्थं शोकः न युक्तः तत्पूर्वं तु युक्त इति सूचनेन पूर्वं मोक्षोपायप्रवृत्तेः नैव विरोध इत्युक्तं भवति । आत्मसमर्पणमित्यत्र आत्मन्यासः अङ्गिभूतो विवक्षित इति व्यासार्याशयः । एतत्सर्वमभिप्रेत्य आचार्यवर्यैः—'माङ्गल्यसूत्रवस्त्रादीन् संरक्षति यथा वधूः । तथा प्रपन्नश्शास्त्रीयपतिकैङ्कर्यपद्धतिम् ॥ यद्वन्माङ्गल्यसूत्रादेः त्यागे संरक्षणेऽपि वा । रक्षोन्निरोधैर्भोगैर्वा पतिस्तद्वदिहापि नः ॥' (र.सा.च.अ.) इत्युक्तम् ॥

गद्योक्तशरणागतिः न्यासरूपैवेति 'पारमार्थिकी भगवच्चरणारविन्दशरणागतिः' इत्यत्र गद्यव्याख्याने 'आनुकूल्यादिशरीरवती । तद्धि तस्या उपायान्तरेभ्यो व्यावृत्तं स्वरूपम्' इति व्यासार्यैरुक्तम् । श्रुतप्रकाशिकायाम् उपा-

## गूढार्थसंग्रहः

सनाभिन्नन्यासरूपाङ्गिन एव बहुत्र कथनेन उदाहरिष्यमाणे शुकपक्षीये आत्मनिक्षेपस्य अङ्गितायाः प्रपत्तेः आनुकूल्यादिपञ्चाङ्गकत्वस्य स्फुटं प्रतिपादनेन च अङ्गाङ्गिसमुच्चयाभिप्रायेण 'आनुकूल्यादिशरीरवती' इत्युक्तम् ॥

अहिर्बुध्न्यसंहितायां च– 'बाह्येनचान्तरेणापि योगाख्येन महामुने । न्यासेन वा सुखी सोऽत्र परत्र च न संशयः ॥ बाह्य आभ्यन्तरश्चापि मम योगः प्रकीर्तितः । न्यासाख्यं साधनं प्रोक्तं तन्मे ब्रूहि महेश्वर ॥ (३७–२१,२२.) एतन्महोपनिषदं देवानां गुह्यमुत्तमम् । अभीष्टार्थप्रदं सद्यः सर्वपापप्रणाशनम् ॥ २३ ॥ अवाच्यमेतत्सर्वस्मै नाभक्ताय कदाचन । भक्तोऽसि मे स्थिरश्चेति वक्ष्यामि हितकाम्यया ॥ २४ ॥ यद्येन कामकामेन नसाध्यं साधनान्तरैः । मुमुक्षुणा यत् साङ्ख्येन योगेन न च भाक्तितः ॥ २५ ॥ प्राप्यते परमं धाम यतो नावर्तते पुनः । तेन तेनाप्यते तत्तत् न्यासेनैव महामुने ॥ २६ ॥ परमात्मा च तेनैव साध्यते पुरुषोत्तमः । षोढा हि वेदविदुषो वदन्त्येनं महामुने ॥ २७ ॥ आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ २८ ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः । उपाये गृहरक्षित्रोश्शब्दः शरणमित्ययम् ॥ २९ ॥ वर्तते सांप्रतंत्वेष उपायार्थैकवाचकः । अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः ॥ ३० ॥ त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता सा देवेस्मिन् प्रयुज्यताम् ॥ ३१ ॥ भगवन् सर्वविजयिन् सहस्रारापराजित । शरणं त्वां प्रपन्नोऽस्मि श्रीकरं श्रीसुदर्शनम् ॥ ३२ ॥ अनेनैव प्रपन्नस्य भगवन्तं सुदर्शनम् । तस्यानुबन्धाः पाप्मानस्सर्वे नश्यन्त्यसंशयम् ॥ कृतान्यनेन सर्वाणि तपांसि तपतां वर । सर्वे तीर्थास्सर्वयज्ञाः सर्वदानानि च क्षणात् ॥ ३४ ॥ कृतान्यनेन मोक्षश्च तस्य हस्ते न संशयः । कथं तपांसि यज्ञाश्च तीर्थदानानि सर्वशः ॥ ३५ ॥ तस्यैव न्यासमात्रेण सिद्ध्यन्ते तद्वद प्रभो । यानि निःश्रेयसार्थानि चोदितानि तपांसि वै ॥ ३६ ॥ तेषां तु तपसां न्यासमतिरिक्तं तपश्श्रुतम् । समित्साधनकादीनां यज्ञानां न्यासमात्मनः ॥ नमसा योऽकरोद्देवे स स्वध्वर उदीरितः' इति वचनक्रमः । अत्र बाह्याभ्यन्तरयोगः प्राक् (३१, ३२ अध्याये) कथितः । तेन साकं विकल्पेन न्यासस्य मुक्तितदितरफलकत्वमुक्तम् । 'यद्येन कामकामेन' इति श्लोके मुमुक्षुणा अनुष्ठेयत्वं न्यासस्य स्पष्टम् । भक्त्याद्यसाध्यफलहेतुत्वं च । 'सर्वपापप्रणाशनम्' 'तस्यानुबन्धःपाप्मानस्सर्वे नश्यन्त्यसंशयम्' इति वाक्यद्वये पापसामान्यनाशकत्वप्रतिपादनेन न्यासशरणागत्योरभेदःसिद्धः

अत्र वचनेषु उपक्रमोक्तन्यासस्य उपसंहारे कृष्णयजुर्वेदे तैत्तिरीये, ऋग्वेदे च विवक्षितत्वकथनेन वेदतात्पर्यविषयत्वं प्रकाशितम् । अत्र न्यासोपासनयोर्विकल्पकथनेन एतद्वचनतात्पर्येणैव 'न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः' इति व्यासार्यैरुक्तम् । एतेन एतद्व्यतिरिक्तब्रह्मविद्या नैव वर्तते इत्युक्तं भवति ॥ अनन्तरं च मध्ये 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्रुत्यर्थः विशदीकृतः । तेन गीतायां सङ्ग्रहेणोक्तार्थोऽपि प्रकटीकृतो भवति ॥

अत्र 'षड्विधा शरणागतिः' इत्युक्तिः अङ्गाङ्गिसमुच्चयाभिप्राया । द्विपञ्चाशे– 'वाचा नम इति प्रोच्य वपुषा मनसा च यत् । तन्नमः पूर्णमुद्दिष्टं अतोऽन्यन्न्यूनमुच्यते ॥ इयं करणपूर्तिस्स्यात् अङ्गपूर्तिमिमां शृणु' इति वक्ष्यते । अत्र नमश्शब्देन ऋग्वेदश्रुतौ विवक्षितः आत्मन्यास एव प्रागुक्तः अभिप्रेतः । अङ्गपूर्तिमित्यत्र अङ्गशब्दनिर्देशेन करणपूर्तिरित्यत्र अङ्गिभूतकरणमेव विवक्षितम् ॥ अत्र 'न्यासेन वा सुखी' 'न्यासाख्यं साधनम्' इत्यत्र न्यासस्य करणत्वस्य स्पष्टमुक्तेः । एतच्च करणत्वं व्यापारवत्कारणरूपम् । शरणशब्दानुसारात् वाङ्मनःकायव्यापारत्रयेण न्यासस्य करणतासंपादनमेव पूर्तिः । अनन्तरमङ्गोपाङ्गान्यभिधाय 'पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम्' इत्येतदर्थः उपसं-

## गूढार्थसङ्ग्रहः

हृतः । अत्र उपाङ्गकथनेन अङ्गानामङ्गत्वं सम्यक्प्रकाशितं भवति । अतः उपाङ्गकथनमात्रेण प्रागुक्तानुकूल्यसङ्कल्पादीनामङ्गत्वं नैव निवर्तते । अतः न्यासस्यैवाङ्गित्वं तत्र विवक्षितम् ॥

अत्र न्यासभिन्नशरणागतिः मध्ये नैवाभिप्रेता । तत्र प्रश्नस्यैवाभावात् । उपक्रमोपसंहारानुरोधेन मध्यग्रन्थस्य नेयत्वात् । 'षोढा हि वेदविदुषो वदन्त्येनं महामुने' इत्युपक्रम्य 'षड्विधा शरणागतिः' इत्युक्तौ एतच्छब्देन पूर्वं प्रस्तुतन्यासस्यैव शरणागतित्वाभिधानात ॥ श्वेताश्वतरोपनिषदि द्वितीयाध्याये– 'युजे वां ब्रह्म पूर्व्यं नमोभिः' इत्यनन्तरम् अष्टाङ्गयोगो निरूपितः । तत्र योगाङ्गभूतबहुप्रपत्तितात्पर्येण 'नमोभिः' इत्युक्तम् । तत्र नमश्शब्दार्थ एव 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यत्र षष्ठे वक्ष्यते । तदनुसारेण अहिर्बुध्न्यसंहितायामपि इत्थमुक्तम् ॥

गीतायाम् अन्ते शरणागतेरभिधानेन न्यासभिन्नशरणागतिर्विवक्षितेति भ्रमवारणाय उपक्रमोपसंहारयोर्न्यासमभिधाय, मध्ये न्यासस्यैव शरणागतित्वप्रदर्शनम्। न्यासस्य उपायत्वं पूर्वं प्रदर्शितम् शरणागतौ तु भगवतएवोपायत्वं प्रतिपाद्यते अतः उभयत्र विरोध इति न भ्रमितव्यम् । तथा सति 'षड्विधा शरणागतिः' इत्यनन्तरं शरणागतिशब्द घटकशरणशब्दार्थनिरूपणपरे 'सांप्रतं त्वेष उपायार्थैकवाचकः' इत्यत्र उपायवाचक इत्यनेनैव निर्वाहे अर्थशब्दो व्यर्थस्स्यात् । अर्थशब्दः पुरुषार्थपरः । 'यद्येन कामकामेन' इत्युपक्रमे न्यासे फलभेदेन धर्मभेदो नास्तीत्यभिधानेन अत्र फलभिन्नोपायः कर्मयोग ज्ञानयोग भक्तियोगरूपः पूर्वप्रस्तुतः । मोक्षार्थशरणागतौ तु फलाभिन्नोपायः । 'त्वमेवोपायभूतो मे भव' इत्यत्रापि प्राप्याभिन्नो भवेत्यर्थः । युष्मच्छब्देन प्राप्यतयैव अर्थस्योपस्थितिः 'यद्येन कामकामेन' इति सन्दर्भे परमात्मनः प्राप्यत्वस्यैव बुद्धिस्थत्वात् । 'अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः' इति पूर्वार्धे अगतिरित्यस्य प्राप्यान्तरशून्य इत्येवार्थः । अगतिरित्यनेन भगवद्व्यतिरिक्तप्राप्यशून्यत्वोक्त्या भगवतः प्रागुक्तं प्राप्यत्वं बुद्धौ सन्निधापितम् । प्राप्यस्यैव त्वमेवेत्यत्र युष्मच्छब्दार्थतया प्राप्याभिन्नोपायव्यतिरिक्तोपायस्य पूर्वप्रस्तुतस्य कर्मयोगादेरेव एवकारेण निषेधः ॥

यद्वा अर्थशब्दः इच्छाविषयपरः । पूर्वं न्यासस्य षड्विधशरणागतिरूपत्वमभिधाय पूर्वोक्तशरणशब्दघटकल्युडर्थस्यात्राभिधानेन न्यासरूपैव शरणागतिः 'शरणागतिरित्युक्ता' इत्यत्राभिप्रेतेति बोधनार्थमेव । संहितायामुपसंहारे 'नमसा योऽकरोद्देवे' इत्यत्र विवक्षित 'सनायुवः' इत्यादिऋग्वेदश्रुत्यर्थमभिप्रेत्य अत्रार्थशब्दः । 'सनायुवः' इति उदाहृतश्रुतौ सनातनं नित्यं कामयमान इत्यर्थेन तदर्थ एव 'उपायार्थ' इत्यत्रार्थशब्देन विवक्षितः । तेन नमःकरणकशरणागतिरेव अत्र विवक्षितेति सूचितम् । एतेन न्यासस्य करणत्वमत्रापि विवक्षितमिति सिद्ध्यति ॥

'प्रार्थनामतिः' इत्यत्र मतिशब्दस्य किम् प्रयोजनमिति विवेचनीयम् । 'आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे । उपायं वृणु लक्ष्मीशम्' इति अत्रिसंहिताऽपरनामकलक्ष्मीतन्त्रवचने निक्षेपरक्षोदाहृते निक्षेपानन्तरमेव उपायवरणस्योक्त्या उपायवरणस्य प्राधान्यव्युदासायात्र मतिशब्दः । मतिशब्दे उपक्रमोपसंहारोक्तन्यासात्मकमतिरेव विवक्षिता । शरणं व्रज, न्यसेत्, इति चोदनावैलक्षण्यादिना न्यास शरणागत्योः भेदशङ्का एतेन निरस्ता भवति ॥ प्रार्थनायुता मतिः प्रार्थनामतिः। अयमर्थः प्रश्नानुरोधेन शरणागतेरप्रश्नेन उपक्रमोपसंहारानुगुण्येनैव मध्ये अर्थविवक्षायाः अङ्गीकार्यत्वेन मध्यस्थैरङ्गीकार्यः। एवमर्थाङ्गीकार एव शरणागतिरित्यत्र गतिशब्दार्थनिर्णयस्सम्भवति नत्वन्यथा 'आत्मात्मीयभरं सर्वम्' (ल.तं) इत्यादिकं न शरणागतिशब्दार्थनिरूपणार्थं प्रवृत्तम् । येन उपायवरणस्यैव तच्छब्दार्थत्वं स्यात् । 'निक्षिप्य' इत्यत्र समानकर्तृकत्वमेव विवक्षितम् । अन्यथा शरणागतिशब्दार्थविरोधात् । भरं सर्वं निक्षिप्योपायं

## गूढार्थसंग्रहः

वृणु इति क्रमेणोक्तिः उपायत्वं भरस्वीकर्तृत्वमिति बोधनार्था, न तु निक्षेपवरणयोः क्रमिकत्वबोधनार्था इति तद्वचनस्य अहिर्बुध्न्यसंहितावचनस्य च न विरोधः । एतत्तात्पर्येणैव 'अभीष्टे दुस्साधे खत इतरतो वा क्वचन तद्भर-न्यासं याच्ञाऽन्वितमभिवदन्ति प्रपदनम् । इतःपश्चादस्मद्यतननिरपेक्षेण भवता समर्थ्योऽसावर्थस्त्विति मतिविशेषं तमविदुः' इति र.सा. साङ्गप्रपदनाधिकारे 'याच्ञाऽन्वितम्' 'मतिविशेषम्' इति पदद्वयेन 'त्वमेवोपायभूतो मे भव' इति श्लोकार्थम् आचार्यपादाः स्फुटमकार्षुः ॥

अत्र उपायशब्दस्य शरणशब्दसमानार्थकत्वं सर्वैरप्यङ्गीकरणीयम् । शरणशब्दश्च 'शॄ हिंसायाम्' इति धातोः करणे ल्युटि व्युत्पन्नः । 'मुमुक्षुर्वै शरणम्' 'अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्' इति श्वेताश्वतरश्रुतावेतदर्थस्य प्रतीतेः । गीतायाम् 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि' 'अनेनैव प्रपन्नस्य भगवन्तं सुदर्शनम् । तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्त्यसंशयम् ॥' इति, अहिर्बुध्न्यसंहितायां च पापसामान्यनिवृत्तेरभिधानेन शरणत्वं पापसामान्यनिवर्तकत्वं तदपि फलाव्यवहितप्राक्क्षणवृत्तित्वरूपस्य करणत्वस्य शरणशब्दे विवक्षितत्वेन तदेवात्रोपायत्वम् । श्रुतौ 'अमृतस्य परं सेतुम्' इत्यत्र परशब्देन एतादृशमेवोपायत्वं शरणशब्दे विवक्षितमिति निर्धारितम् ॥

एतेन प्रपत्तेः भगवत्प्रसादद्वारा भक्त्यपेक्षया फलाव्यवहितोपायत्वेन उपक्रमोक्तन्यासोपायत्वस्य व्यापारवत्कारणत्वस्य न विरोधः । एतेन न्यासशरणागत्योः न भेदसिद्धिः । 'यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा' इत्युपक्रमे इतरासाध्यफलहेतुत्वस्य न्यासे प्रतिपादनात् । सर्वपापनिवृत्तिरूपफलस्यापि तत एव सम्भवात् । अवताररहस्यज्ञानवतां भक्तानां तद्देहावसाने मुक्तेः भगवद्गीतासिद्धत्वेऽपि आर्तानां प्रारब्धनिवर्तकत्वस्य तत्प्रपत्तिसिद्धस्य भक्तिसाध्यत्वासम्भवात् । एवं निराबाधकैङ्कर्यादेरपि ततस्सिद्धिः न संभवति ॥

एतेन 'इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किंपुनस्सहकारिताम् ॥' इति न्यायसिद्धाञ्जनोक्तौ प्रपत्तेरनुपायत्वमाचार्याणामप्यभिमतमित्युक्तिः तद्ग्रन्थे पूर्वोत्तरवाक्यानां ग्रन्थान्तरे आचार्यवाक्यानां चापर्यालोचनेन तात्पर्याज्ञानमूलिकेति सिद्ध्यति । तत्रापि हेतुत्वस्य उक्तशरणशब्दार्थोपायत्वरूपस्यैव विवक्षितत्वात् । भक्तानां चरमदेहवियोगकाल एव उपायनिष्पत्त्या प्रसादमात्रव्यवधानराहितकर्मसामान्यक्षयाव्यवहितपूर्ववृत्तित्वं वर्तते । प्रपन्नानां तु प्रपत्त्यनन्तरं चेतनव्यापारस्योपायभूतस्य विरहेण देहवियोगकालिककर्मक्षयाव्यवहितपूर्ववृत्तित्वं प्रसादमात्रव्यवधानरहितं नास्त्येव । एतादृशोपायत्वधियं रुन्धे । लक्ष्मीशस्यैव तादृशहेतुत्वात् । एतत्पूर्वम् 'अथ को मोक्षहेतुः ?' इत्युपक्रम्य भक्तेर्मोक्षहेतुत्वमुपपाद्य, 'अध्यवसायविशेषात्मिका न्यासविद्या' इति न्यासविद्यां प्रस्तुत्य 'उपायस्सुकरस्सोऽयम्' इति तस्योपायत्वे प्रमाणमपि प्रदर्श्य 'न्यासविद्यातु प्रारब्धं निश्शेषं निवर्तयितुं शक्ता तथाऽपि रागविषयमंशं तदनुबन्धि दुःखं च स्थापयति । निश्शेषवैराग्ये तु निश्शेषं निवर्तयति । अत एव आर्तदृप्तभेदः । रागविषयश्चांशः दृप्ते नैतावदिति परिच्छेत्तुं शक्यः ; विचित्रत्वात्पुंसामभिप्रायपद्धतेः । अस्यां च विद्यते' इत्येतदनन्तरम् 'इयं केवललक्ष्मीश' इत्यादिकमुपन्यस्तम् । अनन्तरंच 'प्रारब्धकर्मावधिको मोक्ष इत्थमुपासितुः । दृप्तस्य देहावधिको आर्तस्यार्त्यवधिर्मतः ॥' इत्युक्तम् ॥

अत्र एतस्मात् श्लोकात्पूर्वमनन्तरं च भक्त्यपेक्षया न्यासे विशेषः प्रदर्शितः । सच 'साधनं भगवत्प्राप्तौ' इत्यादावप्याभिहितः । मोक्षश्च अत्राधिकरणश्रीभाष्योक्तः निश्शेषाविद्यानिवृत्तिघटितः । भगवदनुभवश्च प्रतिबन्धविगमानन्तरं भविष्यति । इत्थं च निश्शेषाविद्यानिवृत्तिकरणत्वमेव शरणत्वम् तदेवात्रोपायत्वम् । एतच्च भक्त्यपेक्षया शरणागतस्य

## गूढार्थसंग्रहः

विशेषप्रदर्शनपरपूर्वोत्तरग्रन्थसन्दर्भे आप्रयाणादनुवर्तमानभक्त्यपेक्षया शरणागतेः विशेषप्रदर्शनेन लक्ष्मीशमात्रनिष्ठं नतु शरणागताविति आचार्यपादैः स्पष्टीकृतम् । अत्र न्यासविद्यां प्रस्तुत्य ‘ इयं केवल– ’ इति श्लोकस्य कथनेन इतरबहुग्रन्थेषु न्यासाभिन्नशरणागतेः अप्रामाणिकत्वस्य आचार्यपादैरेव व्यवस्थापनेन अत्रैव पूर्वम् ‘ उपायस्सुकरस्सोऽयम् ’ इति न्यासस्योपायत्वप्रदर्शनेन च लक्ष्मीशोपायत्ववैलक्षण्यं न्यासाख्यशरणागतौ आचार्यपादैरेव व्यवस्थापितम् ॥

‘ अहमस्म्यपराधानाम्– ’ इत्यहिर्बुध्न्यसंहिताश्लोके ‘ अकिञ्चनः ’ इत्यत्र ‘ यद्येन कामकामेन ’ इति प्रागुक्तकर्मयोगज्ञानयोगभक्तियोगज्ञानशून्यत्वमेव विवक्षितम् । अन्यविवक्षाया अत्रासम्भवात् । गद्ये ‘ एवंभूतमत्कैङ्कर्यप्राप्त्युपायतयाऽवक्लृप्तसमस्तवस्तुविहीनोऽपि ’ इत्येतद्व्याख्याने व्यासार्यैः ‘ वक्ष्यमाणचरमश्लोकप्रथमपादार्थमाह– एवंभूतेति । अवक्लृप्तम्–विहितम् । समस्तवस्तुशब्देन कर्मज्ञानभक्तियोगाः तदनुगुणा अमानित्वादिगुणाश्च विवक्षिताः । विहीन इति त्यागोऽनूदित इति भावः ’ इत्यर्थ उक्तः । एतेनात्र त्यागविधिपक्षः असंमत इति स्फुटम् ॥

एवम् एतदेवाकिञ्चन्यं शरणागतावधिकार इत्यपि सूचितम् । गीताविस्तरत्वात्पञ्चरात्रस्य ‘ अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः ’ इत्यत्र अकिञ्चनशब्देन ‘ मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तितः ’ (३७–२५) इति प्रागुक्तभक्तिशून्यत्वकथनेन न्यासाभिन्नशरणागतौ स एवाधिकार इति बोधनेन ‘ सर्वधर्मान्परित्यज्य ’ इत्यनुवादेन उक्ताधिकार एव विवक्षित इति संहितावचनेन निर्धारितं भवति । एतत्संहितावचनमेव शरणशब्दार्थे प्रमाणतयाऽभ्युपगच्छद्भिः एतद्वचनबलेन ‘ सर्वधर्मान्परित्यज्य ’ इत्यस्यानुवादत्वं नैव प्रत्याख्यातुं शक्यम् । ‘ अकिञ्चनोऽनन्यगतिः ’ इति यामुनमुनिसूक्तिरेतदभिप्रायैव ॥

इत्थमर्थः मित (श्रीरङ्ग) गद्यादिनाऽपि भगवतोऽभिमत इति प्रतीयते । ‘ नित्यकैङ्कर्यप्राप्त्युपायभक्तितदुपायसम्यग्ज्ञान तदुपायसमीचीनक्रिया तदनुगुणसात्विकताऽऽस्तिक्यादिसमस्तात्मगुणविहीनः दुरुत्तरानन्ततद्विपर्ययज्ञानाक्रियाऽनुगुणानादिवासनामहार्णवान्तर्निमग्नः तिलतैलवत् दारुवह्निवत् दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूपदुरत्ययभगवन्मायातिरोहितस्वप्रकाशः अनाद्यविद्यासञ्चितानन्ताशक्यविस्रंसनकर्मपाशप्रग्रथितः अनागतानन्तकालसमीक्षयाऽप्यदृष्टसन्तारोपायः निखिलजन्तुजातशरण्य ! श्रीमन्नारायण ! तव चरणारविन्दयुगलं शरणमहं प्रपद्ये ’ इति मितगद्यसूक्तिः अत्र ‘ समस्तात्मगुणविहीनः ’ ‘ अदृष्टसन्तारोपायः ’ इति सूक्तिः ‘ अकिञ्चनः ’ ‘ सर्वधर्मान् परित्यज्य ’ इत्यस्य च विवरणमिति स्फुटम् ॥ ‘ दुरुत्तरानन्त–’ इत्यादि ‘ अहमस्म्यपराधानामालयः ’ इत्यस्य विवरणम् । अत्र एतत्पूर्वमेव ‘ अशेषशेषैतकरतिरूपनित्यकिङ्करो भवानि ’ इत्यनन्तरं पूर्वोदाहृतगद्यश्रीसूक्तिः ॥ ‘ एवं ‘ दैवी ह्येषा गुणमयी ’ इति श्लोके मायातरणस्य फलत्वकथनेन तत्फलसाधनतया श्वेताश्वतरादौ प्रतिपादितध्यानयोगविरहश्च विवक्षितः । सन्तार इत्यत्र समित्यनेन स्वेच्छाविषयकालिकत्वं विवक्षितम् । तत्साधनत्वं तु भक्तेः नैव सम्भवति ॥

एवं वैकुण्ठगद्येऽपि ‘ ऐकान्तिकात्यन्तिकतत्पादांबुजद्वयपरिचर्यैकमनोरथः तत्प्राप्तये च तत्पादांबुजद्वयप्रपत्तेरन्यन्नमे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः तस्यैव भगवतो नारायणस्य अखिलसत्वदयैकसागरस्य अनालोचितगुणागुणाखण्डजनानुकूलमर्यादाशीलवतः स्वाभाविकानवधिकातिशयगुणवत्तया देवतिर्यङ्मनुष्याद्यखिलजनहृदयानन्दनस्य आश्रितवात्सल्यैकजलधेः भक्तजनसंश्लेषैकभोगस्य नित्यज्ञानक्रियैश्वर्यादिभोगसामग्रीसमृद्धस्य महाविभूतेः श्रीमतश्चरणारविन्दयुगलं अनन्यात्मसंजीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् ’ इत्युक्तम् ।

## गूढार्थसङ्ग्रहः

अत्र गद्यद्वये कैङ्कर्यपेक्षया शरणागतिः स्फुटा । एतेन 'नित्यकैङ्कर्यप्राप्त्यपेक्षया पारमार्थिकी भगवच्चरणारविन्द शरणागतिः' इति श. गद्यसूक्तेः गद्यद्वयसूक्तेश्चैकार्थ्यं स्फुटम् । शरणागतिगद्ये 'अनन्यशरणः' इति अधिकारः सङ्ग्रहेण निरूपितः । 'अकिञ्चनोऽनन्यगतिः' इति यामुनसूक्तौ योऽर्थ उक्तः स एव 'अनन्यशरणः, इत्यत्र विवक्षितः । वै.गद्ये स्वतन्त्रप्रपत्तेरभिधानेन वेदार्थसंग्रहसूक्तिविवरणे व्यासार्योक्तार्थः नात्र विवक्षितः । किं तु 'प्रपत्तेरन्यन्नमे कल्पकोटिसहस्रेणापि साधनमस्ति' इत्यत्र 'भक्त्यादिकमेव साधनमभिप्रेतम्' इति शरणागतिगद्ये सङ्ग्रहेण मितगद्ये विस्तरेण कैङ्कर्यप्राप्त्युपायभक्त्यादिशून्यत्वं यदुक्तं तदेवात्र विवक्षितम् ।। वेदार्थसंग्रहे भक्तेरेव प्राधान्येनोपक्रमोपसंहारयोः उक्त्या अङ्गप्रपत्तिरपि तत्र विवक्षितेति व्यासार्यैः तथा विवृतम् । तेन अङ्गप्रपत्त्यनुष्ठातुः तदुत्तरभक्तियोगपूर्त्यनन्तरमेव मुक्तिः । स्वतन्त्रप्रपत्तिनिष्ठस्य तु न तथेति विशेषः स्फुटं प्रतीयते ।।

'अहमस्म्यपराधानामालयः' इति श्लोके अङ्गप्रपत्तिनिष्ठापेक्षित प्रपत्त्यनन्तरभक्तिरूपगुरुतरोपायस्थानापन्नत्वम् तदपेक्षामन्तरैव रक्षकत्वरूपं भरस्वीकर्तृत्वं विवक्षितमिति एतत्सूक्त्या सूचितम् । अयमर्थः अ. संहितायामपि विदुषां व्यक्तः । 'अकिञ्चन' इत्यत्र भक्तियोगशून्यत्वस्य विवक्षितत्वेन भक्तियोगसाध्यफलापेक्षावतः एवाधिकारित्वस्य पूर्वमेवोपपादनेन भक्तियोगसाध्यफलापेक्षावतः तदुपायशून्यस्य भगवत्युपायत्वप्रतिपादने भक्तियोगमनपेक्ष्य रक्षकत्वं वाक्यव्युत्पत्तिमतां विदुषां व्यक्तं प्रतीयते ।। यथा अनेकवत्सरेषु सेवां कुर्वतां फलमपेक्ष्य परमकारुणिकस्य समर्थस्य महापुरुषस्य समीपं गत्वा 'नाहं विलंबं सहे तावत्कालं सेवां कर्तुमहमशक्तः अथापि शक्तस्य यत्फलं तदिच्छामि त्वमेवोपायो भव इति वाक्यप्रयोगे बहुकालसेवामनपेक्ष्य अल्पकालिकसेवाया एव तत्फलं परमकारुणिको राजा ददाति । तत्सेवयैवायमपि सेवकः फलं संपादयतीति लोकसिद्धमेतत् । एवंच प्रमाणानुरोधेन गुरुतरोपायस्थानापन्नत्वं गुरुतरोपायनिरपेक्षरक्षकत्वरूपं सिद्धम् ।।

अत्र वैकुण्ठगद्ये 'साधनम्' इत्यत्र साधनशब्दः शरणशब्दार्थभूतोपायपर इति सर्वैरप्यङ्गीकरणीयम् । 'अनन्यशरणः' इति शरणागतिगद्यसूक्त्यर्थस्यैव अत्र विस्तरेणाभिधानात् । शरणशब्दे ल्युडर्थः 'सांप्रतं त्वेष उपायार्थैकवाचकः' इति वचनसिद्ध एव । अत्रच वचने अर्थशब्दः याच्ञाविषयार्थकः । फलस्य याच्ञाविषयत्वेन तस्य च 'य द्येन कामकामेन' इति पूर्वमभिधानेन तत्रत्यन्यासस्यैव 'षड्विधा शरणागतिः' इति कथनानन्तरं पूर्वोक्तशरणशब्दघटकल्युडर्थस्यैवात्राभिधानेन पूर्वोक्तफलविषयिणी याच्ञेति स्फुटं प्रतीयते । तच्च फलं प्रागुक्तोपायासाध्यमेव । तच्च स्वापेक्षितकाले सर्वपापनिवृत्तिरूपं प्रपत्तिव्यतिरिक्तगुरुतरोपायमन्तरैव गुरुतरोपायलभ्यं प्रपत्त्युत्तरचेतनव्यापारानपेक्षया भगवद्देयत्वेनेच्छाविषयीभूतं फलम् । तेनैतादृशफलदत्वेन इच्छाविषयाभिन्नः उपायो यः तद्वाचकश्शरणशब्दइति पर्यवसितम् ।। एतेन स्वोत्तरभाविचेतनव्यापारमनपेक्ष्य रक्षकत्वरूपं यत् भरस्वीकर्तृत्वं गुरुतरोपायफलदातृत्वं उपायत्वमेव शरणशब्दे ल्युडर्थ इति निश्चीयते । 'अमृतस्य परं सेतुम्' इति श्रुतौ सहजकारुण्यस्य विशेषतः उपयोगेन भगवति परत्वं प्रकाशितमिति एतादृशमेवोपायत्वं तत्रापि विवक्षितमित्यभिप्रेत्य संहितायामित्थमुक्तिः ।।

एवं ल्युडर्थमभिधाय अनन्तरमेव 'त्वमेवोपायभूतो मे' इति वचनं संहितायां प्रवृत्तम् । तेन च तत्र पूर्वश्लोके भरस्वीकर्तृत्वरूपप्रार्थनैव विवक्षितेति निर्णयस्सम्भवति । एतत्सर्वमभिप्रेत्यैव वैकुण्ठगद्यसूक्तिः । एतदर्थमभिप्रेत्यैव 'स्वतन्त्रन्यासनिष्ठानां सिद्धोपाये विभौ स्थितिः । क्षणात् स्वयत्नविरतिव्यक्त्यै प्रोक्ता विशेषतः ।।' (र.सा. च.अ.) इत्याचार्यपादैरुक्तम् ।। एतेन—दुर्विज्ञानैर्नियमगहनैः दूरविश्रान्तिदेशैः बालानर्हैर्बहुभिरयनैः शोचतां

## गूढार्थसंग्रहः

नस्सुपन्थाः । निष्प्रत्यूहं निजपदमसौ नेतुकामस्स्वभूम्ना सत्पाथेयं किमपि विदधे सारथिस्सर्वनेता ॥ ' र.सा. इत्यत्र सौष्ठवं क्षणात् स्वयत्नविरतिरेवेति सिद्ध्यति । सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना । सस तस्याहमेवेति चरमश्लोकसंग्रहः ॥ ' इत्यत्र भगवति गुरुतरोपायाभेदोक्त्या भरस्वीकर्तृत्वं विवक्षितमिति सिद्धम् । सौलभ्योपयोगिगुणानामेव प्रपत्तौ विशेषेणोपयोग इति ' अनालोचितगुणागुणाखण्डजनानुकूलमर्यादाशीलवतः ' इति सौशील्यमुक्तम् । एतच्च कृष्णावतारे विशेषेण प्रकाशितं भगवता । मर्यादाशीलवत्त्वमेव ' देवतिर्यङ्मनुष्य—आनन्दनस्य ' इत्यादिना विवृतम् । वात्सल्यमपि सौलभ्योपयुक्तम् । ' ये भजन्ति तु ' इत्यत्र भक्तजनसंश्लेषैकभोगत्वमपि व्यक्तम् । एतेन सहजकारुण्यमेव प्रपत्तेः फलदाने मूलम् । तस्यैव अन्ये गुणाः पोषका इति दर्शितं भवति ॥ भक्तावेतेषां गुणानामुपयोगापेक्षया शरणागतेस्त्रैवर्णिकेतरेष्वपि आरम्भसम्भवेन जात्यादिविभागराहित्येन क्षणात् स्वयत्नविरत्या चेतनेच्छाकाले कर्मक्षयफलदानेन इच्छाविषयनिरपराधकैङ्कर्यदानेन आचार्येणानुष्ठितप्रपत्त्या सर्वेषां प्रपत्तिरूपव्यापारमन्तराऽपि फलदानेन च भगवतः सहजकारुण्यस्य अन्यगुणानां च विशेषतः उपयोगोऽवसेयः ॥ एतदभिप्रायेणैव संहितायां ' न साध्यं साधनान्तरैः ' इत्युक्तिः ॥

एतत्तात्पर्येणैव— ' पन्था नकार उद्दिष्टः मः प्रधान उदीर्यते । विसर्गः परमेशस्तु तत्रार्थोऽयं निरुच्यते ॥ अनादिः परमेशो यः शक्तिमान् पुरुषोत्तमः । तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान् ॥ (अ.स.५२. ३२) ' इति नमनशब्दस्य परार्थ उक्तः । अत्र प्राधान्यं ' दैवं चैवात्र पञ्चमम् ' (१८—१४) इति गीताभाष्ये ' पञ्चमम् - परमात्मा अन्तर्यामी कर्मनिष्पत्तौ प्रधानहेतुरित्यर्थः । उक्तंहि —' सर्वस्य चाहम्—अपोहनञ्च ' इति । वक्ष्यति च ' ईश्वरस्सर्वभूतानां—यन्त्रारूढानि मायया ' इति ' इति गीताभाष्ये सहजकारुण्यनिबन्धनमूलकारणत्वमेव प्रधानहेतुत्वमिति प्रतिपादनेन तस्य शरणागतौ नमश्शब्दार्थे विशेषत उपयोगः संहितायां प्रदर्शितः ॥ अत्र ' नमननामवान् ' इत्यत्र नामशब्दः नाभिधानपरः नमनशब्दस्य भगवदर्थकतायाः अ. संहितायां पूर्वमनुक्तेः अन्यत्रानभिधानाच्च ॥ अत्रैव पूर्वं ' नाम यत्यपि वा देवं प्रह्वीभावयति ध्रुवम् । प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् ॥ अतो वा नम उद्दिष्टं यत्तन्नामयति स्वयम् । (५२- ११) ' इत्युपक्रम्य अङ्गोपाङ्गनिरूपणानन्तरं ' पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् ' (२४) इति पूर्वं नमश्शब्दार्थस्य प्रपत्तेरेव नमनशब्देनाभिधानेन तत्र भगवन्तं नामयतीति योगार्थे नमनरूपं यत् स्वप्रह्वीभावकं तद्वानित्यर्थः । तेन नमश्शब्दार्थप्रपत्त्या प्रह्वीभूतः इत्यर्थो लभ्यते । तस्यैव प्रधानहेतुत्वमत्र परमात्मपरत्वाङ्गीकारे विवक्षितम् प्राधान्यं च गीताभाष्योक्तदिशैव ॥

यद्वा—' तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान् ' इति भिन्नं वाक्यम् । ' स्वप्राप्तये ' इत्यनभिधाय तत्प्राप्तये इत्युक्त्या सामानाधिकरण्येनान्वयः नात्र विवक्षित इति प्रतीयते । पक्षद्वयेऽपि प्राप्तये इत्यर्थबोधकशब्दो नास्त्येव । अतः ' अयं पन्थाः ' इति परमेशभिन्नपन्था एव विवक्षितः । विसर्गशब्दार्थो यः परमेशः तत्प्राप्तये पन्थाः कइति गवेषणायां ' अयम् ' इत्युक्तम् । पूर्वं स्थूलार्थनिरूपणावसरे नमश्शब्दार्थो नमनरूप उक्तः । तस्यैव अङ्गोपाङ्गवैशिष्ट्यस्य पूर्वमभिधानेन उपक्रमे न्यासशब्देनोक्तार्थस्य ' नमसा योऽकरोद्देवे स स्वध्वर इतीरितः ' इत्यत्र नमश्शब्दार्थत्वकथनेन तस्यैव परार्थनिरूपणावसरे उपसंहारस्य न्याय्यतया बुद्धिसन्निकर्षः तस्यैव वर्तत इति ' अयम् ' इत्यत्र स एव विवक्षितः । सच उक्तदिशा नमनशब्दावसेय इति न्यासात्मकप्रपत्तिपरतयाऽपि योजनं सम्भवति ॥ तत्र प्रपत्तौ भक्त्याद्यपेक्षया प्राधान्यं ' यद्येन कामकामेन ' इत्युपक्रमोक्तं सहजकारुण्यादिगुणप्रकाशननिबन्धनं भरस्वीकर्तृत्वेनैव । वैकुण्ठगद्ये ' तत्प्राप्तये

## गूढार्थसंग्रहः

च ' इति संहितावटकशब्दस्य प्रयोगेण परार्थनिरूपणावसरे उपक्रमोक्तार्थन्यास एव विवक्षित इति भगवता सूचितम् ॥ एतदेवाभिप्रेत्य आचार्यपादैः एतद्वचनस्य अर्थद्वयं तत्रतत्रोक्तम् ॥

साधनतारतम्येन साध्यतारतम्यं परमकारुण्येन तत्तच्चेतनाद्यधिकारानुरोधेन पुत्राणां दायधनवत् अविशेषेण फलप्रदातुः नैवापादयितुं शक्यम् । अत एवोपासनायाः तरतमभावापन्नफलशङ्काऽपि निरवकाशा । अयमर्थः सर्वत्रप्रसिद्धय धिकरणश्रीभाष्ये स्फुटः । तत्र शाण्डिल्यविद्यायाम् ' एष म आत्मा अन्तर्हृदये ' इति त्रिवारमभ्यासेन परमकारुण्यसूचनेन भगवतस्सहजकारुण्यमूलकत्वेन अन्तर्यामित्वस्य मोक्षपर्यन्तोपयोगित्वस्य ' ईश्वरस्सर्वभूतानाम् ' इति गीतायाम् , ' हार्दा नुगृहीतश्शताधिकया ' इति सूत्रेच्च प्रतिपादनेन सहजकारुण्यवत एव सर्वेषामविशेषेण फलदानं युक्तमिति सिध्यति ॥ ' एतमितः प्रेत्याभिसम्भवितास्मि इति यस्य स्यादद्धा न विचिकित्साऽस्ति ' इति शाण्डिल्यविद्यायां एवमध्यवसायवतः अविशिष्टफलस्य स्फुटं प्रतिपादनेन भक्तविषयेऽपि परमकारुण्यादिकं मूलमिति सिद्धया स्वतन्त्रप्रपत्तिनिष्ठविषये सहजकारुण्यादेर्विशेषत उपयोग इति सिद्धम् ॥ राजकुमारनयोऽप्यत्रैवानुकूलः । एवं च ' तत्प्राप्तये ' इत्यत्र भरन्यासस्य सूचनेन ' न्यासेनैव ' इत्यत्र एवकारार्थ एव व्यतिरेकमुखेनाभिधाने मूलमिति सिद्धम् ॥ अयमर्थः शुकपक्षीये आत्मात्मीयभरन्यासं प्रतिपादयतां व्यासार्याणामभिमत इति न प्रत्याख्यानमर्हतीत्यपि सिद्धम् ॥

एतेन अत्रोपायत्वस्य भरस्वीकर्तृत्वरूपत्वेन भरन्यासमन्तरा तदयोगेन ' प्रार्थनामतिः ' भरन्यासरूपेति सिद्धयति अत्र वचने उपायत्वस्य गुरुतरोपायान्तरस्थानापन्नत्वरूपस्य बहुत्र निर्धारणकरणेन ' अनन्यसाध्ये स्वाभीष्टे ' इति भरतमुनिवाक्येऽपि (अ.सं) एतदनुसारेण भरन्यासएव विवक्षित इत्यभिप्रेत्य ' अभीष्टे दुस्साधे ' इत्यत्र ' भरन्यासं याच्ञाऽन्वितमभिवदन्ति प्रपदनम् ' इत्याद्याचार्यपादैरुक्तम् ॥ एवमधिकारस्य ' तत्प्राप्तये ' इति सूक्त्या स्फुटीकरणानन्तरं एतादृशाधिकारिणः लघूपायनिष्ठस्य गुरूपायसाध्यं फलं कथं दास्यति भगवानिति शङ्कापरिहाराय ' अखिलदयैकसागरस्य ' इत्यादिविशेषणानि । सृष्टेः चेतनसामान्ये सहजदयामूलकत्वेन सर्वचेतनानां फलदानेच्छा भगवतो वर्तते इति सिद्धम् ॥

एवं च कर्मज्ञानभक्त्यसाध्यफलहेतुत्वं न्यासे अभिधाय तादृशफलहेतुत्वमव्यवहितपूर्ववृत्तित्वरूपं भगवति । व्यवहितं तु शरणागतौ इति अहिर्बुध्न्यसंहितायामभिधानेन न्यासस्य करणत्वं व्यापारवत्कारणत्वरूपं भगवतस्तु फलाव्यवहित प्राक्क्षणवृत्तित्वरूपमिति विभागेन उभयोः करणत्वप्रतिपादकप्रमाणयोरविरोधः अन्योन्यसामरस्यं च सिद्धम् ॥ एतत्सर्वमभिप्रेत्य भक्तौ आप्रयाणं मुक्तिहेतुभूतचेतनव्यापारानुवृत्तिः प्रपत्तौ तु उत्तरकाले नानुवृत्तिरित्यर्थः अ.संहिताऽदितात्पर्यपर्यालोचनेन सिद्धयतीत्युक्तिः ' इतः पश्चादस्मद्यतननिरपेक्षेण भवता समर्थ्योऽसावर्थस्त्विति मतिविशेषं तमविदुः ' इत्युक्तिश्च ॥ अत्र ' प्रार्थनामतिः , इत्यत्र प्रार्थनायुता मतिरित्यर्थस्य विवक्षण एव शरणागतिशब्दार्थनिरूपण परत्वमेतद्वचनस्य सङ्गच्छते । गत्यर्थानां बुद्धयर्थत्वस्य सर्वसम्मतत्वेन इच्छायाः बुद्धयवस्थाविशेषरूपत्वस्य सिद्धान्ते अङ्गीकारेऽपि इच्छार्थस्य गत्यर्थकधातुभिः क्वापि प्रतीतिविरहेण अस्य वचनस्य शरणागतिशब्दावयवार्थनिरूपणपरत्वं नैव स्यात् । एतत्पूर्ववचने शरणशब्दे ल्युडर्थमभिधाय अस्मिन् वचने ' शॄ ' ' गम् ' इत्येतद्धातुद्वयार्थनिरूपणमुखेन शरणागतिशब्दार्थो निरूप्यत इति निर्मत्सराणां स्फुटम् ॥

वचने चास्मिन् अधिकारी पूर्वार्धे निरूपितः । अपराधानिवृत्ति साधनान्तरशून्यः आकिञ्चनः अधिकारी इति पूर्वार्धेन सिद्धौ अपराधनिवृत्तिरूपफलस्यापि प्रतीत्या तत्फलकरणत्वरूपोपायत्वस्य तत्प्रार्थनाऽन्वितमेतदुत्तरार्धे निरूपणेन शरणागतिशब्दार्थस्संपूर्णो निरूपितः । गीताऽर्थोऽपि विशदीकृतो भवति । उपक्रमाद्यैकरस्यंच । अन्तर्यामिब्राह्मणस्य प्रश्ना-

## गूढार्थसंग्रहः

नुरोधेनान्तर्यामिपरत्वमेव। 'नान्योऽतोऽस्ति द्रष्टा' इतितु नियन्तुः नियन्त्रन्तरनिषेधपरमिति वृत्तिकारसिद्धान्तः, स एव युक्त इति भगवता साधितम्। नतु परमतरीत्या द्रष्ट्रन्तरानिषेधेनैकस्य द्रष्टृत्वतात्पर्येण आत्मैकत्वम्। सैव रीतिः अत्रापि प्रश्नानुरोधेन साधीयसी। एवमभिप्रेत्यैव गद्यविवरणे पारमार्थिकी शरणागतिरित्यत्र व्यासार्यैः आनुकूल्याद्यङ्गकन्यासस्य भगवदभिप्रेतत्वोक्तिः॥

गद्यव्याख्याने 'प्रपत्तिं विवृणोति 'तस्मादिति'। इति 'तस्मात् प्रणम्य' इति गीतावाक्योपादाने तात्पर्यमभिहितम् पित्रादयः तत्तत्संबन्धाद्धि क्षमन्ते अतस्सर्वविधसंबन्धात् त्वया क्षन्तव्यमित्यर्थः प्रार्थनापर्यन्तमहाविश्वासःप्रपत्तिः महाविश्वास पूर्विका प्रार्थना वा' इत्यनेन 'प्रसादये' इत्यस्यार्थ उक्तः। अत्र प्रार्थना उपायत्वप्रार्थनैव। उपायत्वंच भक्तिस्थानापन्नत्वम्। अनन्तरं 'परभक्तिपरज्ञान-' इति गद्यव्याख्याने 'परभक्तिस्थाने प्रपदनम् परज्ञानपरमभक्ती देहसंबन्धवेलायां उपासकस्य उपायकोटिनिविष्टे प्रपन्नस्य ते उपेयकोटिघटिते' इति परभक्तिस्थाने प्रपदनोक्तेः। अन्ते 'अतो भक्तिसाध्यं प्रपत्त्यैव लभ्यमिति निर्भरेण त्वया भवितव्यमित्याह- अतस्त्वमिति' इत्यत्र प्रपत्तेः परब्रह्मप्राप्तिकरणत्वाभिधानात् भगवत्युपायत्वस्य गुरुतरोपायस्थानापन्नत्वस्य भरस्वीकर्तृत्वस्यैव व्यासार्याणां सम्मतत्वमिति प्रतीयते। एतेन 'तस्मात्प्रणम्य-इति गीतोपादानं सर्वापराधप्रायश्चित्तरूपाऽपि प्रपत्तिः अपराधरूपेति प्राक् गद्यानुष्ठितप्रपत्तिरूपापराधक्षमापणं क्रियत इति कल्पना अप्रामाणिकी इति व्यासार्यैर्निर्धारितं भवति॥

शुकपक्षीयेऽपि 'तत्तेऽनुकम्पां सुसमीक्षमाणः भुञ्जान एवात्मकृतं विपाकम्। हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेतयो मुक्तिपदे सदायभाक्॥' (श्री.भा.१०.स्कं.१४.अ.८.श्लो) इत्यत्र 'हृद्वाग्वपुर्भिस्ते नमः विदधत्' इत्यनेनानुकूल्यादिपञ्चपरिकरोक्तिः, एवंप्रकारेण यो जीवेत इति दृप्तत्वोक्तिः, मुक्तिपदे अर्चिरादिना दायभाग्भवतीति जीवतःपुत्रादेः पितृदायभाक्त्वमिवेति भावः' इति। एकादशस्कन्धे-'तस्माद्गुरुं प्रपद्येत जिज्ञासुश्श्रेय उत्तमम्' (११.३.२१) इत्यत्र 'उत्तमं श्रेयः भक्तिरूपं प्रपत्तिरूपं वा ज्ञानम् इति, 'इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनःप्रियम्। दारान्सुतान्गृहान् प्राणान्यत्परस्मै निवेदनम्॥' (११.३.२८) 'इत्यत्र उक्तसर्ववृत्तिनिदानं श्रीभगवति आत्मात्मीयभरन्यासरूपमङ्गिनमाह——इष्टमिति। प्राणानिति प्राणादिविशिष्टस्यात्मनः परस्मै परवासुदेवायेति विषयो दर्शितः। एवमात्मनः आत्मीयस्य च भरन्यास एव आत्मनिक्षेपः प्रपत्तिः न्यास इति पर्यायैरुक्तः' इति चोक्तम्॥

एवं 'समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः। भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम्॥' (१०.१४.५८) इत्यत्र 'अतएव श्रीभगवच्छरणागतिरेव श्रीमदाचार्यकारिता सर्वाधिकारिका इति सुस्पष्टमाह- समाश्रिता ये इति। ये पुरुषाः मुरारेः मुरहननसमर्थस्य भाविनोऽपि भूतवन्निर्देशश्च अनादिसिद्धनामवत्त्वं हरेस्सूचयतीदं पदम्। पुण्ययशाश्चासौ मुरारिः तस्य पदपल्लवप्लवं पदं चरणः स पल्लव इव शीतलः सुखदःप्लवः नौकातुल्यः सान्निध्यस्पर्शाभ्यामेव तारकत्वं व्यञ्जितम्। महत्पदं महतां ब्रह्माण्डाधिपानामपि पदं आश्रयं तेषां भवाम्बुधिः जन्ममृत्युप्रवाहरूपस्संसारः समुद्र इव दुस्तरोऽपि वत्सपदं वत्सपदतुल्यं भवेत् (अयत्नतरणीयो भवेत्)। परं पदं स्थूलावस्थचिदचिद्विशिष्टब्रह्मणः लीलाविभूतिविशिष्टस्य परं विरजातश्च परं पदं परमव्योमाख्यं श्रीवैकुण्ठपदं स्थानं स्वगृहरूपं भवेत्। विरजाप्रमाणं च 'प्रधानपरमव्योम्नोरन्तरा विरजा नदी। वेदान्तस्वेदजनिततोयविस्राविता च सा' इति। 'अर्चिरादिना तत्प्रथितेः' इति सूत्रकृदमिमतार्चिरादिनैव गमनेन प्रपन्नानां परमपदप्राप्तिः, अतएवात्मात्मीयभरसमर्पणवतां प्रपन्नानां यद्विपदां पदं संसारभ्रमणरूपं तत्तेषां न भवेदेवेत्यर्थः' इति च व्यासार्यैरुक्तम्। अत्र 'परस्मै निवेदनम्' इत्येतद्विवरणे भरन्यास एव आत्म

## गूढार्थसङ्ग्रहः

निक्षेपःप्रपत्तिः न्यास इति पर्यायैरुक्त इति वाक्येन भरन्यासातिरिक्ता प्रपत्तिर्नास्त्येवेति बोधितम् । 'तत्तेऽनुकम्पाम्' इत्यत्र अस्यैव आनुकूल्यादिपञ्चपरिकरा उक्ताः । एतेन गद्यव्याख्याने शरणागतिः आनुकूल्यादिशरीरवतीत्यत्र अङ्गपञ्चकसम्पन्नभरन्यास एव विवक्षित इति स्फुटं प्रतीयते । तेन अहिर्बुध्न्यसंहितायामङ्गपञ्चकसम्पन्नभरन्यास एव शरणागतिः प्रतिपाद्यतया अभिप्रेतेत्यपि सिद्धम् । अयमर्थः गीताविस्तरपञ्चरात्रवचनेषु व्यक्तः । 'षडङ्गं तमुपायं च शृणु मे पद्मसम्भवे । (ल.तं.१७.५९) आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति——षड्विधा शरणागतिः ॥ (६०) मामेव शरणं प्राप्य तरेत्संसारसागरम् ।' इत्युपक्रम्य आनुकूल्यसङ्कल्पाद्यङ्गपञ्चकस्वरूपं निरूप्य 'तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता । केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ॥ निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः । सन्न्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥' इति । 'आत्मात्मीयभरन्यासोह्यात्मनिक्षेप उच्यते ।' (७९) इति च उक्तम् ॥

एवं 'प्रपत्तेश्च स्वरूपंते पूर्वमुक्तं सुरेश्वर । प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैःपञ्चभिरन्विताम् ॥ प्रातिकूल्यं परित्यक्तमानुकूल्यं च संश्रितम् । (२८.११) मया सर्वेषु भूतेषु यथाशक्ति यथामति । अलसस्याल्पशक्तेश्च यथावच्चाविजानतः । उपायाःक्रियमाणास्ते नैवस्युस्तारणं मम । अतोऽहं कृपणो दीनो निर्लेपश्चाप्यकिञ्चनः ॥ यन्मेऽस्ति दुस्तरं किञ्चित्पुत्रदारक्रियादिकम् । समन्तादात्मना न्यस्तं श्रीपते तव पादयोः ॥ शरणं भव देवेश नाथ लक्ष्मीपते मम । सकृदेवं प्रपन्नस्य कृत्यं नैवान्यदिष्यते ॥' इत्युक्तम् । अत्र 'षडङ्गं' 'षड्विधा शरणागतिः' इत्युपक्रम्य पञ्चानामङ्गत्वानिरूपणेन अङ्गाङ्गिसमुच्चयेन 'षडङ्गं' 'षड्विधा शरणागतिः' इत्युक्तमिति निर्धारितम् । एतेन अहिर्बुध्न्यसंहितायां 'षड्विधा शरणागतिः' इत्यत्रापि उक्तार्थ एवेति सिद्धम् ॥

अत्र पूर्वं 'तोषणीयाऽसि केन त्वमुपायेनाम्बुजासने । परमःपुरुषार्थो यस्त्वत्प्रीतिस्तस्य साधनम् ॥ (१५.६) त्वत्प्रीतौ क उपायस्स्यात् कीदृशः किंविधस्स्मृतः । एतन्मे सकलं ब्रूहि नमस्ते पद्मसम्भवे ॥ (१५.७) इति प्रश्नः । अत्र परमपुरुषार्थसाधनं प्रीतिः, तत्साधनं किमित्येव प्रश्नः 'ब्रह्म नारायणं मां यद्ज्ञानेनैवाप्नुयाद्यतिः । पन्था नान्योऽस्ति विज्ञानादयनाय विपश्चिताम् ॥ ज्ञानं तच्च विवेकोत्थं सर्वतश्शुद्धमव्रणम् । वासुदेवैकविषयमपुनर्भवकारणम् ॥ ज्ञाने तस्मिन् समुत्पन्ने विशते मामनन्तरम् । तैस्तैरुपायैः प्रीताऽहं जीवानाममलात्मनाम् ॥ उद्भावयामि तज्ज्ञानमात्मज्योतिःप्रदर्शकम् ।' इत्यन्तेन 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतौ विवेकजज्ञानं समाधिरूपं विवक्षितमिति प्रदर्शितम् । 'उपायास्ते च चत्वारो मम प्रीतिविवर्धनाः । उपायांश्चतुरश्शक्र शृणु मत्प्रीतिवर्धनान् ॥ यैरहं परमां प्रीतिं यास्याम्यनपगामिनीम् । स्वजातिविहितं कर्म साङ्ख्ययोगौ तथैव च । सर्वत्यागश्च विद्वद्भिरुपायाः कथिता इमे ॥' इत्यनेन प्रथमःप्रश्न उत्तरितः । अनन्तरं कर्मसांख्ये निरूप्य 'उपायोऽयं तृतीयस्ते वक्ष्यते योगसंज्ञकः ।' इत्युपक्रम्य 'अहं संख्यायमानाहि स्वरूपगुणवैभवैः । उद्भावयामि तज्ज्ञानं प्रत्यक्षं यद्विवेकजम् ॥ (१६.३८) तृतीयस्तु समाख्यात्मा प्रत्यक्षोऽविप्लवो दृढम् । इति ते कथितास्सम्यगुपायास्त्रय ऊर्जिताः ॥' इत्यन्तेन कर्मज्ञानभक्त्यपरनामधेयसमाधिरूपप्रीतिसाधनान्यभिधाय 'शृणूपायं चतुर्थं मे सर्वत्यागसमाह्वयम् । (४२) तत्र धर्मान् परित्यज्य सर्वानुच्चावचाङ्गकान् । संसारानलसंततो मामेकां शरणं व्रजेत् ॥ अहंहि शरणं प्राप्ता नरेणानन्यचेतसा । प्रापयाम्यात्मनाऽऽत्मानं निर्धूताखिलकल्मषम् । इत्यन्तेन पुरुषार्थसाधनप्रीतिसाधनं सर्वत्यागः शरणागत्यपरनामा प्रदर्शितः । एतावता उपायभूतशरणागतेरेवाभिधानेन उपायव्यातिरिक्ता शरणागतिः नास्त्येवेति निर्धारितं भवति ॥

## गूढार्थसंग्रहः

अत्र उपक्रमे 'पन्था नान्योऽस्ति विज्ञानात्' इत्यत्र प्रथमतः विवेकज्ञानवत् सर्वत्यागसमाह्वयशरणागतेरेवोपायत्वेनाभिधानेन श्रुतौ ज्ञानद्वयं विवक्षितमिति अत्र निर्धारणमभिप्रेत्यैव तात्पर्यदीपिकायां प्राक् (४.क) उदाहृतायां 'वेदनवाचिशब्दः उपासनप्रपदनसाधारणः' इति व्यासार्यैरुक्तम्। एवं पञ्चदशषोडशोक्तप्रकारेणैव सप्तदशे पतिंप्रति 'अमी हि प्राणिनस्सर्वे निमग्नाः क्लेशसागरे। उत्तारं प्राणिनामस्मात्कथं चिन्तयसि प्रभो ॥ ४७ ॥' इति प्रश्नस्य पत्युः प्रतिवचने 'उत्तारहेतवोऽमीषां उपाया विहिता मया। कर्म साङ्ख्यं तथा योग इतिशास्त्रव्यपाश्रयाः ॥' (४९) इत्युपक्रम्य चतुर्थोपायप्रश्नस्य प्रतिवचने 'उपायाश्चाप्यपायाश्च शास्त्रीया निर्मिता मया। विहिता य उपायास्ते निषिद्धाश्चेतरे मताः अधो नयन्त्यपायास्तं य एताननुवर्तते ॥ ५७ ॥ उपायापायसन्त्यागी माध्यमीं वृत्तिमाश्रितः। मामेकं शरणं प्राप्य मामेवान्ते समश्नुते ॥ ५८ ॥' 'षडङ्गं तमुपायं च—षड्विधा शरणागतिः।' (५९,६०) इत्यनन्तरं 'एवं मां शरणं प्राप्य वीतशोकभयक्लमः। निरारम्भो निराशीश्च निर्ममो निरहङ्कृतिः। मामेव शरणं प्राप्य तरेत्संसारसागरम् ॥ सत्कर्मनिरताश्शुद्धास्सांख्ययोगविदस्तथा। नार्हन्ति शरणस्थस्य कलां कोटितमीमपि ॥' (६१,.६२,.६३) इत्युक्तम् ॥

अत्र 'षडङ्गं तमुपायं च' इत्यत्र पूर्वोक्तशरणागतिरेव विवक्षिता। 'षड्विधा शरणागतिः' इत्यनन्तरश्लोके 'एवं मां शरणं प्राप्य' इत्यत्र एवमिति पूर्वोक्तप्रकारेणेत्यर्थेन उपायभूतैव शरणागतिर्विवक्षिता। 'शरणं प्राप्य तरेत्संसारसागरम्।' इत्यत्र पूर्वं योगस्योत्तारहेतुत्ववत् शरणागतेरपि संसारसागरतरणहेतुत्वमेव विवक्षितम्। अनन्तरं लक्ष्म्या आनुकूल्यादिस्वरूपप्रश्नस्य शक्रकृतस्य प्रतिवचने 'तेन संरक्ष्यमाणस्य' इत्यनेन फलत्यागोऽभिहितः। पूर्वं आत्मनिक्षेपशब्देनात्मत्यागः शरणागतिशब्देन गुरुतरोपायभूतभरत्यागोऽभिहितः। 'निक्षेपापरपर्यायः' इत्यनन्तरं 'उपायोऽयं चतुर्थस्ते प्रोक्तश्शीघ्रफलप्रदः। अस्मिन्हि वर्तमानानां विधौ विप्रतिषेधिते ॥ पूर्वेत्रयउपायास्ते भवेयुरमनोहराः।' (१७.९५, ७६) इत्यत्र प्राक् परमपुरुषार्थहेतुप्रीतिसाधनीभूतोपायचतुष्टयं चतुर्थः सर्वत्यागरूपः आत्मनिक्षेपशरणागतिशब्दाभिधेयः यः तमभिधाय 'आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते।' इति प्राक् षडङ्गोपायः 'षड्विधा शरणागतिः' सर्वत्यागः चतुर्थोपायः य उक्तः आत्मनिक्षेपशब्दाभिधेयः तस्य स्वरूपनिष्कर्षः कृतः। इत्थमर्थस्य अत्रिसंहिताऽपरनामकगीताविस्तरभूतलक्ष्मीतन्त्रवचनेषु विदुषां स्फुटं निर्णयेन न्यासशरणागत्योर्भेदोत्प्रेक्षणमनवकाशम् ॥

अयमेवार्थः पञ्चाशेऽपि 'प्रपद्यमानो मां नित्यं देवं वा पुरुषोत्तमम्। इत्येवमनुसन्दध्याच्छ्रद्धावानोजितेन्द्रियः ॥ २१३ ॥ प्रातिकूल्यं परित्यक्तमानुकूल्यं च संश्रितम्। मया सर्वेषु भूतेषु यथाशक्ति यथामति ॥ २१४ ॥ अपायेभ्यो निवृत्तोऽस्मि पातकेभ्यो भवोदधौ। तथाऽप्यत्र प्रवृत्तिर्या त्वत्स्मृतेस्साऽपि नश्यतु ॥ २१५ ॥ अलसस्याल्पशक्तेश्च यथावच्चाविजानतः। उपायाश्चोदिताश्शास्त्रैर्न मे स्युस्तारकास्त्रयः ॥ २१६ ॥ त्रेधाऽप्यत्र प्रवृत्तिर्या त्वदाज्ञापालनंतु तत्। अतोऽहमनुपायत्वात्कृपणोऽकिञ्चनोऽगतिः ॥ २१७ ॥ छायामाश्रित्य वर्तेऽहं त्वदीयां तापहारिणीम्। निरुपाधिस्स्वतंत्रा च स्वामिनी नः कृपानिधिः ॥ २१८ ॥ त्वमेव सर्वशास्त्रेषु शरणत्वेन गीयसे। आत्मात्मीयं च यत्किंचिद्दुस्त्यजं दुर्भरं मम ॥ २१९ ॥ तत्सर्वं तव विन्यस्तं शुभयोःपादपद्मयोः। उपेयायास्तव प्राप्त्यै त्वामुपायं तथा वृणे ॥ २२० ॥ उपायो भव मे देवि शरणं भव मेऽम्बुजे। प्लुष्य मे दुरितं सर्वं पुष्यमे त्वद्गतां धियम् ॥ २२१ ॥ इत्येवमनुसंधाय मां प्रपद्येत वै गतिम्। आदिदेवं जगन्नाथमीशं वा पुरुषोत्तमम् ॥' इति वचनेषु स्फुटः ॥

समाप्तौचोक्तमत्रिणा—'भूयस्त्वं शृणु संक्षेपमनसूयेऽनसूयया। श्रुत्वा च कुरु(ते चित्ते)यत्नेन रक्षांचाप्यप्रमादिनी ॥ लक्ष्मीनारायणाकारा भवित्री ते मनःस्थितिः। अपायान्संपरित्यज्य स्वीकृत्याप्यनुकूलताम् ॥ लक्ष्मीनारायणौ विश्वमिति

## गूढार्थसंग्रहः

भावे कृतस्स्थितिः । अपायान्संपरित्यज्य पातकान्भवसागरे । दैवाद्वा यदि वा मोहादपायस्य परिप्लवे । भजमानाऽथ-तावेव लक्ष्मीनारायणावुभौ ॥ शश्वचासुकरान्सर्वानुपायाञ्जहतीस्वयम् । आलिप्ता करणे तेषां लोकसंग्रहचेतसा ॥ आकिञ्चन्यं समालम्ब्य बुद्ध्यैव दृढया स्वयम् । सर्वथा सर्वदेशेषु सर्वावस्थासु सर्वदा ॥ रक्षिष्यति हरिश्श्रीमानाश्रितानिति निश्चयात् । आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेःपदे ॥ उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्त्य च । इतिते सकलं भद्रे शास्त्रशास्त्रार्थतत्फलम् ॥ दर्शितं परमे तत्त्वं गोपाय स्वेन तेजसा ।' इति निक्षेपरक्षोदाहृतेषु अत्रिसंहिताऽन्तवचनेषु पञ्चदशायुक्तप्रकारेणैवार्थस्स्फुटः । अत्र अष्टाविंशे पञ्चाशे ग्रन्थान्ते च वचनेषु उपायवरणमप्युक्तं, निक्षेपोऽप्युक्तः । अथापि निक्षेपानन्तरं वरणं नैव विवक्षितम् । सर्वत्यागरूपशरणागतेः आत्मनिक्षेपस्य पञ्चाङ्गकत्वस्य प्रतिपादनपूर्वकं आत्मात्मीयभरन्यासएवात्मनिक्षेप इति निष्कर्षकरणेन निक्षेपानन्तरमुपायवरणमिति क्रमः न विवक्षितः, किंतु समानकर्तृकत्व मात्रमेव विवक्षितम् । अयमर्थः अष्टाविंशे–' प्रपत्तेश्च स्वरूपं ते पूर्वमुक्तं सुरेश्वर ।' इति पूर्वोक्तार्थस्यैव स्थैर्यार्थं पुन रुक्तौ प्रपत्तिस्वरूपे प्रागुक्तार्थ एवाभिमत इति प्रतीयते । तादृशप्रपत्तिस्वरूपस्यैव प्रागुक्तान्येव पञ्चाङ्गान्युक्तानि । तेनच न्यासस्यैवाङ्गित्वमिति स्फुटं प्रतीयते ॥

एतेन पञ्चाशग्रन्थान्तवचनेष्वपि अयमेवार्थ इति निर्धारणं युक्तम् । अतश्च आत्मात्मीयभरन्यास एव ह्यात्मनिक्षेपः स एव शरणागतिरिति सिद्ध्यति । ' आत्मात्मीयभरन्यास ' इति वचनानन्तरं ' चतुर्थमाश्रयन्नेवोपायं शरणाश्रयम् । अतीत्य सकलं क्लेशं सविशल्यमलं पदम् ॥ १७–९८ ॥ अपायोपायनिर्मुक्तां मध्यमां स्थितिमास्थिता । शरणागतिरग्र्यैषा संसारार्णवतारिणी ॥ ९९ ॥ इति, ' उपायस्सुकरस्सोऽयं दुष्करश्च मतो मम ।' (१०४) इतिचोक्तम् ॥

अत्र परमपुरुषार्थसाधनप्रीतिसाधनभूतः सर्वत्यागः उपायः चतुर्षूपायेषु यश्चतुर्थः पञ्चदशे उक्तः ' शृणूपायं चतुर्थं मे सर्वत्यागसमाह्वयम् ।' इति षोडशे ' निक्षेपापरपर्याय ' इति वचनानन्तरं ' उपायोऽयं चतुर्थस्ते प्रोक्त ' इति निक्षेपापरपर्यायशरणागतेरेव चतुर्थोपायत्वमभिधाय ' आत्मात्मीय—उच्यते ' इति तन्निष्कर्षं कृत्वा ' चतुर्थमाश्रयन्नेवमुपायम् ' इत्यन्ते चतुर्थोपायशरणागतेः संसारार्णवतारणत्वं प्रतिपाद्य चतुर्थोपायः निक्षेप उपसंहृतः । अष्टाविंशेऽपि ' प्रपत्तिं तां प्रयुञ्जीत ' इत्युपक्रम्य प्रागुक्तार्थस्यैव स्थिरीकरणेन चतुर्थोपायस्सर्वत्यागः आत्मनिक्षेपः स एव शरणागतिः स एवात्मात्मीयभरन्यासः प्रपत्तिः संसारतारणंचेति स्फुटं विदुषां वचनार्थः प्रतीयते ॥

एतेन गीतायां–' दैवीह्येषा गुणमयी ' इति श्लोके प्रपत्तेस्संसारतारणत्वं यदभिहितम् यच्च ' सर्वधर्मान्परित्यज्य ' इति श्लोके शरणागत्यादिकं तत्सर्वं विशदीकृतं भवति । एवं गीताविस्तरसंहितावचनेषु निर्धारणमभिप्रेत्यैव व्यासार्यैः शुकपक्षीये पञ्चाङ्गन्यास एव प्रपत्तिश्शरणागतिरात्मात्मीयभरन्यासः आनुकूल्याद्यङ्गपञ्चकसंपन्न इति निर्धारणं कृत्वा गद्यव्याख्याने शरणागतिरुक्ताङ्गपञ्चकसंपन्नैवोक्तेति निर्धारितम् ॥

गद्यत्रये स्वतन्त्रप्रपत्तिनिरूपणपरे कर्मज्ञानभक्तियोगपरित्याग एव ' सर्वधर्मान्परित्यज्य ' इत्यत्रानूदितः एतदेवाकिंचन्यमधिकारः इत्यर्थस्य स्फुटतया ' सर्वधर्मान् ' इत्यतःपूर्वं ' मन्मना भव ' इति श्लोके न्यासो विवक्षितः ' सर्वधर्मान् इत्यत्रोपायवरणं विवक्षितम् त्यागस्य विधिरेव अनुवादपक्षः असङ्गतः इत्यादिकल्पनाऽप्रामाणिकीति भगवतैव निर्धारितं भवति । स्वतन्त्रप्रपत्तिनिरूपणार्थं गद्यत्रये इत्थं वदतो भगवतः संहिताऽनुसारेण न्यासाभिन्नशरणागतिरेवाभिमता, न न्यासभिन्नशरणागतिरिति च प्रागेव निरूपितम् । अत्र शुकपक्षीये–' शरणागतिः आचार्यकारिता सर्वाधिकारिका ' इत्युपक्रम्य तस्या आत्मात्मीयभरन्यासरूपत्वाभिधानेन शरणागतिव्यतिरिक्ताचार्याभिमानः चरमोपायभूत इति कल्पना ऽप्रा-

## गूढार्थसंग्रहः

माणिकी । वेदार्थसंग्रहवैकुण्ठगद्ययोः प्रपत्तिमन्तरा कस्यापि न मोक्ष इति साधनेन प्रपत्तिव्यतिरिक्ताचार्याभिमानस्याप्रामाणिकतायाः स्फुटीकरणात् अत्र 'न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः ' इत्यभिधाय न्यासस्य उपेयविरोधिनिरासकत्वं वदद्भिः व्यासार्यैः 'भूतसंबन्धी व्रातः **भूतव्रातः** संश्रितसंबन्धिनोऽपि ततएव कारणात् भगवतो रक्ष्या इत्यभिप्रायः ' इत्युक्तेः, ' तयैव सर्वं संपत्स्यते ' इति श.गद्यव्याख्याने ' स्वसंबन्धिसंबन्धिनिस्तारणमपि सर्वशब्दाभिधेयम् ' इत्युक्तेश्च अर्थः 'आचार्यकारितेति' शुकपक्षीयोक्त्या सम्यक्प्रकटीकृतो भवति । अत्र उपासनाधिकारिसंबन्धिना परंपरया निस्तरणमेव, आचार्यकारितन्यास संबन्धिनांतु साक्षादिति विभागस्सूचितो भवति । अयमर्थः आचार्यपादैः सम्यक् तत्र तत्र निरूपितः । श्रुतप्रकाशिका-गद्यव्याख्यानयोः शुकपक्षीयेच सामान्यतः न्यासविद्यानिष्ठसामान्यसंबन्धिनिस्तरणस्याभिधानेन स्वयं न्यासमकुर्वतामपि आचार्य कारितन्यासविषयत्वेन मुक्तिरिति बोधनेन रामानुजमुनिविषयएवेयं प्रक्रिया नान्यत्रेति केषांचित्कल्पना निर्मूलेति बोधितम् ॥ आचार्यपादैरपि शरणागतिगद्याधिकारे विभीषणसहागतराक्षसन्यायेन संबन्धिनिस्तरणमुक्तम् ॥

न्यासतिलकेऽपि–' त्वय्याचार्यैः विनिहितभरास्तावका रङ्गनाथ त्वत्कैङ्कर्यप्रवणमनसः त्वद्गुणास्वादमत्ताः । त्वय्ये कस्मिन्नपि विजहतो मुक्तवत्साधनत्वं त्वच्छेषत्वस्वरसरसिकास्सूरयो मे स्वदन्ताम् ॥ ' इति सामान्यतो आचार्यनिष्ठाय गुणाधिक्यकथनं सङ्गच्छते । ' उक्त्या धनञ्जयविभीषणलक्ष्यया ते प्रत्याय्य लक्ष्मणमुनेर्भवता वितीर्णम् । श्रुत्वा वरं तदनुबन्धमदावलिप्ते नित्यं प्रसीद भगवन् मयि रङ्गनाथ ॥ ' इत्यत्र वरोऽपि न रामानुजमुनिमात्रविषयः, तद्व्यतिरिक्तेन येनकेन वाप्याचार्येणैकेन यच्चेतनभरः भगवति न्यस्यते तच्चेतनानां मुक्तिरित्येव वरः । विभीषणसहागतराक्षसन्यायेनेति शरणागतिगद्यविवरणोक्त्यैकरस्यात् । अतश्च श्रीभाष्यादिप्रवचनप्रख्यातवैभववात्स्यवरदगुरूपदेशानुसारिभिः व्यासार्यैः न्यासविद्याविषये सम्मततया प्रकाशितार्थः योयः स सर्वोऽपि आचार्यपादानामपि संमतः तैर्निर्धारितश्चेति सिद्धम् । ये च वात्स्यवरदगुरूपदेशानुसारिछात्रपरंपरान्तर्गताः ते न्यासातिरिक्तशरणागतिमनभ्युपगच्छन्तः (अ) संहितोक्तन्यासविद्यानिष्ठाः तत्संहितोक्तेज्याप्रयोगं नित्यग्रन्थोक्तमेव श्रद्दधानाः तदुक्तप्रकारेणैव नित्यमाचरन्ति । येतु न्यासविद्याविद्वेषिणः ते ' अथ परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये भगवत्कैङ्कर्यरतिः परमैकान्ती भूत्वा ' इति नित्योपक्रमविरोधेन इन्द्रियजयशून्यानां नित्योक्तरीत्यानुष्ठानं कल्पयन्तः तदुक्तस्नानं तदा गङ्गाऽऽवाहनं मूलमन्त्रजपं आधारशक्त्यादितर्पणमित्यादिकं नानुतिष्ठन्त्येव । अतः वात्स्यवरदगुरूपदेशानुसारेण व्यासार्याणामित्थमुक्तिः सङ्गच्छत एवेति दिक् । अधिकंतु सत्संप्रदायरक्षायां विवेचयिष्यते ॥

**भूतव्रातरक्षैकदीक्षे** इत्यनेन मुक्तिप्रदत्वमुक्तम् । प्रथमपादेन च जगत्कारणत्वम् । ' **जन्माद्यस्य यतः** ' इति सूत्रविषयवाक्ये ' आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्दं प्रयन्त्यभिसंविशन्ति ' इत्यत्र आनन्दरूपस्य ब्रह्मणः कारणत्वमुक्तम् । ' यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति ' इत्यत्र मुक्तिप्रदत्वमपि, एतदर्थद्वयं पादद्वयेन निरूपितम् । ' आनन्दं प्रयन्ति ' इत्यत्रानन्दरूपस्य ब्रह्मणः प्राप्यत्वं प्रतिपादितम् । ' अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान्लोकान्कामान्नी कामरूप्यनुसञ्चरन् ' इति अन्ते ' सोऽश्नुते सर्वान्कामान्त्सह ' इति श्रुत्यर्थो विशदीकृतः । एतेन आनन्दरूपस्यापि ब्रह्मणः एतल्लोके न प्राप्तिः अपित्वन्यत्रेति सिद्धम् । इदमेव प्राप्यत्वं प्रतिपादयति **श्रुतिशिरसिविदीप्ते** इत्यादिना । ' वेदैश्चनेकैरहमेव वेद्यः ' इति (कै.उ) श्रुत्या गीतोपबृंहितया वेदसामान्ये ब्रह्मणः प्रतिपाद्यतया दीप्तस्सत्वेऽपि ' **तंत्वौपनिदं पुरुषम्** ' ' विज्ञानमानन्दं ब्रह्म ' इत्यादौ उपनिषत्प्रतिपाद्यब्रह्मण एव कर्मविद्याफलप्रदत्वम्, परायणमित्यत्र ' आनन्दं प्रयन्ति ' इत्यादिबहुश्रुत्यैकरस्येन प्राप्यत्वमपि विवक्षितमिति श्रुतिशिरसिविशेषेण

श्रीभाष्यम्

**रक्षैकदीक्षे । श्रुतिशिरसि विदीप्ते**

श्रुतप्रकाशिका

**भूतव्रातः** संश्रितसम्बन्धिनोऽपि तत एव कारणाद्भगवतो रक्ष्या इत्यभिप्रायः । यथा—

आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः । वैष्णवो नः कुले जातस्स नस्सन्तारयिष्यति ।। इति ।

पशुर्मनुष्यःपक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोःपरमं पदम् ।। इति च

ननु षष्ठ्यन्तानिर्दिष्टानतिरिक्तविषयस्समुदायशब्दः ; यथा ब्राह्मणसमाज इति नैवम्—राजपारिषदित्यादिष्वतिरिक्तस्यापि दर्शनात्, समासान्तर्गतायाः षष्ठ्यास्सम्बन्धमात्रविषयत्वात्, षष्ठ्यन्तानिर्दिष्टानतिरिक्तत्वनियमस्यानुशासनाभावाच्च । समुदायशब्दे श्रुते समुदायिनः के ? इत्यपेक्षायां सन्निहितशब्दवाच्यनिष्ठस्समुदायश्शीघ्रं प्रतीयत इति ब्राह्मणसमुदाय इत्यादिष्वनतिरेकप्रतीतिः । राजपरिषदित्यादिष्वतिरिक्तत्वस्यापि दर्शनात् तत्तत्समुदायग्राहकप्रमाणानुरोधेनार्थवर्णनं युक्तमिति यथोक्त एवार्थः । एवं च सति व्रातशब्दप्रयोगस्यार्थवत्त्वं स्यात् । इष्टप्रापणपर्यन्तानिवारणलक्षणा **रक्षा** ; तस्याम् **एकदीक्षः**—प्रधानदीक्षः । दीक्षा सङ्कल्पः स्वसत्ताया अपि संश्रितरक्षासङ्कल्पनिवर्तनस्यात्यन्ताभिमतत्वं प्राधान्यम्—**अप्यहं जीवितं जह्याम्** इति ह्युक्तम् । '**काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्नत्वेव दासकर्मकरम्**' इति चापस्तम्बः । ईदृशीय स्मृतिर्यदाज्ञा तस्यापि तथानुष्ठानस्याभिमतत्वम् **अप्यहं जीवितं जह्याम्** इत्यनेनावगम्यते । दीक्षाप्राधान्येन रक्षाप्राधान्यं फलितम् । दीक्षाशब्देन आश्रितसंरक्षणस्य स्वप्रयोजनत्वं दर्शितम् । व्रतभ्रंशसमाप्त्योरनर्थाभ्युदयफलत्वं हि व्रतिन एव ; संश्रितरक्षणं च तद्व्रतम् । यथा '**ददाम्येतद्व्रतं मम**' इति । विनतरक्षाशब्दाभ्यां तृतीयचतुर्थाध्यायार्थौ सङ्कितौ । एवं जगत्कारणत्वमोक्षप्रदत्वे कथिते । एतेहि राज्ञश्छत्रचामरवद्ब्रह्मणोऽसाधारणं चिह्नम् । * परत्वसौलभ्ये च समाश्रयणीयतानिमित्ततयाऽवगते । यथा '**य एनं विदुरमृतास्ते भवन्ति**' इत्युपक्रम्य '**सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः**' इति '**सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति** ।।' इति च ।। प्रमेयशरीरं साधीयो यदि प्रमाणमुपलभामह इत्यपेक्षायां द्विकद्वयशेषभूतचतुरसूत्र्यर्थं वदन् प्रमेयानुरूपं प्रमाणं दर्शयति—**श्रुतिशिरसीति** । श्रूयते नित्यमिति श्रुतिः । अनेनापौरुषेयत्वान्निर्दोषत्वं विवक्षितम् ।

गूढार्थसंग्रहः

दीप्तिः । श्रुतिशिरश्शब्दद्वयोपादानेन 'रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' इति श्रुत्यैव श्रुतितच्छिरः प्रतिपाद्यफलदातृत्वस्य प्राप्यत्वस्य च ब्रह्मणि प्रतिपादनेन श्रुतितच्छिरसोः तात्त्विकप्रामाण्येन प्रतिपाद्यार्थयोः रुङ्गतिमत्त्वेनाविरोधरसूचितः, यथा प्रतिपादकयोरविरोधः तथा प्रतिपाद्ययोरपि । 'विदीप्त' इत्यत्र दीपधातुप्रयोगः 'अथ यदितःपरो दिवो ज्योतिर्दीप्यते' (छा) इति श्रुत्युक्तदीप्तिमभिप्रेत्य । इयं च श्रुतिः ज्योतिरधिकरणविषयवाक्यतया परैरप्युदाहृता । प्रकृतिमण्डलाद्बहिः देशविशेषावच्छेदेन प्राप्तिः एतच्छ्रुतिबलात् सिद्ध्यतीति समन्वयाधिकरणपञ्चपादिकाविवरणभाष्यादिषु वृत्तिकाराणामाशयः पूर्वपक्ष उपन्यस्तः । 'ईश्वरस्सर्वभूतानाम्' इति गीताभाष्ये स्थानविशेषावच्छेदेन प्राप्यत्वनिरूपणपरश्रुतिमध्ये इयं श्रुतिः भगवता उदात्ता । एवं ज्योतिरधिकरणेऽपि स्थानविशेषावच्छेदेन दिव्यमङ्गलविग्रहविशिष्टस्य परमात्मनः प्राप्यत्वमिति भगवता वक्ष्यते । अतः एतच्छ्रुतिबलात् देशविशेषावच्छेदेन दिव्यमङ्गलविग्रहविशिष्टस्यप्राप्तिः उपनिषत्स्वेव सिद्ध्यतीति **श्रुतिशिरसिविदीप्ते** इत्युक्तम् ।।

## श्रीभाष्यम्

### ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन्

### श्रुतप्रकाशिका

अतएव पूर्वमीमांसान्यायानां प्रामाण्याद्युपयोगिनामत्रोपजीव्यत्वं सूचितम्। शिरश्शब्देनानन्यपरत्वं विवक्षितम्। परतत्त्वप्रधाना मन्त्रब्राह्मणभागाह्युपनिषदः। **विदीप्ते**- पूर्वभागेऽप्यग्नीन्द्रादिरूपतया ब्रह्मण एव प्रतिपाद्यत्वं, **'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः'** इत्यादिनोपनिषद्वाक्येनैव ज्ञायत इति विशेषेण दीप्तं विदीप्तम्। यद्वा क्षुद्रसुखसाधनभूतदुःखात्मकप्रवृत्तिनिवृत्तिरूपं प्रयोजनं पूर्वभागे दीप्तम्; ब्रह्मतु स्वयंनिरतिशयानन्दरूपतया परमपुरुषार्थभूतमुपरितनभागे विशेषेण दीप्तमिति भावः। अनेन समन्वयाधिकरणार्थस्सूचितः। तत्पूर्वाधिकरणत्रयार्थश्चात्र द्योतितो भवति। * व्युत्पत्तिलक्षणसौष्ठवाभावे श्रुतिशिरोवेद्यत्वायोगात्। श्रुतिशिरश्शब्दस्य प्रमाणान्तरव्यावर्तकत्वाच्च। **ब्रह्मणीति** सामान्यपदमौपनिषदानां सद्ब्रह्मात्मादिसामान्यशब्दानां प्रदर्शनार्थम्। **श्रीनिवास** इति विशेषपदं नारायणादिविशेषशब्दानां प्रदर्शनार्थम्। **'पशुना यजेत' 'छागस्य वपाया मेदसः'** इत्यत्र **'छागो वा मन्त्रवर्णात्'** इति सूत्रोक्तन्यायेन

### गूढार्थसंग्रहः

**ब्रह्मणि श्रीनिवासे** इत्यनेन निश्श्रीकस्य निरतिशयबृहत्त्वं न सम्भवतीति सूचितम्। 'मही देवस्य सवितुःपरिष्टुतिः' (श्वे.२.४) 'युजे वां ब्रह्मपूर्व्यं नमोभिः' २.५ इति श्वेताश्वतरश्रुतिः अभिप्रेता। 'ब्रह्मविदाप्नोति परम्' 'परात्परं पुरुषमुपैति दिव्यम्' (मु) 'परात्परं पुरुषं याति विद्वान्' (कै) 'परंज्योतिरुपसंपद्य' 'पुरुषस्सपरःपार्थ भक्त्या लभ्यस्त्वनन्यया' (गी) इत्यादौ परशब्दनिर्देशेन परस्यैव प्राप्यत्वं सिद्धम्। 'परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः' इत्यादौ प्रापकात्परस्य प्राप्यस्यप्रतिषेधेन प्राप्यत्वं प्रापकस्यैवेति वक्ष्यते। अतः **अखिले**त्यादिपूर्वार्धे प्रापकत्वेनोक्तस्य प्राप्यत्वं परस्मिन्नित्यत्राभिप्रेतम्। अत्र उत्तरार्धे **श्रुतिशिरसि विदीप्ते परस्मिन्** इत्यनेन अर्चिरादिगतिद्वारा देशविशेषावच्छेदेन प्रापकस्यैव परस्य प्राप्यत्वस्य प्रतिपादनेन अपुनरावृत्तिश्रुतिः क्रममुक्त्यभिप्रायेति परोक्तिः प्रमाणविधुरेति सूचितम्। 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य' इत्यत्र उत्क्रान्त्यनन्तरं गतिसाध्यप्राप्तेः प्रतिपादनात्। 'स एनान् ब्रह्म गमयती' त्यनन्तरं **नच पुनरावर्तते** इति श्रुतौ निर्विशेषप्रतीतेरेवाभावेन क्रममुक्त्युल्लेखस्याप्यसम्भवात्। 'परस्मिन्' इत्यत्र ब्रह्मगतोत्कर्ष एव परशब्देन विवक्षितः। प्रागुदाहृतपरशब्दघटितश्रुतिषु परशब्दस्योत्कृष्टार्थकत्वात्। सूत्रेष्वपि 'परात्तु तच्छ्रुतेः' 'पराभिध्यानात्' 'परंजैमिनिः' इत्यादावपि परशब्दस्योत्कृष्टार्थकत्वस्य परेषामपि संमतत्वात्। 'एतद्वै सत्यकाम परंचापरं च ब्रह्म' (प्रश्न.३) इति श्रुतावपि परशब्दस्यान्यार्थकत्वाभावात्। एवं 'परमत' इति सूत्रघटितपाद एव 'पराभिध्यानात्' इत्यत्र पूर्वं सविशेषस्य ध्यानमेव विवक्षितमिति तत्र परशब्देनोत्कर्षःबुद्धिस्थ इति 'परमत' इति सूत्रेऽपि परशब्दः उत्कृष्टार्थक एव। 'परात्तु तच्छ्रुतेः' इति सूत्रे सृष्टिसमकालिकान्तर्यामित्वप्रतिपादनपरे परशब्दप्रयोगेण स्रष्टा अन्तर्यामी बुद्धिस्थः। स एव 'पराभिध्यानात्' इत्यत्र बन्धमोक्षहेतुतयाऽपि उपस्थितः। 'न स्थानतोऽपि परस्य' इत्यत्रापि तस्यैवोपस्थितिर्युक्ता, नतु परसंमतनिर्विशेषस्य। एवं च 'परमतस्सेतून्मान' इति सूत्रेऽपि अतइत्यनेतच्छब्देनजगत्स्रष्टाऽन्तर्यामी बन्धमोक्षहेतुश्च सविशेष एवोपस्थाप्यते। तस्मादुत्कृष्टमेव प्राप्यमस्तीति पूर्वपक्षः, तस्यैव प्राप्यत्वमिति सिद्धान्तः। नतु परमतरीत्या निर्विशेषादन्यत् तत्त्वमस्तीति पूर्वपक्षः नास्तीति सिद्धान्तोऽत्र विवक्षितः। तथा तस्य तात्त्विकताबो-

## गूढार्थसंग्रहः

धकप्रमाणानां तैरप्यनुपन्यासात् 'तद्धेतुव्यपदेशाच्च' 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ' इत्यादौ प्रापकत्वं परमात्मन उक्तम्। सेतुशब्देन प्रापकबोधस्थले प्राप्यान्तरप्रतीतिवत् अत्रापि प्राप्यान्तरमिति प्रतीयते प्रापकस्योन्मितत्वेन प्राप्यस्यानुन्मितत्वं बोध्यते। 'अमृतस्य परं सेतुम्' 'अमृतस्यैष सेतु'रिति षष्ठ्या प्राप्यप्रापकसंबन्धव्यपदेशेन प्रापकभिन्नं प्राप्यमिति प्रतीयते। 'परात्परं पुरुषमुपैति' 'ततो यदुत्तरम्' इत्यादौ परभूतात्प्रापकात्प्राप्यस्य भेदेन व्यपदेशोऽपि दृश्यते। एते च हेतवः सविशेषात्प्रापकादन्यन्निर्विशेषमेव प्राप्यमिति पूर्वपक्षहेतवो युक्ताः। 'प्रकृतैतावत्त्वं प्रतिषेधति' इति निर्विशेषमतपर्यालोचनेन अत्रापि तत्पर्यालोचनमेव युक्तम् ॥

तत्र 'सेतुं तीर्त्वा' इत्यत्र सेतुशब्दस्सर्वलोकासङ्करकरत्वेन प्रवृत्तः। उन्मानव्यपदेशः उपासनार्थः इत्यभिधाय 'उपपत्तेश्च' इति सूत्रे 'अमृतस्यैष सेतुः' इत्यत्र षष्ठ्या संबन्धव्यपदेशः न प्राप्यप्रापकभेदतात्पर्यकः। 'यमेवैषवृणुते —तनूं स्वाम्' इत्यत्र वरयितुस्स्वस्यैव लभ्यत्वं 'तस्यैष आत्मातिवृणुते तनूँस्वाम्' इति वाक्येन प्रकटीकृतम्। एतेन 'यमेवैष वृणुत' इत्यत्र ध्यानानन्तरकालिकवरयितृत्वेन प्रापकत्वेनोक्तस्यैव 'तेन लभ्य' इत्यत्र प्राप्यत्वमभिधाय, उत्तरत्र तदेव प्राप्यत्वं दृढीकृतमिति प्राप्यप्रापकचेतनाभेद एव सिद्ध्यति। एतत्सूत्रश्रीभाष्यादौ 'स्वप्राप्तौ स्वस्यैव प्राप्यस्यैव प्रापकत्वम्।' इत्यादिना प्राप्यप्रापकचेतनभेदो नास्तीत्येव सूत्रतात्पर्यं बोधितम्। केषांचित्सम्मतं सिद्धोपायत्वं नात्र विवक्षितमिति भावप्रकाशे तृतीयसम्पुटे निरूपितम्॥ 'द्युभ्वाद्यायतनं स्वशब्दात्' (१.३.१) 'मुक्तोपसृप्यव्यपदेशाच्च' (१.३.२) इति सूत्रद्वयार्थः अत्र निर्धारितो भवति। तत्र च 'अमृतस्यैष सेतुः' इति प्रथमसूत्रे विषयवाक्यम्। अमृतस्य स्वस्यैव प्रापक इत्यर्थवर्णनेन तदर्थनिष्कर्षः कृतः। 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतौ 'नामरूपाद्विमुक्तः' इत्यत्र नामरूपसामान्यविनिर्मोकः नाभिप्रेत इति 'प्रकृतैतावत्त्वंहि प्रतिषेधति' इत्यादावेव व्यक्तम्। 'दिव्यो ह्यमूर्तःपुरुषस्सबाह्याभ्यन्तरोह्यजः अप्राणोह्यमनाश्शुभ्रोह्यक्षरात्परतःपरः' (मु.२.१.२) इति परत्वेनोक्तस्यैव 'तमेवैकं जानथात्मानममृतस्यैष सेतुः' (२.२.५) इति सेतुत्वं प्रतिपाद्य 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु.३.२) इत्यत्र परस्यैव प्राप्यत्वप्रतिपादनेन सेतोरेव प्राप्यत्वपर्यसानात्। (३.२) 'यमेवैष वृणुते— स्वाम्' इत्यत्र वरयितुरेव प्राप्यत्वस्य प्रतिपादनेन प्रापकस्यैव प्राप्यत्वं स्थिरीकृतम्। एतेन द्युभ्वाधिकरणोक्तविषयवाक्यनिष्कर्षः पराधिकरणे सिद्धः॥

यद्यपि 'तथाऽन्यप्रतिषेधात्' इति सूत्रे अन्यप्रतिषेधः प्रतीयत इव। तथाऽपि नात्र सोऽर्थो विवक्षितः। 'अन्यप्रतिषेधात्' इत्यनेनैवोपपत्तौ तथेत्यस्य वैयर्थ्यात्। तथेत्यनेन पूर्वपक्षिसंमतोत्कृष्टत्वरूपेणैव प्रतियोगिनः उपस्थित्या तस्य प्रतिषेध एव तत्सूत्रे विवक्षितः। 'यस्मात्परं नापरमस्ति किञ्चित्' इति श्रुतिरत्र विषयवाक्यत्वेन परैरप्युदाहृता। इयं च श्वेताश्वतरश्रुतिः तैत्तरीयेऽपि वर्तते। तैत्तरीयविद्यारण्यभाष्ये 'यस्मात् ब्रह्मतत्वात् परं उत्कृष्टं अपरं अनुत्कृष्टं वा वस्तु किञ्चिदपि नास्ति' इति। एवमेव ब्रह्मविद्याऽभरणेऽपि यद्विवरणं कृतं तत् न श्रुतितात्पर्यानुगुणम्। 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इत्यनन्तरवाक्य इव अत्र नञ्द्वयाभावेन चकारादिविरहेण 'मत्तःपरतरं नान्यत्किञ्चिदस्ति' इति गीताद्युपबृंहणविरोधेन च एवमाशयस्य श्रुतौ कल्पनाऽसम्भवात्। 'यस्मान्नाणीयो न ज्यायोऽस्ति' इति वाक्यं व्यतिरेकमुखेन प्रवृत्तम्। एवं 'अणोरणीयान्—महिमानमीशम्' (श्वे.उ.२०) इत्यत्र अणुत्वमहत्वरूपधर्मद्वयमपि ईशे अन्वयमुखेन प्रतिपाद्यते, तेन ईशविषय एवायं मन्त्रः। अतो 'यस्मान्नाणीयः' इत्यत्र यच्छब्दः ईशविषयः। एवमेव पूर्वं 'ततःपरं ब्रह्म—ईशं तं ज्ञात्वा अमृता भवन्ति' (३.७) इतीश्वरस्योत्कर्षः प्रतिपादितः। तेन 'यस्मात् परं न'

## गूढार्थसंग्रहः

इत्यत्र तत उत्कृष्टस्यैव निषेधः । अपरशब्दः अन्यपरः ईशस्यापरब्रह्मत्वं, तत उत्कृष्टं निर्विशेषं परंब्रह्मेति मतनिरासार्थं एवं श्रुतिः अनया ईश्वरादुत्कृष्टस्यान्यस्य निषेधेन निर्विशेषमप्रामाणिकमिति प्रतिपादितं भवति। एवमेव तत्रैव षष्ठे 'तमीश्वराणाम्' इत्यनन्तरं 'न तत्समश्चाभ्यधिकश्च' इत्यत्रापि अभ्यधिकनिषेधेन निर्विशेषाप्रामाणित्वमेव प्रतिपाद्यते ॥

एतेन पूर्वं परत्र ईशनिरूपणानुसारेण 'ततो यदुत्तरतरं तदरूपमनामयम्। यएतद्विदुरमृतास्ते भवन्ति' (श्वे ३.१०) इत्यत्र यत्तदिति पदद्वयेन तत इत्यत्र अवधिपञ्चमी न विवक्षिता। तथासति यत्तदिति पदद्वयवैयर्थ्यात्। एतेन पदद्वयेन पूर्वं यत्प्रस्तुतं परंब्रह्म ईशरूपं तदेव अरूपमनामयं 'य एतद्विदुरमृतास्ते भवन्ति' इतीशज्ञानस्यैव मुक्तिहेतुत्वं उपसंह्रियते। तत इति हेतुपञ्चमी अरूपमनामयं इत्यनेन निर्विशेषस्यप्रतीतिरिति न भ्रमितव्यम्। 'विश्वस्य स्रष्टारं तमनेकरूपम्' (४.१४) स्रष्टारमनेकरूपं विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः' (५.११) इत्यत्र अनेकरूपाविशिष्टज्ञानस्य मुक्तिहेतुत्वोक्तिविरोधात्। किंतु 'सविश्वरूपः' 'प्राणाधिपस्सञ्चरति स्वकर्मभिः' (५.७) कर्मानुगान्यनुक्रमेण देहीस्थानेषु रूपाण्यभिसंपद्यते (५.११) इत्यत्र जीवस्य कर्ममूलकरूपस्य प्रतिपादनेन अरूपमित्यस्य कर्ममूलकरूपशून्यमित्येवार्थः ॥

एतेन गुरुचन्द्रिकायां–एतत्प्रघट्टकस्य दृश्यमिथ्यात्वरूपत्वं प्रतिज्ञाय 'अत्रहि तमेवेत्यादिना स्वान्याविषयकज्ञानस्य मुक्तिहेतुत्वमुक्त्वा जीवेशभेदादिज्ञानं मुक्तिहेतुरिति मताभासेन विरोधनिरासाय यस्मादित्यादिकमुक्तम्। परमिति तुशब्दसमानार्थकं, यस्मादपरंतु नास्ति, परशब्देन अपरज्ञानस्य मुक्तिहेतुत्वव्यवच्छेदः। 'जीवोऽणुः ईशो महान्' इति तयोरखण्डैक्यज्ञानं न मोक्षहेतुरिति कथमुक्तमतविरोधो नेति भ्रान्तिं निरस्यति 'यस्मान्नाणीयो—कश्चिदिति। किंचिदपि वस्तुस्वरूपं यस्मादात्मनो न ज्यायो न वाऽणीयोऽस्ति। यदात्मस्वरूपं मुमुक्षुभिर्ज्ञेयं तस्य ज्यायस्त्वमणीयस्त्वं वा औपाधिकं न स्वाभाविकमिति तस्मादणुज्यायो वा वस्तुतो नास्तीति भावः। ईशज्ञानादेव मोक्ष इति पाशुपतादयस्तन्निरस्यति वृक्षइवेत्यादि। ततः ईश्वररूपात् यदुत्तरतरमधिष्ठानतया आनन्दघनसद्रूपतया च श्रेष्ठतरम्' इति यदुक्तं तदभिनिवेशमूलकमेव। परमित्यस्य तु इत्यर्थवर्णनमप्रसिद्धत्वादनादरणीयम्। अणुत्वज्यायस्त्वयोरुभयोरप्यौपाधिकत्वकल्पनमपि 'अर्भकौकस्त्वात्' इत्यादिना सूत्रकार एव निरासिष्यति। ज्यायस्त्वं स्वाभाविकं, अणुत्वमौपाधिकमितिहि तत्र व्यवस्थाप्यते। 'तमेव विदित्वा' इत्यत्र तच्छब्देन प्रकारतया उपस्थापितधर्माणां वेदनयोगव्यवच्छेदकत्वं एवकारस्य व्युत्पत्तिविरुद्धम्। विद्यारण्यब्रह्मानन्दपक्षद्वयेऽपि 'यस्मादपरं नास्ति' इत्येतावतैव आत्माऽन्यनिषेधेन सर्वनिषेधोपपत्तौ परमित्यस्य वैयर्थ्यमेव। पूर्वमीशस्यैव प्रस्तुतत्वेन तत्र व्यापकत्वादिधर्माणामेवोक्त्या ततो यदुत्तरतरमित्यत्र पूर्वमनुपस्थिताधिष्ठानत्वपुरस्कारेण उत्तरतरत्वोक्तिरपि न घटते। 'अनेन सर्वगतत्वमायामशब्दादिभ्यः' इति पराधिकरणान्तिमसूत्रे परैरपि आयामशब्दो व्याप्तिवचनः शब्दः इत्युक्त्या व्याप्तेः (श्वे.) उपनिषदि बहुत्राभ्यासेन सर्वव्यापकेश एव एतत्प्रघट्टके विवक्षित इत्यन्तिमसूत्रमपि सिद्धान्त एवानुकूलम्। ननु 'व्याप्यव्यापकता मिथ्या' अपरोक्षानुभूतौ ४६ इति वदतां परेषांमते। अतश्च ईशस्यापरब्रह्मत्वं निर्विशेषस्य परब्रह्मत्वं अपरब्रह्मविषया गतिः इत्यादीनां निरसनमेवात्र सूत्रकृतो विवक्षितम्। एतेन परस्यैव प्राप्यत्वाङ्गीकार एव अर्चिरादिगतिद्वारा अपुनरावृत्तिश्रुतिः स्वरसतः उपपद्यते नतु क्रममुक्तिपक्ष इत्यपि सिद्धम् ॥

एवं पराधिकरणसिद्धान्ताङ्गीकारेण 'एतद्वै सत्यकाम परंचापरं च ब्रह्म' इति प्रश्नश्रुतौ परब्रह्म सविशेषमेवेति स्थापितं भवति। अयमर्थः 'परं पुरुषमभिध्यायीत' 'परात्परं पुरिशयं पुरुषमीक्षते' इत्युभयत्र परशब्दप्रयोगेण ध्यानतत्फलयोरुभयोः परपुरुष एव विषयः सोऽपि पुरिशयमित्यनेन सर्वशरीरीति प्रतिपादनेन प्रश्नोपनिषद्येव दृढी-

## श्रीभाष्यम्

### शेमुषी भक्तिरूपा ॥

### श्रुतप्रकाशिका

पशुशब्दस्य छागपर्यवसायित्वनिर्णयात्, सामान्यवाचिपदानां विशेषवाचिपदे सति तत्पर्यवसायित्वात्, सद्ब्रह्मात्मादिसामान्य-
शब्दानां नारायण एव विशेषे पर्यवसानं सूचितम्। * रूढिशक्त्या त्रिमूर्तिसाम्यं तदैक्यं * ब्रह्मणस्तदुत्तीर्णत्वं च निषि-
द्धम्। ईश्वर एव ब्रह्म, स त्रिमूर्त्यतिरिक्तः सदाशिवः, ब्रह्मादयस्त्रयोऽप्यनीश्वरा इति पक्षश्च व्युदस्तः। **परस्मिन्निति—**
**'परमतस्सेतून्मान'** इत्यधिकरणार्थसूचनम्। तेनोपायान्तरव्यावृत्तिः। **'ब्रह्मविदाप्नोति परम्'** इत्यत्र प्राप्यस्य पर-
शब्देनाभिधानात्। यद्वा कारणत्वशङ्कितदोषव्युदासाय, **'न स्थानतोऽपि परस्य'** इत्यधिकरणसिद्धं शोधकवाक्योक्त-
मुभयलिङ्गतया वैलक्षण्यं सूचितम्। अथोपायोपेयात्मके प्रतिपाद्ये विनतपदसूचितमुपायस्वरूपं वदति—**शेमुषीति**। अयं
सामान्यशब्दः, **भक्तिरूपेति** विशेषशब्दः। अत्रापि **'छागो वा मन्त्रवर्णात्'** इति न्यायोऽभिप्रेतः। शेमुषीशब्दोपा-
दानेन ज्ञानकर्मसमुच्चयव्यावृत्तिः। भक्तिरूपेति वाक्यार्थज्ञानव्यावृत्तिः॥

**शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्।** ... ...
**'भक्त्या त्वनन्यया शक्यः' 'ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च'** इत्युक्तप्रकारेण ज्ञानदर्शनप्राप्तिसाधनभूता भक्ति-
रत्र विवक्षिता, अविशेषेण **भक्तिरूपा** इत्युक्तत्वात्। **'अहमस्म्यपराधानामालयः'** इत्याद्युक्तप्रकारेण स्वात्मान-
मनुसन्धायाह—**ममेति**। **भवत्विति** भक्तेरेव स्वादुतमतया प्रार्थनीयता सूचिता। यद्वा नहि भक्तिस्सर्वेभ्योऽपि स्वदत
इत्यत्राह—**ममेति**। मम प्रतिबन्धकपापरहितस्य शान्तपित्तस्येहि क्षीरस्वादुतमताबुद्धिरिति भावः। **रक्षैकदीक्षे परस्मिन्**

### गूढार्थसङ्ग्रहः

क्तः एवमङ्गीकार एव **'तंत्वौपनिषदं पुरुषम्' '**विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' इत्यु-
क्तिस्सङ्गच्छते। अत्र सविशेषस्यैव प्रापकस्योपनिषत्तात्पर्यविषयत्वकथनेन निर्विशेषस्य प्राप्यत्वं नास्तीति स्फुटं निर्मत्स-
राणाम्। अपरमुक्तिहेतुत्वमेव सविशेषस्य तच्चादृष्टद्वारकम् परमुक्तिस्तु निर्विशेषज्ञानफलभूता नादृष्टद्वारिकेति परे वदन्ति।
सोऽप्यर्थः एतच्छ्रुतिविरुद्ध इति **'फलमतउपपत्तेः'** इत्युत्तराधिकरणे व्यवस्थापयिष्यते। अत्र श्रुतौ 'रातिर्दातुःपरा-
यणं तिष्ठमानस्य तद्विदः' इत्यत्र कर्मफलविद्याफलहेतुत्वयोरुभयोः 'परायणम्' इत्यत्रैकविधत्वप्रतीत्या उभयोःफलयोः
कर्मविद्यामूलकपरमात्मसङ्कल्पहेतुकत्वमेवाविशेषेण प्रतिपादितम्। अयमेवार्थः फलाधिकरणश्रीभाष्यादौ अपूर्वनिरसनमुखेन
सिद्धान्तितः। अधिकं भावप्रकाशे (२—३.संपुटयोः) निरूपितं तत्रैव द्रष्टव्यम्। अतः **परस्मिन् ब्रह्मणि** इत्यत्र
**'जन्माद्यस्य यत'** इति सूत्रे जगत्कारणत्वेनोक्तं ब्रह्मैव परं ब्रह्म, तदेव मुक्तिप्रदं मुक्तप्राप्यं चेति विवक्षितम्। राजकुमार
नयश्च कुमारस्य राजप्राप्तिपक्ष एव स्वरसः। प्राप्तिश्च गतिद्वारा देशविशेषावच्छेदेनैव। एवमङ्गीकार एव गत्यपुनरावृत्तिश्रुत्यै-
करस्यम्। ननु निर्विशेषवादिसंमतक्रममुक्तिपक्षे। अतश्च परं ब्रह्म सविशेषमेवेति श्रुतिसूत्रसिद्धान्तः युक्त इति दिक्॥

वेदार्थसंग्रहे—'निरतिशयपुण्यसंचयक्षीणाशेषजन्मोपचितपापराशेः परमपुरुषचरणारविन्दशरणागतिजनिततदाभि-
मुख्यस्य' इति प्रोक्तमर्थद्वयं ममेत्यत्र विवक्षितमिति **श्रुतप्रकाशिकायां** स्फुटम्। **शेमुषी भक्तिरूपा** इत्यनेन भक्त्यन-
न्तरकालिकज्ञानमेव निर्विशेषविषयकं मुक्तिहेतुः, प्रेमलक्षणा, ज्ञानलक्षणाचेति भक्तिर्द्विविधा सगुणे प्रेमलक्षणा निर्गुणे ज्ञान
लक्षणा इति परे गीताऽर्थकथनावसरे वदन्ति। भक्तिः प्रीतिः साच ज्ञानान्नातिरिच्यते इति वेदार्थसंग्रहान्ते साधितम्।
३३

## श्रीभाष्यम्

पाराशर्येति

## श्रुतप्रकाशिका

इत्यन्तैः सप्तम्यन्तैःपदैरुपेयभूत एव सिद्धोपाय उक्तः । **भक्तिरूपेति** साध्योपायः । अत्र श्लोके शास्त्रप्रतिपाद्यैकदेशभूतः परपक्षप्रतिक्षेपश्चार्थात्सूचितो भवति । **जन्मस्थेमभङ्गादि**शब्देन युगपत्सर्गादिकमनभ्युपगच्छन्तो भाट्टप्राभाकरा व्यावर्तिताः लीलाशब्देन साक्षिमात्रेश्वरहैरण्यगर्भव्युदासः । **विनत**त्येत्यादिपदेन जीवानां परस्परं ब्रह्मणा चाभेदमभ्युपयन्तो ब्रह्माज्ञानवादिनोऽपास्ताः । **श्रुतिशिरसी**त्यनेन वेदबाह्यचार्वाकबौद्धार्हतनिरासः तेनैव पदेन आनुमानिकेश्वरवादिनो व्युदस्ताः । ब्रह्मणीत्यनेनाब्रह्मात्मकप्रधानपरमाणुकारणवादिसाङ्ख्यवैशेषिकादिव्युदासः । **श्रीनिवास**शब्देन पाशुपतादिव्युदासः । अनेनैवेश्वरोत्तीर्णब्रह्मवादिनो भेदाभेदवादिनो व्युदस्ताः । **शेमुषी**शब्देन ज्ञानकर्मसमुच्चयोपायवादिव्युदासः । **भक्तिरूपेति** वाक्यार्थज्ञानमात्रोपायवादिव्युदास इत्येवमनुसन्धेयः ॥

**श्रुते**रेवोपायोपेयावगतौ सत्यां किं भवतो वक्तव्यमित्यत्राह— **पाराशर्येति** । प्रथमश्लोके स्वप्रबन्धस्य परमप्रयोजनतया सिद्धरूपः परमविषयो दर्शितः, साध्यरूपं प्रयोजनं च रक्षापदेनातिसंक्षिप्तम् । अथ द्वितीयेन श्लोकेन स्वग्रन्थस्या-

## गूढार्थसङ्ग्रहः

सगुणनिर्गुणविभाग एव न सम्भवतीति उत्तरत्र निरूपयिष्यते । अतश्च द्वैविध्यकल्पनं निरवकाशम् । '**भवतु**' इत्यनेन स्वादुतमत्वेन प्रार्थनीयत्वं प्रतिपादितम् ॥

'राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥' (गी.९.२) इत्यत्र मुक्तिकालानुवृत्तिरपि भक्तेःप्रतिपादिता । उक्तं च तद्गीताभाष्ये 'पवित्रं मत्प्राप्तिविरोध्यशेषकल्मषापहम्, प्रत्यक्षावगमं अवगम्यते इत्यवगमो विषयः प्रत्यक्षभूतोऽवगमो यस्य ज्ञानस्य तत्प्रत्यक्षावगमम् । भक्तिरूपोपासनेनोपास्यमानोऽहं तदानीमेवोपासितुः प्रत्यक्षतामुपगतो भवामीत्यर्थः । अथापि धर्म्यं धर्मादनपेतं धर्मत्वंहि निश्श्रेयससाधनत्वं, स्वरूपेणैवात्यर्थप्रियत्वेन तदानीमेव मद्दर्शनापादनतयाच स्वयं निश्श्रेयसरूपमपि निरतिशयनिश्श्रेयसरूपात्यान्तिकमत्प्राप्तिसाधनमित्यर्थः । अतएव सुसुखं कर्तुं सुसुखोपादानं अत्यर्थप्रियत्वेनोपादेयम् । अव्ययमक्षयं मत्प्राप्तिं साधयित्वाऽपि स्वयं न क्षीयते । एवंरूपमुपासनं कुर्वतः मत्प्रदाने कृतेऽपि न किंचित्कृतं मया अस्येति मे प्रतिभातीत्यर्थः' इत्यभिहितम् । अत्र मुक्तिकालानुवृत्तेः भक्तौ प्रतिपादनेन प्रपन्नेनापि फलतया प्रार्थनीयत्वं युक्तम् । उपासकस्यतु फलतया फलसाधनतया च प्रार्थनीयत्वं सङ्गतं भवति ॥

प्रथमश्लोके **श्रुतिशिरसि विदीप्ते** इत्यादिना सविशेषस्यैवोपनिषत्तात्पर्यविषयत्वं यदुक्तं तन्नघटते । विष्णुपुराणे बहुत्र अद्वैतस्यैव उपनिषत्तात्पर्यविषयत्वसाधनात् । तत्रचाद्वैतशब्दाः बहवः वर्तन्ते, तत्पुत्रस्य व्यासस्यापीदमेवाभिप्रेतं निर्विशेषपरत्वमेव वेदान्तानामिति इति शङ्कामपनुदन् **परस्मिन् पूरुषे भक्तिभूमा** इत्यत्र भक्तिभूम्नः प्रतिपादनेन **भवतु मम परस्मिन् शेमुषी भक्तिरूपा** इत्यत्र तदकथनेन न्यूनताभ्रममप्यपाकुर्वन् वृत्तिकारसंमतार्थस्य उपनिषत्तात्पर्यविरुद्धत्वमपि व्युदस्यन् सांप्रदायिकत्वमपि सूचयन् ब्रह्मसूत्राणामेव वेदान्तदर्शनत्वेन अन्वहं तदर्थानुसंधानमेव कार्यमित्याह—**पाराशर्येति** । ऋषिवचनैरेव उपबृंहणभूतैः वेदान्तार्थनिर्णयः इति, 'इतिहासपुराणाभ्यां वेदं समुपबृंह-

## श्रुतप्रकाशिका

वान्तरविषयः परम्परया ब्रह्मविषयत्वं स्वप्रबन्धंप्रति सम्यज्ज्ञानस्याव्यवहितावान्तरप्रयोजनत्वं, परम्परया मुक्तेः परमप्रयोजनत्वं स्वव्याख्येयस्य प्रमाणमूलताकथनेन व्याख्येयान्तराणामप्रमाणमूलकता, स्वव्याख्येयविषयभाष्यान्तरव्यावृत्त्यर्थं स्वोक्तप्रबन्धस्य सांप्रदायिकत्वमित्यादि श्रौतमुच्यते । स्तुत्यात्मकगुरूपासनरूपमङ्गलाचारश्चार्थतःक्रियते ।

जायमानंहि पुरुषं यं पश्येन्मधुसूदनः । ... ...

'तद्विद्धि प्रणिपातेन' 'ददामि बुद्धियोगं तम्' इत्यादिभिराचार्योपसत्तेरपि भगवत्कटाक्षहेतुकत्वावगमात् । परदेवतोपासनानन्तरभावित्वं गुरूपासनस्य युक्तम् । तथा च श्रुतिः 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति । पूर्वैरपि तथाऽऽचरितम् । यथा भगवता वैशम्पायनेन 'नमस्कृत्य हृषीकेशम्' 'नमो भगवते तस्मै व्यासाय' इति । यथा च द्रमिडाचार्यैः 'नमःप्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे नमो जैमिनये वेदरहस्यसम्पुटनिगूढविषफारयित्रे न्यायप्रज्वलितचेतसे नमोऽस्त्वाचार्येभ्यः' इति । पाश्चात्यैश्च 'विशुद्धज्ञानदेहाय' 'अभिवन्द्य गुरूनादौ' इति । 'प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः' इति । *पाराशर्यशब्देन जन्मोत्कर्षः 'सहोवाच व्यासःपाराशर्यः' इति श्रुतिप्रसिद्धेः । तस्यैव बादरायणसंज्ञत्वं विवक्षितम् । यथोक्तं महर्षिणैव—

द्वीपे बदरिकामिश्रे बादरायणमच्युतम् । पराशरात्सत्यवती पुत्रं लेभे परन्तपम् ॥ इति

यद्यपि ऋष्यन्तरेऽपि बादरायणशब्दप्रयोगः ; तथाऽपि सूत्रकृद्विषयो बादरायणशब्दः पाराशर्यगोचर एव । तथ च स्कान्दे व्यक्तमुक्तम्—

## गूढार्थसंग्रहः

येत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥' (महाभारतं) इत्यत्रोक्तार्थः सर्वेषामपि संमतः । तत्र च 'तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः । सन्दर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय' (स्तो.र) इति स्तोत्ररत्ने यामुनमुनिभिः पराशरस्य निर्विशेषे तात्पर्यं नास्तीति संग्रहेण प्रदर्शितम् । तदेव तत्पुत्रस्य ब्रह्मसूत्रप्रणेतुः व्यासस्यापीति सूचयति—पाराशर्येत्यनेन । पाराशर्येति गुरुकीर्तनेन 'यस्य देवे पराभक्तिः यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः ॥' (श्वे.) इति श्रुत्युक्तदिशा भक्तिभूमाऽपि प्रदर्शितः । 'परान्बाह्य कुदृष्टीन् प्रमाणतर्कशतैराशृणातीति पराशरः न तादृशापत्यमतादृशस्यात् इति व्यक्त्यै पाराशर्योक्तिः ।' इति तत्त्वटीका ।

एतेन ब्रह्मसूत्राणां नयसूत्रत्वं व्यञ्जितम् । सूत्राणि उपदेशसूत्राणि परिभाषासूत्राणि, नयसूत्राणिचेति त्रिविधानि । ब्रह्मसूत्राणां नयसूत्रत्वं च सर्वैरप्यङ्गीकृतम् । पराशरप्रबन्धे विष्णुपुराणे निर्विशेषाद्वैतं न विवक्षितम्, किंतु सविशेषमेवेत्युत्तरत्र स्फुटीभविष्यति सविशेषस्यैव श्रुतितात्पर्यविषयत्वं 'अत्रेदं तत्त्वमि'त्यादिना प्रकाशयिष्यते । विष्णुपुराणे उपक्रमोपसंहारयोर्वासुदेवशब्दार्थस्य अन्ते भगवच्छब्दार्थस्य च निरूपणेन 'सर्वभूताधिवासं च यद्भूतेषु वसत्यपि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः' इति श्रुतेः (ब्र.उ) 'ज्ञःकालकालो गुणी सर्वविद्य' इति श्रुतिद्वयमध्यपतितायाः 'केवलो निर्गुणश्चेति श्रुतेः 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेश्चार्थो निरणायि 'तवैष महिमा यने व्याप्तमेतच्चराचरम् ।' (वि.पु.१.४.३८) 'व्याप्तिरैश्वर्यगुणसंसूचिका प्रभो' (वि.१.१९ ७२) इत्यादिना श्वेताश्वतरोपनिषदि बहुधाऽभ्यस्तव्याप्तेः 'देवस्यैष महिमातु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' (श्वे.६.१)

### श्रीभाष्यम्

**वचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृताम्**

### श्रुतप्रकाशिका

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् । किञ्चित्तदन्यथाभूतं त्रेतायां द्वापरे खिलम् ॥
गौतमस्य ऋषेश्शापाज्ज्ञानेत्वज्ञानतांगते। सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान् भगवान्वेदानुज्जहार हरिस्स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः । शतधाचैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्यचाप्यतः । सविशेषाणि सूत्राणि ह्यपराणि विदो विदुः ॥
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः । इति वेदविदःप्राहुश्शब्दतत्त्वार्थवेदिनः ॥
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ॥
ज्ञानं संस्थाप्य भगवान् क्रीडते परमेश्वरः । ...

इत्यादिना । **वचस्सुधां** * वचश्शब्दस्यार्थे तात्पर्यं, यथा वेदविच्छास्त्रविदित्यादौ वेदादिशब्दानां अर्थाभिधायकं हि वाक्यम् वचसस्सुधामिति केचिदाचार्याः । रूपकप्रकरणा*त्सुधाशब्दलक्षणाभयाच्च सुधेव वचइति 'उपमितं व्याघ्रादिभिः' इत्यादिना समासमपर आचार्या आद्रियन्ते । सुधाशब्देन भोग्यत्वमभिप्रेतम् । एवमवान्तरविषय उक्तः । तर्हि कथं ब्रह्मणो विषयत्वमिति शङ्कायां सद्वारकं ब्रह्मणो विषयत्वमित्याह—उपनिषदिति । '**ब्रह्मण्युपनिषण्णेत्युपनिषत्, उपनिषण्णत्वाद्वोपनिषत्**' इतिहि वाक्यम् । '**गहनेहीयं विद्या सन्निविष्टा**' इति तद्विषयं द्रमिडभाष्यम् '**गहने ब्रह्मण्युपनिषण्णा**' इति भाष्यविषया वामनटीका । अद्वारकभगवत्प्रतिपादकत्वमुपनिषण्णत्वम् । **दुग्धशब्देन** पूर्वभागादप्युपनिषदस्सारत्वं विवक्षितम् । यथा—

आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम् ।

### गूढार्थसंग्रहः

इत्यादिश्रुतितात्पर्यं च व्यक्तीकृतम् । 'ईश्वरस्सर्वभूतानां—मायया' इत्यादिगीतावचनं च तदनुगुणम् । सविशेषस्य भगवच्छब्दवाच्यस्य वासुदेवस्यैव परब्रह्मत्वम् । उपक्रमोपसंहारयोः तस्यैव मुक्तिफलदत्वं अस्त्रभूषणादिविशिष्टदिव्यमङ्गलविग्रहविशिष्टत्वं चतुर्विंशतितत्त्वानां मिथ्यात्वं नास्तीति व्यञ्जनाय अस्त्रभूषणादीनां चतुर्विंशतितत्त्वाभिमानित्वं नित्यसूरिदृश्यत्वं प्रकृतिमण्डलादूर्ध्वस्थानस्यैव मुक्तिस्थानत्वं इत्यादयो बहवो विषयाः विष्णुपुराणे निरूपिताः । उक्तार्थानां सर्वेषामुपनिषद्विरुद्धत्वभ्रमं निरस्यति—**उपनिषदुग्धाब्धिमध्योद्धृतामिति** । **तंत्वौपनिषदं पुरुषम्** 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' इत्यादौ सविशेषस्यैवोपनिषत्तात्पर्यविषयत्वमभिप्रेतमिति उत्तरत्र निरूपयिष्यते

एवं 'आनन्दमयोऽभ्यासात्' 'अन्तस्तद्धर्मोपदेशात्' 'ज्योतिश्चरणाभिधानात्' 'न वक्तुरात्मोपदेशादितिचेदध्यात्मसम्बन्धभूमाह्यस्मिन्' इत्यादौ विषयवाक्यतयोदाहरिष्यमाणासु तैत्तिरीय छान्दोग्य कौषीतकीबृहदारण्यकश्रुतिषु सवि

## श्रीभाष्यम्

**संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीविनीम्।**

## श्रुतप्रकाशिका

अब्धिशब्देनालोचितानामुपनिषदामानन्त्यादिसूचितम्। मध्यशब्देन सर्ववाक्यानां मुख्यार्थापरित्यागोऽभिप्रेतः। मध्यस्य सर्वपर्यन्तदेशापेक्षया तुल्याह्यासत्तिः। **उद्धृत**शब्देनातिनिम्नदेशनिमग्ने द्रहणमप्यभिदधता निश्शेषार्थग्रहणं सूच्यते स्वप्रबन्धस्यावान्तरविषयःपाराशर्यसूत्रम्, तस्यावान्तरविषय उपनिषत्, तद्विषयभूतं ब्रह्मेति परम्परया ब्रह्मणः प्रतिपाद्यत्वम्। बादरायणसूत्राणामुपनिषन्मूलत्वकथनेन साङ्ख्यादिग्रन्थानामप्रमाणमूलत्वात्तदनादरेणैतद्व्याख्यानमिति सूचितम्। प्रगाढ्या शास्त्रजन्यं परमप्रयोजनमाह—**संसारेति**। संसाराग्निशब्देन संसारस्य कार्त्स्न्येन तापत्रयरूपता विवक्षिता। यथा

**स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः।** ...

इति दीपनशब्देनासङ्कोचात्सदाऽभिज्वलनवाचिना विद्यालब्धेः पूर्वं कदाऽप्यनिर्वाच्यत्वमभिप्रेतम्। वैविध्य*माध्यात्मिकादिरूपेण तेषु त्रिष्वेकैकस्यापि शारीरमानसादिरूपेण च। आत्मनां **प्राणः** परमात्मा। **सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, कोह्येवान्यात्कःप्राण्यात्** इत्यादिश्रुतेः। गतशब्देन तदलाभः, उपसर्गाभ्यां तस्यानादित्वं त्रिविधत्वं च विवक्षितम्। ज्ञानदर्शनप्राप्तिष्वन्यतमस्याप्यभावादलाभस्य वैविध्यम्। **सञ्जीविनीमिति** ॥

## गूढार्थसंग्रहः

शेषस्यैवोपनिषत्तात्पर्यं नतु निर्विशेषस्येत्युत्तरत्र व्यक्तीभविष्यति। सविशेषस्योपनिषत्तात्पर्यविषयत्व एव चेतनानां मुक्तिफलसम्भवः, नत्वन्यथा इत्यभिप्रेत्याह—**संसाराग्निविदीपने**त्यादिना। 'ब्रह्मविदाप्नोति परम्' इत्येतद्विशदीकरणपरे 'रसो वै सः, रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति कोह्येवान्यात्कःप्राण्यात्, यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति' इत्यत्र प्राणनं ब्रह्मप्राप्तिरूपमोक्षात्मकं विवक्षितम्। प्राणः परमात्मा प्राणाधिकरणादौ च प्राणशब्दस्य परमात्मपरत्वं सूत्रकृतैव स्पष्टीकरिष्यते ॥

'असन्नेवसभवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेतिचेद्वेद सन्तमेनं ततो विदुः' (तै) 'इह चेदवेदीदथ सत्यमस्ति नचेदिहावेदीन्महती विनष्टिः' केनोपनिषत् इत्यादिश्रुतिपर्यालोचनायां परमात्मज्ञानाभावे व्यपगतप्राणत्वमात्मनां युक्तम्। लोके प्राणवायुवियोगे मरणव्यवहारः। सच जीवविश्लेषानन्तरकालिक इति तत्रैव पर्यवसानस्य मुक्तीतरसुखविरहाभिप्रायेण संभववत् मुक्तिसुखविरहतात्पर्येण मुक्तियोग्यत्वाभावमभिप्रेत्य परमात्मज्ञानाभावे श्रुतिषु विनाशोक्तिः। राजपुत्रस्य अतिशयसुखानुभवयोग्यस्य व्याधगृहसत्तादशायां राजपुत्रत्वप्रतीतिविरहेण अतिशयितसुखानुभवयोग्यत्वप्रतीतिवत् परमात्मज्ञानविरहदशायामपि जीवानामतिशयितसुखानुभवयोग्यत्वाप्रतिपत्तिमभिप्रेत्य व्यपगतप्राणत्वेन व्यपदेशः। ब्रह्मणः द्वितीयसूत्रे जगत्कारणत्वलक्षणकथनेन राजकुमारनयसूचनेन आनन्दमयाधिकरणे '**तद्धेतुव्यपदेशाच्च**' इत्यत्र एतत्छ्रुतिसिद्धब्रह्मप्राप्तिहेतुत्वप्रतिपादनपूर्वकं उत्तराधिकरणेषु देशविशेषावच्छेदेन तत्प्राप्तिर्व्यवस्थापयिष्यत इति तत्प्राप्तिहेतुभूत मुक्तिहेतुज्ञानमूलभूतज्ञानं ब्रह्ममीमांसासाध्यमिति **व्यपगतप्राणात्मसंजीविनीम्** इत्यत्र विवक्षितम्। समित्यनेन 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्युक्तसंपत्तिः बोध्यते। इदं च पञ्चाग्निविद्यानिष्ठानां कैवल्यानुभवदशायां नास्ति। स्वस्वरूपाविर्भावः परमसाम्यं चेत्यादिकं परज्योतिरुपसंपत्तिकालानन्तरमेव ॥

श्रीभाष्यम्

पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिताम् आनीतां तु निजाक्षरैः

श्रुतप्रकाशिका

जीवनं उज्जीवनं संसारोन्मोचनम्। *समिति कैवल्यव्यावृत्तिः। अथ सांप्रदायिकत्वमाह—पूर्वाचार्येति। पूर्वशब्देन शङ्कराद्यर्वाचीनव्यावृत्तिः। सुरक्षितां नोपदेशमात्रेण ग्रन्थरूपेणचेतिभावः। पूर्वाचार्यग्रन्थैरर्थस्वरूपं प्रतिपन्नंचेत् किं भवतःकृत्यमित्यत्राह—बहुमतिव्याघातेति। *बह्वयो मतयो बहूनां मतयो वा, तासां परस्परव्याघातेन ताभिस्समीचीनार्थव्याघातेन च अर्वाचीनजनैर्दुरवगाहत्वमाह—दूरस्थितामिति। न यथावदप्रतीतिमात्रं, अन्यथा च प्रतिपत्तिरासीदिति भावः। सूत्रावयवान्तरविषयस्य विषयी स्वग्रन्थ इति न पूर्वं कण्ठोक्तं, तदाह—आनीतामिति। सुधापक्षे निजा-

गूढार्थसंग्रहः

सविशेषस्य उपनिषत्तात्पर्यविषयत्वेन ब्रह्मसूत्रेष्वभिप्रेतत्वे वाक्यकारादिसंप्रदायविरोधशङ्कामपाकरोति—पूर्वाचार्य सुरक्षितामिति। 'सिद्धंतु निवर्तकत्वात्' 'न संव्यवहारमात्रत्वात्' इत्यादीनि माण्डूक्यभाष्य इष्टसिद्धि विवरण संक्षेपशारीरिकाद्यभिप्रेतानि परेषां नानुकूलानीति यथाऽवसरं निरूपयिष्यते। द्रमिडाचार्याभिमतराजकुमारनयोऽपि सविशेषस्य परब्रह्मत्व एव स्वरसः। उपनिषदां ब्रह्मसूत्राणां च सविशेषपरत्वस्य वृत्तिकारसम्मतस्य वाक्यकारादिसंप्रदायविरोधः उपनिषद्युक्तिविरोधश्च यः परैरुद्भावितः तस्य नावसर इत्यभिप्रेत्याह—बहुमतिव्याघातदूरस्थितामिति। मण्डनमिश्रेण विवर्तवादिना 'तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानं संसर्गविषयकमेव' इति, वाचस्पतिना 'वृत्त्युपहितविषयकमेव' इति उभाभ्यामपि मानससाक्षात्कारएवाविद्यानिवर्तक इति पद्मपादप्रकाशात्मयत्यादिभिः उपनिषद्वाक्यैः साक्षात्कारात्मकं संसर्गानवगाहिज्ञानं अविद्यानिवर्तकमित्यादिबहुमतीनां व्याघातः परमते, सिद्धान्तेतु तन्नास्तीति वाऽत्र विवक्षितम्॥

आनीतांतु निजाक्षरैरिति। तत्त्वटीकायां 'सूत्राक्षरैः' इति प्रथमं व्याख्याय 'यद्वा गायत्र्यभिमानिसुपर्णानीतायाः सोमलतारूपेण परिणतायाः एकाहाद्युपयुक्तायाः भौमाः सुमनसः प्रतिसमयं भोक्तारः, वचोरूपायास्तु 'ब्राह्मणा विविदिषन्ति' इतिवत् चोदनानर्हव्यावृत्ताः 'सारासारविवेकज्ञाः' इत्यादिना स्वेनैवान्यत्रोक्ताः। एतेन ब्रह्मविद्यासंप्रदानमपि शिक्ष्यते श्रुतंह्येतच्छान्दोग्ये 'इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यायवाऽन्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः' इति इत्यनन्तरमुक्तम्। श्रुतप्रकाशिकायामपि—'निजाक्षरैः गायत्र्यवयवभूतैरमृताक्षरैरिति यावत्। अतो ममाक्षरैरित्यनुक्तिः' इत्यभिहितम्॥

'गायत्र्या जगती त्रिष्टुप्सम्बन्ध्यक्षरचतुष्कस्य सोमलग्नस्य सोमस्य च सहैव नीततायास्ततः परमेव तादृशाक्षरचतुष्केण योगात्प्रथमं चतुरक्षराया अपि गायत्र्या अष्टाक्षरत्वसम्पत्तेश्चाम्नानात्। तथा च तैत्तिरीयसंहितायाः षष्ठे काण्डे प्रथमप्रपाठकस्य षष्ठेऽनुवाके 'कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेतां सा कद्रूस्सुपर्णीमजयत्साऽब्रवीत्तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेतीयं वै कद्रूरसौ सुपर्णी छन्दाꣳसि सौपर्णेयास्साब्रवीदस्मै वै पितरौ पुत्रान्बिभृतस्तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेति मा कद्रूरवोचदिति जगत्युदपतच्चतुर्दशाक्षरा सती साऽप्राप्यन्यवर्तत तस्यै द्वे अक्षरे अमीयेतां सा पशुभिश्च दीक्षया चागच्छत्तस्माज्जगती छन्दसां पशव्यतमा तस्मात्पशुमन्तं दीक्षोपनमति त्रिष्टुबुदपतत्त्रयोदशाक्षरा सती साऽप्राप्यन्यवर्तत तस्यै द्वे अक्षरे अमीयेतां सा दक्षिणाभिश्च तपसा चागच्छत्तस्मात्त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्त एतत्खलु वाव तप इत्याहुर्यस्स्वं ददातीति गायत्र्युदपतच्चतुरक्षरा सत्यजया ज्योतिषा

## श्रीभाष्यम्

**सुमनसो भौमाः पिबन्त्वन्वहम् ॥**

## श्रुतप्रकाशिका

**क्षरैः** * गायत्र्यवयवभूतैरमृताक्षरैरिति यावत् । अतो ममाक्षरैरित्यनुक्तिः । **सुमनसः** 'सारासारविवेकज्ञाः' इत्या-युक्ताः । अनेनासदपरिग्रहो न दोषायेत्युक्तं भवति । देवादीनां वृत्तिकारग्रन्थादिभिस्सुगमत्वाद्भौमा इत्युक्तम् । पिब-न्त्वन्वहमिति । * रस्यतातिशयान्न तृप्तिकरीति भावः । फलान्तराद्भगवत्प्राप्त्युपाय एव हि स्वादुतमः । यथोक्तम्—

## गूढार्थसङ्ग्रहः

तमस्या अजाभ्यरुन्धत तदजाया अजात्वं सा सोमं चाहरच्चत्वारि चाक्षराणि साऽष्टाक्षरा समपद्यत' इति ॥

अयमत्र भाष्याभिमतोऽर्थसङ्ग्रहः—कद्रूस्सुपर्णीचोभे सपत्न्यौ पराजये दासीत्वमभ्युपेत्य ममैव सौन्दर्यं ममैवेत्यस्पर्धेताम् तत्र मध्यस्थाः कद्रूजयमूचिरे । सा च कद्रूस्सुपर्णीं दासीत्वेन परिगृह्य तन्मोचनोपायं स्वयमेवोपदिदेश । इतोऽस्माल्लोका-दारभ्य गणनायां तृतीया द्यौः स्वर्गलोकः । तस्मिन् सोमो वर्तते । महर्जनस्तपस्सत्यमित्येतेऽपि लोका द्युशब्दाभिधेयाः । तस्मादितस्तृतीयस्यामिति विशेष्यते । तस्मिन् सोमे आहृत्य दत्तेसति त्वां मुञ्चामीति । इयं वै पृथिवी कद्रूः, अतएव सा स्वयमाहर्तुं न शक्नोति असौ सुपर्णीतु द्युलोकरूपा उत्पतनसमर्थानां गायत्र्यादिरूपाणामपत्यानां सद्भावाच्च शक्नोति । अथ सा सुपर्णी स्वपुत्राणां गायत्र्यादीनामग्रे स्ववृत्तान्तं स्पष्टीकुर्वती एवमाह । पुत्रानस्मै एतादृशोपद्रवपरित्राणाय मातापितरौ पुष्यतः । मां च कद्रूस्तृतीयस्यामित्यादिकमवोचत् । हे गायत्र्यादिपुत्रा एतत्प्रतिपद्य यदुचितं तत्कुरुध्वम् । गायत्र्यादी-नांचैच्छिकशरीरधारित्वात्पुत्रत्वमविरुद्धम् । तत्र प्रथमं प्रौढत्वाच्चतुर्दशाक्षरा जगती प्रवृत्ता द्युलोकं गत्वा स्वानभ्राजा-दिभिः सोमरक्षकैः सह युध्वा सोममप्राप्याग्नीषोमीयसवनीयानूबन्धाख्यपशू निष्टिसाध्यदीक्षां च गृहीत्वा स्वकीयाक्षरद्वये वाऽनादिभिर्गृहीतेसति पराजित्य समागता । यस्माज्जगती पशूनानयत्तस्मात्सैवात्यन्तपशुप्रदा । यतः पशुभिस्सह दीक्षाऽऽ-नीता । ततः पश्वाधिकस्वाधीनसम्पत्तौ सत्यां दीक्षायां प्रवर्तते । एवं ततस्त्रिष्टुप्त्रयोदशाक्षरा गत्वा पराजिताऽक्षरद्वयहीना प्रतिनिवृत्ता दक्षिणाभिस्तपसा च सह । ततो गायत्र्यजाख्यया दीप्तयासह द्युलोकं प्रवृत्ता । सा च दीप्तिस्तं सोममभितो रुरोध । तस्माद्रोधनपर्यायक्षेपणार्थादजधातोरजेति नाम निष्पन्नम् । ततः सा गायत्री सोममप्याहरत् । तत्सम्बद्धमक्षरच-तुष्टयमप्याहरत् अतएव सा गायत्र्यष्टाक्षरा समपद्यतेति ॥

यद्यप्यत्र सोमस्यैव लतात्मनो गायत्र्या समाहरणमाम्नातं न सुधायाः सोमपदश्रवणात्सोमक्रयणप्रकरणाच्च । तथा-ऽपि 'ब्रह्मादयोऽसृजन्पूर्वममृतं सोमसंज्ञितम् । जरामृत्युविनाशाय विधानं तस्य वक्ष्यते ॥' इत्यादिना सुश्रुतादौ वैद्य-केऽमृतस्यैव सोमलतारूपतयाऽवतारोक्तेः महाभारतेऽपि सौपर्णे आदिपर्वणि सोमामृतपदयोर्बहुधापर्यायतया प्रयोगेणामृतस्य सर्वच्छन्दोऽभिमानिगरुडानीतत्वोपदेशात्सोमामृतयोस्तादात्म्यावगमात्सुधायां निजाक्षरानीतत्वं सङ्गतमेव । तथा चादि-पर्वणि त्रिंशेऽध्याये—'महावीर्यबलःपक्षी हर्तुं सोममिहोद्यतः ।' इत्यादि, तत्रैव चतुस्त्रिंशेऽध्याये—'एवं तदमृतं तेन हृत-माहृतमेव च । द्विजिह्वाश्च कृतास्सर्पा गरुडेन महात्मना ॥ इतीति ध्येयम्' इति वचस्सुधातत्त्वे उक्तम् ॥

**सुमनसो भौमाःपिबन्त्वन्वहम्** इत्युक्तिः स्वादुतमत्वात् गांभीर्याच्चेति पूर्वाचार्यैः व्याख्याता । एवं वदतो भगवतः श्रीभाष्याध्ययनप्रवचनादिकमेव प्रथमतः कर्तव्यम् । एतद्योग्यताऽभावे एव इतरग्रन्थाध्ययनमालयादौ अनुज्ञाकैङ्कर्यादिकं वा कार्यमिति शासनं तच्छिष्यसामान्यसम्मतमत्रानुसंधेयम् ॥

## श्रुतप्रकाशिका

क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥

इति । * यद्वा गम्भीरत्वादन्वहं शीलनीयेति भावः ॥

## गूढार्थसंग्रहः

परैः अहमर्थाध्यासं प्रसाध्य 'अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । यथा चायमर्थः वेदान्तानां सर्वेषां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः' (शं.भा) इति । 'ब्राह्मणो यजेत' इत्यादीन्यपि अध्यासनिबन्धनान्येव अविद्यावद्विषयाणि, शास्त्रीयव्यवहारोऽपि अविद्यावद्विषयः' इति अध्यासभाष्ये 'व्याप्तेश्च समञ्जसम्' इति सूत्रे 'चतुर्धा सामानाधिकरण्यम् अध्यासे अपवादे विशेष्यविशेषणभावे एकत्वे (अखण्डार्थे) च' इति निरूपितम्। अत्र 'सिंहो देवदत्त' इत्यत्र भट्टपादानां आरोपनिराकरणं वेदप्रामाण्य संरक्षणार्थमिति तत्सिद्धिपेटिकायां सोमनाथेन 'व्याप्तेश्च समञ्जसम्' इति सूत्रे परिमले अप्पय्यदीक्षितेन चाभिहितम् । 'तत्र प्रत्यक्षमात्मानमौपवर्षाःप्रपेदिरे' इति न्यायमञ्जर्यां जयन्तोक्त्या उपवर्षस्याहमर्थाध्यासो न संमत इति प्रतीयते । अतएव शबरकुमारिलादिभिः अहमर्थाध्यासनिराकरणं सङ्गच्छते । अविद्यावद्विषयत्वेन वेदवाक्यानां प्रवृत्त्यङ्गीकारे वेदप्रामाण्यसंरक्षणमेव न भवतीति मीमांसकाः अभिप्रयन्तीति सिद्धम् । व्यावहारिपारमार्थिकविभागोऽपि बौद्धाद्यवैदिकसम्मतः । नतु वैदिकस्य कस्यापि, अतः वेदवाक्यानां सर्वेषामप्येकविधमेव प्रामाण्यं, नतु प्रामाण्यद्वैविध्यम् । सर्वत्रापि विशेष्यविशेषणभाव सामानाधिकरण्यमेकमेव इति पूर्वोत्तरमीमांसावृत्तिकाराणां सिद्धान्तः। परिमलोक्तमध्यासस्थापनं न सम्भवतीति भावप्रकाशे (३.सं) निरूपितम्

बोधायनस्य मीमांसासूत्रव्याख्यातृत्वे च भास्करानन्तरकालिकग्रन्थकर्तृनामनिर्देशरहिते अद्वैतिविरचिते प्रपञ्चहृदयनामके प्रबन्धे चतुर्थे उपाङ्गप्रकरणे 'तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतं तद्ग्रन्थबाहुल्यभयादुपेक्ष्य किंचित्संक्षिप्तमुपवर्षेण कृतमित्यत्र व्यक्तम्। अत्र केचित् पुलवरपुराणमणिमेखलाप्रभृतिषु द्रमिडभाषाप्रबन्धेषु बोधायनकृतायाः मीमांसावृत्तेः कृतकोटिपदेन निर्देशोऽस्ति। 'उपवर्षो हलभूतिःकृतकोटिरयाचितः' इति त्रिकाण्डशेषे केशवनिघण्टौ च दृश्यते । इदमेवाभिप्रेत्य 'गौः इत्यत्र कः शब्दः गकारौकारविसर्जनीयाः इति भगवानुपवर्षः' इति शाबरभाष्यमुपन्यस्य 'वृत्तिकारस्य बोधायनस्यैव उपवर्ष इति स्यान्नाम' इति तत्त्वटीकायामाचार्यपादैरुक्तम् । इति वदन्ति पाराशर्यविजयेतु महाचार्यैः उपवर्ष बोधायनयोर्भेद एवोक्तः । अत्र प्रपञ्चहृदयमेव मूलम् । महाचार्याणामयमाशयः बोधायनवाक्यं प्राचीनैः शाबर शङ्कराचार्यप्रभृतिभिः न क्वाप्युपात्तम् उपवर्षवाक्यतूपात्तम् । स्फोटनिराकरणस्योपवर्षसंमतत्वेन विवर्तवादः उपवर्षस्यासम्मत इति सिद्ध्यति । अतश्च असत्यात्सत्यसिद्धिनिराकरणावसरे असत्यात्सत्यसिद्धेः विवर्तवादिसंमतायाः उपवर्षासंमतत्वं सिद्ध्यतीति उपवर्षः न विवर्ताद्वैतीति सिद्धम् । तेनच विवर्ताद्वैतं सूत्रकारवृत्तिकारानभिमतमिति सामान्यतः सिद्धौ अस्य बोधायनेति नामाङ्गीकारेणाऽपि विवर्तवादस्सूत्रकृतो न सम्मत इत्यर्थस्सिद्ध्यतीत्यभिप्रेत्य संभावनातात्पर्यकं तत्त्वटीकावाक्यम् । 'उपवर्षो हलभूतिः' इति वाक्यंतु कृतकोटिप्रवर्तकत्वेनाप्युपपद्यते । बोधायनोपवर्षयोरैक्याङ्गीकारे सेश्वरमीमांसायां 'यत्तूपवर्षवृत्तौ' इत्याद्युपवर्षवृत्तिखण्डनं कथं युक्तं स्यात् । श्रीभाष्ये बोधायनमतानुसारेण सूत्रार्थो वर्ण्यत इति विश्वसनीयत्वेनोक्तबोधायनवृत्तेः सेश्वरमीमांसायां खण्डनं न युक्तं स्यात् । अतः बोधायनोपवर्षयोः भेदएवेति ॥

**पूर्वाचार्या** इत्यत्र 'पूर्वाचार्या ब्रह्मनन्द्यादयः' इति तत्त्वटीका । एतेन **पूर्वाचार्यसुरक्षिताम्** इत्यत्रापि पूर्वाचार्यशब्दो व्याख्यातः । अत्र आत्मसिद्धौ 'यद्यपि भगवता बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि, विवृतानि

श्रीभाष्यम्

**भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ॥**

जिज्ञासाधिकरणम् (१.१.१)

## ॐ अथातो ब्रह्मजिज्ञासा (१.१.१)

**अत्रायमथशब्द आनन्तर्ये भवति ।**

श्रुतप्रकाशिका

तर्हि पुरातनग्रन्था एव वाचयितव्याः, किमपूर्वग्रन्थनिर्माण तत्प्रवर्तनयत्नगौरवेण ? इति शङ्कायामाह—**भगवदिति** । भगवच्छब्देन शङ्करादिवदनाप्तत्वं नास्तीत्यभिप्रेतम् । बोधायनग्रहणेन * पूर्वाचार्यशब्दोऽप्यर्थाद्विवृतः । **विस्तीर्णां सञ्चिक्षिपुरिति** । अनेन वृत्त्यादीनामत्रत्येष्वद्यतनजनेष्वकार्यकरत्वं सूचितम् । बोधायनेनह्यतिविस्तीर्णा वृत्तिः कृता । द्रमिडभाष्यकारादयोहि परपक्षप्रतिक्षेपाद्यनादरेणातिसंक्षिप्तान् ग्रन्थानरचयन् । अतिविस्तीर्णातिसंकुचितग्रन्थानां साफल्यमायुष्मद्बुद्धिमज्जनप्रचुरेषु देशकालान्तरेषु भवति । नहीदानीन्तनपुरुषाणां सर्वेषां शतायुष्ट्वं यावज्जीवं ग्रन्थपरिश्रमस्सहजधीविशेषाश्च सन्ति । तस्मात् परमतनिरासाद्यर्थं, अनतिविस्तरतया सुग्रहत्वार्थंच सूत्रं व्याख्यातव्यमिति यावत् । **तन्मतानुसारेण**—नतु स्वोत्प्रेक्षितमतान्तरेण । **सूत्राक्षराणि**—सौत्रपदानां प्रकृतिप्रत्ययविभागानुगुणं वदामः, नतु स्वोत्प्रेक्षितार्थे सूत्राणि यथाकथञ्चिद्योजयितव्यानीति भावः । **व्याख्यास्यन्ते** व्याङ्भ्यामुपसर्गाभ्यां अपेक्षितविस्तरानपेक्षितसङ्क्षेपौ द्योतितौ ॥

* **ननु—सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥**

इतिहि भाष्यलक्षणम् ; अतस्सूत्रव्याख्यानरूपत्वाभावदखिलेत्यादिकं न भाष्यान्तर्भावीतिचेत् ; न, सूत्रतात्पर्यार्थपरत्वात् भाष्यान्तर्भाव्येव । सूत्रतात्पर्यार्थपरत्वं च श्लोकव्याख्याने स्पष्टम् । किंच * मङ्गलाचरणमारिप्सितग्रन्थपरिसमाप्त्याद्यर्थतया तदुपयोगीति तदन्तर्भाव्येव । शाबरशाङ्करादिभाष्येषु नमस्कारादर्शनादत्र नमस्कारकथनमयुक्तमितिचेत् ; न, **नमः प्रवरगुणैकास्पदाय** ' इति द्रमिडभाष्ये देवतागुरुनमस्कारश्रवणात् । शाबरशाङ्करयोस्त्वीश्वरानभ्युपगमात् जीवब्रह्मभेदानभ्युपगमाच्च नमस्यानादरः । अत्रतु सिद्धान्तानुरूप्यान्नमस्याऽत्यन्तोपपन्ना । शाङ्करग्रन्थोपक्रमे च व्याख्यातृभिर्नमस्काराद्यभावात्कुग्रन्थत्वमाशङ्क्य ' युष्मदस्मत् ' इत्यादिग्रन्थे प्रत्यगर्थानुसन्धानेनार्थान्मङ्गलाचारःकृत इति परिहृतम् ॥

पूर्वं पदानि व्याचिख्यासुः, प्रथममथशब्दं व्याचष्टे—**अत्रायमथशब्द आनन्तर्ये भवतीति ।**

**पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥**

इतिहि व्याख्यानप्रकारः ।

**ननु** नैतावथातश्शब्दौ व्याख्येयौ ; प्रयोजनाभावात् । अज्ञानसंशयविपर्ययनिवृत्त्यर्थंहि व्याख्यानम् । न तावदत्राज्ञानम् ; आनन्तर्ये, प्रकृतस्य हेतुभावे च तयोःप्रसिद्धत्वात् । नापि संशयः अर्थान्तरेषु सत्स्वपि तयोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यात् । नहि गोशब्दं शृण्वतस्सास्नादिमदिति संशयो जायते । अतएव विपर्ययोऽपि दूरोत्सारित इति । अत्र **ब्रूमः**—आनन्तर्यवृत्तहेतुभावपरत्वनिर्णयस्य पूर्ववृत्तविशेषावगमसापेक्षत्वात्तदप्रतीत्या प्रसिद्धिप्राचुर्यस्य सापवादत्वात् ।

## श्रुतप्रकाशिका

अथशब्दस्याधिकारादिषु एतच्छब्दस्य च **एतदुक्तं भवति** इत्यादिषु वक्ष्यमाणेऽर्थे तसेश्च सर्वविभक्त्यर्थवाचिन इत इत्यादिषु पञ्चम्यर्थव्यतिरिक्तेऽर्थे प्रयोगदर्शनात्संशयविपर्ययौ स्यातामिति तन्निरासायाथातश्शब्दव्याख्यानं युक्तमित्यतस्तौ व्याख्यायेते ॥

अत्र तावदथशब्दस्याधिकारार्थत्वमयुक्तम् । अधिकारोहि प्रस्तावः ; ब्रह्मजिज्ञासा प्रस्तूयत इति वचनं मन्दप्रयोजनम् । प्रारभ्यत इत्युक्तिं विनाऽपि प्रारम्भादेव प्रारभ्यमाणत्वावगमात् । उच्यमानंहि वचनं ब्रवीमीत्युक्तिमन्तरेणापि सन्निहितपुरुषेणोच्यत इत्येवावगम्यते ; नतु नोच्यत इति । * प्रस्तोतव्यत्वमुच्यत इतिचेत् ; तदानीमपि न्यायप्रतिपादकस्य सूत्रस्य * उपदेशाज्ञापनपरत्वाभावाद्युक्तितः प्रारम्भयोग्येत्यर्थस्स्यात् * योग्यत्वमशाब्दम् ॥

नन्वध्याहारेण योजना स्यात् ; आनन्तर्यपक्षेऽपि कर्तव्येत्यध्याहर्तव्यमितिचेत् ; न अधिकारार्थत्वपक्षेऽध्याहृतस्यापि पदस्यान्वयदौर्घट्यात् । यथा—चयोग्येत्युक्ते समुचेतुं योग्येत्यर्थो न शक्याभिधानः * एवमथ योग्येत्युक्तेऽधिकर्तुं योग्येत्यभिधानंहि न शक्यम् । अतएवहि महाभाष्ये **'शब्दानुशासनं शास्त्रमधिकृतं वेदितव्यम्'** इत्युक्तम् । नत्वधिकर्तुं योग्यमिति । अधिकृतमित्यपि फलितार्थकथनम् ; नतु वाचनिकोक्तिः । * चादीनां द्योतकत्वात् । * अत्र त्वधिकृतामित्यर्थपरत्वे वैयर्थ्यमित्युक्तम् । शब्दानुशासनोपक्रमे त्वधिकारार्थत्वमगत्याऽऽश्रितम् । नह्युपनीतेन वेदमधीयानेनाध्येतव्यस्य तदङ्गभूतस्य व्याकरणस्यासाधारणो वृत्तविशेषस्सम्भवति । इहतु प्रयोजनवदर्थान्तरसम्भवादधिकारार्थत्वाश्रयणमयुक्तम् । आनन्तर्यपरत्वे प्रयोजनवत्त्वं च वक्ष्यते ॥

मङ्गलंतु नाथशब्दवाच्यम् । अपितु शङ्खस्वनादिभिश्श्रूयमाणोऽथशब्दो मङ्गलावह इत्योङ्कारस्येवार्थान्तरपरत्वेऽपि मङ्गलं सिद्ध्यति । ओङ्कारतुल्योह्यथशब्दः स्मर्यते—

**ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणःपुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥**

इति । मङ्गलवाचित्वाभ्युपगमेऽपि मङ्गलरूपा ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासा स्तुता स्यात् ; ततश्च सूत्रस्यार्थवादता स्यात् नतु न्यायनिबन्धनत्वम् । जिज्ञासाविशेषणत्वाभावे मङ्गलं भवतीति वाक्यभेदस्स्यात् । प्रकृतादर्थादर्थान्तरपरत्वं चायुक्तम् । * तद्धि प्रकृतमपेक्ष्य वक्ष्यमाणस्यार्थान्तरत्वज्ञापनम् । तच्च कल्पान्तरोपन्यासविवक्षायामेव दृष्टम् । अत्रतु कल्पान्तरोपन्यासाभावात्तदनुपपन्नम् । प्रश्नपरत्वमप्यनुपपन्नम् । वचनव्यक्तेः प्रश्नप्रतिवचनरूपत्वाभावात् । तदाहि किं ब्रह्मजिज्ञासा कर्तव्येत्युक्तं स्यात् सा कर्तव्येति वाक्यान्तरेण प्रतिवचनं स्यात्, नच प्रतिवचनरूपं वाक्यान्तरमुपलभ्यते। अथ शब्दस्य कार्त्स्न्यपरत्वे कार्त्स्न्येन सा कर्तव्येत्यर्थः स्यात्, सोऽनुपपन्नः एकदेशकर्तव्यतायाश्शङ्कितत्वाभावात्। कर्तव्यतामात्रंहि संशयपदम् । तन्निरासार्थं च सूत्रम् । किंच अधिकाराद्यर्थान्तरपरत्वमतश्शब्दान्वयोऽपि निवारयति अतश्शब्दोहि प्रकृतमर्थं हेतुतया परामृशन् अथशब्दोपस्थापितं ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तं वा परामृशति, तत्र यद्यथशब्दोपस्थापितमधिकृतत्वं हेतुतया परामृशेत् तदाऽधिकृतादधिकर्तव्येति * हेतोस्साध्याविशिष्टत्वं स्यात् । मङ्गलस्यानभिधेयतया न पदान्तरपरामर्शयोग्यता । वाच्यत्वाभ्युपगमेऽपि तस्य प्रकृतापेक्षत्वस्य च कार्त्स्न्यस्य च * पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावात्तानि न हेतुतया परामर्शनीयानि, * नह्यमङ्गलत्वप्रकृतानपेक्षत्वात्कार्त्स्न्यैः पूर्वपक्षोत्थानम् । नयसूत्राणि च विरुद्धार्थव्युदसनपराणि । प्रश्नवाक्यगतप्रश्नस्तु तस्मिन्नेव वाक्ये हेतुतया परामर्शानर्ह एव । किं ब्रह्मजिज्ञासा कर्तव्येति वाक्येऽपरिसमाप्ते कथं किंशब्दार्थो हेतुतया परामृश्येत ? अतोऽतश्शब्दपरामर्शयोग्यार्थश्चेदथशब्दोऽभ्युपगम्यते तदधिकाराद्यर्थत्वं न घटते। यदि ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तस्य पूर्ववृत्तत्वेन तत्तद्व्याख्यातृभिमतस्य वस्तुनोऽतश्शब्देन परामर्श इष्येत तदानीं

## गूढार्थसंग्रहः

तानि परिमितगम्भीरभाषिणा भगवता भाष्यकृता । विवृतानि च तानि गम्भीरन्यायसागरभाषिणा श्रीवत्साङ्कमिश्रेणापि तथाऽपि आचार्यटङ्क भर्तृप्रपञ्च भर्तृमित्र भर्तृहरि ब्रह्मदत्तशङ्करश्रीवत्साङ्कभास्करादिविरचितासितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धयः यथावदन्यथा च प्रतिपद्यन्त इति युक्तः प्रकरणप्रक्रमः ' इति ॥

आगमप्रामाण्ये च ' नन्वत्र भवतां भाष्यकाराणां विरुद्धांशाप्रामाण्याभिधानं कथमिव । यदपि विरोधः कृत्वा चिन्तया परिहृतः, तदपि गम्भीरन्यायसागरमवगाढुमपरिबृढानां कोमलमनसां वेदानादरो माभूवदित्येवंपरम् । यथैवहि भगवतो जैमिनेः कर्मफलोपन्यासः कर्मश्रद्धासंवर्धनायेति ' इति यामुनमुनिभिः, वेदार्थसंग्रहे ' भगवद्बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकरसन्दर्शितोऽयं पन्थाः ' इति भगवता च प्रतिपादनेन ब्रह्मसूत्राणामपि द्रमिडभाष्यं वर्तत इति केचिन्मन्वते । अत्र ' टङ्कः ब्रह्मनन्दी ' इति तात्पर्यदीपिका । परंतु—आत्मसिद्धौ आगमप्रामाण्ये च द्रमिडाचार्यनाम्नः अनभिधानेन तद्व्यतिरिक्तकर्तृकमेव ब्रह्मसूत्रभाष्यं श्रीवत्साङ्कभाष्यवत् । आचार्यटङ्कभर्तृप्रपञ्चेत्यादि आत्मसिद्धिवाक्ये भर्तृप्रपञ्चादीनां बहूनां ब्रह्मसूत्रभाष्यकृत्त्वस्याप्रसिध्या तद्वत् आचार्यटङ्कापरनामधेयाचार्यब्रह्मनन्दिना सूत्रभाष्याकरणेऽपि तन्नामनिर्देशवत्, वेदार्थसंग्रहसूक्तौ टङ्कद्रमिडयोः छान्दोग्यवाक्यतद्भाष्यकृतोः विवक्षा सम्भवत्येवेति द्रामिडाचार्यस्य सूत्रभाष्यकृत्त्वे नेदं अनन्यथासिद्धं प्रमाणं भवितुमर्हति । वेदार्थसङ्ग्रह एव ब्रह्मनन्दिछान्दोग्यवाक्यं द्रमिडाचार्यभाष्यं च स्पष्टमुदाहृतम् । तेन ब्रह्मनन्दी छान्दोग्यवाक्यकर्तैव । तद्भाष्यकर्तैव द्रमिडाचार्यः सर्वत्र विवक्षितः । वेदार्थसंग्रहसूक्त्या आचार्यटङ्केत्यादि आत्मसिद्धिवाक्ये ब्रह्मनन्दी न परमतानुयायी । अपितु वृत्तिकारसिद्धान्तानुयायी इति स्फुटं प्रतीयते । टङ्कश्रीवत्साङ्कमिश्रयोः वृत्तिकारसिद्धान्तानुयायित्वेऽपि तादितरग्रन्थपर्यालोचनया वेदान्तार्थनिश्चयो न सम्भवतीति प्रकरणारम्भो युक्तः इति यामुनमुनीनामाशयः । छान्दोग्यवाक्यतद्भाष्ययोरपि वृत्तिकारसिद्धान्तार्थानां सङ्क्षेपेणाभिधानं नानुपपन्नम् । एतत्तात्पर्येणैव तत्त्वटीकायाम् 'अत्र पूर्वाचार्याः ब्रह्मनन्द्यादयः तन्निबन्धनानां गहनत्वं सूचयति संचिक्षिपुः इति । सूत्रस्थापितार्थपरैर्ग्रन्थैरित्याशयः ' इत्याचार्यपादैरुक्तम् । अतएव ' वेदनमुपासनं स्यात् तद्विषये श्रवणात् ' इति वाक्यव्याख्याने (श्रु.प्र) । ' सर्वासूपनिषत्सु न केवलं छान्दोग्य इत्यर्थः ' इत्यत्र, साधनसप्तकनिरूपणावसरे तत्त्वटीकायाम् ' अत्र भाष्यकारः ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः ' इत्यत्र च छान्दोग्यवाक्यतद्भाष्यकृत्त्वं ब्रह्मनन्दिद्रमिडाचार्ययोः व्यक्तम् ॥

अत्र ' यद्यपि सच्चित्त ' इत्यादिना छान्दोग्यवाक्यव्याख्यानद्रमिडभाष्यं संग्रहेणोदाहरिष्यते । एतद्वाक्यं च समग्रं व्याख्यातं वेदार्थसंग्रहे । ' अन्तर्गुणा भगवती परदेवतेति प्रत्यग्गुणेति भगवानपि भाष्यकारः । आहस्म यत्तदिह निर्गुण वस्तुवादे सङ्गच्छते नतु पुनस्सगुणप्रवादे ॥ (सं.शा.२२१) ' इति सुरेश्वराचार्यशिष्यसर्वज्ञात्ममुनिना वाक्यद्रमिडभाष्ययोः विवर्ताद्वैतपरत्वं यत्साधितं तन्नघटत इति वेदार्थसंग्रहे एतद्भाष्यव्याख्यानेन बोधितम् । अयमर्थः उत्तरत्र निरूपयिष्यते । छान्दोग्यवाक्यानि बहूनि द्रमिडभाष्यवाक्यानिच वेदार्थसंग्रहे उदाहृतानि । परैरपि छान्दोग्यवाक्यतद्भाष्यकृत्त्वं ब्रह्मनन्दिद्रमिडाचार्ययोरङ्गीक्रियते । अतश्च सर्वसम्मतत्वेन पूर्वाचार्या इत्यत्र छान्दोग्यवाक्यकारा ब्रह्मनन्द्यादय एव विवक्षिताः । ' नासतो निष्पाद्यत्वात् ' ' प्रवृत्त्यानर्थक्यतु सत्त्वाविशेषात् ' ' न संव्यवहारमात्रत्वात् ' इति वाक्यत्रयं प्रकृत्यधिकरणकल्पतरावुदाहृतं संक्षेपशारीरकाभिप्रेतं परिणामवाद एव सङ्गच्छते, नतु विवर्तवादे इति भावप्रकाशे द्वितीयसपुटे निरूपितम् । अत्राप्युत्तरत्र निरूपयिष्यते । वेदार्थसंग्रहे बहूनि छान्दोग्यवाक्यान्युदाहृत्य जीवभिन्नसविशेषब्रह्मपरिणामवादस्य स्थापनेन बोधायनटङ्कादीनां एकाभिप्रायस्य स्पष्टमुक्त्या च परैः वृत्तिकारमतदूषणं वाक्यकारादेः विवर्त-

## श्रीभाष्यम्

**अतश्शब्दो वृत्तस्य हेतुभावे।**

## श्रुतप्रकाशिका

जिज्ञासानुपयोगिनस्तदाक्षेप्यत्वायोगादुपयोग्यर्थ एव तदाक्षेप्य इति तत्परामर्शिनाऽतश्शब्देन जिज्ञासोपयोगितया तत्पूर्वभाव्यर्थविशेषोपस्थापनादथशब्दस्य स्वारसिकानन्तर्यपरत्वे संभवत्यस्वरसविफलार्थान्तरस्वीकारो न घटते। ततश्च अतश्शब्दवद्ब्रह्मजिज्ञासापदसामर्थ्यमप्यधिकाराद्यर्थपरत्वनिवारकं स्यात्। एवमर्थान्तराणामनुपपन्नतामर्थतो दर्शयन्नानन्तर्यार्थत्वमथशब्दस्योपपादयति–**अत्रायमिति**। अथशब्द आनन्तर्य इति प्रतिज्ञा। तदुपपादकमत्रायं भवतीति पदत्रयम्। तत्र * भवतीति पदेनानन्तर्ये स्वारस्यं सूच्यते। स्वारस्यापवादिकां पूर्ववृत्ताप्रतिपत्तिं परिहरति–**अत्रेति**। अत्र वेदस्योत्तरभागविचाररूपब्रह्मजिज्ञासापदसामर्थ्यात्पूर्वभागविचाररूपवृत्तविशेष आक्षिप्त इत्यभिप्रायः। हेत्वन्तरमभिप्रयन्नाह—**अयमिति**। अयमथशब्दः '**अथ शब्दानुशासनम् अथ योगानुशासनम्**' * इत्यादिसूत्रान्तरगतव्यावृत्त इत्यर्थः। अतश्शब्दशिरस्क इत्युक्तं भवति। वेदान्तसारेह्ययमर्थः कण्ठोक्तः। प्रकृतपरामर्शिना एतच्छब्देन पूर्ववृत्तसामान्यमभिहितमित्यभिप्रायः। एवं समभिव्याहृतोभयपदस्वारस्यात्सामान्यतोऽभिहितं विशेषत आक्षिप्तं च पूर्ववृत्तं सिद्धमिति वृत्तविशेषाप्रतिपत्तिरूपस्य स्वारस्यापवादकस्याभावादथशब्द आनन्तर्य एवेति वाक्यार्थः। एवमथशब्दस्योत्तरभागविचारारम्भसूत्रगतत्व,मतश्शब्दशिरस्कत्व, मानन्तर्ये स्वारस्यं च दर्शयद्भिरानन्तर्योपपादकैरत्रायं भवतीति पदैरेवास्मिन् सूत्रेऽर्थान्तराणां गत्यभावस्वीकार्याणामनादरणीयत्वं फलितम्॥

अतश्शब्दं व्याचष्टे–**अतश्शब्दो वृत्तस्य हेतुभावइति**। वृत्तस्येति प्रकृत्यर्थ उक्तः, हेतुभाव इति प्रत्ययार्थः। इयं प्रतिज्ञा, अत्रायं भवतीत्यनुषक्तं पदत्रयमुपपादकम्। प्रकृतिप्रत्यययोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यं भवतिना दर्शितम् अत्रेत्यस्य पूर्ववदर्थः। अनेन वृत्तविशेषः तस्य हेतुभावार्हत्वं चाक्षिप्तम्। तदर्हत्वंचानन्तरमेव व्यक्तं भविष्यति। अयम् आनन्तर्यस्वरसाथशब्दपूर्वकः, अनेन वृत्तसामान्यमाक्षिप्तम्॥

नन्वथशब्दार्थनिर्णयोऽतश्शब्दार्थनिर्णयसापेक्षः अतश्शब्दार्थनिर्णयश्चाथशब्दार्थनिर्णयसापेक्ष इत्यन्योन्याश्रयः। नैवम्। * अथशब्दस्यानन्तर्ये स्वारस्यंहि न अतश्शब्दार्थनिर्णयसापेक्षम्। अतश्शब्दस्य वृत्तहेतुभावपरत्वस्वारस्यं च न अथशब्दार्थनिर्णयसापेक्षम्। अथशब्द आनन्तर्यपरः स्वस्वारस्यात् समभिव्याहृतपदान्तरस्वारस्याच्च। अतश्शब्दोऽपि वृत्तस्य हेतुभावपरः स्वस्वारस्यात् समभिव्याहृतपदान्तरस्वारस्याच्चेति भवत्ययंशब्दाभ्यां दर्शितं भवति। * इमेचाम्नु-

## गूढार्थसङ्ग्रहः

द्वैतित्वस्थापनं च न घटते, वृत्तिकारवाक्यकारादीनां सिद्धान्तैक्यात् इत्यर्थबोधनार्थमेव **भगवद्बोधायनकृताम्** इत्यादि सूक्तिः प्रवृत्तेति निर्णीयते। उपासनस्यापरब्रह्मविषयकता,ज्ञानस्य परब्रह्मविषयकता—इत्यादिपरसिद्धान्तः निरवकाशः, इत्ययमाशयः छान्दोग्यवाक्यकारैरेव मोक्षसाधनवेदनपरशब्दाः सर्वेऽपि उपासनमेव बोधयन्तीति स्थापनादिति लघुसिद्धान्ते निरूपणेन व्यक्तीकरिष्यते॥

**अतश्शब्दो वृत्तस्य हेतुभावे** इति। वेदपूर्वोत्तरभागाविचाररूपत्वेन '**अथातो धर्मजिज्ञासा**' इत्यारभ्य '**अनावृत्तिश्शब्दात्**' इत्येवमन्तशब्दसमुदायस्य वेदपूर्वोत्तरभागविचाररूपत्वेनोत्तरभागविचारपरसूत्रघटकातश्शब्दे–

### श्रीभाष्यम्

### अधीतसाङ्गसशिरस्कवेदस्य

### श्रुतप्रकाशिका

चययुक्ती, अत्र पदाभिप्रेतब्रह्मजिज्ञासापदसामर्थ्यादेव पदद्वयस्योक्तार्थपरत्वसिद्धेः। अतः स्वपरपदस्वारस्याद्ब्रह्मजिज्ञासापदसामर्थ्याच्चाथातश्शब्दौ यथोक्तार्थपराविति न दोषः। अथातश्शब्दयोरन्यतरेणालमिति चेन्न * अथशब्दस्यानन्तरकालमुपस्थापयतो वर्तिष्यमाणब्रह्मजिज्ञासाविशेषणतयाऽतश्शब्दस्य वृत्तहेतुभावपरतयाचापर्यायत्वात्, * प्रतिज्ञाहेतुरूपेण पदयोर्भिन्नप्रयोजनत्वाच्च। ब्रह्मजिज्ञासा कर्तव्येतिहि प्रतिज्ञेति चेन्न ब्रह्मजिज्ञासेति धर्मनिर्देशः, अथेति साध्यधर्मोक्तिः। * न कर्तव्यतामात्रं साध्यधर्मः अपित्वानन्तर्यविशिष्टकर्तव्यत्वम्। एवम् अथ अतः पदयोः प्रतिज्ञाहेत्वर्थत्वेन विभागः अथातो धर्मजिज्ञासेत्यत्रापि समानः। एवमर्थभेदस्याविवक्षितत्वेनाह '**अथ योगानुशासनम् अथ शब्दानुशासनम्**' इत्यादिष्वतश्शब्दस्याप्रयोगः॥

**ननु** ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्ततया बुद्धिस्थस्य कर्मविचारस्य हेतुभावोऽतश्शब्दावगन्तव्य इति किमथशब्देन? नैवम्। आनन्तर्योक्तिमुखेन तस्य हेतोः शास्त्रान्तरश्रवणव्यवधाननैरपेक्ष्यद्योतनार्थत्वादथशब्दस्य। ततश्च वेदान्तश्रवणात्पूर्वं * शास्त्रान्तरश्रवणेन विना संपादयितुमशक्यत्वात, शास्त्रान्तराणां चानवसरग्रस्तत्वाच्च, शास्त्रान्तरसापेक्षाणां नित्यानित्यवस्तुविवेकादीनां पूर्ववृत्तत्वव्युदासः फलितस्स्यात्॥

**ननु** यत्किंचिदतीतं पूर्ववृत्तत्वेन न वक्तव्यम्, अतिप्रसङ्गात्। अतो वर्तिष्यमाणोपयुक्तमेव पूर्ववृत्तमथशब्दोपस्थापितमिति तस्य हेतुत्वमपि शास्त्रान्तरश्रवणनैरपेक्ष्यवत्तैव वस्तुसामर्थ्येन सिद्धमिति किमतश्शब्देन? नैवम्। अथशब्दाक्षिप्तहेत्वसिद्धिशङ्कापरिहारार्थत्वादतश्शब्दस्य। हेतुश्च विशिष्टः। तस्य विशेषणांशविशेष्यांशयोरसिद्धिशङ्कातत्परिहारप्रकारौ सूत्रकाराभिप्रेतौ परस्ताद्दर्शयिष्येते इति प्रयोजनवत्तरं पदद्वयम्॥

**अत्रे**ति पदसूचितं ब्रह्मजिज्ञासापदसामर्थ्यसिद्धं वृत्तं वर्तिष्यमाणं तयोर्हेतुहेतुमद्भावं च विवृण्वन् उक्तमानन्तर्यमुपपादयति—**अधीतेति**। कर्मज्ञानशब्देन वृत्तमुक्तम्। ब्रह्मजिज्ञासापदेन वर्तिष्यमाणमुक्तम्। अल्पास्थिरफलानन्तास्थिरफलशब्दाभ्यां हेतुहेतुमद्भावो दर्शितः। केवलशब्देन ब्रह्मज्ञानपूर्वककर्मव्यावृत्तिः। कर्मज्ञानस्यैव पूर्ववृत्तत्वं कथम्? अनन्तास्थिरफलापातप्रतीतिश्च कथमिति शङ्कायामधीतेत्यादिपदेन तदुपपादनं सशिरस्कवेदशब्देन कृत्स्नाध्ययनस्य विवक्षितत्वं व्याख्यानपौर्वापर्यहेतुभूतव्याख्येयपौर्वापर्यनियमो भागद्वयस्यैकप्रबन्धत्वं च सूच्यते। साङ्गशब्देनानन्तास्थिरफलापातप्रतीतिजनकत्वे हेतुर्दर्शितः। —**कृष्णपक्षे तथाऽङ्गानि**

'**उपनीयतु यश्शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥**

इत्यादि वचनान्यधीतसाङ्गसशिरस्कवेदस्येत्यत्राभिप्रेतानि। एवमधीतेत्यादिषष्ठ्यन्तविशेषणद्वयेन ब्रह्मजिज्ञासापदसामर्थ्या-

### गूढार्थसंग्रहः

प्रकृतिभूतैतच्छब्दस्य **अथातो धर्मजिज्ञासेति** सूत्रघटकधर्मविचार एवार्थः। प्रत्ययार्थो हेतुभावः। इममर्थं व्यञ्जयन् सूत्रवाक्यार्थमाह—**साङ्गसशिरस्कवेदस्येत्यादिना**॥

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति महाभाष्योदाहृतागमवाक्यमत्रानुसन्धेयम्। अस्मिंश्च वाक्ये साङ्गाध्ययनं स्फुटम्। 'सशिरस्केत्यनेन' उपनिषद्भागस्य 'सर्वस्य गात्रस्य शिरःप्रधानम्' इत्युक्तदिशा प्राधान्यं

### श्रीभाष्यम्

**अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनन्तस्थिरफलब्रह्म-जिज्ञासा ह्यनन्तरभाविनी ।**

### श्रुतप्रकाशिका

नुगृहीताथातश्शब्दोपस्थापितोऽधिकारविशेषः प्रदर्शितो भवति । समधिगतकर्मा सांसारिकफलनिर्विण्णोऽनन्तस्थिरफलाकाङ्क्षी हि शास्त्रमधिकरोति । **अनन्तस्थिरफलब्रह्मजिज्ञासेति** । अनन्तास्थिरफलरूपस्य ब्रह्मणो जिज्ञासेत्यर्थः । अनन्त-

### गूढार्थसङ्ग्रहः

दर्शितम् । एतेनाप्रधानप्रधानवेदवाक्यविचाररूपत्वं जैमिनीयशारीरकयोर्बोधितम् । तेन जैमिनेः व्यासशिष्यत्वस्य महाभारतादौ व्यक्ततया उपकोसलविद्योक्तदिशा जैमिनिना पूर्वभागार्थमीमांसा व्यासेन ब्रह्ममीमांसा च कृतेति सूच्यते । एतेन गुरुशिष्ययोः अभिप्रायतो न विरोधः, शिष्येण केषांचिदर्थानां अप्रकाशनमात्रेण विरोधोद्भावनमनुचितं, गुरुशिष्ययोरुभयोरभिसन्धिपर्यालोचनायां पूर्वोत्तरमीमांसयोरैकप्रबन्ध्यरूपैकशास्त्र्यमपि युक्तमिति व्यञ्जितम् ॥

**अधिगताल्पास्थिरफलकेवलकर्मज्ञानतयेति** । केवलकर्मणामल्पास्थिरफलत्वमुत्तरत्र व्यक्तीभविष्यति । केवलेत्युक्तिः 'तमेतं—अनाशकेन' इति श्रुतौ अनाशकेनेत्यनेन स्वर्गादिफलाभिसन्धिपूर्वककर्मव्यावर्तनेन फलसङ्गकर्तृत्वादित्यागपूर्वकमनुष्ठितानां कर्मणां अङ्गिभूतोपासनद्वारा नित्यफलसाधनत्वं सम्भवतीत्यभिप्रायेण । अल्पशब्देन सातिशयत्वबोधकेन केवलकर्मणां तरतमभावापन्नफलसाधनत्वमिति बोधितम् ॥

**सञ्जातमोक्षाभिलाषस्य** इत्यत्र समित्यनेन इदं सूच्यते । कर्मविचारकाल एव मोक्षाभिलाषो वर्तते । स एव प्रतिबन्धकविगमेन इदानीं दृढस्सम्पन्न इति साङ्गाध्ययनानन्तरं कर्मविचारप्रवृत्तिकाले 'अपाम सोममृता अभूम' इत्यादिवाक्यैः कर्मणां नित्यफलसाधनत्वम् । 'ब्रह्मविदाप्नोतिपरम्' 'ब्रह्मलोकमभिसंपद्यते नच पुनरावर्तते' इत्यादिभिर्ब्रह्मज्ञानस्य 'संसारमोक्षस्थितिबन्धहेतुः' इत्यादिभिः ब्रह्मणश्च नित्यफलसाधनत्वम् । 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिभिः कर्मणां ब्रह्मज्ञानाङ्गत्वं च प्रतिपन्नम् । तदात्वे कर्मभिरेव नित्यफलप्राप्तौ ब्रह्मविचारारंभ एव मास्तु, ब्रह्मज्ञानेन नित्यफलसम्पादनेऽपि अङ्गभूतकर्मानुष्ठानमावश्यमिति तदर्थं कर्मस्वरूपादिज्ञानमावश्यकमिति कर्मविचारे प्रवर्तते पुमान् । एतेन कर्मविचारारम्भकाले मोक्षाभिलाषः उपपादितः । कर्मविचारानन्तरं कर्मणामल्पास्थिरफलत्वज्ञानेसति तत्त्वटीकोक्तदिशा प्रतिबन्धकविगमेन मोक्षाभिलाषः सुस्थः । सुकरदुष्करयोरुभयोरेकफलसाधनताज्ञानदशायां दुष्करोपाये प्रवृत्तिंप्रति सुकरोपायज्ञानस्य प्रतिबन्धकत्वमनुभवसिद्धम् । उपासनस्येन्द्रियजयसाध्यत्वेन दुष्करतया कर्मणां सुकरतया प्रथमतः सुकरोपाये प्रवृत्तिः कर्मविचारानन्तरं नित्यफलसाधनत्वाभावनिश्चयेसति प्रतिबन्धकविगमेन मोक्षाभिलाषस्स्थिरः ॥

**अनन्तास्थिरफलब्रह्मजिज्ञासेति** । अनन्तास्थिरफलरूपस्य ब्रह्मणो जिज्ञासेत्यर्थः । सूत्रे **ब्रह्मजिज्ञासा** इत्यत्र सनर्थेच्छाकर्मत्वं ज्ञाने तत्प्रकृत्यर्थे ब्रह्मणि च विवक्षितम् । 'धातोःकर्मणस्समानकर्तृकादिच्छायां वा' (पा.सू. ३.१.७) इति सूत्रमहाभाष्ये 'अथेह ग्रामं गन्तुमिच्छतीति—कस्य किं कर्म' इत्युपक्रम्य 'एवंतर्हि गमेर्ग्रामः कर्मेषेरुभे कर्मणी' इति सिद्धान्तकरणेन ब्रह्मजिज्ञासेत्यत्र सनर्थेच्छाकर्मत्वस्य ब्रह्मणि तज्ज्ञाने च प्रतीतेरावश्यकत्वात् । तत्र ब्रह्मणः निरतिशयानन्दरूपत्वेनेच्छाविषयत्वेन ज्ञानानुकूल्यस्य विषयानुकूल्यनिबन्धनतया ज्ञानस्येच्छाविषयत्वमित्यभिप्रेत्य अनन्तास्थिर

## श्रीभाष्यम्

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा।**

## श्रुतप्रकाशिका

स्थिरफलत्वस्य जिज्ञासाविशेषणत्वे जिज्ञासायास्तथात्व*मागमोत्थविवेकादिजन्यज्ञानद्वारेणेति द्रष्टव्यम्। अनन्तरभाविनीति पदेनाथातश्शब्दफलितं हेतोश्शास्त्रान्तरनैरपेक्ष्यं विवक्षितम्। कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे कर्मणामल्पास्थिर फलत्वनिर्णयसहितानन्तास्थिरफलापातप्रतीतिरित्ययं विशिष्टो हेतुः। अतश्शब्देन वृत्तस्य * कर्मविचारस्य हेतुतयोक्तत्वात् * कर्मविचारस्य साङ्गाध्ययनजन्यानन्तस्थिरफलापातप्रतीतिपूर्वकत्वात् *आवृत्तिविधानादिभिः कर्मणामल्पास्थिरफलत्वाव-गमहेतुत्वाच्च, अयं विशिष्टो हेतुरधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्येत्यन्तेनोक्तः। अत्राधिगतेति पदेन * कर्मणः फलद्वारा हानाय ज्ञातव्यत्वं कण्ठोक्तम्। * स्वरूपेणोपादानाय ज्ञातव्यत्वमपि कर्मविचारपूर्ववृत्तत्वे हेतुः। अपेक्षितकर्मस्वरूपज्ञानं, केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमितिहि वक्ष्यते। तत्र स्वरूपेणोपादेयता प्रतीतिः अनन्तास्थिरफलापातप्रतीत्यन्तर्भूता। उपायतदितिकर्तव्यताविशेषैस्सहैव ह्यनन्तास्थिरफलापातप्रतीतिरिति विशिष्ट-हेत्वन्तर्भाव * उपरितनग्रन्थाविरोधश्च ॥

**ननु** कर्मविचारो ब्रह्मविचारस्य निरपेक्षहेतुश्चेत् कृतकर्मविचारैस्सर्वैरपि ब्रह्म विचार्येतेति *स्वर्गार्थकर्मानुष्ठानाभाव प्रसङ्गः। नैवम्। अश्रुतमीमांसत्वेऽप्युपाध्यायादिवचनाद्येऽनुतिष्ठन्ति तेषां स्वर्गार्थानुष्ठानाविरोधात् *श्रुत्वाऽपि ये स्वर्गा-र्थिनः तेषामदृष्टवैगुण्यादसमीचीनव्याख्यानश्रवणमूलस्यामुमुक्षुत्वस्य सम्भवाच्च। साङ्गाध्ययनं कर्मविचारपूर्ववृत्तं चेत् अधीतसाङ्गवेदैः सर्वैरपि कर्म विचार्येत ; नच तथा क्रियते। वेदेऽधीतेऽप्यश्रुतकर्ममीमांसाहि बहवो दृश्यन्ते तेषां कर्म-विचारानाधिगतिरदृष्टदेशकालादिवैगुण्यात् ; नतु साङ्गाध्ययनस्य पूर्ववृत्तत्वाभावादितिचेत्, तदिहापि तुल्यम्। तथा साधनचतुष्टयादिलाभेऽप्यनधिगतब्रह्मविचारानेकपुरुषदर्शनात् साधनचतुष्टयादेर्ब्रह्मविचारंप्रति नियमेन हेतुत्वं कथमिति परिचोदिते तत्पूर्ववृत्तत्ववादिभिरप्यदृष्टादिवैगुण्याददोष इति परिहर्तव्यम्। तदिहापि तुल्यम्। दुष्परिहरदूषणान्तरसद्भाव-स्तेषां वैषम्यम्। तस्मात् घटनिष्पत्तेः कुलालादिवत् ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियतः। दृष्टादृष्टप्रतिबन्धक-विरहितस्य पुंसः समीचीनःकर्मविचारो * ब्रह्मविचारसामग्रीति न कश्चिद्दोषः। एवमथातश्शब्दार्थो निरूपितः ॥

**अथ** ब्रह्मजिज्ञासापदार्थं विवक्षुः तदेकपद्यस्य समासनिबन्धनत्वात् प्रथमं समासार्थं निरूपयति— **ब्रह्मणइत्या-दिना।** *कर्मत्वकरणत्वादिसंबन्धविशेषेष्वितरविभक्तयः **'कर्मणि द्वितीया'** इत्यादिभिस्सूत्रैर्विहिताः। **'षष्ठी शेषे'** इति सूत्रेण सम्बन्धसामान्ये षष्ठी विहिता। अत्र तस्यास्सामान्यविषयत्वमाशङ्क्य कर्मविषयत्वं निश्चीयते। तत्र सामान्येन समासस्य अनेकविभक्तिसाधारणत्वाद्विभक्त्यन्तरशङ्काव्यावृत्त्यर्थमिह तेषामनुपपत्तिमभिप्रयन् पदं विगृह्णाति— **ब्रह्मणो जिज्ञासेति।** चतुर्थीपरिग्रहे प्रयोजनत्वसिद्धावपि प्रकृतिविकारभावाभावे चतुर्थीसमासायोगात्तदपरिग्रहः। **'सप्तमी'**

## गूढार्थसंग्रहः

फलत्वं ब्रह्मण्यभिहितम्। एतेन ब्रह्मफलको ब्रह्मविषयको विचारः ब्रह्मजिज्ञासापदार्थस्सम्पन्नः, साङ्गाध्ययनादेव अनन्त-स्थिरफलत्वं ब्रह्मणि ज्ञातम्। कर्मविचारारम्भदशायां एतज्ज्ञानं कर्मणोऽपि अनन्तस्थिरफलसाधनत्वज्ञानेन प्रतिबद्धं कर्म-विचारस्य प्रतिबन्धकापनोदनद्वारा ब्रह्मविचारंप्रति हेतुत्वम् इति ब्रह्मविचारेऽतश्शब्दोक्तकर्मविचारहेतुकत्वमुपपन्नम् ॥ **ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति।** ब्रह्मजिज्ञासेत्यत्र अर्थद्वयप्रतिपत्त्यर्थं ब्रह्मणो जिज्ञासेति विग्रहप्रदर्शनम्। ब्रह्मण इति

## श्रीभाष्यम्

**ब्रह्मण इति कर्मणि षष्ठी 'कर्तृकर्मणोःकृति' (अष्टा.२.३.६५) इति विशेषविधानात्। यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञासायाःकर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः। तथाऽप्याक्षेपतः**

## श्रुतप्रकाशिका

इति योगविभागाद्ब्रह्मणि जिज्ञासेति समासेऽपि ब्रह्मणो विषयत्वमात्रं स्यात्, नतु प्रयोजनत्वमिति सम्यक्परिग्रहः। शङ्कुलया खण्ड इतिवत् तृतीयासमासे विषयत्वप्रयोजनत्वे न सिध्यत इत्यभिप्रायः। ब्रह्मण इति शब्दरूपस्य षष्ठीपञ्चमीसाधारण्यात् षष्ठ्याश्चानेकार्थत्वात्तन्निर्णयार्थमाह—**ब्रह्मणइतीति**। कुतइत्यत्राह—**कर्तृकर्मणोरिति**। षष्ठ्याः कर्तृकर्मसाधारण्येऽपि जिज्ञासाकर्तृत्वं तापत्रयातुरस्यैव। ब्रह्मणस्तु कर्मत्वमित्यभिप्रायेण ब्रह्मण इति कर्मणि षष्ठीत्युक्तम्। कर्मणि षष्ठीस्वीकारे ब्रह्मणो विषयत्वप्रयोजनत्वे सिध्येताम्॥

**ननु** तर्हि कथं यद्यपीत्यादेस्सम्बन्धसामान्यपरिग्रहशङ्काविषयस्य भाष्यस्योत्थानं युज्यते ? उच्यते संबन्धसामान्यस्वीकारेऽपि जिज्ञासापदसामर्थ्याद्ब्रह्मणः कर्मत्वसिद्धेः। परम्परया संबन्धिनामुपायोपासकप्रतिबन्धादीनामपि जिज्ञास्यत्वसिद्धेः, प्रतिपदविहितषष्ठ्यास्समासनिषेधाच्च। तत्र सामर्थ्यात्षष्ठ्याःकर्मार्थत्वसिद्धिं, ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिं, च शङ्कते—**यद्यपीति**। संबन्धसामान्यपरिग्रह इत्यत्र * परिणा ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिस्सूच्यते। परितो ग्रहणेनहि परितःस्थितानामपि ग्राह्यत्वं लभ्यते अत एवह्युत्तरत्र गृह्यत इत्युक्तं, नतु परिगृह्यत इति। तदुभयं परिहरति—**तथाऽपीति**। अत्रायमर्थः प्रधानस्य ब्रह्मणोऽप्रधानानामन्येषां च कर्मत्वस्याक्षेपसिद्धत्वादपि प्रधानकर्मत्वस्याभिधानिकत्वमितरेषां * प्रधानसंबन्धादाकाङ्क्षावशाच्च कर्मत्वस्य सामर्थ्यसिद्धत्वं च स्वीकर्तुं युक्तमिति अतःप्रतिपदविहितषष्ठीग्राह्या—

## गूढार्थसंग्रहः

षष्ठीपञ्चमी साधारणतया अर्थद्वयप्रतिपत्तिर्न सम्भवतीत्यभिप्रेत्याह—**ब्रह्मणइति कर्मणि षष्ठी** इति। एतेन 'अथातो धर्मजिज्ञासा' इत्यत्र धर्माय जिज्ञासेति विग्रहः शबरसंमत इति प्रभाकरोक्तिरनुपपन्ना। 'साहि तस्य ज्ञातुमिच्छा' इति शाबरमेव विग्रहप्रदर्शनपरम्। 'धर्माय जिज्ञासा' इति शाबरंतु तादर्थ्यरूपसम्बन्धविशेषप्रदर्शनार्थमिति भट्टपादोक्तिरेव युक्ता इति बोधितम्। सकर्मकधातुसमभिव्याहारदशायां कर्माकांक्षायाः नियतत्वेन कर्मणि षष्ठ्या एव न्याय्यत्वमित्याशयः॥

द्वितीये तृतीयचतुर्थयोः कार्यवर्गनिरूपणेन तृतीयचतुर्थाध्याययोः सपरिकरोपासनतत्फलनिरूपणेन च कर्मणि षष्ठीपरिग्रहे उक्तार्थविचारस्य ब्रह्मविचारानन्तःपातितया अप्रतिज्ञातार्थनिरूपणं स्यात्, अतः ब्रह्मणो जिज्ञासेति विग्रहे शेषषष्ठीपरिग्रह एव युक्तः। एवमङ्गीकारे उक्तार्थानां ब्रह्मसंबन्धितया नाप्रतिज्ञातार्थनिरूपणमिति शङ्कते—**यद्यपीति**। एवमङ्गीकारे ब्रह्माकर्मकविचारोऽपि अन्यसम्बन्धेन ब्रह्मसंबन्धितया अत्र परिग्राह्यस्स्यात् इति शङ्कामपनुदति—**जिज्ञासायाःकर्मापेक्षत्वेनेति**। सकर्मकधातुस्वाभाव्यात् विचारे ब्रह्मकर्तृकत्वप्रतीतिः नैव प्रत्याख्यातुं शक्यते॥

पूर्वपक्षे विचारे ब्रह्मकर्मकत्वमाक्षेपतएव लभ्यते। शेषषष्ठ्याः तादूप्येण कर्मबोधकत्वाभावात्, कर्मणि षष्ठ्याएव तादूप्येण कर्मबोधकत्वात् ब्रह्मशब्देन सर्वावधिकोत्कर्षरूपबृहत्त्वेन उपासनाद्वारा स्वप्राप्तिसाधनत्वरूपबृंहणत्वेन च षष्ठीप्रकृत्यर्थस्य प्रतिपन्नतया उत्तरत्र निरूपयिष्यमाणानां अप्रधानीभूतार्थानां ब्रह्मपदार्थान्तःपातितया अप्रतिज्ञातार्थनिरूपणरूपदोषस्याप्यनवकाशेन ब्रह्मशब्दार्थपर्यालोचनायां ब्रह्मणः राजत्वप्रतिपत्तिमुखेन प्राधान्यबुबोधयिषया च कर्मणि षष्ठीपरिग्रह एव युक्तइत्यभिप्रेत्याह—**तथापीति**॥

### श्रीभाष्यम्

**प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात्कर्मणि षष्ठी गृह्यते। नच 'प्रतिपदविधाना च षष्ठी न समस्यते' (अष्टा.२.२.१०.वा) इति कर्मणि षष्ठ्याः समासनिषेधश्शङ्कनीयः।**

### श्रुतप्रकाशिका

'**विलम्बितधीहेतोश्शीघ्रधीहेतुर्बलीयान्**' इति न्यायात्। षष्ठ्यास्सम्बन्धसामान्यविवक्षायांहि कर्मत्वधीर्विलम्बिता स्यात्। कृद्योगषष्ठीविवक्षायांतु शीघ्रभाविनी ॥

**ननु** कर्तृकर्मणोरुभयोरप्यर्थयोस्सूत्रप्रतिपन्नत्वाद्विलंबिता कर्मधीरितिचेन्न—कर्तुर्जिज्ञासोराधिगतकर्मणः प्रतिपन्नत्वात्कर्मार्थत्वमेवहि प्रथमतरंधियमधिरोहेत्। समासनिषेधमाशङ्क्य परिहरति। **नचेति**। चश्शङ्कासमुच्चये प्रतिप्रसवोऽपवादापवादः। सर्पिषो ज्ञानमित्यादिप्रयोगेषु '**ज्ञोविदर्थस्य करणे**' इत्यादिसूत्रविहितायां षष्ठ्यां समासनिषेधस्य सावकाशत्वम्। सर्पिषा प्रवृत्तिरितिहि तस्य वाक्यस्यार्थः। यद्यपि ज्ञानपदं कृदन्तम्, तथाऽपि सर्पिष इति षष्ठी न कृद्योगविहिता

### गूढार्थसंग्रहः

शेषषष्ठीपरिग्रहशङ्कासमाधानावसरे 'ब्रह्महि ज्ञानेनाप्तुमिष्टतमत्वात्प्रधानम्। तस्मिन्प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येव' इति न पृथक्सूत्रयितव्यानि। यथा 'राजासौ गच्छति' इत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तद्वत् श्रुत्यनुगमाच्च। 'यतो वा इमानि भूतानि जायन्ते' इत्याद्याश्श्रुतयः 'तद्विजिज्ञासस्व तद्ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति' इति शां भाष्योक्ताशयादपि उत्तरत्र निरूपयिष्यमाणानामर्थानां ब्रह्मविचारान्तःपातित्वतात्पर्यमेव व्यासस्य युक्तं ज्यायः। ब्रह्म च वक्ष्यमाण लक्षणं **जन्माद्यस्य यतइति** इति (शं) पूर्वभाष्योक्त्या ब्रह्मशब्दार्थबृहत्त्वं सर्वाविधिकोत्कर्षरूपं जगत्कारणत्वेन द्वितीयसूत्रे प्रतिपिपादयिषितमिति निकृष्टकार्यवर्गस्य ब्रह्मशब्दार्थान्तर्भावः सूत्रकृतो विवक्षित इति सिद्धम्। 'स्वरूपप्रमाणयुक्तिसाधनप्रयोजनानि अर्थादेव जिज्ञास्यत्वान्न प्रथक्सूत्रयितव्यानि' इति पञ्चपादिकोक्तसाधनप्रयोजनयोः ब्रह्मशब्दप्रवृत्तिनिमित्तबृंहणत्वशरीरघटकतया ब्रह्मशब्दार्थान्तर्भावश्च स्फुटः। राजासौ गच्छतीति दृष्टान्तः राजकुमारनयानुकूलः। 'यतो वा' इत्यादिश्रुतिरपि उक्तन्यायनुगुणा। कार्यवर्गनिरूपणस्य श्रुतितात्पर्यविषयतामपि बोधयति। एवं 'यत्प्रयन्त्यभिसंविशन्ति' इत्यत्र प्राप्तेरपि विवक्षितत्वेन प्राप्तिनिरूपणस्यापि तादृशत्वमावेदयति ॥

**प्रतिपदविधानेत्यादि**। 'सर्वा प्रतिपदविधाना शेषलक्षणां वर्जयित्वा 'कर्तृकर्मणोःकृति' इति च कृद्योगा' इति महाभाष्ये उक्तम्। अत्र 'प्रतिपदेति। 'ज्ञोऽविदर्थस्य' (पा.सू.२.३.५९) इत्यादि 'कृत्वोऽर्थे' (पा.२.३.६४) इत्येतत्सूत्रविहिता प्रतिपदविधाना। यत्तु तेषु शेषपदसंबन्धेन शेषे एव तैष्षष्ठीविधानेन तत्र च 'षष्ठीशेषे' (पा.२.३ ५०) इत्यनेनैव सिद्धौ तत्तत्सामर्थ्यात्समासाभावः कल्प्यते। तेन प्रतिपदविधानेति नापूर्वमिति ; तन्न। तत्तद्धातुयोगे उपात्तकारकातिरिक्तकारकाणां शेषत्वविवक्षाऽभावज्ञापनेनाऽपि चारितार्थ्यसम्भवात् ; किंच 'कृत्वोऽर्थप्रयोगे' 'ज्ञोविदर्थस्य' 'दिवस्तदर्थस्य' (पा.सू.२.३.५१) इत्यादिविषये समासनिषेधानापत्तिः। तत्र शेषग्रहणानिवृत्तेस्सर्वसम्मतत्वात्। 'कृत्वोऽर्थे' इत्यत्र तत्संबन्धे भाष्यानुग्रहाभावात्। एवं 'ज्ञोविदर्थस्य' इति सूत्रेऽपि तत्संबन्धेनात्यन्तभाष्यानुग्रहः। 'अधीगर्थ' (पा.२.३.५२) इत्यादौ मण्डूकानुवृत्तिः। एतच्च 'दिव-' इति सूत्रे विस्तरेणोपपादितम्। 'शतस्य देविता' इत्यादौ तृन्योगे 'कर्तृकर्मणोः' इत्यस्य निषेधेनानेनैव षष्ठ्या समासनिषेधस्य भगवत इष्टत्वात्। ४९

### श्रीभाष्यम्

**‘कृद्योगा च षष्ठी समस्यते’ (५.२.८.वा) इति प्रतिप्रसवसद्भावात् ।**

### श्रुतप्रकाशिका

* सर्पिषो जानीत इति तिङन्तपदान्वयार्हत्वात्, * ज्ञाधातोष्षष्ठीविभक्तेश्च प्रवृत्तितःकरणार्थत्वाच्च नहि तत्सर्वं कृद्योगविहितत्वे सिद्धयति । अतो नात्र प्रतिप्रसवप्राप्तिरिति समासनिषेधस्य सावकाशत्वम् ॥

**ननु** * नेयं षष्ठी व्याख्येया अप्रयुक्तत्वात् । सूत्रे प्रयुक्तएवहि शब्दोऽर्थबोधकः नत्वप्रयुक्तः बोधकशब्द एवहि व्याख्येयः । अप्रयुक्ताऽपि स्मृता विभक्तिर्बोधिकेति सा व्याख्येयेतिचेन्न तत्स्मरणेन विनाऽप्यर्थप्रतिपत्तेः । अर्थप्रतिपत्तिश्च प्रातिपदिकेन लक्षणया, लक्षणा च योग्यतादिना, अतोऽनुशासनेन तद्व्याख्यानमयुक्तम् । उच्यते— अप्रयुक्तविभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समासः । अत्र लक्ष्यार्थोपलक्षणतया विभक्तिरनुप्रविष्टा । * अतो लक्ष्यार्थविशेषनिर्णयाय विग्रहवाक्यस्था षष्ठी व्याख्येया, तर्हि नानुशासनेन सा व्याख्येया । लाक्षणिकार्थोहि योग्यतादिनाऽवसीयते । नहि गङ्गायां घोष इत्यत्रानुशासनवत्कूलं लक्ष्यते । अपितु योग्यतादिनैवेति—नैवं सर्वासु लक्षणासु योग्यतादिनैवार्थनिर्णय इति नियमाभावात् । सतु नियमः प्रातिपदिकेन प्रातिपदिकान्तरार्थलक्षणायां, प्रातिपदिकेन विभक्त्यर्थलक्षणायां त्वेतद्विभक्त्यर्थो लक्ष्यः न विभक्त्यन्तरार्थ इतिहि नियमो भवति । सच शब्दानुशासनाधीन इति तदनुरोधेन तन्निरूपणं युक्तं तत्र संबन्धसामान्यं लक्षयित्वा तेन कर्मत्वस्याक्षेपादपि प्रथमत एव कर्मत्वस्यैव लक्षणा शब्दानुशासनानुमता युक्ता । अतः समस्तपदलक्ष्यार्थविशेषनिर्णयाय अनुशासनानुरोधेन लक्ष्यार्थोपलक्षणभूता विग्रहवाक्यस्था षष्ठी व्याख्येयेति । यद्वा लुप्तविभक्तिकशब्देन विभक्त्यर्थबोधनं मुख्यं स्यात् । संबन्धिनोहि लक्षणा दृष्टा न संबन्धमात्रस्य । विभक्त्यर्थश्च स्वयं संबन्धरूपः, नच संबन्धस्य संबन्धान्तरानपेक्षत्वेन स्वस्मिन् संबन्धकार्यकरत्वाल्लक्षणा सम्भवतीति वाच्यम् ; संबन्धस्य स्वपरनिर्वाहकत्वानभिज्ञानामपि विभक्त्यर्थप्रतीतेः । नहि संबन्धस्सत्तया लक्षणा हेतुः, किंतु ज्ञायमानतयैव, नचेदतिप्रसङ्गात् । एवं लक्षणानुपपत्त्या प्रयोगस्यानन्यथासिद्धत्वात्समस्तशब्देन विभक्त्यर्थबोधनं मुख्यम् । अमुख्यत्वे वा का नः क्षतिः

### गूढार्थसंग्रहः

अतएव भाष्ये नेदं प्रत्याख्यातम् । अतएव प्रतिपदविधाना केति प्रश्ने ‘सर्वा प्रतिपदविधाना शेषलक्षणां वर्जयित्वा, कर्तृकर्मणोः कृतीति च कृद्योगा’ इति भाष्ये उक्तम् । तत्र शेषलक्षणामित्यस्य शेषमात्रलक्षणामित्यर्थः, प्रतिपदविधानेत्यस्य कारकविशेषोपादानेन विहितेत्यर्थः । तेन ‘तुल्यार्थैः’ इत्यादेः न तत्त्वमित्यलम् , इति शब्देन्दुशेखरे तत्पुरुषप्रकरणे नागेशग्रन्थोऽत्रानुसन्धेयः ॥

परैः ‘ब्रह्मशब्दस्यहि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते’ इति ‘बृहतेर्धातोरर्थानुगमात्’ इति च (शं) भाष्ये उक्तम् । ‘ब्रह्मशब्दस्तु स्वार्थप्रक्षेपेण वाच्यं किंचिद्रमयन् सदैवाविद्याऽऽदिसंसारबीजानाकलिततया तस्योत्कृष्टमहत्वमादेदयति’ इति (तत्पूर्वं) ‘बृहतेर्धातोर्वृद्धिकर्मणोऽर्थानुगमात् प्रयोगानुगमेचासति विशिष्टार्थविषयस्य आपेक्षिकमहत्त्वस्यापरिग्रहात् सर्वतो निरवग्रहमहत्त्वं संपन्नं बाक्यार्थान्वयि ब्रह्मपदादनुगम्यते । ततश्च कालकृतावच्छेदनिमित्तस्याल्पत्वस्याभावात् सदा सत्वात् नित्यं किञ्चिद्वस्तु ब्रह्मपदात्प्रतीयते । तथा रूपान्तरसद्भावे तद्रूपविकलत्वात्तदवच्छेदकमल्पत्वमपि स्यात्, तच्च ब्रह्मपदादेवोपास्यते । तस्मादेकरसमद्वैतं वस्तु ब्रह्मपदात्प्रतीयते’ इत्यादि च पञ्चपादिकायामुक्तम् ॥

## श्रीभाष्यम्

**ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषः**

## श्रुतप्रकाशिका

**ननु** विग्रहवाक्येऽपि कथं कर्मत्वमाभिधानिकम्। प्रयुज्यमानाऽपि ह्युपपदविभक्तिर्निरर्थिका। तद्विधानं दाराः कलत्रमितिवत् प्रयोगसाधुत्वाय, अर्थस्त्वर्थसामर्थ्याक्षिप्तः। अतएवहि कारकविभक्तेरुपपदविभक्तिदौर्बल्यम्। समासेत्व-प्रयुक्ताया उपपदविभक्तेः कथन्तरां कर्माभिधायकत्वमिति ? उच्यते आभिधानिकवत् कृदन्तपदप्रयोगेण शीघ्रधीविषयत्व-साम्यादाभिधानिकत्वोक्तिः। पदान्तरश्रवणापेक्षामात्रान्नाक्षेपादिवद्विलम्बाधिक्यम्। सामान्यषष्ठीपक्षे संबन्धसामान्यं प्रति-पद्य जिज्ञासाशब्दार्थगतसकर्मकत्वस्वभावालोचनयाऽर्थविशेषावगमादपि कृदन्तश्रवणमात्रभुवःकर्मत्वधियश्शीघ्रत्वादिति कश्चित्परिहारः '**कर्मणि द्वितीया**' '**कर्तृकर्मणोःकृति**' इतिवत् सप्तम्यन्तनिर्दिष्टयोःकर्तृकर्मणोरभिधेयत्वमनुशासन-स्वारस्यानुगुणमिति भाष्यकाराभिप्रेतः परिहार इति संप्रदायः। * कारकविभक्तेरुपपदविभक्तिवैषम्यं पदान्तरयोगविहित-त्वरूपमस्त्येव। नच पदान्तरयोगावगम्यत्वमाभिधानिकत्वविरोधि तस्य क्वचिन्मुख्यार्थव्यवस्थापकत्वदृष्टेः। यथा आदि-त्यस्य गावःप्रकाशयन्तीत्यादिषु। नहि तत्रादित्यादिपदान्तरयोगेन गोशब्दस्य किरणपरत्वं लाक्षणिकम्। * पदान्तरप-रामर्शसापेक्षत्वेन विलंबितधीहेतुरुपपदविभक्तिः, कारकविभक्तिस्तु तन्निरपेक्षत्वाच्छीघ्रधीहेतुरिति प्राबल्यदौर्बल्यविभाग एव नतु सार्थकत्वनिरर्थकत्वाभ्यां वैषम्यम्। * विभक्त्यश्रवणादमुख्यत्वंतु परिहृतम्॥

एवं समासान्तर्गतविभक्त्यर्थे निरूपिते समस्तयोः पदयोः प्रथमं ब्रह्मशब्दं व्याचष्टे—**ब्रह्मशब्देनचेति**। ब्रह्म-शब्दस्य प्राधानाद्यर्वाचीनार्थान्तरेषु प्रयोगदर्शनादितरव्याख्यातृभिरीश्वरातिरिक्तवस्तुपरत्वेन व्याख्यातत्वाद्देवतान्तरपर-त्वस्य कैश्चिदभ्युपगतत्वाच्च तद्व्यावृत्त्यर्थं ब्रह्मशब्देन पुरुषोत्तमोऽभिधीयत इति प्रतिजानीते। * पुरुषोत्तमशब्दस्य रूढ्या ब्रह्मशब्दस्य देवतान्तरपरत्वादिव्युदासः। अवयवशक्त्या बद्धमुक्तावस्थ*चेतनवैलक्षण्यमर्थः। स्वेतरवैलक्षण्यमात्रं तृणादे-

## गूढार्थसङ्ग्रहः

अत्र विवरणम्—'गुणहीनं दोषभूयिष्ठं च वस्तु अल्पमविद्यमानसमं मन्यन्ते। गुणभूयिष्ठं दोषहीनं च महान्तं कथयन्ति' इत्यादि। 'बृहतेर्धातोरर्थानुगमात् वृद्धिकर्माहि बृहतिः अतिशायने वर्तते। तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं नित्यशुद्धबुद्धत्वादि अस्याभ्यनुजानातीत्यर्थः' इति भामती। अत्र सर्वत्र 'बृहबृंहिवृद्धौ' इति वृद्ध्य-र्थकबृहधातोः उत्कर्ष एव प्रवृत्तिनिमित्तमिति सम्मतम्। गुणनिबन्धन एवोत्कर्ष इति च। वस्तुपरिच्छेदरूपाल्पत्वप्रति-द्वन्द्वी उत्कर्षः निर्विशेष एव पर्यवस्यतीति परेषामाशयः प्रतीयते। परसंमतार्थे निर्गुणश्रुतिः मूलमिति च प्रतिभाति। एत-त्सर्वं मनसि निधाय ब्रह्मशब्दार्थवृद्धिः उत्कर्षरूप एव सच स्वरूपगुणविभूतिनिबन्धनः इत्यभिधास्यन् 'स्वरूपेण गुणै-श्चानन्त्यम्' इति जन्माधिकरणवक्ष्यमाणदिशा वस्तुपरिच्छेदराहित्यमपि गुणवत्त्वेव युक्तम्, निर्गुणश्रुतिश्च पूर्वोत्तरश्रुति-वाक्यपर्यालोचनायां न परेषामनुकूलेत्यभिप्रेत्य सगुण एव ब्रह्मशब्दार्थ इत्याह—**ब्रह्मशब्देनचेति**॥

सगुणस्य (सविशेषस्य) ब्रह्मशब्दवाच्यत्वं निर्गुणस्य (निर्विशेषस्य) लक्ष्यत्वं गुणानामाविद्यकत्वेन गुणानां तदाश्रय-त्वस्य च मिथ्यात्वमिति परे वदन्ति। एतच्च ब्रह्मणि अविद्यासम्बन्धस्य प्रामाणिकत्व एव युज्यते, नत्वन्यथा। नि-र्गुणश्रुत्युत्तरं 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे.६) इति श्रुतौ 'निरद्यम्' इत्यविद्यासंबन्धं व्युदस्यति अविद्याशून्यत्वं च उपाध्यनुक्तेस्स्वाभाविकमेवेत्याशयेन **स्वभावतो निरस्तनिखिलदोषः** इत्युक्तम्॥

## श्रीभाष्यम्

**अनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमः**

## श्रुतप्रकाशिका

रप्यस्तीति तद्व्यावृत्त्यर्थं स्वभावतइत्यादिना विशेषणद्वयेन वैलक्षण्यं विशिनष्टि। इदं च विशेषणद्वयं शब्दशक्तेरर्थसामर्थ्याच्च ब्रह्मशब्दस्य पुरुषोत्तमपरत्व*प्रतिपादनोपयोगितयोक्तम्, नतु प्रवृत्तिनिमित्ततया गुणतोऽपि बृहत्त्वेसति शब्दशक्त्यसङ्कोचसिद्धेः, मुमुक्षोरशेषदोषनिवृत्तिनिरतिशयानन्दप्राप्तिहेतुत्वाच्च वाद्यन्तरोक्तस्याविद्यादिदोषान्वयस्य, निर्गुणत्वस्य च व्यावृत्त्यर्थमुपाध्युपहितब्रह्मस्वरूपस्यैव कर्मवश्यत्व दुःखित्वादिव्यावृत्त्यर्थं, ज्ञानादिशक्तियोग एवास्य स्वाभाविकः सार्वज्ञ्यनिरतिशयानन्दादियोगस्तु कादाचित्क इति मतस्य च व्यावृत्त्यर्थमिदं विशेषणद्वयमुक्तम्। निरस्तकतिपयदोषत्वं, निरस्तनिखिलदोषत्वं च, केषांचिद्बद्धानां मुक्तानां नित्यानामप्यस्तीति तद्व्यावृत्त्यर्थं स्वभावतो निरस्तनिखिलदोष इत्युक्तम्। नित्यसिद्धानामपि भगवन्नित्यसङ्कल्पाधीनंहि नित्यनिर्दोषत्वम्। स्वभावत इत्युत्तरत्राप्यनुषङ्गः तेन गुणानामविद्याकल्पितत्वपक्षव्यावृत्तिः '**ते ये शतम्**' इत्यत्र पूर्वपूर्वगुणेभ्य उत्तरोत्तरगुणानामतिशयस्सावधिक इति तद्व्यावृत्त्यर्थमनवधिकातिशयशब्दः। तत्रहि ब्रह्मगुणातिशयस्य * वाङ्मनसागोचरतयाऽनवधिकत्वमुक्तम्। सत्यसङ्कल्पत्वान्तर्भूता वशित्वादिगुणा

## गूढार्थसंग्रहः

सगुणस्य तात्त्विकत्वे निर्गुणश्रुतिविरोध इति शङ्कावारणाय **अनवधिकातिशयासङ्ख्येयकल्याणेत्युक्तम्।** निर्गुणश्रुतेः पूर्वं 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रूयते। एतच्छ्रुतिमभिप्रेत्यैव पराशरेण 'ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः॥' (वि.पु.६.५.७९) इत्युक्तम्। एवं वदता पराशरेण अस्यां श्रुतौ शक्तिशब्दार्थः न परसंमताविद्या, ज्ञानबलादितौल्येन समुचित्य ब्रह्मसम्बन्धप्रतिपादनात्' (श्वे) उपक्रमे 'देवात्मशक्तिं स्वगुणैर्निरूढाम्' इत्यत्र 'स्वगुणैर्निरूढाम्' इत्यनेन सत्त्वादिगुणत्रयवत् प्रकृतेरभिप्रेतत्वस्य स्फुटतया अत्र तादृशयुक्त्यभावाच्च। निर्गुणश्रुतेः पूर्वं परत्र च 'ज्ञःकालकालो गुणी सर्वविद्यः' इति श्रुतौ 'गुणी' इत्यत्र प्रशंसायामिनिप्रत्ययेन प्रशस्तत्वं हेयत्वाभावरूपम्। एवं च 'निर्गुण' इत्यस्य हेयगुणशून्यइत्यर्थः इति निर्धारितम्। 'स्वभावत' इत्यस्यात्रापि अनुषङ्गेन स्वभावतः **अनवधिकातिशयासङ्ख्येय** इतिपदैः श्रुतौ 'स्वाभाविकी परा विविधा' इति पदत्रयार्थःप्रदर्शितः। 'पराऽस्य शक्तिः' इति श्रुतेः निर्गुणश्रुतेः पूर्वत्वेऽपि 'ज्ञःकालकालो गुणी सर्वविद्यः' इति श्रुतेरुत्तरत्रापि सत्त्वेन तत्रेनिप्रत्ययार्थप्राशस्त्यस्य श्रुत्युक्तपरत्वादिरूपतया अप्रशस्तगुणनिषेध एव तत्र विवक्षितः। एवं च ब्रह्मणि अविद्यासंबन्धनिषेधेन निर्गुणश्रुतिविरोधाभावेन च सगुणस्य न मिथ्यात्वमपितु तात्त्विकत्वमेवेति सिद्धम्॥

जीवाभिन्नं निर्विशेषमेव प्रथमसूत्रे ब्रह्मशब्दतात्पर्यविषयभूतं लक्ष्यं नतु शक्यमिति परेषां सिद्धान्तः तं पर्यालोचयति **पुरुषोत्तमोऽभिधीयते** इत्यनेन। 'तंत्वौपनिषदं पुरुषम्' 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' (बृ) इत्यत्रोपनिषत्तात्पर्यविषयीभूतपुरुष एव तस्य कर्मफलदातृत्ववत् ब्रह्मविद्याफलसामान्यदातृत्वमपि प्रतिपादितम्। ब्रह्मविद्याफलं च मुक्तस्यैवेति ब्रह्मणः मुक्तजीवाद्भेदोऽप्यनेन सिद्ध्यति। इममर्थमभिप्रेत्यैव 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते।' इत्युपक्रम्य 'यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः। अतोऽस्मि लोके वेदे च प्रथितःपुरुषोत्तमः॥' इति गीतायां मुक्तजीवभिन्नएव 'पुरुषोत्तमः' इत्यभिहितम्। एतदर्थबोधनायैव **पुरुषोत्तम** इत्युक्तम्॥

## श्रीभाष्यम्

**अभिधीयते। सर्वत्र बृहत्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्वं च स्वरूपेण गुणैश्च**

## श्रुतप्रकाशिका

इतिहि वक्ष्यते, अतः कस्मिंश्चिद्गुणे तद्विधाभेदरूपतया गुणानां बहूना*मन्तर्भावाभिप्रायो गणशब्दः ॥

**ननु** अनवधिकातिशयशब्दस्य गुणविशेषणत्वे गणशब्द*सामानाधिकरण्याभावाद्बहुव्रीहिर्न स्यात्। गणविशेषणवमप्युक्तम्। गुणस्वरूपस्य ह्यनवधिकातिशयत्वं, नतु गणस्वरूपस्य। नैवम्। गणएव विशेष्य इति बहुव्रीहिसिद्धिः तथाऽप्यर्थवशाद्गणान्तर्भूतैकैकगुणव्यक्तेरनवधिकातिशयत्वं फलितं स्यात्। यथैषा परिषदाभिजनवती श्रुतशीलशालिनीत्यत्र श्रुतादीनां परिषद्विशेषणत्वे प्रतीतेऽपि *तदन्तर्गतानामेव श्रुताद्यन्वयः, नतु समूहस्य ततो निर्गतानां श्रुताद्यभावप्रसङ्गात्

असङ्ख्येयत्वमपि गणविशेषणं युक्तम्। गणासङ्ख्येयत्वे गुणासङ्ख्येयत्वं कैमुत्यसिद्धम्। अनवधिकातिशयशब्देन नित्यसिद्धव्यावृत्तिश्च तद्गुणानां जगद्व्यापारानानुगुणत्वेन *भगवद्गुणापेक्षया सातिशयत्वात्। तेषामीश्वरतद्गुणविभूतिसाक्षात्कारस्यात्यन्तानुकूलस्य निरवधिकातिशयत्वेऽपि तादृशासङ्ख्येयगुणाभावात्तद्व्यावृत्तिः। अनुषक्तेन स्वभावत इति पदेन वा नित्यसिद्धव्यावृत्तिः। तेषां तादृशगुणकत्वंहि भगवन्नित्येच्छाधीनम्। स्वरूपेणानवधिकातिशयत्वाभावाच्च नित्यसिद्धव्यावृत्तिः तेह्यणुस्वरूपाः। अत्र स्वरूपस्याप्यनवधिकातिशयत्वं गर्भितम्। विभुत्वस्यापि गुणान्तर्भावात् बृहत्वं च स्वरूपेण गुणैश्चेत्युपपादकग्रन्थोक्तेः। **अभिधीयते**—मुख्यवृत्त्या बोध्यते। अस्मिन् ग्रन्थे '**येनाक्षरं पुरुषं वेद सत्यम्**' इति श्रुतिश्चैतत्सूत्रार्थानुवादिन्यनुसंहिता भवति तत्रहि '**प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्**' इति पुरुषपदपर्यायतया ब्रह्मशब्दः प्रयुक्तः। एवं *प्रतिज्ञातमर्थं शब्दसामर्थ्यात्प्रथममुपपादयति—**सर्वत्र** इत्यादिना *तत्रार्थान्तरेषु ब्रह्मशब्दप्रयोगस्यान्यथासिद्धिं विवक्षुः तदुपयुक्तं दर्शयति **सर्वत्रेति**। सर्वत्र *ब्रह्मशब्दप्रयोगविषयेषु सर्वेषु *बृहत्वगुणयोगोऽस्तीत्यर्थः पुरुषोत्तमे गौणत्वमन्यत्र मुख्यत्वं किं न स्यादित्यत्राह—**बृहत्त्वंचेति**। बृहत्वगुणमात्रयोगिषु सर्वेषु ब्रह्मशब्दप्रयोगाभावात्स्वरूपतो गुणतश्चानवधिकातिशयबृहत्वं प्रवृत्तिनिमित्तमित्यर्थः ॥

## गूढार्थसङ्ग्रहः

**अभिधीयत** इति। पराशरानिर्धारितदिशा सगुणस्यैव श्रुतितात्पर्यविषतया तात्त्विकत्वेन निर्विशेषस्याप्रामाणिकतया च '**अथातो ब्रह्मजिज्ञासा**' इत्यत्र ब्रह्मपदशक्यार्थ एव सूत्रकृतो विवक्षित इति भावः ॥

ब्रह्मशब्दः न रूढोऽत्र विवक्षित इत्याह—**बृहत्त्वंचेति**। 'बृहजातिजीवकलासन' इत्यादिरूढ्यर्थमाशङ्क्य निरुक्तिलभ्यार्थ एवात्र विवक्षित इति पञ्चपादिकादौ सिद्धान्तितम्। 'बृहत्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयम्' इत्युक्त्या 'बृहबृहिवृद्धौ' इत्यत्र वृद्धिः अतिशयरूपैव विवक्षिता, नतु परिमाणविशेषरूपेत्येतेन सूचितम्। अत्र बृंहणत्वं बृहत्वविशेषएवेत्येक एव पक्षः व्यासार्यैरुक्तः। जन्माद्यधिकरणे बृहत्ववत् बृंहणत्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वकथनेऽपि बृंहणत्वस्य बृहत्वान्तर्भावपक्ष एव द्वितीयः व्यासार्यैरुपन्यस्तः ॥

तत्त्वटीकायांतु—'अपरेतु बृहत्ववत् बृंहणत्वमप्यनवधिकातिशयं ब्रह्मशब्दार्थः। 'बृहति बृंहयति' 'बृहत्वाद्बृंहणत्वाच्च' इति पृथगभिधानस्वारस्यात् समुच्चयोपादानस्वारस्याच्चेत्याचक्षते। वयंतु ब्रूमः उभयत्रापि विरोधाभावादुभयथाऽप्याचक्ष्महे इति। अयमत्र सङ्ग्रहः—बृहत्वं ब्रह्मशब्दार्थो बृंहणत्वंतु तद्विदा। यद्वाऽर्थो ब्रह्मशब्दस्य बृंहणत्वं बृहत्ववत् ॥ अथवा बृहत्वबृंहणत्वसमुच्चयो वा। एतत्सर्वमभिप्रेत्योक्तं जन्माद्यधिकरणभाष्ये उपलक्ष्यंह्यनवधिकातिशयबृहत्

## गूढार्थसङ्ग्रहः

बृंहणं च बृहतेर्धातोस्तदर्थत्वात्' इति । अनयोश्च सर्वातिशायित्वमपरिच्छेदात् यास्कनिरुक्तिसामर्थ्याच्च सिद्ध्यति इत्यत्र इतरपक्षद्वयमप्युक्तम्, 'ब्रह्मपरिवृढं सर्वतः' इति यास्कनिरुक्तं पूर्वमुदाहृतम् ॥

ब्रह्मशब्दस्यहि व्युत्पाद्यमानस्य इत्याद्युदाहृतवाक्यानन्तरं 'सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः सर्वोहि आत्माऽस्तित्वं प्रत्येति न नाहमस्मीति । यदिहि नात्माऽस्तित्वप्रसिद्धिस्स्यात् सर्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म इति, आत्मा स भोक्तुरित्यपरे, इति च । इति परेषां (शं) भाष्यम् । 'सर्वज्ञं सर्वशक्तिसमन्वितं च तत्' इति ब्रह्मशब्दादेवावगम्यते । कथं ? यदि किंचिदविदितं तेन कुतश्चिद्वा कार्यात् व्यावर्तेत शक्तिः । आपेक्षिकस्तदोत्कर्षस्स्यात् । न तद्युक्तमन्यतोसिद्धस्य वस्तुनः पदप्रयोगादेव प्रतिपत्तौ सिद्धे हि वस्तुनि प्रयोगे तस्य यथासिद्धमेव महत्वं निरुच्यते शब्दादेव तदर्थान्वयप्रतीतौ निरङ्कुश एवार्थोऽभ्युपगन्तव्यः । एवं च बृहतेरर्थःपरिपूर्णो भवति, यदि सर्वमस्य साक्षादेव संविद्गोचरे वशे च वर्तेत इति । 'आत्मा स भोक्तुरित्यपरे' इति योऽयमित्युल्लिख्यमानश्चेतनः भोक्ता स ब्रह्मेति कैश्चित्प्रतिपन्नः तस्याहम्प्रत्ययसिद्धो भोक्तृत्वावभासः स मिथ्यैवानिर्वचनीयानाद्यविद्याविलसितः । परमार्थतस्तु य स्सर्वज्ञ ईश्वरः अहंप्रत्ययेऽनन्तर्भूतः प्रमाणान्तरानवसितः सोऽस्यात्मा स्वरूपम् । एवमपि बृहत्यर्थान्वयात् ब्रह्मशब्दाभिधानीयतां लभते, इतरथा तद्रूपविकलस्य न निरङ्कुशं बृहत्वमिति न ब्रह्मशब्दाभिधेयस्स्यात्' इति च पञ्चपादिका ॥

अत्र विवरणम् पक्षान्तरमाह—आत्मा स भोक्तुरित्यपर इति । यथा सत्यज्ञानानन्दं निरवयवं ब्रह्म, प्रत्यगात्माऽपि तथा तत्र विवादगोचरापन्नो जीवः ब्रह्मैवसन्नुपाधिपरिच्छिन्नविभागः ब्रह्मणा समानस्वभावतया निरवयवद्रव्यत्वेसति उपाधिपरामर्शाधीनपरिच्छेदप्रतिभासत्वात् । यद्येन समानस्वभावतया निरवयवद्रव्यत्वेसति उपाधिपरामर्शाधीनपरिच्छिन्नप्रतिभासं तत् तदात्मकत्वेसति उपाधिपरिच्छिन्नभेदं दृष्टम् , यथा घटाकाशमिति । भाष्यं व्याचष्टे—योऽयमिति । ननु संसारिणः कथमसंसारिणैकत्वमिति तत्राह—तस्याहंप्रत्ययासिद्ध इति । नन्वेवमहमिति सामान्यतः प्रतिपन्नस्य शरीरादिविशेषमिथ्यात्वे परमार्थभूतो विशेषो वक्तव्यः अहमित्थंभूत इति तदाह—परमार्थतास्त्विति । अहंब्रह्मैवेति विशेषोपसंहार न शरीरादीत्यत्र किं प्रमाणमिति । तदाह—एवमसौ बृंहत्यर्थान्वयादिति । ननु जीवेभ्यो भेदेऽपि बृंहत्यर्थलाभः देशकालव्यापित्वादिति । तदाह—इतरथा तद्रूपविकलस्येति' इति । एवमद्वैतसिद्धौ अखण्डार्थत्वोपपत्तौ—'तथा सर्वतोऽनवच्छिन्नवस्तुपरानन्तशब्दब्रह्मशब्दौ च' इत्येतद्वाक्यस्य विवरणे लघुचन्द्रिकायां—'सर्वतोनवच्छिन्नेति । सद्वस्त्वभावप्रतियोगित्वरूपवस्तुपरिच्छेदस्याभावो भेदादिसत्यत्वे न सम्भवतीत्यर्थः' इत्युक्तम् ॥

अत्र सर्वत्र वृद्धिरतिशयरूपैवेति स्फुटं एवं 'ब्रह्मपरिवृढं सर्वतः' इति यास्कनिरुक्त्यनुसारेण सर्वेभ्यो महत्वंह्यतिशयरूपं ब्रह्मशब्दप्रवृत्तिनिमित्तमिति सिद्धम् । 'अत्रेदं तत्त्वम्' इत्यादिना जीवेश्वरभेदस्य नाविद्यकत्वं, किंतु तात्त्विकत्वमेवेति जिज्ञासाधिकरण एव स्थापयिष्यते ॥

एवं च जीवावधिकोत्कर्षस्य ब्रह्मपदार्थेऽभ्युपगम एव तत्र निरवधिकबृहत्वसम्भवः । यद्यपि न नाहमस्मीति लोके कोऽपि प्रत्येति, किंतु अहमस्मीत्येव जानाति । नचैतावता ब्रह्मणः प्रतिपत्तिस्संभवति । अहमर्थजीवादपि ब्रह्मणः उत्कृष्टत्वात् जीवब्रह्मणोर्भेदे देशकालव्याप्त्यादेः सिद्धावपि वस्तुपरिच्छेदशून्यत्वं न सम्भवतीति परेषामाशयः प्रतीयते । अत्र-चानन्तत्वपदार्थघटकवस्तुपरिच्छेदो न सम्भवतीत्येव पर्यवसानम् । अनन्तत्वं च 'सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम्' इति जन्माद्यधिकरणे परिष्क्रियते । तत्र च 'नान्तं गुणानां गच्छन्ति तेनानन्तोयमव्ययः' इति विष्णुसहस्रनामभाष्यो(शं)दाहृतविष्णुपुराणवचनानुसारेण गुणानन्त्यं विवक्षितम् । 'अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु' इति

### श्रीभाष्यम्

**यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः । सच सर्वेश्वर एव ।**

### श्रुतप्रकाशिका

ननु 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' 'बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते ।' इति श्रुतिस्मृतिभ्यां बृहत्वे बृंहणत्वे च प्रवृत्तिनिमित्ततयाऽवगते कथमिव बृहत्वमात्रं निमित्तमुच्यते गुणतो बृहत्वे बृंहणत्वस्यान्तर्गतत्वादिति ब्रूमः 'सचानन्त्याय कल्पते' इत्यादिश्रुतिप्रसिद्धसकलसङ्कोचनिवृत्तिपूर्वक निरवधिकज्ञानविकासरूपानन्त्यावहत्वंहि बृंहणत्वम् । तद्धि सकलहेयप्रत्यनीकत्वक्षान्तिकारुण्यादि मोक्षप्रदत्वौपयिकगुणगणवत्त्वम् । अतएवहि स्वभावतो निरस्तनिखिलदोष इत्यादिकं प्रतिज्ञावाक्येऽभिहितम् ॥

ननु स्वरूपतो बृहत्वमेव निमित्तमस्तु किं गौरवेणेतिचेन्न * ब्रह्मगुणादेरपि स्वरूपेण बृहत्वाद्ब्रह्मशब्दवाच्यत्वप्रसङ्गात् । तर्हि गुणतो बृहत्वमेवास्तु निमित्तमितिचेन्न * शब्दशक्तेरसङ्कोचस्य स्वतःप्राप्तत्वात्, स्वरूपेण च बृहत्वसद्भावात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इतिहि श्रुतिः । गुणतो बृहत्वं नाम सद्वारकं बृहत्वं गुणद्वाराहि तत् । स्वरूपेण गुणैश्च निरतिशयबृहत्ववद्वस्तु पुरुषोत्तमादन्यदपि स्यात् अन्यदेव वा स्यादित्यत्राह—सचेति । चश्शङ्कानिवृत्तौ सर्वेश्वरशब्देन

### गूढार्थसंग्रहः

अमरसुधोदाहृतमेदिनीकोशे निरवधावित्यत्र देशकालवस्त्ववधिशून्यत्वं विवक्षितम् । तत्र च वस्त्ववधिशून्यत्वं गुणानन्त्य एव विश्राम्यति । इदमस्मादुत्कृष्टमिमिति अवधिविशेषमन्तरा प्रतीतिः सर्वगुणपूर्णत्वसत्व एव नत्वन्यथा कतिपयगुणवत्वे एवायमस्मादुत्कृष्टः न तस्मादिति व्यवहारः अवधिविशेषमन्तरा उत्कर्षव्यवहारः सर्वावधिकोत्कर्ष एव विश्राम्यति । तच्च विष्णुपुराणवचनं कोशोक्तनिरवधित्ववचनसमानार्थकमेव, नतु अनन्तशब्दस्य उभयत्रार्थभेदो विवक्षितः । एतत्तात्पर्येणैवात्र अनवधिकातिशयमित्युक्तम् । अत्र बृहत्त्वे अनवधिकातिशयत्वमुक्तम् । जन्माद्यधिकरणे च उपलक्ष्यंह्यनवधिकातिशयबृहत् बृंहणं च बृहतेर्धातोस्तदर्थत्वात्' इत्युपक्रम्य जगन्निमित्तोपादानताऽऽक्षिप्तसर्वज्ञत्व सत्यसङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्त्वेन प्रतिपन्नं ब्रह्म इत्याद्युक्तम् । अत्र सर्वत्रापि बृहच्छब्दप्रयोगेण बृहत्वं महत्त्वरूपमिति प्रतीयते । 'विशङ्कटं पृथु बृहत् विशालं पृथुलं महत्' इत्यमरः । एतत्तात्पर्येणैव पञ्चपादिकायां—'सर्वतो निरवग्रहमहत्वसम्पन्नं वस्तु ब्रह्मपदादवगम्यते, ब्रह्मशब्दस्तु तस्योत्कृष्टमत्वमावेदयति इत्यत्र बृहधात्वर्थः महत्वमिति स्फुटमभिहितम् । अत्र वाक्यद्वये एकएवार्थः निरवग्रहत्वमुत्कृष्टत्वमेव । निरवग्रहशब्दार्थ एव भाष्ये अनवधिकशब्देन प्रदर्शितः । जन्माद्यधिकरणे धर्मिण्यनवधिकातिशयत्वकथनेऽपि पञ्चपादिकानुसारेण बृहत्वएवानवधिकातिशयत्वमत्राभिहितम् । महत्वे उत्कर्षस्सर्वतो निरवग्रहत्वरूपः इति पञ्चपादिकावाक्ये प्रतीयते । अत्र सर्वतः इत्यस्यैव विवरणं स्वरूपेण गुणैश्चेत्यादि अनवधिकः अतिशयः यस्य तत् अनवधिकातिशयं अयमस्मादुत्कृष्टः न तस्मात् इति प्रत्ययसिद्धोत्कर्षे अवधिव्यवस्था वर्तते ब्रह्मगतोत्कर्षे न तथा अवधिव्यवस्था तेन ब्रह्मगतोत्कर्षे सर्वावधिकत्वे पर्यवसानम् । स्वरूपेण गुणैश्चेत्यत्र चशब्दः विभूतिपरः । एवं च स्वरूपगुणविभूतिप्रयोज्यसर्वाधिकोत्कर्ष एव बृहधात्वर्थबृहत्वमिति अभिहितं भवति ॥

सच सर्वेश्वर एवेति । अत्र सर्वपदोपादानेन पञ्चपादिकोक्तं जीवब्रह्मभेदे जीवरूपविकलस्य न निरंकुशं स्यात् इति दोषो न सम्भवति । अचिद्ब्रह्मणोर्भेदेऽपि अचिद्रूपविकलस्य न निरंकुशं बृहत्वमिति दोषेण ब्रह्मण्यचिदभेदस्य स्वीकारप्रसङ्गात् । नच ब्रह्मण्यचिदभेदः परेषां सम्मतः । अतः ब्रह्मण्यचिद्भेदवत् जीवभेदेऽपि निरंकुशबृहत्वं सम्भवत्येव ।

### श्रीभाष्यम्

**अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः।**

### श्रुतप्रकाशिका

एवकारेण च '**तमीश्वराणां परमं महेश्वरम्**' '**न तत्समश्चाभ्यधिकश्च दृश्यते**' इति वाक्ययुगलार्थो विवक्षितः। ततःकिमित्यत्राह—**अतइति**। अतः अनवधिकातिशयबृहति ब्रह्मशब्दस्य मुख्यत्वात् सर्वेश्वरस्यैव तादृशबृहत्वगुणयोगित्वाच्चेत्यर्थः कथं तत्रैव मुख्यवृत्तः अन्यत्रापि ब्रह्मशब्दः प्रयुज्यतइत्यत्राह—**तस्मादिति**। तस्माद्ब्रह्मणः सर्वत्र मुख्यःकुतो

### गूढार्थसंग्रहः

अचिदपेक्षयोत्कर्षवत् जीवापेक्षया ब्रह्मण्युत्कर्षस्य निरंकुशबृहत्वोपपादकत्वात्। 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे.१) इत्याद्याः उदाहरिष्यमाणाश्श्रुतयः ब्रह्मण्यचिदीश्वरत्ववत् जीवेश्वरत्वमपि प्रतिपादयन्ति। 'य ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' (श्वे.६) इति श्रुत्या ईशेशितव्यभावस्याविद्यकत्वव्यवच्छेदात्। अतश्च अंशाधिकरणपूर्वपक्षे 'स्वामिभृत्यभावेष्वेव ईशेशितव्यव्यवहारस्य लोके दर्शनात् ताद्विधएव संबन्धो भवितुमर्हती'ति परोक्तएवार्थः श्रुतिसूत्रसिद्धान्तः। 'तमीश्वराणां परमं महेश्वरम्' इत्युपक्रम्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' इतीश्वरादभ्यधिकस्य निर्विशेषस्य निषेधात्। एवं च प्रथमसूत्रघटकस्य ब्रह्मशब्दस्य इत्थमर्थाङ्गीकार एव 'तंत्वौपनिषदं पुरुषम्' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुत्युपपत्तिः। इत्थं च सूत्रस्थब्रह्मशब्दस्य 'अहंब्रह्मास्मि' इति विशेष उपसंहारतात्पर्यवर्णनं निरवकाशम्॥

**अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तइति।** ब्रह्मपदशक्यार्थस्यैव तात्पर्यविषयत्वेन मुख्यत्वम्, नतु लक्ष्यार्थस्य; 'तंत्वौपनिषदम्' इत्यादिश्रुतिविरोधात्। एतेन लक्ष्यार्थस्यैव निर्विशेषस्य तात्पर्यविषयत्वेन मुख्यत्वमिति परोक्तिर्निरवकाशा। पञ्चपादिकायां ब्रह्मशब्दरूढिपूर्वपक्षनिराकरणावसरे यत्र स्वार्थादन्यत्रापि प्रयोगस्तत्र कथमभिदध्यादित्यपेक्षायां तद्गतस्यैवावयवार्थलेशस्यानुगमात्। एवंतर्हि एकार्थनियमाय प्रयोगपरतन्त्रता मृग्यते। तदन्तरेणापि प्रयोगमेकार्थनियमएव कथंचिन्निगमादिव्याप्रियेतेति न कश्चिद्दोषः इति। अत्र निगमादिनिर्वचनेनैवोपपत्तौ सूत्रस्थब्रह्मशब्दस्य रूढिर्न कल्पनीयेति सिद्धान्तितम्। अत्र ब्रह्मशब्दस्य अन्यत्र प्रयोगः अवयवार्थलेशनिबन्धन इति स्फुटम्। एवमङ्गीकारेणैवोपपत्तौ प्रकृत्यादौ ब्रह्मशब्दरूढिर्न कल्पनीयेत्यभिप्रेत्याह—**तस्मादन्यत्रेत्यादिना**। अत्र महत्वमात्रप्रतीतावपि अनवधिकातिशयमहत्वं प्रकरणोपपदसङ्कोचकाभावादिनैव प्रतीयत इति वाच्यम्। तावताऽपि वृत्तिमन्तरा नानवधिकातिशयत्वरूपार्थप्रतीतिः, अतस्तत्प्रतीत्यर्थं रूढिरपि अभ्युपेया 'अनवधिकातिशयबृहत् बृंहणं च' इति जन्माद्यधिकरणभाष्यश्रुतप्रकाशिकायां 'मनिन्प्रत्ययान्तस्य रूढिसहकृतस्य बृहति धातोस्तदर्थत्वादित्यर्थः' इत्युक्तेः; गीतार्थसंग्रहरक्षायां 'निर्विशेषणस्यैव ब्रह्मशब्दस्य काष्ठाप्राप्तबृहत्वबृंहणत्वयोगिनि परमात्मन्येव योगरूढत्वेऽपि तस्मादन्यत्र जीवादौ तद्गुणलेशयोगादौपचारिकप्रयोगरूढेः तद्व्यवच्छेदाय परम् इति विशेषितम्' इत्युक्तेश्च॥

तद्गुणलेशः लोकोत्तरबृहत्वम्। उक्तं च तत्त्वटीकायां—'कथं तत्तद्वाचकत्वाभावे संबन्धगुणयोगयोश्च सर्वत्र सम्भवे क्वचित्प्रकृत्यादिषु नियतप्रयोग इत्याह—तस्मादिति। अयंभावः नह्यत्र संबन्धमात्राल्लक्षणा; नच किंचित्साम्याद्गौणी वृत्तिः किंतु तद्गुणो निरतिशयबृहत्वम्। तल्लेशोऽपि लोकोत्तरबृहत्त्वं तन्निबन्धनोपचारानियमान्नातिप्रसङ्गः। प्रयुञ्जते च यथेष्टं स्तुतिनिन्दाभिप्रायेण मुख्यासन्नेतद्गुणप्रकर्षयोगिनि च तच्छब्दं नामतयेति' इति॥

## श्रीभाष्यम्

**अनेकार्थकल्पनायोगात् भगवच्छब्दवत् ।**

## श्रुतप्रकाशिका

न स्यादित्यत्राह—**अनेकार्थेति** । परब्रह्मणोऽन्यत्र प्रयोगस्यान्यथासिद्धत्वान्न तत्र शक्तिकल्पनम् । अनन्यथासिद्धश्शक्तिं कल्पयतीति न्यायादित्यर्थः अनेकशक्तिकल्पनं गौणत्वं वा न स्यात् बृहत्वगुणयोगिसर्वव्यक्तिष्वेकयैव शक्त्या मुख्यत्वसम्भवादित्यत्राह—**भगवच्छब्दवत्** इति तथा च श्रीमति वैष्णवे पुराणे भगवच्छब्दं प्रकृत्योक्तम्—

**तत्र पूज्यपदार्थोक्तिपरिभाषासमान्वितः । शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥**

इति। अनेन प्रस्तुतचोद्यस्य कःपरिहार उक्तो भवति? उच्यते। बृहतिधातोर्मनिन्प्रत्ययान्तत्वेन निष्पन्नस्य ब्रह्मशब्दस्य प्रधानादिषु दृश्यमानःप्रयोगो नावयवशक्तिनिबन्धनः । तथाहिसति बृहन्महच्छब्दादिवदापेक्षिकबृहत्वयोगिषु सर्ववस्तुषु प्रयोगस्स्यात् नच तथा प्रयुज्यते । त्रसरेणुमपिहि ततोऽणिष्ठतयाऽभिमतद्रव्यान्तरापेक्षया महिमगुणशालीति वदन्ति । नच त्र्यणुकादिषु ब्रह्मशब्दप्रयोगः । एवं सर्वत्र प्रयोगदर्शनात् पङ्कजशब्दव्यवस्थापककुमुदादिव्यावृत्त तामरसानुवृत्त पद्मत्व-

## गूढार्थसंग्रहः

एतेन 'जातिजीवकमलासनादिषु यथोक्तार्थाभावेऽपि रूढिवशाद्ब्रह्मशब्दवृत्तिरुपपद्यते' इति विवरणप्रमेयग्रहोक्तं निरवकाशम् । इममेवार्थं व्यनक्ति—**अनेकार्थकल्पनायोगादिति** । अत्र तत्त्वटीका—'ननु मुख्ये लभ्ये नोपचारः। नचावयवशक्तित्वाद्ब्रह्मशब्दस्यैकत्राप्यन्या शक्तिर्न कल्प्या किमुतानेकत्रेति वाच्यम् ; तादृशस्यापि प्रयोगनियत्यै रूढेःकल्प्यत्वात् । पङ्कजादिषु पद्मत्वादिवच्चैकं नियामकं न दृष्टम् । अतो यावत्प्रयोगं शक्तिर्भेद्येत्यत्राह—**अनेकइति** । क्लृप्तशक्तेः शब्दस्य प्रयोगविमर्शेहि प्रथमं मुख्यानुसारः । शक्तिपरीक्षायांत्वेकविषये शक्त्या प्रयोगान्तरान्यथासिद्धौ न शक्त्यन्तरं कल्प्यं गौरवात् । अन्यथोपचार एव लुप्येत । अस्तिचासाविति गौणमुख्याधिकरणे स्थापितम् । क्वचित्तु अगत्या अनेकशक्तिक्लृप्तिरित्याशयः' इति ॥

**भगवच्छब्दवदिति** । अत्र तत्त्वटीका—'प्रत्यक्षेऽपि विसंवादो येषां कस्स्वयमुत्तरम् । तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत् ॥' इति न्यायात् पुराणोक्तीः निदर्शयति **भगवच्छब्दवदिति**। 'प्रत्यक्षेऽपि विसंवाद' इति श्लोक वार्तिके स्फोटवादोपक्रमस्थश्श्लोकः । 'गौरित्यत्र गकारौकारविसर्जनीयाः इति भगवानुपवर्षः' इति वाक्यमेव वृद्धोक्तिः। शब्दविवर्तवादिमते (भर्तृहरिमते) उपवर्षवाक्यमुदाहरतः शबरस्य प्रत्यक्षादिविरोधः अभिप्रेत इति भट्टपादोक्तरीतिरेव भगवच्छब्दवदित्यत्र विवक्षिता । अत्र भगवच्छब्दवाच्यार्थ एव परंब्रह्म, भगवच्छब्दस्तत्रैव मुख्यवृत्तः । अन्यत्रौपचारिकः परविद्याविषयोऽव्ययमेव, तद्ध्यानमेव मुक्तिसाधनमित्यादयोऽर्थाः विष्णुपुराणे सम्यङ्निरूपिताः षष्ठे। वचनानि बहूनि पुराणषष्ठे उदाहरिष्यन्ते । एवं च वर्णातिरिक्तस्फोटवत् निर्विशेषस्यापि अप्रामाणिकत्वस्योत्तरत्र साधयिष्यमाणतया निर्विशेषं ब्रह्मशब्दलक्ष्यं परं ब्रह्म परविद्याविषयः, तद्विषयकज्ञानमेव प्रमा, अपरब्रह्मविषयकं ध्यानमप्रमा । ज्ञानमेवाविद्यानिवृत्तिरूपमोक्षहेतुः इत्यादयः परसंमतार्थाः पराशरानभिमतत्वेन अनुपादेया इति सिद्धम् ॥

'आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥' (वि.पु.६.५.१) इत्युपक्रम्य तापत्रयं निरूप्य 'इतिसंसारदुःखार्ति तापतापितचेतसाम् । विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ॥ (६ ५७

### श्रीभाष्यम्

**तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः ।**

### श्रुतप्रकाशिका

जातिवद्ब्रह्मशब्दप्रयोगविषयपञ्चप्रव्यक्त्यनुवृत्ताकारदर्शनादनेकशक्तिकल्पने प्राप्तेऽनन्यथासिद्धस्य प्रयोगस्य शक्तिकल्पकत्वाद्ब्रह्मशब्दप्रयोगविषयेष्वन्येषु च बृहत्वगुणलेशयोगेन प्रयोगस्यान्यथासिद्धत्वाच्च, नानेकशक्तिकल्पनं युक्तम् । तस्मात्पुरुषोत्तम एव प्रवृत्तिनिमित्तपौष्कल्यवति मुख्यत्वम् अन्यत्रौपचारिकत्वं च, * औपचारिकस्तु प्रयोगस्सङ्कोचसह इष्टः । न तु सार्वत्रिक इति । तमिमं न्यायमभिप्रेत्य भगवच्छब्दस्य पुरुषोत्तम एव मुख्यत्वमन्यत्रामुख्यत्वं च भगवता पराशरेणोक्तम् । तथाहि ज्ञानादिमात्रं वा निरङ्कुशज्ञानादिकं वा भगवच्छब्दप्रवृत्तिनिमित्तम् ? आद्ये पिपीलिकादिष्वपि भगवच्छब्दः प्रयुज्येत । द्वितीयेतु सर्वत्र निरवधिकज्ञानाद्यभावात्प्रवृत्तिनिमित्तासिद्धेर्नैकशक्त्या सर्वत्र मुख्यत्वम् । अनेकशक्तिकल्पनं चायुक्तम् प्रयोगान्यथासिद्धेरिति भगवत्पराशराभिप्रायः ॥

**ननु—उत्पत्तिं प्रळयंचैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥**

इति ग्रन्थान्तरेष्वौपचारिकभगवच्छब्दप्रयोगयोग्येषु यदलौकिकार्थसाक्षात्कारित्वमस्ति तदेव प्रवृत्तिनिमित्तीकृत्य भगवच्छब्दस्सर्वत्र मुख्यस्स्यात् । नैवम । अलौकिकार्थसाक्षात्करणमात्रस्य प्रयोगाविषयव्यावृत्तत्वाभावात् । नहि समाधिपर्यन्तयोगकाष्ठानिष्ठेषु केशिध्वजखाण्डिक्यप्रह्लादादिषु भगवच्छब्दःप्रयुज्यते । * किंच प्रत्यक्षमूलव्युत्पत्या गवादिशब्दानामिवा*गममूलव्युत्पत्त्या समग्रषाड्गुण्यादिमत्येव तस्य मुख्यत्वावगमात् ।

**ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः ॥**

इति निर्दोषत्वपर्यन्तानां ज्ञानादीनां प्रवृत्तिनिमित्ततया वाच्यत्वमुच्यते । निर्दोषत्वं च निमित्ततया वाच्यत्वेनोच्यते । अन्यथा तदुक्तिवैयर्थ्यात् । नह्यवाच्यं सर्वं निषेद्धव्यं अनुक्त्यैव ह्यवाच्यत्वं सिद्ध्यति, नच ज्ञानशक्त्यादिष्वेकैकस्य प्रवृत्तिनिमित्तत्वं किंतु ज्ञानादिसमुदायस्यैव। अन्यथा अशेषत इति पदवैयर्थ्यात्। ऐश्वर्यस्य वीर्यस्य समग्रस्येत्युक्तत्वात् गवादिष्वतिप्रसङ्गभयाच्च प्रकर्षविशेषवतां ज्ञानादीनां समुदायस्यैव प्रवृत्तिनिमित्तत्वमुक्तमित्यभ्युपेत्यम् । एवं न्यायसिद्धार्थस्यागमसिद्धार्थौ भाष्ये दृष्टान्तीकृतः भगवच्छब्दवदिति । तथा च भगवता पाराशर्येण **'परं जैमिनिर्मुख्यत्वात्'** **'स्याच्चैकस्य ब्रह्मशब्दवत्'** इत्यादिसूत्रेषु ब्रह्मशब्दस्य मुख्यत्वमन्यत्रोक्तम् । अतो यथोक्त एवार्थः । तथा च स्पष्टीकृतं श्रीमति गारुडे पुराणे—**वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥**

इत्यारभ्य— **यस्मिन्प्रयुज्यमानेतु गुणयोगस्सुपुष्कलः । तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥**

इति । एवं शब्दसामर्थ्यमुपपादितम् ॥

**अथ** ब्रह्मशब्दस्यानेकार्थमुख्यवृत्तत्वेऽपि एतत्सूत्रस्थस्य तस्यार्थस्वभावात्पुरुषोत्तमपरत्वमुच्यते—**तापत्रयातुरैरिति**

### गूढार्थसंग्रहः

५.५७) तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः । गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥ निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता । तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ॥' इत्यादिना परविद्याविषयः परंब्रह्म भगवच्छब्दवाच्यमेवेति पराशरेण निर्णयकरणेन अत्र सूत्रेऽपि सएव जिज्ञास्य इत्यभिप्रेत्याह—**तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः इति** । अत्र 'भेषजम्' इत्यनेन तात्त्विकरोगनिवृत्त्यर्थमेव भेषजप्रवृत्तिः । न-

## गूढार्थसङ्ग्रहः

त्वारोपितरोगानिवृत्त्यर्थम् । तद्वत् तात्त्विकतापत्रयनिवृत्त्यर्थमेव यत्नःकार्यः नत्वारोपिततापत्रयनिवृत्त्यर्थमिति बोधितम् ।
एवमभिप्रेत्यैव 'तापत्रयातुरैः' इत्यत्रातुरशब्दोपादानम् ॥

सिद्धान्तसिद्धाञ्जने—'बृहेर्वृद्धिकर्मणो मनिन्प्रत्ययान्तस्येदंरूपं ब्रह्मेति, निर्वक्तारोऽपि भवन्ति, 'बृहत्वाद्बृंहण-
त्माच्च ब्रह्मेति परिपठ्यते' इति ततश्च तदेकोपाधिना जात्यादिष्वेव तद्व्युत्पाद्यते । सूत्रे च मुमुक्षुजिज्ञासाविषयसमर्पणपरं
ब्रह्मपदं प्रसिद्धजातिजीवादिबाधे प्रकरणोपपदादिसङ्कोचहेत्वभावात् देशकालवस्तुगुणदोषसम्बन्धपरिच्छेदरूप सर्वविधाल्प-
त्वविरोधिरूपमनवधिकातिशयबृहत्त्वमपूर्वमर्थं प्रतिपादयतीत्यवगम्यते' इति निरुक्तव्याकरणाभ्यांतु वृद्धिपर्यायबृहत्वोपाधिना
जातिजीवादिसाधारण्येन शक्तिरवधार्यते । तत्र च प्रयोगे च प्रकरणोपपदादिना विशेषलाभ इति युक्तम् । तत्र कारण-
भूतसविशेषविषये प्रयुज्यमानो ब्रह्मशब्दः पुष्कलार्थो भवति, स्वरूपतो गुणतश्च निरतिशयबृत्त्वयोगात् । तत्रापि गुणानां
ब्रह्मणो गुणेभ्यश्च ब्रह्मणो व्यवच्छिद्यमानतया नात्यन्तिकं बृहत्त्वम् । तथाऽपि कारणातीते सर्वविधाल्पत्वविरोधिस्वरूपमात्रे
निर्विशेषे प्रवृत्तिनिमित्तासम्भवेन कारणरूप एव ब्रह्मपदशक्तिःपर्यवस्यति । अल्पत्वविरोधिस्वरूपलक्षणयातु ब्रह्मतत्वमुप-
स्थाप्यते 'सत्यं ज्ञानमनन्तम्' इत्यादिषु' इतिचोक्तिर्निरवकाशा ॥

'बृहतेर्धातोरर्थानुगमात्' इति परभाष्यं ब्रह्मशब्दरूढ्यर्थः नात्र ग्राह्यः अपित्ववयवार्थ इत्येतत्तात्पर्यकमिति पञ्चपा-
दिकाऽऽदौ स्पष्टम् । प्रयोगानुगमो न संभवति जात्यादिकतिपयव्यक्तिष्वनुगमासम्भवात् । आपेक्षिकबृहत्वमादाय अन्यत्रापि
प्रयोगस्यापत्तिवारणासम्भवात् । अप्रयोगेणापत्तिवारणंतु अनुचितम् । प्रथमतःप्रमाणतो निर्णयसम्भवे खलु इत्थंक-
ल्पना 'बृहत्वाद्बृंहणत्वाच्च' इति प्रमाणंतु जात्यादिव्यावृत्तिपूर्वकं परमात्मनि ब्रह्मशब्दाभिधेयत्वबोधकम् । व्युत्पत्तिग्रहश्च
संभवत्येव । यत्किंचिदवयवार्थस्य लोके प्रसिद्ध्या तन्मुखेनावयवार्थपौष्कल्यनिश्चयसम्भवात् । '**जन्माद्यस्य**' इतिसूत्रे
'यतो वा इमानि भूतानि जायन्ते' इति श्रुतौ व्यक्तिविशेषानिर्णयस्य सूत्रकृतैव साधयिष्यमाणत्वात् । अत्र जगत्कार-
णत्वं तात्त्विकं सविशेषस्यैव । तेन सविशेषस्यैव प्रथमसूत्रे ब्रह्मपदतात्पर्यविषयता, नतु लक्ष्यार्थस्य । तद्ग्रहणसाधकस्य
लेशतोऽप्यभावात् । श्रुत्यादीनां सविशेषपरत्वस्यैव परैरप्यवश्यंवाच्यत्वात् अयमर्थः उत्तरत्र यथाऽवसरं निरूपयिष्यते ।
अतः सिद्धान्तसिद्धाञ्जनोक्तिः पञ्चपादिकाऽऽदिग्रन्थविरोधतोऽप्यनुपादेयैव ॥

भगवच्छब्दे योगार्थं 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥'
(वि.पु.६.५.७४) इत्यत्र भगशब्दार्थकथनमुखेनाभिधाय 'तत्र पूज्यपदार्थोक्ति परिभाषासमन्वितः । शब्दोऽयं नोप-
चारेण ह्यन्यत्र ह्युपचारतः ॥' (७७) इत्यत्र परब्रह्मभूतवासुदेवस्य भगवच्छब्दरूढ्यर्थत्वमुक्तम् । 'परिभाषा रूढिः'
इति विष्णुचित्तीये स्फुटम् । शब्दशक्तिप्रकाशिकायाम्—'रूढं सङ्केतवन्नाम सैव संज्ञेति कीर्त्यते । नैमित्तिकी पारिभा-
षिक्यौपाधिक्यपि तद्भिदा ॥' (१७.श्लो) इत्युपक्रम्य 'उभयावृत्तिधर्मेण संज्ञास्या त्पारिभाषिकी ।' (२२) 'यद्वाऽऽधुनि-
कसङ्केतशालिस्यात्पारिभाषिकम्' इति जगदीशेनोक्तम् । अत्र परिभाषारूढिरिति स्फुटम् । शक्तिवादे 'सङ्केतो लक्षणाचार्थे
पदवृत्तिः' इत्युपक्रम्य 'तत्राधुनिकसङ्केतः परिभाषा, तयाचार्थबोधकं पदं पारिभाषिकम् । यथा शास्त्रकारादिसङ्केतित-
नदीवृद्ध्यादिपदम् ।' इति गदाधरेणाप्युक्तम् । एवं परिभाषाशब्दस्य रूढिबोधकत्वस्य दार्शनिकसम्मतत्वेऽपि परिभाषा
इतिहि समयेन अव्यभिचारिप्रयोग उच्यते, 'वैयाकरणपरिभाषेत्यादिदर्शनात्' इति परिभाषाशब्दार्थमभिधाय 'सामा-
न्यैनैकशक्त्युपपत्तौ गौणत्वकल्पनाया अन्याय्यत्वात् । स्मृतेरपि विषयविशेषेण प्रयोगप्राचुर्याप्राचुर्याभ्यां शक्यार्थपौष्क-
ल्यापौष्कल्याभ्यां च निरूढाभिप्रायत्वोपपत्तेः' इति सिद्धान्तसिद्धाञ्जने आशयवर्णनमप्यनुपादेयम् । परिभाषाशब्दस्य
प्रयोगार्थकत्वेन व्यवहाराभावात् । औपचारिकत्वानौपचारिकत्वयोः पराशरेण निर्धारणेन तद्विरुद्धतात्पर्यवर्णनस्यानुचि-

## श्रीभाष्यम्

**अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म ।**

## श्रुतप्रकाशिका

स एवामृतत्वाय इति पदैः '**तमेवंविद्वानमृत इह भवति नान्यःपन्थाः**' इत्यादि श्रुत्यर्थो विवक्षितः । अतएवहि
**पुरुषोत्तमोऽभिधीयते** इत्युक्तम् । श्रुतेरपि पूर्वोक्तहेयप्रत्यनीकत्वकल्याणगुणाकरत्वविशिष्ट एव तापत्रयातुरैरुपास्यः नतु
तेष्वन्यतम इति भावः । नहि कारागारनिगलित एव तन्मोचनार्थिभिरभ्यर्थनीयः । तथा च वैष्णवे पुराणे निर्दोषक-
ल्याणगुणाकरस्यैव मुमुक्षूपास्यत्वमुक्तम् । '**स सर्वभूतप्रकृतिं विकारान्**' '**समस्तकल्याणगुणात्मकोऽसौ**' इत्या-
दिना '**तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्**' इत्यन्तेन ब्रह्मशब्दव्याख्यां निगमयति अतइति । निर्दोषमङ्गलगुणकस्य

## गूढार्थसंग्रहः

तत्वात् । 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' (७८) इत्य-
नेन 'अन्यत्र ह्युपचारतः' इत्युक्तार्थः विशदीकृतः 'एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदे-
वस्य नान्यगः ॥' इत्युक्तार्थः 'ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥'
(७९) इति वचनेन स्थापितः । ज्ञानादिगुणषट्कवान् परवासुदेवः इति पञ्चरात्रे व्यक्तम् । 'यज्वभिर्यज्ञपुरुषो वासुदे-
वश्च सात्वतैः ।' (वि.पु.५.१७.१५) इत्यत्र पराशरवचनेऽप्ययमर्थः व्यक्तः । ज्ञानादिषट्कतात्पर्येण 'अशेषत' इति
पदप्रयोगस्य स्फुटत्वेऽपि अतएव 'ज्ञानशक्तिबलैश्वर्य' इत्यत्र तिरश्चामपि ज्ञानादीनि भगवच्छब्दवाच्यानीत्यभिप्रायेणाशे-
षत इत्युपात्तम् । परमात्मन एव ह्यभिन्नस्य ज्ञानशक्त्यादेरविद्यामयः प्राणिभेदेषु खिल्यभावः । तस्यैव सर्वमयत्वात्,
नतु समुदायाभिप्रायेण इत्युक्तिः (सि.सि.अं) पराशराभिप्राया परिशीलननिबन्धना ॥

अत्र परविद्याविषयं प्रस्तुत्य 'तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः । श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोःपरमं
पदम् ॥' (वि.पु.६.५.६८) तदेव (भगवच्छब्दवाच्यं रूपं परात्मनः) । भगवद्वाच्यं स्वरूपं परमात्मनः । वाचको भग-
वच्छब्दः तस्याद्यस्याक्षयात्मनः ॥' इत्यत्र भगवच्छब्दवाच्यमेव परं ब्रह्म इत्यभिधाय 'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि
शब्द्यते । मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥' इत्यत्र महाविभूतिशब्दवाच्यत्वं परब्रह्मणः प्रतिपाद्य भगवच्छब्द-
घटकवर्णानां भगशब्दस्य च अर्थमभिधाय 'एवमेष महाशब्दः' इत्यत्र भगवच्छब्दस्य परब्रह्मभूतवासुदेववाचकत्व-
मभिधाय 'तत्र पूज्यपदार्थोक्ति' इत्यत्र परब्रह्मणि भगवच्छब्दस्यानौपचारिकत्वं अन्यत्रत्वौपचारिकत्वम् । 'उत्पत्तिं
प्रलयंचैव' इत्यत्र औपचारिकार्थमुक्त्वा 'ज्ञानशक्ति' इत्यतःपूर्वं भगशब्दार्थत्वेनोक्तानां गुणानां भगवच्छब्दवाच्यत्वं प्रति-
पाद्य 'सर्वाणि तत्र भूतानि वसन्ति परमात्मनि । भूतेषु च स सर्वात्मा वासुदेवस्ततस्स्मृतः ॥' (८०) इति वासुदेवश-
ब्दार्थकथनमुखेन भगवच्छब्दवाच्यार्थ उपसंहृतः । अत्र परब्रह्मणः लक्ष्यत्वमिति परसिद्धान्तस्य न कथंचिदप्यवकाशः ।
'शुद्धे महाविभूत्याख्ये' इत्येतत्पूर्वं 'अशब्दगोचरस्यापि तस्यवै ब्रह्मणो द्विज । पूजायां भगवच्छब्दः क्रियतेह्युपचारतः ॥'
(७१) इत्यत्र परशब्दाप्रयोगेण अन्यत्र ह्युपचारतः इति परब्रह्मव्यतिरिक्तजीवे भगवच्छब्दस्यौपचारिकत्वस्य स्फुटमुक्त्या पर
ब्रह्मणो वाच्यत्वस्य बहुधा प्रतिपादनेन च मुक्तजीवविषय एव 'अशब्दगोचरस्यापी' ति श्लोकः इति पराशराशयो
निर्णीयते ॥ एवं पराशरेण भगवच्छब्दवाच्यस्यैव पराविद्याविषयत्वस्य परब्रह्मत्वस्यचाभिधानेन 'अक्षरात्परतःपरः' 'नाम
रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्यादिबहुश्रुतितात्पर्यानुसारेण च सविशेषस्यैव ब्रह्मणः जिज्ञासाकर्मत्वं विवक्षि-
तमिति उपसंहरति—**अतस्सर्वेश्वरएवेत्यादिना** ॥

### श्रीभाष्यम्

**ज्ञातुमिच्छा जिज्ञासा ।**

### श्रुतप्रकाशिका

सर्वेश्वरस्यैव तापत्रयातुरजिज्ञास्यत्वात् । तापत्रयातुरजिज्ञास्यतयोक्तं ब्रह्मातु सर्वेश्वरएवेत्यर्थः । * यद्वा अतः उक्तशब्दसामर्थ्यादर्थसामर्थ्याच्चेत्यर्थः ॥

**ननु** ब्रह्मशब्दो * व्युत्पन्नोऽव्युत्पन्नो वा भगवति मुख्यः । अव्युत्पन्नत्वे बोधकत्वविरहिणस्तस्य न क्वचिन्मुख्यत्वम्, नापि व्युत्पन्नस्समुख्यः । अलौकिकेऽर्थे व्युत्पत्त्यसम्भवात् । कथमप्रतीते व्यवहाराविषये *बुद्धिपूर्विका यादृच्छिकी च व्युत्पत्तिस्सम्भवति । उच्यते–यथा कामिनीचन्दनभवनादिषु प्रयोगेण सुखविषयतया व्युत्पन्नस्य स्वर्गशब्दस्य **यस्मिन्नोष्णं न शीतं** इत्याद्यर्थवादपदसमभिव्याहारेणालौकिकसुखविशेषविषयतया व्युत्पत्तिः, यथा लोके क्वचिदव्युत्पन्नत्वेऽपि * यूपाहवनीयस्फ्यकपालचषालचात्वालादिशब्दानां वाक्यान्तरपदान्तरसमभिव्याहारात् तत्तदर्थविषयतया व्युत्पत्तिः एवं ब्रह्मात्मेश्वरादिशब्दानां लोके केषुचिदर्थेषु प्रयोगात् व्युत्पत्तौ सत्यामसत्यामपि '**यतो वा इमानि भूतानि जायन्ते**' '**सत्यं ज्ञानमनन्तं ब्रह्म**' इत्यादिप्रसिद्धार्थवाक्यान्तरपदान्तरसमभिव्याहारादलौकिकपरमात्मविषयत्वव्युत्पत्तिरुपपद्यते । अतो ब्रह्मशब्दस्य उक्तनीत्या भगवत्येव मुख्यत्वं युक्तम् ॥

**अथ** जिज्ञासाशब्दव्याख्येयत्वस्फोरणाय प्रकृतिप्रत्ययविभागं दर्शयति—**ज्ञातुमिच्छा जिज्ञासा** इति । विषयेच्छायाः कर्म, फलविषयत्वादिच्छायाः ज्ञानेनहि प्रमाणेन अवगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थः निश्शेषसंसारबीजाविद्याद्यनर्थनिबर्हणात् ' इति । 'अत्रावगतिरिति साक्षादनुभव उच्यते ' इति ' ब्रह्मरूपतासाक्षात्करणम् ' इतिच पञ्चपादिका

### गूढार्थसङ्ग्रहः

**ज्ञातुमिच्छा जिज्ञासेति ।** अत्र परेषां (शं) भाष्यम् ' ज्ञातुमिच्छा जिज्ञासा अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म, फलविषयत्वादिच्छायाः ज्ञानेनहि प्रमाणेन अवगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थः निश्शेषसंसारबीजाविद्याद्यनर्थनिबर्हणात् ' इति । 'अत्रावगतिरिति साक्षादनुभव उच्यते ' इति ' ब्रह्मरूपतासाक्षात्करणम् ' इतिच पञ्चपादिका

एवं पूर्वं ' नायं जिज्ञासाशब्दः परित्यक्तावयवार्थः । केवलमीमांसापर्यायः प्रयुज्यमानो दृश्यते । नापि स्मरणमस्ति नचावयवार्थेनार्थत्वे सम्भवति समुदायस्यार्थान्तरकल्पना युक्ता । ननु न वयं कल्पयामः । दर्शितः शिष्टप्रयोगः, न तस्यान्यथासिद्धत्वात् । कथमन्यथासिद्धत्वम् ? अन्तर्नीतविचारार्थत्वाज्जिज्ञासाशब्दस्य । तथाहि विचारपूर्वकसाध्यज्ञानविषयेच्छा जिज्ञासाशब्दात्प्रतीयते नोपदेशमात्रसाध्यज्ञानविषया ; एवं प्रयोगप्रत्ययोः दर्शनात् तेन जिज्ञासाशब्दस्यावयवार्थेनार्थत्वाद्युक्तमुक्तम्—ब्रह्म जिज्ञासायाः अनधिकार्यत्वादिति । ननु एवमपि कुतएतत् अन्तर्नीतं विचारमाश्रित्य शब्दतो गुणत्वेऽप्यर्थलक्षणेन प्राधान्येन ब्रह्मतज्ज्ञानयोरधिकारयोग्यत्वाच्चाधिक्रियमाणत्वमङ्गीकृत्याधिकारार्थत्वं किमिति न गृह्यते । येन शब्दलक्षणेन प्राधान्येनेच्छाया अनधिकार्यत्वादानन्तर्यार्थत्वमेव परिगृह्यत इति, उच्यते–शास्त्रस्यानारम्भप्रसङ्गादधिकारार्थत्वानुपपत्तेः अधिकारार्थत्वेह्यप्रयोजनं शास्त्रं काकदन्तपरीक्षावदनारभ्यं स्यात् । तत्र कस्याधिकार उच्येत ' इति च (पं.पा) । भामत्यामपि—' नच जिज्ञासा मीमांसा, येन योगानुशासनवदधिक्रियेत ; नान्तत्वं निपात्य ' माङ्माने ' इत्यस्माद्वा ' मानपूजायाम् ' इत्यस्माद्वा धातोः ' मान्बध ' इत्यादिनाऽनिच्छार्थेसनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वात् । ज्ञानेच्छावाचकत्वाज्जिज्ञासापदस्याप्रवर्तिकाहि मीमांसायां जिज्ञासा स्यात् । नच प्रवर्त्यप्रवर्तकयोरैक्यम् एकत्वे तद्भावानुपपत्तेः । नच स्वार्थपरत्वस्योपपत्तौ सत्यामन्यार्थपरत्वकल्पना युक्ता । अतिप्रसङ्गात्, तस्मात् सुष्ठूक्तम् ' ब्रह्मजिज्ञासाया अनधिकार्यत्वात् ' इति इत्युक्तम् ॥

### श्रीभाष्यम्

**इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह**

### श्रुतप्रकाशिका

वैलक्षण्याधीनाया इच्छायाः कथं विधेयत्वमित्यत्राह—**इच्छाया इति**। ज्ञानस्य विधानार्हतामाह—**इष्यमाणप्रधानत्वादिति**। सन्वाच्याया इच्छाया धात्वर्थः कर्म * कर्मणश्च क्रिया शेषभूता तत्सिध्यर्थत्वात्तस्याः। यथा यागीयव्रीह्यादेः

### गूढार्थसंग्रहः

अत्र कल्पतरुः—'लक्षितविचारप्रारम्भार्थोऽथशब्दोऽस्तु ; नेत्याह—नच स्वार्थपरस्येति। वाच्याया: जिज्ञासायाः संशयसूचनेन वाक्यार्थान्वयोपपत्तौ न लक्षणा, अधिगतविषयप्रयोजनस्तु स्वत एव विचारे प्रवर्त्स्यतीत्यर्थः' इति। अत्र जिज्ञासाशब्दस्य यौगिकत्वं योगाङ्गीकारएव युक्तः नतु रूढिः, नापि लक्षणेति स्फुटम्। एतेन चन्द्रिकायां लक्षणायाः परसम्मतत्वं व्यासतीर्थोक्तं निरवकाशम् ॥

तत्त्वमार्ताण्डे—'नह्ययं मीमांसाशब्दवत्समुदायरूढ्या विचारपर इति केषांचित्कल्पना युक्ता। तद्वदिह विशेषविद्ध्यभावात् सामान्यविधेश्चेच्छार्थत्वाव्यभिचारात्। 'शिक्षेर्जिज्ञासायाम्' इत्यत्र भाष्यकैयटव्याख्याग्रन्थेषु ज्ञानेच्छापरत्वस्यैवाभिधानाच्च। मीमांसिषत इतिवत् जिज्ञासिषत इति सनन्तरप्रयोगप्रसङ्गाच्च। 'जिज्ञासमाना मुनिहोमधेनुः' इत्यादौ विचारार्थत्वादर्शनाच्च। 'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः' इति त्वदभिमतश्रुतिगतनिर्वचनविरोधाच्च। 'तद्विजिज्ञासस्व' इति तिङन्ते समुदायरूढ्यभावाच्च। 'अथातो धर्मजिज्ञासा' 'अथातःक्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इत्यादिनिर्देशव्याख्यापरबहुतरप्राचीनतान्त्रिकग्रन्थाविरोधाच्च। प्रोक्षणीन्यायेन अवयवशक्त्यैव अनतिप्रसक्त्या निर्वाहे समुदायरूढेरकल्प्यत्वाच्च' इत्यत्र नवीनसम्मतः चन्द्रिकोक्तरूढिपक्षः पर्यालोचितः ॥

जिज्ञासाशब्दस्य विचारे रूढत्वानङ्गीकारे अध्याहृतकर्तव्यपदार्थस्य जिज्ञासाशब्देन शब्दतः प्राधान्येनोपस्थितायां इच्छायामन्वयो बाधितः। ज्ञाधातुना विचारोपस्थितिमभ्युपगम्य विशेषणे कर्तव्यपदार्थान्वयाङ्गीकारेऽपि विचारस्य पुरुषार्थत्वाभावेन तस्य इच्छाविषयत्वं न सम्भवतीति शङ्कायामाह—**इच्छाया इष्यमाणप्रधानत्वादित्यादि**। धातोःकर्मणस्समानकर्तृकादिच्छायां वा' इति सूत्रे 'आर्थं प्राधान्यं प्रकृत्यर्थस्य विवक्षित'मिति तत्त्वटीका। एवं च इच्छायामध्याहृतकर्तव्यपदार्थान्वयबोधे सन् प्रकृत्यर्थे एव अध्याहृतकर्तव्यपदार्थान्वयः 'सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः सतिविशेष्येबाधे' इति न्यायात्। विचारस्येच्छाविषयत्वंतु पुरुषार्थसाधनत्वात्। शेषषष्ठीदूषणावसरे 'ब्रह्महि ज्ञानेनाप्तुमिष्टतमत्वात्प्रधानम्' इति (शं) भाष्योक्तरीत्या इष्यमाणज्ञानप्रधानत्वमिच्छायाः संभवति। ज्ञानं च प्राप्तिसाधनत्वेनेच्छाविषयः इत्यप्यर्थः संभवति। एवं सन्नन्तस्थले इच्छाकर्मत्वं प्रकृत्यर्थे तत्कर्मणि च बोध्यत इति प्राक् (४६.पु) उदाहृतमहाभाष्यपर्यालोचनायां इच्छाविषयब्रह्मप्रधानत्वादिच्छायाः ज्ञानस्यापीच्छाविषयत्वम्। अयमाशयः वेदार्थसङ्ग्रहान्ते ब्रह्मण एव आनन्दरूपत्वादिना सुखत्वात् तत्रैव प्राधान्येनेच्छायाः निर्णयकरणेन विषयानुकूल्यनिबन्धनत्वात् ज्ञानानुकूल्यस्य आनन्दरूपवस्तुविषयकत्वेन अनुभवरूपफलवत्साधनोपासनानुभवयोरिव विचारस्यापीच्छाविषयत्वं सम्भवत्येव। एतत्पक्षे 'धर्माय जिज्ञासेति प्रभाकरसंमतविग्रहस्यात्राविवक्षायामपि कर्मणि षष्ठीपरिग्रहेऽपि तदर्थसिद्धेरुपपादनेन प्रभाकरसम्मतस्य कार्यप्राधान्यस्य प्रतिकोटितया ब्रह्मप्राधान्यस्यात्र बुबोधयिषितत्वेन कर्मणि षष्ठ्याङ्गीकारे उक्तदिशाऽधिकरणपूर्वपक्षसिद्धान्तौ व्यञ्जितौ। ज्ञाधातुना ज्ञानसामान्योपस्थितावपि प्रकरणादिना विशेषपर्यवसानस्य तान्त्रिकसंमतत-

## श्रुतप्रकाशिका

प्रोक्षणादिः । कर्तुः क्रिययाऽऽप्तुमिष्टतमत्वंहि कर्मत्वम् । अतः प्रकृत्यर्थभूतज्ञानकर्मिकेच्छा तात्सिध्यर्था । अतः इच्छाया इष्यमाणप्रधनत्वादिष्यमाणं ज्ञानं विधेयमित्यर्थः । जिज्ञासायाः कर्तव्यत्वे प्रतीयमाने कथं ज्ञानस्य विधेयत्वम् ? उच्यते—यथा—**स्नात्वा भुञ्जीत प्राङ्मुखो भुञ्जीत** इत्यत्र भुजिधातोर्विधिप्रत्ययान्तत्वाद्भोजनस्य कर्तव्यत्वे प्रतीतेऽपि स्नानप्राङ्मुखत्वयोरेव विधेस्तात्पर्यमित्यर्थस्वभावादभ्युपगम्यते तयोरप्राप्तत्वात्, अप्राप्तेहि शास्त्रमर्थवत् । तत्र भोजनंचान्यतः प्राप्तमनूद्यते, एवमिच्छाया विधेयत्वासम्भवात् तद्विषयभूतं विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते । इष्यमाणं ज्ञानमिहाभिप्रेतमितिहि सरिऽभिहितम् । सन्नन्तनिर्देशश्च **निदिध्यासितव्यः विजिज्ञासितव्यः तद्विजिज्ञासस्व** इत्यादिश्रुत्यनुसारेण क्रियते । श्रुतिश्चोपायदशाप्रभृतिभगवज्ज्ञानस्य प्रीतिरूपत्वेनेच्छाविषयत्वात्तथा निर्दिशति । यद्वा ब्रह्मजिज्ञासेति सनन्तनिर्देशो विचारस्य रागप्राप्तत्वज्ञापनार्थः । एवमेव धर्मजिज्ञासेत्यत्रापि । अत्र तर्करूपं ज्ञानं विधेयम् । तर्कानुगृहीतवाक्यजन्यप्रमितिरूपज्ञानंतु फलत्वान्नविधेयम् । * प्रमितिरूपं ज्ञानं विधेयम् ; तर्करूपं ज्ञानमार्थमित्यपि परैरुक्तमन्तर्नीतं विचारमाक्षिपतीति ततोऽपि प्रागुक्तपक्षस्साधीयान् । वेदान्तार्थविचारात्मकन्यायनिबन्धनरूपंतु शास्त्रं ब्रह्ममीमांसेतिहि प्रसिद्धिः । प्रमितिश्च फलं, अतएवहि **ब्रह्मविचारःकर्तव्य** इति भाष्ये वक्ष्यते । सनन्तस्यास्य ज्ञाधातोर्ज्ञानसामान्यवाचिनो विशेषाकाङ्क्षायां समुचितविशेषपर्यवसानंहि न्याय्यम् । ब्रह्मणो जिज्ञासा कर्तव्या, नतु कपिलसुगताद्यभिमतानां प्रधानादितत्त्वानामिति ज्ञातव्यविशेषनिर्णयपरमिदं सूत्रं व्याख्यातं यादवप्रकाशाचार्यैः । तद्व्यावृत्त्यर्थ इहशब्दः इह अस्मिन्नुपक्रमसूत्र इत्यर्थः । ब्रह्मणो जिज्ञास्यत्वमात्रे सिद्धेहि तस्यैव जिज्ञास्यत्वसिद्धिः । नचोभयं सूत्रप्रतिपाद्यं ब्रह्म जिज्ञास्यमेव ; ब्रह्मैव जिज्ञास्यमिति वाक्यभेदप्रसङ्गात् ॥

**ननु** मुमुक्षुभिर्नियमेन ब्रह्मणो जिज्ञास्यत्वं तन्त्रान्तरसिद्धानां प्रधानादीनामजिज्ञास्यत्वेन विना न सिद्ध्यतीति ब्रह्मजिज्ञास्यत्वसमर्थने प्रधानादीनामजिज्ञास्यत्वसमर्थनमर्थादापततीति न वाक्यभेद इतिचेन्न अधीतक्रमेण वेदार्थे निरूप्यमाणे पूर्वभागविचारानन्तरमुत्तरभागविचारस्य * प्रधानादिनिरासनिरपेक्षत्वात्, नह्येकस्य प्रबन्धस्यैकदेशे निरूपिते तदेकदेशान्तरनिरूपणस्य प्रबन्धान्तरप्रमेयनिरासापेक्षता भवति । नहि पूर्वषट्के निरूपिते सत्युत्तरषट्कनिरूपणं कपिलसुगतादिमतव्युदसनेन विना न सम्भवति । यदि वेदान्तार्थश्रद्धाप्रदिम्ने तदितरपक्षनिरसनमपेक्षितमिह क्रियत इतिमतम् तदनुपपन्नम् कृतकरत्वप्रसङ्गात् । एतदुक्तंभवति, इह प्रधानादीनामजिज्ञास्यत्वं किं वेदान्तानामतत्परत्वोपपादनेन समर्थ्यते ? उत कपिलसुगताद्यागमाप्रामाण्यतत्प्रमेयदौःस्थ्यप्रतिपादनेन समर्थ्यते । न प्रथमः ईक्षत्यधिकरणादिभिर्वेदान्तवाक्यानामतत्परत्वस्य वक्ष्यमाणतयाऽत्र वक्तव्यत्वाभावात् । न द्वितीयः—वेदविरुद्धस्मृतीनामप्रामाण्यस्य पूर्वमीमांसायामेव समर्थितत्वात्, साङ्ख्यसौगताद्यभिमतप्रमेयदौःस्थ्यस्य तर्कपादे प्रतिपादयिष्यमाणत्वात् । **'विप्रतिषेधाच्चासमञ्जसम्' 'इतरेषांचानुपलब्धेः' 'एतेन योगःप्रत्युक्तः' 'उदासीनानामपिचैवंसिद्धिः' 'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः'** इत्यादिभिस्सूत्रैस्तदुक्तमोक्षतदुपायनिरासस्यापि करिष्यमाणतयाऽत्र वक्तव्याभावात् । किंच **'एतेन सर्वे व्याख्याता व्याख्याताः'** इत्यत्र **'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्'** इति शास्त्रान्ते च सूत्राभ्यासफलमनुक्तांशज्ञापनम् । अनुक्तांशश्च साङ्ख्ययोगावगम्य इति वदतां मोक्षस्यसाङ्ख्ययोगसमुच्चयसापेक्षत्वं च प्रतिपादयतां सौगतादिवत्साङ्ख्यादिनिरासेन शारीरकस्यैवारम्भणीयत्वप्रतिज्ञानमतीव व्याहतम् । साङ्ख्ययोगयोर्विरुद्धांशाभिप्रायमनादरणीयत्वकथनमितिचेन्न, विरुद्धांशानादरणीयत्वस्य विरोधाधिकरणन्यायसिद्धत्वादेव । अतो यादवप्रकाशकृतं सूत्रतात्पर्यवर्णनमनुपपन्नमिति इह शब्दाभिप्रायः ॥

श्रीभाष्यम्

**विधीयते । मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोः**

श्रुतप्रकाशिका

**विधीयतइति ।** अज्ञातज्ञापनं विधिरिह विवक्षितम् । नत्वप्रवृत्तप्रवर्तनं रागतःप्रवृत्तेर्वक्ष्यमाणत्वात् । रागतःप्रवृत्तस्यापि पूर्वपक्षयुक्त्याऽऽनारम्भणीयताबुद्धौसत्यामारम्भणीयत्वज्ञानं ह्यज्ञातज्ञापनम् अतो विधीयत इत्यस्य स्वयमेव प्रवर्तत इति वक्ष्यमाणग्रन्थेन न विरोधः । इत्थं पदार्था व्याख्याताः ॥

अथ सूत्रस्य वाक्यार्थमाह—**मीमांसेति ।** अत्र **पूर्ववृत्तात्कर्मज्ञानादनन्तरन्तत एव हेतोः** इत्यथातश्शब्दार्थ उक्तः । **ब्रह्म ज्ञातव्यमिति** ब्रह्मजिज्ञासापदार्थः । ज्ञातव्यं विचारयोग्यं, ततएवेत्येवकारेण शास्त्रान्तराधिगमनैरपेक्ष्यमथ-

गूढार्थसंग्रहः

याऽत्रापि कर्तव्यत्वयोग्यज्ञानमेव विचारात्मकं बोध्यत्वेन विवक्षितमिति नानुपपत्तिः । एतत्तात्पर्येण इह **विधीयते** इत्युक्तम् । विचारारम्भणसूत्रे इत्यर्थः, **विधीयते** कर्तव्यतया बोध्यते इत्यर्थः, कृतिसाध्यत्वस्य विध्यर्थतायाः उत्तरत्र वक्ष्यमाणत्वात् । नात्र प्रवृत्तिहेतुभूतं ज्ञानं विवक्षितम् । 'तद्विजिज्ञासस्व' 'अथातो ब्रह्मजिज्ञासा' इति श्रुतिसूत्रयोः सन्प्रयोगेण विचारस्य रागप्राप्तत्वबोधनात् । विचारे प्रवृत्तेः अध्ययनश्रवणमननविधिमूलकतायाः असम्भवस्योत्तरत्र साधयिष्यमाणत्वात् 'तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपशारीरकमीमांसाश्रवणेऽधीतवेदःपुरुषः स्वयमेव प्रवर्तते' इति वक्ष्यमाणत्वाच्च । किंतु प्रवृत्तिप्रतिबन्धकानारभ्यत्वभ्रमस्य सिद्धान्तयुक्त्या निरासकज्ञानाभिप्रायेण विधीयते इत्युक्तम् ॥

उक्तं च तत्त्वटीकायम्—'जाताऽपिहि विचारेच्छापूर्वपक्षोक्तयुक्तिः । सीदत्युत्तभ्यते युक्त्या सिद्धे व्युत्पत्तिपूर्वया' इति । एतदेवाभिप्रेत्य वेदान्तसारे 'इष्यमाणं ज्ञानमिहाभिप्रेतम्' इत्युक्तम् । पूर्वमथातश्शब्दाविवरणानन्तरं सूत्रवाक्यार्थ उक्तः इदानीं विचारपर जिज्ञासापदविवरणानन्तरमर्थविशेषबोधनाय पुनस्सूत्रवाक्यार्थ उच्यते—**मीमांसापूर्वभागज्ञातस्येत्यादिना ।** मीमांसाशब्देन पुराणन्यायमीमांसा, मीमांसान्यायविस्तरः इत्याद्युक्तदिशा 'अधीतसाङ्गसाशिरस्क' इति पूर्वोक्त वेदपूर्वोत्तरभागविचाररूपत्वेन ऐकशास्त्र्यं सूचितम् । अत्र 'मीमांसाशब्दः न जिज्ञासाशब्दसमानार्थकः' इति तत्त्वटीकादौ व्यक्तम् । पूर्वं व्याख्येयपौर्वापर्यमुक्तम् । अत्र पूर्वभागोपरितनभागशब्दाभ्यां व्याख्यानपौर्वापर्यं व्याख्येयपौर्वापर्यनिबन्धनमभिहितम् । केवलकर्मणामल्पास्थिरफलत्वं 'तत्र कर्मविधिस्वरूपे' इत्युत्तरग्रन्थे व्यक्तीभविष्यति ॥

**पूर्वभागज्ञातस्य कर्मण इति ।** हानार्थमुपादानार्थं च कर्मज्ञानमिति 'अधीतसाङ्गे' त्यादिवाक्यविवरणे निरूपितम् । पूर्वं '**अनन्तस्थिरफलब्रह्मजिज्ञासा**' इति ब्रह्मनिर्देशःकृतः । 'एष पन्था एतत्कर्म एतद्ब्रह्म' इति श्रुतौ पूर्वोत्तरभागप्रतिपाद्यत्वेन कर्मब्रह्मणोरभिधानमेव एवमुक्तौ मूलम् । अत्रतु विचारविषययोः परस्परसङ्गतिप्रदर्शनमुखेन विचारयोस्सङ्गतत्वबोधनार्थं 'उपरितनभागावसेयस्य ब्रह्मज्ञानस्य' इत्युक्तम् । पूर्वं 'अधीतसाङ्ग' इत्यादिवाक्ये ब्रह्मणएवानन्तस्थिरफलत्वमभिहितम् । अत्रतु ब्रह्मज्ञानस्य उपरितनभागावसेयं ब्रह्मज्ञानं च 'तमेतम्' इत्यादिश्रुत्या कर्माङ्गकमेव विवक्षितमिति तस्यानन्ताक्षयफलत्वं युक्तमेव ॥

**पूर्ववृत्तात्कर्मज्ञानादनन्तरमिति ।** कर्मविचारानन्तरमित्यर्थः, कर्मविचारस्यानुष्ठानद्वारा ब्रह्मोपासनोपयोगोऽप्यत्राभिप्रेतः । तेन **ततएव हेतोरित्यत्र** साङ्गब्रह्मज्ञानविशेष्यकानन्तस्थिरफलापातप्रतीतिरप्यभिप्रेतेति सिद्ध्यति ॥

## श्रीभाष्यम्

**ब्रह्मज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः–' वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा '**

## श्रुतप्रकाशिका

शब्दफलितमभिप्रेतम् उक्तंभवतीति। शब्दतोऽर्थतश्चेति भावः। कथमस्य सूत्रस्यायमर्थ इति शङ्कायां तदुपपादयति– **मीमांसेत्यादिना।** अथात इत्यादिपदानां यथोक्त एवार्थः। कर्मब्रह्ममीमांसयोरैकशास्त्र्यात् ऐकशास्त्र्यं च नियतपौर्वापर्यभागद्वयात्मकवेदाख्यैकप्रबन्धव्याख्यानरूपत्वादित्यर्थः। अत्र व्याख्येयस्य पूर्वापरभावेनावस्थितभागद्वयरूपत्वं, तद्धेतुकं व्याख्यानस्य पौर्वापर्यविशेषविशिष्टभागद्वयरूपत्वं चोभयं पदयोजनायां वाक्ययोजनायां च वक्तव्यम्। तथाऽपि ग्रन्थलाघवार्थं पदयोजनायामधीतसाङ्गसशिरस्कवेदस्येति व्याख्येयस्य नियतपौर्वापर्यभागद्वयरूपत्वमुक्तम्। अत्रतु वाक्ययोजनायां व्याख्यानस्य नियतपौर्वापर्यभागद्वयरूपतयैकशास्त्र्यमुक्तम्। उभयत्रोभयमनुसन्धेयम्। भागशब्दाभ्यां मीमांसाद्वयस्यैकवाक्यत्वं सूचितम्। पूर्वोपरितनशब्दाभ्यां क्रमनियम उक्तः–कर्मब्रह्मशब्दाभ्यां वृत्तवर्तिष्यमाणकथनम्। अल्पास्थिरफलत्वानन्तास्थिरफलत्वाभ्यां तयोर्हेतुहेतुमद्भावोपपादनम्। मुक्त्युपायोपयोगितया कर्मणां स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता, अतः पृथगनुक्तिः। एवं क्रमविशेषविशिष्टैकव्याख्येयव्याख्यानरूपतया कर्मब्रह्ममीमांसयोरेकशास्त्रत्वात्सूत्रस्य यथोक्तएवार्थ इत्यर्थः॥

पूर्वप्रतिज्ञातं वृत्तिकारमतानुसारं वृत्तिग्रन्थेन सम्पादयति। **तदाहेति।** कर्माधिगमस्यैव पूर्ववृत्तत्वं न केवलं

## गूढार्थसङ्ग्रहः

**ब्रह्म ज्ञातव्यमित्युक्तं भवतीति।** ' अनन्तस्थिरफलब्रह्मजिज्ञासाद्यनन्तरभाविनी ' इति पूर्वमर्थउक्तः। इदानीं जिज्ञासाशब्दविवरणानन्तरं ब्रह्मणएव प्राधान्येनेच्छाविषयत्वेन तस्यैव विचार्यत्वं तस्य कर्मविचारानन्तरकालिकविचारकर्मत्वे पर्यवसानमित्यभिप्रेत्येत्थमुक्तम्। शङ्करभाष्येऽपि ' तस्माद्यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासाकर्तव्या ' इति। ' तस्माद्ब्रह्मविजिज्ञासितव्य ' मितिचोक्तम् जिज्ञासेत्यत्र वेदान्तविचारसाध्यं ज्ञानमवगतिरूपं विवक्षितमिति अवगतेरेवेच्छाविषयत्वं, तत्र विचारमन्तराऽवगतिरूपपुरुषार्थासम्भवात् विचारसाध्यज्ञानं विवक्षितमिति तत्सिद्धान्तः॥

**' अथातो धर्मजिज्ञासा '** **' अथातो ब्रह्मजिज्ञासा '** इति सूत्रघटकधर्मब्रह्मशब्दपर्यालोचनायां अयमर्थःसिद्ध्यति, धर्मविचारेणैव ब्रह्मविचारोऽपि निष्पन्नः। कर्मकर्तृस्तावकत्वादुपनिषद्भागस्य सिद्धपरवाक्येषु पुंसां व्युत्पत्त्यभावात्। धर्मस्यैव फलत्वात् ' इति प्रभाकरमतप्रतिकोटितया कर्मस्थाने ब्रह्मशब्दनिर्देशेनोत्तरभागविचारस्य कर्मविचारान्तःपातित्वं नास्तीति सूचितम्। ' तंत्वौपनिषदं पुरुषम् ' ' विज्ञानमानन्दं ब्रह्म ' इत्यत्र ब्रह्मणः उपनिषत्तात्पर्यविषयत्वं कर्मविद्याफलसाधनत्ववत् फलत्वमप्यानन्दशब्देनप्र तिपन्नम्। कर्मणश्चैतादृशं फलत्वं क्वापि न प्रमाणतःप्रतिपन्नम्। अतोब्रह्मणः फलत्वमत्र सूत्रे विवक्षितमित्येवाशयः स्वरसतःप्रतीयते। अयमर्थः वृत्तिकारवाक्ये स्फुट इत्यभिप्रेत्याह—**तदाह वृत्तिकारः वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति।** अत्र कर्मब्रह्मशब्दाभ्यां ' एष पन्थाः एतत्कर्म एतद्ब्रह्म ' इति श्रुतिः प्रत्यभिज्ञाप्यते। इयं च श्रुतिः ऐतरेयोपनिषद्रूपत्वेन सायणीये आनन्दतीर्थभाष्येचाभ्युपगताद्वितीयतृतीयारण्यकद्वये प्रथमश्रुतिः। प्रथमब्रह्मसूत्रे ऐतरेयोपनिषत्प्रथमवाक्यार्थः विवक्षित इति युक्तमभ्युपगन्तुम्। एवंचैतच्छ्रुतिप्रत्यभिज्ञापनमुखेन पूर्वकाण्डे कर्मणइव उत्तरकाण्डे ब्रह्मणश्च प्राधान्यं फलत्वं च विवक्षितमिति सूचितम्। अत्र कर्मब्रह्मणोरुभयोर्वेदतात्पर्यविषयत्वकथनेन देवताविचारोऽपि कर्मविचारान्तःपातीत्येवाशयः प्रतीयते। एतेन देवताविचारव्यवहितत्वात् कर्मविचारा-

६५

श्रीभाष्यम्

(बो.वृ) इति । वक्ष्यति च

श्रुतप्रकाशिका

कण्ठोक्तम् । ऐकशास्त्र्योक्त्याक्षिप्तं चेत्यभिप्रयन्नाह—वक्ष्यतिचेति । वृत्तादित्यादि, संहितमित्यादिश्च, वृत्तिग्रन्थौ शारी-

गूढार्थसंग्रहः

नन्तर्यं नाथशब्दार्थः, किंतु देवताविचारानन्तर्यमेव अथशब्दार्थो वाच्यः, इति चन्द्रिकायां नवीनोक्तस्य दूषणस्य नाव-सरः, अयमर्थः वेदान्तसारे स्फुटः । अत्र पन्थाः इति पथिन्शब्देन कर्मणो ब्रह्मणश्च फलसाधनत्वं प्रतिपादितम् । एतत्स-त्यमित्युभयोस्सत्यत्वबोधकं नतु ब्रह्ममात्रस्य, तथासति चतुर्थैतच्छब्दवैयर्थ्यात् । ब्रह्मणः पथित्वेन पूर्वं प्रतिपन्नतया तद्धर्मवि-शिष्टस्यैव सत्यत्वस्य वाच्यतया निर्विशेषवादिमते कार्यकारणभावस्य सांवृतत्वेन पथित्वविशिष्टस्यासत्यत्वेन निर्विशेषमात्रसत्य-त्वकल्पनाया असम्भवात् । एवमुभयोरपि पथित्वोक्तिः सङ्गतिप्रदर्शनार्था । तत्र पूर्वकाण्डे कर्मणां स्वर्गादिफलसाधनत्वं यत् प्रतिपन्नं तत्रापि ब्रह्मणस्साधनत्वं वर्तते । तत्फलानामनित्यत्वप्रतिपत्त्या हेयत्वम्, तेन केवलकर्मणामल्पास्थिरफलत्वप्रति-पत्तिः । 'तमेतं वेदानुवचनेन' इत्यादिश्रुत्या ब्रह्मविद्याफलेऽपि अङ्गाङ्गिभावेन अङ्गिनो यत्फलं तदेवाङ्गस्य फलमिति न्यायेन तदपि कर्मफलमिति वक्तुं शक्यते तत्रापि ब्रह्मणो हेतुत्वमिति द्वेधाऽपि कर्मब्रह्मणोः परस्परसङ्गतत्वेन अविरोधस्सिद्धः

एतेन भूतभव्ययोर्विषययोः ब्रह्मकर्मणोर्विषयतोऽविरोधः कर्मणां ब्रह्मविद्याङ्गतया अङ्गिद्वारा नित्यफलसाधनत्वं विनियोगविध्यन्तरेण प्रतिपन्नमिति फलतोऽपि न विरोधः । अङ्गाङ्गिक्रमानुसारेण विचारयोरपि नियतपौर्वापर्यं सिद्ध्यति अयमर्थः वृत्तिवाक्य एव व्यक्तः । 'कर्माधिगमात्' इत्यत्र अधिगमशब्दः ज्ञान प्राप्तिरूपार्थद्वयबोधतात्पर्येण प्रयुक्तः । ज्ञानं च विचारात्मकं विवक्षितम् । 'ब्रह्मविविदिषा' इत्यत्र विविदिषाशब्दः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदि-षन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतिप्रत्यभिज्ञापनार्थः । श्रुतौ च 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा' इति समाधेःप्रतिपादनेन समाधिपूर्वकालिकध्यानस्यापि सिद्ध्या 'विविदिषन्ति' इत्यत्र ध्यानरूपं ज्ञानं विवक्षितम् । अत्र 'अनाशकेन' इत्यत्र फलेच्छाविरहस्य प्रतिपादनेन तस्य सङ्गकर्तृत्वत्यागोपलक्षणतया फलसङ्गकर्तृत्वत्यागपूर्वकयज्ञा-दयो विवक्षिताः । तेषां च ध्यानरूपवेदाङ्गत्वं तृतीयाश्रुत्या प्रतिपन्नम् । 'तमेतम्' इत्यत्र तच्छब्दस्य 'सर्वस्य वशी' इत्यादिपूर्ववाक्यप्रतिपन्नसविशेषपरतया यज्ञादीनां सविशेषध्यानाङ्गत्वेन फलतो विषयतश्चाविरोधः सूचितो भवति । प्रति पादितकर्मब्रह्मज्ञानयोरङ्गाङ्गिभावेन तत्क्रमानुसारेण विचारक्रमोऽपि सिद्धः । एवं च 'कर्माधिगमात्—कर्मप्राप्तेरनुष्ठाना-दनन्तरं ब्रह्मध्यानेच्छायाः श्रुत्यादिसिद्धतया कर्मविचारानन्तरं ब्रह्मविचारोऽपि सिद्ध्यतीत्यर्थद्वयमपि सुस्थम् ॥

एतेन परोक्तः फलजिज्ञास्यभेदः न दूषणमिति परिहार उक्तो भवति । पूर्वकाण्डोक्तकर्मणामेव 'तमेतम्' इत्यादि श्रुतौ फलसङ्गकर्तृत्वत्यागपूर्वकमनुष्ठितानां ब्रह्मविद्याऽङ्गतया अङ्गिनो यत्फलं तदङ्गस्यापि' इति न्यायेन विद्याफलं कर्मफ-लमपि भवति । जिज्ञास्ययोर्भूतभव्यभेदेऽपि भूतब्रह्मज्ञानस्यापि उपासनरूपस्यानुष्ठानसापेक्षत्वेन जिज्ञास्ययोर्विरोधाभावात् एवं कर्माधिकृतस्यैव ब्रह्मविद्यायामधिकारेण अधिकृताधिकारत्वमपि सिद्धम् । कर्मब्रह्मविद्ययोरङ्गाङ्गिभावेन तद्विचारयोः शेषशेषित्वे प्रमाणमपि व्यज्यते अङ्गाङ्गिक्रमानुसारेण विचारक्रमोऽपि सिद्ध्यतीति वृत्तिकारमते परोक्ताः दोषाः नैव लग-न्तीति वृत्तिवाक्येनैव सूचितम् ॥

अत्र उभयोस्सङ्गतेरस्फुटतया सङ्गतिप्रतिपादनमुखेन कर्मब्रह्ममीमांसयोरैकप्रबन्ध्यरूपैकशास्त्र्यबोधकवाक्योपादान-मुखेन अथशब्दस्य कर्मविचारानन्तर्यमेव युक्तमिति वृत्तिकाराशय इति साधयति—वक्ष्यतिचेत्यादिना । अत्र वक्ष्यति

### श्रीभाष्यम

**कर्मब्रह्ममीमांसयोरैकशास्त्र्यम् 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' [वो.वृ] इति।**

### श्रुतप्रकाशिका

'तस्यैष एव शारीरआत्मा' इति श्रुतेः। तद्विषयकं शास्त्रं शारीरकम् ब्रह्ममीमांसा जगच्छरीरकः परमात्मशारीरः मित्युच्यते 'षोडशलक्षणेन' षोडशाध्यायेन संहितमिति नियतपौर्वापर्यैकव्याख्येयव्याख्यानरूपतया सङ्गतमितिभावः। 'अर्थैकत्वादेकं वाक्य' मिति न्यायेन प्रधानप्रतिपाद्यैक्याद्व्याख्येयस्य वेदस्यैकप्रबन्धत्वं भवेत्—तच्चोपपद्यते पुरुषार्थपरत्वाद्वेदस्य ब्रह्मपरत्वाद्वा। 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इतिहि श्रुतिस्मृती। वेदार्थविचारस्यानुगतत्वाऽऽन्मीमांसाया एकप्रबन्धत्वम्। अनेनैकशास्त्र्येण धर्माधिगमस्य पूर्ववृत्तत्वमाक्षिप्तम्॥

### गूढार्थसंग्रहः

च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम् 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन' इति शास्त्रैकत्वसिद्धिरिति वाक्ये— 'ब्रह्म' 'शारीरक' शब्दद्वयपर्यालोचनया 'तंत्वौपनिषदं पुरुषम्' 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' इति श्रुतिरत्र विवक्षितेति सूच्यते। 'औपनिषदं पुरुषम्' इत्यत्र पुरुषशब्दः 'स वा अयं सर्वासु पूर्षु पुरिशयः' इति निर्वचनलब्धार्थमाचष्टे। अतः शारीरशब्दसमानार्थकः पुरुषशब्दः। 'अनुपपत्तेस्तु न शारीरः' 'नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च' इति सूत्रद्वये शारीरशब्देन जीवनिर्देशः 'शब्दविशेषात्' 'उभयेऽपिहि भेदेनैनमधीयते' इति सूत्रद्वये देहजीवयोरिव जीवब्रह्मणोरपि शरीरशरीरिभावेन भेदबोधतात्पर्यकतया अन्वयार्थः। एवं च 'तस्यैष एव शारीर आत्मा' इत्यत्र आनन्दमयस्य ब्रह्मत्ववादिनां वृत्तिकाराणां शारीरशब्दस्सर्वशरीरपरः इत्यभिप्रायः स्फुटः। अतः शारीरकशब्दः उदाहृतश्रुत्युक्तदिशा सर्वशरीरिणः उपनिषत्तात्पर्यविषयत्वसूचनार्थः। तस्यैव 'विज्ञानमानन्दंब्रह्म' इत्यत्र ब्रह्मशब्देन निर्देशेन तच्छ्रुतौ कर्मब्रह्मविद्याफलदातृत्वस्य ब्रह्मणि प्रतिपादनेन कर्मब्रह्मणोस्सङ्गतिमत्त्वेनाविरोधस्सूचितो भवतीत्यभिप्रेत्य इत्थमुक्तिः। तेन 'अथातो ब्रह्मजिज्ञासा' इत्यत्र ब्रह्म सविशेषमेव विवक्षितम्, न पुनर्निर्विशेषमिति सिद्ध्यति। एवं शारीरशब्देन सर्वशरीरिबोधकेन परस्य जीवशरीरसंबन्धबोधनेन सुषुप्तौ तत्तज्जीवाधारत्वं परमात्मनः यत् श्रुतिसिद्धं तत्सूचितं भवति। अनेन 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रोक्तः जीवब्रह्मभेदोऽपि सूचितः। एवं 'अन्यार्थंतु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके' (१.४.१८) इत्यत्र 'अपिचैवमेक' इति एकशब्देन वाजसनेयिनां विवक्षया सुषुप्तिप्रकरणे 'य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते' (बृ.४.१.१६) इति वाक्योक्तः जीवब्रह्मभेदः अभिप्रेतः। अस्यार्थस्य परेषामपि संमततया 'तमेतं वेदानुवचनेन' इत्येतत्पूर्वं 'य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते' (बृ.६.४.२२) इत्यत्रापि जीवब्रह्मभेद एव विवक्षित इति सूत्रकाराशयः निर्णेतुं शक्यते। तदनन्तरं 'सर्वस्य वशी सर्वस्येशानः तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यत्र तच्छब्दार्थोऽपि जीवभिन्नः परमात्मैव विवक्षित इति तज्ज्ञाने कर्मणामङ्गत्वस्य युक्ततया कर्मब्रह्मज्ञानयोःपरस्परसङ्गतत्वेन कर्मब्रह्ममीमांसयोः सङ्गतत्वेनैकप्रबन्धरूपैकशास्त्र्यं अप्रकम्प्यमिति व्यञ्जितम्। **सङ्गतिविशेषेण विशिष्टक्रमम्** इति वाक्यविवरणे अयमर्थः व्यक्तीभविष्यति॥ **जैमिनीयेन षोडशलक्षणेन** इत्युक्त्या सङ्गतिग्रन्थे दीधितिकृता 'सङ्गतिरेकवाक्यत्वसाधिकेति निरूपितम्। शारीरकमिति ब्रह्मसूत्रचतुरध्यायीपरम्। 'स्वव्यतिरिक्तं देवताविचाररूपसङ्कर्षोऽपि कर्मविचारान्तःपात्येवेति सिद्ध्यति।

## गूढार्थसंग्रहः

चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकशारीर आत्मा । अतएवेदं परंब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते इति आनन्दमयाधिकरणे वक्ष्यते । यद्यपि 'अधिकृत्य कृते ग्रन्थे' इति सूत्रशेखरे शारीरकमिति जीवमित्यर्थः । शरीरशब्दात् 'तस्येदमित्यणिस्वार्थे कः' इत्युक्तम् । तथाऽपि अत्रासङ्कुचितार्थस्यैव ग्राह्यतया एकशरीरसंबन्धी न विवक्षितः । 'तंत्वौपनिषदं पुरुषम्' इति श्रुतिघटकपुरुषशब्दनिर्वचनत्रये बृहदारण्यकोक्ते 'स वा अयं सर्वासु पूर्षु पुरिशयः' इति सर्वशरीरसंबन्धिन एव एकस्मिन्निर्वचनेऽभिधानात् । 'स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान्पाप्मन औषत्' इत्यत्रापि असङ्कुचितार्थस्यैवोक्तेश्च, शारीरकशब्देऽप्यसङ्कुचितार्थ एव ग्राह्य इतीत्थमुक्तम् । नागेशोक्तप्रकारेण 'स्वार्थे कः' । यद्यपि 'अधिकृत्य कृते ग्रन्थे' इति सूत्रेण छ प्रत्ययविधानेन शारीरकीयमित्येव वाच्यम् । तथाऽपि एतन्महाभाष्ये 'लुबाख्यायिकाभ्यो बहुलम्' आख्यायिकाभ्यो बहुलं लुब्वक्तव्यः वासवदत्ता सुमनोत्तरा इत्युक्त्या आख्यायिकाशब्दस्य शास्त्रोपलक्षणतया छ प्रत्ययस्य लुपि शारीरकमिति सिद्ध्यतीत्याशयः । 'आत्माऽस्तित्वे शारीरके वक्ष्यामः' इत्युपवर्षवाक्यं परैरपि उदाहृतम् । एतेन वृत्तिकारयोरुभयोरपि शारीरकशब्दस्योक्तार्थपरत्वमेवाभिप्रेतमिति सिद्धम् ॥

एतेन 'शरीरमेव शारीरकं तत्र निवासी शारीरको जीवात्मा तस्य त्वंपदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपता मीमांसा या सा तथोक्ता' इति भामतीविवरणमनुपादेयम् । 'शारीरके वक्ष्यामः' इति उपवर्षवाक्ये शारीरकशब्दस्य शास्त्र एव प्रयोगेण तत्रेत्थमर्थकल्पनायाअसम्भवात् । 'त्वंपदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपता मीमांसा' इत्यस्याप्यौत्प्रेक्षिकत्वात् । 'तंत्वौपनिषदं पुरुषम्' इति श्रुतिविरोधाच ॥

एतेन 'शरीरमेव शरीरकम् शरीरके भवः शारीरको जीवः । तमधिकृत्य कृतो ग्रन्थः शारीरकः । तदिह वेदान्तानां जीवस्य तत्त्वमधिकृत्य प्रवृत्तानां ब्रह्मरूपतायां पर्यवसानमिति कथयितुं प्रणीतानां शारीरकं जीवतत्त्वमधिकृतत्वमस्तीति शारीरकाभिधानात्' इति पञ्चपादिकोक्तिरप्यनुपादेयैव । आनन्दमयाधिकरणभाष्यसूक्तौ 'परं ब्रह्म' इति निर्देशः 'एतद्वै सत्यकाम परंचापरं च ब्रह्म' इत्युक्तं परं ब्रह्म 'परं पुरुषमभिध्यायीत, परात्परं पुरिशयं पुरुषमीक्षते' (प्र) इति श्रुत्युक्तपरमपुरुषरूपमेवेति स्फुटं प्रतीत्या सर्वशरीरिण एव परब्रह्मत्वबोधनार्थः ॥

एतेन 'तत्त्वमसि' इत्यादिसमानाधिकरणवाक्ये अन्तर्याम्येव विवक्षित इति परसंमतवाक्यार्थोऽपि न श्रुत्याद्यनुगुण इत्यपि बोधितम् । सर्वशरीरित्वं सर्वान्तर्यामित्वेनैव । सृष्टिसमकाल एव सृज्यवस्त्वनुप्रवेशात् । अनुप्रवेशश्च दयामूलक इति मैत्रायणीयब्रह्मबिन्द्वादिश्रुति,गीतादिसिद्धः । '–हार्दानुगृहीतश्शताधिकया' इति सूत्रम् । तेन च मुक्तिरपि दयामूलेति सिद्ध्यति । एवमङ्गीकारे सृष्टिवाक्यनां मुक्तिवाक्यानां 'तत्त्वमसि' इत्यादिवाक्यानां च अर्थनिर्णयस्सम्भवतीति शारीरकस्य वेदान्तविचाररूपत्वमपि घटतइत्यत्रैव 'वेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति' इति वाक्येन स्फुटीकरिष्यते । परमते महावाक्यानामेव तात्त्विकप्रामाण्यं तदितरवाक्यानांतु व्यावहारिकप्रामाण्यमिति कल्पनया कर्मब्रह्मणोरेकविधप्रमाविषयत्वासम्भवेन 'एष पन्था एतद्ब्रह्म एतत्सत्यम्' इति श्रुतिविरोधः 'वृत्तात्कर्माधिगमात्' इति वृत्तिवाक्ये विवक्षितः दुष्परिहर एव स्यात् । शारीरकशब्दस्य जीवपरत्ववादिपरपक्षाङ्गीकारेऽपि शारीरशब्दस्यैव जीवपरत्वेन प्रागुदाहृतसूत्रयोः प्रयोगात् 'अनुकम्पायाम्' (पा.सू.५.३.७६) इति कप्रत्ययस्सम्भवति । प्रागुक्तदिशा परमात्मानुकम्पितजीवस्यैव विवक्षणेन अन्तर्यामिपरतन्त्रता जीवस्यार्थतस्सिद्ध्यतीति न परेष्टार्थसाधनं सम्भवति ॥

शारीरकमिति व्यवहारनिर्वाहोऽपि तन्मते न सम्भवति । ब्रह्मसूत्राणामाख्यायिकात्वं नाङ्गीक्रियतइति 'अधिकृत्य कृते ग्रन्थे' इति विहितछप्रत्ययस्य लोपो न सम्भवतीत्याग्रहेऽपि 'शारीरं कायति प्रतिपादयतीति शारीरकम्' । 'कैगे-

श्रुतप्रकाशिका

ननु यद्येकशास्त्रयं कर्मब्रह्मविचारयोः तर्ह्युपक्रमे साधारणार्थः प्रतिज्ञायेत अथातो वेदार्थजिज्ञासेति । नचैवंप्रति-
ज्ञातम् किंतु पूर्वभागासाधारण एव प्रतिज्ञातः 'अथातो धर्मजिज्ञासा' इति । इत्यत्र ब्रूमः 'अथातो ब्रह्मजिज्ञासा
इत्येवोभयभागसाधारणार्थप्रतिज्ञा । कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादे सङ्गतः । ब्रह्मविचारान्तर्भावेऽपि पृथ
करणमुपपद्यते यथा निग्रहान्तर्भूतच्छलजात्योराह्निकभेदेन पृथगुक्तिः । यथा च निग्रहान्तर्भूत हेत्वाभासानामध्यायभेदेन
पृथगुक्तिः । पृथक्करणं च बहुग्रन्थप्रतिपाद्यत्वात् । तत्र पूर्वभावित्वमुपजीव्योपजीवकभावादिवक्ष्यमाणहेतुनिबन्धनम् ॥

एतदुक्तं भवति । अर्थक्रमाद्ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन कर्मविचारस्सङ्गतः । प्रतिपत्तिसौकर्यलक्षणक्रमात्तु
कर्मविचारस्य पूर्वभाव इति । एवं वा साधर्म्यवैधर्म्यसमयोर्जात्योः कथनेन यथा * प्रतिधर्मसमोभयानुयायिन्यर्थसिद्धा ।
एवं भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणार्थप्रतिज्ञानमार्थं स्यात् । साधारणार्थे प्रतिज्ञातेऽप्यसाधारणार्थस्तु पृथ
गेव प्रतिज्ञातव्यः । धर्मजिज्ञासायां प्रतिज्ञातायामपि 'अथातश्शेषलक्षणम्' 'अथातःक्रत्वर्थपुरुषार्थयोर्जिज्ञासा'
इत्यादौह्यसाधारणार्थप्रतिज्ञा कृता, अतो भागद्वयासाधारणार्थप्रतिज्ञानेन तदनुगतसाधारणार्थप्रतिज्ञानमार्थं स्यादिति प्रथमं
अथातो धर्मजिज्ञासा इति प्रतिज्ञातं ननु वेदार्थजिज्ञासेति, अथवा * अथातो धर्मजिज्ञासेत्येव साधारणप्रतिज्ञा ।
अलौकिकश्रेयस्साधनंहि धर्मः, तदनुयायिप्रतिपाद्यम् । धर्मश्च साध्यसिद्धभेदेन द्विविधः । सिद्धरूपे वस्तुनि धर्मशब्दप्र-
योगो महाभारते दृष्टः । यथा—

ये च वेदविदो विप्रा येचाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥

इति तथाऽभियुक्तैश्च अलौकिकत्वेसति श्रेयस्साधनत्वं धर्मशब्दप्रवृत्तिनिमित्तं मन्वानैस्सिद्धरूपेऽर्थे धर्मशब्दः प्रयुक्तः ।

* द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते । * तेषामैन्द्रियकत्वेऽपि * न ताद्रूप्येण धर्मता ॥

इत्यादौ तत्र द्रव्यादिसद्भावेऽपि क्रियाप्राधान्यात्साध्यधर्मपरः पूर्वभागः । उपासनातदङ्गसद्भावेऽपि ब्रह्मप्रधानत्वात्सिद्ध-
धर्मपर ऊर्ध्वभागः । अतः उभयभागविचारसाधारणी प्रथमप्रतिज्ञा । तत्र धर्मशब्दस्य साध्यधर्मविषयतया प्रसिद्धिप्राचु-
र्येण बुद्धिस्थत्वात्पूर्वभागप्रतिपन्नत्वेन प्राथम्याद्धर्मजिज्ञासापदेनैव * तन्त्रेण वाऽर्थतो वा प्रतिज्ञातत्वोपपत्तेश्च, तल्लक्षणमुक्तं
चोदनासूत्रे । सिद्धरूपधर्मविशेषस्य च साधारणप्रतिज्ञयैवार्थतः प्रतिज्ञातत्वेऽपि तस्य बहुग्रन्थव्यवधानाच्छब्दाबोध्यत्वश-
ङ्कापरिजिहीर्षया च पुनःप्रतिज्ञा कृता । तस्य लक्षणमुक्तं जन्मादिसूत्र इति युक्तमैकशास्त्रयम् ॥

ननु पूर्वभागस्य साध्यधर्मप्रधानत्वोक्तिरुदाहृतवचनेन विरुध्यते तत्र पूर्वभागेऽपि सिद्धरूपस्य परस्य कर्माराध्य-
तया प्रधानप्रतिपाद्यत्वावगमात् । तस्मिन्वचने वेदविच्छब्दोहि पूर्वभागाभिज्ञपरः गोबलीवर्दनयात् । 'विष्णुनामा स
वेदेषु वेदान्तेषु च गीयते ।' इत्यनेनैकार्थ्याच्च । नच गुणभावेनैव कर्मणःप्रतिपाद्यत्वमित्यविरोधः प्राधान्येन प्रति
पाद्यत्वस्य जैमिनेरभिमतत्वात् । भवद्भिरपि तथोक्तत्वाच्च, सत्यम् । वस्तुतः प्राधान्यं परमात्मन एव यथा राज्ञः तात्पर्य-
गोचरत्वलक्षणम् । शाब्दं प्राधान्यंतु कर्मण एव यथा राजपुरुषस्य । तच्चातिरस्कृतम् । तत्र तस्य परमात्माराधनरूपत्वा-
नवगमात् । नच तदवगमोऽवश्यं सम्पाद्यः, अन्तवत्स्वर्गादिफलप्रदत्वे कर्मणां परदेवताज्ञाननैरपेक्ष्यंहि श्रुतिस्मृतिभ्यामव-
गम्यते । 'यो ह वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंलोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदे-
वास्य तद्भवतीति' ॥

अहंहि सर्वयज्ञानां भोक्ता च प्रभुरेव च । नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥

## श्रीभाष्यम्

**अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च**

## श्रुतप्रकाशिका

इति च । अतस्तन्निरपेक्ष्यलक्षणमपि प्राधान्यमस्ति कर्मणः । अतः पूर्वभागे कर्मणः प्रागवगतं प्राधान्यं पश्चादवगन्तव्यं परमात्माराधनरूपत्वं चाविरुद्धम् । अतः प्रतिज्ञोपपत्तेश्शास्त्रैक्यं युक्तम् । * यद्यपि कर्मब्रह्ममीमांसयोरेकशास्त्रत्वमविवक्षितं जैमिनिना । तथाऽपि तदङ्गीकृत्य तदेकशास्त्रतया बादरायणेन ब्रह्मसूत्रप्रणयनं युक्तम् । यतः—

**अतदर्थतया कॢप्तमपि योग्यमपेक्षितम् । तादर्थ्यमर्हति ग्रामे कल्प्ये पूर्वतटाकवत् ॥**

विवक्षितत्वं सम्भवश्च दर्शितः । अतश्च शास्त्रैक्यं युक्तम् ॥

**नन्विदमयुक्तमैकशास्त्र्यम् ।** शारीरकशब्दसूचिताप्रधानप्रतिपाद्यभेदाज्जैमिनीयशब्दसूचितात्कर्तृभेदात्तदुभयफलितात्प्रयोजनभेदादर्थविरोधाच्चेत्याशङ्कां परिहरति । **अतःप्रतिपिपादयिषितेति** । अतः वृत्तिकारोक्तादेकव्याख्येयव्यानरूपत्वसम्बन्धादित्यर्थः । षट्कभेदः पूर्वमीमांसायाम् । अध्यायभेदस्तत्रोत्तरत्र च निदर्शनार्थमुक्तौ । अर्थभेदाभावेऽप्येकषट्कनैकाध्यायो वा स्यात् । अत एकान्वयवित्वेऽसिद्धेसत्यवान्तरार्थभेदो न महावाक्यैकत्वविरोधी यथा पदार्थभेदो वाक्यार्थैकत्वाविरोधीति भावः । अनेन प्रतिपाद्यभेदःपरिहृतः । प्रयोजनभेदश्चार्थात्परिहृतः । षट्कद्वयाचिन्तितप्रकृतिविकृतिप्रयोजनभेदस्य शास्त्रभेदकत्वाभावात् । अनेन वृत्तिग्रन्थगतषोडशलक्षणशब्दतात्पर्यं च ऊर्जितम् । पूर्वोत्तरमीमांसाशब्देन जैमिनीयशारीरकशब्दौ च विवृतौ । प्रतिपिपादयिषितशब्देनार्थविरोधःपरिहृतः । प्रतिपादयितुमिष्टं हि प्रतिपिपादयिषितम् सच तात्पर्यविषयोऽर्थः विरुद्धतया प्रतीयमानेषु देवतानिरासादिषु न तात्पर्यमित्यभिप्रायः ॥

## गूढार्थसंग्रहः

शब्दे ' इति धातुसत्त्वात् ' इति शारीरकशब्दस्य शास्त्रपरत्वमप्रकम्प्यम् । एवं च शारीरकमीमांसेत्यादौ एतदनुरोधेन कर्मधारयो वा कर्ममीमांसा ब्रह्ममीमांसेत्यादिवत् शारीरकस्य मीमांसेतितत्पुरुषोवाऽऽस्थेयः । अतश्च आनन्दमयाधिकरणे वक्ष्यमाणार्थस्य न कोऽपि विरोध इति सिद्धम् ॥

**अथातो धर्मजिज्ञासा अथातो ब्रह्मजिज्ञासा** इति प्रतिज्ञातार्थभेदेन कर्मब्रह्ममीमांसाभेदव्यवहारएवैकप्रबन्ध्यबाधकः इति शङ्कामपाकरोति—**अतःप्रतिपिपादयिषितार्थभेदेनेति** । अतः ' संहितमेतत् ' इति वृत्तावैकप्रबन्ध्यसधनादित्यर्थः । **षट्कभेवदिति** । पूर्वमीमांसायां प्रकृतिः, विकृतिः, उपदेशः अतिदेशः, इत्यर्थभेदेन षट्कभेदः । षट्कभेदबोधकशब्दभेदस्य सूत्रेऽस्फुटतया सूत्रेऽपि स्फुटार्थभेदबोधकोदाहरणान्तरमाह— **अध्यायभेदवदिति** । ' अथातश्शेषलक्षणम् ' इत्यादिसूत्रोक्तार्थभेदेन अध्यायभेदवदित्यर्थः । एतत्सूत्रस्य तन्त्रवार्तिकोक्त तृतीय तदाद्यध्यायदशकप्रतिज्ञाद्वयपरत्ववत् धर्मजिज्ञासासूत्रस्य प्रतिज्ञाद्वयपरत्वमित्येतेन व्यञ्जितम् ॥

**पूर्वोत्तरमीमांसयोर्भेदइति ।** ' **अथातो धर्मजिज्ञासा** ' इति प्रतिज्ञातार्थस्य सर्वानुगतत्वेन यथा कर्ममीमांसायाः ऐकप्रबन्ध्यं तथेति भावः । ननु ' **अथातो धर्मजिज्ञासा** ' इति प्रतिज्ञातार्थस्य द्वादशाध्यायानुगतत्वेन कर्ममीमांसायाः एकप्रबन्धत्वरूपैकशास्त्रत्वं उक्तम् । देवताविचाररूपसङ्कर्षस्यापि धर्मान्तःपातित्वेन कर्ममीमांसात्वमप्यस्तु । ' **अथातो ब्रह्मजिज्ञासा** ' इत्यादि चतुरध्याय्याः प्रथमप्रतिज्ञातार्थानुगमाभावेन एकप्रबन्धत्वं नैव युक्तम् । श्रुतावपि कर्मब्रह्मशब्दभ्यां पूर्वोत्तरभागप्रतिपाद्यार्थभेदस्य स्फुटमभिधानादितिचेत्—न ; श्रुतिघटककर्मशब्दं विहाय ' **अथातो धर्मजिज्ञासा** ' इत्यत्र धर्मशब्देन कर्मणो निर्देशः अर्थद्वयबोधतात्पर्यकः । धर्मशब्दःपुरुषार्थसाधनपरः । कर्मब्रह्मविद्याफल

## श्रुतप्रकाशिका

ननु एवं कथमभिधीयते ? आम्नायस्य क्रियार्थत्वात्सिद्धपरवाक्यानां तच्छेषत्वंहि सूत्रकारेण कण्ठोक्तम् । तच्च विरु-
ध्यत एव अतश्शास्त्रभेद इति । नैवम्–'पदे जुहोति' 'आहवनीये जुहोति' 'न हिंस्यात्' 'पशुमालभेत'
इतिवत् । शास्त्रान्तरे 'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इतिवच्चोत्सर्गापवादनयेन शास्त्रैक्याविरोधात् । सामान्येन
सिद्धपरवाक्यानां क्रियाशेषत्वेऽभिहिते सिद्धपरवाक्यविशेषस्य किं विधिशेषत्वं नवेति विचार्य स्वयं पुरुषार्थविरहिणामेव
सिद्धपराणां क्रियाशेषत्वम् । स्वयं पुरुषार्थपर्यवसायिनांतु सिद्धपरवाक्यानामतच्छेषत्वमितिहि निर्णेतुं युक्तम्। यथा होमस्य
सामान्येनाहवनीये प्राप्तत्वेऽपिहोमविशेषस्य पदे कर्तव्यत्वनिश्चयः । यथा च सामान्यतो हिंसानिषेधेऽपि हिंसाविशेषस्य
कर्तव्यतोक्तिः, यथा च सामान्येन कर्मण्युपपदे धातोरणिप्राप्तेऽप्याकारान्ताद्धातोःकप्रत्ययविधिः । नच तत्र शास्त्रभेदः ।
तद्वत् देवतानिराकरणे च न तात्पर्यम् । * अश्रुतवेदान्तानां कर्मण्यश्रद्धानिवारणाय कर्मप्राधान्यपरत्वात्तस्य । नहि निन्दा
निन्द्यं निन्दितुं प्रवर्तते अपितु निन्दितादितरत्प्रशंसितुमितिहि न्यायविदः । * यद्वा वेदप्रामाण्यकर्मावश्यकर्तव्यतातात्पर्या-
तिशयात् तत्प्रतिपक्षनिराचिकीर्षयाऽन्वारुह्यवादो देवतानिरासोक्तिस्स्यात् । अभिमततरार्थानादरेणापि विपक्षव्युदासो
दृश्यते यथा—**अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम् । लब्धक्षेत्रैर्न दुष्प्रापस्स्यादर्थ इति निश्चयात् ॥**

एवमभिमततरेश्वराद्यनादरेणापि वेदप्रामाण्यसमर्थने पश्चादभिमतसिद्धिरयत्नलभ्येति जैमिनेरभिप्रायः । तत्सिद्धि-
प्रकारश्च * 'तदुक्तरात्रिसत्रन्यायाद्यधीन' इत्युत्तरत्र व्यक्तीभविष्यति। नच तत्सिद्धिमभ्युपगच्छतस्तदनादरवादव्याघात:
तस्यान्वारुह्य कृतत्वात् । कथमन्वारुह्यवादत्वनिश्चयः उच्यते—'सम्पत्तेरिति जैमिनिः' 'अन्यार्थंतु जैमिनिः'
'परंजैमिनिर्मुख्यत्वात्' 'ब्राह्मेण जैमिनिः' इत्यादिभिर्ब्रह्मसूत्रैरेव जैमिनेः ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपग-
मस्य प्रतिपन्नत्वात्, महाभारते च हयशिरउपाख्यानादिषु भगवद्व्यासोपदेशलब्धपरमात्मतत्त्वज्ञानवत्त्वावगमाच्चेति । अतो
विरुद्धार्थे तात्पर्याभावान्नार्थविरोधः ॥

नन्वर्थविरोधो दुष्परिहरः । तथाहि विशेषातिदेशनिरूपणपरेऽष्टमेऽध्याये विकृतिषु प्रकृतिधर्मातिदेशे कर्तव्येसति
कस्मिन्कर्मणि कस्य कर्मणो धर्मातिदेशःप्राप्त इत्यपेक्षायां यस्य कर्मणो येन कर्मणा द्रव्यसाम्यं देवतासाम्यं वा भवति,
* तस्मिंस्तद्धर्मातिदेष्टव्य इति स्थितम् । तत्र यस्य केनचिद्द्रव्यसाम्यं, केनचिद्देवतासाम्यं च भवति तस्मिन्द्रव्यसाम्य-
वत एव कर्मणो धर्मातिदेशः नतु देवतासाम्यवत इति द्रव्यप्राधान्यमुक्तं जैमिनिना–'द्रव्यदेवतासाम्ये द्रव्यं बलीयः'
इति नच द्रव्यप्राधान्योक्तेरतिवादत्वम्, अनुष्ठानविरोधात्, द्रव्यप्राधान्येन ह्यनुष्ठानं दृश्यते, अतो द्रव्यप्राधान्यं वदतो
जैमिनेर्देवतानिरासे तात्पर्यमस्तीति । अत्रोच्यते–* नात्र द्रव्यदेवतयोस्सद्भावासद्भावाभ्यां प्राधान्याप्राधान्ये विवक्षिते ।
अपितु विलंबिताविलंबितप्रवृत्तिप्रमाणविषयत्वाधीने द्रव्यंह्यविलंबितप्रत्यक्षगम्यम् । देवतातु विलंबितशास्त्रगम्या, विलंबा-
विलंबावेवहि श्रुतिलिङ्गादिषु प्रत्यक्षानुमानादिषु च पूर्वोत्तरप्राबल्यदौर्बल्यहेतू ॥

ननु हविष्ट्वं शास्त्रैकसमधिगम्यमिति न द्रव्यस्यापि प्राधान्यमितिचेत्, चरुपुरोडाशादिकद्रव्यंहि प्रत्यक्षम् । हवि
ष्ट्वाख्यधर्ममात्रमेव तत्र शास्त्रावगम्यम् । देवतायास्तु स्वरूपं श्रेयस्साधनत्वादिधर्मश्चोभयमपि शास्त्रगम्यम् । अतस्स्वरू-
पतो धर्मतश्च विलंबितमानगम्यत्वाद्देवताया अप्राधान्यम् । धर्ममात्रस्य शास्त्रगम्यत्वेऽपि धर्म्यंशेनाविलंबितमानगम्यत्वा-
द्धविषः प्राधान्यम् । अतः प्राधान्याप्राधान्ययोः प्रमाणद्वारकत्वेन स्वरूपासद्भावे तात्पर्यं नास्तीति देवतानिरासोक्तिरन्य-
परा एवमर्थान्तराण्यप्यविरोधेन नेतुं शक्यानीति नार्थविरोधः ॥

### श्रीभाष्यम्

**मीमांसाशास्त्रम् 'अथातो धर्मजिज्ञासे' त्यारभ्य 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम् ॥**

### श्रुतप्रकाशिका

ननु ब्रह्मसूत्रैरेव जैमिनिपक्षमनूद्य प्रतिक्षेपादर्थविरोधो दुष्परिहरः। तथाहि 'फलमत उपपत्तेः' इत्यत्रेश्वरस्य फलप्रदत्वोक्त्या 'धर्मं जैमिनिः' इति धर्मस्य फलप्रदत्वमनूद्य प्रतिक्षिप्तम्? न। श्रुतत्वोपपत्तिभ्यां कालान्तरभाविफलसाधनमात्रे जैमिन्यभिहिते ताभ्यामेवात्र फलसाधनविशेषसिद्धेरुक्तत्वात् ॥

ननु 'शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः' इत्यत्र वेदान्तोदितज्ञानस्य कर्मशेषतयाऽऽत्मनां कर्मशेषत्वोक्तिः 'अधिकोपदेशात्' इति सिद्धान्तेन विरुध्यते। नच विकल्पेन निर्वाहस्सम्भवति वस्तुविकल्पायोगात् नच जैमिना परमतमुपन्यस्तमिति वाच्यम्; जैमिनिमतत्वेन सिद्धान्तिना प्रतिक्षेपायोगात्, नैवम्। * विपक्षनिरासार्थस्य जैमिनेरन्वरुह्यवादस्य तथोपन्यासप्रतिक्षेपोपपत्तेः। अन्यथा 'परं जैमिनिः' इत्यादिसूत्राणां मिथोविरोधो भारतोक्तिविरोधश्च जैमिनेरन्वारुह्यवादमजानतां तदुक्तेस्तत्त्वबुद्धिस्स्यादिति तन्निवारणाय ब्रह्मसूत्रे तदुपन्यासनिरासौ कृतौ। अत एव 'परामर्शं जैमिनिः' इत्यत्र नैष्ठिकाद्याश्रमप्रतिक्षेपोऽपि परिहृतः 'तद्भूतस्य' इत्यत्र नैष्ठिकाद्याश्रमभ्रंशस्य जैमिन्यनभिमतत्वाभिधानात् नह्याश्रमानभिमतौ तद्भ्रंशानभिमतिसंभवः। अतो वीतरागव्यतिरिक्तानामग्निहोत्रादिष्वश्रद्धानिवारणार्थं आश्रमान्तरप्रतिक्षेपः पूर्ववदन्वारुह्यवादः। सच पूर्वमीमांसायामसूत्रितः। तथाऽप्यौडुलोम्यादिमतवदनूद्य निरस्तः नच मधुविद्यायां वस्वाद्यनधिकारोक्तिरधिकारोक्त्या विरुध्यत इति वाच्यम्; अनधिकारोक्तेर्वस्वादिदेवताऽभ्युपगमचिह्नत्वेन शास्त्रैक्याविरुद्धतया तदुद्घाटनवैयर्थ्यात् 'भावं जैमिनिः' इत्यादिसूत्रोक्ताश्च पक्षाः शास्त्रैक्याविरुद्धाः कर्मविचारे तेषामसमर्थनादिति न तत्पर्यनुयोगावकाशः। तस्मान्नार्थविरोधः कर्तृभेदपरिहारस्तु प्रसिद्धत्वान्न कण्ठोक्तः। अतएव च शब्दसूचितो वा धूर्तस्वामिकपर्दिकर्तृकस्यापस्तम्बीयसूत्रव्याख्यानस्य व्याख्येयैक्यादेकप्रबन्धत्वंहि दृष्टम्। पाणिनीयसूत्रपूर्वोत्तरवृत्त्योश्च वामनजयादित्यकर्तृयोर्व्याख्येयैक्यादेकव्याख्यानत्वं दृष्टम्। तस्मादुपपन्नमैकशास्त्र्यम् ॥

अस्त्वैकशास्त्र्यम्। कर्कं पौर्वापर्यनियमइत्याशङ्कां परिहरन्वृत्तिग्रन्थस्थं संहितमिति पदं विवृणोति—**मीमांसेति**। क्रमविशेषान्वितमैकशास्त्र्यंहि संहितमित्यनेनाभिप्रेतम्। आरभ्य एवमन्तमिति पौर्वापर्यनियम उक्तः **सङ्गतिविशेषेणेति**।

### गूढार्थसंग्रहः

दातृत्वं 'रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' इत्यत्र श्रुतौ ब्रह्मणोऽभिहितम्। एतेन औपनिषदपुरुषाभिन्नब्रह्मणः धर्मत्वमुपपादितं भवति। अयमर्थः 'संहितमेतच्छारीरकम्' इत्यत्र शारीरकशब्दे सूचितः। 'एष पन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इत्यत्रापि पथित्वस्य कर्मब्रह्मणोरुभयोः प्रतिपादनेन उभयसाधारणधर्मेण एकप्रबन्धत्वरूप एकशास्त्रत्वं निर्वहति। एतेन प्रथमप्रतिज्ञातार्थानुगमः चतुरध्याय्यां सम्भवति। प्रसिद्धिप्राचुर्येण धर्मशब्दस्य कर्मार्थेऽपि तात्पर्याङ्गीकारेण 'अथातश्शेषलक्षणम्' इत्यत्रेव असाधारणप्रतिज्ञाविवक्षाऽपि सिद्ध्यति ॥

उक्तं सर्वमभिप्रेत्यैव 'पुराणन्यायमीमांसा' 'मीमांसान्यायविस्तरः' इत्यादिप्रमाणेषु मीमांसाशब्देन निर्देशोऽपि एकप्रबन्धत्वरूपैकशास्त्रत्वपर इति मनसि निधाय 'संहितमेतत्' इत्यादेरर्थमुपसंहरति—**मीमांसाशास्त्रमित्यादिना ॥**

**सङ्गतिविशेषेण विशिष्टक्रममिति**। सङ्गतिविशेषाः श्रुतप्रकाशिकायां दर्शिताः। विशिष्टक्रमम्—'नियतक्रमम्' इति तत्त्वटीका। क्रमविशेषवत् इत्यर्थः इति श्रुतप्रकाशिका ॥

## गूढार्थसंग्रहः

अत्र तत्त्वमार्ताण्डकाराः—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' 'वेदं कृत्वा वेदिं कुर्यात्' इत्यादा-
विव 'परीक्ष्य लोकान् कर्मचितान्' इत्यादि 'त्त्वा' श्रुत्या गृहपतिदीक्षाब्रह्मदीक्षयोः वेदवेद्योरिव कर्मब्रह्मविचारयो-
रापि क्रमसिद्धेः। यज्ञादिश्रुत्या कर्मणामुपासनाङ्गतावेदनेन तद्विचारयोरपि क्रमसिद्धेश्च व्याख्येयवेदाध्ययनक्रमेण तदर्थापात-
प्रतीतेरपि क्रमिकत्वात्तत्प्रयुक्तविचारयोरपि तत्क्रमौचित्याच्च। कर्मफलाल्पास्थिरत्वनिर्णयसहितब्रह्मज्ञानानन्तस्थिरफलापात-
प्रतीतिमत्पुरुषकर्तृकतया ब्रह्मविचारं विदधत्या परीक्ष्येत्यादिश्रुत्यैव ब्रह्मविचारस्य कर्मविचाराधिकृताधिकारित्वावेदनेन
कर्मविचारानन्तर्यस्य अथशब्दार्थतायाः प्रामाणिकत्वाच्च। कर्मणां चित्तनैर्मल्यसम्पादनद्वारा ब्रह्मज्ञानोपयोगित्वस्यानेक-
प्रमाणप्रतिपन्नतया तद्विचारयोःपौर्वापर्यस्यावश्यकत्वाच्च। कर्मकाण्डीयन्यायोपजीवनाच्च तदानन्तर्यमेव युक्तम्। तथाहि
प्रमाणलक्षणं तावत्कृत्स्नोपयुक्तम्। भेदोपजीवी च गुणोपसंहारः। तार्तीयश्च श्रुतिलिङ्गादिस्सार्वत्रिकः। प्रयुक्तिश्च वर्णाश्र-
मधर्माणां विद्याप्रयुक्तत्वाश्रमप्रयुक्तत्वादावुपयुक्ता। गतिचिन्तायां च पाञ्चमिकःक्रमः। कर्ताविद्याऽधिकारचिन्तने। अति
देशश्च 'यदेव रूपं तदमुष्यरूपम्' इत्यादौ **'नानाशब्दादिभेदात्'** इत्यत्र आदिशब्देनाभ्यासाद्यर्थकेन शब्दान्तराद्यु-
पजीवनम्। 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इत्यत्र संयोगादिवाचिनाऽऽदिशब्देन 'एकं वा संयोगचोदनाख्याविशे-
षात्' इति शाखान्तराधिकरणस्थन्यायोपजीवनं 'श्रुत्यादिबलीयस्त्वाच्च नबाधः' 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इत्यादौ
तार्तीयन्यायोपजीवनमित्यादिकं प्रसिद्धम्। 'अल्पश्रुतेरितिचेत्तदुक्तम्' इतिवत् 'संज्ञातश्चेत्तदुक्तम्' 'कुशाच्छन्दस्तुत्यु-
पगानवत्तदुक्तम्' इत्यादिषु बहुश उक्तत्वोक्तिश्च तदानन्तर्यगमिका। वृत्तिकारश्च **वृत्तात्कर्माधिगमादनन्तरं ब्रह्म**
**विविदिषा** इत्याह। अतः कर्मविचारानन्तर्यमेवाथशब्दार्थो युक्तः॥

किंच कर्मफलविरक्तस्य वेदान्तविचारेऽधिकारः, तद्विरागश्च तदल्पास्थिरफलत्वनिश्चयेन। तन्निश्चयश्च न कर्मविचार-
मन्तरेणेति तदानन्तर्यमेव युक्तम्। यत्तु 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति
श्रुत्यैव कर्मफलत्वावच्छेदेनानित्यत्वनिश्चयादेव तन्निश्चय इति किं कर्मविचारेणेति भ्राम्यति। स इत्थं बोधनीयः। यद्यपि
श्रुतिभिः कर्मफलत्वावच्छेदेन क्षयित्वं बोधितम्। तथाऽपि न तन्मात्रेण तन्निश्चयः। नहिनिन्दान्यायेन ज्ञानप्रशंसामात्रत्व-
शङ्काग्रस्तत्वात् अनवधारणात्मकंतु ज्ञानं न वैराग्यहेतुः। अतःकर्मविचारादेव तन्निश्चय इति तदानन्तर्यमथशब्दार्थ इति
युक्तःपन्थाः॥ रागद्विरागाद्वैशिष्ट्यात् नैर्मल्याद्ज्ञप्तिवर्धनात्। न्यायो-

तथा च 'वृत्तिग्रन्थाच्छ्रुतेरर्थात् पाठाद्बोधक्रमात्क्रमात्। सर्वापातप्रतीतेस्तन्निर्णिनीषोदयादपि।
पजीवनादुक्तत्वोक्तेश्शास्त्रैक्यकीर्तनात्। अनधीत्याविचार्यत्वादधीतेस्सर्वसंग्रहात्॥ विचार्यैवतु कर्माणि कार्यं ब्रह्मविचा-
त्रय्यन्तमात्राध्ययने विध्यभावात्कथञ्चन॥ कर्मसापेक्षविज्ञानसिद्धये शुद्धबुद्धिभिः।
रणम्॥' अतःकर्मविचारानन्तर्यमथशब्दार्थ इत्यत्र न किंचिद्बाधकम्॥ 'परीक्ष्य लोकान्' इत्यादिश्रुति-

केचित्तु श्रुत्यर्थप्रवृत्तिमुख्यक्रमैश्चतुर्भिः कर्मब्रह्ममीमांसयोः पौर्वापर्यमवगम्यते। तथाऽपि पाञ्चमिकःक्रमोऽनभिधेयोऽपि विधेयइति गुरुमतानुसारात्
क्रमः। यद्यप्यत्र गुर्वभिगमनविधिपरत्वान्न क्रमोऽभिधेयः। पाकस्य होमंप्रतीव कर्मवि-
श्रौतक्रमसम्भवः। तथा अग्निहोत्रयवागूपाकयोरिव कर्मब्रह्मविचारयोरप्यर्थक्रमात्क्रमसिद्धिः। विचारक्रमइति
चारस्य ब्रह्मविचारंप्रतिहेतुत्वात्। प्राजापत्यपशुस्थले उपाकरणक्रमेण नियोजनादीनां क्रमवदध्ययनक्रमेण कर्मभागस्याध्ययनं ततो
प्रवृत्तिक्रमादपि तत्सिद्धिः। वेदेनार्थज्ञाने जननीये अध्ययनस्य विचारस्य च तदङ्गत्वात्पूर्वं सरस्वद्देवता-
ब्रह्मभागस्येत्ययं क्रमस्त्वनादिसंप्रदायसिद्धः। एवं च 'सारस्वतौ होमौ भवतः' इत्यत्र सरस्वतीदेवताक

## गूढार्थसंग्रहः

कयोः मुख्ययोः यागयोः मन्त्रपाठसिद्धक्रमात्तदङ्गनिर्वापक्रमवद्व्याख्येयतया मुख्ययोः कर्मब्रह्मभागयोः अनादिसंप्रदायावगतपाठक्रमात् तद्व्याख्यानतया तदङ्गभूतयोर्विचारयोरपि क्रमसिद्धयतीत्याहुः । विस्तरस्त्वन्यत्र । अतःकर्मविचारानन्तर्येऽथशब्दार्थे न कश्चिद्विरोधः ' इत्याहुः ॥

अत्र भाष्ये '**अथातो धर्मजिज्ञासा**' इत्यारभ्य '**अनावृत्तिश्शब्दात्**' इत्येवमन्तम् इत्यत्र **अनावृत्तिश्शब्दात्** इति सूत्रविवक्षितपुरुषार्थसाधनमपि **अथातो धर्मजिज्ञासा** इत्यत्र धर्मशब्दे विवक्षितम् । ' परं जैमिनिर्मुख्यत्वात् ' इत्यत्र गतिद्वारा परब्रह्मप्राप्तेर्जैमिनिसंमततायाः स्फुटं व्यासेन निर्धारणात् । जैमिनेः वेदान्तार्थपरिज्ञानसत्त्वेऽपि व्यासशिष्यत्वेन अप्रधानार्थनिरूपणप्रवृत्ततया ' चोदनालक्षणोऽर्थो धर्मः ' इत्यादिना कर्मण एव निरूपणेन ' धर्मजिज्ञासा ' इत्यत्र कर्मविचारोऽपि विवक्षितः । नचैतावता ' एष पन्था एतत्कर्म एतद्ब्रह्म ' इत्यैतरेयोपनिषदुपक्रमश्रुत्यभिप्रेत कर्मब्रह्मोभयसाधारणपुरुषार्थसाधनत्वाकारः जैमिनेरनभिमत इति कल्पयितुं शक्यम् । जैमिनेर्व्यासशिष्यत्वस्य महाभारतादौ स्पष्टतया उपकोसलविद्यायाम् ' आचार्यस्तु ते गतिं वक्ता ' इति शिष्योक्तिमात्रेण शिष्याणां गतिज्ञानविरहस्थापनासंभववत् गतिसाध्यफलविशेषज्ञानासंभवस्य जैमिनेः कल्पयितुमशक्यतया तद्ज्ञानसत्त्वे वेदार्थसामान्यस्यापि धर्मशब्दे जैमिनेर्विवक्षाया निश्चयसम्भवात् । उक्तं च परैरपि ' ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तात्मनोऽस्तित्वमुक्तम् ? सत्यमुक्तं भाष्यकृता नतु तत्रात्माऽस्तित्वे सूत्रमस्ति । इहतु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरस्सरं प्रसाधितम् । इत एवचाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । ' अतएव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्माऽस्तित्वाभिधानप्रसक्तौ ' शारीरके वक्ष्याम इत्युद्धारःकृतः ' इति ' एक आत्मानः शरीरेभावात् ' इति सूत्रे । अत्रोपवर्षस्य पूर्वोत्तरमीमांसयोः ऐकप्रबन्ध्यरूपैकशास्त्रत्वं सम्मतमिति शङ्कराचार्याणामाशयः स्फुटं प्रतीयते । ' एष पन्था एतत्कर्म एतद्ब्रह्म ' इति श्रुतिरेव वेदैकप्रतिपाद्यत्वश्रेयस्साधनत्वरूपं धर्मत्वं ब्राह्मणः प्रतिपादयति । सहस्रनामभाष्ये ' अणुरेष धर्मः ' इति श्रुत्या ब्रह्मणो धर्मत्वं शङ्कराचार्यैरप्युक्तम् । एवं ' धर्मो वा इदमग्र आसीत् न पृथिवी न वायुर्नाकाशः न ब्रह्मा न रुद्रः न ऋषयः सोध्यायत् ' इति (९.३) गीताभाष्ये आनन्दतीर्थोदाहृतसामवेदशाखावाक्यमप्यत्र प्रमाणम् ॥

' धर्मजैमिनिरत एव ' इति सूत्रंतु कर्मप्रतिज्ञातात्पर्येण । नैतावता ब्रह्मणः धर्मत्वं नास्तीत्याशयः कल्पयितुं शक्यते पूर्वकाण्डे कर्मणां त्रिवर्गार्थिजनोपकाराय ऐहिकामुष्मिकफलसाधनत्वप्रतिपादनेन त्रिवर्गार्थिनां स्वतन्त्रात्माभिमानस्यावर्जनीयतया स्वशक्त्यैव फलसिद्ध्युपदेशमन्तरा तेषां कर्मसु प्रवृत्तिरेव न सम्भवतीति ' चोदना पुनरारम्भः ' इति सूत्रे अपूर्वद्वारतया जैमिनिना निरूपितम् । नहि पूर्वकाण्डोक्तफलविरक्ता बहवः लोके सन्ति । अविरक्तानां कर्मभिर्नित्यफलसिद्धिनिश्चये वेदप्रामाण्ये दृढाध्यवसायेसति अनन्तरमाचार्यएव कर्मणामप्यङ्गिद्वारा मुक्तिफलसाधनत्वं कर्मब्रह्मणोरुभयोरपि फलसाधनत्वंचोपदिशत्विति जैमिनेरभिप्रायः । एवं च ' ये च वेदविदो विप्रा येचाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ ' इत्यपि ' रामो विग्रहवान्धर्मः, मूर्तिमती कीर्तिः ' इत्यादिसमशीलं न भवति । अत्र ' वेदविदः ' इत्याद्युक्त्या कृत्स्नवेदतात्पर्यवेदनं, ब्रह्मवेदनं च येषां वर्तते ते वदन्ति इत्यर्थसिद्ध्या अत्र तादृशार्थकल्पनायोगात् सनातनमित्यनेन स्थिरत्वस्य प्रतिपादनेनास्थिरकर्मव्यावृत्तिरपि स्फुटा । अतश्च महाभारतवचनमपि ब्रह्मणो धर्मत्वे स्फुटं प्रमाणम् । नहि सामान्याकारेण '**अथातो धर्मजिज्ञासा**' इत्युक्तिमात्रेण '**अथातो ब्रह्मजिज्ञासा**' इति प्रतिज्ञायाः वैयर्थ्यं पौनरुक्त्यं वा शङ्कितुं शक्यम् । प्राधान्येनोत्तरभागविचारप्रतिज्ञायाः ' एष पन्थाः ' इति श्रुत्यनुसारेणावश्यकत्वात् । ब्रह्मणः आनन्दरूपत्वेन पुरुषार्थत्वविशेषप्रबोधनार्थत्वाच्च ॥

## गूढार्थसङ्ग्रहः

उक्तं च परिमलेऽपि–'धर्मजिज्ञासासूत्रे ब्रह्ममीमांसासाधारणीवेदार्थविचारप्रतिज्ञा धर्ममीमांसामात्रासाधारणी धर्मवि चारप्रतिज्ञाचेति द्विविधा प्रतिज्ञा विवक्षिता ; सूत्राणामावृत्त्याऽनेकार्थप्रतिपादनस्यालङ्कारत्वात्। अतएव 'अथातश्शेषलक्ष- णम्' (जै.सू.३.१.१) इति तृतीयाध्यायाद्यसूत्रं वार्तिककृता 'द्विलक्षण्याःपरं शिष्टं यावत्किंचन लक्षणम्। तत्सर्वं वक्तु मारब्धमथातश्शेषलक्षणम् ॥' इत्यवशिष्टाध्यायार्थविचारप्रतिज्ञापरं व्याख्याय अनन्तरं तृतीयाध्यायार्थशेषशेषिभाववि- चारप्रतिज्ञापरत्वेनापि व्याख्यातम्। एवं च यथा 'शेषःपरार्थत्वात्' इति द्वितीयमारभ्य तृतीयाध्यायसूत्राणि शेषशेषि- भावमात्रविषयाणि एवं चोदनासूत्रं (जै.सू.१.१.२) आरभ्य द्वादलक्षणीसूत्राणि धर्ममात्रविषयाणि। अतएव चोदना- सूत्रे धर्मस्यैव विधिगम्यत्वं लक्षणमुक्तम्। नहि ब्रह्मणो विधिगम्यत्वमस्ति। अतः 'तस्य निमित्तपरीष्टिः' इति सूत्रे धर्म- प्रमाणमेव परीक्ष्यत्वेन प्रतिज्ञातमिति तदनुसारेण 'आम्नायस्य क्रियाऽर्थत्वात्' (जै.१.२.१) इति सूत्रं धर्मप्रमाणत्वेना- भिमतस्य क्रियार्थत्वेनैव तत्र प्रामाण्यं वक्तव्यमित्येतत्परम्। 'विधिनात्वेकवाक्यत्वात्' (जै.सू.१.२.७) इति सूत्रमपि धर्मप्रमाणत्वाभिमतक्रियाविधिसमभिव्याहृतत्वायुक्षेपिष्ठाऽऽदिवाक्यमात्रविषयमिति न कश्चिद्विरोधः' इत्युक्तम् ॥

'संहितमेतच्छारीरकम्' इति वृत्तिवाक्ये एतत्–व्यासकर्तृकम् इत्यर्थः। व्यासजैमिन्योरुभयोराचार्यशिष्यभावेन कर्मब्रह्ममीमांसयोर्भिन्नकर्तृकत्वेऽपि सङ्गतिमत्त्वेनैकप्रबन्धयं निर्वहतीत्यपि वृत्तिवाक्ये विवक्षितम्। वृत्तिवाक्ये शारीरकश- ब्देन 'य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते' इति पूर्वप्रस्तुतजीवभिन्नपरमात्मैव 'तमेतं वेदानुवचनेन' इति श्रुतौ विवक्षित इत्यभिप्रायसूचनेन सविशेषविद्यैव 'विविदिषन्ति' इत्यत्र विवक्षितेति सिद्धया फलजिज्ञास्यभेदेन कर्मब्रह्ममीमां- सयोस्सङ्गत्यभावादिकथनप्रयासः परेषां विफलइत्यपि सिद्धम् ॥

'सुषुप्त्युत्क्रान्त्योर्भेदेन' 'पत्यादिशब्देभ्यः' इत्यादिशब्दद्वयपर्यालोचनायां 'तमेतम्' इत्यत्र तच्छब्दे जीव- भिन्नपरमात्मैव विवक्षित इति सूत्रकृदाशयः श्रीभाष्य एव स्फुटीभविष्यति। यद्यपि सुषुप्त्युत्क्रान्त्योर्भेदेन इतिसूत्रभाष्ये (शं) परैः 'सवा एष महानज आत्मा योऽयं विज्ञानमयःप्राणेषु' इति योऽयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते सवा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः' इत्यत्र जीवाभिन्नपरमात्मैव 'स वा एष महानज' इति श्रुतौ विवक्षित इत्युक्तम्। एवं 'पत्यादिशब्देभ्यः' इत्यत्रापि उक्तार्थ एव विवक्षित इति न्यायरक्षामणावभिहि- तम्। तथाऽप्ययमर्थः न सूत्रकृदभिमतः। 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रे 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंच न वेद नान्तरम्' इति श्रुत्या जीवपरयोर्भेद एव विवक्षित इति परेषामपि संमतम्। तदनुसारेण 'स वा एष महान्' इत्यत्रापि जीवभिन्नपरमात्मैव विवक्षित इति सूत्रकृदाशयः स्फुटं प्रतीयते। 'स वा एष महानज आत्मा, योऽयं वि- ज्ञानमयःप्राणेषु, य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते, सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा- भूयान्नो एवासाधुना कनीयान् एष सर्वेश्वरः एष भूताधिपतिः' इत्यादिवाक्यक्रमः। अत्र 'योऽयं विज्ञानमयःप्राणेषु' इत्यत्र जीवः विवक्षितः। य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते' इति परमात्मनि शयनं तस्य प्रतिपादितम्। एतद्वा- क्यात्पूर्वं 'विरजःपर आकाशादज आत्मा महान्ध्रुवः' इति वाक्यं, स एव 'सवा एष महानज आत्मा' इत्यत्रोक्तः परमात्मा। 'य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते' इत्यत्र आकाशशब्दार्थः 'महानजआत्मा।' तस्मिंश्छेते इत्यर्थः। इत्थमुक्तिः आकाशात्परत्वस्य पूर्वमात्मनि प्रतिपादनेन 'य एषोऽन्तर्हृदय आकाशः' इत्यत्र आकाशशब्दार्थः न पर- मात्मेति भ्रमनिरासाय। परभाष्ये 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इति सूत्रे आत्मनीत्यर्थः 'य एषोऽन्तर्हृ- दय आकाशस्तस्मिंश्छेते' इत्यत्र विवक्षितः आकाशशब्दार्थश्च ब्रह्म इत्युक्त्या साधितः। इदं च वाक्यमजातशत्रुब्रा- ह्मणान्ते सुषुप्तिप्रकरणे वर्तते इति तत्समशीलेऽत्रत्यवाक्येऽपि स एवार्थो विवक्षितः ॥

## श्रुतप्रकाशिका

अत्रामी सङ्गतिविशेषा अभिप्रेताः। पाठक्रमः चेतनानां त्रिवर्गे प्रथमप्रावण्यसम्भवरूपोऽर्थस्वभावः, औपनिषदेष्वङ्गाङ्गिभावप्रतिपादकवाक्येषु यज्ञादिकर्मणः पदार्थत्वेन संबन्धः कासुचिद्विद्यासु यज्ञतदुपकरणादीनां दृष्टिविशेषणत्वोक्तिः, कर्मब्रह्मविषयोर्दृष्टान्तदार्ष्टान्तिकभावः विद्याकर्मणोरुत्पाद्योत्पादकभावात्तच्छेषभूतविचारयोस्तत्क्रमत्त्वोपपत्तिः, व्याख्यानभूतमीमांसायां चोत्तरभागस्य पूर्वभागोक्तन्यायसापेक्षत्वंचेति एवं पौर्वापर्यनियामकसङ्गतिविशेषेण **विशिष्टक्रमं** क्रमविशेषवदित्यर्थः ॥

## गूढार्थसंग्रहः

एवम् 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके' इत्येतद्भाष्ये (शं) 'अपिचैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति। 'य एष विज्ञानमयःपुरुषः क्वैष तदाऽभूत्कुत एतदागात्' (बृ.४.१.३४) इति प्रश्ने। प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते' इति। आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नन्तर आकाशः' इत्यत्र इत्यत्र 'य एषोऽन्तर्हृदयआकाशस्तस्मिंश्छेते' इति वाक्यं जीवाभिन्नब्रह्मप्रतिपादकमिति स्फुटम्। एवं च चतुर्थाध्यायवाक्यसमशीलषष्ठाध्यायवाक्येऽपि जीवभिन्नपरमात्मैव विवक्षित इति सूत्रकृदाशयस्सिद्धः ॥

एतेन 'कामादीतरत्र तत्रचायतनादिभ्यः' इति सूत्रे दहरविद्यावाक्ये 'सवा अयं महानज आत्मा' 'सर्वस्य वशी' इति वाक्ये च विद्यैकत्वं प्रसाध्य वशित्वादितु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके सङ्कीर्त्यते। तथाचोपरिष्टात् 'स एष नेति नेतीत्यात्मा' इत्यादिना निर्गुणमेव ब्रह्म उपसंहरति' इति परभाष्योक्तार्थः सूत्रकारानभिमत इति सिद्धम्। 'स एष नेति नेत्यात्मा' इत्यस्य न निर्गुणपरत्वं अपितु सगुणपरत्वमेवेति प्राचीनैश्शबरादिभिरेव साधितम्। यथावसरं तस्य सगुणपरत्वं साधयिष्यते। सुषुप्तावविद्यायाः अन्तःकरणसंस्कारस्य च सत्वेन जीवब्रह्माभेदः परमतेऽपि दुर्निरूपएवेति 'तमेतम्' इत्यादिश्रुतौ जीवाभिन्नं निर्विशेषमेव विवक्षितमिति नैव सिद्ध्यति। सुषुप्तौ लयः प्रबोधे सृष्टिरित्यङ्गीकारः सृष्टिदृष्टिपक्षे न संभवति प्रत्यक्षबाधात्। तथा सुषुप्तौ तत्त्वानां स्वकारणतत्वेषु लयस्य क्वापि श्रुतिष्वप्रतिपादनाच्च। दृष्टिसृष्टिपक्षोऽपि न सम्भवतीति भावप्रकाशे निरूपितम्। अजातशत्रुब्राह्मणान्ते सृष्ट्यभिधानस्य तात्पर्यं **औपनिषदपरमपुरुष** इति सूक्तिविवरणावसरे निरूपयिष्यते ॥ एवं च 'य एषोऽन्तर्हृदय आकाशः' इत्यत्र जीवाभिन्नं परमात्मानं प्रस्तुत्य 'सर्वस्य वशी सर्वस्येशानः' इत्यत्र तद्गुणानभिधाय 'तमेतं वेदानुवचनेन' इत्याद्युक्तौ सगुणवेदनमेव विवक्षितमिति सिद्धम्। अस्यार्थस्योत्तरत्र श्रुतिसूत्राद्यभिप्रेतत्वस्य निरूपयिष्यमाणतया तदभिप्रायेण **सङ्गतिविशेषेण विशिष्टक्रमम्** इत्युक्तम् ॥

कर्मब्रह्ममीमांसयोस्सङ्गतत्वेन एकप्रबन्धत्वरूपैकशास्त्रत्वाङ्गीकारे धर्मविचारे प्रवर्तकः सोऽयमध्ययनविधिः स एव ब्रह्मविचारे प्रवर्तकस्स्यात्। एवमङ्गीकारे जिज्ञासाशब्दस्य यौगिकत्वमङ्गीकृत्य ब्रह्मणः इच्छाविषयत्वेन ब्रह्मज्ञानस्येच्छाविषयत्वबोधनेन ब्रह्मविचारे रागतःप्रवृत्तिः या सूत्रसूचिता सा न घटते। अध्ययनविधेः अर्थज्ञानपर्यन्तत्वेन विचारे प्रवृत्तेः वैधत्वस्य मीमांसकैः स्थापनात्। प्राभाकरैः अध्यापनप्रयुक्तत्वस्याङ्गीकारेऽपि तन्निरसनपूर्वकमध्ययनविधिप्रयुक्तत्वस्य भाट्टैः स्थापनात्। धर्मविचारस्याध्ययनविधिमूलकत्वे ब्रह्मविचारोऽपि तन्मूलकएवेति ऐकशास्त्र्याङ्गीकारपक्षे युक्तम्। अभ्युपगतश्चायं पक्षः वाचस्पतिना। एवं च ऐकशास्त्र्यक्रमनियमादिकं वा परित्याज्यम् विचारस्य इच्छाविषयत्वबोधनेन रागतःप्रवृत्तिर्वा त्याज्या नतु उभयाङ्गीकारो युक्तइत्याशङ्का प्राप्ता। तामपाकर्तुमध्ययनविधेः नार्थज्ञानपर्यन्तत्वमपितु

## श्रीभाष्यम्

### तथाहि

### श्रुतप्रकाशिका

**ननु** भवतु वेदप्रामाण्यसिद्धये प्रथमाध्यायस्य पूर्वभावित्वं * द्वितीयाध्यायात्पूर्वं ब्रह्मविचारः किं नस्यादितिचेन्न, तत्रतत्रोक्तैस्सङ्गतिविशेषैष्षोडशलक्षणानुपूर्वीसिद्धेस्तदनन्तरप्राप्तत्वाद्ब्रह्मविचारस्येत्यभिप्रेत्य **सङ्गतिविशेषेण विशिष्टक्रमम्** इत्युक्तम्। एवमत्रैकशास्त्रत्वं पौर्वापर्यनियमश्शास्त्रस्यारम्भणीयत्वं चेति त्रयं प्रतिज्ञातम् । पूर्वोक्तस्य साङ्गसशिरस्काध्ययनस्य प्रमाणं दर्शयन् साधनचतुष्टयसम्पादनस्यचानवसरग्रस्ततां च दर्शयन्प्रतिज्ञातार्थत्रयमुपपादयितुमाह–**तथाहीति**।

### गूढार्थसङ्ग्रहः

अक्षरराशिग्रहणमात्रपर्यवसितत्वमेवेतीति पञ्चपादिकोक्तपक्षमेवाङ्गीकृत्य तदुक्त, उत्तरक्रतुविधिप्रयुक्तो धर्मविचारः श्रवणविधिप्रयुक्तो ब्रह्मविचारइत्यंशोऽनुपादेयः; एवं मननविधिप्रयुक्तो ब्रह्मविचारः अध्ययनविधिप्रयुक्तो धर्मविचारः इति नवीनपक्षोऽप्यनुपादेयः इत्यभिप्रेत्य उक्तार्थं साधयितुमुपक्रमते–**तथाहि इत्यादिना** ॥

अत्र पञ्चपादिका—'वेदार्थत्वादेव ब्रह्मज्ञानं कर्तव्यम्। स्वाध्यायाध्ययनस्य अर्थावबोधनफलकत्वात् । स्यादेतदेवं यद्यर्थावबोधफलाऽध्ययनक्रिया स्यात् । साहि अधीयमानावाप्तिफलकत्वादक्षरग्रहणान्ता । अथाक्षरग्रहणं निष्प्रयोजनमिति न तत्र पर्यवसानं विधेः, भवतु तर्हि सक्तूनांगतिः तदपि न, अक्षरेभ्यः प्रयोजनवदर्थावबोधदर्शनात् । न तर्हि निष्प्रयोजनान्यक्षराणि अतस्तत्पर्यन्तमध्ययनं न निष्फलम्। अतोऽक्षरग्रहणादेव नियोगसिद्धेः फलप्रयुक्तएवार्थावबोधः अपि च अक्षरग्रहणपर्यन्तो विधिः निष्प्रयोजन इति न सर्वत्र प्रयोजनवदर्थावबोधपर्यन्तता कल्पयितुमपि शक्यते । तत्रावश्यं कल्पनीयाऽक्षरग्रहणान्तता। तद्यथा राजन्यस्य सत्रवैश्यस्तोमबृहस्पतिसवानामाम्नानं वैश्यस्य चाश्वमेधराजसूयसत्राणां पाठः। नच तेषामनध्ययनमेव स्वाध्यायशब्देन सकलवेदवाचिनाऽध्ययनस्य विहितत्वात् । ननु च अश्रूयमाणाधिकारः अध्ययनविधिः। दृष्टश्चाक्षरग्रहणेऽर्थावबोधः, स कल्पनामधिकारस्य निरुन्धन् स्वयमधिकारस्य हेतुस्संपद्यते। दृष्टाधिकारेषु प्रत्यक्षतस्तदुपलब्धौ अधिकारसिद्धिः। अतोऽर्थावबोधपर्यन्तः स्वाध्यायाध्ययननियोगः तेन नियोगसिद्ध्यर्थमेव सकलवेदार्थविचारः। अत्रोच्यते–भवेदध्ययनविधेरर्थावबोधः प्रयोजनम्। नाधिकारहेतुता ; अध्ययनात्प्रागसिद्धत्वात् । प्राक्चाधिकारज्ञानेन प्रयोजनम्। अतो न विधेः दृष्टाधिकारत्वेनार्थावबोधसिद्धिः। यद्येवमधिकाराश्रवणात् अर्थावबोधे च प्रतिपक्षकल्पनानुपपत्तेः तस्यचाधिकारहेतुत्वानभ्युपगमात् अप्रवृत्तिरेवाध्ययने प्राप्ता' इत्युपक्रम्य प्रभाकरमतं निरूप्य तद्दूषयित्वा 'यदैवोपनयीतेति शब्दतो न्यायतश्चात्मानमाचार्यं कर्तुमुपनयनेन संस्कृत्य कंचिदध्यापयेत् इति प्रतीयते, तदैव यागश्रुतौ द्रव्यदेवतामात्रप्रतीतिवत् अध्ययनायोपनयनेन संस्कार्योऽपि सामान्यतः प्रतीयते तस्य च प्रेक्षावतो निष्प्रयोजने प्रवर्तयितुमशक्यत्वात् विद्यमानस्याप्यध्ययने अर्थावबोधस्य प्रागसिद्धेः प्रवृत्तिहेतुत्वासिद्धेः। विधितोऽवश्यकर्तव्यतां प्रतिपद्य स्वयमेव प्रवर्तते। तेन 'अष्टवर्षं ब्राह्मणमुपनयीत' इति अष्टवर्षो ब्राह्मणः उपसर्पेदाचार्यमित्यर्थः, ग्रामकामं याजयेत् ग्रामकामो यजेतेति यथा। नन्वेवमप्यधिकारो न लभ्यते अस्त्यत्राधिकारहेतुः नित्यं निमित्तं वयो विशिष्टा जातिः, जातिविशिष्टं वयो वा। ननु जातिवयसी विशेषणमुपादेयस्य अनुपादेयविशेषणमधिकारहेतुरिति स्थितिः, सत्यमस्तीयं स्थितिः। किंतु कर्तुरधिकारे इत्यपिस्थिता न्यायविदः। किंच इह न माणवको जातिवयोविशिष्टः उपादेयः उपनयने, किंतु उपनयनमेव तदर्थं विधीयते। संस्कारस्य संस्कार्योद्देशेन विधानात् अतः संस्कार्यस्यावच्छेद-

## गूढार्थसंग्रहः

कत्वं वयोजात्यवच्छिन्नं सद्भवति नित्यनिमित्तं माणवकस्य संस्कार्यत्वे इति तदेवमुपनयनस्याध्ययनार्थत्वात् तस्य च साधिकारत्वात् तेनचाधिकारेण साधिकारोऽध्ययनविधिः अक्षरग्रहणमात्रेणाधिकारसिद्धिः । अर्थावबोधस्तु कारणान्तरादिति' इति च ॥

अत्र विवरणम्—'प्रसिद्धं च सर्वस्मृतिशास्त्रेषूपनयनमध्ययनाङ्गमिति वाजसनेयिनांचोपनयनं प्रकृत्याऽध्ययनं विधीयते विधिद्वयसामर्थ्यंचोपादानप्रमाणदर्शितम् । इहापि 'तमध्यापयीत' इत्युपनीतं तच्छब्देन परामृशति । अङ्गाङ्गिनोश्चैकाधिकारत्वादुपनीतो ब्राह्मणोऽधीयेतेति संपद्यते । अङ्गाधिकारनिमित्तस्य कालस्य सर्वत्राङ्गिन्यन्वयनियमाभावात् वयसो नाध्ययनाधिकारनिमित्ततेति । ननु नित्याधिकारेणाध्ययनविधिनाऽर्थावबोधो भाव्यतामिति, नेत्याह—अक्षरग्रहणमात्रेणचेति । ननु सकृदध्ययनादेव नित्याध्ययनविधिसिद्धेरावृत्तिः केन लभ्यते ? अर्थावबोधफलपक्षे वा कथं लभ्यते फलावसानानुपपत्तेरितिचेत् इहापि समानम् ; अक्षरावाप्तेःफलत्वात् । ननु अदृष्टमेव विधिफलमित्युक्तम्, समानमर्थावबोधपक्षेऽपि' इति ॥

विवरणप्रमेयसङ्ग्रहे—'अनारभ्याधीतस्योपनयनस्याध्ययनाङ्गत्वबोधकानां पूर्वतन्त्रतृतीयाध्यायोक्तश्रुत्यादिप्रमाणानामभावेऽपि तत्रस्थचतुर्थाध्यायोक्तविध्याक्षेपरूपोपादानप्रमाणेनोपनयनस्याध्ययनाङ्गत्वं सिद्ध्यति । अनुपपन्नं स्वाचार्योपसत्तिमन्तरेणाध्ययनं लिखितपाठादिप्रतिषेधेन आचार्याधीनश्चेदमधीयेत्युपसत्तौ नियमविधानात् । ततोऽध्ययनविधिरुपसत्तिं स्वाङ्गत्वेनाक्षिपति । तथोपनयनाख्यसंस्कारविधिश्च प्रयोजनमपेक्षमाणः उपसत्तिसमवेतमेवादृष्टं कल्पयति दृष्टसमवाय्यदृष्टसम्भवे स्वतन्त्रादृष्टायोगात् । ततश्चोपनयनाध्ययनविधिद्वयोपादानसामर्थ्यादध्ययनाङ्गत्वमुपनयनस्यावगम्यते । नच वाच्यनङ्गत्वेऽपि न प्रोक्षणादिवत्संस्कारकर्मतयाऽङ्गता प्रयाजादिवत्फलोपकार्यङ्गतैव किं न स्यादिति । अङ्गिस्वरूपनिष्पादकतया संनिपत्योपकारिणस्संस्कारस्याभ्यर्हितत्वात् । फलोपकार्यङ्गंतु नाभ्यर्हितम् । अपूर्वद्वारेणारादुपकारकत्वात् । अतो माणवकसंस्कारकर्मतयैवोपनयनंस्वरूपोपकार्यङ्गम् । किंचोपादानवच्छ्रुतिप्रकरणेऽप्यध्ययनाङ्गत्वमुपनयनस्य गमयतः अष्टवर्षो ब्राह्मण उपगच्छेत्सोऽधीयेतेति वाक्यविपरिणामस्य विवक्षितत्वात् । तच्छ्रुतिरेवोपनयनसंस्कृतं माणवकमादायाध्ययने विनियुङ्क्ते । नच तच्छब्देनैव माणवकस्यैव परामर्शो न संस्कारस्येति वक्तुं युक्तम् । संस्कारस्यानन्तरप्रकृतत्वात् नच श्रुतेरनाकांक्षितस्य समर्पणप्रसङ्गः । उपनयनाध्ययनयोरुपसत्तिद्वारा परस्पर साकांक्षत्वस्य दर्शितत्वात् ॥

ननु 'सोऽधीयीत' इत्यत्र संस्कृतो माणवकः प्रातिपदिकार्थ एव नतु विभक्त्यर्थः । नच प्रातिपदिकमात्रमङ्गाङ्गिभावसंबन्धं बोधयितुमलम् द्वितीयाश्रुत्यादेरेव तद्बोधकत्वादितिचेत्—मैवम् ; प्रातिपदिकस्याप्यन्विताभिधायितया संबन्धप्रतिपादकत्वात् अन्विताभिधायित्वाभावे तत्प्रयोग एव न स्यात् । तस्मात्तच्छब्दश्रुतिरङ्गत्वं गमयति ॥ तथाप्रकरणमपि तद्गमकं वाजसनेयिशाखायां सर्वस्मृत्यनुमितश्रुतिषु चोपनयनं प्रकृत्याऽध्ययनविधानात् । नचैवमुपनयनप्रकरणे पठितमध्ययनमेवाङ्गं प्रसज्येतेति वाच्यम् ; अध्ययनस्य फलत्वात् । 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेनैवोपनयनस्यैवाङ्गत्वप्राप्तेः । अतः उपादानश्रुतिप्रकरणैरुपनयनस्याङ्गत्वं सिद्धम्' इति विवरणोक्तार्थविवरणं च कृतम् ॥

अनन्तरं च पञ्चपादिकायाम्—'ननुचैवमधीतो वेदः धर्मजिज्ञासाया हेतुर्ज्ञातः, अनन्तरं धर्मो जिज्ञासितव्यः, इति वेद एवाधीतोऽन्यनिरपेक्षो धर्मजिज्ञासाया हेतुरिति वदन्ति सत्यम् ; तथैवतत् कोवाऽन्यथा वदति, अधीववेदोह्यवश्यकरणीयानि नित्यनैमित्तिकान्यकरणे प्रत्यवायजनकानि कर्माणि प्रतिपद्यते तान्यनन्तरमेवावश्यविचारणीयानि कथमेतान्यनुष्ठेयानीति । अतः प्रागध्ययनादप्रतिपत्तेरयोग्यत्वादधीतवेदत्वमेवान्यनिरपेक्षमर्थावबोधहेतुरिति गीयते' इति ॥

## श्रीभाष्यम्

**प्रथमं तावत् ' स्वाध्यायोऽध्येतव्यः ' (तै.आ.प्र.२.१५) इत्यध्ययनेनैव**

## श्रुतप्रकाशिका

प्रतिज्ञातार्थत्रयोपपादनार्थमध्ययनविधिं निरूपयति **प्रथममिति** ॥

## गूढार्थसंग्रहः

अत्र विवरणम्—' ननु वेदस्यैवान्यनिरपेक्षतया विचारहेतुत्वं वदन् भाष्यकारोऽध्ययनविधेरेव विचारहेतुत्वमाहेति चोदयति—ननुचैवमधीतो वेदइति । सत्यम् विचारस्य प्रयोजकोत्तरविधिप्रदर्शनद्वारेण विचारहेतुः स्वाध्यायः नाध्ययनविधिविधेयताद्वारेणेति परिहरति—सत्यम् ; तथैवतदित्यादिना । ननु स्वाध्यायादापातप्रतिपन्नोत्तरविधिरनिश्चितः कथं विचारं प्रयुङ्क्ते इति ? तदाह—अधीतवेदोह्यवश्यकरणीयानीति । आपातप्रतिपन्नानामुत्तरनित्यविधीनामनुष्ठेयनिर्णयज्ञानसापेक्षत्वात् तन्निर्णयाय विचारप्रयोजकत्वमिति । काम्यवाक्यविचारमप्याधानवत् फलकामनैव प्रयुङ्क्ते । ननु अनेकविधिप्रयुक्तिकल्पनात् वरमध्ययनविधिप्रयुक्तिकल्पनं विचारस्य न ; विधेयतदुपकारिव्यतिरिक्तस्य विचारस्याप्रयोक्तत्वादध्ययनविधेरित्युक्तत्वात् उत्तरविधिविधेयोपकारित्वात् विचारस्य तत्प्रयुक्तिस्संभवति । प्रतिवाक्यं निर्णयज्ञानभेदाच्च विधिभेदो न विरुध्यते । अन्यथा यागाद्यनुष्ठानस्याप्यध्ययनविधिप्रयुक्तत्वं स्यात्, स्वर्गादिसिद्धिपर्यन्तत्वादध्ययनविधिफलस्य ॥

ननु अध्ययनमप्युत्तरविधिप्रयुक्तं स्यात्, अध्ययनमन्तरेण विचारनिर्णायकत्वानुष्ठानासिद्धेरिति तत्राह—अतःप्रागध्ययनादप्रतिपत्तेरिति । प्रागध्ययनादुत्तरविधीनामप्रतिपत्तेर्नाध्ययनप्रयोजकत्वमित्यर्थः । अध्ययनविधिश्च सन्ध्योपासनादिविधिवत् पित्रादिभ्यः श्रूयमाणः प्रवर्तयति । नच सकलोत्तरविधीनामध्ययनात्प्राक् श्रवणं संभवतीत्युक्तम् ' इति ॥

' तस्माद्ब्रह्म विजिज्ञासितव्यम् ' इति प्रथमसूत्रभाष्यविवरणे अन्तर्नीतविचारार्थविधेयत्वाङ्गीकारेण मीमांसितव्यमित्यर्थः' इति समन्वयाधिकरणे ' आत्मा वा अरे द्रष्टव्यः ' इति श्रुतिविवरणे ' तथा च श्रवणं नामात्माऽवगतये वेदान्तवाक्यविचारः ' इत्युपक्रम्य ' एतच्च सर्वं प्रथमसूत्रेणैव सूत्रितं विवृतं च सूत्रे ' इति पञ्चपादिकायामुक्तम् । अत्र विवरणम्—' मनननिदिध्यासनोपबृंहितस्य श्रवणस्य विधेयत्वमङ्गीकृत्य प्रथमसूत्रं प्रवृत्तमित्यर्थः ' इति । एतेन ब्रह्मविचारः श्रवणविधिमूलइत्युक्तं भवति ॥

ऋग्वेदभाष्ये च प्रथमाष्टके कर्मविचारं प्रस्तुत्य ' विचारउत्तरविधिप्रयुक्तउपपद्यतइति ' इति, ' ननु उक्तनीत्या अध्ययनस्याक्षरग्रहणान्तत्वेऽर्थज्ञानमविहितं स्यात्; मैवम् । वाक्यान्तरेण विधानात् ' ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च ' इति तद्विधिः । तत्र निष्कारणशब्देनाध्ययनज्ञानयोः काम्यत्वं निवार्यते । अर्थज्ञाने पुरुषप्रवृत्तिकरं वचनद्वयं शाखान्तरगतं निरुक्तकारो यास्क एवमुदाजहार—' अथापि ज्ञानप्रशंसाभवत्यज्ञाननिन्दा च । स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥ यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधौ न तज्ज्वलति कर्हिचित् ' ॥ इति इत्युक्तम् ॥

**स्वाध्यायोऽध्येतव्य इतीति** । ' अपहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्तंयोनूत्सृजत्यभागो वाचिभवत्यभागो नाके तदेषाभ्युक्ता । यास्तित्याय सखिविदगुँसखायं न तस्य वाच्यपिभागो अस्ति । यदीगुँश्रृणोत्यलकगुँश्रृणोति नहिप्रवेदसुकृतस्य पन्थामिति । तस्मात्स्वाध्यायोऽध्येतव्यः ' इति ' यंयंक्रतुमधीते तेन तेनास्येष्टंभवति ' (तै.आ.२.१५) इतिश्रुतिक्रमः । ' वेदानधीत्य वेदौ वा वेदंवाऽपि यथाक्रमम् । ' (२.३) इति मनूक्तदिशा एकवेदपक्षे पितृपितामहादिपरम्पराप्राप्तएव

श्रीभाष्यम्

**स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ।**

श्रुतप्रकाशिका

**ननु** वेदप्रामाण्यसमर्थनमिव कर्मविचारसिद्धमध्ययनविधिनिरूपणं किं नोपजीव्यत इतिचेन्न, अर्वाचीनव्याख्यातृभिरर्थज्ञानपर्यन्ततायास्तत्रोक्तत्वात् ; अक्षरराशिग्रहणपर्यन्तत्वंहि भगवद्बादरायणाभिमतम् । **अध्ययनमात्रवत** इतिहि वक्ष्यते । अतस्तत्र वक्ष्यमाणोऽर्थः शास्त्रारम्भणीयत्वायात्र प्रतिपाद्यते अध्ययनविधेरक्षरराशिग्रहणमात्रपर्यन्तत्वे निरूपिते शास्त्रस्यारम्भणीयत्वसिद्धेः कृत्स्नविषयत्वानिरूपणेनैकशास्त्रपौर्वापर्यनियमसिद्धेः कथमक्षरग्रहणमात्रपरत्वे आरम्भणीयत्वम् ? इत्थम् अध्ययनविधेरर्थज्ञानपर्यन्तत्वेसति अर्थज्ञानस्य **' अधीत्य स्नायात् ' ' आचार्यकुलाद्वेदमधीत्याभिसमावृत्य '** इति यज्ञाद्यनुष्ठानशेषत्वेन विनियोगादुपनिषत्सिद्धस्य ब्रह्मज्ञानस्यापि कर्मशेषत्वापत्तेः । तस्य च ज्ञानस्य **' आत्मा वा इदम् ' ' ब्रह्म वा इदम् ' ' अयमात्मा ब्रह्म '** इति त्रैय्यन्तस्थब्रह्मशब्दस्यात्मपर्यायत्वेन आत्मविषयत्वादात्मज्ञानस्य व्रीह्यादिद्वारा प्रोक्षणादेरिव आत्मद्वारा कर्मशेषत्वेसति द्वारभूतव्रीह्यादेरिव द्वारभूतात्मनश्च कर्मशेषत्वं स्यात् नच समुद्रादि-

गूढार्थसंग्रहः

वेदोध्येतव्यइत्यभिप्रेत्य ' स्वाध्यायोऽध्येतव्यः ' इति स्वशब्द आम्नातः इति । ' यद्यप्येतद्ब्रह्मयज्ञस्वाध्यायफलम् तथाऽपि ग्रहणार्थाध्ययनमन्तरेण ब्रह्मयज्ञासम्भवात् तदीयफलमपि संपद्यते । ' इत्यभिधाय वेदाध्ययनस्य नित्यत्वे स्मृतिरपि ' योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ' (मनु.२.१६८) इति च ऋग्वेदभाष्ये उक्तम् । अत्र ग्रहणाध्ययनेऽपि ' स्वाध्यायोऽध्येतव्यः ' इति वाक्यस्यैव प्रमाणत्वोक्त्या एकवेदपक्षमात्रेण स्वाध्यायशब्दस्यार्थवर्णने ' वेदानधीत्य वेदौ वा ' इति पक्षसाधारण्यं नस्यात् । तत्पक्षयोरेतद्वाक्यस्य प्रमाणत्वासम्भवात् । एतदनुवाकोपक्रमे ' अजान् हवै पृश्नीगुँस्तपस्यमानान्ब्रह्मस्वयंभ्वभ्यानर्षत्त ऋषयोऽभवन्तदृषीणामृषित्वं तां देवतामुपातिष्ठन्त यज्ञकामास्त एतं ब्रह्मयज्ञमपश्यन् ' इत्युपक्रम्य ' यदृचोध्यगीषत ताःपय आहुतयो देवानामभवन् यद्यजूगुँषि घृताहुतयो यत्सामानि सोमाहुतयो यदथर्वाङ्गिरसो मध्वाहुतयो यद्ब्राह्मणानीतिहासान्पुराणि कल्पान्गाथानाराशगुँसीर्मेदाहुतयो देवानामभवन्ताभिः क्षुधं पाप्मानमपाघ्नन्नपहतपाप्मानो देवास्स्वर्गं लोकमायन्ब्रह्मणस्सायुज्यमृषयो गच्छन् । ' इत्याद्युक्तौ ब्रह्मयज्ञे वेदत्रयाध्ययनस्यापि प्रतिपादनेन इतरपक्षद्वयस्याप्येतद्वाक्येनैव सिद्धेस्सूचनात् । अतः वेदत्रयवेदिभिः शक्तैः ब्रह्मयज्ञे वेदत्रयाध्ययनं, एकवेदवेदिनाऽत्वशक्तेन ब्रह्मयज्ञे एकवेदाध्ययनमेव कार्यम् । अतः ' स्वाध्यायोऽध्येतव्यः ' इत्यत्र स्वाध्यायशब्दः वेदत्वेन वेदसामान्यपरः । ' स्वध्यायो जपवेदयोः ' इति नानार्थरत्नमालायाम् । ' स्वध्यायो वेदतपसोः ' इति वैजयन्त्यां च स्वाध्यायशब्दस्य वेदत्वेन वेदवचकत्वस्याभिधानात् । ' योनधीत्यद्विजो वेदम् ' इति ऋग्वेदभाष्योदाहृतश्लोकात्पूर्वं ' आहैव स नखाग्रेभ्यः परमं तप्यते तपः । यत्स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ ' (मनु.२.१६७ इत्यन्वयपरश्लोके स्वाध्यायशब्दसत्वेन व्यतिरेके निन्दापर अनन्तरश्लोके वेदशब्दसत्वेन च स्वाध्यायशब्दस्य वेदपरत्वमेव मनोरभिमतम् । ' वेदःकृत्स्नोऽधिगन्तव्यः ' ' वेदाभ्यासोहि विप्रस्य तपःपरमिहोच्यते ' इति श्लोकानन्तरं ' आहैव स ' इति श्लोकः ' तपोहि स्वाध्यायः ' इति श्रुतितात्पर्यवर्णनपर इति स्फुटं प्रतीयते । अतः वेदानधीत्येति वक्ष्यमाणपक्षसाधारण्यमत्र व्यक्तम् । इत्यभिप्रेत्याह — **स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेः** इत्यादि ॥

## गूढार्थसङ्ग्रहः

अयमर्थः अध्ययनं च स्वाध्यायसंस्कारः इत्यादिना निरूपयिष्यते ॥

यद्यपि तन्त्रवार्तिके—'यस्तर्हि द्वे शाखे पठति तस्य प्रकरणान्तरन्यायेन भवितव्यम्। एकशाखागतेषु च ब्राह्मणान्तरेषु। नैषदोषः। शाखान्तराध्ययनं तावदेकस्य पुंसो नैवेष्यते। किंकारणम्? स्वाध्यायग्रहणेनैका शाखाहि परिगृह्यते। एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति॥' यथैवाकृतिः प्रतिव्यक्ति समवैति तथैव स्वाध्यायत्वमेकैकस्यां शाखायाम्। अतश्च 'स्वाध्यायोऽध्येतव्यः' इति कर्मावबोधनं प्रत्युपादीयमानत्वाद्विवक्षितैकसङ्ख्यैका शाखाऽध्येतव्या। नन्वेवं वेदान्तरस्याप्यध्ययनं न प्रसज्यते, न; वचनान्तरेण प्रतिप्रसवात्। 'अनया त्रय्या विद्यया' इति। तथा 'वेदानधीत्य वेदौ वा' इति मानवम्। साकांक्षत्वाच्च वेदान्तराणामतुल्यकारित्वकारितः समुच्चयोऽवगम्यते। शाखान्तरेषुत्वन्योऽन्यनिरपेक्षस्वतन्त्रज्योतिष्टोमादिरूपप्रतीतेस्तुल्यार्थत्वनिमित्तो विकल्पः। साकांक्षत्वादेवचैकशाखागतब्राह्मणान्तरसमुच्चयाश्रयणम्। नन्वेककर्मत्वाद्विकल्पो विकल्पाच्चैककर्मत्वमितीतरेतराश्रयत्वं भवेत्। न। प्रत्यभिज्ञामात्रेणैकत्वे विज्ञाते सङ्ख्यावशेन विकल्पसिद्धेः। अतश्च योनामातिमेधावित्वादेकवेदगतानि शाखान्तराण्यप्यधीते स समृद्धस्सन् व्रीहियवैरपि मिश्रैर्यजेत् तस्मादेकं कर्मेति' इत्यभिधाय, 'ननुचैकयाऽपि शाखया समस्तपुरुषप्रतिपादनेसत्यनर्थकमेव शाखान्तरं, नानर्थकम् नहि कश्चिद्द्वे शाखेऽधीते। नच पुरुषान्तरगतं तत्प्रतिपादनेनार्थवत् अन्यान्प्रत्यनर्थकं भवति। यस्तु तेऽपि किल शाखिनः तामेवाधीत्य प्रतिपत्स्यन्त इत्यभिप्रायः स नित्यत्वाद्वेदस्य तदध्ययनाध्यापनसम्बन्धानादित्वादनुपपन्नः। किंच 'संप्रदायागतां मुक्त्वा स्वां समाख्यानिबन्धिनीम्। शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे॥' तस्मात् परकीयशाखाध्ययनेऽप्यस्त्येव पुरुषाणां श्रम इति यथाऽवस्थितशाखाध्ययनमेव' इत्युक्तम्॥

तत्र च न्यायसुधायां—'नन्वेकेन पुंसा अनेकशाखाध्ययनेऽपि शाखानां च पौर्वापर्याभावेऽपि एककर्मविषयत्वेसत्यैकयैव शाखया सर्वपुंसां प्रतिपत्तिसिद्धेः शाखान्तरानर्थक्यं स्यादित्याशङ्क्ते—ननुचेति। प्रतिचरणं व्यवस्थितत्वाच्छाखानां स्वशाखात्यागेन परशाखाध्ययनानुपपत्तेः स्वशाखाध्ययनपूर्वं मेधाविना शाखान्तराध्ययनेसति नानर्थक्यं वाच्यम्; तच्च स्वाध्याय इत्येकवचनेन अनेकशाखाध्ययननिषेधादयुक्तमित्याशयेन परिहरति—नेति' इति। 'येनास्य पितरो याताः येन याताःपितामहाः। तेन यायात्सतां मार्गं तेन गच्छन्नरिष्यते॥' (मनु.४.१७८) इति स्मृतिपर्यालोचनया काठकादिसमाख्याऽऽलोचनया स्वशब्दालोचनया च पितृपितामहादिपरम्परात्मकसम्प्रदायागतशाखात्यागेन शाखान्तराध्ययनं न युक्तमित्याह—किंचेति। स्वेनात्मना कठादिना समाख्या काठकशाखेयमित्यादिका, निबन्धनमध्ययनव्यवस्थापिका यस्या इत्यर्थाश्रयणेन स्वसमाख्याशब्देन काठकादिसमाख्योक्ता स्वशब्दवती समाख्येत्यर्थाश्रयणेतु अधीयत इति कर्मव्युत्पत्त्या शाखावाच्याध्यायशब्दाभ्युपगमेन स्वश्चासावध्यायश्चेति विग्रहाश्रयणात् स्वाध्यायविधित एव प्रतिचरणं शाखाव्यवस्थासिद्धिः' इतिचोक्तम्॥

तथाऽपि 'अद्विर्वचनं वा' इति सूत्रवार्तिके संप्रदायमनुसृत्य शाखाध्ययनस्योक्तेः सार्वत्रिकविकल्पस्थले व्यवस्थापकं 'येनास्य पितरो याता' इति वचनमभिप्रेतमिति स्फुटतया स्वाध्यायशब्दस्य स्वीयशाखापरत्वकल्पनं न कार्यम्। सुष्ठु आ अधीयते इत्यर्थान्तरस्यापि सम्भवेन स्वीयरूपार्थस्य तेन शब्देन नियमेन प्रतीत्यभावात् स्वाध्यायशब्दस्य वेदत्वेन वेदवाचकत्वस्य कोशेष्वेवाभिधानात्। अत्र मनुवचनेन एतत्प्रकरणोपबृंहणतया प्रतीतेन 'वेदःकृत्स्नोऽधिगन्तव्यः' 'वेदानधीत्य' इत्यर्थेऽपि 'स्वाध्यायोऽध्येतव्यः' इत्येतस्यैव मूलताविवक्षा मनोरभिमता। 'वेदःकृत्स्नोऽधिगन्तव्यः' इति 'स्वाध्यायोऽध्येतव्यः इत्यस्यैवोपबृंहणम्। 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम्। तदर्धिकं पादिकं वा

## श्रुतप्रकाशिका

ध्यानवदात्मज्ञानस्यादृष्टादिद्वारा कर्मशेषत्वात्समुद्रवदात्मा न कर्मशेष इति वाच्यम् ; कर्मशेषतयाऽवक्लृप्तस्या*त्मनो द्वार" भावे संभवत्यदृष्टकल्पनाऽयोगात्समुद्रस्यतु क्रतूपकारकत्वासम्भवेन ह्यदृष्टकल्पनम् ॥ नन्वात्मनः*फलप्रदत्वेन शेषत्वमस्त्विति चेन्न सम्प्रतिपन्नेनात्मनाऽऽत्मज्ञानस्य कर्मशेषत्वे निरूढेऽप्यसम्प्रतिपन्ना त्मकल्पनायोगात्। नहि जीवविलक्षण आत्मा संप्रतिपन्नः। अतोऽनुष्ठानशेषभूत आत्मा कर्मसु कर्तृभूतो जीवएवेति वेदान्तानां जीवपरत्वेन तदतिरिक्तेश्वरे प्रमाणाभावात् अप्रामाणिकेश्वरविचाररूपं शास्त्रमनारम्भणीयमिति प्राप्नुयात् । अक्षरराशिग्रहणमात्रपर्यन्तत्वेतु अर्थज्ञानस्यानुष्ठानशेषत्वाभावेन कर्मसु कर्तृभूतजीवात्मातिरिक्तात्मप्रतिपादनसम्भवात्प्रामाणिकपरमात्मविचाररूपं शास्त्रमारम्भणीयं स्यादिति। अतोऽध्ययनविधिर्निरूप्यते ॥

तत्राध्ययनस्य सक्तुहोमवत् प्रधानकर्मत्वं, स्वरूपेण विधेयत्वं, अध्यापनविधिप्रयुक्तत्वं, उपनयनस्याध्यापनाङ्गत्वं च प्राभाकराभिमतमनादृत्य अध्ययनस्य अवघातादिवत् गुणकर्मत्वं नियमस्य विधेयत्वमध्ययनस्य स्वविधिप्रयुक्तत्वं, उपनयनस्याध्ययनाङ्गत्वं च सङ्ग्रहेण प्रतिजानीते **प्रथममिति** । प्रथमं तावत् प्रथमत एव ‘ **यावत्तावच्च साकल्येऽवधौ**

## गूढार्थसंग्रहः

ग्रहणान्तिकमेव वा ॥ ’ (मनु.३.१) इति वेदत्रयाध्ययनकालमभिधाय ‘ वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । अविप्लुतब्रह्मचर्यः गृहस्थाश्रममावसेत् ॥ ’ इत्यत्र वेदानधीत्येति मुख्यकल्पः वेदौ वा वेदंवेति अनुकल्पश्च प्रतिपादितः । ‘ त्रय्या विद्यया ’ इति वाक्यस्य शक्तसर्वपुरुषाध्ययनविधायकत्वमित्यत्र नियामकानुपलम्भात्। ‘ **अथातो धर्मजिज्ञासा** ’ इत्यत्र ‘ स्वाध्यायोऽध्येतव्यः ’ इत्यध्ययनविधेर्विवक्षितत्वे धर्मविचारस्य एतद्विधिमूलकत्वं स्वाध्यायपदस्य वेदसामान्यपरत्वे स्वरसम्। नत्वेकशाखापरत्वे। एतत्पक्षे अध्वर्यूद्गातृहोतॄणां एतद्विधिसिद्धज्ञानसम्भवेऽपि ब्रह्मणः ‘ सर्वैर्ब्रह्म ’ इत्यापस्तम्बसूत्रानुरोधेन सर्ववेदाध्ययनावश्यकतया तत्संग्रहासम्भवेन तत्र अन्याध्ययनविधिगवेषणापत्तिः। नच स्फुटमन्योऽध्ययनविधिर्दृश्यते, नापि एकशाखापक्षपातिभिः वेदत्रयाध्ययनएवोपपत्तिमती श्रुतिरुदाहृता । नवा ‘ स्वाध्यायोऽध्येतव्यः ’ इत्यत्र शाखान्तराध्ययननिवृत्त्यर्थं एकशाखाप्रयासएवाश्यकइति सम्भवति । खण्डदेवेन कौस्तुभे (२.४.९) ‘ नचैकस्य पुरुषस्य शाखान्तरे स्वाध्यायविधिबोधितवैधाध्ययनाभावेऽपि अध्ययनाद्यर्थमनिषिद्धरागप्राप्तशाखान्तरावगमस्य सम्भवेन एकस्मिन्प्रमातरि वाक्यद्वयस्य नाज्ञातज्ञापकत्वोपपत्तिरिति वाच्यम् ; सर्वस्यापि शाखान्तरावगमे नियमेन प्रवृत्त्यभावात् क्वचित्तदनुपपत्तावपि पुरुषान्तरं प्रत्यज्ञातज्ञापकत्वोपपत्तेः ’ इत्युक्तम् । एवमङ्गीकारे ‘ स्वाध्यायोऽध्येतव्यः ’ इत्यत्र एकशाखाध्ययनविध्यनभ्युपगमेऽपि ‘ एकं वा संयोगरूपचोदनाख्याविशेषात् ’ इत्युक्तदिशा कर्मणस्सर्वशाखासु एकत्वनिश्चये अध्ययनविकल्पे च ‘ येनास्य पितरो याता ’ इत्युक्तदिशा एकशाखाध्ययनेनैव चारितार्थ्यबुद्ध्या शाखान्तरगतविशेषार्थज्ञानसंपिपादयिषया इतरशाखाध्ययने प्रवृत्त्यभावेन तेषां पुरुषाणामज्ञातज्ञापकत्वं सम्भवत्येव, प्रकरणान्तरन्यायेन कर्मभेदमाशङ्क्य शाखान्तराध्ययननिषेधेन सा शङ्का परिहृता तन्त्रवार्तिके । ‘ एकं वा संयोगरूपचोदनाख्याविशेषात् ’ इति सूत्रोक्तहेत्वभावस्थले एव प्रकरणान्तरन्यायेन कर्मभेदो युक्तः इत्यस्याश्शाङ्काया असम्भवेन ‘ स्वाध्यायोध्येतव्यः ’ इत्यत्र वार्तिकोक्तार्थानभ्युपगमेऽपि न दोषः । अतश्च ‘ स्वाध्यायोऽध्येतव्यः ’ इत्यत्र स्वाध्यायशब्दस्य वेदत्वेन वेदसामान्यपरत्वे ‘ वेदःकृत्स्नोऽधिगन्तव्यः ’ इति मनुवचनासिद्धे न किंचिद्बाधकम् एकत्वविवक्षाङ्गीकारेऽपि वेदत्वगतैकत्वं तत्समुदायगतैकत्वं वाऽभ्युपेयताम् । एवमङ्गीकारे वेदत्रयाध्येता धर्मविचारे मुख्याधिकारीति सिद्ध्यतीति भगवत आशयः। स्वाध्यायशब्दश्च नार्थज्ञानवाची अपितु स्वशाखामात्रवाचीति ’ (श्रु.प्र) उक्तिः भट्टपक्षाभिप्राया ॥

### श्रीभाष्यम्

**तच्चाध्ययनं किंरूपं कथं च कर्तव्यमित्यपेक्षायाम् ' अष्टवर्षं ब्राह्मणमुपनयीत**

### श्रुतप्रकाशिका

**मानेऽवधारणे '** इति नैघण्टुकाः । प्राथम्यं शास्त्रान्तरश्रवणयोग्यावस्थापेक्षया पूर्वभावित्वम् गर्भाष्टमोपनीतस्य ह्यध्ययनं ततःपूर्वं शास्त्रान्तरपरिश्रमानर्हत्वात् अध्ययनविधिपरतन्त्रस्य साङ्गाध्ययनानन्तरं कर्मविचारावश्यम्भावस्य स्वरससिद्धत्वाच्च साधनचतुष्टयादिपूर्ववृत्तान्तरनिष्पादनस्यानवसरग्रस्तत्वं **प्रथमंतावत्** इत्यनेन फलितम् । लौकिकाक्षरराशिव्यावृत्त्यर्थो वेदाख्यशब्दः, वेदाख्यशब्देन कृत्स्नाध्ययनं च सूचितम् । नहि वेदान्तभागमात्रं स्वाध्यायशब्दवाच्यम् । **अध्ययनेने**ति निर्देशेन गुणकर्मत्वं सूचितम् भावार्थस्यान्यनिष्ठत्वप्रतीतेः । यदि प्रधानकर्मत्वमविवक्षिष्यत् तदाहि स्वाध्यायेनाध्ययनं संपाद्यमिति वचनव्यक्तिरभविष्यत् । एवकारेण नियमविधित्वं द्योतितम् । * ननु पुस्तकनिरीक्षणादिनेत्यर्थः **' स्वाध्यायोऽध्येतव्यः '** इत्यध्ययनविधिवाक्योपादानेन स्वविधिप्रयुक्तत्वं सूचितम । नह्यध्यापयेदिति वाक्यमुपात्तम्, प्राथम्यवचनादध्ययनस्योपनयनाङ्गत्वं च फलितम् । शास्त्रान्तरपरिश्रमायोग्यगर्भाष्टमवर्षाभिप्रायेणहि प्राथम्यमुक्तम् । अध्ययनस्य च प्राथम्यम् **' अष्टवर्षं ब्राह्मणमुपनयीत '** इत्युपनयनविषयतयोक्तस्य कालस्य * उपनयनद्वाराऽध्ययनशेषत्वे सत्येव ह्युपपद्यते ॥

**एवमर्थपञ्चकं** सङ्क्षेपेण प्रतिज्ञातं भवति । अस्मिन्नध्ययनविधिवाक्येऽध्ययनस्य प्राथम्यं साङ्गत्वमुपनयनाङ्गत्वं च न प्रतीतम् । **उपनयीत तमध्यापयेत्** इति वाक्यान्तरेणाध्ययनस्याध्यापनाविधिप्रयुक्तत्वं, अध्यापनस्योपनयनाङ्गकत्वं च प्रतीयत इति शङ्कायामाह—**तच्चे**ति । चश्शङ्कानिवृत्तौ **तत्** स्वाध्यायोऽध्येतव्य इति वाक्यप्रतिपादितमित्यर्थः ॥

**आद्येत्वध्ययने नैव काचिदस्ति फलश्रुतिः । धारणे जपयज्ञे च या साप्येवं निवारिता ॥**

इति जपादेरध्ययनशब्दवाच्यत्वात् तेषु प्रस्तुताध्ययनस्य आद्याध्ययनत्वानिश्चयायाह—**किंरूपमिति** । किं सकृदुच्चारणरूपम् आहोस्विदसकृदुच्चारणरूपम् ? किं वा स्वतन्त्रोच्चारणरूपम् उत परतन्त्रोच्चारणरूपमित्यर्थः ? परतन्त्रासकृदुच्चारणरूपत्वेह्याद्याध्ययनत्वासिद्धिः । **कथं** किमङ्गकमित्यर्थः । **इत्यपेक्षायाम्** अपेक्षितानि विधीयन्ते इत्यन्वयः । प्राथम्यं परतन्त्रोच्चारणरूपत्वमुपनयनाङ्गकत्वं च दर्शयितुमाह—**अष्टवर्षमिति** । अनेन प्राथम्यं सिद्धम् । *उपनयनद्वाराऽध्ययनशेषत्वात्कालस्य **' ब्राह्मणमुपनयीत '** इति द्वितीयाश्रुत्या माणवकशेषत्वावगमादुपनयनस्य तद्गताध्ययनाङ्गत्वसिद्धिः । उपनयनस्य * अकर्त्रभिप्रायसूत्रविहितत्वाच्च नाध्यापनाङ्गत्वसिद्धिः । अध्यापयेदित्यनेन परतन्त्रोच्चारणरूपत्वसिद्धिः । **' द्वादशाहेन प्रजाकामं याजयेत् ' ' अन्नाद्यकामं याजयेत् ' ' निषादस्थपतिं याजयेत् '** इति प्रतिपन्नस्य याजनस्येतार्थार्जनार्थतया रागप्राप्तस्याध्यापनस्याविधेयत्वात्, अध्यापनेऽधिकारिविशेषाश्रवणाच्चाध्ययनस्याध्यापयितृपूर्वकत्व-

### गूढार्थसंग्रहः

**अष्टवर्षं ब्राह्मणमुपनयीतेति** । यद्यपि उपादानाख्यप्रमाणं प्राभाकरसम्मतं न्यायरत्नमालायां श्रुतिप्रकरणाभ्यामेव निर्वाहेण दूषितं पार्थसारथिना । तथाऽपि शास्त्रदीपिकायाम्—' वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति द्वितीयानिर्देशादुपनयनसंस्कृतत्रैवर्णिकाः किमस्माभिः कर्तव्यमित्यपेक्षन्ते । तत्सन्निधावध्ययनमनिर्दिष्टकर्तृकं विधीयमानं कर्तारमपेक्षते । तत्रापेक्षासन्निधियोग्यत्वैरेवं विज्ञायते त्रैवर्णिकैरेवोपनीतैरक्षरग्रहणेनाध्ययनादिपरम्परयाऽर्थज्ञानं कर्तव्यमिति । एवं च फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वादुपनयनमध्ययनाङ्गम् ' अत्र ' वसन्ते ब्राह्मणमुपनयीत ' इत्या-

## गूढार्थसंग्रहः

दिवाक्यसन्निधौ अध्ययनमनिर्दिष्टकर्तृकं विधीयमानं कर्तारमपेक्षमाणमित्यादिवाक्येन पं पा विवरणे उपनयनप्रकरण एवाध्ययन विधिः य उक्तः स पार्थसारथिना अङ्गीकृतो भवति। अत्र 'ततश्चोपनीतैरसंबध्यमानोऽध्ययनविधिः चतुर्णामपि वर्णानां स्यादिति शूद्राधिकारप्रसङ्गः' इति पार्थसारथ्युक्तिरप्यनुसन्धेया । आपस्तम्बधर्मसूत्रेषु 'अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि' इति सूत्रे (१.१.६) पाठक्रमेणोपनयनानन्तरं वेदाध्ययनमभिधाय 'उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः' (१.१.९) इत्यत्र वेदविद्याऽर्थिनः उपनयनस्य वेदसंस्कारकत्वोक्त्या उपनयनस्याध्ययनाङ्गत्वं श्रुतिसिद्धं निरूपितम् । उपनयनं विद्यासंस्कार इत्युक्तौ 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्' इति श्रुत्युपबृंहणत्वं न प्रतीयेत, अतः विद्यासंस्कार इत्यनभिधाय विद्यार्थस्य श्रुतितस्संस्कार इत्युक्तौ श्रुतितः इत्यनेनैव विद्यार्थस्यैवेत्युक्तेः बीजं दर्शितम् । अत्र विद्यार्थस्येत्यनेन 'नोन्मत्तमूकान् संस्कुर्यात्' इति शङ्खलिखितसिद्धान्त एव आपस्तम्बसंमत इति प्रतीयते । 'मूकोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते । कर्मण्यनधिकाराच्च पातित्यं नास्तिचैतयोः ॥' इति सिद्धान्तासिद्धाञ्जनोदाहृतं मनुवचनं मनुस्मृतौ नैवोपलभ्यते । एतदुत्तरं 'तमसो वा एष तमःप्रविशति यमविद्वानुपनयते यश्चाविद्वान् इतिहि ब्राह्मणम्' (१.१.११) 'तस्मिन्नभिजनविद्यासमुदेतं समाहितं सगूँस्कर्तारमीप्सेत्' (१.१.१२) तस्मिंश्चैव विद्याकर्म आत्तमविप्रतिपन्ने धर्मेभ्यः (१.१.१३) सहि विद्यातस्तं जनयति (१.१.१६) तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः' (१.१.१८) इत्यत्र उपनयनेन संस्कर्ता यः तत्समीपेऽध्ययनं तदेवश्रेष्ठं जन्म, नतु शारीरमित्यनेन एतज्जन्मनः मुक्तिसाधनत्वमपि प्रदर्शितम्। तदनन्तरसूत्रे 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते इतिहि ब्राह्मणम्' (११.१०) इत्यत्र सर्ववेदाध्ययनार्थिनः एकमेवोपनयनमित्यर्थस्साधितः । एवमुक्त्या सर्ववेदाध्ययनमेव मुख्यम् । शक्तेन तदेव कार्यमित्यर्थोऽपि सूचितः। मनुसिद्धान्तोऽप्ययमेव । तदुत्तरं 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्' (१.१.१९) इत्याद्यनन्तरम् 'उपेतस्याचार्यकुले ब्रह्मचारिवासः' (१.२.११) 'अष्टाचत्वारिंशद्वर्षाणि (१२) पादूनम् (१३)अर्धेन (१४) त्रिभिर्वा (१५) द्वादशावरार्ध्यम्' (१६) इत्युक्तम् । अत्र हरदत्तव्याख्यायां 'षट्त्रिंशदाब्दिकम्' इति मनुवचनमुदाहृत्य 'ग्रहणान्तिकमेवे'ति एकैकस्य त्रिभ्य ऊर्ध्वमनियमः न प्रागित्यर्थो द्रष्टव्यः इत्युक्तम् । अत्राप्युपनयनस्याध्ययनाङ्गत्वं स्फुटं प्रतीयते ॥

अत्र 'अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः' इति शाबरभाष्ये विरोधाधिकरणे । अष्टाचत्वारिंशद्वर्षवेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तरविकल्पोपनिबन्धनादाश्रमान्तरविषयत्वसंभवाद्वा विरोधाभावः । तथाहि 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्। सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ॥' गौतमेनापि द्वादशवर्षाण्येकवेदब्रह्मचर्यं चरेत्' (२.५२) इति प्रथमकल्पमाशु गार्हस्थ्यप्रतिपत्त्यर्थमुक्त्वा द्वितीयकल्पे द्वादशप्रतिवेदं वा सर्वेषु प्रतिद्वादश वा सर्वेषु ग्रहणान्तं वा' (५३,५४) इत्यष्टाचत्वारिंशत्परिग्रहःकृतः। श्लो 'तत्रैवं शक्यते वक्तुं येऽन्धपंग्वादयो नराः। गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥ नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा । तैरवश्यं गृहीतव्या तेनादावेतदुच्यते ॥ उपकुर्वाणकेनैव याप्यःकालो बहुस्ततः । संप्राप्य ज्ञानभूयस्त्वं पवित्रैः क्षीणकल्मषः ॥ सर्वाश्रमातिरिक्तेन स्वाध्यायेनैव शोधितः । स्तोकैरप्याश्रमाचारैर्गतिमिष्टां गमिष्यति ॥'

द्वैपायनादयश्चाहुः–'परिनिष्ठितकार्यस्तु स्वाध्यायेनैवहि द्विजः। कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ यानिच प्रतिदिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मण कल्पव्याख्यानादिब्रह्मयज्ञनिमित्तानि फलानि ऋत्वधिकृतपुरुषेभ्योऽन्यानर्थक्यप्रसङ्गाद्व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्मचर्योपदेशः । योवा काश्चिन्मेधावितया शीघ्रमेव वेदचतुष्टयमप्यधीत्य यथोपपत्तिकालं तदर्थज्ञाना-

### श्रीभाष्यम्

**तमध्यापयेत्' (शतपथब्राह्मणम्) इत्यनेन 'श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥' (मनु.४.९५)**

### श्रुतप्रकाशिका

मुच्यतइत्यय*मध्ययनाङ्गविधिरिति भावः। उपाकर्मादिव्रतनियमाङ्गकत्वं साङ्गत्वं च दर्शयितुमाह–**श्रावण्यामिति। अर्धपञ्चमान्मासानित्यादीति**। आदिशब्दोपात्तिः–

### गूढार्थसंग्रहः

मिश्रोगमपरित्यजन् 'ग्रहणान्तं वा' इत्येतत्पक्षाश्रयणेन गृहस्थो भवेत्तंप्रति द्वादशाष्टाचत्वारिंशद्वर्षपक्षावनेनैव स्मरणेन पूर्वपक्षीकृताविति नातीव श्रुतिविरुद्धत्वेनोदाहर्तव्यौ' इति तन्त्रवार्तिकेचोक्तम्। अत्र 'अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्' इति 'वेदानधीत्य' इत्येतदुत्तरार्धं, गृहस्थाश्रमश्च अल्पबहुवेदपक्षसाधारण इत्यत्र प्रतीयते। एवंसति 'षट्त्रिंशदाब्दिकम्' इत्युक्तबहुवेदपक्षे गृहस्थाश्रमपक्षो न वर्तते इति व्यवस्था नैव घटते। अष्टाचत्वारिंशद्वर्षब्रह्मचर्यकर्तुरपि पुरुषस्य जातपुत्रत्वकृष्णकेशत्वयोः अनुभवसिद्धयोरपलापासम्भवात्। अतः मेधातारतम्यानुरोधेन एते पक्षाः प्रवृत्ताः। केषांचित्पुरुषाणामष्टाचत्वारिंशद्वर्षब्रह्मचर्यकर्तॄणां जातपुत्रत्वकृष्णकेशत्वयोरसम्भवेऽपि यस्य सम्भवति तस्य गृहस्थाश्रमाङ्गीकारे न किञ्चिद्बाधकम्॥

स्मृतिसंग्रहे–'निषेकाद्बैजिकंचैनो गार्भिकंचापमृज्यते। क्षेत्रसंस्कारसिद्धिश्च गर्भाधानफलं स्मृतम्॥ गर्भे भवेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम्। निषेकफलवज्ज्ञेयं फलं सीमन्तकर्मणः॥ गर्भाम्बुपानजो दोषो जातात्सर्वोऽपि नश्यति। आयुर्वर्चोऽभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा॥ नामकर्मफलं त्वेतत्समुद्दिष्टं मनीषिभिः। सूर्यावलोकनादायुरभिवृद्धिर्भवेद्ध्रुवा॥ निष्क्रमादायुश्श्रीवृद्धिरप्युद्दिष्टा मनीषिभिः। अन्नाशनान्मातृगर्भमलाशादपि शुध्यति॥ बलायुर्वर्चो वृद्धिश्च चूडाकर्मफलं स्मृतम्। उपनीतेःफलंत्वेतद्द्विजतासिद्धिपूर्विका॥ वेदाधीत्यधिकारस्य सिद्धीऋषिभिरीरिता। देवपित्रर्णापगमो विवाहस्य फलं स्मृतम्॥' इति वचनानि नारायणव्याख्यासहिताश्वलायनगृह्यसूत्रभूमिकायामुदाहृतानि। अत्र द्विजता आपस्तम्बसूत्रेषु 'सहि विद्यातस्तं जनयति' इत्यत्रोक्ता। मनुस्मृतावपि–'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने।' (२.१६९) इत्यत्र। 'कृतोपनयनस्यास्य व्रतादेशनमिष्यते। ब्रह्मणो ग्रहणंचैव क्रमेण विधिपूर्वकम्॥' (२.१७३) इत्यत्र वेदाधीत्यधिकार उक्तः। 'गार्भैर्होमैर्जातकर्म चौलमौञ्जीनिबन्धनैः। बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥' इत्यत्र मौञ्जीनिबन्धनशब्दार्थोपनयनस्य एनश्शमनार्थत्वोक्तिमात्रेण अध्ययनाङ्गत्वप्रतिकूलं पुरुषार्थकर्मत्वं उपनयनात्पूर्वं सन्न्यासस्साधनाभिनिवेशवतः सिद्धान्तासिद्धाञ्जनकारस्य सम्मतं न सिद्ध्यति। 'वैदिकैःकर्मभिः पुण्यैः निषेकादिर्द्विजन्मनाम्। कार्यश्शरीरसंस्कारः पावनः प्रेत्यचेह च॥' इति पूर्वं (२.२६) 'स्वाध्यायेन व्रतैर्होमैः त्रैविद्येनेज्यया सुतैः। महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥' (२८) इति परत्र च शरीरद्वारकसंस्कारस्य ब्रह्मप्राप्तिसाधनोपासनौपयिकस्य प्रतिपादनेन एनश्शमनद्वारा इतरकर्माविशेषेणोपनयनस्यापि तादृशसंस्कारहेतुत्वोक्तिमात्रेणाध्ययनाङ्गतायाः प्रागुदाहृतप्रमाणसिद्धायाः निरसनस्य मनोरनभिमतत्वात्। नित्यकर्मणामप्युपात्तदुरितक्षयः फलमिति तन्त्रवार्तिके स्पष्टम्॥

'कृतोपनयनस्य' इति प्रागुदाहृतवचनविशदीकरणरूपं वचनान्तरमुदाहरति—**श्रावण्यां प्रौष्ठपद्यांवेति**। आपस्तम्बधर्मसूत्रेऽप्ययमर्थ उक्तः। 'श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासंप्रदोषे नाधीयीत (आ.ध.सू.३.९.१)

श्रुतप्रकाशिका

**अत ऊर्ध्वंतु छन्दांसि शुक्लेषु नियतःपठेत् । वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठेत् ॥**

इत्यादिवचनैरङ्गाध्ययनस्य कालो दर्शितः। व्रतं उपाकर्म काण्डव्रतादि । नियमः 'पद्यु ह्वा एतच्छ्मशानं यच्छूद्रः **तस्माच्छूद्रसमीपे नाध्येतव्यम्**' इत्याद्युक्तदेशकालभक्ष्याभक्ष्यादिव्यवस्थारूपः । अध्यापयेदित्यनेन व्रतनियमविशेषोपदेशैश्चेति पृथङ्निर्देशश्श्रुतित्वस्मृतित्वविभगाद्विप्रतिपन्नत्वसंप्रतिपन्नत्वाविभागाच्च कृतः । उपाकर्मादिव्रतनियमवदुपनयनमप्यध्ययनाङ्गमिति भावः । किं रूपं कथं च कर्तव्यमित्यपेक्षायामेभिरङ्गविधायकवाक्यैरपेक्षितानि विधीयन्त इत्यर्थः ॥

**नन्वष्टवर्षं** ब्राह्मणमित्यत्रोपनयनस्याध्ययनाङ्गत्वमवगम्यत इत्युक्तम् तदयुक्तम् । तस्योपनेयासत्तिद्वाराऽध्येतृसाकांक्षाध्यापनाङ्गत्वंह्यवगम्यते–'**उपनीयतु यश्शिष्यम्**' इत्यादिस्मृतिवचनाच्च तदवगम्यते । उच्यते—'**ब्राह्मणमुपनयीत**' इत्यत्र द्वितीयाश्रुत्योपनयनस्य माणवकशेषत्वमवगम्यते, माणवकशेषमुपनयनम् अध्ययनं च तद्गतम् । तत्रा ऽतेरङ्गव्रीहरङ्गन्यायादुपनयनमध्ययनाङ्गमेव ॥

**ननु–उपनीयतु यश्शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥**

इति वचने * क्त्वाश्रुत्योपनयनस्याध्यापनाङ्गत्वं युक्तम् । अन्तरङ्गत्वंहि वस्तुसामर्थ्यरूपं लिङ्गम् । ततः क्त्वाश्रुतिर्बलीयसीतिचेन्न * अन्तरङ्गत्वंहि प्रत्यक्षश्रुतिसिद्धम् । क्त्वाश्रुतिस्तु स्मृतिगताऽनुवादवचनस्था च । अतोऽस्याः स्मृतिवचनस्थत्वान्मूलश्रुतिसापेक्षत्वमनुवादरूपवचनगतत्वात् विध्यन्तरसापेक्षत्वमितिविलंबद्वयमस्ति । श्रुतिलिङ्गादिषु विलंबितधीहेतुत्वं हि परदौर्बल्यहेतुः, अतो विलंबद्वयोपहता क्त्वाश्रुतिर्न बलीयसी । किंच श्रोत्रियोपाध्यायगुर्वादिनामविधानवत्तत्प्रकरणस्थमिदं वचनमुपनीयाध्यापयितुराचार्यनामविधानपरमिति न क्त्वाश्रुतिरुपनयनस्याध्यापनाङ्गत्वे प्रमाणं भवितुमर्हति । किंच '**स्वरितञितः कर्त्रभिप्राये क्रियाफले**' इत्यात्मनेपदे प्राप्तेऽपि '**सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः**' इति पुनर्विधानस्याकर्त्रभिप्रायार्थत्वादुपनयनस्य नाध्यापनाङ्गत्वं युक्तम् । '**अकर्त्रभिप्रायार्थोऽयमारम्भ**' इतिहि तद्वृत्तिकारः ॥

**ननु** कर्त्रभिप्रायत्वं कर्तर्येव फलस्याभिप्रेतत्वम् । * तदवधारणनिषेधार्थं पुनर्विधानम् । अतःफलमुभयान्वयि, अतो माणवकद्वारेणाचार्यान्वय्युपनयनफलमित्यध्यापनाङ्गत्वं युक्तमिति चेन्न–'**अग्नीनादधीत**' इत्यत्र कर्त्रभिप्रायसूत्रविहितेऽप्यात्मनेपदे फलस्योभयान्वयितया पुनर्विधानस्य नियमनिषेधार्थत्वाभावेन कर्त्रभिप्रायत्वमात्रस्य निषेधार्थत्वात् अतो नाध्यापनाङ्गत्वम् ॥

**ननु** कर्त्रभिप्रायशब्देन कर्तृव्यतिरिक्ते चेतने फलान्वयो विवक्षितः । अतो नाग्नीनादधीतेति व्यभिचारः । पुनर्विधानस्य तन्निवारणार्थत्वे फलस्याचार्येऽप्यन्वयोपपत्तेरध्यापनाङ्गत्वमितिचेन्न । *'**ऋत्विजो वृणीत**' इत्यत्र **स्वरिते**त्यादिसूत्रविहितेऽप्यात्मनेपदे फलस्य कर्तृव्यरिक्तचेतनान्वयदर्शनेन पुनर्विधानस्य नियमनिषेधार्थत्वाभावात् । अतःकर्त्रभिप्रायमात्रनिषेधार्थं पुनर्विधानमिति नाध्यापनाङ्गमुपनयनम् ॥

**ननु** क्रियाफलं नाम क्रियानन्तरभाविफलम् । तस्य कर्तर्यन्वितत्वं कर्त्रभिप्रायत्वम् । अत आचार्यकस्योपनयनक्रियानन्तरभावित्वाभावादव्यवहितफलस्य कर्तृगतत्वाभावाच्च, आत्मनेपदस्याप्राप्तावव्यवहितफलस्याकर्त्रभिप्रायत्वेऽप्यात्मनेपदं '**सम्मानन**' इत्यादिसूत्रेण विधीयते । अतोऽकर्त्रभिप्रायार्थत्वेऽपि व्यवहिताचार्यकनिष्पत्त्यर्थतयाऽध्यापनाङ्गत्वमुपनयनस्याविरुद्धमितिचेत्–मैवम् । अग्नीनादधीत इत्यत्र स्वरितेति सूत्रविहितेऽप्यात्मनेपदे * अग्निसंस्कारव्यवहितस्याहिताग्नित्वापत्तिरूपफलस्य कर्त्रन्वयित्वदर्शनात् । अतोऽकर्त्रभिप्रायार्थं सम्मानेत्यादिसूत्रं फलमात्रस्य कर्त्रन्वयनिवारणार्थं संस्कार

श्रीभाष्यम्

इत्यादिव्रतनियमविशेषैश्चापेक्षितानि विधीयन्ते ।

श्रुतप्रकाशिका

विशिष्टोऽग्निःफलमिति * आधानकर्तरि न व्यवहितफलान्वयइतिचेत् । तर्ह्युपनयनसंस्कारविशिष्टमाणवकसिद्धिरेवाव्यवहितं फलमिति कर्त्रभिप्रायसूत्रेणैवात्मनेपदसिद्धेरकर्त्रभिप्रायसूत्रवैयर्थ्यं स्यात् ।

ननु यद्येवं व्यवहितमव्यवहितं वा फलमात्रं कर्त्रभिप्रायसूत्रेण निवार्यते । तर्ह्युपनेतुः प्रवृत्तिर्नोपपद्यते । यतः— 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति, नैवम् । उपनयनफलस्य माणवकान्वयित्वेऽपि 'आचार्याय वरो देय' इति विध्यन्तरप्राप्तदक्षिणाफललिप्सया प्रवृत्त्युपपत्तेः । नचैतेनाकर्त्रभिप्रायत्वविरोधः * असाधारणफलानन्वयविषयत्वादकर्त्रभिप्रायसूत्रस्य । अव्यवहिताक्रियाफलस्य कर्त्रभिमतकर्त्रभिप्रायत्वं तदनभिमतत्वमकर्त्रभिप्रायत्वमित्यप्युक्तम् । क्रियाफलस्य कर्त्रनभिमतत्वव्याघातात् । आचार्यकनिष्पत्त्युपयोगिनो माणवकसंस्कारस्याचार्यानभिमतत्वानुपपत्तेः । अतः उपनयनमध्येष्यमाणमाणवकासत्तिमुखेन नाध्यापनाङ्गम्, अपित्वध्ययनाङ्गमेव । अध्ययनं च नाध्यापनविधिः प्रयुङ्क्ते अध्यापयेदितितु 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यादिवदित्युक्तम् ॥

गूढार्थसंग्रहः

तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् (३.९.२) अर्धपञ्चमांश्चतुरो मासानित्येके' (३) इति । 'पुष्येतु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः । माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥' (मनु.४.९६) इति मनुनाऽप्युत्सर्जनमुक्तम् । अत्र अर्धं पञ्चमो येषांते अर्धपञ्चमाः, अर्धाधिकांश्चतुरो मासानित्यर्थः । यदा श्रावण्यामुपाकर्म तदा पुष्यमासस्य शुक्लप्रतिपदि पूर्वाह्णे । यदा प्रोष्ठपद्यामुपाकर्म तदा माघस्येति व्यवस्थितोऽयं विकल्पः' इति पराशरमाधवीये निर्णयःकृतः । अयमेवार्थः 'श्रावण्यां प्रौष्ठपद्यांवोपाकृतौ क्रमेण पौषशुक्लप्रतिपदि माघशुक्लप्रतिपदि वा कार्यम् । 'अर्धपञ्चमान्मासानधीत' इति तेनैवोक्तेः । अर्धःपञ्चमो येषु सार्धांश्चतुर इत्यर्थः' इति निर्णयसिन्धुकारेणाप्यङ्गीकृतः । आपस्तम्बधर्मसूत्रेतु 'अर्धपञ्चमांश्चतुरो मासानित्येके' इति पक्षान्तरोक्त्या पौर्णमास्यामुत्सर्जनस्य मासपञ्चकविषयत्वं स्फुटं प्रतीयते । एतदभिप्रायेणैव 'तैष्याम्' इत्येतद्विवरणे 'अनयोःपक्षयोः पञ्चमासानधीयीत' इति 'अर्धपञ्चमान्' इति सूत्रविवरणे 'उत्सर्जनस्य वाऽपकर्षः' इति च हरदत्तेनोक्तम् ॥

अत्र तत्त्वटीका—'उपाकृत्याधीयीत' इत्येतत् 'उपनीतोऽधीयीत' इति श्रुतितात्पर्यकत्वस्थापकम् । उपनीतस्य हि अध्ययनार्थतया उपाकर्मादिनिर्दिश्यते' इति। इत्यादिव्रतनियमविशेषैश्चेति । इत्यादिवाक्यप्रतिपाद्य व्रतनियमविशेषोपदेशैरित्यर्थः। तत्र व्रतं—उपाकर्मव्रतम् एतच्छलोकानन्तरं नियमविशेषा उक्ताः प्रागपि मनुनाऽध्ययननियमाःप्रदर्शिताः उत्सर्जनानन्तरं 'अतऊर्ध्वंतु छन्दांसि' इत्यादिना शुक्लपक्षे वेदाध्ययनं कृष्णपक्षे अङ्गाध्ययनं च प्रतिपादितम् । एवं क्रमः उपाकर्मान्तमेव । पुनरुपाकर्मानन्तरं उत्सर्जनपर्यन्तं वेदाध्ययनम् ॥

अपेक्षितानि विधीयन्ते इति । उपनयनादीन्यङ्गानि विधीयन्त इत्यर्थः । यद्यपि पञ्चपादिकायाम्—'अष्टवर्षं ब्राह्मणमुपनयीत' इति श्रुतेः 'अष्टवर्षो ब्राह्मणउपगच्छेत्सोऽधीयीत' इति वाक्यार्थे तात्पर्यमुक्तम् । तथाऽपि अध्यापनस्य रागप्राप्ततया विधानासम्भवेऽपि उपनयनस्य रागप्राप्तत्वाभावेन विधानं संभवतीत्युपनयनस्य विधौ नानुपपत्तिः ।

### श्रीभाष्यम्

**एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य**

### श्रुतप्रकाशिका

यद्यपि–प्रजाकामसमन्नाद्यकामम् इतिवत्प्रयोज्यव्यापारस्याध्ययनस्याधिकारिविशेषणं फलं न श्रूयते, तथाऽपि स्वाध्यायसिद्धिरधिकारिविशेषणं स्यात् स्वाध्यायोऽध्येतव्यः इति स्वाध्यायस्याध्ययनसाध्यत्वावगमात्। यथा 'अग्नीनादधीत' इत्यत्राग्नीनामाधानसाध्यत्वावगमादग्निसिद्धिरधिकारिविशेषणं तद्वत्। नच स्वविधिप्रयुक्तत्वेऽध्ययनस्य अनुष्ठात्रभावः–सन्तिहि प्रबुद्धाध्येतारः। तदाह भगवानापस्तम्बः–'तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्' इति। तेषु परविधिप्रयुक्तत्वे सत्यध्ययनं नोपपद्यते। अप्रबुद्धविषयेतु स्वतन्त्रस्याध्ययनविधेर्माणवकविषयत्वं ज्ञात्वा हितैषिणो माणवकमध्ययनादिकारयन्ति। अतः प्रबुद्धेष्वप्रबुद्धेषु च स्वविधिप्रयुक्तत्वमध्ययनस्य युक्तम्। परविधिप्रयुक्तत्वे नित्यस्याध्ययनस्य काम्यविधिप्रयुक्तत्वं स्यात्। ततश्चानुष्ठाननियमो न स्यात्। आचार्यककामोह्यध्यापकः तस्याचार्यककामनाया अभावेऽध्ययनासिद्धिः। अध्यापकबाहुल्यात्तत्सिद्धिरितिचेन्न अध्यापकेभ्योऽप्यध्येतृबाहुल्यदर्शनात्। आधानस्योत्तरक्रतुविधिप्रयुक्तत्वेऽपि न काम्यविधिमात्रप्रयुक्तत्वम् 'वसन्ते वसन्ते ज्योतिषा यजेत, यावज्जीवमग्निहोत्रं जुहोति' इति नित्यविधिसद्भावादित्येवमाद्यनुसन्धेयम्। अतो यथोक्तएवार्थः॥

अङ्गविध्युपेतेन प्रधानविधिनाऽङ्गस्वरूपमङ्गिस्वरूपं च कथं प्रतिपन्नमित्यत्राह–एवमिति। एवमङ्गविधिभिस्सह प्रधानविधौ निरूपित इत्यर्थः, सत्सन्तानेत्यादिना। 'तस्मिन्नभिजनविद्या' इत्यापस्तम्बवचनार्थोऽनुसंहितः। आत्म-

### गूढार्थसङ्ग्रहः

'उत्तरेणाग्निम्' इत्यारभ्य उत्तरेण यज्ञोपवीय 'सुप्रजा' इति दक्षिणे कर्णे जपति (४.प.१०.१२.म) 'ब्रह्मचर्यमागामिति कुमार आह' (४.११.१) 'प्रश्न परस्य प्रतिवचनं कुमारस्य' इत्यत्र 'कोनामास्यसौ नामासि' इति प्रश्न प्रतिवचने। ततः 'अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्नुत्तरेण यज्ञोपवीतेनोपविशति' (११.७) 'पुरस्तात्प्रत्यङ्ङासीनः कुमारः दक्षिणेन बाहुना दक्षिणं पादमन्वारभ्याह—सावित्रीं भो अनुब्रूहि इति' (११.८) 'तस्मा अन्वाह तत्सवितुरिति (९) पच्छोऽर्धर्चशः ततस्सर्वान्' (११.१०) इत्यापस्तम्बगृह्यसूत्रेषु उपनयन उपनेतृव्यापारानन्तरमेव उपगमन उपगन्तृ व्यापारयोः प्रतिपादनेनोपनयनस्य विधानाभावे उपगन्तृव्यापारस्यैव तत्त्वमुच्येत। अतः उपनयनस्यैव विधानं युक्तम् 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्रोपनयनस्य संस्कारकर्मत्वं स्फुटम्, उपनयनस्य माणवकसंस्कारत्वेन तस्यभाव्युपयोगापेक्षायाः अध्ययनस्य च कर्त्रपेक्षायाश्च सत्वात् अध्ययनाङ्गमुपनयनम्। उक्तं च पार्थसारथिना उपनयनमप्यध्ययनाङ्गमेवाध्येतृसंस्कारत्वात्' (न्यायरत्नमाला) 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्' इत्यादिषु द्वितीयानिर्देशात् उपनयनसंस्कृताः त्रैवर्णिकाः (शा.दी) इत्यादि च॥

एवं मीमांसाकौस्तुभे खण्डदेवेन उपनयनस्य संस्कारकर्मत्वमङ्गीकृत्यैव संस्कारविधिव्यतिरेकेणोपनयनस्य विनियोगानवगमात् तदनन्यथाऽनुपपत्त्यैव विनियोगकल्पनेन अष्टवर्षत्वादेः उपादेयत्वविशेषणत्वं समर्थितम्। अष्टवर्षो ब्राह्मण उपगच्छेदिति विवक्षाङ्गीकारे उपनयनस्य माणवकसंस्कारकर्मत्वमेव न सिध्येत् एतत्तात्पर्येणैव उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः इति आपस्तम्बेनोक्तम्। तदुत्तरं च 'तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्' इत्यत्रापि उपनयनस्याध्येतुसंस्कारत्वं स्पष्टीकृतमित्यभिप्रेत्याह–**एवं सत्सन्तानप्रसूतेत्यादि—आचार्योपनीतस्येत्यन्तम्**॥

### श्रीभाष्यम्

**व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते अध्ययनं च स्वाध्यायसंस्कारः 'स्वाध्यायोऽध्येतव्यः' (तै.आ.२.प्र.१५.अनु.१६) इति स्वाध्यायस्य कर्मत्वावगमात्।**

### श्रुतप्रकाशिका

**गुणाः**—अक्रोधादयः। अनेन समाहितशब्दार्थ उक्तः। **वेदविच्छब्देन** विद्यासमुदेतशब्दार्थ उक्तः, **वेदविदाचार्योपनीतस्य** इति आचार्यविशेषणमुपनयनद्वारा माणवकार्थम्। यथोपनयनस्याध्यापनाङ्गत्वे माणवकविशेषणमाचार्यार्थं तद्वदितिभावः। **व्रतनियमविशेषयुक्तस्य** व्रतनियमविशेषवदाचार्यविशेषणमपि माणवकार्थमिति भावः। **आचार्योच्चारणानूच्चारणमिति** परतन्त्रोच्चारणरूपता दर्शिता। अक्षरराशिग्रहणफलमितिपदमसकृदावृत्तिरूपत्वस्याक्षेपकं दर्शयति। यथा * '**व्रीहीनवहन्ति**' इत्यत्र दृष्टफलत्वस्याप्यपरित्याज्यत्वेनावहननस्य वैतुष्यपर्यन्तत्वादश्रुताऽप्यावृत्तिस्सिद्धा। तद्वदत्रापि सामर्थ्यादावृत्तिस्सिद्धा। दृष्टप्रयोजनापरित्यागेनैव नियमस्य विधेयत्वात्। आचार्योच्चारणानूच्चारणमित्यनेन वेदविदाचार्योपनीतस्येत्यनेन च अध्ययनस्याध्यापयितृसापेक्षत्वेन परतन्त्रोच्चारणरूपत्वं, स्वविधिप्रयुक्तमुपनयनाङ्गकत्वंचोक्तम्। **आचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलम्** इत्यनेन किंरूपमित्याकाङ्क्षा शमिता। **वेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य** इत्यनेन कथं च कर्तव्यमित्यपेक्षा पूरिता। **अक्षरराशिग्रहणफलमित्यनेन** स्वाध्यायग्रहणकामत्वमध्ययनाधिकारिविशेषणमित्यपि सूचितम्॥

**सक्तून्जुहोति** इत्यत्र पुरुषस्य सक्तुहोमजन्यादृष्टभाक्त्वात् * सक्तुहोमो यथा पुरुषसंस्कारः तद्वदध्ययनस्य पुरुषसंस्कारत्वेऽस्याक्षरराशिग्रहणफलत्वं न स्यात्। अपूर्वसिध्यर्थतया स्वाध्यायसिध्यर्थत्वाभावात्। ततश्चाक्षरराशिग्रहणफलत्वाभावेनावृत्त्यसिद्धेस्सकृदुच्चारणरूपमेवाध्ययनं स्यादित्याशङ्क्याह—**अध्ययनंचेति**। उपनयनाङ्गकत्ववत्स्वविधिप्रयुक्तत्ववदिदंचोपपादनीयमितिचार्थः। स्वाध्यायसंस्कारः नतु सक्तुहोमवदपूर्वविषयतया पुरुषसंस्कार इत्यर्थः। कुतइत्यत्राह—**स्वाध्यायइति**। तव्यप्रत्ययात्कर्मत्वावगमः। * स्वाध्यायस्यहि कर्मत्वावगमः नतु पुरुषस्य। कर्तुःक्रिययाऽऽसुमिष्टतमत्वंहि कर्मत्वम् अतोऽध्ययनं स्वाध्यायसंस्कारः, नतु पुरुषस्येत्यर्थः। निर्वर्त्यादेरपि साधारणं कर्मत्वं कथं संस्कार्यत्वे हेतुतयोच्यत इत्यत्र निर्वर्त्यत्वविकार्यत्वानुपपत्तिमभिप्रेत्य स्वाध्यायस्येति पुनःकीर्तनम्। वस्तुसामर्थ्यसचिवकर्मत्वावगमः संस्कार्यत्वे हेतुरितिभावः। फलान्तरे सम्भवति * प्राप्यत्वमात्रपर्यवसानंचायुक्तम्॥

### गूढार्थसंग्रहः

अत्र 'तास्मिन्नभिजनविद्या—' इत्यापस्तम्बसूत्रस्यार्थतोऽनुवादेन 'श्रावण्यां प्रौष्ठपद्यां वा' इति मनुस्मृतिवचनोदाहरणेन च स्वोक्तार्थे आपस्तम्बमनुवचनानां प्रमाणत्वमभिप्रेतमिति सूचितम्। **अध्ययनं च** इत्यादिना अक्षरराशिग्रहणफलत्वसाधनम्। अध्ययनस्य स्वाध्यायसंस्कारत्वं भाट्टानामपि संमतम्। पूर्वोदाहृतपार्थसारथिग्रन्थे अयमर्थः स्फुटमुक्तः 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्' (२.१.३.८) इति सूत्रे संस्कारकर्मणो लक्षणमुक्तं जैमिना। अत्र च तन्त्रवार्तिकम्—'यैःपुनः द्रव्यमुत्पाद्यते यथा आधानेनाग्नयोऽवाप्यन्ते क्रियन्ते वा यथावरणेनर्त्विजः संस्क्रियन्ते यथाऽवहन्तिना व्रीहयः पेषणेन तंडुलाः तानि गुणभूतानि प्रयोजनवद्द्रव्यसंस्कृतेरीप्सितत्वात्' इति॥

### श्रीभाष्यम्

**संस्कारोहि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यत्वं च स्वाध्यायस्य युक्तम्। धर्मार्थ काममोक्षरूपपुरुषार्थचतुष्टय तत्साधनाऽवबोधित्वात् जपादिना स्वरूपेणापि तत्साधन-**

### श्रुतप्रकाशिका

**ननु** न कर्मत्वमात्रावगमात्संस्कार्यत्वं—'**सक्तून्जुहोति**' '**सुवर्णं भार्यम्**' इत्यत्र सक्तुसुवर्णयोस्संस्कार्यत्वाभावादिति शङ्कायां संस्कारस्वरूपं शोधयति—**संस्कारोहीति**। हिनामभ्यां प्रसिद्धिः प्रतियोग्यभ्युपगमश्च सूच्यते। अपि च इतिवदनेकाव्ययतुल्यरूप एकशब्दो वा। यद्यपि सत उत्कर्षाधानं संस्कारः इति भूतभाव्युपयोगिसंस्कारानुगतं लक्षणम्। तथाऽपि स्वाध्यायस्य भूतोपयोगित्वासम्भवात् भाव्युपयोगिसंस्कारलक्षणमत्रोक्तम्। संस्कारलक्षणानुपपत्त्या * **सक्तून्जुहोति** इत्यादिषु प्रत्ययस्वारस्यावगतमपि कर्मत्वं भग्नमिति भावः। अत्रतु न तथाऽनुपपन्नमित्याह—**संस्कार्यत्वंचेति**। चश्शङ्कानिवृत्तौ। कुतइत्यत्राह—**धर्मार्थेति**। **पुरुषार्थचतुष्टयतत्साधन** इत्यनेन पूर्वोक्तव्याख्ययैकत्वाय प्रयोजनवदर्थावबोधनमनुगतमिति दर्शितं भवति। पुरुषार्थपरत्वं वाऽनुगतं धर्मादिषुहि पुरुषार्थत्वमनुगतम्। इष्टतत्साधनयोरुभयोरपि पुरुषार्थत्वात्। यद्यप्यर्थकामतदुपायेषु केचिल्लोकसिद्धाः। तथाऽपि धनेशसुरेशादिविभूतिरूपातिशयितार्थकाम तत्साधनानां लोकासिद्धपशुपुत्रान्नादेश्चित्रादिसाध्यत्वस्य च लौकिकप्रमाणगोचरत्वात् पुरुषार्थचतुष्टयस्य वेदवेद्यत्वोक्तिर्युक्ता—**अवबोधित्वात्**। अनुष्ठानौपयिकबोधजनकत्वादिति भावः। अर्थावबोधकत्वस्य हुमादावव्याप्तत्वादाह—**जपादिनेति**। **स्वरूपेणापि**। अर्थज्ञानानुष्ठानाभ्यामृते जप्यमानेनाक्षरमात्रेणापीत्यर्थः। आदिशब्दादध्यापनग्रहणम्। अनुष्ठानानुगुणं ज्ञानं, जपादि च अध्ययनसंस्कृतेन स्वाध्यायेनैवेत्युक्तं भवति। यद्वा पुरुषार्थतत्साधनावबोधित्वेन सह तत्साधनत्वं * चशब्देन समुच्चीयते। तत्साधनत्वं द्विधा जपादिना, क्रियमाणेन स्वरूपेणचेति अतोऽवान्तरसमुच्चेतव्यसमुच्चयपरोऽपि शब्दः। एवं नियमविधित्वंचोपपादितं भवति॥

### गूढार्थसंग्रहः

अध्ययनस्य उपयोक्ष्यमाणसंस्कारत्वेन स्वाध्यायस्य संस्कारकर्मत्वमुपपादयति—**संस्कार्यत्वं च स्वाध्यायस्य युक्तमित्यादिना स्वरूपेणापि तत्साधनत्वाच्च** इत्यन्तेन। अवबोधित्वादित्यनेन अर्थावबोधपर्यन्तोऽध्ययनविधिव्यापार इति भ्रमस्स्यादिति तन्निरासायाह—**जपादिना स्वरूपेणापीति**। आदिपदेन धारणादिपरिग्रहः। यद्यपि न्यायरत्नमालायां—'न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम्। अपेक्षितं दृश्यते यत् सर्वं तत्फलमिष्यते॥' (प्र.ति.४०) यदिह्यध्ययनस्य केवलमर्थज्ञानं प्रयोजनमस्माभिरिष्यते, ततो यथोदाहृतेष्वेषु तदसम्भवात् उपालम्भस्स्यात् नतु केवलं तत्प्रयोजनम् यदेवहि विध्यन्तरोपयोग्यपेक्षितमध्ययनेन साध्यमानंदृश्यते तत्सर्वमस्य प्रयोजनम्। तेन यथाक्रतुविधिभिः तज्ज्ञानमपेक्षितमिति तत्प्रयोजनम् एवं नित्यनैमित्तिकजपयज्ञपारायणादिविधिभिः 'अहरहस्स्वाध्यायोऽध्येतव्यः' 'याजयित्वाप्रतिगृह्यचानश्नन्त्रिस्स्वाध्यायंवेदमधीयीत' इत्यादिभिर्वेदस्वरूपावधारणमपेक्षितव्यमिति तदपि प्रयोजनम्। तेनाध्ययनोपात्तस्य वेदस्य यथायोगं प्रयोजनकल्पनात्तदनुरोधेन च नियमवर्णनाज्ज्योतिष्टोमादिष्वध्ययनार्जितेनैव वेदेन विज्ञातःक्रतुः फलं साधयतीति नियमः मन्त्रेष्वध्ययनोपात्तमन्त्रकृतमेव स्मरणमनुष्ठानाङ्गमिति। हुमादिष्वध्ययनोपात्तैरेव गीतिकालोपलक्षणं भवतीति' इत्यत्र पञ्चपादिकोक्तदोषपरिहारोऽप्युक्तप्रायः। तथाऽपि 'स्वाध्यायोऽध्येतव्यः' इति वाक्यं 'यंयंक्रतुमधीते तेनतेनास्येष्टं भवति' इति वाक्यसहभावेन पठितम्, ब्रह्मयज्ञप्रकरणेचायंविधिः। इत्थं च जपयज्ञे यत्फलं तदेव सर्वत्र स्तोत्रशास्त्रादौ फलमनु-

## श्रीभाष्यम्

**त्वाच्च । एवमध्ययनविधिः मन्त्रवत् नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति ।**

## श्रुतप्रकाशिका

अर्थज्ञानपर्यन्तत्वं किं शब्दस्वारस्यादभ्युपगम्यते उतार्थानुपपत्त्येति विकल्पमभिप्रेत्य तत्र शब्दस्वारस्यं प्रतिवदन्नध्ययनविधिनिरूपणमुपसंहरति **एवमिति** । * **मन्त्रवत्** इति पृथङ्निर्देशो व्रतान्तर्भावेण तदनन्तर्भावेण वाऽध्ययनोपकारकमन्त्राभिप्रायः । अस्तिहि शन्नोमित्रादिमन्त्राणां व्रताननुप्रवेशेनापि जपमात्रेणोपकारकत्वम् नियमाः पूर्वोक्ताः । * यद्वा यथा बालस्योपनयनकाले सन्ध्योपासनादिकाले च विधीयमानमुच्चारणं नियमवदक्षरपठनमेव नार्थधीसंपादनम् नहि बालानां मन्त्रार्थावबोधसम्भवः तद्वदिति । **अक्षरराशिग्रहणेति** । * सनियमकोच्चारणमध्ययनशब्दस्य मुख्यार्थः । **वेदानां किंचिदधीत्य ब्राह्मणः एकां शाखामधीत्य श्रोत्रियः अङ्गाध्याय्यनूचानः कल्पाध्यायी ऋषिः कल्पसूत्रप्रवचनाध्यायी भ्रूणः** इत्यादिप्रयोगात् । नहि स्वशाखैकदेशाध्यायिनोऽर्थज्ञानसंभवः अङ्गाध्ययनस्य पृथगुपादानेन तद्विरहेऽर्थज्ञानप्रसङ्गाभावात् । स्वाध्यायशब्दश्च नार्थज्ञानवाची * अपितु स्वशाखामात्रवाचीति तत्कर्मत्वं स्वाध्यायस्यैव युक्तं नत्वर्थज्ञानस्य । अध्ययनस्य प्रयोजनाकाङ्क्षायां दृष्टसम्भवत्यदृष्टकल्पनाऽयोगादक्षरग्रहणस्याऽऽसन्नत्वाद्धुमादिष्वनुगतत्वाच्च तत्स्वीकारो युक्तः । व्यवहितत्वादसार्वत्रिकत्वाच्च नार्थज्ञानमित्यभिप्रायः । सकृदुच्चारणावधिकत्वव्यावृत्त्यर्थमक्षरग्रहणे पर्यवसानमुक्तम् । * मात्रचाविधिव्यापारस्यार्थज्ञानपर्यन्तत्वव्युदासः । **पर्यवस्यतीति** । * यथा 'अग्नी-

## गूढार्थसङ्ग्रहः

गतमिति तत एव निर्वाहेऽर्थज्ञानोद्देशेनाध्ययनविधिर्नैव कल्पनीयः। एवंच श्रूयमाणे वाक्येऽप्यर्थान्तराश्रयणं नैव स्वीकृतं भवति । अध्ययनेन स्वाध्यायं भावयेदित्येतावतैव निर्वाहात्, भाट्टमतेतु अध्ययनेनार्थज्ञानं भावयेत्, अथवा अध्ययनेन प्रयोजनवदर्थज्ञानसाधनीभूतस्वाध्यायं संस्कुर्यात् इति कल्पनापत्तेः । साङ्गाध्ययनेनापातप्रतीतौ रागत एव तन्निर्णयात्मकविचारे प्रवर्तत इति न विचारविधिः । अक्षरराशिग्रहणफलस्वीकारेऽपि नियमविध्यङ्गीकारेणोपनीतस्य साङ्गाध्ययने एव प्रवृत्त्या अध्ययनमन्तरा त्रैवर्णिकस्यार्थज्ञानार्थे प्रवृत्तिरेव न संभवति ॥

अन्धपङ्गुनैष्ठिकादिविषयमुपक्रम्य तेषां क्रत्वनुगताभावेऽपि अर्थज्ञानजपादिना सिद्धिः तन्त्रवार्तिके एवोक्ता । एवं सति 'जप्येनैवतु' इति तदुदाहृतमनुवचनेनैव केषांचिदन्धपङ्गुनैष्ठिकादीनां सिद्धिसम्भवेन तेषां क्रत्वनुष्ठानशक्तिविरहवत् अर्थज्ञानशक्तिविरहेऽपि जपमात्रेण सिद्धेः अकामेनाप्यवश्यं स्वीकार्यतया तेषामक्षरराशिग्रहणमात्रमेवेति अवश्यमङ्गीकर्तव्यम् । नियमपूर्वकाध्ययनंतु प्राचीनकाल एव, इदानींतु तस्य लोप एवेति अधिको विचारो नापेक्षितः । (पं.पा.वि) येच उत्तरक्रतुविधिप्रयुक्तः विचार इति वदन्ति तन्मते उक्ततन्त्रवार्तिकोक्तान्धपङ्गु नैष्ठिकादीनां क्रतुविद्ध्यभावेन विचारे प्रवृत्तिरेव न स्यात् । कर्मविचारपूर्ववृत्तत्वनिराकरणावसरे येषां साङ्गाध्ययनानन्तरं वैराग्येण सन्न्यासाश्रमः तेषां कर्मविचारविरहवत् तेषां परिव्राजकानामर्थज्ञानस्याभावेन अर्थज्ञानार्थमध्ययनविधिरिति भामतीपक्षे साङ्गसंपूर्णाध्ययनानापत्तिः । वेदान्तमात्राध्ययने अध्ययनविधिविरोध एव स्यादिति भावः । अन्ये दोषाः ये परैरुद्भाविताः ते प्राचीनैरेव परिहृताः ॥

उपनयनस्याध्ययनाङ्गत्वमुपाकरणद्वारेति प्राक् (३०.क) निरूपितम् । उपनयनकाले गायत्रीमात्रोपदेशः। अनन्तरं च सन्ध्योपासनसमिदाधानादिमन्त्राणामध्ययनम् । तदात्वेचार्थज्ञानं नास्त्येव उपाकर्मानन्तरमुत्सर्जनपर्यन्तं साङ्गाध्ययनस्य तत उपाकर्मपर्यन्तं वेदाध्ययनस्य करणदशायामर्थज्ञानं नास्त्येव, तदात्वे जपमात्र एव विनियोगः इत्यादिकमभिप्रेत्य—**एवमध्ययनविधिरित्युपक्रम्य—अक्षरराशिग्रहणमात्रे पर्यवस्यतीत्युक्तम्** ॥

## श्रीभाष्यम्

**अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात्। गृहीतात्स्वाध्यायादवगम्यमानान् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णय-**

## श्रुतप्रकाशिका

**नादधीत'** इतिवाक्यमाधानमात्रपरं नतूत्तरक्रतुविनियोगपर्यन्तम्। यथा च कारीर्या वृष्टिकामो यजेत इति वाक्यं वृष्टिसिद्धिपर्यन्तकर्मविशेषपरं नतु वृष्ट्युपरितनोपयोगपरं तथेति भावः। एवं शब्दस्वारस्यादर्थज्ञानपर्यन्तत्वं निरस्तम् ॥

**अथार्थानुपपत्तिं** परिहरति, त्रिधाचानुपपत्तिशङ्का, विधेरक्षरग्रहणमात्रपरत्वे *ग्रहणशेषतया विनियुक्तस्य स्वाध्यायस्यार्थपरत्वे प्रमाणाभावादविवक्षितार्थत्वं स्यात्। मीमांसायाः प्रवर्तकाभावादनारम्भणीयत्वं स्यात्। अक्षरग्रहणमात्रस्य दुःखरूपतया विधेः प्रयोजनपर्यवसानं न स्यादिति। एतच्छङ्कात्रयनिराकरणमुखेनाध्ययनविधेरर्थज्ञानपर्यन्ततां, तन्निमित्तां ब्रह्मविचारानारम्भशङ्कां च व्युदस्यन् वेदाख्यैकप्रबन्धव्याख्यानरूपतया धर्मब्रह्मविचारयोरैकशास्त्र्यमपि दर्शयति **अध्ययनगृहीतस्येति**। इह साङ्गाध्ययनं विवक्षितम्। **अधीतसाङ्गसशिरस्कवेदस्य ननु च साङ्गवेदाध्ययनात्** इति पूर्वापरानुगुण्यात्। तेनहि प्रयोजनवदर्थापातप्रतीतिसिद्धिः। अर्थाः—यज्ञोपासनादयः। ते स्वर्गमोक्षादिप्रयोजनवन्तः प्रयोजनवदर्थशब्देन काकदन्तवदपरीक्ष्यत्वशङ्काव्यावृत्तिः **प्रयोजनवदर्थावबोधित्वदर्शनादिति**। अनेन विधेःपरम्परया पुरुषार्थपर्यवसायित्वमुक्तं भवति। अध्ययनस्य साक्षात्प्रयोजनमक्षरराशिग्रहणमित्युक्तमध्ययनगृहीतस्येति पदेन। अयमर्थः किं साक्षात्पुरुषार्थपर्यवसायित्वं विधेर्विवक्षितं उत परम्परया? साक्षात्प्रयोजनपर्यवसायित्वं विधेरर्थज्ञानपर्यन्तत्वेऽपि नोपपद्यते अनुष्ठानापूर्वद्वारा स्वर्गस्यैव प्रयोजनत्वात्, अध्ययनविधेः स्वर्गपर्यन्तत्वानभ्युपगमाच्च, परम्परयाचेदस्मत्पक्षेऽपि संभवतीति ॥

**स्वभावतइति**। शब्दस्य बोधकत्वशक्तिस्वाभाव्यादित्यर्थः। व्युत्पन्नपदपदार्थंप्रति शब्दस्यार्थावबोधकत्वं स्वाभाविकमिति लोकसिद्धम् एवकारो विधिनैरपेक्ष्यपरः। *अन्यत्र विनियोगस्तु न स्वाभाविकं शब्दस्यार्थपरत्वं रुणद्धि जपविधिवत् **'याजयित्वा प्रतिगृह्यवानश्नन्त्रिस्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीं' 'वेदमेव जपेन्नित्यम्'** इत्यादिविधानंहि न वेदस्यार्थपरत्वं निवारयति। स्वाध्यायस्स्वतोऽर्थबोधकश्चेत् किं मीमांसयेत्यत्राह—**गृहीतादिति**। *गृहीतात् गृहीतमात्रात् अध्ययनगृहीतस्येत्युक्तेः। तेन मीमांसाख्येतिकर्तव्यताराहित्यं विवक्षितम्। आपाततःप्रतीतेस्संशयविपर्ययसहत्वात्तन्निराकरणाय मीमांसेति भावः। अध्ययनगृहीतस्येत्यादिना वेदस्य बोधकत्वस्वभावत्वमुक्तम्। तत्र प्रयोजनवदर्थशब्दः परम्परया पुरुषार्थपर्यवसानज्ञापनाय उपरि तन्निमित्तापातप्रतीतिजनकतायास्सहकारिवैकल्यनिबन्धनत्वमित्यपौनरुक्त्यम्। नहि वेदस्यापातप्रतीतिजनकत्वं स्वभावः प्रमितिजनकत्वस्वभावत्वात्। मीमांसाख्यपरिकरशून्यस्य तदभावो न श्रुतेः प्रमितिजनकत्वस्वभावविरोधी। यथा आलोकादिसहकारिविरहे रूपाद्यनुपलम्भश्चक्षुरादीनां रूपादिसाक्षात्कारजनकत्वस्य स्वाभाविकत्वं न विहन्ति तद्वत्, आपातप्रतीतावपि प्रयोजनवत्त्वेन प्रतिपत्तिरस्तीति दर्शयितुं पुनःप्रयोजनवदर्थशब्दः। प्रयोजनवदर्थापातप्रतीतिर्हि तन्निर्णयरागं जनयति। नहि निष्प्रयोजनकाकदन्ताद्यापातप्रतीतिस्तन्निर्णयरागं जनयति *आपाततोऽवगम्यमानान्दृष्ट्वेत्यन्वयः। अर्थानामवगम्यमानत्वं दृष्ट्वेत्यर्थः, स्वात्मनो बुद्ध्युत्पत्तिं दृष्ट्वेति यावत् प्रयोजनवदर्थापातप्रतीतेस्स्वानुभवसिद्धत्वान्न तदपह्नवश्शक्य इति भावः। व्याकरणादिफलस्वरूपविलक्षणे मीमांसाफलस्वरूपे दर्शयति **तत्स्वरूपेति**। स्वरूपविशेषाः अङ्गिनः। प्रकारविशेषाः अङ्गानि। पूर्वपक्षोक्तस्वरूपप्रकारतास्सिद्धा-

## श्रीभाष्यम्

फल वेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदःपुरुषः स्वयमेव प्रवर्तते।

## श्रुतप्रकाशिका

न्तितस्वरूपप्रकारयोर्वैषम्यं विशेषशब्देन विवक्षितम्। प्रयोजनवदर्थस्वाध्यायवेदमीमांसाशब्दाः पूर्वोत्तरभागसाधारणाः स्वयमेव, नतु विधिना तदुपपादकमधीतवेदःपुरुष इति पदद्वयम्। अधीतवेदइति। अध्ययनविधिव्यापारस्यानुष्ठितांशे पर्यवासितत्वान्मीमांसायां तस्याप्रवर्तकत्वं द्योतितम्। चेतनत्वात्फलवदर्थापातप्रतीत्या स्वयं प्रवर्तत इति पुरुषशब्दस्याभिप्रायः

नन्वक्षरराशिग्रहणपर्यन्तत्वपक्षे रागतःप्रवृत्तिरपि नोपपद्यते वेदाङ्गानि समस्तानि कृष्णपक्षेषु सम्पठेत्। 'निष्कारणोधर्मष्षडङ्गो वेदोऽध्येयो ज्ञेयश्च' 'वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च' इत्यादिविहिताङ्गाध्ययनस्याप्यक्षरग्रहणपर्यन्ततया व्याकरणादेरर्थावबोधाभावात्प्रकृतिप्रत्ययज्ञानाभावेनापातप्रतीत्यभावात्। नैवम्। व्याकरणादीनां वेदाङ्गत्वादकिंचित्करस्याङ्गत्वायोगाद्दृष्टकिंचित्कारे सम्भवति तत्प्रहाणेनादृष्टकल्पनाऽयोगात्पदाद्यवबोधरूपदृष्टकिंचित्कार एव स्वीकार्य इति * अङ्गत्वान्यथाऽनुपपत्त्यैव व्याकरणाद्यर्थावगमसिद्धेः। प्रयोजनवदर्थापातप्रतीतिसिध्या मीमांसारम्भोपपत्तेः। अधीतवेदःपुरुषः स्वयमेव प्रवर्तत इत्यनेन 'अथातो धर्मजिज्ञासा' इति सूत्रमप्यर्थाव्द्याख्यातं भवति। विधेरक्षरराशिग्रहणपर्यन्तत्वे प्रवर्तकाभावात्, स्वाध्यायस्यार्थपरत्वे प्रमाणाभावाच्च, मीमांसाऽनारम्भणीयेति पूर्वःपक्षः। साङ्गाध्ययनानन्तरं शब्दस्य स्वतोऽर्थावबोधित्वदर्शनात्प्रवर्तकान्तराभावेऽपि रागात्प्रवृत्त्युपपत्तेरारम्भणीयेति सिद्धान्त इति॥

ननु कर्मविचारस्य रागप्राप्तत्वे 'अधीत्य स्नायादिति' समावर्तनस्मृतिर्बाधिका स्यात्। वैधत्वे स्मृतेरपि श्रुतेर्बलीयस्त्वात् स्मृतिरवकाशप्रदा स्यात्। नैवम्। अध्ययनविधेरक्षरराशिग्रहणपर्यन्तत्वार्थज्ञानपर्यन्तत्वयोः * किमभिप्रेत्यैतदुक्तम्। यद्यर्थज्ञानपर्यन्तत्वं तर्ह्यधीत्य स्नायादिति स्मृतिगताध्ययनशब्दस्य तत्तुल्यार्थत्वान्नाविरोधः। यद्यक्षरराशिग्रहणपर्यन्तत्वं, ततोऽपितुल्यार्थत्वान्नविरोधः। किंच विरोधेसत्यपि प्रत्यक्षश्रुतिरप्यस्ति। यथा छान्दोग्ये–'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे' इत्यादिः ततश्च स्मृतिवचनोपेतास्नानश्रुतिर्बलीयसी तस्मात् श्रुतिस्मृतिवचनयोः प्राबल्यदौर्बल्यकथनं निरर्थकम्॥

नन्वेवं श्रुत्याऽपि रागतःप्रवृत्तिर्बाध्यत इतिचेन्न समावृत्तस्यापि रागतश्श्रवणोपपत्तेः। नन्वध्ययनानन्तरभावित्वे समावर्तनस्य तत्पूर्वकगृहस्थकर्मानुष्ठानावरुद्धश्रवणावसरालाभान्मीमांसानारम्भःप्रसज्यते। नैवम्। समावृत्तस्यापि श्रोतुश्श्रावयितुरिवावसरसम्भवात्। आचार्यस्यह्यध्यापनं विहितम्, नतु गृहस्थस्य श्रवणमितिचेन्न अध्यापनस्य याजनप्रतिग्रहवद्रागप्राप्तत्वात्। रागप्राप्तमपि 'प्रतिग्रहादिना धनमार्जयेत्' इत्यादिशास्त्रानुमतमध्यापनमितिचेत् श्रवणमपि शास्त्रानुमतम् अनिषिद्धत्वाद्यज्ञाद्यनुष्ठानोपयुक्तत्वाच्च॥

ननु 'संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयश्श्रुतिमिच्छन्निति श्वेतकेतुरित्यारभ्य तच्छास्त्रैर्विप्रतिषिद्धं * निवेशेहि वृत्ते नैयामिकानि श्रूयन्ते अग्निहोत्रमतिथयः' इत्यादिना श्रवणं गृहस्थस्य निषिद्धमितिचेन्न साकल्येन मासद्वयं गुरुकुलवासस्यानुष्ठानोपरोधित्वेन तस्यैव निषिद्धत्वात्। 'निवेशेहि वृत्ते नैयमिकानि श्रूयन्ते अग्निहोत्रंमतिथयः' इति ह्युच्यते। आचार्यस्याप्यनुष्ठानानुपरोधेन श्रावणस्यहि शास्त्रानुमतत्वम्। अतो

## गूढार्थसंग्रहः

स्वयमेव प्रवर्तत इत्यनेन रागत एव प्रवृत्तिरिति दर्शितम्। तेन 'ब्राह्मणेन निष्कारणो धर्मः वेदष्षडङ्गोऽ

## श्रुतप्रकाशिका

ऽनुष्ठानानुपरोधोपरोधप्रयुक्तानुमत्यननुमतिविषयत्वं श्रावणस्य श्रवणस्य च तुल्यम् । अतएवहि युधिष्ठिरादीनां गार्हास्थ्यनिष्ठानामपि भीष्मादिभ्यः श्रवणं भारतादिषु प्रतिपाद्यते ॥

यद्यपि श्रावणकाल एव श्रवणकालः तथाऽपि श्रोतुरुदकाहरणकाष्ठसम्पादनादिभिरनुष्ठानोपरोध इतिचेन्न, अध्ययनविधिप्रयुक्तस्योदकाहरणादेस्तन्निवृत्त्या निवृत्तत्वात् । वित्तख्यात्यादिप्रयोजनान्तरस्पृहया शिष्यस्नेहेन च गुरोश्श्रावणमुपपद्यते । श्रावयितुर्ज्ञातार्थत्वादनुष्ठानमुपपद्यते श्रोतुरज्ञातार्थत्वान्नेतिचेन्न उपनयनप्रभृत्यनुष्ठानवद्धितैषिवचनादनुष्ठानोपपत्तेः तर्हि हितैषिवाक्यमेव स्यात् किमर्थं मीमांसाश्रवणमितिचेत् ? हितैषिवचनस्य प्रमाणमूलत्वनिश्चयार्थम्, प्रष्टॄणामपरेषां स्वयमुपपादनार्थं च हितैषिवचनादनुष्ठानसम्भवे शूद्रादीनामप्यनुष्ठानप्रसङ्ग इतिचेन्न **'न शूद्राय मतिं दद्यात्'**

**नचास्योपदिशेद्धर्मं नचास्य व्रतमादिशेत् ।**

इत्यादिनिषेधवचनसद्भावात् । नहि यज्ञादिकं ब्राह्मणाश्शूद्रायोपदिशन्ति । नच शुश्रूषाविरहितशूद्रविशेषविषयत्वेनेदृशनिषेधवचनानां सङ्कोचःकार्यः सङ्कोचकाभावात् नहि शूद्रस्य यज्ञाद्यर्हत्वविषयं वचनान्तरं दृश्यते । * किंच यजमानेन कृत्स्नवेदस्य मन्त्रविशेषाणां च जप्यतावचनात्तेषामध्ययनलभ्यत्वादध्ययनस्योपनयनसापेक्षत्वादुपनयनस्य त्रैवर्णिकाद्यधिकारत्वान्नशूद्राद्यधिकारप्रसङ्गः ॥

ननूपनयनविधिस्त्रैवर्णिकाध्ययनविषयतया नेतुं शक्यते । अतश्शूद्रस्याध्ययनमुपनयननिरपेक्षमिति तस्य याजमानाद्युच्चारणसम्भव इतिचेन्न **'तस्माच्छूद्रसमीपे नाध्येतव्यम्' 'अथहास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्'** इत्यादिना शूद्रस्य वेदश्रवणादेर्निषिद्धत्वात् अध्ययनंचोपनयनाङ्गकं तत्त्रैवर्णिकाधिकारमेवेति न तत्र शूद्राद्यधिकार इति मन्त्रविशेषोच्चारणानुपपत्तेः न हितैषिवचनाच्छूद्रादेः क्रत्वनुष्ठानप्रसङ्ग इति नापशूद्राधिकरणविरोधः । किंच यथा **'यावज्जीवमग्निहोत्रं जुहोति'** इत्यादिविधिर्नस्वाङ्गं स्वव्यवधायकमिति न्यायात्स्वोपयोगिनोऽर्थार्जनादेः रागप्राप्तस्याप्यवसरप्रदः । तथाऽनुष्ठानोपयोगिमीमांसाश्रवणस्य समावर्तनविधिरवकाशप्रदस्स्यात् । क्त्वाप्रत्ययस्य च समानकर्तृकत्वपूर्वकालीनत्वमात्रमर्थः । नत्वानन्तर्यम् । नन्वान्तर्यमेव विधेयं नचेद्विधिवैयर्थ्यं दुःखात्मकगुरुकुलवासनिवृत्तेःस्वतःप्राप्तत्वादितिचेन्न आनन्तर्यपरत्वेऽपि विधिवैयर्थ्यात् । तच्च गुरुकुलवासस्य दुःखात्मकत्वादेव । अतस्सनियमकसंस्कारविशेष एव स्नानमिति तद्विधेयं, नत्वानन्तर्यम् । तस्मादधीत्येति क्त्वाश्रुतेर्न विरोधः, तस्मात्स्वयमेव प्रवर्तते ॥

ननु ❀ **'यो हवा आर्षेयच्छन्दो दैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्छति गर्तंवाऽऽपद्यते प्रवामीयते पापीयान्भवति यातयामान्यस्य छन्दाँसि भवन्त्यथयो मन्त्रेमन्त्रेवेद ससर्वमायुरेति श्रेयांश्च भवत्ययातयामान्यस्य छन्दाँसि भवन्ति तस्मादेतानि मन्त्रेमन्त्रे विद्यात्'** इति श्रुत्या—

**अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेज्जपेद्वाऽपि पापीयान्जायतेतु सः ॥**

इति स्मृत्युपबृंहितयाऽर्थज्ञानविधानं फलितम् । मन्त्रप्रतिपाद्यदेवताज्ञानस्यात्र विहितत्वात्तुल्यन्यायतया देवताशब्दस्य मन्त्रप्रकाश्यानुष्ठेयार्थप्रदर्शनार्थतया च विध्यादिभागार्थज्ञानस्यापि विधेयत्वापत्तेः । योगः मन्त्राणां विनियोगः तज्ज्ञानस्य ब्राह्मणभागार्थज्ञानसापेक्षत्वाच्चेतिचेन्न *प्रतिग्रहर्तुसंवेशनादेरिव रागप्राप्तत्वान्निवृत्तेः । नहि **ब्राह्मणःप्रतिग्रहादिना धनमार्जयेत् ऋतावुपेयात्** इत्यादिवचनं रागतःप्राप्तिं प्रतिग्रहादेर्निरुणद्धि ॥

**किंच** * अनेनैव वाक्येनार्थज्ञानं विहितमित्यध्ययनविधेरर्थज्ञानपर्यन्तत्वं नाश्रयणीयम् । यथा क्रतूनां विध्यन्तरसिद्धत्वादध्ययनविधेरुत्तरक्रतुपर्यन्तत्वं नाश्रीयते तद्वन्नचेदं वाक्यमध्ययनस्यार्थधीपर्यन्तत्वमवगमयति । नच स्वयमर्थ

## श्रीभाष्यम्

### तत्र कर्मविधिस्वरूपे निरूपिते

## श्रुतप्रकाशिका

ज्ञानं विधत्ते अर्थज्ञानस्यान्यतास्सिद्धत्वात् अत्र मन्त्रमात्रस्य ऋष्यादिविज्ञानविधानप्रतीतेश्च । ततश्च वेदस्य साङ्गतया अध्येतव्यत्वं सिद्ध्येत्। नत्वर्थज्ञानम्। छन्दो दैवतादिज्ञानस्य छन्दःकल्पव्याकरणनिरुक्तादिसापेक्षत्वान्मीमांसानपेक्षत्वाच। विनियोगविषयसन्देहेसति मीमांसापेक्षा स्यादितिचेत् तर्हि संदेहापाकरणाय रागतःप्रवृत्तिस्स्यात् ।

**यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥**

इतीदमपि वचनं नार्थज्ञानपर्यन्तत्वमध्ययनविधेरवगमयति । अधीतमविज्ञातमिति अत्रैवाध्ययनार्थज्ञानयोः पृथङ्निर्देशात् रागप्राप्तस्य विधातुमशक्यत्वाच्च '**वेदानां किंचिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचानः**' इत्यादयः कल्पसूत्रप्रयोगाश्चाध्ययनादर्थज्ञानं पृथग्भूतमवगमयन्ति । अतः श्रवणस्य दुःखरूपत्वेन तन्द्रालुतयावाऽर्थार्जनाद्यन्यपरतया वा यो न श्रृणोति तत्प्ररोचनार्थमिदं यदधीतमित्यादिवचनम् । यथा '**अक्षैर्मादीव्यः कृषिवित्कृषस्व वित्तरमस्व बहुमन्यमानः**' इति वाक्यं तन्द्रालुप्ररोचनार्थं प्ररोचनयाहि प्रवृत्तिरुत्कटा स्यात् । नह्येतावता कृषेरर्थार्जनस्य च रागप्राप्तत्वभङ्गेन सर्वत्र वैधत्वमेव स्यात् । तद्वदिदमपि वचनं श्रवणस्य रागप्राप्तत्वं नविहन्ति तस्माद्रागत एव प्रवर्तते । एवमन्यतः प्रवृत्तौ संभवन्त्यां शब्दशक्त्युल्लङ्घनेन मीमांसाश्रवणस्य विधेयत्वकल्पनमयुक्तम् ॥

ऐकशास्त्र्यं रागतःप्रवृत्तिश्चास्तु, कथं पौर्वापर्यनियम इत्यत्राह—**तत्रेति** । तत्र वेदे **कर्मविधिस्वरूपे निरूपिते** इति । कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव निरूपणं प्राप्तमिति कर्मविचारस्य पूर्वभावित्वमिति भावः । * ननु नहि

## गूढार्थसङ्ग्रहः

ध्येयो ज्ञेयश्च' इत्यत्रापि न ज्ञानविधिः । ज्ञानस्य प्रमाणपरतन्त्रत्वेन पुरुषतन्त्रत्वाभावात् विचारलक्षणायां प्रमाणाभावात् तस्य रागप्राप्तत्वाच्च । उक्तं च खण्डदेवेन 'अथ स्वरूपेणाविधेयस्यापि क्रत्वङ्गताबोधनफलक एव विधिरभ्युपगम्यते, तथाऽपि सामर्थ्यत एव प्रातिशाख्यवत् क्रतुजननसिद्धेर्विधिवैफल्यम् । नच क्रतोरन्यदुपस्थापकमप्यस्ति । तस्माद्धर्मज्ञानस्याविधेयत्वात् । षडङ्गवेदाध्ययनफलत्वेनैवात्र सङ्कीर्तनम् । नचैवं चशब्दानुपपत्तिः । प्रयोजनाप्रयोजनीभूतक्रियाद्वयसमुच्चयार्थत्वेनापि तदुपपत्तेः । निष्कारणशब्दश्चायमपौरुषेयत्ववचनः योग्यत्वाद्वेदेन संबध्यत इति न तद्बलेनापि निष्प्रयोजनत्वलाभः' इति व्याकरणाधिकरणे । एवं च वेदवाक्यविचारे अध्ययनविधिः, ज्ञानविधिः, उत्तरक्रतुविधिश्च न मूलमिति सिद्धम् ॥

'अधीतसाङ्गसशिरस्कवेदस्य मीमांसापूर्वभागज्ञातस्य' इत्यादिसूत्रव्याख्यावाक्यद्वये कर्मणामल्पास्थिरफलत्वे हेतुर्नाभिहितः । ब्रह्मज्ञानस्यानन्तास्थिरफलसाधनत्वमपि प्रमाणतः नैव निरूपितम् एतदुभयनिरूपणमभिप्रेत्याह—**तत्र च कर्मविधिस्वरूपे निरूपिते** इति । कर्मविधेः स्वरूपम् अनावृत्तकर्मणः आवृत्तकर्मणश्च विधिः । तस्य स्वरूपे स्वरूपं स्वासाधारणधर्मविशिष्टधर्मी इत्यर्थः । अयमाशयः '**दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत**' इत्यादिवाक्यानि अनावृत्तकर्मणां फलसम्बन्धबोधकविधिवाक्यानि एतद्वाक्येष्वनावृत्तकर्मणः स्वर्गफलसाधनत्वं स्फुटमभिहितम् । आवृत्तकर्मणां फलसाधनत्वं च '**दाक्षायणयज्ञेन स्वर्गकामो यजेत**' इत्यादिवाक्यैरवगम्यते अयनमित्यावृत्तिरुच्यते दक्षस्येमे दाक्षाः तेषामयनं दाक्षायनम् कःपुनः दक्षः उत्साही' इति भाष्यम् (शा) दक्ष इतिचोत्साही शीघ्रकारी

## गूढार्थसङ्ग्रहः

यजमानः तदीया ऋत्विजः दाक्षाः तेषामयनं प्रयोगः यज्ञाश्रितत्वात् दाक्षायणइत्युच्यते ' इति च वार्तिकम् । दाक्षायणशब्दार्थं स्फुटयतः, अयं च दाक्षायणयज्ञः ' विकारो वा प्रकरणात् ' (जै.सू.२.३.८) इति सूत्रेण दर्शपूर्णमासविकारत्वेन स्थापितः ' लिङ्गदर्शनाच्च ' (२.३.९) इति सूत्रे च ' त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत, यदि दाक्षायणयाजी स्यात् अथो अपि पञ्चदशैव वर्षाणि यजेत अत्रह्येव सा संपद्यते द्वे हि पौर्णमास्यौ यजेत, द्वे अमावास्ये अत्रह्येव खलु सा संपद्भवति । इत्येतद्वाक्ये आवृत्तदर्शपूर्णमासरूपत्वं दाक्षायणयज्ञस्य स्पष्टम् । ' गुणात्संज्ञोपबन्धः ' (२.३.३०) इत्यनेनसूत्रेण दाक्षायणयज्ञस्य भेदकसंज्ञापरतया पूर्वपक्षिणा प्रदर्शितस्य गुणपरतया अन्यथासिद्धिः प्रदर्शिता। एवं ' साकंप्रस्थायीयेन यजेत पशुकामः ' इत्यत्र साकंप्रस्थायीपदेऽपि, तत्र च गुणः दाक्षायणादिपदवाच्यः शास्त्रदीपिकायामेवं प्रदर्शितः गुणविधिस्त्वयम्, यद्यपि न लोकसिद्धो गुणः तथाऽपि वाक्यशेषादवयवव्युत्पत्त्या च आवृत्तिसहप्रस्थानलक्षणगुणवचनत्वमनयोरवगम्यते ' इति असकृत्करणे फलभूयस्त्वं च ' कर्मण्यारम्भभाव्यत्वात् ' इत्यधिकरणे स्फुटम् । तत्रचेदमादिमं सूत्रं ' कर्मण्यारम्भभाव्यत्वात्कृषिवत् प्रत्यारम्भं फलानि स्युः ' (११.१.२०) इति अत्र च प्रतिप्रयोगं फलभेदः व्यक्तः अनन्तरं च ' सकृत्तुस्यात्कृतार्थत्वादङ्गवत् ' (११.१.२२) इति सूत्रेण पूर्वपक्षं प्रापय्य ' अपि वा संप्रयोगे यथा कामी प्रतीयेत अभ्युतित्वाद्विधिषु वचनानि स्युः ' इत्यनेन सिद्धान्त उक्तः । अत्रचेदं भाष्यम् (शा) ' अपि वा नैवं स्यात् अस्मिन्नर्थिनः कर्मणश्च संप्रयोगे सकृदेवार्थी कर्मप्रयोगे वर्तेतेति । कथं तर्हि यथा कामी प्रतीयेत । सकृद्वा बहुकृत्वोवा फलभूमार्थी बहुकृत्वः संतुष्टस्सकृत् ' इत्यादि । एतेन दाक्षायणयज्ञस्याप्यतिशयितं फलमिति व्याख्यातप्रायम् ॥

एवमर्थवादाधिकरणे—' फलस्य कर्मनिष्पत्तेः तेषां लोकवत्परिमाणतः फलविशेषस्स्यात् ' (१.२.१७) इतिसूत्रे वार्तिकम्। ' सर्वेहि कामाः पूर्णाहुत्याऽवाप्यमानाः स्तोकस्तोकाः प्राप्यन्ते । तत्र फलभूमार्थिनः कर्मान्तरविधिरर्थवान्भविष्यतीति स्थिते चोद्यते । युक्तं लोके कृष्यादिफलानां प्रत्यक्षावगतत्वात्साधनानुरूपं जन्म । पूर्णाहुत्यादिषु त्वत्यन्तशास्त्राधीनत्वादविशेषश्रुते फले किं मूलविशेषकल्पनया । नह्यग्निहोत्रज्योतिष्टोमस्वर्गयोः कश्चिद्विशेषः श्रूयते । नचानुमानमीदृशे विषये समर्थम् । तदभिधीयते । विधिसामर्थ्यादेवेदं सिद्धम् । कथम् ? यदि ह्यल्पान्महतश्च कर्मणः समंफलं जायेत ततोऽर्केचेन्मधु विन्देतेत्यनेनैव न्यायेनाल्पेन सिद्धे महति न कश्चित्प्रवर्तेत तत्र विधिशक्तिबाधस्स्यात् । अविहतशक्तिस्तुसन् अर्थाद्वा कल्पनैकदेशत्वादिति विधिरेव फलाधिक्यमङ्गीकरोति । अतो यथा विश्वजिदादौ फलसद्भावः प्रमाणवानेवमिह तद्विशेष इति । किंच ' कर्मणामल्पमहतां फलानां च स्वगोचरः । विभागः स्थानसामान्यादविशेषेऽपि चोदिते ॥ '

यथैव क्रमाम्नातानामङ्गाङ्गिनां प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमिति विनियोगव्यवस्था तथैव कर्मगोचरेऽल्पस्य कर्मणः परिमाणसामान्येन फलगोचरेऽल्पमेवोपतिष्ठते । मध्यमस्य मध्यमं महतो महदिति स्थानमेव विनियोजकम्, स्मरणमप्येवमेव । चातुर्मास्यसोमेषु च फलार्थवादो **यदाऽग्निहोत्रं जुहोत्यथदश गृहमेधिन आप्नोत्येकया रात्रियेत्यारभ्य** न्यूनाग्निहोत्रदशसंवत्सरप्रयोगादिभिरेकदर्शपूर्णमासादिप्रयोगावाप्तिवचनं कर्माल्पत्वमहत्त्वकृतं फलभेदं दर्शयति ' इति ॥

अत्र वार्तिके पूर्णाहुत्यादिभिरवाप्यमानाः कामाः स्तोकस्तोकाः । तत्र फलभूमार्थिनः कर्मान्तरविधिरर्थवान्भविष्यति ' इत्युक्त्या सर्वेभ्यो ज्योतिष्टोम इति सर्वफलसाधनत्वेन श्रूयमाणस्य ज्योतिष्टोमस्य ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इति स्वर्गस्य विशेषतः फलत्वोक्तावपि ' श्येनचितं चिन्वीत स्वर्गकाम ' इत्युत्तरवेद्यासाकं विकल्पितचयनाश्रितश्येनकृत्यादिजन्यस्वर्गस्याधिक्यं उत्तरवेद्यामनुष्ठितज्योतिष्टोमजन्यस्य न्यूनत्वंचावश्यं स्वीकर्तव्यमिति ज्ञापितम्। पश्वाद्यर्थज्योतिष्टोम एव ' श्येनचितं चिन्वीत ' इति वाक्यप्रवृत्तौ न नियामकम्। स्वर्गविशेषार्थं स्वर्गसाधनीभूतेति प्रवृत्तिसंभवात्। ' ज्योति-

## श्रीभाष्यम्

**कर्मणामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु च अमृतत्वरूपानन्तस्थिरफलापातप्रतीतेः तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायां**

## श्रुतप्रकाशिका

कर्मणामल्पास्थिरफलत्वमनन्तस्थिरफलत्वं च पूर्वपक्षसिद्धान्तरूपेण क्वाचिन्निरूपितम्। तत्कथमल्पास्थिरफलत्वावगतिरित्यत्राह—**स्वरूपे निरूपिते** इति। केवलं कर्मविधिस्वरूपमेव निरूपितम्; अल्पास्थिरफलत्वज्ञानंतु आवृत्तिविधानादिना फलितमिति भावः। * यद्वा कर्मविधेस्स्वरूपं निरूपितम्; नत्वाराध्यपरदेवतेति भावः। तदाराधनत्वेन कृतेहि अनन्तस्थिरफलत्वासिद्धिः। **अध्ययनगृहीतस्वाध्यायेति**। अध्ययनस्य कृत्स्नस्वाध्यायविषयत्वादुपनिषदश्च स्वाध्यायशब्दान्तर्गतत्वादिति भावः। एकदेशशब्देनैकप्रबन्धांशत्वं सूचितम्। साधारणवेदशब्दनिर्दिष्टे शब्दराशावनन्यपरं प्रदेशं पृथङ्निर्दिशत्युपनिषच्छब्देन **वेदान्त**शब्देन विचारपौर्वापर्यानियमहेतुर्दर्शितः॥

**मीमांसा**शब्दोक्तव्याख्याने प्रदेशभेदं विशिनष्टि **शारीरक**पदेन **'अन्नवानन्नादो भवति प्रजया पशुभिर्ब्रह्मवर्चसेन'** इत्याद्युक्तानुषङ्गिकाल्पास्थिरफलव्यावृत्त्यर्थममृतत्वरूपशब्दः। आनुषङ्गिकाणामल्पास्थिरफलत्वेऽपि प्रधानफलस्यानन्तस्थिरफलत्वेनापातप्रतीतिरस्तीत्यर्थः। कर्ममीमांसासंस्कृतमनस्कत्वादत्राप्यानुषङ्गिकं प्रधानं फलं च सम्भवतीति श्रोतुःप्रतीयत एव। ननु फलत्वादिदमप्यनित्यमिति बुद्धिस्स्यात्। नैवम्। विपक्षे बाधकाभावात्। यथा भौमसुखात्स्व-

## गूढार्थसंग्रहः

ष्टोमेन स्वर्गकामो यजेत' इति स्वर्गसाधनत्वेन श्रुतस्यैव ज्योतिष्टोमादेः सकलफलसाधकत्वं वाक्यान्तरे 'सर्वेभ्यो ज्योतिष्टोमः' इत्यादावितरफलासाधनत्वभ्रमनिरासायोक्तम्। 'सौभरेतु यो वृष्टिकामः' इत्यादावेकस्मिन्नेव वाक्ये फलत्रयसाधनत्वमुक्तम्। तेन एकप्रयोगेणैव फलत्रयावाप्तिरिति भ्रमस्स्यात् तन्निरासाय निधनाक्षरनियमाय च 'हीषिति वृष्टिकामाय इत्यादिवाक्यप्रवृत्तिः। किंच 'श्येनचितं चिन्वीत स्वर्गकाम' इति स्वर्गार्थसोमयागप्रयोगे गुणविशेषव्यवस्थेति पक्षे निधनाश्रयसौभरस्य 'यो वृष्टिकामः' इत्यादिवाक्यात् फलसाधनत्वप्रतीतिवत् श्येनाकृत्यादिगुणाश्रयस्य चयनस्य उत्तरवेद्याविकल्पितस्य न वाक्यान्तरेण फलसाधनत्वावगमः इत्यपि वैषम्यम्॥

अपि च ज्योतिष्टोमे 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति' इति श्रूयमाणवाक्यसन्दर्भे विकल्पएव मीमांसकैरङ्गीकृतः। तथा च सूत्रं 'शिष्टात्तु प्रतिषेधस्स्यात्' (१०.८.६) इति। अत्र 'निषेधेन नान्यत्रेव क्रतुवैगुण्यजनकत्वस्याक्षेपः, किं तर्हि षोडशिग्रहणाभावेऽपि इतराङ्गैः क्रतुसाद्गुण्यं जायत इत्येवाक्षिप्यते। विधिना च षोडशिग्रहणस्यापि क्रतुसाद्गुण्ये सहकारित्वमित्याक्षेपः। स्थितेचैवं षोडशिग्रहणशास्त्रस्य सार्थक्यसिद्ध्यर्थं करणपक्षे फलाधिक्यं षोडशिग्रहणाभावपक्षापेक्षया कल्पनीयम्। उक्तं च खण्डदेवेन 'अतश्च षोडशिग्रहणे प्रवृत्तिसिद्ध्यर्थं करणपक्षे फलभूमाऽपि कल्प्यते इति ध्येयम्। अतएव प्रथमतः विधिप्रवृत्त्या प्रतियोगिप्रसिद्धौ जातायां निषेधेन निषेधे कृते पश्चाद्विधेयस्य फलभूमकल्पनमिति विशेषः' इति। अतश्च कर्मणामल्पास्थिरफलत्वं सिद्धम्। उपासनस्य तरतमभावापन्नफलसाधनत्वं न प्रमाणयुक्तिभिस्सिद्ध्यतीत्युत्तरत्र स्फुटीभविष्यति॥

**अध्ययनगृहीतेत्यादि**। अत्र 'स्वाध्यायैकदेश' इत्यनेन उपनयनात्पूर्वं सन्यासस्थापनाभिनिवेशेन 'उपनिषदमावर्तयेत्' इति विप्रतिपन्नश्रुतिमुदाहृत्य उपनिषन्मात्राध्ययनसाधनं सिद्धान्तसिद्धाञ्जनकृतोऽप्रामाणिकमिति सूचितं

## श्रीभाष्यम्

**अधिकरोति। तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्यचाक्षयफलत्वं दर्शयन्ति। 'तद्यथेह कर्मचितो लोकः क्षीयते**

## श्रुतप्रकाशिका

र्गादिसुखं विलक्षणं प्रतिपन्नम्। तत्रापि परस्परवैलक्षण्यं देशकालस्वरूपभेदात्प्रतिपन्नं, तथैव तस्मादपि विलक्षणसुखं सम्भवतीत्यतीव रागजननायास्यापि प्रतीतिःस्यात्। **अधिकरोति**। अधिकारी भवति। एवं कर्मविचारकृदेवाधिकारी भवति नतु साधनचतुष्टयवानित्यभिप्रायः॥

एवमैकशास्त्र्यक्रमनियमारम्भणीयत्वान्युपपादितानि कैर्वेदान्तवाक्यैरारम्भणीयत्वौपयिकापातप्रतीतिरित्यत्राह-**तथा चेति**। यथा सूत्रे व्याख्यातं तथेत्यर्थः। चशङ्कानिवृत्तौ प्रसिद्धौ वा, केवलशब्देन ज्ञानाङ्गकर्मव्यावृत्तिः। ननु कर्मविचारेण निर्णीतेऽपि कर्मफलक्षयित्वे पुनश्चाल्पास्थिरफलत्वप्रतीतिजनकवाक्यानि किमर्थमुदाह्रियन्ते ? अनन्तास्थिरपलापातप्रतीतिजनकान्येवहि वाक्यान्युदाहर्तव्यानि। उच्यते—अधिगतकर्मणःपुरुषस्यहि निर्णीतार्थसंवादिवाक्यदर्शनात् कर्मफलास्थिरत्ववद्ब्रह्मज्ञानफलाक्षयित्वस्य प्रामाणिकत्वं सम्भवतीति श्रद्धास्थिरीकरणार्थम्। **तद्यथेति**। लोक्यत इति लोकः

## गूढार्थसंग्रहः

प्रामाणिकप्राचीनाद्वैतिभिरनङ्गीकारात्। उपनिषद्वाक्यविचाररूपेत्यनभिधाय वेदान्तवाक्यविचाररूपशारीरकमीमांसायामित्युक्त्या वेदपूर्वोत्तरभागयोः एकविधप्रामाण्यं तदर्थयोः परस्परसङ्गतत्वं तत्र च 'तंत्वौपनिषदं पुरुषम् विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतीनां मूलत्वं च व्यञ्जितम्। 'अधिकरोति' इत्युक्त्या प्रथमसूत्रस्याधिकारिनिरूपणपरत्वं बोधितम्। कर्मविशेष्यकाल्पास्थिरफलसाधनत्वानिर्णयपूर्वक साङ्गब्रह्मज्ञानविशेष्यकानन्तास्थिरफलसाधनत्वप्रकारकसंभाविप्रामाण्यकापातप्रतीतिमानधिकारी अत्र विवक्षितः॥ कर्मसामान्यफलस्यापि हेयत्वमेव, नतु केवलकर्मफलस्येयीत विवरणकारसिद्धान्तः नायं प्रामाणिकः केवलकर्मफलमेव क्षयिष्णु नतु ब्रह्मज्ञानाङ्गभूतकर्मफलम्। अङ्गिद्वारा तस्य नित्यफलत्वादित्यभिप्रेत्य विवरणोक्तप्रक्रियापर्यालोचनमभिप्रेत्य प्रतिजानीते—**तथा च वेदान्तवाक्यानीति**॥

'सोऽन्वेष्टव्य' इति विधिप्रकरणे 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति नित्यानित्यवस्तुविवेको दर्शितः' इति (पं.पा) विवरणे उक्तम्। अत्र तत्त्वदीपनम्–'अन्वेषणंनाम शास्त्रयुक्तिभ्यां तत्त्वनिर्धारणम्। साध्यस्वर्गादिरनित्यत्वे दृष्टान्त उच्यते इत्याह' इति। अस्यां श्रुतौ न नित्यानित्यसामान्यविवेकः प्रतिपाद्यते, किंतु कर्मफलानित्यत्वमात्रमित्यभिप्रेत्य प्रथमसूत्र(शं) भाष्योपात्तं तामेव श्रुतिं प्रथममुपादत्ते—**तद्यथेहेत्यादि**। यद्यपि पञ्चपादिकायां ब्रह्मध्यानक्रियातो देवताविषययागादिवत् प्रीतिविशेषो भोग्यो मोक्षः कल्प्येत ततस्तेष्वेव तारतम्यावस्थितेषु यागफलेष्वयमपि तथाभूतस्स्यात्। ततः 'तद्यथेह कर्मचितो लोकः–पुण्यचितो लोकः क्षीयते' इति लिङ्गविशेषोपबृंहितन्यायावगतानित्यत्वो मोक्षः प्रसज्येत। नच तथाऽभ्युपगमो मोक्षवादिनाम्' इत्युक्तं समन्वयाधिकरणे तथाऽप्युपासनं न क्रिया अपितु ज्ञानमेव, एतच्च लघुसिद्धान्ते व्यवस्थापयिष्यते॥

उक्तं च दहराधिकरणशङ्करभाष्ये–तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इतिच कर्मणामन्तवत्फलमुक्त्वा 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवति इति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन् परमात्मत्वमस्य सूचयति' इति। एतत्पर्यालोचनायां 'तद्यथेह' इत्यत्रोपासनं

## श्रीभाष्यम्

**(छा.८.१.६) 'अन्तवदेवास्यतद्भवति।' (बृ.५.८.१०)**

## श्रुतप्रकाशिका

फलम् अन्तवदेवास्य तद्भवतीत्यनेन ज्ञानविधुरकर्मणोऽनेककालानुष्ठितस्य बहुविधस्यापि क्षयित्वमुक्तं भवति। **'योवा एतदक्षरं गार्ग्यविदित्वाऽस्मिंलोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि'** इत्येतद्वाक्यपूर्वकत्वात्तस्य वाक्यस्य। अन्तवदित्युक्ते क्रियास्वरूपस्यान्तवत्त्वं लोकसिद्धतयानुपदेश्यमिति फलस्यैवान्तवत्त्वमर्थात्सिद्धं स्फुटीकर्तुं पूर्वं

## गूढार्थसंग्रहः

पुण्यशब्देन विवक्षितम्। अपितु ज्ञानविधुरकेवलकर्मैवेति स्फुटं प्रतीयते। उपनिषद्भाष्ये(शं)ऽपि 'तद्यथेहेत्यादि। तत् तत्र इह अस्मिंलोके तासामेव स्वाम्यनुशासनवर्तिनीनां प्रजानां सेवादिचितो लोकः पराधीनोपभोगः क्षीयते अन्तवान्भवति। अथेदानीं दार्ष्टान्तिकमुपसंहरति एवमेवामुत्राग्निहोत्रादिपुण्यचितो लोकः पराधीनोपभोगः क्षीयत एवेति इत्युक्तम्। उक्तो वा दोष एषामिति विषयं दर्शयति तत्र इत्यादिनेत्यत्र 'तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेष्वकामचारो भवति' इति वाक्यस्यार्थ उक्तः॥

अत्रानन्दगिरिः—'केषामेष दोषो भवति' इत्याशङ्कायामाह—उक्त इति। कर्मसाध्यस्य पारतन्त्र्यं क्षयिष्णुत्वं च ज्ञानहीनकर्मसाध्यविषयब्रह्मोपासकानामेव दोषो भवतीत्युत्तरवाक्यमित्यर्थः। अविदुषामेवास्वातन्त्र्यदोषमुक्त्वा विदुषां स्वातन्त्र्यं फलं कथयति—अथेत्यादिना' इति। 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यनन्तरवाक्यम्। अत्रापि (शं)भाष्यम् 'अथ ये अन्ये इह लोके आत्मानं शास्त्राचार्योपदिष्टमनुविद्य स्वात्मसंवेद्यातामापाद्य व्रजन्ति। यथोक्तांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारिता भवति। यथा राज्ञइव सार्वभौमस्य इह लोके' इति। दहरविद्या सगुणविद्या उपासनरूपेति परेषां सिद्धान्तः। तत्फलं गतिसाध्यं तत्रैव स्पष्टम्। एवं स्थिते दहरविद्यायाः 'तद्यथेह कर्मचितः' इत्यत्र पुण्यशब्देन ग्रहणे दहरविद्याप्रकरणे एतद्वाक्यमसङ्गतार्थकमेव स्यात्। यदि परसंमतनिर्विशेषविद्याप्रकरणे इदं वाक्यमभविष्यत् तदा पञ्चपादिकोक्तदोषः साङ्गत्यमगमिष्यत्। नच तथा इदं वाक्यं वर्तते। अतएव प्रथमसूत्रभाष्येऽपि (शं) 'यस्माद्वेद एवाग्निहोत्रादीनां श्रेयस्साधनानामनित्यफलतां दर्शयति। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिः इत्युक्तम्। अत्र च अग्निहोत्रादीनामेवानित्यफलत्वमुक्तम्। नतूपासनस्य, अतः केवलकर्मणामेवानित्यफलसाधनत्वमिति सिद्धम्। 'अथ य इहात्मानम्' इति श्रुतिः दहराधिकरणभाष्ये उदाहरिष्यते। तेन ज्ञानहीनकर्मपरत्वमेव 'तद्यथेह' इति श्रुतेः सिद्ध्यतीत्याशयः बोधितो भवति। 'यस्माद्वेद एव' इति भाष्य पं.पा.विवरणे 'ब्रह्मव्यतिरिक्तपुरुषार्थजातस्यानित्यत्वं दर्शयतीत्यर्थः' इत्युक्तावपि कूटस्थव्यतिरिक्तस्यानित्यत्वं (पं.पा.उक्तं) न सिद्ध्यति। 'सोऽन्वेष्टव्य' इति वाक्यं सप्तमखण्डे वर्तते। 'तद्यथेह' इति श्रुतिः प्रथमखण्डस्था। अत्र 'एष आत्माऽपहतपाप्मा' इत्यादिकमेव वाक्यम्। प्रजापतिविद्यायाः निर्गुणविद्यात्वेऽपि दहरविद्यायाः सगुणविद्यात्वेन 'तद्यथेह' इति श्रुतिः कूटस्थव्यतिरिक्तस्यानित्यत्वं साधयितुं नालमिति भगवत आशयः। सगुणविद्यायां ज्ञानविधुरकर्मणः अनित्यफलत्वं विवक्षितमित्यभिधाय परसम्मतनिर्गुणविद्यायामप्ययमेवार्थो व्यक्त इत्यभिप्रेत्याह—**अन्तवदेवास्य तद्भवतीति**॥

अक्षराधिकरणे—**योवा एतदक्षरं गार्ग्यविदित्वाऽस्मिंलोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति। योवा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति सकृपणः, अथ यएतदक्षरं गार्गिविदित्वा**

### श्रीभाष्यम्

**नह्यध्रुवैःप्राप्यते (क.२.१०) प्लवाह्येते अदृढा यज्ञरूपाः (मु.१.२.७)**

### श्रुतप्रकाशिका

तद्यथेति वाक्योपादानम् । सांसारिकफलस्याध्रुवत्वं स्यात् कर्मभिरेव ध्रुवं फलं संपाद्यतामिति शङ्काव्युदासायोपादत्ते—**नह्यध्रुवैःप्राप्यतइति** । ध्रुवं तदिति वाक्यखण्डः तदुपपादकत्वेन प्रतीयमानं वाक्यान्तरमुदाहरति । **प्लवाह्येते अदृढा यज्ञरूपाइति** । संसारपारं तारयितुं नालं मध्ये भङ्गुरत्वादित्यर्थः ॥

सूत्रयोजनानुगुणतरं कर्मणामल्पास्थिरफलत्वं ब्रह्मोपासनस्याक्षयफलत्वं च दर्शयद्वाक्यमुपादत्ते । **परीक्ष्य लोकानिति** । अस्मिन्वाक्ये न्यायसिद्धार्थानुवादेन गुरूपसत्तिर्विधीयते । **कर्मचितान्** कर्मसंचितान् कर्मसंपाद्यान् **परीक्ष्य** मीमांसान्यायैर्निरूप्य **ब्राह्मणः** अधीतसाङ्गसशिरस्कवेदः य इत्यध्याहार्यं स इत्युत्तरत्र श्रवणात् **अकृतः** नित्यः अत्रपुरुषो विशेष्यः लिङ्गवशादक्षरं पुरुषमित्यनन्तरोक्तेश्च, **कृतेन** कर्मणा **नास्ति** नसिध्यति इतिकरणं द्रष्टव्यम् । इति यो **निर्वेदमायात्** स तद्विज्ञानार्थं **गुरुमेवाभिगच्छेत्** । एवकारेण नियमविधित्वं गम्यते समित्पाणिः न रिक्तपाणिः—

### गूढार्थसंग्रहः

**ऽस्माल्लोकात्प्रैति सब्राह्मणः** इति **यदज्ञानात्संसारप्राप्तिः यज्ज्ञानाच्चामृतत्वप्राप्तिः तदक्षरं परं ब्रह्म** इति सिद्धम् । इति श्रीभाष्ये पूर्वोत्तरवाक्योदाहरणपूर्वकं ब्रह्मज्ञानविधुरकर्मण एव अनित्यफलत्वं सिद्धान्तितम् । ‘ तद्यथेह ’ इतिवाक्यसन्दर्भे उत्तरवाक्यपर्यालोचनायाऽर्थसमर्थनवत् । ‘ सब्राह्मणः ’ इत्यत्र ब्रह्म अण्यते इति ब्राह्मणः ‘ अणप्राणने ’ इति दैवादिको धातुः । ‘ शकन्ध्वादित्वात्पररूपम् । प्रज्ञादित्वादण् । ’ ब्रह्मैव जीवनकर्ता जीवनंवा यस्येति ब्रह्मैव प्राप्यं यस्य स एव विवक्षितः । इत्थं च ब्रह्मप्राप्तिरेवात्र प्रतिपादिता भवति । ‘ अस्माल्लोकात्प्रैति ’ इत्युक्त्या लोकान्तरगमनस्यात्र प्रतीत्या दहरविद्येवाऽक्षरविद्याऽपि सगुणविद्यैवेति सिद्ध्यति । छान्दोग्यबृहदारण्यकश्रुतिद्वयवत् कठश्रुतिरपि केवलकर्मणः अस्थिरफलत्वे प्रमाणमिति तामुपादत्ते—**नह्यध्रुवैः प्राप्यतइति** । ‘ जानाम्यहं शेवधिरित्यनित्यं नह्यध्रुवैः प्राप्यतेहि ध्रुवं तत् । ततो मया नाचिकेतश्चितोऽग्निः अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ ’ इति पूर्णश्रुतिः । अत्र श्रुतौ ‘ अनित्यै— त्यम् ’ इत्युक्त्या ‘ नह्यध्रुवैः ’ इत्यत्र नित्यभिन्नैरित्यर्थो न घटते । अतः नञ्तत्पुरुषाभ्युगमे ‘ स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः ’ इत्यमरसुधोदाहृतकोशानुसारेण नित्यफलसाधनत्वेन निश्चितभिन्नैरित्यर्थः । कर्मणां स्वर्गादिफलसाधनत्वं पूर्वभागे उक्तम् । उपनिषत्सु ज्ञानसाधनत्वमिति नित्यफलसाधनत्वेन निश्चितभिन्नत्वं यज्ञादिकर्मणामेव । एवं च यज्ञादिकर्मणां साक्षाद्ब्रह्मप्राप्तिसाधनत्वमत्र व्यवच्छिद्यते । उत्तरार्धेतु अनित्यद्रव्यसाध्याग्निचयनस्य ज्ञानद्वारा नित्यफलसाधनत्वं विवक्षितमित्येव युक्तम् । ‘ विद्यामेतां योगविधिं च कृत्स्नम् ब्रह्मप्राप्तः ’ इत्युपसंहारेण ‘ यच्छेद्वाङ्मनसी ’ इत्यादौ योगस्याभिधानेन च समाधिपर्यन्तध्यानस्यैवैतदुपनिषदि विवक्षितत्वेन ध्यानस्याप्यनित्यफलत्वोत्प्रेक्षणस्य सिद्धान्तसिद्धाङ्गकारविवक्षितस्यात्रासम्भवात् । एतत्सर्वमभिप्रेत्यैव ‘ अध्रुवफलसाधनतया चोदितैः ’ इति पर्यवसितार्थः तत्त्वटीकायामभिहितः । योगप्रत्युक्त्यधिकरणे परैरपि वैदिकं ध्यानमत्राङ्गीकृतमेव । (शां.सू.भा) ॥

‘ नास्त्यकृतःकृतेन ’ इति मुण्डकश्रुतावपि प्रथमसूत्रार्थमूलभूतायामुपासनस्य न प्राप्तिसाधकत्वं निषिध्यते ‘ परीक्ष्यलोकान् कर्मचितान् ’ इत्यत्र ‘ प्लवाह्येते अदृढा यज्ञरूपाः ’ इत्यादिपूर्वप्रस्तुतकर्मणामेव विवक्षितत्वादित्याशयेन **प्लवा ह्येते अदृढा यज्ञरूपाः** इति श्रुतिमुपादत्ते । एतत्खण्डोपक्रमे ‘ तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि

## श्रीभाष्यम्

**'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतःकृतेन तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठं तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाचतां तत्वतो ब्रह्मविद्याम्।**

## श्रुतप्रकाशिका

**'रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरुम्।'** इतिहि स्मर्यते। श्रोत्रियं श्रुतवेदान्तं **ब्रह्मनिष्ठं** ब्रह्मसाक्षात्कारवन्तं श्रुतवेदान्तोऽपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इतिभावः। अभिगच्छेदित्यन्वयः। **शमः** बाह्येन्द्रियनियमनरूपः प्रशान्तचित्तायेत्यन्तःकरणनियमनस्योक्ततया पारिशेष्यात्। एतेन श्रवणोपयुक्तमवधानं विवक्षितम्। नतूपासनोपयुक्तात्यन्तेन्द्रियजयादिः। **तस्मै स विद्वान्प्रोवाच** इत्यन्वयः। **येन** इति निर्देशो विज्ञानाभिप्रायः, तद्विज्ञानार्थमितिहि प्रकृतम् सामान्यतःकारणाभिप्रायो वा लिङ्गव्यत्ययो वा, **अक्षरं** स्वरूपेणाविकारम्। सत्यं गुणतोऽप्यविकारम् आभ्यामाद्विब्जीवव्यावृत्तिः **तां ब्रह्मविद्यां प्रोवाच** प्रब्रूयादित्यर्थः इति वेदान्तसारे व्याख्यातम्। **छन्दसि लुङ्लङ्लिटइतिलिट्** ॥

**ननु प्रशान्तचित्ताय शमान्वितायेति** शमादेःपूर्ववृत्तत्वं प्रतीयते ? न ; श्रवणोपयोग्यवधानमात्रस्य विवक्षितत्वात्। नात्रोपासनाङ्गभूतात्यन्तविषयवैतृष्ण्यं विवक्षितम्। तद्धि **शमदमाद्युपेतस्स्यादिति** निरूपयिष्यते। * अतो निरूप्य संपाद्यैस्तैर्निरूपणात्प्रागेव विशिष्टत्वमनुपपन्नम्। **श्रुतिश्च** शास्त्रजन्यज्ञानवतःपुरुषस्य तदुत्तरभाविशमाद्यङ्गकमुपासनं दर्शयति। **तस्मादेवंविच्छान्तोदान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति** अत्र ह्येवंविदिति शास्त्रजन्यज्ञानवत्त्वमुक्तम्। भूत्वापश्येदित्युपासनस्य शमाद्यङ्गकत्वं स्थापितम् ॥

## गूढार्थसङ्ग्रहः

त्रेतायां बहुधा सन्ततानि। तान्याचरथ नियतं सत्यकामाः एषवःपन्थास्सुकृतस्य लोके' (मु.२.९) इत्यत्र पूर्वप्रस्तुतसत्यशब्दार्थं ब्रह्म ये कामयन्ते तैरपि कर्मानुष्ठेयमित्युक्तम्। 'परीक्ष्य लोकान्' इति श्रुत्युत्तरं 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाचतां तत्त्वतो ब्रह्मविद्याम्' इत्यत्र सत्यशब्दार्थब्रह्मविद्याऽभिहिता। एवंचोपक्रमोपसंहारयोरैकरस्यम्। अत्र 'सुकृतस्य लोक' इत्युक्त्या 'सत्यकाम' इत्यत्र चतुर्मुखस्थानभूतसत्यलोको न विवक्षितः। उपक्रमोपसंहारयोरैकरूप्यासम्भवात्। 'चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन।' 'येषांत्वन्तगतं पापं जनानां पुण्यकर्मणाम् ॥' (गी.७.२८) इति गीतासप्तमाध्यायोपक्रमोपसंहारयोः ज्ञानित्वे पुण्यकर्मणो हेतुत्वस्य स्पष्टमुक्तया तत्तात्पर्येण 'सुकृतस्य लोक' इत्युक्तम् नतु सत्यलोकाभिप्रायेण। ब्रह्मण एव फलत्वेन 'सत्यकामा' इति युक्तमेव सत्यशब्दसहभावेन लोकशब्दाभावादपि सत्यशब्दः परब्रह्मपरइति निश्चीयते। 'सुकृतस्य लोके एषवः पन्थाः' इत्युक्त्या सुकृतफलमेव परब्रह्मकामनया कर्माचरणम्। तेन स्वर्गफलसाधनतया कर्म व्यावर्तितम्। 'प्लवाह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्यू ते पुनरेवापियन्ति ॥' (१.२.७) इत्यत्र पूर्वकाण्डोक्तस्वर्गादिफलाभिसन्धिपूर्वकं कर्मविवक्षितम्। यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते' इत्यत्र स्वर्गादिफलेच्छया कर्माचरतां ब्रह्मज्ञानवैधुर्ये तत्कर्मफलानित्यत्वंचोक्तम्। अत्र ब्रह्मव्यतिरिक्तफलकामनोक्तिपूर्वकं तद्वतां फलच्युतेरभिधानेन सुकृतमूलकब्रह्मकामनावतां फलच्युतिर्नास्तीति सूच्यते। 'इष्टापूर्तं मन्यमानावरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे सुकृतेऽनुभूत्वा इमं लोकं हीनतरंचाविशन्ति ॥' (१०) इत्यत्र ब्रह्मज्ञानवैधुर्ये पुनरावृत्तिश्चेत्युभयं प्रतिपादितम्। तदुत्तरं 'तपश्श्रद्धे येह्युप-

## श्रीभाष्यम्

(मु.१.२.१२) 'ब्रह्मविदाप्नोति परम्' (तै.आनन्द.२.प्र.१.अनु.७.वा)

## श्रुतप्रकाशिका

केवलानन्तस्थिरफलपरवाक्यान्युदाहरति—ब्रह्मविदिति। अत्रानुवाके 'यतो वाचो निवर्तन्त' इति श्रवणादनन्तस्थिरफलत्वसिद्धिः। प्राप्यस्य ब्रह्मणोऽनन्तस्थिरफलत्वेऽपि प्राप्तेः कादाचित्कत्वशङ्काव्यावृत्त्यर्थमपुनर्निवृत्तिमाह—

## गूढार्थसंग्रहः

वसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यं चरन्तः। सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतस्सपुरुषोह्यव्ययात्मा॥' इत्यत्र विदुषां सूर्यद्वारेण प्राप्तेरभिधानेन सगुणविद्यानिष्ठानां ब्रह्मप्राप्तिफलं स्पष्टमुक्तम्। तदनन्तरं 'परीक्ष्य लोकान्' इत्यादिश्रुतिः। अत्र कर्मचितान् कर्मसंपाद्यान् परीक्ष्य मीमांसान्यायैर्निरूप्य अकृतः नित्य अत्र पुरुषो विशेष्यः। कृतेन कर्मणा नास्ति न सिद्ध्यति इति करणं द्रष्टव्यम् इति यो निर्वेदमायात् इत्यादिना वेदान्तसारे भगवतैव श्रुत्यर्थ उक्तः।' अत्र 'परीक्ष्य' इत्यत्र मीमांसान्यायैर्निरूप्येत्यर्थ एव युक्तः। 'तद्यथेह कर्मचितो लोकः क्षीयते' इति वाक्यं छान्दोग्यप्रकरणान्तरस्थम्, तेनापि नैव निर्णयसंभवः। प्रागुदाहृतपूर्वश्रुतिभिरापातप्रतीतिसंभवेऽपि निर्णयस्यासंभवात्। तत्खण्डोपक्रमे ब्रह्मकामनावतां कर्माचरणस्योक्तेश्च। अतः फलरागेन कृतानां कर्मणामेवात्राभिधानेन 'नास्त्यकृतःकृतेन' इत्यत्र उक्तकर्मभिः नित्यफलासिद्धिरेवोच्यते। जैमिनिसूत्रोक्तन्यायैः कर्मफलानित्यत्वनिर्णयः कर्मविधिस्वरूपे निरूपित इति सूक्तिविवरणावसर एव निरूपितः। अतः 'मोक्षाधिकारी सन्न्यासी गृहस्थःकिल कर्मणि।' (स.वे.सि.सा.सं.१८०) इत्युक्तदिशा सन्न्यासिन एव ब्रह्मविद्यायामधिकार इत्यर्थोऽपि तत्र परसम्मतो विवक्षितः। 'परीक्ष्य लोकान् इत्यादिलक्षणं मोक्षकाङ्क्षिणः।' (१७९) इति तदुक्त्या एतच्छ्रुत्युपक्रमादिपर्यालोचनायां प्रागुक्तरीत्या गृहस्थस्यापि मोक्षाधिकारसिद्धेः। एष वःपन्थास्सुकृतस्य लोक' इति सुकृतिलोके ब्रह्मप्राप्तिसाधनमार्गस्याभिधानेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति श्रुत्यनुसारेण च गृहस्थानामप्यधिकारसत्त्वनिश्चयात्। अतः तत्र च **कर्मविधिस्वरूपे निरूपिते** इतिभाष्यसूक्तौ विवक्षितः मीमांसान्यायैर्निरूपणप्रकार एव 'परीक्ष्य' इत्यत्र विवक्षित इति युक्तम्। अतः 'कर्मचितान्' इत्यत्र 'एतच्छ्रेयो येऽभिनन्दन्ति मूढाः' इति पूर्वं ज्ञानहीनपुरुषानुष्ठितं प्रस्तुतं कर्म केवलमेवात्र विवक्षितमिति सिद्धम्। एतेन सिद्धान्तसिद्धाञ्जनचन्द्रिकाद्युक्तदोषाणां नावसरः॥

एतावता परैः नित्यानित्यवस्तुविवेकप्रमाणतया (शं) भाष्ये उदाहृता, तद्यथेह इत्यादिश्रुतिः केवलकर्मणामेवानित्यफलसाधनत्वं प्रतिपादयतीति निरूपितम्। तेन केवलकर्मणां प्रतिषेध इति भास्करपक्षस्य विवरणोक्त दूषणं निरवकाशमिति सिद्धम्। अथ तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति 'ब्रह्मविदाप्नोतिपरम्' इत्यादिः इति परभाष्ये उदाहृतश्रुतिमेव ब्रह्मज्ञानस्यानन्तास्थिरफलसाधनत्वे प्रमाणतया प्रथमतः उपादत्ते—**ब्रह्मविदाप्नोति परमित्यादिना**। अत्र परमाप्नोतीत्यत्र परशब्देन 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादितदुत्तरश्रुत्या च ब्रह्मणः अनन्तास्थिरफलत्वं प्रतिपाद्यत इत्याशयः। एतेन परीक्ष्य लोकान्' इत्यादौ 'नास्त्यकृतःकृतेन' इत्यत्राकृतशब्देन 'येनाक्षरं पुरुषं वेद सत्यम्' इत्यत्राक्षरपुरुषशब्दाभ्यां ब्रह्मणः अनन्तास्थिरफलत्वं प्रतिपन्नं भवति। तथाऽपि तत्र कर्मफलाल्पास्थिरत्वमुपक्रम्य गुरूपसत्तेः प्राधान्येन प्रतिपादनेन ब्रह्मणः अनन्तस्थिरफलत्वं न प्राधान्येनोक्तम् अस्फुटं च। परभाष्ये साच श्रुतिः नोपात्ता। इति परभाष्योपात्तश्रुतौ प्राधान्येन ब्रह्मफलाल्पास्थिरत्वं प्रतिपिपादयिषितमितीयं श्रुतिरत्रोपात्ता॥

## श्रीभाष्यम

**'न पुनर्मृत्यवे तदेकं पश्यति ( ) न पश्यो मृत्युं पश्यति' (छा.७.२६.२) 'स स्वराड्भवति' (७.२५.२) 'तमेवं विद्वानमृत इह भवति। नान्यःपन्था अयनाय विद्यते' (पुरुष**

## श्रुतप्रकाशिका

**नपुनरिति।** * यद्वा विद्ययाऽनन्तस्थिरफलरूपब्रह्मप्राप्तिमाह—**ब्रह्मविदिति।** विद्यया ब्रह्मप्राप्तेः प्रतिबन्धनिवृत्तिपूर्वकत्वमाह—**नपुनरिति।** मृत्युः प्रमादः मोहो वा **मोहो मृत्युस्सम्मतो यःकवीनाम् प्रमादं वै मृत्युमहं ब्रवीमि** इत्युभयत्र मृत्युशब्दव्यपदेशात्। प्रमादो यथावस्थितात्मस्वरूपस्याज्ञानं, मोहः भ्रान्तिज्ञानं दिङ्मोह इत्यादिव्यपदेशात्। न मृत्युनिवृत्तिमात्रमेव किंतु तत्कार्यमपि निवर्तत इत्याह— **न पश्यो मृत्युं पश्यतीति।** अस्य वाक्यस्योपरि **नरोगं नोत दुःखतामितिहि** श्रूयते। नपुनरित्यादिवाक्यं ब्रह्मणिदृष्टे मृत्युप्रमुखनिवृत्तिज्ञापनार्थम्। **न पश्यो मृत्युमित्यत्रापि** पश्यशब्दस्य ब्रह्मदर्शीत्यर्थः **तदेकं पश्यतीत्यनन्तरोदाहृतवाक्ये** * विषयस्य दर्शितत्वात्। **सस्वराड्भवतीति** कर्मवश्यो न भवतीत्यर्थः 'स्वराट् स्वतन्त्रो विज्ञेयः' इति नैघण्टुकाः। **तमेवं विद्वान्** इति वाक्येन निर्विशेषचिन्मात्रज्ञानदेवता-

## गूढार्थसंग्रहः

'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र परसंमताविद्यानिवृत्तिर्न विवक्षितेति साधनाय श्रुत्यन्तराण्युपादत्ते—**न पुनर्मृत्यवे तदेकं पश्यतीत्यादिना।** **न पुनर्मृत्यवे** इति श्रुत्यर्थनिर्धारणाय श्रुत्यन्तरमुपादत्ते—**न पश्यो मृत्युं पश्यतीत्यादिना।** मृत्युशब्देन ब्रह्मप्राप्तिप्रतिबन्धककर्मैवोच्यते 'अविद्यया मृत्युं तीर्त्वा' इत्यत्र तथैव व्याख्यास्यमानत्वात्। प्रकृतिर्वा मृत्युशब्दार्थोऽस्तु प्रकृत्यतिक्रमणानन्तरमेव ब्रह्मप्राप्तेः श्रुतिषु प्रतिपादनात्। एतेन 'मृत्युर्वै तमो ज्योतिरमृतम्' (बृ.३.३.२९) इति बृहदारण्यकश्रुतिरपि व्याख्याता। तत्रापि 'तम आसीत्' इति श्रुतौ 'तमश्शब्देन प्रकृतेस्सूक्ष्मावस्थोच्यते' इति भाष्ये वक्ष्यमाणदिशा सूक्ष्मावस्थाऽऽपन्नप्रकृतिपरत्वात्तमश्शब्दस्य। 'प्रमादं वै मृत्युमहंब्रवीमि' इत्यत्र प्रमादशब्दस्य 'प्रमादोऽनवधानता' इति कोशोक्तार्थः न विवक्षित इति परेषामपि संमतम्। आत्माऽनवधारणार्थकत्वेऽपि आत्माऽवधारणाभाव एव विवक्षितस्स्यात्। तत्रापि हेतुः कर्म प्रकृतिर्वा 'पुण्येन पापं विनिहत्य—ज्ञानविदीपितात्मा' (सनत्सु) 'प्रकृतेस्सङ्गादहं मानादिदूषितः (वि.पु) इत्याद्युक्तेः। तत्र मृत्युशब्दस्य कार्यपरत्वमस्तु। अतिमृत्युमित्यत्रातिशब्दयोगेन मृत्युशब्दस्य प्रकृतिपरत्वमेव युक्तम्। 'प्रमादंवै मृत्युम्' इत्यत्र पूर्वोत्तरपर्यालोचनया मृत्युशब्दस्यान्यार्थाङ्गीकारेऽपि नानुपपत्तिः। 'सर्वंह पश्यःपश्यति' इत्यत्र वक्ष्यमाणज्ञानपूर्णविकासप्रतिबन्धकनिवृत्तिरत्राभिहिता भवति। एतेन 'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र मृत्युमत्येतीत्यनभिधाय अतिमृत्युमेतीति निर्देशपर्यालोचनया मृत्युमति तमेतैतीति योजनया ब्रह्मप्राप्तिप्रतिबन्धकनिवृत्तिरेव मृत्योरत्ययो विवक्षितः। ब्रह्मप्राप्तिश्च ज्ञानपूर्णविकासरूपेति सिद्ध्यति।

**न पश्यो मृत्युं पश्यति** इत्यत्र 'नरोगं नोतदुःखताम्' इत्यनन्तरवाक्यानुसारेण तद्धेतुभूतप्रकृतिदर्शनस्यैव निषेधः। अन्यथा 'सर्वंह पश्यःपश्यति' इति तदनन्तरवाक्यविरोधात्। एतेन 'न पुनर्मृत्यवे तदेकं पश्यति' इत्यत्र दुःखादिहेतुभूतप्रकृतेः पूर्वसंबद्धायाः संबन्ध एव निषिध्यते। 'नपश्यो मृत्युं पश्यति' इति वाक्यपूर्ववाक्यमुपादत्ते—**स स्वराड्भवति** इति। इदं च वाक्यद्वयं भूमविद्यास्थम्। भूमविद्या च निर्गुणविद्येति परेषां सिद्धान्तः। तत्रैव सस्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इत्युक्त्या तद्विरोधेन परसंमताज्ञानस्यात्र विवक्षा नैव संभवतीति भावः 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतौ आत्माऽन्याविषयकज्ञानं न विवक्षितमिति निर्धारणाय पुरुषसूक्तश्रुतिमुपादत्ते—**तमेवं विद्वानमृत इहभवतीति।** एवमित्यस्य पूर्वोक्तप्रकारेणेत्यर्थः। एतेन 'तमेव विदित्वा' इति श्रुतौ

## श्रीभाष्यम्

सूक्तम्) पृथगात्मानं प्रेरितारंच मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्यादीनि (श्वेता.१.६)

## श्रुतप्रकाशिका

न्तरोपासनाद्युपायान्तरव्यावृत्तिसिद्धिः पुरुषोत्तमोपासनस्यैवोपायतयोक्तत्वात्। तदुपासनरूपज्ञानं च नात्मैक्यविषयम्। अपितु पृथक्त्वविषयमिति दर्शयति **पृथगात्मानमिति**। मत्वा ज्ञात्वा ततःपृथक्त्वज्ञानात् तेन जुष्टः प्रीतिविषयीकृतः। अनुगृहीतोऽमृतत्वमेतीत्यर्थः **इत्यादीनि वेदान्तवाक्यानि** इति पूर्वेणान्वयः॥

## गूढार्थसङ्ग्रहः

तच्छब्दस्य पूर्वप्रक्रान्तधर्मविशिष्टार्थकतया तच्छब्दोपस्थितप्रकारव्यतिरिक्तस्यैव निषेधः एवकारस्य व्युत्पत्तिसिद्धः। नतु तत्प्रकाराणामिति 'तमेव विदित्वा' इत्यत्रापि तच्छब्दस्य धर्मविशिष्टार्थकतया धर्मविशिष्टवेदनमेव विवक्षितम्। नतु निर्विशेषवेदनमिति भावः। वेदनस्य दृष्टद्वारा न मुक्तिहेतुत्वम् किंतु प्रीतिद्वारा। वेदनमपि जीवभिन्नब्रह्मवेदनमेव मुक्तिहेतुतया श्रुतिषु विवक्षितमित्यभिप्रेत्य एतदुभयार्थपरां श्रुतिमुपादत्ते-—**पृथगात्मानमिति**। इदं चार्थद्वयम् आनन्दमयविद्यायां भूमविद्यायां च विवक्षितम्। तत्र चानन्दमयविद्यायां विज्ञानमयशब्दार्थजीवभिन्नानन्दमयशब्दार्थ एव आनन्दरूपं ब्रह्म 'ब्रह्मविदाप्नोति परम्' इत्यत्र विवक्षितम्। तज्ज्ञानस्य 'रसो वै सः रसँ ह्येवायं लब्ध्वाऽनन्दीभवति एषह्येवानन्दयाति' इत्यत्र परमात्मसङ्कल्पद्वारैव मुक्तिसाधनत्वम्। तदुत्तरवाक्यादावुपासनरूपत्वं विवक्षितमिति वृत्तिकारसिद्धान्तः आनन्दमयाधिकरणे स्थापयिष्यते। भूमविद्यायामपि भूमा ब्रह्म नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्' इति वृत्तिकारोक्त एवार्थो युक्त इति भूमाधिकरणे स्थापयिष्यत इत्युक्तार्थद्वयं विवक्षितम्। एवं भूमविद्यायां—'न पश्यो मृत्युं पश्यति' इत्येतदुत्तरं 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इत्यत्र मोक्षहेतुब्रह्मज्ञाने ध्यानरूपत्वं प्रतिपाद्यत इति लघुसिद्धान्ते वक्ष्यते। एवं 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कळं ध्यायमानः' (मु.३.१.८) इति मुण्डकश्रुतौ सत्त्वविशुद्धेर्ध्यानसमाधिहेतुत्वं व्यक्तम्। भूमविद्यायां 'आहारशुद्धौ सत्त्वशुद्धिरिति' सत्वशुद्धावाहारशुद्धिमात्रं कारणमुक्तम्॥

सनत्सुजातीय एव 'तदर्थमुक्तं तपएतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान्। पुण्येन पापं विनिहत्य पश्चात् स जायते ज्ञानविदीपितात्मा' (सन.२.८) 'ज्ञानेनचात्मानमुपैति विद्वान्' इत्युक्तम्। तपःकृच्छ्रचान्द्रायणादि इज्याज्योतिष्टोमादि। किं ततो भवतीतिचेत् ताभ्यां इज्यातपोभ्यां असौ विद्वान् पूर्वोक्तविनियोगज्ञः ईश्वरार्थं कर्मानुतिष्ठन् पुण्यमुपैति प्राप्नोति कर्मजन्यापूर्वसंयुक्तो भवति, तेन पुण्येन पापं विनिहत्य क्षपयित्वा पश्चादुत्तरकालं क्षपिताशेषकल्मषो जायते ज्ञानविदीपितात्मा' इति तत्र (शं) भाष्यम्॥

अत्र ज्ञानविदीप्तौ पुण्यकर्मणां हेतुत्वं स्फुटम्। 'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः' (२,२८) इति योगसूत्रे साधनपादे ज्ञानदीप्तिरुक्ता। अत्र भाष्यम्—'प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः। वियोगकारणं तदेवाशुद्धेः' इति। अत्रैव साधनपादोपक्रमे 'तपस्स्वायेश्वरप्रणिधानानि क्रियायोगः' 'समाधिभावनार्थः क्लेशतनूकरणार्थश्च' (१.२) इत्यत्र भाष्यम् 'ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरावर्पणम्। तत्फलसन्न्यासो वा।' इति प्रथमसूत्रे सहिक्रियायोगः आसेव्यमानस्समाधिंभावयति क्लेशांश्च प्रतनूकरोति। प्रतनूकृतान्क्लेशान्प्रसङ्ख्यानाग्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति तेषां तनूकरणात्पुनः क्लेशैरपरामृष्टा सत्वपुरुषान्यथाख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय

## गूढार्थसंग्रहः

कल्पिष्यत इति । ' अत्र तत्त्ववैशारद्यां—' ननु क्रियायोग एवचेत् क्लेशान् प्रतनूकरोति कृतंतर्हि प्रसंख्यानेनेत्यतआह— प्रतनूकृतान् इति । क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो ननु वन्ध्यत्वे क्लेशानां प्रसंख्यानस्यतु तद्वन्ध्यत्वे दग्धबीजकल्पानिति वन्ध्यत्वेन दग्धकलमे बीजसारूप्यमुक्तम् । स्यादेतत् प्रसंख्यानमेवचेत्क्लेशान् अप्रसवधर्मिणःकरिष्यति कृतमेषां प्रतनूकरणेनेत्यत आह—तेषामिति । क्लेशानामतानवेहि बलवद्विरोधिग्रस्ता सत्वपुरुषान्यथाख्यातिरुदेतुमेव नोत्सहते प्रागेव तद्वन्ध्यभावं कर्तुं प्रविरलीकृतेषुच क्लेशेषु दुर्बलेषु तद्विरोधिन्यपि वैराग्याभ्यासाभ्यामुपजायते उपजाताचैतैरपरामृष्टा अनभिभूता नैव यावत्परामृश्यते । सत्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा अतीन्द्रियतया सूक्ष्मोऽस्या विषयः सूक्ष्मा प्रज्ञाप्रतिप्रसवाय प्रविलयाय कल्पिष्यते कुतः यतः समाप्ताधिकारा समाप्तो अधिकारः कार्यारम्भणं गुणानां यया हेतुभूतया सातथोक्तेति ' इत्युक्तम् ॥

' क्लेशमूलः कर्माशयो दृष्टादृष्टवेदनीयः ' (२.१२) ' सतिमूले तद्विपाको जात्यायुर्भोगाः ' (२.१३) ' तेह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ' (२.१४) इत्यत्र कर्मफलमुक्तम् । अन्ते च ' प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेः धर्ममेघः समाधिः ' (यो.सू.४.२९) ' ततः क्लेशकर्मनिवृत्तिः ' ' तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ' ३० इत्यत्र विवेकख्यातिः धर्ममेघसमाधिः क्लेशकर्मनिवृत्तिः ज्ञानानन्त्यंचेतत्सर्वमुक्तम् । अत्र ' ज्ञानदीप्तिराविवेकख्यातेः ' इत्यत्रोक्ता विवेकख्यातिः स्फुटा । क्रियायोगस्य क्लेशतनूकरणार्थत्वोक्त्या विवेकख्यातिपर्यन्तं क्रियायोगः आवश्यक इत्युक्तं भवति । सर्वान्धर्मान्ज्ञेयान् मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते ' इति तत्त्ववैशारदी । सर्वैः क्लेशकर्मावरणैः विमुक्तस्यानन्त्यं भवतीति भाष्यम् । अत्र कर्मणां ज्ञानावारकत्वं स्पष्टम् आवरणनिवृत्तौ ज्ञानस्यानन्त्यं ज्ञानदीप्तिविशेष एव, अत्र धर्ममेघसमाधिहेतुभूतविवेकख्यातिपर्यन्तं क्रियायोगावश्यकत्वस्य सूत्रेषु स्फुटतया पुण्यकर्मभिः पापक्षयेणैव सत्त्ववृद्धिः भवतीति सिद्धम् । एवं च ' सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे ' इति भूमविद्याश्रुतौ मुक्तिहेतुभूतसमाधिपर्यन्तध्यानहेतुभूतसत्त्वशुद्ध्यर्थं तावत्पर्यन्तं पुण्यकर्मणामावश्यकत्वं सिद्धम् ॥

' यावदधिकारमवस्थितिराधिकारिकाणाम् ' (३.३.३२) इत्यत्र ' ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् ।
तथाहि श्रुतिः ' भिद्यते हृदयग्रान्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावरे ' (मु.२.२.८)
इति । ' स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ' (छा.७.२६.२) इतिचैवमाद्या । स्मृतिरपि ' यथैधांसि समिद्धोऽग्निः
भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ' (४.३७) इति । ' बीजान्यग्न्युपदग्धानि नरोहन्ति
यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैः नात्मा संपद्यते पुनः ' इतिचैवमाद्या । नचाविद्यादिक्लेशदाहेसति क्लेशबीजस्य कर्मा-
शयस्य एकदेशदाहः एकदेशप्ररोहश्चेत्युपपद्यते । नह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते ' इति शङ्करभाष्येऽपि
' स्मृतिलंभ ' इत्यत्र योगसूत्रार्थो विवाक्षित इति स्फुटम् । ' निर्विकल्पसमाधिर्यो वृत्तिर्नैश्चल्यलक्षणा । तमेव योगइत्याहुर्यो-
गशास्त्रार्थकोविदाः ॥ (९०९) अष्टावङ्गानि योगस्य ' इत्युपक्रम्य समाधिपर्यन्ताष्टाङ्गानि निरूप्य ' समाधिनिष्ठया ब्रह्म-
साक्षाद्भवितुमर्हति ' (९२३) इत्यन्तोक्तौ (स.वे.सि.सा.सं) समाधेर्मुक्तिहेतुत्वं स्फुटम् । अतो योगःपरेषामपि संमतः । कठश्वेता-
श्वतरोपनिषदोः योगःप्रतिपादितः । समाधेरेव मुक्तिहेतुत्वं सम्यङ्निरूपितं भावप्रकाशे. ३.सं.,अत्रापि संग्रहेण निरूपयिष्यते

एवं च प्रथमज्ञानमिव चरमज्ञानमपि योगरूपं सत्त्वशुद्धिसापेक्षम् । सत्त्वशुद्धिश्च पुण्येन पापक्षयमन्तरा नघटते
अतः तदर्थकर्मणामपेक्षेति सिद्धम् । अयमर्थः लघुसिद्धान्ते स्फुटीभविष्यति । अतएव ' नाविरतो दुश्चरितात् नाशान्तो
नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् । ' (क.३.२८) इति श्रुतिरुपपद्यते । अत्र प्रतिषिद्धात् श्रुति

## श्रीभाष्यम्

**ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं, स्वर्गादीनां च क्षयित्वं, ब्रह्मोपासनस्यामृतत्वफलत्वं च ज्ञायत एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम् ।**

## श्रुतप्रकाशिका

उदाहृतस्पष्टार्थवाक्यमात्रतृप्तः कश्चिचोदयति—**ननुचेति** । पूर्वत्र चोद्यान्तराणां कण्ठोक्त्यभावेऽपि परिहारस्य कण्ठोक्त्या तान्यभिप्रेतानि अतः चशब्देन तैरर्थसिद्धैस्सह समुच्चयो युक्तः । **साङ्गेति** । कर्मज्ञानपूर्ववृत्तत्ववादिनाऽपि साङ्गाध्ययनस्यापेक्षितत्वं स्वीकृतमिति तदधिकव्युदासार्थ एवकारः अध्ययनस्य साङ्गत्वादङ्गानां चार्थज्ञानहेतुत्वान्मीमांसानिरपेक्षं स्वर्गादेरेव केवलकर्मफलत्वं स्वर्गादेश्च क्षयित्वं ब्रह्मोपासनस्याक्षयफलत्वं च ज्ञायत इत्यर्थः—**ब्रह्मोपासनस्येत्या** दिग्रन्थो दृष्टान्ताभिप्रायः **ज्ञायतएव** इत्येवकारः ज्ञातत्वसंप्रतिपत्तिसूचकः ज्ञानसामग्रीहि सिद्धेति भावः । ततःकिमित्यत्राह—**अनन्तरमिति** । कर्मणोऽल्पास्थिरफलत्वज्ञानेन मुमुक्षासिद्ध्यर्थैहि कर्मविचारः, तन्निरपेक्षमेवाल्पास्थिरफलत्वज्ञाना-

## गूढार्थसङ्ग्रहः

स्मृत्यविहितात् पापकर्मणो नाविरत ' इति (शं) भाष्यम् यस्तु दुश्चरिताद्विरतः प्रज्ञानेन यथोक्तमात्मानं प्राप्नोतीत्यर्थः ' इति च भाष्योक्त्या पापकर्मनिवृत्तिमन्तरा मुक्तिहेतुज्ञानं न सम्भवतीत्युक्त्या योगनिष्पत्तिपर्यन्तं पुण्यस्यावश्यानुष्ठानं सिद्ध्यतीति पुण्यकर्मणां योगाङ्गत्वं न प्रत्याख्यानमर्हति । अतश्च साङ्गब्रह्मज्ञानस्य समाधिपर्यन्तध्यानरूपस्य उदाहृतश्रुतिषु अनन्तस्थिरफलसाधनत्वप्रतीतिः सम्भवत्येवेति सिद्धम् ॥ एवं च कर्मफलाल्पास्थिरत्वनिर्णयपूर्वककर्माङ्गकब्रह्मध्यानविशेष्यकानन्तस्थिरफलसाधनत्वप्रकारकापातप्रतीतिमान् ब्रह्मविचाराधिकारी प्रागुक्तः युक्त इति सिद्धम् ॥

धर्मविचारमन्तराऽपि उक्तविशेषणद्वयसिद्धिस्सम्भवति इति धर्मविचारस्य न पूर्ववृत्तत्वसम्भवः इति परे नवीनाश्च वदन्ति । स्पष्टंचेदं सिद्धान्तसिद्धाञ्जनादौ इति तदभिप्रायानुरोधेन शङ्कते—**ननुचेत्यादि** ।

सिद्धान्तसिद्धाञ्जने—' अधीतवेदान्तापाताधिगतानन्तस्थिरफलाभिलाषवतः तदुपायबुभुत्सया ब्रह्मविचार एव प्रवृत्तिस्स्यात् विनाधर्मविचारम् । कर्मफलफल्गुत्वाज्ञानेऽपि अधीतवेदोपादापितकर्मब्रह्मविद्याफलनित्यत्वापाताधिगमस्य स्वरसतो नित्यफलप्रेप्सोः तदुपायजिज्ञासायां विशेषहेत्वभावेन धर्मविचारप्राथम्यस्यानियाम्यत्वात् । अपिच ' निचाय्य तं मृत्युमुखात्प्रमुच्यते ' ' तमेवं विद्वानमृत इह भवति, ब्रह्म वेद ब्रह्मैव भवति ' इत्यादिब्रह्मविद्याफलनित्यत्वं क्रियाभागेऽपि विपरीताध्ययनशून्यतयाऽविप्लुतमधीयानस्याभिलषितनित्यफलसम्भावनौत्कट्येन वेदान्तविचारप्राथम्यमेव स्यात् क्वचित् कर्मफलनित्यत्वश्रवणेऽपि वेदान्तेषु ' प्लवाह्येते अदृढा यज्ञरूपाः ' ' नास्त्यकृतःकृतेन ' ' नह्यध्रुवैःप्राप्यतेहि ध्रुवंतत् ' ' अन्तवदेवास्य तद्भवति ' ' अमुत्र पुण्यचितो लोकः क्षीयते ' इत्यादिविपरीताध्ययनेन तत्संभावनाशैथिल्यात् प्राचीनपुण्यविशेषसंपदापादितकतिपयन्यायविशेषानुसंधाने तत्फलानित्यत्वनिश्चयोपपत्तेश्च । परस्यापि यत्फलं तदनित्यमेवेति न्यायहार्यं लौकिकसुखविलक्षणस्वर्गादिवदलौकिकब्रह्मज्ञानादनन्तास्थिरफलमपि स्यादिति संभावनायाः सुकृतविशेषायत्तत्वस्योपेयत्वात् ' इत्याद्युक्तम् । चन्द्रिकायां च—' अनित्यत्वात्सदुःखत्वात् न धर्माद्याःपरं सुखम् । मोक्ष एव परानन्दः ' इत्यादीतिहासादिना वा, ' नास्त्यकृतःकृतेन ' इत्यादिश्रुतितः आपाततो वा श्रुतिमूलपित्रादिहितैषिवाक्येन वा श्रवणेन वा मननात्मकविचारात्प्रागपि श्रद्धामात्रेण नित्यानित्यविवेकासिद्धेः ' इत्याद्युक्तम् ॥

### श्रीभाष्यम्

**किमर्था धर्मविचारापेक्षा ? एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम् साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात् ? सत्यम्; आपातप्रतीतिर्विद्यत एव तथाऽपि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थस्संशयविपर्ययौ नातिवर्तते । अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इतिचेत् तथैव**

### श्रुतप्रकाशिका

न्मुमुक्षासिद्धेः ब्रह्मजिज्ञासैव कर्तव्या धर्मविचारे प्रयोजनाभावादित्यर्थः । परिहरति **एवमिति** । **एवंतर्हि** उदाहृतवाक्यमात्रतृप्तोऽसिचंत् । **कृत्स्नस्येति** । ब्रह्मणोऽपीति भावः । वेदान्तवाक्यान्यपि स्फुटार्थान्यस्माभिरुदहृतानि । तेषामर्थोऽपि मीमांसाऽनपेक्षं ज्ञायते । अतोऽनन्तस्थिरफलज्ञानाय न ब्रह्मविचारःकर्तव्य इत्यर्थः ॥

**सत्यमित्यर्धाङ्गीकारे** आपातप्रतीतावभ्युपगमः ब्रह्मविचारनैरपेक्ष्येऽनभ्युपगमः । **आपातेति** । आपातप्रतीतिः अज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहज्ञानं । संशयविपर्ययौ च कारणवाक्यगतसद्ब्रह्मात्माकाशप्राणवैश्वानरादिशब्दैरर्थतत्त्वस्य दुर्निश्चयत्वात् **विज्ञानघनएवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति, असद्वा इदमग्र आसीत्** इत्यादिभिरात्माऽनित्यत्वादेः प्रतीतेः, **अन्नवानन्नादो भवति महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन** इत्यादिनाऽल्पास्थिरफलावगमाच्च स्याताम् । अतस्साङ्गाध्ययनमात्रेण तयोरनतिवृत्तेस्तद्व्युदासस्य न्यायानुगृहीतवाक्यफलत्वाच्च ब्रह्मविचारःकर्तव्य-इतिचेदित्यर्थः । **भवान्** अनुदाहृतवाक्यान्तरपर्यालोचनायामपि प्रवृत्तस्त्वमिति भावः । **तथैव** एतया दृष्ट्या अत्रापि संशयविपर्ययनिरासस्यापेक्षितत्वं जानन् अनुदाहृतवाक्यानि पश्येत्यर्थः—'**अक्षय्यगँ्हवै चातुर्मास्ययाजिनस्सुकृतं भवति**' '**पूर्णाहुत्या सर्वान्कामानवाप्नोति**' '**सर्वान्लोकान् पशुबन्धयाज्यभिजयति**' '**अपाम सोमममृताअभूम**' '**अनन्तगँ्हवा अपारमक्षय्यं लोकं जयति**' '**योऽग्निं नाचिकेतं चिनुते**' '**नास्येष्टापूर्ते क्षीयेते**'

### गूढार्थसंग्रहः

**एवं तर्हि इत्यादि** । साङ्गाध्ययनादेव उपासनाफलस्य ज्ञानफलस्य च नित्यत्वं सुगममिति मुक्तेरुपासनानन्तरकालिकापरोक्षज्ञानफलत्ववादिनव्यमते विचारमन्तरैव सुकृतविशेषेण हितैषिवचनेन उपासनायां प्रवृत्तिस्सम्भवत्येव । परमतेऽपि दृष्टिसृष्टिपक्षस्य एकजीववादपक्षस्यैव मुख्यवेदान्तपक्षतया तत्पक्षे ब्रह्मण एव बन्धमोक्षाङ्गीकारेण साङ्गाध्ययनेनैव तत्पक्षेज्ञानमपि संभवतीति विचारोऽनपेक्षितः । सृष्टिदृष्टिपक्षे बहुजीववादे विचारमन्तरा योगमार्गेण मोक्षपक्षे भारतीतीर्थसंमते विद्यारण्यविस्तृते विचारोऽनपेक्षित एव । साङ्गाध्ययनादेव महावाक्यैरापाततः प्रतिपत्तिसम्भवेन सुकृतविशेषवशात् तत्तात्पर्यावधारणस्य तन्मूलकापरोक्षज्ञानस्यापि संभवेन शारीरकमीमांसायां प्रवृत्तिर्न स्यादिति भावः ॥

**न्यायानुगृहीतस्य वाक्यस्येत्यादि** । 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या न्यायानुगृहीतवाक्येनैव अर्थनिश्चयो लभ्यत इति भावः ॥

**तथैवेत्यादि** । अयमाशयः—परैः अथशब्देनैव नित्यानित्यवस्तुविवेकादेर्हेतुत्वलाभे अतश्शब्दो व्यर्थ इत्याशङ्क्य 'अपाम सोमममृता अभूम' 'अक्षय्यगँ्हवै चातुर्मास्ययाजिनस्सुकृतं भवति' 'स्वर्गे लोके न भयं किंचनास्ति' इत्यादिभिः कर्मफलस्यापि नित्यताप्रतिपादनेन नित्यानित्यवस्तुविवेकादिकं न सम्भवतीति शङ्कापरिहारार्थमतश्शब्दः । तत्र 'यत्कृतकं तदनित्यं' इति व्याप्त्युपोद्बलितया 'तद्यथेह' इत्यादिश्रुत्या उदाहृतश्रुतीनामर्थवादत्वनिश्चयेन नित्यानित्य-

## श्रुतप्रकाशिका

'योऽग्निं नाचिकेतं चिनुते' इत्यादीनि 'अमृतत्वं भजन्ते' 'सोऽश्नुते सर्वान्कामान्' 'इमान्लोकान्कामान्नी कामरूप्यनुसंचरन्' इत्यादिभिः ब्रह्मवेदनफलवाक्यैस्तुल्यानि वाक्यानि दृश्यन्ते। अतः औपनिषदवाक्येष्विवानुदाहृतवाक्येषु संशयविपर्ययबाहुल्यात्तन्निरासाय कर्मविचारः कर्तव्य इत्यर्थः ॥

## गूढार्थसंग्रहः

वस्तुविवेकादिकं संभवतीत्युक्तम्। सिद्धान्तेऽपि 'अपाम सोमम्' इत्यादिश्रुतिभिरेव धर्ममीमांसामन्तरा कर्मफलानित्यत्वनिर्णयो न संभवतीति धर्मविचार आवश्यक इति। धर्मविचारारम्भदशायां साङ्गाध्ययनानन्तरं पुरुषाणां बुद्धिरेवमुदेति। कर्मणामपि नित्यफलत्वमापाततः प्रतिपन्नम्। तथैव ब्रह्मज्ञानस्यापि तत्र कर्मणां सुकरत्वं ब्रह्मोपासनस्य दुष्करत्वं च ज्ञायत एव। उपासनस्य ध्यानरूपस्य इन्द्रियव्यापारविरतिसाध्यस्य दुष्करत्वस्य सुगमत्वात् कर्मणामतादृशत्वेन सुकरत्वम्। एवं साङ्गाध्ययनदशायां 'तमेतं वेदानुवचनेन' इत्यादिश्रुतिभिः कर्मणां ब्रह्मज्ञानाङ्गत्वमापाततः ज्ञातम्। एवं स्थिते उभयथा कर्मणां ज्ञानमावश्यकमिति निष्पन्नम्। ब्रह्मज्ञाने प्रवृत्तिदशायां अङ्गापरिचये अङ्गिनः निष्पत्त्यसम्भवात्। सुकरोपायेनैव फललाभे दुष्करोपाये प्रवृत्तिरपि मास्तु इति। तत्र धर्मविचारानन्तरमावृत्तिविधानादिभिः कर्मणामनित्यफलत्वनिश्चये पूर्वं ब्रह्मज्ञाने प्रवृत्तिप्रतिबन्धकस्यापगमेन ब्रह्मज्ञाने प्रवृत्तिः एतत्तात्पर्येणैव हानार्थं कर्मणामुपयोग इति प्राचीनोक्तिः। प्रतिबन्धकनिरासकत्वेन कर्मविचारस्योपयोगः तत्त्वटीकायां प्रथमसूत्रार्थवर्णनपरभाष्यसूक्तित्रयविवरणपरे ग्रन्थे निरूपितः। अयमर्थः ब्रह्मविद्याकौमुद्यामपि व्यक्तः। एतदर्थमेव कर्मविचारस्य पूर्ववृत्तत्वम्। अङ्गानां सम्यग्ज्ञाने अङ्गिनोऽनुष्ठानं संभवतीति अङ्गाङ्गिक्रमानुरोधेन विचारक्रमोऽपि संभवति। एतत्तात्पर्येणैव उपादानार्थं कर्मणामुपयोग इति प्राचीनोक्तिः। एवं च कर्माङ्गकब्रह्मज्ञानविशेष्यकानन्तस्थिरफलसाधनत्वप्रकारकापातप्रतीतिः साङ्गवेदाध्ययनानन्तरं धर्मविचारोपक्रमे या जाता साऽपि अतइत्यत्रापि एतच्छब्देन परामृश्यते। कर्मविचारानन्तर्यस्याथशब्देन लाभेऽपि उक्तार्थस्यालाभेन अतश्शब्दस्य सिद्धान्ते सार्थक्यम्। अतश्च कर्मविशेष्यकाल्पास्थिरफलसाधनत्वप्रकारकनिर्णयपूर्वक कर्माङ्गकब्रह्मज्ञानविशेष्यकानन्तस्थिरफलसाधनत्वप्रकारकसम्भावितप्रामाण्यापातप्रतीतिमानधिकारी इति सिद्ध्यति ॥

एतेन त्वन्मते पूर्ववृत्तेन कर्मविचारेण कर्मणामल्पास्थिरफलत्वं निश्चितम्। तथाऽपि न तन्निश्चय एव नित्यफलार्थिनो ब्रह्मविचारे प्रवृत्तिहेतुः। भिन्नविषयत्वात् अतिप्रसङ्गाच्च, नापि कर्मणामल्पास्थिरफलत्वनिश्चयसहितो ब्रह्मज्ञानस्यापाततोऽनन्तस्थिरफलत्वसंदेहस्तद्धेतुः, अन्यस्यानुपायत्वानिश्चयेन ततो निवृत्तिमात्रसिद्धावपि तस्योपायत्वानिश्चये तदुपेयार्थिनः तत्र निश्शङ्कमप्रवृत्तेः' इति चन्द्रिकोक्तिः तत्त्वटीकोक्त श्रीभाष्यतात्पर्यापर्यालोचनमूलैव। साङ्गाध्ययनपर्यन्तं हितैषिपित्रादिमुखेनोपदेशादिना प्रवृत्तेः दृष्टान्तेन साङ्गाध्ययनानन्तरमापातप्रतीतिदशायां दोषापादनस्यायोगात्। नित्यफलप्रेप्सोः ब्रह्मविचारे प्रवृत्तिरुक्तदिशा युक्तैव। विचारानन्तरं ब्रह्मध्यानस्य नित्यफलसाधनत्वनिश्चयेन उपासने प्रवृत्तिः नितरां युक्तैव। एतेन सिद्धान्तसिद्धाञ्जनकारोक्तिरपि निरवकाशा। उक्तार्थपरिशीलने तदुक्तदोषस्य कस्याप्यप्रसरात्। परमते निर्विशेषस्यैव प्राधान्येन जिज्ञास्यत्वेन निर्विशेषविद्याफलव्यतिरिक्तसगुणविद्याफलस्यानित्यत्वज्ञानमन्तरा तत्सिद्धान्त घटनस्यासम्भवात्। तद्यथेहेतिश्रुतेः षष्ठपादिकोक्तार्थबोधकत्वासम्भवस्य प्रागेवोपपादनात्। आत्मस्वरूपस्यैवाविद्यानिवृत्तिरूपत्वेन मुक्तित्वस्यासम्भवस्य उत्तरत्र भाष्य एव स्फुटं वक्ष्यमाणत्वात्। अविद्यानिवृत्तेः चरमवृत्तिरूपत्वस्य मण्डनसु-

## गूढार्थसंग्रहः

रेश्वरसंमतत्वेन तस्यैव पक्षस्याद्वैतसिद्धावन्ते उपपादनेन यत्कृतकं तदनित्यमिति व्याप्तेः परसिद्धान्तप्रातिकूल्य एव पर्यवसानात्। लघुचन्द्रिकायां मोक्षस्यानित्यत्वस्याभ्युपगमाच्च। एतेन एतादृशव्याप्त्युपष्टम्भनेन 'तद्यथेह' इत्यादिश्रुत्या अनित्यफलनिश्चयः परमते न संभवतीति अत इत्यस्य सार्थक्योपपादनप्रयासोऽपि परेषां निष्फल एव। परमतरीत्या नित्यफलसाधनत्वं ब्रह्मज्ञानस्य न संभवतीति संक्षेपेण पूर्वमेवोक्तम्। उत्तरत्र श्रुतिषु सर्वत्र मोक्षसाधनध्यानस्य गतिसाध्यफलनित्यत्वस्य विवक्षायाः स्थापयिष्यमाणत्वाच्च, परसंमतप्रक्रियया ब्रह्मज्ञानस्य नित्यफलसाधनत्वं नघटतइति व्यक्तीभविष्यति॥

महता ग्रन्थेन लघुपूर्वपक्षलघुसिद्धान्त महापूर्वपक्षमहासिद्धान्तादिनिरूपणानन्तरं अधिकरणपूर्वपक्षराद्धान्तौ वक्ष्येते। अत्रचेदमेव बीजम्। श्रीभाष्यकरणात्प्राक् बहवो ग्रन्थाः परैर्विरचिता, आसन् नतदवलोकनेन मन्दमतीनां वृत्तिकारसिद्धान्ते ऽस्वारस्यं प्रतीयेत। अतस्तत्पर्यालोचनमन्तरा अधिकरणपूर्वपक्षसिद्धान्तकथनं न युक्तम्। नहि ग्रन्थविस्तरमात्रेण सूत्रभाष्यत्वमस्यापगच्छति। 'सूत्रार्थो वर्ण्यते यत्र पदैः(वाक्यैः)सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥' इत्युक्तभाष्यलक्षणस्यात्र विरोधाभावात्। अतः बहुपरग्रन्थपर्यालोचनानन्तरमेव अधिकरणपूर्वपक्षसिद्धान्तकथनं युक्तम्। दीपे विस्तरतात्पर्याभावेन प्रत्यधिकरणं संग्रहेण पूर्वपक्षसिद्धान्तनिरूपणमुखेन सूत्रार्थो वर्णितः। सारेतु पूर्वपक्षसिद्धान्तौ विहाय संग्रहेण सूत्रार्थो निरूपितः॥

(तत्र च श्रीभाष्ये लघुपूर्वक्षमारभ्य अधिकरणपूर्वपक्षतः प्राग्विषयाः व्युत्पित्सूनां सुग्रहत्वाय विभज्य संग्रहेण प्रदर्श्यन्ते। लघुपूर्वपक्षः (शं) भाष्यादौ वृत्तिकारसम्मतार्थदूषणानां केषांचित्परिहारार्थमनुवादः। नन्विह कर्मावबोधानन्तर्यं विशेषः न धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः' इति (शं) भाष्यार्थः। (४३.पु) भास्करभाष्योक्तपरिहारशङ्का, (पं.पा) विवरणोक्ततत्समाधानम्। भट्टप्रपञ्च भास्कर यादवप्रकाश सिद्धान्तिसाधारण्येन स्वयंपुनश्शङ्का (पु.४५—४७) फलजिज्ञास्यभेदरूपभाष्यो(शं)क्तदूषणपर.पं.पा. विवरणतात्पर्यवर्णनमुखेन शङ्कापरिहारः। (४८) भर्तृप्रपञ्चादिसंमतायाः ब्रह्मज्ञाने कर्मापेक्षायाः अतश्शब्दविवाक्षितविषयविरोधेनासम्भवः। (पु.४९—५०) 'यज्ञेन दानेन' इति श्रुतेः विवरणवाचस्पतिसंमतार्थः। —(पं.पा.,भा.,स.वे.सि.सा.सं) उक्तजन्मान्तरानुष्ठितकर्मभिरेव श्रुत्युक्तविविदिषोपपत्तिः। ५१. 'सदेव' इत्यादिश्रुतेः (शं) सूत्रभाष्योक्तार्थः। —विवरणसंमतवाक्यजन्यज्ञानविचारः। (५२) श्रवणादिस्वरूपनिरूपणम्। (स.वे.सि.सा.सं.,पं.पा) (५३) नित्यानित्यवस्तुविवेकाद्यभावे विचारायोगः। शं.भा.—नित्यानित्यवस्तुविवेकादौ प्रमाणपरविवरणानुवादः। (५४) 'विजिज्ञासितव्यः, विजिज्ञासस्व' इत्यत्र विचारविधिरिति विवरणानुवादः। (लघुसिद्धान्ते.५५) विवरणोक्तपरिणामवादिसंमतार्थदूषणस्य सिद्धान्तेऽभ्युपगमः। (५६) विधिप्रत्ययघटितश्रुतिवाक्येषु विवरणसंमतज्ञानं विवक्षितम्। परिणामवादिवृत्तिकृत्संमतमुपासनमेवेति उपासनपक्षस्थापनार्थं विचारोपक्रमः। (५७—५९) विवरणकारमतपर्यालोचनम्। ६०. बाधितानुवृत्तौ दृष्टान्तदार्ष्टान्तिकवैरूप्यम्। ६१. उपासनविधिसिद्धान्तः (६२—६५.पु) निर्गुणविद्यायां ज्ञानोपासनविधिवाक्यविचारः। ६६. समाधिविचारः ६८. श्रवणमननविद्ध्यभावः। ७०. उपासनस्य सूत्रकृत्सम्मतत्वम्। ७३. 'स्मृतिलम्भे' इत्यत्र समाधिविवक्षा। ७४. समाधितात्पर्येण 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र द्रष्टव्यशब्दः। ७७. उपासनस्य मुक्तिसाधनत्वस्य छान्दोग्यवाक्यकृत्सम्मतत्वम्। ८०. उपासनस्य दर्शनसमानाकारत्वमिव भक्तिरूपत्वमपि समाध्यन्तर्भूतम्। ८१. 'नायमात्मा' इति श्रुत्यर्थः। ८८. कर्मणां मुक्तिसाधनध्यानसाधनत्वम्। ८९. 'विविदिषन्ति यज्ञेन' इति श्रुत्यर्थः। ९०. परोक्त्यनुवादः। ९१. उपासनस्य तदङ्गकर्मणां चाप्रयाणमनुवृत्तिः। ९२. वाक्यकारोक्तविवेकादिसाधनसप्तकनिरूपणम्। ९८. 'विद्यां च' इति श्रुत्यर्थे

## गूढार्थसंग्रहः

मण्डनाद्यनेकमतपर्यालोचनम् । ९९. 'मन्त्रेषु कर्माणि' इति श्रुत्यर्थः । १०२. पञ्चपादिकाकारादिमतपर्यालोचनेन धर्मविचारात्प्राक् एतज्जन्मनि संन्यासिनां पूर्वजन्मन्येव विचारारंभोपपत्तिः । १०३. सिद्धान्तसिद्धाञ्जनकारमतस्य ब्रह्म सूत्रवार्तिके खण्डनादिना निरवकाशत्वम् । १०४. 'पाराशर्यशिलालिभ्याम्' इति सूत्रस्य (श.शे.) नागेशोक्तः परपक्षानुकूल्याभावः । १०५. विवरणे असाधकत्वेनोक्तविद्यांचेति श्रुतेः कर्मणां ध्यानाङ्गत्वसाधनम् । ११०. ब्रह्मजिज्ञासेत्यत्र सना ब्रह्मण एव महाभाष्योक्तदिशा फलत्वम् । १११. बृहदारण्यकश्रुतौ तस्य विवक्षितत्वम् । ११२. कर्ममीमांसया कर्मणामल्पास्थिरफलत्वनिर्णयः । ११३. तत्त्वमार्तण्डोक्तक्रमनियमः । ११४. परोक्त(शं) नित्यानित्यवस्तुविवेकादिस्वरूपनिरूपणम् पं.पा । ११६. पं.पा.पक्षनिरासपूर्वकं भामत्युक्तपक्षनिरूपणम् । ११७. 'यत्कृतकं तदनित्यम्' इति व्याप्तेः परपक्षप्रातिकूल्यकथनम् । ११८. नित्यानित्यवस्तुविवेकादिपर्यालोचनम् । ११९—१२०. (बृ.वा.सं.ज्ञा) उदाहृतप्रमाणैः सन्न्यासस्य श्रवणाङ्गत्वासिद्धिः । १२३. भास्करोक्तदूषणयुक्तत्वोपपादनम् । १२५. लघुसिद्धान्तोपसंहारः

(१२६—१३०) महापूर्वपक्षावतरणम् । १३१. महापूर्वपक्षे प्रतिज्ञा । १३२. 'अथ परा यया' इत्यादौ परापरविद्याद्वयं परापरब्रह्मविषयकम् । १३३. सत्यं ज्ञानमित्यादिश्रुत्यर्थः । १३४. न दृष्टेरित्यादिश्रुत्यर्थः । १३५. इदंसर्वं 'नेह नानाऽस्ति' इत्यादिश्रुत्यर्थः । १३६. अद्वैतसिद्ध्याद्युक्तार्थः । १३७. यत्रहि द्वैतमिवेत्यस्य भाष्यवार्तिकाद्युक्तार्थः, वाचाऽऽरम्भणमित्यस्यार्थः । १३८. चन्द्रिकाद्युक्तार्थः । १३९. यदाह्येवैषः न स्थानतोऽपीत्यस्यार्थः । १४०. मायामात्रंतु इति सूत्रार्थः । १४२. विवरणोक्तमिथ्यात्वानुमानानि । १४३. 'मिथ्यात्वं नाम' इति भाष्यतात्पर्यम् । १४४. पं.पा.वि.ग्रन्थोदाहरणेन तदर्थसाधनम् । १४५. सं.शा.बृ.वा.इ.सि.पं.पा.वि. इत्याद्युक्तब्रह्माज्ञानपक्षः । १४६. अत्र श्रुतिषु 'अनृतेनहि' । १४७. 'नासदासीत्' इत्यादिषु–'मायामात्रंतु' इति सूत्रे च प्राच्यनव्यसम्मतार्थः । १४८. ब्रह्मानन्दसम्मतश्रुत्याद्यर्थः (मायाशब्दस्य) । १४९. 'इन्द्रो मायाभिः' इति श्रुतेः भाष्य गुरुचन्द्रिकाद्युक्तार्थः १५०. विष्णुपुराणवचनैरुक्तार्थसाधनम् । १५१. 'न पुनर्मृत्यवे' इत्यादिश्रुतिभिश्चोक्तार्थसाधनम् । १५३. 'सत्यं ज्ञानम्' इत्यादिश्रुतिभिर्निर्विशेषसाधनम् । १५४—१५६. पूर्वमीमांसकशबरकुमारिलाद्युक्तशङ्काऽवतरणम् । १५७. तच्छङ्का १५८. 'पूर्वोत्तरयोः दुष्टकारणजन्यत्व' इत्याद्युक्तौ शाबरभाष्यस्य मूलत्वम् । १५९. प्रत्यक्षादीनां गतिकल्पनम् (प्र.मा.ब्र.सि) १६०. न्या.म,. १६२. भामत्युक्तार्थसाधनम् । १६५. 'पराऽस्य शक्तिः' इत्यस्याविद्यापरत्वम् 'सत्यकामस्सत्यसङ्कल्प' इति श्रुत्युपपत्तिः । १६६. जर्तिलयवागून्यायेन निर्गुणत्वम् । १६७. अस्थूलं निर्गुणः निरञ्जनम्' इत्यादिश्रुतितात्पर्यम् । १६८. सत्यं ज्ञानमिति श्रुत्यर्थः । १७१-१७२. सामानाधिकरण्यविचारः सं.शा । १७३. सामानाधिकरण्यस्य चातुर्विध्यम् । १७५. सत्यं ज्ञानमित्यत्रेतरव्यावृत्तिविचारः । १७६. सत्यं ज्ञानमित्यस्य लक्षणपरत्वम् । १७९. जगत्कारणत्वादेस्तटस्थस्वरूपादिलक्षणत्वम् । १८०. अद्वितीयत्वश्रुत्यर्थः । १८२. लक्षणाङ्गीकारावश्यकत्वम् । १८३. सर्वपदलक्षणा प्रभाकरसम्मता । १८५. वेदान्ते तदङ्गीकारः । १८७. श्रुतेः प्रत्यक्षविरोधो नास्ति, सन्मात्रग्राहित्वात् (वाक्यपदीयम्.ब्र.सि.पं.पा.वि.अ.सि) । १८८. अस्तित्वभेदविचारः (सं.शा.अ.सि) । १८९. एकक्षणवर्तित्वविचारः (ब्र.सि.न्या.म) । १९१. भेदस्य कल्पितत्वम् । १९३—१९५. एतत्पक्षे घटादेः सतश्च मिथ्यात्व सत्यत्वानुमाने । १९६. सदनुभूत्योर्भेदशङ्कानिरासः, याऽनुभूतिः इतीष्टसिद्धिक्रमेण स्वतस्सिद्धत्वादिसाधनो क्रमः १९९–२००. भट्टमतम् । २०१. तत्खण्डनम् । २०३—२०५. तत्रानुमानम् । २०६. स्वप्रकाशत्वेनाजत्वसाधनम् । २०८. स्वप्रकाशत्वेन ज्ञानभेदायोगेनैक्यम् । निर्भेदत्वम् । २०९. निराश्रयत्वम् । २१०. अहं जानामीत्यत्र ज्ञान-

## गूढार्थसंग्रहः

स्यात्मत्वे प्रतीतिविरोधः । २११. विवरणभामत्यादिमतेन तत्साधनम् । २१२——२१५. सिद्धान्तबिन्द्वाद्युक्तार्थः । २१६——२१८. उक्तप्रतीतेर्भ्रान्तित्वसाधनम् । २१९. आत्मनः कर्तृत्वादिधर्मशून्यत्वम् । २२०——२२२. अहमर्थस्यानात्मत्वम् । २२६–२२७. कूटस्थनित्यप्रतिपादनोपसंहारेण महापूर्वपक्षोपसंहारः । २२८. महासिद्धान्तोपक्रमः । २२८——२५४. 'औपनिषदपरमपुरुष' इति भाष्यविवरणे वृत्तिकारमतस्योपानिषत्तात्पर्यविषयत्वम् । २५९. निर्विशेषे उपक्रमादितात्पर्यलिङ्गानामसंभवप्रदर्शनाय श्रुतिप्रत्यक्षादिप्रमाणाविषयत्वानिरूपणम् । २८४. पर्यन्तं, प्राच्यनव्यग्रन्थपर्यालोचनम् । २८५–२९३. सन्मात्रग्राहिप्रत्यक्षखण्डनाय श्लोकवार्तिक न्यायामृत अ.सिद्ध्याद्युक्त दूषणप्रकारः । २९४ सिद्धान्ते भेदाभेददूषणम् । सूत्रकारसंमतत्वं महाभाष्यसंमतत्वं च । २९७. 'एकधैव' इति श्रुत्यर्थपर्यालोचनम् । २९८ जात्यादेस्तदाश्रयस्य च भेदसाधनम् । ३०१. 'नेह न ना' इति श्रुत्युक्तार्थ तत्पर्यालोचने । ३०३–प्र.३११.भेदाभेदपर्यालोचनम् । ३६४. पर्यन्तम् निर्विशेषस्य प्रमाणाविषयत्वं, परकीयानेकग्रन्थपर्यानोचनं भेदस्य प्रत्यक्षसिद्धत्वं च भेदस्य मिथ्यात्वपर्यालोचनम् । ३६५. बाधितत्वासंभवः । ३८६. पर्यन्तं, तत्र बहुग्रन्थपर्यालोचनम् । ३८८. अनुभाव्याया एवानुभूतेः स्वप्रकाशत्वम् । ४१९. निर्विशेषे सौषुप्तप्रत्यक्षविषयत्वाभावः । ४३६–४४२. अहमर्थस्य पञ्चपादिकाद्युक्तद्विरूपत्वासिद्धिः । ४४३. तत्पर्यालोचनं मीमांसकसम्मताद्विरूपत्वसाधनम् । पञ्चपादिकादिपर्यालोचनेन प्रत्यक्पराक्पदार्थनिरूपणादिना अहमर्थात्मत्वसाधनम् । तस्यैव तेजसःप्रभाऽऽश्रयत्ववत् ज्ञानाश्रयत्वम् । ४६०. तेजःप्रभाविचारः । ४६१. –४६२. तत्र भट्टपादसंमतसिद्धान्तस्थापनं तद्दृष्टान्तेनात्मनः चिद्रूपत्वम् । ४७२. अस्यार्थस्य श्रुतिभिस्साधनम् । ४९४ परग्रन्थपर्यालोचनेन उक्तार्थसाधनम् । ५००. संविदात्मत्वपर्यालोचनम् । ५०१. अहंजानामीति प्रतीतेर्भ्रान्तित्वपर्यालोचनम् । ५०६. ज्ञानक्रियाकर्तृत्वासंभवपर्यालोचनम् । ज्ञानस्य विकारात्मकत्वाभावः । ५१२. अहमर्थस्य चिदचिद्ग्रन्थित्वपर्यालोचनम् । ५३०. अहमर्थस्य सौषुप्तप्रत्यक्षाविषयत्वपर्यालोचनम्; तत्र पञ्चपादिकाऽऽदि बहुग्रन्थोक्तार्थपर्यालोचनम् । ५५२. श्रुतिभिः अहमर्थस्यात्मत्वसाधनम् । ३६२. प्रत्यक्षस्य श्रुतिबाध्यत्वपर्यालोचनम् । ५६३. 'यस्य च दुष्टं करणम्' इति शबरोक्तार्थस्य (२१२.पु) पञ्चपादिकोक्तवैषम्यस्याप्रयोजकत्वम् । ५६४.दुष्टज्ञानगृहीतार्थम् इति भट्टपादोक्तेः, गुरुचन्द्रिकायां भाविबाधोद्धारे स्वमतानुसारेण अन्यार्थकल्पनस्यासाङ्गत्यम् । ५६५. प्रमाणमाला न्यायमकरन्दाद्युक्तार्थपर्यालोचनम् । ५६६. मीमांसकमतदूषणापरिहारः । ५६८. व्यावहारिकप्रमाणप्रमेयशङ्कायास्समाधानोपक्रमः । ५६९,–५७०. 'न सत्यद्वयकल्पना' इत्यादिभट्टपादोक्तार्थस्यैव युक्तत्वम् । ५७२. 'सिद्धिना परमार्थेन' (श्लो.वा) इति भट्टपादोक्तदूषणस्य ब्रह्मसिद्धौ शं. सूत्रभाष्ये च परिहारः । ५७३. परिहारोक्तदृष्टान्तैः स्वपक्षसाधनासम्भवः । ७४. प्र—७८. भामती, परिमल, अद्वैतसिद्धि, चन्द्रिकाद्युक्तार्थानुवादः । ५७९—५८२. भट्टपादोक्त्याशयनिरूपणपूर्वकं परोक्तार्थस्य सर्वस्यापि पर्यालोचनम् । –स्वप्नार्थज्ञानस्य विशिष्टज्ञानत्वेनैव कारणतया असत्यत्वमिति अद्वैतसिद्ध्युक्तिपर्यालोचनम् । ८३—८४. गुरुचन्द्रिकोक्तिपर्यालोचनम् । ८८. प्रतिबिंबस्थलेऽपि असत्यार्थत्वासिद्धिस्सम्भवतीति ब्रह्मसिद्ध्याद्युक्तेः भट्टपादोक्तरीत्यैव पर्यालोचनम् । ८९. जपाकुसुमसमीपवर्तीतस्फटिकमणिप्रभादृष्टान्तस्यापि न परमतानुकूलत्वम् । ५९०. लघुचन्द्रिकोक्तिपर्यालोचनम् । ९१–९२. रेखावर्णादिदृष्टान्तस्यापि परमतानुकूल्यविरहः । ९३. स्फोटदृष्टान्तस्यापि वाक्यपदीयोक्तस्य नासत्यात्सत्यसिद्धिसाधकत्वम् । ९४. स्फोटवादस्य महाभाष्यकृत्सम्मतत्वस्य स्फोटसिद्धौ मण्डनमिश्रोक्तस्यानुवादः । ९७. तत्र शबरकुमारिलाद्युक्तिदूषणानुवादः । ९८. स्फोटस्य महाभाष्यकृदसंमतत्वसाधनोपक्रमः । ९९. तत्रोपवर्षसंमतिः । ६०३. भरतमिश्रकृतस्फोटसिद्धौ महाभाष्यदूषणस्यासाङ्गत्यम् । ६०४. असत्यात्सत्यसिद्धेरसम्भवस्योपसंहारः ॥ ६०८. श्रुतिघट्टे 'सदेव सोम्येदम्' इत्यादिश्रुतिभिः परिणाम्युपादानत्वप्रतिपादनम् । ६२६.

श्रीभाष्यम्

**धर्मविचारोऽपि कर्तव्य इति पश्यतुभवान्**



## अथ लघुपूर्वपक्षः

### गूढार्थसंग्रहः

'सत्यंज्ञानम्' इत्यत्र बोधस्य प्रवृत्तिनिमित्तविषयत्वमेव महाभाष्यकृत्संमतं युक्तम्। ६४३. 'ज्ञाज्ञौ' इत्यादौ तात्त्विक भेद एव। ६४५—प्र.६७४. परसम्मतनिर्गुणस्य श्रुति पूर्वोत्तर (मी) सूत्रकृदसम्मतत्वम्। ६८२. निर्भेदत्वस्यापि न श्रौतत्वम्। ६९८. गीतायां सविशेषमेव। ७०२—७९३. विष्णुपुराणे परब्रह्मणस्सगुणत्वं, शब्दवाच्यत्वं ऐच्छिकाप्राकृतादिव्यविग्रहः मुक्तिप्रदत्वं प्रकृतिजीवलयाधारत्वम् ऐश्वर्यसूचकव्याप्तिरूपमहिमवत्त्वम्, अहमर्थस्य शुद्धात्मत्वं समाधिपर्यन्तध्यानविषयत्वं श्रुति,गीता,सूत्र,वृत्तिवाक्य द्रमिडभाष्य, उक्त साम्यानुगुण मुक्तकर्तृकप्राप्तिकर्मत्वं, मुक्तपरब्रह्मप्रकारैक्यादि। ७९६. अविद्यावादे स्वप्रकाशब्रह्मणः अविद्याऽसंभवः। ८०७—८१६. (पं.पा.वि) प्रत्यक्षादिभिः भावरूपाज्ञानसाधनस्य। ८१७. अयोगः। ८४६. प्रकरणपञ्चिकायां वैलक्षण्येन श्रुतिसंमतयथार्थख्यातिः व्यास जैमिन्युभयमतानुरोधेन युक्तत्वम्। ८७१–८७८. मायाशब्दस्य मिथ्यार्थकत्वाभावः। ८७९. जीवब्रह्मैक्योपदेशान्यथाऽनुपपत्त्या मिथ्यात्वासम्भवः। उक्तोपदेशस्य परसंमतस्याविवक्षितत्वम्। तत्राधुनिकपरोक्ताक्षेपाद्यसंभवः। 'न वक्तु' इत्यादिसूत्रवृत्त्यादिसंमतैक्योपपत्तिप्रकारस्यैव युक्तत्वम्, भावरूपाज्ञाननिवृत्त्याद्ययोगः इति एते विषयास्संगृहीताः ॥)



## अथ लघुपूर्वपक्षः

'शान्तो दान्त उपरतः' (बृ.६.४.२८) इत्यत्र शमदमादिभिस्सह सन्न्यासस्याप्युपरतपदेनाभिधानात् 'तेहस' इत्यादौ सन्न्यासधर्मकथनात् 'सन्न्यस्य श्रवणं कुर्यात्' इति स्मृतेश्च सन्न्यासिन एव श्रवणविधिमूलकविचारेऽधिकारः। तदुक्तं परैः 'मोक्षाधिकारी संन्यासी गृहस्थःकिल कर्मणि' (स.वे.सि.सा.सं.१८०) इति। अतएव 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४.३.११०) इति पाणिन्युक्तिरपि सङ्गच्छते। अत्र सूत्रे व्याससूत्राणां भिक्षुसूत्रत्वकथनेन संन्यासिनामेव व्याससूत्रेऽधिकारइति स्फुटं प्रतीयते। संन्यासश्च वेदाध्ययनानन्तरं पूर्वजन्मसुकृतवशात् धर्मजिज्ञासतःपूर्वमेव कस्यचिद्भवति। कस्यचित्तूपनयनात्पूर्वमपि 'सतानि प्राग्वा त्यजेत्' इत्युपनयनात्प्रागपि संन्यासविधानात्। 'सर्वेषु वेदेष्वारणमावर्तयेत्, उपनिषदमावर्तयेत्' इति प्रव्रजितंप्रति उपनिषदध्ययनस्य पृथग्विधानेन उपनयनाभावे अध्ययनासम्भवप्रसक्तेरभावात्। एवंच उक्तद्विविधसंन्यासिनोऽपि धर्मविचाराभावेऽपि ब्रह्मविचारे प्रवृत्तिस्सम्भवतीति धर्मविचारस्य सर्वेषामधिकारिणामनपेक्षितत्वेन नियतपूर्ववृत्तित्वं नसङ्गच्छते। एवं 'तमेतंवेदानुवचनेन' इतिश्रुतौ 'सवा

## गूढार्थसङ्ग्रहपरिशिष्टम्

ईशाना सर्वस्या वाचो देवी यदङ्कमध्यास्ते । कर्णाटदेशभाग्यं वागीश्वर एष मम मनो विशतात् ॥ १ ॥

भास्करभाष्ये 'यदप्युक्तमङ्गाङ्गिभावाभावादिति तदप्यसिद्धम्; कर्मसमृद्ध्यर्थिनो यजमानस्य उद्गीथाद्युपासनानां विहितत्वात् । 'लोकेषु पञ्चविधं सामोपासीत' इत्यादीनां च कर्माधिकृतस्यैवाभ्युदयार्थिनो विधानात् गोदोहनादिवत्' इत्युक्तम् । तमिममर्थमभिप्रेत्याह—**उद्गीथाद्युपासनानीति** । (४३.पु. ३.पङ्क्ति)

'अत्र कश्चित्—'धर्मब्रह्मजिज्ञासयोः' इति विशेषोपादानमवगच्छन्नपि ज्योतिष्टोमोद्गीथज्ञानयोरधिकृताधिकारत्वं खलु विद्यत इति–प्रतिवक्ति, स खलु मन्दभाग्य एव । उद्गीथाद्युपासनानां धर्मविशेषाणामेव निरूपितविधिचतुष्टयानां ब्रह्मप्रकरणे प्रत्ययत्वसाम्यात् प्रासङ्गिकत्वेन भेदादिमात्रस्यैव निरूपितत्वात् शास्त्रतात्पर्यविगम्यस्य ब्रह्मज्ञानस्य कर्मण्यधिकृताधिकारित्वाभावात्' इति पं.पा. विवरणोक्तं समाधानं परिष्कृत्य समाधत्ते- **अनभिज्ञो भवान् इत्यादिना** ।।४३.४.प

उद्गीथाद्युपासनस्य प्रासङ्गिकत्वेन तस्य तात्पर्यविषयत्वाभावात् । 'भेदश्रुतिस्त्वन्यपरा समस्ता समस्तवेदेषु न तत्पराऽसौ । अतत्परा तत्परवेदवाक्यैर्विरुध्यमानागुणवाद एव ॥ २८४ ।। 'नह्यर्थवादाविधिभिर्विरुद्धाः विध्यर्थसंकोचकरा भवन्ति । किंतु प्रधानानुगुणं यदेषामालंबनं तत्खलु कल्पनीयम् ॥ २८५ ॥ यथा ह्यजक्षीरविधेस्समीपे यज्ञतिलादेः परिकल्पनं तत् । प्रधानसंकोचभयादपास्य स्वमर्थमासीत् गुणवाद एव ॥ २८६ ॥ एवं सतीहापि विरुध्यमानं वचो यदद्वैतपरैर्वचोभिः । तदस्तु गौणं यदि वा परस्य मायाप्रसूतद्वयवादि मुख्यम् ॥ २८७ ॥ भेदश्रुतिः कल्पितमेव भेदमालंब्य मुख्यार्थवती भवित्री । अतत्परा तत्परवाक्यभङ्गस्त्वितोऽन्यथायाति विना निमित्तम् ॥ २८८" इति संक्षेपशारीरके उक्तम् ॥

अर्थवादानां स्वांशेऽप्यवान्तरतात्पर्यस्य विवरणकारैरङ्गीकारेण निर्विशेषस्यैव प्राधान्यं सविशेषस्यत्वप्राधान्यमप्यत्र विवक्षितम् इत्यभिप्रेत्याह–**अतो यत्प्रधानं शास्त्रमिति** ।।(४५.पु.१.प)

भर्तृप्रपञ्चमतं च इत्थं–बृहदारण्यकभाष्यवार्तिकादावुपन्यस्तम् 'विशेषाणां ह्यविशेष एकता, यथा समुद्रे समुद्रोर्मिणाम्' इति 'समुद्रतरुगोपिण्डदृष्टान्तैः परमात्मनः । व्याचक्षते बलात्केचित्समस्तव्यस्तरुपताम् ॥(उ.अ.४.ब्रा.६९३) आत्मशब्दाभिधेयेर्थे प्रत्यक्सामान्यरूपके । अन्तर्भवन्ति निखिला विशेषा इति केचन ॥ ९४७॥ सामान्येन समस्तं तत् विशेषैर्व्यस्तमेवच । कृत्स्नमेवं परंब्रह्मसदोपासीत तत्त्वतः ॥ ९४८ ॥ यथाहुः–यातस्मिन्नन्तर्नीते विशेषणे बुद्धिः साऽन्तर्नीतविशेषणैव कृत्स्नग्राहिणी भवतीति ॥' (सयो एकैकमुपास्ते न सवेद, अकृत्स्नो ह्येष आत्मेत्येवोपासीत') 'अवस्थावदवस्थाभिः क्वचित्कात्स्न्यं प्रचक्षते । कार्यकारणरूपेण क्वचिद्व्याचक्षते तथा ॥ ९४९ ॥ भागभागिविभागेन नाभिनेम्यरवत्तथा । व्याचक्षते महात्मानः संप्रदाय बलात्किल ॥ ९५० ॥

(६.अ.३.ब्रा)' इह व्याचक्षते केचिन्नानात्वैकत्वरुपता । स्वत एवात्मनो ग्राह्या चैतन्यमिव सर्वदा ॥ ६३९ ॥ भेदाभेदात्मकं सर्वं वस्तुदृष्टं यतस्ततः । परपक्षे न दृष्टान्तः कश्चिदप्युपलभ्यते ॥ ६४० ॥ एकैव गोता गोपिण्डे सास्नाद्यर्थानुसारिणी । सास्नादयो मिथोभिन्ना न चान्योन्यविरोधिनः ॥ ६४१ ॥ न च सामान्यबुध्येह भेदबुद्धिर्निवर्तते । नापि सामान्यधीबाधो विशेषोत्थधियेष्यते ॥ ६४२ ॥ स्थूलेषु यद्वत्सामान्यविशेषात्मकता तथा । संभावनीया निःशेष सूक्ष्मवस्तुष्वपीदृशी ॥ ६४३ ॥ नानात्वैकत्ववत्स्थूलं दृष्टं वस्तु यथा तथा । आत्माद्यतीन्द्रियं वस्तु वस्तुत्वादिति गम्यताम् ॥ ६४४ ॥ (७.अ.१.ब्रा)द्वैताद्वैतात्मकं ब्रह्म मैत्रेय्यै वर्णितं किल । यत्र हि द्वैतमित्युक्त्या यत्र त्वस्येति

चादरात् ॥ ३० ॥ यद्यद्वैतं परं ब्रह्म तत्र स्यात्परमार्थतः । कल्पितं प्रसजेद्द्वैतं तोयबुद्धिरिवोषरे ॥ ३१ ॥ मृषात्वा-द्भेदजातस्य सर्गस्थित्याद्यसंभवात् । सर्गस्थितिलयानां स्यादन्वाख्यानं मृषैव तु ॥ ६२ ॥ श्रवणप्रतिपत्ती च व्यर्थे स्यातां तथाऽद्वये । अथ स्वेनैव रूपेण द्वैतमस्तीति भण्यते ॥ ३३ ॥ अन्वाख्यानं सतामेव सर्गादीनां तथा भवेत् । तथाऽप्यद्वैतसंसृष्टे मृषात्वं स्याद्विरोधतः ॥ ३४ ॥ परिकल्पितता दोष एवमत्र प्रसज्यते । तद्दोषापनुनुत्सार्थं पूर्ण-मित्यादिकाश्रुतिः ॥ ३५ ॥ न कश्चिदपि दोषोऽत्र यथा तदभिधीयते । स्वानुभूत्यनुसारेण सर्वं सुस्थं भवेदतः ॥ ६६ अदः परोक्षमत्यन्तं कारणं पूर्णमुच्यते । व्योमवद्व्यापि सद्ब्रह्म सर्वतोऽनवखण्डितम् ॥ ३७ ॥ ब्रह्मणो याऽद्वयावस्था सैव तावदिहोदिता । एव चेदद्वयं ब्रह्म द्वैतावस्था न सिद्ध्यति ॥ ३८ ॥ इति दोषनिषेधार्थमिदं पूर्णमितीर्यते । यथो-क्तावस्थयोर्माभूत् मृषात्वं ब्रह्मणस्सदा ॥ ३९ ॥ पूर्णब्रह्मपरिज्ञानाव्यतिरेकत्व हेतुतः । अदोवत्कार्यमप्येतत्पूर्णमेवावसी-यताम् ॥ ४० ॥ पूर्णेनाभेदतः कार्यं पूर्णं स्यान्न मृषा श्रुतेः । यन्नतो नातिरेकेण तत्तदेवेति निश्चितिः ॥ ४१ ॥ एवं तर्ह्येकरूपेऽस्मिं स्तत्वे सत्ये समर्थिते । ततस्सर्गाद्यभावस्स्यादेकरूपतया स्थितेः ॥ ४२ ॥ नैवं यतः श्रुतिः प्राह पूर्णा-त्पूर्णमुदच्यते । पूर्णात्कारणतः पूर्णं द्वैतमेतदुदच्यते ॥ ४३ ॥ यस्मादुद्रिच्यमानं हि द्वैतं नैवातिरिच्यते । तदेवोद्रे-चनं चेत्स्यात् द्वैतस्येति मतं यदि ॥ ४४ ॥ नैतदेवं कुतो यस्मात् दृष्टहानं प्रसज्यते । प्रत्यक्षतो हि दृष्टोऽयं द्वैता-ख्यो विषयः स्फुटः ॥ ४५ ॥ तथा दर्शनतस्सिद्धो विधितश्चावसीयते । प्रामाण्योच्छेद एव स्यात् श्रुतेरेवं समर्थने ॥ पारमार्थ्ये क्वचिच्छास्त्रं क्वचिचाप्यनृतात्मताम् । विदधन्मानतां जह्यात्परस्परविरोधतः ॥ ४७ ॥ पूर्णत्वेनाजहद्वृत्त्या त्रिष्व-प्यध्वसु वर्तते । द्वैताद्वैतात्मकं ब्रह्म पूर्णत्वेनाविभागतः ॥ ४८ ॥ कुतोऽविभागो मानाचेदुभयोरप्यवस्थयोः । पूर्णा-दित्यादिवचनान्महाप्रलय आत्मनि ॥ ४९ ॥ इदं चद्वैतमस्त्येव तथाऽदोऽद्वैतमेव च । पूर्णत्वाख्याजहद्वृत्त्या समुद्रो-र्मिवदीक्ष्यताम् ॥ ५० ॥ अग्रेचलत्वमूर्मीणां मध्यईषच्चलात्मता । निष्कम्पत्वं तथा मूले समुद्रः सर्वरूपभृत् ॥ ५१ ॥ यथैता यौगपद्येन वृत्तीरूर्मिभिरात्मनः । अनुभूयन्त एकत्र देवदत्तादिके तथा ॥ ५२ ॥ निष्कम्पा देवदत्तस्य वृत्ति-स्त्यात्परमात्मना । ईषत्प्रचलिता प्राणभावेनेत्यवगम्यते ॥ ५३ ॥ विराड्भावेनातितरां चण्डप्रचलितोर्मिवत् । ऊर्म्य-ग्रवत्पिण्डभावे नामरूपक्रियात्मना ॥ ५४ ॥ जनिस्थितिलयेष्वेवं त्रिषु कालेषु पूर्णता । कार्यकारणयोर्द्वेधा द्वैताद्वैतस्व-भावयोः ॥ ५५ ॥ सा चैकैवाविभागत्वात् कार्यकारणभावयोः । भेदेन व्यपदेशार्हा सर्वमेवं समञ्जसम् ॥ ५६ ॥ आविर्भावतिरोभावैः कार्यकारणरूपिभिः । समुद्रवन्नृत्यतिच प्रत्यवस्थं विभुः स्थितः ॥ ५७ ॥ एवं द्वैतस्य सत्यत्वे कर्मकाण्डस्य मानता । अनन्तपुरुषार्थाप्तिरिष्यते कर्मकाण्डतः ॥ ५८ ॥ यदा तु कल्पितं द्वैतमद्वैतं परमार्थतः । उच्छिन्नं कर्मकाण्डस्य प्रामाण्यं विषयादृते ॥ ५९ ॥ एकदेशस्य चामात्वे वेदस्याप्यप्रमाणता । सर्वनाशो भवेदेवं सर्वाप्रामाण्य-हेतु तः ॥ ६० ॥ अतो विरोधनुत्यर्थं सत्यत्वप्रतिपत्तये । कार्यकारणयोः शास्त्रं पूर्णमित्यादिनाऽवदत् ॥ ६१ ॥ प्रत्य क्षादीनि मानानि भेदग्राहीणि सर्वदा । तेषां चाप्यप्रमाणत्वं प्रापदद्वैतवादिनः ॥ ६२ ॥ इति वेदविदः केचित् भिन्ना-भिन्नसतत्त्वकम् ।" इति,

(६.३)'व्याचख्युर्मयटं येतु विकारार्थे महाधियः । स्वव्याख्यानविरोधस्स्यात्तेषां चानर्थसङ्गतिः ॥' 'विज्ञानं परं ब्रह्म तत्प्रकृतिको जीवो विज्ञानमय' इति भर्तृप्रपञ्चैरुक्तम् । तथा च **विकारार्थो** मयडित्याशङ्क्याह व्याचख्यु-रिति ॥' इति च

'यदिह वा अप्यनेवं विन्महत्पुण्यं कर्मकरोति तद्धास्यान्ततः क्षीयत एव आत्मानमेव लोकमुपासीत स य आत्मानमवे लोकमुपास्ते न हास्य कर्मक्षीयते अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' इति(बृह.३.अ.४.ब्रा.५म) इं भाष्ये-'स्वात्मलोकोपासकस्य विदुषो विद्यासंयोगात्कर्मैव न क्षीयते' इत्यपरे वर्णयन्ति । लोकशब्दार्थं च कर्मस-

मवायिनं द्विधा परिकल्पयन्ति किल । एकोऽव्याकृतावस्थः कर्माश्रयो लोकः हिरण्यगर्भारण्यः । तं कर्मसमवायिनं लोकं व्याकृतं परिच्छिन्नं य उपास्ते—तस्य किल परिच्छिन्नकर्मात्मदर्शिनः कर्मक्षीयते । तमेव कर्मसमवायिनं लोकं अव्याकृतावस्थं कारणरूपमापाद्य यस्तूपास्ते—तस्यापरिच्छिन्नकर्मात्मदर्शित्वात्तस्य च कर्म न क्षीयत इति भवतीयं शोभना कल्पना तु श्रौती " इति भर्तृप्रपञ्चमतमुपन्यस्तम् ॥ अत्रानन्दगिरिविवरणम्. एक इति परिच्छिन्नःकर्मात्मातत्साध्योव्याकृतावस्थो लोकः तस्मिन् अहंग्रहोपासकस्येति यावत्, द्वितीयं लोकशब्दार्थमनूद्य तदुपासकस्य लाभं दर्शयति तमेवेति. यथा कुण्डलादेरन्तर्बहिरन्वेषणे सुवर्णातिरिक्तरूपानुपलम्भात् तद्रूपेणास्य नित्यत्वम्. तथा कर्मसाध्यं हिरण्यगर्भादिलोकं कार्यत्वात्. अव्याकृतं कारणमेवेत्यङ्गीकृत्य यस्तस्मिन्नहं बुध्योपास्ते तस्यापरिच्छिन्नकर्मसाध्यलोकोपासकत्वात् ब्रह्मवित्वं कर्मित्वं च घटते तस्य खल्वात्मैव कर्म तेन तस्य तन्न क्षीयते, यः पुनरद्वैतावस्थ उपास्ते. तस्यात्मैव कर्म भवतीति भर्तृप्रपञ्चैरुक्तमित्यर्थः । आत्मानमिति समुच्चयपरं पक्षं प्रत्याचष्टे न तु श्रौती इति । भास्करभाष्ये च. " अत्र हि ज्ञानकर्मसमुच्चयान्मोक्षप्राप्तिः सूत्रकाराभिप्रेता । तथा च वक्ष्यति, " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " इति कर्मणि चापरिज्ञाते विद्यायाः केन यमुच्चयः केन नेति विभागो न शक्यतेवदितुम् हेयोपादेयप्रतिपत्त्यभावात् । पूर्ववृत्ते तु कर्मज्ञाने काम्यं प्रतिषिद्धं च हेयं नित्येन कर्मणा समुच्चय इति प्रतिपादयितुं शक्यते । कर्मसमृद्ध्यर्थानि वोद्गीथाद्युपासनानि अत्र चिन्त्यन्ते तेषां च कर्माधिकृतपुरुषविषयत्वात्. 'अविज्ञाते तु कर्मणि चिन्ता नोपपद्यते " " यदप्युक्तमङ्गाङ्गिभावाभावादिति । तदप्यसिद्धम् । कर्मसमृद्ध्यर्थिनो यजमानस्य उद्गीथाद्युपासनानां विहितत्वात्, लोकेषु पञ्चविधं सामोपासीतेत्यादीनां च कर्माधिकृतस्यैवाभ्युदयार्थिनो विधानात् गोदोहनादिवत् ।" " तद्यथेह कर्मचित इति केवलस्य कर्मणः क्षयित्वमुच्यते, नज्ञानसहकारिणः । तथा च श्रुतिः स य आत्मानमेव लोकमुपास्ते. नहास्य कर्मक्षीयत इति । स्वतः क्षणिकस्यापि कर्मणः ज्ञानरसविद्धस्याक्षयफलत्वान्न क्षीयत इत्युच्यते । कथमयमर्थो गम्यते तद्वा स्यात् ततः क्षीयत इत्यनेवं विदः कर्मक्षयमभिधायात्मविदस्तदभावप्रतिपादनपरत्वाद्वाक्यस्य । (इत्युक्तम्) तस्मात् पूर्वस्य कर्मज्ञानस्य 'अतः' शब्देनोपदिश्यते हेतुत्वम् । तच्चोभयत्र ब्रह्मज्ञानं प्रति हेतुत्वमारम्भे फलप्राप्तौ च । कर्मणि पूर्ववृत्ते तदपेक्षा ब्रह्मजिज्ञासा कर्तुं शक्यत इत्यारम्भे हेतुत्वं कर्मणा समुच्चितं ज्ञानं क्षेमप्राप्तिनिमित्तमितिफलप्राप्तौ हेतुत्वम् 'इत्युक्तम् । " सर्वापेक्षा चेत्यादिसूत्रभाष्ये च 'यद्येवं केवला तर्हि विद्या पुरुषार्थं साधयेन्न कर्म, अत आह—" सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " सर्वेष्वाश्रमवत्सु अपेक्षा सा । सर्वापेक्षा । कुतः । " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इति श्रुतेः ज्ञानं प्रति अपवर्गसिद्धौ यज्ञादयः तृतीयया विभक्त्याऽङ्गत्वेन प्रयाजादिवद्विधीयन्ते । अपूर्वत्वाच्च विधिरयं " दध्ना जुहोति " इतिवत् । सन्वाच्यायाश्चेच्छायाः प्रकृत्यर्थं प्रति उपसर्जनत्वाद्वेदनं प्रधानमीप्सिततमत्वात् । इष्टतमत्वं च ज्ञानस्यापवर्गक्षमत्वात् अपवर्गक्षमं च परिपक्वनिरवशेषा विद्यानिवर्तकं उदितदिनकरवत् । न च ज्ञानस्वरूपोत्पत्तौ कर्मव्याप्रियते । श्रवणमननादितदुत्पत्तिकारकम् । तस्मात् यथैव शमादयो यावज्जीवमनुवर्तन्ते विदुषामपवर्गप्राप्तये, तथाऽऽश्रमकर्माणीति नान्तराले परित्यागः । यत्पुनः कैश्चिदुच्यते "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति सर्वकर्मत्यागवादिनी श्रुतिरिति । तदसत् । पुत्रादिलिङ्गाद्गार्हस्थ्याद्व्युत्थायाश्रमान्तरं प्रतिपद्यन्त इति स्मृतिप्राप्तमेवानूद्यते । स्मृत्यनपेक्षत्वे तु शाक्यक्षपणादिभिक्षाचरणमपि श्रौतं प्रसज्येत । स्मृतौ च मननादौ त्रिदण्डयज्ञोपवीतादिनियमादुत्तमाश्रमः स्वरूपतो धर्मतश्च निर्ज्ञात इति नातिप्रसङ्गः ।' इत्युक्तम् ॥

विवरणे ' विद्यां चाविद्यां च " इत्यादिश्रुतीनां समुच्चयपरत्वं निरस्य ' केवलकर्मणां प्रतिषेध इति चेन्न अविशेषात् । समुच्चयविधायि प्रमाणाभावे सर्वकर्मणां प्रतिषेधोपपत्तेश्च । ज्ञानाङ्गतया सर्वकर्मसंन्यासविधानाच्च न समुच्चयः ।

संन्यासाश्रमधर्मैस्समुच्चय इति चेन्न । तद्धर्माणां ध्यानादीनां ज्ञानस्वरूपोपकारित्वात् । नित्यकर्मविधानानुपपत्तिरेव ज्ञानसहकारितया कर्मणां मोक्षफलत्वं कल्पयतीति चेन्न । नित्यकर्मणां फलनिरपेक्षत्वात् । सापेक्षत्वे च विश्वजिन्न्यायावतारात्संस्कारद्वारेण च विनियोगस्य दर्शितत्वात् कर्मणामेव च विद्ध्यनुपपत्त्या मोक्षसाधनत्वकल्पनात्समुच्चयासिद्धेः । कर्मप्रतिषेधस्य उदितहोमप्रतिषेधवत् ज्ञानस्तुत्यर्थत्वोपपत्तेः ज्ञानकर्मणोर्विकल्पेन मोक्षसाधनत्वप्रसङ्गात् । ब्रह्मज्ञानमेवेति कर्तव्यतया कर्मणां मोक्षसाधनत्वं कल्पयतीति चेन्न । शमादीतिकर्तव्यताऽन्तरभावात् करणतया विद्धयुद्देशप्रसिद्धानां च कर्मणां विधिविरोधात् ॥ अर्थश्च विरुद्धयते । कश्च कर्मणां साध्योऽर्थ इति वक्तव्यम् । न तावत् ब्रह्मात्मैकत्वं तस्यासाध्यत्वात् । नाप्यविद्याभेदांशाध्यासकर्मणां निवृत्तिः 'भिद्यते हृदयग्रन्थिः' 'ब्रह्मवेद ब्रह्मैव भवति' इत्यादौ ब्रह्मदर्शननिवर्त्यत्वावगमात् । न हि 'तस्मिन् दृष्टे' इत्युक्ते कर्माणि सहकारित्वेनावगम्यन्ते । इत्युपक्रम्य 'तस्मासर्वानर्थोपादानानादिमिथ्याज्ञाननिवृत्त्यैव विज्ञानं फलवदिति न समुच्चयावकाशः ।' इत्यनेन 'यदिह वा अप्यनेवं विन्महत्पुण्यं कर्म करोति यद्धाऽस्यान्ततःक्षीयत इत्युपक्रम्य 'स य आत्मानमेव लोकमुपास्ते नहाऽस्य कर्मक्षीयते' इति वचनात् आत्मोपासनाकर्मण एवापरोक्षानुभवद्वारेणाक्षयाविद्या निवृत्तिफलत्वान्न कर्मक्षीयत इत्युपासना कर्मप्रशंसामात्रमेतदुपादीयते । अनेवं विदः कर्मक्षयस्य श्रवणात् एवं विदाऽनुष्ठितस्याग्निहोत्रादेरेव मोक्षफलतयाऽक्षयो विधीयत इति चेन्न । लिङ्गस्य 'नान्यःपन्था विद्यते' 'क्षीयन्ते चास्य कर्माणि' इत्यादि निषेधश्रुतिविरोधात्' इत्यनेन च भास्करमतं दूषितम् ॥ तमेव क्रममनुसृत्य समाधत्ते **नैतद्युक्तमित्यादिना** ॥

**चिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेरिति** । (४७.पु१.प) एतेन 'फलजिज्ञास्य भेदाच' इत्यत्र फलभेदः प्रकटीकृतो भवति । यथोक्तं पञ्चपादिकायाम्—'अभ्युदयः फलं धर्मज्ञानस्येति प्रसिद्धमेव न कस्यचिद्विवादः । तदपि न ज्ञानस्य फलमपितु ज्ञेयस्य । तस्यापि न ज्ञेयत्वादेव फलम् । किं त्वनुष्ठीयमानत्वात् । निःश्रेयसफलं तु ज्ञानं न चानुष्ठानान्तरापेक्षमिति ब्रह्मज्ञानफलमपवर्गः । स च नित्यसिद्धोऽव्यवहितः स्व संवेद्यः । यतोऽविद्या संसारहेतुः । न चाविद्यामनिवर्तयन्ती विद्योदेति । तदेवमत्यन्तविलक्षणत्वात्प्रस्थानभेदाच न फलद्वारेणाप्येकोपनिपातः' इति । एतदर्थ एव पूर्वं उदाहृतविवरणे स्पष्टमुक्तः । अत्र 'सकलविशेषप्रत्यनीके' त्यनेन 'वर्णाश्रमधर्मविशेषे' त्युत्तरवाक्याच्च जिज्ञास्य भेदः, चोदनाप्रवृत्तिभेदश्च संगृहीतो भवति । 'भव्यश्च धर्मो जिज्ञास्यः न ज्ञानकालेऽस्ति पुरुषव्यापारतन्त्रत्वात् । इह तु भूतं ब्रह्मजिज्ञास्यं नित्यत्वान्न पुरुषव्यापारतन्त्रम् । चोदनाप्रवृत्तिभेदाच । याहि चोदनाधर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम् । अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते । यथाऽक्षार्थसन्निकर्षेणावबोधे तद्वत्' इति(शं)भाष्यम् ॥

**अनन्तविकल्पास्पदमित्यनेन**४७.पु.२.प 'ब्राह्मणो यजेत' इत्यादेः अविद्यावद्विषयत्वमेव ब्राह्मण्यादिकमाध्यासिकमेवेति परसिद्धान्तः बोधितो भवति फलभेदः श्रुतिभिरेव सिद्धयति । रसो अतश्शब्देऽपि सोऽर्थो विवक्षत इत्यभिप्रेत्याह—**श्रुतयश्चेत्यादिना**(४८.पु१प)यथोक्तं(शं)भाष्ये—'अतश्शब्दो हेत्वर्थः । यस्माद्वेद एवाग्निहोत्रादीनां श्रेयस्साधनानामनित्यफलतां दर्शयति—'तद्यथेह कर्मचितः लोकःक्षीयते एवमेवामुत्र पुण्यचितो लोकःक्षीयते' इत्यादिः(छा.८.१.६) तथा ब्रह्मविज्ञानादपि पुरुषार्थं दर्शयति 'ब्रह्मविदाप्नोति परम्' इत्यादिः । तस्माद्यथोक्तसाधनसंपातानन्तरं ब्रह्मजिज्ञासा कर्तव्या इति ॥

अत्र पञ्चपादिका—'अतश्शब्दो हेत्वर्थ इति । स्यादेतत् । कृतकत्वपरिच्छेदौ नैकान्ततः क्षयिष्णुतां गमयतः । परमाणुषु पाकजलोहितस्य कृतकस्य तेषां च परिच्छिन्नानां नित्यत्वाभ्युपगमात् । वेदेऽपि 'अक्षय्यं हवै चातुर्मास्य याजिनः

सुकृतं भवति ' 'अपामसोममममृता अभूम' इत्यादिपुण्यफलस्याक्षयत्वश्रवणात् । अतो न विषयभोगान्नियमेन विरागो विवेकिनामपि । नापि कूटस्थनित्यवस्त्ववष्टंभेन मुमुक्षुत्वं ततश्च न शमदमादिपरिग्रहः । यतो न तादात्म्यं भोक्तृस्संभाव्यते । नापि तदवाप्तिः दुःखाभावेऽपि सुखभोगाभावान्नानवद्यः पुरुषार्थः । अतोऽजीर्णभयान्नाहारपरित्यागः भिक्षुभयान्न स्थाल्या अधिश्रयणं दोषेषु प्रतिविधातव्यमिति न्यायः अतो न तस्य ब्रह्मजिज्ञासायां हेतुत्वमित्यतः तस्य हेतुत्वप्रदर्शनार्थोऽतश्शब्दः । कथम् । यस्माद्वेद एवाग्निहोत्रादीनां श्रेयस्साधनानामनित्यफलतां दर्शयति । 'तद्यथेह कर्मचितो लोकःक्षीयते एवमेवामुत्र पुण्यचितो लोकःक्षीयते' इत्यादिना ॥

ननु पुण्यस्याप्यक्षय्यफलत्वं वेद एवाहेत्युक्तम्—न । तस्य वस्तुबलप्रवृत्तानुमानविरोधे अर्थवादस्य नित्यत्वप्रतिपादनासामर्थ्यात् परमाणूनां पाकजस्य च तद्गुणस्यानित्यत्वात् । अतो भवत्यनित्यत्वदर्शनं विषयभोगानां मुमुक्षुत्वे हेतुः । यत्पुनर्मुमुक्षुत्वाभावे निमित्तमुक्तं तत्राह 'तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति 'ब्रह्मविदाप्नोति परम्' इत्यादि । अत उपसंहरति–'तस्माद्यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति ।' यतः परिपूर्णो हेतुः अनन्तरमवश्यं कार्यमारभते अतः कर्तव्येत्यावश्यकतामाह भाष्यकारः यतो द्वैतानुषङ्गादतितरामुद्विजमानेन ब्रह्मात्मत्वं च हस्तप्राप्तमिव मन्यमानेन प्रवर्तितव्यमेव ब्रह्मजिज्ञासायाम् प्रदीप्तशिरसेव जलराशौस्पृशतेव च सुस्वादुफलमङ्गुल्यग्रेणाग्रपादस्थेन । एवं सत्यर्थाद्धर्मजिज्ञासानियमेन पूर्ववृत्तत्वमथशब्देन पूर्वोक्तेन न्यायेन निराक्रियते ॥ इति ।

अत्र विवरणम्–'अतश्शब्दो हेत्वर्थः । नन्वथ शब्द एवानन्तर्याभिधानमुखेन हेतुतया पूर्वनिर्वृत्तमेवार्थं गमयतीत्युक्तम् । ननु हेतुत्वमार्थिकम् तन्नाभिधेयमथशब्दस्य ? सत्यम् । आर्थिकार्थे तात्पर्यात् आनन्तर्यमात्रे वैफल्यात् यत्परः शब्दः स वाक्यप्रयोगे शब्दार्थ इत्यथशब्देनैव हेतुत्वसिद्धेः नातश्शब्दोऽपेक्ष्यत इति अतश्शब्दाभावे माङ्गल्यादीनामन्यतमार्थताऽथशब्दस्य प्रसज्यत इति चेत्–न । निराकृतत्वात्। धर्ममीमांसायां सत्यप्यथशब्देऽतश्शब्देनापि तस्य हेतुत्वमयुक्तमिति चेत् अन्धगोलाङ्गलन्यायैकशरणोऽयं सर्वसङ्करवादी । नह्यन्यत्र विद्यमानः पुनरुक्तिदोषः अस्माभिरप्यनुसरणीयः । तस्मादतश्शब्दवैयर्थ्यमिति प्राप्तमत्राथशब्दपरिगृहीतस्यैव हेतुत्वस्य हेत्वन्तरेणापवादाशङ्कायां तन्निराकरणं पुनरथशब्दोक्तहेतुत्वाभिधायिनाऽतश्शब्देन क्रियत इति दर्शितम् । 'यस्माद्वेद एवाग्निहोत्रादीनाम्' इत्यादिभाष्येण । तत्र तामाशङ्कां दर्शयति । स्यादेतदिति।' इति ॥

एताः श्रुतयः कर्मणामनित्यफलत्वप्रतिपादनपराः अत इत्यत्र विवक्षिताः। यद्यपि अन्तवदेवास्य तद्भवति ' इति श्रुतिः
परैर्नोदाहृता. 'यो वा एतदक्षरं गार्ग्यविदित्वा अस्मिल्लोके जुहोति यजते तपस्तप्यते , बहूनि वा वर्षसहस्राणि अन्तवदेवा
ऽस्य तद्भवति ' इत्येतत्पूर्ववाक्ये ज्ञानविधुरकर्मण एव प्रतीत्या ज्ञानपूर्वककर्मणः अनित्यफलत्वं नात्रविवक्षितमिति प्रतीयते।
अथाऽपि 'तद्येथह कर्मचितो लोकः क्षीयते' इति श्रुतौ कर्मसामान्यफलस्यानित्यत्वप्रतिपादनेनतत्संकोचे मानाभावेन 'अन्त-
वदेवास्य तद्भवती 'त्येतद्वाक्ये एतदुत्तरं ज्ञानफलस्य(विवक्षितत्वेन)नित्यत्वे तात्पर्येण ज्ञानविधुरैरनुष्ठीयमानस्यैव कर्मणोऽनि-
त्यफलत्वस्य विवक्षितत्वेन ज्ञानविधुरकर्मण एवानित्यफलत्वम् अविदित्वेत्यत्र समानकर्तृकत्वस्यैव विवक्षितत्वात् । परभाष्यो-
दाहृतं'तद्येथह कर्मचितः, ब्रह्मविदाप्नोति ' इति श्रुतिद्वयमुपादत्ते तद्यथहेत्यादि। अत्र प्राप्तिरेव विवक्षिता, न तु ब्रह्माभेदः
इति भ्रमनिरासाय अभेदश्रुत्यनुगुण एवार्थः अत्र विवक्षित इति बोधनार्थं 'ब्रह्मवेदब्रह्मैव भवती 'ति श्रुतिरुपात्ता। ब्रह्मवि-
दाप्नोतीत्यत्र ब्रह्माभेद एव विवक्षित इति अद्वैतसिद्धौ लघुचन्द्रिकायां च स्फुटम् । विवरणोपात्तां श्रुतिं दर्शयति तमेव
विदित्वाऽतिमृत्युमेति इत्याद्या इति । 'नान्यःपन्था अयनाय विद्यते ' इति 'नान्यःपन्था विद्यतेऽयनाय ' 'नास्त्य
कृतः कृतेन ' 'न कर्मणा न प्रजया धनेन ' 'नान्यैर्देवैस्तपसा कर्मणा वा ' इत्याद्याःविवरणोपात्ताः श्रुतय आद्यश-
ब्दार्थाः । अत्र कर्मणां मुक्तिहेतुत्वव्यवच्छेदः स्फुट इति विवरणे उक्तम् 'सर्वापेक्षेत्यत्र भास्करभाष्ये शमादीनां याव-

जीवमनुवृत्तिवत् आश्रमकर्मणामपि यावज्जीवमनुवृत्तिरित्यत्र प्रमाणतया तमेतं 'ब्राह्मणा विविदिषन्ति' इति श्रुतिरुपात्ता तदाक्षेपं परिहर्तुं अनुवक्ति, यदपिचेत्यादि। वस्तुविरोधादित्यादि। अर्थश्च विरुध्यते, कश्च कर्मणां साध्योऽर्थ इति वक्तव्यम्। न तावद्ब्रह्मात्मैकत्वं तस्यासाध्यत्वात्। नाप्यविद्यांशभेदांशाध्यासकर्मणां निवृत्तिः। 'भिद्यते हृदयग्रन्थिः' इत्यादौ 'ब्रह्मवेद ब्रह्मैव भवति' ब्रह्मदर्शननिवर्त्यत्वावगमात्। नहि 'तस्मिन्दृष्टे' इत्युक्ते कर्माणि सहकारित्वेनावगम्यन्ते इति विवरणे ब्रह्मात्मैकत्वस्य वस्तुत्वोक्त्या तद्विरोधः मोक्षस्य कर्मसाध्यत्वप्रतिषेधकश्रुतिविरोधोऽप्यत्र विवक्षितः। शमादीतिकर्तव्यतान्तरभावात् करणतया विध्युद्देशः कर्मणां विधिविरोधोऽपि संन्यासविधिविरोधोऽपि 'सर्वत्रात्मज्ञानप्रकरणे संन्यासस्य विहितत्वात् श्रवणाद्यङ्गतयाऽऽत्मज्ञानफलता च संन्यासस्य सिद्धा। कथंपुनः कर्मणां तत्त्यागस्यचात्मज्ञान फलता शक्याऽवधारयितुम्। षोडशिग्रहणाग्रहणयोरिव क्रत्वङ्गतेति वदामः। क्रमेण वा कर्मतत्त्यागयोरात्मज्ञानोपकारितया समुच्चयः कल्प्यते। द्वारोपकारभेदात् निवर्हणीयकल्मषस्यचानन्तत्वात्। ब्रह्मक्षत्रविषयतया वा व्यवस्था कल्प्यते। कियत्पुनरत्र परित्यज्यते स्वशरीरव्यतिरिक्तं सर्वम्। ननूपवीतादिनत्यागमर्हति। न। अग्निहोत्रादिभिरविशेषात्। ननु संन्यासक्रत्वङ्गतया सर्वपरित्यागेऽप्युपवीतादि पश्चादुपादीयताम्? न। जाबालश्रुतौ प्रव्रजेदिति अग्निहोत्रादिभिरविशेषात्सहोपवीतादिना कृत्स्नपरित्यागं विधाय 'अथ परिव्राट् विवर्णवासा मुण्डो अपरिग्रह' इति आश्रमधर्मविधिसमये 'अयज्ञोपवीती कथं ब्राह्मणः' इति प्रश्नपूर्वकम् 'इदमेवास्य तद्यज्ञोपवीतं य आत्म' इत्येवाकारेण बाह्ययज्ञोपवीतादिव्यावर्त्य आत्मन एव यज्ञोपवीतत्वसम्पादनात्। अत्र सर्वसङ्करवादी पुरस्ताद्यज्ञोपवीतत्यागस्यानिर्दिष्टत्वात् ब्राह्मणः कथमयज्ञोपवीतीति प्रश्नस्य प्रसङ्गाभावात् प्रक्षिप्तमिदं वाक्यमिति जल्पति। तस्य तत्वदर्शनतन्निष्ठपरमहंसपरिव्राजकद्वेष एवापराध्यते। पुरस्ताद्विधिसामर्थ्यलब्धसर्वपरित्यागेन उपवीतादित्यागप्रसङ्गापरिज्ञानस्य स्वाभाविकत्वात्। तथा च 'अथ परिव्राडेकशाटी परिहितः मुण्डोदरपात्र्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेदासायं प्रदक्षिणेनाविचिकित्सं सार्ववर्णिकं भैक्ष्यचर्यमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीतेति' परिव्राजकमेवोद्दिश्य मैत्रायणीश्रुतिः। तथा च बोधायनोऽपि 'अतः उर्ध्वं यज्ञोपवीतमासनं शिखा यष्टयः शिक्यं जलपवित्रं कमण्डलुपात्रमित्येतानि वर्जयित्वा अथ दण्डमादत्ते सखा मागोपायेति संन्यासादूर्ध्वमेव दर्शयति। तस्माद्युक्त एवात्मज्ञानाङ्गभूतस्संन्यासः तस्मात्साधूक्तमिति भाष्योपसंहारः॥ इति संन्यासविधिविरोध' इति विवरणे उक्तः। एवं च भास्करभाष्योक्तानि शङ्करभाष्यदूषणानि सर्वाणि परिहृतानि भवन्ति 'न फलोत्पत्ताविति' विवरणानुसारेण। न मोक्षोत्पत्तौ इत्यर्थः। विवरणमते ब्रह्मानुभवकामनया यज्ञाद्यनुष्ठानेऽपि विविदिषायाः द्वारत्वाङ्गीकारेण तत्तात्पर्येण 'विविदिषायामेव तु कर्माणामुपयोग' इत्युक्तम्। एवकारेण मोक्षोत्पत्तौ साक्षात्साधनत्वं व्यवच्छिद्यते। वाचस्पतिमते तु एवकारेण वेदनेपि उपयोगः निषिध्यते। 'न फलोत्पत्तौ' इत्यस्य वेदनमोक्षरूपफलद्वयोत्पत्तौ उपयोगनिषेधः। भास्करभाष्यदूषणस्य ग्रन्थद्वयेऽप्यभिधानात् इत्थमुक्तम्॥

५६ 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् (१.१.३२)' इति सूत्रे 'अथ वा नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इत्यस्यायमन्योऽर्थः। न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते कथं उपासा त्रैविध्यात्। त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च' इत्याद्यर्थस्य शङ्करभाष्ये कथनेन अयमेवार्थः वृत्तिकारसंमत इति अस्मिन् सूत्रे उत्तरत्रस्थापयिष्यमाणतया परेषां निर्विशेषविद्यात्वेन संमतायां सद्विद्यायां उपासनं विधेयमित्येव व्याससिद्धान्त इत्याशयः॥

५७ विवरणे शब्दादेवापरोक्षं प्रथममुत्पद्यत इति प्रथमं स्वमतमभिधाय 'अन्यमतम्। न प्रथमोत्पन्नं शब्दज्ञानमेव प्रतिबन्धविगमापेक्षयाऽपरोक्षावभासं भवति, किंतु शब्द एव प्रथमं ब्रह्माणि परोक्षज्ञानमुत्पाद्य पुनर्वर्णितचित्तदर्पणरुहकारिकारणापेक्षया द्वितीयमपरोक्षज्ञानमुत्पादयति। शब्दादीनां तद्धितप्रत्ययादिनाऽपरोक्षज्ञाने विनियोगसामर्थ्यात्। यथा

संप्रयोगोऽभिज्ञामुत्पाद्य पुनः पूर्वानुभवसंस्कारापेक्षया प्रत्यभिज्ञामुत्पादयति तद्वत् । न च स्वयंप्रकाशे ब्रह्मणि परोक्षज्ञानं विभ्रमः । स्वयंप्रकाशेऽपि पुरुषान्तरसंवेदने परोक्षानुमानदर्शनादिति ॥ सर्वथाऽपि आपरोक्ष्यस्य प्रयत्नान्तरलभ्यत्वाद्युक्तं पृथक् प्रतिपत्तिशब्दग्रहणमित्याह 'ततः प्राग्विद्योदिताऽपि वाक्यादनवासैव भवति' इति । अनन्तरं विवरणे 'ननु मनननिदिध्यासनयोः कथं श्रवणं प्रत्यङ्गताऽवगमः यावता ब्रह्मण्येव शक्तितात्पर्यविशिष्टवेदान्तशब्दावधारणात् ; श्रवणशब्दाभिधेयादात्मन्यवबुद्धे पश्चान्मननमर्थसम्भावनोपपत्तिपर्यालोचनाद्वारा जनिता ब्रह्मणि प्रत्ययावृत्तिरुत्पद्यते । ततश्च प्रमाणयुक्तिसम्भावनाभ्यां परिनिश्चितेऽपि विषये तदेकाकारं चित्तसमाधानं निदिध्यासनमुत्पद्यते । तदेवं निदिध्यासनस्वरूपोपकारितया श्रवणमननयोस्तदङ्गभावेऽवगते न युज्यते श्रवणाङ्गता मनननिदिध्यासनयोरिति । अत्रोच्यते । यस्मिन्पक्षे शक्तितात्पर्यविशिष्टशब्दावधारणं प्रथमं ब्रह्मणि परोक्षज्ञानमुत्पाद्य मनननिदिध्यासनसंस्कारविशिष्टान्तःकरणापेक्षयाऽपरोक्षज्ञानमुत्पादयति तत्र ब्रह्मणि परोक्षज्ञानस्य निदिध्यासनोपकारितया तदङ्गत्वेऽपि तात्पर्यविशिष्टशब्दावधारणादपरोक्षज्ञानोत्पत्तौ मनननिदिध्यासने श्रवणस्य फलोपकार्यङ्गतामश्नुवाते । नन्वपरोक्षफलोदयेऽपि निदिध्यासनाङ्गतैव श्रवणमननयोः किं न स्यात् त्रयाणामपि सन्निपत्योपकाराविशेषात् । दर्शपूर्णमासवत्समप्रधानता वा किं न स्यात् इति । उच्यते । विशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति । प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् । मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितस्य करणस्य विशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदङ्गे अङ्गीक्रियेते । यदा तु पुनःशब्दादेव प्रथममपरोक्षानुभवफलं विज्ञानमुत्पन्नं भ्रान्तिविक्षेपसंस्कारखचितान्तःकरणदोषादर्थोऽपि परोक्षानुभवफलतया विभ्रान्त्याऽवतिष्ठते । तदा मनननिदिध्यासने चित्तगतविक्षेपादिदोषप्रतिबन्धनिरासेनापरोक्षफलप्रतिष्ठाहेतुतया प्रमाणस्य फलोपकार्यङ्गमिति न विरुध्यते । न च शब्दकरणमन्तरेण निदिध्यासनादेवापरोक्षानुभवफलजन्म सम्भवति । तस्य प्रामाण्यासिद्धेः । शब्दावगतब्रह्मात्मविषयत्वादपरोक्षस्य तद्द्वारेण प्रामाण्यनिश्चय इति चेत् । नैवम् । उत्पन्नस्य हि विज्ञानस्य प्रमाणान्तराधीनविषयसद्भावनिश्चयाधीनप्रामाण्यकल्पनात् वरं स्वस्यैव क्लृप्तप्रमाणजन्यत्वकल्पनम् । अन्यथा परतः प्रामाण्यादितरत्र स्वतःप्रामाण्यात् । तस्मात् युक्तं श्रवणस्य फलोपकार्यङ्गतामनननिदिध्यासनयोरिति' इति स्वमतान्यमतयोर्वैलक्षण्यं स्पष्टमेवाभिहितम् । ब्रह्मसिद्धौ—'तत्तु समन्वयादिति चोदनालक्षणाद्धर्मात् तुशब्देन विशेष्यं ब्रह्म समन्वयगम्यमुक्तम् । समन्वयो हि पदार्थानां संसर्गे विनियोगः । ततो ब्रह्म गम्यते न चोदनात इत्यर्थः ।' इति नियोगकाण्डान्ते उक्तम् । एवं तत्रैव 'दृष्टा च ज्ञानाभ्यासस्य सम्यग्ज्ञानप्रसादहेतुता लोके । भावनाविशेषाद्धि अभूतमप्यनुभवमापद्यते किं पुनर्भूतम्' इत्यपि तत्रैवोक्तम् । एवं च मण्डनमते शब्दात्संसर्गावगाह्येव बोधः । मानसमेव ध्यानजन्यं निर्विशेषविषयकापरोक्षम् इति निष्कर्षः ॥

बृहदारण्यकवार्तिके च 'इह व्याचक्षते केचिदुक्तव्याख्यानतोऽन्यथा । कृतायाःकरणं कीदृक्प्रज्ञाया इति चोदिते । उच्यते वचसा बुद्धौ वस्तुमात्रंसमर्प्यते । विज्ञातस्य सन्तानस्य तादात्म्यप्रतिपादनम् ॥ भावना ज्ञानसन्तानैः प्रज्ञाकरणमुच्यते । अस्मिन् काले तु सा प्रज्ञा निष्ठां नीता कृताभवेत् ॥ ८०८ ॥ अनुभवानारूढं वस्तुबुद्धौ शब्देनार्प्यते । तच्च शाब्दं परोक्षज्ञानं 'विज्ञाय' इत्युच्यते । परोक्षतया ज्ञातस्य ब्रह्मणः प्रतीचा तादात्म्यसाक्षात्करणं शब्दज्ञानाभ्यासप्रचयोक्तं प्रज्ञा । तस्याश्च मुमुक्षुयत्नसाध्यताऽत्र विवक्षितेत्यर्थः इति भर्तृप्रपञ्चमतोपन्यासानन्तरं 'अन्ये तु पण्डितंमन्याः संप्रदायानुसारतः । विज्ञायेति वचश्चौतमिदं व्याचक्षतेऽन्यथा ॥ ७९६ ॥ तत्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम् विज्ञायवस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः ॥ ७९७ ॥ नन्वत्रापि कृतैवासौ ल्यबन्तेनाभिधीयते । प्रज्ञातःकरणं तस्या भूयः कस्माद्विधीयते ॥ ७९८ ॥ मैवं पदार्थसंसर्गरूपस्यैवा तथात्मके । ऐकात्म्ये वाक्यहेतूत्थबोधस्योद्भूतिकारणात् । ब्रह्मसं-

## श्रीभाष्यम्

**अस्मिन्शास्त्रे अनाद्यविद्याकृत विविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखमूलमिथ्याज्ञाननिबर्हणायात्मैकत्वविज्ञानं प्रतिपिपादयिषितम् । अस्यहिभेदावलम्बिकर्मज्ञानं क्वोपयुज्यते । प्रत्युतविरुद्धमेव उद्गीथादिविचारस्तु कर्मशेषभूतएव ज्ञानरूपत्वाविशेषादिहैव**

## श्रुतप्रकाशिका

**सोपालम्भं** परिहति । **अनभिज्ञइति** । *शास्त्रे प्रधानतया प्रतिपाद्यं ज्ञानमिदमिति त्वया नज्ञातमित्यर्थः । अत्र किं प्रधानप्रतिपाद्यंज्ञानामित्यत्राह । **अस्मिन्निति** । भेदः ज्ञातृज्ञेयज्ञानरूपः । वैविध्यं तदवान्तरभिदाबाहुल्यम् । एवं विविधभेददर्शनस्य हेतुरविद्या । तस्याः कोहेतुरित्यनवस्थापरिहारार्थमनादिशब्दः । एव मविद्याकृतभेददर्शननिमित्तकं जन्मजरामरणादिकमेव सांसारिकदुःखम् । आदिशब्देन नरकगर्भवासादिग्रहणम् । संसारः प्रकृतिसम्बन्धः तत्प्रभवं सांसारिकं तन्निरसनीयत्वाय दुःखरूपत्वोक्तिः । सागरशब्दस्तदानन्त्यपरः । **निमग्नस्येति** । दुःखनिवृत्त्युपायापेक्षाहेतुतयोक्तम् । अधिकारिस्वरूपमुक्तम् । प्रयोजनमाह । **निखिलेति** । *मिथ्याज्ञानं भ्रान्तिज्ञानं–'**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायात्**' इति प्रयोगात् । भ्रान्तिज्ञानं च भेददर्शनम् । यद्वा *मिथ्याभूतमज्ञानं मिथ्याज्ञानम् । ज्ञाननिवर्त्यत्वाय मिथ्याशब्दः । तस्य निबर्हणाय तन्निबर्हणमेव मोक्षइत्यभिप्रायः । तत्साधनं किमित्यत्राह । **आत्मैकत्वविज्ञानमिति** । सर्पभ्रमस्य रज्जुयाथात्म्यज्ञानं हि निवर्तकम् नतु कर्मविशेषः । एवं भेददर्शनस्याविद्याकृतत्वादैक्यज्ञानमेव तन्निवर्तकमिति तत्रैव तात्पर्यं वेदान्तवाक्यानामित्यर्थः ॥

ततः किमित्यत्राह । **अस्यहीति** । **क्वोपयुज्यते** । न कुत्रचित् ज्ञानस्य स्वरूपोत्पत्तौ तत्फलोत्पत्तौ ज्ञानोत्पत्तिसाधनानुग्रहे वा नोपयुज्यत इत्यर्थः । न केवलमुपयोगाभावः । प्रतिकूलफलत्वमप्याह । **प्रत्युतेति** । द्वैतवासनाजनकत्वादित्यभिप्रायः । तथाऽप्युपनिषत्स्वधीतत्वात् ब्रह्ममीमांसायां निरूप्यमाणत्वाच्चोद्गीथाद्युपासनं ब्रह्मविद्यापेक्षितमित्युद्गीथादिविचारस्साक्षात्सङ्गत इत्यत्राह । **उद्गीथादीति** । तर्हि कथमुपनिषत्स्वध्ययनं, ब्रह्मविचारे तद्विचारश्चेत्यत्राह । **ज्ञानरूपत्वाविशेषादिति** । ज्ञानरूपत्वसाम्याद्बुद्धिस्थतयाकृतः न तु प्रधानार्थोपयोगित्वादित्यर्थः ।

## गूढार्थसंग्रहः

'**प्रत्युत विरुद्धमेव**' इत्यनेन विद्याकर्मणोस्सत्यमिथ्याऽर्थसम्बन्धाभ्यां विरोधः प्रदर्शितः । निर्विशेषे परे ब्रह्मणि प्राधान्येन तात्पर्यं शास्त्रस्य; सविशेषेऽपरे ब्रह्मणि अवान्तरतात्पर्यस्याङ्गीकारेऽपि परमतात्पर्यविषयीभूतार्थसङ्गतस्यैव अपेक्षितस्य पूर्ववृत्तत्वं युक्तम्; न अवान्तरतात्पर्यविषयीभूतार्थापेक्षितस्येति '**यत्प्रधानं**' इत्यादेराशयः ॥

अद्वैतं द्विविधं; परिणामाद्वैतं, विवर्ताद्वैतञ्चेति । परिणामः उपादानसमसत्ताकोऽन्यथाभावः । विवर्तस्तु उपादानविषमसत्ताकोऽन्यथाभाव इति तयोर्भेदः । परिणामाद्वैतिमतेऽपि उपाधिपरिणामवादी भास्करः । शङ्कराचार्येभ्योऽपि प्राचीनः भर्तृप्रपञ्चः बृहदारण्यकव्याख्याता, अर्वाचीनः यादवप्रकाशः ब्रह्मसूत्रभाष्यकर्ता च स्वरूपपरिणामवादिनौ । एतन्मते विजातीयविशेषाः स्वगतविशेषाश्च परब्रह्मण्यङ्गीक्रियन्त इति सविशेषं परं ब्रह्म । जीवब्रह्मणोः स्वाभाविकोभेदस्य अभ्युपगमात् सजातीयविशेषा नाद्रियन्ते । उपादानोपादेययोर्भेदाभेदः, भेदाभेदनिबन्धनं सामानाधिकरण्यम् । सिद्धान्तेऽपि परिणामाद्वैतमभ्युपगम्यते । परिणामनिबन्धनमेवोपादानत्वं ब्रह्मणि । अन्तर्यामित्वस्यैव परिणामरूपत्वात् । उपादानोपादेययोरभेद एवाभ्युपगम्यते । तन्निबन्धनञ्च सामानाधिकरण्यम् । जीवब्रह्मणोः स्वाभाविकाभेदानभ्युपगमात्

## श्रीभाष्यम्

**क्रियते सतु न साक्षात्सङ्गतः अतो यत्प्रधानंशास्त्रं तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यं बाढं तदपेक्षितंच कर्मविज्ञानमेव कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यतिच सर्वापेक्षाच यज्ञादिश्रुतेरश्ववदिति** [शारी.३.अ.४-पा-२६-]**अपेक्षितेच कर्मण्यज्ञाते केनसमुच्चयः केननेति विभागो न शक्यते ज्ञातुम्।**

## श्रुतप्रकाशिका

ततःकिमित्यत्राह। **सत्विति**। * तुशब्दद्वयं शङ्काद्वयव्यावर्तकम्। प्रधानप्रतिपाद्योपयुक्तस्यैव पूर्ववृत्तत्वं निगमयति। **अतइति**। **किमपि**कर्मविचारादन्यदितिभावः। प्रधानार्थोपयोगित्वेन सङ्गतिस्साक्षात्सङ्गतिः। येनकेनाप्याकारेण साम्याद्बुद्धिस्थत्वं प्रसङ्गात्सङ्गतिः। अतः प्रासङ्गिकोद्गीथाद्युपासनाचिन्तापेक्षितस्य प्रधानार्थविरुद्धस्य कर्मविचारस्य न पूर्ववृत्तता युक्ता अपितु प्रधानप्रतिपाद्यात्मैकत्वविज्ञानापेक्षितमेव किमपि पूर्ववृत्तं वक्तुं युक्तमित्युक्तंभवति॥

***अत्र** भास्करीयाः प्रत्यवतिष्ठन्ते। **बाढमिति**। बाढमित्यर्धाङ्गीकारे। यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तमित्येतावन्मात्रविषयोऽङ्गीकारः। तदपेक्षितंचेतिप्रतिज्ञा। त्वयायदनपेक्षितमित्युक्तम्, तदेवापेक्षितमित्येवकाराभिप्रायः। कुतइत्यत्राह। **कर्मसमुच्चितादिति**। समुच्चितशब्दस्साहित्यमात्रपरः। * न समुच्चयपरः '**अस्माद्विद्या आत्मविद्याच**' इति * समुच्चित्योपदेशादित्यत्र समुच्चित्यशब्दवत्। कर्मज्ञानाभ्यामिति न निर्दिष्टम्—अपितु कर्मसमुच्चिताज्ज्ञानादिति *विशेषणविशेष्यभावेन निर्दिष्टम्। अतोज्ञानप्राधान्यमवगम्यते। कर्माङ्गकाज्ज्ञानादित्यर्थः। श्रुतिश्च '**यज्ञेनदानेन**' इत्यादिर्विवक्षिता॥

**कर्मणो**विद्याङ्गत्वे सूत्रकाराभिमतिंदर्शयति। **वक्ष्यतिचेति**। चः *प्रतिपादकसमुच्चये। अङ्गतया कर्मणोनुष्ठानमपेक्षितमस्तु * तज्ज्ञानस्य कथं पूर्वभावित्वम्। कर्मज्ञानं ब्रह्मविचारपाश्चात्यं किं न स्यादित्यत्राह। **अपेक्षितेचेति**। प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकत्वेनाङ्गतयाऽपेक्षा विवक्षिता। तृतीयस्य चतुर्थपादे समावृत्ताकृतदार मृत दारादीनामाश्रमविशेषवर्तिनाञ्च ब्रह्मविद्यानिष्ठानां कर्मस्वनुष्ठेयाननुष्ठेयविभागस्य *निरूपयिष्यमाणत्वमभिप्रेत्योक्तम्। **केन समुच्चयः केन नेतीति** *यद्वा नित्यनैमित्तिकयोस्समुच्चयः नतु काम्यनिषिद्धयोरिति विभागो न ज्ञायत इत्यर्थः। अयमर्थः—पदार्थज्ञानपूर्वकं हि वाक्यार्थज्ञानं। यज्ञेन दानेनेत्यादिवाक्ये यज्ञादिकर्मणां पदार्थभूतत्वाद्वाक्यार्थज्ञानस्यच *पदार्थज्ञानपूर्वकत्वाद्यज्ञादिविचारस्य पूर्वभावित्वम्। नहि '**व्रीहीनवहन्ति**' इत्यादिवाक्यार्थज्ञानं व्रीह्यादिपदार्थज्ञाने नविनोपपद्यते। पदार्थसंसर्गरूपत्वाद्वाक्यार्थस्य॥

***ननु** गामानयेति वाक्याद्व्युत्पत्तौ गवानयनादिरूपं *वाक्यार्थं पूर्वं प्रतिपद्यावापोद्वापमुखेन पश्चात्पदार्थप्रतिपत्तेर्नपदार्थधीपूर्वकत्वनियमोवाक्यार्थज्ञानस्य। * उच्यते—व्युत्पन्नाच्छब्दादर्थप्रतिपत्तौ सर्वत्र पदार्थज्ञानपूर्वकमेव वाक्यार्थज्ञानम्। व्युत्पत्तिदशायान्तु प्रमाणान्तरेण शब्दान्तरेण वा वाक्यार्थावगमः पूर्वं स्यात्। नतु तस्मादेवशब्दात् तस्याग्रहीतसम्बन्धत्वेन बाधकत्वायोगात्। * व्युत्पत्तावपि न वाक्यार्थधियः पूर्वभावनियमः। अम्बा तात मातुलादिपदानां पदा.

## गूढार्थसंग्रहः

भेदसत्त्वेन सजातीयविशेषा अपि अभ्युपगम्यन्त इति विशेषत्रयविशिष्टं परं ब्रह्मेति विशेषः। एवञ्च एतन्मतत्रयेऽपि ब्रह्मान्यमिथ्यात्वविरहेण कर्मब्रह्मज्ञानयोः सौहार्दं सम्भवतीति मतत्रयसाधारण्येन शङ्का '**बाढम्**' इत्यादिना॥

श्रीभाष्यम्

**अतस्तदेव पूर्ववृत्तम् ।**

श्रुतप्रकाशिका

न्तरासंसृष्टानामेव प्रथमव्युत्पत्तिदर्शनात् । अस्यशब्दस्यायमर्थइति व्युत्पत्तौ वक्यार्थज्ञानस्य पूर्वभावाभावाच । नचास्मिन्नेववाक्ये यज्ञादिशब्दव्युत्पत्तिसम्भवः विविदिषानिष्पत्तिरूपवाक्यार्थस्याप्रत्यक्षत्वेन गवानयनादाविव व्युत्पत्त्यनुपपत्तेः । अतःपदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमित्युक्तम् ॥

**बाढमित्या**दिकं सिद्धान्तिनश्चोद्यपरमितिच्च व्यख्यातृभिर्व्याख्यातम् । तदानीमपि पदार्थवाक्यार्थभावः क्रमविशेषहेतुतया विवक्षितः । किंच अपेक्षितेचेत्यङ्गतयाऽपेक्षितत्वस्य विवक्षितत्वात् कर्मणांच ज्ञानोत्पादकतया तदङ्गत्वादुत्पादकोत्पाद्ययोःपौर्वापर्यनियमाद्विचारविषययोः कर्मज्ञानयोः पूर्वभावेन तच्छेषभूतयोर्विचारयोरपि तत्क्रमभाक्त्वं न्याय्यमितिचाभिप्रायः । शेषभूतस्य शेषिक्रमानुरोधित्वं हि न्यायसिद्धम् । यथा '**सारस्वतौहोमौभवतः**' इति युगपदुत्पन्नयोरपि सारस्वतहोमयो * र्याज्यापुरानुवाक्यामन्त्रानुसारेण सरस्वतीयागस्य पूर्वभावे, सरस्वद्यागस्यच पश्चाद्भावे प्राप्ते तदङ्गानामपि * तेनैवक्रमेणानुष्ठानं निर्णीतम् । दृष्टान्ते दार्ष्टान्तिकेच शेषिणोः*क्रमनिश्चायकहेतुवैषम्यमेव । तयोःक्रमे निश्चिते शेषस्य शेषिक्रमानुरोधित्वं तत्रचात्रच तुल्यम् । एवंचोपासनस्यैव विचारंप्रति शेषित्वात् तृतीयलक्षणेकृतस्योपासनाचिन्तनस्यैव कर्मविचारापेक्षया पश्चाद्भाव इति नवाच्यम् । विद्याविषयतत्फलचिन्तनस्यापि * तदपेक्षितत्वेन कृत्स्नायाआपि ब्रह्ममीमांसायाःकर्मविचारपश्चाद्भावप्राप्तेः । निगमयति । **अतइति ।**

**बाढमित्यादे**स्सिद्धान्तिचोद्यपरत्वादपि भास्करमतपरत्वमुचितम् **कर्मसमुचिताज्ज्ञानादपवर्गश्श्रुतेः** इत्यस्य ग्रन्थस्य भास्करीयभाष्येश्रूयमाणत्वात्, अङ्गभावस्य तदभ्युपगतत्वेन तद्विषयसूत्रोपादानाविरोधाच, शब्दतोऽर्थतश्च भास्करमत प्रत्यभिज्ञानात् सिद्धान्तिचोद्यस्यापि तदन्तर्भावाच भास्करपक्षं * यादवप्रकाशपक्षं चोपजीव्य बाढमित्यदिना * पार्श्वस्थश्चोदयतीतिच निर्वाहस्साम्प्रदायिकः । तत्रैवं योजना कर्मसमुचितादिति समसमुच्चयो विवक्षितः । कर्मसमुचिताज्ज्ञानादिति विशेषणविशेष्यभावेन निर्देशो ज्ञानस्य मोक्षोपायत्वप्रासिद्धिप्राचुर्यनिबन्धनः श्रुतिश्च '**विद्याञ्चाविद्याञ्च**' इत्यादिः । अस्मिन्वाक्ये मृत्युशब्दः उपेयप्राप्तिविरोधिकर्मवाची । प्रतिबन्धनिवृत्तिर्ब्रह्मप्राप्तिश्चेति साध्यद्वयं क्रमेण कर्म ज्ञानञ्चेति साधनद्वयमपिहि यादवप्रकाशैरभ्युपेतम् अतो **विद्याञ्चाविद्याञ्च** इति वाक्ये पूर्वखण्डस्साधनद्वित्वपरः उत्तरखण्डस्साध्यद्वित्वपर इति तेषां निर्वाहः ॥

**वक्ष्यतिचेति ।** च शब्दः प्रतिपाद्यसमुच्चये अङ्गभावंच वक्ष्यतीत्यर्थः । ज्ञानोत्पत्तेः पश्चात्कर्मणोब्रह्मप्राप्तिप्रतिबन्धनिवर्तकत्वं, ज्ञानोत्पत्तेःपूर्वं कर्मणो ज्ञानोत्पादकतया तदङ्गत्वमपि हि तदभ्युपगतम् । अङ्गभावपरं सूत्रमुपादत्ते । **सर्वापेक्षेति ।** '**सर्वापेक्षा**' इति सूत्रमङ्गाङ्गिभावपरम् । '**सहकारित्वेन च**' इति सूत्रं समसमुच्चयप्रतिपादकमिति हि तेषां प्रक्रिया । अङ्गभावे, समुच्चये च श्रुतिवाक्ये सूत्रेचोदाहर्तव्येऽपि ग्रन्थलाघवार्थं समुच्चये श्रुतिः अङ्गभावे सूत्रञ्च उदाहृतम् । अङ्गभावप्रतिपादकवाक्यविषयसूत्रोपादानेन भास्करमतंचावलम्बितं भवति । एवमुभयथा कर्मणोऽपेक्षा दर्शिता । ततः किमित्यत्राह । **अपेक्षितेचेति ।** समप्रधानतया अङ्गतया वाऽपेक्षित इत्यर्थः । अन्यत्सर्वं पूर्ववत् ॥

**यद्यपि** यादवप्रकाशमते कर्मविचारस्य पूर्ववृत्तत्वमनभिमतम् । तथापि समुच्चयेनाङ्गतया च कर्मणोऽपेक्षितत्वस्य तदुपपादितत्वात्तावन्मात्रमुपजीव्य पार्श्वस्थेन मतद्वयावलम्बिना चोदयित्रा पूर्ववृत्तत्वापादनमुखेन चोदितमिति न निगमन

## श्रीभाष्यम्

**नैतद्युक्तं सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः अविद्यानिवृत्तिरेव हि मोक्षः वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः**

## श्रुतप्रकाशिका

ग्रन्थविरोधः । समुच्चयशब्दस्य प्रधानतयाऽन्वये स्वारस्यादङ्गत्वपरसूत्रोपादानात्तदनन्तरं साध्यद्वित्वस्य साधनद्वित्वस्य च निराकरिष्यमाणत्वाच्च मतद्वयालम्बनेन बोधितमिति पूर्वाचार्यैर्निर्वाहः कृतः ॥

अत्र प्रतिवदति । **नैतद्युक्तमिति** । हानार्थकर्मणां ज्ञातव्यत्वं प्रागेव प्रतिक्षिप्तम् । वेदान्तमात्राध्यायिनः कर्मविषयापातप्रतीत्यभावेन कर्मविचारनैरपेक्ष्यवचनात्, सुकृतवशाद्वेदान्तमात्रबुभुत्सावतः कर्मज्ञानानपेक्षावचनाच्च । अत्रोपादानार्थं कर्मणोज्ञातव्यत्वं निराचिकीर्षुस्समसमुच्चयेनाङ्गभावेनच द्विविधेऽप्युपादाने समसमुच्चयार्थमुपादानं प्रथमं निराकर्तुं साधनद्वित्वं, साध्यद्वित्वंच वाक्यद्वयेन प्रतिक्षिपति । **सकलविशेषेत्यादिना** । * यदा बाढमित्यादिग्रन्थो भास्करमतेन सिद्धान्तिमतेन वा चोद्यपरः । तदानीं पूर्वपक्षे सम्भावितसमस्तप्रकारेण कर्मणोऽपेक्षां प्रतिक्षेप्तुकामः किं त्वया समसमुच्चयोविवक्षितः—उताङ्गभावइति विकल्पमभिप्रेत्य प्रथमंसमुच्चयपक्षं प्रतिक्षिपंतीति निर्वाह्यम् ॥

**सकल**विशेषाः सजातीय विजातीय स्वगत * व्यावृत्त्यन्वयरूपविशेषाः । तेषां प्रत्यनीकम्, सर्पाद्याकाराणां रज्जुत्वमिव तेषां निवर्तकमितिभावः । चिन्मात्रमिति मात्रचा ज्ञातृत्व ज्ञेयत्वव्यावृत्तिः । * यद्वा सकलविशेषप्रत्यनीकशब्देन विजातीय सजातीय भेदप्रत्यनीकत्वं, चिन्मात्रमिति मात्रचा स्वगतभेदशून्यत्वं च विवाक्षितम् । प्रत्यनीकशब्देन नित्यानर्हत्वं विवक्षितम् । नहि शुक्तिशकलं कदाचिद्रजतत्वसम्बन्धार्हम् । नित्यानर्हत्वादेव हि शुक्तिज्ञानस्य रजतत्वनिवर्तकत्वम् । **ब्रह्मविज्ञानादेवाविद्यानिवृत्तेरिति** । रज्जुत्वज्ञानादेव हि सर्पत्वनिवृत्तिः नतु कर्मणेति भावः ॥

**एवं** साधनद्वित्वं निरस्तम् । कथं साधनद्वित्वव्युदासः साध्यद्वित्वं हि विद्यत इति शङ्कायां साध्यद्वित्वं व्युदस्यति । **अविद्यानिवृत्तिरेव हि मोक्षइति** । ब्रह्मणोनित्यप्राप्तत्वात्प्रतिबन्धनिवृत्तिरेव साध्या । न तत्प्राप्तिः । हिशब्दस्यायमभिप्रायः । या प्रतिबन्धनिवृत्तिः कर्मसाध्यत्वेन त्वयोक्ता सैव ज्ञानसाध्या श्रुतिस्मृतिसूत्रैरभिहिता । **'तमेवं विदित्वाऽतिमृत्युमेति' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' 'एवमेवंविदि पापं कर्मनश्लिष्यते' ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा' 'तदधिगमउत्तरपूर्वाघयोः'** इत्यादिभिः । तस्माद्वाक्यद्वयेन न साध्यसाधनद्वित्वमस्तीत्युक्तं भवति ॥

**अविद्या**निवृत्तिरेव मोक्षोस्तु ततः किं कर्मनैरपेक्ष्यस्येत्यत्राह । **वर्णाश्रमेति** । अनेन पदेन पूर्वोक्तं कर्मणोभेदावलम्बित्वं विवृतं भवति । आदिशब्देन निषिद्धानि, प्रायश्चित्तकर्माणिच विवक्ष्यन्ते । अनन्तशब्देन वर्णादीनां बाहुल्यम् । विकल्पः भेदः । **सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेरिति** । मूलाज्ञाननिवृत्तेः फलं हि भेददर्शन-

## गूढार्थसंग्रहः

**सकलविशेष** इत्यत्र सजातीयविजातीयस्वगतविशेषा विवक्षिताः ।

## श्रीभाष्यम्

**कथमिवसाधनं भवेत् श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षाविरोधित्वं ज्ञानस्यैवमोक्षसाधनत्वंच दर्शयन्ति अन्तवदेवास्यतद्भवति** (बृ-उ-५-अ-८-१०-वा) **तद्यथेहकर्मचितोलोकःक्षीयते एवमेवामुत्रपुण्यचितोलोकःक्षीयते** (छा-उ-८-प्र-१-ख-६-वा) **ब्रह्मविदाप्नोतिपरम्** (तै-उ-आन-२-अ-१-अनु-७-वा) **ब्रह्मवेदब्रह्मैवभवति**(मुं-उ-६-२-ख-९-वा) **तमेवविदित्वाऽतिमृत्युमेतीत्याद्याः**(श्वे-उ-३-अ-८वा) **यदपिचेदमुक्तं यज्ञादिकर्मापेक्षाविद्येति तद्वस्तुविरोधाच्छ्रुत्यक्षरपर्यालोचनयाच**

## श्रुतप्रकाशिका

निवृत्तिः। अतोभेददर्शननिवृत्तिरज्ञाननिवृत्त्यन्तर्गतेत्यर्थः। **कथमिवसाधनं** । न कथंचिदपीति यावत्। नहि वचनविरोधे न्यायःप्रभवति इतिन्यायात् श्रुतिसिद्धं कर्मणोऽपेक्षितत्वं न बाध्यमिति शङ्कायामुक्तोपपत्तेश्श्रुत्यानुकूल्यं दर्शयति। **श्रुतयश्चेति** । न केवलोपपत्तिः। तदनुग्राह्यमप्यस्तीति चशब्दस्यभावः । पूर्वं भेदावलम्बितया विरोधउक्तः। अत्र तु फलानित्यतया विरोधश्च युक्त्यन्तरत्वेन दर्शितः। **अनित्यफलत्वेनेति**। नित्यफलस्य मोक्षस्य कथमनित्यफलदं कर्म साधनमित्यर्थः ॥

श्रुतय इति एकस्मादनेकवाक्यानां प्राबल्यं विवक्षितम् । दर्शयन्तीत्यनेना * स्फुटार्थात् स्फुटार्थानाम् अन्तवदेवास्येति कर्मसाध्यत्वे मोक्षस्यानित्यत्वम् नित्यत्वे कर्मणस्तत्साधनत्वं वा न स्यात् । कर्मणोऽन्तवत्फलत्वनियमादिति भावः। * अनेन वाक्येन कर्मणामानित्यत्वमुक्तम् तद्यथेत्यनेन कर्मक्षयस्य फलद्वारकत्वमुक्तम् पूर्ववाक्यमनेककालानुष्ठित सकलकर्मणामन्तवत्त्वज्ञापनार्थम्। **अस्मिँल्लोके जुहोतियजतेतपस्तप्यते बहूनिवर्षसहस्राणि अन्तवदेवास्यतद्भवति इतिहि श्रूयते** ततएव कर्मनैरपेक्ष्यवादे अस्यवाक्यस्य प्रथमतउपादानम् '**ब्रह्मविदाप्नोति**' इति ज्ञानस्यमोक्षसाधनत्वमुक्तम्। प्राप्यप्राप्तृभेदनिषेधार्थम् **ब्रह्मवेदब्रह्मैवभवति** इत्युपात्तम्। **तमेवेति**। प्रतिबन्धनिवृत्तेर्ज्ञानफलत्वंज्ञापितम् ज्ञान व्यतिरिक्तस्य कर्मादेरुपायत्वनिषेधश्चानेन सिद्धः'**नान्यःपन्था**' इतिह्यनन्तरवाक्यम् । एवं ज्ञानस्यैव मोक्षोपायत्वपरतर्कानुगृहीतस्पष्टार्थानेकवाक्योपादानेन **विद्याञ्चाविद्याञ्च** इतिसमसमुच्चयपरत्वेन परोक्ता श्रुतिश्चातदर्थेत्युक्तंभवति तस्या एकत्वादस्फुटार्थत्वादतर्कोपेतत्वाच्च श्रुत्यन्तराविरोधेनवर्णनीयत्वात् एवं ज्ञानस्यैवमोक्षोपायत्वे प्रमाणतयाश्रुतय उपपत्तयश्च दर्शिताः ॥

**अथ** यज्ञादिश्रुतेः कर्मापेक्षितत्वपरतां व्युदस्यति। **यदपिचेत्यादिना**। सिद्धान्तिभास्करयादवप्रकाशानां त्रयाणामपि कर्माभिमतमिति ईदृशं प्राधान्यं सूचयत्यपिशब्दः। समुच्चयपरवाक्यस्य श्रुत्यन्तरानुगुण्येन निर्वाहेसति यज्ञादिश्रुतिश्चनिर्वाह्येति समुच्चयाभिप्रायः चशब्दः * अपिचेत्यखंडोयंशब्दोवा तदानीमप्युक्तप्रकारेण समुच्चयपरः। यदुक्तं; यज्ञादिकर्मापेक्षा विद्येति । *अनया वचनव्यक्त्या समुच्चयेन विद्याऽपेक्षितं यत्कर्मोक्तमित्यर्थः। वस्तुविरोधः द्वैतवासनाजनकत्वम्

## गूढार्थसंग्रहः

**तमेव विदित्वा** इत्यत्र एवकारेण वेदने ब्रह्मान्यविषयकत्वप्रतीत्या ब्रह्मान्यविषयकज्ञानं कर्मकाले न स्थातुमर्हति इति कर्मज्ञानयोर्विषयविरोधः प्रामाणिक इति दर्शितं भवति। अयमेव **वस्तुविरोधात्** इत्यत्र वस्तुविरोधः ॥

**श्रुत्यक्षरपर्यालोचनयेति**। उक्तंहि सुरेश्वराचार्यैः '**प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्य**

## श्रीभाष्यम्

**अन्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते न फलोत्पत्तौ विविदिषन्तीतिश्रवणात् । विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह ।**

## श्रुतप्रकाशिका

अनित्यफलत्वञ्च । श्रुत्यक्षरपर्यालोचना सन्प्रत्ययार्थनिरूपणम् । चस्समुच्चये । विविदिषोत्पत्तावुपयोगप्रकारमाह—**अन्तः-करणेति । न फलोत्पत्तौ** । न मोक्षोत्पत्तौ '**यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ति**' इति हि श्रुतिः नतु मुच्यन्त इतीति भावः । अक्षरपर्यालोचना कथमित्यत्राह । **विविदिषन्तीति श्रवणादिति** । एवंच यज्ञादिश्रुतिपर्यालोचनयाच ज्ञानकर्मणोस्समुच्चयः प्रत्युक्तः । न फलोत्पत्ताविति फलशब्दस्य मोक्षेस्वारस्यादेवं योजनाकृता ॥

**यद्वा** यज्ञादिकर्मापेक्षा विद्येति वचोभङ्ग्याऽङ्गतयाऽपेक्षितं यत्कर्मोक्तमित्यर्थः । न फलोत्पत्तौ न वेदनोत्पत्तावित्यर्थः । विविदिषाऽपेक्षया हि फलं वेदनम् । अन्यत्सर्वं पूर्ववत् । अस्यां योजनायां यज्ञादिकर्मापेक्षा विद्येति * निर्देशस्वारस्यमस्ति । अङ्गाङ्गिभावसूत्रस्मारकत्वादस्य निर्देशस्य । * अथवा यज्ञादीति प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकतयाऽङ्गं यत्कर्मोक्तं तन्नोपयुक्तमित्यर्थः । न फलोत्पत्तौ नमोक्षोत्पत्तौ । करणभूतविद्यानुग्राहकत्वेन नोपयुक्तमित्यर्थः । अस्यां योजनायामङ्गाङ्गिभाव सूत्रस्मारक निर्देशस्य फलोत्पत्ताविति निर्देशस्य च स्वारस्यमस्ति ॥

**विविदिषन्तीत्युक्तिः** * असिनाजिघांसतीतिवदिति यज्ञादेर्वेदनोपयोगित्वं स्यादितिशङ्कायां वेदनोत्पत्तौ हेतुत्वे कर्मणइतिकर्तव्यतात्वं, करणत्वंचानुपपन्नमित्याह । विविदिषायामित्यादिना * (वाक्यद्वयेन) तत्र शमादिभिस्सहसमुच्चयेन, विकल्पेनच इतिकर्तव्यतात्वं प्रथमं व्युदस्यति, विविदिषायामित्यादिवाक्येन । एवकारद्वयेन कर्मणस्समुच्चयो, विकल्पश्च व्युदस्यते । शमादीनामिन्द्रियव्यापारोपरतिरूपत्वेन यज्ञादिकर्मणस्तत्प्रवृत्तिरूपत्वेनान्योऽन्यविरोधित्वान्न समुच्चय उपपद्यते इत्यभिप्रायेण शमादीनामेवेत्युक्तम् । तुल्यबलयोर्हिविकल्पः—'**भूत्वाऽऽत्मानंपश्येत्**' इति शमादीनामात्मदर्शनंप्रति साक्षात्साधनत्वस्य न्यायनैरपेक्ष्येण शीघ्रंप्रतिपन्नतया बलीयस्त्वात्—'**विविदिषन्ति**' इति यज्ञादेरिच्छासाधनत्वेन स्वरसतः प्रतिपन्नत्वेऽपि स्वारस्यभङ्गेनाऽसिनाजिघांसतीत्यादिदृष्टान्त पर्यालोचनरूपन्यायसापेक्षतया कर्मणो विद्यासाधनत्वस्य विलम्बेन प्रतिपन्नतया दुर्बलत्वाच्च न विकल्प इत्यभिप्रायेणाह । **श्रुतिरेवाहेति** ॥

## गूढार्थसंग्रहः

**स्समायान्ति प्रावृडन्ते घना इव** , इति । चेतश्शुद्धौ विविदिषारूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानम् । ततस्संन्यास इति कर्मसंन्यासाभ्यां विद्यानिष्पत्यभ्युपगमोऽपि युज्यते (सि.ले.सं) इति अनेन दर्शितम् ।

इच्छायाश्च प्रत्ययार्थतया प्राधान्यात् प्रधानेन च कार्येण संप्रत्ययात् वेदानुवचनस्येव यज्ञस्यापि इच्छासाधनतया विधानम् । एवं तपसोऽनाशकस्येति भामत्यां वाचस्पतिः सर्वाण्येव कर्माणि उत्पत्तिविधिविहितानि संयोगभेदेन जीवनकामनाद्यधिकारविध्यन्तरवत् '**ब्रह्मानुभवकामो यज्ञादीन्यातिष्ठेत्**' इति अधिकारिविधिविधेयानि भविष्यान्ति इत्यत्राह **यज्ञेन दानेनेत्यादिना** । यज्ञादीनां इच्छोपसर्जनतयाऽऽख्यातसमीरितभावनाकरणतया अवगतानां साध्येनैव अन्वयात् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगतानि । ततश्च उक्तविधिः परिणम्यते । यथा यागादीनां स्वर्गाद्युद्देशेन विहितानां तदुपपत्तये विधिसामर्थ्यादेव मध्यवर्त्यपूर्वाणि कल्प्यन्ते । एवमिहाप्यन्तःकरणशुद्धिचित्तैकाग्र्यादि द्वारं कल्प्यताम् ।

## श्रीभाष्यम्

**शान्तोदान्तउपरतस्तितिक्षुस्समाहितोभूत्वाऽऽत्मन्येवाऽऽत्मानंपश्येत्** (बृ-अ-६-ब्रा-४-२३) **इति तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौसत्यां**

## श्रुतप्रकाशिका

**तथाऽपि** विविदिषाऽपेक्षितत्वात्कर्मच ज्ञानोपयोगि तत्कथमेतत्त्यज्यते शमादिरुपादीयत इति शङ्कायां कर्मणश्शमादिवैषम्यमाह । **अन्तरङ्गोपायतामिति** । भूत्वापश्येदिति * अन्तरङ्गत्वं स्पष्टम् । विविदिषायाः पूर्वं हि कर्मोपयोगः शमादितु पश्चादप्युपयुज्यत इत्यभिप्रेत्य जातायामित्युक्तम् । ज्ञानंप्रति कर्मणःकरणत्वमपि नास्तीत्याह । **तदेवमिति** । करणत्वं सम्भवतीत्याशङ्क्य निरस्यते नत्वभ्युपगतत्वात् । विशुद्धंमनो हि करणम्–'**मनसातु विशुद्धेनेति**' श्रुतेः । तत् उक्तेभ्यो हेतुभ्यः । एवं समुच्चयेन, विकल्पेनच इतिकर्तव्यतात्वेऽनुपपन्ने स्वर्गादिसाधनस्य कर्मणो विविदिषासाधनत्वानुपपत्तिपरिहारायानभिसंहितफलशब्दः । विविदिषायाअपि तत्साध्यत्वेन फलत्वात् तस्या अनभिसंहितत्वव्यावृत्त्यर्थं फलविशेषेत्युक्तम् । विविदिषासिद्ध्यर्थं * इदानीमप्यनुष्ठानाय कर्मज्ञानापेक्षाशङ्काव्यावृत्त्यर्थं जन्मान्तरशब्दः । * '**अनेक जन्मसंसिद्ध**' इत्यादिवचनादिदानीमप्यनुष्ठेयमित्याशङ्कापरिहारार्थश्शतशब्दः । कार्यकल्प्यं हि कारणम् । इदानीं विविदिषोत्पत्तिदर्शनेन जन्मान्तरशतानुष्ठानं कल्पनीयमिति भावः तेन कर्मणा मृदितकषायस्य नष्टपापस्य ॥

*'**कषायपक्तिःकर्माणि ज्ञानं तु परमागतिः**' '**कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते**' इतिहि स्मृतिः

## गूढार्थसंग्रहः

इति । साक्षात् श्रुत ज्ञानसाधनत्वानुपपत्तौ तत्फलसाधनत्वकल्पनाद्वरं परंपरयाऽपि तत्साधनत्वकल्पनमिति (पं.पा.वि) प्रकाशात्मयतिश्च प्राह । आदिशब्देन विविदिषा द्वारतया गृह्यते । कर्मणां विद्यार्थत्वपक्षे द्वारभूतविविदिषासिध्यनन्तरं उपरतावपि फलपर्यन्तानि विशिष्टगुरुलाभ निर्विघ्नश्रवणमननादिसाधनानि निवृत्तिप्रमुखानि सम्पाद्य विद्योत्पादकत्वनियमोऽस्ति । विविदिषार्थत्वपक्षे तु श्रवणादिप्रवृत्तिजननोत्कटेच्छासम्पादनमात्रेण कृतार्थतेति नावश्यं विद्योत्पादकत्वानियमः । (सि.ले.सं)

पूर्वजन्मानुष्ठितकर्मसंस्कृतोऽपि धर्मजिज्ञासां तदनुष्ठानञ्चाप्रतिपद्यमान एव ब्रह्मजिज्ञासायां प्रवर्तत इति न नियमेन तदपेक्षोऽथशब्दो युज्यते । तथा च श्रुतिस्मृती 'यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' 'अस्याश्रमाविकल्पमेके ब्रुवते' इति (पं.पा.) । 'प्राग्भवीयकर्मवशाद्यो विशुद्धसत्वः संसारासारतादर्शनेन निष्पन्नवैराग्यः कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादनोपयोगिना । प्राग्भवीय कर्मानुष्ठानादेव तत्सिद्धेः । इममेव पुरुषधौरेयमाधिकृत्य प्रवृत्ते श्रुतिः 'यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति । तदिदमुक्तम्, 'कर्मावबोधात्प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः' इति (भामती) पञ्चपाद वाचस्पत्युक्तार्थ एव **जन्मान्तरशतानुष्ठितेत्यादिना** प्रदर्शितः । 'मुख्यगौणादिभेदेन विद्यन्तेऽत्राधिकारिणः । तेषां प्रज्ञाऽनुसारेणाखण्डा वृत्तिरुदेष्यते ।' (स.वे.सि.सा.सं) 'श्रद्धाभक्तिपुरस्सरेण विहितैर्नैवेश्वरं कर्मणा सन्तोष्यार्जिततत्प्रसाद महिमा जन्मान्तरेष्वेव यः । नित्यानित्यविवेकतीव्रविरतिन्यासादिभिस्साधनैः युक्तस्सश्रवणे सतामभिमतः मुख्याधिकारी द्विजः ॥'(९९६)इति शङ्कराचार्योक्तमुख्याधिकार्यत्र विवक्षितः ॥

**मृदितकषायस्येत्यनेन** 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इति पञ्चपादिकोदाहृतं वचनं स्मारितम् ।

## श्रीभाष्यम्

**सदेवसोम्ये दमग्रआसीदेकमेवाद्वितीयम्** (छा--उ-प्र-६-ख-५वा-१-) **सत्यंज्ञानमनन्तंब्रह्म**(तैउ-आन-अनु-१-व्रा-९)**निष्कळंनिष्क्रियंशान्तं** (श्वे-उ-अ-६-वा-१९-)**अयमात्माब्रह्म** (बृ-उ-अ-६-व्रा-४-वा-५) **तत्त्व मसि**(छा-६-प्र-८-ख-७वा)**इत्यादिवाक्यजन्यज्ञाना दविद्या निवर्तते ।**

## श्रुतप्रकाशिका

**एवं** विविदिषोत्पत्तौ सत्यां ज्ञानोत्पत्तौ करणमाह । **सदेवेति** । सदेवेत्यादि कारणवाक्यम् । सत्यं ज्ञानमिति *शोधकवाक्यम् । सत्यज्ञानादिवाक्यफलित व्यावृत्तिविशदीकरणाय निष्कळमित्यादिवाक्यमुपात्तम् । **' अयमात्मा ब्रह्मेति '** ऐक्यवाक्यम् । उपक्रमादिषड्विधतात्पर्यलिङ्गोपेत मैक्यवाक्यं दर्शयति । **तत्त्वमसीति** । अस्मिन्वाक्ये ब्रह्मणाजीवविशेषस्यैक्यं श्रुतम् । श्रुतमैक्यं सर्वात्मनामितिज्ञापनार्थ मयमात्मा ब्रह्मेति वाक्यम् इत्यादिवाक्यं ज्ञानोत्पत्तौ करणं *नकर्मेत्यर्थः । वाक्यजन्यज्ञानमविद्यानिवर्तकंचेच्छ्रवणादिपूर्वकध्यानविधिवैयर्थ्यमित्याशङ्क्याह ।

## गूढार्थसंग्रहः

**' सदेव ' 'एकमेव '** इत्यवधारणद्वयेन **अद्वितीयं** इत्येनन च सन्मात्रातिरेकिसजातीयविजातीयास्सर्वे विशेषा निषिध्यन्ते ' (वे.सं ) इति ' एकं एव अद्वितीयं इति शब्दैस्सजातीयविजातीयस्वगतविशेषानिषेधः । ' सावधारणा चेयं एकमेवाद्वितीयमिति श्रुतिरित्युपक्रम्य, न च स्वकार्यापेक्षया इदं वस्त्वेकदेशविषयं सर्वविज्ञानं एकमेवाद्वितीयतावधारणं चेति न्याय्यम् । मृदादिष्वपि हि तत्सम्भवात् न तदपूर्ववदुपन्यसितव्यं भवति इति (२.३.६ सू.शं भा) परैः [शं] उपनिषद्भाष्योक्तार्थस्य दूषणेन अवधारणत्रयस्य विशेषणत्रयराहित्ये तात्पर्यं दर्शितम् । 'सत्यं, ज्ञानं ' इत्यखण्डपदार्थनिष्ठसामानाधिकरण्यवाक्यम् । उपनिषद्भाष्ये एकमेवेति स्वकार्यपतितमन्यन्नास्तीति । अद्वितीयमिति कुलालादिवदन्यनिमित्तकारणनिषेधकमिति (शं.उ.भा) अर्थावलम्बनेन परिणाम्युपादानमत्र विवक्षितमिति भ्रमव्युदासाय **निष्कलं** इत्यादिश्रुत्युपपादनम् । अत्र सृष्ट्यादिक्रियापरिणामादीनां निषेधेन पूर्वं निर्गुणश्रुतितात्पर्यनिष्कर्षणेन निर्विशेषनिर्धारणान्न परिणामविवक्षा सम्भवतीति एतेन बोधितम् । ' अयमात्मा ब्रह्म ' ' तत्वमसि ' महावाक्यद्वयम् । ' सदेव सोम्य , इत्यादौ निर्विशेषस्य निर्धारणेन अन्ते नवकृत्वः अभ्यस्ते ' तत्त्वमसि ' इति महावाक्ये जीवब्रह्माभेद एव विवक्षित इति सिद्ध्यति । पूर्वं विवरणवाचस्पतिमतद्वयसम्मतार्थप्रदर्शनेऽपि वाचस्पतिना मण्डनमिश्रवत् उपासनस्य तत्त्वविषयकत्वं ज्ञानत्वं, उपासनानन्तरकालिक मानसापरोक्षज्ञानस्यैव अविद्यानिवर्तकत्वंचाभ्युपगम्यते श्रवणविधिमूलकत्वं विचारस्य नाभ्युमगम्यत इति वाचस्पतिमतमुपेक्ष्य विवरणमतेनैव उत्तरग्रन्थः प्रवृत्त इति बोध्यम् ॥

वाक्यजन्यज्ञानमपरोक्षरूपमेव । एतदेव शक्तितात्पर्यविशिष्टशब्दावधारणेन श्रवणेन प्रथममेव जन्यते । मनननिदिध्यासने तु चित्तगतविक्षेपादिदोषप्रतिबन्धनिरासेन अपरोक्षफलप्रतिष्ठाहेतुतया श्रवणरूपाङ्गिनः प्रमाणस्य फलोपकार्यङ्गभूते । प्रथमं वाक्यजन्यज्ञानं परोक्षरूपं चित्तदर्पणसहकारिकारणमनननिदिध्यासनापेक्षया द्वितीयमपरोक्षज्ञानमिति अन्य मते प्रथमतः श्रवणस्य परोक्षज्ञानजनकत्वेन श्रवणजन्यपरोक्षज्ञानस्य निदिध्यासनोपकारितया श्रवणस्य निदिध्यासनाङ्गत्वेऽपि प्रथमतश्शब्दादेव अपरोक्षानुभवफलविज्ञानोत्पत्त्यङ्गीकारेऽपि भ्रान्तिविक्षेपसंस्कारखचितान्तःकरणदोषात् अर्थोऽपि परोक्षानुभवफलतया भ्रान्त्याऽवतिष्ठत इति चित्तविक्षेपादिदोषनिरासेन मनननिदिध्यासने श्रवणं उपकुरुत इति मनननिदि

### श्रीभाष्यम्

**वाक्यार्थज्ञानोपयोगीनिच श्रवणमनननिदिध्यासनानि। श्रवणंनाम वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्वदर्शिनआचार्यो * न्न्यायुक्तार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतःप्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम् । श्रवणादिभिर्निरस्तसमस्तभेद-**

### श्रुतप्रकाशिका

**वाक्यार्थेति** । चश्शङ्काव्यावर्तकः । तेषां स्वरूपमाह । **श्रवणं नामेति** । प्रतिपादकानि *निष्पादनक्षमाणि । वाक्यजन्यज्ञानादितिह्युक्तम् । एतद्विरोधि अत्मैकत्वविद्याविरोधि । श्रवणादीन्येवंरूपाणि स्युः ॥

**कथमेषां** वाक्यार्थज्ञानोपयोग इत्यत आह । **श्रवणादिभिरिति** । वाक्यार्थज्ञानोत्पत्तिविरोधिनिरसनमुपयोग-

### गूढार्थसंग्रहः

ध्यासनयोश्श्रवणंप्रति फलोपकार्यङ्गत्वमिति विवरणे सिद्धान्तितम् । प्रथमं वाक्यजन्यापरोक्षज्ञाना दविद्यानिवृत्तावपि अविद्यासंस्कारा दहङ्कारग्रन्थ्यादेरनुवृत्तिः । (पं.पा) अविद्यावत् संस्कारोऽपि चैतन्यदोषः । तत्वज्ञानानुसन्धानादेव च क्रमेण संस्कारनिवृत्तेः, कञ्चित्कालमवस्थायैव विदेहमुक्तिर्नविरुद्ध्यते । अविद्यालेशो वा तमेलिशवत्संस्कारशब्देनाभिधीयत इति ॥ (पञ्चपादिकाविवरणे)

गौणाधिकारिणो मनननिदिध्यासने अपेक्षिते इत्यभिप्रेत्याह **वाक्यार्थज्ञानेत्यादि** अत्र अन्यमते श्रवणस्य निदिध्यासनाङ्गतया त्रयाणां श्रवणहेतुकद्वितीयापरोक्षज्ञानरूपवाक्यार्थज्ञानोपयोगित्वम् । विवरणसिद्धान्ते तु श्रवणस्याङ्गिनः साक्षात्, इतरयोरङ्गयोरङ्गिद्वारा वाक्यार्थज्ञानोपयोगित्वमिति विभागोऽवसेयः ॥

**श्रवणं नामेत्यादि** 'प्रज्ञामान्द्यं भवेद्येषां तेषां न श्रुतिमात्रतः । स्यादखण्डाकारवृत्तिर्विना तु मननादिना ॥ (८१०) श्रवणान्मननात् ध्यानात् तात्पर्येण निरन्तरं (८०९) बुद्धेस्सूक्ष्मत्व मायाति ततो वस्तूपलब्धये । मन्दप्रज्ञावतां तस्मात्करणीयं पुनःपुनः (८१०)· श्रवणं मननं ध्यानं सम्यग्वस्तूपलब्धये । सर्ववेदान्तवाक्यानां षड्भिर्लिङ्गैस्सदद्वये ॥ परे ब्रह्मणि तात्पर्यनिश्चयं श्रवणं विदुः । श्रुतस्यैवाद्वितीयस्य वस्तुनः प्रत्यगात्मनः ॥ वेदान्तवाक्यानुगुणयुक्तिभिस्त्वनुचिन्तनम् । मननं तत्श्रुतार्थस्य साक्षात्करणकारणम् ॥ विजातीयशरीरादिप्रत्ययत्यागपूर्वकम् । सजातीयात्मवृत्तीनां प्रवाहकरणं यथा ॥ तैलधारावदच्छिन्नवृत्त्या तध्यानमिष्यते । तावत्कालं प्रयत्नेन कर्तव्यं श्रवणं सदा ॥ प्रमाणसंशयो यावत्स्वबुद्धे र्ननिवर्तते । प्रमेयसंशयो यावत्तावत्तु श्रुतियुक्तिभिः ॥ आत्मयाथार्थ्यनिश्चित्यै कर्तव्यं मननं मुहुः । विपरीतात्मधी र्यावन्न विनश्यति चेतसि ॥ तावन्निरन्तरं ध्यानं कर्तव्यं मोक्षमिच्छता ॥ यावन्न तर्केण निरासितोऽपि दृश्यप्रपञ्चस्त्वपरोक्षबोधात् । विलीयतेतावदमुष्यभिक्षोः ध्यानादि सम्यक्करणीयमेव ॥' इति (८१८ स.वे.सि.सा.सं.) शङ्कराचार्यैरुक्तम् । अत्र श्रवणं नाम आत्मावगतये वेदान्तवाक्यविचारः शारीरकश्रवणञ्च । मननं वस्तुनिश्चवाक्योपक्षितदुन्दुभ्यादिदृष्टान्त जन्मास्थितिलयवाचारम्भणत्वादियुक्तार्थवादानुसन्धानं वाक्यार्थाविरोध्यनुमानानुसन्धानञ्च । 'निदिध्यासनं' मननोपबृंहित वाक्यार्थविषये स्थिरीभावः । विधेयस्य उपासनापर्यायस्य निष्फलत्वात् । 'दर्शनं' अतो वाक्यार्थे स्थैर्यात् निरस्तसमस्त प्रपञ्चावभासाविज्ञानघनैकताऽनुभवः' (पं.पा.१.१.४) इति परैरुक्तम् । अत्र दर्शनमेव वाक्यार्थज्ञानं परेषां संमतम् । श्रवणेन प्रमाणासम्भावना मननेन प्रमेयासम्भावना निदिध्यासनेन विपरीतभावनाच निवर्तते इति च ॥

## श्रीभाष्यम्

**वासनस्य वाक्यार्थज्ञानमविद्यांनिवर्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेवपूर्ववृत्तं किमपिवक्तव्यम् । तच्च नित्यानित्यवस्तुविवेकः शमदमादिसाधनसम्पत् इहामुत्रफलभोगविरागः मुमुक्षुत्वंचेत्येतत्साधनचतुष्टयम् अनेनविना जिज्ञासाऽनुपपत्तेः। अर्थस्वभावादेवेदमेव पूर्ववृत्तमितिज्ञायते । एतदुक्तंभवति**

## श्रुतप्रकाशिका

इत्यर्थः । इति उक्तहेतोः ज्ञानकर्मसमुच्चयाङ्गाङ्गिभावानुपपत्तिहेतुभ्य इत्यर्थः । एवंरूपस्य बन्धनिवृत्तौ कर्मनिरपेक्षवाक्यार्थज्ञानोपक्रमभूतस्य नतु प्रासाङ्गिकार्थस्य । **अवश्यापेक्षितम्** नियमेनापेक्षितम् । अपेक्षितञ्च किमित्यतआह—**तच्चेति** । कुतएतदपेक्षितमित्यत्राह—**अनेनविनेति** । **जिज्ञासाऽनुपपत्तेः** विचारानुपपत्तेः । अनुपपत्तिमुपपादयति । **अर्थ स्वभावादिति** । कथमर्थस्वभावः । इत्थम् नित्यानित्यवस्तुविवेकादनित्यसांसारिकफलभोगविरागो नित्यपुरुषार्थेच्छा च स्यात् ततः श्रवणादौ प्रवृत्तिः मनोऽवधानहेतुतया तदुपयोगिनी शमादिसम्पत्तिरिति । **अर्थस्वभावादेव** । * पूर्वप्रक्तादेवेत्येवकाराभिप्रायः । ज्ञानस्यैवोपायत्वं कर्मणोऽनपेक्षितत्वंचार्थस्वभावाद्धिपूर्वमुक्तम् । * यद्वा—**अनेनविना जिज्ञासानुपपत्तेरिति** । * शमाद्यर्थस्वभावादित्यर्थः । शमादि पूर्ववृत्तमस्तु कर्मच पूर्ववृत्तं स्यादित्यतआह । **अर्थस्वभावादेवेति** । येनार्थस्वभावेन शमादेः पूर्ववृत्तत्वं तेनैवार्थस्वभावेन अन्यस्य पूर्ववृत्तत्वनिषेधइति * प्रथमस्यैवकारस्य भावः । पूर्ववृत्तान्तरस्य व्यावृत्त्यर्थं द्वितीय एवकारः ॥

**अत्रा**र्थस्वभावशब्देन शमाद्यर्थस्वभावउक्तः । ज्ञानार्थस्वभावः, कर्मार्थस्वभावश्चाभिप्रेतः । ज्ञानस्य कर्मनिरपेक्षोपायत्वस्वाभाव्यात् कर्मणोभेदावलम्बित्वेन विरुद्धस्वभावत्वाच शमादेर्निवृत्तिरूपत्वेन प्रवृत्तिरूपकर्मविरोधिस्वभावत्वाच्च साधनचतुष्टयमेव पूर्ववृत्तं नत्वन्यदित्युक्तंभवति । **इदमेव पूर्ववृत्तमिति ज्ञायतइति** । इदमेवशब्दावयोगान्ययोगव्यवच्छेदपरौ * इदंशब्दोहि साधनचतुष्टयपूर्ववृत्तत्वपरः एवकारः कर्मव्युदासपरः शमाद्यर्थस्वभावात्तदयोगव्यवच्छेदः * तस्मात् ज्ञानकर्मणोरर्थस्वभावाच्चान्ययोगव्यवच्छेदः । सकलविशेषप्रत्यनीकं ब्रह्मचेत् कथं संसारप्रवृत्तिः? कथं वाक्यार्थज्ञानादेवाविद्यानिवृत्तिः । अन्तःकरणस्य केनवा मालिन्यम् ? कथंकर्मणा नैर्मल्यम्? तेचायोगान्ययोगव्यवच्छेद हेतुभूता अर्थस्वभावाः कथमितिशङ्कायामुक्तार्थं सङ्कलय्यदर्शयन् शङ्काश्चपरिहरति । **एतदुक्तमिति** ॥

## गूढार्थसङ्ग्रहः

**एवंरूपस्य श्रवणस्येति** अनेन श्रवणविधिमूलको विचार इति सूचितम् ॥

**अनेन विनेति** तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये इति [शं] भाष्योक्तार्थः अत्राभिहितः । नित्यानित्यवस्तुविवेकः, सत्यासत्यप्रसंख्यानं (भा) धीसन्ततिः [ऋ.प्र] उपरमतितिक्षा समाधानानि श्रुत्युक्तानि शमदमादीत्यत्र आदिपदार्थः । [पं.पा] ' तद्यथेह कर्मचितो लोकः क्षीयते ' इति नित्यानित्य वस्तुविवेकः दर्शितः । ' परीक्ष्य लोकान्कर्मचितान् ' [मु] ' आत्मनस्तु कामाय सर्वं प्रियं , [बृ] इति च ज्ञानश्रवणविधि प्रकरणे इहामुत्र फलभोगविरागो दर्शितः । ' शान्तो दान्त ' [बृ] इति दर्शनविधिप्रकरणे शमादयो दर्शिताः । ' तद्विजिज्ञासस्व ' [तै]इति विचारविधिप्रकरणे ' वरुणं पितरमुपससार ' इति गुरूपसदनं दर्शितम् । सवत्र च फलश्रुतयः कामनोत्पादनद्वारेण मुमुक्षोरधिकारप्रदर्शनार्थाः । अन्यथा साधनानुष्ठानादेव फलसिद्धौ सङ्कीर्तनवैयर्थ्यात् । ज्ञानस्याविधे-

## श्रीभाष्यम्

* **ब्रह्मस्वरूपाच्छादिकाऽविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम् बन्धश्चापारमार्थिकः सच समूलोऽपारमार्थिकत्वादेव ज्ञानेनैवनिवर्त्यते । निवर्तकंच ज्ञानं तत्वमस्यादिवाक्यजन्यम् तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्येवा कर्मणो नोपयोगः विविदिषायामेवतु कर्मणामुपयोगः । सच पापमूलरजस्तमोनिवर्हणद्वारेण सत्वविवृध्या भवतीति इममुपयोगमभिप्रेत्य ब्राह्मणाविविदिषन्तीत्युक्तमिति । अतः कर्मज्ञानस्य**

## श्रुतप्रकाशिका

**ब्रह्मस्वरूपाच्छादिका**शब्देन सकलविशेषप्रत्यनीकत्वेऽपि स्वरूपतिरोधानाद्भेददर्शनं सम्भवतीत्युक्तम् । **भेदः** ज्ञातृज्ञेयादिः । अपारमार्थिकं भेददर्शनमेव बन्धमूलम् न कर्मेत्यर्थः । कर्मापि भ्रान्तिमूलकमिति भावः । * यद्वा— अपारमार्थिकं भेददर्शनमेव न सत्यभूतं किंचिदपीति भावः तथासति हि कर्मापेक्षा । **बन्धः** जन्मजरामरणादिः । **बन्धश्चापारमार्थिकइति** । अविद्यामूलापारमार्थिक भेददर्शनकार्यत्वादिति भावः । ततः किं कर्मनैरपेक्ष्यस्य इत्यत्राह । **सचेति** । **अपारमार्थिकत्वादेवेति** । पूर्वोक्तादेवापारमार्थ्यात्कर्मनैरपेक्ष्यसिद्धिरित्येवकाराभिप्रायः । **ज्ञानेनैव** । न कर्मणेत्यर्थः । नह्यपरमार्थसर्पनिवृत्तेः रज्जुज्ञानेनविना वैनतेयोपासनादिकर्मापेक्षा । एवं समसमुच्चयः प्रत्युक्तः । ज्ञानं प्रत्यपि कर्मणो न साधनत्वमित्याह । **निवर्तकंचेति** । * निवर्तकबोधः प्रमाणजन्य इति यावत् । प्रमाणजन्यशुक्तिज्ञानं हि रजतनिवर्तकम् । अत्र शमादेरितिकर्तव्यतात्वेन कर्मणइतिकर्तव्यतात्वमपि विरोधान्नेत्यभिप्रेतम् ॥

ततः किमित्यत्राह । **तस्येति** । **तस्य** कर्मनिरपेक्षस्य । **एतस्य** । अद्वैतविषयस्य । तदेतच्छब्दयोः प्रस्तुतवाचित्वाविशेषेऽपिदूरस्थान्तिकस्थविशेषणविशिष्टपरामर्शित्वं ह्युचितम् । अद्वैतविषयत्वे हेतुमाह । **वाक्यजन्यस्येति** । तत्त्वमस्यादिवाक्यजन्यत्वादद्वैतविषयत्वमित्यर्थः । **कार्ये** । मोक्षे, तर्हि कुत्रोपयोग इत्यत्राह । **विविदिषायामिति** । तु शब्देन करणेतिकर्तव्यतात्व व्युदासः । उपयोगः कथमित्यत्राह । **सचेति** । **पापमूले**त्यादिना अन्तःकरणनैर्मल्यद्वारेणेति पूर्वोक्तं विवृतं भवति । रजस्तमोनिवर्हणादिकं नास्मिन्वाक्ये श्रुतमित्यत्राह । **इतीममिति** । **अभिप्रेत्य** शब्देन शङ्कापरिहारः **इतिः** हेतौ । वस्तुविरोधात् इतिकर्तव्यतात्व करणत्वाद्यनुपपत्तिहेतुभ्य इत्यर्थः । **इमम्-उपयोगम्** । रजस्तमोनिवर्हणसत्त्वविवर्धनरूपं * परम्परयोपयोगमित्यर्थः । **विविदिषन्तीत्युक्तमिति** । एतदुक्तंभवतीत्यन्वयः । प्रकृतमुपसंहरति । **अतः कर्मज्ञानस्येति** । **अतः** हानार्थं, मुपादानार्थंच, कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः ॥

## गूढार्थसङ्ग्रहः

यत्वात्तद्विधयः तत्साधनविधानपराः । तत्र सर्वशाखाप्रत्ययन्यायेन विधीनामेकत्वोपपत्तेः । सचैको विधिरधिकारमीक्षमाणः प्रकरणसामर्थ्यात्संकीर्तनवैफल्यपरिहाराच्च वर्णितं धर्मकलाप मीधकारनिमित्तत्वेन स्वीकरोति । 'विजिज्ञासितव्यः' 'विजिज्ञासस्व' इति अन्तर्णीतः विचारो विधीयते । इष्यमाणज्ञानस्य इच्छायाश्च विधेयत्वायोगात् । श्रोतव्य इति च स्वयमेव विचरोविहितः । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति ज्ञानस्य साध्यताऽवगमाद्गुरूपसदनविधानाच्च तत्साधनश्रवणादिविधिः कल्प्यते । 'आत्मन्येवात्मानं पश्येत्' इति ज्ञानविधानायोगात्तत्साधने विधिरुपादीयतइतिसर्वत्र मनननिदिध्यासनाभ्यांसहश्रवणंनाम अङ्गिं विधीयतइतिसिद्धम् ॥ (पं-पा.वि)

श्रीभाष्यम्

**अनुपयोगात् उक्तमेव साधनचतुष्टयं पूर्ववृत्तमितिवक्तव्यम् ॥**

इति लघुपूर्वपक्षः



अथ लघुसिद्धान्तः

**अत्रोच्यते—यदुक्तमविद्यानिवृत्तिरेवमोक्षः साच ब्रह्मविज्ञानादेवभवतीति तदभ्युपगम्यते**

श्रुतप्रकाशिका

अत्र व्याख्यातृभिरुक्तौसङ्ग्रह श्लोकौ—

**विरोधादप्रमाणत्वा च्चित्तशुध्युपयोजनात् । ज्ञानमात्रस्य हेतुत्वश्रुतेस्सामर्थ्यतोऽपिच ॥**

**शमाद्यङ्गकताऽऽम्नाना न्न धीकर्मसमुच्चयः । श्रवणादिक्रमोन्निद्रवाक्यजाधीर्विमोचिका ॥** इति

**विरोधादिति** । कर्मणामनित्यफलतया, भेदवासनाजनकतयाच विरोधोविवक्षितः । **सामर्थ्यत** इति ज्ञानस्य मिथ्यार्थनिवर्तकत्वे कर्मनिरपेक्षत्वरूपं वस्तुसामर्थ्यं विवक्षितम् ॥

इति लघुपूर्वपक्षः



अथ लघुसिद्धान्तः

**राद्धान्त** मारभते । **अत्रोच्यतइति** । अस्मिन्पूर्वपक्षे सिद्धान्तउच्यत इत्यर्थः । * पूर्वपक्षोक्तेष्वर्थेष्वविरुद्धांशमभ्युपगमेनप्रतिवदति । **यदुक्तमिति** । **अविद्यानिवृत्तिः** * प्रतिबन्धनिवृत्तिः साध्यसाधनद्वित्वनिरासोऽभिमत इत्यर्थः । यःप्रतिबन्धनिरासः कर्मसाध्यउक्तः । तस्य **तमेव विदित्वाऽतिमृत्युमेति** इत्यादिषु ज्ञानसाध्यत्वमुक्तम्। ब्रह्मप्राप्तिस्तु स्वतस्सिद्धा एवकाराभ्यां साध्यान्तरं साधनान्तरं च व्यावर्त्यते । यद्यप्यनिष्टनिवृत्तिरिष्टप्राप्तिश्च द्वयमस्ति। तथापीष्टतमब्रह्मप्राप्तेस्स्वतस्सिद्धायाः पृथगुपायसाध्यत्वाभावात् प्रतिबन्धनिवृत्तिरेवसाध्या । स्वतएव सर्वसाक्षात्कारक्षमं ज्ञानं प्रतिबन्धके निवृत्ते सति ब्रह्मस्वरूपरूपगुणविभवादिकं सर्वं साक्षात्कारोति । यथा सेतौ भग्ने जलं स्वयमेवगच्छति न केनचिन्नेतव्यम् तद्वत् । यथा अश्मानयने * मार्गसमीकरण तत्प्रापणे उभेअपि पृथग्यत्नसाध्ये न तथेत्यर्थः । * यद्वा भावान्तरस्यैवाभावत्वादविद्यानिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः ॥

गूढार्थसंग्रहः

**अत्रोच्यत इत्यादि** पूर्वं परिणामवादिना 'बाढं' इत्यादि शङ्कायां 'सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः, अविद्यानिवृत्तिरेव हि मोक्षः' इत्यादिना समाधानं यदुक्तं, तत्र एवकारद्वयेन साध्यद्वित्वसाधनद्वित्वयोः कर्मणां मोक्षे साक्षादुपयोगस्य च परिणामवादिद्वयसंमतस्य व्यवच्छेदः य उक्तः सः परिणामवादिनामस्माकमपि संमतः । अविद्याशब्द ब्रह्मशब्दयोः एकार्थत्वस्य उभयासंमतत्वेऽपि अविद्यानिवृत्तिशब्दवाच्यः एक एव मोक्षः ब्रह्मविज्ञानपदबोध्यमेकमेव तत्साधनमित्यर्थः सिद्धान्तिनोऽपि सम्मत इत्यभिप्रेत्य **तदभ्युपगम्यते** इत्युक्तम् ॥

## श्रीभाष्यम्

**अविद्यानिवृत्तये वेदन्तवाक्यैर्विधित्सितंज्ञानं किंरूपमितिविवेचनीयं किंवाक्याद्वाक्यार्थज्ञानमात्रं उततन्मूलमुपासनात्मकं ज्ञानमिति । नतावद्वाक्यजन्यंज्ञानं तस्य विधानमन्तरेणापि वाक्यादेवसिद्धेः**

## श्रुतप्रकाशिका

**साध्यसाधनद्वित्वनिरासोऽभ्युपेतश्चेत्** विप्रतिपत्तिविषयःक इत्यत्राह । **अविद्येति** । साधनस्वरूपविशेषे विप्रीतपात्तेरित्यर्थः । **किंरूपम्** । किं कर्माङ्गकत्वानर्हं भवदुक्तं ज्ञानम्? उत कर्माङ्गकत्वार्हमस्मदुक्तं ज्ञानमित्यर्थः किंरूपमित्यभिप्रेतं विवृणोति । **किमिति** । किं वाक्यादित्यादिना * परमतं स्वमतंच वदति नतु परमतविकल्पः । प्रथमं परपक्षप्रतिक्षेपः क्रियते स्वपक्षस्थापनं तु पश्चादित्यभिप्रेत्याह । **नतावदिति** । नतु दूष्यशिरसोरन्यतरदूषणं क्रियते । कुत इत्यत्राह । **तस्येति विधानमन्तरेणापीति** । प्रमाणज्ञानं वस्तुतन्त्रं नपुरुषतन्त्रं कर्तुमकर्तुमन्यथाकर्तुंचाशक्यत्वात् । अतः पुरुषतन्त्रत्वाभावा न्नतद्विधेयमिति तैरेवोक्तमिति भावः । **वाक्यादेव** । ब्रह्मस्वरूपपरवाक्यादेव । व्युत्पत्तिमन्तं पुरुषंप्रति न्यायानुगृहीतस्य वाक्यस्यार्थबोधकत्वं स्वतस्सिद्धं । नतु विध्यधीनम् । * तच्छ्रवणे पुरुषस्य प्रवृत्तिश्च रागादेवेत्युपपादितम् ॥

**यद्यपि** न रागात् । तथाऽप्यध्ययनविधिरेव अधीतकृत्स्नवेदवाक्यविचारे प्रवर्तक इति '**प्रज्ञांकुर्वीत**' इत्यादिविधिर्निरर्थक एव । * नच प्रमाणज्ञानस्य श्रेयस्साधनत्व मलौकिकमिति तादृप्येण तस्य विधेयत्वम् । शुक्तिरूप्यादिभ्रमनिवर्तकज्ञानस्येव बन्धनिवर्तकज्ञानस्य दृष्टार्थत्वाभ्युपगमात् । अतो विधिवैयर्थ्यम् । तेनासकृदावृत्तसाक्षात्कारभक्तिरूपत्व यावज्जीवानुष्ठेयत्वपराणाम् * '**यावन्नविमोक्ष्ये अथ सम्मत्स्ये**' इत्यादीनां मुक्तेश्शरीरपातानन्तरभावित्वपराणां नाडीविशेषनिष्क्रमणवादिनीनां मार्गपराणांचानेकश्रुतीनां * नैरर्थक्यं प्रसज्येतेति । * एवमनेकश्रुतिविरोधस्य प्रदर्शनार्थं तस्य विधानमन्तरेणापीत्युक्तम् ॥

## गूढार्थसंग्रहः

निर्विशेषचिन्मात्रब्रह्मज्ञानं सविशेषब्रह्मोपासनं चेति पक्षद्वयवैलक्षण्यसत्वेन वृत्तिकृत्समतसविशेषोपासनस्यैव उपनिषत्तात्पर्यविषयत्वव्यवस्थापनाय उपक्रमते **अविद्यानिवृत्तये** इत्यादिना । **विधित्सितमिति** विधिप्रत्ययसत्वेन विधेयत्वेनबोधतात्पर्यं वेदान्तवाक्येषु आवश्यकमिति सूचितम् । 'अविधिप्रधानैर्हि वस्तुपर्यवसायिभि र्ब्रह्मवाक्यैः ब्रह्मविज्ञानं जन्यते (शं.भा.३.३.१.) इति वदन्तोऽपि परे 'अस्मोद्वेदान्तविहितादात्मज्ञानात् स्वतन्त्रात् पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते' (३.४.१.शं'भा') इत्यत्र विहितशब्दमेव प्रायुञ्जत । **वाक्याद्वाक्यार्थज्ञानमात्रमिति** वेदान्तवाक्यस्य अज्ञातार्थज्ञापकत्वेन प्रामाण्यात् वाक्यजन्यज्ञानं प्रमात्मकं निर्विशेषविषयकमेव सविशेषविषयक स्मृतिरूपोपासनस्याप्रमात्वात् ततोऽविद्यानिवृत्ति र्नघटत इति परेषामाशयः ॥

समन्वयाधिकरणशङ्करभाष्यानुसारेणवाचस्पतिना (भामती) श्रोतव्य इत्यदौ सर्वत्र ज्ञानमेवविवक्षितमिति क्वापि न विधिरिति सिद्धान्तकरणेऽपि सहकार्यन्तरविध्यधिकरणशंकरभाष्यानुसारेण विधियोग्यार्थएव 'श्रोतव्यः' इत्यदौ विवक्षितइति व्यवस्थापयतां विवरणकृतां 'मामेवविजानीहि समेआत्मेतिविद्यात्' (कौ-ब्रा) इत्यादौ 'तं मामायुरमृतमित्युपास्व' इति उपासनाविधिसम्भवेन विधिप्रत्ययवैफल्याङ्गीकारोऽनुचित इति आशयेन **विधानमन्तरेणापि** इत्युक्तम् ॥

### श्रीभाष्यम्

**तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च ॥**

**नचवाच्यं भेदवासनाया मनिरस्तायां वाक्य मविद्यानिवर्तकं ज्ञानं न जनयति–जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्ति र्न दोषाय, चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत् अनिवृत्तमपि**

### श्रुतप्रकाशिका

**अथ** प्रत्यक्षविरोधं दर्शयति । **तावन्मात्रेणेति** । तावदंशस्ततोऽधिकेऽप्यस्तीति तद्व्यावृत्त्यर्थं तावन्मात्रेणेत्युक्तम् । बहुशास्त्रविरोधप्रत्यक्षविरोधरूपमिदं दूषणद्वयं वदता भगवताचाऽपरत्मनेनापि वाक्यार्थज्ञानमात्रस्य मोक्षसाधनत्वं निरस्तम् । **'यथा बुद्धेक्षेमप्रापणं** तच्छास्त्रै**र्विप्रतिषिद्धम् । बुद्धेचेत् क्षेमप्रापणमिहैवनदुःखमुपलभेत एतेन परं व्याख्यातम्'** इति । शास्त्रैरिति बहुवचनेन पूर्वोदाहृत अनेकश्रुतिविरोधोऽभिप्रेतः । *विप्रतिषेधोऽधिकबलेन प्रतिषेधः, नतु प्रकरणसमवत् तुल्यबलेन प्रतिरोधः बहुशास्त्रविरोधः प्रबलतरः भूयसांस्याद्बलीयस्त्वमिति न्यायादित्यभिप्रायेण विप्रतिषिद्धमित्युक्तम् ॥

यत्तु परैरस्य दूषणस्य प्रतिवचनं द्वेधाकृतम् । तदनुभाष्यदूषयति । **नच वाच्यमिति** । वाक्यं ज्ञानोत्पत्तिमिदानीं न जनयतीति कश्चिन्निर्वाहः तमाह । **भेदेति** । इदानीं ज्ञानोत्पत्तिर्दृश्यत इति चेत्तत्परिहारायाह । **अविद्यानिवर्तकमिति** । पश्चादपि वाक्यादेवाविद्यानिवर्तक विशदज्ञानोत्पत्तिश्चेदिदानीमेव जनयत्वित्यत्राह । **भेदवासनायामिति** । प्रतिबन्धकाभावश्च सामग्र्यन्तर्भूतः । अतस्सामग्रीवैकल्याज्ज्ञानमनुत्पन्नम्, ध्यानादिविषयः प्रतिबन्ध निरासौपयिका इति भावः ॥

**अनेन** शास्त्रप्रत्यक्षविरोधौ परिहृतौ भवतः । सनकादीनां ज्ञानाधिकत्वेन श्रुतिस्मृतिप्रसिद्धानामपि ज्ञानानुदयोऽनुपपन्न इति शंङ्कायां निर्वाहान्तरमाह । **जातेपीऽति** । *अविद्याया एकत्वात्, प्रपञ्चप्रतिभासस्यैकस्य ब्रह्मणस्स्वप्नरूपत्वाच्च । **सर्वस्य** इत्युक्तम् । **नदोषाय** । अनिवर्तकत्वं दोषाय न भवति । ज्ञानोदयेऽपि भ्रमानिवृत्तौ दृष्टान्तं दर्शयति । **चन्द्रैकत्वइति** । अनिवृत्तं चेद्भेददर्शनं बन्धकं स्यादित्यत आह । **अनिवृत्तमपीति** ।

### गूढार्थसंग्रहः

विधिच्छायवचनानां स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थत्वस्य (१.१.४'शं.भा.) 'श्रोतव्य' इत्यादावनङ्गीकारेऽपि ज्ञानविधिस्थलेऽभ्युपगमेन इष्टापत्तिशङ्कायामाह **तावन्मात्रेणेति** प्रथमतः वाक्यात्परोक्षज्ञानं जायत इत्यन्यमते वाक्यजन्यज्ञानानन्तरमविद्यानिवृत्त्यनभ्युपगमेन विवरणकारैः वाक्यात्प्रथमोत्पन्नापरोक्षज्ञानात् अविद्या निवर्तत इत्युक्तिः (पं.पा.वि) अद्वैतिनां सर्वेषां न सम्मतेत्याभिप्रायेण 'तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेः इत्युक्तिः'। **न च वाच्यमिति** अन्यमताभिप्रायेण । **जातेऽपीति** पंचपादिकादिमताभिप्रायेण । अकर्त्रात्मबोधोऽपिहि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति । बाधितमपितु मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कंचित्कालमनुवर्तत एव इति ( ४.१.१५.सू.शं.भा) बाधितस्यापि मिथ्याज्ञानस्य द्विचन्द्रादिज्ञानवदनुवृत्त्यभ्युपगमादिति हस्तामलकीयभाष्येऽपि शङ्कराचार्याः । तत्र विशेषमपीत्थंकथयन्ति । 'अविद्यातिमिरतिरोहिताया मुक्तेः तिमिरमात्रं निराक्रियते । तच्च प्रथमज्ञानेनैव निराकृतम् । तथाऽपि अविद्याकार्यस्य देहस्याविनाशात् पुनःपुनः महान्धकारवत् उत्सारितमपि तिरस्करोति । तस्य तिरस्कारप्रतिभासस्य देहविच्छेदाद्विच्छेदे[1] भवति।

## श्रीभाष्यम्

**छिन्नमूलत्वेन न बन्धाय भवतीति । सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः । सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिः बाधकज्ञानोत्पत्तिदर्शनात् ।**

## श्रुतप्रकाशिका

**छिन्नमूलत्वेन** । * छिन्नाविद्याख्यमूलत्वेन अकार्यकरम् । यथा दग्धःपटः पूर्वसन्निवेशेन प्रतीयमानोऽप्याच्छादनादिकार्यायोग्यः क्रमेण विनश्येत् । यथा कुलालभ्रमितं चक्रं भ्रामयितृव्यापारोपरमेऽपि पूर्ववेगवशात्कञ्चित्कालं स्वयमेव भ्रमक्रमेणोपरमते तद्वदिति भावः । अत्र इतिकरणस्य नचवाच्यमित्यनेनान्वयः ॥

**प्रथमं** ज्ञानानुत्पत्तिं दूषयति । **सत्यामिति** । न्यायानुगृहीतवाक्यमेव सामग्री प्रतिबन्धिका भेदवासनाऽस्तीतिचेत्त्राह । **सत्यामपीति** । निवर्त्या वासना निवर्तकोत्पत्तिप्रतिबन्धिका न भवतीत्यर्थः । आदिशब्दादिन्द्रियं गृह्यते । यथा चिरतरतिमिरवासितगुहायां प्रदीपो ननोत्पद्यते, तस्मिन् दीपिते सद्यएव तमोविनश्येत् । * यथा क्वचिद्देशे सर्प इति वाक्याच्चिरं भ्रमितोऽपि पुरुषो न तत्र सर्प इत्याप्तोपदेशाज्जानाति यथा च वनं नदग्धमिति श्रुत्वा चिरं भ्रान्तस्य पश्चात्तत्र गत्वाऽङ्गारादिलिङ्गदर्शनेन दग्धमितिज्ञानं जायते । यथा चिरं सर्पत्वेन वासिते वस्तुनि समीपगमनानन्तरमिन्द्रियव्यापारेण रज्जुज्ञानं सहसैव जायते तद्वदित्यभिप्रायेणाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनादित्युक्तम् । वेदान्तवाक्यंहि दार्ष्टान्तिकम् । अत आप्तोपदेशस्य प्रथमोपादानम् ॥

## गूढार्थसंग्रहः

एवं च सति प्राचीनमेव महान्धकारोत्सारणं ज्ञानमात्रनिबन्धनमवतिष्ठते । यथा सूर्योदयेन महातिमिरोत्सारणे कृतेऽपि छत्रादिकृतस्य तिमिराभासस्य छत्रादिविगमे विगमः ततश्च प्राचीनमेव महातिमिरोत्सारणं सूर्योदयमात्रनिबन्धनं अवतिष्ठते ' इति । तस्मान्न ज्ञानान्तरान्मुक्तिः । अपितु पूर्वोत्पन्नज्ञानादेव मुक्तिरिति सिद्धम् इति । **छिन्नमूलत्वेनेति** ' आत्मोपाधेरविद्यायाः अस्ति शक्तिद्वयं महत् । विक्षेप आवृतिश्चेति आभ्यां संसार आत्मनः ॥ (स.वे.सि सा.सं.४८८.) आवृतिस्तमसश्शक्तिः तद्ध्यावरणकारणम् । मूलाविद्येति सा प्रोक्ता यया संमोहितं जगत् ॥ (४८९) इत्यत्र आवरणशक्तिविशिष्टस्य मूलत्वकथनेन मूलाविद्याच्छेद एव छिन्नमूलत्वेनेत्यत्र विवक्षितः । ' विक्षेपनाम्नी रजसस्तु शक्तिः प्रवृत्तिहेतुः पुरुषस्य नित्यं । स्थूलादिलिङ्गान्तमशेषमेतत् यया सदात्मन्यसदेव सूयते ॥ ( ४९१) इत्युक्तविक्षेपशक्तिकार्याणां नाशासम्भवात् । अविद्यासंस्कारः अविद्यालेशरूपः तत्स्वरूपं आवरणविक्षेपशक्तिमत्याः मूलाविद्यायाः प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्ति प्रयोजकः विक्षेपशक्त्यंश इति केचित् । (सि.ले.सं.४.पारिच्छेदः) इति निरूपणं अत एव सङ्गच्छते । उपादानभूताविद्यारूपमूलस्य छेदो वा अत्र विवक्षितः । संस्कारेणैव देहादिस्थितेः परैरभिधानात् । संस्कारः अविद्यालेश इति विवरणमते तु आकारस्य लेशशब्दार्थत्वं तस्य च शक्तिरूप एव पर्यवसानं अभिधाय अनेकशक्तिमदविद्यायाः प्रपञ्चे पारमार्थिकत्वादिभ्रमहेतुशक्तेः अर्थक्रियासमर्थत्वसंपादनशक्तेश्च प्रारब्धकर्मसमकालीनतत्वसाक्षात्कारेण निवृत्तावपि अपरोक्षप्रतिभासयोग्यार्थाभासजनिकायाश्शक्तेरनुवृत्तेः तद्वती अविद्या तिष्ठत्येवेति (अ.सि.) इति मधुसूदनोक्त्या विक्षेपशक्तिमदविद्यास्थितिरेव परेषां सम्मतेति प्रथमं व्याख्यानमेव युक्तम् ॥

**सत्यां सामग्र्यामित्यादि** अन्यमताभिप्रायेण एतेन प्रथमतः निर्विकल्पकं संशयात्मकं ज्ञानमुदेति अप्रामाण्यशङ्काकलङ्कितं वा । निदिध्यासनानन्तरन्तु निश्चयात्मकं अप्रामाण्यशङ्कानास्कन्दितमविद्यानिवर्तकं ज्ञानमुत्पद्यत इत्यादिपक्षा अपि

## श्रीभाष्यम्

**सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञान मनुवर्तत इति भवता नशक्यते वक्तुम् । भेदज्ञानसामग्रयाअपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् । ज्ञानोत्पत्तावपि मिथयरूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वसनाया निवृत्तिः। वासनाकार्यं भेदज्ञानं छिन्नमूल मथचानुवर्तत इति बालिशभाषितम् । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञान-**

## श्रुतप्रकाशिका

अथ द्वितीयनिर्वाहमनूद्य निरस्यति । **सत्यपीति । मात्रया** अल्पमित्यर्थः । **भवता** । ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्ववादिनेति भावः । **भवता** इति सूचितमर्थं विवृणोति । **भेदेति** । वासनाया अपि मिथ्यत्वाविशेषात्तस्याअपि ज्ञानेन निवृत्तत्व मवश्याश्रयणीयमितिभावः । किं ज्ञानोत्पत्तावपि वासना न निवृत्तेत्युच्यते उत तन्निवृत्तावपि निर्हेतुकं भेददर्शनं भवतीति शङ्काद्वयं हृदिनिधाय प्रथमं परिहरति । **ज्ञानोत्पत्तावपीति** । ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वाद्वासनाऽपि ज्ञानैकनिवर्त्या नोचे * न्निवर्तकान्तरमपि ज्ञानत्वाविशेषान्ननिवर्तयेदित्यर्थः । स्वयमेव वासना नश्यतीति चेत् तदयुक्तम् । स्वयमेवेति बाधकज्ञाननैरपेक्ष्यस्य विवक्षितत्वे वासनाया नश्यन्त्या अपि सत्यत्वप्रसङ्गात् । स्वयमेव नश्यतीति * स्वेनैव स्वविनाशकरणं विवक्षितं चेत् * व्याघातः । * फलोपान्त्यकारण नाशादिनाश्यत्वेऽपि सत्यत्व प्रसङ्गोऽवर्जनीयएव । कर्मशब्दादिषु तथैव वैशेषिकैर्वर्णितत्वात्तेषां च पारमार्थ्यदर्शनात् ॥

**किंच** स्वप्नार्थोत्पत्त्यादिवत् वासनायामिथ्यात्वे तदुत्पत्तिस्थिती अपि मिथ्याभूते इति तद्विनाशोऽपि मिथ्याभूतः । अतो * विनाशविषयभ्रमः पुनस्तिष्ठतीति निश्शेषभ्रमनिवृत्तिर्नस्यात् । अथ द्वितीयां शङ्कां परिहरति । **वासनेति । छिन्नमूलं** * छिन्नवासनाख्यमूलं । **बालिशभाषितमिति** । अकारणकार्योत्पत्तिप्रसङ्ग इत्यर्थः । यद्यकारणं भेददर्शनं भवति । तर्हि मुक्तिरपि ज्ञाननिरपेक्षा स्यात् । श्रवणादिभिर्विना वाक्यार्थज्ञानं स्यात् । अविद्यया विना जगद्भ्रमश्च स्यात् । अधिष्ठानेन विना अविद्याऽपि कार्यकरी स्यादिति भावः । ननु तर्हि कथं सत्यपिबाधकज्ञाने चन्द्राद्वित्वानिवृत्तिरित्यत्राह । **द्विचन्द्रेति** । तुशब्दो विवक्षितार्थवैषम्यपरः । **बाधकसन्निधावपि** । तज्ज्ञानसन्निधावपि । तिमिरादिदोषस्य पारमार्थ्याज्ज्ञानाबाध्यत्वादितिभावः । तत्पारमार्थ्यं च * व्यावहारिकतयाऽपि परेणाभ्युपगन्तव्यम् । अन्यथा आप्तोपदेशानन्तरं रज्जुसर्पव्यवहारोच्छेदवत् दोषो मिथ्येति वचनानन्तरं दोषनिवृत्त्या चन्द्राद्वित्वादिव्यवहारोच्छेदप्रसङ्गात् । अतो दोषस्य विद्यमानत्वाद्भेदभ्रमस्य समूलत्वम् ॥

**अनेन** बाधकसन्निधौ बाध्यसद्भावोऽकारणकार्योत्पत्तिश्चेति दूषणद्वयं दृष्टान्ते परिहृतं भवति । परमते तु

## गूढार्थसंग्रहः

परिशीलिताः । अन्यत्र शब्दात् नियमेन एवमुत्पत्तेः दार्शनिकासम्मतत्वात् । 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतिस्त्वेतत्पक्षमेव साधयतीति वक्तुं नशक्यते । एवमर्थकल्पनामन्तराऽपि स्वरसतः श्रुत्यर्थस्य उत्तरत्र वक्ष्यमाणत्वात् । '**सत्यपि वाक्यार्थज्ञानेति** । विवरणसिद्धान्ताभिप्रायेण । **कदाचिदपीति** । प्रथमत एव वाक्यजन्यापरोक्षज्ञानाङ्गीकारमते प्रथमतः अनिवृत्ता वासना निदिध्यासनानन्तरमपि नैव निवर्तत इत्येव वक्तव्यम् । निदिध्यासनानन्तरं निवर्तकतावच्छेदकपूर्वासिद्धरूपसम्पादनस्य विरहात् । अधिष्ठानापारोक्ष्यस्यैव अध्यस्तनिवर्तकतावच्छेदकत्वात् ॥

### श्रीभाष्यम्

**बाध्यत्वाभावेनाविनष्टत्वा न्मिथ्याज्ञानानु(नि)वृत्ति रविरुद्धा । प्रबलप्रमाण बाधितत्वेन भयादिकार्यंतु निवर्तते ।**

### श्रुतप्रकाशिका

दूषणद्वयं तिष्ठत्येव । तर्ह्याप्तोपदेशादिवैयर्थ्यमित्यत्राह । **प्रबलेति** । * रज्जुसर्पभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिः फलत्वेनोक्ता । आदिशब्दात्पलायनादि गृह्यते । द्विचन्द्रज्ञाने च स्वस्यादुष्टकरणत्वधीनिवृत्तिरौषधादिप्रवृत्तिश्च फलम् । ऐन्द्रजालिकभ्रमादिषु भ्रमहेतोः प्राबल्याद्वस्तुतोभ्रमत्वेऽप्यसत्यविषयत्वानिश्चयप्रतिबन्धस्यादिति तव्द्यावृत्त्यर्थः प्रबलप्रमाणशब्दः । **निवर्ततइति** । प्रतिभासे विद्यमानेऽपि विषयसत्यत्वाभावनिश्चयद्वारा भयादिनिवृत्तिहेतुराप्तोपदेशादिरित्यर्थः । * यद्वा यथावदर्थस्वरूपापरोक्ष्यप्रवृत्तिद्वारा भयादिनिवृत्तिहेतुरित्यर्थः । तुशब्दश्शङ्काव्यावर्तकः ज्ञाना-

### गूढार्थसंग्रहः

**मिथ्याज्ञानानु**(नि)**वृत्तिरविरुद्धेति** । ज्ञानाबाध्यदोषःदृष्टान्ते दार्ष्टान्तिके तु ब्रह्मान्यसामान्यस्य ब्रह्मज्ञानबाध्यतया दोषस्थितिरेव न घटते । 'तस्य तावदेव चिरं' इति ज्ञानव्यतिरिक्तावध्यन्तरकरणात् कञ्चित्कालं शरीरेन्द्रियाद्यवस्थान कल्पनया तन्निमित्तकर्मावस्थानकल्पनात् ' इति श्रुत्यर्थापत्तिमभिधाय तत्वज्ञानमेव स्वकारणेभ्यो जायमानं श्रुत्यवगताऽरब्धकर्मावस्थानप्रतिबन्धात्तदपेक्षित द्वैतप्रतिभास निवर्तनपाटवशून्येतर कर्माविद्यारागादे र्निवर्तकंचोत्पद्यते । (पं. पा॰ वि. १-१-४) इति विवरणसिद्धान्तस्थापनाय 'यावत्प्रतिबन्धकसत्वं ज्ञानानिवर्त्यदोषस्यात्रापि सम्भवात् ' (अ. सि.) इति मधुसूदनसरस्वत्युक्तिरपि प्रतिबन्धकत्वेनाभिप्रेतस्य प्रारब्धकर्मणः देहस्यवा ब्रह्मान्यत्वेन पूर्वज्ञानेनैव निवृत्तेरावश्यकतया प्रतिबन्धकत्वकल्पनस्यैव परमतेऽसम्भवादुपेक्षणीया । एतेन 'यावन्नविमोक्ष्ये' इत्यस्य यावदविद्यालेशोपादानकदेहभ्रमादिना भोगस्य समाप्तिर्नेत्यर्थइति भावः । (ल. चन्द्रि. जी. मु. उ.) इति भावकल्पनमपि औत्प्रेक्षिकमेव ॥

'यावन्न विमोक्ष्य' इत्यत्र 'अथ सम्पत्स्ये' इत्युत्तरवाक्योक्तसत्सम्पत्तिप्रतिबन्धकमोक्ष एवाभिप्रेतः । 'सति सम्पद्य न विदुः' इति तत्रैव पूर्वं सुषुप्तौ सति सम्पत्तिरुक्ता । प्रजापतिविद्यायां 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसपद्य' इति मुक्तौ वक्ष्यते । सम्पत्तिद्वयमपि जीवब्रह्मभेदमन्तरा न घटते । एवं च 'अथ सम्पत्स्य' इत्यत्र वक्ष्यमाणसम्पत्तेरेव विवक्षिततया 'यावन्नविमोक्ष्य' इत्यत्र पूर्ववाक्ये तत्प्रतिबन्धकमोक्ष एवाभिप्रेत इति स्फुटं प्रतीयते । अत एव 'समये सर्वशक्तिमदज्ञाननाशः तज्जातीयेन अप्रतिरुद्धेन प्रत्ययेन । तथा च श्रुतिः 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. १. अ.) इति मधुसूदनसरस्वत्युपात्ता श्रुतिः न तदभिप्रेतार्थं बोधयितुमलमिति भावप्रकाशे निरूपितम् । आस्मिन्नर्थे श्रुतयो नानुकूला इत्यभिप्रेत्यैव 'कथं हि एकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं च अपरेण प्रतिक्षेप्तुं शक्येत ' (५. १. १५. सू.) इति भाष्ये 'स्वेतरसर्वद्वैतविरोधिनी वृत्तिरन्त्या—प्रारब्धभोगकालीनवृत्तेस्तु अविद्यादिमात्रविरोधित्वं, न तु सर्वद्वैतविरोधित्वमित्यप्यनुभवबलात् कल्प्यते । इदमेव च प्रारब्धभोगस्य देहादिपातप्रतिबन्धकत्वं इत्यादिशब्दैर्व्यवह्रियते । ननु देहादिनाशे कर्मप्रतिबन्धकत्वं कल्प्यत ' इति च लघुचन्द्रिकायां (अ.नि.निरू) उक्तम् । तत्र विप्रतिपन्नविषये तत्तन्मतस्थानुभवोक्त्या विप्रतिपत्तिविषयैककोटिनिर्धारणं न संभवतीति सर्वदार्शनिकसंमतमिति व्यक्तं विदुषाम् ॥

आवृत्त्यधिकरणे श्रवणमनननिदिध्यासनानां दृष्टार्थत्वस्याभिधानात् तस्यैव विवरणादिषु अङ्गीकाराच्च लोके अपरिमितविरोधिवासनायाः अल्पभावनया निवृत्त्यदर्शनेन निदिध्यासनस्य विपरीतभावनानिवर्तकत्वं न संभवतीत्याह ।

## श्रीभाष्यम्

**अपिच भेदवासना निरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधि भावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादि शब्द वाच्यं ज्ञानं**

## श्रुतप्रकाशिका

नुत्पत्तिपक्षस्य ब्रह्मभिमतत्वात्सिंहावलोकितकेन तं दूषयति। **अपिचेति**। नायं सर्पो रज्जुरिति * बदृष्टद्वाराहि भेदनिरासः। अदृष्टमुखेनचेद्भेदसत्यत्वप्रसङ्गात्। अतो भूयस्या भेदवासनाया अल्पीयस्याऽद्वैतवासनया निरासोऽनुपपन्न इत्यर्थः॥

* नन्वदृष्टद्वारा निवर्त्यत्वे (पि) निवर्त्यस्य सत्यत्वं नानिष्टम्। ध्याननिवर्त्य सर्पवद्व्यवहारदशायां वासनायास्सत्यत्वाभ्युपगमात्। उत्पन्नेतु ज्ञाने तदुत्पत्तिस्थिति विनाशाश्च बाधितास्स्युरीत। नैवम्। ध्याननिवर्त्यसर्पस्यानित्यत्वमेव *नकदाचिदपि बाध्यत्वं सिद्धमिति तद्वदेवादृष्टनिवर्त्यवासनाया अपि वास्तवसत्यत्वप्रसङ्गात्। नन्वैक्यभावनारूपं निदिध्यासनं प्रतिबन्धनिवर्तकं चेदुक्तदोषस्स्यात्। तत्तु न प्रतिबन्धनिवृत्त्यै। किंतु वाक्यार्थज्ञानोदयसहकारीति। नैवं—स्मृतिरूपस्य निदिध्यासनस्यानुभवसापेक्षतया तस्य वाक्यार्थज्ञानजनन सहकारित्वायोगात्। ननु यद्यपि परोक्षानुभवस्य ध्यानमनुपकारकम्। तथाऽपि निदिध्यासन सहकृतं वाक्य मपरोक्षधीहेतुस्स्यात्। नैवम्—निदिध्यासन सहकृतत्वेऽपि शब्दत्वादेवापरोक्षधीहेतुत्वायोगात् * ज्योतिष्टोमवाक्यवत्॥

**एवं** शास्त्रप्रत्यक्षविरोधा, त्तदविरोधनिर्वाहानुपपत्त्या च वाक्यार्थज्ञानमात्रस्य निवर्तकत्वासम्भवात्पारिशेष्याद्वाक्यार्थज्ञानादन्यदेव मुक्त्युपायज्ञानं विधित्सित मित्याह। **अतइति**। न केवलं पारिशेष्यं तदनुग्राह्याश्श्रुतयश्च सन्ती

## गूढार्थसंग्रहः

**अपिचेत्यादिना** वाक्यजन्यमपरोक्षज्ञानमेव अविद्यानिवर्तकमित्यत्र न किञ्चित्प्रमाणम्। 'तं त्वौपनिषदं' इति तद्धितप्रत्ययेन ब्रह्मावगतिहेतुत्वं शब्दस्य दर्शितमुपपन्नं भवति। अपरोक्षावगतेरेव सम्यगवगतित्वात् (अध्यासभाष्ये) इति विवरणोक्तिरप्यभिनिवेशमूलैव। औपानिषदमिति तद्धितप्रत्ययस्य प्रत्यक्षभिन्नोपनिषज्जन्य प्रमात्मकशाब्दबुद्धिविषयत्वं यत् सर्वसम्मतं तत्परतया, प्रत्यक्षपरत्वस्थापनासंभवात्। 'तं त्वौपनिषदं पुरुषं' इति (बृ)श्रुतिः। अत्र पुरुषशब्दः 'स यत्पूर्वोस्मात् सर्वस्मात्सर्वान्पाप्मन औषत्' (बृ.५.अ) 'स वा अयं सर्वासु पूर्षु पुरिशयः' (बृ.६.अ) इति तत्रत्यनिरुक्त्यनुसारेण सविशेषस्यैव उपनिषत्तात्पर्यविषयत्वमावेदयति न तु निर्विशेषस्येत्यपि स्फुटम्। एवं 'आचार्यवान्पुरुषो वेद' (छा)'तद्धास्य विजज्ञौ' [छा) इति श्रुतिद्वयमपि प्रमात्मकबुद्धिपरमेवेति न क्वापि श्रुतिः वाक्यजन्यज्ञानस्याविद्यानिवर्तकत्वं प्रतिपादयितुमलमिति विदुषांस्फुटमित्यनुक्तिश्श्रीभाष्ये॥

अतइत्यादि। अतः वाक्यजन्यज्ञानस्य निर्विशेषविषयकत्वे अपरोक्षरूपत्वे अविद्यानिवर्तकत्वे प्रमाणविरहात् दृष्टार्थत्वे लोकप्रसिद्ध दृष्टान्तानुरोधेन दार्ष्टान्तिकोपपत्त्यसम्भवाच्चेत्यर्थः। **ध्यानोपासनादिशब्दवाच्यं ज्ञानमिति** उपासनस्य ज्ञानत्वमेव नास्तीति समन्वयाधिकरण(शं.भा) व्याख्यानं दूषितं वार्तिके ब्रह्मानन्दसरस्वतीगुरुभिः नारायणसरस्वतीभिः। लोके उपासनं ज्ञानमिति व्यवहरन्ति सर्वे आगोपालपण्डितं जनाः। वेदेऽपि 'यदुपास्ते य एवं विद्यात्, एवं जानीयात्' इत्यविगानेन प्रयोगो दृश्यते। न च तेषां भिन्नविषयत्वम्। 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपासनसुपक्र-

## श्रीभाष्यम्

**वेदान्तवाक्यै र्विधित्सितं । तथाच श्रुतयः विज्ञाय प्रज्ञां कुर्वीत** [बृ.उ.६.अ.४.ब्रा.२१.वा] **अनुविद्य विजानाति** [छा.उ.८.प्र.१२.ख.६वा]

## श्रुतप्रकाशिका

त्याह । **तथाचेति** । विज्ञायेत्यादिवाक्यद्वये ज्ञानसामान्यशब्दः वाक्यद्वयोपादानंच उपसर्गभेदेऽपि विधिप्रत्ययान्तत्व

## गूढार्थसंग्रहः

स्य 'पिता ह वै कामानां भवति य एवं वेद' इति विदिना उपसंहारदर्शनात् भिन्नविषयत्वासिद्धेः इत्यादिना तस्मादस-देतत् यत् उपासनाया न ज्ञानत्वमित्यादिना च । एतेन विद्युपास्योः उपक्रमोपसंहारयोः यत्रसत्वं तत्र लक्षणा ज्ञानोपासन-योर्भेदवादिभिर्मधुसूदनसरस्वतीभिरङ्गीकृता अभिनिवेशमूला । उपासनस्य ज्ञानत्वं नास्तीति वदतो मधुसूदनस्य तात्पर्या-नुसारेण ब्रह्मानन्दसरस्वतीभिः तत्र विवरणमपि स्वगुरूक्तिविरुद्धं कस्यापि दार्शनिकस्यासम्मतं इति च सिद्धम् । 'ज्ञानात् कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् । तथाहिश्रुतिः 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मु.२.२.८) 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा.७.२६.१.) इतिचैवमाद्या' इत्यत्र (३.३.३२.सू.) शङ्कराचार्यैरेव स्मृतेर्ज्ञानत्वं स्पष्टमुक्तम्। 'अपूर्वविधिस्स्यात् । ज्ञानोपासनयोरेकत्वेसति अप्राप्तत्वात् । 'न स वेद' इति ज्ञानं प्रस्तुत्य, 'आत्मेत्येवोपासीत' इत्य-भिधानात् । 'वेद, उपासन शब्दयोरेकार्थता अवगम्यते' इत्युपक्रम्य 'मानसक्रियात्वाच्च विज्ञानस्य' यथा 'यस्य हि देव-तायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद्वषट्कारिष्यन्' इत्याद्या मानसी क्रिया विधीयते, तथा 'आत्मेत्येवोपासीत, 'मन्त-व्यो निदिध्यासितव्यः' इत्याद्या क्रियैव विधीयेते ज्ञानात्मिका' इत्यत्र (बृ.३.४.७.शां.उ.भा) परैः भर्तृप्रपञ्चमतेऽपि उपा-सनस्य ज्ञानत्वं स्फुटमुक्तम् । परैरपि यत्तूक्तं [शं] 'विज्ञाय प्रज्ञां कुर्वीत' इत्यादिवचनानां वाक्यार्थविज्ञानव्यतिरेकेण उपासनार्थत्वमिति । सत्यमेतत् । किं तु नापूर्वविध्यर्थता, पक्षप्राप्तस्य नियमार्थतैव इत्युपक्रम्य तस्मात् प्राप्तविज्ञान-स्मृतिसंतानानियमविध्यर्थानि, 'विज्ञाय प्रज्ञां कुर्वीत' इत्येवमादीनि वाक्यानि इत्युक्तया प्रज्ञाशब्दार्थः स्मृतिरिति स्मृति-सन्तानमितिच स्पष्टमुक्तम् । अत्र आदिपदेन तन्मतोपन्यासे प्रागुपात्तानां 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'सोऽन्वेष्टव्यः' इत्येवमादीनां सङ्ग्रहः । एतेन उपासनस्य भ्रमत्वं प्रत्यूढम् । मण्डनमिश्रेणापि 'भावनाविशेषाद्धि अभूतमप्यनुभवमापद्यते, किं पुनर्भूतं' इत्यत्र उपासनादिना साक्षात्कृतात्मतत्वस्यतु विरोधात् सन्नपि प्रपञ्चावभासः नात्मसंस्पर्शी इत्यत्रच उपासनस्य तत्वविषयकत्वं स्फुटीकृतम् ॥

**विधित्सितमिति** । अविद्यानिवृत्तये वेदान्तवाक्यै र्विधित्सितमिति प्रथमवाक्यानुसारेण अत्रापि अविद्यानिवृ-त्तये इति शेषः । अयमर्थः 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा.७.प्रपा) इति उदाहरिष्यमाण श्रुतौ स्फुटः । एतेन उपासनस्य तरतमभावानापन्नफलसाधनत्वं निर्णीतं भवति । **'विज्ञाय प्रज्ञांकुर्वीतेति** (बृ.६.४.२१) सुरेश्वरा-चार्यैः पदार्थ वाक्यार्थज्ञानादिविषयकतया अष्टधा व्यख्यानस्य करणेऽपि शङ्कराचार्यैः 'प्रज्ञा—स्मृतिसन्ततिः' इत्यर्थस्य अभ्युपगमेन स्मृत्युपासनयोरविशेषेण ज्ञानत्वबोधकत्वं अस्याश्रुतेः इति तात्पर्येण प्रथमतउपादानं । 'नानुध्यायाद्बहून् शब्दान्' इत्युत्तरार्धे निषेधस्थले ध्याधातुप्रयोगेण प्रज्ञा—ध्यानमिति श्रुतौ विवक्षितमिति प्रतीयते । प्रशब्दः उक्तज्ञान गत विशेषाभिप्रायकः । **'अनुविद्यविजानाति'** इति । परैरुपात्तायाः 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इतिश्रुतेः प्रजापतिविद्योपक्रमे (छा.८.प्र.७.ख) । एतत्पूर्ववाक्यत्वेऽपि 'अन्वेष्टव्य' इत्यत्र ज्ञानप्रतीतेरस्फुटतया ज्ञानार्थक पदद्वय

## श्रीभाष्यम्

**ओमित्येवात्मनं ध्यायथ** [मुं.२.मु.२.ख-६.वा] **निचाय्य तं मृत्युमुखा त्प्रमुच्यते** [कठ.१.अ.३ वल्ली.१५.वा] **अत्मानमेव लोकमुपासीत** [बृ.३.अ.४.ब्रा.१५.वा] **आत्मावा अरे द्रष्टव्य श्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः** [बृ.६.अ.५.ब्रा.६-वा] **सोऽन्वेष्टव्य स्सविजिज्ञासितव्यः** (छा.८.प्र.७.ख.१.वा) **इत्येवमाद्याः**

## श्रुतप्रकाशिका

तद्राहित्ययोश्चार्थभेदोनास्तीति ज्ञापनार्थम् । **ध्यायथ इति** । विशेषशब्दः । निचाय्येति *ध्यानस्य प्रत्यक्षसमानाकारता । '**चायृदर्शने**' इति हि धातुः । **उपासीत** इत्यनेन ज्ञानस्योपासनशब्दवाच्यत्वं सिद्धम् । **अन्वेष्टव्य** इति मननशिरस्कश्रवणोक्तिः । **निदिध्यासितव्यः विजिज्ञासितव्य** इत्युपादानेन सन्नन्तत्वेपीष्यमाणज्ञानपरं वाक्यमिति दर्शितम् । सन्नन्तपदद्वयस्योपादानं सामान्यविशेषशब्दत्वात् ॥

**इत्येवमाद्याइति** । इतिशब्दउपात्तश्रुतिवाक्यस्वरूपमात्रपरः । एवंशब्द स्सन्नन्तत्व विधिप्रत्ययान्तत्व तद्राहित्योपसर्गभेदादिप्रकारपरः । उदाहृतवाक्येषु ज्ञानसामान्यवाचिपदानां विशेषाकाङ्क्षायां वाक्यार्थज्ञानस्वरूपोविशेषः पर्यव-

## गूढार्थसंग्रहः

घटितश्रुतिः अन्तिमा अत्र पूर्वमुपात्ता । अस्याश्श्रुतेः प्रजापतिविद्यान्तेऽपि सत्वेन तत्पूर्ववाक्ये 'तं वा एतं देवा अत्मानमुपासते तस्मात्तेषां सर्वे च लोकाः आत्तास्सर्वेच कामाः' इति उपासनफलमभिधाय तस्यैवफलस्य 'स सर्वांश्च लोकानाप्नोति सर्वांश्चकामान् यस्तमात्मानं अनुविद्य विजानाति' इत्यत्रविज्ञानफलत्वोक्त्या विज्ञानं उपासनमेवेति निश्चीयते । सर्वलोककामावाप्तेः परविद्याफलत्वं उत्तरत्र निर्धारयिष्यते ॥

परविद्याप्रकरणस्थां ध्यानत्वेन ध्यानबोधिकां विधिप्रत्ययघटितां श्रुतिमुदाहरति । **ओमित्येवात्मानं ध्यायथेति** । (२.मु.२.३) 'तमेवैकं जानथात्मानं' इत्येतदुत्तरं एतत् श्रुतिसत्वेन श्रुतिद्वये आत्मानमिति एकविषयनिर्देशेन पूर्वश्रुतौ जानथेति सामान्यशब्देन निर्दिष्टंज्ञानं ध्यायथेति विशेषशब्देन ज्ञानविशेषरूपं ध्यानमिति प्रतीयते । एतदुत्तरं 'स्वस्ति वः पाराय तमसःपरस्तात्' इति ध्यानफलमुक्तम् । 'तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति' (२.मुं.२.८)इत्यत्र ध्यानानन्तरकालिक समाधिमभिधाय 'क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यत्र समाधिफलमप्युक्तम् । अत्र कर्मक्षयसाधनत्वोक्त्या ज्ञानविशेषरूप ध्यानस्य प्रायश्चित्ततया विधिरिति द्योतितम् ॥

**निचाय्य तं इत्यादि** 'मृत्युप्रोक्तां नचिकेतोऽथलब्ध्वा' 'विद्यामेतां योगविधिंच कृत्स्नम्' (क.२.६.८)इति उपनिषदुपसंहारे अभिधानेन निचाय्येत्यत्र समाधिर्विवक्षितः । **अत्मानमेव लोकमुपासीतेति** (बृ.३.४.१५) अत्र लोकशब्दः लोक्यतइति योगमात्रविवक्षया दर्शनविषय फलपरः । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति—येषां नोऽयमात्मा अयंलोकः' (बृ.६.४.२२) इत्यत्रात्मनइच्छाविषयत्वोक्त्या फलत्वमुक्तं भवति । तत्पूर्वं 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादौ प्रव्राजिधर्मस्यापि विवक्षायाः परेषामपि सम्मतत्वेन कर्माङ्गकज्ञानस्य उपासनात्मकस्य आत्मैवफलमिति उत्तरत्रप्रतीत्या 'आत्मानमेव लोकमुपासति' इत्यत्रापि फलाभिन्नं आत्मानमुपासीतेत्येवार्थो विवक्षितइति सिध्यति । एतेन उपासनाविषयस्यैव फलत्वं नतु कर्मवत् अतिरिक्तफलवत्वं इति व्यञ्जितम् । एतेन 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यत्र उपासनाफलस्यापि अनित्यत्वं प्रतिपा-

श्रीभाष्यम्

**अत्र निदिध्यासितव्यइत्यादिनैकार्थ्यात् अनुविद्यविजानाति विज्ञाय प्रज्ञांकुर्वीतेत्येवमादिभिः**

श्रुतप्रकाशिका

सानभूमिस्स्यादिति शङ्कानिवृत्त्यर्थमाह । **अत्रेति** । **अत्र** उपात्तेषु वाक्येषु इत्येवमादिभिर्ध्यानं विधीयत इत्यन्वयः । **निदिध्यासितव्य इत्यादिनेति** । * आदिशब्देन सन्रहितज्ञानविशेषवाचिवाक्यान्तरं विवक्षितम् । ऐकार्थ्यंच * सर्वशाखाप्रत्ययन्यायात् । * सह्यनुक्ताकाङ्क्षितस्वीकारफलः * तत्र '**छागोवामन्त्रवर्णात्**' इतिन्याया त्सामान्यवाचिशब्दानां विशेषपर्यवसानम् । '**अनुविद्य विजानाति**' '**विज्ञाय प्रज्ञां कुर्वीत**' इत्यत्र केन पदेन वाक्या-

गूढार्थसंग्रहः

द्यत इति परेषां(पं.पा)आक्षेपस्य नावसरः । एतद्विशेष सूचनायैव 'आत्मेत्येवोपासीत' (बृ.५.४.७) इत्युपक्रमश्रुतिं परित्यज्य अस्याश्श्रुतेरुपादानम् ॥

अत्र यद्यपि 'तमेव धीरोविज्ञाय प्रज्ञां कुर्वीत' (बृ.८.४.२१) इत्यत्र प्रत्ययप्रवाहविधानं प्रथममभ्युपेत्य तदपि वा व्यर्थमेव प्राप्तार्थत्वात् इत्यनेन दृष्टार्थे विधिवैयर्थ्यमुक्त्वा 'तमेव' इत्यन्यनिवृत्तेश्श्रुतत्वात् निवृत्तौ तात्पर्यं गम्यते । पूर्वार्धे आकाशादिभ्यः परत्वेन आत्मतत्वं दर्शितम् । तथैव प्रज्ञाकरणप्रसङ्गे तन्निवृत्तये 'तमेव' इत्युच्यते । 'अन्यथा न एवशब्दस्य फलं' इत्यनेन पूर्वार्धोक्तधर्मविषयकत्वनिवृत्तिविधिः न प्रज्ञाकरणविधिः इति ब्रह्मसिद्धावुक्तम् ॥

एवं 'एतेन आत्मेत्येवोपासीत, आत्मानमेव लोकमुपासीत, इत्येवमादीनि विधिच्छायानि वाक्यानि व्याख्यातानि '(पं.पा)इत्येतद्विवरणे सर्वत्रैवकारविशेषणश्रवणात् अहमिति स्वभावप्राप्तप्रत्ययावृत्यनुवादेन विषयविशेषः प्रतिपाद्यतइत्यत्र सविशेषणवाक्यस्य अन्यानिवृत्तिरूपविशेषणपरत्वात् न विधिपरत्वमित्युक्तम् । तथाऽपि तच्छब्दस्य पूर्वप्रक्रान्तधर्मप्रकारेणैव धर्मिबोधकतया स्वसमभिव्याहृतपदार्थोपस्थाप्यप्रकारव्यवच्छेदस्य ज्ञानाद्यर्थकधात्वाद्यर्थे एवकारेण बोधस्य क्वापि अदर्शनेन एवकारव्युत्पत्तिविरहेण 'तमेव धीरो विज्ञाय' इत्यादौ एवमर्थकल्पनस्यासंभवात् । अत एव पूर्वं 'एकमेवानुद्रष्टव्यं' इत्यनभिधाय 'एकधैवानुद्रष्टव्यं' इति प्रकारवाचिप्रत्ययघटितनिर्देशः प्रकारविषयकदर्शनबोधतात्पर्यकः सङ्गच्छते । एवकारः 'यदेव साक्षादपरोक्षाद्ब्रह्म' इत्यत्रेव पूर्वप्रस्तुतार्थस्य उत्तरत्रानुकर्षणं दर्शयति । (३.३.६.शं.भा) एतेन 'आत्मेत्येवोपासीत' इत्यत्र 'यच्चाप्नोति यदादत्ते' इत्यादिस्मृतिमुदाहृत्य आत्मन्शब्दस्य सर्वाप्त्यादिगुणवाचकत्वे ऐतरेयभाष्योक्तेऽपि(शं) एवकारेण केवलात्मस्वरूपोक्त्या गुणोक्त्यसंभवात् । इति (ल.चं) ब्रह्मनिर्गुणत्वोपपत्तौ ब्रह्मानन्दोक्तिरपि निरवकाशा । दृष्टार्थत्वे अनुपपत्तेः भाष्ये प्रागेवाभिधानेन औपनिषदपरमपुरुषस्यैव 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणम् तिष्ठमानस्य तद्विदः' इत्यत्र कर्मविद्याफलप्रदतायाः स्फुटमुक्त्या एवकारघटितवाक्येऽपि अपूर्वत्वादुपासनविधिः संभवत्येव । उक्तं च खण्डदेवेन (भा.दी.१०.७.१८) 'यद्यपि चतुरवत्ती यजमानः तथापि पञ्चावत्तैव वपा कार्या' इति वाक्यविचारे 'पञ्चावदानवाक्ये एकप्रसरताभङ्गपरिहारार्थं पञ्चत्वविशिष्टावदानान्तरस्य प्राकृतकार्यापन्नस्य वपोद्देशेन विधानम् । अतिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा प्राकृतावदानस्यैव पञ्चत्वाविशिष्टस्य वपोद्देशेन विधानम्' इति । एवं नवमे चतुर्थपादे द्वितीयाधिकरणे 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति वाक्यविचारे 'यत्र तु न निषेधपूर्वकता तत्र अनुभवबला देवकारसंबद्धस्यापि विधाने न काचित्क्षतिः । यथा 'अत्रह्येव आवपन्ति , इत्यादौ' इति । (भा.दी.) एवं 'अत्रह्येवावपन्ति' इति वाक्यविचारे 'वस्तुतस्तु एवकारस्य अन्ययोगव्य-

श्रीभाष्यम्

**वाक्यार्थज्ञानस्य ध्यानोपकारकत्वा दनुविद्य विज्ञायेत्यनूद्य प्रज्ञांकुर्वीत विजानातीति**

श्रुतप्रकाशिका

र्थज्ञानमनूद्यते । केनवा ध्यानंविधीयत इत्यपेक्षायामाह । **अनुविद्यविज्ञायेत्यनूद्येति** । अनुवादः किमर्थ इत्यत्राह । **ध्यानोपकारकत्वादिति** । **प्रज्ञांकुर्वीत** । **विजानाति** । इति वाक्यद्वयोपादानस्य पूर्वोक्तमेवफलम् ॥

* **एवं** स्मृतिष्वपिसामान्यशब्दः सातिविशेषोपस्थापके तत्पर्यवसितोदृष्टः—

**निषिद्धभक्षणं जैम्ह्यमुत्कर्षे च वचोऽनृतम् । रजस्वलामुखास्वाद स्सुरापानसमानि तु ॥**

इत्यत्र निषिद्धसामान्यस्य भक्षणसामान्यं पातित्यहेतुरवगतम् ।

**छत्राकं विड्वराहंच लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनंचैव मत्याजग्ध्वा पतेद्द्विजः ॥**

इत्यत्र निषिद्धविशेषस्य भक्षणविशेषः पातित्यहेतुर्दृष्टः, अत्र पूर्वग्रन्थश्चरमग्रन्थार्थे पर्यवस्यति । भवतु सामान्य

गूढार्थसंग्रहः

वच्छेदार्थकत्वेन श्रौतपरिसङ्ख्यारूपत्वे निषेधतुल्यतया 'न तौ पशौ करोति' इतिवद्विकल्पापत्तेः नेयं श्रौतीपारिसंख्या-आपितु यावन्न्यायेन सर्वत्र समागमः प्राप्यते तावत्पूर्वमेव गायत्र्याधारकत्वेन विधीयते । अप्राप्तविधिरेवायं परिसंख्या-फलकः नतु श्रौती परिसंख्या' इति च । (भाट्टकौस्तुभे) 'सत्यमेववदेत्' इत्यादावपि नियमफलकत्वादेव नियमविधिः। सर्वत्रअपूर्वीविधेरेवेति मीमांसकसिद्धान्तानुरोधेन प्रागुदाहृत[शं] उपनिषद्भाष्ये 'विज्ञाय प्रज्ञां कुर्वीत' इत्यादौ नियमवि-धित्वोक्तिः नियमफलकत्वादेवेति बोध्यम् । 'ओमित्येवात्मानं, आत्मानमेव, आत्मा वा अरे द्रष्टव्यः' इत्यत्र आत्मन् शब्दः सर्वाप्त्यादिगुणाविशिष्टपरः । **सोऽन्वेष्टव्यः स विजिज्ञासितव्यइति** । 'य आत्मा अपहतपाप्मा' इत्यादि-'सत्यकामः सत्यसङ्कल्पः' इत्यन्त पूर्ववाक्योक्त सत्यसङ्कल्पत्वान्तधर्मविशिष्टपरः 'सोऽन्वेष्टव्यः' इत्यत्र तच्छब्दः । एत-दुत्तरं 'अनुविद्य विजानाति' इत्युक्त्या अन्वेषणं वेदनमिति सिद्धम् ॥

**वाक्यार्थज्ञानस्येति** 'अनुविद्य' 'विज्ञाय' इत्यत्र ज्ञानविशेषाप्रतीतावपि 'श्रोतव्यः' इत्यत्र ज्ञानविशेषप्रती-त्या तदैकार्थ्येन वाक्यार्थज्ञानमेव तत्रापि विवक्षितम् । वाक्यार्थज्ञानस्यानुभवरूपत्वेन स्मृतिहेतुतया ध्यानोपकारकत्वम् । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतौ श्रवणस्य ध्यानोपकारकत्वं विवक्षितम् । 'आगमेनानुमानेन ध्याना-भ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥' इति । 'ऋतंभरा तत्र प्रज्ञा' (यो.सू.१.४८) इत्येतद्भाष्यो-दाहृतस्मृतिवचने 'आत्मा वा अरे' इति श्रुत्युपबृंहणे ध्यानस्य योगसाधनत्वोक्त्या श्रवणंप्रति फलोपकार्यङ्गत्वस्य व्यव-च्छेदेन श्रवणस्याङ्गित्वासंभवात् । 'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ।' (या.स्मृ.१.८) इत्यप्येतदुपबृंहणम् । अत्र योगः ध्यानयोगः । आत्मदर्शनं समाधिः । 'ध्यानयोगेन संदृश्यः सूक्ष्म आत्मा आत्मनि स्थितः' (या.स्मृ.३.६४) इत्युत्तरत्र तत्रैवोक्तेः । 'आत्मा आत्मनिस्थितः' इत्यनेन 'तमात्मस्थं येऽनुपश्यन्ति धीराः' (श्वे.६.१२) इति श्रुत्यर्थ उक्तः। अनेन वचनद्वयेन 'ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत्' (श्वे.१.१६) इति श्रुतिर्विवृता भवति । एवं 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति श्रुतिरपि । 'देवं पश्येत्' इत्यत्र दर्शनं 'तमक्रतुं पश्यति वीतशोकः धातुःप्रसादात्' (श्वे.३.२०) 'तगूँह देवमात्मबुद्धिप्रसादं (प्रकाशं)' (६.१८) 'देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्' (६.२१)

## गूढार्थसंग्रहः

'यस्य देवे परा भक्तिः—तस्यैते कथिताह्यर्थाः प्रकाशन्ते' (६,२३) इत्याद्युत्तरश्रुत्यनुसारेण देवप्रसादमूलकम्। धातुःप्रसादादित्यत्रापि धाता देवः विवक्षितः, उत्तरवाक्यानुसारात्। अन्तर्यामित्वस्य भगवतः जीवात्मबोधनार्थतायाः श्रुतिस्मृतिसिद्धत्वाच्च। एतेन 'ज्ञानप्रसादेनविशुद्धसत्वः ततस्तु तं पश्यति' [मु] इत्यत्र 'तगुँह देवमात्मबुद्धिप्रसादं' इत्यत्रोक्तः भगवानेव ज्ञानप्रसादशब्दार्थः। 'महान्प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्तकः' (श्वे.३.६'१२) इत्युक्तेन तेनैव विशुद्धसत्वता। निष्कलं ध्यायमानः ततः ज्ञानप्रसादात् तं पश्यति इतियोजनया दर्शनमपि अदृष्टद्वारकमेव विवक्षितम्। एतेन अत्र श्रवणवाचिपदाध्याहार इति (अ.सि) मधुसूदनसरस्वत्युक्तिः 'तत इत्यस्यैव श्रवणादित्यर्थ' इति ब्रह्मानन्दसरस्वतीकल्पना च (.ल.च) निरवकाशा। एवं मनुनाऽपि 'ध्यानयोगेन संपश्येत्' [म.स्मृ.६.७३] इत्यनन्तरं 'सम्यग्दर्शनसंपन्नः कर्मभि र्न निबध्यते। दर्शनेन विहीनस्तु संसारं प्रतिपद्यते। [म.स्मृ६,७४] इति श्रुतिद्वयमुपबृंहितम्॥

'योगमुत्तमं' इत्यत्र असंप्रज्ञातसमाधिर्विवक्षितः। ध्यानानन्तरंसमाधेः वचनद्वये विवक्षितत्वेन 'द्रष्टव्यश्श्रोतव्यः' इति समभिव्याहारमात्रेण श्रवणेन दर्शनं वाक्यजन्यापरोक्षरूपं इति विवरणसिद्धान्तस्यासम्भवात्। अतएव ध्यानानन्तरकालिक मानसापरोक्षज्ञानमेव मण्डनमिश्रानुयायिना वचस्पतिना अङ्गीकृतम्। 'विद्यामेतां योगविधिंच कृत्स्नम्—ब्रह्मप्राप्तः (क.२.६.१८) इत्यत्र योगस्य मुक्तिहेतुत्वं प्रतीयते 'द्वे विद्ये वेदितव्ये' (वि.पु.६.५.६५) इत्युपक्रम्य 'यदक्षरं—तद्ध्येयं मोक्षकाङ्क्षिभिः' (६.५.६८) इत्यत्र परविद्यां प्रस्तुत्य 'ओमित्येवात्मनंध्यायथ' इति श्रुत्यर्थं अभिधाय क्लेशानांच क्षयकरं योगादन्यन्नविद्यते इत्युक्त्वा उत्तरत्र (वि.पु.६.७.३१) योगशब्दार्थं उपक्रम्य ध्यानाङ्गषट्कं (वि.पु ६.७.९२) समाधिपर्यन्त पदार्थस्वरूपादिकंच निरूप्य 'विज्ञानंप्रापकं' (६.७.९३) इत्यत्र समाधिरूपज्ञानस्य योगरूपस्य मुक्तिप्रदत्वंच उक्त्वा यद्विमुक्तिप्रदो योगः (६.७.१०१) इत्यत्र योगस्यमुक्तिप्रदत्वं उपसंहृतम्। अतएव समाध्यभावाच्च (ब्र.सू २.३.३९) इति सूत्रे योऽप्ययं औपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपादिष्टोवेदान्तेषु 'आत्मावा अरे द्रष्टव्यः [बृ] सोऽन्वेष्टव्य [छा] ओमित्येवात्मानं ध्यायथ' [मु] इत्येवं लक्षणः [शं.भा]इत्येतद्भाष्यविवरणे 'निदिध्यासितव्यः इति ध्यानोपदेशः द्रष्टव्यः इति समाधेरुपदेशः [भाम] इति वाचस्पतिनोक्तं संगच्छते। योगसूत्रव्याख्यातृभिः योगाङ्गसमाध्यनन्तरं संप्रज्ञातासंप्रज्ञातयोरुभयोरपि समाध्योर्निष्पत्तेः अङ्गित्वस्यचाङ्गीकारेऽपि सदानन्दयतिना संप्रज्ञातस्य अङ्गत्वं असंप्रज्ञातस्याङ्गित्वंच अङ्गीकृतं। असंप्रज्ञाते चित्तस्य वृत्तिविरहेण संस्कारशेषित्वस्य योगव्याख्यातृ सम्मतत्वेऽपि शङ्कराचार्यैः 'निर्विकल्पसमाधि र्या वृत्तिर्निश्चलयलक्षणा। तमेव योगमित्याहुः योगशास्त्रार्थकोविदाः॥ (स.वे.सि सा.सं.९०९) अष्टावङ्गानियोगस्य (९१०) 'अस्मिन्समाधौकुरुते प्रयासं यस्तस्यनैवास्ति पुनर्विकल्पः। सर्वात्मभावोप्यमुनैवसिध्येत् सर्वात्मभावः खलु केवलत्वम् [९०४] सर्वात्मभावो विदुषो ब्रह्मविद्याफलंविदुः। [९०५] इत्युक्त्वा असंप्रज्ञातसमाधौ वृत्तिरपि सदानन्दप्रभृतिभिः अङ्गीकृता। एवंच निदिध्यासितव्यः इत्यत्र ध्यानस्य दर्शनार्थत्वमेव युक्तं नतु श्रवणस्य दर्शनार्थत्वम्। समाधौ वाक्यस्य उपयोगविरहेण समाधेः वाक्यजन्यापरोक्षरूपतायाः साधयितुमशक्यत्वात्। अत्र वाक्यार्थज्ञानस्य ध्यानोपकारकत्वेनेत्यनेन उपकार्येण उपकारकस्य आक्षेपतः प्राप्तिसम्भवेन नवीनै र्निदिध्यासनेविध्यङ्गीकारेण ततएव विचारस्यासिध्या विचारस्य मननविधिमूलकत्वोक्तिः। विवरणमतेऽपि कार्येण कारणाक्षेपसम्भवात् ब्रह्मावगतिरूपकार्येणैव उत्तरक्रतु विधिप्रयुक्तधर्मविचारवत् ब्रह्मविचारसिध्या श्रवणविधेरेव अनावश्यकतया तेन विचाराक्षेपोक्तिश्च निरवकाशेतिद्योधितम्। एवं वाक्यार्थज्ञानस्य ध्यानोपकारकत्वं मूलप्रमाण दार्ढ्येण ध्यानस्य प्रमात्मकत्वसंपादकतयाऽप्यत्र विवक्षितम्। एतच्च श्रवणमननयोरविधेयत्वेऽपि ध्यानस्य श्रवणमननानन्तरकालिकत्वप्रतीति

## श्रीभाष्यम्

### ध्यानं विधीयते ।

### गूढार्थसंग्रहः

मात्रेणापि सम्भवति । एतेन यद्यपि कार्येण कारणाक्षेपःसंभवति तथापि तस्य वैधत्वसिध्यर्थेविधिमूलत्वस्य अवश्यं वक्तव्यत्वात् [अ.सि] एतद्विवरणे ननु वैधत्वासिद्धेः किं फलं इतिचेत् शीघ्रकर्तव्यतादिज्ञाने प्रामाण्यस्य निश्चयादिना शीघ्रंविचारे प्रवृत्यादिकमेव (ल.चं) इत्युक्तिरपि निरवकाशा ॥

ध्यानस्य दर्शनार्थत्वस्य प्रामाणिकतया ध्यानानन्तरकालिकश्रवणाभ्युपगमस्याप्रामाणिकतया 'तध्द्येयं मोक्षकाङ्क्षिभिः' (वि.पु.६.५.६८.) इत्याद्युक्तदिशा तस्यैव समाधिपर्यवसितस्य मुक्त्यर्थतया परमप्रयोजनमन्तरा विचारे कस्यचिदपि प्रवृत्तिविरहेण धर्मविचारस्य उत्तरक्रतुविधिप्रयुक्तत्वाङ्गीकारवत् ध्यानेन विचाराक्षेपाङ्गीकारस्यैव युक्तत्वात् । उक्तं च 'विचारविध्यभावेऽपि विज्ञानार्थतया विधीयमानं गुरूपसदनं दृष्टद्वारसंभवेऽदृष्टकल्पनाऽयोगात् गुरुमुखाधीन वेदान्तविचारद्वारइव विज्ञानार्थं पर्यवस्यतीति । अत एव स्वप्रयत्नसाध्य विचारव्यावृत्तिः । अध्ययनविध्यभावे तु उपगमनं विधीयमानं अक्षरावाप्त्यर्थत्वेनाविधीयमानत्वाच्च न तदर्थं गुरुमुखोच्चारणानूच्चारणं अध्ययनं द्वारीकरोतीति लिखितपाठादिव्यावृत्त्यसिद्धेः सफलः अध्ययने नियमविधिः इति । (सि.ले.सं) एवं सन्निधानादेव वेदान्तनियमस्य लब्धत्वेन विधिविषयत्वायोगादिति च अप्पय्यदीक्षितैः । अत्र सन्निधानादेवेति अधीतसाङ्गस्वाध्यायस्य वेदान्तैरापातप्रतिपन्नब्रह्मात्मजिज्ञासोः जिज्ञासानिवर्तकनिर्णयाय कर्तव्यत्वेन विचारे प्राप्ते सति विचारविषयमन्वेषमाणस्य वेदान्तानां बुद्धिस्थत्वाद्वेदान्ता एव मया विचारणीया इति बुद्धिरुत्पद्यते । तथा च विधिं विनैव वेदान्तविचारानियमस्य लब्धत्वेन तन्नियमनं व्यर्थं इत्यर्थः—अक्षरावाप्तिफलकोऽध्ययनविधिरिति सिद्धान्तेऽपि येषां वाक्यानामध्ययनावाप्तानां अर्थज्ञानद्वारा पुरुषार्थोपयोगस्सम्भवति तेषां वाक्यानामर्थज्ञानं अध्ययनलब्धैर्वाक्यैरेवोत्पादितं फलवत् ; नतदतिरिक्तभाषाप्रबन्धादिजनितं, इतिरीत्या अध्ययनविधिफलाक्षरावाप्तेः पुरुषार्थपर्यवसानकल्पनात् न भाषाप्रबन्धादिप्रसक्तिरित्यर्थः इतिच अच्युतकृष्णानन्दतीर्थाः व्याचख्युः । एतेन 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति ज्ञानस्य साध्यताविगमात् गुरूपसदनविधानाच्च तत्साधनश्रवणादिविधिःकल्प्यते इति (पं.पा)उक्तिः । सर्वमानप्रसक्तौच सर्वमानफलाश्रयात् । श्रोतव्य इत्यतःप्राह वेदान्तावरुरुत्सया ॥ (बृ.४.४.२१२) दर्शनस्याविधेयत्वात् तदुपायो विधीयते । वेदान्तश्रवणंयत्नात् उपायस्तर्क एव च ॥ (बृ.अ-४.ब्रा-४.वार्तिकं-२१३.) इति सुरेश्वराचार्योक्तिरपि निरवकाशा ।

ध्यानं विधीयत इति 'निदिध्यासितव्यः' इत्यनन्तरं 'मैत्रेय्यात्मनो वा अरे दर्शनेन मत्या विज्ञानेनेदं सर्वं विदितं' (बृ.४.४.५.) इत्यत्र निदिध्यासनं ज्ञानरूपमिति स्फुटम् । ध्यानस्य सर्ववेदनहेतुत्वं 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्युत्तरवाक्यानुसारेण परमात्मसङ्कल्पद्वारकमिति प्रतीत्या अदृष्टद्वारा सफलोऽयं विधिः । 'प्रज्ञां कुर्वीत' इत्यत्र स्मृतिसन्ततिविवक्षायाः परेषामपि संमततया 'विज्ञाय प्रज्ञां कुर्वीत' इत्यस्य एकवाक्यता यथा तद्वत् 'आत्मा वा अरे द्रष्टव्यः—निदिध्यासितव्यः' इत्यस्याप्येकवाक्यत्वं स्वरसतः प्रतीतं न परित्यागमर्हति । 'विद्यामेतां योगविधिं च कृत्स्नं' [क] 'ओमित्येवात्मानं ध्यायथ' इत्यादिश्रुत्यन्तरैकार्थ्येन योगसूत्र-मनु-याज्ञवल्क्योपबृंहणानुरोधेन च 'तत्कारणं सांख्ययोगाधिगम्यं' (रा.पाठः) अभिपन्नः (अ.पाठः.श्वे.६.) इति श्रुतौ सांख्यशब्दे वाक्यार्थज्ञानं योगशब्दे ध्यानं च विवक्षितमिति निश्चयसंभवेन अधिकारिद्वयाप्रतीत्या च एकस्यैवाधिकारिणः एकवाक्येन ध्यान-

## श्रीभाष्यम्

**श्रोतव्यइतिचानुवादः—स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थाववोधित्व दर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वात्**

## श्रुतप्रकाशिका

शब्दो विशेषपर्यवसायी । अत्रतु ज्ञानसामान्यवाचि शब्दः **श्रोतव्य** इति श्रवणरूपज्ञानविशेषे पर्यवस्यत्वित्यत्राह । **श्रोतव्यइतिचेति** । चश्शङ्कानिवृत्तौ समुच्चयेवा । विज्ञायानुविधेयेतिवदयंचानुवाद इत्यर्थः । तत्संक्षेपेणोपपादयति । **स्वाध्यायस्येति** । आपातप्रतीत्या स्वतःप्राप्ति श्श्रवणस्य स्यात् । मननस्य तादृशहेत्वभावात्तत्र पर्यवसानमस्तित्यत्राह । **श्रवणप्रतिष्ठार्थत्वादिति** । चः पूर्ववत् ॥

## गूढार्थसंग्रहः

विधिरित्येव युक्तमिति प्रतीयते । गौणाधिकारिविषये मननं ध्यानं चेत्यभ्युपगमे अस्याश्श्रुतेः मुख्याधिकारिविषयत्वमेव न स्यात् । अधिकारिद्वयपरत्वे एकवाक्यत्वभङ्गश्च स्यात् । श्रवणाधिकारिद्वैविध्ये ध्यानमन्तरा दर्शननिष्पत्तौ च न किंचित्प्रमाणमास्ति । 'शान्तः—समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्' इत्यत्र समाहितशब्दार्थसमाधेरेव विधेयतया समाधेश्च ध्यानमन्तरा अयोगेन तत्रापि परसंमतमुख्याधिकारिविवक्षाया असंभवादिति भावः ॥

**श्रोतव्य इतिच अनुवादइत्यादि** पृथक् तव्यप्रत्ययस्य बाधकस्य सद्भावात् कथमत्रैकवाक्यत्वं इत्यत्राह 'श्रोतव्य इतिच अनुवाद' इति । 'श्रोतव्य' इत्यादिवाक्यवत् 'परीक्ष्यलोकान्' इत्यादेरपि विचारविधिपरतायाः प्रथमसूत्रविषयतायाश्च परेषामपि सम्मततया 'परीक्ष्यलोकान्' इत्यादिः प्रथमसूत्रविषय इति वे-सारे इयं श्रुतिस्सम्यग्विवृता । अत्र गुरूपसदनविधिना विचारविध्यभावेऽपि साङ्गसशिरस्कवेदाभ्यासनिष्ठस्य प्रागुक्तापातप्रतीतिमतः वेदान्तविचारमूलकज्ञानमेव 'तद्विज्ञानार्थं' इत्यत्र वि इत्युपसर्गलभ्यविशेषविशिष्टज्ञानं विवक्षितमिति निर्णयस्सम्भवति । तत्र ब्रह्मविद्या, अथ परा यया तदक्षरमधिगम्यते' इत्यत्रोक्तविद्यैवेति जानाति । अतः 'परीक्ष्य लोकान्' इत्यादिवत् प्रथमसूत्रविषयत्वेन परसंमतायां 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतौ श्रोतव्य इत्यत्र 'स्वाध्यायोऽध्येतव्यः' इत्यत्र नियमविधिवत् नियम विधेरनङ्गीकारेऽपि न कोऽपि दोष इति श्रोतव्य इत्यत्र तव्यप्रत्ययः 'अर्हे कृत्यतृचश्च' इति अर्हार्थक इति श्रवणस्य अनुवाद्यत्वमेवेत्याशयः । 'तद्विजिज्ञासस्व, तद्ब्रह्मेति' (तै) श्रुतिरेव ब्रह्मजिज्ञासासूत्रस्य मुख्योविषयः श्रोतव्यः इत्यादि गौणविषयः इति प्रतिपादयद्भिः बालकृष्णानन्दसरस्वतीभिः .'तित्तिरिशिरोगतनियोगगिरि लोटः प्राप्तसमयोऽर्थ इति नो विधिरितीह । लोकमिति बोधितविचारकरणत्वात् केवलसनैव रचितंभवतिसूत्रम् ॥' (शा.मी.भा.वा.६९) इति श्रुति सूत्रयोः सनः विचारस्य रागप्राप्तत्व बोधनार्थत्वमेवाङ्गीकृतम् ॥

यद्यपि उत्तरत्रानेकपक्षानुगन्यस्य .शं.भाष्यसंमंत पक्षद्वयं स्थापयद्भिस्तैरेव प्रथमोक्तपक्षवत् विचारविधिपक्षोऽपि 'तित्तिरिवचस्स्वरसतो ननु विचारं लक्षयति सन्सहितो धातुरिति पक्षे । आवृतिनिवर्तकविलक्षणविद्याकारणतया अविदित एष विधियोगः ॥ (शा.मी.भा.वा.३३८.) इत्यत्रोक्तः ; तथाऽपि तद्विवरणे तैरेव 'यद्यपि विचारो ज्ञानहेतुत्वेन लोकप्रमाणप्राप्तः न विधेयः ; तथाऽपि अविद्यानिवर्तकतावच्छेदकधर्मवद्विलक्षणविद्याकारणत्वेन लोकप्रमाणेनाविदितत्वात् कृतिसाध्यत्वाज्ञातज्ञाप्यत्वयोः सत्वाद्विधियोग्य एव' । इत्युक्त्या प्रागुदाहृतदीक्षिताद्युक्तदिशा 'तद्विज्ञानार्थं स गुरु मेवाभिगच्छेत्' इत्याद्युपनिषद्वाक्यैरेव निर्णयस्य पुरुषार्थपर्यवसायिनः सिद्धेस्संभवेन उक्तदिशाऽपि विचारविधेरयोग

श्रीभाष्यम्

**मननस्य मन्तव्य इति चानुवादः । तस्माद्ध्यानमेव विधीयते ॥**

श्रुतप्रकाशिका

**तस्माद्ध्यानमेवेति** । ननु वाक्यार्थज्ञानमित्यर्थः । ननु—श्रोतव्य इति पुस्तकनिरीक्षणादिव्यावृत्त्यर्थो विधिः किं नस्यात् ? नैवम्—वेदान्तवाक्यानामपि पुस्तकनिरीक्षणादि व्युदासस्याध्ययनविधिसिद्धत्वात्, ब्रह्ममीमांसाया विलेखन पठनादेरप्रतिषिद्धत्वात् । * गुरूपसत्तौ श्रवण शब्दस्य मुख्यार्थत्वाभावात् * तस्याश्च अत्राविहितत्वेऽपि **'गुरुमेवाभिगच्छेत्'** इति वाक्यान्तरसिद्धत्वाच्च । ननु—* न्यायोपेतवाक्यमात्रानवगम्यकेवलोपदेशगम्यार्थ विशेषश्रवणं श्रोतव्य इति विधेयमितिचेन्न मननपूर्वभावितयाऽस्य श्रवणस्य न्यायानुगृहीत वाक्यजन्यज्ञानरूपत्वावगमाच्छब्दस्वारस्याच्च । नच मन्तव्य इत्यालम्बनसंशीलनरूपमननविधिरिति वाच्यम् । श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञानइव मन्तव्यशब्दस्य तत्प्रतिष्ठापने प्रासिद्धिप्राचुर्यात्तस्यचापवादाभावात् । उभयोरप्राप्तार्थद्वयाविधायित्वे वाक्यभेद प्रसङ्गात् । * सतिगत्यन्तरे विशिष्टविधानाश्रयणस्यान्याय्यत्वाच्च ॥

**विधिर्हि** पदावगतेष्वर्थेष्वेकत्रोपक्षीणशक्तिर्लाघवाय तादितरेषुस्वतोनुवादमपेक्षमाणः प्रापकाभावाद्विशिष्टे तात्पर्यं भजते । अत्रत्वनुवादसम्भवान्नविशिष्टविषयत्वकल्पनं युक्तम्, तस्मादनुवादः । अनेन श्रवणशब्दस्य * यादवमिश्रोक्तनिर्वाहो निरस्तः । अत्र द्रष्टव्यशब्दउपायोपेयदशासाधारणत्वादुपरिनियामकस्फुटार्थवाक्यान्तरेण सह * व्याख्यस्यते । ननु न साधारणत्वं * द्रष्टव्य इति तव्यता दर्शनस्य विधेयत्वप्रतीतेः फलस्यचाविधेयत्वात् । उच्यते—निधिध्यासनवद्दर्शनस्यच विधाने वाक्यभेदप्रसङ्गात् । निश्चितानुवादश्रवणमननसाहचर्याच्च विधित्वानिश्चयप्रतिबन्धादुपायस्य दर्शनरूपत्वविषयप्रमाणादर्शने विशिष्टविधित्वाश्रयणायोगात् । **'मनसैतान् कामान् पश्यन् रमते यएते ब्रह्मलोके परात्परं पुरिशयं पुरुषमीक्षते'** इत्यादिभिः फलदशायां दर्शनस्य प्रामाणिकत्वाच्च श्रोतव्यइतिवत् तव्यदर्थमनादृत्य फलसमर्पकत्वं द्रष्टव्य शब्दस्य शङ्कितुं युक्तमित्यतउपरिष्टाद्व्याख्येयत्वम् ॥

**गूढार्थसङ्ग्रहः**

एवेति दीक्षितादिभिरेव निश्चितं भवति । 'इष्यमाणं ज्ञानमिह विधीयते, इति स्वोक्तिः, 'मीमांसापूर्वभागस्य' इत्यादितदुत्तरवाक्ये 'पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति' इत्यनेन विशदीकृता । अत्र अधिकरणसिद्धान्त युक्तिप्रदर्शनेन 'अथ ब्रह्मजिज्ञासा' इति सिद्धान्तार्थप्रतिपत्तेः पूर्वपक्षयुक्त्या प्रतिबन्धे तन्निरसनेन तत्प्रतिपत्तिसंपादनम् प्रथमसूत्रेण क्रियत इति 'अधीतवेदःपुरुषः स्वयमेव प्रवर्तते' इति पूर्वं 'स्वयमेव श्रवणे प्रवर्तते' इत्यत्रच विचारे रागतःप्रवृत्तेः सत्वेऽपि प्रतिबन्धकनिरासिज्ञानतात्पर्येण अध्याहृतकर्तव्यपदार्थस्य इष्यमाणज्ञाने अन्वयो न विरुध्यत इति श्रीभाष्यकृत्तात्पर्यं स्फुटं निर्मत्सराणां विदुषाम् ॥

**तस्माद्ध्यानमेव विधीयते इति** । 'निदिध्यासितव्यः' इत्यत्र प्रागुदाहृतोपबृंहणानुसारात्परविद्यांप्रस्तुत्य तस्य ध्यानरूपत्वं समाधिपर्यवसितत्वं योगस्यमुक्तिहेतुत्वंच(वि.पु.६.अं) पराशरेण निर्धारितमित्यतः कठ श्वेताश्वतरश्रुतिषु योगस्य मुक्ति हेतुत्वमभिप्रेतमिति निर्णयसम्भवात् 'समाध्यभावाचेति (शं.सू.) भाष्ये प्रागुदाहृतवचनेषु (सा.वे.सि.सा.सं) च निदिध्यासितव्यः इत्यत्र ध्यानविवक्षायाः परेषामपि सम्मतत्वाच्च । ध्यानमेव इत्यत्र एवकारेण योगाङ्गव्यतिरिक्तार्थव्यवच्छेदः । न 'निदिध्यासनं मननोपबृंहितवाक्यार्थविषये स्थिरीभावः, विधेयस्योपासनस्यानिष्फलत्वात्' (पं.पा) इत्युक्तिरनवकाशा ।

### श्रीभाष्यम्

**वक्ष्यतिच आवृत्ति रसकृदुपदेशादिति** [शरीर.४.अ.१.पा.१.सू.] **तदिदमपर्गोपायतया विधित्सितं वेदन मुपासन मित्यवगम्यते विद्युपास्यो र्व्यतिकरेणोपक्रमोपसंहारदर्शनात्**

### श्रुतप्रकाशिका

**अथो**पासनस्य विधित्सितत्वद्रढिम्ने सूत्रकारोक्तिं दर्शयति । **वक्ष्यतिचेति** । तादृशसूत्रासम्भवव्युदासाय सूत्रमुपादत्ते । **आवृत्तिरिति** । उपासानशब्दाश्रवणात्सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह । **तदिदमिति** । * आवृत्ति-द्वयत्रयव्यावृत्त्यर्थं **असकृदितिसौत्रं** पदम् । कस्यावृत्तिरित्यपेक्षायामाह । **तदिदं वेदनमिति** । तदिदं तृतीयाध्याया-वसाने । '**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः**' इतिप्रस्तुतं मोक्षफलं ज्ञानमित्यर्थः । यद्वा प्रज्ञां कुर्वीते-त्यादिसामान्यशब्दोक्तं वेदनमसकृदावृत्तिरूपमुपासनमित्यर्थः । **इत्यवगम्यते** इत्यन्तेनावृत्तिरसकृदितिसूत्रांशो व्याख्यातः । उपदेशादितिपदं व्याचष्टे । **विद्युपास्योरिति** ॥

### गूढार्थसंग्रहः

'येनाहं नामृता स्यां किमहं तेन कुर्यां, यदेव भगवान्वेद तदेव मे ब्रूहि' इति प्रश्नस्य प्रतिवचने 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतिः । तत्र 'न वा अरे पत्युः कामाय' इत्यादिना पत्यादिकं निषिध्य आत्मनोऽत्र ध्यातव्यत्वमुच्यते । तेन ध्यातव्यस्यात्मनएव अमृतत्वहेतुत्वं प्रतिपिपादयिषितमिति प्रतीयते । अन्ते 'येनेदं सर्वं विजानाति तं केन वि-जानीयात्' इत्यत्र सर्वज्ञानहेतुत्वमपि वक्ष्यते । तेन . निदिध्यासितव्य . इत्यनन्तरं 'मैत्रेय्यात्मनो वा अरे दर्शनेन श्रव णेन मत्या विज्ञानेनेदं सर्वं विदितं' (४.४.५बृ.) इत्यत्रोक्त ध्यानस्य सर्ववेदनहेतुत्वं परसङ्कल्पद्वारकमिति निर्णयसंभवेन परमात्मनः मुक्तिहेतुत्वमत्र विवक्षितमिति वाक्यान्वयाधिकरण श्रीभाष्ये वक्ष्यते । अतश्च निदिध्यासितव्य इत्यत्र अदृ-ष्टद्वारा मुक्तिफलको ध्यानाविधिर्विवक्षित इति बोध्यम् ॥

सूत्रकृतः इत्थमेव श्रुत्यर्थोऽभिप्रेतइत्याशयेनाह **वक्ष्यतिचेति । अपवर्गोपायतयाविधित्सितमिति** । आवृत्ति सम्बन्धिनः सूत्रे अनिर्देशेन 'एवं मुक्तिफलानियमः' इति पूर्वसूत्रान्मुक्तिफलशब्दस्यानुषङ्ग आवश्यकः । तत्र मुक्तिफ-लेत्यत्र 'विकल्पोऽविशिष्टफलत्वात्' इत्यत्रेव बहुव्रीहिर्विवक्षितः । 'नानाशब्दादिभेदात्' इति पूर्वसूत्रे विहितत्वेन विवक्षि-तानामेव उत्तरसूत्रे विकल्पस्य प्रतिपादनेन मुक्तिफलशब्दानुषङ्गेण अपवर्गोपायतया विधित्सितं वेदनमेव आवृत्तिसम्ब-न्धितया विवक्षितमित्याशयः । एतेन असकृदुपदेशात् श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्येवंजातीयकोहि असकृ-दुपदेशः दर्शनपर्यवसानानिहि श्रवणादीन्यावर्तमानानि दृष्टार्थानि भवन्ति । अपिच उपासनं निदिध्यासनंचेति अन्त र्नीतावृत्तिगुणैव क्रिया अभिधीयते । (शं.भा) इतिपरोक्तौ श्रोतव्य इत्यादीनांत्रयाणां ज्ञानवाचित्वेन ज्ञानमात्रावृत्तिसिद्धौ समुच्चयमात्रेणापि तदुपपत्तिसम्भवेन श्रवणमनननिदिध्यासनानामावृत्तिर्नसिध्यति । अतः श्रवणादीनामावृत्तिः तादूप्येणास-कृदुपदेशविरहेणच्च न घटते । निदिध्यासितव्य इत्यत्र ध्याधातुनैव आवृत्तिस्सिध्यति नतु असकृदुपदेशेनेतिबोधितम् ॥

क्वचिद्विदिनोपक्रम्य उपासिनोपसंहरति यथा 'यस्तद्वेद, (छा.३.१८.३.) 'यां देवतामुपास्से' .छा.४.२.२.इति क्वचिच्चोपासिनोपक्रम्य विदिनोपसंहरति 'मनो ब्रह्मेत्युपासीत छा.३.१८.१. य एवं वेद 'इति । .छा.३.१८.३. तस्मा-त्सकृदुपदेशेष्वपि आवृत्तिसिद्धिः इति परैरुक्तम् । [शं भा] सूत्रे असकृदित्यस्य उपदेशादित्यत्रान्वयस्य विवक्षितत्वे सकृ-दुपदेशेषु आवृत्तिहेतोरनुक्त्या न्यूनता । ध्यानस्य शब्दत एवावृत्तिस्सिध्यति । तत्फलं च मुक्तिरिति पूर्वमेवोपपादितम् ।

## श्रीभाष्यम्

**मनोब्रह्मे त्युपासीते त्यत्र भातिच तपतिच कीर्त्या यशसाब्रह्मवर्चसेन य एवंवेद** [छा.उ.३.प्र.१८.खं.१.वा] **न स वेद अकृत्स्नोह्येष—आत्मेत्येवोपासीत** [बृ.उ.३.अ.४.ब्रा.७.वा] **यस्त द्वेद यत्सवेद समयैतदुक्त इत्यत्र** [छा.४.प्र.१.४.वा] **अनुम एतां भगवो देवतां शाधि**

## श्रुतप्रकाशिका

**स्थल**त्रयमुदाहरति । **मनइति** । **मनोब्रह्मेति** वाक्यम् । *'**रात्रीरुपेयात्**' इतिवत् '**प्रतितिष्ठन्ति-हवा एते यएतारात्री रुपयन्ति**' इत्यत्र **यएतारात्री**' इति सत्रानुवादवत् । **यएवं वेदेति** । पूर्वविहितोपासनस्य फलार्थमनुवादः । वितरणविक्रमादिहेतुभेदात्कीर्तियशसोर्भेदः । मनोब्रह्मेत्युपासीतेत्यादिके प्रकरणे, *यस्तद्वेदेत्यादि-प्रकरणेच वेदनोपासनवाचि शब्दयोर्विप्रकर्षात्प्रकरणैकत्वज्ञापनायात्रेत्युक्तम् । **अनुमइति** । यांदेवतामुपास्से एतां देवतामनुशाधि अनुपूर्वश्शासिर्विविच्य ज्ञापनार्थः । विविच्यज्ञापयेत्यर्थः । **व्यवहिताश्च** । इति सूत्रेण छन्दस्युप-सर्गाणां व्यवहित प्रयोगः । 'नसवेद' इत्यत्र सन्निकर्षादत्रशब्दाप्रयोगः । **न सवेद** इत्यस्य '**सयोऽत एकैकमुपास्ते**' इत्येतद्वाक्यपूर्वकत्वादुपक्रमोपसंहारयोरुपासनशब्दः । मध्येवेदनशब्दः । इदंच पूर्वस्मिन्वाक्ये उपक्रमोपसंहारदर्शनादित्ये-तेनाभिप्रेतम् ॥

## गूढार्थसङ्ग्रहः

अतः असकृदिति आवृत्तिरित्यत्रैवान्वेति । अदृष्टार्थत्वेन योगपर्यन्तावृत्ति र्न सिध्यतीति योगपर्यन्तावृत्तिसिद्धितात्पर्येण असकृदित्यावृत्तिविशेषणम् । तेन यावताकालेन भावनाप्रचयबलेन ध्याने दर्शनसमानाकारत्वलाभः तावत्पर्यन्तावृत्ति लाभेन दर्शनसमानाकारध्यानं सिध्यीत । एवं च विद्युपास्त्योरुपक्रमोपसंहाराभ्यां एकार्थत्वेनोपदेश एव सौत्रो हेतुः विद्यादिधात्वर्थस्य असकृदावृत्तज्ञानरूपत्वसाधकः विवक्षितः । विद्यादिधातोर्ज्ञानसामान्यवाचितया उपक्रमोपसंहाराभ्यां ज्ञानसामान्यवाचिनः ध्यानविशेषे पर्यवसाने सिद्धे एवं सामान्यविशेषवाचिधातुद्वयविरहस्थलेऽपि सामान्यवाचिनः यत्र कुत्रचिद्विशेषे पर्यवसानस्यावश्यकतया एतदनुरोधेन तत्रापि ध्यानविशेषे पर्यवसानं युक्तम् । उपदेशादित्यनेन आवृ-त्तज्ञानपर उपदेशस्यैव विवक्षितत्वेन ययाकयाचन विधया तत्तात्पर्यनिर्णयसंभवे ज्ञानविशेषरूपत्वस्य मुक्तिसाधनवे-दने संभवात् । 'ब्रह्मविदाप्नोति परं' 'तद्विजिज्ञासस्व' इत्यादौ 'यदा ह्येवैष एतास्मिन्नुदरमन्तरं कुरुते' इत्यादौ वक्ष्यमाणार्थानुसारेण उपासनविवक्षा । 'आचार्यवान् पुरुषो वेद' इत्यत्र श्रवणस्य विवक्षितत्वेन 'तस्य तावदेव चिरं' इत्यादौ देहावसान एव मोक्षकथनेन वेदनस्य तावत्पर्यन्तत्वप्रतीत्या च उपासनविवक्षा सिध्यति । तेनचानावृत्त-ज्ञानस्य मुक्तिफलत्वं नास्तीत्येव सूत्रकाराशयः, इत्यभिप्रेत्य **वेदनमुपासनमित्यवगम्यते** । **विद्युपास्त्योर्व्यतिकरेणोप-क्रमोपसंहारदर्शनात्** इति सूत्रार्थ उक्तः । सूत्रकृतः अविशिष्टफलत्वादित्यत्र मुक्तिफलमेव विवक्षितमिति तरतम-भावानापन्नमुक्तिफलाविशेषः सर्वेषामुपासनानां विवक्षित इत्याशयः ॥

**न स वेदेत्यादि** आवृत्त्यधिकरणे 'मनो ब्रह्म, 'यस्तद्वेद' इत्यादिवाक्यद्वयस्य परैरुपादानेऽपि भर्तृप्रपञ्चेन 'न स वेद' इत्यादिवाक्येन ज्ञानस्योपासनत्वं साधितमिति परैरुक्त्या [शं.उ.भा.] अत्र 'न स वेद' इत्यादिवाक्य-मप्युपात्तम् । 'अथ योन्यां देवतामुपास्ते—न स वेद' इत्युपसंहारेऽपि न स वेदेति वाक्यं पठितम् । तत्पूर्वं 'य एवं वेद अहं ब्रह्मास्मि' इत्यभिधाय भेददर्शनवतः ज्ञानाभावः प्रतिपादितः । 'तद्वेदं तर्हि' इत्युपक्रम्य 'स एष इह प्रविष्ट

## श्रीभाष्यम्

**यां देवतामुपास्स इति** [छा.४.प्र.२.ख.२वा]

## श्रुतप्रकाशिका

* **यस्तद्वेद** । तस्य ब्रह्मणोवेदिता यो रैक्वः । **यत्सवेद** । तस्यरैक्वस्यवेद्यं यद्ब्रह्म स वेदितारैक्व एतद्द्वयंचोभयं तव मयोक्तमित्यर्थः । सामान्यविशेषन्यायेन प्रकरणान्तरोक्तज्ञानसामान्यवाचिशब्दानां प्रकरणान्तरोक्तविशेषपर्यवसायित्वं पूर्वमेव स्वयमेवहि भाष्यकारेण दर्शितम् । सूत्रव्याख्यानेत्वेकैकप्रकरणे व्यतिकरणोपक्रमोपसंहारदर्शनमुपदेशादिति पदस्यार्थत्वेनोक्तम् । उभयत्रोभयं हेतुत्वेन वाच्यम् । तथाप्यविस्तरार्थमेकैकमुक्तम् । अतएवहि चतुर्थाध्याये उभयमपि हेतुत्वेन वक्ष्यते । तदिदमित्यादिकं सूत्रव्याख्यानम् । अन्यथा तदिदमपवर्गोपायतयाविधित्सितं वेदनमिति नोच्येत । किंतु ध्यानमुपासन मित्येवोच्येत इतरथा शृङ्खलितोक्तिप्रकरणानौचित्यात् पश्चादपि ध्यानंच तैलधारावदविच्छिन्नस्मृति सन्तानरूपमिति पूर्वप्रकृतध्यानशब्देन निर्देशात् । पूर्वग्रन्थे ध्यानस्योपासनरूपत्वं विवक्षितंचेत्पश्चादुपासनमविच्छिन्नस्मृतिसन्तानरूपमित्युपासनशब्देनोच्येत ॥

## गूढार्थसंग्रहः

आनखाग्रेभ्यः ' इत्याद्यनन्तरं 'स योऽत एकैकमुपास्ते न स वेद ' इत्युपक्रमे श्रूयते । अत्रोपक्रमे नामरूपव्याकरणदशायां परमात्मनः प्रवेशकथनानन्तरं एकैकमुपास्त इत्युक्त्या विशेष्यविशेषणयोरेकैकमुपासितुः ज्ञानविरहो विवक्षितः । तदनन्तरं 'आत्मेत्येवोपासीत ' इत्यत्र विशिष्टज्ञानमेव विवक्षितम् । 'तदात्मानमेवावेत् अहं ब्रह्मास्मि ' इत्यत्र आत्मानमित्युक्त्या आत्मेत्येवोपासीतेत्यत्रोक्तं उपासनमेव विशिष्टविषयकं विवक्षितम् । अन्ते भेददर्शनमप्यहमर्थात्मत्वविशिष्टाविषयकत्वादेव निन्दितमुपक्रमानुसारात् । अत्र आदौ मध्ये अन्ते च विदिधातुः पठितः । न स वेदेत्यत्र अहं ब्रह्मास्मीति वेदनाभावस्यैव विवक्षितत्वेन अहं ब्रह्मास्मीति वेदनं आत्मेत्येवोपासीतेति पूर्ववाक्यानुसारेण उपासनरूपमेवेत्येतत्प्रघट्टकेन निर्धारितं भवति । मनो ब्रह्मेति वाक्योपादानेन भ्रमात्मकोपासनस्यापि वेदनत्वं सिध्यति । एवं च वेदनं प्रमा उपासनं भ्रमः इत्युक्तिरभिनिवेशमूलेत्यपि सिद्धम् ॥

आवृत्त्यधिकरणोक्तन्यायेन प्रतर्दनविद्यायामपि ज्ञानमुपासनात्मकमेव । तत्रहि ' मामेव विजानीहि समआत्मेतिविद्यात् ' इति उपक्रमोपसंहारयोः विदिधातुः । उपक्रमे 'मामेवविजानीहि ' इत्येतदुत्तरं 'प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व ' इत्यत्र उपासिधातुश्च प्रयुक्तइति तत्र वेदनमुपासनमेवेति निश्चीयते । अतएव 'जीवमुख्यप्राणलिङ्गान्नेति चेन्न उपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ' (१.१.३२.) इति सूत्रं प्रतर्दनविद्यायां उपसात्रैविध्यपरं संगच्छेत । एतदेवाभिप्रेत्य वृत्तिकृता एतत्सूत्रं उपासात्रैविध्यपरतया विवृतम् । आवृत्त्यधिकरणे सूत्रकृतः आवृत्तिसाधनं मन्दाधिकारि विषयं इति (शं.भा.) परोक्तिः सूत्रकृता क्वापि अनावृत्तज्ञानस्य मुक्तिहेतुत्व स्थापनस्यादर्शनेन सूत्रकृदाशयविरुद्धा । 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ ' (३.२.४.) इति सूत्रे स्फुटमुक्तेः परसङ्कल्पाधीनत्वमुक्तम् । ' सर्ववेदान्त प्रत्ययं चोदनाद्यविशेषात् ' (३.३.१.) इत्यत्र यद्विहितं वेदनं तस्यैव 'पुरुषार्थोऽतश्शब्दात् ' (३.४.१.) इत्यत्र पुरुषार्थहेतुत्वं प्रतिपिपादयिषितम् । अतः अविधेयज्ञानाविवक्षा न युक्ता । ज्ञानविधिप्रकरणे ज्ञानविधानासम्भावात् तत्साधन श्रवणविधिरिति (पं.पा.वि.) उक्तिरनादरणीया । ज्ञानसामान्यवाचिनः 'उपदेशात् ' पत्यनेन ज्ञानविशेषे पर्यवसानस्य स्फुटं सूत्रकृदुक्त्या ज्ञानसाधनलक्षणाया अनुचितत्वात् । उपासनं न ज्ञानमित्युत्प्रेक्षातु कस्यापि दार्शनिकस्यासम्मतत्वेन अभिनिवेशमूलैवेत्याशयः ॥

## श्रीभाष्यम्

**ध्यानंच तैलधारावदविच्छिन्न स्मृतिसन्तानरूपम् । ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वे ग्रन्थीनां विप्रमोक्ष** [छा.उ.७.प्र.२६.ख.२.वा] **इति ध्रुवायास्स्मृते रपवर्गोपायत्व श्रवणात् साच स्मृति र्दर्शनसमानाकारा भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वे संशयाः । क्षीयन्ते चास्य कर्माणि तस्मि न्दृष्टे परावरे ॥ इत्यनेनैकार्थ्यात्** [मुण्ड.२.मु.२.ख.९.वा]

## श्रुतप्रकाशिका

**एवं** प्रस्तुतसूत्रार्थेऽवधृते पूर्वप्रकृतस्य ध्यानस्य ध्रुवानुस्मृतित्वमुपपादयति । **ध्यानंचेति** । वेदनस्यासकृदावृत्तिं वदतस्सूत्रकारस्यायं भावः । यथा ज्ञानसामान्यवाचिनां शब्दानां विशेषपर्यवसायित्वेनासकृदावृत्तिरूपज्ञानपरत्वं सिद्धम् एवं विशेषान्तरोपस्थापकेषु सत्सु तत्तद्विशेषपर्यवसायित्वं न्याय्यमिति । तस्मात्सूत्रकारेण कण्ठोक्तां ज्ञानस्यासकृदावृत्तिरूपतामुपपाद्य तेनाभिप्रेतं श्रुत्यन्तरोपस्थापितं विशेषान्तरमाह । **ध्यानंचेति** । अनेन ग्रन्थेन * असकृदावृत्तेर्व्यवहितत्वशङ्कानिरासार्थं विजातीयप्रत्ययान्तराव्यवहितत्वमुक्तम् । अत्र विच्छिन्नाविच्छिन्नस्मृतिसन्ततिसाधारणो ध्यानशब्दश्चेत् ध्यानं चेत्यादिना विशेषान्तरे पर्यवसानमुक्तं भवति । ध्यानशब्दस्याविच्छिन्नस्मृतिसन्तत्यसाधारणत्वे ध्यानशब्दो व्याख्यातो भवति । अविच्छिन्नस्मृतिसन्ततित्वेवचनमाह । **ध्रुवेति** । स्मृतेर्ध्रुवत्वंनाम विजातीयप्रत्यान्तराव्यवहितसन्ततित्वम् । स्मृतिव्यक्तीनां क्षणिकत्वात् ॥

**अपवर्गोपायत्वश्रवणादिति** । तत्रापवर्गोपायभूतवेदनस्यासकृदावृत्तिरुक्ता । अत्रापि तदुपायत्वप्रत्यभिज्ञानात्तस्यैवाविच्छिन्नसन्ततिरूपत्वं विवक्षितमिति भावः । तस्याः दर्शनरूपत्वमुच्यते । **साचेति** । न केवलं विषयैक्यतस्साम्यम् । अपित्वापरोक्ष्येणापीत्याकारशब्दस्य भावः । हृदयस्य मनसः । ग्रन्थयः रागादयः । * यद्वा मञ्चाः क्रोशन्तीतिवत् हृदयशब्दस्तत्स्थजीवपरः । * हृत् स्थानं अयतीति व्युत्पत्तेर्वा । तस्यग्रन्थिः प्रकृतिसम्बन्धः हृदयशब्दोपलक्षितं वा शरीरं ग्रन्थिः । संशयशब्दो विपर्ययस्यापि प्रदर्शनार्थः । देहात्माभिमानादिरूपाऽविद्येत्यर्थः । कर्माणि पुण्यपापरूपाणि । अविद्यासञ्चितकर्मकृतप्रकृतिसम्बन्धनिवृत्ति दर्शनसमानाकारोपासनेनेत्यर्थः ॥

## गूढार्थसंग्रहः

**स्मृतिलम्भइत्यादि** । ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् (३.३.३२.शं.सू.भा) इति परैः ' भिद्यते हृदयग्रन्थिः ' इत्येतदुत्तरं ' क्षीयन्तेचास्य कर्माणि, स्मृतिलम्भे ' इत्यादेरेकार्थतायाः अभिधानेन अत्र ध्रुवास्मृतेः मुक्तिहेतुत्वमेव विवक्षितम् । ' यदासर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः '[क.२.६.१५] इत्यत्र ' कामा येस्य हृदिस्थिताः ' [क.२.६.१४] इति पूर्ववाक्यानुसारेण तत्र कर्मसामान्य नाशानुक्त्या ' अथ मर्त्योऽमृतोभवति ' इति पूर्वोत्तरश्रुत्योर्निर्देशेन च एकार्थत्वप्रतीत्या कामप्रभेदनस्य विवक्षितत्वेऽपि अत्र हृदयादिशब्दंविहाय सर्वग्रन्थीनामित्युक्त्या ' भिद्यते हृदय ग्रन्थिः ' इत्यादौ ' तरति शोकं, तरति पाप्मानं, गुहाग्रन्थिभ्योविमुक्तः ' [मु.३.२.९.] इत्यत्रोक्त पापपर्यन्त सर्वनाशएव विवक्षित इति प्रतीयते । अतः अपवर्गोपायत्वमेवात्र विवक्षितमित्याशयः ॥

ध्रुवा स्मृतिः ततस्सर्वग्रन्थीनां विप्रमोक्षः इति क्रमं विहाय स्मृतिलम्भे इत्यादिनिर्देशः स्मृतिविशेषप्रबोधनार्थः लम्भः परिपाकावस्था । भावनाविशेषात् साक्षात्करोमीति प्रतीतिप्रयोजकविषयताविशेषएव लम्भइत्यत्र विवक्षितः इत्यभिप्रेत्याह **सांच स्मृतिर्दर्शनसमानाकारेति** दर्शने यः आकारः साक्षात्करोमीति प्रतीतिप्रयोजकविषयताविशेषाश्रयः तस्य स्मृतावपि

### श्रीभाष्यम्

**एवंच सति आत्मावा अरे द्रष्टव्य इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता**

### श्रुतप्रकाशिका

**एवंचसतीति** । उपायदशायां ज्ञानस्य दर्शनरूपत्वे स्फुटार्थवाक्यान्तरसिद्धे सतीत्यर्थः । च शब्दो द्रष्टव्यशब्दस्य फलदशाभिप्रायत्वशङ्कानिवृत्त्यर्थः । दर्शनशब्दस्य ज्ञानसामान्यपरत्वसम्भवेऽपि । **'द्रष्टव्यश्श्रोतव्योमन्तव्योनिदिध्यासितव्यः' आत्मनिखल्वरेदृष्टेश्रुतेमतेविज्ञातइदं सर्वं विदितम्** । इति ॥ श्रवणादीनां पृथगुक्तत्वाद्द्रष्टव्य इति पदं

### गूढार्थसंग्रहः

सत्वेन श्रुतिषु दृश्यादिधातुप्रयोगः न स्मृतिविशेषव्यावर्तकः । किंतु स्मृतिविशेषसङ्ग्रहतात्पर्यकः इति 'तस्मिन्दृष्टे परावरे' इत्यनेनैकार्थ्ये स्मृतिलम्भ इत्यादिवाक्यस्योपपद्यते । 'तस्मिन्दृष्टे, इत्यतः पूर्वं 'ओमित्येवात्मानं ध्यायथ' मु.२.२.६. इत्युक्त्वा 'तद्विज्ञानेन परिपश्यन्ति धीराः' इत्यत्र ज्ञानरूपध्यानविशेषेण भावनाविशेषमहिम्ना दर्शनमभिधाय अनन्तरश्रुतौ 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यत्र ध्यानस्यैव परिपाकदशापन्नस्य पूर्वोक्तस्मृतिविशेषरूपस्य स्वरसतः प्रतीतेः । 'ध्यानयोगेन संपश्येत्' म.स्मृ.६.७३. 'सम्यग्दर्शनसंपन्नः कर्मभि र्न निबध्यते ।.६.७४. इत्यादिकं अत्राप्युपबृंहणम् । स्मृताविव दर्शनसमानाकारत्वतात्पर्येण दृशिधातुप्रयोग इत्यस्मिन्नर्थे योगसूत्राण्यप्युपबृंहणानि । 'तत्र प्रत्ययैकतानता ध्यानम्' (यो सू ३.२.) 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (३.३.) इत्यत्र ध्यानस्यैव समाधित्वोक्तेः । अत्र स्वरूपशून्यमिवेत्यत्र ध्यानस्वरूपशून्यमिवेत्यर्थेन दर्शनसमानाकारत्वेन स्मृतित्वशून्यमिवेत्येव तात्पर्यम् । इवेत्येनन वस्तुतस्स्मृतित्वं वर्तत इति बोधितम् । ''योगश्चित्तवृत्तिनिरोधः' (योसू.१.२.) इत्युपक्रमोक्तसमाधिरूपं योगं 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेः धर्ममेघस्समाधिः' .४.२९.इत्युपसंहारेऽभिधाय 'ततः क्लेशकर्मनिवृत्तिः' 'तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम्' इत्यनन्तरसूत्रद्वये फलमुक्तम् । ततः क्लेशकर्मनिवृत्तिः इत्यनेन 'स्मृतिलम्भे, 'क्षीयन्तेचास्य कर्माणि' इति श्रुतिद्वयं विवृतम् । स्मृतिलंभ इत्यतः पूर्वं 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां, 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति श्रुतिः 'तदा सर्वावरणमलापेतस्ये' त्युत्तरसूत्रेण-विवृता । ततः क्लेशकर्मनिवृत्तीरित्यनन्तरं तदा सर्वावरणमलापेतस्य ज्ञानस्येत्युक्त्या क्लेशकर्मणां ज्ञानावरणत्वस्य प्रतिपादनेन सर्वं ह पश्यः पश्यतीति श्रुत्युक्तज्ञानावरणत्वं, स्मृतिलम्भे, सर्वग्रन्थीनामित्युक्तकर्मग्रन्थीनां विवक्षितमिति बोधितम् । सर्वान्धर्मान् ज्ञेयान्मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यत इति (तत्ववैशारदी) वाचस्पतिविवरणं उक्तार्थे अनुकूलमेव 'त्रयमेकत्रसंयमः' (यो.सू.३.४) तज्जयात्प्रज्ञालोकः इति पूर्वमुक्त्या जीवधर्मभूतज्ञानस्य प्रभास्थानापन्नत्वमपि दर्शितम् । अत्रच ज्ञानप्रतिबन्धकनिवृत्त्यनन्तरं पूर्णविकासः मणिद्युमणिप्रभावत् इत्युक्तंभवति । अतोयोगसूत्रानुसारादपि स्मृतेर्दर्शनसमानाकारत्वमेव तस्मिन्दृष्टे इत्यत्र विवक्षितम् । अधिकं भावप्रकाशे निरूपितम् । एतेन आत्मावा अरे द्रष्टव्य इत्यादौ द्रष्टव्यः निदिध्यासितव्यः इति उपक्रमोपसंहारघटकपदद्वयेन दर्शनसमानाकारत्वविशिष्टध्यानस्यविधिः । श्रोतव्यो मन्तव्यः आत्मा, द्रष्टव्यः निदिध्यासितव्यः इति वाक्ययोजना । समाध्यभिन्नं ध्यानमत्र प्रतिपिपादयिषितम् इति सिध्यतीत्यभिप्रेत्याह ॥

**एवंचसतीत्यादि** 'शान्तोदान्त इत्यादौ समाहितशब्दस्य समाधिमदर्थकतया समाधिकालिकदर्शनस्यैव तत्र विवक्षितत्वेन औपनिषदविद्यानिष्ठ परमहंसानामपि समाधिमन्तरा मुक्तेरयोगात् । तत्कारणं सांख्ययोगाभिपन्नमित्यत्र सांख्ययोग

## श्रुतप्रकाशिका

साक्षात्काररूपत्वपरम् । * दृष्टशब्दश्च तत्तुल्यार्थः । सचोपायदशाऽभिप्रायः तस्मिन् दृष्टे हृदयग्रन्थिर्भिद्यत इत्युक्तत्वात् । 'येनाहंनामृतास्याम्' 'अमृतत्वस्य तु नाशाऽस्ति वित्तेन' 'एतावदेव खल्वरेऽमृतत्वं' इति * पूर्वापरवाक्येषु फलस्य निर्दिष्टत्वा, त्प्रकरणान्तरोक्तस्य साक्षात्कारत्वस्येहापि वक्तुमपेक्षितत्वा, दपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च ॥

**ननु** ध्रुवानुस्मृतेरेव दर्शनरूपत्वविधिरयुक्तः ध्रुवानुस्मृतिदर्शनयोर्भिन्नप्रकरणाम्नातयोर्दहरशाण्डिल्यादिवेदनानामिव परस्परनिरपेक्षोपायत्वंहि प्रतीयते । नैवम्—द्रष्टव्यो निदिध्यासितव्य इत्येकवाक्यविहितत्वात् । नच तत्रापि विद्याद्वयविधानं शक्यम्—रूपभेदाभावात् । ततएव वाक्यैकत्वे सम्भवति वाक्यभेदाश्रयणायोगात् । विद्यान्तराणामिव तयोर्विकल्पप्रसङ्गाच्च । तयोर्निरपेक्षोपायत्ववादिनो विकल्प इष्ट इति चेन्न * तस्याष्टदोषदुष्टस्य सतिगत्यन्तरेऽभ्युपगन्तुमयुक्तत्वात् । दृश्यते हि व्रीहियवशास्त्रयो स्तस्याष्टदोषदुष्टत्वम् । व्रीह्यनुष्ठाने यवशास्त्रस्य प्रामाण्यत्यागः, अविद्यमानाप्रामाण्यकल्पनंच यवानुष्ठाने तस्य त्यक्तप्रामाण्यस्वीकारः, स्वीकृता प्रामाण्यत्यागश्चेति । यवशास्त्रेचत्वारोदोषाः । यवानुष्ठान वेळायामेव प्रथमप्रयोगे स्वीकृतव्रीहिशास्त्रप्रामण्यत्यागः तद प्रामाण्यकल्पनंच तृतीयप्रयोगेव्रीहिषूपादीयमानेषु द्वितीयप्रयोगे स्वीकृतव्रीहिशास्त्रा प्रामाण्यत्यागः, त्यक्तप्रामाण्यस्वीकार, श्चेति व्रीहिशास्त्रे चत्वारोदोषाः । * इहापि यथा सम्भवं दोषप्राप्तिः ॥

**यद्वा** प्रतिपत्तिबाधोऽनुष्ठानबाधोऽपूर्वबाधः फलबाधश्चेत्येकैकशिरसि दोषचतुष्टयादष्टदोषदुष्टत्वम् । अतो गत्यन्तरे सति विकल्पायोगाच्च, न ध्रुवानुस्मृतिदर्शयोः पृथगुपायत्वं, नापि समुच्चयः चशब्दाश्रवणात्, दर्शपूर्णमासयोरिव द्वन्द्वनिर्देशाभावाच्च, परमात्मनोऽतीन्द्रियत्वात्तत्साक्षात्कारस्य चक्षुषाशब्दग्रहणस्येव प्रक्रान्तयोगं प्रत्यशक्यविधानत्वाच्च शब्दविषययोस्स्मरणचाक्षुषज्ञानयोरिव समुच्चयोऽनुपपन्नः । ननु परमात्मनोयोगपरिशुद्धमनोग्राह्यत्वान्नतद्दर्शनस्य चक्षुषाशब्दज्ञानतुल्यतेति दर्शनोपायभूतस्य व्यापारस्य विधेयत्वोपपत्तेस्समुच्चयस्सम्भवतीति । सत्यम्—कस्तद्दर्शनोपायः ? 'ततस्तुतं पश्यतेनिष्कळंध्यायमान' इति श्रुतेः ध्यानमेवेतिचेत्—तर्हि द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिस्स्यात् । उभयोरपि दर्शनोपायध्यानविधिपरत्वाविशेषात् । द्रष्टव्य इति दर्शनोपाये विहिते कउपाय इत्यपेक्षायां निदिध्यासनं विधीयते । द्रष्टव्यपदाभावे निदिध्यासनस्य तदुपायत्वं न ज्ञायतइति तज्ज्ञापनार्थत्वान्न पुनरुक्तिरितिचेन्न द्रष्टव्यपदश्रवणेऽपि दर्शनस्य ध्यानसाध्यत्वाप्रतीतेः । नहि दर्शनकामेनेति श्रूयते तथासति हि स्वर्गयागयोरिव साध्यसाधनभावावगमस्स्यात् ॥

## गूढार्थसंग्रहः

योर्वैकल्पिकत्वेन मन्दाधिकारिणां निर्गुणोपासनरूपयोगोविवक्षितः इति भारतीतीर्थोक्तिः (पद.ध्या.दी) ब्रह्मसाक्षात्काराय न योगेप्रवर्तते औपनिषदाःपरमहंसाः विचारेणैव चित्तदोषनिराकरणेन तस्यान्यथासिद्धत्वात् [गी.६.२९] इति मधुसूदन सरस्वत्युक्तिश्च अनादरणीया ॥

निर्गुणश्रुतिसमनन्तरं 'तमात्मस्थं येऽनुपश्यन्ति धीराः' (श्वे.६.१२.) इति श्रुत्यर्थस्य 'ध्यानयोगेन संदृश्यः सूक्ष्म आत्मा आत्मनि स्थितः' इति याज्ञवल्क्येन 'ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्' (श्वे.१.१४) इति श्रुत्यानुगुण्येन विवरणेन 'एको वशी' इति पूर्वार्धे वशी 'तमात्मस्थं' (श्वे.६.१२.) इत्युत्तरार्धे आत्मस्थमिति पदद्वयेन जीवात्मान्तर्यामिपरमात्मध्यानानन्तरदर्शनस्यैव तत्र विवक्षितत्वेन 'नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्' 'तत्कारणं सांख्ययोगाधिगम्यं' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे.६.१३.) इति तदनन्तरश्रुतौ

### श्रुतप्रकाशिका

**नच** ध्यानं प्रतिश्रवणमननयोरिव दर्शनं प्रति ध्यानस्यदृष्टकिञ्चित्कारः । * अतो न मानान्तरेण तयोस्साध्यसाधनभावावगम इति वैयर्थ्यम् । किंच ध्यानसाध्यं दर्शनंचेद्ध्यानदर्शनयोस्समुच्चयश्च न सम्भवति । दर्शनंप्रति समुच्चये दर्शनस्य दर्शनं साधनमित्यात्माश्रयप्रसङ्गात् । नच मोक्षंप्रति समुच्चयसम्भवः । ध्यानस्य स्वसाध्यदर्शनव्यवहितस्य मोक्षं प्रतिदर्शनेनसहाव्यवहितकिञ्चित्कारायोगात् नहि यागनिष्पत्त्यर्थानां प्रोक्षणावघातादीनामपूर्वनिष्पत्तौ यागेनसह समुच्चयः * यदि साक्षात्कारं प्रति ध्यानेन सहाव्यहितकिञ्चित्कारोपपत्तये दर्शनसमानाकारं ज्ञानान्तरं विधेयमित्युच्यते । तदयुक्तम्— स्वर्गंप्रति ज्योतिष्टोमस्येव निदिध्यासनस्य साध्यं प्रति निरपेक्षोपायताप्रतीति स्वारस्यभङ्गप्रसङ्गात् । '**नहि ज्योतिष्टोमेनस्वर्गकामोयजेत**' इति वाक्यप्रतिपन्नज्योतिष्टोमस्य स्वर्गसाधनत्वं कर्मान्तरसापेक्षमवगम्यते । नचात्र- चशब्दो द्वन्द्वसमासोवा । अतो दर्शनसमानाकारतारूपविशेषणस्य किं विशेष्यमित्याकाङ्क्षायां विशेष्यान्तरंच नदृश्यते । निदिध्यासनंच सन्निहितम् । अतस्तदेवदर्शनसमानाकारतया विधित्सितमिति युक्तमभ्युपगन्तुम् । ततश्च वाक्यभेदोपि नस्यात् । निदिध्यासनस्य निरपेक्षोपायताप्रतीति स्वारस्यंच न बाध्येत ॥

**ननु** विशिष्टविध्याश्रयणंचेदुपदेशैकगम्यार्थश्रवणशुभाश्रयमननदर्शनरूपताविशिष्टनिदिध्यासनविधिः किं नस्यात् । नैवम् । *चतुर्ष्वंशेषु तात्पर्यकल्पनादपि द्वयोस्तत्कल्पनस्य लघुत्वात् । लघुपक्षसम्भवे गुरुपक्षाश्रयणायोगाच्च । नचास्मिन् वाक्ये विधानाभावादौपदेशिकार्थाधिगमालम्बनसंशीलनयोरसिद्धिश्शङ्कनीया । '**तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यंच निर्विद्याथमुनिः** इत्यनन्यथासिद्धवाक्यान्तरसिद्धत्वात् । तद्धि निरूपयिष्यते सहकार्यन्तविधिरिति सूत्रेण तस्माद्दर्शनसमानाकारत्वगुणविशिष्ट निदिध्यासनविधिः । नन्वेवमपि सर्वोपासनानां न दर्शनसमानाकारनिदिध्यासनरूपतासिद्धिः । द्रष्टव्यो निदिध्यासितव्य इति वाक्यस्य मैत्रेयीब्राह्मणे सत्त्वात् । अतस्तत्र प्रतिपाद्यस्यैवोपासनाविशेषस्य तादृग्रूपता प्रतिपाद्यास्यात् । नैवम् । आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमिति तत्रत्येनैववाक्येन *जगत्कारणविषयसर्वोपासनानां दर्शनसमानाकार निदिध्यासनरूपतावगमात् ॥

**नहीदं** वाक्यं विद्याविशेषविधायकम् । कारणज्ञानेन सर्वज्ञातताप्रतिज्ञानपरत्वात् । कारणमेवहि सर्वविद्योपास्यम् । कश्चध्येय इत्युपक्रम्य कारणन्तु ध्येयइति कारणस्यैवध्येयत्वविधानात् । कारणविषयंचोपासनमत्रदर्शनसमानाकारनिदिध्यासनरूपमवगम्यते । अस्मिन्वाक्येविज्ञातशब्दोहि निदिध्यासनपरः । द्रष्टव्यश्श्रोतव्योमन्तव्योनिधिध्यासितव्यः ।

### गूढार्थसंग्रहः

पूर्वार्धे जीवबहुत्वस्य परमात्मनः जीवेच्छाविषयसर्वफलदातृत्वस्य तदुत्तरं 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' (श्वे.६.१६.) इत्यत्र परस्य मोक्षहेतुत्वस्य च प्रतिपादनेन परसंमतनिर्गुणोपासनस्य 'तत्कारणं सांख्ययोगाभिपन्नं' इत्यत्र योगशब्देन विवक्षाया उभयोर्वैकाल्पिकत्वस्य चाप्रामाणिकत्वात् । 'तं त्वौपनिषदं पुरुषं' इत्येतदुत्तरं 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विदः' इत्यत्र परायणमित्येकशब्देन कर्मौपनिषदविद्ययोः परसङ्कल्पाधीन फलस्यैव स्फुटं प्रतिपादनेन योगमन्तरा केवलविचारेण औपनिषदपरमहंसानामपि ध्यानानन्तरकालिकदर्शनस्य उपनिषद्विवक्षितस्यासम्भवेन केवलविचारेण प्रवृत्तेरयोगाच्च । अतस्समाधिपर्यन्तध्यानमेव 'द्रष्टव्यो निदिध्यासितव्य' इत्यत्र विवक्षितमित्याशयः ॥

## श्रीभाष्यम्

**विधीयते । भवतिच स्मृते र्भावनाप्रकर्षा द्दर्शनरूपता वाक्यकारेणैतत्सर्वं प्रपञ्चितम् वेदन मुपासनं स्या त्तद्विषये श्रवणादिति**[वा-वृ]

## श्रुतप्रकाशिका

दृष्टे श्रुते मते विज्ञातइति स्थानप्रमाणात् । अतोऽस्यवाक्यस्य सर्वविद्यासाधारणकारणमात्रविषयत्वाज्जगत्कारणविषयोपासनं चेद्दर्शनसामानाकारानिदिध्यासनरूपमित्यवगम्यते ॥

***किंच** नानाविद्यानां विकल्पस्य वक्ष्यमाणत्वा, द्गुरुपक्षविषयशास्त्रवैयर्थ्यप्रसङ्गेन गुरुलघुयत्नविकल्पायोगात्, वस्तु *सामर्थ्यस्य प्रकरणाद्बलीयस्त्वाच्च, ध्रुवानुस्मृतिरूपत्वं, दर्शनरूपत्वं, वक्ष्यमाणभक्तिरूपत्वंच सर्वविद्यासाधारणाकारा भवितुमर्हन्ति । नन्विन्द्रियजन्मनोऽनुभवस्य ह्यपरोक्षरूपत्वं तत्कथं स्मृतेस्सम्भवतीत्यत्राह । **भवतिचेति ।** भावना वासना दर्शनरूपता दर्शनसमानाकारता । '**वृक्षेवृक्षेचपश्यामि**' इत्यादि दर्शनसमानाकारत्वं स्मृतेश्च दृष्टमिति भावः । तच्च विशदतरावभासरूपत्वम् । नन्वैतदनुभवासाधारणम् । स्मृतेरपि तत्सम्भवस्य प्रामाणिकत्वात् ॥

**ननु** दर्शनसमानाकारत्वविधानमयुक्तम् । दर्शनवाचिशब्देन तत्समानाकारोपस्थापनस्यामुख्यत्वात् । न विधौ परश्शब्दार्थ इति हि न्यायविद इति चेन्न । तैरेव '**दर्शपूर्णमासाभ्यां स्वर्गकामोयजेत**' इत्यत्र दर्शपूर्णमासशब्दयोर्लक्षणया, श्येनादिवाक्येषु श्येनादिशब्दानां गौण्यावृत्त्याच कर्मनामधेयत्वाभ्युपगमात् । '**अर्धमन्तर्वेदिमिनुयादर्धं बहिर्वेदि**' इत्यत्रापि *मध्यदेशलक्षणाया अङ्गीकृतत्वाच्च । विशदतरत्वस्य फलरूपत्वादपुरुषतन्त्रस्य कथं विधानमिति चेन्न आज्यावेक्षणस्येव विधानोपपत्तेः । तत्राज्यसाक्षात्काररहेतुभूतव्यापारविषयो विधिरितिचेत् इहापि विशदतरत्वावहस्मृतिसन्ततिविषयमनोव्यापारविधिरित्युपपन्नम् । अथ सूत्रकाराभिप्रायविदां वचनं दर्शयति । **वाक्यकारेणेति एतत्सर्वमिति ।** सूत्रकारेण कण्ठोक्तमभिप्रेतं चेत्यर्थः । **प्रपञ्चितमिति ।** पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः । प्रपञ्चनंच '**वेदनमुपासनं, स्यादित्यादिना *वाक्यचतुष्टयेन ॥**

## गूढार्थसंग्रहः

छान्दोग्यवाक्यकृतः ब्रह्मनान्दिनः सद्विद्याया उपासनरूपत्वं संमतमिति प्रागुक्तार्थः (वेदार्थसंग्रहे) उत्तरत्रापि (१.१.१) वक्ष्यते । उपासनातिरिक्तवेदनस्य मोक्षसाधनत्वं नास्तीति 'आवृत्तिरसकृदुपदेशात्' इति सूत्रेऽपि विवक्षितमिति वाक्यकारसिद्धान्त इत्याह **तद्विषये श्रवणादिति ।** उपदेशादिति सौत्रहेत्वर्थ उक्तः । उपासनविषये श्रवणादित्यनेन उपासनतात्पर्यकं श्रवणमेव विवक्षितम् । अतः पूर्वोक्तदिशा सर्वसङ्ग्रहः । 'ब्रह्मविदाप्नोति परं' इत्यादौ . यदाह्येवैष एतास्मिन्'[तै] इत्यादेः भाष्योक्तार्थावलम्बनेन उपासनं विवक्षितमिति प्रतीयते । 'ब्रह्म वेद ब्रह्मैव भवति' (मु) इत्यत्र परविद्यासामान्यस्यापि ध्यानरूपतायाः पूर्वत्रैव प्रतिपादनेन उपासनं विवक्षितमित्यादिकं उत्तरत्र तत्र तत्र भाष्य एव स्फुटीभविष्यति । तद्विषये श्रवणादित्यनेन ययाकयाचनविधया उपासनतात्पर्यकश्रवणस्याभिप्रेतत्वेन 'आचार्यवान्पुरुषो वेद' इत्यत्रोक्तं वेदनं उपासनरूपमिति साधनं संभवति । छान्दोग्यवाक्यकृतः 'आचार्यवान्पुरुषो वेद' इत्यत्र वेदनतात्पर्येणैव 'वेदनमुपासनंस्यात्' इति वाक्येवेदनशब्दप्रयोगः । तदनन्तरं 'तस्य तावदेवचिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये' इत्यत्र देहपातावधिकथनेन तावत्पर्यन्तं वेदनानुवृत्ते स्ततः प्रतीत्या आवृत्तज्ञानमेव विवक्षितम् । एवं तत्र अथशब्देन आवृत्तज्ञानानन्तरं सत्सम्पत्तेरभिधानेन 'अथ तदैव सत्सम्पद्यते . इति[शं.उ.भा.] परसंमतार्थाङ्गीकारे अथशब्द-

## श्रीभाष्यम्

**सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् । सकृत्प्रत्ययं कुर्याच्छब्दार्थस्यकृतत्वा त्प्रयाजादिवत् इति पूर्वपक्षं कृत्वा [बो.वृ.] सिद्धंतूपासन शब्दादिति (बो.वृ) वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् उपासनं स्यात् ध्रुवानुस्मृति दर्शनान्निर्वचनाच्चेति (बो-वृ) तस्यैव वेदनस्योपासनरूपस्या सकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम्**

## श्रुतप्रकाशिका

**वाक्य** मेकैकं व्याचष्टे । **सर्वासूपनिषत्स्विति** । *न केवलं छान्दोग्यइत्यर्थ: मोक्षसाधनतया विहितं वेदनमिति घटादिज्ञानव्यावृत्तिः । विहितमित्यनूदितश्रवणादिव्यावृत्तिः । अस्यार्थस्य पूर्वपक्षसिद्धान्तरूपेण स्फुटीकरणार्थं सकृत्प्रत्ययं कुर्यादितिवाक्यश्रवणेन वेदनमुपासनं स्यादितिवाक्यस्य पूर्वपक्षपरत्वशङ्काव्यावृत्त्यर्थंच सकृदित्यादिकं व्याचष्टे **सकृदिति** । सकृदित्यादिवाक्यमेव पूर्वपक्षपरम् । नतु वेदनमुपासनं स्यादितिवाक्यम् । अनन्तरमेवोपासनरूपत्वस्य सिद्धान्तितत्वादितिभाव: । तथासिद्धान्तितत्वं दर्शयति । **सिद्धंत्विति** । सिद्धन्तुसिद्धान्तस्त्वित्यर्थ: । यद्वा वेदनमुपासनं सिद्धमित्यर्थ: । उपासनशब्दादित्येतव्द्याचष्टे । **वेदनमसकृदावृत्तमिति** । अस्याविच्छिन्नस्मृतिसन्ततिरूपत्वं सूत्रकाराभिप्रेतं वाक्यकारेण कण्ठोक्तंच दर्शयति । **उपासनंस्यादिति** । दर्शनात् लोकेदर्शनात् । निर्वचनात् श्रुतिवाक्यात् । तस्यैवेति मोक्षसाधनतया विहितस्येत्यर्थ: । उपासनरूपस्येति हेतुगर्भम् । उपासनारूपत्वात् - उपासनशब्दवाच्यत्वादसकृदावृत्तस्येत्यर्थ: असकृदावृत्तं ज्ञानं ह्युपासनम् एवमविच्छिन्नस्मृति सन्ततिरूपत्वमुपादितम् ॥

**सूत्र**कारकण्ठोक्तमसकदावृत्तिरूपत्वं तदभिप्रेतं ध्रुवानुस्मृतित्वं च वदतोवाक्यकारस्यायं भाव: । एतत्तुल्यन्यायतया विशेषान्तरोपस्थापकवाक्येसति वेदनादिशब्दास्तत्पर्यन्तास्स्युरिति । तस्मात्पूर्वोक्तं दर्शनसमानाकारत्वमपि वाक्य-

## गूढार्थसंग्रहः

स्यैव वैयर्थ्यं स्यादिति आवृत्तज्ञानानन्तरमेव सत्संपत्तिर्विवक्षितेत्यभ्युपगन्तव्यम् । तत्र चानन्तर्यं व्यवधानसहमित्यर्थ: 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते' (छा.६.८.६.) इति प्रथम 'तत्त्वमसि' इति वाक्यात्पूर्ववाक्येन निर्धार्यते । 'अथ सम्पत्स्ये' इति (६.१४') वाक्योत्तरं उत्तरखण्डे 'पुरुषं सोम्योपतापिनं ज्ञातयः पर्युपासते—तस्य यावन्न वाङ्मनसि सम्पद्यते' इत्यादौ ६.१५' पूर्वोक्तार्थस्यैव अभ्यासेन व्यतिरेकेण प्रदर्शनेन सद्विद्यानिष्ठस्याप्युत्क्रान्तिर्वर्तत एव इति श्रुतितात्पर्यं स्फुटं प्रतीयते । एतत्तात्पर्येणैव सूत्रकृता 'भोगेनात्वितरे क्षपयित्वाऽथ सम्पद्यते' इत्यत्रोक्तसम्पात्तिरुत्क्रान्तिव्यवहितेति द्वितीयपादे एतद्विषयवाक्यार्थमभिधाय गत्यनन्तरकालिकत्वमपि सत्सम्पत्तेरिति बोधनाय तृतीयपादे गतिं निरूप्य 'सम्पद्याविर्भाव: स्वेन शब्दात्' इत्यत्र .४.१.१. 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य' .छा.८.१२.२. इति श्रुतौ शरीरादुत्क्रान्तिकथनेन उत्क्रान्तिगत्यनन्तरकालिकोपसम्पत्तिरेवविवक्षितेति तात्पर्यनिर्णयसम्भवेन सत्सम्पत्तिरप्येवमेवेति निर्धारितम् ॥

इयं च सम्पात्तिः सगुणविद्याया एव फलमिति सद्विद्या सगुणविद्यैव, आवृत्तज्ञानरूपैवेत्येतेन सिद्धम् । परैरपि .ब्र. अ.स. प्रारब्धकर्मणः प्रतिबन्धकत्वमनङ्गीकृत्य चरमवृत्तेरेव सर्वद्वैतनिरासकत्वं अनुभवानुरोधेन .ल.चं. अङ्गीकृतमिति चरमवृत्तिर्देहपातात्पूर्वमवश्याभ्युपगन्तव्यैव । अतः 'तस्य तावदेव चिरं' इत्यादिश्रुतेः एतदर्थपरत्वमकामेनापि स्वीकार्यम् । वाक्यकृता 'उपासनं स्यात् ध्रुवानुस्मृतिः. इत्युत्तरवाक्ये ध्रुवा स्मृतिरिति छान्दोग्यवाक्यस्यैव विवक्षितत्वेन अनु-

## श्रीभाष्यम्

**सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः ।**

## श्रुतप्रकाशिका

काराभिप्रेतमित्यभिप्रयन्नाह । **सेयमिति** । सेयं असकृदावृत्तिरूपा ध्रुवानुस्मृतिरूपाचेत्यर्थः दर्शनशब्दस्य अर्थदर्शी तत्व दर्शीत्यादि प्रयोगात्परोक्षापरोक्षसाधारण्यमाशंक्याह । **दर्शनरूपताच प्रत्यक्षतापत्तिरिति** । प्रत्यक्षसमानाकारतापत्तिरित्यर्थः **'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञातइदंसर्वंविदितम्' 'आत्मावाअरेद्रष्टव्यःश्रोतव्योमन्तव्योनिदिध्यासितव्यः'** इति श्रवणादिपरोक्षज्ञानपर्वसूक्तेष्वापि पृथङ्निर्देशादितिभावः ॥

## गूढार्थसंग्रहः

शब्देन स्मृतिलंभे .छा. इत्याद्युत्तरवाक्यस्याप्यभिप्रेतत्वस्य पूर्वमेवाभिधानेन स्मृतिलंभानन्तरमेव सर्वग्रन्थिविमोक्षस्य श्रुत-वुक्ततया 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुत्यन्तरानुरोधेनच 'यावन्न विमोक्ष्य' इत्यत्र मोक्षणमपि स्मृतिलंभानन्तरकालिकं विवक्षितमिति वाक्यकारस्याशयः निर्णीयते । एवं 'तस्य तावदेव चिरं' इति श्रुत्यनुरोधेन 'आचार्यवान्पुरुषो वेद' इत्यत्र वेदनमुपासनं ध्रुवानुस्मृतिरूपं तस्य वेदनस्य प्रमात्वं आचार्यवानित्यतः लभ्यत इत्येव 'वेदनमुपासनं स्यात्' इत्यादिवाक्ये निर्धारितं भवति । एतेन 'तत्त्वमसी' इत्यादि महावाक्यस्थले वाक्यार्थज्ञानमुपासनात्मकीमीति सिद्धम् । 'अहं ब्रह्मास्मि' इति महावाक्यस्थले वाक्यार्थज्ञानमुपासनरूपमिति 'तद्विषये श्रवणात्' इति वाक्यकारोक्तहेतुना 'न स वेद' इत्यादिना प्रागेव भाष्ये साधितम् । प्रसिद्धमहावाक्यस्थले वाक्यार्थज्ञानस्योपासनात्मकात्वस्य तद्विषये श्रवणादित्यनेनोपादानेन सर्वत्राप्यनेनैव हेतुना तत्सिध्यतीत्याभिप्रेत्याह **सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदमुपासनमित्युक्तमिति ।**

**सिद्धंतूपासन**शब्दादित्यत्र उपासनतात्पर्यकश्शब्दो विवक्षितः । 'ध्रुवा स्मृतिः' (छा.७.२६.२) इति श्रुतिघटकशब्द एव अर्थविशेषविवक्षातात्पर्येण अनुशब्दयोजनेन निर्दिष्टः । 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति गीतासप्तमाध्यायावतरणभाष्योदाहृतप्रमाणवचने अनुशब्देन भक्तिविशेषलाभप्रतीतेः ध्रुवास्मृतिरित्यत्र 'तत्र प्रत्ययैकातानता ध्यानं' इति योगसूत्रोक्तध्यानमेत्र विवक्षितम् । तच्च स्मृतिलंभ इत्यनन्तरश्रुतौ लंभपदोपादानेन समाधिपर्यवसितमित्यभिप्रेत्य समाध्यनुसारिस्मृतितात्पर्येण ध्रुवानुस्मृतिरिति निर्देशः । 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यामिव समाधिः' इति योगसूत्रघटकविशेषणद्वयेन भक्तिरूपत्वं दर्शनसमानाकारत्वं च बोध्यते । 'सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः' (यो.सू.३-११) इत्युक्तसमाधिपरिणामस्य तदुत्तरसूत्रैकाग्रतापरिणामाविनाभूततया [यो'१'१'] भाष्यकृता एकाग्रनिरुद्धयोः संप्रज्ञातासंप्रज्ञातसमाधिरूपताया उक्त्या आसीनाधिकरणे 'यत्रैकाग्रता तत्राविशेषात्' ४ १ ११- इत्युत्तरसूत्रानुसारेण 'आवृत्तिरसकृत्' इत्यत्र असकृदावृत्तिरित्यनेन असंप्रज्ञातसमाधिपर्यन्तावृत्तेर्विवक्षितत्वेन उक्तविशेषद्वयं सूत्रकृतो विवक्षितमिति वाक्यकाराशयः । स्मृतेर्दर्शनसमानकारस्मृतिविशेषे प्रीतिरूपापन्नज्ञानविशेषे च पर्यवसानमपि सूत्रेण बोध्यत इत्ययमाशयो युक्त एव । एवं वाक्यकृतो विशेषद्वयविवक्षामभिप्रेत्यैव **सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता** इत्युक्तम् ॥

**अपरोक्षं** योगजन्यं इत्युपक्रम्य 'अथ परा यया तदक्षरं अधिगम्यते' (मु.१'१२-) इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानं (१.५.२३.ब्र.सू.) इत्युक्त्या ध्यानयोगजन्यसमाधिरेव साक्षात्काररूपत्वभक्तिरूपत्वयोः प्रति-

## श्रीभाष्यम्

**एवं प्रत्यक्षतापन्ना मपवर्गसाधनभूतां स्मृतिंविशिनष्टि**

## श्रुतप्रकाशिका

सूत्रकारवाक्यकारयोः कतिपयविशेषं वदतोस्सतिविशेषान्तरोपस्थापके तत्पर्यवसायित्वस्याभिप्रेतत्वात् श्रुत्यन्तरसिद्धं विशेषान्तरमस्तीत्याह । **एवमिति** । अनेन श्रवणादीनां मुक्त्युपायत्वनिषेधान्नोपासनस्य मोक्षोपायत्वमिति शङ्काव्युदाश्च भवति ।

## गूढार्थसंग्रहः

पादेन उक्तार्थस्य भाष्यकृदभिप्रेतत्वनिश्चयात् । इत्थं भाष्यकाराशयमभिप्रेत्य उक्तस्य समाधिरूपस्य ज्ञानस्य 'भेषजं भगवत्प्राप्तिः' इत्युक्तं परब्रह्मप्राप्तिमेवाह 'विज्ञानं प्रापकं' (वि.पु.६.७.९३.) इति श्लोकोऽवतारितो विष्णुचित्ताचार्यैः 'ध्यानार्चनप्रणामादि प्रीतपरमकारुणिकपुरुषोत्तमप्रसाद विध्वस्तस्वान्तध्वान्तस्य अनन्यप्रयोजनानवरतनिरतिशयाप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपभक्त्येकलभ्यः' इति (वे.सं.) श्रीसूक्तिः तत्प्रशिष्यैर्व्यासार्यैः 'ध्यानशब्देनाविच्छिन्नस्मृतिसन्ततिरूपध्यानमेवोच्यते । पश्चादनुध्यानशब्देन दिव्यात्मस्वरूपानुसन्धानरूपस्समाधिरुच्यते । स हि ध्यानसाध्यः । 'तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥' इति (वि पु'६.७.९२) वचनात् । उपेयविरोधिनिरासकत्वं समाधेरेव । ध्यानमपि समाधिविरोधिनिरासकं । ध्यानस्य समाधिनिष्पादकत्वमेवेति समाधेरेवाङ्गित्वम् । ध्यानस्यैव यत्र प्राधान्यमुच्यते तत्र समाधिपर्यन्तं ध्यानं विवक्षितं' इति विवृता ।

'योग्यं यमैश्च नियमैश्च विधाय चित्तं सन्तो जितासनतया स्ववशासुवर्गाः ।
प्रत्याहृतेन्द्रियगणाः स्थिरधारणास्त्वां ध्यात्वा समाधियुगलेन विलोकयन्ति ॥' (शर-दी.२१)
पद्माभिरामवदनेक्षणपाणिपादं दिव्यायुधाभरणमाल्यविलेपनं त्वाम् ।
योगेन नाथ शुभमाश्रयमात्मवन्तः सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम् ॥ २२
मानातिलङ्घिसुखबोधमहाम्बुराशौ मग्ना स्त्रिसीमरहिते भवतः स्वरूपे ।
तापत्रयेण विहतिं न भजन्ति भूयः संसारघर्मजनितेन समाधिमन्तः ॥ २३
'संप्रज्ञातास्थितिमतिगते निर्विकल्पे समाधौ शान्तावद्यं स्तिमितबहुलानन्दसन्दोहमन्तः ।
यत्तद्ब्रह्म स्फुरति यमिनां पूर्णषाड्गुण्यरूपं सा मे नित्यं हृदि हयमुखी देवता सन्निधत्ताम् ॥' (श दू.)

'ध्यानमेव हि यथावस्थितध्येयार्थवैशद्यातिशयात् तन्निगीर्णस्वरूपमिव भवति' श.दू ११ वा. 'सैव स्मृतिर्वैशद्यातिशयात् समाध्याख्या' त॰ टी 'तदेव च निदिध्यासनं प्रीतिरूपं प्रकरणविशेषात्समाधिः । सचाष्टाङ्गश्शास्त्रेषु शिष्यते । (न्याप.श.अ.२)इत्यत्राचार्यपादैरपि श्लोक (वि.पु) सूत्र (यो) विवरणपूर्वकं प्रागुक्तार्थस्स्थापितः । अतो वाक्यकारस्य भगवतः श्रीभाष्यकृतश्च उक्तार्थोऽभिप्रेत इति साम्प्रदायिकः पन्थाः ॥

स्वरूपग्रहणं (वि पु) अर्थमात्रनिर्भासं (योसू.) इत्यत्र भक्तिरेव विवक्षितेति वाक्यकाराभिप्रेतमर्थं श्रुत्यादिना साधयितुमुपक्रमते **एवं प्रत्यक्षतापन्नामित्यादिना** । अपवर्गसाधनभूतामिति प्रतीकोपासनव्यवच्छेदकथनेन (श्रु.प्र) अप्रतीकोपासनसामान्यस्य वक्ष्यमाणभक्तिरूपत्वं भाष्यकृतो विवक्षितमिति प्रतीयते । गीताभष्ये अप्रतीकालम्बनस्य जिज्ञासोः एकभक्तित्वाभावोक्तिः कैवल्यानुभव प्राक्कालिकोपासनदशाभिप्रायेण तदेव भगवद्व्यतिरिक्तफलेच्छासत्वात् । 'तत्र प्रयातागच्छन्तिब्रह्मब्रह्मविदोजनाः' (गी.८.२४) इत्येतदुत्तरं 'शुक्लकृष्णेगती' (८.२६) इत्येतत् श्लोकस्य भाष्ये एते शुक्लकृष्णेगती

## श्रीभाष्यम्

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामिति ।** (मुण्ड-उ-३-मु-२-खं-३-वा) **अनेन केवल श्रवण मनन निदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा**

## श्रुतप्रकाशिका

एवं उक्तेनप्रकारेण सामान्यविशेषन्यायेन प्रत्यक्षतापन्नामित्यर्थः । अपवर्गसाधनभूतामिति प्रतीकोपासनव्यवच्छेदः । **नायमात्मेति** । प्रवचनशब्देन मननं लक्षयति मननफलत्वात्प्रवचनस्य मननस्याचार्यप्रवचनफलत्वाद्वा प्रोच्यतेऽनेनेति करणव्युत्पत्त्यावा प्रवचनं मननम् । मेधा निदिध्यासनम् परिशेषात् । अस्मिन्वाक्ये श्रवणादीनामनुपायत्वं प्रतीतम् ध्रुवानुस्मृतिविशेषणत्वेन न किंचित्प्रतिपन्नं अतस्तद्वयात्रष्टे । **अनेनेति** । केवलश्रवणमनननिदिध्यासनानां वक्ष्यमाणविशेषविरहितानामित्यर्थः । यथा '**न पृथिव्यामग्निश्चेतव्य**' इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनंनिषिध्यते—नतु पृथ्वीमात्रे तद्वदिति भावः ॥

## गूढार्थसंग्रहः

ज्ञानिनां विविधानां पुण्यकर्मणांच श्रुतौ शाश्वते मते तद्यद्दत्थं विदुः अथ इमेग्रामे इत्युक्त्या प्रागुक्तब्रह्मविच्छब्दे 'तेषांज्ञानी नित्ययुक्तः' इत्यत्र उक्तज्ञानीविवक्षितः । सच पञ्चाग्निविद्यानिष्ठोऽपि । तस्यैव ब्रह्मप्राप्तिरपुनरावृत्तिश्चेति प्रतीतेः । अनावृत्तिश्शब्दात् (४.४.२२.) इत्येतद्भाष्ये 'नचोच्छिन्नकर्मबन्धस्य असंकुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्य अनवधिकातिशयानन्दं ब्रह्मानुभवतः अन्यापेक्षा तदर्थारंभाद्यसम्भवात्पुनरावृत्तिशङ्का । नच परमपुरुषस्सत्यसङ्कल्पः अत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति' इत्यत्रात्यर्थप्रियज्ञानिन एव पुनरावृत्तिसङ्कल्पो भगवतो नास्ति इतरविद्याविशेषेण अनवधिकातिशयानन्दं ब्रह्मानुभवतः तदेकप्रियस्यैवान्यापेक्षा स्वेच्छानिबन्धनपुनरावृत्तिप्रयोजिका नोदेतीति प्रतिपादनेन पञ्चाग्निविद्यानिष्ठस्य अत्यर्थप्रियज्ञानित्वाभावे पुनरावृत्तिप्रसङ्ग इति स्फुटतरं प्रतीयते । अतः सूत्र गीता तात्पर्यानुसारेण 'स एनान्ब्रह्म गमयति' 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादौ पञ्चाग्निविद्यानिष्ठस्य इतरविद्यानिष्ठापेक्षया फलवैलक्षण्यं नास्तीति स्फुटं भाष्यकाराशयस्य निश्चयेन पञ्चाग्निविद्यानिष्ठस्यापि कैवल्यानुभवानन्तरं अत्यर्थप्रियज्ञानित्वतात्पर्येण अप्रतीकोपासनसामान्यं 'अपवर्गोपायभूतां' इत्यत्र विवक्षितमिति व्यासार्यणामाशयः ॥

**केवलश्रवणमननेत्यादि** । श्रवणमननयोः, विधेः साक्षादात्मप्राप्त्युपायतायाश्चानभ्युपगमेऽपि 'नायमात्मा' (मु.२.३) इत्येतदुत्तरं 'एतैरुपायैर्यतते यस्तु विद्वान्' (मु.२.४) इत्यत्र साक्षात्परम्परासाधारणोपायानां वक्ष्यमाणतया परम्परया श्रवणमननयोरुपायत्वं प्रतीयते । 'यस्य देवे परा भक्तिः' (श्वे.६'६.२३) इति श्रुतौ पर्वभेदाभिन्नाया भक्तेः मुक्तिपर्यन्तार्थप्रकाशहेतुत्वस्य प्रतिपादनेन भक्तिरूपताक्रान्तश्रवणमननयोरेव स्वस्वफलभूतार्थप्रकाशहेतुत्वं विवक्षितमिति निश्चयसम्भवेन अत्र तद्व्यतिरेकबोधतात्पर्येण केवलशब्दः । भक्तिरूपानुध्यानेनैव लभ्यते नकेवलवेदनमात्रेण, 'न मेधया' इति केवलस्य निषिद्धत्वात् । एतदुक्तं भवति । यः मुमुक्षुः वेदान्तविहितवेदनरूपध्यानादिनिष्ठः यदा तस्य तस्मिन्नेवानुध्याने अनवधिकातिशया प्रीतिर्जायते, तदैव तेन लभ्यते परमपुरुषः' इति(वे'सं.) सूक्तिविवरणे उपासनादिविधायिवाक्याविरोधाय केवलश्रवणादिनिषेध इत्यवगम्यते इत्यभिप्रायेण वेदान्तविहितेत्युक्तं' इति व्यासार्योक्तिः श्रवणमनन-

## गूढार्थसंग्रहः

योरविधेयत्वेऽपि 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' (बृ.५.५.१) इत्यत्रोक्तपाण्डित्यस्य 'सहकार्यन्तरविधिः' (ब्र.सू.६. ४.४६) इति सूत्रे विधेयत्वस्य विवक्षितत्वेन 'पाण्डित्यं निर्विद्य' उपास्यं ब्रह्मतत्वं परिशुद्धं परिपूर्णं च विदित्वा श्रवण मननाभ्यां प्राप्तं वेदनं प्रतिलभ्येत्यर्थः। तच्च भगवद्भक्तिकृतसत्वविवृद्धिकृतं। यथोक्तं 'नाहं वेदैः' इत्यारभ्य 'भक्त्या त्वनन्यया शक्यः ज्ञातुं' इति। श्रुतिश्च 'यस्यदेवे परा भक्तिः' 'नायमात्मा प्रवचनेन' इत्यादिका इति तदर्थस्य भाष्ये प्रतिपादनेन पाण्डित्यविधिविरोधः इत्यभिप्रायेण प्रवृत्तेति बोध्यम्। 'यमेवैष वृणुत' इत्यत्र यच्छब्दस्यायमर्थः— यो मुमुक्षुः वेदान्तविहितवेदनरूपध्यानादिनिष्टः (वे.सं.) इत्यत्रोक्तः। 'अथ परा यया तदक्षरमधिगम्यते' (मु.१.१. १.) 'ओमित्येवात्मानं ध्यायथ' (मु.२.२.६) 'तद्विज्ञानेन परिपश्यान्ति धीराः' (मु.२.२.७.) 'क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावरे' (२.२.८.) 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः' (६.१.८.) इति पूर्वमुक्तम्॥

अत्र परविद्यासामान्यस्य ब्रह्मप्राप्तिकरणत्वं ध्यानरूपत्वं ध्यानानन्तरानन्दस्वरूपावगाहिदर्शनसमानाकारसमाधि रूपत्वं ब्रह्मप्राप्तिप्रतिबन्धककर्मसामान्यक्षयहेतुत्वंचाभिधाय चक्षुरादीन्द्रिय शब्दजन्यप्रत्यक्षाविषयस्य ब्रह्मणः सत्वप्रवर्तक सकलजीवज्ञानविकासहेतुभगवदनुग्रहलब्धध्यानानन्तरकालिकभगवदनुग्रहमूलकसमाधिरूपदर्शनरूपत्वं च तत्र प्रतिपादितम्। 'ज्ञानप्रसादेन' 'तगूँ ह देवमात्मबुद्धिप्रसादं' इत्युक्तेन भगवता विशुद्धसत्वः निष्कलं ध्यायमानः ततः ज्ञानप्रसादाद्भगवतः तं पश्यतीति योजनयाऽर्थः। अत्र शब्दजन्यापरोक्षविषयत्वं विवरणसंमतं न घटत इति 'नापि वाचा' इत्यत्र स्पष्टम्। ध्यानादिरहितैर्देवैः पुण्यकर्मणा च परमात्मनो ग्रहणं प्रतिषिद्धम्। अत्र 'तंपश्यति' इत्येतावन्मात्रोक्तावपि पूर्वं 'ओमित्येवात्मानं ध्यायथ' इत्येतदुत्तरं तद्विज्ञानेन परिपश्यान्ति धीराः आनन्दरूपं इत्युक्त्या आनन्दरूपदर्शनमेव तं पश्यतीत्यत्र विवक्षितम्। अत्र ध्यायमानशब्दार्थ एव यमेवैष इत्यत्र यच्छब्दार्थः। 'सालम्बनेन परिचिन्त्य नयान्ति तृप्तिं' इत्युक्तदिशा संप्रज्ञातसमाधौ तृप्तिशून्यः असंप्रज्ञातसमाधिनिष्ठः पर्याप्तकामस्येत्यत्र वक्ष्यते। एतदभिप्रायेणैव 'भक्ति रूपानुध्यानेनैव लभ्यते' इति (वे.सं.) प्रथममुक्तम्॥

पूर्वं समाधिपर्यवसित परविद्यायाः लाभकरणत्वोक्त्या नचक्षुषा गृह्यते इत्येतत्पूर्वार्धं वाक्यसच्छाये 'नायमात्मा प्रवचनेन' इत्यत्र पूर्वार्धे ध्यानस्य समाधिपर्यवसितस्य लाभकरणता निषेधो न सम्भवतीति अनुध्यानशब्देन सूचितम्। 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इत्यत्रोक्त एव 'उपासते पुरुषं येह्यकामाः' (मु.३.२.१) इत्यत्र 'पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्तिकामाः' इत्यत्रचोक्तः। पर्याप्ते आनन्दस्वरूपे ब्रह्मणि कामोयस्य स पर्याप्तकाम इत्यर्थः एवंच पूर्वोक्तसमाधि पर्यवसित ध्याननिष्ठएव 'यमेवैष वृणुत' इत्यत्र यच्छब्दार्थः। ज्ञानप्रसादेनेति प्रागुत्तरार्धे समाधेः भगवदनुग्रहमूलकत्वमुक्तं। अत्रतु समाधेः भगवत्कर्तृक वरणमूलक लाभहेतुत्वं प्रतिपाद्यत इति श्रुत्योरुभयोः परसङ्कल्पमूलकफलहेतुत्वप्रतिपादनेन सामरस्यम्। एवं च वेदार्थसंग्रहोक्तयच्छाब्दार्थनिर्णयमभिप्रेत्य 'यमेवैष वृणुते तेनैव लभ्यते' इत्युक्तम्। 'अनन्यचेतास्सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः' (गी.८ १६) इत्येतदुपबृंहणे सुशब्दे वरणं विवक्षितमित्यभिप्रेत्य 'मत्प्राप्त्यनुगुणोपासनविपाकं तद्विरोधिनिरसनमत्यर्थमात्प्रियत्वादिकं च अहमेव ददामीत्यर्थः। यमेवैष वृणुते तेन लभ्यः इति हि श्रूयते।' इति तद्भाष्ये उक्तम्। अत्र उपासनविपाकः दर्शनसमानाकारत्वं 'यो मां स्मरति' इत्यत्र स्मृतिमात्रनिष्ठस्योक्त्या 'ज्ञानप्रसादेन' इति श्रुत्यनुसारेण स्मृतिगतदर्शनसमानाकारत्वात्यर्थभगवत्प्रियत्वयोः भगवत्सङ्कल्पमूलकत्वं लभ्यते। अत्यर्थमत्प्रियत्वादिकं चेत्यत्रादिपदार्थः पर-

श्रीभाष्यम्

**यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तम् । प्रियतम एवहि वरणीयो भवति यस्यायं निरतिशयप्रिय स्स एवास्य प्रियतमो भवति । यथाऽयं प्रियतम आत्मानं प्राप्नोति तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम् । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामिबुद्धियोगं तं येन मामुपयान्तिते** (गी-१०-अ-१०-श्लो) **इति**

श्रुतप्रकाशिका

विवक्षितं विशेषं वाक्यतात्पर्य निरूपणेन दर्शयिष्यन् वाक्यस्यार्थान्वयं दर्शयति । **यमेवैष आत्मावृणुते तेनैव लभ्यइत्युक्तमिति** । वरणीयेन लभ्योऽस्तु–ततःकथं ध्रुवानुस्मृतेर्विशेषितत्वमिति शङ्कायां तद्दर्शयितुं लोकसिद्धप्रतीतिमाह । **प्रियतमएवहीति** । प्रीतिविषयमात्रस्य न वरणीयत्वं । किंतु * स्वयमुपस्थितस्य स्वीकारएव । अतस्तद्व्यावृत्त्यर्थं प्रियतमइत्युक्तम् ततः किमित्यत्राह । **यस्येति** । यस्यउपासकस्य अयं परमात्मा निरतिशयप्रीतिविषयः सएवास्य परमात्मनो निरतिशयप्रीतिविषयो भवति । * चेतनत्वेसति भगवतावरणीयत्वं भगवति निरतिशयप्रीतिमतएव यद्वा * स्वतः प्रियत्वं वरणीयत्वंच स्वस्मिन् प्रीतिमतएव पुण्यक्षेत्रादिषु भगवतः प्रीतिस्स्वस्मिन्प्रीतिमत्पुरुषवरणार्था । पत्रपुष्प फलादिषु तत्सम्बन्धनिबन्धना ॥

**स एवेत्यवकारेण** केवलश्रवणादिमद्व्यावृत्तिः । भगवति प्रीतिमत एव भगवत्प्रीतिविषयत्वमिति कथमिदमवगम्यत इत्यपेक्षायां अत्रप्रमाणतया स्मृतिवचनमर्थोपन्यासपूर्वकं दर्शयन् वरणप्रकारमपि विवृणोति । **यथेति** । अयं भगवति निरतिशयप्रीतिमान् प्रियतमः निरतिशयभगवत्प्रीतिविषयो भवन्नित्यर्थः । **'ददामिबुद्धियोगन्त'** मित्यस्यार्थविवक्षया स्वयमेवभगवान्प्रयतत इत्युक्तम् । अनेन वरणप्रकारोदर्शितः । भगवतैवोक्तमित्येवकारेण भगवदाप्त्यतिशयस्सूचितः । **तेषामिति** । **सततयुक्तानां** सततयोगं काङ्क्षमाणानां । *** आशंसायां भूतवच्चेति** कर्तरिक्तः

गूढार्थसङ्ग्रहः

ज्ञानपरमभक्त्यादिः । सच 'यमेवैष वृणुते' इत्यत्र विवक्षितः । तत्तात्पर्येण वक्ष्यते 'तेषां सततयुक्तानामित्यादि' इति तद्भाष्ये अनन्तरमुक्तम् । वेदार्थसङ्ग्रहेतु पूर्वं 'तं मामायुरमृतमित्युपास्व' (कौ.ब्रा.३.२.) 'प्राण एव प्रज्ञात्मा आनन्दः' (कौ.३.९.) इत्येतदुत्तरं 'एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्यः' (कौ.ब्रा.) इति श्रुत्यर्थविचारे 'यस्तु पूर्वं स्वयमेवातिमात्रानुकूल्ये प्रवृत्तः तंप्रति प्रीतः स्वयमेव भगवान् कल्याणबुद्धियोगदानं कुर्वन् कल्याणे प्रवर्तयति' इति श्रुत्यर्थमभिधाय 'यथोक्तं भगवता 'तेषां सततयुक्तानां–येन मामुपयान्ति ते' । (गी.१०.११.) इत्याद्युक्तम् । अतः 'यमेवैष वृणुते' 'एष एव साधुकर्म कारयति' इति यच्छब्दघटितश्रुत्योरैकार्थ्यम् 'तेषां सततयुक्तानां' इत्यादेरुभयोपबृंहणत्वं, जीवेच्छामूलकानुकूलाचरणजन्य प्रीतिमूलकफलदातृत्वपरत्वं च विवक्षितमिति स्फुटम् ॥

(वे.सं.) अनन्तरं 'यमेवैष वृणुते, इत्येतद्विवरणे 'यथोक्तंभगवता 'पुरुषस्स' गी.८.२३. 'भक्त्यात्वनन्यया' (११.५४) भक्त्या मामभिजानाति १८.५३. इति वचनत्रवमुपादाय एवंविधपरमभक्तिरूपज्ञानविशेषस्योत्पादकः पूर्वोक्ताहरहरुपचीयमान ज्ञानपूर्वककर्मानुगृहीत भक्तियोग एव' इत्युक्त्वा, 'यथोदितक्रमपरिणत भक्त्येकलभ्य एव' इति श्रुत्यर्थ उपसंहृतः । अत्र परभक्त्यनन्तरं परज्ञानपरमभक्त्योः गीताविवक्षितयोः प्रदर्शनेन परज्ञानपरमभक्तिदानमेव वरणमिति स्फुटम् ॥

## श्रीभाष्यम्

**प्रियोहि ज्ञानिनोऽत्यर्थमहं सच ममप्रियः । [गी-७-अ-१७-श्लो) इतिच**

## श्रुतप्रकाशिका

प्रीतिपूर्वकं ददामीत्यन्वयः अनेनपरस्पर विषयप्रीतिरुपास्योपासकयोर्दर्शिता । सततयुक्तशब्दार्थस्फुटीकरणायाह । **प्रियो- हीति** । अत्यर्थम् अतिक्रान्ताभिधेयम् प्रियत्वं वाचामगोचरमित्यर्थः ध्रुवानुस्मृतिं विशिनष्टीतिहि पूर्वमुक्तम् । अत्र योभगवतिप्रीतिमान् भवति तस्मिन्नुपासके भगवतः प्रीतिमत्त्वमुक्तम् ॥

## गूढार्थसंग्रहः

' यमेवैष वृणुते ' इत्यतः पूर्वं निरतिशयप्रीतिरूपभक्तेः श्रुत्युक्तायाः पूर्वोक्तवरणकर्मत्वान्यथाऽनुपपत्त्याऽपि यमे- वैष ' इत्यत्र यच्छब्दे विवक्षितत्वं प्रतिपादयति **प्रियतमएवहीत्यादिना स च मम प्रियः इति च इत्यन्तेन** । ' ददामि बुद्धियोगं तं ' इत्यत्र योगशब्दस्समाधिपरः । समाधिघटक एकांशः भजतामित्यत्रोक्तः । तद्धेतुकप्रीतिपूर्व कदानकर्मतयाऽपरांशः परज्ञानरूपः योगशब्देनोक्तः । पूर्वं एतां विभूतिं योगं च मम यो वेत्ति तत्वतः । सोऽवि- कम्प्येन योगेन युज्यते– १०.७. इत्यत्र तात्त्विकविभूतिगुणादिकं वेदितुरेव एतद्योगसम्बन्ध उक्तः । ' भक्त्यामाम- भिजानाति–तत्त्वतः ' इत्युत्तरत्रापि यावानित्यत्र गुणविभूत्यादेर्विवक्षिततया तात्त्विकगुणविभूत्यादिज्ञानस्यैव वक्ष्यमाण तया च अत्र बुद्धियोगोऽपि सविशेषविषयक एव । एतत्तात्पर्येणैव ' तमेव बुद्धियोगं विपाकदशापन्नं ' इति तद्भाष्ये उक्तम् । तस्य ' येन मामुपयान्ति ते ' इत्यत्रोक्तं प्राप्तिहेतुत्वं ' भक्त्यात्वनन्यया शक्यः–प्रवेष्टुं च परन्तप । भक्त्या मामभिजानाति–विशते तदनन्तरम् ' इति वक्ष्यमाणानुसारेण परमभक्तिमूलकं विवक्षितम् । एतत्तात्पर्येणैव वेदा- र्थसङ्ग्रहे ' भक्त्या मामभिजानाति ' इत्यस्योपादानम् । ' एवं प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा तमसः पारं नयति इति सुपर्णः, स्वपारं भगवान्नयतीति मौलाः ' इत्युक्त्वा ' प्रियार्हः ' इत्यत्र ' तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ' इत्यभिधाय, ' अथ उत्तरोत्तरगुणाविष्कारणे तां प्रीतिं वर्धयतीति ' प्रीतिवर्धनः ' ' भजतां प्रीतिपूर्वकं, ' ददामि बुद्धि- योगं तं ' इति । तथा निरूढभक्तिपरकोटिभिः विहायसं पदमेव गम्यते अस्मादिति ' विहायसगतिः ' स खल्वाह ' भ- क्त्या च भोगान्विपुलान् त्वमन्ते मत्प्रसादतः । ममानुस्मरणं प्राप्य मम लोके निवत्स्यति ' इति सूत्रं च ' तदो- कोऽग्रज्वलनं–शताधिकया ' (ब्र.सू ४.२.१६.) इति ' इति वदन्तः भट्टपादाः अन्तिमस्मृति मूर्धन्यनाडीप्रकाशादि सम्पादनमपि ' तेन लभ्यः , ' येन मामुपयान्ति ते , इत्यत्र प्राप्तिपूर्वकालिकभक्तिपरकोटितया विवक्षितं वरणपदार्थशरीर एव निविशते, इत्यभिप्रयन्ति । अतः ' प्रियो हि ज्ञानिनोऽत्यर्थं , इत्यादिवाक्ये ज्ञानिकर्तृक प्रीत्यनन्तरकालिकत्वस्य भगवत्कर्तृकप्रीतौ प्रतिपादनेन ' भजतां प्रीतिपूर्वकं ददामि , इत्यत्र भक्त्यनन्तरकालिकमेव भगवतः प्रीतिपूर्वकं दानं विवाक्षितमिति प्रतीयते । एतदनुसारेण ' यमेवैष वृणुते , इत्यत्र यच्छब्दे पूर्वप्रस्तुतसमाधिमत एव विवक्षितत्वेन समाध्यनन्तरकालिकं वरणं समाध्यनन्तरप्राप्तिपूर्वकालिक प्राप्त्यपेक्षितश्रुत्यादिविवाक्षित यावत्सम्पादनं वरणत्वेन विव- क्षितमिति सिद्धम् ॥

कठोपनिषद्यपि ' तं दुर्दर्शं–देवं मत्वा धीरा हर्षशोकौ जहाति , (१-२.१२.) ' तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ' १.२.२३. ' महान्तं विभुमात्मानं मत्वा धीरो न शोचति ' १.२.२६. इति ' नाय मात्मा ' इत्यतः पूर्वं श्रूयेत । धातुः प्रसादादित्यत्र श्वेताश्वतरश्रुत्यैकार्थ्यात् देवप्रसाद एव विवक्षितः । ननु मन- आदीनि करणानि धातवः शरीरस्य धारणात् प्रसीदन्तीति एषां धातूनां प्रसादात् इति परसम्मतार्थः (शं.उ.भा)

## गूढार्थसंग्रहः

युक्तः । धातुः प्रसादादिति सविसर्गकपाठस्यैव सर्वसम्मतत्वात् । सविसर्गपाठमभ्युपेत्य श्वे. धातुरिति जात्येकवचनमिति कस्याचिद्व्याख्यानं नादर्तव्यम् । धातोरिति पाठस्य केनाप्यनङ्गीकारेण, एवमर्थवर्णनस्यासङ्गतत्वात् । श्वेताश्वतरव्याख्यातृभिस्सर्वैरपि सविसर्गकपाठस्यैवाभ्युपगमात् । तैत्तरीयसायणभाष्ये 'धाता जगतो विधाता परमेश्वरः तस्य प्रसादोऽनुग्रहः' इति विवरणकरणाच्च । परैरपि शं.उ.भा. 'न आत्मानं दर्शनश्रवणमननविज्ञानालिङ्गं' इति विवरणेन तत्र विज्ञानशब्दस्य 'आत्मा वा अरे द्रष्टव्यः' इत्याद्यनुसारेण ध्यानमेवार्थः । तत्र ध्यानानन्तरकालिकमेव दर्शनं विवक्षितम् । ध्यानानन्तरकालिकदर्शनस्य तेषांमपि (सं.वे.सि.सा.सं.) सम्मतत्वात् । 'अणोरणीयान्—तमक्रतुः पश्यति' 'एको वशी—तमात्मस्थं येऽनुपश्यन्ति, इति मन्त्रद्वयस्य उपनिषदन्तरस्थत्वेन तत्र ध्यानानन्तरकालिकदर्शनस्यैव विवक्षायाः पूर्वं निर्धारणेन तदैकार्थ्यादत्रापि ध्यानानन्तरकालिकदर्शनमेव विवक्षितम् । 'नित्यो नित्यानां' इत्यादिपूर्वार्धस्य उपनिषद्द्वये एकरूपत्वेन, तमात्मस्थं येऽनुपश्यन्तीति तदुत्तरार्धेऽपि समाधिरूपदर्शनमेव विवक्षितम् । 'तत्कारणं साङ्ख्ययोगाधिगम्यं' इति श्वेताश्वतरतदुत्तरार्धस्यापि उक्तार्थानुकूलत्वात् । उत्तरत्र 'यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा' .क.१.३.६. इतीन्द्रियवशीकरणमुपक्रम्य विज्ञानसारथिः—आप्नोति तद्विष्णोः परमं पदं, १.३.९. इत्युक्तौ विज्ञानं, 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' १.३.१५. 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणां' क.२.६.११. 'लब्ध्वा योगविधिं च कृत्स्नं । ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युः' २.३.१८. इत्युत्तरश्रुत्यनुसारात् समाधिरूपदर्शनमेव । एवं च तमक्रतुः पश्यतीति पूर्वश्रुतौ समाधिरूपदर्शनस्यैव विवक्षितत्वेन 'देवं मत्वा' 'विभुमात्मानं मत्वा' इति पूर्वं परत्र च तदेव दर्शनं विवक्षितमिति 'यमेवैष वृणुते' इत्युत्तरश्रुतावपि यच्छब्दस्य समाधिमानिवार्थः । वरणमपि तदुत्तरकालिकप्राप्तिपूर्वयावत्सम्पादनमेव विवक्षितम् । एतावता समाधेरेव मुक्तिहेतुत्वं समाधिरूपदर्शनमेव उपनिषत्सु मुक्तिहेतुदर्शनं समाधिपर्यवसितध्यानस्यमुक्तिहेतुत्वादिकं परसङ्कल्पद्वारकत्वेन अदृष्टद्वारकमुपनिषत्सु विवक्षितमिति निर्णीतम् ।

एतेन 'ननु ततस्तु तं पश्यति निष्कलं ध्यायमान' इति ध्यान मपरोक्षफलं श्रूयते ; सत्यं, एकत्र चित्तस्य समवधानता तदैकाग्र्यनिमित्तं भवति । तदेकाग्रचेतसा सहकारिणा शब्द एव औपनिषदमिति तद्धितप्रत्ययसामर्थ्यादपरोक्षज्ञानमुत्पादयति । ध्यायमानो ज्ञानप्रसादेन पश्यतीति वाक्यस्यान्वयात् । दृष्टेनैवोपकारसिद्धावदृष्टकल्पनाऽयोगात् आपरोक्ष्यकामस्योपासनायां स्वयं प्रवृत्तेः । दृष्टार्थत्वाच्च निदिध्यासनविधानस्येत्युक्तं' इति विवरणं, 'नाप्यभ्यासात्साक्षाद्भावस्सिद्धः । नापि श्रूयते ; येन तदुद्देशेन ज्ञानसन्तानो विधीयेत ।' इति पञ्चपादिकाचेत्युभयं निरवकाशम् । परसम्मतं दृष्टार्थत्वं लोकदृष्टदृष्टान्तवैषम्येन न घटत इति पूर्वमेव निरूप्य समाधिपर्यवसितध्यानस्य मुक्तिहेतुत्वादेः सम्यग्भाष्ये उपपादनात् । 'तस्माद्भूतमभूतं वा यद्यदेव विभाव्यते । भावनापरिनिष्पत्तौ तत्स्पष्टम्' (प्र.वा.२८५) 'तत्र प्रमाणं संवादि यत्प्राङ्निर्णीतवस्तुवत् । तद्भावनाजं प्रत्यक्षं इष्टं शेषा उपप्लवाः ॥ .२८६. इति धर्मकीर्तिना उक्त एवार्थः, 'भावनाविशेषाद्धि अभूतमप्यनुभवमापद्यते । किं पुनर्भूतं' इति मण्डनमिश्रेणापि (ब्र.सि.) अङ्गीकृतः । 'वेदान्तवाक्यजज्ञानभावनाजाऽपरोक्षधीः । मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥' इति कल्पतरावपि इममर्थमभ्युपेत्यैव निर्विचिकित्स वाक्यार्थभावनापरिपाकसहितमन्तःकरणं अविद्याद्वयोच्छेदहेतुसाक्षात्कारं जनयतीति भामतीकार सिद्धान्तः प्रतिष्ठापितः । 'नचैष साक्षात्कारः मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलं अपि तु प्रत्यक्षस्य । तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटांकुरोत्पत्तिप्रसङ्गात्' इति भामती । 'दशमस्त्वमसीत्यत्रापि तत्सचिवादक्षा-

## श्रीभाष्यम्

**अतस्साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य सएव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते परआत्मेत्युक्तं भवति । एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते**

## श्रुतप्रकाशिका

**तत्कथं** ध्रुवानुस्मृतेर्विशेषितत्वमित्यतआह । **अतइति** । अतः, उक्तार्थस्य लोकस्मृतिभ्यां सिद्धत्वादित्यर्थः । यद्वा ध्रुवानुस्मृतिवचना द्वरणीयत्ववचना, द्वरणीयस्यच भगवति निरतिशयप्रीतिमत्त्ववचना, च्चेत्यर्थः साक्षात्काररूपास्मृतिरित्यनेन पूर्वोक्ताकारविशिष्टायाएव विशेषणान्तरमिति दर्शितम् । '**स्मर्यमाणस्यात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियेति**' अर्थेनैव विशेषोहि निराकारतयाधियामिति भावः । स्वयमप्यत्यर्थप्रिया * अनुभूयमानोऽनुभवइति वदयं निर्देश औपचारिकः अत्यर्थप्रीतिरूपेत्यर्थः । यद्वा अत्यर्थप्रिया अत्यर्थानुकूलरूपा स्मर्यमाणस्य भगवद्विषयस्य निरुपाधिक निरवधिकानुकूलत्वेन तद्विषयानुस्मृतिरपि हि निरतिशयानुकूला भवति । *यद्वा ध्रुवानुस्मृतिस्स्वयमत्यन्तानुकूलत्वादयुक्तावस्थायामपि प्रीतिरूपज्ञानेन प्रतिसन्धीयतइति प्रिया अतएवहि '**याप्रीतिरविवेकानां**' इत्यादिना प्रार्थ्यते ॥

**प्रीतिरूप** ध्रुवानुस्मृतेरपवर्गोपायत्वमुक्तम् अन्यत्र भक्तेरुपायत्वं दृश्यते । कथमनयोरैकार्थ्यमित्यत्राह । **एवंरूपेति** । यद्वा शेमुषी भक्तिरूपा इति भक्तिरूपज्ञानस्योपायत्वं प्रागुक्तम् कथमिदानीं *प्रीतिरूप ध्रुवानुस्मृतेरुपायत्वं प्रतिपाद्यत

## गूढार्थसंग्रहः

देव साक्षात्कारः' इत्यादिकल्पतरुश्च । अयमेवार्थः सर्वदार्शनिकसम्मतः, शब्दादपरोक्षंतु न कस्यचिदपि सम्मतमित्यावेदयति । 'तन्त्वौपनिषदंपुरुषम्' बृ ' आचार्यवान्पुरुषोवेद '.छा.' तद्धास्य विजज्ञौ ' छा ' वेदान्तविज्ञान सुनिश्चितार्थाः ' तै' इति परोदाहृत श्रुतिषु शब्दजन्यापरोक्षसाधकःकोऽपि शब्दो न श्रूयते ॥

'तं त्वौपनिषदं पुरुषं' इत्यत्र 'विज्ञानमानन्दं ब्रह्म' इत्याद्युत्तरवाक्ये कर्मफलविशेषेण ज्ञानफलप्रदत्वस्य ब्रह्मणि प्रतिपादनेन ज्ञानफलमदृष्टद्वारकमित्येव प्रतीयते । 'आचार्यवान्पुरुषो वेद' इत्यनन्तरं 'तस्य तावदेव चिरं' इति वाक्यसत्वेन वेदनस्य तावत्पर्यन्तसत्वप्रतीत्या ध्यानरूपतैव सिध्यतीति च पूर्वमेवोक्तम् । अतः भावनाविशेषाधीनदर्शनं सर्वसम्मतं परित्यज्य कस्यापि दार्शनिकस्यासम्मतं अनन्यथासिद्धप्रमाणामूलकं शब्दजन्यापरोक्षमङ्गीकृत्य ध्यानानन्तरकालिकदर्शनवाक्यस्थलेऽपि शब्देनैव दर्शनं विवक्षितमित्युक्तिः विवरणकारोत्प्रेक्षामूला निर्मत्सरैर्नादर्तव्या । अत एव 'मनसैवानुद्रष्टव्यं, इति श्रुतिरपि स्वरसतस्सङ्गच्छते । तदेतत्सर्वमभिप्रेत्य 'यमेवैष वृणुते, इति श्रुत्यर्थं उपसंहरति **अतस्साक्षात्काररूपा इत्यादिना** । साक्षात्काररूपेत्यत्र 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः, (यो.सू.) इति सूत्रे स्वरूपशून्यमिवेत्यस्यार्थः, **स्मर्यमाणात्यर्थप्रियत्वेनेत्यत्र** अर्थमात्रनिर्भासमित्यस्यार्थश्च विवक्षितः । सिद्धान्तेऽपि योगिप्रत्यक्षमिष्यते । 'पूर्वानुभूतार्थविषयकं भावनाबलजं ज्ञानं स्मृतिरेव । वैशद्यातिशयाद्दर्शनसमानाकारमेव तत् । तत्र प्रत्यक्षत्वाङ्गीकारे मानाभावात् । अननुभूतातीतानागतातीन्द्रियार्थविषयकं योगिप्रत्यक्षमिति विशेषः इति आचार्यपादैः (त.टी) उक्तम् । 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति (गीता.अ.७) सप्तमावतरण भाष्योदाहृत प्रमाणमभिसन्धायाह **एवंरूपाध्रुवानुस्मृतिरित्यादि** । —

## श्रीभाष्यम्

**उपासनपर्यायत्वाद्भक्तिशब्दस्य। अतएव श्रुतिस्मृतिभिरेव मभिधीयते तमेव विदित्वाऽति मृत्युमेति** [श्वे.उ-३.अ-८.वा] **तमेवं विद्वानमृतइहभवति । नान्यःपन्था अयनायविद्यते** [पु.सू. १७.वा] **नाहं वेदैर्नतपसा नदानेन नचेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसिमां यथा ॥ भक्त्यात्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुंच तत्वेन प्रवेष्टुंच परन्तप ॥** (गी.११ अ.श्लो.५३.५४) **पुरुष स्सपरः पार्थ भक्त्या लभ्यस्त्वनन्यया । इति** [गी-८.अ-२२.श्लो)

## श्रुतप्रकाशिका

इत्यत्राह। **एवंरूपेति।** एवंरूपा, साक्षात्कारत्व प्रीतिरूपत्वपर्यन्ता ध्रुवानुस्मृतिरेव भक्तिशब्दवाच्येत्यर्थः। कुतइत्यत्राह। **उपासनपर्यायत्वादिति** । उपासनादिशब्दानां भक्तिशब्दस्यचैकार्थवृत्तित्वं विवक्षितम् । ननु घटकुम्भशब्दयोरिव पर्यायत्वम् *एकार्थवृत्तित्वंच । '**सेवाभक्तिरुपास्तिरिति**' नैघण्टुकोक्तेरवगम्यते—'**स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते । भजइत्येषधातुर्वैसेवायां परिकीर्तितः ॥ तस्मात्सेवाबुधैःप्रोक्ता भक्तिशब्देन भूयसी**' इत्यादि चानुसंन्धेयम् ॥

**यद्यपि** साक्षात्काररूपत्वभक्तिरूपत्वादिपराणां वाक्यानां विद्याविशेषविषय प्रकरणपरिगृहीतत्वेऽपि सर्वोपासन साधारणत्वं लघुगुरुयत्नविकल्पानुपपत्तेः प्राप्तम् । तथाऽपि प्रपदनेतु लघुगुरुयत्नविकल्पानुपपत्तिरूपन्यायो *वचनबलप्रतिक्षिप्तः। नहि वचनविरोधे न्यायः प्रभवति वचनविरोधाभावादुपासनेषु तत्प्रवृत्तिः वेदान्तेषूपासनपराणां वाक्यानामैकार्थ्यसिध्यर्थं भक्तिदशापन्नस्योपासनस्यैवापवर्गोपायवेदनत्वमुक्तम् । स्मृतिवचनप्रदर्शनं च श्रुत्यर्थवैशद्याय कृतम् । *इदानीन्तु श्रुतिस्मृत्योरैकार्थ्येन मुक्त्युपायवेदनस्य भक्तिरूपोपासनत्वमुपपाद्यते । **अतएवेति** । अतएव अपवर्गोपायवेदनस्य भक्तिरूपोपासनत्वादेवेत्यर्थः ॥

**तमेव** विदित्वेतिवाक्यं श्वेताश्वतरोपनिषदि श्रूयेत तत्र। '**तस्मात्सर्वगतश्शिवइति शिवशब्दग्रहणाच्छिवस्य**' परमात्मत्वविषयत्वभ्रमः कस्यचिन्मन्दधियस्स्यादिति तन्निवृत्त्यर्थम्। '**वेदाहमेतं पुरुषं महान्तम्**' '**महान्प्रभुर्वैपुरुषस्सत्त्वस्यैषप्रवर्तकः**' इत्युपक्रमोपसंहारयोरवगतपरमपुरुषपरैव सोपनिषदिति *पुरुषसूक्तैकार्थ्यं दर्शयितुं तमेवं विद्वानितिवाक्यमुपात्तम् । तमेवं विद्वानितिवाक्ये, नान्यः पन्थाइति परमपुरुषवेदनव्यतिरिक्तोपायनिषेधः कृतः। **नाहंवेदैरि**त्यादिना तद्भक्तिव्यतिरिक्तोपायनिषेधउक्तः । उभयोरप्युपबृंहणोपबृंहणीयवचनयोः प्रमाणत्वेन सर्वाविगीत

## गूढार्थसंग्रहः

**उपासनपर्यायत्वाद्भक्तिशब्दस्येति** । मांच योऽव्यभिचारेण भक्तियोगेन सेवते। (गी) इति वचनमुदाहृत्य 'इयमेवभक्तिरूपा सेवा' (वे.सं) इत्युक्त्या लोके गुरुमुपास्ते राजानमुपास्ते इति च यत्तात्पर्येण गुर्वादीननुवर्तते स एवं उच्यते। (४.१.१.शं.भा.) इति परोक्त्या च भक्ति रुपासनं एकैव व्यक्तिरित्यर्थः प्रदर्शितो भवति ॥

'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र एवकारेण ब्रह्मान्याविषयकवेदनं विवक्षितं न ध्यानमिति, परेषामाशङ्कां परिहर्तुमाह **अत एवेत्यादिना**। 'तमेव विदित्वा' इति श्वेताश्वतरतृतीये पठ्यते । तत्र च प्रथमे , ध्याननिर्मथनाभ्यासाद्देवं पश्येत्' इत्यत्र, द्वितीये 'त्रिरुन्नतं प्राप्य समं शरीरं' .८. इति योगमुपक्रम्य, 'ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि' .९. इति योगफलदातृत्वं ब्रह्मणोऽभिधाय' 'ब्रह्मण्यभिव्यक्तिकराणि योगे' ११. इत्यादिना योगोपयुक्तमभिधाय, 'यदात्मतत्त्वेन तु ब्रह्मतत्वं दीपोपमेनेह युक्तः प्रपश्येत्। अजं ध्रुवं सर्वतत्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः

## श्रीभाष्यम्

**एवंरूपाया ध्रुवानुस्मृते स्साधनानि यज्ञादीनि कर्माणीति यज्ञादि श्रुतेरश्ववत्**

## श्रुतप्रकाशिका

येरैकार्थ्ये वेदनादिशब्दानां भक्तिपर्यन्तत्वे सिध्यतीति भावः । उपायान्तरनिषेधकण्ठोक्त्या, ज्ञानदर्शनप्राप्तीनां भक्ति साध्यत्वकण्ठोक्त्या, च *नाहं वेदैरितिवचन मुपात्तम् ॥

ननु 'भक्त्यामामभिजानाति' 'ततो मां तत्त्वतोज्ञात्वा विशते तदनन्तरमिति' भक्तिजन्यज्ञानस्यै-वाव्यवहितोपायत्वमवगम्यते । नतु भक्तेरिति शङ्काच नाहं वेदैरित्यनेन परिहृता भवति । अत्र ज्ञानदर्शनयोरिव प्राप्तेरपि भक्तिसाध्यत्वावगमात् । भक्त्या प्रवेष्टुंच शक्यइतिह्यन्वयः । भक्त्यामामिति वचनेऽपि ततो मां विशतइति तच्छब्दपरामृष्टाया भक्तेरेव प्राप्त्युपायत्वमवगम्यते । तत इति भक्तिपरामर्शाभावे *तदनन्तरमित्यनेन पौनरुक्त्य-प्रसङ्गात् । अतश्च भक्तिरेवाव्यवहितोपायः पुरुषस्सपरः पार्थेत्यत्रच भक्त्यालभ्यइति भाक्तेः प्राप्तिसाधनत्वं स्वर-सतोऽवगम्यते । अनेन पुरुषशब्दप्रत्यभिज्ञापित पुरुषसूक्तप्रतिपाद्यवस्त्वैक्यवत्तत्प्रतिपाद्योपायैक्यं न्याय्यमिति सूचितम् ॥

अस्त्वेवं वेदनस्य भक्तिरूपोपासनत्वसिद्धिः ततः प्रकृतस्य कर्मापेक्षितत्वस्य किमायातमित्यत्राह । **एवमिति** । एवंरूपायाः अपरोक्ष्याप्रीतिरूपत्व विशेषणविशिष्टायाः । वाक्यकारसूत्रकाराभ्यामभिप्रेताः कण्ठोक्ताश्च मोक्षोपायज्ञाना-वस्थाविशेषाः कर्मसाध्या इति भावः । **ध्रुवानुस्मृतेस्साधनानीति** । यथा असिनाजिघांसतीत्यत्रासेर्हननसाधनत्वं नात्विच्छासाधनत्वम् । तथा यज्ञेन विविदिषन्तीत्यत्रापि विद्यासाधनत्वमेवोक्तम् नतु तदिच्छासाधनत्वम् । यज्ञा देर्वेदनेच्छासाधनत्वेन विनियोगायोगादिति भावः । तथाहि सर्वेषां पुरुषाणामवान्तरसाध्योपायेप्रवृत्तिः परमसाध्ये-च्छयाविना नोपपद्यते यथा यागाद्युपायभूतद्रव्यार्जनादौप्रवृत्ति र्यागादिसाध्यापूर्वादिविषयेच्छयाविना नोपपद्यते । तथा इच्छासिध्यर्थमनुष्ठान मिच्छासम्पाद्यवेदनेच्छयाविना नोपपद्यते । अतो वेदनेच्छायां जातायां वेदनोपायभूतेच्छा सिध्यर्थानुष्ठानम् । तस्यां जातायांच तदर्थमनुष्ठानमनपेक्षितमिति तदनुष्ठानविधिवैयर्थ्यस्यात् ॥

किंच स्वसिद्धिसापेक्षा स्वसिद्धिरित्यात्माश्रयः । वेदनेच्छया इच्छासिद्ध्यर्थं कर्मानुष्ठानं इच्छासिद्ध्यर्थ-कर्मानुष्ठानाद्वेदनेच्छासिद्धिरित्य *न्योन्याश्रयणंवा, अतो विविदिषासाधनत्वं कर्मणां नयुक्तम् । नन्विच्छासिद्ध्यर्थकर्मा-

## गूढार्थसंग्रहः

(श्वे.१५-) इत्युक्तौ च योगरूपदर्शनमेव सविशेषविषयकं विवक्षितमिति प्रतीयते । 'तमेव विदित्वा' इत्याद्यु-त्तरं 'अणोरणीयान्—तमक्रतुं पश्यति वीतशोको धातुः प्रसादात्' ३.२०. इत्यत्रापि प्रागुक्तयोगरूपदर्शनमेव विव-क्षितम् । एतत्पूर्वार्धे 'वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात्' इति देशविशेषस्य पूर्वमभिधानेन ब्रह्मो-डुपेनेह प्रतरेत' इति पूर्वश्रुत्यनुसारेण च तमेव विदित्वा मृत्युं अति—अतिक्रम्य तमेव एतीति वेदनसाध्यप्राप्तिरभि-धीयते । एवमन्वयस्य पूर्वं विवक्षायामेव 'नान्यः पन्थाः' इति व्यतिरेकोक्तिस्सङ्गच्छते । अतः ध्यानानन्तरकालिक दर्शनं सविशेषविषयमेव 'तमेव विदित्वा' इत्यत्र ज्ञानसामान्यवाचिनः विदिधातोरर्थः विवक्षित इति सिद्धम् । षष्ठे 'तमात्मस्थं येऽनुपश्यान्ति धीराः' .६.१२. 'तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा' .६.१३. इत्येतदुत्तरं 'एको हँसो भुवनस्य मध्ये स एवाग्निस्सलिले सन्निविष्टः' .६.१५. इत्येतत्पूर्वार्धे जीवात्मोपकारकावतारमभिधाय 'तमेव विदित्वा' इत्यादि पठ्यते । तदनन्तरं 'स विश्वकृद्विश्वविदात्मयोनिः ज्ञः कालकालो गुणी सर्वविद्यः प्रधानक्षेत्रज्ञपति र्गुणेशः संसारमोक्षस्थितिबन्धहेतुः, .६.१६' इत्यत्र 'तमेव विदित्वा' इति प्रगुक्ततच्छब्दार्थस्यैव गुणान्मोक्षहेतुत्वं चाभि-

## श्रीभाष्यम्

**इत्यभिधास्यते** [शारी.३.अ-४.पा-२६-सू.] **यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते—तथाऽपि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्या भ्यासाधेयातिशयस्याऽऽप्रयाणा दनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वा त्तदुत्पत्तये सर्वाण्यप्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि ॥**

## श्रुतप्रकाशिका

नुष्ठानस्यात्माश्रयादिग्रस्तत्वे क्वचिदपीच्छा न सम्भवेत्। इच्छाहेतुभूतकर्मानुष्ठानायोगात् । न चेच्छायाविषयवैलक्षण्यज्ञानमात्राधीनत्वं वैलक्षण्यज्ञानेऽपि कस्यचिदिच्छाऽनुत्पत्तिदर्शनात् । अतः कस्यचिदिच्छोत्पत्तेः कर्महेतुकत्वमाश्रयणीयम्। तच्च तवानुपपन्नम्। नैवं भोगादृष्टोद्बोधितपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्तेः। नचा * ज्ञातसुकृतवशाद्धर्मरुचिवद्यज्ञादिना वेदनेच्छासिद्धिरिति वाच्यम्। बह्वर्थव्ययायाससाध्यानां यज्ञादीना मज्ञातसुकृतरूपत्वासम्भवात्। * यज्ञेन विविदिषन्तीति वाक्यस्यह्यर्थश्चिन्त्यते अतो बुद्धिपूर्वकमेव यज्ञाद्यनुष्ठानम्। तत्र मोक्षोपायवेदनेच्छाया अभावे बह्वर्थव्ययत्नसाध्यकर्मणां फलान्तराभिसन्धिपूर्वकत्वनियमान्नविविदिषां साधयति। फलान्तराभिसन्धिविधुरंतु यज्ञादिकं वेदनेच्छयाविना नोपपद्यते, प्रयोजनानुद्देशेन प्रेक्षावतः प्रवृत्त्ययोगात्। प्रकृष्टप्रयोजनतदुपायेच्छाविरहे क्षुद्रप्रयोजनपरित्यागायोगाच्च अतोऽवान्तरसाध्येच्छासिद्ध्यर्थमनुष्ठानं परमसाध्यवेदनेच्छयाविना नोपपद्यतइति स्वसिद्ध्यर्थ कर्मानुष्ठानस्य स्वसिद्धिसापेक्षत्वादा * त्माश्रयादिदोषस्स्यादेव ॥

**अभिधास्यतइति**। तत्रो * पपादयिष्याम इत्यर्थः। विविदिषासाधनत्वे यज्ञादेरात्माश्रयादिदोषाभावमभ्युपगम्याह। **यद्यपीति**। तस्यैव इच्छाविषयभूतस्य ध्यानरूपस्येति वाक्यार्थज्ञानव्युदासः ध्यानस्याप्येकदिनानुष्ठेयत्व व्युदासार्थमाह। **अहरहरिति**। अहरहरनुष्ठानफलमाह। **अभ्यासेति**। अहरहरनुष्ठानेऽपि मासर्तुसंवत्सराद्यवधित्वव्यावृत्त्यर्थमाह। **आप्रयाणादिति**। आप्रयाणादनुवर्तमानत्वेऽप्येकद्वित्रिदिनान्तरितव्यावृत्त्यर्थमहरहरनुष्ठीयमानस्येत्युक्तम्। तत्रापि स्मृतिविच्छेदव्युदासार्थं ध्यानरूपस्येत्युक्तम्। **तदुत्पत्तये**। विविदिषोत्पत्तये वेदनस्याव्यवहित पूर्ववृत्तत्वेऽप्यर्थवशा * त्तच्छब्दो विविदिषापरः विविदिषासाधनत्वं ह्यभ्युपगम्योच्यते ॥

## गूढार्थसंग्रहः

धाय 'तं ह देवमात्मबुद्धिप्रसादं' इत्यत्र जीवबुद्धिविकासहेतुत्वं तस्यैवाभिधाय 'यस्य देवे परा भक्तिः—तस्यैते कथिता ह्यर्थाः प्रकाशन्ते' (६.२३) इत्युपसंहृतम्। अत्र 'तमेव विदित्वा' इत्यत्र ज्ञानसामान्यवाचिनः विदिधातोः ध्यानानन्तरकालिकदर्शन भक्तिरूपविशेषपरत्वं स्फुटं प्रतीयते । 'यस्य देवे परा भक्तिः' इत्यत्र पर्वभेदभिन्नाया भक्तेः अर्थप्रकाश जीवबुद्धिविकासरूपमुक्तिपर्यन्त फलहेतुत्वं गीताऽनुरोधेन विवक्षितामित्यभिप्रेत्य अत्र 'नाहं वेदैः' इत्यादि 'लभ्यस्त्वनन्यया' इत्यन्तगीतावचनोपबृंहणोदाहरणम् ॥

**तथाऽपि तस्यैव वेदनस्य—यावज्जीवमनुष्ठेयानीति**। 'तमेतं वेदानुवचनेन' इत्येतद्भाष्ये (शं) 'यज्ञादिसहपाठाच्च यज्ञादीन्येव कर्माण्यनुक्रमिष्यन् वेदानुवचनशब्दं प्रयुङ्क्ते' इत्युपक्रम्य 'कर्मणां विशुद्धिहेतुत्वात् । कर्मभिः संस्कृता हि विशुद्धात्मानः शक्नुवन्त्यात्मानमप्रतिबन्धेन वेदितुं। तथा हि आथर्वणे 'विशुद्धसत्वः, ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति । स्मृतिश्च 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादिः । इति एवं 'काम्यव-

## गूढार्थसंग्रहः

र्जितं नित्यं कर्मजातं सर्वं आत्मज्ञानोत्पत्तिद्वारेण मोक्षसाधनत्वं प्रतिपद्यते । एवं कर्मकाण्डेनाप्येकवाक्यताऽवगतिः । एवं यथोक्तेन न्यायेन 'एतमेवात्मानं विदित्वा यथा प्रकाशितं मुनिर्भवति । मननान्मुनिः योगी भवतीत्यर्थः । ' इति परैः (शं.उ.भा.) उक्त्या योगसम्बन्धिदर्शनमेव ध्यानानन्तरकालिकं विविदिषन्तीत्यत्र वेदनं विवक्षितमिति प्रतीयते । 'वेदमनूच्य' इत्यादितैत्तिरीयभाष्येऽपि 'प्राग्ब्रह्मात्मविज्ञानात् नियमेन कर्तव्यानि श्रौतस्मार्तानि कर्माणीत्येवमर्थः । अनुशासन श्रुतेः पुरुषसंस्कारार्थत्वात् । संस्कृतस्य हि विशुद्धसत्वस्य आत्मज्ञानमञ्जसैवोपजायते । 'तपसा कल्मषं हन्ति विद्याऽमृतमश्नुते' इति हि स्मृतिः । वक्ष्यतिच 'तपसा ब्रह्म विजिज्ञासस्व' इति । अतो विद्योत्पत्त्यर्थं कर्माण्यनुष्ठेयानीति' इति अतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति । मन्त्रवर्णाच–'अविद्यया मृत्युं तीर्त्वा-विद्ययाऽमृतमश्नुते' इति । स्वात्मलाभे तु पूर्वोपचितदुरितप्रतिबन्धापनयद्वारेण विद्याहेतुत्वं प्रतिपद्यन्ते कर्माणि नित्यानि इति । नह्यग्निहोत्रादीन्येवकर्माणि ब्रह्मचर्यं तपः सत्यवचनं शमो दमोऽहिंसेत्येवमादीन्यपि कर्माणि इतराश्रमप्रसिद्धानि विद्योत्पत्तौ साधकतमान्यसङ्कीर्णानि विद्यन्ते ध्यानधारणादिलक्षणानि च । वक्ष्यति च 'तपसा ब्रह्म विजिज्ञासस्व' इति । यदुक्तं कर्मणि श्रुतेरधिको यत्न इत्यादि ; नासौ दोषः । यतो जन्मान्तरकृतमपि अग्निहोत्रादिलक्षणं कर्म ब्रह्मचर्यादिलक्षणं च अनुग्राहकं भवति विद्योत्पत्तिं प्रति । येन जन्मनैव विरक्ता दृश्यन्ते केचिदिति । कर्मभ्य एव पूर्वोपचितदुरितप्रतिबन्धकक्षयात् विद्या उत्पद्यते चेति कर्मभ्यः पृथगुपनिषच्छ्रवणादिप्रयत्नोऽनर्थक इति चेत् ; न नियमाभावात् । नहि प्रतिबन्धक्षयादेव विद्योत्पद्यते ; नत्वीश्वरप्रसादतपोध्यानाद्यनुष्ठानादिति नियमोऽस्ति । अहिंसाब्रह्मचर्यादीनां च विद्यां प्रत्युपकारकत्वात् । साक्षादेव कारणत्वाच्छ्रवणमनननिदिध्यासनादीनाम् । अतस्सिद्धान्याश्रमान्तराणि सर्वेषां चाधिकारो विद्यायाम् । ' इति च परैरुक्तम् । अत्रापि ध्यानस्य विद्यां प्रति साक्षात्साधनत्वोक्त्या ध्यानरूपज्ञानविरोधिप्रतिबन्धकनिवर्तकत्वेन सर्वेषामाश्रमकर्मणां विद्याहेतुत्वमित्यर्थस्सिद्धः ॥

तत्वप्रदीपिकायामपि 'विविदिषन्ति यज्ञेनदानेनेति तृतीयाश्रुत्या विधेयविद्याकरणत्वेन यज्ञादेः प्रतिपादनादिति । तस्मात् 'व्रीहिभिर्यजेत' इत्यादाविव करणशरीरनिर्वर्तकतया च यज्ञादीनां करणत्वं यज्ञेनेति तृतीयाश्रुत्या निश्चीयते इति । तथेहापि परिपन्थिदुरितशोधनव्यवधानेन यज्ञादेर्विज्ञानकरणतायां न कश्चिद्विरोधः । ' इति च चित्सुखाचार्यैरुक्तम् । वेदान्तसूत्रमुक्तावल्यामपि 'ब्रह्मविद्याऽपि अयोग्यत्वात् स्वजन्यफले कर्मानपेक्षाऽपि स्वोत्पत्तौ तदपेक्षैव । पापक्षयादिद्वारा तदपेक्षाया योग्यत्वात् । 'तमेतं वेदानुवचनेन–अनाशकेन' इति श्रुत्या विविदिषां विद्यां वोद्दिश्य यज्ञाद्याश्रम धर्ममात्रविधानाच्च यज्ञादिनिष्ठविविदिषादिसाधनत्वस्य अपूर्वत्वात्, विविदिषन्तीत्यस्य लेडन्तत्वाच्च । वेदस्य अनुवचनं अध्ययनं ब्रह्मचारिणो धर्मः, यज्ञदाने गृहस्थस्य, तपो वानप्रस्थयतिनोः । अनाशकेन–कर्तव्यतया आन्तराविरोधिना अथवा आशकं–अशनं । ईषदर्थको नञ् हितमितमेध्याशनेनेति यावत् । तथाच भिक्षुधर्मोऽयं, तपस्तु वानप्रस्थस्यैव अत्र यज्ञादिनानापदार्थाः विविदिषायां साधनत्वेन न विधीयन्ते, वाक्यभेदापत्तेः । नापि यज्ञादीवीशिष्टैकाभावना । यज्ञादिसकलसाधनाविशिष्ट प्रयोगान्तरविध्यापत्तेः । किं तु यज्ञादिप्रत्येकान्वितनानाभावनाः तन्त्रेण एकाख्यातोपात्ताः । तथाच एकपदोपात्तत्वा दोग्नयादिषण्णां स्वर्गाद्युद्देशेनेव बहूनां विधेयत्वेऽपि न वाक्यभेदः । ' इति ब्रह्मानन्द सरस्वतीभिरुक्तम् ॥ अत्र विविदिषां विद्यां वा उद्दिश्येत्यत्र पूर्वं बहुत्र शङ्कराचार्यवाक्येषु प्रमाणोपन्यासपूर्वकं विद्याहेतुत्वस्याभिधानेन तत्रैव स्वतात्पर्यमिति विद्यामित्यन्त्योक्त्या सूचितम् । 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ।' इत्यत्र तत इति ग्रहणं विविदिषाव्यवधिं दर्शयति । तदर्थमुक्तं 'तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान्' 'पुण्येन पापं विनिहत्य पश्चा त्सजायते ज्ञानविदीपितात्मा ।' (सनत्सुजातीयं.२.८.) 'ज्ञानेन चात्मानमुपैति विद्वान्'

## श्रीभाष्यम्

**वक्ष्यतिच आप्रयणात्तत्रापि हि दृष्टं** [शा.४.अ.१-पा-१२.सू.] **अग्निहोत्रादितु तत्कार्यायैव तद्दर्शनात्** । [शा.४.१.पा.१६.सू.] **सहकारित्वेनच** [शा-३-अ.४-पा-३३-सू.] **इत्यादिषु**

## श्रुतप्रकाशिका

आप्रयाणादहरहरुपासनानुवृत्तौ * यावज्जीवं कर्मणोऽपेक्षितत्वेच किं प्रमाणमित्यत्राह । **वक्ष्यतिचेति** । चश्शङ्का निवृत्तौ । * सूत्रसन्दर्शने तद्विषयभूतश्रुतिवाक्यमपि दर्शितं भवतीत्यभिप्रायेणोपासनानुवृत्तिपरं सूत्रं दर्शितम् । **आप्रयाणादिति** । **'सखल्वेवं वर्तयन्यावदायुषं'** इतिश्रुतिः यावच्छब्दस्य साकल्यार्थत्वादहरहरनुष्ठानसिद्धिः । तावत्कर्मापेक्षामाह । **अग्निहोत्रेति** । आश्रमधर्माणा * माश्रमशेषत्वेऽपि विद्याङ्गत्वमप्यस्तीत्याह । **सहकारित्वेनचेति** । इत्यादिषु सूत्रेष्विममर्थं वक्ष्यतीत्यर्थः उक्तं कर्मणो विद्याङ्गत्वमुपासनस्य शमाद्यङ्गकत्वविरोधान्नोपपद्यत इत्याशङ्क्य विरोधं परिजि-

## गूढार्थसंग्रहः

(२.अ.९) इत्यादौ च पश्चाद्ग्रहणमुक्ताभिप्रायम् । अन्यथा तत इति पश्चादिति च वैयर्थ्यात् । ' (सि.सि.अं) इत्युक्तिरनादरणीया । तत इत्यस्याभावे कर्मणां परम्परयोपयोगः नतु ज्ञाने साक्षाद्धेतुत्वं इति भ्रमनिरासेन करणशरीरनिष्पादकत्वेन हेतुत्वबोधनाय तत इति चित्सुखाचार्यैरेवोक्तत्वात् । पश्चादित्यपि व्यवधानमन्तरा ज्ञानोत्पत्तितात्पर्येण अनन्तरकालबोधकशब्दद्वयेन आनन्तर्यनिश्चय एव सर्वसम्मतः नतु केनचिद्व्यवहितत्वनिर्णयः ।

यद्यपि परैः प्राग्ब्रह्मविज्ञानात् नियमेन कर्तव्यानि श्रौतस्मार्तानि कर्माणि । 'जन्मान्तरकृतकर्मभ्यश्च प्रागपि गार्हस्थ्यात् विद्योत्पत्तिसम्भवात् ' (शं-तै.उ.भा.) 'आत्मज्ञानोदयादूर्ध्वं पुरुषार्थावसानतः । स्वतास्सिद्धेश्च मोक्षस्य कर्मकाण्डमनर्थकम् ॥ ' (तै.वा.) इत्युक्त्या यावज्जीवं कर्मणामनुष्ठेयत्वं तेषामनभिमतम् । अपरोक्षज्ञानानन्तरं विदेहमुक्तिपर्यन्तं कर्मणामुपयोगविरहात् । तथाऽपि 'आवृत्तिरसकृदुपदेशात् ' इत्यादौ सूत्रकृतः अनावृत्तज्ञानस्य मुक्तिहेतुत्वं नास्तीति सिद्धान्तस्य स्थापयिष्यमाणतया समाधिपर्यवसितध्यानस्यैव मुक्तिहेतुतया दर्शनं तादृशमेव विवक्षितमिति चरम शरीरवियोगपर्यन्तं समाधिपर्यवसित ध्यानात्मकदर्शनावृत्तेः आवश्यकतया दैनान्दिनतदुत्पत्तिप्रतिबन्धक दुरितनिरसनेन तादृशदर्शनोत्पत्त्यर्थं यावज्जीवं कर्मणामनुष्ठानमावश्यकम् । इत्थमेव सूत्रकारसिद्धान्त इत्युत्तरत्र स्थापनमभिप्रेत्य **वक्ष्यति चेत्यादिना** सूत्रत्रयोपादानम् ॥

अत्र यद्यपि परैः 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ' (ब्र.सू.४.१.१६.) 'सहकारित्वेन च ' ३.४.३३' इति सूत्रद्वये 'तमेतं वेदानुवचनेन ' इति श्रुतिमुदाहृत्य अनभिसंहितफलकर्मणां ज्ञानपूर्वमनुष्ठितानां विद्योत्पत्त्यर्थत्वस्य अभिधानेऽपि 'आप्रयाणात्तत्रापि हि दृष्टम् ' (४.१.१२) इत्यत्र आवृत्तिस्सर्वोपासनेष्वप्यादर्तव्येति स्थितमाद्येऽधिकरणे तत्र यानि तावत् सम्यग्दर्शनार्थान्युपासनानि तेषां सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं न हि किंचिच्छासितुं शक्यं इति अभ्युदयफलोपासनविधिपरं इदं सूत्रमिति निर्णीतम् । तथाऽपि 'आवृत्तिरसकृदुपदेशात् ' (४.१.१.) इत्यत्र मुक्तिफलविद्यैव विवक्षितेति प्रागेवोक्तम् । 'यत्रैकाग्रता तत्राविशेषात् ' (४.१.११.) इति सूत्रे समाधिपरिणामाविनाभूतैकाग्रता परिणामपर्यन्तावृत्तिः मुक्तिफलविद्यायास्साधनेन ध्यानानन्तरकालिकं दर्शनं श्रुतिषु समाधिरूपं 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ' इत्यत्र स्मृतिलम्भशब्दाभिप्रेतं विवक्षितम् । न तु परसम्मतवाक्यजन्यापरोक्षरूपं निर्विशेषविषयकं इति निश्चितं भवति । अतः अभ्युदयफलविद्याविषयकत्वं आप्रयाणादित्युत्तरसूत्रस्य न सूत्रकृदभिप्रेतम् । सद्विद्यादेरुपासन

## श्रीभाष्यम्

**वाक्यकारश्च ध्रुवानुस्मृते र्विवेकादिभ्यएव निष्पत्तिमाह तल्लब्धिर्विवेकविमोकाभ्यास क्रियाकल्याणानवसादानुद्धर्षेभ्यस्सम्भवा न्निर्वचनाच्च** [बो-वृ] **इति ।**

## श्रुतप्रकाशिका

हीर्युक्तद्विषयश्रुतिवाक्यप्रदर्शनेनाप्रमाणतां च निराचिकीर्षुराह । **वाक्येति** । सूत्रकाराभिप्रायज्ञैरप्येवमुक्तमितिभावः ध्रुवानुस्मृतिशब्देन तल्लब्धिरित्यत्र तच्छब्दो व्याख्यातः ॥

**विवेकादिभ्यएव** नतु केवलकर्मणा केवलशमादिनावेत्यर्थः । वाक्यकारग्रन्थ उपादीयते । **तल्लब्धिरिति** । उपासनं स्याद्ध्रुवानुस्मृतिरिति हिप्रकृतम् । अतो ध्रुवानुस्मृतिलब्धिरित्यर्थः । **'विवेकविमोकाभ्यासीक्रयाकल्याणानवसादानुद्धर्षेभ्य'** इति द्वन्द्वसमासः सचेतरेतरयोगार्थे । एष्वन्यतमेन तल्लब्धेर्दुष्करत्वात् । समुच्चये सम्भवति पाक्षिकबाधगर्भविकल्पोल्लयुक्तः । तस्याष्टदोषदुष्टत्वात् समुच्चयस्यचात्रसम्भवात् । एवं विवेकादिविधायिनां वाक्यानां समुच्चयेतात्पर्यमिति दर्शयितुमितरेतरयोगद्वन्द्वेन *वाक्यकारनिर्देशः ॥

**ननु** *समुच्चयादर्थान्तरमितरेतरयोगः । तत्कथमितरेतरयोगद्वन्द्वेन समुच्चयलाभः । उच्यते—अन्वाचयादिसहपठितात्समुच्चयाद्विकल्पप्रतिसम्बन्धिसमुच्चयोर्थोऽन्तरम् । एकस्मिन्नेवकार्ये मिथोनिरपेक्षसाधकानामन्वयोऽन्वाचयसहपठितः ।

## गूढार्थसंग्रहः

रूपायाः समाधिपर्यन्तावृत्तेस्साधनानन्तरं 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' (४.१.१९.) इत्युत्तरसूत्राभिप्रेतायां 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुतौ देहपातपर्यन्तावृत्तिविवक्षायाः प्रागेवाभिधानेन 'आप्रयाणात्तत्रापि हि दृष्टं' इति सूत्रे जीवन्मुक्तिनिरास एव सूत्रकृतोऽभिप्रेतः । सर्वपरविद्याफलस्य औपनिषदपुरुषानुग्रहद्वारकत्वं श्रुति सूत्राभिप्रेतमिति पूर्वमेवाभिहितम् ॥

सूत्रकृता कर्मणामिव शमदमादीनामपि विद्योत्पत्त्यर्थत्वं 'शमदमाद्युपेतस्स्यात्' (३.४.२७) इत्यादौ पाण्डित्यबाल्य मौनानां विद्योत्पत्त्यर्थत्वं 'सहकार्यान्तरविधिः' (३.४.४७) इत्यादौच प्रतिपाद्य विद्योत्पत्तौ सर्वेषां सहकारित्वं स्थापितं तेन आश्रमविहितकर्मणां यावज्जीवं विद्योत्पत्त्यर्थत्वेनानुष्ठानेऽपि शमदमादिभिः सह कर्मणां नविरोध इत्युक्तं भवति । एवं 'आसीनस्सम्भवात्' इत्यत्र योगाङ्गासनावश्यकत्वप्रतिपादनेन आसनस्योपलक्षणतया यमनियमादीनामप्यावश्यकत्वं बोधितम् । एवं चास्य सर्वस्यापि विद्याऽङ्गतयाऽवश्यानुष्ठेयत्वं सूत्रकृदभिमतमिति प्रतीयते । अयमर्थः वाक्यकृताऽपि भङ्ग्यन्तरेण प्रतिपादित इति दर्शयति **वाक्यकारश्चेत्यादिना** ॥

**तल्लब्धिरित्यत्र** लब्धिशब्देन 'आहारशुद्धौ सत्वशुद्धिः, सत्वशुद्धौ ध्रुवा स्मृतिः' (छा.७.२६.२) इत्यनन्तरं 'स्मृतिलम्भे' इतिवाक्योक्तलम्भेऽपि विवेकादिकं कारणमिति बोधितम् । तेन च 'तमेतं' इत्यादिश्रुत्युक्तकर्मणां सर्वग्रन्थिविप्रमोक्षाव्यवहितप्राक्कालपर्यन्तसत्वं आवश्यकं बोधितमिति वाक्यकाराशयः प्रतीयते । अत्र श्रुतौ सत्वशुद्धेरेव ध्रुवानुस्मृतिहेतुत्वमुक्तम् । कर्मणामपि सत्वशुद्धिद्वारैव विद्याहेतुत्वं 'विद्यां च' इत्यादिश्रुतौ विवक्षितमित्यनुपदमेव भाष्ये व्यक्तीभविष्यति । 'ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः' (मु.३.१.८.) इति श्रुत्यन्तरेऽपि इत्थमेव प्रतीयते । अथापि द्वारव्यवहितहेतुसाधारण्येन 'तल्लब्धिः' इत्यादिवाक्यकारवाक्यं प्रवृत्तम् ॥

### श्रीभाष्यम्

**विवेकादीनां स्वरूपंचाह जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः**[बो.वृ]**इति । अत्र निर्वचनंआहारशुद्धौ सत्वशुद्धि स्सत्वशुद्धौ ध्रुवास्मृतिः** [बो.वृ] **इति । विमोकःकामानभिष्वङ्गः** [बा-वृ] **इति शान्त उपासीतेति निर्वचनम्** [छा.३-प्र-१४-ख.१.वा] **आरम्भणसंशीलनं पुनः पुनरभ्यासः** .बो.वृ- **इति निर्वचनंच स्मार्तमुदाहृतं भाष्यकारेण सदा तद्भावभावितः** [गीता-८.अ.६-श्लो] **इति । पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया** .बो-वृ.**इति । निर्वचनम् क्रियावानेष ब्रह्मविदां वरिष्ठः** .मु.उ.३.मु.१.ख.४.वा.

### श्रुतप्रकाशिका

विकल्पसमभिव्याहृतस्समुच्चय स्त्वेकस्मिन्कार्ये मिथस्सापेक्षाणामन्वयः । स एवेतरेतरयोग इत्यविरोधइति । निवृत्तिरूपशमादेः प्रवृत्तिरूपयज्ञादेश्च विरोधान्नसमुच्चय इति चेन्न भिन्नविषयत्वेन विरोधाभावात् ॥

अविहिताप्रतिषिद्धनिषिद्धकाम्यविषया हि शमादयः । सम्भवात्, उपपन्नत्वात् । निर्वचनाच्च श्रुतिवचनाच्च प्रमाणोपपत्तिभ्यामित्यर्थः विवेकादयः किंरूपाः कथंवाशमादेः कर्मणश्चाविरोधइत्यत्राह । **विवेकादीनां स्वरूपंचाहेति ।** न केवलं परिगणनामात्रम् । तत्स्वरूपंच वाक्यकारएवोहेत्यर्थः । प्रथमं विवेकस्वरूपविषयं वाक्यमुदाहरति । **जात्याश्रयेति ।** * आहारविषयविवेचनं विवेकशब्देन विवक्षितं भवति । दुष्टाहारात्सात्विकाहाराणां विवेचनं विवेकः । जातिदुष्टाः कळञ्जगृञ्जनादयः आश्रयः द्रव्यस्वामीपुरुषः अभिशस्तपतितचण्डालादिद्रव्य माश्रयदुष्टम् । उच्छिष्टकेशाद्युपहतं निमित्तदुष्टम् । एतात्त्रिविधदोषराहिताहारविवेचनभूतकायशुद्धौ विवेकशब्द उपचरितः । * यद्वा—विविक्ताहारसेवया राजसतामसाहाराप्यायितदेहात्स्वदेहस्य विवेचनं विवेकः । अशुद्धेभ्यो विवेचनं हि शुद्धिः । इतिशब्दो भाष्यकारीयः । अत्र निर्वचनमितिच भाष्यग्रन्थः । **निर्वचनं**—निष्कृष्टवचनम् । अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनमित्यर्थः । आहारशुद्धावित्यादिनिर्वचनम् । **विमोकः कामानभिष्वङ्गः** । विषयमभुक्त्वास्थातुं न शक्नोति येन सविकारोऽभिष्वङ्गः कामात्क्रोधोऽभिजायत इत्यादि वचनात्क्रोधाद्यभावश्चात्रफलितः । शान्तउपासीतेति निर्वचने शान्तशब्देन रागद्वेषाद्यभावो विवक्षितः । **आरम्भणम्** । आलम्बनम् शुभाश्रयः तस्य संशीलनम् । कथमेतत्साधनम्? साध्यंहीदम् । न '**शुचौदेशेप्रतिष्ठाप्य**' इत्याद्युक्तदेशकालविशेषाभ्यसनीययोगशब्दवाच्या ध्रुवानुस्मृतिर्हि साध्या इदन्तु योगकालकर्तव्यध्यानानुग्राहकं सदासंशीलनम् । '**सदातद्भावभावित**' इतिहि वक्ष्यति । सदाभगवत्संशीलनाभावे योगकालेषु कालान्तरसंशीलितं विषयान्तरं बुद्धिस्थं स्यात् । अतो न साध्याविशिष्टत्वमारम्भणसंशीलनस्य । **निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण** । इत्यनेन पूर्वोपात्तनिर्वचनान्यापि द्रमिडभाष्योक्तानीति ज्ञायते । अथमुनिरिति श्रौतं निर्वचनम् तस्य न्यायोपन्याससापेक्षत्वेन '**सहकार्यन्तराविधिः**' इत्यधिकरणे व्याख्येयत्वात् स्मार्तनिर्वचनस्पष्टार्थत्वाच्च स्मार्तनिर्वचनमुदाहृतम् । '**तस्मात्सर्वेषु कालेषु मामनुस्मर**' इत्येवमन्तं वचनमिहाभिप्रेतम् । **पञ्चमहायज्ञेति** । शक्तितः नहि शास्त्रमशक्यं विदधाति । **क्रियावानेष** । इति सन्नहितवाक्यम् ।

### गूढार्थसंग्रहः

**आरम्भणसंशीलनमित्यादि** । उत्तरत्र विष्णुपुराणवाक्यविवरणभाष्ये 'योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा धारणासिध्यर्थं शुभाश्रयं वक्तुं' इति सूक्तिपर्यालोचनया शुभाश्रयचिन्तनं योगावयवधारणारूपमेवेति प्रतीयते ।

**क्रियावानेष ब्रह्मविदांवरिष्ठइति** 'आत्मक्रीड आत्मरति' रितिपूर्ववाक्यम् । अत्र क्रियावानित्यत्र आत्मक्रीडत्व

## गूढार्थसंग्रहः

त्मरतित्व प्रतिबन्धक पापनिरासकक्रिया विवक्षिता । सा च क्रिया ' मन्त्रेषु कर्माणि—तान्याचरथ नियतं सत्यकामाः ' (मु. १.२.१.) इत्यत्रोक्तं गृहस्थकर्म ' तपश्श्रद्धे येह्युपवसन्ति ' १.२.११' इत्यत्र तपश्शब्दीविवक्षितं स्वाश्रमविहितं कर्म शं. उ.भा. फलाभिसान्धिरहितं च (१.२.२३.श्री भा.) इति प्रतीयते । ' सत्वशुद्धौ ध्रुवा स्मृतिः, ' विशुद्धसत्वः ततस्तु तं पश्यति ' इत्यत्रोक्तसत्वशुद्धेः ' धर्मेण पापमपनुदति ' इत्युक्तरीत्या प्रतिबन्धकपापानिरसनाभावे असम्भवेन उक्तकर्मणः आवश्यकत्वात् । सन्यासिन एवात्र विवक्षितत्वग्राहकं न किंचिदुपलभ्यते । आत्मक्रीडत्वात्मरतित्वयोः कथं सम्भव इति शङ्कानिरासकत्वेन क्रियावानित्यावश्यकम् । क्रियावानित्यत्र मतुप् प्रशंसायां । प्राशस्त्यं च ज्ञानपूर्वकत्वं फलसङ्गकर्तृत्व-राहित्यं च । तेनात्मक्रीडत्वात्मरतित्वयोः सिद्धिर्भवति । ज्ञानध्यानवैराग्यादि क्रियामात्रपरमिति क्रियाशब्दसङ्कोचः अन-पेक्षितः । आत्मक्रीडत्वात्मरीतत्वयोः ध्यानवैराग्यविरहेऽसम्भवात् । आत्मक्रीड आत्मरतिरित्यत्रोक्तविशेषणद्वयस्य आत्मा-न्याविषयप्रवृत्तिप्रतिबन्धक पापविगममन्तराऽसम्भवेन ध्यानवैराग्ययोरप्येतदावश्यकत्वेन प्रतिबन्धक पापनिरासककर्मण एव अत्र विवक्षाया उचितत्वात् । अतस्सर्वेऽप्याश्रमिणः आत्मक्रीड इत्याद्युक्तविशेषणवन्तोऽत्र विवक्षिताः । अत एव पूर्व-वाक्ये ' विजानन्, विद्वान् ' इति सर्वाश्रमिकर्मसाधारण्येन ज्ञानध्यानवत्वोक्तिः । अत्रैव ज्ञानध्यानवत्वलभेन क्रिया-शब्दे तद्विवक्षणं न घटते । अतः ' तमेतं वेदानुवचनेन ' इति सर्वाश्रमकर्मपरश्रुतिवत् , . क्रियावान् . इत्यपि सर्वाश्रम-परमिति वाक्यकाराशयो युक्त एव ' प्राणो ह्येष यस्सर्वभूतैर्विभाति विजानान्विद्वान् भव तेनातिवादी । आत्मक्रीड आत्म-रतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ' (मु.३.१.४.) इति पूर्णश्रुतिः । एषः- ' यदा पश्यः पश्यते रुक्मवर्णं ' इति पूर्व-श्रुत्युक्तः यः प्राणः- ' कोह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति ' इति श्रुत्युक्त-दिशा स्वसाम्येन निरतिशयानन्दत्वरूपोजीवनहेतुत्वेन प्राणयतीति प्राण इति व्युत्पत्त्या प्राणशब्दार्थः । पूर्वश्रुतौ ज्ञाना-नन्दसाम्यस्यैव प्रतिपादनेन तस्य परसङ्कल्पमूलत्वं प्राणशब्देन बोधितम् । सर्वभूतैः- सत्ताश्रयविभूतिद्वयमध्यवर्ति-सर्ववस्तुभिः । विभाति- विशेषेण दीप्यते । तमित्यध्याहार्यम् तं विद्वान् विजानन् तेन अतिवादी भव इति योजना । विजानन्नित्यत्र समाधिपर्यन्तध्यानं विवाक्षितम् । ' आत्मा वा अरे—निदिध्यासितव्यः । ' मैत्रेय्यात्मनो वा—विज्ञानेन इदं सर्वं विदितं '(बृ.४.४.२') इत्यत्र विज्ञानशब्देन दर्शनसमानाकारध्यानस्य प्रतिपादनात् । . यदा पश्यः पश्यते रुक्मवर्णं ' इति पूर्वश्रुतौ दर्शनस्योक्तेश्च । तेन— प्राणशब्दार्थभूतेन परमात्मना अतिवादी- वस्त्वन्तरात्पुरुषार्थतया अति-क्रान्तस्वोपास्यवस्तुवादी भवेति शिष्यं प्रत्युक्तिः । ' एष तु वा अतिवदति यस्सत्येनातिवदति . (छा.७.१६.१.) इति वाक्यवदत्राप्यर्थः ॥

आतिवादित्वे निमित्तमुक्त्वा विदुषोऽपि वरिष्ठत्वमभिधीयते ' आत्मक्रीड ' इत्याद्युत्तरार्धेन । ' आत्मक्रीड आत्म-रतिरित्यत्र ' ओमित्येवात्मानं ध्यायथ ' इत्यनन्तरं ' तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं ' ( मु.२.२.७) इत्यत्रोक्तानन्दरूपात्मदर्शनात्मकासम्प्रज्ञातसमाधिनिष्ठः विवक्षितः । क्रियावानित्यस्य पूर्वोक्त एवार्थः । आनन्दस्व-रूपपरमात्मदर्शनात्मकासम्प्रज्ञातसमाधिनिष्ठस्यैव ' एष ब्रह्मविदां वरिष्ठः . इत्यत्र ब्रह्मविच्छ्रेष्ठत्वं प्रतिपाद्यते । अयं च सर्वेष्वप्याश्रमिषु सम्भवतीति सर्वाश्रमिसाधारणप्रशस्तक्रियातात्पर्येण क्रियावानित्युक्तम् । एतेन ' यदा पश्यः पश्यते ' इति पूर्वश्रुतौ द्रष्टा आत्मक्रीड आत्मरतिरित्यत्रोक्तः असम्प्रज्ञातसमाधिनिष्ठः ब्रह्मविदां वरिष्ठ एव विवक्षित इति निर्धारि-तम् । अत्र भूमविद्यायामिव अतिवादित्वस्योक्त्या ' स्मृतिलम्भे ' इत्यत्र सर्वग्रन्थिविप्रमोक्षाव्यवहितपूर्वस्मृतिपूर्णपरिपाक रूपसमाधि रसम्प्रज्ञातसमाधिरेवेत्यर्थस्सिध्यति । ' सत्वशुद्धौ ध्रुवा स्मृतिरिति ' पूर्ववाक्यार्थस्य . विशुद्धसत्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः ' (मु.३.१.८)इत्यत्रापि उत्तरत्र वक्ष्यमाणतया उभयोरेकार्थत्वं सिद्धम् । एवं च ' ततस्तु तं

## श्रीभाष्यम्

तमेतंवेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन .बृ.उ.६.अ.४.ब्रा.२२.
इतिच। सत्यार्जवदयादानाऽहिंसानभिध्याःकल्याणानि .बो.वृ. इति, निर्वचनम् सत्येनलभ्यः
.३.मु.५.वा. तेषामेवैष विरजोब्रह्मलोकः .प्रश्न.१.प्रश्न.१५,१६.वा. इत्यादि, देशकाल वैगुण्याच्छोक
वस्त्वाद्यनुस्मृतेश्च तज्जंदैन्यमभास्वरत्वं मनसोऽवसादः .बो.वृ. इति, तद्विपर्ययोऽनवसादः
निर्वचनम् नायमात्मा बलहीनेन लभ्यः (मु-उ.६.मु.२.ख.४.वा) इति, तद्विपर्ययजातुष्टिरुद्धर्षः
इति, तद्विपर्ययोऽनुद्धर्षः अतिसन्तोषश्च विरोधीत्यर्थः निर्वचनमपि शान्तोदान्तः इति।

## श्रुतप्रकाशिका

ब्रह्मविदांमध्ये वरिष्ठः । नहि ब्रह्मविविदिषूणामित्युक्तम् । क्रियाशब्दार्थविशदीकरणायाह । **तमेतमिति** । **सत्यं** ।
भूतहितम् । **आर्जवं** । मनोवाक्कायानामैकरूप्यम् । **दया** । स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम् । **अहिंसा** । करण-
त्रयेण परपीडानिवृत्तिः । **दानं** । लोभराहित्यम् । **अभिध्या** । परकीये स्वत्वबुद्धिः । यद्वा निष्फलचिन्ता ।
अथवा परकृतापकारचिन्ता । तद्राहित्यमनभिध्या । **सत्येनेति** । इत्यादीत्यादिशब्देन * आर्जवादिप्रतिपादकवा-
क्यजातं क्रोडीकृतम् । **देशेत्यादि** । अनवसादानुद्धर्षयो रवसादोद्धर्षविपर्ययरूपत्वा दवसादोद्धर्षलक्षणमात्रमुक्तं वाक्य-
कारेण तद्विपर्ययरूपो नञर्थोऽर्थात्सिध्यतीति वाक्यकाराभिप्रायः । **शोकवस्तु** । शोकनिमित्तं वस्तु अतीत पुत्रमरणादि
आदिशब्देन भयनिमित्तमागामि विवक्षितम् । अतीतविषयोहि शोकः, आगामिविषयं च भयम् । * अभास्व-
रत्वमिति दैन्यशब्दविवरणम्, अभीष्टकार्यप्रवृत्त्यक्षमत्वरूपं दैन्यमित्युक्तं भवति । * भास्वरत्वविरोधीतिवा दैन्यवि-
शेषणम् । * चशब्दो भिन्नक्रमः तज्जंच दैन्यजदैन्यंचेत्यर्थः । बन्धुजनदैन्येदृष्टेऽपिहि दैन्यं स्यात् । देशकालवैगुण्य-
शोकवस्त्वाद्यनुस्मृतिहेतुकं मनसोभास्वरत्वाभावरूपं भास्वरत्वविरोधि वा दैन्यं दैन्यजदैन्यं च मनसोवसाद इत्यर्थः ।
* यद्वा—भिन्नवाक्यतया योजनीयम् । देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृतिजनितं मनसोऽभास्वरत्वमवसादः । किमुक्तं
भवतीत्यत्राह । **तज्जंदैन्यमिति** । तच्चाभास्वरत्वम् । तज्जम् उक्तहेतुजं दैन्यमिति व्याख्येयव्याख्यानरूपं वाक्यद्वयमिति ।
**तद्विपर्यय** इत्यादिर्भाष्यग्रन्थः । **बलहीनेन** । मनोबलहीनेन । **तद्विपर्ययजा** । देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजा ।
**तुष्टिरुद्धर्ष** इत्येतावदेववाक्यम् तद्विपर्ययोऽनुद्धर्ष इत्यर्थसिद्धम् । कथम् '**स्वाध्यायशौचसन्तोषतपांसिनियता-**
**त्मवान्**' इत्यपेक्षितस्य त्याज्यत्व मित्यत्राह । **अतिसन्तोषश्चविरोधीत्यर्थः** । इति न केवलमसन्तोषएव विरोधी,

## गूढार्थसङ्ग्रहः

' इति वक्ष्यमाणासम्प्रज्ञातसमाध्युत्पत्तिविरोधिपापानिवर्तकत्वेन कर्मणामपेक्षा '**क्रियावान्**'
इत्यत्र विवक्षितेति स्मृतिलम्भे इत्यत्रापि कर्मणां हेतुत्वं उभयोरैकार्थ्यात्सिध्यतीति । 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इति
निर्वचनोदाहरणेन द्रमिडभाष्यकृता वाक्यकाराशयः प्रदर्शित इति । 'तं पश्यति निष्कलं ध्यायमानः' इत्यत्र वर्तमान
कालार्थकलट्स्थानिकशानचा ध्यानदर्शनयोस्समानकालिकत्वप्रतीत्या ध्यानस्यैवावस्थान्तरं पश्यतीत्यत्र विवक्षितम् । 'स्मृति
लम्भ' इत्यत्र च लम्भपदेन स्मृतेरवस्थान्तरं प्रदर्शितम् । एतेन ध्यानदर्शनयोः प्रमाणेषु हेतुहेतुमद्भावोक्तिः ध्यान-
गतावस्थाद्वयाभिप्रायेण, न तु व्यक्तिभेदाभिप्रायेणेत्येतेन निश्चीयते । ध्रुवानुस्मृतिः तल्लब्धिः अभ्यासक्रिया इत्यादिनिर्दे-
शेन श्रुतौ वाक्यकृद्विवक्षितोऽर्थः अयमेवेति निर्धारितं भवति ॥

**नायमात्मा बलहीनेन लभ्य इतीति** । अत्र मनोबलमेव बलशब्दार्थः (श्रु.प्र. । त.टी.) प्रियवस्त्वनुस्मृतिजतुष्टेः
बलत्वेन तद्धीनता, शोकवस्त्वनुस्मृतिजनितदैन्यरूपोऽवसादः मनसोऽभास्वरत्वरूपः विवक्षितः । अत्र बलशब्दस्य प्रियव-

## गूढार्थसङ्ग्रहः

वस्त्वनुस्मृतिजसन्तोषपरत्वेन तद्व्यतिरेकेऽलाभस्योक्त्या तद्वतो लाभस्य प्रतीत्या च 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र उक्तः 'एतैरुपायै र्यतते यस्तु विद्वान्' इति एतदुत्तरार्धोक्तश्च एक एवाधिकारी श्रुतौ विवक्षित इति द्रमिडभाष्यकृता निर्धारितम्। 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र आनन्दस्वरूपवस्त्ववगाह्यसम्प्रज्ञातसमाधिनिष्ठस्य विवक्षितत्वेन प्रियवस्त्वनुस्मृतिजसन्तोषवत एव तात्सिध्यतीति श्रुतिद्वयार्थयोरानुरूप्यम् । 'एतैरुपायैर्यतते यस्तु विद्वान्' इत्येतदुत्तरार्धमभिप्रेत्यैव परविद्यास्वरूपमुपक्रम्य समाध्यन्तपदार्थनिरूपणपूर्वकं समाधेः करणत्वं योगस्य मुक्तिप्रदत्वं च प्रतिपादयता पराशरेण 'अथ परा यया तदक्षरमधिगम्यते' इत्यादिश्रुतिजालं सम्यगुपबृंहितम् । अयमर्थः भाष्ये उदाहरिष्यमाणवचनेषु व्यक्तो भविष्यति। एतेन 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र ब्रह्मप्राप्तिकरणपरविद्या समाधिरूपा विवक्षिता। परविद्याफलब्रह्मप्राप्तये यत्न एव 'एतैरुपायैर्यतते यस्तु विद्वान्' इत्यत्र विवक्षित इति सिद्धम् ॥

'नास्त्यकृतः कृतेन' (मु.१.२.१२.) इत्यत्र कृतशब्देन उपासनस्य ग्रहणं न सम्भवति। 'अथ परा यया तदक्षरमधिगम्यते' (मु.१-१-५.) इत्युपक्रमे समाधिपर्यन्तध्यानरूपपरविद्यायाः मुक्तिकरणत्वोक्त्या तद्विरोधेन 'नास्त्यकृतः कृतेन' इत्यत्र कृतशब्दे समाधिपर्यन्तोपासनविवक्षाया असम्भवात् । एवं 'नायमात्मा प्रवचनेन लभ्यः' इत्यादिपूर्वार्धे भक्तिरूपतापन्नध्यानस्य करणतानिषेधोऽपि उपक्रमविरोधान्न घटते इति पराशरेण निर्धारितं भवति। एतदेवाभिप्रेत्य वेदान्तसारे 'कृतेन' कर्मणा।' इति व्याख्यातम्। एतेन 'जानाम्यहं शेवधिरित्यनित्यं नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्। ततो मया नाचिकेताश्चितोऽग्निः अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ।' (कठ.१.२.१०) इति कठश्रुतौ अध्रुवशब्देऽप्युपासनविवक्षणं न घटते । नित्यभिन्नसामान्यस्य अध्रुवपदार्थत्वे तदुत्तरार्धासङ्गतेः । अनित्यद्रव्यकरणकत्वं नाचिकेताग्निचयनकरणकत्वं वा प्राप्तौ उत्तरार्धे विवक्षितमिति वक्तव्यम्। नित्यभिन्ननाचिकेताग्निचयनकरणकत्वस्य उत्तरार्धे प्राप्तौ प्रतिपादनेन अध्रुवपदस्य नित्यभिन्नसामान्यपरतायाः पूर्वार्धे विवक्षणासम्भवात् । एतदेवाभिप्रेत्य 'केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्याक्षयफलत्वं च दर्शयन्ति' इत्युपक्रम्य 'नह्यध्रुवैः' 'परीक्ष्य लोकान्—नास्त्यकृतः कृतेन' इत्यादिश्रुतयः श्रीभाष्ये प्रागुदाहृताः । नाचिकेताग्निचयनस्य फलसङ्गकर्तृत्वत्यागपूर्वकमनुष्ठितस्य अङ्गिद्वारा प्राप्तिहेतुत्वं सम्भवति। अयमर्थः 'मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नं। ब्रह्मप्राप्तः' इत्यत्र नाचिकेतविद्याया योगाङ्गत्वप्रतीत्या दृढीकृतः। एतेन 'देवं मत्वा धीरो हर्षशोकौ जहाति' (क.१.२.१२.) तमक्रतुः पश्यति वीतशोकः' (१.२.२०) 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (१.२.२१.) इत्यत्र ज्ञानं योगरूपमेव विवक्षितम्। अत एव 'नायमात्मे' त्यनन्तरं 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥'(१.२.२३) इत्यत्र असमाहितशब्दार्थस्य समाधिरूपयोगशून्यस्य अन्यविधप्रकर्षविशिष्टज्ञानेन प्राप्तिविरहप्रतिपादनमपि सङ्गच्छेत । 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा' (बृ.६.—) इत्युक्तस्यार्थस्य व्यतिरेकोऽत्र प्रतिपाद्यते। तेन उपरत इत्यत्र दुश्चरितविरतिमानेव विवक्षितः। इमां श्रुतिमुदाहृत्य 'विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात्।' (श्रीभा.४.१.१३.) इति वदतो भगवतः असमाहितत्वविरहः समाधिपर्यवसितः तन्निष्पाद्यत्वमपि विद्याया विवक्षितमिति प्रतीयते ॥

एतेन 'नह्यध्रुवैः' 'न कर्मणा न प्रजया' इति आहत्य सहोपासनया कर्मणोऽमृतत्वसाधनत्वनिषेधात्' (सि.सि) इत्युक्तिर्निरवकाशा । 'न कर्मणा' इत्यादौ उपासनावाचिपदमेव नास्ति। 'त्यागेनैके अमृतत्वमानशुः' इति कर्मत्यागस्य वा संन्यासस्य वा विवक्षितत्वे तस्याप्यमृतत्वं प्रति साक्षाद्धेतुत्वं न घटत इति परम्परयैव वाच्यम्। गीता॰

श्रुतप्रकाशिका

अतिसन्तोषश्च विरोधीति चार्थः । यथाऽन्यविषयेष्वेव प्रवृत्तिस्स्यात्तथा सन्तोषोऽतिसन्तोषः स त्याज्य इत्युक्तं भवति । निर्वचनमपीत्यपिशब्दस्सर्वानिर्वचनसमुच्चये । एवं पदार्था व्याख्याताः । तल्लब्धिरित्यादेर्वाक्यकारग्रन्थस्य

गूढार्थसङ्ग्रहः

नुसारेण फलादित्यागस्य विवक्षितत्वेऽपि तादृशत्यागसंस्कृतकर्मणः परम्परया अमृतत्वहेतुत्वं शङ्कराचार्यादिभिरुक्तं अस्यां श्रुतौ न विवक्षितमिति शपथः कर्तुं न शक्यते । श्रुतौ त्यागशब्दस्य बहूनामर्थानां प्रतिपादनपूर्वकं (म भा.शा.प'१२ अ.) सर्वाश्रमिणां मोक्षस्य स्थापनाच्च । 'परीक्ष्य लोकान्कर्मचितान्' इत्यत्र कर्मपदेन 'प्लवा ह्येते अदृढा यज्ञरूपाः' [मु.१.२.७.] इति पूर्वोक्तकर्माणि विवक्षितानि । तत्र खण्डोपक्रमे 'तदेतत्सत्यं । मन्त्रेषु कर्माणि—तान्याचरथ नियतं सत्यकामाः' इतिश्रूयते । अत्र 'तदेतत्सत्यं,इत्यस्य यथा सुदीप्तात्पावकात्'(मु.२.१.)इत्यत्रेवार्थो विवक्षितः इति स्वरसतः प्रतीयते । 'येनाक्षरं पुरुषं वेद सत्यं' इत्येतत्खण्डान्तवाक्यैककण्ठ्यात् । श्रुतिषु सत्यशब्दस्य परमात्मन्येव प्रसिद्धेश्च । एवं च परब्रह्मकामनावद्भिः कर्मानुष्ठेयमिति प्रथमश्रुतौ विवक्षितम् । तत्र च कर्म ज्ञानपूर्वं तद्भिन्नं चेति द्वेधा विभज्य 'प्लवाह्येते, एतच्छ्रेयो येऽभिनन्दन्ति मूढाः (मु.१.२.७.) जङ्घन्यमानाः परियन्ति मूढाः (८) यत्कर्मिणो न प्रवेदयन्ति रागात् (९) इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः (१०) इति ज्ञानविधुरत्वकथनपूर्वकं ज्ञानविधुरेण तत्तत्फलरागेणानुष्ठितकर्मणां संसारहेतुत्वेन हेयत्वं 'तपश्श्रद्धे येह्युपवसन्त्यरण्ये शान्ता विद्वांसः' (११) इत्यत्र ज्ञानपूर्वकं अनुष्ठितानां तत्तदाश्रमकर्मणां परम्परया मोक्षहेतुत्वं प्रतिपादितम् । अनन्तरं 'परीक्ष्य लोकान्' इत्यादिः पठ्यते । अत्र च कर्मसामान्यफलस्य निन्द्यत्वं नविवक्षितम् । पूर्वं ज्ञानविधुरेण अनुष्ठितानामेव कर्मणां निन्दितत्वात् । इति ज्ञानविरहपूर्वं अनुष्ठितानि कर्माण्येव 'कर्मचितान्' इत्यत्र कर्मपदेन विवक्षितानि । परीक्षणं मीमांसान्यायैर्निरूपणम् । तत्तत्फलरागेण कर्मानुष्ठाने तत्तत्फलानां नश्वरतया नित्यफलप्राप्तिः तैः न घटते, इति प्राक्तनश्रुतिष्वेव व्यक्तम् । आवृत्तिविधानादिभिश्च कर्मणां तेषां सातिशयफलसाधनत्वमेव, नतु निरतिशयफलसाधनत्वम् । कर्मस्वरूपमेकमेव विनियोगभेदेऽपि कर्मस्वरूपभेदाभावात् । इत्यादिक्रमेण परीक्षणानन्तरं नित्यफलस्य पूर्वोक्तकर्मभिरलाभेन निर्वेदे ज्ञानपूर्वकं कर्मानुष्ठानार्थमपि पूर्वोक्तसत्यपदार्थज्ञानमावश्यकम् । नित्यफलं सत्यज्ञानस्यैव साक्षात् । परम्परया तु तदङ्गभूतकर्मणामपि ; इत्यादिकमुत्तरत्र स्पष्टम् । अतः 'तद्विज्ञानार्थं' इत्यत्र तस्य विशेषतो ज्ञानं विवक्षितम् । एवं च 'परीक्ष्य लोकान्कर्मचितान्' इत्यत्र ज्ञानशून्यतया अनुष्ठितकर्मणामेव विवक्षितत्वेन 'नास्त्यकृतः कृतेन' इत्यत्रापि अकृतशब्देन तान्येव विवक्षितानि । अतः अध्रुवशब्दे कृतशब्दे च केवलकर्माण्येव विवक्षितानि ।

'कृतशब्दः भावे क्तप्रत्ययान्तः' (त.टी.) कर्मणि क्तप्रत्ययाङ्गीकारेऽपि प्रकरणात्प्रागुक्तकर्मपरः । अध्रुवैरित्यत्र ध्रुवभिन्नैरित्येवार्थो वाच्यइत्यभिनिवेशेऽपि ध्रुवशब्दस्य निश्चितार्थकतया प्राप्तिहेतुत्वेन निश्चितभिन्नैरित्येवार्थः । एवं च आपातप्रतीत्या कर्मणां मुक्तिफलकत्वं जानन्तो येऽनुतिष्ठन्ति केवलकर्माणि तेषां नित्यवस्तुप्राप्ति र्न सिध्यतीत्येव तद्वाक्यस्य तात्पर्यमिति श्रीभाष्यकृतामाशयः । अतः 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र अपवर्गोपायभूतभक्तिरूपतापन्नध्रुवस्मृतिविवक्षा पराशरसम्मता न प्रत्याख्यातुं शक्यते । इति द्रमिडभाष्यकृता निर्धारितं भवति ॥

'ध्रुवानुस्मृतिः' इत्युपक्रम्य तल्लब्धिहेतुभूतेषु 'क्रियावानेष' इति श्रुतिघटकक्रियाशब्दनिर्देशेन तल्लब्धिहेतून् दर्शयता वाक्यकृता 'एषतु वाऽतिवदति' 'आत्मरतिरात्मक्रीडः' 'सत्वशुद्धौ, (छा), 'तेनातिवादी' 'आत्मक्रीड आत्मरतिः' 'विशुद्धसत्वः' (मु) इतिवाक्यघटितछान्दोग्यमुण्डकैकार्थ्यप्रदर्शनेन समाधिपर्यन्तध्रुवस्मृतेः परविद्यायाः सर्वा-

## श्रीभाष्यम्

[बृ.६.अ.४.ब्रा.२३.वा] **एवंनियमयुक्तस्याश्रमविहित कर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति**

## श्रुतप्रकाशिका

वाक्यार्थमाह । **एवमिति एवं नियमयुक्तस्य आश्रमविहितकर्मानुष्ठानेनेति** । पृथङ्निर्देशेन प्रवृत्तिरूपकोटिद्वय विभागोदर्शितः । एतेन पदद्वयेन केवलशमादिः केवलकर्म च व्यावर्तितम् । शमादिः कर्म च समुच्चित्याङ्गमित्यर्थः । यद्विविदिषासाधनमिति त्वयोक्तं तेनैव विद्यानिष्पत्तिरित्येवकाराभिप्रायः । **इत्युक्तंभवति** । इति वाक्यार्थो भवतीत्यर्थः ॥

## गूढार्थसंग्रहः

श्रमविहितकर्मानुष्ठानेन सिद्धिः सर्वग्रन्थिविप्रमोक्षरूपफलोपधायकताविशिष्टनिष्पत्तिरूपा प्रदर्शिता भवतीत्यभिप्रेत्य निगमयति– **एवं नियमयुक्तस्य इत्यादिना** ॥

'विद्यां च' इत्यादेरेषोऽर्थः, नाविद्या विद्यायास्साधनं ; किं तु अविद्यया श्रवणादिलक्षणयाऽपि अविद्यैव निवर्तते । मृत्युरित्यविद्यैवोच्यते तस्यां निवृत्तायां विद्यारूपोपलक्षितं अमृतं अश्नुते, स्वरूपावस्थानं ।' इति (ब्रह्मसिद्धौ. ब्र.का.) उत्तरार्धस्य, विद्याऽविद्ये द्वे अप्युपायोपेयभावात् सहिते ।' इति पूर्वार्धस्य च अर्थ उक्तः । 'अविद्या तु यद्वा विद्यामुच्छिन्द्याज्जनयेद्वा न तत्र काचिदनुपपत्तिः । तथा च श्रुतिः विद्यां चेति । (१.१.४.) इति भामतीविवरणे 'विद्यां वृत्तिं अविद्यां च कार्यकारणभावेन सहिते यो वेद सः अविद्योपादानत्वेन तन्मय्या वृत्त्या तदुपादानं मृत्युं अविद्यां तीर्त्वा स्वरूपभूतविद्योपलक्षितं अमृतमश्नुत इति' श्रुतेरर्थः (ब्र.सि) अनुगुण एवोक्तः । 'स्वाभाविकं कर्म मृत्युः विद्या शास्त्रीयमुच्यते ।, (बृ.वा.३.४.१७६५श्लोक) शास्त्रीयेणेतरत्तीर्त्वा विद्ययाऽमृतमश्नुते (१७६६) इति वार्तिके विद्यांचेति विद्याशब्दितं अविद्ययेति अविद्यापदेनाकृष्टं अग्निहोत्रादिशास्त्रीयं कर्म तेन इतरत् अविद्यांचेत्यविद्याशब्देन 'मृत्युंतीर्त्वा' इतिमृत्युशब्देनचोक्तं स्वाभाविकंकर्म विहिताकरणनिषिद्धसेवारूपं अतिक्रम्य केवलब्रह्मविद्यया ब्रह्म आप्नोति इति (आनन्दगिरि) अर्थ उक्तः ॥

अत्र मण्डनमते पूर्वार्धे विद्याऽविद्ययोः उपायोपेयभावः प्रदर्शितः । अविद्या उपायः विद्याकार्यं इति । एवंसति साध्यातर्हि तथाच कृतकत्वादनित्यत्वमतआह 'अविद्यया मृत्युमिति' इति उत्तरार्धावतरणपूर्वकं प्रागुक्तार्थो वार्णितः । तत्रच अविद्या विद्यायाः न साधनमित्यर्थ उक्तः । एतदर्थबोधकश्शब्दः श्रुतावुत्तरार्धे कोऽपि नास्ति । पूर्वोत्तरार्धयोः एकार्थकत्वेन प्रतीताविद्याशब्दस्य श्रवणादिलक्षणयेत्यर्थस्य किंगमकं? विद्ययाऽमृतमित्यत्र अविद्ययेति तृतीयायाः अर्थस्य स्वरसतः प्रतीतस्य त्यागपूर्वकं विद्यास्वरूपोपलक्षितं इत्याद्यर्थवर्णनं अमूलम् । एतेन 'अन्योऽर्थः' इत्युपक्रम्य पूर्वार्धेऽपि विद्या ऐकत्म्यादिश्रवणादिलक्षणा इत्यादिनोक्तार्थान्तरेऽपि 'विद्ययाऽमृतमश्नुते' इत्यत्र विद्यालक्षणेनित्ये स्वरूपे अवतिष्ठते इत्यर्थवर्णनमपि औत्प्रेक्षिकमेव । वार्तिके'विद्यामविद्यया' इत्यत्र शास्त्रीयकर्म 'अविद्यांमृत्युं' इत्यत्र स्वाभाविककर्म 'विद्यया' इत्यत्र ब्रह्मविद्या इत्यर्थःकथितः 'विद्यां, अविद्यया' इत्युभयोर्भिन्नार्थकत्वे विद्यां,विद्यया इत्यनयोरेकार्थकत्वं स्वरसतः निर्मत्सराणां प्रतीयतइत्यतः वार्तिकोक्तार्थः अनुपादेयः । कल्पतरावपि 'विद्यां,अविद्यया' इत्युभयोः एकार्थकत्ववर्णनं विद्ययेत्यादेः स्वरूपभूतविद्योपलक्षितं इत्यर्थवर्णनंच अभिनिवेशमूलकत्वादनुपादेयम् ॥

शङ्कराचार्यैरपि 'विद्यांऽचाविद्यांचेति सहोक्तिरियमुपक्रतासद्भिः । सत्कर्मोपासनयोः नत्वात्मज्ञानकर्मणोः क्वापि ॥' (स.वे.सि.सा.सं.१९७) इति 'विद्यांच, अविद्यांच' देवताज्ञानंकर्मच इत्यर्थः अविद्यया कर्मणा अग्निहोत्रादिना मृत्युं

## गूढार्थसंग्रहः

स्वाभाविकं कर्म ज्ञानंच तीर्त्वा अतिक्रम्य विद्यया ज्ञानेन अमृतं देवतात्मभावं अश्नुते। (ई.बा.शं.भा) इतिच अविद्वद्विषयतया मन्त्रार्थवदाद्भिरेव पुरुषार्थाधिकरणे यद्यपि अत्र प्रकरणसामर्थ्यात् विद्वानेव कुर्वन्निति संबध्येत इति कुर्वन्नेवेत्यादेः विद्वद्विषयकत्वं प्रतिपादयद्भिः उदाहृततैत्तिरीयभाष्ये (शं)प्राक् ब्रह्मज्ञानात् विद्योत्पत्यर्थत्वं कर्मणां अस्यांश्रुतौ विवक्षितमिति व्यवस्थापितम्। अयमेवार्थः सिद्धान्तसिद्ध इत्यभिप्रेत्य आनन्दबोधयतिभिः प्रमाणमालायां एतच्छुत्यर्थउक्तः सहवेदेति वेदनएव सहभावश्रवणात्। केवलविद्यानिन्दातु प्राचीनापरिपक्वविद्याविषयाभविष्यति। अत्रैषाऽक्षरयोजना अन्धंतमः संसारं प्रविशन्ति ये अविद्यामूलत्वात् विद्याविपरीतत्वाद्वा अविद्यां कर्म उपासते आद्रियन्ते अनुतिष्ठन्तीत्यर्थः। ततः तस्मादपि तमसः भूयइव बहुतरमिव ते तमः प्रविशन्ति। य उ येतु विद्यायां अपरिपक्वात्मज्ञानलक्षणायां रता आसक्ताः तन्मात्रेण कृतकृत्यम्मन्याः स्वविहिताशेषकर्मत्यागिन इत्यर्थः। एतदुक्तंभवति विद्यायाः परिपाकात् प्रागेव यथाविहितं नित्यादि कर्मत्यजन्ति तेषां उपात्तदुरितक्षयाभावात् विहिताकरणनिमित्तस्यच पाप्मनः प्रत्यहमुपचीयमानत्वात् अशुद्धान्तःकरणानां विद्यापरिपाकस्य शुभविषयप्राप्तेरपि कारणाभावेनासम्भवात् आत्यन्तिकएव आद्यःपातस्स्यादिति। कस्तर्हि अमृतत्वं भजतीत्यतआह—विद्यांच परिपक्वात्मज्ञानलक्षणां अविद्यांच कर्मलक्षणां तदुभयं यः सह उपायोपेयभावेन वेद जानाति असौ अविद्यया कर्मणा मृत्युंविद्योत्पत्तिप्रतिबन्धकं पापं तीर्त्वा विद्यया परिपक्वब्रह्मसाक्षात्कारलक्षणया अमृतंनिर्वाणं अश्नुते इति। तदिदमत्र तत्वं। आत्मविद्यापरिपाकात् प्राक् यथास्वविहितं कर्म अनुष्ठेयम्। विद्यातु परिपक्वा कर्मनिरपेक्षैव मोक्षंसाधयिष्यति। यत्तु 'तत्प्राप्तिहेतुर्ज्ञानंच कर्मचोक्तं महामुने'। इत्यादि अत्रापि साक्षात् ज्ञानं तद्वारेणच कर्मेतिगमयितव्यं। अन्यथा ज्ञानादेवतु कैवल्यं 'नान्यःपन्थाः विद्यते' इत्यादिविरोधप्रसङ्गादिति। सर्वापेक्षाधिकरणे रत्नप्रभायामपि अयमेवार्थःप्रतिपादितः। अत्रायंविशेषः प्राक् ब्रह्मज्ञानात् विद्योत्पत्यर्थतया अश्रमविहितकर्माणि अनुष्ठेयानि। अपरोक्षज्ञानानन्तरंतु नेति चरमदेहपातावधिकर्मणां अपेक्षा परमते नास्ति समाधिपर्यवसितध्यानस्य मुक्तिहेतुतावादि वृत्तिकृन्मते 'क्षीयन्तेचास्यकर्माणि तस्मिन्दृष्टे' (मुं) 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा) इत्यत्रोक्त सर्वकर्मक्षयाव्यवहितपूर्ववर्तिदर्शने कर्मणां अपेक्षा वर्तते सर्वकर्मक्षयश्च चरमशरीरवियोगकालएवेतिसांपरायाधिकरणे निर्णीतम्॥

'मन्त्रेषु कर्माणि—तान्याचरथ नियतं सत्यकामाः' (मु) खण्डोपक्रमोक्तसत्यपदर्थस्यैव 'येनाक्षरं पुरुषं वेद सत्यं' इति खण्डान्तवाक्ये विवक्षितत्वेन तज्ज्ञानार्थं कर्मणामाचरणस्य 'तान्याचरथ नियतं सत्यकामाः' इत्यत्र विवक्षितत्वेन 'आत्मक्रीड आत्मरतिः, क्रियावानेष' इत्युत्तरत्र समाधेः आश्रमविहितकर्मसाध्यत्वोक्त्या च चरमदेहपातकालिकसर्वकर्मक्षयाव्यवहितपूर्ववृत्तिदर्शनेऽपि कर्मणां हेतुत्वस्य श्रुतिसिद्धतया चरमशरीरपातपर्यन्तं विद्यानिष्पत्तेरेवासम्भवेन तत्कालिकदर्शनप्रतिबन्धकपापनिवर्तकत्वेन स्वाश्रमविहितकर्मणामनुष्ठानमावश्यकं इति। अत्र विद्ययाऽमृतमश्नुते' इत्यत्र विद्यायाः ब्रह्मप्राप्तिहेतुत्वं ब्रह्मप्राप्तिप्रतिबन्धकसर्वकर्मक्षयद्वारेति। सर्वकर्मक्षयश्च सर्वविधकर्मजन्यभगवन्निग्रहसङ्कल्पानिवृत्तिरूपः। सेश्वरवादे कर्मणामपूर्वद्वारा फलजनकत्वविरहेण ईश्वरप्रीत्यादिद्वारैव फलजनकत्वस्य परेषामपि सम्मतत्वेन(बृ.३ अ.८)तत्क्षयस्यापि भगवन्निग्रहनिवृत्तिरूपता सर्वैरपि सेश्वरवादिभिरास्थेया। एवं च भगवदनुग्रहमूलैव ब्रह्मप्राप्तिरित्यर्थ स्सिध्यति। एवं ब्रह्मप्राप्तिप्रतिबन्धककर्मक्षयाव्यवहितपूर्ववृत्तिविद्यायां प्रतिबन्धनिवृत्त्यर्थं कर्मणामपेक्षा विद्यत एवेति तावत्पर्यन्तं कर्मणामनुष्ठानं अस्यामपि श्रुतौ विवक्षितम्। एतत्तात्पर्येणैव 'तत्प्राप्तिहेतुर्ज्ञानं च कर्म च' इति पराशरोक्तिः। एतदुपसंहारे 'विज्ञानं प्रापकं' 'क्षेत्रज्ञः करणी ज्ञानं करणं' (वि.पु.) इत्याद्युक्त्या ज्ञानस्यैव मुक्तिहेतुत्वं साक्षात्' कर्मणस्त्वङ्गिद्वारेति पराशराशयः। विद्यां चेत्यादिश्रुतेः (शु.यजु.) संहितान्तिमभागस्थतया संहितोक्ताग्निहोत्रादिकर्मणामपि

## श्रीभाष्यम्

**तथाच श्रुत्यन्तरं विद्यांचा विद्यांच यस्तद्वेदोभयं सह । अविद्ययामृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते [ईशा.११.वा] इति**

## श्रुतप्रकाशिका

**विद्यांचा**विद्यांचेति श्रुते श्शङ्करयादवप्रकाशाभिमतयोजनाव्युदासार्थं तां व्याचिख्यासुरुपादत्ते । **तथाचेति**। अनेन कर्मणोऽपेक्षितत्वे सन्नहितश्रुत्यन्तरंच दर्शितं भवति । तथाच श्रुत्यन्तरं यदन्यथा भवद्भिर्व्याख्यातम्। तच्चास्मदुक्तार्थानुगुणमिति तथाशब्द, मन्तरशब्दं, च प्रयुञ्जानस्य भावः। सन्नहिततया यज्ञादिवाक्यवैलक्षण्यंच-

## गूढार्थसंग्रहः

विद्याहेतुत्वेन विद्याङ्गत्वमत्र विवक्षितम् । उक्तं च परैरपि 'विद्यासहायस्याप्यग्निहोत्रादेः विद्यानिमित्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित्कारणत्वातिशयो भविष्यति न तथा विद्याविहीनस्येति युक्तं कल्पयितुम् । न तु 'यज्ञेन विविदिषन्ति' इत्यत्र अविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्य अग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुं।' इत्युपक्रम्य 'तस्माद्विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशे**न** इहजन्मनि जन्मान्तरे च प्राक् ज्ञानोपत्तेः कृतं यत् तद्यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्ययासहैककार्यं भवतीति स्थितम् । इति' (४.१.१८.शं.भा.) इति। 'तमेतं' इत्यादिश्रुतिः, 'वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः। श्रद्धोपवासस्वातन्त्र्यं आत्मनो ज्ञानहेतवः ॥ (या.स्मृ.प्र.अ.१९०.) सह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु। द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥ (१९१) इति याज्ञवल्क्येनोपबृंहिता । अत्र 'सह्याश्रमैर्विजिज्ञास्यः' इति श्लोकं वेदार्थसङ्ग्रहे उदाहरता भगवता 'शान्तो दान्त उपरतः' इत्यत्र उपरतशब्दे संन्यासी न विवक्षितः। 'उपरमयति कर्माणीत्यपरतिशब्देन कथ्यते न्यासः। (स.वे.सि.सं. १५२) 'उपरतिशब्दार्थोह्युपरमणं पूर्वदृष्टवृत्तिभ्यः। सोऽयं मुख्यो गौणश्चेतिच वृत्त्या द्विरूपतां धत्ते ॥ .२०५. वृत्तेः दृश्यपरित्यागः मुख्यार्थ इति कथ्यते । गौणार्थः कर्मसंन्यासश्श्रुतेरङ्गतया मतः ॥ .२०६. (श्रुतेः– श्रवणस्येत्यर्थः) शमादिषट्कमेवैतदन्तरङ्गं विदुर्बुधाः। .२२३. मोक्षाधिकारि संन्यासी गृहस्थः किल कर्मणि। .१८०.' इत्युक्तिरप्यनुपादेया। याज्ञवल्क्योक्तिविरोधात् । उपरतिशब्दस्य तैरेव द्वेधाऽर्थवर्णनेन आत्मान्यबहिर्विषयेभ्य उपरतिर्विवक्षितेति युक्तम्। तस्यैव 'समाहित' इति श्रुतिषट्कसमाधिशब्दार्थोपयोगित्वात्। 'समाहित' इत्यत्र संप्रज्ञातः 'आत्मन्येवात्मानं पश्येत्' इत्यत्र असंप्रज्ञातश्च विवक्षित इति अत्र श्रवणवाचिशब्द एव नास्तीति श्रवणाङ्गत्वमपि शमादीनां न श्रुतितात्पर्यविषय इति च बोधितम् ॥

एवं 'तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते।' (म.स्मृ.१०४.) इति (तै.शं.उ.भा) उदाहृतमनुवचनपर्यालोचनायामपि सर्वाश्रमिणां विद्याऽधिकारस्सिध्यति। पूर्वं 'वेदशास्त्रार्थतत्त्वज्ञः यत्र तत्रा ['कुत्रा'] श्रमे वसन् । इहैव लोके तिष्ठन् सः ब्रह्मभूयाय कल्पते ॥ (म.स्मृ.१२.अ.१०२.श्लो.) तपो विद्या च विप्रस्य निःश्रेयसकरं परम्।' १०४ इति पठ्यते। अत्र पूर्वं सर्वेषामाश्रमिणां मोक्षाधिकारोक्त्या अनन्तरं विद्यायां सर्वेषामधिकारः अग्निहोत्रादिकर्मणामपि विद्याङ्गत्वं, 'विद्यांच' इत्यादि श्रुतौ विवक्षितमिति बोधितम्। अस्यां श्रुतौ अविद्याशब्दस्य सर्वाश्रमकर्मपरत्वं (तै.उ.शं भा.) परेषामपि सम्मतम् । 'कुर्वन्नेव' इत्यादेः विद्वद्विषयकत्वमपि (.शं.उ.भा.) इत्यभिप्रेत्य संहितान्तभागवाक्ये

### श्रीभाष्यम्

**अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म अविद्यया कर्मणा**

### श्रुतप्रकाशिका

अन्तरशब्दाभिप्रेतम् । अस्मिन्वाक्ये न कर्मवाचिशब्दः श्रूयत इत्यत्राह । **अत्रेति** । अत्र श्रुतिवाक्ये नत्वनात्मन्यात्मबुद्धिर्येत्यादिषु । अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मास्तु ततः किमुक्तं भवतीत्याशङ्कायां पदान्तराण्यपि विवृण्वन्वाक्यार्थमाह । **अविद्ययेति** । अविद्यया कर्मणा विद्यया ज्ञानेनेत्यत्र च कर्मज्ञानशब्दाभ्यां ।

कषायपक्तिः कर्माणि ज्ञानं तु परमागतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥

इति स्मृतिस्स्वोपजीव्यार्था स्मारिता भवति । कर्माणि कषायपक्तिः कषायपक्तिनिमित्तानि कषायशब्दः पापपरः 'धर्मेण पापमपनुदति' इत्यनेनैकार्थ्यात् । कषायशब्दस्य रागादिपरत्वेऽपि तत्पक्तिहेतुत्वं पापनिर्हरणद्वारा ज्ञानं परमागतिः परमगत्युपायः उभयत्र कारणे कार्योपचारः कर्मभि कषाये पक्वे ततो ज्ञानं प्रवर्तते प्रसरतीत्यर्थः ॥

### गूढार्थसंग्रहः

संहितोक्तकर्मसाधारण्येन सर्वाश्रमकर्मपरत्वमेव अविद्याशब्दस्य युक्तमित्याह–**अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मेति** । 'अत्राविद्याशब्देन विद्येतरत् वर्णाश्रमाचारादिपूर्वोक्तं कर्मोच्यते' इति वेदार्थसङ्ग्रहे विद्येतरदिति अविद्याशब्दयोगार्थः । अब्राह्मणादिशब्दवत्प्रत्यासन्नकर्मपरः अविद्याशब्दः । 'कुर्वन्नेव' इति पूर्वश्रुतौ संहितापूर्वभागोक्तं कर्म प्रत्यासन्नम् । कर्मशब्दसङ्कोचस्य अन्याय्यतया प्रत्यासन्नवर्णाश्रमविहितकर्मसामान्यं अविद्याशब्दे विवक्षितमित्याशयः । एतेनापि संन्यासस्य श्रवणाङ्गत्वं नास्तीति सिध्यति । 'शान्तो दान्त' इति श्रुतौ विक्षेपाभाव उपरतिः इत्युक्त्वा 'अत्र उपरमशब्देन संन्यासोऽभिधीयते । तथाच संन्यासिनामेव श्रवणेऽधिकार इति केचित् । अन्येतु उपरमशब्दस्य सन्यासवाचकत्वाभावात् विक्षेपाभावमात्रस्य गृहस्थेष्वपि सम्भवात् जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वात् सर्वाश्रमसाधारणं श्रवणादिविधानमित्याहुः ।' इति (अ.वे.प.भा.) वदन्तः धर्मराजाध्वरिणः, अत्र संन्यासिनामेव ब्रह्मविद्यायामधिकारः इत्यत्रोपरतशब्दं प्रमाणयन्तः, 'सन्यासयोगाद्यतयश्शुद्धसत्वाः' इति श्रुतिं तात्पर्यभ्रमादुपोद्बलयन्तः 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' इत्यादिश्रुतिं, जनकरैक्ववसिष्ठानां ब्रह्मविचारप्रतिपादिकामाख्यायिकां 'गृहस्थोऽपि विमुच्यते' इति स्मृतिं चाच्छादयन्तः, तदुपोद्बलतया च, स्वाश्रमस्य मोक्षाश्रमनामधेयादिकयुक्त्याभासं वदन्तः गृहस्थादिकृतसाष्टाङ्गप्रणाममात्रेण स्वात्मानमधिकं मन्यमानाः, ब्रह्मविचारे गृहस्थादीनामधिकारं तेषु प्रद्वेषमात्रेण केचिद्भिक्षवो दूषयन्ति । इति तद्व्याख्याकाराः रामकृष्णदीक्षिताश्च सन्यासस्य श्रवणाङ्गत्वं नाभ्युपगच्छन्ति ॥

यद्यपि जन्मान्तरानुष्ठिताग्निहोत्रादि कर्मणः उत्तरजन्मनि विद्योत्पत्तिहेतुत्वस्योदाहृत तैत्तरीयवाक्य सूत्रभाष्ययोरभिधानेन जन्मनैव विरक्तानां ब्रह्मचर्यादेव संन्यस्यतां धर्मविचारात्प्रागेवेदान्ताध्ययनेनैव विचारे प्रवृत्त्या, तत्र च पूर्वकाण्डोक्तकर्मणामनुपयोगात् तद्विचाराधीनकर्माल्पास्थिरफलत्वनिर्णयस्याप्यनपेक्षितत्वेन कर्मविचारस्य नियतपूर्ववृत्तिता भाष्यकृता नैवोपपादितेति शङ्का सम्भवति ; तथाऽपि क्षत्रियवैश्ययोः त्रैवर्णिकत्वाद्विद्याधिकारसत्वेन तेषां श्रवणाङ्गसंन्यासस्य ब्राह्मणमात्राधिकारस्यासम्भवेन परमतेऽप्युपपत्तिर्न संभवति । 'अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः । न सन्यासविधिर्यस्मात् श्रुतौ क्षत्रियवैश्ययोः ॥ त्यक्ताशेषक्रियस्यैव संसारप्रजिहासतः । जिज्ञासोरेवचैकात्म्यं त्रय्यन्तेष्वधिकारिता ।

## गूढार्थसंग्रहः

इतिवार्तिकोक्तेः । त्रयाणामविशेषेण संन्यासश्श्रूयते श्रुतौ । यदोपलक्षणार्थं स्यात् ब्राह्मणग्रहणं तदा ॥ इति वार्तिकं तु विद्वत्संन्यासविषयम् नतु आतुरविविदिषासंन्यासे भाष्याभिप्रायविरुद्धसर्वाधिकारप्रतिपादनपरम् । सर्वाधिकारविच्छेदि विज्ञानंचेदुपेयते । कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥ इति अनन्तरश्लोकेन ब्रह्मज्ञानोदयानन्तरं जीवन्मुक्तिकाले विद्वत्संन्यासएव अधिकारनियमनिराकरणात् एवंच ब्राह्मणानामेव श्रवणाद्यनुष्ठाने संन्यासोऽङ्गम् । क्षत्रियवैश्ययोस्तन्निरपेक्षः श्रवणाद्यधिकारः । एवं देवानां कर्मानुष्ठानाप्रसक्त्या तत्यागरूपसंन्यासस्यासम्भवात् संन्यासनिरपेक्षएव श्रवणाधिकारः इत्यन्ये अपरेतु 'ब्रह्मसंस्थोऽमृतत्वमेति' इतिश्रुत्या अनन्यव्यापारत्वरूपं ब्रह्मनिष्ठत्वं यस्य तस्य श्रवणादिषु मुख्याधिकारः । सच संन्यासिनएव । संन्यासरहितयोः क्षत्रियवैश्ययोः अमुख्यएव श्रवणाधिकारः । विधुरादीनामिव देहान्तरेविद्याप्राप्तेः क्षत्रिय वैश्ययोः अमुख्याधिकारे देवानां अमुख्याधिकारस्तु नशङ्क्यः । सगुणब्रह्मविद्यया देवत्वं प्राप्तानां अनुष्ठेयकर्मवैराग्याभावात् स्वतएव अनन्यव्यापारत्वसम्भवेन मुख्याधिकारोपपत्तेः । मुख्याधिकारिणा परिव्राजकेन क्रियमाणमपि श्रवणं दृष्टार्थमेव तस्य प्रारब्धकर्मविशेषप्रतिबन्धात् इहजन्मनि फलाजनने जन्मान्तरे प्रतिबन्धकापनोदनेन फलजननं 'ऐहिकमप्रस्तुत प्रतिबन्धे तद्दर्शनात्' इत्यकरणे तथा निर्णयात् । एवमेवामुख्याधिकारि कृतमपि श्रवणं भविष्यति । शास्त्रीयाङ्ग विधुरमपि श्रवणं द्वारभूत विविदिषोत्पादक प्राचीन विद्यार्थ यज्ञादनुष्ठानजन्यापूर्वप्रयुक्तमिति तदेवापूर्वं विद्यारूपफलपर्यन्तं व्याप्रियमाणं जन्मान्तरीयायामपि विद्यायां श्रवणस्योपकारितां घटयतीति श्रवणजन्यापूर्वाभावेपि जन्मान्तरीय विद्योत्पत्ति सम्भवात् । इति (सि.ले.सं.) अप्पय्यदीक्षितनिर्णीत पक्षद्वये प्रथमपक्षे क्षत्रियवैश्ययोः संन्यासमन्तरा विचारे प्रवृत्तिरित्युक्तौ संन्यासस्य श्रवणाङ्गत्वभङ्गप्रसङ्गेन क्षत्रियवैश्ययोः श्रवणाधिकार एव न स्यात् । एवं देवानामपि ॥

अपरपक्षे 'ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुतिबलेन सन्यासाङ्गश्रवणविधुराणां देवानां मुख्याधिकारः । क्षत्रियादीनान्त्वमुख्याधिकार इति कथं सिध्यति । तत्र ब्रह्मणि संस्थायाः अनन्यव्यापारत्वरूपायाः सत्वमात्रं न मुख्याधिकारहेतुर्भवति । विधुरादीनां जन्मान्तरे विद्याप्राप्त्याऽमुख्याधिकार इत्युक्तिविरोधात् । अनन्यव्यापारवतामपि संन्यासिनां प्रतिबन्धकसत्वे जन्मान्तरे विद्योत्पत्तेः 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इत्यत्र निर्णयात् । जन्मान्तरे विद्याप्राप्तेः अनन्यव्यापारवतां संन्यासिनां विधुरादीनां क्षत्रियवैश्ययोश्चाभ्युपगमेन तस्मिन्नेव जन्मनि यस्य विद्याऽवाप्तिः तस्यैव मुख्याधिकारः, इतरेषाममुख्याधिकार इति निर्णयस्यैव समीचीनत्वात् । एवं च जन्मनैव विरक्तानां जन्मान्तरे अग्निहोत्रादिलक्षणकर्मानुष्ठानस्य परैरप्युक्त्या क्षत्रियवैश्ययोरग्निहोत्रादिलक्षणकर्मभिरेव विविदिषाद्वारा तज्जन्मनि श्रवणनिष्पत्तिः जन्मान्तरे विद्याप्राप्तिर्यथा, तथैव सम्भवतीति धर्मजिज्ञासायाः प्रागपि एतज्जन्मनि ब्रह्मविचारकरणेऽपि पूर्वस्मिन्जन्मनि श्रवणारम्भेन तत्र धर्मजिज्ञासा नियमेन वर्तत इति ब्रह्मविचारपूर्ववृत्तित्वं धर्मविचारस्य कथं प्रत्याख्यायते । जनकादीनामेतास्मिन्जन्मनि संन्यासविरहेऽपि प्राग्जन्मनि संन्यासकल्पनेन संन्यासस्य श्रवणपूर्ववृत्तित्वं अप्पय्यदीक्षितैरेव पूर्वं (.सि.ले.सं.) व्यवस्थापितमिति सिद्धान्तेऽपि जन्मनैव विरक्तानां संन्यस्यतां पूर्वस्मिन् जन्मनि अग्निहोत्रादिकर्मभिरेव प्रतिबन्धनिवृत्तिद्वारा ब्रह्मविचारे प्रवृत्त्यङ्गीकारे केवलकर्मणामल्पास्थिरफलत्वनिश्चयः आश्रमोचितकर्माङ्गब्रह्मज्ञानस्य अनन्तास्थिरफलापातप्रतीतिश्च सम्भवतीति वृत्तिकाराभिप्रेतब्रह्मविचाराधिकारसम्भवेन वृत्तिकारमते दोषोक्तेरसंभवात् ॥

'तमेतं वेदानुवचनेन' 'विद्यां चाविद्यां च' इत्यादौ सर्वाश्रमकर्मणां वेदनोत्पत्तिहेतुत्वं, जन्मनैव विरक्तानामपि प्राग्भवीयाग्निहोत्रादिलक्षणकर्मभिः विद्योत्पत्तिः विदुषोऽपि संन्यासश्च । इति परैरपि .शं. अभ्युपगम्यते । 'तमेतं

## गूढार्थसङ्ग्रहः

वेदानुवचनेन ' इत्यनन्तरं ' एतमेव विदित्वा मुनिर्भवति ' इत्यत्र विद्वत्संन्यास एव (.पराशरमाधवीये.) उक्तः । एवं ' एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च—व्युत्थायाथ भिक्षाचर्यं चरन्ति ' इत्यत्र विद्वत्संन्यासमेवाभिधाय बाल्यपाण्डित्यादीनि प्रतिपादितानि । ' एतमेव विदित्वा मुनिर्भवति ' इत्याद्युत्तरं ' तस्मादेवंविच्छान्तो दान्त ' इत्यादि वाक्यं पठ्यते । एवं च पूर्वं विद्वत्संन्यासस्याभिधानेन ' एवं विच्छान्तः ' इत्यादौ विदुष एवोक्त्या ' आत्मन्येवात्मानं पश्यति ' इत्यत्र समाधेर्विवक्षितत्वेन विचारस्य प्रसङ्ग एव नास्ति । उपरतशब्दस्य संन्यासवाचकत्वमपि न कस्यचित्सम्प्रतिपन्नम् । बाह्यविषयवृत्तिविरहस्तु परैरप्यङ्गीकृत: (.स वे.सि.सा.सं.) समाधेरपेक्षितः उपरतशब्दे विवक्षित: । एवं च संन्यासस्य श्रवणाङ्गताग्राहकप्रमाणविरहेण समाधेरङ्गतायाः शान्त्यादेः ' शमदमाद्युपेतस्स्यात् ' इति निर्णेष्यमाणतया जन्मनैव विरक्तानां प्राग्जन्मन्यग्निहोत्रादिकर्मानुतिष्ठतां तदैव ब्रह्मविचारः प्रारब्धकर्मवशात् जन्मान्तरे विद्यानुवृत्तिश्च, अपशूद्राधिकरणे विदुरादीनां वक्ष्यमाणदिशा सम्भवतीत्यभिप्रेत्य भगवता अत्रास्यार्थस्य स्फुटमनुपन्यास इति बोध्यम् । देवानामधिकारस्तु उत्तरत्र पर्यालोचयिष्यते ॥

एतेन ' वेदपदतोऽन्तपदमत्र यतिराजः हेतुमुपपादयितुमेव समवोचत् । वेदशिरसोऽध्ययनमात्मविषयायां हेतुरुचितो ननु विचारभुवि तीव्रः ॥ ' इति (ब्र.सू.वा.३०८) बालकृष्णानन्दसरस्वतीविवरणानुसारेण शं' भाष्योक्तदूषणस्य परिहार उक्तः । (सि.सि.अ.) कृष्णानन्दसरस्वत्युक्ता परभाष्यार्थवर्णनप्रक्रिया बालकृष्णानन्दसरस्वतीभिरेव दूषितेति तत्प्रकार एव लिख्यते । ' यत्पतितापहरणं नियतमेतत् विश्रुतमथोपनयनं यदनुविद्यम् । तन्न नियतं महति साधकवरे स्यात् संन्यसनमत्र पुरतश्च परतश्च ॥ ' (ब्र.सू.वा.३०९) अथ अधीतवेदान्तस्येत्यन्तग्रहणे क्रमेणाधीते वेदे उपनिषदंशोऽपि अधीत एव भवति । परं तु अन्तग्रहणमुपनिषदंशस्य असाधारणतासूचनायेत्युक्त, तत्किमर्थं तथोच्यते । क्रमेण ' अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत । ' इति सर्ववेदाध्ययनाभावेऽपि प्रथमत एव उपनिषदध्ययनं यस्य तदभिप्रायेण अधीतवेदान्तस्येति कथितम् ॥

तथाहि आरण्यके ' सोपनयनादूर्ध्वंसता निप्राग्वा त्यजेत् '(आरुणेय्युपनिषन्मन्त्र:.५) इति नित्यकर्मणां संन्यासस्तावत् उपनयनादूर्ध्वं प्राग्वाविहितः । एवंच जन्मान्तरकृतपुण्यपुञ्जेन संजातवैराग्यस्य उपनयनात्प्राक् संन्यासेसति अष्टवर्षमित्यादिशास्त्राधीनक्रमवेदाध्ययनाप्रसक्तेः प्रागेव संन्यासिनः ' सर्वेषुवेदेषु आरणमावर्तयेत् , उपनिषदमावर्तयेत् ' इत्युपनिषदध्ययनविधानात् उपनयनात् प्राक् कृतसंन्यासः अधीतवेदान्तएवभवति । नाधीतवेद इति प्रकारान्तरेणैवान्तग्रहणं सार्थकमिति तदेतत् नसम्भवति । तथाहि—द्विविधं उपनयनं पतितसावित्रीकत्वापहरणं विद्याङ्गंचेति । आषोडशाद्ब्राह्मणस्य, आविंशात् क्षत्रियस्य, आचतुर्विंशाद्वैश्यस्य , अतऊर्ध्वं पतितसावित्रीकाभवन्ति । नैनानुपनयेत् नाध्यापयेत् नैतैस्सह संवसीतेति पातित्याभावकरमुपनयनमाद्यम् । ' शौनकोहवैमहाशालः अङ्गिरसं विधिवदुपसन्नः पप्रच्छ ' । ' महाशालाः महाश्रोत्रियाः तान्हानुपनीयैवोवाच । प्रतिलोमंवाएतद्यत् ब्राह्मणः क्षत्रियमुपेयात् व्येवत्वाज्ञापयिष्यामि 'इत्यादौ विद्याङ्गभूतमुपनयनं कृताकृतं समाम्नातं यत्तावदाद्यं पातित्यापहरणाय विहितं तत्तावत् त्रैवार्णिकानां नियतमेवभवति । तस्मिन्नुपनयने जाते क्रमेण अक्रमेणवा तयैव वैदिकाचाराध्ययनं प्राप्तमेवेति वेदान्तग्रहणं प्रागुक्तरीत्यैव हेतूपपादनपरं योजनीयम् । तत्तद्विद्याङ्गभूतमुपनयनं तु कृताकृतमित्यापि नियतम् । तदेवोपनयनं ' स खलु वेदार्थं विद्वान् सोपनयनादूर्ध्वं स तानि प्राग्वा त्यजेत् । ' इत्यारण्यकवाचि परिगृहीतम्भवति । गुरुसविधे ब्रह्मविद्यार्थगमनानन्तरं वा ब्रह्मचर्याद्याश्रमत्रयविहितस्योचितान्यतमस्य प्राप्तस्य त्यागः, गमनात्पूर्वं वा संन्यासः इति किल आरणवागर्थः । इतरथा ' स खलु वेदार्थं विद्वान् ' इति कथनमनर्थकं स्यात् । तस्मात् नित्योपनयनानन्तरं प्रायस्सर्ववेदाध्ययनात् आपाततः वेदार्थं विद्वान् नित्यानित्य-

## श्रीभाष्यम्

**मृत्युं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वा,**

## श्रुतप्रकाशिका

**अत्रो**पायविरोधि निरासकत्वं कर्मणस्स्पष्टम् । नहि विविदिषा प्रवर्तते मोक्षः प्रवर्ततइति वोक्तम् । अपितु ज्ञानं प्रवर्तत इत्येवोक्तम् । * अस्य वाक्यस्यार्थमुपजीव्याह । **मृत्युं ज्ञानोत्पत्तिविरोधीति** । ननु ब्रह्मप्राप्तिविरोधि । न च विविदिषाविरोधीत्यर्थः । उपेयविरोधिकर्मणो ज्ञाननिवर्त्यत्वं श्रुतिस्मृतिशतसिद्धम् यथा— **'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्थाः' 'एवमेवंविदि पापं कर्म न श्लिष्यते' 'क्षीयन्तेचास्य कर्माणि तस्मिन् दृष्टे परावरे' 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' 'ज्ञात्वादेवं मुच्यतेसर्वपापैः'**

**ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेतथा ॥** इति

एवमुपेयविरोधिनोज्ञाननिवर्त्यत्वश्रवणेन परिशेषान्नान्यःपन्था इत्युपेयविरोधिनिरासे उपायान्तरनिषेधस्वारस्यात् समसमुच्चयपक्षे कर्मणोऽप्युपायतया वेदनव्यतिरिक्तकृत्स्नगोचरान्यशब्दस्य सङ्कोचप्रसङ्गात् । **यज्ञेन विविदिषन्तीति** । कर्मण उपायहेतुत्वस्य कण्ठोक्त्या ।

**कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥** इति

स्मृत्यानुगुण्याच्च सामान्येन मृत्युशब्देन प्रतिपन्नमपि निरसनीय मुपायविरोधिकर्मरूपे विशेषे पर्यवस्यति । तथा विविदिषासाधनत्वस्य प्रागुक्तान्योन्याश्रयणादिनिरस्तत्वेन परिशेषा द्विविदिषन्तीत्यत्रच प्रकृतिप्रत्ययार्थयो र्वेदनतदिच्छयोरविशे·

## गूढार्थसङ्ग्रहः

वस्तुविवेकवैराग्यादिसम्पत्त्या गुरूपसदनात्प्राग्वा ऊर्ध्वं वा सम्भावित आश्रमानाश्रमोचितकर्म संन्यसेदिति । तथा च नित्योपनयनात्प्राक्संन्यासविधिपरं आरणकवाक्यमित्येतदनुचितमेव । 'यदपि 'सर्वेषु वेदेषु आरणमावर्तयेत्, उपनिषदमावर्तयेत्' (आ.उ.२·मन्त्रः) इत्युपनिषद्भागाध्ययनविधिरिति तदपि नातीव रमणीयम् । अत्राधीतस्यावृत्तिरेवोच्यते, नापूर्वं विधीयते ; आवृत्तिपदस्यापूर्वविधिपरत्वे लक्षणापत्तेः । तदेतत्त्रिभिःश्लोकैः विशदयति । तत्रादौनित्योपनयनं पश्चात्तु विद्याङ्गोपनयनम् । विद्याङ्गोपनयनात् प्राक् ऊर्ध्वंवा संन्यासः इतिच निरूपयति यदिति । यत् पतितापहरणं पतित सावित्रीकत्वापहरणं एतदुपनयनं नियतं विश्रुतं श्रुतिस्मृतिषु यत्तावदनुविद्यं विद्यामनुरुध्यवर्तमानं तत्तावत् न नियतम् (कृताकृतं) महाशाला महाश्रोत्रियाः तान्हानुपनयैवोवाच ब्राह्मणः क्षत्रियमुपेयात् , इति च । महति जने साधकवरे नियतं न स्यात् इत्यन्वयः । अत्र ईदृशोपनयनविषय आरणकोदितं संन्यसनं पुरतः विद्याङ्गोपनयनात् पुरतश्च परतश्च विहितं भवतीत्यर्थ इति ' सर्वासम्प्रतिपन्न (आरुणेयी—आरुणिक) उपनिषद्वाक्यविचारः अनपेक्षित इति भगवता एतदुपेक्षा कृतेति बोध्यम् ॥

'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४.३.११०) इति पाणिनिसूत्रमपि विदुषां संन्यासस्य श्रुतिसिद्धतया संन्यासस्य ब्रह्मविद्याङ्गत्वे प्रमाणविरहेणच्च ब्रह्मसूत्राणां भिक्षुभिरेवाध्येतव्यत्वं न प्रतिपिपादयिषति ; किं तु विदुषः संन्यासमभिप्रैति । तदुक्तं नागेशेन— 'भिक्षुसूत्रं— भिक्षुत्वसम्पादकं सूत्रम् । यथा नटसूत्रम् ; नटसूत्रज्ञाने हि नटत्वसम्प्रतिपत्तिः । एवं तज्ज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात् कर्मस्वनादरेण भिक्षुत्वसम्पत्तेः । 'वेदान्ताग्विधिवत् श्रुत्वा संन्यसेदनृणो द्विजः ।' इति मनूक्तेः, 'सह्याश्रमैः----द्विजातिभिः' इति याज्ञवल्क्योक्तेश्च । विविदिषावाक्येऽपि तपआदीनां

## श्रीभाष्यम्

**अपोह्य विद्यया ज्ञनेन अमृतं ब्रह्म अश्नुते प्राप्नोतीत्यर्थः मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरद्विहितं कर्मैव**

## श्रुतप्रकाशिका

षण यज्ञादीनां साधनत्वे प्रतीतेऽपिततोज्ञानं प्रवर्तत इति स्मृत्याद्यानुगुण्यादिष्यमाणप्रकृत्यर्थप्राधान्यस्य नीतिविद्भिर्निर्णीतत्वाच्च प्रकृत्यर्थभूतवेदनसाधनत्वं सिद्धम्। तस्मादुपायविरोधिकर्मैवात्रमृत्युशब्दवाच्य मविद्यानिवर्त्यमित्यभिप्रायः। उपासनरूपंन्यासरूपंचोपेयविरोधिनिरासकं ज्ञानमुत्तरपूर्वाघयोः *उभयोरपि निरासकं स्यादिति तद्व्यावृत्त्यर्थं प्राचीनमित्युक्तम्। उपायविरोधिनिरासककर्म प्राचीनमेव पापं शमयति नतूत्तराघमित्यर्थः॥

**तीर्त्वेति**। पदं व्याचष्टे। **अपोह्येति**। ननु एतं सेतुं तीर्त्वेतिवत्प्राप्तिवचन इत्यर्थः। अविद्यया तीर्त्वेति पदद्वयव्याख्यानेन शङ्करमतयोजनाव्यावृत्तिः। अज्ञानेन संसारं *प्राप्य स्थितइति हि तद्योजना। तन्मते अविद्यायाः ज्ञातव्यत्वंच हेयत्वेन। अविद्याशब्दो विविदिषाविरोधिनिवर्तककर्मवाचीतिवा शङ्कराभिमतयोजनास्यात्। अविद्याशब्द उपेयविरोधिनिवर्तककर्मवाचीति यादवप्रकाशाभिमतयोजना। **ज्ञानोत्पत्तिविरोधि** इतिमृत्युशब्दव्याख्यानेन तदुभयव्युदासः। अयमविद्याशब्दस्संसारहेतुभूताज्ञानपरः किं नस्यात्। कथंच तस्य कर्मवाचित्वमित्यत्राह। **मृत्युतरणेति**। तरतेरुत्तरणवाचित्वं स्वरससिद्धम्। प्राप्तिवाचित्वे तु स्वारस्यभङ्ग इत्यभिप्रेतम्। अविद्याशब्दस्य कर्मवाचित्वं दर्शयति। **विद्येतरदिति**। तदन्यार्थे नञितिभावः। विहितं कर्मैवेत्येवकारेण अज्ञानं अविहितं कर्मच व्यावर्त्यते। अत्र विद्यांचाविद्यांच इति च शब्दावनुक्तसमुच्चयपरौ। विद्यानुबन्धि कर्मानुबन्धि च यदनुक्तं तत्समुच्चेतव्यम्। विद्यानुबन्धि शमदमादिकम्। कर्मानुबन्धि फलाभिसन्धिककर्तृत्वाभिमानराहित्यादिकम्। तदुभयं च शब्दसमुच्चेतव्यम्॥

**यद्वा** धर्मेचार्थेच कामेच मोक्षेच भरतर्षभ इत्यत्र चशब्दवदत्राप्युक्तार्थविरोधिसमुच्चयपरौ चशब्दौ स्याताम्। विद्याविरोधि कर्मविरोधि, च शब्दाभ्यां हानार्थं ज्ञातव्यतया समुच्चिते भवतः। विद्या ब्रह्मविद्या तद्विरोधि तदितरविषयज्ञान तद्विषयरागद्वेषादिकम्। अविद्या विद्याङ्गं कर्म तद्विरोधि संसरणहेतुभूतं फलाभिसन्ध्यादि सहितं कर्म, पापं च तदुभयं हानार्थं ज्ञातव्यमिति च शब्दयोरभिप्रायः॥

## गूढार्थसंग्रहः

करणानां शब्दतो गुणभूतेऽप्यर्थतः प्रधानभूते वेदन एवान्वयः; कारकाणां तण्डुलानां, काष्ठैः पाचकः इत्यादौ गुणभूतक्रियायामप्यन्वयदर्शनात्। यद्वा; 'ग्रामं ग्रामाय वा जिगमिषति' इत्यादौ गमेः ग्रामः कर्म। इषेस्तु उभयम्' इति महाभाष्योक्तरीत्या वेदने इच्छायां च उभयत्रापि करणत्वमिति न तद्विरोधः। वस्तुतः इच्छाया वस्तुसौन्दर्यबलेनैव सिध्या तत्र करणापेक्षा नास्त्येव। 'संन्यस्य श्रवणं कुर्यात्' इत्यस्य संन्यस्य श्रवणमेव कुर्यादित्यर्थः। एतेन भिक्षुमात्राध्येयत्वाद्भिक्षुसूत्रत्वमस्येत्यपास्तम्। (शब्देन्दुशेखरः) इति 'पाराशर्य—सूत्रयोः' इति सूत्रेण विदुषः संन्यासस्य उक्त्या संन्यासस्य ब्रह्मविचाराङ्गत्वं न श्रुतिसम्मतमिति दर्शितं भवति॥

**विद्यया ज्ञानेनेति**। इति विदधात्वर्थ उक्तः। 'विद्याशब्देन भक्तिरूपतापन्नानुध्यानमुच्यते' इति वेदार्थसङ्ग्रहोक्तिः, सामान्यवाचिनो विद्याशब्दस्य 'आत्मन्येवात्मानं पश्यति' इति प्रागुक्तविशेषाभिप्रायेण। तत्र अनुशब्देन समाध्यनुसारिदर्शनस्यैव विवक्षितत्वेन ध्यानानन्तरकालिकानन्दस्वरूपावगाहिदर्शनमेव विवक्षितमित्याशयः। एतेन अत्र विद्या परमात्मविद्या विवक्षितेतिसिद्धम्। **अत्र मृत्युतरणोपायतया प्रतीतेत्यादि**। 'अहं ह्यविद्यया मृत्युं तर्तुकामः करोमि वै।

## श्रीभाष्यम्

**यथोक्तम् इयाजसोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥ इति [वि.पु.६अं-६.अ.१२.श्लो] ज्ञानविरोधि च कर्म पुण्यपापरूपं ब्रह्म ज्ञानोत्पत्ति विरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम् ।**

## श्रुतप्रकाशिका

* **यद्वा** प्रतिपदद्योतकौ च शब्दौ स्याताम् । यथाधर्मेचार्थे च कामे चेति प्रतिपदं यदभिधेयं तस्य समुच्चयद्योतकत्वं प्रतिपदद्योतकत्वम् । तदत्रापि स्यात् । अस्मिन्वाक्ये अविद्यातरणशब्दयोरुक्तार्थपरत्व स्थापनायोपबृंहणवचनं च दर्शयति । **यथोक्तमिति** । ज्ञानव्यपाश्रयः आगमोत्थज्ञानवान् । ब्रह्मविद्यामधिष्ठाय उपासनात्मकज्ञानं साध्यत्वेनावलम्ब्येत्यर्थः । ज्ञानविद्याशब्दयोरर्थभेदबुभुत्सायामागमोत्थविवेकादिजन्यज्ञानयोः प्रकृतत्वात्तत्परत्वाश्रयणं हि युक्तम् । तर्तुंमृत्युमित्यनेन तरतेः प्रातिवाच्यित्वशङ्का व्युदस्ता । न हि संसारं प्राप्तुं ब्रह्मविदा केशिध्वजेन नृपेण यज्ञादिकर्मानुष्ठीयते । मृत्युशब्दस्य विविदिषाविरोधि कर्मपरत्वमपि न शङ्कनीयम् । ज्ञानव्यपाश्रय इत्यनेन शास्त्रजन्यज्ञानवत्ताया अभिहितत्वात् । ब्रह्मविद्यामधिष्ठायेत्युक्तत्वाच्च । नहि ब्रह्मविद्येच्छामधिष्ठायत्युक्तम् । कथं ज्ञानोत्पत्तिविरोधिप्राचीनं कर्मेति पुण्यपापसाधारणकर्मशब्देन कर्ममात्रं निरसनीयमुक्तम् । श्रुतिर्हि धर्मेण पापमपनुदतीति पापरूपकर्मविशेषस्य निरसनीयत्वमाहेति शङ्कायां तत्रापि पापशब्दस्य पुण्यपापपरत्वं दर्शयितुं पुण्यपापयोरुभयोरपि पापशब्दवाच्यत्वोपपादनाय तयोर्ज्ञानोत्पत्तिविरोधित्वमाह । **ज्ञानविरोधिचेति** । चश्शङ्कानिवृत्तौ । * पुण्यपापे उभेअपि ज्ञानविरोधिनी चेत्कथं तयोरन्यतरस्य पापस्य निरसनीयत्वम् । अन्यतरस्य पुण्यस्य निरासकत्वं च श्रूयत इत्यत्राह । **उभयोरपीति** । तयोर्द्वयोरपि निवर्त्यत्वं, फलाभिन्ध्यादिरहितस्य धर्मान्तरस्यैव निवर्तकत्वं, च विवक्षितमिति भावः कथमुभयोः पापशब्दवाच्यत्वमित्यत्राह । **ब्रह्मज्ञानोत्पत्तीति** । अनिष्टफलतयेति प्रवृत्तिनिमित्तसूचनम् । अलौकिकत्वेसत्यनिष्टफलासाधारणकारणत्वं पापत्वमिति भावः । अतएव शस्त्रादावश्चिरे च नातिव्याप्तिः ॥

**वासुदेवे मनोयस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकंफलम् ॥**

**एते वै निरयास्तात स्थानस्य परमात्मनः ।**

इत्यादिभिः पुण्यस्यापि मुमुक्षुं प्रत्यनिष्टफलत्वं सिद्धं । श्रुतिश्च दुष्कृतेन सह पूर्वनिर्दिष्टं सुकृतमपि पाप्मशब्देन निर्दिशन्ती निगमयति । **नैतं सेतुमहोरात्रे तरतो न जरा नमृत्युर्नशोको न सुकृतं नदुष्कृतं सर्वे पाप्मानोऽतोनिवर्तन्ते** इति ॥

## गूढार्थसंग्रहः

राज्यं यागांश्च विविधान् भोगैः पुण्यक्षयं तथा ॥ ' (वि.पु.६७.९) इति वदता केशिध्वजेन, ' क्लेशानां च क्षयकरं योगादन्यन्नविद्यते ।' (७·२५) इत्यादिना योगस्वरूपमुपदिशता ' केशिध्वजो विमुक्त्यर्थं स्वकर्मक्षपणोन्मुखः । बुभुजे विषयान्कर्मचक्रे चानाभिसंहितम् ॥ .१०५. अकल्याणोपभोगैश्च क्षीणपापोऽमलस्तथा । अवाप सिद्धिमत्यन्तां पापक्षयफलां द्विज ॥ '(१०६) इत्यत्र चशब्देन ' तत्रैकान्तमतिर्भूत्वा ' इति पूर्वश्लोकोक्त योगस्यापि विवक्षितत्वेन दैनन्दिनयोगोत्पत्तिप्रतिबन्धकदुरितनिवृत्त्यर्थं तत्सहभावेन कर्मानुष्ठानस्याप्युक्त्या ' इयाज सोऽपि सुबहून् ' इत्यत्रापि योगात्मकब्रह्मविद्यासाधनतया केशिध्वजेन बहुयज्ञाद्यनुष्ठानस्योक्त्या च अविद्याशब्दस्य कर्मैव अर्थ इति भावः ॥

## श्रीभाष्यम्

**अस्यच ज्ञानविरोधित्वं ज्ञानोत्पत्ति हेतुभूत शुद्धसत्वविरोधिरजस्तमो विवृद्धिद्वारेण**

## श्रुतप्रकाशिका

**नचानुक्तपापान्तरविषयः पाप्मशब्दः ।** दुष्कृतशब्दस्य सम्प्रतिपन्न समस्तपापसाधारणतयाऽनुक्त पापान्तरासम्भवेन तद्विषयत्वायोगात् । सम्भवेपि * न तन्मात्रपापान्तरविषयः पाप्मशब्दः । उक्तसर्वहेयनिवृत्तिसंवादितयोपात्ते * **अपहतपाप्माह्येषब्रह्मलोक** इत्यनन्तरवाक्ये पाप्मशब्दस्य सर्वहेयविषयत्वदर्शनात् । नह्यनुक्त कतिपयपापनिवृत्त्युक्तावुक्तसर्वहेयनिवृत्तिसंवादसिद्धिः । * शोकादिषु पाप्मशब्दस्यामुख्यत्वेऽपि सुकृतदुष्कृतयोः प्रवृत्तिनिवृत्तिनिमित्तसम्भवान्नमुख्यत्वं त्याज्यम् । क्वचिदमुख्यस्य सर्वत्रामुख्यत्वनियमाभावात् । अतस्सर्वे पाप्मान इत्यत्राजहल्लक्षणा छत्रिन्यायात् । **'धर्मेण पापं'** इत्यत्रतु मुख्यत्वमेव कथं पापस्य ज्ञानविरोधित्वं रजस्तमसोर्हितदवगम्यत इति शङ्कायां द्वारद्वारिभावादविरोधमाह । **अस्येति** ॥

## गूढार्थसंग्रहः

एतेन 'इयाज—केशिध्वजः' इत्यादौ च नायमर्थः ; ज्ञानव्यपाश्रयः— अधिगतब्रह्मानुभव इति । किं तु अपेक्षितं फलं उपायप्रवृत्तेराश्रयो भवतीति ज्ञानव्यपाश्रयो विविदुषुरुच्यते । तस्येदं प्रयोजनं 'ब्रह्मविद्यामधिष्ठाय सन्तं तत्प्रतिबन्धकं । मृत्युं दुरितं तरितुं' इति ॥ खाण्डिक्याय ज्ञानोपदेशस्तु, तस्य शास्त्रन्यायनैपुण्येनाप्युपपद्यते । अथवा ज्ञानमेव व्यपाश्रयः अस्य न कर्मादि ; ततो लब्धव्याभावात् । स तथाभूतोऽपि ब्रह्मविद्यां समूलकर्मनिर्माथिनीमप्यधिष्ठाय नियम्याभिभूय प्रवृत्तफलं मृत्युं पाप्मानं अविद्यया लोकसङ्ग्रहार्थमप्यनुष्ठितेन कर्मणा तदनुष्ठानायासजनितदुःखफलेन तरितुमियाज यज्ञानित्यर्थः । 'अहं ह्यविद्यया मृत्युं तर्तुकामः करोमि वै । राज्यं यागांश्च विविधान् भोगैः पुण्यक्षयं तथा ॥' इति । तस्यैव भोगनिमित्तपुण्यक्षयवचनसमभिव्याहारात् । ' इति (सि.सि.) कृष्णानन्दसरस्वत्युक्तिरपि निरवकाशा ॥

'अहं ह्यविद्यया मृत्युं तर्तुकामः' इत्यत्र 'अविद्यया मृत्युंतीर्त्वा' इति श्रुत्यर्थः स्फुटंप्रतीयते । राज्यमिति स्ववर्णविहितं कर्म तत् । 'अविद्यया मृत्युं तीर्त्वेत्यस्य' प्रागुदाहृतपरव्याख्यानानुरोधेनाप्येतदर्थः सिद्धान्तानुगुण एव भवति । केशिध्वजो विमुक्त्यर्थं स्वकर्मक्षपणोन्मुखः ' इत्यत्र प्रारब्धकर्मणां भोगादेव क्षयमनुसृत्य विषयभोगस्य मोक्षार्थमनभिसंहितफलकर्मानुष्ठानस्य स्फुटमुक्त्या तत्पूर्वश्लोके 'तत्रैकान्तमतिर्भूत्वा' इत्यत्र मुक्त्युपायविद्याया विवक्षितत्वेन विद्याद्वारा मुक्त्यर्थत्वं स्फुटं प्रतीयते । अतः 'अहं ह्यविद्यया' इति श्लोके 'अविद्यया मृत्युं तीर्त्वा' इति श्रुतौ अविद्यायाग इति बोधनेन 'इयाज सोऽपि' इति श्लोकेऽपि (सि.सि.) उक्तार्थस्य विवक्षा नास्तीति सिद्धेः । योगमुपदेष्टुः केशिध्वजस्य प्रतिदिनं योगानुष्ठानमावश्यकमिति तदुत्पत्तिप्रतिबन्धकपापनिवृत्त्यर्थं आप्रयाणं अनभिसंहितफलकर्मणामनुष्ठानं प्रारब्धकर्मणां भोगादेव क्षपणं च स्फुटं प्रतीयमानं नापह्नोतुं शक्यम् । अतः 'इयाज सोऽपि' इति श्लोकेऽपि ब्रह्मविद्यां, मृत्युंतर्तुमविद्यया इतिपदैः 'विद्यां च' इत्यादि श्रुतेः प्रत्यभिज्ञापनेन 'अहं ह्यविद्यया' इत्यत्रापि श्रुत्युक्तार्थस्य स्फुटप्रतीत्या प्रतिदिनकर्तव्यसमाधिरूप ब्रह्मविद्यानिष्पत्तये तत्प्रतिबन्धकपापापनोदनाय यज्ञानुष्ठानं विवक्षितं ; न तु कृष्णानन्दसरस्वत्युक्तौत्प्रेक्षिकार्थं इति सिद्धम् ॥

मृत्युशब्दस्य 'नचेदिहावेदीन्महती विनष्टिः' इति श्रुत्याद्यनुसारेण ज्ञानोत्पत्तिविरोधिकर्मपरत्वं प्रागुक्तं विरोधित्वादिनिरूपणेन विशदयति=**अस्य च ज्ञानविरोधित्वमित्यादिना** । एतेन 'विशुद्धसत्वः ततस्तु तं पश्यति निष्कलं

## श्रीभाष्यम्

**पापस्य च ज्ञानोदयविरोधित्वम् एषएवासाधुकर्म कारयति । तंयमधोनिनीषति इतिश्रुत्या** [कौषीतकी.३-अ-९.वा] **अवगम्यते ।**

## श्रुतप्रकाशिका

पापस्य रजस्तमसोश्च ज्ञानविरोधित्वे प्रामाणिकेसति द्वारद्वारिभावः कल्प्यतइत्यत्राह । **पापस्यचेति । नन्वियं** श्रुतिर्निरयनिनीषाविषया किं नस्यात् , उन्नयनप्रत्यनीकत्वादधोनयनस्येति । ब्रूमः अत्रविवक्षितमुन्नय-नहेतुत्वमुपासननिष्पादनरूपम् । नचोन्नयनमपि नाकादिनयनमिति शङ्कनीयम् । **यमेभ्यो लोकेभ्य उन्निनीषति** इत्यवगतस्य समस्तलोकेभ्य उन्नयनस्यापवर्गप्रापणरूपत्वात् । तर्हि गर्भजन्मजरामरणादिसंसारप्रापणमधोनयनंस्या न्न तूपासनविरोध इति चेन्न उन्नयनस्य ज्ञानोत्पादनद्वारकत्वावगमात् । **यं त्वं मनुष्यायाहिततमं मन्यसे** इत्युपक्रम-वाक्येन मामुपास्वेति विधित्सितस्योपासनस्य ह्यव्यवहितोपायत्वमवगतम् । **नान्यःपन्था** इत्यादीनि च श्रुत्यन्तराणि तथावगमयन्ति, तच्चकर्मणामपवर्गे प्रत्यव्यवहितोपायत्वे विरुध्येत । अतउपक्रमाद्यविरोधात्साधुकर्मणामपवर्गप्रत्युपायत्व मुपासनद्वारकमवसीयते । अतः कर्मणा मुन्नयनहेतुत्वमुपासन निष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रति-बन्धरूपमिति स्फुटतरमवगम्यते । किंच यद्यप्युन्नयनाधोनयने स्वर्गनरकप्रापणरूपे । तथाप्यसाधुकर्मणां ज्ञानविरो-धित्वं सिध्यति । तथाहि उन्निनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनोवैषम्यनैर्घृण्यप्रसङ्गान्नेतव्यचेतनगोचरं * यद्वृत्तद्वयं गति-द्वयनिनीषानिमित्तभूतातिपुण्यपापकर्तृविषयं विज्ञायते । तत्र च गतिद्वयपर्यासोत्तरसाध्यसाधुकर्मकारयितृत्वमीश्वरस्य नभू-तावेशादिवज्जीवबुद्ध्यनपेक्षितं भवति । तथासति ज्ञानचिकीर्षाद्यभावाद्वायूदकादिनुन्नतृणादेरिव संसारिणां शास्त्रवश्य-त्वाभावेन कर्मफलभोगानुपपत्तेः । एवं संसारिणां कर्मफलभोक्तृत्वान्यथाऽनुपपत्तिरूपन्यायानुगृहीतं एष एवेत्यादिकं वाक्य द्वयं * ज्ञानप्रदानद्वारक कारयितृत्व विषयमवसीयते । तथासति स्मृत्यनुग्रहश्च भवति

**नदेवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुध्या संयोजयन्तितम् ॥**

**यस्मै देवाः प्रयच्छान्ति पुरुषाय पराभवम् । बुद्धिंतस्यापकर्षन्ति सोऽपनीतोविनश्यति ॥**

इति ह्युच्यते । तथा

**पुण्यं प्रज्ञां वर्द्धयति क्रियमाणं पुनःपुनः । वृद्धप्रज्ञःपुण्यमेव नित्यमारभतेनरः ॥**

**पापं प्रज्ञां नशयति क्रियमाणं पुनःपुनः । नष्टप्रज्ञः पापमेव नित्यमारभतेनरः ॥**

इतिच तत्र बुद्धिमवकर्षन्ति प्रज्ञां नाशयतीतिच सम्यग्ज्ञानहानिपूर्वक तद्विपरीतज्ञाननिष्पत्तिरिह विवक्षिता अन्यथा कर्मान्तर प्रारम्भानुपपत्तेः ॥

## गूढार्थसंग्रहः

ध्यायमानः ' (मु) इत्यत्र विशुद्धसत्वपदार्थोऽपि विशदीकृतो भवति । रजस्तमोविवृद्धिहेतुभूतपापक्षयेण रजस्तमोवृद्धिविरह एव शुद्धिः । ' विशुद्धसत्वः ' इत्यनेन ध्यानस्य प्रमात्वं बोधितम् । एवं ' सत्वशुद्धौ ध्रुवा स्मृतिः ' इत्यत्रापि सत्वशु-द्धावित्यनेन स्मृतेः प्रमात्वमावेदितम् । ' सत्वात्सञ्जायते ज्ञानं ' इत्युदाहरिष्यमाणगीता वचनानुसारेण ध्यानस्यज्ञानत्वमपि ॥

**एष एवासाधुकर्म कारयतीति ।** ' यः पुनरतिमात्रप्रातिकूल्ये प्रवृत्तः, तस्य तु क्रूरां बुद्धिं ददन् स्वयमेव क्रूरेषु कर्मसु प्रवर्तयति भगवान् । यथोक्तं भगवता ; ' तानहं द्विषतः क्रूरान्—आसुरीष्वेव योनिषु ॥ इति ' (वे.सं.) ' यश्च

## श्रीभाष्यम्

**रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्वस्यच यथार्थज्ञानहेतुत्वं भगवतैवप्रतिप्रादितम् सत्वात्संजायते ज्ञानं** (गी.१४.अ.१७.श्लो) **इत्यादिना ॥ अतश्च ज्ञानोत्पत्तये पापंकर्मनिरसनीयम् । तन्निरसनंचानभिसंहितफलेनानुष्ठितेन धर्मेण । तथाचश्रुतिः धर्मेणपापमपनुदति इति** [तै.६.

## श्रुतप्रकाशिका

**यद्यपीदं** वचनजातं * सर्वकर्मदेवतासामान्यविषयम् । तथापि भगवज्ज्ञानस्य * सम्यग्ज्ञानसामान्याबहिर्भावादसाधुकर्मणस्ताद्विरोधित्व सिद्धिः । तथा विशेषतश्चोच्यते—

ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्येव कौन्तेय ततोयान्त्यधमां गतिम् ॥

इतिच एवं न्यायस्मृत्युपबृंहितयाऽनयाश्रुत्या सामान्येन ज्ञानविरोधित्वमसाधुकर्मणां सिद्धम् । अस्मादपि निर्वाहात्पूर्वोक्तः उपपन्नः प्रकरणानुगुण्यात् ॥

**एवं** पापस्य ज्ञानविरोधित्वे प्रमाणं दर्शितम् । अथ रजस्तमसोर्ज्ञानविरोधित्वे सत्त्वस्य ज्ञानहेतुत्वे, च प्रमाणं दर्शयति । **रजस्तमसोरिति** । ततः किं प्रस्तुतस्य कर्मापेक्षितत्वस्येत्यत्राह । **अतश्चेति** । अतः पापस्य ज्ञानविरोधित्ववचनात् । ततोपि किमित्यत्राह । **तन्निरसनंचेति** । पापशब्दाभिधेययोः पुण्यपापयोरुभयोरपि निरसनीयत्वेन पापनिरासक कर्मासम्भवमाशङ्क्योक्तम् । **अनभिसंहितफलेनेति** । अनेन स्वर्गादिफलप्रद कर्मव्यावृत्तिः, अनुष्ठितेन न तु ज्ञातमात्रेणेतिभावः तत्र किंप्रमाणमित्यत्राह । **तथाचश्रुतिरिति** । इदानीं निरासकविशेषे प्रमाणतयोदाहृतस्य वाक्यस्यार्थनिर्णयोपयोगितयैतद्वाक्यस्थ निरसनीयवाचिपदस्यार्थः * पूर्वमेव शिक्षितः । निरासकवाचिपदस्यार्थोऽनन्तरमुक्तः ॥

## गूढार्थसंग्रहः

अतिमात्रप्रातिकूल्ये व्यवस्थितः प्रवर्तते ; तं निगृह्णन् स्वप्रातिविरोधिषु अधोगतिसाधनेषु रुचिं जनयति । यथोक्तं भगवता ; 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।' इत्यादि, मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । ' इत्यन्तमुक्त्वा 'तानहं—आसुरीष्वेव योनिषु ॥ इति ' (श्रीभा.२.३.४१.) इति भगवता अर्थ उक्तः । अत्र बुद्धिदानस्य गीतावचने अप्रतीतावपि एतत्प्रतिकोटिभूतायाः 'एष एव साधुकर्म कारयति' इति श्रुतेरुपबृंहणे, 'ददामि बुद्धियोगं तं' इत्युक्त्या अत्रापि बुद्धिदानं गीतायां विवक्षितमिति भगवत आशयः । 'विद्ययाऽमृतमश्नुते' इत्युक्तब्रह्मप्राप्तेः 'नायमात्मा' इतिश्रुतौ वरणमूलकत्वोक्त्या 'नायमात्मा' इत्यादिश्रुतेः, 'एष एव साधुकर्म कारयति' इति श्रुतेश्चोपबृंहणतायाः 'तेषां सततयुक्तानां' इत्यादिगीतावचनाभिधानेन उभयोरैकार्थ्यस्य भगवता प्रदर्शनात् वरयितृत्वसाधुकर्मकारयितृत्वयोरुभयोरापि ऐक्यमेवेति एतच्छ्रुतिद्वयानुरोधेन वरणमूलैव ब्रह्मप्राप्तिः 'विद्ययाऽमृतमश्नुते' इत्यत्रापि विवक्षितेति भगवतः आशयः । 'अयं मामाप्नुयादिति सङ्कल्पः वरणम्' इत्याचार्यपादोक्तावपि उदाहृतगीताभाष्यादिपर्यालोचनया मद्भक्तध्यानविपाकावस्था परज्ञानपरभक्त्यादिसाधुकर्मद्वारा मामाप्नुयादिति सङ्कल्प एव पर्यवसानं युक्तम् ॥

**अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयमिति** । 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।' इति परोदाहृतस्मृतेरपि ध्रुवानुस्मृतेरपि ज्ञानतया तदुत्पत्तिप्रतिबन्धपापनिरसने मूलं भवतीत्याशयः । एवं 'तपसा कल्मषं हन्ति' इति मनुवचनमपि । एतेन 'न चक्षुषा गृह्यते—तपसा कर्मणा वा' इति कर्मणः ज्ञानोत्पत्तिहेतुत्वप्रतिषेधपरं न भवति ।

## गूढार्थसंग्रहः

' ज्ञानप्रसादेन विशुद्धसत्वः ' इत्युत्तरार्धोक्तसत्वशुद्धौ कर्मणामपेक्षितत्वेन कर्मणामननुष्ठाने सत्वशुद्धिद्वारा ध्यानदर्शनयोरसम्भवात् । किं तु कर्मणां सत्वशुद्धिमद्वारीकृत्य ज्ञानोत्पत्तिहेतुत्वं नास्तीति एतत्परं पूर्वार्धमिति निर्णीतम् । ' कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ' (गी.१४.१६) ' चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन । ' (.७.१६.) येषां त्वन्तगतं पापं जनानां पुण्यकर्मणां । भजन्ते मां दृढव्रताः । (७.२८) इत्यादिगीतोक्तेः । एवमुपपादनेन भगवता वाक्यकारोक्तलब्धि (ध्रुवानुस्मृतिलब्धि) हेतुत्वं क्रियायाः द्रमिडभाष्यकारोपदर्शितछान्दोग्यमुण्डकश्रुत्यैकार्थ्यमनुसृत्य सम्यगुपपादितं भवति ॥

ब्रह्मजिज्ञासेत्यत्र जिज्ञासाशब्दो यौगिकः ; ' तद्विजिज्ञासस्व ' इति श्रुतौ यौगिकत्वनिश्चयात् । तत्र ' ज्ञाश्रुस्मृदृशां सनः ' (पा.सू.१.३.५७) इति सन्नन्तधातोः आत्मनेपदस्य ' विजिज्ञासस्व ' इत्यत्र दर्शनात् । काशिकादौ सूत्रस्य ' धर्मजिज्ञासते ' इति उदाहरणाभिधानेन धर्मजिज्ञासा इत्यत्रापि जिज्ञासाशब्दस्य यौगिकत्वबोधनात् धर्मजिज्ञासेत्यत्र कर्मणिषष्ठ्यङ्गीकारेऽपि धर्मस्येच्छाविषयत्वं उक्तरीत्याप्रतिपत्तुं शक्यमिति धर्मस्य प्रयोजनत्वलाभाय धर्माय जिज्ञासेति विग्रहप्रदर्शनं प्रभाकरस्य अनपेक्षितमिति एतेनसिध्यति ' तत्वंजिज्ञासमानानां ' (म.भा.शा.प. ३५७.८८) इत्यादौ योगार्थ प्रतीतेः स्फुटत्वाच्च । प्राच्यनैयायिकैः ज्ञानेच्छारूपजिज्ञासायाः आकाङ्क्षात्वाभ्युपगमात् जिज्ञासाशब्देन ज्ञानेच्छाप्रतीतेः अपलापासम्भवात् । अतः ' तद्विजिज्ञासस्वं ' इति श्रुत्यनुसारेण ब्रह्मजिज्ञासेत्यत्र जिज्ञासाशब्दोयौगिकएव । ज्ञानसामान्यवाचिनः ' ज्ञाधातोः विचाररूपज्ञानविशेषे रूढिमन्तरैव विशेषबोधः सम्भवतीति नव्यसम्मता रूढिर्नावश्यकी । कर्मणि षष्ठ्या विषयत्वप्रयोजनत्वे सिध्यतः ' इति प्राचीननैयायिकमतमनुसृत्य, इति प्रागुक्तम् । वस्तुतस्तु ' ग्रामं गन्तुं इच्छति जिगमिषति इत्यत्र गमेः ग्रामः कर्म, इषेरुभे कर्मणी ' इति (३.१.७.) महाभाष्योक्तरीत्या ब्रह्मजिज्ञासेत्यत्र इच्छाकर्मत्वं ज्ञानब्रह्मणोरुभयोरपि । ब्रह्मणः इच्छाविषयत्वप्रतीत्या फलत्वं, ज्ञानकर्मत्वप्रतिपादनेन ज्ञानविषयत्वं च जिज्ञासापदेन प्रतीयत इत्येव भगवत आशयः । अनन्तास्थिरफलब्रह्मजिज्ञासेति सूत्रवाक्यार्थप्रतिपादनपरप्राथमिकसूक्तौ अनन्तास्थिरफलत्वस्य ब्रह्मण्यभिधानेन ब्रह्मणः इच्छाविषयत्वं दर्शितम् । सूत्रार्थपरद्वितीयभाष्यसूक्तौ उपरितनभागावसेयस्य—ब्रह्मज्ञातव्यमित्यत्र ज्ञानकर्मत्वं प्रतिपादितम् । श्रुतावपि ' ब्रह्मविदाप्नोति परं ' इत्यत्र ब्रह्मविदिति वेदनकर्मत्वं आप्नोति परमित्यत्र ' रसो वै सः ' ' रसँह्येवायं लब्ध्वा ' ' आनन्दोब्रह्म ' इत्यत्र च प्राप्यत्वानन्दत्वयोः प्रतिपादनेन इच्छाकर्मत्वं दर्शितं भवति । ब्रह्मप्राप्तेरनुभवरूपायाः फलत्वमपि ब्रह्मणः आनन्दरूपत्वनिबन्धनम् ; विषयानुकूल्यनिबन्धनत्वात् ज्ञानानुकूल्यस्य । ब्रह्मणः नित्यतया ब्रह्मवेदनासाध्यत्वेन अनुभवमादाय साध्यत्वमुपपादनीयमिति ब्रह्मप्राप्तेः फलत्वं प्राप्तेरिच्छाविषयत्वमपि ब्रह्मणः आनन्दरूपत्वनिबन्धनमिति ब्रह्मण एव प्राधान्येनेच्छाविषयत्वमिति सूत्रकाराशयः । विचारफलत्वं तु ब्रह्मणः उपासनद्वारकम् । ' तत्तु समन्वयात् ' (ब्र.सू १.१.४.) ' मुक्तोपसृप्यव्यपदेशाच्च ' (१.३.२) इत्यादौ ब्रह्मणः फलत्वं सूत्रकृता प्रतिपादितम् । एतेन ' अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म फलविषयत्वादिच्छायाः । ज्ञानेन हि प्रमाणेन अवगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थः । निश्शेषसंसारबीजाविद्यानिबर्हणात् । ' इति परोक्तिः, ज्ञानमात्रे इच्छाविषयत्वप्रतीत्यभिप्राया ; न तु सूत्रकाराभिमतं महाभाष्योक्तदिशा ब्रह्मण इच्छाविषयत्वमभिप्रैतीति बोध्यम् ।

ब्रह्मण इच्छाविषयत्वप्रतिपादनेन विचारफलत्वं ब्रह्मणः उपासनाद्वारकमिति श्रुत्युक्तार्थोऽपि सूचितः । ' एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति —किं प्रजया करिष्यामः येषां नोऽयमात्मा अयं लोकः ' (बृ.६.४.२२)

### श्रुतप्रकाशिका

**नन्वयं** धर्मशब्दः कृच्छ्रचान्द्रयणादि प्रायश्चित्तरूप धर्ममात्रविषयः किं नस्यात्? अनभिसंहितफलधर्मविषय इति कुतोनिर्णीयते। उच्यते **यज्ञेनदानेनतपसाऽनाशकेन 'शान्तादान्त उपरास्तितिक्षुः'**

**कषाये कर्मभिःपक्वे ततोज्ञानं प्रवर्तते।**

**यज्ञदानतपःकर्म नत्याज्यं कार्यमेवतत्।**

**यज्ञोदानं तपश्चैव पावनानि मनीषिणाम्।**

**शमोदमस्तपशौच** मित्यादिश्रुतिभिर्मुमुक्षोरपेक्षितत्वेनोक्तानां यज्ञदानतपश्शमादीना *मत्रश्रूयमाणत्वात्। **'विज्ञानादानन्दोब्रह्मयोनिः'** इत्यादिनाऽस्यप्रकरणस्य ब्रह्मविद्याविषयत्वावगमाचायं धर्मशब्दो मुमुक्ष्वपेक्षितानभिसंहितफलधर्मविषय इत्यवगम्यते अत्र यज्ञदानादिपर्यायेषु **'दानेनद्विषन्तोमित्राभवन्ति'** इत्यादिना सांसारिक फलकीर्तनम्। **'अन्नवानन्नादो भवति'** इत्यादिवद्ब्रह्मवेदनानुगुणानुषङ्गिकफलविषयं मन्तव्यम्। **'भूयोनमृत्युमुपयाहिविद्वान्'** इति प्रधान फलश्रवणात्॥

**किंच** यद्यपीदं वाक्यं न मुमुक्षुमात्रविषयम्। तथाप्यमुमुक्षुमात्रविषयं च नभवेत्। प्रवृत्तिनिमित्तसाधारण्यात्। न हि काम्यफलप्रदत्वं धर्मशब्दार्थः अलौकिकेष्टासाधारणसाधनेन अलौकिकमनिष्टासाधारणकारण *मपनुदेदितिह्यर्थस्स्यात्। ततश्च मुमुक्षुं प्रति काम्यकर्मणोऽनिष्टफलप्रदत्वेन धर्मशब्दवाच्यत्वायोगात् *पापशब्दवाच्यान्तर्भावाच पक्षधर्मता बलादनभिसंहित फलेन धर्मेण पुण्यपापयोरुभयोरपनोद्यत्वमुक्तं स्यात्। ज्ञानस्य कर्मसापेक्षत्वं निगमयति।

### गूढार्थसंग्रहः

इत्यत्र ब्रह्मणः इच्छाविषयत्वोक्त्या फलत्वप्रदर्शनेन 'आत्मानमेव लोकमुपासीत' (३.४.१५.) इत्यत्र फलभूतात्मविषयक-उपासनस्य प्रतिपादनेन उपासनाफलस्यापि तत एव सिद्धेः। 'आत्मानमेव लोकमुपासीत' इतीतःपूर्वं उपक्रमे (३.४ ७) उक्तमेवोपासनं 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे' इत्यत्र वामदेवस्यापि प्रतिपाद्यते। अयमर्थः इन्द्रप्राणाधिकरणे सूत्रकृतैव वक्ष्यते। एतेन 'तद्यथेह कर्मचितो लोकः क्षीयते' (छा.८.१.६) इत्यादौ उपासनाफलं न विवक्षितं सूत्रकृत इति निश्चीयते। एवं 'एतमेवं प्रव्राजिनः' इत्येतत्पूर्वं 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ.६.४.२२.) इत्यत्र उपासने कर्मणामङ्गत्वं हेतुत्वं च विवक्षितमिति सूच्यते। एवं 'मन्त्रेषु कर्माणि—तान्याचरथ नियतं सत्यकामाः' 'परीक्ष्य लोकान् कर्माचितान्' 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच' 'अथ परा यया तदक्षरमधिगम्यते' (मु.१.१.५.) 'तथा विद्वान्—परात्परं पुरुषमुपैति दिव्यम्' (२.२.८) इति प्रथमखण्डादिश्रुतीरभिप्रैति 'अथातो ब्रह्मजिज्ञासा' इति सूत्रं इत्यपि निश्चीयते। अत्र च खण्डे ज्ञानापूर्वकाग्निहोत्रादिकर्मणां तत्तत्फलरागेणानुष्ठितानां अनित्यफलत्वं ज्ञानपूर्वकमनुष्ठितानां तेषामेव अङ्गिभूतज्ञानद्वारा नित्यसत्यशब्दार्थब्रह्मफलकत्वं ब्रह्मजिज्ञासेत्यत्र वेदने इच्छाविषयत्वप्रतिपादनस्य विचारे रागतः प्राप्तत्वबोधनतात्पर्यकत्वेन श्रवणे रागतः प्रवृत्तावपि गुरूपसदनविधिना नियम आवश्यक इति प्रतिपादनेन परम्परया विचारफलत्वमपि ब्रह्मणः प्रदर्शितं भवतीति अथशब्दस्य कर्मविचारानन्तर्यमर्थः। अतश्शब्दे कर्मविशेष्यकाल्पास्थिरफलत्वप्रकारकनिर्णयपूर्वककर्माङ्गब्रह्मज्ञानविशेष्यकानन्तास्थिरफलापातप्रतीतिमानाधिकारी विवक्षित इत्येव सूत्रकाराभिप्राय इत्यपि निश्चीयते। एतत्सर्व-

## श्रीभाष्यम्

प्रश्न.५०.अ] **तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षं । अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्व ज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ।**

## श्रुतप्रकाशिका

**तदेवमिति** । तत् * श्रुतिस्मृतितदनुग्राहकोपपत्ति सूत्रवाक्यकारवचनेभ्यः । एवमुपायप्रतिबन्धनिरासार्थं सर्वाश्रमिणां तत्तदाश्रमधर्माङ्गकोपासनाधिकारस्य वक्ष्यमाणत्वं हृदि निधाय सर्वाश्रमकर्मापेक्षमित्युक्तम् । ततः किं कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तित्व इत्यपेक्षायामनुष्ठानस्य ज्ञानसापेक्षत्वाज्ज्ञानस्य मीमांसाधीनत्वाच्च तदधिगमः पूर्ववृत्त इत्याह । **अतइति** । अतः * ब्रह्मज्ञानस्य फलाभिसन्धिरहिताश्रमकर्मसापेक्षत्वात् । कर्म * ज्ञानं हि हानार्थमुपादानार्थं वा अत्रतूभयार्थमित्याह । **अपेक्षितेति** । फलद्वारकं हानम् । स्वरूपेणोपादानम् । मीमांसाशब्दस्य पूर्वोत्तरसाधारणत्वात्कर्ममीमांसाऽवसेयामित्युक्तम् । **सैव** । या त्वया विरुद्धेति निरस्ता सैवेत्यर्थः । यदनपेक्षितं परेणोक्तं तदेवापेक्षितं

## गूढार्थसङ्ग्रहः

मभिप्रेत्याह– **तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानमित्यादिना** ॥

**कर्ममीमांसावसेयमिति** । जन्मनैव विरक्तानां प्राग्जन्मन्यग्निहोत्रादिकर्मभिः चित्तशुद्धेः परैरप्यङ्गीकारेण तत्रैव विचारारम्भोऽपि तेषां सम्भवतीति कर्ममीमांसावसेयत्वोक्तिर्युक्ता । पूर्वस्मिन्जन्मनि तेषां कृत्स्नाध्ययनसत्वेन कर्ममीमांसाध्ययनं न कृतं तैरिति स्थापनासम्भवेन चित्तशुद्धिफलकाग्निहोत्रादिकर्मस्वरूपपरिज्ञानार्थं साङ्गवेदाध्ययनानन्तरं तैः कर्ममीमांसाऽध्ययनं कृतमिति निश्चयसम्भवात् । अग्निहोत्रादिकर्मभिः तेषां चित्तशुद्धेः तदात्वे सम्भवेन विचारप्रवृत्तेरपि प्रतिबन्धकलनासम्भवेन तदैव विचारे प्रवृत्तिनिश्चयात् । अनन्यव्यापारवतामपि संन्यासिनां प्राग्जन्मनि विचारं कुर्वतां प्रारब्धकर्मवशादुत्तरजन्मनि विद्यावाप्तिवत् जन्मनैव विरक्तानामपि उत्तरजन्मनि विद्यावाप्तिनिश्चयसम्भवात् । वामदेवस्यापि पूर्वजन्मनि विचार तन्मूलकोपासनादिमूलकतयैव उत्तरजन्मनि विद्यासिद्धिस्सर्वेषां संमतैव ॥

' परीक्ष्य लोकान् कर्मचितान् ' इत्यत्र ज्ञात्वा निश्चित्य इत्यादिशब्दं विहाय मीमांसान्यायैर्निश्चयविवक्षयैव ' परीक्ष्य ' इति शब्दप्रयोगः । श्रुतौ ' यत्कर्मिणो नप्रवेदयन्ति रागात् ' इत्युक्त्या ' तद्यथेह कर्मचितो लोकः क्षीयते ' इति श्रुत्यन्तरेण वा निश्चयः न वैराग्यं जनयितुमलं ; ज्ञानप्रशंसापरतयाऽपि तन्निर्वाहप्रतीतिसम्भवात् । अत्र ' यत्कर्मिणो न प्रवेदयन्ति रागात् ' इत्यत्रोक्तरागः ज्ञानपूर्वं तेषामेव कर्मणामनुष्ठानसमये त्याज्यत्वेन अज्ञानामज्ञानेनैव प्रवृत्त इति बोधनाय श्रुतौ प्रतिपादितः । कर्ममीमांसाध्ययने हि आवृत्तिविधाना न्यानर्थक्य कृषितौल्य प्रत्यारम्भफलकत्व स्वर्गार्थज्योतिष्टोमप्रयोगीयतदर्थश्येनाकृत्यादिगुणविधान लोकन्यायाद्यनन्तसहकारिवशात् केवलकर्मणामल्पास्थिरफलत्वनिर्णयस्सम्भवति ; न तु प्रत्यक्षानुमानोपमानागमैः सर्वतो याथात्म्यावधारणरूपपरीक्षया । (शं.उ.भा.) प्रत्यक्षस्यामुत्रफलेऽसंभवात् । आगमस्य ज्ञानप्रशंसापरत्वेनापि निर्वाहसम्भवात् । यत्कृतकं, तदनित्यं इति व्याप्तेः चरमवृत्त्यधनिफले भङ्गादिति तात्पर्येणैव ' परीक्ष्य– मीमांसान्यायैर्निरूप्य ' इति सारे भगवता विवरणं कृतम् ॥

' परीक्ष्य लोकानित्यादि लक्षणं मोक्षकाङ्क्षिणः । ' (स.वे.सि.सा.सं.) परीक्ष्य लोकानित्यत्र इहामुत्र फलभोगविरागः इति (.पं.पा.वि.)परैरुक्त्या एतच्छ्रुत्यर्थस्य प्रथमसूत्रापेक्षितत्वं परेषामपि संमतम् । एवं नव्यानामपि । (आनन्दतीर्थीयानां) तैरपि एतच्छ्रुत्यर्थज्ञानेन वैराग्यस्य ब्रह्मविचाराधिकारस्य प्रतिपादनात् । श्रुतौ चास्यां कर्मणामल्पास्थिरफलत्वनिर्णय

## गूढार्थसंग्रहः

स्यैव मीमांसान्यायाधीनस्य विवक्षितत्वेन एतादृशानिर्णयवतएव ब्रह्मज्ञानार्थं गुरूपसत्तेः प्रतिपादनेन कर्मब्रह्मविचारयोः क्रमनियामकं प्रदर्शितं भवति । 'अध्वर्युर्गृहपतिंदीक्षयित्वा ब्रह्माणं दीक्षयति' 'वेदं कृत्वा वेदिं करोति' इत्यादौ गृहपतिदीक्षा ब्रह्मदीक्षयोः वेदवेद्योरिव च कर्मब्रह्मविचारयोरपि श्रौतक्रमस्सम्भवति । यद्यप्यत्र गुर्वभिगमनविधिपरत्वात् न क्रमोऽभिधेयः ; तथाऽपि पाञ्चमिकः क्रमोऽनभिधेयोऽभिधेयो वेति, गुरुमतानुसाराच्छ्रौतक्रमसम्भवः ॥

एवं प्राजापत्यपशुस्थले उपाकरणक्रमेण नियोजनादीनां क्रमवत् अध्ययनक्रमेण विचारक्रम इति प्रवृत्तिक्रमस्सम्भवति । वेदेनार्थज्ञाने जननीये अध्ययनस्य विचारस्य च तदङ्गत्वात् इति केचित् । कर्मफलाल्पास्थिरत्वनिर्णयसहितब्रह्मज्ञानानन्तास्थिरफलत्वापातप्रतीतिमत्पुरुषकर्तृकं ब्रह्मविचारं बोधयन्त्या परीक्ष्येत्यादिश्रुत्यैव ब्रह्मविचारस्य कर्मविचाराधिकृताधिकारत्वबोधनेन दर्शपूर्णमासिकाङ्गैस्सह प्रणयनाश्रितगोदोहनस्य क्रमवत् कर्मब्रह्मविचारयोरपि क्रमासिद्धेः । इति प्राचीनैरेव (तत्त्वमार्ताण्डे)निरूपितम् । मुख्यक्रमः पाठक्रमश्च प्रागेवोपपादितः । कर्मणां विद्योत्पत्त्यर्थत्वेन तद्विचारक्रमेऽप्यर्थोनियामको भवितुमर्हतीति अर्थक्रमोऽपि द्रष्टव्यः ॥

कर्मफलाल्पास्थिरत्वानिर्णयस्य कर्ममीमांसामन्तराऽप्युपदेशादिना सम्पादने ब्रह्मविचारमन्तराऽपि उपदेशादिना वेदान्तार्थनिर्णयसम्भवेन मुक्तिसाधनब्रह्मविद्यायां प्रवृत्तिस्सम्भवतीति ब्रह्मविचारोऽप्यनपेक्षित एव स्यात् । अयमर्थः, 'साङ्गवेदाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्' इत्यादिप्राक्तनश्रीभाष्यसूक्ताविव (४१.पुटे.) स्फुटः । अतः यस्य ब्रह्मविचारापेक्षा तस्य कर्मफलाल्पास्थिरत्वानिर्णयाय कर्मविचारोऽप्यपेक्षित इत्येव युक्तमित्यभिप्रेत्य 'परीक्ष्य लोकान्' इति श्रुतौ परीक्ष्य मीमांसान्यायैर्निरूप्य, इति वेदान्तसारे भगवतो यद्विवरणं तदेव युक्तमिति बोध्यम् ॥

इहामुत्र फलभोगाविरागे 'परीक्ष्य लोकानित्यादेः' प्रमाणत्वेनोपन्यासेऽपि नैषा श्रुतिः पराभीष्टसाधनायालं ज्ञानपूर्वककर्मानुष्ठानस्य 'तान्याचरथ नियतं सत्यकामाः' 'तपश्श्रद्धे येह्युपवसान्ति' इत्यत्र ज्ञानोत्पत्तिद्वारा नित्यफलत्वप्रतिपादनेन कूटस्थव्यतिरिक्ते सगुणविद्याफले विरागस्य अनया श्रुत्या बोधनासम्भवात् विचारबोधकपदाभावेन विचारविधेः कल्पनाभावेऽपि गुरूपसत्तिविधिनैवोपपत्तिसम्भवेन विचारापेक्षितवैराग्यस्य परसम्मतस्य अस्यां श्रुतावप्रतिपिपादयिषितत्वात् । अतः कर्मफलाल्पास्थिरत्वनिर्णयः कर्ममीमांसयैव सम्पादनीयः । साङ्गब्रह्मज्ञानविशेष्यकानन्तास्थिरफलत्वप्रकारकापातप्रतीतिः विज्ञानार्थं गुरूपसत्तिविधानादेव अपेक्षितेति सिध्यति । ब्रह्मज्ञानस्यानन्तास्थिरफलसाधनत्वाप्रतीतौ ब्रह्मज्ञानार्थं प्रवृत्तेरेवासम्भवात् । अनन्तास्थिरफलसाधनत्वनिश्चये ब्रह्मज्ञानस्य निश्चयरूपस्य तत एव सिद्ध्या ब्रह्मज्ञानार्थप्रवृत्तेरेवासम्भवेन अनन्तास्थिरफलसाधनत्वप्रतीतिरापातप्रतीतिरूपैव । अत्र 'प्रशान्तचित्ताय शमान्विताय' इत्येतावन्मात्रोक्त्या सर्वाश्रमसाधारण्यं ब्रह्मविद्यायास्सिध्यतीति 'तपश्श्रद्धे ये ह्युपवसन्ति' इत्यत्र आश्रमविहितकर्मणां प्रतीत्या च स्वस्वाश्रमकर्माङ्गकब्रह्मज्ञानविशेष्यकानन्तास्थिरफलापातप्रतीतिरेवात्र विवक्षितेत्यपि प्रतीयते । अत्र गुरूपदेशमूलकब्रह्मज्ञानप्रशंसापरत्वेन संभावितफलार्थ ज्ञानविधुरानुष्ठितकर्मनिन्दया तत्फलवैराग्यप्रतीतावपि श्रवणानन्तरमेव तदर्थस्य निर्णयेन ब्रह्मज्ञानस्यानन्तस्थिरफलत्वनिर्णयेन च ब्रह्मविद्यायां मुक्त्युपायभूतायां प्रवृत्तिः । गुरूपसदनात्पूर्वं तु यावदपेक्षितशमवैराग्ययोरेवात्र विवक्षा । ब्रह्मस्वरूपादिज्ञानानन्तरं तृतीये वक्ष्यमाणदिशा ब्रह्मविद्याङ्गवैराग्यशमदमादेर्निर्णयेन तृतीयोक्तदिशा ब्रह्मविद्यापेक्षितसर्वसम्पन्नः पुरुषः ब्रह्मविद्यायां प्रवर्तत इत्येव 'परीक्ष्य लोकान्' इत्यादिप्रघट्टकतात्पर्यमवसीयते ॥

## श्रीभाष्यम्

**अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते फलकरणेतिकर्तव्यताऽधिकारिविशेषनिश्चयादृते**

## श्रुतप्रकाशिका

इत्युक्तम्। यत्तु परेणापेक्षितमित्युक्तं तस्यानपेक्षितत्वमुच्यते। **अपिचेत्यादिना नित्यानित्यवस्तुविवेकादयश्चेति।** च स्वर्थः प्रत्युतेतियावत्। **मीमांसाश्रवणमन्तरेण।** कर्मब्रह्ममीमांसाश्रवणमन्तरेणेत्यर्थः। न सम्पत्स्यन्त इत्यनेन पश्चाद्भावित्वमुक्तम्। कुत इत्यत्राह। **फलेति।** फलविशेषः भोगमोक्षरूपः। करणविशेषः यज्ञोपासनादिः। इतिकर्तव्यताविशेषः प्रयाजादिः साधनसप्तकंच। अधिकारिविशेषः बुभुक्षुर्मुमुक्षुश्च। एषां निश्चयादृते कर्मस्वरूपं साङ्गं यज्ञात्मक मुपासनात्मकंच। भाष्यकारश्च यागात्मकमुपासनात्मकं च कर्मेतिहि वक्ष्यति। प्रकाशश्च कर्मण्यभ्यासात् इतिच सूत्रम्। उपासनात्मके कर्मणीतिच तस्यभाष्यम्। उपासनस्य कर्मत्वं स्मृतिसन्ततिरूपतया तस्य प्रयत्न साध्यत्वात्

**वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्। शरीरजैः कर्मदोषैर्याति स्थावरतां नरः॥**

## गूढार्थसङ्ग्रहः

**नित्यानित्यवस्तुविवेकादयश्चेति।** अत्र साधनचतुष्टयं हेतुहेतुमद्भावापन्नमेव विवक्षितम्। 'ब्रह्मैव नित्यमन्यत्तु ह्यनित्यमिति वेदनं। सोऽयं नित्यानित्यवस्तुविवेक इति कथ्यते। (स.वे.सि.सा.सं.१६) मृदादि कारणं नित्यं त्रिषु कालेषु दर्शनात्। घटाद्यनित्यं तत्कार्यं यतस्तन्नाश ईक्ष्यते॥ (१७) सर्गं वक्त्यस्य तस्माद्वा एतस्मादित्यपि श्रुतिः। सकाशाद्ब्रह्मणस्तस्मादनित्यत्वे न संशयः॥ (१९) सर्वस्यानित्यत्वे सावयत्वेन सर्वतस्सिद्धे। वैकुण्ठादिषु नित्यत्वमतिः भ्रम एव मूढबुद्धीनाम्॥ (२०) अनित्यत्वं च नित्यत्वं एवं यच्छ्रुतियुक्तिभिः। विवेचनं नित्यानित्यविवेक इति कथ्येत॥ (२१) ऐहिकामुष्मिकार्थेषु ह्यनित्यत्वेन निश्चयात्। नैस्पृह्यं तुच्छबुद्ध्या यत् तद्वैराग्यमितीर्यते॥ (२२) सालोक्यसामीप्यसरूपतादि भेदस्तु सत्कर्मविशेषसिद्धः। न कर्मसिद्धस्य तु नित्यतेति विचार्य को वा विरतिं न याति॥ (३८) तस्मादनित्यं स्वर्गादौ साधनत्वेन चोदितम्। नित्यं नैमित्तिकं चापि सर्वं कर्म ससाधनम्॥ (१७२) मुमुक्षुणा परित्याज्यं ब्रह्मभावमभीप्सुना। मुमुक्षोरपि कर्मास्तु श्रवणं चापि साधनम्॥ (१७३) कर्मणः फलमन्यत्तु श्रवणस्य फलं पृथक्। वैलक्षण्यं च सामग्र्योरुभयत्राधिकारिणोः॥ कामी कर्मण्यधिकृतो निष्कामी श्रवणे मतः॥ (१७८)

यावत् हिरण्यगर्भावाप्तिपर्यन्तस्य भोगस्य उत्पादपरिच्छेदाभ्यां विनाशित्वादनित्यत्वं नावैति, विनश्यदपि इदं कूटस्थ वस्तुपर्यन्तमेव विनश्यति इत्यादिनिरूपणात् यावदनित्यं वस्तु नावैति; तावन्नित्यं वस्तु न प्रतिपद्यते इति क्रमेण 'यावच्च नित्यानित्यवस्तुविवेको न जायते तावद्विरक्तो न जायते। यावच्च न विरक्तः तावत् मुमुक्षुत्वं नालम्बते। यावच्च मुमुक्षुत्वं तत्साधनशमदमोपरमतितिक्षा समाधानसंपन्नो भूत्वा नालम्बते तावद्ब्रह्मजिज्ञासां कः प्रतिपद्यते? कथंचिद्वा दैववशात्कुतूहलाद्वा बहुश्रुतत्वबुद्ध्या वा प्रवृत्तोऽपि न निर्विचिकित्सं ब्रह्म तत्वेनावगन्तुं शक्नोति; यथोक्तसाधनसंपत्तिविरहात्। अनन्तर्मुखचेताः बहिरेवाभिनिविशमानः। स्यादेतत्—कृतकत्वपरिच्छेदौ नैकान्ततः क्षयिष्णुत्वं गमयतः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्भवति' 'अपामसोममममृता अभूम' इति पुण्यफलस्य अक्षय्यत्वश्रवणात्। अतो विषयभोगात् न नियमेन विरागः विवेकिनामपि। नापि कूटस्थनित्यवस्त्ववष्टम्भेन मुमुक्षुत्वं। ततश्च न शमदमादिपरिग्रहः। अतो न तस्य ब्रह्मजिज्ञासायां हेतुत्वमित्यतः तस्य हेतुत्वप्रदर्शनार्थः अतश्शब्दः। कथम्? यस्माद्वेद एव अग्निहोत्रादीनां श्रेयस्साधनानां अनित्य

श्रीभाष्यम्

**कर्मस्वरूप तत्फल तत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात् ।**

श्रुतप्रकाशिका

इत्यत्र मनुश्च **मानसैः कर्मदोषैः** इत्युक्तवान् । फलंचोभयं भोगोमोक्षश्च । **आत्मनित्यत्वादीनामिति** । आदिशब्देनात्मनां निर्वाणमयएवायमि त्युक्तज्ञानानन्दस्वरूपत्वादिकं विवक्षितम् ॥

**अत्र** साध्याविशिष्टत्वं हेतोः प्रतीयत इति चेन्नैवम् । मीमांसायां फलकरणेतिकर्तव्यतादीनां प्रत्यधिकरणं तत्तन्न्यायैर्योनिर्णयः क्रियते स हेतुः । एवं तत्तधिकरण न्यायानुग्रहीत श्रुतिवाक्यसमुदायजन्या या प्रमितिरुपायोपेयविषया सा साध्या । तत्तदवान्तरवाक्यार्थनिश्चयैस्तत्समुदायरूपमहावाक्यार्थनिश्चयस्साध्य इत्यर्थः । यथा—पदार्थनिश्चयैर्वाक्यार्थनिश्चय इत्युक्तेसति न साध्याविशिष्टता तद्वत् । अतएवीह करणेतिकर्तव्यतादिशब्दैः पूर्वं पृथगुक्त्वापश्चात्कर्मस्वरूपशब्देनोक्तम् । फलकरणेत्यादिभाष्यस्य कर्ममीमांसामात्रविषयत्वे तत्फलस्थिरत्वास्थिरत्वात्मनित्यत्वादीनामिति वक्तुमयुक्तम् निरुपपद मीमांसाशब्दस्य मीमांसाशास्त्रमित्यादिभाष्ये भागद्वयविषयतया प्रयुक्तत्वाच्च यथोक्त एवार्थः । तस्मात्कर्मब्रह्मविचारानन्तरभावी नित्यानित्यवस्तुविवेकः तत इहामुत्रफलभोगविरागोमुमुक्षुत्वं च शमदमादिसाधनसम्पच्च । शमदमाद्युपेतस्स्यात् इति ब्रह्ममीमांसायां हि शमदमादिस्वरूपं निरूप्यते । अस्मिंश्चतुष्टये सिद्धे ब्रह्मविचारः ब्रह्मविचारात्तत्सिद्धिरित्यन्योन्याश्रयस्यात् । अतः पश्चाद्भाविनः पूर्ववृत्तत्वमनुपपन्नम् । साङ्गाध्ययनजापातप्रतीतेरेव नित्यानित्यवस्तुविवेक इतिचेत् तदयुक्तम् । नह्यापातप्रतीतिरिहामुत्रफलभोगविरागमुमुक्षुत्वयोर्हेतुः नित्यानित्यविपर्ययप्रतीतेः । किंचापातप्रतीतिरुभयभागविचारसाधारणी । तत्र प्रथमं कर्मविचारएव प्रवृत्तिर्युक्ता उभयत्रबुभुत्साया अविशिष्टत्वा त्प्रथमातिक्रमे कारणाभावाच्च शास्त्रान्तरेणापि नित्यानित्याविवेकादिर्नोपपद्यते । प्रथममेवाध्ययनविधिवश्यतया पुरुषस्य शास्त्रान्तरानवकाशात् ॥

**किंच** शास्त्रान्तरेषु परमाणुकारणत्वाब्रह्मात्मकप्रधानकारणत्व गगनादिनित्यत्व निमित्तमात्रेश्वरवादादयो वेदान्तविरुद्धा एवार्था बहव उपलभ्यन्ते । अतशास्त्रान्तरजन्यो नित्यानित्यवस्तुविवेको वेदान्तविरुद्धत्वा न्न तद्विचारं प्रति पूर्ववृत्तोभवितुमर्हति । किंच शास्त्रान्तरे षट्पदार्थ षोडपदार्थज्ञानादीनां मोक्षसाधनत्व प्रतिपादनेन वेदान्तश्रवणनैरपेक्ष्याच्च नतज्जन्य विवेकस्य पूर्ववृत्तत्वं युक्तम् । यतोभ्युदयनिश्रेयससिद्धिः सधर्मः । **छलजातिनिग्रहस्थानानां तत्वज्ञानान्निश्रेयसाधिगम** इति हि तत्रतत्रोच्यते । किंच '**तस्मादेवंविच्छान्तोदान्तउपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्**' इति श्रुतिः एवंविच्छब्देन शास्त्रजन्यज्ञान मनूद्य पश्येदिति प्रतिपन्नस्योपासनस्याङ्गतया शमादीनुपदिशति । अतश्शमादीनां श्रवणपूर्ववृत्तत्वं श्रुतिविरुद्धम् । '**प्रशान्तचित्ताय**' इत्यादि श्रुतिस्तु श्रवणौपयकावधाननिष्पादनार्थेत्युक्तम् । इतिहासपुराणादिश्रवणान्नित्यानित्यविवेक इतिचेत्तर्हि ततएवब्रह्मस्वरूपावगमाद्ब्रह्मविचारस्यानारम्भणीयत्वंस्यात् । इतिहासपुराणयोरपि संशयविपर्ययबाहुल्यात्तन्निरासाय ब्रह्मविचारोऽपेक्षित इति चेत् संशयविपर्ययबाहुल्यादेव नित्यानित्यविवेकोऽपि तत्र दुस्सम्पाद इति न साधनचतुष्टयस्य पूर्ववृत्तत्वं युक्तम् ॥

**गूढार्थसङ्ग्रहः**

फलतां दर्शयति '**तद्यथेह कर्मचितः—क्षीयते**' इत्यादिः । वस्तुबलप्रवृत्तानुमानविरोधे अर्थवादस्य नित्यत्वप्रतिपादनासामर्थ्यात् । अनुमानानुगृहीतश्रुतिविरोधः । अतः पुण्यफलस्याक्षय्यत्वासम्भवेन अनित्यत्वदर्शनं बिषयभोगानां, मुमुक्षुत्वेहेतुः । तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति '**ब्रह्मविदाप्नोति परं**' इत्यादिः । एतेन कूटस्थवस्त्ववष्टंभेन मुमु-

## श्रुतप्रकाशिका

**यत्तु** नित्यानित्ययोर्वसन्तीति नित्यानित्यवस्तूनि तद्धर्मा * इत्यारभ्य वाचस्पतिनोक्तं नित्यस्य धर्मिणोनित्यत्वं सत्यत्वं तत एवोपादेयत्वम् । अनित्यस्य धर्मिणोऽनित्यत्व मसत्यत्वं ततएव हेयत्वमित्येवं नित्यानित्ययोर्द्धर्मिणोस्तद्धर्माणांच्च विवेको नित्यानित्यवस्तुविवेक इति—अत्र ब्रूमः । अनित्यस्य तावदसत्यत्वं वक्ष्यमाणप्रकारेण निरस्तं वेदितव्यम् । यन्नित्यं तदुपादेयं यदनित्यं तद्धेयमित्युभयमप्यनुपपन्नम् । सुखदुःखनिवृत्तितत्साधनतदुपयोगिनामेवोपादेयत्वबुद्धिदर्शनात् तद्व्यतिरिक्तस्यैवानुपादेयताबुद्धिदर्शनाच्च । नित्यमपि दुःखरूपं दुःखनिमित्तं वा यदिस्याद्धेयमित्येवप्रतीयेत अनुभयं चेदुपेक्ष्येत अनित्यमपि सुखरूपं वा सुखनिमित्तं वा भवतिचेत्तदुपादीयते * निरूपकस्य तु हेयमितिचेन्न प्रकृष्टसुखान्तरदर्शनात्यन्तदुःखसाध्यत्वदुःखोदर्कत्व विरहेसति निरूपकस्यापि तत्रोपादेयताबुद्धिदर्शनात् । क्षीरौदनलाभात्कणस्त्यज्यते । अन्धकूपपातिता वराटिका तदुद्धरणक्लेशस्य तल्लाभसुखादतिशायित्वात्त्यज्यते । विषमिश्रमन्नं मरणभयात्त्यज्यते । स्रक्चन्दनादितु ततः प्रकृष्टसुखलाभात् आद्यन्तयो स्तीव्रदुःखानुबन्धाभावाच्च परिमितमप्युपादीयते । तस्मादनित्यस्य हेयत्वं नानित्यत्वमात्रप्रयुक्तम् ॥

**यद्युच्येत** नित्यस्य दुःखासम्भिन्नसुखरूपत्वादुपादेयत्वं तदसम्भवादनित्यस्य च हेयत्वमिति । उच्यते । नित्यस्य दुःखासम्भिन्नसुखरूपत्वं किं व्याप्त्याऽवगम्यते उतशास्त्रात् । न प्रथमः नित्यस्य कालादेस्सुखरूपत्वादर्शनात् । नित्यस्यात्मनो दुःखासम्भिन्नसुखरूपत्वादर्शनाच्च, आत्मनो हि दुःखमुपलभ्यते अहं दुःखीति । शास्त्रतश्चेत् यदि वेदात् वेदजन्यं च किमापातज्ञानम् उतप्रमितिरूपम् प्रथमे कर्मब्रह्मभागसाधारण्यात्कर्मविचारातिक्रमेण ब्रह्मविचारं प्रति तस्य पूर्ववृत्तत्वानुपपत्तिः । निश्चयरूपं चेत् मीमांसाद्वयफलं स्यात् । आगमान्तरमूलत्वे विरुद्धतयाऽनुपयोगा * त्तस्यैतन्नैरपेक्ष्याच्च पूर्ववृत्तत्वानुपपत्तिः । अथोच्येत यन्नित्यं तदुपादेयमिति । नैवं प्रतीतिः किंतु नित्यं सुखं सम्भवतिचेत्तदुपादेयम् । सति तस्मिन्ननित्यमनुपादेयमिति । तत्र तावन्नित्यसुखसम्भवज्ञानस्य ब्रह्मविचारोपयोगो नित्यफलेपादित्साद्वारेणेति वक्तव्यम् । शास्त्रान्तरेषु कर्मकाण्डे च नित्यफलसम्भावनाया निवारकाभावान्नित्यानित्यविवेकानन्तरं तेषामप्यारम्भणीयतास्यात् ।

## गूढार्थसंग्रहः

क्षुत्वं सिद्ध्यति इति । (पं.पा.) नित्यः प्रत्यगात्मा, अनित्याः देहेन्द्रियादयः, तद्विषयश्च विवेको निश्चयः यदि, कृतं ब्रह्मजिज्ञासया ; ज्ञातत्वाद्ब्रह्मणः । अथ विवेको ज्ञानमात्रं, नं निश्चयः, तथा सति संशयस्स्यात् ; तथा च न वैराग्यमिति कथं ब्रह्मजिज्ञासाहेतुत्वम् ? तस्मादेवं व्याख्येयम् । नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्मः । नित्यानित्ययो र्धर्मिणोः तद्धर्माणां च विवेकः । नित्यत्वं सत्यत्वं तद्यस्याऽस्ति तन्नित्यं सत्यं । तथाचास्थागोचरः । अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यं अनृतं तथा च अनास्थागोचरः । सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयादैहिकाद्वा कर्मणः विशुद्धसत्वस्य भवत्यनुभवोपपत्तिभ्यां । न खलु सत्यं नाम किञ्चिदस्तीति वाच्यम् ; तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः । अथास्य पुरुषधौरेयस्य अनुभवोपपत्तिभ्यां एवं सुनिपुणं निरूपयतः आस्मिन् संसारमण्डले अनित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते । प्रसंख्यानादिहामुत्रार्थविरागो भवति । तस्मिन् विरागः अनाभोगात्मकोपेक्षाबुद्धिः । सोऽयमस्य वैराग्यहेतुको मनोविजयः शम इति वशीकारसंज्ञ इति च व्याख्यायते । अतश्शब्दावतरणं पूर्ववदेव । (पं.पा वदेव) ‘ अपाम सोमममृताः ’ इत्यादिकं मुख्यासम्भवे जघन्यवृत्तितामापादयति । यथाहुः पौराणिकाः ‘ आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते ’ इति । अत्र च ब्रह्मपदेन तत्प्रमाणं वेद उपस्थापितः । सच्च योग्यत्वात् ‘ तद्यथेह कर्मचितः इत्यादिः । अतइति सर्वनाम्नापरामृश्य हेतुपञ्चम्या निर्दिश्यते इति [भामती] इतिच परे निरूपयन्ति ॥

## श्रुतप्रकाशिका

तेषु हि नित्यं फलं प्रतीयते। तदसदितिचेत् तदसत्त्वमप्रामाण्यादन्यपरत्वाद्वाभवेत्। तदुभयं कर्ममीमांसयाविना न सिध्यतीति तस्याः पूर्ववृत्तत्वमभ्युपेतव्यम्। आद्यसूत्रं तज्ज्ञापनपरमितिचेन्न तस्य स्वशास्त्रारम्भौपयिकविषयप्रयोजनपरत्वेन शास्त्रान्तराप्रामाण्यादिप्रतिपादनपरत्वाभावात्। * स्वार्थोपयोगित्वात्तदप्रामाण्यादिकमभिप्रेतमितिचेत् तर्हि तस्य स्वोपजीव्यज्ञापनमपेक्षितमिति कर्माविचारस्य तर्कपादस्य च पूर्ववृत्तत्वमापद्येत। शास्त्रान्तराप्रामाण्यंहि कर्ममीमांसाप्रथमपादावसेयम् अन्यपरत्वं वाक्यान्तरविरोधादिभिः नित्यफलविवक्षाऽध्यवसायश्च * तत्रत्यन्यायाधीनः। शास्त्रान्तर प्रमेयदौस्थ्यंच तर्कपादे दर्शयिष्यते ॥

* किंच आद्यसूत्रादेव शास्त्रान्तरगत नित्यफलासत्त्ववगमश्चेदन्योन्याश्रयः—ब्रह्मविचार प्रवृत्तस्यान्यत्र नित्यफलासत्वावगमः तदवगमाद्ब्रह्मविचारे प्रवृत्तिरिति। नचैवंसति धर्मजिज्ञासासूत्रेऽपि अन्योन्याश्रयश्शङ्कनीयः—पित्रादि प्रेरणयाकृत साङ्गाध्ययनस्य पुरुषस्य प्रयोजनवदर्थापातप्रतीत्यैव प्रवृत्त्युपपत्तेः। येषां धर्मविचारो वैधस्तेषा मेवान्योन्याश्रयः वैधत्वज्ञानाद्विचारो विचाराद्वैधत्वज्ञानमिति ॥

**किंच** अनित्यफलहेयताज्ञानस्य स्वर्गादिफलजिहासाद्वारेण ब्रह्मविचारोपयोगोवक्तव्यः। स्वर्गादिफलस्यानित्यत्वं दुःख सम्भिन्नत्वं च कथमवगम्यते। शास्त्रान्तरेणचेत् तत्रैव नित्यपुरुषार्थसिद्धेर्नैराकाङ्क्ष्येण ब्रह्मविचारप्रवृत्त्ययोगात्तत्पूर्ववृत्तत्वानुपपत्तिः। यत्सुखं तदनित्यमिति स्वोत्प्रेक्षिततर्कमात्रेणचेत् तेनैव निरस्तनित्यपुरुषार्थसम्भावनतया ब्रह्मविचारः प्रतिबध्येत दुःखनिवृत्तेरन्तराहित्यात्स्वाभाविकसुखस्यानादिभावत्वादन्ताविरहोपपत्तेश्च न नित्यपुरुषार्थासम्भावनेतिचेन्न दुःखनिवृत्तिश्चेदुःखानुबन्धिनी दुःखनिवृत्तित्वात् सम्प्रतिपन्नवत्। सुखंचेत्सुखत्वादेवकृतकमित्येवंरूप कुतर्कोत्प्रेक्षासम्भवेन केवलतर्कशरणानांनित्यपुरुषार्थसम्भावनाया दुरुपपादत्वात्। शास्त्रसिद्धंनित्येतराविषयोव्याप्तिनिश्चयइतिचेन्न—वेदान्तश्रवण पूर्वकोव्याप्तिनिश्चयः तत्पूर्वकं वेदान्तश्रवण मित्यन्योन्याश्रयप्रसङ्गात्। अतोब्रह्मविचारंप्रति नित्यानित्यगतधर्मविवेकोपयोगाय नित्यानित्यविभागे प्रत्यक्षाप्रवृत्ते स्तर्कस्यातिप्रसक्ते श्शास्त्रान्तराणां ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वा त्तद्विरोधेनानुपयोगाच वेदएव प्रमाणीकर्तव्ये तत्रापातप्रतीतेरुभयभागसाधारण्या न्नित्यानित्यनिश्चस्य मीमांसाद्वयफलत्वेनान्योन्याश्रयस्य दुस्तरत्वाच्च॥

## गूढार्थसंग्रहः

इयंप्रक्रिया 'ननुच साङ्गवेदाध्ययनादेव' इत्यादि (४१. पुटे) पूर्वभाष्यशङ्कायामेवान्तर्भवति। 'तद्यथेह' इत्यादेः ज्ञानप्रशंसापरत्वं अनुमानोपोद्बलनमात्रेण कथं वार्यते। अविद्यानिवृत्तेः चरमवृत्तिरूपतायाः मण्डनादिसंमताया एव मधुसूदनोक्ततया (अ.सि.) तस्या अप्यनित्यत्वेन तद्विषयत्वोपहितात्मनः अज्ञानसामान्यविरोध्युपहितात्मनः अपि अस्थिरत्वस्यैव ब्रह्मानन्दसरस्वतीभिरप्यङ्गीकारेण एवमनित्यत्वग्रहः कथं विचाराङ्गकोटौ निविशते। अज्ञानसामान्यविरोध्युपहितात्मनः परमपुरुषार्थस्य (ल.चं.) परैरप्यङ्गीकृतस्यानित्यत्वात्। अनुपहितात्मनस्तु न फलत्वं सम्भवति। ब्रह्मावगतेरप्यनित्यत्वेन फलत्वं न घटते; जन्यभावसामान्यस्याप्यनित्यत्वात्। कृतिसाध्यस्यैवानित्यत्वमिति शपथ करणासम्भवात्। इहामुत्रफलभोगविरागशून्यस्य प्रकारान्तरेण श्रवणे प्रवृत्त्यङ्गीकारे निर्विचिकित्सं तत्वज्ञानमेव नोदेति। अनन्तर्मुखचेतनत्वेन बहिरेवाभिनिविशमानत्वात् इत्युक्तिः कथं घटेत? ध्याने खलु भवदुक्तसामग्र्यपेक्षा। मनसि विषयान्तरप्रवणे ध्यानानिष्पत्तेः। श्रवणाधीनबोधे तु नैतादृशवैराग्यापेक्षा। सूत्रकारश्च पञ्चाग्निविद्यानिरूपणेन वैराग्यं निरूप्य कर्मणां शमदमादीनां च विहितावृत्तज्ञानसहकारितां वक्ष्यति। परैरपि विद्योत्पत्त्यर्थत्वं कर्मणां ज्ञानद्वारा मुक्तिहेतुत्वं। अत एव कर्मकाण्डैकवाक्यत्वं चाङ्गीकृतम्। (बृ.उ.भा) 'तद्यथेह' इत्यादेः अग्निहोत्रादिकर्मण एवानित्य

## श्रुतप्रकाशिका

**नित्या**नित्यगतहेयोपादेयत्वज्ञानं नित्यानित्यवस्तुविवेक इत्ययुक्तम् । ननु शास्त्रान्तरेषु नित्यफलसम्भावनाया निवारकाभावान्नित्यानित्यविवेकादिमतस्तत्रापि प्रवृत्तिप्रसङ्ग इति यदुक्तम् तन्न शास्त्रान्तरप्रवृत्तिनिवारकत्वादाद्यसूत्रस्य । ब्रह्मैवजिज्ञास्यं न प्रकृतिपुरुषावितिहि सूत्रार्थइति तदयुक्तम् साधनचतुष्टयपूर्ववृत्तत्ववादिभिरस्यार्थस्यानङ्गीकृतत्वात् । तापत्रय (याभिहतत्व) ज्ञानपूर्ववृत्तत्ववादिभिरयमर्थउक्तः नचायमर्थ उपपन्नः—तथाहि नतावदयमर्थस्सूत्रकृतोपदिश्यते नवाज्ञाप्यते । किंतूपपाद्यत इति वक्तव्यं न्यायनिबन्धनत्वात्सूत्राणाम् । उपपत्तिश्च * शास्त्रान्तरदौर्बल्यमेव वा स्वशास्त्रप्राबल्यमेववा * समुचितमुभयं वा न प्रथमः * स्वशास्त्रस्य दौर्बल्ये ब्रह्मणोऽप्यजिज्ञास्यत्वात् । न द्वितीयः शास्त्रन्तरस्यप्राबल्येब्रह्मणएव जिज्ञास्यत्वासिद्धेः । तृतीये सूत्रवैयर्थ्यं पूर्वमीमांसायामेव चोदनासूत्रप्रभृतिभिस्तदुभयसिद्धेः ततएव तस्याः पूर्ववृत्तित्वापत्तिश्च अवश्यापेक्षितत्वात् । वेदप्रामाण्यमात्रे सिद्धेऽपि ब्रह्मणिप्रामाण्यं नतावता सिध्यतीति चे त्तर्हि यैर्हेतुभिर्ब्रह्मणि प्रामाण्यासम्भवशङ्का स्ते परिहर्तव्यास्स्युः । तेच सिद्धेव्युत्पत्त्यनुपपत्त्यादयइति तत्परिहारेण ब्रह्मणि वेदान्तप्रामाण्यसमर्थनपरत्वेऽस्मदीय एव पक्षः परिगृहीतस्स्यात् ॥

**अतएव** दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वमपि निरस्तम् । तथाहि किमैहिकदुःखज्ञानं पूर्ववृत्तम् उतनारकदुःखज्ञानम् । उत स्वर्गादेरप्यल्पास्थिर (फल) तयातापत्रयान्तर्गतत्वज्ञानम् । न प्रथमः आयुर्वेदादिभिस्तन्निरसनोपायावगमाद्वेदान्तविचारनैरपेक्ष्यात् । न द्वितीयः—निरयदुःखहेतुभूतपापापनोदकरव्रतनियमविधायक शास्त्रबाहुल्याद्वेदान्तनैरपेक्ष्यात् । तृतीये तु कर्मविचारापेक्षास्यादेव प्रथमत एवाध्ययनविधिवशस्य शास्त्रान्तरावगमावसरविधुरत्वात् । सत्यप्यवसरे स्वर्गाद्यल्पास्थिरत्व ज्ञापकैस्तैरेवशास्त्रैर्मुक्त्युपायस्यावगतत्वेन वेदान्तनैरपेक्ष्याद्वेदान्तविरुद्धार्थाभिधायिनां तेषामवगमस्य वेदान्तज्ञानपूर्ववृत्तत्वायोगा दापातप्रतीतेरितिहासपुराणयोश्चाल्पास्थिरत्वविपर्ययप्रतीतिहेतुत्वाच्च पूर्वं व्याख्येय

## गूढार्थसंग्रहः

फलबोधकत्वं दहरज्ञानस्य अनन्तफलवत्वप्रतीत्यविरोधेनैव उपपादितम् । एतेन सगुणविद्यायाः नित्यफलत्वे 'तद्यथेह इत्यादिश्रुतिर्निर्बाधिकेत्येव वक्तव्यं भवति । एवं च ज्ञानपूर्वककर्मणां अङ्गिद्वारा नित्यफलत्वेन तत्त्यागो न घटते । सगुणविद्याफलवैराग्यमपि नैव सम्पादितं स्यात् । तद्यथेहेत्यादेस्सगुणविद्याघटकतया दहरविद्यायास्सगुणविद्यात्वेन सगुणविद्यायास्तस्याः फलस्य गतिपूर्वकत्वस्य प्रतिपादनेन 'शतं चैका च' इति श्रुतेरत्रत्यायाः कठवल्यामपि सत्वेन तत्र निर्गुणविद्यायाः परसंमततया गतिसाध्यामृतत्वस्यानित्यत्वे उभयत्रापि फलमनित्यमेव प्रसज्यते । एकत्र दृष्टद्वारकमपरत्र अदृष्टद्वारकमिति गतिद्वारकामृतत्ववैषम्यं न परेषामपि संमतम् । पुण्यशब्दस्य दहरविद्यापरत्वं शक्तिविरहात्प्रसिद्धिविरहाच्चौत्प्रेक्षिकमेव, इति दहरविद्यादिरूपज्ञानव्यतिरिक्तशास्त्रचोदितक्रियापरत्वमेव अभ्युपेयमिति तत्र कर्मपुण्यशब्दावग्निहोत्रादिपरावेवेत्यवश्याभ्युपेयम् । एवं च सगुणविद्याफलस्य नित्यतायाः अस्यां श्रुतौ प्रतीत्या निर्गुणविद्याफलकूटस्थनित्यत्वप्रतिपादनपरत्वं नास्याश्श्रुतेस्सम्भवतीति 'तद्यथेह' इत्यादिश्रुतिः न परेषामभीष्टसाधनायालम् । अत्र 'तास्मिन् यदन्तारिति कामव्यपदेशः' इति वदतो वाक्यकारस्य उपासनस्य मोक्षसाधनत्वं सिद्धान्तयतः तद्यथेहेत्यादिश्रुतौ सगुण विद्यारूपोपासनफलस्य अनित्यत्वं न विवक्षितमिति संमतमिति स्फुटम् । एतेन कूटस्थव्यतिरिक्तस्य नित्यत्वमपि तत्सम्मतमिति सिध्यति । अतः तद्यथेहेत्यादिश्रुतिबलेन नित्यानित्यवस्तुविवेकादिनिर्णयो न घटते । ब्रह्मान्यसामान्यस्यापि ब्रह्मकार्यत्वेन मृदादिदृष्टान्तेन अनित्यत्वनिर्णयोऽपि न घटते । सविकारमृद्दृष्टान्तेन अविकारस्योपादानत्वानिश्चयात् । कूटस्थपर्यन्तं नाशस्य विवर्तोपादानस्यच्च दर्शितश्रुतियुक्तिभिर्निर्णयो न सम्भवतीति आरम्भणाधिकरणन्याय एवापेक्षणीयः ।

## गूढार्थसंग्रहः

ब्रह्मात्मभावस्य मोक्षरूपत्वं तदपेक्षावता नित्यनैमित्तिकत्यागश्चेति कथं घटते । ब्रह्मात्मभावे मोक्षत्वस्य सौत्रन्यायमन्तरा निर्णयासम्भवात् । वशीकारसंज्ञकवैराग्यस्य समाधेरेवापेक्षिततायाः योगसूत्रादिषु निर्णयेन तस्य श्रवणपूर्वमपेक्षितत्वोक्तिरपि कथम् । अतः उत्तरत्र सूत्रेषु समाधिपूर्वभावितयाऽऽवश्यकत्वेन प्रतिपिपादयिष्यमाणस्य वैराग्यस्य शमादेश्च कर्मादितुल्यस्य श्रवणे अपेक्षितत्वोक्तिः न सूत्रकृदभिमता । 'शान्तो दान्त' इतिश्रुतौ ज्ञानविध्यसम्भवेन विचारविधिः परैः (पं.पा.वि., तं.प्र.चं.) अङ्गीकृतः । समाहितशब्दसत्वेन 'पश्यति' (पश्येदिति माध्यन्दिनपाठः) इत्यत्र सम्प्रज्ञातानन्तरकालिकासंप्रज्ञातसमाधेर्विधिस्सम्भवति । 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति ध्यानस्यैवावृत्तज्ञानरूपसमाधित्वोक्त्या समाधेर्विधिस्सभवतीति विचारविधिर्नास्यां श्रुतौ विवक्षितः । 'प्रशान्तचित्ताय शमान्विताय' इति गुरूपसत्तिविधिप्रकरणोक्तवाक्यस्य विचारविधिपरत्वमङ्गीकृत्य उभयोरेकार्थत्वं यत्परसंमतं, तदपि नादर्तव्यम् । अत्रापि विचारविध्यनङ्गीकारे न काप्यनुपपत्तिरिति पूर्वमेवोपपादितम् । अत्र वेदान्तवाक्यजन्यब्रह्मज्ञानार्थे शमो यावानपेक्षितः वैराग्यं च यावदपेक्षितं तावदेव पूर्ववृत्ततया विवक्षितम् । समाधेस्तु तीव्रवैराग्यं परवैराग्यशब्दव्यपदेश्यमपेक्षितं, शमदमादयोऽप्युत्कृष्टा अपेक्षिताः इति समाधिगुरूपदेशाधीनवेदान्तार्थब्रह्मज्ञानयोः विभिन्नयोः वाक्यद्वयप्रतिपाद्यत्वेन विषयभेदात् सर्वशाखाप्रत्ययन्यायस्यापि नावसरः । अतः परसम्मतस्य इहामुत्रफलभोगविरागस्य शमदमादेश्च विचारपूर्वभावित्वेन प्रत्यायकत्वं परोदाहृतश्रुतीनां न सम्भवति । अत एव 'शान्तो दान्त' इत्याद्युक्तशमदमादेः संन्याससहितस्य साक्षात्काररूपविद्योत्पत्त्यर्थत्वं सेङ्क्षपशीरारके तृतीये (३५७-३५९) सर्वज्ञात्ममुनिना अभिहितम् ॥

उभयत्रापेक्षितत्वमङ्गत्वंच कैश्चिदुक्तं ; तत्प्रमाणविरहादनुपादेयम् । 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयश्शुद्धसत्वाः' इत्यत्र 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' इत्यत्रच त्यागसंन्यासशब्दौ भगवद्गीतोक्तफलादित्यागपराविति गीताभाष्ये भगवता व्यवस्थापितम् । 'निश्शेषकर्मसंन्यासो वाक्यार्थज्ञानजन्मने। तस्याराद्‌उपकारित्वात्सहकारित्वाय कल्पते ॥ (बृ.सं.वार्ति.२१४) त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् ॥ (२१५) अतस्संन्यस्य कर्माणि सर्वाण्यात्मावबोधतः । हत्वाऽविद्यां धियैवेयात् तद्विष्णोः परमं पदम् ॥ (२१९) इति भाल्लवेयशाखायां श्रुतिवाक्यमधीयते इति बृ. वार्तिकोक्तश्रुतिवाक्यमपि फलसङ्गकर्तृत्वत्यागपरमेवेति भगवतैव निर्धारितम् । 'नैतादृशं ब्राह्मणस्यास्ति वित्तम् । —ततस्ततश्चोपरमः क्रियाभ्यः ॥ (सं.शा.३.३६) 'अर्थस्य मूलं निकृतिः क्षमा च—मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ (३६५) इति सर्वज्ञात्ममुन्युदाहृतवचनयोरपि तत्तत्फलार्थकर्मोपरम एव विवक्षितः ; न तु संन्यासः, तद्वाचिपदाभावात् । 'वेदानिमं लोकममुं च परित्यज्यात्मानमान्विच्छेत्' (आ.ध.सू.२ प्र.पट २५.ख १३ सू.) इति आपस्तम्बधर्मसूत्रमपि (सि॰सि.अं.) उदाहृतं न संन्यासस्य श्रवणाङ्गतां साक्षात्काराङ्गतां वा साधयितुमलम् । एतदुत्तरं 'बुद्धे क्षेमप्रापणं' इति सूत्रम् । अत्र संन्यासिनः आत्मज्ञानेन मुक्तिः प्रतिपिपादयिषितेति परेषामाशयः । अयमर्थः नापस्तम्बसंमतः । 'चत्वार आश्रमाः' (१.पट.१.सू.) तेषु सर्वेषु यथोपदेशमव्यग्र वर्तमानः क्षेमं गच्छति' (९.पट.२ सू.) इत्यत्र चतुर्ष्वाश्रमेषु समाहितमानसस्य क्षेमप्राप्त्यभिधानेन तदुत्तरसूत्रेषु 'सर्वेषामुपनयनप्रभृति समानः आचार्यकुले वासः' (९.३.) 'सर्वेषामनूत्सर्गो विद्यायाः' (४) 'बुध्वा कर्माणि यत्कामेयत तदारभेत' (५) इत्यत्र विद्यार्थोपनयनस्य विद्याया अपि, सर्वाश्रमाणां साधारण्यं, तत्तदाश्रमविहितकर्माणि, बुध्वा ज्ञानपूर्वकं फलानुरोधेन प्रवृत्तिरितिचोपपादितम् । अनन्तरं संन्यासिनः धर्मोऽप्यभिहितः । संन्यासधर्मकथनावसरे 'वेदानिमं लोकं' इति सूत्रम् । इमं लोकममुं चेत्युक्त्या तत्तत्फलत्यागस्यैवात्र प्रतीत्या तत्तत्फलसाधन-

## गूढार्थसंग्रहः

कर्मणां त्याग एवात्र प्रतीयते । अत्र उज्वलायां काम्यकर्मत्याग एवोक्तः । एवं सर्वेषामाश्रमिणां विद्या, तन्मूलकमोक्षश्च इत्यप्यभिहितम् ; न तु संन्यासस्य श्रवणाङ्गत्वमुक्तम् । अतश्च काम्यकर्मत्यागपूर्वकं आत्मज्ञानेन मोक्षस्यान्ते उक्तिमात्रेण संन्यासिन एव ज्ञानसाधनेष्वधिकार इति (सि.सि.अं) उत्प्रेक्षणमनुपादेयम् । एवं ' संन्यस्य श्रवणं कुर्यात् ' इति संन्यासस्य न श्रवणाङ्गता प्रतिपाद्यते । किं तु संन्यासिनः कर्तव्यमेवोपदिश्यते । गृहस्थस्य श्रवणमन्तराऽपि स्थिति र्न शास्त्रविरुद्धा । संन्यासिनस्तु ' अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम् ' (कौ.ब्रा) इत्युक्तदिशा श्रवणमन्तरा स्थितेर्निषिद्धतया श्रवणकर्तव्यता उच्यते अत्र । एतेन संन्यस्तस्य आत्मज्ञानप्रतिपादकवचनान्तराण्यपि व्याख्यातानि । ' एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ' (बृ) इत्यादि श्रुतिरपि संन्यासस्य श्रवणाङ्गत्वं साक्षात्काराङ्गत्वं वा न प्रतिपादयति । तत्पूर्वं ' एतमेव विदित्वा मुनिर्भवति ' इत्यत्र विद्वत्संन्यासः विवक्षित इति पराशरमाधवीयोक्त्या तेषां संन्यासाधिकारनिरूपणपरं तत् । ' एतमेव प्रव्राजिनः—प्रव्रजन्ति ' इत्यनन्तरं ' एतद्धस्म वै तत्पूर्वे विद्वाँसः प्रजां नकामयन्ते, किं प्रजया करीष्यामः येषां नोऽयमात्मा अयं लोक इति । तेहस्म पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ' इत्यत्र वैराग्यं संन्यासाधिकारभूतं ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इतिश्रुत्युक्तं भिक्षाचरणरूपं कर्तव्यंच प्रदर्शितम् । ' परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ' इति परमात्मनि रागेणं इतरत्र वैराग्यमिति एतच्छ्रुतितात्पर्यं निरभिनिवेशानां स्फुटम् । ' अथ परिव्राट् विवर्णवासाः अपरिग्रहश्शुचिरद्रोही भैक्षाणः ब्रह्मभूयाय भवति ' (जा.उ.५)इतिश्रुतिः (शं.भा.३.४.२०) (सं.शा.३.३५९) न ब्रह्मज्ञानाङ्गत्वं संन्यासस्य प्रतिपादयति ; विवर्णवासाः, अपरिग्रहश्शुचिरद्रोही ' भैक्षाणः इति समान्यविशेषधर्मानभिधाय, अनन्तरं ब्रह्मभूयाय भवतीत्युक्तेः । अत्र अद्रोहित्वादयस्सर्वाश्रमसाधारणा अपि संन्यासिनां विशेषधर्मत्वेनोक्ताः । एवं स्वधर्मनिष्ठस्यैव पारिव्राजकस्य ब्रह्मभूयायभवतीत्युक्तं फलमिति प्रतिपादनात्, इतराश्रमिणां स्वाश्रमधर्माचरणस्यैव विद्याप्रातिहेतुत्ववत् परिव्राजोऽपि स्वाश्रमधर्मनि ष्ठस्य विद्याप्राप्तिरत्रप्रतिपाद्यते । ' नाविरतो दुश्चरितात्-प्रज्ञानेनैनमाप्नुयात् '(क) इत्यत्र विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥

एतेन ' वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैः कर्म व्यश्वनिषेवितं भवति वै जन्मान्तरे पाचकम् । विद्यार्थश्रवणादिलक्षणमिदं नह्येतदेषां क्वचित् शास्त्रेण प्रतिषिद्धमीक्षितमिदं शूद्रस्य दृष्टं यथा ॥ (सं'शा.३.६२८) इति सर्वज्ञात्ममुन्युक्तिरपि अप्रतिषेधमात्रपर्यवसिता नालं । याज्ञवल्क्यादिभिः सर्वेषामाश्रमिणां श्रवणाधिकारविद्यामुक्तीनां अभिधानेन संन्यासस्य श्रवणं प्रति साक्षात्कारं प्रति वा अङ्गतायां प्रमाणविरहेण सर्वेषामाश्रमिणां श्रवणाद्यधिकारस्यैव शास्त्रतस्सिद्धेः । एवं च फलादित्यागपराणां संन्यासिनः अधिकारधर्मप्रतिपादनपराणां परोदाहृतश्रुतीनां संन्यासस्य श्रवणज्ञानाङ्गताबोधकत्वासंभवेन महर्षीणां वामदेवादीनां पूर्वस्मिन्जन्मनि संन्यासकल्पनं परेषामनुपादेयम् । एवमुत्तरजन्मन्यपि । संन्यासिनामपि गृहस्थादिवत् स्वाश्रमधर्मप्रच्युतौ विद्यानिष्पत्तेरसम्भवस्यैव स्वाश्रमविहितकर्मणां विद्योत्पत्तिहेतुत्वप्रतिपादकप्रागुदाहृतश्रुतिभिः ' नाविरतो दुश्चरितात् ' इतिश्रुत्या च निर्णयात् । अत एव ' न्याया (गत) र्जितधनस्तत्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ ' (२७५.प्रा.अ.) इति याज्ञवल्क्यस्मृतिवचनमपि सङ्गच्छते । अतः तमेतं वेदानुवचनेन ' इत्यादिश्रुतिः आश्रमधर्माणां विद्योत्पत्तिपरा, गृहस्थाश्रमधर्मत्यागस्य श्रवणब्रह्मज्ञानाङ्गत्वं न कथं चिदपि सहते । एवं विद्यां चाविद्यां च यस्तद्वेदोभयँ सह ' इति श्रुतिरपि । अत्र उत्तरार्धे आश्रमधर्माणां विद्योत्पत्तिप्रतिबन्धकनिवर्तकत्वमभिधाय विद्यया ब्रह्मप्राप्तेरभिधानेन गृहस्थाश्रमधर्मैरेव विद्याद्वारा ब्रह्मप्राप्तौ तात्पर्यं स्फुटं प्रतीयते । संन्यासस्य विचाराङ्गताप्रतिपादकानन्यथासिद्धप्रमाणसत्वे कालभेदेन

## गूढार्थसङ्ग्रहः

उभयोरविरोधः परोक्त स्सङ्गतस्स्यात् । न च तदस्तीति उदाहृतश्रुतिस्वारस्यत्राधितं संन्यासस्य विचाराङ्गत्वप्रतिपादनम् । सद्विद्यायां पितु र्गृहस्थादेव पुत्रस्य गृहस्थस्य विद्याग्रहणस्य स्फुटतया 'वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति' (तै.आ.) इत्यत्र विचारविधिर्विवक्षित इति विवरणोक्त्या तत्रापि गृहस्थात्पितुः पुत्रस्य गृहस्थस्य श्रवणमेव प्रतिपादितमिति निर्णयेन संन्यासस्य श्रवणाङ्गत्वं नैव सम्भवति । एतेन 'स्वाध्यायधर्मपठितं निजवेदशाखावेदान्तभूमिगतमादरपालितं च । संन्यासिना परदशा गुरुणोपदिष्टं साक्षान्महावचनमेव विमुक्तिहेतुः' ॥ (सं.शा.३.२९५.) इत्युक्तिरप्यनुपादेया । 'यतो महावाक्यत एव पुत्रो विजिज्ञिवानस्य पितुस्सकाशात् । इति श्रुतं तेन स एव वेदः तथा च सैवोपनिषच्च सिद्धा' ॥ (सं.शा.३.३०२) इत्युत्तरस्वोक्तेर्विरोधाच्च । अत्र संन्यासरहितस्य पुत्रस्य श्रवण तज्जन्यापरोक्षज्ञानयोः अभिधानेन विचाराङ्गभूतसंन्यासो नास्त्येव । उत्तरस्मिन् जन्मनि संन्यासकल्पनंत्वप्रामाणिकमेव । संन्यासिना गुरुणा महावाक्यस्य उपदेशोऽपि नास्ति गुरोः पूर्वस्मिन् जन्मनि संन्यासकल्पनया भूतपूर्वगत्याश्रयणेन संन्यासिना उपदेशसाधनमपि औत्प्रेक्षिकमेव । अतः 'भवतितुचरमे योग्यताधिक्यमात्रं' इत्याचार्यपादोक्तमेवयुक्तम् (त.मु.कलापे.जीवसरे.३७) ॥

एतत्सर्वमाभिप्रेत्यैव भगवता 'तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षं' इत्युक्तम् । 'तमेतं—विविदिषन्ति' इतिश्रुतौ महाभाष्योक्तदिशा इच्छाकर्मत्वं परमात्मनोऽपि विवक्षितम् । एवं च आश्रमधर्माणां विद्याद्वारा नित्यब्रह्मफलकत्वं 'तान्याचरथ नियतं सत्यकामाः' 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इत्यत्रेवात्रापि विवक्षितम् । ततश्च 'तद्विजिज्ञासस्व' 'भूमात्वेव विजिज्ञासितव्यः' इत्यादिश्रुत्यनुसारेण 'अथातो ब्रह्मजिज्ञासा' इत्यत्रापि कर्माङ्गकब्रह्मज्ञानद्वारा विचारफलत्वं ब्रह्मणः प्रतिपिपादयिषितमिति अपेक्षितकर्मस्वरूपज्ञानार्थं पूर्वकाण्डोक्तकर्मज्ञानं तदधिकारिणामावश्यकमिति 'अतः अपेक्षित कर्मस्वरूपज्ञानमिति' भाष्योक्तिः । केवलकर्मणामल्पास्थिरफलत्वज्ञानं कर्ममीमांसयैव सम्पादनीयमिति प्रागेवोपपादितम् । अतः 'वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति वृत्तिकारसिद्धान्ते परमतवन्नकाप्यनुपपत्तिरिति भगवता निर्धारितं भवति ॥

सूत्रकारश्च प्रथमसूत्रे ब्रह्मणः 'तद्विजिज्ञासस्व' 'भूमात्वेव विजिज्ञासितव्यः' 'तान्याचरथ नियतं सत्यकामाः' इत्याद्यनुसारेण इच्छाविषयत्वरूपफलत्वं 'परात्परं पुरुषमुपैति दिव्यं' इत्याद्यनुसारेण 'मुक्तोपसृप्यव्यपदेशाच्च' (ब्र. सू.१.३-२) इत्यत्र प्राप्यत्वं पञ्चाग्निविद्याधूमादिमार्गपुनरावृत्तिनिरूपणेन वैराग्यं (३.१.पादे.) पराभिध्यानादेव मोक्षं (३.२.४) विहितज्ञानस्यैव पराभिध्यानद्वारा मुक्तिसाधनत्वं तस्याधृत्तज्ञानरूपत्वं तत्र शमदमादेराश्रमविहितकर्मणांच सहकारित्वं उत्क्रान्त्यर्चिरादिगतिद्वारा परज्योतिरुपसम्पत्तिस्वस्वरूपाविर्भावापुनरावृत्तिहेतुत्वं च प्रतिपादयति । एवं वदतस्सूत्रकृतः ज्ञानवैधुर्येण कर्मानुतिष्ठतां धूमादिमार्गेण पुनरावृत्त्या नश्वरं फलं, ज्ञानपूर्वकं तदेव कर्मकुर्वतां आङ्गिसमाधिद्वारा अर्चिरादिमार्गब्रह्मप्राप्तिमतां पुनरावृत्त्यभावेन नित्यफलवत्वं च विवक्षितम् । स्वस्वरूपाविर्भावः 'सर्वं ह पश्यः पश्यति' (छा) इति श्रुत्युक्तः सर्ववस्त्वनुकूलसाक्षात्कार एव । ब्रह्मणः अनुकूलत्वेन ब्रह्मानुबन्धिनां सर्वेषां विद्यया प्रतिबन्धकविगमानन्तरं अनुकूलतया साक्षात्कारः 'एषह्येवानन्दयाति' इत्युक्तदिशा परसङ्कल्पनिबन्धनः 'रसँह्येवायं लब्ध्वाऽऽनन्दी भवति' 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु) इति श्रुतिविवक्षितः पुनरावृत्त्यभावेन उत्तरावधिशून्यतया नित्यमुक्तिफलरूपो विवक्षित इति निर्मत्सराणां स्फुटं प्रतीयते । परोक्तः इहामुत्रफलभोगविरागादिः तन्मतरीत्याऽपि ब्रह्ममीमांसान्यायानुगृहीतवाक्यैनैव सम्पादनीयः । कर्मफलाल्पास्थिरफलत्वनिर्णयः कर्ममीमांसासम्पादनीय इति न्यायानुगृहीतवाक्यस्य अर्थनिश्चायकत्वादिना पूर्वं यस्समाधिरुक्तः सएव 'नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण नसम्पत्स्यन्ते इत्यादिसूक्तौ विवक्षितइति बोध्यम् ॥

## गूढार्थसंग्रहः

पञ्चपादिकायां 'तत्र तावत् धर्मजिज्ञासायां त्रयं वृत्तम्। द्वादशलक्षणे प्रतिपादितं न्यायसहस्रम्। तदनुग्रहोपजातश्च वाक्यार्थनिर्णयः। वाक्यार्थश्च अग्निहोत्रादिकं कर्म।' इत्युपक्रम्य, 'यः पुनर्वाक्यार्थनिर्णयः स न कथमपि ब्रह्मजिज्ञासायामुपयुज्यते। नह्यन्यविषयं ज्ञानमन्यत्र प्रवृत्तौ हेतुः। प्रतिपत्तौ कदाचित्स्यादपि ; यथाऽनुमानादौ, तदपि इह नास्ति ; सम्बन्धानिरूपणात्। तथाच तैरप्युक्तम् कर्मणामधिकारपरम्परया शब्दतो वा संस्कारतया वा यथाविभागं तादर्थ्यावगमादिति इति संस्कारतया कर्मणामुपयोगपक्षमभ्युपेत्य पूर्वजन्मानुष्ठितकर्मसंस्कृतः धर्मजिज्ञासां तदनुष्ठानं च अप्रतिपद्यमान एव ब्रह्मजिज्ञासायां प्रवर्तत इति न नियमेन तदपेक्षोऽथशब्दो युज्यत इति' इत्युक्तम्। वाक्यार्थनिर्णयस्य कर्मणोऽल्पास्थिरफलत्वनिर्णयसम्पादकतया ब्रह्मविद्याङ्गकर्मणां स्वरूपनिर्णयसम्पादकतया चोपयोगः प्रदर्शितः। यस्य च जन्मन एव विरक्तस्य धर्ममीमांसा धर्मस्वरूपाप्रतिपत्तिरुक्ता तस्य पुंसः पूर्वस्मिन्जन्मनि अग्निहोत्रादिकर्मानुष्ठानस्य सम्मततया तस्योत्तरास्मिन्जन्मनि चित्तशुद्धिद्वारा ब्रह्मविचारोपयोगिता उच्यते। तस्य पुंसः पूर्वस्मिन्नेव जन्मनि कर्मभिश्चित्तशुद्धेस्सम्भवेन प्रतिबन्धककल्पनस्याप्रामाणिकतया तदैव विचारे प्रवृत्तिः, ध्यानारम्भः उत्तरास्मिन् ध्यानपरिपाकश्च अपशूद्राधिकरणभाष्ये विदुरादीनां वक्ष्यमाणरीत्या सम्भवतीति पूर्वजन्मनि विचारात्पूर्वं कर्ममीमांसाधीनकर्माल्पास्थिरफलत्वनिर्णयः साङ्गब्रह्मज्ञानानन्तास्थिरफलापातप्रतीतिश्च वर्तत एवेति न दोषः। उक्तविशिष्टापातप्रतीतिमत एव विचाराधिकारित्वस्य भाष्येऽभिधानेन कर्मणामधिकारपरम्परया तादर्थ्यमपि दर्शितं भवति। 'विविदिषन्ति यज्ञेन दानेन' 'अविद्यया मृत्युं तीर्त्वा' इति शब्दतः आप्रयाणमनुवर्तमानसमाध्यर्थत्वं कर्मणामपेक्षितमित्यपि सिद्धम्' न्यायकलापे प्रथमसूत्रे अथशब्दसूचितन्यायः स्वाध्यायस्यार्थावबोधोपयोगप्रतिपत्तिहेतुः, औत्पत्तिकसूत्रे शब्दार्थसम्बन्धनित्यत्वेन वेदापौरुषेयत्वेन अनपेक्षत्वलक्षणं प्रामाण्यकारणमुक्तम्। तदुभयमिहाप्युपयुज्यताम् ; अपेक्षितत्वात्। इतरस्य पुनर्न्यायकलापस्य न ब्रह्मजिज्ञासायामुपयोगोऽस्ति ; यतो निरस्ताशेषप्रपञ्चं ब्रह्मात्मैकत्वं प्रतिज्ञातम्। तत्र न तत्प्रतिपादने तत्प्रतिपादनसामर्थ्ये वा शब्दानां कश्चन न्यायोऽभिहितः। यत्पुनः प्रथमतन्त्रसिद्धन्यायोपजीवनमस्मिन्नपि तन्त्रे तत्सगुणविद्याविषयम्। तत्र च मानसी क्रिया उपासना विधेया अनित्यफला धर्मविशेष एव। तदेवं न्यायकलापस्य न ब्रह्मजिज्ञासायामुपयोगः। अतो न तदपेक्षः अथशब्दः इति।' इति पञ्चपादिकोक्तौ प्रथमसूत्रस्य ब्रह्मात्मैकत्वप्रतिपादकत्वं तद्बोधकशब्दाभावान्न घटते इति स्फुटम्।

उपासनस्य 'आत्मानमेव लोकमुपासीत' इति श्रुतिसिद्धस्य विशुद्धसत्वेनानुष्ठीयमानस्य ज्ञानत्वं प्रमात्वं आवृत्तेः पुरुषतन्त्रत्वेन तद्विशिष्टस्य विधेयत्वं नित्यफलत्वं च प्रागेव प्रदर्शितम्। 'एवमात्मा आत्मनि गृह्यते' (श्वे) इति 'ध्याननिर्मथनाभ्यासात्' (श्वे-१.१४) इत्यनन्तरवाक्ये 'एको वशी—तमात्मस्थं येऽनुपश्यन्ति धीराः' इति निर्गुणश्रुत्यनन्तरवाक्ये 'शान्तो दान्तः—आत्मन्येवात्मानं पश्यति' (श्वे.१.१४) इत्यत्र च जीवात्मान्तर्यामिपरमात्मदर्शनस्यैव मुक्तिहेतुभूतस्य विवक्षितत्वेन ध्यानानन्तरकालिकस्य तस्यैव श्रुतितात्पर्यविषयता प्रागेव साधिता। 'एष पन्था एतत् कर्म एतद्ब्रह्म' इत्यादौ आराधनकर्मणः आराध्यब्रह्मणश्च फलहेतुत्वप्रतिपादनपूर्वकं 'स एष प्राज्ञेनात्मना' इत्यादौ मुक्तिहेतुत्वस्य ब्रह्मशब्दार्थबृंहणत्वविशेषस्य प्रतिपादनेन धर्मब्रह्मणोस्सम्बन्धोऽपि श्रुत्यैव प्रदर्शितः॥

देवानामुपनयनाध्ययनयोरभावेऽपि ब्रह्मविचारे प्रवृत्तिर्वक्तव्या। तत्रच नित्यानित्यवस्तुविवेकादिकं सम्भवतीति तेषां प्रवृत्तिरुपपद्यते, सिद्धान्ते तु नोपपद्यते इति काचन शङ्का यद्यपि सम्भवति ; तथाऽपि तेषां वेदान्ताध्ययनाभावे कथं ब्रह्मविचारे प्रवृत्तिरिति परेषामप्यनुपपत्तिः। एवं संन्यासाभावादपि। 'उपनिषदमावर्तयेत्' इति विध्यन्तरं तेषां वर्तत इति आधुनिकोक्तिः (शं.भा.प्रदीप.) अनुपादेया। तस्याः अध्ययनविधित्वाभावस्य बालकृष्णानन्दसरस्वतीभिः ब्रह्म

## श्रीभाष्यम्

**एषां साधनत्वं च विनियोगावसेयम्। विनियोगश्च श्रुतिलिङ्गादिभ्यः सच तार्तीयः उद्गीथाद्युपासनानि कर्मसमृध्द्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीति**

## श्रुतप्रकाशिका

स्वभावात्क्रमनियम उक्तः। व्याख्यानस्वभावादपि तत्सिद्धिरिदानीमुच्यते। **एषामिति**। एषां शमादीनां साधनत्वं चः समुच्चये। **विनियोगावसेयम्**। विनियोगः अङ्गत्वज्ञापनम्। ततःकिमित्यत्राह। **विनियागश्चेति**। ततोऽपि किमित्यत्राह। **सचतार्तीयइति**। तृतीयाध्यायोक्तइत्यर्थः * इदं प्रदर्शनार्थमुक्तम्। कर्मविचारोक्तकृत्स्नन्यायसापेक्षत्वाद्ब्रह्मविचारस्य ॥

एतानि हि कर्ममीमांसाध्यायानां प्रमेयाणि प्रथमेऽध्याये * प्रमाणलक्षणंवृत्तम्। द्वितीयेऽध्याये शास्त्रभेदः। कर्मभेदोवा * भेदहेतवश्चशब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानि। तृतीये अङ्गानिरूपणम् अङ्गत्वज्ञापकानि प्रमाणानि * श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि। चतुर्थे क्रत्वर्थपुरुषार्थभेदनिरूपणेन * पुरुषार्थैः क्रत्वर्थानां प्रयुक्तिर्निरूपिता पञ्चमेक्रमः क्रमप्रमाणानि * श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डानि। षष्ठे * आधिकारीनिरूपणम्। सप्तमे * सामान्यातिदेशो निरूपितः * अष्टमे विशेषातिदेशः। नवमे * ऊहः। दशमे * बाधः। एकादशद्वादशयो * स्तन्त्रप्रसङ्गौ। यथोक्तम्

**धर्मधीर्मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः। सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥**

इति एतन्नयायसापेक्षत्वं * सङ्कर्षसापेक्षत्वंच ब्रह्मविचारे तत्रतत्र द्रष्टव्यं—तस्मात्सच तार्तीयइतिप्रदर्शनार्थमुक्तम् ॥

अथ कर्मविचारापेक्षत्वे * अभ्युच्चययुक्तिरुच्यते। **उद्गीथादीति**। परेण प्रसङ्गात्सङ्गतिरुक्ता। अत्रतु साक्षात्सङ्गतिरुपपाद्यते। **कर्मसमृध्द्यर्थान्यपीति**। '**कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं**तन्निर्वचनात्' इति वाक्यकारवचनं स्मारितम्। **ब्रह्मदृष्टिरूपाणीति**। अब्रह्मणि ब्रह्मत्वेन दृष्टिर्ब्रह्मदृष्टिः। * ब्रह्मदृष्टिरूपत्वाद्ब्रह्मज्ञानसापेक्षाणीत्यर्थः इतिर्हेतौ।

## गूढार्थसंग्रहः

सूत्रवार्तिके अभिधानात्। क्रममुक्तिफलकसगुणब्रह्मविद्यया देवभावं गतानां संन्यासाभावेऽपि ब्रह्मविचारः अभ्युपगन्तव्यः (सि.ले.सं) इति दीक्षितोक्तिरपि क्रममुक्तिफलकसगुणब्रह्मविद्यया देवभावं गतानां तेषां श्रवणमनननिदिध्यासनाद्यावृत्तिक्लेशं विना स्वयमाविर्भूतेन वेदान्तवाक्येन तत्वज्ञानोदयस्य निर्गुणब्रह्मविद्याफलपरमकैवल्योपपत्तेश्च मधुसूदनसरस्वतीभिः (१२.६.गीताविवरणे) सिद्धान्तितत्वेनानुपादेया। देवानां वेदान्ताध्ययनाभावेऽपि तेषां स्वयंप्रतिभातवेदत्वस्य जन्मान्तराध्ययनबलात् स्वयमेव स्मृतवेदत्वरूपस्य बालादिषु प्रविष्टपिशाचादीनां वेदोद्घोषदर्शनस्य युक्तताया (१.३.२६.शं.) भाष्ये तद्व्याख्यायां च उक्त्या मधुसूदनसरस्वत्युक्तप्रकारस्यैव साम्प्रदायिकत्वात्। एतेन 'तदुपर्यपि बादरायणः सम्भवात्' इत्यादौ ब्रह्मविद्यायामेव देवानामधिकारः विवक्षितः; नतु ब्रह्मविचारे, ब्रह्मविद्यायामेवाधिकारस्य परैरपि भाष्ये स्पष्टमुक्तेः। देवानां पूर्वस्मिन्जन्मनि साङ्गवेदाध्ययनसत्वेन तत्र वृत्तिकारसम्मतकर्ममीमांसाध्ययनादिकं वर्तत एवेति। वस्तुतस्तु सगुणब्रह्मविद्यया क्रममुक्तिफलया निर्गुणब्रह्मविद्या या परैरङ्गीकृता सा न श्रुतिसूत्रतात्पर्यविषयीभूतेति उत्तरत्र स्थापयिष्यते। अतः वृत्तिकारमते न कोऽपि दोष इत्यभिप्रेत्य सगुणब्रह्मविद्याविषये कर्ममीमांसान्यायोपयोगं परसम्मतं दर्शयति—**एषां साधनत्वं चेत्यादिना**।

**उद्गीथाद्युपासनानीति**। अत्र कश्चित् धर्मब्रह्मजिज्ञासयोरिति विशेषोपादानमवगच्छन्नपि ज्योतिष्टोमोद्गीथज्ञानयोरधिकृताधिकारत्वं खलु विद्यत इति प्रतिवक्ति। स खलु मन्दभाग्य एव। उद्गीथाद्युपासनानां धर्मविशेषाणामेव

### श्रीभाष्यम्

**इहैव चिन्तनीयानि तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनानि एतानि सुतरामिहैव सङ्गतानि। तेषां च कर्मस्वरूपाधिगमापेक्षा * सर्वसम्मता॥**

इतिलघुसिद्धान्तः

### श्रुतप्रकाशिका

**इहैवचिन्तनीयानि।** ननु कर्मविचारे। **तान्यपिकर्माणि।** यत्समृद्ध्यर्थान्युद्गीथाद्युपासनानि तान्यपीत्यर्थः। **अनभिसंहितफलानि।** अनभिसंहितफलत्वाद्ब्रह्मविद्योत्पादकानीत्यर्थः। इतिर्हेतौ। **तत्साद्गुण्यापादनानि।** साद्गुण्यं प्रबलप्रतिबन्धकेसत्यपि शीघ्रफलप्रदत्वं तदापादनानि, * ब्रह्मविद्यां शीघ्रं सम्पादयन्तीत्यर्थः। **एतानि।** उद्गीथाद्युपासनानि अत इहैव सुतरां सङ्गतानि प्रधानानुपयोगित्वेन सादृश्यादिना धीस्थत्वं प्रसङ्गात्सङ्गतिः। * अन्यतरापेक्षया उभयाऽपेक्षया वा सङ्गतिस्साक्षात्सङ्गतिः अत्रतूभयोरपेक्षितत्वं प्रतिपादितम्, ब्रह्मदृष्टिरूपाणीति उद्गीथाद्युपासनस्य ब्रह्मज्ञानापेक्षाभिहिता ब्रह्मविद्योत्पादकानीति ब्रह्मज्ञानस्योद्गीथाद्युपासनापेक्षाभिहिता। एतदभिप्रायेण सुतरामिहैवेत्युक्तम्। **इहैवेति।** उभयापेक्षाया अत्रैव विद्यमानत्वात्सुतरां सङ्गतिरिहैव नतु कर्मविचार इत्यर्थः॥

**ननु** कथमुद्गीथादिविचारस्य ब्रह्मविचारएव सुतरां सङ्गतिः—कर्मविचारेऽपिसुतरां सङ्गतिरस्ति। उभयापेक्षया सङ्गतिर्हि सुतरां सङ्गतिःकर्माङ्गाश्रयत्वादुद्गीथादिधियां तद्विचारस्य कर्मापेक्षाऽस्ति कर्मणामपि स्वसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षा अस्तीत्युभयोपक्षाया विद्यमानत्वात्। उच्यते कर्मसमृध्यर्थोद्गीथाद्युपासनापेक्षा केवलकर्मणां विद्याङ्गकर्मणांच तुल्या। अतः कर्मसमृद्ध्यर्थत्वहेतुस्साधारणः। *कर्माङ्गाश्रयत्वं पूर्वभागविचारसङ्गतेरसाधारणहेतुः। ब्रह्मज्ञानसापेक्षत्वमुत्तरभागविचारसङ्गतेरसाधारणहेतुः एवं साधारणाऽसाधारणहेतुद्वयवत्तासाम्येऽपि ब्रह्मदृष्टिरूपोद्गीथाद्युपासनानां ब्रह्मज्ञानसापेक्षत्वात्तेन विना तच्चिन्तनमशक्यं पूर्वभागविचारे। नहि कर्मविचारात्पूर्वं ब्रह्मविचार उपपद्यते * प्रागुक्तसङ्गतिविशेषविशिष्टत्वात्तयोः उत्तरभागे तु ब्रह्मज्ञानस्य सुलभत्वान्निर्वृत्तकर्मविचारस्योद्गीथाद्युपासनचिन्तनं कर्तुं शक्यम्। अतएव शक्यत्वादुद्गीथाद्युपासनान्युपनिषद्भागे विहितानि अत एव ब्रह्ममीमांसायां निरूपितानि च। एवं वेदान्तभाग विहितत्व ब्रह्ममीमांसाविचारितत्व शक्यत्व रूप * वैषम्यत्रयविशेषिताया उभयापेक्षाया उत्तरभाग एव विद्यामानत्वात्तन्निबन्धना सुतरां सङ्गतिस्तत्रैवेत्यभिप्रायेण सुतरामिहैवसङ्गतानीत्युक्तम्। अयं चाभ्युच्चयहेतुः यदप्रधानस्यार्थस्यापि साक्षात्सङ्गतत्वात्तस्याप्यवश्यापेक्षितः कर्मविचारइति। प्रधानप्रतिपाद्यस्य * नियमेनापेक्षितत्वरूपः प्रधानहेतुः पूर्वमेवोक्तः। ततः किं प्रकृतानन्तर्यस्येत्यत्राह। **तेषांचेति।** तेषां उद्गीथाद्युपासनानां। **सर्वसम्मता।** तत्साक्षात्सङ्गतत्वेहि विगानम्। उद्गीथाद्युपासने चिन्त्येसति तस्य कर्मज्ञानापेक्षा सर्वाविगीता॥

### गूढार्थसंग्रहः

निरूपितविधिचतुष्टयानां ब्रह्मप्रकरणे प्रत्ययत्वसाम्यात् प्रासङ्गिकत्वेन भेदादिमात्रस्यैव निरूपितत्वात् शास्त्रतात्पर्यावगम्यस्य ब्रह्मज्ञानस्य कर्मण्यधिकृताधिकारित्वाभावात् इति विवरणोक्तं भास्करभाष्यदूषणमेतेन परिहृतम्। ब्रह्मात्मैकत्वज्ञानस्य विवरणसम्मतस्य शास्त्रतात्पर्यावगम्यत्वं नव निर्धारितम्। 'यदेव विद्ययेति हि' इति सूत्रे 'यदेव विद्यया करोति'

## श्रुतप्रकाशिका

**यत्त्व**धीतवेदान्तस्य कर्माधिगमापेक्षा नास्तीत्युक्तम्। तदयुक्तम्। वेदान्तेष्वप्युपायपर मुक्तिपरवाक्यमात्राध्यायिनः पुरुषस्य ब्रह्मविचारेऽपि तृतीयचतुर्थाध्यायमात्रश्रवणप्रसङ्गात्। तृतीयचतुर्थयोः प्रथमद्वितीयोक्तन्यायसापेक्षत्वमस्तीतिचेत् तर्हि कृत्स्नस्यब्रह्मविचारस्य कर्मविचारन्यायसापेक्षत्वात्तस्यैव पूर्ववृत्तत्वं जन्मान्तरसुकृतविशेषेण कस्यचिद्ब्रह्मविचारमात्रापेक्षेति- चेत्तस्यसुकृतविशेषेण तृतीयचतुर्थमात्रापेक्षा किं नस्यात्। अथवा सुकृतातिशयात्कृत्स्नब्रह्मविचारनिरपेक्षता किं न स्यात्॥

**किंच** वेदान्तेषूपायफलपरवाक्यमात्राध्ययनमशास्त्रीयमिति त्वयाऽपि वक्तव्यम्। तद्वेदान्तमात्राध्ययनस्यापितुल्यम्। कृत्स्नस्वाध्यायाध्ययनस्य विहितत्वात् अतो विध्यतिलङ्घिनां यदपेक्षितं तदेवपूर्ववृत्तमित्यसङ्गतम्। कृत्स्नस्वाध्यायिनोऽपि सुकृतवशात्काचित्कश्रवणापेक्षायां पूर्वमेव दत्तमुत्तरम्। **विरोधादप्रमाणत्वा**दित्यादिग्रन्थसङ्गृहीतानि दूषणानि अत्रोच्यत इत्यादिना सिद्धान्तभाष्येण परिहृतानि—तथाहि कर्मणामनित्यफलत्वेन विरोधोऽनभिसंहितफलत्वात्परिहृतः। भेदवा- सनाजनकत्वेनैक्यज्ञानविरोधस्तु **पृथगात्मानमिति** पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुत्या परिहृतः अयं विरोधो * वक्ष्यमाणवस्तुसामर्थ्यान्तर्भूतश्च। मोक्षस्य सकलभेददर्शननिवृत्तिरूपतायाः प्रपञ्चमिथ्यात्वोपपादनसापेक्षत्वात्। ऐक्य- ज्ञानस्योपायत्वेऽपि कर्मणामदृष्टद्वारेणोपयोगादविरोधः। अप्रमाणत्वम् **क्रियावानेष ब्रह्मविदां** इत्यादिसत्रोहितविनि- योजक प्रमाणप्रदर्शनात्परिहृतम्। विविदिषार्थचित्तशुध्युपयोगस्तु वेदनोत्पत्त्युपयुक्तमनोनैर्मल्यहेतुत्वोपपादनेन विवि- दिषाऽर्थत्वेऽपि तस्य अहरहरुत्पत्त्यपेक्षोपपादनेन च प्रत्युक्तः, ज्ञानमात्रस्य हेतुत्वश्रवणं च साधनद्वित्वानभ्युपगमाद्दत्तो- त्तरम्। सामर्थ्यं नाम मिथ्याभूतबन्धस्य ज्ञानैकनिवर्त्यत्वरूपं वस्तुसामर्थ्यम्। तत्तु प्रपञ्चमिथ्यात्वदूषणेन प्रतिव- क्ष्यते। शमाद्यङ्गकताम्नानकृतोविरोधश्च प्रवृत्तिरूपयज्ञादेर्निवृत्तिरूपशमादेश्च भिन्नविषयत्वेनाविरोधात्परिहृतः। शमा- दयोह्यविहिताप्रतिषिद्ध काम्यविषया इत्युक्तम्। वाक्यार्थज्ञानस्यैव मोक्षोपायत्वं प्रत्यक्षविरोध शास्त्रविरोधाभ्यां निरस्तम्। तत्र निवर्त्यवासनाया निवर्तकोत्पत्तिप्रतिबन्धकत्वाभावेन श्रवणादेर्भेदवासनानिरासार्थमनपेक्षितत्वा त्तद्वैयर्थ्यपरिहारस्यानुपप- न्नत्वात् श्रवणादिक्रमोन्निद्रवाक्यजाधीर्विमोचिका इत्येतदप्यपास्तम्॥

इतिलघुसिद्धान्तः



## गूढार्थसंग्रहः

इत्यादिश्रुत्युक्तवीर्यवत्तरवत्वफलस्य उद्गीथाद्युपासनानां परैरुक्त्या उपासनापूर्वकं कर्मानुतिष्ठतां ब्रह्मविद्यायाश्शीघ्रनिष्पत्तिः परैरप्यादर्तव्येति तदुपयोगो न प्रत्याख्येयः। ब्रह्मदृष्टिरूपत्वादपि अत्रैव सङ्गतिः॥

लघुसिद्धान्ते विशुद्धसत्वेनानुष्ठीयमानस्य ध्यानस्य प्रमात्वं ज्ञानत्वं परैः निर्गुणविद्यात्वेनाङ्गीकृतविद्याया अपि समाधिपर्यवसितध्यानरूपत्वं परब्रह्मविषयत्वं कर्मसामान्यक्षयहेतुत्वेन तरतमभावानापन्नमुक्तिफलहेतुत्वं ज्ञानविकासप्रति- बन्धकविगमेन ज्ञानपूर्णविकासहेतुत्वं भक्तिरूपत्वं वरणादिद्वारकब्रह्मप्राप्तिहेतुत्वेनादृष्टफलकत्वं च निर्णीय वृत्तिकारसम्मत एवार्थः वाक्यकारसम्मत इति निर्धारितम्॥

इतिलघुसिद्धान्तः



## अथ महापूर्वपक्षः

### गूढार्थसंग्रहः

लघुसिद्धान्ते उपायपरवाक्यार्थ पर्यालोचनया सगुणप्राप्तिफलकत्वं ब्रह्मविद्यायाः यन्निर्धारितं तन्नघटते । विजातीयस्वगत-भेदवादिपरिणामाद्वैतिमतवत् त्रिविधं भेदवादि परिणामाद्वैतिमतस्यापि हेयत्वात् सर्वेषां मूलभूतवृत्तिकारमतानां आत्मनः कौट स्थ्याविरोधाद्धेयतायाः शङ्कराचार्यैरेव सूत्रभाष्यादिषु बहुत्र निरूपणात् । नच निरवयवं विक्रियमाणं दृष्टं क्वचित् । अनित्यगुणाश्रयंवानित्यम् । (बृ.उ.शं.भा.३.४.७) न निरवयवस्य (अनौपाधिक) अनेकधर्मवत्वे दृष्टान्तोऽस्ति (बृ.उ.शं भा.६.३.२४) इतिच तैरेवोक्तेः । स्वयं ज्योतिषः प्रत्यग्वस्तुनः एकबुद्ध्यनधिगम्य पराग्बुद्धिगम्यधर्मवत्त्वं न घटतइति (बृ ६.४.वार्ति.४७२-४७३-४७९) सुरेश्वराचार्यैः स्थापनात् । कूटस्थनित्यं परिणामिनित्यं इति नित्यद्वैविध्यस्य आत्मनः कूटस्थनित्यतायाश्च योगभाष्य एवोक्तेः । 'परिणामस्तु स्याद्ध्यादिवत्' इति वाक्यकारवाक्यं भास्करभाष्योदाहृतं विवर्ताभिप्रायकमेव । 'आत्रेयवाक्यमपि संव्यहारमात्रम्' (सं.शा.२१७.२१८.२२०.) इत्यादिना सङ्क्षेपशारीरके सर्वज्ञात्ममुनिना कार्यसामान्यस्य संव्यवहारमात्रत्वं वाक्यकाराभिप्रेतमिति साधनपूर्वकं 'विवर्तवादस्य हि पूर्वभूमि र्वेदान्तवादे परिणामवादः । व्यवस्थितेऽस्मिन्परिणामवादे स्वयं समायाति विवर्तवादः ॥' (सं.शा.२.६१.) इति सिद्धान्तकरणेन तस्यैव सिद्धान्तस्य प्रकृत्यधिकरणभामत्यामभिधानेन 'नासतो निष्पाद्यत्वात्' 'प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात्' इति सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य न संव्यवहारमात्रत्वादिति अनिर्वचनीयता ब्रह्मनन्दिना सिद्धान्तितेति कल्पतरूक्त्याच 'अद्वैतमेव परिरक्षति वाक्यकारः' (३.२२०) इति सर्वज्ञात्ममुन्युक्तदिशैव वाक्यकारसिद्धान्तनिर्णयसंम्भवात् । वृत्तिकारमत दूषणावसरे (१.१.४) 'किञ्चित्परिणामिनित्यं, इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिस्स्वभावम्' इति भाष्यविवरणे परिणामतद्वतोर्भेदाभेदविकल्पेन अनिर्वचनीयत्वस्य वाचस्पतिना व्यवस्थापनात् । (भामती) नित्यश्च मोक्षः मोक्षवादिभिस्सर्वैरत्युपगम्यते । तच्च पारमार्थिककूटस्थनित्यवादिमत एव सङ्गच्छते । कूटस्थानङ्गीकारे नित्यफलमेव नोपपादयितुं शक्यत इति सगुणात्मवादे ब्रह्मणः अनन्तस्थिरफलत्वमपि नोपपद्येत । अत एवानन्दतीर्थैः सजातीयविजातीयविशेषयोरङ्गीकारेऽपि स्वगतविशेषा नाङ्गीक्रियन्ते । ब्रह्मनिष्ठगुणक्रियाणां ब्रह्मणा सहात्यन्ताभेद एव । एवमजानतां तमोयोग्यजीवत्वमेवेति साधनपूर्वकं 'नेह नानास्ति किञ्चन' 'एकमेवाद्वितीयम्' इत्यादेः स्वगतभेदशून्यपरत्वमेव स्थाप्यते । ब्रह्मणः परिणाम्युपादानत्वमपि नाङ्गीक्रियते ॥

एवं च 'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्य अनन्तत्वघटकवस्तुपरिच्छेदशून्यत्वगुणपर्यालोचनेन 'अहं ब्रह्मास्मि' इत्युपसंहारे तात्पर्यं यद्विवरणोक्तं तदेव युक्तम् । तदुक्तं शङ्कराचार्यैरपि । 'ब्रह्मात्मावगतिस्तु अप्रतिज्ञातेति तदर्थो युक्तश्शास्त्रारम्भः अथातो ब्रह्मजिज्ञासेति । तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयस्सर्वाणि च इतराणि प्रमाणानि' (१.१.४.) उक्तं च पञ्चपादिकायामपि, 'यत्तु तद्भूतानां क्रियार्थेन समाम्नायः' इति सूत्रयामास जैमिनिः तदपि सिद्धेषु रूपादिषु अर्थेषु वर्तमानानां सामानाधिकरण्यार्थत्वेन समाम्नायः समुच्चारणमिति यतो दर्शितः समन्वयः विशेषणविशेष्यत्वेनापि क्रियार्थेनेति तु धर्मजिज्ञासोपक्रमात् प्रकृतोपयोगितया सूचितम् । तथा च भाष्यकारोऽपि 'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति अर्थसद्भावमात्रे कथनीये कर्मावबोधनमिति प्रकृतोपयोगित्वेनैवोक्तवान् । तदेतदाह भाष्यकारः– यदपि शास्त्रतात्पर्यविदामनुक्रमणमित्यादिभाष्येण । अत एव पूर्वेण तन्त्रेणागतार्थत्वाच्छारीरकारम्भः । तत्र हि वेदस्य विवक्षितार्थत्वं स्वतःप्रामाण्यं स्वरूपे च विज्ञानोत्पत्तौ शब्दस्य सामर्थ्यमित्येतत्सर्वमवगतम् । क्रियार्थेन समाम्नायः इति तु धर्मजिज्ञासाप्रतिज्ञानुसारेण सूत्रितम् । इह पुनः 'तत्तु समन्वयात्' इति विशेषणविशेष्यात्मकमपि गौण

## गूढार्थसंग्रहः

मपि सामानाधिकरण्यं विहाय एकस्मिन्निरंशे तत्त्वमसीति समन्वयो मुख्यः प्रदर्शितः। तथा च भगवान् पाणिनिः अव्यतिरिक्ते प्रातिपदिकमात्रे प्रथमां स्मरति। नास्ति क्रियाकर्तर्येवातिरिक्तेऽर्थे। तेन च कात्यायनस्य 'अस्तिर्भवन्तीपरः' इतिमतं नानुमन्यते' इति 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र नीलमुत्पलमितिवाक्यवैलक्षण्येन बोधः (शं.उ.तै.भा) 'नीलमुत्पलमित्यत्र यथा वाक्यार्थसङ्गतिः तथा तत्त्वमसीत्यत्र नास्ति वाक्यार्थसङ्गतिः॥' (स.वे.सि.सा.सं. ७१३) 'सोऽयं द्विज इति वाक्यं त्यक्त्वा प्रत्यक्परोक्षदेशाद्यम्। द्विजमात्रलक्षकत्वं कथयत्यैक्यं पदार्थयोरुभयोः॥' (स्वात्मनिरूपणं ३.६.) तद्वत् तत्त्वमसीति त्यक्त्वा प्रत्यक्परोक्षतादीनि। चिद्वस्तु लक्षयित्वा बोधयति स्पष्टमसिपदैनैक्यम्॥ (३७) 'सामानाधिकरण्यं हि पदयोस्तत्त्वमोर्द्वयोः। सम्बन्धस्तेन वेदान्ते ब्रह्मैक्यं प्रतिपाद्यते॥' (त.उ.२६) इत्यादौ तत्त्वमसीत्यत्रापि तथैवेति स्थापितं शङ्कराचार्यैः। एवमेव वार्तिकसङ्क्षेपशारीरकादौ। 'अन्यत्रेव नचाप्यत्र वाक्यार्थो भेदलक्षणः। संसर्गलक्षणो वाऽपि ब्रह्मात्माभेदतो भवेत्॥' (बृ.सं.वार्ति.९२.) नेहान्यत्रात्मनो ब्रह्म तथाऽऽत्मा ब्रह्मणोऽन्यतः। तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम्॥ (९४) इति।

'एवं तावदखण्डवस्तुविषयश्शब्दान्वयो दर्शितः लोके दृष्टनयेन पाणिनिवचोऽप्यस्यैव संसूचकम्।
येनायं स्मरति प्रकृत्यभिहिते वृक्षादिके केवलं तन्मात्रे प्रथमेति सूत्रवचसैवाद्यां विभक्तिं मुनिः॥ (सं.शा.१.२१६)
सामानाधिकरण्यमन्वयगिरा हेतुं वदत्यादरात् तस्यैवाथ विशेषणं समिति च व्यावृत्तये गृह्यते।
गौणान्मुख्यमयं भिनत्ति भगवान् व्यावर्तकेनामुना नीलेनोत्पलवस्तुवत् स्फुटतरं द्वैविध्यसद्भावतः॥ (२१७)

तद्धि द्विधैकाधिकरण्ययुक्तं गौणं च मुख्यं च विविच्य सद्भिः।
संसर्गरूपार्थनिवेशि गौणं मुख्यं त्वखण्डार्थनिविष्टमाहुः॥ (२१८)
नावेदविद्धि मनुते पुरुषं बृहन्तं इत्याह वेदवचनं कथमन्यथैतत्।
वाक्यान्तरं च कथमाह पुमांसमेनं साटोपमौपनिषदत्वविशेषणेन॥ (३.अ.२९६)
उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्तः।
फलवदवगतिः स्यादन्तरेणैतदेकं वचनमिति न शक्यं वक्तुमित्यादेरऽस्मिन्॥ (.३.२९७)
यतो महावाक्यत एव पुत्रो विजिज्ञिवानस्य पितुस्सकाशात्।
इति श्रुतं तेन स एव वेदः तथा च सैवोपनिषच्च सिद्धा॥ (३०२)

इत्यादिना महावाक्यानामेव मुख्यं वेदत्वमुपनिषत्त्वं च। तदितरवेदवाक्यानां सर्वेषामपि महावाक्यशेषत्वमेव इत्यपि सर्वज्ञात्ममुनिना स्थापितम्। एवं च स्वरूपपरवाक्यार्थानिर्णये उपायपरवाक्यार्थनिर्णयोऽपि न घटते। 'एतद्वै सत्यकाम परं चापरं च ब्रह्म' (प्र.उ.) 'द्वे विद्ये वेदितव्ये' (मु) इत्यादिश्रुत्यनुसारेण परविद्याविषयः परं ब्रह्म निर्विशेषं तज्ज्ञानं नित्यमुक्तिफलम्। अपरविद्याविषयः अपरं ब्रह्म सविशेषं, तदुपासनं गतिद्वारकतरतमभावापन्नफलसाधनं क्रममुक्तिफलकं च। 'तं यथा यथोपासते तदेव भवति' इतिश्रुत्या उपासनानुगुणस्यैव तत्फलस्य निर्णयात्। उपासनाविषयगुणादितारतम्येन फलतारतम्यस्यावश्यकत्वात्, तरतमभावापन्नफलस्यानित्यत्वात्। परब्रह्मविषयिण्यां निर्गुणविद्यायां तु विषयवैलक्षण्याभावेन फलमेकरूपमेव नित्यं इति व्यवस्थासम्भवात्। सगुणविद्या च भ्रम एव। सप्रकारकज्ञानसामान्यस्य भ्रमत्वात्। (सि.बि.टी.) न च निष्प्रकारकज्ञानमेव नास्तीति परब्रह्मविषयकज्ञानासिद्धिश्शङ्क्या ; निर्विकल्पकस्य तस्य दार्शनिकसम्मतत्वात्। सौषुप्तिकानुभवस्यापि तादृशत्वस्य स्थापयिष्यमाणत्वात्। असंप्रज्ञातसमाधेरपि निष्प्रकारत्वाच्च। अतः नित्यफलसाधनं ज्ञानं निर्विशेषविषयमेव। उक्तं च शङ्कराचार्यैः— 'श्रवणं मननं—षड्भिर्लिङ्गैस्सदद्वये'

## गूढार्थसंग्रहः

इति षाड्विधतात्पर्यलिङ्गोपेतायाः श्रुतेरेव बलीयस्त्वेन 'तत्त्वमसीति' महावाक्यार्थे ब्रह्मैक्ये षड्विधतात्पर्यलिङ्गसत्वात् तत्प्राबल्यम्। न च प्रत्यक्षादिविरोधः मीमांसकोक्तः शङ्क्यः। 'महासामान्यमन्यैस्तु' (श्लो.वा.प्र.सू.११४.) इत्यादिना कुमारिलेन दूषितस्यैवान्यमतस्य ब्रह्मसिद्धौ तर्ककाण्डे प्रपञ्चेन दूषणपूर्वकं प्रत्यक्षस्य सन्मात्रग्राहित्वं स्थापयता मण्डनेन 'नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते।' इति सिद्धान्तकरणात्। तत्र च (ब्र.सि.) 'बाह्यार्थापह्नवे द्वैतमेकोऽर्थस्य परीक्षणात्। प्रमाणसंशयश्चैकः तत्रास्तां यः प्रमेयतः॥' (श्लो.वा.नि.वा.१७) इति कुमारिलप्रदर्शितप्रमाणानुपपत्तिप्रमेयानुपपत्तिरूपबौद्धसम्मतयुक्तिभ्यां प्रत्यक्षस्य भेदविषयकत्वं न सम्भवति, भेदोऽपि दुर्निरूपः इति साधितम्। अन्ते च 'यथाऽनुवृत्तव्यवहारसिद्धिं यथाऽवभासं कथयन्ति बाह्याः। तथैव भेदव्यवहारयोगं वदान्ति वेदान्तविवेकभाजः॥' इत्यत्र व्यावृत्तस्वलक्षणस्यैव प्रमाविषयत्वं तस्यैव सत्यत्वं अनुवृत्तस्य भ्रमविषयत्वेनापरमार्थत्वं यथा बौद्धैरङ्गीक्रियते। तथा सदितिप्रतीतिविषयस्य अनुवृत्तस्य प्रमाविषयत्वं घटपटादेस्तु व्यावृत्तस्य भ्रमविषयत्वं च वेदान्तसिद्धान्त इति स्थापितम्।

'वस्तुस्वरूपसंस्पर्शि चक्षुरादिभ्य उत्थितम्।
भेदस्पृक् नाक्षजाद्येवं न तेनैकात्म्यबाधनम्॥' (सम्बन्धवार्ति.९१९)
'भेदग्राहि न नो मानं कृत्स्नेऽपि जगतीक्ष्यते।
वस्तुस्वरूपमुज्झित्वा मेयं नास्त्यपरं मितेः॥' (बृ.७.अ.३.ब्रा.१६४७)
'भेदग्राहि न नो मानं लौकिकं वैदिकं च यत्।
अविचारितसंसीद्धिस्तस्माद्भेदोऽवसीयताम्॥' (बृ.७.अ.१ब्रा.८४.)

इत्यादौ सुरेश्वराचार्यैरपि तथैव स्थापितम्। एवं सङ्क्षेपशारीरकादावपि। एवं मण्डनमिश्रादिभिस्स्वैरपि निर्दोषत्वेन श्रुतेः षड्विधतात्पर्यलिङ्गानां अद्वये ब्रह्मणि सत्वात् तत्रैव महातात्पर्येणापच्छेदनयाच्च भेदपरत्वं न वेदान्तानाम्। 'मायाप्रसूत द्वयवादमुख्यम्' (सं.शा.३.२८७) इत्युक्तदिशा भेदे अवान्तरतात्पर्यं। श्रुतेः, प्रत्यक्षादीनां व्यावहारिकप्रामाण्यं तात्त्विक प्रामाण्यंतु महावाक्यानां इति साधितम्। 'नेह नानास्ति किं चन' इति भेदनिषेधश्रुतयः सर्वा अपि महावाक्यावगतब्रह्मात्मैक्यस्य अबाधितत्वरूपोपपत्तिः या तात्पर्यलिङ्गरूपा तन्निश्चायकाः। भेदश्रुतयः सर्वा अपि व्यावहारिकभेदपराः। स्वप्नेऽपि सृष्टिकथनात्, जगत्सृष्टिवादिन्यः श्रुतयः न तात्त्विकसृष्टिपराः; किं तु आत्मैक्यप्रतिपादनपरा एव। उक्तं च शङ्कराचार्यैः–'नह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः। न हि तत्प्रतिबद्धः पुरुषार्थः कश्चित् दृश्यते श्रूयते वा। न च कल्पयितुं शक्यते; उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैस्साकं एकवाक्यतायाः गम्यमानत्वात्। दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थतां 'अन्नेन सोम्य शुङ्गेन अपोमूलमन्विच्छ, अद्भिस्सोम्य शुङ्गेन तेजोमूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ, (छा ६.८.४.) इति। मृदादिदृष्टान्तैश्च कार्यस्य कारणेन अभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यते इति गम्यते। तथाच सम्प्रदायविदो वदन्ति मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा। उपायः सोऽवताराय नास्तिभेदःकथंचन॥ (माण्डू.३.१५) इति ब्रह्मप्रतिपत्तिप्रतिबद्धफलंतु श्रूयते 'ब्रह्मविदाप्नोतिपरम्' (तै.२.१) 'तरतिशोकमात्मवित्' (छा.७.१.३) 'तमेवविदित्वाऽतिमृत्युमेति' (श्वे.३.८) इति प्रत्यक्षावगमं चेदं फलं। 'तत्त्वमसि' इत्यसंसार्यात्मत्व प्रतिपत्तौसत्यां संसार्यात्मत्वव्यावृत्तेः इति (शं.भा.१.४.१४) ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौसत्यां यत्तत्र अफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि तत् ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते। फलवत्सन्निधौ अफलं तदङ्गमितिवत्। नतु स्वतन्त्रफलाय कल्पतइति नहि परिणामवत्वविज्ञानात्

## गूढार्थसङ्ग्रहः

परिणामवत्त्वं आत्मनः फलं स्यात् इति वक्तुं युक्तं कूटस्थनित्यत्वान्मोक्षस्य । कूटस्थब्रह्मात्मवादिनः एकत्वैकान्त्यात् ईशित्रीशितव्याभावे ईश्वरकारणप्रतिज्ञाविरोध इति चेन्न ; अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात्सर्वज्ञत्वस्य । 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः (तै.२.१.) इत्यादिवाक्येभ्यः नित्यशुद्धबुद्धमुक्तस्वरूपात् सर्वज्ञात्सर्वशक्तेः ईश्वरात् जगज्जन्मस्थितिप्रलयाः, नाचेतनात् प्रधानादन्यस्माद्वा इत्येषोऽर्थः प्रतिज्ञातः । 'जन्माद्यस्य यतः' (ब्र.सू १.१.२.)इतिच (शं.भा.२.१.अधि.६.सू.१६) एवं सुरेश्वराचार्यैरपि गौडपादाचार्योक्त (मा.का) माध्यमिकयुक्तिभिः 'नासतो जन्मना योगः सतस्सत्वान्नचेष्यते । कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ॥' (बृ.४.१.२०.मन्त्रवार्तिकश्लो.३८४) इत्यादिना कार्यकारणभावस्य सांवृतत्वं प्रसाध्य 'जगदुत्पत्तिसंहाराः तद्वदात्मनि कल्पिताः । वस्तुवृत्तं समालोक्य कुतः सृष्ट्यादिसम्भवः ॥ (४११) उद्भूतिस्थितिनाशास्स्यु र्जगतोऽतः प्रतिक्षणम् । अविद्यामात्रहेतुत्वान्नामीषां विद्यते क्रमः ॥' (४१३) इत्यनेन 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते । शिष्याणां बोधसिद्ध्यर्थं कृतज्ञैः कल्पितः क्रमः ॥' इतिसिद्धान्तः प्रतिष्ठापितः ॥

अविद्यैव परिणाम्युपादानम् । ब्रह्म तु विवर्तोपादानम् । एतेन 'एष पन्था एतत् कर्म एतद्ब्रह्म एतत् सत्यम्' (ऐ.२.१) इति उपनिषदुपक्रमश्रुतिरपि ब्रह्मैव सत्यमन्यदसत्यमित्येतदभिप्रायैव । उत्तरत्र 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत्' (ऐ.२.आ.४ अ.१ ख.१ म) इत्यत्र तस्यैवार्थस्य प्रतिष्ठापनात् । जगतस्सत्यत्वे अनिर्मोक्षप्रसङ्गाच्च । एवं 'तं त्वौपनिषदं पुरुषम्' (बृ ४   ) इति श्रुतिरपि नान्तर्यामित्वपरिणामाभिप्राया । 'मच्चैतन्याव- भास्यत्वात् सर्वप्राणिधियां सदा । पूर्मम प्राणिनस्सर्वे सर्वज्ञस्य विपाप्मनः ॥' (उपदेशसाहस्री सूक्ष्मताप्रकरणं.३ श्लो) जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते । नित्यं निर्विषयं ज्ञानं तस्मात् द्वैतं न विद्यते ॥' (७) इति शङ्कराचार्यैः ब्रह्मात्मैक्याविरोधेन पुरुषशब्दार्थव्यवस्थापनात् । एवं च पूर्वकाण्डस्य अनिर्वचनीयकार्यकारणभावे व्यावहारिकप्रामाण्यवत् औपनिषदसगुणपरवाक्यानामपि व्यावहारिकमेव प्रामाण्यम्, महावाक्यानामेव तात्त्विकं प्रामाण्यमिति स्वरूपपरवाक्य- पर्यालोचनया निर्धारितं भवति । एतेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषान्ति' (बृ.६ अ ४ब्रा.२३) इति श्रुतिः 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति पूर्वश्रुतिप्रतिपादितजीवाभिन्नब्रह्मवेदनपरैव । वेदनात्पूर्व- मेव कर्मणामुपयोगः नतु तदुत्पत्त्यनन्तरमिति सिद्धम्।

एतेन फल जिज्ञास्यभेदः मीमांसयोर्द्वयोः य उक्तः (शं.भा.१.१.१) सः स्थिरस्सम्पन्नः ॥ स्मृतेः ज्ञानत्वस्य दार्शनिकसम्मतत्वेऽपि प्रमात्वं न केषामपि वैदिकानां सम्मतम् । अनुभवत्वाज्ञातज्ञापकत्वघटितलक्षणस्यैव तैरुक्तेः । अतः अपरोक्षज्ञानाभिन्नस्य ध्यानस्य भ्रमत्वमेव, न तु प्रमात्वम् । आनन्दतीर्थैः 'मनो ब्रह्मेत्युपासीत' इत्यादौ अब्रह्मणि ब्रह्म- दृष्टेरनङ्गीकारेऽपि सिद्धान्तेऽङ्गीकारेण आरोपितरूपेण जगत्कारणोपासनस्य विवरणोक्तस्य सम्भवेन तरतमभावापन्नफल- साधनत्वं सम्भवत्येवेति सगुणोपासनस्य फलप्रतिपादनमपि घटते ॥

एवं विवरणकारमते अवान्तरतात्पर्यविषयत्वस्य सविशेषेऽङ्गीकारेऽपि महातात्पर्यविषयतायाः निर्विशेष एव स्वीका- रेण 'अतो यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तं वक्तव्यम्' इति भास्करभाष्योक्तार्थदूषणपरविवरणोक्तार्थोऽपि सुदृढ एव । अतः (लघुपूर्वपक्षे) 'बाढमित्यादिना' मतत्रयसाधारण्येन कृतस्याक्षेपस्य 'सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेव अविद्यानिवृत्तेः' इति भास्करभाष्योक्तसमाधानदूषणपर विवरणाभिप्रेतार्थ एव एतावता सिद्धान्तित इति स्वरूपपर- वाक्यापरिशीलनेन लघुसिद्धान्ते वृत्तिकारमतस्थापनप्रयासः सर्वोऽपि विफलएव ॥

अथ महापूर्वपक्षः

**श्रीभाष्यम्**

**यदप्याहुः अशेष विशेष प्रत्यनीकं चिन्मात्रं ब्रह्मैव परमार्थः**

अथ महापूर्वपक्षः

**श्रुतप्रकाशिका**

**साधन**चतुष्टयस्य पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः। स पूर्वं ब्रह्मस्वरूपाच्छादिकेत्यादिना प्रतिज्ञातः। तदुपपादनदूषणयोर्बहुग्रन्थकार्यत्वात्तदुभयं पूर्वं न कृतम्। अथ तदुपपादनायोपक्रमते। पूर्वमुपायोपदेशपरवाक्य पर्यालोचनया वस्तुसामर्थ्यव्यतिरिक्तहेतवउपन्यस्ता निरस्ताश्च। विविदिसितं ज्ञानीमितिह्युक्तम्। वस्तुसामर्थ्यं तु सिद्धपरवाक्यसिद्धम्। वस्तुस्वरूपोपदेशपरैरिति हि वक्ष्यते। अतस्स्वरूप परवाक्य पर्यालोचनामुखेन तदुपपादयितुमारभते। **यदप्याहुरिति**। * अपिनोपपादयिष्यमाणस्यार्थस्य प्राधान्यं सूच्यते। आहुरितिग्रन्थकारबहुत्वम्। अनेनास्य ग्रन्थस्य तत्तत्प्रबन्धोक्तसकलार्थगर्भितत्वं च दर्शितम्। सर्वेवेदान्ता आरभ्यन्त इति यदप्याहुस्तदनादरणीयमित्युपर्यन्वयः। प्रथमं ब्रह्मैकमेव सत्यमिति प्रतिजानीते। **अशेषेति**। अशेषविशेषाः *वक्ष्यमाणज्ञात्रादयः *विजातीयसजातीयस्वगतावा स्वगतेष्वप्य *न्वयिनो व्यावृत्तिरूपाश्च विशेषा अशेषशब्देन विवक्षिताः तत्प्रत्यनीकं *स्वज्ञानेनानिवर्तकं। शुक्तिरिव रजतस्येत्यर्थः निर्विशेषत्वे *शून्यतास्यादित्यत्राह। **चिन्मात्रमिति**। चिच्छब्देन तुच्छत्वव्यावृत्तिः स्वयंप्रकाशत्वं हि चित्त्वम्। मात्रचा ज्ञेयत्वव्यावृत्तिः * यद्वा प्रत्यनीकत्वरूपधर्मोऽपि मात्रचा व्यावर्त्यते। *यद्वा मात्रचा वस्तुतः

**गूढार्थसङ्ग्रहः**

यद्यपि विवर्तवादिमते बहवः सन्ति पक्षभेदाः ; दृष्टिसृष्टिवादः, स एव एकजीववादाख्यो मुख्यवेदान्तसिद्धान्तः (बृ उ भा, सं शा) तत्रापि पक्षद्वयम्। एवं बहुजीववादः, सृष्टिदृष्टिवादः। जीवाज्ञानवादः। (ब्र सि, भाम) ब्रह्माज्ञानवादः। अविद्याशबलब्रह्मणः ईश्वरस्य उपादानत्वम्। (विवरण.वार्तिक) अविद्यायाः द्वारकारणत्वं, ब्रह्मणः उपादानत्वं(सं.शा) इत्यादिवादाः। जीवेश्वरविभागविषये अवच्छेदवादः। (वाचस्पतिः) प्रतिबिम्बवादः प्रतिबिम्बवादेऽपि प्रतिबिम्बस्य स्वरूपेणासत्यत्वमिति आभासवादः। (बृ उ.भा, सुरेश्वर) प्रतिबिम्बस्य बिम्बेन स्वरूपतः ऐक्यम् सत्यत्वंच प्रतिबिम्बत्वंकाल्पितमिति वादः। (पं–पा–वि) अविद्यायां बिम्बभूत ईश्वरः प्रतिबिम्बभूतो जीवः (सं—शा) इति। अविद्याप्रतिबिम्ब ईश्वरः अन्तःकरणप्रतिबिम्बः जीवः (विवरणम्) इत्यादिवादाः। महावाक्यजन्यज्ञानं संसर्गीविषयकं, मानसं तु संसर्गाविषयकम्। (ब्र––सि) तदेव मुक्तिहेतुः। महावाक्यजन्यज्ञानसामान्यं संसर्गाविषयकम्। तद्धि प्रत्यक्षं (विवरणं) परोक्षम् (भाम)इत्यादिवादाः। अविद्यानिवृत्तिरात्मस्वरूपैवेति (इष्टसिद्धिः)। अविद्यानिवृत्तिः पञ्चमप्रकारेति (न्यायमकरन्दः वेदान्तकल्पलतिकाच)। अविद्यानिवृत्तिः चरमवृत्त्युपलक्षितात्मस्वरूपैवेति। (तत्त्वप्रदीप) अविद्यानिवृत्तिः चरमवृत्तिरूपैव, (ब्र.सि-अ.सि.बृ.वा) तत्र च महावाक्योत्थज्ञानस्य हेतुत्वमपि नास्ति (ल––घु) इत्यादिवादाः। तत्र च परस्परदूषणप्रकाराः अपि वर्तन्ते। तथाऽपि 'यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा सैव प्रक्रियेह स्यात्साध्वी साचानवस्थिता।' (बृ वार्ति १.अ.४ ब्रा.४०२ श्लो.) इति सुरेश्वराचार्यैः न दोष इति स्थापनात्, 'सकलविशेषप्रत्यनीकंचिन्मात्रं ब्रह्म' इति भास्करभाष्योक्तसमाधानदूषणपरविवरणवाक्याभिप्रेतार्थस्य सर्वसम्मतत्वाचेत्यभिप्रेत्य तमर्थमेव महापूर्वपक्षे विस्तरेण प्रतिपादयति **यदप्याहुरित्यादिना** ॥

## श्रीभाष्यम्

**तदतिरेकि नानाविधज्ञातृ ज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'** (छा.६.प्र.२.ख.१.वा)

## श्रुतप्रकाशिका

समस्तविशेषविरहोविवक्षितः। ब्रह्मैवेति *एवकारेण सगुणब्रह्मव्यावृत्तिः। परमार्थः तत्त्वावेदकप्रमाण विषयः। सगुणावाक्यानां न तत्त्वपरत्वं फलविशेषार्थमुपासनेऽन्यपरत्वादितिभावः। कथं ब्रह्मणएवसत्यत्वम्। अन्यदपि हि प्रतीयतइति शङ्कायां ब्रह्मण एव परमार्थत्व सिद्धये तद्व्यतिरिक्तस्य तज्ज्ञाननिवर्त्यत्वाय च विश्वस्य मिथ्यात्वं प्रतिजानीते॥

**तदिति**। '**अथात आदेशोनेतिनेती**' त्यादौ '**प्रकृतैतावत्त्व**' मिति सूत्रविषये कृत्स्नस्य मिथ्यात्वेन ब्रह्मणोपि मिथ्यात्वं परैः पूर्वपक्षीकृत्य निरस्तमिति तदभिप्रायेणोक्तम्। **तदतिरेकीति**। '**नेहनानाऽस्तीत्या**' दिनि-षेधवाक्यस्य ब्रह्मव्यतिरेकेऽपि *निषेध्यनानात्वं सिध्यतीति दर्शितम्। **नानाविधेति**। पूर्वमशेषविशेषशब्दोक्तवि-शेषविवरणार्थं नेहनानास्तीत्यादिवाक्यगत नानाशब्दविवरणार्थंच नानाविधशब्दवाच्यभेदोविवृतः। * **ज्ञातृज्ञेयेति**। तत्कृतज्ञानभेदः ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः। *अनेन वृत्तिस्फुरितचैतन्यभेदस्य स्वरूपप्रयुक्तताव्यावृत्तिः भेदश-ब्देनैककोटिष्ववान्तरभेदाविवक्षिताः आदिशब्देन निरसनीयदुःखरूपजन्मजरामरणान्युच्यन्ते। **सर्वमिति**। वक्ष्य-माणश्रुतिगतसर्वशब्दस्यायमर्थ इतिभावः। **तस्मिन्निति**। निरधिष्ठानभ्रमपक्षव्युदासः। एवकारेणाधिष्ठानबहुत्वनिषेधः। तथासतिहि प्रपञ्चस्य तज्ज्ञाननिवर्त्यत्वासिद्धिः। यद्वा तस्मिन्नित्येकवचनेनाधिष्ठानैकत्वसिद्धिः। नानाध्यासा नाना धिष्ठानका दृष्टाः तत्कथमेकाधिष्ठानकत्वमिति विरोधं, स्वयंप्रकाशवस्तुनोधिष्ठानत्व *विरोधं, च स्फोरयत्येवकारः। * **मिथ्याभूतम्**। मिथ्याभाववत् वक्ष्यमाणमिथ्यात्वलक्षणवदित्यर्थः॥

**ब्रह्मण** एव सत्यत्वे व्यतिरिक्तस्य मिथ्यात्वेच किं प्रमाणामित्यत्राह। **सदेवेति**। *सदेवेति विजातीयभेदो-व्यावर्त्यते एकमेवेति सजातीयभेदः। अद्वितीयमिति स्वगत भावाभावरूपभेदः। षड्विधतात्पर्यलिङ्गोपेत सद्विद्या-

## गूढार्थसंग्रहः

अत्र विवक्षिताः सर्वेऽपि मिथ्यात्वहेतवः प्राच्यनव्याद्वैतग्रन्थेषु निरूपिताः। एतेच यथावसरं विवेचयिष्यन्ते पराविद्याविषयः परब्रह्म निर्विशेषं इति 'श्रवणं मननं—षड्भिर्लिङ्गैस्सदद्वये' इत्यादौ प्रतिपाद्यमर्थं प्रथमं निरूपयन् तत्परां श्रुतिमुपादत्ते। **सदेवेति**। अस्याश्श्रुतेः उपनिषद्भाष्ये (शं.उ.प) अन्यया अर्थवर्णनेऽपि सूत्रभाष्ये तद्दूषणपूर्वकं स्वाभिप्रे-तार्थः परैस्साधितइति पूर्वमेव (५१.पुटे) निरूपितम्। इयमेवश्रुतिः अवधारणत्रयगर्भत्वेन द्वैतनिषेधे प्रधानभूतेति मण्ड नादि सर्वसम्मतमिति तत्तद्ग्रन्थानवलोकयितॄणां स्फुटंप्रतीयते। अत्र अद्वितीयपदेनैव द्वितीयसामान्यनिषेधः प्रतिपाद्यते। एकमेवेति तदर्थतात्पर्यग्राहकमिति मधुसूदनसरस्वत्यः वदन्ति। (अ.सि) इयंच श्रुतिः सकलद्वैतनिषेधपरेति प्रतीयते। निषेधवाक्य-विषये पक्षद्वयमुक्तं सर्वज्ञात्ममुनिना—

'वाक्यं मुक्तिफलां धियं जनयति स्पष्टं विधिव्यापृतं साक्षादेव तव स्वरूपकथनान्नैवं निषेधात्मकम्।
अध्यारोपितरूपभेदविलयव्यापारनिष्ठं तव स्वाकारग्रहणक्षमां नहि धियं कर्तुं समर्थं यतः॥ (सं.शा १.२५३)
अस्थूलादिवचो निषेधकतया भेदस्य संशोधनात् वाक्यार्थान्वयसिद्धये तु घटते वाच्यार्थलक्ष्यार्थयोः।
एवं तत्त्वमसीतिवाक्यगतयोः तत्त्वंपदोक्तार्थयोः संशुद्ध्यैव तु नेतिनेति वचनं मोक्षाय साक्षान्न तु॥ (२५६)

## श्रीभाष्यम्

**'अथ परा यया तदक्षरमधिगम्यते' यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्तिधीराः** (मुं.१मु.१.ख.६.वा)

## श्रुतप्रकाशिका

गतत्वादिदं वाक्यं प्रथममुपात्तम्। अथैवकारफलितनिषेधकण्ठोक्तिमत्परविद्यावाक्यमुपादत्ते। **अथेति**। इदंच कारणत्वशङ्कितदोषव्युदासोपक्रमककारणवाक्यम्। भूतयोनिमित्युक्त्वाऽनन्तरं *तस्यैव प्रपञ्चनात्। अद्रेश्यमग्राह्यं प्रत्यक्षागोचरोऽनुमानागोचरः। अथवा चक्षुरगोचर इन्द्रियान्तरागोचरः। अगोत्रम्, अनामकम्, अवर्णम्, अनैल्यादिकम्। अचक्षुश्श्रोत्रमपाणिपादं ज्ञानकर्मेन्द्रियरहितम् नित्यं विभुम् कालदेशाभ्यामपरिच्छिन्नम् सर्वगतम् सर्वेण जगताऽधिष्ठानतयागतम् आश्रितम् वस्तुपरिच्छेदरहितमित्यर्थः। सुसूक्ष्मम् अदृश्यत्वं नतुच्छत्वातिदूरत्वादिना किंतु सूक्ष्मत्वादित्यभिप्रायः। वाक्यभेदादनेकयत्तच्छब्दान्वयोपपत्तिः॥

## गूढार्थसंग्रहः

अन्येपुन र्विधिवचोजनितात्मबुद्धिसामर्थ्यसिद्ध मनुवक्ति निषेधवाक्यम्।
द्वैतोपमर्दमिति शासति शिष्यवर्गं तच्च प्रशस्त मनवद्य मभीष्टमेव॥' (२५७) इति

तत्र अद्वैतसिद्धेः द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम्। (अ.सि) इत्यादिना उपक्रमेऽनुमानेन द्वैतमिथ्यात्वं प्रसाध्य 'एतदनुमानं, 'एकमेवाद्वितीयम्' इति श्रुतिरप्यनुगृह्णाति' (अ सि) इति मिथ्यात्वश्रुत्युपपत्तौ मधुसूदनसरस्वतीभिरुक्तम्। 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुत्या जायमाने अद्वैतत्वोपलक्षितब्रह्मनिर्विकल्पकानिश्चये ब्रह्मणि द्वैताभावविशिष्टबुद्धेः द्वारत्वात् तस्याश्च निषेधत्वेन प्राप्तिपूर्वकत्वेन द्वैतवति ब्रह्मणि द्वैतवत्वकालावच्छेदेन द्वैताभाववत्वविषयकत्वात्। 'सदेवसोम्येदमग्रआसीत्' इति पूर्ववाक्ये इदंशब्दार्थद्वैतसामान्यतादात्म्यस्य लब्धत्वेन तस्य द्वैताभावांशे उद्देश्यतावच्छेदकत्वेन तत्र तत्कालावच्छेद्यत्वभानस्य व्युत्पत्तिसिद्धत्वात्। इदमात्मकसतः अग्रकालसत्वस्य द्वैताभाववत्वस्य च द्वयोर्विधाने वाक्यभेदस्येष्टत्वात्। द्वैतवति द्वैताभावबोधस्य आहार्यत्वेन शाब्दत्वासम्भवेऽपि इदंपदस्य दृश्यत्वरूपेण द्वितीयपदस्यचात्मभिन्नत्वरूपेण बोधकत्वेनाहार्यत्वाभावात्। कालान्तरावच्छेदेन द्वैताभाववत्वविषयकधियश्च 'तरतिशोकमात्मवित्' 'विद्वान्नामरूपाद्विमुक्तः' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुतिभिः ज्ञाननाश्यत्वानुमापकदृश्यत्वलिङ्गादिरूपमानान्तरेण च सिद्धत्वेन तज्जनने वाक्यवैयर्थ्यापत्तेः एककालावच्छिन्नप्रतियोग्यभावयोः एकाधिकरणवृत्तित्वधीरूपः मिथ्यात्वनिश्चयः इति ब्रह्मानन्दसरस्वतीभिरप्युक्तम्॥

**अथ परा ययेत्यादि**। अधिगम्यते– प्राप्यते। अधिपूर्वकगमेः प्रायशः प्राप्त्यर्थत्वात्। न च परप्राप्तेः अवगमार्थस्य भेदोऽस्ति। अविद्याया अपाय एव हि परप्राप्तिः इति। यथा विधिविषये वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयार्थोऽस्ति न तथेह परविद्याविषयो वाक्यार्थज्ञानसमकालएवतु पर्यवसितोभवति। तस्मादिह परां नित्यां सविशेषणेनाक्षरेण विशिनष्टि यत्तदद्रेश्यमित्यादिना। इति परैः इयं श्रुतिर्विवृता [शं.उ.भा] सूत्रभाष्ये परापरविद्ययोः परापरब्रह्मविषयकत्वं विद्याऽविद्याविषयविभक्तत्वं अविद्यावस्थायामेव अपरब्रह्मणः उपास्यत्वं तद्विषयत्वमेवगतिश्रुतेः उपासनानुरोधेन तदुपासनस्य तरतमभावापन्नं फलं इत्यादिकं तत्रतत्र (१.१.१२, १.१.११, ४.३.१४) निरूपितम्। परविद्यायाः निर्गुणविद्यात्वंलघुचन्द्रिकायां अखण्डार्थोपपत्त्यादौ साधितम्॥

## श्रीभाष्यम्

**' सत्यं ज्ञानमनन्तंब्रह्म '** (तै.आन.१.अनु.१.वा) **निष्कळं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् '** (श्वे ६.अ.१९.वां) **' यस्यामतं तस्यमतं मतं यस्य न वेद सः अविज्ञातं विजानतां विज्ञातमविजानतां'**

## श्रुतप्रकाशिका

अथ शोधकवाक्यमुपादत्ते । **सत्यमिति** । अनृतजडपरिच्छिन्नव्यावृत्तनिर्विशेषवस्तुपरमिदं वाक्यम् कारण-वाक्यैकार्थ्याच्छोधकवाक्यान्तरैकार्थ्यात्सामानाधिकरण्यान्यथानुपपत्त्या, चेतिवक्ष्यते । निष्कळम् कळा अवयवाः निरवयवमित्यर्थः तत्र लिङ्गं निष्क्रियत्वम् । शान्तम् ऊर्मिषट्करहितम् अशनायापिपासे शोकमोहौ जरामृत्यूचोर्मयः निरवद्यं निरञ्जनम् कर्मसम्बन्धतत्फलरहितम् । अनेन सत्यज्ञानादिवाक्यगर्भितव्यावृत्तिस्स्पष्टीकृता । अथ चिन्मात्र-शब्दाभिप्रेतां ज्ञेयत्वव्यावृत्तिमाह । * **यस्येति** । अमतमविज्ञातमितिं श्रवणमननादिरूपज्ञानाविषयत्वोक्तिः अथ * ज्ञातृत्व-

## गूढार्थसङ्ग्रहः

**सत्यंज्ञानमित्यादि** । एतच्च निर्विशेषब्रह्मलक्षणपरं वाक्यम् । अत्र प्रथमान्ताएव सर्वे शब्दाः । अखण्डार्थसामा-नाधिकरण्यं द्विविधं पदार्थनिष्ठं वाक्यार्थनिष्ठंचेति । इदंच पदार्थनिष्ठसामनाधिकरण्यवाक्यम् । ' तत्त्वमसि ' इत्यादौ तच्छब्दार्थज्ञानसम्पादनं एतद्वाक्येनैव अत्र अनन्तशब्दब्रह्मशब्दाभ्यां ब्रह्मणि गुणनिषेधः सर्वधर्मनिषेधश्चेति मधुसूदन-सरस्तीभिरुक्तम् । एतदुत्तरं ' तस्माद्वा एतस्मात् ' इत्यादिवाक्यैः सृष्टिप्रतिपादनेन निर्विशेषासिद्धिशङ्कानिरासाय ' **निष्कलं निष्क्रयम्** 'इति श्रुतेरुपादानम् । एतच्छ्रुतिविरोधेन सृष्ट्यादिक्रियायाः अतात्विकत्वं विवरणेऽभिहितम् । निर्गुण-श्रुतिसमनन्तरं बहूनां गुणानां प्रतिपादनेन निर्गुणश्रुतेरान्यपर्यं वाच्य मित्याक्षेपः उपसंहारे एतच्छ्रुतिसत्वेन एतदनन्तरं गुणा-नामकथनेन च एतच्छ्रुत्यवष्टम्भेनैव निराकृतो लघुचान्द्रिकायाम् । एतेन ' सत्यं ज्ञानं ' इत्यतः पदार्थप्रतिपत्तिर्निर्व्यूढा ॥ ' सदेव सोम्येदम् ' इति श्रुतौ ब्रह्मणः सद्रूपता, ' सत्यं ज्ञानं ' इति श्रुतौ चिद्रूपता च प्रतिपादितेति बोध्यम् ॥

' ब्रह्मविदाप्नोति परम् ' इति पूर्ववाक्ये वेदनकर्मत्वस्य ब्रह्मण्याभिधानेन ' सत्यं ज्ञानं ' इत्यत्र ज्ञानस्वरूपत्वमात्र-त्वप्रातिपत्तिः कथमिति शङ्कायां ' प्रत्यगात्मत्वेन अविषयतया प्रतिपादयत् अविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति। तथाच शास्त्रम् ' इत्यादौ (१.१.४) परैरुपात्तं श्रुतिद्वयमुपादत्ते– **' यस्यामतमित्यादि '**

एतच्छ्रुतिद्वयोपादानानन्तरं अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणात् न मोक्षस्यानित्य-त्वदोषः इतिभाष्यम् (शं) शुद्धंब्रह्म वेदान्तजन्यवृत्तेरप्यविषयः किंतु उपहितमवे । शुद्धस्य स्वप्रकाशतयैव स्फुरणम् । उपहितविषयकवृत्त्याच्च अविद्यानिवृत्तिः इति वाचस्पतिमतं अत्र (भामती) सर्वमेवहिवाक्यं नेदंतया वस्तुभेदंबोधयितुमर्हति नहीक्षुक्षीरगुडादीनां मधुररसभेदः शक्य आख्यातुम् । एवमन्यत्रापि सर्वत्र द्रष्टव्यम् । तेन प्रमाणान्तरासिद्धेलौकिकएवार्थे यदा गतिरीदृशीशब्दस्य तदा कैव कथा प्रत्यगात्मन्यलौकिके । अदूरविप्रकर्षेणतु कथंचित्प्रतिपादनमिहापिसमानम् । त्वंपदा-र्थोहि प्रमाता प्रमाणाधीनया प्रमित्या प्रमेयं घटादिव्याप्नोतीत्यविद्याविलसितम् । तदस्या विषयीभूतोदासीनतत्पदार्थप्रत्यगा-त्मसामानाधिकरण्येनं प्रमातृत्वाभावात् तन्निवृत्तौ प्रमाणादयस्तिस्रो विधाः निवर्तन्ते । नहि पक्तुरवस्तुत्वे पाक्यपाचकपचनानि वस्तुसन्ति भवितुमर्हन्तीति । तथाहि ' विगलितपराग्वृत्यर्थत्वं पदस्य तदस्तदा त्वमितिहि पदेनैकार्थत्वे त्वमित्यपि यत्पदम्। तदपिन तदागत्वैकार्थ्यं विशुद्धचिदात्मतां त्यजति सकलान्कर्तृत्वादीन् पदार्थमलान् निजान् ॥ ' इत्यान्तरश्लोकः इति ॥

## श्रीभाष्यम्

(क.२.खं.३.वा) '**न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारंमन्वीथाः**' (बृ.५.अ४.ब्रा.२.वा) '**आनन्दोब्रह्म**'

## श्रुतप्रकाशिका

निषेधपरं वाक्यमाह। **नदृष्टेरिति**। अत्रापि पूर्वोक्तज्ञानावस्थाभेदो विवक्षितः। अस्य पुरुषार्थत्वायासुखाद्व्यावृत्तिरुच्यते। **आनन्दोब्रह्मेति**। आनन्दशब्दोऽसुखाद्व्यावृत्तिमात्रपरः। अतएवब्रह्मानन्दत्यिनुक्तिः॥

## गूढार्थसंग्रहः

अदूरविप्रकर्षेणेति। साक्षादनभिधानादस्ति विप्रकर्षः। स च अदूरे वस्तुगतधर्मपरामर्शद्वारा वस्तुविशेषस्य लक्षणया प्रतिपादनादिति, प्रत्यगात्मत्वेनाविषयतया प्रतिपादयति। भाष्यं व्याचक्षाणः वेदान्तानामदूरविप्रकर्षेण वस्तुबोधकत्वमुपपादयति– त्वंपदार्थोहीति–व्याप्नोतीति। यत् तदविद्याविलसितमित्यर्थः। तत्–तत्र सतीत्यर्थः। अविषयीभूतोदासीनतत्पदार्थस्य प्रत्यगात्मनश्च 'तत्त्वमसि' इति सामानाधिकरण्येन अस्य संसारिणः प्रमातृत्वाभावात् तन्निवृत्तौ प्रमित्या प्रमेयं व्याप्नोतीत्येवम्भावस्य निवृत्तौ त्रयः प्रकाराः निवर्तन्त इत्यर्थः॥ विगलितेति। विगलिता पराक्त्वेन वृत्तिः वर्तनं यस्य सः विगलितपराग्वृत्तिः। तादृशः प्रत्यक्त्वमापन्नोऽर्थो यस्य तद्विगलितपराग्वृत्त्यर्थः तस्य भावः तत्त्वमेतत्। तदः– तत्पदस्य तदा– काले भवति कदेत्यत आह– त्वमिति हीति। तदा– तत्पदेन। ऐकार्थ्यस्यैव व्याख्या विशुद्धेति। आन्तरश्लोकः– मध्यश्लोकः इति 'शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदयते, स्वस्या अप्युपाधित्वाविशेषात्। एवंच नानुपहितस्य विषयता वृत्त्युपरागोऽत्र सत्तयोपयुज्यते, न भास्यतया विषयकोटिप्रवेशेनेति इति च कल्पतरुः॥

अत्र विरवणं 'अविज्ञातं विजानताम्' 'यतोवाचोनिवर्तन्ते' इत्यादि। ननु 'मनसैवानुद्रष्टव्यं' 'तंत्वौपनिषदं पुरुषं' इति ज्ञानक्रियाकर्मत्वमपि श्रूयते। नैषदोषः। वेदान्तजनितापरोक्षज्ञानस्य आकारसमर्पकतया व्यावर्तकत्वं शास्त्रप्रमेयत्वंनाम ज्ञानजन्यप्रकाशातिशयशून्यत्वं अविषयतानामेति व्यवस्थोपपत्तेः इति। अत्र तत्त्वदीपनं 'विरुद्धार्थत्वेनोभयोः प्रामाण्यानुपपत्तेः अन्यतरपरित्यागायोगाच्च व्यवस्था स्वीकार्येत्याह नैषदोष इति' इति। अत्र विवरणप्रमेसंग्रहश्च 'अवेद्यत्वेऽप्यखण्डैकरसब्रह्मान्तःकरणवृत्त्या चैतन्याभिव्यक्तियुक्तया शास्त्रजन्यया विद्यया अविद्यातत्कार्यनिवृत्तेः ब्रह्मणः शास्त्रवेद्यत्वमुपचर्यते। एतांवृत्तिंप्रति सन्निधिमात्रेण अखण्डैकरसत्वलक्षणस्वाकारसमर्पकतया स्वस्वाकारसमर्पकघटादिवत् वृत्तिव्याप्यत्वलक्षणं विषयत्वं ब्रह्मणोऽभिप्रेत्य 'मनसैवानुद्रष्टव्यम्' 'एषोणुरात्मावेदितव्यः' 'तंत्वौपनिषदंपुरुषं' इत्याद्याः श्रुतयःप्रवृत्ताः। जडेषु घटादिष्विव प्रमाणकृतस्फुरणातिशयस्य स्वप्रकाशे ब्रह्मण्यसम्भवात् फलव्याप्यत्वाभावलक्षणमविषयत्वं च 'यतोवाचोनिवर्तन्ते' इत्याद्याः श्रुतयः प्रत्यपीपदन् इति। फलव्याप्यत्वं इत्यत्र फलंचिदेव (संवित्) वृत्तेर्विषयत्वमाकारः ज्ञानस्य तु तादात्म्यम्। इत्युक्तदिशा (ल.चं) वृत्तिव्याप्यत्वं वृत्तेराकाराख्यविषयत्वं। फलव्याप्यत्वं चिन्तादात्म्यरूपचिद्विषयत्वं। अत्यन्ताभेदे तादात्म्यानङ्गीकारात् शुद्धचिति फलव्याप्यत्वाभावः। इति बोध्यम्॥

**नदृष्टेर्द्रष्टारं पश्येरिति**। लौकिक्याः दृष्टेःकर्मभूतायाः द्रष्टारं स्वकीयया नित्ययादृष्ट्या व्याप्तारं नपश्येः इति (शं उ.भा) अत्रैव 'दृश्यया अनया नपश्येः' इति कल्पतरौ विशेषउक्तः। एवमेव रत्नप्रभाऽऽनन्दगिरिव्याख्यानयोरपि। निर्विशेषस्य सच्चिद्रूपस्य ब्रह्मण आनन्दरूपत्वं प्रतिपादयति **आनन्दो ब्रह्मेति**। एतावता अशेषविशेषप्रत्यनीकंचिन्मात्रं ब्रह्मेति उक्तार्थः श्रुत्या साधितः। तत्र चिच्छब्दः सच्चिदानन्दपर इति च दर्शितं भवति॥

## श्रीभाष्यम्

**'इदंसर्वं यदयमात्मा'** [बृ.४.अ.४.ब्रा.६·वा) **'नेहनानाऽस्तिकिंचन'**

## श्रुतप्रकाशिका

**इत्थं** ब्रह्मणो निर्विशेषचिन्मात्रत्वे श्रुतिवाक्यजातमुपन्यस्तम् । अथ व्यतिरिक्तस्यमिथ्यात्वे प्रमाणमुपन्यस्यते । तत्र प्रथमं मिथ्याभूतस्य जगतो ब्रह्मण्यधिष्ठानेऽध्यस्तत्वं दर्शयति इदं सर्वं यदयमात्मेति * सामानाधिकरण्येन अधिष्ठानेनाध्यस्तसामानाधिकरण्यं हि बाधार्थं दृष्टम् । यथा रज्जुस्सर्प इति । पूर्वं सर्वं तस्मिन्नेवेति प्रतिज्ञातं ब्रह्मणस्सर्वाध्यासाधिष्ठानत्वं चानेनवाक्येन दर्शितम् । व्यतिरिक्तनिषेधकण्ठोक्तिं दर्शयति । **नेहनानाऽस्तिकिंचनेति** । नाना-

## गूढार्थसङ्ग्रहः

अथ तस्यैव पारमार्थ्यं अन्यस्यापारमार्थ्यं च श्रुतिभिस्साधयति– **इदं सर्वं यदयमात्मेत्यादिना** । 'सदेव सोम्य इदमग्र आसीत्' इत्यस्याः मिथ्यात्वबोधकत्वेऽपि अशेषविशेषप्रत्यनीकचिन्मात्रे प्रमाणतया तस्याश्श्रुतेरुपादानेन तस्यैव परविद्याविषयत्वमिति स्थापनाभिप्रायेण मिथ्यात्वसाधने अभिप्रायस्य तत्राभावात् एतच्छ्रुतिमध्ये तस्याः श्रुतेरनुपादानम् । 'इदं सर्वं' इत्यादिश्रुतेर्मिथ्यात्वबोधकत्वेऽपि निर्विशेषस्य आनन्दत्वसाधनाभिप्रायेण 'नेह नानाऽस्ति' इत्यादिवत् स्फुटतया मिथ्यात्वाप्रतिपादकतया च 'आनन्दो ब्रह्म' इत्येतदनन्तरं 'इदं सर्वं' इति श्रुतेरुपादानम् । अत्र 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इति आत्मान्यवेदनानिन्दोक्त्यनन्तरं 'इदं सर्वं' इत्यादिवाक्यम् । तत्पूर्ववाक्ये 'आत्मनो वाऽरे दर्शनेन–इत्यादि सर्वं विदितम्' इत्युक्तम् । अत्र भाष्यम् ; (शं.उ.भा.) 'ननु कथमन्यस्मिन् विदिते अन्यद्विदितं भवति । नैष दोषः । नह्यात्मव्यतिरिक्ततया अन्यत् किञ्चिदस्ति । यद्यस्ति न तद्विदितं स्यात् । नत्वन्यदस्ति । आत्मैव तु सर्वम् । आमव्यतिरेकेणाग्रहणात् आत्मैव सर्वमिति च' इति ॥ 'इदं सर्वं' इत्यादिश्रुतिरपि मिथ्यात्वे मानम् । बाधायां सामानाधिकरण्येन सर्वप्रपञ्चाभावोपलक्षितात्मस्वरूपबोधकतयाऽवान्तरतात्पर्येण आत्मनि सर्वाभावबोधनात् । ' इति गुरुचन्द्रिका । (एकमेवाद्वितीयमिति श्रुत्यर्थविचारे) 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यारभ्य 'आत्मा वाऽरे द्रष्टव्यः' इति श्रुत्यनन्तरं 'इदं सर्वं' इत्यादिनिर्देशपर्यालोचनया आत्मनः प्रियत्वं आनन्दत्वं सर्वाभावोपलक्षितचित्वेनैव इति बोधितम् । एतेन 'आनन्दोब्रह्म' इत्यत्र निर्विशेषस्यैव आनन्दत्वं विवक्षितमितिसिद्धम् ॥

अथ 'नेहनानाऽस्ति मृत्योः सः वाचारम्भणमित्यपि । द्वैततदृष्ट्यभावोक्तेः मायाऽनिर्वचनीयता ॥' (इ.सि.१.अ. ३५) 'यत्र हीत्याद्यविद्यायां भेददृष्टिवचोजगौ । यत्रत्वस्येति विद्यायां तदयुक्तिंजगावपि ॥ '(१.३७) इतीष्टसिद्धिं मनुसृत्यश्रुतित्रयमुपादत्ते **नेहनानाऽस्तीत्यादि** । एतछ्रुत्यर्थः ब्रह्मसिद्धावप्युक्तः । 'तथाव्यक्तो नानात्वनिषेधः–नेहनानाऽस्तिकिंचन' इति, नानात्वदर्शननिन्दाच 'मृत्योस्स मृत्युमाप्नोति' इति । भेददर्शनस्यचाभावः भेददृष्टिरिवभ्रमात्–य इह नानेव पश्यति इति इवशब्देन प्रकाशितोनोपचरित एकत्वेऽवकल्पते । काममुपचारादस्त्वेकत्वं नतु भाविकस्य नानात्वस्य निवृत्तिः । साप्युपचारेणैवोच्यतइति चेन्न प्रयोजनाभावात् । सति निमित्ते प्रयोजनेचोपचारः । नच नानात्वनिवृत्त्युपचारे प्रयोजनं पश्यामः । विपर्ययाच्च, अभ्युदयाय निश्रेयसायवा नानात्वनिवृत्तिरुपचर्येत साहि साध्यसाधनादिविभागं निवर्तयन्ती सर्वत्रचात्माभिमानमाविर्भावयन्ती तद्विरोधिनीस्यात् । तथाहि, सर्वतो निवृत्तस्य निश्रेयसमित्यपि संवादः इति(ब्र.सि.ब्र.का)इष्टसिद्धौ च ननु'नेहनानाऽस्ति' इति कारणे ब्रह्मणि नानात्वंनिषिध्यते, नतु नानाभूतं कार्यमेव, तस्य प्रत्यक्षादेः सृष्टिश्रुतेश्चसिद्धत्वात्

## गूढार्थसंग्रहः

नानेवपश्यति इत्यस्यापि इत्थमेवार्थः। कथं चोपमार्थः इवशब्दो युज्येत ?। यदि नानावस्तु किंचित् तद्दर्शनंच नास्त्येवेति चेत्। उच्यते—न तावत् नानाशब्दो नानात्वं वदेत्। वदेच्चेत् नानात्वमिति स्य शब्दोक्तिः त्वदीया व्यर्थास्यात्। अतो 'नेहनाना' इतिकारणेचेत् नानाभूतंकार्यं निषिध्यते तन्नक्वाचित्स्यात्। इति 'नानेवपश्यति' इत्यप्येतेनैव व्याख्यातं नानावस्तुनः तद्दर्शनस्यच क्वचिदप्यभावादुक्तेन न्यायेन अत एवोपमार्थत्वासम्भवात् इवशब्देनापि रूप्यादिदर्शनस्येव नानावस्तुदर्शनस्याभासता अज्ञानमात्रता उच्यते इतिच। भाष्येऽपि (शं.उ.बृ) ब्रह्मणि न इहनानास्तिकिंचन नच किंचिदपि। असति नानात्वेनान्यत्वमध्यारोपयत्यविद्यया 'यइहनानेवपश्यति'। अविद्याऽध्यारोपणव्यतिरेकेण नास्ति परमार्थतो व्यतिरेकः इत्यर्थः इति ॥

नच निषेधस्य निषेधे प्रतियोगिसत्वापत्तिरितिवाच्यम्। तत्रहि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्वं व्यवस्थाप्यते। न निषेधमात्रं निषिध्यते। यथा रजते नेदं रजतमिति ज्ञानानन्तरं इदं न अरजतमिति ज्ञानेन रजतं व्यवस्थाप्यते। यत्र प्रतियोगिनिषेधयोरुभयोरपि निषेधः तत्र न प्रतियोगिसत्वम्, यथा ध्वंससमुदये प्रागभावप्रतियोगिनोरुभयोर्निषेधः। एवं च प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य निषेधस्य च बाधनात् न निषेधस्य बाध्यत्वेऽपि प्रपञ्चस्य तात्विकत्वम्; उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेः तुल्यत्वात्। नचातात्विकनिषेधबोधकत्वे श्रुतेरप्रामाण्यापत्तिः, ब्रह्मभिन्नं प्रपञ्चनिषेधादिकं अतात्विकमिति अतात्विकत्वेन बोधयन्त्याश्श्रुतेरप्रामाण्यासम्भवात्।' इति मधुसूदनसरस्वतीभिः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वनिरूपणे स्वाप्नार्थस्य रजतस्य स्वाप्नतन्निषेधस्य च अतात्विकत्ववत् प्रपञ्चतन्निषेधयोरुभयोरप्यतात्विकत्वं अस्यां श्रुतौ विवक्षितमिति निरूपितम्। अत्र गुरुचान्द्रिका। 'निषेध्यतावच्छेदकस्य दृश्यत्वादेरिति। 'नेह नानास्ति' इति श्रुतौ दृश्यत्वं प्रतियोगितावच्छेदकम्। अभावादिसाधारणस्य नानात्वस्य वृत्तिविशेषविषयत्वात्। तच्च न पर्याप्त्यवच्छेदकम्, येन युगपत्सर्वदृश्यावभासत्वात् परेषां इष्टम्; परं तु स्वरूपसम्बन्धेन। नचैकाश्रयेऽपि नाना नास्तीति प्रयोगात् तत्र पर्याप्त्यैव तत्त्वेति वाच्यम्; वायौ नानारूपं नास्तीत्यादौ स्वरूपसम्बन्धेनापि तथा वक्तुं शक्यत्वात्। अन्यथा किञ्चनेत्यस्य वैयर्थ्यात्। केनापि सम्बन्धेन नानात्ववन्नास्तीत्यस्य ततो लाभात्। घटादेर्नाशप्रत्यक्षेण सर्वदृश्यानां युगपदसत्त्वमविवादमिति नेहेत्यादिवाक्यस्यैव वैयर्थ्यापाताच्च। यदिच 'नेह नानाऽस्ति किञ्चन' 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यस्य 'नात्र काचन भिदाऽस्ति अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नः मृत्योर्मृत्युमाप्नोति इत्यादिश्रुत्येकार्थतया नाना इत्यात्मभिन्नार्थकं किं च नेति च मूढधीविषयार्थकम्। तत्तयोरेकमेवावच्छेदकम्। अन्यप्रतियोग्यंशे विशेषणमात्रम्। तदुक्तिस्तु भिन्नस्यात्मनि प्रतीयमानस्य तादात्म्यस्यासम्भवात् विषयस्य विषयिणि स्वप्नवत्कल्पितत्वाच्च सुतरामभाव इति सूचनाय तत्राऽपि तदेव दृश्यत्वमिति ॥

यत्तु स्वाप्नार्थाभावस्य जाग्रत्यबाधानुभवात् न तस्य बाध्यत्वं स्वप्नदृष्टत्वेनैव बाध्यत्वे आत्मनोऽपि बाधापत्तिः एवं च निषेधस्य बाध्यत्वं प्रतियोगिसत्वाविरोधित्वे तन्त्रमेव। अथ च निषेधनिषेधोऽपि प्रपञ्चसत्वस्यापादकः तद्विना अनुपपन्नत्वात् प्रतियोगिनो निषेधस्यवा सत्वावश्यकत्वात्। अतएव रजतभेदासत्वे रजतसत्वं त्वयैवोदाहृतम्। प्रागभावप्रतियोगिनोस्तु निषेधः प्रतियोगिसत्वं विनाप्युपपद्यते स्वस्यैव तत्वादिति। तत्तुच्छम्। जाग्रत्यबाध्यत्वेनानुभूयमानोहि स्वाप्नार्थस्याभावः व्यावहारिकः इन्द्रियादिप्रमाणग्राह्यः। तदन्यस्तु स्वाप्नो भावः स्वाप्नवृत्तिविशेषाभिव्यक्तसाक्षिभास्योऽपि न प्रमाणग्राह्यः। किं च स्वप्ने रजतादौ रजतभेदादिकमनुभूयते। तत्र च व्यावहारिकत्वं न शङ्कास्पदम्। रजताद्यात्मकनिषेधेन

श्रीभाष्यम्

**'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति'** (बृ.६.अ.४.ब्रा.१९.वा) **'यत्र हि द्वैतमिवभवति तदितर इतरं पश्यति यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्तत्केन कं विजानीयात्'** [बृ.४-अ.४-ब्रा.१४.वा] **'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'** (छा.६.प्र.१.खं.४.वा]

श्रुतप्रकाशिका

पश्यन्नत्यन्ताज्ञइति दर्शयति । **मृत्योरिति** । अत्र मृत्युरविद्या । **'तमसोवाएषतमः प्रविशती'** तिवत् । इव शब्देन नानात्वस्यापरमार्थत्वं दर्शितम् । मिथ्याभूतं चेत्कदाचिन्निवृत्तिस्स्यादित्यत्राह । **यत्रहीति** । यत्र, यदा द्वैतमिव भवति इवशब्दः पूर्ववत् तत् तदा इतर इतर मितरेण पश्यतीत्यर्थः । केनेति वक्ष्यमाणत्वादितरेणेत्यध्याहारः । **यत्रत्विति** । यत्र यथा अस्यसर्वमात्मैवाभूत् । तत्, तदा, केन कं पश्येत् कइत्यध्याहार्यम् इतरइत्युक्तत्वात् । पश्येद्विजानीयादिति ज्ञानपर्वभेदोक्तिः इदं कृत्स्नमिथ्यात्वं दृष्टान्तेनोपपादयन्तीं श्रुतिमुदाहरति । **वाचेति** । विकारः घटादिसंस्थानं नामधेयं च वाचारम्भणं वागालम्बनं व्यावहारिकमित्यर्थः तस्मान्मृत्तिकेत्येव सत्यम् । ब्रह्मणि नानात्वं

गूढार्थसंग्रहः

रजताभावादिकं बाधितमनुभूयते । स च निषेधः नै व्यावहारिकः । तदुचितदेशकालकार्यग्राहकाद्यभावात् स्वप्नदृष्टत्वेन आत्मनः न बाध्यत्वापत्तिः ; दृष्टत्वाभावात् । 'अदृष्टो द्रष्टा' इति श्रुतेः ॥ इति

**यत्र हि द्वैतमिव भवतीत्यादि** । अत्र (शं.उ.४.अ) भाष्यम् 'यत्र यस्मिन् अविद्याकल्पिते कार्यकारणसङ्घातोपाधि जनिते विशेषात्मनि खिल्यभावे हि यस्मात् द्वैतमिव परमार्थतो अद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरं आत्मनः उपलक्ष्यते, परमार्थचन्द्रादेरिव उदकचन्द्रादिप्रतिबिम्ब इतरः । इयमविद्यावस्था । यत्र तु ब्रह्मविद्यया अविद्या नाशमुपगमिता तत्र आत्मव्यतिरेकेण अन्यस्याभावः । यत्र वै अस्य ब्रह्मविदः सर्वं नामरूपादि आत्मन्येव प्रविलापितम् आत्मैव संवृत्तम् । यत्रैवं आत्मैवाभूत् तत् तत्र इत्यादि इति । 'द्वीतं द्विधेतमेकंसत् तद्भावो द्वैत उच्यते । इति वार्तिकम् अत्र गुरुचन्द्रिका । 'यत्रत्वस्य सर्वमात्मैवाभूत्' इति (बृ.६.अ) श्रुतिरपि सर्वमिथ्यात्वे मानम् । अस्य प्रमातुः यत्र तत्वदर्शनसमकाले सर्वाभेदोपलक्षितात्मैवाभूत् । आत्मान्यन्नाभूदित्यर्थात् प्रमातृस्वरूपात्मान्यसम्बन्धिनि आत्मान्याभावसम्बन्धलाभात् । अथवा सर्वमात्मेति बाधायां सामानाधिकरण्यम्, तथाच सर्वाभावोपलक्षित आत्मा यत्राभूदित्यर्थः । सर्वपदस्य आत्मान्यसर्वपरत्वेन असङ्कोचलाभार्थमेवकारः । तथाच उक्तोपलक्षिताखण्डात्मार्थकस्य अवान्तरतात्पर्येणात्मानि तदन्याभावबोधनात् मिथ्यार्थपर्यवसायित्वं । 'यस्मिन् सर्वाणि भूतानि आत्मैनाभूद्विजानतः ।' (ई.उ.७) इत्यादावपि इयमेव रीतिः इति ॥

**वाचारम्भणं—सत्यमिति** । अत्रापि (शं.उ.) भाष्यम् । 'वाचारम्भणम्—वागारम्भणम्, वागालम्बनमित्येतत् कोऽसौ ? विकारो नामधेयम् ;—नामैव नामधेयम् । स्वार्थे धेयट्प्रत्ययः । वागालम्बनमात्र नामैव केवलम् ; न विकारो नाम वस्त्वस्ति परमार्थतः । मृत्तिकेत्येव— मृत्तिकैव सत्यं वस्तु' इति । अत्र गुरुचन्द्रिका । 'वाचारम्भणं विकारो नामधेयम्' इत्यादिश्रुतेरपि दृश्यं मिथ्या । ननु न वाचारम्भणशब्दः मिथ्यात्वे रूढः । नापि यौगिकः । वाचानिष्पाद्यकाद्यर्थोदेर्मिथ्यात्वासम्प्रतिपत्तेः । वागालम्बनमात्रमिति भाष्यव्याख्यानमयुक्तम् । वाचया आरम्भणं यत्रेति व्युत्पत्त्या वागालम्बनत्वलाभेऽपि, मात्रार्थालाभात् । नामधेयमित्यस्य नाममात्रार्थकत्वोक्त्या तेन पौनरुक्त्यं च । मृत्तिकेत्येव सत्यमित्यत्र इति-

## गूढार्थसंग्रहः

शब्दो व्यर्थः । अर्थविपर्यासे हि इतिशब्दः प्रयुज्यते । उक्तं हि महाभाष्ये– ‘ न वेति विभाषा ’ इत्यत्र ‘ इतिकरणः क्रियते सोऽर्थनिर्देशार्थः । तद्यथा गौरित्याहेत्युक्ते गोशब्दः स्वार्थं त्यक्त्वा स्वस्यैव बोधकः, तथा नवेत्युक्ते प्रकरणसिद्धं स्वपरत्वं त्यक्त्वा नवेतिशब्दः स्वार्थपरः । तथाच अर्थप्रकरणे इतिशब्दः शब्दपरः, शब्दप्रकरणे च व्याकरणादावर्थपरः । प्रकृते च अर्थप्रकरणादेवार्थपरत्वसम्भवेन नार्थपर इति व्यर्थः । किं च विवर्तवादे मृत्पिण्डमृन्मयदृष्टान्तानुपपत्तिः । नच अविद्याविशिष्टरूपेण ब्रह्मणोऽपि परिणामित्वात्तदुपपत्तिरिति वाच्यम् । शुद्धब्रह्मणएव ज्ञेयत्वेन तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । अनाद्यविद्यादीन् प्रति ब्रह्मणोऽनुपादानत्वात् तज्ज्ञानेन सर्वज्ञानप्रतिज्ञाविरोधश्च । यथा सौम्य मृदा मृन्मयं ज्ञातं इत्यत्रैव पूर्णत्वेन एकपिण्डसर्वपदानां वैयर्थ्यम् । नखनिकृन्तनस्यान्यावयवित्वेनानुपादानत्वात् मृत्वेन निश्चितेऽपि घटादौ संशयान्मृदश्च घटादेरपि व्यावहारिकसत्वेन द्वयोरपि मिथ्यात्वात् मृत्तिकैव सत्यमित्याद्यानुपपत्तेः । शुक्त्यादि ज्ञानेऽपि रूप्याद्यज्ञानादधिष्ठानीभूतब्रह्मज्ञानात्सर्वज्ञानासम्भवाच्चासंङ्गतिः । यत्तु शुक्तौ ज्ञातायां रूप्यं ज्ञातं भवति साहि तस्य तत्त्वम् एवं ब्रह्मज्ञानात् सर्वज्ञातं तद्धि तस्य तत्त्वम् इति भामत्युक्तम् । तन्न, तथासति ब्रह्मज्ञानात् ब्रह्मज्ञातं इत्यर्थे लब्धेऽपि मृद्घटादिदृष्टान्तेन कारणज्ञानात् कार्यज्ञानस्य प्रकृतस्यालाभात् । अधिष्ठानस्य आरोप्य तत्वरूपत्वाभावाच्च । तत्त्वं हि असाधारणं स्वरूपं धर्मोवा । नच अधिष्ठानं आरोप्यस्य असाधारणं स्वरूपं धर्मोवा । आरोप्यान्तरसाधारणत्वात् अधिष्ठानमात्रस्य तद्रूपत्वे ब्रह्म शुक्त्यादेः आनन्दशुक्तित्वादि तत्वं न स्यादिति ॥

वाचारम्भणशब्दस्य हि वागालम्बनमात्रमित्यादि भाष्यव्याख्याने अयंभावः । ‘ येनाश्रुतं ’ इत्यादि सामानाधि-
करण्यं बाधायां अश्रुतमन्यत्सर्वं यदभिन्नं श्रुतस्वरूपार्थव्यतिरेकेण नास्तीत्यर्थः । तथाचैकं सर्वस्याधिष्ठानमित्यर्थः प्रति-
ज्ञातः । तत्र मृत्पिण्डव्यतिरेकेण तद्विकारो यथा नास्तीत्यादि दृष्टान्ताः ‘ यथासौम्यैकेन ’ इत्यादिना प्रतिपाद्यन्ते । मृत्पिण्ड
पदंच मुख्यार्थैकैकपदयोगात् भूमिरूपपिण्डार्थकं पिण्डपदंच स्थौल्यविशेषबोधकं मृन्मयमात्रोपादानता योग्यतालाभाय
मृन्मयपदंच भूमिविकारमात्रार्थकम् । तथाच भूमिविकारः सर्वो यथा भूमिं विना नास्तीत्यर्थः । भूमिविकारत्वंच साक्षा-
देव वृक्षादौ अक्षतमिति भूमेः विभक्तपिण्डस्य नानाविकारानुपादानत्वेऽपि न क्षतिः । यद्यपि भूमिर्नाधिष्ठानं तथाऽप्यधिष्ठाना-
वच्छेदकशुक्त्यादिव्यतिरेकेण रूप्यादिनास्तीति व्यवहारवत् भूमिविकारादि स्वरूपविचारदशायां आधारतावच्छेदक
भूम्यादिव्यतिरेकेण तद्विकारो नास्तीति व्यवहारात् श्रुत्या तथोक्तम् । एवं च सर्वमृन्मयमेकमृत्पिण्डाभिन्नविज्ञातस्वरूप-
मित्यपि बाधायां सामानाधिकरण्यम् । तत्र हेतुर्मृत्तिकेत्येव सत्यमिति । मृत्तिका भूमिरिति गृह्यमाणं यत् तदेव सत्यम् ।
मृत्तिकास्वरूपस्य सस्यत्वाभावात् तदवच्छिन्नसद्रूपस्य दृष्टान्तत्वधीदशायां मृदो विविच्याज्ञानात् भूमित्वेन ज्ञायमानत्वेन
सद्रूपलाभार्थमितिशब्दः । ‘ मनो ब्रह्मेति ’ इत्यादौ ज्ञायमानस्येतिशब्दार्थत्वात् । आद्यर्थको वा इतिशब्दः । ‘ इतिर्हेतु-
प्रकरणप्रकारादिसमाप्तिषु ’ इत्यमरात् । तथाच भूमिविकारस्वरूपस्य विचारदशायां तत्स्वरूपमिव भूमिस्वरूपविचारदशायां
साऽपि मिथ्या । तत्कारणापञ्चीभूतान्येव सत्यानि । तेषामपि स्वरूपविचारदशायां तान्यपि मिथ्या । तत्कारणमेव सत्यमि-
त्याद्यर्थलाभः । नखनिकृन्तनपदं च अयस्सामान्यपरम् । लोहमणिपदं च सुवर्णार्थकम् । तयोर्विशेषणमेकपदं च एकजा-
तीयार्थकम् । तदुपादानं च एकजातीयत्वेन सर्वत्र स्वविकारे उपादानत्वसम्भवलाभाय । इतिशब्दस्तु तत्राप्युक्तरीत्या
व्याख्येयः । ‘ मृत्तिकेत्येव सत्यम् ’ इत्यादौ हेतुः ‘ वाचारम्भणं विकारो नामधेयम् ’ इति । आरम्भणं– असमवायिका-
रणजन्यत्वं, उत्पत्तिर्वा । वाचा– वाङ्मात्रं, विचारासहमिति यावत् । तथाच उत्पत्तिः सतोऽसतो वेति निरूपयितुमश-
क्यत्वात् उत्पन्नसामान्यं विचारासहमिति भावः । तावताऽप्यनाद्यविद्यासाधारण्येन हेत्वलाभादाह–‘ विकारो नामधेयम् ’

### श्रीभाष्यम्

**'यदाह्येवैष एतस्मिन्नुदरमन्तरंकुरुते अथतस्य भयं भवति'** (तै.आनं.७.अ२.वा] **'न स्थान-तोऽपि परस्योभयलिङ्गं सर्वत्रहि'** [शा.३.अ-२-पा.११.सू.]

### श्रुतप्रकाशिका

पश्यतः पूर्वोक्तमृत्युशब्दाभिहिताज्ञानकार्यं भयं च दर्शयति। **यदाहीति**। उदरम् उ अवधारणे। **'तदेवर्तं तदु सत्यमाहुस्तदेवब्रह्मपरमं कवीना'** मितिवत्, दरम्, अल्पम्, यद्वा उत् अरम्, उदित्यस्य भवतीत्यनेनान्वयः। **व्यवहिताश्चेति** सूत्रात्। अरम् शीघ्रं *यदाह्येवेत्यादेः पश्चादुपादानं सिद्धान्ते परिहारसौकर्यार्थम्। तच्च पूर्वोक्त-वाक्याना *मेकवाक्यन्यायपरिहार्यत्वात्। ब्रह्मणोनिर्विशेषचिन्मात्रत्वे व्यतिरिक्तमिथ्यात्वे च श्रुतिर्दर्शिता तत्र निर्विशेषत्वे सूत्रं प्रदर्श्यते। **नस्थानतइति**। उभयलिङ्गं साकारत्वं साकारनिराकारत्वं च सर्वत्रस्थितस्यापि ब्रह्मणो नास्ति। निराकार-

### गूढार्थसंग्रहः

इति नाशादिविकृतियुक्तं नाममात्रं विचारासहमितियावत्। अर्थे नामभेदासम्भवात् 'अभक्ष्यः' इत्यादाविव मात्रार्था-न्तर्भावेन विचारासहत्वलाभः। तथाचोत्पत्यादिविवृतेः तद्युक्तस्यच संसर्गदुर्निरूपत्वादिना विचारासहत्वान्मिथ्यात्वमिति निर्विकारं ब्रह्मैव सत्यमिति दृष्टान्तोपपादकत्वेनउक्तमपि दार्ष्टान्तिकस्याप्युपपादकमिति ध्येयम्। एवं च भामत्युक्तिरपि युक्तैव अनारोपितरूपस्यैव तत्त्वरूपत्वेन असाधारणस्वरूपधर्मयोरिव अधिष्ठानस्यापि तत्त्वरूपत्वात् शुक्तिरेव रूप्यस्य तत्त्व-मिति लोके व्यवहाराच्च। अतएव 'तत्त्वज्ञानान्निश्रेयसाधिगमः' इति भाष्ये तत्त्वमनारोपितं रूपमित्युदयनाचार्याः। अत एव व्यवहारदशायां शुक्त्यादावनारोपितत्त्वभ्रमेण रूप्यादि तादात्म्योपलक्षितत्वेनच रूप्यादेः स्वरूपतत्वं शुक्तिरिति व्यव-हारः। शुक्तेर्धर्मतत्त्वं शुक्तित्वादिरितिच व्यवहारः विवेकदशायांतु ब्रह्मैवानारोपितत्वेन ज्ञायत इति वस्तुगत्या तदेव सर्वेषां स्वरूपतत्वमित्याशयेन 'ब्रह्म तत्वं तपोवेदाः' इत्यमरेणोक्तम्। इति ॥

**यदाह्येवैष इत्यादि**। अत्र भाष्यम् [शं] यदा पुनः अविद्यावस्थायां हि यस्मादेषः अविद्यावान् अविद्यया प्रत्य-वस्थापितं वस्तु तैमिरिकद्वितीयचन्द्रवत्पश्यति। आत्मनिचैतस्मिन् ब्रह्मणि उत् अपि अरं अल्पं अन्तरं छिद्रं भेदं अल्पम-प्यन्तरं भेददर्शनंकुरुते भेददर्शनमेवहि भयकारणं अल्पमपि भेदं पश्यतीत्यर्थः। अथ तस्मात् भेददर्शनाद्धेतोः तस्य भेद दर्शिनः आत्मनः भयं भवति इति। अल्पार्थकारशब्दस्वारस्यात् अप्यर्थकोत्पदस्वारस्यात् भेदमात्रनिषेधपरत्वम् इति (अ.सि) अल्पमपि भेदं कुरुते जानातिचेत् तदा तस्य भयमित्यनेन भेदसामान्यनिन्देति भावः इति [ल.चं] ॥

अशेषविशेषप्रत्यनीकचित् (निर्विशेषं) तदतिरिक्तमिथ्यात्वंचेत्युभयं सूत्रकृदभिप्रेतमिति सूत्रद्वयमुपादत्ते **'न स्थान-तोऽपीत्यादि'**। अत्रभाष्यं [शं] न तावत्स्वतएव परस्य ब्रह्मणः उभयलिङ्गत्वमुपपद्यते। नह्येकं वस्तु स्वतएव रूपादिविशे-षोपेतं तद्विपरीतंचेत्यवधारयितुं शक्यं विरोधात्। अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगात् इति तदपि नोपपद्यते। नह्युपाधियोगादपि अन्यादृशस्य वस्तुनः अन्यादृशः स्वभावः सम्भवति। स्वच्छस्सन् स्फटिकः अलक्तकाद्युपाधियोगात् अस्वच्छोभवति भ्रममात्रत्वात् अस्वच्छताभिनिवेशस्य उपाधिना च अविद्याप्रत्युपस्थापितत्वात्। अतश्चान्यतरलिङ्गपरिग्र-हेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं नतद्विपरीतं। सर्वत्रहि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्द मस्पर्शमरूपमव्ययं' (क.३.१५) इत्येवमादिषु अपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते' इति। वेदान्तसूत्रमुक्तावलिश्च। 'परस्य ब्रह्मणः स्थानतः मायोपाधितः यत् सविशेषत्वं, स्वभावतश्च यन्निर्विशेषत्वं इत्युभयमपि लिङ्गं धर्मः न तात्विकम् किं तु निर्विशेषत्वमात्रम् हि यस्मात्, 'अशब्दमस्पर्शम्' इत्यादिषु सवत्र तदेव श्रूयते' इति ॥

## श्रीभाष्यम्

**'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्'** [शा.३.अ.२.पा-३.सू] **'प्रत्यस्तमितभेदं यत्सत्ता**

## श्रुतप्रकाशिका

मित्यर्थः अन्यमिथ्यात्वे सूत्रमाह। **मायेति**। स्वाप्नमर्थजातं कार्त्स्न्येन मायामात्रम्। कुतइतिचेत् अनभिव्यक्तस्वरूपत्वात्। * दुर्निरूपत्वात् बाधितत्वादित्यर्थः * स्वाप्नार्थमिथ्यात्वं जगन्मिथ्यात्वेदृष्टान्ततया दर्शितम्॥

**अस्मिन्नर्थद्वये** उपबृंहणवचनानि दर्शयति। **प्रत्यस्तमितेति**। प्रत्यस्तमितभेदम् सजातीयविजातीयभेदरहितम्

## गूढार्थसंग्रहः

**मायामात्रं तु इति**। अत्रभाष्यम् तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति, यदुक्तं सन्ध्ये सृष्टिः पारमार्थिकीति। मायैव सन्ध्येसृष्टिः, न परमार्थगन्धोऽप्यस्ति कुतः? कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वात्। न हि कार्त्स्न्येन परमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्नः। किं पुनः अत्र कार्त्स्न्यमभिप्रेतम्। देशकालनिमित्तसम्पत्तिः, अबाधश्च। न हि परमार्थवस्तुविषयाणि देशकालनिमित्तानि अबाधश्च स्वप्ने सम्भाव्यन्ते। न तावत् स्वप्ने रथादीनामुचितो देशः सम्भवति। न हि संवृत्ते देहदेशे रथादयो अवकाशं लभन्ते। नहि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च तत्र सामर्थ्यं सम्भाव्यते। क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति। 'कुरुष्वहमद्य शयानः निद्रयाऽभिप्लुतः स्वप्ने पाञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्च' इति। देहाच्चेदपेयात् पाञ्चालेषु प्रतिबुद्ध्येत तानसावभिगत इति कुरुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देहान्तरमश्नुवानो मन्यते। तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति। दर्शयति श्रुतिः अन्तरेव देहे स्वप्नम्; 'स यत्रैतत् स्वप्नय्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' इति। कालविसंवादश्च स्वप्ने भवति। रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्बहुवर्षभोगानतिवाहयति। निमित्तान्यपि च स्वप्ने न बुद्धेय कर्मणे वा उचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनिसन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्यानिमेषमात्रेण सामर्थ्यं दारूणिवा बाध्यन्ते चैते रथादयः प्रबोधे स्वप्नएवचैते सुलभबाधाभवन्ति। आद्यन्तयोर्व्यभिचारदर्शनात्। रथोयमितिहि कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते। मनुष्योऽयमिति निर्धारितः क्षणेनवृक्षः। स्पष्टंचाभावं रथादीनां स्वप्ने श्रावयतिशास्त्रं 'न तत्र रथा न रथयोगा' [बृ.४.३.१०] इति तस्मान्मायामात्रं स्वप्नदर्शनं इति वे. सू. मुक्तावलिश्च मायामात्रं प्रतिभासव्याप्यसत्ताकमात्रं स्वाप्नदेहेन्द्रियादिकं। तु शब्दान्नोक्तार्थक्रियाकारि। कार्त्स्न्येन कालदेशादिना अनभिव्यक्तं अप्रामाणिकं स्वरूपं उक्तार्थक्रियाकारित्वव्यापकं यत्र तथात्वात्। यद्वा स्वाप्नं वस्तु कार्त्स्न्येन सर्वमेव नोक्तार्थक्रियाकारि अनभिव्यक्तस्वरूपत्वात् अविद्यमानव्यावहारिकस्वरूपकत्वात्। यन्नैवं तन्नैवं यथा व्यावहारिकदेहेन्द्रियादि इति स्वाप्नार्थानां प्रबोधकाले अनुभूयमानानामर्थानामपि दृष्टिसृष्टिपक्षे प्रातिभासिकत्वमेव। सृष्टिदृष्टिपक्षेऽपि स्वाप्नार्थदृष्टान्तेन प्रपञ्चस्य मिथ्यात्वं साधनीयम्। इति पक्षद्वयेऽपि 'मायामात्रं' इति सूत्रस्योपयोगः अवसेयः॥

अथ उपबृंहणवचनैरपि प्रतिज्ञातार्थं साधयति। तत्र सनत्सुजातीयभाष्ये भगवान् परमगुरुः पराशरः आत्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं दर्शयति इत्युपक्रम्य विष्णुपुराणश्लोकाः बहवः शङ्कराचार्यैः उदाहृताः तत्रच 'ज्ञानस्वरूपमखिलं' 'येतु ज्ञानविदः' 'तस्यात्मपरदेहेषु' 'सोहं सच त्वं' इति श्लोकान् तत्र अनुदाहृतानन्यांश्चोपादाय आत्मव्यतिरिक्तस्य मिथ्यात्वं साधयिष्यन् 'प्रत्यस्तमितभेदंयत्' इति श्लोकमुपाहृत्य निर्विशेषस्य परविद्याविषयत्वं साधयति **प्रत्यस्तमितभेद मित्यादि**। प्रत्यस्तमिभेदमित्याद्युदाहृत्य परविद्यायाः निर्गुणविद्यात्वं साधितं लघुचन्द्रिकायां 'परयात्वक्षरप्राप्तिः' [वि.पु

### श्रीभाष्यम्

**मात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्म संज्ञितम्॥** [वि.पु.६.अं.७-अ-५३.श्लो] **ज्ञान स्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्थितम्॥** [वि.पु.१-२-६] **परमार्थस्त्वमेवैको नान्योऽस्ति जगतःपते।** [वि.पु.१.४.३८] **यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मन स्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥ येतु ज्ञानविदश्शुद्ध चेतसस्तेऽखिलंजगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर॥** (वि-पु.१.४.३९-४०-४१) **तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थो हि द्वैतिनो ऽतथ्यदर्शिनः॥** (२.१४.३१) **यद्यन्योऽस्ति परः कोऽपि मत्तःपार्थिवसत्तम। तदैषोऽहमयंचान्यो वक्तुमेवमपीष्यते॥** (२.१३.९०) **वेणु रन्ध्रविभेदेन भेदष्षड्जादि संज्ञितः। अभेदव्यापिनोवायो स्तथाऽसौ परमात्मना॥** (२.१४.३२) **सोऽहं सच त्वं सच सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। इतीरितस्तेन सराजवर्यः तत्याजभेदं परमार्थदृष्टिः॥** (२.१६.२३) **विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥** (६.७.९६) **अहमात्मागुडाकेश सर्वभूताशयस्थितः।**

### श्रुतप्रकाशिका

सत्तामात्रं स्वगतभेदरहितम् अतएव वचसामगोचरम्। तर्हि तुच्छत्वं स्यात् न सत्तेत्यत्राह आत्मसंवेद्यमिति स्वयं-प्रकाशमित्यर्थः ब्रह्मसंज्ञितमिति ब्रह्मेति संज्ञामात्रमेव नतु बृहत्त्वादिगुणयोग इति भावः निर्विशेषंचेत्कथं जगदवभास इत्याकाङ्क्षायामुपादत्ते। **ज्ञानस्वरूपमिति**। प्रपञ्चमिथ्यात्वमनेन श्लोकेनोच्यते अत्यन्तनिर्मलम्। सकलविशेषरहितम् अर्थस्वरूपेण जडस्वरूपेण, अर्थनानात्वस्य भ्रान्तिसिद्धत्वादेकएव परमार्थइति दर्शयति। **परमार्थस्त्वमिति**। एतद्वि-वृणोति श्लोकद्वयेन। **यदेतदित्यादिना**। भ्रान्तिश्चेत्कस्यचिन्निवर्तेतेत्यपेक्षायां केषांचित्तन्निवृत्तिं दर्शयति। **येतुज्ञान-विदइति**। ज्ञानसत्यत्वं जडमिथ्यात्वंचोक्तम्। अथ ज्ञानाकाराणामात्मनामैक्योक्तिं दर्शयति। **तस्येति**। एकमयम्, एकम्। आत्मपरनिर्देशकृतभेदशङ्कामपि व्युदस्यति। **यद्यन्योऽस्तीति**। अत्र दृष्टान्तमाह। **वेणुरन्ध्रेति**। अस्योप-पादितस्यार्थस्योपदेशं दर्शयति। **सोहमिति**। यथोपादिष्टमकरोदित्याह। **तत्याजेति**। अथात्मनां ब्रह्मणैक्योक्तिं दर्शयति। **विभेदजनकइति**। अथ भगवद्गीतायां सर्वात्मनां परस्परं ब्रह्मणाच्च सहैक्योक्तिमुदाहरति। **अहमात्मेति**।

### गूढार्थसङ्ग्रहः

६.५.६५] 'यन्नदृश्यं तदेव भगवद्वाच्यं स्वरूपं। एवं निगदितार्थस्य तत्त्वं सत्यस्य तत्त्वतः। ज्ञायते येन तज्ज्ञानं परम-न्यत् त्रयीमयम्॥' (६.५.७०.) इत्येतत्पूर्ववचनपर्यालोचनायां परविद्याविषयत्वस्य भगवद्वाच्यार्थनिष्ठत्वप्रतीतावपि 'अश-ब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज। पूजायां भगवच्छब्दः क्रियते ह्युपचारतः॥' (६.५.७१) इत्यत्र परविद्याविषय-ब्रह्मणः शब्दावाच्यत्वं स्फुटमुक्तम्। स एवार्थः 'प्रत्यस्तमितभेदम्' इति श्लोके विस्तरेण प्रतिपादित इति परविद्याविष-यत्वं निर्विशेषस्यैव विवाक्षितमिति परेषामभिप्राय इति भगवतः आशयः॥

**अहमात्मेति**। सर्वेषां भूतानां चेतनानां आशये हृदि स्थितः यः प्रत्यगात्मा सोऽहमेवेति ज्ञेयः। प्रत्यगात्माभेदो-पपादनस्य 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति श्रुत्युक्तं सर्वाद्वैतं दर्शयति= 'अहमिति'। नात्र सर्वभूतजन्मादिहेतुत्वं

## श्रीभाष्यम्

(गी.१०अ.२०.श्लो) **क्षेत्रज्ञंचापि मांविद्धि सर्वक्षेत्रेषुभारत।** (गी.१३.अ.३.श्लो) **न तदस्ति विना यत्स्यान्मया भूतं चराचरम्।** (गी.१०.अ.३९.श्लो) **इत्यादिभिर्वस्तुस्वरूपोपदेशपरैश्शास्त्रैर्निर्विशेषचिन्मात्रं ब्रह्मैकमेव सत्य मन्यत्सर्वं मिथ्येत्यभिधानात्।**

## श्रुतप्रकाशिका

सर्वभूतशब्देन शरीराण्युच्यन्ते। एतत्स्फुटयति। **क्षेत्रज्ञंचेति।** सर्वक्षेत्रेष्वित्यनेन भूतशब्दस्य शरीरपरत्वं स्फुटीकृतम्। तत्रैव व्यतिरिक्तमिथ्यात्वोक्तिं दर्शयति। **न तदस्तीति।** वस्तुस्वरूपोपदेशपरैः। नतूपायपरैः अनन्यपरैरितिभाव निर्विशेषचिन्मात्रमिति पूर्ववदर्थः अभिधानादित्यस्याशेषेत्यादि पूर्वप्रतिज्ञावाक्येन सहान्वयः॥

**ननु** किमन्यत्रसतोन्यत्र ख्यातत्वं मिथ्यात्वम्। उतात्यन्तासत्त्वम् पूर्वस्मिन्कल्पे क्वचित्पारमार्थ्यमभ्युपगतं स्यात् द्वितीये तु निवर्त्यमेवनास्तीति शास्त्रवैयर्थ्यम्। अत्यन्तासत्त्वंचानुपपन्नम् ख्यातेः। स्वयंप्रकाशस्य वस्तुनो भ्रमाधिष्ठानत्वं नोपपद्यते स्वयाथात्म्याप्रकाशमूलोह्यध्यासः पराधीनप्रकाशस्य जडस्यैवतत्सम्भवः। अतः प्राक्प्रतिज्ञातं

## गूढार्थसङ्ग्रहः

प्रतिपाद्यते। 'अहं सर्वस्य प्रभवः' इत्यादिना तस्य प्रागेवोक्तेः; नापि सर्वभूतस्थितिलयानां भगवद्विभूतित्वमुच्यते; 'सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन।' इत्यनुपदमेव तस्य वक्ष्यमाणत्वात्। किं तु सर्वभूतोद्भवस्थितिलयाधारत्वम्। तेन सर्वाद्वैतमुक्तं भवति। यद्धि यत्र उत्पद्य स्थित्वा लीयते तत्ततो नातिरिक्तमिति व्याप्तेः, 'तज्जलान्' इति श्रुतेश्च। तथाच प्रत्यग्ब्रह्माभेदः निर्विवाद इति भावः। 'एवमस्य श्लोकस्य अहमेव प्रत्यगात्मेति भाष्यकारैर्निर्णीतोऽर्थः' इति (वे.ब्र.गि.) वेङ्कटनाथेन व्याख्यातम्॥

**वस्तुस्वरूपोपदेशपरैः शास्त्रैरित्यादि।** अत्र 'अशेषविशेषप्रत्यनीकं—परमार्थः। तदतिरेकि सर्वं तस्मिन्नेव परिः कल्पितं मिथ्याभूतम्' इति प्रतिज्ञातोऽर्थः श्रुत्यादिभिस्साधितः। विवरण इष्टसिद्ध्यादौ श्रुत्यादिकमुदाहृत्य अनन्तरमनुमानेनास्यार्थस्य साधनात् अनुमानं श्रुत्यनुग्राहकं भवतीत्यभिप्रेत्य अत्रापि श्रुत्यादिभिस्साधनम्। प्रथमप्रतिज्ञायां 'तस्मिन्नेव परिकल्पितं मिथ्याभूतम्' इत्यत्र परिकल्पितशब्देन 'तदतिरेकि' इत्यादिशब्दैश्च सर्वे विकाराः स्वानुस्यूतैकस्मिन् वस्तुनि परिकल्पिताः, प्रत्येकमेकस्वभावानुविद्धत्वे सति विभक्तत्वात् चन्द्रभेदवत्। जडत्वात्, कार्यत्वात्, भेदत्वात् रजतवत् चन्द्रभेदवच्च। प्रतिपन्नोपाधौ अस्थूलत्वादिवाक्यैः प्रतिषिध्यमानत्वात्' इत्यादिविवरणोक्तानुमानेषु (१.१.२) कानिचिदभिप्रेतानीति प्रतीयते। अत्र तत्त्वदीपनम्। प्रत्येकमेकस्वभावानुविद्धत्वात् विभक्तत्वाच्चेति हेतुद्वयम्। विभक्तत्वं च धर्मिसमानसत्ताकभेदवत्त्वमित्यर्थः। भेदमिथ्यात्वे हेतुमाह— भेदत्वादिति। हेत्वन्तरमाह— प्रतिपन्नेति। विमतं मिथ्या प्रतिपन्नोपाधौ निषिध्यमानत्वात् देहात्मभाववत्। अत्र जडत्वमस्वयंप्रकाशत्वम्। चिन्मात्रतदतिरेकि इत्यत्र तदपि विवक्षितम् अस्य सर्वस्यानुमानस्य श्रुत्यनुग्राहकत्वं विवरणेष्टसिद्धिकारादीनां सम्मतम्। अत्र विवरणे 'नासदासीत्' 'मायांतु' इत्यादिभिः प्रपञ्चस्य मिथ्यात्वं प्रसाध्य अनन्तरमनुमानेन मिथ्यात्वसाधनात् एतान्यनुमानानि श्रुत्यनुग्राहकानीति विवरणकृतः अभिप्रेतमिति प्रतीयते। अनुमानेन मिथ्यात्वं प्रसाध्य श्रुतिस्तदनुवादरूपेति मधुसूदनमतम्। 'नेह नानाऽस्ति' इति श्रुत्यर्थे विवदमानं प्रत्याह 'प्रतिपन्नोपाधाविति' 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुत्यर्थे विवदमानं प्रत्याह 'ज्ञाननिवर्त्यत्वं' इति लघुचन्द्रिकापर्यालोचनायां अनुमानं श्रुत्यनुग्राहकमेव प्रतीयते॥

## श्रीभाष्यम्

**मिथ्यात्वं नाम प्रतीयमानत्वपूर्वक यथऽावस्थितवस्तुज्ञाननिवर्त्यत्वम् ।**

## श्रुतप्रकाशिका

प्रपञ्चस्यमिथ्यात्वं ब्रह्मणोभ्रमाधिष्ठानत्वंचायुक्तमित्यस्मिंश्चोद्यद्वये प्रथमं परिहर्तुं मिथ्यात्वलक्षमाह । **मिथ्यात्वंनामेति ।** निवर्त्यत्वमित्युक्ते मुद्गरादिनिवर्त्यघटादावतिव्याप्तिः तत्परिहाराय ज्ञानशब्दः । तावतापि * शक्तिमदीश्वरादिसङ्कल्परूप ज्ञाननिवर्त्ये वस्तुन्यतिव्याप्तिः सापि यथावास्थितवस्तु * ज्ञानमात्रनिवर्त्यत्वस्य विवक्षितत्वात्परिहृताभवति । * प्रबलभ्रान्ति ज्ञाननिवर्त्यसत्यरजतादिष्वतिव्याप्तिपरिहाराय यथावस्थितशब्दः यथाऽवस्थितज्ञाननिवर्त्यत्वमित्युक्ते समानाधिकरणधीर्जायेत तदा भ्रान्तिज्ञाननिवर्त्ये व्यभिचारस्तदवस्थः । तत्र ज्ञानस्वरूपं हि यथावस्थितं विषयस्यैवह्ययथार्थत्वम् । अतो यथाऽवस्थितं ज्ञानमिति सामानाधिकरण्यशङ्काव्यावृत्त्यर्थं यथावास्थितवस्तुज्ञाननिवर्त्यत्वमित्युक्तम् ज्ञानप्रागभावे व्यभिचार इति तद्व्युदासार्थं प्रतीयमानत्वपूर्वकपदम् ॥

**ज्ञान**प्रागभावोऽपि कदाचित्प्रतीयमानत्वपूर्वकोनिवर्त्येत इति चेन्न नियमस्य विवक्षितत्वात् । यथा '**सिद्धे शब्दार्थसम्बध**' इत्यत्र सिद्धएवेत्यवधारणस्य विवक्षितत्वान्नित्यत्वसिद्धिः । यथा '**अब्भक्षोवायुभक्ष**' इत्यादावपएवभक्षयतीत्यवधारणासिद्धिः तद्वत् भूदळनज्ञाननिवृत्तस्य रज्जुसर्पस्य यथाऽवस्थितवस्तुज्ञाननिवर्त्यत्वाभावादव्याप्तिरिति चेन्न तस्यापि यथऽावस्थिववस्तुज्ञानेन निवर्तयितुं योग्यत्वात् । अतएवहि निवर्त्यत्वमित्युक्त * न तु निवृत्तत्वमिति । न च सर्पभ्रमजनिते रज्जुधीनिवर्त्ये परमार्थभूते भयेऽतिव्याप्तिरिति वाच्यम्, भयस्य क्षणिकतया स्वयमेव निवृत्तस्य रज्जुज्ञाननिवर्त्यत्वाभावात् । रज्जुज्ञानंह्युत्तरभयोत्पत्तिं प्रतिबध्नाति । अतः प्रतीयमानत्वनियमपूर्वकयथाऽवस्थितवस्तुगोचरज्ञानमात्रनिवर्तनीयत्वं मिथ्यात्वमित्यर्थः । * अनेन लक्षणेन सदसद्वैलक्षण्यं फलितम् । तत्र प्रतीयमानत्वपूर्वकेत्यसद्व्यावृत्तिः शेषेण सद्व्यावृत्तिः । अस्य मिथ्यात्वलक्षणस्य सम्प्रतिपन्नमिथ्याभूतेष्वनुगतत्वं दर्शयति ।

## गूढार्थसंग्रहः

**मिथ्यात्वंनामेत्यादि** । अत्र प्रतीयमानत्वपूर्वक यथाऽवस्थितवस्तुज्ञाननिवर्त्यत्वमिति नतादृूप्येण मिथ्याभूतस्य लक्षण परं 'ख्यातत्वादसदन्यत्वं बाध्यत्वेन सदन्यता । तेनानिर्वचनीयत्वं स्यादित्यत्राभिसंहितम्' ॥ इति तत्त्वटीकायां अस्य वाक्यस्य सदसद्विलक्षणत्वरूप मिथ्यात्वस्वरूपपरत्वस्य आचार्यपादैः स्फुटमुक्तेः सदसद्विलक्षणत्वं मिथ्यात्वस्य स्वरूपं मिथ्याभूतस्यलक्षणम् । अनेन लक्षणेन सदसद्वैलक्षण्यं फलितं प्रतीयमानत्वपूर्वकेत्यसद्व्यावृत्तिः । शेषेण सद्व्यावृत्तिः इति व्यासार्यैरपि (श्रु.प्र) तथैवोक्तेः । सदसद्विलक्षणत्वरूपामिथ्यात्वं पञ्चपादिकोक्तम् । तदिह यन्निष्ठतया प्रतिपन्नं तन्निष्ठात्यन्ताभाव प्रतियोगितयाऽपि तत्त्वज्ञानेन विषयीकारार्हत्वमिति तु तात्पर्यविश्रमः । ' इत्याचार्यपादैः (त.टी.) विवरणोक्तस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपामिथ्यत्वस्यापि अत्राभिप्रेतत्वमुक्तम् । प्रतीयमानत्वपूर्वकेत्यादेः ख्यातिबाधान्यथाऽनुपपत्तिरूपार्थापत्तिप्रमाणस्य मिथ्यात्वसाधकस्य सूचनपूर्वकं सदसद्विलक्षणत्वरूपमिथ्यात्वस्वरूपतात्पर्यकत्वं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वतात्पर्यकत्वं यदुक्तं तत् सति सम्भवे इतरार्थतात्पर्यकत्वस्याप्युपलक्षणम् । अत्र प्रथम प्रतिज्ञायां 'परिकल्पितंमिथ्याभूतं' इत्यत्र परिकाल्पितं—अविद्यमानत्वेऽप्यस्तीति प्रतीत मसत्यमित्यर्थः । स्वात्यन्ताभाववन्निष्ठतया प्रतिभातमिति यावत् । ' इति तत्वटीकायामर्थ उक्तः ।

अद्वैतासिद्धौ च 'घटादयः, स्वानुगतप्रतिभासे वस्तुनि काल्पिताः, विभक्तत्वात्' 'घटादिकं सद्रूपे कल्पितं, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्' इति आनन्दबोध मण्डनमिश्रोक्तानुमानद्वये, कल्पितत्वं च स्वाभाववति प्रतीयमानत्वं वा

### श्रीभाष्यम्

**यथा रज्ज्वाद्यधिष्ठानसर्पादेः, दोषवशाद्धि तत्र तत्कल्पनम् ॥**

### श्रुतप्रकशिका

**यथेति ।** अथोक्तलक्षणस्य पक्षेऽतिदेशे कर्तुमुचितेऽपि स्वप्रकाशे वस्तुन्यध्यासानुपपत्तिरूपं द्वितीयं चोद्यं परिहर्तुमाह । **दोषवशाद्धि तत्र तत्कल्पनमिति ।** अजडत्ववज्जडत्वमपि नाध्यासप्रयोजकम् जडेऽपि दोषाभावे सत्यध्यासादर्शनात् । अतोदोषएवहि सर्वत्रकल्पकः कल्पने दोषाधीने स्वतो वा परतो वा प्रकाशो भ्रमाधिष्ठानत्वोपयोगी । पुरोवर्तिनि भासमानेहि रजतभ्रम इति दार्ष्टान्तिके परिहर्तुं दृष्टान्ते कल्पनस्य दोषाधीनत्वमुक्तम् ॥

### गूढार्थसंग्रहः

स्वरूपज्ञाननिवर्त्यत्वं वेत्यन्यदेतत् ।' इति मधुसूदनसरस्वतीभिरुक्तम् । एवं च प्रतीयमानत्वपूर्वकेत्यत्र प्रतीयमानत्वं स्वाभाववति प्रतीयमानत्वं विवक्षितम् । इत्थं च परिकल्पितशब्दस्यैवार्थद्वयं स्वाभाववति प्रतीयमानत्वं यथावस्थितवस्तुज्ञाननिवर्त्यत्वं च । 'अशेषविशेष...चिन्मात्रे' 'तदतिरेकि...परिकल्पितं मिथ्याभूतम्' इति प्रथमप्रतिज्ञावाक्ये 'सर्वे विकाराः स्वानुस्यूतैकस्मिन् वस्तुनि परिकल्पिताः' इत्यादिविवरणोक्तानुमानस्य विवक्षितत्वेन स्वाभाववति प्रतीयमानत्वं एकं मिथ्यात्वं, स्वरूपज्ञाननिवर्त्यत्वमपरं मिथ्यात्वमत्र विवक्षितमिति निर्णयस्सम्भवति । अत्र विवरणोक्तानुमानमेवानन्दबोधयतिना प्रमाणमालायामुक्तम् । विवरणे परिकल्पितशब्दसत्वेऽपि परीत्यनेन बोधितार्थ एव 'स्वानुस्यूतैकस्मिन्वस्तुनि इत्यनेनापि बोधित इत्यभिप्रेत्य स्वानुगतप्रतिभासे वस्तुनि कल्पिताः' इत्युक्तम् । एवं च प्रथमप्रतिज्ञायां परिकल्पितशब्दस्यापि स्वानुस्यूतैकस्मिन् वस्तुनि कल्पितत्वएव तात्पर्यम् । स्वानुस्यूतं एकं वस्तुच सद्रूपमेव । अतएव गुरुचन्द्रिकायां आनन्दबोधानुमानवाक्यविवरणावसरे वस्तुतस्तु कल्पितपदस्य स्वात्यन्तभाववति प्रतीयमानार्थत्वे स्वानुगतप्रतिभासेत्यस्य स्वपश्चादपि भासमानार्थकतया सद्रूपार्थकत्वस्य पर्यवसानात् सत्वव्यापक स्वात्यन्ताभावकत्वं साध्यं पर्यवस्यति इत्युक्तम् । अतः परिकल्पितत्वं सत्वव्यापकस्वात्यन्ताभावकत्वं पर्यवसितं बोध्यम् । एवमेव प्रतीयमानत्वपूर्वकेत्यत्र प्रतीयमानत्वपदे विवक्षितम् । अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिः बाधः । तथाविधानवबोधनिवृत्तौ बाधप्रसिद्धेरिति विवरणएवोक्त्या ज्ञाननिवर्त्यत्वरूपामिथ्यात्वं विवरणकारसम्मतमिति मधुसूदनसरस्वत्यादि सर्वसम्मतम् । परिकल्पितशब्दे स्वात्यन्ताभाववति प्रतीयमानत्वं विवक्षितम् इति तदपि विवरणकारसम्मतमिति प्रतीयते । अतः 'मिथ्याशदो, **द्व्यर्थो**ऽपह्नववचनोऽनिर्वचनीयतावचनश्च' (पं.पा) इत्युक्तदिशा अपह्नवघटितं त्रयं अनिर्वचनीयत्वं च 'प्रतीयमानत्वे'त्यादिभाष्ये विवक्षितमितिसिद्धम् । एतेन सृष्टिवाक्यानामपि अन्यतात्पर्यकत्वं सूच्यते । प्रत्यक्षादि सिद्ध प्रपञ्चस्य ब्रह्मण्येव उत्पत्तिविनाशवत्तया अन्यत्राभावमुपवर्ण्य तत्रापि प्रतिषिध्य मिथ्यात्वापादनेन प्रमाणान्तराविरुद्धतया अद्वितीयब्रह्मस्वरूपसिद्धिः प्रयोजनं इति विवरणोक्तेः । मिथ्यात्वस्वरूप परिष्करणादिकं अद्वैतसिद्धितद्व्याख्ययोः अवसेयम् ॥

**यथा रज्ज्वाद्यधिष्ठानसर्पादेरिति ।** रज्ज्वादिः—रज्ज्वाद्यवच्छिन्नचैतन्यं अधिष्ठानं अधिष्ठेयविषमसत्ताकं अपरिणामितया उपादानं यस्य सः रज्ज्वाद्यधिष्ठान इत्यर्थः । विवरणे रज्जुसर्पस्य मूलाज्ञानकार्यत्वं अवस्थाज्ञान (तूल) कार्यत्वं च इति पक्षद्वयमुक्तम् । तत्र प्रथमपक्षे शुक्तिज्ञानेन [शुक्त्यवच्छिन्नचैतन्यरूपाधिष्ठानज्ञानेन] रजतस्य निवृत्तिमात्रम्, मुद्गराभिघातेन घटादिनाशवत् । द्वितीयपक्षे तु अवस्थाज्ञानरूपोपादानेन सह रजतस्य बाधः इति विशेषश्चोक्तः । रज्जुसर्पभ्रमः रज्जुसर्पश्चेत्युभयं एकाविद्योपादेयमिति परेषां मतम् । **तत्र**— रज्ज्वाद्यवच्छिन्नचैतन्ये, **तत्कल्पनम्**—रज्जुसर्पादिकल्पनम् ॥

## श्रीभाष्यम्

**एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जग यथाऽवस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम् । दोषश्च**

## श्रुतप्रकाशिका

**इत्थं** प्रतीयमानत्वपूर्वक यथावस्थितवस्तुज्ञाननिवर्त्यत्वं मिथ्यात्वम् । मिथ्याभूतार्थकल्पनं च दोषवशादिति दृष्टान्तेशिक्षितमर्थद्वयं दार्ष्टान्तिकेऽतिदिशन् शङ्काद्वयंचार्थान्निराकरोति । **एवमिति** । अत्यन्तवैसादृश्यरहितकतिपयाध्यासः एकाधिष्ठाने दृष्टः यथा सर्पभूदळनाम्बुधाराद्यध्यासो रज्जुमात्रे । कथमेकस्मिन्नधिष्ठाने युगपन्मिथोऽत्यन्तविसदृशान- न्तप्रपञ्चाध्यास इत्येका । यस्सर्वज्ञइत्यादिषु * सर्वज्ञतादिगुणकत्वेन प्रतीते ब्रह्मणि कथंवाऽध्यास इति द्वितीया चिन्मात्र- वपुषीत्यनेन पूर्वोक्तां स्वयंप्रकाशत्वकृतामध्यासानुपपत्तिं स्फोरयति । परे ब्रह्मणीति शङ्काद्वयं परिहृतं भवति । विलक्षणा- धिष्ठानत्वात्कृत्स्नाध्यास उपपन्नइति । वैलक्षण्यं च सर्वसाधारणसन्मात्ररूपत्वम् । सर्वज्ञत्वादिगुणा अपरे ब्रह्मणि परे ब्रह्मणि तु चिन्मात्र (रूप) तया सर्वज्ञत्वादिगुणानन्वयादध्यास उपपन्न इतिचाभिप्रायः ॥

**इदमिति** प्रतीयमानताकारपरामार्शिना पदेन यथाऽवस्थितब्रह्मस्वरूपावबोधबाध्यमिति पदेन च पूर्वोक्तमिथ्यात्वलक्षण- मनूदितं भवति । दोषपरिकल्पितमित्यनेन दोषवशादित्यादिनोक्तमतिदिष्टम् । विविधकृत्स्नाध्यासं दर्शयति । **देवेति** । मिथ्यारूपम् । मिथ्यालक्षणोपेतत्वाद्रज्जुसर्पवान्मिथ्येत्युक्तं भवति । दोषः कः, स किं परमार्थः उतापरमार्थः । परमार्थत्वे ज्ञाननिवर्त्यत्वं नस्यात्—अपरमार्थत्वे प्रपञ्चवत्कल्पकान्तरापेक्षयाऽनवस्था सकिं ब्रह्मण्यतिरोहिते कल्पयति उत तिरोहिते अतिरोहितेचेदनुपपन्नम् रज्जुत्वे प्रकाशमानइवाध्यासोदय विरोधात् । अविरोधे पश्चादप्यनिवृत्तिः । तिरोहिते चेत् तिरो धानं किं स्वतः किंवा परतः । यदिस्वतः अनिवर्त्यत्वं निवृत्तौ स्वरूपोच्छेदोवा । यदि परतः तत्परं वाच्यम् । किंच नानाऽध्यासानां नानादोषमूलत्वं दृष्टम् । अतोऽनेकदोषा अभ्युपगन्तव्या इतीमाश्शङ्काः परिहर्तुमाह । **दोषश्चेति** । चश्श- ब्दानिवर्तकः कोदोषइत्यस्य प्रतिवचनमविद्येति । तस्याः पारमार्थ्यापारमार्थ्यविकल्पेसदसदनिर्वचनीयेत्यपारमार्थ्याभ्युपगमः । अनवस्थापरिहारोऽनादीति तिरोहितातिरोहितविकल्पस्य प्रतिवचनं स्वरूपतिरोधानशब्देन तच्च किं स्वतःपरतइत्यत्र परतइत्यङ्गी

## गूढार्थसङ्ग्रहः

**एवं चिन्मात्रवपुषि परे ब्रह्मणि इति** । 'आश्रयत्वविषयत्वभागिनी निर्विभागाचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः । ' (सं.शा.१.अ.३१९ श्लो) इति सर्वज्ञात्ममुन्युक्तेः । मण्डनमिश्रस्य वाच- स्पतेश्च जीवाज्ञानवादस्य सम्मतत्वेऽपि पद्मपादसुरेश्वरादीनां सर्वेषां ब्रह्माज्ञानवाद एव सम्मतः । इष्टसिद्धौच ब्रह्मसिद्धिप्रोक्त जीवाज्ञानवाददूषणपूर्वकं ब्रह्माज्ञानवादस्साधितः । तद्विचारस्तु आरम्भणाधिकरणे भविष्यति । दृष्टिसृष्टिपक्षोऽपि एकः वेदार्थसङ्ग्रहे पर्यालोचितः । अन्यस्त्वारम्भणाधिकरणे पर्यालोचयिष्यते । जिज्ञासाधिकरणे सृष्टिदृष्टिपक्ष एव निरूप्यते । **देव तिर्यङ्मनुष्यस्थावरादिभेदमित्यनेन** 'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः । ' इति विष्णुपुराणवचनं स्मारितम् ॥

**यथाऽवस्थितब्रह्मस्वरूपावबोधबाध्यमिति** । अत्र अज्ञानेन साकं कार्यनिवृत्तेरेव बाधत्वस्य विवरणे प्रतिपादनेन अत्रापि तादृश एव बाधो विवक्षितः । 'दोषपरिकल्पितमिति' पूर्वसूक्तौ स्वात्यन्ताभाववति प्रतीयमानत्वं परिकल्पितत्वं विवक्षितम् । एतेन 'प्रतीयमानत्वपूर्वकयथाऽवस्थितवस्तुज्ञाननिवर्त्यत्वम्' इत्यत्र निवर्त्यत्वं बाध्यत्वरूपं विवक्षितमिति बोधितम् । अत्र ब्रह्मस्वरूपावबोधबाध्यमिति पृथगुक्त्या प्रतीयमानत्वपूर्वकयथाऽवस्थितवस्तुज्ञाननिवर्त्यत्वमित्यत्र यथा

## श्रीभाष्यम्

**स्वरूपतिरोधान विविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या 'अनृतेन हि प्रत्यूढाः'** [छा.उ.८.प्र.३.ख.२.वा] **'तेषां सत्यानां सतामनृतमपिधानम्'** [छा.उ.८.प्र.३.ख.१.वा]

## श्रुतप्रकाशिका

क्तम् तिरोधानस्य हेतुनिर्देशात् । नानाऽध्यासस्यैकदोषमूलत्वमुक्तं विविधेत्यादिना विक्षेपः अध्यासः आच्छादिकाऽविद्या विक्षेपिकाऽविद्येत्यविद्याया * एकस्या एवावस्थाद्वयं तदभिमतं तिरोधानविक्षेपहेतुत्ववचनात्सूचितम् ॥

**एवंभूतामविद्यां** प्रतिज्ञायैतदनुगुणं प्रमाणमाह । **अनृतेनेत्यादिना** । प्रत्यूढाः प्रतीपंनीताः । प्रत्यूढशब्द-वैशद्यार्थमुपादत्ते । **तेषामिति** । नात्र बहुवचने तात्पर्यम् **'अदितिः पाशान प्रमुमोक्तु'** इतिवत् । अस्याः

## गूढार्थसंग्रहः

ऽवस्थितवस्तुज्ञाननिवर्त्यत्वमेवैकं मिथ्यात्वं विवक्षितम् । एवमत्र दोषपरिकल्पितमित्यनेन परिकल्पितत्वरूपमेव प्रतीयमानत्व पूर्वकेत्यत्र प्रतीयमानत्वं विवक्षितम् तदप्येकं मिथ्यात्वं विवक्षितमिति च सूचितम् ॥

**स्वरूपतिरोधानेत्यादि** । अविद्यायाः आवरणविक्षेपाख्यशक्तिद्वयं शङ्कराचार्यसम्मतमिति पूर्वमेव (५८) पुटे निरूपितम् । अत्र स्वरूपतिरोधानं आवरणं नास्ति न प्रकाशते इति व्यवहारयोग्यत्वमिति विवरणे उक्तम् ॥

अविद्याविषये पञ्चपादिकाऽऽदौ पैरुदाहृतं श्रुत्यादिकमुपादत्ते । **अनृतेनहि प्रत्यूढा इत्यादि** । 'तेषां सत्यानां अनृतमपिधानम्' इति पूर्ववाक्ये अनृतम् बाह्यविषयेषु स्त्र्यन्नभोजनादिषु तृष्णा, तन्निमित्तं स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमित्तत्वादनृतमित्युच्यते । तन्निमित्तं सत्यानां कामानामप्राप्तिरिति अपिधानमिव अपिधानं' इति व्याख्याय 'अनृतेन हि प्रत्यूढाः' इत्यनन्तरसुषुप्तिवाक्ये अनृतेन हि– यथोक्तेन हि यस्मात् प्रत्यूढाः– हृताः स्वात्मस्वरूपादविद्यादिदोषैः बहिरपकृष्टा इत्यर्थः' इति भाष्यम् । (शं.उ.भा.) यथोक्तेन मिथ्याज्ञानशब्दितानाद्यनिर्वाच्याज्ञानकृतेन तृष्णाप्रभेदेन तन्निमित्तेनेच्छाप्रचारेणेत्यर्थः । तस्मात् प्रजानां स्वात्मभूतब्रह्मलोकालाभः इत्यानन्दगिरिविवरणम् । अत्र 'तेषां सत्यानामनृतमपिधानम्' इति वाक्यस्य प्रथमत्वेऽपि 'अनृतेन हि प्रत्यूढाः' इति वाक्यस्य सुषुप्तिविषयतया निर्विशेषस्वरूपालाभः परसम्मतः अत्र स्फुटः इत्यभिप्रेत्य प्रथमतः 'अनृतेन हि प्रत्यूढाः' इति वाक्योपादानम् । एतद्विवरणभाष्ये यथोक्तेन इत्युक्त्या 'तेषां सत्यानामनृतमपिधानं' इत्यत्रैव अनृतशब्दार्थस्य स्फुटमुक्तेः श्रुतौ अपिधानशब्दसत्वाच्च 'अनृतेन हि प्रत्यूढाः' इति श्रुत्यर्थनिर्णयइति पश्चात् 'तेषां सत्यानां' इति वाक्यस्योपादानम् । अत्र मधुसूदनसरस्वत्यः 'तद्यथा हिरण्यनिधिं—अनृतेनहि प्रत्यूढाः' इति श्रुतिः ब्रह्मज्ञानप्रतिबन्धकत्वेन अनृतं ब्रुवाणा तादृगज्ञाने प्रमाणम् । नच ऋत शब्दस्य 'ऋतंपिबन्तौ' इत्यत्र सत्कर्मणि प्रयोगदर्शनात् 'ऋतं सत्यं तथा धर्मः' इति स्मृतेश्च ऋतशब्दस्य सत्कर्मपरत्वात् अनृतशब्दस्य दुष्कर्मपरत्वमिति वाच्यम् । उत्तरत्र 'य आत्मा अपहतपाप्मा' इत्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन दुष्कर्मप्रत्यूढत्वविरोधात् । सुषुप्तौ कर्ममात्रनाशे दुष्कर्मणोऽप्यभावात् । कारणात्मनाऽवस्थानेच अज्ञानस्यावश्यकत्वात् कर्मणः आवरणत्वानुपपत्तेश्च । ब्रह्मवेदनप्रतिबन्धकतया ह्यनादिब्रह्मावारकं ज्ञाननिवर्त्यं वाच्यम् । तथाच कर्मैव प्रधानमपि नानृतपदाभिधेयम् । तयोर्ज्ञानानिवर्त्यत्वात् । इति अत्र लघुचन्द्रिका ॥ **अनादीति** । नच पापानां प्रवाहरूपेणानादित्वात् पापत्वेन प्रतिबन्धकत्वसम्भवइति वाच्यम् । पापं पुण्यं मिथ्याज्ञानजन्यसंस्कारोवा अस्ति भातीति व्यव-

## श्रीभाष्यम्

**'नासदासीन्नोसदासीत्तदानीं तमआसीत्तमसागूढमग्रे प्रकेतं'** [यजु.२.अ.८.प्र.९.अनु] **'मायां तु प्रकृतिंविद्यान्मायिनं तु महेश्वरं'** (श्वे.उ.४.अ.१०.वा)

## श्रुतप्रकाशिका

सदसदानिर्वचनयित्वमुच्यते । **नासदासीन्नोसदासीदिति** । किमासीदित्यत्राह । **तमआसीदिति** । तमश्शब्देना-च्छादकत्वं विवक्षितम् तमोनाम । **'अक्षरं तमसिलीयत'** इति प्रकृतिरुच्यत इति शङ्कायामुदाहरति । * **मायांतुप्रकृतिं**

## गूढार्थसङ्ग्रहः

हारे प्रतिबन्धकइत्यत्र विनिगमकाभावात् तेभ्योऽतिरिक्तस्यैवाज्ञानस्य तथात्वेन कल्पनस्यौचित्यात् । कल्प्यस्यानुपस्थितत्वेन तदादाय विनिगमनाविरहाप्रसक्तेः इति ब्रह्मानन्दसरस्वत्यश्च प्राहुः ॥

**नासदासीदित्यादि** । सदसच्छब्दौ पारमार्थिकापारमार्थिकयोरेव प्रसिद्धौ । (अ.सि) इत्येतद्विवरणे लघुचन्द्रिकायां 'पारमार्थिकापारमार्थिकयोरिति' । भूतेषु शास्त्रीयप्रसिद्धिमात्रं सत्यालीकयोस्तु शास्त्रीया लौकिकीच प्रसिद्धिः । अतस्तयोर्बलवत्त्वम् । अतएव माधवीयभाष्ये व्याख्यातम् । प्रलयेस्थितं कारणस्वरूपमाह 'नासदित्यादि' तदानीं प्रलये असत् निरुपाख्यं नासीत्, तस्याकारणत्वात्, नापिसत् सत्त्वेन निर्वाच्यमासीत् सद्रूपस्य तद्विलक्षण जगत्पारिणामित्वासम्भवात्, तथाच अनिर्वाच्यमासीदित्यर्थः । इति । गुरुचन्द्रिकायांच वस्तुतः तदानीं सद्भिन्नमासीदित्यर्थक नोसदासीदितिवाक्य तदानीं असद्भिन्नमासीदित्यर्थक नासदितिवाक्ययोः तमआसीदित्यनेनैकवाक्यतया सदसद्भिन्नं तमआसीदित्यर्थपर्यवसान सम्भवात् तदेकवाक्यतार्थमेव नासदित्यादौ तदानीमित्यस्यान्वयावश्यकत्वात् नञः पर्युदासकत्वास्वीकारेतु सन्नासीदित्यत्र बाध एव सत आत्मनस्सदा सत्वात् । अथ 'आनीदवातम्' इत्याद्येकवाक्यतया आत्मान्यत् सन्नास्तीत्यर्थ इतिचेत् न प्रतियोग्यप्रसिद्धेः, सदसद्भिन्नत्वस्य पर्युदासपक्ष एव शाब्दत्वेनोपसंहारमात्रेण 'आग्नेयं नतुर्धा करोति' 'पुरोडाशं चतुर्धा करोति' इत्यनयोरिव विवक्षितार्थसिद्धेश्च । अन्यथा हि सदसतोः प्रतिषेधसहकृतेन 'तम आसीत्' इत्यनेन तमसस्सदसद्भिन्नत्वमार्थिकं स्यात्, न शाब्दम् । किं च 'तदानीम्' इत्यस्य सदसत्प्रतिषेधानन्वये आर्थिकमपि तन्नस्यात् । नहि कदाचित् प्रतिषेधसहकृतां कदाचिद्विद्यमानत्वेन तमउक्तिः तमसस्सदसदन्यत्वं विनाऽनुपपन्ना । तस्मात् सदसन्निषेधपक्षे तदानीमित्यस्य तदन्वयावश्यकत्वेऽप्युक्तयुक्त्या स पक्षो नयुक्तः, किंतु सदसद्भिन्नमासीदिति पर्युदासएव । तत्रच तदानीमित्यस्यान्वयेऽप्यदोषइत्याशयेन रजोनिषेधादावेव तदन्वयादित्युक्तम् । रजआदिनिषेधएवतदन्वयः नतु सदसन्निषेधे । तस्य प्रकृते नञर्थत्वाभावादितिभावः । अतएव सद्भिन्नत्वे उक्ते इत्युक्तम् । नञोक्ते इति तत्रार्थः । इति ब्रह्मानन्दसरस्वतीभिरुक्तम् ॥

**मायां तु प्रकृतिं विद्यादिति** । माया स्वाश्रयमव्यामोहयन्ती कर्तुरिच्छामनुवर्तते । न तथा अविद्या । प्रसिद्धश्च मायाऽविद्ययोर्भेदः लौकिकानाम् । नहि मायाविनिर्मित हस्त्यश्वरथादावविद्याशब्दं प्रयुञ्जते । मन्त्रौषधादिसत्यवस्त्वेव माया नानिर्वचनीया । न । परिदृश्यमानमिथ्यावस्तुन्येव मायाशब्दप्रयोगात् पार्श्वस्थस्य मन्त्रौषधाद्यपरिज्ञानात् तत्र मायाशब्दप्रयोगाभावाच्च । मन्त्रादेश्च काचादिवन्निमित्तकारणत्वात् । अध्यासोपादानाविद्याक्लृप्तिवत् कादाचित्कमायोपादानानिर्वचनीयानादिवस्तुकल्पना । तत्र च 'मायां तु प्रकृतिम्' इति श्रुतौ प्रकृतौ मायाशब्दप्रयोगात् प्रकृतिभूतयोर्मायाऽविद्याशब्दयोः तद्विकारयोश्चाध्यासमाययोः लक्षणाभेदादेकत्वमवगम्यते । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी

## गूढार्थसंग्रहः

मायाममेयाय तस्मै विद्यात्मने नमः ॥, (          ) इत्यादिस्मृतौ मायाऽविद्ययोस्सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वावगमात् ॥ 'मायामात्रं...स्वरूपत्वात्' इति सूत्रे सूत्रकारेण स्वप्ने मायाशब्दप्रयोगात्। भाष्यकारेण च अविद्या माया अविद्यात्मिका मायाशक्तिरिति तत्रतत्र निर्देशात्, टीकाकारेणच अविद्या माया अक्षरमित्युक्तत्वात्, ब्रह्मसिद्धिकारेणच एव मेव इयमविद्या माया मिथ्याप्रत्ययः इत्युक्तत्वात्, विक्षेपप्राधान्येन माया, आच्छादनप्राधान्येन अविद्येति व्यवहारभेदः। इच्छाधीनत्वतद्वैपरीत्येन वा व्यवहारभेदः इति' विवरणे जरद्वैतिमतदूषणपूर्वकं सिद्धान्तः प्रतिष्ठापितः 'मायेति सदसद्भ्यां अनिर्वचनीया अविद्योच्यते' इति इष्टसिद्धावप्युक्तम् ॥

'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासीकरोति' (आभासेन करोतीति पाठान्तरम्) 'मायाचाविद्या च स्वयमेव भवति' (नृ.उ.ता) इति श्रुत्या मायाऽविद्ययोरैक्यप्रतिपादनात् माया अज्ञानमेव इति (अ.सि.) मधुसूदनसरस्वतीभिरुक्तम्। मायाशब्दस्य रूढ्या अज्ञानार्थकत्वं अत एव उज्वलदत्तीयवृत्तौ माया छद्मेति व्याख्यातम्। छद्मनोऽपि दुर्घटकार्यकारित्वरूपेण रूढ्यर्थगुणेन मायापदबोध्यत्वात्। अत एव 'माया स्याच्छाम्बरीबुद्ध्योः मयः पीताम्बरेऽसुरे।' इति मेदिनी युक्ता। शाम्बर्यामविद्यायामपि उक्तगुणयोगेन मायापदप्रयोगात्। 'ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि। तद्विद्यादात्मनो मायां यथाऽभासो यथा तमः ॥' (श्रीभा.२ स्क.९.३४) इति स्मृत्या मिथ्यात्वविशिष्टे मायापदशक्तिनिरूपणात्। तिलरसमुख्यार्थस्यापि तैलपदस्य भूरिप्रयोगेण सार्षपरसे निरूढगौणत्ववत् दुर्घटकारिणि मायापदस्य गौणत्वादिति भावः।' इति लघुचन्द्रिकायामुक्तम् अत एव 'मायाह्येषा मया सृष्टा नैवं मां द्रष्टुमर्हसि' इति नारदं प्रति भगवद्वाक्ये दृश्यमानस्य विश्वरूपस्य प्रतिपन्नोपाधौ निषेधत्वे मायात्वं हेतूकृतम्।

'यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु।
मायेत्सातै यानि युद्धान्याहुः नाद्यशत्रुं ननु पुरा विवित्से ॥ (ऋ सं.१० ५४.२)

इत्यस्यामृचि वेद्यशत्रोर्निषेध्यत्वे मायात्वं हेतूकृतम्। तथा 'भूतानि इन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढः मूढ इव व्यवहरन्नास्ते मायैव तस्माद्द्वय एवायमात्मा' इति तापनीये भूतेन्द्रियादीनां मायामयत्वेन तत्प्रविष्टस्याप्यात्मनः तच्छून्यत्वेन अद्वयस्वभावत्वमुक्तम्। 'मयश्च शम्बरश्चैव महामायाधरावुभौ। पर्जन्यवारुणी माये व्यधत्ताम्' इति हरिवंशे पर्जन्यवारुणास्त्राभ्यां मन्त्रविशेषविशिष्टाभ्यां जनिते मिथ्याभूते मायापदं प्रयुक्तम्। भागवतादावपि मिथ्यामारीचस्य 'मायामृगं दयितयेप्सितम्' इत्यादिना मायात्वमुक्तम्। रामशरवेध्यत्वादिकं तु न सत्यत्वे प्रयोजकम्। यथाऽनुभवमर्थक्रियाकारित्वस्य मिथ्याभूतेऽपि सम्भवात्। मिथ्यात्वेन त्वदुक्तैन्द्रजालिकादेः अर्थक्रियाकारित्वदर्शनात्। ऐन्द्रजालिकादौ मायाशब्दप्रयोगादपि तस्य मिथ्यारूढत्वम्। नच शक्तिविशेषरूपमायापदमुख्यार्थजन्यधीविषयत्वात् तत्रोपचारात्तत्प्रयोग इति वाच्यम्। मिथ्यारूपमुख्यार्थजनकत्वेन शक्तिविशेष एवोपचारात्। अन्यथा उक्तस्मृत्यादिविरोधात्। इति ॥ 'मायां तु प्रकृतिम्' इत्यादेस्तु या प्रकृतिः सा मिथ्येत्येवार्थः। 'माया च तमोरूपा अनुभूतेः। 'तदेतज्जडम् मोहात्मकं अनन्तं तुच्छमिदंरूपं' [नृ.उ.ता] इत्यादि। 'तुच्छेनाभ्वपिहितं यदासीत्' (ना.सू.) 'अनृतेनहिप्रत्यूढाः, इत्यादि श्रुतिभ्यः। अतो मिथ्याप्रकृतिकत्वेन जगन्मिथ्येत्युक्तवाक्यादपि सिध्यति। यद्यपि मायाशब्दः प्रथमः तथाऽपि तदर्थो न जिज्ञासितः। मिथ्यारूपत्वेन लोके ज्ञातत्वात्। अतस्तमुद्दिश्य प्रधानत्वरूपविशेषः नोक्तवाक्येन बोध्यते। किंतु 'मायया संनिरुद्धः' इति पूर्ववाक्ये बन्धस्योक्तो मायारूपो हेतुः प्रकृतिः नतु निमित्तमिति 'मायां' इत्यादिना उच्यते। अन्यथा मिथ्यानिमित्तकस्यापि मिथ्यात्वासम्प्रतिपत्त्या प्रपञ्चमिथ्यात्वासिद्धेः। इतिच गुरुचन्द्रिकायामपि ॥

### श्रीभाष्यम्

**' इन्द्रोमायाभिः पुरुरूपईयते '** [बृ.४.अ.५.ब्रा.१९.वा] **' मम मायादुरत्यया '** (गी.७.१४)

### श्रुतप्रकाशिका

**इति** । विविधाध्यासहेतुत्वं दर्शयति । **इन्द्रोमायाभिरिति** । अस्याऐक्यज्ञानेन विना अनिवर्त्यत्वमाह । **ममेति** ।

### गूढार्थसंग्रहः

**इन्द्रोमायाभिः पुरुरूपः ईयते इति** । ' युक्ताह्यस्यहरयश्शतादशेति अयंवैहरयः अयंवैदशच सहस्राणि बहूनिच अनन्तानि इत्यादि अनन्तरवाक्यम् । ' इन्द्रो—ईयते ' इति व्यक्तमेव नानारूपावगमः मायानिबन्धनो दर्शितः । तत्र कथं एकत्वमुपचरितं इति वक्तुं शक्यम् इति ब्रह्मसिद्धौ मण्डनमिश्रः । इन्द्रः, परमेश्वरः, मायाभि,: प्रज्ञाभिः, नामरूपभूत तत्कृतमिथ्याभिमानैर्वा नतु परमार्थतः पुरुरूपः बहुरूपः ईयते गम्यते एकएवप्रज्ञानघनस्सन् ' अविद्याप्रज्ञाभिः ' इति भाष्यम् [शां] ' मायाभिः प्रत्यगज्ञानैः यदि वाऽनृतबुद्धिभिः । गम्यते पुरुरूपोऽज्ञैः एकोऽपि जलसूर्यवत् ॥ ' इति बृहदारण्यकवार्तिकम् । (४ अ.५ ब्रा.१२७) अविद्यायाः एकत्वेऽपि मायाभिरिति बहुवचनं शक्तिबहुत्वाभिप्रायकमिति आधुनिकैरुक्तम् । कुतो नानारूपा माया ? तत्राह— हि यस्मात् अस्यात्मनः रथिस्थानीयस्य हरयोऽश्वाः इन्द्रियरूपाः रथस्थानीये शरीरे विषयरूपदेशप्रापतेय आगन्तुकतया युक्ताः सम्बद्धाः । तथाहि काठकश्रुतिः— ' आत्मानं रथिनं विद्धि शरीरं रथमेवतु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुःविषयास्तेषु गोचरान् ' इति । ततश्च हर्यादनिामागन्तुकत्वात् अयमात्मैव हरयः । अयमेव च वक्ष्यमाणदशाऽदिरूपा विषयाः । नात्मान्यदस्ति तत्तस्माद्धर्याद्युपाधिशून्यत्वादेतदात्मस्वरूपं ब्रह्मेत्येतावन्मधुस्वरूपं प्रत्यग्ब्रह्मणोरैक्यमिति भाष्यवार्तिकानुसारिव्याख्यानात् ' इति, ' मायाशब्दस्यच शक्तिपरत्वे लक्षणापत्तिः । ' माया वयुनं प्रज्ञा ' इति नैघण्टुकोक्त्या ज्ञाने यौगिकस्यापि तस्य मिथ्यारूढत्वात् । मिथ्याभूतस्य कारणे मन्त्रादावपि प्रयोगो लक्षणयैव । अस्येत्यस्य अव्यवहितेन्द्रपरामर्शकत्वे षष्ठ्यर्थासङ्गतिः । व्यवहितजीव परामर्शकत्वे स एव दोषः । अवतार्यावतारभावस्य षष्ठ्यर्थत्वेऽपि ' अयं वै हरयः ' इत्यादि ' इन्द्र ' इत्यादिच व्यर्थम् । नहीदमुपासनपरम्, निर्गुणप्रकरणस्य ' इदं वै तन्मधु ' इत्यादौ स्फुटत्वात् । ' युक्ताह्यस्य ' इत्यादौ अस्मदुक्तार्थस्य श्रुत्यन्तरसंवादस्योक्तत्वात् ' इति च गुरुचन्द्रिकायामुक्तम् । अत्र नानात्वस्य मायानिबन्धनत्वोक्त्या ' नानाविधज्ञातृज्ञेय ' इति प्रथमवाक्ये नानाविधत्वमपि मिथ्यात्वहेतुरिति सिद्ध्यति ॥

' अनृतेन हि प्रत्यूढाः ' ' अनृतमपिधानम् ' इति स्वरूपतिरोधाने, ' नासदासीत्, ' मायां तु प्रकृतिं विद्यात् ' इति अनिर्वचनीयत्वे मिथ्यात्वे ' मायिनं तु महेश्वरम् ' इति मायायाः परब्रह्मगतत्वे ' इन्द्रो मायाभिः ' इति मायायाः परब्रह्मगतत्वे विविधविचित्रविक्षेपे च प्रमाणम् । ' मम माया ' इति गीतावचनमपि मायायाः परब्रह्मगतत्वे प्रमाणम् । ' तदर्थयोगे च भवन्ति वेदाः ' इति सनत्सुजातीयभाष्ये (१.२१.) तदर्थयोगे— तस्य परमात्मनः जगदुपादानभूतमायार्थयोगे च भवन्ति वेदाः । तथाच श्रुतयः— ' इन्द्रो—ईयते ' ' अस्मान्मायी सृजते विश्वमेतत् ' (श्वे) ' मायिनं तु महेश्वरम् ' (श्वे) इति । तथाचाह भगवान् वासुदेवः ' दैवीह्येषा गुणमयी मम माया दुरत्यया ' इत्युक्तेः । ' प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ' इति क्षेत्रक्षेत्रज्ञत्वनिर्मिता [निमित्ता] मनादीसिद्धामविद्यां प्रकृतिशब्देनाह—' मायां तु प्रकृतिं विद्यात् ' इति श्रुतेः । अतो मायावच्छिन्नरूपत्वात् अनन्यदपि ब्रह्मरूपमात्मनो न वेत्ति । तथाचोक्तम् —' अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ' इति इति । (पं.पा) इति पद्मपादाचार्यैः ' अनादि

## श्रीभाष्यम्

**अनादिमायया सुप्तो यदाजीवः प्रबुध्यते'** (माण्डू.२.ख.२१) **इत्यादिभिर्निर्विशेषचिन्मात्रंब्रह्मैवा नाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते । यथोक्तम् । ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्नतु वस्तुभूतः । ततोहि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥ यदातुशुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषं ।**

## श्रुतप्रकाशिका

अनादित्वमाह । **अनादीति** । अत्रेशितव्यसापेक्षमहेश्वरत्वेन्द्रत्वबहुवचन श्रवणाद्विजातीय सजातीय स्वगतभेदसाहित्यं प्रतिपन्नमिति तदपनुत्तये व्याचष्टे । **निर्विशेषेति** । सगुणत्वे प्रतिपन्नेऽपि स्वरूपपरवाक्यानुगुण्या *द्दोषप्रतिपादनतत्पराणां वाक्यानां नप्रतिपन्नभेदे तात्पर्यमिति भावः । ब्रह्मैव इन्द्रादिशब्दप्रतिपन्नमपि स्वरूपपरवाक्योपदिष्टं ब्रह्मैवेति भावः अनादित्व सदसदनिर्वचनीयत्व तिरोधायकत्व विविधाध्यासकरत्वान्युपात्ततत्तद्वाक्यप्रतिपन्नान्याह । **अनाद्यविद्ययेत्यादिना** । स्वगतशब्देनाधिष्ठानतया सम्बन्धो विवक्षितः नतु सजातीयविजातीय * सहपठितस्वगतनानात्वम् ॥

**एवं** दोषवाचिवाक्यगतमिन्द्रमहेश्वरादिपदजातमर्थस्वारस्येन स्वरूपपरवाक्यप्राबल्यान्निर्विशेषवस्तुपरं व्याख्यातम् । अथ दोषवाचिभिरेवोपबृंहणवाक्यै निर्विशेषस्य वस्तुनएव दोषसम्बन्धित्वमुक्तमिति दर्शयति । **यथोक्तमिति** । चिन्मात्रब्रह्मणोऽज्ञानविजृम्भितत्वं जगतःप्रतिज्ञायते । **ज्ञानस्वरूपइति** । **नतु वस्तुभूतः** वक्ष्यमाणशैलाब्धिधरादिवस्तुभूतो न भवतीत्यर्थः । विज्ञानशब्देन विविधं ज्ञायतेऽनेनेतिकरणव्युत्पत्त्या अविद्याऽभिधीयते । प्रतिज्ञातं प्रपञ्चस्याविद्याकल्पितत्वं व्यतिरेकमुखेनोपपादयति । **यदेति** । **शुद्धम्** अविद्यारहितम् **निजरूपि** भेददर्शनरहितम् । तन्निमित्तकर्मक्षये अपास्तरागादिदोषम् समन्तात्कल्प्यतेऽनेनेति **सङ्कल्पः** अविद्या **वस्तुपु** धर्मिभूतपदार्थेषु **वस्तुभेदाः** अकारभेदाः मध्ये **'वस्त्वास्तिकिम्' 'महीघटत्व'** मिति श्लोकद्वयं जगदुपलब्धिप्रकारेण वस्तुभेदासत्यत्वोपपादकत्वेनो *पपाद्यप्रमेयाधिक्याभावादत्रानुपात्तम् । तच्च सिद्धान्ते दर्शयिष्यते विजातीयभेदाभावमुपसंहरति पूर्वार्धेन ॥

## गूढार्थसंग्रहः

रविद्याख्या माया तथाचोक्तं भगवता=प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । इति। इति सनत्सुजातीयभाष्ये (१.२०) शङ्कराचार्योक्तिमनुसृत्य गीतावचनं अविद्यायाः अनादित्वे प्रमाणतया उपन्यस्य तदर्थएव गौडपादाचार्यैः उक्त इति गौड पादकारिका उपन्यस्ता । इत्यभिप्रेत्य **अनादीत्यादि** गौडपादकारिका उपात्ता भगवता । गौडपादीये अनादिमाययेत्यादि वाक्ये 'स्वर्गकाम' इति 'यजेत' इतिच एकवचनस्य उपादेयकर्त्रैक्यपरत्वेऽपि स्वर्गकामइतिवत् सुप्तेकवचनमविवक्षितम् उद्देश्यविशेषणस्य ग्रहैकत्वाधिकरणादौ तथोक्तत्वात् । अतएव पुंस्त्वस्याविवक्षया स्त्रियः अपि पतिसाहित्येनाधिकारः षष्ठे उक्तः इति तद्युचन्द्रिकायां (ए.जीव.वा) उक्तम् । **अनाद्यविद्ययेति** । उदाहृतश्रुतिषु मायाशब्दसत्वेऽपि मायाऽविद्ययो-र्भेदः जरदद्वैतिसम्मतः विवरणे दूषितः । आरम्भणाधिकरणेऽपि पर्यालोचयिष्यते इति मायाऽविद्ययोरैक्यमेवेत्यभिप्रेत्य 'अनाद्यविद्ययेत्युक्तम् ॥

**ज्ञानस्वरूपो भगवान् यतोऽसौ इत्यादि** । एतेऽपिश्लोकाः सनत्सुजातीयभाष्ये शङ्कराचार्यैः उदाहृताः । परैः 'ज्ञानस्वरूपमत्यन्तनिर्मलं' इत्युपक्रम्य विष्णुपुराणश्लोकानां बहूनामुदाहरणेऽपि विषयभेदेन 'ज्ञानस्वरूपो भगवान् यतः असौ' इत्यादिकं पृथक्कृत्योदाहृतं भगवता । **यदाह्येवैष इति** । भयाभयहेतुत्वाच्च विद्वदविदुषोः अस्ति तद्ब्रह्म सद्वस्वा-

## श्रीभाष्यम्

**तदाहि सङ्कल्पतरोःफलानि भवन्ति नो वस्तुषु वस्तुभेदाः** ॥ [वि.पु.२.१२.३९.४०] **तस्मान्न विज्ञानमृतेस्ति किंचित् क्वचित्कदाचिद्द्विज वस्तुजातम्। विज्ञानमेकं निजकर्मभेदविभिन्न चित्तैर्बहुधाऽभ्युपेतम्** ॥ **ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकं सदैकं परमः परेशस्सवासुदेवो न यतोऽन्यदस्ति । सद्भावएवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत्संव्यवहारभूतं तत्रापिचोक्तं भुवनाश्रितंते** ॥ [वि.पु.२.१२.४३ ४४.४५) **इति अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति न पुनर्मृत्यवे,–तदेकं पश्यति,–न पश्यो मृत्युं पश्यति** [छा.७.प्र.२६.खं.२.वा] **'यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथसोऽभयंगतो भवति'** (तै.आनं

## श्रुतप्रकाशिका

**अथात्मबहुत्वस्य** काल्पनिकत्वमुच्यते विज्ञानमित्यर्धेन पूर्वोक्तमात्मैक्य मेकंसदैकमित्यत्रैकशब्देनानूद्य स्वगतनानात्वं निषिध्य परमपरेशादिशब्दानामपि वस्तुमात्रपरत्वं प्रतिपादयति । **ज्ञानमिति** । विशुद्धमित्यादिपदैरविद्यारहित्यं तत्कृतभेददर्शनवैधुर्यं तन्मूलशोकलोभादिविधुरताचोच्यते । तदैकम् जन्मवृद्ध्यादिरहितम् यथाऽन्यन्नास्ति तद्यथोक्तस्वरूपमित्यर्थः एतन्नपरतममित्याह । **सद्भावइति** । एतद्भुवनाश्रितं भुवनेनाधिष्ठानतया आश्रितं ज्ञानम् । संव्यवहारभूतं समन्ताद्व्यवहारविषयभूतं यद्वर्तते तत्रापि कारणमविद्येत्युक्तम् ॥

**एवं** सिद्धपरवाक्य पर्यालोचनया ब्रह्मण एव सत्यत्वं व्यतिरिक्तस्याविद्यापरिकल्पितत्वं च तत्त्वमित्युक्तम् ? ततः किं प्रस्तुतस्य कर्माङ्गकत्वानर्हवाक्यार्थ ज्ञानमोक्षोपायत्वस्येति शङ्काया मुपायपरवाक्यानामपि सिद्धपरवाक्यप्रतिपन्नार्थानुगुणोपायपरत्वमाह । **अस्याइति** । चश्शङ्कानिवर्तकः अस्याइत्यनेन सदसदनिर्वचनीयत्वादिविशेषणविशिष्टताविवक्षिता तस्या निवृत्तौ प्रमाणं दर्शयति । **नपुनरिति** । मृत्युरत्राविद्या तन्निवृत्तिश्चैक्यज्ञानादित्याह । **तदेकं षश्यतीति** । मृत्युकार्यस्य रोगादेरपि निवृत्तिं ज्ञापयति । **नपश्योमृत्युमिति** । 'न रोगं नोतदुःखता' मिति हि तच्छेषः निर्विशेषवस्तुज्ञानानन्तरमेवाभयप्राप्तिं दर्शयति । **यदाहीति** । अदृश्ये, प्रत्यक्षाद्यविषये । **अनात्म्ये** । आत्म्यं

## गूढार्थसंग्रहः

श्रयणेनहि अभयं भवति नासद्वस्त्वाश्रयणेन भयनिवृत्तिरुपपद्यते । कथमभयहेतुत्वं इति उच्यते 'यदाह्येव' यस्मादेषः साधकः एतस्मिन् ब्रह्मणि किं विशिष्टे अदृश्ये दृश्यं नामद्रष्टव्यं विकारः दर्शनार्थत्वाद्विकारस्य । न दृश्यं अदृश्यं अविकारइत्यर्थः । एतस्मिन्नदृश्ये अविकारे अविषयभूते अनात्म्ये अशरीरे यस्मादहृश्ये तस्मादनात्म्यं यस्मादनात्म्यं तस्मादनिरुक्तं विशेषोहि निरुच्यते विशेषश्च विकारः अविकारं तद्ब्रह्म–सर्वविकारहेतुत्वात् । तस्मादनिरुक्तं यस्मादेवं तस्मादनिलयनं निलयनं नीडः आश्रयः न निलयनं अनिलयनं अनाधारं 'तस्मिन् अदृश्ये अनात्म्ये अनिरुक्ते अनिलयने सर्वकार्य धर्मविलक्षणे ब्रह्मणीति वाक्यार्थः । अभयमिति क्रियाविशेषणम् । अभयामिति वा लिङ्गान्तरं परिणम्यते । प्रतिष्ठाम् स्थितिम्, आत्मभावम् विन्दते लभते । अथ तदा सः तस्मिन्नानात्वस्य भयहेतोरविद्याकृतस्यादर्शनात् अभयं गतो भवति । स्वरूपप्रतिष्ठोह्यसौ तदा भवीत । 'यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति' इत्यन्यस्य ह्यन्यतो भयं भवति । नात्मन एव आत्मनो भयं युक्तम् । तस्मादात्मैवात्मनोऽभयकारणम् । सर्वतो निर्भया हि ब्राह्मणा दृश्यन्ते सत्सु भयहेतुषु । तच्चायुक्तमसति भयत्राणे ब्रह्मणि । तस्मात्तेषामभयदर्शनात् अस्ति तदभयकारणं ब्रह्मेति । कदाऽसौ अभयं गतो

श्रीभाष्यम्

७.अ.२.वा] '**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे** ॥ (मुं.२.मुं.३.खं.९.वा) '**ब्रह्म वेद ब्रह्मैवभवति**' [मुं.३.मुं.२.खं.९.वा] '**तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था**' (श्वे.३.अ.८) **इत्याद्याश्श्रुतयः अत्र मृत्युशब्देनाविद्याऽभिधीयते यथा सनत्सुजातवचनं 'प्रमादंवै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमीति'** [भार

श्रुतप्रकाशिका

व्याप्यं शरीरम्। अशरीरे। **अनिरुक्ते**। अ(नाम)निर्वचनीये। **अनिलयने**। अनाधारे। * **अभयं**। अभयार्थम्। अव्ययीभावसमासः। **प्रतिष्ठा**। निष्ठा वादिभिर्बन्धमूलत्वेनाभ्युपगतस्य कर्मणोऽप्यविद्याकल्पितत्वात्तस्यापिज्ञानेन निवृत्तिमाह। **भिद्यतइति**। हृदयग्रन्थिरविद्या पूर्ववाक्येषु किंचिद्भेदः प्रतीतइवभवतीति तद्व्यावृत्तये ज्ञानस्यैक्यविषयत्वज्ञापनायैक्यापत्तिं फलं दर्शयति। **ब्रह्मवेदेति**। * यथोपासनंहि फलम्। अत ऐक्यज्ञानमेव बन्धनिवर्तकमितिभावः। उपायान्तरनिषेधार्थमुदाहरति। **तमेवेति**। नात्राविद्यानिवृत्तिः प्रतीयते तद्वाचिशब्दाश्रवणादित्यत्राह। **अत्रेति**। '**मृत्युर्धावतिपञ्चम**' इत्यादौ मृत्युशब्दस्य यमादिषु प्रयोगदर्शनात्तद्व्यावृत्त्यर्थमुक्तम्। **अत्रेति**। बन्धनिवृत्तिपरवाक्येष्वित्यर्थः। तत्र प्रयोगं दर्शयति। **यथेति**। **प्रमादं वै** इति वचनात्पूर्वत्र। **मोहोमृत्युस्सम्मतोयः कवीना** मित्युक्तम्। मोहोविपरीतज्ञानम्। तन्मृत्युरिति परमतम्। सनत्सुजातस्य तु प्रमादो मृत्युर्मतः। प्रमादो यथावद प्रतिपत्तिः। स्वरूपाग्रहणे ह्यन्यथाप्रतिपत्तिः तस्मान्मोहस्यापि हेतुरात्मन्यनवधानरूपः प्रमाद इति * तद्धेतुभूताऽविद्यैव प्रमादशब्देन विवक्षितेति सैव मृत्युरित्यभिप्रायः॥

गूढार्थसङ्ग्रहः

भवीत साधकः ? यदा नान्यत्पश्यति आत्मनि च अन्तरम् भेदम् न कुरुते तदा अभयं गतो भवतीत्याभिप्रायः' इति(शं) उपनिषद्भाष्यम्॥

**भिद्यते हृदयग्रन्थिरित्यादि**। हृदयग्रन्थिः— अविद्यावासनाप्रचयः। तस्मिन्— सर्वज्ञेऽसंसारिणि, दृष्टे। परावरे परं च कारणात्मना, अवरं च कार्यात्मना तस्मिन् परावरे साक्षादहमस्मीति दृष्टे संसरणोच्छेदान्मुच्यते इत्यर्थः, इति शां उ.भाष्यम्। अस्यां श्रुतौ प्रायश्चित्ततया दर्शनविधिमाशङ्क्य 'प्रायश्चित्ततया बन्धहेतूच्छेदोऽपि नो ततः। सर्वाविद्याप्रविलये न छेद्यमवशिष्यते॥ बन्धहेतुरविद्यात्मा विद्यायां साऽस्तमागता।' यतश्चाविद्याच्छेदेनैव कर्मोच्छेदः अतस्तुल्यवत् संशयविपर्यासाभ्यां प्रसंख्यातानि कर्माणि।' इति ब्रह्मसिद्धिः। श्रुतिं चेमामुदाहृत्य 'इत्यादिनाऽपि विज्ञानं नादृष्टार्थमितीरितम्।' (सम्बन्धवार्तिक.वृ.२९७ श्लो)

**ब्रह्म वेदेत्यादि**। एतदुत्तरं 'गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' इति वाक्यम्। गुहाग्रन्थिभ्यो विमुक्तस्सन्नमृतो भवतीति। उक्त एव 'भिद्यते हृदयग्रन्थिरित्यादि' इति शां उ भाष्यम्। अविद्यानिवृत्तौ जीवब्रह्माभेदः ब्रह्मात्मभावास्स्यतीति श्रुतितात्पर्यमिति भावः॥ **तमेव विदित्वेति**। अत्र ब्रह्मान्याविषयकं ब्रह्मविषयकं ज्ञानं अविद्यानिवृत्तिसाधनतया विवक्षितमिति परेषामाशयः॥

**प्रमादं वै मृत्युमित्यादि**। अत्र भाष्यं (शं) प्रमादः प्रच्युतिः स्वाभाविकब्रह्मभावात् तं प्रमादं मिथ्याज्ञानस्यापि कारणं आत्मानवधारणं आत्माऽज्ञानं मृत्युं जननमरणादि सर्वानर्थबीजं अहं ब्रवीमि तथासदाऽप्रमादं स्वाभाविकस्वरूपेण

## श्रीभाष्यम्

ज्यो.४१.अ.४] ‘ **सत्यं ज्ञानमनन्तंब्रह्म** ’ [तै.आन.१.अ.१] ‘ **विज्ञानमानन्दं ब्रह्म** ’ (बृ.५.अ.९.ब्रा.२८) **इत्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूप ब्रह्मात्मैकत्वविज्ञानंच** ‘ **अथ योऽन्यां देवतामुपास्ते ऽन्योसावन्योऽहमस्मीति न स वेद** ’ [बृ.३.अ.४.ब्रा.१०.वा] ‘ **अकृत्स्नोह्येषः** ’ (बृ.३.अ.४.ब्रा.७ वा) ‘ **अत्मेत्यवोपासीत** ’ [३.४.७] ‘ **तत्त्वमसि** ’ [छा.६.प्र.८.ख.७.वा] **त्वं वा अहमस्मि भगवो-**

## श्रुतप्रकाशिका

**उपात्तेषु** वाक्येषु ज्ञानस्याविद्यानिवर्तकत्वं प्रतिपन्नं ब्रह्मणो निर्विशेषचिन्मात्रत्वं तेनात्मन एकत्वज्ञानं निवर्तक-मितिच्च न प्रतिपन्नमित्यत्राह । **सत्यं ज्ञानमिति** । सत्यज्ञानादिवाक्यं सर्वतो व्यावृत्तत्वदर्शनार्थमुपात्तम् । पुरुषार्थ-त्वायासुखाद्व्यावृत्तिज्ञापनार्थमुपात्तं । **विज्ञानमानन्दमिति** । आदिशब्देनास्थूलमित्यादिग्रह्यते । एवं ब्रह्मणो निर्वि-शेषत्वे शोधकवाक्यान्युदाहृतानि । अथ ब्रह्मात्मैक्यप्रतिपत्तौ श्रुतिमुपादत्ते । **अथ य इति** । **अथयोन्या** मित्यैक्यो-पासनविधिर्भेदवासनानिरासार्थः * विहितोपासन स्यैक्यविषयतां ज्ञापयितुमैक्योपदेशं दर्शयति । **तत्त्वमसीति** ।

## गूढार्थसंग्रहः

अवस्थानममृतत्वं ब्रवीमि । तथाच श्रुतिः स्वरूपावस्थानमेव मोक्षपदं दर्शयति ‘ परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनि-ष्पद्यते ’ इति । (छा.उ.९.१२.२) एवं तत्रैवोत्तरश्लोकभाष्यम् । बृहदारण्यके प्रमादाख्यस्याज्ञानस्य साक्षान्मृत्युत्वं दर्शि-तम् ‘ मृत्युर्वै तमो ज्योतिरमृतम् ’ (बृ.उ.३.३.२९) इति ॥ **शोधकवाक्यावसेयेति** । ‘ सत्यं ज्ञानमनन्तं ब्रह्म ’ इति वाक्यं प्रस्तुत्य अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयतीति वक्ष्यते । अतश्चैतद्वाक्यमखण्डार्थसामानाधिकरण्य-वाक्यम् । सत्यपदमसत्यव्यावृत्तपरम्, ज्ञानपदम् जडव्यावृत्तपरम्, अनन्तपदम् परिच्छिन्नव्यावृत्तपरमित्यप्युत्तरत्र वक्ष्यते। अतः ब्रह्मणः अनृतजडपरिच्छिन्नत्वविरहबोधकत्वेनास्य वाक्यस्य शोधकवाक्यत्वेन व्यवहारः । ‘ सत्यं ज्ञानम् ’ इतिवत् ‘ विज्ञानमानन्दं ब्रह्म ’ इति वाक्यमपि शोधकवाक्यमेव । सत्यं ज्ञानमित्यत्र सच्चिद्रूपत्वम् विज्ञानमानन्दमित्यत्र चिदानन्द-रूपत्वं प्रतिपादितम्। ‘ विज्ञानमानन्दं ब्रह्मे ’त्यतः पूर्वं ‘ तं त्वौपनिषदं पुरुषं पृच्छामि ’ इतिवाक्यम्। वाक्यद्वयैकार्थ्येन पुरुष-ब्रह्मशब्दार्थयोरैकार्थ्यात् उपनिषत्तात्पर्यविषयत्वं सच्चिदानन्दरूपनिर्विशेषब्रह्मण एवेति ‘ विज्ञानमानन्दं ब्रह्म ’ इति वाक्यो-पादानेन सूचितम् । अत्र पदार्थनिष्ठसामानाधिकरण्यम्, ‘ तत्त्वमसि ’ इत्यत्र वाक्यार्थनिष्ठसामानाधिकरण्यमिति ‘ सत्यं ज्ञानम् ’ इति वाक्येन निर्विशेषस्वरूपस्य ब्रह्मणः तत्पदार्थस्य निश्चयः । तस्य जीवैकत्वविज्ञानं च वाक्यार्थनिष्ठसामाना-धिकरण्यवाक्यात्तत्त्वमसीत्यादेः इत्याशयेनाह- **शोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं चेत्यादिना** ॥

**अथ योऽन्यां देवतामित्यादि** । ‘ आत्मेत्येवोपासीत ’ इत्यत्र आत्मन् शब्दार्थनिर्णयार्थं ‘ अथ योऽन्याम् ’ इति (बृ.३.४.१०) उत्तरश्रुतेरुपादानम् । उत्तरत्र ‘ अथ योऽन्याम् ’ इति वाक्ये स्वापेक्षया अन्योपासकस्य ‘ न स वेद ’ इति ज्ञानाभावप्रतिपादनेन ‘ अकृत्स्नोह्येष, आत्मेत्येवोपासीत ’ (बृ.३.४.७.) इति पूर्ववाक्यात् अव्यवहितपूर्ववाक्ये ‘ स योऽत एकैकमुपास्ते न स वेद ’ इत्यत्र भेददर्शननिषेध एव विवक्षित इति निश्चीयते । एवं च ‘ आत्मेत्येवोपासीत ’ इत्यत्र जीवब्रह्माभेदज्ञानमेव विवक्षितम् । अत एव ‘ तदात्मानमेवावैत् अहं ब्रह्मास्मीति ’ इत्युत्तरवाक्यमपि सङ्गच्छत इति भावः । **तत्त्वमसीति** । नवकृत्वोऽभ्यासः अत्र विशेषः । एवं षड्विधतात्पर्यलिङ्गानिच यथावसरं निरूपयिष्यन्ते ॥

### श्रीभाष्यम्

**देवते अहंवै त्वमसि भगवोदेवते तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मीत्यादि वाक्यसिद्धम्। वक्ष्यति चैतदेव ‘ आत्मेतितूपगच्छन्ति ग्राहयन्ति चेति ’** [शा.४.अ.१पा.३.सू] **तथा च वाक्यकारः ‘ आत्मेत्येवतु गृह्णीयात् सर्वस्यतन्निष्पत्तेरिति ’** )वाक्यम्) **अनेनच ब्रह्मात्मैकत्वाविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता ॥**

### श्रुतप्रकाशिका

* उपदेशानुगुणमुपासको देवतां प्रत्याह । **त्वंवेति** । उपदिष्टार्थ मात्मन्यनुसन्धत्ते । **तद्योऽहमिति** । अस्यार्थस्य श्रुतिविवक्षितत्वसिद्धये सूत्रं दर्शयति । **वक्ष्यतिचेति** । **‘ आत्मेतितूपगच्छन्ति ग्राहयन्तिच * आत्मेत्येवोपासीत । तथाह्युपगच्छान्ति मुमुक्षुव उपासत** इत्यर्थः । ग्राहयन्तिच, ज्ञापयन्तिच्च तथा शास्त्राणि । सूत्राकाराभिप्रायविद वाक्यं दर्शयति । **तथाचेति** । तन्निष्पत्तेः तत्र कल्पितत्वादित्यर्थः ॥

**न केवलं** श्रुति: तदनुग्राहकतर्कोऽप्यस्तीत्याह । **अनेनचेति** । चस्समुच्चये । कर्मनिरपेक्षज्ञाननिवर्त्यत्वायाह । **मिथ्यारूपस्येति** । हेतुत्वं गर्भितम् । सकारणस्य अविद्याभेददर्शनसहितस्य बन्धस्य निवृत्तिर्युक्ता न हि मिथ्यासर्पनिवृत्तौ नायं सर्पोरज्जुरेषेति ज्ञानादृते कर्मापेक्षाऽस्तीति भाव: । अथानुमानागमयोर्व्याप्तिग्रहणलिङ्गदर्शनधर्मिप्रतिप्रतिपत्त्यर्थं

### गूढार्थसंग्रहः

**आत्मेति तु इति** । आत्मेत्यत्र परमेश्वरः प्रतिपत्तव्यः । तथाहि परमेश्वरप्रक्रियायां जाबालाः आत्मत्वेनैतमुपगच्छन्ति । ‘ त्वं वाऽहमास्मि भगवो देवते अहं वै त्वमसि देवते ’ इति । तथाऽन्येऽपि ‘ अहं ब्रह्मास्मि ’ इत्येवमादयः आत्मत्वोपगमाः द्रष्टव्याः । ग्राहयान्ति चात्मत्वेनैव ईश्वरं वेदान्तवाक्यानि ‘ एष त आत्मा सर्वान्तरः ’ (बृ.५.४.१.) ‘ एष त आत्माऽन्तर्याम्यमृतः ’ (५.७.३.) ‘ तत्सत्यम् स आत्मा तत्त्वमसि ’ इत्येवमादीनि । इति भाष्यम् । (शां.सू.भा) अत्र ‘ एष त आत्मा ’ इत्यत्र त्वदभिन्न इत्येवार्थ इत्यभिप्रायः ॥ **अनेन चेत्यादि** । अत्र जगतस्सत्यत्वेऽनिर्मोक्षप्रसङ्गः इत्यप्यभिप्रेतम् ॥

‘ शास्त्रदृष्टविरोधाच्च ’ इति (पू मी १.२.२.) सूत्रे दृष्टविरोधादर्थवादस्याप्रामाण्यमाशङ्क्य ‘ रूपात्प्रायात् ’ ‘ गुणवादस्तु ’ इति सूत्राभ्यां गौणार्थकत्वेन प्रामाण्यं साधितं जैमिनिना । यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तम् ; ‘ स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकं याति ’ इति प्रत्यक्ष शारीरकं व्यपदिशतीति, तदुच्यते । शरीरसम्बन्धात् यस्य तच्छरीरं सोऽपि यज्ञायुधैः यज्ञायुधीत्युच्यते ’ इति शाबरं भाष्यम् । ‘ साक्षाद्यद्यपि सम्बन्धो नात्मनो यज्ञसाधनैः । तथाऽपि लक्षणावृत्त्या शरीरद्वारको भवेत् ॥ (श्लोकवार्तिकं आ वाद १ श्लो) तस्माद्यथाऽऽकृतौ शास्त्रं प्रवृत्तं व्यक्तिमाश्रयेत् । तथा पुंसि प्रवृत्तस्य भूतेन्द्रियसमाश्रयः ॥ (श्लो वा.आ वा.९१) इति, एवं ‘ न च शक्यमेवमवगन्तु यथोपलभ्यन्ते अर्था न तथा भवन्तीति, यथातु खलु नोपलभ्यन्ते तथा भवन्ति इति । तथा सति हि शशो नास्ति शशस्य विषाणमास्ति इत्यवगम्येत । नचाहं प्रत्ययो व्यामोह इति शक्यते वक्तुम्। बाधकप्रत्ययाभावात् । तस्मात् सुखादिभ्यो व्यतिरिक्तोऽस्ति । एवं चेत् स एव यज्ञायुधीति व्यपदिश्यते इति च शा भाष्यम् । (आ.बा) ‘ नचाहं प्रत्ययो भ्रान्तिरिष्टो बाधकवर्जनात् ’(श्लो वा.आ.वा.१२५) ‘ येचेहाज्ञातनानात्वाः तेषां देहेष्वहं मतिः (१३२) येतु विज्ञातनानात्वाः ते देहेष्वनहंकृता ’ [१३३] इतिच वार्तिकम् । तस्मात् असम्भिन्नेदंप्रत्ययएव अहं प्रत्ययआलम्बनम् । व्यामोहोऽयमहंकारग्रन्थिरिति न शक्यते वक्तुं

## गूढार्थसंग्रहः

यस्यच दुष्टं करणं यत्रच मिथ्येति भवति प्रत्ययः सएव असमीचीनः प्रत्ययः नान्यः इति सिद्धत्वादस्यार्थस्य । यदि परं ब्रह्मविदां एष निश्चयः यदुपलभ्यते तदसत् यन्नोपलभ्यते तत्तत्त्वं नमस्तेभ्यः विदुषिनोत्तरं वाच्यं इति अत्र परिहारः । तस्मात् यथार्थोयं अर्थवादः 'स एष यज्ञायुधी यजमानिः' इति इतिबृहती ॥

उपसंहरति 'तस्मात् असंभिन्नेदंप्रत्ययएव अहं प्रत्ययः आत्मनः आलम्बनं । असम्भिन्नः अमिश्रीकृतः' इदंप्रत्ययः येन अहं प्रत्ययेन सएव आत्मनः आलम्बनं व्यवस्थितौ कारणं इत्यर्थः । इति तस्मान्नायथार्थोऽयं अर्थवादः 'स एष —याति' इति इति ऋजुविमला च । एतत्तात्पर्यपर्यालोचनायां अध्यासभाष्ये परैः (शं) उक्तोऽर्थः शबरादीनामसम्मत इति स्फुटम् । एवं उपवर्षस्यापि वृत्तिकारस्य, वृत्तिकारसम्मतसूत्रव्याख्यानावसरे इत्थमुक्तेः । अत एव 'तत्र प्रत्यक्षमात्मानमौपवर्षाः प्रपेदिरे । अहंप्रत्ययगम्यत्वात् सयूथ्या अपि केचन ॥' इति न्यायमञ्जर्यां जयन्तोक्तिस्सङ्गच्छते । अत्र वार्त्तिके कुमारिलेन आकृतिवाचिनां शब्दानामाकृतिव्यक्त्युभयबोधपरत्ववत् शरीरशरीर्युभयबोधपरत्वं अर्थवादवाक्ये उपपादितम् । सम्बन्धाक्षेपपरिहारे च 'स्वाभाविकीमविद्यां च नोच्छेत्तुं कश्चिदर्हति ॥ (८५) विलक्षणोपपाते हि नश्येत्स्वाभाविकी क्वचित् । नत्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः ॥' (८६) इति वार्तिके ऐकात्म्यमविद्या चेत्युभयं परसम्मतं वृत्तिकाराद्यसम्मतमिति स्फुटम् । अत्र 'निरस्तश्चायं पक्षः निरालम्बनवादेनेति ऐकात्म्याविद्यापक्षः निराकृतः निरालम्बन वादेन' इति न्यायरत्नाकरेऽभिहितम् । निरालम्बनवादे 'बाह्यार्थापह्नवे द्वैतम्' (श्लोकवा.नि.वा.१७) इत्यादिना प्रमाणानुपपत्तिप्रमेयानुपपत्तिभ्यां योऽयमपह्नव उक्तः स एव ब्रह्मविवर्तवादिभिरनुसृतः । 'तस्माद्यन्नास्ति नास्त्येव...न सत्यद्वयकल्पना' (नि.वा.१०) इति । 'सिद्धि र्नापरमार्थेन परमार्थस्य युज्यते' इत्यत्र दूषितं सत्यद्वयकल्पनं असत्यात्सत्यसिद्धिरित्युभयं ऐकात्म्यवादिनां संमतम् । एतदुभयमप्युपवर्षासमतमिति एतेन सिद्धम् ॥

अत एव 'चैतन्यात्मकत्वाद्यविभागाच्चोपनिषत्सु ऐकात्म्यव्यवहारः' इति अपूर्वाधिकरणे कुमारिलोक्तिः संगच्छते। अत्र चैतन्यात्मकत्वादिकं एकं अविभागश्चेत्यपरं हेतुद्वयं ऐकात्म्यव्यवहारे विवक्षितम् । 'आनन्दमेकमिति' ब्रह्मसिध्युपक्रमवाक्ये एकमिति पदावतरणे एकत्वश्रुतिः जातिदेशकालविभागाभावनिमित्तोपचारात् मन्यन्ते । इत्यत्र चैतन्यात्मकत्वादि इति कुमारिलवाक्ये जातिदेशकालाविवक्षिताः अविभागश्चान्यः । इति 'स्वाभाविकीं अविद्यां' तु इत्यादिना कुमारिलोक्तानि दूषणानि परिहरता मण्डनेन स्फुटमभिधानात् । अत्र चैतन्यात्मकत्वं जीवाद्वैतश्रुतीनां अविभागश्च ब्रह्माद्वैत श्रुतीनां इति विषयविभागो अवसेयः । तत्र तत्र सर्वज्ञात्मनिराकरणं कुर्वता कुमारिलेन ग्रहैकत्वाधिकरणे 'तथा व्योम शरीरोऽपि परमात्माश्रुतौ श्रुतः । इज्यते वारिणानित्यं यः खं ब्रह्मेति चोदितः' ॥ 'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वं एकेन परमात्मना' ॥ इति परमात्मा अभ्युपगतः । अत्र न्यायसुधा । कस्याः श्रुतेः व्योमशरीरता श्रुता इत्यपेक्षायां 'खं ब्रह्म' (छा.४.१०.५) इति श्रुत्या व्योमशरीरत्वम् उदितइत्युक्तम् । 'य आकाशे तिष्ठन् आकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' (बृ.५.७.१२) इति श्रुत्यन्तरसूचनार्थः चकारः इति । अत्र 'आकाशशरीरं ब्रह्म' इति श्रुतिरपि विवक्षिता । न्यायसुधायां 'खं ब्रह्म' इति सामानाधिकरण्यनिर्देशे आकाशशरीरब्रह्मणः प्रतिपाद्यत्वाभिधानात् सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनं इति स्फुटं बोधितम् ॥

आत्मवादे आकृतिव्यक्तिबोधकशब्दवत् शरीरशरीर्युभयबोधः कुमारिलेनोपपादितः । अतः आकृत्यधिकरणन्यायः अस्मिन् सामानाधिकरण्येऽपि मूलभूत इति प्रतीयते । तत्र च 'प्रयोगचोदनाभावात् अर्थैक्यमविगात्' इति सूत्रम् ।

## गूढार्थसंग्रहः

अत्र वार्तिकम् । ' प्रयोगचोदनाभावात् व्यक्तिर्वाच्या नतूभयम् । अर्थैकत्वं यतो युक्तमविभगात् द्वयोर्गतिः ॥ ' इति । कथं तर्हि आकृतिप्रत्ययः ? इति चेत् ; अत आह– अविभागादिति । यस्तु नित्यमेव व्यक्त्याकृत्योरविभागः तस्माद्व्यक्तिः अभिहिता सती शक्नोत्येवाकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे ' यस्यतु पदस्य योऽर्थोऽभिधेयतयाऽऽश्रितः तस्य तत्परिहारासम्भवात् अवश्यं तत्रस्थस्यैवार्थान्तरं लाक्षणिकत्वेनाभ्युपगन्तव्यमिति । अत्र न्यायसुधा । ' एतच्च ' यत्रहि शुक्ल इति वा कृष्ण इति वा गुणः प्रतीतो भवति, भवति खल्वसौ अलं गुणवति प्रत्ययमाधातुम् ' इति तद्भूताधिकरणभाष्येण तुल्यन्यायत्वादुक्तं भवतीत्याह– तदुक्तमिति ' ।

यद्यपि इदं पूर्वपक्षसूत्रवार्तिकम्, तथाऽपि ' तदर्थत्वात् प्रयोगस्याविभागः ' इति सिद्धान्तसूत्रे आकृतिव्यक्त्योरत्यंतभेदाभावात् कदाचिद्व्यक्तिरूपेण द्रव्यमभिधीयते कदाचित्सामान्यरूपेण यथा विवक्षितं तथा शब्दस्य उभयरूपवस्त्वर्थत्वात् व्यक्त्यभिधानेऽपि न प्रयोगस्य विभागो नानारूपतेति । जातेर्वा व्यक्तितोऽत्यन्तभेदाभावात् व्यक्तौ कृता धर्माः जातौ कृता भवन्तीति न प्रयोगस्य विभागेन प्रयोजनमस्तीति । यद्वा ' आकृतिव्क्त्योरुभयोः यागार्थत्वात् धर्माणां च यत्र क्वचन यागसाधने कृतानां प्रयोजनवत्त्वात् द्रव्यादविभक्ततेति ' इत्युक्त्या जातिव्क्त्योरविभागस्सिद्धान्तेऽप्यभ्युपगतः । शरीरशरीरिभावस्थलेऽपि इत्थमेवाविभागादर्थैकत्वं जैमिनिसम्मतमिति निर्धारणेन उपनिषत्सु ब्रह्मकात्म्यव्यवहारे ऽयमविभागो मूलमिति कुमारिलवाक्यानां सर्वेषां पर्यालोचनेन कुमारिलाशयः स्फुटो निर्मत्सराणां विदुषाम् । इत्थं वदतः कुमारिलस्य तद्भूताधिकरणे उक्तं नीलमुत्पलमित्यादिसामानाधिकरण्यं गौणमित्यभिप्रेत्य व्यासेन मुख्यसामानाधिकरण्यस्य ब्रह्मैक्यपरेषु वाक्येषु स्थापनार्थं ' अथातो ब्रह्मजिज्ञासा ' इति सूत्रं प्रणीतमिति पञ्चपादिकायामभिहितोऽर्थः न सम्मत इति स्फुटं प्रतीयते । खण्डदेवेनापि भाट्टरहस्य ' यदि तु इच्छात्वस्य आत्मगतवृत्तित्वमेवेत्याग्रहः तदा लिङादिवैदिकशब्दे श्रौतात्मशब्दप्रयोगाभावेन ईश्वर इवात्मत्वाङ्गीकारे मानाभावात्, उपनिषदादिप्रमाणगम्यमीश्वरमप्यङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थः तात्पर्यरूपा च ' इति वदता ब्रह्मैकत्वाधिकरणवार्त्तिकादिकमेव मूलत्वेनाभ्युपगतमिति प्रतीयत इति खण्डदेवस्याप्युपनिषत्सु सामानाधिकरण्यमविभागनिबन्धनमेव विवक्षितमिति प्रतिभाति ॥

आत्मवादे ' बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता । ' इति दिङ्नागोक्तसगुणात्मवाददूषणस्य परिहारकथनदशायां ' नानित्यशब्दवाच्यत्वं आत्मनो विनिवार्यते । विक्रियामात्रवाचित्वे नह्युच्छेदोऽस्य तावता ॥ ' (श्लो.वा.आ.वा. २२) स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ । नत्ववस्थान्तरप्राप्तौ लोके बाल्युवादिवत् ॥ (२३) अवस्थान्तरभाव्येतत् फलं मम शुभाशुभम् । इति ज्ञात्वाऽनुतिष्ठंश्च विजहच्चेष्टते जनः ॥ (२४) सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम । चैतन्यद्रव्यसत्ताऽदिरूपं न च विमुञ्चति ॥ ' इत्यत्र आत्मनः परसम्मतकूटस्थत्वमनङ्गीकृत्य नित्यत्वमुपपादितम् । अत्र अवस्थान्तरभाव्येतत् इत्युक्तप्रकारेणैव व्याकरणाधिकरणे ' स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते । नच पुनरावर्तते ' (छा.८.११.१.) इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनं इत्युक्तम् ॥

एतेन ' अतीतेऽनागते चार्थे सूक्ष्मे व्यवहितेऽपि च । प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥ (श्लो वा.प्र.सू. २६) इत्यत्र अत्र कैचिदिति वेदान्तवादिनो वदन्तीति काशिकाव्याख्याने धर्मभूतज्ञाननित्यत्वं भट्टपादसम्मतमिति स्थापयता सुचरितमिश्रेणोक्तार्थः भट्टपादसम्मत इति प्रतीयते । अत एव व्याकरणाधिकरणे ' तरति शोकमात्मवित् ' (छा.७.१ ३) इति श्रुत्युपादानेन ' सर्वं ह पश्यः पश्यति ' (७.२६.२.) इत्युपसंहारोक्तौ मुक्तावात्मविदः सर्ववस्तुसाक्षात्काररूपफल सूचनमपि सङ्गच्छते । एवं आत्मवादे ' नैरात्म्यवादपक्षे तु पूर्वमेवाववुध्यते । मद्विनाशात् फलं न स्यात् मत्तोऽन्यस्याथ

### श्रीभाष्यम्

**ननुच सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते ?**

### श्रुतप्रकाशिका

व्युत्पत्त्यर्थंच प्रत्यक्षनापेक्षत्वादनुष्णोऽग्निर्द्रव्यत्वात् । '**आदित्यो यूपः**' '**यजमानः प्रस्तर**' इत्यादिष्वनुमानागमौ प्रत्यक्षाविरुद्धार्थप्रतिपादनाशक्तौ दृष्टौ तस्मान्नप्रत्यक्षविरुद्धार्थप्रतिपादनक्षमा श्रुतिरित्याभिप्रायेण भेदवादी चोदयति— **ननु चेति**। श्रुतिवाक्येष्ववान्तरचोद्येषु परिहृतेष्विदमपि चोद्यमस्तीति चार्थः । स्वप्नादिषु सर्पभूदळनादिषु च

### गूढार्थसंग्रहः

वा भवेत् ॥ (श्लो.वा.आ.वा.३२.) इति नैव प्रवृत्तिस्स्यात् नच वेदप्रमाणता । जन्मान्तरेऽभ्युपेतेऽपि ज्ञानमात्रात्मवादिनाम् ॥ ' (३३) इति नैव प्रवृत्तिस्स्यात् नच वेदप्रमाणता ' (३४) इत्यत्र नैरात्म्यवादिनामिव निर्गुणात्मवादिनाम् मुक्तावहमर्थविनाशे मोक्षार्थप्रवृत्तिः न घटते वेदप्रामाण्यं च इत्युक्तम् । आत्मवादान्ते च

' इत्याह नास्तिक्यनिराकरिष्णुः आत्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन ॥ ' (श्लो.वा)

इत्युक्तम् अत्र ज्ञातृहमर्थसगुणात्मवादः वेदान्तनिषेवणेन दृढीभवति इत्यर्थः स्फुटो निर्मत्सराणम् । व्याकरणाधिकरणे ' यः आत्मा—सत्यकामः सत्यसङ्कल्पः ' [छा.८-७-१] इति श्रुत्युपादानेन तत्र ' अथ योवेदेदंजिघ्राणीति स आत्मा ' इत्यादिश्रुत्या ' य आत्मा ' इत्यत्र अहमर्थज्ञात्रात्मनएव विवक्षा अतएव सत्यकामत्व सत्यसङ्कल्पत्व धर्मवत्वमात्मनः उपपद्यते । तत्रैव ' परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ' इत्यत्र परमात्मप्राप्त्यवस्थायाः स्वस्वरूपाविर्भावस्यच कथनं च संगच्छते । इत्यर्थः कुमारिलेनैव सूचितो भवतीति आत्मविषयप्रबोधस्य वेदान्तनिषेवणेन दृढीकरणमपि व्याकरणाधिकरणोक्तं कुमारिलस्य विवक्षितमिति प्रतीयते । व्याकरणाधिकरणे ' य आत्मा ' इति श्रुत्युपादानात्पूर्वं ' सर्वत्रैव हि विज्ञानं संस्कारत्वेन गण्यते । पराङ्ग चात्मविज्ञानादन्यत्रेत्यवधारणात् ॥ ' इति श्लोकः तन्त्रवार्तिकस्थः बृहदारण्यवार्तिके (३.४.१२५४) उदाहृतः । तत्र अपहतपाप्मादिशास्त्रेण मोक्षहेतुं तज्ज्ञानमाचक्षाणेन तद्वर्जयित्वा ज्ञानान्तरमेव परार्थमित्यवधारणात् तत्स्वतन्त्रमेव मुक्तिफलमित्यर्थः इत्यानन्दगिरिविवरणम् । एतत्पर्यालोचनायां प्रागुक्त एवार्थः कुमारिलसम्मतः वार्तिके इति च प्रतीयते । एतेन व्याकरणाधिकरणे न्यायसुधायाम् सगुणनिर्गुणात्मभेदस्य कुमारिलभिमतत्वकल्पनं खण्डदेवस्य भाट्टकौस्तुभे तदनुसरणं चाभिनिवेशैकमूलमिति सिद्धम् ॥

एवं व्याकरणाधिकरणे ' अप्रकरणगतत्वेनानैकान्तिकक्रतुसम्बन्धाच्च नाञ्जनखादिरस्रुवादिफलश्रुतिवदर्थवादत्वम् ' इति ' स खल्वेवं वर्तयन् ' इत्यादिफलश्रुतेरर्थवादत्वनिराकरणेन भावार्थाधिकरणे क्रत्वर्थकर्तृप्रतिपादनद्वारेण उपनिषदां नैराकाङ्क्ष्यं व्याख्यातमिति स्वोक्तौ नैर्भय्यं नास्तीति सूचितम् । सम्बन्धाक्षेपपरिहारे सृष्ट्यादिदूषणेऽपि कुमारिलस्य तात्पर्यं नास्तीति एतेन सिद्धम् । एतेन ग्रहैकत्वाधिकरणे आकाशशरीरपरमात्माभ्युपगमेन व्याख्यानं अभ्युच्चयमात्रमिति न्यायसुधाकारकल्पनमपि औत्प्रेक्षिकमिति सिद्धम् । एवं च ' स एष यज्ञायुधी ' इति वाक्ये प्रत्यक्षाविरोधेन अर्थवर्णनकृतां शबरादीनां प्रत्यक्षविरुद्धार्थे श्रुतेस्तात्पर्यं नैव कल्पनीयमिति सिद्धम् । अत एव प्रकरणपञ्चिकायां (तत्त्वालोके) ब्रह्मसिद्धिकार मतं दूषयित्वा ' अतः प्रत्यक्षाविरोधात् आम्नाये गौणी लाक्षणिकी वा वृत्तिराश्रयेति शालिकानाथेनोक्तं सङ्गच्छते । अतश्च पूर्वमीमांसकानां ब्रह्मविवर्तैकात्म्यवादप्रतिद्वान्द्वितया तन्मतानुसारेण शङ्कते— **ननु च सकलभेदनिवृत्तिरित्यादिना** ।

## श्रीभाष्यम्

**कथं वा रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते । तत्र द्वयोःप्रत्यक्षयो र्विरोधः इहतु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेतिचेत् तुल्ययोर्विरोधेवा कथं बाध्य बाधकभावः । पूर्वोत्तरयोर्दुष्टकारणजन्यत्व तदभावाभ्यामितिचेत् शास्त्रप्रत्यक्षयोरपि समा नमेतत् । एतदुक्तं भवति बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम्। ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् ।**

## श्रुतप्रकाशिका

कतिपयभेदनिवृत्तिर्दृष्टा । तद्व्यावृत्त्यर्थस्सकलशब्दः अत्र किं प्रत्यक्षत्वान्नबाध्यत्वम् । उत परोक्षत्वा न्मूलित्वाच्च न बाधकत्वमितिशङ्काद्वयं हृदि निधाय प्रथमं प्रत्यक्षत्वादबाध्यत्वमित्येतत्परिहरति । **कथंवेति** । स तु प्रत्यक्षाभास इतिचेत् । न प्रतीतिदशायामाभासत्वानवगमात् । पश्चात्प्रमाणबाधेन ज्ञायत इतिचेत् तत् प्रपञ्चग्राहिप्रत्यक्षस्यापि तुल्यम् । भेदस्य श्रुतिबाधादित्येतदत्राभिप्रेतम् । मूलित्वात्परोक्षत्वाच्च न बाधकं शास्त्रमिति शङ्कते । **तत्रेति** । **इहत्विति** । तुल्यत्वव्यावृत्तये तु शब्दः । **प्रत्यक्षमूलस्येति** । मूलित्वान्नशास्त्रं बाधकमिति भावः । **शास्त्रस्येति** । परोक्षत्वान्न-बाधकमिति भावः । तुल्यत्वे प्रयोजके सति बाध्यबाधकभावो विपर्ययेणापिस्यादिति तदप्रयोजकम् । अतस्तच बाध्य-बाधकभावे प्रयोजकान्तरं त्वयाऽपि वक्तव्यम् । तदेवास्माकमपि प्रयोजकमित्यभिप्रायेणाह । **तुल्ययोरिति** । बाध्य बाधकभावानियमव्यावृत्तये भेदबाधाभिमतत्वेन प्रयोजकान्तरं शङ्कते । **पूर्वोत्तरयोरिति** । पूर्वोत्तरयोः बाध्यबाधकयोः । त्वदुक्तं प्रयोजकमत्रापि तुल्यमित्याह । **शास्त्रेति** । मूलमूलित्वादिसद्भावे मूलस्य प्रत्यक्षस्य बाधकत्व, मितरस्य बाध्यत्वं, च दृष्टम् । अतोमूलमूलित्वपरोक्षत्वापरोक्षत्वादि वैषम्यराहित्ये सति *दुष्टकारणजन्यत्वतदभावौ बाध्यबाधकभावे प्रयो-जकाविति शङ्कायामाह । **एतदुक्तमिति** । *तुल्यत्वे सति दुष्टकारणजन्यत्व तदभावौ न प्रयोजकावित्यभिप्रायेण तुल्यशब्दः प्रयुक्तः । विशिष्टस्य हेतुत्वे विशेषणांशस्यापि हेतुत्वात् । * तुल्यशब्देनैकदेशोपादानम् । दुष्टकारण-जन्यत्वतदभावविशेषणीभूतं तुल्यत्वं विवक्षितम् । तुल्यत्वे सति विपरीतप्राबल्यदौर्बल्यकारणाभावे सति दुष्टकारण-जन्यत्वतदभावौ न प्रयोजकावित्यर्थः । सापेक्षत्वं निरपेक्षत्वं मूलमूलिभावः । आदिशब्देन परोक्षापरोक्षभावविलम्बा विवक्षिताः । श्रुतिलिङ्गादिषु विलम्बाविलम्बाभ्यां हि प्राबल्यदौर्बल्ये ॥

* **यद्वा** अप्रयोजकत्वेनोक्तं । * तुल्यत्वं दृष्टान्ततयाऽनूदितम् । * वैषम्यान्तराभावे सति दुष्टकारणजन्यत्व तदभावावप्यादिशब्देन विवक्षितौ । एतेषामप्रयोजकत्वमेकेनदृष्टान्तेनोपपादयति । **ज्वालेति** । अन्यथेत्यध्याहर्तव्यम् । **प्रत्यक्षोदमर्दायोगादिति** । अयोगप्रसङ्गादित्यर्थः । ज्वालाभेदानुमाने हि मूलमूलिभावोऽस्ति विलम्बाविलम्बौ च प्रत्यक्ष-सापेक्षत्वादनुमानस्य । तुल्यत्वे सति दुष्टकारणजन्यत्व तदभावयोः प्रयोजकत्वमप्यनेन व्युदस्तं भवति तद्राहित्येऽपि

## गूढार्थसङ्ग्रहः

प्रमाणमालायाम् ‘ प्रतिष्ठितप्रामाण्यप्राचीनप्रत्यक्षादिविरोधात् तदपेक्षपराचीनागमवाक्यं कथं तद्गोचरं भेदमपबाधत इति चेत् ’ इत्यानन्दबोधयतिकृतशङ्काऽपि पूर्वमीमांसकमतमनुसृत्यैव । इयमेव शङ्का ‘ ननु च ’ इत्यादिग्रन्थे मूलभूता इति प्रतीयते ॥ **पूर्वोत्तरयोरित्यादि** । ‘ यस्य न दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एव असमीचीनः प्रत्ययः । नान्यः इति शबरभाष्योक्तार्थ एवात्र प्रदर्शितः ॥

### श्रीभाष्यम्

**तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते । एवं च सति द्वयोः प्रमाणयोर्विरोधे यत्सम्भाव्यमानान्यथासिद्धि तद्बाध्यम् अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति ।**

### श्रुतप्रकाशिका

बाध्यबाधकभावदर्शनात् । तत्र किंविषयं प्रत्यक्षं बाध्यमित्यत्राह । **तत्रहीति** । ऐक्यग्राहिप्रत्यक्षं बाध्यमित्यर्थः । तर्हि किं प्रयोजकमित्यत्राह । **एवंचेति** । तुल्यत्वादीनां प्रयोजकत्वेऽनुपपन्ने सति । **द्वयोरिति** । प्रत्यक्षयोरनुमानयोरागमयोः प्रत्यक्षानुमानयोरनुमानागमयोः प्रत्यक्षागमयोर्वेत्यर्थः । **यत्सम्भाव्यमानान्यथासिद्धीति** । सावकाशत्वादन्यथासिद्धमित्यर्थः । अनन्तरमनन्यथासिद्धमनवकाशमित्युक्तेः । विषयान्तरलाभोऽप्रमाणकोटिनिवेशोवा सावकाशत्वम् । तेन स्वोपस्थापितार्थविषयप्रामाण्यंविनाऽपि सम्भावितोदयत्वमन्यथासिद्धत्वम् । विरुद्धार्थप्रमाणाबाधेनापि सम्भवदुदत्वमितियावत् । **अनन्यथासिद्धमनवकाशमिति** । अनन्यथासिद्धत्वंनाम तदर्थप्रमाणतां विनाऽनुदयत्वं विरुद्धार्थप्रमाणाबाधेनानुदयत्वमितियावत् । तच्चानवकाशत्वात् । अनवकाशत्वंनाम विषयान्तराऽलाभो प्रमाणकोटिनिवेशाभावोवा अप्रमाणकोट्यनन्तर्भाव विषयान्तरालाभाभ्यां विरुद्धार्थोपस्थापक प्रमाणबाधेनानुदयत्वमित्यर्थः । **इति सर्वत्र** । उक्त प्रकारेण सजातीययोर्विजातीययोर्वा प्रमाणयोर्विरोधे इत्यर्थः ॥

### गूढार्थसंग्रहः

**द्वयोः प्रमाणयोरित्यादि** । 'प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् । आश्रित्यायं प्रपञ्चस्स्यादलीकोऽपि प्रमाणवान् ॥ अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम् । प्रमाणभावं भजतां बाधवैधुर्यहेतुतः ॥' इति प्रमाणमालोक्तरीत्या प्रत्यक्षागमयोः विषयव्यवस्था बोध्या । अस्यार्थः प्रमाणमालायामनन्तरमेवं साधितः । 'नहि सुशिक्षितोऽपि प्रत्यक्षादिः अत्यन्ताबाध्यार्थपरिच्छेदलक्षणप्रामाण्यं स्वतः परतो वा विज्ञातुं क्षमते । नहि तावत् प्रत्यक्षेणैव वेदनेन स्वप्रमाण्यं ईदृग्विज्ञायते । परवेदनपक्षेहि तत् स्वात्मानमप्यगोचरयत् कथं स्वप्रामाण्यं गोचरयेत् । स्वसंवेदनपक्षेऽपि स्वार्थस्यात्यान्तिकबाधं अनवगम्यतु कथं तदुपहितमर्यादमात्मनः प्रामाण्यमध्यवस्येत् । नहि स्वार्थस्यात्यन्तिकबाधासत्वमस्मत्प्रत्यक्षगम्यं सम्भवति । कालान्तरभाविनो बाधस्य इदानीमयोग्यत्वेनानुपलम्भसम्भवात् । परमपि प्रत्यक्षान्तरं चेत् आद्यसमानयोगक्षेमं कथमत्र प्रवर्तताम् । यदा तु प्रत्यक्षस्यैतेदृशी गतिः तदा कैव कथा तद्गोचरव्याप्त्युपजीविनोऽनुमानादेः । 'परतश्च प्रमाणत्वपरिज्ञाने ऽनवस्थितेः । परिहारं प्रयत्नेऽपि न पश्यामः सभाक्षमम् ॥' आगमवाक्यं पुनः अनियतकालवस्तुपरिच्छेदकत्वादात्यान्तिकाबाध्यत्वलक्षणमपि सत्यत्वं स्वविषयस्याध्यवस्येत् । तदवसायान्वयव्यतिरेकाभ्यां च तत्साधनत्वलक्षणं प्रामाण्यमध्यवसीयते । तथा च श्रूयेत 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । तस्मादद्वैतागमवाक्यमेव तत्त्वावेदने प्रमाणमुपपद्यते, न प्रत्यक्षादीनि इति स्थितम् ।' इति ॥

ब्रह्मसिद्धावप्युक्तम्– 'इतश्च– सम्भवद्विचित्रविभ्रमहेतुत्वात् प्रत्यक्षादीनाम् । विगलितनिखिलदोषाशङ्कत्वाचाम्नायस्य । शब्दाश्रयाणांहि दोषाणां शब्दे पुरुषाभावेऽसम्भवात् । शक्योह्याम्नायादेव अनादिरविद्यासंस्कारो विभ्रमहेतुः प्रत्यक्षादिषु सम्भावयितुं निश्चेतुं च, देहात्माभिमान इव । नत्वेवं अपौरुषेये वेदे काचिद्दोषाशङ्का । सत्यां वा प्रमाणमेव न स्यात् । प्रत्यक्षादीनां तु व्यावहारिकं प्रामाण्यं, अविद्यासंस्कारस्य स्थेम्ना व्यवहाराविपर्ययाभावात् । यत्रच व्यवहारविपर्ययः

### श्रीभाष्यम्

**तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्य–**

### श्रुतप्रकाशिका

एवं बाध्यबाधकभावे प्रयोजकमस्तु । ततः किं प्रस्तुतशास्त्रप्राबल्यस्येत्यत्राह । **तस्मादिति** । तस्मात् अन्यथा

### गूढार्थसङ्ग्रहः

न तत्र प्रामाण्यम् । शब्दे तु सम्भावितदोषे न तत्त्वावेदनेन प्रामाण्यं, न व्यवहाराविपर्ययेण, अदृष्टार्थत्वात्, दोषेभ्यो व्यवहारविसंवादिज्ञानदर्शनाच्च । प्रत्यक्षादीनां तु व्यवहारे संवादात् न शक्यते व्यवहारविसंवादिज्ञानहेतुदोषः कल्पयितुम् व्यवहारविपर्ययाद्धि स कल्प्येत ; तत्त्वदर्शनस्य तु वेदान्तजन्मनः प्रतिपक्षत्वात्, तत्त्वप्रतिहतिमात्रहेतुरेवानादिरविद्यानुबन्धः कल्प्यते ततो दोषानुबन्धः प्रामाण्यं चेति न विरोधः । शब्दस्तु संभावितदोषः दुर्लभप्रामाण्यएवस्यात् । दृश्यते हि दोषेभ्यः व्यवहारविसंवादिज्ञानोत्पत्तिः तत्र दोषाशङ्कायाः व्यवहारविसंवादस्य शङ्कितत्वात् तत्त्वप्रतिघातस्यच न तत्वावेदनलक्षणं प्रामाण्यं न व्यवहारविसंवादलक्षणमिति साम्प्रतम् । यत्तु प्रत्यक्षाद्यपेक्षणादिति तत्रोच्यते–न प्रमितावपेक्षावत्ता शब्दस्य प्रत्यक्षादिषु किंतु स्वरूपसिद्धौ अन्यथा प्रमाणमेव नस्यात् । तथाच स्वकार्येऽनपेक्षत्वात् न प्रत्यक्षादिभ्यो हीयते । प्रत्यक्षादयोऽपि स्वरूपसिद्धौ नान्यानपेक्षाः कार्येहि सापेक्षत्वं सामर्थ्यमपकर्षतीति । यत्त्वेतेषां प्रामाण्यमनुमन्तव्यमिति कोवा अन्यथाऽऽह व्यवहाराविसंवादिलक्षणंतु तत् न तत्वावेदनलक्षणम् । व्यावहारिक प्रामाण्योपेतेभ्यः प्रत्यक्षादिभ्यः सिद्धादाम्नायात्तत्वदर्शनं तद्विरोधात् तेषु तत्त्वदर्शनमेवापबाधते न व्यवहाराविसंवादांशम् दृष्टंच हेतुत्वेनापेक्षितायाः अपि पूर्वस्याःप्रतिपत्तेः परस्याःप्रतिपत्तेः बलीयस्त्वं यथा दूरस्थेषु वनस्पतिषु हस्तिप्रतिपत्तिभ्यः वनस्पतिप्रतिपत्तेः । अपेक्षिताहि हस्तिप्रतिपत्तयः व्यक्तवनस्पतिप्रतिपत्त्या हेतुत्वेन इति । 'तथाऽनवकाशत्वमपि' । यदि खल्वेकमद्वयं वेदान्तार्थः कस्तेषामन्योऽवकाशः इति । नच प्रत्यक्षादीनामनन्यगतित्वादनवकाशत्वं या खलु रजतादि विभ्रमाणां गतिः सा तेषामपि । एतेषां उपचरितः कल्पितोवा विषयः प्रत्यक्षादीनामपितथा । अथासत्वात् तस्य विषया अविद्यमानार्थाः प्रत्यक्षादयोऽप्येवम् तस्मादविवक्षितार्थत्वं उपचरितार्थत्वंवा गतिरुभयोरविशिष्टा इतिच ॥

सर्वेष्वपि प्राच्यनव्याद्वैतग्रन्थेषु प्रत्यक्षविषयसत्वस्य मिथ्यात्वाविरोधित्वं प्रत्यक्षस्य व्यावहारिकविषयकत्वं किंचिदंशे प्रत्यक्षमूलकत्वेऽपि बाध्यत्वाविरोध इत्यादिकं स्फुटम् । प्रत्यक्षस्य व्यावहारिकविषयकत्वेन सावकाशत्वं शास्त्रस्य तात्विक विषयकत्वेन निरवकाशत्वं प्रत्यक्षविषयसत्वस्य कालत्रयाबाध्यत्वरूपत्वाभावात् अन्यथासिद्धत्वं शास्त्रप्रतिपाद्यब्रह्मसत्त्वस्य काल त्रयाबाध्यत्वरूपत्वेन शास्त्रस्यानन्यथासिद्धत्वं शास्त्रे षड्विधतात्पर्यलिङ्गसत्वेन परीक्षितप्रामाण्यसत्वात् प्राबल्यं इति बोध्यम् ॥

न्यायमकरन्दे इहखलु निखिलप्रमाणानां मायाशरीरत्वाविशेषेऽपि तत्वतोविषयबाधात् सांव्यवहारिकमेव प्रामाण्यं प्रत्यक्षादीनाम् । अद्वैतागमवाक्यानां तु तद्विपर्यासात्तात्त्विकमेव प्रामाण्यम् । उक्तं हि–' मणिप्रदीपप्रभयोः मणिबुद्ध्याऽभिधावतोः । मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ ' इति । ' (धर्मकीर्तिवचनम्) इत्युक्तम् । ' प्रत्यक्षादिविरोधादाम्नाये गौणी लाक्षणिकी वा वृत्तिरास्थेया ' इत्यादिप्रकरणपञ्चिकोक्तं सर्वं दूषयित्वा ' एषोऽपि माहायानिकपक्षप्रवेशः ब्रह्मवादिनां मोह एव ' (प्र.प.) इति शालिकानाथोक्तिः व्यामूढभाषितमित्याचक्षाणैः आनन्दबोधयतिभिः प्रमाणमालायां ' प्रतिष्ठितप्रामाण्यप्राचीनप्रत्यक्षविरोधात् ' इत्यादिना प्रागुपन्यस्ता (१५७पुटे) पूर्वमीमांसकशङ्का इत्थं समाहिता । ' तत्परत्वात् परत्वाच्च निर्दोषत्वाच्च वैदिकम् । पूर्वस्य बाधकं नायंसर्प इत्यादिवाक्यवत् ॥ तत्परत्वं च उपक्रमादिषड्विधतात्पर्य लिङ्गावगम्यम् ' इति । अयमर्थः ब्रह्मसिद्ध्यादिसर्वाद्वैतग्रन्थेषु स्फुटमुक्तः इत्यभिप्रेत्य तदुक्तमर्थमेवाह– **तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धेत्यादिना** ॥

श्रीभाष्यम्

**निर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाश प्रत्यक्षादिसिद्ध विविधविकल्परूप बन्धनिवृत्तिर्युक्तैव । सम्भाव्यते च विविधविकल्पभेद प्रपञ्चग्राहि प्रत्यक्षस्य अनादिभेदवासनादिरूपाविद्याख्योदोषः । ननु**

श्रुतप्रकाशिका

सिद्धत्वानन्यथासिद्धत्वयोरेव बाध्यबाधकभावे प्रयोजकत्वात् । **अनादिनिधनाविच्छिन्नसम्प्रदायेति** । अविच्छिन्न-सम्प्रदायत्वादनादिनिधनम् । सम्प्रदायविच्छेदेसत्यस्मर्यमाण कर्तृकत्वं ह्यपौरुषेयत्वसाधकम् ॥

**अनादिनिधनाह्येषा वागुत्सृष्टा स्वयम्भुवा ।**
**आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः ॥**

**अनादिनिधनं ब्रह्म** इत्यादिवचनानिचानादिनिधनशब्देन स्मारितानि । अत एव असम्भाव्यमानदोषम् । पौरुषेयत्वप्र-युक्तंहि भ्रमविप्रलिप्साप्रमादाशक्तिरूपदोषचतुष्टयवत्त्वम् । अतएव अनवकाशम् । शास्त्रजन्यशब्दस्यावबोधशब्देनान्वयः ॥

बाध्यबाधकभावाङ्गीकारस्य विरोधसापेक्षत्वाद्विरोधं दर्शयति । **निर्विशेषेत्यादिना** । नित्यं कालापरिच्छिन्नम् शुद्धम् अविद्यारहितम् ततएव मुक्तशब्दोऽविद्याकृतजन्मादिराहित्यपरः । बुद्धं भासमानम् स्वप्रकाशशब्दः पूर्वं बुद्ध-शब्दोक्तभासमानत्वस्य पराधीनत्वव्युदासार्थः । स्वयमेव प्रकाशस्वभावत्वं स्वप्रकाशत्वम् । तच्च चिन्मात्रशब्दवाच्यत्वात् । स्वयंप्रकाशत्वं हि चित्वम् । चित्स्वरूपत्वं च श्रुतिसिद्धम् । मात्रशब्दोज्ञेयत्वव्युदासपरः । ब्रह्मात्मभावावबोधेन एवं भूतस्य ब्रह्मणः स्वस्यैक्यावबोधेनेत्यर्थः । **सम्भाव्यमानेति** । सम्भाव्यमानदोषत्वात् सावकाशं अप्रमाणकोटौ लब्ध-निवेशम् । अतएवान्यथासिद्धत्वमपिफलितम् । अन्यथासिद्धत्वं विपरीतप्रमाणमबाधित्वाप्युदयसम्भवः । **प्रत्यक्षादीति** । आदिशब्दादनुमानादिकमुच्यते । **विविधेति** । देवादिरूपेण स्वकार्यजन्मजरामरणादिरूपेणच विविधो ज्ञातृज्ञेयादि विकल्पः सएव बन्धः तन्निवृत्तिरित्यर्थः । सम्भाव्यमानश्चदोषः कइत्यत्राह । **सम्भाव्यतेचेति** । भेदप्रपञ्चः भेदसमुदायः । यद्वा भेदरूपः प्रपञ्चः । * विविधविकल्पशब्दः प्रपञ्चविशेषणं भेदविशेषणंवा । भेदः ज्ञातृज्ञेयादिः स च ब्राह्मणादिरूपेण विविधः देवमनुष्यादिरूपेण विकल्पवान् ॥

**अर्वाचीनाः** केचित्काचतिमिरादिकं दोषमाचक्षते । तदयुक्तम् तस्यकाचित्कत्वात् । काचादिदुष्टं प्रत्यक्षं सपक्षीकृत्य व्यतिरिक्तस्य काचादिदुष्टत्व मनुमीयत इतिचेत् न अतिप्रसङ्गात् । अनादिनिधत्वेन यच्छास्त्रमुक्तम् । तस्यापि शब्दत्वादित्यादिना दुष्टकर्तृकत्वानुमानं हि सुशकम् । तत्र कर्ता योग्यानुपलम्भनिरस्त इतिचेत् । तदत्रापि तुल्यमिति काचादिदोषत्वकल्पनानुपपत्त्या तद्व्यावृत्त्यर्थमाह । **अनादीत्यादि** । भेदवासनादिरूपा आदिशब्देन भेद-वासनाहेतुभूतं भेददर्शनं विवक्षितम् । अनयोर्हेतुहेतुमद्भावेऽन्योन्याश्रयपरिहारायादिशब्दः । बीजाङ्कुरन्यादिति भावः । भेददर्शनं भेदवासनाच हि * कार्याविद्या अतउक्तं भेदवासनादिरूपाऽविद्येति । **'आदित्योयूप'** इत्यादिषु यूपादि-त्याद्यैक्याद्यप्रतिपादनं न प्रत्यक्षाविरोधात् । किंत्वन्यपरत्वात् यत्परश्शब्दस्स शब्दार्थ इति हि न्यायविदः । अन्यपरत्वं च तात्पर्यलिङ्गाभावादवगम्यते । **'आदित्योयूप'** इति वाक्यं च यूपाञ्जनविधिशेषत्वा * दन्यपरमिति परस्याभिप्रायः ॥

* **यन्निर्दोषमुक्तम्** । तत्रापि बाध्यबाधकभावनिमित्तभूतोऽर्थविरोधोऽस्ति अतोऽवश्यमन्यतरस्य बाध्यत्वं स्यात् । तत्र यद्बाध्यत्वे प्रयोजकं दुष्टकारणजन्यत्वं, तत्तु नास्ति । कथमत्रनिर्वाह इत्याशयेन चोदयति । **नन्विति** ।

## श्रीभाष्यम्

**अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य 'ज्योतिष्टोमेनस्वर्गकामो यजेत' इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत ? सत्यम्। पूर्वापरापच्छेदे पूर्वशास्त्रवत्**

## श्रुतप्रकाशिका

प्राबल्यदौर्बल्य हेतुर्नास्तीत्याह। **अनादीति** । अपिर्विरोधसूचकः अर्थविरोधं दर्शयति । **भेदावलम्बिन इति**। सत्यमित्यर्धाङ्गीकारे भेदावलम्बिनो बाध्यत्वमङ्गीकृतम् । *दुष्टकारणजन्यत्वेऽनङ्गाकारः अन्यथासिद्धत्वानन्यथासिद्धत्वयोरेव बाध्यबाधकभावे प्रयोजकत्वम्। पूर्वोक्तं दुष्टकारणजन्यत्वमपि ह्यन्यथासिद्धत्वप्रकारविशेषः। अत्रापि मुख भेदेनान्यथासिद्धिमुपपादयति। **पूर्वापरेत्यादिना**। अपच्छेदन्यायाद्बाध्यत्वं प्रत्यक्षस्यापि तुल्यम्। तत्रदोषमूलत्वं च बाध्यत्वेऽधिकहेतुः ॥

## गूढार्थसङ्ग्रहः

अत्र भाष्ये अनवकाशत्वे षड्विधतात्पर्यलिङ्गोपेतत्वं हेतुतया विवक्षितं, ब्रह्मसिध्यनुरोधात्। अतएव गुरुचन्द्रिकायां (प्रत्यक्षस्य आगमबाध्यत्वविचारे) श्रुतितात्पर्यनिर्णायकोपक्रमादीनामपि प्राबल्यप्रयोजकं निरवकाशत्वादिकमुक्तं वक्ष्यतेच , इत्युक्तं संगच्छते। गुणवादसूत्रविरोधो नास्तीति भामत्यां (१.३.३३) सम्यगुपपादितम्। यत्र प्रमाणान्तरविरुद्धार्था अर्थवादाः दृश्यन्ते यथा 'आदित्यो यूपः' 'यजमानःप्रस्तरः' इत्येवमादयः तत्र यथा प्रमाणान्तराविरोधः यथाच्च स्तुत्यर्थता तदुभयसिध्यर्थं 'गुणवादस्तु' इति 'तत्सिद्धिः' इतिच असूत्रयज्जैमिनिः। नन्वेवं मानान्तरविरोधेऽपि कस्माद्गुणवादो भवति ? यावता शब्दविरोधे मानान्तरमेव कस्मान्न बाध्यते ? वेदान्तैरिव अद्वैतविषयैः प्रत्यक्षादयः प्रपञ्चगोचराः, कस्माद्वा अर्थवादवद्वेदान्ता अपि गुणवादेन न नीयन्ते ? अत्रोच्यते।। लोकानुसारतो द्विविधो हि विषयश्शब्दानाम् द्वारतः तात्पर्यतश्च। यथैकस्मिन् वाक्ये पदानां पदार्थाः, वाक्यार्थश्च तात्पर्यतो विषयः; एवं वाक्यद्वयैकवाक्यतायामपि। यथेयं देवदत्तीया गौः क्रेतव्येत्येकं वाक्यं, एषा बहुक्षीरेत्यपरम्। तदस्य बहुक्षीरत्वप्रतिपादनं द्वारम्। तात्पर्यं तु क्रेतव्या इति वाक्यान्तरार्थे। तत्र यत् द्वारतः तत्प्रमाणान्तरविरोधेऽन्यथा नीयते। यथा विषं भक्षयेति वाक्यम्। मा अस्य गृहे भुङ्क्ष्व इति वाक्यान्तरार्थपरं तत्। यत्र तु तात्पर्यं तत्र मानान्तरविरोधे पौरुषेयमप्रमाणमेव भवति। वेदान्तास्तु पौर्वापर्य पर्यालोचनया निरस्तसमस्तभेदप्रपञ्चब्रह्मप्रतिपादनद्वारा अपौरुषेयतया स्वतस्सिद्धतात्त्विकप्रमाणभावास्सन्तः तात्त्विकप्रमाणाभावात् प्रत्यक्षादीनि प्रच्याव्य सांव्यवहारिके तस्मिन् व्यवस्थापयन्ति। नच 'आदित्यो यूपः' इति वाक्यं आदित्यस्य यूपत्वप्रतिपादनपरं अपितु यूपस्तुतिपरम्। तस्मात् प्रमाणान्तरविरोधे द्वारभूतो विषयो गुणवादेन नीयते। यत्रतु प्रमाणान्तरं विरोधकं नास्ति यथा देवताविग्रहादौ। तत्र द्वारतोऽपि प्रतीयमानो विषयः न शक्यस्त्यक्तुं, न च गुणवादेन नेतुम्। को हि मुख्ये सम्भवति गौणमाश्रयेत् ? अतिप्रसङ्गात्' इति। अत्र गुरुचन्द्रिका। 'यत्तु व्यावहारिकप्रामाण्यमादाय प्रत्यक्षस्य सावकाशत्वोक्तिः न युक्ता, प्रमामात्रस्य तात्त्विकस्य स्वीकारादिति। तत्तुच्छम्। श्रुतिप्रत्यक्षयोः तात्त्विकप्रामाण्यविरोधे श्रुतेरतात्त्विकप्रामाण्यस्यासम्भवात्, प्रत्यक्षस्यैव तदित्युक्तत्वात्, तत्र प्रतिकूलतर्कमप्रदर्श्य त्वदस्वीकारमात्रस्याप्रयोजकत्वात्' इति ॥ (अपच्छेदन्यायभङ्गः)

**पूर्वापरापच्छेदे इति**। अत्र पूर्वापरशब्देन 'पौर्वापर्ये पूर्वदौर्बल्यम् प्रकृतिवत्' (जै.सू.६.५.५४.) इति सूत्रं प्रत्यभिज्ञाप्यते। युगपदपच्छेदे विकल्पः 'विप्रतिषेधाद्विकल्पः स्यात्' (जै.सू.६.५.५१ इति पूर्वाधिकरणे स्थापितः।

श्रीभाष्यम्

**मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव ।**

श्रुतप्रकाशिका

**अपच्छेदे** पूर्वापरशास्त्रयोः पौर्वापर्ये *प्रमित्युत्पत्तिक्रमात् । न पाठक्रमात् । '**पञ्चर्त्विजस्समन्वारब्धाः प्रसर्पन्ति । अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्म ब्रह्माणं यजमान**' इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते । '**बहिष्पवमानं प्रसर्पतां यद्युद्गातापऽच्छिद्येत अदक्षिणस्स-यज्ञस्संस्थाप्यः तेन पुनर्यजेत तत्र तद्द्यात् यत्पूर्वस्मिन् दास्यन्स्यात् अथ प्रतिहर्ताऽपच्छिद्येत सर्ववे-दसं दद्यादिति** ॥ तदिदं शास्त्रद्वयं विषयः । अत्रोद्गातृप्रतिहर्त्रोः प्रयोगभेदेनापच्छेदे स्वंस्वं प्रायश्चित्तशास्त्रं प्रवर्तते *एकस्मिन् प्रयोगे यौगपद्येना पच्छेदे सत्युद्गातुः प्रायश्चित्तं प्रवर्तते तस्यवर्गप्रधानत्वात् । प्रधानापच्छेदस्यैव समाधेयत्वात् *विकल्पेनानुष्ठानंवा । एकस्मिन्नेव पौर्वापर्येणापच्छेदे पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्यप्राबल्यं च कर्ममीमांसायामुक्तम् '**पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति**' ॥ अत्रासञ्जातविरोधित्वेनपूर्वमुदयात्पूर्वस्यप्राबल्यम् । परस्य सत्प्रतिपक्षतयैवोदयाद्दौर्बल्यमिति पूर्वःपक्षः । राद्धान्तस्तु पूर्वस्योत्पत्तिकाले विरोध्यभावात्तदबाधेनाप्युदयस्सम्भवति । उत्तरस्यतु स्वोत्पत्तिकाले विरोधिसद्भावात्तदबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधित्वैवोत्पन्न मित्यनन्यथासिद्धत्वादुत्तरस्य

गूढार्थसंग्रहः

अत्र लघुचन्द्रिका । '**पौर्वापर्ये** परस्परनिरपेक्षयोः अपच्छेदनिमित्तविरुद्धप्रायश्चित्तकर्तव्यताग्राहकप्रमाणयोः पूर्वा-परीभूतत्वेन उत्पत्तौ पूर्वदौर्बल्यम्– पूर्वोत्पन्नप्रमाणस्य दौर्बल्यम् । पश्चादुत्पन्नप्रमाणेन पूर्वं बाध्यते । प्रकृतिवत् इति । श्येनयागादिरूपविकृति प्रकरणपठितं 'शरमयं बर्हिः' इत्यादिवाक्यं ज्योतिष्टोम प्रकृतिगताङ्गकलापातिदेशरूपात् प्रकृति-वत् कुर्यात्' इति वाक्यात् पश्चात्प्रवर्तते । तत्प्रापितबर्हिरादिकार्यमुद्दिश्य शरादिविधायकत्वात् । तेन यथा पूर्वं प्रवृत्तं तद्वाक्यं कुशादिप्रापकत्वांशे बाध्यते तथेत्यर्थः इति ॥

**मोक्षशास्त्रस्येत्यादि** । 'विद्वान्नामरूपाद्विमुक्तः' (मु.३.२.८) 'तरति शोकमात्मवित्' (छा.७.१.३) 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' [श्वे.१.८] इत्यादिकं मोक्षशास्त्रम् । 'विद्वान्नामरूपाद्विमुक्तः' इत्यत्र असंकोचेन नामरूपसामा-न्यविनिर्मोकएव विवक्षितः । एतच्छ्रुत्यर्थे विवदमानं प्रत्याह 'ज्ञाननिवर्त्यत्वंवा मिथ्यात्वं' इति लघुचन्द्रिकोक्त्या ज्ञान निवर्त्यत्वरूपमिथ्यात्वानुमानमपि उक्तार्थं दृढीकरोति । 'तरति शोकमात्मवित्' इत्यत्र अविद्यादिदृश्यसामान्यस्य शोक पदार्थतया ज्ञानेन दृश्यसामान्यनिवृत्तिः प्रतिपाद्यते । 'तरतिशोकमात्मवित्' इत्यस्यानन्तरं 'सोऽहं भगवः शोचामि' 'तंमा भगवान् शोकस्य पारं तारयतु' इति । उपसंहारे 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कु-मारः' [श्वे.७.२६.२] इतिच उक्त्या शोकशब्दस्य यथोक्तएवार्थः । इति ज्ञानेन सकलभेदनिवृत्तिप्रतिपादकशास्त्रस्या नवकाशत्वमवसेयम् ॥

**तेन बाध्यत एवेति** । 'परनिमित्तोपनिपाते तन्नैमित्तिकवाक्यार्थज्ञानं पूर्वविज्ञानस्मरणं च । ततः परज्ञानस्य तेन सह विरोधज्ञानं, ततस्तेनापेक्षाबुद्ध्यात्मकेन विनश्यदवस्थेन चतुर्थक्षणे पूर्वविज्ञानस्य भ्रान्तित्वकल्पना । विरोधज्ञान दशायां तदुत्तरं वा परनैमित्तिकवाक्यार्थस्मरणात् सेति न विरोधः । अतस्सिद्धं परेण पूर्वस्य बाध इति' (भा.दी.६. ५.१९.) इति खण्डदेवोक्तरीत्या अत्रापि ज्योतिष्टोमादिवाक्यजन्यज्ञानस्य मोक्षशास्त्रजन्यज्ञानानन्तरं भ्रमत्वमवसेयम् ॥

### श्रीभाष्यम्

**वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः निर्गुणत्वात्परस्य ब्रह्मणः। ननुच 'यस्सर्वज्ञस्सर्ववित्' (मु.२.मु.ख.७) 'पराऽस्यशक्तिर्विविधैवश्रूयते**

### श्रुतप्रकाशिका

प्राबल्यमिति। '**पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति**' इति हि न्यायविदः। ननूत्तरशास्त्रमुदयेतचेत् पूर्वाबाधनानुदयस्स्यात् *पूर्वशास्त्रमुत्तरोत्पत्तिप्रतिबन्धकं किन्नस्यात्। नैवम् *निमित्तस्योत्पन्नत्वान्नैमित्तिकं हि शास्त्रमुदितमेवेतितत्रोत्तरस्योद्यतः पूर्वाबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधितमेव *किंच यथोदितदक्षिणाकत्वेन कर्मसमापनं हि शास्त्रेण पूर्वमेव स्वतःप्राप्तम् तत्तुप्रायश्चित्तशास्त्रेणान्यथाकृतम्। एवं *पूर्वसिद्धार्थान्यथाकरणप्रकरणत्वादत्रापि पूर्वमेवबाध्यमिति कर्मविचारेनिश्चितम्। एवमुत्तरशास्त्रस्येव मोक्षशास्त्रस्य निरवकाशत्वाद्वेदावलम्बिशास्त्रं पूर्वशास्त्रवद्बाध्यत इत्यर्थः। परत्वं च पाठक्रमादर्थक्रमाच्च *त्रिवर्गफलत्वेन कर्मणि प्रथमप्रावण्यं। निरूपकस्य *तत्त्वपरस्य हि मुमुक्षा। तादृशपौर्वापर्यरहितेषु विरोधगर्भेषु वेदान्तवाक्येषु सगुणोपासनपरेषु कथं निर्वाह इत्यत्राह। **वेदान्तवाक्येष्वपीति**। अपिस्समुच्चये। पूर्वोत्तरभागयोर्विरोधः परिहृतः। उत्तरभागेच परस्परविरोधः परिह्रियत इत्यर्थः। कथमत्रापच्छेदनयावतार इत्यत्राह। **निर्गुत्वादिति**। परशब्देनार्वाचीनसगुणब्रह्मव्यावृत्तिः। अपच्छेदन्यायावतरण फलभूतनिर्गुणत्वबोधदर्शनापदच्छेदनयोऽवतीर्ण इति बोद्धव्यमित्यर्थः *जक्षत्क्रीडन्नममाण इत्यादिफलश्रुते स्तात्त्विकत्वातात्त्विकत्वनिरूपणानादरेण प्रथमं सगुणोपासने प्रावण्यम्। निरूपकोहि निर्गुणपरब्रह्मवेदनाधिकारीति पौर्वापर्यमिति भावः। उपासनपर सगुणनिर्गुणवाक्ययोः फलद्वारा पौर्वापर्यमुक्तम्। तत्तुस्वरूपपरसगुणनिर्गुणवाक्ययोर्नास्तीति कथं तत्र बाध्यबाधकभाव इति बोधयति। **ननुचेति**।

### गूढार्थसङ्ग्रहः

**एतावता** वेदपूर्वभागवाक्यानां बाध्यत्वमुक्तम्। अथ औपनिषदवाक्यानामपि सगुणब्रह्मप्रतिपादकानां बाध्यत्वमुच्येत— **वेदान्तवाक्येष्वपीत्यादिना**। पञ्चपादिकायां सगुणविद्यायाः ज्योतिष्टोमादिवत् धर्मत्वस्यैवोक्त्या सगुणवाक्यानां ज्योतिष्टोमादिवाक्यतुल्यत्वात्। परैः सगुणानिर्गुणाविद्यात्वेन विद्याद्वैविध्यस्यैवोक्त्या गुणाविषयकप्रपञ्चविषयकोपासनस्य विरहेण सृष्ट्यादिवाक्यानां आरोपिताकारेण उपासनपरत्वस्य विवरणे प्रतिपादनेन च सप्रपञ्चब्रह्मवाक्यान्यपि सगुणब्रह्मोपासनपरवाक्यान्येव। अनेन न्यायेन गुणानां प्रपञ्चस्य च ब्रह्मणि निषेधः पर्यवस्यति। अत एव प्रमाणमालायां 'प्रत्यक्षविरोधेन कथं भेदसामान्यबाधः इति शङ्कायां 'तत्परत्वात्' इति समाधानोक्तिस्सङ्गच्छते। उक्तं चाद्वैतसिद्धौ 'अत एवसगुणसप्रपञ्चश्रुत्योः निर्गुणनिष्प्रपञ्चश्रुतिभ्यां अपच्छेदेन न्यायेनबाध इति सुष्ठूक्तम्। तदुक्तमानन्दबोधाचार्यैः—'तत्परत्वात्...वाक्यवत्' इति'। अनुपदं 'अस्थूलमनणु' इतिश्रुत्युपादानेन तस्याश्श्रुतेः प्रपञ्चनिषेधपरतया सप्रपञ्चब्रह्मवाक्यानामप्यनेन न्यायेन बाध इति अस्यार्थस्य भगवतः अभिमतत्वं सूचितम्॥

**निर्गुणत्वात् परस्य ब्रह्मणः इति**। परब्रह्मणः कूटस्थनित्यतया तत्र गुणस्यप्रपञ्चस्यच तात्त्विकस्य असम्भवादिति भावः॥ **यः सर्वज्ञः सर्वविदिति**। सर्वज्ञत्वादिविशिष्टमायाशबलेश्वरस्यैव उपादानतायाः विवरणानुसारिसम्मतत्वं मायावृत्तिनिबन्धनं सर्वज्ञत्वं प्रकटार्थकारादीनां सम्मतमिति च सिद्धान्तलेशसङ्ग्रहे उक्तम्। अतस्सर्वज्ञत्वादेरुत्तरत्र बाधोक्तिसङ्गतिः। अत एव निर्गुणत्वोपपत्तौ सर्वज्ञत्वादीनां अद्वैतसिद्धौ बाधोक्तिस्सङ्गच्छेत॥ **पराऽस्य शक्तिरित्यादि**।

## श्रीभाष्यम्

**स्वाभाविकी ज्ञानबलक्रियाच** ' (श्वे.६.अ.८) **' सत्यकामस्सत्यसङ्कल्पः '** (छा.८.प्र.१.खं) **इत्यादि ब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम् ।**

## गूढार्थसंग्रहः

' यः सर्वज्ञस्सर्ववित् ' इत्यादिवाक्यमिवेदमपि वाक्यं निर्गुणविद्याप्रकरणे पठितम् । अत्र स्वाभाविकशब्दोपादानेन ज्ञानबलादीनामौपाधिकत्वकल्पनाऽयुक्तेति भगवत आशयः । ' पराऽस्य शक्तिः ' इत्यत्रापिवैव विवक्षितेति परैर्निर्णयकरणेन उत्तरत्र बाधोक्तिर्युज्यते । नचौपाधिकत्वे ' स्वाभाविकी ज्ञानबलक्रिया च ' इत्यनेन विरोधः । अस्मदादाविव भौतिकोपाधित्वाभावेन योगिष्विव योगार्जितत्वाभावेन स्वाभाविकत्वोक्तेः । नच सङ्कोचकाभावः ; निर्गुणवाक्यस्यैव सङ्कोचकत्वात् । नच स्वाभाविकज्ञानसमभिव्याहारविरोधः ; सार्वज्ञादिरूपाविद्यापरिणतस्यैव ज्ञानपदेन विवक्षितत्वात् । बाधकसत्वासत्वाभ्यां समभिव्याहारेऽपि वैरूप्याङ्गीकरणात्, पावको ब्राह्मण इतिवदिति अद्वैतसिद्धावुक्तम् । (नि.उ.)

**सत्यकामः सत्यसङ्कल्पः इति ।** सिद्धान्तलेशसङ्ग्रहे यावत्सर्वमुक्तिसगुणबिम्बेश्वरभावस्य कल्पनेन ' सत्यकामस्सत्यसङ्कल्पः ' इति श्रुतेः निर्गुणप्रजापतिविद्याप्रकरणपठितत्वेऽपि सगुणबिम्बेश्वरभावाङ्गीकारेण बाधोक्तिस्सङ्गच्छते । उक्तं च अद्वैतसिद्धौ ' नच ' य आत्माऽपहतपाप्मा ' इत्यारभ्य, ' सत्यकामस्सत्यसङ्कल्पः, ' सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः ' इति सत्यकामत्वादीनां अपहतपाप्मत्वादिभिस्सह जिज्ञास्यत्वश्रवणात् ज्ञेयत्वमिति वाच्यम् । अपहतपाप्मत्वादीनां स्वरूपतया जिज्ञास्यकोटिप्रवेशेऽपि सत्यकामत्वादीनां स्वरूपबहिर्भावेन जिज्ञास्यत्वायोगात् । तच्छब्देन तेषामपरामर्शात् । ' यश्चित्रगुः लम्बकर्णश्च तमानय ' इत्यादौ योग्यविशेषणस्यैव तच्छब्देन परामर्शदर्शनात् । अत एव ' एष सर्वेश्वरः ' इत्यादिधर्मानुक्त्वा ' तमेतं वेदानुवचनेन ' इत्याद्युक्तिः, ' यस्सर्वज्ञ ' इत्याद्युक्त्वा ' तद्विज्ञानेन ' इत्याद्युक्तिश्च न विरुध्यत इति । अत्र लघुचन्द्रिका । ' अपहतपाप्मत्वादीनां—पापशून्यत्वादीनाम् । बहिर्भावेनेति । यदज्ञानात् संसारः तस्यैव जिज्ञास्यतया प्रत्यग्ब्रह्मणोरैक्यमखण्डानन्दरूपमेव । तथा पापाभावादिकं च अधिकरणस्वरूपतया तदेव । कामादिकंच आप्तकामत्व नित्यतृप्तत्वादिश्रुतेः स्वप्रकाशनिरतिशयानन्दस्येश्वरस्वरूपत्वाच्चाविद्यकमेव । अतएव ' सोऽकामयत ' इत्यादि श्रुत्या कामनादेरतीतत्वं प्रतीयतइति भावः । एवमद्वैतसिद्धौ यत्तु सत्यकामत्वादेः अनुपास्तिप्रकरणे श्रवणमिति तन्न पूषाद्यनुमन्त्रणमन्त्रवत् प्रकरणादुत्कृष्टत्वस्य द्वादशोपसत्तावाक्यवत् स्तावकत्वस्यवासम्भवात् इत्युक्तम् । अत्र लघुचन्द्रिका ' पूषाद्यनुमन्त्रणेति ' पूषादिमन्त्रस्य दर्शपूर्णमासप्रकरणे पठितस्य यथा पूषादिदेवताककर्मणि लिङ्गेन विनियोगः तथा सत्यकामत्वादेः ज्ञेयप्रकरणे पठितस्य ज्ञानान्वयासम्भवेन सगुणोपासनायामन्वयइत्यर्थः । स्वप्रकरणएव स्तावकत्वेनान्वयसम्भवे उत्कर्षो नयुक्तः प्रतीतैकवाक्यतायाः भङ्गापत्तेरित्याशयेनाह द्वादशेति ' तिस्रएव साह्नस्योपसदः ' द्वादशाहीनस्येति वाक्ये अहर्गणरूपाहीनगतोपसदां द्वादशत्वेनानुष्ठानगतगौरवद्वारा निन्दया साह्नगतोपसत्त्रयस्य विधेयस्य तदभावेन यथा स्तुतिः तथा सगुणब्रह्मणः सत्यकामत्वादिना विधेयस्य स्तुतिरिति भावः ॥

एवमद्वैतसिद्धौ नच अपूर्वत्वात् सत्यकामत्वादौ विशेषणे तात्पर्यं अपूर्वत्वेऽपि अन्यशेषस्यातत्परत्वदर्शनात् । इत्यभिधाय ' यथाह्यजक्षीरविधेः समीपे यजतिलादेः परिकीर्तनंतत् । प्रधानसंकोचभयादपास्य स्वमर्थमासीद्गुणवादएव ॥ ' (सं.शा.अ.३.२८६) ' एवं सतीहापि विरुध्यमानं वचोयदद्वैतपरैर्वचोभिः । तदस्तुगौणं यदिवा परस्य मायाप्रसूतद्वयवादि मुख्यम् ॥ (२८७) (गौणं गुणकीर्तनपरं स्तावकमिति यावत् इति) सर्वज्ञात्ममुन्युक्तदिशा जर्तिलयवाग्वधिकरणन्यायेनात्राप्युपपत्तिमभिधाय निर्गुणप्रकरणस्थायास्तु अद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितविषयसमर्पकतया अन्यथासिद्धेः

श्रीभाष्यम्

**निर्गुणवाक्यसामर्थ्यादितिब्रूमः । एतदुक्तं भवति ‘ अस्थूलमनण्वह्रस्वमदीर्घम् ’** (बृ.५.अ.८.ब्रा

श्रुतप्रकाशिका

विधिनिषेधरूपं पौर्वापर्यं हृदि निधायाह । **निर्गुणेति** । कानि निर्गुणवाक्यानि कथं तेषां सामर्थ्यमित्यत्राह । **एतदुक्तमिति** । अस्थूलेत्यादिवाक्यं गुणविशेषनिषेधपरम् । सत्यज्ञानादिवाक्ये व्यावृत्तिर्गर्भिता । निर्गुणमित्यादिवाक्यं

गूढार्थसंग्रहः

इत्युक्तम् । अत्र लघुचन्द्रिका एकवाक्यताभङ्गापत्तेः उक्तोपासनपरश्रुतेः नोक्तवैशिष्ट्ये तात्पर्यमिति सदृष्टान्तमाह ‘ अपूर्वत्वेऽपि ’ इत्यादि मानान्तरेणाबाधिताप्राप्तार्थकत्वेऽपि । अन्यशेषस्य अन्यार्थपरवाक्यघटकस्य, अतत्परत्वदर्शनात्, स्वीयोक्तार्थपरत्वाभावदर्शनात् ‘ जर्तिलयवाग्वावाजुहुयात् गवीधुकयवाग्वावा न ग्राम्यान् पशून् हिनस्ति नारण्यान् अथोखल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहुयात् ’ इति अग्निहोत्रप्रकरणे श्रुतम् । तत्र ‘ जर्तिलयवाग्वा ’ इत्यादिना विहितयोः जर्तिलगवीधुकयवाग्वोः अनाहुतिरित्यादि निन्दया प्रतिषेधकल्पनात् तयोर्विधिप्रतिषेधाभ्यां विकल्पः पयसेत्यादिकंतु पयोविधिः वाक्यभेदस्तु न दोषः पृथगाख्यातश्रवणादिति प्राप्ते जर्तिलयवाग्वेत्यादेर्विधित्वेऽपि अनाहुतिरित्यादिकं न विकल्पतात्पर्यकं तद्विधिनाऽपि पयोविधित्वेनैव व्रीहियवन्यायेन विकल्पसिद्धेः किंतु ‘ नहि निन्दा ’ न्यायेन पयःस्तुतिपरम् । वस्तुतस्तु जर्तिलयवाग्वेत्याद्यपि नविधिः किंतु पशुनिन्दाद्वारेण पयःस्तुतिपरं वाशब्दंविनापि व्रीहियवन्यायेन विकल्पबोधसम्भवेन वाशब्दस्यान्यथावैयर्थ्यात् तस्मात् ‘ विषंवा भुंक्ष्व ’ विष्णुमपूजयित्वा न भुंक्ष्व । विषभोजनं मरणहेतुः विष्णुं पूजयित्वा भुंक्ष्व । इत्यादाविवान्यनिन्दापादनद्वारा अन्यस्तुतिपरं प्रथमवाक्यमिति पयोविध्येकवाक्यत्वापन्नमेव जर्तिलादिवाक्यमिति दशमाष्टमेस्थितम् । तथाच तद्वत् उपासनाविध्येकवाक्यत्वाय विशिष्टोपासनपरमेव सगुण वाक्यं न तु ब्रह्मणि गुणवैशिष्ट्यपरमिति भावः । ‘ अजक्षीरेण जुहोति ’ इति वाक्यं तु शाखान्तरीयम् । ‘ अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोति ’ इत्यापस्तम्बशाखायां पाठात् । उक्तं च सङ्क्षेपशारीरके ‘ यथा ह्यजक्षीरविधेः समीप ’ इति । निर्गुणप्रकरणस्थायाः ‘ य आत्मा अपहतपाप्मा ’ इत्यादि ‘ सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः ’ इत्यस्याः इति । —**निर्गुणवाक्यसामर्थ्यादिति** । ‘ एकोदेवः—साक्षीचेताकेवलोनिर्गुणश्च ’ (श्वे.६.११) इति निर्गुणवाक्यं तस्य सामर्थ्यं कैवल्यप्रतिपादकत्वं उक्तंचाद्वैतसिद्धौ ‘ कैवल्यश्रुत्या तावदात्मानिर्गुणः ’ इति । कैवल्यश्रुत्या ‘ केवलो निर्गुश्च ’ इति श्रुत्या इति लघुचन्द्रिका । समन्वयाधिकरणे शङ्करभाष्योक्तार्थानुवाददशायां ‘ एकोदेवः—केवलोनिर्गुणश्च ’ इति श्रुतिरेव भगवता उदाहरिष्यते । अतः इयमेव श्रुतिः निर्गुणवाक्यमिति भगवतोविवक्षितम् । एवं सामर्थ्यं तत्परत्वं अपच्छेदन्यायानुग्रहश्च ॥

**अस्थूलमनण्वित्यादि** । ‘ अरूपवदेवहि तत्प्रधानत्वात् ’ (ब्र.सू.३-२.१४) इति सूत्रे रूपाद्याकाररहितमेव ब्रह्म अवधारयितव्यं न रूपादिमत् । तत्प्रधानत्वात् ‘ अस्थूलमनण्वह्रस्वमदीर्घम् ’ (बृ.५.८.८) ‘ अशब्दमस्पर्शं ’ (क.३.१५) ‘ आकाशो हवै —ते यदन्तरा तद्ब्रह्म ’ (छा.८.१४.१.) ‘ दिव्यो ह्यमूर्तः ’ (मु.३.१.२) ‘ तदेतद्ब्रह्मापूर्वम् ’ (बृ.४.५.१९) इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मप्रतिपादनानीति ’ इति (शां) भाष्ये ‘ अस्थूलमनण्वह्रस्वमदीर्घम् ’ इति वाक्यस्यैव प्रथमत उपादानेन तत्सूत्रभाष्यार्थविवक्षया ‘ अस्थूलमनण्वह्रस्वमदीर्घम् ’ इति वाक्यस्य प्रथमत उपादानम् । अस्थूलमनण्वह्रस्वमदीर्घमित्येतावन्मात्रमेव तत्र (शं.भाष्ये) उपात्तम् । अत्रापि तावन्मात्रोपादानेन

### श्रीभाष्यम्

८.वा) **'सत्यं ज्ञानमनन्तंब्रह्म'** (तै.आनन्द.१.अनु.१.वा) **'निर्गुणः'** [श्वे.६.अ.११] **'निरञ्जनम्'** (श्वे.६.अ.१९) **इत्यादि वाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेतिप्रतिपादयन्ति इतराणिच सगुणम्। उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदपहीनमिति।**

### श्रुतप्रकाशिका

गुणसामान्यनिषेधपरम्। आदिशब्देन यत्तदद्रेश्यमित्यादिगृह्यते। विरोधं स्फोरयति। **निरस्तेति**। कूटस्थशब्दो निर्विकारत्ववाची सर्वाधिष्ठानत्ववाचीवा कूटवत्तिष्ठतीतिहि कूटस्थः। नित्यचैतन्यमित्यन्तैः पदैरुदाहृतनिर्गुण श्रुत्यर्थस्संक्षिप्तः। **इतराणि**। यस्सर्वज्ञ इत्यादीनि पूर्वोपात्तानि वाक्यानि। चस्समुच्चये। सगुणनिर्गुणपरत्वादुभयविधवाक्यविरोधः। **तेनैव**। पूर्वोत्तरभागविरोधे य उत्तरस्यप्राबल्य हेतुरुक्तस्तेनैवेत्यर्थः निर्गुणवाक्यबलीयस्त्वं कुतइत्यत्राह। **गुणापेक्षत्वेन परत्वादिति**। निषेध्यविषयोहि निषेध उदेति। नहिनिर्विषयोनिषेधः। प्रागेव प्रसक्तस्यच विषयस्य प्रतिषेध्यत्वम्। अतोनिषेध्यसापेक्षत्वेन निषेधस्य परत्वमित्यर्थः। सगुणवाक्यवैयर्थ्यमप्युपासन (शेष) विषयत्वात्परिहृत मित्यभिप्रायेण न किंचिदपहीनमित्युक्तम्॥

### गूढार्थसंग्रहः

प्रागुक्तार्थविवक्षा भगवतो वर्तत इति प्रतीयते। उपनिषद्भाष्ये च(शां) अस्थूलम्– स्थूलादन्यत् इत्यादिक्रमेण पदचतुष्टयं व्याख्याय एवमेतैश्चतुर्भिः परिमाणप्रतिषेधैः द्रव्यधर्मः प्रतिषिद्धः। यन्न द्रव्यं तदक्षरमित्यर्थः। इति व्याख्यातेयं श्रुतिः अद्वैतरत्नरक्षणे मधुसूदनसरस्वतीभिस्तु 'उक्तं तावत् स्वप्रकाशचिदानन्दरूपं सत्यं नित्यं सजातीयविजातीयस्वगतभेदशून्यं तत्त्वमिति। प्रमाणं चात्र अस्थूलमनण्वह्रस्वमित्यादिवेदान्तवाक्यमेव। अस्यचायमर्थः 'न विद्यते स्थूलं यत्र तदस्थूल मित्याद्यभिधाय स्थूलं यच्छरीरं तद्भिन्नं ब्रह्मेत्यर्थः इत्यादिशङ्करमिश्रव्याख्यानमपि दूषितम्। ब्रह्मसिद्धौ च 'आनन्दमेकं' इति प्रथमश्लोके केचित् 'सर्वगन्धस्सर्वरसः' इत्यादिश्रुतेः सर्वात्मतां ब्रह्मण उपागमन्। तान्प्रत्याह असर्वमिति इत्यसर्वमित्यंशमवतार्य कुतः 'अस्थूलमनण्वह्रस्व' मिति सर्वभेदोपरागप्रतिषेधात्। सर्वभेदावियोगाच्चानिर्मोक्षः। नहिस्वभावाद्वियोजयितुं वस्तुशक्यम्। वह्निरिव औष्ण्यात्। अथापि कथंचिद्वियोज्येत तथापि भेदप्रपञ्चप्रबन्धस्यानुच्छेदात् वियोगाभावात् नित्यसंसारिता स्यात् इत्याद्युक्तम्॥

इयंच श्रुतिः ब्रह्मणो निरस्तसमस्तविशेषत्वं प्रतिपादयति। **सत्यं ज्ञानमनन्तं ब्रह्मेति**। यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यं अतः सत्यं ब्रह्मेति ब्रह्म विकारात् निवर्तयति। इति भाष्यं (शं.उ.भा) सत्यपदेन कूटस्थनित्यत्वं ब्रह्मणो बोधितम्। ज्ञानमिति चैतन्यं ब्रह्मेति प्रतिपादयति। अनन्तपदंच त्रिविधपरिच्छेदशून्यार्थकम्। अनन्तंच यद्धि कुतश्चित्प्रविभज्यते तदनन्तं इति तद्भिन्नवस्त्वन्तराभावाच्च वस्तुतः आनन्त्यम्। इतिच (शं) उपनिषद्भाष्योक्तरीत्या तत्र वस्तुपरिच्छेद शून्यत्वं निरस्तसमस्तविशेषत्वएव पर्यवस्यति। **निर्गुणः इति**। 'एकोदेवः सक्षीचेता केवलो निर्गुणश्च' (श्वे.६.११) इति श्रुतिः॥ **निरञ्जनमिति**। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे.६.१९) इति श्रुतिः। 'केवलो निर्गुणश्च' इति श्रुतिः उपक्रमे, 'निरवद्यं निरञ्जनम्' इति श्रुतिरुपसंहारे च वर्तते। निर्गुणश्रुतिसमनन्तरं बहूनां गुणानां प्रतिपादनेन निर्गुणश्रुतेस्सङ्कोच आवश्यक इति शङ्कानिराकरणाय निरवद्यं निरञ्जनमिति श्रुतेरुपादानम्। निरञ्जन-

## श्रीभाष्यम्

**' ननुच सत्यंज्ञानमनन्तंब्रह्म ' इत्यत्र सत्यज्ञानादयोगुणाः प्रतीयन्ते ।**

## श्रुतप्रकाशिका

* **यद्वा** यस्सर्वज्ञइत्यादि वाक्यानामप्युपासनशेषत्वाभिप्रायेणाह । **वेदान्तवाक्येष्वपीत्यादि । उपासनपराणामिति** । तान्यपि वाक्यानिफलविशेषार्थमुपासनपराणि नतु तत्त्वपराणीति भावः । अपच्छेदन्यायावतारमुपपादयति । **निर्गुणत्वादिति** । पूर्ववदर्थः । निर्गुणत्वमसिद्धम् पूर्वापरभावाभावेनापच्छेदनयानवकाशाद्गुणानां बध्यत्वासिद्धेः । अत एवसगुणवाक्यानां वैयर्थ्यपरिहारश्च नघटते । स्वरूपपरतयैव प्रतिपन्नानामुपासनपरत्वकल्पनं हि बाध्यत्वसिद्ध्यधीनमिति चोदयति । **ननुचेति** । परिहरति । **निर्गुणेति** । अन्यत्सर्वं पूर्ववदेव । निर्गुणवाक्यैस्सहोपात्तस्य सत्यज्ञानादिवाक्यस्य सगुणपरत्वबुध्या चोदयति । **ननुचेति** । चशब्दोऽप्यसमुच्चये । सत्यज्ञानादयोगुणाः प्रतीयन्तइत्यत्र सत्यज्ञानशब्दौ सत्यत्वज्ञानत्वपरौ यथा ह्येकयोर्द्विवचनैकवचने इति पाणिनीय सूत्रस्थद्व्येकशब्दौ द्वित्वैकत्वपरौ । * अन्यथा द्व्येकेष्विति हि वक्तव्यम् । तथा श्रीवत्साङ्कमिश्राः " **गुणास्सत्यज्ञानप्रभृतयउत** " इति ॥

**एतद्वाक्य**वैशद्याय प्रथमं सामानाधिकरण्यं निरूप्यते । तद्धि विशदतरमुपन्यस्तं प्रमेयमालाया माचार्यपादैः । तथाहि भगवता पतञ्जलिना " **लटश्शतृशानचावप्रथमानाधिकरणे** " " **तत्पुरुषस्समानाधिकरणः कर्मधारयय** " इत्यादि सूत्रस्थसमानाधिकरणशब्द विवरणार्थं सामानाधिकरण्यलक्षणमुक्तम् । " **भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यं** " इति । अस्यायमर्थः । प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तम् । प्रकृष्टावृत्तिः शब्दस्यार्थेवृत्तिर्नाम तद्बोधनम् । तत्र विशेष्यभूतप्रधानार्थविषया वृत्तिः प्रवृत्तिः । विशेष्यप्राधान्यं च, गुणानां प्रतिपत्तिर्हिगुणिप्रतिपत्त्यर्थेत्यनेन सिद्धम् । तस्याः प्रवृत्तेः निमित्तं द्वारम् । " **निमित्तमात्रं भव सव्यसाचिन्** " इत्यादि प्रयोगात् । तच्च विशेषणीभूतजातिगुणादिकम् । * समानम् एकम् अधिकरणं विशेषणानामाधारभूतं विशेष्यम् ।

## गूढार्थसङ्ग्रहः

मित्यत्र सम्बन्धसामान्यविरहप्रतिपादनेन ब्रह्मणि गुणसम्बन्धोऽपि प्रतिषिद्धः । तदनन्तरं च गुणाः नैव प्रतिपादिता इति केवलो निर्गुणश्चेत्यत्र निर्गुणत्वमसङ्कुचितमेव विवक्षितम् । निष्क्रियमित्यत्र सृष्ट्यादिक्रियाया अपि प्रतिषिद्धतया सृष्ट्यादिकमतात्त्विकमिति विवरणे उक्तम् । सृष्ट्यादेरेवातात्त्विकत्वे सृष्ट्याद्युपयोगितया उपनिषत्सु प्रतिपादिता गुणा अप्यतात्त्विका इत्येतेन सिद्ध्यतीति भगवत आशयः । भाष्यादि (शङ्कर) सर्वपरग्रन्थेषु 'केवलो निर्गुणश्च ' इति श्वेताश्वतर श्रुतिरेवोपात्ता । तत्सहभावेन क्वचित् ' निरञ्जनम् ' इत्यादिश्रुतिरपीति भगवता श्वेताश्वतरश्रुतिद्वयमेवात्रोपात्तम् । निर्गुणमिति पाठस्तु लेखकप्रमादनिबन्धनः नादर्तव्यः । निर्गुणमिति श्रुतेः सर्वसम्मतोपनिषत्सु क्वाप्यदर्शनात् परैः कैरपि अनुपादानाच्च । कैश्चित् आत्मोपनिषदित्यप्रसिद्धोपनिषदाकरकल्पनं कृतं तत्रापि निर्गुणइत्येव परिदृश्यते । आत्मोपनिषच्च केनाप्यनुदाहृता अतः ' केवलोनिर्गुणश्च ' ' निरवद्यं निरञ्जनं ' इति श्वेताश्वतरश्रुतिद्वयमेवात्राभिप्रेतमिति बोध्यम् ॥

' सत्यं ज्ञानम् ' इति श्रुतेः लक्षणवाक्यत्वस्य परैरुक्त्या (उ.भा) सत्यादिपदानि लक्षणपराणीति वाच्यम् । लक्षणस्येतरव्यावर्तकतया ब्रह्मवृत्तिधर्माणामेव लक्षणत्वं वाच्यम् । एवमनन्तत्वघटकवस्तुपरिच्छेदशून्यत्वमपि गुणनिबन्धनमेवेति ' सत्यं ज्ञानम् ' इत्यादिवाक्यं सगुणवाक्यमेव नतु निर्गुणवाक्यमिति शङ्कते-- **ननु चेति** ॥

## श्रुतप्रकाशिका

एकस्मिन्नर्थे वृत्तिरित्येकशब्देन समानशब्दस्य सदृशार्थपरत्वं व्युदस्तम्। *समानशब्दसामर्थ्यादेकशब्दस्साधारणपरः। समानशब्दोहि साधारणे प्रयुज्यते। "**समानकर्तृकयोः पूर्वकाल**" इति। अर्थशब्दश्च विशेष्यभूतप्रधानाभिधेयपरः। अनेनाधिकरणशब्दो विशेष्यपरत्वेन व्याख्यातः॥

**एतदुक्तं** भवति त्रिविधाश्शब्दाः केचिद्विशेषणतोविशेष्यतश्चैकार्थाः, यथा घटः कुम्भः नीलं कृष्णमित्यादयः। केचिच्चोभयतश्च भिन्नार्थाः यथा गौरश्वोमहिषः नीलं शुक्लं पटमित्यादयः केचिच्च विशेषणतोभिन्नार्थाः विशेष्यतश्चैकार्थाः, यथा नीलमुत्पलं देवदत्तश्श्यामो युवा लोहिताक्ष इत्यादयः। तत्र पूर्वकोटिद्वयव्यावृत्ततृतीयकोटिनिविष्टानां शब्दानां सामानाधिकरण्यम्। तत्र भिन्नप्रवृत्तिनिमित्तानामित्यनेन विशेषणतो विशेष्यतश्चैकार्थानां घटःकुम्भ इत्यादीनां न सामानाधिकरण्यमित्युक्तम्। एकस्मिन्नर्थे वृत्तिरित्यनेनचोभयतोभिन्नार्थानां गौरश्वोमहिष इत्यादीनां न सामानाधिकरण्यमित्युक्तम् तस्माद्विशेषणतोभिन्नार्थानां विशेष्यतश्चैकार्थानां नीलमुत्पलमित्यादीनामेव सामानाधिकरण्यमिति॥

तत्र प्रवृत्तिनिमित्तशब्दयोरेवंवार्थः। प्रवृत्तिरभिधानम्, निमित्तमभिधेयम्। अर्थशब्दश्चाभिधेयवचनः। भिन्नाभिधेयानां शब्दानामेकस्मिन्नभिधेये वृत्तिस्सामानाधिकरण्यमिति भिन्नविशेषणाभिधायिनां शब्दाना मेकस्मिन् विशेष्ये वृत्तिः (पर्यवसानं) सामानाधिकरण्यमित्युक्तं भवति। भिन्नपदसामर्थ्येन निमित्तशब्दनिर्दिष्टं विशेषणभूतमभिधेयम्। एकशब्दसामर्थ्येन चार्थशब्दनिर्दिष्टं विशेष्यभूतमभिधेयमित्यवगम्यते। अत उभयथाऽप्यनेकविशेषणाभिधायिनां शब्दानामेकस्मिन् विशेष्य पर्यवसानं सामानाधिकरण्यमिति भिन्नप्रवृत्तिनिमित्तानामित्यादिना सामानाधिकरण्यलक्षण वाक्ये नोक्तं भवति। उक्तादर्थादपि * पूर्वोक्तार्थस्साधीयान्, समानाधिकरणपदेषु प्रातिपदिकं विशेषणान्वयपरम्। * तत्समानविभक्तिर्विशेष्यैक्यपरा। समानविभक्त्यैक्यबोधनं वृत्तिशब्देन विवक्षितम्। तेन राजा तस्य पुत्रश्च दर्शनीयावित्यत्र राजतच्छब्दयोस्सामानाधिकरण्यनिवृत्तिः। तत्र हि प्रकृतपरामर्शितच्छब्दप्रातिपदिकादैक्यावगमः। न तु समानविभक्त्या॥

***ननु** नीलान्युत्पलानीत्यत्र सामानाधिकरण्यं न स्यात्। विशेष्यबहुत्वादेकार्थवृत्तित्वानुपपत्तेः। नैवम्। एकस्मिन्निति पदस्य *समभिव्याहृत पदान्तरोपस्थापिताकारानाधिकरणत्वव्यावृत्त्यर्थत्वात्। तत्तत्पदोपस्थापितानेकविशेषणापेक्षया साधारणत्वं ह्येकशब्दार्थः। नहि नीलान्युत्पलानीत्यत्र *नीलत्वानधिकरणेषूत्पलत्वं वर्तते। अतस्तत्रसामानाधिकरण्यमुपपन्नम्। अतस्सामानाधिकरण्यलक्षणग्रन्थस्य यथोक्तएवार्थ इति॥

अत्रमृषावादिन आहुः। सामानाधिकरण्यवाक्यमखण्डार्थम्। तथाहि सामानाधिकरण्यस्य तावदेकार्थपरत्वमविगीतम्। तत्र समानाधिकरणपदानि किं विशेषणमात्रपराणि उत विशेषणविशिष्टपराणि उत स्वरूपमात्रपराणीति विवेचनीयम्। न तावद्विशेषणमात्रपराणि विशेषणानामनेकार्थत्वादेकार्थत्वासिद्धेः। नापिविशिष्टपराणि विकल्पासहत्वात्। किंक्रमेण युगपद्वा विशिष्टार्थप्रतिपादनं पदानाम्। नतावत्क्रमेण तत्र किं प्रथमपदप्रतिपन्नस्य विशिष्टस्य पदान्तरं स्वोपस्थापितविशिष्टेन तादात्म्यं विदधाति। उत विशेषणान्तरान्वयम्। प्रथमे विशिष्टैक्ये विधीयमाने विशेष्यांशयोरिव विशेषणांशभूतयोर्जातिगुणयोरप्यैक्यं प्रसजेत्। द्वितीयेच्च विशेषणानामन्योन्यसमवायप्रसङ्गः। प्रथममेकेन विशेषणेन विशिष्टतयाऽवगतस्य वस्तुनः पश्चाद्विशेषणान्तरविशिष्टतया बोधनं हि विशेषणान्तरान्वयप्रतिपादनम्। तत्र विशिष्टं प्रतिविशेषणतयाऽन्वीयमानं पूर्वविशेषणस्यापि विशेषणं भवतीति विशेषणानामन्योऽन्यविशेषणविशेष्यभावप्रसङ्गोहि दुर्वारः।अवर्जनीयंच पदानां क्रमेणार्थप्रतिपादनम्। कुतः उद्देश्योपादेयविभागवत्त्वात्सर्ववाक्यानाम्। नापि युगपत् उद्दे-

## श्रुतप्रकाशिका

श्योपादेयविभागहानिप्रसङ्गेन युगपत्प्रतिपादनासम्भवात् । * सम्भवेऽपि विशेषणानां परस्परैक्यप्रसङ्गाच्च । तथाहि प्रातिपदिकानां विशिष्टार्थपरत्वे प्रातिपदिकार्थैक्यपरस्य समानविभक्तिनिर्देशस्य विशिष्टैक्यपरत्वमवश्याश्रयणीयमिति विशेष्यैक्यवद्विशेषणानामप्यैक्यं प्रतिपाद्यं स्यात् । तदनुपपत्त्या विशेष्यस्यापि नैक्यं प्रतिपादयितुमलं समानविभक्तिनिर्देशः ॥

**किंच** विशिष्टपरत्वे विशेषणविशेष्याभ्यामनेकार्थत्वं विशेषणबहुत्वाच्चानेकार्थत्वम् । ततश्च सामानाधिकरण्यं न सिध्यति । किंच विशेषणानां व्यावर्तकत्वस्वाभाव्याद्विशेषणभेदेन विशेष्यभेदप्रसङ्गो दुर्वारः । तथाहि भेदकं विशेषणं भेद्यं विशेष्यमिति हि विशेषणविशेष्ययोस्स्वरूपविवेकः । दृश्यते च विशेषणानां विशेष्यभेदकत्वम् यथा खण्डो मुण्डः घटःपट इत्यादिषु । ननु नीलमुत्पलं देवदत्तश्श्यामोयुवेत्यादिषु विशेषणभेदेऽपि विशेष्यैक्यं दृश्यते । नैष दोषः अत्र हि स्वतः प्राप्तं विशेषणानां विशेष्यभेदकत्वं प्रत्यक्षविरोधेनापोह्यते । प्रत्यक्षागोचरे तु ब्रह्मणि विशेषणभेदप्रयुक्तो विशेष्यभेदः केन वार्यते । तस्माद्वस्तुमात्रपरमेव समानाधिकरणवाक्यम् । नीलमुत्पलमित्यादिवाक्य इव सत्यादिवाक्येप्येकवचनान्तधर्मिवाचिपदैक्येन विशेष्यैक्यसिद्धिरिति चेन्न । खण्डो मुण्डः पूर्णश्रृङ्गो गौरित्यत्र विशेष्यभेदात् ॥

**ननु** विशेषणभेदो न विशेष्यैक्यविरोधी प्रत्यक्षमेवतु तद्विरोधि । प्रत्यक्षागोचरे ब्रह्मण्येकवचनान्तधर्मिवाचिपदैक्येन स्वतःप्राप्तमेकत्वं दुर्निवारमिति चेन्न खण्डोमुण्डः पूर्णश्रृङ्गोगौरिति परोक्षविषयवाक्येऽपि विशेष्यभेदप्रतीतेः । अतो न धर्मिवाचिपदैक्यं परोक्षे ब्रह्मण्यैक्यप्रतिपादनक्षमम् । तस्माद्विशेषणभेदप्रयुक्तो विशेष्यभेदो दुर्वारः । ततश्चैकार्थत्वं न सिध्यति । अतः पारिशेष्यात्समानाधिकरणपदानां स्वरूपमात्रप्रतिपादनपरत्वमास्थेयम् । एवं तर्हि पदानां पर्यायत्वमेकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यम् । * प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च प्रसजेत् । नैवं एकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन पदानामर्थवत्वमपर्यायत्वं निमित्तभेदलाभात्सामानाधिकरण्यलक्षणसिद्धिश्च । * अतएव जगत्कारणत्वशङ्कितानृतत्व जडत्व परिच्छिन्नत्व दोषव्यावृत्तिस्सत्यज्ञानादिवाक्येन क्रियते । नच व्यावृत्तिरूपधर्मवत्वं ब्रह्मणः प्रसज्येत ब्रह्मस्वरूपस्यैव सकलेतरव्यावृत्तिरूपत्वात् यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्पदार्थस्वरूपमेव न धर्मान्तरं धर्मान्तरानुपलम्भात्, तदभ्युपगमेऽनवस्थानाच्च । अतः कार्ष्ण्यव्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमिति पदानां शौक्ल्यस्वरूपमात्रविषयाणां * व्यावर्त्यभेदेन यथा न पर्यायत्वमर्थवत्वमेकार्थत्वंच । अतएव सामानाधिकरण्यलक्षणवत्त्वंच, तथा सत्यादिपदानामपि व्यावर्त्यभेदेन नपर्यायत्वदोषप्रसक्तिः ॥

**नन्वेवं** तत्तत्पदार्थविरोधिव्यावृत्तपरत्वे लक्षणा स्यात् । नैवं । अवाच्योपस्थापनेहि लक्षणा यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गापदस्य कूलोपस्थापने नहि कूलं गङ्गापदवाच्यं । अत्रतु सत्यादिपदानां वाच्यैकदेशभूतविशेषणपरित्यागेऽपि वाच्यप्रधानांशभूतविशेष्यस्वरूपप्रतिपादनान्नलक्षणाप्रसङ्गः । तथाऽपि विशिष्टवाचिनश्शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यभङ्ग इतिचेत् नैषदोषः । समानाधिकरणवाक्येष्वेकार्थपरत्वबलाद्विशेषणपरित्यागेन स्वरूपमात्रपरत्वमेव पदानां स्वारसिकम् । तथा व्युत्पत्तेः । व्यधिकरणवाक्येषु तु पदानां विशिष्टपरता स्वारसिकी । * लक्षणाऽभ्युपगमेऽपि नदोषः वाक्यतात्पर्यानुगुणा हि लक्षणा तद्विरोधिमुख्यवृत्तेर्बलीयसी दृष्टा यथा गङ्गापदे । समानाधिकरणवाक्यस्य ह्यैक्यएवतात्पर्यमिति सर्वसम्मतम् ॥

**ननु** सर्वपदानां लक्षणा नदृष्टा अयुक्ताच्च । केनचिन्मुख्यवृत्त्येन तात्पर्ये निश्चितेहि पदान्तरलक्षणा युक्ता । सर्वपदलक्षणाऽङ्गीकारे किं तात्पर्यनिश्चायकं? उच्यते दृष्टा तावद्विषं भुंक्ष्वेत्यादिषु सर्वपदलणा । तत्र विषपदं निषिद्धभोज्यं लक्षयति भुंक्ष्वेति भोजननिवृत्तिं तत्र योग्यतादिवशाद्वाक्यतात्पर्यनिश्चयः । सत्यादिवाक्येषु * समानविभक्तिबलादैक्यतात्पर्यनिश्चयः । तदविरोधाय प्रातिपदिकानां लक्षणा स्वीकृता एकपदलक्षणायामपि वाक्यतात्पर्यविरोध एवहि हेतुः । यथा

## श्रीभाष्यम्

**नेत्युच्यते सामानाधिकरण्येनैकार्थत्वप्रतीतेः । अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्ध-मितिचेत् अनभिधानज्ञो देवानांप्रियः एकार्थत्वं नाम सर्वपदानामर्थैक्यम् । विशिष्टपदा-र्थाभिधाने**

## श्रुतप्रकाशिका

गङ्गायां घोष इत्यादिषु । तदविरोधे एकस्यापि नद्या यथा गङ्गायां मत्स्याः प्रतिवसन्तीत्यादिषु । अतो वाक्यतात्पर्याविरो-धायैकस्यैव सर्वपदानां लक्षणा न दोषः । तस्मात्समानाधिकरणवाक्यं वस्तुमात्रपरमेवेति ॥

एतदभिप्रायेण प्रत्यवतिष्ठते । **नेत्युच्यतइति** । सत्यज्ञानादयो गुणाः प्रतीयन्तइति परिचोदिते * नेत्युच्यतइति वदतोऽयंभावः प्रतीयन्तइत्यापातप्रतीतिमात्रविवक्षाचेत्तया न किंचित्प्रयोजनं । प्रमितिविवक्षाचेत् नतु प्रमितिर्जायत इत्युपपा-द्यतइति । कुतइत्यत्राह । **सामानाधिकरण्येनैकार्थत्वप्रतीतेरिति** । शङ्कते । **अनेकेति**। यथा व्यधिकरणवाक्ये भिन्नार्थ पर्यवसायिकारकपदार्थापरित्यागेऽपि प्रधानार्थकार्यस्यैकत्वं '**अर्थैकत्वादेकं वाक्यम्**' इत्यत्र निश्चीयते । तथा समाना-धिकरणवाक्येष्वपि विशेषणभूतगुणवाचिशब्दार्थापरित्यागेऽपि विशेष्यैक्यं सिध्यतीत्यर्थः ॥ चोदयन्तमुपालभते– **अनभि-धानज्ञ इति** । व्यधिकरणसमानाधिकरणवाक्ययोरभिधानविशेषानभिज्ञइत्यर्थः । देवानां प्रियः मेषः अज्ञइत्यर्थः ॥

परिहरति । **एकार्थत्वमिति** । एकार्थत्वं नाम * सर्वपदानामेकाभिधेयपर्यवसानम् । * नतु वाक्यस्येत्यर्थः पृथ-क्पृथगर्थपर्यवसायिनां पदानामेकप्रधानार्थान्वयादर्थैकत्वं व्यधिकरणवाक्यएव । समानाधिकरणवाक्येतु * पदानामेवै-कार्थपर्यवसायित्वमित्युक्तं भवति । ततः किमित्यपेक्षायां समानाधिकरणपदानां विशेषणमात्रपरत्वे विशिष्टपरत्वेच दूषण-मेकग्रन्थेनाह । **विशिष्टेति** । विशिष्टेत्यादिना * कृत्स्नवाक्येन विशिष्टपक्षे दूषणमुक्तम् । विशेषणभेदेन विशेषणानाम्

## गूढार्थसंग्रहः

**अनेकगुणविशिष्टाभिधानेऽपीति** । विशेष्यैक्यात् एकार्थत्वमुपपद्यतइति भावः । **अनभिधानज्ञइति** । सामा-नाधिकरण्यमित्यत्र समानाधिकरणशब्दशक्त्यनभिज्ञ इत्यर्थः । समानं अधिकरणं येषां तानि समानाधिकरणानि सत्यादीनि पदानि तेषां भावः सामानाधिकरण्यं समानं साधारणं एकं अधिकरणं पदानां प्रतिपाद्यतया अधिकरणं अर्थ एव । अत्र सत्या-दिपदानां धर्मधर्म्युभयबोधकत्वे प्रत्येकमर्थद्वयबोधकत्वेन सामानाधिकरण्यशब्दार्थएव नघटते । विशेषणसम्बद्ध विशेष्यैक्यस्थले गौणमेव सामानाधिकरण्यम् । विशेषणपरित्यागेनार्थैक्य एव मुख्यं सामानाधिकरण्यम् । इति (पं पा, सं शा.) परोक्तदिशा मुख्यसामानाधिकरण्यमेव 'सत्यं ज्ञानमनन्तम्' इत्यत्र सामानाधिकरण्यशब्दमुख्यार्थोपपादनाय विवक्षितम् ॥

**देवानां प्रिय इति** । 'देवानां प्रिय इति च मूर्खे' इति वार्तिकेन समासे षष्ठ्याः अलुक् । मूर्ख इत्यर्थः । **विशिष्ट-पदार्थाभिधान इत्यादि** । उक्तं च सर्वज्ञात्ममुनिना 'अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः । घटते न यदैक-ता तदा न तरां तद्विपरीतरूपयोः ॥ (सं.शा.१.१६७.) इति । ननु एकस्यैव ब्रह्मणः विशेषणद्वयविशिष्टतया पदद्वय-वाच्यत्वेन दण्डी कुण्डलीति प्रयोगादिवत् अभेदप्रतीत्युपपत्तिरितिचेन्न ; विशिष्टाभ्यां तदुभयाश्रयकेवलस्वरूपस्यान्यत्वेन ल-क्षणां विना तत्पदाभ्यां उपस्थित्यसम्भवात् । तथा हि इदानीमयं दण्डी न भवतीति हि दण्डिनो देवदत्तात् केवले तस्मि न्भेदः प्रतीयेत । अभेदनिषेधस्य भेदविषयतया अन्यत्रक्लृप्तस्य विशेषणमात्रसंसर्गाभावविषयत्वायोगात् । अन्यथा घटः पटो न भवतीत्यादिप्रतीतेरपि घटत्वात्यन्ताभावविषयत्वप्रसङ्गेन क्वापि भेदो न सिध्येत् । नच प्राग्दण्ड्येवायमिति प्रत्य-

## श्रुतप्रकाशिका

अन्योन्यतो विशेष्याच्च भेदेन विशेषणैर्विशेष्येणचानेकार्थत्वं स्यादित्यर्थः। किंच अर्थशब्दो विशेष्यपरतयाच विवक्षितः तेन विशेषणभेदे विशेष्यभेदस्स्यादिति दूषणान्तरमुक्तं भवति। किंच विशेषणभेदेन विशेष्यभेदइत्युक्ते व्यतिरेकवशाद्विशेष्याभेदे विशेषणाभेदश्च स्यादित्युक्तं भवति विशिष्टैक्यप्रतिपादिका समानविभक्तिर्ह्यविशेषेण विशेष्यैक्यवद्विशेषणैक्यमपि प्रतिपादयतीत्यभिप्रायः। एवं विशिष्टपरत्वे * युगपदभिधानपक्षे दूषणमुक्तं भवति। उद्देश्योपादेयविभागहानिप्रसङ्गश्चार्थसिद्धः। क्रमेणाभिधानेऽन्योन्यसमवाय आनन्दमयाधिकरणे वक्ष्यते। विशेषणभेदेन पदानामर्थभेद इत्येतावतांऽशेन विशेषणमात्रपरत्वे च दूषणमुक्तं भवति विशेषणानामनेकत्वादेकार्थत्वहानिरित्यर्थः॥

## गूढार्थसंग्रहः

भिज्ञया तदभेदे सिद्धे निषेधधियो विशेषणाभावविषयतेति वाच्यम्। भेदबुद्ध्यनुरोधेन प्रत्यभिज्ञाया एव तज्जातीयविषयतयोपपत्तेः। 'आत्मैवेदम्' इत्यादिना सर्वाभेदसिद्धेः घटाद्यभेदनिषेधोऽपि न स्यात्। विशिष्टभेदस्तु उभयत्रापि समान एव। अभेदबुद्धिरपि स्वरूपमात्राभेदविषयैवेति तयोर्भिन्नविषयतैव। एवं सति दण्डिकुण्डलिनोरपि परस्परं स्वसमानसत्ताकभेदबलात् तत्रापि लक्षणयैव तदुभयाश्रयाभेदसिद्धिः। एवमेकदैकत्राविरुद्धविशेषणद्वयविशिष्टयोरपि परस्परभेदेन यदैकता न घटते, तदा किमु वक्तव्यं विरुद्धविशेषणद्वयविशिष्टयोजीवेश्वरयोरित्याह— अविरुद्धेति। इति मधुसूदनसरस्वतीविवरणम्॥

एवं 'तत्त्वंपदार्थविषयो नय एव योज्यः सत्यादिवस्तुषु न तत्र विशेषकल्पः। सत्यादिवस्तुविषयाश्रयबलास्तदर्थभागेषु लाक्षणिकवृत्तिरिहापि तुल्या॥ (सं.शा.१.१७७.) इति तेनैवोक्तम्। एतदनुसारेण भाष्ये 'सत्यं ज्ञानमिति' श्रुतिविचारेणैव 'तत्त्वमसीति' श्रुत्यर्थोऽपि विचारितस्स्यादित्यभिप्रेत्यैव अस्याश्श्रुतेरर्थ एव विचारितः। भाष्ये पूर्वं 'शोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मकत्वविज्ञानंच तत्त्वमसीति वाक्यसिद्धम्' इत्युक्तावपि उभयोरैकार्थ्यमवसेयम्। एवं 'सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः पश्चादेष विशेषणेतरतया पश्चाद्विरोधोद्भवः। उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमस्सूरिभिः॥ (सं.शा.१९६.) सामानाधिकरण्यमत्र पदयोः ज्ञेयस्तदीयार्थयोः सम्बन्धस्तु विशेषणेतरतया ताभ्यां सहास्यात्मनः। सम्बन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेयं एवं बुधैः एतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु॥ (१९७) इति वेदान्तानामखण्डार्थप्रतिपादनक्रमादिकमुक्तम्। विशेषणेतरतया— विशेषणविशेष्यभावेन। इदमिहाचार्याभिप्रेतम्। तत्त्वंपदयोः अपर्याययोस्समानविभक्तिकयोः परस्पराकाङ्क्षयोरर्थान्तरासम्भवादेकार्थवृत्तित्वं वक्तव्यमिति प्रथममधिकारिणा अनुसन्धेयम्। ततस्तद्बलात्तदर्थयोरत्यन्ताभेदः। अन्यथा तयोस्सामानाधिकरण्यायोगादिति चानुसन्धेयम्। ततस्तत्र (शनलयोः) विरोधोऽपि प्रतिसन्धेयः। तदनन्तरं नेदं वाक्यं प्रमत्तगीतं वाक्यान्तरतुल्यत्वात्। नाप्यदृष्टार्थं तदध्ययनम् दृष्टे सम्भवति तदयोगादिति विचारयतः लोकसिद्धमर्यादया पदद्वय लक्षणया तत्त्वमिति वाक्यमखण्डमेव ब्रह्म प्रतिपादयेत्। एवं सत्यज्ञानादिवाक्यमपीति' इति मधुसूदनसरस्वतीविवरणम्।

'यत्रैष काक इदमेव तु देवदत्तवेश्मेति लाक्षणिकवृत्तिरिहाभ्युपेता। काकास्पदत्वमवधीर्य तथाऽपि वेश्ममात्राकृतिर्भवति लाक्षणिकी तु बुद्धिः॥ (२०६) सोऽयमित्यपि पदार्थरूपकं लक्षणं यदुपलक्षणं हि तत्।' (२०७) इति दृष्टान्तद्वयमभिधाय 'एवं तावल्लक्षणावृत्तिहेतोरानीतैषाऽखण्डवाक्यार्थबुद्धिः।' इति पूर्वार्धेन दार्ष्टान्तिके दृष्टान्तानुसारेणाखण्डार्थत्वमुपपाद्य 'मुक्त्वाऽपीमां लक्षणावृत्तिमेषां वक्तुं शक्येत्युच्यतेऽनन्तरेण॥' (२०८) 'भिन्नाभिन्नरवौ घटादिवचसा साकं समुच्चारितौ अन्यूनानधिके घटादिविषये तावत्प्रवृत्तौ तव। नोचेद्विश्वसृजोऽपि दुष्परिहरा भेदादिमालाऽऽगता भेदादेरपि

### श्रीभाष्यम्

**विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः ततश्चैकार्थत्वं न सिध्यति। एवंतर्हिसर्वपदानां पर्यायता स्यात् अविशिष्टार्थाभिधायित्वात्।**

### श्रुतप्रकाशिका

एवं पदानां प्रतिपाद्यभेदः प्रसञ्जितः ततः किमित्यत्राह। **ततश्चैकार्थत्वं न सिध्यतीति**। सामानाधिकरण्यल-क्षणासिद्धिरित्यर्थः। अतोवस्तुमात्रपरमिति परिशेषसिद्धं तदनुवादेन चोदयति। **एवमिति** एवंतर्हि वस्तुमात्रपरत्वे कुत इत्यत्राह। **अविशिष्टार्थाभिधायित्वादिति**। अनेन ततश्चैकार्थत्वं नसिध्यतीत्यत्रफलितोर्थो विवृतः। अत्र पर्यायत्वचोद्ये प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकण्य लक्षणहानिरे (क) के) तरपदवैयर्थ्यंचेति * चोद्यद्वयमभिप्रेतम्

### गूढार्थसङ्ग्रहः

तत्र वाच्यमपरं भेदादिकं स्यादिति ॥' (सं.शा.१.२०९) परस्पराभावमुपाददानो निमित्तमर्थेषु हि भिन्नशब्दः। प्रवर्ते-तेऽन्ये तु घटादिशब्दाः निजं निजं वाच्यमुपाददानाः॥ (२१०) परस्पराभावविहीनभावादभिन्नशब्दस्य घटे प्रवृत्तिः। घटस्वरूपैकनिबन्धनात्तु घटादिशब्दस्य घटे प्रवृत्तिः॥ (२११) भेदो भिन्नश्चातिरेकोऽतिरिक्तः भेदोऽभिन्नस्संविदस्स्वप्रका-शाः। इत्येतास्मिन् विद्यते नार्थभेदः वेदान्तानामप्यखण्डस्तथार्थः॥ (२१५) इति लक्षणावृत्तिमन्तरेणाखण्डार्थत्वमुप-पाद्य 'एवं तावदखण्डवस्तुविषयः' (सं शा.२१६) इति प्राक् (१२७) पुटे उदाहृतश्लोके प्रातिपदिकार्थेति सूत्रानुसा-रेण लक्षणामन्तरेणाखण्डार्थत्वं पाणिनिसम्मतमित्युपपादितम्। न्यायदीपावल्याम् 'सत्यादिवाक्यार्थो ब्रह्मप्रातिपदिकार्थमा-त्रम्, तन्मात्रप्रश्नोत्तरवाक्यत्वात्' इत्यनुमानमुक्तम्। ब्रह्मप्रातिपदिकार्थविशेष्यमात्रपरत्वमत्र साध्यम् इत्यद्वैतसिद्धिः। 'नामवृत्तिज्ञानाधीनस्मृतिमुख्यविशेष्येत्यर्थः' इति लघुचन्द्रिका। प्रमाणमालयां च 'विज्ञानादिवाक्यमखण्डार्थनिष्ठम् ल-क्षणवाक्यत्वात् पृथुबुध्नोदराकारो घटः इत्यादिवाक्यवत्। तत्त्वमसिवाक्यमखण्डार्थनिष्ठं अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणवाक्यत्वात् सोऽयं देवदत्तः इत्यादिवाक्यवत्' इत्यनुमानं प्रमाणमुपन्यस्तम्। 'अतश्चैतल्लक्षणवाक्यमख-ण्डैकरसमेव प्रतिपादयति' इति उत्तरभाष्ये विज्ञानादिवाक्यमित्यादि प्रमाणमालोक्तानुमानमेव विवक्षितमिति प्रतीयते। सामानाधिकरण्ये श्रूयमाणे अध्यासापवादैकत्वपक्षाणां प्रतिभासनं शङ्कराचार्यैः (३.३.९.ब्र.सू) भाष्ये उक्तम्॥ अद्वैतसिद्धौ चतुर्धाहि सामानाधिकरण्यं अध्यासे इदं रजतमित्यादौ बाधायां 'स्थाणुः पुमान्' इत्येवमादौ। विशे-षणविशेष्यभावे 'नीलमुत्पलम्' इत्यादौ। अभेदे 'तत्त्वमसि' इत्येवमादौ। इति आगमबाधोद्धारे उक्तम्। अत्र गुरुचन्द्रि का सामानाधिकरण्यमिति समानविभक्तिकमिथस्साकाङ्क्षनामद्वयत्वरूपं पदयोस्सामानाधिकरण्यमित्यर्थः। अध्यासइति भिन्न सत्ताकयोस्तादात्म्यबोधकाकाङ्क्षाघटितमित्यर्थः। बाधायामिति बाध्यमानतादात्म्योपलक्षितस्य अधिष्ठानस्य बोधकाकाङ्क्षाघटित-मित्यर्थः। स्थाणुः पुमान् इत्यादेः स्थाणुत्वेन ज्ञातः पुमान् इत्यर्थकत्वात् तत्स्थाणुतादात्म्येन बाध्यमानेन उपलक्षितः-पुमान् अधिष्ठानं प्रतीयत इति भावः। विशेषणविशेष्यभावेनेति– समानसत्ताकयोस्तादात्म्यबोधकाकाङ्क्षाघटितमित्यर्थः। अभेदेनेति– अखण्डार्थबोधकाकाङ्क्षाघटितमित्यर्थः' इति। लघुचन्द्रिकायामपि (अखण्डार्थत्वोपपत्तौ) 'ननु नीलो घट इ-त्यादौ नीलघटयोस्तादात्म्यसम्बन्धो भाति सोऽयमित्यादौ तु अखण्डार्थत्वमित्यत्र किं नियामकमितिचेत्? अत्रोच्यते, चतु-र्धा हि सामानाधिकरण्यम्' इत्युपक्रम्य व्यावहारिकतादात्म्यं विशेषणविशेष्यभावः, प्रातीतिकतादात्म्यमध्यास इति। ऐक्यं यथा सोऽयं देवदत्त इत्यादौ तत्तेदन्तयोरेककालावृत्तित्वेन तदुपहितयोस्तादात्म्यासम्भवेन तदुपलक्षितयोः अखण्डव्यक्ति-

## श्रीभाष्यम्

**एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाश्शृणु । एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य**

## श्रुतप्रकाशिका

परिहरिष्यमाणत्वात् । उक्तं चोद्यं (त्रयं) परिहर्तुमाह । **एकार्थेति** । अवहितमनाश्शृणु । प्रतिवचनस्यानेकवाक्यसाध्यत्वान्मध्ये न चोदनीयम् । किंत्वर्थस्य गहनत्वादवधातव्यमिति भावः । अनुपपत्तित्रयं परिहरति । **एकत्वेत्यादिना** । एकत्वतात्पर्यनिश्चयस्समानविभक्त्या । अर्थवत्त्वम् प्रयोजनवत्त्वम् । व्यावर्त्यभेदकृतव्यावृत्तिभेदादपर्यायत्वं व्यावृत्तिरूपप्रवृत्तिनिमित्त (भेद) लाभात्सामानाधिकरण्य लक्षणसिद्धिः व्यावर्त्यबहुत्वात्पदानां तत्तद्व्यावृत्तिरूप प्रयोजनवत्त्वंचेत्यर्थः ॥

## गूढार्थसंग्रहः

मात्रैक्यरूपं भाति । तथाच यत्र तादात्म्यं न सम्भवति तत्राखण्डार्थत्वात् जीवत्वेशत्वोपहितयोस्तादात्म्यासम्भवादखण्डार्थत्वम् । नीलो घट इत्यादौ तादात्म्यं सम्भवति । गुणक्रियाद्रव्यरूपकार्याणां सामान्यविशेषयोश्चाकार्ययोस्तादात्म्यस्वीकारात्, विशिष्टकेवलयोरंशांशिनोश्च तादात्म्यं सम्भवति । केवले विशिष्टस्य अंशिनि चांशस्य कल्पितत्वेन कार्यत्वात् पुरुषो दंडीत्यादावपि दण्डसंयोगस्य गुणत्वेन द्रव्ये तादात्म्यात् तद्विशिष्टस्यापि पुरुषे तादात्म्यसम्भवः । नित्यगुणस्य ज्ञानानन्दरूपस्य नित्यांशस्यच जलादिपरमाणौ ब्रह्मणिच तादात्म्यं सम्भवत्येव गुणत्वादेव । अतएव नित्यगुणद्रव्ययोः अकार्यकारणनिष्ठसामानाधिरण्यस्य व्यभिचारित्वात् द्रव्यनिवेशः इतिचोक्तम् । अत्र भाष्ये एकार्थत्वमिति उत्तरत्र अतश्चैतल्लक्षण वाक्यं अखण्डैकरसमेव प्रतिपादयति इतिच उक्त्या एकार्थत्वं अखण्डार्थत्वंच एकमेवेतिद्योतितम् । एकार्थत्वमित्यनेन संसर्गाविषयकबोधजनकवाक्यत्वमखण्डार्थवाक्यत्वं इत्यपि सूचितम् । विशिष्टपदार्थाभिधाने दोषोक्त्या विशिष्टपदार्थे संसर्गस्य घटकतया विशिष्टाविषयकत्वोपपादनेन प्रागुदाहृतसुरेश्वरवचनाद्यनुसारेण संसर्गाविषयकत्वस्यापि सूचनं सम्भवत्येव । उत्तरत्र सत्यादिपदार्थशोधनेन अपर्यायशब्दानां एकविषयकबोधजनकत्वोपपादनेन ' सत्यं ज्ञानम् ' इत्यादिश्रुतेः अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वरूपं अखण्डार्थत्वं सम्यगुपपादितमेव । प्रागुदाहृतप्राचीनग्रन्थाननुसृत्य ' संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् । उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥ ' अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वमखण्डार्थता । इति तत्त्वदीपिकायां १.परिच्छेदे नित्सुखाचार्यैरुक्तम् ॥

अत्र पूर्वोदाहृतभाष्यवाक्यद्वयपर्यालोचनायां अखण्डशब्दस्य अविशिष्टमेकमर्थ इत्यपि प्रतीयते । 'एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम् ' इति उत्तरभाष्यश्रीसूक्तौ अपर्यायानेकशब्दप्रकाशितं एकमखण्डमित्यर्थः स्फुटः । ' सकलेतरविरोध्याकारमवगमयत् ' इत्यत्र अविशिष्टमित्यंशः विवक्षितः इति भाष्य वाक्यैरेवाखण्डशब्दार्थोऽपि निर्णीतो भवति । अयमर्थः' ' अविशिष्टमपर्यायानेकशब्दप्रकाशितम् । एकं वेदान्तनिष्णाताः अखण्डं प्रतिपेदिरे ॥ ' इति कल्पतरुवाक्ये स्फुटः ॥ अत्र संसर्गासङ्गीत्यादि चित्सुखवाक्ये ' पदवृत्तिस्मारितातिरिक्तमत्र संसर्गपदेन विवक्षितम् । तथाचापर्यायशब्दानां पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वं लक्षणं पर्यवसितम् । तथाच न ' अप्राप्तयोस्तु प्राप्तिः संयोगः ' इति संयोगलक्षणे अव्याप्तिः । तस्य वृत्तिस्मारितत्वात् । नापि द्विषदन्नं न भोक्तव्यम् इत्येतत्परे विषं भुङ्क्ष्वेति वाक्येऽतिव्याप्तिः । तत्रानिष्टसाधनत्वसंसर्गस्य पदवृत्त्यस्मारितस्य प्रतिपाद्यत्वात् ' इत्यद्वैतसिद्धिः पदवृत्तीति स्वघटकपदवृत्तिरित्यर्थः । स्वं लक्ष्यभूतं वाक्यम् । अपर्यायेत्यादि स्वघटकपदवृत्तिस्मारितान्यागोचरप्रमाजनकत्वे सति पर्यायताऽनापन्नानामघटितमित्यर्थः । इति लघुचन्द्रिका ॥

### श्रीभाष्यम्

**तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायताच। एतदुक्तं भवति लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतोव्युदस्यते।**

### श्रुतप्रकाशिका

**ननु** तत्त्वमसीत्यादिवाक्यवदन्वयमुखेनोपलक्षणंस्यात्। किमर्था व्यावृत्तिः व्यावृत्तिबहुत्वादनेकार्थत्वमापतितम्। व्यावर्त्याकारानन्त्यात्कतिपयपदैर्नतद्व्यावृत्तिश्शक्येतकर्तुम्। ब्रह्मणो येभ्योव्यावृत्तिः कानि च तानि वस्तूनि। ब्रह्मणोऽनेकव्यावृत्तिमत्त्वात्सधर्मकत्वम्। व्यावृत्तीनां धर्मत्वानभ्युपगमे पदानां पर्यायत्वमित्याद्यनेक शङ्कापरिहारार्थमाह। **एतदुक्तंभवतीति**। लक्षणतः स्वरूपलक्षणतः नतु तटस्थलक्षणतः। अनेन जगत्कारणत्व शङ्कितदोषव्यावृत्तये ब्रह्मणस्सकलेतरविरोधित्वं प्रतिपादयदिदं शोधकवाक्यं व्यावृत्तिपरं भवितुं युक्तमित्युक्तं भवति। बहुव्यावृत्तिभिरनेकार्थत्व प्रसङ्गं परिहरति। **सकेलतरपदार्थविरोधिरूपमिति। तद्विरोधिरूपमिति। फलतोव्युदस्यतइति।** इदं वाक्यं स्वरूपमात्रपरमेव अत ऐकार्थ्यम्। * व्युदासस्तुफलित इति भावः। व्यावर्त्याकार बहुत्वात्कतिपयपदैर्व्यावृत्तिर्नशक्येत्यत्परिहरति। **सर्वमनेन पदत्रयेण फलतोव्युदस्यत।** इति प्रयोजक (त्व) रूपेण व्युदासे सर्वमपि व्युदस्तं भवती-

### गूढार्थसंग्रहः

**तत्तत्पदार्थविरोधि प्रत्यनीकत्वपरत्वेनेति।** उक्तंच आनन्दबोधयतिभिः न्यायमकरन्दे 'लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदतः। विज्ञानानन्दपदयोः पदार्थव्यर्थ (तेनहि)॥ इति। **फलतो व्युदस्यतइति।** शाब्दबोधानन्तरं अर्थापत्त्यधीनबोधात् व्युदस्यतइत्यर्थः। उक्तंच सुरेश्वराचार्यैः 'शब्दात्प्रतीयते तावत् संगतिर्धर्मधर्मिणोः। मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः॥ (तैत्तरीयवार्तिकम् ब्र.व.६७) इति। अत्रानन्दगिरिविवरणम्। 'सत्यं ब्रह्म' इत्यादिना ब्रह्म शब्दसमानाधिकृतसत्यादिशब्दात् धर्मस्य सत्यादेः धर्मिणश्च ब्रह्मणः तादात्म्यरूपा सङ्गतिस्तावदवगम्यते। तथाच सत्यादि रूपंच यत् ब्रह्म कथं तदसत्यादि स्यात् इत्यर्थापत्तिरूपादनुमानात् मानान्तरात् असत्याद्यपोहोभासते। ततश्च तस्यापूर्वत्वाभावात् न शब्दगम्यत्व मुच्यते। यश्चार्थादर्थो न सचोदनाऽर्थः इतिन्यायात्। तदेवं सत्यादिवाक्यं परमार्थादिरूपे ब्रह्मणि पर्यवसितम् इति॥

एतदनुसारेणैवोक्तं कल्पतरावपि, 'इतरव्यावृत्तिस्तु अर्थात् नतु शब्दात्' इति। उक्तंचाद्वैतसिद्धावपि, 'व्यावृत्तिर्यद्यपि विशेषणतयैव आर्थिकबोधे भासते। तथाऽपि नं शाब्दबोधे सखण्डार्थत्वम्। यश्चार्थादर्थो न स चोदनार्थ इति न्यायात्। नचार्थिकेनापि विशेषणेन ब्रह्मणस्सखण्डत्वापत्तिः; निर्धर्मकत्वादिश्रुतेः विशेषणस्य धर्म्यसमानसत्ताकत्वेन सखण्डत्वाप्रयोजकत्वादिति।' व्यावृत्तेः ब्रह्मस्वरूपाभेदेन पारमार्थिकत्वं तद्भिन्नत्वेन मिथ्यात्वं चेति पक्षद्वयमुक्तम्। अ.सि. तत्र प्रथमपक्षेऽपि व्यावृत्तिर्व्यावहारिकी इत्येवाभ्युपगतम्। यद्यपि 'सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः' इति प्रागुदाहृतश्लोके अनृतजडपरिच्छिन्नभ्रमनिवृत्तिः वाच्यभिन्नरूपविशिष्ट्योः तादात्म्यबुद्धिः या प्राथमिकी तत एवेति स्फुटं प्रतीयते। उक्तंचाद्वैतसिद्धौ, 'अस्मन्मते यद्यपि सत्याद्यत्यतमपदं स्वरूपलक्षणपरम् ब्रह्मणोऽन्यस्य तदाभासत्वात्; तथाऽपि परैरपि सत्यत्वस्य सत्यत्वे सति ज्ञानत्वस्य सत्यत्वेसत्यानन्दत्वस्य शून्यवादिभिरपि सत्वरहितज्ञानानन्दात्मकत्वस्य ब्रह्मणोऽन्यत्राङ्गीकारात् मिलितं विना न निर्विचिकित्सब्रह्मसिद्धिरिति मिलितं लक्षणम्। नचैवं विशिष्टस्य लक्षणत्वे सख-

## गूढार्थसङ्ग्रहः

ण्डार्थत्वप्रसङ्गः, वाच्यस्य सखण्डार्थत्वेऽपि लक्ष्यस्याखण्डार्थत्वात् । यद्यपि सर्वेषां सत्यादिपदानां लक्ष्यमेकमेव निर्विशेषं ब्रह्म । तथाऽपि निवर्तनीयांशाधिक्येन न पदान्तरवैयर्थ्यम् । अतो वाच्यार्थवैशिष्ट्यस्य अखण्डार्थसिद्धावुपायत्वात् न तद्विरोधिता इति । द्वारत्वेन लक्षणे तात्पर्यं न द्वारिणः अखण्डार्थत्वं निरुणद्धि इतिच । सामानाधिकरण्यमत्र भवतीति सङ्क्षेपशारीरकमधुसूदनसरस्वतीविवरणे प्रागुदाहृते प्रथमं भिन्नधर्मविशिष्टतादात्म्यबुद्धिः इत्यर्थः नैवोक्तः । अथापि मिथ्यात्वश्रुत्युपपत्तौ श्रुतेः चैतन्यमात्रे द्वितीयाभावविशिष्टे तदुपलक्षिते वा तात्पर्यम् । तत्र आद्ये मिथ्यात्वासिद्धिः, द्वितीयतृतीययोः अखण्डार्थत्वहानम् इति शङ्कायां द्वितीयाभावद्वारकस्वरूपज्ञानस्योद्देश्यत्वात्, अवान्तरतात्पर्यस्य तत्रापि सत्वात्, तद्द्वारैव स्वरूपचैतन्ये महातात्पर्यात्' इत्युक्तम् ॥ सिद्धान्तबिन्दावपि 'वाच्यार्थभेदावभासान्न पौनरुक्त्यम् । लक्ष्यस्य चार्थस्य च एकत्वादखण्डार्थता' इत्युक्तम् । तत्रचात्रच सङ्क्षेपशारीरकोक्तिरेव मूलमिति वक्तव्यम् । एतदनुरोधेनैव 'सामानाधिकरण्यम्' इत्यादिश्लोके विशेषणेतरतया— विशेषणविशेष्यभावेन वाच्यार्थभेदज्ञानमन्वयः इत्यनुपज्यते । विरोधः— विरोधज्ञानम् । वाच्यार्थभेदज्ञाने प्रमात्वासम्भवेन तात्पर्याविषयत्वज्ञानात् । निर्विकल्पकशाब्दबोधे तात्पर्यज्ञानमिति यावत्' इति न्यायरत्नावल्यां श्लोको विवृतः ॥

सुरेश्वराचार्यैरपि 'तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् । स्वार्थार्पणप्रणाड्यैव परिशिष्टौ विशेषणम्' इत्युक्तम् । अत्र तैत्तरीयवार्तिकोक्तदिशा विधिपदानां स्वार्थार्पणप्रणाडिकया अर्थादितरनिवृत्तिबोधकत्वम् । निषेधपदानां तु साक्षादिति स्थितम् । अतः अनन्तशब्देन शाब्दबोध एव इतरनिवृत्तिबोधः इति स्फुटं प्रतीयते । तत्रच इयमेव रीतिरास्थेया । इति फलतो व्युदासः 'सत्यं ज्ञानमनन्तं' इत्यत्र सर्वत्र नघटते । तथाऽपि स्वरूपलक्षणपरत्वस्यैव भगवता अत्राभिधानेन नविरोधः । उक्तंचाद्वैतसिद्धावपि धर्मलक्षणस्य अखण्डत्वविरोधित्वेऽपि स्वरूपलक्षणस्यतदविरोधित्वाच्च । नच अभेदे लक्ष्यलक्षणभावायोगः । अन्तःकरणवृत्तिनिबन्धनाकारभेदेनोभयोपपत्तेः । अन्यथा स्वरूपलक्षणतटस्थलक्षणाविभागो न स्यादिति । अत्र लघुचन्द्रिका भावायोगः भावव्यवहारायोगः इतरव्यावृत्त्यनुमितिंप्रति पक्षो लक्ष्यम् हेतुर्लक्षणं तदुभयरूपत्वमत्यन्ताभेदे न सम्भवति हेतौ पक्षसम्बन्धाभावादितिभावः । अन्तःकरणेति । विभिन्नमनोवृत्तिरूपोपाधिभेदात् एकस्याप्युपहितरूपेण भेदसम्भवात् सम्बन्धसम्भवः । तादृशमनोवृत्तिश्च ब्रह्मपदार्थस्वरूपमात्रस्य लक्षणया उपस्थितिः, तद्विषयत्वेन लक्ष्यता । सत्यादिपदार्थस्वरूपमात्रस्य लक्षणया उपस्थितिश्च । तद्विषयत्वेन लक्षणत्वं साचोपस्थितिः अभिहितान्वयमते अनुभवः । मतान्तरे स्मृतिः तादृशविषयत्वरूपेण लक्ष्यलक्षणयोः साक्षिणैव प्रथमं गृहीतयोः अनुमितिहेतुपरामर्शविषयत्वं यदितु इतरव्यावृत्तिः अर्थात् नतु शब्दादिति कल्पतरूक्तरीत्या इतरव्यावृत्तेरर्थापत्तिरेव नानुमितिः तदाऽपि ब्रह्मपदार्थस्य सत्यादिपदार्थानामैक्यं यदखण्डाकारशाब्दधिया प्रमितं तदसत्यादिव्यावृत्तिं ब्रह्मपदार्थादिनिष्ठां विना अनुपपन्नमिति अनुपपत्तिज्ञानेन असत्यादिव्यावृत्तिर्ब्रह्मनिष्ठेति अर्थापत्तेरुत्पादात् ब्रह्मपदार्थत्वस्य ब्रह्मपदजन्यतादृशधीविषयत्वरूपत्वात् यत्र अनुपपन्ने गृह्यते तस्यैव लक्ष्यत्वादिनां व्यावृत्त्युपपाद्यस्यानुपपन्नस्यैव लक्षणत्वात् अनुपपन्नविषयकमनोवृत्तिविषयत्वेन लक्षणत्वासिध्या लक्ष्यलक्षणभावो मनोवृत्तिभेदेनैवेतिभावः इति । तस्मात् स्वरूपलक्षणं लक्ष्यात्यन्ताभिन्नं विशेषलक्षणं यावदाश्रयभावि तटस्थलक्षणं स्वकालावच्छेदेन स्वाश्रयनिष्ठमिति विवेको युक्त इति भावः । इति च ॥

शङ्कराचार्यैरपि 'एवं सत्यादिशब्दाः इतरेतरसन्निधानात् अन्योन्यनियम्यनियामकास्सन्तः सत्यादिशब्दवाच्यान्निवर्तकाः ब्रह्मणो लक्षणार्थाश्च भवन्तीति ।' (तै.उ.शं.भा.) इत्यत्र सत्यादिवाक्यस्य ब्रह्मस्वरूपलक्षणपरत्वमेवोक्तम् । अत्र आनन्दगिरिविवरणम् । 'यद्यपि सत्यादिशब्दानां ब्रह्मणा मुख्योऽन्वयः ; तथाऽपि आरुण्यैकहायन्यादिवत् पार्ष्ठिकान्व-

### श्रीभाष्यम्

**तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनोव्यावृत्तब्रह्मपरं । ज्ञानपदंच अन्याधीनप्रकाश जडरूपाद्वस्तुनोव्यावृत्तपरं । अनन्तपदं च देशतःकालतोवस्तुतश्च परिच्छिन्नव्यावृत्तपरं । नच व्यावृत्तिर्भावरूपोऽभावरूपोवा धर्मः अपितु सकलेतरविरोधि ब्रह्मैव । यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्पदार्थस्वरूपमेव, न धर्मान्तरम् । एवमेकस्यैव वस्तुनस्सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयं । तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति ।**

### श्रुतप्रकाशिका

त्यर्थः । विरोधीनि कानीत्यत्राह । **तत्रेति** । जगत्कारणत्वेन तुच्छताव्यावृत्ता । किमर्थमसत्यव्यावृत्तिरित्यत्रोक्तं विकारास्पदत्वेनासत्यादिति । स्तब्धशीतादिसाधारणजडशब्दविवरणार्थमन्याधीनप्रकाशशब्दः ॥

**यद्यपि** सत्यादिष्वेकैकपदेन समस्तव्यावृत्तिसिद्धिः । तथाऽपि ब्रह्मणि शङ्कितस्वेतरपदार्थगतविरोध्याकारस्यैकपदेनानिवर्तनात्पदत्रयसाफल्यम् । व्यावृत्तिभिस्सधर्मकत्वं परिहरति । **नचेति** । प्राभाकरपक्षे सिद्धान्तिमतेच भावरूपधर्मः । वैशेषिकादिमतेत्वभावरूपधर्मः तस्माद्भावरूपोऽभावरूपोवेत्युक्तम् । व्यावृत्तिर्धर्मो न चेत् । किं स्यादित्यत्राह । **अपित्विति** । शुक्त्यादौहि धर्मस्य व्यावृत्तित्वं रजतादिविरोधित्वादभ्युपगम्यते । एवं ब्रह्म च सकलेतरविरोधित्वात्स्वयमेव व्यावृत्तिरित्यर्थः । स्वरूपस्यैव व्यावृत्तित्वे दृष्टान्तमाह । **यथेति** । शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिर्न धर्मान्तरं अनुपलम्भात् । धर्मान्तरत्वेऽनवस्थानाचेत्यभिप्रायः । तर्हि पदानां पर्यायत्वं स्यादित्याशङ्क्य कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमिति दृष्टान्तवाक्याभिप्रायेण परिहरति । **एकस्येति** । व्युदसनीयव्युदासभेदेन पदानां प्रयोजनवत्त्वं तत एवापर्यायत्वमित्यर्थः । प्रतियोग्यवच्छिन्नवेषेण प्रवृत्तिनिमित्त (भेद) लाभात्सामानाधिकरण्य लक्षणसिद्धिश्चेत्यभिप्रेतम् । पर्यायत्वादि प्रसङ्गपरिहार ऐकार्थ्याविरोधेन कृतइत्यभिप्रायेणोक्तमेकार्थमिति । स्वरूपमात्रपरत्वादैकार्थ्यं हि (विव) रक्षितम् । **अर्थवत्तरमिति** । तरप्प्रत्ययेन दृष्टान्ताच्छौक्ल्यादे र्भेदवाद्यभिमतसगुणपरत्वाच्च प्रयोजनाधिक्यमभिप्रेतम् । अपरोक्षभूतोहि शौक्ल्यादिदृष्टान्तः । तत्र स्पाष्ट्यार्थं कार्ष्ण्यादिव्यावृत्तमित्यादि पदप्रयोगः प्रत्यक्षागोचरेतु परे ब्रह्मणि सकलेतरव्यावृत्तिवचनमाधिकप्रयोजनमिति दृष्टान्तात्प्रयोजनाधिक्यं जगत्कारणभूतस्य ब्रह्मणश्शङ्कितदोषव्यावृत्तिरेवापेक्षिता नतु गुणान्तरमिति भेदवादिपक्षात्प्रयोजनाधिक्यम् ॥

**एवं** सत्यज्ञानादिवाक्यस्यानुग्राहकस्तर्कउक्तः । तर्कानुगृहीतवाक्येन कोऽर्थः प्रतिपन्नइत्यत्राह । **तस्मादिति** । तस्मात् उक्तन्यायानुगृहीतत्वादस्यवाक्यस्येत्यर्थः । **एकमिति** । समानाविभक्तिनिर्देशफलितमैक्यमुक्तम् । एवकारेण स्वरूपतऐक्यं, गुणतोभेद इत्यंशतोऽनेकार्थत्वव्यावृत्तिः । एतद्विशदयति । **निर्धूतनिखिलविशेषमिति** । निर्विशेषस्य तुच्छताव्यावृत्त्यर्थे स्वयंज्योतिरितिपदम् । **इत्युक्तमिति** । सत्यज्ञानादिवाक्येनेतिशेषः । इत्थं सामानाधिकरण्यान्यथाऽनुपपत्त्या सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम् । अथ कारणवाक्यैकार्थ्येन शोधकवाक्यान्तरैकार्थ्येनच हेतु

### गूढार्थसंग्रहः

येन सकललौकिकाध्यासाधिष्ठानं ब्रह्मत्वेन लक्षयन्तीत्यर्थः इति । एतदभिप्रायेणैव 'सामानाधिकरण्यमत्र' इत्यादिश्लोक विवरणे मधुसूदनसरस्वतीभिः प्रथमतो वाच्यार्थाभेदाध्यवसायो नोक्तः । सत्यत्वादेरभावरूपत्वेन अधिकरणब्रह्मस्वरूपत्वम-

### श्रीभाष्यम्

**एवं वाक्यार्थप्रतिपादने सत्येव 'सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं' (छां.६.प्र.२.खं.१) इत्यादिभिरैकार्थ्यम् 'यतोवा इमानि भूतानि जायन्ते' [तै.भृगु.१.अनु] 'सदेवसोम्येदमग्रआसीत्' 'आत्मावा इदमेकएवाग्रआसीत्' [ऐतरेय.१.अ.१खं.१) इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणस्स्वरूपमिदमुच्यते 'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आनन्द.१.अनु.१) इति तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्**

### श्रुतप्रकाशिका

द्वयेन वस्तुमात्रपरत्वमुपपाद्यते । **एवमित्यादिना** । तत्र प्रथमं कारणवाक्यैकार्थ्ये हेतुरुच्यते । **एवमिति** । एवं निर्विशेषपरत्वेन निर्वाहेसत्येव कारणवाक्यैकार्थ्यमित्यर्थः ॥

कारणवाक्यैकार्थ्यं कुतोऽपेक्षितं । ऐकार्थ्येसति कथंवा निर्विशेषपरत्वमित्यत्राह । **यतइत्यादि** । यतोवा इमानीत्यादिलक्षणवाक्यम् । * एतस्य कारणत्वानुवादेन लक्षणपरत्वात्कारणत्वप्रापकं वाक्यमाह । **सदेवेति** । उपलक्षितस्य * उपलक्षणं नाम चन्द्रस्य शाखेव तटस्थं ज्ञापकम् । **सत्यं ज्ञानमनन्तं ब्रह्मेतीति** । अनेन वाक्येनेत्यर्थः । कारणवस्तुनस्स्वरूपशोधकत्वात्कारणवाक्यैकार्थ्यमस्यापेक्षितमित्युक्तं भवति । अस्तु कारणवाक्यैकार्थ्यम् । तत्तु सगुणब्रह्मकारणत्ववादिभिः **'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नंच जायते' 'तमीश्वराणां परमं महेश्वरं' 'सकारणं करणाधिपाधिप'** इत्यादिवाक्यैरेव स्यादित्यत्राह । **तत्रेति** । तत्र कारणवाक्यैकार्थ्येऽपेक्षिते । सर्वशाखाप्रत्ययन्यायोह्यनुक्तार्थस्वीकारफलः तेनात्रानुक्तस्योपनिषदन्तरोक्तस्याप्यर्थस्य स्वीकर्तव्यत्वेसति सगुणमात्रपरासूपनिषत्सु निर्गुणमपि ब्रह्मोक्तं भवति । तत्रापच्छेदन्यायेन निर्गुणवाक्यानां बलीयस्त्वात्सर्वत्र सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मैव प्रति-

### गूढार्थसङ्ग्रहः

द्वैतसिद्धावेव मधुसूदनसरस्वतीभिः तत्र तत्रोक्तम् । न्यायरत्नावल्यामपि— 'सामानाधिकरण्यमत्र' इत्यादिश्लोकस्य प्रथमं वाच्यार्थाभेदज्ञानस्य आवश्यकत्वपरतया विवरणानन्तरं 'यदि तु सत्यादिवाक्यजन्यनिर्विकल्पकप्रमोत्तरमर्थापत्त्या सत्यत्वाद्युपलक्षितानामभेदनिश्चयः सत्यत्वाद्युपलक्षितानामभेदः परस्परवृत्तिरित्याकारको जायते । समानविभक्तिकसत्यज्ञानादिपदजन्यनिर्विकल्पकविषयत्वस्य तादृशाभेदं विनाऽनुपपत्तेः । तदुक्तं कल्पतरौ— 'इतरव्यावृत्त्यादिकमर्थात् नतु शब्दात् इति' इतिपक्षः अद्वैतसिद्ध्यादावाश्रितः आश्रीयते तदा नोक्तक्लेशः' इत्युक्तम् । एवं च फलतो व्युदासपक्ष एव क्लेशो नास्तीति ब्रह्मानन्दसरस्वतीभिरुक्त्या मधुसूदनसरस्वतीनामभिमतत्वेन अयमेव पक्षो ज्यायानिति सिद्धम् । अतः 'सत्यं ज्ञानम्' इत्यस्य स्वरूपलक्षणपरत्वेन फलतो व्युदासोक्तियुक्तेति बोध्यम् ॥

**एवं वाक्यार्थप्रतिपादने सत्येवेति** । 'अस्थूलमनणु' इत्यादिवाक्यवत् 'सत्यं ज्ञानम्' इत्यादिवाक्यस्य निर्धूतनिखिलविशेषार्थप्रतिपादनपरत्वानुरोधेन वाक्यार्थप्रतिपादने सत्येवेत्यर्थः ॥ **जगत्कारणत्वेनोपलक्षितस्य—ब्रह्मावगतमिति** । अत्र जगत्कारणत्वस्य तटस्थलक्षणत्वेन व्यवहारः । एवं काकवदुपलक्षणत्वेनापि व्यवहारः । न च मुक्ताविच्छापाये आनन्दापायापत्तिः ; इष्टत्वोपलक्षितस्य स्वरूपस्यानपायात् । इत्यद्वैतसिद्धावुक्त्या (ज्ञानत्वाद्युपपत्तौ) किञ्चित्कालावच्छेदेन विद्यमानस्य धर्मस्य इष्टत्वादिवत् उपलक्षणत्वेन व्यवहारः ॥ परैः उपनिषद्भाष्ये—तै. 'यद्रूपेण यन्निश्चितं तद्रूपं व्यभिचरत्तदनृतमित्युच्यते । अतो विकारोऽनृतम् । अतः सत्यं ब्रह्मेति विकारान्निवर्तयति । अतः कारणत्वं प्राप्तं

### श्रीभाष्यम्

**जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्त**
**व्यम् । अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते । अन्यथा 'निरञ्जनं' 'निर्गुणः'**

### श्रुतप्रकाशिका

पादितं भवतीत्यभिप्रायः ततः किमित्यत्राह । **जगदिति** । जगत्कारणेत्यादिपदैः कारणवाक्योक्तमर्थमनुवदति प्रतिपिपाद-
यिषितम् । तात्पर्यभूमिः वस्तुमात्रएव तात्पर्यमित्यर्थः । तदविरोधेन वक्तव्यं कारणवाक्यप्रतिपन्नब्रह्मस्वरूपशोधकत्वात्तदवि-
रोधनानेन वाक्येन वक्तव्यमित्यर्थः । नरपतिरद्वितीय इत्यादिवत्समाभ्यधिकराहित्येऽप्यद्वितीयत्वमुपपन्नमिति तदैकार्थ्येऽपि
न निर्गुणपरत्वसिद्धिरित्यत्राह । **अद्वितीयत्वश्रुतिरिति** । सदेव एकमेवेति विजातीयसजातीयव्यावर्तकावधारणद्वयसम-
भिव्याहृतत्वादिदमद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहत इत्यभिप्रायः ॥

**एवं** कारणवाक्यैकार्थ्यात्सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम् । अथ शोधकवाक्यैकार्थ्ये हेतुरुच्यते ।
**अन्यथेति** । अन्यथा सत्यज्ञानादिवाक्यस्य विशिष्टपरत्वे '**निरञ्जनं-निर्गुणः**' इत्यादिभिर्विरोधस्स्यात् अतस्तदविरोधा-
येदं वाक्यं निर्विशेषवस्तुमात्रपरमित्यर्थः । अन्यथा '**निरञ्जनं-निर्गुणः**' इत्यादिभिर्विरोधश्चेत्यनेनाद्वितीयत्वश्रुतेर्गुण-

### गूढार्थसङ्ग्रहः

ब्रह्मणः । कारणस्य च कारकत्वं वस्तुत्वात् मृद्वदाचिद्रूपता च प्राप्ता । अत इदमुच्यते– ज्ञानं ब्रह्मेति । ज्ञानं ज्ञप्तिः । भा
वसाधनो ज्ञानशब्दः । नहि सत्यता अनन्तता च ज्ञानकर्तृत्वेसत्युपपद्यते । ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं
भवेत् । अनन्तं च । यद्धि न कुतश्चित्प्रविभज्यते तदनन्तम् । ज्ञानकर्तृत्वं च ज्ञेयज्ञानाभ्यां प्रविभक्तमित्यनन्तता नस्यात् ।
इति, सजातीयेभ्य एव निवर्तकानि विशेषणानि विशेष्यस्य, लक्षणं तु सर्वत एव' इतिचोक्तम् । 'सत्यं ज्ञानमित्यादि
शोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानंच' इति पूर्वभाष्ये निर्विशेषस्वरूपस्य शोधकवाक्यावसेयत्वमत्र उपपा-
दितं भवति । मधुसूदनसरस्वतीभिश्च सृष्ट्यादिश्रुतयः तत्पदवाच्यार्थस्य समर्पिकाः । 'सत्यं ज्ञानमनन्तम्' इत्यादयस्तु
लक्ष्यार्थस्य' इत्यादि प्रथमं अवान्तरवाक्ये अनुभूतयोः शुद्धयोर्जीवब्रह्मणोः तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्त्या
लक्षणया स्मरणोपपत्तिः' इति सिद्धान्तबिन्दावुक्तम् । अत्र तत्त्वमसीति वाक्यप्रवृत्तेः पूर्वं सृष्ट्यादिवाक्यस्य प्रकृतत्वात्
प्रक्रान्तवाचितत्पदस्य सृष्ट्यादिकारणं वाच्यमिति भावः । इत्यादयस्तु लक्ष्यार्थस्येति । शुद्धब्रह्मज्ञानस्य मोक्षहेतुत्वे उक्ते
किं तद्ब्रह्मेत्याकाङ्क्षायां सत्यं ज्ञानमिति वाक्यस्य प्रवृत्तत्वेन तत्पदलक्ष्यशुद्धब्रह्मपरत्वमिति भावः । ब्रह्मस्वरूपं सत्यत्वाद्युप-
लक्षितात्यन्ताभिन्नं न वा इत्यादिसंशयनिवर्तकत्वेन स्वरूपलक्षणपरत्वम् । स्वरूपे भ्रमसंशयनिवर्तकधीघटकस्यैव स्वरूपलक्ष
णपरत्वात् । तत्पदवाच्यत्वं सृष्ट्यादिजननस्वरूपयोग्यताऽवच्छेदकीभूताविद्याबिम्बत्वरूपं ईश्वरत्वम् । त्वंपदवाच्यत्वमपि
अवस्थात्रयसम्बन्धयोग्यताऽवच्छेदकीभूताविद्याप्रतिबिम्बत्वरूपं जीवत्वम् ।' इति न्यायरत्नावली ॥

**अद्वितीयत्वश्रुतिरिति** । 'किं त्विदमभिन्नं अग्रे यदासीत्तत्सदेव एकमेवाद्वितीयम्' इत्येवमुद्देश्यभावस्य विव-
क्षितत्वात् अग्रे विद्यमानमनूद्य अखण्डसदद्वितीयाविधानात् अग्रकालविद्यमानत्वोपलक्षिते वस्तुनि अखण्डसदद्वितीयस्यैव
धीः । तथाचावान्तरतात्पर्येण द्वितीयसामान्यस्य मिथ्यात्वादिधीः । एवं चाग्रादिपदानि न व्यर्थानि । शून्यवादिनो हि
सृष्टिपूर्वकाले सद्वस्तु नाङ्गीकुर्वन्ति । तदङ्गीकुर्वन्तोऽपि तार्किकादयः नाद्वितीयमङ्गीकुर्वन्ति । तत्र सदित्यनेनाद्यानां नि-
रासः । अद्वितीयादिपदैस्तु द्वितीयानामिति सार्थक्यात्' इति । अथवा 'आत्मा वा इदमग्र आसीत् नान्यत्किञ्चन मिष

## श्रीभाष्यम्

[श्वे] इत्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयन्ति।

## श्रुतप्रकाशिका

तोऽपि सद्वितीयतानिषेधपरत्वंचार्थादुपपादितं भवति। हेतुत्रयेणोपपादितमर्थं निगमयति। अतश्चेति। अतः पूर्वोक्त

## गूढार्थसङ्ग्रहः

त्' इति वाक्ये मिषदितिपदं आसीदित्यर्थकम्, ऐतरेयभाष्ये तथा व्याख्यातत्वात् तदेकवाक्यतया प्रकृते द्वितीयपदस्य अन्यार्थकत्वात्। लक्षणायाश्चावश्यकत्वे द्वित्वसङ्ख्यापूरकत्वत्यागेन आत्मान्यविजातीयत्वेन लक्षणाया एव युक्तत्वात् तादृशत्वेन एकरूपेण निषेधे भेदस्य निषेधस्य च निषेधस्सिद्ध्यति। विशेषणस्य भेदस्यापि विशेष्यभूतभेदस्यैव निषेधे बाधकाभावात्' इति, 'किं च सजातीयब्रह्मान्यत्वादिरूपेण (एकं-एव-अद्वितीयम् इति) पदत्रयस्य लक्षणैव वाच्या। द्वितीयगामीत्यादौ स्वान्यत्वेन लघुरूपेणापि प्रयोगस्याभाक्तस्य सत्वेन उक्तगुरुरूपेण शक्त्यसम्भवात्। तथा च द्वितीयपदस्य स्वान्यसामान्यबोधकत्वस्य मुख्यवृत्त्यैव सम्भवात् अद्वितीयपदस्यैव द्वितीयसामान्यनिषेधपरत्वसम्भवेन, पदान्तरं तस्य तत्परत्वग्राहकमिति युक्तम्' इति च लघुचन्द्रिकायाम् (एकमेवाद्वितीयमिति श्रुत्यर्थविचारे) उक्तम्॥

अत्र गुरुचन्द्रिका– 'अथ अद्वितीयशब्देन द्वयमात्रनिषेध इत्ययुक्तम्। 'आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किंचन मिषत्' इत्यादौ द्वयस्य मिषत्वेन निषेधात् अत्रापि तथा वाच्यत्वात्। किं च द्वितीयशब्दः समद्वितीये व्युत्पन्न इति न तस्य तदर्थत्वे सङ्कोचः इति चेन्न ; आत्मा वेत्यादौ धातूनामनेकार्थत्वात् मिषदित्यस्य आसीदित्यर्थः इति भाष्ये व्याख्यानात् अद्वितीय इति पदोपसंहारस्य मिषदित्यस्य उन्मिषदित्यर्थकतया, व्याकृतं किं चन अग्रे नासीत् इत्यर्थस्य च सम्भवेन अविरोधाच्च। द्वितीयशब्दस्य तु सङ्कोचेनैव सजातीयान्यबोधकत्वोपपत्तौ तत्र पृथग्व्युत्पत्तिकल्पने मानाभावः। सजातीये सङ्कोचोऽपि यत्र किंचित्प्रकारेण बोध स्वतंत्रतात्पर्यं साधारणधर्मोपादानं वा तत्रैव। यथाऽयं राजा अद्वितीयः, अश्वमेधोऽद्वितीयः इत्यादौ। प्रकृते तु न तथेति तत्र मानाभावः' इति॥ **इत्यादिभिश्चेति**। आदिपदेन भेदसामान्यनिषेधश्रुतयः ग्राह्याः। 'सत्यं ज्ञानमनन्तम्' इत्यत्र अनन्तशब्दे गुणानन्त्यं नाभिप्रेतमिति व्यक्तम्। गुरुचन्द्रिकायाम् – (एकमेवाद्वितीयमिति श्रुत्यर्थविचारे) 'तस्मादन्तः परिच्छित्तिः साचाभावीयतैव हि। निषेध्यं प्रतियोगित्वमभावीयमतोऽखिलम्॥ 'अति अदि बन्धने' इति धातुसिद्धस्य अन्तपदस्य बन्धनार्थकतया बन्धनस्यच किञ्चिद्देशकालसंसर्गविरोधिस्वरूपतया संसर्गाभावप्रतियोगित्वरूपत्वमिव किंचिद्वस्त्वैक्यरूपामिलनविरोधितया भेदप्रतियोगित्वरूपत्वं तदन्यन्तपदार्थः प्रकृते निषिध्यते। अत एव 'अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु' इति मेदिनी। संसर्गाभाववत इव भेदवतोऽपि प्रतियोगिनं प्रत्यवधित्वात्। अत एव काश्यादेरसीवरणस्थानाद्यवधिकत्वव्यवहारः। यत्तु देशकालगुणपरिच्छिन्नमनन्तपदार्थः इत्युक्तम् तन्न गुणापरिच्छेदोऽसङ्ख्यगुणकत्वम्। देशकालापरिच्छिन्नगुणकत्वंवा नाद्यः सत्यंज्ञानमित्यादिनिर्गुणप्रकरणे तस्य प्रतिपादनासम्भवात् केवलोनिर्गुणइति श्रुतिविरोधात् अतएवानान्त्यः 'मथ्यनन्तगुणे अनन्ते गुणतो अनन्तविग्रहे' इत्यादौ गुणानन्त्यस्य पृथगुक्तिवैयर्थ्यात्। गुणानन्त्यस्य अनन्तपदार्थत्वे मानाभावात् उक्तरूपमेवानन्त्यम्॥

**अखण्डैकरसमेव प्रतिपादयन्तीति**। द्विविधंतावद्वेदान्तवाक्यं एकं पदार्थनिष्ठं अपरं आत्मतादात्म्यरूपवाक्यार्थनिष्ठमिति प्रमाणमालोक्तद्विविधवाक्ययोरपि अखण्डार्थनिष्ठत्वं बोध्यम्। महावाक्यार्थबोधोपयोग्यखण्डवाक्यार्थबोधजनकं

## श्रीभाष्यम्

**ननुच सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात्। नैषदोषः अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्। सामानाधिकरण्यस्यैक्यएव तात्पर्यमिति सर्वसम्मतम्। ननुच सर्वपदानां लक्षणा न दृष्टचरी ततः किं**

## श्रुतप्रकाशिका

सामानाधिकरण्यान्यथानुपपत्त्या पश्चादुक्तकारणवाक्यशोधकवाक्यान्तरैकार्थ्यरूपहेतुद्वयेन चेत्यर्थः। एतल्लक्षणवाक्यं। स्वरूपलक्षणवाक्यम्। अखण्डैकरसं निर्विशेषचैतन्यस्वभावमेव प्रतिपादयतीत्यर्थः॥

**अथ** मुख्यार्थपरित्यागेन लक्षणास्वीकारे दोषमुद्भावयति। **ननुचेत्यादिना**। **स्वार्थप्रहाणेन**। स्वार्थोहि विशेषणद्वारकं विशेष्यं तत्प्रहाणेनेत्यर्थः लक्षणात्वमभ्युपगम्यादोषतां प्रतिजानीते। **नैषदोषइति**। * मुख्यार्थत्वमुत्तरत्राभिधास्यते हेतुमाह। **अभिधानवृत्तेरपीति**। तात्पर्यवृत्तिर्नामतात्पर्यादागतावृत्तिः तत्परत्वरूपावा साचात्रलक्षणाविवक्षिता वाक्यतात्पर्यविरोधिमुख्यवृत्तेरपि वाक्यतात्पर्यानुगुणलक्षणावृत्तेर्बलीयस्त्वादित्यर्थः कस्मिन्नर्थेतात्पर्यं यदनुरोधाय लक्षणास्वीकारइत्यत्राह। **सामानाधिकरण्यस्येति**। **ऐक्यएवतात्पर्यमिति**। तात्पर्यनिश्चायिका समानविभक्तिरितिभावः आनन्दमयाधिकरणे सिद्धान्तिनाह्येतद्वक्ष्यते। **सर्वसम्मतम्**। विशिष्टैक्यवादिभि * रन्यैश्च सम्मतमित्यर्थः॥

**गङ्गायां** घोषइत्यादिषु सर्वपदलक्षणा न दृष्टेतिचोदयति। **ननुचेति**। तात्पर्यानिश्चायककतिपयमुख्यवृत्त्या तदनुगुणमन्येषां पदानां लाक्षणिकत्वमाश्रयणीयम्। सर्वपदलक्षणायांतु तन्नसम्भवतीत्यभिप्रायः। * तात्पर्याविरुद्धपदमुख्यार्थस्वीकारस्तात्पर्यविरुद्धपदलक्षणास्वीकरस्याविरुद्धइत्याशयेनाह। **ततःकिमिति**। ततःकिमित्यभिप्रेतं विवृण्वन्प्रतिबन्दिमुखेन

## गूढार्थसंग्रहः

पदार्थनिष्ठम्। अनन्यशेषाखण्डार्थबोधजनकं वाक्यार्थनिष्ठम्। यन्महावाक्यीयपदार्थयोः भेदबुद्धिविरोधि सत् तन्महावाक्यीयपदार्थरूपाखण्डार्थकं यत् तन्महावाक्यीयपदार्थनिष्ठम्। यन्महावाक्यार्थबोधोपयोगिपदार्थबोधपर्यवसायि यत् तत् तन्महावाक्यपदार्थनिष्ठम्। यन्महावाक्यीयपदार्थयोः भेदबुद्धिविरोधि सत् तन्महावाक्यार्थरूपाखण्डार्थकं यत् तत्तन्महावाक्यार्थनिष्ठम्। यन्महावाक्यार्थबोधे अनन्यशेषे पर्यवसायि यत् तत्तन्महावाक्यार्थनिष्ठमिति निष्कर्षः लघुचंद्रिकोक्तः अत्र अवसेयः॥

**तात्पर्यवृत्तेर्बलीयस्त्वादिति**। उक्तं च शब्दमणौ— 'तात्पर्याद्धि वृत्तिः नतु वृत्त्यनुरोधे तात्पर्यम्, गौणलाक्षणिकयोरुच्छेदापत्तेः। तात्पर्यनिर्वाहार्थं वृत्तित्वेन तयोः, कल्पनात्।' इति। अत्र मथुरानाथविवरणम्— 'तात्पर्याद्धीति' तात्पर्यज्ञानसहकारादित्यर्थः। वृत्तिः— शाब्दबोधौपयिकीति शेषः। तथा च मुख्यार्थे तात्पर्यज्ञानाभावदशायामेव लक्ष्यार्थमात्रशाब्दबोधइति भावः। ननु वृत्तिज्ञानार्थमेव तात्पर्यज्ञानस्यापेक्षितत्वात् अन्यतः सिद्धे वृत्तिज्ञाने तात्पर्यज्ञानस्त्वमकिंचित्करमित्यतआह नत्विति। वृत्त्यनुरोधात्। वृत्तिज्ञानानुरोधात् तात्पर्ये तात्पर्यज्ञानं अपेक्षितमितिशेषः। किंतु शाब्दबोधहेतुत्वैवेतदितिभावः इति। **सर्वपदानां लक्षणा नदृष्टचरीति**। गङ्गायां घोष इत्यादौ लाक्षणिकपदस्यानुभावकत्वाभावेऽपि घोषपदस्य शक्तस्य सद्भावेन शाब्दबोधः सम्भवति। सर्वपदलक्षणास्थलेतु शक्तपदाभावेन शाब्दबोधनिर्वाहो न घटते लाक्षणिकस्यानुभावकत्वासम्भवात्। लाक्षणिकं पदं नानुभवकं इति जरन्नैयायिकसिद्धान्तात्॥

## श्रीभाष्यम्

**वाक्यतात्पर्याविरोधेसत्येकस्यापि तद्वृत्त्या समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमितिनिश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधाय एकस्येव लक्षणा न दोषाय। तथाच**

## श्रुतप्रकाशिका

(विपक्षेबाधं)विवक्षितार्थं) दर्शयित्वा परिहर्तुं विपक्षे बाधगर्भांप्रतिबन्दिमाह। **वाक्यतात्पर्येति**। यद्यविरुद्धपदमुख्यार्थत्वं विरुद्धपदलक्षणाविरोधि तर्हि गङ्गायां मत्स्याः प्रतिवसन्तीत्यादिष्वविरोधेनैकस्यापि पदस्य लक्षणाऽनङ्गीकाराद्गङ्गायां घोष- इत्यादिष्वप्येकस्यापिपदस्य लक्षणा नस्यादित्यभिप्रायः। गङ्गायां मत्स्या इति वाक्ये विरोधाभावाल्लक्षणाऽनङ्गीकारः गङ्गायां घोष इत्यत्र विरोधाल्लक्षणा न दोषइतिचेत् तदत्रापि तुल्यमित्याह। **समभिव्याहृतेति**। सर्वपदलक्षणाच विषं भुंक्ष्वे- त्यादिषु दृष्टेत्यभिप्रायः। **एतत्तात्पर्यमिति निश्चिते सतीति**। अपवादकरहितसमानविभक्तिनिर्देशो निश्चायक इति भावः। **द्वयोस्त्रयाणामित्यादि**। अविरोधविरोधावेवमुख्यलक्षणावृत्तिस्वीकारप्रयोजकौ नतु पदानामेकत्वद्वित्वादिकमित्यर्थः॥

## गूढार्थसंग्रहः

**वाक्यतात्पर्याविरोधे सतीति**। तात्पर्यज्ञानस्य शाब्दबोधहेतुतया तदनुसारेण गङ्गायां घोष इत्यादौ गङ्गापदस्य प्रवाहे लक्षणा। इत्थं च लाक्षणिकार्थस्य शाब्दबोधे भाने तात्पर्यज्ञानमेव मूलम्। एवं सति सर्वपदलक्षणास्थलेऽपि तात्पर्यज्ञानबलादेव सर्वेषां शाब्दबोधे भानमावश्यकम्। जरन्नैयायिकमतं त्वनुपादेयमेव, नियामकाभावात्। मणिकारेणापि तन्मतस्य परित्यागाच्च। यथोक्तम् शब्दमणौ– 'नव्यास्तु लाक्षणिकमप्यानुभावकं। प्रवाहशक्तत्वेन ज्ञातादेव गङ्गापदात् शक्तिं विनाऽपि तीरानुभवसम्भवात्। यथा परेषां जातिशक्तत्वेन ज्ञातादेव पदात् व्यक्त्यनुभवसम्भवात् यथा वा अस्माकं पदार्थशक्तत्वेन ज्ञातादेव अन्वयानुभवसम्भवात् न व्यक्त्यन्वययोः शक्तिरिति' इति। अत एव भट्टपादैः सर्वत्र वाक्यार्थस्य तात्पर्यवशात् लक्ष्यस्यैव बोधाभ्युपगमः सङ्गच्छते। भट्टमते पदं न करणम् अपि तु पदार्थ एव। यथोक्तम्– 'पदार्थानां तु मूलत्वं युक्तं तद्भावभावतः' इति। (१११) 'पश्यतश्श्वेतमारूपं हेषाशब्दं च शृण्वतः। खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥' (श्लो.वा.वा.अ.३५८) दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित्। न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः॥ तन्मात्रावसितेष्वेषु पदार्थेभ्यस्स गम्यते। (२२९) अशाब्दे चापि वाक्यार्थे न पदार्थेष्वशाब्दता। वाक्यार्थस्यैव नैतेषां निमित्तान्तरसम्भवः॥ (२३०) इति। अत्र न्यायरत्नाकरः। वाक्यार्थस्येति– सति तेषां शाब्दत्वेन द्वारेण अस्ति वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वम्। तथाच तत्परत्वाच्च शब्दानां शाब्दत्वं सिद्ध्यति। वाक्यार्थे हि शब्दानां तात्पर्यं न पदार्थेषु। तेषां प्रमाणान्तरसिद्धत्वात्। अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितः; तथाऽपि तात्पर्यव्याप्तेरपर्यवसितायाः वाक्यार्थपर्यन्तत्वात् तात्पर्ये शब्दस्य प्रामाण्यात् सिध्यति शब्दे प्रमेयतया वाक्यार्थस्य शाब्दत्वमिति। एवं वार्तिकं व्याकुर्वाद्भिः पार्थसारथिमिश्रैः न्यायरत्नमालायां 'अत एव वाक्यार्थो लाक्षणिक इति मीमांसकाः। अभिहितार्थसम्बन्धादभिगम्यमानत्वात्। ननु अविनाभावनिमित्ता लक्षणा, न च पदार्थाः वाक्यार्थविशेषेण अविनाभूता इति स कथं लक्ष्यते? नाविनाभावनिमित्तैव लक्षणा, एकवाक्यताऽपि तत्र निमित्तम्। अत एवासत्यप्यविनाभावे 'व्रीहीनवहन्ति' इत्यत्र दर्शपूर्णमासैकवाक्यतया तत्साधनत्वलक्षणोपपत्तिः' इति। 'तस्मान्न वाक्यं न पदानि साक्षात् वाक्यार्थबुद्धिं जनयन्ति किंतु। पदस्वरूपाभिहितैः पदार्थैः संलक्ष्यतेऽसाविति सिद्धमेतत्॥' इति च वाक्यार्थनिर्णयान्ते उक्तम्। अतः तात्पर्यानुरोधेन सर्वपदलक्षणा न दोषः। तदेतदभिप्रेत्य उक्तम्– **तथा च शास्त्रस्थैरभ्युपगम्यत इति॥**

श्रीभाष्यम्

**शास्त्रस्थैरभ्युपगम्यते । कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते * अपूर्वकार्यएवलिङादेर्मुख्यवृत्तत्वात् । लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते कर्यान्वितस्वार्थाभिधायिनांचेतरेषांपदानमपूर्वकार्यान्वितएवमुख्यार्थइति क्रियाकार्यान्वित-**

श्रुतप्रकाशिका

न केवलं विषं भुंक्ष्वेत्यादिषु लौकिकप्रयोगेष्वेव सर्वपदलक्षणाऽगत्याऽऽश्रिता । अन्यैरपि परीक्षकैराश्रितेत्याह । **तथाचेति** । तथा सर्वपदलक्षणायाअदोषत्वं अभ्युपगम्यते * अभ्युपगमहेतुसद्भावादभ्युपगमःफलित इतिभावः । कैःपरीक्षकैः केषुवाक्येषु सर्वपदलक्षणाऽऽश्रितेत्यत्राह । **कार्यवाक्यार्थेति** । लौकिकवाक्येषु सर्वपदलाक्षणिकत्वमुपपादयति । **अपूर्वकार्यएवेति** । क्रियाकार्यं लाक्षणिकमस्तु तत्कथं सर्वपदलक्षणेत्यत्राह । **कार्यान्वितेति** । पदानामन्विताभिधायित्वेन कारक पदानामपूर्वकार्यान्विताभिधायिनां तदन्वितएव मुख्यार्थइति तदन्वयपरित्यागे लक्षणैवेत्यर्थः । ननु गङ्गायां घोषः प्रति वसतीत्यादिषु गङ्गापदस्य लाक्षणिकत्वेऽपि * तदन्विताभिधायिनां पदान्तराणाममुख्यत्वं नदृष्टमितिचेन्न गङ्गापदलक्षितस्य कूलस्य वाक्यार्थत्वाभावात् इहतुवाक्यस्य प्रधानप्रतिपाद्यभूत * कार्यार्थसमर्पकपदस्य लाक्षणिकत्वात्तदान्विताभिधायिनां पदानां लक्षणा स्यादेव । अतएव कार्यवाक्यार्थवादिभिरित्युक्तम् ॥

गूढार्थसंग्रहः

ननु अभिहितान्वयवादिमते वाक्यार्थस्य लाक्षणिकत्वाभ्युपगमेऽपि अन्विताभिधानवादिमते पदानामेव करणत्वेन आनुभावकशक्तेः पदेष्वेवाङ्गीकारात् कार्यस्य लिङादिवाच्यत्वाङ्गीकारेण वाच्यार्थविषयक एव वाक्यार्थबोध इति लाक्षणिकस्य पदस्यानुभावकत्वं नाभ्युपगम्यते । एवं च 'अभिहितघटना यदा तदानीं स्मृतिसमबुद्धियुगं पदे विधत्तः । परदृशि पुनरन्विताभिधाने पदयुगलात् स्मृतियुग्ममेव पूर्वम् ॥' (सं.शा.१.३७४) इति सङ्क्षेपशारीरके अन्विताभिधान वादेऽपि सर्वपदलक्षणया वाक्यार्थबोधोक्तिः कथं घटते इति शङ्कायामाह-- **कार्यवाक्यार्थवादिभिरिति** ।

**अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वादिति** । उक्तं च शालिकानाथेन प्रकरणपाञ्चिकायाम्----

'संप्रधार्यमिदं तत्र तत् कार्यं किं क्रियात्मकम् । यद्वा तद्व्यतिरेकीति तत्र लोकानुसारतः ॥
प्रमाणान्तरविज्ञेया क्रिया कार्येति यद्यपि । स्वर्गकामादयः कार्ये नियोज्यत्वेन सङ्गताः ॥
नियोज्यस्सर्वकार्यं यः स्वकार्यत्वेन बुध्यते । लिङादिः तत्र कार्यं चेत् क्रियमेवावबोधयेत् ॥
समन्वयो नियोज्येन तदानीमेव हीयेत । क्रियाहि क्षणिकत्वेन न कालान्तरभाविनः ॥
स्वर्गादेस्साध्यमानस्य न शक्ता जननं प्रति । इष्टस्याजानिका साच नियोज्येन फलार्थिना ॥
कार्यत्वेन न सम्बन्धमर्हति क्षणभाङ्गिनी । तस्मान्नियोज्यसम्बन्धसमर्थं विधिवाचिभिः ॥
कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते । क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ॥
अतो मानान्तरापूर्वं मपूर्वमिति गीयते । प्रमाणान्तरगम्यं हि लोकश्शब्दैर्विवक्षति ॥
क्रियाकार्यत्व एवातः प्रयोगो लक्षणाऽन्वितः । लक्षणानभिमानं तु मुख्यार्थानवधारणात् ॥

ये तु मुख्यार्थकुशलाः तेषां लाक्षणिकत्वधीः ।' (वा.मा.) इति। एवं च अन्विताभिधानवादिमतेऽपि सर्वपद लक्षणाऽङ्गीकारेण जहदजहल्लक्षणापक्ष एव अन्विताभिधानम् तत्पक्षे वाच्यैकदेशस्यापरित्यागेन शक्तेस्सत्वाच्छक्यैव

## श्रीभाष्यम्

**प्रतिपादनं लाक्षणिकमेव ।**

## श्रुतप्रकाशिका

**ननु कमलानि निमीलन्ति कुमुदान्युन्मिषन्तिच** इति वाक्यार्थभूतनिमीलनादेर्लाक्षणिकत्वेऽपि तदन्विताभिधायिनां कमलादिपदानां न लाक्षणिकत्वं दृष्टमितिचेत् अनभिप्रायज्ञश्चोदयतिभवान् । सर्वपदानां निमीलनरूपवाक्यार्थपरत्वस्य कैश्चिद्व्यवस्थापितत्वाभावान्निमीलनोपस्थापकपदलक्षणायामपि न तदन्विताभिधायिनां लाक्षणिकतापत्तिः । त्वयातु सर्व पदानां कार्यपरत्वाभ्युपगमात्तत्कार्यसमर्पकपदलाक्षणिकत्वे तदन्वितस्वार्थाभिधायिनां लक्षणा प्राप्नोति । तथाहि कार्यवाक्यार्थवादिना पदानां * किं विशिष्टकार्यैकदेशे पदशक्तिर्निश्चीयते उत विशिष्टस्थायिकार्यैकदेशे । प्रथमेविशिष्टकार्यैकदेशत्वाविशेषात्स्वार्थेषु कारकपदानामिव लिङादेः क्रियाकार्ये मुख्यत्वप्रसङ्गः । द्वितीये विशिष्टस्थायिकार्यैकदेशपरत्वप्रहाणस्य सर्व पदानामविशिष्टत्वाल्लिङादेः क्रियाकार्यइव कारकपदानां क्रियाकार्यान्वितपरत्वे लक्षणास्यात् । पदानां विशिष्टकार्यैकदेशपरत्वे तुल्येऽपि लिङादेः क्रियाकार्ये लाक्षणिकत्वं । कार्यान्वितमात्रे कारकपदानां मुख्यत्वमितिचेत् यदि कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिष्टम् । क्रियाकार्ये लिङादेर्लाक्षणिकत्वं कथं ? स्थायिकार्यपरत्वेन वेदप्रयुक्तत्वनिश्चयाल्लक्षणयाऽपि क्रियाकार्यबोधन सम्भवादितिचेत् कारकपदानामपि स्थायिकार्यान्वितपरत्वेन वेदप्रयोगदर्शनाल्लक्षयापि क्रियाकार्यान्वितबोधनोपपत्तेः क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकं स्यात् ॥

**ननु** गोपदस्य सास्नादिमन्मात्रमुख्यत्वेऽपि प्रमाणान्तरेण खण्डादिविशेषसिद्धिवल्लिङादेः कार्यमात्रपरत्वे कार्यविशेषस्य प्रमाणान्तरेण सिध्द्यभावादुभयत्रैकशक्तिल्पनाऽयोगाच्छक्तिद्वयकल्पनागौरवाच्च लिङादेरपूर्वकार्ये मुख्यत्वमिति क्रियाकार्य प्रतिपादनं लाक्षणिकम् । अन्यथा शब्दशक्तेः कार्यमात्रविषयत्वात्प्रत्यक्षाद्यविषयत्वाच्च कार्यविशेषोनिष्प्रमाणकस्स्यादितिचेन्न कार्यविशेषस्य प्रामाणिकत्वे तत्र शक्तिकल्पनम् शक्तिकल्पने तस्य प्रामाणिकत्वमित्यन्योन्याश्रयप्रसङ्गात् ॥

## गूढार्थसंग्रहः

अर्थबोधसम्भवात् । जहल्लक्षणापक्षे अभिहितान्वयवाद एव ' इति अद्वैतसिद्धौ सङ्कोचेन सङ्क्षेपशारीरकार्थवर्णनमनुपादेयमिति सिद्धम् । न्यायरत्नावल्यां– ' एकदेशशक्तेरपि लक्षणावदमुख्यवृत्तित्वं शक्यतापर्याप्त्यधिकरणे गृह्यमाणशक्तेरेव मुख्यवृत्तित्वं शुद्धविशेषशाब्दबोधापेक्षया तु उपहितमात्रान्वयधीः विशिष्टान्वयधीश्च मुख्या । तादृशधीद्वयं लक्षणयैवेति पक्षस्तु युक्तः । ' इति, लघुचन्द्रिकायां च ' यत्र तादात्म्य न सम्भवति तत्राखण्डार्थत्वम् ' इतिचोक्त्या तावताऽपि मुख्यत्वनिर्वाहस्यासंभवात् । प्रथमतः शक्यतापर्याप्त्यधिकरणस्यैव अर्थस्योपस्थित्या तत्र तात्पर्यानुपपत्तिप्रतिसन्धानानन्तरमेव शुद्धार्थस्योपस्थितिर्वाच्येति जहदजहल्लक्षणाया अपि मुख्यशक्त्यपेक्षया जघन्यत्वमायातमेवेति लिङ्गाधिकरणविरोधः नैव परिहृतो भवति । प्राभाकरमतेऽपि व्यवहारानुरोधेन शक्तिग्रहस्याभ्युपगततया स्वर्गकामस्य नियोज्यत्वेनान्वयासम्भवेनखलु अपूर्वकार्यस्य अन्वयोपस्थितिरभ्युपगम्यते । पदान्तरसमभिव्याहारानुसारेणखलु वेदवाक्यस्य प्रथमतो जातस्य शक्तिग्रहस्य त्यागः । एवं च ' सत्यं ज्ञानमनन्तं ब्रह्म ' इत्यत्रापि सविशेषस्योपस्थितावपि सत्यत्वज्ञानत्वानन्तत्वानां सविशेषेऽसम्भवेन ' यतो वाचो निवर्तन्त ' इत्युत्तरश्रुत्यनुसाराच्च लक्ष्यार्थस्य मुख्यत्वमभ्युपगम्यते ॥

अद्वैतसिद्धावपि ' शक्यार्थस्य न मुख्यता अपितु तात्पर्यविषयीभूतार्थस्य मुख्यत्वं ' इति प्रागुक्तमेव । ' तद्धि द्विधैकाधिकरण्यमुक्तं गौणंच मुख्यंच ' इति वदतां सङ्क्षेपशारीरककृतां शक्यार्थस्य नमुख्यता अपितु तात्पर्यविषयीभूतस्यैव

श्रीभाष्यम्

**अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः। अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणं**

श्रुतप्रकाशिका

**किंच** यदि कार्यविशेषस्याप्रामाणिकत्वपरिहाराय तत्र शक्तिकल्पनम्। तर्हि कारकपदानां कार्यान्वितमात्रपरत्वे कार्यविशेषान्वयस्य प्रमाणान्तरागोचरत्वादुभयत्र शक्तिकल्पने गौरवाच्च कार्यविशेषान्वये प्रमाणं न स्यादिति तत्परिहाराय कार्यविशेषान्वये कारकपदानां मुख्यत्वमिति क्रियाकार्यान्वितपरत्वं लाक्षणिकं स्यात्। लिङादिसमभिव्याहारबलात्कारक पदानां कार्यविशेषान्वयपरत्वसिद्धिरितिचेत् तर्हि स्वर्गकामपदसमभिव्याहारबलाल्लिङादेः कार्यविशेषान्वयपरत्वसिद्धिरिति * लिङादिःकार्यमात्रपरस्स्यात्। तस्माल्लिङादेरपूर्वकार्यएव मुख्यवृत्तत्वेन क्रियाकार्यस्यामुख्यत्वे कारकपदानामपि क्रियाकार्यान्वितपरत्वं लाक्षणिकमेवाभ्युपगन्तव्यम्। कारकपदानामन्वयांशे लक्षणा न सर्वत्रेतिचेत् समानाधिकरणवाक्येऽपि पदानां प्रातिपदिकांशएव लक्षणा न समानविभक्ताविति तुल्यम्॥

सर्वपदलक्षणाऽनुपपत्तिपरिहारमुपसंहरति। **अतइति**। अतः सर्वपदलक्षणाया उपपत्तिसिद्धत्वाल्लौकिकैः परीक्षकैरप्यङ्गीकृतत्वाच्चेत्यर्थः। यदप्याहुरित्यारभ्य कृतां शास्त्रेणस्वाभिमतार्थसिद्धिमुपसंहरति। **अतइदमेवेति**। अतः निर्विशेषवस्तुनि तस्यैव पारमार्थ्ये व्यतिरिक्तस्य मिथ्यात्वे तस्य दोषपरिकल्पितत्वे दोषस्यच सदसदनिर्वचनीयत्वे ज्ञानमात्रनिवर्त्यत्वेचो * क्तैरुपपत्तिसहितैश्श्रुतिवाक्यैरित्यर्थः। इदमेवार्थजातं पूर्वोद्दिष्टमेवार्थजातं नतु सगुणवस्त्वादिकम्। **प्रतिपादयन्तो वेदन्ताः प्रमाणमिति**। वाक्यान्तराणां काल्पनिकार्थपरत्वेन तत्वावेदकत्वाभावादुक्तार्थविषयमेव वाक्यजातंतत्वे प्रमाणमित्यर्थः। पूर्वं प्रत्यक्षविरोधे शास्त्रप्राबल्यं शास्त्रेच भेदावलम्बिनां बाध्यत्वं,चोक्तम्॥

गूढार्थसंग्रहः

मुख्येतेति स्फुटंप्रतीयते। प्राभाकरमतेऽपि लौकिकवाक्येषु लाक्षणिकस्यापि अनुभावकत्वं अङ्गीकृतमेव। इति लाक्षणिकं नानुभावकमितिनियमः नैयायिकवत् भाट्टैः प्राभाकरैश्च परित्यक्त एव। अतः 'अभिहितघटनेत्यादि' श्लोके उत्तरार्धेऽपि प्राभाकरमते लाक्षणिकस्यानुभावकत्वाङ्गीकारेण जहल्लक्षणापक्षोऽपि सङ्क्षेपशारीरककृतामभिप्रेत इत्येव युक्तम्। अभिहितघटनेतिश्लोके 'स्मृतिसमबुद्धियुगम्' इति 'पदमभ्यधिकाभावात् स्मारकान्नविशिष्यते' इति वार्तिकाभिप्रायेणोक्तम्। वार्तिककारमते पदेनानुभवस्यैवाङ्गीकारात् 'स्मृतिसमेति'। अभिहितघटनेतिश्लोकस्य 'तत्त्वमसीति' वाक्यार्थविचारावसरे प्रवृत्तत्वेऽपि 'सत्यं ज्ञानम्, 'तत्त्वमसि' इत्युभयोर्वाक्ययोराविशेषस्य सङ्क्षेपशारीरक एव पूर्वमभिधानेन अत्रापि पक्षद्वयोक्तिस्सम्भवतीत्याभिप्रेत्यैव अद्वैतसिद्धौ 'सत्यं ज्ञानमनन्तम्' इति वाक्यार्थविचारे एतदुक्तिस्सङ्गच्छते। 'प्रत्ययप्रकृतिशब्दतो बहिः विद्यतेऽभिहितसङ्गतिश्च नः। प्रत्ययप्रकृतिशब्दयोः पुनः नित्यमन्वितधियो निमित्तता॥' इति विषयविभागः सङ्क्षेपशारीरके उक्तः। अन्वितेत्यस्य स्वघटितवाक्यतात्पर्यविषयार्थकत्वात्। तथाच यस्यपदस्य स्वघटितवाक्यतात्पर्यविषयो योऽर्थः अन्वितोऽनन्वितो वा तत्रैव तस्यानुभावकत्वम्। अभिहितान्वय इत्यस्य हि अयमर्थः; विभक्त्यन्तपदाभ्यां स्वार्थानुभवौ जन्येते। तादृशान्वयानुभवविषयत्वमेव पदार्थस्याभिहितत्वम्। तदुत्तरं तादृशानुभवाभ्यामेव विभक्त्यन्तपदार्थयोस्संसर्गानुभवः, नतु पदेन। तथाच पदाभिहितयोरर्थयोरन्वयधीः, नतु विभक्त्यन्तपदार्थयोर्मध्ये एकपदार्थान्वितस्य अपरपदार्थस्य पदजन्यानुभवइति। अन्विताभिधानमित्यस्याप्ययमर्थः। एकपदस्य विभक्त्यन्तस्वार्थेनान्वितः

## श्रीभाष्यम्

**प्रत्यक्षादिविरोधेच शास्त्रस्य बलीयस्त्वमुक्तम्। सतिच विरोधे बलीयस्त्वं वक्तव्यं**

## श्रुतप्रकाशिका

**अथ** प्रत्यक्षविरोधोनास्तीत्युपपादयितुं प्रक्रमते। **प्रत्यक्षादीति**। * शास्त्रप्रत्यक्षविरोधे शास्त्रप्राबल्यप्रतिपादक ग्रन्थेन वक्ष्यमाणार्थसङ्गतिरिति भावः। चस्समुच्चये अविरोधपक्षस्य बुद्धिस्थत्वात्तस्यचान्वारुह्योक्तस्यच समुच्चयः * विरोधाभ्युपगमेऽपीत्यर्थः। **सतिचेति**। अत्र चशब्दो हिशब्दार्थः॥

## गूढार्थसङ्ग्रहः

अन्यपदार्थः पदेनानुभाव्यते नतु विभक्त्यन्तपदार्थमात्रमिति। इति न्यायरत्नावली। एवं न्यायरत्नावल्यां 'तत्त्वमसीति' वाक्यविषयकत्वेन पक्षद्वयस्य, अयं श्लोकः तत्त्वमसीति वाक्याभिप्रायकः इति निरूपितम्। वस्तुतस्तु अभिहितघटनेति उक्तवाक्यस्य तत्त्वमसीति वाक्यमधिकृत्योक्तत्वात् तत्रैव तत्-त्वं पदयोः स्मृतिसमधीद्वयजनकत्वम्। तादृशधीद्वयस्य निर्विकल्पकत्वात् पदार्थमात्रविषयकत्वेन पदार्थस्य च सत्यादिवाक्येन पूर्वं ज्ञातत्वात् स्मृतिसमत्वम्। नचोक्तपदाभ्यां प्रत्येकं शाब्दबोधजनने मानाभाव इति वाच्यम्; 'प्रातिपदिकान्यनतिरिक्तविषयाणि प्राह भगवान् प्रथमशब्दितविभक्त्या। पाणिनिरतः सकलतत्वसमयज्ञः वष्टि वचसोरनतिरिक्तविषयत्वम्॥' इति सङ्क्षेपशारीरकोक्त्या तथा लाभात्। अत एव 'संसर्गाविषयकप्रमाजनकत्वे सति अपर्यायशब्दत्वम्' इति अखण्डार्थलक्षणे घटः कलशः इति वारणाय अपर्यायशब्दत्वमित्युक्तमद्वैतसिद्धौ। लक्ष्यार्थशाब्दबोधस्थले लक्षणाया एव तादृशधीहेतुत्वम्। लक्षकपदज्ञानस्य हेतुत्वे मानाभावः। तस्याश्शाब्दत्वं तु शब्दाजन्यत्वेऽपि शब्दप्रयोज्यत्वादेव। अन्यथा भट्टमते महावाक्यार्थज्ञानस्य शाब्दत्वानुपपत्तेः। एवं च तत्त्वमसीतिवाक्ये सर्वपदलाक्षणिकत्वेऽपि लाक्षणिकं नानुभावकमिति सिद्धान्तस्य न भङ्गः इति॥

**शास्त्रस्य बलीयस्त्वं उक्तमिति**। ब्रह्मसिद्धौ 'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः। नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते॥' इति तर्ककाण्डे प्रतिज्ञामात्रमेव प्रथमतः, अनन्तरं प्रत्यक्षादिविरोधे आम्नायस्य दौर्बल्यमिति पूर्वमीमांसकशङ्का आम्नायस्य प्राबल्यादपच्छेदनयाच समाहितेति अत्रापि पूर्वमीमांसकशङ्का ब्रह्मसिद्ध्युक्तप्रकारविवेचनपूर्वकं समाहिता। अनन्तरं च प्रत्यक्षस्य स्वरूपमात्रग्राहित्वं नतु भेदावगाहिता। भेदः अनाद्यविद्याविलसित एव, इति साधनपूर्वकं सन्मात्रग्राहिप्रत्यक्षवादे भट्टपादोक्तदूषणपरिहारपूर्वकं भट्टपादमतमपि दूषितम्। सुरेश्वरवार्तिकेऽपि भर्तृप्रपञ्चमतदूषणावसरे 'भेदग्राहि न नो मानं कृत्स्नेऽपि जगतीक्ष्यते। वस्तुस्वरूपमुज्झित्वा मेयं नास्त्यपरं मितेः॥' (बृ॰ अ.३-ब्रा. १३८९) इत्यादिना प्रमाणानुपपत्तिप्रमेयानुपपत्तिभ्यां प्रत्यक्षस्य भेदग्राहित्वं नास्तीति साधितम्। 'सति व्यभिचरत्येव तदन्यद्वस्तुमोहजम्। सर्पादिवस्तुवत्तस्मात् तत्सत्यमितरन्मृषा॥ व्युत्थित्या हि सतो भेदाः प्रत्यक्षागमलिङ्गतः। अभावत्मकतां प्राप्ताः गम्यन्ते नेश्वरैरपि॥ (३.६.ब्रा १३९०) सदेकत्वमशेषस्य वस्तुष्वव्यभिचारि हि। व्यभिचारि ततोऽन्यद्यत् वस्त्वतोऽद्वैतमेव तत्॥' (१६९१) इति उक्तार्थे अनुमानद्वयं प्रदर्शितम्। 'अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः। अक्षादीनां स्वतस्सिद्धा यत्र तेषां प्रमाणता॥' (सं.शा.१००२) इत्यत्र घटादीनां जडत्वेन जडे आवरणकृत्याभावादज्ञातत्वं न सम्भवति। सतः ज्ञानस्वरूपत्वेन स्वयंप्रकाशत्वात् अज्ञातत्वमिति तस्यैव विषयत्वमिति साधितम्। तदुभयक्रममनुसृत्य प्रत्यक्षस्य भेदावगाहित्वं नास्तीति साधयितुमुपक्रते—**सति च विरोधे इत्यादिना**।

श्रीभाष्यम्

**विरोधएव नदृश्यते निर्विशेषसन्मात्रब्रह्मग्राहित्वात् प्रत्यक्षस्य। ननुच घटोऽस्ति पटोऽस्तीत्यादि नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते। विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यं तथैवात्र विविच्यते। कथं घटोस्तीत्यत्र**

श्रुतप्रकाशिका

* अविरोधंप्रतिजानीते। **विरोधएव न दृश्यतइति**।* हेतुमाह। **निर्विशेषेति**। विषयविषयिभावरूपभेदव्युत्यर्थे सन्मात्रब्रह्मेत्युक्तं प्रतीतिविरोधेन चोदयति। **ननुचेति**। विरोधमुपपादयति। **घटोऽस्तीत्यादिना**। नहि केवलमस्तीतिप्रतीतिः। अपितु घटोऽस्तिपटोऽस्तीत्येवहिप्रतीतिरित्यर्थः। * प्रतीतेर्भ्रान्तिरूपत्वसम्भवात्तद्व्युदासार्थं व्यवहारविरोधमाह। **विलक्षणेति**। परिहरति। **सत्यमिति**। घटोऽस्तिपटोऽस्तीत्यत्रास्तित्वव्यवहारस्यैकरूपत्वात्तावन्मात्रे भेदावभासमात्रे चाङ्गीकारोभेदव्यवहारस्य प्रत्यक्षमूलत्वे भेदावभासस्य प्रत्यक्षत्वेचानङ्गीकारश्च सूच्यते सत्यमित्यर्धाङ्गीकारेण। **तथैव**। यथा सन्मात्रस्यैव प्रत्यक्षत्वमेकव्यवहारहेतुतैवच स्यात्तथैवेत्यर्थः। अत्र घटादिविषयस्वरूपविषयव्यवहारसमुदाये। **विविच्यते** यथेदं रजतमित्यत्र इदंव्यवहारस्य प्रत्यक्षमूलत्वं रजतव्यवहारस्य भ्रान्तिमूलत्वं तथा विविच्यतइत्यर्थः तत्रेदमंशरजतांशव्यवहारयोरबाधितत्वबाधितत्वाभ्यां विवेकः॥

**अत्र** स्वरूपविषयभेदविषयव्यवहारयोरुभयोरप्यबाधितत्वाविशेषेऽपि कथं विवेकइत्यभिप्रायेणाह। **कथमिति**। यौक्तिकबाधोऽस्तीत्यशयेनाह। **घटोऽस्तीति**। किमस्तित्वं तद्भेदश्चैकः पदार्थः उत द्वौ द्वित्वेच किं तदुभयव्यवहारयोःप्रत्यक्ष

गूढार्थसंग्रहः

'अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रियाजगतोयतः॥ (वा.प.१.का.१.श्लो)इत्युपक्रम्य सत्यासत्यौतु यौ भावौ प्रतिभावं व्यवस्थितौ। सत्यं यत्तत्रसा जातिः असत्या व्यक्तयस्स्मृताः॥ (वा.प.६.का.३२.श्लो)सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः॥ (३३) तांप्रातिपदिकार्थंच धात्वर्थंच प्रचक्षते। सानित्या सा महानात्मा तामाहुस्त्वतलादयः॥ (३४) इत्यत्र सत्ताजातेः ब्रह्मरूपत्वं तस्या एव सत्यत्वं व्यक्तीनां मिथ्यात्वंच शब्दाऽद्वैतशब्दविवर्तवादिना हरिणा उक्तम्। ब्रह्माद्वैतवादिमतेऽपि अयमर्थः सम्मत इति 'महासामान्यमन्यैस्तु' (श्लो.वा.प्र.सू.११४) इत्यादिना सन्मात्रब्रह्मग्राहिप्रत्यक्षमतमनूद्य भट्टपादैर्दूषितम्। ब्रह्मसिद्धौ तन्मतदूषणावसरे यतश्च विशेषप्रत्यस्तमयमुखेन तन्निरूपणं अतो अन्यैर्ब्रह्मविद्भिरुक्तैः सामान्यरूपं ब्रह्म निरूपितम्। 'स एष महानजआत्मा सत्तालक्षणः तथा सत्तैव सर्वभेदयोनिः प्रकृतिःपरा' इति। यथा सुवर्णतत्त्वं कटकाङ्गुलीयादि सर्वविशेषोपसंहारेण निरूप्यमाणं तत्सामान्यमिति। इत्युक्तं ब्रह्मकाण्डे। विवरणेऽपि (पं.पा) नच सद्बुद्ध्यनुगमविरोधः अधिष्ठानत्वात्तस्य घटादि विशेषाणामेव मिथ्यात्वात् इति। इत्युक्तं (१.१.२.ब्र.सू) सङ्क्षेपशारीरकेऽपि 'सत्तं प्रयोगइति जैमिनिरप्युवाच यल्लक्षणं तदुभयोः सममेव विद्यात्। आपाततस्तदथयुक्तिनिपीडितं तत् सन्मात्रसंविदि निषीदति निर्विशङ्कम्'॥ (अ.२.४६.श्लो) इत्युक्तं अत्र मधुसूदनविवरणं सन्मात्रस्य सत्सामान्यात्ममात्रस्य संविदि निषीदति पर्यवस्यति। सर्वप्रपञ्चाधिष्ठानसत्तयैव घटादेः सद्बुद्ध्युपपत्तेः तस्य न ततः पृथक्त्वं कल्पनीयं इति। एवंच सर्वेषां विवर्ताद्वैतवादिनां सन्मात्रब्रह्मग्राहि प्रत्यक्षं इति शास्त्रप्रत्यक्षयोः विरोधएव नास्तीति सिद्धान्तः इत्यभिप्रेत्याह। **विरोधएव न दृश्यते इति**॥

## श्रीभाष्यम्

**अस्तित्वं तद्भेदश्च व्यवह्रियते ।**

## श्रुतप्रकाशिका

मूलत्वं उतान्यतरस्य द्वयोरपि प्रत्यक्षमूलत्वे प्रत्यक्षं किं युगपदुभयग्राहि उत क्रमेणेति विकल्पान् हृदिनिधायास्तित्वलक्षण स्वरूपतद्भेदयोरैक्यं नसम्भवति भेदग्रहणस्य स्वरूपग्रहणप्रतियोगिस्मरणसापेक्षत्वात् । सन्मात्रग्रहणस्य तन्निरपेक्षत्वाच्चेत्यभिप्रयन्नाह । **अस्तित्वं तद्भेदश्चेति** । भिन्नइति व्यवहारइव घटइत्यसाधारणव्यवहारेऽपि घटस्य पटाद्व्यावृत्ततयाप्रतीतौ प्रतियोगिसापेक्षत्वाद्घटव्यवहारएव भेदव्यवहारइत्युच्यते ॥

## गूढार्थसङ्ग्रहः

**अस्तित्वं तद्भेदश्च व्यवह्रियते इति** । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । अस्तित्वं सत्तेत्यर्थः । 'प्रकृत्यर्थातिरेकेण प्रत्ययार्थो नगम्यते । सत्तेत्यत्र ततस्स्वार्थस्तद्धितोऽत्र भवन् भवेत् ॥ (बृ.६.३.ब्रा.१६८८) इतिवार्तिकोक्तदिशा सद्रूपं ब्रह्मेत्यर्थः । देवतेत्यादिवत् स्वार्थे प्रत्ययः । घटोऽस्ति पटोऽस्तीति क्रियापदघटितवाक्यतात्पर्येण सत्तेत्यनभिधाय अस्तित्वमित्युक्तम् । अस्तित्वं सद्रूपं ब्रह्मसामान्यम् । घटः सन् इत्यादौ सत्ता भेदश्च व्यवह्रियत इत्यनभिधाय घटोऽस्तीत्यत्र अस्तित्वमित्याद्यभिधाने बीजं तु, अस्तीत्यत्र साध्यावस्थापन्नक्रिया न विवक्षिता अपितु सिद्धरूपं ब्रह्मैव विवक्षितमिति परसिद्धान्तबोधनमेव । यथोक्तम्— 'अस्त्यस्म्यसीति च तिङन्तपदानि सन्ति वेदान्तवाक्यनिलयानि तथाऽपि तानि । नाख्यानशब्दनिजशक्तिधुरं वहेयुः आस्तित्वमात्रविषया हि निषक्तिरेषाम् ॥ (सं.शा.१ अ.४९१) 'पूर्वापरीभूतपदार्थनिष्ठं आख्यातमाख्यानविदो वदन्ति । कूटस्थसत्तावगतिप्रधानं आख्यातवत् साधु तिङन्तमाहुः ॥ (१९२) 'आस्तित्ववस्तुविषयोपनिषन्निषक्तिः' इति, 'वस्तुस्वभावमिति सत्वमतो गृहाण तच्च द्विधेति वितथावितथत्वभेदात् । स त्वं द्विरूपमितरेतरसङ्करेण सच्छब्दवाच्यमिति च व्यवहारकाले ॥ (सं.शा.१ २८७) इतिच । (सर्वज्ञात्ममुनिना) अतश्च 'अस्तित्वं तद्भेदश्च व्यवह्रियते' इत्यत्र अस्तित्वं सद्रूपं ब्रह्मेति सिद्धम् । नैयायिकाद्यभ्युपगतजातिसामान्यं अनुवृत्तं सद्रूपं ब्रह्मैव; 'गोत्वादिमेयपक्षेऽपि सद्रूपस्यानपायतः । वस्त्वेव मेयं गोत्वादि शाबलेयादिवत्स्फुटम् ॥ (९६६) सद्रूपत्वापरित्यागादवान्तरनिबन्धनाः । व्यवहाराः प्रतीयन्ते सत्तात्वं तेष्ववास्थितम् ॥ (९३७) सत्तातोऽपि न भेदस्स्यात् द्रव्यत्वादेः कुतोऽन्यतः । एकाकारा हि संवित्तिः सद्द्रव्यं सन् गुणस्तथा ॥ (९६८) सत्तावगुण्ठिताश्चेत् सर्वे भावास्सदैव हि । व्यवहाराय कल्पन्ते भ्रान्तो भेदस्सदैवतु ॥' (९७२) इति बृ.सम्बन्धवार्तिके उक्तेः ॥

एवं विवरणकृतामपि इदं सम्मतमेव । उक्तं च अद्वैतसिद्धावपि— 'सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात् । गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमात् व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववत् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तत्तद्व्यवहारजनकत्वोपपत्तेः' इति । इत्थं च जातिसामान्यं सद्रूपं ब्रह्मेति सिद्धम् ॥ 'अस्तित्वं तद्भेदश्च व्यवह्रियत इत्यत्र तद्भेदः—सद्विशेषः । सदितिप्रतीतिसामान्याविषयः, व्यावृत्त इत्यर्थः । अनुवृत्तशब्दप्रतिकोटितया भेदशब्दस्य ब्रह्मसिद्धौ प्रयोगात् । 'महासामान्यमन्यैस्तु—विशेषास्तु प्रतीयन्ते' इति श्लोकवार्तिकमनुसृत्यैव उत्तरत्र भाष्येऽपि 'घटोऽस्ति पटोऽस्ति घटोऽनुभूयत' इत्युपक्रम्य, 'सर्वासु प्रतीतिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः । विशेषास्तु व्यावर्तमानतया अपरमार्थाः' इत्यत्र विशेषशब्देन भेदस्य व्यवहारात् । घट इति व्यवहारे व्यावृत्तिः पटाभावरूपैव । तत्रैवोत्तरत्र 'घटादौ दृष्टा व्यावृत्तिः'

## श्रीभाष्यम्

**नच द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं सम्भवति तयोर्भिन्नकालज्ञानफलत्वात् । * प्रत्यक्ष ज्ञानस्यैकक्षणवर्तित्वात् ।**

## श्रुतप्रकाशिका

द्वित्वेच द्वयोरपिप्रत्यक्षमूलत्वं नेत्याह । **नच द्वयोरपीति** । द्वयोरपि व्यवहारयोः स्वरूपविषयभेदविषयव्यवहारयोः प्रत्यक्षं युगपद्वाक्रमेणवा मूलं स्यादिति विकल्पमभिप्रेत्य यौगपद्यं दूषयति । **तयोरिति** । प्रतियोग्यपेक्षानपेक्षारूपवैषम्यादि त्यभिप्रेतं क्रमपक्षं प्रतिक्षिपति । **प्रत्यक्षज्ञानस्येति** । चस्समुच्चये । एवं युगपत्क्रमेणचोभयव्यवहारस्य प्रत्यक्षमूलत्वमनुपपन्न-

## गूढार्थसङ्ग्रहः

इत्युपक्रम्य, 'घटोऽस्तीत्यत्र पटाद्यभावः' इत्युक्त्या पटादिव्यवच्छेदएव व्यावृत्तिः । सएव तद्भेदइत्यत्रविवक्षितः । 'न भेदो वस्तुनोरूपं' इतिश्लोके न व्यावृत्तिर्वस्तुस्वभावः, इति मण्डनविवरणाच्च यथोक्तएवार्थः । अत्र ब्रह्मसिद्धौ 'तत्र प्रत्यक्षे त्रयःकल्पाः । वस्तुस्वरूपविधिः । वस्त्वन्तरस्यव्यवच्छेदः । उभयंचेति । उभयस्मिन्नपि त्रैविध्यं, यौगपद्यं, व्यवच्छेदपूर्वको विधिः, विधिपूर्वको व्यवच्छेदः' इति । अत्र वस्त्वन्तरव्यवच्छेदे उभयस्मिन्वा भेदः प्रत्यक्षगोचरइति भवति विरोधः । स्वरूपविधिमात्रेतु कस्यचिद्व्यवच्छेदेन शून्ये न भेदः प्रमाणार्थः । नहिव्यवच्छेदादन्ये भेदासिद्धिः । विधिमात्रव्यापारंच प्रत्यक्षं अतोनविरोधः । कथमित्युच्यते 'लब्धरूपे क्वचित्किंचित् तादृगेव निषिध्यते । विधानमन्तरेणातो न निषेधस्य सम्भवः ॥' न तावद्व्यवच्छेदमात्रं प्रत्यक्षव्यापारः । न युगपदुभयं । न व्यवच्छेदपूर्वकं विधानम् । यतः सिद्धे विषये सिद्धरूपमेव निषिध्यते' इति । नापि विधिपूर्वको व्यवच्छेदः ; यतः— 'क्रमस्सङ्गच्छते युक्त्या नैकविज्ञानकर्मणोः । न सन्निहितजं तच्च तदन्यामर्शि जायते ॥' नखल्वेकप्रमाणज्ञानव्यापारौ सन्तौ विधिव्यवच्छेदौ क्रमवन्तौ युज्येते । क्षणिकत्वात् । क्रमवतोर्हि व्यापारयोः पश्चातनो न तद्व्यापारस्स्यात् व्यवधानात् । अपि च जन्मैव बुद्धेर्व्यापारः अर्थावग्रहरूपायाः । सा चेदर्थविधानरूपोदया विधिरेवास्या व्यापारः यौगपद्यस्य निषेधात् । उत्पन्नायाश्च पुनरनुत्पत्तेः । अपि च सन्निहितार्थालम्बनं प्रत्यक्षं नासन्निहितमर्थमवभासयितुमर्हति । नचानवभासमानं व्यवच्छेत्तुं पर्याप्नोति । अनवभासमानेहि तत्र व्यवच्छेद्ये व्यवच्छेदमात्रं स्यात् न व्यवच्छेदः कस्यचित् सर्वस्य वा स्यात् । तस्मान्नानवभासमाने व्यवच्छेद्ये व्यवच्छेदः । नच सन्निहितार्थालम्बने प्रत्यक्षेऽसन्निहितार्थावभासो युक्तः । ' इति । अयमेवार्थः सङ्गृहीतः संवित्सिद्धौ यामुनमुनिना— 'यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः । एकत्वायोगाच्च भेदो न प्रत्यक्ष इति ' इति । तमेवार्थं विशदयति—**नच द्वयोरपि व्यवहारयोरित्यादिना** ॥

**एकक्षणवर्तित्वादिति** । ज्ञानस्य क्षणिकत्वस्य मण्डनेनैवोक्तेः । (ब्र.सि॰) अनन्तरं तेनैव तदुपपादनाच्च । ब्रह्मसिद्धिव्याख्यायामपि अर्थपरिच्छेदरूपायाः बुद्धेर्जन्मैव व्यापारः । न काष्ठादीनामिव जन्मातिरेकेण व्यापारान्तरमस्ति । तदुक्तम्— 'तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते ' (श्लो.वा.प्र.सू.५६.) 'नहि तत्' क्षणमप्यास्ते जायते वाऽप्रमात्मकम् ' (श्लो.वा.प्र.सू.५५) इति । इति । न्यायमकरन्दे च ब्रह्मसिद्धिप्रतिपादितप्रकारेणैव पूर्वपक्षस्याभिधानावसरे 'क्षणभङ्गिन्याः वित्तेः व्यापारक्रमानुपपत्तेः' इति ब्रह्मसिध्द्युक्तार्थमभिधाय, 'यऽप्याहुः न वयमिह पूर्वापरभावविकलकालकलाऽवस्थितिलक्षणां क्षणिकतामाचक्ष्महे बौद्धा इव बुद्धेः, अपितु आशुतरविनाशितालक्षणा अस्यां द्वित्रक्षणावस्थायिन्यामास्थी यत इति । न । तन्मतेऽपि जननातिरिक्तव्यापारासम्भवो वित्तेः । नखल्वस्याः तत्त्वतः कारकतामर्थावग्रहे संङ्गिरन्ते ।

## श्रीभाष्यम्

**तत्र स्वरूपंवा भेदोवा प्रत्यक्षस्य विषयइति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति नभेदः प्रत्यक्षेण गृह्यते।**

## श्रुतप्रकाशिका

मिति तयोरन्यतरस्य प्रत्यक्षविषयत्वमाह। **तत्रेति**। भेदः प्रत्यक्षविषयस्स्यादित्यत्राह। **भेदेति**। अस्तित्वभेदयोरैक्यायोगे **तद्व्य**वहारयोर्भिन्नकालज्ञानफलत्वेच यएव हेतुस्तेनैवेत्येवकाराभिप्रायः प्रत्यक्षस्य स्वरूपमात्रविषयत्वे कथं भेदव्यवहारसम्भव

## गूढार्थसङ्ग्रहः

रूपमेवास्यार्थावग्रहः। रूपं चास्य जन्माधीनमिति जन्मैव व्यापारः। तदाहुः क्षणभङ्गवादिनः– 'भूतिर्येषां क्रिया सैव कारकं सैवचोच्यते।' इति। एतदभिप्रेत्यैवाभिहितं 'अपिच जन्मैव बुद्धेर्व्यापारः अर्थावग्रहरूपायाः' इति। इत्यत्र अपिच जन्मैवेति वाक्यस्याशयः सम्यग्वर्णितः आनन्दबोधयतिभिः। अत्र न्यायमकरन्दवाक्ये सङ्गिरन्त इत्यत्र भट्टपादाः विवक्षिताः। 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म' इति जैमिनिसूत्रार्थे 'बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता' इत्यादिना दिङ्नागेन दूषिते 'विक्रिया ज्ञानरूपाऽस्य न नित्यत्वे विरोत्स्यते' इति, 'नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते। विक्रियायात्रवाचित्वे नह्युच्छेदोऽस्य तावता॥' इति आत्मवादे वक्ष्यमाणार्थमभिधाय 'बुद्धिजन्मेतिचाप्याह जायमानप्रमाणताम्।' इत्यादौ 'नहि तत्क्षणमप्यास्ते जायते वाऽप्रमात्मकम्' इत्याद्युक्तं भट्टपादैः। ब्रह्मसिद्धौत विवर्ताद्वैतमतं दूषयतां भट्टपादानां सम्मतोऽर्थः तत्र तत्र निरस्यते। अत्र 'सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा' इत्यादिपूर्वमीमांसशङ्कासमाधानावसरे भेददूषणप्रसङ्गे भट्टपादोक्तरीतिरेव ब्रह्मसिद्धावुक्तेति निर्णयो युक्तएव॥

**स्वरूपविषयत्वमवश्यमाश्रयणीयमिति**। अद्वैतसिद्धौच 'ननु सदर्थस्य ब्रह्मणः रूपादिहीनस्यासंसारमज्ञानावृतस्य शब्दैकगम्यस्य कथं घटस्सन् इत्यादिबुद्धिविषयतास्यात्। तथाच घटोऽनित्यः' इत्यनेन घटगतानित्यतेव 'घटस्सन्' इत्यनेनापि घटगतमेव सत्त्वंगृह्यते। नच स्वरूपगाप्रत्यक्षस्य राहोः चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेनैव प्रत्यक्षतेति सिद्धम्। शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रावणत्वाद्यापातात्। राहोस्तु दूरदोषेणाज्ञातस्य नीलस्ययोग्यस्य शुक्लभास्वरचन्द्रसम्बन्धात् चाक्षुषता युक्तेतिचेन्न, यतः सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वं किंतु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव। तथाच चक्षुरादिजन्यवृत्त्या तदावरणभङ्गेसति 'सन् घटः' इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात्। नच रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिः बाधिका इति वाच्यम्। प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात्। सर्वेन्द्रियग्राह्यंतु सद्रूपं ब्रह्म। नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः। सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमाच्च। तदुक्तं वार्तिककृद्भिः 'अतोऽनुभवएवैक---यत्र तेषां प्रमाणता' इति कालस्यच रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्। नच शब्दावच्छिन्नस्य आकाशस्यापि श्रावणत्वं स्यादिति वाच्यम्। स्वभावतो योग्यस्यहि केनचिन्निमित्तेन प्रतिरुद्धायोग्याऽवच्छेदकादिना योग्यतासम्पाद्यते। यथा दूरदोषेण प्रतिरुद्धयोग्यताकस्य राहोः चन्द्रसम्बन्धेन। एवं स्वावरणेन प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्यवच्छेदेन योग्यंभवति। नभस्तु स्वभावतोयोग्यमेव नप्रतिरुद्धयोग्यताकं येन शब्दावच्छेदेन योग्यंभवेत् यद्वा द्रव्यग्रहे चक्षुषो रूपापेक्षा, नत्वन्यग्रहे। ब्रह्मतु न द्रव्यम्ः 'अस्थूलमनण्वह्रस्वमदीर्घम्' इति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्। अतो नानुपपत्तिः। अस्तुवा द्रव्यम्; तथाऽप्यध्यस्तद्रव्यवति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षुः रूपमपेक्षते। ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेवेति न तद्ग्रहे

## श्रीभाष्यम्

**अतो भ्रान्तिमूलएव भेदव्यवहारः। किंच भेदोनामकश्चित्पदार्थोन्यायविद्भिर्निरूपयितुं नश क्यते। भेदस्तावन्न वस्तुस्वरूपम्। वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यव-हारप्रसक्तेः। नच वाच्यं**

## श्रुतप्रकाशिका

इत्यत्राह। **अतो भ्रान्तीति**। तथाच संवित्सिद्धौ--

**यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः। ऐक्यायोगाच्च भेदो न प्रत्यक्षइति योभ्रमः॥**

इति। व्यवच्छेदः भेदग्रहणं विधानं स्वरूपग्रहणं। एवं भेदप्रमाणानुपपत्तिरुक्ता॥

**अथ** प्रमेयानुपपत्तिमाह। **किंचेति**। किंचेत्यादिना प्रमाणानुग्राहकतर्काभावोऽप्युच्यतइतो भवति। दुर्निरूपत्वं प्रतिजानीते। **भेदोनामेति**। विकल्पासहत्वादितिभावः। **न्यायविद्भिः**। नत्वापातप्रतीतिमात्रतुष्टैरितिभावः। स्वरूपधर्म विकल्पं हृदिनिधाय स्वरूपपक्षं दूषयति। **भेदस्तावदिति**। कुतइत्यत्राह। **वस्तुस्वरूपइति। स्वरूपव्यवहारवत्सर्व स्माद्भेदव्यवहारप्रसक्तेरिति**। *प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरित्यर्थः। *स्वरूपग्रहणस्य शब्दव्युत्पत्तिव्युत्पन्नश-ब्दस्मरणनिरपेक्षत्वेऽपि भिन्नइति व्यवहारस्तु तत्सापेक्षोयथा भवति *तथा प्रतियोगिस्मरणमपि भेदव्यवहारसामग्र्यन्त-र्भूतम्। अतस्तत्स्मरणाभावात्तदानीमेव भेदव्यवहाराभावः। ननु भेदग्रहणादिति परमतमाशङ्क्याह। **नचेति**। कुतइत्य-

## गूढार्थसंग्रहः

रूपाद्यपेक्षा' इति विशेषः प्रोक्तः॥ अत्र लघुचन्द्रिका—'शक्त्यज्ञानेन— मूलाज्ञानावस्थारूपाज्ञानेन। रूपहीनत्वेऽ पीति— ननु सद्रूपस्य चाक्षुषाविषयत्वमेवास्ताम्; नच तथा सति सद्रूपावरणनाशे उक्तव्यवहारानुपपत्तिरिति वाच्यम्। घटादिविषयकवृत्त्यैव घटाद्यवच्छेदेन सद्रूपावरणाभिभावकत्वसम्भवात् इति चेन्न। आवरणाभिभवाय कल्प्याया वृत्तेः विषयत्वस्यावरकाज्ञानविषये सद्रूप एव कल्पनौचित्यात्। अज्ञानस्येव वृत्तेरपि घटाद्यवच्छिन्नविषयताकत्वात्। ननु स-द्रूपस्य सर्वेन्द्रियग्राह्यत्वं विप्रतिपन्नं तत्राह— सत्ताया इति। परैः— मीमांसकादिभिः। प्राभाकरमते हि ज्ञानविषयत्वमेव सत्ता नान्या जात्यादिरूपा। गुणादौ जात्यस्वीकारात्। साच सर्वेन्द्रियजन्यधीविषया। ज्ञानमात्रस्य घटादिविषयकत्वरूपेण स्वविषयताशालित्वस्वीकारेण घटो मया ज्ञातः इत्याकारत्वस्यापि स्वीकारात्। न्यायवैशेषिकादिमतेऽपि सत्ताजातिस्सर्वेन्द्रि-यजन्यधीविषयः सन्निकृष्टतया सत्तायाः भाने सामग्रीसत्त्वात्। तथाच तस्यास्सर्वेन्द्रियग्राह्यत्वं न कस्यापि विप्रतिपन्नमिति भावः। अपिशब्दसमुच्चितं स्वकीयाचार्यसम्मतं सर्वेन्द्रियग्राह्यत्वं प्रकटयति— तदुक्तमिति। अतः अनुभवान्यस्याज्ञातत्वा-भावेन प्रमाणाविषयत्वात् अनुभवः सद्रूप आत्मैव विषयः। तत्र हेतुः अज्ञातलक्षण इति। जडस्याज्ञातत्वाभावेन न विषयत्वं किंतु विषयीभूतसद्रूपावच्छेदकत्वम्। अक्षादीनां इन्द्रियादिजन्यमनोवृत्तीनां दोषजन्याविद्यावृत्तीनां च। स्वतस्सिद्धः अना रोपितः। तस्याविषयत्वे प्रमाणानां प्रमाणता न स्यात्। अज्ञाताबाधितविषयकत्वस्यैव प्रमाणतारूपत्वादित्याह— यत्रेति। यत्रैवेत्यर्थः। भ्रमस्यापि बाधात्पूर्वं प्रमात्वं सद्रूपमादायैव। इदमंशावच्छिन्नसद्रूपताहशविषयकत्वरूपस्य हि इदमंशधीनिष्ठ प्रमात्वस्य संसर्गो भ्रमे समारोप्यते' इति॥

**भ्रान्तिमूल एव भेदव्यवहार इति**। इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते। देशकालव्यवधानेन असन्निकृष्टानामपि प्रतियोगिनां भ्रान्तिरूपः प्रतिभास इति तदेकवित्तिवेद्यत्वनियतस्य भेदस्य भेदैक-

## श्रीभाष्यम्

**स्वरूपे गृहीतेऽपि भिन्नइति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात् तत्स्मरणाभावेन तदानीमेव न भेदव्यवहारइति । स्वरूपमात्रभेदवादिनोहि प्रतियोग्यपेक्षाच नोत्प्रेक्षितुं क्षमा । स्वरूभेदयोस्स्वरूपत्वाविशेषात् । यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः भेदव्यवहारोपि तथैव स्यात् । हस्तःकरइतिवत् घटोभिन्नइति पर्यायत्वंच स्यात् । नापि धर्मः धर्मत्वेसति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः । अन्यथा स्वरूपभेदस्यात् । भेदेच * तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था । किंच जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं भेदग्रहणेसति जात्यादिविशिष्टवस्तुग्रहणमित्यन्योऽन्याश्रयणम् ।**

## श्रुतप्रकाशिका

त्राह । **स्वरूपेति** । यथा न स्वरूपग्रहणे प्रतियोग्यपेक्षा तथा भेदव्यवहारेचेति शब्दार्थः । हिशब्दोहेतौ स्वरूपग्रहणइवभेद व्यवहारे प्रतियोग्यपेक्षाया असम्भवादित्यर्थः । असम्भवः कुतइत्यत्राह । **स्वरूपेति** । स्वरूपभेदयोस्स्वरूपत्वमविशिष्टमस्तु ततः किं प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरिति शङ्कायां तद्विवृणोति । **यथेति** । स्वरूपपक्षे दूषणान्तरमप्याह । **हस्तः करइति** । पर्यायत्वेसति सहप्रयोगस्स्यात्व्यस्स्यादितिभावः ॥

स्वरूपपक्षे मृषावादिभिर्दूषणान्तराण्यप्युक्तानि । उदाहृतदूषणपरिहारेण तान्यपि प्रत्युक्तानि भवन्तीति भाष्ये न कण्ठोक्तानि तान्युच्यन्ते । स्वरूपपक्षे भिन्नइति व्यवहर्तुं नयुक्तं भिन्नोहि भेदयोगी । एतद्व्यवहारसिद्धये यदि * स्वरूपभूतं भेदान्तरं स्वीक्रियते । तत्रापि भिन्नइति व्यवहारस्यायुक्तत्वात्तत्स्वरूपभूतभेदान्तरमाश्रयणीयमित्यनवस्था । * किंच शब्दान्तरेण धर्मइत्युक्तंस्यात् । तथाच धर्मपक्षदूषणान्यापतेयुः । किंच भेदःकिमनुवृत्तः उत व्यावृत्तः व्यावृत्तश्चेत् सकिं स्वरूपं उतधर्मः । प्रथमे * घटस्यभेदव्यवहारेकृते पटविषयभेदव्यवहारोनस्यात् व्यावृत्तत्वात् । * धर्मश्चेत्पूर्वोक्तदोषो, धर्मत्वप्रयुक्तदूषणानिचस्युः । यद्यनुवृत्तः सचस्वरूपंचेत् शब्दान्तरेण * सन्मात्रमङ्गीकृतं धर्मपक्षे पूर्ववत् । किंच भिदिधातोर्हि विदारणमर्थः । एकस्य वस्तुनोभेदोनाम द्विधाभावः * तत्खण्डस्यापि तथास्यात् । अतो वस्तुनि भेदाभ्युपगमे विदारणपरम्परयानाशएव स्यादित्येवमादीनि ॥

**अथ** धर्मपक्षं दूषयति । **नापीति** । कुतइत्यत्राह । **धर्मत्वइति** । स्वरूपाद्धर्मस्य भेदाभावेऽनिष्टमाह । **अन्यथेति** । स्वरूपधर्मयोर्भेदोऽस्तु ततःकिमित्यत्राह । **भेदेचेति** । तस्यापि भेदस्तद्धर्मः तस्य धर्मतया स्वीकृतस्यापि भेदस्य स्वरूपापक्षया यो भेदस्सोपि तस्य धर्मतया स्वीकृतस्य भेदस्य धर्मः । * यद्वा स्वरूपाद्धर्मस्य योभेदस्स्वीकृतः तस्य धर्मिभूताद्धर्माद्भेदोपि धर्मः । अन्यथा स्वरूपमेव स्यात् त(दा)थाच स्वरूपपक्षदूषणानिस्युः । सोऽपि भेदोधर्मः तस्यापि स्वरूपाद्भेदइत्यनवस्थेत्यर्थः । एवं धर्मपक्षेऽनवस्थामुक्त्वाऽन्योन्याश्रयणमाह । **किंचेत्यादिना** । * त्रिधाचतत् धर्मिणि प्रतियोगिनिच गृहीते भेदग्रहणं भेदे गृहीते धर्मिप्रतियोगिग्रहणमिति । धर्मे धर्मिणिच गृहीते भेदग्रहणं भेदे गृहीते धर्मधर्मिग्रहणमिति । अयं घटइत्यत्रेदं शब्दानिर्दिष्टस्य घटजातीयत्वविशिष्टग्रहणं पटजातीयाद्भेदग्रहणपूर्वकम् । अन्यथा घट-

## गूढार्थसंग्रहः

वित्तिवेद्यत्वनियतस्य घटादेश्च भ्रमैकविषयत्वात् भ्रान्तिमूलो भेदव्यवहारः । इत्थमेव तत्वशुद्धिकारादीनां मतमिति सिद्धान्तलेशसङ्ग्रहे निरूपितम् । वार्तिकादिपर्यालोचनायां घटादरज्ञातत्वभावेन प्रमाविषयत्वं नसम्भवतीति भेदव्यवहारः न

### श्रीभाष्यम्

अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम्। किंच घटोऽस्तिपटोऽस्ति घटोऽनुभूयते पटोऽनुभूयतइति सर्वे पदार्थास्सत्ताऽनुभूतिघटिता एव दृश्यन्ते। अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतया अपरमार्थाः रज्जुसर्पादिवत्। यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना परमार्थसती व्यावर्तमानास्सर्पभूदळनाम्बुधारादयोऽपरमार्थाः॥

ननुच रज्जुसर्पादौ रज्जुरियं न सर्पइत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेनबाधितत्वात् सर्पादेरपारमार्थ्यं न व्यावर्तमानत्वात् रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतयाकिंत्वबाधितत्वात् अत्रतु घटादीनामबाधितानां कथमपारमार्थ्यम्? उच्यते घटादौ दृष्टा व्यावृत्तिः साकिंरूपेति

### श्रुतप्रकाशिका

जातीयत्वाविरोधात्। पटाद्भेदग्रहणमिदंशब्दानिर्दिष्टस्य घटजातीयत्वग्रहणपूर्वकं अन्यथा पटत्वप्रसङ्गादिति। एवं धर्मधर्मिग्रहणे धर्मितया प्रतियोगितयाच ग्रहणे तत्तज्जातीयत्वग्रहणेच त्रिधाऽन्योन्याश्रयणमुक्तम्॥

साधकप्रमाणाभावमुपसंहरति। **अतइति**। अतः स्वरूपधर्मपक्षोक्तैर्दूषणैर्दुर्निरूपत्वादित्यर्थः। इत्थं साधकप्रमाणाभावउक्तः। प्रमेयानुपपत्तिरूपस्तर्कश्च तच्छेषभूतः सामग्रीविषयेणार्थस्वभावविषयेणवा निरूपणेन विषयविशेषे प्रमाण व्यवस्थापनंहि तर्ककृत्यम्। * अथ बाधकप्रमाणमुपन्यस्यति। **किंचेति**। तत्रानुमानं विवक्षुर्व्याप्तिं शिक्षयति। **घटोस्ती त्यादिना**। **'वैधर्म्याच्च न स्वप्नादिवत्'** इत्यत्र सूत्रकारेणैव दृश्यत्वानुमानस्य निराकरिष्यमाणत्वात्तन्निरासस्य मिथ्यात्वानुमानानां सर्वेषां दूष्यत्वप्रदर्शनार्थत्वात्पूर्वपक्षे व्यावर्तमानत्वहेतुरुपन्यस्यते। अनुवृत्तत्वप्रदर्शनाय घटोऽस्ति पटोऽस्ती त्युक्तम्। सदनुभूत्योरैकत्वं वक्ष्यमाणं हृदि निधायानुभूतेरनुवृत्तिं दर्शयति। **घटोऽनुभूयते पटोऽनुभूयतइति**। ततः किंमित्यत्राह। **अत्रेति**। व्यावर्तमानतया उत्तरोत्तरप्रतिपत्तिविषयेष्वविद्यमानतया रज्जुसर्पादिवत् रज्ज्वादिवत्सर्पादिवच्चेत्यर्थः तद्विवृणोति। **यथेत्यादिना**॥

बाधितत्वाबाधितत्वाभ्यां द्वयोरपि हेत्वोस्सोपाधिकत्वं दर्शयंश्चोदयति। **ननुचेति**। उपाधिनिवृत्त्या पक्षे साध्यनिवृत्तिमाह। **अत्रत्विति**। विपरीतोपाधिसद्भावाच्च व्याघात इतिचाभिप्रायः। परिहरति। **उच्यतइत्यादिना**। प्रथमं संप्रतिपन्नांशमाह। **घटादौ दृष्टा व्यावृत्तिरिति** सपक्षेषु सर्वेषु विद्यमानःपक्षे अविद्यमानोह्युपाधिः। तत्र परेणोपाधित्वेनोक्तस्य धर्मस्य पक्षे विद्यमानत्वकथनेन व्यावर्तमानत्वहेतोस्सोपाधिकत्वं दूषयिष्यंस्तदुपयोगित्वेन घटादिषु दृष्टाव्यावृत्तिः किं संवादफलभूता उत बाधफलभूतेति विवेचनीयमित्याह। **सा किंरूपेति**॥

### गूढार्थसंग्रहः

प्रमामूलक इति प्रतीयते। उत्तरत्र भाष्ये सतः अनुभूतेश्चैक्यस्य अनुभूतेस्स्वयंप्रकाशत्वस्य च साधयिष्यमाणतया अज्ञातत्वं इति प्रमाविषयत्वं न घटादिभेदस्येति च भगवतोऽप्यभिप्रेतमिति प्रतिभाति॥

**घटोऽस्ति पटोऽस्ति घटोऽनुभूयत इत्यादि**। अत्र 'घटोऽनुभूयत इत्युक्तिः यथा घटादिसद्भेदव्यवहारः भ्रान्तिमूलः एवं अनुभूतिकर्मघटादिव्यवहारोऽपि। अनुभवस्यानुवृत्तत्वेन घटादेर्व्यावृत्तत्वात्। अयमर्थः 'एवं सत्यनुवर्तमाना अनुभूतिरेव परमार्थः' इत्युत्तरभाष्यसूक्त्या **सूच्यते**। एवं घटादिभेदनिबन्धन एवानुभवभेदः न तात्त्विकः इति। घटाद्यनुभवभेदव्यवहारोऽपि भ्रान्तिमूल इति च बोधनाय॥ **सत्ताऽनुभूतिघटिता एवेति**। सदनुभूत्य-

## श्रीभाष्यम्

**विवेचनीयम् । किं घटोऽस्तीत्यत्र पटाद्यभावः । सिद्धंतर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम् । अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः । सा व्यावर्तमनानामपारमार्थ्यं साधयति । रज्जुवत् सन्मात्रमबाधितमनुवर्तते तस्मात्सन्मात्रातिरेकि सर्वं मपरमार्थः ।**

## श्रुतप्रकाशिका

बाधफलभूतत्वं दर्शयितुं व्यावृत्तिस्वरूपमाह । **किं घटोऽस्तीत्यत्रेति** । घटोऽस्तीति प्रतीते विषये पटाभावइत्यर्थः । **सिद्धंतर्हीति** । * रज्जौ भूदळनादीनामभावेोहि बाधितत्वमितिभावः । तस्माद्बाधफलभूतैवेत्याह । **अतइति** । बाधोनामादुष्टकारणजा निषेधबुद्धिः तेन पुरोवर्तिन्यभावो व्यावृत्तिः । एवं निरुपाधिकत्वाद्व्यावर्तमानत्वमपारमार्थ्यसाधकमित्याह । **सेति** । अबाधितत्वफलभूतानुवृत्तेः परमार्थत्वप्रयोजकत्वादनुवर्तमाने पारमार्थ्यं दर्शयति । **रज्जुवदिति** । अबाधोनामाविरोधित्वं अनुवृत्तिर्नामतत्कृतोविषतयाऽन्वयः पुरोवर्तिनि सद्भावोवा इत्थं व्याप्तिरशिक्षिता न केवलंतर्कः अनुग्राह्यमप्यस्तीत्याह ।

## गूढार्थसंग्रहः

विषयकप्रतीत्यविषया एवेत्यर्थः । 'प्रत्येकं तद(सद)नुविद्धत्वेन प्रतीयमानत्वात्' इति ब्रह्मसिद्धौ मिथ्यात्वसाधकहेतुर्य उक्तः स एव सत्तानुभूतिघटिता एवेत्यनेनोक्तः । अत्र सदनुभूत्योरैक्यस्य विवक्षिततया प्रमाणानामज्ञातार्थज्ञापकतया जडे आवरणकृत्याभावेनाज्ञातत्वासम्भवात् सत एवाज्ञातत्वं वाच्यमिति तत्रैव प्रमाणभूतेन्द्रियादिव्यापारः, नतु घटादावित्येतेन सिद्धम् । तेन घटोऽस्तीतिप्रतीतौ पटस्याविषयत्वे इन्द्रियव्यापारविरह एव हेतुः इति वक्तुं न शक्यते । पटस्याज्ञातत्वाभावेन इन्द्रियभूतप्रमाणव्यापारस्य तत्राभ्युपगमासम्भवात् ॥

**सन्मात्रातिरेकीति** । 'परस्परव्यावृत्तौ नीलपीतावभासेते । अपरोक्षता तु नतथा ; एकरूपावमाद्विच्छेदावभासेऽपि । अतो न तत्स्वभावता । यदि स्यात् तद्वदेव व्यावृत्तस्वभावताऽप्यवभासेत ; नच तथा' इति पञ्चपादिका ॥ यदि स्यादिति । अनुवृत्तस्य व्यावृत्ताद्भेदः अनुवृत्तत्वात् आकाशघटादिवत्' इति विवरणम् । (पं.पा) अनुवृत्तं न तत्वतो व्यावृत्ताभेदवत् अनुवृत्तत्वादाकाशवत्' इति तत्त्वदीपनम् । अत्र नीलात्मिका संवित् इत्युक्तं स्यादिति बौद्धशङ्कापरिहारः पञ्चपादिकायामभिहितः । तत्रचानुवृत्तत्वव्यावृत्तत्वाभ्यां संविद्विषययोर्भेदः अनुमानेन विवरणे साधितः । अतः व्यावृत्तस्य घटादेरनुवृत्तसद्भेदः इति भावः । अत्र यद्यप्यनुवृत्तत्वं संविदो विषयभेदसाधकं विवरणेऽभिहितम् । वार्तिके च (बृ.वा) व्यावृत्तत्वं कल्पितत्वे साधकमुक्तम् । अनुवृत्तत्वं च परमार्थत्वसाधकं प्राचीनग्रन्थेषु न क्वाप्युक्तम् । तथाऽपि व्यावर्त्तमानत्वस्य कल्पितत्वसाधकत्वे अनुवृत्तत्वमकल्पितत्वसाधकमित्यङ्गीकृतमेव । किंच अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य इति भाष्योक्ताध्यासप्रकारः 'इदमर्थैवस्त्वपिभवेद्रजते परिकल्पितं रजतवास्त्विदमि । रजतभ्रमेऽस्यच परिस्फुरणात् न यदि स्फुरेन्नहि तु शुक्तिरिव ॥' (सं.शा) इत्यत्र दृष्टान्ते उपपादितः । अस्य— इदमर्थस्य । न यदीदमर्थः कल्पितः तदा भ्रमे नस्फुरेत्तु । शुक्तिरिव शुक्तित्वविशिष्टवत् । शुक्तित्वविशिष्टस्येव संसर्गोपहितेदमादेरकल्पितत्वेन उक्तबाधकाबाध्यत्वेन भ्रमविषयत्वापत्तिरिति भावः' इति न्यायरत्नावली । एवं च घटोऽस्ति घटस्सन् इत्यादौ सतः काल्पितत्वमपरिहार्यम् । उक्तं च न्यायरत्नावल्याम्— 'एवं सदाकाशमित्यादावपि सतः संसृष्टरूपेण आकाशादेस्स्वरूपेण मिथ्यात्वम् । सदाकाशमिति यज्ज्ञानं तन्मिथ्येति प्रत्ययात् । सत् आकाशंन आकाशं सन्न इति बाधकसत्वाच्च ।' इति । सर्वबाधावधिभूतचैतन्यपरिशेषेण च न शून्यवादापत्तिः । (सि.बि.) इत्यत्रापि 'ननु सदिदं रजतमिति भ्रमे सद्रूपचितोऽपि

## श्रीभाष्यम्

**प्रयोगश्च भवति। सत्परमार्थः अनुवर्तमानत्वात् रज्जुसर्पादौ रज्ज्वादिवत् घटादयोऽपर-मार्थाः व्यावर्तमानत्वात् रज्ज्वाद्यधिष्ठान सर्पादिवदिति**

## श्रुतप्रकाशिका

**प्रयोगश्चभवतीति।** मायावेदान्तिनोहि ज्ञानमात्रपारमार्थ्यवादिनः तत्कथं सतः पारमार्थ्यसाधनमित्यत्राह।

## गूढार्थसंग्रहः

विषयत्वात् साऽप्यध्यस्ता स्यात्तत्राह– सर्वबाधेत्यादि। तथा च संसृष्टरूपेणैव सद्रूपस्य भ्रान्तिविषयत्वं मिथ्यात्वं च नतु शुद्धरूपेणेति भावः' इति न्यायरत्नावल्यामुक्तम्। एवं च सतो मिथ्यात्वाभावसाधनमपि आवश्यकमिति तदपि साध यति– **सत् परमार्थः इत्यादिना।**

अत्र पारमार्थ्यमकल्पितत्वम्। अनुवृत्तत्वं सर्वप्रतीतिविषयत्वम्। 'सर्वे पदार्थास्सत्तानुभूतिघटिता एव दृश्यन्ते' इति पूर्ववाक्यपर्यालोचनया पदार्थानां सत्तादात्म्याविषयकप्रतीत्यविषयत्वं सिद्धमिति स्वाविषयकप्रतीत्यविषयपदार्थसामा-न्यकत्वमेव अनुवर्तमानत्वम्। ब्रह्मसिद्ध्यनुमानपरिष्करणावसरे 'प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वरूपं सदवृत्तित्ववि-शिष्टभेदप्रतियोगित्वमेव तत्' इति व्याख्याय, तत्र शब्दार्थास्वारस्यं पर्यालोच्य, 'अथवा सत्तादात्म्याविषयकप्रतीत्याविषय त्वादित्यर्थः। प्रतीतिमात्रे सद्रूपं विषय इति वक्ष्येत। यत् यत्तादात्म्याविषयकप्रतीत्याविषयः तत्तत्र काल्पितमिति सामान्यतो व्याप्तिः।' इति गुरुचान्द्रिकायां (परिच्छिन्नहेतुत्वविचारे) उक्तम्। तत्र काल्पितत्वं तु पूर्वोक्तं द्विविधम्। एवं च सदवि-षयकप्रतीत्यविषयत्वेन सन्निष्ठाभावप्रतियोगित्वस्य सद्विषयकज्ञाननिवर्त्यत्वस्य वा सिद्धिः गुरुचन्द्रिकाकृतां सम्मता। अत्रापि अनुवृत्तत्वेन स्वनिष्ठाभावप्रतियोगिवस्तुसामान्यकत्वं स्वविषयकज्ञाननिवर्त्यवस्तुसामान्यकत्वं वा सिध्यति। यत्तादात्म्या-विषयकप्र प्रतीत्यविषययद्यत्पदार्थकत्वं यत्र तत्र स्वनिष्ठाभावप्रतियोगितत्तत्पदार्थकत्वं स्वविषयकज्ञाननिवर्त्यतत्तत्पदा-र्थकत्वं वेति सामान्यतो व्याप्तौ रज्जुसर्पादौ रज्ज्वादिवदिति दृष्टान्तस्सङ्गच्छते। एवं च सदन्यपदार्थसामान्यस्यापि सन्निष्ठाभावप्रतियोगित्वस्य सद्विषयकज्ञाननिवर्त्यत्वस्य सिद्धिरनेनानुमानेन। अतश्च सर्वबाधावधिभूतत्वं सतास्सिद्धमिति सतः बाधाधिकरणस्याभावात् सदन्यस्य सज्ज्ञाननिवर्त्यत्वेन सतः अन्यज्ञाननिवर्त्यत्वमपि न सम्भवतीति सतोऽकल्पितत्व रूपपारमार्थ्यं सिद्ध्यति॥

**व्यावर्तमानत्वादिति।** सत्यनुवर्तमान इति शेषः। तेन सतस्तादात्म्येनान्वितत्वं सूच्यते। **न्यायरत्नावल्याम्–** 'अनुवृत्तव्यावृत्तान्यव्यतिरेकः' इति सिद्धान्तबिन्दुविवरणावसरे 'एवं सर्वेषु दृश्येषु मिथो व्यावृत्तेषु भिन्नेषु सद्रूपेणानु वृत्त आत्मा। तस्मात् तत्र तेषां अन्वयेन तादात्म्यरूपेण व्यतिरेकास्सिद्ध्यति। यत् येषु व्यावृत्तेषु तादात्म्येनान्वितं तत्र तानि काल्पितानि यथा रज्जौ मालासर्पादि। यथा वा जातौ व्यक्तयः इति भावः' इत्युक्तम्। एवंच सत्तादात्म्यवत्वे सति व्यावर्तमानत्वमत्र हेतुरिति विवक्षितम्। 'सर्वे पदार्थास्सत्ताऽनुभूतिघटिता एव दृश्यन्ते' इति पूर्वसूक्तिपर्यालोचनेनात्र इत्थं विवक्षानिर्णयस्सम्भवति। एवं च अनुवृत्तयत्तादाम्यविशिष्टव्यावर्तमानत्वं यत्र तत्र तस्मिन् कल्पितत्वमिति सामा-न्यमुखी व्याप्तिः। अनुवृत्तरज्ज्वादितादात्म्यविशिष्टव्यावर्तमानत्वं सर्पभूदलनादेरिति रज्ज्वादौ कल्पितत्वं इति दृष्टान्तस-ङ्गतिः। काल्पितत्वं पूर्वोक्तं द्विविधं विवक्षितम्। ब्रह्मसिद्धौ 'इदं तत् अर्थः वस्तु इत्यभेदान्वयः' इत्युक्त्या अनुवृत्तिः अपि इदं तदित्यादिरूपेणैव विवक्षितेति दृष्टान्तसाधारण्यम्॥

## श्रीभाष्यम्

**एवं सत्यनुवर्तमानाऽनुभूतिरेव परमार्थः सैवसती ॥**

**ननुच सन्मात्रमनुभूतेर्विषयतया ततोभिन्नं ? नैवम् । भेदोहि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः । अतएव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति । * तस्मात्सदनुभूतिरेव । साच स्वतस्सिद्धा अनुभूतित्वात् ।**

## श्रुतप्रकाशिका

**एवंसतीति ।** व्यावर्तमानत्वानुवर्तमानत्वयोरपारमार्थ्ये पारमार्थ्येच प्रयोजकत्वे सिद्धइत्यर्थः तर्हि परमार्थद्वयं स्यादित्यत्राह । **सैवसतीति ॥**

**अथ** सदनुभूत्योर्विषयविषयिभावरूपं भेदमुद्धाट्यंश्चोदयति । **ननुचेति ।** भिन्नत्वं साध्यं विषयतयेति हेतुः परिहरति । **नैवमिति ।** तत्र साध्यांशं दूषयति । **भेदोहीति ।** पुरस्तादेव ज्ञेयभेदनिषेधादेव ज्ञानभेदोपि निरस्तइत्यर्थः त्वंशं दूषयति । **अतइति । न प्रमाणपदवीमनुसरतीति ।** विषयविषयिभावो भ्रान्तिसिद्धइत्यर्थः । * भेदस्यच भ्रान्ति सिद्धत्वमपिना समुच्चीयते ॥

**श्रुति**प्रतिपाद्यानर्थांस्तर्केणापि साधयन् विषयविषयिभावे निरस्ते ग्राहकाभावाच्छून्यत्वशङ्कांच व्यावर्तयन् स्वप्रकाशत्वमुपपादयति । **साचेति ।** चश्शङ्कायानिवृत्तौ तत्र व्यतिरेकिणं हेतुमाह । **अनुभूतित्वादिति ।** विपक्षेबाधं दर्शयति ।

## गूढार्थसंग्रहः

**एवं सत्यनुवर्तमानेत्यादि ।** अनुवर्तमानत्वं 'घटोऽस्ति पटोऽस्ति घटोऽनुभूयते' इति पूर्ववाक्ये दर्शितम् । सत अनुवर्तमानत्वेन परमार्थत्वात् अनु**भू**तेरप्यनुवर्तमानत्वेन पारमार्थ्यमिति भावः । एवं च अनुवृत्तपदार्थद्वयं सिद्धमित्यद्वैत भङ्गशङ्कायामाह– **सैव सतीति ।** घटोऽस्ति, घटोऽनु**भू**यते इत्युभयत्र सकलपदार्थसम्बन्धित्वेन सतोऽनु**भू**तेश्च प्रतीत्या वस्त्वैक्यं 'सत्यं ज्ञानम्' इत्यादिश्रुत्या च सिद्ध्यतीति भावः ॥

ननु घटः सन् पटः सन् इत्यादौ घटादेः सत्तादात्म्यं प्रतीयत इति युक्तम् । घटोऽनु**भू**यत इत्यादौ तु अनुभूतिविषयत्वमेव प्रतीयते, नत्वनुभूतितादात्म्यं घटादेः ; घटः सन् अनुभूयत इति प्रतीत्या घटादिवत् सतोऽप्यनुभवविषयत्वं प्रतीयत इति 'सैव सती' इत्युक्तिः कथं घटत इत्याशङ्कते– **ननु सन्मात्रमिति ॥**

**अनुभूतिविषयभावोऽपीत्यादि ।** पूर्वपक्षिणः भेदसाधकत्वेन विवक्षितः विषयविषयिभावः अप्रामाणिकः । घटाद्यवच्छिन्नचित एव प्रत्यक्षादिविषयत्वम् । घटादेरवच्छेदकत्वमेव । घटाद्याकारवृत्तिरपि नाङ्गीक्रियते । एतत्पक्षे सत्तात्रैविध्यं नास्त्येव । घटाकारवृत्तिमङ्गीकृत्य घटादेः प्रत्यक्षविषयत्वाङ्गीकार एव घटादौ व्यावहारिकी सत्ता । एतत्पक्षेतु ऽधिष्ठानसत्तयैव घटादेर्व्यवहारः । सद्वत् अनुभूतेरपि अनुवर्तमानत्वेन घटादेर्व्यावर्तमानतया अनुभूतौ कल्पितत्वं सिद्धम् । एवं च सत्तादात्म्यमिवानुभूतितादात्म्यमपि घटादेः स्वीकार्यम् । अध्यस्ते अधिष्ठानतादात्म्यस्य प्रातीतिकस्यैव सम्बन्धत्वात् । ज्ञानस्य तादात्म्यमेव विषयत्वमिति लघुचान्द्रिकादौ सिद्धान्तकरणेन 'घटोऽनुभूयत' इत्यत्र अनुभूतितादात्म्यमेव विषयत्वमिति अनुभूतेस्सदभेद एवेति भावः । तदेतदाह– **तस्मात् सदनुभूतिरेवेति ॥**

एतावता ब्रह्मसिध्याद्युक्तप्रक्रियाऽनुसारेण प्रत्यक्षस्य सन्मात्रग्राहित्वादि साधितम् । अथ 'याऽनुभूतिरजाऽमेयाऽनन्तात्माऽऽनन्दविग्रहा । महदादिजगन्मायाचित्रभित्तिं नमामि ताम् ॥' इति इष्टिसिद्धिप्रथमश्लोकक्रमानुसारेण कांश्चित् अर्थान् निरूपयति– **सा च स्वतस्सिद्धेत्यादिना ।** या इति स्वतस्सिद्धतां द्योतयति अनुभूतेरनुभाव्यत्वे घटादिवदनु-

### श्रीभाष्यम्

**अन्यतःसिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किंच अनुभवापेक्षाचानुभूतेर्नशक्या कल्पयितुम्। सत्तयैव प्रकाशमानत्वात् नह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते येन परायत्तप्रकाशाऽभ्युपगम्येत।**

### श्रुतप्रकाशिका

**अन्यतस्सिद्धाविति।** यदन्यतस्सिद्धं तदननुभूति दृष्टम् यथा घटइति व्याप्तिरर्थाद्दर्शिता अस्य व्यतिरेकिण: पराभिमत प्रत्यनुमानं सोपाधिकमिति दर्शयन्नर्थादनुमानान्तरमप्याह। **किंचेत्यादिना।** अनुमानान्तरं कण्ठोक्तं आर्थःप्रत्यनुमान निरासोवास्यात्। अनुमानान्तरस्य कण्ठोक्तत्वे किंचशब्दस्स्वरसः प्रत्यनुमाननिरासस्य कण्ठोक्तत्वे नशक्याकल्पयितुमिति निर्देशस्स्वरसः॥

**किंचेति।** न केवलं स्वमतोपपत्तिः परमतानुपपत्तिश्चेत्यर्थः अनुमानान्तरञ्चेतिवाऽर्थः। **अनुभवापेक्षाचेति।** पूर्वोक्तसमुच्चेनव्यद्धये * किंचशब्दसमुचितादन्यस्य समुच्चयपरश्चशब्दः। **नशक्या कल्पयितुं।** ज्ञानं परप्रकाशं वस्तुत्वाद्भासमानत्वाद्वा (प)घटादिवदिति प्रत्यनुमानम्। एवमादिभिःपरप्रकाशत्वं न वक्तुं शक्यमित्यर्थः कुतइत्यत्राह। **सत्तयैवेति।** सत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्कानिवृत्तये तं विवृणोति। **नहीति।** विद्यमानदशायां कदाचिदप्रकाशमानत्वं पराधीनप्रकाशत्वे प्रयोजकं अतः प्रत्यनुमानं सोपाधिकमित्यर्थः। विद्यमानदशायां सर्वदाभासमानत्वादिति व्यतिरेक्यनुमानान्तरमिति स्फुटतरम्। यथा संवित्सिद्धौ—

> **यद्यप्रकाशमाना धीः कदाचिदवतिष्ठते।** इत्यारभ्य
> **घटादाविव तत्रापि कल्पनीयं प्रकाशनम्।**

### गूढार्थसंग्रहः

भूतित्वप्रसङ्गात् ' इति इष्टसिद्धिः। याऽनुभूतिरित्यत्र अनुभूतित्वविशिष्टस्यैव अनुभूतिपदार्थतया विशेषणमेव हेतुरित्यभिप्रेत्याह—' साच स्वतास्सिद्धा अनुभूतित्वादित्यादि। यद्यपि 'तस्माच्चित्स्वभाव एव आत्मा तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते। अविवक्षितोपाधिरेवात्मादिशब्दैरभिधीयते ' इति पञ्चपादिकोक्तरीत्या उपहितस्यैवानुभूतित्वेन व्यवहारात् उपहितस्य स्वयंप्रकाशत्वं न घटते; तथाऽपि चित्त्वरूपानुभूतित्वस्य विवक्षितत्वान्न दोषः :। इत्थमेव अद्वैतसिद्धावुक्तम्। अत्र 'चित्वरूपेति। उपहितमात्रवृत्तीत्यर्थः। यथाहि उपलक्षितस्वरूपात्मकं लक्षणं ज्ञानविशेषविषयत्वादिरूपेण शुद्धत्वाच्छुद्धस्य लक्षणम्, तथा उपहितेऽपि चित्तादात्म्यस्य सत्वात् तस्यापि लक्षणम्। शुद्धोपहितभावेन तादात्म्यस्यैव प्रकृते लक्षणतावच्छेदकसम्बन्धत्वात्। वस्तुतस्तु अनुभूतिपदजन्यधीविशेषविशेष्यत्वस्य अनुभवान्याविशेष्यकधीविशेष्यत्वपर्यवसितस्य हेतुत्वं सम्भवतीति न काऽपि शङ्का। व्यभिचारवारणाय विशेष्यकान्तम्। अनुभवत्वं च आत्मस्वरूपत्वम्। विषयत्वमात्रं परमते आत्मादावपीति विशेष्यत्वं हेतुः। चिन्मात्रविषयकधीस्तु परस्य न प्रसिद्धेति तद्विषयत्वं न हेतुरिति बोध्यम्। व्यवहारं प्रति न वृत्तिविषयत्वं प्रयोजकं विद्यमानसुखादौ तत्कल्पने गौरवात्। नापि चिद्विषयत्वं वृत्तिं विनाऽपि घटादौ तदापत्तेः। नाप्यसत्वापादकाज्ञानानिरूपकत्वे सति चिद्विषयत्वम् विशेष्यवैयर्थ्यादिति चितः चिद्विषयत्वे वृत्तिसापेक्षव्यवहारकत्वे च मानाभावः। तत्त्वज्ञाननाश्यतावच्छेदकं चिद्विषयत्वम्। चिदन्यत्वं तु चिद्विषयत्वान्नातिरिक्तम् लाघवादित्यादितर्का अपि बोध्याः ' इति लघुचन्द्रिका॥ " **किंचेत्यादि।** " 'तस्मादनुभवः सजातीय प्रकाशान्तर-

## श्रुतप्रकाशिका

इति अनेन ग्रन्थेन स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्का परिहृता। विद्यमानत्वे सर्वदा प्रकाशमानत्वं सुखादावप्यस्तीत्यनैकान्त्यमिति चेन्न। सुखादिव्यतिरिक्तत्वेसतीति विशेषणस्याभिप्रेतत्वात्। सिद्धान्तिमते सुखादेरपि ज्ञानविशेषत्वेन पक्षेऽन्तर्भावान्नानैकान्त्यम्। एवमनुमानान्तरमुक्तं शङ्कितप्रत्यनुमानस्य सोपाधिकत्वंच दर्शितम्॥

## गूढार्थसङ्ग्रहः

निरपेक्षःप्रकाशमानएव विषये प्रकाशादिव्यवहारनिमित्तं भवितुमर्हति अव्यवधानेन विषये प्रकाशादिव्यवहारनिमित्तत्वात् प्रदीपालोकवत्' इति, 'स्वयंप्रकाशोऽयमात्मा स्वसत्तायां प्रकाशव्यतिरेकाभावात् प्रदीपसंवेदनवत्' इतिच (पं.पा)विवरणम्। अत्र प्रदीपवत् संवेदनवदिति दृष्टान्तद्वयम्। संवेदनं च प्रमेयभेदविनिर्मुक्तचिदेव' इति पूर्वं विवरणे एव स्फुटम्। तस्माच्चित्स्वभाव एवेत्याद्यनन्तरग्रन्थावतरणे स्वयंप्रकाशमानात्मचैतन्यस्य विषयानुभवत्वं विवरण एवोक्तम्। अतः विवरणोक्तम् आत्मस्वप्रकाशत्वानुमानमेव अनुभूतिस्वप्रकाशत्वानुमानमित्यभिप्रेत्य–'सत्तयैव प्रकाशमानत्वात्' इति हेतुरुक्तः। 'आत्मा सजातीयप्रकाशाप्रकाश्यः द्रव्यत्वे सति स्वसत्तायां प्रकाशाभावविधुरत्वात् प्रदीपवत्' इति तत्वदीपने विवरणोक्तानुमाननिष्कर्ष उक्तः। सुखादौ व्यभिचारवारणाय द्रव्यत्वे सतीति विशेषणम्। स्वतस्सिद्धा स्वयंप्रकाशा इत्यत्र स्वनिरूपितविषयतावत्वं न विवक्षितम्। अभेदे विषयविषयिभावसम्बन्धविरहात्। सम्बन्धस्य भेदनियतत्वात्। अतः स्वत इत्यादेरन्यानपेक्षेत्यर्थः। एतत्तात्पर्येणैव (पं.वि) 'अनुभवान्तरापेक्षा च अनुभूते र्न शक्या कल्पयितुम्' इत्युक्तम्॥

अद्वैतसिद्धौ च (स्वयंप्रकाशत्वलक्षणोपपत्तौ) 'स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वम्, स्वावच्छिन्नसंविदनपेक्षत्वम् वा स्वप्रकाशत्वम् इत्युक्तम्। अत्र लघुचन्द्रिका– 'स्वव्यवहारेत्यादि। स्वव्यवहारे स्वान्यसंविदपेक्षं यत् तदन्यमित्यर्थः। ननु स्वातिरिक्तसंविदपेक्षत्वं चित्यपि वर्तते। व्यवहारमात्रे असत्वापादकाज्ञानाभावव्यक्तित्वेन हेतुत्वात्। तदुपहितस्य चिद्रूपत्वेऽपि शुद्धचिदन्यत्वात् तदाह– स्वावच्छिन्नेति। स्वविषयकेत्यर्थः। तथाचोक्तोपहितचितः शुद्धचिद्विषयकत्वाल्लक्षणं शुद्धचित्यक्षतमिति भावः। एतदुभयमपि 'अनुभवान्तरापेक्षाच' इत्याद्युक्तार्थानुकूलम्। एवं 'अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वं स्वप्रकाशत्वम्' अवेद्यत्वं फलाव्याप्यत्वं वृत्तिप्रतिबिम्बितचिज्जन्यातिशययोगित्वं वृत्त्या तत्प्रतिफलितचिता वा अभिव्यक्ताधिष्ठानचिद्विषयकत्वंवा फलाव्याप्यत्वम्। चिज्जन्यातिशयश्च नावरणभङ्गः नापि व्यवहारः विवक्षितः। किं तु भग्नावरणचित्सम्बन्धः। स च घटादावस्ति नात्मनि। सम्बन्धस्य भेदगर्भत्वात्। व्यवहारपदेनाभिवदनं विवक्षितम्। सच शब्दप्रयोगः प्रामाणिकव्यवहाररूप एव। व्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वं ब्रह्मस्वरूपम्। तद्धि मोक्षेऽपि वर्तते। चिदविषयस्वरूपमेव वा स्वप्रकाशत्वम्, चिदन्यस्य सर्वस्य चिद्विषयत्वात्। तुच्छस्य निस्स्वरूपत्वेन नातिव्याप्तिशङ्का।' इत्यप्यद्वैतसिद्धावुक्तम्॥ अत्र 'अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वमपि स्वप्रकाशत्वं सम्भवति। प्रमाणवृत्तिं विनाऽपि व्यवहार्यत्वाय स्वप्रकाशत्वमुच्यते। तस्य च ब्रह्मस्वरूपत्वाभावेऽपि व्यवहारदशायां सत्वेनैवोपपत्तिः। लक्ष्ये लक्षणासत्वस्यैवाव्याप्तित्वात्। ब्रह्मणि तु उक्तयोग्यत्वस्य कदाचित् सत्वेन तदसम्भवात्।' इति लघुचन्द्रिका॥

पूर्वं 'सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्' इति शङ्का वार्तिककृतामेव। ज्ञानार्थयोरेकदा ग्रहणे ज्ञानेनैव निर्वाहे अर्थो ज्ञानातिरिक्तः अनावश्यक इति योगाचाराक्षेपपरिहारो न घटत इति अर्थस्यैव प्रत्यक्षं ज्ञानस्य तु प्राकट्यानुमेयत्वमेव। स्वप्रकाशत्वे स्वस्य स्वविषयत्वे न कोऽपि दृष्टान्त इति तैरुक्तम्। तदभिप्रेतमेवार्थं विशदयन् भाट्टशङ्कामेव

## श्रीभाष्यम्

**अथैवं मनुषे ? उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते। घटोऽनुभूयतइति नहि कश्चित् घटोऽयमिति जानंस्तदानीमेवाविषयभूतामनिदंभावामनुभूतिमप्यनुभवति। तस्मात् घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसन्निकर्षवदनुभूतेस्सद्भावएव हेतुः तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते।**

## श्रुतप्रकाशिका

अथ प्राकट्यानुमेयपक्षं निराचिकीर्षुरनुवदति। **अथैवंमनुषइत्यादिना**। प्रथमं स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिमुपपादयति। **उत्पन्नायामिति**। अनेन स्वोक्तस्य वस्तुत्वाद्भासमानत्वादित्यादि प्रत्यनुमानस्य सोपाधिकत्वव्युदासश्च सेत्स्यतीतिभावः। उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासतइत्यत्र घटोऽयमितीत्यध्याहार्यम्। घटोयमिति विषयमात्रमवभासतइत्यर्थः घटोऽयमिति जानन्निति हि वक्ष्यते। यथा संवित्सिद्धौ—

**घटोऽयमितिविज्ञाने घटमात्रं प्रकाशते। नवित्तिरिति युष्माकं गोष्ठीषु ननुघुष्यते॥**

इति घटोऽनुभूयतइतीत्यस्योत्तरत्रान्वयः। पूर्वत्रान्वयश्चेद्विषयमात्रमवभासतइत्यनेन विरोधस्स्यात्। कथं विषयमात्रस्यावभासः घटोऽनुभूयतइत्यनुभवोऽपि हि प्रकाशतइति शङ्कायां विषयमात्रस्यैवावभासमुपपादयति। **घटोऽनुभूयतइत्यादिना**। यदा घटोऽयमिति जानाति नहि तदानीमेव घटोऽनुभूयतइति जानाति कुतइत्यत्राह। **अविषयभूतामनिदम्भावामिति**। अविषयभूतां घटशब्दार्थव्यतिरिक्तां। अनिदम्भावां अयंशब्दार्थव्यतिरिक्तां। घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः सन्निहितदेशवर्तमानकालविशिष्टत्वमयंशब्दार्थः। उभयव्यतिरिक्तोह्यनुभवः। सतु घटोऽयमित्यनुभववेळायां नानुभूयतइत्यर्थः। अविषयभूतामितिसाधारणनिर्देशः पटादीनामपि प्रदर्शनार्थः अतएवाघटभूतामित्यनुक्तिः॥

यद्वा घटोऽनुभूयतइति पूर्वेणान्वयः। इतिर्हेतौ यतोघटएवानुभूतिकर्म नत्वनुभूतिरपि तदानीमनुभूतिकर्मभवति। तस्माद्विषयमात्रमवभासतइत्यर्थः अस्यैवविवरणं नहीति शब्दलिङ्गालोकादीनां प्रकाशकानां ज्ञाततयैव प्रकाशकत्वं दृष्टम्। अतोऽनुभूतिरप्रकाशाचेत्प्रकाशकत्वमपि नस्यादित्यत्राह। **तस्माद्घटादीति**। सत्तयाप्रकाशकं ज्ञायमानतया प्रकाशकंच द्विविधं प्रकाशकम्। तत्र सत्तयाप्रकाशककोटिनिविष्टं ज्ञानमित्यर्थः। * कएवं नियामकइत्यत्राह। **तस्मादिति**। स्वसत्तयैव प्रकाशमानत्वहेतोरसिद्धे * रसदुक्तहेतोस्सोपाधिकत्वनिरासाच्चेत्यर्थः। यद्यनुभूतिस्स्वयमेव नप्रकाशते तर्हि किंतस्यां प्रमाणमित्यत्राह। **तदनन्तरमिति**। **अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेन**। कादाचित्कत्वात्कार्यं कार्यत्वात्सहेतुकमि-

## गूढार्थसंग्रहः

उत्थापयति– **अथैवं मनुषे इत्यादिना**। 'पञ्चपादिकायाम्–' कथं चित् धर्मरूपेण भिन्नत्वात् प्रत्ययस्य तत्। ग्राहकत्वं भवेत्तस्य ग्राह्यं द्रव्यादि चात्मनः॥' (श्लो.वा.शू.वा.३८) इति ज्ञानत्वेन ग्राहकत्वं द्रव्यत्वेन ग्राह्यत्वं ज्ञानात्मनोर्भेदाभेदः स्वयंप्रकाशत्वं न आत्मनः ज्ञानस्य वा, इति श्लोकवार्तिककारमतमनूद्य अनुभवस्य स्वयंप्रकाशत्वसाधनार्थं तन्मतं दूषितम्। तस्मादनुभवः सजातीयप्रकाशान्तरनिरपेक्षः इति प्रागुदाहृतानुभवस्वयंप्रकाशत्वसाधकाविवरणमपि तत्रत्यमेव। इत्यभिप्रेत्य तत्राप्रदर्शितप्रकारेण श्लोकवार्तिककृत्सम्मतेन स्वयंप्रकाशत्वाक्षेपमुपन्यस्य तद्दूषणेन स्वयंप्रकाशत्वं विवरणोक्तक्रममनुसृत्य भगवता अत्र साधितमिति बोध्यम्॥

### श्रीभाष्यम्

**एवंतर्ह्यनुभूतेरजडाया अर्थवज्जडत्वमापद्यतइतिचेत् । किमिदमजडत्वं नाम न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपितत्सम्भवात् । नहि कदाचिदपि सुखादयस्सन्तोनोपलभ्यन्ते अतोऽनुभूतिस्स्वयमेवनानुभूयते अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति**

### श्रुतप्रकाशिका

त्यनुमानेन ज्ञायतइत्यर्थः । विषयगतप्राकट्यलिङ्गेन कथं स्वगतज्ञानमनुमीयतइतिचेत् *स्वस्मै प्रकाशमानत्वात्स्वगतज्ञानानुमानमुपपद्यते । यदि ज्ञानपश्चाद्भाविना प्रकाशलिङ्गेन ज्ञानमनुमीयते तर्हि घटोऽनुभूयतइति वक्तुमयुक्तं घटोऽन्वभावीत्येव वक्तुं युक्तमिति शङ्कायामुक्तं तदनन्तरमिति प्रत्यासत्त्यतिशयाद्वर्तमानत्वव्यपदेशइत्यर्थः । अर्थेन्द्रियसंयोगसमनन्तरमेव घटोऽनुभूयतइति प्रतीतेः । प्राकट्यलिङ्गेन ज्ञानानुमानानवकाशत्वशङ्काचानेन परिहृता तदनन्तरमिति बहुपत्रवेधवदनुमानशैघ्र्यात्तथाप्रतीतिरुपपद्यतइतिभावः ॥

**मृषा**वादी स्वदर्शनप्रसिध्द्याऽनिष्टं प्रसञ्जयति । **एवंतर्हीति** । जडत्वं ज्ञानव्यतिरिक्तत्वंअचित्वमित्यर्थः । इहचानुभूतिरजडेति विपर्यये पर्यवसानं प्रसञ्जनीयस्य जडत्वस्यानिष्टत्वंच प्रतिक्षेप्तुमजडत्वं विकल्प्य दूषयति । **किमिदमिति** । किमिदं नकिमपि दुर्निरूपमित्यर्थः । अनन्तरं शिरोद्वयप्रदर्शनाभावात् दुर्निरूपत्वविवरणमुत्तरग्रन्थः । विकल्पपरोवा किंशब्दः अजडत्वं नाम किं हेतुत्वेनोक्तं विद्यमानदशायां सर्वदा प्रकाशमानत्वं उत साध्यतयाऽभिमतं स्वयमेव स्वस्य प्रकाशत्वमिति विकल्पोऽभिप्रेतः । तत्र प्रथमे कल्पे किमुत्पत्तिकालेऽपि प्रकाशाव्यभिचारोविवक्षितः उतोत्पत्तिक्षणादूर्ध्वं प्रकाशाव्यभिचार इति विकल्पोऽभिप्रेतः तत्राद्येशिरस्यासिद्धिः पूर्वमेवोक्तेतिमत्वा द्वितीयेऽनैकान्तिकत्वमाह । **सुखादिष्विति** । तद्विवृणोति । **नहीति** । शिरोन्तरंदूषयति । **अतइति** । अतः हेतोरासिध्द्यनैकान्तिकत्वाभ्यां साध्यमपि नेत्यर्थः अनेन जडत्वं नानिष्टमिति दर्शितम् । अनुमानान्तरेण साधयिष्यतइत्यत्राह । **अर्थान्तरमिति** । व्याहतत्वान्नकिंचिदपि प्रमाणमिमर्थं साधयितुमलमित्यर्थः । यथाहुः—

**अङ्गुल्यग्रं यथाऽऽत्मानं नात्मना स्प्रष्टुमर्हति । स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥**

इति एवं जडत्वप्रसङ्गरूपतर्कस्य विपर्यये पर्यवसानाभावो, व्याप्त्यभाव, इष्टप्रसङ्गत्वं व्याघातलक्षणप्रतितर्कपराहतत्वं च दर्शितम् । इत्यथैवं मनुषइति पूर्वत्रान्वयः ॥

### गूढार्थसङ्ग्रहः

यद्यपि 'प्रमातृप्रमिती पुनः अपरोक्षे एव केवलम्, न कर्मतया' इति पञ्चपादिकाविवरणे आत्ममनस्संयोगजन्यप्रत्यक्षेण अपरोक्ष इति वार्तिककारन्यायवैशेषिकादयः कल्पयन्ति । प्रमितिस्तु आत्मनि संयुक्तसमवायनिमित्तज्ञानान्तरादपरोक्षेति न्यायवैशेषिकौ । प्रमेयगता प्रमितिः संयुक्ततादात्म्यात् ज्ञानान्तरेणापरोक्षेति वार्तिककारीयाः । तान्प्रत्याह– प्रमातृप्रमिती पुनः अपरोक्षे एव केवलम् इत्युक्तम् । अत्र वार्तिककारमतेऽपि प्रमितिरपरोक्षेत्येव मुद्रितकोशेषु वर्तते । तत्वदीपनेऽपि 'प्रमितिविषयं ज्ञानान्तरं उपजायते तेन आपरोक्ष्यं प्रमितेः' इत्येव वर्तते ; तथाऽपि ज्ञानान्तरेणापरोक्षेऽति वाक्यकारीयाः इत्यत्र विवरणवाक्ये ते.के.इति न प्रतिभाति । 'तस्मादप्रत्यक्षा बुद्धिः' इति शाबरभाष्योक्तसिद्धान्तः 'नान्यथा ह्यर्थसद्भावः दृष्टस्सन्नुपपद्यते । ज्ञानं नेत्यतः पश्चात् प्रमाणमुपजायते ॥' (श्लो.वा.शू.वा.१८) इति श्लोकव्याख्याने

### श्रीभाष्यम्

**तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितं अनुभूतिव्यतिरेकिणोविषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः। उभयाभ्युपेतानुभूत्यैवाशेषव्यहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च ।**

### श्रुतप्रकाशिका

अथ स्वयं प्रकाशत्ववाद्याह । **तदिदमिति । अनाकलितानुभवविभवस्य** । स्वव्यतिरिक्तस्य कृत्स्नस्य प्रकाशकस्सन्ननुभवस्स्वात्मन्यनन्यापेक्ष इत्येकोविभवः प्राकट्यहेतुको योव्यवहारः प्रकाशतइति तंच जनयितुमयमेवक्षम इत्यपरः । एवं द्विविधोऽनुभवविभवोऽनाकलितो येन सोऽनाकलितानुभवविभवस्तस्य । **स्वमतिविजृम्भितम्** । प्रमाणतर्कनिरपेक्षस्वोत्प्रेक्षामात्रविजृम्भितमित्यर्थः । स्वमतिमाहात्म्यमित्यधिक्षेपोवा पारिशेष्यात्स्वयम्प्रकाशत्वमभ्युपगमयितुं प्रथमं प्राकट्यलिङ्गं प्रतिक्षिपति । **अनुभूतीत्यादिना** । अनुभूतिव्यतिरेकिण इत्यनेना ❋ साधारण्यप्रतिक्षेपःफलितः विषयधर्मशब्देनात्मधर्मव्युदासः । तेन रूपादिवत्साधारण्यं फलितं अनुभूतिव्यतिरेकी विषयधर्मः प्रकाशः प्रत्यक्षयोग्योवा नवा नचेत् लिङ्गशानाभावादनुमानानुदयः योग्यश्चेत् अन्यैरप्युपलभ्यस्स्यात् रूपादिवदितिभावः अपेक्षाबुद्धिजन्यद्वित्वादेर्यथावत्तदेकपुरुषवेद्यत्वं तद्वत्प्राकट्यमपि तदेकपुरुषवेद्यमितिचेन्न द्वित्वादिसङ्ख्याः प्रागेवसन्ति यथैकत्र सर्वादिशः तत्तदुपाध्य(पेक्षाबुध्य)भिव्यङ्ग्याहिताः एवमपेक्षाबुध्यभिव्यङ्ग्यं द्वित्वादि तस्यैव प्रकाशते । यद्गतमभिव्यञ्जकं अत्रतु रूपादिवज्जन्यधर्मत्वाभ्युपगमात्सर्वैरुपलभ्येत । अभिव्यङ्ग्यत्वेऽभिव्यञ्जकवतएवाभासते सिद्धाञ्जनवतोनिधिरिव न(हि(तु)जन्यं जनकस्यैवावभासते नहि कुलालस्यैव घटःप्रकाशते ॥

**किंच । रूपादिवदिति ।** धर्मस्य निराश्रयोत्पत्त्ययोगादतीतानागतयोरर्थयोर्ज्ञायमानयोरपि प्राकट्यायोगात् प्राकट्याभावेऽपि प्रतीयतइति तत्र रूपादिवत्प्रकाशानुपलब्धेः प्राकट्येन ज्ञानानुमानं न सम्भवतीतिभावः । यथा संवित्सिद्धौ—

**अतीतेनागतेचार्थे कथं प्राकट्यसम्भवः । नहि धर्मिण्यसत्येक धर्मःस्सम्भवमृच्छति ॥**

इति अतीतानागतयोरपि द्वित्वादिवत्प्राकट्यं जन्यतइतिचेन्न द्वित्वादेरपि निराश्रयोत्पत्त्ययोगात् । तत्र द्वित्वाद्यनुत्पत्तावपि घटादेरिव द्वित्वादेरपि धीस्थतया व्यवहारोपपत्तेश्च । ❋ ये पुनर्द्वित्वादिकं नाभ्युपगच्छन्ति नतान्प्रतीद्वित्वादिकं प्रतिबन्दी कार्यम् । विषयविषयिभावसम्बन्धस्य विद्यमानाश्रयत्वनियमाभावाद्विषयविषयिभावएव प्राकट्यमितिचेन्न सम्बन्धस्य सम्बन्धिभ्यां विनाप्रतीत्यनुपपत्या सम्बन्धि ज्ञानंच प्रतीयत इत्यनुमेयमेवस्यादिति प्राकट्यं लिङ्गं न भवति ॥

एवं प्राकट्याख्यं वस्त्वनुपलब्धमप्यन्यथाऽनुपपत्या कल्प्यतइत्याशङ्क्य कल्पकस्यान्यथासिद्धिं दर्शति । **उभयेति ।** अनुभूत्येत्युक्ते प्राकट्यस्य नामान्तरमुक्तं स्यादिति शङ्कानिरासार्थमुभयाभ्युपेतशब्दः । यां प्राकट्यजनकत्वेनाभ्यधाः तयैवेत्येवकाराभिप्रायः अशेषव्यवहारः हानोपादानादिः । **तस्यानुभूत्यैव सम्भवान्नतेन** प्राकट्यं कल्प्यम् । ज्ञातोघटः प्रकटोघट

### गूढार्थसंग्रहः

न्यायरत्नाकरे 'उत्तरं ग्राहकाभावात्' (श्लो.वा.शू.वा.२३२) इति श्लोकव्याख्याने 'अत्रोत्तरं भाष्यम् । तन्न । नह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते । ज्ञातेत्वनुमानादवगच्छति' इत्यादि, 'तस्याभिप्रायमाह— उत्तरमिति । ग्राहकाभावात्तु तदानीमग्रहणम् । तदभावश्च तत्कारणस्य लिङ्गस्य ज्ञाततादिपदास्पदस्याभावात्' इत्यत्र सुचरितमिश्रीयकाशिकायाम् एतदनुसारेणैव अस्य श्लोकस्य व्याख्याने न्यायरत्नाकरे 'ज्ञानक्रिया हि सकर्मिका कर्मभूतेऽर्थे फलं जनयति पाकादिवत् ।

## श्रीभाष्यम्

**अतोनानुभूतिरनुमीयते नापि ज्ञानान्तरसिद्धा ।**

## श्रुतप्रकाशिका

इति व्यवहारश्चेष्टोघटोद्दिष्टोघट इतिवदन्यथासिद्ध इत्यशेषशब्दाभिप्रायः । नहीच्छाजन्येनार्थगतेष्टत्वेनेच्छाऽनुमीयते । घटः प्रकाशतइति घटकर्तृकतया प्रकाशःप्रतीयते । घटमनुभवतीति घटकर्मकतयाऽन्यकर्तृकतयाचानुभवः प्रतीयते एवमेकस्यैव कर्मकर्तृव्यवहारानुपपत्त्या कल्प्यतइतिचेन्न कारकभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावात् । यथा परशुमुद्यम्य वृक्षेनिपातयति पशुरना वृक्षं छिनत्तीत्युक्तौ परशोःकर्मकरणत्वे श्रुते तथापि नार्थभेदः वृक्षस्याधिकरणत्वकर्मत्वे श्रुते तथापि नार्थभेदः । तथा व्यवहारभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावान्नव्यवहारः प्राकट्यकल्पकइत्यभिप्रायेणचाशेषव्यवहारोपपत्ताविल्युक्तम् । घटःप्रकाशतइति व्यवहारो घटगतातिशयेन विना नोपपद्यते अन्यथा पटेऽपि तस्य व्यवहारस्य प्रसङ्गात् । सचातिशयः प्राकट्यमितिचेन्न योऽतिशयोव्यवस्थापकः स कथं घटएवस्यान्नपटे इन्द्रियसंयोगवशादिति चेत् । तेन ज्ञानमेवव्यवस्थाप्यतां किमतिशयान्तराभ्युपगमेनेत्ययमर्थोऽप्यशेषव्यवहारशब्देनाभिप्रेतः ॥

**यत्तु** घटोऽयमित्यनुभववेळायां नानुभूत्यनुभवइति । तन्न अनुभूयतइति शब्दाप्रयोगस्याविवक्षानिबन्धनत्वेनाननुभवप्रयुक्तत्वाभावात् लोकोह्यनुभूतक्तत्स्नार्थविवक्षाऽस्तिचेत् तं सर्वं वदति एकदेशविवक्षाऽस्तिचेत् अनुभूतैकदेशं वदति एवं एकदेशविवक्षाऽपि नास्तिचेत् न किंचिदपि वदति अतोनुभूयतइति शब्दाप्रयोगो नतदप्रकाशत्वहेतुः इदमप्यशेषव्यवहारशब्देनाभिप्रेतम् । विकलस्याविकलस्यापि व्यवहारस्याशेषशब्देन क्रोडीकर्तुं शक्यत्वात् एवं व्यवहारस्यान्यथासिद्धत्वादननन्यथासिद्धस्यैव कल्पकत्वान्नप्रकाशः कल्प्यइत्यर्थः ॥

**प्राकट्यानु**मेयत्वानुपपत्तिं निगमयति । **अतइति** । अतः अनुपलब्धिव्यवहारान्यथासिद्धिभ्यां प्राकट्याभावात्— अनुभूतिर्नप्राकट्यानुमेयेत्यर्थः मानसप्रत्यक्षवेद्यत्वानुपपत्तिमभिप्रेत्याह । **नापिज्ञानान्तरसिद्धेति** । इदमत्र परोक्तमनुमानं ज्ञानं मानसप्रत्यक्षग्राह्यं क्षणिकत्वेसत्यात्मविशेषगुणत्वात्सुखदुःखप्रयत्नादिवदिति आत्मविशेषगुणत्वादित्युक्ते धर्मादिष्वनैकान्त्यं स्यादिति तद्व्यावृत्त्यर्थं क्षणिकत्वेसतीत्युक्तम् । क्षणिकविशेषगुणत्वादित्युक्तेशब्देव्यभिचारः । क्षणिकात्मगुणत्वादित्युक्ते * आत्ममनस्संयोगे व्यभिचारस्स्यादिति तत्परिहारार्थमात्मविशेषशब्दौ तदिदमपनुपपन्नम् । क्षणिकत्वगुणत्वयोरन्यतरासिद्धत्वात् दृष्टान्तश्चसाधनविकलः ॥

**किंच** यन्मानसप्रत्यक्षवेद्यं * तदबुभुत्सितग्राह्यं दृष्टं यथा सुखादि अतश्च तद्विषयं ज्ञानं नियतमिति वक्तव्यम् । तस्माद्घटादिज्ञानविषयं यज्ज्ञानं * तस्याबुभुत्सितग्राह्यत्वान्मानसप्रत्यक्षवेद्यत्वं स्यात् । तद्विषयज्ञानस्यापि तथेत्यनन्तसंविदावली

## गूढार्थसङ्ग्रहः

तच्च फलं ऐन्द्रियिकज्ञानजन्यमापरोक्ष्यम् । लिङ्गादिज्ञानजन्यं तु पारोक्ष्यमित्युच्यते । तदेव च फलं कार्यभूतं कारणभूतं विज्ञानमुपकल्पयतीति सिध्यत्यप्रत्यक्षमीप ज्ञानम्' इति । तदेवमविवादासिद्धेऽर्थगते अतिशये तेनैव ज्ञानस्यानुमानं सम्भवति ।' इति च शास्त्रदीपिकायांचसाधितः । अतः ' अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेन अनुभूतिरनुमीयते इति ' भाष्योक्तिर्युक्ता ॥ भट्टमते अनुभवस्यानुमेयत्वं आत्मनो मानसप्रत्यक्षविषयत्वं कस्यापि न स्वयंप्रकाशता । नैयायिकमते आत्मनो ज्ञानस्य च मानसप्रत्यक्षविषयत्वमेव स्वयंप्रकाशत्वं द्वयोर्नास्तीति तेषामपि सम्मतमिति तन्मतनिरसनमन्तरा अनुभवाभिन्नस्यात्मनः न स्वयंप्रकाशता स्थापिता भवतीति नैयायिकमतमपि दूषयति । **नापिज्ञानान्तरासिद्धेति** ॥

श्रीभाष्यम्

**अपितु सर्वंसाधयन्त्यनुभूतिस्स्वयमेवसिध्यति । प्रयोगश्च अनुभूतिरनन्याधीनस्वधर्मव्यवहारा**

श्रुतप्रकाशिका

समुदायस्यावर्जनीयत्वाज्ज्ञानान्तरानवकाशस्स्यात् । मानसग्राह्यत्वस्याबुभुत्सितग्राह्यत्वव्याप्यत्वं नास्ति स्वापादावुछ्वासनि* श्वासप्रयत्नेसत्यपि तद्ग्रहणाभावादितिचेन्न तदानीं जीवात्मनिप्रयत्नस्यैवाभावात् । देहधारणादयःपरमात्मसङ्कल्पाधीनास्तदा- नीमितिहिवेदान्तिनः **'अन्तराभूतग्रामवत्'** इत्यधिकरणेऽयमर्थस्सुनिर्णयः । स्वापे देहपरिवर्तनादिस्त्वङ्गप्रत्यङ्गतोदादंश मशकादिजन्यदुःखादिनावाऽत्यल्पप्रबोधेसति भवति । तदानींच प्रयत्नोधीविषयः अतोहेतोरव्यभिचारान्मानसग्राह्यं सर्वमबुभु- त्सितग्राह्यमित्यनवस्थास्यादेव यदि बुभुत्सितग्राह्यं तर्ह्यन्योन्याश्रयणं * ज्ञानेसतीच्छा इच्छायां सत्यांज्ञानमिति ॥

**किंच** मानसप्रत्यक्षवेद्यस्य बुभुत्सितग्राह्यत्वेऽपि सुखादिषूपलब्धिनियमदर्शनाद्बुभुत्सानियमः कल्प्यतइति तद्वदेवज्ञाने ऽपि बुभुत्सानियमसिद्धेरुपलब्धिश्चनियतास्यात् । अतोबुभुत्सान्तरितज्ञानपरम्पराया अविरतिस्स्यात् । * ज्ञानं बुभुत्सितग्राह्यं सुखादितु नेतिचेन्न मानसप्रत्यक्षवेद्यत्वाविशेषे नियामकाभावात् । सुखादिषु घटादिविषयप्रथमज्ञानेच्च बुभुत्सा द्वितीयादौ तु नेतिचेन्न नियामकाभावात् मानसग्राह्यत्वाविशेषात्प्राप्तांबुभुत्सां कोवारयेत् । मानसग्राह्यत्वे सतिहि बुभुत्सा सुखादिकं घट दिविषयप्रथमज्ञानंच मानसग्राह्यं द्वितीयादिज्ञानं न मानसप्रत्यक्षवेद्यमितिचेन्न तत्रापि नियामकाभावात् ॥

किं च क्षणिकात्मविशेषगुणत्वे सत्यपि द्वितीयादिज्ञानं नमानसग्राह्यं चेत् हेतोरनैकान्त्यम् । * यदा प्रत्यक्षेण गृह्यते तदा मानसग्राह्यमिति चेत् तर्हि पक्षो हेतुश्च * प्रत्यक्षग्राह्यशब्देन विशेष्यौ स्याताम् । किं च अन्यैरप्युक्तानि दूषणान्त- राण्युच्यन्ते । यदि द्वितीयं ज्ञानं न मानसग्राह्यम् तस्य द्वितीयस्य निष्प्रमाणत्वेन शून्यता च स्यात् । ततश्च प्रथमस्य तत्तद्विषयघटादेरपि शून्यता स्यात् । द्वितीयादिज्ञानं स्वतस्सिद्धं चेत् प्रथमज्ञानमपि तथा स्यादिति । एवमाद्यभिप्रायेण 'नापि ज्ञानान्तरसिद्धा' इत्युक्तम् । अथ पारिशेष्यात्स्वयंप्रकाशत्वं सिद्धमित्याह— **अपितिवति । सर्वमिति** । अन्यथा संविदश्शून्यत्वेन तदधीनसिद्धि सर्वं शून्यं स्यादिति तत्परिहाराय स्वयंप्रकाशत्वमवश्याभ्युपगन्तव्यमित्यभिप्रायेण 'सर्वं साधयन्त्यनुभूतिः स्वयमेव सिद्ध्यति' इत्युक्तम् । यथा संवित्सिद्धौ—

**तदेवापश्यतां सर्वशून्यत्वाद्बिभ्यतां सताम् । गतिस्स्वयंप्रकाशत्वादृते नान्योपलभ्यते** ॥ इति ॥

**अथ** तर्कानुग्राह्यं स्वयंप्रकाशत्वे प्रमाणमुपन्यस्यति **प्रयोगश्चेति** । न केवलं पारिशेष्यात्स्वतस्सिद्धत्वं, साधकप्रमा णमप्यस्तीति चार्थः । अनुभूतिरित्यादिनाऽनुमानद्वयं ग्रन्थलाघवार्थमविभागेनोक्तम् । अनुभूतिरनन्याधीनस्वधर्मा स्वस- म्बन्धादर्थान्तरे तद्धर्महेतुत्वात्, अनुभूतिरनन्याधीनस्वव्यवहारा स्वसम्बन्धादर्थान्तरे * तद्व्यवहारहेतुत्वादित्येवं विभागः ।

गूढार्थसङ्ग्रहः

विवरणे विषये प्रकाशादिव्यवहारानिमित्तत्वादनुभवस्य सजातीयप्रकाशान्तरनिरपेक्षप्रकाशमानत्वं साधितम् । तमेव हेतुं परिष्कृत्य प्राकाश्यानुमेयत्वमपि निरस्यति— **अनुभूतिरनन्याधीनस्वधर्मव्यवहारेत्यादिना** । 'यथा रूपादिः' इत्यत्र आदिपदार्थः विवरणोक्तप्रदीपालोकः । अत्र श्रुतप्रकाशिकोक्तानुमाननिष्कर्षोपपत्तिः शतदूषणीव्याख्यायां चण्डमारुते (२०) वादे द्रष्टव्या । अत्रानुमानद्वये अनन्याधीनस्वव्यवहारा स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वादिति विवरणोक्तानु- मानं विवक्षितम् । विवरणे च सजातीयप्रकाशान्तरनिरपेक्षप्रकाशत्वं विषयप्रकाशादिव्यवहारनिमित्तत्वेन साधितम् ।

### श्रीभाष्यम्

**स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्।**

### श्रुतप्रकाशिका

अत एव हि परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वमित्युत्तरत्र वक्ष्यते । प्राकट्यमभ्युपगम्य तदुपजविनेन प्रथमानुमानमुक्तम्। तदनुपजीव्य तु द्वितीयम् । प्राकट्याभ्युपगमस्य न स्वप्रकाशताविरोधित्वम्, तस्य ज्ञानानुमापकत्वानभ्युपगमात्। धर्मवत्त्वेऽनन्याधीनधर्मवत्त्वे च साध्ये सिद्धसाध्यता स्यात्; अनुभूतित्वादिधर्माणां हेत्वन्तरनैरपेक्ष्यात्। नह्यनुभूतित्वजातिर्हेत्वधीना; नित्यत्वात्। जात्यनभ्युपगमेऽपि अनुभूतित्वस्य * अनुभूतिसामग्रीव्यतिरिक्तहेत्वनपेक्षत्वात् सिद्धसाध्यता । अतोऽनन्याधीनस्वधर्मेत्युक्तम्। स्वस्य धर्मः स्वोत्पाद्यतया स्वसम्बन्धी धर्मस्स्वधर्मः; परत्र * स्वसाध्यधर्मात्यन्तसजातीयधर्म इत्यर्थः। * अर्थान्तेर तद्धर्महेतुत्वादिति हेतूक्तेः। स्वधर्मनिर्दिष्टधर्मो हि तच्छब्दोक्तः । परत्र स्वसाध्यधर्मात्यन्तसजातीयः * स्वस्मिन्नवश्यंभाविधर्मः स्वधर्मत्वेन विवक्षितः । अत एव स्वस्मिन् रूपित्वानापादनात् रूपस्य दृष्टान्तस्य साध्यविकलत्वशङ्का व्युदस्ता स्यात् । दण्डान्तरनिरपेक्षं स्वस्मिन्दण्डित्वमनापादयति दण्डे व्यभिचारश्च परिहृतस्स्यात्। अन्यशब्दश्च स्वात्यन्तसजातीयान्तरपरः । अन्यथा हेतुमात्रनिरपेक्षत्वे दृष्टान्तस्य साध्यविकलत्वं स्यात्। चक्षुराद्यपेक्षं हि रूपस्य चाक्षुषत्वम् । तादृशहेत्वपेक्षानियमराहित्यमनन्याधीनशब्देन विवक्षितम्। अन्यापेक्षामात्रविरहे साध्ये * परज्ञानस्यानुमेयत्वदर्शनेन बाधितत्वप्रसङ्गात्। * नहि ज्ञानान्तरागोचरत्वमेतदनुमानसाध्यम्। अपि तु स्वात्यन्तसजातीयानपेक्षप्रकाशार्हत्वमात्रम्। तच्च परज्ञानस्य सम्भवतीति न बाधितविषयकत्वम् ॥

**अनन्याधीनस्वव्यवहारेत्यत्रापि** व्यवहारवत्त्वे साध्ये सिद्धसाध्यता; अतोऽनन्याधीनशब्दः। अन्यशब्दस्यात्यन्तसजातीयपरत्वात् वागाद्यपेक्षया बाधितत्वशङ्का परिहृता स्यात् । घटादीनां हानादिव्यवहारे स्वात्यन्त *सजातीयानपेक्षो हेतुरनुभूतिरिति सिद्धसाध्यत्वव्युदासाय स्वशब्दः। सच्च परत्र स्वसाध्यव्यवहारात्यन्तसजातीयपरः । व्यवहारस्यात्यन्तसजातीयत्वं नाम अभिन्नप्रवृत्तिनिमित्तकत्वम्। व्यवहारानुगुण्यमात्रं हि प्रकाशत इति व्यवहारस्य निमित्तम् । परज्ञानव्यवहारे कालात्ययापदेशपरिहाराय अपेक्षानियमराहित्यविवक्षा। हेतुमाह– **स्वसम्बन्धादिति**। धर्महेतुत्वे व्यवहारहेतुत्वे च हेतौ विवक्षिते * ऽनैकान्त्यं स्यादिति तत्परिहाराय तच्छब्दः । स्वस्य यो धर्मो व्यवहारश्च तदत्यन्तसजातीयो धर्मो व्यवहारश्च तच्छब्दविवक्षितः। स्वस्याग्निसम्बन्धात् स्वस्मिन् पूर्वरूपसजातीयरूपान्तरतद्व्यवहारहेतुर्घटः अग्निसापेक्ष इति तत्र व्यभिचारपरिहाराय 'अर्थान्तरे' इत्युक्तम् । * किं च अर्थान्तरशब्दो * निर्दिष्टजातीयाद्विजातीयपरः। तेन परस्मिन् द्रव्ये संयुक्तत्वतद्व्यवहारहेतोः द्रव्यस्य परद्रव्यसापेक्षतयाऽनैकान्त्यं परिहृतं स्यात् । द्रव्यं हि द्रव्यस्यात्यन्तसजातीयम् ॥

**ननु** घटो हि पटे संयुक्तत्वादिकमापादयन् स्वस्य तथात्वे घटान्तरापेक्ष इत्यनैकान्त्यम्? नैवम्। सजातीयापेक्षानियमविरहरूपस्य साध्यधर्मस्य तत्र विद्यमानत्वात्। * नहि घटस्स्वस्य संयुक्तत्वादौ स्वात्यन्तसजातीयं घटमेवापेक्षते

### गूढार्थसंग्रहः

प्रदीपालोकश्च दृष्टान्तः। अत्र अद्वैतसिद्धौ –– 'ज्ञानप्रभानुगतं च प्रकाशत्वम्। आवरणाभिभावकत्वम्। तच्च ज्ञानस्य चित्त्वेन अन्यत्र तेजोविशेषत्वादिनेत्यन्यदेतत्। आवरणत्वं च अज्ञानतमसोरर्थव्यवहारप्रतिबन्धकत्वमनुगतमेव। तच्चाज्ञानस्य तमसो ज्ञानप्रतिबन्धकद्वारेत्यन्यदेतत्' इत्युक्तम् । अत्र प्रकाशत्वनिर्वचनादिक्लेशः। व्यवहारघटितस्वप्रकाशत्वम-

## श्रीभाष्यम्

**यस्स्वसम्बन्धादर्थान्तरे यद्धर्मव्यवहरहेतु स्सतयोः स्वस्मिन्ननन्याधीनोदृष्टः यथा रूपादि श्चाक्षुषत्वादौ। रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादिजनयन् स्वस्मि न्न रूपादिस-म्बन्धाधीनश्चाक्षुषत्वादौ अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशतइति व्यवहारेच**

## श्रुतप्रकशिका

इति नियमोऽस्ति। * पुत्र पुत्रत्वतद्व्यवहारेहेतौ पितरि स्वस्य पुत्रत्वव्यवहाराय पित्रन्तरसापेक्षे व्यभिचारपरिहाराय स्वस-म्बन्धादित्युक्तम्। विद्यमानस्वस्वसम्बन्धो विवक्षितः। परत्र * स्वसम्बन्धतुल्यकालस्वगतधर्मात्यन्तसजातीयधर्म तत्सापेक्ष-व्यवहारहेतुत्वादित्यर्थः। * नहि पित्रादिप्रवासनिधनयोः पुत्रादौ पुत्रत्वं तद्व्यवहारश्चापगच्छति। अत एव स्वास्मिन्नन-न्यापेक्षद्वैधीभावमनापादयति परद्वैधीभावेहेतौ द्रव्ये व्यभिचारश्च दूरोत्सारितः॥

**ननु** सिद्धान्तिनोऽप्यभिमतमिदमनुमानम्। चेतनः स्वसम्बन्धतुल्यकालं शरीरत्वं शरीरे जनयन् स्वास्मिन् शरीरत्वतद्व्य वहारयोः नान्यानपेक्षः। अपितुपरमात्मसापेक्षः परमात्माच चेतनत्वादत्यन्तसजातीयः। अतस्तत्रानैकान्त्यमिति। नैवम्। स्वव्यापकधर्महेतुत्वस्य विवक्षितत्वात्। नहि चेतनत्वव्यापकं शरीरत्वम्; ईश्वरस्य चेतनस्यापि शरीरत्वाभावात्। अतस्स्वधर्म-शब्दाभिप्रेतेन स्वावश्यंभावित्वेन परिहारः। *एतदुक्तं भवतिं। धर्मशब्दः प्रकाशपरोवा धर्ममात्रपरो वा। अन्यशब्दश्चान्यमा त्रपरो वा स्वात्यन्तसजातीयभूतान्यपरो वा। तत्र हेतुमात्रानपेक्षप्रकाशत्वे दृष्टान्तस्य साध्यवैकल्यम्। रूपं हि चक्षुराद्यपेक्ष प्रकाशम्। स्वात्यन्तसजातीयानपेक्षप्रकाशत्वे साध्ये व्यर्थविशेषणत्वं हेतोः; हेतुत्वमात्रेण साध्यसिद्धेः। नहि यस्य कस्य चिद्धेतुस्सन् घटादिः स्वप्रकाशे घटान्तरादिकमपेक्षते। हेत्वनपेक्षधर्मत्वेऽनुभूतित्वादिना सिद्धसाध्यता, परश्वधादिष्वनैका-न्त्यं च। काष्ठद्वैधीभावे हेतोः परश्वधस्य स्वद्वैधीभावे हेत्वन्तरसापेक्षत्वात्। स्वात्यन्तसजातीयानपेक्षधर्मत्वेचानुभूतित्वादिना सिद्धसाध्यता विषयप्रकाशके पदज्ञाने लिङ्गापेक्षप्रकाशत्वदर्शनाद्बाधश्च। रूपे रूपान्तरानपेक्षस्वगतरूपित्वहेतुत्वाभावाद्दृष्टा-न्तस्य साध्यविकलता। पुत्रगतपुत्रत्वहेतौ पित्रन्तरसापेक्षपुत्रत्वधर्मे पितर्यनैकान्त्यंच परद्रव्यगतसंयुक्तत्वहेतौ द्रव्यान्तरसा-पेक्षसंयोगे द्रव्येचानैकान्त्यम्॥

अत एवमादिदोषपरिहारार्थमित्थं प्रयोक्तव्यम्। * अनुभूतिस्स्वजन्यपरगतधर्मात्यन्तसजातीयधर्मभाक्त्वे स्वात्यन्तस-जातीयापेक्षानियमरहितेति प्रतिज्ञा। * स्वविजातीये स्वावश्यम्भाविधर्मात्यन्तसजातीयस्वसम्बन्धतुल्यकालधर्महेतुत्वादिति हेतुः। तथाऽनुभूतिस्स्वजन्यपरगतव्यवहारात्यन्तसजातीयव्यवहारभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा। स्वविजातीये स्वावश्यम्भाविव्यवहारात्यन्तसजातीयस्वसम्बन्धतुल्यकालव्यवहारहेतुत्वादितिहेतुः। व्यवहारस्य स्वावश्यम्भा-वित्वं नामावश्यम्भाविधर्मनिन्धनत्वम्। व्याप्तिप्रदर्शनपूर्वकं दृष्टान्तमाह। **यइति**। साध्यसाधनमौं सपक्षे दर्शयति। **रूपा दिर्हीति**। पक्षधर्मताबलसिद्ध(धर्म)माह। **अतोऽनुभूतिरिति**। **प्रकाशतइतिव्यवहारइति**। अनुभूतिः प्रकाशतइति व्यव हारे अनुभूतिरिति व्यावहारेचेत्यर्थः॥

## गूढार्थसङ्ग्रहः

द्वैतसिद्धावेव परिष्कृतम्। तत्रच नायं क्लेश इत्यभिप्रेत्य व्यवहारघटितमेव स्वप्रकाशत्वं भगवता साधितम्॥ ‘विवा-दाध्यासिता संवित् स्वसमानाश्रयस्वसमानकालस्वगोचरसंवेदनाविरहप्रयुक्तव्यवहाराविरहा न भवति संवित्त्वात्; अनन्तर व्यवह्रियमाणसंविद्वत्’ इति प्रमाणमालयामुक्तम्॥

### श्रीभाष्यम्

**स्वयमेवहेतुः । सेयं स्वयम्प्रकाशाऽनुभूतिर्नित्याच**

### श्रुतप्रकाशिका

**ननु** स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वं * सोपाधिकं सम्बन्धविशेषादर्थान्तरे तद्धर्मव्यवहारहेतुत्वस्यैव स्वस्मिंस्तद्धर्मव्यवहारयोरनन्याधीनत्वे प्रयोजकत्वात् सच सम्बन्धविशेषअश्रयाश्रयिभावरूपः । सतु रूपादावस्ति नतु पक्षइति नैतत् अस्य साध्यसमव्याप्त्यभावेनोपाधिकत्वाभावात् । आश्रयाश्रयिभावविरहेऽपि सम्बन्धमात्रादर्थान्तरे प्रकाशतइति व्यवहारहेतोर्दीपस्य स्वस्मिन्नपि तद्व्यवहारेत्यन्तसजातीयानपेक्षत्वंहि दृष्टम् । पूर्वं ज्ञानस्य परप्रकाशवादिभिस्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिर्व्याहतिश्चोक्ते तत्र घटोऽयमित्यनुभववेळायातनुभूयतइति शब्दस्याप्रयोगादसिद्धिरुक्ता । शाब्दव्यवहारवैकल्यपौष्कल्ययोर्विवक्षाविशेषहेतुकत्वेनार्थानुभवेऽननुभवेच प्रयोजकत्वाभाववचनादाद्धिः परिहृता व्याहतिश्चनास्ति तथाहि अङ्गुल्यग्रस्य स्वात्मस्पर्शादिषु व्याहतिरुपलब्धिनिन्धना । दीपादिषुच्च प्रकाश्यत्वप्रकाशकत्वे दृश्यते निरूप्यमाणे कर्मकर्तृभावविरोधश्च नास्ति । निरासकोदीपः निरसनीयं तमः दीपउत्पादकः ज्ञानमुत्पाद्यं ज्ञानमुत्पादकं व्यवहार उत्पाद्यइति ॥

**किंच** यद्यपि कर्मकर्तृभावस्य स्वतोविरोधाच्छेदकत्वमुपलब्धिसिद्धम् तथापि ज्ञापकेषु विरोधनियमाभावश्चोपलब्धिसिद्धः । ज्ञातरि मनसि शब्दशब्दे पदमितिपदे तथेदृशार्थान्तरेष्वप्यविरोधोह्युपलभ्यते । उत्पादकेष्वेवतु विरोधनियमः । तत्रचाकारान्तरेणचेन्नविरोधः । ननु घटादिषु व्यवहारार्हत्वं स्वव्यतिरिक्तज्ञानहेतुकं दृष्टम् । ज्ञाने व्याप्तिभङ्ग्येतेच्चेद्व्यवहारस्य ज्ञानपूर्वकत्वव्याप्तिभङ्गेन * अज्ञातस्यैव ज्ञानस्य व्यवहारास्पदत्वं स्यात् ? नैवम् । घटादिज्ञातृव्यातिरिक्तज्ञेयदृश्यत्वेऽपि स्वेनैव ज्ञात्रा ज्ञातरि दृश्यत्वमिति सर्वाविगीतमिति तत्र परेणापि कर्मकर्तृविरोधव्याप्तिभङ्गोऽभ्युपगन्तव्यः । तथा घटादौ स्वव्यतिरिक्तकरणजन्यज्ञानदृश्यत्वेऽपि मनसि तद्भग्नम् । स्वानुमाने मनस एव करणत्वात् । तथा सर्ववाच्यानां स्वव्यतिरिक्तशब्दवाच्यत्वेऽपि शब्दशब्दे पदपदेच तद्भग्नम् । घटादीनां स्वव्यातिरिक्तवाग्व्यवहार्यत्वेऽपि वागिन्द्रिये तद्भग्नम् । अतः कर्मकर्तृभावस्य विरोधिव्याप्तिर्नास्ति । व्यवहारस्य ज्ञानपूर्वकत्वं न कैश्चिदपि भग्नम् । ज्ञानव्यवहारस्य * ज्ञानकर्मतापूर्वकत्वविरहः प्रसज्यते चेन्नानिष्टः । अवभासपूर्वकत्वस्याभग्नव्याप्तिकत्वा न्न तद्विरहप्रसङ्गः । तस्मादवभासमानस्यैव ज्ञानस्य व्यवहारास्पदत्वम् । अतः स्वविषयपरविषयव्यवहारानुगुण्यं ज्ञानस्य युक्तम् ॥

**अथ** ज्ञातृज्ञेयनिरसनं ज्ञानस्य स्वप्रकाशत्वं च बौद्धपक्षेऽपि समानमिति तद्व्यावर्तकं ज्ञानस्य नित्यत्वं साधयति— **सेयमिति** । सेयम्— परमार्थभूतसन्मात्रैक्या प्रमाणाविषयभूताचेत्यर्थः । * यद्वा— स्वयंप्रकाशत्वहेतुभूतधर्मवत्तया प्रसिद्धेत्यर्थः । स्वयंप्रकाशत्वस्य नित्यतोहेतुत्वविवक्षया स्वयंप्रकाशेत्युक्तम् । चस्साध्यसमुच्चेय सौगतसाम्यशङ्कानिवृत्तौ वा । कुत

### गूढार्थसंग्रहः

'यद्यपि कालान्तानुपादानेऽपि असदभिमतं सिध्यत्येव ; तथाऽपि गुरुमते ज्ञाने सति तास्मिंस्तदाश्रये च नतत्समानाधिकरणं ज्ञानान्तरं स्वीक्रियते । तदभावे तदव्यवहारादर्शनात् । तदीयत्वेन च स्वस्वाश्रययोर्व्यवहारसम्भवात् । अतीतादिज्ञानेतु ज्ञानान्तरं स्वीक्रियत एव । तदभावे तदव्यवहारदर्शनात् । तथाऽपि तन्मतमाश्रित्यैतदनुमानमिति कालान्तमुपात्तम्' इति लघुचान्द्रिका ॥

**सेयं स्वयम्प्रकाशाऽनुभूतिर्नित्याचेत्यादि** । एतदारभ्य 'स्वप्रकाशरूपा सैवात्मा' इत्यन्तमिष्टसिद्धिविवरणम् । इष्टसिद्धौ च 'नच स्वतस्सिद्धस्य प्रागभावादयः स्वतोऽन्यतो वा सिध्यन्ति । अतोऽजा । अतोऽस्या नान्येऽपि भावानि-

## श्रीभाष्यम्

**प्रागभावाद्यभावात्। तदभावश्च स्वतस्सिद्धत्वादेव। नह्यनुभूतेस्स्वतस्सिद्धायाः प्रागभाव-
स्स्वतोऽन्यतोवावऽगन्तुं शक्यते। (तथाहि) अनुभूतिस्स्वाभावमवगमयन्ती सती तावन्नावग-
मयति। तस्यास्सत्त्वे विरोधादेव तदभावोनास्तीति कथं सा स्वाभावमवगमयति? एव-
मसत्यपि नावगमयति। अनुभूतिस्स्वयमसती स्वाभावे कथं प्रमाणं भवेत्? नाप्यन्यतोऽव-
गन्तुं शक्यते अनुभूतेरनन्यगोचरत्वात् अस्याः प्रागभावं साधयत् प्रमाणमनुभूतिरिय-
मिति विषयीकृत्य तदभावं साधयेत्। स्वतस्सिद्धत्वेन इयमिति विषयीकारानर्हत्वान्नतत्प्रा-
गभावोऽन्यतश्शक्यावगमः। अतोऽस्याःप्रागभावाभावादुत्पत्तिर्नशक्यते**

## श्रुतप्रकाशिका

इत्यत्राह। **प्रागभावादीति**। सच्च कथमितिशङ्कायां ग्राहकाभावादित्याभिप्रायेणाह। **तदभावश्चेति**। स्वतस्सिद्धत्वेन
प्रागभावाद्यभावं विकल्पमुखेन प्रतिपिपादयिषुर्विकल्पशिरोद्वयेऽनुपपत्तिं प्रतिजानीते। **नहीति**। स्वतःपक्षेऽनुभूतिः किं-
सती स्वाभावमवगमयति उतासतीति विकल्पमभिप्रेत्य सत्त्वपक्षं दूषयति। **अनुभूतिरिति**। कुतइत्यत्राह। **तस्याइति।**
ग्राह्याभावादित्यर्थः। अनुभूतिः किमनुमित्यादिरूपा स्वाभावमवगमयति उत प्रत्यक्षरूपेति विकल्पे लिङ्गाद्यभावात्प्रथमः
कल्पो न सम्भवतीत्याभिप्रेत्य * द्वितीयःकल्पोग्राह्याभावाद्दूषितः, पूर्वाभिप्रेतविकल्पशिरसोरसत्वपक्षं ग्राहकाभावेन दूषयति।
**एवमिति**। पूर्वतराभिहितयोर्विकल्पशिरसोरन्यतम इति पक्षं दूषयति। **नापीति**। अनुभूतिरनन्यगोचरास्यात् ततः किम-
भावाग्रहणस्य अभावोह्यन्यगोचरत्वमर्हतीत्यत्राह। **अस्याइति**। अस्याः नह्यन्यस्य प्रागभावो ग्राह्यः। अपित्वनुभूतेरेव
तस्मात्तां विषयीकृत्यैव तदभावोग्राह्यः तस्या विषयीभावानर्हत्वान्नतत्प्रागभावग्रहणं शक्यमित्यर्थः एवं प्रागभावाभावादुत्प-
त्त्यभावं ततश्च परिणामादिसर्वविकारान्तराभावमप्युपपादयति। **अतोऽस्या इति**। अतः स्वतःपरतः पक्षयोरुभयोरप्यभावस्य
दुर्ग्रहत्वादित्यर्थः विकारमात्रविरहेसाध्येऽनुत्पन्नत्व मन्तवर्तिप्रागभावेऽनैकान्तिकंस्यात् अतोभावरूपविकारविरहस्य साध्यत्व-
ज्ञापनाय भावशब्दः॥

## गूढार्थसंग्रहः

कारः। जन्मादित्वात्तेषाम्। चेत्यानां च न चिद्धर्मत्वं रूपादिवत्। अतोऽमेया। नास्या मेयो धर्मोऽप्यस्तीत्यर्थः।
अतोऽनन्ता। अन्तस्यापि मेयत्वेऽतद्धर्मत्वात्। अमेयत्वेऽप्यनन्यत्वा न्नतद्वत्ता चितः। कालतस्तावदानन्त्यं सिद्धं जन्मा
भावात्। अत एव देशतो वस्तुतो ऽपि। अन्यथा घटादिवज्जन्मप्रसङ्गात्। नह्यजं विभाग्यस्ति' इत्यारभ्य
'नचाभावं विना जन्मादिसिद्धिः। नह्यज्ञाते प्रागभावे कस्यचित् जन्मानिश्चयः स्यात्। नह्यदृष्टस्य दृष्टिमात्रं जन्म
साधयेत्। नचादर्शनेऽसिद्धे अदृष्टदृष्टिस्सिद्ध्येत्। अतः प्रागभावाभावे दृश्यस्य च दर्शनस्य च जन्माभावः। जन्मा-
भावे नान्येऽपि भावविकारास्स्युः। अतः कूटस्थं सदैकरूपं वस्तु स्वतस्सिद्धमिति। एवं नाशादयोऽपि निरूप्यमाणाः नाव
तिष्ठन्ते इति तस्मादनन्तैवानुभूतिरिति स्थितम्' 'नन्वनुभवित्रात्मना विना नास्त्यनुभूतिः तत्कथं सा अनन्ता? नैषदोषः
यतस्सैव सः। कथम्? उच्यते। सोऽप्यनुभूतिस्वभावश्चेत् नास्या भेदः। अन्यथा सोऽनात्मेति नानुभविता। अतस्सैवा-
त्मा। अनन्तत्वाच्च। अथवाऽनन्तत्वात्सैवपरमात्मा। तल्लक्षणस्य तस्यां परिपूर्णत्वात्। अन्यत्वे तदयोगाच्च। अतोऽनन्त-
त्वात्सैव परमात्मा' इतिचोक्तम्। अत्र 'स्वयंप्रकाशा अनुभूतिर्नित्याच' इत्यत्र नित्यत्वं कालतः आनन्त्यरूपम्॥

## श्रीभाष्यम्

**वक्तुमित्युत्पत्तिप्रतिसंबद्धाश्चान्येऽपि भावविकारास्तस्यानसन्ति। अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते व्यापकविरुद्धोपलब्धेः। नह्यनुत्पन्नं नानाभूतं दृष्टं, भेदादीनामनुभाव्यत्वेनच रूपादेरिवानुभूतिधर्मत्वं नसम्भवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्याधर्मः यतो निर्धूतनिखिलभेदासंवित्**

## श्रुतप्रकाशिका

* **यद्वा** भावस्य विकारइति षष्ठीसमासः। ततश्च * भावाभावरूपविकारमात्रविरहे साध्ये प्रागभावे व्यभिचारशङ्कनिवारणार्थं * भावत्वे सत्यनुत्पन्नत्वं विकारान्तराभावे प्रयोजकमिति फलितम्। अनुभूतिर्नान्तवती भावत्वेसत्यनुत्पन्नत्वात् यदन्तवत्तद्भावत्वेसत्यनुत्पन्नं न भवति यथा घटः इति ॥ बौद्धाभ्युपगतक्षणिकत्वव्यावृत्त्यर्थं नित्यत्वाय अनुत्पत्तिस्तद्व्याप्तविकारान्तराभावश्च साधितौ। अथ तदभ्युपगतानेकत्वव्यावृत्त्यर्थं सजातीयभेदं व्युदस्यति—**अनुत्पन्नेयमिति**। **व्यापकविरुद्धोपलब्धेः**— नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः। व्याप्तिं दर्शयति – **नहीति**। अस्य ग्रन्थस्य यदनुत्पन्नं तदनानाभूतं दृष्टमित्यर्थो वक्तुं न युज्यते, ब्रह्मव्यतिरेकेणानुत्पन्नस्यानानाभूतस्य कस्यचिन्मायावेदान्तिभिरनभ्युपगमात्। यदनानाभूतं तदनुत्पन्नमित्युक्ते * व्यापकजन्मनिवृत्त्या व्याप्यनानात्वनिवृत्तिरुक्ता नस्यात्। तस्मादयमर्थः। यन्नानाभूतं तदनुत्पन्नं नदृष्टम्। अपितूत्पत्तिमदेव दृष्टमिति जन्मनो नानात्वव्यापकत्वं दर्शितम्। अनेनोत्पत्तिनिवृत्त्या नानात्वनिवृत्तिरित्यर्थसिद्धम्। * यद्वा यथा नह्यनग्नि धूमवद्दृष्टमित्युक्तेऽग्निमदेव धूमवदित्युक्तं स्यात्, तद्वदिहाप्यनुत्पन्नं नानाभूतं नदृष्टमित्युक्ते उत्पत्तिमदेव नानाभूतमित्युक्तं स्यात्। ततश्चोत्पत्तिर्व्यापिकेत्युक्तं भवति। अनुभूतिर्नाना न भवति अनुत्पन्नत्वात्, यन्नानाभूतं तदुत्पत्तिमद्दृष्टं यथा घट इति व्यतिरेक्यनुमानं अनुभूतिं पक्षीकृत्योक्तम्। गगनादिषु व्यभिचारो दुर्वचः। तेषामुत्पत्तिमत्त्वेन वेदान्तिभिरभ्युपगमादिति भावः ॥

एवं सजातीयभेदो निषिद्धः। अस्मिन्नर्थे विकारान्तराभावेच भेदं विकारान्तरं च पक्षीकृत्य अन्वय्यनुमानमाह— **भेदादीनामिति**। आदिशब्देनोत्पत्त्यादयो विवक्षिताः। भेदादयो नानुभूतिधर्माः अनुभाव्यत्वात् रूपादिवदिति व्यावृत्तिरूपधर्मोऽपि नास्तीत्युपपादयति— **अतोऽनुभूतेरिति**। अन्योऽपि— व्यावृत्तिरूपोऽपीति भावः। यद्वा विकारनानात्वजडत्वनिषेधान्नित्यत्वैकत्वस्वयंप्रकाशत्वरूपधर्मवत्त्वशङ्काव्युदासार्थं पूर्वोक्तनानात्वादिव्युदासार्थं च व्यतिरेक्यनुमानमाह— **अतोनुभूतेरिति**। अन्योऽपि- नित्यत्वादिरूपोऽपीत्यर्थः। * अनुभूति र्नव्यावृत्तिरूपधर्मभाक् अनुभवस्वरूपत्वात् यत् व्यावृत्तिरूपधर्मभाक् तदननुभूति दृष्टं यथा घटादीति व्यतिरेकि। यदि व्यावृत्तिरूपधर्मं पक्षीकृत्य अनुभूतिधर्मत्वाभावः साध्यस्स्यात् तदाऽनुभाव्यत्वं हेतुः, यथा रूपादीति सपक्षः। इदमन्वयि। एवं स्वगतभेदो निरस्तः। पूर्वमेव ज्ञेयभेदो निरस्तः ॥ **अत्रायं पुरुषस्स्वयंज्योतिर्भवति** इत्यादिषु वेदान्तवाक्येषु आत्मनो नित्यत्वस्वयंप्रकाशत्वादयः प्रतिपन्नाः अत्र तु संविदो नित्यत्वादिरुच्यते तत्कथं सङ्गच्छत इत्यत्राह – **यत इति**। निर्धूतनिखिलभेदा- * सकलभेदनिषेधेन विजातीयभेदोऽपि निरस्त इति विजातीयभेदस्य ज्ञातुर्मिथ्यात्वेन न स आत्मा। अपितु परमार्थभूता संविदेवात्मेत्यर्थः। * यद्वा

## गूढार्थसङ्ग्रहः

**अनुत्पन्नेयमनुभूतिरित्यादि**। 'संवित् स्वान्तर्गतभेदशून्या भेदोपाधिमन्तरेणाविभाव्यमानभेदत्वात् आकाशवत्' इत्यनुमानं प्रमाणमालायामुक्तम्। ज्ञानानित्यत्वपक्षे तत्तद्व्यक्तिभेदध्वंसप्रागभावसमवायज्ञानत्वजात्याद्यभ्युपगमे गौरवात्।

### श्रीभाष्यम्

**अतएव नास्यास्स्वरूपातिरिक्तआश्रयो ज्ञातानामकश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा**

### श्रुतप्रकाशिका

वेदान्तैरात्मनः प्रतिपादितं सजातीयविजातीयस्वगतनानात्वराहित्यं संविदएवोपपद्यतइति सैवात्मेत्यर्थः। **स्वरूपेति**। * स्वरूपातिरिक्तआश्रयोहि ज्ञाता स नास्ति * संवित्स्वरूपातिरिक्तत्वादेवापरमार्थइति स नात्मेति परमार्थभूता संविदेवात्मेत्यर्थः। **स्वप्रकाशरूपा सैवात्मेति**। वेदान्तैरात्मनः प्रतिपादितं स्वयम्प्रकाशत्वं संविदउपपन्नमिति सैवात्मेत्यर्थः यद्वा

### गूढार्थसंग्रहः

एकत्वाभ्युपगमे च अतिलाघवात्। घटज्ञानं पटज्ञानमिति उपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः। स्वतस्तु ज्ञानं ज्ञानमित्येकस्वरूपत्वावगमात् तदुत्पत्तिविनाशप्रतीत्योश्च अवश्यकल्प्यविषयसम्बन्धविषयतयाऽप्युपपत्तेः। इति सिद्धान्तबिन्दुवाक्यानि अत्र बोध्यानि ॥

**नास्याः स्वरूपातिरिक्तः आश्रयो ज्ञाता नाम कश्चिदस्तीति**। निर्धूतनिखिलभेदत्वेन आश्रयभेदादपि न ज्ञानभेद इति भावः॥ **स्वप्रकाशरूपा सैव आत्मेति**। अहमर्थस्य साक्षिभास्यत्वेन स्वप्रकाशत्वाभावान्नात्मत्वमिति भावः। पञ्चपादिकायाम्— 'अस्मत्प्रत्ययत्वेनाभिमतोऽहङ्कारः। सच इदमनिदंरूपवस्तुगर्भः सर्वलोकसाक्षिकः। तमवहितचेतस्तया निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् स्वानुभवमप्रच्छादयन्तः वदन्तु भवन्तः परीक्षकाः किमुक्तलक्षणं न वेति' इत्येतदनन्तरं 'ननु असंभिन्नेदंरूप एवाहमित्यनुभवः, इति प्रभाकरशङ्कामुत्थाप्य, कथम्' इति समाधानावसरे प्रमातृप्रमेयप्रमितयस्तावदपरोक्षाः। प्रमेयं कर्मत्वेनापरोक्षम्। प्रमातृप्रमिती पुनः अपरोक्षे एव केवलम्। न कर्मतया। प्रमितिरनुभवः स्वयंप्रकाशः प्रमाणफलम् तद्बलेनेतरत्प्रकाशते। प्रमाणं तु प्रमातृव्यापारः फललिङ्गः नित्यानुमेयः। तत्र अहमिदं जानामीति प्रमातुः ज्ञानव्यापारः कर्मविषयः नात्मविषयः। आत्मातु विषयानुभवादेव निमित्तादहमिति फले विषयेन्न अनुसन्धीयते' इत्युक्तम्॥ अत्र विवरणम्— 'ननु इदं रजतमितिवदध्यस्तत्वे अहमितिद्वैरूप्यावभासो वक्तव्य इत्यत आह- सचेदमनिदीमीत। अयो दहतीति दग्धृत्वविशिष्टस्याग्नेरयसश्च द्वैरूप्यावभासवत् अहमुपलभे इति उपलब्धृत्वविशिष्टस्यात्मनः अन्तःकरणस्य च अस्त्येव द्वैरूप्यावभासः। असाधारणक्रियोपरक्तमात्मादिद्रव्यमेव वस्त्वन्तराविशिष्टमवभासत इति भावः। दुःखिप्रेमास्पदरूपेण परिणामितदागमापायद्रष्टृरूपेण अहङ्कारविषयादिषु अनुस्यूतचैतन्यरूपेण अहमिति व्यावृत्तरूपेण च सर्वलोकसाक्षिकं द्वैरूप्यमित्याह सर्वलोकसाक्षिकइति। '**ननु विषयसंविदः आश्रयः आत्मा**। तत्राह जानामीति संविदाश्रयत्वेनाऽहङ्कारः कथमिदमंशस्स्यादिति चोदयति— **ननु किमत्र विवदितव्यमिति**। नन्वयो दहतीत्यादौ अयःपिण्डादिवदकर्तृत्वेऽपि दर्शनक्रियाश्रयकोटिनिक्षिप्ततयाऽहङ्कारस्यावभासः सम्भवतीति पूर्ववादिनं सिद्धान्ती चोदयति कथमिति' अयःपिण्डव्यतिरेकेण वह्नेः दहनक्रियाश्रयत्वदर्शनवत् अहङ्कारव्यतिरेकेण आत्मनः ज्ञानक्रियाऽदर्शनात् अहमेवात्मत्वमित्युत्तरेण ग्रन्थेन प्रतिपादयति' इति। **ननूभयोस्स्वयंप्रकाशत्वकल्पना न युक्ता**। अन्यतरस्य स्वयंप्रकाशत्वे आत्मैव स्वयंप्रकाश इति चेन्नेत्याह— प्रमितिरनुभव इति। ननु अहं जानामीति आत्मानात्मविषयावनुभवौ भेदेन प्रत्यक्षसिद्धाविति। नेत्याह तत्राहमिदं जानामीति। एतदुत्तरं तस्मादनुभवः सजातीयप्रकाशान्तरानिरपेक्षः इत्यादिना प्रागुदाहृतस्वयंप्रकाशत्वसाधकग्रन्थः वर्तते॥ पञ्चपादिकायां **च एतदुत्तरमेव** 'तस्माच्चित्स्वभाव एव आत्मा तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते। अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते। इति वर्तते। अत्र विवरणम्। 'कथं

### श्रीभाष्यम्

**अजडत्वाच्च अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति। ननुच अहंजानामीति ज्ञातृता प्रतीतिसिद्धा**

### श्रुतप्रकाशिका

तुच्छत्वशङ्कानिरासार्थमुक्तं स्वप्रकाशरूपेति * स्वयम्प्रकाशत्वं स्वतन्त्रसाधकं चेत्याह। **अजडत्वाचेति**। इदं व्यतिरेकि- संवित् आत्मा अजडत्वात् यन्नात्मा तज्जडं यथा घटादीति एतद्विवृणोति। **अनात्मत्वेति**। अनात्मत्वव्याप्तं व्याप्तमिति * कर्तरिक्तः। व्यापकमित्यर्थः प्राप्तमितिवत्। तर्केण ज्ञातृत्वे प्रतिक्षिप्ते * आत्मनोऽहम्प्रत्ययगोचरत्वस्य स्वानुभवप्रत्यक्षसिद्धत्वेन चोदयति। **ननुचेति**। चश्चाप्यसमुच्चये प्रतीतिसिद्धा स्वानुभवरूपप्रतीतिसिद्धेत्यर्थः ॥

### गूढार्थसंग्रहः

पुनरात्मचैतन्यस्य नित्यस्य विषयानुभवत्वमिति। तदाह- तस्माचित्स्वभाव **एवेति**। एतदर्थ एव संविदात्मत्वसाधनभाष्ये णोक्तः ॥ अत्र पञ्चपादिकायां 'विषयिणश्चिदात्मनः कथं विषयभावः। पराग्भावेन इदन्तासमुल्लेख्यो हि विषयो नाम भवति। तद्वैपरीत्येन प्रत्यग्रूपेणानिदंप्रकाशो विषयी। तत्कथमेकस्य निरंशस्य विरुद्धांशद्वयसन्निवेशः' इति शङ्कायाः अहङ्कारस्य इदमनिदंरूपवस्तुगर्भत्वं सर्वलोकसाक्षिकमिति समाधानकथनेन अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः इति अध्यासभाष्ये (शां) युष्मत्प्रत्ययगोचरस्येति इदमर्थस्येत्यर्थक इति निर्णीतम्। उक्तंच रत्नप्रभायाम् 'युष्मत्प्रत्ययगोचरस्येति त्वङ्कारयोग्यस्य इदमर्थस्येति यावत्' इति ॥ 'ननु च अहं जानामीति अस्मत्प्रत्यये योऽयमनिदमंशः प्रकाशैकरसः चित्पदार्थः स आत्मा। तस्मिन् तद्बलनिर्भासिततया युष्मदर्थलक्षणः अहमर्थः' इति महासिद्धान्तभाष्ये युष्मदर्थः पराग्रूपः इदमर्थः विवक्षित इत्येतेन सिद्धम् ॥

**ननु च अहं जानामीति**। इयमपि पञ्चपादिकोक्तप्रभाकरशङ्कैव। 'सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिको लोकव्यवहारः।' इत्यध्यासभाष्यम्। (शां) 'सत्यम् अनिदं चैतन्यम्। अनृतं युष्मदर्थ' इति पञ्चपादिका। 'सत्यं चिदात्मा। अनृतं बुद्धीन्द्रियदेहादि' इति भामती। अत्र अहमिदं ममेदमित्यध्यासस्य स्वरूपं दर्शयति। अहमिति तावत्प्रथमोऽध्यासः। ननु अहमिति निरंशं चैतन्यमात्रं प्रतिभासते। नांशान्तरमध्यस्तमनध्यस्तं वा। यथा अध्यस्तान्तर्भावस्तथा दर्शयिष्यामः। ननु इदमिति अहंकर्तुर्भोगसाधनं कार्यकारणसङ्घातः अवभासते। ममेदमितिचाहंकर्तृस्वत्वेन तस्य सम्बन्धः। तत्र न किञ्चिदध्यस्तमिव दृश्यते? उच्यते। यदैवमहङ्कर्ताऽध्यासात्मकः तदैव तदुपकरणस्यापि तदात्मकत्वसिद्धिः। नहि स्वप्नावातराज्याभिषेकस्य राज्ञो राज्योपकरणं परमार्थसत् भवति। एवमहङ्कर्तृत्वप्रमुखः क्रियाकारकफलात्मकः लोकव्यवहारः अध्यस्तो नित्यशुद्धबुद्धमुक्तस्वभाव आत्मनि' इति पञ्चपादिका। 'निष्कलङ्कचैतन्यैकताने निरंशानन्दैकरसे अज्ञानादिसाक्षिण्यनादिसिद्धेपि अज्ञानाध्यासे कादाचित्कमध्यासमाश्रित्याह– अहमिति तावत्प्रथमोऽध्यास इति। ननु इदं रजतमितिवदध्यासे द्वैरूप्यमपि वक्तव्यम्। अहमितिचैकरूपेणावभासते। अतो नाध्यास इति चोदयति– अहमिति निरंशचैतन्यमात्रमिति' इत्यादिविवरणम् ॥ इदमनिदंरूपवस्तुगर्भत्वं प्रागुदाहृतविवरणे सम्यक्साधितम् ॥

एवं 'अन्तःकरणोपरागनिमित्तं मिथ्यैव अहंकर्तृत्वमात्मनः, स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा। स्फटिकमणावुपधानोपराग इव चिदात्मन्यप्यहङ्कारोपरागः। ततस्सम्भिन्नोभयरूपत्वाद्ग्रन्थिरिव भवतीति अहङ्कारो ग्रन्थिरिति गीयते। तत्र जडरूपत्वादुपरक्तस्य न तद्बलादुपरागस्य साक्षाद्भावः। चिद्रूपस्य पुनरुपरागः तद्विषयव्यापारविरहिणोऽपि तद्बलात्प्र-

## गूढार्थसंग्रहः

काशते । तेन लक्षणतः इदमंशः कथ्यते न व्यवहारतः । व्यवहारतः पुनः यदुपरागादनिदमात्मनः अहंकर्तृत्वं मिथ्या
तदात्मनस्तद्व्यापारेण व्याप्रियमाणस्यैव व्यापारपूर्वको यस्य परिच्छेदः स एवेदमात्मको विषयः । अत एवाहमिति अस-
म्भिन्नेदमात्मकोऽवभासः इति विभ्रमः केषां चित् । दृष्टश्च लक्षणतः तद्व्यवहारार्होऽपि तमननुपतन् । तद्यथा अङ्कुरादि-
फलपर्यन्तो वृक्षविकारः मृत्परिणामपरम्परापरिनिष्पन्नोऽपि घटवल्मीकवत् न मृन्मयव्यवहारमनुपतति । व्युत्पन्नमतयस्तु
तद्व्यवहारमपि नातीवोल्बणं मन्यन्ते । अत एव निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् अहंकारं निरूपयतां सम्भिन्नेदंरूपस्स
इत्यभिहितम् ' इति पञ्चपादिकायामपि ॥

अत्र विवरणम् । ' ननु साक्षिस्वरूपवत् विज्ञानक्रियाव्यवधानमन्तरेण अहंकारस्य सिद्धौ कथमिदमंशतेति तत्राह
तेन लक्षणत इति । अर्थस्वभावत इत्यर्थः । अर्थतश्चित्स्वरूपता अनिदमंशता । चैतन्यकर्मता चेदमंशतेति न ज्ञानक्रिया-
व्यवधानेनेत्यर्थः । तद्व्यापारेण अहंकारव्यापारेणेति । वृत्तिव्यवधानसिद्धिरेव शरीरेन्द्रियविषयाणां इदमिति प्रतिभासिता
नाम तदव्यवधानसिद्धिरेव अनिदंम्प्रतिभासितेति भावः । ननु अज्ञानव्यवहितोऽहङ्कारः कथमव्यवधानादिदन्तावभासा-
भावः स्यादित्यत्राह– अत एवाहमिति । अनिदन्ताप्रतिभासादेव । अज्ञानमात्रव्यवधानादेवेत्यर्थः । नन्वर्थतो युष्मदर्थ
त्वे तथा प्रतिभासाभावो न युक्त इत्यत्राह– दृष्टश्च लक्षणत इति । ननु तत्र विमर्शेऽपि मृन्मयव्यवहारो न जायते, इह
तु विमर्शे युष्मदर्थता व्यवह्रियते । अतो नायं दृष्टान्त इत्यत आह– व्युत्पन्नमतयस्तु इति ॥ एवं देहेन्द्रियादिषु अहं
ममाद्यभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारस्सम्भवति ।
नचाधिष्ठानमन्तरेण इन्द्रियाणां व्यवहारस्सम्भवति । नचानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । नचैतास्मिन् सर्वस्मिन्न
सति असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते । नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्याविषयाण्येव प्रत्यक्षादि-
प्रमाणानि शास्त्राणि च ' इति भाष्यम् । (शां)

अत्र भामती– ' देहेन्द्रियादिषु अहंममाभिमानहीनस्य तादात्म्यतद्धर्माभिमानहीनस्य प्रमाणप्रवृत्त्यनुपपत्तेः । अ-
यमर्थः । प्रमातृत्वं हि प्रमां प्रति कर्तृत्वम् । तच्च स्वातन्त्र्यम् । स्वातन्त्र्यं च प्रमातुः । इतरकारकाप्रयोज्यस्य समस्तकारक-
प्रयोक्तृत्वम् । तदनेन प्रमाकरणं प्रमाणं प्रयोजनीयम् । नच स्वव्यापारमन्तरेण करणं प्रयोक्तुमर्हति । नच कूटस्थनित्यः
चिदात्मा अपरिणामी स्वतो व्यापारवान् । तस्माद्व्यापारवद्बुध्यादितादात्म्याध्यासात् व्यापारवत्तया प्रमाणमधिष्ठातुमर्हतीति-
भवत्यविद्यावत्पुरुषविषयत्वं अविद्यावत्पुरुषाश्रयत्वं प्रमाणानाम् ' इति ॥

अत्र पञ्चपादिका देहेन्द्रियादिषु–प्रमाणप्रवृत्त्यनुपपत्तेरिति । भाष्यकारस्य वस्तुसङ्ग्रहवाक्यम् । अस्यैवप्रपञ्चः ' नही
न्द्रियाण्यनुपादाय ' इत्यादिः नहि देहेन्द्रियादिषु अहंममाभिमानहीनस्य सुषुप्तस्य प्रमातृत्वमुपपद्यते । इन्द्रियाणीति यतो देहे
अहमभिमानः इन्द्रियादिषु ममाभिमानः आदिशब्देन बाह्याद्यवयवग्रहणम् । देहशब्देन सशिरस्को मनुष्यत्वादिजातिसम्भिन्नः
अवयव्यभिमतः । न शरीरमात्रे देहोऽहमिति प्रतीत्यभावात् । सर्वोहि मनुष्योऽहं देवोऽहमिति जातिविशेषैकाधिकरण
चैतन्यएवप्रवर्तते इति स्वसाक्षिकमेतत् । तत्र न स्वत्वेन सम्बन्धेन मनुष्यावयविना तदनुस्यूतेनवा चक्षुरादिना प्रमात्रा-
दिव्यवहारः सिध्यति । भृत्यादिमनुष्यावयविनाऽपि प्रसङ्गात् । इति अपरआह आत्मेच्छानुविधायित्वं कार्यकारणसंघात-
स्यात्मना सम्बन्धः । नैतत् इच्छाऽपि परिणामविशेषः स कथमपरिणामिनआत्मनस्स्यात् परिणाम्यन्तःकरणसम्मिलिताहं
कर्तृत्वमन्तरेण । अतः स्वयमसङ्गस्याविकारिणः अविद्याध्यासमन्तरेण न प्रमातृत्वमुपपद्यते । निरपेक्षाणां स्वसामर्थ्येनार्थ
सिद्धिं विदधतां बाधानुपलब्धेः प्रामाण्यं अविद्यावद्विषयत्वंच विधिमुखोपदर्शि न नेति शक्यमपह्नोतुम् । दोषस्त्वागन्तुक-

## गूढार्थसंग्रहः

एव मिथ्यात्वेहेतुः न नैसर्गिकः तथोपलब्धेः । नच सर्वसाधारणे नैसर्गिके दोषबुद्धिः, तथाहि क्षुत्पिपासोपजनिते सन्तापे शश्वदनुवर्तमाने जाठराग्निकृतविकारे अन्नपाननिष्यन्दे वा नरोगबुद्धिर्जनस्यामुहूर्तमात्रपरिवर्तिनि मन्दे ज्वरे प्रतिश्यायेवा अल्पकफप्रसूतेऽपि रोगबुद्धिः, अनैसर्गिकत्वात् । अनैसर्गिकंच दोषमभिप्रेत्योक्तं 'यस्यचदुष्टंकरणं यत्रच मिथ्येतिप्रत्ययः' सएवासमीचीनः प्रत्ययः नान्यइतिच ॥ (शं.भा)

अत्र विवरणम् । 'वस्तुसङ्ग्रहवाक्यं अस्यैव प्रपञ्च इति । व्यवहारत्रितयमध्यासोपादानमित्यत्र अर्थापत्तिर्व्यतिरेक्यनुमानप्रदर्शनाय । यत्र यत्राध्यासाभावस्सम्प्रतिपन्नः तत्रतत्र व्यवहाराभावो दृष्ट इति व्यतिरेकव्याप्तिं भाष्यार्थं दर्शयति- नहि देहेन्द्रियादिष्विति । प्रमाणान्तरप्रदर्शनार्थं व्यवहारत्रयमूलाध्यासे प्रत्यक्षं उक्तमनुवदति- सर्वो हि मनुष्योऽहमिति अत्रायं प्रयोगः । देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव कर्तुः करणभूतदेहेन्द्रियादिषु अहममाध्यासपुरस्सरप्रमातृत्वादिव्यवहारवन्तौ तस्यैव सुषुप्तिकालादन्यकालत्वात् यः कालस्तथाविधव्यवहारवान्नभवति न स तस्यैव सुषुप्तिकालादन्यकालः यथा तस्यैव सुषुप्तिकालइति । व्यवहारत्रितयंवा दर्शिताध्यासोपादानमन्तरेणानुपपन्नं, अध्यासाभावे व्यवहारादर्शनात् सुपुप्ते इत्यर्थापत्तिः । यत्तु अध्यासपरिनिष्पन्नाहंकारात्मसम्पिण्डितोपादानत्वं कारणदोषादप्रामाण्यं प्रमाणानामिति । तत्र यदि प्रतिपन्नोपाधौ केनापि प्रमाणेनाबाध्यत्वलक्षणतत्त्वावेदनप्रामाण्यहानिरुच्यते, तदङ्गीकृतमेव । अथ आगमेन परमार्थसत्यत्वांशे बाध्यमानेऽपि व्यवहारसमर्थवस्त्वङ्गताप्रामाण्यहानिरुच्यते । न । तत्र बाधाभावादित्याह- निरपेक्षाणामिति । ननु ब्रह्मज्ञानस्याप्यध्यासोपादानत्वात् मिथ्यात्वमापन्नम् । यदि तावत् स्वरूपमिथ्यात्वमुच्यते अङ्गीकृतमेव तत् । अर्थविषयमिथ्यात्वं न ब्रह्मणि बाधाभावात् । प्रपञ्चस्यापि बाधादेव मिथ्यात्वम् ; नाध्यासोपादानज्ञानगम्यत्वात् । ननु दुष्टकारणजन्यस्य विषयतोऽपि मिथ्यात्वं दृष्टमिति ? नेत्याह- दोषस्त्वागन्तुक इति । प्रमाणकारणेषु सत्सु पश्चाद्भवन् दोषो दोष इत्युच्यते । स आगन्तुक इत्युक्तः । प्रमाणकारणत्वेनैव यो दोषो व्यवतिष्ठते स नदोषः कारणत्वात् । अविद्याऽध्यासस्तु चैतन्यस्य अद्वितीयावभासं प्रत्येव दोषः । न द्वैतावभासंप्रति तस्यकारणत्वात् यथा काचादिः चक्षुरादिदोषः तथाविधपापादृष्टोदयं अनुभावयन् तत्रप्रमाणत्वान्नदोषः तद्वदित्यर्थः । चैतन्यदोषत्वादेव तत्प्रकाश्याव्यवहार्यब्रह्मविपरीतं व्यवहारयोग्यं वस्तु प्रदर्शयति । दोषत्वं चाविद्यायाः चैतन्यस्य तथाऽवभासविरोधितया अन्यथाप्रतिभासनिमित्तत्वात् । कथमागन्तुके दोषबुद्धिः न नैसर्गिके इत्येतावन्मात्रे दृष्टान्तमाह—नच सर्वसाधारण इति । ननु(जै.सू.)भाष्यकारेण दोषमात्रमेव विषयतो ज्ञानमिथ्यात्वे हेतुरुक्त इति ? नेत्याह- अनैसर्गिकं च दोषमिति ॥

मानमेयव्यवस्थातु सिद्धान्तबिन्दावेवमुक्ता । दृश्यत्वाजडत्वाद्विनाशित्वाच परिच्छिन्नाऽप्यविद्या अनिर्वचनीयत्वेन विचारासहा आवरणविक्षेपशक्तिद्वयवती सर्वगतं चिदात्मानमावृणोति । अङ्गुलिरिव नयनसंनिहिता सूर्यमण्डलम् । तत्र चक्षुष एवावरणे अङ्गुलेरप्यभानप्रसङ्गात् अधिष्ठानावरणमन्तरेण विक्षेपानुपपत्तेश्च । ततः सा पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्तासती निखिलजगदाकारेण परिणमते । सान्च स्वगतचिदाभासद्वारा चित्तादात्म्यापन्नेति तत्कार्यमपि सर्वमाभासद्वारा चिदनुस्यूतमेव । तथाच चैतन्यस्य दीपवत्स्वसम्बद्धसर्वभासकत्वात् जगदुपादानचैतन्यं प्रमाणापेक्षामन्तरेणैव सर्वदा सर्वं भासयत् सर्वज्ञं भवति । तेन तत्र न मानमेयादिव्यवस्था । किंतु जीवे तस्य बुध्यवच्छिन्नत्वेन परिच्छिन्नत्वात् तेन चिदभिव्यक्तियोग्येन येनान्तःकरणेन यदा यत्सम्बद्धं भवति तदेव तदा तदवच्छिन्नो जीवो अनुभवतीति न साङ्कर्यप्रसङ्गः । एवमत्र प्रक्रिया (पं.पा) शरीरमध्योस्थितः सर्वशरीरव्यापकः सत्वप्राधान्येन सूक्ष्मपञ्चभूतारब्ध. अन्तःकरणाख्यः अविद्याविवर्तः दर्पणादिवत् अतिस्वच्छः नेत्रादिद्वारा निर्गत्य योग्यान्घटादीन्विषयान्व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत् । तस्यच सौ-

## गूढार्थसङ्ग्रहः

रालोकादिवत् झटित्येव सङ्कोचविकासावुपपद्येते । सच सावयवत्वात् परिणममानः देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देह-
घटयोर्मध्येऽपि चक्षुर्वदवच्छिन्नोऽप्यवतिष्ठते । तत्र देहे अन्तःकरणभागः अहङ्काराख्यः कर्तेत्युच्यते । देहविषयमध्यवृत्तिः
दण्डायमानः तद्भागः वृत्तिज्ञानाख्यः क्रियेत्युच्यते । विषयव्यापकस्तद्भागः विषयस्य ज्ञानकर्मत्वसम्पादकं अभिव्यक्तियो-
ग्यत्वमित्युच्यते । तस्यच त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते । तस्यचाभिव्यक्तस्यचैतन्यस्य एकत्वे-
ऽप्यभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशोभवति कर्तृभागावच्छिन्नः चिदंशः प्रमाता । क्रियाभागावच्छिन्नचिदंशः
प्रमाणम् । विषयगतोऽभिव्यक्तियोग्यत्वभागावच्छिन्नचिदंशः प्रमितिरिति । प्रमेयंतु विषयगतं ब्रह्मचैतन्यमेव अज्ञातम् ।
तदेवच ज्ञातं सत् फलम् इति ॥

अद्वैतसिद्धौ च ' तदयमत्र निष्कर्षः । यद्यपि विषयप्रकाशकं विषयाधिष्ठानभूतं प्रमेयचैतन्यम्, अन्तःकरणाव-
च्छिन्नचैतन्यं तु तस्य प्रमातृ अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं तु प्रमाणम् ; तथाऽपि यदीयान्तःकरणवृत्त्या विषयपर्यन्तं चक्षु-
रादिद्वारा निस्सृतया यत्प्रकाशकं चैतन्यं यत्प्रमातृचैतन्याभेदेनाभिव्यज्यते तमेव स एव जानाति नान्यं नान्यो वा । अत
एवैकवृत्त्युपारूढलक्षणैकलोलीभावापन्नं प्रमातृप्रमाणप्रमेयचैतन्यं भवति । ततस्तदवच्छेदेनाज्ञाननिवृत्त्या भासमानं प्रमेयचैत-
न्यमपरोक्षं फलमित्युच्यते । तत् स्वयं भासमानं सत् स्वाध्यस्तं घटाद्यपि भासयतीति तत् फलव्याप्यमित्युपेयते । यन्निष्ठा
च यदाकारा वृत्तिर्भवति तन्निष्ठं तदाकारमज्ञानं सा नाशयतीति नियमात् प्रमातृप्रमेयोभयव्यापिन्यपरोक्षवृत्तिः स्वावच्छेदे-
नावरणमपसारयति ; प्रकाशस्य स्वावच्छेदेन आवरणापसारकत्वदर्शनात् । अतः प्रमात्रवच्छिन्नस्यासत्वावरणस्य प्रमेयाव
च्छिन्नस्याभानावरणस्य चापसरणात् घटोऽयं मे स्फुरतीत्याद्यपरोक्षव्यवहारः । परोक्षस्थले तु इन्द्रियसन्निकर्षलक्षणद्वाराभा
वादन्तःकरणनिस्सरणाभावेन विषयपर्यन्तं वृत्तेरगमनात् विषयावच्छिन्नप्रमेयचैतन्येन सह प्रमेयचैतन्यस्यैकवृत्त्युपारूढत्वा-
भावेन अपरोक्षतयाऽभिव्यक्त्यभावेऽपि प्रमातृप्रमाणचैतन्ययोरेकलोलीभावापत्त्या प्रमात्रवच्छिन्नमसत्वावरणमात्रं निवर्तते ;
तावन्मात्रस्य वृत्त्यवच्छिन्नत्वात् । इदमेव सुषुप्तिव्यावृत्तिशब्देन विवरणाचार्यैर्व्याख्यातम् । विषयावच्छिन्नाभानावरणत-
त्कार्यसद्भावेऽपि प्रमात्रवच्छिन्नासत्वावरणनिवृत्त्या अनुमानादौ व्यवहारोपपत्तिः । अत एव जानाम्यहं पर्वते वह्निरस्तीति
सतु कीदृश इति न मे भातीत्यादिव्यवहारः । त्रयाणामेकलोलीभावेऽपरोक्षत्वं द्वयोरेकलोलीभावे तु परोक्षत्वमिति न सङ्क-
रः । वृत्तेश्च विषयेण समं साक्षादेवापरोक्षस्थले सम्बन्धः, परोक्षस्थलेत्वनुमितेरनुमेयेन तद्व्याप्यज्ञानजत्यत्वम् शाब्द्याः संस-
र्गेण सह तदाश्रयवाचकपदजन्यत्वम् स्मृतेः स्मर्तव्येन सह तद्विषयानुभवजन्यत्वम् । एवमन्यत्रापि परम्परासम्बन्ध एव
इति परोक्षापरोक्षविभागः ' इत्युक्तम् ॥ (प्रतिकर्मव्यवस्थोपपत्तौ)

सिद्धान्तबिन्दौ सर्वस्यैवाध्यासमूलत्वे भ्रमप्रमादिव्यवस्थाच नस्यात् । एकस्यैव आत्मनः प्रमातृप्रमेयप्रमितिरूपता च
विरुद्धा अविरोधाभ्युपगमेवा सौगतमतापत्तिरिति । अत्रोच्यते अहंमनुष्यः कर्ता भोक्तेत्यादि प्रतीतिस्तावत् सर्वजनसिद्धा
साच नस्मृतिः अपरोक्षावभासत्वात् भेदाग्रहः अपूर्वकत्वाच्च नापि प्रमा श्रुतियुक्तिबाधितत्वात् । तथाच श्रुतयः ' योऽयंवि-
ज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुषः, अयमात्माब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, यः आत्मा अपहतपाप्मा
यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः, यो अशनाया पिपासे शोकं मोहं जरां मृत्युमत्येति । यत्र तत्र किंचित्
पश्यति अनन्यगतस्तेन भवति । असङ्गोह्ययं पुरुषः ' इत्याद्या अकर्तृभोक्तृपरमानन्दब्रह्मरूपतां आत्मनोदर्शयन्ति । युक्तयश्च
विकारिणः परिच्छिन्नत्वेन अनात्मत्वापत्तेः । स्वेनैव स्वस्य ग्रहणे कर्तृकर्मविरोधात् दृग्दृश्यसम्बन्धानुपपत्तेः भेदेनाभेदेनवा
धर्मधर्मिभावानुपपत्तेश्च । ज्ञानानित्यत्वपक्षे तत्तद्व्यक्तिभेदध्वंसप्रागभावज्ञानजात्याद्यभ्युपगमे गौरवात् । एकत्वाभ्युपगमे च
अतिलाभात् । घटज्ञानं पटज्ञानमित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः । स्वतस्तु ज्ञानं ज्ञानमित्येकस्वरूपावगमात् ।

## गूढार्थसङ्ग्रहः

तदुत्पत्तिविनाशप्रतीत्योश्च अवश्यकल्प्यविषयसम्बन्धविषयतयाऽप्युपपत्तेः। स्वतएव घटात् घटान्तरस्य भेदप्रतीतेः तत्प्रतिबन्दीग्रहासम्भवात् आकाशकालदिशामपि नानात्वापत्तेश्च। कर्तृत्वादेर्वास्तवत्वेऽनिर्मोक्षप्रसङ्गात्। स्वप्रकाशानभ्युपगमे च जगादान्ध्यप्रसङ्गात् परमप्रेमास्पदत्वेनच तस्यानन्दरूपत्वात्। निर्धर्मकनित्यस्वप्रकाशसुखात्मकएवेत्यर्थः। तस्मात्परिशेषात् भ्रान्तिरियमितिस्थिते तत्कारणमपियोग्यं किंचित् कल्पनीयमित्याद्युक्तम्॥

'अहं मनुष्य इत्यादिज्ञानं नात्मनि शरीरादिस्वामित्वविषयम् तस्यात्मनि शरीरादिभेदग्रहपूर्वकत्वनियमादिति भावः। विज्ञानमयः इत्यादि बुद्धिप्राणमनोऽभिमानी अन्तः–जन्यज्ञानरूपत्रीहिर्ज्योतिर्भिन्नं, ज्योतिः– स्वप्रकाशचैतन्यम्। पुरुषः पुरुषदृश्येषु अनुस्यूतः इत्यनेनापि सर्वदृश्याभिन्नचिद्रूपलाभात् अकर्तृभोक्तृत्वलाभः। साक्षादपरोक्षात् अपरोक्षचिद्रूपं न तत्तादात्म्येन घटादिवदपरोक्षः। सर्वदृश्याधिष्ठानम्। अशनायापिपासे प्राणस्य, शोकमोहौ मनसः, जरामृत्यू देहस्य धर्माः। स यत्तत्र पश्यति स जीवः। यदिति ज्ञेये ज्ञानक्रियायां च विशेषणम्। पश्यति जानाति। अनन्वागतः असंस्पृष्टः। तेन ज्ञेयेन ज्ञानेन चापरोक्षविषयस्यापि सर्वानुस्यूतसद्रूपचिदात्मके तादात्म्यप्राप्त्या निषेधो नव्यर्थः। असङ्गः सम्बन्धसामान्यशून्यः। असङ्गत्वहेतुतां द्योतयति। अयं दृग्रूपः पुरुषः सर्वदृश्येष्वधिष्ठानत्वेनानुस्यूतः। तथाच दृग्दृश्ययोस्सम्बन्धानुपपत्तेः सर्वदृश्यानां दृशि कल्पितत्वात् असङ्गत्वहेतुः नासिद्ध इति भावः।

युक्तयोऽनुमानं तदनुकूलतर्काश्च। तत्र निर्धर्मकनित्यस्वप्रकाशसुखात्मकैक एव आत्मा इति अनेन वक्ष्यमाणवाक्येन आत्मा निर्धर्मकः नित्यत्वात्' नित्यः स्वप्रकाशसुखरूपत्वात् इत्यनुमानद्वयं विवक्षितम्। विकारिणः इत्यादिनाच तर्का विवक्षिताः। तत्र निर्धर्मकत्वं परमार्थरूपेण धर्माभावः। तेन धर्माभावरूपसाध्यस्य व्यावहारिकत्वे स्वव्याघातः, प्रातीतिकत्वे अनुमानस्याभासत्वम्। पारमार्थिकत्वे अद्वैतश्रुतिविरोधः। धर्माभावस्वरूपत्वे साध्ये सधर्मकत्वाप्रतिक्षेपापत्तिरित्यादि परास्तम्। वस्तुतो व्यावहारिको धर्माभावः न स्वव्याघातकः। धर्मतदभावयोः व्यावहारिकयोः स्वाप्नयोर्गजतदभावयोरिवाविरोधात्। अत्र गज इति स्वाप्नज्ञानोत्तरं नात्र गजोऽस्तीति स्वाप्नज्ञानस्येव इहात्मनि धर्मोऽस्तीति ज्ञानोत्तरं आत्मा निर्धर्मक इत्यनुमितेः प्रतियोगिसमसत्ताकाभावविषयत्वसम्भवात्॥ विस्तृतं चैतत् चन्द्रिकायाम्। ननु यदि निर्धर्मको न स्यात् तदा नित्यो नस्यात्। धर्मधर्मिणोस्तादात्म्येन धर्मोत्पत्तिविनाशाभ्यां धर्मिणः उत्पत्तिविनाशरूपविकारापत्तिः इति तर्को वाच्यः तत्रेष्टापत्तिरेवेत्यत आह– विकारिण इत्यादि। आत्मनो विकारस्वीकारे अभावप्रतियोगित्वरूपपरिच्छेदादात्मत्वस्याभावापत्तिरित्यर्थः। आत्मा यदि कर्तृत्वादिमान् स्यात् तदा द्रष्टा नस्यात् इति अभेदे द्रष्टृदृश्यभावानुपपत्तिरिति तर्कमाह स्वेनेत्यादि। स्वेनात्मना स्वस्य कर्तृत्वादिमदात्मना ग्रहणे विषयीकरणे कर्ता साक्षी विषयी व्यवहर्तृत्वात् सएव कर्मविषयः व्यवहार्यत्वात्। तत्र विरोधः। एकत्वे सम्बन्धासम्भवेन विषयविषयिभावसम्पादकतादात्म्यसम्बन्धानुपपत्तिरित्यर्थः। कर्तृत्वं ज्ञानं चिद्रूपं प्रत्यपि सम्भवति जन्यविषयतावच्छिन्नं ज्ञानमपि क्षेमसाधारणजन्यतावदिति वा। तथाच कर्तृत्वकर्मत्वयोर्व्यवहारक्रियापेक्षत्वेऽपि न क्षतिः। ननु तादात्म्यं प्रत्यनुयोगित्वं विषयत्वं प्रतियोगित्वं विषयित्वम्। तत्राद्यं कर्तृत्वादिविशिष्टरूपेण द्वितीयं शुद्धरूपेणैकस्यात्मनस्सम्भवत्येव। तत्राह– दृग्दृश्येत्यादि। दृग्दृश्ययोस्सम्बन्धनिर्वचनस्य पूर्वोक्तरीत्या असम्भवात्। दृगात्मनि विषयिणि विषयरूपं सर्वं मिथ्येति निर्धर्मकत्वमात्मन इति भावः।

आत्मा यदि धर्मवान् स्यात्तदा निरूपणानर्हधर्मसम्बन्धवान् स्यादिति तर्कमाह भेदेनेति। तादात्म्यान्यसम्बन्धेनेत्यर्थः। अभेदेन तादात्म्यसम्बन्धेनानुपपन्नेनेति शेषः। तादात्म्येन तदन्येन सम्बन्धेन वा सम्बद्धयो धर्मधर्मिता वाच्या। तादात्म्यादिसम्बन्ध एवतु नसम्भवति। सम्बन्धान्तरेणासम्बद्धस्य तस्य सम्बन्धस्य सम्बन्धत्वासम्भवेन सम्बन्धान्तरं वाच्यम्।

## गूढार्थसंग्रहः

एवंतस्यापि सम्बन्धान्तरमित्यनवस्थापत्तेः नच सम्बन्धस्य सम्बन्धान्तरेण न सम्बन्धता किंतु स्वेनैव सम्बन्धेनेति वाच्यम्। स्वस्य स्वप्रतियोगिकसम्बन्धत्वासम्भवात् स्वं न स्वीयमित्यनुभवात्। अन्यथा धर्मधर्मिणोरपि स्वेन सम्बन्धताऽऽस्था सम्बन्धमात्रलोपापत्तेः। अथ तयोस्सम्बन्धान्तरं प्रतीयते। तस्यतु नप्रतीयतइतिचेत् सत्यं प्रतीयमानमनुपपन्नं मिथ्यैवेति भावः आत्मायदि कर्तृत्वादिधर्मकःस्यात् तदा कर्तृत्वादिधर्मविशिष्टस्य ज्ञानरूपत्वन्नस्यात् इति तर्के आत्मा ज्ञानरूपो नभवत्येव तस्य नित्यत्वेन उत्पत्तिनाशवत्त्वेनानुभूयमानज्ञानरूपत्वासम्भवात्। इतीष्टापत्तिं निरस्यति ज्ञानेत्यादि। ननु 'नहिघ्रातुः घ्रातेर्विपरिलोपो विद्यते अविनाशित्वात्' इत्यादिश्रुत्या घ्राणजमनोवृत्त्यादिसामर्थ्यरूपघ्रात्यादेरविनाशित्वोक्तेः अत्मनः कृत्यादिजननशक्तिरूपकर्तृत्वादेः ज्ञानानुच्छेद्यत्वेन सत्यत्वेन कथमात्मनः पारमार्थिकत्वेन धर्माभाववत्वं तत्राह 'कर्तृत्वादेरित्यादि। अनिर्मोक्षेति। विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुत्या सर्वनामरूपोच्छेदस्य ज्ञानाधीनतयाबोधितस्य त्यागेनेत्यर्थः। तथाच नहीत्यादि श्रुतिः घ्राणेन्द्रियाद्यभिव्यक्तचित्स्वरूपानाशबोधिका, अतएव 'नतु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यज्जिघ्रेत् इत्याद्युत्तरवाक्येन चिदन्यस्य विषयतदाकारवृत्तितत्साधनेन्द्रियाभावेन घ्राणजप्रत्यक्षाभावः नतु चिदभावादिति उक्तमितिभावः। स्वप्रकाशेत्यादि चस्त्वर्थे सुखरूपस्यात्मनः यदि स्वप्रकाशत्वं न स्वीक्रियते तदा जगतः श्रवणाद्यधिकारिमात्रस्य मोक्षबोधरूपपरमपुरुषार्थादर्शनरूपान्ध्यप्रसङ्गः। द्वितीयाभावेन मोक्षरूपात्मसुखस्य परप्रकाश्यत्वासम्भवात्। अप्रकाशमानसुखस्यापुरुषार्थत्वात्। अथवा आत्मनः स्वकाशत्वास्वीकारे जगत्सु सर्वदृश्येषु आन्ध्यस्य अप्रकाशनस्य प्रसङ्गः। अप्रकाशेनात्मचैतन्येन दृश्यप्रकाशनासम्भवात् प्रकाशान्तराणां कल्पने अनवस्थानादित्यर्थः। अत्रेदं पर्यवसितं धर्मधर्मिभावानुपपत्तेश्चेत्यन्तं निर्धर्मकेत्यत्र तर्काणां हेतुत्वबोधकम्। नानात्वापत्तेश्चेत्यन्तं नित्येत्यत्र अनिर्मोक्षप्रसङ्गादित्यन्तं तदुभयत्र परिशिष्टं स्वप्रकाशसुखरूपत्वे हेतुत्वपरम्। तस्मात्—आत्मनः निर्धर्मकत्वेन आत्मनि प्रतीयमानस्य मनुष्यादितादात्म्यकर्तृत्वादेर्मिथ्यात्वात्। इयं—अहं मनुष्यः कर्ता भोक्तेत्यादिधीः इति न्यायरत्नावली॥

अत्रैव पूर्वं 'तस्यच सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गाच्च। नहि सत्यं क्वचिन्निवर्तते। निवर्त्यमानं वा ज्ञानेन। श्रुतयश्च 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्तेचास्य कर्माणि तस्मिन् दृष्टे परावरे॥' 'तरति शोकमात्मवित्' 'नान्यः पन्था विद्यतेऽयनाय' इत्याद्याः ज्ञानात्संसारनिवृत्तिं दर्शयन्त्यः तस्यच मिथ्यात्वं सूचयन्ति।' इति सिद्धान्तबिन्दुः॥ अत्र न्यायरत्नावली— तस्य अनात्मनः। अनिर्मोक्षेति— निश्शेषसंसारोच्छेदाभावेत्यर्थः। निवर्तते उच्छिन्नं भवति। ननु प्रपञ्चसत्यतामते घटादिकं दण्डादिप्रहारेणोच्छिद्यत एव; तत्राह— निवर्त्यमानमिति। उच्छिद्यमानमित्यर्थः सत्यमित्यनुषज्यते। तथाच सत्यं यत् तत् ज्ञानोच्छेद्यं न भवतीत्यर्थः। ननु सेतुदर्शनादिना पापादिकमुच्छिद्यत एव परमत इति चेन्न। ज्ञानशब्दस्य स्वप्रयोजकाज्ञानसमानविषयकज्ञानार्थकत्वात्। तथाच यदसत्यं तत्स्वप्रयोजकाज्ञानसमानविषयकज्ञानेनोच्छिद्यत इत्यर्थः। स्वपदं ज्ञानपरम्। तादृशं च ब्रह्मज्ञानमेव। भिद्यत इत्यादि। हृदयस्य अहङ्कारचित्तादात्म्याध्यासस्य ग्रन्थिरिव मूलीभूतमज्ञानम्। भिद्यते विदार्यते। आवरणशक्तिमुच्छिद्य भोगसमाप्तिपर्यन्तं विक्षेपशक्तिमात्रविशिष्टं स्थाप्यते। शक्तिद्वयानङ्गीकारे अज्ञानस्वरूपमुच्छिद्य तत्कार्यसंस्कारदेहादिमात्रं स्थाप्यत इत्यर्थः। सर्वसंशयाः— आत्मा कर्ता नवा, अकर्ताऽपि भोक्ता नवा, अभोक्ताऽपि ब्रह्म नवा इत्यादिसंशयाः। छिद्यन्ते भिद्यन्ते। आवरणशक्तिरूपमूलोच्छेदादुत्पत्त्ययोग्याः क्रियन्त इति यावत्। कर्माण्युपभुज्यमानानि पूर्वं सञ्चितपापपुण्यानि। क्षीयन्ते उपादानभूतविक्षेपशक्तिविशिष्टाज्ञानपर्यन्तं विद्यमानान्यपि स्वाश्रये मनसि सुखादिकं न जनयन्ति। 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्, इति श्रुत्या ज्ञानिनः पुण्यादिना तदीयसुहृदादौ फलजननोक्तेः। उक्तप्राप्त्यस्वीकारेतु नश्य-

श्रीभाष्यम्

**नैवम्। सा भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य**

श्रुतप्रकाशिका

अत्राह। **नैवमिति**। प्रतीतिर्भ्रान्तित्वमाह। **सा भ्रान्तिसिद्धेति**। अनुभवविषयत्वेन पूर्वप्रतीता रजतता यथा शुक्तिज्ञानबाधितत्वाद्भ्रान्तिसिद्धा भवति तथेत्यभिप्रायेणाह। **रजततेव शुक्तिशकलस्येति**। भ्रमाधिष्ठानत्वोपपत्तये शकल शब्दः अविकलवपुषश्शुक्तेर्भ्रमास्पदत्वायोगात् * यद्वा ज्ञातृत्वे प्रतीयमाने तत्र ज्ञानांशस्य पारमार्थ्ये कर्त्रंशस्यापारमार्थ्ये च दृष्टान्ततया रजततेव शुक्तिशकलस्येत्युक्तम्। तत्रहीदमंशः परमार्थः रजततैवापरमार्थइति भ्रान्तिसिद्धत्वमुपपादयति।

**गूढार्थसंग्रहः**

न्तीत्यर्थः। अस्य दृष्टतत्वस्य। हृदयग्रन्थ्यादिषु त्रिषु तदन्वयः। तस्मिन् प्रत्यगात्मनि दृष्टे साक्षात्कृते। परावरे– परः ईशोऽपि अध्यस्तत्वेनापकृष्टः यस्माच्छुद्धब्रह्मणः तदभिन्ने। तमेव आत्मानमेव। अतिमृत्युमेति– अज्ञानमतिक्रामति ना शयतीति यावत्। अन्यः तन्मात्रज्ञानादन्यः। पन्थाः उपायः। अयनाय स्वरूपप्राप्तये। तरति नाशयति। शोकमज्ञानम्। सर्वसंसारेति। सर्वप्रपञ्चमूलाज्ञानेत्यर्थः। तस्य सर्वप्रपञ्चस्य। सूचयन्तीति। अज्ञानादेर्ज्ञाननिवर्त्यत्वरूपमिथ्यात्वोक्त्या तन्मूलकसर्वप्रपञ्चस्य मिथ्यात्वं सूचितम्। अज्ञानोच्छेदकस्य अज्ञानमूलकद्वयोच्छेदकत्वनियमादित्यर्थः' इति ॥

अद्वैतसिद्धौच असङ्गश्रुतिमुदाहृत्य 'नचैषालेपाभावपरा अकर्तृत्वप्रतिपादनाय सम्बन्धाभावपरत्वात् यथाचैतत् तथा व्यक्तमाकरे' इत्युक्तम्। अत्र गुरुचन्द्रिका। आकरे बृहदारण्यकभाष्यादौ उक्तं हि तत्र 'यदि स्वाभाविकं कर्तृत्वंस्यात् तदा आत्मनो मोक्षएव नस्यात्। अतो दृष्टैव पुण्यं पापंच' इत्यादिना कर्तृत्वाभावप्रतिपादनेन स्वभावतः अकर्तेति ज्ञापितम्। 'ध्यायतीव लेलायतीव' इतिच पूर्वमकर्तृत्वमुक्तम्। तत्रचासङ्गत्वं हेतुः कारकसंगिनो हि मूर्तस्य कर्तृत्वं नान्यस्येति। अतएवव्यासः 'शरीरस्थोऽपि कौन्तेय न करोति नलिप्यते। इति' उक्तंच वार्तिके 'आत्मा कर्त्रादिरूपश्चेत् मा काङ्क्षीस्तर्हि मुक्तताम्। नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः॥ इत्यादि इति' (प्रतिकर्मव्यवस्थोपपत्तिप्रकरणे) लघुचन्द्रिकायांच विशेषउक्तः। 'विषयनिष्ठवह्न्यादिजनकत्वात् असत्वापादकस्याप्यज्ञानस्य विषयनिष्ठत्वं वक्तुमुचितम्। अन्यथा ह्रदादि चित्सम्बन्धरूपविशेष्यतायाः वह्न्यादिचित्सम्बन्धरूपप्रकारतावच्छिन्नत्वासम्भवात्। नहि दूरस्थयोरवच्छेद्यावच्छेदकत्वं सम्भवति। अभानापादकस्याप्यज्ञानस्य प्रमात्रवच्छिन्नत्वे प्रमाणाभावः। प्रमातृविशेषस्यतु निरूपकत्वमेव अज्ञाने सम्बन्धः अन्यथा ब्रह्म मे न स्फुरतीत्यादौ का गतिः?। नहि मूलाज्ञानं प्रमात्रवच्छिन्नम्। तथाच द्विविधमप्यज्ञानं विषयेणैवावच्छिन्नं न प्रमात्रेति पश्यामः इति' एतेन शङ्करभाष्यादिषूक्तः अध्याससिद्धान्तः सम्यक्साधितो भवति। तदेतत्सर्वमभिप्रेत्याह **सा भ्रान्तिसिद्धा इति** ॥

**रजततेव शुक्तिशकलस्येति**। उक्तंच शङ्करभाष्ये तथाच लोके अनुभवः। शुक्तिकाहि रजतवदवभासतइत्यादि अत्र पञ्चपादिका। तत्र शुक्तिकोदाहरणेन सम्प्रयुक्तस्यानात्मा रजतं इति दर्शितम्। निरञ्जनस्य चैतन्यस्य अस्मदर्थे अनिदमंशस्यानात्मा तदवभास्यत्वेन युष्मदर्थलक्षणापन्नोऽहंकारः अध्यस्तइति प्रदर्शनार्थम्। इति एवं संस्कारदुष्टकारणसंवलिका सामग्री। साच एकमेव ज्ञानं एकफले जनयति। तस्यच दोषोत्थापितसंस्कारविशेषसहितसामग्रीसमुत्पन्नज्ञानस्य उचितमेव शुक्तिगतमिथ्यारजतमालम्बनमवभासते। तेन मिथ्यालम्बनं ज्ञानं मिथ्याज्ञानं न स्वतोज्ञानस्य मिथ्यात्वमस्ति

## श्रीभाष्यम्

**अनुभूतेस्स्वात्मनि कर्तृत्वायोगात्। अतोमनुष्योऽहमित्यत्यन्तबहिर्भूत**

## श्रुतप्रकाशिका

**अनुभूतेरिति**। ततः किमित्यत्राह। **अतोमनुष्यइति**। कर्तृत्वायोगमुपपादयति। * **ज्ञातृत्वंहीति**। * यद्वा ज्ञातृत्वं नाम किं ब्रह्मस्वरूपभूतज्ञानाश्रयत्वम्। उतान्तःकरणक्रियारूपज्ञानाश्रयत्वमिति विकल्पमभिप्रेत्य प्रथमं शिरोदूषयति। **अनुभूतेरिति**। पूर्वोक्तयुक्तिभिरनुभूतेरेव पारमार्थ्ये सिद्धे तस्याज्ञातृत्वं स्वात्मनिकर्तृत्वं स्यात् तत्तु व्याहतमित्यर्थः। * कर्तृत्वं

## गूढार्थसङ्ग्रहः

बाधाभावात्। भिन्नजातीयज्ञानहेतुसामग्र्योः कथमेकज्ञानोत्पादनमितिचेत्? नैष दोषः। दृश्यतेहि लिङ्गज्ञानसंस्कारयोः संभूय लिङ्गिज्ञानोत्पादनम्। प्रत्यभिज्ञानोत्पादनं च अक्षसंस्कारयोः उभयत्रापिभेदगर्भमेकमेव प्रमाणज्ञानम्। संस्कारानुद्बोधे तदभावात्। तस्माल्लिङ्गादिज्ञानमेव सम्बन्धज्ञानसंस्कारमुद्बोध्य तत्सहितं लिङ्गिज्ञानं जनयतीति वक्तव्यम्। अयमेव च न्यायः प्रत्यभिज्ञानेऽपि। न पुनर्ज्ञानद्वये प्रमाणमस्ति। तथा भिन्नजातीयज्ञानहेतुभ्यो नीलादिभ्यः एकं चित्रज्ञानं प्रदर्शनीयम्। तत्र लैङ्गिकज्ञानप्रत्यभिज्ञाचित्रज्ञानानां अदुष्टकारणारब्धत्वात् यथार्थमेवावभासः, इहतु कारणदोषादतथाभूतार्थावभास इति विशेषः। एवं च सति नानुभवविरोधः; प्रतिभासमानस्य रजतस्यैवालम्बनत्वात्। अतो मायामयं रजतम्। अथपुनः पारमार्थिकं, स्यात् सर्वैरपि गृह्येत। यतो नहि पारमार्थिकं रजतं कारणदोषं स्वज्ञानोत्पत्तावपेक्षते। यद्यपेक्षेत तदा तदभावे न तत्र ज्ञानोत्पत्तिरालोकाभावइवरूपे। मायामात्रत्वे तु मन्त्राद्युपहतचक्षुष इव दोषोपहतज्ञानकारणाएव पश्यन्तीत्युक्तम्। किंच नेदं रजतमिति बोधोऽपि मायामयत्वमेव सूचयति। कथं तेन हि निरूपाख्यतापादनपूर्वकं मिथ्यात्वं ज्ञाप्यते। नेदं रजतं मिथ्यैवावभासिष्टेति इति। अत्र विवरणम्। नन्विदमासम्प्रयोगादन्तःकरणपरिणामज्ञानमेकमुत्पद्यते न तद्रजतं तत्संसर्गं वा विषयीकर्तुमीष्टे। मिथ्यावस्तुनि देशान्तरादिगतेवा सम्प्रयोगानुपपत्तेः चक्षुरुन्मीलनान्वयव्यतिरेकयोः अधिष्ठानज्ञानोपक्षयादन्यथासिद्धेः। नापि संस्काराद्रजतांशावगमः स्मृत्यनभ्युपगमात्। नापिदोषः स्वयमेव कस्यचित् ज्ञानस्य हेतुर्दृष्टः; ज्ञानकरणानामेव कार्यविशेषनिमित्तत्वात्। अतो न रजततत्सम्भिन्नशुक्तिविषयकमेकज्ञानंसमस्ति। किंत्वविद्यैव बाह्यदोषनिमित्तकारणापेक्षया रजताकारेण साक्षिचैतन्यस्य रजतावच्छेदज्ञानाभासाकारेणच परिणममाना स्वकार्येण सह साक्षिचैतन्यस्य विषयभावं प्रतिपद्यत इति ते मतं तत्र कथं एकज्ञानत्वमिति तत्राह—एकफलत्वामिति। विषयावच्छिन्नं हि फलमवभासते न ज्ञानावच्छिन्नम्। विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मतया एकतामापन्नः तेनैकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञानद्वयमपि एकमित्युपचर्यते इति भावः। अथ विषयः कथमिति तदाह तस्यचेति। कुतो रजतस्य मिथ्यात्वमित्यत आह— तेन मिथ्यालम्बनमिति। भावाभावज्ञानयोर्मिथ्यात्वप्रसिद्ध्यभावात् इदं ज्ञानसमवायि मिथ्यात्वं अनिर्वचनीयार्थतामेव गमयतीत्यर्थः' इति ॥

अद्वैतसिद्धौच इदमंशोऽन्तःकरणवृत्तिः रूप्यांशे अविद्यावृत्तिरिति वृत्तिभेदेऽपि इदमंशावच्छिन्नचैतन्यप्रकाश्यत्वेन फलैक्यात् ज्ञानैक्यधीः। नच परोक्षभ्रमे अपरोक्षैकरसचैतन्यरूपफलैक्याभावात् कथं तन्निबन्धनज्ञानैक्यानुभवः इति वाच्यम्। तत्र फलैक्यमुपचर्यज्ञानैक्योपचारइत्येव विशेषात् इत्युक्तम्। फलैक्यादिति। आवरणनाशरूपफलविशिष्टत्वेन इदमंशावच्छिन्नचिदेवफलम्। तथाच उक्तफलस्यैक्यात् तदवच्छिन्नवृत्तिज्ञानयोरैक्यव्यवहारः इति भावः। इतिलघुचन्द्रिका। **अनुभूतेस्स्वात्मनि कर्तृत्वायोगादिति**। अनुभूतेर्निर्धर्मकत्वेन आश्रयेण धर्मेण धर्मवत्वांशे भ्रान्तिः इति भावः ॥

## श्रीभाष्यम्

**मनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तं ज्ञातृत्वंहि ज्ञानक्रियाकर्तृत्वम् । तच्च विक्रियात्मकं जडं विकारद्रव्याहङ्कारग्रन्थिस्थमविक्रिये**

## श्रुतप्रकाशिका

आश्रयत्वं । * ज्ञातृत्वं भ्रान्तपुरुषप्रतीतिसिद्धत्वाचाध्यस्तमित्यभिप्रायेणाह । **अतइति** । पिण्डस्योत्पत्यादिभिरात्मव्यतिरिक्तत्वस्य सम्प्रतिपन्नत्वादत्यन्तबहिर्भूतेत्युक्तम् ॥

अथ न केवलं स्वापेक्षया कर्तृत्वमनुपपन्नम् । अपितु स्वपराविभागानिर्विशेषं कर्तृत्वमात्रमेवानुपपन्नमित्यभिप्रायेण द्वितीयं शिरोदूषयति । **ज्ञातृत्वंहीति** । ततःकिमित्यत्राह । **तच्चेति** । विक्रियात्मकं उत्पत्तिविनाशयोगाक्रियायास्तदाश्रयत्वमापि कादाचित्कमिति तद्विकाररूपमित्यर्थः । जडं ज्ञेयं अतएव * विकारिद्रव्याहङ्कारग्रन्थिस्थं * जडत्वविक्रियात्मकत्वसाम्यादितिभावः ग्रन्थिर्नाम बन्धनस्याशैथिल्यकरो ग्रथनविशेषः । अहङ्कारस्य सर्वभ्रममूलत्वाद्ग्रन्थिरित्युक्तं एतद्विरोधिरूपमाह । **अविक्रियइति** । साक्षित्वाभ्युपगमेन ज्ञातृत्वमभ्युपगतं भवतीति शङ्कायां साक्षित्वमपि ज्ञानस्वरूपत्वानुगुण-

## गूढार्थसंग्रहः

**मनुष्यत्वादि विशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तामिति** । अज्ञानाध्यासविशिष्टचैतन्ये अहंकाराध्यासः । तद्विशिष्टे कामसङ्कल्पादीनामहङ्कारधर्माणां इन्द्रियधर्माणांच काणत्वबधिरत्वक्लीबत्वादीनामध्यासः । इन्द्रियाणां तु परोक्षत्वान्नापरोक्षधर्माध्यास इति सिद्धान्तः । तद्विशिष्टे स्थूलदेहाध्यासः धर्मिपुरस्कारेणैव अहंमनुष्यः इत्याद्याकारः । नतु स्वरूपतः अहं देह इत्यध्यासः ; तथा प्रतीत्यभावात् । तद्विशिष्टेच स्थौल्यादीनां च तद्विशिष्टे बाह्यानां पुत्रभार्यादीनां साकल्यवैकल्यादिधर्माध्यासः । एवं चैतन्यस्याप्यहङ्कारादिषु देहपर्यन्तेष्वध्यासः संसर्गतः अध्यासव्यवधानतारतम्याच्च प्रेमयतारतम्यम्' इति सिद्धान्तबिन्दौ अध्यासभेदाः प्रदर्शिताः ॥

अत्र 'अहमज्ञः कामी अहं मनुष्यः कामी सकलो मनुष्यः इत्यादिप्रत्ययस्यापि सत्वात् । मनआद्यवच्छेदेन शुद्धचिति अज्ञानादिविशिष्टचितोऽन्तर्गतत्वरूपप्रतिबिम्बत्वरूपसंसर्गः अध्यस्तो जायते । तथाच उक्तप्रत्ययस्यापि निर्वाहः । तन्नान्तरीयकतया मनसः प्रतिबिंबाध्यासाधीनप्रमातृत्वस्यापि पूर्वोक्तस्य सिद्धिरित्याशयेनाह– एवं चैतन्यस्येत्यादि । चैतन्यस्य अज्ञानादिविशिष्टचैतन्यस्य अहङ्काराद्याधारस्य । अहङ्कारादिषु मनआद्यवच्छेदकेषु । देहपर्यन्तेषु साकल्यादिविशिष्टदेहपर्यन्तेषु । संसर्गतः प्रतिबिम्बत्वरूपेण' इति न्यायरत्नावली ॥

उक्तं च शङ्करभाष्येऽपि–'तथाहि ब्राह्मणो यजेत इत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमाचारवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते । अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा पुत्रभार्यादिषु सकलेषु विकलेषु वा अहमेव विकलस्सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति, तथा देहधर्मान् स्थूलोऽहं गौरोऽहं तिष्ठामि गच्छामि लङ्घयामिचेति । तथेन्द्रियधर्मान् मूकः काणः क्लीबः बधिरः अन्धोऽहमिति । तथा अन्तःकरणधर्मान् कामसङ्कल्पविचिकित्साऽध्यवसायादीन् । एवमहम्प्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तंच प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति । एवमयमनादिरनन्तः नैसर्गिकोऽध्यासः मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः इति । अत्र पञ्चपादिका । तस्मादेहादिव्यतिरिक्तविषयएवायमहङ्कारइत्यात्मवादिभिरभ्युपेयम् । अन्यथा आत्मसिद्धिरप्रामाणिकीस्यात् अतो गौणो मनुष्यत्वाभिमानः । उच्येत । यद्यपि देहादिव्यतिरिक्तभोक्तृविषयएवायमहङ्कारः तथापि तथा अनध्यव-

## श्रीभाष्यम्

**साक्षिणि चिन्मात्रात्मनि कथमिव सम्भवति। दृश्यधीनसिद्धित्वादेव रूपादेरिव**

## श्रुतप्रकाशिका

मित्यभिप्रायेण साक्षिणीत्युक्तम्। अविद्याऽनुभवरूपत्वमेव साक्षित्वमिति ज्ञानत्वाविरोधइतिभावः। चिन्मात्रात्मनि स्वयम्प्रकाशे जडं ज्ञातृत्वमप्यजडस्य न सम्भवतीतिभावः। कर्तृत्वादिर्नात्मधर्मः दृश्यधीनसिद्धित्वात् रूपादिवदित्यन्वयिनमभिप्रेत्याह। **दृश्यधीनसिद्धित्वादेवेति**। कर्तृत्वादेरित्यादिशब्देनाहम्प्रत्ययगोचरत्वं गृह्यते। यएव भेदादीनामनुभूतिधर्मत्वाभावे हेतुः तेनैवेत्येवकाराभिप्रायः॥

## गूढार्थसंग्रहः

सायात् तद्धर्मानात्मन्यध्यस्यति। दृश्यतेच स्वरूपेणावभासमानेऽपि वस्त्वन्तरभेदानध्यवसायात् तत्संभेदेनावभासः। यथैकस्मिन्नप्यहङ्कारे ह्रस्वादिसम्भेदः इत्यादि॥ अत्र विवरणम्। 'ननु प्रत्यक्षे देहात्मैक्याध्यासे किमैक्यप्रत्ययमपबाध्य व्यतिरेकेप्रमाणमुक्तमिति? उच्यते। युक्तिसहितागमानुमानाद्प्रत्ययैः द्विचन्द्रबाधया एकत्ववत् व्यतिरेकस्सिद्ध्यतीत्युक्तं भवति।' इति॥

अत्र तत्वदीपनम्। 'बाल्याद्यवस्थासु शरीरव्यावृत्तावपि अहंप्रत्ययोऽनुवर्तते। अनुवर्तमानस्य च व्यावृत्तमात्रालम्बनत्वायोगात् सकलावस्थानुस्यूतात्मतत्वमालम्बनमेष्टव्यं इत्याद्या युक्तिः' इति॥ अत्रमनुष्योऽहमित्यत्र गौणत्वं प्रभाकरोक्तं दूषयित्वा अध्यासस्साधितः। तेन मनुष्योऽहमित्यत्र मनुष्यत्वादिविशिष्टपिण्डात्माभिमान एव परेषां सम्मतः। ब्राह्मणो यजेतेत्यत्र अध्यासः स्पष्टमेव भाष्ये उक्तः। लघुगुरुचन्द्रिकयोस्तु 'वस्तुतो ब्राह्मणत्वादिविशिष्टे ब्राह्मणादिपदशक्तिः। ब्राह्मणत्वादिवैशिष्ट्यं च देहे स्वाभाविकमात्मन्यौपाधिकम्। तदुभयमपि व्यावहारिकत्वाच्छक्यशरीरप्रविष्टम्। आजानिकव्यवहारस्य शक्तिग्राहकस्योभयत्राप्यविशिष्टत्वात्। तदुभयोरेकत्वेन व्यवहारकाले निश्चयाच' इत्युक्तम्॥

अत्र महासिद्धान्तभाष्ये अहमर्थस्येदमनिदंरूपवस्तुगर्भत्वं स्पष्टमुक्तमिति तदंशे अध्यासः अत्रापि भगवतो विवक्षितः। अत्रैव विकारिद्रव्याहङ्कारिग्रन्थिस्थमित्युक्तेः। अत्राहमर्थस्यैवात्मत्वाभिप्रायेण प्रभाकरपूर्वपक्षः। अहमर्थस्य चिदचिद्ग्रन्थिरूपतया नात्मत्वं, किं तु विषयाश्रयविनिर्मुक्तानुभूतेरेव। सैव अहम्प्रत्यये अनिदमंशः चित्पदार्थः। इति ज्ञातृत्वस्याप्यध्यासइति भावः। तदेतदाह **साक्षिणि चिन्मात्रात्मनि इति**। अहमर्थसाक्षि निर्धर्मकं चिदेव आत्मा इति आत्मनि ज्ञातृत्वस्य अहं जानामीत्यतः न सिद्धिरिति भावः। पञ्चपादिकायां तस्माच्चित्स्वभावएवायमात्मा तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते। अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते, इत्यनन्तरं 'बाढं' अतएव विषयानुभवनिमित्तः अनिदमात्मकः अहङ्कारो वर्ण्यते। किंतु तथासति सुषुप्तेऽपि अहमित्युल्लेखस्स्यात् कथं? नीलानुषङ्गो यश्चैतन्यस्य स नीलभागः नासावहमुल्लेखार्हः। अहमित्यात्मावभसते। तत्र यदि नाम सुषुप्ते विषयानुषङ्गाभावात् इदं जानामीति विषयतदनुभवपरामर्शोनास्ति। माभूत् अहमित्यात्ममात्रपरामर्शः किमिति नभवेत्। ननु अहमिति भोक्तृत्वं प्रतिभासते। तदभावे कथं तथा प्रतिभासः? नैतत् सारम्। समुत्कालितोपाधिविशेषं चैतन्यमात्रमस्मदर्थः ततस्सर्वदा अहमिति स्यात्। नैतच्छक्यम्। उपाधिपरामर्शेन चैतन्यमहमित्युल्लिख्यत इति वक्तव्यम्। तत्परामर्शो हि तत्सिद्धिनिमित्तः, न स्वरूपसिद्धिहेतुः। स्वमाहात्म्येनैवतु स्वरूपसिद्धिः। ततश्च विषयोपरागानुभवात्मत्वशून्यः स्वरूपत एवाहमिति सुषुप्तेऽप्यवभासेत; दृशिरूपत्वाविशेषात्। भवत्येवेतिचेन्न। तथाऽपि हि स्मर्येत ह्यस्तन इवाहङ्कारः। अविनाशिनस्स-

## श्रीभाष्यम्

**कर्तृत्वादेर्नात्मधर्मत्वं सुषुप्तिमूर्छादावहंप्रत्ययापायेपि**

## श्रुतप्रकाशिका

अहमर्थोह्यात्मा तेन समानाधिकरणतया प्रतीतोज्ञाताऽऽत्मास्यादित्यत्राह । **सुषुप्तिमूर्छादाविति** । '**नाहखलु**' इत्यादिश्रुत्युपजीवनेनाहम्प्रत्ययापायेऽपीत्युक्तम् । आत्मनः कर्तृत्वाहम्प्रत्ययगोचरत्वाभावे व्यतिरेक्यनुमानत्रयं प्रसङ्गरूपे-

## गूढार्थसंग्रहः

स्कारस्याभावात् न स्मर्येतेति चेत् ? ह्यस्तनमपि नस्मर्येत । नन्वस्त्येव सुषुप्तेऽहमुल्लेखः सुखमहमस्वाप्समिति । सुप्तोत्थितस्य स्वापसुखानुभवपरामर्शनात् । न तत्त्वापि सुखानुभवसंस्कारजं स्मरणम् । किं तर्हि ? सुखावमर्शो दुःखाभावनिमित्तः । कथम् ? स्वप्ने तावदस्त्येव दुःखानुभवः । सुषुप्ते तदभावात् सुखव्यपदेशः । तदभावश्च करणव्यापारोपरमात्' इत्याद्युक्तम् ॥ अत्र विवरणम् । 'ननु स्वयंप्रकाशमानात्मचैतन्यस्य विषयानुभवत्वेऽपि विषयानुभवमेव निमित्तीकृत्य अहम् इति द्रष्टृपरामर्शात् आत्मैवाहङ्कारः संवृत्तः इति चोदयति । बाढमतएवेति । द्रष्टृरूपेण परामर्शस्य विषयानुभवो निमित्तम् । अन्यथा द्रष्ट्रादिविभागशून्यः चिन्मात्रावभासस्स्यात् इति भावः । मैवं–सुषुप्तावात्मन्यवभासमानेऽपि अहङ्कारस्यानवभासमानत्वादिति व्यतिरेकप्रदर्शनेन परिहरति– सत्यमेवमिति । इति ॥

अत्र अहमिदंजानामीत्यत्र विषयाश्रयसम्बन्धिनः अनुभवव्यपदेश्यत्वं तस्यैवानुभवस्य विषयाश्रयाविनिर्मुक्तस्य आत्मव्यपदेश्यत्वं एवमहामित्यत्र अहमर्थस्यच अनिदमात्मकत्वमपि वर्ततइतिच पूर्वमुक्तम् । ततउपरि 'अहं इदं जानामी' त्यत्र अहमिति ज्ञातृपरामर्शात् आत्मैवाहङ्कारइति शङ्का । इत्थंच पञ्चपादिकोक्तरीत्या आशङ्कायामाह **सुषुप्तिमूर्छादाविति** ॥

**अहम्प्रत्ययापायेऽपीति** । उक्तंच पञ्चपादिकायां तस्मात् ब्रह्मविदामेकपुण्डरीकस्य लोकानुग्रहैकरसतया सम्यक् ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम् । तदुच्यते – येयं श्रुति स्मृतीतिहास पुराणेषु नामरूपव्याकृतमविद्या,माया प्रकृतिरग्रहणमव्यक्तं तमः कारणं लयः, शक्तिः महासुषुप्तिर्निद्रा अक्षरमाकाशमिति च तत्र तत्र बहुधा गीयते । चैतन्यस्य स्वत एव अवस्थितलक्षणब्रह्मस्वरूपावभासं प्रतिबध्य जीवत्वापादिकाऽविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिः सुषुप्ते प्रकाशाच्छादनविक्षेपसंस्कारमात्ररूपस्थितिरनादिरविद्या । तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषः विज्ञानाक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसंज्ञातज्योतिः स्वयम्प्रकाशमानो अपरोक्षोऽहङ्कारः यत्संभेदात् कूटस्थचैतन्यः अनिदमंशः आत्मधातुरपि मिथ्यैव भोक्तीति प्रसिद्धिमुपगतः । सच सुषुप्ते समुत्खात निखिलपरिणामायां अविद्यायां कुतस्त्यः इति ॥

अत्र विवरणम् । यस्मादात्मनोऽहङ्कारो भिद्यते तस्मादागममूलभाष्यवचनं उपपन्नमित्याह 'तस्मात् ब्रह्मविदां' इति कश्चासावागमः 'सएवाधस्तात्' सएवोपरिष्टात् इति भूमाख्यब्रह्मणः सर्वात्मकत्वमभिधाय अथातोऽहङ्कारादेशइति तस्यापि सर्वात्मकत्वमुक्त्वा अथात आत्मादेश इति आत्मानमहङ्काराद्भेदेन निर्दिशति । ननु जीवब्रह्मणोः सार्वात्म्यव्यपदेशो यथैकत्वसिध्यर्थः एवमहङ्कारस्य आत्मैकत्वसिध्यर्थो व्यपदेशस्स्यात् । तन्न । द्वयोः सार्वात्म्यायोगात् तत्र युक्तं भेदेन प्रतिपन्नयोः जीवब्रह्मणोरेकत्वसिध्यर्थः तदुपदेशः अहङ्कारस्यतु पूर्वमेवात्मैकत्वप्रतिपत्तेः पृथगुपदेशो भेदसिध्यर्थः इति गम्यते । ब्रह्मणः परोक्षस्य प्रत्यक्षत्वसिद्धये अहमात्मत्वं उपदिश्य पुनस्तद्व्युदासेन मुख्यात्मत्वमुपदिशतीत्यर्थः । महाभूतान्यहङ्कारः इतिच स्मृतिः । तर्हि अहङ्कारः किमुपादानः किंनिमित्तः किंस्वरूपः किंप्रमाणकः किंकार्यः किमिति सुषुप्ते न भाति ।

## गूढार्थसंग्रहः

इति चोदितेसति उच्यत इत्यादि परिहारः। किमिति तर्हि सुषुप्ते नस्यात् इत्यतआह सच सुषुप्तइति। अज्ञानकार्यलिङ्गशरीरप्रविलयोहि सुषुप्तिरित्यर्थः। ननु सतिप्राणे क्रियात्मनि कथमहङ्कारस्य क्रियाशक्तेःप्रविलयः ? उच्यते। नाहङ्कारमात्रत्वं प्राणस्य उच्यते किंतु प्राणस्य पृथक्सतः पञ्चधा व्यापारहेतोरहङ्कारस्य क्रियाशक्तिरस्तीत्येतावदुच्यते मनोऽधीनतादर्शनात् प्राणवृत्तेरिति। प्राणलक्षणक्रियाशक्त्यंशंवा विहाय विज्ञानशक्त्यंशस्य वा लयः कल्प्यतां सांशत्वादन्तःकरणस्य स्वप्नादिवत् दृष्टिसृष्टिमाश्रित्य वा सुषुप्तपुरुषदृष्ट्याभिप्रायेण सर्वस्य तत्र लयो दर्शितः सुषुप्तप्राणशरीरादिदर्शनस्य पुरुषान्तरस्य विभ्रमत्वादिति इति॥

अत्र तत्त्वदीपनम्। स्वप्नादिवदिति। 'अथ रथान् रथयोगान् पथः सृजते' इत्यत्रोच्यमाना स्वाप्नी सृष्टिः दृष्टेरेव यथा तथा जागरणेऽपि दृष्टेरेव सृष्टित्वात्। सुषुप्तस्य च तद्दर्शनाभावात् सर्वलयः इत्यर्थः : नच तत्र प्रमाणाभावः इत्यतआह दर्शित इति। श्रुताविति शेषः। यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राणएवैकधा भवति। तदैनं वाक् सर्वैर्नामभिः सहाप्येति (कौ) इति सुषुप्तौ सर्वस्य लयं दर्शयति। एवमेव एतस्मादात्मनः सर्वे प्राणा (बृ) इत्यत्र प्रबोधावस्थायां सृष्टिंच दर्शयति। नचैवं प्रत्यभिज्ञाविरोधः। कारणात्मना स्थितस्य अभिव्यक्तिमात्राश्रयणादित्यर्थः। इति।

सिद्धान्तबिन्दौच अज्ञानोपहितं बिम्बचैतन्यं ईश्वरः। अज्ञानप्रतिबिम्बचैतन्यं जीवइतिवा अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः अज्ञानोपहितं जीव इतिवा मुख्यो वेदान्तसिद्धान्तः एकजीववादाख्यः। इममेव दृष्टिसृष्टिवादमाचक्षते। अस्मिंश्च पक्षे जीवएव स्वाज्ञानवशात् जगदुपादानं निमित्तंच। दृश्यं सर्वं प्रातीतिकं देहभेदाच्च जीवभेदभ्रान्तिः। एकस्यैवच स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यात् आत्मसाक्षात्कारे सति मोक्षः। शुकादीनां मोक्षश्रवणंचार्थवादः इत्युक्तम्। अद्वैतसिद्धावपि दोषप्रयुक्तत्वनिबन्धनस्य ज्ञातैकसत्वस्य अज्ञातसत्वाभावस्य वा प्रतिपन्नोपाधिदृष्टिजन्यज्ञातैकसत्वस्य वा द्रष्ट्रन्तरावेद्यत्वेसति ज्ञातैकसत्वस्य वा दृष्टिसृष्टिपदार्थत्वस्य विवक्षितत्वात् 'जीवईशो विशुद्धाचित् तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादयः॥' इत्युक्तानाद्यतिरिक्तसृष्टिविषयएव दृष्टिसृष्टिस्वीकारात्। नचैवं वेदान्वाक्यस्य मीमांसायाश्च स्वप्नवाक्यतन्मीमांसातुल्यतापत्तिः। विषयबाधाबाधाभ्यां विशेषोपपत्तेः नतु तद्द्वितीयं अस्ति ततोऽन्यद्विभक्तं यत्पश्येत् इत्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात्। सयथोर्णनाभिः तन्तुनोच्चरेत् यथाऽग्नेः क्षुद्राविस्फुलिङ्गाः व्युच्चरन्ति। 'एवमेतस्मात् आत्मनः सर्वे प्राणाःसर्वे लोकाः' (बृ.४.१.२०) इत्यादौ ऊर्णनाभ्यादेः तन्त्वादि जन्मोत्पत्तिस्तु लौकिकभ्रमसिद्धकार्यकारणभावप्रसिद्धिमनुरुध्य। सर्वलोकादिसृष्टिश्च तत्तदृष्टिव्यक्तिमभिप्रेत्य। यदा यत्पश्यति तत्समकालं तत्सृजतीत्यत्र तात्पर्यात् इत्युक्तम्॥

अत्र लघुचन्द्रिका सृष्टिविषये सृज्यमाने एव या दृष्टिः सा अनाद्यन्यत्र नत्वनादौ स्वीक्रियते। तत्र मिथ्यात्वसिद्धिस्तु दृश्यत्वादिनैव नतु दृष्टिसृष्ट्या इति भावः। विषयबाधेति ननु स्वप्नाविशेषे बाधाभावोऽपि अनुपपन्नइतिचेन्न। दोषप्रयुक्तत्वाज्ञानेनाबाधोपपत्तेः। वस्तुतः ईशस्येव जीवेशभेदादेरपि स्थूलमनःपरिणामत्वमेव। सुषुप्त्यन्यकालएव तस्यदृष्टेः। अज्ञानसत्वेन न सुषुप्तिप्रलययोर्मुक्तिरिति ध्येयम्। इति अज्ञायमानतादशायां घटादावनन्तसंयोगादिकं इन्द्रियक्रियासंयोगादिकं तस्य प्रत्यक्षहेतुत्वादिकं प्रातीतिकव्यावहारिकयोर्मिथो व्यावृत्तरूपेणान्यत्रहेतुत्वादिकं नकल्प्यते। ज्ञानहेतुत्वस्थले विषयस्यैव हेतुत्वं जन्यज्ञानकल्पनंचेति लाघवम्। घटं पश्यामीत्यादिप्रत्ययेच घटादौ चाक्षुषाद्यभेदो विषयः घटादावेव चाक्षुषत्वादि धर्मस्वीकारादित्यादिरूपं इति शेषः। इतिच। अयमेको दृष्टिसमया सृष्टिः इति दृष्टिसृष्टिवादः। अन्यस्तु दृष्टिरेव विश्वसृष्टिः दृश्यस्य दृष्टिभेदे प्रमाणाभावात्। 'ज्ञानस्वरूपमेवाहुः जगदेतद्विचक्षणाः। अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः॥' इति स्मृतेश्चेति सिद्धान्तमुक्तावल्यादि दर्शितो दृष्टिसृष्टिवादः इति सिद्धान्तलेशसङ्ग्रहे उक्तम्। एवंच पञ्चपा-

## श्रीभाष्यम्

**आत्मानुभवदर्शनेन नात्मनोऽहम्प्रत्ययगोचरत्वम् । कर्तृत्वेऽहम्प्रत्ययगोचरत्वेचात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः । अहम्प्रत्ययगोचरात् कर्तृतयाप्रसिद्धाद्देहात्तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव । तथाऽहमर्थात् ज्ञातुरपि विलक्षणस्साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् ।**

## श्रुतप्रकाशिका

णाह । **कर्तृत्वइति** । आत्मा नकर्ता नचाहम्प्रत्ययगोचरइति प्रतिज्ञाद्वयम् । अजडत्वात्प्रत्यक्त्वादात्मत्वादिति हेतुत्रयम् । यत्कर्तृ यदहम्प्रत्ययगोचरः तज्जडं पराक् अनात्माचदृष्टं यथा शरीरमिति । यद्वा आत्मा नकर्ता नचाहम्प्रत्ययगोचरः जडत्वादिप्रसङ्गात् देहवदिति जडत्वं दृश्यतैकरूपत्वम् । पराक्त्वं परस्मैभासमानत्वम् । आत्मत्वं पुरुषार्थप्रतिसम्बन्धित्वम् । देहं प्रतिनियन्तृतया व्याप्तित्वंवा तदभावोऽनात्मत्वं आदिशब्देन क्षयित्वादिकं विवक्षितम् ॥

अहम्प्रत्ययगोचरस्य देहस्यानात्मत्वे सिद्धेप्यहम्प्रत्ययगोचरस्य कर्तुरनात्मत्वप्रसक्तिरित्यत्राह । **अहम्प्रत्ययगोचरादिति** । क्रियाफलस्वर्गादेर्भोक्तुरित्यनेन देहातिरिक्तत्वं सिद्धम् । प्रामाणिकानां चार्वाकव्यतिरिक्तानां अनात्मनोऽहङ्कारस्य कर्तृत्वे कथमात्मनस्संसारभोक्तृत्वमितिच शङ्का * शरीरप्रतिबन्द्या निरस्ता । स्वर्गादिभोक्तुरात्मत्वे सिद्धे ज्ञातैवात्मा स्यादित्यत्राह । **तथेति** । शरीरातिरिक्तात्मनोऽभ्युपगमोहि प्रमाणबलात्क्रियते तथा ज्ञातुरपि विलक्षणत्वेन प्रमाणसिद्धत्वात्तथाऽभ्युपगन्तव्यमित्यर्थः । * यद्वा अप्रामाणिकाहम्प्रत्ययगोचरत्वेनहि शरीरस्यानात्मत्वादि प्रामाणिकाहम्प्रत्ययगोचरस्यतु कथमनात्मत्वादीत्यत्राह । **अहम्प्रत्ययगोचरादिति** । देहस्याप्रामाणिकाहम्प्रत्ययगोचरत्वं प्रमाणबाधादेवहि ज्ञायते । एवं कर्मफलभोक्तुरौपाधिकाकारवतो * ज्ञातुरात्मत्वं प्रमाणबाधितंचेदात्मनस्तद्विलक्षणत्वं स्वीकार्यमित्यर्थः अतःप्रामाणिकाप्रामाणिकविभागाभावेनाहम्प्रत्ययगोचरत्वमात्रमेवानात्मत्वसाधकमिति भावः ॥

## गूढार्थसंग्रहः

दिकोक्तदिशा अहमर्थाभावादहम्प्रत्ययाभावः । अहमर्थसत्तावादिनैयायिकप्राभकरादिमतेऽपि अहंप्रत्ययो नाभ्युपगम्यते । अहंप्रत्ययाभावस्सर्वसम्मत इति भगवत आशयः ॥

**आत्मानुभवदर्शनेनेति** । सुषुप्तौ वार्तिकपञ्चपादिकाकारयोर्मते वृत्तेरनङ्गीकारेऽपि आत्मनः स्वयंप्रकाशतया स्फुरणं वर्तत एव । विवरणे अविद्यासुखसाक्ष्याकाराविद्यावृत्तित्रयं सिद्धान्तितमिति सर्वपक्षेष्वात्मानुभवः अभ्युपगत इति भावः ॥ **साक्षी प्रत्यगात्मेति प्रतिपत्तव्यमिति** । उक्तंच भाष्ये (शं) 'औपनिषदस्य पुरुषस्यानन्यशेषत्वात् । योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्म उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नाधिगम्यत इतिवा । शक्यं वादतुम् । 'स एष नेति नेति आत्मा' (बृ.३.९.२६.) इत्यात्मशब्दात् । आत्मनश्च प्रत्याख्यातुमशक्यत्वात् य एव निराकर्ता तस्यैवात्मत्वात् नन्वात्मा अहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् ? न । तत्साक्षित्वेन प्रत्युक्तत्वात् । नह्यहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः समः एकः कूटस्थनित्यः पुरुषः विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा । अतः स नकेनाचित् प्रत्याख्यातुं शक्यः विधिशेषत्वं वा नेतुम् । आत्मत्वादेवच सर्वेषां नहेयः नाप्युपादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो विनाशहेत्वभावादविनाशी । विक्रियाहेत्वभावाच्च कूटस्थनित्यः । अत एव नित्यशुद्धबुद्धमुक्तस्वभावः । तस्मात् 'पुरुषान्न परं किंचित् सा

## गूढार्थसङ्ग्रहः

काष्ठा सा परा गतिः' (कठ.१.३.११) 'तंत्वौपनिषदं पुरुषं पृच्छामि' (बृ,५.९.२६.) इतिचौपनिषदत्वविशेषणं पुरुषस्य उपनिषत्सु प्राधान्येन प्रकाशमानत्वे उपपद्यते' इति ॥ (ब्र.सू.१.१,४.)

अत्र भामती– 'उप नि पूर्वात्सदेर्विशरणार्थात् क्विपि उपनिषत्पदं व्युत्पादितम्। उपनीय अद्वयंब्रह्म सवासनामविद्यां हिनस्तीति ब्रह्मविद्यामाह। तद्धेतुत्वाद्वेदान्ता अप्युपनिषदः। ततो विदितः औपनिषदः पुरुषः। एतदेव विभजते- योऽसावुपनिषत्स्वेवेति। अहंप्रत्ययाविषयाद्भिनत्ति– असंसारीति। विक्रियाहेत्वभावाच्च कूटस्थनित्यः। त्रिविधोऽपि धर्मलक्षणावस्थापारिणामलक्षणो विकारो नास्तीत्युक्तम्। अपिच आत्मनः परमार्थसतो धर्मोऽपि परमार्थसन्निति न तस्यात्मनोऽन्यथात्वं कारणैश्शक्यते कर्तुम्। नच धर्मान्यथात्वादन्यो विकारः। तदिदमुक्तं' विक्रियाहेत्वभावादिति' इति ॥ अत्र पञ्चपादिका– 'अतएव औपनिषदत्वविशेषणम्। अनन्यविषयत्वात्। तच्च वेदान्तानां तत्परत्वेऽवकल्पते' इति ॥ अत्र विवरणम्– 'औपनिषद इति ताद्धितप्रत्ययः ब्रह्मणि वेदान्तान् विनियुङ्क्ते। तथा' सर्वे वेदा यत्पदमामनन्ति' वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृत्' इति श्रुतिस्मृतिभ्यां ब्रह्मपरा वेदान्ता इति गम्यते' इति ॥

सिद्धान्तबिन्दौ च 'ननु प्रमाश्रयः प्रमाता। स एव कर्ता भोक्ता प्रदीपवत् स्वपरसाधारणसर्वभासकश्चेति न घटादिवत्साक्षिसापेक्ष इति चेन्न। विकारित्वेन स्वविकारसाक्षित्वानुपपत्तेः। दृश्यस्य द्रष्टृत्वानुपपत्तेः प्रमातुश्च परिणामित्वेन दृश्यत्वात् एकस्य कूटस्थस्यैव सर्वसाक्षित्वात्। ननु एकः कूटस्थः निर्धर्मकस्साक्षी नाद्रियते अप्रामाणिकत्वादिति चेन्न। 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' 'न दृष्टेर्द्रष्टारं पश्येः' 'अदृष्टो द्रष्टा–नान्योतोऽस्ति द्रष्टा' इत्यादि वदता वेदान्तप्रमाणराजेन तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात्। ननु महदेतदिन्द्रजालम्। प्रमाश्रयानकूटस्थान् विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति? बाढमिन्द्रजालमेवैतत् स्वप्नवदविद्याविलसितत्वात्। तथाऽपि दृश्यस्य घटादिवज्जडत्वेन कथं प्रमाश्रयत्वमितिचेन्न। दर्पणादिवत् स्वच्छत्वेन चित्प्रतिबिम्बग्राहकत्वात् चित्तादात्म्याध्यासाद्वा। ननु नीरूपस्य निरवयवस्य कथं प्रतिबिम्ब इतिचेत्; काऽत्रानुपपत्तिः। विभ्रमहेतूनां विचित्रत्वात्। जपाकुसुमरूपस्य नीरूपस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात्। शब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्। तयोः सम्प्रतिपन्नप्रतिबिम्बवैलक्षण्यानिरूपणात्। तथाऽपीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति चेन्न। व्यभिचारात्। अनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्य आकाशस्यापि जलादौ प्रतिबिम्बोपलम्भात्। अन्यथा जानुमात्रेऽप्युदकेऽतिगम्भीरप्रतीति र्नस्यात्। आकाशप्रतिबिम्बस्य साक्षिभास्यत्वेऽपि अधिष्ठानग्रहणार्थं चक्षुषोऽपेक्षणात्। एतेन नीलं नभ इत्यादिविभ्रमेऽपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ। तत्र सालोकस्याकाशस्याधिष्ठानत्वात्। तस्माच्चाक्षुषबिम्बमेव रूपसापेक्षं नान्यदित्यवधेयम्। तथाऽप्यात्मनः प्रतिबिम्बे किं प्रमाणमितिचेत्? शृणु। 'तदस्य रूपं प्रतिचक्षणाय' (बृ) 'माया आभासेन जीवेशौ करोति' (नृ.उ ता.) इत्यादिश्रुतिः। 'एकधा बहुधाचैव दृश्यते चलचन्द्रवत्' इति स्मृतिः। 'स एषइहप्रविष्ट आनखाग्रेभ्यः' (बृ.३) 'सएतमेव सीमानं विदार्यैतया प्रापद्यत (ऐ.उ) तत्सृष्ट्वा तदेवानुप्राविशत्' (तै) इत्यादिप्रवेशश्रुत्यर्थापत्तिः। 'आभासा एव च' 'अतएवचोपमा सूर्यकादिवत्' इत्यादिसूत्राणिच तत्रतत्रमानानि। तस्यच प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिबिम्बवादिनः। मिथ्यात्वमेवेति आभासवादिनः स्वरूपेत्वविवादएवेत्यन्यदेतत् इति ॥

अज्ञानोपहितआत्मा अज्ञानतादात्म्यापन्नः स्वचिदाभासाविवेकात्। अन्तर्यामीसाक्षीजगत्करणमितिच कथ्यते। बुध्युपहितश्च तत्तादात्म्यापन्नः स्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेतिच कथ्यते इति वार्तिककारपादाः। प्रतिदेहं बुद्धीनांच भिन्नत्वात् तद्गतचिदाभासभेदेन तदविविक्तंचैतन्यमपि भिन्नमिव प्रतीयते। अज्ञानस्यतु सर्वत्राभिन्नत्वात्

## गूढार्थसङ्ग्रहः

तद्गतचिदाभासभेदाभावात् तदविविक्तसाक्षिचैतन्यस्य न कदाऽपि भेदभानमिति । ' अयमेवपक्षः आभासवादइतिगीयते। अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीवइति विवरणकाराः । अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः बुद्धिप्रतिबिम्बितं चैतन्यं जीवः, अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति सङ्क्षेपशारीरककाराः । अनयोःपक्षयोर्बुद्धिभेदाज्जीवनानात्वम् । इममेव प्रतिबिम्बवादमाचक्षते । अज्ञानविषयीकृतं चैतन्यमीश्वरः । अज्ञानाश्रयीभूतंच जीवइति वाचस्पतिमिश्राः । अस्मिंश्चपक्षे अज्ञाननानात्वाज्जीवनानात्वं । प्रतिजीवंच प्रपञ्चभेदः । जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वम् । प्रत्यभिज्ञाचापि सादृश्यात् । ईश्वरस्यच सप्रपञ्चजीवाविद्याऽधिष्ठानत्वेन कारणत्वोपचारादिति । अयमेवच अवच्छेदवादः इति । अविद्याप्रतिबिम्बपक्षे बिम्बचैतन्यं साक्षी । बिम्बेश्वरपक्षेतु बिम्बप्रतिबिम्बसुखानुगतमुखस्वरूपवज्जीवेश्वरानुगतं सर्वानुसन्धातृचैतन्यं साक्षीत्युच्यते । वार्तिककारमतेतु ईश्वर एव साक्षीति द्वैविध्यमेव जीवेश्वरभेदेन दृष्टः ' इतिचोक्तम् ॥

अत्र न्यायरत्नावली– ' कूटस्थस्येति । स्वसमसत्ताकं रूपान्तरमापद्यते यः तदन्यस्येत्यर्थः । एवकारात् प्रमाता सुखादिरूपं स्वसमसत्ताकपरिणाममापद्यमानो नसाक्षीत्यर्थः । तमेव भान्तमिति श्रुतौ भान्तं– अपरोक्षव्यवहारविषयम् । अनु आश्रित्य । किं दृग्दृश्ययोस्सहापरोक्षव्यवहारमात्रं विवक्षितं तत्राह– तस्य भासेति । तदभिन्नभानेनेत्यर्थः । विभाति– अपरोक्षव्यवहारविषयः । दृष्टेः चाक्षुषादिवृत्तिज्ञानस्य । द्रष्टारम्– अनुभवरूपम् । पश्येरिति । चाक्षुषादिवृत्तिविषयीकुर्याः । अदृष्टः वृत्तिभिन्नानुभवस्याप्यविषयः । तर्हि नित्यचिद्रूपसाक्षिण एव वास्तवं नानात्वमस्तु । तत्राह– नान्योऽतोऽस्ति द्रष्टेति । योद्रष्टा सोन्तर्यामिस्वरूपादन्यस्सन् कुत्रापिनास्ति मिथ्येत्यर्थः । शुद्धेनान्तर्यामिरूपेण द्रष्टासन् नतु तदन्यरूपेणेति द्रष्टृनानात्वं मिथ्येति भावः । तस्य कूटस्थचिद्रूपस्य सर्वसाक्षित्वेन स्वभिन्नं सर्वं प्रत्यनुभवरूपतया अभिषिक्तत्वात् । लाघवतर्कगङ्गाजलेन संशोध्य सर्वान्प्रतिज्ञापितत्वात् । तथाच लाघवतर्कसहकृतया उक्तश्रुत्या स्वभिन्नसर्वविषयकमन्याविषयीभूतमेकं नित्यचिद्रूपंज्ञानं कल्प्यते । चक्षुरादिजन्यप्रमातु ज्ञानव्यञ्जिका । नतु ज्ञानम् । सुखादौ चित एव ज्ञानत्वस्य क्लृप्तत्वात् । तत्र जन्यज्ञानतत्सामग्र्यादिकल्पनेतु महागौरवम् । यद्यपि यथाऽभिमतवक्तरि प्रमातर्येव साक्षिशब्दस्य लोके रूढिःक्लृप्ता । तथाऽपि ' साक्षी चेता सर्वस्य साक्षी ' इत्यादि श्रुत्या गौणया वृत्त्या चैतन्येऽपितत्प्रयोगः । प्रमाता रागद्वेषादिविकारवतामनेकेषां अन्येषु दुष्टादुष्टत्वव्यवहारंजनयति । चैतन्यमपि सर्वेषां विकारवतां व्यवहारं प्रमातृषु जनयतीति सादृश्यादितिभावः ॥

चित्तादात्म्याध्यासादिति । साक्षितादात्म्याध्यासादित्यर्थः । अविद्योपहिते अहङ्कारोऽध्यस्यते । तदुपहितेकामादयः तद्विशिष्टे स्थूलशरीरमित्यादेर्वक्ष्यमाणत्वात् । अविद्योपहितसाक्षिणः विशेषरूपेण आधारत्वेन मनस्तादात्म्यवत्वेन भ्रमे स्फुरणम् । अज्ञोऽहमिति प्रत्ययात् । शुद्धचित् सर्वदृश्यानामधिष्ठानमेव नाधारइति न विरोधः । साक्षिणएवज्ञानत्वात् तस्यैवमनसि प्रतिबिम्बितत्वेन मनसो ज्ञानाश्रयत्वम् । तत्र मनस्तादात्म्याध्यासेन मनोभासकत्वंच बोध्यम् । प्रतिशब्दाख्यप्रतिबिम्बेति । मठमध्यस्थपुरुषकर्णावच्छिन्नत्वेन उपलभ्यमानशब्दस्य मठान्तरुपरिभागावच्छिन्नाकाशरूपोपाध्यन्तर्गतत्वेन प्रतीयमानत्वात् प्रतिबिम्बत्वमस्तीति प्रतिबिम्बीभूतशब्दबोधिका प्रतिशब्दाख्या यस्येत्यर्थः । तथाच प्रतिबिम्बस्य सरूपसावयवत्वेनैव धीरिति न नियमः किंतु उपाध्यन्तर्गतत्वरूपप्रतिबिम्बत्वेनैवेति भावः । जानुमात्रेऽप्युदकेऽतिगम्भीरप्रतीतिरिति– जानुमात्रपरिणामापेक्षया अधिकपरिणामविशिष्टस्याकाशभागस्य जानुमात्रोदकान्तर्गतत्वेन प्रतीतिरित्यर्थः ! जानुद्वयादिपरिमितजले अन्तर्गततया यावतः आकाशभागस्य धीः तावतो जानुमात्रजलेऽपीति तदन्यथाऽनुपपत्त्या तत्रोपरिस्थितस्य तावतः

## श्रीभाष्यम्

**एवमविक्रियानुभवस्वरूपस्यैवाभिव्यंजको जडोऽप्यहङ्कारस्स्वाश्रयतया तमभिव्यनक्ति। आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः। दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति। तत्कृतोयं जानाम्यहमिति भ्रमः। स्वप्रकाशाया अनुभूतेः कथमिवतदभिव्यङ्ग्यजडरूपेणाहङ्कारेणाभिव्यङ्ग्यत्वमिति मावोचः? रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात् जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापिकरतलेन स्फुटतरप्रकाशोहि दृष्टचरः। यतोऽहंजानामीति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिकोधर्मः। अतएव सुषुप्तिमुक्त्योर्नान्वेति। तत्रह्यहमर्थोल्लेखविगमेन स्वाभविकानुभवमात्ररूपेणात्माऽवभासते।**

## श्रुतप्रकाशिका

**अविक्रियात्मनः** कथं ज्ञातृत्वसम्भवइत्यत्राह। **एवमिति**। * यद्वा ज्ञातृत्वमहङ्कारग्रन्थिस्थमिति पूर्वमुक्तम्। कथमहङ्कारस्य ज्ञातृत्वसम्भव इत्यत्राह। **एवमिति**। अभिव्यञ्जकत्वप्रयुक्तोऽयमहङ्कारस्य संविदाश्रयभाव इतिभावः। अभिव्यञ्जकोऽस्त्वहङ्कारः कथमस्य स्वाश्रयतयाऽभिव्यञ्जकत्वमित्यत्राह। **आत्मस्थतयेति**। स्वभावशब्देनौत्सर्गिकत्वं विवक्षितम्। क्वचित्प्रमाणबाधश्चेन्नतथेतिभावः दृष्टान्तं दर्शयति। **दर्पणेति**। आत्मस्थतयाऽभिव्यञ्जनं न दर्पणत्वप्रयुक्तम्। नच प्रतिबिम्बत्वप्रयुक्तम्। अभिव्यञ्जकत्वमात्रप्रयुक्तमिति दर्शयितुं खण्डादिग्रहणं। आदिशब्देन मुण्डादि। एवं व्यङ्तृव्यङ्ग्यभावकृतो ज्ञातृत्वावभासस्संविद इत्याह। **तत्कृतइति**। जडस्याभिव्यञ्जकत्वमयुक्तम्। स्वप्रकाशस्य वस्तुनोऽभिव्यङ्ग्यत्वंचायुक्तं संविदभिव्यङ्ग्यस्यच विशेषेण तदभिव्यञ्जकत्वमितीमामाशङ्कां स्वयमेवोत्थाप्य प्रतिक्षिपति। **स्वप्रकाशायाइति**। कुतइत्यत्राह **रविकरेति**। करतलस्य किरणाभिव्यञ्जकत्वं क्वदृष्टमित्यत्राह। **जालकेति**। एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तम्। एतदेवपरमार्थवस्तुभासनवेळायामनवभासनप्रतिपादनेनोपपादयति। **यतइति**। अनेनाहम्प्रत्ययापायेऽपीति पूर्वोक्तार्थोविवृतो भवति यतइति साध्यस्य हेतुतयानिर्देशः अग्निमत्वेन धूमवत्वामितिवत्। मुक्तिसमभिव्याहारेण सुषुप्तावप्यहम्प्रत्ययापायस्यागमसिद्धत्वं तदा कथमवभासतइत्यत्राह। **तत्रहीति**। '**नाहखल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मि**' इति स्वापविषया श्रुतिः। –

**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममश्शान्तोब्रह्मभूयायकल्पते॥**

## गूढार्थसंग्रहः

आकाशस्य प्रतिबिम्बत्वमवश्यं वाच्यमिति भावः। रूपं रूपमिति। रूप्यते अहमिति धिया व्यवह्रियते आत्मा येन मनसा तद्रूपं। रूपं रूपं प्रतिरूपः। प्रतिबिम्बशब्दस्येव बिम्बस्वरूपार्थकरूपपदान्तकस्य प्रतिरूपशब्दस्यापि प्रतिबिम्बार्थकत्वम्। 'स पक्षीभूत्वा पुरः पुरुषआविशत्' इति पूर्ववाक्येन मनोरूपासु पूर्षु तदन्तर्गतत्वरूपप्रवेशस्योक्तत्वात्। तदुत्तरेण 'तदेतदृषिः पश्यन्नवोचत् रूपं रूपं प्रतिरूपो बभूव' इति वाक्येन उक्तप्रवेशस्यैव उक्तेर्युक्तत्वात्। तदिति। प्रतिबिम्बात्मकामित्यर्थः। प्रतिचक्षणाय अहमित्यादिव्यवहाराय। माया अविद्या। आभासेन स्वगतप्रतिबिम्बेन। जीवेशौ प्रतिबिम्बबिम्बरूपौ करोति। सर्वान् प्रति व्यवहारयति। जीवविषयकव्यवहारस्य आभासप्रयुक्तत्वं स्फुटमेव। ईशविषयकस्यापि व्यवहारस्य तदस्त्येव। जीवत्वोपाहिताचिद्रूपस्य आभासप्रयुक्तत्वेन ईशप्रयुक्तस्येशविषयकव्यवहारस्य ईशद्वारा आभासप्रयुक्तत्वसम्भवात्। इत्यादिश्रुतिरित्यादिपदेन 'यथा ह्येको ज्योतिरेको विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना

### श्रीभाष्यम्

**अतएव सुप्तोत्थितःकदाचिन्मामप्यहं नज्ञातवानिति परामृशति । तस्मात्परमार्थतोनिरस्त समस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव**

### श्रुतप्रकाशिका

इति मुक्तिविषया स्मृतिः । **महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेवच ।**

इति क्षेत्रान्तर्भावश्चोच्यतेऽहङ्कारस्य । **अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ।**

इति तस्य भ्रान्तिसिद्धत्वमुच्यते । हिशब्दः श्रुतिस्मृतिप्रसिद्धिद्योतनार्थः ॥

**न केवलं** श्रुतिस्सुषुप्तिविषया परामर्शश्च तथाऽस्तीत्याह । **अतएवचेति** । अतएवेति साध्यस्य हेतुत्वेन परामर्शः । कथं साध्यसाधनयोर्विपरीतनिर्देशः ? इत्थं ज्ञप्तौ यत्साध्यं तदुत्पत्तौ साधनं यदुत्पत्तौ साधनं तज्ज्ञप्तौ साध्यम् । तस्माद-ग्निमत्वादेवहि धूमोद्गमइतिवत् उत्पत्तौ हेतुत्वमपेक्ष्यातएवेत्युक्तम् । ततः किं प्रस्तुतपूर्ववृत्तत्वचिन्तायाइत्यत्राह । **तस्मादिति** । तस्मादित्यनेन यदप्याहुरशेषविशेषेत्यारभ्योक्तं प्रमाणतर्काभ्यां स्वमतोपपादनमभिप्रेतम् । **निरस्तसमस्तभेदविकल्पेति** । भेदविकल्पशब्देन ज्ञातृज्ञेयादिभेदस्यावान्तरवैविध्यं विवक्षितम् । निर्विशेषशब्देन स्वगतनित्यत्वादिभेदव्यावृत्तिः कुतइत्य-त्राह । **चिन्मात्रैकरसेति** । चिन्मात्रत्वादित्यर्थः अनेन शून्यत्वव्युदासश्च कूटस्थं निर्विकारं सर्वाधिष्ठानंवा । **नित्यसं-विदेवेति** । चिन्मात्रशब्दस्स्वयम्प्रकाशत्वपरः संविच्छब्दो * विशेष्यपरइत्यपौनरुक्त्यम् । चिन्मात्रस्य कथं भेदसम्भवइत्य-

### गूढार्थसंग्रहः

क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ ' इत्यादिश्रुतयो ग्राह्याः । तदित्यादि । तत् जगत् सृष्ट्वा ब्रह्म तदेव जगत् अनुप्राविशत् इत्यर्थः । यद्यप्यविद्यायां मनसि च प्रतिबिम्बरूपः प्रवेशः ; तथाऽपि अविद्यामनस्तद्वृत्तिद्वारा सर्वत्र हृदये प्रवेशः । अतीन्द्रियार्थेष्वपि ईश्वरीयमायावृत्तिविशिष्टरूपेषु प्रतिबिम्बत्वरूपप्रवेश इति बोध्यम् । नचैवमीश्वरीयमायावृत्ति-द्वारैव सर्वत्र प्रवेशसम्भवात् मनस्तद्वृत्तिषु प्रवेशस्य प्रकृतश्रुतिबोध्यत्वे मानाभाव इति वाच्यम् । रूपंरूपमित्यादिश्रुत्या ' पुरश्चक्रे द्विपदः ' इत्यादिपूर्विकया मनःप्रवेशस्यैव प्रतीतेः । ' स एष इहप्रविष्ट आनखाग्रेभ्यः 'इत्यादिपूर्विकया ' प्राण न्नेव प्राणोनाम भवति वदन् वाक् ' इत्यादिश्रुत्याच तथैव प्रतीतेः । श्रुत्यर्थापत्तिः श्रुतेरन्यथाऽनुपपन्नत्वधीः । प्रवेश-बोधनमात्रेण न मनसि प्रतिबिम्बत्वलाभः । अधिष्ठानतयाऽपि प्रवेशसम्भवात् । परं तु घटादावपि प्रवेशसम्भवात् नखाग्र पर्यन्तप्रवेशस्य मनस्येवक्तेः प्रतिबिम्बत्वरूपमनोऽन्तर्गतत्वरूपप्रवेशविशेषतात्पर्यकत्वं विना अनुपपन्नत्वग्रहात् लक्षणया तादृ शप्रवेशबोधनमितिभावः । बिम्बेश्वरेत्यादि । यथा बिम्बत्वप्रतिबिम्बत्वोपहितरूपाभ्यां मुखंद्वेधा भिद्यते । दर्पणाद्युपाध्यन्तर्ग-तत्वेसति औपाधिकपरिच्छेदशून्यत्वेच सति बहिः स्थितस्वरूकपत्वं प्रतिबिम्बत्वम् । बिम्बवारणाय आद्यम् । घटाकाशादिवार-णाय द्वितीयम् । दर्पणान्तर्गततदवयववारणाय तृतीयम् । उपाध्यनन्तर्गतत्वेसति उपाध्यन्तर्गतरूपाभिन्नंबहिःस्थितत्वं बिम्बत्वमि ति विवेकात् । तथोक्तोपहितमुखद्वयात् शुद्धरूपं मुखं भिद्यते शुद्धस्योपहितकल्पनाद्यधिष्ठानत्वेन ततो भेदस्यावश्यकत्वात् । तथाच बिम्बत्वप्रतिबिम्बत्वोपहिताभ्यां जीवेश्वराभ्यां शुद्धचिदन्या विशिष्टकेवलयोर्भेदाभेदस्वीकारेण तस्यास्तदुभयाभेदस्य अस्वीकारात् तदुभयानुस्यूता सेति भावः ॥ **कूटस्थनित्यसंविदेवेति** । उक्तं च (बृ) वार्तिके— ' परागर्थप्रमेयेषु याफलत्वेन सम्मता । संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ (सं.वा.१५९) अप्रामाण्यप्रसक्तिश्च स्यादितोऽन्यार्थकल्पने । वेदा-न्तानामतस्तस्मान्नान्यमर्थं प्रकल्पयेत् ॥ (१६०) अनात्मनि प्रमेयेऽर्थे या फलत्वेन सम्मता । प्रमेया सैव वेदान्तेष्वनुभू-तिरिहात्मनः ॥ (२३०) विज्ञानमानन्दमितिह्यात्मैवेति श्रुतिस्तथा । पुमर्थस्यैव मेयत्वं मातृत्वाद्यनपेक्षिणः ॥ ' इति ॥

### श्रीभाष्यम्

**भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभाव ब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ताआरभ्यन्त इति ॥**

*इति महापूर्वपक्षः*

### श्रुतप्रकाशिका

भ्रान्त्या विवर्ततइति *कारिकलभवन्निर्देशः । शुद्धम् अविद्यारहितम् । बुद्धं स्वयम्प्रकाशम् । मुक्तं
त्राह । **भ्रान्त्येति** । परमार्थतोभेददर्शनजन्मादिरहितं एवंविधब्रह्मात्मैकत्वविद्यालब्धये सर्वे वेदान्ता आरभ्यन्तइत्यर्थः ॥

वेदान्तानामारम्भणीयत्वं नाम तद्विचारस्यारम्भणीयत्वम् । सर्ववेदान्ता आरभ्यन्तइति यदप्याहुरिति पूर्वेणान्वयः
ब्रह्ममीमांसाशास्त्रं किमनारम्भणीयं उतारम्भणीयमिति विचारे बन्धस्य परमार्थत्वेन ज्ञाननिवर्त्यत्वाभावाज्ज्ञानप्रतिपादकवेदा-
न्तवाक्यविचाररूपं शास्त्रमनारम्भणीयमिति पूर्वपक्षं कृत्वा बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वाज्ज्ञानार्थं वेदान्तविचार-
रूपं शास्त्रामारम्भणीयमितिहि ब्रह्मज्ञानपक्षे प्रथमाधिकरणार्थश्शिक्षितः । अतो बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वाज्ज्ञा
नप्रधानस्य शास्त्रस्य कर्मविचारो न पूर्ववृत्तइत्युक्तं भवतीति वैषम्यं । उपाय आत्मैकत्वविज्ञानम् । उपेयं निर्विशेषचिन्मात्रं
ब्रह्म । निवर्त्यञ्च मिथ्याभूतमिति त्रयं कर्मविचारस्यानपेक्षितत्वाय पूर्वं विस्तरेणोपपादितं निगमनग्रन्थेसंक्षिप्तं भवति ॥

*इति महापूर्वपक्षः*

### गूढार्थसङ्ग्रहः

**तन्मूलभूताविद्यानिबर्हणायेत्यादि** । 'तज्ज्ञानं यत्तु सञ्जातं जातमेवास्य नान्यथा । कुक्षिस्थस्यापि हि सतो
वामदेस्य तद्यथा ॥ (२३२) तच्चाविद्यानिरास्येव व्याधभावनयाश्रितः । राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ॥
(२३३) यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः । लब्धैकात्म्यस्मृतेर्व्येति सर्वा विद्या सकार्यका ॥' (२३४) इति वा-
र्तिके अयमर्थः स्पष्टमुक्तः ॥ उक्तंच **इष्टसिद्धावपि**– (प्र.अ) 'अतः प्रत्यगात्मैव परमार्थसत्यं नान्यदिति सएवौपनिषदः
पुरुषः ब्रह्मेति सिद्धम् । कर्मोपासनादिवाक्यानां च अविद्यावत्कल्पितेष्टानिष्टप्राप्तिपरिहारोपायज्ञापकानामविद्यावस्थायामेव
प्रत्यक्षादीनामिव आबाधात्स्वप्नावस्थायामिव प्रामाण्यमिति, न वेदान्तवेद्यवस्तुविरुद्धरूपवस्तुसंस्पर्शितेति आत्मैव सम्यक्प्र-
माणवस्तु नान्यत्किञ्चिदिति स्थितम्' इति ॥ **सर्वे वेदान्ता आरभ्यन्तइति** । 'एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः
कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते'।
इति (शं) अध्यासभाष्योक्तार्थ उक्तः ॥

*इति महापूर्वपक्षः*

## गूढार्थसंग्रहः

एतावता 'बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता । अथाविकृतिरेवासौ प्रमातेति नयुज्यते ॥' इति बौद्धदिङ्नागेन दूषिते सगुणनिर्गुणात्मवादद्वये बौद्धोक्तयुक्तिभिस्सगुणात्मवादं दूषयित्वा निर्गुणात्मवादे प्रमातृत्वं नयुज्यत इति तदीयदूषणं प्रमातृत्वस्य कल्पितत्वपभ्युपेत्याङ्गीकृतमेव भवति । 'अहमेव नकिञ्चिचेद्वयं कस्य भविष्यति' इति (ना.अ) तदुक्तार्थः अहमिति चिदचिद्ग्रन्थिः विवक्षितः। नमिथ्यामात्रमिति विशेषकथनेन परिष्कृतः । 'नैतद्बुद्धेन भाषितं' इति गौडपादोक्तस्वप्रकाशात्मकचिद्रूपार्थस्साधितः । तैः क्षणिकत्वेनार्थक्रियाकारित्वं नाभ्युपगम्यते व्यवहारकालाबाध्यत्वेन स्थिरत्वाभ्युपगमात् अर्थक्रियाकारित्वाभ्युपगमेन अस्मन्मते वैलक्षण्यमित्युक्तमिति बोध्यम् ॥

## अथ महासिद्धान्तः

'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति' वृत्तौ ब्रह्ममीमांसायाः औपनिषदपुरुषप्रतिपादकत्वमभिप्रेत्य शारीरकशब्दउपात्तः । 'तंत्वौपनिषदं पुरुषं' (बृ.५.९.२६) इत्यत्रोक्तौपनिषदपुरुषस्य 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं । तिष्ठमानस्य तद्विदः' (५.९.२८) इत्युत्तरत्र ब्रह्मत्वाभिधानात् । 'परीक्ष्य लोकान्' इत्यादौ 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' (मु) इत्यत्र पुरुषब्रह्मशब्दयोरेकार्थत्वस्य स्फुटं प्रतीतेश्च । औपनिषदश्च पुरुषः न पराभिमतकूटस्थनित्य इत्ययमर्थः 'क्षरःस्सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते । यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः । अतोऽस्मि लोके वेदेच प्रथितःपुरुषोत्तमः ॥' इति वदता गीताचार्येण निर्धारितः ॥

यद्यप्यत्र कारणभूतप्रकृतिरेव अक्षरशब्दार्थ इति (शं) भाष्योक्तार्थः 'दिव्योह्यमूर्तःपुरुषः अक्षरात्परतःपरः' (मु.२.२.२) इति मुण्डकश्रुत्यर्थविशदीकरणरूपत्वेन गीतायाः तात्पर्यविषयइति स्थापितं मधुसूदनसरस्वतीभिर्गीताविवरणे । अथापि 'अक्षरात्परतःपर' इति श्रुतौ अक्षरशब्दः न प्रकृतिपरः 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु.३ २.८.) इत्युत्तरश्रुत्यैकार्थ्यात् तत्र च 'नामरूपाद्विमुक्तः' इत्येतत्समभिव्याहारात् पञ्चम्यन्तपरशब्दः नामरूपविनिर्मुक्तपरः । परात् नामरूपविनिर्मुक्तात्परः पुरुष एवात्र विवक्षितः । एतदेवाभिप्रेत्य अक्षरशब्दस्य भाष्ये प्रकृतिपरत्वं पररीत्याऽभ्युपेत्य व्याकुर्वताऽपि भगवता वेदान्तसारे 'अथवा सामानाधिकरण्येन परतोऽक्षरात् पञ्चविंशकात्पर इति भेदव्यपदेशः' इति 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' (१.२.२३) इति सूत्रे श्रुत्यर्थो निरणायि ॥

'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्रचैव अपियन्ति ॥' इति पूर्वश्रुतौ (मु.३.२१.) सुदीप्तपावकदृष्टान्तेन अक्षरशब्दार्थः प्रभास्थानीयज्ञानसङ्कोचशून्यपर इति प्रतीयते । तत्र भावाः जीवाः इति परैरपि विवरणं कृतम् । भावाः सत्तावन्तः । ज्ञानवत्त्वेनैव सत्तावत्वम् । 'भावो विद्वान्' इत्यादिकोशोऽप्यत एव सङ्गच्छते । अतः तत्र बद्धजीवानामिव विवक्षितत्वेन बद्धजीवानां सङ्कुचितज्ञानतया 'यस्सर्वज्ञस्सर्ववित्' इत्युक्तपरमात्मवत् असङ्कुचितज्ञानस्यैव 'अक्षरात्परतः परः' इत्युत्तरश्रुतौ अक्षरशब्दार्थत्वं स्वरसतः प्रतीयते । अत एवोत्तरत्र 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.३.१३.) इत्यत्र जीवस्य ज्ञानेन परमात्मसाम्योक्तिस्सङ्गच्छते । अत्र विद्वानित्यस्य वैयर्थ्यप्रसङ्गेन ज्ञानेन साम्यं विवक्षितमिति निश्चीयते । गीतायामपि 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' । (गी १४.२) इत्युपक्रमोक्तज्ञानसाधर्म्यमेव 'सगुणन् समतीत्यैतान् ब्रह्मभूयाय कल्पते' । (१४.२६) इत्यत्र ब्रह्मभावः मुण्डकश्रुत्युक्तएव पूर्वाध्याये प्रतिपादितः । अतः उत्तराध्याये अक्षरत्वं पूर्वोक्तमेवेति सिद्धम् ॥

एवंगीतायां 'सर्वस्यचाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनंच' इति पूर्वश्लोके जीवानां परमात्माधीनज्ञानवत्वप्रतिपादनेन 'क्षरःस्सर्वाणि भूतानि' इत्युत्तरश्लोके ज्ञानसंकोचवन्तो बद्धजीवाः विवक्षिताइति 'कूटस्थोऽक्षरउच्यते'

## गूढार्थसंग्रहः

इत्यत्र ज्ञानसंकोचशून्यमुक्तानामेव अक्षरशब्दार्थः इति निश्चयस्संभवति। एतेन कूटस्थत्वं स्वरूपतो धर्मतश्च संकोचविकासशून्यत्वं मुक्तसाधारणं परमात्मनोऽपि युक्तं नतु निर्धर्मकत्वम्। 'येत्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। सर्वत्रगमचिन्त्यंच कूटस्थम्' (गी १२-३) इति पूर्वगीतावचनकूटस्थशब्दतुल्यार्थकएव 'कूटस्थोऽक्षर' इत्यत्रापि कूटस्थशब्दः। उभयत्र कूटस्थशब्दयोर्भिन्नार्थकत्वकल्पनं परेषां न गीतातात्पर्यमनुसरति। पूर्वं 'सर्वाणिभूतानि(२.३०) सर्वभूतानां (२.५९ सर्वभूतेषु (३.१८) सर्वभूतात्मभूतात्मा (५.७) सर्वभूतहिते (५.२५) सर्वभूतानां (५.२९) सर्वभूतस्थं (६.२९) सर्वभूतस्थितम् (६.३१) भूतानि सर्वाणि (७.६) सर्वभूतेषु (७.९) सर्वभूतानां (७.१०) सर्वभूतानि (७.२७)सर्वभूतानि (९.४) सर्वाणि भूतानि (९.६) सर्वभूतानि (९.७) सर्वभूतेषु (९.२९) सर्वभूतानां (१०.३९) सर्वभूतेषु (११.५५) सर्वभूतहिते (१२.४) सर्वभूतानां (१२.१३) सर्वभूतानां (१४.३) इत्यत्र अचित्संसृष्टजीवानां सर्वभू शब्दार्थतायाः परेषामपि सम्मतत्वेन 'ईश्वरस्सर्वभूतानां हृद्देशेर्जुन तिष्ठति'। इत्यत्रैव 'सर्वस्यचाहं हृदि सन्निविष्टः' इतिपूर्वत्र हृदयदेश स्थितिमभिधाय 'क्षरःस्सर्वाणि भूतानि' इति अनन्तरप्रयुक्तसर्वशब्दघटितवाक्ये बद्धजीवार्थकत्वमेव सर्वभूतशब्दस्य गीताचार्याभिप्रेतं न प्रत्याख्यातुं शक्यते॥

अतएव परैः 'ईश्वरस्सर्वतभूनाम्' इति वचनस्य स्मृतेश्च (ब्र.सू.१.२.६) इति सूत्रे शारीरजीवपरमात्मभेदस्मृतितया उदाहरणं सङ्गच्छते। अतः 'ईश्वरस्सर्वभूतानाम्' इत्यत्रैव 'सर्वस्यचाहं हृदिसन्निविष्टः' इत्येतदुत्तरं 'क्षरःस्सर्वाणि भूतानि' इत्यत्रापि ज्ञानसङ्कोचवद्बद्धजीवानामेव विवक्षिततया 'कूटस्थोऽक्षरउच्यते' इत्यत्र ज्ञानसङ्कोचहीनमुक्तजीवस्यैव विवक्षितत्वेन कूटस्थत्वं स्वरूपतो धर्मतश्च सङ्कोचात्मकविकारशून्यत्वं गीतायां निर्धार्य 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात्क्षरमतीतोऽहम्' इत्यादिना जीवव्यापकधारकनियन्तृशेषिपुरुषस्यैव सर्ववेदतात्पर्यविषयत्वं निर्धारितमिति सएवौपनिषदःपुरुषः न निर्धर्मकः॥

'तंत्वौपनिषदंपुरुषम्' इति श्रुतिपर्यालोचनायामपि अयमेवार्थस्सिध्यति। अत्र उपनिषच्छब्दः ब्रह्मविद्यामाह। तद्धेतुत्वाद्वेदान्ता अप्युपनिषदः। तयोविदितऔपनिषदःपुरुषः इति (भामती) उपेप्युपसर्गः सामीप्यार्थमाह नीत्ययं निश्चयार्थः (कल्पतरु) इति चोक्तेऽर्थे न विवादः। 'ब्राह्मीं वावतउपनिषदमब्रूमेति। तस्यै तपो दमःकर्मेति प्रतिष्ठा' इत्यादि तलवकारश्रुतौ उपनिषच्छब्दस्य विद्यार्थकतायाः व्यक्तत्वात्। 'उपनिषण्णत्वाद्वा उपनिषत्' इति वाक्यस्य 'गहनेहीयं विद्या समुपनिविष्टा' इति द्रमिडभाष्ये तथैव प्रतीतेश्च। 'अद्वयं ब्रह्मेति' (भामती) इत्यादिपरसम्मतार्थः उपनिषच्छब्दे न विवक्षितः। तत्रैवोपनिषदि पुरुषशब्दनिर्वचनविरोधात्। 'सयत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत् तस्मात् पुरुषः' (ऐ.३.४.१) इत्यत्र जगत्कारणत्वं सर्वपापदाहकत्वं च पुरुषपदार्थ इति निरुक्तम्। अत्र 'आत्मैवेदमग्र आसीत् पुरुषविधः' इति प्रथमवाक्यम्। इदं च 'सदेव सोम्येदमग्र आसीत्' (छा) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ) इत्यादिवाक्यसच्छायम्। अतः आत्मन्शब्दः परमात्मपरः। अत एवैतद्ब्राह्मण एवोत्तरत्र 'आत्मेत्येवोपासीत' 'तदात्मानमेवावेत्, आत्मानमेव लोकमुपासीत' इत्यत्र आत्मशब्दानामप्युपक्रमानुसारेणार्थस्सङ्गच्छते। पुरुषविधइति पुरुषस्य विधा पुरुषशब्दप्रवृत्तिनिमित्तभूतो धर्मः स आत्मन्यपि वर्तते इति एतत्तात्पर्येण प्रयुक्तम्। पुरुष इत्युक्तौ धर्माणां न प्रतीतिस्स्यादिति तात्पर्येण पुरुषविधइत्युक्तिः। तेन पुरुषविधेत्यनेन धर्मवत आत्मनएव पूर्वमुक्त्वा आत्मवृत्तिधर्मदर्शनस्यावश्यकत्वेन 'नान्यत्किञ्चन मिषत्' इति श्रुत्यन्यन्तरसमशीले 'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्' इति वाक्ये परमात्मव्यतिरिक्तवस्तुसामान्यदर्शनाभावो न विवक्षितः। किंतु पुरुषशब्दस्य सर्वस्मात्पूर्वभूतकारणवस्तुपरत्वेन कार्यावस्थापन्नवस्तुदर्शनराहित्यमेव विवक्षितमिति सिद्धम्॥

## गूढार्थसंग्रहः

एवंच 'सयत्पूर्वोऽस्मात्सर्वस्मात्' इत्यत्र ब्रह्मादिकार्यवस्तुसामान्यस्यैव विवक्षितत्वेन 'सर्वान्पाप्मन औषत्' इति अत्र ब्रह्मादिसर्वजीवसर्वपापदाहकत्वं विवक्षितमिति सिद्धम्। अतः 'क्षीयन्तेचास्यकर्माणि तस्मिन्दृष्टे परावरे' (मु.२.२.८ इति श्रुत्युक्तरीत्या उपनिषदित्यत्र षदॢधातोः विशरणार्थकत्वेन जीवसर्वपापदाहकब्रह्मविद्या प्रायश्चित्ततया विधियोग्या उपनिषच्छब्दार्थः तद्विषयोपनिषत्प्रतिपाद्य पुरुषः औपनिषदःपुरुषइत्यत्र विवक्षितइति युक्तम्। एतेन ब्रह्मविद्यायाः सर्वपापदाहकत्वं परमात्मसङ्कल्पाधीनमिति निर्णीतं भवति। अत्र 'विज्ञानम्—परायणम्—तिष्ठमानस्यतद्विदः' इत्युत्तरत्र वक्ष्यमाणब्रह्मविद्याफलप्राप्तिप्रतिबन्धकपापदाहकत्वोक्त्या मोक्षप्रदत्वमुक्तं भवति ॥

एतेन निर्वचनद्वयेन राज्ञः छत्रचामरवत् असाधारणलक्षणकथनेन औपनिषदपुरुषस्य राजत्वं व्यञ्जितम्। राजकुमारनयश्च द्रमिडाचार्यसम्मतः 'स यथाऽग्नेः क्षुद्रा विष्फुलिङ्गाव्युच्चरन्ति एवमेतस्मादात्मनः सर्वे प्राणाः' (बृ.४.१.२०) इत्येतद्भाष्ये (शं) अत्रच सम्प्रदायविदः आख्यायिकां सम्प्रचक्षते। कश्चित्किल राजपुत्रः जातमात्रएव मातापितृभ्यामपविद्धो व्याधगृहे संवर्धितः। सोऽमुष्य वंश्यतामजानन् व्याधजातिप्रत्ययो व्याधजातिकर्माण्येवानुवर्तते। न राजाऽस्मीति राजजातिकर्माण्यनुवर्तते। यदा पुनः कश्चित्परमकारुणिकः राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन्नमुष्य पुत्रतां बोधयति। न त्वं व्याधः। अमुष्य राज्ञः पुत्रः कथंचिद्व्याधगृहमनुप्रविष्टः इति। स एवं बोधितः त्यक्त्वा व्याधजातिप्रत्ययकर्माणि पितृपैतामहीमात्मनः पदवीमनुवर्तते राजाऽहमस्मीति। तथाऽपि किलायं परस्मादग्निविष्फुलिङ्गादिवत् तज्जातिरेव विभक्तः इह देहेन्द्रियादिगहने प्रविष्टः असंसारी सन् देहेन्द्रियादिसंसारधर्ममनुवर्तते, देहेन्द्रियसङ्घातोऽस्मि कृशः स्थूलः सुखी दुःखीति परमात्मतामजानन्नात्मनः। न त्वमेतदात्मकः परमेव ब्रह्मासि असंसारीति प्रतिबोधित आचार्येण हित्वैषणात्रयानुवृत्तिंब्रह्मैवास्मीति प्रतिपद्यते। अत्र राजपुत्रस्य राजप्रत्ययवत् ब्रह्मप्रत्ययो दृढीभवति। इति परैः स्वमतानुरोधेन प्रदर्शितः। तत्र राजाऽहमस्मि अहं ब्रह्मास्मि इत्येदंशंविहाय सर्वेंऽशाः द्रमिडाचार्याभिमताः। 'यथाऽग्नेः क्षुद्राविष्फुलिङ्गाः' इति दृष्टान्तानुसारेण दार्ष्टान्तिके एकजातीयत्वमेव ज्ञातव्यम्; नतु स्वरूपपरिणामित्वं एकव्यक्तित्वंवा। राजपुत्रस्य स्वजातियज्ञानानन्तरं राजपुत्रत्वज्ञाने आचार्यद्वारेण जाते राजप्राप्तिप्रतिबन्धकविगमानन्तरं राजसमीपगमनं खलु युक्तम्। 'परायणं तिष्ठमानस्यतद्विदः' इत्युत्तरत्र परसङ्कल्पाधीनपरप्राप्तिर्वक्ष्यतइति अत्र परप्राप्तिप्रतिबन्धकपरसङ्कल्पाधीनसर्वपापनाशकथनेन द्रमिडाचार्यसम्मतः राजकुमारनयः सम्यक् शिक्षितो भवति ॥

एतेन सृष्टिवाक्यानां राजपुत्रत्वज्ञानसम्पादनमेव अभिप्रेतम्; नतु आत्मैक्यप्रतिपादनमिति सम्प्रदायविद्भिः द्रमिडाचार्यैः निर्धारितं भवति। प्राप्तिप्रतिबन्धकापगमः ज्ञाननिबन्धनःसच 'तस्मिन्दृष्टेपरावरे' इति श्रुत्युक्तः उपनिषच्छब्देन प्रतिपादितः। ज्ञानसम्पादनपर्वणां उत्तरत्र बृहदारण्यकश्रुतिषु प्रदर्शनं व्यक्तम्। तत्र 'पुरश्चक्रेद्विपदः पुरश्चक्रेचतुष्पदः पुरस्सपक्षीभूत्वा पुरःपुरुषआविशत्' इति सवा अयं पुरुषः सर्वासु पूर्षु पुरिशयः (नैतेन) नानेनकिंच नानावृतं नैतेन (नानेन) किंच नासंवृतं इत्यादिना पुरुषशब्दनिर्वचनेन चतुर्थे (४.५.१८) वक्ष्यते। सएवार्थः अत्रैवोत्तरत्र 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते, सएषइहप्रविष्ट आनखाग्रेभ्यः' इत्यादिना प्रदर्श्यते। (६.४.७) तेन आत्मनः पुरुषविधत्वमपि विशदीकृतं भवति। अत्र द्विपदः द्विपादुलक्षितानि मनुष्यशरीराणि चतुष्पदः चतुष्पादुपलक्षितानि पशुशरीराणि। बाह्यभूतेन अन्तर्भूतेनच नानावृतम्। एवं सएवनामरूपात्मना अन्तर्बहिर्भावेन कार्यकरणरूपेण व्यवस्थितः इति परेषां भाष्यम्। वस्तुतस्तु 'हिरण्यगर्भस्समवर्तताग्रेभूतस्य जातःपतिरेकआसीत्' इत्यनन्तरं 'यःप्राणतो निमिषतो महित्वैकइद्राजा जगतो बभूव। यईशेऽस्य जगतश्चतुष्पदः' इति सर्ववेदपठितहिरण्यगर्भसूक्त इव 'सवा अयमात्मा सर्वेषां

## गूढार्थसंग्रहः

भूतानामधिपतिस्सर्वेषां भूतानां राजा ' (बृ.४.५.१५.) इत्येतदुत्तरं ' पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ' इत्यादिश्रुतावपि द्विपदः चतुष्पदः इति मनुष्यपश्वात्मकजीवात्मशरीराणि विवक्षितानि । तत्र ' य आत्मनि तिष्ठन्नात्मनोऽन्तर ' इति प्रदर्शिता अन्तर्बहिर्व्याप्तिः ' नानेन किञ्चनानावृतम् ' इति व्यतिरेकेण प्रदर्श्यते । राजपुत्रनयं प्रदर्शयतां द्रमिडाचार्याणां ' स वा अयमात्मा सर्वेषां भूतानामधिपतिस्सर्वेषां भूतानां राजा ' इति श्रुतिर्विवक्षिता । ' यथाग्नेः क्षुद्राः विस्फुलिङ्गा व्युच्चरन्ति एवमेतस्मादात्मनः सर्वे प्राणा सर्वे लोकास्सर्वे देवाः सर्वाणि भूतानि (सर्व एत आत्मानः ' माध्यन्दिनपाठः) व्युच्चरन्ति ' इत्युक्तानां सर्वेषां ' तद्यथा रथनाभौ च रथनेमौ च अरास्सर्वे समर्पिताः एवमेवास्मिन्नात्मनि सर्वे प्राणास्सर्वे लोकास्सर्वे देवाः सर्वाणि भूतानि सर्वे एत आत्मानस्समर्पिताः ' (१२) इति अत्र राजभूत आत्मनि समर्पितत्वोक्त्या उभयोरैकार्थ्येन पूर्वं जगत्कारणत्वेनोक्तस्य अत्र राजत्वप्रतिपादनात् । अत्र आत्मभूतस्य राज्ञएव ' पुरश्चक्र ' इत्यादौ ' सवा अयं पुरुष ' इत्यत्र पुरुषत्वमुक्तमिति । आत्मैवेदमग्रआसीत्पुरुषविधः ' इत्यत्रापि अत्रत्यपुरुषशब्दनिर्वचनाल्लब्धार्थोऽपि विवक्षितः इति निश्चयस्सम्भवति । ' सयथाऽग्नेः क्षुद्राविस्फुलिङ्गाः ' इति वाक्यात्पूर्ववाक्ये यत्रैष एतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषः तदैषां प्राणानां विज्ञानेन विज्ञानमादाय स एषोन्तर्हृदयआकाशस्तस्मिन्शेते । ' इति सुषुप्तिरभिहिता । सुषुप्त्यनन्तरं ' यथाग्नेः क्षुद्राविस्फुलिङ्गाः ' इत्यादिना सृष्टिकथनेन सुषुप्त्यनन्तरप्रबोधतुल्यताप्रलयानन्तरतासृष्टेः प्रदर्शिताभवति । सुषुप्तौ इन्द्रियजन्यज्ञानभावेन ज्ञानस्य संकोचः तद्वत्प्रलयेऽपि । प्रबोधे इन्द्रियजन्यज्ञानसत्वेन धर्मभूतज्ञानविकासवत् प्रलयानन्तरकालसृष्टावपि धर्मभूतज्ञानविकासः इत्ययमर्थःस्सिध्यति । अयमर्थः ' स्वप्नान्तंमे सोम्य विजानीहीति यत्रैषपुरुषस्स्वपितिनामसतासोम्यतदासम्पन्नो भवति स्वमपीतोभवति ' (छा.६.८.१) इति सुषुप्तिकथनानन्तरं ' सन्मूलास्सोम्येमास्सर्वाःप्रजास्सदायतनास्सत्प्रतिष्ठाः ' (छा.६.८.४) इति सृष्टिप्रतिपादनेन छान्दोग्येऽपि विवक्षितः ॥

एवंच ' सयत्पूर्वोऽस्मात्सर्वस्मात् ' इति जगत्कणवाक्यविवक्षितसृष्टेः जीवज्ञानविकासार्थत्वेन ' सवा अयं सर्वासु पूर्षु ' इति निर्वचनप्रतिपन्नान्तर्यामित्वस्यापि जीवज्ञानविकासार्थत्वेन निर्वचनद्वयैकरस्यं सिध्यति । अत्र शरीरप्रवेशः अन्तर्बहिर्व्याप्तिश्च प्रतिपाद्यतइतिस्फुटम् । अत्र 'पुरश्चक्रे द्विपदः' इति सृष्टिमभिधाय प्रवेशउक्तः । तेन ' तत्सृष्ट्वा तदेवानुप्राविशत् ' इत्यत्रापि शरीरप्रवेशः सिद्धः । अयंच प्रवेशः जीवज्ञानसम्पादनार्थं इति मैत्रायणीयश्रुतौ स्फुटम् । ' प्रजापतिर्वा एकोऽग्रेऽतिष्ठत् सनारमतैकः सोत्मानमभिध्यात्वा बह्वीः प्रजा असृजत ' (मै.२.प्र.६) (सनारमत) ' ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत् ' ' सनारमत सोऽमन्यतैतासां प्रतिबोधनाय आभ्यन्तरं विविशामि ' इति । ' सर्वभूताधिवासंच यद्भूतेषु वसत्यपि । सर्वानुग्राहकत्वेन ' इति ब्रह्मबिन्दूपनिषद्यपि अयमर्थः अभिहितः । एतेन सवायुरिवात्मानं कृत्वाऽऽभ्यन्तरं प्राविशत् ' इति मैत्रायणीयतदुत्तरश्रुतिः परवासुदेवव्यूहचतुष्टयविवक्षया निर्व्यूढेति सिद्धम् । ' प्रजापतिर्वाएकोऽग्रेऽतिष्ठत् ' इत्यादि मैत्रायणीयश्रुत्युक्तार्थः ' सह यज्ञैः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेषवोऽस्त्विष्टकामधुक् ॥ ' (गी.३.१०) इत्यत्र गीतायां विवक्षितः । एतदेवाभिप्रेत्य भाष्यम्—पुरा सर्गकाले स भगवान्प्रजापतिरनादिकालप्रवृत्ताचित्संसर्गविवशा उपसंहृतनामरूपविभागाः स्वास्मिन्प्रलीनाः सकलपुरुषार्थानर्हाश्चेतनेतरकल्पाः प्रजास्समीक्ष्य परमकारुणिकस्तदुज्जिजीवयिषया स्वाराधनभूतयज्ञनिर्वृत्तये यज्ञैस्सह तास्सृष्ट्वैवमुवाच । अनेन यज्ञेन प्रसविष्यध्वम्, आत्मनो वृद्धिं कुरुध्वम् । एष वो यज्ञः परमपुरुषार्थलक्षणमोक्षाख्यस्य कामस्य तदनुगुणानांच कामानां प्रपूरयिता भवतु ' इति । ' सर्वस्यचाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनंच ' ' ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ! ' ' तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं

## गूढार्थसङ्ग्रहः

प्राप्स्यसि शाश्वतम् ॥ ' (गी.१८.६२.) इत्यत्र अन्तर्याम्यधीनजीवज्ञानं तत्फलं च गीतायामेव दर्शितम् ॥ अत्र मैत्रायणीयश्रुतौ सर्वजीवसाधारणदेहेन्द्रियादिमूलकान्तर्याम्यधीनज्ञानमूलभूतं कारुण्यं निर्हेतुकं विवक्षितम् । ' स्वधर्मस्याचरणं , इत्यारभ्य ' तपसा प्राप्यते सत्वं सत्वात्सम्प्राप्यते मनः । मनसः प्राप्यतेह्यात्मा यमाप्त्वा न निवर्तते ॥ ' इति (मै.४.५) श्रुत्यर्थः ' अनेन प्रसविष्यध्वम् ' इत्युत्तरार्धे उक्त इति तत्र फलहेतुभूतानुग्रहस्सहेतुकउक्तः । अतश्च ' तत्सृष्ट्वा तदेवानुप्राविशत् ' इति श्रुत्यन्तरेष्वपि मैत्रायणीयानुरोधेन प्रवेशस्य ज्ञानसम्पादनार्थत्वं विवक्षितम् । अन्तर्यामिब्राह्मणेच अन्तर्बहिर्व्याप्तिर्नियमनार्थत्वं स्फुटम् । एवंच ' हन्ताहमिमास्तिस्रोदेवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' इति छान्दोग्येऽपि ' हन्तहर्षेऽनुकम्पायां ' इति कोशानुसारेण कृपामूलकत्वं प्रवेशस्य विवक्षितम् । गीतायां परमात्मनः हृदि स्थितेः जीवज्ञानसम्पादनार्थत्वोक्त्या कृपामूलकत्वप्रतिपादनेन छान्दोग्ये शाण्डिल्यविद्यायां (३.१४.ख) ' एषम आत्माऽन्तर्हृदये ' इति त्रिरभ्यस्तवाक्येऽपि हृदयस्थितिः कृपामूलेति बोधितम् । तदुक्तं भाष्ये ' एषम आत्माऽन्तर्हृदये एतद्ब्रह्म ' इत्येवंभूतंपरं ब्रह्म परमकारुण्येन अस्मदुज्जिजीवयिषया अस्मिन्हृदये सन्निहितमिति इदमनुसन्धानं विधाय ' इति (१.२.७)॥

एवंच सृष्टिकालिकप्रवेशस्य कारुण्यमूलकत्वप्रतिपादनेन सृष्टेः परार्थत्वं दर्शितमिति सृष्टिवाक्यानि आत्मव्यतिरेकेण वस्त्वभावपराणि इति परसम्मतार्थः न श्रुत्यादिप्रमाणतात्पर्यविषयः । किंतु द्रमिडाचार्यसम्प्रदायरीत्या राजकुमारनयप्रदर्शनपराणि सृष्ट्यादिवाक्यानि इति सिद्धम् । एतेन ' सयथाऽग्नेः क्षुद्राविष्फुलिङ्गाः ' इति वाक्यं दृष्टिसृष्टिपक्षाभिप्रायकं द्रष्टुरेकजीवस्यैव स्रष्टृत्वं तत्र विवक्षितमित्याद्युक्तिरपि परेषां निरवकाशा । ' यथा सुदीप्तात्पावकाद्विष्फुलिङ्गाः ' इत्यादि मुण्डकश्रुतौ सरूपत्वोक्त्या पावकविष्फुलिङ्गयोरधिकन्यूनत्वप्रभावत् जीवपरमात्मनोः संकुचितासङ्कुचितज्ञानवत्वप्रतिपादनेन तत्समानार्थकश्रुतावत्रापि ' यत्रैष एतत्सुप्तोऽभूद्यएषविज्ञानमयःपुरुषः ' इति पूर्ववाक्ये जीवस्य ज्ञानवत्वाभिधानेन अत्रापि दृष्टान्तानुसारेण परजीवयोस्सङ्कुचितासङ्कुचितज्ञानवत्वं विवक्षितमिति जीवज्ञानविकासार्थत्वमेव सृष्टेः प्रतीयते । ' एतस्मादात्मान ' इत्यत्र न जीवः विवक्षितः किंतु परमात्मैव । ' यएषोन्तर्हृदयआकाशस्तस्मिंश्छेते ' इति पूर्ववाक्ये तच्छब्दार्थ ब्रह्मण एव परामर्शः । तत एव जीवानां व्युच्चरणं विवक्षितम् । ' सर्वाः प्रजास्सति सम्पद्य न विदुस्सति सम्पद्यामह इति सत आगम्य न विदुस्सत आगच्छामह इति ' (छा) श्रुत्यन्तरैकार्थ्यात् । अत्र बहूनां जीवानां व्युच्चरणोक्त्या एकजीववादः न श्रुतितात्पर्यविषयः ॥

' पुरत्रये क्रीडति यस्तु जीवः ततस्तु जातं सकलं विचित्रम् । आधारमानन्दमखण्डबोधं यस्मिंलयं याति पुरत्रयं च ॥ ' (कै.उ.३.१४) इत्यत्र पुरत्रये क्रीडति यस्तु जीव इति जाग्रत्स्वप्नषुसुप्तिषु जीवव्यापार उक्तः । ततस्तु जातमित्यत्र तुशब्दप्रयोगेण जीवो व्यवच्छिद्यते । यस्मिन्पुरत्रयं च लयं याति ततः सकलं जातमित्यन्वयः । जाग्रत्स्वप्नसुषुप्त्यवस्थाऽऽपन्नजीवस्य चशब्देनोचेतनस्य च लयाधारत्वेनोत्तरार्धे प्रतिपन्नः पर एव तत इत्यत्र जगत्कारणतया विवक्षितः । सुषुप्तौ भूतानां स्वस्वकारणेषु लयः क्वापि नोक्तः प्रमाणेषु । किं तु परमात्मन्येव लय उक्तः । एवमहमर्थस्यापि लयो नाभिहितः । दृष्टिसृष्टिपक्षे च ब्रह्मव्यतिरिक्तस्य सर्वस्यापि प्रातीतिकत्वेन प्रमाणानां प्रामाण्यमेव न स्यात् । अनादिव्यतिरिक्तविषये दृष्टिसृष्टिः इत्यत्र न किंचिद्विनिगमकम् । दृष्टिसृष्टिपक्षे वेदान्तवाक्यस्य तन्मीमांसायाश्च स्वप्नवाक्यतुल्यत्वेन दोषप्रयुक्तत्वाज्ज्ञानमपि न सम्भवतीति अबाधोपपत्ति र्नसम्भवति । अतः विषयबाधाबाधव्यवस्था नैव घटते । अतः ' यथाऽग्नेः क्षुद्राः विष्फुलिङ्गा व्युचरन्ति ' इत्यस्यां श्रुतौ दृष्टिसृष्टिपक्षः एकजीववादश्च नैव विवक्षितः । पूर्वं सुषुप्तौ स्वस्वकारणेषु भूतादीनां लयस्यानुक्त्या इन्द्रियव्यापारविरहमात्रोक्त्याच धर्मभूतज्ञानस्य सङ्कोचसिध्या जागरे धर्मभूतज्ञानविकास-

## गूढार्थसंग्रहः

सत्वेन प्रलयानन्तरकालिकसृष्टावपि इत्थमेव धर्मभूतज्ञानविकास इति तात्पर्येण सृष्टिवाक्यानां जीवपरयोः राजतत्पुत्रतुल्य
ताप्रतिपत्तिरेव फलम् । 'यथा सुदीप्तात्' इति श्रुत्यन्तरसमानार्थकायामस्यामपि श्रुतौ अग्निविस्फुलिङ्गयोः असङ्कुचित-
सङ्कुचितप्रभावत् परजीवयोरपि असङ्कुचितसङ्कुचितज्ञानवत्वेन एकजातीयताप्रतीतिरिति सम्प्रदायविदां द्रमिडाचार्याणां
सिद्धान्त एव युक्तः । प्रलये जीवानां सङ्कुचितज्ञानवत्वेन तज्ज्ञानविकासार्थं परमात्मनः सृष्टिकालिकप्रवेशः, अन्तर्बहि-
र्व्याप्तिः, हृदयस्थितिश्च श्रुतिषु उच्यत इत्यत्र न सङ्कटं किंचित् ॥

कैवल्योपनिषदि 'यथा चिरात् सर्वपापं विपोह्य परात्परं पुरुषं याति विद्वान्' (१.ख) इत्युपक्रम्य 'वेदान्तवि-
ज्ञानसुनिश्चितार्थाः परामृतात्परिमुच्यन्ति सर्वे' (४) इत्यत्र बहूनां जीवानां मोक्षकथनेन एकजीववादस्य श्रुतितात्पर्यावि-
षयत्वं प्रदर्श्य 'वेदैरनेकैरहमेव वेद्यः वेदान्तकृद्वेदविदेवचाहम्' (कै.२.३) इत्याद्युक्तम् । वेदैरनेकैरितिश्रुत्यर्थ एव
'सर्वस्य चाहं हृदि सन्निविष्टः' इत्येतदुत्तरार्धे 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिना उक्तः । अत्र 'अतोऽस्मि लोके
वेदे च प्रथितः पुरुषोत्तमः' इति पुरुषस्य सर्ववेदप्रतिपाद्यत्वं तदवतारभूतकृष्णस्यापि सर्ववेदप्रतिपाद्यत्वंच वदता गीता-
ऽऽचार्येण 'पुरश्चक्रे द्विपदः' इत्याद्युत्तरं 'इन्द्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयश्शता दश ।' इत्यादिश्रुत्यर्थः
प्रकाशितो भवति । एतेन ज्ञानसम्पादनार्थम् अन्तर्यामिरूपमिव विभवरूपमिति प्रदर्शितं भवति । मायाशब्दस्य यथा
न मिथ्यार्थकता तथा यथाऽवसरं निरूपयिष्यते । पुरुषशब्दनिर्वचनानन्तरं इत्थमुक्त्या 'याते धामानि परमाणि यावमा
यामध्यमाविश्वकर्मन्नुतेमा' इति (वि.क.सु) श्रुत्युक्तोत्तममध्यमाधमशरीराणि अत्रापि विवक्षितानि । अत्रेन्द्रशब्दः इदिपरमै-
श्वर्ये इति धातुना निष्पन्नः परमैश्वर्यविशिष्टवाची । इन्द्रशब्देन 'सवा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां
राजा' । इति पूर्वश्रुत्युक्तो राजैव प्रतिपादितः । पुरुरूपः इत्यत्र युक्ताह्यस्य हरयश्शतादश इति वक्ष्यमाणरूपाणि विव-
क्षितानि । अवतार्यावतारभावः अस्येत्यत्र षष्ठ्यर्थः । तन्निर्धारणंच 'अयंवैहरयः अयंवैदशच सहस्राणि बहूनिच अन-
न्तानिच' इति अनन्तरवाक्ये तत्तदवतारपुरुषाणां इन्द्राभेदप्रतिपादनेन क्रियते । 'तदेतद्ब्रह्मापूर्वम् अनपरमनन्तरमबाह्यम्
अयमात्मा ब्रह्म सर्वानुभूः' इति अनन्तरवाक्ये अनन्तरूपाणां फलमपि दर्शितं भवति । अत्र अपूर्वं नास्य कारणं पूर्वं
विद्यतइति अपूर्वमिति परेषां (शं) विवरणम् । अपूर्वमित्यनेन पूर्वावधिरहितम् अनपरम् इत्यनेन उत्तरावधिरहितम् अन
न्तरमबाह्यम् इत्यनेन अन्तर्बहिःप्रदेशरहितम् इति प्रतिपाद्यते । एतेन नित्यं निरवयवम् इत्युक्तं भवति । तदेतदित्यत्र
तच्छब्देन जगत्कारणम् एतच्छब्देन जगच्छरीरकं प्रतिपिपादयिषितम् । तत्र नित्यत्व निरवयवत्वविरोधशङ्कायां अपूर्वमन
परमित्याद्युक्तम् । जगत्कारणत्वेऽपि स्वरूपपरिणामानभ्युपगमेन आगन्तुकधर्मवत्वाङ्गीकारेऽपि धर्मधर्मिणोर्भेदेन धर्मिणो नित्य
त्वस्य न विरोधः । 'नानेन किञ्चनानावृतम्' इत्यादौ सर्वव्यापकत्वस्य अत्र निरवयवत्वस्यचोक्त्या 'तदस्य रूपं प्रतिच-
क्षणाय' इत्यादौ चित्प्रतिबिम्बं न विवक्षितमिति निर्णीतं भवति । व्यापकस्य निरवयवस्य क्वापि प्रतिबिम्बादर्शनात् ।
आकाशस्य वेदान्तिमते सावयवत्वेन उपाध्यनन्तर्गताकाशस्य प्रतिबिम्बसम्भवात् । 'अम्बुवदग्रहणात्तु नतथात्वम्' इति
(३.२.१९) सूत्रे सर्वगतस्य प्रतिबिम्बं नसम्भवतीत्येव युक्तम् । 'वृद्धिह्रासभाक्त्वम्—' इत्याद्यनन्तरसूत्रेऽपि 'जलगतं
सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति इत्येवं जलगतधर्मानुसारिभवति ; नतु परमार्थतस्सूर्यस्य तथात्वमस्ति ।
एवं परमार्थतोऽविकृतमेकरूपमेव सद्ब्रह्म देहाद्युपाध्यन्तर्भावात् भजत इव उपाधिधर्मान् वृद्धिह्रासादीन्' इत्येव (शं)
भाष्ये उक्तम् । नतु प्रतिबिम्बम् । 'अत एवचोपमा सूर्यकादिवत्' (३.२-११) इति सूत्रोदाहृतायां 'यथाह्ययं ज्यो-
तिरात्मा' इति श्रुतावपि न चित्प्रतिबिंबसाधकं किंचित् । (भामती-कल्पतरु) परिमलादौ अप्पय्यदीक्षितैः चित्प्रतिबिम्ब-

## गूढार्थसङ्ग्रहः

वादः न प्रमाणानुगुण इति साधितम् । अतश्च रूपं रूपं प्रतिरूपो बभूव ' इत्यत्र प्रतिबिम्बवाचिपदं किमपि न श्रूयते। रूपशब्दस्य रूप्यतेऽनेन धिया व्यवह्रियते आत्मा येन मनसा तद्रूपमित्यर्थः औत्प्रेक्षिक एव । पूर्वं सर्वव्यक्तेरेवाभिधानात् । अत्रापि रूपशब्दस्य आत्मभिन्नद्रव्यवस्तुसामान्यपरत्वात् । रूपं रूपं– वीप्सायां द्विर्वचनम्, प्रतिवस्तु । प्रतिरूपः नियतान्तर्यामिरूप इत्यर्थः । ' स पक्षीभूत्वा पुरःपुरुष आविशत् ' इति पूर्ववाक्ये शरीरसामान्यस्यापि विवक्षितत्वेन मनोरूपासु पूर्षु तदन्तर्गतत्वरूपप्रवेशस्योक्तिरपि अभिनिवेशमूलैव ॥

' तदस्य रूपं प्रतिचक्षणाय ' इति । प्रतिचक्षणाय– नियतव्यवहाराय । अस्य परस्य रूपं शरीरमित्यर्थः । तत्– तस्मात्कारणात् । यस्मात्प्रतिवस्त्वन्तर्यामितया सत्ता तस्मात् व्यवहाराय वस्तुसामान्यं परमात्मशरीरमित्यर्थः । अतः उपनिषत्सु अचिज्जीवसामानाधिकरण्यं परमात्मवाचिशब्दस्योपपद्यत इति भावः । प्रतिबिम्बस्य पूर्वमविवक्षितत्वादेव सर्वानुभूरित्यपि सङ्गच्छते । सर्वानुभूः इत्यत्र सर्वाननुभवति सर्वाननुभावयति सर्वैरनुभूयते इत्यप्यर्थः । राजपुत्रस्य राजसमीपगमनानन्तरं राजाऽनुभववत् सर्वेषां जीवानां जगन्महाराजपुत्राणां जगन्महाराजब्रह्मानुभव इति राजपुत्रस्य राजपुत्रत्वज्ञानमूलकपरमफलमपि दर्शितं भवति । चेतनानां तत्तदवतारमूलकतया ज्ञानसम्पादनस्योक्तं फलमवताररूपाणामपि फलं भवतीति अवताररूपफलप्रदर्शनं नाविरुध्यते । अन्तर्यामिरूपमात्रेण चेतनसामान्यस्य ज्ञानद्वारकफलं नैव लभ्यत इति बहुरूपप्रदर्शनम् । अन्तर्यामिरूपं तु न विभववदुपकरोतीति एतावता निर्णीतं भवति ॥

एवं ' येन सूर्यस्तपति तेजसेद्धः । पिता पुत्रेण पितृमान् योनियोनौ । नावेदविन्मनुते तं बृहन्तम् । सर्वानुभूमात्मानँ सम्पराये ' (काठक ३ प्र.) इति श्रुत्यन्तरेऽपि अवताररूपफलं सर्वानुभव इति व्यक्तम् । अत्र पिता पुत्रेणेति वाक्ये पिता सर्वजगत्स्रष्टृत्वेन सर्वस्य पिता रामकृष्णादिः । पुत्रेण– सृष्ट्यादिवाक्यपर्यालोचनया जगन्महाराजपुत्रेण दशरथवसुदेवादिना पितृमान्- पितृविशिष्टः । दशरथवसुदेवादेः पुत्र इत्यर्थः । एतेन जगत्कारणत्वादिना सर्वस्मात्परस्यापि चेतनोज्जीवनार्थं स्वसृष्टदशरथवसुदेवादिपुत्रत्वेन चेतनसजातीयतया अवतारेण स्वस्य सौशील्यवात्सल्यादिप्रदर्शनेन उपदेशादिना च ज्ञानसम्पादनमुखेन चेतनानामुज्जीवनं सम्यक्प्रदर्शितं भवति । इदं चान्तर्यामिरूपेण नैव सम्पादयितुमर्हम् । अतः विभवरूपैरेव इदं फलं सम्पादयितुं शक्यमिति परस्य राज्ञः पारमार्थिकबहुरूपपरिग्रह एव पुत्राणां चेतनानां सर्वेषां पितृभूतपरराजाऽनुभवः परमार्थतस्सम्भवति नत्वन्यथेति भावः । औपनिषदं पुरुषमित्यन्वय उक्तः । नावेदविन्मनुते बृहन्तम् इति व्यतिरेकः । अत्र सम्पराय इत्युक्त्या ' तस्यैवात्मा पदवित्तं विदित्वा नकर्मणा लिप्यते पापकेन । इति उत्तरत्र वेदनस्य पापालेपहेतुत्वोक्त्याच्च मुक्तिफलमपि वेदनस्य प्रतिपादितम्। एतेन विभवावतारान्तं निर्हेतुककृपामूलकमितिसिद्धम्॥

एवम् परब्रह्मणः परत्वोपयुक्तगुणैः परत्ववेदनेन मुक्तिफलं न सिध्यति । सौलभ्योपयुक्तगुणैः अवतारतत्त्वज्ञानेन सौलभ्यवेदनेनैव परमात्मनः ' मांहि पार्थ व्यपाश्रित्य ' इत्याद्युक्तदिशा सम्यगाश्रयणं तद्भक्त्याच मुक्तिफलमिति निर्णीतं भवति । अतश्च कृष्णाद्यवताराणां सर्ववेदवेद्यत्वएव परस्य सर्ववेदवेद्यत्वम् इति ' वेदैश्च सर्वैरहमेव वेद्यः ' इत्यादिना गीतायां निर्णीतं भवति । एतेन चेतनज्ञानसम्पादनार्थावताराणां सत्यत्वं स्थापितम् । तदुत्तरं गीतायां ' यो मामेवमसम्मूढः जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ॥ ' इति वचने असम्मूढइत्यत्र समित्येकीकारे जीवब्रह्माभेदमोहरहित इत्यर्थः । एवं ' क्षरःसर्वाणि भूतानि इत्यादिपूर्ववाक्ये प्रागुक्तप्रकारेणेत्यर्थः । एवञ्च जीवब्रह्माभेदमोहरहितानामेव जीवव्यापकधारकनियामकशेषिपुरुषोत्तमज्ञानवतां भक्तिः नान्येषामिति सिद्धम् । एवं ' सयत्पूर्वोऽस्मात् सर्वस्मात् सर्वान्पाप्मनः औषत् ' ' सवा अयं सर्वासु पूर्षु पुरिशयः ' इति पुरुषशब्दनिर्वचनत्रयलब्धार्थत्रयस्य सौहार्द

## गूढार्थसङ्ग्रहः

इत्यस्य सविशेषपरत्वमेव । सोऽनु-
सिद्धम् । अतश्च औपनिषदपुरुषः सविशेषएव । अतः आत्मैवेदमग्रआसीत्पुरुषविधः ’
वीक्ष्य नान्यदात्मनोऽपश्यत् इत्यत्र कार्यावस्थापन्नवस्तुदर्शनाभावः विवक्षितः । ननु ‘ सोऽबिभेत् तस्मादेकाकी बिभेति सहायमी
क्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नुबिभेमीति ततएवास्य भयंवीयाय कस्माध्यभेष्यत् द्वितीयाद्वै भयं भवति ’ । (बृ.३.४.२)
इत्युत्तरवाक्ये आत्मान्यस्य भयहेतुत्वं आत्मान्यविरहज्ञानेनैव भयनिवृत्तिश्च प्रतिपाद्यते । अतः ‘ सोऽनुवीक्ष्य नान्यदात्मनो
ऽपश्यदिति ’ पूर्ववाक्यस्यापि आत्मान्यदर्शनाभावपरत्वमेव । तदनन्तरं ‘ सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहं नामाभवत् ’
इत्यत्र चतुर्मुखस्य सर्वात्माहमस्मीति आत्मैक्यज्ञानमेव विवक्षितम् इतिचेत् ? द्वितीयाद्वै भयंभवति इत्यतःपूर्वं ‘ तस्मादेकाकी
बिभेति ’ इति एकाकित्वमेव भयहेतुत्वेनोक्तम् । अत्र एकशब्दं विहाय एकाकिशब्दप्रयोगेण ‘ एकादाकिनिच्चासहाये ’
(पा.सू.५.३.५२) इति सूत्रानुसारेण एकाकिन् शब्दः असहायार्थकः । अतएव ‘ सहायमीक्षाञ्चक्रे ’ इत्यनन्तरवाक्ये
सहायदर्शनमेव भयनिवृत्तिहेतुत्वेन प्रथमतउक्तम् । सहायदर्शनानन्तरमेव ‘ यन्मदन्यन्नास्ति कस्मान्नुबिभेमि ’ इतिज्ञानम्
‘ ततएवास्य भयं वीयाय ’ इत्यत्र ततइत्यस्य सहायदर्शनादेरित्यर्थः । मदन्यन्नास्ति इत्यत्र अन्यशब्दस्य ‘ द्वितीयाद्वै भयं
भवति ’ इत्यत्र द्वितीयशब्दस्यच विरोधीत्यर्थः ’ । विरोधिनः भयसम्भवएव सहायापेक्षा नत्वन्यदा इतीत्थमेवार्थो
विवक्षितः ॥

अतएव ‘ आनन्दं ब्रह्मणो विद्वान् नबिभेति ’ इति द्विरभ्यस्ततैत्तिरीयश्रुतिः संगच्छते । तत्र आनन्दं ब्रह्म विद्वान्
इति निर्देशं विहाय एवं निर्देशेन ब्रह्मसम्बन्धिगुणज्ञानेन भयनिवृत्तिः इति स्फुटं प्रतीयते ‘ मदन्यन्नास्ति द्वितीयाद्वै भयं ’
इत्यत्र अन्यसामान्यविवक्षणे ज्ञानस्याप्यन्यत्वेनासङ्गतिः । नहि यन्मदन्यन्नास्ति इत्यादौ द्वितियाभावस्य भयाभावप्रयोजक-
त्वमुच्यते । किंतु भयहेतुत्वेन यद्यत्प्रमाणसिद्धं तस्य कस्मादित्यनेनाक्षेपे कृते, तत्र हेतुः अनात्मामिथ्यात्वम् यन्मदन्यन्नास्ति
इत्यनेनोक्तम् । अधिकरणं विना निषेधापर्यवसानेन यत्रयत्र मदन्यत् प्रसक्तं तत्र तन्नास्तीत्यर्थात् । तथाच द्वितीयमात्र
दर्शनस्यैव भयहेतुत्वादित्यत्र (अ.सि) द्वितियस्याविरोधि समानतादितररूपस्य सत्यत्वेन ज्ञायमानस्यैव भयहेतुत्वमित्यर्थः । नचैवं
द्वितीयाद्वै भयमित्यस्य भयहेतुत्वेन मानसिद्धस्यैवानुवादात् द्वितियसामान्यनिन्दापरत्वं नस्यादिति प्रकृतानुपयोग इति
वाच्यम् । द्वितीयपदस्य आत्मभिन्नार्थकतया आत्मभिन्नादेव भयं नत्वात्मन इति भेदनिन्दाद्वारा अभेदस्तुत्या प्रकृतार्थोपयो-
गात् ’ इति लघुचन्द्रिकोक्तिरपि श्रुतिपीडनमेव । ‘ तस्मादेकाकी बिभेति ’ इति पूर्ववाक्यविरोधात् । यन्मदन्यन्नास्तीत्यत्र
अहमर्थस्यानात्मतावादिनां परेषां आत्मभिन्नं नास्तीत्यर्थस्यैव असम्भवात् । यत्र भयं प्रसक्तं तत्रैव भयहेत्वभावो वक्तव्य
इति मदन्यन्नास्तीत्यत्र भयदेश एव मदन्यवस्त्वभावः प्रतीयते । नत्वात्माभिन्नमिथ्यात्वम् । मिथ्यात्वं तु नास्ति नासीत्
नभविष्यतीति प्रतीतिसत्त्व एव सिध्यति । अत्रतु मदन्यन्नास्तीत्येतावन्मात्रमेव वर्तते । अतो लघुचान्द्रिकोक्तार्थः न श्रुति
तात्पर्यविषयः । अतः ‘ आनन्दं ब्रह्मणो विद्वान् ’ इत्याद्यनुरोधेन गुणवत्सुपुरुषसहायसाक्षात्कार एव अत्र भयनिवृत्तिहेतुः
इत्यर्थ एव विवक्षितः ॥

‘ सोऽहमस्मीत्यग्रे व्याहरत् ’ इति चतुर्मुखोक्तौ आत्मैक्यं न विवक्षितम् ‘ अहङ्कारकृतं चैव नामपर्यायवाचकम् ’
इति भारतोक्त्यनुसारादिति ’ व्यासार्यैः सर्वव्याख्यानाधिकरणे उक्तम् । एवं च हयशिरउपाख्याने ‘ अहङ्कारस्ततो जातो
ब्रह्मा शुभचतुर्मुखः । ’ इत्युक्त्या ‘ सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहन्नामाभवत् ’ इति श्रुत्यर्थ उक्तः । ब्रह्मणः अहङ्कारा
भिमानित्वं प्रकाशयितुं जलबिन्दुभ्यामेव तामसराजसमधुकटभरूपेण अनिरुद्धसङ्कल्पिताभ्यां वेदापहारेण ज्ञाननाशाच्चतुर्मुखस्य
भयम् । ततः चतुर्मुखकृतशरणवरणेन अनिरुद्धेन हयशिरोरूपेण अवतीर्य वेदाहरणस्य ब्रह्मणो वेदप्रदानस्य मधुकैटभवध-
स्यच करणेन हयशिरसस्सहायस्य साक्षात्करणेन विरोधिनःअभावाद्भयनिवृत्तिरिति एतावदर्थस्य हयशिरउपाख्याने वर्णनेन

## गूढार्थसंग्रहः

व्यासेन अस्याश्श्रुतेरर्थः सम्यङ्निर्धारितः ॥ अतश्च रजस्तमोऽभिवृद्धिमूलकज्ञाननाशे सति अत्रापि विभवावतारमुखेन रजस्तमोनिर्बर्हणपूर्वकं सत्वाभिवृध्या ज्ञानसंपादनं भाविपुरुषशब्दार्थनिर्वचनवेदनीयं दर्शितं भवति ॥

एवं शिशुब्राह्मणेऽपि 'योहवै शिशुँ साधानँ सप्रत्याधानँ सस्थूणँ सदाम वेद, सप्तह द्विषतो भ्रातृव्यानवरुणद्धि । अयं वाव शिशुर्योऽयं मध्यमः प्राणः, तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणा अन्नं दाम' (बृ.४.२.१) इत्यत्र प्राणः स्थूणा इति व्यूहस्य स्थूणात्वं विवक्षितम् । ऐतरेयारण्यके वाक्प्राणसंहिताकथनावसरे 'प्राण आत्मा' इत्यत्र प्राण ऊष्मरूपमिति तत्रैव प्रागुक्तार्थस्य विवक्षितत्वेन 'शषसहा अनिरुद्धाद्याः विज्ञेयास्त्रिदशेश्वर' (लक्ष्मीतन्त्रं १९.१७) 'वासुदेवाख्ययाऽह्नोऽभूत् साख्यस्सङ्कर्षणोदयः । प्रद्युम्नः षाख्यया ज्ञेयोह्यनिरुद्धस्तु शाख्यया ॥' (ल.१९.३२) इत्युक्तदिशा व्यूहस्य विवक्षितत्वेन अत्रापि तद्विवक्षा युक्ता । 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' इत्यत्र हयशिरोरूपधरो अनिरुद्धो विवक्षितः । 'अहं नारायणो नाम शङ्खचक्रगदाधरः । अशिशुश्शिशुरूपेण यावद्ब्रह्मा नबुध्यते ॥' (म.भा.वनपर्व १९२.४१४) इति मार्कण्डेयं प्रति भगवदुक्तेः । 'पूर्णे युगसहस्रेऽपि तमेवाहं तदा शिशुम् । अनिरुद्धं विजानामि पितरंते जगत्पतिम् ॥' विष्णुधर्मोत्तरं (१.१९.३) इति मार्कण्डेयेन वज्रं प्रत्युक्तेश्च एतद्वेदनस्य ज्ञानेन्द्रियमनोबुद्धिजयः फल मुक्तम् । तदनन्तरं 'इदं तच्छिरः एषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नः' इत्यत्र हयशिरएव विवक्षितम् । तदुक्तं शरीरभूतभृन्नामविवरणावसरे भट्टपराशरपादैः- 'शरीरभूतं तत्वजातं बिभर्तीति शरीरभूतभृत्' 'तच्छिरः' (बृ) तस्य मूर्धासमभवत् द्यौः सनक्षत्रदेवता' (ह.उ) इत्यारभ्य 'एतद्धयशिरःकृत्वा नानामूर्तिभिरावृतमिति' 'वागष्टमी ब्रह्मणा' (बृ.४.२.३) इत्यत्र वागिन्द्रियाभिमानिनी हयशिरश्शक्तिर्वाग्देवी । हयशिरोरूपधारी अनिरुद्धो ब्रह्मेति विवक्षितम् । पूर्वब्राह्मणान्ते (अजातशत्रुब्राह्मणम्) 'यएष विज्ञानमयःपुरुषः तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इत्यादिना सुषुप्तेः प्रागिन्द्रियव्यापारनिरोधविषये जीवस्य स्वातन्त्र्यमुक्तम् । 'एतस्मादात्मनस्सर्वे प्राणाः-व्युचरन्ति' इत्युक्तप्रबोधेऽपि सुषुप्तेःप्रागिव इन्द्रियेषु जीवस्य स्वातन्त्र्यं प्राप्तम् । तच्चानुभवविरुद्धं बहूनामिन्द्रियाणां प्रतिकूलत्वात् इति शङ्कापनोदनाय शिशुब्राह्मणमारब्धम् । वेदानाहृत्य चतुर्मुखाय प्रदाय तस्येन्द्रियानुकूल्यं सम्पाद्य तं सृष्टौ पूर्ववत्प्रवर्तयतः हयशिरोरूपधारिणोऽनिरुद्धस्यानुग्रहेण इन्द्रियजयेन सम्यज्ज्ञानं मनुजानामपीति शिशुब्राह्मणेन प्रकाशितं भवति ॥

गीतोक्तकैवल्योपनिषत्तात्पर्यमनुसृत्य (बृ.४.१.२०.) इत्यत्र राजकुमारनयं प्रदर्शयत द्रमिडाचार्याणां परमात्मैव विवक्षितः । नतु जीव इति २६२ पुटे पूर्वमेवोक्तम् । एवं दृष्टिसृष्टिपक्षोऽपि नसम्मत इति । 'अन्यार्थंतु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके' (ब्र.सू. १.४.५.१८.) इति सूत्रभाष्ये (शं) 'प्रतिवचनमपि 'यदा सुप्तः स्वप्नं नकथंचन पश्यति, अथास्मिन् प्राण एवैकधा भवति-' इत्यादि, (कौ.ब्रा.४-११.) 'एतस्मादात्मनः प्राणा यथायथं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः' इति च । सुषुप्तिकाले च परेण ब्रह्मणा जीवः एकतां गच्छति । परस्माच्च ब्रह्मणः प्राणादिकं जायत इति वेदान्तमर्यादा । अपिचैवमेके शाखिनः अस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति । 'य एष विज्ञायमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागात्' (बृ.४.१.१६) इति प्रश्ने प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशः तस्मिंश्शेते' इति । आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन् अन्तर आकाशः' (छा.८.१.१) इति । 'सर्व एत आत्मनो व्युच्चरन्ति' (बृ.४.१.२०.) इतिच उपाधिमतामात्मनामनवतो व्युच्चारणमामनन्तः परमात्मानमेव कारणत्वेनामनन्तीति गम्यत इति इत्युक्तम् ॥

## गूढार्थसंग्रहः

‘यत्रैष एतत्सुप्तोऽभूदिति’ (बृ.४.१.१७) पूर्वश्रुत्या ‘नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तम् यत्पश्येत्’ (बृ.६)
इत्यादावपि न द्वितीयसामान्याभावो विवक्षितः । अपितु इन्द्रियसंबद्धद्वितीयवस्त्वभावः इति निर्णीतम् । ‘यत्रैष एतत्सु-
तोऽभूत् यएषविज्ञानमयःपुरुषः तदेषां प्राणानां विज्ञानेन विज्ञानमादाय’ इत्यत्र पूर्वं इन्द्रियव्यापारविरहमात्रस्यैवोक्तेः ॥

यद्यपि ‘नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ।’ इत्यत्रापि ततो द्रष्टुरन्यद्विलक्षणं जडं द्वितीयं
विभक्तं स्थूलं यन्नास्ति यद्येन चक्षुरादिना यद्रूपादिकं च पश्येत् किंतु अविभक्तं संस्काररूपं सर्वमस्तीति शेषः ।
अतएव ‘सुषुप्तिकाले सकले विलीने’ ‘स्वमपीतोभवति’ इत्यादिश्रुत्यन्तराणि । तथाच संस्काररूपेण द्वैतावस्थानस्य च
लयस्य ब्रह्मण्युक्तत्वात् संस्कारस्यच उपादानएव स्वीकारात् उपादानत्वस्यच ब्रह्मण्यपरिणामिनि परिणाम्यविद्योपरागेण
वाच्यत्वात् जडयोरुपादानत्वोपादेयत्व निर्वाहकतादात्म्यस्य कल्पितत्वात् विनिगमकाभावेन द्वैतसामान्यस्य कल्पितत्वसि-
द्धिरिति भावः । यत्रवा अन्यदिव स्यादित्यादि । अन्यदिव आभासत्वरूपान्यत्वयुक्तं अन्यत् अतएव स्वप्नेघ्नन्ति इव इत्याद्यु-
क्त्वा अविद्यया मन्यते इत्यग्रे आविद्यकत्वेन आभासत्वमुपपादितम् । लोकेऽपि सद्वितीयश्चन्द्रः प्रसिद्धोऽस्ति । यस्य साद्द-
श्यं बुध्येत । तस्मादुक्तश्रुतिसंदर्भो द्वैतमिथ्यात्वपरः । इति गुरुचन्द्रिकायां (एकमेवेत्यादि श्रुत्यर्थविचारे) उक्तम् । तथा-
ऽपि ‘नतु तद्द्वितीयमस्ति’ इति वाक्ये अस्तीत्यन्तम् एकं वाक्यं स्वरसतःप्रतीयते । नञ् समभिव्याहारे अस्तीत्यतःपर
वाक्यघटकपदार्थस्य पूर्ववाक्यघटकपदार्थैस्समं संसर्गेण बोधस्य अदर्शनात् । विभक्तमित्यस्य स्थूलमिति अर्थोऽपि नोचितः
स्थूलरूपार्थे रूढत्वाभावात् । विभक्तशब्दस्य संयोगप्रतिकोटिविभागवदित्यर्थः । संयोगविरहसत्वएव विभक्तशब्दस्य प्रयोगः
‘ततोऽन्यद्विभक्तं यत्पश्येत्’ इत्यत्र यदित्येकमेव पदं वर्तते उभयत्र यदित्यस्याभावेन यद्येन चक्षुरादिना यद्रूपादिकं च
पश्येत् इत्यर्थः कथम् ? तन्नास्ति इति पाठेऽपि पूर्वोक्तदोषः तदवस्थएव । एतेन चक्षुरादिना यद्रूपादिकंचेति अर्थद्वय-
मपि नलभ्यते । अतः अविभक्तं संस्काररूपं सर्वमस्तीति शेषः इत्यर्थोऽपि नात्र श्रुतौ विवक्षितः । पूर्वं स्वस्वकारणेषु
पदार्थानां क्रमेण लयस्यानुक्तेः । तदुक्तलयस्य ब्रह्मण्यङ्गीकारेऽप्यतिक्लिष्टकल्पनेनैव विश्वस्य मिथ्यात्वं साधनीयम् ॥

‘सुषुप्तिकाले सकले विलीने’ इत्यत्र समुत्खातनिखिलपरिणामत्वम् (पं.पा.) अविद्यायाः यदि विवक्षितं, तदा
अन्तःकरणस्य प्राणलक्षणक्रियाशक्त्यंशं विहाय लयकल्पनं विवरणकृतां कथं? सङ्गच्छते । (श्रीभाष्ये २२१) दृष्टिसृष्टि
पक्षाभ्युपगमेऽपि अविद्यासुखसाक्ष्याकारवृत्तेरपि विवरणकारादिसम्मतायाः अभ्युपगमः कथम् ? ‘तमोऽभिभूतस्सुखरूप-
मेति’ इत्युत्तरवाक्ये अभिभवदशायामप्रकाश एव विवक्षितस्स्यात् । व्यवहाराभावदशायां सुखरूपस्य विवरण एवोक्तेः ।
अविद्यावृत्तिसत्वे व्यवहारस्यावश्यकत्वेन सुखरूपस्याप्यसम्भवात् । अतः स्वप्रकाशतयैव भानं वाच्यम् । वार्तिकपञ्चपा-
दिकाकारमत इव वृत्तेरनभ्युपगम एव आपद्येत । नहि सकलशब्दसद्भावमात्रेण अन्यत्र श्रुत्यादिषु क्वाप्यनुक्तस्य सुषुप्तौ
सर्वपदार्थलयस्यात्र विवक्षा सम्भवति । सर्वत्र इन्द्रियव्यापारविरह एव प्रतिपाद्यते । अतः ‘सुषुप्तिकाले सकले विलीन’
इत्यत्र पूर्वं जाग्रत्स्वप्नकालिकभोगानामुक्त्या जाग्रत्स्वप्नकालिकभोगविरह एव विवक्षितः । ‘जागरे कार्यकरणानि श्राम्यन्ति ।
तदपनुत्त्यै व्यापारोपरमः स्वापः’ इति पञ्चपादिकायामुक्तेः । ‘अनन्वागतं पुण्येन अनन्वागतं पापेन’ (६.३.२२)
इति पूर्वं जाग्रद्भोगप्रयोजककर्मविरहस्योक्त्या तन्निबन्धनकरणव्यापारविरहेण भोगलयविवक्षाया एव युक्तत्वात् ॥

‘स्वमपीतो भवति’ (छा.६.८.१) इति जीवस्य ब्रह्मणि नीरन्ध्रसंश्लेषरूपलय उच्यते । अत एव ‘तद्यथा प्रियया
स्त्रिया संपरिष्वक्तः न बाह्यं किंचन वेदनान्तरम् । एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तः नबाह्यं किंचन वेद ना-
न्तरम्’ इति श्रुतिः सङ्गच्छते । अत्र सम्यक्परिष्वङ्गः पुरीतद्देशावच्छेदेन संयोगः । तेन इन्द्रियव्यापारविरहेण बाह्यान्तर-

## गूढार्थसंग्रहः

पदार्थविषयकधर्मभूतज्ञानविरहः अहमर्थजीवस्य प्रतिपाद्यते । अत्र दृष्टान्ते स्त्रीपुरुषयोरैक्यमनुभवाविरुद्धम् । जीवब्रह्मणोरपि परिष्वक्तशब्देन सुषुप्तावैक्यं नास्तीति स्फुटं बोधितम् । अहमर्थस्य मनसोवा सुषुप्तौ नाशः स्वकारणे लयोवा न क्वापि श्रुतिषु प्रतिपाद्यते । अतः सुषुप्तौ जीवब्रह्मणोरैक्यं नसिध्यति ॥

एवंच ' सलिल एको द्रष्टा अद्वैतो भवति ' (बृ.६.३.३२) इति श्रुतावपि ' प्राज्ञेनात्मना संपरिष्वक्तः ' इति पूर्वश्रुत्यनुसारेण अद्वैत इत्यत्र सम्यक् परिष्वङ्गएव विवक्षितः । ' ततोऽन्यद्विभक्तं यत्पश्येत् ' इत्यत्र विभक्तशब्देन प्राज्ञविभक्तवस्तुस्वभावस्यैव ततःप्रतीत्या पुरीतद्देशावच्छेदेन प्राज्ञेन नीरन्ध्रसंश्लेषस्य संपरिष्वक्तः इत्यत्रोक्त्याच पुरीतद्भिन्नदेशावच्छेदेन जीवस्य विभक्तत्वाभावएवात्र विवक्षितः । अतएव ' यदेव जाग्रद्भयं पश्यति तदत्राविद्ययामन्यते ' । अथ यत्र देवइव राजेव अहमेवेदꣳसर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः इत्यत्र ' अहमेवेदꣳसर्वोऽस्मीत्यपि अविद्यया मन्यते इत्युक्तम् । अहमर्थजीवस्य देवत्वराजत्वादि यथा कर्ममूलकाज्ञानमूलकं तद्वत् ' अहमेवेदꣳसर्वोऽस्मीति ' ज्ञानमपि । इत्युक्त्या जीवब्रह्मणोः ऐक्यज्ञानस्य अज्ञानमूलकत्वंसिद्धम् ॥

एतेन ' यत्रवा अन्यदिवस्यात् तत्रान्योऽन्यत्पश्येत् ' इत्यादौ आत्मान्यवस्तुस्वभावो न विवक्षितः । यद्वै तन्नपश्यति इत्यादि वाक्यानन्तरं इदं वाक्यम् । जाग्रत्स्वप्नयोः प्राज्ञान्यस्य जीवस्य प्राज्ञान्यपदार्थदर्शनम् अत्रोपपाद्यते । ' उतेव स्त्रीभिःस्सह मोदमान ' (६.३.१३) इत्यादौ इवशब्दस्य लघुचन्द्रिकोदाहृत ' इवोपमायामल्पत्वे ' इति कोशानुसारेण इवशब्दः अल्पार्थकः । अन्यदल्पं स्यादित्यत्र सम्भावनायां लिङ् । सत्ताच ज्ञानविषयता । इन्द्रियद्वारकविषयसम्बन्ध एव ज्ञानविषयत्वं सम्भावितम् । तदैव अहमर्थजीवस्यान्यवस्तुदर्शनम् । जाग्रत्स्वप्नयोरिन्द्रियद्वारकविषयसम्बन्धसत्वेन तत्रान्यदर्शनमुपपद्यत इति भावः । अत्र इवशब्देन प्रतिपादितमल्पत्वमल्पकालिकत्वम् । तद्धि स्वप्नदृष्टपदार्थानामल्पकालिकत्वात् । जाग्रत्काल इव पदार्थस्य दीर्घकालसत्वेऽपि अल्पकालिकस्य इन्द्रियद्वारकव्यापारवतस्सत्वे अन्योऽन्यत्पश्येत् न अन्यथेति वाक्यतात्पर्यम् । अत एव एतदुत्तरं ' अकामँ रूपं शोकान्तरं तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति ' (बृ.६.३.२१) इत्यत्र अहमर्थस्य जीवस्य कामशोकविरह एव प्रतिपाद्यते । कामादीनामन्तःकरणधर्मत्वं न श्रुतितात्पर्यविषयः किंतु अहमर्थजीवस्यैवेति भावप्रकाशे निरूपितम् ॥ पूर्वं ' दृष्ट्वैव पुण्यंच पापं च ' (३.३.१५) ' स यत्तत्र किंचित्पश्यति अनन्वागतः तेन भवति असङ्गोह्ययं पुरुषः ' (६.३.१६) इत्यभ्यस्तवाक्यद्वये पुण्यपापफलदर्शनमभिधाय पुण्यपापफलोपभोगेन तत्क्षये सति न दर्शनविषयभूतार्थसम्बन्धः । सार्वदिकपुण्यपापसम्बन्धविरहात् । इत्युक्तेः अत्रापि सुषुप्तौ बाह्याभ्यन्तरज्ञानकामशोकसम्बन्धप्रयोजककर्मविरहेण ज्ञानाद्यभावः इति स्फुटं प्रतीयते । अत्र पूर्वं सुषुप्तौ ज्ञानाभावोक्त्या ज्ञानस्य प्रभास्थानीयत्वस्य श्रुतिषु प्रतिपादनेन द्रव्यतया तस्य सुषुप्तौ क्षये प्रबोधे चोत्पत्तौ द्रव्यांशे आरम्भवाद एव स्यान्नतु परिणामवाद इति धर्मभूतज्ञानसङ्कोचविकासनिबन्धनसृष्टिः अहमर्थजीवानां ' यथाऽग्नेः क्षुद्राः विष्फुलिङ्गा व्युच्चरीत ' इत्यादौ पूर्वं विवक्षिता न सिध्येत्, इत्याक्षेपपरिहाराय ' यद्वै तन्नपश्यति ' इति श्रुतिः प्रवृत्ता । ' यद्वै तन्नपश्यति पश्यन्वै तत् (तद्द्रष्टव्यम् मा.पा.) न पश्यति ' (६.३.२१) इति वाक्ये ' स यत्तत्र पश्यति अनन्वागतस्तेन भवति ' इति तत्पूर्वश्रुत्यनुसारेण तत्– जाग्रत्काले इन्द्रियसम्बद्धमित्यर्थः । पश्यन् वै तन्नपश्यति ' इत्यत्र दर्शनाश्रयस्यैव तद्विषयकदर्शनाभावः प्रतिपाद्यते ज्ञाननित्यत्वस्थापनार्थम् । तत्र चक्षुरिन्द्रियजन्यज्ञानस्यैव लोपः आरम्भवादिभिरुच्यते । नात्र विशेष्यज्ञाननाशो विवक्षितः इत्याह– ' नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते ' इति । द्रष्टुरित्यत्र तच्छीलार्थे तृन्, दर्शनस्वभावस्येत्यर्थः । स्वाभाविकदर्शनाश्रय इति यावत् । स्वाभाविकदर्शनाश्रयस्याविनाशित्वेन दर्शनस्य अविपरिलोपः

## गूढार्थसंग्रहः

विवक्षितः । वि.परि इत्युपसर्गाभ्यां नैयायिकादि सम्मतो विनाशो न विद्यते किंतु संकोचएवेति द्योतितम् । स्वाभावि-
कधर्मस्य आश्रयनाशादेव नाशः नान्यथेति आश्रयस्य नित्यत्वात् दर्शनस्यापि नित्यत्वमिति भावः । दर्शनस्य नित्यत्वे
तन्नपश्यतीति न युज्यतइति शङ्कायां नतु तत् द्वितीयमिति वाक्यं प्रवृत्तम् । द्वितीयं द्रष्टुः भिन्नं तत् पूर्वश्रुत्याद्यनुसारेण चक्षु
र्द्वारकसम्बन्धवत् इत्यर्थः । तद्द्रष्टव्यम् इति माध्यन्दिनपाठे उक्तेः । दर्शनयोग्यता इन्द्रियद्वारकसम्बन्धदशायामेव विष-
यस्व । इति स्फुटं प्रतीयते । द्रष्टव्यपदाभावेऽपि काण्वपाठे पूर्वश्रुत्यनुसारेण पुण्यपापमूलकेन्द्रियद्वारकसम्बन्धवतएव तच्छ-
ब्दार्थत्वं युक्तम् । तदित्यस्य पूर्वप्रस्तुतपरामर्शित्वेन तदुत्तरद्वितीयशब्दस्य प्राज्ञभिन्नार्थकत्वमपि युक्तम् ॥

' ततोऽन्यद्विभक्तं यत्पश्येत् ' इत्यत्र विभक्तशब्दः प्राज्ञविभक्तपरः । पूर्वं जागरदशायां प्राज्ञस्य सर्वव्यापकत्वेन
सर्वसंयुक्तत्वेऽपि तद्विभक्तत्वेन ज्ञानं पापफलमवर्तत । इदानीं तादृशपापस्याभावात् विभक्तत्वेन ज्ञानं नसम्भवति । इ-
न्द्रियद्वारकसम्बन्धविरहाच्चेति भावः । अत्र दृष्ट्यादिविरहः ' नहि द्रष्टुः ' इत्यादावुक्तः नघटते, चक्षुरिन्द्रियव्यपाराभावे
तज्जन्यज्ञानविरहो युक्त एवेति शङ्का (शा.दी.) सम्भवति । तथाऽपि दृष्ट्यादिशब्दानां चक्षुरिन्द्रियजन्यज्ञानपरतया ' नतु
तद्द्वितियमस्ति ' इत्यत्र इन्द्रियद्वारकव्यापारविरहप्रतिपादनेन तत्तदिन्द्रियजन्यत्वोपलक्षितज्ञानमात्रपराः दृष्ट्यादिशब्दाः
इति विशेष्यज्ञानाविपरिलोपस्यैव श्रुतितात्पर्यविषयत्वमिति नानुपपत्तिः ॥

एतेन ' अत्र पिता अपिता भवति माता अमाता ' इत्यादिपूर्वश्रुतिः ' वसन्तकाले संप्राप्ते काकः काकः पिकःपि-
कः ' इत्येतत्समशीलेति बोधितम् । एकस्य पुंसः सुषुप्तिदशायां तत्समीपे पित्रोस्सत्वे दृष्टिसृष्ट्यभ्युपगमेन उपपत्तिवर्णनंतु
वेदाप्रामाण्यप्रसङ्गेन अभिनिवेशमूलमेव । दृष्टिसृष्टिपक्षे व्यावहारिकस्यैवाभावेन व्यावहारिकतत्वावेदकत्वेन प्रामाण्यक-
ल्पनाया अप्यसम्भवात् । अतः सुषुप्तपुरुषज्ञानाविषयत्वपरा ' अत्र पिता अपिता भवति ' इत्यादिश्रुतिः । समीपस्थानां
पित्रादिज्ञाने सत्यपि सुषुप्तस्येन्द्रियव्यापारोपरमेण पित्रादिज्ञानाभावात् ॥

एतेन ब्राह्मणोपक्रमे ' योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ' इत्यत्र विज्ञानमयत्वं पुरुषस्य प्रागुक्तं तत्
ज्ञानस्य सङ्कोचएव नतु नाशः इत्युक्त्या स्थापितं भवति । अत्र ' योयं विज्ञानमयः ' इत्युपक्रमानुसारेण ' पश्यन् '
' द्रष्टुः ' ' दृष्टेः ' इत्यत्र धर्मभूतज्ञानाश्रयः जीवः तत्सम्बन्धिधर्मभूतज्ञानञ्च विवक्षितम् । प्रकाशयितेत्यादावपि आदित्या-
नां प्रकाशस्वरूपत्वं न कस्यचित्प्रतीयते । आदित्यस्य स्वप्रभया तमोनिवारणेन विषयप्रकाशनदशायामेव प्रकाशयितेति
व्यवहारात् । अतः ' द्रष्टुः ' ' पश्यन् ' इत्यादौ प्रत्ययार्थस्य प्रतीतस्य त्यागो नाविवक्षितइति जीवसम्बन्धिधर्मभूतज्ञानमेव
विवक्षितम् । उत्तरत्र ' नहि घ्रातुर्घ्रातेः ' इत्यादावपि तत्तदिन्द्रियजन्यज्ञानमेवाविवक्षितम् । अतश्च सुषुप्तौ इन्द्रियद्वार-
कविषयसम्बन्धाभावमात्रं नतु अहमर्थात्मस्वाभाविकधर्मज्ञानस्य नाशःनैयायिकादिसम्मतः । आश्रयनाशाभावात् ; किंतु
संकोचः इति ' यथाग्नेः क्षुद्राविष्फुलिङ्गाः व्युच्चन्ति ' इत्यत्र प्रभास्थानीयज्ञानवतः एकजातीयत्वप्रतीत्या राजपुत्रनयः दृढी
कृतो भवतीति द्रमिडाचार्याणामाशयः ॥

सुषुप्त्यनन्तरप्रबोधस्य प्रलयानन्तरसृष्टेश्च साम्यतात्पर्येण सुषुप्त्यनन्तरं ' यथाऽग्नेः क्षुद्राः विष्फुलिङ्गाः ' इत्यादि
वाक्यं प्रवृत्तम् । ननु सुषुप्तौ सर्वेषां लयः ततः सर्वेषां सृष्टिरिति । तथा सुषुप्तौ सर्वेषां लयस्यात्रानभिधानात् । प्रलयवा-
क्यवत्सुषुप्तिवाक्यानुपूर्वीविरहाच्च । सुषुप्तौ शोकविरहमात्रं श्रुतिसिद्धम् । ' ब्रह्मविदाप्नोतिपरम् ' ' परात्परं पुरुषमुपैति दि-
व्यम् ' इत्यादिवत् ब्रह्मप्राप्तिः क्वापि नोक्ता । किन्तु पुरीतद्देशावच्छेदेन ब्रह्मणि नीरन्ध्रसंश्लेष एवोक्त इति आनन्दरू-
परमात्मानुभवः सुषुप्तौ नश्रुतावुक्तः ॥

## गूढार्थसंग्रहः

'स यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीत एवमेवैष एतच्छेते' (बृ.४ १.१९) इत्यत्र आनन्दस्यातिघ्नीं गत्वा इत्येवान्वयः। अत्र भाष्यम्– (शं) 'सर्वान् शोकान् हृदयस्येति वक्ष्यति। सर्व संसारदुःखविमुक्तेयमवस्थेत्यत्र दृष्टान्तः। स यथा कुमारो वेत्यादि। अतिघ्नीम्– अतिशयेन दुःखं हन्तीत्यतिघ्नी आनन्दस्यावस्था।, इतिच। अत्र परमानन्दं गत्वा शयीतेत्याद्यनभिधाय दुःखवियुक्तावस्थामात्रतात्पर्येण दृष्टान्ते अतिघ्नीमानन्दस्य गत्वा शयीतेत्युक्त्या दुःखविरहावस्थैव सुषुप्तौ सर्वसम्मता। अत एव सुखमहमस्वाप्समित्यत्र सुखं दुःखाभाव एव इति शास्त्रदीपिकापञ्चपादिकयोरुक्तं सङ्गच्छेत। विवरणमते सुखभानानभ्युपगमेऽपि शोकविरहस्य श्रुतावुक्त्या अत्रातिघ्नीमित्युक्त्या च दुःखवतो जीवस्य स्वस्वरूपसुखभानमेव विवक्षितम्। ननु निरतिशयानन्दपरमात्मभानमित्येव युक्तम्। 'सलिल एको द्रष्टा' इत्याद्यनन्तरं 'एष ब्रह्मलोकः एषोऽस्य परमा गतिः एषोऽस्य परमानन्दः एतस्यैवानन्दस्य अन्यानि भूतानिमात्रामुपजीवन्ति' (बृ.६.३.३२.) इत्यत्र अस्येति षष्ठ्या जीवप्राप्यानन्दस्यैव ब्रह्मरूपस्य तत्रोक्त्या अन्तर्यामिणो ब्रह्मणश्चाभेदेन '–हार्दानुगृहीतश्शताधिकया' (ब्र.सू.४.२.८.१३) इत्याद्युक्तदिशा आनन्दरूपपरमात्मैव तत्र विवक्षितः। तदनुभवश्च न सुषुप्तौ। तद्बोधकानन्यथासिद्धप्रमाणविरहात्। सुषुप्तौ देशविशेषावच्छेदेन पितृप्राप्त्या दुःखविरह मत्रम् प्रबोधानन्तरं स्वस्य गुरुद्वारा पितृत्वज्ञानमुत्पाद्य ब्रह्मविद्यया शुद्धिं संपाद्य स्वसमीपं प्रापयति पिता इत्येव श्रुतितात्पर्यम्॥ सुषुप्तौ 'अत्र पिता अपिता भवति' इत्यादौ सुप्तस्य पितृज्ञानं नास्तीत्युक्तम्। एवंच सर्वजगन्महाराजभूतस्य परमात्मनः स्वपितृत्वेन ज्ञानमपि सुषुप्तौ नास्तीति श्रुत्यनुभवसिद्धम्। अतश्च परमात्मनः जीवधर्मभूतज्ञानविकासहेतुत्वेन जीवपितृत्वेन ज्ञानानन्तरं, पूर्वं व्याधवशस्य राजपुत्रस्य राजपुत्रत्वेन ज्ञानानन्तरं प्रायश्चित्तेन शुद्धिं प्राप्य राजप्राप्तिवत् ब्रह्मविद्याया शुध्द्यनन्तरमेव पितृभूतपरमात्मप्राप्तिः, नान्यथा। सैव ज्ञानपूर्णविकासनिरतिशयानन्दानुभवरूपा। साच ब्रह्मविद्या गुरुभक्तिमूलगुर्वनुग्रहेणैव सम्पादनीया॥

अतश्च 'सहायमीक्षाञ्चक्रे' 'इदं तच्छिरः' इत्यत्र हयशिरोऽनुग्रहमूलकज्ञानविकासएव विवक्षितः। हयशिरोऽनुग्रहेण चतुर्मुखस्य ज्ञानलाभः शङ्कराचार्यैरपि सहस्रनामभाष्ये उक्तः। विरिञ्चादीनामपि ब्रह्मविद्यासम्प्रदायकत्वाद्गुरुतमः। (३६.श्लो) यो ब्रह्माणम्' इति मन्त्रवर्णात् इति, चतुर्दशविद्यानां बाह्यविद्यासमयानां च प्रणेता प्रवक्ताचेति तीर्थकरः। (८७.श्लो) हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चाय सर्गादौ सर्वा श्रुतीरन्याश्च विद्या उपदिशन् इत्यादिच। एवं भट्टपराशरपादैरपि भगवद्गुणदर्पणे––गुरुः (४९५.नाम) 'योवै वेदांश्च प्रहिणोति तस्मै' (श्वे.६.१८) 'हरिगुरुवशगोस्मि' (वि.पु.३.७.१५) 'सपूर्वेषामपि गुरुः कालेनानवच्छेदात्' (यो.१.१.२७) इति। इदं गुरुत्वं हयशिरउपाख्याने प्रसिद्धम्। 'जग्राह वेदानखिलान् रसातलगतान् हरिः।' 'प्रादाच्च ब्रह्मणे राजन् ततःस्वां प्रकृतिं गतः इति' इत्युक्तम्॥

अतश्च 'सवा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा' इत्यनन्तरं 'सवा अयं सर्वासु पूर्षु पुरिशयः' 'इन्द्रोमायाभिः पुरुरूपईयते' इत्यादौ अन्तर्यामीविभवमूलकज्ञानाविकासेन 'तदेतद्ब्रह्म–सर्वानुभूः' इत्युक्तं फलं लभ्यत इति सिद्धम्। अत्र आत्मनः पुरुषत्वोक्त्या 'आत्मैवेदमग्रआसीत्पुरुषविधः' इत्यत्रापि आत्मपुरुषशब्दयोरेकोऽर्थ इति निर्णीतं भवति। 'आत्मावा इदमेकएवाग्रआसीत्।' (ऐ.उ) इत्येतद्भाष्ये (शं) आत्मा, आप्नोतेरत्तेरततेर्वा परः इत्याद्युक्तम्। अत्र आनन्दगिरिविवरणम्। आप्नोतेरिति– वा शब्दश्चार्थः आदानंच समुच्चिनोति। तथाच स्मृतिः 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भाव तस्मादात्मेति कीर्त्यते॥' इति। अत्तीत्यनेन संहर्तृत्वमिति च। तेन 'आत्मैवेदमग्रआसीत्पुरुषविधः' 'सयत्पूर्वोस्मात्सर्वस्मात्' इत्यत्रोक्तं जगत्कारणत्वम् आत्मशब्दे विवक्षितम्।

## गूढार्थसंग्रहः

'यद्यच्छरीरमादत्ते तेन तेन स युज्यते' (श्वे.५.१०) इति जीवविषयकश्रुत्यनुसारेण सर्वशरीराण्यादत्त इत्यात्मा । एवम् आप्नोति- व्याप्नोतीत्युक्त्या अन्तर्बहिर्व्याप्तेः सिद्ध्या व्याप्तेः ज्ञाननियमनार्थतायाः पूर्वमुपपादनेन 'अन्तःप्रविष्टश्शास्ता जनानाँ सर्वात्मा' (तै.आ) इति श्रुत्यनुरोधेन च सर्वशरीरित्वमेव आत्मशब्दे विवक्षितम् । इति 'सवा एष सर्वासु पूर्षु पुरिशयः' इति पुरुषशब्दनिर्वचनलब्धार्थ एवात्रापि विवक्षितः । अस्तीति निर्वचने पापदाहकत्वस्यापि विवक्षासम्भवेन 'सर्वान्पाप्मनः औषत्' इति पुरुषशब्दनिर्वचनसिद्धार्थः आत्मन्शब्देऽपि सम्भवति । इति पुरुषात्मन्शब्दयोरेकार्थकत्वं सिद्धम् ॥

एवं च 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यत्र सर्वशरीरकत्वमेव विवक्षितम् । 'प्राणन्नेव प्राणोनाम भवति । इत्यादि नियन्तृत्वेन सुसङ्गतम् । एतदुत्तरं 'यथा क्षुरः क्षुरधानेऽवहितस्स्यात् विश्वम्भरो वा विश्वम्भरकुलाये' (३.४७) इत्युक्तदृष्टान्ते प्रतिबिम्बासम्भवाच्च । परैरपि कार्यस्थस्योपलभ्यत्वमेव प्रवेश इत्युपचर्यते । यथाचाग्निः काष्ठादौ सर्वतो व्याप्यावस्थितः एवं सामान्यतो विशेषतश्च देहं संव्याप्य स्थित आत्मा' इत्येव (शं) भाष्ये उक्तम् । नतु प्रतिबिम्बम् । 'रूपं रूपं प्रतिरूपो बभूव' इति (कठश्रुति ५.९) भाष्येऽपि (शं) 'अतिसूक्ष्मत्वाद्दार्वादिष्विव सर्वदेह प्रविष्टत्वात् प्रतिरूपो बभूव' इत्येवोक्तम् । अत्र सर्वदेहप्रवेशस्यैवोक्त्या सर्वदेहेषु प्रतिबिम्बस्य परैरप्यनभ्युपगमेन अन्तःकरणप्रतिबिम्बस्य (सि.बि.) परोदाहृतश्रुतिभिः साधनं न सम्भवति । 'असङ्गोह्ययं पुरुषः' इति श्रुतिरपि आत्मनि शरीरसम्बन्धं नबाधते अत्रैव पुरुषशब्दविरोधात् । 'प्रधानपुरुषसंयोगा नित्यानुमेया इति सांख्या मन्यन्ते' इति ईक्षत्यधिकरणशङ्करभाष्ये परैरेवोक्तेःसांख्यमते संयोगसम्बन्धस्वीकारात्! (६.१०) 'निर्गुणत्वमात्मनोऽसङ्गश्रुतेः' इत्यादिसांख्यप्रवचनसूत्रभाष्यवार्तिके विज्ञानभिक्षुः 'तस्मात्तत्संयोगादचेतनम्' इत्यादिकारिकां 'द्रष्टृदृश्ययोस्संयोगो हेयहेतुः (यो.सू.२१३) स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुस्संयोगः' (२.२३)इति योगसूत्रादिकमुदाहृत्य, 'संयोगश्च नपरिणामः सामान्यगुणातिरिक्तधर्मोत्पत्त्यैव परिणामित्वव्यवहारात् । अन्यथा कूटस्थस्य सर्वगतत्वरूपाविभुत्वानुपपत्तेः । नापि संयोगमात्रं सङ्गः ; परिणामहेतुसंयोगस्यैव सङ्गशब्दार्थतायाः वक्तव्यत्वात्' इति सांख्यप्रवचनभाष्ये (१.१९) सिद्धान्तयति ॥ 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' सूचित इति' सएवाह । एवंच सर्वगतत्वानुपपत्त्या संयोगाङ्गीकारवत् पितृत्वान्तर्यामित्वादिकमपि श्रुतिसिद्धं क्यार्थोऽपि (यो.सू.२६.) इति सूत्रवार्तिके 'अनेन पितृत्वान्तर्यामित्वरूपेण जीवात्मनामप्यात्मेश्वर इति वेदान्तमहावानप्रत्याख्यानमर्हति ॥

'असङ्गोह्ययं पुरुषः' (६.३.१५.१६) इति श्रुतिः जाग्रत्स्वप्नयोः एकैककालदृष्टपदार्थसम्बन्धस्य अन्यकालेऽभावं प्रतिपादयति । नतु धर्मसम्बन्धसामान्यं निषेधति । 'सम्बन्धानुपपत्तेश्च' (ब्र.सू.२.२.३८.शं) इति सूत्रभाष्ये अपिच्चागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यम् । इति नियमोऽस्ति । इति परैरुक्त्या 'तंत्वौपनिदं पुरुषम्' इत्यादिप्रागुदाहृतश्रुत्यनुसारेण परस्यान्तर्यामित्वादिसम्बन्धः अभ्युपेय एव । स्वरूपसङ्कोचविकासात्मकपरिणामस्यैव नित्यताविरोधित्वात् । एतेन नच 'निरवयवं विक्रियमाणं दृष्टं क्वचित्' इत्यादि प्राक् (१२६.पुटे) उदाहृतपरोक्तिरपि निरवकाशा । निरवयवस्य उपाध्यन्तर्गतस्य प्रतिबिम्बस्याप्यदर्शनात् । कूटस्थत्वस्य निर्धर्मकत्वादि रूपतायाः योगसूत्रकारासम्मतत्वात् योगसूत्रव्याख्यातृकल्पितप्रतिबिम्बादिकमन्तरैव द्रष्टृत्वादिकं सूत्रकृत्सम्मतमिति सूत्रकृतः सगुणात्मवादस्यैव अभिप्रेतत्वं भावप्रकाशादौ निरूपितम् । संयोगसम्बन्धाद्यभ्युपगमे तस्याधि सम्बन्धान्तराभ्युगमापत्तिः इत्यादिदूषणंतु स्वपरनिर्वाहकत्वाभ्युपगमेन तस्य परिहरणीयम् । धर्मधर्मिभावभङ्गवादिवैभाषिकादि

## गूढार्थसङ्ग्रहः

मते कार्यकारणभावादिसम्बन्धः अभ्युपेयत एव। माध्यमिकेन तस्यानङ्गीकारेऽपि 'तंत्वौपनिषदं पुरुषम्' इति तत्रैव प्रागुक्तनिर्वचनलभ्यपुरुषशब्दार्थस्य उपनिषत्तात्पर्यविषयत्वप्रतिपादनादेव सम्बन्धसिध्द्या न स्वप्रकाशानङ्गीकर्तृ माध्यमिकानभ्युपगममात्रं बाधकं भवितुमर्हति। धर्मिधर्मयोर्भेदे सम्बन्धानुपपत्तिः या उक्ता बौद्धैस्साऽपि, यत्रानुभवः तत्रभिन्नयोः सम्बन्धः अभ्युपगम्यते प्रामाणिकप्रतीतिबलात्। यत्रतु नैवानुभवः तत्र नाभ्युपगम्यत एव इति परिहरणीया। उक्तं च वाचस्पतिमिश्रैः न्यायवार्तिकतात्पर्यटीकायाम् 'जनकत्वंनाम नवस्तुस्वभावः' अपितु तद्धर्मः। धर्मश्च धर्मिणो वस्तुतोभिद्यते नचान्यस्य भेदः अन्यस्य भेदायालम्। अतिप्रसङ्गात्। अन्यत्वाविशेषे कथं तस्यैव धर्मइतिचेत्? अत्र वस्तुस्वभावैरेवोत्तरं वाच्यम्। यथा अन्यत्वाविशेषेऽपि कार्यं धूमो हुतभुजएव न बीजस्य इत्युक्तम्। (३.२.१७) इति॥ नित्यस्य अनित्यधर्माधानमेवोपकारः नतु नित्यस्वरूपकरणं; येन तदनित्यं स्यात्। धर्मश्च धर्मिणो भिन्नो नतु धर्मिस्वभावः। यथाच भेदाविशेषेसत्यपि वह्निधूमयोरेव कार्यकारणभावः। न वह्निक्रमेळकयोः; वस्तुस्वभावनियमात्। एवं भेदाविशेषेऽपि आत्मनः पुण्यपापयोरेव धर्मधर्मिभावः 'नात्माकाशयोः पुण्याकाशयोर्वेति' (३.५.१) इतिच। एतेन परिणामवादाभ्युपगमे विवर्तवाद एव पर्यवसानमित्यपि निरवकाशम्॥ १२६.ब्रह्मनन्दिवाक्यानि परेषामनुकूलानीति (भा.प्र.२.सं.३४९पुटे) निरूपितम् अतः सम्बन्धानुपपत्त्यादियुक्तयः न उपनिषत्तात्पर्यविषयीभूतार्थं बाधन्ते। पुरुषशब्दस्य विवर्तोपादानभूताधिष्ठानार्थकत्वमपि अभिनिवेशमूलकमेव, प्राक् श्रुतिभिः प्रतिपादितस्यैव तदर्थस्य संयोगादेरभ्युपगमे बाधकाभावात्॥

एतेन 'मच्चैतन्यावभास्यत्वात्' इत्यादिपूर्वोदाहृता (१२९.पुटे) उक्तिरपि निरवकाशा; अन्तर्यामित्वस्य ज्ञाननियमनार्थतायाः प्रामाणिकत्वात्। 'हार्दानुगृहीतश्शताधिकया' इति सूत्रकारोक्तिरप्यत एव सङ्गच्छते। गीतायां बन्धहेतुकर्तृत्वं देहाद्युपाधिनिबन्धनम्। तत्रच परमात्मा अन्तर्यामी प्रधानहेतुः। अन्ये हेतवोऽप्रधानाः। इत्थं च स्वमात्रहेतुकं कर्तृत्वं जीवस्य नास्तीत्येतावन्मात्रमुपपादितम्। एतावन्मात्रेणोपाधिसम्बन्धस्य तात्त्विकत्वे कर्तृत्वादेर्मिथ्यात्वमपि न सम्भवति। कर्ममूलकत्वेन कर्मणां निवृत्तौ उपाधिसम्बन्धमात्रं निवर्तते। तावता जीवस्य न नित्यत्वविरोधः। उपाधिजीवयोर्भेदात्॥ अत्र राजसूनोः राजपुत्रत्वमौपाधिकम्, नमिथ्या अपितु सत्यमेव। व्याधत्वं तु नसत्यमिति अभिप्रयतां द्रमिडाचार्याणामुक्तार्थस्य सर्वस्य सम्मतत्वात्॥

ननु 'तंत्वौपनिषदं पुरुषम्' इत्यतः पूर्वं 'स एष नेति नेतीत्यात्मा, अगृह्यो नहि गृह्यते अशीर्यो नहि शीर्यते असङ्गो नहि सज्जते असितो नव्यथते नरिष्यति' इतिवाक्ये (शं) 'नेति नेति' इति, चतुर्थे मधुकाण्डे 'अथात आदेशो नेति नेति' इत्यत्र पूर्वं निषेधमुखेन यः निर्विशेषः आत्मा उक्तः स एवात्र प्रतिपादितः। तस्यैव असङ्गत्वमप्युक्तम्। एवं षष्ठे ब्राह्मणत्रयेऽपि (२.४.५) इदं वाक्यं पठितम्। अभ्यासेन निषेधमुखेन निर्विशेषस्यैव तत्रापि विवक्षेति प्रतीयते। अतः औपनिषदपुरुषोऽपि स एव। पुरुषशब्दार्थोऽपि परैरुक्त एव युक्त इतिचेत्? उच्यते। 'अथात आदेशो नेति नेति, इत्यनन्तरं 'अथ नामधेयं सत्यस्यसत्यमिति प्राणावै सत्यं तेषामेष सत्यम्' इति श्रूयते। चतुर्थएव पूर्वं 'स यथाऽग्नेः क्षुद्राः विस्फुलिङ्गाः व्युच्चरन्ति' इत्याद्यनन्तरं 'तस्योपनिषत् सत्यस्य सत्यमिति' 'प्राणावै सत्यम् तेषामेषसत्यम्' इति श्रूयते। अत्र भाष्यम् (शं)– 'तस्य–अस्यात्मनः ब्रह्मणः। उपनिषत्–उप समीपं निगमयतीति अभिधायकश्शब्दः उपनिषदित्युच्यते। शास्त्रप्रामाण्यादेतच्छब्दगतो विशेषः अभ्युपगम्यते उपगमयितृत्वं नाम' इति॥

प्रथमब्राह्मणान्तश्रुत्यर्थएव 'अथात आदेशो नेति नेतीत्यनन्तरं' अथ नामधेयं सत्यस्य सत्यमितीत्यादौ विवक्षित इत्यत्र नविप्रतिपत्तिः। एवंच 'तस्योपनिषत्' 'अथ नामधेयम्' इत्युभयत्र पूर्वप्रस्तुतब्रह्मणः शक्त्या प्रतिपादकत्वं सत्यस्य

## गूढार्थसंग्रहः

सत्यमित्यत्र प्रतिपाद्यतइति । निर्विशेषस्य लक्ष्यत्वमेव नतु शक्यत्वमिति वदतां परेषांमते तस्योपनिषत् अथ नामधेयम्
इति कथंघटते ? अतः अथात आदेशो नेति नेतीत्यत्र शक्यं परं ब्रह्मैव विवक्षितम् नतु परसम्मतं निर्विशेषम् । श्रुत्य-
र्थश्च 'प्रकृतैतावत्त्वंहि प्रतिषेधति' इत्यादिसूत्रे सूत्रकृतैव निर्धारयिष्यते । 'यथाऽग्नेः क्षुद्रा विष्फुलिङ्गाः' इत्यादिवाक्या
नन्तरं 'तस्योपनिषत् सत्यस्य सत्यमिति' इति वाक्ये 'अथ नामधेयम्' इत्यादौ च निर्विशेषस्य विवक्षा नघटेत इत्य
भिप्रेत्यैव द्रामिडाचार्यैः राजकुमारनयः प्रदर्शितः । नहि राज्ञः तत्पुत्रस्यचैक्यं कस्यचित्सम्मतम् । न वा राज्ञः स्थितिद-
दशायां तत्पुत्रस्य असमर्थस्य राज्यं सम्भवति राज्यसम्भवेऽपि धर्मएव प्रतिपन्नःस्यात् नतु जीवब्रह्माभेदप्रतिपत्तिः सम्भवति
'यथाऽग्नेः' इत्यादौ 'एवमेतस्मादात्मन' इत्यत्र परं ब्रह्मैव विवाक्षितमिति भाष्यादौ परैःनिर्धारितम् । तच्चानित्यम् इति
राजकुमारनयेन जीवब्रह्माभेदबोधनं नैव घटते । नेति नेती' ति वाक्यानन्तरं 'तंत्वौपनिषदं पुरुषम्' इत्यादि वाक्यप्रवृ-
त्तेरयमाशयः 'यथाऽग्नेः क्षुद्राविष्फुलिङ्गाः' इत्यादौ 'एवमेतस्मादात्मनः' 'सत्यस्य सत्यम्' इत्यत्र य आत्मा उपनि
षदभिधेयतया उक्तः 'अथात आदेशो नेति नेति' इत्यनन्तरं अभिधेयतयापुनरप्युक्तः, सएव आत्मा औपनिषदः
पुरुषःइति बोधनमेव फलमिति । एतदर्थमेव 'सएष नेति नेति' इत्यनन्तरं 'तंत्वौपनिषदम्' इति वाक्यं प्रवृत्तमिति
द्रमिडाचार्याणामाशयः । पञ्चमान्ते उक्तः औपनिषद्पुरुषएव षष्ठान्ते जनकयाज्ञवल्कसंवादे नेति नेति इत्यादिना उक्तः
तत्रच 'येनेदं सर्वं विजानाति तंकेन विजानीयात्' इति अव्यवहितपूर्ववाक्यम् । इत्थंच 'सएष नेती' त्यत्र तच्छब्दस्य
सर्वाविषयकज्ञानहेतुः अर्थः इति सिद्धम् । 'विज्ञातारमरेकेन विजानीयात्' इत्यनन्तरवाक्यम् । तत्पर्यालोचनायामपि ज्ञा-
तैव 'सएव नेति नेति' इत्यत्र विवक्षितः इति । सविशेषएव औपनिषदः पुरुषः इति ततोऽपि निर्णीयते । अतः
'स एष इहप्रविष्ट आनखाग्रेभ्यः' इत्यत्र अन्तर्यामी पुरुषएव विवक्षितः इति सिद्धम् ॥

आत्मा
अतः 'तदात्मानमेवावैत्' अहंब्रह्मास्मीत्युत्तरवाक्येऽपि आत्मानमित्यस्यान्तःप्रविश्य नियन्तारमित्यर्थः ।
नमित्यस्याभावेऽपि 'अहं ब्रह्मास्मीत्यवेत्' इत्युक्त्या वेदनाश्रयस्यैव ब्रह्मणः अहमित्यनेन प्रतीत्या ब्रह्मविषयकवेदनलाभेन
आत्मानमित्यस्य वैयर्थ्यप्रसङ्गेन अन्तर्यामिविषयकमेव अहं ब्रह्मास्मीति वेदनमत्र विवक्षितम् ॥ पूर्वं 'स एष इह प्रविष्ट
आनखाग्रेभ्यः' इत्यत्र चतुर्मुखादिसर्वशरीरेषु प्रवेशस्य 'नानेन किञ्चनानावृतम्' इत्यादिवाक्यपर्यालोचनया चतुर्मु-
खादिजीवान्तर्बहिर्व्याप्तेः आत्मशब्दार्थतयाऽपि विवक्षितत्वेन 'तदात्मानमेवावैदहं ब्रह्मास्मीति' इत्यत्र चतुर्मुखादिसर्वान्त-
र्यामिवेदनमेव विवक्षितम् । सर्वान्तर्यामिवेदनस्यात्र विवक्षितत्वादेव 'तस्मात्तत्सर्वमत्राभवत्' इत्यनन्तरवाक्यमत्रोपपद्यते
अतएव 'तद्यो देवानां प्रत्यबुध्यत । सएव तदभवत् यथर्षीणां तथा मनुष्याणां तद्धै तत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे
अहं मनुरभवं सूर्यश्चेति तदिदमप्येतर्हि यएवंवेद अहं ब्रह्मास्मीति । स इदँ्सर्वं भवति' इत्यादि तदनन्तरश्रुतिरपि
अन्तर्यामिवेदनाभिप्राया सङ्गच्छते ॥

एतेन 'ऐतादात्म्यमिदँ सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा.६.८–१३) इति नवकृत्वः अभ्यस्तश्रुत्य-
र्थोऽपि निर्णीतो भवति । अत्र ऐतदात्म्यमित्यत्र 'एतत् सत् आत्मा यस्य सर्वस्य तत् ऐतदात्म । तस्य भावः ऐतदा-
त्म्यम्' इति (शं) भाष्यम् । अत्र समासोत्तरभावप्रत्ययेन सम्बन्धबोधस्यैव शाब्दिकसम्मततया ब्रह्मविद्याभरणे नैयायि-
कवासनया पीताम्बरत्वं पीताम्बरमितिवत् एष आत्मा, इत्यर्थकरणमनुचितमित्यभिप्रेत्य 'सामानाधिकरण्यं च स्वार्थिकत्वाद्व
भावभवित्रोरभेदोपचाराद्वा' इत्युक्तमद्वैतसिद्धौ मधुसूदनसरस्वतीभिः । तत्र उपचारकल्पनापेक्षया सौख्यमित्यादाविव स्वा-
र्थे ष्यञित्येव युक्तम् । अतश्च ऐतदात्म्यम् एतदात्मकम्, एतदन्तर्यामिकमित्यर्थः । अत्र सर्वमित्यस्य 'सन्मूलास्सोम्येमाः

## गूढार्थसङ्ग्रहः

सर्वाःप्रजाः' इति पूर्ववाक्ये सन्मूलत्वेनोक्तप्रजासामान्यमर्थः। प्रजाशब्दः न जनिमदचेतनमात्रपरः। एतदुत्तरखण्डद्वये 'इमास्सर्वाः प्रजास्सति सम्पद्य नविदुः' 'इमास्सर्वाः प्रजास्सत आगम्य नाविदुः' इति वाक्यद्वये प्रजाशब्दस्य जीवार्थकतायाः परेषामपि सम्मतत्वात्। 'प्रजापतिर्वा—सोऽत्मानमभिध्यात्वा बह्वीःप्रजा असृजत' (मै) इति श्रुत्यन्तरैकार्थ्याच्च प्रजाशब्दः बद्धचेतनसामान्यवाची। एवंच ऐतदात्म्यमित्यत्र बद्धचेतनसामान्यस्य सदन्तर्यामिकत्वं विवक्षितम्। 'स आत्मा' इत्यत्र सः अन्तर्यामी इत्यर्थः। विशेष्यविशेषणभावव्यत्यासेन उक्तार्थस्यात्र कथनेन अभ्यासरूपतात्पर्यलिङ्गेन जीवसामान्यस्य सदन्तर्यामिकत्वं दृढीकृतम्। 'तत्त्वमसि श्वेतकेतो' इति प्रागुक्तार्थनिगमनम्। श्वेतकेतो इत्यस्यापि नवकृत्वः अभ्यासो वर्तते श्वेतकेतुशब्दस्य नश्वेतकेतुशरीरभेदज्ञानवानित्यर्थः। श्वेतकेतोश्शरीरात्मभ्रमस्य प्रागुपनिषद्वाक्यैः साधनासम्भवात्। पूर्वोपनिषद्वाक्येषु देहात्मविवेकस्यानुपदेशाच्च। 'नैव स्त्री नपुमांश्चैव नचैवायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन सयुज्यते ॥' (श्वे.५.१०) इत्यादिभिः श्वेतकेतुशब्दः तच्छरीरसंयुक्तजीवपरः एवमेव जानाति श्वेतकेतुरपि। एवं सम्बोधनेन यथा जीवस्य शरीरान्तःप्रवेशरूपसंयोगात् श्वेतकेत्वादिशब्दाः तच्छरीरसंयुक्तजीववाचिनः तथा 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र सर्वस्य सदन्तर्यामिकत्वप्रतिपादनेन संबोध्यार्थकः 'तत्त्वमसि श्वेतकेतो' इत्यत्र युष्मच्छब्दः जीवान्तर्यामिणं प्रतिपादयतीति श्वेतकेतोः बोधजननार्थमेव श्वेतकेतो इति सम्बोधनपूर्वकमुपदेशः ॥

ऐतदात्म्यमित्यत्र एतत् आत्मा यस्येति बहुव्रीहिः परेषामपि सम्मतः॥ एवंच 'एष म आत्मा अन्तर्हृदये' (छा.३.१४) इति शाण्डिल्यविद्यायां त्रिवारमभ्यस्तवाक्यानन्तरं 'एतद्ब्रह्म' इत्यत्रैव अत्राप्यर्थः स्वरसतः प्रतीयमानः नप्रत्याख्येयः। तत्रापि 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इतिसर्वस्य, ब्रह्मण उत्पत्तिकथनानन्तरमेव 'एष म आत्मा' इति ब्रह्मणो जीवान्तर्यामित्वमभिहितम्। 'एतमितः प्रेत्याभिसम्भविताऽस्मि' इति तत्रोक्तं फलं 'तस्यतावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इत्यत्रच उक्तं फलमेकरूपमेव। आस्मिन्वाक्येविदेहकैवल्यं विवक्षितमिति परेषामपि सम्मतम्। 'इतः प्रेत्य' 'अथ' इत्यत्राप्येक एवार्थो विवक्षितः। 'सम्पत्स्ये' इति 'सति सम्पद्य नविदुः' 'सत आगम्य न विदुः' (छा ८.९. छा.८.१०) इति 'सता सोम्य तदा सम्पन्नो भवति' (छा.६.८.१) 'इमास्सर्वाः अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति' (८.३.२.) 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य' (छा.६.८)इति श्रुत्यन्तरानुसारात् ब्रह्मप्राप्तिपरमेव। एवंच 'एष म आत्माऽन्तर्हृदये—एतद्ब्रह्म' इत्यत्र षष्ठ्यास्सम्बन्धार्थकत्वाङ्गीकारेण जीवब्रह्मभेदवत् ऐतदात्म्यमित्यत्रापिबहुव्रीह्यङ्गीकारेण जीवब्रह्मभेदः प्रतीयमानः कथंनिराक्रियते। एतद्वाक्यपूर्वकमेव 'तत्त्वमसि श्वेतकेतो' इत्यस्य नवकृत्वः अभ्यासेन जीवब्रह्मणोर्भेदेन ब्रह्मणो जीवान्तर्यामितया श्वेतकेतुशब्दस्येव त्वमित्यस्यापि अन्तर्यामिपरत्वं स्फुटं प्रतीयते निर्मत्सराणां विदुषाम् ॥ अन्तर्यामिणो ब्रह्मणश्च एकत्वाभिधानेन ब्रह्मणः पूर्वं सृष्टिवाक्यैः परत्वे प्रतिपन्नेऽपि सौलभ्येऽप्रतिपन्ने आश्रयणं नसम्भवतीति अन्तर्यामित्वेन सौलभ्यप्रतिपत्त्या सम्यगाश्रयणं सम्भवतीति बोध एव फलम्। सृष्टिवाक्यैः राजपुत्रत्वेन जीवस्य प्रतिपत्त्यनन्तरं ब्रह्मान्तर्यामिकत्वेनप्रतिपत्तौ परतन्त्रतया स्थितस्य जीवस्य ब्रह्मप्राप्तिरूपं परमफलमितिं बोधनमपि फलम्। अतश्च जीवब्रह्माभेदज्ञानस्यनात्रावसरः। 'एषम आत्मा' इति शाण्डिल्यविद्यावाक्यवदेव 'सम आत्मेति विद्यात्' (कौ.ब्रा)इत्यत्र 'एषत आत्मा अन्तर्यामी' 'सतआत्माऽन्तर्यामी' (मा.पा.बृ.उ) इत्यत्रापि षष्ठ्या जीवब्रह्मणोर्भेदः ब्रह्मणो जीवान्तर्यामित्वंचेत्युभयं विवक्षितम् ॥

'शब्दविशेषात्' (१.२.५) इतिसूत्रे 'एषम आत्माऽन्तर्हृदये' इत्यत्र जीवब्रह्मभेदमेव अभिप्रैति सूत्रकारः। कर्मकर्तृव्यपदेशाच्च' 'स्मृतेश्च' इति तत्पूर्वोत्तरसूत्रयोरपि अयमर्थः (ब्रह्मसूत्रभाष्ये, छान्दोग्यभाष्ये) परेषामपि सम्मतः।

## गूढार्थसंग्रहः

एवंच 'नवक्कुरात्मोपदेशादितिचेदध्यात्मसम्बन्धभूमाह्यस्मिन्' (१.१.२९) इत्यत्र 'सम आत्मेति विद्यात्' इति श्रुता
वपि जीवब्रह्मणोर्भेद एव विवक्षित इत्यभिसन्धत्ते । 'वक्कुरात्मोपदेशात्' इत्यत्र सूत्रे षष्ठी नभेदपरा वक्तैव विवक्षितइति
पूर्वपक्षी मन्यते इति परेषामपि सम्मतम् । एवं 'वक्कुरात्मोपदेशात्' इति सूत्रखण्डे 'मामेव विजानीहि तं मां आयुर-
मृतमित्युपास्व' इति उपक्रमानुसारेण 'सम आत्मेति विद्यात्' इत्युपसंहारेऽपि वक्ता इन्द्रएव विवक्षितइत्यपि । वक्तुरिन्द्रस्य
द्वेधापि विवक्षणं पूर्वपक्षिसम्मतमिति स्वरसतः प्रतीयते । उपाधिविशिष्टवेषेण तद्विनिर्मुक्तवेषेणचेति । अतएव 'अध्या
त्मसम्बन्धभूमाह्यस्मिन्' इति सिद्धान्ते सम्बन्धबहुत्वाभिधानं सङ्गच्छते । सम्बन्धिबहुत्वेन सम्बन्धबहुत्वम् । यदि पर-
सम्मतरीत्या सम्बन्धानुपपत्या आत्मव्यतिरिक्तमिथ्यात्वं जीवब्रह्माभेदश्चेत्युभयमभिप्रैष्यत् सूत्रकारः तदा सम्बन्धभूमा इति
नावक्ष्यत् । वक्ष्यतिच सम्बन्धभूमेति । तत्रच 'प्रज्ञामात्राः प्राणे अर्पिताः' 'एषएव साधुकर्म कारयति तं यमेभ्यो लो-
केभ्यः उन्निनीषति' 'स एष लोकपालः लोकाधिपतिः एषसर्वेश्वरः' इत्यादिषु परमात्मनः जीवसम्बन्धस्यापि प्रतिपादनेन
'सर्वेश्वरः' इत्यनन्तरं 'समआत्मा' इति वाक्येऽपि इन्द्रस्येश्वरः परमात्मैव विवक्षितः । इति सूत्रखण्डस्याशयः ॥

'शास्त्रदृष्ट्यातूपदेशो वामदेववत्' इति उत्तरसूत्रे 'मामेव विजानीहि' 'तं मामायुरमृतमित्युपास्व' इत्युप-
क्रमवाक्यार्थो निर्णीयते । परमात्मनः जीवान्तर्यामित्वप्रतिपादकशास्त्रदृष्ट्या 'मामेव विजानीहि' इत्युपक्रमोक्तिः । 'त-
दात्मानमेवावैदहं ब्रह्मास्मीति' इत्यनन्तरं 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवम्' इत्याद्युपदेशः प्रागुप-
पादितदिशा यथा जीवान्तर्यामिवेदनपरः तथा अध्यात्मसम्बन्धभूमकथनानन्तरं 'स म आत्मेति विद्यात्' इत्युपसंहारे
इन्द्रान्तर्यामित्वप्रतिपादनेन 'मामेव विजानीहि' इत्याद्युपक्रमोऽपि इन्द्रान्तर्यामित्वपर एवेति 'शास्त्रदृष्ट्या तूपदेशो
वामदेववत्' इति सूत्रेण निर्धारितं भवति ॥

एवम् 'उभयेऽपि हि भेदेनैनमधीयते' (१.२.२१) इति सूत्रे 'एष तआत्माऽन्तर्याम्यमृतः' (स त आत्माऽन्त
र्याम्यमृतः मा.पा) इति द्वाविंशतिवारमभ्यस्तवाक्येऽपि जीवब्रह्मभेद एव विवक्षितः । 'पूर्वं तत्रैव '—शारीरश्च' इत्य-
नेन जीवस्य शारीराद्भेदः बोधितः । जीवस्य अन्तर्यामित्वेन शरीराद्भेदवत् परमात्मनोऽपि जीवान्तर्यामित्वेन जीवभेदः
उक्तसूत्रे प्रतिपिपादयिषितः । 'अनुपपत्तेस्तु न शारीरः' (१.२.३) इत्यत्र शारीरशब्देन जीवस्य शरीरभेदप्रतीत्या 'कर्म-
कर्तृव्यपदेशाच्च' इत्यादितदुत्तरसूत्रत्रये जीवब्रह्मभेदपरे 'शब्दविशेषात्' इत्यत्र 'एषमआत्माऽन्तर्हृदयः' इति वाक्येन
जीवपरभेदः यः पूर्वं प्रतिपादितः सः अन्तर्यामिब्राह्मणतात्पर्यनिरूपणपरे अन्तर्याम्याधिकरणे 'य आत्मनि तिष्ठन्' यो
विज्ञाने तिष्ठन्' इत्यादौ यस्यात्मा शरीरं, यस्य विज्ञानं शरीरम्' इत्यत्र जीवस्यापि परमात्मशरीरत्वाभिधानपूर्वकं 'सत
आत्माऽन्तर्याम्यमृतः' 'एष त आत्माऽन्तर्याम्यमृतः' इत्यत्र षष्ठ्या भेदबोधनेन जीवशरीरत्वस्य परस्मिन् जीवस्या-
प्यात्मत्वरूपस्य प्रतिपत्तेः शरीरजीवभेदवदेव शरीरभूतजीवपरमात्मभेद इति 'उभयेऽपि हि' इति सूत्रेण सम्यक्प्र-
काशितो भवति । सूत्रेषु शारीरशब्दस्योभयत्रैव प्रयोगेण इत्थमेव सूत्रकृदाशयो निर्णीयते ॥

सूत्रे भिन्नमेनमधीयते इत्युक्तौ शुक्तिं रजतं जानाति शुक्तिं रजतं ब्रूते इतिवत् एतद्वाक्यं भ्रमसाधारणं स्यात् ।
भेदस्य विशेषणत्वप्रतिपत्तिरपि न शाब्दी स्यादिति शङ्का सम्भवत्येवेति 'भिन्नमेनमित्यनुक्त्वा भेदेनैनमधीयत इत्युक्तौ भे-
देनेति उपलक्षणतृतीयानिर्देशेन जीवस्येश्वराद्भेदो न विशेषणं किंतु उपलक्षणमेवेति' दीक्षितोक्तिः (न्यायरक्षमणौ) कथं घ-
टते ? भेदेनेति तृतीयानिर्देशेन भेदस्योपलक्षणत्वं वा कथं निर्णीयते ? मञ्जूषायाम् 'एवमवच्छेद्यत्वादीनां सम्बन्धत्व-
विवक्षायां पटत्वेन जन्यत्वं प्रकारित्वम् अभावः इत्यादि प्रकृत्यादित्वात् साधु' इति 'कर्तृकरणयोस्तृतीया' (२.३.१८)

## गूढार्थसंग्रहः

इति (पा) सूत्रे महाभाष्ये उदाहृतेन 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति वार्तिकेन तृतीयेति नागेशेन सिद्धान्तकरणेन अत्रापि भेदेनैनं जानाति भेदेनैनं ब्रूत इतिवत् 'प्रकृत्यादिभ्य' इत्यनेनैव तृतीयेति भेदस्योपलक्षणत्वं सूत्रकारविवक्षितमिति नैव स्थापयितुं शक्यते। भिन्नमेनमधीयत इत्युक्तौ विशेषणविभक्तेस्साधुत्वार्थकत्वपक्षे विशेषणविभक्तेरपि कर्मार्थकत्व पक्षे च विषयतामात्रस्य द्वितीयया बोधनेऽपि विशेषणत्वे शक्तेर्विरहेण भेदस्य विशेषणत्वनिर्णयः न शक्त्या सम्पादयितुं शक्यः। भेदेनैनमधीयत इत्युक्तौ तु भेदेनैनं जानाति इत्यादिवाक्येषु स्वरसतः तृतीयया प्रकृत्यर्थस्य विशेषणत्वमेव प्रतीयत इति अविलम्बेन बोधनायैव तृतीयानिर्देश इति सूत्रकाराशयः निर्णीयते। 'एनम्' इत्यत्र अन्तर्याम्यधिकरणे प्राधान्येन प्रतिपिपादयिषितः अन्तर्याम्येव विवक्षित इति सारदीपयोः स्फुटम्॥

एतेन 'अदृष्टो द्रष्टा' 'नान्योऽतोऽस्ति द्रष्टा' इति तत्रत्यवाक्ये परमात्मभिन्नजीवनिषेधः नैव विवक्षितः। उपक्रमे 'य इमं च लोकं परंच लोकं सर्वाणिच भूतानि योन्तरो यमयतीति' सर्वेषां नियन्तुरेव पृष्टतया 'यमात्मा न वेद' इत्यत्र आत्मसामान्याविषयत्वोक्त्या असङ्कोचेनच्च 'अदृष्टो द्रष्टा' इत्यत्र सर्वैरदृष्टस्य सर्वस्य द्रष्टुरेव विवक्षिततया 'नान्योऽतोऽस्ति द्रष्टा' इत्यादावपि परमात्मव्यतिरिक्तसर्वद्रष्टृनिषेधएव प्रतीयते; नतु परमात्मभिन्नद्रष्टृजीवनिषेध इति स्वरसतः प्रतीयते। परमतेऽपि 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्र अतइत्यत्र एतच्छब्देन सर्वनियन्तृत्वसर्वद्रष्टृत्वविशिष्टस्यैव परामर्शस्य वाक्यस्वरससिद्धस्य अङ्गीकारे बाधकविरहेण तथैव परैरप्यङ्गीकार्यम्। तथासति विशिष्टयोर्भेदस्य परैरप्यङ्गीकारेण तद्भिन्नद्रष्टृनिषेधेन जीवनिषेधः कथं सिध्यति? जीवस्य सर्वनियन्तृत्वादिवैशिष्ट्यानङ्गीकारात्। किंच 'नान्योऽतोऽस्ति' इत्येतावदेवालं परमते सामान्यनिषेधेनैवोपपत्तेः। सिद्धान्तेतु आत्मान्यस्याङ्गीकारेण आत्मान्यस्य सर्वस्य द्रष्टृनिषेधः आवश्यकः। सर्वस्य द्रष्टुः निषेधे दर्शनस्य नियमनार्थतायाः प्रकरणात् सिध्या नियन्तुः नियन्त्रन्तरानिषेधोऽपि सिध्यति। जीवस्य सर्वद्रष्टृत्वाद्यसम्भवोपपादकं 'अतोऽन्यदार्तम्' इत्याद्युत्तरवाक्यम्। आर्तमित्यस्य पीडितमित्यर्थतया सर्वद्रष्टृत्वासम्भवः सम्यगुपपादितो भवति। परमते 'अतोन्यदार्तम्' इत्यस्य जगन्मिथ्यात्वपरतया नान्योऽस्ति इत्येतावन्मात्रेणैव अस्याप्यर्थस्य सिद्धौ अतोऽन्यदार्तमित्यस्यापि वैयर्थ्यमेव। आर्तम् इत्यस्य बाधितमित्यर्थः शब्दशक्त्या नलभ्यते। अतः इत्यस्यावृत्या 'अतोऽन्यत् अतः आर्तम्' इति योजनया मिथ्यात्वबोधनप्रयासः ब्रह्मानन्दसरस्वतीनां श्रुतिपीडनमेव। अतः दर्शनस्य नियमनार्थतया नियमनार्थसर्वद्रष्टृनिषेधेन नियन्त्रन्तरनिषेधपरैवेयं श्रुतिः॥

सर्वस्य द्रष्टृत्वस्य 'अदृष्टो द्रष्टा' इत्यत्रोक्तौ 'स कारणं करणाधिपाधिपः' (श्वे.६) इत्यत्र सर्वकारणत्वोक्त्यनन्तरम् अस्यापि कारणं किंचित्स्यादिति शङ्कायां 'नचास्य कश्चिज्जनिता नचाधिपः' इत्येतज्जनकनिषेधवत् सर्वद्रष्टृपरमात्मनः द्रष्टा परमात्मव्यतिरिक्तो निषेध्यतया विवक्षित इति तात्पर्येण दर्शनस्य नियमनार्थतया नियन्तुर्नियन्त्रन्तरं निषिध्यत इति वृत्तिकाराः प्राहुः। जीवब्रह्मणोर्भेदमेव अन्तर्यामिब्राह्मणाभिप्रेतं वदन् सूत्रकारोऽपि इत्थंमेवार्थमभिप्रैति। एवंच आत्मन्शब्दस्य पुरुषशब्दस्यच एकार्थत्वेन श्रुतिषु जीवपरवाचिशब्दसामानाधिकरण्यस्थले सर्वत्रापि सामानाधिकरण्यं परस्य जीवान्तर्यामित्वनिबन्धनमेवेति 'तदात्मानमेवावैत्' इत्यत्र आत्मन्शब्दस्याशयः सुस्थः॥ 'वैकुण्ठः पुरुषः' इत्यत्र पुरुषनामभाष्ये 'स यत्पूर्वोऽस्मात्सर्वस्मात्' इति निर्वचनत्रयलब्धार्थः शङ्कराचार्यैरुक्तः। 'स यत्पूर्वोऽस्मात्' इति निर्वचनसिद्धार्थः 'यद्वा अस्तेः व्यत्यस्ताक्षरयोगात् आसीत् पुरा पूर्वमेव' इति विग्रहं कृत्वा व्युत्पादितः पुरुषः। 'पूर्वमेवाहमिहासम्' इति 'तत्पुरुषस्य पुरुषत्वम्' इति श्रुतेः इति श्रुत्यन्तेरणापि सिद्धइति (अव्यय पुरुष) नाम भाष्ये तैरेवोक्तम्। पूर्वमेवाहं इति श्रुतिः कूर्मरूपभगवद्विषयिणी इति पुरुषः नारायणः इति स्तोत्रभाष्ये आचार्यपादैरुक्तम्॥

## गूढार्थसंग्रहः

एवं 'तं त्वौपनिषदं पुरुषम्' इत्यत्र निर्वचनसिद्धार्थत्रयमुपपादितम्। अथ 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्। तिष्ठमानस्य तद्विदः' इत्युपसंहारे 'पुरूणि फलानि सुनोति ददातीतिवा अव्ययः पुरुषः' इति (शं) भाष्योक्तार्थः अर्थतः प्रतिपाद्यते। अत्र (शं.उ) भाष्यम्। 'रातिः रातेः। षष्ठ्यर्थे प्रथमा धनस्येत्यर्थः। धनस्य दातुः कर्मकृतो यजमानस्य। परमयनम् परा गतिः कर्मफलप्रदातृत्वात्। किंच व्युत्थायैषणाभ्यः तस्मिन्नेव ब्रह्मणि तिष्ठत्यक-र्मकृत्। तत् ब्रह्म वेत्तीति तद्विच्च। तिष्ठमानस्य तद्विदः ब्रह्मविदः इत्यर्थः' इति। 'फलमत उपपत्तेरिति' न्यायेन ब्रह्मणो जगन्मूलत्वमाह– रातिरित्यादिना। इत्यानन्दगिरिविवरणम्। अत्र परंच तत् अयनंच परायणमिति विग्रहः। अयनं फ-लप्राप्तिसाधनम्। अत्र परशब्दः कर्मब्रह्मविद्ययोरपि फलप्राप्तिसाधनतया तद्वैलक्षण्यबोधनार्थः। वैलक्षण्यंच फलमत उप-पत्तेरित्यत्रोक्तं फलप्रदानसङ्कल्परूपम्। कर्मविद्यानन्तरं ब्रह्मणः फलप्रदानसङ्कल्पाभावे फलप्राप्तिर्नघटत इति परशब्देन बोधि तमिति परत्वमव्यवहितत्वरूपमपि बोध्यम्। 'स यत्पूर्वोऽस्मात्' इत्यादिप्राङ्निर्वचनादिपर्यालोचनायां कर्मब्रह्मविद्ययोः कारणं फलजननशक्तिः ब्रह्मणैव सङ्कल्पितेति सर्वमूलत्वरूपमपि परत्वमिति सिध्यति। अत्र परायणमित्येकमेव पदं कर्म-ब्रह्मविद्ययोः ब्रह्मणः फलप्रदत्वं प्रतिपादयितुं श्रुतावुपात्तम्। एतेन कर्मण इवब्रह्मविद्याया अपि फलं अदृष्टद्वारकमेव इति निर्णीतम्। परायणमित्यत्र विद्याफलब्रह्मप्राप्तिहेतुत्वं ब्रह्मशब्दार्थबृंहणत्वरूपमेव। बृंहणत्वं स्वप्राप्तिहेतुसङ्कल्पवत्त्वम् बहुफलप्रदानसङ्कल्पवत्त्वरूपपुरुषपदार्थे इदमप्यन्तर्भूतम्। परायणमित्यनेन निर्वचनचतुष्टयस्य सामरस्यमपि प्रदर्शितं भवति। जगत्कारणत्वान्तर्यामित्वयोः ज्ञानसुखसम्पादकत्वेन कर्मदाहकत्वस्य फलप्राप्तिप्रतिबन्धकपापनिवर्तकत्वेन बहुफल प्रदत्वस्य प्रागुक्तस्य सर्वस्य फलपर्यवसानकरणेन निर्वचनानां सौहार्दम्। अत्र ब्रह्मविद्याफलं परब्रह्मप्राप्तिः 'ब्रह्मविदाप्नो-तिपरं' 'सोऽश्नुते सर्वान्कामान् सह '(तै)' सर्वंहपश्यः पश्यति सर्वमाप्नोति सर्वशः' (छा.७.२६.२) 'तदा विद्वान् पुण्य पापे विधूय निरञ्जनः परमं साम्यमुपैति '(मु) इत्यादिश्रुतिपर्यालोचनया सर्वविषयकज्ञानसर्वानुकूलत्वप्रकारक ज्ञानरूपानन्दा-त्मकपूर्णधर्मभूतज्ञानविकासरूपा। पूर्वं निर्हेतुकदयया सृष्टिः अन्तर्यामित्वं विभवमुखेन सौशील्यवात्सल्यादिप्रदर्शनं निर्हेतु-कदयैव व्यवस्थापितकारणत्वशक्तिमत्कर्ममूलकया तादृशब्रह्मविद्यामूलकयाच अनुग्रहसङ्कल्पात्मकसहेतुकदयया अन्ते पूर्ण धर्मभूतज्ञानविकासरूपब्रह्मप्राप्तिः फलमिति सर्वेषामपि निर्वचनानां जीवधर्मभूतज्ञानविकासार्थत्वं प्रदर्शितं भवति ॥

एवं 'पुरश्चक्रे द्विपदः, इत्यादौ 'तदेतद्ब्रह्म। सर्वानुभूः' इति अन्ते प्रदर्शितं सर्वानुभवरूपं फलं मुक्तिपर्यवसित-मित्येतेन सिद्धम्। 'एवमेतस्मादात्मनस्सर्वे प्राणाः' इत्यादिप्रागुदाहृतश्रुतौ एतस्मादात्मन इत्यत्र आत्मन्शब्दस्य त-स्याश्श्रुतेरन्ते 'सर्व एतस्मादात्मनो व्युच्चरन्ति' (मा.पा.) इत्यत्र आत्मन्शब्दस्यच 'यच्चास्य सन्ततो भावः, इति स्मार्तनिर्वचनसिद्ध एव अर्थः। यश्चायं सन्ततः इत्यनभिधाय यच्चास्य सन्ततो भाव इत्युक्त्या 'निरञ्जनः परमं साम्यमु-पैति' इत्यादिभिश्च अस्यभावः धर्मभूतज्ञानं सन्ततः व्यापकमित्यर्थेन धर्मभूतज्ञानघटितव्यापकताश्रय एवात्मन्शब्दार्थः। स्वतस्सर्वज्ञेन परमात्मना पुण्यपापविधूननानन्तरमेव जीवस्य साम्यप्रतिपादनेन पूर्वं व्यापकत्वयोग्यधर्मभूतज्ञानमेव बद्धजी-वस्य, मुक्तौतु व्यापकधर्मभूतज्ञानवत्वमिति निर्णयेन 'एतस्मादात्मनः' इत्यत्र व्यापकधर्मभूतज्ञानवान् परमात्मा 'सर्व एत आत्मानः' इत्यत्र व्यापकत्वयोग्यधर्मभूतज्ञानवन्तः जीवाः विवक्षिता इतिविभागः। एतेन सृष्टिः धर्मभूतज्ञान विकासार्था इति पूर्वापरपर्यालोचनायां पूर्वं यदुक्तं तद्दृढीकृतम् ॥

एवं 'सवा अयमात्मा सर्वेषां भूतानां राजा' सर्वं एत आत्मानः समर्पिताः 'तदेतद्ब्रह्म सर्वाभूः' इत्यन्तसन्द-र्भेऽपि आत्मन्शब्दस्य पूर्ववदेवार्थः 'सर्वानुभूः' इत्यत्र आत्मन्शब्दार्थः सम्यग्विशदीकृतः। एवंच बहुफलप्रदत्वरूपपुरु-

## गूढार्थसंग्रहः

षपदार्थान्तर्भूतस्वप्राप्तिहेतुसङ्कल्पवत्त्वस्य ब्रह्मशब्दार्थबृंहणत्वस्य च ब्रह्मणः प्राप्यत्वघटिततया उत्क्रात्मन् शब्दार्थस्य च आनुरूप्यं सिद्धम्। एतेन सृष्टेः निर्हेतुककृपामूलायाः धर्मभूतज्ञानविकासरूपं फलं ब्रह्मप्राप्तिः पर्वक्रमेण परम्परया परमफलमितिनिर्धारितं भवति। एतेन उपनिषदामपि उक्तपुरुषप्राप्तिरूपपरमफलएवतात्पर्यम्। कठोपनिषदि ‘ सर्वे वेदा यत्पदमामनन्ति (१.२.१५) इत्यत्र सर्ववेदानां प्राप्यब्रह्मतात्पर्यकत्वं स्पष्टमुक्तम्। ‘ नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान् ’ इत्यत्र बहुफलदातृत्वम्युक्तम्। ‘ अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिस्पद्यते सउत्तमः पुरुषः ’ इत्यत्र पुरुषस्योत्तमस्य प्राप्यत्वं प्रतिपादितम्। एवं छान्दोग्ये ‘ अस्माच्छरीरात् समुत्थाय ’ इत्यनेन उत्क्रान्तिपूर्विकेयं प्राप्तिरिति प्रतीयते ॥

कठोपनिषदि ‘ विज्ञानसारथिर्यस्तु–सोऽध्वनःपारमाप्नोति तद्विष्णोःपरमं पदम् ’। इत्यत्र स्थानप्राप्तिरेवाभिधीयते। ‘आत्मानं रथिनं विद्धि शरीरंरथमेवच । बुद्धिंतु सारथिं विद्धि ’ इत्यादौ धर्मभूतज्ञानस्य सारथित्वमुक्तम्। बुद्धेः श्रुतिषु ‘ स एतासांप्रतिबोधनाय आभ्यन्तरं विविशामि ’ (मै) इत्यादिषु अन्तर्याम्यधीनतोक्तेति सारथित्वमन्तर्यामिण्येव विश्राम्यति एवं ‘ अस्माच्छरीरात्समुत्थाय ’ इत्यनन्तरं ‘ सयथा प्रयोग्य आचरणे युक्तः एवं अस्मिन् शरीरे प्राणो युक्तः’इत्यत्रापि सारथिः परमात्मैव विवक्षितः इति सारथिरूपान्तर्यामिमूलकेन्द्रियजयद्वारकजाविज्ञानस्य स्थानप्राप्तिः परमफलमिति कठोपनिषदर्थएव ‘ ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति। भ्रामयन् सर्वभूतानि ’ ‘ तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ’ इति गीतायां (१८.अ ) अन्तर्यामिरूपस्य तदनुग्रहद्वारा भगवतः स्थानप्राप्तिफलप्रतिपादनेन प्रकाशितो भवति। एतेन सृष्ट्यादिवाक्यानां देशविशेषावच्छेदेन ब्रह्मप्राप्तिरूपधर्मभूतज्ञानपूर्णविकासात्मकपरमफलस्य प्रदर्शनेन सृष्ट्यादिवाक्यानां सार्थकतया परकल्पितान्यार्थस्य न सृष्ट्यादिवाक्यतात्पर्यविषयत्वमिति सिद्धम् ॥

अत्र ‘ रातिर्दातुः परायणं तिष्ठमानस्य तद्विदः ’ इत्यत्र एकेन परायणशब्देन कर्मफलस्यैव विद्याफलस्यापि दातृत्वस्य प्रतिपादनेन फलद्वयस्याप्यदृष्टद्वारकत्वबोधनेन कर्मब्रह्मविद्ययोरविरोधोऽपि सूचितः ॥ अयमर्थः तलवकारोपनिषदि स्फुटः। ‘ उपनिषदं भो ब्रूहीति। उक्ता त उपनिषत्। तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदास्सर्वाङ्गानि सत्यमायतनम् ’ (त.उ.४.८.) इति । अत्र ‘ तस्यै तपो दमः कर्म प्रतिष्ठा ’ इत्यत्र उपनिषच्छब्दार्थभूतब्रह्मविद्यायाः प्रतिष्ठाहेतुत्वं तपसः कर्मणश्चोक्तमिति कर्मब्रह्मविद्ययोस्सम्बन्धप्रतिपादनेन उभयोरविरोधः प्रदर्शितो भवति। अत्र प्रतिष्ठाशब्देन विद्यायाः फलपर्यन्तं विद्यमानायाः कर्मापेक्षितमिति प्रतीयते। तेन विविदिषोत्पादनपर्यन्तमेव कर्माद्यपेक्षेति शङ्काया नावकाशः। अत्र प्रतिष्ठापदेन ब्रह्मविद्यायाः ध्यानरूपत्वं ध्यानपरिपाकपर्यन्तं कर्मणामावश्यकत्वं च सूच्यते ॥

एवं श्वेताश्वतरोपनिषदि ‘ स्वदेहमरणिं कृत्वा प्रणवंचोत्तरारणिम्। ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ’ (श्वेता. १.१४)‘ एवमात्माऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसायोऽनुपश्यति ’ (१.१५) आत्मविद्या तपो मूलं तद्ब्रह्मोपनिषत्परम् ’ (१.१६) इत्यत्र सत्येनैनं तपसा योऽनुपश्यतीति ध्यानपरिपाकदर्शनस्य तपस्साध्यत्वोक्त्या तपश्शब्दस्य कर्मोपलक्षकतया कर्मणां ध्यानपरिपाकप्रतिबन्धकपापनिरासकत्वेन आवश्यकत्वात् कर्मब्रह्मविद्ययोस्सङ्गतिस्सम्यक्प्रतिपादिता भवति। अत्र ‘ एवमात्माऽत्मनि गृह्यतेऽसौ ’ इत्यत्र जीवात्मनि परमात्मनोऽन्तर्यामिणः ग्रहणं विवक्षितम्। ‘ तद्वोभयं वै प्रणवेन देहे ’ (१.१३.) इति अत्रैव पूर्वमुक्तेः। ततः पूर्वं ‘ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ’ इति देहस्य जीवनियन्तृत्वमभिधाय ‘ तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ’(१.१०.) इत्यत्र जीवनियन्तृध्यानादित एव मुक्तेरभिधानात्। ‘ ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ’ इत्यत्रापि जीवात्मनियन्तैव देवो विवक्षितः।

## गूढार्थसंग्रहः

अत्र 'तस्याभिध्यानात्' इति श्रुतौ अहं ब्रह्मास्मीति ज्ञानं विवक्षितमिति सङ्क्षेपशारीरकविवरणे मधुसूदनसरस्वत्युक्तिरभि-
निवेशमूलैव । तच्छब्दस्य 'क्षरात्मानावीशते देव एक' इति पूर्वार्धोक्तप्रधानजीवनियन्तृपरामर्शकतया जीवाभिन्नब्रह्म-
कथाया एवात्राभावात् । अतः 'तस्यै तपो दमः कर्मेति प्रतिष्ठा' इत्यत्र ब्रह्मविद्या परिपाकदशापन्नध्यानरूपैव विवक्षिता ॥

अत एव 'विद्यया विन्दतेऽमृतम्' इति विद्यायाः ब्रह्मप्राप्तिहेतुत्वमभिधाय 'भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्या-
स्माल्लोकादमृता भवन्ति' (२.५.) इत्युक्तिस्सङ्गच्छते । 'तस्यैतपो दमः' इत्यनन्तरं 'यो वा एतामेवं वेदापहत्य पाप्मा-
नमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति, इत्यत्र ब्रह्मविद्यायाः पापनाशकत्वं स्वर्गशब्दितपरमपदे फलञ्चाभिहितम् । ब्रह्म
प्राप्तिप्रतिबन्धकपापनिवर्तकत्वस्यात्र प्रतिपादनेन उपनिषच्छब्दे षद्लृविशरणगत्यवसादनेषु इति धातुना निष्पन्ने पापदाह-
कत्वं विवक्षितमिति प्रतीयते । 'रातिर्दातुः परायणम् । तिष्ठमानस्य तद्विदः, इत्यत्र विद्यायाः ब्रह्मप्राप्तिहेतुत्वकथनेन
'षद्लृ विशरणगत्यवसादनेषु, इति गत्यर्थकात् षद्लृधोतारुपनिषच्छब्दनिष्पत्त्या ब्रह्मविद्याया ब्रह्मप्राप्तिहेतुत्वमुपनिष-
च्छब्देनोक्तं भवति ॥

'अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिस्सेव्यमानां निगूढाम् । यया चिरात्सर्वपापं व्यपोह्य परात्परं पुरुषं
याति विद्वान्, (कै.१.) इत्यत्र ब्रह्मविद्यायास्सर्वपापनिवृत्तिपूर्वकपरमपुरुषप्राप्तिहेतुत्वाभिधानेन विशरणगत्यर्थद्वयानुस-
न्धाने उपनिषच्छब्दे प्रागुक्तार्थद्वयं विवक्षितमिति स्फुटम् ॥ 'अथ परा यया तदक्षरमधिगम्यते, 'तथा विद्वान्नामरू-
पाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्, इत्यत्र परविद्यासामान्यस्य परपुरुषप्राप्तिहेतुत्वकथनेन 'ब्रह्मविदाप्नोति परम्'
इत्यत्रापि तस्यैवार्थस्याभिधानात् उपनिषच्छब्दस्य षद्लृधातोः गत्यर्थकत्वेन ब्रह्म गमयितृत्वमेवार्थः । एतेन 'एष
पन्था एतत्कर्म, इत्यैतरेयोपनिषदारम्भसायणीयभाष्ये ब्रह्मतां गमयतीति उपनिषच्छब्दव्युत्पत्तिवर्णनम् औत्प्रेक्षिकमेव
इति सिद्धम् ॥

'तं त्वौपनिषदं पुरुषम्, इत्यत्र श्रौतनिर्वचनसिद्धेषु अर्थेषु 'सवाऽयं सर्वासु पूर्षु पुरिशयः' इति श्रुत्युक्तार्थः
उपनिषदः पूर्वभागस्यच अर्थतः अविरोधं सम्यक् प्रकाशयतीत्यभिप्रेत्य 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन'
इति वृत्तिवाक्ये शारीरकशब्देन ब्रह्ममीमांसाया निर्देशः । जैमिनीयेन षोडशलक्षणेनेत्युक्त्या देवताविचारस्य कर्मवि-
चारशेषतया कर्मविचारान्तःपातित्वबोधनेन ब्रह्ममीमांसायां देवताधिकरणे देवताप्रीतिद्वारा कर्मफलस्य साधयिष्यमाणस्य त-
त्तद्देवताऽन्तर्यामिपरमात्मप्रीतिपर्यवसानेन कर्मफलं तत्तद्देवताऽन्तर्यामिप्रीत्यैव नान्यथेति कर्मब्रह्ममीमांसयोः सङ्गतिः सम्यक्
प्रदर्शिता भवति ॥

एवंच 'एषपन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इति ऐतरेयोपनिषदुपक्रमवाक्यमभिप्रेत्य कर्मब्रह्मणोरुभयोः एक
विधसत्यत्वेन कर्मब्रह्मविद्ययोः अविरोधेन सङ्गतिमत्वेनच कर्मविचारानन्तर्यमथशब्दार्थं बोधयत् 'वृत्तात् कर्माधिगमादन-
न्तरं ब्रह्मविविदिषा' इति वृत्तिवाक्यं सुस्थम् । ब्रह्मविचारस्य ब्रह्मविद्याद्वारैव परमंफलम् । साच विद्या औपनिषदपुरुषस्य
सविशेषतया सविशेषब्रह्मविषयिण्येव । साऽपि लघुसिद्धान्तनिर्धारितदिशा परिपक्वध्यानरूपा समाधिपर्यवसिता । समाधि-
स्वरूपशोधनेन दर्शनसमानाकारा भक्तिरूपा चेति श्रुतिगीतावचनैः प्रागेव निर्णीतम् । सैव भक्तिः 'नायमात्मा...यमे-
वैष वृणुते तेन लभ्यः, इत्यत्र विवक्षितेत्यपि ॥ यद्यपि 'यमेव स्वमात्मानम् एषः साधकः वृणुते प्रार्थयते, तेनैवात्म
ना वरयित्रा लभ्यते ज्ञायते इत्येतत् । निष्कामश्चात्मानमेव प्रार्थयते । आत्मनैव आत्मा लभ्यत इत्यर्थः । तस्य स्वात्म-
कामस्य एष आत्मा विवृणुते प्रकाशयति पारमार्थिकीं स्वकां तनुम् स्वकीययाथात्म्यमित्यर्थः ।' इति कठोपनिषद्भाष्ये(शं.

## गूढार्थसङ्ग्रहः

(१.२.२३) उक्तम् । तथाऽपि ‘महान्तं विभुमात्मानं मत्वा धीरो न शोचति’ (१.२.२२.) इति पूर्वश्रुतौ यः ज्ञेयत्वेनोक्तः आत्मा स एव ‘नायमात्मा’ इति पूर्वार्धे, ‘तस्यैष आत्मा’ इत्युत्तरार्धेच आत्मशब्दार्थ इति स्फुटम् । पूर्वार्धे प्रवचनादिभिः तस्यात्मनः अलभ्यत्वमभिधाय उत्तरार्धे लभ्यत्वं तस्यैव वाच्यम् । ‘यमेवैष वृणुते तेन लभ्यः’ इत्यत्र एष इत्येकमेव पदं प्रथमान्तमिति एष इत्यस्य स एवात्मेत्यर्थं इत्यवश्यमङ्गीकर्तव्यम् । एवं तस्यैव वरणकर्मत्वं लाभकर्मत्वं चेति स्वरसतः अर्थप्रतीतिसत्वे एषः साधकः इति विवरणं कथम् ? यमेव स्वात्मानमित्यर्थः कथम् ? जीवब्रह्मभेदप्रतिपत्तिपरं न किंचित्पदमत्र श्रूयते ॥

एवं ‘महान्तं विभुमात्मानम्’ इति पूर्ववाक्येऽपि जीवब्रह्माभेदबोधकपदं न किंचित् । ‘तस्यैष आत्मा विवृणुते तनूं स्वाम्’ इत्यत्रैव स्वशब्दः वर्तते । तत्र पारमार्थिकीमित्यर्थोऽपि न केनचिल्लभ्यते । अपारमार्थिकाकारस्य तत्र प्रसक्तेरभावात् । लभ्यः इत्यस्य ज्ञेयइत्यर्थोऽपि ‘सोऽध्वनःपारमाप्नोति सर्वे वेदा यत्पदमामनन्ति’ इत्यत्र प्राप्तेरेवाभिधानेन लभ्यः इत्यस्य प्राप्यइत्यर्थस्यैव स्वरसतः प्रतीतेः । साधककर्तृकं वरणं ‘श्रेयोहि धीरोऽभिप्रेयसो वृणीते, विद्याभीप्सिनं नचिकेतसं मन्ये’ इत्यत्र पूर्वमेवोक्तम् । अतः साधककर्तृकवरणानन्तरं परमात्मककर्तृकवरणमेव लाभहेतुभूतमत्र विवक्षितम् । यं तेनेत्यत्र यत्तच्छब्दौ साधकपरौ । पूर्वश्रुतौ ‘महान्तं विभुमात्मानं मत्वा धीरो न शोचति’ इत्यत्र विद्या प्रस्तुता । मत्वेत्यत्र योगरूपज्ञानमेव विवक्षितम् । योगस्योत्तरत्र वक्ष्यमाणत्वात् । न शोचतीति फलमुक्तम् । अत्रापि लभ्य इति फलम् ; इति उभयत्र फलभागिनः एकत्वं प्रतीयते । अतः पूर्वश्रुतौ योगरूपब्रह्मविद्यावान् धीर एवात्र यत्तच्छब्दार्थः । विद्यावतः परमात्मकर्तृकवरणमन्तरा न परमात्मलाभः । किंतु परमात्मकर्तृकवरणद्वारैव इति अयमर्थ एवात्र विवक्षित इति युक्तम् । विद्यावतः लाभपर्यन्तविद्यापरिपाकावस्थाः याः तद्द्वारा विद्यावान् माम् आप्नुयात् इति संकल्पएव वरणमितिच युक्तम् ॥

‘महान्तं—न शोचति’ इत्यत्र परसम्मतं जीवब्रह्माभेदज्ञानं नविवक्षितम् । ‘महान्तं विभुमात्मानम्’ इत्यादेः उत्तरत्र (२.१.४) अभ्यासात् । तदनन्तरं ‘य इदं मध्वदं वेद आत्मानं जीवमन्तिकात्’ । ईशानं भूतभव्यस्य (२.१.५) अङ्गुष्ठमात्रः पुरुषः मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य (१२) इति श्रूयते । मध्वदं कर्मफलभुजं जीवम् अन्तिकात् अन्तिके समीपे ईशानं ईशितारं इति भाष्यम् (शं) अत्र ईशानः ‘महान्तं विभुमात्मानं’ इति पूर्वश्रुतावुक्तः आत्मैव मध्वदं जीवमित्युक्त्या आत्मानमित्यत्र परमात्मभिन्नजीवएवविवक्षितः तत्समीपवर्तित्वमेव ईशानस्योक्तम् नतु तदभेदउक्तः एवमुत्तरत्र ‘मध्यआत्मनि तिष्ठति’ इति शरीरमध्ये जीवात्मनि तिष्ठतीत्यर्थः । ‘य आत्मनि तिष्ठन्’ इत्याद्यन्तर्यामिब्राह्मणोक्तार्थएवात्रापि विवक्षितः । अतएव ‘अङ्गुष्ठमात्रःपुरुषः’ इत्यत्र सर्वशरीर्यर्थकपुरुषशब्दोऽपि सङ्गच्छते । अत्र पुरुषशब्दः ‘पुरुषान्नपरं किंचित् सा काष्ठा सा परागतिः’ । (१.३.११) इत्यत्रोक्तपुरुषशब्दसमानार्थकः । अतः जीवपरयोः शरीरशरीरिभावसम्बन्धएवात्र विवक्षित । अयमेवार्थः पूर्वश्रुतौ अन्तिकादित्यात्राभिप्रेतः । अतएव ‘महान्तं विभुमात्मानम्’ इत्यत्र महान्तं विभुमिति शब्दप्रयोगोऽपि संगच्छते ॥

‘शब्दादेव प्रमितः’ (१.३.२३) इति सूत्रे ‘अङ्गुष्ठमात्रः पुरुषः’ इत्यत्र परमात्मपरत्वं सूत्रकृता स्थापयिष्यते । ‘एको वशी’ ‘तमात्मस्थं येनुपश्यन्ति धीराः तेषां सुखं शाश्वतम्’ (कठ २.२.१२) ‘नित्यो नित्यानां चेतनः चेतनानाम् एको बहूनां योविदधाति कामान् । तमात्मस्थं येऽनुपश्यन्तिधीराः तेषां शान्तिश्शाश्वती’ इत्युत्तरत्र परमात्मनः वशित्वं जीवात्मस्थत्वं काम्यमानबहुफलप्रदातृत्वं तद्दर्शनस्य मुक्तिफलहेतुत्वंच प्रतिपादयिष्यत इति तदनुसारेण ‘नायमात्मा’

## गूढार्थसंग्रहः

इत्यत्रापि आत्मन्शब्दस्य सर्वशरीरी परमात्मैवार्थः । स एव 'यमेवैष वृणुते' इत्यत्रैतच्छब्दार्थः । तस्यैव बहुफलप्रदातृत्वानुगुण्येन वरयितृत्वमित्यादिकं श्रुतौ विवक्षितमिति सिध्यति ॥

मुण्डकोपनिषद्भाष्येऽपि (शं) (३·२.३) यमेव परमात्मानम् एषविद्वान् वृणुते प्राप्तुमिच्छति तेन वरणेन एष परमात्मालभ्यः नान्येन साधनान्तरेण । तस्यैषआत्मा अविद्यासञ्छन्नां स्वां परां तनूं विवृणुते प्रकाशयति । प्रकाशइवघटादिः विद्यायां सत्यां आविर्भवतीत्यर्थः । तस्मादन्यत्यागेन आत्मलाभप्रार्थनैव आत्मलाभसाधनमित्यर्थः इत्युक्तम् । अत्र पूर्वं 'उपासते पुरुषं येह्यकामाः ते शुक्रमेतदतिवर्तन्तिधीराः' (३.२.१) इत्यत्र पुरुषशब्दोनात्मज्ञपरः आत्मज्ञस्य पूर्वं पुरुषशब्देनानिर्देशात् । पूर्वं 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (३.१.३) इति उत्तरत्रच 'परात्परं पुरुषमुपैति' (३.२.८ इत्यत्र पुरुषशब्देन परब्रह्मणएव निर्देशात् 'सवेदैतत्परमं ब्रह्म धाम' इत्येतत्पूर्वार्धेऽपि परब्रह्मणः ज्ञेयत्वोक्तेः तादृशपरब्रह्मज्ञानं उपासनरूपमेव मुक्तिफलं इति प्रतिपिपादयिषया उत्तरार्धस्य प्रवृत्तेः अत्र पुरुषशब्दः परब्रह्मपरएव । तदुपासकस्य 'ते शुक्रमेतदतिवर्तन्ति' इत्यत्र फलमुक्तम् । अतः तेनलभ्यः इत्यत्रापि फलभागी सएव विवक्षितः । अतः 'यं, तेन' इत्यत्र यत्तच्छब्दौ पूर्वश्रुत्युक्त यत्तच्छब्दार्थपरावेव । एकवचननिर्देशस्तु भक्तिरूपापन्नोपासनवतः दौर्लभ्यद्योतनार्थः ॥

तत्पूर्वखण्डे 'ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यति निष्कळं ध्यायमानः' (२.१.८) इत्यत्र एकवचनान्तध्यायमानशब्देन निर्दिष्टः यः विशुद्धसत्वः सएव अत्र यत्तच्छब्दार्थोऽपीति श्रुतित्रयमेकाधिकारिपरमेव अत्र 'नायमात्मा' इत्यत्र 'सवेदैतत्परमं ब्रह्म धाम' इति पूर्वोक्तपरब्रह्मैव आत्मन्शब्दार्थः । वरणंच पूर्वोक्तमेव । अतः आत्मलाभप्रार्थनमात्रेण फलमपि नसिध्यतीति बोध्यम् ॥ अतः श्रुतिषु यत्तच्छब्दानां परसम्मतार्थः श्रुतौ नाविवक्षितः । बहूनां जीवानां कामनाविषयबहुफलप्रादातृत्वस्य परमात्मनः प्रतिपादनात् पुरुषशब्दस्य बहुफलप्रदात्रर्थकत्वात् ब्रह्मणः स्वप्राप्तिहेतुत्वस्य श्रुतावभिधानात् ब्रह्मशब्दार्थबृंहणत्वानुरूप्याच 'नायमात्मा, इति श्रुतौ परमात्मनः स्वप्राप्तिपूर्वकालिकमुक्त्युपायब्रह्मविद्यापरिपाकावस्थादातृत्वरूपवरयितृत्वप्रतिपादनेन ब्रह्मप्राप्तिरूपमुक्तिफलस्य अदृष्टद्वारकत्वं दृढीकृतम् ॥

एतेन औपनिषदपुरुषस्य 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विदः' इत्यत्र यत् ब्रह्मप्राप्तिहेतुत्वमुक्तं तत् सम्यक्प्रकाशितं भवतीति 'एष पन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इति ऐतरेयद्वितीयारण्यकोपक्रमश्रुतौ बृत्तिकाराभिप्रेतोऽर्थः न प्रत्याख्यानमर्हति । अत्र ब्रह्मणः, पन्था इत्यत्रोक्तमुपायत्वं बृंहणत्वरूपं यत् स्वप्राप्तिहेतुत्वं तस्यैव 'स एतेन प्राज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे लोकेसर्वान्कामानाप्त्वाऽमृतस्समभवत् समभवत्' इति द्वितीयारण्यकान्तेस्थापनात् ॥

'एष पन्था' इत्यादि द्वितीयारण्यकम् ऐतरेयोपनिषद्रूपमिति सायणीये स्फुटम् । अयमर्थः आनन्दतीर्थानामपि सम्मतः । श्रुतौचास्यां वेदपूर्वोत्तरभागप्रतिपादितयोः कर्मब्रह्मणोरुभयोः पुरुषार्थहेतुत्वं विवक्षितमिति सायणीये व्यक्तम् । उपनिषदारम्भे कर्मब्रह्मणोरुभयोः पुरुषार्थहेतुत्वाभिधानं किमर्थमिति विवेचनीयम् । परिव्राजएव ब्रह्मविद्यायामधिकारः न गृहस्थस्य इत्ययमर्थः यदि उपनिषदि विवक्षितस्स्यात् तदा इत्थमुक्तिर्विरुध्येत । पूर्वभागोक्तकर्मणां पुरुषार्थहेतुत्वं नानपूर्वद्वारकं किंतु ब्रह्मणः फलदानसङ्कल्पद्वारकमिति बोधनायैव इत्थमुक्तिः । एवमत्र विषयविशेषानभिधानेन 'स एष प्राज्ञेनात्मना' इत्येतदारण्यकान्तिमवाक्ये मोक्षस्य प्राज्ञहेतुकत्वाभिधानेनच ब्रह्मविद्याफलमपि परब्रह्मसङ्कल्पमूलकमेवेति बोधयितुमपि एवमुक्तिः एवंच माध्यमिकवत् कार्यकारणभावस्य सांवृतत्वमसङ्गतमिति एतेन सिद्धम् । कार्यकारणभावस्य

## गूढार्थसंग्रहः

सत्यत्वादेव जगत्कारणत्वमपि तात्त्विकमेवेति सिध्यति । एतदुभयसिद्धौ राजकुमारनयोऽपि सूचितो भवति । 'एष पन्थाः एतत्कर्म एतद्ब्रह्म सत्यम्' इति वा, सर्वं परित्यज्य 'एतद्ब्रह्म सत्यम्' इति वा निर्देशं विहाय एवं श्रुतिनिर्देशेन एतद्ब्रह्म एतत्सत्यमित्यत्र कर्मब्रह्मणोरुभयोरेकविधप्रमाविषयत्वरूपं सत्यत्वं विवक्षितमिति प्रतीयते । येच कर्मणां व्यावहारिकसत्यत्वं ब्रह्मणः पारमार्थिकसत्यत्वं वदन्ति तन्मते कार्यकारणभावस्यापि सांवृतत्वेन एवं निर्देशस्य निर्बीजतैव स्यात् । किंच तन्मते एकजीववादस्यैव मुख्यवेदान्तपक्षतया तत्पक्षे दृष्टिसृष्ट्यभ्युपगमेन व्यावहारिकसत्यमेव नाभ्युपगम्यत इति श्रुतेरसमञ्जस्यमेव । ब्रह्मैव सत्यमिति सायणभाष्योक्तार्थस्तु नास्यां श्रुतौ विवक्षितः । प्रागुक्तश्रौतनिर्देशस्य वैफल्यप्रसङ्गात् ॥

किं च व्यवहारकालेऽबाधेन व्यावहारिकसत्यमिति कार्यकारणभावानङ्गीकर्तृमाध्यमिकमतवत् सिद्धान्तं कुर्वतां विवर्ताद्वैतिनां मते सषुप्तिवत् व्यवहारातीतदशैव परमार्थदशा वाच्या । सुषुप्तावविद्याया अपि विवरणकारमते भानाङ्गीकारेण मुक्तितो वैलक्षण्यं तन्मतेऽपि वाच्यम् । राजपुत्रस्य राजपुत्रत्वेन ज्ञानानन्तरं सुखसम्पादनार्थप्रवृत्तिः राजप्राप्त्यनन्तरं पूर्णसुखं तथैव सृष्टिवाक्यैः ब्रह्मजन्यत्वेन ज्ञानानन्तरं ब्रह्मविद्यया ब्रह्मप्राप्तौ पूर्णधीविकासरूपं परमं फलमिति उपनिषत्तात्पर्यविषयीभूतार्थस्य द्रमिडाचार्यैर्निर्धारणेन 'एष पन्थाः' इति श्रुतौ उपायत्वमुखेन ब्रह्मणो निर्देशेन उक्तार्थस्य विवक्षायाः वृत्तिकाराद्यभिप्रेतत्वेन जीवस्य ब्रह्मप्राप्तिदशा न व्यवहारातीतदशा भवतीति व्यावहारिकपारमार्थिकसत्यद्वयविभागकल्पना श्रुत्यैवानया निरस्तेति उभयोरेकविधप्रमाविषयत्वरूपसत्यत्वमेव अस्यां श्रुतौ विवक्षितमित्येव युक्तम् ॥

एतेन सविशेषस्यैव उपनिषत्तात्पर्यविषयताबोधनेन ब्रह्मणः उपासनं प्रमात्मकं तदेव मुक्तिसाधनं तद्व्यानं समाधिपर्यवसितमित्यौपनिषदसिद्धान्तः 'जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्' (१.१.३१) इत्यत्र सूत्रकृतो विवक्षितइति वृत्तिकाराःप्राहुः । उक्तंच शङ्करभाष्ये अथवा 'नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्' इत्यस्य अयमन्योऽर्थः । नब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते । कथम्? 'उपासा त्रैविध्यात्' त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेणच इति । तस्मात् ब्रह्मणएवैतदुपाधिद्वयधर्मेण स्वधर्मेणच एकमुपासनं त्रिविधं विवक्षितम् इतिच ॥ अन्यत्रापि 'मनोमयः प्राणशरीरः (छा.३.१४.२) इत्यादौ उपाधिधर्मेण ब्रह्मणः उपासनमाश्रितम् । इहापि तद्युज्यते वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात्' इत्यादिच ॥

अत्र परमते शाण्डिल्यविद्या सगुणविद्या प्रतर्दनविद्यातु निर्गुणविद्या । उभयत्रापि उपासनं विवक्षितमिति व्याससिद्धान्तस्य वृत्तिकृता प्रदर्शनेन सगुण निर्गुण विद्याविभागएव नास्ति उपासनव्यतिरिक्तं निर्विशेषविषयकं ज्ञानं श्रुतिषु नविवक्षितम् इति व्याससिद्धान्तः वृत्तिकृता प्रदर्शितो भवति । शाण्डिल्यविद्यायां 'एषमआत्माऽन्तर्हृदये एतद्ब्रह्म एतमितःप्रेत्याभिसम्भवितास्मि' इति यस्यस्यादद्धानविचिकित्साऽस्तीति इत्यत्र अहमर्थागमनएव मुक्तिफलेच्छाऽभिधानेन मुक्तिफलमहमर्थस्यैव प्रदर्शितम् । एतेनाहमर्थस्य चिदचिद्ग्रन्थिरूपत्वं न श्रुतिसम्मतम् इति सूच्यते । एवं 'सोऽहं भगवः शोचामि तंमा भगवान् शोकस्य पारंतारयतु' इति भूमविद्यावाक्येऽपि अहमर्थस्य शोकनिवृत्त्यभिधानेन अहमर्थस्य मुक्तावनुवृत्तिः स्फुटं प्रतीयते । सुषुप्तौ शोकनिवृत्तिमात्राभिधानेऽपि पारतारणानुक्त्या प्रबोधे पुनश्शोकसम्बन्धः । अत्रतु 'तरति शोकमात्मवित्' इत्यात्मवेदनस्य शोकतरणमुपक्रम्य 'सोऽहं भगवः शोचामि...तारयतु' इत्यत्र 'तस्मै मृदितकषाय तमसः पारं दर्शयति' इति, उपसंहारेच पारतरणदर्शनेऽभिहिते । 'सोऽध्वनः पारमाप्नोति' इतिच कठश्रुतिः । अतः इयं मुक्त्यवस्था अनन्तरकालिकशोकं न सहते । उपसंहारे 'न पश्योमृत्युं पश्यति नरोगं नोत दुःखताम्' 'सर्वंह पश्यः पश्यति इति सर्वसाक्षात्कारमभिधाय 'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः'

## श्रीभाष्यम्

### अथ महासिद्धान्तः

**तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणां**

## श्रुतप्रकाशिका

### अथ महासिद्धान्तः

कर्माविचारपूर्ववृत्तत्वविरोधिवस्तुसामर्थ्यनिरासार्थं परोक्तानामुपायोपेयनिवर्त्यानां प्रमाणतर्काभासमूलत्वं प्रति
अथ कर्माविचारपूर्ववृत्तत्वविरोधिवस्तुसामर्थ्यनिरासार्थं ... स्वाभिमतानामेव तेषां प्रमाणतर्कोपपन्नतां च सङ्क्षेपेण प्रतिजानाति । अर्थाद्बहुशास्त्रज्ञानां बहु
जानीते । **तदिदमिति** । स्वाभिमतानामेव तेषां प्रमाणतर्कोपपन्नतां च सङ्क्षेपेण प्रतिजानाति । अर्थाद्बहुशास्त्रज्ञानां बहु
ग्रन्थकाराणामपि परेषां स्खलनानुपपत्तिशङ्कांच सम्यज्ज्ञानोत्पत्तिसामग्रीवैकल्यप्रतिपादनमुखेन परिहरति । **तदिदमित्या-**
दिना । परमपुरुषशब्देनोपेयं वरणीयतेत्यादिनोपायमनादीत्यादिना निवर्त्यमनधिगतेत्यादिना परपक्षनैर्मूल्यं न्यायानुगृही·

## गूढार्थसंग्रहः

इति सर्वानुभवप्रीतबन्धकग्रन्थिसामान्यमोक्षाभिधानेन पुनश्शोकसम्बन्धबीजाभावः प्रदर्शितः । सर्वानुभवप्रतिबन्धकसामान्य-
विरहप्रतिपादनेन मुक्त्यवस्था सर्वानुभवरूपैवेति सापि यस्याहमर्थस्य शोकविरहः तस्यैव विवक्षितेति च स्फुटं प्रतीयते ।
अतोऽप्यहमर्थस्य मुक्तावनुवृत्तिस्सिद्धा ॥

एवं च ‘ एतमितः प्रेत्याभिसम्भविताऽस्मि ’ इत्यत्रापि अभीत्युपसर्गेण ‘ यथाक्रतुरस्मिन् लोके पुरुषो भवतितथेतः
प्रेत्य भवति ’ इति पूर्वश्रुतौ उपासनाविषयधर्ममात्र प्राप्तौ विवक्षितम् इति भ्रमो व्युदस्तः । अभितः प्राप्त्यभिधानेन
उपासनाविषयधर्मातिरिक्तधर्मविषयकत्वस्य प्राप्तौ स्फुटं प्रतीतेः । तदुपपादकश्च ‘ एषम आत्मान्तर्हृदये एतद्ब्रह्म ’ इति
पूर्ववाक्यार्थस्य ‘ इति यस्यस्यादद्धानविचिकित्साऽस्ति ’ इति संशयविरहएव । सच ‘ सर्वं खल्विदं ब्रह्म तज्जलानिति ’ जग
त्स्रष्टुः जगन्महाराजस्य परत्वं प्रतिपाद्य ‘ एषम आत्मान्तर्हृदये ’ इति सौलभ्यस्य प्रदर्शनेन जगन्महाराजस्य पितृत्वं परत्व-
वत् सौलभ्यंच ये निश्चिन्वन्ति तेषां ब्रह्मपुत्रत्वनिश्चयवतां सर्वेषां दायधनवत् ब्रह्मप्राप्तिः उपासनाविषयातिरिक्तधर्मविष-
यिणी सम्भवत्येवेति निर्णयेन भवति । एतेन ‘ यथाक्रतुः ’ इति वाक्ये उपासनाविषयातिरिक्तधर्मस्य प्राप्तौ व्यवच्छेदः नाभि-
प्रेतः इति निर्धारितं भवति । येचेत्थं निर्णयविधुराः तेषामेव यथाक्रतुनये अन्यथा प्रतीतिरित्येतेन सिद्धम् । अयमर्थः
‘ तंत्वौपनिदं पुरुषं ’ इत्यत्र पुरुषशब्देऽपि विवक्षितः । अयमेवार्थः श्वेताश्वतरोपनिषद्यापि विवक्षितः । ‘ एको हँसो
भुवनस्य मध्ये स एवाग्निस्सलिले सन्निविष्टः । तमेव विदित्वाऽतिमृत्युमेति ’ इति विभवावतारमुखेन सौलभ्यज्ञानवतः
मृत्युमतिक्रम्य ब्रह्मप्राप्तिमभिधाय . ‘ यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोतितस्मै ’ इत्यादौ जगज्जनकस्य महारा
जस्य पितुः विभवावतारे गुरुत्वं तन्मूलकोपकारंचाभिधाय—‘ यस्य देवे पराभक्तिः यथा देवे तथा गुरौ । तस्यैते कथिता-
ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ’ इत्युपसंहारे जगत्स्रष्टरि पितरि गुरौच भक्त्यैव पर्वक्रमेण सर्वानुभवरूपब्रह्मप्राप्तिपर्यन्तार्थ
प्रकाशस्याभिधानात् ॥ ‘ एष पन्थाः एतत्कर्म एतद्ब्रह्म एतत्सत्यम् ’ इत्यनन्तरं ‘ तस्मान्न प्रमाद्येत् तन्नातीयात् नह्यत्यायन्
पूर्वे येह्यत्यायन् ते पराबभूवुः ’ इत्यत्र व्यासादीनां कर्मणो ब्रह्मणश्च पुरुषार्थहेतुत्वम् उभयोस्सत्यत्वं चाभिमतमिति व्यास-
सूत्राणां वृत्तिकारसम्मतएव अर्थः सूत्रकृत्तात्पर्यविषयः ॥ एतत्सर्वमभिप्रेत्य उक्तार्थान् सर्वान् संगृह्णाति—**औपनिष -**
**परमपुरुषेत्यादिना** ॥

## श्रुतप्रकाशिका

तेनेत्यादिना स्वपक्षस्य समूलतामर्थतोऽनेकविद्वत्परिग्रहं च प्रतिजानीते । तदिदमित्यनन्तरवाक्यप्रकृतं परोक्तोपायोपेयनिवर्त्यत्रयं विवक्षितम् ॥

औपनिषदपरमपुरुषशब्देन ' तंत्वौपनिषदंपुरुषं विद्धि ' इति श्रुतिं स्मारयति एतेनास्मदभित * प्रमाणप्रमेयविशेषसम्बन्धश्श्रुत्यैव व्यक्तइति सूचयति । परमशब्देनेश्वरातिक्तत्त्वव्यावृत्तिः वरणीयताहेतुगुणविशेषविरहिणामित्यनेन ' यमेवैष वृणुते तेनलभ्यः ' इत्यभिमतोपायविशेषकथनं फलितम् । अनेन पदेन बहुशास्त्रज्ञ बहुग्रन्थकाराणां भ्रमानुपपत्तिशङ्काच परिहृता भवति सम्यक्छास्त्रार्थज्ञानोत्पत्तौ भगवद्भक्तेरपि सामग्र्यन्तर्भावेण केवलशास्त्रपरिश्रमस्य विकलहेतुत्वात् यथा ' यस्य देवे परा भक्तिः ' इत्यादिका श्रुतिः । स्मृतिश्च--

विद्याराजन्नते विद्या मम विद्या महीयते । विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् ॥

धृतराष्ट्रः– गावद्गणे ते का विद्या या ते विद्या जनार्दने । यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥

सञ्जयः– मायां न सेवे भद्रं ते नवृथा धर्ममाचरे । शुद्धभावंगतो भक्त्या शास्त्राद्वेद्मिजनार्दनम् ॥

इति अत्र शुद्धभावं गतः शास्त्राद्वेद्मि जनार्दनमित्यनेन यथावच्छास्त्रार्थज्ञानोदयस्य भक्तिसापेक्षत्वं सिद्धम्--

जायमानं हि पुरुषं यंपश्येन्मधुसूदनः । सात्विकस्सतु विज्ञेयः सवै मोक्षार्थचिन्तकः ॥

पश्यत्येनं जायमानं ब्रह्मारुद्रोऽथवा पुनः । रजसा तमसाचास्य मानसं समभिप्लुतम् ॥

इति वचनाच्च तत्त्वार्थज्ञानस्य भक्तिप्रीतभगवत्कटाक्षसापेक्षत्वं ज्ञायते ॥

## गूढार्थसङ्ग्रहः

परैः, भक्तिर्द्विविधा प्रेमलक्षणा ज्ञानलक्षणा चेति ; तत्र सगुणे भक्तिः प्रेमलक्षणा । निर्गुणविषयकज्ञानलक्षणा च निर्गुणे भक्तिः । ' ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत ' इत्यत्र इयं भक्तिर्विवक्षितेति भाष्यादौ (शं.गी) व्यवस्थापितम् । मधुसूदनसरस्वतीमिश्र भक्तिरसायने भक्तिस्वरूपं तदुपकारादिकं च सम्यक्प्रकाशितम् । एवं गीताविवरणेऽपि । जीवब्रह्माभेदज्ञानपूर्वकं सगुणे प्रेमलक्षणां भक्तिं कुर्वतां अर्चिरादिगतिद्वारा ब्रह्मलोकप्राप्तिः तत्रच श्रवणमनननिदिध्यासनादिकमन्तरैव निर्विशेषविषयकजीवब्रह्माभेदज्ञानेन परममुक्तिश्शीघ्रमेव भवतीति सगुणोपासकानां विशेषश्च गीताविवरणेऽभिहितः । प्रागुक्तदिशा श्रुतिषु जीवब्रह्माभेदविवक्षा नसम्भवतीति वृत्तिकाराणामाशयसिध्या एतदेवाभिप्रेत्य परेषाम् औपनिषदपरमपुरुषवरणीयताहेतुगुणविरहित्वं भगवता अभिहितम् ॥

गीताभाष्य उपासनंतु भक्तिरूपापन्नमेव परप्राप्त्युपायभूतमिति वेदान्तवाक्यसिद्धमित्युपक्रम्य ' तमेव विदित्वाऽतिमृत्युमेति ' इत्यादि ' नायमात्मा–विवृणुते तनूँ स्वाम् ' इत्यन्तश्रुतीरुदाहृत्य परेणात्मना वरणीयताहेतुभूतं स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियरूपं स्मृतिसन्तानमेव उपासनशब्दवाच्यमितिहि निश्चीयते । तदेवच भक्तिरित्युच्यते, ' स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते ' इत्यादिवचनात् ' इत्युक्तम् ॥ अत्र ' तमेव विदित्वा ' (श्वे.३.अ) इत्यत्र तच्छब्दः ' वेदाहमेतं पुरुषं महान्तम् ' इति पूर्वार्धोक्तमहापुरुषपरः । अत्र पुरुषशब्दस्य प्रागुपदर्शितनिर्वचनसिद्ध एवार्थः । महत्त्वमपि जीवापेक्षया उत्कर्षरूपम् । इत्थंच जीवापेक्षया उत्कृष्टपुरुषज्ञानस्यैव मुक्तिहेतुत्वमत्र विवक्षितम् । एवकारः न परसम्मतात्मान्यविषयकत्वव्यवच्छेदकः । तच्छब्देन निर्विशेषस्य पूर्वमप्रस्तुततया उपस्थापनासम्भवात् । किंतु पूर्वोक्तमहापुरुषाति-

### श्रीभाष्यम्

**अनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादि सकलप्रमाणवृत्ततदितिकर्तव्यतारूप**

### श्रुतप्रकाशिका

**ननु यथात्वमभिजानासि । भक्त्या वेद्मि** इति प्रश्नप्रतिवचनाभ्यां विद्याभक्तिशब्दयोरैकार्थ्यं प्रतीयते । भक्तिरूपाच्च विद्या मोक्षयेति प्रागुपपादितम् । ततश्च शास्त्रज्ञानमूला भक्तिः भक्तिमूलं शास्त्रज्ञानमित्यन्योऽन्याश्रयइतिचेत्—नैवम् श्रवणवेळायामेव पदार्थतयाऽवगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगोचरत्वाद्विद्याभक्तिशब्दयोः तेन सम्यग्वाक्यार्थनिर्णयलाभः । पूर्वपक्षतयोपन्यस्यमानेऽपि सुगताभिमतवेदाप्रामाण्यादौ हि भवति प्रद्वेषो वैदिकानां भगवद्गुणादिष्वनुरक्तचित्तता भवति । नचैषा साक्षात्कारानिरन्तरध्यानरूपाभक्तिः अतो नान्योऽन्याश्रयः । अथ शास्त्रार्थयाथात्म्यज्ञानोत्पत्तिहेतुभूतभक्तिविरोधिनमाह । **अनादीति** । * यद्वा सम्यज्ज्ञानहेतुभूतभक्त्यभावात् सम्यज्ज्ञानविरोधिपापानुबन्धमाह । **अनादीति** । वासनाशब्देन पापस्य दृढमूलत्वेन * दुर्निवारत्वमुक्तम् । वासनया पापं पापेन वासना । अज्ञानेन पापवासना पापवासनयाऽज्ञानमित्यन्योन्याश्रयपरिहाराय अनादिशब्दः शेमुषी—मोक्षोपयोगिज्ञानम् । अशेषशब्दस्योपायोपेयानिवर्त्यविषया विश्वशेमुषी दूषितेतिभावः । अनेनार्थात्स्वपक्षे निवर्त्यं चोक्तं भवति कर्मणएव मोक्षप्रतिबन्धकत्वात् । दूषितशेमुषीकत्वफलं सम्यज्ज्ञानाभावमाह । **अनधिगतेति** । प्रत्यक्षविरोधे शास्त्रप्राबल्यस्य परेणोक्तत्वात् पदशस्समुदायेनच सविशेषपरत्वप्राधान्येनच प्रथमं शब्दप्रमाणमाह । **पदेति** । प्रकृतिप्रत्यययोगेनच पदत्वं न ज्ञातमिति पदशब्दस्यभावः । **वाक्यस्वरूपेति** । वाक्यमनेकपदार्थसंसर्गविशेषाभिधायीतिच न ज्ञातमिति भावः । तदर्थयाथात्म्यं तात्पर्यविषयः प्रत्यक्षादीत्यादि शब्दादनुमानम् । सकलशब्देन स्पार्शनचाक्षुषादिप्रत्यक्षावान्तरभिदा विवक्षिता । अन्वयव्यतिरेकाद्यनुमानावान्तरभिदा च विवक्षिता । * यद्वा तत्तद्वाद्यभिमतार्थापत्त्यादिप्रमाणान्तरविषयस्सकलशब्दः **वृत्तम्** बोधनम् । **तदितिकर्तव्यतारूपेति** । तर्केण प्रमाणबाधवचनात्प्रमाणानुग्राहकस्तर्कइति च नज्ञातमिति भावः ॥

### गूढार्थसंग्रहः

रिक्तात्पपुरुषत्वयवच्छेदकः । एवं च जीवावधिकोत्कर्षविशिष्टपुरुषविषयकवेदनं प्राक् (८८पुटे) उपपादितदिशा समाधिपर्यवसितं भक्तिरूपमेव भवति । महनीयविषये प्रीतेरेव भक्तिरूपत्वात् ॥ ज्ञानलक्षणा प्रेमलक्षणेति भक्तिद्वैविध्यं परसम्मतम् । सर्वस्यापि प्रीतिसुखादेः ज्ञानावस्थारूपत्वस्य वेदार्थसङ्ग्रहान्ते स्थापनात् सगुणनिर्गुणविभागस्याप्रामाणिकत्वाच्च भगवता अनादृतम् । 'औपनिषदपरमपुरुष' इत्यत्र परमशब्दोपादानेन 'उत्तमः पुरुषस्त्वन्यः' इति गीतायां सविशेषस्यैव औपनिषदपुरुषत्वं निर्धारितमिति स्वसंयुक्तविकासादिजनकसङ्कोचविकासशून्यकूटवत्तिष्ठतीति कूटस्थत्वमुपपद्यत इति सूचितम् ॥

**अनधिगतपदवाक्येत्यादि** । अखण्डार्थं द्विविधम् एकं पदार्थनिष्ठम् अपरं वाक्यार्थनिष्ठम् एकैकंच पुनर्वैदिकलौकिकभेदेन द्विविधं, पदार्थनिष्ठं वैदिकमपि द्विविधं, तत्पदार्थनिष्ठं, त्वं पदार्थनिष्ठंच । 'सत्यं ज्ञानमनन्तम्' इत्यादि तत्पदार्थनिष्ठम् 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्यादि त्वं पदार्थनिष्ठं प्रकृष्टप्रकाशः इत्यादितु लौकिकं पदार्थनिष्ठम्, वाक्यार्थनिष्ठमपि वैदिकं तत्त्वमस्यादिवाक्यम् । सोऽयं देवदत्तः इत्यादि लौकिकम् इत्यद्वैतसिद्धावुक्तावपि तदर्थबोधे धर्मसंसर्गयोर्भानानभ्युपगमेन धर्मसंसर्गाविषयकबोधस्य कस्यापि दार्शनिकस्यासम्प्रतिपत्तेः उपलक्षणधर्मस्यापि उपलक्षितबोधे प्रकारतया भानस्यैव सम्प्रतिपन्नत्वादिति भावः ॥ **प्रत्यक्षादिसकलप्रमाणवृत्तेति** । प्रमाणानामेकविधमेव प्रमाणत्वम्

## श्रीभाष्यम्

## समीचीनन्यायमार्गाणां

## श्रुतप्रकाशिका

प्रमाणानुग्राहकतयैवहि वयं 'तर्कमङ्गीकुर्म इत्यत्राह। **समीचीनन्यायेति** । अनुग्राहकबुध्या स्वीकृतस्यापि तर्कस्य प्रमाणविद्धत्वात्सोऽसमीचीनइति भावः। अपच्छेदनयादिसमीचीनन्याया एवहि स्वीकृता इत्यत्राह। **न्यायमार्गाणामिति** । अयमपच्छेदन्यायविषयः अयं सामान्यविशेषन्यायविषयइति तत्तन्यायसंचारविषयविभागोऽनवगतइति भावः तर्हि किम-

## गूढार्थसंग्रहः

**सर्वसम्मतम्** । ननु व्यावहारिकप्रामाण्यं तात्विकप्रामाण्यमिति प्रामाण्यद्वैविध्यम्। एवं स्मृतौ प्रमात्वव्यवहारविरहेण अनुभूतित्वघटितं कैश्चित्, अनधिगतार्थविषयकत्वघटितं प्रमात्वं कैश्चिच्चाभ्युपगम्यते। पूर्वमनुभूतार्थस्य स्मृतौ भानेन ज्ञातार्थविषयकतया ज्ञातभिन्नार्थविषयकत्वाभावेन तद्वारणमिति तैरुच्यते। विवर्तवादिभिस्तु अनुभूतेः स्वप्रकाशतया तत्र आवरणकृत्यं सम्भवतीति अनुभूतेरेवाज्ञातत्वं, जडे आवरणकृत्याभावात् जडस्य घटादेर्नाज्ञातत्वमिति प्रत्यक्षं न जडविषयकम्, किंतु अनुभूतिमात्रविषयकमिति निर्णीयते । इदं च दार्शनिकमर्यादाविरुद्धमेव । भावरूपाज्ञानस्य केनाप्यनङ्गीकारेण ज्ञातभिन्नार्थविषयकत्वस्य प्रमात्वलक्षणे निवेशेन जडादौ प्रत्यक्षं प्रमाणं भवितुमर्हत्येवेति दार्शनिकैः स्थापनात्। सन्मात्रग्राहिप्रत्यक्षवादे दृष्टिसृष्टिपक्षइव घटादौ व्यावहारिकसत्ताविरहेण ‘ प्रत्यक्षमनुमानंच शास्त्रंच विविधागमम्। त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता॥(म.स्मृ.१२.१०३)’ इत्याद्यार्षसिद्धान्तोऽप्यसङ्गतस्स्यात्। एवं नैरात्म्यवादिभिः वैभाषिकैर्बौद्धैः धर्मधर्मिभावापलापिभिः शब्दादिपदार्थमात्रवादिभिः सगुणात्मवादे आत्मनः प्रत्यक्षेण सिद्धिः नसम्भवति। तद्गतनित्यत्वस्य प्रत्यक्षेण प्रतिपत्त्यसम्भवात्। धर्मधर्मिणोरुभयोरेकप्रमाणगम्यत्वस्यैव अवश्यमेषितव्यत्वादिति दूषणमुच्यते। तद्वदेव अनुभूतेः स्वप्रकाशतावादिभिः अस्वप्रकाशधर्मो न सम्भवतीति व्यवस्थाप्यते। एवं भासकस्य भास्यधर्मवत्वं नसम्भवतीत्याद्यपि। एतत्सर्वं भाट्टनैयायिकादिदार्शनिकासम्मतमिति तात्पर्येण प्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यानधिगमोक्तिः॥

**समीचीनन्यायमार्गाणामिति** । प्रमाणयोर्विरोधशङ्कायां स्वसमानसत्ताकविषयसिध्यैव सावकाशत्वं अन्यस्य तादृशविषयासिध्या निरवकाशत्वं निरवकाशेन सावकाशं बाध्यम्, इति समीचीनन्यायविदां व्यवस्था। ननु व्यावहारिकविषयकल्पनेन सावकाशत्वमिति ॥ अपच्छेदनये यथा ‘ शरमयं बर्हिर्भवति ’ इति वैकृतवाक्येन पाश्चात्येन प्रकृतिवत् कुर्यात् इति पूर्वप्रवृत्तचोदकवाक्यं कुशांशे बाध्यते, एवमेव क्रमिकापच्छेदेन अपच्छेदनिमित्तविरुद्धप्रायश्चित्तकर्तव्यताग्राहकप्रमाणयोः पूर्वापरयोर्मध्ये पूर्वप्रमाणस्य बाध इत्ययमंशः अपच्छेदनयसिद्धः। तत्रतु बाधः अननुष्ठापकत्वलक्षण एव। शास्त्रयोरुभयोः एकविधमेव प्रामाण्यम्। एकेन प्रमाणेन अन्यप्रमाणजन्यज्ञानस्य भ्रमत्वमपि नकल्प्यते। उभयोः तुल्यप्रमात्वस्य सर्व (मीमांसक) सम्मतत्वात्। अयंच न्यायः ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इत्यादेः बाध्यत्वविषये नैव सञ्चारयितुं शक्यः। तद्वाक्यजन्यज्ञानस्य भ्रमत्वेन शास्त्राप्रामाण्यप्रसङ्गात्। एवं ‘ अपहतपाप्मा—सत्यकामः सत्यसङ्कल्पः ’ इति वाक्यविषये यत् न्यायद्वयं प्रदर्शितं मधुसूदनसरस्वतीभिः तदपि न समीचीनं, पूषादिमन्त्रस्य दर्शपूर्णमासप्रकरणपठितत्वं, दर्शपूर्णमासादिषु पूषादिदेवताशून्यत्वंच सर्वसम्मतम् सत्यकामत्वादेः अनुपास्य ज्ञेयब्रह्मप्रकरणपठितत्वं उपासनातिरिक्तज्ञानान्वयासम्भवश्चेत्येतदुभयंतु न पूर्वपक्षिसिद्धान्त्युभयसम्मतम्। सगुणनिर्गुणविद्याविभागस्यैव इतरासम्मतत्वात्। एवं जर्तिलयवाग्वाधिकरणन्यायोऽपीत्युत्तरत्र विवेचयिष्यते ॥

### श्रीभाष्यम्

**विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथा-त्म्यविद्भिरनादरणीयम् । तथाहि**

### श्रुतप्रकाशिका

वलम्ब्य प्रबन्धाः कृता त्यत्राह । **विकल्पासहेति** । कुतर्काः प्रमाणविरुद्धाः मूलशैथिल्यमिथोविरोधादिदोषान्तराक्रा-
न्ताश्च तर्काः तेच त्रिचतुरपदस्थायिनो नभवन्ति किंतु विकल्पितान्यतरशिरःपरिग्रहएव भङ्गुरा इत्याह । **विकल्पासहेति** ।
तर्कस्य विकल्पासहत्वंनाम तद्विषयसाधनादि विकल्पासहत्वमेव । **विविधेति** । ब्रह्मणोऽनुभाव्यत्वेऽननुभूतित्वं प्रत्यक्षं
सन्मात्रग्राहि वेदान्तवेद्यं ब्रह्म प्रमाणान्तरागोचरइत्यादिरूपं कुतर्काणामन्योऽन्यव्याहतिवैविध्यं विवक्षितम् । ईदृशकुतर्कए-
वकल्कं असारभूतं बौद्धैरात्तसारं ऋजीषमित्यर्थः एतेन कल्पितं उत्कीर्णं इतिहेतौ । केषांचित्समीचीनार्थान्तरविषयज्ञा-
नेसति अस्यासमीचीनत्वनिश्चयः इत्यत्राह । **न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरिति** । अनेन
पूर्वोक्तविपरीताकारउक्तः बहुवचनेन स्वपक्षस्य भगवद्बोधायनाद्यनेकशिष्टपरिग्रहस्सूचितः । **अनादरणीयमिति** । शिष्य-
शिक्षासु पूर्वपक्षोपन्यासकौशल्यार्थमप्यादर्तुमयोग्यमित्यर्थः । 'अशेषविशेषप्रत्यनीकचिन्मात्रमित्यारभ्य सर्वे वेदान्ता आरभ्य-
न्त' इत्यन्तेन यदप्याहुस्तदनादरणीयमित्यन्वयः । एवं सङ्क्षेपेण प्रतिपादितमर्थमुपपादयितुमुपक्रमते । **तथाहीति** ॥

**ननु** पूर्वपक्षिणा प्रथमं वेदान्तवाक्यविशेषानुदाहृत्य तत्र निरूपणीयं सर्वं निरूप्य पश्चाद्व्यतिरिक्तप्रमाणतर्काः प्रद-
र्शिताः । अतः सिद्धान्ते च तेन क्रमेण तत्प्रतिक्षेपो युक्तः । तत्कथं प्रथमं सकलप्रमाणाविषयत्व निरूपणं सङ्गच्छते ?
उत्तरत्रच कथं? प्रत्यक्षादिनिर्विशेषविषयत्वानिरासपूर्वकं वेदान्तवाक्ययोजना क्रियते । उच्यते । प्रत्यक्षाविरोधे शास्त्रप्राब-
ल्याभ्युपगमात् परेण वेदान्तवाक्यानि प्रथममुदाहृत्य पश्चात्तदन्यद्वक्तव्यं सर्वमुक्तम् । प्रबलतयाऽभिमतप्रमाणपुरस्कारोह्यु-
चितः । सिद्धान्तिनातु प्रत्यक्षविरोधे शास्त्रप्राबल्यानभ्युपगमात् प्रत्यक्षादिनिर्विशेषविषयत्वव्युदसनपूर्वकं तदविरोधेनवे-
दान्तवाक्यानि स्वरसतो व्याख्यास्यन्ते ॥

### गूढार्थसंग्रहः

वेदाप्रामाण्यवादिबौद्धतर्कैरेव विश्वमिथ्यात्वमेभिः साध्यते इत्यभिप्रायेणाह...**विकल्पासहेत्यादि** ॥ **न्यायानुगृ-
हीतेत्यादि** । प्रमाणानां वृत्तम् एकविधप्रमाजनकत्वं तज्जन्यज्ञानस्य एकविधप्रमात्वपर्यवसितम् । प्रमाणानां न्याया-
नुग्रहः तादृशप्रामाण्योपकारः ननु बाधकप्रमाणप्रवृत्त्यनन्तरं बाध्यत्वेन सम्मतप्रमाणस्य ज्ञानबाध्यार्थविषयकत्वम् । तथासति
प्रमाणानामप्रामाण्यस्यैव प्रसङ्गः इतिरीत्या वृत्तस्य याथात्म्यं स्वस्वरूपानतिक्रमरूपं ये विदन्ति, ते किल प्रत्यक्षादि प्रमाण
याथात्म्यविदः । तेच पूर्वोत्तरमीमांसावृत्तिकाराः एकविधप्रामाण्यवादिनः वाक्यकारद्रमिडभाष्यकारादयश्चेतिबोध्यम् ॥

महापूर्वपक्षे 'अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः (१३०) इति, 'सत्यं ज्ञानमनन्तंब्रह्म' 'विज्ञानमानन्दं
ब्रह्म' इत्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च' (१५३ पुटे) इति 'अनवकाशशास्त्रजन्यनिर्विशेष
ब्रह्मात्मभावावबोधेन सावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिः युक्तैव' (१६१) इति, 'सत्यं ज्ञानमनन्तं
ब्रह्म' इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति' (१६७) इति, 'तस्मात्परमार्थतो
निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव—विवर्तत इति—अविद्यानिबर्हणाय ब्रह्मात्मैकत्वविद्याप्रतिप-
त्तये सर्वे वेदान्ता आरभ्यन्ते' (२२७ पुटे) इतिच उक्तम् । मध्ये सकलभेदानिवृत्तेः प्रत्यक्षविरुद्धत्वमिति पूर्वमीमांसक-

## गूढार्थसङ्ग्रहः

शङ्कायाम् अखण्डार्थवाक्यानां षड्विधतात्पर्यलिङ्गोपेतत्वेन बलवत्तया दुर्बलप्रत्यक्षादेर्बाधः प्रमाणानामज्ञातार्थज्ञापकतया प्रत्यक्षादीनां सर्वेषां जडविषयकत्वं न सम्भवति इति प्रत्यक्षविरोध एव नास्तीतिच द्वेधा परिहृतम्। पक्षद्वयेऽपि घटमहं जानामीत्यत्र ज्ञानं सोपाधिकमनुभवशब्दवाच्यं निरुपाधिकमात्मस्वरूपमिति च स्थापितम्। तत्रच 'तंत्वौपनिषदं पुरुषम्' इत्येतदुत्तरं 'विज्ञानमानन्दं ब्रह्म' इत्युक्त्या उपनिषत्तात्पर्यविषयत्वं तस्यैव निर्विशेषचिद्रूपज्ञानस्येति बृहदारण्यकवार्तिके स्फुटम्। एवम् इष्टसिद्धावपि 'याऽनुभूतिरजा' इत्युपक्रम्य प्रत्यगात्मन एवौपनिषदत्वं प्रथमाध्यायान्ते उक्तम् ॥ 'श्रवणं मननं ध्यानं...षड्भि र्लिङ्गैस्सदद्वये' (स.वे.सि.सा.सं) इति शङ्कराचार्यैरपि सिद्धान्तितम् ॥

उक्तंच अद्वैतसिद्धौ— 'तात्पर्यविषये शब्दः प्रमाणम्। 'यत्परश्शब्दः स शब्दार्थः' इत्यभियुक्ताभ्युपगमात्। अन्यथा स्वाध्यायविधिग्रहणानुपपत्तेरुक्तत्वाच्च। नह्यन्यतस्सिद्धेऽर्थे शास्त्रतात्पर्यम्। यथाऽहुर्भट्टाचार्याः— अप्राप्ते शास्त्रमर्थवत्' इतीति 'अद्वैतश्रुतिर्हि षड्विधतात्पर्यलिङ्गोपेता। तत्र द्विविधं तात्पर्यलिङ्गम्। प्रामाण्यशरीरघटकमर्थनिष्ठमज्ञातत्वम् अबाधितत्वं प्रयोजनवत्वंच। त्रिविधं तु शब्दनिष्ठम्, अतिप्रसङ्गवारकम् उपक्रमोपसंहारयोरैकरूप्यम्, अभ्यासः अर्थवादश्चेति। तत्र शब्दनिष्ठलिङ्गत्रये तावन्नविवादः। सर्वासामेवोपनिषदामेवं प्रवृत्तत्वात्। मानान्तरासिद्धतया मोक्षहेतुज्ञानविषयतया च अज्ञातत्वं सप्रयोजनत्वं च निर्विवादमेव। अबाधितत्वमात्रं हि सन्दिग्धम्। तच्च अन्यथाऽनुपपत्तिगतिसामान्याभ्यां च निर्णीयते' (आगमबाधोद्धारे) इति च ॥

अत्र गुरुचन्द्रिका= 'प्रामाण्यशरीरेति। ज्ञाते बाधिते निष्प्रयोजने वा विषये प्रमातृभिः प्रमाणं नव्याप्रियत इति यादृशविषयकज्ञानमुद्दिश्य प्रमाणव्यापारे प्रवृत्तिस्तादृशविषयकज्ञानमेव प्रमेत्युच्यते। तथाच ज्ञाताद्यर्थे दैवात्प्रमाणजन्यमपि ज्ञानं न प्रमा प्रमाणध्वंससंयोगादिवत्। अतोऽज्ञाताबाधितसप्रयोजनार्थविषयकधीरूपप्रमानुकूलशक्तिमत्वरूपे तात्पर्ये घटकत्वेन अज्ञातत्वादित्रयोपयोगः। अत एव 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति जैमिनीयसूत्रे प्रमात्वशरीरघटकविषये अबाधितत्वं प्रविष्टमित्याशयेन औत्पत्तिक इत्यनेन कारणदोषः, अव्यतिरेक इत्यनेन बाधकज्ञानाभावो विवक्षितः। अज्ञातत्वं प्रविष्टमित्याशयेन अनुपलब्ध इति सप्रयोजनत्वं निविष्टइत्याशयेन अर्थइत्युक्तं उक्तंच शास्त्रदीपिकादौ। विशेषणत्रयेण अबाधिताग्रहीतार्थग्राहि ज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचितमिति भावः। एवं च लिङ्गशब्दस्तत्र विशेषणतया ज्ञापकत्वात्प्रयुज्यतइति बोध्यम्। अतिप्रसङ्गवारकमिति। यत्र पूर्वत्रिकं द्वयोरर्थयोरस्ति, अभ्यासादित्रयान्यतमच्च एकत्रैवार्थे तत्राभ्यासादिहीनान्यतमार्थे तात्पर्यापत्तिरूपस्य अतिप्रसङ्गस्य अभ्यासादिहीनेऽर्थेऽपि तात्पर्येऽभ्यासादिवैयर्थ्यापत्त्या वारकमित्यर्थः। एवंच इदं वाक्यं यद्येतदर्थतात्पर्यकं न स्यात्तदा एतदर्थेऽभ्यासादियुक्तं नस्यात्। एतदर्थतात्पर्यकमिदं नार्थान्तरतात्पर्यकमेकवाक्यत्वेन गृहीतत्त्वादित्यादि तर्कावतारे आपाद्याभावनिश्चयादिविधया अभ्यासादिनिश्चयस्य तात्पर्यनिश्चयोपयोगितेति यत्रोक्तातिप्रसङ्गस्तत्रैवाभ्यासादेः तद्वारकतया उपयोगइति ध्येयम्। इति ॥

लघुचन्द्रिकायांच 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णये ॥ इति वृद्धोक्तौ उपक्रमोपसंहारपदाभ्यां विचार्यवाक्यस्याद्यन्तभागयोरेकार्थपर्यवसानं लक्ष्यते। अभ्यासः अनन्यपरं पुनश्श्रवणम्। अर्थवादः स्तुतिनिन्दान्यतरबोधकवाक्यम्। एतत्त्रयं शब्दघटितत्वाच्छब्दनिष्ठम् तत्राद्यस्यैकार्थतात्पर्यनिर्णायकत्वेन लिङ्गत्वम्। तात्पर्यविषयत्वेन संदिग्धानां बहूनांमध्ये यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं तस्मिन्नेव तात्पर्यनिर्णयात्। अन्यथा तस्य वैयर्थ्यात्। कचिचानुवादत्वादि शङ्कापसारकतयाऽपि तस्य लिङ्गत्वम्, यदिहि तस्मिन्नर्थे वाक्यमनुवादः

श्रीभाष्यम्

**निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति नशक्यते वक्तुम्।**

गूढार्थसंग्रहः

स्यात् तदा उक्तपर्यवसानं व्यर्थस्यात् इति युक्तेः। द्वितीयंतु समिदादिवाक्येषु यद्यपि विलक्षणनानाकर्मविधाने तात्पर्य ग्राहकं विहितविधानायोगात्, तथाऽपि सिद्धार्थविषयकंसत् एकार्थतात्पर्यज्ञापकम्। अन्यथा पुनःश्रवणवैयर्थ्यात्। तस्मा- दादरज्ञापनद्वारा तस्य तात्पर्यज्ञापकत्वम् तदुक्तं भामत्याम्–अभ्यासेहि भूयस्त्वमर्थस्य भवति 'यथा अहो दर्शनीया अहो दर्शनीया' इति। आदरश्च यद्यपि प्राशस्त्यरूपः अभ्यस्यमानस्यार्थस्य विधेयत्वानुमानद्वारा तात्पर्यविषयत्वं ज्ञापयति। अर्थवादोऽपि प्राशस्त्यज्ञापनद्वारा तथैव तज्ज्ञापकः तथाऽपि अर्थवादबोध्यं प्राशस्त्यं बलवादनिष्टाजनकत्वम् अभ्यासबोध्यंतु अर्थान्तरादुत्कृष्टत्वरूपमिति नाभ्यासार्थवादयोरर्थैक्यम् अपूर्वता प्रकृतवाक्यार्थधीविषये उक्तधीपूर्वमज्ञातत्वम्। फलम् उक्तधियः प्रयोजनवत्वम् उपपत्तिः उक्तधीविषयस्याबाधितत्वम्। एतस्यतु त्रयस्य प्रमात्वघटकतया तात्पर्यप्रति व्यापक- तया लिङ्गत्वम्। यथा यज्ञोपवीतादिकं ब्राह्मण्यंप्रति। तत्राद्यम् अनुवादवाक्यस्य स्वार्थे प्रामाण्यवारणाय द्वितीयं 'उत्ता ना वै देवगवा' इत्यादेस्तद्वारणाय तृतीयं 'ग्रावाणः प्लवन्ते' इत्यादेः इति उक्तम्॥

वेदान्तसूत्रमुक्तावल्याम् (१.१.४) उपक्रमादिषड्विधतात्पर्यलिङ्गानि निरूपितानि। तथाहि छान्दोग्ये षष्ठे 'सदेव सोम्येदमग्रआसीत्' (छा.६.२.१) 'एकमेवाद्वितीयम्' (छा.२.५.१९) इत्युपक्रमः। 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इत्युपसंहारः। ऐतदात्म्यमित्यादेः तत्त्वमसीत्यन्तस्य नवकृत्वः अभ्यासः। 'आचार्यवान्पुरुषो वेदेत्यनेन मानान्तराविष- यत्वरूपापूर्वत्वकथनम्। 'तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ सम्पत्स्ये' (छा.६.१४-२.) इति फलकथनम्। 'तमा देशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' (छा.६.१.३.) इत्याद्यर्थवादः। 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (६.१.४.) इत्याद्योपपत्तिः। एवं बृहदारण्यके– 'आत्मे- त्येवोपासीत। अत्रह्येते सर्वं एकं भवन्ति' (बृ.१.४,७) इत्युपक्रम्य 'स एष नेति नेति' इत्यादिना अभ्यस्य 'तं त्वौ- पनिषदं पुरुषं पृच्छामि' (.३.९.२६) इति अपूर्वयित्वा 'अभयंवै जनक प्राप्तोऽसि' (४.२.४) 'ब्रह्मैव सन् ब्रह्माप्येति' (४.४.६.) इति सफलीकृत्य 'तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्' (१.४.१०.) इत्यर्थवादमुक्त्वा 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' (बृ.२. ४.७) इत्यादिनोपपाद्य 'पूर्णमेवावशिष्यते' (५.१.१) इत्युपसंहृतम् इति॥

अतश्च उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतश्रुतेः प्राबल्यात् तस्याः निर्विशेषचिन्मात्रात्मैकत्व एव तात्पर्यं नान्यत्रेति महापूर्वपक्षेनिर्धारितं भवति। एवं शङ्कायां आत्मसिद्धौ भगवद्यामुनमुनिभिः 'तदेवं व्योमारविन्दसदृशवपुषि यथोदित दृशि वेदान्ततात्पर्यवर्णनं वेदान्तायैव स्यात्' इत्युक्तम्। अयमाशयः उपक्रमादि षड्विधतात्पर्यलिङ्गानि बोधविषयस्य प्रामाणिकत्वेन तद्विषयकबोधस्य सम्प्रतिपन्नत्वे तादृशबोधद्वयसंशये तात्पर्यलिङ्गैस्तात्पर्यनिर्णयेन अन्यतरबोधव्यवस्था पूर्व मीमांसकसम्मता। निरुपाधिकचितः कस्यापि प्रमाणस्याविषयतया तस्यास्तात्पर्यलिङ्गैः श्रुत्यभिप्रेतत्वनिर्णयः न सम्भवति तथाच वेदस्य अज्ञाताबाधितार्थबोधकनिर्दोषशब्दप्रमाणत्वमेव नस्यात्। तद्विषयस्याप्रामाणिकत्वात् इति। सूक्तिमिमां यामु- नेयीमभिप्रेत्य तत्र व्योमारविन्दसदृशीत्यस्यार्थं विशदयितुं सर्वप्रमाणानां सविशेषविषयत्वेन निर्विशेषवस्तुनि तेषामप्रवृत्ति- रितिप्रतिजानीते। **निर्विशेषवस्तुवादिभिः इत्यादिना**॥

## श्रीभाष्यम्

**सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम्। यस्तु स्वानुभवसिद्धइति स्वगोष्ठीनिष्ठस्समयः सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः।**

## श्रुतप्रकाशिका

तत्र निर्विशेषचिन्मात्रपारमार्थ्यस्य परेण प्रथमप्रतिज्ञातस्य सामान्येन सकलप्रमाणबहिष्कृतत्वरूपं दूषणं प्रतिजानीते। **निर्विशेषइति**। अर्थात्प्रमाणस्वभावश्च स्वपक्षानुगुणो निरूपितो भवति। खपुष्पमपि स्वानुभवसिद्धमिति वक्तुं शक्यमिति तद्व्यावृत्त्यर्थमिदंशब्दः परसम्प्रतिपत्तिपदं प्रमाणं न किंचिदपीतिभावः। * यद्वा न काचिदपि प्रमाणव्यक्तिर्निर्विशेषगोचरेत्येकवचनाभिप्रायः। कुतइत्यत्राह। **सविशेषेति**। ननु विशेषाहि निर्विशेषाः तत्कथं? निर्विशेषवस्तुनोऽप्रामाणिकत्वम् उच्येत—धर्मेण धर्मी सविशेषः। धर्मिणाच धर्मस्सविशेषः कस्यचिद्धर्मभूतं धर्मिवा यन्नभवति तत्प्रमाणशून्यमिति ग्रन्थार्थः विशेषो व्यावर्तकः। धर्मीच स्वगतधर्मस्य आश्रयान्तरगतधर्माद्व्यवच्छेदक इति विशेषशब्दवाच्यः। किंच विशेषो निर्विशेषइति शब्दौ किं पर्यायौ नवा आद्येसहप्रयोगानुपपत्तिः द्वितीयेतु न निर्विशेषत्वम्। बोध्यभेदमन्तरेणापर्यायत्वायोगात्॥

**ननु** कथं सर्वप्रमाणनां सविशेषविषयत्वम्। नहि गन्धादिग्राहिप्रमाणं गन्धादिकं साश्रयमावेदयति। नैवम्... आश्रयएव विशेषइति नियमाभावात्। संविदोऽपि सर्वविशेषणतया सर्वार्थवैशिष्ट्यंह्युपपद्यते। * अयं गन्धोऽनुभूयत इति कालादि विशेषावच्छिन्नतयैव गन्धादिप्रतीतेश्च सविशेषविषयत्वोपपत्तिः। तथा प्रतीतिश्च वक्ष्यते। तर्हि नवयं प्रमाणान्तरेण निर्विशेषसिद्धिमभ्युपगच्छामः। स्वानुभवसिद्धंहि तदित्यतआह। **यस्त्विति**। तुशब्देन समयं विशिंषन् समय

## गूढार्थसंग्रहः

अद्वैतसिद्धौ निर्विशेषे किं प्रमाणमिति शङ्कायाम् 'स्फूर्त्यर्थं वा अज्ञाननिवृत्त्यर्थं वा प्रमाणप्रश्नः? आद्ये स्वप्रकाशतया प्रमाणवैयर्थ्यात्। द्वितीये उपनिषद एव प्रमाणत्वात्।' (निर्गुणत्वे प्रमाणोपपत्तौ) इत्युक्तम्। 'स्फूर्तिश्चासत्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपा अनादिः। पूर्णानन्दांशे उक्ताज्ञाननिवृत्तेः तदाकारवृत्त्यधीनत्वेन तदंश एव स्फुरणंसादि, नतु चिदंशे। वृत्तिं विनाऽपि चिदस्तीति व्यवहारात्' इतिच लघुचान्द्रिकायाम् (दृश्यत्वहेतूपपत्तौ)। जन्माद्यधिकरणभाष्ये च (शं) 'न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम्। किंतु श्रुत्यादयोऽनुभवादयश्च यथासम्भवमिह प्रमाणम्। अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य' इत्युक्तम् ॥ अत्र भामती— 'अनुभवोऽन्तःकरणवृत्तिभेदः ब्रह्मसाक्षारः। तस्याविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफलमिति। अनुभवावसानत्वात्। ब्रह्मानुभवः ब्रह्मसाक्षात्कारः। परमपुरुषार्थः। निर्मृष्टनिखिलदुःखपरमानन्दरूपत्वात्' इति। वाचस्पतिमते शब्दादात्मसाक्षाकारानभ्युपगमेन अयं साक्षात्कारः मानसप्रत्यक्षरूपः। विवरणकारमते शब्दजन्यसाक्षात्काराभ्युपगमेन तत्तात्पर्येणोपनिषदां प्रमाणत्वमद्वैतसिद्धावुक्तम्। एवंच उपनिषद एव मानत्वादित्युक्तिरपि जन्माद्याधिकरणशङ्करभाष्योक्तानुभवपदार्थविवरणरूपैव। तमिममर्थमभिप्रेत्याह— **यस्तु स्वानुभवसिद्ध इति**।

**स्वगोष्ठीनिष्ठइति**। स्वप्रकाशात्मकप्रत्यक्षस्य उक्तानुभवस्यच धर्मसंसर्गाविषयकस्य केनापि दार्शनिकेनानभ्युपगमात् इत्थमुक्तिः॥ **सोऽप्यात्मसाक्षिकसविशेषानुभवादिति**। स्वप्रकाशात्मकं ज्ञानं निर्विशेषरूपमिति सर्वदा चिदस्तीति व्यवहारेण खलु निर्णेयम्। अयंच व्यवहारः केन दार्शनिकेनाभ्युपगम्यते? नकेनापि। सुषुप्तिभिन्नकालएव व्यवहारः व्यवहारकाले अहमर्थः परेषामपि सम्मतएवेति अहमर्थमनन्तर्भाव्यव्यवहारःकथम्? सुषुप्तिभिन्नकाले चिद्विषयकवृत्तेरभा-

## गूढार्थसंग्रहः

वेऽपि इतरार्थविषयकवृत्तिविरहोपि न कस्यचित्सम्मतः । इतरार्थविषयकवृत्तिविरहकाले व्यवहारस्यैव कस्याप्यसम्मत- त्वाच्च । सुषुप्तिभिन्नकाले अहमर्थमन्तर्भाव्यैव व्यवहारसामान्यस्य अवश्याभ्युपेयत्वात् । अयंचाहमर्थान्तर्भावेन व्यवहारः स्वप्रकाशपक्षेऽन्तकरणवृत्तिपक्षेच प्रसज्यते । यद्यपि एतेन प्रमितिप्रमात्रोर्महावाक्यार्थबोधे भानमपास्तमिति बिन्दुटीकायाम् एतेन तात्पर्यानुरोधतः महावाक्यार्थजन्यज्ञानस्य शुद्धं ब्रह्मैव विषयः नान्यदिति स्वीकारेण । भानम्—प्रभाकरसम्मतं विषयत्वम् मणिकारोक्तप्राभाकरनव्यमतेहि सर्वज्ञानेषु स्वं स्वाश्रयश्च विषयइति स्वीक्रियते । प्राचीनप्राभाकरमतेतु प्रमाया विषयत्वं न प्रमितिप्रमात्रोः स्वीक्रियते । प्रमायास्तादात्म्यसमवायाभ्यामेव तयोर्व्यवहारसम्भवात् इत्युक्तम् । तथाऽपि प्रभाकरशिष्येण शालिकानाथेन 'साक्षात्प्रतीतिः प्रत्यक्षं मेयमातृप्रमासु सा । मेयेष्विन्द्रिययोगोत्था द्रव्यजातिगुणेषु सा ॥ सर्वविज्ञानहेतूत्था मितौ मातरिच प्रमा । साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता ॥ यावती काचित् ग्रहणस्मरणरूपा प्रतीतिः तत्र साक्षादात्मा प्रतिभाति । नह्यात्मन्यनवभासमाने विषया भासन्ते । मेये मातरिच व्यतिरिक्ता प्रतीतिः साक्षा- त्कारवतीमितौ त्वव्यतिरिक्ता । इदमहं स्मरामि गृह्णामि इति त्रितयमेवावभासते । मेयानां मातुश्च स्वतःप्रकाशो नोपप- द्यतइति युक्ता तयोःपरापेक्षा । मितौच काचिदनुपपत्तिर्नास्तीति स्वयम्प्रकाशैव मितिः । इति प्रकरणपञ्चिकायां प्रमाण- पारायणे उक्तम् । एवंच प्रभाकरशिष्येणेत्थमुक्त्या इदं प्राचीनप्राभाकरमतमेव नतु नव्यप्राभाकरमतमिति बोध्यम् ॥

'असंप्रज्ञातसमाधिः श्रुतिस्मृतिसिद्धत्वाच्च' इत्यनन्तरासिद्धान्तबिन्दुटीकायाम् 'ननु 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिश्रुत्याद्यालोचनेन शुद्धब्रह्मान्यो महावाक्यजन्यज्ञानीविषयो नेति निर्णीयते । तथाऽपि प्रमितिप्रमात्रोर्विषयत्वमेव । तदन्यासाधारणविषयस्यैव तथा निर्णयात् । भवत्सिद्धान्ते हि प्रमितिप्रमात्रोर्महावाक्यार्थबोधकाले साक्षिणा भाने बाधका भावः । तथाच प्राभाकरमते नित्यसाक्ष्यसम्भवात् सर्वज्ञानानां मितिमातृविषयकत्वं युक्तमेव । सुषुप्त्यन्यकाले हि सदा मितिमातृमेयरूपा त्रिपुटी मतद्वयेऽपि भासते । तत्राह– असंप्रज्ञातेति । सर्ववृत्तिशून्यनिरुद्धमनोरूपेत्यर्थः' इत्यारभ्य स- र्वथा प्रमात्रादिभानशून्यस्य असंप्रज्ञातसमाधेरावश्यकत्वात् । सुषुप्तिभिन्नसर्वकाले प्रमात्रादिभानमिति स्वीकारासम्भवाद्भिन्न- विषयकानुमित्यादिसामग्रीरूपप्रतिबन्धककालीनघटादिमात्रप्रत्यक्षे व्यभिचारेण सुषुप्तिसमाधिभिन्नसर्वकाले प्रमादिभानमि- त्यस्याप्यसम्भवात् प्रमात्राद्यविषयके महावाक्यार्थबोधे बाधकाभाव इति भावः' इत्युक्तम् । तथाऽपि योगसूत्रव्याख्यातृ- मतानुरोधेन असम्प्रज्ञातसमाधिकाले न वृत्तिः अपितु संस्कार एवेति गीताविवरणे मधुसूदनसरस्वतीभिरुक्तम् । एवंचास- म्प्रज्ञातसमाधिदृष्टान्तेन निर्धर्मकनिस्संसर्गकनिर्विकल्पकमाहावाक्यार्थबोधः कथं साध्यते ? असम्प्रज्ञातसमाधेः वृत्तिरूप त्वाभावात् । असम्प्रज्ञातसमाधिदशा जीवन्मुक्त्यवस्था संस्कारस्यापि नाशे विदेहकैवल्यमिति योगसूत्रव्याख्यातृप्रक्रिया । असम्प्रज्ञातसमाधेःवृत्तिरूपत्वाभावः नसूत्रकृत्सम्मतः । 'योगश्चित्तवृत्तिनिरोधः' 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति सूत्रद्वयपर्यालोचनया तथा प्रतीतेः । प्रथमसूत्रभाष्ये 'सर्वशब्दग्रहणात्सम्प्रज्ञातोऽपि योगइत्याख्यायते' इत्युक्त्या सम्प्र- ज्ञातासम्प्रज्ञातद्वयं प्रथमसूत्रे विवक्षितमिति स्फुटं प्रतीयते ॥

एवंच 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति सूत्रस्य सम्प्रज्ञातविषयकत्वं कथं ? विनिवार्यते । असम्प्रज्ञातमात्रविषयकत्वं भाष्यादिसम्मतं सूत्रकाराभिप्रेतं कथं भवति ? अतः 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति सूत्रं योगद्वयविषयमे- षितव्यम् । द्रष्टुः स्वरूपं स्वासाधारणधर्मविशिष्टधर्मि । नतु निर्धर्मवस्तु द्रष्टुरित्येतद्विरोधात् । तदेवार्थमात्रनिर्भासं स्वरू- पशून्यमिव समाधिः' इत्यत्र अर्थमात्रनिर्भासमित्यनेन नधर्मस्य व्यवच्छेदः । 'तस्यैव कल्पनाहीनं स्वरूपग्रहणंहि यत् ।' (वि.पु.६.अं) इत्यत्र स्वरूपग्रहणमित्यत्राप्येवमेव । स्वरूपशब्दस्यात्रापि स्वासाधारणधर्मविशिष्टधर्मिबोधकतया धर्मव्यव-

### श्रीभाष्यम्

**इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभावानाम्। सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभासेन निर्विशेषइति निष्कृष्यमाणः**

### श्रुतप्रकाशिका

वैशिष्ट्यमूलं स्वानुभवलक्षणप्रमाणवैशिष्ट्यमभिप्रैति। स्वगोष्ठीनिष्ठइति परवाद्यसम्मतत्वं दर्शयति। आत्मसाक्षिकानुभवस्य सविशेषत्वं दर्शयति। **इदमहमिति**॥

**विशिष्टविषयत्वादिति**। विशिष्टो विषयः स्वयमनुभवएव *शिलापुत्रकस्य शरीरमितिवत् अयं निर्देशः। अन्यथा स्वानुभवनिर्विशेषत्वनिरासे घटादिसविशेषत्वसाधनस्यानुपयोगात्। अनुभूयमानोऽप्यनुभव इत्युपरितनग्रन्थस्याप्येवमेवार्थः स्वानुभवसिद्धमित्यनेनैकार्थ्यात्। *नचानुभवशब्दोऽनुव्यवसायपरः नह्यनुव्यवसायरूपं प्रत्यक्षमिष्टम्। *अतीतविषयतया प्रत्यक्षत्वानुपपत्तेः। परज्ञानं *प्रमुषितसंस्कारं स्वज्ञानञ्चानुमेयम्। *अन्यत्तुस्मृतिविषयः नच स्मृतिविषयत्वमिह विवक्षितम्। अनुभवशब्दस्यातदर्थत्वात्। अतोऽनुभूयमानत्वम् अवभासमानत्वम्। इदमहंशब्दभ्यां सकर्मकर्तृकएवानुभवइत्युक्तम्। अदर्शमित्यनेन अपरोक्षत्वविशेषान्वयोऽभिप्रेतः। अतीतत्वं त्वविवक्षितं तदा स्वसिद्धत्वायोगात्। **केनचिद्विशेषेणेति**। उक्तेष्वन्यतमविशेषणमन्ततोगत्वाऽप्यवर्जनीयमिति भावः। यद्वा—अदर्शमितीत्यत्रेतिशब्दः प्रकारवचनः प्रकृतसजातीयरूपं विशेषं यावत्सम्भवं गृह्णाति। तेन परोक्षत्ववर्तमानत्वादिकं केनचिदिति विवक्षितंस्यात्। *परोक्षत्वं विषयद्वारा॥

**ननु** नहिवयमिदमहमदर्शमिति प्रतीतिमपलपामः। सातु तर्कव्यवस्थापितविषया निर्विशेषे प्रमाणमित्यत्राह। **सविशेषोपीति**। स्वव्याघातस्य दर्शयिष्यमाणत्वाद्युक्त्याभासेनेत्युक्तम्। **निर्विशेषइति निष्कृष्यमाणइति**। यदा निर्वि-

### गूढार्थसंग्रहः

च्छेदासम्भवात्। अर्थमात्रनिर्भासमित्यत्र मात्रपदव्यवच्छेद्यार्थः नधर्मः, किंतु कल्पनैवेति 'कल्पनाहीनमिति' पराशरेणैव दर्शितम्॥ 'समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्। न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते॥' (६-३४) इति मैत्रायणीयश्रुत्या असम्प्रज्ञातसमाधिकाले सुखं भासते। इत्थं च सुखत्वेनैव तद्भासत इत्यसम्प्रज्ञातसमाधेरप्यानन्दत्वरूपधर्मविषयकत्वं न प्रत्याख्यातुं शक्यम्॥

'द्रष्टा दृशिमात्रः' (२.२०) इति सूत्रे ननिर्धर्मकदृशिपरमिति हयशिरोरत्नभूषणदीधितौ, 'चितेरप्रतिसंक्रमायाः' (४.२२.) इति सूत्रं न प्रतिबिम्बपरम्। मैत्रायणीयोपनिषच्च असंप्रज्ञातसमाधेरपि वृत्तिरूपतामावेदयति' इत्यादिभावप्रकाशेच निरूपितम्। 'भिन्नविषयकानुमित्यादिसामग्र्याः प्रतिबन्धकत्वमात्मप्रमित्यन्यपटादिविषय एवेति घटादिमात्रप्रत्यक्षेच्छाजन्यतत्प्रत्यक्षेऽपि प्रमितिप्रमात्रोर्भाने न काचिदनुपपत्तिः। एवं सुषुप्त्यन्यसर्वकाले प्रमितिप्रमात्रोर्भानं न निवारयितुं शक्यम्। वृत्तिमन्तरा व्यवहारस्यैव असम्भवात्। वृत्तिदशायां साक्षिणा प्रमितिप्रमातृभानस्याप्यवर्जनीयत्वात्। 'तमेव विदित्वा' इत्यत्र एवकारः नबाधक इति पूर्वमेव निरूपितम्। अतश्च महावाक्यार्थबोधः जन्माद्यधिकरणभाष्यस्थानुभवशब्दाभिप्रेतः सविशेषविषय एवेति भगवता यदुक्तं तद्युक्तमेवेति बोध्यम्॥ **युक्त्याभासेनेति**। अनुवृत्तत्वेनानुभवस्यैव परमार्थतया व्यावृत्तत्वेन घटादिविषयाणामपारमार्थ्यात्। अनुभूतित्वेन निर्धर्मकत्वस्य पूर्वमेव स्थापितत्वाच्चेत्यर्थः॥

## श्रीभाष्यम्

**सत्ताऽतिरेकिभिस्स्वासाधारणैस्स्वभावविशेषैर्निष्कृष्टव्यइति निष्कर्षहेतुभूतैस्सत्ताऽतिरेकि-भिस्स्वासाधारणैस्स्वभावविशेषैस्सविशेषएवावतिष्ठते। अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तु-नोऽन्ये विशेषा निरस्यन्तइति न क्वचिन्निर्विशेषवस्तुसिद्धिः। धियोहि धीत्वं स्वप्रकाशताच**

## श्रुतप्रकाशिका

शेषइति निष्कृष्येत तदानींमिवंहि निष्कृष्टव्यइत्यर्थः कथं ? निष्कृष्टव्यइत्यत्राह। **सत्तातिरेकिभिस्स्वासाधारणैरिति।**
सत्तानतिरेकिचेत् * पक्षाविशिष्टो हेतुस्स्यात् तदयुक्तम्। पक्षव्यावर्तकोहि हेतुः किंच अन्यस्य द्रव्यान्तराद्व्यावर्तकधर्मस्यैव
स्वव्यावृत्तिरूपत्वसम्भवः। स्वरूपे प्रतिपन्ने स्वस्यान्यतादात्म्यभ्रमविरोधिनश्च स्वरूपमेव व्यावृत्तिः यथा शुक्तित्वादेः।
ब्रह्मस्तु वस्त्वन्तरस्यान्यस्माद्व्यावर्तकधर्मत्वाभावात्स्वरूपे भासमाने भ्रमसहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति वक्ष्यमाणशौ-
क्ल्यादिदृष्टान्तवैषम्याभिप्रायेण सत्ताऽतिरेकिभिरित्युक्तम्। साधारणश्चेद्धेतुरनैकान्तिको भ्रमाविरोधीचस्यात् यथा शौक्ल्यादिः
असाधारणं शुक्तित्वमेवहि रजतभ्रमविरोधि अतस्स्वाधारणैरित्युक्तम्। स्वशब्देन * व्यधिकरणासिद्धिपरिहारः स्वभाववि-
शेषैः धर्मविशेषैः ॥

एवं सामान्येनार्थशरीरमुक्तम्। अतस्त्वयाऽपि निरासकहेतुतयाभिमतानां सत्तातिरेकित्वस्वासाधारणत्वे अवर्जनीये
इत्यभिप्रायेण सत्तातिरेकिभिस्स्वासाधारणैरिति पुनः कथनम्। येये हेतवः सविशेषघटादिवस्तुव्यावृत्तास्सामान्येन सकल
विशेषाभावसाधकाः तेऽर्थसामर्थ्यात्सामान्यान्तर्गतं स्वात्मानमपि निवर्तयेयुरेवेत्यत्राह। **अतःकैश्चिदिति।** अतः तेषां
सत्ताऽतिरेकित्वस्वासाधारणत्वयोरवश्याभ्युपगन्तव्यत्वादित्यर्थः। **कैश्चिदिति।** स्वासाधारणैःप्रामाणिकैरित्यर्थः। **विशिष्ट-स्यैवेति।** निर्विशेषत्वसाधकनिवृत्तौ निर्विशेषत्वासिद्धेस्तदनिवृत्तौ तैरेव सविशेषत्वप्रसङ्गाच्चेत्यभिप्रायः। **अन्यइति।**
निर्विशेषत्वसाधकाहेतवो येभ्यो घटादिभ्यो व्यावृत्ताः तद्गता इहाप्रामाणिकारूपादयो विशेषाअस्मिन्निरस्यन्ते। नतु सर्वे
विशेषाः अनग्निमद्व्यावृत्तोधूमः पक्षेह्यनग्निमत्वमेव निवर्तयति नत्वाकारान्तरमित्यर्थः। **नक्वचिदिति।** स्वानुभवे प्रत्यक्षादि
प्रामाणान्तरेष्वपीत्यर्थः स्वव्याघातप्रसङ्गेन सकलविशेषनिवृत्तेस्साधयितुमशक्यत्वात् न निर्विशेषवस्तुसिद्धिरित्युक्तं भवति ॥

एवं कर्मकर्तृव्युदासमभ्युपगम्य सविशेषत्वमुपपादितम्। अथ कर्मकर्तृनिरासएव दुश्शकइत्याह। **धियोहीति।**
धीत्वं विषयप्रकाशत्वम्। स्वप्रकाशता अनन्याधीप्रकाशत्वम्। एतदुभयं स्वप्रकाशवादे साधनतया साध्यतयाच परेण

## गूढार्थसंग्रहः

**सत्तातिरेकिभिरिति ॥** सद्रूपब्रह्मभिन्नैरित्यर्थः। निर्धर्मकत्वसाधकानुभूतित्वस्वप्रकाशत्वयोः न निर्धर्मकत्वसाधक-त्वमित्याह–**धियो हि धीत्वमित्यादिना।** विवरणे ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादित्युक्त्या स्वातिरिक्तार्थप्रकाशकत्वेन ज्ञानत्व-स्योपपादनीयतया धर्मसम्बन्धाभावे ज्ञानत्वं कथम्? स्वप्रकाशत्वमपि स्वातिरिक्तार्थप्रकाशकत्वेन साध्यते। तदपि तत्सं-म्बन्धविरहसाधकं नभवतीति भावः ॥

यद्यपि 'अर्थप्रकाशत्वमेव ज्ञानत्वं मुक्तावर्थाभावेऽपि तत्संसृष्टप्रकाशत्वस्य कदाचिदर्थसम्बन्धेनाप्यनपायात्' इति अद्वैतसिद्धावुक्तम्। तत्र लघुचान्द्रिका– 'यद्यप्युक्तजातिः विशिष्टचिन्निष्ठा ज्ञाधातुवाच्यतावच्छेदिका ; तथाऽपि ताद्विशिष्टा-भिन्नायाः ज्ञानपदलक्ष्यव्यक्तेः मुक्तौ सत्वेन ज्ञानस्वरूपमविनाशीत्याशयेनाह–अविनाशीति' इति। तथाऽपि वाच्यविशिष्ट-चितो मिथ्यात्वेन तदभेदः शुद्धचितो न सम्भवति। तादात्म्याङ्गीकारे तु घटादेरपि तादात्म्यस्य शुद्धचिति सद्भावेन

### श्रीभाष्यम्

**ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः। स्वापमदमूर्छासुच सविशेषएवानुभवइति स्वावसरे निपुणतरमुपपादयिष्यामः स्वाभ्युपगताश्च नित्यत्वादयोह्यनेके विशेषास्सन्त्येव**

### श्रुतप्रकाशिका

उपन्यस्तम्। **ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेरिति।** नियमेन स्वाश्रयं प्रतिविषयप्रकाशकतया भासमानत्वा * द्धीत्वस्वप्रकाशत्वे सिध्यतइत्यर्थः धीत्वं विषयत्वसाधनत्वं तथावभासमानत्वादिति न साध्याविशिष्टता। यद्युपलब्धिसिद्धं सकर्मकर्तृत्वं नाङ्गीकुरुषे ततः सकर्मकर्तृत्वहेतुकं स्वप्रकाशत्वमपि नसिध्येदितिभावः। * यद्वा—धीत्वं धीस्वरूपमात्रं हि शब्द उपलब्धेस्सर्वसम्प्रतिपत्तिं दर्शयति। ननु न कर्मकर्त्रवच्छिन्नं ज्ञानमात्मभूतम्। अन्यदेवतु स्वापाद्यवस्थानुभूतं निर्विशेषं साध्यतइत्यत्राह। **स्वापेति।** अनुभवः आत्मस्फुरणम्। नहि तदा धर्मभूतज्ञानस्फुरणम्। स्वावसरे अहमर्थस्यैवात्मत्वसमर्थने निपुणतरं परप्रयुक्तयुक्त्यैवेतिभावः। सुखमहमस्वाप्सं मामप्यहं नज्ञातवानित्यादिना परोक्तपरामर्शेनेति यावत्—यद्वा निपुणतरं विशदतरम्॥

**एतदुक्तं** भवति किं त्वया स्वानुभवाधीनं निर्विशेषत्वं कर्मकर्त्रवच्छिन्नस्य ज्ञानस्योच्यते—उताहमितिभासमानस्यात्मस्वरूपभूतज्ञानस्य उत तदुत्तीर्णस्यवा। आद्ये कर्मकर्त्रवच्छेदनियमादेव न निर्विशेषत्वम् द्वितीये प्रत्यक्त्वानुकूलत्वादि

### गूढार्थसङ्ग्रहः

तस्याप्यविनाशित्वं कथं वार्यते? ज्ञानत्वोपलक्षितचितः अविनाशित्वमित्यङ्गीकारे अविद्योपलक्षितचितोऽप्यविनाशित्वसम्भवेन ज्ञानस्यैव नित्यत्वेन व्यवहारः अविद्यावतः नित्यत्वेन व्यवहाराभावश्च श्रुतौ निर्बीज एव स्यात्। विवरणानुसारेण ज्ञानवाद्युपपत्तौ ज्ञानत्वस्यार्थप्रकाशरूपत्वम् आनन्दत्वस्य निरुपाधिकेष्टत्वरूपत्वं मुक्ताविच्छापायेऽपि इष्टत्वोपलक्षितस्वरूपत्वेन न दोषइति वदद्भिः मधुसूदनसरस्वतीभिः द्वितीयमिथ्यात्वविचारे स्वप्रकाशत्वादेः परप्रकाश्यत्वाभावादिरूपत्वमुक्तम् तत्र लघुचान्द्रिकायां 'ब्रह्मणः सर्वधर्माभावरूपतया न काप्यनुपपत्तिरित्येतद्विवरणे सर्वधर्माभावरूपतया स्वाधिष्ठानकसर्वधर्माभावत्वविशिष्टतादात्म्योपलक्षितस्वरूपत्वेन तथाचाध्यात्मिकतादात्म्यसम्बन्धेन ब्रह्मणः प्रतियोगित्वादिरूपमिथ्यात्वादिधर्मवत्वेऽपि विशेषणताविशेषसम्बन्धेन तद्विशिष्टात् भेदसत्वेन तत्समानाधिकरणो यो मिथ्यात्वात्यन्ताभावः तद्वत्तादात्म्योपलक्षितस्वरूपं उक्तभेदवत्तादात्म्योपलक्षितस्वरूपंवा सत्यत्वादि इतिभावः। इति निर्णयकरणेन ज्ञानत्वादिविशिष्टतादात्म्योपलक्षितस्वरूपमेव उक्ताभावस्य पर्यवसितोऽर्थः इति निष्कर्षः प्रतीयते॥

एवंच अनुभूतिर्निर्विशेषा अनुभूतित्वात् इत्यनुमाने निर्विशेषत्वं ब्रह्मस्वरूपं स्वरूपस्य प्राक्सिद्धत्वेऽपि निर्विशेषत्वेन रूपेण ज्ञानस्योद्देश्यत्वान्नानुमिति वैयर्थ्यमिति ब्रह्मनिर्गुणत्वोपपत्तौ मधुसूदनसरस्वत्युक्तिः कथं घटते? अत्र निर्विशेषत्वस्य विशेषसामान्याभावत्वाविशिष्टस्वरूपत्वेऽनुमितेः भ्रमरूपत्वमेव स्यात्। अर्थान्तरं च। विशेषसामान्याभावरूपत्वे विशेषसामान्याभावरूपविशेषाभावोऽपि तत्र विषय इति तत्प्रामाण्यव्याघातः। अप्रयोजकत्वं च। भिन्नत्वेऽभिन्नत्वे सम्बन्धत्वेच अतिप्रसङ्गानवस्थाभ्यां धर्मधर्मिभावानुपपत्तेरेव विपक्षबाधकत्वेन नाप्रयोजकत्वामितिचेत्? भिन्नत्वेऽपि अनुभवानुरोधेन क्वचिदेव सम्बन्धत्वं नान्यत्रेति वाचस्पतिनैवोक्तेः स्वपरनिर्वाहकत्वेन सम्बन्धानवस्थाया अप्यभावात् हेतोः साध्यस्यच सम्बन्धस्य कल्पितत्वेन कल्पितसम्बन्धमादाय तात्त्विकविषयासिद्धेश्चेति बोध्यम्॥ सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यानुभवाङ्गीकारेण निर्विशेषस्य अनुभवसामान्याविषयत्वं न घटत इत्याशङ्कायामाह— **स्वापमदमूर्छास्वित**॥

श्रीभाष्यम्

तेच न वस्तुमात्रमिति शक्योपपादनाः वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्। * स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात्। अतः प्रामाणिकविशेषैर्विशिष्टमेव

श्रुतप्रकाशिका

तृतीये शून्यवादेव निर्विशेषत्वं साध्यमिति मुखान्तरेण सविशेषत्वमाह। **स्वाभ्यु-**. भिस्सविशेषत्वमवर्जनीयमिति वक्ष्यते। ते वस्तुमात्रमितिह्युक्तमित्यत्राह। **तेचेति**। उप-पगताश्चेति। आदिशब्देन स्वप्रकाशत्वैकत्वानन्दत्वादयो विवक्षिताः ते वस्तुमात्रमितिह्युक्तमित्यत्राह। **तेचेति**। उपपादयति। **वस्त्विति**। बौद्धैः क्षणिकत्वमुक्तं अनेनतु नित्यत्वम्। वैशेषिकादिश्च जडत्वबहुत्वे अनेनतु स्वप्रकाशत्वैकत्वे स्वरूपंतु तैस्सर्वैरभ्युपेतम् अतो विप्रतिपत्तिविषयः सम्प्रतिपत्तिविषयश्चैक एवेति वक्तुमयुक्तमित्यर्थः विमत्यनन्तरभाविना तदुपपादनेनच स्वरूपातिरिक्ततां दर्शयति। **स्वाभिमतेति**। क्षणिकत्ववादिनं प्रति ब्रह्मनित्यत्वं साधयता त्वया स्वरूपमात्रातिरेकेण किंचित्साधितमस्तिवा नवा, अस्तिचेत्सधर्मत्वं नोचेत् सिद्धसाधनत्वं—स्वरूपमात्रस्याभिमतत्वात् संविन्नित्येति प्रतिज्ञावाक्यगतौ धर्मधर्मिशब्दौ किं पर्यायौ नवा—आद्येसाधनायासोनिष्फलः द्वितीयेस्वरूपातिरिक्तधर्माङ्गीकारइति भावः। स्वमतोपपादनान्नवस्तुमात्रमितिशक्योपपादना इत्यन्वयः॥

**पूर्वं** सविशेषत्वनिरासकहेतुभिः सविशेषत्वमुक्तम्। * अनन्तरं साध्यधर्मैः ततःकतिपयविशेषसाधकहेतुभिः। एते निरासकसाध्यसाधनधर्मा अपरमार्था इत्यत्राह। **अतइति**। अतःविशेषव्युदासकत्वेन साध्यत्वेन साधनत्वेनच केषांचिद्धर्माणां त्वयोक्तत्वात् परमार्थभूतैस्तैस्तैर्विशिष्टमित्यर्थः। प्रामाणिकैरित्यनेन कैश्चिदिति पूर्वोक्तस्यार्थस्यापि विशेषो दर्शितः। **विशिष्टमेवेति**। पूर्वोक्तसत्तातिरेकित्व स्वासाधारणत्वाभावे भ्रमोच्छेदो न स्यात् निरासकधर्मापारमार्थ्ये युक्ति

गूढार्थसंग्रहः

'कालपरिच्छेदाभावो नित्यत्वम्' इत्यादिना अद्वैतसिद्धौ द्वितीयमिथ्यात्वविचारे नित्यत्वादीनामभावरूपत्वेनाधिकरणस्वरूपत्वोक्त्या न तेन सविशेषत्वमिति शङ्कायामाह **तेच नवस्तुमात्रमिति**॥ 'उदयानन्तरास्थायि स्वरूपं यच्च वस्तुनः। तदुच्यते क्षणस्सोऽस्ति यस्य तत् क्षणिकं मतम्॥ (३८८) असत्यप्यर्थभेदेच सोऽस्त्यस्येति न बाध्यते। इच्छारचितसङ्केतमात्रभावि हि वाचकम्॥ (३८९) उदयानन्तरास्थायि वस्त्वेवंतु विवक्षितम्। तत्र सप्रत्ययश्शब्दोऽप्रत्ययो वा प्रयुज्यताम्॥' (३९०) इति तत्वसङ्ग्रहे क्षणिकत्वस्वरूपं वदता शान्तरक्षितेन 'नित्यज्ञानविवर्तोऽयं क्षितितेजोऽनिलात्मकः। आत्मा तदात्मकश्चेति सङ्गिरन्ते परे पुनः॥ (३२८) तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः' इति उपक्रम्य 'एकज्ञानात्मके पुंसि बन्धमोक्षौ ततः कथम्' इत्युक्तम्। एवंच बौद्धोक्तक्षणिकत्वमपि वस्तुस्वरूपत्वमेव। नित्यत्वाद्यपि तथैवेति यद्यभ्युपगम्यते तदा तन्मतादविशेष एव स्यात्। बौद्धमते शब्दस्य वस्तुस्वभावानुबन्धित्वानङ्गीकारेऽपि शब्दप्रामाण्यवादिभिः परैः कल्पितेन धर्मेण धर्मवत्त्वव्यवहारः अवश्याभ्युपेय इति कालपरिच्छेदाभावधर्मेणापि सविशेषत्वमपरित्याज्यम्। सत्यत्वादीनां सर्वेषामभावरूपत्वे सत्यज्ञानादिपदप्रवृत्तिनिमित्तधर्मभेदो नस्यात्। कालपरिच्छेदाभावत्वविशिष्टतादात्म्योपलक्षितस्वरूपत्वं नित्यत्वादेः लघुचन्द्रिकायामुक्तं यत् तदपि कदाचित्तादात्म्यप्रतीत्यैव निर्वाह्यमिति कदाचित्तद्धर्मत्वमन्तरा न नित्यत्वादिधर्मवत्त्वमुपपादयितुं शक्यमिति भावः॥

**विधाभेदविवाददर्शनादिति**। उदयानन्तरास्थायिनाशप्रतियोगित्वाभावविशिष्टतादात्म्योपलक्षितमिति वाक्यद्वयेन विधाभेदः उभाभ्यां सम्यक्प्रदर्शितो भवतीति भावः॥ इह पुनः 'तत्तु समन्वयात्' इति विशेषणविशेष्यात्मकमपि

## श्रीभाष्यम्

**वस्त्वतिवक्तव्यम्। शब्दस्यतु विशेषेण सविशेषएव वस्तुन्यभिधानसामर्थ्यं पदवाक्य रूपेण प्रवृत्तेः प्रकृतिप्रत्यययोगेनहि पदत्वम्। प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थ**

## श्रुतप्रकाशिका

त्वापारमार्थ्ये रजतसत्यत्ववत् निरसनीयाकारसत्यत्वं प्रसजेत् साध्यधर्मापारमार्थ्येच नित्यत्वादिविपरीताकारसत्यत्वप्रसङ्गः साधनापारमार्थ्येच साध्यनित्यत्वादिविपरीताकारसत्यत्वमापद्येतेति भावः। इत्थं स्वानुभवप्रसङ्गात्तत्रापि सविशेषत्वमुपपादितम् ॥

**अथ** प्रथमप्रतिज्ञातं सर्वप्रमाणानां सविशेषविषयत्वं वक्तुमारभते। तत्र परेण प्रत्यक्षात् बलीयस्त्वेनोक्तत्वात् सविशेषबोधकत्वातिशयस्य स्वाभिमतत्वाच प्रथमं शब्दस्य सविशेषविषयत्वमाह। **शब्दस्यत्विति**। तुशब्दः परोक्त बलीयस्त्वसूचकः। विशेषेणेतिपदेन सविशेषवस्तुबोधकत्वातिशयउच्यते। यद्वा—सर्वप्रमाणानां सविशेषगोचरत्वे प्रतिज्ञाते चिद्वस्तुन्यन्तरङ्गतया स्वप्रकाशवृत्तिं निरूप्य तदनन्तरमात्मनि प्रत्यक्षादिभ्यो *ऽन्तरङ्गत्वेन उभयवादिसम्मतस्य शास्त्रस्य सविशेषविषयत्वमाह। **शब्दस्यत्विति**। सविशेषगोचरत्वे प्रमाणान्तरेभ्योऽतिशयो विशेषेणेत्युच्यते तुशब्देन तत्तदौपयिकं शब्दस्य सविशेषगोचरप्रत्यक्षादिपूर्वकत्वं विशेषउच्यते प्रतिज्ञातस्य हेतुमाह। **पदवाक्यरूपेणेति**। ततः किं सविशेष विषयत्वस्येतिशङ्कायां पदरूपेण प्रवृत्तिं विवृणोति। **प्रकृतीति**। ततःकिमित्यत्राह। **प्रकृतिप्रत्यययोरिति**। **पदस्यैवेति**।

## गूढार्थसंग्रहः

गौणमपि सामानाधिकरण्यं विहाय एकस्मिन् निरंशे 'तत्त्वमसीति समन्वयो मुख्यः प्रदर्शितः। तथाच भगवान् पाणिनिः अव्यतिरिक्तेऽर्थे प्रातिपदिकार्थमात्रे प्रथमां स्मरति' इति (१२७.पुटे) उदाहृतपञ्चपादिकासङ्क्षेपशारीरकोक्तदिशा शब्दात् निर्विशेषबोधः न कस्यचित्सम्मतःइत्यभिप्रेत्याह– **शब्दस्य तु इत्यादिना**। तुशब्दः षड्विधतात्पर्यलिङ्गोपेतत्वेन इतरवैलक्षण्यसूचकः॥ प्रत्यक्षस्य निर्विकल्पकस्य धर्मानवगाहिनः वैभाषिकादिभिः स्वीकारेऽपि तैः शब्दप्रामाण्यानभ्युपगमेन शब्दप्रामाण्यवादिभिस्सर्वैरपि सविशेषबोधजननशक्तत्वमेव शब्दस्योच्यते। प्रत्यक्षे इन्द्रियसन्निकर्षभेदः धर्मधर्मिबोधे शब्दस्यतु नतथेति तात्पर्येण '**विशेषेण**' इत्युक्तम्। तदेवोपपादयति– **पदवाक्यरूपेण इत्यादिना**।

**प्रकृतिप्रत्यययोगेन हि पदत्वमिति**। केवलप्रकृतेः केवलप्रत्ययस्यच प्रयोगविरहेण 'सुप्तिङन्तं पदम्' (पा.सू १.४.१४) 'ते विभक्त्यन्ताः पदम्' (गौ.सू.२.२.६०) इत्याद्युक्तदिशा शाब्दबोधजननसामर्थ्ये नकेवलप्रकृतेः नापि केवल प्रत्ययस्येति भावः॥ **प्रकृतिप्रत्यययोः अर्थभेदेनेति**। अत्र प्रकृतेः प्रत्ययस्य उभयोश्च अर्थभेदो विवक्षितः। 'तत्त्वमसि' इत्यत्र तच्छब्दस्य धर्मधर्मिबोधकत्वस्य उत्तरत्र वक्ष्यमाणत्वात्। प्रकृतेः धर्मधर्म्युभयबोधकत्वेन अर्थभेदोक्त्या 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति पाणिनिसूत्रे प्रवृत्तिनिमित्तं तदाश्रयश्चेत्युभयं प्रातिपदिकार्थ इति पाणिनेराभिमतमिति बोधितम्। शेखरादौ नागेशेनाप्ययमर्थः उक्तः। 'प्रातिपदिकग्रहणं किमर्थम्? उच्चैः नीचैः इत्यत्रापि यथा स्यात्' इति महाभाष्यम्। असति प्रातिपदिकग्रहणे अव्ययात् प्रथमा न स्यात्। 'बहुषु बहुवचनम्' इत्यादिना अस्य एकवाक्यतायां संख्यायुक्तएव प्रातिपदिकार्थः स्यात्। प्रातिपदिकग्रहणात् यत्नात् अव्ययार्थे सङ्ख्यारहितेऽपि प्रथमा सिध्यति' इति कैयटः। अव्ययानामपि प्रवृत्तिनिमित्ततदाश्रयबोधकत्वं सम्मतमेव॥

## गूढार्थसंग्रहः

यद्यपि मधुसूदनसरस्वतीभिः सङ्क्षेपशारीरकविवरणे (२१६) 'पाणिनिः खलु भगवान् प्रातिपदिकार्थमात्रे प्रथमा-
विभक्तिं स्मरन् अपर्यायियोः वृक्षादिप्रातिपदिकप्रथमाविभक्त्योः एकार्थत्वं दर्शयति । तदेवच वाक्यस्याखण्डार्थत्वं इति
तत्सम्मतमितिभावः इति । अद्वैतसिद्धौच सत्यादिवाक्यार्थो ब्रह्मप्रातिपदिकार्थमात्रं तन्मात्रप्रश्नोत्तरत्वात् । (न्यायदीपा-
वळी) इत्यनुमानविचारे ब्रह्मप्रातिपदिकार्थविशेष्यांशमात्रपरत्वस्य साध्यत्वात् तथाच प्रातिपदिकार्थस्य विशिष्टत्वेऽपि अख
ण्डार्थत्वासिद्धिः प्रतिपदिकार्थेत्यत्र लिङ्गादेरपि प्रातिपदिकार्थत्वेन तद्ग्रहणवैयर्थ्यमाशङ्क्य प्रातिपदिकार्थपदस्य लिङ्गाद्यवि-
शिष्टस्वरूपमात्रपरतया समाधानस्य अभियुक्तैरुक्तेश्च इत्युक्तम् ॥

अत्र लघुचन्द्रिका– 'तथा चासंसृष्टं नाम्ना लक्षणयाचोपस्थापितं प्रथमयाऽपि निरूढलक्षणया उपस्थाप्यत इति
सोऽयमित्यादौ संसर्गाविषयकशाब्दबोधः पाणिन्यादिसम्मतः । तदुक्तम् सङ्क्षेपशारीरके– 'भेदो भिन्नश्च' (२१५) 'एवं
तावत्' (२१६) इति १२३. पुटे उदाहृतम् । भेदत्वावच्छिन्ने तस्य सम्बन्धाभावात् प्राभाकरमते स्वप्रकाशत्वस्यैव संवि
त्स्वरूपत्वात् तदवच्छिन्नादौ तत्सम्बन्धादौ अखण्डार्थत्वम् । अभियुक्तैरिति । संसृष्टस्य प्रकृत्या अभिहितत्वेन प्रथमाऽ
भिहितत्वं व्यर्थमिति विवेचकैरित्यर्थः' इति । एवं (अखण्डार्थलक्षणोपपत्तौ) 'भिन्नरूपेण स्वार्थस्मृतिद्वारा एकमात्रप्रातिप-
दिकार्थमात्रानुभावकतावच्छेदकाकाङ्क्षादिमत्वार्थकं नच घटः कलशः इत्यादेः अनाकाङ्क्षत्वेन अन्त्यदलेनैव वारणात् आद्य
दलं व्यर्थमिति वाच्यम्, उद्देश्यविधेययोरैक्येन सप्रकारकबोधं प्रत्यनाकाङ्क्षत्वेऽपि एकोद्वावित्यादावित सम्भेदे नान्यतरवै-
यर्थ्यमिति न्यायेन प्रातिपदिकार्थमात्रानुभावकत्वे बाधकाभावात् । अतएव 'प्रातिदिकार्थानतिरिक्तविषयाणि प्राह भगवान्
प्रथमाशब्दितविभक्त्या पाणिनिरतः सकलतर्कसमयज्ञः वष्टिवचसोरनतिरिक्तविषयत्व' मित्यनेन उच्चैरित्यादौ नामप्रथमावि-
भक्त्योः एकार्थानुभावकत्वमुक्तम् सङ्क्षेपशारीरके । नचैवं घटः कलशः इत्यादौ लक्ष्यत्वमेव स्वीक्रियतामिति वाच्यम् ।
तथाच घटकलशपदार्थयोः भेदबुद्धेराहार्यत्वेन विरोधित्वस्याप्रसिध्या न तत्पदयोरखण्डार्थत्वम् । अखण्डविषयकस्यापि
तादृशानुभवस्य तादृशभेदधीविरोधित्वं भिन्नरूपविशिष्टयोः तादात्म्यधीद्वारकत्वान्नानुपपन्नम् इतिच । तथाऽपि उच्चैरित्यादौ
धर्मविवक्षा नास्तीति कथं निश्चीयते । संसृष्टस्य प्रकृत्यभिहितत्वेन प्रथमाऽभिहितत्वं व्यर्थं इति तन्निर्णयः इतिचेत् प्रथमा
प्रातिपदिकार्थे कथं सिद्धा । प्रातिपदिकेन संसृष्टस्यैवाभिहिततया तदर्थे एवप्रथमायाः प्राणिनि सम्मतत्वस्य स्फुटत्वात् ।
असंसृष्टं नाम्ना लक्षणया उपस्थापितं प्रथमयाऽपि निरूढलक्षणया उपस्थाप्यते इति कल्पनाच नपाणिनेर्विवक्षिता । संभेदे
नान्यतरवैयर्थ्यमिति न्यायः एकः द्वौ इत्यादौ यः प्रदर्शितः तत्रापि प्रातिपदिकस्य एकत्वविशिष्टमेवार्थः । उक्तार्थाना-
मप्रयोगइति न्यायेन तत्र प्रथमायाः अप्राप्तौ वचनग्रहणमिति महाभाष्ये उक्तम् । प्रथमायाः अभावे प्रकृतिमात्रस्य प्रयो-
गासम्भवात् प्रयोगनिर्वाहार्थमेव प्रथमा अभ्युपगता । द्वाभ्यां चक्षुर्भ्यां यथा एकस्य घटस्य प्रत्यक्षेभानं तद्वत् एकार्थ
भासकसामग्रीद्वयसंवलने नैकतरवैयर्थ्यमापादयितुं शक्यमिति तदाशयः ॥

मञ्जूषायांच नागेशेन यद्वा प्रवृत्तिनिमित्तसंख्या अत्र विभक्तिवाच्या नच तद्द्वयबोधाननुभवः एकत्वस्य प्रचितस्य
ततो बोधात् सजातीयसंवलनेहि प्रचयः द्वित्वाद्युपजननयोग्यत्वंहि प्रचितत्वं प्रातिपदिकस्यतु प्रचिताप्रचितसाधारणं तदर्थः
तत्प्रतीतिश्च 'एकपुत्र' इत्यादौ एतन्मूलकमेव सम्भेदे नान्यतरवैयर्थ्यमिति पठ्यते इत्युक्तम् । 'यद्वा न केवलेति निय-
मेन स्वाभाविकं सहाभिधानम् । अत्र लुग्विधानारम्भेण केवलेनाप्यभिधानं सङ्गच्छते । एवं च प्रकृत्यर्थानुवादिका
विभक्तिः' इत्युक्तम् । अत्र यद्वेति पक्षे प्रातिपदिकार्थस्य एकदैव भानमिति स्फुटम् । मञ्जूषायां बहूनां पक्षाणामभिधाने
ऽपि अखण्डार्थता काश्मिन्नपि पक्षे नोक्ता । जडत्वहेतूपपत्तौ ब्रह्मास्तीत्यत्र लकारः साधुत्वार्थ इति सिद्धिव्याख्याने लघु_

## गूढार्थसंग्रहः

चन्द्रिकायां यथा मणिकारादिमते चैत्रो जानातीत्यादौ ज्ञानकर्तृत्वादेरननुभवात् ज्ञानाश्रयत्वादिलक्षणायां गौरवाच्च अवच्छेदकतासम्बन्धेन ज्ञानप्रकारकधीस्वीकारात् आख्यातं नकर्तृत्वमाह किंतु साधुत्वमात्रार्थम् । तथा प्रकृतेब्रह्मसत्तायाः अनादित्वेन तत्कर्तृत्वबोधासम्भवात् घटोऽस्तीत्यादावपि क्रियात्वाभावेन कारकान्वयबोधासम्भवात् आश्रयत्वस्यैव आख्यातेन बोधाच्च ब्रह्मास्तिपदाभ्यामखण्डबोधस्वीकारेण आख्यातं साधुत्वमात्रार्थम् । कल्पितभेदेन ब्रह्मणः स्वात्मकसत्ताश्रयत्वसम्भवेऽपि निर्धर्मितावच्छेदकशाब्दबुध्द्यसम्भवेन आश्रयत्वस्याख्यातेनाबोधात् । ब्रह्मपदस्य उत्कृष्टार्थकत्वेतु तत्राश्रयत्वप्रकारकधीः इष्टैव । इत्युपक्रम्य एको द्वावित्यादौ सर्वमतेष्विव प्रत्ययः साधुत्वार्थः इत्युक्त्या अत्र एको द्वावित्यादौ प्रातिपदिकार्थमात्रानुभावकत्वोक्तिःकथम् ॥

व्युत्पत्तिवादे तु गदाधरेण एकः द्वौ इत्यादौ प्रकृतिप्रत्ययाभ्यामेकदैव एकत्वाद्यर्थधीः । प्रत्ययस्य साधुत्वार्थकत्वं वा इत्येवोक्तम् । अत्र प्रथमपक्षे 'सम्भेदे नान्यतरवैयर्थ्यम्' इति न्यायेन द्वाभ्यां चक्षुर्भ्यामित्यादिप्रागुक्तदिशा एकदैव एकार्थबोधस्य विवक्षितत्वेन एतन्नयायमवलम्ब्य केनापि दार्शनिकेन अखण्डार्थबोधस्यानभ्युपगमात् । 'प्रातिपदिकार्थमात्र' इत्यत्र पाणिनेः नाखण्डार्थबोधः विवक्षितः । अतएव भाट्टरहस्ये प्रातिपदिकं तत्र प्रथमाऽर्थविशेषतात्पर्यग्राहकमेव इत्युक्तिः सङ्गच्छते । प्रकृतिप्रत्ययाभ्यामर्थस्य द्वेधोपस्थितिः न खण्डदेवेनादृता, नापि गदाधरेण । 'अस्तिर्भवन्तीपरः' इति मतं नानुमन्यत इति (श्रीभा॰ १२७पुटे) पञ्चपादिकायामुक्तावपि 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यत्र असि अस्मि इत्यनयोस्सत्वेन क्रिया वर्ततएवेति लकारोपपत्तिः ब्रह्मास्तीत्यत्र प्रागुपदर्शितदिशैव वाच्या । आख्यातस्याश्रयार्थकत्वे निर्धर्मितावच्छेदकबोधापत्तिः योक्तासाऽखण्डार्थबोधेऽपि दुर्वारा ॥

यद्यपि शब्दमण्युक्तदिशा विशेषणविभक्तेरभेदार्थकत्वमद्वैतसिद्धावुक्तम् ; तथाऽपि 'प्रातिपदिकार्थमात्रे प्रथमा' इति सूत्रेणाखण्डार्थबोधं साधयतांमते अभेदार्थकत्वं प्रथमायाः कथम् ? अनुशासनविरहात् । अस्तुवा मणिकारोक्तदिशा विशेषणविभक्तेरभेदार्थकत्वम् । तथाऽपि निरूढलक्षणयोपस्थितस्य भेदाभावस्यैव विशेष्यतया भानं सम्भवति । इति सिद्धान्तबिन्दुटीकायां मणिकारादिमतानुसारेण 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादौ बोधवर्णनं नसम्भवति । अभेदप्रकारकबोधस्यैव मणिकारादिसम्मततायाः मथुरानाथादिभिः व्यवस्थापितत्वात् व्युत्पत्तिवादेच राजपुरुषवादोक्तदिशा विशेषणविभक्तेरभेदार्थकत्वे लाघवसत्वेन तत्रापि न नोविद्वेषइत्युक्तेः । सर्वैरपि नैयायिकैरनुभवानुरोधेन विशेषणविभक्त्यर्थप्रकारकबोधएवादृतः इति विशेषणविभक्त्यर्थभेदाभावविशेष्यकबोधः नकस्यचिद्दार्शनिकस्य सम्मतः चैत्रा जानातीत्यादौ आश्रयत्वप्रकारकबोधाङ्गीकारे तत्सम्बन्धस्यापि भानमावश्यकमिति गौरवात् लाघवेनाश्रयत्वसंसर्गकबोधः मणिकृता स्वीकृतः नावच्छेदकतासंसर्गकबोधः । इत्थंच आख्यातार्थस्य मुख्यस्यासम्भवेन लाक्षणिकाख्यातार्थसंसर्गकबोधः मणिकृतास्वीकृतः । वर्तमानकालबोधस्तु नपरित्यक्तः । अखण्डार्थबोधवादिमते 'तत्त्वमसि' इत्यादौ आख्यातार्थस्य संसर्गतया भानमपि नाङ्गीकृतं वर्तमानकालबोधोऽपि परित्यक्तः इति मणिकारोक्तरीतिर्नादृता भवति । आश्रयत्वप्रकारकबोधे राजपुरुषवादोक्तदिशा लाघवं प्रदर्श्य आख्यातस्य आश्रयत्वमर्थइति दीधितिकारसिद्धान्तः व्युत्पत्तिवादे गदाधरेण प्रतिष्ठापितः । वैयाकरणमतरीत्या ब्रह्मकर्तृकासत्तेति बोधाङ्गीकारे सत्तायाः ब्रह्मरूपत्वेन निर्धर्मितावच्छेदकबोधापत्त्या असम्भवः लघुचन्द्रिकायामुक्तः । सत्तायाः प्रमाविषयत्वतद्योग्यतारूपतायाः वैयाकरणप्राभाकरादिसम्मतायाः सङ्क्षेपशारीरके स्पष्टमुक्त्या शुद्धस्य वेदान्तजन्यवृत्तिविषयतायाः विवरणकारमतेऽङ्गीकारेण ब्रह्मनिष्ठत्वरूपब्रह्मकर्तृकत्वस्य तत्रापि सम्भवात् । वैयाकरणमतरीत्या बोधः सम्भवत्येवेति साधुत्वमात्रार्थकत्वकल्पनं कथं घटते ? एवमङ्गीकारे वर्तमानकालार्थस्य वृत्तावन्वयसंम्भवेन कालरूपार्थोऽपि न परित्यक्तो भवति ॥

## श्रीभाष्यम्

**प्रतिपादनमवर्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः**

## श्रुतप्रकाशिका

वाक्यं तावदास्ताम् पदमेव सविशेषपरमिति भावः । वाक्यरूपेण प्रवृत्तिं विवृणोति । **पदभेदश्चेति** । पदभेदः पदानां
परस्परभेदः न केवलं प्रकृतिप्रत्ययभेदएवार्थभेदहेतुकः पदभेदोऽपीतिचार्थः अन्यथा पदान्तरवैयर्थ्यादिति भावः । पदभेद-
स्यार्थभेदनिबन्धनत्वेऽपि वाक्यैकत्वान्निर्विशेषत्वसिद्धिरिति शङ्कायां वाक्यस्य सविशेषविषयत्वं वदन् निर्विशेषे प्रमाणाभा-

## गूढार्थसंग्रहः

यद्यपि '**असिपदेनैक्यम्**' (१२७) इति परैरुक्तम् ; तथाऽपि ' गगनं द्रव्यं भवतीत्यादौ भवत्यर्थे तादात्म्यादौ
द्रव्यवृत्तिबोधाच ' इति बिन्दुटीकायामुक्त्या, घटो नीलो भवतीत्यादौ नीलवृत्त्यसाधारणधर्माश्रयो घटइति व्युत्पत्तिवादे प्रति-
पादनेनच तत्त्वंपदार्थयोरैक्यबोधः तद्रीत्यैवोपपादनीयः । अन्यथा ' असि ' इत्यत्र प्रकृतिप्रत्ययोरुभयोरर्थवत्त्वं न
स्यात् । सङ्क्षेपशारीरकोक्तदिशा असीत्यस्य सद्रूपब्रह्मार्थकत्वेऽप्ययमेव दोषः । ' असि ' इत्यादौ प्रकृत्यर्थस्य क्रियात्वा-
नङ्गीकारे लकारस्य प्रवृत्तेरसम्भवात् ' असि ' ' अस्मि ' इत्यत्र मध्यमोत्तमपुरुषयोः कथमुपपत्तिः ? भावे लकारस्थले
प्रकृतिप्रत्ययोरेकार्थकत्वेन एकदैवार्थोपस्थितिरिति अनुभवानुरोधेनाभ्युपगच्छान्तिकेचित् । केचित्तु तत्र विशेषमङ्गीकृत्य उभा-
भ्यामप्यर्थोपस्थितिमङ्गीकुर्वन्ति । कर्तरि लकारस्थले तु कर्त्रर्थबोधं सर्वेऽप्यभ्युपगच्छन्तीति असि अस्मीत्यनयोः विवर्त-
वादिसम्मतोऽर्थः न पाणिनिसम्मतः नापि कस्यचिद्दार्शनिकस्येति बोध्यम् ॥ अतः ' तत्त्वमसि ' इत्यत्र तच्छब्दस्य
धर्मधर्म्युभयबोधकत्वात् तत्र लिङ्गसङ्ख्यादयस्तु अर्थात्प्रतीयमानाः ' प्रज्ञानघनएव अद्वितीयम् ' इत्यादिशब्दविरोधात्
अनिर्वचनीया भविष्यन्तीति विवरणोक्तरीत्यादरे मिथ्याधर्मवत्त्वप्रतीतेरावश्यकत्वात् तत्परित्यागेऽनुभवविरोधात् । असी-
त्यत्र प्रकृतिप्रत्यययोः अर्थभेदाच्चाखण्डार्थबोधोन सम्भवति । एवं अथ योवेदेदं जिघ्राणि ' इत्यादिषु बहुषु स्थलेषु प्रकृ-
तिप्रत्ययोरर्थभेदः परैः परित्यक्त इति तत्र तत्र निरूपयिष्यते ॥

कश्चन्द्रइति धर्मिमात्रप्रश्नस्य प्रकृष्टप्रकाशश्चन्द्रइति तदुत्तरस्यच न धर्मबोधकत्वमिति परसम्मतार्थः न सर्व
सम्प्रतिपन्नः । किंशब्दस्य जिज्ञासाविषयार्थकस्य स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यधर्मप्रकारकजिज्ञासाविषयादावेव
शक्तेस्सर्वसम्प्रतिपन्नत्वात् । स्पष्टश्चायमर्थः शक्तिवादे मञ्जूषायांच । अतः प्रश्ने प्रतिवचनेच धर्माविषयक धर्मिविषयक
बोधः न कस्यचित्सम्मतः । नहि प्रष्टुस्तात्पर्यं प्रतिवक्तुस्तात्पर्यंवा स्वतन्त्रं धर्माविषयकविप्रतिपन्नबोधं जनयितुमलम् ? प्रष्टुः
प्रतिवक्तुर्वा तात्पर्यं बोधद्वयस्य प्रसिद्धावन्यतरसन्देहे संशयविषयैकतरकोटिनिर्णायकं भवति । नत्वप्रसिद्धबोधजनकम् ।
एतेन सत्यादिवाक्यार्थो ब्रह्मप्रातिपदिकार्थमात्रं तन्मात्रप्रश्नोत्तरत्वात् इत्यत्र हेतुरेवासिद्धः इतिबोध्यम् ॥

अद्वैतसिद्धौच ' कश्चन्द्रः प्रकृष्टप्रकाशश्चन्द्रः ' इति दृष्टान्तार्थविचारे चन्द्रस्वरूपस्य ज्ञातत्वाज्ञातत्वविकल्पेन शङ्का-
याम् चन्द्रस्वरूपस्य ज्ञातत्वाभ्युपगमादेव तदज्ञातत्वनिबन्धनदोषानवकाशः । ज्ञातत्वेऽपिच विपर्ययविरोधिज्ञानानुदयदशायां
तदुदयार्थं प्रश्नो युज्यतएव । अन्यथा सर्वत्र प्रश्नमात्रोच्छेदापत्तेः । यद्यपि यश्चन्द्रः तत्र चन्द्रत्वं तमो नक्षत्रादिव्यावृ-
त्तिश्चास्तीति मया ज्ञायतएव तथाऽपि चन्द्रस्वरूपं परं न ज्ञायतइत्यनुभवेन व्यावर्तकव्यावृत्तिवैशिष्ट्यस्याजिज्ञासितत्वेन
जिज्ञासितं चन्द्रस्वरूपमेव विपर्ययविरोधिज्ञानविशेषं जनयता प्रकृष्टप्रकाशश्चन्द्रः इति वाक्येन बोध्यतइति किमनुपपन्नम् ।

## गूढार्थसंग्रहः

व्यावृत्तेः शाब्दबोधफलत्वेऽपि तदविषयत्वान्नाखण्डार्थत्वव्याघातः तद्बोधकपदाभावाच्च । नच कश्चन्द्रइति धर्मप्रश्नोऽयं कश्चन्द्रधर्मः इति स्वाधीने शब्दप्रयोगे निष्प्रयोजनलक्षणायाः अन्याय्यत्वात् । तद्बोधनेऽप्यखण्डार्थत्वस्य उपपादितत्वाच्चे त्युक्तम् । (अखण्डार्थत्वोपपत्तौ) अत्र लघुचन्द्रिका विपर्ययविरोधिज्ञानेति । चन्द्रः प्रकृष्टप्रकाशो नेत्यादिधीविरोधि यत् प्रकृष्टप्रकाशत्ववैशिष्ट्यधीद्वारकं उक्तप्रकाशत्वोपलक्षितस्वरूपज्ञानं तदित्यर्थः । अत्र पूर्वं ज्ञातस्याप्यर्थस्य विपर्ययविरोधि ज्ञानार्थं प्रश्नः प्रतिवचनंचेति स्फुटम् । तत्र विपर्ययविरोधिज्ञानंतु धर्मप्रकारकमेव तदभावे विपर्ययस्यानिवृत्तेः । इत्थंच यत्किंचिद्धर्माप्रकारकज्ञानकल्पनाऽनुचितैव । कस्यापि दार्शनिकस्यासम्प्रतिपत्तेः । कश्चन्द्रइति प्रश्नएव धर्मप्रकारकज्ञानार्थइति मञ्जूषाशक्तिवादयोः निर्णीतमेव ! 'ब्रह्मविदाप्नोति परम्' इत्यादौ उत्कर्षविशिष्टविषयकज्ञानस्य मुक्तिहेतुतायाः पूर्वं प्रति पादनेन उत्कर्षविशिष्टवस्तुन्येव जिज्ञासा प्रश्नोऽपि तद्विषयकएव इति स्फुटं निर्मत्सराणां विदुषाम् । नहि 'ब्रह्मवित्' इत्यादौ ब्रह्मशब्दप्रवृत्तिनिमित्ताविषयकज्ञानं विवक्षितमित्यत्र किञ्चिन्मानं पश्यामः । येन पररीतिः साधीयसीस्यात् प्रकृष्टप्रकाशश्चन्द्रः इत्यत्र प्रकृष्टशब्देन बोधितप्रकर्षस्य तद्वाक्यजन्यबोधे प्रकरतया भानं नैव वारयितुं शक्यम् । अतः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र सत्यादिपदानि न प्रवृत्तिनिमित्तधर्मं विहाय धर्मिमात्रं बोधयितुमलम् इति नात्र पर सम्मताखण्डार्थस्य बोधः कस्यचिद्दार्शनिकस्य सम्मतः । प्रातिपदिकार्थमात्रे प्रथमा इत्येतदपि यत्र एकत्वादि संख्यायाः सर्वथा प्रतीतिर्नास्ति तत्रैवेति महाभाष्ये स्फुटमिति अत्र एकवचनेन एकत्वसंख्याबोधोऽपि जायतइत्यभ्युपगन्तव्यम् । अतश्च प्रकृतिप्रत्ययाभ्यामुभाभ्यां सविशेषविषयकबोधएवात्रेषितव्यः ॥

यद्यपि ब्रह्मानन्दसरस्वतीभिः न्यायरत्नावल्याम् 'प्रत्ययप्रकृतिशब्दतोबहिः' (प्राक् १८५.पुटे) इति श्लोक-मुदाहृत्य बहिरिति विभक्त्यन्तपदार्थप्रतियोगिकसंसर्गस्येति यावत् अभिहितसंगतिरिति पदाभिहितार्थानुभाव्यता इत्यर्थः अन्वितधियः । प्रकृत्यर्थान्वितप्रत्ययार्थानुभवस्य तद्भूताधिकरणीयवार्तिकोक्तपक्षाणां चरमत्वात् अयमेव पक्षःप्रामा-णिकः । तथाहि 'भावनैवहि वाक्यार्थः सर्वत्राख्यातवत्तया । अनेकगुणजात्यादि कारकार्थानुरञ्जिता ॥ अन्वयव्यति-रेकाभ्यां प्रत्ययार्थस्तु सेष्यते । कैश्चिदन्यैस्तु धात्वर्थः सामीप्येनोपकारतः ॥ अपरैस्समुदायार्थः ततएवहि गम्यते । पाका दौ यत्र दृष्टा सा भवत्यादौ तथैवच ॥' इति वार्तिके वाक्यार्थः वाक्यजन्यशाब्दधीमुख्यविशेष्यः । आख्यतवत्तया आख्यातसामान्यबोध्यत्वात् । प्रत्ययार्थः प्रत्ययमात्रवाच्यः एवं धात्वर्थत्वादिकं बोध्यम् । भावनामात्रं प्रत्ययगम्यमिति प्रथमपक्षउक्तः । भावनेति कर्मत्वादेरुपलक्षणं तथाच प्रत्ययमात्रं कर्मत्वादिमात्रस्यवाचकं वाचकत्वंच अनुभावकत्वं । शक्त्यविषयकसंस्कारेण उद्बुद्धेन सहितादमादिपदात् कर्मत्वादेः प्रथमतएव शाब्दो अन्वयः । एवं घटादिपदादपि घटत्वादे स्तथा तदस्मिन्पक्षे केवलघटत्वादेः शाब्दानुभवस्याननुभवपराहतत्वात् द्वितीयतृतीयपक्षावुक्तौ । तत्र द्वितीयपक्षे प्रकृतेः प्राधान्येन मुख्यत्वात् कर्मत्वाद्यन्वितघटत्वाद्यनुभावकत्वं धातुपदस्य प्रकृतिमात्रपरत्वात् सोऽयं पञ्चक प्रातिपदिकार्थवादः । स्वार्थद्रव्यलिङ्गसंख्याकर्मत्वादिरूपस्य पञ्चकस्य प्रातिपदिकार्थस्य तन्मते स्वीकारात् उक्तंच वैयाकरणैः । 'वाचका द्योति-कावा स्युर्द्वित्वादीनां विभक्तयः । स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः ॥' इति (वा.प) ननु तस्याः घटत्वाद्यन्वितक-र्मत्वाद्यनुभावकत्वं तस्यास्तद्वाचकत्वाव्यवहारात् । यन्मुख्यविशेष्यकशाब्दबोधानुकूलशक्तिमत्वं यत्पदे तिष्ठति तत्रैव तद्वा-चकत्वव्यवहारात् । कर्मत्वादिप्रकारकघटविशेष्यकएव शाब्दबोधे घटपदस्य शक्तत्वात् तद्वाचकत्वव्यवहारः तार्किकादीनामपि सम्मतमेवैतत् । घटत्वादि वाचकत्वस्य घटादिपदे तैरस्वीकारात् । शक्तिज्ञानस्य कारणत्वे घटत्वानुभवानुकूलशक्तिमत्वे-नैवेत्यन्यत् । अस्मिन्पक्षे करणत्वविशिष्टं दधि विधीयते । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्रेति शास्त्रदीपिकाद्युक्तिः

## गूढार्थसंग्रहः

तद्त्रापि पक्षे कर्मत्वादेर्विशेष्यत्वेन बोधस्य सर्वानुभाविकस्य बाधात्तृतीयःपक्षउक्तः । तत्र घटत्वादि विशिष्टकर्मत्वादिविष-
यकशाब्दानुभवे प्रकृतिपदोत्तरत्वविशिष्टप्रत्ययपदस्य कारणतग्राहकमानेन विशेषणीभूतप्रकृतेरपि कारणत्वग्रहात् घटत्वा-
द्यन्वितविषयकशाब्दत्वेन घटादिपदकार्यता । अमादिपदस्यतु प्रकृत्युत्तरत्वविशिष्टत्वेन रूपेण घटत्वादि विशिष्टकर्मत्वादि
शाब्दबोधइव अम्त्वादिकेवलरूपेणान्वितकर्मत्वादिशाब्दत्वावच्छिन्ने कारणत्वम् । द्वितीयपक्षे प्रत्ययः पूर्ववृत्तितारूपेण
सामीप्यसम्बन्धेन प्रकृतिनिष्ठकारणतावच्छेदकत्वात् प्रकृतेरुपकारकः नतु कारणम् । तस्य कारणतायामुपाधित्वेन दण्डत्वा
देरिव विशेषणत्वस्यास्वीकारात् । तृतीयपक्षे प्रकृतिः उत्तरवृत्तितारूपेण सामीप्यसम्बन्धेन प्रत्ययनिष्ठकारणतावच्छेदक-
त्वात् प्रत्ययस्योपकारिका । विशेषणत्वस्वीकारात् ज्ञायमानलिङ्गमिव कारणमपीति भावः तस्मात् केवलस्य घटत्वादेः स्मृ-
तिरेव नानुभवः । तस्य घटं पश्येत्यादि वाक्यार्थधीपूर्वमपि ज्ञातत्वेन अज्ञातविषयकत्वघटितप्रमात्वस्याभावात् । दर्श-
नादेर्घटत्वादि कर्मत्वेनाज्ञातत्वेऽपि घटत्वादेः कर्मत्वादिमात्रे उक्तवाक्यं विनाऽपि ज्ञायतएव । अतो घटं पश्येति प्रत्यया
न्तपदाभ्यां ज्ञातविषयकत्वेन स्मृतिसममनुभवद्वयं जन्यते । अन्विताभिधानपक्षेतु तयोर्घटत्वीयकर्मत्वाद्यनुभावकत्वस्वीका-
रात् तदेव सम्बन्धं पुरस्कृत्य घटत्व कर्मत्वादेर्दर्शनाद्यन्वितप्रत्ययार्थस्यच स्मृतिद्वयमेव ताभ्यां जन्यते । प्रकृतिप्रत्ययाभ्यां
हि तादृशस्मृतिशक्तत्वं केवलघटत्वादि स्मृतिशक्तत्वं उक्तान्वयानुभावकत्वं वा सम्बन्धं पुरस्कृत्य घटत्वकर्मतात्वयोः स्मृति
द्वयम् । तेनच घटत्वीयकर्मता स्मृतिः कर्मत्वस्याखण्डशक्तिरूपत्वेतु तस्यैव स्मृतिः । अतः प्रत्ययान्तपदघटकाभ्यां प्रत्येक
पदाभ्यां प्रत्युक्तत्वात् अन्वितकर्मतास्मृतिः प्रत्ययान्तपदजन्येति व्यवह्रियते इत्याद्युक्तम् एवमेव लघुचन्द्रिकायामपि ॥

तथाऽपि—' पाकादौ यन्नदृष्टाऽसौ भवत्यादौ तथैव च । ' इत्यनन्तरं ' विवेकफलमन्दत्वात् पचत्यादौ यथेष्टता । '
इति वार्तिकएवोक्त्या प्रत्ययप्रकृतिसमुदायार्थ पक्षेषु विवेकस्य प्रयोजनाभावोक्त्या चरमपक्ष एव सिद्धान्त इति कथं
निर्णयः ? द्वितीयपक्षः पञ्चकप्रातिपदिकार्थवादिनाम् इति कथं निर्णेतुं शक्यते । भावनामात्रविचारे कर्तृकर्मविचारस्य
प्रसङ्गएव नास्ति । ' कारके ' इति सूत्रमहाभाष्ये अधिश्रयणोदकासेचन तण्डुलावपनेधोऽपकर्षणादि क्रियाः कुर्वन् एव
देवदत्तः पचतीत्युच्यते । इत्युक्त्या भावनापर्यन्तक्रियासमुदायः पचिधात्वर्थ एवेति वैयाकरणमतम् । ' फलव्यापारयोर्धा-
तुराश्रयेच तिङः स्मृताः ' इति तदुक्तेः । इदंच पञ्चकप्रातिपदिकार्थमतएवेति नैव नियन्तुं शक्यम् । तदन्यमतेऽप्यस्या-
र्थस्याबाधात् । मञ्जूषायां भावनायाः धातुवाच्यत्वपक्षस्येत्थमेवोपपादनात् ॥

तन्त्रवार्तिकपर्यालोचनायामपि एवं तात्पर्यकल्पनं नघटते । तत्रहि ' भावनागम्यमानाच धातुप्रत्ययसन्निधौ । कस्य
वाच्येति विस्पष्टं न कदाचित्प्रतीयते ॥ ' केवलप्रकृतिप्रत्ययप्रयोगाभावाद्धि न विवेको विज्ञायते । शक्यतेहि वक्तुं धातुस-
हितेन प्रत्ययेनोच्यतइति अथवा प्रत्ययानुगृहीतेन धातुना अथवोभाभ्यां । नच शक्तिकल्पनायां विशेषः । सर्वथा अर्था-
पत्तिसाम्यात् नच विवेचनज्ञानप्रयोजनमस्ति । इत्युपक्रम्य द्व्यर्थस्य धातोर्भेदेनार्थेकथ्यमाने यागेनेति विशेषरूपं करणा-
त्मना निष्कृष्टम् । इतरन्तु भावात्मकं सामान्यरूपं शब्दान्तरेण भावयेदित्यनेन कथ्यते । अथवा केचित्करणांशकर्तृसंख्या-
दयः प्रकृतिप्रत्यययोर्भेदेन वाच्याः भावनातु समुदायाव्यभिचारात् समुदितयोरेवार्थइत्यपि शक्यं वक्तुम् तथाच सूत्रकारभा
ष्यकाराभ्यां भावार्थाःकर्मशब्दा इतिसमानाधिकरण्यमेवाश्रितं न भावार्थत्वेन प्रत्ययाःकथिताः । शास्त्रेतु सर्वत्र प्रत्ययार्थो
भावनेति व्यवहारः तत्रायमभिप्रायः ' प्रत्ययार्थं सहब्रूतः प्रकृतिप्रत्ययौ सदा । प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधा
र्यते । यद्यपि अन्याद्विवेककारणं नास्ति तथाऽपि प्राधान्यं प्रत्ययार्थधर्मं दृष्ट्वा नूनमियं प्रत्ययार्थः इति अवगम्यते । ' तथा
क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः । प्रत्ययश्रुतिवेलायां भावनत्माऽवगम्यते ॥ ' न केवलमेतावेवान्वयव्यतिरेकौ यौ परस्पर

## गूढार्थसंग्रहः

परित्यागेन लक्ष्येते तस्मिन्नेवहिपदे 'तदागमेहि तद्दृश्यते' इत्यनेन न्यायेन विवेकोऽवधार्यते । यत्त्वस्त्यादिपरः प्रत्ययोऽपि भावनां जहातीति तुल्यं धातुसमुदायपक्षयोरप्येतत् । सर्वथा यत्र प्रतीयते तत्र तावत् प्रत्ययार्थत्वं निश्चीयते । अन्यत्रत्वयंविचारएव नास्ति । क्वचिद्व्यभिचारस्यचोत्तरमुक्तं तद्भूताधिकरणे इत्युक्तं भावार्थाधिकरणे । तत्रैव पूर्वं कथं पुनर्यज्यादीन् पृथक्कृत्य केवलप्रत्ययवाच्यएव भावनार्थो लभ्यते इत्युपक्रम्य 'सिद्धकर्तृक्रियायोगादाख्यातप्रत्ययेसति । सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥' यदातु लब्धात्मकोऽन्यत्र व्याप्रियते तदा करोतीत्येवोपदिश्यते तथाच किं करोति गच्छति पठतीति सामान्यविशेषरूपेण सामानाधिकरण्यप्रयोगो दृश्यते । तस्माल्लब्धात्मक कर्तृव्यापारवचनानि करोत्यर्थवन्त्याख्यातानीत्युक्तम् ॥

अत्र भावार्थाः कर्मशब्दाइति सूत्रखण्डविवरणदशायां भावनायाः केवलप्रत्ययवाच्यत्वं यदुपक्रमे उक्तं तदेव शास्त्रेत्वित्यादिना सिद्धान्तितमिति स्फुटं प्रतीयते । श्लोकवार्तिकोक्तपक्षत्रयमेवात्राप्युपन्यस्यप्रथमपक्षस्सिद्धान्तित इति भावनायाः केवलप्रत्ययवाच्यत्वपक्षएव वार्तिककार सिद्धान्त इति स्फुटं प्रतीयते समुदायवाच्यत्वपक्षे भावार्थानां धातुप्रत्ययसमुदायानां धात्वंशेन कर्मशब्दत्वात् सामानाधिकरण्यं प्रत्ययस्यतु भावार्थत्वेन कथंचित् सामानाधिकरण्यमित्याशयो वाच्यः भावनायाः केवलप्रत्ययवाच्यतापक्षेऽपि आख्यातधातुरूपाश्शब्दाः प्रत्ययांशेन भावार्थाः धात्वंशेन कर्मशब्दा इति धातव एव भावनाविशेषणभूतस्वार्थवाचित्वेन भावनाप्रयोजनत्वाद्भावार्था इति वा सूत्रार्थस्योपपत्तिः । भाष्येऽपि अस्मिन्नेव सूत्रे यज्याद्यर्थश्चातोऽवगम्यते । भावयेदितिचेत्यत्र धातुवाच्यादर्थाद्भेदेन भावनावगमाभिधानात् । शब्दान्तराधिकरणेच यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति उत्तरो भागोभावयेदित्यत्रापि भावनायाः उत्तरभागवाच्यत्वाभिधानाच्च केवलप्रत्ययवाच्यत्वपक्षएव शास्त्रकृत्सम्मत इति प्रतीयते ॥

तदागमेहि तद्दृश्यते इति न्यायः 'शब्दवत्तूपलभ्यते तदागमेहि तद्दृश्यते तस्य ज्ञानं यथाऽन्येषाम्' (४.१.५) इति सूत्रउक्तः नकेवलमेतावेवान्वयव्यतिरेकौ इत्यादिनात्रोक्तार्थः (श्लो.वा) वाक्याधिकरणे 'क्रमेणहिप्रतीयेते प्रकृतिप्रत्ययौ पदे । तदागमे तदर्थोऽपि स्वसंवेद्यः क्रमेणनः ॥' (१५६) इत्यादिना 'नान्वयव्यतिरेकाभ्यामपूर्वार्थावधारणम् । संसृष्टेऽवगतेऽर्थेहि ताभ्यां शक्तिर्नियम्यते ॥ तेनानेकात्मकाच्छब्दात् अनेकार्थावबोधने । सिद्धे यदागमे योऽर्थः सतस्यैवावधार्यते ॥' इत्यन्तेनोक्तः ॥

आकृत्यधिकरणेऽपि 'आख्यातस्यापि नन्वत्र नयुक्ताऽर्थविचारणा । द्वितीयादावियं यस्मात् विस्तरेण करिष्यते ॥ कः पुनर्भाव इत्यादौ विवेकेनार्थनिर्णयः । आख्यातस्य कृतस्तेन तच्चिन्ता नोपपद्यते ॥ प्रत्ययार्थस्य भावस्य वाच्यताप्रतिपादिता । प्रकृत्यर्थविवेकार्थं विचारः क्रियतेऽधुना ॥ प्रत्ययस्यापि वा तत्र भावार्थत्वे निरूपिते । सामान्यंवा विशेषोवा किं वाच्यमिति चिन्त्यते ॥' इत्युक्त्याच भावनायाः केवलप्रत्ययवाच्यत्वमेव वार्तिककारसिद्धान्तइति स्फुटं प्रतीयते अतः भावनावचस्तावत् इत्यादि श्लोकोक्तपक्षत्रये प्रथमपक्षएव वार्तिककारसम्मतः न चरमइति सिद्धम् ॥

एवमेव न्यायसुधायां सिद्धान्तितम् पार्थसारथिखण्डदेवयोरप्ययमेव पक्षस्सम्मतः । प्रथमपक्षे शक्यविषयक संस्कारेणोद्बुद्धेन सहितात्पदात् पदार्थशाब्दबोधएव नतु पदार्थस्मृतिः इति सिद्धान्तः कथं घटते ? यदा शक्यविषयक संस्कारोद्बोधोभ्युपगतः तदा पदात् पदार्थस्मृतिः कथं बार्यते । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम् भाट्टमते पदानां शाब्दबोधजननशक्तिरेव नास्ति पदार्थबोधजननशक्तिर्वर्तते हस्ति हस्तिपकस्थले यथा सम्बन्धः तद्वत्स्मृतिजनकोऽयं सम्बन्धो भवतीति पदात् पदार्थस्मृतिर्न घटते इतिचेत् पदस्य शक्यविषयक संस्कारोद्बोधोऽङ्गीक्रियतएव शक्यविषयक संस्कारोद्बो-

## गूढार्थसंग्रहः

सत्व संस्कारेण स्मृतिजनने किं बाधकम् ? कैरपि दार्शनिकैरनभ्युपगतस्य पदार्थविषयकशाब्दबोधस्याङ्गीकारोऽपि कथम् ?
'भावनावचनस्तावत् तां स्मारयति लोकवत्' इति वार्तिक एव स्फुटं पदस्य स्मारकत्वमुक्तम् । इत्थं च प्रथमपक्षे
पदस्य स्मारकत्वं वार्तिककृदुक्तं कथं वा प्रतिषिध्यते ? संस्कारोद्बोधः पदज्ञानकाले भवद्भिरङ्गीक्रियते च ॥ न्यायरत्नमा-
लायां पदस्य अभिधायकत्वशक्तिमनभ्युपगम्य संस्कारोद्बोधकत्वेन स्मृतिमभ्युपगच्छतां चिदानन्दादीनां मतमुपन्यस्य 'तां
स्मारयति' इति वार्तिके स्मारयतीत्यौपचारिकः प्रयोगः इत्युक्तम् । हस्तिहस्तिपकयोरिव सम्बन्धान्तराभावे स्मृति र्नघटत
इति पदात् स्मृतिवादिमते यो दोष उद्भावितः सः स्वमतेऽपि शक्तिव्यतिरिक्तसम्बन्धानभ्युपगमेन समानः । स्वाभावि-
कशक्तिशालिनामपि चक्षुरादीनां सम्बन्ध्यैवप्रातिपादकत्वात् । अथान्यत्रादृष्टमपि तदिहैव कल्प्यते तर्हि स्मारकत्वमेव कि-
मिति न कल्प्यते इत्याक्षिप्य पदात् संस्कारोद्बोधानन्तरं अर्थप्रतीत्यङ्गीकारे शब्दानन्तरमर्थप्रत्ययानुभवविरोधः' इत्य-
भिधाय अभिधायकत्वमेव वाच्यमिति सिद्धान्तितंच । शब्दश्रवणसमनन्तरं अर्थप्रत्ययः शक्तिज्ञानानन्तरमेव वाच्यः । सच
शाब्दबोधोवा स्मृतिर्वेत्यत्र विवादः । शाब्दबोधस्तु न कस्यचिद्दार्शनिकस्य सम्मतः । अनुभवविरुद्धशाब्दबोधकल्पना
ऽपेक्षया स्मृतिकल्पनमेव ज्यायः ॥

इतरासंसृष्टार्थविषयकशाब्दबोधस्य वार्तिकोक्तप्रथमपक्षेऽसम्भवात् चरमपक्ष एव वार्तिककारसिद्धान्त इति वदद्भिः
भावना समुदायार्थ इत्युक्तिः समुदायजन्यशाब्दबोधमुख्यविशेष्यत्वात् भावनायाः उपपद्यते । एतत्पक्षे प्रकृतिप्रत्ययाभ्यां
स्मृतिद्वयानन्तरं संसृष्टार्थविषयकशाब्दबोधः । अत एवोक्तं शाबरभाष्ये– 'प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिः प्राति-
पदिकार्थो विशेषक इत्याह' इति । विशेषकः व्यावर्तकः । उपलक्षणविधया व्यावर्तकत्वलाभार्थमितिशब्दः । तथा च
प्रातिपदिकार्थोपलक्षितोऽन्वयः । तद्विशिष्टवाचिका सेत्यर्थः । अत एवच निरुक्तकारैरुक्तम्– 'प्रकृतिप्रत्ययौ प्रत्ययार्थं
सह ब्रूतः' इति । घटत्वकर्मत्वाद्यंशे प्रकृतिप्रत्यययोरनुवादकत्वात् अन्वयमात्रांशे पर्यवसितं सहवाचकत्वमिति भाव-
इत्युक्तम् ॥ अत्र अभिहितान्वयवादिभट्टमते प्रकृतिप्रत्ययसंसर्गेण अभिहितेन वाक्यार्थबोधः इत्यपि निर्णीतम् । नाय-
मर्थो भट्टसम्मतः ॥ 'प्रकृतिप्रत्ययौ नापि प्रयुज्येतेच केवलौ । येन युष्मदभिप्रेता श्रुतिर्लभ्येत कर्हिचित् ॥' (श्लो.वा-
वाक्याधिकरणं.३५३) 'अयमेव विशेषश्च कथ्यते पदवाक्ययोः । अर्थवद्भागतुल्यत्वे प्रकृतिप्रत्ययार्थतः ॥ (३५५)
दृष्टा यथाहि साकाङ्क्षाः पदार्थाः केवलाः क्वचित् । स्वातन्त्र्येण गृहीताश्च विशिष्टार्थावबोधकाः ॥ (३५६) प्रकृतिप्र-
त्ययौ नैवं कदाचिदपि लक्षितौ । प्रकृत्यर्थानुरक्तोहि प्रत्ययार्थस्सदेष्यते ॥' (३५७) इत्यत्र प्रकृतिप्रत्ययशक्त्या नसंस-
र्गबोधः । किंतु अकाङ्क्षादिवशादिति 'साकाङ्क्षाः विशिष्टार्थावबोधकाः' इत्यनेन स्फुटं प्रतिपादनात् 'प्रातिपदिकादुच्च-
रन्ती' इत्यादिभाष्यमाकाङ्क्षादिपरमिति स्फुटम् । भावार्थाधिकरणे–प्रथमपक्षएव 'प्रकृतिप्रत्ययौ' इत्यादि निरुक्तस्य
'प्रत्ययार्थं सह ब्रूतः' (२७१.पुटे) इत्यादिना प्रवृत्तेरुपपादनेन निरुक्तवाक्यस्य भाष्यस्यच अन्वयवाचकत्वकल्पनं कथं
भट्टसम्मतं स्यात् । अतः तृतीयपक्षस्य भट्टसिद्धान्तत्वकल्पनपूर्वकं प्रकृतिप्रत्ययार्थान्वयमात्रस्य भट्टमते अभिहितत्वकल्पनंच
न पूर्वमीमांसकसम्मतम् ॥

लघुचन्द्रिकायाम्—प्रकृत्यर्थान्विते प्रत्ययार्थकर्मत्वादौ घटेत्यादिप्रकृत्युत्तरप्रत्ययपदस्यामादेरनुभावकत्वरूपा शक्तिः
प्रत्ययपूर्ववृत्तिघटादिपदस्य कर्मत्वाद्यन्वितघटत्वादौ सेत्युक्ते पक्षद्वये समुच्चयस्वीकारे घटत्वान्वितकर्मत्वं कर्मत्वान्वितं घटत्व-
मिति बोधद्वैविध्यस्य युगपदापत्त्या वाक्यभेदापत्तिः यदि प्रकृत्यर्थान्वितकर्मत्वादौ प्रत्ययस्य प्रकृत्युत्तरस्यानुभावकत्वमि-
त्येव स्वीक्रियते, तदा प्रकृतेः अवाचकत्वापत्तिः प्रकृतेरेव कर्मत्वाद्यन्वितघटत्वाद्यनुभावकत्वस्वीकारे प्रत्ययस्यावाचकत्वा-
पत्तिः । प्रकृतिप्रत्यययोर्द्वयोः विशिष्टार्थानुभावकत्वे केवलप्रकृतिपदे प्रत्ययपदेचोभयवाचकत्वापत्तिः । एकैकस्यैकैका-

## गूढार्थसंग्रहः

र्थानुभावकत्वे पूर्वोक्तपक्षत्रयमध्ये पूर्वपक्ष एव स्वीक्रियेत । किं च वेदान्तमहावाक्यस्थपदानामखण्डार्थबोधं प्रत्येव विशेषतो हेतुत्वस्य वाच्यतया कथं सर्वपदानामन्वितबोधकत्वम् ? तस्मान्नान्विते पदानां शक्तिः, किन्त्वनन्विते घटत्वादौ तदनुभवात् पदजन्यादान्वितानुभव इति प्रथमपक्ष एव युक्त इति पार्थसारथिमिश्रादयः ।

तदसत् । अन्वितशक्तिवादस्याशयानवबोधात् । अन्यान्वितघटत्वादिकं तदर्थः इत्युक्तपक्षे आकृत्यधिकरणन्यायेन जातिशक्तेः यदीयतया ग्रहः शाब्दधीप्रयोजकः सोऽर्थोवाच्यतया व्यवह्रियते । सा च जातिरेवेति तत्रैव वाचकत्वं घटादिपदे व्यवह्रियते नतु घटत्वाद्यान्विते अन्वितघटे वा । 'अन्यान्वितघटत्वं घटपदस्य शक्यम् । अन्यान्वितकर्मत्वममादिपदस्य ' इत्यादिविवरणाद्युक्तेरयमर्थः— शाब्दत्वावच्छेदकविशेष्यतानिरूपित संसर्गतानिरूपितघटत्वप्रकारताशालित्वं घटपदधीकार्यतावच्छेदकम् । घटत्वादिविषयतामात्रावच्छिन्नशाब्दत्वेन तु न तत्कार्यता । शाब्दत्वस्य तन्मात्रानवच्छिन्नत्वात् घटमित्यादिवाक्यजन्यधीस्थले घटत्वं स्मरामीत्येव प्रत्ययेन घटत्वं शाब्दयामीत्यप्रत्ययात् । अनुवादवाक्यार्थे स्मरामि इत्येव प्रत्ययात् ।

ननु घटं घटेनेत्याद्यानुपूर्वीविशेषज्ञानत्वेन घटत्वादिकर्मताकरणतादिशाब्दं प्रति हेतुत्वमवश्यं वाच्यम् । अन्यथा अं घट इत्याद्यानुपूर्वीज्ञानादपि तदापत्तेः । तथाच घटादिपदज्ञानत्वेन घटत्वाद्यन्वितशाब्दत्वेनच कार्यकारणभावः वृथा । अथ घटमित्याद्यानुपूर्वीविशेषाणामेकस्याप्यज्ञानदशायां घटान्वितशाब्दसामान्याभावस्योपलभ्यमानस्य घटमित्याद्यानुपूर्वीविशेषाभावकूटेन प्रयुक्तत्वकल्पने गौरवात् घटत्वान्वितस्य शाब्दसामान्येन घटपदज्ञानत्वेन कार्यकारणत्वं प्रकल्प्य घटपदज्ञानसामान्याभावप्रयुक्तत्वमुक्तशाब्दसामान्याभावस्य कल्प्यते इतिचेन्न—निर्विभक्तिघटादिपदज्ञानकाले घटादिपदज्ञानसामान्याभावस्याभावेन तदा तत्प्रयुक्तत्वस्य तादृशशाब्दसामान्याभावे वक्तुमशक्यतया तादृशानुपूर्वीविशेषाभावज्ञानस्यैव तत्प्रयोजकताया वाच्यतया घटादिपदसामान्याभावकालेऽपि उक्तविशेषाभावकूटस्यैव प्रयोजकतासम्भवेन उक्तकार्यकारणभावकल्पनस्य वैयर्थ्यादिति ॥

अत्रोच्यते निर्विभक्तिघटादिपदज्ञानदशायां उक्तसामान्याभावस्याभावेन तस्य तत्प्रयोजकत्वासम्भवेऽपि घटादिपदज्ञानसामान्याभावकालावच्छिन्नस्य उक्तशाब्दसामान्याभावाधिकरणत्वस्य तत्तत्पुरुषनिष्ठस्य घटादिपदज्ञानसामान्याभावप्रयुक्तत्वस्य लाघवेन स्वीकारसम्भवेन तदनुरोधेनोक्तकार्यकारणत्वकल्पनात् । सविभक्तिकघटादिपदज्ञानत्वेन वा कारणत्वमास्ताम् । नच एवं घटादिपदोत्तरामादिपदज्ञानत्वेन हेतुत्वादीनां स्वीकारेऽपि घटादिपदज्ञानत्वेन तदभावात् । घटादिपदे घटत्वादिशक्त्यभावेन तादृशशक्तिज्ञानहेतुत्वासम्भवः तत्पदज्ञानत्वावच्छिन्नाया हेतुताया एव मीमांसकमते शक्तिरूपत्वादिति वाच्यम् । घटपदोत्तराम्पदज्ञानत्वेनेव अम्पदपूर्ववृत्तिघटपदज्ञानत्वेनापि हेतुतायाः विनिगमकाभावेन स्वीकारस्य पूर्वमुक्तत्वात्, घटत्वप्रकारतानिरूपितकर्मताविशेष्यताकशाब्दत्वेनेव कर्मताविशेष्यतानिरूपितघटत्वप्रकारताकशाब्दत्वेनापि कार्यतायाः स्वीकारात् । घटत्वीयानुभावकतारूपशक्तेः तादृशशक्तित्वेन घटपदज्ञानं हेतुः । अंपदपूर्ववृत्तित्वस्य कर्मताविशेष्यकत्वस्य वा तत्र निवेशेऽपि घटत्वशक्तत्वस्य घटपदे अक्षतत्वात् । तथा च घटमित्यादिपदज्ञानस्य घटादिपदविशेष्यघटत्वादिशक्तिज्ञानजन्यसंस्कारोद्बोधकस्वघटकघटादिपदज्ञानजनितघटत्वादिस्मृतिद्वारा घटत्वीयकर्मतादिशाब्दधीहेतुत्वम् । घटः कर्मत्वमित्यादिनिराकाङ्क्षपदजन्यघटत्वादिस्मृतेः घटमित्यादिपदघटकघटादिपदाजन्यत्वात् तादृशस्मृतिद्वारा घटमित्यादिपदज्ञानस्य नानुभावकतेति घटादिपदस्य स्वघटकेति विशेषणम् । घटमित्यादिपदघटकेति तदर्थः । एवंच घटादिपदज्ञानत्वादिरूपेण घटत्वाद्यन्वितानुभावकत्वाभावेऽपि न क्षतिः । घटत्वीयकर्मतासंसर्गो निरूपकत्वरूपो दर्शनादिक्रियानिष्ठः उक्तकर्मताशाब्दबोधन लक्षणया अनुभाव्यते ' इत्युक्तम् ॥

## गूढार्थसंग्रहः

अत्र अम्पदपूर्ववृत्तित्वस्य कर्मताविशेष्यकत्वस्य निवेशेऽपि घटत्वशक्तत्वं घटपदे अक्षतमिति घटमित्यादिपद-
ज्ञानस्य घटत्वीयकर्मतादिशाब्दधीहेतुत्वं यद्यभ्युपगम्यते तदा शक्ततावच्छेदिका घटमित्याद्यानुपूर्वी यदि अभ्युपगम्यते
तदा घटमित्यानुपूर्वीपर्याप्तावच्छेदकताक शक्तताकमेव शक्तिज्ञानं संपन्नम्। एवं सति घटादिपदविशेष्यकघटत्वादिशक्ति
ज्ञानं घटत्वस्मृतिजनकं कथं भवति ? एकैकानुपूर्व्याः शक्ततावच्छेदकतापर्याप्तेरनभ्युपगमादिति चेत् ; विनिगमनाविरहेण
घटदाम्पदयोः विशेष्यतामात्रेण तत्तदर्थस्मृतिजनकं घटपदविशेष्यकघटत्वशक्तिज्ञानम् अंपदविशेष्यककर्मत्वशक्तिज्ञानं तत्त-
दर्थस्मृतिद्वारा घटत्वीयं कर्मताशाब्दबोधहेतुः इति यद्यभ्युपगम्यते तर्हि घटपदोत्तराम्पदज्ञानत्वेनेव अंपदपूर्ववृत्तिघटपद-
ज्ञानत्वेनापि विनिगमनाविरहेण कारणताऽभ्युपगमेन अम्पदाभिहितं घटत्वं घटपदाभिहितं कर्मत्वमिति स्वारसिकप्रयोगापत्तेः
त्तेः कथं वारणम् ?

पार्थसारथिमिश्राशयवर्णनदशायां पूर्वपक्षे प्रकृतिप्रत्यययोर्द्वयोः विशिष्टार्थानुभावकत्वं केवलप्रकृतिपदे प्रत्ययपदे च
उभयवाचकत्वापत्तिः इति यो दोष उक्तः स कथं परिह्रियते। अम्पदपूर्ववृत्तिघटपदज्ञानस्य कर्मताबोधं प्रति, घटपदो-
त्तराम्पदज्ञानस्य घटत्वबोधं प्रति च जनकत्वात्, अंम्पदादिविशेष्यकशक्तिज्ञाने घटपदादेः प्रकारत्वात्। पदाभिहितत्वं
पदविशेष्यकशक्तिज्ञानजन्यशाब्दबोधे साक्षाद्विशेषणीभूतविषयताश्रयत्वम्। अम्पदादिविशेष्यकशक्तिज्ञानस्य घटत्वप्रकार-
तानिरूपितकर्मताविशेष्यताकशाब्दत्वादिकं कार्यतावच्छेदकमिति कर्मत्वस्यैव अम्पदाभिहितत्वात् न दोष इति चेत्——
'भावना समुदायार्थः' इति श्लोकवार्तिकवाक्यस्य कथं चिदुपपत्तावपि भावनां प्रस्तुत्य 'अथ वा उभाभ्याम्'
इति तन्त्रवार्तिकवाक्यस्य कथमुपपत्तिः ? एवं 'भावार्थाः कर्मशब्दाः' इत्यस्य च कथमुपपत्तिः ? भावनायाः प्रत्यय-
विशेष्यकशक्तिज्ञानमादाय धात्वर्थस्य च धातुविशेष्यकशक्तिज्ञानमादाय भावनाधात्वर्थयोः आख्यातधात्वर्थत्वमुपपाद-
नयिम्। एवमुपपादनंच न घटेत। भावना समुदायार्थ इति रीत्या कर्मत्वं घटमिति समुदायार्थः इति भावनां प्रस्तु-
त्य उभाभ्याम् इतिवत् कर्मत्वं प्रकृतिप्रत्ययाभ्यामुच्यत इति च स्वारसिकप्रयोगापत्तिः नैव परिहर्तुं शक्यते। आकृत्यधिक-
रणवार्तिके प्रकृतेः प्रत्ययस्यच पृथगेव जातिशक्तेरभ्युपगमेन प्रकृतिप्रत्ययसमभिव्याहारेणैव वाक्याधिकरणवार्तिके विशिष्ट-
र्थबोधविषयकत्वस्य स्थापनात्। घटमिति पदज्ञानस्य घटत्वीयकर्मतादिशाब्दबोधहेतुत्वस्य भवद्भिरङ्गीकारेण प्रत्ययप्रकृ-
तिसमभिव्याहारस्यैव संसर्गभाननियामकत्वमङ्गीकृतप्रायमेव। अभिहितान्वयवादेऽपि प्रकृतिप्रत्ययार्थसंसर्गस्य शक्तिभा-
स्यत्वाभ्युपगमे आन्विताभिधानवाद एव पर्यवसानं स्यात्। अभिहितान्वयः अन्विताभिधानमिति पक्षद्वयप्रसिद्धिरसङ्गतैव
स्यात्। भवदुक्तरीत्या आन्विताभिधानं द्विविधम्। प्रकृतिप्रत्ययमात्रविषयकमेकं, वाक्यविषयकमन्यत् इत्यव प्रसिद्धिरापद्य-
द्यते। प्रकृतिप्रत्ययविषये उदाहृतवार्तिके आकाङ्क्षादिबलादेव विशिष्टार्थबोधस्याभिधानेन तद्व्याख्याने न्यायरत्नाकरे
न्यायरत्नमालायां च पदद्वयसमभिव्याहारेण संसर्गभानस्य वार्तिककारसम्मतस्य स्थापनेन भवदुक्तार्थः कथं वार्तिककारसि
द्धान्तः ॥ 'प्रत्ययप्रकृतिशब्दयोः' इति सङ्क्षेपशारीरकविवरणे आकाङ्क्षादिसाचिव्यापेक्षां विनैव विशिष्टबुद्धेः मधुसूदन
सरस्वतीभिरप्युपपादनात् ॥

पूर्वं संक्षेपशारीरके 'अभिहितघटनाऽथवाऽन्वितानामभिहितिः' (१.३८२) इत्यादौ लौकिकवाक्ये पक्षद्वये पक्ष-
पातो नास्तीत्यभिधानपूर्वकं 'न तदुभयं श्रुतिमस्तके पदानाम्' इत्युत्तरश्लोके पक्षद्वयमपि वेदान्तवाक्येषु नास्तीत्य-
भिधाय 'अभिहितघटना यदा तदानीम्' इत्यादौ पक्षद्वयेऽपि 'तत्त्वमसि' इत्यादावखण्डार्थत्वमुपपाद्य 'स्मृतिसमपद-
जन्यबुद्धियुग्मात् परदृशि मोहनिवर्तनं परेषाम्। परदृशिपदजस्मृतिद्वये स्यात् पदयुगलात् प्रमितेस्समुद्भवो नः॥' (१.

## श्रीभाष्यम्

### पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादना

## श्रुतप्रकाशिका

वमुपसंहरति। पदसङ्घातेति। तत्तत्पदाभिधेयानां संसर्गविशेषएव वाक्यप्रतिपाद्यः नतु तत्तत्पदार्थप्रहाणेन अर्थान्तरमित्यर्थः॥

## गूढार्थसंग्रहः

६८५) इत्यत्र नः इत्युक्त्या अन्विताभिधानवाद एव सर्वज्ञात्ममुनिसम्मत इति स्फुटं प्रतीयते॥ 'एवं च नः इति वदता साक्षात्कारस्योपनिषजन्यत्वेन ब्रह्मणः स्वमते औपनिषदत्वासिद्धेः इदमेव ज्यायः इति दर्शितम्' इति मधुसूदनसरस्वतीभिः तद्विवरणे उक्तम्। एवं च 'इदं तु बोध्यम्। अभिहितान्वयमतमेव युक्तम्, घटत्वकर्मतां शृणोमीत्यनुभवस्यानपलापात्' इति विन्दुटीकोक्तिः सर्वज्ञात्ममुन्याद्याशयविरुद्धैव। अतः प्रत्ययप्रकृतिशब्दयोः पुनः' इत्यत्र प्रभाकरसम्मत अन्विताभिधानवादएव सर्वज्ञात्ममुनिविवक्षितः पक्षद्वये पक्षपातविरहकथनपूर्वकं प्रभाकरसम्मतान्विताभिधानवादस्यैव स्वसिद्धान्तत्वस्थापनात्। एवमभ्युपगमएव शब्दस्य शाब्दबोधकरणत्वसम्भवेन शब्दजन्यसाक्षात्कारस्य विवरणकारादिसम्मतस्योपपत्तिः शाब्दापरोक्षोपपत्तौ (अद्वैतसिद्धि. ३. परिच्छेदे) शब्दस्य कारणतायाएव भवद्भिस्सिद्धान्तितत्वात्। भट्टमते पदार्थानामेव करणतया शब्दस्याकरणत्वेन तदुपपादनासम्भवात्। छटत्वकर्मतां शाब्दयामीत्यनुभवस्तु वाक्यार्थानुभवाभिप्रायेण प्रभाकरमतेऽपि सम्भवत्येव। वाक्यार्थानुभवात्पूर्वं तु खले कपोतन्यायेन शाब्दबोधवादिभिर्नैयायिकैरपि नाभ्युपगम्यते। अभिहितान्वयवादे 'स्मृतिसमबुद्धियुगं पदे विभक्तः' इत्येतदर्थोपपादनावसरे यद्यपि स्मृतिसमत्वं ज्ञातविषयकत्वं प्रमाणजन्यज्ञानंचाज्ञातविषयमेव अनुवादवाक्यादिस्थले वाक्यार्थज्ञानं स्मृतिरेव प्रमाणादप्रमानुपपत्तेः। तथाऽप्यगत्या महावाक्यादिस्थले पदजन्यो बोधः स्मृतिसमःकल्प्यते। तथाच स्मृतिप्रमाविलक्षणमपि ज्ञानं प्रमाणजन्यं स्वीक्रियते अन्यथाऽनुपपत्तेः। अतएव घटोऽस्तीत्यादिवाक्यजन्ये अस्तित्वं घटत्वीयमिति शाब्दबोधे घटत्वनिर्विकल्पकशाब्दबोधः स्मृतिसमएव करणम् इति लघुचन्द्रिकोक्तप्रयासोऽप्यन्विताभिधानमते नास्ति॥

एवं तत्त्वमसीत्यादौ निर्विकल्पकशाब्दबोधवादिभिः वार्तिकोक्त पक्षत्रये प्रथमपक्षे घटत्वनिर्विकल्पकशाब्दबोधस्यैवाभ्युपेयतया न निर्विकल्पकस्य शब्दप्रमाणजन्यत्वसम्भवः। प्रमाणत्वावच्छेदेन अगृहीतग्राहिधीजनकत्वनियमात् इति दूषणं कथं घटते? स्मृत्यनुभवविलक्षणानन्तबोधकल्पनापेक्षया तृतीयपक्षे स्मृतिद्वारकसंसर्गानुभावकत्वस्यैव लघुत्वात् (लघुचं) इतिचेत् अनयैव रीत्या महावाक्यजन्यबोधस्थले निर्विकल्पकशाब्दबोधकल्पनापेक्षया संसर्गावगाहिबोधएवकल्प्यताम् एवंच वार्तिकोक्तपक्षत्रये तृतीयपक्षस्य तत्रतत्र वार्तिकोक्तिभिः विरुद्धस्य वार्तिककारसिद्धान्तत्वकथनपूर्वकं 'तत्त्वमसि' इत्यत्र 'प्रातिपदिकार्थे प्रथमा' इति पाणिनिसूत्रस्य महाभाष्याद्याशयविरुद्धस्य पाणिनेरसम्मतस्य अर्थस्य पञ्चपादिकासङ्क्षेपशारीरकादिषूक्तस्य स्थापनप्रयासः ब्रह्मानन्दसरस्वतीनामभिनिवेशमूलः न सर्वसम्मत इति सिद्धम्। अतः प्रकृतिप्रत्यययोरर्थभेदेन पदस्य विशिष्टार्थप्रतिपादनमवर्जनीयमिति 'तत्त्वमसि' इत्यादौ स्मृतिप्रमाविलक्षणनिर्विकल्पकशाब्दबोधरूपवाक्यार्थबोधः नैव घटत इति बोध्यम्॥

'प्रकृतिप्रत्यययोरर्थभेदेन' 'पदभेदश्चार्थभेदनिबन्धनः' इत्यत्र अर्थशब्दस्य वृत्त्यधीनोपस्थितिविषयपरतया शक्यलक्ष्योभयमपि तत्रविवक्षितम्। एवं च 'सत्यं ज्ञानमनन्तम्' इत्यादौ लक्षणयोपस्थितस्य सत्यत्वाद्युपलक्षितस्य बोधाङ्गीकारेऽपि उपलक्षणोपलक्षितयोरुभयोरपि बोधे भानमावश्यकम्। उपलक्षितबोधस्थले उपलक्षणाप्रकारकबोधस्य नैयायिकादिभिरनङ्गीकारात् इत्युपलक्षणबोधोऽपि न निर्विशेषविषयकः इत्याशयः॥ पदसङ्घातरूपस्य वाक्यस्येत्यादि।

## श्रुतप्रकाशिका

**ननु** निर्विशेषशब्देन निर्विशेषं वस्तु किं प्रतिपन्नम् । उताप्रतिपन्नं उत सविशेषं वस्तु प्रतिपन्नम् आद्ये निर्विशेष वस्तुनःशब्देन प्रतिपादना * न्निषेधोऽनुपपन्नः । द्वितीयेतु निषेध्याप्रतिपत्तेर्निषेधोऽनुपपन्नः तृतीयेतु सविशेषनिरासःकृत- स्यात्–नैवम् । * भ्रान्तिप्रमितिविभागात् निर्विशेषवस्तुनि शब्दस्य प्रमाणभावो हि निषिध्यते नतु भ्रमहेतुत्वम् । अतो * निर्विशेषशब्दजनिता * मिथोऽन्वयानर्हार्थगोचरा भ्रान्तिः प्रमितिजनकैश्शब्दैर्बाध्यत इतियुक्तम् । * अधिकरणतदसाधा- रणनिषेध्य प्रतिपक्षधर्मतो विशेषशब्दस्य सङ्कोचानभ्युपगमे हि * अधिकरणालाभान्निषेधकशब्दस्यानन्वयएवस्यात् । * नहि निर्विभक्तिकः * पदान्तरानन्वितो निर्विशेषशब्दोऽर्थाभिधायी अतस्सङ्कोचाभावे व्याघातः यद्यपि कथंचिद्विभक्त्यर्थो न विवक्षितः । तथापि निर्विशेषपदस्य बहुव्रीहित्वादन्यपदार्थाभिधानमवर्जनीयम् । * तत्पुरुषप्रयोगेच्च अधिकरणाभिधानम- वर्जनीयम् । अतो यदि निर्विशेषशब्दः प्रमाणभूतवाक्यस्थः तदा विषयविभागो द्रष्टव्यः सकलविशेषशून्यप्रतिपादनासा- मर्थ्यात् । नगरे कोविशेष इत्युक्ते न कश्चिदपीत्यादिषु वाक्येषु सविशेषनिषेधः संकुचितविषयोदृष्टः तथा शास्त्रेष्वपि ' अविशेषास्ततोहिगत ' इति गन्धादिगुणान्वितानामपि पृथिव्यादीनां शान्तत्वघोरत्वमूढत्वरूप कतिपयविशेष विरहाविव- क्षया अविशेषशब्दः प्रयुज्यते ॥

## गूढार्थसंग्रहः

अन्विताभिधानवादिमते संसर्गे शक्त्यङ्गीकारेऽपि संसर्गविशेषस्य वाक्यमहिम्नैव बोधः । अभिहितान्वयवादिमते प्रकृति- प्रत्ययार्थसंसर्गे, केषांचिन्मते प्रवृत्तिनिमित्ततदाश्रयसंसर्गेऽपि शक्तेरेवानङ्गीकारात् वाक्यादिबलादेव तद्भानमिति पक्षद्वयेऽपि संसर्गाविषयकबोधः अप्रामाणिकएव यत्रतु एकविधादेव वाक्याद्विभिन्नसंसर्गकबोधः आनुभाविकः तत्र तात्पर्यबलादेव संसर्ग विशेषबोध इति नैयायिकानां सम्मतम् । पदतात्पर्यबलादेव पदार्थैः लक्षणया संसर्गविषयकविशिष्टवाक्यार्थबोध इति भाट्टानां मतम् । नतु क्वापि शब्दात् संसर्गाविषयकशाब्दबोधः । अतएव मण्डनमिश्रेण ब्रह्मसिद्धौ (नियोगकाण्डे) ' तथाच ' तत्तु समन्वयात् इति चोदनालक्षणाद्धर्मात् तुशब्देन ब्रह्म समन्वयगम्यमित्युक्तम् । समन्वयोहि पदार्थानां संसर्गे विनियोगः । ततो ब्रह्मगम्यते न चोदनात इत्यर्थः ' इत्युक्तम् । अत्र ' तत्त्वमसि ' इति वाक्यं पूर्वमुपादाय सदस्मीति धारयेदित्यप्युक्त्यामहावाक्यानां संसर्गविषयकबोधजनकत्वमेवाङ्गीकृतम् । ' भिन्नो घटः ' इत्यादौ यथा नारु- ण्डार्थता तथाउत्तरत्र भाष्यएव व्यक्तीभविष्यति ॥

मण्डनमिश्रपक्षे अभिहितान्वयवादः अन्विताभिधानवादो वा कश्चित्सम्मत इति प्रतिभाति । एवं च ' अन्वि- ताभिधानमित्यत्र अन्वितेत्यस्य स्वघटितवाक्यतात्पर्यविषयार्थकत्वात् । तथाच यस्यपदस्य स्वघटितवाक्यतात्पर्यविषयः योऽर्थः आन्वितोऽनन्वितो वा तत्रैव तस्यानुभावकत्वम् ' इति बिन्दुटीकाद्युक्तिरनादरणीया ॥ अतः अभिहितान्वयवादिनः आन्वि- ताभिधानवादिनश्च कस्यापि दार्शनिकस्य शब्दप्रामाण्यवादिनः शब्दान्निर्विकल्पकशाब्दबोधस्य असम्मतत्वेन ' तं वौपनिषदं पुरुषम् ' इत्यादौ सविशेषबोधविवक्षायाः पूर्वमुपपादनेन ' न तदुभयं श्रुतिमस्तके पदानाम् ' (सं.शा.१. ३८६) इत्यत्र अभिहितान्वदवादस्य आन्विताभिधानवादस्य च वेदान्तेषु असम्भवस्य सर्वज्ञात्ममुनिभिरेवोक्त्या च ' तत् त्वमसि ' इत्यादौ स्मृतिप्रमाविलक्षणनिर्विकल्पकशब्दप्रमाणजन्यशाब्दबोधः अखण्डार्थनिर्विशेषविषयकः न कस्य चित् दार्शनिकस्य शब्दप्रमाणगम्यः सम्प्रातिपन्न इति अयमपि व्योमारविन्दतुल्य इति भावः ॥

ननु वैभाषिकमते प्रत्यक्षं निर्विकल्पकं प्रमा, धर्मिमात्रविषयकम् । सप्रकारकं ज्ञानंतु अप्रमेति सिद्धान्तितम् । अतः सप्रकारकज्ञानसामान्यं भ्रम एव । शब्दजन्यनिर्विकल्पकप्रत्यक्षमेव प्रमा । नैयायिकैः निर्विकल्पकप्रत्यक्षस्य संसर्गानव-

## श्रीभाष्यम्

**सामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम्। प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेद-भिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः। सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पकमपि सविशेषविषयमेव।**

## श्रुतप्रकाशिका

एवं ज्ञानस्वरूपे आत्मन्यन्तरङ्गतया स्वानुभवशब्दौ निरूपितौ अथ व्यतिरिक्तप्रमाणेषु मूलभूतस्य प्रत्यक्षस्य सविशेषविषयत्वमुपपादयति। **प्रत्यक्षस्येत्यादिना**। निर्विकल्पकानुभूतार्थस्य सविकल्पके प्रतिसन्धानस्य वक्ष्यमाणत्वा, त्तदुपयोगित्वेनच * सविकल्पकस्वरूपं प्रदर्शितम्। अथ निर्विकल्पकस्य सविशेषविषयत्वं प्रतिजानीते। **निर्विकल्पकमपीति**।

## गूढार्थसङ्ग्रहः

गाहिनः विशेष्यावृत्त्यप्रकारकत्वेन प्रमात्वस्याभ्युपगमात्। वार्तिकोक्तपक्षद्वये घटत्वनिर्विकल्पकशाब्दबोधस्य प्रथमपक्षे अङ्गीकारात् खण्डदेवेन भाट्टकौस्तुभे आकृत्यधिकरणे, गदाधरेण शक्तिवादे मीमांसकमतविचारावसरे, भट्टमते घटपदार्थनिर्विकल्पकस्य स्फुटमभिधानात् इति शङ्कायामाह– **प्रत्यक्षस्येत्यादि**।

**निर्विकल्पमपीत्यादि**। उक्तं च प्रत्यक्षसूत्रे सन्मात्रग्राहिप्रत्यक्षनिराकरणावसरे (श्लो.वा.) 'तदयुक्तं प्रतिद्रव्यं भिन्नरूपोपलम्भनात्। नह्याख्यातुमशक्यत्वात् भेदो नास्तीति गम्यते ॥ (११७) निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः। ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥ (११८) नचासाधारणत्वेन (नह्यसाधारणत्वेन) परव्यावृत्त्यकल्पनात्। विशेषानुगमाक्लृप्तेः सामान्यमिति नापि तत् ॥' (११९) अत्र न्यायरत्नाकरः— द्व्यात्मकस्य- सामान्यविशेषात्मकस्येत्यर्थः। सामान्यावभासोऽपि प्रतीतिसिद्ध एव। नहि निर्विकल्पकेनागृहीतस्य सविकल्पकेनापि ग्रहणं सम्भवति। न वा अगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञा सम्भवति। तस्मात् सामान्यं विशेषश्च निर्विकल्पकेऽपि प्रकाशत एव। **ननु 'न विशेषो न सामान्यं तदानीमनुभूयते' इत्युक्तम्। तत्कथं तयोर्ग्रहणमुच्यते अत आह– लक्षणाऽऽख्येयं ...नापि तदित्यन्तेन। नहीदानीमप्यनुवृत्तिव्यावृत्त्योर्ग्रहणमुच्यते। यात्वियं गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या गृह्यमाणस्य वस्तुनः लक्षणमाख्यायते सामान्यविशेषात्मकं तद्वस्त्विति। ज्ञात्रा पुनः शुद्धमेवानुवृत्तिव्यावृत्तिरहितं गृह्यते, नत्वसाधारणत्वेन ; परेभ्यो व्यक्त्यन्तरेभ्यो व्यावृत्तेरकल्पनात्। तथा व्यक्त्यन्तरानुवृत्तेरकल्पनात् न सामान्यमपि गृह्यते अतो न विरोधः इति' इति ॥

काशिकाऽपि– 'शुद्धं गृह्यते इत्येतदेव प्रपञ्चयति– नहीति। अयमभिप्रायः। स्वरूपमात्रेण सामान्यविशेषौ निर्विकल्पकेन गृह्येते। नासाधारणतया, सामान्यतया च। व्यावृत्त्यनुगमविकल्पाभावात् इति। अनुगमव्यावृत्तिधर्माणौ सामान्यविशेषौ। न पुनरनुगमव्यावृत्ती एवेति' इति। 'अस्ति ह्यालोचनं नाम प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्' ११२इत्यत्र 'यदितु नादावुदीयते निर्विकल्पकं विज्ञानमित्युच्यते। ततस्सविकल्पकमपि कथमात्मानंलभते। तद्धि सङ्केतकालपूर्वभाविशब्दादिस्मरणपूर्वकम्। नचाकस्मादेव तत्स्मरणमाविरास्ते। निर्विकल्पोद्बोधितप्राचीनभावनाबीजजन्मानस्तु विकल्पाः इति युक्तं यदात्मानं लभत इति। अपि च, सन्ति केचित् व्यवहाराः ये निर्विकल्पकमात्रादेव भवन्ति। यथाऽग्निना दह्यमानस्य सहसाऽपसरणम्। तद्धि परामर्शानपेक्षमेव झटिति जायमानमुपलभ्यते। तिर्यग्बालानां च अविकल्पकेनैव सर्वो व्यवहारः। नच तेषां सूक्ष्मशब्दसद्भावे प्रमाणमस्ति।' इति च ॥

## श्रुतप्रकाशिका

एकजातीयपिण्डेषु द्वितीयादिपिण्डग्रहणस्य सविकल्पकत्वं प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वंच हृदिनिधाय हेतुमाह—

## गूढार्थसङ्ग्रहः

'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्' (जै.सू.१.१.४) इति सूत्रे इन्द्रियसन्निकर्षजातं प्रत्यक्षमित्युक्त्या निर्विकल्पकमपि तादृशमेव । इन्द्रियसन्निकर्षश्च सामान्ये विशेषे तयोस्सम्बन्धेऽपिच वर्तते । अतः त्रितयावगाहि निर्विकल्पकम् । अनुवृत्तिव्यावृत्त्यवगाहि सविकल्पकम् । इयं गौरिति ज्ञानं निर्विकल्पकम् । इयं च गौः, सेयं गौः, इतिच ज्ञानं सविकल्पकम् । निर्विकल्पके त्रयाणां विशेष्यविशेषणसम्बन्धानां तादृप्येणैव भानम् । सविकल्पके च व्यक्त्यन्तरे अपि सामान्यज्ञानात् अनुवृत्तिरधिकतया भासतइति निर्विकल्पकं सविशेषविषयकमेव । 'बालमूकादिविज्ञानसदृशम्' त्यइनेन शब्दानभिलप्यस्यापि निर्विकल्पकस्य प्रवृत्तिहेतुत्वं बोधितम् । प्रवृत्तिहेतुज्ञानंच सप्रकारकमेव । अतः भट्टमते निर्विकल्पकप्रत्यक्षं सप्रकारकमेव न निष्प्रकारकमिति सिद्धम् ॥

प्रकरणपञ्चिकायामप्युक्तं प्रभाकरशिष्येण शालिकानाथेन— 'निर्विकल्पकेन सामान्यविशेषौ द्वे वस्तुनी प्रतिपद्यमानेनापि तयोर्भेदो गृहीतुं न शक्यते । न हि वस्तुभेदमात्रेण भेदसिद्धिः । किं तु धर्मान्तरग्रहोऽपि भेदबुद्धौ सहकारी । तेनानुगतिव्यावृत्ती धर्मान्तरभूते अगृह्णतः सत्यपि सामान्यविशेषयोर्भेदे भेदबुद्धिर्नासीत् । उत्तरकाले च वस्त्वन्तरानुसन्धानेन ते प्रतीत्य भिन्नत्वमवसीयेते । भेदे च सति विशेषणविशेष्यभावावसाय इति न निर्विकल्पकदशायां विशिष्टबुद्धिः' इति ॥

अत्र 'साक्षात्प्रतीतिः प्रत्यक्षम्' इत्यादिप्रागुदाहृत (२६१पुटे) तद्ग्रन्थपर्यालोचनायां प्रतीतिसामान्यस्य मितिमातृमेयविषयकत्वलाभेन 'सविकल्पाविकल्पाच प्रत्यक्षा बुद्धिरिष्यते' इति तदनन्तरश्लोकोक्तनिर्विकल्पकेऽपि मितिमातृविषयकत्वं तत्सम्मतम् । एवं च ज्ञानविशिष्टविषयकत्वं निर्विकल्पके वर्तत एव । एवं सामान्यविशेषयोर्ग्रहणे तत्सम्बन्धोऽप्यवर्जनीयः । तत्रापि सन्निकर्षसत्वात् । सामान्यविशेषयोरनुवृत्तिव्यावृत्तिधर्मवत्वज्ञानमन्तरा तयोर्भेदो न ज्ञायते । वस्त्वन्तरग्रहणे अनुवृत्तिर्ज्ञायते सविकल्पक इत्याशयेन निर्विकल्पकस्य विशिष्टबुद्धित्वाभावोक्तिः, नतु संसर्गाविषयकत्वेन (सांसर्गिकाविषयत्वानिरूपकत्वेन) ; इन्द्रियसन्निकर्षस्य सर्वांशे सत्वात् । विशिष्टबुद्धौ विशेषणज्ञानहेतुकत्वस्य एतन्मतेऽनङ्गीकारेण घटमहं जानामीत्येव निर्विकल्पकाकाराच्च । अनुवृत्तिव्यावृत्त्योरज्ञाने सामान्यविशेषयोः सामान्यत्वविशेषत्वरूपाभ्यां ज्ञानं न सम्भवति । अतः इतरव्यावृत्तिरूपभेदावसायः न घटत इत्याशयः, नतु 'बालमूकादिविज्ञानसदृशम्' इति कुमारिलश्लोकविवक्षित प्रवृत्तिप्रयोजकसप्रकारकज्ञानत्वाभावविवक्षया इति बोध्यम् ॥

एतेन न्यायकन्दलीवाक्यान्यपि व्याख्यातानि ॥ नैयायिकैरपि— 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम् अव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' (गो.सू.१.४) इत्यत्र अव्यपदेश्यपदे विवक्षितं निर्विकल्पकम् इन्द्रियसन्निकर्षानन्तरजातत्वेन विशेष्यविशेषणसम्बन्धत्रितयविषयकमेव । परं तु व्यवसायानन्तरं अनुव्यवसायाङ्गीकारेण विशिष्टबुद्धौ विशेषणज्ञानकारणत्वाङ्गीकाराच्च न विशिष्टबुद्धिरूपम् । निर्विकल्पके विशेष्यविशेषणसंसर्गेषु तुरीयविषयतैव स्वीक्रियत इति, प्रकारावगाहित्वं संसर्गावगाहित्वमपि वर्तत एव । अतः विवर्तवादिसम्मते प्रकारसंसर्गानवगाहि निर्विकल्पकं न भट्टादीनां सम्मतमिति सिद्धम् । भट्टमते ज्ञानस्य स्वप्रकाशत्वाङ्गीकारे अर्थप्रतीतिसमकालमेव ज्ञानप्रतीतेरावश्यकतया बाह्यार्थापलापियोगाचारमतनिरसनं न सुकरमित्यभिप्रेत्य ज्ञानस्यातीन्द्रियत्वाङ्गीकारेण निर्विकल्पकस्य मितिमातृविषयकत्वाभावेऽपि सिद्धान्ते ज्ञानस्य स्वप्रकाशत्वाभ्युपगमेन प्रभाकरमत इव निर्विकल्पकस्यापि मितिमातृविषयकत्वमभ्युपगम्यत इति बोध्यम् ॥

### श्रीभाष्यम्

**सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात् । निर्विकल्पकं नाम केनचित् विशेषेण वियुक्तस्यग्रहणम् । न सर्वविशेषरहितस्य । तथाभूतस्य कदाचिदपि ग्रहणादर्शनादनुपपत्तेश्च । केनचिद्विशेषेणेदमित्थमितिहि सर्वा प्रतीतिरुपजायते । त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात् ।**

### श्रुतप्रकाशिका

**सविकल्पकइति** । विशिष्टप्रतिसन्धानमिति षष्ठीसमासः कर्मधारयोवा । स्वस्मिन् निर्विकल्पके अनुभूतजात्यादिपदार्थविशिष्टवस्तुविषयस्य सविकल्पके प्रतिसन्धानस्य हेतुत्वादित्यर्थः । प्रथमपिण्डस्य विशिष्टतयाऽवगतत्वमर्थलब्धम् । प्रथमपिण्डजातिविशिष्टतया प्रतीतेर्हि द्वितीयादिषु जात्यनुवृत्तिबुद्धिलक्षणं प्रतिसन्धानं घटते । कथं प्रतिसन्धानं सकलविशेषशून्यविषयंहि निर्विकल्पकमिति हेत्वसिद्धिमाशङ्क्याह । **निर्विकल्पकंनामेति** । सकलविशेषवैधुर्याभावमुपपादयति । **तथाभूतस्येति** । सकलविशेषशून्यग्रहणं किं दर्शनादभ्युपगम्यते किंवाऽनुपपत्त्या कल्प्यतइति विकल्पे न तावद्दर्शनमित्याह **कदाचिदपीति** । कल्पनं व्युदस्यति । **अनुपपत्तेरिति** । निर्विशेषज्ञानबाधिकैवानुपपत्तिर्दृश्यते । तत्कल्पिकातु दूरतो निरस्तेति भावः । अदर्शनं विवृणोति । **केनचिदिति** । प्रकारविशेषनियमोनेति भावः । उत्तरत्र ग्रहणायोगादिति पञ्चम्या हेतुत्वं स्फुटम् । अत्र पञ्चमीस्थाने हिशब्दः, इदमित्थमिति प्रतीतिमेव विवृण्वन्नर्थात्सकलविशेषशून्यग्रहणकल्पनामपि व्युदस्यति । **त्रिकोणेति** । अनुपपत्तिं विवृणोति **ग्रहणायोगादिति** । * अध्याहृतशङ्कावाक्येन ग्रहणायोगादिति पञ्चम्यन्तान्वयः । त्रिकोणं गोमुखं ग्रहणायोगात् दृष्टव्याप्तिविरोधेन सकलविशेषशून्यग्रहणकल्पनस्यानुपपन्नत्वादित्यर्थः । अनुपपत्तेरित्यनेन विपक्षे बाधकतर्कोऽप्यभिप्रेतः । सविशेषविषयत्वाभावे प्रत्ययत्वमेव हीयेतेति अस्य तर्कस्यानुग्राह्यं प्रमाणं प्रत्यक्षं योग्यानुपलम्भश्च ॥

**यद्वा** अनुपपत्तेरित्यनेन विशेषविषयत्वे साधकं प्रमाणं विवक्षितम् । प्रथमाक्षसंनिपातजं ज्ञानं सविशेषविषयं ज्ञानत्वात् सम्प्रतिपन्नज्ञानवदिति । एवं साधकप्रमाणाभावबाधकप्रमाणसद्भावाभ्यां विवक्षितकतिपय विशेषशून्यग्रहणं

### गूढार्थसंग्रहः

**सविकल्पक इत्यादि** । उक्तंच श्लोकवार्तिके– 'तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि । विकल्पयन् स्वधर्मेण वस्तुप्रत्यक्षवान्नरः ॥ (३२३) तच्चैतदिन्द्रियाधीनमिति तैर्व्यपदिश्यते । तदसम्बन्धजातं तु नैव प्रत्यक्षमिष्यते ॥' (३२४) इति । अत्र न्यायरत्नाकरः– 'तथाऽपि कथम् ? स्मरणोपेताक्षव्यापारजन्यस्य सविकल्पकस्य प्रत्यक्षत्वमत आह, तेनेति । पुरुषो हि पूर्वदृष्टं जात्यादि कालान्तरे चक्षुरादिभिर्गृहीत्वा तस्य पूर्वदर्शनं मनसा तदित्यनुसन्धाय अनुपरतेन्द्रियव्यापारः पुरःस्थितमर्थं विकल्पयन् प्रत्यक्षवानेव । तदानीमपीन्द्रियव्यापारस्याविरमादिति' इत्यादि । पूर्वं 'निर्विकल्पकबोधेऽपि' इति श्लोकव्याख्याने न्यायरत्नाकरे— 'नवा अगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञा सम्भवति । तस्मात् सामान्यविशेषश्च निर्विकल्पकेऽपि प्रकाशत एव' इत्युक्त्वा, अत्रेत्थमुक्त्या निर्विकल्पकानुभूतपदार्थविशिष्टप्रतिसन्धानं सविकल्पकं, निर्विकल्पके प्रतिसन्धानहेतुत्वं च भट्टसम्मतमिति स्फुटम् । इत्थमभ्युपगम एव निर्विकल्पके एकस्यां व्यक्तौ गृहीताया जातेः सविकल्पके अन्यस्यामपि ग्रहेण सविकल्पस्यानुवृत्तिविषयकत्वं सम्भवति ॥

एवं च निर्विकल्पकस्य सप्रकारकज्ञानत्वमन्तरा उक्तार्थो न घटत इति निर्विकल्पकमपि सविशेषविषयकमेवेति शालिकानाथेनाप्यङ्गीकरणीयम् । अन्यथा व्यक्त्यन्तरेऽपि सामान्यग्रहे अनुवृत्तिर्गृह्यत एवेति तदुक्तिरसङ्गतैव स्यात् ।

## श्रीभाष्यम्

**अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्-द्वितीयादिपिण्डग्रहणं सविकल्प-**
**कमित्युच्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते । द्वितीयादि**
**पिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूप गोत्वादेरनुवृत्तिधर्म-**

## श्रुतप्रकाशिका

अनेन निर्विकल्पकशब्दस्य संकुचितवृत्तित्वं फलितं सच संकोचः कस्मिन्विषयइत्यत्राह । **अत-**
र्विकल्पकमिति सिद्धम् । अनेन निर्विकल्पकशब्दस्य संकुचितवृत्तित्वं फलितं सच संकोचः कस्मिन्विषयइत्यत्राह । अत-
इति । अतः उक्तादर्शनानुपपत्तिभ्यामित्यर्थः । प्रथमद्वितीयपिण्डयोः सविकल्पकनिर्विकल्पकशब्दौ न संकेतितौ । अत-
स्तयोःपिण्डयोर्वैषम्यं वक्तव्यमिति शङ्कायां ग्राह्याकारभेदं दर्शयति । **तत्रेत्यादिना वाक्यद्वयेन** । * गोत्वानुवृत्तिप्रती-
त्यप्रतीत्योः सविकल्पक निर्विकल्पकशब्दयोः प्रवृत्तौ निमित्ततां दर्शयति । **प्रथमप्रतीतेत्यादिना वाक्यद्वयेन** । पूर्वग्र-
न्थोक्तं गोत्वं संस्थानशब्देनाविशेषितम् तेन पराभिमतविलीनाज्यगतघृतत्वादेरिव प्रत्यक्षत्वे व्यंजकापेक्षया विलम्बो नास्तीति
दर्शितम् । तदेव संस्थानमनन्तरग्रन्थे सास्नादिशब्देन निर्दिश्यते ॥

## गूढार्थसंग्रहः

मीमांसकानां सर्वेषामपि मते निर्विकल्पकं सविशेषविषयकमेवेति बोध्यम् ॥
अतः सविकल्पकस्यानुवृत्तिविषयकत्ववादिनां मीमांसकानां सर्वेषामपि मते निर्विकल्पकं सविशेषविषयकमेवेति बोध्यम् ॥ खण्डदेवस्याप्या-
मीमांसकमते पदादालोचनरूपं स्मरणमेवोक्तं शक्तिवादे गदाधरेण । एवमेव आकृत्यधिकरणकौस्तुभे खण्डदेवस्याप्या-
शयो वाच्यः । ' पदार्थानां तु मूलत्वं दृष्टं तद्भावभावतः ' (श्लो॰वा.वा.अधि.१११) ' पदार्थेषूपयुक्तानां पुनर्व्यापार-
कल्पना । पदार्थानां च सामर्थ्यं गम्यमानमपह्नुतम् ॥ आनन्तर्याद्धि वाक्यार्थः तद्धेतुत्वं न मुञ्चति ' (वा.अ.११४)
इत्यत्र वाक्यार्थबोधे पदानां हेतुत्वाभावोक्त्या पदैः पदार्थस्मृतिः न घटत इति शाब्दबोध एव अवश्यमङ्गीकर-
णीयः इति चेत्—

न । ' साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथाऽपि नैतास्मिन् पर्यवस्यन्ति निष्फले ॥ (३४२)
वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥ ' (श्लो.वा.वा.अधि.३४३)
इत्यत्र वाक्यार्थप्रतीतौ पदानां साक्षाद्धेतुत्वाभावेऽपि पदार्थप्रतिपादनद्वारा हेतुत्वमुक्तम् । एवं ' ओदने साध्यमाने हि
पाकः करणमिष्यते । अकृतस्सोऽपि नास्तीति पुनः करणवाञ्छनम् ॥ करणं ज्वलनादीनि तस्य काष्ठादि वा तथा ॥ (२
८९) इतिकर्तव्यताकाङ्क्षा यावत्करणसंश्रयां । ज्वलनादिनिमित्ताऽतः काष्ठादेः पाकसङ्गतिः ॥ ' इत्यत्रापि । साधन-
साधनमपि साधनमेव, तथा लोके दर्शनात् ' इति अत्रत्यन्यायरत्नाकरे । ' अत्रापि तिरोहितेष्वेव पदेषु पदार्थानुसन्धा-
नानन्तरमवगम्यमानस्य वाक्यार्थस्य पदार्था एव साक्षात्साधनम् । पदानि तु तद्द्वारेणैव साधनं न साक्षात् ' इति
न्यायरत्नमालायां चोक्त्या पदार्थोपस्थितिद्वारा पदानां शाब्दबोधहेतुत्वं पार्थसारथेरपि सम्मतम् ।

एवं च वाक्यार्थबोधहेतुत्वस्य पदेष्वपि सत्वेन तैः पदार्थस्मृतिस्सम्भवत्येव । पदार्थानां ज्ञाततया पदैः तद्बोधः
शाब्दबोधरूपो न भवति । ज्ञातार्थविषयकत्वेन प्रमात्वासम्भवात् । प्रमाविलक्षणशाब्दबोधस्य कस्याप्यसम्मतत्वात् ।
' यत् गृहीतग्राहि ज्ञानं तत् अनुवाद इत्युच्यते न स्मृतिरिति ' इति यद्यपि न्यायरत्नमालायामुक्तम् ; तथाऽपि अनुवाद-
स्थले स्मरामीत्यादिप्रत्ययस्यैव ब्रह्मानन्दसरस्वतीभिर्व्यवस्थापनेन पदैः पदार्थबोधः स्मृतिरूप एव । प्रमात्वासम्भवेन
शाब्दबोधत्वासम्भवात् । शब्दानन्तरमर्थप्रत्ययदर्शनात् तस्यैव तत्र कारणत्वं कल्पयितुं युक्तम्, नतु शब्दात् संस्कारो-

## श्रीभाष्यम्

**विशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम्। सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्। न पुनस्संस्थानरूपजात्यादेरग्रहणात्। संस्थानरूपजात्यादेरप्यैन्द्रियकत्वाविशेषात्। संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते।**

## श्रुतप्रकाशिका

**एवमनुवृत्तिग्रहाग्रहाभ्यां** सविकल्पकत्वं निर्विकल्पकत्वंचोक्तम्। नानुवृत्तिमात्राग्रहणान्निर्विकल्पकत्वं किंतु जात्यग्रहणाच्च अनुवृत्त्यग्रहणेहि जातिरेवागृहीतास्यादिति शङ्कायामाह— **न पुनस्संस्थानाग्रहणा**दिति। अत्रानुपपत्तिद्योतकस्संस्थानरूपशब्दः। गोत्वादेरसाधारणधर्मभूतानुवृत्त्यग्रहणात् गोत्वादिर्नगृहीत इति शङ्कायामग्रहणानुपपत्तिमेव विवृणोति— **संस्थानरूपजात्यादेरपीति।** ग्रहणकारणभूतेन्द्रिययोग्यतायामपि सएव हेतुरिति द्योतनाय पुनस्संस्थानशब्दोक्तिः निर्विकल्पकस्य सविशेषविषयत्वे प्रमाणत्वेन सविकल्पके निर्विकल्पकानुभूतार्थविशिष्टप्रत्यभिज्ञानं पूर्वमुक्तम्। पराभिमतनिर्विकल्पकाभावे योग्यानुपलम्भः प्रत्यक्षंच प्रमाणं तयोरनुग्राहकतर्कश्चानेनोक्तो भवति। किं प्रमाणानुपपत्त्या प्रमेयानुपपत्त्यावा वस्तुमात्रग्रहणाभ्युपगम इति विकल्पमभिप्रेत्य प्रमाणानुपपत्तिं प्रथमं व्युदस्यति—**ऐन्द्रियिकत्वाविशेषादिति।** अनेन- * पृथिव्यपृथक्सिद्धगन्धव्यावृत्तिः। कथमैन्द्रियिकत्वं समवायस्यानैन्द्रियिकत्वात्तदयुक्तमितिचेत् तर्हि सविकल्पकेऽपि विशिष्टग्रहणमनुपपन्नम्। अतो न भिन्नेन्द्रियग्राह्यत्वमिति न प्रमाणानुपपत्तिः असन्निहितत्वं प्रमेयानुपपत्तिः अपृथक्सिद्धत्वेन तन्नास्तीति परिहरति—**संस्थानेनेति॥**

**अनेन** चाक्षुषत्वेऽपि पृथक्सिद्धदण्डादि व्यावृत्तिः। एकेन्द्रियग्राह्यत्वेसत्यपृथक्सिद्धत्वात् प्रमाणप्रमेयानुपपत्तिर्नास्तीति ससंस्थानमेव वस्तुगृहीतमित्यर्थः। एवं पूर्वं संस्थानरूपशब्देनाभिप्रेतोऽर्थो विवृतो भवति— **इत्थमिति।** अनुवृत्त्यग्रहणान्न संस्थानरूपजात्यादेरग्रहश्शङ्कनीयः। प्रकारप्रकारिभावेन *ग्रहणोपपत्तेरिति भावः। प्रथमपिण्डग्रहणे अनुवृत्त्यग्रहणात् गोत्वमगृहीतं चेत् द्वितीयपिण्डेऽपि गोत्वं दुग्रहम्, अनुवृत्त्यग्रहात्। अनेकव्यक्त्यन्वयरूपाह्यनुवृत्तिः। साचान्वयिनः पदार्थस्य पूर्वव्यक्तिनिष्ठतापरामर्शेनैव द्वितीयादिषु गृह्यते। अतः प्रथमपिण्डे गोत्वाग्रहात् तदन्वयापरामर्शेन द्वितीयव्यक्त्यन्वयरूपानुवृत्तिः द्वितीयेऽपि दुर्ग्रहेति तत्रापि गोत्वमगृहीतम्। एवं व्यक्त्यन्तरेष्वापि गोत्वं दुर्ग्रहं स्यात्। अतः प्रथमपिण्डग्रहण एव गोत्वग्रहणमभ्युपेतव्यम्॥

## गूढार्थसंग्रहः

द्बोधः, ततश्चार्थप्रत्ययः इति युक्तम्। प्रणाल्यां प्रमाणाभावात्' इत्युक्तिरपि न्यायरत्नमालायाम् अनादरणीया। शक्तिज्ञानशून्यस्य शब्दानन्तरमर्थप्रत्ययादर्शनात्। एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति सम्बन्धिज्ञानस्य संस्कारोद्बोधकविधयैव स्मरणं प्रति हेतुत्वस्य तान्त्रिकसम्मतत्वात्। पूर्वं पदार्थानुभवेन जातस्य संस्कारस्य शब्दशक्तिज्ञानस्योद्बोधकविधया स्मृतिहेतुत्वसम्भवात्। अतः भट्टमते पदात् पदार्थविषयकशाब्दबोधाङ्गीकारे नैव साधकं वर्तत इति पदात्पदार्थस्मृतिः आलोचनरूपैवेति गदाधरोक्तरीत्यैव खण्डदेवाशयोऽपि युक्तः। अतः निष्प्रकारकनिस्संसर्गकशाब्दबोधः तथाविधप्रत्यक्षं चेत्युभयं न भाट्टमतमिति सिद्धम्॥

## श्रुतप्रकाशिका

**एवं** सकलविशेषशून्यवस्तुग्रहणं व्युदस्तम् । *जात्यादयो विशेष्यं च पृथक् निर्विकल्पके गृहीतं सविकल्पक एव
विशिष्टतया ग्रहणमिति पक्षश्चार्थान्निरस्तो भवति । विशेषणं विशेष्यं च पृथक्पृथग्गृहीतमिति कथमवगतम् ? दण्डकुण्ड-
लादिषु विशेषणविशेष्ययोः पृथक्पृथक् ग्रहणपूर्वकत्वदर्शनादिति चेत् तत्र किमपृथक्स्थितिवेलायां पृथग्ग्रहणम्, उत
पृथक्स्थितिवेलायाम् ? नाद्यः विशिष्टत्वेनैव ग्रहणात् । पृथक्स्थितिवेलायां तु विशिष्टग्रहणमेव नास्तीति न तत्प्रतीतिहेतु-
त्वम् । अतः पृथग्ग्रहणस्य विशिष्टग्रहणहेतुत्वाभावात् न गोत्वादौ पृथग्ग्रहणप्रसङ्गः ॥

*ननु विशेषणविशेष्यभावस्य सप्रतियोगिकत्वात्तज्ज्ञानस्य प्रतियोगिस्वरूपज्ञानमपेक्षितमिति विशिष्टप्रतिपत्तेः
जात्यादिपदार्थस्वरूपमात्रग्रहणपूर्वकत्वं स्वीकार्यम् ? उच्यते । प्रतियोगिज्ञानापेक्षा नाम किं विशिष्टज्ञाने प्रतियोग्यवभास
नियमः उत तज्ज्ञानस्य विशिष्टज्ञानहेतुत्वम् ? प्रथममभ्युपगच्छामः । द्वितीये च जात्यादयः पदार्थाः प्रथमं मिथोव्यावृ-
त्ततया गृहीता नवा ? न चेत्, अव्यावृत्ततया गृहीतानां पूर्वोत्तरज्वालानामिव विशेषणविशेष्यभावप्रतियोगिताप्रतीतिः
नोपपद्येत । यदि व्यावृत्ततया गृहीताः तदा व्यावृत्तिश्च विशेषणविशेष्यभावेन पारतन्त्र्यादिलक्षणेन तदौपयिकाकारान्त-
रेण वा यदि न स्यात् विशेषणविशेष्यभावव्यत्यासप्रतीतिः प्रसज्यते । वस्तुसामर्थ्यात् वास्तव एव विशेषणविशेष्यभावः
प्रतीयत इति चेत् ; तर्हि वस्तुसामर्थ्यं नाम विशेषणविशेष्यभावरूपं तदौपयिकाकारान्तररूपं वा स्यात् । वस्तुस्वभा-
वस्य सत्तयोपकारकत्वे वस्तुस्वभावादेव विशिष्टप्रतीतिसम्भवात् स्वरूपमात्रग्रहणकल्पनमयुक्तम् । ज्ञाततयोपकारकत्वे तेन
स्वभावेन व्यावृत्ततया विशेषणस्य प्रागवगतिरस्तीति प्रथमत एव विशिष्टप्रतीतिरभ्युपगता स्यात् । अतो वरं द्रव्यस्यैव
प्रथमं विशिष्टतया प्रतीत्यभ्युपगमः । *तस्यापि स्वभावस्य स्वविशेष्यभूतं विशेषणं प्रति *विशेषणत्वं न प्रथममवगतम्
*किं तु स्वरूपमात्रमितिचेत्तर्हि *विशेषणतत्स्वभावयोः विशेषणविशेष्यभावव्यत्यासः प्रतीयेत । तत्परिहाराय तस्य वस्तु-
स्वभावस्य आकारान्तराभ्युपगमेऽनवस्था ॥

*यदि व्यत्यासविशिष्टप्रतीतिप्राथम्यप्रसङ्गपरिहाराय जात्यादीनां स्वरूपमेव विशेषणभावो विशेष्यभावश्च नत्वा-
कारान्तरमित्यभ्युपगम्येत, तदा प्रथमप्रतिपत्तिः *विशेषणतया विशेष्यतया च स्यात् । तदप्रतिपत्तौ स्वरूपस्याग्रहीतत्व-
प्रसङ्गात् । तथैव प्रतीतौ प्रथमतएव विशिष्टप्रतीतिस्स्यात् । एकस्यांप्रतीतौ विशेषणतया विशेष्यतया च जात्यादीनां
प्रतिपन्नत्वात् । अतः प्रथमतएव परस्परप्रतियोगिकविशेषणविशेष्यभावप्रतीतिस्सम्भवतीत्यभ्युपगन्तव्यम् ॥

**एवं** सतिविशिष्टग्रहणस्य पृथग्ग्रहणपूर्वकत्वे *भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिस्स्यात् । पक्षव्यतिरिक्तव्यवच्छे
द्याभावेऽप्युक्ततर्कबला *त्पक्षव्यवच्छेदकत्वसिद्धेरुपाधित्वं युक्तम् । यथा प्रध्वंसाभावस्यादिमत्वादन्तवत्वे भावरूपादिमत्त्व-
मुपाधिर्भवति भावोन्मज्जनप्रसङ्गरूपतर्कबलात् । यथा अग्निमत्वाद्धूमानुमाने आर्द्रेन्धनवत्त्वमुपाधि *स्सर्वत्राग्निमति धूमो-
पलम्भप्रसङ्गतर्कबलाद्भवति तद्वत् । अतः प्रथमपिण्डग्रहणएव गोत्वं गृह्यते । द्वितीयादिष्वनुवृत्तिग्रहणमभ्युपेतव्यम् । अतः
*यथोक्तस्वरूपे एव निर्विकल्पकसविकल्पके । अनुवृत्तिग्रहाग्रहौहि सविकल्पकनिर्विकल्पकयोः प्रयोजकौ कथितौ । तत्कथं

## गूढार्थसंग्रहः

एवं 'प्रत्यक्षानुमानागमाः प्रमाणानि' (यो.सू.१.७) इत्येतद्भाष्ये 'इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूप-
रागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्' इत्युक्त्या तद्व्याख्यायां तत्त्व-
वैशारद्यांच 'विशेषावधारणप्रधानेति । यद्यपि सामान्यमपि प्रत्यक्षे प्रतिभासते, तथाऽपि विशेषं प्रत्युपसर्जनीभूतमित्यर्थः
एतच्च साक्षात्कारोपलक्षणपरं तथाच विवेकख्यातिरपि लक्षिता भवति इत्युक्त्याच प्रत्यक्षसामान्यं सप्रकारकमेव सम्प्र-

## श्रीभाष्यम्

**अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत्संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव । अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ।**

## श्रुतप्रकाशिका

द्वितीयादिग्रहणस्य सविकल्पकत्वमित्यत्राह । **अतइति** । अतः प्रथमग्रहणएव संस्थानवस्तुग्रहणात् । अनुवृत्तिग्रहणविधुरप्रथमेतरग्रहणे कथं सविकल्पकत्वमित्यत्राह । **द्वितीयादीति** । द्वितीयादिपिण्डग्रहणेषु * द्वितीयादित्वेन पिण्डग्रहणेषु ॥

**अनेन** संस्कारसचिवग्रहणं सविकल्पकमितरन्निर्विकल्पकमिति सिद्धम् । एतेन न केवलं जात्यनुवृत्त्यैव सविल्पकत्वं जातिगुणादिष्वन्यतमानुवृत्तिविशिष्टग्रहणेऽपि सविकल्पकत्वमिति सिद्धम् । सर्वविधानुवृत्तिविकलग्रहणमेव निर्विकल्पकम् । यथा एकव्यक्तौ प्रथमाक्षसन्निपातजं ज्ञानम् । नन्वेकव्यक्तावपि संस्कारजन्यं देशकालाद्यनुवृत्तिविशिष्टग्रहणं सविकल्पकं स्यात् । स्यादेव संस्कारजन्यत्वानुवृत्तिगोचरत्वाविशेषात् एकजातीयद्रव्येषु प्रथमपिण्डग्रहणमित्युक्तिस्तु जात्यनुवृत्तिप्रदर्शनार्था संस्थनिवत् संस्थानवदिति दृष्टान्तप्रदर्शनं स्पष्टीकृतार्थम् । पिण्डधर्मस्संस्थानं तद्धर्मोऽनुवृत्तिरिति धर्मिधर्मभावरूपसाम्यनिबन्धनं च दृष्टान्तद्वयोपादानम् । एवं सविकल्पकनिर्विकल्पकयोः संस्कारसचिवत्वतद्विरहौ सामग्रीवैषम्यं गोत्वाद्यनुवृत्तितद्विरहौ ग्राह्याकारवैषम्यमित्युक्तं भवति । द्विविधस्यापि प्रत्यक्षस्य सविशेषविषयत्वं निगमयति । **अतइति** ॥

## गूढार्थसंग्रहः

ज्ञातसमाधिः प्रकृतिपुरुषविवेकख्यातिरूपः सप्रकारकएव । असम्प्रज्ञातसमाधेः योगव्याख्यातृभिः वृत्तिरूपत्वानङ्गीकारेण तत्र तन्मते प्रकाराभानेऽपि वृत्तिरूपप्रत्यक्षसामान्यस्य सप्रकारकत्वमेव योगभाष्यकारादिसम्मतम् ॥

एतेन 'उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियंच साधर्म्यात्' ( .का.२७) इतिकारिकाव्याख्यायां तत्त्वकौमुद्यां 'सङ्कल्पकमत्रमन' इति सङ्कल्पेन रूपेण मनो लक्ष्यते । आलोचितमिन्द्रियेण वस्तु इदमिति सम्मुग्धम् । इदमेवं नैवमिति सम्यक्कल्पयति विशेषणविशेष्यभावेन विवेचयतीति यावत् । यदाहुः—'सम्मुग्धं वस्तुमात्रं तु प्राग्गृह्णन्त्यविकल्पितम् । तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः' ॥ इति तथाहि—'अस्ति ह्यालोचनं नाम प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञान सदृशं मुग्धवस्तुजम्' ॥ 'ततःपरं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया । बुध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता' ॥ (श्लो.वा.प्रत्यक्षसूत्रम्.१२०) इति सोऽयं सङ्कल्पलक्षणो व्यापारः मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति' इत्युक्तिरपि व्याख्याता । इन्द्रियसन्निकर्षस्य धर्मधर्मिणोरुभयोस्सत्वे निर्विकल्पके धर्माभानस्यासम्भवात् । अत्र तत्सामान्यविशेषाभ्यामित्यत्र सविकल्पके सामान्यत्वविशेषत्वरूपाभ्यां ग्रहणं विवक्षितम् । सामान्यत्वविशेषत्वरूपाभ्यां ग्रहणएव इतरव्यावृत्तिर्भासतइत्यभिप्रेत्य विशेष्यविशेषणभावेन विवेचयतीत्युक्तिः । अयंचाशयः इदमेवं नैवमिति सम्यक् कल्पयतीत्यत्र नैवमितीतरव्यावृत्तिबोधकशब्देन सूचितः । अत्र बालमूकादिविज्ञानसदृशमिति श्लोकवार्तिकोदाहरणेन शब्दानभिलप्यस्यापि निर्विकल्पकस्य प्रवृत्तिप्रयोजकतायाः बोधनेन निर्विकल्पकस्यापि सप्रकारकत्वसिद्धेः अतः साङ्ख्यमतेऽपि निर्विकल्पकंसविशेषविषयमेव । आनन्दतीर्थीयैरपि प्रत्यक्षसामान्यस्यापि सविकल्परूपत्वाङ्गीकारेण सविशेषविषयत्वमेव तेषामपि सम्मतम् । अतः निष्प्रकारकं निस्संसर्गकं निर्विकल्पकं प्रत्यक्षं वैभाषिकव्यतिरिक्तस्य दिकस्य न कस्यचिद्दार्शनिकस्य सम्मतमिति बोध्यम् ॥

## गूढार्थसंग्रहः

प्रत्यक्षस्य सन्मात्रग्राहित्वं निराकुर्वता भट्टपादेन निर्विकल्पकस्य सामान्यविशेषरूपद्व्यात्मकवस्तुविषयकत्वं सविकल्पकस्य अनुवृत्तिविषयकत्वं च व्यवस्थापितम् । एतन्मतरीत्या अनुवृत्तिविषयकत्वतदभावाभ्यां संस्कारजन्यत्वतद्विरहाभ्यां च निर्विकल्पकसविकल्पकविभागः भगवता प्रदर्शितः । एवं च धर्मधर्मिणोर्भेदाभेदोऽपि भट्टपादसम्मतः सिद्धान्तेऽप्यभ्युपगत इति प्रतीयते। प्रत्यक्षस्य सन्मात्रग्राहितायाः सिद्धान्तेऽप्यनिष्टत्वात् वैभाषिकमते विशेषविषयकं निर्विकल्पकमेव प्रत्यक्षं प्रमा, तद्विषय एव परमार्थ इत्यभ्युपगमेन तत्प्रतिकोटितया सत्सामान्यविषयकमेव प्रत्यक्षं प्रमा तद्विषयएव परमार्थ इति विवर्तवादिनां प्रवृत्तिः । तदुभयमप्यनुचितमित्यभिप्रेत्य निर्विकल्पकं सामान्यविशेषात्मकवस्तुविषयकं इत्यभिप्रेत्य भट्टपादग्रन्थः प्रवृत्तेत ॥

शास्त्रदीपिकायांच (१.१.५) प्रभाकरमतदूषणावसरे–' यदि जात्यात्मना व्यक्तिः प्रतीयते, ततो जातिव्यक्त्योरभेद एव प्रतीतिबलादापद्यते । कथं भेदाभ्युपगमः ? उच्यते । गौरयं शाबलेयः, गौरयं बाहुलेय इति उभयत्र गवाकारोऽनुवर्तमानो दृश्यते । शाबलेयबाहुलेयाकारौ तु व्यावर्तेते । तद्यदि तयोश्शाबलेयगवाकारयोरभेदस्स्यात् एकानुवृत्तावितरोऽप्यनुवर्तेत । तद्व्यावृत्तौ वा गवाकारोऽपि व्यावर्तेत । किंच तस्यामेव व्यक्तावियं गौरिति गवात्मना प्रतीयमानायामपि नेयं बुद्धिर्गोबुद्ध्योः गौर्गौरितिवत् पर्यायत्वं प्रतीयते । तस्मान्नभेदः । तादात्म्यप्रतीतेरभेदोऽप्यस्तु । पूर्वोक्तन्यायेन भेदोऽपि, तस्मात् प्रमाणबलेन भिन्नाभिन्नत्वमेव युक्तम् ' इति । इयं गौरिति बुद्धिद्वयमपर्यायेण प्रतिभासमानं एकं वस्तु द्व्यात्मकं व्यवस्थापयति । सामानाधिकरण्यंहि अभेदमापादयति, अपर्यायत्वं च भेदं, अतः प्रतीतिबलादविरोधः । इतिचोक्त्या जातिव्यक्त्योर्भेदाभेदः प्रतिष्ठापितः । एवमेव साङ्ख्यानां पातञ्जलानां च सम्मतम् । आनन्दतीर्था अपि धर्मधर्मिणोर्भेदाभेदवादिनएव । उक्तंच तैस्तत्वविवेके ' गुणक्रिया जातिपूर्वाः धर्मास्सर्वेपि वस्तुनः । रूपमेव द्विधं तच्च यावद्वस्तुच खण्डितम् ॥ खण्डिते भेदऐक्यं च यावद्वस्तु न भेदवत् । खण्डितं रूपमेवात्र विकारोऽपि विकारिणः ॥ कार्यकारणयोश्चैव तथैव गुणतद्वतोः । क्रियाक्रियावतोस्तद्वत्तथा जातिविशेषयोः । विशिष्टशुद्धयोश्चैव तथैवांशांशिनोरपि ' ॥ इति । अत्र यावद्द्रव्यभाविनां गुणादीनां अत्यन्ताभेदः अयावद्द्रव्यभाविनांतु भेदाभेदः इति विशेषउक्तः । ' समवायाभ्युपगमाच्च साम्यादनवस्थितेः ' (ब्र.सू.२.२.१३) इति सूत्रानुव्याख्याव्याख्यानसुधादौ अयमर्थः सम्यग्व्यवस्थापितः ।

न्यायामृते तु ' गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात् ' इत्यनुमानमप्युक्तम् । जातिगुणादीनां व्यक्तिगुण्यादिभिस्सह समवायसम्बन्ध इति केचित् । भेदाभेदस्तादात्म्यमित्यपरे । एवं च जातिव्यक्त्यादीनां समवायसम्बन्धं निराकुर्वतः सूत्रकृतः भेदाभेदएव सम्मत इति प्रतीयते । अतः समवायमभ्युपगच्छतां प्राभाकरवैशेषिकनैयायिकानां मतमनुचितमेव । अतएव परिणामाद्वैतिनः भर्तृप्रपञ्च भास्कर यादवप्रकाशाः ब्रह्मणा सह अचेतनानां जीवानामपि भेदाभेदमेव अङ्गीचक्रुः । गुणादिकमित्यादि न्यायामृतानुमानम् अद्वैतसिद्धावप्यनूदितम् ॥

अत्र गुरुचन्द्रिका– ' गुणादिकमिति । समानाधिकृतत्वात्– गुणादौ गुण्यादिभेदधीप्रतिबन्धकप्रमाविषयत्वात् । तथा च यो यत्प्रतियोगिकभेदधीप्रतिबन्धकप्रमाविषयः स तद्भेदाभेदवान् इति व्याप्तिः । निष्कर्षस्तु यो धर्मः यद्धर्मवदवच्छिन्नप्रतियोगिताक भेदप्रकारतानिरूपित स्वावच्छिन्नविशेष्यताकज्ञानत्वावाच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्संयोगाद्यसंसर्गकप्रमादिविषयः, सः तद्धर्मावच्छिन्नप्रतियोगिताक भेदाभेदानुयोगिताऽवच्छेदकताद्वयवान् इति सामान्यतो व्याप्तौ घटत्वादिमदवाच्छिन्नप्रतियोगिताकभेदप्रकारतानिरूपित स्वावच्छिन्नविशेष्यताकज्ञानत्वावाच्छिन्नप्रतिबध्यतानिरुपित प्रतिबन्धकताऽऽश्रय प्रमाविषयः द्रव्यत्वादिः । यथा घटत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभेदोभयानुयोगिताऽवच्छे-

## गूढार्थसङ्ग्रहः

दक इति दृष्टान्तः इति। नच द्रव्यत्वावच्छिन्ने घटत्वावाच्छिन्नभेदोऽसिद्ध इति वाच्यम्। विशिष्टकेवलयोः भेदवादिना तार्किकादिना केवलघटे द्रव्यत्वविशिष्टघटत्वादिना भेदस्वीकारात्। विशिष्टघटो घटः इत्यादिप्रतीतेः, अभेदस्वीकाराच्च। विशिष्टघटकेवलयोः भेदास्वीकारे संयोगाविशेषवतः भेदाभेदयोः वृक्षादौ तार्किकादिभिः स्वीकारेण तत्रैव दृष्टान्तत्वसम्भवाच्च। भेदधीप्रतिबन्धकाभेदभ्रमविषययोः घटपटयोरभेदाभावात् प्रमेति स्वविशेषणीभूतयावदंशे भ्रमभिन्नार्थकम्। तेन उक्तभ्रमस्य घटत्वाद्यंशे प्रमात्वेऽपि न दोषः। प्रमात्वं च बाधकाभावात् सिद्धम्। संयोगेन घटवतो भिन्नं भूतलम् इत्यादिधीप्रतिबन्धकप्रमाविषये भूतलादौ घटाद्यभेदाभावात् असंसर्गान्तं, यद्धर्मविशिष्टे यद्धर्मविशिष्टसंयोगाद्यविषयार्थकम्। नच नीलादिविशिष्टप्रतियोगिकभेदप्रकारकघटादिविशेष्यकज्ञानं प्रति प्रमायाः प्रतिबन्धकत्वस्य घटादौ नीलादिगुणविशिष्टप्रतियोगिताकाभेदविषयत्वावच्छिन्नत्वेन उक्तप्रतिबन्धकत्वे उक्ताभेदासिद्धेरुपपादकत्वेऽपि न घटादौ नीलादिगुणाभेदसिद्धिस्तथेति अप्रयोजकत्वमिति वाच्यम्। गुणगुण्याद्योरभेदान्यसम्बन्धासिद्ध्या अभेदसम्बन्धेन गुणादिविशिष्टप्रतियोगिकगुण्यादिनिष्ठभेदस्य उक्तप्रतिबन्धकत्वोपपादकत्वात्। आधाराधेयत्वस्य लोकैरननुभवात्। नह्यस्ति धीः घटे नीलः कपाले घट इति। अपि तु घटो नीलः कपालो घटः इत्यादि। अत एवेहेतिप्रत्ययहेतुः समवायः तयोस्सम्बन्ध इति कणादादिमतमनुभवविरोधाद्धेयम्। किंच घटो न नील इत्यादिज्ञानं प्रति घटविशेष्यतानिरूपिताभेदसंसर्गतानिरूपितनीलादिगुणप्रकारताकत्वेन प्रतिबन्धकत्वं मया वाच्यम्। नीलो घट इति धियः नीलगुणघटाभेदविषयकत्वस्य मयाऽङ्गीकारात्। नीलादिगुणविशिष्टनिष्ठोक्तप्रकारताकत्वेन तु त्वया वाच्यमिति ते गौरवम्॥

अथ ममापि समवायेन नीलादिप्रकारतानिरूपितघटादिविशेष्यताकत्वेन तदितिचेत्तर्हि व्यर्थमभेदान्वयनामकरणम्। यत्र यद्विशिष्टभेदज्ञानं प्रति यत्सम्बन्धेन त्वदभिमतसमवायान्यसंयोगाद्यविषयिका तयोर्विशिष्टप्रमा प्रतिबन्धिका स एव हि तयोरभेदः, घटो द्रव्यमित्यादिप्रमायां त्वयाऽपि तथाऽङ्गीकारात्। एवं च घटो न नीलः इत्यादिज्ञानं नीलगुणविशिष्टप्रतियोगिकभेदस्य त्वद्रीत्या विषयत्वेऽपि तत्र नीलगुणभिन्नप्रतियोगिकभेदत्वेनैव विषयत्वं स्वीक्रियते। तथा सति हि तज्ज्ञानं यत्रोक्तभेदप्रकारकं तत्र नीलगुणाभेदज्ञानस्य तत्पूर्वमभावनियमेन तत्र नीलगुणभेदप्रकारकत्वसम्भवेन तद्रूपेणैव प्रतिबन्धकत्वं कल्प्यत इति लाघवम्। तादृशानुमित्यादेरप्युक्तप्रकारकत्वेन नीलाभिन्नप्रतियोगिकभेदव्याप्यपरामर्शादिकार्यत्वसम्भवात्॥

किंच गुणगुण्याद्योः समवायस्वीकारे तदन्तर्भावेणापि ज्ञानयोः प्रतिबध्यप्रतिबन्धकत्वं कल्प्यमिति ते गौरवम्। तादात्म्यान्तर्भावेणतु तत्तवापि कॢप्तम्। एवं नीलगुणादिकं प्रति तद्व्यधिकरण तद्भेदत्वेन मे हेतुत्वम्। तवतु समवायावच्छिन्ननीलादिप्रतियोगिक तादृशात्यन्ताभावेनेति गौरवम्। घटो रूपमित्यादिकं तु लोकैरनुभूयतवए। पटे रूपमित्यादिकंतु काणादादिमतवासनाविलासः। उक्तं हि भामत्यां 'उभयथाच दोषात्' इति सूत्रे 'अनुभूयतेहि पृथिव्यादिकं गन्धाद्यात्मकं लोकैः' इति पुराणवचनान्यपि—आकाशं शब्दमात्रं तत्स्पर्शमात्रं समाविशत्। द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मनो भवेत् इत्यादीनि। एवमनुभवागमासिद्धं गुणगुण्याद्योरभिन्नत्वं वैशेषिकैरशक्यापह्नवमिति। इति॥

एवं अथैवमपि भेदांशासिद्धौ कस्तर्कः ? उच्यते भेदंविना न सम्बन्धः घटो घटः इति विशिष्टानुभवस्य लोकानामभावात्। नच घटो घटवानिति लोकैरनुभवात् संसर्गप्रतियोग्यनुयोगिनोः तद्व्यक्तित्वाभ्यामेव भेदोऽपेक्षित इति प्रतियोग्यनुयोगितावच्छेदकान्तर्भावेन भेदसिद्धौ न तर्कइति वाच्यम्। घटो द्रव्यमित्यादौ तद्व्यक्तित्वाभ्यामपि प्रतियोग्यनुयोगिनोः भेदाभावेन घटो घटवानित्यादिस्थलेऽपि भिन्नरूपेणैव लोके संसर्गप्रतियोग्यनुयोगितयोः स्वीकारात्। प्रतियोग्यनु-

## गूढार्थसंग्रहः

योगितावच्छेदकरूपाभ्यां भेदाग्रहे संसर्गाग्रहात् भेदभ्रमे संसर्गभ्रमाच्च भेदज्ञानस्य संसर्गज्ञानकारणत्वे आवश्यके घटोद्रव्य मित्यादौ कारणीभूतभेदज्ञानस्य भ्रमत्वे तत्प्रयोजकानन्तदोषकल्पनापेक्षया प्रमात्वकल्पनस्यैव युक्तत्वात्। प्रमात्वाकल्प-नेऽपि सिद्धान्ते प्रातिभासिकभेदसिद्धेरनपायात्। नचैवं सिद्धान्ते घटो घटः इत्यादिधीरपि स्यात् प्रातीतिकभेदसम्भवा-दिति वाच्यम्। तत्र भेदाकारवृत्तेराहार्यत्वेन ज्ञानत्वस्यास्वीकारेण स्वीकारेऽप्यनाहार्यस्यैव हेतुत्वेन उक्तहेत्वभावेन उक्त बुद्ध्यनुत्पादात्। नच भेदस्य प्रातीतिकत्वेन व्यवहारकालेऽपि बाधात् तदा तद्घटितं कपाले घटःइत्यादिधीप्रमात्वं न व्यवह्रियेतेति वाच्यम्; इष्टत्वात्। तदा घटत्वकपालत्वजात्योरप्यैक्यज्ञानेन उक्तबुद्धेरनुत्पादाच्च। संयोगविशेषत्वक-पालत्वरूपेण घटत्वेनोक्तधीरप्युक्तयुक्तेः भेदज्ञानमपेक्षत एव। संसर्गप्रतियोग्यनुयोगितावच्छेदकयोः भेदस्यावश्यकत्वात्॥

यदि चैकरूपेणापि संयोगादिसंसर्गप्रतियोग्यनुयोगितेत्याग्रहः; तथाऽपि अभेदसंसर्गं प्रति तथा नैव। वस्तुतः तद्घटे स्वकीयसंयोगादिसत्वेऽपि तद्घटः तद्घटीयः इति प्रत्ययाभावात् तद्व्यक्तिभिन्नवृत्तिसंयोगादिरेव तद्व्यक्तिसम्बन्धः। अतः घटो द्रव्यमित्यादौ अभेदसम्बन्धस्थले तद्व्यक्तेः स्वतो भेदाभावात् द्रव्यत्वघटत्वाभ्याम् औपाधिको भेदोऽवश्यं वाच्यः। अत एव घटाभावे घटो नास्तीत्यादावपि एकत्वविशिष्टघटाभाव केवलघटाभावत्वाभ्यां भेदात्सम्बन्धः। न च प्रतियोग्यनुयोगिभावस्सम्बन्धनियामकः। नच घटाभावो घटाभाववान् इत्यादौ विद्यमानोऽपि तद्घटः तद्घटीयः इत्यादौ नास्त्यननुभवादिति वाच्यम्। घटो द्रव्यमित्यादौ प्रतियोग्यनुयोगिनोः स्वतो भेदाभावस्थले औपाधिकभेदान्यप्रतियोग्यनु-योगित्वकल्पने गौरवात्। तथा च तद्घटे स्वकीयसंयोगादिसत्वेऽपि तद्घटः तद्घटीय इति धीप्रमात्वाभावात् विशेषणभे-दमात्रस्य विशेष्यगततया प्रमात्वानियामकत्वा सम्भवाच्च। विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसमानाधिकरण-संयोगादिरूपस्य तद्घटसम्बन्धस्य आश्रये संयोगादिसम्बन्धेन तद्घटप्रकारकज्ञानत्वं संयोगादिसम्बन्धेन तद्घटप्रमात्वमित्येवं-रीत्या प्रमात्वं तार्किकादिभिर्निर्वाच्यम्' इति॥

एवं 'किंच सम्बन्धप्रतियोगितानुयोगितयोः तद्घटादिस्वरूपत्वे येन संयोगेन तद्घटतत्पटयोर्मिथो विशिष्टप्रमा तेन तद्घटस्तद्घटीयः इति प्रमाऽऽपत्तितादवस्थ्यम्। तत्संयोगस्य तद्घटप्रतियोग्यनुयोगित्वासत्वात्। तयोस्तदतिरिक्तत्वक-ल्पने च गौरवम्। मन्मते द्रव्यत्वघटत्वादिभ्यां भेदस्य कल्प्यत्वे यः भूतलघटयोर्भेदः क्लृप्तः स एव। नच तत्सम्बन्धीया तदभिन्ना या प्रतियोगिता तन्निरूपितानुयोगितारूपे तत्सम्बन्धेन तत्प्रकारकधीवत्म् तत्सम्बन्धेन तत्प्रमात्वं पटात्मकप्रतियो-गितानिरूपितानुयोगिता तद्घटे स्वप्रमात्ववारणाय तदभिन्नेति तत्तद्विशेषणाभिन्नपरमिति वाच्यम्। तथाऽपि हि द्रव्यंघटः इति धीरिव द्रव्यं द्रव्यमिति धीरपि प्रमा स्यात्। द्रव्याभिन्नघटात्मकप्रतियोगितानिरूपितानुयोगितायाः द्रव्यस्वरूपत्वात् न हि मन्मतइव त्वन्मते द्रव्यघटयोर्भेदः त्वया औपाधिकभेदास्वीकारात्। नच द्रव्यत्वघटत्वादिभ्यां भेदप्रतियोग्यनुयो-गिताभावोऽपि त्वन्मतेऽतिरिक्तः कल्प्यते इति गौरवमिति वाच्यम्। त्वन्मते सर्वत्र प्रतियोगित्वानुयोगित्वयोः अतिरिक्तयोः कल्प्यत्वात् भेदप्रतियोगितानुयोगितयोः स्वावच्छेदकधर्मस्वरूपत्वाच्च। नच मन्मतेऽपि यत्र स्वाभाविको भेदः तत्र भेदे-नैव निर्वाहः यत्रतु द्रव्यत्वघटत्वादिभ्यां औपाधिको भेदस्त्वयोच्यते तत्रैवातिरिक्तयोस्तयोः कल्प्यत्वं इति वाच्यम्। एवं सति तद्घटः तद्घटीयः इत्यादिधीप्रमात्वं तद्घटधीभिन्नवृत्तिसंयोगादिघटितं तादात्म्येन प्रमात्वन्तु सम्बन्धप्रतियो-ग्यनुयोगित्वघटितम् इति वैरूप्यं स्यात्। तत्प्रतियोगिकभेदेति नाम विहाय तत्प्रतियोगितानिरूपिसम्बन्धानुयोगिता इति नाम त्वया कृतमिति पर्यवसानाच्च। एतदभिप्रायेणैव 'यथाच तत्राभेदः' इत्यादि वक्ष्यति। तस्माद्वयोरभेदस-म्बन्धः तयोर्भेदः सर्वैरपि वाच्यः, विशिष्टकेवलाद्योर्भेदं विना तज्ज्ञानादीनां मिथो वैलक्षण्यासिद्धेः भेदज्ञानस्य विशिष्ट धीमात्रहेतुत्वात् प्रमात्वस्य भेदघटितत्वाच्च। अथवा समानाधिकृतत्वात्—आधारतावच्छेदकतानवच्छेदकरूपावच्छिन्नत्व-

## गूढार्थसङ्ग्रहः

सम्बन्धेन गुण्याद्यंशे प्रमाप्रकारत्वात् । तथाच यो यदवच्छिन्नविशेष्यतानिरूपितोक्तरूपावच्छिन्नसंसर्गतानिरूपितप्रमाप्रकारतावच्छेदकः सः तदवच्छिन्नानुयोगिताकभेदाभेदोभयप्रतियोगिताऽवच्छेदक इति व्याप्तिः । नचाप्रयोजकत्वम्; नीलो घट इत्यादौ आधारतावच्छेकताऽनवच्छेदकरूपेणैव सम्बन्धस्योक्तयुक्तिभिस्सिद्धया तादात्म्यजातीयस्य घटोद्रव्यमित्यादौ क्लृप्तस्य तादृशत्वेनोपपत्तौ अतिरिक्तसमवायकल्पने गौरवात् । गुणादीत्यादिना क्रियावयवजातिविशिष्टांशानां गुण्यादीत्यादिना च तद्वतां ग्रहणम् । नच कुण्डलत्वादेः कनकत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभेदानुयोगितावच्छेदकत्वे 'कार्यात्मना तु नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥' इति भामत्युक्तभेदाभेदवादिकारिकया कारणताऽवच्छेदकरूपेणाभेदस्यैव कार्यताऽवच्छेदकरूपेण भेदस्यैवोक्तया विरोध इति वाच्यम् । तया कटककुण्डलयोः कटकत्वकुण्डलत्वाभ्यामत्यन्तभेदः कटकत्वादिकनकत्वाभ्यां तु अभेदइति भेदाभेदावित्यस्सदनुकूलस्यैवोक्तत्वात् ।

तथा हि—कार्यात्मना तु कटकत्वकुण्डलत्वादिरूपैः कार्यमात्रधर्मैरेव नानात्वम् । कारणात्मना—कारणगतधर्मेणैव कार्यात्मनावित्यनुषज्यते अभेदोऽपि । तथाच कारणगतधर्मकार्यमात्रगतधर्माभ्यां त्वभेदोऽपीत्यर्थः इति व्याख्या सम्भवति । भेदाभेदवादिना त्रिदण्ड्यादिना ब्रह्मरूपज्ञानप्रपञ्चरूपज्ञेययोः अभेदोक्तेर्व्यभिचारः । व्यभिचारादिस्तु न सम्बन्धः । सम्बन्धोऽपि न धूमादिप्रकारतावह्न्यादिविशेष्यतायां निरूपितसांसर्गिकविषयताकः । दृष्टान्तस्तु पूर्ववत् । येन द्रव्यत्वघटत्वाभ्यां न भेद उच्यते तं प्रत्युक्तयुक्तिभिः तस्य प्रसाध्यत्वात् । तदुक्तं सङ्क्षेपशारीरके... 'अविरुद्धविशेषणद्वय... तद्विपरीतरूपयोः ' (१७१) इति । एकता अभेदः ' इति ॥

एवं 'ननु भेदाभेदयोरेकत्र युगपद्ग्रहणम् तद्धियोर्मिथोविरोधित्वात् । युगपदुभयानुभवबलात् गुणगुण्यादिस्थले तदनङ्गीकारे प्रथमोक्तहेत्वसिद्धिः । नचैकस्यैवैकदा ग्रहणमविनिगम्यत्वात्, द्वयोः ग्राहकसन्निकर्षाद्यविशेषात् । 'सामानाधिकरण्यप्रत्यये व्यक्त्योर्भेदाभेदौ चकास्त ' इत्यादिभामतीविरोधाच्चेतिचेन्न । प्रत्यक्षे मिथः समानाधिकरणत्वेन तयोर्युगपद्भाने ऽप्यन्यतरविरोधितया एकतरस्य शाब्दादिबुद्धेः प्रतिबन्धकत्वसम्भवात् । एकांशधीप्रतिबन्धकदोषसत्वे तद्विरोधितया अन्यांश प्रत्यक्षेऽपि तत्सम्भवात् अन्यतरसमानाधिकरणत्वेन अज्ञायमानतद्विषयकज्ञानत्वमेव तद्विरोधितया तज्ज्ञानत्वम् । तेन न प्रमात्वघटितहेत्वसिद्धिः अव्याप्यवृत्तिस्थले, सर्वैरपि तथा वाच्यत्वात् । भामत्युक्तिः असति दोषे । अतएवात्यन्ताभेदे अन्यतरस्य भामत्यां द्विरवभासमात्रे दूषणमुक्तम् । ननु भेदानुभवविरोधः भेदानुभवस्य त्वन्मतेऽप्यसार्वत्रिकत्वात् । अन्यतरस्याभिन्नस्य धर्मिणः द्वाभ्यां रूपाभ्यां अवभासमात्रे नत्वेकरूपावच्छिन्ने अपररूपावच्छिन्नस्य विशिष्टधीः अत्यन्ताभेदे सम्बन्धासम्भवादिति तदर्थः । अथैवमपि भावाऽभावावेकत्र कथम् ? नचावच्छेदकभेदेनैव तौ साध्याविति वाच्यम् । एकावच्छेदेन तत्साधकयुक्तेरेवोक्तत्वात् । भामत्यादौ तन्मतस्य विरोधोक्त्या दूषणारुक्तेः । मणिकारैरपि 'नचैवं भेदाभेदः ' इत्यनेन तन्मतमापाद्य अवच्छेदकभेदेन स्वमते तन्मतवैलक्षण्यस्योक्तत्वाच्चेतिचेन्न । सामान्यतो विरोधेऽपिहि अव्याप्यवृत्तिस्थले अवच्छेदकभेदेनेव प्रकृते तदभेदेनापि तयोरेकत्र सम्भवः धीबलस्याविशेषात् । तदुक्तं भामत्याम्—विरुद्धमिति नः कसम्प्रत्ययः यन्नप्रामाणिकम् इति । तदेतत्सर्वं सिद्धान्ते अनुकूलम् । परन्तु एकत्र शुक्तिरजतत्वयोः प्रतीतिसत्वेऽपि तद्बलाबलपरीक्षया तदुचित तत्सत्ताभ्युपगमात् भेदाभेदावपि भिन्नसत्ताकौ तत्राप्यभेदसम्बन्धत्वाद्यन्यथानुपपत्त्यैव भेदस्य कल्प्यत्वात् व्यवहारदशायामेव विशेषदर्शनबाध्यत्वाच्च भेदः प्रातिभासिकः तदुपजीव्योऽभेदो व्यावहारिकः नच कार्यकारणभावएव भेदोपजीव्यइति वाच्यम् । स एव तथेत्यविशेषात् । कार्यकारणभावस्यापि प्रतीयमानतादात्म्यघटितान्वयव्यतिरेकग्रहोपजीवकत्वात् । साङ्ख्यादिमते वक्ष्यमाणरीत्या तस्यैवाभावाच्च । अत एवाभेदोपादाना

## गूढार्थसंग्रहः

द्भेदकल्पनेति भामत्यामभेदस्योपजीव्यत्वेनोपादानमस्याम्। सा तथा। अत एव ब्रह्मप्रपञ्चयोरपि भेदाभेदौ तथैव उक्तं परिमलादौ ' इति च ॥

यद्यपि न्यायामृते ' वस्तुतस्तु अस्मन्मते भेदो वस्तुना सविशेषाभिन्नः। ततश्चाभिन्नत्वान्नानवस्थादि। भेदप्रतिनिषेधश्च विशेषस्य सत्वान्न पर्यायत्वादिकम्। विशेषश्च भेदहीनेऽप्येकतरपरिशेषाभावादिनिर्वाहकः। तदुक्तम् ' भेदहीनेत्वपर्यायशब्दान्तरनियामकः। विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः॥ ' इति। प्रमाणं तत्रार्थापत्तिः। तथाहि ' विज्ञानमानन्दं ब्रह्म ' इत्यादिवाक्यबोध्यविज्ञानानन्दादीनां परमतेऽपि न तावद्भेदो भेदाभेदौ वा अखण्डार्थत्वात्। ' एकधैव अनुद्रष्टव्य ' मित्याद्यैकरस्यश्रुतिविरोधाच्च। तत्र भेदप्रतिनिधिर्विशेषोऽपि न चेत् कथं तच्छब्दानामपर्यायत्वम् पदान्तरावैयर्थ्यं विज्ञानानन्दयोरेकतरापारिशेषः। नच सखण्डवादेऽपि प्रवृत्तिनिमित्तयोर्भेदादपर्यायत्वम्। ' एवं धर्मान् ' इतिश्रुत्या तयोरपि भेदानिषेधात्। अर्थप्रकाशत्वनिरुपाधिकेष्टत्वरूपयोस्तयोः अर्थप्रकाशनिरुपाधिकेष्टरूपाश्रयविशेषसापेक्षत्वाच्च। आकाशशब्दाश्रयशब्दयोः निमित्तभेदाभावेन पर्यायत्वापाताच्च। नह्याकाशशब्दस्य शब्दाश्रयत्वादन्यन्निमित्तमस्ति। ज्ञानानन्दयोरेकतरपारिशेष्ये च मोक्षे आनन्दप्रकाशो न स्यात्। तस्माद्विज्ञानानन्दादेः ऐक्यश्रुतिबलादभेदः इति एकतरापरिशेषाद्यर्थं विशेषोऽप्यङ्गीकार्यः ' इति।

किंच ' एवं धर्मान् ' इति श्रुतिबलादपि विशेषसिद्धिः। अत्र हि ब्रह्मणो धर्मानुक्त्वा तद्भेदो निषिध्यते। नच भेदप्रतिनिषेधाभावे धर्मधर्मिभावो धर्माणामनेकत्वं च युक्तम्। नच धर्मानित्यनुवादः। श्रुतितोऽन्येन ब्रह्मधर्माप्राप्तेः। नचेयं श्रुतिरत्यन्तभेदनिषेधिका। भेदमात्रनिषेधात्तादृशभेदाभावस्य लोकत एव प्राप्तत्वाच्च। ' भेदाभेदौ च यः पश्येत् स याति तमएव च ' इत्यादिस्मृतेश्च। तदुक्तम्—' उक्त्वा धर्मान् पृथक्त्वस्य निषेधादेवमेव हि। विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः॥ ' इति ' इति॥ एवं ' किं चायं विशेषः प्रत्यक्षसिद्धः। तथा हि— तन्तुपटादिबुद्धीनां भिन्नघटपटादिबुद्धितः वैलक्षण्यं तावदनुभूयते। तच्च न तावत्सम्बन्धविषयत्वेन कुण्डबदरादिबुद्धितोऽपि वैलक्षण्यानुभवात्' इति॥

एवं ' तस्मादभेदविषयत्वेनैव वैलक्षण्यं वाच्यम्। अयं घटः गजाश्वादिरिव सेना, पत्रमेव ताटङ्कमित्यादौ पुरोवर्तमानघटादेरिव आतानवितानात्मकाः तन्तवः पटः शुक्लः पटः इत्यादावपि तन्त्वादिना पटस्याभेदप्रतीतेः। नचात्र पटत्वशुक्लत्वयोः एकस्थत्वमेव भातीति वाच्यम्। पटशुक्लयोरैक्यस्यापि तत्रान्तर्गतेः। अन्यथा क्वाप्यभेदो न सिध्येत्। घटः पटो नेति धीश्च भेदविषया न स्यात्। दण्डी चैत्र इत्यत्रापि दाण्डिना चैत्रस्याभेदो भात्येव। नच शुक्लः पटः इत्यत्र शुक्लवानेव शुक्लपदार्थ इति वाच्यम्। शुक्लरूपमित्यत्र यच्छुक्लं तस्यैवेह प्रतीतेः। अन्यथा इहापि शुक्ली पटः इत्यादिधीस्स्यात्। मतुब्लोपादिकल्पनं तु व्यवहारे नतु प्रतीतौ। पटस्य शौक्ल्यं रूपी पटः इत्यादिधीस्तु सम्बन्धविषया नतु भेदविषया सत्ता सती इत्यादिवत् भेदाभावेऽप्युपपन्ना। पटस्य तन्त्वनन्यत्वे च गुरुत्वद्वयं स्यात्। तन्तुयुक्ते भूतले पटव्याप्तिश्च नस्यात्। मूर्तानां सामानाधिकरण्यायोगात्। व्यवहारार्थक्रियाभेदादि तु पत्रताटङ्कादिवदित्युक्तम्। तस्मात् तन्तुपटादिबुद्धिरभेदविषयैव। यदिचेयं केवलभेदविषया, तर्हि समानाधिकरणं व्यवहारं न जनयेत्। घटः कलश इत्यव्यवहारात्। तेन ज्ञायते अधिकोऽप्यस्या विषयोऽस्तीति। नचायं भेदः पटो न शुक्ल इत्युल्लेखापातात्। भेदाभेदाविरोधाय विशेषस्यावश्यकत्वाच्च। तस्माद्योऽधिको विषयः स एव विशेष इति सिद्धं विशेषस्य प्रत्यक्षत्वम्। तदुक्तम्— ' यन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् ' इति। ' अभेदेऽपि विशेषोऽस्ति व्यवहारस्ततो भवेत् ' इति स्मृतिसिद्धश्च विशेषः ' इत्युक्तम्॥

## गूढार्थसंग्रहः

तथाऽपि 'सत्यप्यभेदे काल्पनिकभेदमादाय तथा व्यवहारोपपत्त्या विशेषस्यासिद्धेः । न च घटो न शुक्ल इति प्रतीत्यापत्तिः ; फलबलेन काल्पनिकभेदस्य सामानाधिकरण्यादिव्यवहारनिर्वाहकत्वकल्पनेन विपरीतोल्लेखनं प्रत्यहेतुत्वात्' इति अद्वैतसिद्धौ विशेषखण्डनं कृतम् ॥

लघुचन्द्रिकायां च– 'नचैवं घटो द्रव्यं नेत्यादिधीरपि प्रमा स्यादिति वाच्यम् ; नञ्भेदादिपदाभिलप्यज्ञाने तादात्म्यविरोधित्वविशिष्टभेदस्य विषयत्वात् । अत एव वृक्षे कृष्णसंयोगो नेत्यादिज्ञानेऽपि कृष्णसंयोगविरोध्यत्यन्ताभावस्यैव विषयत्वम् । नञादिपदस्य विरोध्यभावबोधकत्वेन तेनैव तादृशाभावज्ञानस्यैव अभिलापात्, विरोधस्य पदानुपस्थाप्यत्वेऽपि संसर्गविधया भानसम्भवात् । अतएव विरोधित्वमेकावच्छेदेनैकाधिकरणावृत्तित्वरूपम् । अत एव उक्तज्ञानोत्तरं घटो द्रव्यमित्यादिज्ञानस्य नोत्पत्तिः, प्रतियोगिसामानाधिकरण्यरूपाव्याप्यवृत्तित्वविशिष्टसंयोगाद्यभावज्ञानस्य तु नञ्पदानभिलप्यतया न संयोगादिविशिष्टधीविरोधित्वम् । अत एव मूले वृक्षे कृष्णसंयोग इत्यादिधीरपि मूले वृक्षे न कृष्णसंयोग इति ज्ञाने नियमेन विरोधिनी ; प्रतियोगिविरोधविशिष्टाभावनिश्चयत्वेनैव विरोधित्वस्वीकारात्, तादृशस्यैव तथात्वेन सर्वानुभविकत्वात् । अत एव च भूतले घटोऽस्ति न वेति संशयनिवृत्तये भूतले घटाभावोऽस्तीति न प्रयुज्यते, किंतु भूतले घटोऽस्तीति ।

एतेन 'विशिष्टकेवलयोर्भेदे विशिष्टसत्ता सत्ता नेति प्रमा स्यात्' इति शिरोमण्युक्तापत्तिः अपास्ता । तस्मात् 'सामानाधिकरण्यप्रत्यये भेदाभेदौ भासेते' इति वाचस्पत्युक्तिर्युक्तैव । तत्र भेदो भेदत्वरूपाखण्डधर्मविशिष्टो भावोऽभावो वा यथासम्भवं बोध्यः । अयं घटान्य इत्यादौ घटान्यस्य भेदो घटान्यत्वभेद एव ; उपहितभेदस्योपाधिभेदात्मकत्वमित्युक्तत्वात् । तथाच तस्याभावप्रतियोगिकाभावत्वेन अधिकरणात्मकत्वादिदन्त्वानिष्ठत्वेनेदन्त्वरूपत्वात् भावरूप एव सः । अयं घट इत्यादौ घटादिभेदोऽभावरूपः । अभेदस्तु तादात्म्यम् । तादात्म्यत्वंचाखण्डधर्मविशेष एव । ननु तथाऽपि तादात्म्यं न विशेषणस्वरूपम्, द्रव्यं घट इत्यादौ द्रव्यत्वोपहितस्य विशेष्यस्यापि विनिगमकाभावेन तादात्म्यत्वापत्तेः, अथ तस्य पटादिद्रव्येऽपि सत्वेन तत्रापि घटत्वोपहितप्रकारकज्ञानस्य भ्रमत्वानापत्त्या तादात्म्यत्वापत्तिरितिचेत्, सत्यम् । तथाऽपि विशेषणस्वरूपघटाद्यसम्बद्धपटादेरपि तत्तादात्म्यता स्यात् विशेषणस्वरूपस्यापि तदसम्बद्धत्वेन विनिगमकाभावात्, नह्यत्यन्ताभेदे सम्बद्धता सम्भवति । घटो घट इत्यादिप्रत्ययाभावात् । किंच स्वं न स्वीयमित्यनुभवेन स्वप्रतियोगिकत्वस्य स्वस्मिन्नसम्भवेन विशेषणस्य न स्वप्रतियोगितादात्म्यत्वसम्भवः ।

अथ आस्तां विशेषणतावच्छेदकघटत्वादेः घटादितादात्म्यता इति चेन्न ; शुद्धघटत्वादिविशेषणस्थले तदसम्भवात् घटत्वादिकमविषयीकृत्यैव अयं घट इत्यादिबुद्ध्युदयात् तद्व्यक्तित्वस्य विशेषणतावच्छेदकत्वस्थले रूपरसाद्यनेकधर्मरूपस्य तद्व्यक्तित्वस्य तद्व्यक्तित्वतादात्म्यकल्पने गौरवात्तद्व्यक्त्युत्पत्तिकालावच्छेदेन रूपादेस्तद्व्यक्तावभावाच्च, तदन्यस्यैव तत्कालावस्थायिनः तत्कल्पनाया आवश्यकत्वेन, घटत्वादेर्विशेषणतावच्छेदकत्वस्थलेऽपि तादृशतादात्म्यभानसम्भवेन घटत्वादेः तादात्म्याश्रयत्वकल्पने गौरवान्मानाभावाच्च । अथ घटादेस्तादात्म्यं तत्स्वरूपमेव, अभावादेस्स्वरूपस्यैव अधिकरणे सम्बद्धत्वदर्शनात्, स्वरूपस्यापि सम्बद्धत्वोपपत्तेः, उक्तं च बौद्धाधिकारे शिरोमणिना– 'ज्ञानस्य स्वरूपमापि विषयतानामकः तत्सम्बन्धः, अभावाधिकरणयोस्स्वरूपान्यस्यैव सम्बन्धत्वात्' इति । अत एव विषयताऽपि न ज्ञानरूपेति तेनैव पश्चादुक्तम् । अथ घटादेर्विशेषणस्वरूपस्यापि तादात्म्यत्वरूपेण घटादितो भेदसम्भवेन घटादिप्रतियोगिकत्वसंभवात् तदीयविशिष्टत्वमुपपद्यत इतिचेन्न ; घटादौ तादात्म्यत्वकल्पनायाः पूर्वं तस्य तत्सम्बद्धत्वासिद्ध्या तस्या असिद्धेः । नहि घटत्व-

## गूढार्थसंग्रहः

त्वविशिष्टप्रतियोगिकतादात्म्यत्वासिद्धेः पूर्वं तादात्म्येन तत्सम्बद्धं किञ्चित्समस्ति, येन तत्सम्बद्धस्य तादात्म्यत्वमात्रं
कल्प्येत । तथा च भेदे सिद्धे तादात्म्यत्वं कल्प्यं, तादात्म्ये क्लृप्ते तदुपहितरूपेण भेदसिद्धिरित्यन्योऽन्याश्रयः । तस्मा-
त्तादात्म्यत्वमिव तदाश्रयस्तत्र घटादिसम्बन्ध इति त्रयमपि क्लृप्तघटादिभ्योऽतिरिक्तं कल्प्यते । तत्र तादात्म्ये तदन्यस्य
घटादिसम्बन्धस्य कल्पनेऽनवस्थानाद्वरं तत्स्वरूपसम्बन्धेन घटादिसम्बन्धत्वं तस्य स्वीक्रियते ; अनवस्थाऽपेक्षया आ-
त्माश्रयस्य युक्तत्वात् । अनवस्थायां हि तादात्म्ये घटस्यैकः सम्बन्धो वाच्यः ; असम्बद्धस्य तादात्म्यस्य सम्बन्धत्वासम्भ-
वात्, एवं तत्रापि घटस्य सम्बन्धान्तरमेवं तत्रापीत्यादिमहागौरवम् । यदि तु तादात्म्यद्वयं घटस्य स्वीक्रियते तयोः पर-
स्परसम्बद्धता च स्वीक्रियते, तदाऽन्योन्याश्रयः, तत्रापि गौरवं च । यदि तु तादात्म्यत्रयं स्वीकृत्य प्रथमस्य द्वितीयं सम्ब-
न्धस्तस्य तृतीयं तस्यतु प्रथममित्युच्यते, तथाऽपि चक्रकं गौरवं च ।

अथ तादात्म्यमेकं स्वसम्बन्धिभ्यामतिरिक्तं कल्प्यते, तदाऽनवस्थाद्यपेक्षया लाघवम् । अतः स्वस्यैव स्वं प्रति सब
न्धत्वादात्माश्रयोऽपि स्वीक्रियते । अत एव बौद्धाधिकारशिरोमणौ घटाभावस्य स्ववृत्तित्वास्वीकारे आत्माश्रयेऽपि लाघव-
मुक्तम् । तच्च तादात्म्यं घटादौ रूपरसादेर्जायते । रूपादीनां नित्यत्वादुत्पत्तिनाशप्रत्ययस्य तादात्म्योत्पत्तिनाश
विषयकत्वात् ॥ पाकादिना घटादेर्नाशोत्पत्तिः रूपादीनां तादात्म्यस्यवेत्यत्र विनिगमकाभावादिति भट्टादिमतम् । म-
न्मतेत्वविद्यादेः श्रुतियुक्तिसिद्धानादित्वकात् भिन्नं दृश्यमात्रं उत्पत्तिनाशवदिति स्वीक्रियते । 'यावद्विकारं तु विभागो
लोकवत्' इति न्यायात् । विभागः तादृशाविद्यादिभेदः । यावद्विकारं- उत्पत्तिमनतिक्रम्य वर्तते, उत्पत्तिव्याप्य इति
यावत् । 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतौ इमानि भूतानीति पदाभ्यां आत्माऽविद्यादिभिन्नस्योत्पन्नमात्रस्यो-
क्तेश्च । भूतानीत्युक्ते उत्पन्नत्वसामानाधिकरण्यमात्रेण ब्रह्मजन्यत्वं लभ्यत इत्यतस्तदवच्छेदेन जन्यतालाभाय इमानीत्यु-
क्तम् । सर्वाणीति तदर्थः अथवा भूतानि सत्तादात्म्यवन्ति ब्रह्माभिन्नानीति यावत् । अविद्याद्यनादिवारणायेमानीति ।
अविद्याद्यनादिभिन्नानीत्यर्थः विशेष्यतावच्छेदकीभूत तादृशविशिष्टधर्मावच्छिन्नत्वस्योत्पत्तिमत्त्वे लाभस्त्वौत्सर्गिकव्युत्पत्त्या
भवत्येव तथाच कपालाद्यवच्छेदेन घटादेः घटाद्यवच्छेदेन कपालादेस्तादात्म्यं जायते परस्पराध्यासोक्तरीत्या जन्यमात्रस्य
तादात्म्यं जायते ॥

यत्तु कपालघटाभ्यामुपहिता सत्त्वैव तयोस्तादात्म्यमिति मतम् तत्राध्यासिकं तादात्म्येनैव चिद्रूपसत्तायाः घटाद्युप-
हितत्वं वाच्यम् ; तथाच कपालघटयोर्यत्तादात्म्यं सत्तायां सम्बन्धस्तदेव तयोरन्योऽन्यस्मिन्नपि सम्बन्धोऽस्तु ; कपालादि
तादात्म्यापन्नसत्तानुयोगिकस्य घटादितादात्म्यस्य कपालाद्यनुयोगिकत्वसम्भवात् सत्तायामेकानुयोगिकत्वापरप्रतियोगिकत्व-
योस्तादात्म्यत्वस्य च कल्पनाऽपेक्षया एकप्रतियोगिकतया क्लृप्ते तादात्म्ये अपरानुयोगिकत्वमात्रस्य कल्पने लाघवात् ।
तस्मादयमाशयस्तत्रोन्नीयते उक्तरीत्या कपालघटयोस्तादात्म्यसम्बन्धस्वीकारे एकघटनिष्ठानां रूपरसादीनामपि मिथस्तादा-
त्म्यापत्तिः ; तेषामपि परस्परोपहितायाः एकसत्तायाः स्वीकारात्, अतो यद्विशिष्टे सत्तारूपाधिष्ठानचैतन्ये आधारीभूते
यस्यारोप्यस्य तादात्म्यमारोप्यते तत्रैव तस्यारोप्यस्य तत्तादात्म्यं स्वीक्रियते ; विशिष्टस्य तदनुयोगित्वेन विशेषणस्यापि
तदनुयोगित्वात् रूपादिविशिष्टेतु चैतन्ये रसादीनां च न तादात्म्यमारोप्यते ; घटादिशिष्टचैतन्ये रूपरसादीनां युगपदा-
रोपात् । एवञ्च कपालोपहितसत्तायां वस्तुगत्या विद्यमानं घटस्य यत्तादात्म्यं तस्य तादात्म्यत्वरूपेणैवोक्तसत्तायामिव कपा
लेऽपि सम्बन्धत्वेऽप्युक्तसत्वोपहिततादात्म्यस्य स्वरूपपरिचयार्थमुभयोपहितसत्तासम्बन्धइत्युच्यते । उक्तसत्तायाअपि तादृ-
शतादात्म्यरूपसम्बन्धपरिचायकत्वात् । यथाश्रुतंत्वसङ्गतम् ; उक्तयुक्तेः सन् घटः इति प्रत्ययस्येव कपालं घटः इति प्रत्य-

## गूढार्थसंग्रहः

यस्यापि तादात्म्यत्वविशिष्टसंसर्गविषयकत्वस्य सर्वानुभाविकत्वात् उक्तसंसर्गेणैव घटाद्युत्पत्तौ कपालदलघवेनोपादानकारणत्वादि कल्पनात् तादात्म्योपहितसत्तात्वादिविशिष्टसंसर्गेण तदुत्पत्तौ तत्कल्पने गौरवान्मानाभावाच्चेत्यास्तां विस्तरः। तस्मादुक्तरीत्या भेदाभेदयोरविरोधादिकमुपपादनीयम्। वेदान्तदर्शनेतु एकाधिकरणकस्वाप्नभावाभावदृष्टान्तेन मूले वक्ष्यमाणः व्यावहारिकयोः प्रपञ्चतदभावयोरविरोधइव भेदाभेदयोरविरोधः। अथवा व्यवहारदशायामेव अवयवावयविगुणगुण्यादिभेदस्य विचारेण मिथ्यात्वनिश्चयात्तादृशभेदः प्रातीतिकः अभेदस्तु व्यावहारिकः अतो भिन्नसत्ताकत्वेन तयोरविरोधइत्यादि युक्तिरपि बोध्या इति ॥

एवं ननु विशिष्टकेवलयोर्भेदस्वीकारे एकस्यैव घटस्य तत्तद्विशिष्टाण्यनन्तानि कल्पनीयानीति महागौरवम्—इति चेन्न तादृशरूपाणामनन्तानां केवलघटभिन्नानामकल्पने केवलघटविशिष्टबुद्धितस्ताशरूपविशिष्टबुद्धीनां वैलक्षण्यानुपपत्तेः। नच तासां तत्तत्क्षण वैशिष्ट्यविषयकत्वमेव वैलक्षण्यमिति वाच्यम्; विशेष्ये विशेषणं तत्रच विशेषणान्तरं इत्येवमाकारेऽपि तत्क्षणविशिष्टघटवदितिज्ञाने तादृशविषयकत्वसत्वेन विशिष्टवैशिष्ट्यविषयताशालि तादृशज्ञानस्य ततो वैलक्षण्यानुपपत्तेः। अथ विशिष्टवैशिष्ट्यविषयताकज्ञाने तत्तत्क्षणेषु घटनिष्ठविशेषणतावच्छेदकत्वरूपस्य विषयतेणताविशेषस्य स्वीकाराद्विशेष्ये विशेषणमितिरीत्या ज्ञानेच तदभावात्तदेव वैलक्षण्यमिति चेन्न। ज्ञानविषययोः सम्बन्धोहि विषयतात्वेन तादात्म्यत्वेनैववा तत्क्षणविशिष्टवन्तं जानामीत्याद्यनुभवेन गृह्यते, नत्ववच्छेदकतात्वेन विशेष्यतात्वेन प्रकारतात्वेन सांसर्गिकविषयतात्वेन वा अखण्डधर्मेण। नचैवं विशेष्यतात्वादि विशिष्टविषयताशालितया ज्ञानग्राहकत्वं तादृशानुभवस्य सर्वसम्मतं न स्यात् इति वाच्यम्; परस्पराध्यासविवेचनोक्तरीत्या विशिष्टज्ञानमात्रस्य एकविषयतावच्छिन्नविषयत्वान्तरशालित्वेन तद्विशिष्टज्ञानग्राहकत्वादुक्तानुभवस्य विशेष्यतात्वप्रकारतात्वादि विशिष्टविषयता विशिष्टतया ज्ञानग्राहकत्वोपपत्तेः इति ॥

एवं 'वस्तुतस्तु नोक्तरूपं विशिष्टवैशिष्ट्यबुद्धित्वं, विशेष्ये विशेषणमिति ज्ञानापेक्षया विषयकृतविशेषस्य वाच्यत्वात्, विशिष्टस्य केवलादन्यत्वेन तत्प्रकारकत्वमेव। सिद्धान्ते तथैव स्वीकारात्, तस्माद्विषयतानिष्ठं यद्विषयतावच्छेदकत्वं तद्विशेष्यतात्वं तदवच्छेदकविषयतात्वं विशेष्यतावच्छेदकतात्वं, विषयतानिष्ठस्यावच्छेदकत्वस्य निरूपकत्वविशेषौ सांसर्गिकविषयतात्वप्रकारतात्वे तदवच्छेदकविषयतात्वे सांसर्गिकविषयताप्रकारतावच्छेदकते। ननु तादृशविशेष्यतात्वादीनामखण्डविशेष्यतात्वादिभ्यः को विशेषो येन तादृशेष्वेव पक्षपात इति चेत्, अवश्यं सर्वैः कल्पनीयत्वमेव विशेषः। अन्योऽप्ययं विशेषः, मूलादौ तत्सम्बन्धेच्च यदवच्छेदकत्वं यच्च तन्निरूपकत्वं संयोगादौ तत्सम्बन्धे च तज्जातीययोरेव अवच्छेदकत्वतन्निरूपकत्वयोः विषयतासु कल्पनात् विषयविषयतयोर्द्वयोरेव ते वर्तेते, नैकत्रैव तथा च विषयविषयतयोरेकमपि नापलपितुं शक्यते, तज्जातीयावच्छेदकता तन्निरूपकत्वयोः संबन्धसबन्ध्युभयसापेक्षत्वात् अखण्डविशेष्यतात्वादेः विषयतायां स्वीकारे तु तस्य ज्ञानवैलक्षण्यानुभवान्यथानुपपत्तिरेव कल्पिका। साच ज्ञानगतवैलक्षण्यमेव कल्पयेन्न विषयतानिष्ठम्। तथा च घटत्वादिकमपि ज्ञानस्यैव धर्मः, घटपटादिज्ञानानां मिथोवैलक्षण्यानुपपत्तेः। तथाच ज्ञानस्य घटादिविषयैरत्यन्ताभेदापत्त्या तार्किकाणां बौद्धस्वीकृतसाकारवादापत्तिः ॥

अथ वेदान्तिनां मतमालम्ब्य तार्किकैरेवं वाच्यम् घटादीनामुत्पत्तिविनाशवत्त्वानुभवात् ज्ञानस्यच विषयाविशेषितरूपेण तथाऽननुभवेन लाघवेनैकव्यक्तिरूपत्वान्नज्ञानस्य ज्ञातघटादिभिरभेदः। नचैवं तेषां व्यवहारो न स्यात्—व्यवहारविषयतायां तादात्म्येन ज्ञानव्यक्तेः प्रयोजकतया क्लृप्तत्वेऽपि ज्ञान एव तत्तादात्म्यसत्वात् ज्ञानभिन्नेऽपि विषये ज्ञानसम्बन्धं स्वीकृत्य तस्य तत्र व्यवहारविषयताप्रयोजकत्वकल्पने गौरवादिति वाच्यम्। ज्ञानतादात्म्यापन्नतया विष-

## गूढार्थसंग्रहः

याणां कल्पितत्वेन ज्ञान इव विषयेष्वपि कल्पितस्य ज्ञानतादात्म्यस्य सत्वात् । तथा च न ज्ञानस्य घटत्वादिकं धर्मः, नहि नैल्यादिकं गगनादावारोपितमपि तस्य धर्मः धर्मिसमसत्ताकस्यैव धर्मपदमुख्यार्थत्वात् । नच ज्ञानानां मिथोवैलक्षण्यानुभवानुपपत्तिरिति वाच्यम् । ज्ञानानां मिथो विलक्षणविषयतादात्म्यमनुभूयते नतु मिथो वैलक्षण्यम् । तथा च ज्ञानगतस्य वैलक्षण्यस्य साकारवादिबौद्धस्वीकृतस्य कः प्रसङ्ग इति चेत् तर्हि वेदान्तिभिरेव जितम् । तार्किकस्वीकृतस्य सम्बन्धरूपविषयतागतस्यापि वैलक्षण्यस्य विशेष्यतात्वादेः कः प्रसङ्गः । अथैवमिदमादिताद्विषयत्वयोरुक्तावच्छेदकत्वमपि नस्यादितिचेन्न । नहि तत् ज्ञानानां मिथोवैलक्षण्यानुभवान्यथाऽनुपपत्त्या कल्प्यते, येन उक्तरीत्या नस्यात् । किंतु मूलादितत्सम्बन्धयोः संयोगावच्छेदकत्ववत् सार्वलौकिकेन पूर्वोक्तानुभवेनेत्यलं विस्तरेण ॥

तस्माद्विषयवैलक्षण्येनैव ज्ञानानां वैलक्षण्यस्य वाच्यत्वात् विशिष्टवैशिष्ट्यज्ञाने विशिष्टस्य विषयत्वात् विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति ज्ञाने च तस्याविषयत्वादुक्तज्ञानयोः तत्क्षणविशिष्टघटत्वानित्याकारसाम्येऽपि मिथो विशेषः । एवमेकत्र द्वयमितिरीत्या तादृशाकारज्ञाने तत्क्षणघटत्वाभ्यां विशिष्टो विशेषणम् । तदतिरिक्तश्च तत्क्षणविशिष्टो घटः, घटत्वविशिष्टानुयोगिकतत्क्षणवैशिष्ट्यस्य तत्र घटकत्वात् । तादृशघटस्य तत्क्षणविशिष्टघटत्वेन विशिष्टस्य वा विशिष्टवैशिष्ट्यज्ञाने विषयत्वात् । विशेष्ये विशेषणं तत्रच विशेषणान्तरमिति ज्ञाने च भूतलादौ केवलघटस्यैव विशेषणत्वात्तेषां मिथो विशेषः । नच तत्क्षणविशिष्टघटस्य तद्व्यक्तित्वरूपेण यत् ज्ञानं तस्य तादृशघटत्वरूपेण ज्ञानापेक्षया वैलक्षण्यं न स्यात् इति वाच्यम् । तद्व्यक्तित्वविशिष्टविषयकत्वस्यैव उक्तवैलक्षण्यरूपत्वात् ॥

अथ तत्क्षणविशिष्टस्य यत्र विषयत्वादिकं व्यवह्रियते तत्र तत्क्षणोपहितस्य तत्क्षणोपलक्षितस्य वा तद्व्यवहारस्स्यात् इति चेन्न । उपहितोपलक्षितशब्दयोर्हि न विशिष्टमर्थः, किंतु येन धर्मेणोपहितमुच्येत विद्यमानेन तेन तच्छून्याद्व्यावर्तितमुपहितशब्दार्थः । तथा च तत्क्षणोपहितघटो विषय इत्यत्र विषयताकाले घटे विद्यमानेन तत्क्षणेन तत्क्षणानवच्छिन्नघटादिभ्यो व्यवर्तितो घटो विषय इत्येव बुद्ध्यते नतु विशिष्टो घटो विषयइति । तत्क्षणोपलक्षितो घटः विषयइत्यादावप्येवम् । विद्यमानपदस्थानेऽविद्यमानपदमिति तु विशेषः । तथा च तदुभयस्थले विशिष्टस्य विषयत्वाप्रत्ययात् विशिष्टस्य विषयत्वप्रत्ययस्थले विशेषणस्यापि विषयताप्रत्ययादुक्तव्यवहाराणां मिथो विशेषः ॥

अथ तत्क्षणविशिष्टं यत्र नविषयः तत्र केवलघटादावसम्बद्धतत्क्षणस्य तदवच्छिन्नघटादिभ्यो व्यावर्तकत्वानुपपत्तिः घटादौहि तत्क्षणादियुक्ते तत्क्षणाद्ययुक्ताद्व्यावृत्तिधीः नतु केवले इतिचेन्न ; तत्क्षणादियुक्तकेवलघटयोस्तत्क्षणादियुक्तत्वघटत्वरूपाभ्यां अभेदस्यैव भेदस्य स्वीकारात् घटस्तत्क्षणयुक्तइत्यनुभवात् । अतएव घटो न तत्क्षणविशिष्टइति धीर्नप्रमा, अभेदविरोधिभेदस्य नञादिनोल्लेखात् । तद्विरोधित्वंचैकावच्छेदेनैकाधिकरणत्वस्याभावः । तेन कृष्णसंयोगिन्यपि वृक्षे मूले न कृष्णसंयोगी इति धीः प्रमैव ' इति, ॥

एवं ' ननु कथमुक्तप्रत्यये भेदाभेदयोर्भानम् ? तयोरेकवत्ताज्ञानस्य अपरवत्ताधीविरोधित्वेनैकानिश्चयविषयत्वाभावात् । नच गुण्यादिस्थले नोक्तविरोधित्वं कल्प्यते, सामानाधिकरण्यप्रत्ययस्यान्यथाऽनुपपत्तेरिति वाच्यम् । घटो न नील इति वाक्यजन्यधीकाले घटो नीलं इति ज्ञानापत्तेः । न च तयोरेकप्रकारकज्ञानस्यैव सामग्र्या उक्तविरोधित्वम्, नत्वेकसंसर्गकज्ञानसामग्र्याः, उक्तप्रत्यये च तयोस्संसर्गतयैव भानान्नोक्तदोष इति वाच्यम् । एकसंसर्गकधीसामग्र्या अप्युक्तविरोधित्वस्यानुभवसिद्धत्वात्, नहि घटोऽभेदसंबन्धेन नीलविशिष्ट इति धीकाले घटो भेदसंबन्धेन नीलविशिष्ट इति धीः, घटो न नील इति धीर्वाऽनुभूयते । किं च सामानाधिकरण्यप्रत्यये संसर्गत्वेनाभेदस्य भानेऽपि भेदस्य भाने मानाभावः । तथाच वाचस्पत्युक्तमसङ्गतमितिचेन्न । एकधर्मावच्छिन्ने धर्मिणि भेदाभेदविषयकस्य निश्चयत्वासम्भवेऽपि तादृशप्रत्यये

### श्रीभाष्यम्

**अतएव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् ।**

### श्रुतप्रकाशिका

**प्रसङ्गाद्भेदाभेदं निराकरोति । अतएवेति ।** अतएव प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसमर्थनेन सर्वत्र पिण्ड

### गूढार्थसंग्रहः

भेदसामानाधिकरण्यविशिष्टाभेदविषयतायां बाधकाभावात् । न हि नीलभेदविशिष्टं द्रव्यं नीलो घट इत्याकारकधीर्नोत्पद्यते । नच घटो नीलं इत्यादिज्ञाने तादृशविषयताऽपि न सम्भवति । घटत्वविशिष्टे हि तादृशाभेदस्य विषयत्वे भेदस्यापि घटत्वविशिष्टविषयतायाः आवश्यकत्वेन पूर्वं घटत्वविशिष्टे भेदनिश्चयस्यावश्यकत्वे घट नीलभेदस्य संशयोत्तरं घटे नीलस्य भेदसमानाधिकरणाभेदसंसर्गकनिश्चयस्यानुत्पत्तेः, तत्र नीलभेदनिश्चयस्य हेतुत्वात् । तदुक्तमनुमानदीधितौ— 'साध्यसामाधिकरण्यविशिष्टहेतोः पक्षे निश्चयस्तु पक्षे साध्यनिश्चयं विनाऽनुपपन्न' इति । एतावांस्तु भेदः वह्विसामानाधिकरण्यविशिष्टधूमवान् पर्वतइति पर्वतांशे विशिष्टधूमस्य प्रकारत्वात् तत्र वह्निरपि प्रकारः । घटो नीलइत्यादौतु घटे विशिष्टभेदस्य संसर्गत्वाद्भेदस्यापि संसर्गता अतएव घटे भेदसंसर्गकज्ञाने भेदसंसर्गेण नीलप्रकारकज्ञानमेव हेतुः औचित्यात् नतु भेदप्रकारकमिति वाच्यम् ; भेदसामानाधिकरण्योपलक्षिता भेदविषयतायामुक्तदोषाभावात् ' इति चोक्तम् । अतः समवायमनङ्गीकुर्वद्भिः सर्वैरपि दार्शनिकैः भेदाभेदस्यैव स्थापनेन भेदाभेदस्सिद्धान्तेऽप्यवश्यमङ्गीकरणीय एव इत्यत आह– **अत एवेति ।**

अत एव– प्रथममेव ससंस्थानस्य वस्तुनः इत्थमिति ग्रहणादेव । सर्वत्र- गुणक्रियाऽऽदिषु प्रपञ्चेच । गुण्यादिभिः ब्रह्मणा सह चेति शेषः । शुक्लादिशब्दानां गुणादिविशिष्टवाचित्वं आकृत्यधिकरणार्थनिष्कर्षणेन स्थापयिष्यते । सामानाधिकरण्यं च पदद्वयप्रवृत्तिनिमित्तभेदेनैवोपपादनीयमिति वक्ष्यते । अतः सामानाधिकरण्येन शुक्लरूपादिगुणस्य गुणिनश्च अभेदो (शा.दी) नसिध्यति । ' आकाशं शब्दमात्रंतत् ' इति भामत्युदाहृतपुराणवचने शब्दमात्रमित्यत्र शब्दगुणो नविवक्षितः अपितु शब्दतन्मात्रमेव विवक्षितम् । अतएव ' यदग्रे रोहितंरूपं तेजसस्तद्रूपम् ' इति श्रुत्यादिकं सङ्गच्छते । घटः शुक्लः फलंमधुरं इत्यादिव्यवहारसत्वेऽपि घटो रूपं फलं रसः पुष्पं गन्धः इति व्यवहारो न दृश्यते । किं तु फले फलस्य मधुररसः, पुष्पे पुष्पस्य गन्धः, इत्येवव्यवहारः । अभिलापकशब्दानुरोधेनैव प्रतीतिव्यवस्था । ' अनुभूयतेहि पृथिवी गन्धरूपरसस्पर्शात्मिका स्थूला ' इत्येव भामती । (१.२.१६) तत्र ' गन्धरूपरसस्पर्शगुणा स्थूला पृथिवी ' इति भाष्यम् । अनन्तरं च ' रूपस्पर्शगुणाः सूक्ष्माः आपः रूपस्पर्शगुणं सूक्ष्मतरं तेजः स्पर्शगुणः सूक्ष्मतमो वायुः ' इत्येवमेतानि चत्वारि भूतानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतारतम्योपेतानिच लोके लक्ष्यन्ते ' इतिच । एतद्ग्रन्थपर्यालोचनायां भूतेषु नैयायिकपरिक्लृप्तगुणव्यवस्था अनुचितेति सूत्रतात्पर्यमेव भाष्यकृदाभिमतमिति प्रतीयते । अतएवोत्तरत्र ' तेजसि स्पर्शस्यापेलब्धि र्नस्यात् अप्सु रूपस्पर्शयोः, पृथिव्यांच रसरूपस्पर्शानाम् ' इति भाष्यं सङ्गच्छते । अपञ्चीकृतानां भूतानां परमते (अ.प) तन्मात्राणीतिव्यवहारः । ' आकाशं शब्दमात्रन्तु स्पर्शमात्रं समाविशत् । द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ' इत्यादिपुराणवचने पञ्चीकरणानन्तरमधिकगुणसम्बन्धोक्तेः, भाष्यानुसारेणच ' अनुभूयतेहि पृथिवी गन्धरूपरसस्पर्शात्मिका स्थूला ' इति भामत्युक्तौ गन्धादिस्वभावत्वमेव विवक्षितं नतु गन्धाद्यभिन्नत्वम् । अतः भामतिवाक्यस्य लोके कस्याप्यनुभवासिद्धगन्धाद्यभिन्नपृथिवीबोधतात्पर्योक्तिः ब्रह्मानन्दसरस्वतीनांस्वोत्प्रेक्षितार्थाभिनिवेशमूलैव ॥

### श्रीभाष्यम्

**इदमित्थमिति प्रतीताविदमित्थम्भावयोरैक्यं कथमिव प्रत्येतुं शक्यते।**

### श्रुतप्रकाशिका

भेदाभेदवादिना पिण्डानामन्योन्यजातिव्यक्तिगुणगुणिक्रियातद्वत्कार्यकारणेष्वित्यर्थः कथमित्यत्राह । **इदमित्थमिति** । द्वयजातिव्यक्तिगुणगुणिक्रियातद्वत्कार्यकारणेष्वित्यर्थः ऽन्यभेदाभेदसमर्थने इदमिदं न भवतीति भेदः इदमिदं भवतीत्यभेद इत्येकस्यैव युगपद्भावाभावरूपव्याहतिपरिहारार्थे जात्यात्मना अभेदो व्यक्त्यात्मना भेदइत्याकारद्वयेन भेदाभेदउपपादितः । जातिगतोऽभेदः व्यक्तिगतो भेदश्चेति नैकस्य व्यात्मकतेति शङ्कापरिहाराय जातिव्यक्त्योश्चान्योऽन्यभेदाभेद उक्तः । तन्निर्वहणायाकारान्तरान्वयादर्शनात् । प्रतीतिरेव

### गूढार्थसंग्रहः

अतएव व्यतिरेको गन्धवत्तथाहि दर्शयति (२.३.२६) इति व्याससूत्रमपि रुङ्गच्छते । अत्र शं भाष्यम्–'यथा गुणस्यापि सतो गन्धस्य द्रव्यव्यतिरेकेण वृत्तिर्भवति' इति । अतः सूत्रकृतः गन्धगुणद्रव्ययोः व्यतिरेकएव सिद्धान्तइति सिद्धम् । घटः शुक्ल इत्यत्र शुक्लरूपं यत्तदेव प्रतीयतइति (न्या-अ) न निश्चेतुं शक्यते । घटः शुक्लरूपमिति प्रयोग विरहात् । घटो रूपमित्यादिकं तु लोकैरनुभूयत (गु.चं) इत्युक्तिश्शपथमात्रमेव । सर्वत्र प्रत्यक्षस्थले अभिलापकशब्दानुरोधेनैव निर्णयः । अतः मतुब्लोपादिकल्पनं तु व्यवहारे नतु प्रतीतौ इति (न्या.अ) उक्तिरपि निरवकाशा ॥

उक्तंच 'तस्य भावस्त्वतलौ' ५.१.११९इति सूत्रे महाभाष्ये 'यस्यगुणस्य भावात् द्रव्ये शब्दनिवेशः तदभिधाने त्वतलौ (गुणशब्देन यावान् कश्चित्पराश्रयः भेदको जात्यादिरर्थः ससर्वत्र गृह्यते । इति कैयटः) गुणस्यायम्भावात् द्रव्ये शब्दनिवेशं कुर्वन् ख्यापयत्यन्यच्छब्दादिभ्यो द्रव्यमिति' इति । किंपुनः कारणं शुक्लादयएवोदाह्रियन्ते नपुनर्वृक्षादय इति ? अस्त्यत्र विशेषः । उभयवचनाह्येते द्रव्यंचाहुर्गुणं च । यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति । इमेहि तर्हुभय वचनाः । कथम् ? आरभ्यते मतुब्लोपः 'गुणवचनेभ्यो मतुपो लुग्भवतीति' गुणद्रव्ययोर्व्यतिरेकदर्शनात् मतुप्श्रवण निवृत्यर्थो लुगारम्भः कैयटः) इति 'तदस्यास्त्यस्मिन्निति मतुप्' (५.२.९४) इति सूत्रेऽपि गुणवचनेभ्यो मतुपो लुग्वक्तव्यः शुक्लःकृष्णइति । अव्यतिरेकात्सिद्धं न गुणो गुणिनं व्यभिचरतीति । अव्यतिरेकात्सिद्धमितिचेत् दृष्टो व्यतिरेकः तद्यथा पटस्य शुक्लइति (पटस्य शुक्लइति ततश्च भेदविवक्षायास्सद्भावान्मतुपः श्रवणं स्यादिति लुग्वक्तव्यएव कैयटः) इतिच 'अत्र न गुण इति गुणगुणिनोः जातितद्वतोरिव युतसिद्धयभावात् सोऽयमित्यभेदात्सम्बन्ध इत्यर्थः' इति कैयटः । 'ननु यो यदव्यभिचारी स तदभिन्न इति न नियमः, धूमवह्न्योर्व्यभिचारात् इत्यत आह- गुणेत्यादि' इत्युद्योतः ॥

एतन्महाभाष्यानुसारेणैव 'व्यतिरेको गन्धवत्' इति सूत्रावतरणशङ्करभाष्ये– 'कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत ? नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यत' इत्यत्र पटस्य शुक्ल इति व्यवहारः । अत्र 'तस्य भावस्त्वतलौ' इति सूत्रमहाभाष्ये द्रव्यगुणयोर्भेदस्य पाणिनिसम्मततायाः स्फुटमुक्त्या घटस्य शुक्ल इति व्यतिरेकोक्त्या च, 'पटस्य शौक्ल्यं, रूपी घटः इत्यादिधीस्तु सम्बन्धविषया नतु भेदविषया' (न्या.अ.) इत्युक्तिरभिनिवेशमूलेति सिद्धम् ॥

अत्र महाभाष्ये गुणगुणिनोर्व्यतिरेकः सर्वत्र प्रदर्शितः । 'अव्यतिरेकात्सिद्धं न गुणो गुणिनं व्यभिचरति' इति भाष्यं वक्ष्यमाणाकृत्यधिकरणार्थानिष्कर्षाभिप्रायकं लुग्विधानाभावेऽपि घटश्शुक्ल इत्यादिप्रयोगोपपादकमिति, आकृत्यधिकरणनिष्कृष्टार्थपरमेव नतु गुणगुण्यभेदपरमित्याशयेन गुणादेर्भेदमेव साधयति– **इदमित्थमिति प्रतीताविव्यादिना** ।

### श्रीभाष्यम्

**तत्रेत्थम्भावस्सास्नादिसंस्थानविशेषः तद्विशेष्यं द्रव्यमिदमंशइत्यनयोरैक्यं प्रतीतिपराहतमेव। तथाहि प्रथममेव वस्तु प्रतीयमानम्। सकलेतरव्यावृत्तमेव प्रतीयते। व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतयेत्थमिति प्रतीतेः सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः।**

### श्रुतप्रकाशिका

शरणमित्याश्रिता। अतस्तन्निरासाय प्रथमं जातिव्यक्त्योर्भेदेनैव प्रतीतेरभेदस्य प्रतीतिविरोधं दर्शयति। **इदमित्थमिति।** इदम्भावो विशेष्यम्। इत्थम्भावो विशेषणम्। इत्थमंशः कः इदमंशः कइत्यत्राह। **तत्रेति।** अत्र जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः प्रथमपिण्डग्रहणे अभेदेन ग्रहणम्। एकशब्दानुविद्धप्रत्ययः मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः सहोपलम्भनियमश्चेति * अत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकौ। अन्यौ द्वावभेदसाधकौ इदं हेतुचतुष्टयमाशङ्क्याह। **तथाहीति।** तान् इदिकृत्वा प्रथमपिण्डग्रहणे अभेदेन ग्रहणं व्युदस्यति। **प्रथममित्यादिना।** सकलेतरव्यावृत्तं सकलेतरविजातीयव्यावृत्तमित्यर्थः। ततः किं भेदेन ग्रहणस्येत्यत्राह। **व्यावृत्तिश्चेति।** गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेः व्यावृत्तिश्च निश्चीयतइत्यर्थः॥

**अनेना**खण्डवाक्यार्थभङ्गश्चार्थतः कृतो भवति। शौक्ल्यादिवैधर्म्यस्येहाभिप्रेतत्वाच्च पूर्वं दर्शितम्। गोत्वादिविशिष्टतया प्रतीतिरस्तु तथाऽपि अभेदः स्वप्रमाणेन प्रसज्यतेचेन्ननिवार्यत इत्यत्राह। **सर्वत्रेति।** सर्वत्र गोत्व तदाश्रयादिषु दण्डकुण्डलादिषुच दण्डदण्डिनोरिव जातितद्वतोरपि विशेषणविशेष्यभाव एवाभेदविरोधीत्यर्थः। **विशेषणविशेष्यभावेति।** गोत्वव्यक्त्योरनुवृत्तिव्यावृत्त्यग्रहेऽपि विशेषणविशेष्यभावरूपेणाकारान्तरेण भेदो गृहीतः। नह्येकेनैवाकारेण भेदग्रहइत्यस्ति नियमइति भावः उभयत्रात्यन्तभेदोऽस्ति चेत् मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमेकशब्दानुविद्धप्रत्ययः सहोपलम्भनियमश्च कथमेकत्र दृश्यते नान्यत्रेत्यतआह। **तत्रेति।** तत्र गोत्व तदाश्रय दण्डदण्ड्यादिवर्गे * पृथक्संस्थानविशिष्ट स्वपर्यवसितकादाचित्कविशेषणभावो मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्यप्रत्यये प्रयोजकः। द्रव्यसंस्थानतयैव पदार्थत्वेन तत्पर्यन्तत्वात् तद्विशेषणतयैव स्थितिः मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजिका सहोपलम्भनियमतदभावयोरप्यपृथक्सिद्धत्वपृथक्सिद्धत्वे एव प्रयोजके नतु भेदाभेदावित्यर्थः। सहोपलम्भनियमे द्वयोरेव सहभावात् सहोपलम्भो द्वित्वसाधकः। तन्नियमस्तु भिन्नयोरेकस्मिन्नपि नास्तीत्यसाधारणानैकान्तिकत्वादनुभयसाधकः॥

### गूढार्थसङ्ग्रहः

इत्थमित्यत्र 'इदमस्थमुः' (५.३.२४) इति 'प्रकारवचने थाल्' इत्यतोऽनन्तरसूत्रेण प्रकारवचनादिदंशब्दात् थमुप्रत्ययः। 'सामान्यस्य भेदको विशेषोऽत्र प्रकारः' इति (शब्देन्दुशेखरे) नागेशः। पुरोऽवस्थितवस्तुनि कांश्चित्प्रकारान् विज्ञाय प्रकारान् प्रथमतः अभिलापकशब्देनाभिधायानभिधाय वा तादृशप्रकारसम्बन्धस्य पुरोऽवस्थितवस्तुनि अभिलापकश्शब्दः इदमित्थमिति इतरव्यावर्तकप्रकारस्य धर्मिणः ऐक्यमनुभवविरुद्धमिति भावः। एतेन 'क इत्था वेद यत्र सः' (कठ १.२.२४) इति ब्रह्मणो दुर्विज्ञानत्वश्रुतौ सविशेषब्रह्मणः दुर्विज्ञानत्वं विवक्षितम्, नतु निर्विशेषस्य ब्रह्मण इति सूचितम्॥

एवं 'एकधैवानुद्रष्टव्यम्' (बृ.६.४.२०) इति 'नेहनानाऽस्ति किंचन' इत्येतदनन्तरश्रुतौ सप्रकारकज्ञानमेव विवक्षितम् इति बोधितम्। एकधेत्यत्र 'एकाद्धोध्यमुञन्यतरस्याम्' (५.३.४४) इतिस्वार्थिकः धाप्रत्ययः। तत्र च

## गूढार्थसंग्रहः

' सङ्ख्याया विधार्थे धा ' इति पूर्वसूत्रोक्त एकविधार्थकः एकशब्दः । अत्र सूत्रे कैयटः ' सामान्यस्य भेदको विशेषः प्रकार उच्यते । इति ' एकःपाकः ' इत्यादौ प्रकारस्याविवक्षितत्वात्प्रत्ययाभावः । प्रकारविवक्षायां तु भवत्येव एकधा पाक इति ' इति च । एतेन भेदकप्रकाराविवक्षणे एकधेतिरूपं न सिध्यतीति स्फुटम् । तेन ' नेहनानाऽस्ति किंचन ' इति पूर्वश्रुतौ भेदसामान्यनिषेधः स्वगतभेदनिषेधो वा न विवक्षित इति सिद्धम् ॥

यद्यपि ' एकधैवानुद्रष्टव्यम् ' इत्यादिवाक्यस्वारस्यादभेदज्ञानस्यैव साक्षान्मोक्षहेतुत्वात् ' इत्यद्वैतसिद्धिविवरणे (आगमबाधोद्धारे) गुरुचन्द्रिकायां— ' एकधेति । विषयरूपो ज्ञाननिष्ठप्रकारो धाप्रत्ययार्थः । एकपदमखण्डरूपकेवलार्थकम् । अत एव ' नेह नना ' इत्यग्रिमवाक्येन कैवल्योपपादनम् । ' अद्वैतं चतुर्थं मन्यन्ते स आत्मा सं विज्ञेयः ' इत्यादिश्रुतिस्मृतिसहस्रं सङ्गच्छत इति भावः । नच संख्यावाचकात् एकशब्दात् धाप्रत्ययविधानात् केवलार्थकोत्तरः सोऽसाधुरिति वाच्यम्; कैवल्यस्यापि बुद्धिविषयत्ववद्गौणैकत्वसंख्यात्वात् । ' एको देव 'इत्यादौ नाम्ना, ' येन जातानि जीवन्ति ' इत्यादावेकवचनेन च तस्यैव प्रत्ययात् । अन्यथा सद्वितीयत्वशङ्कानुपमर्दात्, तादृशसंख्योपलक्षितबोधकस्यापि सौत्रसंख्याशब्देन गृहीतुं शक्यत्वात्, एकशब्दस्य संख्यावाचकत्वेऽपि विषयितारूपैकप्रकारयुक्तदर्शनलाभेन निर्विकल्पकदर्शनलाभसम्भवात् सविकल्पकस्य विशेष्यतादिरूपनानाप्रकारयुक्तत्वेन व्यावर्तनसम्भवात् । अभेदज्ञानस्येति । चिन्मात्ररूपाखण्डाभेदज्ञानस्येत्यर्थः ' इति, ' एकधैवानुद्रष्टव्यः ' इत्यादिश्रुतौ एकधैव निर्विकल्पेन घटो ज्ञात इत्यादिलौकिकव्यवहारे च धाप्रत्यय इव स्वरूपार्थको न धर्मार्थकः ' इति च (भाविबाधोद्धारे) उक्तम्, तथाऽपि ' एकधैव निर्विकल्पेन घटो ज्ञातः ' इत्यादिलौकिकव्यवहारे धर्माविवक्षणे धाप्रत्यय एव न घटते । एक एवेत्येव तदा प्रयोगः । निर्विकल्पके प्रकाराभाने एकधैवेति प्रयोगोऽसाधुरेव ॥

' एक एव हि भूतात्मा...एकधा बहुधा चैव दृश्यते ' (ब्र.बि.उ.) ' एकं सद्विप्रा बहुधा वदन्ति ' (ऋ.सं.१.म १६४ सू ४३ ऋ) ' स एकधा भवति त्रिधा भवति ' (छा.७.२६.२) इत्यादाविव ' एकधैवानुद्रष्टव्यम् ' इत्यत्र विशेष्यसम्बद्धप्रकार एव एकधेत्यत्र प्रतीयते । एकत्वस्य कैवल्यरूपत्वेऽपि परसम्मतं कैवल्य भेदसामान्यशून्यत्वं न कस्याचिद्दार्शनिकस्य संमतम् । अविप्रतिपन्नकैवल्ये गृहीतशक्तिकस्यैकपदस्य विप्रतिपन्नव्यतिरिक्तविषये अप्रसिद्धे भेदसामान्यशून्यत्वे एकपदे शक्तिग्रहोऽपि न सम्भवति । एकधैव घटो मया ज्ञातः इत्यादौ घटगतैकप्रकारवत् अत्रापि ' एकधैवानुद्रष्टव्यम् ' ' एतदप्रमेयम् ' इत्यत्र ब्रह्मनिष्ठेतरव्यावर्तकप्रकारबोधानङ्गीकारे एकधेत्यत्र धाप्रत्ययो नैव घटते । एकमेवानुद्रष्टव्यमित्यादिरीत्या चारितार्थ्यसम्भवात् । बुद्धिविषयत्वस्य गौणसंख्यारूपत्वाङ्गीकारेऽपि कैवल्यस्य संख्यारूपत्वस्य केनाप्यनङ्गीकारात्, संख्योपलक्षितबोधस्याङ्गीकारे संख्यायाः प्रकारत्वासंभवेन च धाप्रत्ययस्य सुतरामनुपपत्तिरेव ॥

विषयितारूपैकप्रकारयुक्तदर्शनमपि नात्र विवक्षितम् । एतच्छब्दार्थब्रह्मगतप्रकारबोधस्यैव वाक्यस्वरससिद्धत्वात् । दर्शनान्वयिप्रकारः यद्यत्र वाक्ये विवक्षितस्स्यात् तर्हि ' नेह नानाऽस्ति किंचन, इति पूर्ववाक्येऽपि ' मनसैवानुद्रष्टव्यम्, इत्यत्रोक्तदर्शन एव नानापदार्थसम्बन्धप्रतिषेधः विवक्षितो भवेत् । तथासति मिथ्यात्वं नैव सिध्यति । ' नेह नाना ' इति श्रुतेः पूर्वं ' यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजिगुप्सते ॥ ' (बृ.६.४.१५) इत्यत्र भूतभव्यादिनियन्तृत्वमात्मत्वं च ब्रह्मणः उक्तम् । ' यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः, (६.४.१७) इति तदुत्तरश्रुतौ आकाशाद्याधारत्वमपि । अतः ' नेह नानाऽस्ति किंचन, (बृ.६.४.१९) इत्यत्र इह— भूतभव्यनियन्तृत्वेन आत्मत्वेन आकाशाद्याधारत्वेन च पूर्वोक्ते ब्रह्मणीत्यर्थः । नाना— ' विनञ्भ्यां नानाञौ न सह '

### श्रीभाष्यम्

**तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थितास्स्वनिष्ठाश्च कदाचित्क्वचिद्द्रव्यान्तरविशेषणतयाऽवतिष्ठन्ते । गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूतास्सन्तो द्रव्यविशेषणतयाऽवस्थिताः । उभयत्र विशेषणविशेष्यभावः समानः ।**

### श्रुतप्रकाशिका

**किंच** विरुद्धएव *द्वित्वसाधकसहोपलम्भनियमोहि द्वित्वस्य नियमं दर्शयति । एकशब्दानुविद्धप्रत्ययस्तु एको दण्डीत्यादिषु दण्ड्यन्तरव्यावर्तकत्वदर्शनेन धर्म्यन्तरनिषेधपरत्वात् न धर्मधर्मिणोरभेदसाधकइति भावः । *यद्येवं जातिकुण्डलादेर्वैषम्यम् । यदि विषेषणविशेष्यभावसाम्यादुभयत्र भेदस्साध्यते–तर्हि सहोपलम्भनियमादिवैषम्येणैकत्वमपि स्यादित्यतआह । **उभयत्रेति** । विशेषणविशेष्यभावादिविशेषात्तत्प्रयुक्तभेदप्रतिपत्तिरनिवार्या विशेषणविशेष्यभावेसति भेदस्योभय*सम्प्रतिपत्तेः सहोपलम्भनियमे ऐक्यंहि विमतम् । अतो नसम्प्रतिपन्नभेदविरुद्धाभेदःकल्प्यः । यथा शीतत्वोष्णत्वाद्यवान्तरवैषम्यं न द्रव्यत्वादिसाधारणाकारविरोध्यद्रव्यत्वकल्पकम् । एवं सहोपलम्भनियमो न भेदविरोध्याकारकल्पकइति भावः ॥

**यद्वा** पृथक्संस्थितानां दण्डादीनामविशेषणानामेव सतां कदाचित्सहभावमात्राद्विशेषणत्वमध्यस्तमित्यत्यन्तभिन्नेषु विशेषणत्वाभावाद्विशेषणत्वं नात्यन्तभेदसाधनसमर्थमित्यत्राह । **उभयत्रेति** । व्यावृत्तप्रतीतौ व्याकर्तकतयोपयुज्यमानत्वं

### गूढार्थसङ्ग्रहः

(५.२.२७) ‘विनञ्भ्यामसहवाचिभ्यां नानाञौ भवतः । कस्मिन्नर्थे ? स्वार्थे’ इति सूत्रमहाभाष्यानुसारेण असहभूतं विनाभूतं किंचन नास्तीत्यर्थः । ‘न तदस्ति विना यत्स्यात् मया भूतं चराचरम्’ (गी.१०.४२.) इति गीतोक्तेः एवं च पूर्वं भूतभव्यनियन्तृत्वव्यापकत्वादेः ब्रह्मणि प्रतिपादनपूर्वकं भूतभव्यादेः कस्यापि ब्रह्माविनाभूतस्याभावेन ब्रह्माविनाभूतत्वं प्रतिपाद्य ‘एकधैवानुद्रष्टव्यम्’ ‘एतदप्रमेयध्रुवम्’ ‘विरजःपरआकाशादज आत्मा महान्ध्रुवः’ (६.४.२०) इति श्रुतौ ‘एकधैवानुद्रष्टव्यम्’ इत्यत्र ब्रह्मणः भूतभव्यादिसर्वव्यापकनियन्तृत्वेन दर्शनमेवविवक्षितम् । अत्र ‘परआकाशात्’ इत्यनेन ‘आकाशश्च प्रतिष्ठितः’ इत्याकाशाधारत्वेन प्रागुक्तस्य ब्रह्मणः आकाशात्परत्वोक्त्या उक्तार्थविवक्षा दृढीकृता । तदुत्तरं ‘तमेवधीरो विज्ञाय’ ‘प्रज्ञां कुर्वीत ब्राह्मणः’ ‘नानुध्यायात् बहूञ्छब्दान्’ (६.४.२१) इत्यादिश्रुतिः अत्र तच्छब्दस्य प्रागुक्तभूतभव्यादिसर्वव्यापकनियन्तृत्वविशिष्टएव अर्थः । ‘यस्मिन्द्यौः पृथिवीचान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्यावाचो विमुञ्चथ’ इति मुण्डकश्रुत्यैकरस्याच्च । तच्छब्दसमभिव्याहृतैवकारादेः तच्छब्दप्रवृत्तिनिमित्तधर्मस्य ज्ञानान्वयव्यवच्छेदकत्वकल्पनं न सम्भवति । लोके तथा क्वाप्यदर्शनात् । अतः ‘एकधैवानुद्रष्टव्यम्’ इत्यत्र धाप्रत्ययेन ब्रह्मणः सप्रकारकज्ञानमेव विवक्षितमिति भगवत आशयः । अत्र ‘नेहनानाऽस्ति किंचन’ इत्यत्र गुणादिवत् प्रपञ्चस्य ब्रह्माविनाभूतत्वप्रतिपादनेन गुणादीनां द्रव्यपारतन्त्र्यवत् प्रपञ्चस्य ब्रह्मपारतन्त्र्यं सिध्यति ॥

‘उभयथाच दोषात्’ इति सूत्रभामतीवाक्यस्य गुणगुण्यभेदविषयकत्वमपि वक्तव्यम् ‘अपरिग्रहाच्चात्यन्तमनपेक्षा’ इति तदुत्तरसूत्रभाष्ये गुणगुण्यभेदस्य सिद्धान्तितत्वात् । तथाहि ‘अथ भवति द्रव्याधीनत्वं गुणादीनां ततो द्रव्यभावे भावाद्द्रव्याभावेऽभावात् द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति । नन्वग्नेरन्यस्यापि सतोधूमस्याग्न्यधीनत्वं दृश्यते । सत्यं दृश्यते । भेदप्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते । इहतु शुक्लः कम्बलो रोहिणी धेनुः नीलमुत्पलमिति

### गूढार्थसंग्रहः

द्रव्यस्यैव तस्य तस्य तेन तेन विशेषणेन प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति । तस्मात् द्रव्या
त्मकता गुणस्य । एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता । गुणानां द्रव्याधीनत्वं द्रव्यगुणयो-
रयुतसिद्धत्वादिति यद्युच्येत, तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्यादपृथक्कालत्वं वा अपृथक्स्वभावत्वं वा ' इति वैशे-
षिकादिमतं दूषयित्वा द्रव्यगुणयोरभेदस्साधितः ॥

अत्र ' पटश्शुक्ल ' इति प्रस्तुत्य भामती– ' नच शुक्लपदस्य गुणविशिष्टगुणिपरत्वादेवं प्रथेति सांप्रतम् ; नहि
शब्दवृत्त्यनुसारि प्रत्यक्षम् । नह्यग्निर्माणवक इति उपचरिताग्निभावो माणवकः प्रत्यक्षेण दहनात्मना प्रथते । नचायम
भेदविभ्रमः समवायानिबन्धनः भिन्नयोरपीति वाच्यम् ; गुणादिसद्भावे तद्भेदे च प्रत्यक्षानुभवादन्यस्य प्रमाणस्याभावात्
तस्य च भ्रान्तत्वे सर्वाभावप्रसङ्गात् तदाश्रयस्य तु भेदसाधनस्य तद्विरुद्धतयोत्थानासम्भवात् । तदिदमुक्तं ' तस्य तादा-
त्म्येनैव प्रतीयमानत्वादिति ' इति ॥

कल्पतरुपरिमलश्च– ' नच पटस्य शुक्लं रूपमिति व्यवहारमूलभूतं भेदविषयं प्रत्यक्षमप्यस्ति, तत् अभेदप्रत्यक्षं
बाधेतेति वाच्यम् ; नह्युक्तव्यवहारो भेदविषयः, किं तु षष्ठ्यर्थसम्बन्धविषयः । सम्बन्धेन तु भेदोऽनुमातव्यः । तदप्यनु-
मानं शुक्लः पट इत्यभेदसाक्षात्कारो बाधेत, तस्माद्राहोश्शिर इतिवदौपचारिकं सम्बन्धव्यपदेशमात्रमिति कल्पनीयम् । किंच
पटस्य शुक्लं रूपमित्येतत् पटस्य शुक्लत्वं शौक्ल्यमित्यादिना समानविषयम् । शुक्लत्वमित्यादिप्रत्ययेच गुणगुणिभेदवादिभिर्गुणे
यच्छुक्लत्वमभ्युपगम्यते तदेव पटे प्रतीयते । अतः पटस्य शुक्लं रूपं शुक्लो गुणइत्यादिव्यवहारोऽपि पटगतशुक्लत्वसामान्यवि
षयइत्येव वक्तुमुचितम् । शुक्लत्वसामान्ये कथं शुक्लशब्दइतिचेत् शुक्ल गुणे वा कथं शुक्लत्वं शुक्लिमेत्यादि भावप्रत्यया-
न्तश्शब्दः । शुक्लशब्दस्य द्रव्यलक्षणामाश्रित्येति चेत् तस्येह सामान्ये लक्षणाऽस्तु गौर्नित्येति प्रयोगे गोशब्दस्येव । यद्वा
शुक्लशब्दः शुक्लद्रव्यस्येव तद्गतशुक्लत्वसामान्यस्यापि वाचकः, यथा साक्षात्कारशब्दः प्रत्यक्षज्ञानस्येव तद्गतसाक्षात्वसामा-
न्यस्यापि । अतएव घटसाक्षात्कारइति साक्षात्कारिप्रमेतिच व्यवहारः । एवंच गुणवचनेभ्यो मतुब्लोपानुशासनमपि सा
मान्यवाचिभ्यो मतुपः प्रसक्त्या सार्थकं भविष्यति । नच–एवमपि साक्षात्कारीति शब्दवत् शुक्लशब्दादिनिप्रत्ययेन शु-
क्लीत्यपि प्रयोगःस्यात् तल्लोपानुशासनाभावादिति वाच्यम् ; अर्श आदिगणे वर्णशब्दपाठस्यार्श आदिभ्योऽच्प्रत्ययविधा-
नार्थत्वेन ततइनिठनोर्बाधात् । मतुपस्तु ततो बाधो न भवति । ' प्राणिस्थादातो लजन्यतरस्याम् ' इत्यतोऽन्यतरस्यां
ग्रहणस्य वैशेषिकप्रत्ययैर्मतुपः समुच्चयार्थमनुवृत्त्यङ्गीकारात् । अतो मतुब्लोपानुशासनं सार्थकम् । एवमभेदप्रत्यक्षानुसा-
रेण व्यवहारव्यवस्थाकरणे लाघवमपि भवति । द्रव्यातिरिक्तगुणाभ्युपमे हि गुणः तत्सम्बन्धश्चेत्युभयमपि कल्पनीयमिति
गौरवम्भवेत् । तस्माल्लाघवानुगृहीताभेदप्रत्यक्षबलात् गुण्यभेदएव गुणानामास्थेयः ; सुरभिर्गन्धफली मधुरो गुडः उष्णो
वह्निरिति गन्धादीनामपि द्रव्याभेदप्रत्यक्षैस्तद्भेदनिरासात् । अयंच गुणगुण्यभेदो गुणिपरिशेषेण प्रतिनियतेन्द्रियग्राह्यना-
नागुणसङ्घातपरिशेषेणोभयथाऽप्यनिर्वचनीयभावेनवा पर्यवस्यतीत्यन्यदेतत् ' इति । एवंच गुणगुणिनोस्तादात्म्येमेव भा-
मतीकारसिद्धान्तइति शङ्कानिवृत्त्यर्थं " सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ " इत्यादि पूर्वमुक्तम् ॥

दण्डिप्रत्यक्षानन्तरं अयं दण्डीति शब्दप्रयोगे दण्डस्य विशेषणत्वेन इतरव्यावर्तकतया दण्डिभेदः यथातथा गवि
शुक्लरूपप्रत्यक्षानन्तरं इयं शुक्लरूपवती इति इयंशुक्ला इतिच शब्दःप्रयुज्यते । अत्र शुक्लरूपवतीति प्रयोगे रूपस्य विशेषण-
त्वेन यथा भेदप्रतिपत्तिः तद्वच्छुक्लेति प्रयोगेऽपि । गौः शुक्लरूपं, पुष्पं गन्धः इत्यादिप्रयोगः भाष्यादौ क्वापि नाभ्युपगतः
घटः शुक्लः इतिवत् द्रव्यगुणयोरभेदे तथा प्रयोगोपि स्यात् । शुक्लरूपाभेदावगाहिप्रत्यक्षं विप्रतिपन्नम् । अभिलापकशब्दा

## श्रीभाष्यम्

**ततएव तयोर्भेदप्रतिपत्तिश्च । इयांस्तु विशेषः । पृथक्स्थितिप्रतिपत्तियोग्यादण्डादयः गोत्वादयस्तु नियमेन तदनर्हा इति ।**

## श्रुतप्रकाशिका

विशेषणत्वम् । तच्च दण्डादिष्वपि मुख्यमिति विशेषणत्वादत्यन्तभेदो युज्यत इति भावः । गोत्वतदाश्रयादिष्वेव *सहोपलम्भनियमः नान्यत्रेति व्यवस्थासिध्यर्थमैक्यं कल्पनीयमितिचेत्तत्राह । **इयांस्त्विति ।** * इयानेव नत्वधिकं कल्पनीयमित्यर्थः । यदि सहोपलम्भनियमव्यवस्थार्थमैक्यं कल्प्यते तदयुक्तम् । तत्रैवैक्यं नान्यत्रेति व्यवस्थार्थमर्थान्तरकल्पनाप्रसङ्गात् यच्चैक्यं तत्र स्वाभाविकं तर्हि सहोपलम्भनियमस्स्वाभाविक इति न प्रतिपन्नविरुद्धार्थान्तरकल्पनागौरवमाश्रयणीयमिति भावः । * यद्वा विशेषणविशेष्यभावप्रयुक्तभेदप्रतिपत्तिर्यथोभयत्र तुल्या, तथा सहोपलम्भनियमो दण्डदेवदत्तादावपि स्यात् जातिव्यक्त्योर्वा स नस्यादित्यत्राह । **इयानिति ।** नहि साधारणाकारेऽभ्युपगतेऽवान्तरभेदस्त्याज्यइत्यर्थः ।

## गूढार्थसंग्रहः

नुरोधेनैव निर्णयः उभाभ्यां वाच्यः । अग्निमाणवकयोः भेदप्रत्यक्षं सर्वसम्मतम् । एवं स्थिते नहि शब्दवृत्त्यनुसारि प्रत्यक्षं इत्यादिभामत्युक्तिरभिनिवेशमूलैव । रूपवान् घट इति प्रत्यये रूपघटयोरभेदो न भासतइति सर्वैरप्यास्थेयम् । एवमेव उदाहृतमहाभाष्याद्यनुसारेण घटश्शुक्लइत्यत्र 'गुणवचनेभ्यो मतुपो लुगिष्यते' इति मतुब्लोपस्य प्रामाणिकतया दण्डी कुण्डली इति प्रत्ययतुल्यएव घटश्शुक्लइति प्रत्ययः रूपघटयोर्नाभेदमवगाहते ॥

एतेन 'पटस्य शुक्लं रूपम्' इति व्यवहारेण सम्बन्धेन भेदानुमानं शुक्लः पटः इत्यभेदसाक्षात्कारो बाधते इति परिमलोक्तिरप्यनादरणीया । शुक्लः पटइति शब्दाभिलप्यस्य अभेदविषयकसाक्षात्कारत्वस्यैवासिद्धेः । साक्षात्कारशब्दः साक्षात्त्वजातितदाश्रयवाचकः स्यान्नाम, न तावता प्रत्यक्षविषयेऽपि प्रत्यक्षशब्दः प्रयुज्यत इति प्रत्यक्षविषय प्रत्यक्षज्ञाने तदुभयसाधारण्यं प्रत्यक्षत्वस्य न कश्चिदभ्युपैति । तद्वत् शुक्लशब्दः शुक्लरूपे तदाश्रये च प्रयुज्यतइत्युभयसाधारण्यं शुक्लत्वजातेः न अभ्युपगन्तुं शक्यम् । पटस्य शुक्लं रूपं इत्यत्र शुक्लरूपमेव विषयः पटस्य शुक्लत्वं शौक्ल्यमित्यादौतु शुक्लरूपत्वं विषयः शुक्लरूपवत्वं च शुक्लरूपसम्बन्धित्वं, तथैव शाब्दिकैर्व्यवस्थापनात् । अतः पटस्य शुक्लं रूपं पटस्य शुक्लत्वं शौक्ल्यमित्यादेरेकविषयत्वोक्तिरप्यनादरणीयैव । अभेदप्रत्यक्षस्यैव विप्रतिपन्नत्वे लाघवोक्तिरपि निरवकाशा ॥

वादनक्षत्रमालोक्तिरपि पर्यालोचयिष्यते । 'व्यतिरेको गन्धवत्' इतिसूत्रं गन्धपृथिवीभेदपरमिति परेषामपि सम्मतम् । एवमानन्दतीर्थानामपि । गन्धादिगुणतदाश्रययोः अभेदे नकिंचित्सूत्रं प्रमाणम् । अतः गन्धादिगुणानां गुणिनश्च भेदएव व्याससिद्धान्तइति निर्णये नकिंचिद्बाधकम् । **पृथक्स्थितिप्रतिपत्तियोग्या इति ।** 'अव्यतिरेकात्सिद्धं नगुणा गुणिनं व्यभिचरति' इत्येतद्भाष्यकैयटे 'गुणगुणिनोः जातितद्वतोरिव युतसिध्यभावात्' इत्यत्र युतसिद्धिपदार्थः एतेनोक्तः ॥

**गोत्वादयस्तु नियमेन तदनर्हाः ।** इत्यत्र नियमेन तदनर्हत्वं पृथक्स्थितिप्रतिपत्तियोग्यत्वाभावः । अयमेवापृथक्सिद्धिशब्देनापि व्यपदिश्यते, अत्र सिद्धिपदं स्थितिप्रतीत्युभयार्थकम् । 'अपृथक्सिद्धत्वंच सम्बन्धानाधिकरण सम्बन्धिद्वयाधिकरणकालवृत्तिपदार्थभिन्नपदार्थत्वरूपम् ।' (भेददर्पणम्) एतदनुगमः (रं.ब्र.प्र) पुरुषसूक्तभाष्ये द्रष्टव्यः । 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्' (जै.सू.आ.अ) इत्याकृत्यधिकरणजैमिनिसूत्रप्रयुक्तविभागशब्दत्यागेन पृथक्शब्दघटितविन्यासेन गुणगुणिभेदाभेदविचारावसरे ब्रह्मप्रपञ्चयोः योऽयं भेदाभेदः परैरुक्तः स न घटते । कठोपनिषदि 'नेहनाना-

## गूढार्थसंग्रहः

ऽस्ति किं चन' इत्येतदुत्तरं 'एवं धर्मान्पृथक्पश्यन्' इत्युक्तेरिति बोधितम् । अत्रापि 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (२.४.४) 'यइदंमध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य' (२.४.५) इतिपूर्वं 'अङ्गुष्ठमात्रः पुरुषो मध्यआत्मनि तिष्ठति । ईशानो भूतभव्यस्य' इति परत्रचोक्त्या 'नेह नाना' इति श्रुतेः पूर्ववदेव अर्थः । परमते 'नेह किंचनास्ति' इत्येतावन्मात्रेण भेदसामान्यनिषेधसिद्धौ नानेत्यस्य वैयर्थ्यम् । नानाशब्दः अनेकार्थकः सङ्ख्यापर्याप्त्यधिकरणनिषेधो नात्र विवक्षितः अपितु सङ्ख्यात्वाश्रयस्यैव निषेधः । अतः एकस्यापि निषेधः अतएव किंचनेत्यस्य सार्थक्यम् । इति गुरुचन्द्रिकोक्तप्रयासोऽपि नेहास्ति किंचन इत्येतावन्मात्रोक्तौ नास्ति । एवं विन्यासे द्वितीयद्वितीयाभावयोरपि निषेधस्सिध्यत्येव । अतः नानाशब्दघटिता श्रुतिः परसम्मतार्थो नात्र विवक्षितः, अपि तु विनाभूतार्थप्रतिषेधएवेति स्फुटमभिप्रायं व्यनक्ति ॥

अभ्युपगतश्चायमर्थः व्यासतीर्थैः न्यायामृतेऽपि— 'किं च त्वद्रीत्या किंचन विश्वं नाना नास्तीत्युक्तेऽप्यविनाभूतमस्तीत्येवार्थः । नाना शब्दो हि विनेत्यर्थे वर्तते' इत्यादौ । अतः नात्र ब्रह्माभिन्नगुणक्रियाऽऽदिमात्रनिषेधः केषांचित्सम्मतोऽपि (वि.स) विवक्षितः । 'एवं धर्मान्' इत्यत्र धर्मशब्दोऽपि गुणाक्रियादिमात्रपर इति न नियन्तुं शक्यते । ब्रह्मणः सर्वाधारत्वेन जडजीवयोरपि ब्रह्मधर्मत्वात् । धर्मानिति बहुवचनेन सजातीयविजातीयस्वगतभेदसामान्यस्यैव प्रतीतेः । पृथगित्यपि न भिन्नार्थकम् । 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति' इति दृष्टान्ते जलस्य देशद्वयसम्बन्धः उक्तः । तद्वत् धर्माणामपि ब्रह्माभिन्नवृत्तित्वमेव निषिध्यते । एवं च 'नेह नानाऽस्ति किंचन' इति विनाभूतार्थप्रतिषेधकश्रुतेः अस्याश्च एकार्थत्वं निर्व्यूढम् । 'पृथग्विनाऽन्तरेणर्ते हिरुङ्नाना च वर्जने' इत्यत्रैव न्यायामृतोदाहृतकोश (ना.अ.) पृथग्विनाशब्दयोरेकार्थत्वप्रतिपादनात् । जलेन सह न बहिः किंतु जलं विनेतिवत् जलात्पृथग्बहिरिति, पुत्रेण न सह गच्छति किंतु पुत्रं विना गच्छति इतिवत् पुत्रात्पृथग्गच्छतीति व्यवहाराच्च । अत एव 'नेह नानाऽस्ति किंच न' 'एवं धर्मान् पृथक्पश्यन्' इति श्रुतिद्वयैकरस्यम् ॥

यद्यपि गुरुचन्द्रिकायम् 'पृथग्विनाऽन्तरेणर्तेहिरुङ्नानाच वर्जने' इत्यमरोक्तेः वर्जनं विनाशब्दार्थः । तच्च नञर्थस्यात्यन्ताभावस्य भेदस्यवाऽधिकरणंसम्बन्धः वह्निं विना धूमइत्यादौ वह्नयत्यन्ताभाववत्सम्बन्धः । नीलं विना तेजोरूपवत् नीलादिभिन्नतादात्म्यं प्रतीयते, नानाशब्दस्यतु भिन्नसम्बन्धएवार्थः । तत्रापि भेदांशमात्रं शक्यम् अधिकरणसम्बन्धस्त्वधिकरणनिष्ठसम्बन्धरूपो विशेषणतात्वादिरूपेण वाक्यार्थः । अन्यथा नञ्पदस्य तत्र शक्त्यभावेन नानाञ्प्रत्यययोः स्वार्थिकत्वेन भाष्यादावुक्तत्वेनच नानापदार्थविधया तल्लाभासम्भवात् । उक्तसूत्रस्याप्यत्रैव तात्पर्यम् उक्तामरोक्तिमात्रेण नानाशब्दस्य विनाशब्दसमानार्थकत्वे पृथक्छब्दस्यापि तदापत्तेः । मन्मतेत्वभाववत्सम्बन्धस्य वर्जनशब्देनोक्तत्वात् पृथक्पदस्य तद्बोधकत्वेऽप्युक्तरीत्या भिन्नत्वरूपेण पृथक्त्वगुणरूपेण वाऽभाववच्छक्यम् । विनाशब्दार्थे प्रयोगाभावस्तु नानाशब्देऽपि तुल्यः ; तस्य तथा प्रयोगसत्वेऽपि विनाशब्दस्येव भिन्नतादात्म्यार्थकत्वस्यापि सम्भवात् भिन्नात्मकं किमपि नास्तीत्यर्थे बाधकाभावात्' इति न्यायामृतोक्तिर्दूषिता ; तथाऽपि आत्मभिन्नात्मकं किमपि नास्तीत्यर्थस्यात्र विवक्षणं न सम्भवति । विनाशब्दार्थस्य नानाशब्दार्थस्य वा यत्राधारान्वयित्वं तत्राधारभिन्नवृत्तित्वमेव पृथिवीं विना सांसिद्धिकद्रवत्वं जलादिकं विना गन्धः इत्यादौ प्रतीयतइति अत्रापि इहेत्यस्याधारवाचितया नानापदार्थघटकभेदप्रतियोगित्वेन आत्मन एवोपस्थितेर्वाच्यत्वेन आधारतयोपस्थिततदर्थान्वयित्वमेव नानाशब्दार्थस्य वाच्यमिति आत्मभिन्नवृत्तित्वनिषेध एवात्र विवक्षितः । नत्वात्मभिन्नतादात्म्यनिषेधः । 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति' इत्युत्तरश्रुत्यैक

## गूढार्थसंग्रहः

रस्याच । भिन्नमात्रस्य नञर्थत्वेन नानाशब्दस्य नञो नानाञा स्वार्थे निष्पन्नस्य भिन्नार्थकत्वेऽपि आधारवाचिसमभिव्याहारेण 'इह किंचन' इत्यत्र एतद्वृत्तितावोधस्यानुभवसिद्धतया आधारवाचिपदसमाभिव्याहृताविना नानापदसमभिव्याहृतनञः एतद्भिन्नाधारवृत्तित्वाभावबोधकत्वमेव व्युत्पन्नं, नत्वेतद्भिन्नतादात्म्यबोधकत्वम् । पृथिव्यादिवृत्तिगन्धादितात्पर्येण पृथिवींविना गन्धोनास्ति इत्यादि प्रयोगवत् नेहनानाऽस्तीतिप्रयोगः। एतत्तात्पर्येणैव 'विनञ्भ्यां नानाञौ नसह' ईतसूत्रे नसहेति निर्देशः। असाहित्यंच आधाराधेयादिवाचिपदसमभिव्याहारेषु भिद्यतइति सर्वसङ्ग्रहइति न्यायामृतकाराणामाशयः। नेह नानेत्यादि श्रुतौ बहुविधाः अन्यथासिद्धयः हरिगुणदर्पणे प्रदर्शिताः ॥

एवं च 'नेह नानाऽस्ति' इति श्रुत्यर्थविचारे (न्यायामृते) व्यासतीर्थोक्तार्थस्यैव युक्ततया 'नेह नानाऽस्ति' इत्यादिश्रुतौ ब्रह्मणि आत्मभिन्नसामान्यनिषेधवत् गुणादिभेदनिषेधोऽपि नैव विवक्षित इति सिद्धम् ॥ एवं च 'विज्ञानमानन्दं ब्रह्म' इत्यादौ प्रवृत्तिनिमित्तभेदेनैव सामानाधिकरण्यं सिध्यति । प्रवृत्तिनिमित्तभेदेनैव शब्दानामपर्यायत्वादिकं सम्भवति । धर्माणां धर्मिसापेक्षत्वमात्रेण भेदे न किंचिद्बाधकम् । यश्चाकाशशब्दस्य शब्दाश्रयत्वमेव प्रवृत्तिनिमित्तमित्यभ्युपैति तन्मते आकाशशब्दशब्दाश्रयशब्दयोः पर्यायत्वमिष्टमेव । तन्मतेऽपि आकाशःशब्दाश्रयइति प्रयोगे आकाशपदस्य आकाशपदार्थइत्येवार्थः। 'वसन्तकाले सम्प्राप्ते काकः काकः पिकः पिकः' इति प्रयोगस्य सर्वसम्मतत्वात् । तत्र काकपिकशब्दयोः काकत्वेन ज्ञातः पिकत्वेन ज्ञातः काकेतरव्यावृत्तशब्दवान् पिकेतरव्यावृत्तशब्दवानिति वा अर्थाङ्गीकारेण प्रवृत्तिनिमित्तभेदेनापर्यायत्वं सामानाधिकरण्यं च । अतः विशेषसद्भावेऽर्थापत्तिः प्रमाणमिति नघटते । 'सत्ता सती' इत्यादिसर्वव्यवहाराणां स्वभावविशेषादेवोपपत्तेः' इत्यादिना अद्वैतसिद्धौ उक्तम् । तथाहि "स्वभावविशेषादेव सर्वस्योपपत्तेः। नच तर्हि विशेषस्याङ्गीकारेण मन्मतप्रवेशइति वाच्यम् ; तत्तदसाधारणस्वरूपस्यैव स्वभावविशेषशब्दार्थत्वेन त्वदुक्तविशेषानुक्तेः तत्तदसाधारणरूपेण समवायादेः स्वनिर्वाहकत्वात् । अतएव स्वनिर्वाहकत्वं हि स्वकर्मकनिर्वहणकर्तृत्वं तच्चैकस्मिन्विरुद्धमिति तदुपपादनायापि विशेषाङ्गीकारइति निरस्तम् ; स्वनिर्वाहकशब्दस्य स्वेतरानपेक्षव्यवहारविषयत्वमात्रार्थकत्वात् ।" इत्यद्वैतसिद्धिः। अत्र लघुचन्द्रिका—'सदाऽस्ति सर्वकालविशिष्टः । सर्वत्रास्ति सर्वदेशविशिष्टः। असाधारणस्वरूपस्य समवायत्वसम्बन्धत्वादिविशिष्टस्य । एकरूपेण विशिष्टप्रमांप्रति विशेष्यत्व विशेषणत्वयोरभावेऽपि समवायत्वसम्बन्धत्वाभ्यां सत्वासद्भिन्नत्वाभ्यां अन्त्यविशेषव्यावृत्तत्वाभ्यां कालत्वसर्वकालत्वाभ्यां देशत्व सर्वदेशत्वाभ्यां तयोः सम्भवः । अभेदेऽपि ताभ्यां कल्पितभेदस्वीकारादितिभावः । स्वनिर्वाहकत्वात्—विशेषं विनैव स्वविशेष्यकप्रमाविशेषणत्वात् । अतएव विशेषानङ्गीकारादेव' इति अन्यविधतात्विकधर्मभेदविवक्षयाऽपि सर्वोपपत्तिः ॥

अत्र भाष्ये पृथक्स्थितियोग्यत्वतदभावाभ्यां दण्डकुण्डलादेः जातिगुणादेश्च वैलक्षण्यमुपपादितम् । इत्थं च विलक्षणवस्तुगतशक्तय एव विलक्षणबुद्धिव्यवहारनियामकाः भवन्ति इति वैलक्षण्योपपादनार्थं विशेषो नाङ्गीकरणीय इति सूचितम् । विशेषमभ्युपगच्छद्भिरपि तत्तद्वस्तुनि शक्तय अङ्गीक्रियन्त एवेति शक्तिभिन्नविशेषाङ्गीकारे न किंचिन्मानमित्येतेन सिद्धम् ॥ एतेन दण्डी चैत्र इतिवत् द्रव्यगुणभेदाङ्गीकर्तृमते शुक्लो पट इति धीस्स्यात् (न्या.अ.) इत्यापादनमपि न सम्भवति । गुणानां द्रव्यापृथक्सिद्धत्वेन वक्ष्यमाणाकृत्यधिकरणार्थनिष्कर्षानुसारेण शुक्लपदस्यैव शुक्लरूपाश्रयपरतया अर्श आद्यचा वा तदुत्तरेनिप्रत्ययस्यासम्भवात् । शुक्लरूपवान् पट इत्यादि प्रयोगास्तु इष्यन्त एव । सामानाधिकरण्येन घटश्शुक्ल इति व्यवहारेण ज्ञायते अभेदादधिकोऽपि अस्याः प्रतीतेर्विषयोऽस्तीति । नचायं भेदः ; पटो न शुक्ल इत्युल्लेखापातात् । भेदाभेदाविरोधाय विशेषस्यावश्यकत्वाच्च । तस्माद्योऽधिको विषयः सएव विशेष इति सिद्धं प्रत्यक्ष त्वं

## गूढार्थसंग्रहः

विशेषस्येति (न्या.अ.) उक्तिरप्येतेन निरवकाशा। शुक्लशब्दस्य शुक्लरूपाश्रयवाचितया जले पृथिवीभेदतात्पर्येण द्रव्यं
नेति प्रयोगस्य विरहवत् हर्यादिपदस्य नानार्थकतया एकस्मिंस्तदर्थे इतरतदर्थभेदतात्पर्येण हरिर्नेतिप्रयोगविरहवच्च पटः
शुक्लो नेति प्रयोगविरहसम्भवात्। पुष्पं न गन्ध इत्यादिवत् पटश्शुक्लरूपं नेति प्रतीत्यादिकमिष्यत एव। रूपस्थले द्रव्य-
गुणयोरेकेन्द्रियग्राह्यत्वेन प्रत्यक्षस्याभेदविषयकत्वसम्भावना वर्तते, गन्धप्रत्यक्षे तु न तथा गन्धस्य घ्राणजप्रत्यक्षविषय-
त्वात्। पुष्पादेश्च चाक्षुषप्रत्यक्षविषयत्वात् तयोरभेदप्रत्यक्षसम्भावनाऽपि नास्ति। एवं रसादेरपि ॥

एतत्तात्पर्येणैव 'व्यतिरेको गन्धवत्' इत्यादिसूत्रम्। गन्धादौ द्रव्यभेदस्य भिन्नेन्द्रियग्राह्यत्वेन स्फुटतया 'पुष्पं
गन्धः फलं मधुररसः इति व्यवहारविरहवत् पटश्शुक्लरूपमिति व्यवहारविरहेण अत्रापि भेदस्सिध्यतीति सूत्रकाराशयः।
अतएव 'घटो रूपम्' इत्यादिकं तु लोकैरनुभूयतएव (गु.चं) इति वदद्भिरेव रूपं पटः इति प्रत्ययस्यानुभाविकत्वाभा-
वात् वस्तुतस्तु रूपत्वादिना रूपादेः न घटाद्यभेदः मानाभावात् किंतु शुक्लत्वादिना। अतएव मन्मतेऽपि न तथा प्रयो
गप्रत्ययौ। (ल.चं.वि.खं) इत्युक्तम्। गुणगुणिनोरभेदप्रत्यक्षवादिभिः घटप्रत्यक्षदशायां शुक्लरूपं यदा प्रत्यक्षविषयः तदा रूपत्वे
नैव प्रत्यक्षविषयः। इत्थंच शुक्लरूपत्वेनैव शुक्लरूपस्य प्रत्यक्षतादशायां शुक्लत्वेन रूपभाने शुक्लरूपत्वेन रूपस्य घटस्यच
कःसम्बन्धो भासत इति ते प्रष्टव्याः। यदि भेदमात्रं तदा शुक्लघटयोरभेदो भासतइति नैव सिध्यति। घटरूपप्रत्यक्ष
सामान्ये ऐकरूप्यविरहात्। अतः घटरूपप्रत्यक्षे शुक्लाभेदो भासतइत्युक्तिरप्यभिनिवेशमूलैव। तथाऽङ्गीकारे शुक्लरूप-
त्वेन रूपाभेदस्यापि घटे भानावश्यकतया सर्वजनानुभवासिद्धस्य शुक्लरूपं घट इति प्रत्ययस्य स्वीकारापत्तिः। अतो गन्ध
रूपादिकं सर्वमपि गुणिनो भिन्नमित्येव सूत्रकृत्सिद्धान्तो युक्तः ॥

अतएव 'रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत्' (यो॰सू॰ ३.४६.) इतिसूत्रे रूपस्य द्रव्यभेद एवोक्तः। योग-
सूत्रेषु क्वापि द्रव्यगुणयोरभेदो नोक्तः। जातिगुणादिषु मध्ये जातिगुणकर्मणां द्रव्याद्भेद एव। अवयावयविनोस्तु तन्तु-
पटयोः द्रव्ययोः अभेद एव। संयुक्ततन्तूनामेव तन्तवः पट इति प्रतीतिविषयत्वात्। प्रवृत्तिनिमित्तभेदेन सामानाधिक-
रण्यसम्भवाच्च इत्यारम्भणाधिकरणे सिद्धान्तयिष्यते ॥

विशिष्टकेवलयोरपि न भेदः। तथा सति क्षणभेदेन तत्तत्क्षणविशिष्टानामनन्तानां वस्तूनां स्वीकारापत्त्या बौद्धम-
तादविशेषस्यादिति 'अनतिरेके तु' इति दीधितिविवरणावसरे गदाधरेण स्फुटमुक्तेः। तत्तत्क्षणाविशिष्टघटवदिति ज्ञानं
यद्विशिष्टवैशिष्ट्यावगाहि तदीयघटनिष्ठविशेषणतावच्छेदकत्वं तत्क्षणेष्वङ्गीक्रियते। विशेष्ये विशेषणं तत्रापि च विशेषणा-
न्तरमिति ज्ञानेतु तत्क्षणे विशेषणतावच्छेदकत्वं नाङ्गीक्रियते। तत्क्षणविशिष्टवन्तं जानामीत्यनुभवे तत्क्षणविशिष्टवन्तमित्यत्र
विशिष्टस्य प्रकारता विशिष्टवतः विशेष्यता सर्वानुभवसिद्धेति विशिष्टवैशिष्ट्यावगाहिज्ञानविषयकत्वं यदा तादृशानुभ-
वस्य, तदा तत्क्षणेषु विशेषणताऽवच्छेदकत्वमपि विषयः इत्यनुभवसिद्धमेव। एतद्बलेनैव उक्तज्ञानयोर्वैलक्षण्यम्।
परस्पराध्यासोक्तरीतिस्तु उत्तरत्र पर्यालोचयिष्यते। अतः विशेषणतावैलक्षण्येन विशेष्ये विशेषणं तत्रापि विशेषणा
न्तरमिति ज्ञानात् विशिष्टवैशिष्ट्यावगाहिज्ञानस्य वैलक्षण्यं निर्वहत्येव। साकारवादस्यापि नापत्तिः। योगाचारमते
ज्ञानातिरिक्तस्यार्थस्यानङ्गीकारेऽपि ज्ञानार्थयोः भेदवादिमते विषयवैलक्षण्येन ज्ञानवैलक्षण्यं वर्तत एवेति न साकारवादा-
पत्तिः। यत्रतु समूहालम्बनादौ ज्ञानयोर्वैलक्षण्यमनुभवसिद्धं विषयांशे वैलक्षण्यं नास्ति तत्र परं विषयतावैलक्षण्येन ज्ञान-
वैलक्षण्यम्। अन्यथा क्षणभेदेन बौद्धवदनन्तपदार्थकल्पनं स्यात् तथा सति महागौरवम्। एतत्तात्पर्येणैव विशिष्टकेवलयो
र्भेदे विशिष्टसत्ता सत्ता नेत्यापत्तिः शिरोमणिना उक्ता। एतेन गुरुचन्द्रिकायां विशिष्टकेवलयोर्भेदवादिना तार्किकादिना

## गूढार्थसङ्ग्रहः

केवलघटे द्रव्यत्वविशिष्टघटत्वादिना भेदस्वीकारादित्युक्तिः न घटते इति सिद्धम् । विशिष्टकेवलयोर्भेदास्वीकारे संयोग-विशेषवतो भेदाभेदयोः वृक्षादौ तार्किकादिभिस्स्वीकारेण तत्रैव दृष्टान्तत्वसम्भवाच्चेत्युक्तिरपि (गु.चं.) नादरणीया । संयोग-तदत्यन्ताभावयोः अवच्छेदकभेदेनैकत्र तार्किकैः स्वीकारेऽपि भेदस्य व्याप्यवृत्तितया संयोगवति संयोगवद्भेदः नाभ्युपगम्यत एव इति भेदाभेदानुयोगितावच्छेदकत्वम् एकस्य धर्मस्य क्वापि नाभ्युपगम्यतइति गुरुचन्द्रिकोक्तानुमानयोः दृष्टान्तासिद्धिः व्याप्तयनुसारेण साध्याप्रसिद्धिश्च ॥ 'य एव द्रव्यत्वघटत्वयोर्भेदः स एव तदुपहितयोरपि' (ल.चं.) इति परैः अभ्यु पगमेऽपि तार्किकैर्नाङ्गीक्रियते ॥

अत एव 'भिन्नाभिन्नं भेदाभेदोभयवत् समानाधिकृतत्वात् अभेदसंसर्गकधीविषयतायोग्यत्वात् पराभ्युपगतसम-वायतादात्म्यभिन्नाः ये संयोगादयः तेषामन्यतमसम्बन्धेन गुणादिविशेषणका या धीः तदन्या गुणादिविशेषणका याधीः तद्विशेषणत्वादिति यावत्' इत्यनुमाने (ल.चं.) 'व्याप्तिश्चात्र नान्वयतः दृष्टान्तासम्भवात्; किंतु व्यतिरेकतः । यः घटत्वावच्छिन्नप्रतियोगिताकभेदाभेदोभयाभाववान् सः घटत्वावच्छिन्नोक्तविशेषणताकधीविशेष्यत्वाभाववान्, यथा घटत्वा-वाच्छिन्नो घटः इति प्रमाया अभावात्' इति विठ्ठलभट्टोक्तं सङ्गच्छते ॥ एवं साधने विभिन्नधर्मावच्छेदेन भेदाभेदयोः उभयोः अङ्गीकारेण साध्यसिध्याऽर्थान्तरम् । भेदावच्छेदकावच्छेदेन अभेदः अभेदावच्छेदकावच्छेदेन भेदस्तु न तार्किकादिसम्मत इति दृष्टान्तासिद्धिः साध्याप्रसिद्धिश्च । नञ्भेदादिपदाभिलप्यज्ञाने तादात्म्यविरोधित्वविशिष्टभेदस्य विषयत्वेन घटो द्रव्यं न, घटः शुक्लो न, विशिष्टसत्ता सत्ता नेत्यादेः प्रमात्ववारणमपि नघटते । घटोद्रव्यं नेति प्रतीतिविषयभेदाद्विल-क्षणः घटो द्रव्यमित्यत्राभेदसहभावेन भासमानो भेद इति भेदद्वैविध्यकल्पनेन, घटो द्रव्यमित्यत्र भेदस्य नञभिलप्यत्वं नास्ति तद्विलक्षणभेदस्यैव नञभिलप्यत्वं भेदत्वस्याखण्डरूपत्वेऽपि घटो द्रव्यमित्यत्र भेदोऽभावरूपः इति खलु निष्कर्षः । नञनभिलप्यः अभावः नञभिलप्यश्चाभाव इत्यभावद्वैविध्यं न केनापि दार्शनिकेन अङ्गीक्रियते । प्रतियोगिसामानाधिक-रण्यरूपाव्याप्यावृत्तित्वविशिष्टसंयोगाद्यभावस्य नञनभिलप्यत्वमित्यपि न । मूले वृक्षे न कापिसंयोगः इति नञभिल-प्याभाववत्ताबुद्धेः मूले वृक्षे कपिसंयोग इति धीविरोधित्वस्य भवद्भिरप्यङ्गीकारेण मूलावच्छेदेन वृक्षे विद्यमानो यः कपि संयोगाभावः सः अग्रावच्छेदेन कपिसंयोगरूपप्रतियोग्यधिकरणवृक्षवृत्तिर्भवत्येवेति प्रतियोगिसमानाधिकरणाभावस्यापि नञभिलप्यत्वसम्भवात् ॥

अव्याप्यवृत्तित्वज्ञानाभावदशायां निरवच्छिन्नविशेषणतासम्बन्धेनाभावानवगाहिनोऽपि तदभाववत्तानिश्चयस्य तद्व-त्ताबुद्धौ प्रतिबन्धकता अनुभवानुरोधेन बाधग्रन्थे गदाधरेण अङ्गीकृता । अतएव ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रद-सामान्यस्य बाधत्वं निर्वहति एवंच प्रतियोगिविरोध्यत्यन्ताभावबुद्धेरेव विरोधित्वमिति नियमोऽपि नसम्भवति । उभयोः सामानाधिकरण्यानिश्चयदशायां वस्तुतः प्रतियोगिसमानाधिकरणाभाववत्तानि श्चयस्य प्रतिबन्धकत्वस्यानुभवसिद्धस्यापला-पप्रसङ्गात् ॥

'गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्' इत्यत्र समानाधिकृतत्वात्— गुणादौ गुण्यादिधीप्रतिब-न्धकप्रमाविषयत्वात् इति गुरुचन्द्रिकायां व्याख्यानपूर्वकं 'द्रव्यं घट इत्यपि प्रमाविषयो दृष्टान्तः' इत्युक्तम् । द्रव्यं घटः इति ज्ञाने भेदाभेदयोरुभयोरपि भानेन तज्ज्ञानस्य एकतरज्ञानप्रतिबन्धकप्रमाविषयत्वं कथम् ? नञादिपदाभिलप्यज्ञाने तादात्म्यविरोधित्वविशिष्टभेदस्य विषयत्वाङ्गीकारेण घटो द्रव्यं नेति प्रमावारणे द्रव्यं घटः इति ज्ञानस्यापि ज्ञानविषयैक-तरस्य अन्यतरविषयकज्ञानप्रतिबन्धकप्रमाविषयत्वस्याप्यसम्भवात् । भेदाभेदोभयावगाहिज्ञानस्य एकतरबुद्धिप्रतिबन्ध-कत्वस्य असम्भवात् । अतः एकावच्छेदेन भेदाभेदयोः कथं सम्भवः ? किंच एकावच्छेदेन विरोधिनोः प्रमायां भानस्य

## गूढार्थसंग्रहः

केनाप्यनङ्गीकारेण एकधर्मस्य भेदाभेदानुयोगितावच्छेदकत्वस्यासम्भवात् । एतेन 'एकांशधीप्रतिबन्धकदोषसत्वे अन्यांशप्रत्यक्षेऽपि तत्सम्भवात्' इत्युपक्रम्य, 'न प्रमात्वघटितहेत्वसिद्धिः' इति (२२८.पुटे.गुं चं) उक्तिरपि निरवकाशा । नैयायिकादिभिः साध्यस्यानङ्गीकारात् । 'अवच्छेदकभेदेन गुणगुण्यादिषु भेदाभेदानुमाने तार्किकादीन्प्रति क्रियमाणे सिद्धसाधनताऽऽपत्तेः । नहि तार्किकादिभिः कुण्डलादौ हेमत्वाद्यवच्छिन्नाभेदो नस्वीक्रियते । किंच हेमत्वादिना कुण्डलादावभेदस्वीकारे भेदोऽपि तेनैव रूपेण स्वीकार्यः । अन्यथा हेमकुण्डलमिति सामानाधिकरण्यप्रत्ययानुपपत्तेः । नहि द्रव्यत्वघटत्वाभ्यां भेदसत्वेऽपि घटः कलश इति सामानाधिकरण्यधीर्भवति' (ल.चं.) इत्युक्तिरपि न घटते । उपादानोपादेययोः अवच्छेदकभेदेनाप्यभेदस्य आरम्भवादिभिर्नैयायिकादिभिरस्वीकारात् । अत एव इहेत्यधिकरणावगाहिप्रत्ययहेतुः समवाय इति तैरुच्यते । हेमकुण्डलमिति तु हेमपदस्य स्वर्णत्वजात्यवच्छिन्नबोधकत्वे द्रव्यं घट इतिवत् तन्मते सामानाधिकरण्यं निर्वहत्येव । यदि उपादानपरं हेमेतिपदं तथा प्रयोगः नाङ्गीक्रियत एव । तन्तुषु पटः इत्येव प्रयोगस्य तैरप्यङ्गीकारात् ॥ भामत्यां पूर्वपक्षोक्तिः एकधर्मस्य भेदाभेदानुयोगिताऽवच्छेदकत्वाभिप्रायेण न प्रवृत्ता। तथा वदतः कस्यापि भेदाभेदवादिनः अभावात् ॥

'आत्यन्तिकेऽभेदे अन्यतरस्य द्विरवभासप्रसङ्गः । भेदे वाऽऽत्यन्तिके न सामानाधिकरण्यं गवाश्ववत्' इति हि भामती । 'द्विरवभासेति । हेम हेमेति कुण्डलं कुण्डलमिति वेत्यर्थः । अपर्यायानेकशब्दवाच्यत्वेन हेमकुण्डलयोर्भेदः सामानाधिकरण्याच्चाभेदः' इति कल्पतरुः । अत्र भेदे हेतुः शास्त्रदीपिकोक्त एव उक्तः । नतु (लघु) चन्द्रिकाद्युक्तः । अतः कुमारिलसम्मत एव भेदाभेदः भामतीपूर्वपक्षसम्मतः । सिद्धान्तेऽपि, 'नच भावाभावयोरविरोधः सहावस्थानासम्भवात्' इति भामती । एतेन चन्द्रिकोक्तदिशा भावाभावयोस्सहावस्थानं तत्प्रतीत्योः परस्पराप्रतिबन्धवत्वंच न वाचस्पतिसम्मतमिति स्फुटम् । संयोगतदभावयोरवच्छेदकभेदेन सहावस्थानं सर्वानुभवसिद्धं नापलपितुंशक्यम्। तद्वदेकावच्छेदकावच्छेदेन भेदाभेदाभ्युपगमस्तु नसम्भवति। केनापि एकावच्छेदेन भेदाभेदावगाहिप्रतीत्यनङ्गीकारात् । अपिच कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमकुटकुण्डलादयो न भिद्यन्ते, एवं कटकात्मनाऽपि न भिद्येरन् । कटकस्य हाटकादभेदात् । तथा च हाटकमेव वस्तुसत् न कटकादयः । भेदस्याप्रतिभासनात् । अथ हाटकत्वेनैवाभेदः न कटकत्वेन तेन तु भेद एव कुण्डलादेः । यदि हाटकादभिन्नः कटकः कथमयं कुण्डलादिषु नानुवर्तते । नानुवर्ततेचेत् कथं हाटकादभिन्नः कटकः' इत्यादिना भामत्यामवच्छेदकभेदेन भेदाभेदावेव पूर्वपक्षिसम्मतौ दूषितौ, नत्वेकावच्छेदेन । अन्ते च भेदाभेदयोरेक एव परिग्राह्य इति । अभेदोपादानैव भेदकल्पना न भेदोपादाना अभेदकल्पना इतिच निगमितम् । अतो भामत्यां पूर्वपक्षे सिद्धान्ते च चन्द्रिकोक्तरीतिर्नास्त्येव । भामतीपूर्वपक्षाशयस्तु अनुपदमेव वक्ष्यते ॥

भेदाभेदयोः एकधर्मावच्छेदेनासम्भवे नञ्भेदाभिलप्यज्ञाने तादात्म्यविरोधिविशिष्टभेदस्य विषयत्वकल्पनमापि न घटते । एकाधिकरणकस्वाप्नभावाभावदृष्टान्तेन प्रपञ्चतदभावयोरिव भेदाभेदयोरविरोध इत्यपिन । स्वप्ने गजज्ञानदशायां गजाभावज्ञानाभावात् । प्रपञ्चज्ञानदशायां प्रपञ्चाभावज्ञानस्याप्यसम्भवात् । तद्दृष्टान्तादरेतु दृष्टान्ते उभयावगाहि ज्ञानस्यैकदाऽसम्भवेन भेदाभेदोभयावगाहिज्ञानस्याप्यसम्भवात् । भेदस्य प्रातीतिकत्वमभेदस्य व्यावहारिकत्वं भिन्नसत्ताकत्वेनोभयोरविरोधः इत्यङ्गीकारेऽपि नेदं रजतमिति बुद्धिदशायां इदं रजतमिति बुद्धिर्यथा नोदेति तद्वद्भेदाभेदोभयावगाहिबुद्धिर्नघटते । एकधर्मावच्छेदेन धर्मिणि भेदाभेदविषयकनिश्चयस्यासम्भवेऽपि भेदसामानाधिकरण्योपलक्षिताभेद विषयकनिश्चयस्सम्भवतीति' लघुचन्द्रिकोक्तिरप्यनादरणीया । भेदसामानाधिकरण्योपलक्षितत्वं च भेदोपलक्षिताधिकरण

## गूढार्थसंग्रहः

वृत्तित्वविशिष्टत्वम् । इत्थं च तद्भेदोपलक्षिताधिकरणवृत्तित्वविशिष्टसंयोगस्य तत्राभावात् तद्घटस्तद्घटवानिति प्रतीतिवारणम् । अभेदावच्छेदकावच्छेदेन भेदोपलक्षिताधिकरणवृत्तित्वविशिष्टभेदस्य सामानाधिकरण्यस्थले सम्बन्धतेत्यङ्गीकारे गौरवम् । तद्घटत्वावच्छिन्नप्रतियोगितानिरूपितसंयोगानुयोगितायाः सम्बन्धत्वे लाघवम् । संयोगः खलु सम्बन्धः उभयसम्मतः । संयोगस्तु प्रतियोग्यनुयोगिनोः ज्ञानमन्तरा न सुज्ञानः इति तादृशसम्बन्धानुयोगिताविशेषस्य सम्बन्धत्वाङ्गीकारे अयं सम्बन्धः सर्वैरपि ज्ञातुंशक्यते अनुभवसिद्धश्च । अभेदस्य सम्बन्धत्वमुभयसम्मतम् । तत्र तद्भेदोपलक्षिताधिकरणवृत्तित्ववैशिष्ट्यमतिप्रसङ्गवारणायैवाभ्युपेयम् । भेदस्य संम्बन्धत्वानङ्गीकारे घटो घट इति प्रयोगस्स्यात् इत्यापत्तिर्वाच्या । प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यं न निर्वहतीति तत एव वारणे अनुभवविरुद्धस्य भेदाभेदवादिनामन्येषामसम्मतस्य अस्य सम्बन्धतयाऽङ्गीकरणं कथम् ? प्रवृत्तिनिमित्तभेदस्तु न शाब्दबोधे विषयः, अनुभवविरोधात् । एतदभिप्रायेणैव अभेदसंसर्गकशाब्दबोधे उद्देश्यतावच्छेदकविधेयतावच्छेदकभेदावश्यकत्वविचारः व्युत्पत्तिवादादौ ॥

एकावच्छेदेन भेदाभेदावुभौ 'कार्यात्मना तु नानात्वम्' इति कारिकाकर्तुः न सम्मतौ । तेन तथा क्वाप्यनुक्तेः । भामत्युपात्ता इयं कारिका भास्करभाष्यस्था । तत्र 'सत्ता ज्ञेयत्वद्रव्यत्वादिसामान्यात्मना सर्वमभिन्नम् व्यक्त्यात्मना तु परस्परवैलक्षण्याद्भिन्नम्' इत्युपक्रम्य, 'तस्माद्यत्किंचिदेतत् यत् प्रपञ्चे मिथ्यात्वप्रतिज्ञानम् । यथा आगमेनापि नमिथ्यात्वं प्रतिपाद्यते तथा 'तदनन्यत्वम्' इत्यत्र वक्ष्यामः । नच तिमिरवत् प्रपञ्चमिथ्यात्वे कारणदोषौ गृह्येते । अतो भिन्नाभिन्नरूपं ब्रह्मेति सिद्धम्' इत्युक्त्यनन्तरमियं कारिका दृश्यते । ब्रह्मणो अनन्यत्वात् भोक्तृभोग्ययोरविभागः लोके समुद्रेणानन्यत्वेऽपि फेनतरङ्गादीनां परस्परविभागः नाभेदापत्तिः एवमत्रापि स्यात् । भेदाभेदयोर्हि सर्वप्रमाणसिद्धत्वादुपपत्तिः इति पूर्वसूत्रे अभिधाय तदनन्यत्वमित्यादौ ब्रह्मणो अनन्यत्वं साधितम् । एवमेव प्राचीनेन भर्तृप्रपञ्चेनाप्यङ्गीक्रियते इति (बृ) वार्तिके व्यक्तम् । 'भेदाभेदात्मकं सर्वं वस्तु दृष्टंयतस्ततः । परपक्षे न दृष्टान्तः कश्चिदप्युपलभ्यते ॥ एकैव गोता गोपिण्डे सास्नाद्यर्थानुसारिणी । सास्नादयो मिथो भिन्नाः नचान्योऽन्यविरोधिनः ॥ (सु.वा.१६४०–१६४१. १६६८.पुटे) अग्रेचलत्वमूर्मीणां मध्यईषच्चलात्मता । निष्कम्पत्वं तथा मूले समुद्रस्सर्वरूपधृत् । निष्कम्पा देवदत्तस्य वृत्तिस्स्यात्परमात्मना ॥ (१९५.पुट.५१.श्लो) जनिस्थितिलयेष्वेवं त्रिषु कालेषु पूर्णता । कार्यकारणयोर्ज्ञेया द्वैताद्वैतस्वभावयोः ॥ (५४) साचैकैवाविभागत्वात् कार्यकारणभेदतः । भेदेन व्यपदेशार्हा सर्वमेवं समञ्जसम् ॥ (५६) इति वार्तिके भर्तृप्रपञ्चमतानुवादात् ॥

उक्तंच श्लोकवार्तिकेऽपि—'सद्गुणद्रव्यरूपेण रूपादेरेकतेष्यते । स्वरूपापेक्षयाचैषां परस्परविभिन्नता' ॥ इति(अ.भाव प.२४) (सद्गुणेति—एतच्चाकृतिवादे समर्थयिष्यत इति न्यायरत्नाकरः) 'केनचिद्ध्यात्मनैकत्वं नानात्वं चास्य केनचित्' (आकृतिवादः.५६) इति च । 'गोत्वं शाबलेयात्मना बाहुलेयाद्भिद्यते । स्वरूपेण च न भिद्यते । तथा व्यक्तिरपि गुणकर्मजात्यन्तरात्मना गोत्वाद्भिद्यते । स्वरूपेण च न भिद्यते । तथा व्यक्त्यन्तरादपि जात्यात्मना न भिद्यते स्वरूपेण च भिद्यत' इति अत्र न्यायरत्नाकरः । अत्र सर्वत्रापि भिन्नरूपेणैवं भेदाभेदावुपपादितौ । भास्करभाष्ये मिथ्यात्वं दूषयित्वा भेदाभेदस्साधितः । भामत्यां तु भास्करसम्मतं भेदाभेदं दूषयित्वा मिथ्यात्वं साधितम् । एवं च भामत्युपात्तकारिकायाः एकावच्छेदेन भेदाभेदपरतयाऽर्थवर्णनं कथं घटते । अतः भामत्युक्तभेदाभेदपूर्वपक्षः भास्करसिद्धान्त एव । भर्तृप्रपञ्चकुमारिलसम्मतश्च । वस्तुनस्सामान्यविशेषात्मकत्वस्य कुमारिलसम्मतस्यैव उदाहृतसांख्ययोगग्रन्थयोः प्रतिपादनेन सांख्यानां पातञ्जलानामप्युक्तरीत्यैव भेदाभेदस्सम्मतश्चेति स्फुटं निर्मत्सराणां विदुषाम् ॥ लघुचान्द्रिकोपात्त भामती-

### श्रीभाष्यम्

### अतो वस्तुविरोधः प्रतीतिपराहतइति

### श्रुतप्रकाशिका

घटे पटस्याभावो * भेदः। तत्र तस्य सद्भावोऽभेदइति भावाभावविरोधस्य **'नहि दृष्टेऽनुपपन्नं नाम'** इति न्यायात् प्रतीतिपराहतत्वमाशङ्क्याह। **अतइति।**

### गूढार्थसंग्रहः

वाक्यं तत्र न दृश्यते। अतः भामतीपूर्वपक्षः प्रागुक्तदिशा भास्करादिसम्मत एवेति एकावच्छेदेन भेदाभेदसिद्धान्तः ब्रह्मानन्दसरस्वतीभिरेव परिकल्पित इति बोध्यम्॥ भास्करसम्मतभेदाभेदः समन्वयाधिकरणे भगवता पर्यालोचयिष्यते॥

वस्तुतः तद्घटे स्वकीयसंयोगसत्वेऽपि स्वप्रतियोगिकत्वविशिष्टसंयोगानुयोगित्वस्य तद्घटेऽनङ्गीकारेण तद्घटः तद्घटीय इति प्रमा नैव सम्भवति। संयोगस्थले प्रतीत्यनुरोधेन यथाऽङ्गीक्रियेते तथैवाभेदस्थलेऽपीति न निर्बन्धः। द्रव्यं घटः नीलो घटः इत्यादिप्रतीत्यनुरोधेन अभेदस्य लघुचान्द्रिकोक्तदिशा तादात्म्यत्वरूपाखण्डधर्मत्वेन सम्बन्धत्वं सम्भवति। तस्याः स्वपरनिर्वाहकत्वसमाधिना न सम्बन्धान्तरापेक्षा। तादात्म्यत्वस्य अखण्डधर्मत्वं न सम्भवतीत्यभिप्रेत्य व्युत्पत्तिवादे गदाधरपरिष्कृततादात्म्यरूपस्य वा सम्बन्धत्वं सम्भवति॥

**वस्तुविरोधः प्रतीतिपराहत इति।** 'प्रतीयते तदुभयं विरोधः कोऽयमुच्यते। विरोधे चाविरोधे च प्रमाणं कारणं मतम्॥' इत्युक्तं भास्करभाष्ये॥ 'अभेदेन प्रतीतिश्च कार्यकारणपूर्वके। अभावान्ते पदार्थेऽस्मिन् सविशेषाऽवसीयते॥ अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः। अनन्यत्वान्नानवस्था भेदो नाशे भवेत्तथा॥ विशेषमेव संश्रित्य विशेषो बलवान् यतः। दृष्टिप्रमाणतश्चैव विरोधो दर्शने कथम्॥ विरोधो ह्यविरोधश्च यतो दर्शनमानकौ। ततो दृष्टे विरोधस्तु सद्भिरापाद्यते कथम्॥' इत्यनुव्याख्यानेच॥

अत्र सुधा— 'पूर्वशब्देन गुणगुण्यादिकम्। अभावशब्देनान्योन्याभावो गृह्यते। यद्वा भावतद्धर्माववेनोपलक्ष्येते। अवसीयते साक्षिणा तथाहि तन्तुपटादिविषया बुद्धिः अत्यन्तभिन्नघटपटादिबुद्धितो विलक्षणा अनुव्यवसीयते' इति कुण्डबदरप्रतीतितोऽपि वैलक्षण्यानुभवात्। सम्बन्धिनोरयुतसिद्धत्वात्तथेतिचेन्न। आधाराधेयभावेनावस्थानसमये तस्याकिंचित्करत्वात्। अतस्तन्तुपटयोः कुण्डबदरयोश्च भेदे सम्बन्धे च समाने कालान्तरभाविनस्सम्बन्धविनाशादेः सम्बन्धविभागादेर्वा प्रत्यक्षप्रतीतिं प्रत्युपयोगायोगात् वैलक्षण्यं नानुभूयेत अनुभूयते च तन्तुपटादिबुद्धिः कुण्डबदरादिबुद्धेः विलक्षणेति अभेदविषयैव साऽवसीयते। यद्यवयवादयोऽवयवाद्यभिन्नाः। कथं तर्हि सत्स्वेवावयवादिषु विनश्यन्ती त्यतआह—भेदइति तथा शब्दः समुच्चये। अवयवादिषु सत्स्वेव अवयव्यादीनां नाशे भेदोऽभेदश्च भवेदित्यर्थः। अत्र नाशइत्युपलक्षणम्। यत्र सत्स्ववयवेष्ववयविनोऽभावः सति गुणिनि गुणस्याभावस्तत्र भेदाभेदावित्यादिद्रष्टव्यम्। अन्यथा यत्रावयवावयव्यादीनां युगपद्विनाशस्तत्र भेदाभेदावुक्तौ न स्याताम्। इदमुक्तं भवति। सत्यपि तास्मिन्नसत्वादित्यनेन हेतुना अवयव्यादीनामवयवादिभ्यो भेदमात्रं वा साध्यते अत्यन्तभेदो वा। आद्ये सिद्धसाधनता भागासिद्धिश्च। तथा हि— सत्युपादाने कदाचिदुपादेयमसत् यथा पटः। एवं सत्यपि द्रव्ये केचिद्गुणा असन्तो यथा पाकजादयः। तथा सत्येवाश्रये काश्चिक्रिया असत्यो यथा पटचलनादयः। जातिश्च काचित् सति जातिमत्यसती यथा ब्राह्मण्यम्। तत्र भेदाभेदयोरङ्गीकाराद्भेदसाधनं सिद्धविषयम्। गगनतद्भागयोरीश्वराद्याश्रितज्ञानादिगुणाक्रियाजातिष्वभावात्

### श्रीभाष्यम्

**प्रतीतिप्रकारनिह्नवादेवोच्यते । प्रतीतिप्रकारोहि इदमित्थमित्येव सर्वसम्मतः ।**

### श्रुतप्रकाशिका

अतः इत्थं भेदसामानाधिकरण्येन अभेदस्य प्रतीत्यभावात् । कथं प्रतीतिप्रकारइत्यत्राह । प्रतीतिप्रकारोहीति ॥

यदि विशेषणविशेष्ययोरैक्यमस्ति तर्ह्यन्यतरदेव प्रतीयेत, अन्यतरप्रतीतिर्वाऽस्तु तथाऽपि नैक्यम् । यथा पूर्वानुभूतयोः पुरुषयोः एकस्मिन् दृष्टे नहि पुरुषैक्यम् । जातिव्यक्त्योस्सम्बन्धानियमएवैक्यमितिचेत् न भेदसाधकसम्बन्धनियमस्य भेदनियतसम्बन्धनियाम्यत्वात् द्वयोर्हि सम्बन्धः तन्नियमएवैक्यंचेत् सम्बन्धस्वरूपभङ्गप्रसङ्गः । एवं भेदाभेदनि-

### गूढार्थसंग्रहः

भागसिद्धत्वं हेतोरिति । न द्वितीयः । कालात्ययापदिष्टत्वात् । अभेदस्य प्रागुपपादितत्वादुपपादयिष्यमाणत्वाच्चेति ॥ स्यादेतत् । यथा भेदसाधकानां व्यपदेशभेदादीनां विशेषाश्रयणेनैवान्यथासिद्धिरुक्ता, तथा सत्यपि तास्मिन्नसत्वस्यापि विशेषेणैव निर्वाहः क्रियताम् । किं भेदाभेदाभ्युपगमेन ? मैवम् । विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेन विनाशं प्रति अनिर्वाहकत्वात् । सकलभेदकार्यकारित्वे विशेषे भेद एव नतत्प्रतिनिधिस्स्यात् । ननु भेदाभेदावेकत्र विरुद्धौ । तत्कथम यावदाश्रयभाविनामवयविगुणकर्मसामान्यानामवयवादिभिर्भेदाभेदाभ्युपगम इत्यतआह–विशेषमेवेति । भेदाभेदावेकत्र भवतइति सम्बन्धः । अवधारणम् कालादिभेदव्यावृत्त्यर्थम् । इति । दृष्टीति दृष्टिश्च तत्प्रमाणं च प्रमाणभूतादृष्टिरित्यर्थः ततो भेदाभेदौ न विरुद्धौ इति सम्बन्धः चशब्दो विशेषेण सह दृष्टेःसमुच्चये । न स्वेच्छामात्रेण भेदाभेदावित्युपेत्य विशेषेण विरोधाभावोऽभिधीयते । येनातिप्रसङ्गः स्यादित्येव शब्दः । उक्तं तावदवयवावयव्याद्यभेदग्राहिणी दृष्टिरस्ति । संबद्धवस्तुबुद्धितो विलक्षणतया अनुव्यवसायात् । अस्तिच भेदग्राहिणीसत्यपि तस्मिन्नसत्वादिति हेतुजनिता दृष्टिरिति । (नचैते बाध्यबाधके अन्यतराननुवृत्तिप्रसङ्गात् । नापि प्रतिपक्षभूते प्रतिपत्तॄणामुभयोदासीनतापत्तेः । ) नचैवं । अतो द्वयोरपि प्रामाण्यमेषितव्यम् । प्रमाणतश्च भेदाभेदयोरवगतयोः न विरोधः तदिदमुक्तं प्रमाणतइति । ननुभवतां भेदाभेदावेकत्रैकदैव प्रमितौ । तथाऽपि कथं विरोधभ्रान्तिरित्यतआह विरोधइति । सह दर्शने सति कथं विरोधो वक्तुं शक्यते सह दृष्टौ विरुद्धौचेति विप्रतिषिद्धमिति भावः । एतदेव विवृणोति विरोधोहीति । सर्वत्र परस्परपरिहारेणैव सत्वदर्शनं सहानवस्थानलक्षणविरोधे प्रमाणम् । क्वचित्सह दर्शनंचाविरोधे । अन्यस्यानिरूपणात् । अतः सहदृष्टे भेदाभेदलक्षणे वस्तुद्वये विरोधः कथमुच्यते । सहदर्शनेह्यविरोधस्स्यात् । इति ॥

**प्रतीतिप्रकारनिह्नवादेवेति** । सदादिरूपेण रूपादेरेकत्वाङ्गीकारः कुमारिलादीनाम् तत्र रूपादिषु सत्ताधर्मो वर्तत इति सर्वैरप्यभ्युपगन्तुं शक्यम् । रूपं सत् द्रव्यं सत् गोत्वादिकं सत्, इति व्यवहारात् । तावता रूपादेर्द्रव्याभेदो न सिध्यति । रूपंसत् घटः गोत्वं सत् सास्नादिमत् द्रव्यंसत् चलनम् इत्यादिव्यवहारविरहात् गुणजातिक्रियाणां द्रव्याभेदः न सिध्यति । जातिगुणक्रियातात्पर्येण इदमित्थमिति प्रतीत्यभिलापकशब्दः लोके अविप्रतिपन्नः । इदंशब्दात्प्रकारार्थे थमुना निष्पन्नः इत्थमिति शब्दः इदमर्थस्य इतरव्यावर्तकप्रकारवचनः इति उभयोर्भेदः प्रतीतिविरोधान्नघटत इति । स्वाप्नभावाभावयोरिव भेदाभेदयोः एकसत्ताकयोर्न विरोधः इतितु नघटते । स्वप्ने गजो नास्तीति या प्रतीतिः जागरेऽपि सा प्रतीतिर्वर्तते । बाधश्च नदृश्यते अतः उभयोरेकसत्ताकत्वमेव न इति उत्तरत्र व्यक्तीभविष्यति । 'नेहनानाऽस्ति किंचन' इति श्रुतेः अविनाभूतवस्तुनिषेधकत्वेन नानाशब्दस्य दृश्यार्थकतया लोके प्रयोगविरहेण कोशाद्यभावाच्च श्रुतेः

## गूढार्थसंग्रहः

दृश्यसामान्यानिषेधबोधकत्वं न सम्भवति इति अनया श्रुत्या द्वितीयद्वितीयाभावयोः निषेधो नघटते इतिच उत्तत्र स्फुटी भविष्यति । तन्तवः पटः इतिवत्, शुक्लरूपं पटः इत्यादिव्यवहारविरहात् उपादानोपादेयद्रव्ययोरभेदः । गुणद्रव्ययोस्तु भेदएव । उपादानोपादेयद्रव्याभेदः आरम्भणाधिकरणे स्थापयिष्यते । उत्पत्तिविनाशादि व्यवहाराः अवस्थानिबन्धना इति तत्रैव वक्ष्यते । परिणामवादे सर्वत्रापि एषैव रीतिः । अतः पटनाशो नाम पटत्वावस्थानाशः नतु पटद्रव्यस्य । अतः तन्तुपटयोरभेदे तदा अपि पट इति कुतो नव्यवहारः इतितु नशङ्क्यम् । पटत्वावस्थाविशिष्टविषयकत्वात् तद्व्यवहारस्य । अवस्थाविरहेण तद्व्यवहारविरहसम्भवात् । अतस्तन्तुपटादेः भेदः नानुमानेन सिध्यति । गुणगुणिनोर्भेदस्यैवाङ्गीकारेण पाकेन रूपादिनाशस्थले रूपनाशेऽपि द्रव्यसत्वे नकोऽपि विरोधः । घटः शुक्लः इत्यादिप्रतीतौ विशेषस्य विषयत्वमपि न । अभिलापकशब्दे मतुब्लोपेन शुक्लशब्दस्य शुक्लरूपसम्बन्ध्यर्थकत्वात् अभेदप्रतीत्युपपत्तेः । सामानाधिकरण्यमपि प्रवृत्तिनिमित्तभेदेनैवोपपद्यते । अनवस्थापरिहारार्थं विशेष इत्यपि न । विशेषाङ्गीकारेऽपि तस्यापि व्यवहारार्थं विशेषान्तरमित्यनवस्थापरिहारः विशेषस्य विशेषान्तरनैरपेक्ष्येणैव वाच्यः । एवमेव सम्बन्धस्थले सम्भवतीति विशेषसाधकं न किंचित्प्रमाणम् । 'पृथक्स्थितिप्रतिपत्तियोग्याः दण्डादयः' इत्यादिभाष्य एव दण्डजात्यादिबुद्धिवैलक्षण्यं स्फुटमुक्तम् । तत्र आधाराधेयभावावगाहिप्रतीतिदशायामेकतरनाशविभागप्रतीतिविरहेऽपि पृथक्स्थितिप्रतिपत्तियोग्यत्वं केषांचित् केषांचिन्नेति सर्वैरप्येषितव्यम् । दण्डतद्वतोः पृथक्स्थितिः प्रतिपत्तिश्च वर्तते । जातिगुणादीनां तदाश्रयाणां च पृथक्स्थितिः प्रतिपत्तिश्च नैव वर्तते । दण्डतद्वतोः सम्बन्धः वस्तुतो विभागसमानाधिकरणः, गुणगुणिनोस्तु विभागासमानाधिकरणः । गुणगुणिस्थले विभागासामानाधिकरण्योपलक्षितस्य सम्बन्धता । दण्डादिस्थले तु तत्सामानाधिकरण्योपलक्षितस्येति सम्भवति । 'नैव स्त्री न पुमान्'(श्वे.५ अ.) इति श्रुत्या आत्मनि स्त्रीत्वादिनिषेधेन ब्राह्मण्यमपि निषिद्धम् । 'यद्यच्छरीरमादत्ते तेन तेन स युज्यते' (श्वे.५ अ.) इति तदुत्तरार्धानुसारेण आत्मनि ब्राह्मणशरीरसंयुक्तत्वमेव ब्राह्मण्यम् । क्वचित् स्मृतिषु कर्मवैलक्षण्येन ब्राह्मण्यादिविरहप्रतिपादनं मानसिकब्राह्मण्याभिप्रायकम् । औत्पत्तिकं शारीरं ब्राह्मण्यं तु यावद्द्रव्यभाव्येव । ब्राह्मण्यजातेः यावद्द्रव्यभावित्वं आचार्यपादैर्निर्धारितम् इति तत्रापि पृथक्स्थितिप्रतिपत्तियोग्याभावः वर्ततएव । अवयवद्रव्यादिसत्वेऽपि अवयव्यादिनाशानुभवेन अवयविगुणादेः अवयवद्रव्यादिभेदोऽपि सच विशेषविलक्षणएवेति (सु)सिद्धान्ते "सामानाधिकरण्येन व्यवहारोपपत्त्यर्थं गुणगुणिनोरभेदादधिकोऽपि विषयोऽस्तीति ज्ञायते । नचायंभेदः पटो न शुक्लइत्युल्लेखापातात् । किंतु विशेषः' इति न्यायामृतोक्तिरपि नघटते । विशेष विलक्षणभेदस्य (सु)सिद्धान्तेऽप्यङ्गीकारेण पटो न शुक्लइत्युल्लेखापत्तिवारणस्यैवासम्भवात् । भेदाभेदयोरेकत्र प्रतीतिविरोधे-नासम्भवे तदुभयाविरोधार्थं विशेषस्यकथैव नास्ति । अवयवातिरिक्तांशो नास्ति इति आरम्भणाधिकरणे निरूपयिष्यते । अतः अंशांशिनोरपि न भेदाभेदौ । घटो द्रव्यमित्यादौ विशिष्टान्वयो न स्वीक्रियते । किंतु उपलक्षितान्वयः इति न घटत्वद्रव्यत्वयोरभेदापत्तिः । विशिष्टोपलक्षितान्वयप्रकारः तार्किकाभिमतएव सिद्धान्ते अभ्युपगम्यते । अतः घटो द्रव्यमित्यादौ धर्मिणोरभेदएव नतु भेदः भेदसाधकाभावात् । अतः भेदाभेदौ प्रतीतिविरुद्धावेवेति सुस्थम् ॥

एतावता सदसद्विलक्षणत्वरूपप्रथममिथ्यात्वविचारे सद्भेदासद्भेदोभयं साध्यमिति पक्षे एकांशस्य सिद्धत्वेऽप्यंशतः सिद्धसाधनं नास्ति इत्येतदर्थं दृष्टान्ततया गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात् इत्यनुमानं यन्न्यायामृताद्वैतसिध्द्योरुपात्तं तत् भेदाभेदौ साधयितुं नालमिति सिद्धम् ॥ सदसत्वादिविरुद्धधर्मसमावेशः जैनाभितः न युक्त इति 'नैकस्मिन्नसम्भवात्' इति सूत्रे परैः (शं) नवीनैश्च (आ.ती) प्रतिपादितम् । तद्वदेव भेदाभेदयोरपि विरोधः तत्सूत्रे

## श्रीभाष्यम्

**तदेतत्सूत्रकारेण 'नैकस्मिन्नसम्भवात्'** (शारी.२.अ.२.पा३१) **इति सुव्यक्तमुपपादितम् । अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसम्बन्धविशिष्टविषयत्वादनुमानमपि**

## श्रुतप्रकाशिका

रासस्य सूत्रकाराभिमतत्वमाह । तदेतदिति । अथ प्रमाणान्तराणां प्रत्यक्षमूलत्वात्तेषामपि सविशेषविषयत्वमाह । **अतइति ।** प्रत्यक्षादिदृष्टधूमादिसम्बन्धविशिष्टाग्न्यादिविषयत्वादित्यर्थः । स्वाभिमतमुक्तं प्रमाणत्रयम् प्रमाणान्तराभ्युपगमेऽपि तेषां

## गूढार्थसंग्रहः

सूत्रकृतोभिप्रेतः इत्याशयेनाह—**तदेत्सूत्रकारेणेत्यादि** । एतेन भेदाभेदवत् सदसद्विलक्षणत्वमपि विरोधान्नसम्भति इति-सूचितम् । अयमर्थः 'अनिर्वचनीयत्वं च किमभिप्रेतम् ? सदसाद्विलक्षणत्वमितिचेत्, तथाविधस्य वस्तुनः प्रमाणशून्य त्वेन अनिर्वचनीयतैव स्यात् ' इत्यादावुत्तरत्र स्फुटं वक्ष्यते ॥

उक्तंच बौद्धाधिकारे (आत्मतत्त्वविवेके) उदयनाचार्यैः—'सदसत्वस्य एकत्र विरोधेन विधिवान्निषेधस्याप्यनुपपत्तेः ' इति । सत्वासत्वयोरिव तदभावयोरप्येकत्र विरोधेनासम्भवः इति तदर्थः । ननु सत्वासत्वयोः परस्परात्यन्ताभावरूपत्वेहि विरोधः । तन्नाङ्गीक्रियते । अत्र त्रिकालाबाध्यत्वरूपसत्वव्यतिरेको नासत्वम् ; किंतु क्वचिदप्युपाधौ सत्वेन प्रतीयमानत्वानधिकरणत्वम् । तद्व्यतिरेकश्चासत्वात्यन्ताभावः । तथाच त्रिकालाबाध्यविलक्षणत्वेसति क्वचिदप्युपाधौ सत्वेन प्रतीयमानत्वरूपं सदसद्विलक्षणत्वम् । एतच्च शुक्तिरूप्ये प्रसिद्धम् । बाध्यत्वरूपासत्वव्यतिरेकश्च नात्र विवक्षितः । तथा च कालाद्यनवच्छिन्नं यदबाध्यत्वं तदत्यन्ताभावस्सत्तादात्म्यंचेत्युभयवत्वे पर्यवसानम् । स्पष्टंचेदं अद्वैतसिद्धिचान्द्रिकयोः अतो न विरोध इतिचेत् ; असद्विलक्षणशब्दः असत्वात्यन्ताभावबोधकः । असत्वात्यन्ताभावशब्देन असत्वं नास्तीति प्रतीतिविषयीभूताभावस्यैव बोधस्सर्वजनानुभवसिद्धः । एवंच अबाध्यत्वरूपसत्वं नात्र विवक्षितमित्यङ्गीकारे असत्वविशेषाभाव एवायं स्यात् नत्वसत्वसामान्याभावः । अतश्चासत्सामान्यविलक्षणत्वं यदि नात्र विवक्षितं तदा सदसद्विलक्षणशब्दप्रयोगः न स्वरसः । सदसच्छब्दयोः द्वयोस्सहभावेनैव प्रयोगे सच्छब्दार्थो यादृशः तन्निषेधस्यैवासच्छब्देन बोधः व्युत्पत्तिसिद्धः । अतस्सदसाद्विलक्षणशब्दः पारिभाषिक एव । सच्चेन्नबाध्येत असच्चेन्नप्रतीयेत, अतः ख्यातिबाधानुपपत्त्या मिथ्यात्वसिद्धिः इति हि प्रक्रिया असत्ख्यात्यनङ्गीकारेण प्रवृत्ता । एतत्पर्यालोचनायामपि बाध्यत्वरूपासत्वमेव सदसद्विलक्षणशब्दप्रयोगे सर्वेषां धियमधिरोहति । शुक्तिरूप्यदृष्टान्तोऽपि न कस्यचिद्दार्शनिकस्य सम्मतः । भ्रमस्थले अनिर्वचनीयशुक्तिरूप्योत्पत्तेः केनाप्यनङ्गीकारादित्युदयनाचार्याणामाशयः ॥

ननु उक्तवाक्यं बौद्धमतनिराकरणपरम् । नत्वद्वैतमतनिराकरणपरम् । अद्वैतमतस्य सर्वमतश्रेष्ठतायाः बौद्धाधिकारएव उक्तत्वात् । तथाहि तत्र 'न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः तद्बाधके बलिनि वेदनये जयश्रीः । नोचेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः ॥ ' वेदनये–वेदान्तदर्शने । सङ्कोचकाभावात् सर्वमतापेक्षया बलिनि । नच दूष्यबौद्धमतस्य प्रस्तुतत्वात् तदपेक्षया बलीयस्त्वमुदयनाचार्यैर्विवक्षितमिति वाच्यम् । तथा सत्यस्वमतप्रकटनपूर्वकं तस्य स्वापकर्षोक्त्ययोगात् । 'अस्तु तर्हि शून्यतैव परमं निर्वाणमितिचेन्न । सा हि यद्यसिद्धा कथं तदवशेषमपि विश्वमभिधीयते । वाङ्मात्रस्य सर्वत्र सुलभत्वात् । परतश्चेत्सिद्धा परोऽभ्युपगन्तव्यः ग्राह्यलक्षणं चावर्जनीयम् ' इत्यादि, 'अविद्यैव तथा तथा विवर्तते, यथा यथाऽनुभाव्यतया व्यवह्रियेत । तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव

## श्रीभाष्यम्

**सविशेषविषयमेव । प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेवविषयइति**

## श्रुतप्रकाशिका

सविशेषविषयत्वमाह । **प्रमाणसंख्येत्यादिना** । * प्रमाणानि सविशेषविषयाणिस्युः * तानि तर्कपराहतानीति शङ्कायां अस्मिन् सर्वप्रमाणसविशेषविषयत्वविस्तरोक्तिसमयेऽपि पूर्वं तत्सङ्ग्रहोक्ताविव बुद्धिस्थस्वसिद्धिवादेऽपि न निर्विशेषत्वसि-

## गूढार्थसङ्ग्रहः

व्यवहारपथमवतरति । गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिः ।... तदास्तां तावात् । किमार्द्रकवणिजो वहित्र-चिन्तया ' इतिं, । ' तस्मादनुभवव्यवस्थितावनात्माऽपि परिस्फुरतीत्यवर्जनीयमेतत् ' इति ' प्रविशवाऽनिर्वचनीयख्यातिकुक्षिं तिष्ठवा मतिकर्दममपहाय नीलादीनां पारमार्थिकत्वे ' इत्याद्युक्तम् ।। ' वहित्रेति महानौकेत्यर्थः । यथा शूर्पादिपात्रे आर्द्रकाणि स्थापयित्वा विक्रीणतो वणिजो वहित्रमनुपयुक्तम् प्रत्युत कार्यविरोधि समुद्रगतवहित्रस्थस्यार्द्रकस्य तद्ग्राहकसकलसाधारणजनैर्दृष्टत्वाभावात् । तथा द्वैतमतमेव परिष्कुर्वतो मम वेदान्तदर्शनमनुपयुक्तम् । द्वैतमताविरोधिच । द्वैतखण्डनयुक्तीनां मिथ्यात्वग्राहकमानस्यच तत्र पुरस्कारात् । तथापि वहित्रमिव वेदान्तदर्शनं पुरुषधौरेयस्य परमप्रयोजनं साधयत्येवेति वेदान्तदर्शने तदन्यसर्वदर्शनेभ्यः उत्कर्षः आचार्याभिप्रेत इति ' इति लघुचन्द्रिका ।।

गुरुचन्द्रिकायां च–' किंच सदसत्वविरोधस्य अस्मत्सम्मतत्वात् तत्परमुक्तवाक्यं ननःप्रतिकूलम् ; अवच्छेदकभेदाभावेऽपि प्रमाणबलात्समुच्चयइत्युक्तमेव । परस्परविरहयोरेकज्ञानबाध्यत्वं युक्तम् ; जाग्रद्बोधेन स्वाप्नयोर्भावाभावयोरयं घट इत्यादिज्ञानेन शुक्तिरूपतदभावयोर्बाधात् । किंच यद्यपि ब्रह्मप्रमाऽन्यज्ञानं न परस्परविरहयोर्बाधकं तदधिष्ठानाविषयकत्वात् तथाऽपि ब्रह्मप्रमा तद्बाधिकैव । तदधिष्ठानविषयकत्वात् । विरुद्धयोः समसत्तयोः एकत्र स्थितिरपि युक्ता । स्वप्नेन्द्रजालादौ तथा दृष्टत्वात् व्यावहारिकयोरौष्ण्यतदभावयोरेकत्र सत्वेऽपि न बाधोच्छेदः संयोग तदभावयोरिव विरोधिनिरूपकाधिकरणस्यैव स्वप्रतियोगिविरोधित्वाविशिष्टाभावविशिष्टस्य बाधत्वसम्भवात् । नचैवं जलमुष्णमित्यादावुष्णत्वानधिकरणवृत्त्यनुष्णत्ववज्जलस्य बाधत्वसम्भवेऽपि तेजोऽनुष्णमित्यादौ बाधो न स्यात् अनुष्णत्वानधिकरणाप्रसिद्धेरिति वाच्यम् ; उष्णत्वानाधारवृत्त्यनुष्णत्वसाध्यकस्थले बाधाभावस्त्विष्टः तव संयोगाभावसाध्यकस्थलवत् । अतएव व्यावहारिकमभावमादायापि बाधव्यवस्था न विरुद्धा । समसत्ताकयोः भावाभावयोः विरोधपक्षे वा सोक्तेति न कोऽपि दोषः । ' इति प्रोक्तमिति चेन्न ।।

बलिनि वेदनये इत्यत्र दूष्यबौद्धमतापेक्षया बलित्वमेव उदयनचार्याणां विवक्षितम् । नत्वद्वैतमतस्य सर्वमतश्रेष्ठत्वम् एतच्छ्लोकपूर्ववाक्यविरोधात् । ' प्रविशवा अनिर्वचनीयख्यातिकुक्षिं तिष्ठवा मतिकर्दममपहाय न्यायमतानुसारेण नीलादीनां पारमार्थिकत्वे । तस्मात् नग्राह्यभेदमपहाय ' इत्यादिः तद्ग्रन्थः । तत्र अद्वैतस्य सर्वश्रैष्ठ्यस्य विवक्षितत्वे मतिकर्दममपहायेति प्रविशवा इत्येतत्पूर्वमेव प्रयुज्येत । नच तथा प्रयुक्तम्, किंतु अनन्तरमेव । अतः मतिकर्दमः बौद्धमत इव अनिर्वचनीयख्यातिवाद्यद्वैतमतेऽपीति पूर्ववाक्ये उदयनाचार्याणां विवक्षितमिति स्फुटं विदुषाम् । ' तस्मात् तथ्यमेव विश्वम् ' मन्दप्रयोजनत्वात् सद्भरैरुपेक्षितमिति युक्तमुत्पश्यामः । ' तर्हि नैयायिकानां जगत्परिरक्षणे कोऽयमभिनिवेशातिशय इतिचेत् ' सहसैव तदुपेक्षायां न्यायाभासावकाशे न्यायमार्गविप्लवो भवेत् तथाच न्यायरूढिःप्रेक्षावान्न तत्त्वमधिगच्छेदिति भिया इति उत्तरग्रन्थे सिद्धान्तविवरणम् । कुतः पुनरयमुपादेयः तथा सति भावनाक्रमेण निश्रेयससिद्धेः किमस्य उपादानम्

## श्रीभाष्यम्

### न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः ।

### गूढार्थसङ्ग्रहः

विवेकः । कुतः ? अनात्मनश्शरीरादेः । किं पुनरत्र प्रमाणम् ? न्याय आम्नायश्चेति ’ इत्यादिना दुःखजन्मेत्यादिसूत्रतात्पर्यमभिधाय आम्नायसारसङ्क्षेपस्तु अशरीरंवावसन्तमित्यादि । तदप्रामाण्यं प्रपञ्चमिथ्यात्वसिद्धान्तभेदतत्त्वोपदेशपौनःपुन्येषु अनृतव्याघातपुनरुक्तदोषेभ्यः इतिचेन्न । सतात्पर्यत्वात् । निष्प्रपञ्च आत्मा ज्ञेयो मुमुक्षुभिरिति तात्पर्यं प्रपञ्चमिथ्यात्वश्रुतीनाम् । आत्मनएव एकस्य ज्ञानमपवर्गसाधनमित्यद्वैतश्रुतीनाम् । दुरूहोऽयमिति पौनःपुन्यश्रुतीनाम् । आत्मैवोपादेय इत्यानन्दश्रुतीनाम् ’ इतितदुत्तरग्रन्थः । एतद्ग्रन्थपर्यालोचनायां मुमुक्षूणामावश्यकं बाह्यार्थभङ्गवादिमतनिरासदशायां न्यायाम्नायपरिशीलनमनपेक्षितम् इति तात्पर्यस्य स्फुटतया ‘ किमार्द्रकवणिजो वहित्रचिन्तया ’ इति वाक्यतात्पर्यमपि सम्यक्प्रकाशितं भवति । अनिर्वचनीयख्यातिपक्षे प्रत्यक्षस्य सन्मात्रग्राहित्वमङ्गीकृत्य शुक्तिरूप्यवदनिर्वचनीयत्वं प्रपञ्चस्य । अनुवृत्तत्वेन सतएकस्यैव सत्यत्वम् । तस्यैव ज्ञानरूपत्वमभ्युपगम्यते । योगाचारोक्तबाह्यार्थभङ्गनयात् अयं नयः प्रबलः, तन्मते ज्ञानानामनन्तत्वाङ्गीकारेण एकज्ञानाङ्गीकारे लाघवात् इति योगाचारमतनयापेक्षया अद्वैतिमतनयस्य प्राबल्यम् ‘ बलिनिवेदनये ’ इत्यत्र विवक्षितम् । अतएव मध्ये ज्ञेयत्वादिभिः शुक्तिरूप्यादिदृष्टान्तेन भेदः स्वरूपंवा धर्मोवा इति विकल्पेनच ग्राह्यभेदापह्नवप्रकारनिरसनं सङ्गच्छते । भेदापह्नवश्च अद्वैतिनां सम्मतएव ॥

एवं ‘ नित्यंतु सुखं न सत्यं योग्यानुपलम्भबाधितत्वात् । श्रुतिस्तत्र प्रमाणमितिचेन्न, योग्यानुपलब्धिबाधिते तदनवकाशात् । अवकाशेवा ग्रावविप्लवनश्रुतेरपि तथा भावप्रसङ्गात् । नापि काम्यं सदातनत्वात् । नहि यद्यस्यास्ति स तत्कामयते । भ्रान्तेरेव कण्ठचामीकरवत् इतिचेत् न । स्वसंवेद्ये तदभावात् ’ । इत्यादिवदताम् आनन्दश्रुतेः आत्मैवोपादेय इति तात्पर्यं वर्णयतां उदयनाचार्याणामद्वैतमतस्य सर्वमतश्रैष्ठ्यं न विवक्षितम् । अतः शुक्तिरूप्यादिदृष्टान्तज्ञेयत्वादिहेतुभिः भेदापारमार्थ्यस्य भेदस्य सांवृतत्वस्य च उदयनाचार्यैर्दूषिततया तदसम्मतत्वनिश्चयेन ‘ बलिनि वेदनये ’ इत्यत्र बौद्धमतापेक्षया बलित्वमेव विवक्षितमिति नीलादीनां पारमार्थिकत्वमेव न्यायाम्नायाभ्यां सिध्यति । एवंच अद्वैतिसम्मतं सदसद्विलक्षणत्वमपि विरोधान्नसम्भवत्येवेति उदयनाचार्याणामाशयः ॥

सन्ध्याधिकरणे ‘ सूचकश्च हि श्रुतेराचक्षते ’ इति सूत्रे ‘ केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनस्सत्यत्वम् । सूचकस्यतु स्त्रीदर्शनादेः भवत्येव वैतथ्यं बाध्यमानत्वादित्यभिप्रायः ’ इति (शं) भाष्ये सूत्रकाराशयवर्णनेन बाधमन्तरा स्वप्नानुभूतानां मिथ्यात्वकल्पनं न घटत इति स्वाप्नगजाभावो व्यावहारिक एव, नतु स्वाप्नगजवत्प्रातीतिकः । अतः जाग्रत्यबाध्यत्वेनानुभूयमानो हि स्वप्नार्थस्याभावो व्यावहारिकः इन्द्रियादिप्रमाणग्राह्यः । तदन्यस्तु स्वाप्नोऽभावः स्वाप्नप्रवृत्तिविशेषाभिव्यक्तसाक्षिभास्योऽपि न प्रमाणग्राह्यः इत्यभावद्वैविध्यकल्पनमपि न घटत इत्यादिकमुत्तरत्र विवेचयिष्यते ॥ व्यवहारदशायामेव अवयवावयविगुणगुण्यादिभेदस्य विचारेण मिथ्यात्वनिश्चयात् तादृशभेदः प्रातीतिकः अभेदस्तु व्यावहारिकः, अतः भिन्नसत्ताकत्वेन तयोरविरोधः इत्युक्तिरप्यनादरणीया । अवयवावयविस्थलेऽभेदस्य गुणगुण्यादिस्थले भेदस्य च प्रागेव साधनात् । अवयवावयविभेदवादिमतेऽपि एवं कल्पनस्यासम्मतत्वात् । इत्थंच भेदाभेदवत् सदसद्विलक्षणत्वमपि विरोधान्नसंभवतीति सिद्धान्तएव युक्त इति बोध्यम् ॥

**न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिरिति** । एतावता ‘ व्योमारविन्दसदृशि यथोदितदृशि वेदान्ततात्पर्यवर्णनं वेदान्तायैव स्यात् ’ इति यामुनसूक्तौ (आ.सि.) व्योमारविन्दसदृशत्वं निर्विशेषस्य विशदीकृतम् ॥ तत्पूर्वं ‘ अपि

श्रीभाष्यम्

**वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमितिवदन्**

श्रुतप्रकाशिका

द्भिरिति ज्ञापनाय सविशेषविषयत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैस्सविशेषत्वमवर्जनीयमिति पूर्वोक्तं स्मारयन् विरोधं दर्शयति । **वस्तुगतेति** ॥

**यद्वा** * पूर्वोक्तं स्वानुभवसिद्धे विशिष्टे निर्विशेषत्वनिष्कर्षो निष्कर्षकैस्सविशेषत्वापादनेन दूषितः । तत्सर्वं प्रमाण निर्विशेषविषयत्वनिष्कर्षेऽप्यतिदिशति । **वस्तुगतेति** । एवं निर्विशेषचिन्मात्रपारमार्थ्य व्यतिरिक्तापारमार्थ्यप्रतिज्ञाबाधः सामान्येन सर्वप्रमाणसविशेषगोचरत्वेन दर्शितः । अथ परोक्तं प्रमाणतर्कजातं विशेषतो दूषयितुमुपक्रमते । शास्त्रबलीयस्त्वमिच्छता परेण प्रथमं शास्त्रमुपन्यस्तम् । तदनिच्छता प्रत्यक्षाविरुद्धेऽर्थे शास्त्रं प्रमाणयता सिद्धान्तिना प्रत्यक्षस्य सन्मा-

गूढार्थसंग्रहः

अस्या इति षष्ठ्या अनुभूतेः सम्बन्धमभिधाय निर्धर्मत्वं प्रतिज्ञायमानं वन्ध्यात्वमिव जनन्याः विरुद्धार्थमापद्येत ' इति सूक्त्यर्थमाह---**वस्तुगतस्वभावविशेषैरित्यादिना** । ततः पूर्वं ' शास्त्रानुमान प्रमाणसिद्धैः स्वयम्प्रकाशत्वनित्यत्वधर्मैः ' इत्युपक्रम्य ' न च ते चितिमात्रमिति वाच्यम् । तत्सिद्धावपि तेषु विमतिदर्शनात् । अभ्युपगम्यैवहि संविदं तदनुमेयत्वक्षणिकत्वादिप्रतिजानते वादिनः। स्वरूपभेदाच्च इत्यादि यामुनसूक्तिः। एतदर्थश्चस्वाभ्युपगताश्च नित्यत्वादयः अनेकेविशेषाः सन्त्येवेति प्राक्तनभाष्येण विशदीकृतः । अपिच ' अस्याः इति षष्ठ्याः ' इत्यादि यामुनसूक्तेः पूर्वग्रन्थानन्तरं सत्वेऽपि भेदाभेदनिरसनानन्तरमेव तत्सूक्त्यर्थनिष्कर्षः भवतीत्यमिप्रेत्य तथैव तत्सूक्त्यर्थः अत्र भाष्ये उक्तः ॥

सत्वासत्वधर्मद्वयशून्यत्वेन तत्रातिव्याप्तिः । ' निर्धर्मकत्वात् ब्रह्मणः ' इत्यद्वैतसिद्धिः । अत्र लघुचन्द्रिका । सत्वादिधर्माणां तदुपहितएव ब्रह्मणि सम्बन्धः नतु शुद्धे । धर्मधर्मिणोः तादात्म्यस्वीकारेण तत्त्वज्ञानेन धर्माणां नाशे धर्मिणोऽपि नाशापत्तेः । अथ धर्मिसमानसत्ताकधर्मनाशेसत्येव धर्मिणो नाशः आरोपितस्य वास्तवधर्मत्वाभावेन तन्नाशेऽपि न धर्मिनाशः । तर्हि शुद्धस्य सत्वेऽपि कैवल्ये तत्र धर्माप्रत्ययात् शुद्ध धर्मो न स्वीक्रियते। तस्मात् यथा शुद्धस्य स्वप्रकाशत्वेन न वृत्तिज्ञानविषयत्वादिकं किंतु तदुपहितएव ब्रह्मणि इति वाचस्पतिसम्मतम् । तथोक्तयुक्तेः सत्त्वादिसम्बन्धः तदुपहितब्रह्मणीति सत्त्वादिधर्माभावघटितं लक्षणं शुद्धब्रह्मणि अतिव्याप्तमिति भावः । सद्रूपत्वेन ब्रह्मणः तदत्यन्ताभावान धिकरणत्वात् निर्धर्मकत्वेनैव अभावरूपधर्मानधिकरणत्वाच्चेत्यद्वैतसिद्धिः । सद्रूपत्वेन बाध्यत्वाभाववत्वेन । तथाच भावरूपधर्मानाश्रयत्वेऽपि ब्रह्मणो बाध्यत्वादिशून्यत्वरूपाभावधर्माश्रयत्वान्नातिव्याप्तिः । नच उक्ताभावस्य ब्रह्मरूपाधिकरणस्वरूपत्वेन तदभावो ब्रह्मण्यस्त्येवेति वाच्यम् । उक्ताभावत्वविशिष्टरूपेण ब्रह्मणि तादात्म्यस्यैव भेदस्यापि सत्वेन तत्र उक्ताभाववैशिष्ट्यस्यैव सम्भवेन तदभावासम्भवात् । तादात्म्यमेवहि अभावस्य अधिकरणवैशिष्ट्यं भट्टादिमते स्वीक्रियते । उक्तं च न्याकुसुमाञ्जलौ ' तादात्म्यमेव परस्य मते अभावाधिकरणयोः सम्बन्धः ' इति । ' परस्य भट्टस्येति ' तत्र वर्धमानादिटीका। एतदभिप्रायेण द्वितीयमिथ्यात्वप्रस्तावान्ते आचार्यैः वक्ष्यते ब्रह्मणो भावरूपधर्मानाश्रयत्वेऽपि अभावरूपधर्माश्रयत्वेन सत्यादिधर्मवत्वमिति ध्येयमिति (ल.चं) तादृशसत्वादेराधारत्वं तादात्म्यंवा ब्रह्मणि कल्पितमवश्यं वाच्यम् । अन्यथा ' प्राणावै सत्यं तेषामेषसत्यम् ' इत्यादिश्रुतिभिः सत्यत्वादेः ब्रह्मधर्मत्वोक्तेरसङ्गतेः। अतएव ब्रह्मणो निर्धर्मकत्वात् तद्धर्मा-

## गूढार्थसंग्रहः

ध्यासानुपपत्तिमाशङ्क्य आनन्दो विषयानुभवो नित्यत्वंचेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते' इत्युक्तं पञ्चपाद्याम् । अत्र चकारात् सत्यत्वशुद्धत्वविभुत्वादीनां ग्रहणम् । सद्रूपत्वेनेति । उक्तसम्बन्धप्रतियोगितादात्म्येनेत्यर्थः । उक्तसम्बन्धस्य सोपहितएव सत्वेऽपि तत्तादात्म्यं शुद्धे अस्त्येव, शुद्धाशुद्धयोः तादात्म्याङ्गीकारात् । अन्यथा शुद्धस्याशुद्धोपरागेण भानासम्भवेन संसारकाले स्वप्रकाशत्वं नस्यात् । नहि शुद्धस्य तदा पृथग्भानमस्ति । तथाच सति 'तमेव भान्तमनुभाति सर्वम्' इति शुद्धप्रतिपादकश्रुतेः 'अनुकृतेस्तस्यच' इति सूत्रस्यचानुपपत्तिः । तदभावेति । उक्ततादात्म्याभावे इत्यर्थः । नचोक्ततादात्म्यस्य कल्पितत्वेन शुद्धे तदभावोऽपीति वाच्यम् । प्रतियोगिव्यधिकरणस्य उक्ताभावस्य निवेशात् । ननु उक्तसत्त्वसम्बन्धोपहितब्रह्मण एव आकाशाद्युपादानत्वात्, सत्त्वोपहितकपालादेः घटाद्युपादानत्वाच्च प्रपञ्चेऽप्युक्ततादात्म्यसत्वान्नोक्ताभाव इत्यव्याप्तिः । न च प्रपञ्चे स्वोपहित एवोक्ततादात्म्यमिति तदनुपहितसाधारणप्रपञ्चे अव्याप्त्युक्तिः न युक्ता । सत्त्वानुपहितस्यैव कपालादेरुपादानत्वेन घटादितादात्म्यात् घटादौ न तद्द्वाराऽपि सत्त्वोपहिततादात्म्यमिति वाच्यम् । 'केवलो निर्गुणः' इत्यादिश्रुत्या धर्माभावेऽपि कैवल्ये केवलं ब्रह्मास्ति, नतु धर्मा-धर्मोपहितमित्यन्वयव्यतिरेकाभ्यां स्वोपहित एव ब्रह्मणि धर्म इति युक्त्या च शुद्धे ब्रह्मण्येव धर्मानङ्गीकारात् । प्रपञ्चमात्रस्य सत्त्वादिप्रतीतेः तत्र तदावश्यकत्वादितिचेन्न । स्वाभाविकस्य सत्त्वसम्बन्धस्य उपहितकेवलभावेन तादात्म्यस्य च निवेश्यत्वात्, प्रपञ्चे च सदाधिष्ठानतादात्म्यप्रयुक्तस्यैव सत्त्वसम्बन्धस्य सत्वात् सत्त्वोपहितब्रह्मणः तादात्म्यस्य प्रपञ्चे सत्वेऽपि उक्तब्रह्मकेवलरूपत्वाभावात्' इति गुरुचन्द्रिका ।

'तथा च भावरूपधर्मानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावरूपतया न काऽप्यनुपपत्तिः' इति द्वितीयमिथ्यात्वविचारान्ते अद्वैतसिद्धिः । तथा च सत्त्वादेरभावरूपत्वे च । 'भावरूपधर्मानाश्रयत्वेऽपि' मिथ्यात्वादिधर्मान् प्रति सम्बन्धविशेषेण अनाश्रयत्वेऽपि । 'सर्वधर्माभावरूपतया' स्वाधिष्ठानकसर्वधर्माभावत्वाविशिष्टतादात्म्योपलक्षितस्वरूपत्वेन । तथाचाध्यासिकतादात्म्येन ब्रह्मणः प्रतियोगित्वादिरूपमिथ्यात्वादिधर्मवत्वेऽपि विशेषणताविशेषादिसम्बन्धेन तद्विशिष्टाद्भेदसम्भवेन तत्समानाधिकरणो यो मिथ्यात्वात्यन्ताभावः तद्वत्तादात्म्योपलक्षितस्वरूपं उक्तभेदवत्तादात्म्योपलक्षितस्वरूपं वा सत्यत्वादीतिभावः' इति लघुचन्द्रिका' ॥ अत्र वस्तुगतस्वभावविशेषैरिति भाष्ये अनुभूतित्वानन्तत्वादि विवक्षितम् । अनुभूतेः अनुभूतित्वेन हेतुना निर्धर्मकत्वमिष्टसिद्धौ साधितम् 'नास्या मियो धर्मोऽस्ति' इति । अस्या इति षष्ठ्या अनुभूतेस्सबन्धः अनुभूतित्वरूपहेतोः निर्धर्मकत्वरूपसाध्यस्य च प्रतिपादितः । उभयोर्धर्मरूपत्वेन धर्माभावो विरुद्ध इति यामुनमुनेराशयः ॥

इष्टसिद्धिवाक्यमेव परिष्कृतमद्वैतसिद्धौ- 'अनुभूतिर्निर्विशेषा अनुभूतित्वात्दिति व्यतिरेक्यनुमानमपि बाधकम् । नचात्र अप्रसिद्धविशेषणत्वम्, यद्व्यतिरेके समीहितप्रसक्तिः तन्मानयोग्यमिति सामान्यतःप्रसिद्धेः । विशेषत्वमभावप्रतियोगिताऽवच्छेदकं अभावप्रतियोगिमात्रवृत्तित्वात् घटत्ववत् इति विशिष्यापि सत्वात् । नापि स्वव्याघातः; निर्विशेषत्वस्य स्वरूपत्वेन विशेषत्वानङ्गीकारात् । नच स्वरूपस्य प्रागेव सिद्धेः स्यादनुमितेर्वैयर्थ्यम् । तेन रूपेण ज्ञानस्योद्देश्यत्वात् । नाप्यप्रयोजकत्वम्; भिन्नत्वेऽभिन्नत्वे सम्बन्धत्वेच अतिप्रसङ्गानवस्थाभ्यां धर्मधर्मिभावानुपपत्तेरेव विपक्षबाधकत्वात् नच सम्बन्धस्य मिथ्यात्ववत् स्वनिर्वाहकत्वान्नानवस्था । अभेदवादे अतिरिक्तस्य वक्तुमशक्यत्वात् । नच धर्माभावरूपधर्मभावाभावाभ्यां व्याघातेन कुतर्कता अस्येति वाच्यम्; धर्माभावस्य स्वरूपत एव सत्त्वाङ्गीकारेण व्याघाताभावात् । अभेदेऽपि भेदकल्पनया धर्मधर्मिभावव्यवहारस्य त्वयापीष्टत्वात् इत्युक्तम् ॥

## गूढार्थसंग्रहः

विशेषसामान्याभावस्वरूपविशेषणाप्रासिद्धिः । विशेषत्वं मेयत्वं
अत्र लघुचान्द्रिकाऽपि= अप्रसिद्धविशेषणत्वम्—विशेषसामान्याभावविषयकत्वे विशेषसामान्या-
मात्रवृत्तित्वात् सामान्यवृत्तित्वात् । स्वव्याघात इति । निर्विशेषत्वानुमितेः विशेषसामान्याभावविषयकत्वे विशेषसामान्याभाव-
भावरूपविशेषाभावोऽपि तद्विषय इति तत्प्रामाण्यव्याघात इत्यर्थः । अबाधितविषयकत्वरूपं प्रामाण्यं विशेषसामान्याभाव-
स्वरूपमात्रांशे अस्त्येव, विशेषसामान्याभावत्वविशिष्टांशेतु नमयाऽपि तदङ्गीक्रियत इत्याशयेनाह–निर्विशेषत्वस्येति । तेन
रूपेण निर्विशेषत्वेन । भिन्नत्वइत्यादि । भिन्नयोर्धर्मधर्मिभावे घटपटयोरपि स स्यादित्यतिप्रङ्गः । नच प्रतीत्यभावादेव तयोः
स नेति वाच्यम् ; भिन्नत्वेन निश्चितघटपटादियुग्मसामान्ये धर्मधर्मित्वादर्शनात् भिन्नत्वेन सन्दिग्धगुणगुण्यादावभेदसम्बन्धस्यैव
कल्पनात् । अथ भेदं विना सम्बन्धएवानुपपन्नः, न हि स्वास्मिन् स्वयं सम्बध्यत इतिचेत्, एवमप्यभेदस्य सम्बन्धत्वा-
नुपपत्त्या कल्प्यमानो भेदो न स्वापेक्षया तमाभासीकरोति, किंतु स्वयमेव तदपेक्षया आभासीभवतीति धर्मधर्मिणोरभेदः
व्यावहारिकः भेदस्तु प्रातीतिकः । नच एवमभेदस्तात्विकएवास्तु, भेदस्तु व्यावहारिकइति वाच्यम् ; कल्पितभेदस्य
तात्विकसम्बन्धोपपादकत्वे हि तव्द्यक्तिस्तव्द्यक्तिमतीत्यपि प्रमा स्यात् । तस्मात् भेदाभेदाभ्यां धर्मधर्मिभावो न निर्वाच्यः
एवं धर्मस्य धर्म्यसम्बद्धत्वे सर्वं सर्वस्य धर्मस्स्यादित्यतिप्रसङ्गः । सम्बद्धत्वे सम्बन्धादेस्सम्बन्धो वाच्यः । अन्यथा
सर्वस्य सम्बद्धताऽऽपत्तेः । तथा च सम्बन्धपरम्पराकल्पनेऽनवस्था । स्वरूपस्य सम्बन्धसम्बन्धत्वे धर्मान्यसम्बन्ध
एव न कल्प्यस्स्यात्, धर्मस्वरूपस्यैव तत्सम्बन्धत्वसम्भवादिति भावः । नच सम्बन्धेत्यादि । यथाऽनवस्थाभयान्मिथ्या-
त्वान्तरं त्वया न मिथ्यात्वेऽङ्गीक्रियते, तथा मयाऽपि सम्बन्धस्य सम्बन्धान्तरं नाङ्गीक्रियते । तव तेनैव तत्र मिथ्या-
त्वस्येव ममापि तेनैव तस्य सम्बन्धस्य व्यवहार इति भावः । परिहरति अभेदवाद इति । ब्रह्मतद्धर्मयोर्भेदास्वीकारवतस्तव
मते इत्यर्थः । अतिरिक्तस्येति । सम्बन्धस्येति शेषः । सम्बन्धस्य भेदनिष्ठत्वादित्यादिः भेदकल्पनया—धर्मधर्मिभाव-
व्यवहारप्रयोजककल्पनया । तथाचानन्दादीनां ब्रह्माभेदेऽपि धर्मधर्मिभावव्यवहाराय त्वयाऽप्यतिरेकनामा कश्चनार्थस्स्वी-
क्रियते । एवंच काल्पितत्वेनास्मत्स्वीकृतभेदस्यैव नामान्तरं कृतम् । नहि भेदनिर्वाह्यो धर्मधर्मिभावो भेदान्येन निर्वहति ।
नचाभिन्नयोस्तात्विको भेदो निर्वहतीति धर्मधर्मिणोः काल्पितभेदः उभयसम्मत इति भावः ' इति ॥

'नास्या मेयो धर्मोऽस्ति ' इति (इष्टसिद्धि) वाक्ये धर्मसामान्याभाव एव साध्यतया विवक्षितः । मेय इति अद्वै
तसिद्ध्युक्तरीत्या साध्याप्रसिद्धिपरिहारपरम् । धर्मपदं सजातीयविजातीयस्वगतविशेषसामान्यपरमिति यामुनमुन्यभिप्रायमनु-
सृत्य **तदेव वस्तु निर्विशेषमिति वदन्** इति भाष्ये उक्तम् ॥

इष्टसिद्धौ अनुभूतेरनन्तत्वात् परमात्मत्वं प्रसाध्य तस्याएव परमार्थत्वं ब्रह्मत्वं सत्यत्वं औपनिषदपुरुषत्वं च प्रति-
पादितम् । एवं च अनुभूतित्वादिधर्माणां तत्रानङ्गीकारे अनुभूतित्वादिभिः निर्विशेषत्वसाधनं न सम्भवति । अङ्गीकारे
च स्ववाग्विरोधः, अनुभूतित्वनिर्विशेषत्वयोः उपहित एवाङ्गीकारेण तदुपलक्षितस्य औपनिषदत्वं विवक्षितम् इत्यपि न
घटते । विशेषाभावोपलक्षितमित्युक्तेः विशेषोपलक्षितमित्युक्तेश्च न कश्चन विशेषः । मुक्तौ विशेषोपलक्षितस्य परैरेवाङ्गी-
कारात् । 'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः । उपलक्षणनाशेऽपि स्यान्मुक्तिःपाचकादिवत् ॥' (त.प्रदी.४.८)
इति चित्सुखाचार्यैः मुक्तौ वृत्त्युपलक्षितचितः अभ्युपगमात् । मुक्तौ आनन्दत्वोपलक्षितस्य अद्वैतसिद्धावेव स्फुटं प्रतिपा-
दितत्वात् । एवं च विशेषाभावोपलक्षितस्येव विशेषोपलक्षितस्यापि मुक्तावङ्गीकारे निर्विशेषमेवोपनिषत्तात्पर्यविषयः नतु
सविशेषमिति उभयलिङ्गाधिकरणासिद्धान्तः कथं घटते ? शब्दद्वयस्यापि उपलक्षितपरत्वे विशेषाभावात् । 'मुक्तौ केऽपि
विशेषा नैव वर्तन्ते ' इत्येतावन्मात्रोक्त्यैव सामञ्जस्य सम्भवात् । साविशेषस्य तात्पर्याविषयत्वे कूटस्थनित्यता न घटतइति

## श्रीभाष्यम्

**जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति ।**

## गूढार्थसंग्रहः

तत्र तत्रोक्तिरपि (शं.भा) कथं घटते ? उपहित एव निर्विशेषत्वाङ्गीकारेण तस्यापि मिथ्यात्वात् । नित्यत्वस्य उभयोपलक्षितेऽपि सम्भवात् । कालपरिच्छेदाभावो हि नित्यत्वम् । तत् उपहित एव यद्यङ्गीक्रियते तदा विशेषाभावोपहितस्य विशेषोपहितस्य च उभयोर्मिथ्यात्वे एकत्र विनिगमकमपि नास्तीति निर्विशेषं नित्यं न सविशेषमिति व्यवहारोऽपि न समञ्जसः । अतः यावता शुद्धे निर्विशेषत्वस्य विशेषाभावरूपस्य तत्साधकहेतोश्च तात्विकः सम्बन्धः नाद्रियते, तावता निर्विशेषं वस्त्विति सिद्धान्तो न घटते । अतः वस्तुनि परमार्थसत्ये तदुभयमकामेनापि स्वीकार्यमित्यभिप्रेत्य **वस्तुगतस्वभावविशेषैः** इत्युक्तम् । एतत्तात्पर्येणैव स्ववाग्विरोधो यामुनमुनिभिः उक्तः इत्याशयेन **स्ववाग्विरोधमपि न जानाति** इति भाष्योक्तिः ॥

'शुद्धे ब्रह्मणि उपहिततादात्म्यमेव नत्वभावरूपधर्मोऽपि' इत्यत्र न काऽपि युक्तिः । उपहिततादात्म्यस्येवाभावरूपधर्मस्य कल्पितस्य शुद्धेऽङ्गीकारसम्भवात् । तत्र धर्मप्रत्ययो नास्तीति तु शपथमात्रमेव । सत्यत्वादिप्रतिपादकश्रुतेरेव तत्र मानत्वात् । 'भावरूपधर्मानाश्रयत्वेऽपि' 'ब्रह्मणस्सर्वधर्माभावरूपतया' इति द्वितीयमिथ्यात्वविचारान्तसिद्धिवाक्यस्य उपहिततादात्म्यपरतया अर्थवर्णनमपि सिद्धिकारोक्तिविरुद्धमेव । 'अधिकरणातिरिक्ताभावानभ्युपगमेन' इत्यादौ पूर्वस्मिन् सिद्धिवाक्ये ब्रह्मणस्सर्वधर्माभावरूपतायाः स्पष्टमुक्तेः तत्पूर्वं तत्रैव प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नस्यानिषेधस्य तात्विकत्वेऽपि नाद्वैतहानिकरत्वम्' इति वाक्ये द्वितीयमिथ्यात्वघटकाभावस्य ब्रह्माभिन्नत्वेन परमार्थत्वोक्तेश्च । 'अतात्विक एव वा निषेधोऽयम्' इति द्वितीयाभावस्य अपारमार्थ्यपक्षस्य पृथगुक्तेश्च ॥ एवं ज्ञानत्वाद्युपपत्तौ प्राभाकररीत्या द्वितीयाभावस्य अधिकरणानतिरिक्तत्वेन प्रामाणिकत्वेऽपि तेन सद्वितीयत्वाभावात् । नचैवमनुपलब्धेः पार्थक्येन प्रमाणत्वोक्तिरयुक्ता प्रमेयानतिरेकादिति वाच्यम् । अतिरिक्ताभाववादिमत एव तदुक्तेः । अतिरिक्ताभावानभ्युपगमेऽपि अभावत्वप्रकारकज्ञाने तत्प्रामाण्योपपत्तेश्च' इत्यत्र प्राभाकरमतवत् द्वितीयाभावस्याधिकरणरूपत्वमद्वैतसिद्धौ स्पष्टमुक्तम् । एतेन द्वितीयमिथ्यात्वविचारान्तवाक्यमपि प्राभाकरमताभिप्रायकमिति सिद्धम् । एवं च द्वितीयमिथ्यात्वविचारान्तवाक्यस्य लघुचन्द्रिकायां भट्टमतानुगुण्येन अर्थवर्णनमभिनिवेशमूलकं सिद्धिकाराशयविरुद्धंचेति सिद्धम् ॥

द्वितीयाभावस्य विशेषसामान्याभावस्य च अधिकरणरूपत्वेऽपि श्रुतेस्तत्सम्बन्धबोधकत्वमवश्यं वाच्यम् । तत्सम्बन्धस्य कल्पितत्वे च निर्विशेषत्वस्य प्रमाणविषयत्वाभावेन ब्रह्मणि न निर्विशेषत्वं सिध्यति, सविशेषत्वतुल्यत्वात् । श्रुतेः द्वारभूतवाक्यार्थबोधे सम्बन्धप्रकारयोः विषयत्वेन उपलक्षितस्य मुख्यतात्पर्यविषयीभूतबोधविषयत्वेन च उपपत्तिवर्णनमपि निष्प्रकारकनिस्संसर्गकबोधस्य केनापि दार्शनिकेन वैदिकेनानभ्युपगमादप्रामाणिकत्वाच्च न घटते । तात्विकसम्बन्धाभ्युपगमे च वाग्विरोधस्तदवस्थ एव । उपहितशुद्धयोर्भेदाभेदवर्णनमपि भेदाभेदसाधकयुक्तिविरहादनादरणीयम् । अतः उपहितशुद्धयोर्भेदाभेदमवलम्ब्य ब्रह्मणो निर्विशेषत्वप्रतिपादनं ब्रह्मानन्दसरस्वतीनां निरवकाशम् ॥

यद्यपि भामत्यां (१.१.४) भेदाभेदसम्बन्धविकल्पेन सम्बन्धानुपपत्त्या परिणामिनित्यमपारमार्थिकं कूटस्थनित्यं पारमार्थिकमिति भेदाभेदविचारावसरे वाचस्पतिमिश्रैरुक्तम् ; तथाऽपि तैरेव न्यायवार्तिकतात्पर्यटीकायां सम्बन्धोपपत्तिः प्रदर्शितेति (२४२.पुटे.श्रीभा.) पूर्वमेव निरूपितम् । गुणगुणिनोरभेदवादिनव्यमते स्वपरनिर्वाहकत्वायोगेऽपि भेदवादिमते

## श्रीभाष्यम्

**यत्तु प्रत्यक्षंसन्मात्रग्राहित्वेन न भेदविषयम्। भेदश्च विकल्पासहत्वाद्दुर्निरूपइत्युक्तम्।**

## श्रुतप्रकाशिका

त्रविषयत्वं निराक्रियते तत्र प्रत्यक्षस्य सन्मात्रविषयत्वे, भेदस्य दुर्निरूपत्वे च परोक्तं कुतर्कमनूद्य निरस्यति। यत्त्विति।

## गूढार्थसंग्रहः

स्वपरनिर्वाहकत्वं भाष्य एवोत्तरत्र वक्ष्यते। अतः बौद्धसम्मतसम्बन्धानुपपत्तिः सिध्युक्ताऽपि निरवकाशा॥ बौद्धाधिकारे गुणगुणिभेदभङ्गनिराकरणे 'सम्बन्धाभाव इति चेत्? असम्बन्धस्तावदस्तु। कथं तद्वत्प्रतीयत इतिचेत्, तेषां तथोत्पादादिति परिहारोऽस्तु' इति उदयनाचार्यैः बौद्धोक्तानुपपत्तिः परिहृता॥

अत्र स्ववाग्विरोधमपि न जानाति इति भाष्ये अपिना श्रुतिविरोधः समुच्चीयते। 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म अपितु आनन्दि इति श्रुतिविरोधः उत्तरत्र वक्ष्यते। राहोश्शिरइत्यादावपि औपाधिकभेदविवक्षयैव षष्ठी। 'आद्यन्तवदेकस्मिन्' (पा.सू.१.१.२१) इतिसूत्रभाष्ये व्यपदेशिवद्भावोक्तेरिति भक्ष्यायामुद्योतेच स्पष्टम्। 'आनन्दो विषयानुभवो नित्यत्वंचेति सन्ति धर्माः। अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते' इति पञ्चपादिकोक्तौ चकारात् सत्यत्वशुद्धत्वविभुत्वादीनां ग्रहणम्। सत्यत्वादेराधारत्वं तादात्म्यंवा ब्रह्मणि कल्पितमवश्यं वाच्यमिति गुरुचन्द्रिकोक्त्या 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र कल्पितानन्दाधारत्वविवक्षणे तज्ज्ञानस्य 'नबिभेति' इति भयनिवृत्तिहेतुत्वकथनं नसङ्गच्छते। ब्रह्मणः विशेषत्रयशून्यत्वे स्वगतविशेषशून्यत्वेच एतच्छ्रुतिविरोधस्समानः। स्वगतविशेषमात्रशून्यत्वपक्षे विशेषबलात् भेदव्यवहारमात्रनिर्वाहाङ्गीकारेऽपि भेदज्ञानस्य भ्रमत्वेन गुणभेदबोधकश्रुतेः प्रामाण्यं नैव निर्वहति। एतन्मते ब्रह्मनिष्ठजीवादिभेदस्यापि ब्रह्मस्वरूपतायाः तैत्तरीय (आ.ती) भाष्ये उक्ता जीवब्रह्मभेदबोधकश्रुतेरपि अस्वारस्यमेव। ब्रह्मणि स्वभिन्नधर्मस्य कस्याप्यनङ्गीकारात्। अतः ब्रह्मणि विशेषत्रयसामान्यशून्यत्वं स्वगतविशेषमात्रशून्यत्वं वा नोपनिषत्तात्पर्यविषयइति सिद्धम्॥

एवंच व्योमारविन्दसदृशि दृशि वेदान्ततात्पर्यवर्णनं वेदान्तायैव स्यात्' इति यामुनमुनिसूक्तिः सुस्था॥ एतावता ब्रह्मसिध्युक्तप्रकारेण महापूर्वपक्षे षड्विधतात्पर्यलिङ्गोपेत श्रुते प्रत्यक्षापेक्षया प्राबल्येन निर्विशेषपरत्वं यदुक्तं तत्सम्यक्पर्यालोचितम्। अथ प्रत्यक्षस्य सन्मात्रग्राहित्वं पूर्वपक्षे यदुक्तं तत्पर्यालोचयति—**यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेद विषयमित्यादिना॥**

**भेदश्च विकल्पासहत्वाद्दुर्निरूपइतीति**। 'धर्मस्य तदतद्रूप विकल्पानुपपत्तितः। धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत्' इति जातिमस्मिन्नर्थे आशङ्क्य जातिर्नास्तीत्युक्तं लघुचन्द्रिकायाम्। तथा हि 'ननु भेदः किं भिन्ने उताभिन्ने' इत्यादि त्वदुक्तिरपि जातिरितिचेन्न। वैतण्डिकतामाश्रित्य वदतो मम स्थापनीयाभावेन मां प्रति जातिव्याघातकत्वाभावात्, सर्वदृश्यानां खण्डनयुक्तिभिर्बाधस्य मदिष्टत्वात् तदुक्तं खण्डने—'अभीष्टसिद्धावपि खण्डनानामखण्डराज्ञामिव नैवमाज्ञा। तत्तानि कस्मान्नयथावदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम्॥' इति परमतखण्डनरूपस्याभीष्टस्य सिद्धावपि खण्डनयुक्तीनां राज्ञामिवाज्ञास्वातन्त्र्यं नाखण्डि नास्माभिर्निराकृता। तत् तस्मात् तानि खण्डनानि यथावत् परमत इव सिद्धान्तिसिद्धप्रक्रियायामपि कस्मान्नयोजयध्वमित्यर्थः इति। अत्र घटे पटभेदस्य घटस्वरूपत्वे अभिन्ने भेदः घटत्व

## श्रीभाष्यम्

**तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनस्स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम् । संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोस्स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि सम्भवत्येव ।**

## श्रुतप्रकाशिका

यच्चेत्यादिना ग्रन्थद्वयेन प्रमाणानुपपत्तिप्रमेयानुपपत्त्यनुभाषणम् । **तदपीति** । न केवलं विशेषविषयत्वोपपादनम् । निर्विशेषविषयत्वोपपादनानुपपत्तिश्चेति अपिशब्दस्य भावः । यद्वा * न केवलं भिन्नविषयत्वं स्थापितम् । सन्मात्रविषयत्वमपि दूरोत्सारितमिति अपिशब्दस्यार्थः । **जात्यादेरेवेति** । स्वपरनिर्वाहकत्वाद्व्यावृत्तिरूपधर्मान्तरनिरपेक्षस्य प्रतियोगिनिरपेक्षस्यैवचेतिभावः । **दूरोत्सारितम्** । प्रतियोगिस्मरणकृतविलम्बे सत्यपि ज्ञानस्य यावत्कार्यसिद्धि स्थिरत्वं कल्प्यम् । अथापि प्रतियोगिनिरपेक्षजात्यादेः भेदत्वेनैकक्षणवृत्तित्वेऽपि प्रत्यक्षस्य भेदस्य सुग्रहत्वाद्दूरोत्सारितमितिभावः ॥

## गूढार्थसङ्ग्रहः

रूपत्वे भिन्ने भेदइत्युभयोरेकत्रैव पर्यवसानम् ॥ **जात्यादिविशिष्टस्यैवेति** । एवकारेण भावातिरिक्ताभावरूपोऽपि भेदः व्यवच्छिद्यते । एवं जात्यादेर्विशेषणतया तदाश्रयद्रव्यस्य विशेष्यतया उभयोस्सम्बन्धस्य संसर्गतया प्रत्यक्षे भानेन एवकारेण असम्बन्धप्रतीतिव्यवच्छेदेन यत्र प्रामाणिकानां प्रतीतिः तत्र प्रतीतिबलादेव सम्बन्धोऽभ्युपगन्तव्य इति नात्र सम्बन्धानुपपत्तिशङ्का युक्तेऽत्यापि एवकारेण बोधितम् ॥

**संवेदनवद्रूपादिवच्च...युष्माभिरभ्युपेतमिति** । अयमर्थः विवरणे उक्त इति पूर्वमेव (१९८) उपपादितम् । (अनुभूतिस्वप्रकाशत्वोपपत्तौ) विवरणोक्तप्रदीपालोकादिः **रूपादिवदित्यत्र** आदिपदार्थः । उक्तंच अद्वैतसिद्धावपि— 'स्वसबन्धादन्यत्रेव स्वस्मिन्नपि चित्फलमिति खण्डनोक्तकुठादिदृष्टान्तपर्यवसानात्' इति, 'स्वस्मादन्यत्र व्यवहारजनने स्वविषयत्वं स्वस्मिन् स्वाभेदः निमित्तम्' इति च ॥

पूर्वं **वस्तुस्वभावविशेषैरित्यत्र संवेदनवत्** इत्यादिश्रीसूक्त्यनुरोधेन स्वप्रकाशत्वमपि विवक्षितमिति प्रतीयते । एवं च भेदाभ्युपगन्तृभिः खण्डनयुक्त्या भेदापह्नववत् स्वप्रकाशत्वानभ्युपगन्तृभिः बौद्धैः स्वप्रकाशापह्नवोऽपि क्रियेत इत्यपि विवक्षितमिति प्रतिभाति ॥ लघुचन्द्रिकायां— 'नचैवं ब्रह्मणोऽपि खण्डनयुक्त्या बाधापत्तिरिति वाच्यम्; ब्रह्मणोऽसंसृष्टत्वेन तर्काविषयत्वात्, सर्वसाक्षित्वेनाबाध्यत्वाच्च' इत्युक्तिरपि नघटते । ब्रह्मणः वेदान्तजन्यवृत्तिविषयत्वाङ्गीकारेण असंसृष्टत्वस्यासम्भवात् । 'मातृमानमितिमेयानां व्यभिचारित्वेऽपि तद्भावाभावसाक्षिणः कालत्रयेऽप्यव्यभिचारात्' इति सिद्धान्तबिन्दुविवरणे, 'तद्भावाभावसाक्षिण इति— ज्ञात्रादिस्वरूपतदभावभासकस्येत्यर्थः' इत्युपक्रम्य, 'तदुक्तम् 'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति' इति खण्डनोक्तकारिकामेवोपन्यस्य 'अस्वप्रकाशज्ञानवादिनः अर्थप्रकाशो नोपपद्यत इत्यर्थः' इत्युक्त्या कालत्रयाबाध्यस्य ज्ञातृज्ञेयाद्यभावभासकत्वोक्त्या च असंसृष्टत्वं नास्तीति स्फुटं प्रतीयते । 'एकः कूटस्थो निर्धर्मकः साक्षी नाद्रियते' इति सिद्धान्तबिन्दावाशङ्क्य 'तमेव भान्तम्' इत्यादिश्रुतिरुदाहृता । 'श्रुतौ तस्य भासेति- तदभिन्नभानेन' इति विवरणम् । अत्रापि सर्वभानहेतुत्वं निर्धर्मकस्योक्तम् । एवं सिद्धान्तबिन्दौ साक्षिसाधनावसरे 'स्वप्रकाशानभ्युपगमे च जगदान्ध्यप्रसङ्गात्' इत्येतद्विवरणे प्राक् (२१५.पुटे) उदाहृते 'जगत्सु- सर्वदृश्येषु आन्ध्यस्य अप्रकाशस्य प्रसङ्गः । अप्रकाशेनात्मचैतन्येन दृश्यप्रकाशनासम्भवात् । प्रकाशान्तराणां च कल्पनेऽनवस्थानात्

## गूढार्थसंग्रहः

इत्यर्थः' इत्युक्तिरपि न घटते स्वप्रकाशानभ्युपगन्तृमाध्यमिकमते प्रकाशान्तराणां परमार्थसत्यत्वानभ्युपगमेन अनवस्थादो-
षस्यैवासम्भवात्। 'अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः' इति चन्द्रिकोदाहृतखण्डनोक्तेरेव। 'अप्रत्यक्षोपलम्भस्य
नार्थदृष्टिः प्रसिध्यति' इति खण्डनाद्युदाहृतकारिकाऽपि माध्यमिकव्यतिरिक्तबौद्धोक्तैव इति न ततः स्वप्रकाशत्वं सिध्यति
एवं 'सर्वबाधावधिभूतचैतन्यपारिशेष्येण न शून्यवादापत्तिः' इति बिन्दूक्तिः नघटते। 'सर्वबाधेत्यादि साक्षिरूपत्वेन चितो
बाधासम्भवात्। चैतन्यं सर्वबाध्यज्ञानानामवधिरूपोऽवधिः, अतस्तस्य पारिशेष्यात् मिथ्यात्वास्वीकारात्, शून्यवादस्य सर्व
मिथ्यात्ववादस्य आपत्तिरिति भावः। तथा च संसृष्टरूपेणैव सद्रूपस्य भ्रमविषयत्वं मिथ्यात्वं च न तु शुद्धरूपेणेति भावः'
इति तद्विवरणमपि तथैव साक्षिसाधनस्यैवासम्भवात्। शुद्धस्य वाचस्पतिमते स्वप्रकाशत्वेनैव भानाङ्गीकारात् स्वप्रकाश
भावे तदयोगात्। विवरणकारमते वृत्तिविषयत्वेन संसृष्टत्वस्यैव सत्त्वात्॥

एवं 'मिथ्यावस्तुनोऽधिष्ठानत्वे शून्यवादप्रसङ्गात्।' इति बिन्दुः 'शून्यवादप्रसङ्गात्। शून्यवादिनं प्रत्यापा-
दितदोषप्रसङ्गात् सर्वस्य मिथ्यात्वे हि ज्ञानानां बाध्यबाधकभावव्यवस्था न स्यात्। प्रमयैव भ्रमो बाध्यते। शून्यवादे च
सर्वस्य मिथ्यात्वात् न प्रमास्तीति बाध्यबाधकभावो न क्वापीति दोष आपादितः।' इति तट्टीकाऽपि नघटते। स्वाप्नगज
तदभावज्ञानयोः उभयोर्भ्रमत्वेऽपि बाध्यबाधकभावः यथा सिद्ध्यादौ अङ्गीकृतः तथा शून्यवादेऽप्यङ्गीकारसम्भवात्।
दृष्टिसृष्टिपक्षे 'तत्त्वमसि' इति वाक्यार्थबोधस्यापि भ्रमत्वस्यावश्यं स्वीकार्यत्वात्। विषयबाधाबाधाभ्यां च व्यवस्था न
घटते। निर्विशेषशुद्धचित एव व्योमापविन्दसदृशत्वात्॥

खण्डनोक्तयुक्तिभिर्भेदापह्नवे 'आपाततो यदिदमद्वयवादिनिनामद्वैतमाकलितमर्थतया श्रुतीनाम्। तत्स्वप्रकाश-
परमार्थचिदेव भूत्वा निष्पीडितादहह निर्वहते विचारात्॥' (ख.ख.१ प.२६.श्लो.) तदिदमेताभिरात्ममतसिद्धस्युक्ति-
लक्ष्मोपपन्नाभिः युक्तिभिरुपनीयमानमद्वैतमविद्याविलासलालसोऽपि श्रद्धधातु भवान्' इत्युपक्रम्य, 'परमात्मतत्त्वं स्वप्रका-
शसाक्षिकं माक्षिकरसातिशायि स्वात्मनैव साक्षात्करिष्यते' इति खण्डनोक्तं स्वमतस्थापनाहीनवितण्डायामेव पर्यवस्यति।
'यदि दर्शनेषु शून्यवादानिर्वचनीयपक्षयोराश्रयणं तदा तावदमूषां निराबाधैव सार्वपथीनता' इति खण्डनयुक्तीनां
निराबाधतायाः शून्यवादे तैरेव वक्ष्यमाणत्वात्॥ एवं पूर्वमपि 'सर्वथा सदुपायानां वादमार्गः प्रवर्तते॥' अधिकारोऽनु-
पायत्वान्नवादे शून्यवादिनः।' (श्लो.वा.नि.१२८) इति वेदार्थसङ्ग्रहोदाहृतभट्टपादोक्तिदूषणावसरे, 'सोऽयमपूर्वः प्रमा
णादिसत्त्वानभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवताऽभ्यूहितः। नूनं यस्य प्रभावात् भगवता सुरगुरुणा लोकायतसूत्राणि न
प्रणीतानि। तथागतेन मध्यमागमाः वा नोपदिष्टाः। भगवत्पादेन वा बादरायणेषु सूत्रेषु भाष्यं नाभाषि' इति। एवंच
सति सौगतब्रह्मवादिनोरयं विशेषः यदादिमः सर्वमेवानिर्वचनीयं वर्णयति। तदुक्तं भगवता लङ्कावतारे 'बुध्या विविच्य
मानानां स्वभावो नावधार्यते। अतो निरभिलप्यास्ते निस्स्वभावश्च देशिताः' इति। 'विज्ञानव्यतिरिक्तं पुनः इदं विश्वं सद
सद्भ्यां विलक्षणं ब्रह्मवादिनः सङ्गिरन्त इति' इति चोक्तौ माध्यमिकस्य स्वसुहृत्त्वेन प्रतिपादनात्। एवंच तदेतत्तु श्रुत्या
प्रमाणेन उपलक्षणन्यायात् तात्पर्यतः प्रकाश्यते। तेन परमार्थतोऽभिधानाभिधेयभावविरहे तात्पर्यतः श्रुतिः 'तस्मिन्
अविद्यादशायां पराभ्युपगमरीत्या प्रमाणमित्युच्यते। वस्तुतस्तु आत्मसिद्धमेव चिद्रूपम्' इति स्वपक्षस्थापनं न घटते।
व्योमारविन्दवत् श्रुतेः निर्विशेषचिति प्रमाणभावस्यासम्भवात् स्वतस्सिद्धिरपि न घटते॥

तत्र विद्यासागरीये 'ज्ञानं सजातीयपरनिरपेक्षव्यवहारगोचरः परत्रव्यवहारहेतुत्वात्सत्तावत्' इत्यनुमानं 'यथातुभवतो
सत्तासम्बन्धात् इतरत्र सद्व्यवहारव्यवस्था सत्तातु स्वयमेव सद्रूपा' इत्यादि खण्डने विवक्षितमित्युक्तम्। अत्र स्वयम्प्र-

श्रीभाष्यम्

**अत एव च नानवस्थाऽन्योन्याश्रयणं च ।**

श्रुतप्रकाशिका

**जात्यादेरेवे**त्यभिप्रेतं भेदस्य स्वपरनिर्वाहकत्वं परोक्तयुक्त्यैव दर्शयति । **संवेदनवदित्यादिना** । संवेदनवद्रूपादि- वच्चेत्यनेन परोक्तपक्षसपक्षौ द्वावपि सपक्षीकृतौ । अनेन परोक्तदूषणस्य परिहृतत्वं दर्शयति । **अतएवेति** । अत्र प्रथमच- शब्दस्य स्वपरनिर्वाहकत्वोपपादनेन दूषणपरिहारश्च सिद्धइति भावः । द्वितीयश्चशब्दो दूषणद्वयसमुच्चये । अनवस्थापरिहार- **दर्शनात्। तत्तु भ्रान्तिमूलमितिचेत् एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम्। पाश्चात्यबाधादर्शनंतु तस्यैवेति** इति ॥

गूढार्थसंग्रहः

काशाचितः व्यवहारहेतुत्वमुक्तम् । हेतुत्वस्य कल्पितत्वे स्वयम्प्रकाशत्वमपि कल्पितमेव स्यात् । कार्यकारणभावस्तु शून्य- न्यब्रह्मवादिनोरुभयोरपि अनिर्वचनीयइति सम्मतम् । माध्यमिकमतवत् कार्यकारणभावस्य सांवृतत्वे स्वयम्प्रकाशचि- तोऽपि सांवृतत्वमेव प्रसज्यते । अतः खण्डनोक्तयुक्तिभिर्वैतण्डिकत्वस्याङ्गीकारे शून्यवादिनः वैताण्डिकश्रेष्ठस्य माध्यमिकस्यैव विजयस्स्यात् नतु खण्डनकृताम् । तदेतदभिप्रेत्य युक्तिघट्टान्ते भगवता वक्ष्यते—**शून्यमेव तत्वमिति वाक्येन तस्यापि बाध**

**अतएव च नानवस्थेत्यादि** । अतएव विवरणाद्युक्तस्वपरनिर्वाहकत्वादेव नानवस्थेति । एतेन सम्बन्धानुपपत्ति- रपि परिहृता । **जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षसिद्धत्वात्** । इति पूर्वमुक्त्या प्रतीतिबलेन सम्बन्धसिद्धौ स्वपर निर्वाहकसमाधिना अनवस्थाया असम्भवात् । एतेन 'अथ तयोः सम्बन्धान्तरं प्रतीयते । तस्यतु न प्रतीयते इतिचेत् सत्यं प्रतीयमानमुपपन्नं मिथ्यैवेति भावः ।' इति (२१५.पुटे) प्रागुदाहृतबिन्दुटीकोक्तिरपि निरवकाशा । स्वपरनिर्वाहस- माधिना सर्वसामञ्जस्यसम्भवात् । सम्बन्धानुपपत्त्या धर्मधर्मिभावभङ्गः वैभाषिकानाम् ज्ञानातिरिक्तार्थाभावो योगाचाराणाम् कार्यकारणसम्बन्धानुपपत्त्या ज्ञानस्याप्यभावः माध्यमिकानां सम्मतः । अनयैव दिशा सम्बन्धानुपपत्त्या भेदस्वरूपधर्म- तापक्षविकल्पेन ब्रह्मसिद्धिखण्डनादौ भेदापह्नवः क्रियते । स्वप्रकाशत्वंतु परव्यवहारहेतुत्वेन साध्यते । 'बाह्यार्थापह्नवे द्वैतम्' इति निरालम्बनवादोक्त (श्लो.वा.निरा वा.१७) प्रमाणानुपपत्तिप्रमेयानुपपत्तिभ्यां प्रत्यक्षस्य सन्मात्रग्राहित्वं ब्रह्म- सिध्यादौ स्थापितम् । प्रत्यक्षस्य सन्मात्रग्राहित्वे घटादौ सत्तादात्म्यमेव नतु व्यावहारिकसत्ता । दृष्टिसृष्टिपक्षेऽपि घटादीनां प्रातीतिकत्वमेव । श्रुतीनामितरप्रमाणानां च व्यावहारिकप्रामाण्यमपि नास्ति । दृष्टिसृष्टिपक्षएव एकजीववादाख्यः मुख्य- वेदान्तपक्षइति मधुसूदनसरस्वतीभिरुक्तम् । एतत्पक्षद्वयापेक्षया शून्यवादिमतमेव ज्यायः । व्यावहारिक पारमार्थिकस- त्यद्वयस्य तत्पक्षे सत्वात् । सृष्टिदृष्टिपक्षे सत्तात्रैविध्याङ्गीकारेण व्यावहारिक पारमार्थिकप्रामाण्यभेदकल्पनेन श्रुतीनां प्रा- माण्यसम्पादनमपि 'तस्माद्यन्नास्ति नास्त्येव—न सत्यद्वयकल्पना' इति प्रागुदाहृत (१५५.पुटे) श्लोकवार्तिकादौ भट्टपादै- रेव श्रुतेरेकविधप्रामामाण्यासम्भवात् दूषितम् ॥

यद्यपि गुरुचन्द्रिकायाम्— असतस्साधकत्वोपपत्तौ एतद्वचनमुदाहृत्य इति बौद्धं प्रति भट्टपादोक्तिरपि युक्तैव । अ- बाध्याधिष्ठानाङ्गीकारं विना प्रपञ्चे तद्बाध्यत्वासम्भवात् । निस्साक्षिकस्य चरमबाधस्यासम्भवाच्च । अत एव तयोर्मतयोरेव 'तत्रार्थशून्यं विज्ञानं योगाचारास्समाश्रिताः । तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥' इत्याद्युत्तरवार्तिकेन निरासः । अस्मन्मते तु प्रपञ्चस्य खण्डनयुक्तिभिर्बाधात् । स्फुरणस्वरूपस्य ब्रह्मणस्तु अधिष्ठानत्वेन बाधानुपलम्भेन बाध- साक्षित्वेनचाबाधात् । 'सत्यस्य सत्यम् प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रुतिभिश्च सत्यद्वयकल्पना युक्तमैव'

## गूढार्थसंग्रहः

इत्युक्तम् ; तथाऽपि सम्बन्धाक्षेपपरिहारे 'स्वाभाविकीमविद्यां च' इत्यादिना अविद्यावाददूषणात्, प्रत्यक्षसूत्रे सन्मात्रग्राहिप्रत्यक्षनिराकरणात्, निरालम्बनवादान्ते 'ग्राह्यं गतास्तत्र कथञ्चिदन्ये' इत्युक्तेश्च ब्रह्मविवर्ताद्वैतमतदूषणमपि भट्टपादानां विवक्षितमेव । अत एव 'चैतन्याद्यात्मकत्वाद्यविभागाच्च उपनिषत्सु ऐकात्म्यव्यवहारः' इति अपूर्वाधिकरणे भट्टपादोक्तिस्सङ्गच्छत इत्यादिकं प्रागेव (१५५) निरूपितम् । अत एव ब्रह्मसिद्धौ भट्टपाददूषितसन्मात्रग्राहिप्रत्यक्षस्थापनार्थं 'स्वाभाविकीमविद्यां च' इत्याद्युक्तदूषणपरिहारार्थं च प्रयत्नस्सङ्गच्छते । शून्यवादयुक्तय एव खण्डनयुक्तय इति 'यदि दर्शनेषु शून्यवादानिर्वचनीयपक्षयोराश्रयणं तदा तावदमूषां निराबाधैव सार्वपथीनता' इति खण्डनकारैरेवोक्तेः । अबाध्याधिष्ठानमन्तराऽपि साक्षिणं विनाऽपि व्यवहारः उपपद्यत इति निरूपितम् । उत्तरत्र भाष्येऽपि निरूपयिष्यते ॥

'प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रुतिमुपन्यस्य सत्यत्वं शुद्धचिति कल्पितमित्युक्त्वा सत्यत्वमुपहित एव सत्यत्वविशिष्टतादात्म्यमेव शुद्धचिति कल्पितमिति गुरुचन्द्रिकायां सिद्धान्तः पूर्वमेव प्रदर्शितः । सत्यत्वं प्राणेषु उपहिते च । प्राणानामपि मिथ्यात्वमुपहितस्यापि मिथ्यात्वमेव । स्वाभाविकस्सत्त्वसम्बन्धः उपहिते, सदधिष्ठानतादात्म्यप्रयुक्तः सत्त्वसम्बन्धः प्रपञ्चे इति उभयोर्वैषम्येन 'तेषामेष सत्यम्' इति वाक्यं प्रवृत्तमितिचेत् ; मिथ्याभूतोपहितवस्तुनि सत्यशब्दप्रयोगः कथं विदुषां हृदयङ्गमः ? सत्त्वोपहितब्रह्मतादात्म्यं प्रपञ्चेऽपि वर्तते । एवमुपहितकेवलभावेन तादात्म्यं शुद्धे इत्येवं वैषम्यकल्पनेन उपहितकेवलतादात्म्यविवक्षया 'एष सत्यम्' इति कल्पनमप्यनादरणीयमेव सत्यत्ववैशिष्ट्यस्यैव स्वरसतः तद्वाक्यात्प्रतीतेः । सत्यत्वस्य उपहितेऽङ्गीकारे शुद्धचितः सत्यत्वोपलक्षितत्वमपि न सम्भवति । तादात्म्याङ्गीकारेण तत्र भेदस्याप्यङ्गीकारात् । सत्यत्वोपलक्षितत्ववत् उपहिते मिथ्यात्वस्य सत्त्वेन मिथ्यात्वोपलक्षितत्वस्यापि सम्भवात् 'प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रुतिः न ब्रह्मानन्दसरस्वत्युक्तार्थमभिप्रैति ॥

'मूर्तामूर्तं हि सत्याह्वं प्राणास्सत्यास्तदात्मतः । क्षेत्रज्ञस्तदुपाधित्वात् सत्य इत्यभिधीयते' (बृ.वा.४.६.२४४) इति सुरेश्वराचार्यैः 'प्राणा वै सत्यम्' इत्यत्र जीवविवक्षाया उक्त्या एतद्वाक्यं जीवापेक्षया परमात्मनः अतिशयितसत्यत्वपरमिति श्रुतितात्पर्यविषयीभूतार्थः भाष्ये स्थापयिष्यते । अतः 'न सत्यद्वयकल्पना' इत्यादिभट्टपादोक्तिः परमतमपि संगृह्णाति । व्यावहारिकपारमार्थिकविभागकल्पने प्रमाणानामेकविधप्रामाण्यं नैव निर्वहतीति भट्टपादाशयात् । अत एव 'सिंहो देवदत्त' इत्यत्र आरोपनिराकरणपूर्वकं सदृशार्थबोधं स्थापयतां भट्टपादानां वेदप्रामाण्यरक्षणमभिप्रेतमिति सोमनाथाप्पय दीक्षिताभ्यामभिधानेन वेदस्य क्वाप्यारोपितार्थबोधकत्वं नास्तीति भट्टपादसिद्धान्तः सङ्गच्छते । अयंच भट्टपादसिद्धान्तः समर्थितः सर्वार्थसिद्धिभावप्रकाशे । (नृ.सं.२८९) एवं सिद्धान्तानुसारेणैव 'सर्वथा स्वदुपायानां वादमार्गः प्रवर्तते' इत्यादिकं भट्टपादैरुक्तम् । उक्तंच 'क्षणिकत्वाच्च' (२.२.३१) इति सूत्रे शङ्कराचार्यैः 'शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरःक्रियते । नह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारः अन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम् । अपवादाभाव उत्सर्गप्रसिद्धेः' इति । एतेन व्यावहारिकपारमार्थिकविभागः प्रमाणैस्तत्त्वनिर्णयमन्तरा नघटत इत्युक्तं भवति। अधिष्ठानानङ्गीकारेऽपि साक्षिणोऽनङ्गीकारेऽपि व्यवहारानिर्वेषयोः संवृत्या शून्यत्वादिभिरुपपादनान्नदोषः ॥

'यदिहि देवपुत्रपरमार्थतः परमार्थसत्यं कायवाङ्मनसां विषयतामुपगच्छेत् । नतत्परमार्थसत्यमिति संख्यां गच्छेत् संवृतिसत्यमेव तद्भवेत् । अपितु देवपुत्रपरमार्थसत्यां सर्वव्यवहारसमतिक्रान्तं निर्विशेषं असमुत्पन्नमनिरुद्धं अभिधेयाभिधानज्ञेयज्ञानविगतं यावत्सर्वाकारवरोपेतसर्वज्ञानविषयभावसमतिक्रान्तं परमार्थसत्यमिति विस्तरः' इतिभगवता आर्यसत्यद्वयावतारे उक्तं (बोधिचर्यावतारपञ्जिका) यथा प्रमाणेन नसिध्यति तद्वत् प्रमाणेन अधिष्ठानं साक्षिच नैव सिध्यति ।

## श्रीभाष्यम्

**एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे**

## श्रुतप्रकाशिका

सिद्धौ तदर्थस्वपरनिर्वाहकत्वसिद्धिः स्वपरनिर्वाहकत्वसिद्धौ अनवस्थापरिहारसिद्धिरित्यन्योन्याश्रय इतिचेत्—न भ्रमनिवृत्त्य न्वयव्यतिरेकाभ्यामेव स्वपरनिर्वाहकत्वसिद्धेरनवस्थापरिहारात् । प्रत्यक्षज्ञानस्य त्रिचतुरक्षणमात्रवृत्तित्वेऽप्येकक्षणवृत्तित्वमभ्युपगम्य परिहरति । एकक्षणवर्तित्वेऽपीति ॥

अत्रेदमनुसन्धेयं किं भेदप्रतीतिरनभ्युपगता उताङ्गीकारेऽपि मूलं नास्ति किंवा मूलं दुर्निरूपमिति । विषयो वा किं नास्ति उत सन्नपि दुर्निरूपइति । तत्र प्रथमं प्रतीत्यनभ्युगमो नोपपद्यते वेदान्तानामनारम्भणीयत्वप्रसङ्गात्, वादिप्रतिवादिरूपेण कथाऽनुपपत्तेश्च मूलमप्यस्ति कार्यस्य सम्प्रतिपन्नत्वेन कारणस्य कल्पनीयत्वात् । कार्यं हि प्रतीतं कारणकल्पनायां प्रमाणम् न पुनस्स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हतीति नीतिविदः । दुर्निरूपत्वमपि नास्ति कार्योत्पत्त्यनुरूपत्वं हि कारणस्य सुनिरूपत्वम् । कार्योत्पत्त्या कारणस्य तदनुरूपत्वं सिद्धमिति न दुर्निरूपत्वं । विषयोऽप्यस्त्येव यदि न विषयः, तर्हि त्वयैव तदनुयुक्तेन वक्तव्यम् । प्रपञ्चस्य बाध्यत्वज्ञानं किं सविषयं उताविषयमिति । सविषयत्वे विषयोऽङ्गीकृतएव । नोचेद्बाध्यत्वमपि नेति प्रपञ्चस्य पारमार्थ्यं स्यात् । अतोऽस्त्येव विषयः नच बाध्यविषयत्वम् । तथासति भेदबाधकप्रमाणजन्यप्रतीतेरपि मिथ्याविषयत्वेन भेदपारमार्थ्यप्रसङ्गात् । एतान्प्रत्याहुः—

**स्वशास्त्रनिर्णये सत्ये सत्यास्स्युर्लोकनिर्णयाः । स्वशास्त्रनिर्णयेऽसत्ये सत्यास्स्युर्लोकनिर्णयाः** इति ॥

उक्तविकल्पेषु पूर्वे चत्वारः पक्षाः अपिचेत्यादिना भाष्येण वक्ष्यमाणेनाभिप्रेता इति तेषां निरस्तत्वमुत्तरत्र ज्ञास्यते । अत्र प्रथमं पञ्चमं बाध्यविषयत्वपक्षं प्राधान्यात्परिजिहीर्षता भाष्यकारेण प्रत्यक्षबाधस्तावन्नदृष्ट इति यौक्तिकबाधः परिह्रियते । तत्र प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वेन तद्विशिष्टविषयतया क्षणान्तरग्राह्याभावात् क्रमयौगपद्यविकल्पायोगरूपा प्रमणानुपपत्तिः परिहृता । एवं प्रमेयानुपपत्तौ स्वरूपपक्षे प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तिश्चेष्टतया परिहृता । हानोपादानादिरूपस्य, गोत्वादिशब्दावलम्बिनश्च व्यवहारस्य प्रतीतेश्च प्रतियोगिनिरपेक्षत्वात् । शाब्दव्यवहारविशेषे प्रतियोगिसापेक्षत्वस्य '**दाराः कळत्रमाप**' इत्यादिषु स्त्रीत्वनपुंसकत्वबहुत्वादिवत् शब्दस्वभावायत्तत्वात् नार्थदूषणत्वम् । व्यावृत्तादिशब्दप्रयोगेष्वेव प्रतियोगिसापेक्षत्वदर्शनात् । गोत्वादिप्रतिपत्तिव्यवहारेषु तदभावाच ॥

## गूढार्थसंग्रहः

तस्मात् सन्मात्रग्राहिप्रत्यक्षवादे सर्वप्रमाणसिद्धलोकव्यवहारापह्नवस्स्यात् । अतः सत्यद्वयकल्पनं अनादरणीयमिति भट्टपादैरेवव्यवस्थापितम् । अतः तद्दूषणपरब्रह्मासिध्यादिपर्यालोचनेन औपनिषदपरमपुरुषनिर्धारणार्थं प्रवृत्तेन भगवता स्वपरनिर्वाहकसमाधिमाश्रित्य यदुक्तं तन्निरवद्यमिति सिद्धम् ॥

एकक्षणवर्तित्वेऽपीति । अपिना बौद्धसम्मतक्षणिकत्वं भट्टपादानां न सम्मतमिति सूचितम् । मण्डनमिश्रेणतु अनुवृत्तं सामान्यादिकं नास्ति किंतु व्यावृत्तमेव निर्विकल्पकप्रत्यक्षप्रमाविषयः इति साधयतां वैभाषिकादीनां मतं दूषयितुं प्रवृत्तेन अनुवृत्तमेव प्रत्यक्षविषयः, नतु व्यावृत्तमिति साधनावसरे ' न खल्वेकज्ञानप्रमाणव्यापारौ सन्तौ विधिव्यवच्छेदौ क्रमवन्तौ युज्येते क्षणिकत्वात् ' इति (१८९) प्रागुदाहृतवाक्येषु बौद्धसम्मतमेव क्षणिकत्वं प्रतिपादितम् । तथाऽपि

## श्रुतप्रकाशिका

शब्दव्यवहारविशेषस्य प्रतियोगिसापेक्षत्वं शब्दविशेषस्वभावाधीनमित्यन्वयव्यतिरेकाभ्यां निश्चीयते—शब्दस्वभाव-
श्च प्रवृत्तिनिमित्तसाधारण्यात्तदवच्छेदकोपाधिपुरस्कारेणार्थविशेषप्रतीतिहेतुत्वम् । गोत्वशब्दोह्यसाधारणो गोत्वं स्वरूपेण
दर्शयति । भेदशब्दस्तु व्यावृत्तिबुद्धिहेतुत्वरूपप्रवृत्तिनिमित्तसाधारण्यात्तदवच्छेदकमहिषादिपदार्थान्तररूपोपाधिपुरस्का-
रेण गोत्वं दर्शयति । पर्यायत्वप्रसक्तिश्च परिहृता । व्यावृत्तिरूपे परे ब्रह्मणि ब्रह्मशब्देनसह स्वरूपशब्दवदधिकार्थाविव-
क्षयाँमपि भिन्नशब्दस्य प्रयोगसम्भवात् । उपाधिशब्दानां हि वाच्यानतिरेकेऽपि तटस्थोपाधिभेदादपर्यायत्वमुपपद्यते ।
तत्रैच्छिकौ प्रयोगाप्रयोगौ भेदस्य व्यावृत्त्यनुवृत्तिविकल्पोऽपि परिहृतः । व्यावृत्तइत्यभ्युपगमे स्वरूपव्यावृत्तशब्दयोरिव
भेदशब्दस्यानुवृत्तप्रयोगसम्भवात् । भिन्नोहि भेदयोगीत्येतच्च स्वरूपस्यैव जात्यादिभेदविशिष्टत्वेन भिन्नशब्दप्रयोगसम्भ-
वात् परिहृतम् । धर्मभूतजात्यादिषु भिन्नइति प्रयोगो भवन्मते व्यावृत्तिरूपे ब्रह्मणि व्यावृत्तशब्दवदौपचारिकः धर्मान्तर
राहित्येऽपि तद्योगकार्यव्यावृत्तिबुद्धिहेतुत्वात् ॥

धर्मपक्षेऽनवस्थाऽन्योन्याश्रयणेच्च परिहृते प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वात्तस्यैव स्वपरनिर्वाहकत्वाभ्युपगमाच्च ।
अविद्यायाः ब्रह्मणो भेदोऽस्ति नवा ? नाचेद्ब्रह्मणः जडत्वादिप्रसङ्गः । अस्तिचेत्सभेदः स्वरूपंवा धर्मोवेति विकल्पे दूषण
परिहारसाम्यं द्रष्टव्यम् । किंच स्वरूपधर्मविकल्पदूषणपरिहारा अभेदेऽपि तुल्याः । अभेदः स्वरूपंचेत् प्रतियोगिनिरपे-
क्षाभेदव्यवहारप्रसङ्गः **परमात्मना भवत्यभेदी—**

**घटध्वंसे घटाकाशो न भिन्नो नभसा यथा ।**

इत्यादिषु अभेदस्सप्रतियोगिकोह्यवसीयते । ब्रह्म अद्वितीयम् इत्यादिपदानां पर्यायत्वं स्यात् । धर्मश्चेत्सविशेषत्वं ततश्चा-
पसिद्धान्तइति ॥

## गूढार्थसङ्ग्रहः

नेदं कुमारिलोक्तदूषणपरिहारसमर्थं भवति कुमारिलेन निर्विकल्पकस्य सामान्यविशेषात्मकवस्तुग्राहित्वाङ्गीकारात् । प्रत्यक्ष
सूत्रे ‘ नहि तत्क्षणमप्यास्ते ’ इत्यत्र क्षणपदं न बौद्धसम्मतक्षणपरं ‘ पुरुषो लौकिको वा स्यात् योवाऽस्मिन्साधयिष्यते ।
विक्रिया ज्ञानरूपाऽस्य न नित्यत्वे विरोत्स्यते ’ इति परिणामवादस्यैव पूर्वमभिधानात् । ‘ बुद्धिजन्मनि—अनित्यता ।
इति दिङ्नागोक्तदूषणपरिहारार्थमेव श्लोकस्यास्य प्रवृत्तेः । आत्मवादे च अस्यार्थः विस्तरेण प्रतिपादितः । ‘ नहि
तत्क्षणमप्यास्ते ’ इत्येतद्विवरणकाशिकायां ‘ नित्यबुद्धिवादिनः निराकर्तुं बुद्धेरनतिचिरविनाशित्वमुक्तम् ’ इत्युक्तम् । ‘ बुद्धि
जन्मेतिचाप्याह जायमानप्रमाणताम् ’ इति श्लोकव्याख्याने न्यायरत्नाकरे–‘ यदि बुद्धेरर्थान्तरं जन्म तत् किं वैशेषिकोक्तः
कारणे कार्यसमवायः इति चेन्न ; तस्य नित्यत्वेऽनक्षाधीनत्वात् प्रत्यक्षत्वानुपपत्तेः । अथ नार्थान्तरं ततः पुनरुक्तम् अत
आह- बुद्धीति । कर्तृवचनोऽयं जन्मशब्दः बुद्धिसमानाधिकरणः जायमाना बुद्धिरित्यर्थः कीदृशी पुनः जननक्रिया यस्यां
कर्तृत्वं उपादानकारणदशाविशेषः, यदनन्तरं कार्यस्य सत्ता तस्यापि दशाविशेषस्य ततः प्राच्यवस्थैव, ततः प्रागपि तथेत्य
नादिरेषा आगन्तुककार्यकारणपरम्परा । न तु समवायो जन्म नापि तस्य नित्यत्वमिति, इत्युक्तम् । कुमारिलेन अनुवृत्तत्व-
व्यावृत्तत्वे सविकल्पकएव भासेते । वस्तुतः सामान्यविशेषात्मकं निर्विकल्पकविषयइति सिद्धान्तः कृतः । वैभाषिका-
दिभिरपि जात्यादिकल्पनाशून्यं धर्मिमात्रं निर्विकल्पके भासते तदेव प्रत्यक्षं प्रमा तस्य धर्मिणः वस्तुतो व्यावृत्तत्वेऽपि इतर
व्यावृत्तिः सविकल्पक एव भासते । सविकल्पकं च भ्रम एव इत्यङ्गीक्रियेत ॥ ॥

### श्रीभाष्यम्

**वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति । अपि च सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति**

### श्रुतप्रकाशिका

इत्थं विषयदुर्निरूपत्वपक्षे प्रतिक्षिप्ते भेदप्रतीत्यनभ्युपगमएव परेषांशरणमिति तं निराकरोति । **अपिचेत्यादिना** । प्रथमं प्रतिपत्तिविरोध उच्यते । **सन्मात्रेति** । यदिचेत्यादिना व्यवहारविरोधः । सर्वास्वित्यादिना शब्दविरोधः । नन्वेकत्र स्युर्यन्तएव सर्वे शब्दाः सर्वत्र प्रतिपत्तीनां सन्मात्रविषयत्वाभ्युपगमात्—नैवम् । घटे प्रतिपन्ने तत्र पटव्यवहारप्रसङ्ग-

### गूढार्थसंग्रहः

उक्तं च धर्मकीर्तिनाऽपि– 'तस्मात् विशेषविषया सर्वैवेन्द्रियजा मतिः' इति (प्रमाणवार्तिके प्रत्यक्षचिन्ता.२७) 'स्वलक्षणे च प्रत्यक्षं अविकल्पतया विना । विकल्पेन न सामान्यग्रहस्तस्मिंस्ततोऽनुमा ॥' (अनुमानचिन्ता.७५) इति 'स्वलक्षणेच प्रत्यक्षमविकल्पतया प्रवर्तते । सामान्यस्यतु ग्रहो विकल्पेन विना नभवति । ततः कारणात् तास्मिन् सामान्ये अनुमैवविकल्पिका । नाध्यक्षं विकल्पकम्' इति तद्विवरणम् । तत्वसङ्ग्रहेऽप्युक्तं शान्तरक्षितेन 'सजातीयविजातीयव्यावृत्तार्थग्रहान्मतः । विशिष्टविषयो बोधः न विशेषणसङ्गतेः ॥ (१२७१.श्लो) भेदो वैशिष्ट्यमुक्तं हिन विशेषणसङ्गतिः । भिन्नमित्यपि तद्वाचा नानुविद्धं प्रतीयते ॥ (१२७२) स्वभावापरनिश्शेषपदार्थव्यतिरेकिणि । गृहीते सति तस्मिंस्तु विकल्पो जायते तथा ॥ (१२७३)इति । स्वभावादपरे ये निश्शेषाः पदार्थाः तेभ्यो व्यतिरेकिणि व्यावृत्ते गृहीते सति असाधारणनीलाद्याकारप्रतिभासनात् पश्चात् भेदाध्यवसायी शब्दाकारानुस्मृतः भिन्नमित्यभिलपन्नुत्पद्यते विकल्पः' इति कमलशीलविवरणम् ॥

एवंच मतद्वयेऽपि धर्मिज्ञानानन्तरं व्यावृत्तत्वज्ञानाङ्गीकारेण एकज्ञानस्य वस्तुतो व्यवच्छिन्नविषयकत्वेऽपि व्यवच्छेदत्वेन व्यवच्छेदाविषयकत्वात्, 'नापि विधिपूर्वको व्यवच्छेदः । यतः–क्रमस्सङ्गच्छते युक्त्या नैकविज्ञानकर्मणोः । न सन्निहितजं तच्च तदन्यामर्शि जायते ॥' इति न मण्डनमिश्रोक्तदूषणावसरः पक्षद्वयेऽपि । सिद्धान्ते भेदस्य गोत्वादिधर्मरूपत्वाङ्गीकारेण गोत्वविषयकत्वे भेदविषयकत्वमपि निर्विकल्पकस्य वर्तत एव । किंचित्प्रतियोगिकत्वज्ञान एव प्रतियोगिज्ञानापेक्षेतिसिद्धान्तेऽपि 'एकविधिरेव अन्यव्यवच्छेदः' इत्युपक्रम्य 'नैकप्रतिनियमः अन्याभावनिश्चयानिमित्तं उपलब्धिलक्षणप्राप्तस्य इतरस्य च अविशेषेण प्रसङ्गात्' इत्याद्युक्तदूषणस्यापि नावसरः । गोत्वस्य गवेतरत्वेन गवेतरसामान्यव्यावृत्तिरूपत्वात् । अपि च सर्वप्रत्यात्मवेदनीयमेतत् अभेदोपादानो भेद इति । तथा हि–'आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना । अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् ॥ वस्तुमात्रविषयं प्रथममविकल्पकं प्रत्यक्षं तत्पूर्वास्तु विशेषबुद्धयो विकल्पानवगाहन्त इति सर्वप्रत्यात्मवेदनीयम् ॥ स्यादेतत् । विशिष्टरूपोपग्राह्येव प्रत्यक्षम् । स तु भेदः शब्देनासंस्पर्शात् न तथोपलक्ष्यते यथा विकल्पबुद्धौ तदयुक्तं विप्रतिषेधात् । नचोपलक्ष्यते प्रत्यक्षबुद्धौ विशेषः प्रकाशतेचेति विप्रतिषिद्धम् अतोऽतिसाहसमित्युच्यते' इत्युक्तिरप्यनादरणीया । अविकल्पकस्य विशेषानवगाहित्वानुभवः वैभाषिकानामेव, नतु तदतिरिक्तस्य कस्यापि वैदिकदार्शनिकस्येति पूर्वमेव निरूपितम् प्रत्यक्षस्य विशिष्टरूपोपग्राहित्वमपि प्रागेव साधितम् । न तथोपलक्ष्यतइत्यपि युज्यते विकल्पइव अनुवृत्तत्वव्यावृत्तत्वयोरभानात् ॥ अतः न मण्डनमिश्रोक्तदूषणावसरः ॥

## श्रीभाष्यम्

विशिष्टविषया प्रतिपत्तिर्विरुध्यते ।

## गूढार्थसंग्रहः

तदुक्तं संवित्सिद्धौ– ' यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः । ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः ॥
भेदेतरेतराभावधीवेगाग्रहणेन सः । स्वरूपमेव भावानां प्रत्यक्षेण परिस्फुरत् । भेदव्याहारहेतुस्स्यात् प्रतियोगिव्यपेक्षया ।
इति ॥ विशिष्टविषया प्रतिपत्तिर्विरुध्यत इति । घटोऽस्तीत्यभिलपकशब्देनैव प्रतीतिविषयव्यवस्था । अभिलापक-
शब्दे च कर्तरि लकारः । असधात्वर्थश्च सत्तेति सत्त्वतदाश्रययोः संसृष्टयोः प्रतीतौ भान एव अस्ति घट इत्यभिलपक-
शब्दः उपपद्यते । अतः ' अस्ति ब्रह्मेति चेद्वेद ' इति श्रुतौ ब्रह्मणः सत्ताकर्तृत्वमेव विवक्षितम् । जानातीत्यादौ मणिकार-
मत इव लकारस्साधुत्वार्थक इति सिध्याद्युक्तिः पूर्वमेव पर्यालोचिता । कालस्य षडिन्द्रियवेद्यत्वेन प्रत्यक्षादौ कालस्यापि
भानेन ततोऽपि विशिष्टविषयत्वं प्रत्यक्षप्रतीतेः । आगमेन ' अस्ति ब्रह्मेति ' प्रतीतिर्यथा तथैव घटोऽस्तीतिप्रत्य-
क्षप्रतीतिरिति सर्वेषामनुभवसिद्धोऽयमर्थः । एवं स्थिते ' अस्ति ब्रह्मेति ' श्रुतौ ब्रह्मशब्देनोपस्थितस्यार्थस्य अस्तीत्य-
नेनोपस्थितस्य सतश्च यथाऽभेदस्तात्विकः तथैव घटोऽस्तीति प्रत्यक्षेऽपि । ' अस्ति ब्रह्मेति ' इत्यत्र ' असन्नेव स भवति,
असद्ब्रह्मेति वेद चेत् ' इति पूर्ववाक्यानुसारेण असत्वविरोधिनी सत्तेति सिद्धान्तसिद्धाञ्जने उक्तम् ॥

एवमेव घटोऽस्तीत्यत्रापि असत्वविरोधिनी सत्तैव प्रत्यक्षे विषयः । एकेन सद्रूपेण ब्रह्मणैव निर्वाहे अनन्तपदार्था-
कल्पनप्रयुक्तलाघवमेतन्मतइत्याधुनीकोक्तिरप्यनादरणीया । एकस्यापि ब्रह्मणः परमार्थसतः शून्यवादिमतेऽनङ्गीकारेण
तन्मतएवातिलाघवात् । ' लब्धरूपे क्वचित्किंचित्तादृगेव निषिध्यत ' इति मण्डनोक्तिरप्यनुपादेया निषेध्यनिषेधाधिकरणयो-
रपामार्थ्येऽपि निषेधसम्भवात् सत्तात्रैविध्यवादिमते भूतले घटादिनिषेधवत्, भूतलघटयोर्व्यावहारिकत्वं तन्मते यथा तथैव
शून्यवादिभिरप्यङ्गीक्रियते । ततः फलमुखगौरवस्यादोषत्वेन प्रत्यक्षादिप्रमाणानुभवमूलकं गौरवं न दोषाय । एवं च
' अस्ति ब्रह्म ' इत्यागमतुल्यं घटोऽस्ति इति प्रत्यक्षं प्रमाणं सत्ताविशिष्टघटावगाह्येव । अखण्डार्थातिरिक्तस्थलएव अस्ती-
त्यादौ वर्तमानकालबोधः लकारार्थकर्तृबोधोऽपीति ब्रह्मानन्दसरस्वत्युक्तिरभिनिवेशमूलैव । परसम्मताखण्डार्थस्य सिद्धिरेव
न सम्भवतीति विचारावसरे इत्थमुक्तेः सर्वथाऽसम्भवात् ॥

अत्र ब्रह्मशब्दः स्वेतरयावदवधिकोत्कर्षवत्परः । एवं च ' अस्ति ब्रह्मेति चेद्वेद ' इत्यत्र सविशेषज्ञानमेव विवक्षि-
तम् । कठोपनिषदि ' अव्यक्तात्तु परःपुरुषः व्यापकोऽलिङ्ग एव च । यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ' (कठ.
६.८.) इति सर्वोत्कृष्टं पुरुषमभिधाय ' नैव वाचा नमनसा प्राप्तुं शक्यो नचक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथं तदुपल-
भ्यते ' इति अव्यक्तात्परस्यपुरुषस्य अस्तीति शब्दमन्तरा नोपलब्धिः इति व्यतिरेकमभिधाय ' अस्तीत्येवोपलब्धव्यः तत्त्व-
भावेनचोभयोः। अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति ' (कठ.६.१३) इति अन्वयः उक्तः। उभयोः व्याप्यव्यापकयोः
तत्त्वभावेन- पारमार्थ्येन पुरुषः अस्तीत्येवोपलब्धव्यः । एवं ज्ञानवत एव पारमार्थ्यं स्वच्छतया ज्ञायते । यद्वा उभयोः
व्याप्यव्यापकयोः परमार्थाभिप्रायेण अस्तीतिशब्देन पुरुषः उपलब्धव्यः । उभयोः परमार्थाभिप्रायसत्व एव पुरुषसाक्षा-
त्कारो भवति । नतु व्यापकपुरुषमात्रपरमार्थताऽभिप्रायेण उपलब्धुं शक्यते । एवं उपलब्धुरेव परमार्थभावः (परमार्थ
तात्पर्य) प्रसन्न भवति अकलुषं भवतीत्यर्थः । अत्र व्याप्यव्यापकयोरुभयोः पारमार्थ्यज्ञान एव पुरुषोपलब्धिरिति श्रुत्या
पुरुषशब्दव्युत्पत्तिमवलम्ब्यैव अर्थनिर्णयः कृतः । पुरुषशब्दश्च ' स वा एष सर्वासु पूर्षु पुरिशयः ' इति बृहदारण्यके

## गूढार्थसङ्ग्रहः

निरुक्त इति पूर्वमेवोक्तम् ॥ एवमभ्युपगम एव 'अव्यक्तात्तु परःपुरुषः' इति प्राक् पुरुषस्य सर्वावधिकोत्कर्षप्रतिपादनं सङ्गच्छते ॥

एवं उपसंहारे 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण' (कठ.६.१७) इत्युक्तिरपि सङ्गच्छते । अत्र परमात्मनः स्वशरीरभूतजीवव्यतिरेकः प्रतिपादितः । अस्याश्श्रुतेः उपबृंहणानि च 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' 'सर्वस्यचाहं हृदि सन्निविष्टः...' 'अतोऽस्मिं लोके वेदे च प्रथितः पुरुषोत्तमः' इत्यादिवचनानि । 'स्मृतेश्च' (१.२.६.) 'स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति 'ईश्वरः सर्वभूतानाम्' इत्याद्या' इति शङ्कराचार्यैरुक्तम् । एवं च 'अस्तीत्येवोपलब्धव्यस्तत्वभावेनचोभयोः' इति श्रुतेर्यथोक्तएवार्थः । तदेतत्सर्वमभिप्रेत्योक्तं यामुनमुनिभिः संविस्सिद्धौ 'तस्मादस्तीति संवित्तिर्जायमाना घटादिषु । तत्तत्पदार्थसंस्थानपारमार्थ्यावबोधिनी ॥ सजातीयविजातीयव्यवच्छेदनिबन्धनैः । स्वैस्स्वैर्व्यवस्थितैरूपैः पदार्थानां तु यास्थितिः । सा सत्ता न स्वतन्त्रान्या तत्राद्वैतकथाकुतः' इति ॥

प्रमाणानामज्ञातार्थज्ञापकत्वेन जडे आवरणकृत्याभावात् अज्ञातत्वासम्भवेन घटादिविषये प्रत्यक्षप्रामाण्यं नसम्भवति। सदनुभूत्योरैक्येन सति प्रामाण्यं सम्भवत्येव। इति कल्पनाऽपि नादरणीया। सदंशे चिदंशे आनन्दांशे नावरणम् अपि तु पूर्णानन्दांशएव, इति विवरणाद्युक्त्या सतोऽपि अनावृतत्वेन तद्विषये प्रत्यक्षस्य कथं प्रामाण्यसम्भवः । नव्वद्वैतसिद्धौ सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वं किंतु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव । तथा च चक्षुरादिजन्यवृत्त्या तदावरणभङ्गेसति सन् घटइत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात् इत्युक्तम् । 'सदात्मनेति...सत् भानानन्दांशानां मध्ये आनन्दांशेनैव ब्रह्म मूलाज्ञानेनावृतम् । पूर्णानन्दोऽपि न भातीति प्रत्ययात् सद्भानरूपे भातइति प्रत्ययाच्च । ननु तर्हि सद्भानांशयोरनावृतत्वात् घटाकारवृत्त्यभावकालेऽपि घटः सन् घटोभातीति प्रतीतिस्स्यात् तत्राह किंत्वित्यादि शक्त्यज्ञानेन मूलाज्ञानरूपावस्थाऽज्ञानेन' (प.वि) इति अत्र लघुचन्द्रिका। अतो नानुपपत्तिरितिचेत्; एकाज्ञानपक्षे सदंशेऽज्ञातत्वोपपादनासम्भवात् । ननु 'तथाच' इत्यादिसिद्धिग्रन्थस्य यथाश्रुतार्थे एकाज्ञानपक्षे उपपत्त्यसम्भवेऽपि लघुचन्द्रिकोक्तविवरणे नानुपपत्तिः । तथाहि—ननु एकाज्ञानपक्षे शक्त्यज्ञानास्वीकारेण मूलाज्ञानेनैव सद्भानांशाभ्यामावृतत्वं ब्रह्मणो वाच्यं तत्राह—तथाचेति । तथास्वीकारेऽपीत्यर्थः । मूलाज्ञानेनैव सद्भानात्मना ब्रह्मण आवृतत्वस्वीकारपक्षेपीति यावत् । अपिशब्दात् पूर्वकल्पसङ्ग्रहः। तदावरणेति। घटाद्यवच्छिन्नावरणेत्यर्थः। भङ्गे- अभिभवे । यद्येकमेव अज्ञानं तदा तद्विषयतायाः घटाद्याकारवृत्तिकाले घटाद्यवच्छेदेनाभिभवात् घटाद्यवच्छेदेन सद्भानांशयोर्व्यवहारः । तस्याभिभवस्तु तत्तदाकारवृत्त्यभाववैशिष्ट्यविघटनेन सन् घटो भातीत्यादिव्यवहारे प्रतिबन्धाक्षमत्वम् । तादृशव्यवहारं प्रति हि घटाद्याकारवृत्त्यभावविशिष्टाया एव मूलाज्ञानविषयतायाः प्रतिबन्धकत्वम् । यदि तु मूलाज्ञानस्यावस्थारूपाणि घटाद्यवच्छिन्नानि अनन्तानि अज्ञानानि स्वीक्रियन्ते तदा घटाद्याकारवृत्त्या तदुच्छेदेन तथा व्यवहार इति भावः' इति लघुचन्द्रिकायां विवरणात् इति चेत्; न । एवमपि पूर्णानन्दांश एवावरणमिति सिद्धान्तः कथं रक्षितः? शुक्त्यवच्छिन्नचितः घटाद्यवच्छेदेन सतश्च मूलाज्ञानेनावरणाङ्गीकारे शुक्तिप्रत्यक्षात्तदज्ञानं घटसाक्षात्काराद्घटाज्ञानं च नश्यतीति व्यवहारस्य कथमुपपत्तिः?

एतेन 'सदात्मनेति। सद्रूपेणेत्यर्थः। घटाद्यवच्छिन्नशक्त्यज्ञानेनेति । घटादिप्रपञ्चानुकूला शक्तिः यस्य तादृशमज्ञानं यत्र तेन पूर्णानन्दरूपेणेत्यर्थः । सद्रूपस्फुरणेऽपि पूर्णानन्दावरणादेव संसारदृष्ट्या पूर्णानन्दरूपेण मूलाज्ञानावृतत्वम् सद्रूपपूर्णानन्दरूपयोस्तु भेद आविद्यकइति भावः । अथवा सदात्मनेति घटाद्यवच्छिन्नसदात्मनेत्यर्थः । अतएव वक्ष्यति

### गूढार्थसंग्रहः

ब्रह्म घटाद्यवच्छेदेन योग्यमिति । अतएव पल्लवाज्ञानास्वीकारपक्षेऽपि मूलाज्ञानेन घटाद्याकारवृत्तिकाले घटाद्यवच्छिन्नसद्रू-
पानावरणात् तस्य प्रकाश इति भावः । घटाद्यवच्छिन्नेत्यादेरर्थस्तु पूर्ववत्' इति गुरुचन्द्रिकायां मूलविवरणक्लेशोऽपि
निरवकाशः ॥ चाक्षुषवृत्तिकाले घटं पश्यामीति प्रतीतेः ब्रह्म जानामीति प्रतीतिसमशीलायाः चाक्षुषवृत्त्यभावकाले घटं ना
जानामीति प्रतीतेः ब्रह्म न जानामीति प्रतीति समशीलायाश्च सन्मात्रग्राहिप्रत्यक्षवादे स्वरसतः उपपादनासम्भवात् ॥

एतेन 'घटादि द्वैतज्ञानस्यापि अद्वैतसन्मात्रांशे अज्ञाते प्रामाण्याभ्युपगमाच्च । ज्ञनाज्ञानयोस्समानाश्रयविषयत्वानि-
यमात् । जडेच प्रमाणप्रयोजनाभावेन अज्ञानानभ्युपगमात् तदवच्छिन्नचैतन्याज्ञानादेव तत्राप्यज्ञानव्यवहारोपपत्तेः ।
सर्वप्रमाणानांचाज्ञातज्ञापकत्वेनैव प्रामाण्यात् ।' इति सिद्धान्तबिन्दूक्तिः, 'ननु घटादेरज्ञातत्वाभावेऽपि घटं पश्यामीत्यादि
प्रतीत्या चाक्षुषादिविषयत्वसम्भवात्तदंशे प्रामाण्यं सम्भवति तत्राह—ज्ञानेत्यादि । तथाच चाक्षुषादिवृत्तेः समानविषयका
ज्ञाननिवर्तकत्वानुरोधेनाज्ञातचिद्विषयकत्वेऽपि घटादिविषयकत्वे मानाभावः । घटं पश्यामीति साक्षिधीस्तु घटावच्छिन्नचिद्वि-
षयकचाक्षुषादि विषयीकुर्वन्ती चाक्षुषादिवृत्तेः विषयतावच्छेदकत्वेन घटादिकं भासयतीति भावः । ननु घटं न जाना-
मीति साक्षिधिया घटादेरप्यज्ञानविषयत्वावगाहनात् चाक्षुषादिवृत्तिविषयत्वेनैव घटादिकं गृह्यते साक्षिणा, नत्ववच्छेदक-
त्वेन तत्राह—जडेचेत्यादि । अज्ञानेति अज्ञानविषयत्वेत्यर्थः । घटाद्यवच्छेदेन चितस्स्फुरणवारणाय, घटाद्यवच्छेदेन चिति
अज्ञानविषयताऽवश्यकल्प्या, अतस्तदवच्छेदकत्वेनैव घटादीनामस्फुरणोपपत्तौ तेष्वज्ञानविषयतान्तरकल्पने गौरवम्' इति
तद्विवरणन्यायरत्नावल्युक्तिरपि निरवकाशा ॥

किंच इदं रूप्यमित्यत्र इदमितिवत् 'सन् घटः इत्यत्रापि सदित्याधिष्ठानभूतं ब्रह्मैव भासते ।' इति अद्वैतसिद्धा-
वुक्तम् । तत्र इदं रूप्यमित्यत्र इदंशब्देन यत्किंचिदनवच्छिन्नं सत् विवक्षितं आहोस्विदवच्छिन्नं वा । आद्ये पुरो वर्ति-
शुक्त्यादिकं निर्दिश्य इदं रूप्यमिति व्यवहारानुपपत्तिः । द्वितीये किंचिदवच्छिन्नचितएवाधिष्ठानतया सन् घटः इत्यत्र
सच्छब्देन अनवच्छिन्नचितएवप्रतीत्या तस्यैवोपादानस्वरूपमधिष्ठानत्वं वाच्यमिति घटावच्छिन्नचितः अधिष्ठानत्वाभावेन
तस्यापरोक्षे भानं कथम्? अधिष्ठानत्वस्योपादानाज्ञानविषयत्वरूपत्वात् । (गुचं) अनवच्छिन्नचिद्विषयकवृत्तिदशायां घटव्यव-
हारोऽपि कथम्? शुक्त्यवच्छिन्नचिद्विषयकवृत्त्या शुक्त्यवच्छिन्नचिद्विषयकाज्ञानतत्कार्ययोर्नाशवत् अनवच्छिन्नसद्विषयकवृत्त्या
अनवच्छिन्नसद्विषयकाज्ञानतत्कार्यघटादेः नाशस्यैवावश्यकत्वात् । **विशिष्टविषया प्रतीतिर्विरुध्यत** इति सूक्तौ विशिष्ट-
विषयकत्वमनङ्गीकृत्य अधिष्ठानविषयकत्वमात्राङ्गीकारे अधिष्ठानसाक्षात्कारेण शुक्तिरूप्यवत् अध्यस्तघटादेरपि निवृत्तिप्रस-
ङ्गः इत्यपि विवक्षितम् । एवं तत्त्वमस्यादिवाक्यात् प्रपञ्चबाधकाखण्डार्थबोधवैयर्थ्यमप्यभिप्रेतम् । **निर्विशेषसन्मात्रस्य
प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेन अनुवादकत्वमेव स्यात्** इत्युत्तरसूक्तौ 'तत्त्वमसि' इत्यादिश्रुतेः
अज्ञातज्ञापकत्वाभावप्रसङ्गस्य वक्ष्यमाणत्वात् ॥

यद्यपि गुरुचन्द्रिकायाम् 'किंच सदानन्दयोर्मास्तूक्तभेदः तथाऽपि न क्षतिः । सद्रूपस्य घटादिविशेषणतया व्यव-
हारंप्रति सद्रूपमूलाज्ञानं नविरोधि घटादिवृत्तिशून्यकाले घटादिव्यवहारस्य विरोधिपल्लवाज्ञानसत्त्वेन तद्विशेषणतया सद्रूप
भानासम्भवात् पल्लवाज्ञानावृतं सद्रूपमित्युपचर्यतइत्यस्मिन्नर्थे प्रकृतग्रन्थतात्पर्यात् आनन्दरूपमपि विशेषणतया व्यवह्रि-
यतएव । 'अस्तिभाति प्रियं रूपं नामचेत्यंशपञ्चकम् ।' इतिव्यवह्रियमाणस्य पञ्चांशत्वोक्तेः घटोस्तीत्यादिवत् घटः
प्रेयानित्यादिप्रतीतेः । नच सद्रूपस्य घटादिवृत्तिविषयत्वे मूलाज्ञाननिवृत्तिः स्यादिति वाच्यम्; आपातश्रौतज्ञानस्येव
घटादिवृत्तेरपि तदनिवर्तकत्वात्, सामग्रीविशेषजन्यज्ञानस्यैव विजातीयत्वेन तन्निवर्तकत्वस्योक्तत्वात् । नच विशे-

## गूढार्थसंग्रहः

षणतया व्यवहारस्यावरणाप्रतिरुद्धत्वे घटादिवृत्तिविषयत्वं सद्रूपे व्यर्थमुक्तमिति वाच्यम् ; सदुपरक्तघटादिसंस्कारार्थं तदुक्तेः, सम्भवप्राचुर्यमात्रेण तस्योक्तत्वाच्च ' इत्युक्तम् । (परिच्छिन्नत्वविचारे)

अद्वैतसिद्धावपि—ब्रह्मणः चक्षुरादिजन्यज्ञानविषयत्वं परिच्छिन्नत्वविचारे उक्तम् । एवं प्रत्यक्षबलखण्डनावसरे ' इदं रूप्यमित्यत्र इदमितिवत् सन् घटइत्यत्र सदिति अधिष्ठानभूतं ब्रह्मैव भासत ' इति तत्रैवोक्तम् । अज्ञानविषयनिरूपणेऽपि ' किंच त्वन्मते घटाद्यपरोक्षवृत्तेरपि घटाद्यवच्छिन्नचिद्विषयत्वेन चित्यज्ञानासम्भवः । नच विशिष्टचैतन्यरूपजीवविषया वा घटावच्छिन्नचैतन्यविषया वा वृत्तिः अज्ञानविषयीभूतकेवलचिदविषयत्वात् अज्ञानविरोधिनी न स्यादिति ' वाच्यम् । दण्डी चैत्र इति वृत्त्या चैत्राज्ञानानभिभवापातात् ॥ नच श्रवणादिजन्यैव वृत्तिरज्ञानविरोधिनी भ्रमकालीनापरोक्षज्ञानानधिकविषयकज्ञानेन कारणान्तरजन्येनापि अज्ञाननिवृत्तावतिप्रसङ्गात् । अनधिकविषयत्वे श्रवणादिवैयर्थ्यात् सत्यत्वापाताच्चेतिचेन्न यावन्तिज्ञानानि तावन्त्यज्ञानानीतिमते अज्ञानविशेषः एकाज्ञानपक्षेऽवस्थाविशेषः शक्तिविशेषोवा अविद्यागतः विशिष्टगोचरवृत्त्या निवर्ततएव । प्रपञ्चनिदानभूतं तत्त्वमस्यादिवाक्यजन्याखण्डार्थगोचरवृत्तिनिवर्त्यमज्ञानं परमवशिष्यते, भेदभ्रमस्यानुभूयमानत्वात् । यथाऽयमितिज्ञानात्तत्राज्ञाने निवृत्तेऽपि सोऽयमित्यभेदगोचरवृत्तिविवर्त्याज्ञानमवशिष्यते । तथा च विषयकृतविशेषाभावेऽपि कारणविशेषजन्यत्वेन विशेषेण निवर्तकत्वे श्रवणवैयर्थ्यं सत्यताऽऽपत्तिश्च निरस्ता । अन्यथा सोऽयमित्यत्राप्यगतेः इत्युक्तम् ॥

अत्र गुरुचन्द्रिका— ' सोऽयमितिवाक्यजज्ञानं तत्तोपहिते इदन्तोपहिततादात्म्यविषयकत्वेन तादृशविषयकाज्ञाननिवर्तकम्, अयमितिज्ञानंतु नोक्तविषयकम्, अतो न तथेत्याशङ्क्य अखण्डार्थत्वेनोक्तवाक्यस्वीकर्तृमतेऽयमिति ज्ञानसमानविषयकमेव सोऽयमितिवाक्यजज्ञानमित्याशयेनाह—तथाचेति । नचोक्तमतमेवाप्रामाणिकमिति वाच्यम् । एकस्यां शुद्धव्यक्तौ भेदकल्पकाज्ञानस्य तत्तेदंत्वविषयकत्वे मानाभावेन व्यक्तिस्वरूपाखण्डैक्यविषयकत्वेन तन्निवर्तकज्ञानस्यापि तदौचित्यात् । नचोक्तभेदस्य तत्तेदंत्वोपहितप्रतियोग्यनुयोगिकत्वात्तज्जनकाज्ञानमप्युपाहितयोरैक्याविषयकम्, नतु व्यक्तिमात्ररूपाखण्डैक्यविषयकमिति वाच्यम् ; उपहितयोर्हि भेदसहिष्णु तादात्म्यमपि नास्ति दूरे भेदासहिष्ण्वैक्यम् । नहि घटाकाशं पटाकाशमिति तादात्म्यप्रमा, किंतु घटाकाशमाकाशमिति । उक्ततादात्म्यस्वीकारेऽपि तस्य भेदाविरोधित्वेन न भेदजनकाज्ञानविषयत्वम् । नह्यत्यन्ताभेदे तादात्म्यादिसंसर्गप्रमा । घटो घटः तद्व्यक्तिस्तद्व्यक्तिरिति संसर्गबुद्ध्यननुभवात् । तथाच उक्तभेदः शुद्धव्यक्त्यनुयोगिप्रतियोगिकः । नायं स इत्याकारस्तु तत्तेदन्त्वयोरुपलक्षणत्वमात्रेण नतु भेदधीविषयत्वेन । नचैवं प्रतियोगितानुयोगिताऽवच्छेदकराहित्येन भेदधीरेव न सम्भवतीति वाच्यम् । प्रतियोग्यंशेह्यप्रकारस्य न प्रतियोगिताऽवच्छेदकत्वेन भानम् । तथाच प्रतियोग्यंश इव प्रतियोगितासबन्धांशेऽप्यवच्छेदकस्योपलक्षणत्वम् । नतु तदवच्छिन्नत्वेन प्रतियोगिताभानम् । अत एव शुद्धब्रह्मण्यानन्दचिद्रूपभेदः काल्पितंस्सङ्गच्छते । एवंच शुद्धव्यक्तिरूपैक्यविषयकाज्ञाननाशकमुक्तवाक्यजज्ञानमुक्तविषयकमेव इति सामग्रीविशेषजन्यत्वमज्ञानविशेषनाशकत्वे प्रयोजकम् । नच गौरवमिति वाच्म् । नह्युक्तजन्यत्वेन नाशकता किंतु शक्तिविशेषेणेत्याशयेनाह— कारणेति । चैत्रो ब्रह्मेतिवाक्यजबुद्ध्याऽज्ञाननिवृत्तेः शक्तिविशेषेण मूलाज्ञाननाशकत्वावश्यकत्वात् कारणविशेषादिनिवेशे गौरवंचेति भावः । सत्यताऽऽपत्तिश्चेति । शक्तिविशेषतो नाशकत्वस्वीकारेऽपि प्रमात्वेन सामान्यतो नाशकत्वस्यापि स्वीकारादधिष्ठानप्रमासामान्यनिवर्त्यत्वयोग्यत्वस्य प्रपञ्चेऽनपायान्नसत्यताऽऽपत्तिरिति भावः । विशेषनिवर्तकत्वेऽपि शक्तिविशेषानादरे दोषमाह अन्यथेति । अगतेरिति । तत्त्वेदंत्वोपहितयोस्तादात्म्यस्योक्तरीत्याऽधिष्ठानत्वासम्भवात् तत्प्रमात्वेन नाशकत्वे गौरवाच्च शक्तिविशेषेणैव विशेषतो नाशकत्वं युक्तमिति भावः ' इति ॥

## गूढार्थसंग्रहः

तथाऽपि अखण्डार्थत्वाङ्गीकर्तृमते सोऽयमिति वाक्यस्य अज्ञातार्थज्ञापकत्वमेव न सम्भवति । दण्डी कुण्डली इत्यादौ उपहितान्वयबोधः न नैयायिकादिसम्मतः । विशिष्टान्वयबोधोऽपि न सम्मतः । स्वान्वितान्वयिनि विशेषणस्याभानात् । किंतूपलक्षितान्वयबोधएव उपलक्षणस्य प्रकारतया भानं वर्ततएव । दण्डतदाश्रययोस्सम्बन्धे भासमाने प्रतियोगित्वेन दण्डस्य प्रकारत्वसम्भवात् । एवं सोऽयमित्यत्र उपलक्षितान्वयबोधएव नतु विशिष्टान्वयबोधः । येन तत्तेदंत्वयोरपि परस्परमन्वयप्रसङ्गेन बाधस्स्यात् । तत्त्वेदंत्वयोरपि प्रकारत्वमेव । तत्ता पूर्वदृष्टप्रकारः । सच स्थलभेदेन बहुविधः । देश काल स्थौल्यकार्श्यवस्त्रभूषणादिविशिष्टतत्तद्देह ज्ञानागुणादिरूपः । तत्सम्बन्धः पूर्वं धर्मिणि यो दृष्टस्स एव तत्तासम्बन्धः इदानीमपि स्मृतिविषयो भवति । स्मृतिप्रत्यक्षसामग्रीसमवधाने प्रत्यभिज्ञानं सर्वसम्मतम् । तच्च ज्ञानद्वयमिति, एकं विलक्षणज्ञानमिति च मतभेदः । पूर्वदृष्टोक्तप्रकारसम्बद्धस्यैव सोऽयमित्यत्र तच्छब्देनाभिलापः । एवं च पूर्वदृष्टप्रकारसम्बद्धस्य सोऽयमित्यत्र भानस्य सर्वसम्मततया भासमानवैशिष्ट्यप्रतियोगित्वेन तत्तादेः प्रकारत्वं सम्भवति । तादिदंशब्दार्थयोर्धर्मिणोरेवाभेदस्सम्बन्धः ॥

एतेन ' तत्तेदंत्वयोरपि न प्रकारता ; भासमानाभेदवैशिष्ट्यप्रतियोगित्वाभावात् । अत एव न तस्यास्तत्तेदंतोल्लेखिता । तदभिलापे तु निरन्तरोत्पन्नाभिज्ञाद्वयादेव तथोल्लिखव्यवहारात् । सर्वत्र निर्विकल्पकाभिलाप इयं गतिः । नच अभिज्ञाया अविशेषः । सप्रकारकत्वनिष्प्रकारकत्वाभ्यामेव विशेषात् । फलवैलक्षण्यं तु उक्तमेव । अत एव तत्तोपलक्षितप्रतियोगिकभेदरहिते इदंत्वोपलक्षितदेवदत्तस्वरूपे तात्पर्यात् यथाज्ञानमुपदेशोऽप्युपपद्यते ' इति अद्वैतसिद्ध्युक्तिः, (अखण्डार्थत्वोपपत्तौ) ' भासमानाभेदरूपवैशिष्ट्येति । तत्तेदंत्वयोः संसर्गस्य भासमानतया अननुभवात् अखण्डाभेदरूपं वैशिष्ट्यं भासमानतया वाच्यम् । तत्प्रतियोगित्वं च न तत्तेदंत्वयोरित्यर्थः । यत्तु परिणम्यमानस्य देवदत्तादेरुत्तरकालोपलक्षितस्य न पूर्वकालोपलक्षितस्वरूपेणात्यन्ताभेद इति ' तत्तुच्छम् । यावत्कालमध्ये एकएव परिणामस्तावत्कालमध्ये तत्तेदंत्वयोस्सम्भवात् । अतएव—उक्तक्रमेण तत्तेदंत्वयोः प्रकारत्वासम्भवात् विशेष्यत्वस्यचाननुभवात् । तस्याः प्रत्यभिज्ञायाः न तत्तेदंत्वोल्लेखिता—तत्तेदंत्वविषयकत्वसामान्याभावः तदभिलापे प्रत्यभिज्ञाभिलापे तथोल्लिखव्यवहारात्—तत्तेदंताबोधकशब्द प्रयोगात् । तथा च यदुपलक्षितं यत्र ज्ञाने विषयः तद्बोधकशब्देनापि तदभिलप्यत इति भावः । तत्र तदिदंशब्दरूपाभिलापे तत्तेदंत्वोपलक्षिते व्यक्तिमात्रे लक्षणावश्यिकी, अन्यथा अभिलप्यज्ञानेन तदभिलापसमानविषयत्वव्याघातादित्याशयेनाह—तत्रेति एवं च तत्तेदंत्वाभ्यां जानामीत्यनुव्यवसायोऽपि व्याख्यातः । तत्रापि तयोरुपलक्षणयोरभिलापात् । सर्वत्र ' यएवाहं वेदाहंब्रह्मास्मि ' इति ' आत्मानमेवावेदहं ब्रह्मास्मीति, ' आत्मानंचेद्विजानीयादयमस्मि ' इत्यादिवेदे सोऽयमिति लोके च। सप्रकारकत्वेति अभिज्ञाप्रत्यभिज्ञयोरित्यादिः ।' इति ' धर्मस्य धर्मिणो वा उपस्थितिद्वारा स्वविषयकं स्वाश्रयस्य यत् ज्ञानं येन जन्यते तस्मिन् स्वाश्रयस्य ज्ञाने तस्योपलक्षणत्वमित्यादि ' इति च लघुचन्द्रिकोक्तिश्चानुपादेया । स्मृतावेव तच्छब्दोल्लेखस्सर्वसम्मतः । स्मृतिप्रत्यक्षप्रयोजकसामग्रीद्वयसमवधाने प्रत्यभिज्ञेत्यपि सर्वसम्मतम् । पूर्वदृष्टप्रकारवतः तच्छब्दोल्लेखः प्रत्यभिज्ञायामपि ॥

एवं च प्रत्यभिज्ञायां तत्तेदंतयोः प्रकारतया भानमपि सर्वसम्मतम् । अभिज्ञास्थले तच्छब्दोल्लेखः न कस्यचिद्दार्शनिकस्य सम्मतः । अतएव वेदान्तपरिभाषाव्याख्याने सोऽयमिति प्रत्यभिज्ञाप्रत्यक्षे धर्मस्य सन्निकर्षबलात् भानमङ्गीकृतं रामकृष्णदीक्षितैः । ' एवं च प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति सोयमिति । ' इति विवरणकारैरुक्त्या सोऽयमिति वाक्यजन्यबोधेऽपि तत्तादेः उपलक्षणस्य प्रकारत्वं सर्वसम्मतमवश्यमभ्युपगन्तव्यम् । ' स्वविशेष्यान्विते यत्र

## गूढार्थसङ्ग्रहः

यदन्वेति तदंशे तद्विशेषणम्' इति लघुचन्द्रिकोक्तिस्सर्वसम्मता। एतत्प्रतिकोटिभूतमुपलक्षणत्वमपि स्वविशेष्यान्विते अनन्वितत्वे सति स्वविशेष्यान्वितत्वम्। प्रथमस्थले विशिष्टान्वयबोधः द्वितीयस्थले उपलक्षितान्वयबोधः। काकवदित्यादौ काकशब्देनोपस्थितोत्तृणत्वस्य बोधः कदाचिदविद्यमानस्यैवोपलक्षणत्वम् इति रीतिः अन्या। सर्वदा विद्यमानत्वेऽपि उपलक्षणत्वस्य विशेषणत्वप्रतिकोटितया स्वविशेष्यान्विते अनन्वितत्वमात्रेण उपलक्षणत्वेन व्यवहारः तस्यापि प्रकारत्वमेव। 'धनिकमानय, सुवस्त्रमानय' इत्यादौ धनस्यानयनानान्वितत्वेन उपलक्षणत्वम्, वस्त्रस्यानयनान्वितत्वेन विशेषणत्वम्। उभयत्रापि धनवस्त्रयोः प्रकारत्वमविशिष्टमेव। विशेषणत्वप्रतिकोटिभूतमुपलक्षणत्वं कदाचिदविद्यमानस्यैवेति न नियमः। लघुचन्द्रिकायां तत्तादिकमुपलक्षणमेव। नानाव्यक्तिगतस्योपलक्षणस्य धर्मान्तरोपस्थापकत्वनियमेऽपि एकव्यक्तिगतस्य तदभावात्। इति काकवैलक्षण्यं तत्तारूपोपलक्षणस्याभ्युपगतम्॥

एवं च 'काकवदित्यत्राप्युपलक्षणस्याप्रकारत्वात्। किंतु स्वरूपातिरिक्तधर्मस्य तत्रोपलक्षणत्वेन सप्रकारकत्वम्' (अ.सि.मि.श्रु.उ) इति। 'धर्मान्तरस्य यदुपलक्षणं तस्माद्व्यावृत्ताकारत्वे सप्रकारतैव। यदि स्वरूपोपलक्षणात् व्यावृत्ताकारता तदा निष्प्रकारतैव।' उपलक्षणस्य तत्राप्रवेशात्। 'स्वस्य च स्वस्मिन् अप्रकारत्वात्' (अ.सि.मि.श्रु.उ) इति सप्रकारकत्वनिष्प्रकारकत्वव्यवस्था कथं घटते? धर्मान्तरस्योपलक्षणत्वस्थलएव व्यावृत्ताकारता। नत्वन्यत्रेति लोके अनुभवासिद्धोऽयमर्थः। एवं स्थिते धर्मान्तरस्योपलक्षणत्वं विहायापि तत्तादेरुपलक्षणत्वमङ्गीकृत्य उपलक्षणत्वशरीरे स्वाविषयकत्वं निवेश्य धर्मस्य धर्मिणोवा उपस्थितिद्वारा स्वाविषयकं स्वाश्रयस्य यज्ज्ञानं येन जन्यते तस्मिन् स्वाश्रयस्य ज्ञाने तस्योपलक्षणत्वमिति परिष्करणं कथं घटते? विशेषणत्वं पूर्ववत्परिष्कृत्य तत्प्रतिकोटिभूतमुपलक्षणत्वं स्वविशेष्यान्विते अनन्वयित्वेन स्वविशेष्यान्वयिनः नैयायिकादिसम्मतं कथं परित्यज्यते? काकवदित्यादौ काकस्याप्रकारत्वेऽपि उत्तृणत्वस्य प्रकारत्वं वर्तत एव। अतः यस्य यद्वाचकपदोपस्थापितस्यवा प्रकारत्वं यस्मिन् ज्ञाने नास्ति तस्य तत्रोपलक्षणत्वमपि नास्ति व्यावृत्ताकारत्वेन ज्ञानस्य भ्रमनिवर्तकत्वात्। भ्रमनिवर्तकज्ञानस्य सप्रकारत्वनियमात्। व्यावृत्ताकारताहि द्वेधा भवति। विशेषणादुपलक्षणाच्च। आद्ये सप्रकारकत्वनियमः। द्वितीयेऽपि धर्मान्तरस्य यदुपलक्षणं तस्मात् व्यावृत्ताकारत्वे सप्रकारतैव। इति अद्वैतसिद्धि (भा.बा.उ) वचनं युक्तम्। यदितु स्वरूपोपलक्षणात् व्यावृत्ताकारता तदा निष्प्रकारतैव, इति तदुक्तिस्तु नैयायिकाद्यसम्मतत्वेन अनुभवविरुद्धत्वेनचानुपादेया। अतः तत्तादेः भासमानवैशिष्ट्यप्रतियोगितया प्रकारत्वमप्रकम्प्यम्। अतएव स्वविशेष्यान्वितानन्वयि स्वविशेष्यान्वितं उपलक्षणमिति हि व्यवहारस्तान्त्रिकाणाम्॥

अतएव गोत्वेनोपलक्षितं व्यक्तिस्वरूपं गोपदशक्यं धेनुपदशक्यवदित्याशंक्य गोत्वस्य व्यक्तिबोधे भानावश्यकत्वात् निराकृतं मणौ शक्तिवादे। उक्तं च तत्र 'गोत्वविशिष्टे एव कार्यान्वयात् गोत्वं विशेषणं नोपलक्षणम्। तदन्येन कार्यान्वये उपलक्षणम् यथा 'अयं वासस्वीदेवदत्तपदवाच्यः इत्यत्र वासः तस्माद्विशेषणशब्दव्यवहार्यभिन्ने उपलक्षणशब्दप्रयोगात्' इति गुरुचन्द्रिकोक्तिः भाविबाधोद्धारे सङ्गच्छते। गोत्वेति गां पश्येत्यादौ गोत्वविशिष्टे दर्शनाद्यन्वयादित्यर्थः। कार्यान्वयि विशेषणं तदनन्वयि उपलक्षणमिति लक्षणानुसारेणेदम् उपलक्षणमुदाहरति यथेति। वाससि तत्पदवाच्यत्वानन्वयेन तस्योपलक्षणत्वमित्यर्थः' इति आलोकटीका (मणिपङ्क्तिः) वासस्वी देवदत्तशब्दवाच्यः इत्यत्र उपलक्षणस्यापि वाससः धर्म्यंशे प्रकारत्वं वर्ततएव। एवं प्रत्यक्षखण्डमणावपि निर्विकल्पकवादे 'यद्वा विशेष्यान्वयिना यस्य अवश्यमन्वयः तदवच्छेदकं विशेषणं तदन्यदुपलक्षणमिति तत्र उपलक्ष्यविशेष्यमात्रान्वयात्। यद्व्यावर्तकं विशेष्यान्वयिना अन्वीयते तद्विशेषणं तदन्यदुपलक्षणं इति वा' इत्युक्तम्। अतः विशेष्यान्वितानन्वयित्वेन तत्तादेरुपलक्षणस्य भासमानवैशिष्ट्यप्रतियो-

## गूढार्थसंग्रहः

गित्वेन प्रकारत्वमेव तान्त्रिकसम्मतमेषितव्यम् । अनुभवे कालो धर्मान्तरं वा यो वर्तमनत्वेन विषयः स एव स्मरणस्य अनुभवस्मरणयोरेकविषयत्वेऽपि स्मरणे तत्र तच्छब्दप्रयोगः । संस्काराजन्यज्ञानस्यैव तच्छब्दप्रयोगहेतुत्वात् । अत एव प्रत्यभिज्ञाने तत्र तच्छब्दप्रयोगः प्रत्यक्षानुभवे तत्रैवेदं शब्दप्रयोगः । नतु विषयकृतः अनुभवस्मरणयोर्विशेषः । अत एव अयं घटः इत्यनुभवात् अयं घटः इति न स्मरणं स घटः इति स्मरणकारणं स घट इति नानुभवः । यद्वा अयं घटः इत्यत्र यद्धर्मवैशिष्ट्यं भासते तस्य अतीतत्वं तत्ता । तद्वैशिष्ट्यमननुभूतमपि स्मृतिविषयः । इदन्ताविशिष्टगोचरसंस्काराकथं तत्ता स्मृतिरितिचेत् न । स घटइति स्मृतिं प्रति अनुभवस्य हेतुत्वनिर्वाहकतया संस्कारस्य तथैव कल्पनात् । अयं घट इति स्मृतेः स घटः इति अनुभवस्यादर्शनाच्च ।' इति प्रत्यक्षमणौ सविकल्पकवादे प्रत्यभिज्ञायाः सविकल्पकत्वमेवोक्तम् । एवं पक्षद्वयेऽपि भासमानवैशिष्ट्यप्रतियोगित्वेन तत्तायाः प्रकारत्वमेवोक्तम् । एतत्सर्वमद्वैतसिद्धिकृतां विरुध्यते । अभिज्ञास्थले तच्छब्दोल्लेखः प्रत्यभिज्ञायां तत्तायाः अप्रकारत्वंचेत्युभयं अनुभवविरुद्धमित्येतेन सिद्धम् ॥

एतेन 'तथाचोक्तभेदः शुद्धव्यक्तिप्रतियोग्यनुयोगिकः । नायं स इत्याकारस्तु तत्तेदन्तयोरुपलक्षणत्वमात्रेण नतु भेद धीविषयत्वेन । इत्यादिगुरुचन्द्रिकोक्तिरपि (अ.वि.नि) अनुपादेया । प्रतियोग्यंशे प्रकारीभूतधर्मस्य प्रतियोगितावच्छेदकस्याभाने भेदधिय एवासम्भवात् । अतएवाद्वैतरत्नरक्षणे अभावस्य सविकल्पकवेद्यत्वत्यागे अपसिद्धान्तापत्तेः । निर्विकल्पकैकवेद्यस्यच व्यवहारानङ्गत्वादित्युक्तं सङ्गच्छते । अभावस्य सविकल्पकवेद्यत्वमित्यत्र प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्यमर्यादां नातिवर्तत इति नैयायिकसिद्धान्तोऽभिप्रेतः । एवंच नायं स इति भेदबुद्धौ तत्तेदंतयोःप्रकारतया अभाने तत्र भेदबुद्धित्वमेव न सर्वसम्मतम् अनुभवविरुद्धंच । अतः विशेषणत्वप्रतिकोटिभूतस्य सोऽयमिति प्रत्यभिज्ञानविषयीभूत तत्तादेरुपलक्षणस्य अप्रकारत्वं सोऽयमितिप्रत्यभिज्ञायाः निर्विकल्पकत्वं तादृशनिर्विकल्पकस्य व्यवहाराङ्गत्वं अभिज्ञाद्वयसमानविषयकत्वं अभिज्ञायाः तत्तोल्लेखित्वं चेत्यादिकं कस्यापि दार्शनिकस्यासम्मतमनुभवविरुद्धं सिद्धिकारादिभिः परिकल्पितमिति तद्दृष्टान्तेन 'तत्त्वमसीति' वाक्यजन्यबोधस्य 'सन् घटः, घटोऽस्ति' इति प्रत्यक्षसमानविषयकस्यापि भेदभ्रमनिवर्तकत्वेन अज्ञाताज्ञापकवाक्यजन्यस्यापि शक्तिविशेषविशिष्टतया मूलाज्ञाननिवर्तकत्वमित्याद्युक्तिरनुपादेया ॥

**भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात् तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः** इति लघुसिद्धान्तोक्तन्यायेन सन् घट इत्यादिप्रतीतेरपीरिमितकालोपचितत्वेन अत्रैवाज्ञाननाशकशक्तिकल्पनमुचितम् तत्त्वमसीति वाक्यजन्यबोधसमशालित्वात् । उपलक्षितव्यक्तिप्रतियोगिकभेदप्रतीतेः परसम्मतायाः सोऽयमित्यादौ कस्याप्यसम्मतत्वेन तद्दृष्टान्तेन तत्त्वमसीत्यत्र उपलताक्षिभेदभ्रमनिरासकत्वस्य स्थापनासम्भवेन 'तत्त्वमसीति' शब्दादपरोक्षस्य दार्शनिकासम्मतत्वेन 'सन् घटः' इत्यादेः प्रत्यक्षत्वस्य सर्वसम्मततया च ततोऽपि सन् घटः इतिप्रत्यक्षे शक्तिविशेषकल्पनस्यैव न्याय्यत्वात् । अतः 'घटोऽस्ति' इत्यादिप्रत्यक्षस्य सन्मात्रग्राहित्वेऽज्ञाननाशकत्वमपिस्यादिति घटादेरपि नाशेन घटोऽस्तीति व्यवहारएव न सम्भवति ॥

किंच इदं रूप्यमितिवत् 'घटोस्ति' इत्यत्र अधिष्ठानस्यैव प्रत्यक्षविषयत्वं यदुक्तं तत्र शुद्धसतएवाधिष्ठानत्वं वाच्यम् । सत्तायाः उपहितवृत्तित्वं उपहिततादात्म्यमेव शुद्धे इति प्रागुदाहृत चन्द्रिकाद्वयवाक्येषु स्पष्टम् । एवं च 'घटोऽस्ति, सन् घटः' इत्यादौ उपहितस्यैव विषयत्वं न्याय्यम् । तस्य च मिथ्यात्वेन अधिष्ठानत्वं कथम् ? एवं ब्रह्मणः सर्वाधिष्ठानतया तद्रूपसत्तायाः सर्वानुस्यूतत्वेन जातित्वव्यपदेशात् कल्पितधर्मत्वमादाय ब्रह्मव्यक्तिकत्वाच्च । तच्च सत्त्वं

## गूढार्थसङ्ग्रहः

त्रिकालाबाध्यत्वमेवेति न तस्य श्रौतत्वहानिः तस्यानृतं प्रत्यधिष्ठानत्वेऽपि अनृताश्रितत्वाभावेन तद्व्यावर्तकत्वसम्भवात्। आनन्दत्वादिकल्पितजातिसाहित्येन लक्षणोक्तिःपररीत्या । नच धर्मिसमानसत्ताकभेदं विना औपाधिकभेदमात्रेण आकाशत्वादेरिव ज्ञानत्वादेरपि जातित्वायोगः इति वाच्यम्। उपहितवृत्तित्वेऽपि उपधेयवृत्तित्वानपायात्। तदुक्तं सत्यत्वादिशबलब्रह्मवाचिनां सत्यादिपदानां शुद्धे ब्रह्मणि लक्षणेति । नच अनृतस्वरूपे शबले सत्यत्वायोगः, योगे वा ततो नानृतव्यावृत्तिरिति वाच्यम्। शबले सत्यता एवैव, यत् परमार्थमसत्येन प्रतीयमाने तस्मिन् संगतिग्रहः। तदुक्तं संक्षेपशारीरके। 'आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या। तत्संपर्कात्सत्यता तत्रचान्या व्युत्पन्नोऽयंसत्यशब्दस्तु तत्र' इति इत्यद्वैतसिध्युक्तिः, (अखण्डार्थत्वोपपत्तौ)

लघुचन्द्रिकायां सत्तायाः सत्तारूपजातिः । ब्रह्मलक्षणत्वायोगः कल्पतरूक्तब्रह्मलक्षणत्वमयुक्तमिति भावः। जातित्वव्यपदेशात्- कल्पतरौ परजातित्वव्यपदेशात् । त्रिकालाबाध्यत्वमेवेति त्रिकालबाधविषयत्वाभावस्याधिकरणीभूतसत्तारूपत्वेन तत्स्वरूपा सत्तेति भावः। तस्य त्रिकालाबाध्यत्वोपलक्षितसत्त्वस्वरूपस्य। अनृताश्रितत्वाभावेनेति। त्रिकालाबाध्यत्वस्येत्यादिः। त्रिकालाबाध्यत्वोपलक्षितसत्त्वस्वरूपस्य स्वरूपलक्षणस्येति शेषः । तद्व्यावर्तकत्वसम्भवात् अनृतव्यावर्तकत्वसम्भवात्। स्वरूपलक्षणं- यत् स्वरूपं तत् इतरव्यावर्तकम्। अतः उक्तोपलक्षितसत्त्वस्य ब्रह्मस्वरूपतया तदितरव्यावर्तकत्वं युक्तमिति भावः। नन्वेवं सत्यपदेनैव लक्षणसमर्पणे त्वन्मते आनन्दादिपदं व्यर्थमित्याशङ्क्य पूर्वोक्तं स्मारयति आनन्दत्वादीति। धर्मिसमानसत्ताकभेदं- स्वाश्रयसमसत्ताकभेदम्। स्वं भेदः, लक्षणम् उपलक्षणम्। जात्युपलक्षितव्यक्तिस्वरूपस्यैव सिद्धान्ते लक्षणत्वात्। पररीत्यैवेदम्। एका स्वकालाबाध्यत्वरूपा। काचिदन्या त्रिकालाबाध्यस्वरूपत्वरूपा। तत्र आकाशादौ। अन्या त्रिकालाबाध्यस्वरूपतादात्म्यरूपा। तत्र उक्ततादात्म्यवति। व्युत्पन्नः गृहीतशक्तिकः तत्र प्रथमद्वितीयसत्यत्वाभ्यां 'सत्यस्य सत्यम्' 'सत्यं चानृतं च सत्यमभवत्' इत्यादिश्रौतप्रयोगोपपादनेऽपि लोके व्यवहाराच्छक्तिग्रहः त्रिकालाबाध्यसद्रूपात्मक एव ; घटः सन्नित्यादौ तत्त्वेनैव लोके घटोदः प्रत्ययात्। 'सदेव सोम्येदं' 'सत्यं ज्ञानम्' इत्यादिवाक्ये तु सत्यादिपदेनोक्तरूपात्मकत्वेनोपहितब्रह्मणः शक्त्या बोधनेऽपि लक्षणया शुद्धब्रह्मबोधकत्वम् । तावता नोपहितस्य मिथ्याभूतस्य त्रिकालाबाध्यसद्रूपता, नवोक्तसद्रूपात्मकत्वेन शुद्धेऽपि वर्तमानेनोपलक्षितस्य शुद्धचिद्रूपलक्षणस्य अनृतव्यावर्तकत्वासम्भव इति भावः। यत्तु सत्यत्वादेरुपहितगतस्य शुद्धेऽपि सम्बन्धस्वीकारे शुद्धस्य सत्यादिपदवाच्यतासम्भवे तल्लक्ष्यत्वानुपपत्तिः, उपहिते सत्यत्वस्य श्रौतपदवाच्यत्वेन त्रिकालाबाध्यत्वरूपसत्त्वं ब्रह्मणि श्रौतमिति सिद्धान्तभङ्गः, तात्त्विकसत्त्वस्य सत्यपदाबोध्यत्वेन तद्बोध्यसत्त्वस्य लक्षणत्वासम्भवः इति तन्न। लक्षणां विना निष्प्रकारकबोधासम्भवेन लक्षणाऽऽवश्यकत्वात्। त्रिकालाबाध्यत्वं ब्रह्मणि श्रौतमिति सिद्धान्तस्यायमर्थः—यच्छ्रुतिजन्येन सत्यत्वाद्युपलक्षितशुद्धब्रह्मज्ञानेन शुद्धब्रह्मण्यनृतादिसंशयनिवृत्तिरिति। सत्यादिपदेन शक्त्या बोध्यसत्त्वस्यालक्षणत्वंतु मन्मते इष्टमेव ; लक्षणया तद्बोध्यस्यैव लक्षणत्वात्' इत्युक्तिश्च अनुपादेया ।।

आकाशादौ सत्यशब्दस्य त्रिकालाबाध्यतादात्म्यवत्त्वेनैव व्युत्पत्तिरिति—लोके व्यवहारानुरोधेन शक्तिग्रहः दार्शनिकस्य कस्याप्यसम्मतः । असद्विलक्षणत्वेन सत्यशब्दस्य लोके व्युत्पत्तेः । तस्याश्च ब्रह्मणि आकाशादौ च तुल्यत्वात्। घटः सन् इत्यादौ घटे स्वकालाबाध्यत्वं नैव भासते। किंतु त्रिकालाबाध्यतादात्म्यमेवेति कथं निर्णयः? सत्त्वस्य त्रिकालाबाध्यत्वरूपस्य उपहितवृत्तित्वमेवेति प्रागुदाहृतचन्द्रिकाद्वयवाक्ययोः व्यक्तं प्रतिपादनेन सन् घटः इत्यत्र सत्ताविशिष्टस्यैव प्रतीत्या त्रिकालाबाध्यत्वाविशिष्टस्य उपहितस्य भानं नास्तीति कथं स्थाप्यते । शुद्धाशुद्धयोस्तादात्म्येन

## गूढार्थसंग्रहः

शुद्धस्याशुद्धोपरागेण भानवत् प्रपञ्चे सदधिष्ठानतादात्म्यप्रयुक्तसत्त्वसम्बन्धसत्वेऽपि सत्त्वोपहितब्रह्मतादात्म्यम् प्रपञ्चे वर्तत इति अनुपहितब्रह्मतादात्म्यं भासते इत्यत्र किंगमकम्? परजातिरूपसत्तायाः ब्रह्मरूपत्वं कल्पितधर्मवत्त्वमादाय तद्वत्त्वं ब्रह्मणि इति यद्यभ्युपगम्यते तदाऽपि सन् घटः इत्यादौ कल्पनयैव सत्ताविशिष्टत्वं वाच्यम्। अतोऽपि शुद्धस्य भानं न सम्भवति। एतत्तात्पर्येणैव–' विशिष्टविषया प्रतिपत्तिर्विरुध्यते ' इति भाष्ये उक्तम्। उक्तरूपेण सत्ताविशिष्टतया प्रतिपत्तिर्विरुध्यतइत्यर्थः। सत्यत्वादेरुपहितगतस्य शुद्धे सम्बन्धस्वीकारेऽपि निष्प्रकारकबोधासम्भवेन लक्षणेत्युक्तिरपि नयुक्ता निष्प्रकारकबोधस्यैव स्थापनासम्भवात्। ' सत्यस्य सत्यम् ' इत्यादिश्रुतौ सत्यस्येत्यत्र विशिष्टं, सत्यमित्यत्र उपलक्षितं विषयः इति खलु भवता वाच्यम्। एवं कल्पनं कथं स्वरसम्? उभयत्रापि सत्यत्वविशिष्टस्यैव प्रतीतेः। अतः ' प्राणावै सत्यं तेषामेष सत्यम् ' इत्यादिभिः श्रुतिभिः व्यवहारकालाबाध्यत्वरूपप्रपञ्चसत्यत्वापेक्षया अबाध्यत्वाद्युपलक्षितस्वरूपात्मकत्वेन ब्रह्मसत्वादेरुत्कर्षोक्तेः इति सदसद्विलक्षत्वमिथ्यात्वविचारे गुरुचन्द्रिकोक्तिरप्यनुपादेया। उपहितस्य विवक्षणे उपहितस्य प्राणशब्दार्थस्य चोभयोर्मिथ्यात्वेन ' तेषामेषसत्यम् ' इत्युक्तिःकथम्? अतः सत्यत्वविशिष्टस्यैव श्रौतत्वं न्याय्यम्। ' तंत्वौपनिषदं पुरुषम् ' (बृ) ' ब्राह्मीं वावतउपनिषदमन्त्रमेति ' (तलवकार) इत्यादिश्रुतिषु धर्मविशिष्टस्यैव उपनिषत्तात्पर्यविषयतायाः स्वरसतः प्रतीतेः॥

किंच त्रिकालाबाध्यत्वमुपहितस्यैव धर्मः इत्युक्तिरपि नघटते। उपहितस्य मिथ्यात्वेन आकाशादिवत् तस्यापि ब्रह्म ज्ञानानन्तरमसत्वात्। उपहितशुद्धयोरत्यन्ताभेदस्याभावेन तादात्म्याङ्गीकारे भेदस्यापि सद्भावात्। उपहितकेवलभावेनतादात्म्यमुपहितशुद्धयोः आकाशादिप्रपञ्चब्रह्मणोः अधिष्ठानाधिष्ठेयभावेन तादात्म्यम् इति वैषम्यन्तु ज्ञानात्परंसत्त्वतदभावयोरप्रयोजकमेव। अधिष्ठानसाक्षात्कारस्य बाधहेतुभूतस्य अत्राभावेऽपि ब्रह्मभिन्नसामान्यस्य मिथ्यात्वाङ्गीकारेण मिथ्यात्वस्य ज्ञान निवर्त्यत्वरूपत्वेन तस्यापि अपरिहार्यत्वात्। तदनङ्गीकारे उपहितशुद्धयोः भेदगर्भतादात्म्याङ्गीकारः तन्निबन्धनमिथ्यात्वाङ्गीकारश्च असङ्गतएव स्यात्। अतः उपहितशुद्धयोरभेदएवाङ्गीकार्यः नतु भेदाभेदः। तथासति शुद्धेऽपि धर्मव्यवहारस्स्यात् शुद्धे अविद्या उपहिततादात्म्यं च स्वीक्रियतएव। तद्वत् त्रिकालाबाध्यत्वमपि स्वीकर्तुं शक्यम्। तथासत्येव ' सन् घटः ' इत्यादिप्रतीतौ सतः अधिष्ठानत्वं तत्र घटादेः कल्पितत्वं चोपपादयितुमर्हम्। अतः ' सत्यस्य सत्यम् ' इति श्रुतौ सत्य पदद्वयेन सत्यत्वपुरस्कारेण एकरूपेणोपस्थितिः युक्ता। अतः सत्यत्वोपलक्षितस्वरूपस्य वेदान्ततात्पर्यविषयत्ववर्णनं निरवकाशम्। तत्तादेरुपलक्षणस्याप्रकारत्वम् नीलो घट इत्यादावुपहितबोधः इति कल्पनमपि न कस्यचित्सम्मतम्। काकवदित्यादौ काकशब्देनोपस्थितस्योत्तृणत्वस्य प्रकारतया भानस्य सर्वसम्मतत्वात् ' यदितु स्वरूपेणोपलक्षणाद्व्यावृत्ताकारता तदा निष्प्रकारतैवेति ' (भाविबाधोद्धारे) अद्वैतसिध्युक्तेः अनुभवविरुद्धत्वेन कस्याप्यसम्मतत्वात्। एवंचोपलक्षणस्याप्रकारत्वस्यासम्भवेन विशिष्टान्वयबोधः उपलक्षितान्वयबोध इति प्रकारद्वयमेव तान्त्रिकाणां सम्मतम् नतु तद्विलक्षणोपहितान्वयबोधस्सम्मतः। नीलो घट इत्यत्र घटत्वोपलक्षितएव नीलपदार्थस्य प्रकारत्वं। अतः ' अविरुद्धविशेषणद्वयप्रभवत्वेऽपि ' (सं.शा) इत्युक्तदोषस्यापि नावसरः। नीलमुत्पलमानयेत्यादौ आनयनांशे नैल्यविशिष्टान्वयबोधतात्पर्येण नीलिमादिविशिष्टमेवानीयते इति (आनन्दमयाधिकरण) भाष्ये वक्ष्यते। ' सुवस्त्रं दधानमानय, दण्डधारिणमानय, कुण्डलवन्तमानय ' इत्यादौ वस्त्रादेर्विशेषणत्वमेव। अतः प्रत्यक्षस्य सन्मात्रग्राहित्वे ' घटोऽस्ति पटोऽस्ति ' इति सत्ताविशिष्टप्रतिपत्तेर्विरोधः यः भगवतोक्तः सः दुष्परिहरइति सिद्धम्॥

अस्ति सन् इत्यत्र प्रत्ययार्थसत्वेन भवदभिप्रेतनिर्विशेषसतः अपरोक्षे भानं नैवोपपादयितुं शक्यम्। यद्यपि एतदुपपादनायैव ' सद्रूपस्य घटादिविशेषततया व्यवहारः। तत्र मूलाज्ञानं न विरोधि ' इत्यादिकं (३२७ पुटे) उक्तम्।

## गूढार्थसंग्रहः

तथाऽङ्गीकारे सद्रूपे वृत्तिविषयत्वोक्तिरपि निष्फलैव ; आवरणनाशस्यासम्भवात् । अस्ति घट इति अस्त्यर्थोपाधौ प्रतिपन्नस्य घटस्य तदुपाधावेव नास्तीति प्रत्यक्षेणैव बाधो दृश्यते । देशकालयोर्देशकालान्तराभावात् । तयोर्द्वयोर्निरुपाधिकनिषेधात् अस्त्यर्थस्यानुयायिनो निषेधाभावात् । अतो देशकालतदुपाधिघटानामस्त्यर्थे ब्रह्मस्वरूपे प्रतिपन्नोपाधौ प्रत्यक्षेणैव बाधान्मिथ्यात्वसिद्धिः एवं 'सर्वभावप्रत्ययगोचरे ब्रह्मणि स्वरूपोपाधावस्त्यर्थे कालाद्युपाधिभिः सहाभावप्रत्यक्षेण बाधान्मिथ्यैवेति सिद्धम्' इत्यारभ्य, 'नच सद्बुद्ध्यनुगमविरोधः अधिष्ठानत्वात्तस्य । घटादिविशेषाणामेव मिथ्यात्वादिति सिद्धम्' इत्यन्तेन विवरणोक्तौ इदं रूप्यमित्यत्र इदमर्थस्याधिष्ठानस्य विशेष्यत्ववत् सन् घटः इत्यत्र सदर्थस्य विशेष्यत्वमेव प्रतीयते ॥

घटोऽस्तीत्यत्र अस्तीति प्रकृत्यर्थमात्रबोधकमिति संक्षेपशारीरकादिवाक्यैः पूर्वमेव (१८८ पु) निरूपितम् । प्रत्ययार्थाभावे प्रकृत्यर्थस्य विशेष्यत्वमपि अङ्गीकरणीयम् । एवमङ्गीकार एव घटो नास्तीत्यत्र सद्रूपब्रह्मणि घटस्य निषेधस्सङ्गच्छते । अयमर्थः 'भावे चोपलब्धेः' इति सूत्रे 'घटोऽस्तीत्यादौ अस्तित्वशब्दितब्रह्मसत्तायां प्रतिपन्नस्य घटादेः घटो नास्तीत्यादिप्रत्यक्षेण तस्यामेवाभावावगाहनं इति विवरणोक्तेः' इति वेदान्तसूत्रमुक्तावल्यामुक्तः । एवं च घटोऽस्तीत्यादिप्रतीतेः ब्रह्मविशेषणकत्वं विवरणादिस्वारस्यप्रतिकूलमेव । रजतं नेति बाधस्थले रजतस्य रजतप्रतियोगिकतादात्म्यस्य च निषेधस्यैव लघुचन्द्रिकायां व्यवस्थापनात्, सन् घटः इत्यादौ सत्तादात्म्यस्य घट इव घटतादात्म्यस्य सति भानस्य बिन्दुटीकालघुचन्द्रिकयोस्साधनाच्च ॥

एवंच सद्रूपस्य घटादिविशेषणतयैव व्यवहारइति नियमोऽपि गुरुचन्द्रिकोक्तः अनुपादेयः । मूलाज्ञानेनावरणदशायां विशेषणतया व्यवहारकल्पनस्याप्यनुपपत्तेः । अतो मूलाज्ञानेन सतः आवरणे प्रकाशानुपपत्तिस्सिद्धान्तविरोधश्च । अनावरणे अज्ञातत्वानुपपत्तिः । सन् घट इति प्रत्यक्षेण मूलाज्ञाननाशे अनुभवविरोधः तत्कार्यप्रपञ्चस्थित्यनुपपत्तिश्च । अतोऽवस्थाऽज्ञाननाशएवाभ्युपगन्तव्यः । इदं रजतमित्यत्र रजतस्य मूलाज्ञानकार्यत्वपक्षे निवृत्तिमात्रमेवेषितव्यम् नतु बाधः । निवृत्तिमात्राभ्युपगमे ब्रह्मज्ञानेन प्रपञ्चस्याज्ञानेनसह नाशरूपो बाधः एतद्दृष्टान्तेन नैव वक्तुं शक्यतइति भ्रमस्थले बहूनि अवस्थाऽज्ञानानि अङ्गीकरणीयानि । सन् घटः इत्यत्र साक्षात्कारेण अज्ञानमात्रस्यैव नाशः । नत्वज्ञानकार्यस्य रजतादिस्थानापन्नस्य । तथाविधस्योत्पत्तेरेवात्राभावात् । एवं च इदं रूप्यमित्यत्र घटादेरवच्छेदकतयैव भानमधिष्ठानविषयकएव साक्षात्कारः इति कथं नियन्तुं शक्यते ? इदं रजतमित्यत्र इदंशब्दस्थाने न घटशब्दः किंतु रजतशब्दस्थानएव इति घटाद्यवच्छिन्नसद्विषयकाज्ञानस्य नाशः दृष्टान्तानुरूप्येण कथमुच्यते ? इदं रजतं सत् घटः सन् इतिप्रतीतिद्वयपर्यालोचनायामपि घटाद्यवच्छिन्नचिद्विषयकमज्ञानं नैव कल्पयितुं युक्तम् । सतः अनुस्यूतत्वेन घटादेःकल्पितत्वं साधयतां शुद्धसति घटादेः कल्पितत्वं वाच्यम् । तेन शुद्धसद्विषयकाज्ञानकार्यत्वमेव घटादेस्सिध्यति इति इदं रजतमिति दृष्टान्तानुरूप्येण न घटाद्यवच्छिन्नानन्तावस्थाऽज्ञानकल्पना युक्ता । ब्रह्म नजानामि, घटं नजानामि ब्रह्मसाक्षात्करोमि, घटं साक्षात्करोमि इति प्रतीतिद्वयसामरस्येन ब्रह्मसाक्षात्कारेण ब्रह्माज्ञाननाशवत् घटसाक्षात्कारेण घटाज्ञाननाशाभ्युपगमएव युक्तः । प्रतीतिव्यवहाराणां सर्वेषां स्वरसतो निर्वाहसम्भवएव लाघवस्य पुरस्कारः युक्तः नत्वन्यथा । घटादिविषयकज्ञानाभावः सर्वसम्मतः । ज्ञानाभावातिरिक्ताज्ञानं तु निरसिष्यते इति सिद्धान्ते कल्पनागौरवमेव नास्ति । अवस्थाज्ञानान्यनन्तानि सति तद्विषयत्वान्यपि बहूनि घटादिषु तत्तदवच्छेदकत्वानि च कल्पनीयानीति गौरवम् ॥

## गूढार्थसङ्ग्रहः

एतेन ३२७ पुटेोदाहृतबिन्दुटीकानन्तरं 'नच घटाद्युपहितचैतन्यानि केवलचितो भिन्नानि नवा? आद्ये तेष्वज्ञानविषयत्वानि घटादिषु तदवच्छेदकत्वानि कल्पनीयानीति तदपेक्षया घटादिष्वज्ञानविषयत्वानां कल्पनैव लघीयसी । द्वितीये घटाद्यवच्छेदेन स्फुरणं घटादिविशेषितचिद्रूपे संशयाद्यभावः तद्वारणंच तस्मिन्नज्ञानविषयत्वास्वीकारेऽपि घटादावज्ञानविषयतानां स्वीकारेण निर्वहतीतिवाच्यम् । आद्ये घटादावबच्छेदकत्वानामकल्पनात् अज्ञातचित्तादात्म्यादेव तत्राज्ञातत्वव्यवहारात् । नच विनिगमकाभावः । घटादावज्ञातत्वस्वीकारेऽपि अज्ञातघटादितादात्म्येन तदुपहितचित्यज्ञातत्वव्यवहारसम्भवादिति वाच्यम् । चित्यज्ञातत्वस्वीकारे हि अज्ञातत्वशून्यचिद्रूपमपरोक्षत्वं वाच्यम् । घटादौ तत्स्वीकारे तु नापरोक्षत्वं तथा, घटाद्याकारवृत्त्यभावकालेऽपिघटादेरपरोक्षत्वापत्तेः । किंतु अज्ञातत्वशून्योपहितत्वविशिष्टचिद्रूपम्, तथा च गौरवम् । नचाज्ञातत्वशून्यत्वमेव तदितिवाच्यम् । अलीकस्यापि तदापत्तेः । नचाभानापादकाज्ञातत्वमलीके सदाऽस्त्येवेति वाच्यम् । साक्ष्यसम्बन्धादेव तत्राभानोपपत्तौ अज्ञातत्वास्वीकारात् । नचाज्ञातत्वशून्यं यद्घटादि तत्तत्स्वरूपमेव तदिति वाच्यम् । घटोऽपरोक्षः पटोऽपरोक्षः इतिप्रतीतेः एकापरोक्षतात्वव्यक्तिविषयत्वात् । अज्ञत्वशून्यचित्वस्यैव तादृशव्यक्तित्वात् घटाद्युपादानकप्रवृत्त्यादौ घटाद्यपरोक्षतानां तेन रूपेणैककारणत्वस्य मन्मते सम्भवाच्च । एवं पूर्वोक्तयुक्तेः द्वितीयपक्षेऽपि न घटादावज्ञानविषयत्वं नन्वज्ञातत्वशून्यचैतन्यं द्वितीयपक्षे ब्रह्मज्ञानोत्तरमपि अप्रसिद्धम् तदाऽपि घटं नजानामीति प्रत्ययेन चितः अज्ञातत्वशून्यत्वाभावात् । तथाच तदाऽपि घटाद्याकारवृत्तिकाले घटं साक्षात्करोमीति व्यवहारो नस्यात् इतिचेन्न । द्वितीयपक्षे घटं साक्षात्करोमीत्यादौ घटाद्यवच्छिन्नेनाज्ञानविषयत्वेन शून्यं चैतन्यं साक्षात्करोमीति व्यवह्रियते । तथाच घटाद्याकारवृत्तिकाले घटाद्यवच्छिन्नस्याज्ञानविषयत्वस्यापसरणात् घटं साक्षात्करोमीति व्यवहारः । एवंच आद्यपक्षे अज्ञातत्वशून्यचिति तादात्म्यस्य द्वितीयार्थस्यान्वयः । द्वितीयपक्षे तु अज्ञातत्वे अवच्छिन्नत्वस्य द्वितीयार्थस्येति विवेकः । आख्यातस्य तदनुकूलव्यापारोर्थः' इत्युक्तिरपि निरवकाशा । उपहितकेवलयोः तादात्म्यस्य चान्द्रिकायामुक्त्या भिन्नानि नवेति विकल्पस्यैवानुचितत्वात् । घटादावज्ञातत्वाद्यवच्छेदकत्वं अकल्पयित्वा सत्तादात्म्येन निर्वाहाङ्गीकारोऽपि अनादरणीयः । घटादौ सत्तादात्म्यानि अनन्तानीति बिन्दुटीकाचन्द्रिकयोर्व्यवस्थापनात् । ततोऽपि प्रतीतिव्यवहारावैषम्येन सत्ताद्यङ्गीकारस्यैव युक्तत्वात् । घटादावज्ञातत्वस्वीकारे गौरवमपि नास्ति । स्वसामानाधिकरण्यस्वप्रतियोगिकत्वैतदुभयसम्बन्धेन अज्ञातत्वविशिष्टाभावस्य अज्ञातत्वेऽभावेच खण्डशः शक्तिमङ्गीकृत्य उभयोर्वा अपरोक्षपदार्थत्वस्वीकारे दोषाभावात् अज्ञातत्वस्य द्वितीयपक्षे उक्तसम्बन्धद्वयेन अभावे अन्वयः ॥

एवंच अलीके अज्ञातत्वसामानाधिकरण्यविरहेण अज्ञातत्वाभावसत्त्वेऽपि न दोषः । 'घटं साक्षात्करोमि' इत्यादौ अवच्छिन्नत्वस्य 'ब्रह्मसाक्षात्करोमि' इत्यादौ आधेयत्वस्य अज्ञातत्वान्वयिनः भानमङ्गीकृत्यैव प्रतीतिद्वयनिर्वाहः कार्यः । द्वितीयायाः साक्षात्कारवाचिसमभिव्याहारे शक्तिद्वयेन लक्षणयावा अर्थभेदकल्पनमपि अप्रामाणिकमेव । एतेन अज्ञातत्व सामान्याभाववाचितः साक्षात्करोत्यर्थत्वे घटाद्यवच्छिन्नाज्ञातत्वाभाववचितः साक्षात्करोतिना बोधासम्भवमाशङ्क्य द्वितीय पक्षे अज्ञातत्वे अभावे चितिच साक्षात्कारोतेः शक्तित्रयस्वीकारात् अज्ञातत्वेच घटाद्यवच्छिन्नत्वस्यान्वयेन घटाद्यवच्छिन्नाज्ञातत्वस्यैवाभावेऽन्वयेन तादृशाभावस्य च चित्यन्वयेन विशिष्टचिद्बोधसम्भवः । चितस्तु तद्व्यक्तित्वेनैव शक्यता शाब्दधीविशेष्यता च । तेन शाब्दधीविशेष्यतायाः किंचिदवच्छिन्नत्वनियमेऽपि नदोषः । अथवा चिन्निष्ठविशेष्यतासम्बन्धेनाभाववदेव द्वितीयं शक्यम् । तृतीयंतु नाभ्युपेयते । अभावस्यतु पदार्थैकदेशत्वेऽपि ससम्बन्धिकत्वात् तत्राज्ञातत्वान्वयेऽपि नदोषः । 'एतत्सुखं साक्षात्करोमि' इत्यादौ तु नाप्रसिद्धिः सुखमात्रे नित्यत्वादिभ्रमहेत्वज्ञानविषयत्वस्य सर्वसुखावच्छि-

## गूढार्थसंग्रहः

न्नस्य प्रसिद्धत्वात् । 'ब्रह्म साक्षात्करोमि' इत्यादौ तु न ब्रह्मावच्छिन्नत्वस्याज्ञानाविषयस्याभानम् अप्रसिद्धत्वात् । नाप्याधेयत्वस्य द्वितीयार्थतया ब्रह्मवृत्त्यज्ञातत्वशून्यचित: भानम् । ब्रह्मज्ञानोत्तरमपि घटाद्यवच्छिन्नस्य ज्ञातत्वस्य ब्रह्मचिदसत्वेन तादृशचितोप्रसिद्धेः । किंतु ब्रह्मवृत्त्यज्ञातत्वानवच्छिन्नविषयत्वीयविशेषणतासम्बन्धेन योऽभावस्तद्भानम् । आधेयत्वं तु द्वितीयया लभ्यते ब्रह्मपदसमभिव्याहारस्य तत्सम्बन्धभाननियामकत्वात् । 'घटं साक्षात्करोमि' इत्यादौ तु घटावच्छिन्नाज्ञातत्वस्यैव नोक्तसम्बन्धेन अभावभानम् । दृश्यवाचकपदसमभिव्याहृतद्वितीयाया एव अवच्छिन्नार्थकतया न ब्रह्मसाक्षात्करोमि इत्यादौ द्वितीयया अवच्छिन्नत्वबोधः । वस्तुतस्तु साक्षात्करोतेस्स्वकर्तृकत्वात् प्रयोजकेऽपि शक्तिः, तथाच घटं साक्षात्करोमीत्यादौ घटत्वाद्यवच्छिन्नस्याज्ञातत्वस्य यो भावः तत्प्रयोजकविशिष्टचिद्बोधः । अथवा अज्ञातत्वाभावप्रयोजकत्वविशिष्टचित्येकैव शक्तिः । इत्याद्युक्तिरप्यनुपादेया ॥

वृत्तिदशायामेवाज्ञातत्वापसरणमपरोक्षव्यवहारोऽपि । ब्रह्मविदित्यादौ वृत्तिरेव विद्यादिधात्वर्थः । ब्रह्मणः वेदान्तजन्यवृत्तिविषयत्वमेवाङ्गीक्रियते, नतु ज्ञानविषयत्वमिति सत्तात्रैविध्यवादिमते सिद्धान्तः क्रियते । एवं च चिति शक्तिकल्पनं कुतः ? वृत्तिशक्तिकल्पनेनैव सर्वव्यवहारोपपत्तिसम्भवात् । अज्ञातत्वशून्यत्वस्य प्रागुक्तरीत्या अपरोक्षपदार्थत्वाङ्गीकारेऽपि क्षतिविरहात् । यद्वा अज्ञातत्वमभावश्च खण्डशस्साक्षात्करोत्यर्थः । घटं साक्षात्करोतीत्यादौ आधेयत्वरूपद्वितीयार्थस्य अज्ञातत्वेऽभावे च उभयत्रान्वयः । एवंच घटवृत्त्यज्ञातत्वस्याभावो घटवृत्तिर्यः तदनुकूलव्यापारस्य बोधः । अलीकस्थले अलीकवृत्त्यज्ञातत्वस्याप्रसिद्ध्या अलीकं साक्षात्करोतीत्यप्रयोगः । अलीकमपरोक्ष इति व्यवहारस्यापि नापत्तिः । स्वसमभिव्याहृतपदार्थवृत्त्यज्ञातत्वाभावस्यैव अपरोक्षपदार्थत्वाङ्गीकारात् । अतश्च घटादावज्ञातविषयत्वाङ्गीकारे गौरवस्य नावसरः ॥

किंच प्रमाणानामज्ञातार्थज्ञापकत्वं मीमांसकादिसम्मतम्, तत्र नकोऽपि विवादः । परंतु अज्ञातत्वं न भावरूपाज्ञानविषयत्वं, किंतु तद्विषयकज्ञानाभावः । अतएव ज्ञातार्थविषयकस्मृतेः न प्रमात्वमिति मीमांसकाः वदन्ति । एवं च घटादिविषयकेन्द्रियसंयोगात् पूर्वं घटादिज्ञानाभावसत्वेन घटाद्यंशे प्रामाण्यं कथं प्रत्यक्षस्य वार्यते । एतेन 'वस्तुतस्तु ब्रह्मण चाक्षुषादिवृत्त्यविषयत्वेऽपि नास्माकं प्रकृतेक्षतिः । घटादिविषयकवृत्त्या घटाद्यवच्छिन्नसद्रूपस्यापि आवरणाभिभवात् घटादौ भासमाने सद्रूपतादात्म्यस्यावश्यम्भानसम्भवात् । अज्ञाताचिदवच्छेदकविषयकत्वघटितस्य घटादि गोचरवृत्तिप्रमाणस्य वक्तुं शक्यत्वात् । ब्रह्मज्ञानस्य तु त्रिकालाबाध्यविषयकत्वघटितं प्रामाण्यं भिन्नमेवेति तत्राज्ञानविषयकत्वनिवेशेऽपि क्षत्यभावात् । परंतु वस्तुगतिराचार्यैरुक्ता' इत्युक्तिरपि निरवकाशा ॥

परसम्मताज्ञानस्योत्तरत्र दूषयिष्यमाणतया अज्ञातत्वं घटादेस्सम्भवत्येवेति घटाद्यंशे प्रामाण्यं प्रत्यक्षस्य घटत इत्यभिप्रेत्य परसम्मतप्रक्रियायाः दार्शनिकासम्मतत्वेन सा प्रक्रिया नविचारिता । अन्ते प्रत्यक्षस्य सन्मात्रग्राहितापक्षे 'तत्त्वमसि' इत्यादेः अज्ञातार्थज्ञापकत्वं न सम्भवतीत्येतावन्मात्रमुक्तम् । पूर्वं सन् घटः इत्यादौ सत्त्वोपलक्षितस्य विषयत्वं नसम्भवति अपितु सत्ताविशिष्टस्यैवेति उपलक्षिताधिष्ठानविषयत्वोक्तिः परेषामनुपादेया इत्युक्तम् । किंच **विशिष्टविषया प्रतिपत्तिर्विरुद्धयते** इत्यत्र घटत्वादिविशिष्टे सत्तावैशिष्ट्यं विवक्षितम् । अस्तीत्यादौ शब्दाभिलप्यप्रतीतेस्सविकल्पकत्वस्य विशिष्टविषयकत्वस्य च सर्वसम्मतत्वात् । घटादीन्द्रियसंयोगकाले घटत्वादावपीन्द्रियसम्बन्धसत्वेन तद्भानस्य तत्र सत्तायाः अप्यबाधेन तद्भानस्य च अविप्रतिपन्नत्वात् ॥ एतेन 'तस्मादस्तीति संवित्तिर्जायमाना' इत्यादिप्रागुदाहृत (३२६ पु) यामुनसूक्त्यर्थो विशदीकृतः । तत्तत्पदार्थसंस्थानपारमार्थ्यावबोधित्वमस्तीति संवित्तेः 'नैव शब्दे स्वतो दोषाः प्रामाण्य-

### गूढार्थसङ्ग्रहः

परिपन्थिनः । सन्ति किंतु स्वतस्तस्य प्रमाणत्वमिति स्थितिः ॥ अकारणं यथा ज्ञानं प्रमात्वमधिगच्छति । अकारणं तथा वाक्यं स्वतः प्रमितिकारणम् ॥' (आ.प्रा) इत्यादियामुनसूक्त्यनुसारिणा **यथाऽवस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च । तच्च स्वतःप्रामाण्यन्यायसिद्धम्** इति उत्तरभाष्येणोपपादितप्रायम् । विस्तरेण एतदर्थः न्यायकुलिशे ३.वादे द्रष्टव्यः ॥

गुरुचान्द्रिकायां जडत्वनिरुक्तौ 'तदुक्तं मणौ, प्रवृत्तिसंवादादिना प्रामाण्यं यथार्थत्वमेवानुमीयते । नत्वनुभूतित्वे सति । स्मृतौ व्यभिचारादिति' प्रमापदमुख्यार्थत्वाच्च । उक्तं हि दीधितौ 'प्रमापदं हि धात्वर्थताऽवच्छेदकज्ञानत्वपुरस्कारेण यथार्थज्ञानमभिधत्ते । स्मृतिहेतोः प्रमाणान्तरत्वापत्तेः शास्त्रे प्रमाव्यवहारौपयिकं स्मृतिव्यावृत्तमनुमन्यन्त इति मणौ निर्विकल्पकं च प्रमाबहिर्भूतं व्यवहारानङ्गत्वादित्याद्युक्तेर्दर्शितत्वाच्च' इत्युक्तम् । घटादिविषयकप्रत्यक्षाङ्गीकारेऽपि प्रत्यक्षबाधोद्धारे 'व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तावपि संवादोपपत्तेः । तद्रूपगतप्रामाण्यस्य साक्षिणा ग्रहणेऽपि विरोधाभावात् । नहि घटादिज्ञानस्य संवादिप्रवृत्तिजनकताऽवच्छेदकं प्रामाण्यं त्रिकालाबध्याविषयकत्वम्, किंतु शुक्तिरूप्यादिज्ञानव्यावृत्तं व्यवहारकालाबाध्यविषयकसकलज्ञानवृत्तिव्यवहारकालाबाध्यविषयकत्वमेव' इति (अ.सि) आगमबाधोद्धारेच 'प्रातिभासिकव्यावृत्तस्य व्यावहारिकस्य तद्वति तत्प्रकारकत्वादिरूपस्य निराकर्तुमशक्यत्वात् । तासां व्यावहरिकं प्रामाण्यं अव्याहतमेव' इति च उक्तम् । अत्र तद्वति तत्प्रकारत्वरूपप्रामाण्यग्रहः स्पष्टमुक्तः । अन्तःकरणतद्धर्माणां साक्षिभास्यत्वं इति परमते अङ्गीकारेण साक्षिणा प्रामाण्यग्रहउक्तः । सिद्धान्ते धर्मभूतज्ञानस्य स्वप्रकाशतया तद्गतप्रामाण्यमपि ज्ञानं गृह्णातीति भिदा । त्रिकालाबाध्यविषयकत्वं कस्येति विवेचनीयम् । 'भावि कालबाधतदभावौ च, न मानं विना साक्षिणा गृहीतुं शक्यौ । तस्य विद्यमानमात्रग्राहित्वात्' इति चोक्तमिति एतावन्मात्रं प्रत्यक्षबाधोद्धारे पूर्वोदाहृतवाक्यानन्तरमुक्तम् । श्रुतीनामखण्डार्थविषये पारमार्थिकप्रामाण्यं, इति परसिद्धान्तः 'तत्त्वमसि' इत्यादिवाक्यजन्यनिर्विकल्पकस्य सन्मात्रग्राहितावादे सन् घटः इत्यादेश्च त्रिकालाबाध्यत्वविशिष्टविषयकत्वं नास्तीति ब्रह्मानन्दसिद्धान्तः पूर्वमेवाभिहितः । त्रिकालाबाध्यत्वाविशिष्टाविषयकत्वेन उपलक्षितमात्रविषयकत्वे प्रामाण्यं कथम् ? वृत्त्युपलक्षितत्वस्य वृत्तिविरहकालइव त्रिकालाबाध्यत्वोपलक्षितत्वस्य तद्विरहकाले प्रतीत्यनिवारणात् । अधिकं व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येवेति शङ्कासमाधानभाष्यविवरणावसेर स्फुटीभविष्यति । प्रत्यक्षबाधोद्धारे पूर्वोदाहृतवाक्यानन्तरं 'ननु तर्हि देहात्मैक्यज्ञानं उष्णं जलम्' इत्यादिज्ञानं च प्रमा स्यात् व्यवहारदशायां विषयाबाधादिति चेन्न । आब्रह्मज्ञानमबाधितत्वेन तेषामपि घटादि ज्ञानसमानयोगक्षेमत्वात् इत्युक्तम् । तत्रच देहात्मैक्याध्यासोपपत्तौ इयांस्तु विशेषः । यदत्राभेदो व्यवहारकालिकेन परीक्षितप्रमाणभावेन अनुमानादिना बाध्यते । भेदस्तु देहात्मनोर्नतेन किंतु चरमवृत्त्येति विशेष उक्तः ॥

एतेन प्रत्यक्षबाधोद्धारोक्ता आब्रह्मज्ञानमनुवृत्तिः देहात्मैक्यधियः तैरेव परित्यक्ता । उष्णं जलमिति ज्ञानस्यापि अग्निसंयोगात्पूर्वं परतश्च जले औष्ण्याप्रतीतेः 'इदं रजतम्' इतिवत् भ्रमत्वमिति सर्वैरपि दार्शनिकैरभ्युपगम्यते । अनुभवोऽपि तथैव । देहात्मैक्यज्ञानं भ्रमः भेदज्ञानं प्रमा इति विष्णुपुराणादावुक्तमिति उत्तरत्र भाष्य एव स्फुटीभविष्यति । एवं स्थिते घटादिज्ञानसमानयोगक्षेमत्वोक्तिः अद्वैतसिद्धिकृतामभिनिवेशमूलैवेति बोध्यम् । अतः सन्मात्रग्राहिप्रत्यक्षवादापेक्षया सत्तात्रैविध्यवादएव युक्तः । प्रथमपक्षे लाघवस्यासम्भवात् । द्वितीयपक्षे घटः सन् इत्यादिप्रतीतौ तद्वति तत्प्रकारकत्वरूपप्रामाण्यग्रहः परेषामपि सम्मतः । एतत्पक्षे भाविबाधनिश्चयो न सम्भवति । अतएव स्वाप्निकभ्रमापेक्षया घटादिभ्रमस्य दीर्घकालिकतया स्वाप्निकसृष्टिवाक्यापेक्षया प्रपञ्चसृष्टिवाक्यानां वेदगतानां अतीव जघन्यत्वस्य निरसनेन

## गूढार्थसंग्रहः

सिंहो देवदत्त इत्यत्र आरोपवादनिराकरणेन यत् वेदप्रामाण्यं भट्टपादैः स्थापितं तत्सुरक्षितं भवति ॥ एवं ' बाह्यार्थालम्बना बुद्धिरिति सम्यक्च धीरियं ॥ (७९) बाधकापेतबुद्धित्वात् यथा स्वप्नादिबाधधीः । मृषात्वं यदि बुद्धेस्स्याद्बाधः किं नोपलभ्यते ॥ (८७) बाधाद्विनाऽपि तच्चेत्स्यात् व्यवस्था न प्रकल्पते । प्रतियोगिनि दृष्टे च जाग्रद्ज्ञाने मृषा भवेत् ॥ (८८) स्वप्नादिबुद्धिरस्माकं तव भेदोऽपि किंकृतः । नचान्यप्रतियोग्यस्ति जाग्रद्ज्ञानस्य शोभनम् ॥ (८९ यद्दर्शनेन मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत् । स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः ॥ (९०) तदीयधर्मवैधर्म्याद्बाधक प्रत्ययो यथा । योगिनां जायते बुद्धिर्बाधिका प्रतियोगिनी ॥ (९१) जाग्रत्स्तम्भादिबुद्धीनां ततस्स्वप्नादितुल्यता । प्राप्तानां तामवस्थां च सर्वप्राणभृतामपि ॥ (९२) बाधोऽयं भविता तेन सिद्धा सप्रतियोगिता । इह जन्मनि केषां चिन्न तावदुपलभ्यते ॥ (९३) योग्यवस्थागतानां तु न विघ्नः किं भविष्यति । योगिनां चास्मदीयानां त्वदुक्तप्रतियोगिनी ॥ (९४) त्वदुक्तिविपरीता वा बाधबुद्धिर्भविष्यति । ईदृत्त्वे योगिबुद्धीनां दृष्टान्तो न तवास्ति च ॥ (९५) दृष्टान्तस्त्वस्मदीयानां यो गृहीतस्स विद्यते ' इति भट्टपादोक्तप्रक्रिया ' ग्राहंगतास्तत्र कथं चिदन्ये ' इति निरालम्बनवादान्ते अन्यशब्देन विवक्षितानां अविद्यावादिनामपि समा । ' बाह्यार्थविषयत्वं च बुद्धीनां प्रतिपादितम् ॥ (श्लो.वा.आ.वा.८) अन्योन्यापेक्षिता नित्यं स्यात्सामान्यविशेषयोः । विशेषाणां च सामान्यं तेच तस्य भवन्ति हि ॥ (९) निर्विशेषं न सामान्यं भवेच्छशविषाणवत् । सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥ (१०) ' इति भट्टपादैराकृतिवादे उक्तेः । प्रत्यक्षसूत्रे सन्मात्रग्राहिप्रत्यक्षवादस्य सम्बन्धाक्षेपपरिहारे अविद्यावादस्य दूषणात् उपनिषत्सु ऐकात्म्यव्यवहारस्य परासम्मतरीत्यैव अपूर्वाधिकरणे स्थापनात् । अत्र ' निर्विशेषं नसामान्यं भवेच्छशविषाणवत् ' इति कुमारिलोक्तौ प्राक् १८७ पु उदाहृतवाक्यपदीयहरिवचनमनुसृत्य प्रवृत्तस्य (ब्र.सि) सन्मात्रग्राहिप्रत्यक्षवादस्य दूषणं निर्मत्सराणां स्फुटम् ॥

अत्र शशविषाणशब्दप्रयोगमनुसृत्यैव ' व्योमारविन्दसदृशि यथोदितदृशि ' इति आत्मसिध्युक्तिः । जाग्रद्ज्ञानस्य शोभनं प्रतियोगि नास्तीत्युक्त्या जाग्रद्ज्ञानस्य बाधः प्रत्यक्षेण नसम्भवतीत्युक्तं भवति । एतेन ' अस्ति घटइति अस्त्यर्थोपाधौ प्रतिपन्नस्य घटस्य तदुपाधावेव नास्तीति प्रत्यक्षेण बाधो दृश्यते ' इति प्रत्यक्षेण प्रपञ्चस्य मिथ्यात्वं यत् विवरणोक्तं तन्निरवकाशम्, अनुभवविरुद्धत्वाच्चेति स्फुटम् ॥ ' देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः । (श्लो.वा.शू.वा. २५३) देशकालनिमित्तादि नच तेऽस्ति नियामकम् । (२५७) आगमस्यतु नैवेह व्यापारोऽतोऽन्यथाऽपिवा । ' (२६०) इति शून्यवादे उक्तेश्च । अत्र आगमः ' नेहनानाऽस्ति किंचन ' इत्यादिः । ' अतोऽन्यथा शून्यत्वविपर्यये बाह्यसद्भाव एव व्यापारः ' इति न्यायरत्नाकरः । अत्र ' नेहनानाऽस्ति किंचन ' इति श्रुतौ आत्माभिन्नसामान्यनिषेधो न विवक्षितः इति भट्टपादस्याशयः । एवमत्र जाग्रज्ज्ञानस्यैव स्वप्नधियः बाधकत्वेन स्वाप्निकानां मिथ्यात्वव्यवस्थापनेन स्वाप्निकगजतदभावयोरुभयोरपि मिथ्यात्वं तद्दृष्टान्तेन द्वितीयद्वितीयाभावयोरुभयोरपि मिथ्यात्वं यत् अद्वैतसिद्धिकारैरुक्तं तदनुपादेयम् । गजाभावस्य जाग्रज्ज्ञानेन स्वाप्निकगजस्यैव मिथ्यात्वं नतु गजाभावस्य इति व्यक्तं प्रतिपादनात् ॥

एतेन ' नेहनानाऽस्ति ' इति श्रुतौ द्वितीयद्वितीयाभावयोरुभयोरपि निषेधो विवक्षितः । (१३६.पु) इति ब्रह्मानन्दप्रयासोऽपि विफलः । नानाशब्दस्य दृश्यार्थकत्वविरहात् । विनाभूतवस्तुनिषेधः आत्मभिन्नसामान्यस्य आत्माविनाभूतत्वपर्यवसितएवात्र विवक्षितइति प्राक् (३०१.पु) उपपादनेन श्रुत्यर्थश्च दर्शितः । ' योगिनांचास्मदीयानाम् ' इत्यत्र विवक्षितं योगिप्रत्यक्षम् ' अतीतानागतेऽप्यर्थे सूक्ष्मेव्यवहितेऽपिच । प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥ '

**श्रीभाष्यम्**

**यदिच सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः**

**गूढार्थसंग्रहः**

(प्र.सू.·२६)इति निरूपितम् । इन्द्रियादितत्तत्प्रमाणैः इतरपुरुषैर्गृहीतानामर्थानां तत्तत्प्रमाणान्यन्तरैव योगिनां प्रत्यक्षमत्रोक्तं भवति । एवं च स्वाप्नगजाभावस्य साक्षिभास्यत्वं जाग्रज्जगजाभावस्य त्वतिरिक्तप्रमाणगम्यत्वमित्युभयोर्वैलक्षण्यं गुरुचान्द्रिकोक्तं यत् प्राक्प्रदर्शितं (१३६) तत् योगिप्रत्यक्षन्यायेन समाधेयमिति कुमारिलेनोक्तं भवति । जाग्रत्काले स्वाप्नगजाभावस्य बाधादर्शनात् कालद्वयेऽप्येक एव गजाभावः । एकस्यैव गजाभावस्य भासकसामग्रीवैलक्षण्यं स्वाप्नसामग्र्याः योगिप्रत्यक्षसामग्रीवदविरुद्धम् ॥

एतेन स्वप्ने रजते रजतभेदः प्रतीयत इत्याद्युक्तिरपि निरवकाशा । रजतभेदस्यैकस्यैव जाग्रत्कालेऽन्यत्रानुभूयमानस्य स्वप्ने सामग्रीवशात् रजतेऽपि प्रतीतिसम्भवात् । नहि स्वाप्निकत्वमात्रं बाध्यताप्रयोजकं, किंतु जाग्रत्काले बाधयोग्यत्वमेव यस्य च जाग्रत्काले कदाऽपि बाधो नास्ति तस्यच स्वप्ने मिथ्यात्वं नैव सम्भवति इति भट्टपादाशयः । इममर्थं दृढीकरोति ' सूचकश्च हि श्रुतेराचक्षतेच तद्विदः ' (३.२.४) इति सूत्रम् । ' केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम् । सूचकस्यतु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं बाध्यमानत्वादित्यभिप्रायः ' इति तत्सूत्र (शं) भाष्ये उक्तम् । अत्र बाध्यमानत्वाद्वैतथ्यमित्यनेन जाग्रत्यबाध्यमानस्य सत्यत्वमिति प्रतीयते । अत्र भामत्यां ' दर्शनं सूचकं तच्च स्वरूपेण सत् असत्तु दृश्यम् । अतएव स्त्रीदर्शनस्वरूपसाध्याः चरमधातुविसर्गादयः जाग्रत्यनुवर्तन्ते । स्त्रीसाध्यास्तु माल्यविलेपन दन्तक्षतादयो नानुवर्तन्ते ' इत्यत्र स्वाप्निकानां चरमधातुविसर्गादीनां जाग्रत्कालेऽनुवर्तमानत्वेन बाधाभावाद्व्यावहारिकसत्यत्वं स्पष्टमुक्तम् । अतश्च स्वाप्निकगजाभावस्य जाग्रत्कालेऽबाधेन गजवत्प्रातीतिकत्वं नैव सम्भवति । एवंच द्वितीयद्वितीयाभावयोः ब्रह्मणि निषेधे न युक्तिर्नापि श्रुतिरिति सिद्धम् ॥

सत्यत्वं त्रिकालाबाध्यत्वरूपं यस्योच्यते उपहितस्य तस्यैव मिथ्यात्वं इति वदतामुपलक्षितस्य निष्प्रकारकबोधस्य उपनिषत्तात्पर्यविषयत्वप्रतिपादनाभिनिवेशवतां परेषां कस्यापि दार्शनिकस्यासम्मतप्रक्रियां प्रतिपादयतां गजाभावस्यापि मिथ्याभूतस्य स्वाप्निकस्य जाग्रत्कालेऽबाधेन सत्यत्वं कुतो न सम्मतं इत्यपि पर्यालोचयितुं शक्यते । अतः उपहितस्य मिथ्यात्वं त्रिकालाबाध्यत्वरूपसत्यत्वं उपहितवृत्ति इत्याद्युक्तिरप्यनुपादेयेति सिद्धम् । सिंहो देवदत्त इत्यत्र आरोपानिराकरणेन अध्यासे सामानाधिकरण्यं वेदे नास्तीति सिद्धम् । उदाहृतभट्टपादवाक्यैः प्रपञ्चस्य प्रत्यक्षादिबाधो नसम्भवति इत्यपि । अतश्च बाह्यार्था—सम्यक्च धीरियं ' इति भट्टपादोक्तएवार्थः ' तस्मात् अस्तीति—पारमार्थ्यावबोधिनी ' (सं.सि) इत्यत्र प्रतिपादितः । निर्धर्मितावच्छेदककनिष्प्रकारकज्ञानस्य बाधकत्वादर्शनात् केनापि बाधकत्वस्यानङ्गीकारात् , सर्वसम्मतदृष्टान्तविरहाच्च अस्तीति संवित्तेः प्रत्यक्षादिबाधासम्भवेन पारमार्थ्यावबोधित्वं इति यामुनमुनेराशयः । अयमर्थः उत्तरत्र भाष्ये निरूपयिष्यते इति दिक् ॥

इदं रूप्यमित्यादौ रूप्योत्पत्त्याद्यनुरोधेन अनन्तावस्थाऽज्ञानकल्पनसम्भवेऽपि घटः सन् इत्यादौ रूप्यस्थानापन्नवस्तूत्पत्त्याद्यभावेन अनन्ताज्ञानकल्पनं नैव युक्तम् । इदं रूप्यमित्यत्र अर्थद्वयस्य शब्दद्वयाभिलप्यत्वसत्वेन तत्र शुक्त्यवाच्छिन्नचैतन्यविषयकत्वस्य इदमाकारान्तःकरणवृत्तौ कल्पनसम्भवेऽपि अत्र तथा विरहेण घटावाच्छिन्नचैतन्यविषयकत्वं नैव कल्पयितुं शक्यम् । घटादेर्मिथ्यात्वे प्रत्यक्षबाधस्य मीमांसकोक्तस्य परिहारार्थं यदि सन्मात्रस्य घटाद्यनवच्छिन्नस्य प्रत्यक्षविषयत्वमङ्गीक्रियते तदाऽप्याह **यदिचेत्यादिना** ।

## श्रीभाष्यम्

**किमित्यश्वार्थी महिषदर्शनेन निवर्तते। सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्–तत्तत्प्रतिपत्तिविषयसहचारिणस्सर्वेशब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते। किंच अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेन उपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्। प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति। सर्वेषां संवेदनानामेकविषयताया मेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत। नच चक्षुषा सन्मात्रं गृह्यते तस्य रूप रूपि रूपैकार्थसमवेतपदार्थग्राहित्वात् नापित्वचा स्पर्शवद्वस्तुविषयत्वात्। श्रोत्रादीन्यपि न सन्मात्रविषयाणि। किंतु शब्दरस गन्धलक्षणविशेषविषयाण्येव। अतस्सन्मात्रस्य ग्राहकं नकिंचिदिह दृश्यते। निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्।**

## श्रुतप्रकाशिका

स्याभिप्रेतत्वात्। अत्र प्रतिदूषणं सन्मात्रशब्दानुवृत्तिदूष्योऽर्थोऽयमेवेति स्मरणार्था। किंचेत्यादिना प्रतिपत्त्यवान्तरजातिविशेष विरोधउक्तः। अत्र सन्मात्रशब्दाप्रयोगः किंच शब्देन दूष्यार्थप्रतिसंधानात्॥

धारावाहिकज्ञानेषु कालभेदोऽस्तीति तद्व्यावृत्त्यर्थं विशेषाभावादित्युक्तम्। **स्मृतिवैलक्षण्यं न स्यादिति**। * ज्ञाततयैव परामर्शप्रसङ्गइत्यर्थः धारावाहिकबुद्धिष्विव ज्ञाततया परामर्शाभावोपपत्तिरितिचेन्न–तत्राप्रतिसन्धानस्य तादात्विकबुभुत्साभावाधीनत्वात्। अत्रतु सत्यामपि बुभुत्सायां ज्ञाततया परामर्शाभावो विषयभेदमेव व्यवस्थापयति। **प्रतिसंवेदनमिति**। विशेषाभ्युपगमशङ्का परस्य गत्यन्तराभावद्योतनार्था। सर्वेषामित्यादिना करणव्यवस्थाऽभावप्रसङ्गउक्तः। करणानां व्यवस्थासिध्यर्थं विषयभेदानाह। **नचेत्यादिना**। अत्र पूर्वोक्तविशिष्टविषयप्रतिपत्तिविरोधविवरणमकारणत्वदुर्निरूपकारणत्वनिरसनं च कृतं भवति। **रूपैकार्थसमवेतेति**। रूपसमानाश्रयसमवेतेत्यर्थः। * समवेतशब्दो विशेषणतैकस्वभावपरः। विशेष्यतइति विशेषः तेन सन्मात्रविलक्षणपरस्परभिन्नविषयत्वासिद्धिः॥

**ननु** सर्वं प्रत्यक्षं सविशेषविषयमित्युक्तम्। शब्दगन्धरसानां साश्रयतया धर्मान्तरवत्तयावा ग्रहणाभावात् तद्ग्राहिणः प्रत्यक्षस्य कथं सविशेषविषयत्वम्? नैतदेवम्। गुणकर्मणोरपि * तत्तत्संस्थानवत्तया * कालविशिष्टतया च सविशेषत्वेन गृह्यमाणत्वात्। एतच्च निर्विकल्पकमपेक्ष्योक्तम्। * सविकल्पकेतु देशादीनां बहूनां विशेषत्वं सम्भवत्येव। इन्द्रियाणां लोकसिद्धिहेतुभिस्सन्मात्रविषयत्वप्रतिक्षेपमुपसंहरति। **अतइति**। प्रत्यक्षस्य सन्मात्रविषयत्वं पराभ्युपगतार्थान्तरविरुद्धंचेत्याह। **निर्विशेषेति**। शास्त्रस्याप्राप्तविषयतयाऽर्थवत्वं लोकसिद्धत्वाद्भेदस्य शास्त्रविषयत्वं वदद्भिः परैरेवा-

## गूढार्थसंग्रहः

**रूपरूपीत्यादि**। कालस्य षाडिन्द्रियवेद्यत्वेऽपि सिद्धान्ते तत्र रूपस्याङ्गीकारेण नानुपपत्तिः। सत्तायाः इन्द्रियजन्यप्रत्यक्षविषयत्वस्य नैयायिकादिभिरङ्गीकारेऽपि रूपरूप्याद्यविषयकप्रत्यक्षविषयत्वं नाभ्युपगम्यत इति स पक्षोऽपि सम्भवति। परमते रूपरूप्याद्यविषयकप्रत्यक्षं न सम्भवतीति भावः।

**अनुवादकत्वमेव स्यादिति**। सोऽयमितिवाक्यस्येव 'तत्त्वमसि' इतिवाक्यस्य उपलक्षितभेदभ्रमनिवर्तकत्वेन सप्रयोजनत्वं यत् अद्वैतसिध्यादावुक्तं तन्नसम्भवतीति पूर्वमेवोक्तम्। इदं चानुवादकत्वापादनं न सन्मात्रग्राहिप्रत्यक्ष-

## गूढार्थसंग्रहः

वादमात्राभिप्रायकं, किंतु सत्तात्रैविध्यपक्षाभिप्रायकमपि। एवं च 'उपनिषदितिवेद इत्यपीदं समभिवदान्ति महावचो महान्तः। फलवदवगतिस्स्यादन्तरेणैतदेकं वचनमिति नशक्यं वक्तुमित्यादरोऽस्मिन्॥ (सं.शा. ३.अ.२९७) सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद्ग्राहकः वेदश्चायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः:' (२९९) इति सर्वज्ञात्ममुनिना उत्कीर्त्यमानानां 'तत्त्वमसि' इत्यादिमहावाक्यानां सत्यादिवाक्यात् तत्पदाच्च प्रतिपन्नार्थबोधकानां अज्ञातार्थज्ञापकत्वाभावेन अनुवादकत्वमेव स्यादिति। यद्यपि विवरणे 'तत्त्वमसि' इति वाक्यं प्रस्तुत्य जीवब्रह्मपदार्थप्रतीतिसमये सत्यादिवाक्यात्तत्पदाच्च प्रतिपन्नैक्यविषयकतयाऽनुवादप्राप्तावपि भेदप्रतिभासविरोधितया प्रामाण्यमुपपद्यत इति। तदुक्तं 'सिद्धंतु निवर्तकत्वात्' इति इत्युक्तम्। गौडपादकारिकाभाष्ये वैतथ्यप्रकरणे 'न निरोधो नचोत्पत्तिः' इत्येतद्व्याख्याने 'कथं पुनः स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतज्ञाननिवर्तकत्वम्? नैषदोषः' रज्ज्वां सर्पादिवत् आत्मनि द्वैतस्याविद्याध्यस्तत्वात्। सुख्यहं दुःखीत्यादयस्सर्वे आत्मन्यध्यारोप्यन्ते। आत्मैतेष्वनुगतः सर्वत्राव्यभिचारात्। यथा सर्पधारादिभेदेषु रज्जुः। यत्त्वसुखित्वादिशास्त्रमात्मनः तत्सुखित्वादिविशेषनिवृत्त्यर्थमेवेति सिद्धम्। 'सिद्धंतु निवर्तकत्वात्' 'इत्यागमविद सूत्रम्' इत्युक्तम्।

अत्र आनन्दगिरिटीका उक्तेऽर्थे द्रमिडाचार्यसंम्मतिमाह 'सिद्धंतु निवर्तकत्वात् इति' इति। इष्टसिद्धौ 'सिद्धं तु निवर्तकत्वात्' इतिचोक्तं वाक्यकारैः इति वाक्यकारोक्तित्वमस्य प्रतिपादितम्। अत्र भाष्ये आगमविदामित्युक्त्या इष्टसिद्ध्यानन्दगिरिटीकाद्वयपर्यालोचनायां ब्रह्मनन्दिनामधेयाः छान्दोग्यवाक्यकाराः वाक्यभाष्यकाराश्च द्रामिडाचार्याः वा 'सिद्धं तु निवर्तकत्वात्' इति वाक्यकर्तार इति प्रतीयते। अद्वैतसिद्धौ तु (अखण्डार्थत्वोपपत्तौ) 'तत्त्वमसि' इति वाक्यस्य सत्यादिवाक्यात्तत्पदाच्च प्रमेयावैलक्षण्येऽपि धर्मद्वयपरामर्शित्वेन भेदभ्रमनिवर्तकत्वात्प्रामाण्यम्। उक्तं च कात्यायनेन 'सिद्धं तु निवर्तकत्वात्' इति इत्युक्तम्। अत्र लघुचन्द्रिका 'धर्मद्वयेति। जीवत्वब्रह्मत्वेत्यर्थः। उक्तंचेति। शब्दानां नित्यत्वे सिद्धान्तिते व्याकरणस्य ज्ञातज्ञापकत्वेन अप्रामाण्यमाशङ्क्य मृजादिधातुना मृजादिधातोस्साधुत्वनिश्चयसम्भवेऽपि मार्ष्टीत्यादेः असाधुत्वभ्रमनिवर्तकत्वरूपप्रयोजनकत्वेन प्रामाण्यं सिद्धमेवेत्यर्थकं 'सिद्धंतु' इत्यादिकमुक्तं वृद्धिसूत्रवार्तिके। तद्वज्ज्ञातज्ञापकत्वेऽपि भ्रमविशेषनिवृत्तिरूपप्रयोजनकत्वात् 'तत्त्वमसि' इत्यादि प्रामाण्यमित्यर्थः इति॥

तथाऽपि सुख्यहं दुःखीत्यादौ 'आत्मैतेष्वनुगतः' इति भाष्ये उक्त्या अत्राहमर्थस्यैवानुगतत्वमनुभवसिद्धं नापलपितुं शक्यम्। अहमर्थस्य देहादिव्यतिरेकस्य मम देह इति प्रतीत्या सिद्धत्वेऽपि स्थूलोऽहं कृशोऽहमित्यादिप्रतीत्या पुनस्संशये तन्निवृत्त्यर्थं 'सिद्धंतु निवर्तकत्वात्' इति वाक्यं प्रवृत्तमिति 'दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन' इति भट्टपादवाक्यमुदाहृत्य शास्त्रदीपिकायां व्यवस्थापितप्रक्रियया एतद्वाक्यप्रवृत्तिरिति निर्णीतं सर्वार्थसिद्धिभावप्रकाशे (द्वि.सं.४४-४५पुटे)। एवं ज्ञातृत्वकर्तृत्वादेः आत्मनः प्रत्यक्षविषयत्वेऽपि साङ्ख्याद्युक्तयुक्तिभिः तत्र संशये जाते तन्निराकरणार्थं 'एषहि द्रष्टा' (मुण्डकश्रुतिः) इत्यादिश्रुतय इति 'बोद्धाकर्ता च भोक्ता दृढमवगमितः प्रत्ययार्थःप्रमाणैः' (तत्त्वमुक्ताकलापः.जी.स.८) इत्यत्र वार्तिकस्थ दृढशब्दप्रयोगेण 'सिद्धंतु निवर्तकत्वात्' इति वाक्यमेव मूलं सूचितमाचार्यपादैरिति निरूपितं भावप्रकाशएव (२७४.पु.द्वि.सं)॥

'आत्मास्तित्वे शारीरके वक्ष्यामः' इत्युपवर्षवाक्यमपि एतदभिप्रायकमेव। नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' 'ज्ञोत एव' इत्यादिक महमर्थात्मनः उक्तप्रकारेण श्रुतिभिस्स्वरूपनिरूपणपरम्। उक्तं च शरीरे भावाधिकरणे व्यासार्यैः—

## गूढार्थसङ्ग्रहः

'शारीरके वक्ष्याम' इति वृत्तिकारोक्तिस्तु न देहातिरेकमात्राभिप्राया, किंतु जडत्वज्ञानात्मकत्वस्थूलत्वविभुत्वाणुत्वाद्याकारविषया मन्तव्या' इति । 'सिद्धं तूपासनशब्दात्' इति लघुसिद्धान्तोदाहृतवाक्यपर्यालोचनायां 'सिद्धं तु निवर्तकत्वात्' इति वाक्यमुपासनाभिप्रायकं प्रवृत्तमित्यपि वक्तुं शक्यम् । 'युक्तं तद्गुणकोपासनात्' इति सद्विद्या उपासनरूपैव विवक्षितेति वाक्योक्तार्थः तेन दृढीकृतः । उपासनं ध्यानं तच्चापरोक्षज्ञानायोपयुज्यते, नतु मुक्तिरूपफलायेति शङ्कायां 'सिद्धं तु निवर्तकत्वात्' इति वाक्यं प्रवृत्तम् । 'उपासनं स्यात् ध्रुवाऽनुस्मृतिर्दर्शनान्निर्वचनाच्च' इति वाक्ये 'सत्वशुद्धौ ध्रुवास्मृतिः' इत्यादिछान्दोग्यश्रुतिर्विवक्षितेति लघुसिद्धान्ते निरूपितम् । 'ध्रुवानुस्मृतिः' इत्यत्र समाधिपर्यवसितस्मृतेरेव 'स्मृतिलम्भ' इत्यत्र लम्भपदोपादानेन सूचितायाः 'अनु' शब्देन विवक्षितत्वस्य समाधौ साक्षात्करोमीति प्रतीतिनियामकविषयताविशेषस्य तादृशसमाधेरेव प्राप्तिप्रतिबन्धकसर्वकर्मनिवर्तकत्वस्य च लघुसिद्धान्ते सम्यङ्निरूपणेन तत्रोक्तदिशा ध्यानरूपस्योपासनस्य प्राप्तिप्रतिबन्धकसर्वकर्मनिवर्तकत्वेन मुक्तिहेतुत्वं निराबाधमिति 'सिद्धं तु निवर्तकत्वात्' इति वाक्यस्याशयः ॥

द्रमिडाचार्यसम्मतराजकुमारन्यायपर्यालोचनायां 'सिद्धं तु निवर्तकत्वात्' इति औपनिषदपुरुषविषयकमित्यपि प्रतीयते । अन्तर्यामिणः उपनिषत्तात्पर्यविषयत्वं न सम्भवति अनुमानेन सिद्धेरिति 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ.५.८) इत्येतद्भाष्य [शं] वार्तिकयोः स्पष्टम् । एवमंशाधिकरणभामत्यामपि । 'जगत्स्थितियन्तृपूर्वा व्यवास्थितत्वात् राजपूर्वस्थितिवत्' इत्यनुमानं वार्तिके उपन्यस्तम् । ईशेशितव्यभावादिरूपो भेदः लोकसिद्धत्वात् न शब्देन प्रतिपाद्यः । अभेदस्तु अनधिगतत्वादधिगतभेदानुवादेन प्रतिपादनमर्हतीति अंशाधिकरणभामती । अतः 'तत्त्वमसि' इति वाक्यार्थस्य सिद्धान्तसंमतस्य नोपनिषत्तात्पर्यविषयता । सृष्टिवाक्यानां परिणामज्ञानस्य प्रयोजनासम्भवात् कार्यकारणयोः विभिन्नद्रव्यत्वाभावेन आत्मैक्यएव पर्यवसानम् । एवं च 'यथाऽग्नेः क्षुद्राः विष्फुलिङ्गाव्युच्चरन्ति' (बृ. ४.१.२०) इत्यादिभाष्ये (शं) परैरुपन्यस्तः राजकुमारन्यायः तद्भाष्योक्तदिशैव संगमनीयः । नतु समन्वयाधिकरण श्रीभाष्याद्युक्तदिशा । श्रीभाष्योक्तरीतौ दृष्टान्तदार्ष्टान्तिकयोः अत्यन्तानुरूप्यस्य उपोद्घाताधिकारे (र.त्र.सा) आचार्यैरुपपादनेऽपि प्रागुक्तदिशा अपूर्वत्वप्रयोजनवत्त्वयोरुभयोरभावात् सा रीतिर्नादरणीया इति शङ्का । एतत्परिहारः 'सिद्धंतु निवर्तकत्वात्' इत्यत्रानुसंधेयः, निवर्तकत्वादित्यस्य ज्ञानसङ्कोचनिवर्तकत्वादित्यर्थः । सृष्टेः ज्ञानसङ्कोचनिवारणार्थत्वं दयामूलकत्वमन्तर्यामित्वस्यापि तथाविधत्वं मुक्तिपर्यन्तफलसम्पादनेच्छया सृष्टिकरणेन सृष्टेः मुक्तिफलपर्यन्तत्वंचेत्यादिकम् 'औपनिषदपरमपुरुषेति' महासिद्धान्तारम्भसूक्तितात्पर्यवर्णनावसरे सम्यक् निरूपितमस्माभिः । उत्तरत्रापि यथाऽवसरं विवेचयिष्यते ॥

'तंत्वौपनिदं पुरुषम्' इति श्रुतौ पुरुषशब्दनिर्वचनपर्यालोचनया एतच्छ्रुतेः 'विज्ञानमानन्दं ब्रह्म' इत्याद्युपसंहारस्थ श्रुत्यैकरस्यपर्यालोचनया ब्रह्मशब्दार्थबृंहणत्वपर्यालोचनया च अयमेवार्थः द्रमिडाचार्यसम्मत इति पूर्वमेव निरूपितम् । अतश्च 'सिद्धंतु निवर्तकत्वात्' इत्यस्य छान्दोग्यवाक्यकारवाक्यत्वे तद्भाष्यकारद्रमिडाचार्यवाक्यत्वे वा न परसम्मतरीत्या अर्थः सम्भवति । प्रतियोगितावच्छेदकधर्मपुरस्कारमन्तरा उपलक्षितव्यक्तिप्रतियोग्यनुयोगिकभेदप्रतीतेरेवासम्भवात् । निर्धर्मितावच्छेदकनिष्प्रकारकज्ञानस्य तद्बाधकत्वस्याप्यसम्भवाच्च । जीवव्यापारसामान्यस्य यन्तृपूर्वकत्वं नानुमानेन सिध्यति । जीवे परमात्मान्तर्यामिकत्वज्ञाने राजकुमारस्थानापन्नस्य जीवस्य राजप्राप्तिस्थानापन्नपरब्रह्मप्राप्तिरूपमुक्तिदशायामपि पारतन्त्र्यप्रतिपत्तिः फलमपि सिध्यति । अद्वैतसिध्याद्युक्तरीतिस्तु वैयाकरणकात्यायनवार्तिकादौ नोप-

## गूढार्थसंग्रहः

लभ्यते । 'वृद्धिरादैच्' (अ.१.१.१) इति सूत्रे सतो वृध्यादिषु संज्ञाभावात् तदाश्रयेऽइतरेतराश्रयत्वात् अप्रसिद्धिः । 'सिद्धंतु नित्यशब्दत्वात् । किमर्थं शास्त्रमितिचेत् निवर्तकत्वात् सिद्धम् ।' इतिवार्तिकानुपूर्वी । अत्रान्योन्याश्रयदोषशङ्का । तत्परिहारः 'सिद्धं तु नित्यशब्दत्वात्' इत्यनेन ।

एवमेव 'इग्यणस्सम्प्रसारणम्' इति सूत्रे इतरेतराश्रयदोषशङ्कायां 'सर्वाणि चेतरेतराश्रयाणि एकत्वेन परिहृतानि ।' 'सिद्धं तु निवर्तकत्वात्' इति इत्येतदुत्तरं 'भाविसंज्ञाविज्ञानाद्वा' इति वार्तिकोक्तसमाधानानन्तरमुपन्यस्तं भाष्ये । अत्र तु 'यदि तर्हि नित्याश्शब्दाः किमर्थं शास्त्रम् ? किमर्थं शास्त्रमितिचेत् निवर्तकत्वात्सिद्धम् । निवर्तकं शास्त्रम् । कथम् ? मृजिरस्मै अविशेषेणोपदिष्टः । तस्य सर्वत्र मृजि वृद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते । मृजेराकिङ्त्सु प्रत्ययेषु मृजिप्रसङ्गे मार्जिस्साधुर्भवतीति समाधानवार्तिकस्यार्थः महाभाष्ये उक्तः ।' किमर्थं शास्त्रमिति चेन्निवर्तकत्वात् सिद्धमिति वार्तिकानुपूर्वी । शब्दानामनित्यत्वे मार्जिसाधुत्वार्थं शास्त्रमिति वक्तुं शक्यते । शब्दानां नित्यत्वे मार्जिरपि पूर्वमेव सिद्ध इति न तत्साधुत्वं प्रयोजनमिति शङ्का । धातुपाठे मृजिधातोः सत्वेन अकिङ्त्सु प्रत्ययेष्वपि मृजिप्रसङ्गे तन्निवृत्तिः फलमिति समाधानमत्रोक्तम् । अत्र ज्ञातार्थज्ञापकत्वप्रसङ्ग एव नास्ति ; अत्र च शब्दानामानित्यत्वे मार्जिरिति रूपसिद्धिः फलम् । नित्यत्वे मृजेरपि धातुपाठे निर्दिष्टस्य नित्यतया अकिङ्त्सु तन्निवृत्तिः फलमित्येव वैषम्यं दर्शितं भवति । इत्थं च ज्ञातार्थज्ञापकस्य 'तत्त्वमसि' इति वाक्यस्याज्ञातार्थज्ञापकत्वाभावेऽपि सर्वप्रमाणानामज्ञातार्थज्ञापकत्वेनैव प्रामाण्यमिति सन्मात्रग्राह्येव प्रत्यक्षमिति व्यवस्थापयद्भिः उपनिषदां सविशेषपरत्वे अज्ञातार्थज्ञापकत्वं न सम्भवतीत्यपि वदद्भिः एतद्वार्तिकदृष्टान्तेन 'तत्त्वमसि' इत्यादीनामखण्डार्थत्वोपपादनं कथं विदुषां हृदयंगमं भवेत ॥

एतेन 'अद्वैतश्रुतिः तात्त्विकप्रमाणम् अव्यावहारिकप्रमाणत्वे सति अज्ञातसप्रयोजनार्थकश्रुतित्वात्, अन्यथा प्रामाण्यानुपपत्तिरनुकूलस्तर्कः' इति गुरुचन्द्रिकायाम् आगमबाधोद्धारे यदुक्तं तन्नघटत इति सिद्धम् । सिद्धान्ते राजकुमारन्यायेन द्रमिडाचार्यप्रदर्शितेन ब्रह्मप्राप्तिरूपं प्रयोजनं श्रुतिषु यदुक्तं तत्परविद्यासामान्यफलमिति उत्तरत्र भाष्यएव स्थापयिष्यते । सद्विद्यानिष्ठस्यापि 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये' (छा.६.) इत्यत्र 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.८) इति तत्रैव वक्ष्यमाणं ब्रह्मप्राप्तिरूपं फलं विवक्षितमिति सूत्रकार एव निर्धारयतीत्यपि व्यक्तीभविष्यति । अतस्सन्मात्रग्राहित्वपक्षे सत्तात्रैविध्यवादिपक्षे च 'तत्त्वमसि' इत्यादीनां ज्ञातार्थज्ञापकत्वेन अनुवादत्वं भगवता यदापादितंतदप्रकम्प्यमिति ज्ञेयम् ॥

• यद्यपि ब्रह्मसिद्धौ (सि.का.४) 'सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते । प्रपञ्चस्य प्रविलयश्शब्देन प्रतिपाद्यते ॥ प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः । मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ॥ अथवा—न लोकेऽत्यन्तमप्रसिद्धं ब्रह्म सर्वप्रत्ययवेद्यत्वात्, ब्रह्मणो व्यतिरेकेण प्रत्येतव्यस्याभावात् विशेषप्रत्ययानां च सामान्यरूपानुगमात् भेदोपसंहाराविशिष्टं च सत्यं ब्रह्मेति प्रतिपादनात् 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति दृष्टान्तात् । किंतर्हि शब्देन प्रतिपाद्यते ? प्रपञ्चाभावः । तत्र प्रपञ्चपदार्थोऽपि सिद्धः । निषेधोऽपिसिद्धः तयोस्संसर्गात्तदभावप्रतिपत्तिः । आम्नायैकनिबन्धनत्वं तु तस्योच्यते । प्रत्यक्षादीनामविद्यासम्भिन्नत्वात् ; प्रत्यस्तमितनिखिलभेदेन रूपेण अविषयीकरणाद्धेदप्रत्यस्तमयस्याम्नायावगम्यत्वादिति' इति, 'अत्रापि च शब्दप्रमेयं स्वयमेव ब्रह्म पुरुषार्थः । जरादिविविधाशिवोपशमात् परमानन्दप्रकाशत्वाच्च सुप्रसन्नम् । अत एव 'तत् त्वमसि' इति श्वेतकेतुमुखेनानुशासनीयाय पुरुषाय श्रुत्याऽभिन्नमुपदिश्यते ; अभिन्नं हि तदनुशासनीयात् । भेदेन च प्रतीयमानं न पुरुषार्थः । तत्त्वे तादात्म्यज्ञाने च तथाभावाद्विश्वाशिवोपशमात् परम

## गूढार्थसंग्रहः

शिवभावाच्च परिपूर्णः पुरुषार्थ आप्तो भवति । यदि मतं प्रत्यक्षादीन्यपि प्रवृत्त्यङ्गान्येव प्रमितेऽर्थे हानोपादानादिलक्षणायाः प्रवृत्तेस्तन्मूलत्वात् । ईदृशं प्रवृत्त्यङ्गत्वमत्राप्यस्त्येव । शब्दात्प्रमिते ब्रह्मणि साक्षात्करणाय प्रवृत्तेरिष्टत्वात्' इत्युक्तम् ।

ब्रह्मकाण्डेऽपि 'केन पुनः प्रमाणेनास्यार्थस्य समधिगमः? नतावत्प्रत्यक्षेण, तस्यैतद्विपरीतभेदविषयत्वात्' इत्यादिना 'सर्वविशेषप्रत्यस्तमयेतु कथं प्रतिपत्तिस्स्यादित्यत्राह' इत्यन्तेनाशङ्क्य, 'आम्नायतः प्रसिद्धिं च कवयोऽस्य प्रचक्षते । भेदप्रपञ्चविलयद्वारेण च निरूपणात् । अनधिगतमपि प्रमाणान्तरेण अनधिगतसम्बन्धं च स्वशब्देन शक्यं शब्देन निरूपयितुं विशेषप्रतिषेधमुखेन विशेषशब्दानां नञश्च यथायथमर्थैर्विदितसङ्गतित्वात् । तथाचेत्थमेव तदुपदिश्यते 'अस्थूलम्' इति सर्वविशेषातिगम् । इति 'विशेषनिवृत्त्यैव तच्छब्देन बुद्धौ निधीयते, सुवर्णतत्त्ववत् नहि सुवर्णतत्त्वं पिण्डरुचकादिसंस्थानभेदोपप्लवरहितं दृश्यते । नच तदेव सुवर्णतत्त्वम् । तत्परित्यागेऽपि भावासंस्थानान्तरे अथ चा दृष्टसंस्थानभेदोपप्लवाविवेकमपि बुध्या भेदापोहद्वारेण स्वयं प्रतीयते परस्मै च प्रतिपाद्यते । स एष प्रतिपत्तिक्रमश्श्रुत्यैव दर्शितः 'स एष नेति नेति' इति तथापरैः 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चयते' इति, इत्युक्तम् ॥

तर्ककाण्डेऽपि 'नच प्रत्यक्षादीनामनन्यगतित्वादनवकाशत्वम् । याखलु रजतादिविभ्रमाणां गतिः सा तेषामपि इति तेषामुपचरितः कल्पितोवा विषयः प्रत्यक्षादीनामपि तथा' 'अथासत्वात्तस्याविषयाः अविद्यमानार्थाः प्रत्यक्षादयोऽप्येवम्' इत्युक्तम् । एतत्पर्यालोचनायां इदं रजतमिति प्रतीतौ रजतवत् 'सन् घटः' इति प्रतीतौ घटः मण्डनमिश्रसम्मत इति प्रतीयते । एवं च सप्रपञ्चब्रह्मणः प्रत्यक्षादिविषयत्वं निष्प्रपञ्चब्रह्मणस्तु श्रौतज्ञानविषयता इति श्रुतेरनुवादकत्वं नैतन्मते आपादयितुं शक्यम् ;

तथाऽपि (त्र) वार्तिककारसुरेश्वराचार्यादिमत एवैतद्दूषणम् । संवित्सिद्धौ महापूर्वपक्षे च ब्रह्मसिद्ध्युक्तप्रकारस्य सत्वेऽपि प्रमाणानुपपत्तिपरिहारः उभयत्र कृतः । **घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतिपत्तिर्विरुद्ध्यत** इति भाष्ये, 'तस्मादस्तीति संवित्तिः' इत्यादिसंवित्सिद्धौ च उक्तं दूषणमेतन्मतेऽपीति अनुपदमेव निरूपयिष्यते । किंच 'अस्थूलम्' इत्यादिविशेषनिषेधकश्रुतिषु विवक्षितः प्रपञ्चप्रलयः किं ब्रह्मस्वरूपः, आहोस्वित् तद्भिन्नः । ब्रह्मस्वरूपत्वेऽपि स्थूलादिभेदविषयकत्वात् भेदावगाह्येव भवीत । स्थूलात्यन्ताभावावगाहित्वेऽपि अभेदे धर्मधर्मिभावानुपपत्तिः उपक्रमे ब्रह्मसिद्धावेव उक्ता उपलक्षितावगाहित्वं उपलक्षणस्याप्रकारत्वमित्यादिकं ब्रह्मसिद्धौ क्वापि नोक्तम् । 'तत्तु समन्वयात्' इत्यत्र, 'तत्त्वमसि' इत्यादौ संसर्गावगाहिबोधस्यैव ब्रह्मसिद्धावुक्तेः । अतएव 'विज्ञाय प्रज्ञां कुर्वीत' (बृ.६.४) इत्येतदर्थविचारावसरे 'अन्येतु पण्डितंमन्याः' इति मण्डनमिश्रमतमुपक्रम्य 'तत्त्वमस्यादि वाक्योक्त विज्ञानेन यथोदितम् । विज्ञाय वस्त्वसंसर्गि प्रज्ञां कुर्वीतयत्नतः ॥ (७९७) संसर्गरूपं वाक्योत्थं ज्ञानं नीलोत्पलादिवत् । (८००) स्वभावतोऽखिलं वाक्यं संसर्गात्मकमेव हि । परोक्षवृत्त्या च तथा वस्तु बोधयति स्वतः ॥ (८०१) स्वस्वभावं नचोल्लङ्घ्य स्वभावान्तरसंश्रयात् । ब्रह्मासंसर्गि साक्षाच्च शब्दःशक्नोति बोधितुम् ॥' (८०२) इति वार्तिके सुरेश्वराचार्यैर्मण्डनमतानुवादस्सङ्गच्छते । अतः 'द्वारेणच निरूपणात्' इत्याद्युक्त्या ब्रह्मस्वरूपात् भेदमङ्गीकृत्य प्रपञ्चविलयसंसर्गावगाहिबोधएवास्थेयः ॥

भावाद्वैतमतविचारावसरे 'तस्माद्विज्ञानात्मनो ब्रह्मणः दुःखाभावोपाधिरेवानन्दशब्दः । यथा स्थूलाभावाद्युपाधयः 'अस्थूलमनण्वह्रस्वम्' इत्यादयश्शब्दाः' इत्याशङ्का, करणाच्च । 'विशिष्टस्याह्लादात्मनः प्रकाशस्य चान्द्रमसस्येव शब्दद्वयेन प्रतिपादनान्नदोषः । यथा च प्रकृष्टप्रकाशस्सविता इति । नच प्रकृष्टप्रकाशशब्दयोः पर्यायत्वम् । अथचैक एव

## गूढार्थसङ्ग्रहः

आभ्यामर्थविशेषः प्रतिपाद्यते प्रकाशविशेषः। नच प्रकर्षोऽन्यः प्रकाशरूपात्सवितरि । न प्रकाशरूपो वा प्रकर्षात्। अपि तु प्रकाशभेदश्शब्दद्वयोपायः प्रतीयते। तथा 'विज्ञानमानन्दं ब्रह्म' इति आनन्दभेदः विज्ञानभेदो वा ब्रह्मरूपमिति शब्दद्वयेनावगम्यते इत्यनन्तरोक्तावपि, 'तत्त्वमसि' इत्यादाविव संसर्गावगाहिबोधो विवक्षित इत्येव वाच्यम्। अत्र 'अस्थूलम्' इत्यादेः स्थूलभावाद्युपाधित्वस्योक्त्या स्थूलाभावप्रकारकबोध एव तत्र विवक्षित इति इत्युक्तम्। प्रकृष्टप्रकाशस्सविता इत्यत्र सवितृपदेनोपस्थापितस्य धर्मस्य प्रकारतया भानं मण्डनसम्मतमित्येव प्रतीयते । 'तत्त्वमसि' इत्यत्र संसर्गावगाहिबोधाभ्युपगमेन 'विज्ञानमानन्दं ब्रह्म' इत्यत्र संसर्गावगाहिबोधो नास्तीत्युक्तिर्न सम्भवति। उभयोः स्वरूपपरवाक्यत्वाविशेषात्। मानसप्रत्यक्षमेव निर्विशेषविषयकं संसर्गानवगाहि एतन्मते । (बृ) वार्तिक एव एतन्मतं दूषितम् 'नच प्रमान्तरैस्साक्षादज्ञाते ब्रह्मवस्तुनि। अयथावस्त्विति ज्ञानं वक्तुं शक्यं विपश्चिता॥ (८१६) नच मिथ्याधियोऽभ्यासात् सम्यग्ज्ञानसमुद्भवः। तथासत्यप्रयत्नेन मुक्तिस्स्यात्सर्वदेहिनाम्॥ (८२१) सम्यग्ज्ञानप्रसूतेश्च विघातायैव जायते। मिथ्याज्ञानाभ्यासहेतुः संस्कारो नतु जन्मने॥ (८२३)' इति॥

ब्रह्मसिद्धौ (नियोगकाण्डे) 'यस्तु तत्त्वावबोधनपराद्वाक्यात्तत्वावबोधः, नासौ शब्दार्थबोधात्पराचीनः। किंतु स एवेति । उपपादि चैतत् 'सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्' इत्युपक्रमात् 'तत्त्वमसि' इत्यन्ताद्वाक्यात् आत्मतत्त्वावबोधः पदानां परस्परान्वितार्थत्वात् किमन्यद्विधिः करिष्यति' इति, 'अथ तु वाक्यान्तरात्तत्वनिष्ठादधिगते तद्विषयप्रत्ययप्रवाहविधानमिष्यते। भवतु न कश्चिद्दोषः। तथा च 'विज्ञाय प्रज्ञां कुर्वीत' इत्यात्मतत्वविज्ञानस्य सिद्धतां दर्शयति। तदपि वा व्यर्थमेव प्राप्तार्थत्वात्। साक्षात्करणफलं हि तत्तदनुचिन्तनं दृष्टार्थम्' इति, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' इति भूत एव पर्यवसितं वाक्यम्। तत्र 'सदस्मीति धारयेत्' 'तथा च 'तत्तु समन्वयात्' इति चोदनालक्षणाद्धर्मात् तुशब्देन विशेष्यं ब्रह्म समन्वयगम्यमुक्तम् । समन्वयो हि पदानां संसर्गो विनियोगः' इत्यादिवाक्यपर्यालोचनायां वाक्यजन्यबोधः परोक्षरूपः संसर्गावगाही प्रमात्मक एव । ध्यानमन्तरा साक्षात्कारो न सम्भवतीति ध्यानं दृष्टार्थतयाऽपेक्षितम्। इति मण्डनसिद्धान्तः प्रतीयते । 'केन पुनरुपायेनाविद्या निवर्तते—योऽयं श्रवणमननपूर्वको ध्यानाभ्यासः प्रतीतिसिद्धाखिलभेदप्रपञ्चे स एष 'नेति नेति' आत्मनि स व्यक्तमेव भेददर्शनप्रतियोगी तन्निवर्तयति' इति, (ब्रह्मकाण्डे) 'उपासनादिना साक्षात्कृतात्मतत्वस्य तु विरोधात्सन्नपि प्रपञ्चावभासः नात्मसंस्पर्शी' (नियोगकाण्ड) इत्याद्युक्तेः॥ वार्तिके तु (बृ) भेदः संसर्गश्च 'तत् त्वमसि' इत्यादौ न वाक्यार्थ इति संबन्धवार्तिके ९२, ९४.श्लो. इत्यादौ सिद्धान्तकरणेन इत्थं दूषणमुक्तम्॥

'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' इत्यत्र कर्मफलविशेषेण ब्रह्मविद्याफलदातृत्वं ब्रह्मणो विवक्षितम्। तच्चब्रह्म प्रागुक्तः औपनिषदपुरुष एवेत्ययमर्थः महासिद्धान्तारम्भे **औपनिषदपरमपुरुष** इत्यत्र प्रागुपपादितदिशा भगवतोऽभिप्रेत इति निरूपणेन इयं श्रुतिः परेषां सर्वेषामद्वैतिनां प्रतिकूलैव। एतदाशयेनैव अत्र ब्रह्मसिद्धिकारमते पृथक्दूषणं नोक्तं श्रीभाष्ये॥

जीवाज्ञानवादादिषु एतन्मतमेवाचरता वाचस्पतिना 'विज्ञाय प्रज्ञां कुर्वीत' इति श्रुत्यर्थः एतदुक्तएवाभ्युगतः। उक्तं च भामत्याम्—तस्मान्निर्विचिकित्सशाब्दज्ञान संतति रूपोपासना कर्मसहकारिण्यविद्याद्वयोच्छेदहेतुः । नचासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता; साक्षाकाररूपो हि विपर्यासः साक्षात्काररूपेणैव तत्त्वज्ञानेनोच्छिद्यते, नतु परोक्षावभासेन' इति 'नचैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम्, अपितु प्रत्यक्षस्य; तस्यैव

## गूढार्थसंग्रहः

तत्फलस्य नियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । नचायमनुभवो ब्रह्मस्वभावः येन न जन्येत, अपित्वन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः । नचैतावता ब्रह्मणोऽपराधीनप्रकाशता । नहि शाब्दज्ञान प्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवीत सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते, नतूपहितमपि । यथाहस्म भगवान् भाष्यकारः नायमेकान्तेनाविषय इति, 'नचान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः । तस्यैव तदुपाधेः विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात् । अन्यथा चैतन्यछायापत्तिं विना अन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात् । तस्मात् यथा गान्धर्वशास्त्रज्ञानाभ्यासाहितसंस्कारसचिवश्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्छनाभेदमध्यक्षमनुभवति, एवं वेदान्तार्थज्ञानाभ्यासाहितसंस्कारो जीवस्य ब्रह्मभावमन्तःकरणेनेति' इति च । अत्र शाब्दज्ञानस्योपहितविषयकत्वं स्पष्टमुक्तम् ॥

अद्वैतसिद्धौ च (दृश्यत्वनिरुक्तौ) 'नहि वृत्तिदशायामनुपहितं तद्भवति । नच 'सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते' इति स्ववचनविरोध इति वाच्यम् ; तस्याप्युपहितपरत्वात् । नचैवं सति शुद्धसिद्धिर्नस्यादिति वाच्यम् । स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात् शुद्धं स्वप्रकाशमिति वाक्यस्य लक्षणया अशुद्धत्वं अस्वप्रकाशत्वव्यापकमित्यर्थः । तथाच अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति । नच शुद्धपदेनाभिधया लक्षणया वा शुद्धाप्रकाशे तत्प्रयोगवैयर्थ्यमिति वाच्यम् । पर्यवसितार्थमादाय सार्थकत्वोपपत्तेः' इत्युक्तम् ॥

लघुचन्द्रिकायांच 'ननु वृत्तिदशायामुपहितमेवास्ति । तस्य मिथ्यात्वे सत्यरूपाधिष्ठानशून्यताऽऽपत्तिस्तत्राह- नहीत्यादि । वृत्तिदशायामनुपहितं शुद्धं यदधिष्ठानमरूपमस्ति तन्नहि तदुपहितं भवतीत्यर्थः । तथाचानुपहितरूपस्योपहितदशायामपि सत्वात् नोपहितस्योक्तशून्यतेति भावः । उपहितपरत्वादिति । घटाद्याकारवृत्त्या घटाद्युपहितस्यैव सद्रूपस्य ग्रहणमिति भावः । सिद्धिः, संशयाद्यगोचरत्वम् । अशुद्धत्वं, उपहितत्वम् । अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यतीति । उपहितत्वशून्यब्रह्मनिष्ठाभावप्रतियोगितारूपेण स्वप्रकाशत्वं न ज्ञायत इत्यर्थः । अस्वप्रकाशत्वज्ञानं अनुपहितविशिष्टविशेष्यकं नेति यावत् । तथाच स्वप्रकाशत्वाद्यभावव्यापकाभावप्रतियोगित्वरूपायाः स्वप्रकाशत्वव्यतिरेकव्याप्तेः यदा उपहितत्वाभावरूपे शुद्धत्वे ज्ञानं उद्बुद्धसंस्कारो वा तदा उक्तशुद्धत्वविशिष्टे स्वप्रकाशत्वस्याभावो न ज्ञायते । पर्यवसितार्थमादायेति । शुद्धत्वविशिष्टे स्वप्रकाशत्वाभावज्ञानासंभवरूपं पर्यवसितप्रयोजनमित्यर्थः' इतिचोक्तम् ॥

गुरुचन्द्रिकायां च 'नच शुद्धतात्पर्यनिर्णायकविचारासिद्धिरिति वाच्यम् । उपहिततात्पर्यनिर्णायकविचारादेरेव श्रवणत्वादिसम्भवात्' इत्युक्तम् । एवं 'उपहितब्रह्मान्याविशेषितोपहितब्रह्मविषयकज्ञानत्वं तात्त्विकप्रमात्वम् । यादृश रूपविषयकस्य व्यावहारिकप्रमाबाधकत्वं तादृशरूपविषयकज्ञानस्यैव तात्त्विकप्रमात्वरूपत्वात् । नचोपहितब्रह्मणः आकाशादिबाधकधीविषयत्वानुपपत्तिः ; आकाशाद्यधिकसत्ताकत्वाभावात् । यद्यद्बाधकधीविषयः तत्तदधिकसत्ताकमित्युक्तव्याप्तेरिति वाच्यम् ; स्वाबाधकेत्यनेन यद्बाधकस्य विशेषणीयत्वात् । अन्यथा स्वाप्नयोर्गजतदभावयोः परस्परबाधधीविषयत्वस्य पूर्वोक्तस्यानुपपत्तेः । विवक्षितेतु स्वाप्नगजाभाववति स्वाप्नगजइत्याकारकज्ञानस्य स्वाप्नगजतदभावयोः स्वसमानाधिकरणस्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वविषयत्वेनोभयबाधकत्वात् । यद्बाधके स्वाबाधकत्वाभावात् यत्र धीविषयत्वं हि स्थाप्यं तत्स्वपदार्थः इति 'नच वाचस्पतिमते आत्मसाक्षात्कारस्य मानसत्वेन मनस्सन्निकर्षविषयाभ्यां जन्यत्वात् स्वोपतात्माविषयकत्वानुपपत्तिः; विषयनिष्ठप्रत्यासत्त्या तयोर्हेतुत्वेन स्वोपहिते तयोः स्वोत्पत्तिपूर्वमसत्त्वादिति वाच्यम् ;

## गूढार्थसङ्ग्रहः

सन्निकर्षाद्युपहितस्य स्वविषयस्य स्वोपहितत्वेन तदुपपत्तेः। यस्मिन्क्षणे यत्कारणकूटवत्तदव्यवहितोत्तरक्षणे तत्तादात्म्यापन्ने कार्योत्पत्तिरिति व्याप्तेः स्वीकारात्। नच विनश्यदवस्थसन्निकर्षादिना स्वोत्पत्तिस्थले भिन्नकालीनसन्निकर्षाद्युपहितात् स्वोप हितस्य अत्यन्तभेदात् यत्र मनस्संयोगोपहिते मनस्संयोगः तत्र लौकिकविषयतया न साक्षात्कारोत्पत्तिरित्युक्तानुपपत्तिरिति वाच्यम्; तावताप्यविनश्यदवस्थसम्प्रयोगात् तदुत्पत्तिसम्भवादिति सुधीभिर्ज्ञेयम् इतिचोक्तम्॥

अत्र 'सर्वप्रत्ययवेद्येऽस्मिन्' इति मण्डनकारिकायाः प्रत्यक्षादिविशेषप्रत्ययानां अनुवृत्तसन्मात्रावगाहित्वं यन्मण्डनेनोक्तं तत्परित्यज्य वाचस्पतिमतरीत्या उपहितविषयकत्वमर्थः इति वर्णितं मधुसूदनसरस्वतीभिः। मण्डनमते भेदनिषेधमुखेन निर्विशेषप्रतिपत्तिः 'तत्त्वमसि' इत्यादौ संसर्गविषयकएव वाक्यार्थबोधः। मानसप्रत्यक्षंतु संसर्गानवगाहिब्रह्म विषयकम्। वाचस्पतिमते उपनिषद्वाक्यजन्यज्ञानस्य मानसप्रत्यक्षस्य च अविशेषेण मिथ्याभूतोपहितविषयकत्वमेव। शुद्धस्य स्वप्रकाशतएव भानम्। इति विशेषः॥

अत्र 'नहि वृत्तिदशायामनुपहितं तद्भवति' इत्यनन्तरं 'सर्वप्रत्ययवेद्येऽस्मिन्' इति कारिकायाः उपहितपरत्वेन अर्थवर्णनं कथम्। मणिकृपाणादिषु मुखवत् तरङ्गेषु चन्द्रवत् सन्मात्रब्रह्मणः अनुवृत्तस्य प्रतीतिः तेनैव तर्ककाण्डे वर्णिता। 'अस्थूलमनणु' 'नेतिनेति' इत्यादिश्रुतीनां शुद्धपरता मण्डनेनैवोक्ता। 'संहृताखिलभेदोऽतःसामान्यात्मा सवर्णितः। हेमैवपरिहार्यादि भेदसंहारसूचितम्' इति ब्रह्मकाण्डान्ते उक्त्या 'भेदप्रपञ्चविलयद्वारेण च निरूपणात्' इत्यादिब्रह्मकाण्डपूर्ववाक्यानां 'प्रपञ्चस्य प्रविलय' इति उदाहृतसिद्धिकाण्डवाक्यानां च तेनैवार्थवर्णनेन अधिष्ठानभूतं शुद्धं घटादिभेदप्रकारेण मानान्तरे मणिकृपाणादिषु मुखवत् तरङ्गेषु चन्द्रवत् भासते। 'नेतिनेति' इत्यादिशब्दजन्यबोधेतु तस्यैव भेदप्रपञ्चनिषेधमुखेन प्रतिपत्तिः। भेदप्रपञ्चनिषेधमुखेनैव प्रतिपन्नस्य पुरुषार्थत्वं मण्डनेन निरूपितम्। वृत्तिदशायां उपहितसद्विषयकता सर्वप्रत्ययेत्यत्र न मण्डनेनोक्ता। घटः सन्नित्यादेः शुद्धसद्विषयकत्वं अनुवृत्तविषयकत्वस्य मण्डनेनोक्त्या सिद्धम्। विवरणादावपि अनुवृत्तत्वेन तदेवोक्तम्। अतएव 'ब्रह्मरूपे व्यवस्थिते' (ब्र.सि) इत्यस्य स्वारस्यम्। 'तत्त्वमसि' इत्यादिशब्दजन्यज्ञानं शब्दात्संसर्गानवगाहिबोधस्यानुभवविरुद्धतया संसर्गावगाहि। मानसापरोक्षंतु संसर्गानवगाहि एवं वैषम्ये स्थिते वाचस्पतिमतानुसारेण कारिकार्थवर्णनं न विदुषां हृदयङ्गमम्। सन्घट इत्यादेरधिष्ठानविषयकत्वं तु अद्वैतसिद्धावेवोक्तम्। शुद्धब्रह्मणएवाधिष्ठानतया तस्यैव प्रपञ्चतद्विलयमुखभेदेन प्रत्यक्षादेः भेदनिषेधश्रुतिजन्यज्ञानस्य विषयता। अतः मण्डनवाचस्पतिमतयोः नास्मिन्विषये ऐकरस्यं सम्भवति॥

वाचस्पतिमते 'अत्रायं पुरुषस्स्वयंज्योतिर्भवति' इति वाक्यजन्यज्ञानविषयीभूतं किं शुद्धं उपहितं वेति विवेचनीयम्। 'शुद्धं स्वप्रकाशमितिवाक्यस्य लक्षणया' (अ.सि.३४६.पु) इत्युक्तरीत्यैव 'अत्रायं पुरुषस्स्वयंज्योतिर्भवति' इत्यस्यार्थः वाच्यः। एवमर्थवर्णनं कथं घटते? तथार्थस्याभिप्रेतत्वे अशुद्धमस्वप्रकाशमिति क्रमं विहाय एवंश्रुतिविन्यासस्यैवा साङ्गत्यं स्यात्। 'किं ज्योतिरयं पुरुषः' इति प्रश्नः। 'आत्मैवास्य ज्योतिः हृद्यन्तर्ज्योतिः अत्रायं पुरुषस्स्वयंज्योतिः' इति प्रतिवचनम्। एतत्प्रतिवचनशैलीपर्यालोचनायां मधुसूदनसम्मतार्थः नैव श्रुतौ विवक्षितः। 'औपनिषदं पुरुषं' 'ब्राह्मीं वावतउपनिषदं' 'प्राणावै सत्यं तेषामेष सत्यम्' इत्यादिश्रुतीनां मिथ्याभूतोपहितविषयकत्वमेव वाच्यम्। एतच्छ्रुतिवत् 'अत्रायं पुरुषः' इत्यस्या अपि एतन्मते उपहितविषयकत्वमेव शब्दस्वारस्यानुरोधेनाङ्गीकरणीयम्। अङ्गीकारेच शुद्धस्य स्वप्रकाशत्वासिद्धिः सत्यार्थसिद्धिश्च न घटते। अतः 'अत्रायं—भवति' इत्यादिसर्वश्रुतीनां सत्यार्थविषयकत्वं परित्यज्य एवमर्थवर्णनं वाचस्पतिमतस्थापनाऽभिनिवेशमूलकमेव॥

## गूढार्थसंग्रहः

'यत् यद्बाधकधीविषयः तत्तदधिकसत्ताकम्' इति व्याप्तौ यद्बाधके स्वाबाधकत्वं निवेश्य उपहितस्य आकाशाद्यधिकसत्ताकत्वाभावेऽपि उपहितसक्षात्कारस्य वाचस्पतिमते आकाशादिबाधकत्वोपपादनमपि न सम्भवति स्वाप्निकगज तदभावयोर्मध्ये गजाभावस्य व्यावहारिकत्वं (३.२.४) सूत्रभाष्य भामती, भट्टपादवाक्यैः पूर्वमेव निरूपितम्। जाग्रद्दशायां स्त्रीदर्शनसाध्यचरमधातुविसर्गादीनां सत्यत्वं भाष्यभामत्योः उक्तम्। स्वप्नदर्शनस्य व्यावहारिकसत्त्वं कल्पतरौ स्पष्टमुक्तम् तत्र जाग्रत्यबाधएवमूलम्। तेन भामत्युक्ततत्साध्यचरमधातुविसर्गस्य जाग्रत्कालेऽबाधितस्य व्यावहारिकसत्यत्वमवश्यमेषितव्यम्। इत्थं च गजाभावस्याधिकसत्ताकत्वेन यद्बाधके स्वाबाधकत्वं नैव निवेशनीयम्। गजाभावज्ञानानन्तरं गजज्ञानसत्त्वे गजस्य अधिकसत्ताकत्वभ्रमेणैव तन्निवृत्तिभ्रमःनतु गजाभावस्य निवृत्तिः। अतः यद्बाधके स्वाबाधकत्वनिवेशस्यैव निष्फलतया मिथ्याभूतोपहितविषयसाक्षात्कारस्य वाचस्पतिमते स्वविषयसमानसत्ताकाकाशादिबाधकत्वं नैवसम्भवति॥

अविनश्यदवस्थमनस्सन्निकर्षात् आत्मसाक्षात्कारस्य वृत्तिरूपस्याङ्गीकारे वृत्तिविषयस्य वृत्त्युपहितत्ववत् मनस्सन्निकर्षोपहितत्वमपि वर्तत एवेति अस्य अविद्याद्वयनिवर्तकत्वं कथम्? अधिष्ठानविषयकसाक्षात्कारस्यैव अध्यस्तनिवर्तकत्वम्। साक्षात्कारदशायां तस्य वृत्त्युपहितत्वमवर्जनीयमिति तद्विषयकज्ञानस्य निवर्तकत्वमास्ताम्। नतु सन्निकर्षविषयकस्यापि तस्य। शुक्तिसाक्षात्कारस्य रजतनिवर्तकत्वस्थले सन्निकर्षानुपहितविषयकस्यापि तस्य निवर्तकत्वदर्शनात्, सन्निकर्षोपहितविषयकस्यैव निवर्तकत्वमित्यत्र नियामकाभावात्। किं च एवं कल्पनायां निर्विशेषशुद्धसाक्षात्कारस्य अज्ञाननिवर्तकत्वासम्भवेन निर्विशेषसिद्धिरेव न सम्भवति। तत्त्वमस्यादिवाक्यजन्यं ज्ञानं निर्विशेषशुद्धविषयकं वा न वा? द्वितीये साक्षात्कारस्यापि सन्निकर्षवृत्त्युपहितविषयकस्य निर्विशेषशुद्धविषयकत्वासम्भवेन निर्विशेषशुद्धवस्त्वसिद्धिरेव। आद्ये उपहितविषयकत्वोक्तिविरोधः। एवं मण्डनमतेऽपि संसर्गावगाहिवाक्यजन्यज्ञानस्य तदनवगाहिसाक्षात्कारोपयोगोऽपि न सम्भवति।

कल्पतरौ जन्माद्यधिकरणे 'यत्र पदार्थः प्रमितः तत्र सएवेतरपदार्थविशिष्टःप्रतिपाद्यः। यस्त्वज्ञातः स नान्यैश्शक्यो विशेष्टुमिति सएव वाक्येन प्रमेयः। प्रमितेचैतस्मिन् वाक्यस्य समाप्तेः न विशिष्टपरत्वम्। यथा 'प्रकृष्टप्रकाशश्चन्द्र' इति प्रकर्षप्रकाशद्वारा चन्द्रलक्षणान्नतद्वैशिष्ट्यम्। मानान्तरादेव तत्सिद्धेः उपायस्तु वैशिष्ट्यं अखण्डचन्द्रसिद्धौ। तच्च अविरोधाचन्द्रेऽनुज्ञायते। सत्यादिवाक्येतु अनन्तादिपदैर्बोध्यते वैशिष्ट्यम्। 'एवंचाविशि—अखण्डं प्रतिपेदे'(पु १७४) इत्याद्युक्तम्। अत्र परिमलः। अविशिष्टमिति—समभिव्याहृतपदान्तरार्थासंसृष्टमित्यर्थः। अतः प्रकृष्टप्रकाशश्चन्द्र इत्यत्र बोध्यस्य चन्द्रस्य पदार्थैकदेशेन चन्द्रत्वेन वैशिष्ट्येऽपि नासम्भवः। नच तत्त्वमस्यादिवाक्यार्थेषु अभेदरूपसंसर्गोऽस्तीत्यसम्भवश्शङ्कनीयः। सम्बन्धस्य द्विष्ठत्वनियमेनाभेदस्य संसर्गत्वाभावात्' इति। समन्वयाधिकरणे च 'नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः। तत्त्वमसि इत्यादिब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात्' इति भाष्यस्य भामत्यां 'नचानाधिगतगन्तृता नास्ति, येन प्रामाण्यं न स्यात्। जीवस्य ब्रह्मतायाः अन्यतोऽनधिगमात्' इत्युक्तम्॥

अत्र सत्यादिवाक्यात् प्रमित एवार्थः 'तत् त्वमसि' इति वाक्यस्य प्रमेयः। तस्य च इतरपदार्थासंसृष्टत्वेऽनधिगतार्थगन्तृत्वासम्भवः। संसृष्टत्वे उक्ताखण्डार्थकत्वानुपपत्तिः। प्रकृष्टप्रकाशश्चन्द्र इत्यत्र चन्द्रपदार्थचन्द्रत्वस्य वाक्यजन्यबोधे भानाभ्युपगमेन प्रकृष्टप्रकाशपदार्थैकदेशस्यापि वाक्यजन्यबोधे भानाभ्युपगमे तदाश्रयस्वरूपपरत्वमपि सम्भवत्येवेति बोधद्वयमङ्गीकृत्य वैशिष्ट्यस्योपायत्वकल्पनमपि न युक्तम्। वैशिष्ट्यबोधेऽपेक्षिते तदाश्रय स्वरूपविषयकबोधमात्रेणैव

### श्रीभाष्यम्

**सन्मात्रब्रह्मणः प्रमेयभावश्च ।**

### श्रुतप्रकाशिका

भ्युपेतम् । श्रुतिप्रामाण्यविरोधश्चउक्तः । पराभिमतर्थान्तरविरोधमाह । **सन्मात्रब्रह्मण इति** । ततः फलितमाह ।

### गूढार्थसंग्रहः

निर्वाहात् । एवैव रीतिः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रापि, नच ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यं उपचरितार्थत्वञ्चेति युक्तम् । तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य बोधकतया स्वतस्सिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात् । इत्युपक्रम्य 'नह्यागमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति येन कारणाभावान्नभवेत् । अपितु तात्त्विकं' नच तत्तस्योत्पादकं अतात्त्विकप्रमाणेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यः तत्त्वज्ञानोत्पत्तिदर्शनात् । तथा च वर्णे ह्रस्वदीर्घत्वादयो अन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः इति अध्यासभाष्यभामत्यामुक्तम् । अत्र ब्रह्मसिद्ध्युक्तपक्षद्वये (श्री.भा.पु.१८६) सन्मात्रग्राहितापक्षं परित्यज्य आम्नायप्राबल्यपक्षः एकएवोपन्यस्तः । अतः प्रत्यक्षादि ज्ञातार्थबोधकत्वस्य महावाक्ये असम्भवेऽपि एतन्मते सत्यादिवाक्यप्रतिपादितार्थबोधकतया महावाक्यानामनुवादकत्वं सम्भवति । मिथ्यार्थविषयकज्ञानस्य अविद्याद्वयनिवर्तकत्वाङ्गीकारेण 'भिद्यते हृदयग्रन्थिः' 'तरति शोकमात्मवित्' इत्यादिश्रुतीनां इतराद्वैतिमतापेक्षया एतन्मतेऽस्वारस्यं परमतिरिच्यते ॥

'तं त्वौपनिषदं पुरुषम्' इत्यादिश्रुतीनामस्वारस्यं तु सकलाद्वैतिमतेऽपि समानम् । अतः 'तत् त्वमसि' इत्यादीनामनुवादकत्वापादनं सुरेश्वराचार्य (बृ.वा), पद्मपाद (पञ्चपादिका), प्रकाशात्मयति (पं.पा.वि), सर्वज्ञात्ममुनि (सं.शा), वाचस्पति (भामती), मताभिप्रायकं सुस्थम् ॥ इष्टसिद्धौ— 'नन्वज्ञानं यदि जडे नास्ति ज्ञानमपि तत्र न स्यात् । अतश्च नाज्ञासिषं पूर्वं घटम्, इदानीं तं जानामीत्यादिव्यवहारो नस्यादिति चेत्, नायं दोषः ; पूर्वं द्वितीयं चन्द्रं नाद्राक्षम् इदानीं तं पश्यामीतिवत्तदुपपत्तेः' इति, 'प्रत्यक्षादेरनात्मत्वं यद्यनात्मानमीयते । तत्रासिद्धिश्रुतीनाञ्च तदात्मा हि न सेत्स्यति ॥ अत्रोत्तरं मयाऽवादि तथाऽप्यज्ञायि न त्वया । अतो वच्मि पुनर्व्यर्था विद्याऽनात्मास्विति स्थितम् ॥ अनात्मसु अविद्याऽभावेऽपि स्वप्नादिदृश्येष्विव मानमेयफलादिव्यवहारः । आत्मा विद्ययैव समस्तीत्यसकृन्मयोक्तम्' इत्यादौ जडे आवरणादिफलाभावान्नाज्ञानम् इति सुरेश्वरोक्तरीत्याङ्गीकारेऽपि प्रत्यक्षादीनामज्ञातसन्मात्रविषयकत्वं सुरेश्वरादिसंमतं नाङ्गीकृतम् । द्विचन्द्रस्वप्नदृष्टान्तेन ज्ञानाज्ञानयोः जडे व्यवहारः उपपादितः । ननु घटाद्यवच्छिन्नचिद्विषयकत्वेन । अतः सन्मात्रग्राहितायाः प्रत्यक्षस्य क्वाप्यनुक्तावपि श्रुतेर्निर्विशेषे प्रामाण्याङ्गीकारेण 'तत् त्वमसि' इत्यादीनां पूर्ववत् विमुक्तकाचार्यमतेऽपि अनुवादत्वापादनमभिमतमिति बोध्यम् ॥

**सन्मात्रब्रह्मणः प्रमेयभावश्चेति ।** इष्टसिद्धौ प्रमाणानामज्ञातज्ञापकत्वाभ्युपगमेऽपि घटादीनामज्ञातत्वाभावेऽपि स्वाप्नप्रत्ययवत् घटादिप्रत्ययः इत्येवोक्त्या प्रत्यक्षस्य सन्मात्रग्राहित्वानङ्गीकारेऽपि विवरणे घटः सन् इत्यादिप्रत्यक्षे अधिष्ठानमात्रविषयत्वाङ्गीकारेण अधिष्ठानत्वस्याज्ञानाश्रयत्वरूपत्वेन शुद्धसतएवाधिष्ठानत्वस्य अङ्गीकरणीयतया शुद्धसद्विषयकत्वं प्रत्यक्षस्याभ्युपगतं भवति । अतश्च विवरणमते प्रमेयत्वमपरित्याज्यम् । प्रेत्युपसर्गेण प्रतीतिगतबहुत्वं विवक्षितम् । विवरणे—'तस्मादनुभवः सजातीयप्रकाशान्तरनिरपेक्षः प्रकाशमानएव विषये प्रकाशादि व्यवहारनिमित्तं भवितुमर्हति । अभ्यधानेन विषये प्रकाशादि व्यवहारनिमित्तत्वात्' इति स्वप्रकाशत्वसाधनदशायां प्रकाशान्तरनैरपेक्ष्येण प्रकाशमा-

## गूढार्थसंग्रहः

नत्वमुक्तम् । प्रत्यक्षस्य सन्मात्रग्राहित्वे प्रकाशान्तरसापेक्षप्रकाशत्वेन स्वयम्प्रकाशभिन्नघटादिवत् जडत्वादि स्यादित्यर्थः । इष्टसिद्धौ ' अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात् ' इति स्वतस्सिद्धत्वसाधनावरे उक्तेः । भाष्ये नकारेण सतः प्रत्यक्षविषयत्वे प्रत्यक्षरूपत्वायोगः कर्मकर्तृविरोधादिति सूचितम् । अनुभवस्यैव स्वप्रकाशत्वस्य विवरणे साधनात् । ' तस्मात्चित्स्वभावएवात्मा तेनतेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते । अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते ' इति पञ्चपादिकोक्तेः तत्रापि विवरणे—' स्वयम्प्रकाशमानात्मचैतन्यस्य विषयानुभवत्वेऽपि ' इत्युक्तेश्च ॥

' नाशित्वादय ' इत्यत्र आदिपदेन अस्वयम्प्रकाशत्वस्यापि सङ्ग्रहः । सतः प्रत्यक्षविषयत्वे स्वातिरिक्तप्रकाश्यत्वेन स्वयम्प्रकाशत्वस्यासिद्धिरित्यर्थः । एवमादिपदेन मिथ्यात्वस्यापि सङ्ग्रहः । प्रपञ्चस्य दृश्यत्वेन मिथ्यात्वस्य परैस्साधनात् । शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वमिति अद्वैतसिध्द्युक्तदृश्यत्वस्य प्रत्यक्षस्य सन्माग्राहितापक्षे सन्मात्रब्रह्मणि सत्वात् । एतन्मते घटादीनां प्रत्यक्षाविषयतया वृत्तेर्विषयत्वमाकारः ज्ञानस्य तु तादात्म्यमिति विषयताभेदकल्पनेन घटादौ चित्तादात्म्यरूपं विषयत्वं वर्तते, ब्रह्मणितु अत्यन्ताभेदे तादात्म्यानङ्गीकारेण तन्नास्ति । एवं च चित्तादात्म्यरूपचिद्विषयत्वमेवात्र हेतुः इति कल्पनाऽपि न सम्भवति । प्रत्यक्षादीनां ब्रह्ममात्रविषयकत्वेन घटादौ विषयत्वस्यैवाभावेन चित्तादात्म्यरूपविषयत्वस्य कल्पनस्यैवासम्भवात् ॥

ननु दृश्यत्वेन मिथ्यात्वं सन्मात्रग्राहिप्रत्यक्षवादे नोच्यते, ' सर्वे विकाराः स्वानुस्यूतैकस्मिन्वस्तुनि परिकल्पिताः । प्रत्येकमेकस्वभावानुविद्धत्वेसति विभक्तत्वात् चन्द्रभेदवत् ' । इति जन्माद्यधिकरणविवरणे ' प्रत्येकमनुविद्धत्वादभेदेन मृषा मतः । भेदोयथा तरङ्गाणां भेदाद्भेदःकलावतः ॥ ' इति ब्रह्मसिध्द्य(तर्ककाण्ड)नुसारेण मिथ्यात्वानुमानस्याभिधानात् । ' सन् घट ' इति प्रत्यक्षविषयीभूतसच्छब्दार्थविचारावसरे प्रमाविषयत्वं तद्योग्यत्वं च सत्त्वमिति मतं निरस्य ' स्यादेतत् ' ' भिन्नाएवार्थस्वभावाः प्रमाणंप्रति योग्याः सच्छब्दवाच्यास्सन्तु ' नैका सत्ता । माभूत् नैतत् साध्यं सर्वथा अर्थस्वभावाभिधाय्यस्ति शब्दो न प्रमाणयोगनिमित्त इति । प्रमाणं संस्पर्शेहि सापेक्षता स्यात्, अनेकतातु न कंचिद्दोषमावहति । अपिच यदि तस्यानेकत्वं, कथमभिन्नशब्दप्रवृत्तिः ? तथाहि भिन्नेष्वभिन्नं विशेषणमुपलक्षणं वा आश्रित्य एकः शब्दः वर्तेत । भिन्ननिमित्तो वा साधारणशब्दः स्यादक्षादिवत् । तत्र न तावदनन्तार्थस्वभावेषु साधारणत्वमुपपद्यते । संबन्धग्रहणसामर्थ्याभावात् परिमितजातिविषयाह्यक्षादिशब्दाः परिमितोपलक्षणलक्षिता वा स्युः । स्यादेतत् । द्रव्यत्वादिसामान्यत्रयोपलक्षितानामर्थानां सच्छब्दस्साधारण इति, तन्न यो हि सत्तामवजानीते स द्रव्यत्वादीन्यप्यवजानीत एव । न किल तेजो दृष्टवतः अप्सु तदवमर्शो भवति । अपि च सामान्यविशेषसमवाया अपि सन्त एव । न तेष्वौपचारिकः सच्छब्दः । प्रत्ययस्यावैलक्षण्यात् । नच सामान्याद्विनोपचारः । सति वा सामान्ये तदेव च सच्छब्दार्थः तदेव च सत्ता, तुल्यत्वात्प्रत्ययस्य । अथ मतं सर्वप्रवादेषु सर्वपदार्थाःपरिमितैः कैश्चिद्धर्मैः उपसंगृहीताः तदुपलक्षणानामनन्तानामप्यर्थानां सदिति साधारणश्शब्दः । तदयुक्तम् । संग्रहो हि नैकमन्तरेण इत्यारभ्य, ' तस्मादर्थस्वभाव एकस्सत्तेति ब्रह्मविदो मन्यन्ते ' इति नियोगकाण्डे, ' एकस्यैवास्तु महिमा यन्नानेव प्रकाशते । लाघवान्न तु भिन्नानां यत्प्रकासत्यभिन्नवत् ' इति तर्ककाण्डे च ब्रह्मसिद्धावुक्तम् ॥ एवं च ' सजातीयविजातीयव्यवच्छेदानिबन्धनैः । स्वैः स्वैर्व्यवस्थितै रूपैः पदार्थानांतु या स्थितिः । सासत्ता न स्वतन्त्रान्या तत्राद्वैतकथा कथम् ' इति संवित्सिध्द्युक्तिः कथं घटते ?

किं च जातेर्नित्यत्वं व्यक्तीनामनित्यत्वं भट्टपादादीनां नैयायिकादीनां च संमतम् । एतदर्थमेवावष्टभ्य जातिसत्यत्वं व्यक्त्यसत्यत्वं च शब्दविवर्तवादिना भर्तृहरिणा वाक्यपदीये सिद्धान्तितम् । एतदेवचावलंब्य ब्रह्मविवर्तवादे

### श्रीभाष्यम्

**ततो जडत्वनाशित्वादयस्त्वयैवोक्ताः । अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्ट विषयमेव प्रत्यक्षं । संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् । तावतैव गोत्वादिजातिव्यवहारोपपत्तेः अतिरेकवादेऽपि संस्थानस्य सम्प्रतिपन्नत्वाच्च संस्थानमेव जातिः ।**

### श्रुतप्रकाशिका

**अतइति** । एवमुपपादितं प्रत्यक्षस्य सन्मात्रग्राहित्वप्रतिक्षेपं स्वाभिमतार्थान्तरव्युत्पादनाय प्रत्यक्षस्य विशिष्टविषयत्वे पर्यवसाययति । **अतइति** । अतइत्यादिभाष्ये अर्थद्वयमुक्तं वस्तुसंस्थानरूपा जातिः जात्यादिरेव भेदइति च । तत्र प्रथमं संस्थानमेव जातिरित्युपपादयति । **संस्थानेत्यादिना** । किं दर्शनेन उतानुपपत्त्या वा संस्थानातिरिक्तजात्यभ्युपगमइति विकल्पमभिप्रेत्य दर्शनं नेत्याह । **संस्थानातिरेकिणइति** । * अयं सास्नादिमान् अयमपि सास्नादिमान् अयं पृथुबुध्नोदराकारः अयमपि तदाकारइति सास्नादिरनुवृत्तबुद्धिव्यवहारविषयो दृश्यते । तदतिरिक्तोऽनुवृत्तधीव्यवहारविषयो न कश्चिद्दृश्यते तस्मादित्यर्थः ॥

यद्वा जातितयास्वाभिमतात्संस्थानात् पराभिमतजातेरसाधारणं रूपमुक्तम् एकाकारबुद्धिबोध्यस्येति । कल्पनमित्यनुपपन्नमित्याह । **तावतेति** । व्युत्पत्तिरनुगतप्रयोगश्च व्यक्तिजातिविशेषादिशब्दानामिव गवादिशब्दानामपि सुसदृशोपाधिवशादुपपद्यतइति भावः । * नामान्तरेण पराभिमतजातेरभ्युपगतत्वशङ्काव्युदासायाऽह । **अतिरेकवादेपीति** ।

### गूढार्थसंग्रहः

सद्रूपं जातिस्थानापन्नं ब्रह्म प्रत्यक्षविषयः । व्यक्तिस्थानापन्ना घटादयस्तु शुक्तिरूप्यादिवद्भासन्त इति ब्रह्मसिद्धौ, घटादीनां प्रत्यक्षविषयत्वमेव नास्तीति विवरणे च सिद्धान्तितम् । विवरणकारमतंच परिष्कृतमद्वैतसिध्द्यादौ । अतो लाघवात्सच्छब्दार्थस्यैकत्वे तन्मतमेव युक्तम् ॥ **भेदः स्वरूपं वा धर्मो वा** इति विकल्प्य दूषणानां परिहारः पूर्वं न सम्यक्प्रदर्शितः । जातेः संस्थानरूपत्वमपि न निर्धारितम् । अतः पूर्वं प्रक्रान्तस्य अर्थद्वयस्य सम्यग्व्यवस्थापनेन 'सजातीयविजातीय' इत्यादि (सं.सि) यामुनमुन्युक्तार्थं प्रतिष्ठापयितुं तमेवार्थद्वयमुपसंहरति **अतो वस्तुसंस्थानरूपेत्यादिना** ।

**संस्थानमेव जातिरिति** । अत्र तत्त्वटीका 'अभाषत च संस्थानजातिमेव पतञ्जलिः । जातिनित्यत्ववादोक्तिरन्वारूह्येति नीयताम् ॥' इति । 'अइउण्' इत्येतन्महाभाष्यान्ते 'रूपसामान्याद्वा' (वा) रूपसामान्याद्वा सिद्धमेतत् । तद्यथा तानेव शाटकानाच्छादयामः ये मथुरायाम् । तानेव शालीन् भुञ्ज्महे ये मागधेषु । तदेवेदं भवतःकार्षापणं, यन्मथुरायां गृहीतम् । अन्यस्मिश्चान्यस्मिन् रूपसामान्यात्तदेवेदमिति भवति । एवमिहापि रूपसामान्यात्सिद्धम् इति । अत्र प्रदीपः–' रूपसामान्यादिति व्यक्तिनिर्देशेऽपि भेदापरामर्शेन लोकवदभेदव्यवहारोऽप्यस्तीति सिद्धमिष्टम् । व्यक्तिव्यतिरिक्तंतु सामान्यं भवतु मावाभूत् । सर्वथा लोकइव शास्त्रे व्यवहारइत्यर्थः ' इति । उद्योतश्च अभेदव्यवहारइति । रूप सादृश्यनिबन्धनप्रत्यभिज्ञाकृताभेदव्यवहार इत्यर्थः । अल्प महत्स्थूल कृश ह्रस्व दीर्घ गोघटादिषु गौर्घट इत्यादिव्यवहारवदिति भावः । एवं च व्यक्तिव्यतिरिक्तजातिस्वीकारोऽपि व्यर्थ एवेत्याशयेनाह- व्यक्तिव्यतिरिक्तंत्विति । मावेति । अनुगतप्रतीतिव्यवहारयोः सादृश्येनैवोपपत्तेरिति भावः । सादृश्यंचात्र समानध्वानिक्तम्' इति ।

अत्र 'अइउण्' इत्येतन्महाभाष्ये अन्ते इत्थमुक्त्या अयमेव पतञ्जलिसिद्धान्त इति प्रतीयते । अत्र च 'रूपसामान्याद्वा' इति वार्तिके, 'रूपसामान्यात्सिद्धमेतत्' इत्यादिभाष्ये च सादृश्येनैव निर्वाहे जातिर्नाङ्गीकरणीयेति सिद्धान्ति

## श्रीभाष्यम्

**संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयम् ।**

## श्रुतप्रकाशिका

परैरवयविनोऽसमवायिकारणत्वेन संस्थानं स्वीकृतम् । किमिदं संस्थानं नाम किमवयवसंयोगविशेषः उत स्वरूपमात्र– उतान्यत्किमपि । प्रथमे निरवयवेष्वात्मादिषु संस्थानाभावादात्मत्वादिर्जातिर्नस्यात् । द्वितीये प्रत्यक्षस्य विशिष्टविषयत्वं नस्यात् । * जातिमात्रोच्छेदश्च स्यात् । तृतीये गत्यभावादस्मत्पक्षाङ्गीकारइति शङ्कायां निरवयवेष्वपि जातिव्यवहारसिध्यर्थं जात्यजातिसाधारणं संस्थानमात्रं दर्शयति । **संस्थानं नामेति** । घटस्य द्रव्यत्वं संस्थानं माभूदित्यसाधारणशब्दः रूपं अपृथक्सिद्धविशेषणम् । तेन गर्भदासादिव्यवच्छेदः ॥

**ननु** स्वासाधारणमित्यत्र स्वशब्दः किं व्यक्तिपरः उत सजातीयपरः व्यक्तिपरत्वेच किमेकव्यक्तिपरः उतसर्वव्यक्तिपरः प्रथमे एकव्यक्त्यतिरिक्तव्यक्तिषु गोत्वं नस्यात् । स्वशब्दस्य सर्वव्यक्तिपरत्वे महिषव्यक्तावपि गोत्वं स्यात् असाधारणशब्दश्च निष्फलः सजातीयपरत्वे जातेस्संस्थानविशेषत्वात् । समानसंस्थानविशेषाणामसाधारणंरूपं संस्थानमित्युक्तंस्यात् । ततश्चात्माश्रयः संस्थाननिरूपणस्य तत्प्रतिपत्तिसापेक्षत्वात्—नैवं स्वशब्दस्य प्रकृतपरत्वात् । प्रकृतत्वं च तत्तद्व्यवहारगोचरतया बुद्धिस्थत्वम् एवं तर्हि खण्डे बुद्धिस्थे गोत्वं तदसाधारणमिति मुण्डे गोत्वं न स्यात् । खण्डस्यवा गोर्गोत्वं संस्थानं न स्यात् मुण्डेऽपि विद्यमानतया गोत्वस्य खण्डासाधारणत्वाभावादितिचेन्न खण्डं प्रति गोत्वस्य संस्थानरूपत्वाभावात् । खण्डत्वमेवहि खण्डस्य संस्थानं किं तत्र खण्डो बुद्धिस्थः उतगौः उतखण्डोगौः प्रथमे खण्डत्वमेव खण्डासाधारणमिति न मुण्डे गोत्वाभावप्रसङ्गः । अतएव खण्डं प्रति गोत्वस्य संस्थानरूपत्वाभावश्च नानिष्टः द्वितीये गोर्गोत्वमसाधारणमिति महि-

## गूढार्थसंग्रहः

**तम्** । सादृश्यमपि नातिरिक्तः पदार्थः । तथासति तत्सदृश इत्येव प्रतीतिप्रसङ्गात् गौरिति प्रतीत्यनुपपत्तेः । किंतु तद्भिन्नत्वे सति तद्गतधर्मवत्त्व**म्** । सच धर्मस्संस्थानमेव । तस्यैव प्रत्यक्षाविषयत्वे अविप्रतिपन्नत्वात् । यथा आरम्भवादे अवयवातिरिक्तावयविनः अनुपलब्ध्या संस्थानरूपपरिणामभेदेन व्यवहारः परिणामवादिनां सर्वेषां संमतः । एवमेव जातिव्यञ्जकत्वेन परेषामप्यपेक्षितेन प्रत्यक्षविषयत्वेन संप्रतिपन्नेन गौरिति व्यवहारादिकमुपपद्यत इति जातिरपि नैवाभ्युपगन्तव्या । सादृश्यं क्वचित्प्रतियोगितया क्वचिदनुयोगितया वर्तते । इमौ सदृशाविति प्रतियोग्यनुयोगिभावेनोभयोरपि सादृश्यव्यवहारात् । इत्थं च गौर्गौरिति यत्र यत्र व्यवहारः तत्र सर्वत्र इयं गौर्गोत्वेन तद्गोसदृशी इति व्यवहारः संप्रतिपन्नः । एवं इमे गावौ सदृश्याविल्यपि ॥ एवं च सादृश्यस्यातिरिक्तत्वमस्तु वा मा वा । सादृश्यस्यातिरिक्तत्वाभावेऽपि क्लृप्तधर्मरूपस्य तस्यैव क्वचिदनुयोगितया अन्यत्र प्रतियोगितया च सत्त्वाभ्युपगमेन गौरित्यादिव्यवहार उपपद्यते । भावत्वं समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वमिति परिष्कृत्य भाव इत्यनुगतव्यवहारस्य नैयायिकैरुपपादनेन तद्वत् प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन संस्थानरूपसादृश्येनैव गौरिति व्यवहारो निर्वहति । एक एव सम्बन्ध इति यद्याग्रहः तदा निरूपकत्वं प्रतियोग्यनुयोगिनोरुभयोरङ्गीकृत्य गौरिति व्यवहारनिर्वाहोऽपि सम्भवतीति वैयाकरणभाष्यकार वार्तिककारसिद्धान्त एव युक्त इति भगवत आशयः ॥

**संस्थानं नामेत्यादि** । सावयवेषु अवयवसन्निवेशः आत्मसु ज्ञानं तदितरेषु निरवयवेषु तत्तल्लक्षणं च संस्थानम् । नित्याया जातेरङ्गीकारे तस्यास्सर्वव्यापकत्वमवश्यमेषितव्यम् । तत्तदाश्रयव्यक्तिभिन्नव्यक्तिषु जातेरसम्बन्धे

## श्रुतप्रकाशिका

षादौ गोत्वं निवर्तते गोषुच वर्ततइति न कश्चिद्दोषः । तृतीये यथा नीलोत्पलस्य नीलत्वविशेषितमुत्पलत्वमसाधारणम् । एवं खण्डस्य गोः खण्डत्वविशेषितगोत्वमसाधारणमिति मुण्डे खण्डत्वविशेषितगोत्वमेव निवर्तते न गोत्वमात्रमिति न काचिदनुपपत्तिः नीलत्वविशेषितमुत्पलत्वमिन्दीवरशब्दप्रवृत्तिनिमित्तत्वादेकं संस्थानम् । खण्डत्वगोत्वे तु मिथो विशेषणविशेष्यभावेऽपि नैकं संस्थानम् । * एकशब्दप्रवृत्तिनिमित्तत्वाभावादिति भिदा । अतः स्वासाधारणरूपं संस्थानम् ॥

कस्तर्हि जातिरूपसंस्थानानां शौक्ल्यादिभ्योभेदः स्वभावतारतम्याभावादिति ब्रूमः शौक्ल्यादिषुशुक्लंशुक्लतरमिति तारतम्यं विद्यते शब्दादिष्वप्युपाधितो वा स्वतोवा तीव्रतरत्वादितारतम्यमुपलभ्यते खरत्वमृदुत्वादि स्वभावतारतम्यं स्पर्शादिष्वप्यस्ति सङ्ख्यास्वपि न्यूनाधिकभावउपलब्धः परिमाणे च स्फुटतरः । एवं गोत्वादिषु गोतरो गोतम इति तारतम्यं नोपलभ्यते एवमादिवैषम्यं द्रष्टव्यम् । * जातिरूपसंस्थानलक्षणमिह विवक्षितंचेत् प्रकृताकारेण सुसदृशव्यक्तयस्समस्तास्स्वशब्देन विवक्षिताः प्रकृताकारेणेत्यात्माश्रयः परिहृतः संस्थाननिरूपणस्य संस्थानप्रतिपत्तिनैरपेक्ष्यात् । सुसदृशशब्देन महिषादावतिप्रसङ्गः परिहृतः समस्तशब्देन मुण्डादिष्वभावप्रसङ्गः परिहृतः । खण्डासाधारणत्वाभावात् गोत्वस्य ॥

**ननु** व्यावृत्तं संस्थानम् अनुवृत्तव्यवहारस्य कथं निष्पादकम् । उच्यते–यथा व्यक्तित्वजातिविरहेऽपि बह्वीषु व्यक्तिषु व्यक्तिशब्दप्रयोगः । यथा वा गोत्वाश्वत्वादिजातिषु जात्यन्तराभावेऽपि जातिशब्दप्रयोगः । भिन्नेषु भिन्नत्वजात्यभावेऽपि भिन्नशब्दप्रयोगः । खण्डादिषु खण्डत्वादिजात्यभावेऽपि खण्डादिशब्दप्रयोगः । यथा च नित्यद्रव्येषु विशेषमिच्छतां विशेषेषु विशेषत्वाभावेऽपि विशेषशब्दप्रयोगः । तद्वद्गवादिशब्दव्यवहारउपपद्यतइति । किंच–कोऽयमनुवृत्तव्यवहार इति निरूप्यम् । गकारौकारविसर्जनीयानामानुपूर्वी यावदाकाशभाविनां * देशतः कालतश्च नोपपद्यतइति *तस्याउच्चारणनिबन्धनत्वादुच्चारणस्य च विनाशित्वादानुपूर्वी च प्रतिप्रयोगयोगिविनाशिनीत्यानुपूर्वीविशेषविशिष्टस्यशब्दस्य कथमनुवृत्तिः सुसदृशत्वमेव शब्दानामनुवृत्तिरितिचेत् अर्थानामपि गोत्वादीनां तथाभूताऽनुवृत्तिरित्यङ्गीक्रियताम् ॥

**ननु** किमिदं सौसादृश्यम् । उच्यते–सदृशव्यवहारासाधारणहेतुर्विषयधर्मस्साद्दृश्यम् । सच भ्रातृत्ववत् प्रतियोगिनिरूप्यपदार्थः प्रतिव्यक्तिव्यावृत्तः । अतो न * वृत्तिविकल्पादिदौर्घस्थ्यम् । निर्दिष्टाकारपौष्कल्यतस्सादृश्यं सौसादृश्यमिति विशेष्यवाचिशब्दप्रवृत्तिनिमित्तपौष्कल्यं विवक्षितम् । पौष्कल्यशब्देन गवयनिष्ठगोसादृश्यं न सौसादृश्यमिति सिध्यति । नन्वेवं तर्हि प्रथमेतरगोव्यक्तिषु गवा सुसदृश इत्येव प्रयोगस्स्यात्–नतु गौरितीतिचेत् यदि विवक्षा तदा प्रयुज्यताम् । अयंगौः अयं * गवा सुसदृश इति प्रयोगेऽर्थभेदाभावात् । किं तर्हि न प्रयुज्यतइतिचेत् व्यवहारगौरवादिति **ब्रूमः** * गौरिति व्यवहारे हि लाघवात्सौकर्यमस्ति । ननु तर्हि तत्सदृशे तच्छब्दो माणवकेऽग्निशब्दवदौपचारिकस्स्यात् । न । सौसादृश्यलक्षणानुवृत्त्यभावनिबन्धनत्वादौपचारिकत्वस्य । नहि माणवकाग्न्योस्सौसादृश्यम् । किंतु सादृश्यलेशमात्रम् । पक्षे तु सौसादृश्यलक्षणाऽनुवृत्तिरुपलभ्यते । तस्य च मुख्यताहेतुत्वं व्यवहारसिद्धम् । यथा जालादिशब्दानाम् । अतोऽनुवृत्तप्रयोगउपपन्नः कस्मिंश्चिदर्थे कस्यचिच्छब्दस्य व्युत्पत्तिः तत्सुसदृशेऽर्थे सुसदृशस्य तस्यैव शब्दस्य प्रयोगहेतुरिति यथा दर्शनमभ्युपगन्तव्यम् । अप्रतिपन्नमर्थान्तरं कल्पयित्वा वृत्तिविकल्पादिदोषाणां प्रतीतिशरणतया परिहारादपि परिदृष्टएव वस्तुनि प्रतीतिबलेन चोद्यपरिहारोहि लाघवन्यायादुपपद्यते–* व्याप्तिग्रहणं च सौसादृश्यलक्षणानुवृत्तेरेवोपपद्यतइति तदपि नत्वदभिमतजातिकल्पकम् । अतो न संस्थानातिरिक्ताजातिः ॥

## श्रीभाष्यम्

**जातिग्रहणेनैव भिन्नइति व्यवहारसम्भवात्,**

## श्रुतप्रकाशिका

**ननु** संस्थानस्यासाधारणाकारत्वात्तेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च, शुक्त्यादौ रजतादिभ्रमो न स्यात्। नह्यसाधारणाकारस्फूर्तौ भ्रमस्सम्भवतीतिचेत् नकेनापि संस्थानेन प्रतिपन्नवस्तुनि * प्रतिपन्न संस्थानाविरोध्याकारविषयभ्रमोपपत्तेः। प्रतिपन्नसंस्थानविरोध्याकारभ्रमस्यैवह्युत्पत्त्यसम्भवः। इदं शुक्लमिति प्रतीतौ न कार्ष्ण्यादिभ्रमः। शौक्ल्यं हि शुक्लस्यासाधारणं न शुक्तेः, अतो साधारणाकारप्रतीतिर्भ्रान्तिश्चोपपद्यते। एवमापेक्षिकंचेदसाधारण्यं तर्ह्यसाधारणशब्दवैयर्थ्यं स्यात्। नहि किमपि रूपं कस्यचिदसाधारणं न भवतीतिचेन्न–शुक्त्यपेक्षया शौक्ल्यस्य संस्थानत्वव्युदासार्थत्वादसाधारणशब्दस्य। अतः स्वासाधारणरूपं संस्थानम्। ततोऽनतिरिक्ता जातिरिति सिद्धम्॥

**इत्थं** संस्थानमेव जातिरित्युपपाद्य गोत्वादेरेव भेदत्वं पूर्वं प्रस्तुतमुपपादयति। **जातिग्रहणेनेति**। प्रतियोगिनिरपेक्षो गोत्वादिः प्रतियोगिसापेक्षो भेदो भवितुं नार्हति। अतः प्रतियोगिसापेक्षेतरेतराभावो गोत्वाद्यतिरिक्तो भेदोऽभ्युपगन्तुमुचित इति शङ्कायामुच्यते। **जातिग्रहणेनैव भिन्नइति व्यवहारसम्भवादिति**। अयमर्थः गोत्वादिव्यतिरिक्तभेद-

## गूढार्थसङ्ग्रहः

एकत्वभङ्गः। अतस्सम्बन्ध एषितव्यः। सम्बन्धाङ्गीकारे घटादावपि गौरिति व्यवहारस्स्यात्। तद्वारणं च स्वाश्रयव्यक्तौ समवायेन सत्वं नैयायिकप्राभाकरमते। भेदाभेदवादिमते तु तादात्म्येन। अन्यत्र तु अन्यसंबन्धेनेति. सबन्धभेदमभ्युपगम्य समवायादिना सत्वं गौरिति प्रतीत्यादिनियामकमङ्गीकृत्य आश्रयव्यक्तीनां संस्थानस्य वा गोत्वव्यञ्जकत्वमभ्युपेत्य वा घटादौ गौरिति प्रतीत्यादिवारणं कार्यम्। अतश्च गौरवम्। अतश्च जातेर्नित्यत्वे एकत्वे घटादौ गोत्वव्यवहार विरहएव बाधकः। जातिवादिभिः अतिरिक्ताभावाङ्गीकर्तृभिः अभावे न जातिरङ्गीक्रियते। एवं बहुषु स्थलेषु अखण्डोपाधिरपि कल्प्यते। एवं जातिः अखण्डोपाधिरिति भेदकल्पनमपि स्वोत्प्रेक्षयैव क्रियते। अनुगतधर्मः जाति र्वाऽखण्डोपाधिर्वा नैव अभ्युपगम्यते। अतः प्रत्यक्षविषयत्वेन संप्रतिपन्नसंस्थानादिनैव सादृश्यापरपर्यायेण प्रतीतिव्यवहारानिर्वहणप्रकारः वैयाकरणवार्तिकमहाभाष्यकारादिसम्मतस्साधीयान्॥

एवं च नित्यैकजातेरेवाभावे तन्न्यायमवलम्ब्य सन्मात्रस्यैव प्रत्यक्षविषयता तस्यैव सत्यत्वमित्यादिकल्पना निर्मूलैवेति। अत्र **संस्थानमेव जातिः, संस्थानं नामस्वासाधारणं रूपम्** इति च उक्त्या 'तत्तत्पदार्थसंस्थानपारमार्थ्यावबोधिनी' इति, 'स्वैस्स्वैर्व्यवस्थितैः रूपैः पदार्थानां तु या स्थितिः। सा सत्ता' इति च यामुनमुनिसूक्तेरर्थः सम्यक्प्रकाशितो भवति॥

**भेदस्स्वरूपं वा धर्मो वा** इत्येवं विकल्पकरणे ब्रह्मविवर्ताद्वैतिनां शून्याद्वैतिमाध्यमिकमतपर्यवसानं पूर्वं (३१८ श्रीभा.पुटे) प्रदर्शितम्। तथाऽपि तदर्थनिर्णयमन्तरा प्रमेयानुपपत्तिपरिहारो न भवतीति पूर्वं सङ्ग्रहेण भेदस्य संस्थानरूपत्वं यत्प्रदर्शितं तदेव जातेः संस्थानत्वे यत् युक्तित्रयम् तेनैव युक्तित्रयेण विशदयति–**जातिग्रहणेनैवेत्यादिना**। जातेः यथा नैकत्वं तद्वदभावस्य अभावविशेषरूपभेदस्यापि नैकत्वमिति निर्धारितं भवति। पूर्वं स्वपरनिर्वाहकत्वेन अनवस्थाऽन्योन्याश्रयपरिहार उक्तः। अद्वैतसिद्धौ विशेषखण्डेन (श्रीभा. ३०२पुटे) अनुभूतिस्वप्रकाशत्वोपपत्तौ च (श्रीभा. ३१८) स्वपरनिर्वाहकत्वमभ्युपगतमिति पूर्वमेव निरूपितम्॥

## गूढार्थसंग्रहः

बौद्धाधिकारे (आत्मतत्त्वविवेके) 'भेद: स्वरूपं वा स्यात् इतरेतरभावोवा धर्मान्तरं वा' इत्यादिना बौद्धोक्तदूषणान्यभिधाय 'तत्किं भेदज्ञानमेव नास्ति, सदपि वा नित्यम् अनित्यमपि वा निर्हेतुकम् सहेतुकमपि वा निर्विषयम् सविषयकमपिवा बाध्यमानविषयकम्' इत्युपक्रम्य कोटिचतुष्टयं दूषयित्वा 'पञ्चमस्तु चिन्त्यते किमेतेष्वन्यतमात्मा अस्य विषय: तदन्यो वेति' इत्यादिना अन्यविषयत्वपक्षं दूषयित्वा 'अथान्यतमात्मा तत्रापि यदि धर्मान्तरमेवेति तत्त्वं तदा अनवस्थाभिया तदधिकएव प्रवाहस्त्यज्यताम्। तस्य कुतस्त्याग: नह्यनवस्था प्रतिभासमर्थं निवर्तयति, किंतु प्रवाहं परिहापयति। गन्धे गन्धान्तरवत्' इति 'अथ स्वरूपमेव भेदप्रतिभासस्य विषयइति तत्त्वं तथाऽपि सह योगएवानुपपन्नस्त्यज्यताम्। भेदेनतु किमपराद्धम्?' इत्यादिना पक्षत्रये दूषणपरिहारमभिधाय 'तथाऽपि क: परमार्थ:? यथायथं त्रयमपि। पटस्यहि घटाद्यात्मना अप्रतीति: अघटात्मनाच प्रतीति: ततो वैशिष्ट्यप्रतीतिश्चेत्यनुभवसिद्धम्।' इत्यादिना भेद प्रतीते: बाध्यमानविषयकत्वं नास्तीति उदयनाचार्यै: सिद्धान्त:कृत:। 'धर्मपक्षे प्रवाहस्त्यज्यताम्' इत्यत्र स्वपरनिर्वाहकत्व समाधिरेव विवक्षित:॥

अत्र भाष्ये **यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयं भेदश्च विकल्पासहत्वात् दुर्निरूप इति तदपि जात्यादिविशिष्टस्यैव वस्तुन: प्रत्यक्षविषयत्वात् जात्यादेरेव वस्तुन: प्रतियोग्यपेक्षया भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्** इत्युपक्रम्य प्रमाणानुपपत्त्यादिकं परिहृत्य जाते: संस्थानरूपत्वसाधनानन्तरं, भेदस्य गोत्वादिसंस्थानरूपत्वसाधनेन 'भेदव्यवहारस्य एकाकारस्य नानानिमित्तत्वे गोत्वाद्यनुगताकारप्रतीतेरपि कथमेकानिमित्तत्वसिद्धौ प्रामाण्यम्? व्यभिचारात्। सामान्यविशेषैरेव सामान्यबुद्धिव्यवहारोपपत्तौ तत्कल्पनानुपपत्ते:' इति जातिवादिनं प्रति **खण्डने** उक्तदूषणस्य सिद्धान्ते नावसर इति बोध्यम्। अत्र प्रवाहत्यागस्य प्रथमस्वीकारस्य उदयनोक्तस्य स्वपरनिर्वाहकसमाधिना सङ्गतत्वबोधनेन 'तत्र यदि प्रवाहस्वीकारे तस्यासाधकत्वं स्वीक्रियते एकस्वीकारेऽपि स्यादविशिष्ट लक्षणत्वात्' इति खण्डने उदयनमतदूषणमपि अलग्नकमिति सूचितम्॥

यद्यपि खण्डने 'ननु न वयं स्वात्मा स्वाधिकरणं स्वावधिर्वेत्यभ्युपगच्छाम:, किंतु धर्मान्तरे तत्प्रतियोगिके तदाधारे वा यौ बुद्धिव्यवहारावुपपद्येते तावनवस्थाभयात् धर्मान्तरमन्तरेणैव स्वभावाद्भेद: करोतीति ब्रूम इति चेत्, तर्हि अन्यत्र यादृशी प्रतीतिर्धर्मान्तरविषया तादृश्येवात्र विना धर्मान्तरमुत्पद्यत इति भ्रान्ता स्यात्। यस्य च सामर्थ्यात् तादृशी जायते स दोष इत्युच्यते। तत्र रजतत्वं नास्ति अत्र धर्मिरूपोऽपि भेद एव सन् अवलम्बनमितिचेत्—मैवम्। भिन्नप्रतीतिर्विशिष्टविषया भेदतदाश्रयरूपोभयवस्तुविषया अन्यत्र यादृशी सत्याऽङ्गीक्रियते ततो मात्रयाऽप्यन्यूनार्थाया इह जायमानाया यदि द्वयं विषयं नाङ्गीकुरुषे तदा शक्रेणापि भ्रान्तत्वं दुर्वारम्। अथाङ्गीकुरुषे तदाऽनवस्थाप्रसङ्ग:। अथ तदुभयविषयव्यतिरेकेणैव साऽत्र सत्याऽन्यत्र तर्हि इतोऽन्यादृशविषया मिथ्या स्यादित्यलं पल्लवितेन॥ यत्तु सत्त्वेवेत्युक्तं तत् कटकगवोदाहरणमनुहरति यत: सत्ताऽप्यमुना दूषणेनास्माभि: स्वण्डनीया' इत्युक्तम्; (कटकं–राजधानी)

तथाऽपि—वस्तुतस्तु आत्मसिद्धमेव चिद्रूपमित्युपक्रम्य 'ननु च स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदं क्रियाकर्मभावस्य भेदव्यतिरेकेणानुपपत्ते:।' इत्यादिना अनुपपत्तिमाशङ्क्य मैवम्। विषयविषयिभावोहि सम्बन्ध: न सम्बन्धिस्वरूपाद्भिन्न:। तथाभूतत्वेऽपिचान्तत: तत्सम्बन्धस्यापि स्वाश्रयात्मकत्वमभ्युपगतम् अनवस्थाभयात्। तथासतिच सैव यथा सम्बन्धमिति: सम्बन्धस्वरूपात् सम्बन्धिनो भेदमादायैव पर्यवस्यतीत्यभ्युपगन्तव्यम्, स्वभावसम्बन्धस्येतरसम्बन्धमर्यादातिशायित्वात्, तथा विनाऽपि सम्बन्धिभेदं विषयविषयिभावात्माऽयं सम्बन्ध: पर्यवस्यति। तदवगमोऽपि तथाऽवगमव्य-

## गूढार्थसंग्रहः

तिरेकेणैव भविष्यति कोविरोधः। नचैवं घटतज्ज्ञानयोः याहग्विषयविषयिभावः ततो मात्रयाऽपि स्वप्रकाशविषयविषयिभावान्यत्वे बाध्यतैकत्रस्यात्। अस्त्येवहि अविद्याविद्यमाने घटतज्ज्ञाने बाध्यत्वम्। परमार्थसतितु स्वप्रकाशे पारमार्थिकमिति द्वयोरनुगमेऽपि न दोषः। अथवा स्वात्मनासह क्रियाकर्मभावः विषयविषयिभावो वा स्वप्रकाशार्थइति नाभ्युपेयमेव। यथातु भवतां सत्तासम्बन्धादितरत्र सद्व्यवहारव्यवस्था सत्तातु स्वयमेव सद्रूपा नचैतावता स्वात्माश्रयता तस्याः तथा ज्ञानमपि स्वतएव सिद्धस्वरूपम्।' इति खण्डने उक्तम्॥

अत्र आनन्दपूर्णव्याख्या। द्रव्यादौ सत्तासमवायात्सदिति व्यवहारः सामान्यविशेषयोस्तु सत्तयैकार्थसमवायात् समवायस्य सत्तैकाश्रयत्वात् सत्तायां तु सद्व्यवहारः स्वयमेव सत्तारूपत्वात्—इति व्यवस्था यद्वत् तथेत्यर्थः। सत्तायां सत्तासंसर्गोऽस्युतन। नचेत् नरशृङ्गवत् सद्व्यवाहारो न स्यात्। अस्तिचेत् स्ववृत्त्यापातइत्यत आह नेति। प्रदीपो घटादिकं स्वसंसर्गितया प्रकाशयन्नपि स्वात्मनि तमोनिवृत्तिं प्रकाशरूपत्वेनैव करोति यथा तद्वदित्यर्थः। दृष्टान्तोक्तमर्थं दार्ष्टान्तिके प्रदर्शयिष्यन्नाह। तथेति। ज्ञानं सजातीयपरनिरपेक्षत्वेसति व्यवहारगोचरः परत्र व्यवहारहेतुत्वात् सत्तावदित्यर्थः। इति॥

अत्र प्रदीपदृष्टान्तः विवरणोक्त एवाभिहितः। अत्र स्वपरनिर्वाहकसमाधिः खण्डनकृता अभ्युपगतएव। विवरणकारैरप्यङ्गीकृत इति प्रागेवोक्तम्। विवरणतात्पर्येणैव **संवेदनवत् रूपादिवच्च परत्र व्यवहारविशेषहेतोः** इत्यादि भाष्यम्। एवं च खण्डनकृतां स्वपरनिर्वाहकसमाधिखण्डनमभिनिवेशमूलकमेव। इदं रजतमित्यादौ बाधात् भ्रमत्वनिश्चयः। अत्र तु बाधमन्तराऽपि भ्रमत्वोक्तिः स्वोत्प्रेक्षामूलैव। आगमोऽपि न बाधक इति भट्टपादैरेवोक्तम्। अयमर्थः उत्तरत्र निरूपयिष्यते। अनवस्थाच्च अप्रामाणिकपदार्थकल्पनाधाराविश्रान्तिराहित्यमिति नैयायिकाः। उक्तं च बौद्धाधिकारे शिरोमणिना—'प्रामाणिकीचानवस्था/न दोषाय' इति, 'तस्मात् भेदानन्त्यमेव न्यायः। प्रामाणिकंच वस्त्वानन्त्यं न दोषाय' इतिच। उक्तं च बौद्धाधिकारे उदयनाचार्यैरपि, 'अस्तु तर्हि सर्वथा विचारासहत्वमेव विश्वस्येति चेत्, तत्किमिदानीं तत्त्वोपप्लव एव काष्ठा शून्यता वा' इत्युपक्रम्य 'सोऽयं पवनतनयवार्तामुपश्रुत्य तत्स्पर्धया बालवानरः कियदपि दूरमुत्लुत्य महार्णवे पतितः प्राह-'अपार एवायमकूपारः मिथ्या रामायणम्' इति। तत्किमनेन। एवं ज्ञातुं निर्वक्तुं वा न शक्यते कीदृशं जगदिति। एतावन्मात्रमपि पामरदशावन्निष्फलमेव। न च निष्फलत्वेऽपि श्रद्धेयमिदम्। तावत्परामर्शपाटवाभावेनाप्युपपत्तेः। नहि जात्यन्धो नीलं ज्ञातुं निर्वक्तुंवा नशक्तइति अज्ञेयानिर्वाच्यमेव तल्लोक इति' इति॥

भट्टपादैः बौद्धयोगिभिर्बाह्यार्थाभावः योगिप्रत्यक्षेण गृहीतः इत्याक्षेपे अस्मद्योगिभिः तद्विपरीत्येन बाह्यार्थसद्भाव एव प्रत्यक्षेण गृहीत इति न बाह्यमिथ्यात्वमित्युक्तमिति प्रागेव निरूपितम्॥ अत्र पदार्थानां योगिप्रत्यक्षसामग्री भिन्ना। तदितरप्रत्यक्षसामग्री च अन्या। इतरप्रत्यक्षेऽविषयीभूता अपि धर्माः योगिप्रत्यक्षे विषयीभवन्ति। अतश्च विषयाणामेकरूपेणैव प्रत्यक्षे भानमिति न नियमः। तद्वदनुभवानुरोधेन स्वपरनिर्वाहकसमाधिरप्युपपादनीयः। एवं कारणवैचित्र्यमप्यङ्गीकरणीयम्। रघुनाथशिरोमणिविवरणपर्यालोचनया कानि चिद्दूषणानि न घटन्ते॥

श्रुतिभिः प्रपञ्चबाधः परसम्मतो न सिध्यतीति भाष्ये स्थापयिष्यते। एवं मुक्तानां व्यवहारोऽपि एतदुभयं भट्टपादसम्मतमिति प्रागेव निरूपयिष्यते। एवं च व्यावहारिकपारमार्थिकसत्त्वद्वैविध्यं निरवकाशमिति सिध्यति। यानिचात्र खण्डने बौद्धाधिकारोदयनोक्तिदूषणानि तानि सम्यक्पर्यालोचितानि वेदान्तोदयनसम्प्रदायप्रतिष्ठापकैः आचार्यपादैः शतदूषण्यां–भेदवादे सर्वार्थसिद्धौ अद्रव्यसरेच 'भेदेवस्तुस्वरूपे' (१३)इत्यादिश्लोकव्याख्यायाम्॥

## गूढार्थसंग्रहः

यद्यप्यद्वैतसिद्धौ– (सामन्यतो भेदखण्डने) ' नहि वयं भेदप्रतीतेः स्वरूपं कारणंवाऽपलपामः । किंतु बाधितविषयत्वं ब्रूमः । व्याप्तिसध्रीचीनतया अशुक्कैस्तर्कैरेव अनन्यपरया श्रुत्या स्मृत्या च भेदस्य बाधितत्वात् । विषयभेदादिना प्रत्यक्षविरोधस्य परिहृतत्वेन श्रुत्यादावुपचरितार्थत्वाभावात् । भेदखण्डनयुक्तीनां तत्त्वतो भेदनिवारकत्वेऽपि व्यावहारिकभेदस्यानिराकरणेन स्वाव्याघातकत्वोपपत्तेः । एतेन प्रपञ्चे सद्वैलक्षण्यस्य मिथ्यात्वे सदैक्यापत्तिः । जगन्मिथ्यात्वप्रमाणानां च अतत्त्वावेदकत्वापात इति निरस्तम् । मिथ्यात्वनिरुक्तावुक्तोत्तरत्वाच्च । नच कल्पितेन अकल्पितकार्यप्रतिबन्धायोगः ; अविद्यया स्वप्रकाशरूपब्रह्मकार्यप्रतिबन्धदर्शनात् कल्पितकान्तया विश्लेषकार्यप्रतिबन्धदर्शनाच्च ' इत्यनन्तरं,

' ननु भेदस्य व्यावहारिकसत्त्वार्थमपि त्वया अन्योन्याश्रयादिकमुद्धरणीयम् । परस्परसापेक्षेण व्यवहारस्याप्यभावात् । नहि व्यावहारिकमृदःस्वजन्यघटसापेक्षत्वम् । किंचात्र भेदमात्रेण तद्दर्शनमात्रेण वा अन्योन्याश्रयाद्यापादनम् ; तथा सति व्यावहारिकयोरपि तयोरसिद्धिस्स्यात् । नापि तत्प्रतीतिवास्तवत्वेन तदापत्तिः ; चरमवृत्त्यवास्तवत्वेऽपि तद्विषयवास्तवत्ववदुपपत्तेः, वास्तवे अन्योन्याश्रयादर्शनेन व्याप्त्यसिद्धेश्च । नच प्रमारूपतत्प्रतीत्या तदापादनम् ; प्रतीतिसामान्य एव त्वया अन्योन्याश्रयस्योक्तत्वेन प्रमात्वपर्यन्ते तत्र दोषाभावात् । नापि तत्प्रतीतेर्धर्मिप्रतियोगिसापेक्षत्वेन तदापादनम् । तावताऽपि तत्सापेक्षतामात्रस्यैव निवृत्तिरितिचेत्– न ; अस्माकमविद्यासामर्थ्यात्सर्वानुपपत्तिविधूननोपपत्तेः । नहि मायायामसम्भावनीयंनाम ? तथाच परस्पराश्रितमपि इन्द्रजालवद्दर्शयिष्यति । नच ईश्वरसामर्थ्यात्तादृशमपि सत्यं स्यादिति वाच्यम् । उभयसिद्धमृषाभूतेन्द्रजालादिस्थले कारणादिव्यवस्थोल्लङ्घिकार्यादिदर्शनवदत्र तथाऽदर्शनात् । दर्शने च मृषात्व एव पर्यवसानात्, उक्तश्रुत्या अस्वव्याघातकयुक्त्या च भेदस्य बाधात् अभेदस्य अबाधाच्च स्वाभेदस्वभेदयोः व्यावहारिकत्वे समानेऽपि स्वाभेदंपरित्यज्य भेदएव सर्वथा प्रद्वेषो नाकारणकः ' इत्युक्तम् ॥

लघुचन्द्रिकायांच– ' विषयभेदादिना- प्रत्यक्षादेर्व्यावहारिकभेदो विषयः । ' नात्र काचन भिदा ' इत्यादिश्रुत्यादिकंतु तात्त्विकत्वेनभेदं निषेधतीत्यादिना । तत्त्वतः–तात्त्विकत्वरूपेण । निवारकत्वे–निषेधकत्वे । अथवा तत्त्वतः–पर्यवसानतः । भेदनिवारकत्वे–स्वावताराद्वितीयक्षणेषु भेदोच्छेदकत्वे । व्यावहारिकभेदानिराकरणेन । स्वावताररक्षणरूपव्यवहारकाले भेदानुच्छेदकत्वेन । अतत्त्वावेदकत्वे इति । अत्यन्ताभावस्य मिथ्यात्वे तत्प्रतियोगित्वरूपं मिथ्यात्वमपि मिथ्या स्यादिति भावः । उक्तोत्तरत्वादिति । तेषां व्यवहारिकमेव प्रामाण्यम् । अत्यन्ताभावस्याधिष्ठानरूपत्वात्तदंशे तत्त्वावेदकत्वं चेत्यादिकमुक्तम् । अकल्पितकार्येति । अकल्पितं यत् ब्रह्मरूपमैक्यं तत्कार्येत्यर्थः । कान्तयेति । यत्तु कल्पितकान्तायाः ज्ञानं सत्यं विश्लेषकार्यप्रतिबन्धकं नतु सेति तन्न । कल्पितविषयकज्ञाने कल्पितत्वनियमस्योक्तत्वात् । अन्योन्याश्रयाद्यापादनं अन्योन्याश्रयादेः भेदासिद्धिविरोधित्वापादनम् । अन्योन्याश्रयाद्यधीनायाः भेदासिद्धेरापादनमिति यावत् । घटपटौ यदि भिन्नौ भिन्नत्वेन प्रतीयमानौ वा स्यातां तदा स्वविशेष्यकभेदज्ञानप्रमात्वविरोध्यन्योन्याश्रयादिकं स्यात् इत्यापत्तिर्बोध्या । तत्प्रतीतिवास्तवत्वेनेति । भेदधीर्यदि वास्तवी स्यात् तदा स्वप्रमात्वविरोध्यन्योन्याश्रयादिका स्यादित्यर्थः । विपर्ययानुमाने प्रतीतेरवास्तवत्वेन पर्यवसानं वाच्यम् । तथा च विषयसत्यत्वेऽपि ब्रह्मधीर्यद्यवास्तवी तथा भेदधीस्स्यादित्यर्थान्तरमित्याशयेनाह—चरमेति । अन्योन्याश्रयादर्शनेन–उक्तान्योन्याश्रयादिकत्वादर्शनेन । तत्र–प्रत्यये दोषाभावात्—आपत्त्यभावात् । व्यर्थविशेषणतया प्रमात्वघटितरूपेण नोक्तसाध्यव्याप्यता भेदप्रमात्वेनोक्तसाध्याभावस्यैव साधनसम्भवश्चेति भावः परस्पराश्रितमिति मृदादेः घटादिरूपकार्यानपेक्षत्वेऽपि भेदधीः अन्वयव्यतिरेकाभ्यां भेद

## गूढार्थसंग्रहः

धीसापेक्षत्वेनाविद्ययैव कल्प्यते । तथा च भेदधियं विनाऽपि कस्याश्चित् भेदधियउत्पत्तिरपि भूषणं नतु दूषणम् ; इन्द्रजालस्थले कलसकारणं विना कार्योत्पत्तिवत् । अतएव ' विचारकाले कारणीभूतभेदबुद्धौ भेदबुध्यन्तरापेक्षायामनवस्था । कार्यीभूतभेदबुद्धेस्तद्धेतुत्वेचान्योन्याश्रयः ' इत्यादितर्कैर्भेदस्याविद्यकत्वनिश्चयात् तस्यास्तात्त्विकप्रामाण्याभावेऽपि प्रकृत विचारानाधिकरणरूपव्यवहारकालाबाध्यविषयकत्वेन व्यावहारिकप्रामाण्यमव्याहतमिति भावः । ' अभेदस्य ब्रह्मस्वरूपस्य स्वाभेदेति स्वभेदाभावत्वविशिष्टेत्यर्थः । भेदएवेति भेदघटितएवेत्यर्थः । एवकारात् ब्रह्मस्वरूपाभेदे प्रद्वेषव्यवच्छेदः । भेदाभावत्वविशिष्टेतु भेदघटितत्वात्प्रद्वेषोऽस्त्येवेति । अथवा अभेदस्य ब्रह्मस्वरूपत्वेनाबाधात् व्यावहारिकत्वे द्वयोरसमानेऽपि भेदद्वेषः अकारणक इति यत्परेणोक्तं तन्नेत्यर्थः ' इति । इति विवरणं कृतम् ॥

तथाऽपि प्रत्यक्षस्य व्यावहारिकप्रामाण्यं श्रुतेस्तात्विकप्रामाण्यमित्यत्र नियामकं किमिति विवेचनीयम् । श्रुतेः षड्विधतात्पर्यलिङ्गोपेतत्वेन प्रबलत्वात् तात्विकप्रामाण्यमित्युक्ति र्न घटते । भवदभिमतनिर्विशेषविषयकबोधस्य शब्दात् कस्यापि दार्शनिकस्यासंमतस्य षड्विधतात्पर्यलिङ्गैः तत्र तात्पर्यनिर्धारणमेव न सम्भवतीति कथं भवदभिप्रेतार्थे श्रुतीनां तात्विकप्रामाण्यम् ? ' नात्र काचन भिदाऽस्ति ' इति वाक्ये भेदाभावत्वेनैव भेदाभावस्य शब्दत उपस्थित्या तद्विशिष्ट विषयक एव बोधः । अभावत्वविशिष्टस्य मिथ्यात्वेन तच्छ्रुतेः कथं तात्विकप्रामाण्यम् ? विशिष्टविषयकबोधस्यैव तद्वाक्यात् स्वरसत उत्पत्तेरनुभवात् । उपलक्षितविषयत्वाङ्गीकारेऽपि उपलक्षणस्याप्रकारत्वम् इत्याद्युक्तिः शपथमात्रमेव ॥

वस्तुतस्तु ' नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्ति ' इत्युत्तरतापनीये षष्ठखण्डवाक्यम् । ' नैव तत्र काचन भिदाऽस्ति, इति द्वितीयखण्डेऽपि दृश्यते । तदनन्तरं च ' अथ तस्यायमादेशो अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत ओङ्कारः आत्मैव संविशत्यात्मनाऽऽत्मानम् ' ' यएवंवेद एषवीरः नारसिंहेन वा अनुष्टुभा मन्त्रराजेन तुरीयं विद्यात् एषह्यात्मानं प्रकाशयति । ' इत्यादि श्रूयते । अत्राकारोकारमकारनादार्थाः उच्यन्ते । चतुर्थोऽव्यवहार्यः तुरीयंविद्यादित्युक्त्या एतद्वाक्यं तुरीयपरम् । अकारोकारमकारनादार्थाः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः इति सम्यङ्निरूपितं हयशिरोरत्नभूषणे तद्दीधितौ च । वासुदेवव्यतिरिक्तानां सृष्टिस्थितिसंहाराधिकृतत्वं वासुदेवस्यतु तन्न, इत्ययमर्थः ' प्रपञ्चोपशम ' इत्यनेन बोध्यते । सङ्कर्षणादिरूपाणामपि उपसंहारे वासुदेव एकएवावशिष्यते । तदत्रैव प्रपञ्चोपशम इत्यत्र विवक्षिता । तत्पूर्वं ' नैव काचन भिदाऽस्ति ' इत्यत्र वासुदेवसङ्कर्षणादीनां भेदो नास्ति अपितु एकव्यक्तित्वमेवेति विवक्षितम् । वासुदेवादीनामैक्यं महाभारते स्पष्टम् । एवं द्वितीयखण्डानुरोधेन षष्ठखण्डेऽपि । ' अथ तुरीयेण ओतश्च प्रोतश्चायमात्मा सिंहः । अस्मिन् हि सर्वं अयं हि सर्वात्मा, अयं हि सर्वं नैव अतोऽद्वयोह्ययमात्मा एकलः ' इत्युपक्रमानुरोधेन च ' नात्र काचन भिदाऽस्ति ' इत्यत्र परसम्मतार्थो नैव विवक्षितः । उपक्रमे ' अस्मिन् हि सर्वम् ' इति सर्वाधारत्वं ' अयं हि सर्वात्मा ' इत्यत्र सर्वेषामन्तःप्रविश्य नियन्तृत्वं चाभिधाय, ' अयं हि सर्वं नैव ' इत्यध्यासादिकं प्रतिषिध्य ' अतोऽद्वयोह्ययमात्मा एकलः ' इत्यत्र सर्वेषां अन्तःप्रविश्य नियन्तुः अद्वयत्वं प्रतिपादितम् । ' सद्घनोऽयं चिद्घनोऽयमानन्दघनः एकरसोऽव्यवहार्यः केनचनाद्वितीयः ' इत्यादिना तुरीयमुपक्रम्य, ' तस्मात्परमेश्वर एव तद्भवति अविकल्पो नाविकल्पोऽपि नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्ति ' इत्यत्रापि अकाराद्यर्थानां नादार्थस्य च भेदो नास्तीत्येव विवक्षितम् । अस्य वाक्यस्य प्राचीनैरनुदाहृतत्वेऽपि ब्रह्मानन्दसरस्वतीभिरुदाहृतत्वेन प्रामाण्यमभ्युपेत्य इत्थमर्थ उक्तः ॥

## गूढार्थसङ्ग्रहः

भेदस्य मूलाविद्याकार्यत्वमेव। घटादिप्रपञ्चस्य आप्रलयस्थायिनः भेदस्य व्यावहारिकत्वेन भवत्सम्मतस्य प्रलय पर्यन्तं व्यवहारसत्वेन मूलाविद्याकार्यत्वमेव वाच्यम्। एवं च मूलाविद्याकार्यस्य ब्रह्मज्ञानेनैव बाधः। ननु खण्डनयुक्त्य-वतरणक्षणानन्तरम्। अतः खण्डनयुक्त्यवतरणक्षणकाले भेदः अनन्तरं भेदोच्छेदः इत्युक्तिरपि निरवकाशा। स्वप्नेन्द्र-जालादिषु प्रातीतिकत्वमेव। दृष्टिसृष्टिव्यतिरिक्तसृष्टिदृष्टिपक्षे न व्यावहारिकत्वम्। स्वप्नज्ञानं अबाधात्सत्यम्, एवं मायाविनः मन्त्रौषधादिप्रभवं ज्ञानं सत्यमित्यादिकमुत्तरत्र भगवतैव वक्ष्यते। जागरेऽबाधितस्य स्वाप्निकार्थस्य सत्यत्वं भट्टपादसंमतमिति प्रागेव निरूपितम्॥

'अस्ति मिथ्याभूतस्याद्युपहितस्यापि स्वप्नदर्शनस्य व्यावहारिकं सत्त्वम्। अतएवाद्राक्षं स्वप्नमहमिति स्वप्नदर्शन-मनुमन्यते। युक्त्यातु तस्य मिथ्यार्थोपहितत्वान्मिथ्यात्वमुच्यते। अर्थश्च स्वाप्नो मिथ्या, नच व्यावहारिकसत्त्वं तस्यास्ति' इति कल्पतरावप्युक्तम्। एवं च 'कल्पितकान्तया विश्लेषकार्यप्रतिबन्धदर्शनाच्च' इत्युक्तिःकथम्? तत्र कान्ताज्ञान-स्यैव विश्लेषकार्यप्रतिबन्धकत्वात् तस्य व्यावहारिकसत्यत्वात् विश्लेषकार्यस्यापि व्यावहारिकसत्वेन उभयोस्समानसत्ताक त्वात् ब्रह्मैक्याविद्ययोः भिन्नसत्ताकत्वेन प्रतिबन्धकत्वमपि न सम्भवति। स्वप्नज्ञानतद्विषययोरुभयोरापि सत्यत्वं स्वप्नसृष्टे रीश्वरकर्तृकत्वसाधनेन भाष्ये निरूपयिष्यते। सत्यस्य मन्त्रौषधादेर्मायात्वं मायाऽविद्याविभागवादि जरदद्वैतिसम्मतमिति प्राक् (१४७) उदाहृतविवरणग्रन्थएव स्फुटम्। तच्च विवरणाद्युक्तदूषणपरिहारेण स्थापयिष्यते। एवं स्वप्नसृष्टिरपि भगव-त्कर्तृकैवेति च। शम्बरमायामयास्त्रादीनां छेद्यत्वोक्त्या ज्ञानबाध्यत्वरूपमिथ्यात्वं नास्तीति भाष्ये निरूपयिष्यते। स्वप्न सृष्टेर्भगवत्कर्तृकत्वनिर्णये तत्र जाग्रत्कालिककरणव्यवस्थोल्लङ्घनदर्शनेन तद्वत् करणव्यवस्थोल्लङ्घनं जाग्रत्प्रपञ्चस्य सत्यत्वे नैव दोषाय॥

मायामयशंबरास्त्रादीनां ज्ञानातिरिक्तछेद्यत्वोक्त्या ज्ञानाबाध्यत्वनिश्चये सति तत्र करणव्यवस्थोल्लङ्घनसत्वेऽपि यथा ज्ञानाबाध्यत्वरूपसत्यत्वं तद्वदत्रापि सम्भवतीति भगवतैव उक्तप्रायम्। एतेन 'यन्मायिकी न स्यात् करणव्यवस्थोल्ल-ङ्घिनी न स्यात्' इति तर्केणापि न परसम्मतार्थसाधनं सम्भवति। आमोक्षं जाग्रत्प्रपञ्चव्यवहारसत्वेन करणव्यवस्थो-ल्लङ्घनमवश्यं भवद्भिरप्येषितव्यम्। अतः व्यवहारविरहदशायामेव करणव्यवस्थोल्लङ्घनमित्यपि। साच दशा प्रलयदशा, सुषुप्तिदशा। तत्र प्रलयोपमैव सुषुप्तिरिति वार्तिकमते सुषुप्तावविद्यावृत्तिरेव नाङ्गीक्रियते। एवमेव पञ्चपादिकायामपि। विवरणे परं अविद्यावृत्तिः अङ्गीक्रियतइति विशेषः। एवंस्थिते भेदेव्यावहारिकप्रामाण्यं प्रत्यक्षस्येति कथं निर्णयः? भेद व्यवहारसामान्यस्यापि तथैव वक्तव्यत्वेन व्यावहाराभावदशायां अविद्याविगमपूर्वकसुखानुभवासम्भवस्योत्तरत्र स्थाप यिष्यमाणतया व्यावहारिकतात्त्विकप्रामाण्यविभागेन विषयव्यवस्थापनं न घटते॥

'अतीतेऽनागते चार्थे सूक्ष्मे व्यवहितेऽपि च। प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि॥' (प्र.सू.२६) इति प्रत्यक्षसूत्रं भट्टपादोक्तौ 'अत्र केचित् वेदान्तिनः' काशिकायां सुचरितमिश्रेण इति विवृतम्। एवं च वेदान्तिमते सर्वेषां मुक्तानां अतीतानागतार्थप्रत्यक्षसत्वेन बाह्यार्थविषयकप्रत्यक्षं बन्धकालिकप्रत्यक्षतो विलक्षणमेव। तथा सर्वेषां मुक्तानामेवं प्रत्यक्षाङ्गीकारे 'जक्षन् क्रीडन्' इति प्रजापतिवाक्योक्तदिशा व्यवहारोऽपि वर्तते इत्यभ्युपगन्तव्यम्। अतश्चाविद्याविग-मकालेऽपि व्यवहारस्य सत्वेन भेदस्याविद्यकत्वं व्यावहारिकसत्यत्वमित्याद्युक्तिः शपथमात्रमेवेति बोध्यम्॥

बौद्धाधिकारे 'भेदः स्वरूपं वा धर्मो वा' इत्यादिपूर्वपक्षविचारावसरे तद्व्याख्यायां रघुनाथशिरोमणिना—
'ननु स्वरूपस्य भेदत्वे इदं तन्नेति संशयः नेदं तदिति विपर्ययश्च न स्यात्। धर्मिणो ग्रहे भेदस्यैव ग्रहात् अग्रहे च

## श्रुतप्रकाशिका

मङ्गीकुर्वताऽन्यभावाभावे प्रतियोगिनिरपेक्षभावरूपपदार्थस्यैव प्रतियोगिसापेक्षाभावत्वमङ्गीकृतम् । अन्यथाऽनवस्थानादनुपलम्भाच्च । तद्वदत्रापि सम्भवति, प्रतियोगिसापेक्षत्वस्य प्रतियोगिनिरूपितवेषप्रवृत्तिनिमित्तकशब्दस्वभावाधीनत्वे-

## गूढार्थसंग्रहः

तयोरनुत्पादात् स्वस्य स्वावृत्तित्वात् इदं भिन्नमिति प्रतीत्याद्यनुपपत्तिश्च । धर्मिभेदस्य धर्मस्वरूपस्य धर्मिवृत्तितया तत्रैव तद्भेदप्रतीत्यादिप्रसङ्गः । निष्प्रतियोगिकस्य स्वरूपस्य सप्रतियोगिकत्वायोगश्चेति । अत्र वदन्ति । स्वरूपग्रहेऽपि तद्भेदत्वाग्रहात् संशयादिः । तद्भेदत्वंच नतदविषयकप्रतीतिविषयत्वम् अचाक्षुषत्वापातात् । किंतु विलक्षणम् । प्रतियोग्यनुयोगिभावलक्षणस्सम्बन्धः । सच स्वरूपमतिरिक्तोवेत्यन्यदेतत् । तद्धानमपि सम्बन्धविधया प्रकारतया वेत्यपि तथा । सम्बन्धविशेषेण स्वस्य स्ववृत्तित्वं स्वाश्रयवृत्तित्वंच नानुपपन्नम् । स्वस्य स्वाभावप्रतियोगिकत्ववत् स्वाभिन्नप्रतियोगिकत्वमपि तथा । एतेन वैधर्म्यं व्याख्यातम् । अन्योन्याभावस्तु भाववत् अभावान्तरे स्वस्मिंश्च वर्तते । भिन्नताप्रतीतिरविशेषात् । अन्योन्याभावान्तरकल्पनं अन्योन्याश्रयचक्रकानवस्थानामन्यतमं चापेक्ष्य आत्माश्रयस्यैवौचितत्वात् । एतेनात्यन्ताभावो व्याख्यातः । अभावत्वान्योन्याभावत्वसंसर्गाभवत्वादिनाच अभावाद्भेदः । स्वरूपं वैधर्म्यं अन्योन्याभावो वा तत्तदभावभेदात्तु नाधिकः भेदानन्त्यप्रसङ्गात् इति । ननूक्तं वैधर्म्ये वैधर्म्याभावे तदद्वैते धर्मिद्वैताऽनुपपत्तिः । अभिन्नस्योभयवृत्तेः धर्मस्य एकतरभेदत्वे स्वस्मादपि स्वस्य भेदापत्तिः । नच वैधर्म्यं न भिन्नं नाप्यभिन्नं परस्परविरहात्मकोभयरूपपरित्यागानुपपत्तेरितिचेद्वैधर्म्ये स्वरूपादेरेव भेदस्योपगमात् । धर्मान्तरमेवेति तु घटपटादिभेदाभिप्रायकम् । इति च उदयनाचार्यसिद्धान्तः प्रतिष्ठापितः ॥

'अविद्यावशादितिचेत्' किंचातः नह्यविद्येत्येवमाश्रयनिवृत्तिः । तथा सति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः । अथ 'आत्माश्रयदोषोपहततया तत्र स्वस्यैव कारणं ततो यतः कुतश्चित्तस्य जन्म तच्च दुर्निरूपमतोऽविद्येत्युच्यते' इति विचारार्थः, नास्ति तर्हिविवादः । नच तदपि दुर्निरूपं प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिरधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहणकारणमिति निरूपणात् । इति उदयनचार्यैः भेदप्रतीतेराविद्यकत्वं निराकृतम् ॥

अत्र शिरोमणिविवरणम् । अविद्यावशादिति कोऽर्थः किं अविद्याप्रभावाद्भेदज्ञानं स्वस्मादेव जायत इति किं वा अविद्यारूपात् कारणादिति । आद्ये किंचेति । द्वितीयमाशङ्कते अथेत्यादि इतरयोरधिकरणप्रतियोगिनोः इतरत्वेन ज्ञानं न हेतुः । येन आत्माश्रयस्स्यादित्याशयेन नचेत्यादि । प्रतियोगिरूपत्वं प्रतियोगितावच्छेदकधर्मवत्त्वम् । स्मृतिद्वयं ज्ञानमात्रपरम् । स्वस्मिन्नपि स्वात्यन्ताभावग्रहणादितरेतरेति । ग्रहणं प्रत्यक्षं भिन्नाभ्यां रूपभ्यां प्रतियोग्यधिकरणयोः ज्ञानं कारणम् । प्रतिबन्धकं अधिकरणतावच्छेदकवति प्रतियोगितावच्छेदकग्रहः इति ॥

अत्र 'अन्योन्याभावान्तरेत्यादि पूर्वोदाहृतशिरोमणिग्रन्थे 'आत्माश्रयस्यैवौचितत्वात्'इतिवाक्यं लघुचन्द्रिकायामुदाहृतम् । एतेन भेदस्याविद्यकत्वनिरसनं उदयनाचार्यकृतमपि ब्रह्मानन्दसरस्वतीभिर्ज्ञातमेव । एवम् उदयनमतखण्डनं खण्डनस्थमपि । एवमपि भेदप्रतीतेः आविद्यकत्वस्य उदयनाचार्यदूषितस्य (सामान्यतो भेदखण्डने) अत्र समर्थनं, मिथ्यात्वमिथ्यात्वनिरूपणे बौद्धाधिकारे एतत्पूर्वं 'न ग्राह्यभेदमवधूय' इति श्लोके 'बलिनि वेदनये जयश्रीः' इत्यत्र विवर्ताद्वैतिमते सर्वमतमूर्धन्यत्वमुदयनाचार्यैरुक्तमिति गुरुचन्द्रिकायां निरूपणं च ब्रह्मानन्दसरस्वतीनां विदुषांविस्मयावहं भवति ॥

श्रीभाष्यम्

**पदार्थान्तरादर्शनात् अर्थान्तरवादिनाप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः। ननु च जात्यादिरेव भेदश्चेत् तस्मिन् गृहीते तद्व्यवहारवत् भेदव्यवहारोऽपि स्यात्। सत्यम् भेदश्च व्यवह्रियतएव गोत्वादिव्यवहारात्, गोत्वादिरेवहि सकलेतरव्यावृत्तिः। गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः, भेदग्रहणेनैवह्यभेदनिवृत्तिः। अयमस्माद्भिन्नइति**

श्रुतप्रकाशिका

नार्थस्वरूपभेदहेतुत्वाभावादिति। एवमनुपपत्तिर्नास्तीत्युक्तम्। दर्शनं न नेत्याह। **पदार्थान्तरादर्शनादिति**। नामान्तरेणेतरेतराभावाभ्युपगमशङ्कांच व्युदस्यति। **अर्थान्तरेति**। अर्थान्तरवादिना इतरेतराभावरूपोभेदोऽप्यस्तीति वदतेत्यर्थः॥

* **पूर्वं** प्रतियोग्यपेक्षया भेदव्यवहारइत्युक्तम्। अत्र तन्निरपेक्षगोत्वादिभेदउक्तः। * तर्हि भेदव्यवहारोऽपि प्रतियोगिनिरपेक्षः प्रसजेदित्यभिप्रायेण चोदयति। **ननुचेति**। एकार्थविषयानेकचोद्यसमुच्चयपरा ईदृशाः च शब्दाः। **सत्यमिति**। प्रतियोग्यनपेक्षभेदस्वरूपव्यवहारेऽभ्युपगमः। भेदशब्दादिव्यवहारविशेषेत्वनभ्युपगमः। **भेदश्च व्यवह्रियतएवेति**। न केवलं गृह्यते प्रतियोगिनिरपेक्षं व्यवह्रियतेचेति चार्थः। उपपादयति। **गोत्वादिव्यवहारादिति**। कथं गोत्वादिव्यवहारेसति भेदव्यवहारइत्यत्राह। **गोत्वादिरिति**। गोत्वादिरेव कथं व्यावृत्तिरित्यत्राह। **गोत्वादाविति**। * निर्दिष्टसामान्यानन्तरपरसामान्यापेक्षया तद्विशेषाणां सजातीयत्वं विवक्षितम्। अत्र तिर्यक्त्वेन सजातीयो महिषादिर्गोत्वव्यवच्छेद्यः। व्यावृत्तेस्सजातीयबुद्धिव्यवहारानिवृत्तिहेतुत्वमस्तु—ततः किं व्यावृत्तेर्भेदत्वइत्यत्राह। **भेदग्रहणेनैव ह्यभेदनिवृत्तिरिति**। अभेदनिवृत्तिः अभेदधीनिवृत्तिः। एवं गोत्वादेः प्रतीतौ हानोपादानादौ गोत्वादिशब्दव्यवहारे च न प्रतियोग्यपेक्षेत्युक्तम्। तर्हि कथमयमस्माद्भिन्नइत्यत्र प्रतियोग्यपेक्षेति शङ्कायामाह। **अयमस्मादिति**। न हानादिव्यवहारे नापि शब्दव्यवहारमात्रे अपितु शब्दव्यवहारविशेषएवेति ज्ञापयति तुशब्दः। भेदश्च व्यवह्रियतएवेत्यादिना भेदग्रहणेनैवह्यभेदानिवृत्तिरित्यन्तेन कस्यचिद्वस्तुनो वस्त्वन्तराद्व्यावर्तकधर्मस्यैव स्वयमेव स्वव्यावृत्तिरूपत्वसम्भवः * परनिर्वाहकत्वाभावे स्वनिर्वाहकत्वासम्भवात्। स्वरूपे प्रकाशमाने भ्रमविरोधिनश्च न व्यावृत्तिरूपधर्मान्तरापेक्षेत्युक्तं भवति। एवं च सति ब्रह्मणः कस्यचिद्वस्तुनो वस्त्वन्तराद्व्यावर्तकधर्मरूपत्वाभावात्, स्वरूपे भासमानेऽध्याससहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति सिध्यति॥

**ननु** धर्मिणः स्वरूपमेव तद्गतभावाभावरूपसकलधर्मान्तरापेक्षया भेदइति अन्ततोगत्वाऽभ्युपगन्तव्यं भेदान्तराभ्युपगमे तस्मात्स्वरूपस्य भेदापेक्षायामनवस्थाप्रसङ्गात्। सत्यम्। सतु स्वरूपभेदो नाध्यासविरोधी तन्निवृत्तौ धर्मान्तरान्वयसापेक्षत्वात्। पटद्रव्यस्य रूपाव्यतिरेकभ्रमोहि स्पर्शसामानाधिकरण्यबुद्धिनिवर्त्यः। अतो धर्मिस्वरूपस्य स्वगतधर्मापेक्षया भ्रमविरोधिभेदो धर्मान्तरान्वयः। अतो * धर्माणां स्वरूपस्यैव स्वाश्रयस्य विरुद्धधर्मान्तरधर्म्यन्तरापेक्षया अध्यासविरोधिभेदत्वसम्भवः। विशिष्टस्य वस्तुनः स्वरूपमेव विशिष्टं स्वविरुद्धविशेषणविशिष्टवस्त्वन्तराद्व्यावृत्तिरिति च युक्तम्। अर्थान्तरैक्यभ्रमविरोधित्वात्। तत्र * विशेषणापेक्षया विशेष्यस्य स्वरूपमेव भेदः। विशेष्यापेक्षया विशेषणस्य स्वरूपमेव भेदः। तदुभयापेक्षया च सम्बन्धस्य स्वरूपमेव भेदः। विशिष्टस्य विशिष्टान्तरापेक्षया स्वरूपमेव भेदः। स्वरूपस्य भेदइति निर्देशस्तु पदार्थस्य स्वरूपमितिवदनतिरिक्तार्थः। तत्तदसाधारणशब्दवाच्यं स्वरूपं। * सच शब्दो व्युत्पत्तिसिद्धः। प्रतियोगितयाभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपम्। अतः कस्यचिद्धर्मत्वाभावाद्धर्मविशिष्टत्वाभावात्स्वरूपे भासमानेऽपि भ्रमसहत्वाच्च ब्रह्मणः स्वरूपमेव जडत्वाद्यध्यासविरोधिनी व्यावृत्तिर्भवितुं नार्हतीति सिद्धम्॥

## श्रीभाष्यम्

### तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात्

### गूढार्थसंग्रहः

**प्रतियोगिनिर्देशस्य तदपेक्षत्वादिति ।** एतेन अद्वैतसिद्धौ 'एतेनैकस्यार्थस्य लघुत्वकठिनत्वादिना उल्लेखे निरपेक्षत्वेऽपि अगुरुत्वाद्रवत्वादिना उल्लेखेन सापेक्षत्वमपि यथा, तथा घट इत्युल्लेखेन निरपेक्षस्यापि भेद इत्युल्लेखे सापेक्षत्वोपपत्तिरिति निरस्तम् । शब्दानुल्लेखेऽपि सापेक्षत्वनिरपेक्षत्वयोरनुभवाच्च । लयादिवत् अनुल्लेखमात्रेण दृष्टान्तासम्प्रतिपत्तेश्च' इत्युक्तदूषणस्य नावकाशः । अत्र लघुचन्द्रिका– 'घटभेदरूपार्थभेदे शब्दभेदमात्रेण सापेक्षत्वासम्भवः । अर्थभेदसत्वेतु शब्दोल्लेखः प्रयोजकः । तं विनाऽपि तदुभयप्रतीतेरित्याशयेनाह–शब्दानुल्लेख इति । लयेत्यादि । लयादिपदेन नञोऽभावेऽपि कारणगतकार्यध्वंसत्वरूपस्येव लघुकठिनादिपदेऽपि गुरुत्वद्रवत्वादिरूपस्य सप्रतियोगिकस्य प्रतीत्या सापेक्षत्वं तत्राप्यस्तीति दृष्टान्तासिद्धिरित्यर्थः' (विशेषतो भेदखण्डने) इति ॥

अत्र भाष्ये प्रतियोगिवाचकपदोपादानं प्रतियोगिज्ञानमन्तरा न घटते । अतः प्रतियोगिवाचकशब्दपुरस्कारेण नञादिना प्रतियोगिविशेषितभेदबोधदशायां प्रतियोगिज्ञानापेक्षा नान्यत्रेति धर्मभेदपक्षेऽपि धर्मे विद्यमानस्य भेदस्य स्वरूपात्मकत्वेन धर्मस्य प्रतियोग्यविशेषितदशायां निरपेक्षस्यापि प्रतियोगिविशेषितरूपेण नञादिना बोधदशायां सापेक्षत्वं प्रतियोगिवाचकपदोपादाननिबन्धनमिति स्फुटं प्रतिपादनेन अत्र अद्वैतसिद्ध्याद्युक्तदूषणस्यासम्भवात् । लघुकठिनादिपदेऽपि वस्तुतः सप्रतियोगिकस्याप्यभावस्य सापेक्षत्वं यदापादितं तदपि न संभवति । अगुरु अद्रवमित्यादौ प्रतियोगिवाचकपदोपादानेन प्रतियोगिज्ञानापेक्षासत्वेऽपि लघु कठिनमित्यादिव्यवहारे प्रतियोगिज्ञानापेक्षा कथमापाद्यते ॥

अद्वैतसिद्धौ (ज्ञानत्वाद्युपपत्तौ) 'प्रभाकररीत्या द्वितीयाभावस्य अधिकरणानतिरिक्तत्वं अतिरिक्ताभावानभ्युपगमेऽपि अभावत्वप्रकारकज्ञाने अनुपलब्धिप्रामाण्योपपत्तिः' इतिचोक्तम् । तत्र अद्वितीयमिति पदे द्वितीयरूपप्रतियोगिनिर्देशेन ब्रह्माभिन्नत्वेन द्वितीयाभावस्य निरपेक्षस्यापि प्रतियोगिसापेक्षत्वमवश्यं वक्तव्यम् । अद्वितीयपदशक्यार्थबोधस्य प्रतियोगिज्ञानमन्तरा असंभवात् । तदुत्तरं तत्रैव अनृतव्यावृत्तिं प्रस्तुत्य भेदो ब्रह्माभिन्नतया सत्य एवेत्युक्तम् । एवं च अनृतभिन्नमित्यत्रापि निरपेक्षब्रह्मरूपभेदस्य प्रतियोगिसापेक्षत्वमवर्जनीयम् । तत्त्वतो निरपेक्षत्वेऽपि प्रतीतौ सापेक्षत्वमाविद्यकमिति तत्रोक्तंतु नघटते । 'ब्रह्म' 'अद्वितीयम्' इति व्यवहारदशायामेकस्यैव वस्तुनः प्रतीतेः प्रतियोगिसापेक्षत्वनिरपेक्षत्वयोः भेदवादिमतइव अद्वैतिमतेऽप्यविशेषात् । नहि वस्तुनः सापेक्षत्वनिरपेक्षत्वे सिद्धान्तेऽप्यङ्गीक्रियेते । एकस्यैव कचित्स्वरूपतः काचित् प्रतियोगिपुरस्कारेण प्रतीतौ भानमितिपरं मतद्वयेऽप्याविशिष्टम् । प्रतियोगिनः स्फुरत्त्वंतु प्रमाणान्तराधीनम् । लयादिपदैः प्रतियोगिपुरस्कारेणैवार्थबोधनेन प्रतियोगिनिर्देशतया प्रतियोग्यपेक्षा स्यान्नाम । नैतावता लघुकठिनादिशब्दैः प्रतियोग्यपुरस्कारेणैवार्थप्रतीतेरनुभवसिद्धतया अर्थबोधे प्रतियोगिज्ञानापेक्षा आपादयितुं शक्यते ॥

भाष्ये **प्रतियोगिनिर्देशस्येति** सामान्यतः उक्त्या घटःपटो नेत्यादौ प्रतियोगिज्ञानापेक्षाऽपि प्रतियोगिनिर्देशनिबन्धनेति बोधितम् । अत्र **अयमस्माद्भिन्नः** इत्यत्र 'अन्यारात्' (पा.सू.२.३.२९) इति सूत्रेण पञ्चमी । तस्याश्च प्रतियोगित्वमर्थः । अन्यइत्यर्थग्रहणमिति प्राञ्चः वैयाकरणाः नैयायिकाश्च वदन्ति । एवं खण्डदेवोऽपि भाट्टरहस्ये तथैवाह । घटःपटोनेत्यादौ नञा अभावत्वेनैव अभावबोधः समभिव्याहारविशेषात्तु भेदप्रतीतिः । भेदत्वेन भेदवाचकःशब्दः सूत्रे विवक्षितः इति घटःपटोनेत्यत्र न पञ्चम्यापत्तिः इति च (भा.र.)। व्युत्पत्तिवादे गदाधरेण अन्यइत्यर्थग्रहणे बहून्

## गूढार्थसङ्ग्रहः

दोषान् अभिधाय पटाद्भिन्नं पटाद्भिद्यते' इत्यादौ पञ्चमीनिर्वाहाय अपादानत्वमेव कथंचिदुपपादनीयम् । अन्यत्वेन ज्ञापनं भिदिर्धात्वर्थः । ज्ञापनं च ज्ञानविषयताप्रयोजकव्याप्तिपक्षधर्मता । तदाश्रयः असाधारणधर्मएव भिदाकर्तृत्वात् भेदकः उच्यते इत्याद्युक्तम् । नागेशेन शब्देन्दुशेखरेऽपि भाष्ये अर्थग्रहणानुक्त्या 'अन्यारात्' इति सूत्रे अर्थग्रहणं न विवक्षितम् । 'भिदिर् विदारणे' इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् । एकत्वेन गृहीतस्य तथा विदारणे बुद्धिविदारणस्य तत्रापि सत्त्वात् । घटाद्भेदः इत्यत्र अपादानत्वमेव । अन्यशब्दार्थस्य अक्रियात्वात् तद्योगे 'अन्यारात्' इति सूत्रेण पञ्चमीविधानम् । अतएव घटः पटो न इत्यत्र न पञ्चमी इत्युक्तम् । अत्र पञ्चमी ययाकयाचनविधया भवतु । प्रतियोगिनिर्देशः सर्वमतेऽप्यविशिष्टः इति प्रतियोगिज्ञानापेक्षा युक्ता । घटः पटो न इत्यादौ नञो निपाततया तदर्थे पटस्य प्रतियोगिता (निरूपकत्व) सम्बन्धेनान्वयः । प्रथमायास्तु न प्रतियोगित्वमर्थः 'प्रातिपदिकार्थलिङ्गवचनपरिमाणमात्रे प्रथमा' इति वदता पाणिनिना प्रतियोगित्वादेः प्रथमार्थत्वेन अनुक्तेः ॥

एतेन 'किं च भेदस्य घटस्वरूपत्वे तन्निरूपकप्रतियोगिनोऽपि तत्स्वरूपापत्तिः । नहि भेदरूपमात्रं घटः । किं तु पटप्रतियोगिकभेदरूप इति' इत्युपक्रम्य, 'नहि वयं पटभेदः घटस्वरूपमिति अन्वयप्रविष्टत्वेन प्रतियोगितया निरूपकत्वमात्रेण वा घटरूपतामापादयतः । किं तु समानाधिकरणप्रतीतिविषयस्वरूपं प्रति प्रतियोगितया निरूपकत्वेन अभेदनिरूपकप्रतियोगिवत्' इति अद्वैतसिद्धौ मधुसूदनसरस्वत्युक्तिः, (विशेषतो भेदखण्डने) 'प्रतियोगिवदिति । घटो द्रव्यमित्यादौ विशेषणविभक्त्यर्थाभेदस्य घटस्वरूपस्य अभेदेन घटान्वयात् घटे अभेदेन अभेदस्य धीरिव घटो न पटः इत्यादावपि तादृशान्वयात् भेदस्यापि घटे अभेदेन धीः । तथा च यो यदभेदेन प्रतीयमाननिरूपकः स तदभिन्न इति सामान्यतो व्याप्तिः । नच अनुकूलतर्काभावः । घटः पटो नेत्यादौ विभक्तीनामभेदार्थकत्वात् नलि घट इत्यादौ तस्य क्लृप्तत्वात् । प्रतियोगित्वानुयोगित्वयोः प्रथमार्थत्वकल्पनायां गौरवादभेदस्य सम्बन्धत्वेन क्लृप्तस्य प्रतियोग्यनुयोगिभ्यां अभावे सम्बन्धत्वसम्भवे प्रतियोगित्वानुयोगित्वयोः अतिरिक्तयोः सम्बन्धत्वे गौरवात् । अतएव भट्टमते तादात्म्यमभावस्य सम्बन्धइत्युक्तं कुसुमाञ्जलौ । भूतलादेरेव घटाद्यभावत्वस्य भट्टमते स्वीकारात् तस्य घटाद्यभावाभेदो निर्विवादः । घटाद्यभावे घटाद्यभेदोऽपि वार्तिकादौ तर्कपादे स्पष्टमुक्तः । 'सर्वं हि द्विविधं वस्तु नित्यं सदसदात्मकम् ।' इत्यादि ग्रन्थे तर्कचरणे, शास्त्रदीपिकायामप्युक्तम्—'सर्वंहि वस्तु सदसदात्मना द्विविधं तद्यथा यत्र सद्रूपेण वर्तते घटादि' तत् तदा तत्र प्रत्यक्षादिभिरस्तीति प्रतीयते । यत्रत्वसद्रूपेण वर्तते सद्रूपेण बोधकानां प्रत्यक्षादीनामभावेन तत् प्रमीयते—भूतले घटो नास्ति' इति शारीरकवाचस्पत्ये प्रथमसूत्रेऽप्ययमर्थः स्पष्टमुक्तः । 'भावान्तरमभावोहि कयाचित्तु व्यपेक्षया' इति । तथा च घटाभिन्नभेदाभिन्नत्वेव घटस्य घटाभेदवत् पटाभिन्नभेदाभिन्नत्वात् घटस्य पटाभेदो युज्यतेतमाम् । एवं च घटो न पट इत्याद्यनुभवे घटादौ पटाद्यभेदभानकालएव पटादिभेदो भासमानः सुतरां मिथ्या अभेदस्तु श्रुत्यादिसिद्धत्वात् तात्त्विकएवेतिभावः ।' इति लघुचन्द्रिकायां ब्रह्मानन्दोक्तिरप्यनादरणीया ॥

घटो नास्तीत्यादौ घटप्रतियोगिकाभावबोधः नैयायिकानां भाट्टानां च संमतः । 'गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् । मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षणात्' (अभावपरिच्छेद २७) इति वार्तिके प्रतियोगिपदोपादानेन घटस्याभावप्रतियोगितायाः स्पष्टमुक्तेः । 'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते कैश्चित् रूपं किं चित्कदाचन ॥' (१२) 'नह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः ॥ (१९) धर्मयोर्भेदइष्टोहि धर्म्यभेदेऽपि नः स्थिते । उद्भवाभिभवात्मत्वात् ग्रहणंचावतिष्ठते ॥ (२०) इदमेव निमित्तं च विवेकस्य प्रतीयते । भावाभावधियोस्तै:

## श्रीभाष्यम्

**प्रतियोग्यपेक्षया भिन्नइति व्यवहार इत्युक्तम् ॥ यत्पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम् । तदनालोचित बाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्ति परिकल्पितम् ।**

## श्रुतप्रकाशिका

प्रमाणप्रमेयानुपपत्ती परिहृते । अथ परोक्तमनुमानमनूद्य दूषयति । यत्पुनरित्यादिना । पुनश्शब्दः केवल तर्कादनुमानस्य वैषम्यं द्योतयति । दृश्यत्वानुमानस्य सूत्रकारैरेव दूषयिष्यमाणत्वात् । वक्ष्यमाणदूषणस्य मिथ्यात्वविषय सर्वानुमानानां दूष्यत्वप्रदर्शनार्थत्वाच, व्यावर्तमानत्वानुमानमिह दूष्यते । साधारणदूषणानि कालात्ययापदेश सोपाधिकत्वव्याघाताः । तत्राश्रयः प्रतीतो नवा? नचेदाश्रयासिद्धिः प्रतीतत्वे प्रतीतिश्च प्रत्यक्षादिप्रमाणैस्सत्यत्वेनेति तस्य मिथ्यात्वसाधनं धर्मिग्राहकप्रमाणबाधितम् । प्रतिपन्नोपाधौ बाधितत्वस्य मिथ्यात्वे प्रयोजकतया सोपाधिकत्वं च वक्ष्यते । तत्र देशकालविषयभ्रमेष्वपि * वस्त्वन्तरस्योपाधित्वा * दनुदितबाधकज्ञानेषु भ्रान्तिष्वपि * चोदयितृपुरुषज्ञानेन बाधितत्वाच्च * विशेषणाविशेष्यांशासिद्धेः विशिष्टोपाधिसिद्धिरिति विस्तरेण वक्ष्यामः ॥

साध्यधर्मस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्यंचेदद्वैतहानिः, दृश्यत्वहेतोरनैकान्त्यं च । पारमार्थ्येऽपि तस्य वृत्तेः, अपारमार्थ्ये प्रपञ्चसत्यता बाधकाबाधे बाध्यस्वरूपाबाधइति न्यायात् । अतएव हि द्वौ नञौ प्रकृतमर्थं सूचयत इति शाब्दप्रसिद्धिः । धर्मे धर्मान्तरारोपणेन प्रत्यवस्थानादियं नित्यसमा जातिरिति न वाच्यम् । * अप्रामाणिकधर्म परम्परापादनेन दूषणंहि नित्यसमा । मिथ्यात्वमिथ्यात्वं प्रामाणिकं माध्यमिकोक्तस्य ज्ञानबाध्यत्वस्य भवता बाध्यत्वाभ्युपगमात् । परमार्थरज्जौ रज्जुबुद्धेस्सर्पबुध्या बाध्यत्वस्य बाध्यत्वदर्शनाच्च । तर्हि सत्यत्वेऽपि सत्यत्वं किमस्ति उत नास्ति नचेदसत्यं जगत्स्यात् । अस्तिचेत्तस्यापि सत्यत्वमित्यनवस्थेतिचेत् न, स्वपरनिर्वाहकत्वाभ्युपगमात् । यदि त्वया मिथ्यात्वेऽपि स्वपरनिर्वाहकत्वमङ्गीक्रियते तर्हि मिथ्यात्वस्यैव स्वमिथ्यात्वनिर्वाहकत्वान्मिथ्यात्वं मिथ्यात्वान्तरमनपेक्ष्य स्वयमेव मिथ्येति प्रपञ्चस्सत्यस्स्यात् । साधनस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये अद्वैतहानिः—अपारमार्थ्ये धूमबुध्या गृहीत बाष्पवदसाधकत्वमिति व्याघातः । भेदवादिनाऽपिहि न प्रपञ्चसत्यत्वहेतुसत्यत्वसाधनपूर्वकमनुमानान्युपन्यस्यन्ते तथाऽपि

## गूढार्थसंग्रहः

संबन्धोऽक्षानपेक्षणम् ॥ (२१) सद्गुणद्रव्यरूपेण रूपादेरेकतेष्यते । स्वरूपापेक्षयाचैषां परस्परविभिन्नता ॥ (२४) ' इत्यत्र स्वरूपेण धर्मिरूपेण च भावाभावयोः भेदाभेदौ वार्तिके प्रतिपादितौ । एकेन रूपेण च भेदाभेदौ न वार्तिककृत्सम्मतौ । ' गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभावउच्यते ' (३) इति चतुर्विधेष्वभावेषु अन्योन्याभावोऽप्युक्तः । एवंच गवि विद्यमानः अश्वभेदः गोरूपः । गोः इन्द्रियसन्निकर्षमात्रं यदा तदा चाक्षुषं गोज्ञानम् । यदाचाश्वरूपप्रतियोगिस्मृतिः तदा गौरश्वो न, गौरश्वाद्भिन्ना इति अश्वभेदस्याश्वभेदत्वेन मानसज्ञानमनुपलब्धिप्रमाणेन जन्यतइति वार्तिककारसिद्धान्तः । इममेव सिद्धान्तमनुसृत्य घटाद्भिन्नइत्यत्र प्रतियोगित्वं पञ्चम्यर्थइति भाट्टरहस्ये खण्डदेवेनोक्तम् ॥

अभावस्य विशेषणताविशेषसम्बन्धः नैयायिकैः समवायवादिभिरभिधीयते । भेदाभेदवादिना वार्तिककृता विभिन्न रूपेण भेदाभेदौ तदात्म्यशब्दव्यपदेश्यौ । नचैतावता प्रतियोग्यनुयोगिभावः परित्यक्तः । घटः पटोनेत्यादौ प्रथमायाः नाभेदोऽर्थः । घटो द्रव्यमित्यादावपि विशेषणविभक्तेरभेदार्थकत्वेऽनुशासनं नास्त्येव । तत्रचभेदसंसर्गकबोध: अभेद

### श्रुतप्रकाशिका

तदुपपद्यते तद्वन्ममापीतिचेन्न। सत्यत्वासाधनेऽपि नास्माकं स्वाभ्युपगमव्याहतिः। तवतु मिथ्यात्वाभ्युपगमसाधकत्वाभ्युपगमव्याहतिरिति वैषम्यात्॥

ननु न साधनधर्मपारमार्थ्यमपेक्षितम्। नाशके मुद्गरे नष्टेऽपि पूर्वनष्टो घटोनष्टएव दृष्टः नोत्पन्नः। तद्वद्बाधकज्ञानस्य मिथ्यात्वेऽपि तद्बाधितस्य मिथ्यात्वं तिष्ठत्येवेतिचेन्न। कारकज्ञापकयोर्वैषम्यात्। नाशकोहि कारकः अतस्तन्नाश्यस्य तस्मिन्नष्टेऽपि नाशएव तथा दर्शनात्। बाधकश्च ज्ञापकः तस्मिन् बाधिते तद्बाध्यं च सत्यमेव स्यात्। अपवरकस्थघटाभावे केनचिदुक्ते अस्तीति वचनेन बाधिते घटसत्यत्वदर्शनात्। ननु बाधकबाधे पूर्वबाधितस्य सत्यत्वं वक्तुमयुक्तम्। वृन्तविषयभ्रमरत्वभ्रमबाधेऽपि भ्रमरत्वबुद्धिबाधितस्य पलाशपुष्पविषयाग्निभ्रमस्याबाधितत्वदर्शनादितिचेत्—तत्र किं वस्तु निवृत्तिर्बुद्धिनिवृत्तिर्वोच्यते? न प्रथमः दावत्वस्य परमार्थभूतवृन्तबाध्यत्वदर्शनात्। बुद्धिनिवृत्तिश्चेत् सा न बाधकाधीना ज्ञानानां क्षणिकत्वात् स्वयं निवृत्तेः भ्रमरबुद्धिस्तूत्तरकालीनदावबुध्युत्पत्तिप्रतिबन्धिका। तत्प्रतिबन्धकत्वं च भ्रमरपारमार्थ्यबुद्धेरेव। अन्यथा पूर्वभ्रमनिवृत्त्यभावदर्शनात्। ततश्च त्वन्मते कदाचिदपि न निश्शेषभ्रमनिवृत्तिस्सिध्यति। बुद्धिनिवृत्तेर्बाधकज्ञानजन्यत्वपक्षेऽपि निवर्तकज्ञानानां सर्वेषां भ्रान्तिरूपोत्तरोत्तरनिवर्तकज्ञानसापेक्षतया भ्रमपरम्परापत्तेः। उत्तरस्य कस्यचिज्ज्ञानस्य स्वयं नाशे काल्पनिकघटादिनाशस्येव तन्नाशस्य काल्पनिकत्वात् नाशक्लृप्तिरूपभ्रान्तिः स्थिरेति निश्शेषभ्रमनिवृत्तिरूपो मोक्षोऽनुपपन्नइति कृत्स्नमिथ्यात्वनिश्शेषाविद्यानिवृत्तिव्याघातः। एवमादिव्याघाता अनुसन्धेयाः॥

सोपाधिकत्वंचानन्तरमेव वक्ष्यते। दृश्यत्वव्यावर्तमानत्वयोरसाधारणदूषणं ब्रह्मण्यनैकान्त्यम्। अध्यस्तं स्वाधिष्ठानसमानाधिकरणतयावेद्यम्। यथा इदं रजतमिति। एवं घटस्सन् पटस्सन्नित्यधिष्ठानस्य सतः प्रपञ्चस्यचैकधीवेद्यत्वात् दृश्यत्वमनैकान्तिकम्। यद्यपि नभो मलिनमित्यध्यासे नभसोऽचाक्षुषत्वादेकधीवेद्यत्वमध्यस्ताधिष्ठानयोर्नानियतम्। तथाऽपि सन्मात्रस्य प्रत्यक्षग्राह्यत्वं परोपगतमिति स्थिरमनैकान्त्यम्। ननु दृश्यत्वनियमोऽत्र हेतुतया विवक्षितः सतु दृश्यत्वनियमस्सतो नास्ति सतस्स्वयम्प्रकाशत्वात्। तदपि कथं? सदनुभूत्योर्भेदाभावादितिचेन्न अन्योन्याश्रयणात्। सदनुभूत्योर्भेदाभावे सिद्धे सतः स्वयम्प्रकाशत्वेन दृश्यत्वनियमासिद्धेर्दृश्यत्वहेतोरनैकान्त्यपरिहृतिः अनैकान्तिकत्वे परिहृते भेदाभावइति। यद्यनुमानान्तरेण भेदनिषेधः तर्ह्यस्मिन् सिद्धसाध्यता एवं परोपगमेऽनैकान्त्यमुक्तम्॥

किंच ब्रह्मणः दृश्यत्वं श्रुतिसिद्धम् 'दृश्यतेत्वग्र्यया बुध्या' 'आत्मावा अरे द्रष्टव्यः' इति। अनुभूतित्वाद्यनुमानेन दृश्यत्वाभावे साध्ये कालात्ययापदेशः 'यत्तदद्रेश्यम्' इति वाक्याद्दृश्यत्वश्रुतिर्बाध्येतिचेन्न दृश्यत्वसामान्यनिषेधपरत्वात्तस्य—

### गूढार्थसंग्रहः

प्रकारकबोध इति च नैयायिकमते पक्षद्वयम्। पक्षद्वये बीजं च व्युत्पत्तिवादे गदाधरेण सम्यक्प्रदर्शितम्। घटो द्रव्यं, नीलमुत्पलमित्यत्र समानाधिकरणनिर्देशस्सर्वसम्मतः। प्रवृत्तिनिमित्तभेदेनैकार्थबोधकत्वस्याविप्रतिपत्तेः। भूतले न घटः भूतलं न घटः इत्यत्र नञः अत्यन्ताभावान्योन्याभावबोधकत्वं सर्वसम्मतम्। एकत्रात्यन्ताभावबोधः अन्यत्रान्योन्याभावबोधइत्यत्र कारणवैलक्षण्यमवश्यं वाच्यम्। अतः नञाऽन्योन्याभावे बोधनीये समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारापेक्षा सर्वैरप्यास्थेया। एतदर्थमेव घटः पटोनेत्यत्र समानविभक्तिकपदद्वयप्रयोगः। पदयोर्द्वयोस्सामानाधिकरण्यमत्र नास्त्येव नीलमुत्पलमित्यादिवत्। एवं च घटो न पट इत्यादौ समानाधिकरणनिर्देश एव नास्तीति तदव-

## श्रुतप्रकाशिका

**दृश्यतेत्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।**

इत्यस्य दृश्यत्वविशेषविधानविषयत्वाच्च, '**नचक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः**' '**मनसातु विशुद्धेन**' इत्यादौ दृश्यत्वविशेषनिषेधदर्शनात्, अद्रेश्यमित्यादिसामान्यनिषेधस्य तत्पर्यवसायित्वाच्च । अद्रेश्यमित्यादिसामान्यश्रुत्या दृश्यत्वाभावसाधकानुमानेन च ब्रह्मणो न दृश्यत्वमितिचेन्न । तर्हि '**न हिंस्यात्सर्वभूतानि**' इति सामान्यनिषेधश्रुत्या, हिंसात्वादित्यनुमानेनचाग्नीषोमीयहिंसानिवृत्तिप्रसङ्गात् । अतो ब्रह्मणि दृश्यत्वमनैकान्तिकम् । अनैकान्तिके परिजिहीर्षिते ब्रह्मणो मिथ्यात्वंवाऽभ्युपगन्तव्यं स्यात्, दृश्यतैकस्वभावत्वंहि हेतुत्वेनाभिमतमिति नानैकान्त्यम् । ब्रह्महि स्वयम्प्रकाशमिति न दृश्यतैकस्वभावमितिचेन्न तदानीं हेतोर्भागासिद्धिस्स्यात् । चिदचिदात्मके प्रपञ्चे जीवांशस्य स्वयम्प्रकाशत्वात् । अचिदंशमात्रपक्षीकारे हेतोर्जीवगतनित्यत्वादिधर्मेष्वनैकान्तिकत्वम् । तेहि तद्धर्मभूतज्ञानवेद्याएव परमार्थभूताश्च । व्यावर्तमानत्वमपि ब्रह्मण्यनैकान्तिकम् अनृतादिभ्यो व्यावृत्तत्वेनाभ्युपगमात्, तच्च स्वरूपमात्रमिति न शक्यं वक्तुम् । ब्रह्मणः कस्यचिद्धर्मत्वाभावादध्याससहत्वाच्च, व्यावर्तमानस्य स्वरूपत्वेऽपि तत्स्वकार्यकरम् अनुभूतित्ववत् । हेतोः स्वरूपानतिरेकेऽपि साधनदशायां कार्यकरत्वं, नतु दूषणदशायामिति नियामकाभावात् ॥

**किंच** ब्रह्मणि स्वरूपं व्यावृत्तिश्चेत्, घटादिष्वपि तथाऽस्तु । यदि ब्रह्मणि स्वरूपातिरिक्ता सा तर्हि घटादिष्वपि तथा स्यात् । सर्वथानैकान्त्यमवर्जनीयम् । जडादिव्यावृत्तत्वं ब्रह्मणोऽपरमार्थश्चेद्वस्तुतो ब्रह्म जडमेवस्यात् । अपारमार्थशब्दश्च निष्फलः घटादावपि व्यावर्तमानत्वस्य मिथ्यात्वेन व्यावर्त्याभावात्, ततश्चानैकान्त्यं सुस्थम्, अपरमार्थस्य हेतुतया त्वयाऽङ्गीकृतत्वात् । तस्य च विपक्षेऽपि वर्तमानत्वात् । किंच अनुवर्तमानस्य सन्मात्रस्य व्यावर्तमानेभ्यो घटादिभ्यो व्यावृत्तिरस्तिवा नवा, अस्तिचे त्ततएव व्यावर्तमानत्वहेतुर्ब्रह्मण्यनैकान्तिकः, नोचेद्घटादिष्विव व्यावर्तमानत्वं ब्रह्मणिस्यात्, व्यावर्तमानेभ्यो व्यावर्तमानत्वाभावात् । यथा रजतादव्यावृत्तं रजतम्, तथा व्यावर्तमानादव्यावृत्तमपिहि व्यावर्तमानमेव भवति अत उभयथाऽपि ब्रह्मण्यनैकान्तिकत्वम् । ननु ब्रह्म जडादिव्यावृत्तमेव, व्यावर्तमानत्वं च सत्यम् । तच्च स्वरूपमिति नाद्वैतहानिः । तस्यच सत्यत्वान्नजडत्वादिब्रह्मणः ततश्च नानैकान्त्यम् । अपरमार्थभूतं घटादिगतं व्यावर्तमानत्वंहि हेतुरितिचेत्—यद्यपरमार्थभूतं घटादिगतं व्यावर्तमानत्वं हेतुतया विवक्षितं, तर्ह्यसिद्धो हेतुः । घटादीनां मिथो व्यावृत्तेरसत्यत्वोपगमात् ॥

## गूढार्थसंग्रहः

लंबनेन घटे पटभेदः कथमापाद्यते ? सिद्धान्ते घटः पटो नेत्यादौ घटे विद्यमानः पटभेदः घटत्वरूप एव । प्रतियोगिनिर्देशेन प्रतीतौ प्रतियोगिज्ञानापेक्षेति आपादनशङ्कैव नोत्तिष्ठति ॥

'घटधर्मेषु पटप्रतियोगिकभेदत्ववत् घटप्रतियोगिकभेदत्वस्याप्यभ्युपगमात् पटाद्भिन्नो घटइतिवत् घटात् भिन्नो घट इति प्रतीतेः वज्रलेपत्वाच्च' इति अद्वैतसिद्धौ (वि-भे-खं) उक्तिरप्यनादरणीया । पटाद्भिन्नो घटइति प्रयोगस्तु सर्वसंमतो युक्तः । तत्र पटभेदो नातिरिक्तः । अपितु घटशब्दप्रवृत्तिनिमित्तधर्मरूपः । घटत्वे विद्यमानघटभेदोऽपि घटत्वस्वरूपः इति सिद्धान्ते पटात् भिन्नः घटइत्यत्र घटत्वरूपः भेदः प्रतियोगिपुरस्कारेण, घटशब्देन तदपुरस्कारेणच बोध्येत । पटरूपप्रतियोगिपुरस्कारेण वस्तुतो घटत्वरूपपटभेदस्य तदपुरस्कारेणच द्विधा भानेऽपि विधेयांशेऽधिकावगाहित्वेन बोधस्य नानुपपत्तिः । घटत्वं पटाद्भिन्नं घटत्वं पटो न इत्यादौतु शब्दादेव घटत्वस्वरूपपटभेदः भासते । पटाद्भिन्नो घट इत्यत्र तु स न

श्रीभाष्यम्

**द्वयोर्ज्ञानयोर्विरोधेहि बाध्यबाधकभावः। बाधितस्यैव व्यावृत्तिः। अत्र घटपटादिषु देश कालभेदेन विरोधएव नास्ति।**

श्रुतप्रकाशिका

यत्पुनरित्यादिना सोपाधिकत्वं प्रतिजानीते। पूर्वं परेण बाधस्यापि पक्षवृत्त्युपपादनेनोपाधित्वं प्रत्युक्तम्। तद्युदासाय पक्षे बाधाभावं दर्शयितुं बाधं शिक्षयति। **द्वयोरिति**। विरोधे सत्येव बाध्यबाधकभावः। नत्वस्ति नास्तीति प्रत्ययमात्रयोरित्यर्थः। **बाधितस्यैव व्यावृत्तिरिति**। प्रतिपन्नोपाधौ बाधितस्यैव मिथ्यात्वसाधिका व्यावृत्तिः नत्वगृहीतत्वमात्रं मिथ्यात्वसाधकमित्यर्थः। अत्र व्यावृत्तिविशेषो व्यावृत्तिशब्दोक्तः उत्तरत्र व्यावर्तमानत्वमात्रमिति मात्रच्प्रत्ययसद्भावात्। ततःकिं पक्षे बाधाभावस्येत्यत्राह। **अत्रेति**। देशयोः कालयोश्च भेदेसत्यविरोधं दर्शयितुं तयोरैक्ये विरोध

गूढार्थसङ्ग्रहः

शब्दात् भासते। किंतु प्रवृत्तिनिमित्तधर्मात्मकः घटे भासते। पूर्वत्र स्वरूपरूपत्वं उत्तरत्र धर्मरूपत्वमेव भेदस्य। उभयत्रापि प्राधान्येनोपस्थिते भेदस्यान्वयः। शब्दात् प्रतियोगिपुरस्कारेण स्वरूपात्मकभेदभानस्थले स्वरूपस्य प्राधान्येन शब्दादुपस्थितिरपेक्षिता। प्रत्यक्षादौतु वस्तुतः घटत्वे विद्यमानस्य घटभेदस्य घटत्वस्वरूपत्वेन प्रतियोगिपुरस्कारेण घटत्वस्याभानेऽपि वस्तुतः घटभेदस्य घटत्वरूपतया तत्रापि तद्भेदग्रहः। प्रत्यक्षे घटेपटप्रतियोगिपुरस्कारेण भेदस्याभानेऽपि वस्तुतः पटभेदस्य घटत्वरूपतया घटे घटत्वग्रहदशायां पटभेदग्रहो यथा तद्वत् इतिभगवत आशयः। एवं स्थिते घटत्वे स्वरूपात्मकघटभेदस्य तत्त्वतः सत्त्वेन घटाद्भिन्नो घटइति व्वहारस्य कथमापत्तिः। घटशब्देन प्राधान्येन घटत्वस्यानुपस्थित्या तत्र स्वरूपात्मकघटभेदभानासम्भवात्। शब्दात् प्रतियोगिपुरस्कारेण स्वरूपात्मकभेदभानस्थले व्युत्पत्तिभेदेन स्वरूपात्मकधर्मस्य प्राधान्येनोपस्थितिरपेक्षिता। प्रवृत्तिनिमित्ततया उपस्थितेरप्रयोजकत्वात् ॥

**गोत्वादिरेव सकलेतरव्यावृत्तिः गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः। भेदग्रहणेनैवह्यभेदनिवृत्तिः** इति पूर्वभाष्यसूक्तौ 'भिदिर्विदारणे' इत्यत्र बुद्धिविदारणमपि विवक्षितम्। अयमर्थो नागेशसम्मतइति प्रागेव (३६३.पु) उक्तम्। एतेन 'किंच विदारणात्मनो भेदस्य घटस्वरूपत्वे घटस्यापि विदारणं स्यात्। एवं तदवयवानामपीति परमाणुरपि नैकइति शून्यतापत्तेः। एकाभावे तत्समाहाररूपानेकस्याप्यभावात् इत्यद्वैतसिद्धौ विशेषतोभेदखण्डने उक्तिरपि निरवकाशा ॥

**घटपटादिषु देशेकालभेदेनेत्यादि**। 'देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः। शक्तीनां कारणस्थानां स्वकार्यनियमं प्रति ॥ (श्लो.वा.शू.वा.२५३) शक्तयोऽपिच भावानां कार्यार्थापत्तिकल्पिताः। प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः' इति भट्टपादोक्त्या बाह्यार्थपारमार्थ्यवादिभिः देशकालव्यवस्थयैव विरोधपरिहारएष्टव्यः। अन्यथा परेषामपि व्यावहारिकपदार्थस्य संमततया बौद्धवैलक्षण्यस्यअहमर्थस्य अर्थक्रियाकारित्वाङ्गीकारेण पञ्चपादिकाविवरणयोःउपपादनेन करणाकरणरूपविरुद्धधर्मद्वयसमावेशप्रसङ्गेन क्षणिकत्ववादिबौद्धनिराकरणं देशकालव्यवस्थाऽनङ्गीकारे न घटते ॥

एतेन अस्ति घट इति अस्त्यर्थोपाधौ प्रतिपन्नस्य घटस्य तदुपाधावेव नास्तीति प्रत्यक्षेण बाधो दृश्यते। देशकालयोः देशकालान्तराभावात् तयोर्द्वयोः निरुपाधिकनिषेधात्। अस्त्यर्थस्यानुयायिनो निषेधाभावात्। अतः देशकालतदुपाधि घटानां अस्त्यर्थे ब्रह्मस्वरूपे प्रतिपन्नोपाधौ प्रत्यक्षेणैव बाधात् मिथ्यात्वसिद्धिः। एवं सर्वभावप्रत्ययगोचरे ब्रह्मणि स्वरू-

### श्रीभाष्यम्

**यस्मिन्देशे यस्मिन्काले यस्य सद्भावः प्रतिपन्नः तस्मिन्देशे तस्मिन्काले तस्याभावः प्रतिपन्नश्चेत् तत्र विरोधात्। बलवतो बाधकत्वं बाधितस्य च निवृत्तिः। देशान्तरकालान्तर**

### श्रुतप्रकाशिका

बाधौ दर्शयति । **यस्मिन्निति** । भावाभावविरोधादन्यतरस्य बाध्यत्वेसति बलवतो बाधकत्वमितरस्य बाधितत्वान्निवृत्तिश्चेत्यर्थः च एवार्थे । बाधितस्यैव त्वदभिमतव्यावृत्तिविशेषइत्यर्थः । सामानाधिकरण्यानर्हत्वं विरोधः अदुष्टकारणजन्या निषेधधीः बाधः । अदुष्टकारणजन्यत्वेसति निषेधरूपत्वं बाधकत्वम् । पुरोवर्तिन्यभावोऽनवभासोवा सत्यत्वावभासाभावोवा निवृत्तिः पक्षे घटादौ देशकालभेदेन विरोधबाधाभावावुपपादयति । **देशान्तरेति** । विरोधबाधाभावात्तत्फलभूतनिवृत्ति-

### गूढार्थसंग्रहः

पेपाधौ अस्त्यर्थे कालाद्युपाधिभिस्सह अभावप्रत्यक्षेण बाधात् मिथ्यैवेति सिद्धम् । अन्याभावविशिष्टवस्त्वन्तरज्ञानस्य प्रत्यक्षत्वात् ' इति जन्माद्यधिकरणे विवरणोक्तिरपि निरवकाशा ॥

स्थिरस्यापि सहकारिसमवधानेन अर्थक्रियाकारित्वस्य (पं.पा) उपपादनेन सहकारिसमवधानं सर्वदा कुतो नास्ति इति शङ्कायां तस्य सहकार्यन्तरापेक्षणेनैव परिहारः वाच्यइति अनवस्थाप्रसङ्गेन वस्तुनः क्षणभङ्गेन भेदएवेषितव्यः इति बौद्धाक्षेपपरिहारस्यासम्भवात् । देशो नास्ति कालो नास्तीति प्रतीतिर्नास्त्येव । तद्देशो नास्ति तत्कालो नास्तीत्येव प्रतीतिः । साच कालाद्युपाधिभिरेव निर्वाह्या । अतः कालभेदेन विरोधपरिहारः परमार्थस्थिरवस्तुवादिभिस्सैर्वैरप्यङ्गीकृतः । एवमेव व्यावहारिकार्थक्रियाकारिस्थिरवस्त्वङ्गीकरणेनैव बौद्धवैलक्षण्यं परैरपि वाच्यम् । एवंच घटपटादिषु सन् इति प्रतीति सामान्याविषयत्वरूपं व्यावर्तमानत्वं देशकालभेदेनैवोपपादयितुं शक्यत इति न तन्मिथ्यात्वं साधयितुमलमिति भावः ॥

**यस्मिन् देश इत्यादि** । अत्र **बाधितस्यैव** व्यावृत्तिः ' **बाधितस्य च निवृत्तिः** ' ' **न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः** ' इत्यनया वाचोभङ्ग्या ' अनुमानमपि । सर्वे विकाराः स्वानुस्यूतैकास्मिन् वस्तुनि परिकल्पिताः, प्रत्येकमेकस्वभावानुविद्धत्वेसति विभक्तत्वात् चन्द्रभेदवत् । जडत्वात् कार्यत्वात् भेदत्वात् रजतवत् चन्द्रभेदवच्च । प्रतिपन्नोपाधौ अस्थूलादिवाक्यैः प्रतिषिध्यमानत्वात् देहात्मभाववत्, विरोधिकारणस्वभावानुपमर्देन विरोधिकार्योपत्तिलक्षणत्वात् मायाचन्द्रवत्, प्रलयावस्थायां सह कालेन स्वोपाधौ शून्यत्वात् देहात्मभाववत् ' इति (जन्माद्यधिकरणविवरणे) प्रथम हेतुना कल्पितत्वं न सिध्यति । किंतु प्रतिपन्नोपाधवित्यादिहेतुनैव अयमपि हेतुः देशकालावच्छेदकघटित एव कल्पितत्वं साधयति । नत्वन्यथेतिनिर्णीतं भवति । अत्र प्रथमहेतौ विभक्तत्वं व्यावर्तमानत्वम् । तच्च सद्विषयकप्रतीतिसामान्याविषयत्वम् । अतएव अयं विशिष्ट एकएव हेतुः । प्रागुदाहृत (१९५पुट) सिद्धान्तबिन्दुटीकाग्रन्थानुसारेण इत्थमेव अर्थो युक्तः । ननु प्रत्येकमेकस्वभावानुविद्धत्वात् विभक्तत्वाच्चेति हेतुद्वयमिति तत्त्वदीपनाक्तोर्थः । अत्र देशकालभेदेन व्यावर्तमानत्वमात्रस्यअपारमार्थ्यसाधकत्वाभावकथनेनन ' प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् ' इति ब्रह्मसिद्ध्युक्तहेतुरपि नापारमार्थ्यसाधकइति बोधितम् । अपारमार्थ्यं च विवरणोक्तं स्वानुस्यूतैकास्मिन् वस्तुनि परिकल्पितत्वमेव । परिकल्पितत्वं च ज्ञाननिवर्त्यत्वं विवरणकृतो विवक्षितम् । विवरणे ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्याप्यभिधानात् ॥ प्रागुक्तदिशा (१४३) स्वात्यन्ताभाववति प्रतीयमानत्वंवा अपारमार्थ्यम् । प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपमिथ्यात्वस्य विवरणकारसंमतस्य परिष्करणं ' येनरूपेण यदधिकरणतया प्रतिपन्नं तेनरूपेण तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य प्रतिपन्नपदेन सूचितत्वात् ।

## गूढार्थसंग्रहः

तच्च रूपं सम्बन्धविशेषोऽवच्छेदकविशेषश्च । नहि संबन्धविशेषमन्तरेण भूतले घटाधिकरणता प्रतीयते । अवच्छेदकविशेषमन्तरेण वा वृक्षे क्वापि संयोगाधिकरणता । तथा च येन सम्बन्धविशेषेण येन चावच्छेदकविशेषेण यदधिकरणताप्रतीतिर्यत्र भवितुमर्हति तेनैव सम्बन्धविशेषेणतेनैव चावच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्यमिथ्यात्वमिति पर्यवसिते क्व सिद्धसाधनम् ' इति अद्वैतसिद्धौ अवच्छेदकघटनयैव कृतम् ॥

अत्र लघुचन्द्रिका । ' सूचितत्वादिति । तथाच प्रतिपन्नपदसुक्तार्थलाभायैवेति भावः । अन्तरेण विनैव सम्बन्धावच्छेदकौ निवेश्य अधिकरणता न प्रतीयतइति नेत्यर्थः । एवकारान्तर्भावेन तादृशार्थलाभात् । तादृशप्रत्ययाभावस्य नहीत्यनेन निषेधः । यथाश्रुतंतत्वसङ्गतम्—सम्बन्धावच्छेदकौ विनाऽपि अधिकरणताधीसत्वात् । ननु गगनाधिकरणत्वाप्रसिध्या तस्य मिथ्यात्वानुपपत्तिः। अतआह तथाचेति । अर्हतीति प्रतीतिनिवेशे यावत्त्वमधिकरणे देयम् । अन्यथा उक्ताधिकरणतायाः तच्छून्येऽपि प्रतीतिसम्भवेन सिद्धसाधनतापत्तेः । तथाच लाघवात् येन सम्बन्धेन यदवच्छेदेन यस्य सम्बन्धि यत् तन्निष्ठेत्याद्येव निवेश्यम्, प्रतिपन्नपदेन तादृशसम्बन्धित्वेन प्रमाणयोग्यत्वस्य तादृशसम्बन्धित्वरूपस्य लाभात् । सम्बन्धित्वं भूतलादौ गगनादेरपीति न तत्रातिव्याप्तिरिति भावः । तेनैव सम्बन्धविशेषेणेति प्रतियोगित्वमित्यत्रान्वेति । संयोगसमवायाद्युभयसम्बन्धावच्छिन्नप्रतियोगित्वमादाय सिद्धसाधनात् तदन्यसम्बन्धानवच्छिन्नप्रतियोगित्व लाभाय एवकारः । तेनैवावच्छेदकविशेषेणेति तदन्यावच्छेदकानवच्छिन्नेत्यर्थः । तस्य तदधिकरणकत्वेऽन्वयः । सिद्धान्ते अत्यन्ताभावमात्रस्य सर्वदेशकालवृत्तित्वेनावच्छिन्नवृत्तिकान्यत्वात्तदवच्छिन्नेत्यनुक्त्वा तदन्यानवच्छिन्नेत्युक्तम् । वस्तुतस्तु अवच्छिन्नवृत्तिकान्यत्वमेव तदधिकरणकात्यन्ताभावे देयम् । अन्यथा व्याप्यवृत्तिसाधारणपक्षकानुमाने व्याप्यवृत्त्यंशे यथोक्तसाध्यासम्भवादिति ध्येयम् । ' इति ॥

गुरुचन्द्रिकाच । ' तेनैवचावच्छेदकविशेषेणेति तदन्यावच्छेदकानवच्छिन्नेत्यर्थः । अभावान्विते अधिकरणत्वेच तदन्वयः । एवंच व्याप्यवृत्तिस्थले तद्वत्ताऽवच्छेदकताभ्रमः प्रसिद्धएव । यद्यदवच्छिन्नतया यद्वत्ताधीः तत्प्रत्येकान्यानवच्छिन्नत्व कूटंनिवेश्यम् । तेन मूलाद्यवच्छिन्ने अग्राद्यवच्छिन्नाभावमादाय न सिद्धसाधनम् । नच मूलाद्यवच्छिन्नस्य अग्राद्यवच्छिन्नत्वेनापि ज्ञानात् तन्मिथ्यात्वलक्षणे अग्राद्यन्यानवच्छिन्नत्वस्यापि निवेशनीयत्वाद्बाधः, मूलाद्यवच्छिन्नस्य मूलाद्यवच्छिन्नाभावप्रतियोगित्वरूपस्यैव मिथ्यात्वस्य वाच्यत्वादिति वाच्यम् । मिथ्यात्वघटकाभावस्य तात्विकत्वपक्ष इव अतात्विकत्व पक्षेऽप्यनवच्छिन्नत्वस्वीकारात् । नचैवमवच्छिन्नत्वसामान्याभावएव निवेश्यतामिति वाच्यम् । विशेषाभावकूटान्यस्य तस्यानभ्युपगमात् । सामान्याभावत्वेन निवेश्य स्वरूपाणामेव प्रदर्शितत्वाच्च ' इति ॥

विवरणोक्तहेतुः इत्थं यदि विवक्षितः स्यात्, तर्हि हेतोरुभयवादिसम्मतत्वाभावेन साध्यसाधकत्वं न सम्भवति । विवरणे निरुपाधिकनिषेधाभिधानेन इत्थं विवक्षायास्सम्भवोऽपि नास्ति । प्रलयावस्थायां सहकालेन स्वोपाधौ शून्यत्वं तु प्रलयावस्थायां कालसद्भावाङ्गीकारेण कस्यापि दार्शनिकस्यासम्मतम् ॥

यद्यपि ' संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटाभावसत्वे मानाभावात् लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात् सम्बन्धविशेषप्रवेशे च गौरवात् । घटसमवायमात्रविषयतया प्रतीतेरुपपत्तेः आधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्याव्याप्यवृत्तित्वशङ्काऽनुदयात् उक्तयुक्तेश्च नघटादेः अत्यन्ताभावसामानाधिकरण्यम् । एवं संयोगतदभावयोर्नैकाधिकरण्यम् । ' अग्रे वृक्षः कापिसंयोगी न मूले ' इति प्रतीतेः अग्रमूलयोरेव संयोगतदभाववत्त्वोपपत्तेः तदा सन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं मन्तव्यम् । नचैवं सति भावाभावयोरविरोधात् तज्ज्ञानयोः

## गूढार्थसङ्ग्रहः

बाध्यबाधकभावो न स्यादिति वाच्यम् । भिन्नसत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात् । यत्र भूतले यस्य घटस्य अत्यन्ताभावो व्यावहारिकः तत्र स घटो न व्यावहारिकः इति नियमात् । नचैवं सति 'शुक्तिरियं न रजतम्' इति ज्ञानविषयीभूताभावस्य व्यावहारिकत्वेन पुरोवर्तिप्रतीतरजतस्य व्यावहारिकत्वापहारेऽपि प्रातीतिकसत्तानपहारात् बाधोत्तरकालेऽपि 'इदं रजतम्' इति प्रतीतिः स्यादिति वाच्यम् । तत्र 'इयं शुक्तिः' इत्यपरोक्षप्रमया प्रातीतिकरजतोपादानाज्ञाननिवृत्तौ प्रातीतिकसत्वस्याप्यपहारात्, शुक्त्यज्ञानस्य प्रातीतिकरजतोपादानत्वेन तदसत्वे प्रातीतिकरजतासत्वस्य आवश्यकत्वात् । अतएव यत्र अपरोक्षया अधिष्ठानप्रमया न भ्रमोपादानाज्ञाननिवृत्तिः, तत्र व्यावहारिकत्वापहारेऽपि प्रातीतिकत्वानपहारात् । 'तिक्तो गुडः' इत्यादिप्रतीतिरनुवर्ततएव । एवमखण्डब्रह्मसाक्षात्कारात्पूर्वं परोक्षबाधेन प्रपञ्चस्य व्यावहारिकत्वापहारेऽपि प्रतीतिरनुवर्ततएव । अधिष्ठानाज्ञाननिवृत्तौ तु नानुवर्तिष्यते' इति अद्वैतसिद्धावुक्तम् ॥

अत्र गुरुचान्द्रिका । लाघवेनेति- सम्बन्धरूपावच्छेदकभेदेनाभावभेदाकल्पनलाघवेनेत्यर्थः । विरोधित्वेनेति– सहानवस्थानेत्यर्थः । तथाच अत्यन्ताभावत्वेनेति सहार्थे तृतीया । एवं च घटात्यन्ताभावत्वेन सह घटसामानाधिकरण्यस्य एकत्राभावेन प्रतियोगिस्वरूपमात्रेण अत्यन्ताभावस्य विरुद्धत्वमिति भावः । घटपटोभयं भूतले नास्तीत्यादौ नोक्तोभयस्य अभावप्रतियोगितया धीः, घटादिप्रत्येकरूपस्योभयस्य उक्तधीविषयाभावविरोधित्वात् । किंतूक्तोभयत्वस्य भूतलादिनिष्ठाधिकरणतावच्छेदकत्वाभावधीः, अतएव उभयादिपदप्रयोगे एकजातीयव्युत्पत्त्या घटत्वपटत्वोभयं नास्तीत्यादावपि घटत्वपटत्वोभयत्वे घटादिनिष्ठाधारताऽवच्छेदकत्वाभावधीः, संयोगसमवायोभयसंबन्धेन भूतले घटोनास्तीत्यादौ संयुक्तत्वसमवेतत्वोभयवद्घटत्वादौ घटसंयोगसमवायोभयत्वादौवा भूतलादिनिष्ठाधारताऽवच्छेदकत्वाभावधीः, घटादौ भूतलादिनिष्ठसंयोग समवायोभयप्रतियोगिकधीर्वा । अतएवोक्तस्थले भासमानाभावमादाय वक्ष्यमाणमिथ्यात्वस्य घटत्वादौ नासिद्धसाधनम् ॥

अथवा लाघवेन–सम्बन्धाघटितावच्छेदकत्वलाघवेन घटसामानाधिकरण्यविरोधित्वेनेति । भूतलं घटवदित्याकारिका भूतलत्वादौ या घटसामानाधिकरण्यधीः तत्प्रतिबन्धकतायां भूतलादिविशेष्यकधीनिष्ठायां प्रकारतया अवच्छेदकेनेत्यर्थः । गौरवात्–सम्बन्धानां प्रतियोगितावच्छेदकत्वे गौरवात् । द्वितीये व्याख्याने घटत्वसंयोगाद्यवच्छिन्नप्रतियोगिकाभावस्य प्रतिबन्धकतावच्छेदकनिवेशे घटत्वसंयोगाद्यवच्छिन्नत्वयोः विशेषणविशेष्यत्वस्याविनिगम्यत्वेन प्रतिबन्धकताभेदे गौरवात् । नच प्रतियोग्यंशे भासमानस्यैव प्रतियोगितावच्छेदकतया भानात् प्रतियोगितांशे घटत्वाद्यवच्छिन्नत्वाविषयता घटाभाववद्भूतलमिति धीनिष्ठप्रतिबन्धकतावच्छेदककोटौ ननिवेश्यते, किंतु अभावांशे घटत्वाद्यवच्छिन्नप्रकारतैवेति वाच्यम् । व्यधिकरणधर्मावच्छिन्नाभाववादिनामस्माकं तदसम्भवात् । तत्सम्भवेवा सम्बन्धांशेऽपि तदापत्त्या घटत्वसंयोगाद्युभय धर्मावच्छिन्नप्रकारतानिवेशस्यैवोचितत्वात् । अथैवं घटत्वादिनाऽपि प्रतियोगितानावच्छिद्येतेति अनवच्छिन्नैव सास्यादितिचेत् स्यादेव यदि नानुभवो बाधकः, अभावांशे प्रतियोगितासम्बन्धघटत्वमात्राभ्यां प्रकारतायाएव प्रतिबन्धकतावच्छेदके निवेशसम्भवात् । नच नीलघटाभावस्यापि घटीयत्वात् घटवत्यपि घटो नास्तीति धीः स्यादिति वाच्यम् । घट सामान्याभावीयप्रतियोगिताव्यक्तेरेव घटत्वमात्रावच्छिन्नं प्रति संसर्गत्वात् नीलघटाभावे तद्व्यक्त्यसम्भवात् । अन्यथा प्रतियोगितावच्छिन्नत्वपक्षेऽपि उक्तापत्तेर्दुर्वारत्वात् । नीलघटत्वावच्छिन्नप्रतियोगिताव्यक्तेरपि घटत्वावच्छिन्नत्वात्, प्रतियोगितायाः अवच्छेदकत्वाभिमतघटत्वादिस्वरूपत्वाभ्युपगमात् । प्रतियोग्यंशे प्रकारीभवतएव अभावांशे सम्बन्धतया भानात् । प्रतीतेरुपपत्तेरिति । घटसंयुक्तादौ समवायेन घटो नास्तीत्यादि प्रतीतेरुपपत्तेः इत्यर्थः । नचैवं घटादेः प्रतियोगित्वानुभावविरोधः समवायविशिष्टघटादिप्रतियोगित्वावगाहनात् तादृशप्रतियोगिताकोऽपि घटसमवायाभाव एव

## गूढार्थसङ्ग्रहः

तत्समनियतत्वात् । ननु घटसामान्याभावइत्याशयेन घटसमवायाभावइत्युक्तम् । नचैवमपि वक्ष्यमाणलक्षणस्य तादृशाभावमादाय घटादौ सिद्धसाधनम् । यद्धर्मरूपप्रतियोगिताकाभावत्वेन सत्त्वव्यापकत्वं तद्धर्मवत्त्वस्य वाच्यत्वात् घटादिसमवायिन्यपि संयोगवत् घटाद्यभावसत्त्वादिति वाच्यम् ; सत्त्वव्यापकतावच्छेदकं यद्धर्मपर्याप्तप्रतियोगिताकाभावत्वं तद्धर्मवत्त्वे वक्ष्यमाणतात्पर्यात् तादृशाभावप्रतियोगितात्वस्य समवायादिघटत्वयोरेव पर्याप्तत्वात् । अन्यथा नलिवटाद्यभावमादाय सिद्धसाधनाद्यापत्तेः, विशिष्टस्यातिरिक्तत्वात् यथाश्रुतस्याप्यदोषत्वाच्च ॥

अथवा ननु सम्बन्धावाच्छिन्नत्वस्य विरोधिताऽवच्छेदकाप्रवेशे संयोगेन घटाभाववदित्यादिबुद्धेरपि समवायेन घटवत् इत्यादिबुद्धिविरोधित्वापत्तिः घटाभावविषयकत्वाविशेषात् अत आह– घटसमवायेत्यादि । घटः समवायः आदिना प्रतियोगिता अभावश्चेति चतुष्टयमात्रविषयतया समवायविशिष्टघटत्वावच्छिन्न प्रतियोगिताविशेषसंबन्धावच्छिन्नाच या प्रकारता तन्निरूपिताभावप्रकारताकत्वेन । प्रतीतेः–समवायेन घटाभाववत् इत्यादिप्रतीतेः । उपपत्तेः–उक्तधीविरोधित्वोपपत्तेः नचैवं घटसमवायाद्यभावस्य तद्विरोधित्वस्य च आवश्यकत्वे घटसामान्याभावतद्विरोधित्वयोः पूर्वोक्तयोः मानाभाव इति वाच्यम् । घटो नास्तीति बुद्धेरुक्तरीत्या समवायविशिष्टघटादिसामान्याभावीय प्रतियोगिताविषयकत्वानुपपत्त्या अतिरिक्तप्रतियोगित्वावश्यकत्वात् अतिरिक्ताभावानभ्युपगमेऽपि क्षतिविरहात् । उक्तबुद्धिसत्त्वे घटवादित्यादिबुद्ध्यनुत्पादात् उक्तबुद्धेः विरोधित्वस्यानुभविकत्वात् । सम्बन्धसामान्येन घटाद्यभावस्य त्वयाऽप्यङ्गीकारात्, घटसम्बन्धसामान्याभावस्यैव मम घटसामान्याभावत्वात् । एकज्ञानविषयत्वव्यभिचारादिस्तु न सम्बन्धः सम्बन्धो वा न भिन्नकालीनयोः ॥

किंच समवायादिना घटविशिष्टबुद्धौ घटसमवायाभावधीविरोधित्वं त्वयाऽपि वाच्यम् ; तदनुभवात् । नच समवायादिना घटसामान्याभावावच्छेदकत्वेन गृहीततद्धीरेव तद्विरोधिनीति वाच्यम् ; गौरवात् । तथा च सम्बन्धावच्छिन्नप्रतियोगितावादिनस्तव मते तदन्तर्भावेनैव विरोधित्वात् घटसमवायित्वाद्यवच्छिन्नत्वस्वरूपसम्बन्धावच्छिन्नत्वयोः विशेषणविशेष्यत्वाविनिगम्यत्वात् तत्र विरोधिताद्वयं तदवच्छेदकगुरुत्वं च आवश्यकम् । मन्मते च तत्र घटसमवायाभावधीत्वेनैकैव विरोधिता । तव समवायादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगितान्तर्भावेन उक्तरीत्या विरोधिताद्वयं अवच्छेदकगौरवं च । मम तु तत्र समवायादिविशिष्टघटाभावधीत्वेन एकैव सेति महदेव लाघवम् । नच तवाऽपि समवायवत अंशे घटत्वस्य एकत्र द्वयमिति रीत्या समवायघटत्वयोश्च प्रकारतामादाय अन्ये अपि ते वाच्ये इति वाच्यम् ; घटत्वांशे निर्धर्मितावच्छेदकज्ञानस्यैव विरोधिताया आवयोस्सम्मतत्वात् । घटो न समवायीति धीकालेऽपि प्रकृतविरोधधीसम्पत्तये एकत्र द्वयमिति रीत्या प्रकारीभवद्भ्यां समवायघटत्वाभ्यां अवच्छिन्नायाएव अभावांशे प्रकारतया विरोधितावच्छेदकत्वस्वीकारात् । नच तथाऽपि समवायविशिष्टघटाभावो घटसामान्याभाव एव तत्समनियतत्वादिति तद्धीः कथं घटसंयुक्तादौ, प्रतियोगिता समवायस्य न सम्बन्धः ; किंतु स्वाश्रयसमवेतत्वमित्युक्तौ तद्विषयताया विरोधितावच्छेदकत्वनिवेशे गौरवमिति वाच्यम् ; लाघवेन प्रतियोगितामात्रस्य अभावविरोधित्वे स्थिते समवायप्रतियोगिघटत्वेन भूतलादिनिष्ठाभावविरोधित्वात् उक्तगौरवस्य प्रामाणिकत्वात् ॥

अतएव संयोगेन भूतले घटो नास्तीत्यादावपि संयोगादेः घटादौ स्वाश्रयसंयुक्तत्वादिकमेव सम्बन्धः । समवायेन भूतले घटो नास्तीत्यादौ समवेतघटादिकं वा प्रतियोगितया भाति, तस्य केवलघटाद्यन्यत्वेन भूतलादौ तदभावसम्भवात् भूतले समवेतत्वेन घटो नास्तीत्यनुभवात् । अतएव समवायवत् घटाभावस्येव नीलघटाभावस्यापि धीः समवायेन घटवदिति धीविरोधिन्यस्तु इत्याद्यपास्तम् । तव प्रतियोगितावच्छेदकतया प्रतिबन्धकतावच्छेदके निवेशितयोरेव

## गूढार्थसंग्रहः

मम प्रकारताऽवच्छेदकतया निवेशात् । अत एव घटसंयुक्ते घटसमवायाभावस्याप्यसम्भवः, तत्र घटसमवायस्य कालिकसंबन्धेनाधिकरणत्वसत्वात् । अथ कालिकसंबन्धेन घटसमवायाभाव एव तद्विरोधी तर्हि संयोगेन घटाभाव एव संयोगेन घटाधिकरणविरोधीत्येव युक्तमित्यपास्तम् । घटसंयुक्ते समवायेन घटाभावस्य त्वया स्वीकारेण तस्यैव मया घटसमवायाभावत्वस्वीकारात् समवायसम्बन्धावच्छिन्नघटाधिकरणत्वस्यैव मया घटसमवायाभावविरोधित्वस्वीकारात् ॥

अथवा समवायेन घटो नास्तीत्यादौ घटसमवायादिनिष्ठप्रतियोगितैव परम्परया घटादिगततया भासते शिखी नष्ट इत्यादिवत् । अतो घटादेः प्रतियोगिताऽनुभवो न विरुद्धः साक्षात्संबन्धेन वक्ष्यमाणप्रतियोगितायाः लक्षणत्वान्न दोषः । संयोगेन रूपं नास्तीत्यादौ रूपादौ संयोगाद्यभावः घटत्वेन पटो नास्तीत्यादौ पटादौ घटत्वाद्यभाव इव भाति घटत्वेन पटो नास्तीत्यादिशब्दात् यद्यपि नामार्थस्य घटत्वादेरत्यन्ताभावो न भाति प्रतियोगिनः प्रथमान्तानुपस्थाप्यत्वात् । अनुयोगिपटादेः सप्तम्यन्तानुपस्थाप्यत्वाच्च । तथाऽपि तृतीयार्थस्य साहित्यरूपवैशिष्ट्यस्य स भाति । अथवा तत्र घटत्वाभावाद्यन्यो व्यधिकरणघटत्वपटत्वाद्युभयावच्छिन्नप्रतियोगिताकत्वेन पराभ्युपगताभाव एव भाति । अत एव घटत्वपटत्वाद्युभयावच्छिन्नवत्वेन ज्ञाते नोक्ताभावधीः, तत्प्रतियोगितायाः मिथोव्यधिकरण घटत्वपटत्वादिरूपत्वात् । प्रतियोग्यंशे प्रकारस्यैव संसर्गत्वमित्युक्तमिति मम न व्याहतिः । अत एव तादृशाभावांशे प्रकारताऽवच्छेदकतयोक्तधर्मद्वयमवश्यं भातीति स्वीक्रियते । तथा च तत्प्रतियोगितायाः उक्तधर्मद्वयरूपत्वात् प्रतियोग्यंशे प्रकारस्यैव अभावांशे प्रतियोगिसंसर्गत्वमिति नियमाव्याघातः । नच घटत्वस्य पटासम्बन्धित्वात् तद्घटितसम्बन्धेन अभावस्य पटीयत्वासंभवः इति वाच्यम् ; घटत्वनिष्ठं यत्पटत्वनिष्ठप्रतियोगितात्वं तन्निरूपकसम्बन्धेन अभावांशे पटस्य विशेषणत्वेन भानस्वीकारात् । संयोगकालीनसमवायेन घटादेः रूपवत्त्वस्यैव उक्तसम्बन्धेन अभावे पटीयत्वस्य सम्भवात् उक्तप्रतियोगित्वाश्रयविशिष्टस्य पटस्योक्ताभावाविरोधित्वेऽपि न क्षतिः, उक्तस्थले प्रतियोग्यभावयोः विरोधस्य परेणाप्यस्वीकारात् । उक्तस्थले घटत्वपटत्वोभयत्र भूतलनिष्ठाधारतावच्छेदत्वं नास्तीति धीस्तु न सम्भवति, उभयत्वविशिष्टबोधकपदाभावात् ॥

एवं च संयोगेन रूपं नास्तीत्यादावपि संयोगरूपत्वादिमत्प्रतियोगिकतया तादृशाभावएव भातीति न कथमपि प्रतियोगितायाः अवच्छिन्नता । नचोक्ताभावमादाय सिद्धसाधनं, स्वावच्छिन्नप्रकारकधीविशेष्यसन्मात्रवृत्त्यत्यन्ताभाव प्रतियोगितात्वपर्याप्त्यधिकरणोक्तोभयधर्माधिकरणत्वाप्रसिद्धेः वक्ष्यमाणमिथ्यात्वाभावादित्यास्तां विस्तरः । ननु घटस्य स्वात्यन्ताभाववदवृत्तित्व(भाववद्वृत्तित्व)रूपो विरोधोऽवृत्तित्वेऽप्युपपद्यत इति स्वसंयोगिनि स्वात्यन्ताभावसत्त्वे किं बाधकं तत्राह–आधारेति ॥

अग्रमूलयोरिति । मिथश्चौपाधिकभेदवतोः तदवच्छिन्नवृक्षयोर्वेति शेषः । तदेति इति परेणोच्यत इत्यादिः । सन्मात्रनिष्ठेति । स्वप्रकारकधीविशेष्यनिष्ठसत्त्वव्यापकेत्यर्थः । तेन न पूर्वोक्तिः प्रपञ्चालीकत्वापत्तिसिद्धसाधने अधिष्ठानमेव तत्र प्रतीयमानाभाव इति पक्षेऽपि केवलस्य सतोऽभावात्वविशिष्टेन सता सम्बन्धसत्त्वात् व्यापकत्वमुपपन्नम् । नच तत्पक्षे अधिष्ठानेऽभावाधारत्वप्रत्ययानुपपत्तिः विशिष्टकेवलयोराधाराधेयत्वाभावात्, अन्यथा तद्घटो द्रव्यमितिवत् तत्र द्रव्यमित्यपि धीःस्यादिति वाच्यम् ; अन्यत्र तदस्वीकारेऽपि प्रतीत्यनुरोधेन प्रकृते तत्स्वीकारात्, घटाभावे घटो नास्तीत्यादाविव कल्पिताधारत्वे बाधकाभावात् । किंचाभावप्रत्यये भावस्य सम्बन्धमात्रं नियमेन भासते आधारत्वंतु सति सम्भवे, यथा पृथिव्यां गन्धाभावो नेत्यादौ । चैत्रे न गोशून्यतेत्यादौत्वसम्भवात न तद्भाति ॥

## गूढार्थसंग्रहः

तथा च अधिष्ठानस्याभावानाधारत्वेऽपि न क्षतिः । अधिष्ठाने घटो नेत्यादिशब्दे सप्तमी तु आकाङ्क्षासम्पादनायापेक्ष्यते नाधारत्वबोधाय । एवंचाभावे स्वाधारत्वाकल्पनेऽपि न क्षतिः । घटाभावे घटो नेत्यादौ किञ्चिद्विशिष्टघटाभावत्वेनानुयोगितावच्छेदकरूपेण आवश्यकभेदादेवोपपत्तेः । नच या अभावव्यक्तिः तद्व्यक्तित्वेन सत्त्वव्यापिका तत्प्रतियोगित्वरूपे प्रकृतलक्षणे समवायेन घटाभावमादाय न सिद्धसाधनं, तद्व्यक्तेः घटसमवायिनि असत्त्वादिति घटादेरसंयोगिनि समवायेनाभावनिराकरणं व्यर्थमिति वाच्यम् ; वक्ष्यमाणनिष्कर्षे उक्तदोषासम्भवात् । अभावीयविशेषणतादिसम्बन्धेन घटाद्यभावव्यक्तिं केवलान्वयिनीमादाय सिद्धसाधनवारणाय प्रतियोगितायाः सम्बन्धावच्छिन्नत्वनिरासस्सार्थक्याच्च ॥

अत्यन्ताभावेति । स्वान्यूनसत्ताकत्वरूपात्यन्तिकत्वविशिष्टसंसर्गाभावेत्यर्थः । तेन प्रातिभासिकात्यन्ताभावमादाय न सिद्धसाधनम् ; नवा निष्ठान्तेनैव ध्वंसादिवारणादत्यन्तपदार्थघटकसदातनत्ववैयर्थ्यम्, भेदस्य सत्त्वव्यापकत्वसिद्ध्या अर्थान्तरं स्यात् । अतः संसर्गेति । ध्वंसादेस्तु तत्सिध्या न तद्बाधेन तत्सिद्धेरसम्भवात् । ध्वंससामान्यं न सत्त्वव्यापकमिति बाधेन उक्तानुमानात् ध्वंससामान्याभावसिद्धावपि भेदसामान्यं न सत्त्वव्यापकमिति बाधेन भेदसामान्याभावसिद्धि र्नसंभवति, घटत्वादिना पटादिभेदस्य सत्त्वव्यापकत्वबाधात् ॥

अस्तुवा अत्यन्ताभावार्थकमभावपदम् । उक्ताभावप्रतियोगित्वं च उक्तसत्त्वव्यापकाप्रातिभासिकाभावस्य व्यावहारिकनिष्ठप्रतियोगित्वं उक्तसत्त्वव्यापकाभावस्य प्रातिभासिकनिष्ठप्रतियोगित्वं चेत्यन्यतरवत्त्वम् । व्यावहारिकनिष्ठत्वंच प्रातिभासिकान्यविनाशिनिष्ठत्वं ब्रह्मावृत्तित्वं वा ग्राह्यम् । आद्यस्यान्त्यस्य च प्रतियोगित्वस्योक्त्या व्यावहारिके प्रातिभासिके वा साध्यलाभः । व्यावहारिको यः पूर्णानन्दाभावः तत्प्रतियोगिब्रह्मण्यतिव्याप्तेः व्यावहारिकनिष्ठेति विशेषणम् । विनाशिनः स्वस्य अप्रातिभासिकाभावत्वं च स्वान्यूनसत्ताकत्वम् । स्वाप्नस्य स्वाप्नाभावेन मिथ्यात्वव्यवहारस्तु तदानीं तस्या प्रातिभासिकत्वज्ञानात् । ...स्वावच्छिन्नप्रकारकधीविशेष्यनिष्ठसत्त्वव्यापकात्यन्ताभावप्रतियोगितात्वपर्याप्त्यधिकरणधर्मवत्त्वं लक्षणं बोद्धव्यम् । तेन संयोगेन रूपाद्यभावमादाय रूपादौ न सिद्धसाधनमिति दिक् ॥

अप्रातिभासिको यः स्वसमानाधिकरणात्यन्ताभावः तस्य ब्रह्मावृत्ति यत्प्रतियोगित्वं, यच्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं प्रातिभासकवृत्ति तयोरन्यतरत्वं मिथ्यात्वमिति निष्कर्षस्तु पूर्वमेवोक्तः । बाध्यबाधकेति । भावाभावयोस्सामानाधिकरण्यबुद्धौ सत्यां तयोरेकज्ञानमपरज्ञानाद्बाध्यम् । अत उक्तबुध्यभावविशिष्टेन तयोर्विरोधविषयकेवा पर ज्ञानेन बाध्यं वाच्यम् । तादृशज्ञानं च मिथ्यात्वं जानतां न सम्भवतीति न तेषां तथेति भावः । बाधकत्वं यदि प्रतिबन्धकत्वं तदा तत्रास्त्येव तयोरेकप्रमायां सत्यामविद्यादोषादिविरहादेवापरभ्रमानुदयात् । तयोरेकभ्रमे सति तज्जनकदोषादिनैवापरप्रमानुदयात् । भावाभावयोरेकज्ञानस्य अपरज्ञानप्रतिबन्धकत्वाङ्गीकारेऽपि मिथ्यात्वधीपूर्वकं उक्तप्रतिबन्धकज्ञानं सम्भवत्येव वस्तुतः प्रतियोगिसामानाधिकरण्यधीरभावधीप्रतिबन्धकतायां नोत्तेजिका । नच समुच्चयोत्तरं समुच्चयो न स्यादिति वाच्यम् अवच्छिन्नत्वरूपाव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वात् । नच प्रातिभासिकत्वेन ज्ञायमानाभावस्य धीरपि प्रतिबन्धिका स्यादिति वाच्यम् ; ब्रह्मज्ञानपूर्वबाध्यत्वरूपस्य प्रातिभासिकत्वस्य ज्ञाने तद्वदभावविषयकत्वस्य प्रमात्वाभावव्याप्यत्वेन गृहीतस्याभावज्ञानग्रहे अप्रमात्वग्रहात् प्रमात्वेन गृह्यमाणस्य अभावज्ञानस्य प्रतिबन्धकत्वेन क्लृप्तस्य उक्तधीरूपत्वाभावात् ॥

एतेन प्रतियोगिसामानाधिकरण्यज्ञानस्य उत्तेजकत्वे प्रातीतिकप्रतियोगिसामानाधिकरण्यधीरपि तथा स्यात् । अन्यूनसत्ताकप्रतियोगिनिवेशे तु गौरवमित्यपास्तम् । वस्तुतस्तु मन्मते प्रतिबन्धकत्वं न कस्यापि कुत्राप्युच्यते अव्याप्य

## गूढार्थसङ्ग्रहः

वृत्तिशक्तेः मण्यादसमवहितवह्न्यादौ स्वीकारात् । अथ तयोरेकज्ञानस्य अपरज्ञाने भ्रमत्वज्ञापकत्वं तत् तथाऽपि स्वान्यून सत्ताकसन्मात्रनिष्ठाभावप्रतियोगित्वविशिष्टविषयकधीत्वस्यैव भ्रमत्वरूपत्वम् नतु स्वविरोधिस्वाभाववति स्वप्रकारकधीत्वस्य। शुक्तिरूप्यादिज्ञानस्य तदभावात् । अतएव समसत्ताकयोः अविरुद्धयोरपि स्वाप्नभावाभावयोः बाध्यबाधकधीविषयत्वमुक्तमिति नानुपपत्तिः। अथ तयोरेकज्ञानस्य अपरोपादानाज्ञाननिवर्तकत्वं तत् तथाऽपि नतयोः विरोधोऽपेक्ष्यते प्रत्युत अविरोधः, एकाश्रये अपरस्य कल्पितत्वात् । अथ तयोरेकज्ञानस्य स्वविषयापेक्षया न्यूनसत्ताकविषयकत्वज्ञापकत्वं अपर ज्ञाने तत् तथाऽपि तत्परत्वादिप्राबल्यसापेक्षत्वेऽपि तस्य नतयोर्विरोधापेक्षा इत्यस्माकं स्थितिः। त्वं तु यदि तयोर्विरोधेऽत्यन्त भक्तः तदा पारमार्थिको व्यावहारिकोवा मिथ्यात्वघटकोऽभाव इत्युक्तयोः पक्षयोराद्ये रोन्यरित्यभिप्रेत्याह–भिन्नेति ' इति ॥

लघुचन्द्रिकायां च– ' ननु कथमुक्तश्रुत्या मिथ्यात्वेन प्रपञ्चतदभावयोर्बोधः ? ब्रह्मणि प्रपञ्चस्याभावबोधनेऽपि अभावे प्रपञ्चसामानाधिकरण्यस्य प्रपञ्चान्यूनसत्ताकत्वस्य चाबोधनादिति चेत्= न । इहेत्यस्य प्रपञ्चाविशिष्टब्रह्मणीत्यर्थकत्वात्, किंचनेत्यस्य च ' अतोऽन्यदार्तम् ' इत्यादिश्रुत्यादिमानेन विनाशितया प्रमितं दृश्यमानमित्यर्थकत्वात् । विनाशिदृश्याविशिष्टे ब्रह्मणि विनाशि दृश्यं नास्तीति बोधस्य उक्तश्रुत्या सम्भवात् । विनाशिदृश्यवति विनाशिदृश्याभावस्य च उक्तश्रुतिप्रमितत्वेनैवाप्रातिभासिकत्वानुमितिसम्भवात् विनाशिदृश्यत्वावच्छेदेन अप्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वनिश्चयस्य अनुमितिद्वारा उक्तश्रुतितात्पर्यविषयत्वसम्भवात् । नच विनाशिदृश्याविशिष्टे विनाशि दृश्यं नास्तीतिबोधस्य घटविशिष्टे घटो नास्तीति बोधस्येव आहार्यत्वा न्नशाब्दत्वं, प्रत्यक्षस्यैवाहार्यत्वादिति वाच्यम् । नानेतिपदस्य नाञ्प्रत्ययान्तननञ्पदसिद्धस्य भेदार्थकत्वात् ब्रह्मार्थेहपदयोगेन ब्रह्मभेदबोधकत्वात् उक्तानुपपत्तेर्विनाशिदृश्यत्वस्य तादृशबोधे अभावप्रतियोगिताऽवच्छेदकतया भानासम्भवेऽपि प्रतियोग्यंशे विशेषणमात्रतास्वीकारेण विनाशिदृश्यानामात्मभिन्नत्वमात्ररूपेण अभावबोधस्याहार्यत्वासंभवात् । तादृशबोधे हि विनाशिदृश्यत्वेनाभावो नविषयः । किंतु आत्माभिन्नत्वेनैव । किंच ' अत्यन्तबाधितेऽप्यर्थे ज्ञानं शब्दःकरोतिहि ' इति खण्डनकारोक्तेः शाब्दबोधस्याहार्यत्वं स्वीक्रियते । नच तथाऽप्युक्ताभावे प्रतियोग्यवच्छेदकदेशकालावच्छिन्नत्वस्यावच्छिन्नवृत्तिकान्यत्वस्य वा असिध्द्या मिथ्यात्वबोधनमसिद्धमिति वाच्यम् । निषेधस्य प्रसक्तिपूर्वकत्वेन निषेधवाक्यस्वाभाव्येन प्रतियोगिप्रसक्त्यवच्छेदकदेशाद्यवच्छेदेनैवोक्तवाक्येन उक्ताभावस्य बोधनीयत्वात् तत्तदवच्छेदकविशिष्टस्य दृश्यवद्ब्रह्मण एवाधिकरणत्वेन इहेति सर्वनामपदेनोक्तिसंभवेन तात्पर्यवशात्तदभावानां स्वस्वप्रतियोग्यवच्छेदकावच्छिन्नतया इहेति सप्तम्या अनवच्छिन्नविशेषणतासंबन्धावाच्छिन्नाधेयतया वा उक्तश्रुत्या बोधनसंभवात् ' इति गुरुचन्द्रिकानुक्तार्थोऽपि पूर्वमुक्तः ॥

अद्वैतसिद्धौ च (निषेधप्रतियोगित्वानुपपत्त्या अनिर्वचनीयत्वसमर्थने) ' नच घटो नास्तीति बुद्धेः घटसंसर्गाभावएव विषयः । नतु घटाभावः । पूर्वं तत्र घटस्य सत्वेन तदत्यन्ताभावस्य अभावात् । प्राक्प्रध्वंसाभावयोः प्रतियोगि काले असम्भावितत्वात् भेदस्य घटापसरणानपसरणयोः तुल्यत्वात् । संसर्गोऽपि नतात्त्विकः । प्रतियोगिनि पूर्ववद्ध्वंसाद्यनुपपत्तेः । किंत्वसन् संसर्गः इति वाच्यम् । उक्तमत्रोदयनाचार्यैः–' यन्निबन्धनाहि यत्प्रतीतिः तदभावनिबन्धनैव तत्प्रतीतिः ' इति । इहच घटास्तित्वप्रतीतिः, संयोगनिबन्धना तदभावप्रतीतिः संयोगाभावनिबन्धनैव । सच संयोगः तात्त्विकएव । नच ध्वंसादिविकल्पः घटानयनात्प्राक् संयोगप्रागभावस्य घटे अपसारिते संयोगध्वंसस्य सत्वात् । नहि घटे अन्यत्र नीते तद्देशे घटसंयोगोऽस्ति, येन प्रागभावादिर्व्याहन्येत । तथा च संसर्गप्रतियोगिकाभावस्वीकारेऽपि नासत्प्रतियोगिकाभाव सिद्धिः । वस्तुतस्तु–घटप्रतियोगिकत्वेनैवाभावस्यानुभवात नायं संयोगप्रतियोगिको भवितुमर्हति । एवं च सति वा[illegible]

## गूढार्थसंग्रहः

शेषसंसर्गात्यन्ताभावोवा, उत्पादविनाशशीलः तुरीयः संसर्गाभावो वा भूतलादि संयुक्तस्य घटस्य विशेषणाभावप्रयुक्त विशिष्टाभावो वा अङ्गीकरणीयः ॥

नच—अत्राद्ये ध्वंसादेरुच्छेदः । कपालेऽपि घटान्यकालसंसर्गिणैवात्यन्ताभावेन तद्व्यवहारोपपत्तेरिति वाच्यम् । 'दण्डी गौरश्चलति' इति विलक्षणव्यवहारत्रये द्रव्यगुणकर्माणि विलक्षणानि हेतुर्यथा तथाऽत्रापि नास्ति नष्टोभविष्यतीति विलक्षणव्यवहारत्रयस्यैकेनात्यन्ताभावेनोपपादयितुमशक्यत्वाद्विलक्षणाभावत्रयासिद्धिः । समयविशेषसंसर्गश्च तत्समयावच्छिन्नं स्वरूपमेव संयोगध्वंसादिर्वा । नच संयोगादिध्वंसेनैवावश्यकेन तर्हि प्रतीत्युपपत्तिरिति वाच्यम् । घटप्रतियोगिकत्वेनानुभवानुपपत्तेरुक्तत्वात् । नच कपालेऽपि घटध्वंसादिः सम्बन्धस्थानीयोऽस्तु एकएवात्यन्ताभावो व्यवहारयत्विति वाच्यम् । विलक्षणव्यवहारत्रयानुपपत्त्या दत्तोत्तरत्वात् । अतएव द्वितीयतृतीयपक्षावपि क्षोदक्षमौ घटप्रतियोगिकत्वानुभवस्यान्यथोपपादयितुमशक्यत्वात् । एतेन दण्डसत्वेऽपि पुरुषासत्वात् दण्ड्यभावदर्शनादस्तु तत्र विशिष्टाभावः नचात्र संयोगसत्वे संयोग्यभावो दृष्टः, तथा च न विशिष्टस्याभावः, किंतु विशेषणस्यैवेति निरस्तम् । संयोगिप्रतियोगिकत्वेनानुभवात् । संविदेवहि भगवती वस्तूपगमे शरणमिति । तस्मान्निषेधप्रतियोगित्वान्यथाऽनुपपत्त्याऽपि अनिर्वाच्यत्वसिद्धिः ।' इत्यत्र अत्यन्ताभावस्य असत्प्रतियोगिकत्वमपि सम्भवतीति आनन्दततीर्थीयं मतमपि पर्यालोचितम् ॥

अत्र चन्द्रिका । घटान्यकालेति घटवतः कालादन्यकालेत्यर्थः । संयोगध्वंसादिर्वेति—तथाच घटस्य संयोगनाशोत्तरं पुनर्नयने नास्तीति व्यवहारानापत्तिः तत्तत्संयोगप्रागभावकालीन तत्तत्संयोगध्वंसस्यैव सम्बन्धत्वात् । संयोगिप्रतियोगिकत्वेनेति—यत्राधिकरणे प्रतियोगि न संयुक्तं तत्र नान्यःपक्ष इति बोध्यम् । यन्निबन्धनेत्याद्याचार्योक्तेर्हि अयमर्थः । प्रतियोग्यनुयोगिनोर्येन सम्बन्धेन रूपेणच अभावाविषयकधीविषयत्वं तेन सम्बन्धेन रूपेण च अभावधीविषयत्वम् । तथा च प्रतियोगितानुयोगितावच्छेदकरूपेण प्रसिद्धिरभावबुध्या अपेक्ष्यते, नतु तदधिकरणीयतत्तत्सम्बन्धविशिष्टप्रतियोगित्वादिना तदुक्तं 'सद्भयामभावो निरूप्यते' इति । एवंच घटसंयोगित्वभूतलत्वाभ्यां सतोःप्रसिद्धिः प्रकृते अस्त्येवेति ॥

तथाऽपि अत्यन्ताभावस्य असत्प्रतियोगिकत्वनिराकरणं सिद्धान्तिनामपि सम्मतम् । नास्ति नासीत् नभविष्यतीति प्रतीतिविषयएवात्यन्ताभावः । कस्मिंश्चित्काले सतः तत्प्रतियोगित्वाङ्गीकारे एतत्प्रतीत्यनुपपत्तिः, इति असत्प्रतियोगिकत्ववादिनामाशयः प्रतीयते । वस्तुतः कालविशेषनियतध्वंसप्रागभावादिवैलक्षण्येन एकत्र स्थितिकालेऽपि अन्यत्र अत्यन्ताभावप्रतीतिसम्भवेन च उत्पत्तिस्थितिलयकालेषु त्रिष्वपि नास्तीति प्रतीतिसत्वेन त्रैकालिकत्वमत्यन्ताभावस्य । ननु नास्ति नासीत् नभविष्यतीति प्रतीतिविषयतया, इति 'सद्भयामभावो निरूप्यते' इति सिद्धान्तेऽपि अत्यन्ताभावस्य त्रैकालिकत्वमुपपद्यते । नैयायिकमते 'वायौ रूपं नास्ति, सर्वमतेषु शशेशृङ्गं नास्ति' इति प्रतीतिविषयः अत्यन्ताभावः नास्ति नासीत् नभविष्यतीति प्रतीतिविषयोऽपि त्रैकालिकतया संग्रहीतो भवति । अत्यन्ताभावस्य असत्प्रतियोगिकत्व निराकरणावसरे 'संविदेव हि भगवती वस्तूपगमे शरणम्' इति वदाद्भिः मधुसूदनसरस्वतीभिः द्वितीयमिथ्यात्वनिरूपणावसरे 'समवायेन घटो नास्तीति प्रतीतौ घटसमवायाभावस्य विषयत्वम्' इत्युक्तिःकथं घटते? संयोगेन घटवत् संयुक्त घटवत्, घटसंयोयवत्, इति प्रतियोगिप्रतीतिविरोधिनीनां संयोगेन घटो नास्ति संयुक्तघटो नास्ति घटसंयोगो नास्ति इति प्रतीतीनां विषयवैलक्षण्यनिबन्धनमेव वैलक्षण्यं वाच्यम् । प्रतियोगिज्ञाने संयोगस्य संबन्धतया भाने संयोगेन घटो नास्तीत्यत्रापि तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावो विषयः । संयोगस्य प्रकारतया भाने घटस्य विशेष्यत्वप्रकारत्वाभ्यां संयुक्त घटत्व घटसंयोगत्वावच्छिन्नप्रतियोगिताकाभावौ विषयौ इत्यङ्गीकार एव प्रतीतिवैलक्षण्यं सम्भवति ॥

## गूढार्थसंग्रहः

संयोगेन भूतले घटो नास्तीत्यादावपि संयोगादेः घटादौ स्वाश्रयसंयुक्तत्वादिकमेव सम्बन्धः। समवायेन भूतले घटो नास्तीत्यादौ समवेतघटादिकं वा प्रतियोगि इत्यङ्गीकारे अनुभवविरोधः स्फुटः। एवं समवायेन घटो नास्तीत्यादौ घटसमवायादिनिष्ठप्रतियोगितैव परम्परया घटादिगततया अवभासते। शिखी विनष्ट इत्यादिवत्' इत्युक्तिरप्यनुभवविरुद्धैव। शिखी विनष्ट इत्यत्र शिखिनो नाशस्य प्रत्यक्षविरोधेन विशिष्टान्वयविवक्षया शिखानाशतात्पर्येण तथा प्रयोगः। समवायेन घटो नास्तीत्यत्र तु न तथाविधं बाधकम्। 'घटसंबन्धसामान्याभावस्यैव मम घटसामान्याभावत्वात्' इत्युक्तिरप्यनुभवविरुद्धा। अतः अनुभवानुरोधात् सम्बन्धावच्छिन्नप्रतियोगिता कल्प्यताम् ॥

एवं च अनुभवानुरोधेन प्रतियोगिताऽङ्गीकारे आवश्यके फलमुखतया गौरवं न दोषः। समवायादिना घटादिबुद्धौ घटसमवायाद्यभावधियः विरोधित्वस्यानुभाविकत्वमात्रेण समवायेन घटोनास्ति घटसमवायो नास्ति इति प्रतीत्योः एकविषयत्वं नकल्पयितुं शक्यते। तदभावावच्छेदकधर्मदर्शनविषया तभावावच्छेदत्वेन गृहीतानां बहूनांभावानामभावानांच निश्चयस्य प्रतिबन्धकता सर्वैरप्यास्थेयेति तत्संसर्गकबुद्धौ तत्संसर्गाभावधियः प्रतिबन्धकत्वं ततएव निर्वहति। लाघवात्प्रतियोगिमात्रस्यैवाभावविरोधित्वमित्यपि वक्तुं न शक्यते । रक्तघटवति देशे नीलघटाभावबुद्ध्यनुपपत्तेः। व्यक्तीनामानन्त्येन एकैकव्यक्तेर्विरोधित्वकल्पनासम्भवात्। अतः प्रतियोगिताऽवच्छेदकरूपावच्छिन्नाधिकरणतया साकं तदवच्छिन्नप्रतियोगिताकाभावस्य विरोधित्वं वक्तव्यम्। एवमपि रक्तघटवति देशे घटो नास्तीति न प्रतीतिः। घटो नास्तीत्यत्र घटत्वनिष्ठतद्व्यक्तित्ववृत्तिप्रतियोगिताकाभावः नीलो घटो नास्तीत्यत्र नैल्यघटत्वैतदुभयगतद्वित्ववृत्तिप्रतियोगिताकाभावः विषयः। वृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताऽवच्छेदकत्वसंबन्धेन इति अभावयोर्द्वयोर्वैलक्षण्यम्। एवं प्रतियोगिमत्ताग्रहविषयीभूतप्रतियोगिताऽवच्छेदकरूपावच्छिन्नाधिकरणतया साकमभावस्य विरोधित्वे सिद्धे प्रतियोगिमत्ताग्रहविषयसंबन्धावच्छिन्नप्रतियोगिताऽवच्छेदकरूपावच्छिन्नाधिकरण तया साकं तद्रूपावच्छिन्नतत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्य विरोधः सहानवस्थानलक्षणः तज्ज्ञानयोः प्रतिबध्यप्रतिबन्धकभावलक्षणोऽप्यनुभवानुरोधादङ्गीकरणीयः ॥

वह्न्यादौ मण्यादेः प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वरूपं नैयायिकमते शक्तेःपदार्थान्तरत्वानङ्गीकारात्। शक्तिमभ्युपगच्छतां मीमांसकानां मते कार्यानुकूलधर्मविघटकत्वरूपं प्रतिबन्धकत्वम्। मणिसमवधाने वह्निगतशक्तेर्नाशेन न दाहः। शक्तिविशिष्टवह्निरूपकारणाभावात् इति मतभेदेन प्रतिबन्धकत्वं व्यवस्थितम् ॥

एवं स्थिते 'वस्तुतस्तु प्रतिबन्धकत्वं न कस्यापि कुत्राप्युच्यते अव्याप्यवृत्तिशक्तेः मण्याद्यसमवहितवह्न्यादौ स्वीकारात्' इत्युक्तिःकथं घटते? वह्नौ शक्तेर्नाशे उत्पत्तिं प्रति च किंचित्कारणं कल्पनीयं तत्रच वह्नौ दाहानुकूलशक्तिः स्वाभाविकीति तन्नाशंप्रति मणेरेव कारणत्वमङ्गीकरणीयम् अन्वयव्यतिरेकसत्वात्। एवं च शक्त्यंङ्गीकर्तृमीमांसकमतवत् मणेः प्रतिबन्धकत्वं चन्द्रिकाकारैरप्यङ्गीकृतप्रायमेव। अग्रे वृक्षः कपिसंयोगी मूले नेति प्रतीतेः अग्रमूलयोः संयोगतदभावावगाहित्वे अनुभवविरोधः स्फुटः। भेदधिकारे नृसिंहाश्रमयुक्तिमनुसृत्य अग्रमूलभेदेन औपाधिभेदाङ्गीकारे, एवं देश कालभेदेन भावाभावावगाहिप्रतीतेरपि तथैव निर्वाह्यतया क्षणभेदेनानन्तवस्तुकल्पनायाः अकामेनापि प्रसङ्गेन बौद्धमताविशेषः स्यात् इति गदाधराद्युक्तदोषः अपरिहार्य इति औदयनिकानां सरणिः। पूर्वं भेददूषणपरिहारे उदयनोक्तप्रक्रियामनुसृत्य भेदस्य धर्मरूपत्वं स्वपरनिर्वाहकसमाधिना स्वरूपरूपत्वं च व्यवस्थापयता भगवता ज्ञेयत्वासत्वादिहेतून् रज्जुसर्पस्वप्नप्रत्ययादिदृष्टान्तांश्च (आत्मतत्त्वविवेके) दूषयतः उदयनाचार्यस्य मतमेवानुसृतं 'यस्मिन्देशे यस्मिन्काले यस्य

## गूढार्थसङ्ग्रहः

**सद्भावः प्रतिपन्नः तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत्** इत्यादौ इति प्रतीयते । अस्यां च सूक्तौ ' यस्य सद्भावः प्रतिपन्नः तस्याभावः प्रतिपन्नश्चेत् ' इत्यत्र संयोगेन घटसद्भावः यत्र देशे काले वा प्रतिपन्नः तत्र देशे काले संयोगेन घटाभावः प्रतिपन्नश्चेत् इत्यर्थस्य स्वरसतः प्रतीत्या संयोगेन घटो नास्तीत्यत्र घटसंयोगाभाव एव विषयः इति मधुसूदनसरस्वत्युक्तिरनुपादेयेति सूचितम् ॥

**तत्र विरोधात् बलवतो बाधकत्वम्** इत्यत्र बलवत्त्वं सिद्धान्ते प्रमा(विषय)त्वेन परमते अधिकसत्ताक(विषयक)त्वेन वाच्यम् । रज्जुसर्पादिषु रज्जुसर्पाभावप्रतिपत्तिः प्रमा । परमते रज्जुसर्पाभावस्य व्यावहारिकत्वेन अधिकसत्ताकतया तद्विषयकत्वेन ज्ञानस्य बाधकत्वम् । एतेन प्रतियोगितदभावयोरुभयोः समसत्ताकत्वे बाध्यबाधकभावो नघटतइति बोधितम् । तेन स्वाप्नगजतदभावयोः इव द्वितीयद्वितीयाभावयोः बाध्यबाधकभावः । स्वाप्नयोरुभयोः प्रातीतिकत्वं द्वितीयद्वितीयाभावयोः उभयोर्व्यावहारिकत्वम् । समसत्ताकयोरुभयोरपि एकत्राङ्गीकारः नैव विरुध्यते इत्यद्वैतसिध्युक्तिरनवकाशा । एकस्य बलवत्त्वाभावे बाधकत्वासम्भवात् । स्वाप्नगजाभावस्य व्यावहारिकत्वमेव, तत एवच स्वाप्नगजबाधकत्वमिति कुमारिलसिद्धान्तः पूर्वमेव (३३८) निरूपितः । एतेन पूर्वोक्तरीत्या बलवत एव बाधकत्वमिति भट्टपादसिद्धान्त इति सिद्धम् । स्वप्ने प्रतियोगितदभावयोरुभयोः ग्रहे अभावस्य जाग्रत्यबाधेन व्यावहारिकत्वनिश्चये स्वप्ने अभावप्रतीत्यनन्तरं प्रतियोगिप्रतीतौ अभावस्य बाधभ्रम एव, नतु बाधः । यस्य तु जाग्रत्यबाधाननुभवः तस्यैव बाधः । स्वप्नजागरयोः चन्द्रिकोक्तसामग्रीवैलक्षण्यं योगितादितरसामग्रीवैलक्षण्यवदुपपद्यत इति, तेन नविषयभेदस्सिध्यतीत्यापि पूर्वमेव (३३८) निरूपितम् । अयमेवार्थः आचार्यपादैः (अ.सा.२९५) उक्तः । स्वप्ने ईश्वरदत्तशक्तिविशेषविशिष्टेन्द्रियाङ्गीकारेऽपि न बाधकं किंचित् ॥

एतेन ' स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात् । निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्, किंतु निषेध्यापेक्षया न्यूनसत्ताकत्वम् । प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधित्वम् ' इत्यद्वैतसिद्धिः, (द्वितीयमिथ्यात्वनिरुक्तौ) ' स्वाप्नार्थस्य- स्वप्ने आरोपितस्य गजादेः । स्वाप्ननिषेधेन- स्वप्ने आरोपितगजाभावमादाय । बाधदर्शनात्- मिथ्यात्वव्यवहारदर्शनात् । न तन्त्रं- न व्याप्यम् । न्यूनेति–निषेधस्येत्यनुषज्यते । प्रकृते- प्रपञ्चतत्सामानाधिकरण्यनिषेधयोः । तुल्यसत्ताकत्वात्- व्यावहारिकत्वात् । विरोधित्वं प्रपञ्चनिषेधस्य प्रपञ्चपारमार्थिकत्वव्याघातकत्वम् । तथाच स्वान्यूनसत्ताक स्वसमानाधिरणात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं वाच्यम् नतु स्वाधिकसत्ताघटितम् । स्वाप्नार्थस्य स्वाप्न तदभावघटितमिथ्यात्वव्यवहारानुपपत्तेः । ननु किमिदमभावस्य स्वप्रतियोगिन्यूनसत्ताकत्वम् ? उच्यते ; प्रातिभासिकनिष्ठं व्यावहारिकपारमार्थिकान्यतरप्रतियोगिकत्वं व्यावहारिकनिष्ठं पारमार्थिकप्रतियोगिकत्वं चेत्यन्यतरत्वं ; तथा च व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत् प्रातिभासिकाभावप्रतियोगित्वं यच्च पारमार्थिकनिष्ठं व्यावहारिकाभावप्रतियोगित्वं तदन्यत् यत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तदेव मिथ्यात्वम् । व्यावहारिकः पारमार्थिको वा अयं घटः स्वसमानाधिकरणप्रातिभासिकात्यन्ताभावप्रतियोगीति ज्ञानकाले एतद्घटे मिथ्यात्वव्यवहाराभावात् पारमार्थिकमिदं पारमार्थिकान्यस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगीति ज्ञानकाले इदं मिथ्येतिव्यवहाराभावाच्च तदन्यदित्यन्तं प्रतियोगित्वविशेषणम् । ननु पारमार्थिकत्वममिथ्यात्वं, तथाच मिथ्यात्वघटितं मिथ्यात्वमित्यात्माश्रयः ; ज्ञाननिवर्त्यत्वाभावरूपं पारमार्थिकत्वमेव घटकमित्युक्तावपि तद्घटितस्य प्रकृतमिथ्यात्वस्य मिथ्यालक्षणत्वानुपपत्तिः ; ज्ञाननिवर्त्यत्वान्यवैयर्थ्यादितिचेन्न ; धूमप्रागभावादौ धूमादेरिव ज्ञाननिवर्त्यत्वस्य उक्तप्रतियोगित्वे विशेषणत्वात् अविनाशित्वरूपस्य पारमार्थिकत्वस्य प्रकृते निवेशसम्भवाच्च । प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं विनाशिनिष्ठं यत् अप्रातिभासिकस्य स्वसमा-

## गूढार्थसङ्ग्रहः

नाधिकरणात्यन्ताभावप्रतियोगित्वं तयोरन्यतरवत्त्वं मिथ्यात्वमिति तु निष्कर्षः । शुक्तिरूप्यादेः व्यावहारिकेऽत्यन्ताभावे मिथ्यात्वं नानुपपन्नम् । तदधिकरणे व्यावहारिकस्य तदत्यन्ताभावस्य स्वीकारात् । नच अन्यूनसत्ताकात्यन्ताभावघटितो- मिथ्यात्वस्वीकारे द्वयोरपि स्वाप्नयोर्भावाभावयोः मिथ्यात्वनिश्चयापत्तिरिति– वाच्यम् ; स्वप्ने द्वयोरन्यूनसत्ताकाभावघटित उक्तप्रतियोगित्वनिश्चये तस्या इष्टत्वात् । अत एव जागरे तयोः परस्परात्मकतादृशाभावघटितमेव मिथ्यात्वं प्रतीयते ; तयोरभावान्तरस्य व्यावहारिकस्य कल्पने गौरवात् । नच स्वप्ने घटादेः प्रतीयमानस्य व्यावहारिकोऽभावः क्लृप्त एवेति न गौरवमिति वाच्यम् ; यस्य चैत्रत्वादिजातिविशेषस्य जाग्रत्काले न ज्ञानं किंतु स्वप्न एव नानाव्यक्तिषु, तादृशव्यक्तीनां तादृशजात्यवच्छिन्नाभावस्य प्रागभावस्यचैकाधिकरणे स्वाप्नपदार्थे एव स्वप्ने जागरे वा ज्ञानं जातं तदवच्छिन्नाभावस्य व्यावहारिकत्वेनाक्लृप्तत्वात् व्यावहारिकत्वकल्पने गौरवेण तादृशजातिविशिष्टतदभावयोः परस्परात्मकाभावघटितस्यैव मिथ्यात्वस्यौचित्यात् ' इति लघुचान्द्रिकायां तद्विवरणं चानवकाशम् ॥

एवं ' एकस्य साधकेन अपरस्यबाध्यत्वं विषमसत्ताकत्वे प्रयोजकं यथा शुक्तिरूप्यतदभावयोः । एकबाधकबाध्यत्वंच समसत्ताकत्वे प्रयोजकम् यथा शुक्तिरूप्यशुक्तिभिन्नत्वयोः । अस्ति च प्रपञ्चतन्मिथ्यात्वज्ञानयोः एकब्रह्मज्ञानबाध्यत्वम् । अतः समसत्ताकत्वात् मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधात् नाद्वैतक्षतिरिति ' इत्यद्वैतसिद्धिः, ' ननु यत्र मिथ्यात्वावच्छेदकं नोभयवृत्ति तत्राप्येकमिथ्यात्वे अपरस्याधिकसत्तायां का युक्तिः ? तत्राह– एकसाधकेनेत्यादि । प्रयोजकं- व्याप्यम् । ययोर्विरुद्धयोः एकस्य साधकं ज्ञानमपरस्य बाधकं तयोर्भिन्नसत्ताकत्वनियमः । यदि तयोर्भिन्नसत्ताकत्वं न स्यात् तदा बाध्यबाधकधीविषयत्वं नस्यात् शुक्तिरूप्ययोरिवेति हेतूच्छित्तिप्रसङ्ग एव विपक्षे बाधकः । अथवा– ननु मिथ्यात्वावच्छेदकस्योभयवृत्तित्वेऽपि एकमिथ्यात्वे अपरस्याधिकसत्ता मास्तु ; विरुद्धयोरेकत्र प्रसक्तयोरुभयावृत्तिरूपेण एकस्य मिथ्यात्वे अपरस्याधिकसत्तेति नियमाभावात्, गजे प्रसक्तयोः गोत्वाश्वत्वयोरेकत्र गोत्वं नास्ति अत्राश्वत्वं नास्तीति प्रत्येकरूपेण निषेधेऽपि समसत्ताकत्वात् । तत्राह–एकबाधकेति । तथाचोक्तनियमाभावेऽपि यत् यद्बाधकधीविषयः तत् तदधिकसत्ताकमिति नियमोऽस्त्येव । एकसाधकेनापरस्य बाध्यत्वमुभयावृत्तिरूपेणैवेत्यभिप्रायेण उभयवृत्ति नभवेदित्यादिकं पूर्वमुक्तमिति भावः । प्रपञ्चगतयोः सत्यत्वमिथ्यात्वयोः समसत्ताकत्वे संयोगतदभावदृष्टान्तेन सम्भावनामात्रमुक्तं तत्रेदानीं प्रमाणमाह—एकबाधकेति । यत् यद्बाधकबाध्यं तत् तत्समानसत्ताकमिति व्याप्तौ यद्युक्तसाध्यं नस्यात् तदोक्तहेतुर्नस्यात् शुक्तिरूप्यघटयोरिव पौर्वापर्येण बाधसम्भवात् ब्रह्मज्ञानबाध्यं शुक्तिरूप्यादिकं व्यावहारिकेण स्वाभावादिना समसत्ताकमेव ; ब्रह्मप्रमाबाध्यत्वस्य व्यावहारिकत्वस्योभयत्रापि सम्भवात् । प्रपञ्चेति । स्वसत्यत्वादिघटितप्रपञ्चेत्यर्थः ॥

अथवा एकत्र प्रसक्तयोः विरुद्धयोरेकस्यापरापेक्षया अन्यूनसत्ताकत्वं प्रत्यमिथ्यात्वं नप्रयोजकं किंतु स्वाश्रयसमसत्ताकत्वम् अतो मिथ्याभूतमपि प्रपञ्चे मिथ्यात्वं प्रपञ्चगतसत्यत्वात् न्यूनसत्ताकम्, प्रपञ्चसमसत्ताकत्वात् तदपि प्रपञ्चबाधकबाध्यत्वात् नासिद्धमित्याशयेनाह–एकबाधकेति । (मिथ्यात्वमिथ्यात्वनिरुक्तौ) इति लघुचन्द्रिकायां तद्विवरणमपि निरवकाशम् ॥ स्वाप्नगजाभावस्य व्यावहारिकत्वस्य प्रागेवोपपादनात् । ' यस्य चैत्रत्वादिजातिविशेषस्य जाग्रत्काले नज्ञानं किंतु स्वप्नएव ' तत्रापि तादृशजात्यवच्छिन्नाभावस्य व्यावहारिकत्वं सम्भवत्येव । सामान्यतः स्वप्ने प्रतियोगितदभावयोर्ज्ञाने अभावस्य जाग्रत्यबाधनिश्चये व्यावहारिकत्वं सर्वत्र निर्णीतमिति स्वप्नदृष्टवस्तुप्रतियोगिकत्वेन जाग्रत्कालबाधितत्वेन तादृशजात्यवच्छिन्नाभावस्य इतरेषामपि ज्ञानसम्भवात् । किंच योगिनां तादूप्येणापि स्वप्नदृष्टतज्जातेः नानाव्यक्तिषु नानाव्यक्तीनां तदवच्छिन्नाभावस्य च ज्ञानं सम्भवत्येव तत्र तज्जात्यवच्छिन्नाभावस्य जाग्रत्यबाधेन तादूप्येणापि व्यावहारिकत्वं सुगमम् ॥

## गूढार्थसंग्रहः

गुरुचन्द्रिकायां—किंच रजतादौ रजतभेदादिकमनुभूयते । तत्र च व्यावहारिकत्वं न शङ्कास्पदं रजताद्यात्मकनिषेधेन रजताभावादिकं बाधितमनुभूयते । सच निषेधो न व्यावहारिकः । तदुचितदेशकालकार्यग्राहकाद्यभावात् ।' इति स्वाप्निकप्रतियोगितदभावयोः उभयोःप्रातिभासिकत्ववचनमप्यनादरणीयम् । रजतात्मकनिषेधेन रजताभावबाधानुभवः रजताभावस्य जाग्रत्यबाधनिश्चये भ्रमरूपएवेति नात्र बाधः । स्वप्ने रजतप्रतीत्यनन्तरं प्रतीतरजते रजतभेदावगाहिज्ञानेन न रजतस्य बाधसम्भवः । जाग्रत्काले शुक्तिं दृष्ट्वा इदं रजतम् इति ज्ञानानन्तरं तत्र प्रतीते रजते रजतभेदावगाहिज्ञानेन यथा न रजतस्य बाधः तद्वदेव । रजततादात्म्येन पुरोवर्तिनो ग्रहे तत्र च रजतभेदज्ञाने परं बाधस्सम्भवति । इदं रजतमिति ज्ञानस्य 'नेदं रजतम्' इति ज्ञानेन बाधानुभवात् । तत्रच रजतभेदस्य व्यावहारिकत्वमिष्टमेव । एवमेव स्वाप्निकप्रतीत्यङ्गीकारेऽपि । अतः प्रातीतिकस्य प्रातीतिकेन नबाधः । विरोधएव बाध्यबाधकभावदर्शनात् । समसत्ताकयोरविरोधे बाध्यबाधकभावोक्तेः शपथमात्रत्वात् । एतदेवाभिप्रेत्य 'तत्र विरोधात् बलवतो बाधकत्वम्' इत्युक्तिः भाष्ये । अतः स्वाप्नरजतदभावयोरुभयोः बाधितत्वोक्तिरभिनिवेशमूलैव ॥

गुरुचन्द्रिकायां—'नच समसत्ताकयोर्भावाभावयोरविरोधे बाध्यबाधकत्वानुपपत्तिरिति वाच्यम् । अभावग्राहकश्रुत्यादिप्राबल्येन वक्ष्यमाणेन तदुपपत्तेः ।' इत्युक्तिरप्यनुपादेया तत्रत्य श्रुत्यर्थस्य 'नेहनाना' इति श्रुतौ विवक्षाया असम्भवात् इति पूर्वमेव निरूपितम् । 'वायौ रूपंनास्ति' इति प्रत्ययेन वायौ रूपस्य कस्याप्यभावनिश्चयेन 'वायौ नानारूपं नास्ती'त्यादौ नानात्वपर्याप्त्यधिकरणनिषेधेन एकरूपवत्ताप्रतीतिर्नोदेति । अत्रतु अभावसाधारणनानात्वं वृत्तिविशेषविषयत्वं स्वरूपसम्बन्धेन तद्वतः निषेधः इत्याशयस्तु न सम्भवति । नेह किंचिन्नास्ति इति श्रुत्यानुपूर्व्याः क्वापि विरहात् नानापदस्यैव वैयर्थ्याच्च ॥

किंचनेत्यस्य वैयर्थ्यान्यथानुपपत्त्या केनापि संबन्धेन नानात्ववन्नास्तीत्यर्थकल्पनमपि नानादिशब्दवैयर्थ्यादेवानुपादेयम् । घटादेर्नाशप्रत्यक्षेण सर्वदृश्यानां युगपदसत्वमविवादमिति नेहेत्यादि वाक्यस्य वैयर्थ्यापातोऽपि न संभवति । विनाभूतं किंचन नास्तीत्यर्थे श्रुतितात्पर्यस्य पूर्वमेव (६०३पुटे) निर्धारणेन एतच्छ्रुतिवैयर्थ्यासंभवात् । 'नेह नाना अस्ति' इति श्रुतेः बहवोऽर्थास्संभवन्तीति हरिगुणदर्पणे तत्त्वमार्ताण्डकारैः सम्यङ्निरूपणेन श्रुतिवैयर्थ्यस्य न कथंचिदप्यवकाशः । द्वितीयद्वितीयाभावोभयसाधारणदृश्यत्वं निषेध्यताऽवच्छेदकं नानापदेऽभिप्रेतमिति (गु.चं.१३६ पुटे) उत्प्रेक्षणमनुपादेयम् । नानाशब्दस्यैवमर्थकल्पनायां कोशादेः कस्यापि मूलस्याभावात् ॥

नानाशब्दस्य नञ्प्रकृतितया इहेति ब्रह्मबोधकपदसमभिव्याहारेण ब्रह्मान्यन्नास्तीत्यर्थवर्णनमपि (ल चं) अनुपादेयम् । अन्यादिशब्दपरित्यागेन नानाशब्दप्रयोगेण श्रुतेरित्थं तात्पर्यासंभवात् । एतत्पक्षे किंचनेत्यस्य वैयर्थ्यापाताच्च । किंचनेत्यस्य (ल चं) 'अतोऽन्यदार्तम्' इति श्रुत्यादिमानेन विनाशितया प्रमितं दृश्यमात्रमित्यर्थाङ्गीकारे नानेत्यस्य वैयर्थ्यम् । 'अतोऽन्यदार्तम्'इत्यत्र विनाशित्वप्रतीतिसंभवेऽपि दृश्यत्वेन रूपेण अर्थबोधकपदं किंचिदपि नास्ति । 'एष त आत्मान्तर्याम्यमृतः' 'अतोऽन्यदार्तम्' इति श्रुतौ अत इत्यत्र एतच्छब्देनान्तर्यामिण एव परामर्शात् अन्तर्यामिभिन्नस्यैव ततः प्रतीत्या भवदभिप्रेतनिर्विशेषभिन्नस्य तस्यां श्रुतौ प्रतिपत्तिरेव नास्ति । 'यदैतमनुपश्यत्यात्मानम्' (बृ.६.४.१५) 'तमेवमन्यआत्मानम्' (१७) इति पूर्वं 'अज आत्मा महान् ध्रुवः' (२०) स वा एष महानज आत्मा' (१२) इत्युत्तरत्र च आत्मन्शब्दप्रयोगेण आत्मन्शब्दस्य व्यापकार्थकतया अत्र इहेति सर्वव्यापकपरामर्शकम् । एवं च विनाशिदृश्याविशिष्टे विनाशिदृश्यं नास्तीति बोधः नात्र श्रुतौ विवक्षितः । किंतु सर्वव्यापके आत्मनि

## गूढार्थसङ्ग्रहः

विनाभूतं किंचन नास्तीत्येवार्थः । 'अहमात्मा गुडाकेश' (१०.२०) 'न तदस्ति मया यत्स्यात् विनाभूतं चराचरम्' इत्युपक्रमोपसंहाराभ्यां गीतायां श्रुत्यर्थः इत्थमेव निरणायि ॥ अत्र निर्विशेषबोधकस्य कस्यापि पदस्याभावात् । 'नाना इत्यस्य नञ् प्रकृतिकत्वेन आत्मभिन्नत्वमेव निषेधप्रतियोगितावच्छेदकं नतु विनाशिदृश्यत्वमिति आहार्यत्वस्य नावसरः इति प्रयासोऽपि तेन निरर्थकः । इहेत्यस्यैव निर्विशेषबोधकत्वाभावात् । सिद्धान्ते 'किंचन' इति प्रातिस्विकरूपेणा-विनाभावबोधनायेति बोध्यम् । 'किंचन-अणुमात्रमपि, इति शां. कठभाष्यम् । एतत्पर्यालोचनायां 'नेह नानाऽस्ति' इति सामान्योक्तिः कस्यचित् व्यक्तिविशेषस्य परित्यागेऽपि सति तात्पर्ये संभवति । किंचनेत्यस्य सत्त्वे अनानाभूतस्य कस्यचिदपि वस्तुनोऽभावास्सिध्यतीति प्रतीयते । अयमर्थः सिद्धान्तेऽपि सम्मतः ॥

'नात्र काचन भिदाऽस्ति' इति तापनीयश्रुत्यर्थः (३५८.पुट) प्रागेवाभिहितः । अतः एतदैकार्थ्येन 'नाना' इति आत्मभिन्नार्थकम् । 'किंचन' इति मूढधीविषयात्मकम् । इत्यादिना अस्यां श्रुतौ प्रतियोग्यभावसाधारणैकदृश्यत्व-निषेध्यतावच्छेदकबोधनोत्प्रेक्षणापि (१३६.पु) निरवकाशम् । एवमपि पदद्वयसार्थक्यासंभवात् । एतेन नानापदस्य ब्रह्म-भिन्नं तदन्वितवस्तुसामान्यं च किंचनेति, निपातसङ्घातस्यार्थः' इत्यादि विठ्ठलेशोक्तिरप्यनुपादेयेति सिद्धम् । दृश्यादिपद परित्यागेन 'नेह नानाऽस्ति किंचन' इति श्रुतिप्रवृत्तेरेव परसम्मतार्थाङ्गीकारे निर्बीजत्वापातात् ॥

एतेन 'निषेधस्य प्रसक्तिपूर्वकत्वेन निषेधवाक्यस्वाभाव्येन प्रतियोगिप्रसक्त्यवच्छेदकदेशाद्यवच्छेदेन अभावस्य बोधेन शुक्तिरूप्यादिवन्मिथ्यात्वासिद्धिः' (ल.चं) इत्युक्तिरप्यनुपादेया । दृश्यत्वस्य परसम्मतात्माभिन्नत्वस्यच निषेध्यता-वच्छेदकत्वेन अत्र वाक्ये विवक्षायाएव तद्बोधकपदाभावेनासम्भवेन एवमाशयवर्णनासम्भवात् । कालान्तरावच्छेदेन निषेधस्य प्रळयवाक्यादिभिरेव सिद्ध्या वाक्यवैयर्थ्यान्यथानुपपत्त्या इत्थमेवार्थो वर्णनीयइत्यपि न । 'अहमात्मा गुडाके-श' नतदस्ति विनायत्स्यात् मया भूतं चराचरम्' इति गीतायां उपक्रमोपसंहाराभ्यां आत्मन्शब्दार्थसर्वव्यापकत्वस्य व्यतिरेकेण दृढीकरणमेव 'नेहनानाऽस्ति किंचन' इति श्रुतौ विवक्षितमिति बोधनेन वाक्यवैयर्थ्यशङ्कायाएवासम्भवात् । एवं बोधनेन अविनाभावनिबन्धनमेव सामानाधिकरण्यं गुणवाचिशुक्लादिशब्दवत् इति गीतायां मध्ये समानाधिकरण-निर्देशैर्निर्धारितम् । एतेन 'तदात्मानमेवावेत् अहंब्रह्मास्मि' इति (बृ) श्रुतौ आत्मन्शब्दः 'सएषइह प्रविष्ट आनखाग्रेभ्यः' इति तत्पूर्वश्रुतौ आत्मन्शब्दार्थसर्वव्यापकत्वप्रतिपादनेन सामानाधिकरण्ये व्यापकत्वमेव प्रयोजकमिति बोधनायैवेति निर्णीतम् । इममर्थमभिप्रेत्यैव गीतायां 'सर्वं समाप्नोषि ततोऽसिसर्वः' (अ.११) इत्युक्तम् ॥

अयमर्थः 'व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् । इति ज्ञाते परे तत्त्वे भेदस्यावसरःकुतः' (शां.अप अनु.श्लो.४६) इति सिद्धान्ते कथं घटते ? 'मय्यन्यत्र तथा शेषभूतेषु भुवनेषुच । तवैवं व्याप्तिरैश्वर्यगुणसंसूचिकाप्रभो' (वि.पु.१९.७२) इत्यादौ पराशरेण व्याप्तेरैश्वर्यगुणसूचकत्वस्योक्तेः 'अन्तःप्रविष्टश्शास्ताजनानाग्ँसर्वात्मा' (तै.आ.३. २१) इति श्रुतेश्च ॥

एतेन उपक्रमे 'अद्वैतसिद्धेर्द्वैतमिथ्यात्वपूर्वकत्वात्' इति सिद्धिवाक्यविवरणे लघुचन्द्रिकायां 'महावाक्यजन्या-द्वैतनिश्चयस्यापि' 'नेहनानाऽस्ति किंचन' 'नात्र काचन भिदाऽस्ति' इत्यादितत्पदार्थशोधकवाक्याधीनधीपूर्वकत्वात् उक्तवाक्येन वर्तमानार्थकलट्प्रत्यययुक्तत्वात् द्वैतविशिष्टब्रह्मरूपोद्देश्यार्थकेहपदयुक्तत्वाच्च वर्तमानकालावच्छेदेनोद्देश्य-तावच्छेदक द्वैतवत्त्वावच्छेदक देशकालावच्छेदेन च द्वैतविशिष्टे ब्रह्मणि अस्तित्वविशिष्टस्य द्वैताभावस्य बोधनात् । अत्य न्ताभावस्यावच्छिन्नवृत्तिकान्यत्वस्वीकारे निरवच्छिन्नविशेषणतया तादृग्ब्रह्मवृत्तित्वबोधनात्, तत्सम्बन्धावच्छिन्नस्य प्रति-

## गूढार्थसंग्रहः

योगिसामानाधिकरण्यस्य निवेशादेवाव्याप्यवृत्तितामादाय मिथ्यात्वानुमाने अर्थान्तरवारणात् एकप्रसरताभङ्गापत्त्या ब्रह्मणीत्येकपदस्य ब्रह्माधेयत्वयोरुद्देश्यविधेययोः अन्वयबोधकत्वेऽपि ब्रह्मणीत्यनेन ब्रह्मनिरूपितत्वरूपस्योद्देश्यस्यैव अस्तीत्यनेन आधेयत्वाश्रयत्वरूप विधेयस्यैव समर्पणेन ब्रह्मनिरूपिताधेयत्वे तत्तद्देशाद्यवच्छिन्नत्वलाभात् 'यस्मिन् पञ्च पञ्चजना-आकाशश्च प्रतिष्ठितः' इति वाक्ये 'प्राणस्य प्राणमुतचक्षुषश्चक्षुः' इत्यादिवाक्येचाकाशशब्दिता व्याकृतप्राणादिसम्बन्धितया ब्रह्मण उक्तत्वात् । पञ्चजनशब्दस्य गन्धर्वादिरूपस्य ब्राह्मणादिरूपस्यवा भाष्योक्तार्थस्य 'यस्य ब्रह्म च क्षत्रं च' इति वाक्ये ब्रह्मक्षत्रपदयोरिव सर्वदृश्योपलक्षणत्वेन प्राणस्येत्यादेरपि सर्वदृश्योपलक्षणत्वेन सर्वदृश्यसम्बन्धित्वेनैव ब्रह्मणः पूर्वमुक्तत्वाच्च । अद्वैतसिद्धेः द्वैतमिथ्यात्वपूर्वकत्वम्' इत्युक्तिरप्यनुपादेया ॥

अत्र 'यस्मिन् पञ्चपञ्चजना' इत्यादौ प्रतियोगिनः उपस्थितावपि अभावस्यानुपस्थित्या अभावसाधारणदृश्यत्वेन आत्मभिन्नसामान्योपलक्षणपरता तद्वाक्यस्य नसम्भवति । इह भूतले घटो नास्तीत्यादौ लोके क्वापि व्यावहारिकप्रतियोगि-विशिष्टनिरूपितवृत्तित्वस्य प्रतियोग्यवच्छेदकदेशकालावच्छिन्नव्यावहारिकतदभावे बोधः न दृष्टः । अतः प्रतियोगि विशिष्टवाचकत्वेन निर्णीतस्य पदस्य असत्वेऽपि नञःप्रतियोग्यवच्छेदकदेशकालावच्छिन्नाभावबोधकत्वं नञ्समभिव्याहृतास्तीत्यस्य नञर्थगतप्रतियोग्यवच्छेदक देशकालावच्छिन्नाधेयताबोधकत्वं चाव्युत्पन्नम् । इत्थमेव नैयायिकादीनामपि सम्मतम् । व्यावहारिकप्रतियोग्यवच्छेदकदेशकालावच्छिन्नत्वस्य व्यावहारिकरिकतदभावे तदभावनिष्ठाधेयतायां वा नास्तीति-पदसमभिव्याहारे बोधः नैयायिकादीनां दार्शनिकानां मध्ये कस्याप्यसम्मतः । लटः वर्तमानकालार्थकत्वेऽपि अभावगतं वर्तमानकालिकत्वमेव तेन बोध्यत इति संप्रतिपन्नम् ॥

इहेत्यस्य दृश्यविशिष्टोपस्थापकत्वं, नाना, किंचन, इत्यनयोः दृश्यत्वात्मभिन्नत्वरूप निषेध्यताऽवच्छेदकपरत्वं, प्रतियोग्यवच्छेदकवर्तमानकालावच्छेदेन अभावस्य तद्गताधेयतायाश्च नञः अस्तीत्यस्यबोधकत्वंच यदुक्तं तत् तत्तदर्थबोधकशब्दाभावात् लोके वाक्येषु एवं व्युत्पत्तिविरहात् एवं तात्पर्यकल्पकानन्यथासिद्धप्रमाणाविरहाच्च अनादरणीयम् । एवं अत्यन्ताभावस्य अवच्छिन्नवृत्तिकान्यत्वस्वीकारे निरवच्छिन्नविशेषणतया तादृशब्रह्मवृत्तित्वबोधनं यदुक्तं तदप्येतेन निरवकाशम् ॥ प्रतियोग्यवच्छेदकदेशकालावच्छिन्नत्वस्य अवच्छिन्नवृत्तिकान्यत्वस्य वा नास्तीति पदसमभिव्याहारे तदर्थबोधकशब्दाभावेऽपि बोधाङ्गीकारे तदंशे तद्वाक्यजन्यबोधानन्तरं संशयस्य तन्निवृत्त्यर्थं प्रवृत्तेश्च लोकेऽनुभवस्यैवापलापप्रसङ्गः । अत्र भाष्ये शुक्तिरूप्यदृष्टान्तानुरूप्यविरहात् अविरोधे बाध्यबाधकभावासंभवात् अधिकसत्ताकत्वस्यैव बाधकत्वस्य लोके दर्शनाच्च 'नेहनानाऽस्ति किंचन' इति श्रुत्यर्थः प्रागेव (१३६.पुटे,३७४.पुटे च लचं गुचं रीत्या) प्रदर्शितः नसम्भवतीति बोधितम् ॥

एतेन 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' इति श्रुत्यर्थोऽपि प्राक् (१३२.पुटे, १७९, १८०.पुटेच) चान्द्रिकोक्तः अनुपादेय इति सिद्धम् । 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किंचन मिषत्' इत्यत्र मिषदित्यस्य आसीदित्यर्थकत्वे शब्दस्यैव वैयर्थ्यम् । इदमभिन्नं अग्रे यदासीत् तत् सदेव एकमेवाद्वितीयम् इत्येवं उद्देश्यविधेयभावः नात्र विवक्षितः । 'आत्मावा इदमेकएवाग्र आसीत्' इत्यत्र आसीदित्यतः पूर्वं एक एवेत्यस्योक्त्या एकएवेत्यस्य विधेय समर्पकतायाः प्रतीत्या अत्रापि एकमेवासीदिति योजनया अस्यैव विधेयसमर्पकत्वम् । 'नान्यत्किंचन मिषत्' इत्यत्र स्पर्धार्थकमिषच्छब्दप्रयोगेण पूर्ववाक्ये कार्यकारणयोरभेदप्रतीत्या कार्याभिन्नकारणरूपोपादानकारणत्वस्य उपस्थित्या उपादानकारणेन कारणत्वेन स्पर्धमानं निमित्तकारणमेव आत्मान्यत् 'नान्यत्किंचनमिषत्' इत्यत्र निषेध्यतया विवक्षितमिति-अद्वितीयमित्यत्रापि सएवार्थो अभिप्रेतः इति साधितं वेदार्थसंग्रहे भगवता । अत्रापि उत्तरत्र सएवार्थः अभिधास्यते ।

## गूढार्थसंग्रहः

तत्रैव यथावसरं चन्द्रिकोक्तिः पर्यालोचयिष्यते । अतः नञ्समभिव्याहृतवाक्यव्युत्पत्तिविरुद्धेऽर्थे श्रुतेस्तात्पर्यं कथं वर्णयितुं शक्यते । एवं निषेधवाक्यत्वेन परेषां सम्मतानि 'अस्थूलमनणु' इत्यादिवाक्यान्यपि न तदर्थबोधनक्षमानीति यथावसरं भगवतैव निरूपयिष्यते । तदर्थस्तु तत्रैव प्रदर्शयिष्यते ॥

**बाधितस्यैव व्यावृत्तिः । बाधितस्य च निवृत्तिः । न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः ।** इति सूक्तिभिः बाधमन्तरा न मिथ्यात्वव्यवहारः । अतएव विवरणे रज्जुसर्पस्य मूलाज्ञानकार्यत्वपक्षे मूलाज्ञानस्यैक्येन रज्जुज्ञानेन तन्निवृत्त्यसम्भवात् । मुद्गराद्यभिघातेन घटादिविनाशवत् रज्जुसर्पमात्रनाशइत्यङ्गीकारे मुद्गराभिघातेन घटनाशस्थले घटस्य मिथ्यात्वेन व्यवहारविरहवत् रज्जुसर्पस्यापि मिथ्यात्वव्यवहारो न स्यात् इत्यालोच्यैव अवस्थाज्ञानान्यनन्तान्यङ्गीकृत्य रज्जुसर्पस्य तत्कार्यत्वपक्षे बाधोक्तिः, मिथ्यात्वव्यवहाररक्षणायैव इति बोधितम् ॥

एतेन 'नच मनोवच्छिन्नं जीवरूपं ब्रह्मरूपंवा चैतन्यमविद्याऽवच्छिन्नं ब्रह्मवा स्वाप्नाध्यासाधिष्ठानमिति तद्धीरेव स्वाप्नबाधः ; नतु स्वाप्नाभावधीः अधिष्ठानाविषयकत्वात् स्वाप्नस्य प्रातिभासिकत्वेन अज्ञानविषयतानवच्छेदकत्वाचेति वाच्यम् । बाधकत्वस्य स्वाप्नाभावबुद्धावप्यानुभाविकत्वेन मनोवच्छिन्नइव स्वाप्नाभावावाच्छिन्नेऽपि चैतन्ये अज्ञानविशेषाङ्गीकारसम्भवात् । नच प्रातिभासिकत्वविरोधः तत्तदज्ञानान्याज्ञानाभावस्य तत्र निवेशात् , अन्यथा मनसोऽपि तद्विरोधापत्तेः । तथा च इदं रजताभाववदित्यादिस्वाप्नबुध्युत्तरकालावच्छेदेन रजताभावादौ साक्षिण्युत्पन्ने प्रकाशप्रसक्तया तदवच्छेदेनाज्ञानविषयत्वसम्भवात् । तदानीमुत्पन्नस्य इदं रजतमित्यादिस्वप्नस्य तदुत्तरोत्पन्नया इदं रजताभाववदिति धिया बाधः ; अथवा स्वाप्नरजताद्यभावोत्पत्तेः पूर्वं प्रकाशप्रसक्तावपि पश्चात्तद्धीबाधकत्वानुभवादेव तदवच्छेदेनाज्ञानविषयत्वम् । भाव्यवच्छेदेन ज्ञानविषयत्ववत् । एवं च स्वाप्नेषु प्रातिभासिकत्वं यथाश्रुतमेव । यद्वा बाधोऽत्र न सविलासाज्ञाननिवर्तकधीः, किंतु मिथ्यात्वनिश्चयः' इति गुरुचन्द्रिकोक्तिः अनादरणीया । स्वाप्नाभावस्य जाग्रत्यबाधेन व्यावहारिकतया तद्बुद्धेः जाग्रति स्वाप्नप्रतियोगिबाधकत्वस्यानुभाविकत्वेन रज्जुसर्पवत् मिथ्यात्वव्यवहारः भट्टपादैरेव व्यवस्थापितः स्वाप्नाभावस्य प्रातिभासिकत्वाङ्गीकारपक्षे तदुत्पत्तेःपूर्वं प्रकाशाप्रसक्त्या तदवच्छिन्नचैतन्ये रज्जुसर्पाद्यवाच्छिन्नचैतन्यइव अज्ञानकल्पनमेवाप्रामाणिकम् ॥ अतएव 'नच इदंवृत्तेर्ज्ञातैकसत्वेन तदवाच्छिन्नचैतन्यगताज्ञानमेव नास्तीति वाच्यम् ; वृत्तेः साक्षिवेद्यत्वेन यद्यपि तद्गोचराज्ञानं नास्ति, तथाऽपि तदवच्छिन्नचैतन्ये शुक्त्यवच्छिन्नगोचराज्ञानसत्वात्। तथाच इदंवृत्तिराश्रयावच्छेदिका नतु विषयावछेदिकेति वस्तुस्थितिः, शुक्तितत्वाज्ञानस्यैवोभयपरिणामित्वात् । इदमंशः तदाकारवृत्तिश्च एतत् द्वयं आश्रयमात्रावच्छेदकमित्युक्तत्वात्' इति अ. सिद्धिः, (भ्रमस्य वृत्तिद्वयोपपत्तौ) 'आश्रयमात्रावच्छेदकमिति—इदं रूप्यं इदं रूप्यज्ञानमिति द्व्याकारानुभवात् अज्ञानमूलकभ्रमविशेष्यताऽवच्छेदकरूपावाच्छिन्नस्यैव अज्ञानाधारावच्छेदकरूपत्वात् एकस्याज्ञानस्य द्वयमाश्रयतावच्छेदकम् । यदवच्छिन्नांहि चितमज्ञानमाश्रयति तदवच्छिन्नां तां तत्परिणामोऽपि तदाश्रयतावच्छेदकमेव तदंशे विशेष्यतावच्छेदकम् ।' इति गुरुचन्द्रिका च सङ्गच्छते । अत्र ज्ञातैकसद्विषयकमज्ञानं नास्तीत्यङ्गीकृत्यैव शुक्त्यवच्छिन्नगोचराज्ञानेनैव तत्कार्यनिर्वाहोक्त्या ज्ञातैकसद्विषयकाज्ञानं नास्तीति सिद्धान्तः अभ्युपगतएव ॥

बाधितत्वाभावे मिथ्यात्वव्यवहारस्यैवासम्भवात् । मिथ्यात्वनिश्चयएव सिद्धौ (अद्वैतसिद्धौ) अत्र बाधइति उक्तिरपि नघटते । पल्लवाविद्यापक्षे (मूलाविद्याकार्यत्वं व्यावहारिकत्वं पल्लवाविद्याकार्यत्वं प्रातिभासिकत्वम्) मूलपल्लवाविद्याप्रयुक्तत्वे लक्षणे । पक्षान्तरे च अविद्यामनस्तत्परिणामान्यत्वेसति अविद्याविषयताऽनवच्छेदकदृश्यत्वं प्रातीतिकत्वम् ।

## गूढार्थसंग्रहः

उक्तलक्षणशून्यत्वेसति बाध्यत्वं व्यावहारिकत्वम् । इति गुरुचन्द्रिकायां (सत्तात्रैविध्योपपत्तौ) वक्ष्यमाणरीत्या प्रातिभासिकत्वमपि स्वाप्नाभावस्य न सम्भवति, तत्राज्ञानविषयतावच्छेदकत्वाङ्गीकारे अज्ञानविषयताऽनवच्छेदकत्वं नसम्भवति । पल्लवाविद्याऽपि प्रातिभासिकावच्छिन्ने अन्यत्रादर्शनेन नैव कल्पयितुंशक्या । बाधाभावेच मिथ्यात्वव्यवहारोनसम्भवति ॥

स्वप्नदर्शनस्य स्वरूपेण सत्त्वं (भामती) व्यावहारिकसत्त्वं प्रागुदाहृतभामतीकल्पतरुकारैरङ्गीकृतम् । श्रीभाष्ये च ज्ञानस्य सत्यत्वमबाधितत्वात् अभ्युपगन्तव्यमित्युत्तरत्र वक्ष्यते । एवं च स्वप्नज्ञानतद्विषययोः एकाविद्यापरिणामत्वस्यैव परैरङ्गीकारेण एकस्याबाधेन व्यावहारिकत्वम् अन्यस्य प्रातीतिकत्वमिति कल्पनमेव नघटतइति उभयोरपि सत्यत्वमेव । जाग्रति स्वप्ने दृष्टानामर्थानामभावनिश्चयः अल्पकालिकत्वेन उत्तरकालानुवृत्तिविरहनिबन्धन उपपद्यते । अतः स्वाप्निक पदार्थसृष्टिरीश्वरकर्तृकैव इति भगवता सिद्धान्तयिष्यते । स्वाप्नपदार्थज्ञानस्य सत्यत्वं ज्ञानस्याबाधेनेति भट्टपादादीनामपि सम्मतम् । अतः स्वाप्नाभावज्ञानस्येव स्वाप्नाभावस्यापि जाग्रत्यबाधितस्य व्यावहारिकत्वेन विरोधेएव बाध्यबाधकभावः नत्व विरोधेपीति सिद्धम् ॥

एतेन 'भेदस्य मिथ्यात्वेऽपि अभेदो न तात्विकः भावाभावयोरुभयोरपि मिथ्यात्वस्य प्रागेवोपपादितत्वात् । इयांस्तु विशेषः यदत्र अभेदो व्यवहारकालीनेन परीक्षितप्रमाणभावेन अनुमानादिना बाध्यते । भेदस्तु देहात्मनोर्न तेन, किंतु चरमवृत्त्य' इति अद्वैतसिद्धिः । (देहात्मैक्याध्यासोपपत्तौ) 'प्रागेवेति स्वसमानाधिकरणस्वान्यूनसत्ताकात्यन्ताभावस्य प्रतियोगित्वं मिथ्यात्वम् । प्रातीतिकात्यन्ताभावमादाय सिद्धसाधनवारणाय स्वन्यूनसत्ताकेति । एवं च मिथ्यात्वघटकाभावो अधिष्ठानरूपत्वेन तात्विकः, तदतिरिक्तत्वेन कल्पितो वा उभयथापि नक्षतिरित्यादिकंतु मिथ्यात्वानुमाने पूर्वमुक्तमित्यर्थः' इति गुरुचन्द्रिकाचेत्युभयमपि निरवकाशम् । स्वाप्नगजाभावदृष्टान्तेन इत्थं साधितं प्राक् । स्वाप्नगजाभावस्य नप्रातीतिकत्वम् अपितु व्यावहारिकत्वम् । अतः अधिकसत्ताकज्ञानस्यैव बाधकत्वम् । स्वान्यूनसत्ताकत्वेन अभावज्ञानस्य बाधकत्वविरहादेव (३७७) लघुचन्द्रिकायां प्रातिभासिकनिष्ठमित्यादिना स्वप्रतियोगिन्यूनसत्ताकत्वमिथ्यात्वयोः परिष्करणम् । गुरुचन्द्रिकायामप्रातिभासिको यः इत्यादिना मिथ्यात्वनिष्कर्षणं (३७३) च निरवकाशम् ॥

द्वितीयाभावस्य ब्रह्मरूपत्वेऽपि द्वितीयाभावत्वविशिष्टविषयकज्ञानमेव बाधकं, द्वितीयाभावत्वाविशिष्टस्य द्वितीयवत् मिथ्यात्वंतु तेषां सम्मतमिति द्वितीयसमसत्ताकाभावज्ञानस्य बाधकत्वमेव नसम्भवति । द्वितीयाभावत्वविशिष्टस्य सत्यत्वं तु तैर्नाङ्गीक्रियतएव । अतः एकबाधकबाध्यत्वं शुक्तिरूप्यशुक्तिभिन्नत्वयोरिव प्रपञ्चतदभावयोः नैव सम्भवति । तत्र शुक्तिज्ञानस्य स्वविषमसत्ताकोभयबाधकत्वं सर्वसम्मतम् । उभयविरोधस्यापि बाधके तत्र सत्त्वात् । श्रुतावुभयसाधारणद्वयत्वस्य एकस्य निषेध्यतावच्छेदकत्वस्य अभिप्रेतत्वं नसम्भवतीत्यादिकं प्रागेवोपपादितम् । अतः बलवतएव विरोधे बाधकत्वं, नतु विरोधाभावे बलवद्भिन्नस्य । नापि बाधितत्वमन्तरा मिथ्यात्वनिश्चयः । प्रतियोग्यवच्छेदकदेशकालावच्छेदेन बाधितत्वमेव मिथ्यात्वं साधयति । न भिन्नदेशकालावच्छेदेन बाधितत्वमिति सिद्धम् ॥

एतेन 'प्रतिपन्नोपाधौ (अस्थूलादिवाक्यैः) प्रतिषिध्यमानत्वात्' इति हेतुः (१.१.२) विवरणोक्तः देशकालावच्छेदकैक्यकमन्तरा न मिथ्यात्वसाधनायालमिति सिद्धम् । अत्र विवरणे देहात्मभावः दृष्टान्तः प्रदर्शितः । विवरणप्रमेयसंग्रहे 'आत्मन्यपि आबालपण्डितमनुभवसिद्धं देहादितादात्म्यभ्रमं शास्त्रजन्यब्रह्मात्मसाक्षात्कारेणविना बाधरहितम्' । इति साक्षिबाधोद्धारे सोपाधिकत्वभङ्गे च अद्वैतसिद्धौ ब्रह्मज्ञानमात्रबाध्यत्वमेव देहात्मैक्यस्योक्तम् । देहात्मैक्यस्य न प्रातीतिकत्वं किंतु व्यावहारिकत्वमेव इत्यन्यएव दृष्टान्तो वाच्यः इत्यभिप्रेत्य भगवता रज्जुसर्पदृष्टान्तःप्रदर्शित ॥

## गूढार्थसंग्रहः

किंच द्वितीयद्वितीयाभावयोरिव देहभेदतदभावयोरपि आत्मनि प्रतिषेधो वाच्यः द्वितीयाभावस्य ब्रह्मस्वरूपतापक्ष इव देहात्मैक्यस्यापि देहात्मभेदाभावरूपत्वेन ब्रह्मस्वरूपतया तत्पक्षे बाधो नास्तीत्येषितव्यम् । देहात्मैक्याध्यासोपपत्तौ व्यवहारकालीनपरीक्षितप्रमाणभावेनानुमानादिना अभेदस्य बाधः अद्वैतसिद्धावुक्तः । तथा च तत्रैव पूर्वं आब्रह्मज्ञानमनुवृत्तेरुक्ततया अयमर्थः कथं घटते ? एवमात्मगतः देहभेदोऽपि अभावस्याधिकरणस्वरूपतापक्षे ब्रह्मरूपइति एषितव्यम्। एतत्पक्षेऽपि द्वितीयाभावत्वविशिष्टविषयकज्ञानस्यैव द्वितीयबुद्धिविरोधिता सर्वसम्मता । स्वाप्निकगजाभावस्य आत्मगत देहभेदस्य च स्वाप्निकगजदेहात्मैक्यसमसत्ताकत्वं न कश्चिदपि दार्शनिकः आत्मवादी अभ्युपैति । अतः प्रतिपन्नोपाधौ प्रतिषिध्यमानत्वं विवरणोक्तरीत्या हेतुर्वा स्यात् साध्यं वा । उभयथाऽपि आत्मगतदेहभेदद्वितीयाभावयोः मिथ्यात्वं नततः सिध्यति । श्रुत्यादिकंतु अविरोधे बाध्यबाधकभावसाधकं नास्तीति बलवतएव बाधकत्वं यदुक्तं तत्समञ्जसम् ॥

'बाधफलभूता विषयनिवृत्तिः व्यावृत्तिः' इति पूर्वप्रतिज्ञानुसारेण बाधस्वरूपशोधनेन बाधफलभूतविषयनिवृत्तिः घटपटादिषु नास्तीत्युपपादनपूर्वकं 'न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः' इत्युक्तम् ॥

यद्यपि 'व्युत्थिता हि सतो भेदाः' (१८६.पु) इति वार्तिकश्लोकविवरणे 'सतो व्यावृत्ताः घटादयः तद्व्यावृत्तेरेव तुच्छतां गताः'। इति आनन्दगिरिविवरणे (१९५.पु) सिद्धान्तबिन्दुटीकायां च व्यावर्तमानत्वमात्रमपारमार्थ्यसाधकमुक्तम् । 'प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वे सति विभक्तत्वात्' इति विवरणोक्तानुमानेऽपि विभक्तत्वं व्यावर्तमानत्वमेव स्यात् ; तथाऽपि 'प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्' इति एक एव हेतुः ब्रह्मसिद्धावुक्तः । विभक्तत्वमात्रमानन्दबोधाचार्यैः प्रमाणमालायां हेतुत्वेनोक्तम् । एतत्पर्यालोचनायां विवरणेऽपि हेतुद्वयमेव विवक्षितमीति तत्त्वदीपनोक्तविवरणमेव युक्तमिति प्रतीयते । तत्र व्यावर्तमानत्वं परग्रन्थेषु सर्वत्र स्वसमानसत्ताकभेदप्रतियोगित्वमित्येव प्रतिपादितम् । भगवता तु अनुवृत्तत्वं व्यक्तौ जातिवत् घटपटादिप्रतीतिसामान्यविषयत्वम् , व्यावर्तमानत्वं तत्प्रतिकोटिभूतं प्रतीतिसामान्याविषयत्वमित्युक्तम् । एवं 'ब्रह्मण्यनुगच्छति घटादिकं विभज्यते सन् घटः सन् पट इति' (प्र. माला) आनन्दबोधवाक्यपर्यालोचनायामपि इत्थमेव प्रतीयते । सतः प्रतीतिसामान्यविषयत्वे अबाधितत्वमेव मूलम् । घटपटादेस्तु विषयनिवृत्त्या अतथाविधत्वम् । अत्र च विषयनिवृत्तिः बाधफलभूतैव मिथ्यात्वं साधयितुमलम् । भेदप्रतियोगित्वं तु महापूर्वपक्षोपक्रमे '**तदतिरेकिनानाविध**' इत्यत्र नानाविधशब्दे विवक्षितम् । नानात्वेन मिथ्यात्वं प्राचीन परग्रन्थेषु व्यक्तम् । तत्र च मूलं 'नेह नानाऽस्ति किंचन' इति श्रुतिः । वस्त्वपरिच्छेदो भेदशून्यत्वरूपः 'सत्यं ज्ञानमनन्तम्' इत्यत्र अनन्तत्वघटकः तत्प्रतियोगितया भेदप्रतियोगित्वमपि मिथ्यात्वनिमित्तं विवक्षितमिति । श्रुतिद्वयेऽपि परसंमतार्थो न विवक्षित इति उत्तरत्र निरूपयिष्यते । ततश्च न भेदप्रतियोगित्वं मिथ्यात्वं साधयितुमलम् ॥

एवं ब्रह्मभिन्नत्वादिकमपि । शुक्तिरूप्यादौ बाधेनैव मिथ्यात्वस्य सर्वसंमतत्वात् । तत्र मिथ्यात्वस्वरूपविषये बाधविषये च विप्रतिपत्तिः । शुक्तिरूप्यादेः पदार्थस्यैव इतरदार्शनिकैरनङ्गीकारेण तदुपादानभूताज्ञानेन साकं तस्य निवृत्तिरूपबाधस्यापि इतरदार्शनिकासंमतत्वात् । एवं सदसद्विलक्षणत्वज्ञाननिवर्त्यत्वयोरपि । परैः अनिर्वचनीयख्यात्यङ्गीकारेण अधिष्ठानज्ञानेन शुक्तिरूप्यपदार्थस्य शुक्तिरूप्योपादानभूताज्ञानेन साकं निवृत्तिरूपबाधस्य अभ्युपगमेन तस्य सदसद्विलक्षणत्वज्ञाननिवर्त्यत्वादिकमङ्गीक्रियते । इतरदार्शनिकैस्तु अभावप्रमया प्रतियोगिज्ञानस्य भ्रमत्वसम्पादनमेव बाध इति । अतः विरोध्यभावज्ञानस्य प्रमात्वनिश्चयमन्तरा प्रतियोगिज्ञानस्य भ्रमत्वं नैव निर्णेतुं शक्यम् । भ्रमत्वानिर्णये प्रतियोगिनः अभावोऽपि तत्र न सिध्यति इति बाधनिर्णयमन्तरा मिथ्यात्वं नैव निश्चेतुं शक्यम् । दृग्दृश्यसम्बन्धा

### श्रीभाष्यम्

**सम्बन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः। अन्यत्र निवृत्तस्यान्यत्रनिवृत्तिर्वा कथमुच्यते। रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकालान्तर (दृष्टस्य देशकालान्तर)व्यावर्तमानत्वम्मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः ॥**

### श्रुतप्रकाशिका

रापि नेत्याह। **अन्यत्रेति।** अन्यत्र निवृत्तस्य–विरोधबाधस्थले निवृत्तस्य। अन्यत्र विरोधबाधरहितस्थले। यद्वा अन्यत्र स्वदेशकालव्यतिरिक्तदेशकालयोः अन्यत्र स्वदेशकालयोः एतद्वैधर्म्यं दृष्टान्तेन विवृणोति। **रज्जुसर्पादिष्विति।** तुशब्दो घटादिवैधर्म्यपरः। इत्थं दूषणोपयोगिनीव्याप्तिशिक्षिता। अथानुमानदूषणसिद्धिं दर्शयति। **इतिदेशकालान्तरेति।** इतिहेतौ मिथ्यात्वं व्यापकम्। व्यावर्तमानत्वं व्याप्यम्। व्यावर्तमानत्वमात्रमिति मात्रशब्देन विरोधबाधहेतुकव्यावृत्तिर्व्यावर्त्यते ॥

यद्वा व्यावर्तमानत्वहेतोरासिद्धिं प्रतिजानीते। **यत्पुनरित्यादिना।** तदर्थं बाधमूलं विरोधइत्याह। **द्वयोरित्यादि।** पक्षे तदभावं दर्शयति। **अत्रेति।** विरोधाभावमुपपादयति। **यस्मिन्निति।** तत्फलनिवृत्तिमाह। **अन्यत्रेति।** दृष्टान्ते तद्वैधर्म्यं दर्शयति। **रज्ज्विति।** एवमसिद्धिं वक्तुं विभागो दर्शितः। अथासिद्धिमाह। **इतिदेशाकालान्तरेति।** सोपाधिकत्वमार्थम्। अयमर्थः किं पटोऽस्तीत्यत्र घटाभावःसिषाधयिषितः उत घटोऽस्तीत्यत्रापि तदभावः। प्रथमे सिद्धसाध्यता। द्वितीये व्यावर्तमानत्वशब्देन किं व्यावृत्तिबुद्धिबोध्यत्वं मिथ्यात्वहेतुतया विवक्षितम् उत प्रतिपन्नोपाधौ बाधितस्य व्यावृत्तिः। प्रथमे सोपाधिकत्वं द्वितीये हेत्वसिध्द्या घटादेस्सत्यत्वमिति ॥

### गूढार्थसंग्रहः

नुपपत्तिप्रभृतिकं तु बौद्धोक्तसंबन्धानुपपत्तितुल्यमेव। तदसंबन्धेन स्थितिरेवास्ताम्। संबान्धिनस्तत अपह्नवः नैव वक्तुं शक्यते। अनुभवानुरोधेन सम्बन्धो वा अभ्युपगम्यतामिति, दर्शनग्रन्थेष्वेव व्यक्तम्। अतः बाधमन्तरा मिथ्यात्वस्य नैव सिद्धिरित्यालोच्य इत्थं सिद्धान्तकरणम् ॥ प्रतियोगितदभावयोः एकबाधकबाध्यत्वं बलवत्त्वाभावेन न संभवतीति साधनेन 'किंच भेदप्रपञ्चस्य धर्मो मिथ्यात्वलक्षणः। मिथ्या वा परमार्थो वा नाद्यः कल्पोऽयमञ्जसा ॥' (संवित्सिद्धौ) इत्यादिना 'तान्मिथ्यात्वे प्रपञ्चस्य सत्यत्वं दुरपह्नवम्। पारमार्थ्येपि तेनैव तवाद्वैतं विहन्यते ॥' (सं.सि) इत्यन्तेन यामुनमुनिभिः योऽयं सिद्धान्तःकृतः स सिद्धान्तः 'अस्ति च प्रपञ्चतन्मिथ्यात्वयोः एकज्ञानबाध्यत्व**म्** अतः समसत्ताकत्वात् मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधात् नाद्वैतक्षतिरिति' (अ.सि) (मिथ्यात्वमिथ्यात्वनिरुक्तौ) इति मधुसूदनसरस्वत्युक्तः निरवकाशत्वबोधनपूर्वकं सम्यक्प्रतिष्ठापितः ॥

पञ्चपादिकोक्तसदसद्विलक्षणत्वं अविद्यावादे अनिर्वचनीयत्वानुपपत्तौ श्रीभाष्यएव पर्यालोचयिष्यते। अविद्यावादे शुक्तिरूप्यादेः प्रातिभासिकपदार्थस्याभ्युपगम एवाप्रामाणिकः ज्ञानं च तत्पदार्थनाशकं न भवति इत्यादिनिरूपणेन ज्ञाननिवर्त्यत्वरूपमिथ्यात्वमपि विवरणोक्तं न घटत इत्यावेदयिष्यते। सन्मात्रग्राहिप्रत्यक्षवादे लाघवं यदद्वैतासिद्ध्यादावुक्तं बौद्धसंमतं तत् प्रमाणप्रवृत्तिसाफल्यादिभिः अनुभवानुरोधेन पदार्थसिद्धौ भाविबाधस्य परकाल्पिस्यायोगेन फलमुखगौरवस्यादोषतया निरवकाशम्। लाघवमात्राभ्युपगमे माध्यमिकयुक्तिभिः स्वप्रकाशस्यापि निरासे ततोऽपि लाघवमिति

## श्रुतप्रकाशिका

**ननु** बाधार्हताया उपाधित्वे साध्याविशिष्टता स्यादिति बाधितत्त्वमेवोपाधिस्स्यात्। तस्य च न साध्यसमव्याप्तिः असहायेन गच्छता पथिदृष्टस्य रज्जुसर्पस्य केनाप्यबाधितत्वादितिचेत्—नैवम्। ईश्वरादिज्ञानेनापि बाधितत्वनियमात्। अनभ्युपगतेश्वरादीनां पक्षेऽप्ययमुपाधिरेव। किं त्वया तस्य पथिदृष्टस्य रज्जुसर्पस्य मिथ्यात्वं प्रमाणोपगतम् नवा। नचे-त्सम्यक्सर्पएवेति तत्राव्याप्तिर्नसाध्यसमव्याप्त्यभावाय स्यात्। अवगतंचेत्ततएव ज्ञानात्तस्य बाधितत्वं सिद्धमिति साध्य समव्याप्तिसिद्धिः। ननु किं प्रतिपन्नोपाधौ बाधो मिथ्यात्वे प्रयोजकः उत केवलबाधः प्रथमे देशकालयोरुपाधित्वात् देश कालभ्रमस्य देशकालोपाधित्वाभावेन सर्वसपक्षाननुयायित्वेन साध्यसमव्याप्त्यभावात्प्रतिपन्नोपाधौ बाधो नोपाधिस्स्यात्। द्वितीये कृत्स्नमिथ्यात्वमिति ॥

**अत्रोच्यते**—नहि देशकालावेवोपाधिरिति नियमः किंतु वस्त्वन्तरमप्युपाधिः। उपाधिरवच्छेदकः। अतएव हि देशकालादिप्रतिपन्नोपाधौ अबाधितत्वादित्यत्रादिशब्देन वस्त्वन्तरस्याप्युपाधित्वं भाष्यकारैर्वक्ष्यते। तस्माद्देशकालभ्रमे वस्त्वन्तरमुपाधिः देशकालभ्रमस्य वस्त्वन्तरोपाधिकत्वेऽपि वस्तुभ्रमस्य देशकालोपाधिकत्वे नान्योन्याश्रयः भ्रमव्यक्तिभे-दात्। तस्माद्यदवच्छेदकावच्छिन्नं यत्प्रतिपन्नं तदवच्छेदकावच्छिन्नस्य बाधो मिथ्यात्वे प्रयोजकः। आरोपितेन सायंत्वा-दिना तन्निवर्तकेन दिवात्वादिना च विना क्रियान्तरावच्छिन्नस्य कालस्य भ्रान्त्युपाधित्वम्। एवं देशेऽपीति नकश्चिद्दोषः। एवं विशिष्टोपाधौ विशेषणविशेष्यांशयोः परिहृतानुपपत्तिकत्वेन विशिष्टोपाधिसिद्धिः। अतो न व्यावर्तमानत्वमात्रमपार-मार्थ्यहेतुः ॥

## गूढार्थसंग्रहः

स्वप्रकाशस्यैवासिद्धिप्रसङ्गः। अतः लाघवमात्रावलम्बनेन प्रमाणवैयाकुलीसंपादनमनुपादेयम्। व्यावहारिकतात्त्विक-प्रामाण्यभेदकल्पनं तु बौद्धमात्रसम्मतं ‘सर्वथा सदुपायानां वादमार्गः प्रवर्तते’ इति कुमारिलेनैव दूषितम्। वैदिकदार्श-निकैः तात्त्विकप्रमाणप्रमेयभावमङ्गीकुर्वद्भिः कैश्चिदपि नाङ्गीक्रियतइति शब्दप्रामाण्यवादिभिर्वैदिकैरनुपादेयमेव, इति यामुन मुनिभिरेव व्यवस्थापितम्। उक्तं च ‘नियामकं न पश्यामः निर्बन्धात्तावकादृते।’ (सं.सि) इति प्रामाण्यभेदकल्पने नियामकं नपश्यामइत्यर्थः ॥

एवं च विरोधएव—बलवतो बाधकत्वस्याभ्युपगमएव बाधितस्य मिथ्यात्वं बाधश्च प्रतियोग्यवच्छेदकदेशकालावच्छे-देन अभावप्रतीतावेव सर्वसम्मतः। अतः प्रतियोग्यभावयोरुभयोरविरोधेऽपि मिथ्यात्वं यत् परोक्तं तत्रचार्थे श्रुत्यादि योजनं नघटतइति सिद्धम्। नच विरोधएव बाध्यबाधकभावाङ्गीकारे अव्याप्यवृत्तित्वज्ञानाभावदशायां तदभाववत्ता-ज्ञानस्य तद्वत्ताग्रहप्रतिबन्धकत्वमङ्गीकृत्य वह्न्यभाववद्ध्रदस्यैव अनवच्छिन्नत्वाविशेषितस्य बाधत्वोक्तिः गदाधरस्य कथं घटतइति वाच्यम्। अव्याप्यवृत्तित्वज्ञानाभावदशायां प्रतियोग्यभावयोः विरोधं ये सर्वथा नजानन्ति तेषां तदभाववत्ता निश्चयेऽपि तद्वत्ताबुद्धिरुदेत्येव। येतु जानन्ति तेषामेव तद्वत्ताधीर्नोदेति इति अनुभवः नापलप्यते तत्पक्षेऽपि। अभा वस्य प्रतियोगिसामानाधिकरण्यनिश्चये तद्वत्ताबुद्धिरुदेत्येव तद्वारणार्थमव्याप्यवृत्तिज्ञानस्योत्तेजकत्वमङ्गीकृतम्। अव-च्छिन्नत्वरूपाव्याप्यवृत्तिज्ञानस्यैवोत्तेजकत्वं, नतु प्रतियोगिसामानाधिकरण्यरूपाव्याप्यवृत्तित्वज्ञानस्येति (३७३.पुटे) इति गुरुचन्द्रिकोक्तिस्तु नघटते। व्याप्यवृत्तेरपि अवच्छेदकाभ्युपगमपक्षस्य गदाधरेण तत्रतत्रोक्त्या व्याप्यवृत्तिसाधारणत्वा-दवाच्छिन्नवृत्तिकत्वस्य इत्थमङ्गीकारे अवच्छिन्नवृत्तिकत्वज्ञानदशायां व्याप्यवृत्तिस्थले प्रतिबन्धकत्वस्यानुभवसिद्धस्यो-

### श्रीभाष्यम्

**यत्त्वनुवर्तमानत्वात्सत्परमार्थइति तत्सिद्धमेवेति नसाधनमर्हति । अतो न सन्मात्रमेव वस्तु अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्चानुभूतिरेव सतीत्येतदपि निरस्तम् ॥**

### श्रुतप्रकाशिका

**कैश्चि**देवमुक्तम् । घटोऽस्तीत्यत्र किं घटोऽस्तिशब्दौ पर्यायौ उतन । पर्यायत्वे सहप्रयोगो नस्यात् नोचेत्सद्विलक्षणो घटइति । नैवम्—'अस्ति ब्रह्मेतिचेद्वेद' इत्यादौचास्तिब्रह्मशब्दयोः पर्यायत्वे पौनरुक्त्यम् । नोचेद्ब्रह्मणोऽपि सद्विलक्षणत्वमिति । उभयत्रायं परिहारः स्वशब्दप्राप्तस्य स्वभावस्यैव निषेधार्थानुवादशङ्कापरिहारायास्तिशब्देन नियमः क्रियत इति अथ पारमार्थ्यसाधकत्वेनोक्तमनुवर्तमानत्वं दूषयति । **यत्त्वित्यादिना** । प्रमाणसम्बन्धार्हतत्तद्घटादिस्वरूपस्य सच्छब्दवाच्यस्य किं पारमार्थ्यं साध्यते उताधिष्ठानतयाऽनुवृत्तस्यार्थान्तरस्येति विकल्पे द्वितीयशिरस्याश्रयासिद्धिमभिप्रेत्य प्रथमे शिरसि सिद्धसाधनत्वं दूषणमुक्तम् ॥

**ननु** सदेव परमार्थइति हि ग्रन्थकाराभिप्रायः । तत्कथं सिद्धसाधनत्वमिति ? उच्यते—एतदनुमानं किं सतः पारमार्थ्यसाधकम् । उत व्यतिरिक्तापारमार्थ्यस्य उतोभयस्य प्रथमे सिद्धसाध्यता । द्वितीये व्यधिकरणासिद्धता तृतीये अंशे सिद्धसाध्यता अंशे व्यधिकरणासिद्धिश्चेति । निगमयति । **अतइति** । परेण प्रमाणप्रमेयानुपपत्तिकृतं भेददूषणमुपजीव्यानुभूतिसतोर्भेदोऽपास्तः । अत्र च भेददूषणहेत्वाभासनिरासमुपजीव्यानुभूतिसतोरभेदश्च निरस्यते । **अनुभूतीत्यादिना** । अनुभूतिसद्विशेषयोरित्यत्र विशेषशब्देनानुवर्तमानत्वहेतोराश्रयासिद्धिस्सूच्यते । सच्छब्दवाच्यस्य वस्तुनो व्यावृत्तत्वादनुवृत्तार्थान्तराभावाच्च । सच्छब्दः प्रमाणसम्बन्धयोग्येहि वर्तते । घटस्सन् पटस्सन् इत्यनुवृत्तव्यवहारो व्यावृत्तशब्दवदुपपन्नइति प्रमाणसम्बन्धार्हाः पदार्थाः परस्परव्यावृत्तास्सच्छब्दवाच्याः ॥

### गूढार्थसंग्रहः

**च्छेदप्रसङ्गात्** । अतः प्रतियोगितदभावयोः सहानवस्थानरूपविरोधस्य अज्ञाने तद्ज्ञानयोः प्रतिबध्य प्रतिबन्धकभाव एव गदाधरस्यापि नसम्मतः । अतः घटपटादेः प्रतिपन्नोपाधौ बाध्यमानत्वात् मिथ्यात्वं यत् परोक्तं तत् नघटतइति भगवतआशयएव युक्तः ॥

पूर्वपक्षे 'घटोऽस्ति, पटोऽस्ति, घटोऽनुभूयते, पटोऽनुभूयते इति सत्ताऽनुभूतिघटिताएव व्यवहाराः' इत्युपक्रम्य । 'एवंच अनुवर्तमानानुभूतिरेव परमार्थः, सैवच सती' इत्युक्तेरनन्तरं 'सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्' इत्याशङ्का भेददूषणेन अनुभूतेरनुभाव्यत्वासम्भवेनच समाहिता । तत्र च भेददूषणपरिहारमभिधाय द्वितीयदूषणपरिहारं कथयिष्यन् शङ्कितार्थमेव सिद्धान्तयति—**अनुभूतिसद्विशेषयोश्चेत्यादिना** ॥

**विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादिति** । 'घटोऽस्ति पटोऽस्ति घटोऽनुभूयते पटोऽनुभूयते' इति प्रतीत्या सदनुभूत्योरनुवर्तमानत्वेन पारमार्थ्यमैक्यं च पूर्वपक्षे साधितम् । 'सन् घटोऽनुभूयते सन् पटोऽनुभूयते' इति प्रतीत्योरापि सत्त्वेन सतः अनुभवविषयत्वं सिध्यतीति तेन भेदस्य सिद्धिः कथं परिह्रियते । 'भेदस्य प्रत्यक्षसिद्धत्वात्' इत्यनेन यत् प्रत्यक्षं सन्मात्रग्राहित्वेन सदनुभूत्योरैक्यसाधकत्वेन च परैरभ्युपगतं तदेव सदनुभूत्योर्विषयविषयिभावेन भेदं

### श्रीभाष्यम्

**यत्त्वनुभूतेस्स्वयम्प्रकाशत्वमुक्तम्, तत् विषयप्रकाशनवेळायां ज्ञातुरात्मनस्तथैव नतु सर्वेषां सर्वदा तथैवेतिनियमोऽस्ति, परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषय-**

### श्रुतप्रकाशिका

**अथ** परोक्ते स्वयम्प्रकाशत्वेऽभिमतेऽपि तत्र शिक्षणीयांशोऽस्तीत्यभिप्रायेणाह । **यत्त्वनुभूतेरिति** । तुः पक्षवैषम्ये वक्तव्यांशमाह । **तत् विषयप्रकाशनवेलायामिति** । उत्तरत्र वर्तमानदशायामिति हि वक्ष्यते । तत्र ज्ञानस्य नित्यद्रव्यत्वेन सदा वर्तमानत्वाद्वर्तमानदशायामिति पदं निरर्थकमिति शङ्काऽपनुत्तये विषयप्रकाशनवेलायामित्युक्तम् । वर्तमान

### गूढार्थसङ्ग्रहः

साधयतीति बोधितम् । यदा सन् घटोऽनुभूयतइति व्यवहारः तदा सन् घटो नानुभूयतइति व्यवहारविरहेण विषयविषयिभावस्य बाधो नास्ति, तेन च भेदस्यापि नबाधइत्यभिप्रेत्य 'अबाधितत्वाच्च' इत्युक्तम् । एतेन अनुभूतिर्नसती इति भेदव्यवहाराविरहात् कथं भेदसिद्धिरिति शङ्काया नावकाशः ॥

आत्मसिद्धौ 'अतो निर्धूतनिखिलभेदाऽविकल्पानिर्धर्मप्रकाशमात्रैकरसा कूटस्थनित्या संविदेवात्मा परमात्माच यथाऽऽह याऽनुभूतिरजाऽऽमेयाऽनन्तात्मेति सैवच वेदान्तवाक्यतात्पर्यभूमिः' इति, तेषां परिभाषा । यथाऽह तद्वार्तिककारः । 'परागर्थप्रमेयेषु या फलत्वेन सम्मता । संवित्सैवेहमेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ अप्रामाण्यप्रसक्तिश्च स्यादितोऽन्यार्थकल्पने । वेदान्तानामतस्तस्मान्नान्यमर्थं प्रकल्पयेत्' (सम्बन्धवार्तिकं—१५९—१६०) इति, इत्युपक्रम्य तदर्थं सम्यक्पर्यालोच्य 'तदेवं व्योमारविन्दसदृशवपुषि यथोदितदृशि! वेदान्ततात्पर्यवर्णनं वेदान्तायैव स्यात्' इत्युक्तम् । अत्र वार्तिके उपक्रमश्लोकौ आत्मसिद्धावुपात्तौ । ततः 'अनात्मनि प्रमेयेऽर्थे या फलत्वेन सम्मता । प्रमेया सैव वेदान्तेष्वनुभूतिरिहात्मनः ॥ (२३०) विज्ञानमानन्दमिति ह्यात्मैवेति श्रुतेस्तथा । पुमर्थस्यैव मेयत्वं मातृत्वाद्यनपेक्षिणः ॥ (२३१) भेदस्यचापुमर्थत्वात् तादर्थ्ये स्यादमानता । पुमर्थत्वेनचास्येष्टं प्रामाण्यं वेदवादिभिः ॥ (९१८) सत्ताऽवकुण्ठिताश्चैते सर्वे भावास्सदैवहि । व्यवहाराय कल्पन्ते भ्रान्तो भेदस्सदैवतु ॥ (९७२) अतोऽनुभवएवैको विषयोऽज्ञातलक्षणः । अक्षादीनां स्वतस्सिद्धो यत्र तेषां प्रमाणता ॥ (१००२)' इत्याद्युक्तम् ॥

अत्र 'तस्मात् चित्स्वभावएवात्मा तेनतेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते । अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते' इति (१९७.पु) प्रागुदाहृतपञ्चपादिकापर्यालोचनायां सोपाधिकस्यैवानुभवशब्देन व्यपदेशः ; निरुपाधिकस्यात्मशब्देनेति स्फुटं प्रतीयते । एतदेवाभिप्रेत्य 'अप्रामाण्यप्रसक्तिश्च' इति वार्तिकविवरणे 'अतो वेदान्तवेद्यादन्यमर्थं प्रत्यक्षादिविषयत्वेन नकल्पयेत् । किंतु सोपाधिकं ब्रह्म तेषां विषयः निरुपाधिकं वेदान्तानामित्यर्थः' इत्यानन्दगिरिणोक्तम् ॥

एवं च 'तस्मादनुभवः सजातीयप्रकाशान्तरनिरपेक्षःप्रकाशमानएव विषये प्रकाशादिव्यवहारनिमित्तं भवितुमर्हति अव्यवधानेन विषये प्रकाशादिव्यवहारनिमित्तत्वात्' इति (१९७.पु) उदाहृतविवरणोक्तानुमानेऽपि सोपाधिकमेव विवक्षितमिति अभिप्रेत्य अनुभूतेर्ज्ञानान्तरविषयत्वमपि सम्भवतीति साधयति—**यत्त्वनुभूतेस्स्वयम्प्रकाशत्वमुक्तं तद्विषयप्रकाशनवेळायाम् इत्यादिना** । अव्यवधानेन विषये प्रकाशादिव्यवहारनिमित्तत्वेन स्वप्रकाशत्वस्य परैस्साधनात् तदेव स्वप्रकाशत्वम् एवं विषये प्रकाशव्यवहारदशायां अनुभूतेः ज्ञातृसम्बन्धोऽपि प्रकाशते तद्व्यवहारोऽपि वर्तते ।

## श्रीभाष्यम्

**त्वात्, स्वानुभवस्याप्यतीतस्याज्ञासिषमिति ज्ञानविषयत्वदर्शनाच्च। अतोऽनुभूतिश्चेत् स्वतस्सिद्धेति वक्तुं न शक्यते। अनुभूतेरनुभाव्यत्वे अननुभूतित्वमित्यपि दुरुक्तम् स्वगतातीतानुभावानां परगतानुभावानांचानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्युपगमेच शब्दार्थसम्बन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्वमनुमाय तदुपसत्तिश्च क्रियते साच नोपपद्यते। नचान्यविषयत्वेऽननुभूतित्वम्। अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयंप्रतिप्रकाशमानत्वं**

## श्रुतप्रकाशिका

दशाशब्देन विषयसम्बन्धप्रसरस्य वर्तमानता विवक्षितेत्यवगम्यते। ननु सर्वेषामित्येतदुपपादयति। **परानुभवस्येति।** सर्वदेत्येतदुपपादयति। **स्वानुभवस्यापीति।** अनुभूतिश्चेदित्यनेन स्वाश्रयंप्रति विषयप्रकाशनवेलायामित्युक्तवैषम्यविरहो गर्भितः। एवमनुभूतेरनुभाव्यत्वसम्भवमुपपाद्य तदसम्भवे परोक्तमनुमानं दूषयति। **अनुभूतेरिति।** कुतइत्यत्राह। **स्वगतेति।** परानुभवानुमेयत्वानभ्युपगमे लौकिकव्यवहारविरोधमनिष्टमाह। **परेति।** अथ वैदिकव्यवहारविरोधमाह। **आचार्यस्येति।** परानुभवानुमानानभ्युपगमइत्यादिना चार्वाकनिरासश्च फलितः—अनुमानानभ्युपगमे शब्दार्थसम्बन्धग्रहणायोगात् एवं बाधउक्तः॥

अथ व्याप्तिं दूषयति। **नचान्येति।** नह्यसाधारणाकारो धर्मिग्राहकमानसिद्धः साधारणाकारेसत्यपगच्छतीत्यभिप्रायेणानुभूतिस्वरूपं शिक्षयति। **अनुभूतित्वमिति।** अत्रानुभूतिशब्दो ज्ञानमात्रपरः। ननु स्मृतिविलक्षणपरः। प्रकाशमानत्वमित्युक्ते घटादेरप्यनुभूतित्वं स्यादिति तद्व्यावृत्त्यर्थं स्वाश्रयंप्रतीत्युक्तम्। अणुत्वनित्यत्वाद्यात्मधर्माणां ज्ञानान्तर प्रकाश्यत्वात्तद्व्यावृत्त्यर्थं स्वसत्तयैवेत्युक्तम्। अतीतानुभवव्यावृत्त्यर्थं वर्तमानदशायामित्युक्तम्। यद्यप्यतीतानुभवस्य ज्ञानान्तरमन्तरेण प्रकाशानुपपत्तेरर्थादसम्भवव्यवच्छेदः तथाऽप्यतीतस्य ज्ञानान्तरेण सिद्धिं परानभिमतां व्युत्पादयितुमिदं विशेषणम्, विषयसम्बन्धस्य वर्तमानदशायामित्यर्थः। वर्तमानदशायां स्वसत्तयैव प्रकाशमानत्वमित्युक्ते परानुभवे तदसम्भवात् तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तम्॥

## गूढार्थसङ्ग्रहः

इति 'ज्ञातुरात्मनस्तथैव' इत्युक्तम्॥ 'अनुभूतेरनुभाव्यत्वेऽननुभूतित्वम्' इति इष्टसिद्धौ 'याऽनुभूतिरजाऽमेया' इति प्रथमश्लोकविवरणे उक्तम् 'एवं तत्र संविदामपि संविद्विषयत्वे घटादिवदस्वसंवेद्यत्वं असंवित्त्वं च स्यात् इति। यदि संवित् संविदन्तरस्य विषयः तदा सा विषयतयैव भासेत, ननु विषयितया घटवत्। विषयितयैवतु भाति घटस्तु न तथा, अतो घटविषयवैलक्षण्यात् अविषयत्वमेव संविदः। तस्माद्घटादेर्विषयस्यैव असंवित्त्वमेव निश्चनुमः। अविषयत्वव्याप्तत्वात् संविदः, घटादेश्च तदभावात्। अतस्संविदामापि संविद्विषयत्वे घटादिवत् असंवित्त्वं स्यादिति युक्तमुक्तम्। घटसंविदोऽप्यन्यदा विषयता स्यात् इतिचेत्— न; विषयाकाररहितायास्संविदः कदाचिदपि विषयभावादृष्टेः सकृद्विषयस्य अन्यदा विषयिताऽदृष्टेश्च घटस्य। नहि घटः कदाचिदपि विषयी दृष्टः। कालभेदेनच विषयाविषयिभावाभ्युपगमे स्थायित्वप्रसङ्गः' इति, 'नच अन्यस्यास्संविदास्सिद्धा आत्मानमन्यं च साधयेत्। अन्यस्याप्यन्यसाध्यत्वे अनवस्थाप्राप्तेः। अन्यसंवेद्यत्वेच नात्र संवेद्यता संविदः। तस्मादसंवेद्यैव संवित्' इतिचोक्तम्। अस्य च परिशीलनमात्मसिद्धौ सम्यक् कृतम्। स एवार्थः भगवता अत्र प्रतिपाद्यते। अन्यविषयत्वे याऽनवस्था इष्टसिद्धावुक्ता सा

श्रीभाष्यम्

**स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत इति नानुभूतित्वमपगच्छति। घटादेस्त्वननुभूतित्वमेतत्स्वभावविरहात् नानुभाव्यत्वात्। तथाऽनुभूतेरननुभाव्यत्वेऽपि अननुभूतित्वप्रसङ्गो दुर्वारः—गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्। गगनकुसुमादेरननुभूतित्वमसत्वप्रयुक्तं नाननुभाव्यत्वप्रयुक्तमितिचेत् एवं तर्हि घटादेरप्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनम् नानुभाव्यत्वमित्यास्थीयताम्। अनुभूतेरनुभाव्यत्वे अज्ञानाविरोधित्वमपि तस्याः घटादेरिव प्रसज्यत इति चेत् अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानविरोधित्वमपि प्रसज्यत एव**

श्रुतप्रकाशिका

एतल्लक्षणं स्वयम्प्रकाशत्ववादिनामेवेष्टमिति सर्वसम्प्रतिपन्नं लक्षणमाह। **स्वसत्तयैवेति**। स्वाश्रयंप्रति वर्तमान दशायामिति पदद्वयानुकर्षस्योपलक्षणं स्वसत्तयैवेति पदम्। साधनमित्युक्ते दण्डचक्रादेरपि तथात्वात्तद्व्यावृत्त्यर्थम्। **विषयसाधनमित्युक्तम्**। चाक्षुषज्ञानं श्रावणविषयं न साधयतीति सर्वविषयसाधनत्वासम्भवात्तद्व्यावृत्त्यर्थं स्वशब्दः। इन्द्रियव्यावृत्त्यर्थं स्वसत्तयैवेति पदम्। इन्द्रियादिकं हि न केवलं स्वसत्तया प्रकाशकम् अपितु ज्ञानोत्पादनद्वारा। वर्तमानदशायामित्यतीतानुभवव्यावृत्तिः। स्वाश्रयं प्रतीति परानुभवव्यावृत्तिः। ततःकिमित्यत्राह। **तेचेति**। एवमननुभाव्यत्वलक्षणसाध्यधर्मप्रतिक्षेपेणानुभाव्यत्वेनानुभूतित्वस्य सामानाधिकरण्यदर्शनादननुभाव्यत्वेनव्याप्तिर्निराकृता ॥

तर्हि कथमनुभाव्यत्वेऽननुभूतित्वदर्शनमिति शङ्कायां सोपाधिकत्वमाह। **घटादेस्त्विति**। अननुभूतित्वमनुभूतिशब्देन व्यवहर्तव्यत्वाभावइति न साध्याविशिष्टता। यद्वा उक्तयोर्लक्षणयोः अन्यतरदनुभूतित्वम्। नतु समुच्चितमुभयम्। अन्योऽन्यनिरपेक्षत्वात् वाशब्दप्रयोगाच्च। नहि चशब्दःप्रयुक्तः। तत्रान्यतरलक्षणराहित्यरूपमननुभूतित्वमन्यतराकारविरहप्रयुक्तमिति सोपाधिकत्वमित्यर्थः। अथ प्रतितर्कपराहतिमाह। **तथाऽनुभूतेरिति**। यद्वा आभाससमानयोगक्षेमत्वमाह। **तथाऽनुभूतेरिति**। गगनकुसुमादेरननुभूतित्वस्य उपाध्यन्तरमसत्त्वं शङ्कते। **गगनेति**। घटादेरननुभूतित्वस्याप्युपाध्यन्तरमज्ञानाविरोधित्वमाह। **एवंतर्हीति**। प्रकाशनियमाभावाविरोधित्वं अज्ञानाविरोधित्वम्। नच सुखादावभावात् साध्यसमव्याप्त्यभावश्शङ्कनीयः। सुखादेर्ज्ञानविशेषत्वेनाननुभूतित्वाभावात्। अज्ञानाविरोधित्वस्योपाधित्वनिरासाय पक्षे तत्प्रसञ्जयति। **अनुभूतेरिति**। तद्धवत्पक्षेऽपि तुल्यमित्याह। **अननुभाव्त्वेऽपीति**। अनुभूतेरनुभाव्यत्वेऽननुभूतित्वरोपाधित्वेनोक्तमज्ञानाविरोधित्वमननुभाव्यत्वेऽपि प्रसज्यत इत्यर्थः। अनुभाव्यत्वेऽननुभूतित्वमज्ञानाविरोधित्वं च यदुक्तं तदनुभाव्यत्वेऽपि गगनकुसुमादेरिव प्रसज्यतइत्युक्तम्। गगनसुमादावननुभूतित्वम् अज्ञानाविरोधित्वंचासत्त्वप्रयुक्तम् नाननुभाव्यत्वप्रयुक्तमिति चेत् अननुभाव्यत्वे तद्वदसत्त्वमपि प्रसज्यते। गगनकुसुमादेरसत्त्वं नाननुभाव्यत्वमात्रप्रयुक्तम्। अपितु स्वयम्प्रकाशत्वे सत्यनुभाव्यत्वविरहप्रयुक्तमित्यनुभूतेरननुभाव्यत्वमात्रान्नासत्त्वप्रसक्तिरितिचेत्—अननुभाव्यत्वे तद्वदस्वयम्प्रकाशत्वमपि प्रसजति। अतः अस्वयम्प्रकाशत्वेसति अननुभाव्यत्वप्रयुक्तमसत्त्वमनुभूतेर्दुर्वारम्। अस-

गूढार्थसंग्रहः

अनुभूतेर्विषयप्रकाशनवेलायां ज्ञातुरात्मनः स्वप्रकाशत्वाभ्युपगमेन परिहृता। कालभेदेन विषयविषयिभावाभ्युपगमे योऽयं स्थायित्वप्रसङ्गउक्तः सः धर्मभूतज्ञानस्य स्वरूपतः स्थायित्वाभ्युपगमेन इष्टापत्त्या परिहृतः। तदात्वे स्वयंप्रकाशस्या

## श्रीभाष्यम्

**अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम्। यत्तु संविदस्स्वतस्सिद्धायाः**

## श्रुतप्रकाशिका

त्वंतु धर्मिग्राहकप्रमाणविरुद्धमितिचेत् अनुभाव्यत्वेऽननुभूतित्वमपि तथेत्येवमनुसन्धेयमिति भाष्याभिप्रायः। खपुष्पोदाहरणेतु नाश्रयवैकल्यदोषश्शङ्कनीयः। ख्यातिर्नासदिति व्यतिरेकदृष्टान्तत्वस्य परैः स्वीकृतत्वात् '**शब्दज्ञानानुपाती वस्तुशून्योऽवभासो विकल्पः**' सस्वभावस्त्ववभासः प्रतीतिरितिहि तैरुच्यते। तत्राभासप्रतीतस्यापि निषेधाधिकरणत्वं युक्तमिति भाट्टाङ्गीकृतं च अतः परमतप्रक्रियया खपुष्पमुदाहृतम्। उपहास्यं समीपस्थैरपि हास्यमित्यर्थः॥

अथ परोक्तं नित्यत्वं व्युदस्यति। **यत्त्वित्यादिना**। ननु ज्ञाननित्यत्वमभ्युपयद्भिः कथं तन्निरसनं युक्तम्। उच्यते—ज्ञानाश्रयभूत आत्मा तदाश्रितं च संकोचविकासार्हं नित्यं ज्ञानद्रव्यं परास्यानभिमतम्। यत्तु प्रस्तुतमिन्द्रियसं-

## गूढार्थसंग्रहः

प्रतीतज्ञानस्य ज्ञानविषयत्वे न किंचिद्बाधकम्। स्मृतिरपि ज्ञानमेव। एकस्य पुंसः स्वयंप्रकाशत्वे अन्यस्य तज्ज्ञानस्य अनुमेयत्वेऽपि न दोषः। तमेतमर्थमुपसंहरति—**अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम्** इति॥

इष्टसिद्धौ 'नच स्वतस्सिद्धस्य प्रागभावादयः स्वतः अन्यतो वा सिध्यन्ति। अतो अजा' इत्युक्तम्। अत्र ज्ञानोत्तमविवरणम्। नच स्वतः सिद्धस्येति। अत्रादिशब्देन तज्जन्मव्यापकीभूतकारणवत्त्वोत्तरकालसम्बन्धादयो गृह्यन्ते न (च) प्रध्वंस प्रागभावस्य 'नान्ये भावविकाराः' इति जन्माभावेन साध्यमानत्वात्। तेतु संवेदनस्य प्रकाशा(प्राग?) भावादयः स्वतः स्वप्रकाशतया नसिध्यन्ति संविस्वापत्तेः। यद्वा स्वतः तेनैव संवेदनेन नसिध्यन्ति स्वाग्रहणे स्वविशेषितप्रागभावादिग्रहणायोगात् स्वप्रागभावादिकाले स्वस्य सद्भावापत्तेः। नापि संविदन्तरेण, प्रागभावादिधर्मिभूतसंवेदनस्य स्वप्रकाशतया संविदन्तराग्राह्यत्वात्। एवं जन्मव्यापकानां प्रागभावादीनां प्रमाणतोऽसिद्धत्वात् तद्व्याप्यस्य जन्मनोऽपि प्रमाणतोऽसिद्धिः। संविज्जन्मप्रसिद्धिश्च घटाकाशजन्मप्रसिद्धिवदुपपद्यते ततस्स्वतस्सिद्धत्वादजैवानुभूतिरित्यर्थः इति। तामिमर्थं पूर्वपक्षे विस्तृतमनुवदति—**यत्त्वित्यादिना**॥

उक्तंच सिद्धान्तबिन्दौ 'ज्ञानानित्यत्वपक्षे तत्तद्व्यक्तिभेद ध्वंसप्रागभावसमवायज्ञानत्वजात्याद्यभ्युपगमे गौरवात्, एकत्वाभ्युपगमेचातिलाघवात् घटज्ञानं पटज्ञानमित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः, स्वतस्तु ज्ञानं ज्ञानमित्येकस्वरूपावगमात्, तदुत्पत्तिविनाशप्रतीत्योश्चावश्यकल्प्यविषयसम्बन्धविषयतयाऽप्युपपत्तेः' इति। अत्र न्यायरत्नावली—ज्ञानेत्यादि। अनित्यत्वपक्षे अनित्यत्ववादितार्किकादिमते। तत्तद्व्यक्तीत्यादि। तत्तज्ज्ञानव्यक्तयस्तासां भेदध्वंसप्रागभावाः समवायः, ज्ञानत्वजातिः, आदिपदेन तज्ज्ञानतद्ध्वंसेषु अनन्तरकारणानीत्येतेषामनन्तानां स्वीकारे गौरवादित्यर्थः। एकत्वाभ्युपगमे एकैव ज्ञानव्यक्तिः सर्वज्ञेयविषयिकेति स्वीकारे अतिलाघवात्—आत्मनएव ज्ञानस्वरूपत्वसम्भवेन ज्ञानस्वरूपस्याप्यकल्पनीयत्वेनातिलाघवात्। ननु घटज्ञानं न पटज्ञानमिति भेदप्रतीतेः कथमेकं ज्ञानं सर्वस्येत्यतआह—घटज्ञानमित्यादि। इत्युपाधिभेदपुरस्कारेणेति। धर्मिप्रतियोगिरूपोपाध्योरित्थंभूतौ घटविषयकत्वपटविषयकत्वरूपौ यौ भेदौ विशेषौ तत्पुरस्कारेण तदुल्लेखेनेत्यर्थः। एवकारार्थं स्फुटयति—स्वतइति। उपाधिपुरस्कारंविनेत्यर्थः। ज्ञानं ज्ञानमित्येकरूपावगमात् ज्ञानमित्याकारकसर्वप्रत्ययैरेकस्यैव ज्ञानस्वरूपस्य विषयीकरणात्, तुशब्देन तज्ज्ञानव्यक्तिरतज्ज्ञानव्यक्तिभिन्नेत्युपाध्यपुरस्कृत प्रत्ययो नास्तीत्युक्तम्। ननु ज्ञानस्य उत्पत्तिनाशप्रत्ययात् कथमात्मरूपता तत्राह—तदुत्पत्तीत्यादि। विषयसम्बन्धेति।

## गूढार्थसंग्रहः

विषयज्ञानोभयसम्बन्धेत्यर्थः । विषयज्ञानयोस्सम्बन्धमविषयीकृत्य 'ज्ञानमुत्पन्नन्नष्टम्' इति प्रत्ययस्यानुदयात् ज्ञानोत्पत्त्यादिप्रत्यये ज्ञानविषयसम्बन्धविषयकत्वमवश्यं कल्प्यम्, तथा च 'घटज्ञानमुत्पन्नन्नष्टम्' इति धीरुपपद्यते, 'अयमिदानीं शिखी जातः, अयं शिखी नष्ट' इति धीवत् विशेषणोत्पत्तिनाशविषयकत्वात् । तथाहि प्रत्यक्षज्ञानस्थले यावन्मनोऽवच्छिन्नचिता घटादेस्सम्बन्धस्तिष्ठति तावदेव 'घटमहं साक्षात्करोमि' इति व्यवहारात्, तादृशसम्बन्धोत्पत्तिनाशावेव 'घटप्रत्यक्षमुत्पन्नन्नष्टम्' इति धीविषयौ । सच सम्बन्धो वृत्तेः चिदुपरागार्थत्वपक्षे मनोऽवच्छिन्नचिति घटादेः स्वावच्छिन्नवृत्तिप्रतिबिम्बितत्वम् । आवरणनाशार्थत्वपक्षे स्वनिष्ठस्याज्ञानविषयत्वस्य प्रयोजकं यत् स्वावच्छिन्नवृत्त्यादिकन्तद्विशिष्टत्वम् । 'अर्थविवेचनं जानामि' इति धीस्थले घटादिविषयकस्यासत्त्वापादकाज्ञानस्य आश्रयत्वाभावः । यावन्मनोऽवच्छिन्नचितिः तावदेव घटादि जानामीति व्यवहारात् तादृशाभावरूपस्य घटादिसम्बन्धस्य उत्पत्तिनाशावेवोक्तधीविषयौ, असत्त्वापादकाज्ञानाश्रयत्वाभावविशिष्टचितः स्वाकारवृत्तिप्रतिबिम्बितचितस्तादृशाज्ञानाविषयकत्वप्रयोजकविशिष्टचितो वा जानात्यर्थत्वेनोक्तव्यवहारे उक्ताभावस्य विशेषणत्वात् । ननूक्ताभावोऽत्यन्ताभावएव, अज्ञाननाशोहि न ज्ञानेन जन्यते, किंतु ज्ञानम् अज्ञानतत्कार्यविरोधीत्युक्तम्, तथा च कथं तस्योत्पत्तिविनाशाविति चेत् सत्यम् । तथाऽपि तत्तत्कालस्योत्पत्तिविनाशसम्भवेन तत्तत्कालविविशिष्टाधिकरणात्मकाविशेषणतासम्बन्धविशिष्टरूपेण उक्ताभावस्य उत्पत्तिनाशसम्भवात् तदतिरिक्तनित्यविशेषणतादेरभावीयसम्बन्धत्वपक्षे तत्तत्कालावच्छिन्नरूपेण तस्य तत्सम्भवात् । सहि सम्बन्धो नित्योऽपि प्रतियोगिमतिदेशे प्रतियोगिसम्बन्धानवच्छेदककालावच्छिन्नएव, तथा च घटाद्याकारमनोवृत्तिकाल एव घटाद्यज्ञानाभावसंबन्धस्य प्रमातरि स्वीकारात्, तत्कालावच्छिन्नरूपेण तदुत्पत्त्यादिसंभवः । सुखादेरपि विद्यमानत्वदशायामेव प्रमातर्यज्ञानाभावस्वीकारात् तत्कालावच्छिन्नस्य तदभावस्योत्पत्त्यादिसम्भवः । घटादिकार्यं प्रति जीवस्योपादानत्वपक्षे घटादौ विद्यमाने जीवतादात्म्यस्य तदा तदा सत्वात् सदैव घटादिकं जानामीति प्रत्ययापत्तिः, विद्यमानसुखादाविव भासकतानियामकतादात्म्यरूपस्य जीवोपरागस्य सत्वात् । अतोऽसत्वापादकाज्ञानं तादृशप्रत्ययविरोधिघटाद्यवच्छेदेन स्वीक्रियते । तथाचोक्ताज्ञानाविषयत्वघटित एव जानात्यर्थः, नतु घटादितादात्म्यापन्नजीवचित् अतो नोक्तानुपपत्तिः ॥

यदा तु ब्रह्मैव घटाद्युपादानं तदा उक्ततादात्म्यास्वीकारात् असत्वापादकाज्ञाने मानाभावात् तदविषयत्वघटितो जानात्यर्थो न संभवतीति घटाद्याकारवृत्तिप्रतिबिंबितं चैतन्यं घटादिज्ञानं सुखादिप्रतिबिंबितं सुखादिज्ञानम् । नच जीवस्य जगदुपादानत्वपक्षेऽप्युक्तज्ञाने मानाभावः, घटाद्याकारवृत्तिप्रतिबिंबिता चित् घटादिज्ञानमित्यादेर्वक्तुं शक्यत्वात् इति वाच्यम् । जीवोपादानत्वस्य वाचस्पतिसंमतत्वेन सिद्धान्तबिन्दावुक्तत्वात् । वाचस्पतिमतेच वृत्त्यादौ चित्प्रतिबिंबास्वीकारात् आवरणभङ्गार्थत्वेमेव वृत्तेः स्वीक्रियते, नतु प्रतिबिम्बघटितोपरागार्थत्वम् । यदि च वाचस्पतिमतेऽपि चिदुपरागो वृत्तेः प्रयोजनं अन्यथा तन्मते पल्लवाज्ञानस्वीकारेत्वावरणभङ्गस्य प्रयोजनत्वसम्भवेऽपि तदस्वीकारपक्षे प्रयोजनाभावात् तदा विषयावच्छिन्नचिति जीवचितोर्भेदनाशएव प्रयोजनं वृत्तेरिति वाच्यम्, सोऽयं वृत्तेरभेदाभिव्यक्त्यर्थत्वपक्षः । असत्वापादकाज्ञानास्वीकारपक्षे जीवचैतन्यस्य घटादिना तादात्म्यस्वीकारपक्षे च घटाद्याकारवृत्तिप्रतिबिम्बितरूपेण सुखादिप्रतिबिम्बितरूपेणच चितउत्पत्त्यादिसम्भवात् । चित्प्रतिबिम्बानङ्गीकर्तृवाचस्पतिमते तु वृत्तिविशिष्टरूपेण सुखादिविशिष्टरूपेण च चितउत्पत्त्यादिव्यवहार इति भावः' इति ॥

यद्यपि 'ज्ञानंचास्य स्वाभाविकधर्मत्वेन नित्यम्' इति 'स्वयमपरिच्छिन्नमेव ज्ञानं संकोचविकासार्हमित्युपपादयिष्यामः इति 'तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते' इति च अत्रैवोत्तरत्र सिद्धान्तयि-

## श्रुतप्रकाशिका

योगाद्यन्वयव्यतिरेकानुविधायिप्रत्यक्षत्वपरोक्षत्वप्रमाणत्वाप्रमाणत्वाद्यवस्थं लोकसिद्धं ज्ञानम्। तस्य यदि नित्यत्वमुपपाद्यते तद्व्युदस्यते विषयसम्बन्धिज्ञानस्यहि स्वयम्प्रकाशत्वं परेण समर्थितम्। स्वयम्प्रकाशत्वसमानाधिकरणं च नित्यत्वं

## गूढार्थसंग्रहः

ष्यते। एवं च नित्यस्य ज्ञानस्य उदयास्तमयव्यपदेशः सिद्धान्ते कयाचनविधया उपपादयिष्यते। एवमेव परैरपि। तथाऽपि महद्वैषम्यं वर्तते। सिद्धान्ते मम ज्ञानमुत्पन्नमित्यादौ अस्मदर्थसंबन्धः ज्ञाने प्रभास्थानापन्ने तात्विकः, तस्योत्पत्तिः इन्द्रियद्वारा घटादिसंबन्धः सोऽपि तात्त्विकः। मणेः प्रभा उत्पन्ना मणेः प्रभा नष्टेतिवत् मम घटज्ञानमुत्पन्नं मम घटज्ञानं नष्टमिति सिद्धान्ते व्यवहारः। अस्मदर्थस्य स्वयंप्रकाशत्वं ज्ञानस्यापि स्वयंप्रकाशता। प्रभायाः ज्ञानस्य च सिद्धान्ते द्रव्यतया परिणामवादाभ्युपगमेन असत्कार्यवादाभावात् स्वयंप्रकाशस्यैव ज्ञानस्य प्रभाया इव सङ्कोचविकासावस्थानिबन्धनः उदयास्तमयव्यपदेशः। ब्रह्मविदित्यादौ वेदे लोके च विद्यादिधात्वर्थः एकरूप एव। परमतेतु नैवम्। परमते अन्तःकरणवृत्तिप्रक्रिया, पञ्चपादिकाद्युक्तरीतिमनुसृत्य मधुसूदनसरस्वत्युक्ता (अ.सि. प्रतिकर्मव्यवस्थायां) प्रागेव (२१३.पुटे) निरूपिता। पञ्चपादिकाऽऽदौ सोपाधिकस्यैव अनुभवत्वमुक्तम्। तस्यैव स्वयंप्रकाशत्वं विवरणे साधितम्। एवं आत्मनोऽपि स्वयंप्रकाशत्वं साधितम्। (१९८.पु) 'संवेदनं च प्रमेयभेदविनिर्मुक्ताचिदेव' इति विवरणोक्तिमनुसृत्य 'एवं चिदभिन्नस्यात्मनोऽपि स्वप्रकाशत्वं चिद्रूपत्वात् साधनीयम्' इति आत्मस्वप्रकाशत्वोपपत्तौ अद्वैतसिद्धावुक्तम्। एतदनुसारेण लघुचान्द्रिकायां अनुभूतिस्वप्रकाशत्वोपपत्तौ अनुभवत्वं च आत्मस्वरूपत्वमित्युक्तम्। घटमहं जानामीत्यादि प्रतीतिसिद्धं प्रमेयभेदविनिर्मुक्तं चिदेव संवेदनं, तदेव आत्मेति शुद्धचितस्सिद्ध्यनन्तरमेव सम्भवति। निर्विषयनिराश्रयसंवेदनस्याप्रामाणिकतयाऽयमर्थो नघटतइत्यात्मसिद्धावुक्तार्थः भाष्ये वक्ष्यते। एतदभिप्रायेणैव 'यत्त्वनुभूतेः स्वयम्प्रकाशत्वम्' इत्यादिपूर्वभाष्यग्रन्थः। निर्विषयनिराश्रयसंवेदनस्य चिद्रूपस्याप्रामाणिकत्वादेव पञ्चपादिकानुसारिणी अन्तःकरणवृत्तिविभागेन प्रमाणप्रमेयप्रमितिव्यवस्था सिद्धान्तबिन्द्वद्वैतसिद्ध्याद्युक्ता (२१३.पु) नरुङ्गच्छते॥

सिद्धान्तबिन्दु तट्टीकयोः ज्ञानत्वजात्यभ्युपगमे गौरवमुक्तम्। अद्वैतसिद्धौ च ज्ञानत्वाद्युपपत्तौ अर्थप्रकाशत्वमेव ज्ञानत्वमित्युक्तम्। तत्र च लघुचन्द्रिकायां—' अर्थप्रकाशत्वमिति। अर्थव्यवहारजनकतावच्छेदकवत्त्वम्। उक्तावच्छेदकं च ज्ञानत्वजातिः। साच तत्तदर्थस्यासत्त्वापादकाज्ञानविरोधिचैतन्यवृत्तिः। चैतन्यस्य तद्विरोधित्वं च घटादावविद्यमानसुखादौ च तदाकारवृत्तिविशिष्टत्वेन विद्यमानसुखादौ च तद्विशिष्टत्वेन। विद्यमानसुखादावपि वृत्त्यङ्गीकारेतु वृत्ति विशिष्टत्वेनैव तद्बोध्यम्। यद्यप्युक्तजातिर्विशिष्टाचिन्निष्ठा ज्ञाधातुवाच्यताऽवच्छेदिका। तथाऽपि तद्विशिष्टा भिन्नाया ज्ञानपदलक्ष्यव्यक्तेः मुक्तौ सत्त्वेन ज्ञानस्वरूपमविनाशीत्याशयेनाह—मुक्तावर्थाभावेऽपि तत्संसृष्टप्रकाशत्वस्य कदाचिदर्थसम्बन्धेनाप्यनपायात्' इति॥

एवं तत्रैव 'आनन्दत्वस्य निरुपाधिकेष्टत्वरूपत्वात्। नच मुक्ताविच्छाऽपाये आनन्दापायापत्तिः। इष्टत्वोपलक्षितस्य स्वरूपस्यानपायात्' (अ.सि) 'निरुपाधिकेष्टत्वरूपत्वात्। अन्येच्छानधीनेच्छाविषयत्वयोग्यत्वरूपत्वात्। उक्तयोग्यत्वं च सुखत्वम्। तद्विशिष्टं वृत्तिविशेषावच्छिन्नचिद्रूपं बोध्यम्। इष्टत्वोपलक्षितेति। उक्तयोग्यत्वविशिष्टरूपवाच्यार्थद्वारा आनन्दपदलक्ष्येत्यर्थः' इति (लघुचन्द्रिका), 'अस्तु वा द्वितीयाभावोपलक्षितस्वरूपत्वमाद्वितीयत्वम्' इतिच मुक्तौ तत्तदुपलक्षितस्वरूपमेव अद्वैतसिद्धिलघुचन्द्रिकयोस्सिद्धान्तितम्। एवं तत्रैवोभयावधिराहित्यं नित्यत्वमिति कालपरिच्छेदाभावो नित्यत्वमिति द्वितीयमिथ्यात्वनिरुक्तौ उक्तम्। तत्रापि तत्तदभाववैशिष्ट्यमुपहितस्यैव धर्मः। शुद्धे न

### श्रीभाष्यम्

**प्रागभावाद्यभावादुत्पत्तिर्निरस्यते तदन्धस्य जात्यन्धेन यष्टिःप्रदीयते। प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम् अनुभूत्यैव ग्रहणात्। कथमनुभूतिस्सती**

### श्रुतप्रकाशिका

परस्येष्टम्। स्वतस्सिद्धतया नित्यत्वसमर्थनात्। अतस्तन्निरासो युक्तः तत्र च मृद्रव्यस्य सिद्धत्वेऽपि घटत्वावस्थ मृद्द्रव्यानित्यत्ववत् ज्ञानाख्यद्रव्यस्य नित्यत्वेऽपि स्मृतित्वानुभूतित्वाद्यवस्थज्ञानानित्यत्वं युक्तमिति न स्वपक्षविरोधः। स्वयम्प्रकाशत्वे किंचिदुपादेयत्वमस्तीति तद्व्यावृत्त्यर्थःतुशब्दः। **अन्धस्य जात्यन्धेन यष्टिःप्रदीयतइति**। असिद्धमत्यन्तासिद्धेन हेतुना साध्यत इत्यर्थः॥

तत्रहि ग्राहकाभावात्' ग्राह्याभावाच्च प्रागभावाभावउक्तः। तमाशङ्क्य ग्राहकोऽस्तीत्याह। **प्रागभावस्येति**। तत्र विकल्पे पूर्वपक्षिणोक्ते सत्येवावगमयतीति पक्षं स्थापयितुं तत्रोक्तं विरोधं शङ्कते। **कथमिति**। तदानीमित्यभाव

### गूढार्थसङ्ग्रहः

कश्चन काल्पितोऽपि धर्मः। तत्तदभावत्वविशिष्टोपहिततादात्म्यं परं काल्पितमङ्गीक्रियते। अतः शुद्धं तदुपलक्षितस्वरूपमेवेति लघुचान्द्रिकादिसिद्धान्तः पूर्वमेव (३१३.पु) प्रदर्शितः। एवंच शुद्धचितमालम्ब्यैव तत्र स्वसिद्धान्तोपपादनकरणेन शुद्धचितएवाप्रामाणिकत्वस्य वक्ष्यमाणतया तस्याः प्रागभावाद्यभावादिकमभिप्रेत्य प्रागभावाभावादुत्पत्तिनिरसनमिष्टसिद्धौ नघटते, शुद्धचितएवाप्रामाणिकत्वस्य वक्ष्यमाणत्वात् इत्याशयेनाह–**तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते इत्यादिना**॥

**अनुभूत्यैव ग्रहणादिति**। शुद्धचितः अप्रामाणिकत्वे घटादिविषयकं ज्ञानमेवानुभूतिः। तत्तत्पुरुषवृत्तिज्ञानस्य धर्मिस्वरूपस्य भेदो नास्ति। घटविषयकज्ञानस्य प्रागभावो नाम पूर्वकालिकविषयान्तरसम्बन्धः। ज्ञानस्य स्वप्रकाशतया ज्ञानं धर्मिस्वरूपं यथा भासयति तद्वत्तद्गतविषयसंबन्धमपि भासयति। तथा च घटादिविषयकं ज्ञानं पूर्वकाले विषयान्तरसंबद्धं विषयान्तरसंबन्धरूप स्वप्रागभावभासकमपि भवतीत्यनुभूत्यैव प्रागभावस्य ग्रहणमुपपन्नम्। एतावता 'तस्माच्चित्स्वभावएवात्मा तेनतेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते।' इति पञ्चपादिकावाक्यं विवरणोक्तस्वप्रकाशत्वानुमानं च अनुसन्धाय स्वयमप्रकाशमानस्य विषयप्रकाशकत्वं न सम्भवतीति विवरणोक्तरीतिमनुसृत्य घटमहं जानामीति प्रतीतिसिद्धस्य निरुपाधिज्ञानस्यात्मरूपस्याप्रामाणिकत्वांनिश्चित्य इष्टसिद्धिप्रक्रिया सम्यक्पर्यालोचिता॥

अथ प्रमेयभेदाविनिर्मुक्तमेव संवेदनम्' इति विवरणादिपर्यालोचनायां निरुपाधिज्ञानं प्रामाणिकमित्यवश्यमेषितव्यम्। साधितश्चायमर्थः नैष्कर्म्यसिद्धिकारैः सुरेश्वराचार्यैः बृहदारण्यकवार्तिके। 'सर्वतीर्थदृशां सिद्धिःस्वाभिप्रेतस्य वस्तुन यदभ्युपगमादेव तत्सिद्धिर्वार्यते कुतः॥ (बृ.वा.६.३.१५६.श्लो) सर्वतीर्थदृशां तावत् सामान्यं मानलक्षणम्। अज्ञातार्थाधिगमनं त्वदुक्ते तन्नयुज्यते॥' (१५८) इत्यादिना॥

अद्वैतसिध्यादौ चायमर्थःप्रतिष्ठापितः। (अनुकूलतर्कानिरूपणे) 'वृत्त्युदयात्प्राक् अज्ञातार्थसिध्यर्थं वृत्त्यतिरिक्तज्ञानस्यावश्यमभ्युपेयत्वात्। अन्यथा तस्य साधकभावेन शशशृङ्गतुल्यतया सन्निकर्षतज्जन्यज्ञानहेतुत्वेन प्राक् सत्त्वकल्पना निष्प्रमाणिकीस्यात्। तस्मात्घटादृशस्य घटादेः इन्द्रियसन्निकर्षाश्रयत्वेन ज्ञानकारणत्वं तादृशस्य साधकं किंचिन्मानमवश्यमभ्युपेयम्। अन्यथा अन्वयव्यतिरेकयोरग्रहेण कार्यकारणभावाग्रहात् सर्वमानमेयादिव्यवस्था उच्छिद्येत। तच्च मानं

## गूढार्थसंग्रहः

नवृत्तिरूपं, तदानीं वृत्तिकरणप्रवृत्तेरिति तद्विलक्षणं नित्यं स्वप्रकाशमेकमेव लाघवात्, वृत्तिगतोत्पत्तिनाशजडत्वादिभिस्त दसंस्पर्शात् तदेव च नानाविधोपाधिसम्बन्धान्नानाविधव्यवहारभाक् भवति नभइव घटमणिमल्लिकाद्युपाधिभेदेन तच्चाज्ञानसाधकत्वात् स्वरूपतो नाज्ञाननिवर्तकं, वृत्त्युपरक्तंत्वज्ञाननिवर्तकमिति न वृत्तेरनुपयोगः। तथा च सर्वाज्ञानसाधके साक्षिचैतन्ये तस्मिन् घटादेरध्यासइति काऽनुपपत्तिः ? तदुक्तं सुरेश्वराचार्यैः। 'सर्वतीर्थदृशामित्यादिना' 'स्वतोऽसिद्धे प्रमेयेतु नासतो व्यञ्जिका प्रमा। नाभिव्यनक्ति सविता शशशृङ्गं स्फुरन्नपि'॥ इत्यन्तेन, 'यथा चैकस्यैव चैतन्यस्य सर्वभासकत्वं तथा विस्तरेणोपपादितं 'नाभाव उपलब्धेः' इत्यस्मिन्नधिकरणे भाष्यकृद्भिः' इत्यन्तेन च॥

अत्र गुरुचन्द्रिका। 'कारणाप्रवृत्तेरिति। अज्ञातो घट इत्याकारा न प्रमाणवृत्तिस्सम्भवति, प्रमाणवृत्तेरज्ञानविरोधित्वात्तद्ग्रहणासम्भवात्। स्वभिन्नकालीनाज्ञाततया घटादिविषयिण्यास्तस्यास्सम्भवेऽपि स्वसमानकालीनाज्ञाततया घटादिप्रत्यक्षमिदानीं घटं न जानामीत्याकारकं, तदुत्तरं तादृशघटादिकारणताज्ञानादिरूपं तत्फलं च नापलपितुं शक्यं मानुभविकत्वात्। किञ्चाज्ञानकालीनघटज्ञानं विना तादृशघटेन्द्रियसंयोगानुकूलेन्द्रियव्यापारादौ तत्कालीनप्रवृत्त्यसंभवः। नच स्मरणसंशयाद्यप्रमाणवृत्त्या तत्सम्भव इति वाच्यम्; अज्ञातत्वांशे तदसम्भवेन अज्ञातघटसंयोगानुकूलव्यापारे प्रवृत्त्यसंभवात्। पूर्वाननुभूते स्मरणासंभवात् संशयवृत्त्या संशयस्यैवौचित्यावर्जितत्वेन उक्तसंयोगरूपेष्टसाधनत्वे निश्चयासम्भवात्। नित्यं स्वप्रकाशमेकमिति। तस्य तादृशज्ञानरूपत्वाभावे जानामीति व्यवहारस्यैकविषयकत्वं न स्यात्। संभवत्येकविषयत्वेचैकजातीयविषयकत्वं न सम्भवतीत्याद्युक्तम्। घटादिवृत्तेश्च जडत्वेन ज्ञानान्तरे तत्प्रकाशके वाच्ये तस्यात्मान्यत्वे मानाभावः। आत्मस्वरूपत्वे चैकव्यक्तिरेव सर्वपुरुषसाधरणी नित्या, तस्याः ज्ञानान्तरविषयत्वेच कदाचित् देहादि स्फुरति न वेत्यादिसंशयःस्यात्, अतः स्वप्रकाशता। अन्यथा कैवल्यस्य भासमानता नस्यादिति भावः॥ नानाविधेति। ब्रह्मणो ज्ञानादिगुणकत्वं परेणाप्युच्यते। तत्र ज्ञानादेर्मिथो भिन्नत्वे ब्रह्मभिन्नत्वे जीवभिन्नत्वे च मानाभावादुपाधिभेदादेव नानाविधजीवेश्वरत्वादिव्यवहारसंभवात् वृत्त्यन्यज्ञानं दुर्वारमिति भावः॥ वृत्त्युपरक्तमिति। निवर्तकवृत्त्युपरक्तत्वात् निवर्तकत्वेन व्यपदिश्यते, ननु वृत्त्युपरक्तेन निवर्तकता, स्पष्टं चेदमावरणभङ्गश्च वृत्त्येति पूर्वं ग्रन्थे। न वृत्तेरनुपयोग इति। तथाचाज्ञाननिवृत्त्याद्यर्थमेव वृत्त्यङ्गीकारात् सुखादौ वृत्त्यनङ्गीकारेण असत्त्वापादकाज्ञानाभावविशिष्टचैतन्यमेव तत्र ज्ञानमिति, घटादावपि तदेव ज्ञानम्। नच सुखादौ वृत्त्यभावे वृत्तिसूक्ष्मपरिणामरूपसंस्कारो न स्यादिति वाच्यम्; सुखाद्युपहितचैतन्यस्यैव नाशस्य संस्कारत्वसंभवात्, संस्काररूपमनःपरिणामविशेषस्यावश्यकत्वेऽपि वृत्तिज्ञानानावश्यकत्वाच्च। पल्लवाज्ञानानङ्गीकारपक्षेतु उक्ताज्ञानविषयतावच्छेदकत्वस्य वृत्त्यभावविशिष्टस्याभावविशिष्टं चैतन्यमेव ज्ञानम् प्रतियोग्यनधिकरणकालोऽत्यन्ताभावइव घटादिरेव मूलाज्ञानविषयत्वे कादाचित्कोऽप्यवच्छेदकोऽङ्गीक्रियते, घटं नजानामीति प्रतीतेर्न सुखादिरिति वृत्तिविषयघटादौ विशेषणस्य सुखादौ विशेष्यस्याभावादुक्ताभाव इति नतत्पक्षेऽपि वृत्त्यपेक्षा सुखादिज्ञानार्थमिति भावः। नच घटो जानातीत्यादि प्रयोगापत्तिरिति वाच्यम्; जीवेश्वराद्यन्यतरत्वस्य जानातीत्यादिप्रयोगोपाधित्वात्॥

वस्तुतस्तु यदवच्छिन्नविषयकत्वयद्विषयकत्वान्यतरवतोऽसत्त्वापादकाज्ञानस्यानवच्छेदकं यन्मनोऽविद्यान्यतरत्तदवच्छिन्नचैतन्यं तदीयं ज्ञानम्। ब्रह्मावच्छिन्नविषयकस्य ब्रह्मान्यविषयकस्य चाज्ञानस्याप्रसिद्धत्वात्तयोरेकैकमनिवेश्यान्यतरन्निवेशितम्। मनोमात्रे निवेशिते ईशो जानातीति न स्यात्, अविद्यामात्रे च निवेशिते जीवो जानातीति न स्यात्, अतस्तदन्यतरान्निवेशितम्। यदवच्छिन्नविषयकत्वयद्विषयकत्वान्यतरवतोऽज्ञानस्यानिरूपकं यन्मनोऽविद्यान्यतरत्तदवच्छिन्नं चैतन्यं तत्साक्षात्कारः। लक्षणद्वयेऽपि प्रथमयत्पदाभ्यां चरमतत्पदार्थस्य विषयस्य ग्रहणम्। घटादौ वृत्त्यभावकाले तद

## श्रीभाष्यम्

**तदानीमेव स्वाभावं विरुद्धमवगमयतीतिचेत् नह्यनुभूतिस्स्वसमकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः अतीतानागतयोरविषयत्वप्रसङ्गात् ॥**

**अथ मन्यसे अनुभूतिप्रागभावादेस्सिध्यतस्तत्समकालभावनियमोऽस्तीति । किं त्वया क्वचिदेवंदृष्टं येननियमंब्रवीषि हन्त तर्हि ततएव दर्शनात् प्रागभावादिस्सिद्ध इति**

## श्रुतप्रकाशिका

विशेषणं न क्रियाविशेषणम् । परिहरति । **नहीति** । स्वसमकालवर्तित्वानियमः किं ग्राह्यसामान्यप्रयुक्तः उतैतद्ग्राह्यविशेषप्रयुक्तइति विकल्पाभिप्रायेण प्रथमं ग्राह्यसामान्यप्रयुक्तत्वपक्षं प्रतिवदति । **नह्यनुभूतिरिति** । यद्वा वर्तमानग्रहणनियमः किं ग्राहकानुभूतिस्वभावात् । उत ग्राह्यानुभूत्यभावस्वभावादिति विकल्पमभिप्रेत्य प्रथमं दूषयति । **नहीति** । हिशब्दोहेतौ नेति प्रतिज्ञाऽध्याहर्तव्या । ग्राह्यविशेषपक्षं दूषयितुं शङ्कते । **अथ मन्यसइति** । ग्राह्यविशेषस्य समकालवर्तित्वनियमोक्तिः दर्शनपूर्विकैव स्यादित्यभिप्रायेणाह । **किंत्वयेति** । क्वचित् अनुभूतौ व्याप्तिग्रहणभूमित्वेनाभावस्य दृष्टत्वात् प्रागभावो दुरपह्नवइत्याह । **हन्ततर्हीति** । प्रागभावस्य समकालसिध्या व्याप्तिः अनुभूतिप्रागभावरूपे धर्मिणि गृहीतेहि सिध्यतीत्यर्थः आदिशब्दः प्रध्वंसपरः ॥

## गूढार्थसंग्रहः

वच्छिन्नचिद्विषयकमसत्त्वापादकमज्ञानं मनोऽवच्छिन्नचिदाश्रितमिति तदा न तस्य ज्ञानम् । तत्र प्रत्यक्षवृत्त्यभावकाले तदवच्छिन्नविषयकम भानापादकमज्ञानं मनोनिरूपितमिति तदा न तस्य साक्षात्कारः । पल्लवाज्ञानास्वीकारे स्वपरिणामवृत्तिज्ञानाविषयत्वसमानाधिकरणस्य स्वतादात्म्यवदज्ञानावच्छेदकत्वस्याभाववत् यत् तत्सम्बन्धिनावाच्छिन्नं चैतन्यं तस्य ज्ञानम् । संबन्धिशब्देन यद्ग्राह्यं तदेव स्वपदाभ्यां ग्राह्यम् । तच्च जीवज्ञानस्थले मनः, ईशज्ञानस्थलेत्वविद्या । वृत्तिज्ञानविषयत्वस्थले वृत्त्यनवच्छेदकत्वं निवेश्य साक्षात्कारो निर्वाच्यः । इन्द्रियकरणकवृत्तिरेव विषयावाच्छिन्नेति परोक्षवृत्तिमादाय न लक्षणसमन्वयः । अज्ञानावच्छेदकत्वं च अज्ञानविषयत्वतदवच्छेदकत्वान्यतरवत्त्वम् । तेन ब्रह्मण्यज्ञानावच्छेदकत्वाभावेऽपि वृत्त्यभावकाले ब्रह्म जानामीत्यादिर्नव्यवहारः । शब्देनैव ब्रह्मणोऽपरोक्षत्वमतेऽपि शाब्दवृत्त्यवच्छेदकत्वस्यापि ब्रह्मणि पूर्वमुक्तत्वात्तदनङ्गीकारेऽप्युक्तान्यतररूपविशेष्याभावसत्वाच्च ब्रह्म साक्षात्करोमीत्यादौ नानुपपत्तिः । एकमनोवृत्त्यविषयस्यापि मनोऽन्तरवृत्तिविषयत्वेन वृत्त्यविषयत्वाभावात्स्वपरिणामेति । पुरुषान्तरीयाज्ञानविषयेऽपि ब्रह्मणि साक्षात्कारसम्पत्त्यै स्वतादात्म्यवदिति । नच—यदवच्छिन्नचितो ज्ञानत्वं साक्षात्कारत्वंचोक्तम्, तस्यैव तदुच्यतामिति वाच्यम्; यथाहि आकाशं मेयं, घटाकाशं मेयं, पटकाशं मेयं, इत्यादावनुगताकाशव्यक्तिविषयकत्वम्, तथा स्फुरणं ज्ञानं, घटस्य स्फुरणं, पटस्फुरणं ज्ञानमित्यादावप्येकस्याएव स्फुरणज्ञानव्यक्तेर्विषयत्वमित्यादेरुक्तत्वादिति दिक् ॥

सर्वाज्ञानसाधक इति । यद्यप्यज्ञानाकाराऽविद्यावृत्तिरभ्युपगम्यते, तथाऽपि सा न ज्ञानमपितूक्तरीत्या चैतन्यमिति भावः । ननु प्रमोत्पत्तेः पूर्वमप्रतीतमप्यज्ञातघटादिकं पश्चादनुमानादिना प्रतीयमानत्वान्नासत्, अन्यथा कदाचित्केनचिदप्रतीतस्यासत्वे सर्वमसत्स्यात्; नच सन्निकर्षतज्जन्यज्ञानादौ हेतुताग्राहकान्वयव्यतिरेकज्ञानमज्ञातताकालीनघटान्वयज्ञानं विना न सम्भवतीति वाच्यम्; तादृशज्ञानस्यानुमित्यादिरूपस्याभानापादकाज्ञानकाले सम्भवादतआह—नाभिव्यनक्तीति । शशशृङ्गाभिव्यक्तिमुद्दिश्य न यततइत्यर्थः । तथा च जगदभिव्यक्तिमुद्दिश्य प्रवृत्तौ सवितुर्जगत्तमोज्ञानमिव प्रमेयाभिव्यक्तिमुद्दिश्य प्रवृत्तौ प्रमातुः प्रमेयाज्ञानज्ञानमावश्यकम् । अन्यथा तन्निवृत्तीच्छाया असम्भवादितिभावः ॥

### श्रीभाष्यम्

**नतदपह्नवः । तत्प्रागभावं च तत्समकालवर्तिनमनुन्मत्तः कोब्रवीति । इन्द्रिजन्मनः प्रत्यक्षस्यह्येषस्वभावनियमः यत्स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वं न सर्वेषां ज्ञानानां प्रमाणानां च । स्मरणानुमानागम योगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात् ।**

### श्रुतप्रकाशिका

समकालवर्तित्वनियममभ्युपगम्य दूषणमुक्तम् । समकालवर्तित्वंचानुपपन्नमित्याह । **तत्प्रागभावंचेति** । यदि स्वसमकालवर्तिग्रहणनियमोऽनुभूतेर्नास्ति तर्ह्यविद्यमानेऽपि घटे चाक्षुषं तज्ज्ञानमुपपद्येतेत्यत्राह । **इन्द्रियजन्मनइति** । प्रत्यक्षशब्देन प्रत्यक्षज्ञानमुच्यते । अयमभिप्रायः स्वसमकालवर्तिग्राहकत्वनियमो न ज्ञानमात्रस्य नच तदवान्तरभेदप्रमाणज्ञानस्य, नच तदवान्तरभेदप्रत्यक्षस्य । अपितु प्रत्यक्षविशेषरूपस्य ऐन्द्रियिकज्ञानस्येति । **न सर्वेषां ज्ञानानां प्रमाणानांचेति** । चशब्देन प्रत्यक्षस्यचेत्युक्तं भवति उपपादकग्रन्थानुगुण्यात् । कुतइत्यत्राह । **स्मरणानुमानेति** । स्मरणशब्देन सर्वज्ञानानां समकालवर्तिविषयत्वनियमव्युदासः । अनुमानागमशब्देन प्रमाणमात्रस्य तन्नियमव्युदासः योगिप्रत्यक्षादिशब्देन प्रत्यक्षमात्रस्य तन्नियमव्युदासः । आदिशब्देनेश्वरप्रत्यक्षं गृह्यते ॥

### गूढार्थसङ्ग्रहः

यत्तु—परोक्षज्ञानस्थले यत्र विषयोऽध्यस्तः तदेव चैतन्यमनुमित्यादिवृत्त्यवच्छिन्नमतो ज्ञानएवाध्यासइति नयुक्तम्; तावता स्वज्ञानेऽध्यासालाभादिति ; तत्समाहितमेव । नहि प्रत्यक्षस्थलेऽपि ज्ञानत्वेनोपहितेऽध्यासः ; तस्यानाधिष्ठानत्वात्, किंतु ज्ञानत्वोपलक्षिते । तथा च स्वज्ञानाभिन्नएवाध्यास इति नियमो न व्याहतः । यदपि घटादेरज्ञाततया साक्षिभास्यत्वे सदा सर्वस्य सर्वं भायात् । किंचाज्ञातताकालेऽपि घटादिकं योगिना प्रमीयतइति न तदा तस्य भानासिद्धत्वेनासत्त्वमिति साक्षिज्ञानत्वं व्यर्थमिति, तदपि न ; अज्ञाततया सर्वस्याज्ञातभानस्येष्टत्वात् । उक्तंहि विवरणे—' ज्ञाततया अज्ञाततया च सर्वं साक्षिभास्यम् ' इति । नचैवं घटो भाति, अज्ञातघटो भातीत्यादिव्यवहारः स्यादिति वाच्यम् ; यथाह्यज्ञातेऽपि घटादावनुमितत्वादिना भातीति व्यवहारस्तथा अज्ञातत्वेन भातीति व्यवहार इष्टएव । अथानुमितत्वादिना भातीत्यपलप्यते अपलप्यतां तर्हि सः । तथाऽपि यथा तार्किकादिमते मानसज्ञानस्य ज्ञानादौ लौकिकविषयत्वस्य तद्विषये घटादौ तदन्यविषयत्वस्य च स्वीकारः, तथा मन्मतेऽप्यज्ञानज्ञानयोरनावृतस्याज्ञातपरोक्षज्ञानविषयोरावृतस्य साक्षितादात्म्यस्य स्वीकारः । तन्मते तादृशविषयताया इव मन्मते तादृशतादात्म्यस्य कार्यकारणभावादिग्रहप्रयोजकत्वस्य सम्भवः । घटो भातीति व्यवहारस्यतु नापत्तिः ; शुद्धघटस्य तादृशतादात्म्यानङ्गीकारात्, घटं नजानामीत्याकारकानुनुवकालोत्तरं तार्किकादिभिरपि घटज्ञानकार्यमङ्गीक्रियत एव अभावः परं तत्र विषय उच्यते । नच—त्वन्मते घटाज्ञानकालसामान्ये तथानुभवसत्त्वात् घटज्ञानकार्यं स्यात्, तन्मतेतु न तत्सामान्ये स इति न तदापत्तिरिति वाच्यम् ; मन्मतेऽपि सर्वमज्ञानं सर्वदा नावृणोतीति स्वीकारेणाज्ञानसम्बन्धस्य तन्निवर्तकप्रमित्यव्यवहितपूर्वमेव स्वीकारात् । योगिनां कारणत्वादिग्रहादावुपयुज्यतइत्यायोगिनं प्रत्यसत्त्वं ते न दुर्वारम् । किंच योगिनामज्ञातकारणत्वादिग्रहेऽज्ञाताभिव्यक्त्यर्थं प्रवृत्तौ वा साक्ष्येव शरणमिति दिक् ' इति ॥

एवंलघुचन्द्रिकाऽपि ' वृत्तेर्जडत्वेन मिथ्यात्वेनच मोक्षानन्वयित्वात् अप्रकाशमानसुखरूपस्य मोक्षस्यापुरुषार्थत्वाच्च स्वप्रकाशचिद्रूपत्वं मोक्षस्यावश्यकम् । तथाच तस्य नित्यत्वादेकत्वाच्च वृत्त्युपहितः सएव ज्ञानम् । अन्यथा वृत्तेर्ज्ञानत्वे ' तदा

### श्रीभाष्यम्

**अतएवच प्रमाणस्य प्रमेयाविनाभावः। नहि प्रमाणस्य स्वसमकालवर्तिनाऽविनाभावोऽर्थसम्बन्धः अपितु यद्देशकालादिसम्बन्धितया योऽर्थोऽवभासते तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। अतइदमपि निरस्तम् स्मृतिर्नैवाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनादिति।**

**अथोच्यते–नतावत्संवित्प्रागभावः प्रत्यक्षावसेयः अवर्तमानत्वात्। नचप्रमाणान्तरावसेयः लिङ्गाद्यभावात्। नहि संवित्प्रागभावव्याप्तमिहलिङ्गमुपलभ्यते। (नानुपपत्तिरपि कस्यचिद्दृश्यते) नचागमस्तद्विषयोदृष्टचरः। अतस्तत्प्रागभावः प्रमाणाभावादेव न**

### श्रुतप्रकाशिका

प्रमेयसद्भावो नचेत् प्रमाणाप्रमाणज्ञानयोः कथं वैषम्यमित्यत्राह। **अतएवेति**। अतएव ज्ञानमात्रस्य समकालवर्तिग्राहकत्वनियमाभावेन प्रमेयाविनाभावश्च सिद्धइत्यर्थः अन्यथा वर्तमानविषयालाभादसमकालवर्तिग्राहिणां तत्तत्प्रमाणानां प्रमेयाविनाभावो न सिध्येदिति भावः। तत्सिद्धिःकथमित्यपेक्षायां तमेवाविनाभावं विवृणोति। **नहि प्रमाणस्येति**। प्रमाणस्यार्थसम्बन्धइत्यन्वयः तर्हि प्रमेयाविनाभावः क इत्यत्राह। **अपित्विति**। यद्देशकालादीत्यादिशब्देन संस्थानमुच्यते। **मिथ्यात्वप्रत्यनीकता**। मिथ्यात्वस्य प्रमाणं प्रत्यनीकं भवति तस्य भावइत्यर्थः। यद्वा मिथ्यात्वप्रत्यनीकोऽर्थो भवति तस्य भावो मिथ्यात्वप्रत्यनीकता सा प्रमाणस्यार्थसम्बन्धइत्यन्वयः। अतएवेत्यादिभाष्यस्यैवं वाऽर्थः अतएव प्रमाणत्वेन सम्प्रतिपन्नानां कालान्तरवर्तिग्राहकत्वदर्शनात् तत्रापि प्रमेयाविनाभावः कल्प्यतइत्यर्थः। कथं तत्राविनाभावप्रकारइत्यत्राह। **नहीत्यादि**॥

**अनेनैव** प्रमाणप्रमेयाविनाभावरूपविषयविषयिभावशिक्षणेन बौद्धैकदेशिभिरुक्तं स्मृतेर्निर्विषयत्वं निरस्यतइत्यवश्याभ्युपेतव्यमिदमित्यभिप्रायेणाह। **अतइदमपीति**। एवमनुभूतिरेव प्रागभावग्रहणक्षमेत्युपपादितम्। अथ तद्ग्राहिणाऽनुभवेन प्रत्यक्षाद्यन्यतमेन भवितव्यमिति तदसम्भवेन प्रमाणाभावात् प्रागभावाभावइति शङ्कते। **अथोच्येतेति**। लिङ्गाद्यभावादित्यादिशब्देन अनु(पपद्य)मानशब्दौ विवक्षितौ तद्विवृणोति। **नहीत्यादिना**। निगमयति। **अतइति**।

### गूढार्थसंग्रहः

ज्ञात' मिदानीं ज्ञातं घटोज्ञातः पटोज्ञातः इत्यादिप्रत्ययानां अनुगतैकविषयकत्वमानुभाविकमपलप्येत। वृत्तेरपि स्वयंप्रकाशत्वे कल्प्यमाने गौरवञ्चापद्येत। नच चितः स्वयंप्रकाशत्वं तत्तद्देहादौ संशयाद्ययोग्यत्वम्। तदपि देहादावनावृतत्वम्। चितो हि पूर्णानन्दरूपेणावृतत्वेऽपि स्फुरणरूपेणानावृतत्वमेव। अन्यथा अहं स्फुरामि नवा मनः स्फुरति नवेति नस्फुरतीति वा संशयविपर्यासापत्तेः। तथा च वृत्तिज्ञानस्यापि तादृशस्वप्रकाशत्वमस्त्येवेति कथं गौरवम्। तदुक्तं तार्किकादिभिरपि। 'नहि जानन्नेव पुरुषो जानाभि नवेति नजानामीति वा जानातीति'। घटज्ञानवान् पुरुषो घटमहं जानामि नवेति घटं न जानामीति वा नानुभवतीति तदर्थ इति वाच्यम्। स्वान्यभानानपेक्षभातीतिव्यवहारविषयत्वं स्वप्रकाशत्वमिति हि मूल एव जडत्वस्य मिथ्यात्वहेतोर्विवेचने उक्तम्। तथाचोक्तविषयत्वे वृत्तौ स्वीक्रियमाणे गौरवम्। सुखं भाति चित् भातीत्यादौ चित्तादात्म्यस्यैव प्रयोजकतया क्लृप्तत्वेन वृत्तिर्भातीत्यादौ वृत्तितादात्म्यस्य प्रयोजकतया कल्पनीयत्वात्। किं च तार्किकादिमते संशयाद्ययोग्यत्वरूपमनावृतत्वं निश्चयविषयत्वम्, नत्वावरणाविषयत्वम्। तैर्भावरूपस्यावरणस्यास्वीकारात्। तथा च वृत्तेर्घटादिवदुक्तविषयत्वेऽपि न स्वप्रकाशत्वम्। नच तन्मते सर्वस्य ज्ञानस्यानुव्य-

श्रीभाष्यम्

**सेत्स्यतीति । यद्येवं स्वतस्सिद्धत्वविभवं परित्यज्य प्रमाणभावेऽवरूढश्चेत् योग्यानुपलब्ध्यैवाभावस्समर्थित इत्युपशाम्यतु भवान् ॥**

**किंच प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्तस्य न सर्वदा सत्ता मवगमयद्दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते । तदप्रतीतिश्च संवेदनस्य काल**

श्रुतप्रकाशिका

उपमानस्य प्रतिपन्नवस्तुसादृश्य संज्ञासंज्ञिसम्बन्धयोः अन्यतरमात्रगोचरत्वेन अप्रतिपन्नपदार्थप्रतिपादनासामर्थ्यादनुपन्यासः परिहरति । **यदीति** । यदिशब्दः किमर्थः चेच्छब्दो यद्यर्थः, स्वपरिपाटीं विहाय शास्त्रमर्यादायां किमवतीर्णोऽसि तथा चेदित्यर्थः प्रमाणमाह । **योग्यानुपलब्ध्यैवेति** । परेणाभावप्रमाणस्याङ्गीकृतत्वात् योग्यानुपलब्ध्यैवेत्युक्तम् ॥

स्वपक्षपर्यालोचनायामपि ज्ञानस्य योग्यानुलब्धिर्नाम भावरूपावस्थान्तरोपलब्धिः पिण्डत्वाद्युपलब्धिर्यत्रहि घटस्य योग्यानुलब्धिः । अतोऽतीतकालावच्छिन्नज्ञानाभावोनाम ज्ञानस्य संकोचोऽर्थान्तरज्ञानं वा । पूर्वकालीनगजज्ञाने बुभुत्सिते तत्कालीनस्वापादिप्रतिसंधानं घटादिज्ञानप्रतिसंधानं वा गजज्ञानस्य योग्यानुपलब्धिः साच लिङ्गतया पूर्वकालीन ज्ञानाभावनिश्चायिका । यदुक्तं संविदइयमिति विषयीकारानर्हत्वेन अभावो दुर्ग्रहइति तदयुक्तम् । तथासति प्रागभाव निरासानुपपत्तेः । नह्यन्यस्य घटादेः प्रागभावो निरस्यते अपित्वनुभूतेः । तस्मादनुभूतिं इयमिति विषयीकृत्य तस्याः प्रागभावो निराकरणीयः । इयमिति विषयीकाराभावेऽपि तत्प्रागभावो निराकर्तुं शक्यतेचेत् तदभावेऽपि प्रागभावस्साधयितुं शक्यते । यदि त्वया विषयीकृता तद्वदस्माभिरपि विषयीकृतेति तदभावस्सुसाधइत्यनुसन्धेयम् । उत्तरत्र नित्यं चेदिति ग्रन्थेह्ययमर्थोऽ(प्य)भिप्रेतः ॥

एवं प्रागभावस्य योग्यानुपलब्धिसिद्धत्वमभिधाय अर्थापत्तिमाह । **किंचेत्यादिना** । ज्ञानस्य स्वावभासास्थिरत्व लक्षणयोग्यानुपलब्ध्या अनित्यत्वमुक्तम्, अथ विषयप्रकाशनिरूपणमुखेनापि तदुपपाद्यते । अविशेषेणज्ञानाभावस्य ग्रहण मुपपन्नमित्युक्तम् । अथ किं भवता नित्यत्वं सविषयज्ञानस्य सिषाधयिषितं उत निर्विषयस्येति विकल्पमभिप्रेत्य सविषय पक्षं दूषयति । **प्रत्यक्षेत्यादिना** । सर्वदा घटसत्ताकाले सर्वस्मिन्नप्रतीयत इत्यर्थः घटादेः पूर्वोत्तरकालसत्ता नप्रतीयताम् । ततःकिंमित्यत्राह । **तदप्रतीतिश्चेति** । अप्रतीतिः ज्ञानस्य घटव्यवहारानुगुण्याभावः । अतो नसाध्याविशिष्टता ।

गूढार्थसंग्रहः

वसायाभावेन उक्तविषयत्वासम्भवात् । संशयादिविषयत्वे ज्ञानतादात्म्यमेव विरोधित्वेन कल्प्यम् । तथा च तादृशतादात्म्यमेव स्वप्रकाशत्वमिति वाच्यम्, उक्तकल्पनायां गौरवात् । तैर्ह्युक्तविषयत्वं प्रति निश्चितत्वमवश्यं विरोधि वाच्यम् । आविद्यमानस्यापि घटादिज्ञानस्य आत्मनि निश्चये तत्संशयानुत्पत्तेः । तथाच विद्यमानेऽपि घटादिज्ञाने निश्चितत्वस्यैवोक्तविरोधित्वं सम्भवति । अनुव्यवसायस्य सर्वदोत्पत्त्यसम्भवेऽपि चिद्रूपनित्य(त्व)ानुव्यवसायेन निश्चितत्वसम्भवात् । किंच सुखादेरप्युक्तविरोधित्वं त्वया वाच्यम् । तथाच सुखत्वादिसाधारणस्याहमर्थविशेष्यतानिरूपितनिश्चयप्रकारतावच्छेदकत्वस्य धीत्वभीत्वादिनिष्ठ संशयादिप्रकारतावच्छेदकत्वविरोधित्वसम्भवात् सुखादीनामनन्तविरोधित्वकल्पनं नयुक्तम् । तस्मान्न जन्यज्ञानादेः स्वप्रकाशत्वम् । चित्तादात्म्येनैव तस्य भातीत्यादिव्यवहारात् स्वान्यभानेत्यादिलक्षणाभावादिति

### श्रीभाष्यम्

**परिच्छिन्नतया प्रतीतेः। घटादिविषयमेवसंवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्-संवेदनविषयो घटादिरपि कालानवच्छिन्नःप्रतीयेतेति नित्यस्स्यात्। नित्यंचेत्संवेदनं स्वतस्सिद्धं नित्यमित्येव प्रतीयेत। नच तथा प्रतीयते, एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाःप्रतीताश्चेत् स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति तेच सर्वे कालानवच्छिन्ना नित्यास्स्युः। संविदनुरूपस्वरूपत्वाद्विषयाणाम्।**

### श्रुतप्रकाशिका

नियमेन स्वसमकालवर्तिग्राहिणः प्रत्यक्षज्ञानस्य पूर्वोत्तरकालयोर्विद्यमानेऽपि घटे तदप्रकाशकत्वं तदानीं स्वाभावादेवेत्यर्थः एवं विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथाऽनुपपत्त्या ज्ञानानित्यत्वमुक्तम् ॥

अर्थापत्त्यन्तरमप्याह। **घटादिविषयमेवेति**। विषयसमकालवर्तिनः प्रत्यक्षसंवेदनस्य नित्यत्वे घटादिरपि नित्यस्स्यात्। अतो घटाद्यनित्यत्वान्यथानुपपत्त्या ज्ञानानित्यत्वमित्यर्थः। अर्थापत्त्यन्तरमाह। **नित्यंचेदिति**। संविदो नित्यत्वसाधनं संविदियमिति विषयीकृत्यैव कर्तव्यम्। स्वतस्सिद्धत्वेनेयमिति विषयीकारानर्हत्वात् स्वयमेव नित्यमिति प्रतीयेत। नच तथा प्रतीयते तस्मादनित्यमेवेत्यर्थः। एवं नित्यतयाऽनवभासान्यथाऽनुपपत्त्या ज्ञानानित्यत्वमुक्तम्। अनित्यतयाऽनवभासान्नित्यत्वमिति चेन्न। पूर्वापरावधिद्वयसापेक्षस्यानित्यत्वस्य सद्भावेऽप्यवधिद्वया स्वयम्प्रकाशत्वादेवानित्यत्वाप्रकाशत्वोपपत्तेः। यद्वा, घटादिनित्यत्वप्रसङ्गो नित्यत्वेनावभासप्रसङ्गश्च विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथाऽनुपपत्तेरनुग्राहकतर्कतयोक्तौ भवतः। अथानुमानादिविषयाणामपि नित्यत्वमनिष्टं प्रसञ्जयति। **एवमिति**। एवं प्रत्यक्षज्ञाननित्यत्वे विषयनित्यत्वप्रसक्तौ सत्यामित्यर्थः। कुतो नित्यतेत्यत्राह। **संविदनुरूपेति**। यथा संवित्स्वविषयं दर्शयति तथा भावादिति तदर्थः ॥

**ननु** प्रत्यक्षस्य समकालवर्तिविषयत्वनियमात्तन्नित्यत्वे विषयनित्यत्वप्रसङ्गउपपन्नः। अनुमानादिसंविदामतीतानागतविषयत्वसम्भवात् कथं तन्नित्यत्वे विषयनित्यत्वप्रसङ्गः। उच्यते—अतीतत्वानागतत्वेह्यापेक्षिके वर्तेते ततः संविदपेक्षयाहि विषयस्यातीतत्वानागतत्वे संविदोनित्यत्वे तदपेक्षया विषयस्यातीतत्वानागतत्वे संविन्नदर्शयतीति कालानवच्छिन्नतय प्रतीता विषया नित्यास्स्युरिति। कालानवच्छिन्नत्वमेवानुगतं नित्यत्वलक्षणमित्याभिप्रायेण कालानवच्छिन्ना नित्या इत्युक्तम्। ननु न संविदपेक्षया विषयस्यातीतत्वागामित्वे किंतु लिङ्गाद्यर्थान्तरापेक्षया ततो विषयस्य लिङ्गाद्यपेक्षयाऽतीतत्वमागामित्वं च सम्भवतीति न नित्यत्वप्रसङ्गः। उच्यते—लिङ्गादेःप्रत्यक्षज्ञानविषयत्वात्तन्नित्यत्वेन तद्विषयभूतलिङ्गादेरपि नित्यत्वापातात् तदपेक्षयाऽनुमानविषयस्यातीतत्वमागामित्वं च संविन्नदर्शयतीति कालानवच्छिन्नो नित्यएव विषयस्स्यादिति। एवं पूर्वोक्तदोषमुपजीव्यानुमानविषयनित्यत्वप्रसक्तिरित्यभिप्रायेण एवमित्युक्तम् ॥

### गूढार्थसंग्रहः

भावः। अज्ञाननिवर्तकमिति। यद्यप्यज्ञानस्य प्रमातृचिदनुपरागस्य वा निवर्तकत्वं वृत्तावेव, आवरणभङ्गश्च वृत्त्येति मूले पूर्वमुक्तं; तथाऽपि तदुपरक्तचित्यपि तदस्तीति तथोक्तम्। नहि तन्निवृत्तिजनकत्वं तत्, यनोक्ताचित्त्वरूपेण तदुक्तौ गौरवं स्यात्। किंतु तद्विरुद्धस्वभावत्वम्' इति ॥

## श्रीभाष्यम्

**नच निर्विषया काचित्संविदस्ति-अनुपलब्धेः**

## श्रुतप्रकाशिका

एवं पूर्वोक्तविकल्पे सविषयानुभवस्य नित्यत्वं निराकृतम्। अथ निर्विषयानुभवस्य नित्यत्वपक्षं निराकरोति। **नचेति**। कुतइत्यत्राह। **अनुपलब्धेरिति**। निर्वि(यसंविदनुपलब्धि) (या संविदनुपलब्धे(रे)रि)व सविषयसंविदएव

## गूढार्थसंग्रहः

'नाभाव उपलब्धेः' (२.२.२८) इत्यत्र 'विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणो ग्रहणाशङ्कानुत्पादात् अनवस्थाशङ्काऽनुपपत्तेः। साक्षिप्रत्यययोश्च स्वभाववैषम्यात् उपलब्धृपलभ्यभावोपपत्तेः स्वयंसिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात्' इति(शां.) भाष्यम्। अत्र भामती। 'तस्मात् यथा छेत्ता छिदया छेद्यं वृक्षादिव्याप्नोति। ननु छिदा छिदाऽन्तरेण। नापि छिदैव छेत्री, किंतु स्वत एव देवदत्तादिः। यथा वा पक्ता पाकेन पाक्यं व्याप्नोति ननु पाकं पाकान्तरेण। नापि पाक एव पक्ता, किंतु स्वत एव देवदत्तादिः। एवं प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति, ननु प्रमां प्रमान्तरेण। नापि प्रमैव प्रमात्री, किंतु स्वत एव प्रमायाः प्रमाता व्यापकः। नच प्रमातरि कूटस्थचैतन्ये प्रमाऽपेक्षासम्भवः, यतः प्रमातुः प्रमायाः प्रमात्रन्तरापेक्षायामनवस्था भवेत्। तस्मात् सुष्ठूक्तं 'विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणः प्रमातुः कूटस्थनित्यचैतन्यस्य ग्रहणाकाङ्क्षाऽनुत्पादात्' इति। एवं च प्रमेयभेदाविनिर्मुक्तं नित्यचैतन्यं अवश्यमङ्गीकरणीयमित्याशङ्कायामाह **नच निर्विषया काचित् संविदस्तीति**।

घटमहं जानामीति प्रतीतिः विज्ञातृविषयिणी विज्ञानमात्रविषयिणी लोके नानुभवसिद्धा। विज्ञानं विज्ञानान्तरेण नैव गृह्यते। यदा घटादिविषयकं ज्ञानमुदेति तदात्व एव विज्ञानस्य स्वप्रकाशतया स्फुरणम् एवं विज्ञातुरपि। अतः छिदा पाकादिदृष्टान्तेन 'प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति, ननु प्रमां प्रमान्तरेण इत्यादिभामत्युक्तार्थः सिद्धान्तेऽप्यङ्गीक्रियत इति भाष्यएव व्यक्तीभविष्यति। दृष्टान्ते पक्तृत्वं छेत्तृत्वं दार्ष्टान्तिके प्रमातृत्वंच तात्विकं इतरदार्शनिकसम्मतं परमते न घटते। 'साक्षात् द्रष्टरि संज्ञायाम्' इति पाणिनिसूत्रानुसारेण वक्ष्यमाणं साक्षित्वमपि न मुख्यं सम्भवति। पाकछिदाभेदवत् ज्ञानभेदो नाङ्गीक्रियते। अतः परसम्मतकूटस्थनित्यैकचैतन्यस्य नैतया प्राक्रियया सिद्धिस्संभवति॥

यद्यपि 'प्रकाशस्य साक्षात् स्वसंसृष्टप्रकाशकत्वनियमेन चैतन्यस्य परम्परासम्बन्धेन विषयप्रकाशकत्वायोगात्। नहि प्रदीपः परम्परासम्बद्धं प्रकाशयति। अतो विषयाधिष्ठानचैतन्यं अनावृतमेव प्रकाशकम्। अतो वृत्तेः पूर्वमाध्यासिकसम्बन्धे विद्यमानेऽपि दृश्याप्रतीतिरुपपन्ना' (अनुकूलतर्कनिरूपणे) इत्यद्वैतसिद्धिः। अत्र लघुचान्द्रिका—'जीवचिदेव विषयप्रकाश इति पक्षे तस्या जगदुपादानत्वे घटादौ तादात्म्याभावेन वृत्तिद्वारकोक्तसंबन्ध एव विषयभानव्यवहारे कारणं त्वदुक्तमिष्टमेव। नच तर्हि दृग्दृश्ययोः सम्बन्धानुपपत्तिरूपतर्कः मिथ्यात्वसिद्ध्यनुकूलो न स्यात् दृग्दृश्ययोस्तादात्म्यस्यैवानुपपन्नत्वादिति वाच्यम्; उक्तसंबन्धस्याप्यनुपपन्नत्वात्। संसर्गमात्रस्यानुपपन्नत्वं हि वक्ष्यते। तस्या जगदुपादानत्वेतु तादात्म्यरूपसाक्षात्सबन्धसम्भवे उक्तसंबन्धो विषयावभासको नयुक्तः। अतएव मनोऽवच्छिन्नचितो जीवत्वपक्षे जीवस्य जगदुपादानत्वेन विषयतादात्म्याभावेऽपि ब्रह्मण एव जगदुपादानत्वेन विषयतादात्म्यात् विषयप्रकाशकं तादात्म्यमेव, वृत्तिस्तु विषयभासकब्रह्माभेदाभिव्यक्त्यर्थेत्याशयेनाह—प्रकाशस्येति। ज्ञानालोकयोरन्यतरस्येत्यर्थः। साक्षात्स्व-

## गूढार्थसंग्रहः

संसृष्टप्रकाशकत्वेति । स्वकीयसाक्षात्सम्बन्धाश्रये कार्यविशेषप्रयोजकत्वेत्यर्थः । प्रकाशयति स्वप्रयोज्यकार्यविशेषभाजं करोति यथा आलोकः संयोगरूपसाक्षात्सम्बन्धेन घटादौगतः घटःप्रकाशतइतिव्यवहारं तमोनाशंच जनयति तथा चित् तादात्म्येन घटादौ गता घटोभातीत्यादि व्यवहारं प्रवृत्त्यादिकं च । परम्परासम्बन्धेन तज्जनकत्वे गौरवादिति भावः । नन्वनावृत चित्तादात्म्यस्य जनकत्वे वृत्तेरेव तद्युक्तम्, तस्याएवावरणविरोधित्वात् लाघवाच । तत्राह–अतो विषयेति । आवरण भङ्गोऽनावृतत्वम् । क्वचिदिति शेषः तथाच वृत्तेरुक्तजनकत्वे सुखादिस्थले तदभावादनुपपत्तिः । किंच वृत्तिमात्रस्योक्त जनकत्वाभावात् अपरोक्षत्वेन तस्य जनकत्वं वाच्यम् ; तच्चानावृतचित्तादात्म्यवद्विषयकत्वम् । तथाचोक्तचितएवोक्तका रणत्वे लाघवमिति भावः ' इति ॥

गुरुचन्द्रिकाच ' प्रकाशस्य आलोकचैतन्यान्यतरस्य । साक्षात्स्वसंसृष्टप्रकाशत्वेति । स्वकीयसाक्षात्सम्बन्धाश्रये कार्यविशेषप्रयोजकत्वेत्यर्थः । परम्परेति । वृत्तिविशेषद्वारकेत्यर्थः । प्रकाशयति स्वप्रयोज्यकार्यविशेषभाजं करोति । तथाच चैतन्यंसाक्षात्सम्बद्धे कार्यविशेषप्रयोजकं, प्रकाशत्वात्, दीपवत् इत्यनुमानाल्लाघवतर्कसाचिव्यात् चैतन्यस्य विषये साक्षादेव संबन्धः यथाहि दीपः संयोगरूपसाक्षात्सम्बन्धेन घटादौ विद्यमानो दीपेन घटः प्रकाशतइत्यादिव्यवहारे विषयतया प्रयोजकोऽन्धकारनिवृत्त्यादिकार्यं जनयति च, नतु स्वक्रियाजन्यसंयोगादिरूपपरम्परासम्बन्धेन गौरवात् तथा चैतन्यं तादात्म्यरूपसाक्षात्सम्बन्धेन घटो भातीत्यादिव्यवहारे विषयतया प्रयोजकं, प्रवृत्त्यादिकार्यं जनयति च, नतु वृत्तिविशेषद्वारकसम्बन्धेन गौरवादिति भावः । ननु चैतन्यस्य तादात्म्यं वृत्तेः पूर्वमप्यस्तीति तदाऽप्युक्तकार्यापत्तिः । अथ आवरणनाशविशिष्टं तादात्म्यं प्रयोजकं वाच्यम् ; तर्हि वृत्तिरेवावरणनाशस्तद्धेतुर्वेति सैव प्रयोजिकोच्यतां किं तादात्म्येनेत्यतआह–अतो विषयेति । प्रकाशकम् उक्तकार्यप्रयोजकम् । आवरणभङ्गइति । क्वचिद्विषय इत्यादिः । तथा च भातीति व्यवहारप्रवृत्त्यादिकार्येषु वृत्तिमात्रं न प्रयोजकम्, अनुमित्यादेस्तत्त्वासम्भवात् । नापीन्द्रियजन्या वृत्ति रभानापादकावरणनाशादिरूपा तथा ; तस्या अनैन्द्रियकाऽविद्या मनस्सुखादावभावात् । नह्यविद्यादौ संस्काराद्यर्थं स्वीक्रियमाणापि वृत्तिरिन्द्रियजन्या ; चक्षुराद्ययोग्ये साक्षिमात्रभास्यत्वसम्भवेन मनसोऽप्यप्रवृत्तेः, किंत्वविद्यापरिणामरूपा ॥

नच चाक्षुषादिवृत्ताविव तस्यामपि साक्षात्कारत्वमङ्गीकृत्य साक्षात्कारवृत्तिः प्रयोजिकोच्यताम्, अविद्यादौ वृत्त्यनङ्गीकारपक्षे साक्षिण्यपि साक्षात्कारत्वमङ्गीकृत्य तदाश्रय एव तथोच्यतामिति वाच्यम् ; साक्षात्कारत्वजाताविव मानाभावात् । आद्यपक्षे कार्यमात्रवृत्तितादृशजात्यवच्छिन्नेऽनुगतकारणासम्भवात् । नानाकारणकल्पने गौरवात् । द्वितीये पक्षेतु साक्षिणो विषये तादात्म्यं सम्बन्धः, चाक्षुषादिवृत्तेस्तु सम्बन्धान्तरमिति, नैकेन सम्बन्धेन प्रयोजकत्वसम्भवः । नहि भातीत्यनुगतव्यवहारो भानस्यैकत्र तादात्म्येनान्यत्रान्यसम्बन्धेनेति युक्तम् । नवाऽविद्यादौ तस्य तादात्म्यमन्यत्रान्यसम्बन्धः प्रवृत्त्यादिप्रयोजकइत्यापि युक्तम् ॥

अतो लाघवाद्विषयनिष्ठं स्फुरणमेवोक्तकार्ये प्रयोजकम् । विषयतासम्बन्धेन तत्पुरुषीयप्रवृत्त्यादिकंप्रति तादात्म्येन तत्पुरुषीयस्फुरणस्य हेतुत्वसम्भवात् । उक्तस्फुरणं च वृत्तेरावणनाशार्थत्वपक्षे तत्पुरुषीयाज्ञानस्य विषयतावच्छेदकत्वाभाववद्विषयतादात्म्यवच्चैतन्यम् । यदिचैकमेवाज्ञानमिति वृत्त्या न तन्नाशः किंतु तस्य स्वकार्याक्षमत्वं, तदा तत्पुरुषीयवृत्त्यविषयनिष्ठं यदज्ञानविषयतावच्छेदकत्वं तदभाववद्विषयतादात्म्यवच्चैतन्यं तत् । यदि च वृत्तेर्जीवोपरागार्थत्वं जीवाभेदाभिव्यक्त्यर्थत्वं वा, तदा तन्मनोऽवच्छिन्नचिदभिन्नं सत्तन्मनोऽवच्छिन्नजीवोपरक्तविषयतादात्म्यवच्चैतन्यं तन्मनोऽवच्छिन्नजीवस्य स्फुरणम् । उपरक्तत्वं च सुखादिविषये प्रतिबिम्बवत्त्वं, घटादिविषये प्रतिबिम्बवद्वृत्तिविषयत्वम्,

## गूढार्थसङ्ग्रहः

अन्यतरत्वेनाखण्डेन तयोर्निवेशान्नाननुगमगौरवे । परोक्षवृत्तिमात्रेण रूपादेः स्फुरणवारणायाभिन्नामित्यन्तम् । रूपादिमात्रविषयकापरोक्षवृत्त्या रसादिचैतन्यस्यापि तन्मनोऽवच्छिन्नचिदभेदसम्पादनात्तदानीं रसादेरपि स्फुरणं स्यात्, अतोऽन्यदळम्। सर्वत्राभावस्य स्वरूपतो निवेशान्न गौरवम् । उक्तस्फुरणं च भात्यादेरर्थः, तत्प्रयोजकं चैतन्यं साक्षात्कारार्थः तत्पुरुषीयस्यासत्त्वापादकाज्ञानस्य विषयतानवच्छेदकत्वप्रयोजकं चैतन्यं जानात्यर्थः तच्च वृत्त्याद्यवच्छिन्नं चैतन्यम् । उक्तप्रयोज्यरूपं फलमादाय विषयस्य तत्कर्मता बोध्या । विस्तरेणचेदमेतत्प्रकरणसमाप्तिस्थले वक्ष्यतेऽस्माभिः ॥

यदिचैकमेवाज्ञानम् अतस्तस्य न वृत्त्या नाशः, सुखादावप्यविद्यावृत्तिश्च, तदा तत्पुरुषीयवृत्त्यवच्छेदकाविषयतादात्म्यवच्चैतन्यं तत्पुरुषीयस्फुरणम्, तत्पुरुषीयवृत्तिविषयतादात्म्यवच्चैतन्यप्रयोजकं चैतन्यं तत्पुरुषीयज्ञानम्, चक्षुरादिसन्निकर्षजन्यवृत्तेर्विद्यमानसुखादिविषयिकायाअविद्यावृत्तेश्च स्वविषयावच्छिन्नत्वं स्वकारणाधीनम् ; विनिगमकाभावेन विषयतासम्बन्धेनेवावच्छेदकतासम्बन्धेनापि वृत्तेः सन्निकर्षकार्यत्वात्, सुखादिविषयकवृत्तित्वेनेव सुखाद्यवच्छिन्नत्वेनाप्यविद्यावृत्तेः कार्यत्वाच्च । अज्ञानविषयतावच्छेदकत्वाभावोऽज्ञानविषयतातदवच्छेदकत्वान्यतराभावोवा निवेश्यः, तेन वृत्त्यभावकाले ब्रह्मणि जानामीति न व्यवहारः । शुद्धचिदवच्छिन्नवृत्तित्वेनापि शाब्दवृत्तेः कार्यत्वस्य विनिगमनाविरहेण स्वीकाराच्चरममते ब्रह्म भातीत्यादिव्यवहारः । संशयरूपाविद्यावृत्तिविषये भातीति व्यवहाराभावेन निश्चयवृत्तिनिवेशावश्यकत्वात् भ्रमत्वेन गृह्यमाणवृत्तेश्चानिश्चयत्वान्निदिध्यासनात्पूर्वं ब्रह्म मे भातीत्यस्य नापत्तिः । एवं च भातीत्यादिव्यवहारसामान्येऽनुगतविषयकत्वोपपत्तिः, भानज्ञानस्वरूपस्यैकत्वात् । वृत्तिभानत्वादिस्वीकारे तु सा न, नह्येकविषयकत्वे सम्भवति एकजातीयकत्वमुचितम् । 'यत्साक्षादपरोक्षाद्ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'अयमात्मा ब्रह्म सर्वानुभूः' इत्यादिश्रुतिश्चोपपद्यते । शाखा चलतीत्यादाविव शाखाऽस्ति भातीत्यादावपि चैतन्यरूपयोस्सत्ताभानयोस्तादात्म्यमाख्यातार्थः । वृत्तिविषयत्वस्य तत्वकल्पने तु गौरवमिति भावः' इति ॥

तथाऽपि प्रकाशस्य साक्षात्स्वसंसृष्टप्रकाशकत्वनियमेन वृत्तिविशेषद्वारकपरम्परासम्बन्धेन चैतन्यस्य प्रकाशकत्वं नास्तीत्युक्तिः कथं घटते ? प्रकाशस्येत्यस्य आलोकचैतन्यान्यतरस्येत्यर्थः चन्द्रिकाद्वयेऽप्युक्तः । 'नहि प्रदीपः परम्परासंबद्धं प्रकाशयति' इति सिद्धिवाक्यम् । नहि प्रदीपः प्रभात्वेन आलोकत्वेन व्यवह्रियते, किंतु प्रदीपस्य प्रभा प्रदीपस्यालोकइत्येव व्यवहारः । दीपस्यालोकद्वारैव प्रकाशकत्वमेतेन सिध्यति । 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमंरविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥' (गी.१३.३४) इत्यत्र सूर्यस्य प्रकाशकत्वं प्रभाद्वारैव विवक्षितम् । एवं च परम्परासंबद्धस्य प्रकाशकत्वं सिद्धम् । 'प्रमाता प्रमया प्रमेयं नीलादि व्याप्नोति' इति भामत्यामपि प्रमाद्वारक एव प्रमातुस्संबन्धः स्फुटमुक्तः ॥

प्रतिकर्मव्यवस्थायां च 'प्रकाशकं तावत् अधिष्ठानचैतन्यम् । तच्चाध्यासेन विषयैस्सह साक्षात्संबद्धम् । प्रकाशस्य च स्वयं भासमानस्य स्वसंबद्धसर्वभासकत्वमपि क्लृप्तमेव एतदनभ्युपगमे कल्पनान्तरगौरवापत्तेः । तच्चानभिव्यक्तं निर्विकल्पकरूपम् आच्छादितदीपवन्नप्रकाशकमिति तदभिव्यक्तिरपेक्षिता । तच्च परोक्षस्थले वृत्त्यवच्छेदेनैव अभिव्यज्यते । अपरोक्षस्थले तु वृत्तिसंपर्कादावरणाज्ञानाभिभवे विषयोऽभिव्यज्यते ।' इत्युक्तम् ॥

अत्र गुरुचन्द्रिका । 'प्रकाशस्येति । भातीति व्यवहारविरोधिनाशकस्येत्यर्थः । तत्त्वं च तमोनाशकत्वादालोकस्येवाज्ञानाभिभावकवृत्त्यवच्छिन्नत्वाचितोऽपीति भावः । स्वयंभासमानस्य उक्तविरोधिशून्यस्य एवकारः शेषः । कल्पनान्तरेति । प्रयुक्तेति शेषः भातीति व्यवहारे विषयसंश्लिष्टवृत्तिप्रतिबिम्बितचितः प्रयोजकत्वे घटादौ तत्सम्भवति नतु सुखा-

## गूढार्थसंग्रहः

दावित्यनावृतचितोऽपि तद्वाच्यमिति कल्पनान्तराद्गौरवम् । अथचावृतप्रकाशकस्य भासकत्वे अपूर्वकल्पनाद्गौरवमिति भावः ' इति । अत्र आलोकस्य तमोनाशकत्वं प्रकाशकत्वं चैकदैव यथा तद्वच्चैतन्यस्य प्रकाशकत्वमपि आवरणाभिभवकालएवेति स्फुटम् । आवरणाभिभवश्च वृत्तिमन्तरा न घटते । एवं च वृत्तिदशायामेव विषयप्रकाशकत्वमवश्यमङ्गीकरणीयम् । तथाऽङ्गीकारे घटादिविषयकवृत्तिविरहदशायां अज्ञातघटो भातीति व्यवहारो नघटते । अतः वृत्तिसत्त्वेन वृत्तिद्वारकसम्बन्धवतः चैतन्यस्यैव प्रकाशकत्वाङ्गीकारे नित्यस्वप्रकाशचैतन्यस्य वृत्त्युदयात्प्राक् साक्षात्सम्बद्धस्यैकस्यैव प्रकाशकत्वोक्तिः (अ.त.नि) कथं घटते ? एवंच अज्ञातघटो भातीति व्यवहारान्यथाऽनुपपत्त्या नित्यस्वप्रकाशचैतन्यस्य परसम्मतस्य सिद्धिर्नसम्भवति । घटादिविषयकवृत्तिविरहदशायां तादृशव्यवहारस्य कस्यापि दार्शनिकस्यासंमतत्वेन विप्रतिपन्नतया तेन परैः स्वसिद्धान्तस्थापनस्यासम्भवात् । स्वानुभवसिद्धत्वोक्तौ ' यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठस्समयः सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः ' इति पूर्वश्रीभाष्यसूक्त्यैव तदुक्तिस्समाहिता । यदा च घटः प्रकाशत इति व्यवहारः तदा घटमहं जानामीति व्यवहारोऽपि सम्प्रतिपन्नइति पूर्वमेवावेदितम् । घटमहं जानामीति व्यवहारश्च वृत्ति विरहदशायां न सम्भवतीति वृत्तिदशायामेवाङ्गीकरणीयः । एवमङ्गीकारएव घटविषयकवृत्तिदशायां पूर्वकालिकघटविषयकज्ञानाभावबोधतात्पर्येण अज्ञातो घट इति व्यवहारः सर्वदार्शनिकसम्मतः परैरप्यभ्युपगन्तव्यः । अतः निर्विषया निराश्रया संवित् नसिध्यति ॥

एतेन दृश्यत्वहेतूपपत्तौ ' यद्वा स्वव्यवहारे स्वातिरिक्तसंविदपेक्षा नियतिरूपं दृश्यत्वं हेतुः, संविच्छब्देन विषयाभिव्यक्तं (विषयावच्छेदेन भग्नावरणं, विषयगतवृत्तिप्रतिबिम्बितंवा) वा वृत्त्यभिव्यक्तं (मनोऽवच्छेदेन भग्नावरणं वृत्तिप्रतिबिम्बितंवा ) वा (शुद्धं वा) चैतन्यमात्रमभिप्रेतम् । तथाच घटादौ, नित्यातीन्द्रिये, साक्षिभास्ये च, सर्वोऽपि व्यवहारः स्वातिरिक्तसंवित्सापेक्ष इति नासिद्धिः । व्यवहारश्च स्फुरणाभिवदनादिसाधारणः । तत्र ब्रह्मणः स्फुरणरूपे व्यवहारे नित्य सिद्धे स्वातिरिक्तसंविदपेक्षा नास्तीति नियतिपदेन व्यभिचारवारणम् । ' इति अद्वैतसिद्धिविवरणे(ल.चं) अभिवदनादीति आदिपदादिच्छाप्रवृत्त्यादिसंग्रहः । ननु घटादेरिव ब्रह्मणोऽपि इच्छादावसत्त्वापादकाज्ञानशून्यचितो हेतुत्वात् तादृशचितश्च ब्रह्मातिरिक्तत्वात् ब्रह्मणि व्यभिचारः तत्राह–तत्रेत्यादि स्फुरणरूपे असत्त्वापादकाज्ञानाविषयत्वप्रयोजकाविशिष्टचिद्रूपे नित्य सिद्धे अनादौ । पूर्णानन्दांशे उक्ताज्ञाननिवृत्तेः तदाकारवृत्त्यधीनत्वेन तदंशे एवस्फुरणं सादि नतु चिदंशे । वृत्तिंविना ऽपि चिदस्तीति सर्वदा व्यवहारात् । शुद्धचितो अज्ञानाविषयत्वे नित्यसिद्धे वृत्तेरप्रयोजकत्वेऽपि अज्ञानाविषयत्वाविशिष्टचितएव तत्र क्षेमसाधारणप्रयोजकत्वात् शुद्धचितः तद्विशिष्टत्वेन स्फुरणमिति भावः । ' इत्युक्तिरपि निरवकाशा ॥

अत्र व्यवहारः शब्दप्रयोगरूपो न सम्भवति । तस्य वृत्तिं विना कस्यापि दार्शनिकस्यासम्प्रतिपत्तेः । असत्त्वापादकाज्ञानविषयत्वप्रयोजकाविशिष्टचिद्रूपस्य शब्दप्रयोगप्रवृत्त्याद्यतिरिक्तस्य व्यवहारपदेन निर्देशः लोके क्वापि नास्ति । ' घटादेरसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपं स्फुरणं शुद्धचिद्रूपसंविदपेक्षं शुद्धचिज्जन्यमनोवृत्त्या उक्ताज्ञाननिवृत्तेः । विशिष्टचितः शुद्धचिति कल्पितत्वेन शुद्धचिदाश्रितत्वाच्च ' इति तत्रैव पूर्वं, ' स्वातिरिक्ता संविदिति । उक्तस्फुरणस्य शुद्धचिदपेक्षत्वेऽपि सा न ब्रह्मातिरिक्ता । उक्तस्फुरणेन क्षेमसाधारणजनकत्वेन ब्रह्मातिरिक्ताविद्यायाः अपेक्षणीयत्वेऽपि सा न संवित् ' इति उत्तरत्र च शुद्धचित्सापेक्षत्वं विशिष्टचित उक्तम् । अत्र असत्त्वापादकाज्ञानाविषयत्वे शुद्ध चिन्निष्ठे वृत्तेः प्रयोजकत्वं नास्ति । घटगते तत्रतु वृत्तेः प्रयोजकत्वम् । ब्रह्मणः स्फुरणे घटस्य स्फुरणे च असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपे शुद्धचित्सापेक्षत्वं वर्तते । ब्रह्मस्फुरणे शुद्धचित्सापेक्षत्वेऽपि सा न ब्रह्मातिरिक्ता, घटादिस्फुरणे तु ब्रह्मातिरिक्ता, इत्युक्तिः कथं घटते ? घटस्य विशिष्टचितश्चोभयोः शुद्धचिति कल्पितत्वे एकत्र भेदः

## गूढार्थसंग्रहः

अन्यत्राभेद इत्युक्तिः कथम् ? घटस्याधिष्ठानाधिष्ठेयभावेन शुद्धचित्तादात्म्यं विशिष्टचितश्शुद्धचितश्च विशिष्टकेवलभावेन उपहितकेवलभावेन च तादात्म्यमिति वैषम्यं त्वप्रयोजकमेव । तादात्म्यस्य भेदमन्तराऽसम्भवेन उभयत्राप्यविशेषात् । अत एव ब्रह्मस्वप्रकाशत्वलक्षणोपपत्तौ 'स्वव्यवहारेस्वातिरिक्तसंविदनपेक्षत्वं स्वावच्छिन्नसंविदनपेक्षत्वं वा स्वप्रकाशत्वम्' इत्यद्वैतसिद्धिविवरणे लघुचन्द्रिकायां 'ननु स्वातिरिक्तसंविदपेक्षत्वं चित्यपि वर्तते । व्यवहारमात्रेऽसत्वापादकाज्ञानाभावव्याक्तित्वेन हेतुत्वात् । तदुपहितस्य चिद्रूपत्वेऽपि शुद्धचिदन्यत्वात्, अत आह—स्वावच्छिन्नेति' इत्युक्तिस्सङ्गच्छते ॥

एवं घटादिगतासत्त्वापादकाज्ञानविषयत्वइव शुद्धचिद्गताज्ञानाविषयत्वे वृत्तेः प्रयोजकत्वमनङ्गीकृत्य अज्ञानाविषयत्वाविशिष्टचितः प्रयोजकत्वोक्तिः न घटेत । विशिष्टे विशेषणसम्बन्धस्य लोके प्रयोजकत्वाङ्गीकारेऽपि विशेषणसम्बन्धे विशिष्टस्य प्रयोजकत्वं न केनापि दार्शनिकेनाङ्गीक्रियते । विशिष्टे प्रयोजके विशेषणसम्बन्धे विशिष्टस्य प्रयोजकत्वाङ्गीकारेऽन्योन्याश्रयापत्तेश्च । अत्र प्रयोज्यप्रयोजकभावः पारिभाषिक इति विह्वलेशकल्पनमप्यनुपादेयम् । कस्याप्यसम्मतप्रयोज्यप्रयोजकभावकल्पनाऽपेक्षया वृत्तेः प्रयोजकत्वकल्पनस्यैव युक्तत्वात् । प्रकाशते स्फुरति भातीति लोके पर्यायशब्दः प्रयुज्यते । एवं सति स्फुरणमसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपमित्युक्तिः कथम् ? स्फुरणस्याभानापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपताया एव युक्तत्वात् । स्फुरति भातीत्यादिशब्दप्रयोगस्य प्रत्यक्षवृत्तिमन्तरा कस्याप्यसंप्रतिपन्नत्वेन घटादेरिव ब्रह्मणोऽपि स्फुरणं प्रत्यक्षवृत्तिसापेक्षमेवेत्यवश्यमेषितव्यम् ॥

अतएव गुरुचन्द्रिकायां 'स्फुरणमसत्त्वापादकाज्ञानविरोधिचैतन्यम् । नित्यसिद्ध इति नित्यसिद्धब्रह्माश्रित इत्यर्थः । इदं च नास्तीत्यत्र हेतुगर्भं विशेषणम् । अत्रोक्तविशिष्टस्फुरणस्य स्वातिरिक्तवृत्तिसापेक्षत्वात् संवित्पदेन पूर्वं चैतन्यमुक्तम् ।' इति ब्रह्मणः स्फुरणेऽपि वृत्तिसापेक्षत्वमङ्गीकृत्य व्याख्यानं सङ्गच्छते । तदनन्तरं गुरुचन्द्रिकायां—'अथ वा नित्यसिद्धे ब्रह्मस्वरूपे । तथा च घटादिस्फुरणस्योक्तविरोधिचिद्रूपत्वेऽपि शुद्धचिद्रूपब्रह्मणः स्फुरणं शुद्धचिदेव आवृताया अप्यस्याः चिन्मात्रमस्तीत्यभिलापादिदर्शनादिति भावः' इति योजनान्तरन्त्वनुपादेयम् । वृत्तिविरहदशायां चिन्मात्रमस्तीत्याभिलापस्य शब्दप्रयोगरूपस्य कस्यापि दार्शनिकस्यासम्मतत्वात् ॥

यद्यपि गुरुचन्द्रिकायम् (प्र.क.व्य.उपपत्तौ) 'नन्वभिव्यक्तचितः प्रकाशकत्वे घटादेरज्ञातत्वेन साक्षिभास्यता न स्यात्तत्राह—तच्चेति । प्रकाशकश्चैतन्यंचेत्यर्थः, निर्विकल्पकरूपमिति । तार्किकादिसिद्धनिर्विकल्पकतुल्यमित्यर्थः । तुल्यता च जानामि' इति व्यवहाराविषयत्वेन । आच्छादितेति । यथा सूक्ष्मवस्त्राच्छादितो दीपःअन्धतमसविरोध्यपि अवतमसाविरोधित्वात् द्रव्यत्वादिरूपेण व्यवहारस्य प्रयोजकः नतु रूपपरिमाणविशेषवत्त्वेन व्यवहारस्य तथा चैतन्यमावृतमज्ञातत्वेन व्यवहारं प्रयोजयति । न ज्ञातत्वेनेति भावः ।' इति 'तच्चानभिव्यक्तं निर्विकल्पकरूपं आच्छादितदीपवत्प्रकाशकमिति तदभिव्यक्तिरपेक्षिता' (अ.सि) इति मूलं व्याख्यातम् ॥

तथाऽपि सूक्ष्मवस्त्राच्छादितदीपस्थले तमस्सम्बन्धित्वेन घटादेर्द्रव्यत्वेन व्यवहारः, तमस्सम्बन्धमन्तरा द्रव्यं घट इत्यपि व्यवहारः सम्प्रतिपन्नः, तत्र घटचक्षुस्संयोगस्य सत्त्वेन घटस्य प्रत्यक्षसम्भवात् । दार्ष्टान्तिकेतु अज्ञानेन घटावच्छिन्नचिति कस्यांशस्य आवरणं कस्यांशस्यानावरणमिति विवेचनीयम् । चिति भेदाभावेन घटरूपावच्छेदकभेदनिबन्धनएव अंशभेदः विवक्षितोवा, आहोस्वित् आवृतत्वानावृतत्वरूपधर्मभेदनिबन्धनः अंशभेदः आवृतत्वानावृतत्वनिबन्धनांशभेदोऽपि घटरूपावच्छेदकभेदनिबन्धनएव पर्यवस्यति । शुद्धचिति तथा कल्पनासम्भवात् । घटस्याज्ञानावच्छेदकत्वं यदा तदा सूक्ष्मवस्त्राच्छादितदीपवत् अज्ञानावच्छेदकत्वं तस्य प्रकाशयतीति वाच्यम् । सूक्ष्मवस्त्राच्छादितदीपस्थले दीपस्याभिव्यक्तिः

## गूढार्थसङ्ग्रहः

वर्तते । तत्स्थाने चैतन्यस्यापि यया कयाचन वृत्त्या अभिव्यक्तिरपेक्षिता । अभिव्यक्तेरभावे दृष्टान्तदार्ष्टान्तिकभावो न घटते । अविद्यावृत्तिमङ्गीकृत्य तस्याः ज्ञानत्वं नास्तीति गुरुचन्द्रिकोक्तिरप्यनादरणीया । तमश्छन्नैन्द्रियकवस्तुनः केन चित् रूपेण सूक्ष्मवस्त्राच्छादितदीपस्य भासकत्वं प्रदीपतद्वस्तुनोः चक्षुस्संयोगदशायामेव । अतः अविद्यावृत्त्यङ्गीकारेण अज्ञातत्वेन घटभासकत्वं न दृष्टान्तानुगुण्येन युज्यते । अज्ञातेऽपि घटादौ अनुमितत्वादिना भातीतिव्यवहारः न कस्यापि सम्मतः । अनुमित्यनन्तरं घटो भातीतिव्यवहारः न भवतामपि सम्मतः । प्रत्यक्ष एव भातीतिव्यवहारस्य भवद्भिरङ्गीकारात् । भवद्भिः भावरूपाज्ञानं विवरणादिमतरीत्या अङ्गीक्रियते । अन्यैः कैश्चिदपि तन्नाङ्गीक्रियते । ज्ञानाभावादिरूपत्वमेव अज्ञानस्य सर्वैरङ्गीक्रियेत । ज्ञानस्यैवाभाव ज्ञानाभावपुरस्कारेण घटादेः प्रतीतिः न कस्यापि सम्मता । किंतु घटादिप्रत्यक्षदशायां पूर्वकालिकज्ञानाविषयत्वतात्पर्येणैव तथा व्यवहारः । पूर्वकालिकज्ञानाविषयत्वं तु अनुमित्या निश्चेयमिति वृत्तिविरहदशायां अज्ञातत्वेन भातीतिव्यवहारः न कस्यापि सम्मत इत्यत्र न कापि विप्रतिपत्तिः । तार्किकादिमते मानसज्ञानस्य ज्ञानादौ लौकिकविषयत्वं तद्विषये घटादौ तदन्यविषयत्वं चाङ्गीक्रियते । तावता भवन्मते अज्ञानज्ञानयोः अनावृतस्य अज्ञातपरोक्षज्ञानविषययोरावृतस्य साक्षितादात्म्यस्य स्वीकारेण घटस्य अज्ञानावरणदशायां अज्ञातघटो भातीति व्यवहारोपपादनं तु (गु.चं) नघटते । घटमहं जानामीति प्रतीतिः सर्वसम्मता । एतदुपपादनं च यया कयाचनविधया सर्वैरपि कार्यम् । तत्र च ज्ञानस्य मनस्संयुक्तसमवायेन भानाङ्गीकारेण तदंशे लौकिकविषयता । तदन्य घटांशे अलौकिकविषयता तार्किकादिभिरङ्गीक्रियते । वृत्तिविरहदशायामज्ञातघटो भातीति व्यवहारः न कस्यापि सम्मत इति गुरुचन्द्रिकायामुपपादनं न घटते । आदित्यप्रदीपदृष्टान्तश्च भवन्मते नानुगुणः । सिद्धान्ते तु अत्यन्तानुगुणः । आदित्यदीपयोरपि स्वसजातीयानपेक्षप्रकाशता तद्वदेव प्रभाया अपि दीपस्थानापन्नस्य अहमर्थस्य ज्ञानरूपस्य जीवस्य प्रभास्थानापन्नस्य धर्मभूतज्ञानस्य च उभयोः स्वप्रकाशत्वं दृष्टान्तानुगुणं अनुभवसिद्धं च । प्रभायाः चक्षुस्संयोगादिना यदा भानं तदैव विषयप्रकाशकता तद्वद्धर्मभूतज्ञानस्यापि स्वप्रकाशतया स्वभानदशायामेव विषयप्रकाशकत्वं विषयेन्द्रियसम्बन्धकाले । प्रभावच्चैतन्यस्य विषयप्रकाशकत्ववादिभिः भवद्भिः प्रभावदेव वृत्त्यभिव्यक्तचैतन्यस्यैव विषयप्रकाशकत्वमकामेनापि स्वीकार्यम् । अतः सूक्ष्मवस्त्राच्छादितदीपस्य यथा कस्मिंश्चिदंशे अभिव्यक्तस्य प्रकाशकत्वं तथा चैतन्यस्यापि कस्मिंश्चिदंशे अभिव्यक्तस्यैव प्रकाशकत्वमित्यवश्यमास्थेयम् ॥

एतेन अज्ञानविषयनिरूपणे 'ज्ञानाज्ञानयोः विषयावच्छिन्नयोरिव भानात् । एतेन अन्धकारावृतवत् ज्ञानाभावावच्छेदकविषयवच्च अज्ञानावृतस्याप्यप्रकाशेन साक्षिवेद्यत्वायोग इति निरस्तम् । विषयावच्छेदेनानुभवविरोधात्' (अ.सि.) इत्युक्तिरप्यनुपादेया । वृत्तिविरहदशायामज्ञातो घट इत्यनुभवस्य कस्याप्यसंप्रतिपत्त्या दृष्टान्तानुगुण्यविरहाच्च तथा अनुभवेन विप्रतिपन्नेन स्वसिद्धान्तसाधनासम्भवात् । दृष्टिसृष्ट्युपपत्तौ घटादेर्ज्ञातैकसत्त्वाङ्गीकारेण अज्ञातसत्त्वस्याभावेन अज्ञातो घट इति व्यवहारस्य मुख्यवेदान्तपक्षेऽसंभवस्य अद्वैतसिद्धावेवाङ्गीकारात् प्रतिकर्मव्यवस्थादेः मन्दाधिकारिविषयत्वस्य, कार्यकारणभावस्य स्वाप्नकार्यकारणभावतुल्यतायाश्च तत्रैवोपपादनात् । सृष्टिदृष्टिपक्षे व्यावहारिकसत्त्वाङ्गीकारे सर्वसम्मतव्यवहारानुरोधेनैव विषयसाधनस्यावश्यकत्वेन अज्ञातो घट इति व्यवहारेण विप्रतिपन्नेन निर्विशेषचित्साधनासम्भवात् ॥

अनुकूलतर्कनिरूपणे वृत्त्यतिरिक्तचैतन्यानभ्युपगमे यो दोष उक्तः सः प्रमाणप्रमेयभावस्य सांवृतत्ववादिबौद्धोक्तन्यायसूत्रद्वितीयाध्यायप्रथमाह्निकोपन्यस्तदोषतुल्यः । समाधानमपि तत्रोक्तमेवात्रापि योजनीयम् । तत्रहि 'प्रत्यक्षादीना

## गूढार्थसंग्रहः

मप्रामाण्यं त्रैकाल्यासिद्धेः (गौ.सू.२.१.८) पूर्वंहि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः, (२.१.९) पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयासिद्धिः, (२.१.१०) युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम्' (२.१.११) इति पूर्वपक्षसूत्राणि । अत्र न्यायवार्तिकतात्पर्यटीका । 'ज्ञानं हि प्रमाणं तद्योगात् प्रमेयमितिचार्थः इति च भवति । तद्यदि प्रमाणं पूर्वं प्रमेयादर्थादुत्पद्यते ततः प्रमाणात्पूर्वं नासावर्थ इति इन्द्रियार्थेति सूत्रव्याघातः । अथ पूर्वं प्रमेयं पश्चात्प्रमाणं तत्राह–पश्चादिति । यद्यपि स्वरूपं न प्रमाणाधीनं तथाऽपि तस्य प्रमेयत्वं तदधीनम् । तदपिचेत् प्रमाणात्पूर्वं नप्रमाणयोगनिबन्धनं स्यादित्यर्थः । यौगपद्ये दृष्टव्याघातः सूत्रव्याघातश्च प्रयोगस्तु प्रत्यक्षादयो न प्रमाणत्वेन व्यवहर्तव्याः कालत्रयेऽप्यर्थाप्रतिपादकत्वात् यदेवं न तत्प्रमाणत्वेन व्यवह्रियते यथा शशविषाणं तथा चैतत् तस्मात्तथेति' इति ॥

"त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः" (२.१,१५) इति सिद्धान्तसूत्रम् । अत्र भाष्यम् । 'आनियमदर्शीखल्वयमृषिः नियमेन प्रतिषेधं प्रत्याचष्टे । त्रैकाल्यस्यचायुक्तः प्रतिषेध इति । तत्रैकां विधामुदाहरति । शब्दादातोद्यसिद्धिवदिति । यथा पश्चात्सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते, साध्यंचातोद्यं साधनं च शब्दः अन्तर्हितेह्यातोद्ये स्वनतोऽनुमानं भवतीति । निदर्शनार्थत्वंच अस्य शेषयोर्विधयोः' इति । विधात्रयंच पूर्वं भाष्ये उक्तम् । 'उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमात् यथादर्शनं विभागवचनम् । क्वचिदुपलब्धिहेतुः पूर्वं पश्चादुपलब्धिविषयः यथा आदित्यस्य प्रकाशः उत्पद्यमानानां क्वचित्पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः यथाऽवस्थितानां प्रदीपः । क्वचिदुपलब्धिहेतुः उपलब्धिविषयश्च सह सम्भवतः, यथा धूमेनाग्नेर्ग्रहणमिति । उपलब्धिहेतुश्च प्रमाणम् । प्रमेयंतु उपलब्धिविषयः । एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथार्थो दृश्यते तथा विभज्य वचनीय इति । प्रमाणमित्येतस्याः समाख्यायाः उपलब्धिहेतुत्वं निमित्तम् । तस्य त्रैकाल्ययोगः उपलब्धिमकार्षीत् उपलब्धिं करोति उपलब्धिं करिष्यतीति । समाख्या हेतोः त्रैकाल्ययोगात् समाख्या तथाभूता । प्रमितोऽनेनार्थः प्रमीयते प्रमास्यते इति प्रमाणं प्रमितं प्रमीयते प्रमास्यत इति च प्रमेयम्' इति ॥

अत्र यथावस्थितानां प्रदीपः इत्यत्र अवस्थितिः एतत्प्रकरणएव 'प्रमेयता च तुलाप्रामाण्यवत्' (सू.१६) इत्यत्र न्यायवार्तिके 'पूर्वापरप्रत्ययैकविषयता वा स्थितिः । यद्वस्तु प्राक्सिद्धं पुनर्निमित्तान्तरसन्निधाने सति उपलभ्यते (यत्) तस्यानेकायुगपत्कालप्रत्ययविषयत्वं सा स्थितिः । तस्यां स्थितावस्य यत्सहकारिसाधनं चक्षुरादि तत्करणमिति । चक्रभ्रान्तिप्रदीपप्रत्ययवत् मिथ्याप्रत्ययः स इति चेत् न प्रमाणाभावात् । अथ मन्यसे नैवेकं किंचित् वस्त्वयुगपत्कालानेकप्रत्ययविषयो भवति ? यदि न भवति कथं तर्हि स एवायं वृक्षस्तिष्ठति इति प्रत्ययः इत्यत्रोक्ता । तत्र प्रमाणं च— 'अथ भवतः कालान्तरावस्थाने किं प्रमाणम्—उक्तं प्रमाणम् रूपरसस्पर्शप्रत्ययानाम् एकानेकप्रत्ययनिमित्तत्वं प्रतिसन्धानादिति' इत्यत्र प्रदर्शितम् । 'प्रमेयताचे' ति सूत्रस्य भाष्यंचेत्थम् । 'गुरुत्वपरिणामज्ञानसाधनं तुलाप्रमाणम् । ज्ञानविषयो गुरुद्रव्यं सुवर्णादिप्रमेयम् । यदातु सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणम्' इति ॥

अर्थः अभिज्ञाप्रत्यक्षप्रमां प्रति साधनम् । अभिज्ञाप्रत्यक्षप्रमां प्रति साधनीभूतोऽर्थः प्रमितिविषयश्च, इति प्रमितिविषयत्वप्रमासाधनत्वयोरविरोधः एतत्सूत्रभाष्यादौ विस्तरेण प्रपञ्चितः ॥ प्रदीपदृष्टान्तश्च 'न प्रदीपप्रकाशवत्तत्सिद्धेः' (२.१.१९) इति सूत्रएवोक्तः । अत्र भाष्यम्—'यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वात् दृश्यदर्शने प्रमाणम् । सच

## गूढार्थसंग्रहः

प्रत्यक्षान्तरेण चक्षुषस्सन्निकर्षेण गृह्यते । प्रदीपभावाभावयोः दर्शनस्य तथाभावात् दर्शनहेतुरनुमीयते । तमसि प्रदीपमुपादधीथाः इति आप्तोपदेशेनाऽपि प्रतिपद्यते ' इति ॥

अत्र भाष्यादौ भूतस्य भाविनो वर्तमानस्यापि हेतुत्वम् अर्थस्य प्रतिसन्धानेनानेका युगपत्कालस्थितिः, प्रदीपस्य प्रत्यक्षविषयस्यैव विषयप्रकाशकत्वम्, अनुमानेन शब्देन च कार्यकारणभावग्रहः इत्यादिकं सम्यङ्निरूप्य सांवृत प्रमाणप्रमेयाभाववादिमतं दूषितम् । ' अनुस्मृतेश्च (ब्र.सू.२.२) सएव तु कर्मानुस्मृतिशब्दविधिभ्यः ' (३.२) इत्यादौ व्यासेन प्रतिन्धानेनैव पूर्वापरकालस्थायित्वमेकस्य साधितम् । अनित्यपदार्थस्य यः निर्माता सः पदार्थं तदा पश्यत्येव । ततः बहुषु कालेषु प्रतिसन्धत्ते इति अयमर्थः सर्वेषामपि अविप्रतिपन्नः । अत्र प्रथमतः प्रत्यक्षसमये वस्तूत्पत्तेः पूर्वमज्ञातं तद्वस्तु इति प्रतीत्या तस्य सत्तां निश्चित्य अन्वयव्यतिरेकेण कार्यकारणभावग्रहः इति कथं ? परैः वक्तुं शक्यते । पदार्थनिर्मातृव्यातिरिक्तानां केषांचित् उत्पत्त्यनन्तरं कालविलम्बेन तत्प्रत्यक्षे तस्य कारणत्वग्रहः परोक्तरीत्या उपपादयितुं शक्यः, न सर्वत्र एवं स्थिते प्रागुक्तस्थले या रीतिः सैव सर्वत्राश्रीयताम् । त्यज्यतां च विप्रतिपन्नव्यवहारमवलम्ब्य स्वाभिप्रेतार्थसाधनाभिनिवेशः । स्वप्रकाशमनभ्युपगच्छन्तः माध्यमिकाअपि परोक्तरीतिं नाभ्युपगच्छन्ति । किं पुनर्वैदिका दार्शनिकाः । अतः न्यायसूत्रभाष्याद्युक्तसांवृतप्रमाणप्रमेयभावदूषणप्रकारः स्वप्रकाशाभ्युपगन्तृ परमतेऽपि समः । प्रदीपवत् स्वप्राशमङ्गीकृत्य प्रदीपस्य प्रत्यक्षविषयतादशायामेव विषयभासकत्वं यथा, तथा स्वप्रकाशस्य चैतन्यस्य विषयभासकत्वप्रक्रियां परित्यज्य घटाद्याकारवृत्तिविरहदशायां चैतन्यस्य विषयप्रकाशकत्वमभ्युपेत्य कस्याप्यसम्मतस्याज्ञातो घटइति व्यवहारस्यसाधनम् एतदवलम्बनेन स्वप्रकाशनित्यचैतन्यसाधनं दृष्टान्तविरोधेन नघटते इति माध्यमिकमतापेक्षया विशेषः ॥

यद्यपि ' स्वतोऽसिद्धप्रमेयेतु नासतो व्यञ्जिका प्रमा । नाभिव्यनक्ति सविता शशशृङ्गं स्फुरन्नपि ॥ ' इति वार्तिके (बृ.वा) उक्तम् । अत्र लघुचन्द्रिका (अ.त.नि) ' ननु प्रमोत्पत्तेः पूर्वमप्रतीतमपि अज्ञातघटादिकं पश्चादनुमानादिना ज्ञेयत्वान्नासत् । अन्यथा कदाचित्केनचित् अप्रतीतिमात्रेण असत्त्वे सर्वमसत्स्यात् । नच तथा केनापि तस्याप्रतीतत्त्वमिति वक्तुं शक्यम् । नचाज्ञातताकाले घटादिज्ञानाभावे प्रत्यक्षे तत्कारणेन्द्रियसन्निकर्षे च उक्तघटादेः कारणताग्राहकान्वयव्यतिरेकज्ञानासम्भव इति वाच्यम् ; उक्तघटादेरभानापादकाज्ञानकाले अनुमित्यादिनापि तत्सम्भवात्तत्राह—नाभिव्यनक्तीति । नाभिव्यक्त्युद्देश्यकप्रवृत्तिमानित्यर्थः । तथा च यथा जगत्तमोनाशमुद्दिश्य सवितुः प्रवृत्तिः नतु शशशृङ्गीयतमोनाशमुद्दिश्य, तस्यालीकत्वेनाज्ञानासम्भवात् ; तथा घटाज्ञाननाशार्थं नकस्यापि प्रवृत्तिः स्यात् । घटाज्ञानस्य प्रमाण ज्ञानासम्भवात् । अतः तस्य ज्ञानं साक्षिचिदेव ' इति । एवमेव गुरुचन्द्रिकाऽपि ॥

तथाऽपि शशशृङ्गविसजातीयत्वं घटादेः पूर्वमेवोपपादितम् । शशशृङ्गस्यालीकतया अज्ञानं यथा न संभवति, तथा घटादेर्जडतया तद्विषयकाज्ञानं न सम्भवतीति घटावच्छिन्नचिद्विषयकमेवाज्ञानं भवद्भिरङ्गीक्रियते । ब्रह्म न जानामीत्यादौ ब्रह्मविषयकमज्ञानम् । घटं न जानामीत्यादौ घटावच्छिन्नचिद्विषयकमज्ञानमिति हि भवतां प्रक्रिया । एवं वैषम्यं न कस्यचिद्दार्शनिकस्य सम्मतम् । विवरणकारसम्मतं भावरूपाज्ञानं केषांचित् विवर्ताद्वैतिनामपि न सम्मतमित्युत्तरत्र निरूपयिष्यते । एवं च वृत्त्यतिरिक्तचैतन्यस्य कथं सिद्धिरित्याक्षेपे अज्ञातो घटइति व्यवहारेण अज्ञानस्य ज्ञानाभावे अज्ञाननाशार्थं प्रवृत्तिर्नोपपद्यत इति साक्षिचित्सिद्धिरुच्यते भवद्भिः । कथमिदं घटते ? घटाद्यवच्छिन्नचिद्विषयकमज्ञानमिति निर्णयः भवत्सम्मतचैतन्यसिद्ध्यनन्तरकालिकः । वृत्त्यतिरिक्तचैतन्यस्य साधनदशायामेवं रीत्या अज्ञानज्ञानोपपादनं नैव सम्भवति । भवद्व्यतिरिक्तदार्शनिकमते तु घटाद्यज्ञानं घटादिज्ञानप्रागभावरूपम् । ज्ञानोत्पत्त्यर्थं प्रवृत्तिः

## गूढार्थसंग्रहः

ज्ञानप्रागभावनिवृत्त्यर्थैव भवति। प्रागभावध्वंसस्य प्रतियोगिरूपतायाः प्राच्यनैयायिकैरङ्गीकारात्। तस्यातिरिक्तत्वेऽपि तमोवत् आवरणरूपत्वं नाङ्गीक्रियते। तमसः द्रव्यत्वं भाट्टादयः अभ्युपगच्छान्ति नैयायिकास्तु द्रव्यत्वमपि नाभ्युपगच्छान्ति। तमःप्रक्रिया यथा तथा वा भवतु, घटादिप्रागभावस्येव ज्ञानप्रागभावस्यापि ज्ञानं सम्भवत्येव, अतः अज्ञातो घट इति व्यवहारान्यथाऽनुपपत्त्या निर्विशेषचितस्साधनं नैव सम्भवति ॥

ज्ञानमित्यनुगतप्रतीत्या विषयपुरुषभेदेऽपि कूटस्थनित्यं चैतन्यमेकं निर्विशेषं सामान्यस्थानापन्नं न सम्भवतीति 'निर्विशेषं न सामान्यं भवेच्छशविषाणवत्' (श्लो. वा. आ. वा. १० श्लो) इति भट्टपादैरेवोक्तम् ॥

यद्यपि ब्रह्मसिद्धौ 'संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः' इत्युपक्रम्य, 'ये वा—निर्विशेषं न सामान्यं भवेच्छशविषाणवत्' इत्यभावमाहुः तान् प्रत्युच्यते 'संहृताखिलभेदः' इति। यदि तावदसामान्यत्वं साध्यते सिद्धसाधनम्। विशेषाणामभावे केषां तत्सामान्यम्। सामान्यंतूक्तं ब्रह्मवीदीभिः 'विशेषप्रत्यस्तमयमुखेन निरूपणादुपचारतः' इति। अथ अभाव एव साध्यः 'विशेषैरेवास्य निर्विशेषैर्व्यभिचारः' इति ब्रह्मकाण्डान्ते उक्तम्; तथाऽपि विशेषाणां यथा सविशेषत्वं तथा महासिद्धान्तारम्भे **'सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम्'** इति भाष्यसूक्तिविवरणश्रुतप्रकाशिका तत्त्वटीकयोः स्थापितमिति न दोषः ॥ एतेन (१८७. पुटे) व्यक्तीनामसत्यत्वे जातिव्यवहारोऽप्यनुचित इति बोधितम् ॥

अतः वस्तुत्वं यत्र तत्र सविशेषत्वम् इति भट्टपादादिसिद्धान्तः अप्रकम्प्यः। अतः घटमहं जानामीति प्रतीतिसिद्धज्ञानस्य विषयाश्रयाद्युपाधिशून्यस्यात्मत्वं तस्यैव वेदान्ततात्पर्यविषयत्वं वार्तिक (वृ) इष्टसिद्ध्याद्युक्तं न सङ्गच्छत इति निर्विषया निराश्रया धीः न सम्भवति इत्यभिधाय 'व्योमारविन्दसदृशवपुषि यथोदितदृशि' इति यामुनमुन्युक्तार्थ एव युक्तः। निर्विशेषसाक्षिचैतन्यस्य प्रागभावाभावादुत्पत्तिः न सम्भवतीति इष्टसिद्ध्याद्युक्तिः निर्विशेषचितएवाप्रामाणिकत्वेन न घटत इति **तदन्धस्य जात्यन्धेन यष्टिःप्रदीयते।** इत्यभिधानपूर्वकं **नच निर्विषया काचित्संविस्तीति** वदता भगवता यामुनमुनिसिद्धान्तएव प्रतिष्ठापितः। सुरेश्वरवार्तिकाद्युक्तः अध्यारूमूलकव्यवहारः प्रमाणप्रमेयव्यवस्थायाः सांवृतत्वं चेत्यादिकं प्रमाणप्रमेयव्यवहारसांवृतत्ववादिमाध्यमिकमतनिरसनपूर्वोदाहृतन्यायसूत्रभाष्याद्युक्तरीत्यैव सम्यङ्निरस्तमिति यामुनमुनेर्भगवतश्चाशयः ॥

'प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः' (गौ.सू.२ १ ८) इत्यादिना माध्यमिकमतमनूद्य 'त्रैकाल्याप्रतिषेधश्च शब्दात् आतोद्यसिद्धिवत् तत्सिद्धेः (गौ.सू..२.१.१५) इत्यादिभिःस्सूत्रैः तन्मतं निरस्य प्रमाणप्रमेयव्यवहारस्य असांवृतत्वं स्थापयता तार्किकधुरन्धरेण गौतमेन 'स्वप्नविषयाभिमानवत् अयं प्रमाणप्रमेयाभिमानः' (गौ.सू..४.२.३१) इत्यादिसूत्राणि पूर्वपक्षसूत्राणीति तत्पूर्वं 'प्रमाणतश्चार्थप्रतिपत्तेः' (४.२.२९) इति सूत्रं सिद्धान्तसूत्रमिति च स्फुटमावेदितम् ॥

एतेन तार्किकधुरन्धरगौतमसूत्रैरपि प्रपञ्चो मिथ्या; तथाहि—'एकस्मिन्भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः' (१), बुद्ध्या विवेचनात्तु भावानां याथार्थ्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् (२), स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः (३), मायागन्धर्वनगरमृगतृष्णावद्वा (४), मिथ्योपलब्धेर्विनाशः स्वप्नविषयोपलब्धिप्रणाशवत्प्रबोधे (५), बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् (६), तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः (७), दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः (८), दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः (९), तन्निमित्तन्त्ववयव्यभिमानः—(१०), विद्याऽविद्याद्वैविध्यात्संशयः (११)', इति तत्त्वनिर्णयनामकचतुर्थाध्यायसूत्राणि गौतमीयानि। अथ पूर्वपक्ष

## गूढार्थसंग्रहः

सूत्राणीमानि आरम्भवादरूपतत्सिद्धान्तविरुद्धत्वादितिचेन्न 'बुद्धया विवेचनात्' इत्यादिना 'यदग्ने रोहितं रूपं तेजसस्तद्रूपम्, अपागादग्नेरग्नित्वम्' इत्यादिश्रुत्युक्तस्य तर्कस्योक्तत्वात्। अतएवोक्तसूत्रार्थस्त्रोटकाचार्यैः श्रुत्यर्थत्वेनोक्तः॥

"प्रदिदर्शयिषुर्वसनस्य यथा वितथत्वमयास्यति तन्तुगुणम्।
अपकृष्यतु तन्तुसमं त्रितयं ज्वलनप्रमुखस्य तथोक्तवती॥" इति

यदग्नेरित्यादिश्रुतिरिति शेषः। मायेत्यादिना 'इन्द्रजालमिव मायामयं स्वप्नइव मिथ्यादर्शनम्' इत्यादिश्रुयुक्तस्य, मिथ्येत्यादिना 'यत्र हि द्वैतमिव भवति' इत्यादिश्रुत्युक्तस्य सङ्कल्पकृता इत्यादिना 'एतत्सर्वं मनएव' इत्यादि श्रुत्युक्तस्य तर्कस्यापरिहार्यस्योक्तत्वात्, आरम्भादिप्रक्रियाया अवैदिकनिरासमात्राभिप्रायेणोक्तत्वाच्च। अन्यथा चतुर्थाध्यायान्ते तादृशप्रक्रियाया हेयत्वमद्वैतमतस्य च ग्राह्यत्वं सूत्रभाष्ययोर्नोच्येत। तथाहि—'तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चात्मविध्युपायैः' 'तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः कर्तव्यः यमः समानमाश्रमिणां धर्मसाधनम्, नियमः प्रतिविशिष्टम् आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः सपुनस्तपः प्राणायामः प्रत्याहारो ध्यानं धारणेति, इन्द्रियविषयेषु च प्रसङ्ख्यानाभ्यासो रागद्वेषनिघातार्थः। उपायस्तु योगाचारविधानम्' इति, 'ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः' 'तदर्थमिति प्रकृतं ज्ञायतेऽनेनेति ज्ञानमात्मविद्याशास्त्रम्, तस्य ग्रहणमध्ययनधारणे, अभ्यासः सततं तत्क्रिया अध्ययनानुबन्धश्रवणचिन्तनानि, तद्विद्यैश्च सह संवादइति प्रज्ञापरिपाकार्थम्, प्रज्ञापरिपाकस्तु संशयच्छेदनं विज्ञातार्थावबोधोऽध्यवसितार्थाभ्यनुज्ञानमिति, समा(म)य वादः संवादस्तद्विद्यैश्च सह संवाद इत्यविविक्तार्थं वचनं तद्विभजते—'तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनुसूयिभिरभ्युपेयात्' एतन्निगदव्याख्यानेनैव नीतार्थमिति। यदि च मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति, 'प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे।' तमभ्युपेयादिति वर्तते परतः प्रज्ञामुपादित्समानस्तत्वबुभुत्साप्रज्ञापनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेत्, अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि स्वपक्षरागेणचैके न्यायमतिवर्तन्ते। तत्र तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहरक्षणार्थं कण्टकशाखावरणवत्। अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य ताभ्यां विगृह्य कथनम्। ताभ्यां जल्पवितण्डाभ्यां विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति। तदेतद्विद्यापालनार्थं न लाभपूजाख्यात्यर्थम्' इति गुरुचन्द्रिकोक्तिरपि निरवकाशा॥

'बुद्धया विविवेचनात्तु भावानाम्' (४.२.२६) इत्यादिपूर्वपक्षसूत्रम्। 'बुद्धया विविच्यमानानां स्वभावो नाव धार्यते। अतो निरभिलप्याश्च निस्वभावाश्च ते मताः॥' (लं.अ.सू.२.१७५) इति बौद्धोक्तार्थस्य तत्सूत्रे प्रतिपादनात्। 'व्याहतत्वादहेतुः (गौ.सू.४.२.२७) तदाश्रयत्वादपृथग्ग्रहणम् (२८) प्रमाणतश्चार्थप्रतिपत्तेः (२९) प्रमाणानुपपत्त्युपपत्तिभ्याम्' (३०) इति चत्वारि सिद्धान्तसूत्राणि। 'बुद्धया विवेचनात्तु' इत्यादिसूत्राणां भाष्यम्। (२६.सू) यथा अयं तन्तुः अयं तन्तुः इति प्रत्येकं तन्तुषु विविच्यमानेषु नार्थान्तरं किंचिदुपलभ्यते। यत् पटबुद्धेर्विषयस्स्यात्। याथात्म्यानुपलब्धेरसति विषये पटबुद्धिर्भवतीति मिथ्याबुद्धिर्भवति। एवं सर्वत्रेति (२८.सू) कार्यद्रव्यं कारणद्रव्याश्रितं तत् कारणेभ्यः पृथक् नोपलभ्यते। विपर्यये पृथग्ग्रहणात्। 'बुद्धया विवेचनात्तु भावानां' पृथग्ग्रहणमतीन्द्रियेष्वणुषु यदिन्द्रियेण गृह्यते, तत् एतया बुद्धया विविच्यमानमन्यदिति। (२९) बुद्धया विवेचनात् भावानां याथात्म्योपलब्धिः। यदस्ति यदा च तत्सर्वं प्रमाणतः उपलब्ध्या सिध्यति। याच प्रमाणतः उपलब्धिः तत् बुद्धया विवेचनं भावानाम् इति॥

## गूढार्थसङ्ग्रहः

अत्र न्यायवार्तिकतात्पर्यटीका । भाष्यं 'बुद्ध्या विवेचनात्तु अणुषु यत्र खल्ववयवावयविनौ ऐन्द्रियकौ तत्र पृथग्ग्रहणम् अविवेचकानामस्फुटतरम् । अतीन्द्रियेभ्यः अणुभ्यः आनुमानिकेभ्यः प्रत्यक्षदृश्यानां तदाश्रितानामवयविनां पृथग्ग्रहणमित्यतिस्फुटमित्यर्थः । सम्प्रत्यैन्द्रियकेऽप्यवयवे अवयविनो विविच्यमानस्य याथात्म्येन पृथग्ग्रहणमाह— प्रमाणतश्चार्थप्रतिपत्तेरिति । यदस्ति पटादिकमवयविद्रव्यं यथा च स्वावयवसमवेतत्वेन गुणाधारतया च यन्नास्ति शशविषाणादि यथा च कार्यकारणभावेन तत्सर्वं प्रमाणतः उपलब्ध्या सिद्ध्यति' इति ॥

अत्र सिद्धान्तसूत्रभाष्यादौ अवयवातिरिक्तावयविपरतया आरम्भवादएवसमर्थितः । तथाऽपि 'परिणामात्' वैशेष्यात्तु तद्वादः तद्वादः 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इत्यादिसूत्रेषु परिणामवादएव श्रौत इति व्यासेन निर्णीतम् । एतदनुरोधेन 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यारम्भणाधिकरणमपि परिणामवादाभिप्रायकमिति भगवता साधयिष्यते । 'आत्रेयवाक्यमपि संव्यवहारमात्रम्' (सं.शा.३.२१७) इत्यत्राभिप्रेतानि प्रकृत्यधिकरणकल्पतरूदाहृतानि वाक्यकारवचनानि परिणामाभिप्रायकानि इति भावप्रकाशे निरूपितम् ॥

'यदग्ने रोहितं रूपम्' इत्यादिश्रुतेः 'ननुकिमत्र बुद्धिशब्दकल्पनया क्रियते । प्राक् रूपत्रयाविवेककरणात् अग्निरेवासीत् । तदग्नेरग्नित्वं रोहितादिरूपविवेककरणात् अपागात्' इति युक्तम् । यथा तन्त्वपकर्षणे पटाभावः । नैवं बुद्धिशब्दमात्रमेवह्यग्निः यतः आह 'वाचारम्भणम् अग्निर्नामविकारो नामधेयं नाममात्रमित्यर्थः अतो अग्निबुद्धिरपि मृषैव । तर्हि किं तत्र सत्यं त्रीणि रूपाणीत्येव सत्यम् । नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः । इति उपनिषद्भाष्ये (शां) पूर्वपक्षे योऽर्थ उक्तः स एव युक्तः । अत्र अग्नेः अग्नित्वनिषेधः क्रियते अग्नौ अग्नित्वं नास्तीति निषेधे अग्नेस्सत्यत्वमेव आयातं नतु मिथ्यात्वम् । त्रिवृत्करणत्वोक्तिदशायां मिथ्यात्वस्य कःप्रसङ्गः । त्रिवृत्करणमन्तरैव मिथ्यात्वस्य दर्शनीयत्वात् । 'त्रिवृत्कृताग्न्यादिस्वरूपस्य अत्रिवृत्कृततेजोवन्नस्वरूपव्यतिरेकेण विचारासहत्वमग्नित्वाभित्यन्तेन हेतूकृत्य वाचारम्भणमित्यादिना त्रिवृत्कृतमात्रमसत्यमित्यादिरूपेण विकारो नामधेयमिति प्रपाञ्चितम् ।' इति गुरुचन्द्रिकोक्तिरपि (ए.अ.इति श्रुत्यर्थविचारे) नादर्तव्या । अत्रिवृत्कृतस्य त्रिवृत्कृतस्यचाभेदमात्रेण कथं त्रिवृत्कृतस्यासत्यत्वम् ? अतः रूपत्रयविवेककरणात् प्राक् भागत्रयसमुदाये एकभागमात्रगताऽग्नित्वावस्था या पूर्वं ज्ञाता त्रिवृत्करणज्ञानानन्तरं नैकावस्था किंतु अवस्थात्रयमपि अत्र वर्तते, इति बोधतात्पर्येणैव श्रुतिः प्रवृत्ता । एवंरीत्या बोधतात्पर्यनिश्चयः 'नानावीर्याः पृथग्भूताः ततस्ते संहतिं विना । नाशक्नुवन्प्रजास्स्रष्टुं असमागम्य कृत्स्नशः ॥' इति भाष्ये उदाहरिष्यमाणमन्वादिवचनैः दृढीक्रियते । एवमवस्थात्रयस्यश्रुतितात्पर्यविषयत्वं पर्यालोच्यैव भागत्रयसमुदाये अग्निरिति व्यवहारः श्रुतिविरुद्धः इति शङ्का 'वैशेष्यात्तु तद्वादः' इति सूत्रेण समाहिता । अतः 'बुद्ध्या विवेचनात्तु भावानाम्' इति सूत्रस्य गुरुचन्द्रिकोक्तरीत्या अर्थः यः प्रोक्तः स न श्रुतितात्पर्यविषयः ॥

चतुर्थाध्यायान्ते अद्वैतमतस्यैव ग्राह्यत्वं न्यायसूत्रभाष्ययोः नैवोक्तम् । 'स्वप्नविषयाभिमानवत् अयं प्रमाणप्रमेयाभिमानः' इति न सिद्धान्तसूत्रम् । द्वितीयाध्यायस्थ प्रागुदाहृतसूत्रभाष्यसिद्धान्तविरोधात् । अस्य सिद्धान्त सूत्रत्वादरे प्रत्यक्षाद्यप्रामाण्यस्यैव प्रसङ्गात् । प्रत्यक्षाद्यप्रामाण्यानिरासः द्वितीयाध्यायोक्तः 'प्रमाणतश्चार्थप्रतिपत्तेः' इति चतुर्थाध्याये एतत्पूर्वसूत्रे विवक्षित इति स्फुटप्रतीतेः । 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र.सू.२.२.२२) इति सूत्रे स्वप्नविषयतुल्यता जागरितविषयस्य नास्तीति व्यासेनैव निर्धारितम् । अत्र (शां) भाष्यम् 'वैधर्म्यंहि भवति स्वप्नजागरितयोः' किंपुनर्वैधर्म्यं

## गूढार्थसंग्रहः

बाधाबाधाविति ब्रूमः बाध्यते हि स्वप्नोपलब्धं वस्तुप्रतिबुद्धस्य। मिथ्यामयोपलब्धः महाजनसमागम इति। नह्यस्ति मम महाजनसमागमः निद्राग्लानंतु मे मनो बभूव। तेनैषा भ्रान्तिरुद्बभूव इति इति। नैवं जागरितोपलब्धं वस्तु स्तंभादिकं कस्यांचिदप्यवस्थायां बाध्यते इति च। अत्र कस्यांचिदप्यवस्थायां न बाध्यतइत्युक्त्या ज्ञानबाध्यत्वं जागरितपदार्थानां नास्तीत्येव व्यासस्य अभिप्रेतम्। 'प्रतियोगिनि दृष्टे च' इति वार्तिकेन वार्तिककृतः कुमारिलस्यापि अयमेवार्थोऽभिमतः इति पूर्वमेव निरूपितम्॥

मैत्रायणीयोपनिषदि 'अथान्यत्राप्युक्तं महानदीषूर्मय इवानिवर्तकमस्य यत्पुराकृतं समुद्रवेलेव दुर्निवारमस्य मृत्योरागमनं सदसत्फलमयैः पाशैः पङ्गुरिव बद्धं बन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्थस्येव बहुभयावस्थं मदिरोन्मत्तइव मोहमदिरोन्मत्तं पाप्मना गृहीतइव भ्राम्यमाणं महोरगदष्ट इव विषयदष्टं महान्धकारमिव रागान्धम् इन्द्रजालमिव मायामयं स्वप्नइव मिथ्यादर्शनं कदलीगर्भइव असारं नटइव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरमम्' इत्यथोक्तम्। 'शब्दस्पर्शादयोह्यर्थाः मर्त्येऽनर्था इवाऽऽस्थिताः। येषां सक्तस्तु भूतात्मा न स्मरेत्परमं पदम्॥' (४.प्र.२.म) इति श्रुतिक्रमः ततः पूर्वं 'प्रजापतिर्वा एकोऽग्रे अतिष्ठत्' (२.प्र.६.म) इत्यादिना परमात्मनो जगत्सृष्टिं सर्वान्तःप्रवेशंचाभिधाय 'तेहोचुः यद्येवमस्यात्मनोमहिमानं सूचयसि, इति अन्योवा परः' (३.प्र.१.म) इत्यादिना कर्मफलादिसंबद्ध जीवस्वरूपमभिधाय 'आत्मस्थं प्रभुं कारयितारं नापश्यत् गुणौघैरुह्यमानः। अहं सो ममेदमित्येवं मन्यमानः निबध्नात्यात्मना आत्मानम्' (३.प्र २.म) इत्याद्युक्तम्। 'अस्य को विधिर्भूतात्मनः येनेदं हित्वा आत्मन्येव सायुज्यमवाप्नोति तान्होवाचेति' (४.प्र.१म) इत्यादिश्रुत्यनन्तरम् 'अथान्यत्राप्युक्तम्' इत्याद्युक्तम्॥

अत्र पूर्वं जगत्सृष्टेर्ज्ञानसंपादनार्थत्वेन सप्रयोजनत्वमन्तर्यामिणः जीवस्य च अभेदज्ञानेन बन्धश्चोक्तः। एतेन प्रतिबिम्बनिबन्धनो जीवभाव इत्ययमर्थः न श्रुतितात्पर्यविषय इति निर्णीतम्। अनन्तरं बन्धकारणहानपूर्वकमोक्षप्राप्तिप्रश्नप्रतिवचने अनर्थपरम्परामध्ये इन्द्रजालमिवेत्यादिवाक्यम्। अत्र शब्दस्पर्शादीनामनर्थत्वं तत्संगेन स्वापेक्षया उत्कृष्टस्य प्राप्यस्य स्मृत्यभावस्फुटमुक्तः। प्रपञ्चे सङ्कल्यागार्थमनेकाकारप्रदर्शनदशायां इन्द्रजालमिव मायामयमित्युक्तम्। अत्र मायाशब्दः (विचित्रकारिणि) वर्तते इति भाष्ये सिद्धान्तयिष्यते। अतः आश्चर्यार्थकः स्वप्न इव मिथ्यादर्शनमिति नाचेतनजीवसामान्यस्य मिथ्यात्वं प्रतिपादयति। अत्र जीवब्रह्मणोरद्वैतस्य पूर्वं परतश्चानुक्तेः। प्रपञ्चस्य मिथ्यात्वमात्रस्यात्रानुक्तेः सङ्कल्यागार्थं प्रपञ्चे अनेकाकारप्रदर्शनमध्ये एवमुक्तेश्च। अतः प्रपञ्चे क्वचिन्मिथ्यादर्शनं वर्ततइति तात्पर्येणेत्थमुक्तम्। यदि व्यवहारकाले सर्वमपि मिथ्येति विवक्षितम्। तदा जीवब्रह्माभेदस्यापि व्यवहारकालिकतया बृहदारण्यकश्रुतौ स्वप्नविषये 'तदत्राविद्यया मन्यते अथ यत्र देवइव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते' इति स्वप्नकाले अभेदज्ञानोक्तेश्च जीवब्रह्माभेदज्ञानमपि मिथ्यादर्शनं स्यात्। अतः गुरुचन्द्रिकोक्तार्थः नास्यां श्रुतौ विवक्षितः। 'बुद्ध्या विविच्यमानानाम्' इति वचने तत्पूर्वं 'मृगतृष्णाऽलातचक्रकेशोण्ढकगन्धर्वनगरमायास्वप्नप्रतिबिम्बाक्षिपुरुषाः लोके अविद्वद्भिरपि विपर्यस्यन्ते न विद्वद्भिः' इत्यादौ च (लं.अ.सू) सूत्रत्रयपूर्वपक्षविवक्षितोऽर्थः स्फुटः। 'यत्रहि द्वैतमिव भवति' इत्यादिश्रुतौ यथा न मिथ्यात्वं विवक्षितं तथा उत्तरत्र भाष्ये एव स्फुटीभविष्यति॥

'स्वप्नविषयाभिमानवत्' इत्यादिपूर्वपक्षस्य सिद्धान्तसूत्राणि 'हेत्वभावादसिद्धिः, ( सू.३.२.३३) स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः, (३४) मिथ्योपलब्धेर्विनाशः तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे, (३५) बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्, (३६) तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेः द्वैविध्योपपत्तिः' (३७) इति। अत्र भाष्यादौ

## गूढार्थसंग्रहः

'स्वप्नप्रतीतिविषयाणां न निवृत्तिः किंतु भ्रमस्यैव' (३५.सूत्रे) इत्यादिकं सम्यङ्निरूपितम्। 'तत्त्वप्रधानभेदात्' इति सूत्रेऽपि नाद्वैतसम्मतोऽर्थो विवक्षित इति तत्रैव स्फुटम्। 'दोषनिमित्तं तु रूपादयो विषयाः सङ्कल्पकृताः' (गौ.सू.४.२.२) इत्यत्र सङ्कल्पः मिथ्याज्ञानमिति 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (१.१.२) इति सूत्रानुसारेण भाष्यादावर्थो वर्णितः। एवं स्थिते 'कामस्सङ्कल्पः एतत्सर्वं मनएव' (बृ. ) इति श्रुत्युक्ततर्कः कथंचिदपि नात्र सूत्रे विवक्षितः, किंतु अन्यार्थएवेति भाष्यादावेव स्फुटम्। 'कामस्सङ्कल्पः एतत्सर्वं मनएव' इति श्रुतिः परसम्मतार्थं साधयितुं नालमिति सम्यङ्निरूपितं भावप्रकाशे। एवं 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ' (ब्र.सू.३.२.४) इत्यत्र बन्धविपर्ययस्य परसङ्कल्पहेतुकत्वं प्रदर्शयित्रा सूत्रकृता मोक्षः न दृष्टद्वारकः अपितु अदृष्टद्वारकः इति वेदान्तसिद्धान्तः इत्यादिकमपि तत्रैव निरूपितम्॥

'तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चात्मविध्युपायैः' (४.२.४६) इत्यादि सूत्राणि अद्वैतमतसाधकानि नभवन्ति इति स्फुटं विदुषां। भाष्यादावप्ययमर्थोऽवसेयः। 'प्रमाणप्रमेयतत्त्वज्ञानान्निश्रेयसाधिगमः' (गौ.सू.१.१.१) 'प्रत्यक्षानुमा......प्रमाणानि' (१.१.३) 'आत्मशरीरेन्द्रियार्थ......प्रमेयम्' (१.१.९) इत्याद्यभिधाय 'प्रमाणतश्चार्थप्रतिपत्तेः' इति वदता गौतमेन अन्तःकरणपरिणामभेदेन चितएव प्रमाणप्रमेयादिभावप्रक्रिया परसम्मतां नयुक्तेति निर्धारितम्। ज्ञाधातोः छिदादिधातुतुल्यतया भामत्युक्तदिशा छिदादेः यथा अनौपाधिकभेदः तद्वत् ज्ञानस्यापि 'अहमिदमनेन छिद्मि' इतिवत् अहमिदमनेन जानामीति व्यवहारस्याविशेषात्॥

एतेन 'दृश्यत्वानिरुक्तौ स्वप्रकाशत्वंहि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वं' 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः। इत्यद्वैतसिद्धिविवरणे स्वापरोक्षत्व इति। अपरोक्षत्वमज्ञानविरोधिचैतन्यम्। स्वातिरिक्तेति। स्वविलक्षणचिदित्यर्थः। तेन अज्ञानविरोधित्वरूपेण वृत्त्यपेक्षत्वेऽपि न क्षतिः। वृत्त्यसत्वेऽपि चिन्मात्रं भातीति व्यवहारात्। शुद्धचैतन्यस्यापरोक्षताकत्वेतु स्वातिरिक्तत्वं न निवेश्यम्। अनपेक्षापरोक्षताकत्वस्य ब्रह्मणि सत्वात् साक्षादपरोक्षात् स्वविलक्षणचिदनपेक्षापरोक्षताकं अनपेक्षापरोक्षताकं वा अविद्याद्युपहितचिद्रूपं अविद्याद्यपरोक्षत्वं शुद्धचित्सापेक्षमेव। इति गुरुचन्द्रिकोक्तिरनादरणीया। वृत्त्यसत्वे चिन्मात्रं भातीति व्यवहारस्यैवाभावात्॥

अत्र साक्षात्करोतेः जानातेश्च सकर्मकत्वानुरोधेन अज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपत्वं चिदपरोक्षत्वं तादृश प्रयोजकं च घटादिप्रत्यक्षस्थले घटादिवृत्तिजनकसामग्री। इत्यादिकं लघुचन्द्रिकायामुक्तम्। सिद्धान्तबिन्दुटीकायां न्याय रत्नावल्यामपि जानात्यर्थोऽपि प्रतिबिम्बप्रयोजकमनोवच्छिन्नचित्तादात्म्यविशिष्टः साक्षी वृत्तेरावरणभङ्गार्थत्वपक्षे असत्त्वापादकाज्ञानाविषयत्वप्रयोजकमनोवाच्छिन्नचिद्विशिष्टस्साक्षी। यद्वा स्वीयाकाराख्यविषयता स्वतादात्म्यं स्वतादात्म्याश्रयतादात्म्यंचेति अन्यतमस्यप्रयोजकं यन्मनः तद्विशिष्टस्साक्षी। मनसो न मनस्त्वेनैव निवेशः 'ईशो जानाति' इत्यादावीशस्य जगदुपादानत्वपक्षे मनोविशिष्टतादात्म्यबाधात्। किंतु ईशोपाधिमनोऽन्यतरत्वादिना निवेशः इत्याद्युक्तम्। एवं च ज्ञानं ज्ञानमित्यनुगतप्रतीत्या एकं नित्यं चिद्रूपं ज्ञानमङ्गीकरणीयमिति सिद्धान्तबिन्दौ प्रागुक्तोऽर्थः कथं घटते। जानात्यर्थस्यातिगुरुत्वं स्पष्टम् नित्यत्वमेकत्वमपि नसम्भवतीति व्यक्तम्। शुद्धचितःखलु एकत्वं, तत्रापि एकत्वधर्मो नास्ति नापि जानात्यर्थत्वम्। ज्ञानत्वैकत्वाद्युपलक्षितैव शुद्धचित वृत्तेर्जडत्वेन मिथ्यात्वेन मोक्षान्वयासम्भवात् तदनन्वयिनी वृत्त्यतिरिक्ता संवित् अवश्यमेषितव्येति लघुचन्द्रिकोक्तिः ज्ञानत्वाद्युपपत्तौ अर्थप्रकाशत्वं ज्ञानत्वमित्येतदर्थविवरणावसरे ज्ञानत्वजातिमभ्युपेत्य तादृशज्ञानत्वस्य मुक्तावसत्त्वेऽपि ज्ञानत्वोपलक्षितव्यक्तिः आनन्दत्वाद्युपलक्षितव्यक्तिश्च मुक्तावबाधितैवेति लघुचन्द्रिकोक्तिश्च अनादरणीया॥

## गूढार्थसङ्ग्रहः

उपलक्षितव्यक्तौ किं प्रमाणमिति विचारावसरे एवमुक्तेरयोगात् परब्रह्मप्राप्ति, अनुभवप्रतिपादकश्रुतिभिः मुक्तौ ब्रह्मानुभवः जीवधर्मभूतज्ञानेनैवोपपादनीयः। दीपस्थानीयस्य जीवस्य प्रभास्थानापन्नस्य धर्मभूतज्ञानस्य च स्वप्रकाशत्वमनुभवसिद्धं न प्रत्याख्यानमर्हति। इति सिद्धान्ते मुक्तेरुपपत्तिस्सम्भवति। परमते तु नैवेति बोध्यम्। एतावता जडे आवरणकृत्याभावात् अज्ञातार्थज्ञापकस्यैव प्रमाणत्वात् प्रमाणसामान्यं निर्विशेषचिद्विषयकं। 'एवमज्ञातो घट इत्यादि प्रतीतिव्यवहारान्यथानुपपत्त्या निर्विशेषचित्सिद्ध्यति' इति वार्तिककारोक्तरीतिपरिष्करणं 'वृत्तिं विना चिदस्ति—चिद्भाति' इति व्यवहारेण चित्सिद्धिरित्यादि चन्द्रिकोक्तिरपि कस्यापि दार्शनिकस्यासम्प्रतिपत्त्या न घटत इत्यास्मसिद्ध्यनुसारेण **नच निर्विषया काचित्संविदस्ति, अनुपलब्धेः**। इति श्रीसूक्त्या निर्णीतं भवति॥

प्रतिकर्मव्यवस्थायाम् (अद्वैतसिद्धौ) 'किंच घटं जानामीति अनुभूयमानसकर्मकवृत्त्यन्या संवित् घटप्रकाशरूपा घटःप्रकाशते, इत्याकारकानुभवसिद्धैव इत्युक्तम्। अत्र गुरुचन्द्रिका। घटप्रकाशेति घटकर्तृकप्रकाशेत्यर्थः। तथाचैकस्यां क्रियायां एकस्य कर्तृत्वकर्मत्वयोः एकस्याः क्रियायाः सकर्मकत्वाकर्मकत्वयोश्च विरोधादनावृतचिद्रूपा घटकर्तृका असत्त्वापादकाज्ञानशून्या चिद्रूपा ज्ञानक्रिया। तत्राज्ञानांशे घटस्य निरूपकतया विशेषणत्वात् गौणः कर्मत्वव्यवहारः इति मन्मतम्। त्वन्मतेतु वृत्तिरेव घटकर्मिका वाच्येति तदन्या क्रिया घटकर्तृका अवश्यं वाच्या। साचानावृतचिद्रूपा 'आत्मा सदा प्रकाशते' इत्यादौ तथा क्लृप्तत्वादिति भावः। इति॥ सकर्मकवृत्तीति सकर्मकज्ञानेत्यर्थः। घटप्रकाशरूपा घटकर्तृकस्फुरणरूपा इत्यादिलघुचन्द्रिका च॥

एतत्पर्यालोचनायां प्रपूर्वककाशधातोः अकर्मकतया अनावृतचित् सिद्ध्यतीति परेषामाशयः। 'यद्व्यवहारोपजननुगुणं ज्ञानं तत्प्रकाशते, इत्युच्यते। ज्ञेयस्य ज्ञातुः स्वात्मनश्च व्यवहारानुगुणं ज्ञानमुदयत इति युक्तः त्रिष्वपि एकप्रकारः प्रकाशते व्यवहारः' इत्युक्तौ प्रकाशश्च चिदचिदशेषपदार्थसाधारणः इत्युपक्रम्य व्यवहारानुगुण्यवचनः प्रकाशशब्दः इत्युक्तौ (आत्मसिद्धौ) एतदनुसारिण्यां 'प्रकाशश्च' चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यं इत्युत्तरश्रीभाष्यसूक्तौ च उपदर्शितरीत्या शुद्धचितः सिद्धिर्नसम्भवतीति प्रतिपादितम्। त्रिष्वपि प्रकाशते इति व्यवहारसद्भावात् चितः प्रकाशपदार्थत्वं न युक्तम्। घटःप्रकाशत इत्यादौ घटकर्तृकाचित् इत्यर्थाङ्गीकारे शुद्धचिति घटकर्तृकत्वं बाधितमिति अबाधितव्यवहारानुपपत्तिः चितः प्रकाशत्वे चित्प्रकाशते इत्यादौ चित्कर्तृकप्रकाशोऽपि बाधितः घटादिस्फुरणमसत्त्वापादकाज्ञानविरोधिचैतन्यं शुद्धचिद्रूपब्रह्मगः स्फुरणं शुद्धचिदेव इति दृश्यत्वानिरुक्तौ गुरुचन्द्रिकायां स्फुरणपदार्थभेदकल्पनं नयुक्तं तत्रैव वृत्त्यसत्त्वेऽपि चिद्भातीति व्यवहारे स्वसम्मते भाधात्वोरेव शुद्धचिदर्थकतया कर्तृप्रत्ययार्थानुपपत्तिः। 'अस्ति ब्रह्म' इत्यत्र लकारः साधुत्वार्थकः इति सिद्धिब्रह्मानन्दीयादिकं पूर्वमेव (२६८.पु) पर्यालोचितम्। अतः व्यवहारानुगुण्यं व्यवहारकर्मत्वं व्यासार्योक्तदिशा भासमानत्वरूपं तत् त्रिष्वप्यङ्गीकृत्य त्रिष्वपि प्रकाशते इति व्यवहारः सिद्धान्ते सङ्गतः॥

अयमर्थः प्रत्यक्षे भासते एवमनुमितौ शाब्दबोधे च। इति व्यवहारः सर्वेषां सम्प्रतिपन्नः। भासते, भाति, प्रकाशते, इति च पर्यायशब्दाः। एते धातवः दीप्त्यर्थकाः इति वैयाकरणप्रक्रिया सर्वैरप्यङ्गीकृता। अतः अचिज्जीवब्रह्मवृत्तिदीप्त्याख्यधर्मबोधकाः नतु चिद्बोधकाः। पदार्थस्य दीप्तिः भासमानत्वमेवेति प्रपूर्वककाशधातोरकर्मत्वं सर्वानुभवसिद्धं न प्रत्याख्यानमर्हति। प्रपूर्वककाशधातोः ण्यन्तात् घञि प्रकाशशब्दनिष्पत्त्यङ्गीकारेण प्रकाशत्वं ज्ञाने सम्भवति। एवमहमर्थस्य तद्गतज्ञानस्य च दीपतत्प्रभयोरिव स्वान्यनिरपेक्षभानकत्वेन प्रकाशत्वेन व्यवहारे न विरोधः। घटः प्रकाशते

## गूढार्थसंग्रहः

इत्यादिकंतु व्यवहारानुगुण्याभिप्रायकत्वेनैवोपपादनीयमिति यामुनमुन्यादेराशयः। अतः प्रपूर्वककाशधात्वादेरकर्मकत्वात्तदनुरोधेन परमते शुद्धाचितः सिद्धिः न सम्भवति ॥

एतेन 'ज्ञानंहि वृत्त्यवच्छिन्नं चैतन्यम्' (अनुकूलतर्कनिरूपणे) अहमर्थस्य ज्ञप्त्याश्रयत्वायोगेन 'अहं जानामि' इत्यादौ ज्ञानपदस्य वृत्तौ गौणत्वात्। दुःखं जानामीत्यादौ दुःखाद्याकारकवृत्तेरेव विवक्षितत्वाच्च। अनात्मनि अनुभूतिशब्दवाच्यत्वस्यैवाभावात्। वृत्तौ ज्ञानपदस्येवानुभूतिपदस्य गौणत्वात्। (अनुभूतेःस्वप्रकाशत्वोपपत्तौ) 'विज्ञाता प्रज्ञाता' इत्यादिश्रुतेः वृत्तिरूपज्ञानाश्रयत्वपरत्वात् (आत्मस्वप्रकाशत्वोपपत्तिः) इत्याद्युक्तयोऽपि निवरकाशाः। आदित्यादेः तत्प्रभायाश्च तेजस्त्ववत् अहमर्थतज्ज्ञानयोरुभयोः ज्ञानत्वस्य स्वयम्प्रकाशत्वस्य च श्रुत्यनुभवादिभिर्भाष्यएव साधयिष्यमाणत्वात्। परमतेऽपि शुद्धचिति ज्ञानादिपदशक्तेरभावात्। 'सत्यं ज्ञानम्' इत्यादिश्रुतीनां उपलक्षितपरत्वेनास्वारस्यस्य दुस्त्यजत्वात् चक्षुषा घटमहं जानामीत्यादेः अस्वारस्यस्य अपरिहार्यत्वाच्च, परसम्मतप्रक्रियया अन्तःकरणपरिणामभेदेन अन्तःकरणावच्छिन्नचिदहमर्थः प्रमाता, घटाद्यवच्छिन्नचित् प्रमेयं, मध्यभागावच्छिन्नचित् प्रमाणम्' इति वृत्तेः एकलोलीभावमङ्गीकृत्य प्रतीत्युपपादनं न स्वरसम्। दीर्घदण्डस्थले दण्डमूलभागस्य दण्डमध्यभागेन दण्डाग्रभागसम्बन्धस्य लोके क्वाप्यदर्शनात्। आदित्यादेः स्वप्रभया विषयप्रकाशकत्वमेव। ननु 'घटमहं जानामि' इत्यत्र पररीत्या सम्बन्धः। विषयसम्बद्धप्रभावत्वं तत्र वर्तते। तद्वदत्रापि विषयसम्बद्धज्ञानवत्वं वाच्यम्; एवमङ्गीकारे विषयसम्बद्धवृत्तिसम्बन्धः अन्तःकरणे अभ्युपेयः तावन्मात्रेण 'घटमहं जानामि' इति प्रतीतिनिर्वाहः भवतां नेष्टः। प्रमेयचैतन्यं शुद्धचित् इत्यादि भवतांप्रक्रिया अतः 'परागर्थप्रमेयेषु या फलत्वेन सम्मता' इत्यादि वार्तिकाद्युक्तदिशा प्रमेयचैतन्यस्यैव फलत्वं वेदान्ततात्पर्यविषयत्वं इत्यादि न घटते। 'ब्रह्मवित् तदात्मानमेवावैत्' इत्यादि वेदे 'घटमहं जानामि' इत्यादिलोके च ज्ञाधात्वर्थादिवैरूप्येण अप्रामाणिकशुद्धचितमङ्गीकृत्य विषयव्यवस्थापनमपि परेषां निर्मूलम् ॥

एतेन (ब्रह्मणः स्वप्रकाशत्वोपपत्तौ) घटादौ फलव्याप्यत्वस्य समर्थितत्वात् रूप्यसुखादौ साक्षिभास्यतया अपरोक्ष व्यवहारेऽपि प्रमाणजन्यापरोक्षवृत्तिविषयत्वाभावात्। तथा च फलव्याप्यत्वसमानाधिकरणतद्वत्वस्य पर्यवसिततया सकलदोषनिरासात्। नच ब्रह्मणोऽपि वृत्तिप्रतिबिम्बितचिद्रूपफलभास्यत्वेनासम्भवः। तस्य फलत्वेन तद्विषयत्वाभावात्। अयमत्र निष्कर्षः। वृत्तिप्रतिबिम्बितचिज्जन्यातिशययोगित्वं वृत्त्या तत्प्रतिफलितचितावा अभिव्यक्ताधिष्ठानचिद्विषयत्वं वा फलव्याप्यत्वम्। चिज्जन्यातिशयश्च नावरणभङ्गः, नापि व्यवहारो विवक्षितः, किंतु भग्नावरणाचित्सम्बन्धः। सच घटादावस्ति नात्मनि सम्बन्धस्य भेदगर्भत्वात्। इत्यद्वैतसिद्ध्युक्तिः ॥

समर्थितत्वादिति। जानातिभात्योः सकर्मकाकर्मकत्वाभ्यां भिन्नार्थकत्वेन घटो भातीत्यादौ फलविषयो घट इत्यर्थात् सुखादौ वृत्त्यभावेऽपि साक्षात्क्रियमाणत्वप्रतीत्या चितो जगदुपादानत्वेन जगत्तादात्म्यात् तस्यैव विषयताशब्देन व्यवहारात् फलविषयत्वस्य घटादौ समर्थितत्वादित्यर्थः। तथा च सुखादावुक्ताभावसत्वे च। समानाधिकरणतद्वत्वस्य—समानाधिकरणोक्तविषयत्ववत्त्वस्य। समानाधिकरणत्वस्येति पाठे विशेषणस्येति शेषः। तथाचेत्यस्य उक्तविषयत्वे इत्यर्थः अनुमित्यादिविषयत्वस्य सुखादावपि सत्त्वादपरोक्षेत्युक्तम्। यद्यपि विद्यमानसुखाद्यनुमितिरप्यपरोक्षा। तथाऽपि यत्प्रमाणजन्यत्वमपरोक्षव्याप्यं तत्प्रमाणजन्यत्वविवक्षया इन्द्रियजन्यवृत्तिविषयत्वं पर्यवसितं बोध्यम्। शुद्धेऽपि घटादिचाक्षुषादिविषयत्वान्नाव्याप्तिः ॥

## गूढार्थसङ्ग्रहः

अथवा प्रमाणवृत्तियोग्यत्वं स्वाज्ञातत्वनाशकवृत्तिविषयत्वं विवक्षितम् । स्वाज्ञातत्वं स्वस्याभानापादकमज्ञानं विद्य मानसुखादौ तु तदप्रसिद्धम् । नित्यातीन्द्रिये तन्नाशकवृत्तिरप्रसिद्धेति बोध्यम् । तस्येत्यादि । मूलाज्ञानस्य शुद्धचिन्निष्ठत्वात् तन्नाशस्यापि तान्निष्ठत्वेन शुद्धस्य फलीभूतशुद्धाविषयत्वमिति भावः । गर्भत्वादिति । ननु—शुद्धेऽपि फलत्वेन भेदोऽस्त्येव उपहितकेवलयोर्भेदस्य सिद्धान्ते स्वीकारात्, तथा च शुद्धस्य फलत्वोपहिततादात्म्यमव्याहतमितिचेत्, सत्यं तथाऽपि विषयता-रूपाखण्डधर्मस्योक्ततादात्म्ये मानाभावः, भास्यानुयोगिकस्य भासकचित्प्रतियोगिकतादात्म्यस्यैव भासकतानियामकत्वेन विषयतात्वादुपादानचित्प्रतियोगिकतादात्म्यस्य दृश्यमात्रे घटादावध्यस्तत्वेऽपि शुद्धचिति फलस्य तादात्म्यानध्यासात् शुद्धचितएव फलत्वोपहिते तदध्यासात् शुद्धस्य स्वप्रकाशत्वेन फलविषयतां विनाऽपि व्यवहारसम्भवात् । अतएव विष-यत्वाभावादित्युक्तं मूले । 'अतएव च वेद्यनिष्ठस्त्वसावस्मिन् दर्शने' इति बौद्धाधिकारे उक्तम् । अस्मिन् वेदान्तनये पूर्वोक्तदर्शने असौ विषयतारूपसम्बन्धः । वेद्यनिष्ठस्तु दृश्यनिष्ठएव, नतु चिन्निष्ठः । चितः स्वप्रकाशत्वेनैव व्यवहार्य-त्वात् । तत्प्रतियोगिकस्याध्यस्तनिष्ठस्याध्यासिकतादात्म्यस्यैव विषयतात्वादिति भावः ॥

तथा च सम्बन्धस्य भेदगर्भत्वादित्यत्र योगित्वमित्यनेन उक्तसम्बन्धस्य केवलचिद्भेदव्याप्यविषयतारूपत्वादित्यर्थः, आवरणाभिभवोपहितचिद्विषयत्वं योगित्वान्तेन विवक्षितमिति भावः । अथवा योगित्वान्तेनोक्तसम्बन्धस्य भेदगर्भत्वात्, केवलचिद्भेदव्याप्यत्वात् । तथाच स्वावच्छिन्नावरणनाशोपहितचित्तादात्म्यं विवक्षितम् । अन्यथा रूप्यादेरपि शुक्त्याद्यवच्छि-न्नावरणाभिभवोपहितचित्तादात्म्येन फलव्याप्यतापत्तेः । एवं च घटादेरावणाभिभवावच्छेदकत्वेनोक्ततादात्म्येऽपि शुद्ध-ब्रह्मणि तदभावेनातद्भेदव्याप्यमुक्ततादात्म्यमिति तस्य फलाव्याप्यत्वमिति भावः । इति (ल.चं) उक्तिश्च निरवकाशा ॥

प्रपूर्वककाशधातोरकर्मकत्वस्य अन्यथैव यामुनमुनिभिरुपपादनेन शुद्धचितः फलत्वस्य वार्तिकोक्तस्य साधकाभावात्, शुद्धचितः साधकाभावे फलव्याप्यत्वेन घटादेः व्यवहारः, शुद्धचितस्तु फलमन्तरैव स्वप्रकाशत्वेन व्यवहारः, इति द्वैविध्य कल्पनाया अपि निर्मूलत्वात् । एतेन ततस्तदवच्छेदेनाज्ञाननिवृत्त्या भासमानं प्रमेयचैतन्यमपरोक्षं फलमित्युच्यते । तत् स्वयंभासमानं सत् स्वाध्यस्तं घटाद्यपि भासयतीति तत् फलव्याप्यमित्युपेयते । इति प्राक् (श्री.भा.२१३.पु) उदा-हृताद्वैतसिद्धिविवरणे अज्ञाननिवृत्त्या अनभिव्यक्तिनिवृत्त्या तेन वृत्तेः प्रमातृचिदुपरागार्थपक्षस्यापि संग्रहः । अनुपराग स्याप्यनभिव्यक्तित्वात्, निवृत्या भासमानं निवृत्याभिन्नस्य भासमानत्वस्याश्रयः । फलमिति वृत्तेरावरणनाशत्वात् प्रमातृ-परागत्वाच्च फलत्वात् तद्विशिष्टरूपेण घटादिचैतन्यं फलं, नच फलत्वं क्रियारूपवृत्तेः अनुपपन्नमिति वाच्यम्; घटादि-संयोगोपधायकक्रियोपहितरूपेण वृत्तेः क्रियात्वं तादृशसंयोगोपहितरूपेण फलत्वमिति स्वीकारात् । तादृशरूपयोःपौर्वापर्यात् फलव्याप्यं फलभास्यम् ।' इति वृत्तेः फलत्वमुक्तम्, फलव्याप्यत्वं च फलभास्यत्वमित्यपि । (लघुचन्द्रिका) एवमङ्गीकारे वृत्तिभास्यत्वेनैव निर्वाहे शुद्धचितः मध्ये प्रवेशः कुतः? वृत्तेर्जडत्वेन मिथ्यात्वात्मोक्षानन्वयित्वमित्यादि लघुचन्द्रिकोक्तिः पूर्वमेव पर्यालोचिता । दीपतत्प्रभयोरिव अहमर्थधर्मभूतज्ञानयोः स्वप्रकाशत्वेन धर्मभूतज्ञानप्रसरस्यैवाज्ञाननिवृत्तितया तद्भास्यत्वं घटादेस्सम्भवतीति 'घटमहं जानामि' इति प्रतीतिः सिद्धान्ते सूपपादा ॥

निवृत्त्या भासमानं वृत्तेरज्ञाननिवृत्त्यर्थत्वपक्षान्यपक्षयोरपि जीवचिद्विषयचितोः अनुपरागनिवृत्तिरूपः वृत्त्यादि द्वारकोपरागः प्रमातृ प्रमेयचितोरभेदश्च अज्ञाननिवृत्तिशब्दार्थो बोध्यः । तादृशानुपरागभेदयोः भातीति व्यवहारविरोधि-त्वात् । 'फलमिति । निवृत्तेश्चैतन्यरूपत्वेऽप्युक्तनिवृत्तित्वेन वृत्तिप्रयुक्तत्वात्फलत्वम् । एकदेशनाशादिपक्षेऽप्युक्तवि-शिष्टाज्ञानसम्बन्धस्याज्ञानविषयतावच्छेदकत्वस्य वा विरहः अज्ञाननिवृत्तिर्बोध्या । तस्य च वृत्तिप्रयुक्तत्वात् फलत्वम् ।

## गूढार्थसंग्रहः

वृत्तेरज्ञाननाशत्वपक्षेऽपि तेन रूपेण वृत्तिप्रयुक्तत्वात् फलत्वम्। अधिकरणमेव ध्वंसः ज्ञानमेव स्वप्रागभावनिवृत्तिरित्यादिमतेषु 'ज्ञानेनाज्ञानं नष्टम्' इत्यादिप्रतीतिस्तथाऽवश्यं वाच्यमित्याद्युक्तम्। वृत्तेर्जीवचिदुपरागार्थत्वपक्षे जीवाचिदभेदाभिव्यक्त्यर्थत्वपक्षे च वृत्त्यादिद्वारकोपरागः प्रमात्रभेदश्च विषयचिति फलम्। तादृशफलसम्बन्धाच्च विषयचैतन्यं फलम्। तादृशचिदेव भात्यादेरर्थः तादृशचिदेव साक्षात्करोत्यादेरर्थः। एवं च घटं साक्षात्करोमीत्यादौ फलीभूतस्य धात्वर्थतावच्छेदकोक्तचैतन्यस्याश्रयत्वात् घटादेःकर्मत्वमिति भावः। व्याप्यमाश्रयः' इति गुरुचन्द्रिकाऽपि नादर्तव्या॥

वृत्तेरज्ञाननाशार्थत्वस्य तन्नाशरूपत्वस्य वा अङ्गीकारो युक्तस्स्यात्। विषयचैतन्यस्य फलत्वं तस्य भात्यादेरर्थत्वं च निर्मूलम्। एतदुभयमन्तरा प्रतीतिव्यवहारयोः पूर्वमेवोपपादनात्। एवं तादृशानुपरागभेदयोः भातीति व्यवहार विरोधित्वमपि न कल्पनीयम्। वृत्तिविषयत्वेनैव भातीति व्यवहारोपपत्तौ तत्कल्पनाया अनुचितत्वात्। वृत्तिमन्तरा घटो भातीति व्यवहारो नास्तीति सर्वेषां सम्प्रतिपन्नम्। निर्गुणात्मवादे वृत्तिः अन्तःकरणवृत्तिः, सगुणात्मवादे अहमर्थवृत्तिधर्मभूतज्ञानमिति भिदा वृत्तिसत्त्वएव घटो भातीति व्यवहारे सम्प्रतिपन्ने वृत्तेरावरणभङ्गे उपरागे अभेदाभिव्यक्तौ अभेदेचोपयोगः नतु प्रकाशकत्वांशे, प्रकाशकत्वं चितएव, इति कल्पना कथं घटते? भातीत्यादिव्यवहारप्रवृत्त्यादि कार्येषु वृत्तिमात्रं न प्रयोजकम्' इत्यादिना प्राक् (४०२.पु) उदाहृत गुरुचन्द्रिकाग्रन्थेन वृत्तिमात्रस्य प्रयोजकत्वं न सम्भवतीत्युपपादनेन शुद्धचित्सिद्ध्यतीति न निर्णेतुं शक्यते, शुद्धचितोऽपि भातीत्यादिव्यवहारस्य वृत्तिमन्तरा असम्भवेन सर्वत्र वृत्तिसम्बन्धेनैव भातीति व्यवहारस्य निर्वाहः सम्भवतीति तत्रोक्तदोषो नैव घटते। अनुमित्यादौ भातीति व्यवहारो नास्तीत्यभ्युपगमेऽपि यत्र यत्र भातीति व्यवहारः, तत्र तत्र वृत्तिर्वर्तत एव। क्वचिदविद्यावृत्तिरिति वृत्तिवैलक्षण्याभ्युपगमेऽपि भातीति व्यवहारप्रयोजकवृत्तिसामान्ये शक्तिविशेषमङ्गीकृत्य शक्तिविशेषविशिष्टवृत्तिसम्बन्धेनैव भातीति व्यवहारप्रवृत्त्यादेरुपपत्तिसम्भवे शुद्धचितः अप्रामाणिकत्वस्याप्रकम्प्यत्वात्॥

'आवरणभङ्गश्च वृत्त्या' इति सिद्धिग्रन्थेन अज्ञानस्य प्रमातृचिदनुपरागस्य अभेदानभिव्यक्तेश्च तत एव निवृत्तिसम्भवात्। यदज्ञाननिवर्तकं तदेव विषयप्रकाशकं, तदर्थं शुद्धचित् नैव कल्पनीया। शुद्धचितमन्तरैव व्यवहारस्योपपत्तिः सम्भवतीति विचारावसरे शुद्धचितः सिद्धिरेव नास्तीति शुद्धचितं सिद्धवत्कृत्य पक्षत्रयनिरूपणं कथं युक्तं भवति? उपरागस्य भवत्सम्मतस्य अभ्युपगम एव न सम्भवति, निरवयवस्य सन्निकृष्टस्य प्रतिबिम्बासम्भवात्। आकाशस्य वेदान्तिमते सावयवत्वेन प्रतिबिम्बसम्भवात्। नैयायिकमते अभ्रनक्षत्रादीनामेव प्रतिबिम्बाभ्युपगमात्। एतद्दोषेणैव भामतीकारेण प्रतिबिम्बानभ्युपगमाच्च। प्रमातृप्रमेयचैतन्ययोरभेदसिद्धिरपि शुद्धचित्सिद्ध्यनन्तरकालिकयेव॥

अतः पक्षत्रयावलम्बनेन चितः फलत्वमङ्गीकृत्य घटादेः फलव्याप्यत्वस्योपपादनं नैव घटते। फलव्याप्यत्वस्य पर सम्मतस्य असम्भवादेव फलव्याप्यत्वचिद्विषयत्वादिरूपदृश्यत्वहेतुना मिथ्यात्वसाधनमपि न सम्भवति। वृत्तिमन्तरा प्रकाशते भाति जानाति इति व्यवहारस्यैवासम्प्रतिपन्नतया अवेद्यत्वघटितस्वप्रकाशत्वसाधनावसरे 'नाप्यवेद्यत्वानिरुक्तिः, फलव्याप्यत्वस्यैव तत्त्वात् आवरणभङ्गे चितएव फलत्वात्। नचैवं घटादेरपि वृत्तिवेद्यतया फलविषयत्वाभावादिति शङ्कायां घटादौ फलव्याप्यत्वस्य समर्थितत्वात्' इत्यादि प्रागुदाहृत (४१५-पु) अद्वैतसिद्ध्युक्तिरनुपादेयेति सिद्धम्। 'ब्रह्मवित्, घटमहं जानामि' इत्यादिप्रयोगाणां वृत्त्यैव निर्वाहे चितः वृत्तिव्याप्यत्वं घटादेः फलव्याप्यत्वम्' इत्यादिवैषम्य कल्पनस्य निर्बीजत्वात्॥

## श्रीभाष्यम्

**विषयप्रकाशनतयैवोपलब्धेरेवहि संविदस्स्वयम्प्रकाशता समर्थिता। संविदो विषयप्रकाश(न)तास्वभावविरहेसति स्वयम्प्रकाशत्वासिद्धेरनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात्।**

## श्रुतप्रकाशिका

स्वयम्प्रकाशत्वसमर्थनात् तदभ्युपगमप्रकारेणापि निर्विषया संविन्नास्तीत्याह। विषयेति। ततःकिमित्यत्राह। **संविदोविषयेति**। सविषयज्ञानोत्तीर्णायास्संविदः कदाचिदपि विषयसम्बन्धाभावेन स्वयम्प्रकाशत्वासिद्धेः ज्ञानान्तरावेद्यत्वाच्च तुच्छतेत्यर्थः। ननु यदि विषयप्रकाशकतया स्वयम्प्रकाशत्वमुपपाद्यते तदाऽयं दोषस्स्यात्। विषयसम्बन्धाभावेऽप्यनुभूतित्वादित्यनेन साध्यस्वप्रकाशत्वसिद्धिरितिचेत्—किमिदमनुभूतित्वं किं स्वतस्सिद्धत्वं तदा साध्याविशिष्टतास्यात्। यदि विषयप्रकाशकत्वमनुभूतित्वं तदानीमुक्तदोषस्स्यादेव। विद्यमानदशायां सर्वदा भासमानत्वमपि न त्वया हेतुत्वेन वाच्यम्। सुखदुःखेच्छादौ जडत्वेन त्वदभिमते व्यभिचारात्। अतो विषयप्रकाशकत्वमनुपजीव्य स्वयम्प्रकाशत्वं दुस्साधमित्युक्तदोषानतिवृत्तिः॥

कथं स्वप्रकाशत्वरूपसाध्यधर्मनिवृत्तौ धर्मिभूतसंविदसिद्धिरित्यत्राह। **अनुभूतेरनुभवान्तराननुभाव्यत्वाच्चेति**। नन्वेकस्याएव संविदः अन्तःकरणवृत्तिद्वारा विषयसम्बन्धः कादाचित्कः तद्विगमेऽपि स्वापादिदशानुस्वप्रकाश

## गूढार्थसंग्रहः

त्रिष्वपि एकविधः प्रकाशते व्यवहारः इति वदता भगवता यामुनमुनिना जानातीत्यादि ज्ञानार्थकधातुघटितव्यवहारः त्रिष्वपि एकरूप एव इत्युक्तं भवति। व्यवहारसामान्यमपि जागरणकालिकमेव वाच्यं भवद्भिरपि। जाग्रद्दशायां च वृत्तिशून्यावस्था नास्त्येव। कस्यापि पदार्थस्य ज्ञानमन्तरा जाग्रद्दशायां स्थितेरसम्भवात्। सिद्धान्ते च वृत्तिस्थानापन्नधर्मभूत ज्ञानप्रसरमन्तरा नैव व्यवहारः। एवं निर्गुणात्मवादिभिः साङ्ख्ययोगविद्भिः वृत्तिमन्तरा, नैयायिकैर्वैशेषिकैः भाट्टैः प्राभाकरैश्च सगुणात्मवादिभिः ज्ञानमन्तरा न व्यवहार इत्येव अङ्गीक्रियते इत्ययमर्थः सर्वानुभवसिद्धः। अतः वृत्तिमन्तरा चितो व्यवहारः चितः फलत्वं तद्व्याप्यत्वं घटादौ, न शुद्धचितीत्यादिकल्पनं निर्मूलमनुभवासिद्ध मनुभवविरुद्धचेति यामुन मुन्यादेराशयः॥

स्वप्रकाशतया शुद्धाचितः सिद्धिः भामतीकारैरिष्यते वृत्तेरावणभङ्गार्थत्वेन शुद्धचितः वेदान्तजन्यवृत्तिविषयत्वस्य विवरणकारैरङ्गीकारेऽपि भामतीकृद्भिः वृत्त्युपहितविषयत्वमेव वेदान्तजन्यवृत्तेरप्यङ्गीक्रियते। शुद्धचित्तु स्वप्रकाशतयैव सिध्यतीति भामतीसिद्धान्तस्य पूर्वमेव (३४६ पु) निरूपणात्। उक्तंचाद्वैतसिद्धौ 'यथा च वृत्त्यतिरिक्तभानासिद्धिः तथा स्वयं ज्योतिष्ट्वप्रस्तावे विस्तरेण वक्ष्यामः' इति। अत्र गुरुचन्द्रिका। 'वक्ष्यामइति 'तमेव भान्तमनुभाति सर्वम्' 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' 'स्वप्रकाशमहानन्दमात्मैव तत्' इति श्रुत्यादिना आत्मास्वप्रकाशज्ञानरूपः इतिवक्ष्यते' इति। शतृप्रत्ययादिकमपि न विरुद्धं प्रभां भान्तीमनुभाति घटादिकं, तस्य भासा घटादि भातीतिवत् अग्निं दहन्तमनुदहत्ययः इत्यादिवत्तस्योपपत्तेः। उक्तं च ब्रह्मास्ति भातीत्यादौ लकारः साधुत्वार्थः इति ध्येयम्।' इति च स्वप्रकाशानभ्युपगमे जगदान्ध्यप्रसङ्गश्चेति शङ्कायामाह—**विषयप्रकाशनतयोपलब्धेरेवहि इति**॥ प्रागुदाहृत (१९८.पुटे) विवरणोक्तानुमानं (३१९.पु) विद्यासागरीयानुमाने च अयमर्थः स्फुटः॥ **संविदस्तुच्छतैव स्यादिति**। स्वप्रकाशानभ्युपगमे जगदान्ध्य प्रसङ्गात्। इति सिद्धान्तबिन्दुविवरणे (२१५.पु) उक्तदोषः न लगतीती पूर्वमेव (३१९.—३५६.पु च) निरूपितम्॥

## गूढार्थसंग्रहः

प्रभां भान्तीमनुभाति घटादिकं इत्यत्र प्रभायाः भानं व्यवहारानुगुण्यमेव, प्रभायाः ज्ञानविषयतादशायामेव ज्ञानविषयीभूतप्रभासम्बन्धात् घटादेर्ज्ञानविषयत्वमिति तात्पर्येण तद्वाक्यं प्रवृत्तम्। प्रभाया भासा घटादिभातीति लोके न क्वापि व्यवहारः। किंतु दीपस्य भासा आदित्यस्य भासा घटादि भातीत्येव व्यवहारः। यदि दीपप्रभाभासा आदित्य प्रभाभासा घटादिभातीति व्यवहारः इत्याग्रहः तदा घटादिचाक्षुषप्रतिबन्धकतमस्सम्बन्धविरहएव भाश्शब्दार्थः। ननु 'तस्य भासा सर्वमिदं विभाति' इति पूर्वश्रुत्यनन्तरश्रुतिवाक्ये तस्यभासेति तदभिन्नभासेति सिद्धान्तबिन्दुटीकोक्तार्थवत् तस्या भासेत्यर्थः कस्यापि सम्मतः। 'अग्निं दहन्तमनुदहत्ययः' इत्यत्र अयसि दाहकर्तृत्वं तत्त्वतो नास्त्येवेति सर्वसम्मतम्। अतः औपचारिकएव स प्रयोगः। तत्तुल्यता च 'तमेव भान्तमनुभातिसर्वम्' इति श्रुतेः नैवोत्प्रेक्षितुं शक्या। भान्तमपरोक्षव्यवहारविषयं अनु आश्रित्य इत्यादि प्राक् (२२४.पु) उदाहृतसिद्धान्तबिम्दुविवरणोक्त रीत्या घटादेरपरोक्षव्यवहारविषयत्वं ब्रह्मणः अपरोक्षव्यवहारमूलकम् इत्यर्थः प्रतीयते। प्रभायाः अपरोक्षव्यवहारविषयतामनुसृत्य घटादेरपरोक्षव्यवहारविषयत्वामित्युक्तौ लिङ्गकरणतावादिमत इव अपरोक्षप्रभाहेतुकं घटाद्यपरोक्षमिति दृष्टान्ते प्रतीतिस्सम्भवति। एवमेव दार्ष्टान्तिके यद्यङ्गीक्रियते, तदाऽपि ब्रह्मणः अपरोक्षवृत्तिदशायामेव सर्वस्य अपरोक्षत्वेन व्यवहारः इत्येव सिद्ध्यति। एवमर्थाङ्गीकारे तस्य भासेत्यस्य तन्निष्ठापरोक्षव्यवहारविषयत्वेनेत्यर्थएव युक्तः। ननु तदाभिन्नभानेनेति परोक्तार्थः। अत्र तच्छब्दस्यापि न निर्विशेषबोधकत्वनियामकं किंचित्। अतः नानया श्रुत्या कूटस्थ निर्विशेष परसम्मतचित् सिध्यति॥

अतएव प्राक् (४१३.पु) गुरुचन्द्रिकोक्तौ 'यत् साक्षादपरोक्षाद्ब्रह्म' इति श्रुतौ अपरोक्षत्वं अज्ञानविरोधिचैतन्यं स्वातिरिक्तेति, स्वविलक्षणचिदित्यर्थः तेन अज्ञानविरोधित्वरूपेण वृत्त्यपेक्षत्वेऽपि न क्षतिः, इति। एवं प्राक् (४०५.पु) स्फुरणमसत्त्वापादकाज्ञानविरोधिचैतन्यम्, अत्र उक्तविशिष्टस्फुरणस्य स्वातिरिक्तवृत्तिसापेक्षत्वात् संवित्पदेन पूर्वं चैतन्यमुक्तम्, इति च सङ्गच्छते। वृत्त्यसत्वे चिन्मात्रं भातीति व्यवहारः न कस्यापि सम्मतः इति प्रागेवोक्तम्॥

अत्र अपरोक्षत्वस्य वृत्तिसापेक्षत्वमङ्गीकृत्य स्वविलक्षणाचिदनपेक्षत्वाङ्गीकारेण उभयत्र वृत्तिविषयत्वेनैव अपरोक्षत्वमिति अङ्गीकृतं भवति। एवं च घटादौ चित्तादात्म्येनापरोक्षत्वमित्युक्तिः न घटते। एवमङ्गीकारे सर्वत्र एकसम्बन्धेनैव अपरोक्षत्वनिर्वाहः सम्भवति। एतेन सिद्धान्तबिन्दुटीकायां 'साक्षादपरोक्षात्' अपरोक्षचिद्रूपं न तत्तादात्म्येन घटादिवदपरोक्षः, इति विवरणमपि निरवकाशम्। सर्वत्र वृत्त्यैव अपरोक्षव्यवहारसम्भवात्॥

एतेन प्रत्यक्षप्रमा तु अत्र चैतन्यमेव 'यत् साक्षादपरोक्षात्' इति श्रुतेः अपरोक्षात् इत्यस्य अपरोक्षमित्यर्थः ननु चैतन्यमनादि तत्कथं तत्र चक्षुरादेः तत्करणत्वेन प्रमाणत्वमिति, उच्यते—चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिः इन्द्रियसन्निकर्षादिना जायत इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते। ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः। इत्यद्वैतपरिभाषोक्तिरप्यनुपादेया॥

स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वं, 'यत् साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः। इति (अ.सि) अत्र अपरोक्षत्वं अज्ञानाविषयत्वप्रयोजकविशिष्टचित् विषयनिष्ठंचेदं स्वप्रकाशत्वम्। इति लघुचन्द्रिकोक्त्या अत्रापरोक्षज्ञान रूपत्वस्य अविवक्षितत्वस्य स्फुटत्वात्। एवं (ब्र.सू.३.३.३५) सूत्रभाष्यानन्दगिरिव्याख्यायां घटादि संवित्कर्मत्वेनापरोक्षं ब्रह्मतु साक्षात् अपरोक्षम्, इति रत्नप्रभायां च घटादिकं चिद्विषयत्वेनापरोक्षं, ब्रह्मतु साक्षादविषयत्वेनापरोक्षमिति इति

## श्रीभाष्यम्

**नच स्वापमदमूर्छादिषु सर्वविषयशून्या केवलैव संवित्परिस्फुरतीति वाच्यम् । योग्यानुपलब्धिपराहतत्वात् । तास्वपि दशास्वनुभूतिरनुभूताचेत् तस्याः प्रबोधसमयेऽनुसन्धानं स्यात् नच तदस्ति ? नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः । अतस्स्मरणाभावः कथमनुभवाभावं साधयेत् ? उच्यते–निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेण्य-**

## श्रुतप्रकाशिका

संविचकास्तीति न तुच्छताप्रसक्तिरित्यत्राह । **नचेति** । केवलशब्देन निराश्रयत्वमुच्यते—कुतइत्यत्राह । **योग्येति** । तदेवोपपादति । **तास्वपीति** । विपर्यये पर्यवसानं दर्शयति । **नच तदस्तीति** ॥

**व्यापकाभावोहि** व्याप्याभावसाधकः स्मरणं च नानुभवव्यापकम् । अतस्तदभावो नानुभवाभावसाधकइत्याह । **नन्विति** । पथि गच्छता स्पृष्टतृणादीनां प्राग्जन्मानुभूतार्था(दी)नांचास्मरणादिति भावः । परिहरति– **उच्यतइत्यादिना** । विषयान्तरव्यासङ्गादिरस्मरणमात्रहेतुः । विषयवैचित्रीविरहः निष्प्रयोजनतया तात्पर्यभावस्तादात्विकतीव्रसंवेदनान्तरमनुभवानभ्यासश्चास्मरणमात्रहेतु ाया प्रसिद्धाः, अतो नियमशब्दः अस्मरणनियमइत्युक्तेः । जन्मान्तरानुभूतस्या-पा(र्थस्या)नुभवाभावप्रसङ्गातद्व्यावृत्त्यर्थं निखिलसंस्कारेत्युक्तम् । देहविगमादीत्यादिशब्देन नारकदुःखप्रसूतिव्यसनकालविप्रकर्षा विवक्षिताः । यथा संवित्सिद्धौ—

## गूढार्थसङ्ग्रहः

च एतच्छ्रुत्यर्थाभिधानेन अपरोक्षादित्यत्र विषयनिष्ठापरोक्षत्वमेव विवक्षितमिति स्फुटम् । ‘यद्वैतन्नपश्यति’ इत्यादिबृहदारण्यकश्रुतिसन्दर्भस्य ‘संज्ञानमाज्ञानम्’ इत्याद्यैतरेयारण्यकादिश्रुतिसंदर्भस्य च न ब्रह्मणः दृष्ट्यादिस्वरूपतापरत्वं, किंतु अहमर्थजीवधर्मभूतज्ञानस्य दृष्ट्यादिस्वरूपतापरत्वम्, इति निरूपितं भावप्रकाशे (द्वि.सं) ॥ वृत्तौ ज्ञानत्वमुपचरितं चिति मुख्यमित्यर्थस्यैवासिद्धेः। अर्थप्रकाशत्वरूपज्ञानत्वस्य चित्यसम्भवस्य प्रागेवोपपादनात्, अत्र उपलक्षितमेव विवक्षितमित्यत्र नियामकाभावात् वृत्तेरपरोक्षत्वे चक्षुरादेः तत्करणत्वेन प्रमाणत्वमिति व्यवहारस्य स्वरसतः उपपादनसम्भवे अन्यथोपपादनस्यानुचितत्वात् । अद्वैतपरिभाषायां वृत्तेरपि स्वविषयत्वस्य सुखादिविषयकवृत्तेश्चाङ्गीकारेणैव साक्षिभास्यत्वस्योपपादनेन वृत्त्यादौ वृत्तिसम्बन्धनैव अपरोक्षव्यवहारोपपात्तिसम्भवात् ॥

‘अत्रायं पुरुषः’ इत्यत्र अहमर्थजीवस्यैव स्वप्रकाशत्वं विवक्षितमिति निरूपितं भावप्रकाशे (द्वि.सं)। स्वप्रकाशत्वं शुद्धचिति धर्मः नैवाङ्गीकृतो ब्रह्मानन्दसरस्वतीभिः । अवेद्यत्वेसति अपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वस्य स्वप्रकाशरूपत्वाङ्गीकारेऽपि अभावत्वविशिष्टस्य शुद्धचित्यनङ्गीकारात् । शुद्धचितः स्वप्रकाशोपलक्षितत्वमेव अभ्युपगतमिति ‘अत्रायं पुरुषः’ इत्यादिश्रुतिवाक्यानामस्वारस्यमपरित्याज्यमेव । अतः परसम्मतनिर्विशेषचितः संविद्रूपायाः पराभ्युपगतायाः श्रुत्यादिभिरपि नैव सिद्धिरिति भगवतआशयः ॥

**स्वापमदमूर्च्छादिषु** । इत्यत्र आदिपदेन असम्प्रज्ञातसमाधिसंग्रहः निर्विकल्पकविचारस्तु प्रागेव कृतः । विवरणे (पं.पा.वि) सौषुप्तज्ञानाभावस्य प्रबोधसमये अनुमानेन निर्णयो न सम्भवति, ग्रामं गच्छतः तृणादिस्पर्शेऽपि तृणादिस्पर्शस्यास्मरणमात्रेण ज्ञानाभावस्य असम्भवात् । इति दूषणमुक्तम् । तमेव दूषणमाशङ्कते–**नन्वनुभूतस्य पदार्थस्येत्यादिना** ॥

## श्रीभाष्यम्

**स्मरणनियमोऽनुभवाभावमेव साधयति। न केवलमस्मरणनियमादनुभवाभावः सुप्तोत्थितस्य इयन्तं कालं न किंचिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः। नच सत्यप्यनुभवे तद स्मरणनियमो विषयावच्छेदविरहादहङ्कारविगमाद्वेति शक्यते वक्तुम् अर्थान्तराननुभवस्यार्थान्तराभावस्यचानुभूतार्थान्तरास्मरणहेतुत्वाभावात्।**

## श्रुतप्रकाशिका

प्रायणान्नरकक्लेशात्प्रसूतिव्यसनादपि। चिरातिवृत्ताः प्राग्जन्मभेदा नस्मृतिगोचराः॥

इति देहविगमादीनां निखिलसंस्कारतिरस्कृतिकरत्वं स्वभावः। पुण्यविशेषादपवादात् कस्यचिदेकस्य जातिस्मृतिः। प्रबलशब्दो व्यासङ्गाद्यपेक्षया प्राबल्यपरः। उक्ततिरस्कारकाभावे कदाऽपि स्मरणमनुभवव्यापकम्। अतस्तदभावोऽनुभवाभावसाधकएवेत्यर्थः। न केवलमनुभवसाधकाभावः बाधकप्रमाणान्तरमप्यस्तीत्याह। **न केवलमिति**॥

**सिद्धेरिति**। अनुभवाभावस्येत्यनुषङ्गः। अथास्मरणनियमस्यान्यथासिद्धिमाशङ्कते। **नचेति**। अहङ्काराविगमः अहं प्रत्ययविगमः। परिहरति। **अर्थान्तरेति**। घटाननुभवः पटविनाशश्च अनुभूतकुड्याद्यस्मरणकारणं न दृष्टमित्यर्थः ननु कुड्यादेस्स्मरणंप्रति घटादेरकारणत्वात्तदभावो नास्याः स्मरणहेतुः इहतु स्मरणकारणस्याभावोऽस्मरणहेतुरेव।

## गूढार्थसंग्रहः

**इयन्तं कालं न किंचिदहमज्ञासिषमिति**। अस्य प्रत्यवमर्शस्य विवरणकारसम्मतं भावरूपाज्ञानविषयकत्वं पर्यालोचयिष्यते। 'सुखमहमस्वाप्स्वम्' इति प्रत्यवमर्शे भावरूपाज्ञान सुख साक्ष्याकाराः तिस्रः अविद्यावृत्तयः निर्विकल्पकरूपाः विवरणकारमते अङ्गीक्रियन्ते। भावरूपाज्ञानस्य उत्तरत्र साधनासम्भवस्य उपपादयिष्यमाणतया 'न किंचिदहमज्ञासिषम्' इति प्रत्यवमर्शस्य ज्ञानाभावविषयकत्वमेवाङ्गीकरणीयम्, पूर्वं साक्ष्याकाराविद्यावृत्तिरुत्वे तत्रापि ज्ञानत्वमवश्यमेषितव्यमेवेति 'न किंचिदहमज्ञासिषम्' इति प्रत्यवमर्शानुपपत्त्या पूर्वं साक्ष्याकाराविद्यावृत्त्ययोगेन तदभावः सिध्यतीति भावः॥

यद्यपि 'सुखमहमस्वाप्सम्' इत्यादेः सौषुप्तानुभवमूलकस्मृतित्वं विवरणकारैरभ्युपगम्यते। वार्तिककृता च 'न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः। कालाद्यव्यवधानत्वात् नह्यामस्यमतीतभाक्' इत्युक्तम्। 'कालाद्यव्यवधानत्वादिति। यदा स्मृतिः परेण बाध्या तदाऽपि साक्षिरूपाऽनुभवोऽप्यस्तीत्यर्थः।' इति सिद्धान्तबिन्दुटीका। एतत्पक्षे च स्मृत्यभावे कारणान्तरमेवोक्तम्। तथाऽपि निर्विशेषचिद्विषयकानुभव एव विप्रतिपन्नः। तन्मूलकस्मृतेरेव विप्रतिपन्नत्वात्। 'सुखमहमस्वाप्सम्' इत्यस्य स्मृतित्ववादिभिरपि विवरणकारैः अहमर्थांशे स्मृतित्वं परित्यक्तमेव। अहङ्कारस्तु व्युत्थानसमये एव अनुभूयत इति तात्सिद्धान्तात्। अहङ्काराभावाच्च नैका विशिष्टवृत्तिरपि निर्विकल्पकवृत्तिरिति च॥

एवं च अस्वारस्येन विप्रतिपन्नस्मृत्यभ्युपगमापेक्षया अहमंशे स्मृतिर्न सम्भवतीत्यत्र यद्बीजमुक्तं तेनैव निर्विकल्पकानुभवमूलकस्मृतिः न घटत इति उक्तिरेव युक्ता इत्यभिप्रेत्य शङ्कते— **नच सत्यप्यनुभवे इत्यादिना। विषयावच्छेदविरहादिति**। यद्यप्ययं हेतुः परैरहमर्थांशे स्मृतित्वाभावेऽपि नोपन्यस्तः निर्विकल्पकस्मृतिरपि परैरङ्गीक्रियते। तथाऽपि घटमहं जानामि' इत्यत्र विषयाश्रयोपाधिद्वयविनिर्मुक्तज्ञानस्यैवात्मतायाः परैरभ्युपगमात् सुषुप्तावहङ्कारविगम इव विषय

## श्रीभाष्यम्

**तास्वपि दशास्वहमर्थोऽनुवर्तत इति च वक्ष्यते। ननु स्वापादिदशास्वपि सविशेषो ऽनुभवोऽस्तीति पूर्वमुक्तम्। सत्यमुक्तं सत्वात्मानुभवः। सच सविशेषएवेति स्थापयिष्यते। इहतु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते। केवलैव संविदात्माऽनुभवइतिचेत् (न) साच साश्रयेति ह्युपपादयिष्यते।**

## श्रुतप्रकाशिका

नैवम्—कुड्यादिस्मरणंप्रति घटादेरिव ज्ञातृज्ञेययोरपि स्मरणंप्रत्यकारणत्वमकामेनापि स्वीकार्यमित्यभिप्रायेणह्यर्थान्तरशब्दः प्रयुक्तः। अयमर्थः ज्ञातृज्ञेययोः स्मरणंप्रति कारणत्वं दृष्टत्वादङ्गीक्रियतेचेत्—दृष्टत्वादेवानुभवेऽपि ज्ञातृज्ञेययोः कारणत्वमङ्गीकार्यम्। यदि ज्ञातृज्ञेययोः दृष्टत्वेऽप्यनुभवकारणत्वं नाङ्गीक्रियते—स्मृतावपि कारणत्वं न स्यात्। अतस्तदभावान्नस्मरणाभाव इति॥

एतद्दूषणमहमर्थाभावमभ्युपगम्योक्तम्। अहमर्थाभावो नास्तीत्युपपादयिष्यत इत्याह। **तास्वपीति**। अनुवर्तते प्रकाशते ततो हेतुरसिद्धश्चेत्यर्थः। पूर्वं सविशेषोऽनुभवः स्वापादिदशास्वस्तीत्युक्तमिति तमालम्ब्य व्याघाताभिप्रायेण चोदयति। **नन्विति**। अत्राह। **सत्यमुक्तमिति**। सतु आत्मानुभवः नानुभूत्यनुभव इत्यर्थः अनुभूतिविरहे स आत्मा निर्विशेषस्यादित्यत्राह। **सचेति**। प्रत्यक्त्वानुकूलत्वाविशिष्ट इत्यर्थः इह किं निषिध्यत इत्यत्राह। **इहत्विति**॥

शब्दान्तरेणासन्ततमङ्गीकृतमिति शङ्कते। **केवलैव संविदात्मानुभव इतिचेदिति**। आत्मानुभवे केवलात्मानुभवदशायां स्वापादिदशायां या संवित्त्वया नित्यतयाऽभ्युपेता सा प्रसरणाभावेन विषयावच्छेदविरहात्तदानीं केवल निर्विशेषा अस्मदुक्तैव स्यादिति भावः। परिहरति। **साचेति**। साच धर्मभूता संवित्। विषयविरहिता(पि)वा साश्र-

## गूढार्थसंग्रहः

सम्बन्धविगमोऽपि वर्तते। अहमर्थस्य अर्थवित्तिवैयत्त्ववादि प्राभाकरमते अहमर्थस्य सत्वेऽपि अर्थवित्तेरभावात् न सुषुप्तौ भानमित्यङ्गीक्रियते। एवं च शुद्धाचितः सुषुप्तौ विषयावच्छेदमन्तरैव भानस्य परैरभ्युपगमेन स्मृत्यभावे सोऽपि हेतुः सम्भवतीत्यभिप्रेत्य विषयावच्छेदविरहादित्युक्तम्॥

'सुखमहमस्वाप्सम्' इति सौषुप्तानुभवमूलकस्मृतिः वर्ततएवेति नास्मरणं, अतश्च एतन्मूलभूतसौषुप्तानुभव एव विषयाश्रयविनिर्मुक्तसंवित् ज्ञप्त्यादिरूपीनिर्विशेषीचित्साधकः इति विवरणकारसिद्धान्तो युक्त एवेति शङ्कायामाह **तास्वपि दशासु इत्यादिना।**

**वक्ष्यत इति**। सुषुप्तावहङ्कारनाशकल्पनं परेषामप्रामाणिकमिति निरूपयिष्यते। इत्थं च सुखमहमस्वाप्समिति अहमंशेऽपि स्मृतिः स्वरससिद्धा न प्रत्याख्यातुं शक्यते। अतः तन्मूलानुभवोऽपि सविशेषानुभव एव नतु निर्विशेषानुभव इति भावः। तमेवार्थमाह **स च सविशेष एवेति स्थापयिष्यत इति।**

**सा च साश्रयेतीत्यादि**। 'मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासेन रक्तं मुखमिति प्रतीतिवदहङ्काराश्रयतया साक्षिचैतन्यस्य स्मरणाश्रयत्वादहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः, न पुनरहं सुखीतिवदाश्रयतया। स्मृति संशय विपर्ययाणां साक्षिचैतन्याश्रयत्वनियमात् अहङ्कारस्य च प्रमाणजन्यज्ञानाश्रयत्वनियमात् प्रमात्वेनैव तत्कार्य-

## श्रीभाष्यम्

**अतोऽनुभूतिस्सती स्वयं स्वप्रागभावं नसाधयतीति प्रागभावासिद्धिर्नशक्यते वक्तुम्। अनुभूतेरनुभाव्यत्वसम्भवोपपादनेनान्यतोऽप्यसिद्धिर्निरस्ता। तस्माच्च प्रागभावाद्यसिध्या संविदोऽनुत्पत्तिरुपपत्तिमती।**

## श्रुतप्रकाशिका

येत्यर्थः। केवलैवेत्यादेरेवंवाऽर्थः। आत्मानुभवरूपा आत्मस्फुटणरूपा या संवित् सा केवलैवेतिचेत् अस्मदुक्तसकलविषयादिविशेषशून्यैवेतिचेदित्यर्थः। परिहरति। **साचेति**। सा धर्मिस्फुरणरूपा या संवित् सा साश्रयेति वक्ष्यते स्फुरणं हि स्फुरतो धर्मः। यथा प्रभाऽऽश्रयदीपस्य धर्मिणः औज्वल्यं दीपाख्य धर्मिगतो धर्मः तद्वदित्यर्थः। धर्मिस्वरूपभूतज्ञानस्य स्फुरणं नित्यम्। तच्च भासमानताव्यवहारानुगुण्यं धर्मभूतज्ञानस्य स्फुरणं विषयसम्बन्धजन्यं तदानीमिव नत्वन्यदा ततएव हि विषयप्रकाशवेळायामिति पूर्वमुक्तम्। '**पुंस्त्वादिवत्त्वस्य**' इत्यत्र च वक्ष्यते स्वापादौ तु तस्य सर्वविषयसम्बन्धार्हता प्रतिबद्धा वह्नेर्दाहकत्वशक्तिवत्। अतो न तदा स्फुरणम्॥

अथ प्रासङ्गिकमात्मानुभवं परिसमाप्य प्रस्तुतप्रागभावासिद्धिं निगमयति। **अतइति**। अतः निर्विषयज्ञानस्याप्रामाणिकत्वात् तदवच्छिन्नज्ञाननित्यत्वस्योक्तानुपपत्तिपराहतत्वात् प्रागभावग्राहकसमर्थनाच्चेत्यर्थः। कथमनुभूतिस्सती स्वप्रागभावं साधयेत्? इत्थम्। स्मर्तव्यास्मरणलिङ्गेन इयन्तं कालं न किंचिदहमज्ञासिषमिति सुषुप्तयवस्थापरामर्शेन ज्ञानसामान्याभावगोचरेण तदन्तर्गतस्वाभावोऽपि स्वेनैव विषयीकृत इति स्वतःपक्षे प्रागभावासिद्धिरुक्ता। परतःपक्षेऽपि सिध्यतीत्याह। **अनुभूतिरिति**। अथ प्रागभावाभावहेतुकानुत्पत्तिदूषणमुपसंहरति। **तस्मादिति**॥

## गूढार्थसंग्रहः

ताऽवच्छेदात् अप्रमात्वावच्छेदेन च अविद्याया एव कारणत्वात्' इति सिद्धान्तबिन्दूक्तिः 'संविदेव भगवती वस्तूपगमे शरणम्' इति (३७५पुटे) प्रागुदाहृतस्वोक्ति (अ.सि) विरोधेन अनुपादेया॥

'अहं जानामि, अहं स्मरामि, अहं संदेह्मि, अहमज्ञासिषम्, अहमस्मार्षम्, अहमस्वाप्सम्' इति प्रतीतीनाम् ऐकरूप्यं सर्वेषामनुभवसिद्धं स्वमतपरिकल्पितप्रक्रियामवलम्ब्य अन्यथाकर्तुमशक्यम्। प्रातः गजादिकं दृष्ट्वा पुनस्सायं तस्यैव दर्शने यं गजं प्रातरहमद्राक्षं तमेवाद्य पश्यामि इति प्रतीतेः योऽहं ह्यः गजमद्राक्षं सोऽहमद्य तं पश्यामीति प्रतीतेश्च ऐकरूप्यमनुभवसिद्धम्। 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' (३.२) 'तइह व्याघ्रो वा वराहो वा' इत्यादि सूत्रश्रुत्यादिसिद्धं सुषुप्तावहमर्थलयाङ्गीकारे नोपपादयितुं शक्यते। अतः सुषुप्तावहमर्थसत्त्वं ज्ञानस्मृत्यादीनामहमर्थवृत्तित्वं च यद्यभ्युपगम्यते तदैव सर्वप्रतीतिनिर्वाहः नान्यथा। तथाऽभ्युपगमे च सौषुप्तानुभवस्य सविशेषविषयत्वमेवेति भावः॥

'असम्प्रज्ञातसमाधिः नान्तःकरणवृत्तिः, अपितु संस्कारएव' इति योगसूत्रव्याख्यातृपक्षएव गीताविवरणे मधुसूदनसरस्वतीभिरङ्गीकृतः। (६६ पु) सर्ववेदान्तसिद्धान्तसारसङ्ग्रहे सदानन्दवेदान्तसारादौच असम्प्रज्ञातसमाधिः वृत्तिरित्येवाङ्गीकृतम्। असम्प्रज्ञातसमाधौ वृत्तिपक्षएव युक्तः, श्रुतिसूत्रसम्मतः, सा च वृत्तिः सविशेषविषयिण्येव। इत्यादि सम्यङ्निरूपितम् भावप्रकाशे तृतीयसम्पुटे। अतो निर्विकल्पकासम्प्रज्ञातसमाधिसौषुप्तानुभवेषु निर्विशेषचितो विषयत्वम् इति सिद्धान्तबिन्दौ यत् मधुसूदनसरस्वतीभिरुक्तं तन्निरवकाशम्॥ **तस्मादिति**। निर्विशेषाचितः अप्रामाणिकत्वात् 'घटमहं जानामि' इत्यादौ ज्ञाधात्वर्थस्य आत्मत्वासम्भवात् अहमर्थात्मवृत्तित्वस्य युक्तत्वाच्चेत्यर्थः। **संविदोऽनुत्पत्तिरुपपत्तिमती** इति॥ प्रागुदाहृत (३९१) बिन्दुटीकोक्तरीत्या घटमहं जानामि इत्यत्र आत्मन एव ज्ञानस्वरूपत्व-

श्रीभाष्यम्

**यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम्, तदप्यनुपपन्नं प्रागभावे व्यभिचारात्। तस्यहि जन्माभावेऽपि विनाशो दृश्यते। भावेष्विति विशेषणे तर्ककुशलताऽऽविष्कृता भवति। तथा च भवदभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम्। तद्विकारास्सर्वे मिथ्याभूता इतिचेत्? किं भवतः परमार्थभूतोऽप्यस्ति विकारः येनैतद्विशेषणमर्थवद्भवति नह्यसावभ्युपगम्यते? यदप्यनुभूतिरजत्वात्स्वस्मिन्विभागं न सहत इति, तदपि नोपपद्यते अजस्यैवात्मनो देहेन्द्रियादिभ्योविभक्तत्वात् अनादित्वेनचाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्। स विभागो मिथ्यारूपइतिचेत् जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया।**

श्रुतप्रकाशिका

अथानुत्पत्त्या विकारान्तरनिरसनं दूषयति। **यदपीत्यादिना।** अनुत्पत्तिरूपहेत्वसिद्ध्या विकारान्तरानिरासोऽनुपपन्नः तदभ्युपगमेऽपि हेतोर्व्यभिचारमाह। **प्रागभाव इति।** तद्विवृणोति। **तस्यहीति।** भावशब्दोपादाने तद्विरहेऽपि व्यभिचारसाम्याभिप्रायेण भावशब्दोपादानमुपालभते। **भावेष्वितीति।** (नतु) प्रतिज्ञान्तरं दूषणमुच्यते। तत् उक्तिदूषणं नत्वर्थदूषणम्। भावरूपत्वे व्यभिचारं दर्शयति। **तथाचेति।** तथाशब्देन भावरूपत्वं विवक्षितम्—तैर्भावरूपाज्ञानस्य समर्थितत्वात्। तत्र परिहारं शङ्कते। **तद्विकाराइति।** अस्य विशेषणस्य व्यावर्त्याभावान्नैरर्थक्यमाह। **किं भवतइति।** व्यावर्त्यमस्तिचेदद्वैतहानिः—नचेद्विशेषणवैयर्थ्यमित्यर्थः। किं विकारमात्राभावस्साध्यते उत परमार्थविकाराभावः। प्रथमेऽनैकान्त्यम्। द्वितीयेऽनुभूतिः परमार्थविकाररहिता अजत्वादित्युक्तं स्यात्। यत्परमार्थविकारवत् तदुत्पन्नं, यथा घट इति व्यतिरेकोदाहरणं वाच्यम्; तथा घटस्य परमार्थविकारानभ्युपमाद्दृष्टान्तस्साध्याव्याप्य इति हेतोर्व्याप्यत्वासिद्धिर्भवेदितिभावः॥

**अथाजत्वान्नानात्वनिषेधं प्रतिवदति। यदपीति।** अत्र किं भेदमात्रं दुदूषयिषितं उत विजातीयभेदः—उत सजातीयभेदः—उत स्वगतभेद इति पक्षेषु हेत्वसिद्ध्या निरस्तेष्वपि हेतुत्वाभ्युपगमेन प्रथमं द्वितीयांशश्च दूषयन् चार्वाकव्यतिरिक्तसर्ववादिसम्मतस्थले व्यभिचारं दर्शयति। **अजस्यैवेति।** मृषावाद्यभिमतस्थलएव हेतोरनैकान्त्यमाह। **अविद्याया इति। 'तमःप्रकाशयोरिव विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सत्याम्'** इतिहि ग्रन्थः। तद्विभागस्य मिथ्यात्वमाशङ्क्य तदभ्युपगमेन परिहरति। **सविभागइत्यादिना।** जन्मप्रतिबद्धः उत्पत्तिव्याप्तः घटादिषु परमार्थविभागस्यैव उत्पत्तिव्याप्यत्वाभ्युपगमे घटादिविभागस्य पारमार्थ्यप्रसङ्गात् तस्यापारमार्थ्ये विशेषणवैयर्थ्याद्युक्तदोषस्स्यादेवेत्यर्थः॥

**गूढार्थसंग्रहः**

सम्भवस्य अतिलाघवमूलकस्य प्रतीतिस्वारस्यादिविरोधादयोगेन घटमहं जानामीत्यादौ तिङ्प्रकृत्यर्थत्वेन साध्यतया प्रतीयमानस्य ज्ञानस्य परिणामविशेषशून्यत्वरूपानुत्पत्तिः नैव सम्भवति। प्रभाया इव सङ्कोचविकासरूपावस्थावत्त्वस्य ज्ञाने अङ्गीकारसम्भवेन ज्ञानप्रसरस्य प्रमाणसिद्धत्वेन च ताच्चिकज्ञानप्रसररूपोत्पत्तेः प्रत्याख्यानासम्भवात्। सिद्धान्तबिन्दुटीकोक्तरीत्या अताच्चिकविषयसम्बन्धनिबन्धनोत्पत्तिकल्पनस्यानुचितत्वादिति भावः॥

## श्रीभाष्यम्

**अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतोह्यविद्यैव स्यादात्मा। अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थितएव छेद्यभेदाच्छेदनभेदवत्।**

## श्रुतप्रकाशिका

हेतुदूषणस्य बुभुत्सायां दृष्टान्तस्य साध्यव्यावृत्तत्वमुखेन व्याप्यत्वासिद्धिरभिप्रेताऽनुसंधेया, अपरमार्थविभागवत् तदुत्पन्नम् यथा घट इति व्यतिरेकदृष्टान्तः। घटस्य परमार्थविभागवत्त्वानभ्युपगमात्साध्याव्यावृत्तत्वं हि स्पष्टम्। विभागस्य मिथ्यात्वे दूषणान्तरमाह। **अविद्याया इति।** अथ सजातीयभेदाभावं व्युदस्यति। **अबाधितेति।** पूर्वं प्रमाणप्रमेयानुपपत्तिमिथ्यात्वानुमाननिरासमुखेन दृश्यभेदस्समर्थितः। तत्तुल्यन्यायतया दर्शनभेदोऽपि सिद्धइत्यर्थः। अवच्छेदकगतो भेदः नत्ववच्छेद्यगत इति घटकरकाकाशदृष्टान्तमाशङ्क्याह। **छेद्यभेदादिति॥**

## गूढार्थसङ्ग्रहः

इष्टसिद्धौ 'नह्यजं विभाग्यस्ति' इत्युपक्रम्य, 'तस्मात् चितोऽजत्वे विभागो नाभ्युपेयः, अविभागे च नेतरेतराभावसिद्धिः' इत्युक्तमर्थमनूद्य, **तदपि नोपपद्यते** इत्यादिना तत्र दूषणमुक्तम्। इष्टसिद्धौ 'नान्विदंतया चेत्यं भाति अनिदंतयैव तु चित्। अतस्तयोर्भेदः प्रसिद्धतरो लोके इतरेतराभावश्च। त्वंचावाचोऽसकृत् न चेत्यं चितः स्वरूपं धर्मो वा घटादिवत् रूपादिवच्चेति। अतस्तयोर्भेदोऽभ्युपेयः। अन्यथा अभिन्नायाश्चितः अभेदात् चेत्यानामपि नमिथो भेदो भासेत, भासते तु अतः स नास्ति, अन्यथा विभागात् कार्यताऽनुमानादिव्यवहारस्तवापि नस्यात्। तस्मात् चिच्चेत्ययोः भेदः अभ्युपेयः प्रसिद्धेरिति। अत्रोच्यते। सत्यं प्रसिद्धिरस्ति, अत एव व्यवहरामः किंतु नास्याः मूलं पश्यामः। कथम्? उच्यते। यद्यपि दृग्दृश्ययोः भेददृष्टिः समस्ति तथाऽपि न सा दृग्दृशययोस्सम्भवेत् दृशोऽदृश्यत्वात्। नह्यदृष्टस्य दृष्टादृष्टस्य वाऽदृष्टात् भेदः द्रष्टुं शक्यः धर्मिप्रतियोग्यपेक्षत्वात् भेददृष्टेः। नचादृष्टो धर्मी प्रतियोगी वा। सर्वस्य सर्वतो-युगपद्भेददृष्टिप्रसङ्गात्। तस्मात् दृष्टयोरेव परस्परापेक्षया भेददृष्टिस्सम्भवति, नतु दृष्टादृष्टयोः अदृष्टयोर्वा। अतो दृग्दृश्ययोः भेदप्रसिद्धेः न मूलं पश्यामः। नन्वदृश्यापि दृक् नाप्रसिद्धा स्वयं प्रथनात्। अतो भेददृष्टिस्स्यादिति चेत्; कोऽयं भेदो नाम? किं स्वरूपमेव भेदिनः, उत धर्मः' इत्यारस्य 'तस्मात् भेदेतरेतराभावौ न दृशो न धर्माविति स्थितम्। अत एव न दृश्यस्यापि तौ धर्मौ न्याय्यौ। नहि दृशस्तयोरभावे तदपेक्षया दृश्यस्यापि तौ सम्भवतः' इति उक्तम्। तमेतमर्थं पर्यालोचयति **अबाधितप्रतीतिसिद्धदृश्यभेदसमर्थनेन, इत्यादिना।**

प्राक् (४०१.पु) उदाहृतायां 'नाभाव उपलब्धेः' (२.२.२८) इत्येतत्सूत्रभाष्य (शां) भामत्यां 'यथा छेत्ता छिदया छेद्यं वृक्षादि व्याप्नोति, एवं प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति' इत्यत्र प्रमायाः छिदादृष्टान्तः उपन्यस्तः। एवं च छिदादृष्टान्तेनैव ज्ञानभेदोऽपि सिद्ध्यतीत्याह **छेद्यभेदात् छेदनभेदवत् इति।** धात्वर्थक्रियाकर्मभेदात् क्रियाभेदः छिदादिषु यथा, तद्वत् ज्ञानकर्मभेदात् ज्ञानभेदः। प्राक् (३९१.पु) (सि.बि) ज्ञानं ज्ञानमिति एकस्वरूपावगमवत् छिदा छिदेति एकस्वरूपावगमोऽपि वर्तत एव। ज्ञानं ज्ञानं नेति प्रतीतिविरहवत् छिदा छिदा नेति प्रतीतिविरहोऽपि सर्वसम्मतः। अतः कर्मभेदेन धात्वर्थक्रियाभेदः तात्त्विकः प्रत्याख्यातुं न शक्यः॥

एतेन लघुचन्द्रिकायां (प्रतिकर्मव्यवस्था) 'प्रमाणमिति। विषयस्थमनोभागावच्छिन्ना चित्तु प्रमितिरिति शेषः। तस्यास्तु प्रमातृव्यापाराविष्टेन उक्तमध्यभागेन सम्पत्त्या उक्तमध्यभागावच्छिन्ना चित् प्रमाणम्। कर्तृव्यापारेण हि नमनो-

## श्रुतप्रकाशिका

यथा संवित्सिद्धौ–प्रतिप्रमातृविषयं परस्परविलक्षणाः । अपरोक्षं प्रकाशन्ते सुख दुःखादिवद्धियः ॥
सम्बधिव्यङ्ग्यभेदस्य संयोगेच्छादिकस्य तु । नहि भेदस्स्वतो नास्ति नाप्रत्यक्षश्च सम्मतः ॥

इति । प्रतिप्रमातृविषयं ज्ञानभेदोऽपरोक्षः परज्ञानं परोक्षतया भासते, स्वज्ञानमपरोक्षतया । घटादिविषयज्ञानानां परस्परवैलक्षण्यंचापरोक्षम् । अतस्तद्भेदापलापः स्वानुभवप्रत्यक्षबाधित इति प्रथमग्रन्थार्थः । सर्वमेकं ज्ञानं ज्ञातृज्ञेयरूपावच्छेदकसम्बन्धभेदात् भेदेन प्रतीयतइत्यत्राह सम्बधीति । सम्बन्धिव्यङ्ग्यभेदस्येति शङ्काबीजानुवादः । नच ज्ञातृज्ञेयरूपसम्बन्धिव्यङ्ग्यत्वमात्रेण ज्ञानस्य भेदः सम्बन्धिभेदकृत इति औपाधिकस्स्यात् । संयोगादेरपि सम्बन्धिव्यङ्ग्यत्वमात्रेण घटकरकावच्छिन्नाकाशवदेकत्वप्रसक्तेः । सम्बन्धीहि द्वेधा सत्ताहेतुर्व्यक्तिहेतुश्चेति । यस्य संयोगादेः सम्बधिव्यतिरेकेण स्वरूपे प्रमाणं नास्ति । तस्य सम्बन्धी सत्ताहेतुः, यस्य तु शब्दाकाशादेरस्ति तस्य तदुपाधिकोभेदावभासः–न स्वतः । तस्मात् ज्ञातृज्ञेयव्यतिरेकेणालब्धसद्भावस्य ज्ञानस्य स्वाभाविक एव भेदः, तस्मान्नसजातीयभेदापलाप इत्यर्थः । एतदभिप्रेत्य छेद्यभेदादित्युक्तम् ॥

## गूढार्थसंग्रहः

भ्रमणादिना आविष्टं कुठारादिकं करणं भवति । तादृशकरणं प्रति देहावच्छिन्नप्रयत्नेन देहावच्छिन्नभागस्य प्रेरकत्वात् प्रमासाधनसकलकारकेषु स्वतन्त्रत्वाच्च तदवच्छिन्ना चित् प्रमात्री । केवलस्योक्तभागस्याचेतनत्वात् केवलचितोऽपि निर्व्यापारत्वेन कर्तृत्वासम्भवात् मिथस्तादात्म्यं प्राप्तस्य तदुभयस्य प्रमातृत्वम् । तस्य च तादृशेनैव चिदात्मकेन प्रमारूपेण विषयं प्राप्नुयामहमितीच्छया तादृशव्यापाररूपेण विषयसंश्लिष्टपरिणामप्राप्तेः तस्या अपि विषयशरीरमध्यस्थ तादृशपरिमाणप्राप्तिद्वारकत्वात् । प्रमितिप्रमाणयोरपि चिदचिद्रूपत्वम् । नहि चैत्र कुठार छिदानामिव प्रमात्रादीनां मिथोऽत्यन्तभिन्नत्वम् । अपितु प्रमामुद्दिश्यैव प्रमातुः प्रयत्नोदयात् प्रमायाश्च प्रमातृपरिणामरूपत्वेन चिदचिद्रूपत्वमेव ' इत्युक्तिरनुपादेया । शुद्धचितः अप्रामाणिकत्वस्य पूर्वमेव निरूपणात् तद्घटितप्रमाणादिविभागस्यापि निर्मूलत्वात् । प्रमाया अपि प्रमातृपरिणामरूपत्वं विप्रतिपन्नमेव । मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गेन तत्प्रभायाः मण्यादिपरिणामरूपतायाः भाष्ये एव निराकरिष्यमाणत्वात् प्रभास्थानापन्नधर्मभूतज्ञानस्य सङ्कोचविकासात्मकपरिणामवत्त्वेऽपि अहमर्थस्य प्रमातुर्जीवस्य सङ्कोचविकासात्मकपरिणामशून्यत्वात् चैत्र कुठार छिदानामिव अहमर्थेन्द्रियज्ञानानां भेदस्यैव संप्रतिपन्नत्वात् । अतश्च छिदाकर्मभेदेन छिदायाः भेदवत् ज्ञानकर्मभेदेन ज्ञानभेदोऽपि तात्त्विक एषितव्यः ॥ भेदः स्वरूपं वा धर्मो वा इत्यादि विकल्पेन दूषणं तु पूर्वमेव निरस्तम् । एवं च घटज्ञानं पटज्ञानात् तत्त्वतो भिन्नं तज्ज्ञानकर्मभिन्नकर्मकधात्वर्थत्वात् ; यत्र यत्क्रियाकर्मभिन्नकर्मकधात्वर्थत्वं तत्र तत्क्रियायास्तत्त्वतो भेदः इति सामान्यतो व्याप्तौ छिदादृष्टान्तः । अत्र तत्क्रियाकर्मभिन्नकर्मकत्वं तत्क्रियाकर्मभूतवस्त्वकर्मकत्वं, तेन समूहावलम्बनज्ञानमादाय न दोषः ॥

यद्वा तत्क्रियाकर्मभिन्नत्वं तत्क्रियाकर्मत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं, समूहावलम्बनज्ञाने घटपटयोरुभयोःकर्मत्वेन तत्क्रियाकर्मत्वावच्छिन्नप्रतियोगिताकभेदः कस्मिन्नपि कर्मणि नास्तीति न दोष इति प्रागुक्तरीतिरेव युक्ता ॥

एतेन ' संवित् स्वान्तर्गतभेदशून्या ' इति प्राक् (२०८.पु) प्रमाणमालोक्तानुमानमपि निरवकाशम् । आकाश दृष्टान्तः न धात्वर्थः नापि निर्गुणः इति न तत्साम्यमत्र सम्भवति । अतश्च प्रागुदाहृतभामत्युक्त दृष्टान्तानुरोधेन दर्शनभेदः सिद्ध्यतीति भावः ॥

### श्रीभाष्यम्

**यदपि नास्यादृशेर्दृशिरूपाया दृश्यःकश्चिदपि धर्मोऽस्ति दृश्यत्वादेव तेषां न दृशि धर्मत्वमिति च। तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयम्प्रकाशत्वादि धर्मैरुभयमनैकान्तिकम्।**

### श्रुतप्रकाशिका

अथ स्वगतनित्यैकत्वादिभेदनिरासार्थं पूर्वपक्षिणाऽनुभूतिं पक्षीकृत्योक्तं अनुभूतित्वादिति व्यतिरेकि, दृश्यं पक्षीकृत्योक्तं दृश्यत्वादित्यन्वयि च दूषयति। **यदपीत्यादिना। अनैकान्तिकमिति।** अनियतं व्याप्तिशून्यमित्यर्थः। दृश्य-

### गूढार्थसङ्ग्रहः

'घटमहं जानामि' इत्यादिप्रतीतौ ज्ञाधात्वर्थः केनापि रूपेण नात्मा तिङ्प्रकृत्यर्थत्वात् इत्यनुमानमपि भगवतो विवक्षितमिति उत्तरत्र स्फुटीभविष्यति। एतेन 'नन्वनुभवित्रात्मना विना नास्त्यनुभूतिः' इत्याशङ्क्य 'अतस्सैवात्मा' इत्यादिप्राक् (२०७.पु) उदाहृतेष्टसिद्धिग्रन्थोऽप्यनुपादेयः। 'याऽनुभूतिरजा' (४९६) इत्युपक्रम्य (२०७) अनुभूतिरूपत्वमभिधाय उपसंहारे 'अतः प्रत्यगात्मैव परमार्थसत्यं नान्यदिति सएव औपनिषदःपरमपुरुषः' (२२७.पु) इति इष्टसिद्ध्युक्तिः निरवकाशा। एवं प्राक् (२२६.पु) उदाहृत 'परागर्थप्रमेयेषु' इत्यादिवार्तिकोक्तिरपि॥

यद्यपि इष्टसिद्धौ 'नास्याः मेयो धर्मोऽप्यस्तीत्यर्थः' इत्याद्युक्त्यनन्तरमेव 'नह्यजं विभागयस्ति' इत्युक्तं प्राक् (२०७.पु) तथाऽपि अनुभूतौ विभागाभावसाधनानन्तरमेव निर्धर्मकत्वसाधनमुचितम्। अनुभूतेः स्वयम्प्रकाशत्वेन अनुत्पत्तिः निर्विकारत्वं यथा वृत्त्यतिरिक्तचित्साधनोपयोगि तथा विभागशून्यत्वमपि एवं च विभागशून्यत्वसिद्ध्यनन्तरमेव निर्विशेषचित्साधनपूर्तिः। तदनन्तरमेव अनुभूतौ निर्धर्मकत्वं धर्मेषु अनुभूतिवृत्तित्वाभावो वा साधयितुं शक्यते इत्यभिप्रेत्य आत्मसिद्धौ विभागशून्यत्वसाधनानन्तरमेव 'नास्याः मेयो धर्मोस्ति' इति इष्टसिद्धिग्रन्थार्थः अभिहितः पूर्वपक्षे सिद्धान्ते च इत्यभिप्रेत्य तमेव क्रमं पूर्वपक्षवत् सिद्धान्तेऽप्यनुसृत्याह—**यदपि नास्याः दृशेर्दृशिरूपायाः इत्यादिना॥**

**दृश्यत्वादेव तेषां न दृशिधर्मत्वमिति।** दृश्यत्वं वृत्तिव्याप्यत्वं वृत्तेराकाराख्याविषयत्वम्। वाचस्पतिमते शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वानङ्गीकारात् वृत्त्युपहितस्य मिथ्याभूतस्यैव तत्वात्। विवरणकारादिमतेऽपि सप्रकारकवृत्तिविषयत्वं तत्। यद्वा चिद्विषयत्वम्। तच्च यथाकथंचित् सम्बन्धित्वरूपं तच्च नचैतन्ये अभेदे भेदनान्तरीयकस्य सम्बन्धस्याभावात्' इत्यद्वैतसिद्धावुक्तम्। **तदपीत्यादि।** अत्र चिद्विषयत्वं चितएव परसम्मतायाः अप्रामाणिकत्वेन नोभयवादिसम्मतम् एवं सप्रकारकवृत्तिविषयत्वं ब्रह्मणि नास्तीति शुद्धचित्सिद्धिसमनन्तरमेव सम्भवति। वृत्तेः सप्रकारकत्वे वृत्तिविषयस्य मिथ्यात्वं कथं युक्तं स्यात्? निष्प्रकारकज्ञानस्यैव प्रमात्वमिति साधनसम्भवे खलु तत्सम्भवः। निष्प्रकारकज्ञानस्यैवानुभवविदूरत्वे सप्रकारकेत्यस्य फलमपि नास्ति, हेतोः साध्यसाधकत्वमपि न सम्भवति॥

यद्यपि अद्वैतसिद्धौ सत्यत्वे सम्बन्धानुपपत्तेः आध्यासिकएव दृग्दृश्ययोः सम्बन्धः, (दृ.दृ.सं.भ) तात्त्विकसम्बन्धस्य व्यापको देशकालविप्रकर्षाभावः। सचातीतादिविषयकज्ञानादीनां नास्त्येवेति कथं तात्त्विकस्तेषां सम्बन्धः? किंच सम्बन्धग्राहकएव तात्त्विकसम्बन्धव्यापकानुपलब्धिरूपबाधकसहकृतः आध्यासिकसम्बन्धे पर्यवस्यति, अतो न धर्मिग्राहकबाधशङ्काऽपि। तस्मात् सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिर्दृढैव' (अ.त.नि) इत्युक्तम्॥

## गूढार्थसंग्रहः

'तथाऽपि विषयाधिष्ठानचैतन्यमनावृतमेव प्रकाशकं, आवरणभङ्गश्च वृत्त्या अतो वृत्तेः पूर्वं आध्यासिसम्बन्धे विद्यमानेऽपि दृश्याप्रतीतिरुपपन्ना ' इति अद्वैतसिद्धाविवोक्तम् (अनुकूलतर्कनिरूपणे।) आवरणभङ्गकालएव व्यवहार इति वृत्तिमन्तरा न व्यवहार इतिच प्रागेव निरूपितम्। अद्वैतसिद्ध्युक्तवृत्त्यतिरिक्तभानसाधकप्रकारस्सर्वोऽपि न सम्भवतीतिच निरूपितम्। एवं च सम्बन्धस्याध्यासिकत्वकल्पनमपि न सम्भवति । आध्यासिकत्वकल्पनेऽपि वृत्तिमन्तरा न व्यवहार इति वृत्तिविषयसम्बन्धेनैव व्यवहारः उपपादनीयः । वृत्तिविषयसम्बन्धश्च अनाध्यासिकएव निर्गुणात्मवादिनां साङ्ख्यादीनां सम्मतः इति स्वमते आध्यासिकसम्बन्धेन मिथ्यात्वोपपादनं कथं घटते ? केषांचित्सम्बन्धानां देशकाल विप्रकर्षाभावदर्शनेऽपि अनुभवानुरोधेन अतीतविषयकज्ञानस्थले ज्ञानविषययोः देशकालविप्रकर्षेऽपि (स्वजनकसंस्कार विषयत्वं स्वविषयकसंस्कारजन्यत्वं च) संस्कारादिसम्बन्धः स्वीकर्तुं शक्यते ॥

'ध्वंसादीनां स्वप्रतियोग्यादिभिस्तात्त्विकः सम्बन्धो नास्त्येव । अध्यासोऽपि न ज्ञानज्ञेयन्यायेन उभयोरपि मिथ्यात्वात् । तथाऽपि प्रतीयमानं प्रतियोग्यनुयोगिभावादिकं सर्वथा न निराकुर्मः । किंतु तात्त्विकाध्यासाभ्यां भिन्नमेव ज्ञेयकुक्षिनिक्षिप्तत्वात् मिथ्याभूतमङ्गीकुर्मः ' इत्यद्वैतसिद्धावुक्तम् । (अ.त.नि) एवंच सम्बन्धत्वं यत्र तत्र तात्त्विकाध्यासिकसम्बन्धान्यतरत्वम् आध्यासिकत्वं वा इति व्याप्तेः सम्मतत्वेऽपि तात्त्विकाध्यासिकसम्बन्धविलक्षणस्य सम्बन्धत्वमङ्गीकृत्य अतीतज्ञान विषयस्थले देशकालविप्रकर्षाभावेऽपि सम्बन्धत्वानङ्गीकारः कथं युक्तः स्यात् ? मिथ्याभूतानां वस्तूनां एकविधाध्यासिकसम्बन्धसत्वे मिथ्यात्वमिति व्यवस्था युक्ता । विशिष्टकेवलयोः अधिष्ठानाधिष्ठेयभावेन तादात्म्यविरहेऽपि विशिष्टकेवलभावेन तादात्म्यं विशिष्टस्य मिथ्यात्वं च ब्रह्मानन्दसरस्वतीभिरङ्गीकृतम् । तत्राप्यधिष्ठानाधिष्ठेयभावसम्बन्धसत्वएव मिथ्यात्वाङ्गीकारो युक्तः । सर्वत्राधिष्ठानज्ञानस्याध्यस्तनिवर्तकत्वमिति एकरूपेण ज्ञाननिवर्त्यत्वरूपमिथ्यात्वसम्भवात् । सम्बन्धस्यैकरूप्यविरहेऽपि मिथ्यात्वमङ्गीकृत्य देशकालविप्रकर्षभावरूपैकरूप्यविरहे तात्त्विकत्वाङ्गीकारो न घटत इत्युक्तिरभिनिवेशमूलैव । अतः तात्त्विकसम्बन्धव्यापकानुपलब्धिरूपबाधकसहकृतः सम्बन्धग्राहकएव आध्यासिकसम्बन्धे पर्यवस्यतीत्युक्तिरनुपादेया ॥

अतः ' नचाध्यासिकत्वे सम्बन्धस्य साध्ये धर्मिग्राहकमानबाधः ' इति शङ्कितोऽर्थएव सिद्धान्तो युक्तः । ' विशिष्ट बुद्धित्वेन प्रथमं तात्त्विकातात्त्विकसाधारणसम्बन्धत्वस्यैव सिद्धेः ' इत्यादिना उक्तस्य तात्त्विकसम्बन्धव्यापकानुपलब्धिबाधस्यैव असम्भवात् । तात्त्विकसम्बन्धव्यापकत्वस्यैव देशकालविप्रकर्षाभावे विप्रतिपन्नत्वात् । वृत्तिविषयसम्बन्धस्य समान सत्ताकस्यैव अङ्गीकारेण ' घटमहं जानामि ' इत्यादौ ज्ञाधात्वर्थस्य केनापि रूपेण भवत्सम्मतात्मत्वासम्भवेन अहमर्थ जीववृत्तिधर्मभूतज्ञानस्य प्रभास्थानीयस्य प्रभाया इव विषयसम्बन्धसम्भवस्योक्तत्वच्च श्रीभाष्यएवोपपादयिष्यमाणत्वात् । परोक्षादौतु अनुभवानुरोधेन सम्बन्धस्य प्राचीनैरेवोपपादनात् । एवं च धर्मिग्राहकमानमेव बाधकाभावात् सम्बन्धस्य तात्त्विकत्वं कल्पयतीति दृश्यत्वस्य मिथ्यात्वसाधकं नैव सम्भवति ॥

सम्बन्धानुपपत्त्या बाह्यार्थापह्नवः बौद्धानां सम्मतः । धर्मधर्मिणोस्सम्बन्धानुपपत्त्या धर्मधर्मिभावभङ्गेन धर्मिमात्रस्वरूपं निर्विकल्पके भासते धर्मिमात्रमेव सत्यं निर्विकल्पकमेव प्रमा इति वैभाषिकमतम् । अयमर्थः परैरादृतः । निर्विकल्पकज्ञानस्य प्रमात्वस्य सप्रकारकज्ञानस्य भ्रमत्वस्य च परैरङ्गीकारात् । एतन्मते ज्ञानार्थयोः जन्यजनकभावः सम्बन्धः अङ्गीक्रियते । योगाचारमते पूर्वोत्तरज्ञानयोर्जन्यजकभावाङ्गीकारेऽपि ज्ञानार्थयोस्सः नाङ्गीक्रियते । ज्ञानार्थयोस्तात्त्विकसम्बन्धानुपपत्त्या ज्ञानातिरिक्तोऽर्थः निरस्यते । अयमेव न्यायः प्रकारान्तरेण ज्ञानातिरिक्तार्थापह्नवे परैरप्यादृतः ॥

### श्रीभाष्यम्

**नच ते संवेदनमात्रं स्वरूपभेदात् । स्वसत्तयैव स्वाश्रयम्प्रति कस्यचिद्विषयस्य प्रकाशनंहि**

### श्रुतप्रकाशिका

त्वादित्यन्वयिनः पक्षत्रयवृत्तित्वलक्षणमनियतत्वम् । दृशित्वादिति व्यतिरेकिणस्साध्यव्यावृत्तावपि साधनाव्यावृत्तिलक्षणमनियतत्वमात्रम् । अनुभूतिर्नदृश्यधर्मवती दृशित्वात् यद्दृश्यधर्मवत् तन्नदृशिः यथा घटइति ह्यनुमानशरीरम् । अत्र दृश्य धर्मवत्त्वस्यादृशित्वव्याप्तिरनुभूतौ भग्ना तस्याः दृशित्व नित्यत्वादिधर्मवत्त्वादिति भावः । नित्यत्वादि मिथ्यात्वे नित्यत्वादिविपरीताकारानित्यत्वं प्रसजेदिति तत्परिहाराय तेषां स्वरूपमात्रत्वमाशङ्क्य परिहरति । **नचेत्यादिना** ॥

तेषां स्वरूपमात्रत्वं किमन्वयरूपाणां उत व्यतिरेकरूपाणामिति विकल्पमभिप्रेत्य अन्वयमुखेन स्वरूपमात्रत्वं सम्भावितं शिर इति दूषितं नतु पराभ्युपगमात् , हेतुमाह । **स्वरूपभेदादिति** । स्वरूपाद्भेदस्तेषां परस्परं भेदश्च विवक्षितः । अनेन पूर्वं विधाभेदविवाददर्शनादित्युक्तं विवृतं भवति संवेदनत्वस्वयम्प्रकाशत्वयोः स्वरूपभेदमाह । **स्वसत्तयेत्यादि वाक्यद्वयेन** । प्रकाश्यतेऽनेनेति प्रकाशनं व्यवहारानुगुण्यापादकमित्यर्थः । उभयत्रानुगतप्रकाशशब्दार्थमाह ।

### गूढार्थसंग्रहः

माध्यमिकैस्तु क्वापि कार्यकारणभावसम्बन्धः तात्त्विको नाभ्युपगम्यते, किंतु सांवृतएव । एवमेव परैरपि । व्यावहारिकपारमार्थिकसत्यद्वयविभागः एतन्मतएव ' सर्वथा सदुपादानां वादमार्गः प्रवर्तते ' इत्यादिकुमारिलोक्तिदूषणे खण्डने माध्यमिकः सुहृत्त्वेनाङ्गीकृतः स्वमते स्वप्रकाशाभ्युपगमेन वैलक्षण्यमप्युपपादितम् । स्वप्रकाशानभ्युपगमेऽपि मधुसूदनसरस्वत्याद्युक्तदूषणानामसम्भवस्य प्रागेवोपपादनेन शुद्धचितएव सिद्धिर्नसम्भवतीति आध्यासिकसम्बन्धस्योपपादनारम्भवेन विशिष्टबुद्धिव्यवहारोपपत्तये धर्मिग्राहकमानमेव तात्त्विकसम्बन्धं व्यवस्थापयति इत्येव युक्तम् ॥

एतेन ' नास्याः मेयो धर्मोऽस्ति ' इति इष्टसिद्धिवाक्याभिप्रेत प्राक् (३१४.पु) उदाहृताद्वैतसिद्ध्युक्तानुमानविचारे नाप्यप्रयोजकत्वं भिन्नत्वेऽभिन्नत्वे सम्बन्धत्वे च अतिप्रसङ्गानवस्थाभ्यां धर्मधर्मिभावानुपपत्तेरेव विपक्षे बाधकत्वात् । नच सम्बन्धस्य मिथ्यात्ववत् स्वनिर्वाहकत्वान्नानवस्था अभेदवादे अतिरिक्तस्य वक्तुमशक्यत्वात् इत्युक्तिर्निरवकाशा । धर्मस्य धर्म्यसम्बन्धत्वे अतिप्रसङ्ग उक्तः । सम्बन्धाङ्गीकारेण तस्य नावसरः । भिन्नत्वे हिमवद्विन्ध्ययोर्घटपटयोरपि सम्बन्धस्स्यादित्यतिप्रसङ्गः प्रतीत्यभावादेव निराकृतः वाचस्पतिना न्यायवार्तिकतात्पर्यटीकायाम् । ब्रह्म तद्धर्मयोरभेदवादिनव्यमते स्वपरनिर्वाहकत्वानङ्गीकारेऽपि प्रागेव श्रीभाष्ये स्वपरनिर्वाहकत्वस्य स्थापनेन अनवस्थाया अप्यसम्भवात् ॥

' जन्माद्यस्य यतः ' इति सूत्रयतः व्यासस्य कार्यकारणभावसम्बन्धस्तात्त्विकः कार्यभूतप्रपञ्चविषयकप्रत्यक्षादिकमपि तात्त्विकप्रमाणमेवेति सम्मतम् । अन्यथा तस्य लक्षणपरत्वायोगात् । अयमर्थः तत्सूत्रश्रीभाष्ये उपपादयिष्यत इति भगवत आशयः । शुद्धचितः अप्रामाणिकत्वसाधनानन्तरं दृश्यत्वात् दृशिधर्मत्वनिराकरणनिरसनेन आध्यासिकसम्बन्धो न सम्भवतीति सूचितमिति बोध्यम् । एतेन दृश्यत्वहेतुपरिष्कारप्रकारास्सर्वेऽपि उक्तप्रकारेण न सम्भवन्तीति सुधीभिर्विभावनीयम् ॥

**स्वसत्तयैवेत्यादि** । ' संवेदनमेवार्थप्रकाशो ज्ञप्तिर्ज्ञानमित्युच्यते ' इति विवरणे उक्तम् । अर्थप्रकाशत्वमेवज्ञानत्वमिति (अ.सि.ज्ञा.उ) एतद्विवरणे ' अर्थप्रकाशत्वमिति ' अर्थविषयकव्यवहारजनकताऽवच्छेदकवत्त्वमित्यादि प्राक् (३९३.पु)

## श्रीभाष्यम्

**संवेदनम्। स्वयम्प्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता। प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्। सर्वकालवर्तमानत्वं हि नित्यत्वम्।**

## श्रुतप्रकाशिका

**प्रकाशश्चेति**। चिदचिदशेषपदार्थाः तदाहि व्यवहारानुगुणाः यदा तद्व्यवहारहेतुषु ज्ञानं संनिधत्ते। तत्राचिदंशस्य स्वव्यवहारसामग्र्यन्तर्भूतज्ञानवत्त्वं व्यावहारानुगुण्यम्। वेद्यत्वे चिदंशस्याप्येवम्। स्वप्रकाशत्वेतु स्वव्यवहारसामग्र्यां ज्ञानान्तरानपेक्षया स्वस्यान्तर्भावः॥

यद्वैवंचाहुः व्यवहारानुगुण्यं व्यवहारप्रतिसम्बन्धित्वं प्रकाशइत्यर्थः। तच्च ज्ञप्तिज्ञात्रोस्स्वतः ज्ञेयस्यतु ज्ञानापाद्यम्। अतः पुरोवर्तिनो घटादेरपि तदेव प्रकाशः, न प्राकट्यम्। तदतिरिक्ताभ्युपगमेऽपि न ज्ञानस्य स्वयम्प्रकाशत्वविरोधः। तस्य तन्निरपेक्षसिद्धितया प्राकट्यस्य ज्ञानानुमापकत्वानभ्युपगमात्। यद्वा ज्ञानगतप्रकाशासाधारणं लक्षणमाह। **चिदचिदिति**। चिदचिदशेषपदार्थापेक्षयासाधारणं ज्ञानगतं चिद्व्यवहारानुगुण्यं अचिद्व्यवहारानुगुण्यं च प्रकाशः स्वपरव्यवहारानुगुण्यं प्रकाशइत्यर्थः॥

**नन्वचितो** विषयत्वमविगीतम्। तच्च भासमानत्वम्। अचितो व्यवहारानुगुण्यंहि ज्ञानगतंचेत्—घटःप्रकाशते इति व्यवहारामुख्यत्वं स्यात्। ज्ञानगतप्रकाशस्य तत्सम्बन्धिन्युपचरितत्वात्। नच ज्ञानसम्बन्धएव घटादेः व्यवहारानुगुण्यं व्यवहारानुगुण्यापादनस्वभाव इति ज्ञानलक्षणकथनायोगात्। सम्बन्धस्य द्विनिष्ठतया पुरोवर्तिनो घटादेरपि तद्धेतुत्वेन सम्बन्धरूपव्यवहारानुगुण्यापादकत्वंहि ज्ञानज्ञेयसाधारणं स्यात्। उच्यते—व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणम्। तद्धिव्यवहारप्रतिसम्बन्धित्वम्। तदेव भासमानत्वं घटः प्रकाशते इति व्यवहारश्च तन्निबन्धनतया मुख्यः। व्यवहारप्रतिसम्बन्धित्वं प्रतिहेतुत्वरूपव्यवहारानुगुण्यं ज्ञानस्यैव तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यवहारप्रतिसम्बधितांप्रति हेतुत्वरूपं व्यवहारानुगुण्यं ज्ञातृस्वरूपभूतज्ञानस्यैव। स्वस्वरूपस्वगतैकत्वपराक्त्वानुकूलत्वाद्याकारस्वाश्रयसंबन्धस्वविषयतत्सम्बन्धानां व्यवहारप्रतिसंबन्धित्वे हेतुत्वरूपं व्यवहारानुगुण्यंतु धर्मभूतज्ञानस्यैव। अतः स्वपरव्यवहारानुगुण्यं ज्ञानासाधारणलक्षणमिति युक्तम्॥

**अथ** नित्यत्वमाह। **सर्वेति**। यद्यपि कालानवच्छिन्नत्वं अनुगतं नित्यत्वलक्षणं प्रागुक्तम्। सदकारणत्वं च नित्यत्वं प्रसिद्धम्। तथाऽपि संविदः कालव्यतिरिक्तत्वात् कालव्यतिरिक्तार्थनित्यत्वं कृत्स्नकालसम्बन्धव्याप्तमिति तेनापि

## गूढार्थसङ्ग्रहः

उदाहृत (ल.चं) वाक्ये अर्थप्रकाशत्वं व्यवहारजनकत्वघटितमेव परिष्कृतम्। ज्ञानस्य स्वयम्प्रकाशत्वं विषयप्रकाशकत्वेन विवरणे साधितमिति पूर्वमेव निरूपितम्। अतः कस्यचिद्विषयस्य प्रकाशनमित्यर्थः परेषां सम्मतः। व्यवहारोऽपि अहमर्थघटित इत्येव परेषां सम्मतम्। अतः स्वाश्रयंप्रतीत्यपि लभ्यते स्वसत्तयैवेति स्वयम्प्रकाशत्वेन सिद्धोऽर्थः॥

**स्वयम्प्रकाशता तु इत्यादि**। स्वसत्तयैवेति स्वयमित्यस्यार्थः। कर्मवत्सूत्रे स्वयंशब्दस्य आत्मनेति तृतीयान्तार्थे वर्तनादिति कैयटे। 'स्वयं क्तेन' इति सूत्रे स्वयमित्यव्ययम् आत्मनेत्यस्यार्थे वर्तते, इति काशिकायांचोक्तेः। स्वसत्तयैव प्रकाशमानता स्वयम्प्रकाशताशब्दार्थः। 'घटमहं जानामि' इत्यत्र ज्ञाधात्वर्थसंवेदनस्य प्रकाशमानता स्वाश्रया-

## श्रीभाष्यम्

**एकत्वमेकसङ्ख्याऽवच्छेद इति। तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्यधर्मभूतैरनैकान्त्यमपरिहार्यम्। संविदि तु स्वरूपातिरेकेण न जडत्वादिप्रत्यनीकत्वमिति अभावरूपो भावरूपोवा धर्मो नाभ्युपेतश्चेत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्**

## श्रुतप्रकाशिका

सविशेषणत्वापादनाय कालव्यतिरिक्तार्थनित्यत्वलक्षणमत्रोक्तम्। धर्माणामभावरूपत्वेऽप्यनैकान्तमाह। **तेषामिति।** अभावरूपाणामपि स्वरूपानतिरिक्तत्वे दूषणमाह। **संविदित्विति।** तुशब्देन प्रागुक्तशौक्ल्यादिदृष्टान्तवैषम्यमिहाभिप्रेतम्। तस्य कस्यचिद्धर्मत्वेन स्वपरनिर्वाहकत्वात् स्वरूपे प्रतिपन्ने भ्रमविरोधित्वाच्च स्वरूपमेव व्यावृत्तिः। ब्रह्मणस्तु कस्यचिद्धर्मत्वेनानभ्युपगमात् स्वरूपे प्रतिपन्नेऽपि भ्रमसहत्वाच्च पुरोऽवस्थितशुक्लभास्वरशकलस्येव न स्वरूपमेव व्यावृत्तिरिति॥

संविदिति शब्दो (ब्दौ) नित्यस्वयम्प्रकाशादिशब्दाश्च किमधिकार्थाः उतानधिकार्थाः, अधिकार्थत्वे सविशेषत्वम्। अन्यथा पदान्तरवैयर्थ्यं स्वरूपमात्रस्याविगीतत्वात्। नित्यत्वादिसाधकैर्हेतुभिः किं संविन्मात्रं साध्यते उत तदतिरिक्तं किंचित्। प्रथमे सिद्धसाध्यत्वम्। द्वितीये सविशेषत्वमित्येवं समानाधिकरणपदप्रयोगानुपपत्तिः। नित्यत्वादिसाधक हेतूनां सिद्धसाधनत्वंचाभिप्रेतम्। यथा संवित्सिद्धौ—

**न वेद्यं वित्तिधर्मस्स्यादिति यत्प्रागुदीरितम्। तेनापि साधितं किंचित्संविदोऽस्ति नवा त्वया॥**
**अस्तिचेत्पक्षपातस्स्यान्नचेत् ते विफलः श्रमः।**

इति नित्यत्वादि धर्माणां परस्परभेदानभ्युपगमे एकेनैव धर्मेण साधितेनालं—नतु धर्मान्तरंसाध्यं तस्य पूर्वप्रसाधितधर्मानतिरिक्तत्वात् नहि नित्यत्वे प्रसाधिते कालापरिच्छेदःपुनरपि साध्योऽवतिष्ठते एवं नित्यत्वादीनां स्वरूपाद्भेदः परस्पर भेदश्च सिद्धः॥

## गूढार्थसंग्रहः

ययैव नतु परस्मै इति सर्वसम्मतमित्यभिप्रेत्य स्वाश्रयायेत्युक्तम्। अत्र स्वाश्रयायेति पूर्वं स्वाश्रयंप्रतीतिचोक्तिः तस्य आत्मत्वाभावबोधनाय—**अभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेदित्यादि**। शुद्धे धर्मः नाङ्गीक्रियते इति परेषां सम्मतमिति (३१३.पु) निरूपितम् तेषां ब्रह्मरूपत्वाङ्गीकारेऽपि तत्सम्बन्धबोधकत्वं तत्प्रतिपादकवाक्यस्यावश्यमङ्गीकरणीयम्। एवमभावत्वविशिष्टतादात्म्यमेव, नतु धर्मः इति पक्षोऽपि तादात्म्यस्य कल्पितत्वे ज्ञानत्वनित्यत्वाद्यसिद्धिः, इत्यादिकं प्रागेव (३१६.पु) निरूपितम्॥

एतावता इष्टसिद्ध्युक्तार्थपर्यालोचनपर आत्मसिद्धिग्रन्थार्थः विशदीकृतः। अथ 'सर्वतीर्थदृशां सिद्धिः—तत्सिद्धिर्वार्यते कुतः'॥ इत्यादि प्राक् (३९४.पु) उदाहृतवार्तिकं 'सिद्धिश्चेदभ्युपेयेत संविदस्स्यात्सधर्मता। नचेत्तुच्छत्वमेवोक्तं भवेच्छशविषाणवत्। ननु सिद्धिरेव सा कस्यभोः यदि न कस्यचित्; न तर्हि सिद्धिरेव। साहि पुत्रत्वमिव कस्यचित्कञ्चित्प्रति। आत्मन इतिचेत्; कः षष्ठ्यर्थः'? इति आत्मसिद्धौ पर्यालोचितम्। अत्र 'तत्सिद्धिः केन वार्यते' इति वार्तिकोक्त तत्सिद्धिविकल्पेन दूषणमुखेन अनुभूतिरूपनिर्विशेषचितः सिद्धिर्वारिता। उक्तात्मसिद्धिग्रन्थार्थ

### श्रीभाष्यम्

**अपिच संवित्सिद्ध्यति वा नवा । सिध्यतिचेत् सधर्मता स्यात् ।**

### श्रुतप्रकाशिका

**परेण** संविदो निर्भेदत्वापादनमुखेन तस्या आत्मत्वं साधितम् । अत्र निर्भेदत्वनिराकरणमुखेन संविदात्मत्वं निराकर्तुमारभते । **अपिचेत्यादिना** । तत्र सविशेषत्वमापादयितुं विकल्पयति । **संवित्सिद्ध्यति वा नवेति** । किं प्रतीता उताप्रतीतेत्यर्थः, प्रथमं शिरो दूषयति । **सिध्यतिचेदिति** । सर्वप्रमाणनां सविशेषविषयत्वस्य पूर्वमुपपादितत्वादिति

### गूढार्थसंग्रहः

विशदयति–**संवित्सिद्ध्यति वा नवा इत्यादिना** । अत्र सिद्धिः प्रमारूपा प्रतीतिः प्रकाशोवा । विवरणकारमते शुद्धस्य वेदान्तजन्यवृत्तिविषयमङ्गीक्रियते । जन्माद्यधिकरणभाष्यो(क्तो)क्तानुभवोऽपि वेदान्तवाक्यजन्यसाक्षात्काररूपएव । तद्विषयत्वं च तदाकारत्वं शुद्धे अङ्गीक्रियते । एवं च घटादौ वृत्त्याकारता समानसत्ताकधर्मरूपैव यथा, तद्वत् ब्रह्मण्यपि समान सत्ताकधर्मएव वृत्याकाराख्यः अवश्यमङ्गीकरणीयस्स्यादिति सधर्मता । अद्वैतसिद्धौ ‘ अस्तीत्यादि तद्विषयकव्यवहार प्रतिबन्धकाज्ञाननिवर्तनयोग्यत्वस्य तत्सन्निकृष्टकरणजन्यत्वस्य वा तदाकारत्वरूपत्वात् । ’ इति (प्र.क.व्यवस्थोपपत्तौ) उक्तम् ॥

अत्र गुरुचन्द्रिका—‘ अस्तीत्यादिना सन्निति व्यवहारो ग्राह्यः । प्रतिबन्धकेति अनुत्पत्तिनियतेत्यर्थः । अस्तीत्यादिव्यवहारे असत्त्वापादकाज्ञानाभावविशिष्टचैतन्यस्य विषयतया तादृशाज्ञानस्योक्तव्यवहारानुत्पत्तिनियतत्वमिति भावः । असत्त्वापादकाज्ञाननिवृत्तिप्रयोजकताऽवच्छेदकं यद्वृत्तिनिष्ठं विषयप्रतियोगिकं रूपं तद्वत्त्वमिति पर्यवसितम् । तत्सन्निकृष्टेति । परोक्षस्थलेऽपि धूमादिज्ञानेन वह्न्यादिनिरूपितव्याप्यत्वसम्बन्धिज्ञानत्वादिकं वह्न्यादिसन्निकृष्टत्वम् । ’ इति, ‘ यस्य यस्य विषयस्य येन येन ज्ञानेनासाधारणव्यवहारः तत्तज्ज्ञानमात्रनिष्ठानां तत्तद्विषयीयसम्बन्धानामन्यतममेव तत्तज्ज्ञानेषु तत्तद्विषयाकारकत्वमिति लक्षणयोःपर्यवसितोऽर्थः । वस्तुतो वृत्तिज्ञानविषययोराकारताख्यः कश्चिद‌निर्वाच्यस्सम्बन्धोऽङ्गीक्रियते ’ इत्याचार्यैरेव वक्ष्यमाणत्वात् सएवात्राभिप्रेतः । तस्य च तत्तत्कारणसन्निकर्षजन्यताऽवच्छेदकत्वेनोक्ताज्ञाननिवर्तकताऽवच्छेदकत्वेन च सिद्धिरिति ज्ञापयितुं द्वैविध्येनोक्तिरिति ध्येयम् ’ इति च ॥

अत्र तत्तद्विषयीयसम्बन्धानामन्यतममेवेत्यत्र ज्ञानविषयसम्बन्धःप्रातिस्विकरूपेण कोऽपि नोक्तः, एतत्पक्षे वृत्त्याकारत्वरूपं वृत्तिविषयत्वं प्रातिस्विकरूपेण ज्ञातुं नैव शक्यते । ज्ञानार्थयोस्सम्बन्धानुपपत्तिं वदद्भिः घटादौ चित्तादात्म्यं सम्बन्धः शुद्धब्रह्मणितु वृत्तेराकाराख्यविषयत्वं सम्बन्धः, इति स्वसिद्धान्ते निर्णेतृभिः आकारत्वं कीदृशमिति प्रश्ने इत्थमुच्यते एवमुक्त्या आकारत्वमेतादृशमिति नैव निर्धारितं भवति । आकाराख्यः सम्बन्धः अनिर्वाच्यइति पक्षे सम्बन्धस्यानिर्वाच्यत्वे ब्रह्मणोऽप्यनिर्वाच्यत्वं स्यात्, सम्बन्धस्य मिथ्यात्वे ब्रह्मणः मिथ्यात्वाभावः कथं स्थाप्यते ? ॥

शुद्धस्य सिद्धिः कथमिति विचारावसरे वृत्तेराकाराख्याविषयत्वेन कल्पितेन सिद्धिव्यवहाराङ्गीकारे शुद्धस्य सिद्धिरेव नस्यात् । अतः अकल्पितेनैव व्यवहारः एषितव्यः । तथाऽङ्गीकारे सधर्मत्वमेवेत्यभिप्रेत्याह—**सिद्ध्यतिचेत्सधर्मता इत्यादि** । सिद्धिःप्रकाशः इति पक्षेऽपि तत्र ब्रह्मणः स्फुरणरूपे व्यवहारे नित्यसिद्धे स्वातिरिक्तसंविदपेक्षा नास्तीति प्राक् (४०४ पु.) उदाहृतसिद्धिव्यवहारानुसारेण षष्ठ्या भेदप्रतीतेः सधर्मत्वमेव । एतद्विवरणपरगुरुचन्द्रिकायां घटादिस्फुरणस्य

### श्रीभाष्यम्

नचेत्तुच्छता गगनकुसुमादिवत्। सिद्धिरेव संविदितिचेत् कस्य कं प्रतीतिवक्तव्यं यदि न कस्यचित् कंचित्प्रति सा तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित्कंचित्प्रति भवति। आत्मन इतिचेत् कोऽयमात्मा? ननु संविदेवेत्युक्तम्।

### श्रुतप्रकाशिका

भावः। यद्वा सिध्यद्वस्तु सिद्धेराश्रयतया सविशेषंस्यात्। सिद्धिः प्रकाशः, व्यवहारानुगुण्यधर्मयोगी स्यादित्यर्थः। शिरो द्वया(पति)पादि)तदोषपरिहाराय परोक्तं शङ्कते। सिद्धिरेवेति। सिद्धेस्सिद्ध्यन्तरानपेक्षत्वात् प्रमितिविषयत्वप्रयुक्तं सिद्धि सम्बन्धित्वरूपं सविशेषत्वं नस्यात्। अथापि तुच्छत्वं च नभवेत् नच शशशृङ्गं सिद्धिरूपामितिभावः। तत्रापि सविशेषत्वमाह—कस्येति। * प्रतीतिश्चेत् कस्यचिदाश्रयस्य कंचिद्विषयंप्रति भवेदिति तदुभयं वक्तव्यमित्यर्थः। विपक्षे बाधकमाह—यदीति। तद्विवृणोति। सिद्धिर्हीति। पितृस्थाने विषयः। पुत्रस्थाने आश्रयः। पुत्रत्वस्थाने सिद्धिः पुत्रत्वस्य हि पुत्रआश्रयः॥

कस्यचिदित्युक्तं ज्ञात्रपेक्षाप्रतिक्षेपं * शङ्कते। आत्मनइतिचेदिति। * आत्मानंप्रतीत्यर्थः। * आत्मशब्दः स्ववाची। अनेन प्रत्यक्त्वं फलितम्। सिद्धिप्रतिसम्बन्धी स्वात्माहिप्रत्यक् स्वस्मै भासमानत्वं प्रत्यक्त्वमितिहि वक्ष्यते। तच्च संविदोऽनुपपन्नमित्यभिप्रायेणाह—कोऽयमात्मेति। अयंशब्दः सिद्धिप्रतिसम्बन्धित्वपरः * सिद्धिप्रतिसम्बन्ध्यात्मा कः? किंशब्दः क्षेपे संविन्नसिद्धिप्रतिसम्बन्ध्यात्मा संविदः प्रत्यक्त्वमनुपपन्नामित्यर्थः। * संविदात्मत्वस्योपपादितत्वान्नानुपपन्नमिति चोदयति। नन्विति।

### गूढार्थसंग्रहः

असत्त्वापादकाज्ञानविरोधिचिद्रूपत्वेऽपि शुद्धचिद्रूपब्रह्मणः स्फुरणं शुद्धचिदेव इत्युक्तरीत्यङ्गीकारे घटस्य स्फुरणं चितः स्फुरणमिति व्यवहारयोरैकरूप्यानुभवविरोधः। एवं 'घटः प्रकाशते भाति, चित् प्रकाशते भाति' इत्यादावाख्यातार्थस्य ऐकरूप्यस्यानुभवसिद्धस्यायोगः। चित् प्रकाशते भातीत्यादौ आख्यातस्य साधुत्वमात्रार्थत्वाङ्गीकारोऽपि अर्थप्रतीतिसम्भवेऽनुचितः। चितं सिद्धवत्कृत्य अर्थबाधकल्पनंचायुक्तम्। अतस्सधर्मत्वमपरित्याज्यमिति भावः॥

'सर्वतीर्थदृशां सिद्धिः' इत्यादिवार्तिकसन्दर्भे 'स्वतोऽसिद्धप्रमेयेतु—शशशृङ्गं स्फुरन्नपि' इति प्राक् (३९५पु.) उदाहृतवाक्यमभिप्रेत्य 'भवेच्छशविषाणवत्'(४३१) इति यामुनमुनिना उक्तम्। सधर्मवस्तुनएव सिद्धिः नतु निर्धर्मकस्य तथासिद्ध्यनङ्गीकारे निर्विशेषचितः शशविषाणतुल्यत्वमेव। एवं च शशविषाणतुल्यनिर्विशेषचिता घटादेरभिव्यक्तिः वार्तिककृत्सम्मता नैव घटतइति यामुनमुनेराशयः। तमेवाह—नचेत्तुच्छता इत्यादिना॥

सिद्धिरेव संविदितिचेदिति। 'अत्र शुद्धचिद्रूपब्रह्मणः स्फुरणं शुद्धचिदेव' इति गुरुचन्द्रिकावाक्यमभिप्रेतम्। चैत्रस्य घटः स्फुरति इत्यादिप्रामाणिकव्यवहारेण स्वभिन्नार्थद्वयसम्बन्धित्वं स्फुरणस्य सम्प्रतिपन्नम्। स्फुरणस्य संविद्रूपत्वे तदनुपपत्तिः। 'स्फुरणं ज्ञानं घटस्य स्फुरणं ज्ञानम्' इत्यादेरेकस्याएव स्फुरणज्ञानव्यक्तेर्विषयत्वम्' इति (अनुकूलतर्कनिरूपणे) गुरुचन्द्रिकोक्त्या चैत्रस्य घटस्य ज्ञानमित्यादावपि सम्बन्धिद्वयपुरस्कारेण प्रतीत्या शुद्धचितस्तद्रूपत्वं न सम्भवति॥ आत्मनइतिचेदित्यादि—संविदेवेत्युक्तमिति॥

### श्रीभाष्यम्

**सत्यमुक्तम्। दुरुक्तं तु तत्। तथाहि कस्यचित्पुरुषस्य किंचिदर्थजातंप्रति सिद्धिरूपतया तत्सम्बन्धिनी सा संवित् स्वयं कथमिवात्मभावमनुभवेत्। एतदुक्तंभवति अनुभूतिरिति स्वाश्रयंप्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगति संविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो घटमहंजानामि इममर्थमवग च्छामि पटमहंसंवेद्मीति सर्वेषामात्मसाक्षिकः प्रसिद्धः। एतत्स्वभावतयाहि तस्यास्स्वय-म्प्रकाशता भवताऽप्युपपादिता। अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत्**

### श्रुतप्रकाशिका

परिहरति । **सत्यमुक्तमिति** । संविदात्मत्वस्य दुरुक्तत्वं संविदात्मत्वनिराकरणमुखेन उपपादयितुमारभते । **तथाहीति** । कर्मनिर्देशो दृष्टान्तत्वेन । **अर्थजातमिति** । * धर्मधर्मिरूपपुञ्जएव प्रमितिविषयइति भावः, सिद्धिरूपा । प्रकाशरूपा अतएव तदुभयसम्बन्धिनी । **कथमिति** । आत्मधर्मभूता संवित् स्वयं कथमात्मेत्यर्थः सिद्धिशब्दउत्पत्ति ज्ञप्तिसाधारणः * अयमर्थः । प्रकाशश्चेदिह विवक्षितः सकः तस्य कर्मकर्तृसम्बन्धित्वे किं प्रमाणम् । वृत्तिज्ञानंहि सकर्मक-र्तृत्वम् । संवित्तु केवला ॥

इह कर्मनिर्देशे किं फलमिति शङ्कायामाह । **एतदुक्तं भवतीति** । अनुभूतिरित्यनेन ज्ञप्तिपरत्वमुक्तम्, स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावइत्यनेन तत्स्वरूपमुक्तम् । एवं सिद्धिशब्दार्थउक्तः । ज्ञानावगतिसंविदाद्यपरनामेत्यनेन ज्ञानसंविच्छब्दयोः पर्यायतया वृत्तिज्ञानसंविदोर्विभागस्य निष्प्रमाणकत्वं फलितम् । 'घटमहं जानामि' इत्यादिना आत्मसाक्षिकः प्रसिद्धइत्यन्तेन कर्मकर्तृसम्बन्धस्य स्वानुभवसिद्धत्वमुक्तम् । ज्ञानसंवि-च्छब्दयोः पर्यायत्वमुपपादितं च कर्मकर्तृसम्बन्धे पराभ्युपगतिमाह । **एतत्स्वभावतयेति** । आत्मनस्स्वयम्प्रकाशत्वं साध

### गूढार्थसङ्ग्रहः

'घटमहं जानामि' इत्यादौ प्रागुक्तान्तःकरणपरिणामभेदप्रक्रियया अन्तःकरणावच्छिन्नाचित् प्रमाता, विषयाकार वृत्त्यवच्छिन्नाचित् प्रमितिः, इति परैर्व्यवस्थाकरणेन शुद्धचितः आत्मन एव संविद्रूपत्वं तदाश्रयरूपत्वं च सम्भवति, आत्मनः स्फुरणं चिद्रूपमिति पूर्वमेवोक्त्या कल्पितभेदेन व्यवहारोपपत्त्या नानुपपत्तिः इति भावः । शुद्धचितः अप्रामाणि कत्वस्य पूर्वमेवोक्त्या अन्तःकरणपरिणामभेदेन व्यवहारोपपादनं न युक्तमिति निरूपयति—**तथाहीत्यादिना** ॥

**कथमिवात्मभावमनुभवेदिति**। आश्रयस्यात्मतया तद्वृत्तित्वेन प्रतीयमानासंवित् आत्मेत्युक्तिः साहसमेवेतिभावः। तिङ्प्रकृत्यर्थस्य संविदः आत्मत्वं आश्रयसम्बन्धमन्तरा प्रतीत्यादिना यदि निर्णेतुं शक्येत तदा क्वाचित्को व्यवहारः अभेदेऽपि भेदकल्पनया निर्वोढुं शक्यते नच तथा इति भावः । इममेवार्थं विशदयति—**एतदुक्तं भवतीत्यादिना** ॥

**सर्वेषामात्मसाक्षिकः प्रसिद्धः इत्यादि** । ज्ञाधात्वादेः सकर्मकत्वेन कर्तृकर्मसम्बन्धमन्तरा तस्य प्रतीतिर्व्यव-हारोवेव नैव वर्तेते । 'अर्थप्रकाशो ज्ञप्तिः' इति विवरणानुसारेण अर्थव्यवहारजनकत्वेनैव अर्थकर्मकत्वम्। अर्थव्यवहार दशायां च अहमर्थव्यवहारो नियतः, सच व्यवहारः अहमर्थस्य कर्तृतयैवानुभवसिद्धः, एवं च कर्तृकर्मसम्बन्धमन्तरा तिङ्प्रकृत्यर्थप्रतीतिव्यवहारयोरभावेन क्रियायाः तत्कर्तुश्चैक्यं न युक्तमिति भावः ॥

### श्रीभाष्यम्

**कर्तृत्वमपि दुर्घटमिति। तथाहि अस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते। कर्तृस्थैर्यं तावत् सएवायमर्थः पूर्वं मयाऽनुभूत इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम्।**

### श्रुतप्रकाशिका

यता कर्मकर्तृसम्बन्धिज्ञानस्य स्वयम्प्रकाशत्वं साधितमिति सकर्मकर्तृकंज्ञानं जडरूपमात्मभूतज्ञानादन्यत् वृत्तिरूपमित्यभ्युपगमोऽनुपपन्नइति भावः। अस्येत्यादिना कर्मनिर्देशस्य फलं दर्शितम्॥

ननु न वयं संविदः कर्तृत्वमिच्छाम इति कथमयं प्रसङ्गः (इति) उच्यते—न संविदआत्मत्वं वदता प्रत्यक्त्वमभ्युपेतव्यम्। प्रत्यक्त्वं च ज्ञानाश्रयस्यैवेति संविदो ज्ञातृत्वमवर्जनीयम्। तच्च दुर्घटमित्यर्थः। कर्तृत्वमाश्रयत्वं, धात्वर्थाश्रयोहि कर्ता। एवं धर्मधर्मिभावेन प्रतीत्या संविदात्मत्वं निराकृतम्। अथ स्थिरत्वास्थिरत्ववैधर्म्येण तद्युदस्यते। तथेति। हिर्हेतौ तथाशब्देन चार्थेन हेत्वन्तरमुच्यते—कर्तृस्थैर्यमुपपादयति। **कर्तृस्थैर्यंतावदिति।** प्रत्यभिज्ञायमान-

### गूढार्थसंग्रहः

संविदः नित्यत्व महमर्थस्यानित्यत्वं यत्परैरुक्तं तदपि प्रमाणविरोधादनुपादेयमिति निरूपयति—**तथाहीत्यादिना। प्रत्यभिज्ञाप्रत्यक्षसिद्धमिति।** 'अनुस्मृतेश्च' (२.२.२५) इति सूत्रभाष्ये (शं) 'अपिच दर्शनस्मरणयोः कर्तर्येकस्मिन् प्रत्यक्षःप्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धः अहमदोऽद्राक्षम् इदं पश्यामि' इति। यदि तयोर्भिन्नः कर्ता स्यात्, ततोऽहं स्मरामि अद्राक्षीदन्यः इति प्रतीयात् नत्वेवं प्रत्येति कश्चित्। इहतु अहमदोऽद्राक्षमिति दर्शनस्मरणयोर्वैनाशिकोऽपि आत्मानमेवैकं कर्तारमवगच्छति। न नाहमिति आत्मनो दर्शनं निह्नुते इति। उपलब्धरितु सन्देहोऽपि न कदाचिद्भवति सएवाहं स्यां तत्सदृशोवेति। यएवाहं पूर्वेद्युरद्राक्षं सएवाहमद्य स्मरामि इति निश्चिततद्भावोपलम्भात्' इति॥

एवं 'स एवतु कर्मानुस्मृतिशब्दविधिभ्यः' (३.२.९) इतिसूत्रभाष्ये (शं) इतश्च सएवोत्तिष्ठति, यत्कारणमतीतेऽहनि अहमदोद्राक्षमिति पूर्वानुभूतस्य पश्चात् स्मरणं, अन्यस्योत्थाने नोपपद्यते। नह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति। सोऽहमस्मीति चात्मानुस्मरणं आत्मान्तरोत्थाने नावकल्पते, इति। यावदेकोपाधिगता बन्धानुवृत्तिः तावदेकजीवव्यवहारः उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः सएवायमुपाधिः स्वापप्रबोधयोः बीजाङ्कुरन्यायेनेति सएव जीवः प्रतिबुध्यते इति युक्तमिति चोक्तम्। प्रत्यभिज्ञाप्रत्ययश्च अहमर्थानात्मवादे न स्वरसः। यएवाहं सुप्तः सएव जागर्मि इति प्रत्ययः सुषुप्तावहमर्थो नास्तीति मते कथं स्वरसः? पञ्चपादिकायाम् अहङ्कारं प्रस्तुत्य 'सच सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कुतस्त्यः' इत्युक्तेः। 'अहङ्काराभावाच्च नैका विशिष्टवृत्तिः' इति सिद्धान्तबिन्दुटीकायाम् 'अहङ्कारत्वं च स्थूलावस्थमनस्त्वम् अहमाकाराविद्यावृत्तित्वं वा' इत्युक्तम्॥

एवं च मनसः संस्काररूपेण सत्त्वस्य स्थूलावस्थमनसो लयस्य च परसम्मततया अहमर्थः सुषुप्तौ नास्त्येवेति अहमर्थविषयकप्रत्यभिज्ञा यएवाहं सुप्तः सएव जागर्मि इत्याकारिका न घटते। अस्यां च प्रत्यभिज्ञायां अहंत्वविशिष्टस्यैव विषयतया अहंत्वविशिष्टस्य सुषुप्तौ लये प्रत्यभिज्ञाऽनुपपत्तेः स्फुटत्वात्। यएवाहं प्रातरदोऽद्राक्षं, सएवाहमिदं पश्यामि

## श्रीभाष्यम्

**अहंजानामि अहमज्ञासिषं ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः प्रत्यक्ष सिद्धा इति कुतस्तदैक्यम् । एवं क्षणभङ्गिन्यास्संविद आत्मत्वाभ्युपगमे**

## श्रुतप्रकाशिका

त्वाद्धि घटादेः स्थैर्यसिद्धिः । तद्वत्तत्र घटप्रत्यभिज्ञाकाले पूर्वं मयाऽनुभूत इति कर्तुरपि प्रत्यभिज्ञाविषयस्थैर्यसिद्धिरित्यर्थः अथ ज्ञानस्योत्पत्तिस्थितिनिरोधान् दर्शयति । **अहमित्यादिना** । जानामीत्यनेनोत्पत्तिस्थिती सिद्धे अज्ञासिषमित्यतीतत्वंप्रतीतिः । एतद्वैशद्यायानन्तरपूर्वकालसञ्जातज्ञानविशिष्टत्व परामर्शद्योतनार्थं ज्ञातुरेव ममेत्युक्तिः । उत्पत्त्यादयइत्यादिशब्देन स्थितिनिरोधग्रहणम् । संविदउत्पत्तिर्नाम त्रिचतुरक्षणस्थायिन्यास्तस्याः प्रथमक्षणयोगः क्षणान्तरसम्बन्धः स्थितिः । संविदः स्वकाशत्वात्ते प्रत्यक्षे घटसंविदो * निरोधोनाम पटसंवित् । साच प्रत्यक्षा इतिहेतौ स्थिरत्वास्थिरत्व वैधर्म्येण न तदैक्यमित्यर्थः । एवं प्रत्यभिज्ञाविषयत्वेनात्मनः स्थैर्यमुक्तम् ॥

अथ प्रत्यभिज्ञाश्रयत्वेन स्थैर्यमुच्यते । **एवमिति** । पूर्वत्र प्रत्यभिज्ञाप्रत्यक्षसिद्धमित्युक्तम् । अयमभिप्रायः प्रत्यभिज्ञाविषये ज्वालादौ यत्र क्वचिदन्यथासिद्धिस्सम्भवेत् तत्र न स्थैर्यसिद्धिः । अत्र प्रत्यभिज्ञाविषयत्वान्यथासिद्धावपि प्रत्यभिज्ञाश्रयत्वस्यानन्यथासिद्धत्वात् भ्रान्तिरूपप्रत्यभिज्ञायामपि तदाश्रयस्य स्थैर्यमनन्यथासिद्धमिति प्रत्यभिज्ञाश्रयत्वप्र-

## गूढार्थसंग्रहः

इति प्रत्यभिज्ञासमशीला सा प्रत्यभिज्ञा इति प्रत्यभिज्ञाद्वयस्यैकरूप्यमनुभवसिद्धं न सम्भवति । 'अनुस्मृतेश्च' इति सूत्र भाष्ये 'न नाहमिति आत्मनो दर्शनं निह्नुते' इत्युक्त्या सुषुप्तावहमर्थाभावे न नाहमिति प्रत्ययस्य प्रसङ्गः कथं वार्यते ? मृदो घटाद्याकारेण परिणामेऽपि तत्परिणामविरहदशायां मृदि न घट इति प्रतीतिवत् सुषुप्तौ नाहमिति प्रत्ययस्य परमते सम्भवात् । एवं 'यएवाहं पूर्वेद्युरद्राक्षं सएवाद्य स्मरामि' इति प्रत्यभिज्ञाऽपि परमतेऽनुपपन्नैव । पूर्वेद्युः अहमर्थः यादृशान्तःकरणविशिष्टः अद्य न तादृशान्तःकरणविशिष्टः । पूर्वेद्युः स्थितस्यान्तःकरणस्य सुषुप्तौ लयः संस्काररूपेण स्थितिः अद्य पुनरुत्पत्तिः स्थूलावस्थमनस्त्वेनेति परेषां प्रक्रिया । एवं च लूनपुनर्जाताङ्कुरादिस्थले यएवाङ्कुरः पूर्वं मया ज्ञातः सएवायमङ्कुरः इति प्रत्यभिज्ञातुल्या इयं प्रत्यभिज्ञा । ननु पूर्वं यादृशाङ्कुरस्य ज्ञानं तादृशाङ्कुरविषयक प्रत्यभिज्ञातुल्या भवति । लूनपुनर्जाताङ्कुरादौ प्रत्यभिज्ञा सादृश्यनिबन्धना यथा, तथा इयमपि प्रत्यभिज्ञा अभ्युपगन्तव्या आपद्यते । अतः अहमर्थस्य विकारित्वाभ्युपगन्तृमते प्रत्यभिज्ञाऽस्वारस्यं दुर्वारमिति बोध्यम् ॥

**संविदुत्पत्त्यादयः इति** । उत्पत्त्यादयः परिणामविशेषा इति गीताभाष्ये व्यक्तम् । मणिद्युमणिप्रभाया इव तत्तद्विषयसम्बन्धः श्रीभाष्ये वक्ष्यते । तेन नीलानुभवः पीतानुभव इत्यादौ अनुभवस्य नीलपीतादि सम्बन्धएव परिणामः एकैकविषयसम्बन्धविगमपूर्वकमन्यविषयसम्बन्धदशायां अनुभवस्य विनाशोत्पत्तिव्यवहारौ' इति च निर्णीतं भवति । एतेन 'प्रमाणजन्यश्चेदनुभवः तथासति स्वगतेन विशेषेण प्रतिविषयं पृथक् पृथगवभासेत । सर्वानुभवानुगतं च गोत्ववदनुभवत्वपरमीक्ष्येत । नच नीलानुभवः, पीतानुभव इति विषयाविशेषपरामर्शशून्यः स्वगतो विशेषो लक्ष्यते । ननु विनष्टाविनष्टत्वेन विशेषः सिध्येत् यदिहि विनष्टाविनष्टता सिध्येत् । साच जन्यत्वेसीत तस्यां च सिद्धायां जन्यत्वमिति परस्परायत्तस्थितित्वेन एकमपि न सिध्येत्' इति पञ्चपादिकोक्तिर्निरवकाशा ॥ इत्थं च सविकारत्वेन संविदः

## श्रीभाष्यम्

**पूर्वेद्युर्दृष्टमपरेद्युरिदमहमदर्शमिति प्रत्यभिज्ञा च न घटते अन्येनानुभूतस्य नह्यन्येन प्रत्यभिज्ञानसम्भवः। किंच अनुभूतेरात्मत्वाभ्युगमे तस्याः नित्यत्वेऽपि प्रतिसन्धानाभावस्तदवस्थः। प्रतिसन्धानंहि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति। नानुभूतिमात्रम्। अहमेवेदं पूर्वमप्यन्वभूवमिति। भवतोऽप्यनुभूतेर्नह्यनुभवितृत्वमिष्टम्। अनुभूतिरनुभूतिमात्रमेव, संविन्नाम काचिन्निराश्रया निर्विषया वाऽत्यन्तानुपलब्धेर्नसम्भवतीत्युक्तम्। उभयाभ्युपेता संविदेवात्मेत्युपलब्धिपराहतम्।**

## श्रुतप्रकाशिका

युक्तं स्थैर्यं दुष्प्रकम्पमिति। प्रत्यभिज्ञाश्रयतया स्थैर्यं विवृणोति। **अन्येनेति**। एवं स्थिरस्य ज्ञातुर्धर्मत्वेन अस्थिरत्वेन च प्रतीतत्वादस्थिरत्वनिबन्धनात्प्रतिसन्धानासम्भवाच्च संविदात्मत्वं निरस्तम्॥

अथ स्थिरत्वाभ्युपगमेऽपि प्रतिसन्धानासम्भवादात्मत्वं व्युदस्यति। **किंचेति**। **अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेपीति**। आत्मत्वाभ्युपगमौपयिकतया संविदो नित्यत्वाभ्युपगमेपीत्यर्थः। न केवलमनित्यत्वपक्षएव संविदात्मत्वानुपपत्तिः, नित्यत्वेपीत्यपिशब्दार्थः। * आत्माहि प्रतिसन्धत्ते प्रतिसन्धानमत्र न सम्भवतीत्यर्थः। तदसम्भवमुपपादयति। **प्रतिसन्धानमिति**। तदुदाहरति। **अहमिति**। ततः किमितिशङ्कायां तस्य परानिष्टत्वमाह। **भवतइति**। नकेवलं भवदनभ्युपगमः अनुभूतेरनुभवितृत्वं गमनक्रियाया गन्तृत्ववदनुपपन्नंचेत्यभिप्रायेणाह। **अनुभूतिरिति**। मात्रचानुभवितृत्वव्यावृत्तिः॥

• **ननु** धर्मत्वास्थिरत्वाप्रतिसन्धातृत्वैस्संविदोऽनात्मत्वं यदुक्तं तन्नवक्तव्यम्। अनुभवितृत्वास्माकारत्वेन अनभ्युपगमात्। विषयाश्रयशून्यायास्संविदो गुणभावाभावात्। तदुभयसम्बन्धप्रयुक्तानित्यत्वप्रसङ्गाभावाच्चेत्यत्राह—**संविन्नामेति**। ननु कथं विषयाश्रयशून्यज्ञानाभावः स्वरूपभूतं ज्ञानं विषयाश्रयशून्यं त्वन्मते उच्यते—स्वविशिष्टमिदं चोद्यं किं त्वया ज्ञातुरेव ज्ञानशब्दवाच्यस्याजडत्वनित्यत्वादिकं विषयाश्रयशून्यमात्मत्वं च साध्यते तत्सिद्धसाधनम्। यदि ज्ञातृव्यतिरिक्तस्य ज्ञानस्य तर्हि ज्ञातृव्यतिरिक्तं विषयाश्रयविरहितं ज्ञानं शून्यमिति ब्रूमः। ज्ञातृज्ञेयतदवच्छिन्नज्ञानस्वरूपत्रिकातिरिक्तं ज्ञानमनुपलम्भनिरस्तमित्यर्थः॥

बौद्धैकदेशिभिः धर्मिकल्पनातो वरं धर्मकल्पनेति लाघवन्यायात् ज्ञात्रात्मवादिना ज्ञानात्मवादिना च संप्रतिपन्ना संविदेवात्मेत्युक्तम्। तदाशङ्क्य परिहरति। **उभयेति**। कल्पनायामेव लाघवन्यायः। नतूपलब्धौ अन्यथाऽत्यन्तलाघ-

## गूढार्थसंग्रहः

अविकारत्वेनाहमर्थस्य प्रतीतिसिद्धत्वेऽपि अहमर्थस्यानात्मत्वं शुद्धचितं प्रमाणासिद्धामङ्गीकृत्य संविद आत्मत्वं च पञ्चपादिकोक्तमनादरणीयमिति भावः॥

**पूर्वेद्युर्दृष्टमित्यादि**। इयं च प्रत्यभिज्ञा 'अनुस्मृतेश्च' इति सूत्र(शं)भाष्ये उक्ता। इयंचाहमर्थानात्मत्वे न घटते इति पूर्वश्रीभाष्येऽभिप्रेतमिति निरूपितम्॥

प्रागुदाहृतपञ्चपादिकावार्तिकाद्युक्तदिशा निरुपाधिकज्ञानस्यैव आत्मत्वमभिप्रेतमिति परसिद्धान्ते न कोऽपि दोषइति शङ्कायामाह—**संविन्नामेति**॥ **उपलब्धिपराहतमिति**। 'घटमहं जानामि' इति पूर्वभाष्ये उपलब्धिः प्रदर्शिता।

## गूढार्थसंग्रहः

परमते अन्तःकरणपरिणामभागभेदेन अहमर्थस्य न ज्ञानाश्रयत्वम् अन्तःकरणावच्छिन्नचितएव प्रमातृत्वम्, ज्ञाधात्वर्थस्यापि चिद्रूपत्वं सम्मतम्। अन्तःकरणावच्छिन्नचिति ज्ञाधात्वर्थचिदाश्रयत्वं 'नाभावउपलब्धेः' इति सूत्र भामत्युक्तदृष्टान्तानुसारेण न सङ्गच्छते। अतः अहमर्थस्य सङ्कोचविकासात्मकपरिणामशून्यत्वं यावता नाभ्युपगम्यते तावता प्रत्यभिज्ञायाः उक्तोपलब्धेश्च सामञ्जस्यं नैव सम्भवतीति न अहमर्थातिरिक्तज्ञाधात्वर्थस्य आत्मत्वं परेषामिष्टं युक्तमिति भावः॥

'अन्योऽन्यस्मिन्नन्योन्यात्मकतां अन्योन्यधर्मांश्च अध्यस्य इतरेतराविवेकेन अत्यन्तविविक्तयोर्धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः।' इति अध्यासभाष्यम्। अत्र पञ्चपादिका। 'नैसर्गिकः प्रत्यक् चैतन्यसत्तामात्रानुबन्धी। अयं युष्मदस्मदोः इतरेतराध्यासात्मकः। अहमिदं ममेदमिति लोकव्यवहारः, तेन यथा यस्मादस्मदर्थस्य सद्भावो नोपलम्भमर्हति, एवमध्यासस्यापीत्यभिप्रायः। लोकइति मनुष्योऽहमित्यभिमन्यमानः प्राणिनिकायउच्यते। सत्यानृते मिथुनीकृत्येति। सत्यम्—अनिदं चैतन्यम्। अनृतं युष्मदर्थः इति। अत्र विवरणम् 'व्यवहारः, अभिज्ञा, अभिवदनम्, उपादानम्, अर्थक्रिया' इति चतुर्विधः। अन्यस्यान्यात्मनाऽवभासो अविद्येत्युक्ते शुक्लः पट इत्यादिप्रत्ययानां अविद्यात्वप्रसङ्गो माभूदिति सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदो अविद्येति स्वसिद्धान्तमङ्गीकृत्य तद्व्याचष्टे 'सत्यमनिदं चैतन्यमित्यादिना' इति,

अहमिति तावत् प्रथमोऽध्यासः इति अस्मत्प्रत्ययत्वाभिमतोऽहंकारः, सच इदमनिदंरूपवस्तुगर्भः सर्वलोकसाक्षिकः। तमवहितचेतस्तया निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् स्वानुभवमप्रच्छादयन्तः वदन्तु भवन्तः परीक्षकाः किमुक्तलक्षणः नवेति इति। ननु किमत्र वदितव्यम्, असम्भिन्नेदं रूपएवाहमित्यनुभवः। इत्यादिना प्राभाकरमतस्य कुमारिलमतस्य च दूषणावसरे 'तस्माच्चित्स्वभावएवात्मा तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते। अविवक्षितोपाधिः आत्मादिशब्दैरभिधीयते। इति। सच परिणामविशेषः अनिदंचिदात्मनो बुद्ध्या निष्कृष्य वेदान्तवादिभिः अन्तःकरणं मनः बुद्धिः, अहम्प्रत्ययः, इति विज्ञानशक्तिविशेषमाश्रित्य व्यपदिश्यते, परिस्पन्दशक्त्या च प्राण इति। तेनान्तःकरणोपरागनिमित्तं मिथ्यैवाहंकर्तृत्वमात्मनः स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा।' इत्यादिनोक्तार्थसाधानानन्तरं, 'तदेवं स्फटिकमणावुपराग इव चिदात्मन्यहंकारोपरागः, ततः सम्भिन्नोभयरूपत्वात् ग्रन्थिरिव भवतीति अहङ्कारो ग्रन्थिरिति गीयते तत्र जडत्वादुपरक्तस्य न तद्बलादुपरागस्य साक्षाद्भावः चिद्रूपस्य पुनरुपरागः तद्विषय व्यापारविरहिणोऽपि तद्बलात् प्रकाशते। तेन लक्षणतः इदमंशः कथ्यते न व्यवहारतः, व्यवहारतःपुनः यदुपरागादनिदमात्मनोऽहंकर्तृत्वं मिथ्या तदात्मनस्तद्व्यापारेण व्याप्रियमाणस्यैव व्यापारपूर्वको यस्य परिच्छेदः स एवेदमात्मको विषयः अतएव अहमित्यसम्भिन्नेदमात्मकः अवभास इति विभ्रमः केषांचित्। दृष्टश्च लक्षणतः तद्व्यापारार्होऽपि तमननुपतन्। तद्यथा अङ्कुरादिफलपर्यन्तो वृक्षविकारः मृत्परिणामपरम्परापरिनिष्पन्नोऽपि घटवल्मीकवत् न मृन्मयव्यवहारमनुपतति व्युत्पन्नमतयस्तु तद्व्यवहारमपि नातीवोल्बणं मन्यन्ते' इति, अतएव 'निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् अहङ्कारं निरूपयतां सम्भिन्नेदं रूपस्सइत्यभिहितम्' इति च पञ्चपादिका॥

अत्र विवरणम्। ननु 'इदं रजतमितिवदध्यस्तत्वे अहमिति द्वैरूप्यावभासो वक्तव्य इत्याह—सच्चेदमनिदमिति। अयो दहतीति दग्धृत्वविशिष्टाग्नेः अयसश्च द्वैरूप्यावभासवत् 'अहमुपलभे' इति उपलब्धृत्वविशिष्टस्यात्मनः अन्तःकरणस्यचास्त्येव द्वैरूप्यावभासः असाधारणक्रियोपरक्तमात्मादिद्रव्यमेव वस्त्वन्तरविशिष्टमवभासत इति। दुःखिप्रेमास्पदरूपेण परिणामि तदागमापायद्रष्टृरूपेण अहङ्कारविषयादिषु अनुस्यूतचैतन्यरूपेण अहमिति च व्यावृत्तरू-

## गूढार्थसंग्रहः

पेण च सर्वलोकसाक्षिकं द्वैरूप्यमित्याह—सर्वलोकसाक्षिक ' इति । (२) सच परिणामविशेष इति । अयमाशयः ' बुद्धेर्गुणेनात्मगुणेनचैव ह्याराग्रमात्रोह्यवरोऽपि दृष्टः ' इति श्रुतौ परिणामगुणवत्तया द्रव्यमित्यवगता बुद्धिः तथा ' यदा पञ्चैव लीयन्ते ज्ञानानि मनसासह। बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते। ' इति श्रुतौ चेष्टाश्रयत्वेन द्रव्यमित्यवगता बुद्धिः। तथा ' विज्ञानं यज्ञं तनुते ' इत्यानन्दमयस्यात्मनः पृथगभिधानात् विज्ञानंबुद्धिरित्यनर्थान्तरत्वात् बुद्धिः क्रियाश्रयत्वेन द्रव्यमित्यवगता । तथा ' विज्ञानेन वा ऋग्वेदं विजानाति मनसाह्येव पश्यति ' इति च करणान्तःपातिनोर्विज्ञानमनसोरेकत्वान्मनसश्च काम सङ्कल्पादिवृत्तिमत्वश्रवणादेकमन्तःकरणं विज्ञानंक्रियाशक्तिमत् मनआदिशब्दवाच्यं श्रुतिलिङ्गेभ्यःप्रसिद्धम्। तथा ' बुद्धेर्गुणेनात्मगुणेनचैव, सधीः स्वप्नो भूत्वेमं लोकं सञ्चरति, विज्ञानमयः, मनोमयः ' इत्यादिश्रुतावात्मावच्छेदकतया स्वगुणारोप गमनागमनादिनिमित्तत्वं चावगतम्। तथा कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि ' इति श्रुतावुत्क्रान्त्याद्युपाधेः प्राणस्याप्यन्तःकरणांशत्वमवगतम्। युगपदुपाधिद्वयायोगात् ततश्च वर्णितमन्तःकरणं श्रुतिलिङ्गादिसिद्धमिति ननु अर्थवादलिङ्गानां न्यायापेक्षा भवति—सत्यं निरंशसर्वगतासङ्गस्याकाशस्येव निरुपाधेर्गमनपरिच्छेदाद्यनुपपत्तिरेव न्याय इत्यलमतिप्रसङ्गेन ॥

ननु आत्मनएव विज्ञानक्रियापरिणामशक्ती किं न स्यातामिति निरवयवसर्वगतासङ्गस्य परिणामानुपपत्तेः, परिणाम्यन्तःकरणसन्निधानाच्च प्रतिभासस्यान्यथासिद्धेरिति सदृष्टान्तमाह—तेनान्तःकरणोपरागनिमित्तमिति । तदेवमिति ॥

ननु अहङ्कारधर्मस्य आत्मनि आरोपमात्रं क्रियते किंवा मिथ्यैव धर्मान्तरमुत्पद्यते इति पूर्वस्मिन्नायं दृष्टान्तः अन्यथाख्यातिश्च स्यात् । उत्तरस्मिन् सत्यमिथ्याकर्तृत्वात् द्वयावभासस्स्यात् । उच्यते—अहङ्कारस्य स्वधर्मसहितस्यैव आत्मन्यध्यस्ततया मिथ्यात्वान्नान्यथाख्यातिप्रसङ्गः, अन्यसन्निधानादन्यस्मिन् मिथ्याधर्मावभासः इत्येतावति दृष्टान्तः। अथवा कर्तृत्वद्वयेऽपि धर्मिणोरेकत्वापत्त्या धर्माभेदावभास इत्यविरोधः ॥

ननु ' भिद्यते हृदयग्रन्थिः ' इत्यादौ हृदयग्रन्थिरात्मन्यनर्थहेतुरिति गम्यते। तत्कथमहङ्कारस्योच्यत इति तत्राह—सम्भिन्नोभयरूपत्वादिति । ननु आत्मा स्वात्मन्युपरक्ताहंकरतद्धर्मादीन् नावभासयेत्, उपरक्तत्वसाम्यात् स्फटिकादिवदिति तत्राह—तत्र जडरूपत्वादिति। जाड्ये चैतन्ये अवभासकत्वानवभावसकत्वयोः निमित्ते नोपरक्तत्वानुपरक्तत्वे इत्यर्थः ॥

ननु चेतनस्याप्युपरक्तविषयज्ञानव्यापारशून्यत्वात् जाड्यादविशेष इति तत्राह—चिद्रूपस्य पुनरिति । अव्यवधानेन चित्संसर्गएवप्रतिभासहेतुः, न ज्ञानव्यापार इति भावः ॥

ननु साक्षिस्वरूपवत् विज्ञानक्रियाव्यवधानमन्तरेणाहङ्कारस्य सिद्धौ कथमिदमंशता इति ? तत्राह—तेन लक्षणत इति । अर्थस्वभावत इत्यर्थः । अर्थतश्चित्स्वरूता अनिदमंशता, चैतन्यकर्मताचेदमंशता । न ज्ञानक्रियाव्यवधाने॰ नेत्यर्थः। व्यवहारतः पुनः कथंभूतस्येदमंशतेति तदाह। व्यवहारतः पुनरिति । यदुपरागात् । यस्याहंकारस्योपरागादित्यर्थः। तदात्मन इति । तदात्मतामहङ्कारात्मतामापन्नस्येत्यर्थः । तद्व्यापारेण अहङ्कारव्यापारेणेति वृत्तिव्यवधानेन सिद्धिरेव शरीरेन्द्रियविषयाणां इदमिति प्रतिभासिता, तदव्यवधानसिद्धिरेवानिदंप्रतिभासिता इति भावः ॥

ननु अज्ञानव्यवहितोऽहंकारःकथम् ? अव्यवधानादिदंतावभासाभावः स्यादित्यत्राह—अतएवाहमिति । अनिदन्ताप्रतिभासादेव अज्ञानमात्रव्यवधानादित्यर्थः । ननु अर्थतो युष्मदर्थत्वे तथा प्रतिभासाभावो न युक्त इत्यत्राह—दृष्टश्च लक्षणत इति । ननु विमर्शेऽपि मृन्मयव्यवहारो न जायेत इहतु विमर्शे युष्मदर्थता व्यवह्रियते, अतो नायं दृष्टान्तइत्यतआह—अव्युत्पन्नमतयस्त्विति । ' इति ॥

## श्रीभाष्यम्

**अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः। ननुचाहं जानामी-त्यस्मत्प्रत्यये**

## श्रुतप्रकाशिका

वार्थे माध्यमिकमतानुसारेण ज्ञानं च त्यज्येत, कल्पनेतु लाघवन्यायः संवित्तूपलभ्यत इति चेत् ज्ञातापि तथोपलभ्यते अतः * उपलब्धिपराहतत्वात् संविदात्मत्वमनुपपन्नमित्यर्थः। साश्रयैव संविदुपलभ्यते तथाऽपि युक्तिभिर्निर्विशेषत्वं साधितमित्यत्राह—**अनुभूतिमात्रमिति** ॥

* यद्वा संविदः परमार्थत्वेन उभयवादिसम्मतत्वात् सैवात्मेत्युक्तमित्याशङ्क्य दूषयति। **उभयेति**। उपलब्धिपराहतं प्रत्यक्त्वलक्षणस्यात्मत्वस्य 'अहं जानामि' इति ज्ञातृत्वसामानाधिकरण्येनोपलब्ध्या पराहतमित्यर्थः। ज्ञातुरेव प्रत्यगात्मत्वमुपलब्धिसिद्धमित्युक्तम्। तस्या उपलब्धेर्निर्विशेषसंविदात्मसाधकयुक्तिभिर्बाधितत्वमाशङ्क्याह—**अनुभूतिमात्रमिति**। प्रत्यगर्थोह्यात्मा प्रत्यक्त्वंचाहमर्थात्मत्वेतु नारुद्ध्यति संविदात्मत्वपक्ष एव सेत्स्यतीति चोदयति। **ननुचेति**।

## गूढार्थसंग्रहः

इममर्थं सर्वमभिप्रेत्य 'अस्मत्प्रत्यये योऽनिदमंशः चिदेकरसः प्रकाशः सआत्मा। तस्मिन् तद्बलनिर्भासिततया लक्षणतो युष्मदर्थएव अहं जानामि इति सिध्यन्नर्थः' इत्यात्मसिद्ध्युक्तमर्थं शङ्कते **ननुचाहं जानामीत्यादिना**। 'युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोस्तमः प्रकाशवत् विरुद्धस्वभावयोः इतरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः' इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणांचाध्यासः। तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्' इति भाष्यविवरणे 'अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके इति। अस्मत्प्रत्यये योऽनिदमंशः चिदेकरसः तस्मिन् तद्बलनिर्भासिततया लक्षणतोयुष्मदर्थस्य मनुष्याभिमानस्य सम्भेदइव अवभासः सएवाध्यासः' इति पञ्चपादिका 'ननु अहङ्कारादिषु शरीरान्तेषु अहमित्येव प्रत्ययः, नतु इदमिति। कथमेषां युष्मत्प्रत्ययगोचरत्वमिति तत्राह—तद्बलनिर्भासिततयेति। तस्यास्मत्प्रत्ययगोचरस्य चैतन्यस्य बलेन निर्भास्यत्वात् अहङ्कारादेः प्रतिभासतो युष्मदर्थत्वाभावेऽपि अपरोक्षतयाऽवभास्यत्वेन लक्षणेन युष्मदर्थभावो युज्यत इत्यर्थः' इति विवरणम्। अत्र पञ्चपादिकोक्तएवार्थः आत्मसिद्धौ श्रीभाष्येचोक्तइति स्फुटं प्रतीयते ॥

अत्र भामती। 'इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युष्मद्ग्रहणम् अत्यन्तभेदोपलक्षणार्थम्। यथाहि अहंकारप्रतियोगी त्वंकारः नैवमिदंकारः एते इमे वयमास्महे इति बहुलं प्रयोगदर्शनादिति। चित्स्वभाव आत्मा विषयी जडस्वभावा बुद्धीन्द्रियदेहादयो विषयाः। एतेहि चिदात्मानं विषिण्वन्ति अवबध्नन्ति। स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्' इति ॥

'येऽप्यहङ्कारास्पदमात्मानमास्थिषत तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम्। अहमिहैवास्मि सदने जानानः इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात्' इत्यादिकमभिधाय तदेवमुक्तक्रमेणाहम्प्रत्यये पूतिकूश्माण्डीकृते भगवती श्रुतिः अप्रत्यूहं कर्तृत्वभोक्तृत्व सुखदुःख शोकाद्यात्मत्वम् अहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति। तदेवं सर्वप्रवादिश्रुतिस्मृतीतिहासपुराणप्रथितमिथ्याभावस्याहम्प्रत्ययस्य स्वरूपनिमित्तफलैरुपव्याख्यानम् 'अन्योन्यस्मिन्' इत्यादि। 'अन्य

## गूढार्थसङ्ग्रहः

ऽन्यस्मिन् धर्मिणि आत्मशरीरादौ अन्योऽन्यात्मकतामध्यस्य अहमिदम् शरीरादीति । इदमिति च वस्तुतः न प्रतीतितः । लोकव्यवहारः लोकानां व्यवहारः । सचायमहमिति व्यपदेशः ' इत्यादि च ॥

अत्र रत्नप्रभा ' युष्मच्छब्देन युष्मच्छब्दजन्यप्रत्यययोग्यः परागर्थो लक्ष्यते ; अस्मच्छब्देन अस्मच्छब्दजन्यप्रत्यययोग्यः प्रत्यगात्मा । प्रतीयत इति प्रत्ययः अहङ्कारादिः । अनात्मा दृश्यतया भाति । आत्मातु प्रतीतित्वात्प्रत्ययः स्वप्रकाशतया भाति ' इति ॥

' पराञ्चिखानि व्यतृणत्स्वयम्भूः तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन् ' (कठ) इति श्रुत्यादिभिः प्रत्यक्पराग्वस्तुनी सर्वसम्मते अहमर्थस्य प्रत्यक्परागुभयरूपत्वं न कस्यचित्सम्मतम् । ' अयो दहति ' इतिवत् ' अहमुपलभे ' इति प्रतीतिः इति कोवा दार्शनिकः अभ्युपगच्छति ? ' अयो दहति ' इत्यत्र अयसि दाहकर्तृत्वं न तात्त्विकम् । अग्नावेव तद्दर्शनात् । ' अहमुपलभे ' इत्यत्र अहमर्थस्य उपलब्धृत्वं तात्त्विकमेव । 'अयःपिण्डव्यतिरेकेण वह्नेर्दहनक्रियाश्रयत्वदर्शनवत् अहङ्कारव्यतिरेकेण आत्मनि ज्ञानक्रियाऽदर्शनात् ।' इति उत्तरविवरणवाक्ये अयमर्थः स्फुटः । अतएवाहमर्थस्योपलब्धृत्वं नैयायिकैः वैशेषिकैः भाट्टैः प्राभाकरैश्च तात्त्विकमभ्युपगम्यते । तत्र अन्तःकरणस्य प्रतीतिरेव नैयायिकादीनामसम्मता । अहं चक्षुषा पश्यामीतिवत् अहं मनसा साक्षात्करोमि इति प्रतीतौ मनसः करणत्वस्य अनुभवसिद्धतया अहमर्थघटकत्वाभावस्य ततएव सिद्धेः । ' मनसाह्येव पश्यति ' (बृ) इति श्रुत्याऽपि उक्तार्थसिद्धिः । पञ्चपादिकायां प्रभाकरभट्टमतदूषणपूर्वकं ' चित्स्वभाव एवात्मा अनुभवाभिधानीयकं लभते ' इति सिद्धान्तकरणं चितएवाप्रामाणिकत्वेन न घटत इति प्रागेवावेदितम् । ' दुःखिप्रेमास्पदरूपेण ' इत्यादि प्राक् (४३८.पु) उदाहृतविवरणवाक्यं भावप्रकाशे (द्वि.सं.२२९.पु) पर्यालोचितम् । ' बुद्धेर्गुणेनात्मगुणेनचैव ' इति श्रुतौ बुद्धिः धर्मभूतज्ञानमेव तस्या अपि प्रभावत् द्रव्यत्वम् अनुपदमेव श्रीभाष्ये स्थापयिष्यते । श्रुत्यर्थस्तु भावप्रकाशे (द्वि.सं.४५६.पु) द्रष्टव्यः ॥

' यदा पञ्चैव लीयन्ते ' इति श्रुतौ मनसः पृथगुपादानात् तत्र बुद्धिः न परसम्मताऽभिप्रेता । ' बुद्धिश्चाध्यवसायलक्षणा न विचेष्टते । स्वव्यापारेषु नचेष्टते न व्याप्रियते ' इति (शं.उप) भाष्ये उक्त्या नात्र विवरणोक्तार्थः युक्तः । ' विज्ञानं यज्ञं तनुते ' इत्यत्र आनन्दमयस्य परमात्मनः पृथगभिधानात् जीवात्मैव विवक्षित इति आनन्दमयाधिकरणे वक्ष्यते । तस्यचाणुत्वेन क्रियाश्रयत्वं सम्भवतीति सूत्रकृतैव निर्णेष्यते । ' विज्ञानेन वा ऋग्वेदं विजानाति ' इति श्रुतौ विज्ञानशब्दः विज्ञानसाधनपरः । मनसः कामसङ्कल्पाद्याश्रयत्वं श्रुत्यादिभिः न निर्णेतुं शक्यत इति निरूपितं भावप्रकाशे (द्वि.सं) । ' सधीः स्वप्नो भूत्वा ' ' विज्ञानमयः ' इत्यादौ धर्मभूतज्ञानमेव विवक्षितं, नतु आत्माऽवच्छेदकतया अन्तःकरणम् । ' कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि ' (प्रश्न.६.३) इत्यत्र प्राणस्यान्तःकरणांशत्वं विवक्षितमिति कथं वक्तुं शक्यते । अहमर्थस्योत्क्रमणे प्राणस्यापेक्षा प्रतीयते । अहमर्थस्याणोर्जीवस्य उत्क्रमणं प्राणस्योत्क्रमणंचैककालिकमिति ततस्सिद्ध्यति । ' कस्मिन्न्वहमुत्क्रान्ते ' इति श्रुतौ अहमित्यत्र मन उपाधिको वा प्राणोपाधिको वा, सामान्येन अन्तःकरणोपाधिको वा विवक्षित इति परैर्वाच्यम् ; तत्र अहमित्यत्र सोपाधिकस्य विवक्षायां न किंचित्प्रमाणं पश्यामः । अहमर्थविवाददशायां अन्तःकरणाद्यवच्छिन्नस्याहमर्थत्वं नैव वक्तुं शक्यम् । ' सईक्षाञ्चक्रे । कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि ' इति । (३) ' सप्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् । मनोन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम च । ' (प्र.उ.४) इति श्रुतिक्रमः ॥

## श्रीभाष्यम्

**योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थस्सआत्मा । तस्मिन् तद्बलनिर्भासिततया युष्मदर्थ लक्षणोऽहंजानामीति सिध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थएव ।**

## श्रुतप्रकाशिका

'अहं जानामि' इत्यस्मत्प्रत्यये * अस्मत्प्रत्ययत्वेन पराभ्युपगते यश्चित्पदार्थः सआत्मा कुतइत्यत्राह–**अनिदमंशइति**। इदमंशव्यतिरिक्तः परागर्थव्यतिरिक्तः प्रत्यगर्थः हेतुगर्भमिदम्। प्रत्यगर्थत्वादित्यर्थः। प्रत्यगर्थत्वं च कुतइत्यत्राह–**प्रकाशैकरसइति**। स्वयम्प्रकाशत्वादित्यर्थः। हेत्वभिप्रायश्चिच्छब्दः ज्ञानत्वात्स्वयम्प्रकाशत्वमित्यर्थः। प्रत्यक्त्वं स्वस्मै प्रकाशमानत्वं स्वयम्प्रकाशत्वमनन्याधीनप्रकाशत्वम्। अहमर्थस्तु युष्मदर्थलक्षणः युष्मदर्थलक्षणत्वात्परागर्थविशेषोऽहमर्थ इत्यर्थः। युष्मदर्थलक्षणत्वं कुतइत्यत्राह—**तद्बलेति**। तद्बलनिर्भासितत्वात् ज्ञानाधीनप्रकाशत्वात् तच्च चिन्मात्रातिरेकित्वादित्यर्थः॥

## गूढार्थसङ्ग्रहः

अत्र प्राणमनसोः अहमर्थेन सृष्टेः प्रतिपादनात् तदुपाधिकस्य तत्स्रष्टृत्वविवक्षायाः अनुचिततया अहमर्थः प्राणोपाधिकः मन उपाधिकः इति वक्तुं न शक्यते। अन्तःकरणोपाधिकस्य प्राणमनस्स्रष्टृत्वविवक्षाऽपि न घटते। अन्तःकरणस्य प्राणमनोंशद्वयरूपत्वेन तदतिरिक्तस्य परमते अभावात्। अतः अहमर्थः प्राणमनोऽनुपाधिकः प्रत्यग्रूपजीव एव विवक्षितः॥

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतौ उत्क्रामन्तं जीवमनुसृत्य प्राणस्योत्क्रमणं प्रतिपाद्यते। इयं च श्रुतिः 'सोध्यक्षेतदुपगमादिभ्यः' (४.२) इति सूत्रे परै(शं)रप्युदाहृता। विशेषेण च तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ.४.४.२) इति पञ्चवृत्तेः प्राणस्य अध्यक्षानुगामितां दर्शयति। तदनुवर्तितांचेतरेषां 'प्राणमनूत्क्रामन्तं सर्वे प्राणाः अनूत्क्रामन्ति' इति भाष्यं (शं) अत्र 'तन्मनः प्राणउत्तरात्' इति पूर्वसूत्रम्। तत्र 'वाक् मनसि सम्पद्यते मनः प्राणे' इति विषयवाक्यम्। 'प्राणस्तेजसि' इति विषयवाक्यमस्मिन् सूत्रे। मनसः प्राणे प्राणस्य च करणाध्यक्षे सम्पत्तिः सूत्रद्वयविवक्षिता। अत्र प्राणोपाधिके मन उपाधिके वा सम्पत्तिविवक्षा न घटते। अतस्तदुभयानुपाधिकएव सम्पत्तिविवक्षा परैरप्यङ्गीकरणीया। अतस्तत्समानार्थकायां 'कस्मिन्नहमुत्क्रान्ते' इति श्रुतावपि अनुपाधिक एवाहमर्थः विवक्षित इति निश्चीयते। अतः प्राणस्यान्तःकरणांशत्वं मनसः प्राणस्य च अन्तःकरण रूपैकद्रव्यत्वं च परसम्मतमप्रामाणिकमेव। असङ्गत्वं न परसम्मतं विवक्षितं किन्त्वन्यदेवेति पूर्वमेव निरूपितम्॥

अहन्त्वमन्तकरणमिति नारायणकृत ब्रह्मसूत्रवार्तिकोक्तिः श्रुति स्मृतिकोशाद्यभावात् अनुपादेया। अस्मच्छब्दपरिनिष्पन्नस्याहमित्यस्य अहमिति मान्ताव्ययस्य अहङ्कारशब्दस्य च त्रयाणामेकएवार्थः शक्यताऽवच्छेदकंचैकम् इति ब्रह्मानन्दोक्तिः न घटत इति भावप्रकाशे (२.संपुट) निरूपितम्। अङ्कुरादिफलपर्यन्तवृक्षविकारः अङ्कुरस्य बीजविकारत्वेन परम्परया बीजविकाररूपः लोकव्यवहारसिद्धः। निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् निरूपयतामपि घटवल्मीकवत् मृन्मयव्यवहारस्तत्र नास्ति। 'यथा पृथिव्यामोषधयः सम्भवन्ति' इति श्रुत्या तात्सिद्धिर्वाच्या ; तत्रापि बीजवृक्षादौ पृथिवीरसत्वात् पृथिवीविकारत्वमात्रेणोपपत्तिः सम्भवति। अत्रतु अहमर्थस्य सम्भिन्नेदं रूपत्वं न कथञ्चिदपि वक्तुं

## श्रीभाष्यम्

**नैतदेवम् 'अहं जानामि' इति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव। किंच**

## श्रुतप्रकाशिका

अस्मिन् चोद्यग्रन्थे संविदात्मत्वे व्यतिरेकित्रयं, अहमर्थानात्मत्वेऽन्वयित्रयंचाभिप्रेतम्। तत्र व्यतिरेकिणां व्यतिरेकिदृष्टान्तोऽन्वयिनां सपक्षश्च युष्मदर्थशब्देन सूचितः अनुभूतिरात्मा प्रत्यक्त्वात्; यदनात्मा तन्नप्रत्यक् यथा घटः। अनुभूतिः प्रत्यग्भूता स्वयम्प्रकाशत्वात्; यन्नप्रत्यक् तन्नस्वयम्प्रकाशं यथा घटः। अनुभूतिस्स्वयम्प्रकाशा अनुभूतित्वात्; यन्नस्वयम्प्रकाशं न तदनुभूतिर्यथा घटइति व्यतिरेकित्रयम् अहमर्थः ज्ञानाधीनप्रकाशः चिद्व्यतिरिक्तत्वात् घटवत्। अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात् घटवत्। अहमर्थोऽनात्मा पराक्त्वाद्घटवदित्यन्वयित्रयम्। स्वयम्प्रकाशत्वमेव संविदात्मत्वे साक्षाद्धेतुतया पूर्वमुक्तं पूर्वपक्षोपन्यासे। अत्रतु तेन प्रत्यक्त्वं साधयित्वा तेनात्मत्वं साधितम्॥

एतत्परिहरति। **नैतदेवमिति**। संवित्स्वयम्प्रकाशत्वमिष्टम्। शिक्षणीयांश(श्वशिक्षितः)श्चोक्तः) अतोऽनुभूतेस्स्वतस्सिद्धत्वसाधकेहेतोस्सिद्धसाध्यता। ज्ञातुरस्वतस्सिद्धत्वसाधकहेतोश्चिदन्यत्वस्यासिद्धिर्वक्ष्यते। इतरानुमानचतुष्टयमिह निरस्यते संविदात्मत्वादि किं प्रतीत्याऽभ्युपगतम् उत प्रत्यक्त्वसिध्यनुपपत्त्या उत श्रुत्यर्थापत्त्या उत श्रुतिस्मृतिसूत्रस्वारस्यात् इतिविकल्पमभिप्रेत्य प्रथमपक्षे प्रत्यक्षप्रतीतिविरोधमाह—**अहं जानामीति**। एतेन परोक्तानां ज्ञानप्रत्यक्त्वात्मत्वज्ञातृपराक्त्वानात्मत्वसाधकानामन्वयव्यतिरेक्यनुमानानां कालात्ययापदेश उक्तः। 'अहं जानामि' इत्यत्राहमर्थस्स्वावभासेऽपि घटावभासइव प्रतिसम्बन्धितयाऽहमिति प्रतीयते। * धर्मितयाऽवभासादेव न ज्ञानशेषतावभासः। अतस्सप्रत्यक् आत्मा च, ज्ञानं च धर्मतया प्रतीयमानं सुखादिवदन्यस्मै भासतइति न प्रत्यक् नाप्यात्मा। अपितु परागनात्मा च। अतश्चतुर्णां हेतूनां प्रत्यक्षबाध उक्तो भवति॥

अथ * प्रत्यक्त्वं विपरीतसाधकंचेत्याह—**किंचेति**। स्वस्मै प्रकाशमानत्वरूपं प्रत्यक्त्वं। परस्मै प्रकाशमानत्वं पराक्त्वं चाहमिदं बुद्धिभ्यांहि विभज्येते। तस्मादहं बुद्धिविगमे प्रत्यक्त्वमेव न सेत्स्यतीति प्रत्यक्त्वमहमर्थस्यैवात्मत्वसा-

## गूढार्थसङ्ग्रहः

शक्यं प्रमाणाभावात्। तदेतत्सर्वमभिप्रेत्य आत्मसिद्ध्युक्तप्रत्यक्षविरोधमेव दर्शयति—**अहं जानामीत्यादिना**। 'अहमुपलभे' इत्यत्र उत्तरविवरणवाक्यानुसारेण द्वैरूप्यं न सम्भवति। अहमित्यत्रापि अन्तःकरणावच्छिन्नाचितः जानामीत्यत्रापि चितो भानाङ्गीकारः अनुभवविरोधादनुपादेयः। उभयत्र चितः चित्त्वेन भानस्य कस्याप्यनुभवासिद्धत्वात्। अतोऽहमर्थस्य प्रत्यक्त्वरूपाहंत्वेन भानस्यानुभवसिद्धत्वेन परोक्तरीतिरनुभवविरोधादेवानुपादेयेति भावः॥

कथं पुनः प्रत्यगात्मनि अविषये अध्यासो विषयतद्धर्माणाम्। सर्वोऽहि पुरोवस्थिते विषये विषयान्तरमध्यस्यति युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनः अविषयत्वं ब्रवीषि। उच्यते—'न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्।' इति भाष्यं (शां) अत्र भामती 'तदयं प्रकाशएव स्वयम्प्रकाश एकः कूटस्थनित्यः निरंशः प्रत्यगात्मा अशक्यनिर्वचनीयेभ्यः देहेन्द्रियादिभ्यः आत्मानं प्रतीपं निर्वचनीयमञ्चति। जानातीति प्रत्यङ् सच आत्मेति प्रत्यगात्मा। सचापराधीनप्रकाशत्वात् अनंशत्वाच्चाविषयः तस्मिन् अध्यासो विषयधर्माणां—देहेन्द्रियादिधर्माणां कथं किमित्याक्षेपे। न तावदयमेकान्तेनाविषय इति। तस्माच्चिदात्मनः स्वयम्प्रकाशस्यैव अनवच्छिन्नस्य अवच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात् तद-

## श्रुतप्रकाशिका

धकमित्यर्थः । संविदि प्रत्यक्त्वाभावादात्मत्वसाधकहेतोरासिद्धिश्च फलिता । अहमर्थस्य पराक्त्वाभावादनात्मत्वसाधक हेतोरसिद्धिश्च सिद्धा । अहंबुद्ध्येत्यनेन ‘ **युष्मदस्मत्प्रयगोचरयोः** ’ इति स्वोक्तिविरोधश्च ‘ **कोहमित्येव निपुणः** ’ ‘ **शब्दोऽहमिति दोषाय नात्मन्येषः** ’ इत्याद्यागमविरोधश्च गर्भितः। हिशब्दस्य प्रसिद्धिपरत्वात् हेतौ वा अनुभूतिः पराची अहमर्थव्यतिरिक्तत्वाद्धटवदिति । प्रत्यक्त्वहेतोरासिद्धिदार्ढ्यं तत्प्रत्यक्त्वसाधकस्य * स्वयम्प्रकाशत्वहेतोस्सत्प्रतिपक्षत्वं च

## गूढार्थसंग्रहः

ध्यासेन जीवभाव इति । तस्यानिदमिदमात्मनः अस्मत्प्रत्ययविषयत्वमुपपद्यते । तस्माच्चिदात्मनोऽव्यतिरेकात् स्वयम्प्रकाशोऽपि अहम्प्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियते इति अहम्प्रत्ययालम्बन उच्यते इति । जीवोहि चिदात्मतया स्वयम्प्रकाशतया अविषयोऽपि औपाधिकेन रूपेण विषयः ’ इतिभावः इति च ॥

अत्र कल्पतरुः । अस्मत्प्रत्ययविषयत्वमपि जीवस्य अहम्प्रत्ययविशिष्टेऽन्तःकरणे व्यवहारयोग्यत्वापत्तिः, न कर्मत्वम् ; अतो न कर्मकर्तृत्वविरोधइत्युपसंहारव्याजेनाह–तस्मादिति, इति ॥

अत्र परिमलः । ननु चैतन्यस्याखण्डानान्दात्मक शुद्धस्वरूपेणाहंवृत्त्यविषयत्वेऽप्यौपाधिकरूपेण तद्विषयत्वं प्रागनुपदमेवोक्तम् । वक्ष्यते च शब्दापरोक्षनिराकरणे औपाधिकरूपापन्नश्च जीवः तस्य कथमिह तद्विषयत्वं औपचारिकमित्युच्यते–तस्य तद्विषयत्वाभावे च तस्यास्मदुल्लेखो न स्यात् अन्तःकरणमात्रविषयत्वादिदमुल्लेखएव स्यात् सत्यम् अहमर्थानुप्रविष्टानिदमंशरूपस्य सुखादिसाक्षिणः स्वप्रकाशस्याज्ञानोपाधिकस्य जीवस्याहंवृत्तिविषयत्वं प्रागुक्तं वक्ष्यते च, इहतु तस्येदमंशस्येव अहंवृत्त्यवच्छिन्नचैतन्यविषयत्वं मुख्यं नास्तीति तदौपचारिकमित्युच्यते । एवं च न कर्मकर्तृविरोध इति चैतन्यकर्मत्वप्रयुक्तस्य विरोधस्य परिहारः । वृत्तिकर्मत्वप्रयुक्तस्यतु पञ्चाग्निविद्यायामुपासनाकर्मत्वप्रयुक्तस्येव कथंचिद्रूपभेदेन परिहार आस्थेयः । अहं सुखीत्याद्यनुभवात् सुखादिविशिष्टरूपेण कर्मत्वम् अन्तःकरणविशिष्टरूपेण कर्तृत्वमिति इति ॥

पञ्चपादिका च ‘ न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात् । ननु विषयिणश्चिदात्मनः कथं विषयभावः ? पराग्भावेन इदन्ता समुल्लेख्यो हि विषयो नाम भवति । तद्वैपरीत्येन प्रत्यग्रूपेण अनिदम्प्रकाशो विषयी। तत्कथमेकस्य निरंशस्य विरुद्धांशद्वयसन्निवेशः ’ इत्यनन्तरम् ‘ अत्रोच्यते अस्मत्प्रयविषयत्वाभिमतोऽहंकारः ’ इति प्राक् (४३८ पु) उदाहृतवाक्यार्थसमाप्तौ ‘ तदेवं यद्यपि चैतन्यैकरसोऽनिदमात्मकत्वादविषयः तथाऽपि अहङ्कारे व्यवहारयोग्यो भवति इति गौण्या वृत्त्या अस्मत्प्रत्ययविषयतोच्यते । प्रमेयस्य च व्यवहारयोग्यत्वाव्यभिचारात् ’ इति । एतत्पर्यालोचनायाम् अहमित्यत्र प्रत्यगात्मनः विषयत्वं नास्तीत्येव प्रतीयते । अहमर्थस्य न प्रत्यगात्मत्वमिति च ॥

विवरणे च ‘ अथात अहङ्कारादेशः ’ ‘ अथातः आत्मादेशः ’ (छा.७.२५.१,२) इति श्रुतिद्वयपर्यालोचनया अहमर्थातिरिक्तएवात्मेति निर्णीतम् । तत्कथमहमर्थस्यात्मत्वमिति शङ्कायाम् आत्मसिद्धौ ‘ नो खल्वहमिति धर्ममात्रं येन तदपगमेऽप्यविद्यानिवृत्त्यामिवात्मनः स्वरूपेणावतिष्ठेते ’ इत्युच्यते । अहमित्येवहि तस्य स्वरूपं ज्ञानमपिहि तद्धर्मत्वेन तस्यैव प्रकाशते ज्ञानं मे जातमिति, का कथा पुनरर्थान्तरस्यात्मत्वे । अन्यच्च यः सांसारिकदुखैर्दुखित्वेनात्मानं तत्त्वतो भ्रान्त्या वा प्रत्येति दुःख्यहमिति स सर्वमिदमनिष्टजातं कथमहमपुनरुदयमपनुद्य अव्याकुलं स्वस्थो भूयासमिति संजातमुमुक्षः तत्साधने प्रवर्तते स यदि साधनानुष्ठानादहमेव न भविष्यामीत्यवगच्छति अपगच्छेदसौ मोक्षकथाप्रसङ्गादपि ततश्चासम्भवदधिकारितया सर्व एव वेदान्तविषयः सर्वाणि च मोक्षशास्त्राणि प्रामाण्यादेव प्रच्यवेरन् । अहमुपलक्षितः प्रकाशः

### श्रीभाष्यम्

**अहमर्थो नचेदात्मा प्रत्यक्त्वं नात्मनो भवेत्। अहंबुद्ध्या परागर्थात्**

### श्रुतप्रकाशिका

अनुभूतिरनात्मा अहमर्थव्यतिरिक्तत्वाद्धटादिवदिति संविदात्मत्वसाधकस्य प्रत्यक्त्वहेतोश्च सत्प्रतिपक्षं चाभिप्रेतमित्यवगम्यते अहं बुद्ध्या परागर्थात्प्रत्यगर्थस्य भेदसमर्थनात्। हिशब्दाचात्र * संवित्प्रत्यक्त्वहेतोरासिद्धिश्च सिद्धा॥

### गूढार्थसंग्रहः

अपवर्गेऽवस्थास्यते इतिचेत् किमतः, नहि मयि नष्टेऽपि कोऽपि प्रकाशः स्थास्यति इति कश्चित् प्रेक्षावान् प्रयस्यति, एतेन तदपि परास्तम् अस्मत्प्रत्यये योऽनिदमंशश्चिदेकरसः प्रकाशः स आत्मा तस्मिंस्तद्बलनिर्भासिततया लक्षणतो युष्मदर्थ एव 'अहं जानामि' इति सिध्यन्नर्थइति प्रत्यक्षविरोधात् 'अहं जानामि' इति चेतनो युष्मदर्थइति माता वन्ध्येतिवद्व्याहतार्थं वचः। नचासावन्याधीनावभासः चैतन्य स्वभावतया स्वयंज्योतिष्ट्वात्, इत्याद्युक्तमर्थं साधयति—**अहमर्थो नचेदात्मा इत्यादिना** ग्रन्थेन॥

अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके, इति प्राक् (४४०.पु) उदाहृतभाष्यविवरणे अस्मत्प्रत्यये योऽनिदमंशः चिदेकरसः, इत्यभिधाय अस्मत्प्रत्ययविषयत्वादिति भाष्यविवरणे 'अस्मत्प्रत्ययत्वाभिमतोऽहंकारः' इति पञ्चपादिकोक्तिः अस्मत्प्रत्यये योऽनिदमंशः इत्यत्रापि अस्मत्प्रत्ययोऽहंकारः इत्येव विवक्षितमिति प्रतीयते। एवमर्थाङ्गीकारे भाष्यवाक्यस्य स्वरसार्थो नायं भवति। भाष्ये अस्मत्प्रत्ययगोचरे, अस्मत्प्रत्ययविषयत्वात्, इति वाक्यद्वयस्य प्रत्ययगोचरादिशब्दप्रसिद्धार्थबोधकत्वं स्वरसतः प्रतीयते। अन्तःकरणतादात्म्येनास्मत्प्रत्ययविषयत्वस्यात्रापि सम्भवात्। अस्मत्प्रत्ययगोचरत्वं अनिदञ्चिदात्मनः परेषामपि सम्मतमिति तद्वाक्यादेव प्रतीयते॥

अत्र भामतीप्रभृतिविवरणं च पूर्वमेव निरूपितम्। 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्याद्युपक्रमभाष्याविवरणनारायणवार्तिके 'वृद्धास्तु निर्विकल्पस्यापि चिदात्मनोन्तःकरणाद्यध्याससम्बन्धात् तत्र सविकल्पतयोपलम्भादाशयस्थितस्येव तेजसः अङ्गुल्यादिसम्बन्धात् राहोरिव चन्द्रमस्सम्बन्धात् तद्विषयत्वमुपचरन्ति' तथा च वसिष्ठः—'अदृश्यो दृश्यते राहुः गृहीतेनेन्दुना यथा। तथाऽनुभवमात्रात्मा दृश्येनात्माऽवलोक्यते'॥ इति। वक्ष्यतिचैतद्भगवान् भाष्यकारः—'नतावदयमेकान्तेनाविषयः अस्मत्प्रयविषयत्वात्' इति तेनायमात्मा शुद्धचिद्घनः अस्मत्प्रत्ययविषयः इत्युच्यते। युष्मच्चास्मच्च युष्मदस्मदी, तयोः युष्मदस्मत्प्रत्ययौ तद्गोचरौचतौ युष्मदस्मत्प्रत्ययगोचरौ तयोरित्यर्थः इति॥

एवं 'न तावदयमेकान्तेनाविषयः' इत्यादिभाष्यविवरणवार्तिके च 'अस्मत्प्रत्ययविषयत्वादिति। अयमपरोक्षभूतः प्रत्यगात्मा स्फूर्त्यविषयोऽपि न सर्वात्मना अविषयः, कुतः? अस्मत्प्रत्ययविषयत्वात्। अस्मच्चासौ प्रत्ययश्चेति अस्मत्प्रत्ययः, तद्विषयत्वात्। अत्र यदा प्रत्ययशब्दो भावसाधनः—प्रतीतिः प्रत्ययः इति तदाऽस्मत्प्रत्ययोऽहमाकारवृत्तिः। यदा करणसाधनः प्रतीयतेऽनेनेति तदाऽहमित्यभिलापः तत्फलम्। यदा प्रत्येतीति कर्तृसाधनः तदाऽन्तःकरणमभिधीयते सर्वमत्र श्रुत्यर्थाभ्यां विवक्षितं भवति। तत्राहमाकारान्तःकरणवृत्तिर्द्विधा एका तावत् 'तत्त्वमसि' इत्यादिवाक्यजन्या निष्कृष्टाहङ्कारशुद्धचिन्मात्रविषया जीवन्मुक्तानाम्, अन्यातु चिदाभासविशिष्टाहङ्कारविषया संसारिणाम्। इयं च यद्यपि साक्षान्नात्मविषया, तथाप्यप्यात्मवादित्यविषयम् आदर्शइव मुखविषयः चिदाभासद्वारा तद्विषया भवति। अन्यथा तद्विषय आत्मव्यवहारानुपपत्तेः' इति चोक्तम्॥

## श्रीभाष्यम्

**प्रत्यगर्थोहि सिध्यते ॥**

## गूढार्थसंग्रहः

'पराग्भावेन इदन्तासमुल्लेख्योहि' इति पञ्चपादिकापर्यालोचनायाम् इदंशब्दनिर्देश्यं पराग्वस्त्विति तेषामपि सम्मतमिति स्फुटम् । अनिदंचिदात्मनः अस्मत्प्रत्ययविषयत्वाङ्गीकारे अन्तःकरणसंवलनेनैव अध्यासेन अनिदंचिदात्मनः विषयत्वमिति स्थापनं न सम्भवतीति वक्ष्यमाणतया अन्तःकरणासंवलनेनैव अनिदं चिदात्मनः अस्मत्प्रत्ययविषयत्वमपरिहार्यमिति प्रत्यग्वस्तुनोऽपि तदङ्गीकृतं भवति । तेन च अहमर्थस्य प्रत्यग्रूपत्वमपि सम्मतमित्येषितव्यम् 'वयमिमे' इत्यादिप्रयोगः इमे इत्यत्र अहमर्थाघटकधर्मवैशिष्ट्यविवक्षया उपपद्यते । एवं च अहमर्थः अनिदं वस्तु प्रत्यक् । इदमर्थः पराग्वस्तु इत्येव युक्तम् ॥

तत्र देहेन्द्रियमनःप्राणधीभ्यो ज्ञानाश्रयतया विविच्यमाने प्रतीपमञ्चतीव निर्भासमान अहंभावएवहि प्रत्यक्त्वंनाम सर्वं च प्रकाशमानं ज्ञात्रे अहमिति चकासते प्रकाशत इति प्रत्यात्मसिद्धोऽयमनुभवः 'अहं जानामि' 'मह्यं प्रकाशते इति,' इत्यात्मसिद्ध्युक्तार्थएव युक्तः । भामत्युक्तार्थस्तु नादरणीयः । परमते प्रत्यक्त्वं स्वप्रकाशस्यैव सम्मतम् । अतश्च अञ्चति जानातीति अर्थवर्णनं तद्विरुद्धम् । तत्र आत्मसिद्धिवाक्ये सर्वं च प्रकाशमानम् अहमिति चकासते प्रकाशते, मह्यं प्रकाशते इति सूक्त्या परस्मै अञ्चति इति पराक्शब्दोऽपि विवृतो भवति । एवं प्रतीपमञ्चतीत्यत्र परार्थप्रतीपमञ्चति (स्वार्थमञ्चति) इत्यर्थएव पर्यवसितः । एतत्सर्वमहमर्थस्यात्मत्वाभावे न घटत इत्याशयेनाह–**अहमर्थो नचेदात्मा–सिध्यते** । इत्यन्तेन ॥

'अहं मनुष्यः' इति ज्ञानं द्विविधम् एकमज्ञानां देहात्मभ्रमरूपम् । अन्यच्च अहमर्थात्मनः मनुष्यदेहसंयुक्तत्व ज्ञानं प्रमारूपम् । 'नैव स्त्री न पुमांश्चैव नचैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन सयुज्यते ॥' (श्वे.५.१०) 'अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत्' (ब्र.सू.२.३.४७) इति श्रुतिसूत्रादिभिः द्वितीयं प्रमारूपम् । अतएव 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिश्रुत्युपपत्तिः । देहात्मभ्रममूलकत्वे आत्मनः परलोकसम्बन्धनिश्चयप्रतिबन्धेन तत्कर्मणि प्रवृत्तिरेव न स्यात् । उक्तं च परैरपि शास्त्रीयेतु व्यवहारे यद्यपि नाविदित्वा आत्मनः परलोकसम्बन्धमधि क्रियते इति । प्राक् (४३८.पु) विवरणे 'शुक्लःपट इत्यादिप्रत्ययानामविद्यात्वप्रसङ्गो माभूत्' इत्युक्त्या शुक्लःपटइत्यत्र नाविद्येति परेषां सम्मतमिति प्रतीयते । शुक्लादिशब्दन्यायएव ब्राह्मणादिशब्दानां जैमिनीयसम्मत इति (१५४.श्री.भा.पु) प्राङ्निरूपितम् ॥

एतेन 'ब्राह्मणो यजेत' इत्येवमादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्यप्रवर्तन्ते ।' (शं.भा) इत्यपि न वाच्यम् । तत्रापि अवस्थाविशेषवच्छरीरसंयोगज्ञानेन प्रवृत्तिसम्भवात् । जीवस्य ब्रह्मक्षत्रादिभेदोऽपि शरीरसम्बन्धनिबन्धनएव ब्रह्मक्षत्रादिशब्दानां शरीरसम्बन्धिवाचकत्वात् । एवमशनायादिसम्बन्धोऽपि शरीरसम्बन्धनिबन्धनएव वेदान्तवेद्याशनायाद्यतीतापेतब्रह्मक्षत्रादिभेदा संसार्यात्मतत्त्वस्य प्रागज्ञानेऽपि 'ब्राह्मणो यजेत' इत्यादेः भ्रम मूलकत्वं नोपपादयितुं शक्यम् । 'प्रकृतिपुरुषतत्संयोगाः नित्यानुमेयाः' इति वदद्भिः साङ्ख्यैरपि जीवे संयोगः अभ्यु पगतएव । सूत्रकृता व्यवस्थापयिष्यमाणाणुजीववादेतु न काचिदनुपपत्तिः ॥

एतेन 'पश्वादिभिश्चाविशेषात्' यथाहि पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते । यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छति इति पला-

## गूढार्थसंग्रहः

यितुमारभन्ते हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखी भवन्ति । एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान्बलवतउपलभ्य ततो निवर्तन्ते, तद्विपरीतान्प्रति प्रवर्तन्ते । अतः समानः पश्वादिभिः पुरुषाणां प्रमाण प्रमेयव्यवहारः ।' इत्युक्तार्थः प्राथमिकज्ञानवतां सम्मतः । द्वितीयज्ञानवतामपि देहसम्बन्धकृत सुखदुःखयोः जीवे अङ्गीकारेण नानुपपत्तिः देहसम्बन्धस्तु नाध्यासनिबन्धनः । 'प्राणाधिपस्सञ्चरति स्वकर्मभिः' (श्वे.५.अ) इति 'यद्यच्छरीर मादत्ते' इत्येतत्पूर्वश्रुत्या कर्मनिबन्धनत्वस्य प्रतिपादनात् । अतः कर्मफलानुभवाय अहमर्थस्य नित्यताज्ञानवतामपि शरीरसम्बन्धविगमे तच्छरीरे सुखानुभवहानिज्ञानेन खड्गोद्यतकरं पुरुषं दृष्ट्वा निवृत्तिरुपपद्यते । परैरपि प्रारब्धकर्मफलानुभवपर्यन्तम् अहं मनुष्य इति ज्ञानमङ्गीकृतमेव । परमते अध्यासरूपं तज्ज्ञानम् । सिद्धान्ते तु अज्ञानां भ्रमरूपं ज्ञानिनां तु प्रमारूपमपि न विरुध्यते । देहसम्बन्धश्च श्रीभाष्ये वक्ष्यमाणशरीरशरीरिभावलक्षणज्ञानवतां सुगमः । तेन देहसम्बन्धविचारस्य (पं.पा.वि) नावसरः । पुरुषधौरेयाणां तु नोक्तदोषसम्भवः । अहमिति तावत्प्रथमोऽध्यास इत्यत्र न काप्येतेन युक्तिरुक्ता भवति इति भावः ॥

'अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च । देहेन्द्रियादिषु अहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः' इति भाष्ये (शं) उक्तार्थः व्याख्याकारैस्साधितः ॥ तत्र पञ्चपादिका । किमनेन युष्मदस्मदित्यादिना—'अहं मनुष्यः' इति देहेन्द्रियादिष्वहं ममेदमित्यभिमानात्मकस्य लोकव्यवहारस्याविद्यानिर्मितत्वप्रदर्शनपरेण भाष्येण ? उच्यते—ब्रह्मज्ञानं हि सूचितमनर्थनिबर्हणम् । ज्ञानमज्ञानस्य निवर्तकम् । तद्यदि कर्तृत्वभोक्तृत्वमज्ञानहेतुकं स्यात् ततो ब्रह्मज्ञानमनर्थहेतुनिबर्हणमुच्यमानमुपपद्येत । तेन सूत्रकारेणैव ब्रह्मज्ञानमनर्थहेतुनिबर्हणं सूचयता अविद्याहेतुकं कर्तृत्वभोक्तृत्वं प्रदर्शितं भवति । अतस्तत्प्रदर्शनद्वारेण सूत्रार्थोपपत्त्युपयोगितया सकलतन्त्रोपोद्घातः प्रयोजनमस्य भाष्यस्य । तथाचास्य शास्त्रस्यैदंपर्यं सुखैकतान—सदात्मक—कूटस्थ चैतन्यैकरसता संसारित्वाभिमतस्यात्मनः पारमार्थिकं स्वरूपमिति वेदान्ताःपर्यवस्यन्तीति प्रतिपादितम् । तच्चाहं कर्ता सुखी दुःखीति प्रत्यक्षाभिमानेनाबाधितकल्पेनावभासेन विरुध्यते । अतस्तद्विरोधपरिहारार्थं ब्रह्मस्वरूपविपरीतरूपमविद्या निर्मितमात्मन इति यावन्नप्रतिपाद्यते, तावत् जरद्गवादिवाक्यवदनर्थकं प्रतिभाति । अतस्तन्निवृत्त्यर्थं अविद्याविलसितमब्रह्मस्वरूपत्वमात्मनः इति प्रतिपादयितव्यम् । वक्ष्यतिचैतत् अविरोधलक्षणे जीवप्रक्रियायां सूत्रकारः 'तद्गुणसारत्वात् इत्यादिना' इति ॥

'यतो देहेऽहमभिमानः इन्द्रियादिषु ममाभिमानः । आदिशब्देन बाह्यावयवग्रहणम् । देहशब्देन सशिरस्को मनुष्यत्वादिजातिसम्भिन्नोऽवयवव्यभिमतः ; न शरीरमात्रं देहोऽहमिति प्रतीत्यभावात् । सर्वोहि मनुष्योऽहं देहोऽहमिति जातिविशेषैकाधिकरणचैतन्यएव प्रवर्तत इति स्वसाक्षिकमेतत्' इति च । अत्र विवरणम्—'सर्वोहि मनुष्योऽहमिति । अत्रायं प्रयोगः देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव कर्तुः करणभूतदेहेन्द्रियादिष्वहंममाध्यासपुरस्सरप्रमातृत्वादि व्यवहारवन्तौ तस्यैव सुषुप्तिकालादन्यकालत्वात् । यःकालः तथाविधव्यवहारवान्नभवति न स तस्यैव सुषुप्तिकालादन्यकालः यथा तस्यैव सुषुप्तिकाल इति । व्यवहारत्रितयं वा दर्शिताध्यासोपादानमन्तरेणानुपपन्नम्, अध्यासाभावे व्यवहारादर्शनात्सुषुप्तइत्यर्थापत्तिः' इति ॥

'ननु—निरतिशयानन्दं ब्रह्म श्रूयते, ब्रह्मावाप्तिसाधनं च ब्रह्मविद्या' 'स योहवै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिभ्यः ; तस्मान्निरतिशयसुखावाप्तये इति वक्तव्यम् किमिदमुच्यते—'अनर्थहेतोः प्रहाणाय' इति ? ननुचानर्थस्यापि समूलस्य प्रहाणं श्रूयते ब्रह्मविद्याफलम्—'तरतिशोकमात्मवित्' जुष्टं यदा पश्यत्यन्यमीशमस्य महि-

### श्रीभाष्यम्

**निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्। भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥**

### श्रुतप्रकाशिका

श्रुत्यर्थापत्तिं वक्तुं मुमुक्षोरभिसन्धिमाह—**निरस्तेति** ।

### गूढार्थसंग्रहः

मानमिति वीतशोकः' इत्यात्मनो जीवस्य ब्रह्मात्मकता शास्त्रस्य विषयः, तेनानन्दात्मकब्रह्मस्वरूपताप्राप्तिर्जीवस्य विषय तयैव संवृत्ता । नच सा विषयाद्बहिः शास्त्रविषयात् ब्रह्मात्मरूपात् । अनर्थहेतुप्रहाणमपि तर्हि न पृथङ्निर्देष्टव्यम् ? यतः सर्वेषु वेदान्तेष्वलौकिकत्वात् ब्रह्मणः तत्प्रतिपादनपूर्वकमेव जीवस्य तद्रूपता प्रतिपाद्यते । तद्यथा 'तदेव सोम्येदमग्रआसीत्' इत्युपक्रम्य इत्याद्यभिधाय 'तदेवमशब्दमविद्याविलयं मन्वानः श्रुतिन्यायकोविदो भगवान्भाष्यकारः विषयात्पृथङ्निर्दिशति अस्यानर्थहेतोः प्रहाणायेति ।' इति पञ्चपादिकायामुक्तम् ॥

एतत्पर्यालोचनायाम् अहमर्थाध्यासः अवश्यमङ्गीकरणीयः । इति शङ्कायामाह—**निरस्ताखिलदुःखोऽहमिति** । शुक्लादिशब्दवत् ब्राह्मणादिशब्दा इति जैमिनिनैवेव निरूपितप्रायमिति तेनैव न्यायेन सर्वेषां परमात्मशरीरत्वबोधकश्रुत्यनुसारेण 'तत्त्वमसि श्वेतकेतो' इत्यत्र श्वेतकेतुशब्दप्रयोगेण तन्न्यायसूत्रेनेन च जीवान्तर्यामिबोधएव श्रुतौ विवक्षित इति श्रुत्यर्थविचारावसरे स्थापयिष्यते । विवरणकारसम्मतं भावरूपाज्ञानं निरासिष्यते इत्यभिप्रेत्य पञ्चपादिकोदाहृत श्रुतिवाक्यैरेव प्रतीयमानमोक्षार्थप्रवृत्तिप्रतीतिः अहमर्थाध्यासाङ्गीकारे न घटतइति अनेन श्लोकेन प्रतिपाद्यते ॥

'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् श्रुतंह्येवमे भगवद्दृशेभ्यः तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि, तं मा भगवान् शोकस्य पारं तारयतु' (छा.७.१.३) इति श्रुतिक्रमः । अत्र तरति शोकमात्मविदित्यत्र शोकतरणं यदुक्तं 'सोऽहं भगवश्शोचामि' इत्यत्र अहमर्थस्य शोकवत्त्वप्रतिपादनपूर्वकं तत्पारतारणप्रार्थनोक्त्या अहमर्थगतमेव शोक तरणं विवक्षितमिति स्फुटम् । एवं भूमविद्योपक्रमे उक्तएवार्थः उपसंहारेऽपि 'न पश्यो मृत्युं पश्यति नरोगं नोतदुःखताम् । सर्वंह पश्यः पश्यति सर्वमाप्नोति सर्वशः' 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः । तस्मै मृदितकषायाय तमसःपारं दर्शयति भगवान् सनत्कुमारः ।' इत्यत्र प्रतिपादितः । अत्र 'नरोगं नोतदुःखताम्' इत्यत्र दुःखसामान्यतरणमुपक्रमोक्तमेव प्रतिपादितमिति स्पष्टं प्रतीयते । 'सर्वंह पश्यःपश्यति सर्वमाप्नोति सर्वशः ।' इत्यत्र सर्वज्ञत्वं 'ब्रह्मविदाप्नोतिपरम्', इत्यादौ प्रोक्तपरप्राप्तिश्चेत्युभयं प्रतिपाद्यते । तत्र परशब्देन सर्वावधिकोत्कर्षविशिष्टस्यैव विवक्षिततया विभूतिगुणादि विशिष्ट निरतिशयानन्दब्रह्मानुभवएव विवक्षितः । सएव सर्वप्राप्तिरूपोऽत्र प्रतिपिपादयिषितः ॥

एतत्तात्पर्येणैव 'तमसःपारं दर्शयति' इत्युक्तम् । 'सोऽध्वनःपारमाप्नोति तद्विष्णोःपरमं पदम्' (कठ) इति श्रुत्यन्तरम् । उक्तब्रह्मानुभवश्च स्थानविशेषएवेति निर्धारयिष्यते । एतदनुभवतात्पर्येणैव **अनन्तानन्दभाक्** इत्युक्तम् । 'निरस्ताखिलदुःखोऽहम्' इत्यत्र आध्यात्मिकादि दुःखसामान्यनिरासो विवक्षितः । अनया च सूक्त्या 'तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः । गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥ (वि.पु.६.अं.५.अ.श्लो.५८) निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥ (५९) तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ॥ विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव । प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥' (८.अ.९३.श्लो) इति पुराणवचनं मूलभूतमिति स्मारितम् ॥

### श्रीभाष्यम्

**अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति। अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः॥**

### श्रुतप्रकाशिका

ततःकिमित्यत्राह—**अहमर्थविनाशइति**। * यत्सम्बन्धित्वेन दुःखज्ञानं यत्सम्बन्धिनी दुःखनिवृत्तिः यत्सम्बन्धिनी सुख प्राप्तिश्चेष्यते तद्विनाशो मोक्षश्चेदधिकारिविरहादप्रामाण्यं भवेत्। प्रमितिजनकत्वं हि शास्त्रस्य प्रामाण्यम्। बुभुत्सित ग्राह्यस्य शास्त्रस्य पुरुषार्थपर्यवसायित्वाभावे श्रवणमननाद्यधिकारी न सिध्येत्। नहि शास्त्रं श्रवणादिनिरपेक्षं कस्यचित्प्रमितिं जनयति अतोऽधिकारिविरहात्प्रामाण्यं न भवेदिति शास्त्रप्रामाण्यान्यथाऽनुपपत्तिरूपश्रुत्यर्थापत्तिरुक्ता। अहमर्थे

### गूढार्थसंग्रहः

अत्र 'परयात्वक्षरप्राप्तिः' 'तत् ध्येयं मोक्षकाङ्क्षिभिः' इति च परविद्यासामान्यं ध्यानरूपमिति निर्णयपूर्वकं भगवत्प्राप्तिरूपं फलं च प्रदर्शितम्। भगवच्छब्दस्तु 'ज्ञानशक्तिबलैश्वर्य' इत्यादिना ज्ञानादिगुणषट्कविशिष्टवाची। वाच्यार्थस्य परविद्याविषयत्वमिति 'तदेव भगवच्छब्दवाच्यं स्वरूपम्' इत्यत्र स्थापितम्। अत्र च 'तदा विद्वान् पुण्य पापे विधूय निरञ्जनः परमं साम्यमुपैति। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्। ब्रह्म वेद ब्रह्मैव भवति। तरति शोकं, तरति पाप्मानम्' इत्यादि श्रुतयो विवक्षिताः। **स्वराडित्यनेन** 'सस्वराड्भवति। तस्य सर्वेषु लोकेषु कामचारो भवति' (छा.७.२५) इति श्रुतिः प्रत्यभिज्ञापिता। एतेन 'व्यवहारसामान्यमध्यासमूलकम्' इति विवरणकारोक्तानुमानानि अनुपादेयानीति बोधितम्॥

सूत्रकारश्च 'सम्पद्याविर्भावः स्वेन शब्दात्' इत्यत्र 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति विषय वाक्यमभिप्रयन् 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' इत्यादि तदुत्तरश्रुत्युक्तमर्थं मुक्तस्य स्थापयन् मुक्तिकाले व्यवहारसाधनेन व्यवहारसामान्यस्याध्यासमूलकत्वं निराकरोति। अतश्च अहमर्थस्य मुक्तिकाले ब्रह्मानुभव सर्वलोककामचारादेः श्रुतिषु प्रतिपादनेन श्रुत्युक्त तादृशानुभवेच्छया श्रवणादौ प्रवृत्तेः पराशरेण निर्णीततया च अहमर्थाध्यासः परोक्तः न घटत इति भावः॥

**मोक्षार्थी श्रवणादौ प्रवर्तते इति**। 'येनाहं नामृतास्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि' (बृ.६.५.४) इति मैत्रेयी प्रश्नगता श्रुतिः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति याज्ञवल्कीयतत्प्रतिवचनश्रुतिश्चात्र विवक्षिता। 'येनाहं नामृता स्याम्' इति वाक्येन श्रवणादेः मोक्षार्थिप्रवृत्ति विषयत्वं प्रतीयते। अत्राहंत्वविशिष्टस्यैव मुक्तिरूपफलस्य तदर्थिनएव श्रवणादौ प्रवृत्तेश्च प्रतिपादनेन अहमर्थस्य चिदचित्संवलनात्मकत्वेनाध्यासवादिमते एतच्छ्रुतिविवक्षितप्रवृत्त्यनुपपत्तिरिति भावः॥

एतावता विवरणवार्तिककारादिसर्वमतेषु अध्यासानुपपत्तिरुक्ता। अथ वार्तिककारमते अनुपपत्तिं दर्शयति—**अहमर्थविनाशश्चेदित्यादि** श्लोकद्वयेन। वार्तिककारमते प्रतिबिम्बवादे प्रतिबिम्बस्यासत्यत्वाङ्गीकारेण प्रतिबिम्बभूताभासस्यैव अनर्थतायाः 'अयमेवहि नोऽनर्थो यत्संसार्यात्मदर्शनम्' (बृ.वा) इत्यत्रोक्त्या आभासनिवृत्तेरेवानर्थनिवृत्तिरूपत्वेन अहमर्थविनाश एव मोक्षः पर्यवस्यतीति अहमर्थविनाशार्थं प्रवृत्तिर्न घटतइति भावः॥

उक्तं च सिद्धान्तबिन्दौ केवलचैतन्यस्यैव आभासद्वारा बद्धत्वाभ्युपगमात्। उक्तं च वार्तिककारपादैः 'अयमेव दर्शनमिति। तेन शुद्धचैतन्यस्याभास एव बन्धः तन्निवृत्तिश्च मोक्ष इति' इति। अत्र 'दर्शनं भासकत्वयोग्यशुद्धचिन्निष्ठ

### श्रीभाष्यम्

### मयिनष्टेऽपि

### श्रुतप्रकाशिका

नष्टेऽपि ज्ञप्तिः नित्या तिष्ठतीत्यत्राह—**मयि नष्टेऽपीति** । नहि मयिनष्टेऽपि स्तम्भस्तिष्ठतीति स्वशिरश्छेदः पुरुषार्थः स्यादिति भावः । नहि केवलसंविदः श्रवणादौ प्रवृत्तिः अपित्वहमर्थस्यैव । अतः प्रवर्तमानोऽयं स्वनाशाय नप्रवर्तते ॥

### गूढार्थसङ्ग्रहः

आभासतादात्म्यमिति यावत् । तन्निवृत्तिरिति । तथा च स्वीयवास्तव मुख्यस्वरूपत्वप्राप्तये स्वस्य बद्धस्य नाशार्थमपि प्रवृत्तिः न दोषाय । सर्वमतेष्वपि मुक्तस्य स्वीयरूपस्य प्राप्त्यर्थं बद्धस्वरूपस्य नाशार्थं बद्धेप्रवृत्तिस्वीकारात् । मनो देहादिविशिष्टरूपंहि बद्धम् । तन्नाशद्वारा तदुपलक्षितमुक्तरूपप्राप्त्यर्थं तत्र प्रवृत्तेः स्वीकारात् । अत्र अज्ञानमेव शुद्ध चिन्निष्ठं बन्धः तन्नाशो मोक्ष इति युक्तम् । 'अविद्याऽस्तमयो मोक्षः साच बन्ध उदाहृतः' । इति वार्तिकोक्तेः आभासस्याप्यज्ञानजन्यत्वात् । तथाप्याभासस्य सुखदुःखाद्याश्रयत्वेन स्फुटबन्धवत्त्वेन प्रत्ययात् स एव बन्ध उक्तः । अत एव संसार्यात्मदर्शनमित्यनेन आभासस्य दुःखादिसंसारवत्त्वमुक्तम् , इति बिन्दुटीकोक्तप्रवृत्त्युपपत्तिः 'नैरात्म्यवादपक्षेतु पूर्वमेवावबुध्यते । मद्विनाशात् फलं न स्यात् मत्तोऽन्यस्याथ वा भवेत् । इति नैव प्रवृत्तिस्स्यात् नच वेदप्रमाणता' (श्लो.वा.आ.वा.३२.३३) इति भट्टपादैरेव न घटत इत्युक्तम् । 'नचाहम्प्रत्ययो व्यामोह इति शक्यते वक्तुम् । बाधकप्रत्ययाभावात्' इति शबरभाष्यस्य 'नातस्मिन् स इतिज्ञानं नह्यसौ भ्रान्तिकारणम्। नचाहंप्रत्ययो भ्रान्तिरिष्टो बाधकवर्जनात् ॥' (श्लो.वा.आ.वा.१२५.श्लो) इत्यादिना विवरणपूर्वकं वार्तिकएव भट्टपादैः अहमर्थात्मत्वस्थापनेन अत्र अहमर्थानात्मतावादिमतसामान्यमपि विवक्षितम् ॥

अत्र न्यायरत्नाकरः 'एवं नित्यात्मवादपक्षे सिद्ध्यति वेदप्रामाण्यमित्युक्तं, ज्ञानमात्रे शरीरमात्रे वा न सिद्ध्यतीत्यर्थवत् नित्यात्मप्रतिपादनमित्याह—नैरात्म्येति, इति । 'येनाहं नामृतास्याम्' इत्यादि श्रुतिप्रामाण्यं न सम्भवती त्यप्यत्राभिप्रेतम् । तमेतमर्थमभिप्रेत्य वार्तिकोक्तार्थमेव विशदयति—**मयि नष्टेपीत्यादिना** । अहमर्थविनाशकालिकज्ञप्त्यर्थं न कोऽपि प्रवर्तते पुमान् । अहमर्थस्यैव मुक्तिसम्पादनार्थं प्रवृत्तिः श्रुत्यनुभवसिद्धा । मनोदेहादिविशिष्टस्य बद्धत्वेऽपि अहंत्वविशिष्टस्य बद्धत्वं न कोऽप्यभ्युपैति । अतः उक्तप्रवृत्त्यन्यथाऽनुपपत्त्या वेदप्रामाण्यभङ्गप्रसङ्गेन च अहमर्थाध्यासो न युक्तः । 'अहं ब्रह्मास्मि' इत्यत्रापि अहंत्वविशिष्टस्य प्रतीतिः 'आत्मेतितूपगच्छन्ति ग्राहयन्ति च' (ब्र.सू.४.१.३) इत्यत्र सूत्रकृतैव साधयिष्यते ॥

'मद्विनाशात् फलं न स्यात्' इति वार्तिके व्यतिरेक उक्तः । अत्र 'अनन्तानन्दभाक् स्वराड्भवेयम्' इति अन्वयोऽभिहितः । एवमन्वयव्यतिरेकाभ्यां अहमर्थसम्बन्धिन एव सुखस्य पुरुषार्थत्वं स्थापितम् । 'मयिनष्टेऽपि' इत्यादिना व्यतिरेकविषयीकरणेन अद्वैतसिद्धौ (मुक्तेरेवानन्दरूपत्वेन पुरुषार्थसाधनत्वप्रकरणे) 'सुखादौहि पुमर्थता नापरकीयत्वप्रयुक्ता, नापि स्वकीयत्वप्रयुक्ता, गौरवात् । किंतु साक्षात्क्रियमाणतया सम्बन्धस्य च अनित्यत्वसाधनपारतन्त्र्यादेरिव अवर्जनीयसन्निधिकत्वात्' इत्युक्तिः । 'पुमर्थता—पुमर्थतामात्रं, प्रयुक्ता घटिता, साक्षात्क्रियमाणतया—अनावृततया घटितेति शेषः । सम्बन्धस्य स्वकीयत्वादेः अवर्जनीयसन्निधिकत्वात् दैवाधीनसामग्र्यधीनेच्छाविषयत्ववत्त्वात् अनित्य सुखत्वादिरूपेणाज्ञानस्य कदाचित् सम्पत्त्या तेन रूपेणैव स्वकीयसुखत्वेनापि कदाचित् ज्ञानात् तेन रूपेणेच्छा । नचैता-

## गूढार्थसङ्ग्रहः

वता सैव पुमर्थतामात्रघटिका । अनित्यसुखत्वादेरपि तत्त्वापत्तेः । अथ केवलसुखत्वेन ज्ञातेऽपि मदीयसुखत्वेनैवेच्छा इच्छासामान्यसामग्र्या एव मदीयत्वविषयतानियामकत्वादितिचेत् ; उक्तनियामकत्वे मानाभावात् । अनावृतं भवतु इत्येवाकारस्येच्छामात्रव्यापकत्वेन मदीयत्वविषयतायाः तदनङ्गीकारात् । अङ्गीकारे वा मां प्रत्यनावृतत्वमेव मदीयत्वमित्यविरोधात् । नहि तदन्यत् सुख तत्साधनादिसाधारणं मदीयत्वमेकजातीयमस्ति यदिच्छाव्यापकविषयताकं स्यात् । मत्सम्बन्धमात्रंतु परकीयमेवेदमिति ज्ञातेऽपि मत्सम्भवेतत्वं मत्स्वत्वंचेत्यन्यतरवत्त्वंतु पापिष्ठकाम्ये परदारादौ नास्त्येव । मद्भोगयोग्यत्वं तु मां प्रत्यनावृतत्वमेव ॥

नच तदपि दूरस्थशत्रुमरणादौ नेति वाच्यम् ; तन्निश्चयस्यैव सुखविशेषसाधनत्वेन पुरुषार्थस्य स्वंप्रत्यनावृतत्वात् । शत्रुमरणादिमात्रस्यापुरुषार्थत्वेऽपि क्षत्यभावात् । नहि यद्यदिष्टं यस्य तस्य तत् पुरुषार्थः हेयस्य क्रीडादेरिष्टत्वेऽपि पुरुषार्थत्वेनाव्यवहारादिति भावः । ' इति लघुचन्द्रिकोक्तिश्च निरवकाशा । अहमर्थस्याध्यासिकत्वे अहमर्थ नाशकालएव मुक्तिरूपं सुखमिति ज्ञानस्य सत्वे प्रवृत्तेरसम्भवाभिधानेन **'अनन्तानन्दभाक्'** इत्यनेन स्वसम्बन्धस्य प्रदर्शनेन मदीयत्वस्य तद्रूपतायाः तेनैव सिद्ध्या परदारादौ भाविसुखसाधनत्वबुद्ध्या तत्रापि अहमर्थसम्बन्धित्वसत्वेन अहमर्थसम्बन्धित्वेन सुखस्य ज्ञानकालएव सुखे तत्साधने च प्रवृत्तेरन्वयव्यतिरेकसिद्धत्वेन मानाभावोक्तेरयोगात् । हेय क्रीडादेः यस्येष्टत्वं तस्य पुरुषार्थत्वं सिध्यत्येव । अत्र **'अनन्तानन्दभाक्'** इत्यनेन मुक्तिसुखस्य आनन्दत्वमात्रेण न पुरुषार्थता, अपितु अनन्तत्वविशिष्टानन्दत्वेन अन्यथा बन्धकालिकानन्दापेक्षया वैलक्षण्यासम्भवात् इति सूचितम् ॥

तेन इष्टतावच्छेदकसंसर्गस्य भोग्यविषयाव्यभिचारित्वं प्रदर्शितम् । एतेन 'येनेष्टतावच्छेदकेन विशिष्टे कामना तस्यैव तथा, यथा सुमुखनासिकादि पुत्रकामनादिस्थले येनतु उपलक्षिते कामना तस्य न तथा । यथा श्रीकृष्णविहार स्थानबृन्दावनादिस्थितौ, शत्रुस्वामिकगृहादौ वा । नहि बृन्दावनस्थितेः, शत्रुगृहादेर्वा भोगकाले श्रीकृष्णविहारः शत्रुस्वत्वं वा अस्ति । तथा च कैवल्ये सुखत्वाद्यसंसर्गेऽपि न क्षतिः । इति ' लघुचन्द्रिकोक्तिः अनुपादेया ॥

'यस्मिन् देशे बृन्दावने पूर्वस्मिन् काले श्रीकृष्णविहारः पूर्वमासीत् तद्देशस्य तद्देशत्वेनैवेच्छाविषयत्वम्, नतु देशत्वोपलक्षितस्य शत्रुस्वामिकगृहेऽपि गृहत्वविशिष्ट एव कामना, इदानीं शत्रुस्वामिकं गृहं, शत्रुस्वत्वनिवृत्तिपूर्वकं स्व स्वत्वसम्पत्त्या गृहत्वेन कामनाविषयः । नतु गृहत्वोपलक्षितम् । तत्रापि इष्टतावच्छेदकसंसर्गो वर्ततएव पूर्वकालिकश्रीकृष्ण सम्बन्धस्य तद्देशत्वादेरिष्टतावच्छेदकत्वात् । एतेन स्वाज्ञानविरोध्युपहितस्य आत्मस्वरूपसुखस्यैव फलत्वात् । लोकेऽपिहि सुखमात्मैव चन्दनादियोगजमनोवृत्तेः तत्र व्यञ्जकमात्रत्वात् मानभूवं भूयासं, इत्याकारिकायाः अन्येच्छानधीनेच्छायाः 'एष परमानन्दः' इत्यादिश्रुतेश्च अन्यथाऽनुपपत्तेश्च । स्वाज्ञानविरोधित्वं च स्वाज्ञानाधिकरणकालपूर्वत्वशून्यक्षणवृत्तित्वम् । एतावांस्तु विशेषः यच्चन्दनादियोगजमनोवृत्तेः यत्किञ्चिदज्ञानविरोधित्वं तन्नाशोत्तरमज्ञानान्तरेणात्मसुखस्यावरणात् वेदान्तजन्यवृत्तेस्तु अज्ञानसामान्यविरोधित्वं तन्नाशोत्तरमज्ञानान्तरेणानावरणात् ' (अविद्यानिवर्तकनिरूपणे) इत्यादि लघुचन्द्रिकोक्तिरपि अनादरणीया ॥ मदज्ञानविरोध्युपहितसुखम् भूयादिति इच्छासत्त्व एव लोके प्रवृत्तिरनुभवसिद्धा । नतु मन्नाशे एतत्सुखं भवतीति ज्ञाने एवं विरोध्युपाहितत्वाविशिष्टसुखएवेच्छा नतु तदुपलक्षिते तदुपलक्षितत्वस्य तच्छून्य कालएवाङ्गीकारेण तच्छून्यदशायां प्रवृत्तेरसम्भवात् । विरोध्युपाहितात्मनः मिथ्यात्वेन तन्निवृत्तिनिश्चयेन अस्थिरतदिच्छया प्रवृत्तिः नैव घटते । उपहितशुद्धयोः तादात्म्याङ्गीकारेण शुद्धात्स्वाभाविकभेदाभावस्य कर्तृत्वाध्यासोपपत्तावुक्तावपि भेदस्यापि सत्वेन मिथ्यात्वस्य परैरप्यङ्गीकृतत्वेन नश्वरसुखे प्रवृत्त्यनुपपत्तिर्दुर्वारैव ॥

## श्रीभाष्यम्

**मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता। इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥ स्वसम्बन्धितयाह्यस्यास्सत्ता विज्ञप्तितादि च। स्वसम्बन्धवियोगेतु ज्ञप्तिरेव न सिध्यति॥ छेत्तुश्छेद्यस्यचाभावे छेदनादेरसिद्धिवत्।**

## श्रुतप्रकाशिका

अहमर्थविगमे ज्ञप्त्यवस्थानमभ्युपगम्य दूषणमुक्तम्। अथ तदवस्थानमेव नास्तीत्याह—**स्वसम्बन्धितयेति**। सामान्याकारः सत्ता, विज्ञप्तिता विषयप्रकाशकत्वरूपाविशेषाकारः। आदिशब्देन स्वयम्प्रकाशत्वं विवक्षितम्। सत्ताया आश्रयसम्बन्धाधीनत्वात् स्वरूपलाभेसति ज्ञप्तित्वादिसम्भवाच्च सर्वं तदधीनमित्यर्थः। अतो यत्सम्बन्धायत्ता सत्ता—तत्सम्बन्धवियोगे ज्ञप्तिसत्त्वैव नेत्याह—**स्वसम्बन्धेति**। घटकरकाकाशदृष्टान्तव्यावृत्त्यर्थं विषयाश्रयसम्बन्धस्य सत्ताहेतुत्वे दृष्टान्तमाह—**छेत्तुरिति**। **छेदनादे**रित्यादिना सत्ता तत्फलं द्वैधीभाव इत्यादिविवक्षितम्॥

## गूढार्थसंग्रहः

'स्वरसवाही विदुषोऽपि तथाऽरूढोभिनिवेशः' (यो.सू.२.९) इति योगसूत्रभाष्ये 'सर्वस्य प्राणिन इयमात्माशीर्नित्याभवति मानभूवं भूयासमिति' इत्युक्तम्। अत्र तत्त्ववैशारदी 'इयमात्माशीः—आत्मनि प्रार्थना। मानभूवं—मा अभावीभूवम् भूयासं जीव्यासमिति' इति। योगभाष्योक्तया मानभूवं भूयासम् इत्यन्येच्छानधीनेच्छया वृत्तिविषयत्वोपहितात्मनः लोके पुरुषार्थत्वेन क्लृप्तयङ्गीकारे इच्छया अहंत्वविशिष्टविषयकतया विशिष्टस्य अहमर्थस्य सुखरूपत्वमेषितव्यम्; नत्वहमर्थातिरिक्तात्मनः इति बोध्यम्॥

वस्तुतस्तु मन्मतेऽपि तार्किकादिमत इव सुखत्वजातिमत्त्वेनैव काम्यता। उक्तजातिस्तु अनवच्छिन्नात्मानन्दावरकमूलाज्ञानविरोधि वृत्त्युपहितात्मनि स्वीक्रियते। असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचितिज्ञानत्वजातिरिव। कैवल्यदशायामात्मनि ज्ञानत्वस्येव सुखत्वस्यासत्वेऽपि तदुपलक्षितप्रकाशसत्वान्नदोषः' इति बिन्दुटीकायामुक्तम्। तन्न्यायेनाहमर्थस्य नाशेऽपि अहन्त्वोपलक्षितप्रकाशस्य सत्त्वान्नदोष इति शङ्कायामाह—**मत्तोऽन्याकाचिज्ज्ञप्तिरित्यादिना**। विशिष्टोपहितचितोः शुद्धचितश्च तादात्म्याङ्गीकारेऽपि तत्र भेदस्यापि सत्त्वाभिप्रायेण मत्तोऽन्येत्युक्तम्॥

**तत्प्राप्तयइति**। परमतेऽभिव्यक्तिरेव प्राप्तिः। अन्तःकरणवृत्तावेव चितोऽभिव्यक्तिः। शुद्धचिद्विषयकवृत्तिः यदा तदा तादृश वृत्त्युपहित आत्मा भवति इति तदिच्छया यत्नः कस्यापि न भविष्यतीति भावः। उपहितशुद्धयोरभेदमात्राङ्गीकारे कथंचिदुपपत्तिस्स्यात्। नतु तादात्म्याङ्गीकारे। कैवल्यसुखार्थमेव प्रवृत्तेस्सर्वसम्मततया इष्टतावच्छेदकरूपेण प्रवृत्तेर्वाच्यतया कैवल्यदशायामिष्टतावच्छेदकरूपाभावेन न प्रवृत्त्युपपत्तिः। सुखत्वोपलक्षितस्य कैवल्यदशायां सत्वेन न दोष इत्युक्तिरपि न घटते। सुखत्वव्यतिरिक्तरूपान्तरोपलक्षितस्य सुखत्वोपलक्षितस्य च विशेषाभावेन कैवल्यदशायां तत्र सुखत्वं नास्तीति निश्चयेन च सुखेच्छया लोके प्रवृत्तेरनुभूयमानायाः उक्तरीत्योपपादनासम्भवाच्चेति भावः॥

अहमिदं जानामीत्यत्र ज्ञाधात्वर्थस्यैव आत्मतायाः परैरङ्गीकारेण अहमर्थसम्बन्धविनिर्मुक्तस्य तस्य सिद्धिरेव न सम्भवतीत्याह—**स्वसम्बन्धितयाह्यस्याः इत्यादिना**। **छेदनादेरसिद्धिवदिति**। 'नाभाव उपलब्धेः' (२.२.२८) इति सूत्र (शं) भाष्य प्रागुदाहृत (४०१.पु) भामत्युक्तोऽयं दृष्टान्तः। एतेन विज्ञानग्रहणमात्र एव 'विज्ञानसाक्षिणः प्रमातुः कूटस्थनित्यचैतन्यस्य ग्रहणाकाङ्क्षाऽनुत्पादात्' इति भामत्युक्तिः। 'प्रमाता प्रमेयं प्रमया व्याप्नोति नतु प्रमां प्रमान्तरेण नापि प्रमैव प्रमात्री' इति तत्रोपदर्शितप्रक्रियया परसम्मतकूटस्थनित्यचैतन्यग्रहणं न सम्भवतीति सूचितम्॥

## गूढार्थसंग्रहः

प्रमायाः प्रमातुश्च परमते चिद्रूपत्वाङ्गीकारेण भेदाभावात् । छेत्तृसम्बन्धशून्यछिदायाः अभाववत् ज्ञातृसम्बन्धेनैव ज्ञानस्य भानेन ज्ञातृसम्बन्धशून्या ज्ञप्तिः नैव सिद्ध्यति ॥

ननु 'अर्थोहि निलीनस्वभावः प्रमातारंप्रति स्वप्रत्यक्षत्वाय अन्तःकरणविकारभेदमनुभवमपेक्षते । अनुभवस्तु जडोऽपि स्वच्छतया चैतन्यबिम्बोद्ग्रहणाय नानुभवान्तरमपेक्षते येनानवस्था भवेत् । नह्यस्ति सम्भवः अनुभवः उत्पन्नश्च । नच प्रमातुः प्रत्यक्षो भवति यथा नीलादिः ।' इति पूर्वं भामतीवाक्यम् । अत्र कल्पतरुः । 'तत्प्रत्यक्षत्वाय तस्योपलम्भस्य प्रत्यक्षत्वायेत्यर्थः । स्वप्रकाशसाक्षिणि अन्तःकरणप्रतिबिम्बितेसति अन्तःकरणपरिणामस्य भास्वरस्य स्वत एव साक्षिप्रतिबिम्बाधारतया सिद्धिसम्भवान्नपरिणामान्तरात् अपरोक्षतेति ग्रन्थार्थः । प्रमातुः साक्षिणः इति ।' एतत्पर्यालोचनायां उत्तरभामतीवाक्ये अन्तःकरणवृत्तिरेव विवक्षितेति नानुपपत्तिः । नवा दृष्टान्तसामञ्जस्यम् । 'स्वयं सिद्धस्य च साक्षिणो ऽप्रत्याख्येयत्वात्' इति भाष्य (शं) एव साक्षिणः प्रत्याख्यानं न सम्भवतीत्युक्तम् । अत्र भामती । अस्य साक्षिणः सदा असंदिग्धाविपरीतस्य नित्यसाक्षात्कारता अनागन्तुकप्रकाशत्वे घटते । तथाहि प्रमाता संदिहानोऽप्यसंदिग्धः विपर्यस्यन्नपि अविपरीतः परोक्षमर्थं प्रेक्षमाणोऽप्यपरोक्षः स्मरन्नप्यानुभविकः प्राणभृन्मात्रस्य नचैतदन्याधीनसंवेदनत्वे घटते । अनवस्थाप्रसङ्गश्चोक्तः इति ॥

अत्र कल्पतरुः । 'अनागन्तुकप्रकाश इति प्रतिज्ञा आगन्तुकः स्वविषयी अर्थात् प्रकाशइति लभ्यते । स यस्य नास्ति सचासौ प्रकाशश्च तत्वे सतीत्यर्थः । अनेन अज्ञेयत्वेसति भासमानत्वं स्वप्रकाशत्वमिति निरुक्तम् । भासमानत्वं च व्यावहारिकबाधविधुरं भासत इति शब्दलक्ष्यत्वं न भानविषयत्वमिति न व्याघातः । नच वेदान्तज्ञेयत्वविरोधः निरुपाधेरज्ञेयत्वात् वेदान्तजन्यवृत्त्युपाधौ तज्ज्ञेयत्वमपीतिह्युक्तं तन्नप्रस्मर्तव्यम्, इति । असंदिग्धाविपरीतत्वमुपपादयति तथाहि प्रमातेत्यादिना । तदयं प्रयोगः आत्मा स्वयम्प्रकाशः शश्वदपरोक्षत्वात् शश्वदपरोक्षश्च शश्वदसंदिग्धत्वात् व्यतिरेके घटवत्, इति च । अतश्च अहमर्थसम्बन्धशून्यज्ञप्तेः स्वप्रकाशसाक्षिरूपायाः सिद्धिः सम्भवतीति चेन्न । 'प्रमाता संदिहानोऽपि' इत्यादिभामतीवाक्ये प्रमातुः विषयसंशयादिमत्त्वदशायां स्वस्य संदेहाविषयत्वादिना अपरोक्षत्वेन स्वप्रकाशत्वं साधितम् । अत्र संदेहाद्याश्रयः अहमर्थ एव नान्यः । विषयसंदेहाद्याश्रयदशायां अहमर्थविषयकसंदेहाद्यभावः सिद्धान्तेऽप्यङ्गीक्रियते तस्यापरोक्षत्वं स्वप्रकाशत्वमप्यङ्गीक्रियते ॥

एवं च अनेन ग्रन्थेन अहमर्थातिरिक्तस्साक्षी नैव सिद्ध्यति । अत्र भामत्यां प्रमाता संदिहानोऽपीत्यत्र 'नच प्रमातुः प्रत्यक्षो भवतीति पूर्ववाक्ये च प्रमाता साक्ष्येव विवक्षितः' इति कल्पतरुग्रन्थे स्पष्टम् । 'यथाचैकस्यैव चैतन्यस्य' इत्यादिप्राक् (३९५.पु) उदाहृताद्वैतसिद्धिविवरणलघुचन्द्रिकायाम् एतद्भामतीवाक्यार्थवर्णनावसरे 'एवं साक्षी प्रमेयं प्रमया व्याप्नोति, नतु प्रमां प्रमान्तरेण, किंतु स्वयमेव साक्षी प्रमां व्याप्नोति' इति । तस्मात् स्वतस्साक्ष्यभिव्यक्त्यक्षमस्य घटादेस्त्वाकारवृत्त्यपेक्षप्रत्यक्षताकत्वेऽपि स्वतस्साक्षिव्यञ्जकस्य मनोवृत्त्यादेः न तथेति साक्षिण एव प्रत्यक्षता । साक्षीतु नानुभवान्तराविषयः, येनानवस्था स्यात् अपितु स्वप्रकाशः । तत्त्वं च अज्ञेयत्वेसति ज्ञानत्वोपलक्षित स्वरूपत्वं, तच्च नित्यापरोक्षत्वोपलक्षितस्वरूपत्वात् तदपि नित्यमसंदिग्धत्वात् । व्यतिरेकेण घटादिर्दृष्टान्तः । साक्षीह्ययं संदिहानोऽपि न संदिह्यते। विपर्यस्यन्नपि न विपर्यस्यते। परोक्षतया जानानोऽपि स्फुरतीति सर्वानुभविकम्' इतिचोक्तम् ॥

अत्रापि भामतीवाक्ये प्रमाता साक्ष्येव विवक्षितः इति स्फुटम् । अत्रापि नित्यापरोक्षत्वं इतरविषयकसंदेहाद्याश्रितस्य स्वविषयकसंदेहाद्यभावादेव साधितम् । अत्र ज्ञानत्वापरोक्षत्वोपलक्षितस्वरूपत्वं शुद्धचितएव वाच्यम् ; तस्य

श्रीभाष्यम्

**अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥ विज्ञातारमरे केन**

श्रुतप्रकाशिका

एवं प्रत्यक्षविरोधात् असिद्धत्वाद्विपरीतसाधकत्वात् सत्प्रतिपक्षत्वाच्च, संविदात्मत्वानुपपत्तेश्श्रुत्यर्थापत्त्याचाहमर्थात्मत्वमाह—**अतइति**। पूर्वोक्तरहेतूनामियं प्रतिज्ञा। श्रुतिस्मृतिसूत्राणि दर्शयति। **विज्ञातारमिति**। ज्ञातव्यस्यात्मनो

गूढार्थसंग्रहः

संदेहाद्याश्रयत्वप्रसङ्ग एव नास्ति। प्रमातृशब्देन निर्देशोऽपि न स्वरसः। अन्तःकरणवृत्तिप्रतिबिम्बिताचितः वृत्तिभासकत्वं परोक्षं निरवयवस्य सन्निकृष्टस्य प्रतिबिम्बासम्भवादेव न घटते। सिद्धान्तेतु अहमर्थस्य नित्यापरोक्षत्वेन स्वप्रकाशत्वं भामत्युक्तदिशैव सम्भवति। स्वप्रकाशत्वंतु स्वव्यवहारे स्वातिरिक्तानपेक्षत्वम्। प्रमायाः धर्मभूतज्ञानरूपत्वेन धर्मभूत ज्ञानस्य मणिद्युमणिप्रभास्थानापन्नतया स्वप्रकाशत्वेन प्रमान्तरापेक्षा नास्त्येव। येनानवस्थास्यात्। अतः प्रमातृप्रमेय प्रमाशब्दत्रयप्रयोगे प्रमाता प्रमाश्रयएव। नतु निर्धर्मकः। तादृशप्रमातृप्रमेयसम्बन्धाभावे ज्ञप्तिः 'घटमहं जानामि' इत्यादौ ज्ञाधात्वर्थरूपा परसम्मता चित् नैव सिद्ध्यति। प्रतिकर्मव्यवस्थायां लघुचन्द्रिकोक्तप्रमाणप्रमेयप्रमातृव्यवस्था छिदादिदृष्टान्तवैरूप्येण न घटत इति प्राक् (४२६.पु) निरूपितम्। '**अहमर्थविनाशश्चेत्**' '**छेत्तुश्छेद्यस्यचाभावे**' इत्यादि श्रीसूक्तिः विवरणकारपतमपि क्रोडीकरोति। तन्मतेऽपि प्रतिबिम्बत्वविशिष्टस्यैवाहमर्थतया विशिष्टस्यासत्यत्वादिति दिक् ॥

प्राक् (२२२.पु) पूर्वपक्षोदाहृत (१.१.४.शं) भाष्यभामत्याम् 'आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, प्रकाशोहि सर्वस्यात्मा तदधिष्ठानत्वाच्च प्रपञ्चविभ्रमस्य नचाधिष्ठानाभावे विभ्रमो भवितुमर्हति। अपिच आत्मनः प्रकाशस्य भासा प्रपञ्चस्य प्रथा। तथा च श्रुतिः 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति। नचात्मनः प्रकाशस्य प्रत्याख्याने प्रपञ्चप्रथा युक्ता। तस्मात् आत्मनः प्रत्याख्यानायोगात् वेदान्तेभ्यः प्रमाणान्तरागोचरसर्वोपाधिरहित ब्रह्मस्वरूपावगतिसिद्धिरर्थः' इति। इत्युक्तिस्तु आत्मनः प्रकाशरूपत्वाङ्गीकारेऽपि सर्वोपाधिरहितप्रकाशरूपत्वं न सम्भवतीति '**संविदो विषयप्रकाशनतास्वभावविरहेसति स्वयम्प्रकाशत्वासिद्धेः अनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात्** इति' पूर्वभाष्य (४१८.पु) सूक्त्यैव निरवकाशेति उक्तप्रायम्। प्रपञ्चप्रथा भवत्सम्मतस्वप्रकाशानभ्युपगमेऽपि घटते इति प्रागेव (३१९.पु) निरूपितम्। 'तमेव भान्तम्' इत्यादिश्रुतेः गुरुचन्द्रिकोक्तार्थः अनुपादेय इति (४१९.पु) पूर्वमेव निरूपितम् ॥

किंच 'तमेव भान्तम्' इति श्रुतौ तच्छब्दस्य न निर्विशेषप्रकाशोऽर्थः। 'एको वशी' 'तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम्' (कठ.५.वल्ली.१२) 'नित्यो नित्यानां, तमात्मस्थं येऽनुपश्यन्ति धीराः, तेषां शान्तिः शाश्वती नेतरेषाम्। (१३) तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्, कथंनु तद्विजानीयां किमुभाति विभाति वा' इति वाक्यानन्तरवाक्यत्वात्तमेव भान्तमित्यादेः। अत्र मिथ्याभूतस्यार्थस्य अधिष्ठानप्रकाश्यत्वं यदि विवक्षितं तदा 'तेषां सुखं शाश्वतं, शान्तिः शाश्वती' इत्यत्र सविशेषज्ञानवतां शाश्वतसुखादिप्राप्त्युक्तिः कथं घटते ? 'तदेतदिति' इति पूर्वश्रुतावपि तत्पूर्वश्रुतिद्वयानुरोधेन सविशेषस्यैव विवक्षा अवश्यमभ्युपेतव्या। तेन 'तमेव भान्तम्' इति श्रुतावपि सविशेषमेव विवक्षितमिति परसम्मतस्साक्षी नानया श्रुत्या सिध्यति इति बोध्यम् ॥

## गूढार्थसङ्ग्रहः

शबरभट्टपादसिद्धान्तितार्थमेव निगमयति–**अतोऽहमर्थः** इत्यनेन । उक्तमर्थं श्रुत्यादिभिः साधयति–**विज्ञातारमिति** । 'येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरेकेन विजानीयात्' इति **श्रुतिः** मैत्रेयीब्राह्मण द्वये (बृ.४.४.१४.१) (६.५.१५) इति श्रूयते । 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रे 'यत्रहि द्वैतमिव भवति तदितर इतरं पश्यति (बृ.४.४.१३) इत्यारभ्य अविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपञ्चय 'यत्रत्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञानस्याभावमभिदधाति। पुनश्च विषयाभावेऽपि आत्मानं विजानीयादित्याशङ्क्य 'विज्ञातारमरेकेन विजानीयात्' इत्याह । ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलस्सन् भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते' इति (शं) भाष्ये उक्तम् ॥

'यत्रहि द्वैतमिव भवति' इत्यत्र परमार्थतः अद्वैते ब्रह्मणि भिन्नमिव वस्त्वन्तरम् आत्मनः उपलक्ष्यते । परमार्थचन्द्रादेरिव उदकचन्द्रादिप्रतिबिम्बेतरः इयमविद्यावस्था' इति प्राक् (१३७.पु) उदाहृतभाष्ये उक्तम् ॥

अत्र द्वैतमिवेत्यस्य भिन्नमिवेत्यर्थः कथम् ? 'द्वीतं द्विधेतम् एकंसत् तद्भावो द्वैतमुच्यते' (बृ.वार्तिके.४५७. श्लो) इति वार्तिकोक्तरीत्या रूपद्वयविशिष्टं द्वैतशब्दार्थः । एवं च भिन्नमिव भवतीति शब्दतः नैव लभ्यते । 'द्विधेतं द्वीतमित्याहुः तद्भावो द्वैतमुच्यते' (बृ.वा.४.३.१८०७) इति न विद्यते द्विधाभावो यत्र द्वैतमित्यक्षरार्थः । इति सिद्धान्तबिन्दुविवरणे (न्यायरत्नावली) 'द्विधाभावः प्रकारद्वयसत्ता सद्रूपाधिष्ठानसंसर्गस्य घटादिरूपारोप्यस्य च सन्घटः' इत्यादिभ्रमसिद्धस्य च सत्ता यत्र शुद्धे ब्रह्मणि नविद्यते तदद्वैतम्' इत्युक्तिस्तु नादर्तव्या । द्वैतशब्दे अधिष्ठानसंसर्गारोप्यैतदुभयविवक्षायां नियामकाभावात् । 'यत्रत्वस्य सर्वमात्मैवाभूत्' इति विद्यावस्था यत्रतु ब्रह्मविद्यया अविद्यानाशमुपगमिता तत्र आत्मव्यतिरेकेणान्यस्याभावः' इति भाष्यम् (शं) 'यत्र तत्त्वदर्शनसमकाले सर्वाभेदोपलक्षितात्मैवाभूत्' इत्यादि गुरुचन्द्रिका । इदमुभयं श्रुतौ विवक्षितमिति कथं निर्णीयते ? श्रुतौतु सर्वपदार्थस्य आत्मनश्चाभेदः प्रतिपाद्यते । नतु आत्माऽन्यनिषेधः । अत्र उपलक्षितस्यैव विवक्षेति कथं वा निर्णयः ॥

अथवा 'सर्वमात्मा' इति बाधायां सामानाधिकरण्यम्, तथा च 'सर्वाभावोपलक्षितात्मा यत्राभूत्' इति गुरुचन्द्रिकोक्तिरपि बाधायां सामानाधिकरण्याभ्युपगमेऽपि सर्वाभावविशिष्टस्य ततः प्रतीत्या तस्य विशिष्टस्य मिथ्यात्वेन तद्वाक्यस्य प्रमापकत्वमेव न स्यात् । 'आत्मैवेदमग्रआसीत्पुरुषविधः' (बृ.३.४.१) इति श्रुत्यर्थस्य प्राक् (२२९.पु) उपदर्शितस्य उपनिषदि विवक्षितस्य अनुसारेण मैत्रेयीब्राह्मणेऽपि आत्मन्शब्दस्य अर्थविवक्षायाः उत्तरत्र स्थापयिष्यमाण तया तदनुसारेण 'विज्ञातारमरेकेन विजानीयात्' इत्यत्रापि विज्ञाता सविशेषएव विवक्षितः । 'सलिल एको द्रष्टा अद्वैतो भवति' (बृ.६.३.३२) इत्येतत्पूर्ववाक्ये 'ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यत्र विभक्तशब्दप्रयोगेण आत्मन्शब्दस्य व्यापकार्थकतया अविभक्तस्यार्थस्य ततः प्रतिपादनेन 'यत्रहि द्वैतमिव भवति' इति वाक्येऽपि विभक्तार्थस्य प्रतीत्या अविभक्तं परतन्त्रं विभक्तं स्वतन्त्रम् इत्येतदर्थद्वयमेव अत्र वाक्यद्वये पर्यवसितं विवक्षितम् । 'यत्रत्वस्यसर्वमात्मैवाभूत्' इत्यत्र आत्मन्यस्वतन्त्रवस्तुनिषेधएव विवक्षित इति उत्तरत्र स्फुटीभविष्यति ॥

एवं च 'येनेदं सर्वं विजानाति' इत्यत्र जीवानां सर्वपदार्थज्ञानस्य परमात्मसंकल्पाधीनतायाः विवक्षितत्वेन तदानुगुण्येन 'विज्ञातारम्' इत्यत्रापि वीत्युपसर्गसमभिव्याहारेण सर्ववस्तुविषयक ज्ञानवत एव विवक्षिततया जीवानां सर्ववस्तुविषयकज्ञानहेतुसङ्कल्पाश्रयं सर्ववस्तुविषयकज्ञानवन्तं केन विजानीयात् इति तत्सङ्कल्पव्यतिरेकेण तज्ज्ञानं न

## श्रीभाष्यम्

**जानात्येवेति च श्रुतिः। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः॥ नात्मा श्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति। ज्ञोऽतएवेत्यतो**

## श्रुतप्रकाशिका

ज्ञातृत्वमुक्तम् 'विज्ञातारमरेकेन विजानीयात्' इति। ज्ञातृत्वस्य स्वाभाविकतया मुक्तावपि विज्ञातृत्वमस्तीति दर्शयति। **जानात्येवेति**। ज्ञोऽतएवेत्यत्र ज्ञशब्दानिर्दिष्ट आत्मेति ज्ञापनार्थं नात्मा श्रुतेरिति सूत्रमुपात्तम्। त्वयाऽनित्यतयाऽभ्युपेतस्या * हमर्थस्य नित्यत्वकथनमपि तस्यैवात्मत्वसाधकमिति च ज्ञापनार्थम्। अतो नात्मेति संविदात्मत्वप्रतिक्षेपनिगमनात्पूर्वोक्ताहमर्थात्मत्वप्रतिज्ञायां संविदात्मत्वप्रतिक्षेपे च यथायथमुक्तहेतवोऽनुन्धेयाः॥

## गूढार्थसङ्ग्रहः

सम्भवतीत्येतद्वाक्यतात्पर्यं उत्तरत्र स्फुटीभविष्यति तदेतत्सर्वमभिप्रेत्य '**विज्ञातारमरेकेनविजानीयात्**' इति श्रुतिः अत्र उपात्ता॥

**जानात्येवेतिचेति**। इयं च श्रुतिः 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतिसहभावेन पार्थसारथिमिश्रात्प्राचीनेन सुचरितामिश्रेण (श्लो.वा.७०) श्लोकवार्तिकव्याख्यायां काशिकायामुदाहृता। आत्मसिद्धौ च 'सयथा सैन्धवघनो अनन्तरोऽबाह्यः' इत्यादिप्रसिद्धश्रुतीरुदाहृत्य अन्याश्च 'जानात्येवायं पुरुषः ज्ञातव्यंतु न वेद' इत्याद्याः इति सुचरितामिश्रोपात्तश्रुतिरपि भगवद्यामुनमुनिना उदाहृता। एतदेवाभिप्रेत्य अत्रेयं श्रुतिरुपात्ता॥

**ज्ञोतएवेतीत्यादि**। अत्र 'नात्मा श्रुतेः इत्यादिसूत्रानन्तरं 'ज्ञोतएव' इति सूत्रे आत्मा ज्ञः इत्येव विवक्षितमिति प्रतीयते। अत्र 'अथयोवेदेदं जिघ्राणीति स आत्मा' (छा.८.१२.४) इति च सर्वैः करणद्वारैः इदं वेदेदं वेदेति विज्ञानेनानुसन्धानात् तद्रूपत्वासिद्धिः। नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमितिचेन्न गन्धादिविषयविशेषपरिच्छेदार्थत्वात्। तथाहि दर्शयति 'गन्धाय घ्राणमित्यादि' इति सूत्रभाष्ये (शं) 'यो वेद स आत्मा' इत्येवं सर्वत्र प्रयोगात् वेदनमस्य स्वरूपमित्यवगम्यते। यथा यः पुरस्तात् प्रकाशयति स आदित्यः यो दाक्षिणतः यः पश्चात् यउत्तरतः य ऊर्ध्वं प्रकाशयति स आदित्य इत्युक्ते प्रकाशस्वरूपः सइति गम्यते। दर्शनादिक्रियानिर्वृत्त्यर्थानि च चक्षुरादिकरणानि। इदंचास्यात्मनः सामर्थ्यादवगम्यते। आत्मनः सत्तामात्रतएव ज्ञानकर्तृत्वं नतु व्यापृततयां। यथा सवितुः सत्तामात्रतयैव प्रकाशनकर्तृत्वम्। नतु व्यापृततयेति तद्वत्। इति उपनिषद्भाष्ये(शं)चोक्तम्। अत्रानन्दगिरिटीका। 'योवेदेत्यत्र प्रत्यार्थभूतं कर्तृत्वं सापेक्षत्वात् मिथ्या प्रकृत्यर्थरूपं तु संविन्मात्रम् अनपेक्षतया सत्यमात्मस्वरूपमित्याह–योवेदेति' इति॥

'ज्ञात एव' इति सूत्रे 'अथ योवेदेदं जिघ्राणीति' इति श्रुतेः परैरुदाहरणेन इयंश्रुतिः एतत्सूत्रे सूत्रकृता विवक्षितेति परेषामपि सम्मतमिति स्फुटम्। 'योवेद' इत्यादिश्रुतौ 'योवेद स आत्मा' इत्येतत्तात्पर्येण ज्ञ इत्युक्तमिति च वेदेत्यत्र कर्तरि लकारः परेषामपि सम्मतः। श्रुत्यनुसारेण सूत्रे ज्ञ इत्यत्रापि ज्ञाधातोः 'इगुपधज्ञाप्रीकिरःकः' (३.१.५८) इति सूत्रेण कर्तरि कः। माधवीयधातुवृत्तावपि इत्थमेवोक्तम्। एवं च श्रुतिसूत्रयोः कर्तृप्रत्ययान्तशब्द निर्देशेन ज्ञानकर्तैव विवक्षितः नतु ज्ञानस्वरूपः। यः पुरस्तात् प्रकाशयति इति दृष्टान्तेऽपि प्रकाशनकर्तैव सविता विवक्षितः। नतु प्रकाशस्वरूपः। शब्दतः एतदर्थालाभात्। प्रामाणिकानां एतदर्थतात्पर्येण प्रयोगविरहाच्च। यःपुर

## गूढार्थसंग्रहः

स्तात्प्रकाशयतीत्यादौ आदित्यस्य प्रभाद्वारेणैव प्रकाशकत्वं नतु सत्तामात्रेण। आवरणदशायां प्रकाशनकर्तृत्वाभावात्। प्रत्ययार्थस्य प्रकृत्यर्थाधीनत्वमात्रेण प्रकृत्यर्थस्यैव सत्यत्वं प्रत्ययार्थस्य मिथ्यात्वमिति कल्पनं तु अभिनिवेशमूलकमेव। एवंसति सर्वत्र प्रकृतिप्रत्ययस्थले प्रत्ययार्थस्य मिथ्यात्वे प्रामाणिकव्यवहारस्य भ्रान्तिमूलकत्वं विधिवाक्यादिस्थले प्रवृत्त्यभावादिश्च स्यात् ॥

यद्यपि ब्रह्मविद्याऽऽभरणे ‘अथ योवेदेदं जिघ्राणि’ इत्याद्याअपि यथा ‘यतोवा इमानि भूतानि जायन्ते’ इत्यादिब्रह्मणः तटस्थलक्षणं, तद्वज्जीवस्य तटस्थलक्षणमिति वक्तव्यम्। तत्र यदि ज्ञानाश्रयमात्रतया बाह्येभ्यो व्यावृत्ततया आत्मा लिलक्षयिषितः स्यात्। तदा ‘यो वेद स आत्मा’ इत्येतावदेव पर्याप्तम्। ‘इदं जिघ्राणि’ इत्यादिविशेषणमनर्थकमेव स्यात्; इति। ‘अथ यो वेद’ इत्यादिवाक्येष्वपि ‘अथ यो वेदेदं जिघ्राणि’ इत्यादिविशेषणस्यायमभिप्रायः,— पूर्वसन्दर्भे ‘य एषोऽक्षिणि पुरुषो दृश्यते’ इत्यादि पर्यायेषु जाग्रदाद्यवस्थोपलक्षितस्यात्मनः ‘एष आत्मेति होवाच’ इत्यात्मतत्त्वमुक्त्वा ‘एतदमृतमभयमेतद्ब्रह्म’ इति ब्रह्मत्वमुक्तम्। तत्रेयमाकाङ्क्षा—कोऽसावात्मा यस्य ज्ञानस्वरूपब्रह्माभेदः प्रतिपाद्यते इति? तत्र नित्यज्ञानस्वरूपतया आत्मानं लक्षयितुं ‘अथ यो वेदेदं जिघ्राणि’ इति वाक्यं प्रवर्तते। तत्र यदि ‘इदं यो वेद’ इत्येवोच्येत, तार्किकाभिमतः अनित्यज्ञानाश्रयएवात्मा सिद्ध्येत्, तन्माभूदिति गन्धादिगोचरज्ञानावभासकतया आत्मा लक्ष्यते। गन्धादिगोचरज्ञानानांहि उत्पत्तिमारभ्य ज्ञाततानैयत्यात् जन्यज्ञानेन तदनुत्पत्तेः तदवभासकं नित्यं ज्ञानं सिद्ध्यतीति स एवात्मा। नच ‘योवेद’ इति गन्धादिगोचरज्ञानाश्रयतायाः प्रतिपादनात् नित्य ज्ञानाश्रयतैवात्मनः सिद्ध्येदिति वाच्यम्; तावता प्रवृत्ताकाङ्क्षानिवर्तनासम्भवात् ज्ञानरूपब्रह्माभेदस्य नित्यज्ञानरूपतयैवोपपादनीयत्वात्। अतो वेदेति निर्देशः सत्ता सतीतिवत् तादात्म्येन वा नित्यज्ञानरूपस्यैवात्मनः वृत्त्युपाधिकभेदकल्पनया वा द्रष्टव्य इति न काचिदनुपपत्तिः। इति चोक्तम् ॥

तथाऽपि प्रजापतिविद्योपक्रमे ‘य आत्मा अपहतपाप्मा—सत्यसङ्कल्पः’ इति श्रूयते। अत्र परसम्मतात्मनि सत्यकामत्वसत्यसङ्कल्पत्वयोरयोगात् सविशेष एव विवक्षितः। ‘एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते’ इत्युपसंहारश्रुतौ संप्रसादशब्दो जीवपर इति परेषामपि सम्मतम्। अतः ‘य आत्मा अपहतपाप्मा’ इत्युपक्रमोक्तरूपं ‘स्वेन रूपेण’ इत्यत्र जैवं विवक्षितम्। तदुक्तं दहराधिकरणभाष्ये (शं) ‘अपरेतु वादिनः पारमार्थिकमेव जैवं रूपम्’ इति मन्यन्ते। अस्मदीयाश्च केचित् इति। अत्र भामती। मतान्तरमाह—‘अपरे तु वादिनः’ इति। तत्र कल्पतरुः। पारमार्थिकजीवब्रह्मविभागमतमाह—‘मतान्तरमिति’ इति ॥

अयमाशयः अपरेषाम्। दहरविद्यायां ‘य एष संप्रसादः—अभिनिष्पद्यते ‘एष आत्मेतिहोवाच एतदमृतमेतदभयमेतद्ब्रह्मेति। तस्यहवा एतस्य ब्रह्मणो नाम सत्यमिति। (छा.८.३.४) तानि हवा एतानि त्रीण्यक्षराणि सत्—ति यमिति। तद्यत् सत् तदमृतम्, अथ यत् ति तन्मर्त्यम् अथ यद्यं तेनोभौ यच्छति’ (८.३.५) इति श्रूयते। वाजसनेयके ‘अथ नामधेयं सत्यस्य सत्यमिति प्राणावै सत्यं तेषामेष सत्यम्’ (बृ.४.३.६) इति श्रुतिवदियं श्रुतिः। अत्र ब्रह्मणो नामसत्यमित्युक्त्या सत्यशब्दवाच्यमेव ‘एतदमृतमेतदभयम्’ इति श्रुतौ ब्रह्म विवक्षितम्। तच्च सविशेषमेव एतदनुसारेण प्रजापतिविद्यायामपि ‘एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्म’ (छा.८.७.४) इत्यत्र सविशेषमेव ब्रह्म विवक्षितम्। पूर्वं एतदमृतमित्यत्रोक्तामृतानियामकत्वेन ब्रह्मणः सत्यशब्दवाच्यत्वकथनेन जीवब्रह्माभेदो नात्र विवक्षितः। स्वरूपाविर्भावकथनानन्तरं एतद्ब्रह्मेत्युक्तम्। दहरविद्यायां ‘स्वेन रूपेण अभिनिष्पद्यते’ इत्यत्र रूपशब्दार्था-

### श्रीभाष्यम्

**नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥ अहम्प्रत्ययसिद्धोह्यस्मदर्थः । युष्मत्प्रत्ययविषयो**

### श्रुतप्रकाशिका

दूषणान्तरं व्याहतिरप्यस्तीत्याह—**अहम्प्रत्ययेत्यादिना** । **अहम्प्रत्ययसिद्धइति** । सिद्धशब्देन स्वतःसिद्धिस्सूचिता । अतएवह्यन्यत्र युष्मत्प्रत्ययविषयइत्युक्तम् । अहम्प्रत्ययसिद्धोहीति हिशब्देन अस्मदर्थ युष्मदर्थशब्दतश्च युष्मत्

### गूढार्थसंग्रहः

निर्णयेन तन्निर्णयार्थं 'यआत्मा अपहतपाप्मा' इत्यादि प्रजापतिवाक्यप्रक्रमः। एवंच 'एष आत्मा अपहतपाप्मा' इत्यादिना ब्रह्मणि प्रतिपादितानां अपहतपाप्मत्वादीनां 'य आत्मा अपहपाप्मा' इत्यादिना जीवे वक्ष्यमाणतया परगतापहतपाप्मत्वादि धर्मवत्त्वस्य मुक्तजीवे प्रतिपिपादयिषया ब्रह्मशब्दप्रयोगः 'मुखं चन्द्रः' इति रूपकस्थले चन्द्रसदृशाभेदबोध एव प्राचीनालङ्कारिकाणां सम्मतः । एवं च अत्रापि 'एतद्ब्रह्म' इत्यत्र ब्रह्मसदृशाभेदएव विवक्षितः । अयमर्थः 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्याद्यधिकरणे सूत्रकृतः अभिप्रेत इति भाष्यकृता स्थापयिष्यते ॥

एवं 'अथ यो वेदेदं जिघ्राणीति—स आत्मा' (छा.८.१२.४) इति 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय' इति श्रुत्यनन्तरश्रुतौ नित्यव्यापकज्ञानमपि रूपशब्दार्थतया विवक्षितम् । 'अथ यो वेद स आत्मा' इत्येतावन्मात्रोक्तौ नित्यव्यापकज्ञानासिद्धिः आगन्तुकज्ञानेनापि तदुपपत्तेः । 'गन्धाय घ्राणम्' इत्यनेन ज्ञानस्य गन्धरूपविषयसम्बन्धः घ्राणेन्द्रियद्वारकः नतु घ्राणेन्द्रियेण ज्ञानमुत्पद्यते इति प्रदर्शनेन आगन्तुकज्ञानवादः न सम्मत इति सूचितम् । ज्ञानस्य इन्द्रिय द्वारा विषयसम्बन्धप्रदर्शनपूर्वकं तादृशज्ञानाश्रयत्वस्य आत्मनि प्रतिपादनेन ज्ञानस्य आत्मगतस्य मणिद्युमणिप्रभावत् सङ्कोचविकासार्हत्वं बोधितम् । अत्र आत्मनः ज्ञानावभासकत्वस्य वृत्त्युपाधिकभेदस्य च बोधकशब्दाभावेन विवक्षा न सम्भवति ॥

एतेन आत्मन्शब्दार्थोऽपि प्रदर्शितो भवति। 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति गीयते ॥' इतिहि स्मृतिः । (कठ.शं.भा) अत्र यच्चायं सन्ततः इत्यनभिधाय 'यच्चास्य सन्ततो भावः' इत्युक्त्या एतच्छ्रुतिविवक्षितज्ञानस्य संततत्वमेव विवक्षितमिति प्रतीयते । 'अत सातत्यगमने' इति धातोः 'सातिभ्यां मनिन्मणिनौ' इति औणादिकःप्रत्ययः अस्मिन्निर्वचने जीवस्वरूपव्याप्तिः नैव विवक्षिता। अयं सन्ततः इत्यनभिधाय अस्य सन्ततोभावः इति निर्देशस्य वैयर्थ्यप्रसङ्गात् । किंतु धर्मभूतज्ञानव्याप्तिरेव विवक्षिता । तेन व्याप्तियोग्यधर्मभूतज्ञानाश्रयः धर्मभूतज्ञानघटितव्यापकत्वयोग्यः आत्मपदार्थः श्रुतौ विवक्षितइति पर्यवसितम्। ब्रह्मणि सर्वज्ञत्वं बहुश्रुत्यादिसिद्धम्। 'यदा पश्यः पश्यते रुक्मवर्णं—तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यत्र विद्वानित्यस्य वैयर्थ्यान्यथाऽनुपपत्त्या ज्ञाननिबन्धनमेव परमात्मसाम्यं जीवस्य विवक्षितम्, इत्यवश्यमङ्गीकरणीयम् । ज्ञाननिबन्धनसाम्यस्यान्यत्रोक्तस्यानुसारेण अपहतपाप्मत्वादिगुणाष्टकस्येव धर्मभूतज्ञानस्यापि 'स्वेन रूपेण' इत्यत्र अभिप्रेतत्वस्य सिद्ध्या 'एतद्ब्रह्म' इत्यत्र धर्मभूतज्ञाननिबन्धनब्रह्मसादृश्यमपि जीवे विवक्षामर्हति । अतश्च 'अथ योवेदेदं जिघ्राणीति स आत्मा' इति 'ज्ञोऽतएव' इति सूत्रविषयवाक्यात् नित्यज्ञानस्वरूपता नैव सिध्यति । किंतु व्याप्तियोग्यधर्मभूतज्ञानाश्रयतैव । तदनुसारेण सूत्रे 'ज्ञ' इत्यत्रापि ज्ञाधातोः उक्तदिशा कर्तरि कः नतु (सिद्धान्तसिद्धाञ्जने) 'घञर्थे कविधानम्' इति वार्तिकेन भावे कः 'ग्रहवृदृनिश्चिगमश्च' (३.३.५८) इति सूत्रमहाभाष्ये 'घञर्थेकविधानम्' स्थास्नापा व्यधिहनियुध्यर्थम्

## श्रीभाष्यम्

**युष्मदर्थः। तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिव-द्व्याहतार्थं च।**

## श्रुतप्रकाशिका

अस्मत्प्रत्ययगोचरयोरिति तद्ग्रन्थप्रसिद्धिं दर्शयति, ज्ञानमेव स्वयम्प्रकाशम्। * तद्व्यतिरिक्तत्वादहमर्थोऽन्याधीनप्रकाशः।

## गूढार्थसङ्ग्रहः

इत्युक्तेः। ज्ञाधातोः कस्य भावे असम्भवात्। ख्याज्ञा इति उदाहरणमात्रं बोध्यम्। इति नागेशोक्तेः (श.शे) अस्योदाहरणमात्रत्वे प्रमाणंतु 'द्वित्वप्रकरणे केकृत्रादीनाम्' इति वार्तिकमेव। इति भैरवमिश्रीयव्याख्यान एव आशय उक्तः। 'द्वित्वप्रकरणे केकृत्रादीनाम्' इति वक्तव्यम्। 'चक्रं चिक्लिदं चक्नसः' इत्येतावन्मात्रोक्त्या कृत्रादौ ज्ञाधातुरपि नैव पारिगणित इति ज्ञाधातोः भावे कप्रत्ययस्य कथंचिदप्यसम्भवात्॥

'ज्ञोऽत एव' इत्यत्र 'धर्मं जैमिनिरतएव' इति सूत्रे अतश्शब्देन पूर्वसूत्रोक्तश्रुति सजातीयश्रुतिवत् 'नात्मा श्रुतेः' इति पूर्वसूत्रोक्तानुत्पत्तिश्रुतिसजातीयज्ञातृत्वश्रुतेः अतश्शब्देन परामर्शः। अतः ज्ञ एवेति योजनया विशेषण सङ्गतैवकारस्थले 'शङ्खःपाण्डरएव' इत्यादिवत् अत्रापि ज्ञानायोगव्यवच्छेदस्य लाभेन आगन्तुकज्ञानवादः व्युदस्तो भवति। श्रुत्यनुसारेण सूत्रेऽपि इन्द्रियादिद्वारकविकासयोग्यज्ञानमेव विवक्षितम्। 'नात्मा श्रुतेः' इति पूर्वसूत्रे वियदधिकरणोक्तरीत्या स्वरूपपरिणामस्य जीवे निषेधानन्तरं मूलभूतश्रुतौ आत्मन्शब्दे च विवक्षितविकासयोग्यज्ञानस्य 'ज्ञोऽत एव' इति सूत्रे अभिप्रेतत्वेन विकासयोग्यधर्मभूतज्ञानद्वारकं जीवे कार्यत्वमप्युपपादितं भवति। अतश्च 'ज्ञोऽत एव' इति सूत्रे तन्मूलभूतविषयवाक्ये च ज्ञानाश्रयत्वमेवात्मनो विवक्षितं न ज्ञप्तिमात्रमिति भावः॥

अहं जानामीति सिद्धो ज्ञाता युष्मदर्थः इति। 'अस्मत्प्रत्यये योऽयमनिदमंशः चिदेकरसः तस्मिन् तद्बल निर्भासिततया लक्षणतो युष्मदर्थस्य मनुष्याभिमानस्य सम्भेद एव' इति प्राक् (४४०.पु) उदाहृत पञ्चपादिकायां प्रति भासतो युष्मदर्थत्वाभावेऽपि अपरोक्षतया अवभास्यत्वलक्षणेन युष्मदर्थभावः इति विवरणोक्तः सिद्धान्ते न घटते। अहमित्यत्र चिदचित्संवलने भवत्सम्मते प्रमाणाभावात्। मनुष्याभिमानस्येति पञ्चपादिकोक्त्या 'मनुष्योऽहम्' इति प्रतीत्या तत्सिद्धिरित्यपि न शङ्क्यम्। केषांचित् भ्रमरूप तादृशप्रतीतेरापि देहशुद्धात्मनोरभेदविषयकत्वस्य पराशरवचनैः उत्तरत्र साधयिष्यमाणत्वात्। युष्मच्छब्दप्रयोगोऽपि देहात्माभिमानविवक्षयैवेति न निश्चेतुं शक्यम्। 'तत्त्वमसि श्वेतकेतो' इत्यत्र श्वेतकेतोः देहात्माभिमानो वर्तते इति स्थापनासम्भवात्। युष्मच्छब्दबोध्यस्यापि वस्तुनः श्वेतकेत्वादेः तदीयास्मत्प्रत्ययविषयत्वं वर्ततएव। इति अस्मत्प्रत्ययविषय युष्मत्प्रत्ययविषययोः वैलक्षण्यमेव न निरूपयितुं शक्यम्॥

'मनुष्योऽहम्' इत्यादौ देहात्माभिमानाङ्गीकारेऽपि अहमित्यत्र अन्तःकरणसंवलनं नैव सिद्ध्यति। भवत्सम्मतचितएवाप्रामाणिकत्वं पूर्वमेव निरूपितम्। एवंस्थिते तादृशचिद्भास्यत्वं अन्तःकरणस्यापि न सम्भवति। अतः अस्मत्प्रत्ययविषयस्य देहस्य भ्रमात्मकप्रतीत्यापि नैव युष्मदर्थलक्षणत्वं देहस्येन्द्रियजन्यप्रत्ययविषयत्वेन युष्मदुक्तरीत्या युष्मदर्थत्वासम्भवात्। अतः अस्मत्प्रत्ययविषयस्य लक्षणतो युष्मदर्थत्वं न कथंचिदपि सम्भवतीति भावः॥

अहमर्थस्य ज्ञातुः स्वप्रकाशत्वं न सम्भवति। ज्ञानस्य स्वप्रकाशत्वेऽपि ज्ञातुः स्वप्रकाशत्वासम्भवात्। तेनाहमर्थस्य ज्ञातृत्वाङ्गीकारे तस्यापि स्वप्रकाशता न घटते। प्रत्यक्त्वं स्वप्रकाशत्वं, पराक्त्वं अस्वप्रकाशत्वम्। यदा दृश्यत्वं

## श्रीभाष्यम्

**नचासौ ज्ञाताऽहमर्थोऽन्याधीनप्रकाशः, स्वयम्प्रकाशत्वात् । चैतन्यस्वभावताहि स्वयम्प्रकाशता । यः प्रकाशस्वभावः सोऽनन्याधीनप्रकाशः**

## श्रुतप्रकाशिका

अतो नात्मेति शङ्कायां हेतोरसिद्धिमभिप्रयन्न हमर्थस्य प्रकाशान्तरनैरपेक्ष्यं प्रतिजानीते । **नचासाविति** । कुतइत्यत्राह–**स्वयम्प्रकाशत्वादिति** । प्रकाशः व्यवहारानुगुण्यं स्वतएव व्यवहारानुगुण्यशक्तियुक्तत्वादहमर्थः प्रकाशान्तरनिरपेक्ष इत्यर्थः । * तच्च कथमित्यत्राह–**चैतन्यस्वभावताहि स्वयम्प्रकाशतेति** । चेतना ज्ञानं–तद्भावः * चैतन्यं ज्ञानत्वम् । तत्स्वभावत्वं ज्ञानत्वगुणकतेत्यर्थः । ज्ञानत्वमेव हि ज्ञानस्य स्वयम्प्रकाशत्वम् । तद्वदत्रापि ज्ञानत्वं प्रामाणिकं चेत् तदेव स्वयम्प्रकाशत्वं भवतीत्युक्तं भवति ॥

* अहमर्थस्य चैतन्यस्वभावत्वे श्रुतिं प्रमाणं वक्ष्यंस्तदनुग्राहकतर्कमुपन्यस्यति । **यःप्रकाशस्वभावइत्यादिना** ।
* आत्मदीप धर्मभूतज्ञानप्रभयोस्साक्षाद्वा प्रणाड्या वा यादृशं स्वव्यवहारानुगुण्यं तादृशं स्वव्यवहारानुगुण्यमिह प्रकाशशब्देन

## गूढार्थसंग्रहः

पराक्त्वं दृशित्वमेव प्रत्यक्त्वम् । युष्मदस्मत्प्रत्ययगोचरयोरित्यत्रापि प्रत्यक् पराग्रूपार्थद्वयमेव विवक्षितम् । (सिद्धान्त सिद्धाञ्जनम्) अहमर्थस्य स्वप्रकाशानिदंरूपत्वाभावेन अस्वप्रकाशेदंरूपत्वेन पराक्त्वमेवेति शङ्कायामाह–– **नचासौ ज्ञातेत्यादिना** ॥

**चैतन्यस्वभावताहि स्वयम्प्रकाशतेति** । एतेन 'नचासावन्याधीनावभासः । चैतन्यस्वभावतया स्वयंज्योतिष्ट्वात् प्रकाशश्च प्रकाशत्वादेव कस्यचिदेव भवेत्, दीपादिप्रकाशवदिति नात्मा भवितुमर्हति' इति यामुनसूक्त्यर्थ उक्तः । अत्र चैतन्यस्वभावताज्ञानधर्मकत्वं, (श्रुतप्रकाशिका) हि यतः चैतन्यस्वभावता अतः स्वयम्प्रकाशता इति भाष्य सूक्त्यर्थः । 'यः प्रकाशस्वभाव' इत्यादिना प्रकाशश्च प्रकाशत्वादेवेत्यादि यामुनसूक्त्यर्थः विशदीक्रियते । यःप्रकाशस्वभावः इत्यत्र प्रकाशत्वं दीपप्रभाधर्मभूतज्ञानोभयसाधारणं अज्ञानतमोऽन्यतरानिवर्तकत्वम् । तत्स्वभावत्वंतद्धर्मकत्वम् । अत्र दीपादेः स्वप्रभाबलनिर्भासितत्वेन इत्यत्र बलनिर्भासितत्वशब्दोपादानेन 'अस्मत्प्रत्यये योऽनिदमंशः चिदेकरसः तस्मिन् तद्बलनिर्भासिततया लक्षणतो युष्मदर्थस्य' इति प्राक् (४४०.पु) उदाहृतपञ्चपादिकावाक्यमभिप्रेतमिति प्रतीयते । 'अहंजानामि' इति प्रतीतौ अहमर्थस्य ज्ञानपुरस्कारेण भानेन दीपस्य प्रभाविशिष्टतया भातस्य प्रभाबलनिर्भासितत्वेन अप्रकाशत्वाद्ययोगवत् अहमर्थस्याप्यप्रकाशत्वादि न सम्भवति । दीपस्य प्रभानिर्भास्यत्वाभाववत् अहमर्थस्यापि धर्मभूतज्ञाननिर्भास्यत्वाभावस्य सुषुप्तावमहर्थभानस्य साधयिष्यमाणतया स्थापनात् । प्राक् (४०३.पु) उदाहृत गुरुचन्द्रिकावाक्येषु आलोकस्य तमोनाशकत्वं ज्ञानस्य च अज्ञाननाशकत्वं स्पष्टमुक्तम् ॥

एतेन 'यत्तु प्रकाशत्वादेव कस्यचिदेवस्यात् दीपप्रकाशवदिति । तन्न अज्ञानतमोविरोधिस्वरूपस्यातल्लक्षणत्वात् ।' इत्युक्तिरनुपादेया । प्रकाशतेः अकर्मकत्वेऽपि प्रपूर्वककाशधातोः भावे घञि प्रकाशशब्दानिष्पत्त्यङ्गीकारे तस्य कर्माकाङ्क्षा मास्तु । प्रपूर्वककाशधातोरेव णिजन्तात् घञि प्रकाशशब्दनिष्पत्त्यङ्गीकारे तस्य प्रकाशस्य कर्माकाङ्क्षा वर्तत एव । णिजन्तत्वानङ्गीकारेऽपि कस्य प्रकाश इति नियमेन आका । वर्तत एव । प्रकाशः औज्वल्यं स्फुरणं, तच्चाज्ञानतमोविरोधिस्वरूपमिति श्रुतप्रकाशिकायामेवोक्तम् । 'स्वसम्बन्धिनि अपरोक्षावभासविरोधिपारिपन्थिरूपस्य अनुगममात्रत्वमेव

## श्रीभाष्यम्

**दीपवत् । नहि दीपादेस्स्वप्रभाबलनिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वं च । किं तर्हि दीपः स्वयम्प्रकाशस्वभावस्स्वयमेव प्रकाशते अन्यानपि प्रकाशयति स्वप्रभया ।**

## श्रुतप्रकाशिका

विवक्षितम् । दीपस्य तमोविरोधिरूपमौज्वल्यं प्रकाशः । ज्ञानस्य तु स्फुरणं, यस्तत्स्वभावः तद्धर्मकः स्वव्यवहारानुगुण्यापादनशक्तियुक्तः सोऽनन्याधीनंप्रकाशः । स्वधर्मनिरपेक्षइत्यर्थः । (स्व) प्रकाशस्वभावत्वासिद्धिर्नशङ्कनीया यथा प्रभाऽश्रयस्य दीपस्यौज्वल्यं प्रत्यक्षसिद्धम् । तथा ज्ञातुरपि स्वतएव स्वव्यवहारानुगुण्यस्य वक्ष्यमाणश्रुतिस्वारस्यावगतत्वात् । प्रकाश स्वभावस्य स्वधर्मभूतप्रकाशानपेक्षप्रकाशत्वमुपपन्नमित्येतावदेव ह्युच्यतेऽनेन ग्रन्थेन ॥

**अथ** चक्षुर्ग्राह्यत्वेसति प्रभाव्यतिरिक्तत्वात् दीपो घटादिवत्प्रभाबलनिर्भास्य इति **दृष्टान्तस्य** * साध्यवैकल्यमाशङ्क्याह—**नहीति** । नच चक्षुर्ग्राह्यत्वेसति प्रभान्यत्वात् घटादिरिव दीपः प्रभा(बलनिर्भा)ऽवभास्यः अन्धकारे व्यभिचारात् । अतो न दीपस्य प्रभापेक्षेत्यभिप्रायः । **अप्रकाशत्वमन्याधीनप्रकाशत्वंचेति** । स्वयमौज्वल्यधर्मकत्वाभावस्तत्कृतप्रकाशान्तरसापेक्षत्वं च नास्तीत्यर्थः । अर्थस्थितिं वक्तुमाकाङ्क्षां दर्शयति । **किंतर्हीति** । उत्तरमाह—**दीपइति** । दीपो न केवलं स्वात्मानमेव प्रकाशयति अपितु स्वपरिकरेणान्यानापि प्रकाशयतीत्यतिशयमाह—**अन्यानपीति** ॥

**एवं** वाऽर्थः दीपः प्रभानिरपेक्षप्रकाशश्चेत्प्रभावद्विषयानापि प्रकाशयेदित्यत्राह—**अन्यानपीति** । विषयप्रकाशनक्षमोऽपि स्वरूपस्य काचित्कतया विषयसम्बन्धाभावात्स्वरूपेण न प्रकाशयति किंतु विषयसन्बान्धिन्या स्वपरिकरभूतया प्रभयेत्यर्थः—'**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**' इत्यादि निर्देशोऽभिप्रेतः ॥

**यद्वा** अनुमानविवक्षयाऽऽह—**चैतन्यस्वाभावताहीति** । चैतन्यस्वभावता ज्ञानधर्मकत्वम् । एतदेवाहि स्वयम्प्रकात्वम् । ज्ञानधर्मकत्वात्स्वयम्प्रकाशत्वमित्युक्तं भवति । यथा धूमवत्त्वं ह्यग्निमत्त्वमित्युक्ते धूमवत्त्वादग्निमत्त्वमित्युक्तं स्यात् तद्वत् अयंचान्वयीहेतुः । व्याप्तिं दर्शयति । **यइति** । प्रकाशस्वभावः प्रकाशधर्मः योधर्म्यन्तरापरोक्षावभासे साक्षाद्वा परम्परया वा भासमानतयैव हेतुः (सइह) सोऽनन्याधीन) प्रकाशशब्दाविवक्षितः । * रूपितत्समवेतार्थचाक्षुषत्वानिमित्तस्य रूपस्य स्वाश्रयेतरद्रव्यानुमापकधूमादेश्च प्रकाशत्वव्युदासाय धर्म्यन्तरापरोक्षशब्दौ । इन्द्रियव्यवच्छेदार्थो भासमानशब्दः पक्षसक्षयोरनुगतत्वाय साक्षाद्वा परम्परयावेत्युक्तम् । ज्ञाता स्वधर्मभूतप्रकाशानिरपेक्षासिद्धिः प्रकाशधर्मकत्वाद्दीपवदित्यनुमानशरीरम् । भासमानतया साक्षाद्वा परम्परया वा धर्म्यन्तरापरोक्षावभासहेतुधर्मकत्वादिति हेतुवाचिशब्दार्थः । दीपस्य स्वधर्मभूतप्रभाऽनपेक्षप्रकाशत्ववत् ज्ञातुरपि स्वधर्मभूतज्ञाननिरपेक्षप्रकाशत्वं सिद्धमिति पक्षधर्मताबलात् स्वयम्प्रकाशत्वासिद्धिः

## गूढार्थसंग्रहः

ननु प्रकाशपदप्रवृत्तिनिमित्तरूपता (सि.सि.अं) इति व्यवस्थाऽङ्गीकारेऽपि नानुपपत्तिः । दीपादौ ज्ञाने च प्रकाशव्यवहारानुसारेणउभयानुगतप्रकाशत्वविवक्षया 'प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः' इति ग्रन्थस्य सामञ्जस्यात् । **अन्यानापि प्रकाशयति स्वप्रभयेति** । अत्र दीपस्य प्रभाद्वारा प्रकाशकत्वकथनेन 'नहि प्रदीपः परम्परासम्बन्धेन प्रकाशयति' इति (अ.सि) वाक्यं न घटते । प्राक् (४०३.पु) उक्तयुक्तेः । 'प्रदेशसंहारविसर्पाभ्यां प्रदीपवत्' (त.अ.सू.५.१६) इति सूत्रे दीपस्य सङ्कोचविकासस्वभावत्वमिव जीवस्यापि तत्स्वभावत्वं राजवार्तिकश्लोकवार्तिकयोः

## श्रुतप्रकाशिका

दृष्टान्ते साध्यान्वयं दर्शयति । नहीति । साधनान्वयं दर्शयति । अन्यानपीति । अनुमानपरत्वादपि ग्रन्थस्य श्रुत्यनुग्राहकतर्कपरत्वं युक्तम् । उत्तरत्र तथाहि श्रुतय इति वक्ष्यमाणत्वात् । पूर्वमनुमानं विवक्षितंचेत्तथाचेतिहि वक्तव्यम् । उपक्रमे चैतन्यस्वभावताहि स्वयम्प्रकाशतेति समानाधिकरणनिर्देशस्वारस्याच । पञ्चम्यर्थत्वेहि स्वारस्यं भज्यते। निगमने च चिद्रूपताहि स्वयम्प्रकाशतेत्युक्तम् । तत्र चिद्रूपशब्दो ज्ञानस्वरूपत्वपरः, नतु ज्ञानधर्मकत्वपरः अनन्तरपूर्वे ग्रन्थे चिद्रूपएव चैतन्यगुण इति ज्ञानधर्मकत्वस्य पृथगुक्तत्वात् । एवं निगमनग्रन्थे स्वयम्प्रकाशतापदसमानाधिकरणस्य चिद्रूपताशब्दस्य ज्ञानस्वरूपतापरत्वदर्शनात् पूर्वमपि स्वयम्प्रकाशतापदसमानाधिकरणस्य चैतन्यस्वभावतेति पदस्य ज्ञान स्वरूपतापरत्वस्य समुचितत्वाच * चैतन्यस्वभावतेत्यादिभाष्यं श्रुत्यनुग्राहकतर्कपरम् ॥

एवमनुग्राहकतर्कस्य श्रौतत्वेसत्यनुमानमप्यर्थसिद्धं ज्ञानधर्मकत्वज्ञानस्वरूपत्वोक्तेः । एकजातीयद्रव्ययोर्नियतधम धर्मिभावे प्रभाप्रभावद्दृष्टान्तोक्तेश्च ज्ञानस्य द्रव्यत्वे द्वयोर्ज्ञानयोर्नियमेन धर्मधर्मिभावो नोपपद्यते अन्यत्रादर्शनात् । गुणत्वे तु न ज्ञानाश्रयत्वसम्भवः गुणानामगुणत्वात्। नच द्रव्यत्वेऽपि नियताश्रयाश्रयिभावः प्रभाप्रभावतोर्दृश्यतइति वाच्यम्

## गूढार्थसङ्ग्रहः

साधितम् । अनेकान्तवादाश्रयणेन द्रव्यपर्यायार्थिकनयभेदेन जीवस्य नित्यत्वानित्यत्वेऽप्यङ्गीकृते । तन्त्रवार्तिके (२.१.-५) 'अथ शरीरपरिमितः आर्हतपक्षेणाभ्युपगम्यते' इत्युपक्रम्य 'सङ्कोचविकासावेतेषां भवत इत्यत्र न किंचित्प्रमाणं पश्यामः दीपप्रभा प्रभृतीनांतु कथंचित्प्रत्यक्षत्वादुपपद्येते । नच प्रदीपप्रभायास्सङ्कोचो भवति । शरावादिछादने शेषप्रभाविनाशात् । अनावृताहि ज्वाला आत्मसमीपे प्रभामण्डलमारब्धुं समर्था नाच्छादिता । एतेनैवच विकासोऽपि प्रत्युक्त अन्यएव ह्यवयवाः तत्र प्रचीयमाना विस्तारं जनयन्ति न तावतामेव विकासः । स्पर्शवतां च परस्परदेशप्रतिबन्धात् देशान्तरव्याप्तया विकासो घटते । जीवावयवानान्त्वमूर्तत्वात् सर्वेषां समानदेशत्वादविघातात् नित्यमणुमात्रत्वप्रसङ्गस्स्यात् । कथंचैकस्य जीवस्य पुत्तिका हस्तिशरीरपरिमितौ सङ्कोचविकासौ युज्येते' इत्याद्युक्तम् ॥

आनन्दतीर्थैश्च बृहद्भाष्ये–'स्वरूपेणापि संयोगस्स्वरूपस्यैव युज्यते । यथा रत्नस्य संयोगः तत्प्रकाशेन नित्यता ॥ रत्नस्य च प्रकाशस्य न भेदः कश्चिदिष्यते ।' इत्याद्युक्तम् । 'गुणाद्वाऽऽलोकवत्' (२.३.२६) इति सूत्रभाष्ये च (आ.ती) 'यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिः, ज्योतीरूपेणाव्याप्तिः, एवं चिद्गुणेन व्याप्तिः जीवरूपेणाव्याप्तिरितिवा' इत्युक्तम् । अत्र तत्त्वप्रकाशिका 'नन्वालोकस्य द्रव्यत्वात्कथं गुणत्वमुच्यत इति मैवम्–तद्द्रव्यत्वे मानाभावात् । रूपित्वं मानमितिचेत् ; न तेन घटादिरूपस्यैव प्रतीयमानत्वात् । नहि व्योम्नि वर्तमानस्य प्रकाशस्य रूपं गृह्यते । दीपंविहाय वृत्तिः प्रमाणमितिचेत् ; न तस्य द्रव्यत्वसाधकताविवादात् । तर्हि कुतस्तद्गुणत्वमितिचेन्न ; तदनुविधानादिनैवेति ब्रूमः। द्रव्यत्वेचालोकः कार्यमकार्यं वा । आद्येऽपि किं दीपकार्यमन्यस्य वा । नाद्यः कारणं विहाय कार्यवृत्तेरनभ्युपेतत्वात् । न द्वितीयः दीपप्रकाश इति प्रयोगानुपपत्तिप्रसङ्गात् । कारणान्तरादर्शनाच । नान्त्यः अप्रतीतिप्रसङ्गात् । प्रदीपावयवा एवालोक इतिचेन्न । तथासति प्रदीपानुविधानानुपपत्तेः । नहि जीर्णकंथा तन्तवः कतिचन विकीर्णाः कंथया सहैव गच्छन्ति । अवस्थिताएवावयवा दीपापगमे तमसा न दृश्यन्त इति न युक्तम् । विरोधात् क्रमेण चैवंसति प्रकाश बाहुल्यं स्यात् । तदैवोत्पन्नप्रदीपावयवाः सर्वतो विकीर्णा भवन्तीत्यनुभवविरुद्धमिति युक्तमुक्तमालोकगुण इति अप्राधान्यसाम्येन वा गुणत्वोक्तिरिति' इति । 'तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादि गुणैकराशिः' (वि.पु) इत्यत्र तेजसः गुणत्वमुक्तमिति चन्द्रिका ॥

### श्रीभाष्यम्

**एतदुक्तं भवति यथैकमेव तेजो द्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते । यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता । तथाऽपि देजोद्रव्यमेव न शौक्ल्यादिवद्गुणः स्वाश्रयादन्यत्रापि वर्तमानत्वाद्रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्**

### श्रुतप्रकाशिका

प्रभाया विशीर्णदीपावयवत्वादित्याशङ्क्याह—**एतदुक्तमिति** । यथैकमेव तेजो द्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते एवमात्मा चिद्रूपएव चैतन्यगुण इति यथाशब्दस्योत्तरत्रान्वयः ॥

प्रथमं प्रभाया विशीर्णावयवान्यत्वं प्रतिजानीते । **एकमेवेति** । एकं (एक)स)जातीयम् । नियतधर्मस्य कथं द्रव्यत्वमित्यत्राह–**यद्यपीति** । गुणभूता परतन्त्रभूता अयुतसिद्धविशेषणभूतेत्यर्थः । तेजो द्रव्यमेवेति प्रतिज्ञा तद्द्रव्यविशेषत्वसिद्ध्यर्थं प्रथमं द्रव्यत्वमुपपादयति । **स्वाश्रयादिति** । द्रव्यत्वमस्तु तत्रापि तेजस्त्वे किं प्रमाणमित्यत्राह—

### गूढार्थसंग्रहः

एवं दीपप्रभादृष्टान्तादरे तन्त्रवार्तिकाद्युक्तदोषाः प्रसज्यन्ते इति शङ्कायामाह—**एतदुक्तं भवतीति** । **तथाऽपि तेजोद्रव्यमेवेति** । उक्तं च 'गुणाद्वालोकवत्' इति सूत्रे (शं.भाष्ये) चैतन्यगुणव्याप्तेर्वाऽणोरपिसतः जीवस्य सकल देहव्यापिकार्यं न विरुध्यते । यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभाऽपवरकव्यापिनीसती कृत्स्नेऽपवरके कार्यं करोति तद्वत्' इति 'व्यतिरेको गन्धवत्' इति सूत्रावतरणे च 'कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत ? नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते प्रदीपप्रभावद्भवेदितिचेत् न तस्या अपि द्रव्यत्वाभ्युपगमात् । निबिडावयवंहि तेजोद्रव्यं प्रदीपः, प्रविरलावयवंतु तेजोद्रव्यमेव प्रभेति' इति ॥

अत्र 'नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते' इत्यनेन स्वाश्रयादन्यत्र वर्तमानत्वाद्गुणत्वं न सम्भवतीति उक्तं भवति । स्वाश्रयादन्यत्र वर्तमानत्वं 'व्यतिरेको गन्धवत्' इत्यनन्तरसूत्रभाष्ये (शं) गन्धस्य स्वाश्रयादन्यत्र वर्तमानत्वसाधनेन तन्मते गुणत्वसाधकं न भवतीत्यभिप्रेत्य **रूपवत्त्वाच्च** इत्युक्तम् । उत्तरसूत्रेऽपि गन्धस्य स्वाश्रयादन्यत्र वर्तमानत्वं नाभिप्रेतम्; तद्बोधकशब्दाभावात् । रूपादिवद्गन्धादेरपि स्वाश्रयादन्यत्र वृत्त्यभाव निश्चयात् अतिदूरस्थ पुष्पपरिमलमात्रस्य प्रत्यक्षत्वेऽपि तत्रापि आश्रयसम्बन्धो वर्ततएव । तेषां सूक्ष्मत्वेनान्येन्द्रियजन्यप्रत्यक्षाविषयत्वेऽपि गन्धस्य प्रत्यक्षमनुभवानुरोधादङ्गीक्रियते । उभयोर्भिन्नेन्द्रियग्राह्यत्वात् । एतत्तात्पर्येणैव रूपं परित्यज्य गन्धस्योपादानम् । अहमर्थजीवतद्धर्मभूतज्ञानयोरुभयोः प्रदीपप्रभावत् स्वप्रकाशत्वेन गन्धदृष्टान्तसङ्गतिः ॥

एतेन स्वाश्रयादन्यत्र वर्तमानस्य द्रव्यत्वसाधकताविवादोऽपि (त.प्र) न शङ्कनीयः । 'गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' (गीता.१५.८) इति गीताभाष्य (आ.ती) प्रमेयदीपे 'गन्धानिवेति गन्धवतः पुष्पाद्यवयवानित्यर्थः' इति जयतीर्थैरेव व्याख्यातत्त्वात् । 'यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति' इत्युत्तरसूत्र (आ.ती) भाष्येऽपि गन्धशब्दस्य गन्धवत्पुष्पावयवपरत्वसम्भवात् । रूपवत्त्वेनापि प्रभायाः गुणत्वविरहः निश्चीयते । अन्धकारे आकाशेऽपि दीपप्रभायाः रूपवत्त्वग्रहः सर्वानुभवसिद्धः । तत्र व्योम्नि अन्यदीयरूपवत्त्वग्रह शङ्काऽपि न सम्भवति । दिवा दीपप्रभायाः सूर्यप्रभया अभिभवेन तद्गतरूपाग्रहेऽपि व्योम्नि वर्तमानस्य द्युमणिप्रकाशस्य

## श्रीभाष्यम्

**प्रकाशवत्त्वाच्च तेजो द्रव्यमेव नार्थान्तरम्। प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषां च प्रकाशकत्वात् अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्व तच्छेषत्वनिबन्धनः। नचाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते**

## श्रुतप्रकाशिका

**प्रकाशवत्त्वादिति**। प्रकाशः तमोविरोध्याकारविशेषः औज्वल्यं। प्रकाशवत्त्वमुपपादयति। **प्रकाशवत्त्वंचेति**। स्वविषय परविषयज्ञानविरोधितमोनिरसनरूपकार्यदर्शनादित्यर्थः॥ तर्हि कथमस्यागुणत्वव्यवहारइत्यत्राह—**अस्यास्त्विति**। तुशब्दः शौक्ल्यादिवैषम्यपरः। अथ विशीर्णावयवानां प्रभात्वं प्रतिक्षिपति। **नचेति**।

## गूढार्थसंग्रहः

रूपं गृह्यतएव। 'निबिडावयवंहि तेजोद्रव्यं प्रदीपः, प्रविरलवयवं तु तेजोद्रव्यमेव प्रभेति' (शं) भाष्येनोभयोरुपादानभेदः स्फुटः। उपादानभेदेऽपि दीपप्रकाश इत्यत्र दीपप्रकाशयोरपृथक्सिद्धेः संयोगरूपाया अभ्युपगमे न किंचिद्बाधकम्। अतएव 'अप्राधान्यसाम्येन वा गुणत्वोक्तिः' इति जयतीर्थोक्तिस्सङ्गच्छते। द्रव्यभिन्नस्यैव गुणत्वेन व्यवहार इति काणादाक्षपादव्यतिरिक्तैः नाङ्गीक्रियतएव॥

**प्रकाशवत्त्वाच्चेति**। प्रपूर्वककाशधातोः ण्यन्तात् भावे घञि प्रकाशशब्दव्युत्पत्तिरत्राभिप्रेता। अत्र ज्ञानविरोधितमोनिरासकत्वं प्रकाशकत्वं विवक्षितम्। नित्यतदाश्रयत्वपदेन तदधीनसत्ताकत्वप्रतिपादनेन पारतन्त्र्यापेक्षया विशेषउक्तः। तदधीनसत्ताकत्वाभावेऽपि पारतन्त्र्यं लोके प्रसिद्धम्। रूपादिगुणानां गुण्यधीनसत्ताकत्ववत् अस्यापि आश्रयाधीनसत्ताकत्वेन गुणत्वेन व्यवहारः गन्धस्याप्यश्रयाधीनसत्ताकत्वात् तत्रापि गुणत्वेन व्यवहारः। **तच्छेषत्वेति**। दीपस्य विषयप्रकाशनार्थमारोपितस्य प्रभामन्तरा विषयप्रकाशनासम्भवेन प्रभयैव विषयप्रकाशनस्य सत्त्वेन विषयप्रकाशनमुखेन दीपोपकारकत्वं प्रभायाः वर्तत इति तच्छेषत्वम्। अत्र च 'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्' (जै.सू.३.१.२२) इति सूत्रमभिप्रेतम्॥ 'तेजोबल' इत्यत्र तेजश्शब्दः 'तेजःप्रभावे' इत्यादिकोशोक्तसामर्थ्यपरः इति स्फुटीभविष्यति॥

तन्त्रवार्तिकेऽपि आर्हतमते 'सद्भावोऽवयवानां च तथा तेषामनन्तता।' इत्युपक्रम्य 'तथासति सङ्कोचविकासावेतेषां भवत इत्यत्र न किंचित्प्रमाणं पश्यामः।' इत्यत्र जीवावयवानां सङ्कोचविकाससद्भावे प्रमाणाभाव उक्तः। तदनन्तरं (५.१६) तत्त्वार्थाधिगमसूत्रोक्तप्रदीपदृष्टान्ते तु दीपप्रभाप्रभृतीनां तु कथंचित्प्रत्यक्षत्वादुपपद्येते' इत्यनेन सङ्कोचविकासौ प्रत्यक्षानुरोधेन सम्भवतः त्युक्तम्। एतावतैवार्हतमतनिराससम्भवात्। 'नच प्रदीपप्रभायास्सङ्कोचो भवति। शरावादिछादने शेषप्रभाविनाशात्। अनावृताहि ज्वाला आत्मसमीपे प्रभामण्डलमारब्धुं समर्था नाच्छादिता। एतेनैव च विकासोऽपि प्रत्युक्तः। अन्यएव ह्यवयवास्तत्र प्रचीयमानाः विस्तारं जनयन्ति। न तावतामेव विकासः।' इत्युत्तरग्रन्थस्तु आर्हतमतमात्राभिप्रायकः। तन्मते दीपावयवानामेव प्रभात्वाङ्गीकारेण अवयवानामनन्तत्वेन अनन्तावयवैरेवोपपत्तौ विकासस्य व्यर्थत्वात्। विकासाभावे सङ्कोचकल्पनाऽपि विफला। दीपावयवोत्पत्तिविनाशाभ्यामेष तदुपपत्तिसम्भवात्। स्पर्शवतां च परस्परदेशप्रतिबन्धात् देशान्तरव्याप्त्या विकासो घटते। दीपावयवानांत्वमूर्तत्वात् सर्वेषां समानदेशत्वाविघातात् नित्यमणुमात्रत्वप्रसङ्गस्स्यात्। इत्युत्तरग्रन्थे अवयवानामेव विकासो न घटत इत्युक्तम्। ननु दीपावयवव्यतिरिक्तप्रभाद्रव्यस्य। एतमर्थं सूचयन् आर्हतमतरीत्या प्रभादृष्टान्तो न घटत इत्याह— **नचाश्रयावयवाएव विशीर्णाः इत्यादिना**॥

श्रीभाष्यम्

**मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गात्।**

श्रुतप्रकाशिका

कुतइत्यत्राह—**मणीति**। प्रतिक्षणं विनाशप्रसङ्गादित्यर्थः। तदभ्युपगमे मण्याद्यनुपलम्भप्रसङ्गपरिहाराय प्रतिक्षणोत्पत्तिरभ्युपेत्या। प्रतिक्षणोत्पत्तिविनाशाभ्युपगमश्चानुपपन्नः दीपस्येवोत्पत्तिविनाशसामग्रयनुवृत्त्यभावात्। तदभावेऽपि तेजस्त्वसामान्याद्दीपइव प्रत्यभिज्ञाबाधेन प्रतिक्षणं विनाशादिकल्पने सत्त्वद्रव्यत्वादिभिर्घटादावपि क्षणिकत्वप्रसङ्गइति भावः। रत्नेषु क्षणिकत्वं रत्नशास्त्रविरुद्धम्। कालविशेषे तदुत्पत्त्याद्यवगतेः आदित्यादिषु च क्षणिकत्वं श्रुतिविरुद्धम् **'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' 'नाग्नीषोमौ न सूर्यः'** इति कालविशेषे तदुत्पत्तिविनाशावगतेः। नच सूर्या-

गूढार्थसंग्रहः

**मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गादिति**। अत्र प्रभृतिशब्देन जीवोऽपि संगृहीतः। यद्यपि उदाहृतसूत्रे राजवार्तिके 'सावयवत्वाद्विशरणप्रसङ्ग इतिचेन्नामूर्तस्वभावापरित्यागात्। (४) स्यान्मतं प्रदीपादिवत् यदि प्रदेशसंहारविसर्पवानात्मा, अतः संसारिणः घटादिवत् छेदभेदादिभिः प्रदेशविशरणप्रसङ्गः। ततश्च शून्यता प्राप्नोतीति तन्न। किंकारणं अमूर्तस्वभावापरित्यागात्। बन्धं प्रत्येकत्वेसत्यपि लक्षणभेदादन्यत्वमापाद्यमानः नामूर्तस्वभावं जहातीति घटादिवत् न प्रदेशविशरणमस्ति—किंच अनेकान्तात्। ५. योह्येकान्तेन संहारविसर्पवानेवात्मा सावयवश्चेति ब्रूयात् तं प्रत्ययमुपालम्भो घटामुपेयात्। यस्यत्वनादिपारिणामिकचैतन्यजीवद्रव्योपयोगादि द्रव्यार्थादेशात् स्यान्न प्रदेशसंहारविसर्पवान्। द्रव्यार्थादेशाच्च स्यान्निरवयवः। प्रतिनियतसूक्ष्मबादरशरीरापेक्षनिर्माणनामोदयपर्यायार्थादेशात् स्यात् प्रदेशसंहारविसर्पवान् अनादिकर्मबन्धपर्यायार्थादेशाच्च स्यात्सावयवः तंप्रत्यनुपालम्भः' इत्युक्तम्;

तथाऽपि प्राक् राजवार्तिके 'एकं द्रव्यमनन्तपर्यायम्' (१.४) इति वचनात् अष्टसाहस्रयां '**स्यादेकं सद्द्रव्य नयापेक्षया**' इत्यकलङ्कवाक्यं विवृण्वानेन विद्यानन्दिना 'सर्वमेकं जीवादीनां षण्णां तद्भेदप्रभेदानांचानन्तानां तत्पर्यायत्वात् एकं द्रव्यमनन्तपर्यायमिति सङ्क्षेपतस्तत्त्वोपदेशात्' इत्युक्तया जीवस्यापि पर्यायत्वेन द्रव्यार्थिकनयेन **जीवस्य** नित्यता न सम्भवति। 'नाणुः' इति सूत्रे (श्लो.वा) 'सर्वद्रव्यसाधारणसद्द्रव्यरूपेण नित्यत्वस्योक्तावपि जीवरूपेण नित्यत्वं न सम्भवति।' 'अन्यत्र केवलसंयुक्तज्ञाने' इति सूत्रे ज्ञानस्य, तत्पूर्वसूत्रे जीवस्य मुक्तावनाशस्य च प्रतिपादनमसङ्गतमेव स्यात्। पञ्चविधशरीरेषु कार्मणशरीरस्येन्द्रियजन्यप्रत्यक्षाविषयस्याङ्गीकारेण तदतिरिक्तजीवाङ्गीकारे मानाभावेन 'प्रदेशसंहार' इति सूत्रे लोकाकाशतुल्यप्रदेशस्यापि उपात्तसूक्ष्मशरीरमधितिष्ठतः शुष्कचर्मवत् सङ्कोचनं प्रदेशसंहारः। बादरशरीरमधितिष्ठतो जले तैलवद्विसर्पणं विसर्पः' इत्याद्युक्तिरपि न घटते। अधिकं 'नैकस्मिन्नसम्भवात्' इति सूत्र भाष्यविवरणे उपपादयिष्यते॥

सिद्धान्ते दीपप्रभायाः प्रत्यक्षानुरोधेन दीपातिरेकेण सङ्कोचविकासौ 'दीपप्रभाप्रभृतीनांतु कथंचित्प्रत्यक्षत्वादुपपद्येते' इति तन्त्रवार्तिकएवोक्तौ। अत्र प्रभृतिशब्देन मणिद्युमणिप्रभासङ्ग्रहः। तेनाश्रयावयवानां विशरणपक्ष एव तन्नाशप्रसङ्गः तत्राभिप्रेतः। शरावादिछादने शेषप्रभाविनाशदर्शनंतु परिणामवादे निरन्वयविनाशाभावेन सङ्कोचरूपपरिणामविषयकतयैव उपपद्यते॥

## श्रुतप्रकाशिका

दिसृष्टिप्रळयपरवाक्यानां सन्तत्युपक्रमोच्छेदपरत्वं वाच्यम् ; रत्नसूर्यादिमात्रक्षणिकत्वे प्रमाणाभावात् तेजस्त्वं(हि)तु) तेजःपरमाणूनिच्छद्भिः न हेतुतया वाच्यम् ; तेजःपरमाणुषु व्यभिचारात् सत्त्वादिभिः क्षणिकत्वे जगत्क्षणिकत्वं स्यादित्युक्तम्॥

* **ननु** कर्पूरादीनां दूरोपलब्धगन्धानां गन्धाश्रयभूतावयवविशरणस्य अवर्जनीयत्वादुत्तरकालोपलम्भाच्च प्रतिक्षणोत्पत्तिविनाशावभ्युपगन्तव्यौ तद्वन्मण्यादिष्वपीति । नैवम् । समुद्गकसम्पुटादिनिवातदेशनिहित दृढपिहितघनसारादेः दूरे गन्धोपलम्भाभावादाश्रयावयवविशरणाभावेन यथापूर्वं स्थित्युपलम्भोपपत्तेर्नप्रतिक्षणोत्पत्तिविनाशौ कल्प्यौ । सवातदेशस्थघनसारादीनां दूरोपलभ्यमानगन्धानामल्पावयवविशरणमस्त्येव । अवयविनि च सूक्ष्मपरिक्षयो विद्यतएव तुल्या परीक्षणेऽप्यल्पाल्पपरिमाणापकर्षदर्शनात् । अतः प्रतिक्षणमवयवान्तरोपनिपातविशेषहेतुकोत्पत्तिविनाशौ न कल्प्यौ । कल्पनेऽपि परितः केषांचिदवयवानामुपलभ्यमानगन्धाश्रयत्वेनो * भयवादिसम्प्रतिपन्नानामेव स्थितिमात्रं कल्प्यं तावता गन्धोपलब्ध्युपपत्तेः, अनेकधर्मितदुत्पत्तिविनाशापरिदृष्टतदुभयसामग्रीकल्पने गौरवाच्च ॥

**यद्वा** घ्राणस्यापि चक्षुष इव रश्मिद्वारा सम्बन्धात् दूरस्थपदार्थगतगन्धग्राहित्वं कल्प्यम् गौरवाभावात् नकेवलं कल्प्यं रश्मिमत्त्वम् । उक्तं च भारते—

**नह्यात्मा शक्यते द्रष्टुमिन्द्रियैःकामगोचरैः । प्रवर्तमानैरनयैर्दुर्धर्षैरकृतात्मभिः ॥**

**तेषां तु मनसा रश्मीन्यदा सम्यङ्नियच्छति । तदा प्रकाशतेह्यात्मा दीपोदीप्यन्नि(वा(रा)कृतिः ॥**

इति । इन्द्रियाणां पञ्चीकृतभूताप्यायनैर्वायुतेजःप्रभृतिभिस्सम्बन्धाद्रश्मिमत्त्वंचोपपद्यते ॥

**नन्वग्न्यातप(तप्तस)सम्बन्धात्स)लिलशिलादेरौष्ण्यतारतम्योपलम्भोऽग्न्यातपाद्यवयवसङ्क्रान्तिंविना नोपपद्यते——सलिलादेस्स्वतऔष्ण्याभावान्निराश्रयधर्मसङ्क्रमणायोगाच्च औष्ण्याश्रयभूताग्न्यातपावयवस्य सङ्क्रान्तिरभ्युपेत्या । एवमवयवसङ्क्रान्तिश्च विशरणेनविना नोपपद्यते । गत्वराणां रश्मीनां चरणतलानामिव कथं विशरणेनविना क्वचित्सङ्क्रमः ? अवयव तारतम्याच्चौष्ण्यतारतम्यमिति उच्यते—अग्नितप्तेष्वग्न्यवयवनसङ्क्रान्त्यैवौष्ण्योपलम्भः । सलिलादौ सङ्क्रामन्तोऽग्न्यवयवा एव प्रभेति न वाच्यम् ; दीपप्रभयाहोरात्रसं(पृक्ते)वृते)पि सलिलभूतलादावौष्ण्यानुपलम्भात्, आतपतप्तेष्वपि नकिरण विशरणादवयवसङ्क्रमः तुहिनकणानामिव रविकिरणोपात्तमुक्तानामग्न्यवयवानां सङ्क्रमणादुष्णोपलम्भोपपत्तेः ॥

**नचात्र** कल्पकमन्वेष्टव्यम् । नापि कल्पनागौरवं प्रसजति आगमसिद्धत्वादस्यार्थस्य । तथाहि मात्स्ये पुराणे कथ्यते—

**वसन्ते ग्रीष्मकेरश्मिशतैस्संतपति त्रिभिः । शरद्यपि च वर्षासु चतुर्भिस्संप्रवर्षति ॥**

**हेमन्ते शिशिरेचैव हिममुत्सृजति त्रिभिः । ... ... ...**

इति । यथा वर्षासु हेमन्ते च रविकिरणमुक्तास्सलिलकणास्तुहिनकणाश्च न विशीर्णकिरणावयवाः किंतु किरणोपात्तमुक्ता आप्यावयवाएव । एवं ग्रीष्मे च रविकिरणजन्यं सन्तापनं न तद्विशीर्णावयवकार्यम् । किंतु तदुपात्तमुक्ताग्न्यवयवकार्यमिति प्रतीयते । तथा '**अग्निंवावादित्यस्सायम्प्रविशति**' '**उद्यन्तं वावादित्यमग्निरनु समारोहति**' इति श्रूयते । अत्रचादित्यतिरोधानदर्शनावच्छिन्नकालविशेषपरौ सायंप्रातश्शब्दौ कालस्य सायंभावप्रातर्भावौ रविविप्रकृष्टसन्निकृष्टतत्तद्देश(विशेष)वर्तिपुरुषापेक्षया सर्वदोपपद्येते । इत्ययमर्थो भुवनकोशे स्फुटतरः ॥

## श्रीभाष्यम्

**दीपेऽप्यवयविप्रतिपत्तिः कदाचिदपि न स्यात् नहि विशरणस्वभावावयवा दीपाश्चतुरङ्गुळ मात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततःपश्चाद्युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा विशीर्णाः**

## श्रुतप्रकाशिका

**ततश्च** प्रविशतीत्यनेनाग्नावादित्यस्य व्याप्तिरुच्यमाना दूरस्थितस्य स्वरूपेण नोपपन्नेति किरणद्वारा भवति । अग्निरनुसमारोहतीत्यनेन अग्न्यवयवानामादित्येनोपादीयमानत्वमुच्यते । नचाग्न्यधिष्ठातृदेवतारोहणपरमिदं वाक्यम् । '**तस्माद्धूमएवाग्नेर्दिवाददृशे**' इत्यनन्तरवाक्येनाग्नेरादित्योपसर्पणनिमित्ततेजोमान्द्यकथनात् अन्यथा सायम्प्रातस्समयोः सर्वदा सम्भवेनाग्नेरादित्ये सर्वदारोहणमग्नावादित्यस्य सर्वदाऽवरोहणं च प्रसजेत् । ततश्चाग्न्यादित्ययोस्स्थानविनिमयेन सर्वदा स्थितिरुक्तास्यात् साच प्रमाणान्तरविरुद्धा ॥

अत आदित्यस्याग्नौ किरणद्वारा व्याप्तिः किरणैरग्न्यवयवोपादानं च वाक्यद्वयोक्तम् । अतश्चोपात्ताग्न्यवयववर्षेण तापनं मात्स्योक्तं उत्सर्जनप्रकरणस्वारस्यात् । अतस्तुहिनकणानामिव रविकिरणमुक्तानामाग्नेयावयवानां विशीर्णकिरणावयवत्वाभावाद्रविकिरणेषु तन्मण्डले प्रतिक्षणविनाशोत्पत्तिक्लृप्तिरनुपपन्ना । अतो न विशीर्णावयवा प्रभा,

दूषणान्तरमाह—**दीपेऽपीति** । अवयविप्रतिपत्त्यनुपपत्तिमुपपादयति । **नहीति** । दीपः किं विशरणस्वभावः ? उत स्थिरस्वभावः विशरणस्वभावत्वे पिण्डीभावो मूर्तद्रव्यप्रतिबन्धनिबन्धनस्स्यात् । स्थिरस्वभावत्वे विशरणं मूर्तद्रव्यप्रतिहतिहेतुकं स्यात् । अत्रोभयमनुपलम्भपराहतम् । विशरणस्वभावत्वे पिण्डीभावो वायुनोपपद्यत इतिचेत्तर्हिनिवाते पिण्डीभावो न स्यात्, स्तिमितसूक्ष्मवायुना पिण्डीभावश्चेद्विशरणं न स्यात् तच्च सूक्ष्मवायुनाचेत् एकस्य विरुद्धस्वभावद्वयायोगात् पिण्डीभावविशरणहेतुभूतवायुद्वयमभ्युपेतव्यम् । तयोर्मिथः प्रतिघातुकत्वादन्यतरविगमे पिण्डीभावएव वा विशरणमेव वा स्यात् । तत्परिहाराय परस्परान्तरितविरुद्धस्वभाववायुद्वयपरम्परया सन्निधिविगमपरिकल्पने गौरवंस्यात् । तत्परिकल्पनेऽपि तिर्यग्गत्वराणां वाय्ववयवानां नोदनमात्रहेतूनां परितः प्रतिबन्धकत्वायोगात्पिण्डीभावो न स्यात् ॥

**ननु** प्लोषणद्रवीभूतपार्थिवावयवसंदंशात्पिण्डीभावः । ततस्तदवयवगतस्निग्धत्वापगमे(न)संदंशकत्वाभावादग्न्यवयवविशरणमित्यत्राह—**नहिविशरणेति** । यद्यग्न्यवयवा उद्गमनस्वभावाः, तर्हि विशरणे तिर्यग्गतिर्नस्यात् । यदि ते तिर्यग्गतिस्वभावाः तर्हि प्रथममूर्ध्वगतिर्नस्यात् । एकजातीयद्रव्यस्योपाधिनाविना विरुद्धस्वभावत्वायोगात् । उपाधिश्च न दृश्यते दीपप्रभयोर्भिन्नावयवित्वेतु विरुद्धस्वभावत्वमुपपद्यते किंच चतुरङ्गुळादिपरि(माण)मिति)तारतम्यनियामकोऽपि नास्ति । विशरणे च पार्श्वेऽपि विशरणं सम्भवति समन्ततो युगपद्विशरणे नियामकाभावादित्यभिप्रायः किंच विशीर्णानांचावयवानां पांसूनामिव ऋजुप्रसरणनियमने च न हेतुः प्रसरणस्यार्जवनियमश्च तिरोधायकं पदार्थंप्रति ऋजुदेश एव छायायोगादवगम्यते छायावैपुल्यं तु निवार्यमाणरश्मीनां पृथ्वग्रत्वकृतं नाऽनार्जवकृतम् । छायाकौटिल्यंतु तिरोधायककौटिल्यकृतम् । नतु प्र(सरणा)सारा)नार्जवकृतम् । तच्च ऋजुप्रसारित्वसाधकं विशीर्णावयवत्वे रेणूनामिव पवनानुत्सार्यमाणत्वं च न घटते । प्राचीनजालकनिष्क्रान्ताहि प्रभा दक्षिणानिलेन नोत्सार्यते । अन्यथा रजसामपि तत्रानोदनं प्रसजेत् । जालकनिष्क्रान्तप्रभायाश्च पवनानुत्सारितत्वं ततः परस्मिन् भित्त्यादौ प्रभासंसर्गादवगम्यते । अतो धनुष्यातताया मौर्व्याइव प्रभाया न विशीर्णावयवत्वमिति ॥

## श्रीभाष्यम्

**प्रचरन्तीति शक्यं वक्तुम्। अतस्सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्चावगम्यते।**

## श्रुतप्रकाशिका

ततः किमित्यत्राह—**अतस्सप्रभाकाएव दीपाः प्रतिक्षणमुत्पन्ना इति।** तेजस्त्वेन मण्यादिविनाशाभ्युपगमेऽतिप्रसङ्गात्। विशरणस्वीकारे पिण्डीभावयुगपद्दिक्ष्वाग्विशरणऋजुप्रसरणाद्यनेकानियमव्यवस्थापकाभावाद्यथादृष्टाभ्युपगमे विरोधाभावाच्च सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इत्यर्थः। तर्हि कथं प्रतिक्षणोत्पत्तिर्विना(शोत्पत्तिरि)शावि)त्यपेक्षायां यथा मण्यादीनां प्रतिक्षणविनाशो न प्रसजति। तथा दीपक्षणिकत्वे हेतुद्वयमाह—**पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्चेति।** पृथक्स्थितदण्डचक्रादिव्यावृत्त्यर्थं पुष्कलशब्दः। वर्त्यवयवाग्निसंयोगस्य दीपसामग्रीत्वं प्रथम वर्त्यवयवाग्निसंयोगे दृष्टम्॥

**नच** प्रथमावयवाग्निसंयोगस्यैव कारणत्वं शङ्कनीयं चरममध्यावयवयोरप्याग्निसंयोगेसति दीपोत्पत्तिदर्शनात् अतः प्रत्यवयवमग्निसंयोगात्पुष्कलकारणपरम्परा दृष्टेति प्रत्यवयवमग्निसंयोगाद्दीप उत्पद्यते एव तत्र प्रतिक्षणमुत्पत्तौ सत्यां युगपदनेकदीपानुपलम्भाद्विनाशोऽपि सिद्धः प्रतिक्षणविनाशस्य पृथगनुमापकमुच्यते। तद्विनाशे विनाशाच्चेति। वर्त्यवयवविनाशस्य दीपविनाशसामग्रीत्वं चरमवर्त्यवयवविनाशे दृष्टम्। एवं विनाशकारणानुवृत्तिदर्शनात् प्रत्यवयवविनाशं दीपो विनश्यत्येव। एवमुत्पत्तिविनाशसामग्र्यनुवृत्तिभ्यां प्रतिक्षणं तावनुमीयेते इत्यर्थः। प्रभा विशीर्णावयवा नचेद्दीपसमीपे

## गूढार्थसंग्रहः

यद्यपि तन्त्रवार्तिके 'अणुजीववादखण्डनं कृतं तथाऽपि सर्वज्ञनिराकरणपक्षाभिप्रायकं तत्। तत्पक्षे सर्वगतत्व प्रतिपादकश्रुतीनां जीवस्य सर्वगतत्वाभावे अप्रामाण्यमेव स्यात्॥

यत्तु 'श्यामकतण्डुलादिमात्रप्रदर्शनमुपनिषत्सु तद्वाक्यान्तरप्रदर्शितविभुत्वस्यैव सतः, सूक्ष्मग्रहणगोचरत्वात्' इति तन्त्रवार्तिके उक्तम्। अत्र 'एष मआत्मान्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामकतण्डुलाद्वा' (छा. ३.१४.३) इति श्रुतिर्विवक्षिता। इयं च श्रुतिः परमात्मपरेति सर्वत्र प्रसिद्ध्याधिकरणे व्यक्तम्। जीवब्रह्माभेद विवक्षया एतच्छ्रुत्युपादानमिति कल्पनमपि न सम्भवति। सर्वगतत्वे व्योमवत् सर्वशरीरेष्वेकएवात्मा प्राप्नोतीति एकात्म वादमाशङ्क्य तस्य विस्तरेण दूषणपूर्वकं 'चैतन्याद्यात्मकत्वाद्यविभागाच्च उपनिषत्सु ऐकात्म्यव्यवहारः' इति तदनन्तरं तन्त्रवार्तिकएवोक्तेः। 'यत्तु श्यामकतण्डुलादि' इति तन्त्रवार्तिकवाक्येन सर्वज्ञनिराकरणपक्षाभिप्रायकत्वं अणुजीववाद खण्डनस्य निश्चीयते। परमात्माभ्युपगमपक्षे तस्याः श्रुतेः परमात्मविषयकत्वेन जीवस्याणुत्वे बाधकविरहेण एतद्ग्रन्थासङ्गतिस्स्यात्। अतः अणुजीववादखण्डनं परमात्मानभ्युपगमपक्षाभिप्रायकमेव॥

प्राक् उदाहृतग्रहैकत्वाधिकरणवार्तिके परमात्माभ्युपगमस्य व्याकरणाधिकरणे परमात्मप्राप्त्यवस्थायाश्च कथनेन परमात्माभ्युपगमपक्षस्य भट्टपादसम्मतत्वानिर्धारणेन सर्वगतत्वप्रतिपादकश्रुत्यादीनां तद्विषयकत्वसम्भवेन तच्छ्रुतीनां प्रामाण्यसम्भवात्। परमात्माभ्युपगमपक्षे च दीपप्रभादृष्टान्तेन अणुजीववादसम्भवात्। अतः आर्हतमतदूषणमेव तन्त्रवार्तिके विवक्षितम्। ननु 'दीपप्रभाप्रभृतीनां तु प्रत्यक्षत्वादुपपद्येते' इति स्वीयवाक्यदूषणम्। इति सिद्धम्। दीपानां विशरण स्वभावावयवत्वमनुभवविरुद्धमित्युदाहृततत्त्वप्रकाशिकायां स्पष्टम्॥

### श्रीभाष्यम्

**प्रभायास्स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यम् इत्याद्युपलब्धिव्यवस्थाप्यमग्न्यादीनामौष्ण्यादिवत्। एवमात्मा चिद्रूपएव चैतन्यगुणक इति।**

### श्रुतप्रकाशिका

तस्या औष्ण्याधिक्यादिकं कथं विशरणपक्षेह्यवयवबाहुल्यवैरल्याभ्यामौष्ण्याधिक्यमान्द्यादिकमुपपद्यत इत्यत्राह—**प्रभाया इति**। प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादीत्यादिशब्देनाश्रयाविप्रकृष्टदेशे प्रकाशमान्द्यमौष्ण्यमान्द्यं च विवक्षितम्। उपलब्धिव्यवस्थाप्यत्वे दृष्टान्तमाह—**अग्न्यादीनामिति**। उक्तं दार्ष्टान्तिकेऽतिदिशति। **एवमिति। चिद्रूपएवेति**। रूपशब्दो

### गूढार्थसंग्रहः

**स्वाश्रयसमीपे प्रकाशाधिक्यमिति**। अनावृतायाआपि ज्वालायाः स्वाश्रयसमीपएव प्रभामण्डलसम्पादकत्वं तन्त्रवार्तिकेऽप्यङ्गीकृतम्। शरावादिना छादितायाः प्रभामण्डलजनकत्वं नास्तीति नैव वाच्यम्; स्वाश्रयसमीपएव प्रभामण्डलजनकत्वं, नत्वसमीपे इति अनुभवानुरोधात् खलु अङ्गीकरणीयम्। शरावादिछादनदशायां शरावादेःप्रभायास्तद्देशसम्बन्धप्रतिबन्धकत्वेन प्रभामण्डलस्य स्थित्यसम्भवेनैव अभावः अनुभवसिद्धः शरावादिछादनात्पूर्वं प्रभाजनकत्वमभ्युपगन्तव्यम्, छादने च प्रभामण्डलनाशकत्वमभ्युपेत्यं तैरपि। भट्टपादैरपि परिणामवादाश्रयणेन उत्पत्तिविनाशयोः तत्पक्षे विकाससङ्कोचरूपतया प्रत्यक्षसिद्धसङ्कोचविकासाभ्युपगमेनैव अवयवविशरणमन्तराऽप्यनुभवोपपत्तौ प्रभायाः दीपाद्यतिरेकः दीपाद्यवयवरूपत्वाभावश्च युक्तः इति, **उपलब्धिव्यवस्थाप्यमिति** अनेन बोधितम्। दीपरत्नादिप्रभायाः दीपरत्नादिव्यतिरेकस्यैव अनुभवसिद्धतया दीपरत्नाद्यभेदो न घटते। भेदाभेदवादस्तु पूर्वमेव पर्यालोचित इति भावः॥

**एवमात्मा चिद्रूपएव चैतन्यगुणकइति**। दीपस्याणुभूतस्य विकासयोग्यप्रभावत्त्वमिव अणुभूतस्याहमर्थजीवस्य विकासयोग्यधर्मभूतज्ञानगुणकत्वमित्युपपादनेन 'गुणाद्वाऽऽलोकवत्' इति सूत्रे ज्ञानस्य ज्ञानाश्रयत्वं सूत्रकृतो विवक्षितमिति बोधितम्। प्रभाप्रभावतोः स्वप्रकाशत्वं यथा तथा ज्ञानतद्वतोः। एतेन 'नात्मा ज्ञानाश्रयः ज्ञानत्वात् विषयज्ञानवत्'। (सि.सि.अं) इत्युक्तिः दीपादिकं न प्रकाशाश्रयः प्रकाशत्वात् प्रभात्मकप्रकाशवत् इत्येतत्तुल्येति बोधितम्। 'अनुपादानोपादेयद्रव्ययोः आश्रयाश्रयिभावे संयोगो निबन्धनं दृष्टम्। नच तव द्रव्याभिमतज्ञानात्मनोः संयोगो युज्यते अनवयवत्वेन अपरिच्छिन्नज्ञानसंयोगव्याप्तावात्मनोऽनणुत्वप्रसङ्गात्। ज्ञानस्य सावयवत्वे च नित्यत्वोपगमविरोधः (सि.सि.अं) इत्युक्तिरप्यनुपादेया। अनवयवानां परमाणूनां नैयायिकैः, अनवयवानां पुरुषाणां साङ्ख्यैश्च संयोगाभ्युपगमात्। ज्ञानस्य परिणामित्वेऽपि अवस्थातद्वतोर्भेदेन धर्मिणो नित्यत्वे न विरोधइत्युत्तरत्र स्फुटीभविष्यति॥

एवम् 'अपि च आत्माऽनुपादेयत्वेसति ज्ञानद्रव्यस्य नियततद्धर्मत्वानुपपत्तिः आत्माऽन्तरवत्। नच प्रभायाः दीपोपायत्वे तदतिवृत्त्ययोगात् अतदुपादेयत्वेऽपि तद्धर्मनियमो दृष्ट इति वाच्यम्; दीपसम्बन्धसहभावनियमेऽपि तस्यास्तद्धर्मत्वासिद्धेः' (सि.सि.अं) इत्युक्तिरपि अनुपादेया। प्रकाशवान् दीपः प्रकाशवान् द्युमणिः इति प्रतीत्यैव दीपसम्बन्धसहभावनियमेन अनुभवानुरोधेनैव नियतधर्मधर्मिभावस्य अवश्याभ्युपेयत्वात्। प्रभायास्सङ्कोचोऽपि दीपपरिमाणानतिविशेषेण स्थितिः, तद्वत् सुषुप्तौ धर्मभूतज्ञानस्य जीवपरिमाणविशेषेण ज्ञानस्य स्थितिः। कर्मबद्धस्य कर्मणा ज्ञानस्य सङ्कोचेन विषयसम्बन्धार्थं इन्द्रियादिद्वारापेक्षा इति न सङ्कोचाद्यनुपपत्तिरित्युत्तरत्र स्फुटीभविष्यति॥

## गूढार्थसंग्रहः

'अपृथक्सिद्धिश्चासिद्धा संविदहमित्यप्रतीतेः' (सि.सि.अं) इत्युक्तिरपि न घटते । संविदहमित्यत्र संवित् किं घटादिप्रत्यक्षकाल तादृशप्रत्यक्षरूपा आहोस्विदन्या वा । घटादिप्रत्यक्षकाले 'घटसंवेदनवानहम्' इति रूपी घटइति प्रतीतिवदुपपद्यते । 'शुक्लो घटः' इति प्रतीतिवत् 'संविदहम्' इति प्रतीतिरपि नापादयितुं शक्यते । निष्कर्षकानिष्कर्षकभेदेन सर्वव्यवहारसामञ्जस्यस्यव्यासार्यैरेव उपपादयिष्यमाणत्वात् चिदात्मरूपसंविदः प्रतीतिरपि नापादतार्हा स्वयम्प्रकाशत्वरूपचित्त्वस्याप्रत्यक्षत्वात् ॥

एवं 'परस्यापि प्रकाशायुतसिद्धज्ञानवृत्तिभेदसम्प्रतिपत्तेः। परंतु स्वतन्त्रनित्यप्रकाशाविवेकादेव तदयुतसिद्ध्युपपत्तौ तस्य पृथक्प्रकाशगुणत्वकल्पनागौरवमधिकम् । नचान्याय्योऽपि यथाऽनुभवमर्थः अभ्युपेयः, येन प्रकाशस्यैव स्वतः निरुक्तभेदो अवस्थाप्येत अतिप्रसङ्गोहि स्यात् । एवमुभयसम्प्रतिपन्नस्य स्वावसितावभासस्वभावस्याप्यात्मचैतन्यस्यैव विषयाञ्जनेन तदवभासत्वोपपत्तौ अतिरिक्तविषयसंविदभ्युपगमे गौरवात् । 'तमेव भान्तमनुभाति सर्वम्' इत्यादिविरोधाच्च । विषयसंविदमपि भान्तीमनुभानेन तमेवेत्यवधारणासामञ्जस्यात् । अतएव प्राथमिकानुपजातविरोधावधारण विरोधात् 'तस्य भासा सर्वमिदं विभाति' इति न तद्धर्मभूतज्ञानेनेत्येवंपरम् । किंत्ववधारणस्थितये विकल्पमात्रम् ।' (सि.सि.अं) इत्युक्तिरपि न घटते । आत्मचैतन्यमुभयाभ्युपगतं किमिति विवेचनीयम् । सविशेषमस्मन्मते । निर्विशेषं भवन्मते । सविशेषात्मवादे दीपप्रभादिदृष्टान्तसामञ्जस्यम् । निर्विशेषात्मवादे निर्विशेषवस्तुनएवाभावात् दृष्टान्तोनास्त्येव सविशेषदृष्टान्ते च समानसत्ताकएव सम्बन्धः न विषमसत्ताकः इति सोऽपि न घटते । निर्विशेषस्याप्रामाणिकतायाः पूर्वमेवोपपादनेन तस्यावभासकत्वोक्तिरपि ततएवासिद्धा ॥

किंच वृत्तिविरहदशायां विषयभानं न सम्भवतीति पूर्वमेव निरूपितम् । वृत्त्यपेक्षत्वे विषयभानस्य तमेवेत्यवधारणस्य भवन्मतेऽप्यसङ्गतिः । विषयभानार्थम् इन्द्रियादिद्वारकवृत्त्यपेक्षायां ततएव विषयभानोपपत्तौ निर्विशेषचित् शशविषाणतुल्यैवेति भट्टपादादिसिद्धान्तएव साधुस्स्यात् । बौद्धोक्तयुक्तिभिः अर्थापह्नवे स्वप्रकाशानभ्युपगमेऽपि तदुक्तयुक्तिभिः उपपत्तिः सम्भवतीति विषयावभासकतया भवत्सम्मतनिर्विशेषचितोऽपि सिद्धिर्नसम्भवति इत्यादिकं पूर्वमेव निरूपितम् । **एवमात्मा चिद्रूपएव चैतन्यगुणकः** इत्यत्र एवमित्यनेन 'गुणाद्वाऽऽलोकवत्' इति सूत्रार्थं प्रदर्श्य 'चैतन्यगुणकः' इत्यत्र चैतन्यपदप्रयोगेण 'चैतन्यस्वभावताहि' इत्यत्रापि चैतन्यपदं गुणपरमिति प्रतीयते । अत्र गुणपदोपादानंतु 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्' इति सूत्रे गुणपदं 'गुणाद्वाऽऽलोकवत्' इति सूत्रोक्तगुणशब्दसमानार्थकम् इति बोधनाय । तेन 'अविद्याविलसितम् अब्रह्मस्वरूपत्वमात्मनः' इति प्रतिपादयितव्यम् । वक्ष्यतिचैतदविरोधलक्षणे जीवप्रक्रियायां सूत्रकारः 'तद्गुणसारत्वात्' इत्यादिना, इति प्राक् (४४७.पु) उदाहृतपञ्चपादिकोक्तिः अनुपादेयेति बोधितम् ॥

'गुणाद्वाऽऽलोकवत्' 'तद्गुणसारत्वात्' इत्यत्र गुणशब्दद्वयम् एकार्थकमिति स्वरसतःप्रतीयते । तत्र प्रथम सूत्रे आलोकदृष्टान्तेन ज्ञानस्य द्रव्यत्वबोधनपूर्वकं तद्द्वारा अणोर्जीवस्य व्याप्तिः प्रतिपादिता । द्वितीयसूत्रे प्राज्ञदृष्टान्तेन जीवस्य ज्ञानवत्त्वेन तच्छब्दव्यपदेशः । परैः (शं) 'गुणाद्वाऽऽलोकवत्' इति सूत्रे चैतन्यगुणव्याप्तेर्वा अणोरपि स्वतः इति । 'पृथगुपदेशात्' इत्यत्र 'प्रज्ञया शरीरं समारुह्य' (कौ.३.१) इति च आत्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापिता गम्यते । इति व्याख्याय 'तद्गुणसारत्वात्' इति सूत्रे गुणस्य गुणिदेशमतिक्रम्य वृत्तिर्न घटत इति । यदि चैतन्यं जीवस्य समस्तशरीरं व्याप्नुयात् नाणुर्जीवः स्यात् । चैतन्यमेवहि अस्य स्वरू-

## श्रीभाष्यम्

**चिद्रूपताहि स्वयम्प्रकाशता।**

## श्रुतप्रकाशिका

धर्मिस्वरूपपरः। ततः किं स्वयम्प्रकाशत्वस्येत्यपेक्षायां चिद्रूपत्वं विवृणोति। **चिद्रूपताहीति**। अनेन वक्ष्यमाणश्रुति-

## गूढार्थसंग्रहः

पम्। अग्नेरिवौष्ण्यप्रकाशौ नात्र गुणगुणिविभागो विद्यतइति शरीरपरिमाणत्वं च प्रत्याख्यातम्। परिशेषाद्विभुर्जीवः कथं तर्हि अणुत्वादिव्यपदेशः इत्यतआह–'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति। तस्याः बुद्धेर्गुणाः तद्गुणाः इच्छाद्वेषः सुखं दुःखमित्येवमादयः तद्गुणाः। सारः प्रधानं यस्यात्मनः संसारित्वे सम्भवति स तद्गुणसारः तस्य भावः तद्गुणसारत्वम्। नहि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति। तस्मात् तद्गुणसारत्वात् बुद्धिपरिमाणेन अस्य परिमाण व्यपदेशः। इति भाष्ये व्याख्यातम्। 'तस्या बुद्धेरिति आत्मना स्वसम्बन्धिन्या बुद्धेरुपस्थितत्वात्तथा परामर्शः' इति भामती। अत्र कल्पतरुः। 'बुद्धेरप्रकृतत्वात् सूत्रगततच्छब्देन परामर्शायोगमाशङ्क्याह–आत्मनेति।' इति॥

अत्र भाष्ये (शं) 'चैतन्यमेवहि अस्य स्वरूपम् अग्नेरिवौष्ण्यप्रकाशौ नात्र गुणगुणिविभागो विद्यते' इति वाक्य पर्यालोचनरूपता **एवमात्मा चिद्रूपएव चैतन्यगुणकः** इतिसूक्तेः स्फुटं प्रतीयते। सूत्रकृतः परोक्तार्थो नैव विवक्षितः। 'तद्व्यपदेश' इत्यत्र तच्छब्देन सूत्रोपात्ताणुशब्दार्थपरामर्शमङ्गीकृत्य 'तद्गुण' इत्यत्र तच्छब्दस्य 'ज्ञोतएव' 'गुणाद्वाऽऽलोकवत्' इति सूत्रोपात्तशब्दार्थपरामर्शकत्वं विहाय अप्रकृतबुद्धिपरामर्शकत्वस्य परैःकथनेन 'तद्गुणसारत्वात्' इत्यत्र तच्छब्दस्य एवमर्थबोधकतायाः सूत्रकृतोऽनभिमतत्वात्। तद्गुणप्राज्ञपदद्वयेन सूत्रद्वयोक्तैकार्थविवक्षिताऽत्र दृढीकृता॥

यद्यध्यासः सूत्रकृतः सम्मतोऽभविष्यत् तदा 'तदध्यासात्तद्व्यपदेशः' इत्येव सूत्रमवर्तिष्यत। नच तथा सूत्रं प्रवर्तते। अतोऽत्र नाध्यासो विवक्षितः। सारशब्दोऽपि परेषां नापेक्षितः। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इति अमरः। एतत्कोशानुसारेण जीवगुणेषु ज्ञानस्य श्रैष्ठ्यविवक्षया सारशब्दः अपेक्षितः। औपाधिकाणुत्वविवक्षायां परमात्मवाचिशब्दान्तरं विहाय प्राज्ञशब्दप्रयोगोऽपि विफलः। सिद्धान्ते ज्ञानवत्परप्राज्ञशब्दप्रयोगेण तद्गुणेत्यत्रापि ज्ञानगुणस्यैव विवक्षिततया दृष्टान्तदार्ष्टान्तिकैकरूप्यं प्राज्ञशब्देन बोधितमिति प्राज्ञशब्दोऽपेक्षितः। तच्छब्दानुपादाने 'गुणाद्वाऽऽलोकवत्' इति सूत्रे आलोकपदोपादानेन ज्ञानगुणमात्रविवक्षायाः सिद्धावपि अत्र 'गुणसारत्वात्' इत्यत्र गुणपदस्य सामान्यवाचितया आत्मगुणसामान्यविवक्षणे धर्म्यपेक्षया तद्गुणानां श्रैष्ठ्यलाभेऽपि ज्ञानगुणस्य श्रैष्ठ्यं नैव लभ्यते। इति ज्ञानगुणश्रैष्ठ्यलाभाय तच्छब्दोपादानम्। 'गुणाद्वाऽऽलोकवत्' इति सूत्रे आलोकसदृशज्ञानद्वारा जीवस्य व्याप्तिरुक्ता। आलोकसादृश्योक्त्यैव ज्ञानस्य द्रव्यत्वं बोधितम्। 'व्यतिरेको गन्धवत्' इति तदुत्तरसूत्रे व्यतिरेकपदोपादानेन तदर्थएव साध्यतया विवक्षितः। नतु आश्रयं विहायान्यत्र गमनं तद्वाचकशब्दस्यैवाभावात्। अनेन सूत्रेण गन्धस्याश्रयापृथक्सिद्धस्य स्वाश्रयग्राहकातिरिक्तग्राह्यस्य यथा आश्रयाद्भेदः तद्वत् ज्ञानतदाश्रययोः आलोकतदाश्रययोश्च इति सूत्रकृतो विवक्षितम्॥

एतेन औष्ण्यप्रकाशयोः अग्न्यभेदः न सूत्रकृत्सम्मतः। एवंचाणोः चैतन्यद्वारा दीपस्य आलोकद्वारेव व्याप्तिः सूत्रकृत्सम्मतेति 'गुणाद्वाऽऽलोकवत्' 'तद्गुणसारत्वात्तद्व्यपदेशः' इति सूत्रयोर्द्वयोः एकार्थकगुणशब्दप्रयोगेण उभयोः सिद्धान्तसूत्रताबोधनेन निश्चीयते। अतःपञ्चपादिकोक्तिर्नयुक्ता। शुद्धचितः अप्रामाणिकतायाः पूर्वमेवोपपादनेन तदव-

## श्रीभाष्यम्

**तथाहि श्रुतयः ‘ सयथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघनएव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनएव (बृं.६.अ.५.ब्रा.१३) विज्ञानघनएव ’ (४.४.१२)**

## श्रुतप्रकाशिका

वाक्ये ज्ञानादिशब्दो विवृतो भवति । एवमनुग्राहकतर्कमुपन्यस्य प्रमाणमाह— **तथाहि श्रुतयइति** । **सयथा सैन्धवघनः** इति **अनन्तरः** अन्तरङ्गव्यतिरिक्तः **अबाह्यः** बहिरङ्गव्यतिरिक्तः । एवं व्यतिरेकानिर्देशेन निश्शेषग्रहणं कृतम् । तदेवाह–**कृत्स्नइति** । दार्ष्टान्तिकविषयोऽबाह्यशब्दो धर्मिपरः । अनन्तरशब्दो धर्मपरः । कृत्स्नशब्दस्तयोरेकदेशजडत्वशङ्काव्युदासार्थः । अत्र सर्वत्रैकरूप्यमेव दृष्टान्तोपजीव्यं नत्वन्यत् । दृष्टान्तदार्ष्टान्तिकविषयवाक्यद्वयेऽप्यनन्तरोऽबाह्य इति ह्युक्तम् । शरीरकत्वावस्थायामपि ज्ञानात्मकत्वपरं वाक्यमुपादत्ते **विज्ञानघनएवेति** । घनशब्दोक्तनैरन्तर्यस्य जडांशमिश्रत्वं व्यावर्तयत्येवकारः । ज्ञानत्वंनाम स्वयम्प्रकाशत्वमिति ज्ञापनार्थमत्रायमिति वाक्योपादानम् ॥

## गूढार्थसङ्ग्रहः

लम्बनेन जीवब्रह्मैक्योक्तेरयोगात् । इति भावः ॥ **चिद्रूपताहि स्वयम्प्रकाशतेति** । एतेन आत्मनि ज्ञानत्वं न धर्मभूतज्ञानवत् स्वभिन्नविषयप्रकाशकत्वरूपं किंतु स्वप्रकाशत्वरूपमेव । स्वप्रकाशत्वेन ज्ञानशब्देन आत्मनो व्यपदेशः ‘ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ’ इति सूत्रे विवक्षितः । वक्ष्यति च तत्सूत्रश्रीभाष्ये ‘ चकारात् आत्मनोऽपि स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशः ’ इति । एतेन धर्मभूतज्ञाने स्वभिन्नविषयप्रकाशकत्वेन ज्ञानाश्रयत्वाभावेऽपि आत्मनि स्वभिन्न विषयप्रकाशकत्वाभावात् ज्ञानाश्रयत्वं युक्तम् । प्रभायाः प्रभाश्रयत्वाभावेऽपि दीपस्य प्रभाश्रयत्ववत् । अन्यथा दीपः प्रकाशाश्रयत्वाभाववान् स्वयम्प्रकाशत्वात् प्रभावत्, इत्यपि स्यात् । अतश्च दीपस्य साक्षात् विषयासम्बन्धेन विषयप्रकाशनार्थं यथा प्रभा अपेक्षिता तद्वत् आत्मनः साक्षात् विषयासम्बन्धितया विषयसम्बन्धार्थं ज्ञानमप्यपेक्षितमेवेति **एवमात्मा चिद्रूपएव चैतन्यगुणक इति** । **चिद्रूपताहि स्वयम्प्रकाशता** इत्यानुपूर्व्यैव बोधितम् ॥

चिद्रूपत्वमेवात्मनः परे अभ्युपगच्छन्ति । नवीनास्तु बन्धदशायां अन्तःकरणपरिणामएव ज्ञानं तत्कर्तृत्वेन तत्स्वामित्वेन वा जीवस्य ज्ञानवत्त्वेन व्यवहारः । मुक्तौतु नान्तःकरणपरिणामः । अपितु स्वरूपज्ञानमेकमेव तेनैव व्यवहारः इति वदन्ति । अतः प्रागुपपादितार्थद्वये श्रुतीरुपपादयति । **तथाहि श्रुतय इति** । ‘ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ’ (ब्र.सू.४.४.६) इति सूत्रे आत्मनश्चित्स्वरूपत्वे परोदाहृतामेव श्रुतिमाह—**‘ सयथा सैन्धवघनः— इत्यादि प्रज्ञानघनएवेत्यन्तम्** ’ इयं ‘ **विज्ञानघनएव** ’ इति श्रुतिश्च मैत्रेयीब्राह्मणस्था । तत्र ‘ विज्ञानघनः ’ (बृ.४ ४.१२) इत्यत्र भाष्यं (शं) ‘ ज्ञप्तिः विज्ञानं विज्ञानं च तद्घनश्चेति विज्ञानघनः घनशब्दो जात्यन्तरप्रतिषेधार्थः । यथा ‘ सुवर्णघनः अयोघनः ’ इति एवशब्दोऽवधारणार्थः । नान्यज्जात्यन्तरमन्तराले विद्यत इत्यर्थः । इति ॥

‘ एवमप्युपन्यासात् ’ इति तदनन्तरसूत्रे कस्तर्हि ‘ विज्ञानघनएव ’ इत्यवधारणार्थः, कृत्स्नोऽप्यात्मा जडव्यावृत्त स्वप्रकाशः । नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीत्ययमर्थः वाक्यादेव सुव्यक्तः ‘ सयथा सैन्धवघनः—कृत्स्नः प्रज्ञानघनएवेति ’ इति भगवता वक्ष्यते । ‘ विज्ञानघनएव ’ इत्यत्र एवकारस्य विशेषणसङ्गतत्वेन ‘ शङ्खःपाण्डरएव ’ इत्यत्र ‘ धर्मस्थेत्येवकारे त्रिविधमपि भवेत्तद्व्यवच्छेदकत्वम् ’ (अ.सा.२३१) इत्युक्तदिशा पाण्डुरत्वविरुद्धनैल्यादिव्यवच्छेदवत् अत्रापि ज्ञानत्वविरुद्धजाड्यव्यवच्छेदएवावधारणार्थो विवक्षितः इति भावः ॥

## गूढार्थसङ्ग्रहः

अत्र आत्मनः निरवयवत्वेन अनन्तरः अबाह्यः कृत्स्नः इति पदाभ्यां धर्मिणः धर्मस्य च स्वप्रकाशत्वं विवक्षितमिति व्यासार्याः (१.१.१) प्राहुः । अनन्तरः अबाह्यः इति पदाभ्यां अन्तर्बहिरवयवशून्य इति अर्थो लभ्यते । एवमर्थाङ्गीकारे दृष्टान्ते तत्पदार्थस्य बाधः । अतः ताभ्यां दृष्टान्ते अन्तर्बहिरवयवसामान्येऽपि रसघनत्वं विवक्षितमिति वाच्यम्; एवमङ्गीकारे आत्मनः अन्तर्बहिरवयवशून्यत्वेन अनन्तरः इत्यनेन धर्मिस्वरूपस्य अबाह्य इत्यनेन धर्मस्य विज्ञानघनत्वं कृत्स्नइत्यत्र विवक्षितम् । आत्मन्शब्दस्य प्रागुक्तार्थानुसारेणाप्ययमर्थो युक्तः । अतएव चतुर्थे 'विज्ञानघनएव' इति श्रुतिसमनन्तरश्रुतौ 'अलं वा अरे इदं विज्ञानाय' इत्यत्र इदंशब्दार्थविज्ञानघनस्य विज्ञानार्हत्वोक्तिः सङ्गच्छते । इदं विज्ञानवदित्यादिक्रमं विहाय विज्ञानायालमित्युक्त्या ज्ञानशक्तिनित्यत्वमेव प्रतीयते नतु ज्ञाननित्यत्वमिति, पार्थसारथिमिश्रैः ज्ञाननित्यत्वं भट्टपादसम्मतमिति व्यवस्थापयतां सुचरितामिश्राणां मतं दूषयद्भिः शास्त्रदीपिकायां यद्यप्युक्तम्;

तथाऽपि 'ज्ञानायालम्' इत्यनभिधाय विज्ञानायालमित्युक्त्या तत्र वि इत्युपसर्गेण ज्ञानगतपूर्णविकासवत्त्वस्य विवक्षितत्वेन बन्धदशायां ज्ञानविकासपूर्तेरभावेन तादृशज्ञानवत्त्वं न सम्भवतीति पूर्णविकासज्ञानार्हत्वं बोधयितुम् 'अलं वा अरे विज्ञानाय' इत्युक्तम्। 'अत्र अलं पर्याप्तं वै अरे इदं महद्भूतमनन्तमपारं यथा व्याख्यातम् । विज्ञानाय विज्ञातुम् ।' (शं.भा) इति विवरणेऽपि इदंपदार्थस्य विज्ञानकर्तृत्वे विवक्षिते पूर्वोक्तार्थ एव सिद्ध्यति । परैर्विज्ञातुमलमित्यर्थविवक्षणं तु कर्तृवाचिपदान्तराध्याहारस्य अनुचिततया नात्र विवक्षितम् । अत एव षष्ठे 'प्रज्ञानघनएव' इत्येतदनन्तरश्रुतौ 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इति धर्मनित्यत्वोक्तिः सङ्गच्छते । अत्र 'विज्ञानघनएव' इति श्रुत्यनन्तरश्रुतौ 'अलं वा अरे विज्ञानाय' इत्यत्रोक्तविज्ञानमेव 'प्रज्ञानघनएव' इति श्रुतिसमनन्तरश्रुतौ 'अनुच्छित्तिधर्मा' इत्यत्र धर्मपदेन विवक्षितम् । एतदेवाभिप्रेत्य व्यासार्यैः 'अनुच्छित्तिधर्मा' इत्यत्र धर्मभूतज्ञाननित्यत्वं विवक्षितमित्युक्तम् ॥

एतेन 'अनुच्छित्तिधर्मा इत्यनेन तार्किकाभिमतं मोक्षं निरस्य इति, 'अनुच्छिन्नज्ञानसुखादिधर्मः' (रा.ती.खं) इतिचोक्तिः 'उच्छित्तिः' अत्यन्तोच्छेदः धर्मः प्रतियोगितया यस्यास्ति तदन्यस्यानुच्छित्तिधर्मशब्देन बोधनात् यथासन्निवेशे धर्मपदावैयर्थ्यात् । अथवा न विद्यते उच्छित्तिः विशेषगुणगणोच्छेदरूपो धर्मः यत्रेति विवक्षितः । तत्र धर्मग्रहणं उच्छेदधर्मकत्वमात्मनो न सम्भवति निर्धर्मकत्वात्तस्येति ज्ञापनाय' इति गुरुचन्द्रिकोक्तिश्च (ए.अ.ब्र.श्रु.वि) निरवकाशा ॥

तत्र प्रथममते अनुच्छिन्नज्ञानसुखादिधर्मः इत्यर्थे पूर्वमैत्रेयीब्राह्मणे 'अलं वा अरे इदं विज्ञानाय' इत्यत्र 'इदं मुक्तजातं विज्ञानाय यथायोग्यं परापरवस्तु विशेषेण ज्ञातुमलं शक्तमेव' इति स्वव्याख्यानानुसारेण अत्र ज्ञानमात्रस्य धर्मशब्देन ग्रहणेनैव तार्किकाभिमतमोक्षनिरासः सम्भवतीति सुखादीनां धर्मशब्देन ग्रहणे गमकं नास्ति । मुक्तस्य स्वरूपज्ञानातिरिक्तज्ञानसुखादिधर्मस्याभावेन धर्मशब्दस्य वैयर्थ्यम् । अनुच्छित्तिः इत्येतावतैव मुक्तस्य स्वरूपज्ञानोच्छेदविरहलाभसम्भवात् । नैयायिकमतनिरसनं च कथं सम्भवति ? धर्मपदोपादानेऽपि तदभिन्नत्वस्य नवीनसम्मतस्य शब्दतः अलाभात् । तद्वत्त्वस्य च नवीनेष्टासाधकत्वात् स्वभिन्नज्ञानसुखाद्यभावस्य सार्वदिकत्वेन मुक्तिकाले विशेषाभावेन मुक्तमधिकृत्यानुच्छित्तिधर्मवत्त्वोक्तेः विशेषाभावात् । बन्धदशायां अन्तःकरणपरिणामज्ञानादिस्वामित्वाङ्गीकारेऽपि ज्ञानाद्याश्रयत्वानङ्गीकारात् । धर्मपदोपादानबलेन अनुच्छित्तिधर्माश्रयत्वस्यैव तद्वाक्यात्प्रतीतेः । मुक्तावपि स्वरूपज्ञानाश्रयत्वस्य स्वरूपे असम्भवात् । विशेषेण भेदव्यवहाराङ्गीकारेऽपि वस्तुतो भेदाभावे वाक्यप्रामाण्यस्यैवासम्भवात् । द्वितीयपक्षे

श्रीभाष्यम्

**‘अत्रायं पुरुषस्स्वयंज्योतिर्भवति’ (बृ.६.अ.३.ब्रा.९)**

**गूढार्थसंग्रहः**

उच्छित्तिधर्मवत्त्वं न सम्भवति निर्धर्मकत्वात् इति विशेषलाभाय धर्मपदोपादानमिति वा कथम्? धर्मपदेन उच्छित्ति रूपधर्मस्य खलु व्यवच्छेदः, नतु धर्मसामान्यस्य। उच्छित्तिधर्मवत्त्वशून्यत्वस्य पराभिप्रेतस्याङ्गीकारेऽपि धर्मपदोपादानेन तदितरधर्मवत्त्वं बोध्यत इत्यपि सूचनसम्भवेन पराभीष्टासिद्धेः। अतः चतुर्थमैत्रेयीब्राह्मणवाक्यानुसारेण उच्छित्ति-शून्यज्ञानधर्मवत्त्वमेवात्र विवक्षितम्। एवमङ्गीकारएव धर्मपदस्य सार्थक्यम्। परमतेऽपि अनुच्छित्तिमानित्येतावतैव पर्याप्तेः। एवं प्रथममतेऽपि। अतो व्यासार्योक्तरीतिरेवसाधीयसी। मैत्रेयीब्राह्मणवाक्यद्वयैकरस्यमभिप्रेत्यैव ‘अहमिदं जानामि’ इत्यत्र ज्ञाधात्वर्थः धर्मभूतज्ञानमिति सिद्धान्ते व्यवहार इति बोध्यम्॥

‘स यथा सैन्धवघनः’ इति श्रुतौ धर्मधर्मिणोरुभयोः स्वप्रकाशत्वरूपज्ञानत्वं विवक्षितमित्युक्तम्। अत्र धर्मिणो धर्मस्य च ‘स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति’ इति प्रभाप्रभावतोरिव स्वप्रकाशत्वबोधनेन पूर्वश्रुत्युक्तार्थः दृढीकृत इत्यभिप्रेत्य तदनन्तरं धर्मिणः स्वप्रकाशत्वबोधिनीं श्रुतिमाह——**अत्रायं पुरुषः स्वयंज्योतिर्भवति इति।** यद्यपि ‘योऽयं विज्ञानमयः प्राणेषु’ इत्यत्रोदाहरिष्यमाणश्रुत्यनन्तरमेव ‘अत्रायं पुरुषस्स्वयं ज्योतिर्भवति’ इति श्रुतिः इति तस्याएव प्रथममुपादानमुचितम्। तथाऽपि ‘कतम आत्मेति योऽयं विज्ञानमयः–पुरुषः’ इत्यत्र ‘आत्मैवास्य ज्योतिर्भवति’ इत्यत्र च आत्मन्शब्दमुख्यत्वाय आत्मन्शब्दः परमात्मपरः इति नवीना वदन्तीति ‘योऽयं विज्ञानमयः’ इत्यस्य जीवपरत्वमेव नास्तीति शङ्का स्यादिति एतच्छ्रुत्युपादानम्। ‘स यत्र प्रस्वपिति अस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति। अत्रायं पुरुषः स्वयंज्योति-र्भवति’ इत्यत्र ‘प्रस्वपिति’ इत्यभ्यासेन स्वापकर्तृजीवस्यैव उपस्थित्या ‘अत्रायम्’ इति वाक्यं जीवपरमेवेति निश्ची-यते। ‘किं ज्योतिरयं पुरुषः’ इति प्रश्नवाक्यसमशीलत्वादस्य वाक्यस्य। उभयत्र ‘अयं पुरुष’ इत्यस्य एकार्थ-कत्वात्। ‘किं ज्योतिः’ इत्यनन्तरं ‘किं ज्योतिरेवायं पुरुषः’ इति चतुर्वारमभ्यासः। पञ्चधा अभ्यस्त अयं पुरुष इति पदद्वयसमानार्थकमेव। ‘अत्रायं पुरुषः स्वयं ज्योतिर्भवति’ इत्यत्र ‘अयं पुरुष’ इति पदद्वयम्, अत्र प्रश्ने ‘अयं पुरुषः’ इति जीव एव विवक्षित इति नवीनानामपि सम्मतम्॥

नच ‘आत्मैवास्य ज्योतिः—आत्मनैवायं ज्योतिषा आस्ते। कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्य-न्तर्ज्योतिः पुरुषः’ इत्यत्र आत्मन्शब्दे मुख्यार्थपरिग्रहस्यैव युक्ततया आत्मन्शब्दस्य परमात्मैवार्थः। अन्तर्ज्योतिरिति न बहुव्रीहिः, हृद्यन्तः जीवहृदयान्तः ज्योतिः ज्ञानहेतुस्सन् वर्तते पुरुषः अयमात्मेत्यर्थः। एवं च तदनुसारेण ‘अत्रायं पुरुषस्स्वयं ज्योर्भवति’ इत्यत्रापि अयं पुरुषो हरिः स्वयमेव जीवस्य ज्योतिर्भवतीत्यर्थः (रा.ती.खं) इत्यर्थस्य युक्ततया ‘अयं पुरुषः’ इति पदद्वयं परमात्मपरमेवेति वाच्यम्; ‘किं ज्योतिरयं पुरुषः’ इति प्रश्नप्रतिवचने आदित्यचन्द्रा-ग्न्यादीनां ज्योतिष्ट्वमभिहितम्। तेषामत्रभासकत्वमेव न ज्ञानहेतुत्वम् ज्ञानोत्पत्तिप्रतिबन्धकतमोनिरासकत्वात्। अस्तु वा ज्ञानहेतुत्वमपि तादृशमेव॥

तथाऽपि ‘आत्मैवास्य ज्योतिः’ इत्यादौ आत्मन्शब्दस्य परमात्मपरत्वे बहूनां पदानां स्वरसार्थपरित्यागस्यैव दोषत्वात्। ‘ससमानस्सन्नुभौ लोकावनुसंचरति, ध्यायतीव लेलायतीव सहि स्वप्नो भूत्वा इमं लोकमतिक्रामति, मृत्या

## गूढार्थसंग्रहः

रूपाणि सवा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते, स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति' इत्यादीनि उत्तरवाक्यानि । ध्यायतीव 'जीवं ध्याययतीवेति' अन्तर्णीतो णिजत्र उत्तरत्र च ज्ञेयः । जीवस्य ध्याने स्वातन्त्र्यं नास्ति हरेरेवेति द्योतनार्थमिवशब्दः इत्यर्थे अत्र उत्तरत्र च बहुषु स्थलेषु णिचः कल्पनम् । ध्यायतीवेत्यत्र इवशब्दद्योत्यमस्वातन्त्र्यं ध्यायतीत्येतत्प्रधानार्थगतमेव इवशब्देन द्योतनीयम् । इवशब्दस्य तथा व्युत्पत्तेः स्वप्नो भूत्वा स्वापको भूत्वा मृत्यो रूपाण्यतिक्रामति अतिक्रामयति 'सवा अयं पुरुषः' प्रकृतःपुरुषो हरिः जायमानः शरीरमभिसम्पद्यमानः जीवमादाय स्वयमेव पितृदेहप्रवेशद्वारा मातृदेहं प्रविश्य अभिनवदेहं प्रतिपद्यत इति स्वातन्त्र्याभिप्रायेणेयमुक्तिः ॥

यद्वा जायमानः जीवं जनयन् शरीरमभिसम्पादयन् संसृज्यते, जीवस्य फलदानाय तत्कृतपाप्मान्युपादत्ते इत्यभिप्रायेण संसृज्यत इत्युक्तिः इत्यादिरीत्या अर्थे वाक्यघटकानां बहूनां पदानामस्वारस्यं विदुषां स्फुटम् । एतदस्वारस्यमेव पर्यालोच्य यदा 'किं ज्योतिरयं पुरुष इत्युपक्रान्तः आत्मज्योतिष्ट्वेनोक्तजीवः स वा अयं पुरुषः' इति परामृश्यते तदा यथाश्रुतएवार्थः न ण्यर्थत्वेन व्याख्यात इति नवीनैरुक्तम् ॥

एवं च 'सवा अयं पुरुषः' इत्यत्र जीवविवक्षायामेव स्वारस्यमिति नवीनैरप्यभ्युपगतं भवति । एवमभ्युपगमे 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुषः' इत्यत्र 'अयं पुरुष' इति पदद्वयमपि प्रश्नगतपदद्वयसमानार्थकमित्येव युक्तम् । एवम् 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति' इत्यत्रापि तत्पूर्वं यदा स्वापिति इत्यादौ स्वापयतीत्यर्थकल्पनायाः अन्याय्यत्वेन प्रश्नवाक्यानुसारेण च 'अयं पुरुषः' इति पदद्वयं जीवपरमेव। पुरुषशब्दोऽपि परमात्मन्येव मुख्यः॥

चन्द्रिकायाम् (१.१.२५) पुरुषशब्दोहि 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः'। 'नैनेन किंचनानावृतम्' इत्यत्र सर्वान्तर्यामित्वं पुरुषत्वमित्युक्तेः। इत्युपक्रम्य श्रुतिस्मृतीरुदाहृत्य पुरुषोत्तमे मुख्य इति 'स तं पुरुषमुपैति दिव्यम्' (भ.गी.अ.८) भाष्यो(आ.टी)क्तसिद्धान्तस्य व्यासतीर्थैः स्थापनात् । तद्वदात्मशब्दोऽपि । किं ज्योतिरयं पुरुषः' इति पञ्चधा अभ्यस्तवाक्ये पुरुषशब्दस्य जीवपरत्वे निश्चिते तस्यैव शीघ्रोपस्थितिकत्वेन सर्वत्र ग्रहणं युक्तम् । पुरुषशब्द समानार्थकात्मन्शब्दोऽपि जीवपरएव । आत्मन्शब्दस्य स्वशब्दपर्यायत्वेन 'स्वेन भासा स्वेन ज्योतिषा' इत्युत्तर वाक्ये 'स्वेन ज्योतिषा' इत्यत्र स्वशब्दोपादानेन च 'आत्मैवास्य ज्योतिः आत्मनैवायं ज्योतिषा आस्ते' इत्यत्र आत्मन्शब्दोऽपि जीवपरः । 'कतम आत्मा योऽयं विज्ञानमयःप्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्यत्र 'अयं पुरुषः' इति पदद्वयस्य जीवपरतया आत्मन्शब्दोऽपि जीवपरएव । 'किं ज्योतिरयं पुरुषः' इति प्रश्ने किं ज्योतिरित्यत्र बहुव्रीहिः सर्वसम्मतः । तदनुसारेण 'अन्तर्ज्योतिः स्वयं ज्योतिः' इत्यत्रापि बहुव्रीहिरेव ॥

'स्वयमात्मना' इति कोशात् 'स्वयंक्तेन' (२.२.२५) इति सूत्रे स्वयमेतदव्ययम् आत्मनेत्यस्यार्थे वर्तते इति काशिकायां कर्मवत्सूत्रे 'स्वयं शब्दस्य आत्मनेति तृतीयान्तार्थे वर्तनात्' इति कैयटेचोक्तेः 'स्वयं ज्योतिः' इत्यत्र 'स्वयम्' इति आत्मनेत्यर्थकम् एतदेवाभिप्रेत्य 'स्वसंवेद्यस्सभवति' इत्युपक्रम्य तेन सर्वे स्वेन स्वेन आत्मानमुपलभमानाः सन्त्येव । यद्यपि परपुरुषं नोपलभन्त इति । अथास्मिन्नर्थे ब्राह्मणं 'शान्तायां वाचि किं ज्योतिरेवायं पुरुषः आत्मज्योतिस्सम्राडितिहोवाच' इति । इति स्वयंज्योतिष्ट्ववचनात् । अथापि ब्राह्मणं भवति । 'अत्रायं पुरुषस्स्वयंज्योतिर्भवति' इति च शाबरभाष्यं (जै.सू.१.१.५) प्रवृत्तम् । 'ज्योतिरग्नौ दिवाकरे। पुमान्नपुंसके दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति अमरसुधोदाहृतमेदिनीकोशात् ज्योतिश्शब्दस्य प्रकाशोऽर्थः। तत्र 'आत्मैवास्य ज्योतिः' इत्यत्र णिजन्तनिष्पन्नप्रकाश

## गूढार्थसंग्रहः

शब्दार्थः प्रकाशकः अर्थः । एवम् ' अग्निरेवास्य ज्योतिः ' इत्यादि पूर्ववाक्येषु । तथैव ' किं ज्योतिरयम् ' इत्यादिप्रश्न वाक्येष्वपि । ' स्वयं ज्योतिः ' इत्यत्र स्वयमित्यस्य आत्मनेत्यर्थकतया अणिजन्तनिष्पन्नप्रकाशशब्दार्थ एव ज्योतिश्शब्दार्थः । आत्मना ज्योतिः प्रकाशो यस्य इति बहुव्रीहिः । आत्मप्रयोज्यत्वस्य प्रकाशस्य शब्दतो लाभे अन्यनिरपेक्षत्वमर्थात् सिद्ध्यति । एतेन धर्मिणः स्वप्रकाशत्वं सिद्धम् । ' स्वेन भासा स्वेन ज्योतिषा ' इति पूर्ववाक्ये ' भासा ज्योतिषा ' इति पदद्वयवैयर्थ्यान्यथाऽनुपपत्त्या पदद्वयं धर्मधर्मिपरम् । ' स्वेन भासा ' इत्यत्र स्वशब्दः स्वकीयपरः । तेन धर्मस्यापि स्वप्रकाशत्वम् ' ॥

' किं ज्योतिरयं पुरुषः ' इति । अयं प्राकृतः कार्यकारणसंघातरूपः शिरःपाण्यादिमान् पुरुषः पृच्छयत इति ' आत्मैवास्य ज्योतिर्भवति ' इति । अत्र ' आत्मेति कार्यकारणस्वावयवसङ्घातव्यतिरिक्तं कार्यकारणावभासकम् आदित्यादिबाह्यज्योतिर्वत्स्वयं अन्येनानवभास्यमानमभिधीयते ज्योतिः ' अन्तरस्थं च तत्पारिशेष्यात् ' इति । ' स्वेन भासा ' इत्यादि स्वेन आत्मीयेन भासा दीप्तया प्रकाशेन सर्ववासनात्मकेन अन्तःकरणवृत्तिप्रकाशेनेत्यर्थः । तेन ' स्वेन भासा ' विषयभूतेन स्वेन ज्योतिषा तद्विषयिणा विविक्तरूपेण अलुप्तदृक्स्वभावेन तद्भारूपं वासनात्मकं विषयीकुर्वन् प्रस्वपिति । अत्र एतस्यामवस्थायाम् एतस्मिन्काले ' अयं पुरुषः ' आत्मा स्वयमेव विविक्तज्योतिर्भवति । बाह्याध्यात्मिकभूतभौतिक संसर्गरहितं ज्योतिर्भवति । नन्वस्य लोकस्य मात्रोपादानं कृतं, कथं तस्मिन्सति ' अत्रायं पुरुषः स्वयंज्योतिर्भवती ' त्युच्यते । नैषदोषः विषयभूतमेवहि तत् । तेनैव च ' अत्रायं पुरुषः स्वयंज्योतिः ' दर्शयितुं शक्यः । इत्यादि उपनिषद्भाष्यं (शं) ' स्वेन भासा ' इत्यत्र इत्थंभावे तृतीया । ' स्वेन ज्योतिषा ' इत्यत्र कर्तरि तृतीया । स्वशब्दोऽत्र आत्मविषय इत्यानन्दगिरिः ।

' आत्मा स्वाभाससाचिवः धियमिच्छादिरूपिणीम् । अनुगृह्णाति कर्मोत्थां प्रत्यगज्ञानकारणात् ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं व्यनक्तीति तथा स्मृतिः ॥
भान्वादिवत् अतो बुद्धिं स्वाभासैकसहायवान् । अनुगृह्णाति कूटस्थः स्वात्मा विद्यानुरोधतः ॥
अनुग्राह्याभिसम्बन्धः एकजाति समन्वयात् । आदित्यादेरिहावाप्तिरात्मनोऽज्ञानवर्त्मना ॥
स्वेनेति भासःप्रत्यक्चित् अभिव्यक्तिकृतोऽभिधा। स्वशब्दाविहविज्ञेयावात्मीयात्मार्थवाचिनौ ॥
भाज्योतिरनुरोधेन सामर्थ्यादेव कारणात् । इत्थंभूते तृतीयाऽतः स्वेन भासेति कथ्यते ॥ '

इति वार्तिकम् । (बृहदारण्यके) अत्र ' किं ज्योतिरयं पुरुषः ' इत्यत्र प्रश्ने पुरुषः कार्यकारणसङ्घाताद्यात्मकः ' आत्मैवास्य ज्योतिर्भवति ' इत्यत्र अस्येति ' किं ज्योतिरयं पुरुषः ' इति प्रश्नगतपुरुषपरमेवेति स्फुटं प्रतीयते । ' कतम आत्मा—हृद्यन्तर्ज्योतिः पुरुषः ' इत्यत्र ' अयं पुरुषः ' कार्यकारणसङ्घातात्मक एव परेषामपि सम्मतः । ' अत्रायं पुरुषस्स्वयं ज्योतिर्भवति ' इत्यत्र आत्मनः आत्मैवास्येत्यत्रोक्तस्य विवक्षणे ' अयं पुरुष ' इत्यत्र अर्थभेदः स्फुटः ॥

एवं भिन्नार्थकत्वं वाक्यानां न श्रुतौ विवक्षितम् । स्वेन भासा स्वेन ज्योतिषा स्वपिति ' इति पूर्ववाक्यविरोधात् । स्वापदशायां कार्यकारणसङ्घातात्मकः पुरुषः तन्मते वर्तत एव । ' स्वेन भासा ' इत्यत्र अन्तःकरणवृत्तिप्रकाशेनेत्यर्थे तत्र ' यथा प्रकाशयत्येकः ' इति गीतासामरस्यं कथम् ? दृष्टान्ते रवेः स्वप्रभाद्वारा कृत्स्नलोकप्रकाशकत्वम् । रवितत्प्रभयोश्च समानसत्ताक एव सम्बन्धः । दार्ष्टान्तिके तु अज्ञानकल्पितः इत्युभयवैरूप्यात् । गीतायाम्

## गूढार्थसंग्रहः

' इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते । एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ ' इत्युपक्रमानुसारेण ' क्षेत्रं क्षेत्री ' इत्युपसंहारेऽपि धर्मभूतज्ञानद्वारैव प्रकाशकत्वमहमर्थजीवस्य प्रतीयते ॥

एवं च गीताऽनुसारेण ' स्वेन भासा ' इत्यत्र धर्मभूतज्ञानमेव विवक्षितमिति निश्चीयते । दृष्टान्तदार्ष्टान्तिकयोः समानसत्ताकसम्बन्धसत्त्वात्, उभयोः स्वप्रकाशत्वसाम्याच्च । अन्तःकरणवृत्तेः तदभिव्यक्तचितश्च भाज्योतिश्शब्दाभ्यामभिधानं न घटते । चिदभिव्यक्त्यर्थं वृत्तेरपेक्षणेन चिद्व्यतिरिक्तवृत्त्यपेक्षायां स्वयं ज्योतिष्ट्वोक्तिस्वारस्यासम्भवात् ॥

' स्वयं ज्योतिः ' इत्यस्य आदित्यादिमनोवृत्तिपर्यन्तज्योतिषामभावेन स्वयमेवात्मा स्वीयव्यवहारसाधनं ज्योतिरित्यर्थात् । (सि.बि.टी) मनसः दृश्याकारपरिणामाभ्युपगमेन मनसः विषयत्वमेव नतु ग्राहकत्वम् । अतः स्वयं ज्योतिष्ट्वस्य न विरोध इत्यङ्गीकारेऽपि ' स्वेन भासा ' इत्यस्य नोपपत्तिः । ज्योतिःपदस्य स्वयमेव स्वीयव्यवहारसाधनरूपम् इत्यर्थवत् तत्समानार्थभाश्शब्दस्यापि तथैवार्थस्याङ्गीकरणीयतया तस्यान्तःकरणवृत्तौ बाधात् ॥

सिद्धान्ताबिन्दौ च ' अविद्यैव शुक्तिरजतादिवत् स्वाप्नार्थाकारेण परिणमते । ज्ञायते च अविद्यावृत्त्येति पक्षस्यैव मन एव रथगजतुरगाद्याकारेण विवर्तते अविद्यावृत्त्या च ज्ञायतेचेतिपक्षात् श्रेयस्त्वस्य प्रतिपादनेन तत्पक्षे मनःपरिणामस्य विषयत्वस्याप्यसम्भवात् । अन्तःकरणगतवासनानिमित्तः इन्द्रियवृत्त्यभावकालीनोपलम्भः स्वप्न इत्यर्थस्य पदद्वयसाधारण्येऽपि अन्तःकरणवासनायाः पक्षद्वये निमित्तत्वाङ्गीकारमात्रेण विषयत्वासम्भवात् । वासनाया एव ' स्वेन भासा ' इत्यत्र विवक्षणे उक्तदिशा पूर्वोक्तस्वयंज्योतिष्ट्वस्यैव हानप्रसङ्गात् । स्वप्ने अविद्यायाः अर्थाद्याकारेण परिणामपक्षे बहिरिन्द्रियजन्यवृत्त्यभावेन तदानीं मनसोऽग्राहकत्वात् सवृत्तिकान्तःकरणावच्छिन्नचैतन्यस्य प्रमातृत्वनियमेन तदानीं प्रमात्रभावः ' इति बिंदुटीकोक्तिः स्वप्नेऽपि ' अहमिदं जानामि ' इत्यनुभवानुरोधेन अनुपपन्ना । ' अहमित्याकारकवृत्तिः अविद्यापरिणाम एव ' इति बिन्दुटीकोक्तिरपि क्वचिदन्तःकरणपरिणामः क्वचिदविद्यापरिणामः इति द्वैविध्यकल्पनं ' योऽहं स्वप्ने अर्थानद्राक्षं सोऽहमिदानीमन्यान् पदार्थान् पश्यामि ' इत्यत्राहमर्थस्यैकरूप्यप्रतीत्या अनुपपन्नमिति नोपादेया । सिद्धान्ते उभयत्र अहमर्थस्य स्वप्रकाशत्वेनैव भानाङ्गीकारेण अनुपपत्त्यभावात् ॥

सिद्धान्ते स्वापदशायां धर्मभूतज्ञानस्य विषयसम्बन्धो वर्तते इति तस्य स्वप्रकाशत्वबोधनाय ' स्वेन भासा ' इत्युक्तिः सुषुप्तौ विषयसम्बन्धाभावेन धर्मभूतज्ञानसत्त्वेऽपि तस्य स्वयम्प्रकाशत्वं नास्तीति सुषुप्तिवैलक्षण्यबोधनाय । स्वप्रकाशधर्मभूतज्ञानविशिष्टस्यैव स्वापः सुषुप्तौ तु न तथेति उभयोर्वैलक्षण्यम् । जीवस्य स्वप्रकाशत्वे धर्मभूतज्ञानापेक्षा नास्तीति ' अत्रायं पुरुषः स्वयंज्योतिर्भवति ' इत्यत्र स्फुटं प्रतीयते । उभयोः स्वप्रकाशत्वबोधनेन धर्मभूतज्ञानस्य स्वभिन्नविषयप्रकाशकतया जीवे स्वप्रकाशत्वेन ये धर्माः नैव प्रतीयन्ते तद्धर्मविशिष्टजीवस्य धर्मभूतज्ञानबलाद्भानाङ्गीकारेऽपि नानुपपत्तिः । जीवस्य स्वप्रकाशत्वं स्वव्यवहारे स्वातिरिक्तानपेक्षत्वं, नतु स्वव्याहारसामान्ये इति एतेन सिद्धम् । वृत्तेर्जडत्वेन ' स्वेन भासा ' इत्यत्र तद्विवक्षा न घटते । वृत्त्यभिव्यक्तचितः तत्र विवक्षणे एकेनैवालम् एवं ' बाह्यप्रकाशोभेत्युक्तः ज्योतिरान्तर उच्यते ' इति नव्यमतेऽपि ॥

चित्सुखाचार्यैः ' अकर्मत्वाचात्मनः स्वप्रकाशत्वम् । वेद्यत्वे स्वाश्रयज्ञानविषयतया कर्मकर्तृभावविरोधप्रसङ्गात् । ' इत्युक्तं तु नादरणीयम् । ' कर्मवत्सूत्रे ' ' णेरणौ ' इति सूत्रे च भाष्ये द्वावात्मानौ, शारीरात्मा अन्तरात्माचेति आत्मनः कर्तृत्वकर्मत्वयोरुपपादनात् । ' एकस्य बुद्ध्यवस्थाभिर्भेदेन परिकल्पने । कर्मत्वं करणत्वंच कर्तृत्वंचोपजायते । '

## गूढार्थसंग्रहः

इति हरिणा कर्मत्वकर्तृत्वयोरवस्थाभेदेनाविरोधस्योपपादनाच्च । अहंत्वरूपप्रत्यक्त्वाविशिष्टस्य कर्तृत्वं प्रत्यक्त्वैकत्वानुकूलत्व व्यतिरिक्तधर्माविशिष्टस्य धर्मभूतज्ञानविषयत्वरूपं कर्मत्वम् । एतद्धर्मविशिष्टतया वेद्यत्वाङ्गीकारेण तदंशेऽज्ञाननिवृत्तिः सम्भवतीति क्रियाजन्याज्ञाननिवृत्तिरूपफलाश्रयत्वमपि वर्तत इति कर्मत्वम् । तत्फलस्योद्देश्यत्वमपि अबाधितमिति न सिद्धान्तसिद्धाञ्जनोक्तातिप्रयाससाफल्यम् । अवेद्यत्वं फलाव्याप्यत्वमिति 'ब्रह्मवित्' इत्यादि श्रुत्यविरोध इति परैस्स-वैरप्युच्यते । वृत्त्यतिरिक्ताचितएव निर्विशेषायाः अप्रामाणिकत्वस्य पूर्वमेव समर्थितत्वात् एवं वैषम्यकल्पनं निर्मूलम् ॥

अद्वैतसिद्धौ च आत्मस्वप्रकाशत्वोपपत्तौ 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति श्रुतिरप्यत्र प्रमाणम् । तथाहि 'अस्तमित आदित्ये याज्ञवल्क्य' इत्यादिना 'किं ज्योतिरेवायं पुरुषः' इत्यन्तेन ज्ञानसाधनालोकाद्यभावे जीवस्य कथं स्फुरणमित्युक्ते 'आत्मैवास्य ज्योतिः, स्वयंज्योतिः' इत्यादिना स्वातिरिक्तानपेक्षतया स्वप्रकाशत्वमुक्तम् । नचा-त्मन्शब्दस्य परमात्मपरत्वम्; पूर्ववाक्ये आत्मनि नाडीसम्बन्धप्रतिपादनात् उत्तरवाक्ये च 'कतम आत्मा योऽयं विज्ञान-मयः प्राणेषु हृद्यन्तर्ज्योतिः' इत्युत्तरवाक्यपर्यालोचनया संदंशन्यायेन जीवपरत्वात् ॥

अत्र लघुचन्द्रिका । 'पूर्ववाक्ये–' अथैतयोरेषा सृतिस्संचरणीयैषा हृदयादूर्ध्वं नाड्युच्चरति' इत्यादिपूर्ववाक्ये । प्रतिपादनादिति । 'किंज्योतिरेवायं पुरुषः' इत्यादिवाक्येऽपि आत्मपदपर्यायेण पुरुषपदेन जीवस्यैवोक्तेरित्यपि बोध्यम् पर्यालोचनयेति । आत्मशब्देन पूर्वोक्तस्य 'स समानस्सन्नुभौ लोकावनुसंचरति' इत्यादिना अवस्थात्रयसम्बन्धमौपा-धिकमनूद्य 'स यत् किंचित् तत्र पश्यति अनन्वागतस्तेन भवति असङ्गो ह्ययम्' इत्यादिना तच्छून्योक्तेः जीव एवा-त्मशब्दार्थः' इति । 'आत्मैवास्य ज्योतिर्भवति' इत्युपक्रमानुरोधात् स्वयमेव ज्योतिर्यस्येति विग्रहात् आत्मान्यतादात्म्य शून्यज्योतिस्सामान्यकत्वं स्वयंज्योतिश्शब्दार्थः' इति च ॥

अत्र जीवस्यैव स्वप्रकाशत्वं स्फुटम् । स्वप्ने अहमर्थो वर्तते इति तस्यैव स्वप्रकाशत्वं श्रुतितात्पर्यविषयः । 'स यत्तत्र किंचित्पश्यति अनन्वागतस्तेन भववि असङ्गो ह्ययं पुरुषः' इत्यत्र अवस्थात्रयसम्बन्धशून्यत्वं कथमुच्यते इति विवेचनीयम्। तद्वाचकशब्दाभावात्, तत्पूर्वम् 'अथो खल्वाहुः जागरितदेशएवास्येति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति श्रूयते । अत्र 'अथो खल्वाहुः' इति मतान्तरं प्रस्तुतम् । तच्च न दूषितम् । तद्दूषणाय 'स यत्तत्र किंचित्पश्यति' इत्यादिवाक्यद्वयम् । 'स्वप्नायैव स यत्तत्र किंचित्पश्यति' इत्यत्र तत्र जाग्रतीत्यर्थः । 'असङ्गो ह्ययं पुरुषः' इत्यत्र असङ्गइत्यस्य न सम्बन्धसामान्याभाववानित्यर्थः सङ्गशब्दः सम्ब-न्धमात्रे न प्रसिद्धः । अपितु चिरकालसम्बन्ध एव किंचित्कालसम्बन्धसत्वे तन्निषेधेन प्रकृते न कश्चिदुपयोगः आध्या-सिकसम्बन्धश्च परैरप्यभ्युपगम्यते इति पारमार्थिकेन स्वसमानसत्ताकेन वा सम्बन्धेन शून्यइति तैरर्थो वाच्यः । तथा-ऽर्थवर्णनेऽपि असङ्गशब्दार्थसंकोचः अवर्जनीयः स्वाभाविकसम्बन्धशून्य इत्यर्थः उभयसम्मतः । औपाधिकत्वेऽपारमा र्थ्यमिति परे वदन्ति ॥

सिद्धान्ते तु यावत्कालमुपाधिसम्बन्धः तावत्कालएव औपाधिकधर्मः वर्तते । न तावन्मात्रेण सम्बन्धस्य मिथ्यात्वं जलादावौष्ण्यवत् औष्ण्यं च परम्परासम्बन्धेन अग्निसम्बन्धदशायां सत्यमेव । अतः सम्बन्धस्य स्वाभाविकत्वे सार्व-दिकत्वं कर्ममूलकत्वे कालविशेष एव तत्सत्वम्, इति जाग्रत्कालिकपदार्थासम्बन्धः स्वाभाविकसम्बन्धशून्यत्वेनात्र प्रति पिपादयिषितः । एवं 'बुद्धान्ताय' इत्यनन्तरं 'स यत्तत्र किंचित्पश्यति' इत्यत्र स्वप्नदृष्टवस्त्वसम्बन्धः जाग्रति प्रति-पाद्यत इति अहमर्थजीवस्यैव 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इत्यत्र 'अथो खल्वाहुः' इति मतान्तरनिरसन

## गूढार्थसङ्ग्रहः

पूर्वकं स्वप्रकाशत्वं वाक्यद्वयेन निर्धारितं भवति । 'यथा च वृत्त्यतिरिक्तभानासिद्धिः तथा स्वयं ज्योतिष्ट्वप्रकरणे विस्तरेण वक्ष्यामः' (प्र.व्य.उपपत्तौ) इति वदद्भिः स्वयं ज्योतिष्ट्वनिरूपणे 'अत्रायं पुरुषः स्वयं ज्योतिः' इति स्वप्नप्रकरणस्थश्रुतिरेवोदाहृता । स्वप्ने च 'स्वेन भासा' इत्यत्र वृत्तिः पूर्वमभिहितैव । वृत्तेः चैतन्यस्य च प्रकाशत्वमेकार्थकज्योतिर्भाश्शब्दाभ्यां श्रुत्यैव प्रदर्शितम् । तेन च विषयप्रकाशः 'स्वेन भासा' इत्यत्रोक्तभासैव प्रभास्थानापन्नस्य तस्यैव विषयसम्बन्धात् । आत्मनस्तु 'कतम—हृद्यन्तर्ज्योतिःपुरुषः' इत्यत्र हृत्सम्बन्धस्योक्त्या विषयसम्बन्धो नास्तीति स्फुटं प्रतीयते ॥

एवं च विषयप्रकाशकचैतन्यस्य परमते सिद्धिः कथम्? एतेन आत्मा स्वप्रकाशः स्वसत्तायां प्रकाशव्यतिरेकविधुरत्वात्, इति विवरणोक्तानुमाने सजातीयप्रकाशाप्रकाश्यत्वमेव साध्यम्, स्वाप्रकाश्यसजातीयाप्रकाश्यत्वेनावेद्यत्वस्य लाभादित्युक्तिः 'आत्मैवास्य ज्योतिर्भवति' इत्यत्र एवकारप्रयोगश्च अवेद्यत्वानभ्युपगमे न सम्भवति इत्याक्षेपश्च निरवकाशः । अहंत्वानुकूलत्वैकत्वविशिष्टस्य आत्मान्याप्रकाश्यत्वं सिद्धान्तेऽपि सम्मतम् । तदतिरिक्तधर्मास्तु न स्वप्रकाशत्वबलात् सिध्यन्ति । तत्तद्धर्मविशिष्टस्य व्यवहारे धर्मभूतज्ञानस्यापेक्षितत्वेऽपि अहंत्वादिविशिष्टव्यवहारे स्वातिरिक्तानपेक्षत्वेन स्वप्रकाशत्वसम्भवात् । वृत्त्यतिरिक्तभानसिद्धिरित्यादिसिद्धिविवरणगुरुचन्द्रिकायां 'तमेव भान्तम्' इत्यादि श्रुतेरुदाहृतायाः (श्री.भा.४१८) परसम्मतार्थसाधकत्वमिति प्रागेव (४१९—४५४.पुटयोः) निरूपितम् ॥

'स्वेन भासा स्वेन ज्योतिषा' इति श्रुतौ भाश्शब्देन वृत्तिप्रकाशस्यैवाभिधानेन 'तस्य भासा' इत्यत्र तत्सम्बन्धिवृत्तिप्रकाशस्यैव सर्वभानप्रयोजकत्वं भवद्भिरेषितव्यम् । तथा च विषयभासकत्वं वृत्त्यतिरिक्तचितः परसम्मतं न घटते । 'तमेव भान्तमनुभाति' इत्यत्र एवकारेण आत्मातिरिक्तस्य भासकत्वव्यवच्छेदेन 'तस्य भासा सर्वमिदं विभाति' इति विकल्पः इति सिद्धान्तसिद्धाञ्जनोक्तिरप्यनुपादेया । 'तमेव भान्तम्' इत्यत्र भान्तमित्यनेन वृत्त्याश्रयत्वस्यैव विवक्षणीयतया वृत्त्याश्रयत्वविशिष्टतदतिरिक्तस्य भासकत्वव्यवच्छेदे एवकारेण वृत्तेर्भासकत्वव्यवच्छेदो न घटते । भान्तमादित्यमेवानुभाति सर्वम् इत्यादौ प्रभायाः भासकत्वव्यवच्छेदस्य कस्याप्यसम्मतत्वात् । वृत्तिसत्तादशायामेव सर्वस्य भानं नत्वन्यदा इति तात्पर्येण भान्तमिति प्रयुक्तम्; एवंस्थिते वृत्तेर्भासकत्वव्यवच्छेदः न कथंचिदपि सिद्ध्यति ॥

एतेन एककूटस्थनिर्धर्मकसाक्षिसाधकत्वं सिद्धान्तबिन्दौ 'तमेव भान्तम्' इति श्रुतेः यदुक्तं (२२३.पु) तन्नघटत इति सिद्धम् । एवं तत्रोदाहृता 'न दृष्टेर्द्रष्टारं पश्येः' इति श्रुतिरपि न तत्साधिका । 'दृष्टेः चाक्षुषादिवृत्तिज्ञानस्य द्रष्टारम् अनुभवरूपम् । पश्येरिति चाक्षुषादिवृत्तिविषयीकुर्याः' इति तट्टीकायां (२२४.पु) उक्तेऽर्थे कथमेकनिर्धर्मकसाक्षिसिद्धिरिति विवेचनीयम् । द्रष्टारमित्यस्य अनुभवरूपमित्यर्थः कथम्? दृष्टिरिति द्विविधा भवति लौकिकी पारमार्थिकीचेति । तत्र लौकिकी चक्षुस्संयुक्तान्तःकरणवृत्तिः, सा क्रियत इति जायते विनश्यति च । यात्वात्मनो दृष्टिः अग्न्युष्णप्रकाशादिवत् साच द्रष्टुः स्वरूपत्वान्नजायते न विनश्यति च । सा क्रियमाणया उपाधिभूतया संसृष्टेवेति व्यपदिश्यते द्रष्टेति । भेदवच्च द्रष्टुर्दृष्टेरिति च । तथा च वक्ष्यति षष्ठे 'ध्यायतीव लेलायतीव, नहि द्रष्टुः दृष्टेः विपरिलोपो विद्यते' इति च । तमिममर्थमाह—लौकिक्या दृष्टेः कर्मभूतायाः द्रष्टारं स्वकीयया नित्यया दृष्ट्या व्याप्तारं न पश्येः' इति अत्र आनन्दगिरिविवरणम् । 'आत्मा नित्यदृष्टिस्वभावः न दृश्यायाः दृष्टेर्विषय इति 'एषचेन्नदृष्टेः' इत्यादिवाक्य-

## गूढार्थसंग्रहः

स्यार्थः। तदा नहीत्यादिना अस्यैकवाक्यत्वं सिद्ध्यति। तस्माद्यथोक्तार्थत्वमेव 'न दृष्टेः' इत्यादिवाक्यस्यार्थः इत्याह नहीति इति। अत्र भाष्योक्तावपि द्रष्टारमित्यस्य दृष्टिकर्तारमित्यर्थः परित्यक्तः। स्वकीयया नित्यया दृष्ट्या व्यासारमिति क्वापि तच्छब्दबोध्यतया कस्याप्यसम्मतोऽर्थः अभ्युपगत इति स्फुटम् ॥

अस्याः 'नान्योऽतोऽस्ति' इति श्रुतेश्चायमर्थः भगवतैव वक्ष्यते। 'नहि द्रष्टुः' इत्यादिश्रुतेः आत्मा कूटस्थ नित्यदृष्टिस्वभावः इत्यर्थं सिद्धवत्कृत्य 'न दृष्टेर्द्रष्टारं पश्येः' इत्यस्य कूटस्थनित्यदृष्टिरूपात्मपरत्वं परैः सिद्धान्तितम्। 'नहि द्रष्टुर्दृष्टेः' इत्यत्र (शं) भाष्यम् 'स्त्रीपुंसयोरिवैकत्वान्नपश्यतीत्युक्तम् स्वयंज्योतिरिति च। स्वयंज्योतिष्ट्वंनाम चैतन्यात्मस्वभावता। विप्रतिषिद्धमेतच्चैतन्यमात्मस्वभावः न जानातिचेति। न विप्रतिषिद्धम्। उभयमप्येतदुपपद्यतएव। कथम् यद्वै सुषुप्ते तन्नपश्यति पश्यन्वैतत् तत्र पश्यन्नेव न पश्यति यत्तत्र सुषुप्ते न पश्यतीति जानीषे तन्न तथा गृह्णीयाः कस्मात् पश्यन्नेव भवति तत्र। नन्वेवं न पश्यतीति सुषुप्ते जानीयाः। यतो न चक्षुर्वा मनो वा दर्शने करणं व्यापृत मस्ति। व्यापृतेषुहि दर्शनश्रवणादिषु पश्यतीति व्यवहारो भवति शृणोतीति वा। नच व्यापृतानि करणानि पश्यामः तस्मान्नपश्यत्येवायम्; नहि। किंतर्हि पश्यन्नेव भवति। कथम्? नहि यस्माद्द्रष्टुः स्तृष्टिकर्तुर्या दृष्टिः तस्या दृष्टेः विपरिलोपः विनाशः स नविद्यते। यथा अग्नेरौष्ण्यं यावदग्निभावि तथाचायमात्माऽविनाशी अतोऽविनाशित्वादात्मनो दृष्टिरप्यविनाशिनी। यथाऽऽदित्यादयो नित्यप्रकाशस्वभावा एव सन्तः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयन्ति, तथा अयमात्मा अविपरिलुप्तस्वभावया दृष्ट्या नित्यया द्रष्टेत्युच्यते। यदि ह्यन्यथाऽप्यात्मनो द्रष्टृत्वं दृष्टं तदाऽस्य द्रष्टृत्वस्य गौणत्वम्। नत्वात्मनोऽन्यो दर्शनप्रकारोऽस्ति। तदैवमेव मुख्यं द्रष्टृत्वमुपपद्यते। यथाऽऽदित्यादीनां प्रकाशयितृत्वं नित्येनैव स्वाभाविकेन अक्रियमाणेन प्रकाशेन। तदेव च प्रकाशयितृत्वं मुख्यम्। प्रकाशयितृत्वान्तरानुपपत्तेः। ननु अनित्यक्रियाकर्तृविषय एव तृच्प्रत्ययान्तशब्दस्य प्रयोगो दृष्टः। यथा छेत्ता भेत्ता गन्तेति तथा द्रष्टेत्यत्रापि इतिचेत् न; प्रकाशयितेति द्रष्टृत्वात्। कथं तर्हि न पश्यतीत्युच्यते, ननु तदस्ति किं तत् द्वितीयं विषयभूतं। किं विशिष्टम् ततः द्रष्टुरन्यत्। अन्यत्त्वेन विभक्तं यत्पश्येत्। यद्धि तद्विशेषकारणमन्तःकरणं चक्षूरूपं च तदविद्यया अन्यत्वेन प्रत्युपस्थापितमासीत् तदेतस्मिन्काले एकीभूतम् आत्मनः परिष्वङ्गात्। द्रष्टुर्हि परिच्छिन्नस्य विशेषदर्शनाय करणमन्यत्वेन व्यवतिष्ठते' इति ॥

अत्र वार्तिकम्—'दृष्टिरेवतु सा द्रष्टा नतु कारकलक्षणा। द्रष्टुर्विशेषणत्वेन दृष्टेरिति परिग्रहात् ॥
छेत्तृतृजन्तश्रवणात् दृष्टिश्चेत्स्यात्सकर्तृका। पश्यन् द्रष्टुरितिह्येवं नैवंकर्त्राद्यसम्भवात् ॥
नेह बुद्ध्यादिसद्भावः तदाऽपीति श्रुतेर्भवेत्। सुषुप्तेऽतो न धात्वर्थः प्रत्ययार्थश्च नेष्यते ॥
यथाऽवकाशदात्रितिभण्यते निष्क्रियं वियत्। छेत्तृतृजन्तवचसा तथाऽऽत्मा भण्यते ध्रुवः ॥
निरन्वयो विनाशोऽस्य नहीत्युक्त्या निषिध्यते। अविनाशीतिचाप्यत्र विकारापह्नुतेर्वचः ॥
अविनाशीति मैत्रेय्यां द्विधा नाशनिषेधकृत्। वचनं प्रागुपन्यस्तं तदेवात्रापि हेतवे ॥
परिणामिनिषेधस्यादविनाशगिराऽऽत्मनः। अनुच्छित्तिगिरा नाशे वार्यते योनिरन्वयः ॥'

इति। अत्र 'अविनाशीवा' 'नहि द्रष्टुः' इति श्रुतिद्वयैकार्थ्यं परेषामपि सम्मतमिति स्फुटम् ॥

'प्रज्ञानघन एव' इति श्रुतिसमनन्तरश्रुतौ 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इत्यत्र धर्मः 'विज्ञानघन एव' इति श्रुत्यनन्तरश्रुतौ 'अलं वा अरे विज्ञानाय' इत्युक्त्या विज्ञानरूपः। तस्य च नित्यत्वं अनु-

## गूढार्थसंग्रहः

च्छित्तिपदेन विवक्षितमिति प्रागुक्तार्थ एव श्रुत्यन्तरेण दृढीक्रियते। '**न विज्ञातुर्विज्ञातेर्विपरिलोपोविद्यते**' इति यद्यपि परैः (शं) 'दृष्टिश्रुतिर्मतिर्ज्ञातिः स्वप्ने दृष्टा जनैस्सदा। तासामात्मस्वरूपत्वात् अतःप्रत्यक्षताऽऽत्मनः॥' (उ.स. प.ग्र.२६) इत्यत्रापि उपनिषद्भाष्योक्तार्थः प्रदर्शितः। तथाऽपि नायमर्थः श्रुतौ विवक्षितः॥

स्वप्नप्रकरणे आत्मादिशब्दाः जीवपरा इति परैरप्यङ्गीक्रियते। इदं च तदनन्तरसुषुप्तिप्रकरणस्थं वाक्यम्। तत्र 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंच न वेद नान्तरम्' इति पूर्वश्रुतौ प्राज्ञशब्दः प्रकर्षेण जानातीति व्युत्पत्त्या प्रकृष्टज्ञानाश्रयवचनः जीवपरयोः अत्यन्तवैषम्यबोधनाय प्राज्ञशब्दप्रयोगः संपरिष्वक्तशब्दः नीरन्ध्रसंश्लेषविशिष्टवाची 'पुरीततिशेते' इत्यादिश्रुत्यन्तरैकार्थ्येन पुरि तद्देशावच्छेदेन परमात्मना नीरन्ध्रसंश्लेषो जीवस्य विवक्षितः। प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेन आत्मना परेण ज्योतिषा संपरिष्वक्तः—एकीभूतः।' इति भाष्ये (शं) प्राज्ञपदसंपरिष्वक्त शब्दयोः प्रसिद्धार्थपरित्यागः स्फुटः। स्त्रीपुरुषयोः संपरिष्वक्तयोरपि एकत्वं लोके नानुभवसिद्धम्। अतः एतच्छ्रुतौ स्वोक्तार्थमनुसृत्य 'नहि द्रष्टुर्दृष्टेः' इत्यादिश्रुतेरर्थवर्णनं नैव घटते। स्वप्नप्रकरणे 'देव इव राजेव अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः' इत्यत्र ऐक्यस्य कथनेन ऐक्यमपारमार्थिकमिति सुषुप्तिप्रकरणे 'प्राज्ञेनात्मना संपरिष्वक्त' इत्यत्र तद्विवक्षाकल्पनमपि न युज्यते। अग्न्यौष्ण्ययोरादित्यप्रकाशयोश्च भेदः प्रागेवोक्तः। प्रकाशयिता इत्यत्र प्रकाशकत्वमेव शब्दबोध्यम्। आदित्यः स्वप्रभाद्वारा विषयान् प्रकाशयति इत्यर्थ एव दृष्टान्ते सर्वसम्मतः। 'यथा प्रकाशयत्येकः कृत्स्नम्' इति उपसंहारस्य 'एतद्योवेत्ति तं प्राहुः' इत्युपक्रमस्य च ऐकरस्येन आदित्यस्य प्रभाद्वारा विषयप्रकाशकत्ववत् अहमर्थजीवस्य धर्मभूतज्ञानद्वारा विषयप्रकाशकत्वमेव गीतायां विवक्षितमिति पूर्वमेव निरूपितम्॥

अत्र स्वप्ने 'योऽयं विज्ञानमयः' 'स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इत्यत्र स्वप्रकाशधर्मभूतज्ञानसम्बन्ध उक्तः। सुषुप्तौ 'न बाह्यं किंच न वेद नान्तरम्' इति बाह्याभ्यन्तरज्ञानाभावः प्रतिपाद्यते। तेन नैयायिकवत् आगन्तुकज्ञानस्य सुषुप्तौ निरन्वयविनाशः श्रौतसिद्धान्त इति भ्रमस्स्यात् इति तदपनोदनाय 'यद्वै तन्नपश्यति' इत्याद्यारम्भः न पश्यतीति अन्तःकरणचक्षुरादिव्यापारविरहेणैव घटत इति परैरुपपादितं सिद्धान्तेऽपि सम्मतम्। 'द्रष्टुर्दृष्टेः' इत्यत्र सामानाधिकरण्येनान्वये द्रष्टृशब्दस्यैव वैयर्थ्यम्। दृष्टिरूपः द्रष्टा इत्यर्थोऽपि अनुपपन्नः। द्रष्टुरित्यत्र तृजर्थस्याविवक्षायां पदद्वयार्थस्याभेदः घटो घट इत्यत्रेव न वाक्येन बोधयितुं शक्यते। अतः तृजर्थविवक्षामङ्गीकृत्य पूर्वं स्वप्ने द्रष्टृत्वेनोक्तस्य जीवस्य सुषुप्तौ 'दृष्टेर्विपरिलोपो न विद्यते' इत्येव वाक्यार्थः। एवमङ्गीकारएव 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इति श्रुत्यन्तरैकार्थ्यम्। अत्र अविनाशित्वात् इत्यत्रात्मगताविनाशित्वमेव विवक्षितं मतद्वयेऽपि। आत्मनः दृष्टिरूपत्वप्रतिपादनेनैव आत्मनः अविनाशित्वे दृष्टेरप्यविनाशः सिद्ध्यतीति पृथक् दृष्टेर्विपरिलोपाभावप्रतिपादनमेव परमते निरर्थकम्॥

सिद्धान्ते च द्रष्टुरविनाशित्वं हेतुः। द्रष्टुरित्यर्थे तच्छीलार्थप्रत्ययेन स्वाभाविकदृष्ट्याश्रयः अभिधीयते। स्वाभाविकदृष्ट्याश्रयस्याविनाशित्वेन तत्स्वभावभूतदृष्टेरप्यविनाशः श्रुतौ प्रतिपाद्यते। एतत्तात्पर्येण भगवता वक्ष्यते 'ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यमिति। नहि 'द्रष्टुर्दृष्टेः विनाश' इत्यनभिधाय विपरिलोपशब्दोपादानेन आत्मनित्यत्वापेक्षया विलक्षणं दृष्टिनित्यत्वमिति श्रुत्यैव बोधितम्। आत्मनः निरन्वयविनाशाभावः अविनाशित्वादित्यत्र नैव विवक्षितः। बौद्धमतनिरसनस्यात्राविवक्षितत्वात्। किंतु सङ्कोचविकासरूपपरिणामशून्यत्वमेव। 'विपरि

## गूढार्थसङ्ग्रहः

लेप' इत्यत्र परीत्युपसर्गेण परितः अनवस्थितेः विरहः प्रतिपाद्यते। परितः लोपस्य निषेधेन एकत्र लोपः सम्मत इति प्रतीयते। पटादेः प्रसारणदशायामधिकदेशे परिदृश्यमानस्य आकुञ्चनदशायां अधिकदेशे अनवस्थितिः यथा तद्वत् धर्मभूतज्ञानस्य इन्द्रियद्वारकविषयसम्बन्धविरहदशायां विषयदेशे अनवस्थितिः जीवदेशे स्थितिश्च एतेन बोधिता भवति। एतेन धर्मभूतज्ञाननित्यत्वं सङ्कोचविकासवत्त्वेऽपि सङ्कोचदशायां विकासाभावरूपं तेन निरन्वयविनाशाभावबोधनमुखेन नैयायिकमतवैलक्षण्यं दर्शितं भवति॥

'नतु तद्द्वितीयमस्ति ततोऽन्यत् विभक्तं यत्पश्येत्' इत्युत्तरवाक्ये तदित्यस्य दर्शनकारणीभूतेन्द्रियसम्बन्धवदित्यर्थः। तच्छब्दोपादानेन द्वितीयसामान्यविरहो नात्र श्रुतौ विवक्षितइति निर्धारितं भवति। इन्द्रियसम्बन्धविशिष्टद्वितीयाभावः द्वितीयवस्तुनि इन्द्रियसम्बन्धाभावनिबन्धनः। सुषुप्ताविन्द्रियव्यापारविरहश्च 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशः तस्मिन् शेते। तानि यदा गृह्णाति अथहैतत् पुरुषः स्वापिति नाम' (बृ.४.१.१७) इति प्रागेवाभिहितः। 'तानि यदा गृह्णाति अथहैतत् पुरुषः स्वापिति नाम' इत्युक्त्या करणव्यापारोपरमः सुषुप्तिः इति सुषुप्तिस्वरूपमपि प्रदर्शितं भवति। सुषुप्तौ न दृश्यसामान्यलयः प्रमाणाभावात्।' इति भावप्रकाशे (द्वितीसम्पुटे) निरूपितम्॥

एतेन 'न बाह्यं किंचन वेद नान्तरम्' इति यदुक्तं तन्न दृष्टिलोपात्, किंतु दृश्यलयादिति अलुप्तदृष्टिरूप आत्मेत्याह—'यद्वै तन्नपश्यति' इत्यादि। तत् तदा सुषुप्तौ यन्नपश्यतीत्याद्युक्तं तत्पश्यन्नेव न पश्यति इत्यादिरूपम्। 'प्राज्ञेनात्मना संपरिष्वक्तः' इत्यनेनोक्तो लयः दृश्यमात्रस्येत्याशयेनाह—नतु तद्द्वितीयमस्तीत्यादि। ततो द्रष्टुरन्यद्विलक्षणं जडं द्वितीयं विभक्तं स्थूलं यन्नास्ति यद्येन चक्षुरादिना यद्रूपादिकं च पश्येत्। किंतु अविभक्तं संस्काररूपं सर्वमस्तीति शेषः। अतएव 'सुषुप्तिकाले सकले विलीने' 'स्वमपीतो भवति' इत्यादि श्रुत्यन्तराणि। तथा च संस्काररूपेण द्वैतावस्थानस्य लयस्य ब्रह्मण्युक्तत्वात् संस्कारस्यचोपादान एव स्वीकारात् उपादानत्वस्य च ब्रह्मण्यपरिणामिनि परिणाम्यविद्योपरागेण वाच्यत्वात् जडयोरुपादानोपादेयत्वनिर्वाहकतादात्म्यस्य च कल्पितत्वात् विनिगमकाभावेन द्वैतसामान्यस्य कल्पितत्वसिद्धिरिति भावः' इति गुरुचन्द्रिकोक्तिः (ए.अ.ब्र.श्रु.अ.वि) स्वाभिप्रेतार्थस्य श्रुतावारोपणमेवेति बोध्यम्॥

सुषुप्तौ करणव्यापारविरहमात्रं श्रुत्यनुभवसिद्धम्। करणानामपि परिणामिनि स्वोपादाने लयः न क्वापि श्रुतौ प्रतिपादितः करणानामेव स्वपरिणाम्युपादाने लयस्य श्रुतावप्रतिपादने का कथा दृश्यसामान्यस्य परिणाम्युपादाने लय प्रतिपादनस्य। 'ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यत्र दर्शनविरह एवाभिहितः, नतु दर्शनविषयपदार्थविरहः। नतु तद्द्वितीयमस्ति इत्यत्र तच्छब्देन द्वैतसामान्यविरहो न विवक्षित इति निर्णीतम्। परमते द्रष्टुरित्यस्य तच्छब्दस्य च वैयर्थ्यमेव। 'द्रष्टुर्दृष्टेः' इत्यनेन दृष्टिकर्तृसम्बन्धिदृष्टिरेव अभावप्रतियोगितया अत्र प्रतिपिपादयिषिता। नतु दृष्टिरूपात्मेति। द्रष्टृकर्तृकदृष्टिविरहस्यात्र प्रतिपादनादेव 'प्राज्ञेनात्मना—नान्तरम्' इति श्रुतौ परमात्मसंपरिष्वक्तस्य अहमर्थ जीवस्य बाह्याभ्यन्तरविज्ञानविरहस्य अत्र साधनं सङ्गतं भवति। 'प्राज्ञेन—न बाह्यं किंचन वेद नान्तरम्' इति विन्यासेन 'तद्यथा प्रियया' इति दृष्टान्तोपादानेन च जीवब्रह्मणोरैक्यं लयो वा न सम्भवतीति बोधितम्॥

एवमेव 'सति सम्पद्य न विदुः सति सम्पाद्यमाह' इति 'सत आगत्य न विदुः सतः आगच्छामह' इति छान्दोग्यश्रुत्यादावपि जीवब्रह्मणोः भेदएव बोधितः। अतः स्वप्नानन्तरसुषुप्तावपि 'नहि द्रष्टुर्दृष्टेः' इत्यत्र द्रष्टा जीव

### श्रीभाष्यम्

**'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (६.३.२०) 'अथयोवेदेदं जिघ्राणीति सआत्मा'**

### श्रुतप्रकाशिका

धर्मधर्मिभावं ज्ञापयति **न विज्ञातुरिति**। ज्ञातृसम्बन्धिज्ञानस्य नित्यत्वे कथिते ज्ञानमात्रस्य नित्यत्वशङ्काव्युदासार्थं ज्ञातुरेवात्मत्वं दर्शयति। **अथयइति**। एकवाक्येन ज्ञानगुणकत्वस्वयम्प्रकाशत्वयोस्सहप्रतिपादकं वाक्यमाह—

### गूढार्थसङ्ग्रहः

एव विवक्षितः। तद्दृष्टेरविपरिलोपस्योक्त्या 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इति श्रुत्यन्तरैकार्थ्यमपि सिद्धम्। एवं 'संज्ञानमाज्ञानम्' इत्याद्यैतरेयोपनिषद्वाक्येऽपि अयमेवार्थो विवक्षित इति भावप्रकाशे (द्वि.सं)निरूपितम्॥

'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यत्र चक्षुरिन्द्रियजन्यज्ञानाविपरिलोपः चक्षुरिन्द्रियविषयसम्बन्धाभावनिबन्धनः प्रदर्शितः। अत्र विशेष्यभूतज्ञानसत्त्वेऽपि विशेषणाभावनिबन्धनः विशिष्टाभावः विवक्षितः। ननु चक्षुरिन्द्रियजन्यत्वविशिष्टज्ञानस्यैवाविपरिलोपः। ननु 'तद्द्वितीयमस्ति' इत्यादिना इन्द्रियसम्बद्धविषयाभावेन दर्शनाभावस्योपपादानात्। एतद्वाक्योपादाने ज्ञानरूपधर्मिणः अविपरिलोपः न झटिति बोद्धुं शक्यते इत्यभिप्रेत्य **'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'** इति ज्ञानसामान्याविपरिलोपबोधकचरमश्रुतिः भाष्ये उपात्ता। 'यत्र वा अन्यादिव स्यात्' इत्यत्र इवेति सम्भावनायां सात्त्वेन्द्रियविषयसम्बन्धकालएवेत्यर्थः॥

यद्यपि 'कतम आत्मा योऽयं विज्ञानमयः' इति श्रुतिः 'न विज्ञातुः' इत्येतत्पूर्वं पठिता। अतः सैवोपादातव्या। तथाऽपि उक्तश्रुतौ परसम्मतः दृष्ट्यादिरूप आत्मा नैव विवक्षित इति निर्धारणाय अत्र तदविवक्षाबोधिनीं छान्दोग्यश्रुतिमेवोपादत्ते—**अथ योवेदेदं जिघ्राणीति स आत्मा इति॥**

ननु 'तीर्णोहि तदा सर्वान् शोकान् हृदयस्य भवतीति, यद्वै तन्न पश्यति' इत्यतः पूर्ववाक्ये हृदयशब्दार्थभूतं ब्रह्मैव यच्छब्दार्थः। तस्य दृष्टेरविपरिलोप एव 'नहि द्रष्टुः' इत्यादिवाक्ये विवक्षितः। एवं छान्दोग्ये प्रजापतिवाक्ये 'य आत्मा अपहतपाप्मा' इति प्रसिद्धार्थेन प्रकृतपरामर्शिना च य इति सर्वनाम्ना 'एष आत्मा अपहतपाप्मा' इति प्रस्तुतदहरवाक्ये प्रसिद्धेश्वरपरामर्श एव युक्तः। जागरितस्वप्नसुषुप्ताशरीरवाक्यानि प्रकरणचतुष्टयगतानि ब्रह्मपराण्येव तत्र 'य एषोन्तरक्षिणि पुरुषो दृश्यते एष आत्मा' इत्यत्र 'अन्तस्तद्धर्मोपदेशात्' 'अन्तर उपपत्तेः' इति सूत्रद्वये अक्षिस्थत्वेन निर्धारितस्य परमात्मनः प्रत्यभिज्ञानात्। जीवस्य हृदयस्थत्वेन अक्षिस्थत्वाभावाच्च। 'य एष स्वप्ने महीयानश्चरति एष आत्मा' इत्यत्र 'स्वप्नेन शारीरमभिप्रहत्य असुप्तस्सुप्तानभिचकाशीति' इति श्रुत्यन्तरात् अत्रापि महीयानत्वलिङ्गाच्च। 'यत्रैतत् सुप्तः समस्तस्सन् प्रसन्नः स्वप्नं न विजानाति एष आत्मा' इत्यत्र 'प्राज्ञेनात्मना संपरिष्वक्तः' इत्यादि श्रुत्यन्तरात्। अत्रापि 'यत्र सुप्तः' इति यच्छब्दोक्तस्य समस्तसुप्ताधारस्यैव 'एष आत्मा' इति एतच्छब्देन परामर्शाच्च। 'मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्य शरीरस्यात्मनः अधिष्ठानम्' इत्यत्राशरीरशब्देन निरपेक्षस्य सर्वकालिकस्य च शरीरराहित्यस्य च स्वरसतःप्रतीतेः। तस्यचेश्वर एव सम्भवात्॥

किंच अक्ष्यादिवाक्येषु प्रतिवाक्यम् 'एष आत्मेतिहोवाच एतदमृतमेतदभयमेतद्ब्रह्म' इति श्रवणात् कथं तेषां जीवविषयता? दहरवाक्ये 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्युक्तस्यान्वेष्टव्यत्वस्य 'सोऽन्वेष्टव्यः' इति प्रजापति-

## गूढार्थसंग्रहः

वाक्येऽपि श्रवणात् दहरवाक्योक्तफलस्य प्रजापतिवाक्ये श्रवणात्, 'इन्द्रो विरोचनश्चैव श्रुत्वातं ब्रह्मणोऽक्षिगम्। विष्णुमानन्दरूपेतम्' इत्यादि स्मृतेश्च न तयोर्भिन्नार्थता। इति (त.प्र.चं) 'स यथा प्रयोग्यआचरणे युक्तः एवमस्मिन्शरीरे प्राणो युक्तः' इत्यत्र प्राणशब्दस्य अतएव प्राण इत्यादौ ब्रह्मण्येव प्रसिद्धत्वात् 'इदं पश्यामि जिघ्राणीत्यादि जीवा नवै विदुः। द्रव्याणामपरिज्ञानात् वेदासौ पुरुषोत्तमः॥' इति स्मृत्या 'अथ योवेदेदं जिघ्राणि' इत्यस्य विष्णुपरत्वात् 'एतं देवा आत्मानमुपासते' इति देवोपास्यश्रवणाच्च। नहि जीवमात्रं देवा उपासते 'ऊर्जं पृथिव्या—भक्त्योरुगायमुपासते' इति हि श्रुतिः (चं.प्र) इति च नवीनैः व्यवस्थापनात् श्रुतिद्वयं जीवधर्मभूतज्ञानविषयमेव न भवतीति श्रुतिद्वयेन कथं तत्सिद्धिः? इतिचेत्—अत्रायमाशयो वृत्तिकाराणाम्। स्वप्नप्रकरणस्य जीवपरत्वसाधनेन ब्रह्मपरत्वासम्भवः सिद्धः। तत एव तदनन्तरसुषुप्तिप्रकरणमपि जीवपरमेव। 'तीर्णोहि तदा सर्वान् शोकान् हृदयस्य—भवति' इति पूर्ववाक्ये जीवस्य 'प्राज्ञेनात्मना' इति तत्पूर्ववाक्ये ज्ञानविरहवत् शोकविरह उक्तः। शोकोऽपि ज्ञानावस्थाविशेष एव। बाह्याभ्यन्तरज्ञानाभाववत् ज्ञानावस्थाविशेषशोकाभावस्योक्त्या ज्ञानभावोऽपि दृढीकृतः॥

नैयायिकादिमतेऽपि ज्ञानानन्तरमेव शोकः इति शोकमूलज्ञानविरहः सिद्ध्यति। सुषुप्तौ तन्मते ज्ञानविरहः अभ्युपेयत एव। एतन्मतवैलक्षण्यबोधनार्थं 'न बाह्यं किंचन वेद नान्तरम्' इत्यत्र बाह्यमान्तरमिति पदद्वयम्। तत्र 'न बाह्यं किंचन वेद नान्तरम्' इत्यत्र बाह्यमान्तरमिति पदद्वयोपादानेन सूचितएवार्थः 'यद्वै तन्नपश्यति' इत्यादि वाक्येन दृढीक्रियते इत्येव युक्तम्। 'यद्वै तन्नपश्यति' इत्यत्र 'पश्यन्वै तन्नपश्यति' इत्युत्तरवाक्ये तच्छब्दस्य पुल्लिङ्गपश्यन्नित्यस्य च प्रयोगानुसारेण 'द्वैतं यन्नपश्यति' इति स्फुटार्थकशब्दप्रयोगविरहेण च 'यत् वै तन्नपश्यति' इत्येव विभागो युक्तः। द्वैतमित्यस्य च समाभ्यधिकम् (रा.ती.ख) इत्यर्थः शब्दशक्त्या न लभ्यते। वैशब्दः प्रसिद्धौ दर्शनाभावः प्रसिद्धः। तच्छब्देन 'न बाह्यं किंचन' इति पूर्वोक्तबाह्यपदार्थः परामृश्यते। बाह्यं बहिरिन्द्रियसम्बद्धमित्यर्थः। जागरदशायां बहिरिन्द्रियसम्बद्धं सुषुप्तौ न पश्यतीति यावत्। 'नहि द्रष्टुर्दृष्टेः विपरिलोपो विद्यते' इत्यत्र जागरदशायां बाह्यपदार्थद्रष्टुः सुषुप्तौ द्रष्टेरविपरिलोप एव प्रतिपिपादयिषितः। बहिरिन्द्रियविषयसम्बन्धाभावेन बहिरिन्द्रियजन्यज्ञानाभावः विशेषणाभावनिबन्धनः। नतु ज्ञानरूपधर्म्यभावनिबन्धनः इति वाक्यतात्पर्यं पूर्वमेवोक्तम्॥

एतेन ज्ञानस्य द्रव्यत्वं तस्य प्रभावत् सङ्कोचविकासार्हत्वंच सूचितम्। तेन द्रव्यांशे सत्कार्यवादएवेत्यपि सिद्धम्। एतेन आगन्तुकज्ञानवादिनैयायिकमताद्विशेषः प्रदर्शितो भवति। एवमङ्गीकारेणैव मुक्तौ उत्तरावधिरहितब्रह्मानुभवप्रतिपादकश्रुतीनामविरोधः। अतः स्वप्नप्रकरणवत् सुषुप्तिप्रकरणमपि जीवविषयकमित्येव युक्तम्। नव्यमते ब्रह्मणो दृष्ट्यादेः ब्रह्माभिन्नत्वानङ्गीकारेण ब्रह्माभिन्नदृष्टिविरहएवात्र विवक्षित इति वाच्यम्; ब्रह्माभिन्नदृष्टिः पूर्वं न प्रस्तुता। दृष्ट्यादेर्ब्रह्माभिन्नत्वसिद्ध्यनन्तरं विशेषनिबन्धनभेदव्यवहारः इत्युक्तिः घटते। इति श्रुतिस्वारस्यं नव्यमते नैव सम्भवति। एवं परमतेऽपि इन्द्रियद्वारकवृत्त्यतिरिक्त तत्सम्बद्धाचितः अविपरिलोपः अत्र विवक्षित इति वाच्यम्; परसम्मतचितएव प्रमाणतः सिध्यसम्भवे अस्याः श्रुतेः तद्विषयवत्त्वकल्पनमपि न सम्भवति। एवं परमते पश्यन्नित्यस्याप्यस्वारस्यं बोध्यम्॥

छान्दोग्ये 'य आत्मा अपहतपाप्मा' इत्यत्र यच्छब्देन दहरविद्यायां 'स्वेन रूपेणाभिनिष्पद्यते एष आत्मेतिहोवाच' इत्यत्रोक्तमुक्तात्मैव परामृश्यते। तत्र च 'एष आत्मा' इत्यत्र 'एष संप्रसादः' इति पूर्ववाक्ये प्रस्तुतो जीवात्मैव विवक्षितः। नतु मुक्तप्राप्यं परं ज्योतिः। 'एतदमृतम्' इत्यत्र तस्यैवामृतत्वमुच्यते। 'अस्माच्छरीरात् समुत्थाय'

## गूढार्थसंग्रहः

इति पूर्वमुक्तेः। 'न ह वै सशरीरस्य' इत्यादेरुत्तत्र वक्ष्यमाणत्वाच्च। 'एतदभयम्' इति मुक्तस्यैव भयाभावेनोपपद्यते। 'एतद्ब्रह्म' इति च मुक्तस्य स्वरूपाविर्भावोक्त्या ब्रह्मसदृशाभेदाभिप्रायकम्। श्रुत्यन्तरे 'पुण्यपापे विधूय निरञ्जनःपरमं साम्यमुपैति' (मुं) इत्युक्तेः। 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति गीतावचनाच्च। 'स उत्तमः पुरुषः' इत्यत्र मुक्तजीवब्रह्माभेदो न विवक्षित इत्यत्र मुक्तब्रह्मणोः सादृश्यस्य श्रुत्यादिषु कथनमेव मूलमिति नवीनैरप्यङ्गीकारात्। अत्र ब्रह्मसदृशाभेदएव विवक्षितः इति 'तस्यहवा एतस्य ब्रह्मणो नाम सत्यम्' इति उत्तरवाक्यपर्यालोचनया प्रतीयते। यदि पूर्ववाक्यं ब्रह्मपरं तदा अत्र ब्रह्मण इति शब्दस्य वैयर्थ्यम्। सिद्धान्तेतु तस्येत्यनेन ब्रह्म शब्दोपादानेन च अत्र ब्रह्मपदं मुख्यमेवेति निर्णयः सम्भवति। तदुत्तरं 'सत् ति यमिति तद्यत् सत् तदमृतम् अथ यत्ति तन्मर्त्यम् अथ यद्यं तेनोभौ यच्छति' इत्यत्र पूर्ववाक्योक्तामृतपदार्थमुक्तनियामकत्वस्य ब्रह्मणि प्रतिपादनं पूर्ववाक्येऽमृतपदस्य मुक्तपरतां गमयति। अन्यथा अमृतनियामकत्वोक्तेरस्वारस्यात्॥

एतेन प्रजापतिविद्यायां जागरितस्वप्नसुषुप्तिवाक्येषु 'एष आत्मेतिहोवाच एतदमृतमेतदभयमेतद्ब्रह्म' इति अभ्यासोऽपि सङ्गच्छते। 'य एषोऽक्षिणि पुरुषो दृश्यते' इति अक्षिस्थत्वेन निर्णीतपरमात्मविषयमिति नात्र वक्तुं शक्यते। एकशतवर्षानन्तरमेव आत्मतत्त्वोपदेशस्य व्यक्तत्वात्। प्रथमतः उपदेशसमये निर्णीतपरमात्मतत्त्वज्ञापनासम्भवात्। विरोचनसहितमिन्द्रंप्रति उपदेशसमये विरोचनप्रतारणार्थमित्थमुक्तेस्सम्भवात् विरोचनं विहाय इन्द्रस्यागमनदशायां 'मघवन् मर्त्यंवै' इत्यादिना आत्मतत्त्वोपदेशः युज्यतएव। जीवस्य अक्षिदर्शनेन स्थितिनिर्णयस्य लोकानुभवसिद्धतया प्रथमतः 'य एषो अक्षिणि पुरुषो दृश्यते' इत्यस्य जीवपरत्वेन न विरोधः। जाग्रत्स्वप्नसुषुप्त्यवस्थानां जीवगतत्वेन जीवप्रकरणत्वनिश्चयेन प्रकरणानुरोधेनैव अर्थस्य वर्णनीयत्वात्। अयमर्थः तदुत्तरवाक्येष्वेव सुव्यक्तः। 'तेषां सर्वे लोका आप्ताः' इति फलस्य 'सोऽन्वेष्टव्यः' इति अन्वेष्टव्यत्वस्य च प्रतिपादनं प्रजापतिविद्यायाः दहरविद्याङ्गत्वेनोपपद्यते। अङ्गाङ्गिभावश्चोत्तरत्र स्फुटीकरिष्यते। देवोपास्यत्वमप्यतएवोपपद्यते। प्रजापतिना मघवते उपदिष्टत्वात् तदितरदेवानामपि इन्द्रद्वारा आत्मज्ञानसम्भवेन अङ्गभूतात्मोपासनस्याप्यनुपपत्त्यभावात्। एवमेव 'एषसम्प्रसादोऽस्माच्छरीरात्समुत्थाय' इत्यादिदहरविद्योक्तफलोक्तिरपि॥

'अशरीरवाक्यमपि न परमात्मविषम्, अपितु जीवविषयमेव। 'एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय' इत्यादिवाक्ये शरीरात् समुत्थितस्य स्वस्वरूपाविर्भावः दहरविद्यायामुक्तः, प्रजापतिविद्यायामपि वक्ष्यते। इति जीवस्य शरीरसम्बन्धः तद्विरहश्च प्रतिपिपादयिषितः। शरीरसम्बन्धदशायामेव प्रियाप्रियसम्बन्धः शरीरसम्बन्धाभावे प्रियाप्रियसम्बन्धविरहश्च अवश्यं प्रतिपादनीयः। अन्यथा शरीरात् समुत्थितस्यैव स्वरूपाविर्भाव इति वक्ष्यमाणार्थोपपादनासम्भवादिति वक्ष्यमाणार्थोपपादनायैव जीवस्योभयमवश्यं वक्तव्यम्। 'मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनो अधिष्ठानम्' इत्यत्रापि मुक्त एवाशरीरात्मा विवक्षितः। दहरविद्यायां स्वरूपाविर्भावकथनानन्तरम् 'एष आत्मेतिहोवाचैतदमृतम्' इत्युक्त्या शरीरात् समुत्थितस्य अमृतस्य मुक्तात्मनएव विवक्षानिर्णयात्। शरीरमस्यात्मनः कर्मफलभोगाधिष्ठानमत्र विवक्षितम्। शरीरात् समुत्थितस्य पुण्यपापरूपकर्माभावेन प्रियाप्रियहेत्वभावात् प्रियाप्रियसम्बन्धाभावः। एतेन शरीरात् समुत्थितस्य परंज्योतिरुपसम्पन्नस्य स्वस्वरूपाविर्भावस्य उत्तरत्रोक्तेः परिपोषणं कृतं भवति। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतौ अशरीरमित्यनेनैवोपपत्तौ सन्तमिति शब्दप्रयोगेण पूर्वं शरीरसम्बन्धिनएव अशरीरस्यात्र विवक्षा स्फुटं प्रतीयते। शरीरसम्बन्धतदभावयोः प्रियाप्रियसम्बन्धत-

## गूढार्थसंग्रहः

दभावप्रयोजकत्वस्याविवक्षितत्वे ब्रह्मणः प्रियाप्रियसम्बन्धविगमे बहुषु श्रुतिषु अकर्मवश्यत्वप्रतिपादनं यन्मूलमुक्तं तद्विहाय अशरीरत्वस्य मूलत्वोक्तेः निर्बीजतैव स्यात्। जीवस्यतु शरीरात् समुत्थानानन्तरमेव स्वरूपाविर्भावोक्त्या प्रियाप्रिय विरहस्यापि अशरीरत्वनिबन्धत्वकेनोक्तिर्युक्ता ॥

एतावता 'एष आत्मेतिहोवाच' इत्यादिप्रकरणचतुष्टयगतवाक्यानां अशरीरवाक्यस्य च जीवपरत्वे नानुपपत्तिरित्युपपादितम्। एवं 'य आत्मा अपहतपाप्मा' इत्यस्यापि। दहरविद्यायां 'स्वेन रूपेणाभिनिष्पद्यते' इति रूपं यत् सामान्यत उक्तं तत् 'य आत्मा अपहतपाप्मा' इत्यत्र अपहतपाप्मत्वादिरूपमिति विशेषतः प्रदर्शितम्। एवं प्रदर्शनेन 'एष आत्मा अपहतपाप्मा' इत्यत्र परमात्मसम्बन्धितयोक्तापहतपाप्मत्वादेः जीवेऽपि सत्त्वज्ञाने 'एष आत्मेति होवाच—ब्रह्म' इत्यत्र ब्रह्मसादृश्यमपहतपाप्मत्वादिनेति निर्धारितं भवति। नव्यैरपि 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति सूत्रे ब्रह्मगुणसदृशगुणवत्त्वेन जीवस्य श्रुतिषु ब्रह्माभेदव्यपदेश इति सिद्धान्तितम् ॥

सिद्धान्तेतु 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्यादौ अपहतपाप्मत्वादिगुणानामप्याविर्भावकथनेन 'स्वेनरूपेण' इत्यत्र रूपं 'य आत्मा अपहतपाप्मा' इत्यत्रोक्तापहतपाप्मत्वादिकमेवेति सिद्धान्तितम्। एवमर्थस्य श्रुतौ विवक्षाऽङ्गीकारेण परमसाम्यश्रुतेः स्वरूपाविर्भावश्रुतेश्च ऐकरस्यं सिद्ध्यति। 'य एष स्वप्ने महीयानश्चरति' इत्यत्र स्वप्ने चरतीति निर्देशेन स्वप्ने चरणं जीवस्यैव प्रसिद्धम्। 'चरगतिभक्षणयोः' इत्युक्तार्थस्य जीवएव प्रसिद्धेः। 'स्वप्नेन शारीरम्' इत्यादिश्रुतौ 'असुप्तः अभिचकाशीति' इत्येव वर्तते स्वप्ने चरणं तत्र नोक्तमेव। स्वप्ने जीवस्य महीयानत्वमपि सम्भवत्येव। राजत्वाद्यनुभवदशायां पूजनीयत्वसम्भवात् स्वप्ने पूजनीयश्चरतीत्युक्तेरविरोधात्। सार्वदिकमहीयानत्वरूपपरमात्मधर्मस्तु नात्रोक्तः ॥

दहरविद्यायां 'स यदि पितृलोककामो भवति' इत्यादौ महीयतइत्यभ्यासेन महीयानत्वं जीवेऽपि प्रतिपादितम्। 'तद्यत्रैतत्सुप्तस्समस्तस्संप्रसन्नः स्वप्नं न विजानाति' इत्यत्र यत्रेति परमात्मपरमिति कथं निर्धार्यते? 'प्राज्ञेनात्मना संपरिष्वक्तः' इति श्रुत्यन्तरेतु प्राज्ञेन न वेद इति जीवपरयोः वैलक्षण्यं बुद्ध्यबोधयितृतम्। अत्रतु न तथाविधवैलक्षण्यबोधकश्शब्दो वर्तते। तत्र संपरिष्वक्तशब्देन 'सलिल एको द्रष्टा अद्वैतो भवति' इत्यत्र अद्वैतशब्दार्थोऽपि निर्धारितो भवति। अतः 'प्राज्ञेनात्मना संपरिष्वक्तः' इति वाक्यसमानार्थकं नेदं वाक्यम्। किंतु 'यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति' इति तत्पूर्ववाक्यसमानार्थकम्। स्वप्नं न विजानाति' 'न कञ्चन स्वप्नं पश्यति' इति वाक्य द्वयस्यैकार्थतायाः व्यक्तत्वात्। तत्र 'यत्र' इत्यस्य परमात्मपरत्वं नवीनैरपि नोक्तम्। नाह खल्वयमयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि' इति तदुत्तरवाक्ये परमात्मज्ञानाभावस्यानुक्तेः। अत्र 'आत्मानं जानात्ययमहमस्मि' इत्युक्त्या अहमित्येतत्समानार्थकः आत्मन्शब्दः जीव परइति स्वरसतः प्रतीयते ॥

'नाहं जानामि मत्तोऽन्यं सुप्तौ नान्योऽपि दर्शयेत्' अहमस्मीति भूतानि नच पश्यन्ति कानिचित्' इति भाष्यानुसारेण सुप्त्यवस्थायामहंखलु तावत् आत्मानं परमात्मानम् अयं परमात्मा। एवं सुप्तस्य ममाश्रयः अहंत्वेतदाश्रित इति न जानाति—न जानामि। अयं जीवाश्रयोऽहमस्मीति—अयमन्यो भगवानपि आत्मानं—स्वात्मानं नजानाति—न ज्ञापयति' (वेदेशीयखण्डार्थः) इत्यर्थस्तु न विदुषां हृदयङ्गमः। आश्रयाश्रयिभावप्रतिपादकस्फुटार्थकशब्द

## गूढार्थसङ्ग्रहः

विरहात्। जानातीत्यस्य ज्ञापयतीत्यर्थस्य स्वरसतः अलाभात्। अतः ब्रह्मशब्दश्रुतिमात्रमवलम्ब्य प्रकरणबाधकल्पनम् अशरीरवाक्यस्य 'अस्माच्छरीरात्समुत्थाय' इति वाक्यार्थाननुगुणार्थवर्णनं च न श्रुतितात्पर्यमनुसरति। घटो नीलो भवति, गगनं द्रव्यं भवति इत्यादौ द्रव्यत्वनैल्यादिधर्मवत्त्वबोधस्य नैयायिकादिसम्मतत्वेन परमसाम्यश्रुत्यनुरोधेन च ब्रह्मवृत्त्यपहतपाप्मत्वादिधर्मवत्त्वबोधपरत्वस्यैव 'एतद्ब्रह्म' इत्यस्य युक्तत्वात्॥

'स यथा प्रयोग्यः' इत्यादिवाक्यमपि जीवपरमेव। 'स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिन्शरीरेप्राणो युक्तः' इति वाक्यानुपूर्वी। अत्र 'स तत्र पर्येति' इत्यत्र जीव एव विवक्षित इति नव्यानामपि सम्मतम्। एवं च तदुत्तरवाक्येऽपि जीव एव विवक्षितः। 'यथैव सारथिर्याने एवं देहे च मारुतः। यथा रथी तथा विष्णुः जीवोऽन्यरथगो यथा' इति (आ.ती.भा) भाष्यं 'सः बुद्धिस्थः प्रायोग्यः सारथिः याने यथा नियुक्तः, एवमेवायं प्राणो मुख्यवायुः सारथित्वेन नियुक्तः, विष्णुस्तु रथिकवत् देहाधिष्ठातेत्युक्तमेव। जीवस्तु अन्यरथगवत्तिष्ठतीति भावः।' इति (रा.ती) खण्डार्थः। अत्र प्राणशब्दस्य मुख्यवायुवाचकत्वमेव स्पष्टमुक्तम्। एवं वदद्भिः इमां श्रुतिमुदाहृत्य चन्द्रिकाप्रकाशे प्राणशब्दस्य 'अत एव प्राणः' इत्यादौ ब्रह्मण्येव प्रसिद्धत्वात् इत्युक्तिः कथं घटते? सारथित्वं मुख्यवायोरेवोक्तमिति विष्णोः सारथिदृष्टान्तोऽपि न घटते। विष्णुस्तु रथिकवद्देहाधिष्ठातेत्युक्तमेवेति 'तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम्' इति वाक्य मभिप्रेत्योक्तमिति प्रतीयते। तद्वाक्यमपि जीवपरमिति पूर्वमेवोक्तम्।' इत्थं च जीवविष्ण्वोः नव्यमते अत्र बोधकशब्द एव नास्ति। अत्र प्राणशब्देन विष्णुरपि विवक्षित इत्याशयेन अपेक्षितं पूरयन् एवमेवेत्यादि व्याचष्टे–यथा रथीति। प्राणशब्दस्य लक्षणया तद्वज्जीवपरत्वमपीत्याशयेन अपेक्षितं दर्शयन् व्याचष्टे–जीव इति तद्व्याख्या वैदेशीये॥

अत्र प्राणशब्दस्य विष्णुजीवोभयपरत्वं सम्मतमिति स्फुटम्। प्रायोग्यः सारथिः, इत्यर्थः तत्रैव वर्णितः प्रायोग्यशब्दस्य सारथिवाचकत्वे रथिनः कथमुपस्थितिः। प्राणशब्दस्य विष्णुपरत्वे जीवस्य वा कथमुपस्थितिः। उभयपरत्वाश्रयणंतु श्रुतिपीडनयैव भवेत् अतो जीवपरत्वमेव युक्तम्। शतपथब्राह्मणे (१.३.१.१३) 'योक्त्रेणहि योग्यं युञ्जन्ति अस्ति वै पत्न्या अमेध्यं यदवाचीनं' इत्यत्र 'योग्यं योजनीयमनडुदश्वादिकमित्यर्थः' इति सायणभाष्ये— योग्यशब्दस्याश्वपरत्वं स्फुटम्। एवं तत्रैव (१.४.४.१४) 'योग्यं युञ्जन्ति' इत्यत्रापि अश्वपरत्वं स्फुटम्। प्रकृष्टो योग्यः प्रयोग्य इति वा, प्रकर्षेण योजनीयः प्रयोग्य इति वा विग्रहेण प्रयोग्यशब्दः उत्कृष्टाश्वादिवाचकः। प्रयोग्यशब्दस्य अश्वपरत्वेन यथा अश्वः रथे युक्तः रथगमनादिकं निर्वर्तयति, एवं शरीरे युक्तो जीवः शरीरेन्द्रियव्यापारं निर्वर्तयति। अश्वस्य सारथिप्रयत्नेनैव रथव्यापारनिर्वर्तनवत् जीवस्य शरीरव्यापारनिर्वर्तनमप्यर्थतः सिद्ध्यति। अयमर्थः दहरविद्यायां सत्यशब्दनिर्वचनेनापि सिद्ध्यति। एवमत्रापि 'स उत्तमःपुरुषः' इत्यत्र पुरुषशब्देनापीति बोध्यम्॥

कठोपनिषदि जीवस्य रथित्वम् इन्द्रियाणामश्वत्वं बुद्धेः सारथित्वंचोक्तम्। बुद्धेः उक्तं यत् सारथित्वं सारथित्वेनावस्थाय गीतोपदेष्ट्रा कृष्णेन बुद्धिनियामके स्वस्मिन्नेव विश्राम्यतीति प्रदर्शितं भवति। अयमर्थः गीतातात्पर्यपर्यालोचने निर्मत्सराणां स्फुटः इति अत्रापि सारथित्वं सत्यपुरुषशब्दद्वयार्थानुसन्धाने ब्रह्मण एव विवक्षितम्। जीवस्य अश्वसादृश्यमत्र कठोपनिषदितु रथित्वमिति भिदा। तत्र इन्द्रियवशीकरणस्य योगार्थमुपदेष्टव्यत्वेन तदानुगुण्येन तदुपपादकतया इन्द्रियाणां हयत्वमुक्तम्। अत्रतु सशरीरजीवस्य पूर्वं प्रस्तुततया सशरीराशरीरजीववैलक्षण्यमेव प्रतिपिपादयि-

## गूढार्थसंग्रहः

षितम् सशरीरतादशायां जीवस्य अश्वदृष्टान्तेन शरीरव्यापारप्रदर्शनेन अश्वस्य सारथिनियाम्यत्ववत् जीवस्य परमात्म नियाम्यत्वं बोधितं भवति । सशरीरतादशायां जीवस्य परमात्मज्ञानाभावे परमात्माधीनमेव शरीरव्यापारसम्पादनमिति ज्ञापनमावश्यकमिति जीवस्याश्वदृष्टान्तो युक्त इति बोध्यम् ॥

एतत्प्रघट्टकस्य जीवप्रकरणत्वं ‘ य आत्मा अपहतपाप्मा ’ इत्यादेः जीवपरत्वम् ‘ उत्तराच्चेदाविर्भूतस्वरूपस्तु ’ इति सूत्रे विवक्षितम् । अयमर्थस्सर्वोऽपि दहराधिकरणे भाष्ये निरूपयिष्यते इत्यभिप्रेत्य अत्र ‘ अथ योवेदेदं जिघ्राणीति ’ इति श्रुतिमात्रमुपात्तम् । अत्र भाष्यम् (आ.ती.उ.भा) ‘ यदाश्रितानीन्द्रियाणि प्राणश्चापि यदाश्रयः । यदाश्रयोऽप्ययं जीवो योवेदैषां प्रवर्तनम् ॥ दर्शनं श्रवणं घ्राणं जिह्वां स्पर्शं मनस्तथा । तदीयान्विषयांश्चैव योवेदाखिलमञ्जसा ॥ स विष्णुःपरमो ज्ञेयो देवताः करणानि च । सएतैरिन्द्रियैर्विष्णुः भोगाननुभवत्यजः ॥ स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः । भुङ्क्ते तदिन्द्रियैः भोगाञ्छुरितैरिन्द्रियैस्स्वकैः ॥ जीवं तदिन्द्रियाण्येवं प्राणं च व्याप्य कृत्स्नशः । भुङ्क्ते तच्चद्गुणान्विष्णुः नैव दोषान्कदाचन ॥ ’ इति ॥

अत्र ‘ स चाक्षुषः चक्षुस्स्वामी पुरुषः हरिः दर्शनाय चक्षुः करणमिति यावत् । भगवान् स्वरूपेन्द्रियैः सर्व भोगान् भोक्तुं शक्तोऽपि लीलया जीवदेहमधिष्ठाय स्वकीयेन्द्रियमिलितैर्जीवदेहकृतचक्षुरादीन्द्रियैः पुरुषभोग्यविषयान्सर्वान् भुङ्क्ते इति तात्पर्यं ज्ञेयम् । अथ यो देहाधिष्ठाता विष्णुः इदं सुगन्धं जिघ्राणीति वेद । स आत्मा देहस्वामी गन्धाय तस्य गन्धज्ञानाय घ्राणमित्यर्थः ’ इति (रां.ती) खण्डार्थः । अत्र चक्षुरादिकं जीवसम्बन्ध्येव प्रतिपिपादयिषितमिति नव्यानामपि सम्मतम् । एवं च ‘ स्वरूपेन्द्रियैः सर्ववेदनशक्तस्य जीवेन्द्रियद्वारा भोगस्यात्र वाक्ये स्फुटमप्रतिपादितस्य विवक्षायां न किंचित्साधकं पश्यामः । जीवेन्द्रियाणां द्वारत्वकथनेन नव्यानामप्यस्य जीवपरत्वस्य सम्मतत्वेन अन्यथाऽपि ज्ञानवतः परस्यात्र विवक्षाकल्पनात् वाक्यं जीवभोगपरमेवेति निर्णयो युक्तः ॥

अत्र प्रागुक्तरीत्या आत्मन्शब्दार्थपर्यालोचनया तद्विशदीकरणमेवात्र विवक्षितम् । चक्षुरादीन्द्रियद्वारकवेदनस्य जीवगतस्यैव स्फुटं शब्देनात्र प्रतिपादनात् । परस्य स्वभिन्नधर्मशून्यत्वसिद्धान्तिनां नवीनानां मते वेद जिघ्राणीति धर्मधर्मिभावबोधकश्रुतेरपि स्वारस्यं न सम्भवति । अत्र उत्तमपुरुषेणाहमर्थ एव विवक्षित इति निश्चयेन तद्धर्मभूतं ज्ञानमेव वेद, जिघ्राणीत्यत्र विवक्षितमिति स्वरसतः प्रतीयते । धर्मभूतज्ञानस्य सार्वदिकत्वस्य पूर्वमेव श्रुत्यादिभिस्साधनेन इन्द्रियादेरनुपयोगेन जिघ्राणीत्यनुपपन्नमिति शङ्कायां इन्द्रियद्वारकविषयसम्बन्धप्रदर्शनेन इन्द्रियद्वारा गन्धसम्बद्धज्ञानमेव जिघ्राणीत्यत्र विवक्षितमिति विशिष्टस्यासार्वदिकत्वेन जिघ्राणीत्यस्योपपत्तिरित्येतेन निर्णीतं भवति । एतेन ‘ नहि घ्रातुर्घ्रातेर्विपरिलोपो विद्यते ’ इति बृहदारण्यकश्रुतिरपि व्याख्याता भवति ॥

अत्र ‘ यदाश्रयोऽप्ययं जीवः ’ इत्यनेन चाक्षुषः ‘ योवेदेदं जिघ्राणीति ’ वाक्यं घ्राणजीवपरमपि भवतीति—सूचितं भवति इति भाष्यविवरणे ‘ एवं यत्र प्राणे जीवेषां स्वस्वविषयसम्बद्धं चक्षुरादीन्द्रियं यस्य प्राणस्य च जीवस्य वा भोगाय चक्षुरादिकं यश्च प्राणो जीवो वा इदं पश्यामीत्यनुसन्धानवान् स आत्मा प्राणो जीवो वा यत्र स उत्तमःपुरुषः इति प्राणजीवपरतयाऽपि इदं वाक्यं योज्यम् ’ इति उपनिषद्विवरणे च (वैदेशीये) उक्तम् ॥

एवं तद्विवरणे परमात्म,प्राण,जीवविषयकत्वं कथं कल्प्यते ? ‘ स यथा प्रयोग्य आचरणे युक्तः ’ इति पूर्वश्रुतौ परमात्म प्राण जीवत्रयविवक्षायां ‘ स यथा प्रयोग्य ’ इति दृष्टान्तासामञ्जस्यरूपबाधकवत् अत्र बाधकविरहाङ्गीकारेऽपि

## श्रीभाष्यम्

**(छा.८.प्र.१२.खं.४) ‘कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुषः’ (बृ. ६.अ.३.ब्रा.७) ‘एषहि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः’**

## श्रुतप्रकाशिका

**कतमइति** । ज्ञानगुणकत्वज्ञानस्वरूपत्वप्रतिपादकवाक्यमाह—**एषहीति** । ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वमाह–

## गूढार्थसंग्रहः

आत्मन्शब्दमुख्यार्थः परमात्मा यदा विवक्षितः तदा गौणार्थविवक्षायास्साधकमेव नास्ति । ‘जिघ्राणि वेद’ इत्यत्र सामान्यप्रतीतेः बाधिकायाः सत्त्वाच्च । अतः अहमर्थजीवधर्मभूतज्ञानपरत्वमेवास्याश्श्रुतेर्युक्तम् । एवमङ्गीकारे ‘स्वेन रूपेण’ इत्यत्रोक्तः आविर्भावः सम्यग्विशदीकृतो भवति । तत्र रूपेणेत्यस्य वैयर्थ्यान्यथाऽनुपपत्त्या जीवगतधर्माविर्भाव एव विवक्षितः । तत्रापहतपाप्मत्वादिधर्माः जीवगताः आविर्भावसम्बन्धिनो विवक्षिता इति ‘य आत्मा अपहतपाप्मा’ इत्यादावेव प्रदर्शितम् । तद्वत् धर्मभूतज्ञानमपीति अत्र प्रदर्शितं भवति । परैरपि ‘वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवति’ इत्यादि समानाधिकरणनिर्देशः सादृश्यनिबन्धन इति ‘साभाव्यापत्तिरुपपत्तेः’ (३.१.२२) इति सूत्रे सिद्धान्तितम् ॥

एवमर्थनिष्कर्षणेन ‘एतद्ब्रह्म’ इत्यादिवाक्येषु ब्रह्मसादृश्यमप्यनेन धर्मेणेति निर्णीतं भवति । ‘यदा पश्यःपश्यते—तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति’ इत्यत्र ‘विद्वान्’ इत्यस्य वैयर्थ्यान्यथाऽनुपपत्त्या धर्मभूत ज्ञाननिबन्धनमेव परमसाम्यमिति निश्चयेन श्रुतिद्वयैकार्थ्यं सिद्ध्यति । ‘अथ योवेदेदं जिघ्राणीति’ उत्तमपुरुषेण अहमर्थ एवात्माऽत्र विवक्षितः । अनया श्रुत्या चक्षुरादीन्द्रियजन्यज्ञानाश्रयस्याहमर्थस्यैवात्मत्वं विषयसम्बन्धार्थमिन्द्रियाणामपेक्षेति निष्कर्षणेन ‘नहि द्रष्टुर्दृष्टेर्विपरिलोपः’ इत्यादावपि अहमर्थात्मगत दृष्ट्यादिशब्दार्थज्ञानाविपरिलोप एव विवक्षितः, नतु परसम्मतरीत्या दृष्ट्यादिरूप आत्मेति निश्चितं भवति ॥

एतावता नित्यस्वप्रकाशधर्मभूतज्ञानाश्रयस्य अहमर्थस्यात्मत्वनिर्णयेन ‘अत्रायं पुरुषः स्वयं ज्योतिर्भवति’ इत्येतत्पूर्वं ‘कतम आत्मा योऽयं विज्ञानमयः’ इत्यादिश्रुतेरप्यर्थो निश्चितो भवतीत्यभिप्रेत्य तां श्रुतिमुपादत्ते **‘कतम आत्मेत्यादि** । विज्ञानमयः धर्मभूतज्ञानप्रचुर इत्यर्थः । अन्तर्ज्योतिरित्यत्र धर्मिणः स्वयम्प्रकाशत्वं विवक्षितम् । अत्र विज्ञानमयः, अन्तर्ज्योतिरिति पदद्वयेन ‘स यथा सैन्धवघनः—एवं वा अरे अयमात्मा’ इति प्रागुदाहृतश्रुतौ धर्मधर्मिणोरुभयोः स्वप्रकाशत्वविवक्षा दृढीकृता ॥

प्रजापतिविद्यायां मुक्तस्य सर्वज्ञत्वेन परमात्मसाम्यमपि विवक्षितमिति निर्णयार्थं जीवस्य ज्ञानाश्रयस्यैव ज्ञान स्वरूपत्वमिति साधनार्थं ‘नहि द्रष्टुः’ इत्यादौ दृष्ट्यादिरूप आत्मा न विवक्षित इति श्रुत्यन्तरेणापि साधनार्थं च परमात्मभिन्नस्य जीवात्मनः चाक्षुषादिज्ञानाश्रयत्वज्ञानस्वरूपत्वबोधकश्रुत्यन्तरमुपादत्ते **एषहि द्रष्टा स्प्रष्टा इत्यादि** । ‘विज्ञानात्मा पुरुषः’ इत्यनन्तरं ‘स परे अक्षरे आत्मनि संप्रतिष्ठते सयो हवै तदच्छायमशरीरं अलोहितं शुभ्रमक्षरं वेदयते स सर्वज्ञः स(र्वो)र्वै भवति । तदेष श्लोकः ‘विज्ञानात्मा महदेवैश्चसर्वैः प्राणा भूतानि संप्रतिष्ठन्ति यत्र । तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेव आविवेशेति ।’ इति श्रूयते । अत्र ‘एषहि द्रष्टा’ इत्यत्र एतच्छब्दार्थो जीवः ।

## गूढार्थसंग्रहः

‘अत्रैष देवः स्वप्ने महिमानमनुभवति ।’ अत्रैष देवः स्वप्नान् न पश्यति, अथ तदेतस्मिंच्छरीरे एतत्सुखं भवति’ इत्यत्र पूर्वं जीवस्य प्रस्तुतत्वात् । अत्र उपक्रमे ‘ भगवन् एतास्मिन् पुरुषे कानि स्वपन्ति, कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत् सुखं भवति, कस्मिन्नु सर्वे प्रतिष्ठिता भवन्ति ’ इति पञ्च प्रश्ना उपक्षिप्ताः । तत्र तृतीयचतुर्थप्रश्नप्रतिवचनयोः जीवस्य करणाधिपस्य स्वप्ने द्रष्टृत्वं सुषुप्तौ स्वप्नद्रष्टृत्वाभावश्चोक्तः स्वप्नसुषुप्तयोः एतदर्थ-द्वयं बृहदारण्यके जीवस्य स्पष्टमुक्तम् । अतः करणाधिपो जीव एव तत्र विवक्षित इति प्रस्तुतस्य तस्यैव ‘ एषहि द्रष्टा ’ इति श्रुतावपि एतच्छब्देन परामर्शो युक्तः । कस्मिन्नु सर्वे प्रतिष्ठिता भवन्ति ’ इति प्रश्नस्य ‘ यथा सोम्य वयांसि-वासोवृक्षं संप्रतिष्ठन्ते, एवं हवै तत्सर्वं पर आत्मनि संप्रतिष्ठते ’ इति प्रतिवचने सर्वस्य परस्मिन्नात्मनि संप्रतिष्ठितत्वमुक्तम् । तत्र सर्वशब्दार्थः अचेतनं जीवश्चेति द्विविध इत्यभिप्रेत्य ‘ पृथिवी च पृथिवीमात्रा च ’ इत्यादिना अचेतनं निरूप्य ‘ एषहि द्रष्टा ’ इत्यादिना पूर्वप्रस्तुतजीवस्वरूपनिरूपणपूर्वकं तस्यापि परस्मिन्नात्मनि संप्रतिष्ठितत्वमुच्यते । अत्र ‘ स परे आत्मनि संप्रतिष्ठते ’ इति श्रुतिवाक्यं शङ्कराचार्यैरप्युपात्तम् । अचेतनविषये पृथक्संप्रतिष्ठितत्वानुक्तिः पर-मात्माऽभ्युपगन्तॄणां तद्विषये विवादाभावाभिप्रायेण जीवब्रह्मणोरभेदः अप्रामाणिक इति बोधनायैव जीवस्य पृथक्संप्रतिष्ठि-तत्वमत्र प्रतिपादितम् ॥

अत्र **द्रष्टा श्रोता घ्राता** इत्यादिना जीवस्य दृष्ट्याद्याश्रयत्वप्रतिपादनेन ‘ अथ योवेदेदं जिघ्राणीति स आत्मा ’ ‘ यद्वै तन्नपश्यति पश्यन्वै तन्नपश्यति ’ इत्यादेर्जीवविषयकत्वमेवेति निर्धारितं भवति । स्वप्नसुषुप्तिविषयवाक्ययोः जीवविषयकत्वं वदद्भिरपि नवीनैः कथं सर्वस्य तदधीनतेत्युच्यते ? ‘ एषहीति । चक्षुरादीनामेतेषां एषहि दर्शनादि शक्तिप्रदः । स्वयं च विज्ञानात्मा विज्ञानस्वरूपः, सर्वज्ञ इति यावत् । पुरुषः पूर्णत्वात् अतश्चोपपन्नं तस्य सर्वाश्रयत्व-मिति । तदस्य विज्ञानात्मनो वेदनस्य फलमुच्यते–स य इति । सः विज्ञानात्मा पुरुषः, यः यादृशलक्षणं एतमेवंविधं हे सोम्य वेदयते विजानाति ’ (जयतीर्थटीका) इत्यादिना एतच्छ्रुत्यर्थः वर्ण्यते । अस्याः श्रुतेः जीवाविषयकत्वे स्फुटं प्रतीयमाने ‘ द्रष्टा ’ इत्यादेः दर्शनशक्तिप्रदइत्यर्थःकथम् ? ‘ सपरे अक्षरे आत्मनि संप्रतिष्ठते ’ इति जीवस्य परस्मि-न्नात्मनि संप्रतिष्ठितत्वोक्तिर्वा कथम् ? ‘ एवं विज्ञानात्मा सह देवैश्च सर्वैः ’ इत्यत्र ‘ विज्ञानात्मा विज्ञानस्वरूपो जीवः ‘ शरीरे सुखं भवतीतिह्युक्तम् ’ इति तदीया टीका । ‘ विज्ञानात्मा पुरुषः ’ इत्यत्र पूर्वं विज्ञानात्मशब्दार्थः यः सएवात्र श्रुतौ विवक्षित इति निर्मत्सराणां स्फुटम् ॥

तत्र ‘ पुरुष ’ इत्यस्य पुरि शेते इति व्युत्पत्त्या शरीरसम्बन्धिबोधकत्वेन ‘ एतास्मिंच्छरीरे ’ इति श्रुत्युक्तजीवस्य-प्रकाशनात् । विज्ञानात्मशब्दद्वयस्य विभिन्नार्थकत्वकल्पनं निर्बीजम् । अतः ‘ एषहि द्रष्टा ’ इति श्रुतेः जीवपरत्वस्यैव युक्ततया अत्र विज्ञानात्मा इत्यस्य विज्ञानस्वरूप इत्येवार्थः ॥

‘ विजानातीति विज्ञानं कर्तृकारकं तदात्मा तत्स्वभावः विज्ञातृस्वभावइत्यर्थः ’ (शं) इतितु नादरणीयम् । ‘ मन्ता बोद्धा ’ इत्यत्रैवास्यार्थस्य सिद्धेः । मृदात्मको घट इत्यादाविवात्रापि आत्मन् शब्दः । विज्ञानात्मा इत्यत्र विज्ञानशब्दे कर्तरि प्रत्ययाविवक्षाङ्गीकारे विज्ञाता इति वा विज्ञात्रात्मा इति वा श्रुतावनिर्देशे किंबीजमिति वक्तुं न शक्यते । तथा अनिर्देशपूर्वकं विज्ञानात्मा इति श्रौतानिर्देशेनैव विज्ञानशब्दो भावप्रत्ययान्त इति निश्चीयते । ‘ विज्ञानमानन्दं ब्रह्म ’ इत्यत्र विज्ञानशब्दस्य भावार्थे प्रसिद्धिप्राचुर्यं (पं.पा) विवरणे उक्तम् । इत्थं च विज्ञानशब्दस्य भावार्थे प्रसिद्धिप्रा-चुर्यात् आत्मन्शब्दात् शब्दान्तरावैयर्थ्याच्च । ‘ विज्ञानात्मा ’ इत्यत्र ज्ञानस्वरूपत्वमेव विवक्षितम् । अतश्च जीवस्य–

### श्रीभाष्यम्

(प्र.४.९) 'विज्ञातारमरे केन विजानीयात्' (बृ.४.४.१४)

### श्रुतप्रकाशिका

**विज्ञातारमिति।** अनेन ज्ञातृत्वं स्वाभाविकमिति फलितम्। न केवलं संसृतिदशायां मुक्तावपि ज्ञातृत्वं ज्ञापयति—

### गूढार्थसंग्रहः

ज्ञानस्वरूपत्व ज्ञानगुणकत्वे अनया श्रुत्या सिध्यतः। ज्ञानं न ज्ञानाश्रयः इति कल्पनाऽपि एतेन निरस्ता॥ अत्र सोपाधिक एवात्मा विवक्षित इत्यत्र न किञ्चिन्नियामकं पश्यामः। पुरुषशब्दनिर्देशेन सोपाधिकविवक्षेति वक्तुं न शक्यते। 'तं त्वौपनिषदं पुरुषम्' इत्यादावपि पुरुषशब्दसत्त्वात्। अनौपाधिकात्माभिप्रायेणैव विज्ञानात्मशब्दः ज्ञानस्वरूपस्यैव जीवस्य परस्मिन्नात्मनि संप्रतिष्ठितत्वोक्त्या अनौपाधिकजीवब्रह्मभेदः सिद्ध्यति। 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इति (छा) श्रुत्या तत्तदिन्द्रियजन्यज्ञानाश्रयस्यैवात्मत्वं प्रतिपादितमिति सोपाधिकात्मशङ्कायाः नावकाशः॥

एतेन 'कर्ता विज्ञानात्मा पुरुषः' 'इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथा प्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति' (२.३.४०.शं.भा) इत्युक्तिरपि निरवकाशा। उक्तश्रुतिविरोधात् अचेतनाविशेषेण ज्ञानस्वरूपस्य ज्ञानाश्रयस्य जीवस्य परस्मिन्नात्मनि संप्रतिष्ठाकर्तृत्वोक्तिविरोधाच्च। 'स पर आत्मनि संप्रतिष्ठते' इत्युक्तकर्तृत्वांशे अनुवादरूपतायाः वक्तुमशक्यत्वात्। अस्यैव ब्रह्मवेदनेन सर्वज्ञत्वमभ्यासेन प्रदर्शितम्। 'नतु तद्द्वितीयमस्ति, गन्धाय घ्राणम्' इत्यत्र बन्धदशायां इन्द्रियापेक्षायाः विषयसम्बन्धार्थमुक्तावपि ब्रह्मज्ञानेन मुक्तिदशायां प्रभास्थानापन्नधर्मभूतज्ञानस्य सङ्कोचकाभावेन पूर्णविकासेन इन्द्रियाद्यनपेक्षयैव सर्वसम्बद्धत्वेन सर्वज्ञत्वं पुण्यपापविधूननानन्तरं ज्ञानवत्त्वेन मुक्तस्य परमात्मसाम्यस्य श्रुतौ प्रतिपादनेन निश्चितं भवति॥

ननु 'यत्रहि द्वैतमिव भवति, तदितर इतरं पश्यति' इति अविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति 'यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इति परैः 'यथा च तक्षोभयथा' इति सूत्रे सिद्धान्तकरणेन न द्रष्टृत्वादिकं तात्त्विकमिति शङ्कायां 'तत्केन कं पश्येत्' इति वाक्योत्तरश्रुतौ ज्ञातृत्वस्य प्रतिपादनेन ज्ञातृत्वं तात्त्विकमेवेत्यभिप्रेत्य तामेव श्रुतिमुपादत्ते—**विज्ञातारमरेकेन विजानीयात् इति।** अत्र 'यदातु पुनः परमार्थविवेकिनो ब्रह्मविदः विज्ञातैव केवलोऽद्वयो वर्तते, तं विज्ञातारमरेकेन विजानीयात्' इति (शं.उ) भाष्यम्। 'विज्ञातारम् इति वाक्यस्यार्थं प्रपञ्चयति यदात्विति' इति आनन्दगिरिविवरणम्। अत्र विज्ञानमित्यनभिधाय विज्ञातारमित्युक्त्या परसम्मतः अद्वयः आत्मा नैव विवक्षित इति स्फुटं प्रतीयते। 'भूतपूर्वगत्याश्रयणेन विज्ञातारमित्युक्तमिति' (शं.सू.भा) इति कल्पनायां श्रुतौ न किञ्चिद्बीजं पश्यामः। 'यत्रत्वस्य सर्वमात्मैवाभूत्' इति पूर्वश्रुतौ परसम्मतार्थविवक्षा न सम्भवतीति प्रागेव (४५५.पु) निरूपितम्॥

'यथा च तक्षोभयथा' इति सूत्रे तथा स्वप्नजागरितयोरात्मनः उपाधिसंपर्ककृतं श्रमं श्येनस्येवाकाशे विपारिपततः श्रावयित्वा तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्' (बृ.४.३.२१) इत्यारभ्य 'एषाऽस्यपरमागतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोकः एषोऽस्य परम आनन्दः' इत्युपसंहारात्' इति परैरुक्तम्। अत्र प्राज्ञः प्रकृष्टज्ञानाश्रयएव 'एषाऽस्य' इत्यादौ विवक्षितइति सविशेषपरमेवेदं वाक्यम्॥

### श्रीभाष्यम्

**' जानात्येवायं पुरुषः ' ' नपश्योमृत्युं पश्यति नरोगं नोत दुःखताम् ' (छा.७.२६.२) ' स उत्तमःपुरुषः नोपजनं स्मरन्निदं शरीरम् ' (छा.८.१२.३)**

### श्रुतप्रकाशिका

**जानात्येवायमिति ।** अवधारणासङ्कोचान्मुक्तावपि ज्ञातृत्वं सिद्धं मुक्तौ ज्ञाननिषेधश्रुतीनां विषयभागं दर्शयति—**नपश्य**

### गूढार्थसंग्रहः

तत्र अन्तःकरणसंस्कारस्य सुषुप्तावुपाधित्वं विवरणादिषु स्पष्टमुक्तमित्युपाधिविगमः न सम्भवति । श्रुतौतु— ' प्राज्ञेनात्मना संपरिष्वक्तः ' इत्यत्र प्राज्ञसंपरिष्वङ्ग एव श्रमाभावनिदानभूतः अभिहितः । संपरिष्वङ्गश्च नैक्यमिति पूर्वमेवोक्तम् । अतः सिद्धान्ते सा श्रुतिरनुकूलैव ॥

यद्यपि ' येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरेकेन विजानीयात् ' इति श्रुतेः वाक्यान्वयाधिकरणे परमात्मपरत्वेनैवाथः वक्ष्यते ; तथाऽपि ' येनेदं सर्वं विजानाति तं केन विजानीयात् ' इत्यस्य परमात्म परत्वेऽपि ' विज्ञातारमरेकेन विजानीयात् ' इत्यत्र विज्ञातारमिति सामान्यशब्दप्रयोगेण परजीवयोरुभयोरपि स्वप्रकाशतया करणाधीनज्ञानविषयत्वं नास्तीति तात्पर्यकमिदं वाक्यमित्यभिप्रेत्य अत्र एतच्छ्रुत्युपादानमिति बोध्यम् । सुचरित मिश्रोदाहृतश्रुतिरपि यामुनमुनिभिः आत्मसिद्धावुपात्ता पूर्वोदाहृतश्रुतिभिः आत्मनः सार्वदिकधर्मभूतज्ञानवत्त्वस्य सिद्ध्या प्रमाणं भवितुमर्हतीत्याशयेन तामुदाहरति **जानात्येवायं पुरुषः इति** ॥

' न प्रेत्य संज्ञा अस्ति ' इत्यादिनिषेधानां न ज्ञानसामान्यनिषेधपरत्वम्, अपितु ज्ञानविशेषनिषेधपरत्वमेवेति ज्ञानविशेषनिषेधपूर्वकं सर्वसाक्षात्कारबोधकश्रुत्या सिद्ध्यतीत्यभिप्रेत्य तां श्रुतिमुपादत्ते **न पश्यो मृत्युं पश्यति इत्यादि।** मुक्तस्य स्वमृत्युरोगयोरभावेन साक्षात्कारासम्भवेऽपि अन्यदीयमृत्युरोगसाक्षात्कारः सम्भवत्येव । अथापि कस्यापि प्रतिकूलत्वेन साक्षात्कारो नास्तीत्यभिप्रेत्य **नोत दुःखताम्** इत्युक्तम् ॥ अत एव ' न पश्यो मृत्युं पश्यति न रोगम् ' ' सर्वं ह पश्यः पश्यति ' इति पूर्वोत्तरवाक्ययोरविरोधः । ब्रह्मविशेषणतयैव ब्रह्मातिरिक्तसर्वसाक्षात्कार इति बोधनाय श्रुत्यन्तरमुपादत्ते **स उत्तमः पुरुषः इति ।** ' एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमःपुरुषः ' इति श्रुतिक्रमः । सः ' परं ज्योतिः ' इत्यत्र पूर्वं प्राप्यतया प्रस्तुतः । ' परात्परं पुरुषमुपैति दिव्यम् ' इतिहि श्रुत्यन्तरे श्रूयते । उत्तमत्वं स्वेतरसर्वावधिकोत्कर्षः । ' परं ज्योतिः ' इत्यत्र परशब्दार्थोऽयमेव । अत्र ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मविशेषणतया प्राप्यत्वस्य प्रतिपादनेन निरतिशयानन्दब्रह्मानुभवदशायां तद्विशेषणतया सर्वस्य अनुकूलतयैव साक्षात्कारः नतु प्रतिकूलतया इत्येतेन सिद्धम् । ' न हवै सशरीरस्य ' इति पूर्ववाक्ये सशरीरस्य शरीरे भोग्यताबुद्धिः या सूचिता सा मुक्तस्य नास्तीति बोधिनीं श्रुतिमुपादत्ते **नोपजनं स्मरन्निदं शरीरम् इति।** उपजनं कर्ममूलकजनिमत् । अपहतपाप्मत्वाद्याविर्भावानन्तरं मुक्तस्य कर्ममूलकशरीरे भोग्यताबुद्धिप्रयोजकस्मृतेर्नावसर इति भावः ॥

अत्र ' स उत्तमःपुरुषः ' इत्यनन्तरं ' स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम् ' इति श्रुतिक्रमः । अत्र ' स तत्र पर्येति ' इत्यादि वाक्योक्तार्थः शरीरसम्बन्धमन्तरा नोपपद्यते

## श्रीभाष्यम्

**'एवमेवास्य परिद्रष्टुरिमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' (प्र.६.प्र.५) 'तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः' (तै.आनं.५.अ.२) इत्याद्याः**

## श्रुतप्रकाशिका

इति । सउत्तमइति च पुरुषं प्राप्तस्य मुक्तस्य ज्ञातृत्वेऽनुवर्तमानएव देहेन्द्रियवि(गमं)लयं)दर्शयति–**एवमिति** । अन्तःकरणोत्तीर्णस्य ज्ञातृत्वमाह—**तस्माद्वा इति** ।

## गूढार्थसङ्ग्रहः

इति शरीरसम्बन्धमादायैवोपपादनीयः । एवं च 'न हवै सशरीरस्य' इति श्रुतिः कथमुपपद्यते इति शङ्कावारणाय 'नोपजनं स्मरन्' इति श्रुतिः । अत्र 'उपजनम् इदम्' इति शब्देन कर्ममूलकशरीरस्यैव बोधनेन प्रियाप्रिययोरपि कर्मफलतया 'न हवै सशरीरस्य' इत्यत्र कर्ममूलकशरीरसम्बन्ध एव विवक्षितः । 'अशरीरं वाव सन्तम्' इत्यत्रापि कर्ममूलकशरीरसम्बन्धविरह एव तथेति अनया श्रुत्या निर्धारितं भवति ॥

एतदुत्तरं 'स यथा प्रयोग्य आचरणे युक्तः' इत्यत्रापि 'योक्रेण योग्यम्' इति श्रुत्यनुसारेण 'एवमस्मिन् शरीरे प्राणो युक्तः' इत्यत्र कर्मभिः शरीरे योग एव विवक्षितः । अतश्च कर्ममूलकशरीरसहितस्यैव ' हवै सशरीरस्य' इत्यत्र विवक्षा अनयाऽपि श्रुत्या दृढीकृता भवति । अत्र सर्वसाक्षात्कारवतो मुक्तस्य अतीतानागतरूर्वंवस्तुसाक्षात्कारदशायां कर्ममूलकशरीरसाक्षात्कारसत्वेऽपि स्वर्गाद्यनुभवदशायां यथा संस्काराधीनशरीरस्मृतिः तद्वन्मुक्तस्य संस्काराधीनज्ञानविरहाद्यभिप्रायेण 'स्मरन्' इत्युक्तिः इति तत्त्वटीकायां व्यक्तम् ॥

'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु.६.८) इति श्रुत्या मुक्तस्य नामरूपसामान्यविरहप्रतिपादनेन शरीरसम्बन्धः धर्मभूतज्ञानपरिणामभूतः सर्ववस्तुसाक्षात्कारश्च न घटत इति शङ्कायां उक्तश्रुतौ नामरूपसामान्य विरहः नैव विवक्षित इति बोधनाय कालविरहप्रतिपादिनीं श्रुतिमुपादत्ते **एवमेवास्येति** । 'स यथेमानद्यस्स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते, इति पूर्वं, भिद्यते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' इति अनन्तरं च श्रुतिः । अत्र मुण्डकश्रुतिवत् समुद्रदृष्टान्तेन नामरूपाविनिर्मोकः प्रतिपाद्यते । दृष्टान्ते 'समुद्र' इत्येवं प्रोच्यते, दार्ष्टान्तिके 'पुरुष' इत्येवं प्रोच्यते इत्युक्तया नामरूपसामान्यविनिर्मोको नात्र विवक्षितः, किंतु नदीनां पूर्वनामरूपविनिर्मोकः ; षोडशकलासम्बन्धदशायां बद्धजीवस्य ये नामरूपे तयोर्विनिर्मोकश्च विवक्षितः इति स्फुटं प्रतीयते । एवं च मुक्तस्य शरीरसम्बन्धे सर्ववस्तुसाक्षात्कारे च न काऽपि क्षतिः । अत्र परिद्रष्टुः इत्यनेनोक्तस्य दर्शनाश्रयस्याहमर्थजीवस्यैव कलाविलयं प्रतिपाद्य 'स एषोऽकलोऽमृतो भवति' इत्युक्तया ज्ञानाश्रयस्य मुक्तिदशायां सत्ता सूच्यत इति भावः ॥

ज्ञातुः अहमर्थजीवस्यैव सगुणपरमात्मज्ञानात् विमुक्तिबोधकश्रुत्यन्तरपठितां जीवविषयत्वेन वृत्तिकारसम्मतां जीवस्य ज्ञातृत्वप्रतिपादिकां श्रुतिमुपादत्ते **तस्माद्वा एतस्मादिति** । अत्र 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन' इति पूर्वं श्रुतिः । आनन्दवल्ल्यन्ते 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतौ **'आनन्दं ब्रह्मणोविद्वान् इति ब्रह्मणः ल्याणगुणानन्त्यमत्यादरेण वदतीयं श्रुतिः'** इति उत्तरत्र भाष्ये वक्ष्यते ।

### श्रीभाष्यम्

**वक्ष्यति च ' ज्ञोतएवेति ' (शारी.२.अ.३.पा.१९)**

### श्रुतप्रकाशिका

अस्यार्थस्य सूत्रकाराभिप्रेतत्वमाह—**वक्ष्यतिचेति** । पूर्वं सूत्रोपादानमहमर्थात्मत्वं सूत्रकाराभिमतमिति ज्ञापनार्थम् । अत्रोपादानं ज्ञानगुणकत्व ज्ञानस्वरूपत्ववादिनीनां श्रुतीनामविरोधस्सूत्रकाराभिमत इति ज्ञापनार्थम् ॥

ज्ञानत्वात् ज्ञानं (न) ज्ञानान्तराश्रय इतिचेत्–यदि व्याप्तयनुरोधेनैवमुच्यते तर्हि धर्मत्वेन स्वीकार्यम् यदि श्रुति बलात्स्वातन्त्र्येण स्वीक्रियते, तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियताम् । नच व्याप्तिविरोधः धर्मभूतज्ञानत्व-

### गूढार्थसंग्रहः

अत्र ' आनन्दं ब्रह्मणो विद्वान् ' इति निर्देशेन ब्रह्मगतानन्दज्ञानस्यैव भयाभावहेतुत्वस्य प्रतिपादनेन आनन्दमयश-ब्दार्थप्रचुरानन्दविशिष्टस्यैव ब्रह्मत्वं श्रुतौ विवक्षितमिति निश्चीयते । यदि धर्मिमात्रज्ञानमत्र विवक्षितमभविष्यत् तर्हि ' आनन्दं ब्रह्म ' इति निरदेक्ष्यत नचैवं निर्दिष्टम् । अतः प्रचुरानन्दवद्ब्रह्मगतानन्दज्ञानस्य पूर्ववाक्ये विवक्षितत्वे ' विज्ञानमयः ' इत्यत्रापि ज्ञानधर्मवतो जीवस्य विवक्षा युक्ता । एवमत्र विवक्षणे ' तस्माद्वा एतस्माद्विज्ञानमयात् ' अन्योऽन्तरआत्माऽऽनन्दमयः ' इति उत्तरवाक्ये जीवाविभिन्नपरमात्मनो विवक्षा सिद्ध्यति इति भावः ॥

' ज्ञोत एव ' इत्यत्र ज्ञानाश्रयत्वविवक्षा श्रुतिविरुद्धेति शङ्का आत्मनः ज्ञानस्वरूपत्वज्ञानगुणकत्वप्रतिपादकश्रुत्यु-दाहरणेन परिहृता । एवं च ज्ञानस्वरूपस्यैव आत्मनः ज्ञानगुणकत्वमेव सूत्रे विवक्षितमित्यभिप्रेत्य प्राक् ' ज्ञोत एव ' इति सूत्रोपादानेन योऽर्थः प्रकाशितः स एव श्रुतिविरोधशङ्कापरिहारानन्तरं दृढ इति बोधनाय तत्सूत्रोपादानेनोपसं-ह्रियते **वक्ष्यति च ज्ञोत एवेति** ॥ अत्र **एवमात्मा चिद्रूपएव चैतन्यगुणकः** इति भाष्येण ' गुणाद्वाऽऽलोकवत् ' ' तद्गुणसारत्वात् ' इति सूत्रद्वयघटक गुणशब्दद्वयमेकार्थबोधकमिति सूचितमिति पूर्वं (४७०) उपपादितम् ॥

यद्यपि सिद्धान्तसिद्धाञ्जने ' इहापि बुद्धिसत्वस्य ' हृदयमेवान्ववक्रामति ' इति ' बुद्धेर्गुणेनात्मगुणेनचैव ह्याराग्र-मात्रः ' इत्यादि प्रकृतविषयसन्निधानात् । ' अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि ' इति हृच्छब्देन प्रकृतत्वाच्च व्यवहितावमर्शश्च परस्यापि उपसर्जनावमर्शस्तु दोषोऽधिकः। संप्रतिपन्नश्चायं ' पानव्यापच्च तद्वत् ' (जै.३.४.१५)— ' तथा प्राणाः (ब्र.२.४.१) तदभावो नाडीषु तच्छ्रुतेः (ब्र.३.२.७) इत्यादौ इति ' प्राज्ञस्यापि दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः ' ' एषम आत्माऽन्तर्हृदयेऽणीयान् व्रीहेः ' इत्यादिव्यपदेशो हृदयोपाधिकस्तुल्य इत्यत्र दृष्टान्तः प्राज्ञवदिति युक्तम् । ननु हृदयोपाधिकमणुत्वमित्यत्र येन परस्यातदुपाधित्वेन वैषम्यमाशङ्क्येतेति । परस्यतु यद्यात्मा चिद्रूपः तत एव ज्ञानव्यपदेश इति कृतं ज्ञानगुणसारत्वेन । अथ न स्वयं ज्योतिष्ट्वाद्याम्नायविरोधः इत्यलमतिप्रसङ्गेन ' इतिचोक्तम् ॥

तथाऽपि ' अवस्थितिवैशेष्यात् ' इति सूत्रभाष्ये (शं) हृदि ह्येष आत्मा पठ्यते वेदान्तेषु । ' हृदि ह्येष आत्मा ' (प्रश्न) ' स वा एष आत्मा हृदि ' (छा.८.३.३) इत्याद्युपदेशेभ्यः इत्युक्तम् हृदिह्येष पुण्डरीकाकारमांसपिण्डपरिच्छिन्ने हृदयाकाशे एष आत्मा इति । एषः विवक्षितः आत्मा हृदयपुण्डरीके आकाशशब्देनाभिहितः ' इति च उपनिषद्भाष्ये (शं) उक्तम् । ' तद्गुणसारत्वात्तु तद्व्यपदेशः ' इति सूत्रभाष्ये (शं) ' बुद्धेर्गुणा तद्गुणाः ' इत्युक्त्या हृदयाकारमांसपिण्डस्य

## श्रीभाष्यम्

**अतस्स्वयम्प्रकाशोऽयमात्मा ज्ञातैव न प्रकाशमात्रम्**

## श्रुतप्रकाशिका

प्रयुक्तत्वात् ज्ञानानाश्रयत्वस्य । श्रुत्या ज्ञा(तुः(तृत्वं) स्वयम्प्रकाशत्वसिद्धिं निगमयति । **अतइति** । ननु 'घटमहं– जानामि' इत्यत्र ज्ञानस्य ज्ञातृसम्बन्धः प्रतीयतइत्यभ्युपेत्यम् अन्यथा स्वज्ञानपरज्ञानविभागस्य दुर्ग्रहत्वप्रसङ्गात् । स्व-

## गूढार्थसङ्ग्रहः

तच्छब्देन परामर्शएवात्र न कृतः । बुद्धिहृदयाकारमांसपिण्डयोर्भेदात् । अतस्तच्छब्दस्य प्रकृतपरामर्शकत्वोक्तिः (सि.अं) परेषां न घटते। प्रकृतपरामर्शकत्वं न घटत इत्यभिप्रेत्यैव भामत्यादौ बुद्धिस्थपरामर्शकत्वमभिहितम् । 'तथा प्राणाः' इत्यत्र व्यवहितपरामर्शकत्वं 'पानव्यापच्च तद्वत्' इत्येवमादौ व्यवहितोपमानसम्बन्धस्याप्याश्रितत्वात् यथाऽतीतानन्तरपादा-द्युक्ता वियदादयः परस्य ब्रह्मणो विकारास्समधिगताः 'तथा प्राणाः' अपि परस्य ब्रह्मणो विकाराः इति योजयितव्यम्' इति (शं) भाष्ये उक्तम् । पादद्वयस्य कार्यनिरूपणपरत्वेन पूर्वपादाद्याधिकरणोक्तस्यार्थस्य द्वितीयपादाद्याधिकरणे— परामर्शो युक्तः 'पानव्यापच्च तद्वत्' इत्येतदधिकरणपूर्वाधिकरणद्वयमपि अश्वप्रतिग्राहेष्टिविषयकम् । तत्र द्विती-याधिकरणे लौकिकवैदिकविषयविचारो नास्त्येव । प्रथमाधिकरण एव लौकिके अश्वदाने, वैदिके अश्वदाने वा अश्वदान निमित्तेष्टिरिति संशयः । तत्र 'दोषात्विष्टिर्लौकिके स्यात् शास्त्राद्धि वैदिके न दोषस्स्यात्' इति पूर्वपक्षसूत्रे लौकिक वैदिक शब्दद्वयमपि वर्तते ॥

अत्र 'पानव्यापच्च तद्वत्' इति सूत्रेऽपि लौकिक सोमपानवमने, वैदिकसोमपानवमने वा सौमेन्द्रश्चरुरिति संशयः । लौकिकसोमपानवमने सोमेन्द्रचरुरिति पूर्वःपक्षः लौकिकसोमपाने व्यापत् वमनमश्वदानवदित्युक्तः । तत्राश्व-प्रतिग्रहेष्ट्याद्याधिकरणपूर्वपक्षस्य तच्छब्देन परामर्शो युक्तः । द्वितीयाधिकरणस्य लौकिकवैदिकविषयविचाररूपत्वाभा-वात् । 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इत्यस्य तृतीयद्वितीयपाद द्वितीयाधिकरणादिसूत्रत्वेन प्रथमाधिकरणस्य स्वप्नावस्थापरीक्षारूपतया तत्र 'सन्ध्ये सृष्टिराहहि' इति प्रथमसूत्रोक्तस्वप्नस्य तच्छब्देन परामर्शो युक्तः । प्रकृते तद्वत् 'तद्गुण' इत्यत्र तच्छब्दे बुद्धिपरामर्शकत्वोक्तिः (सि.सि.अं) न घटते ॥

'ज्ञोत एव' इत्यत्र विशेषणतयोपस्थितस्य ज्ञानस्यैव 'गुणाद्वाऽऽलोकवत्' इति सूत्रे गुणशब्देन विवक्षा सर्व सम्मता । गुणशब्दोऽपि किंचिदधीनत्वेनाप्राधान्यमेव बोधयति । 'तद्गुणसारत्वात्' इति सूत्रे 'बुद्धेर्गुणा' इतिहि तत्पुरुषाविवक्षातः कर्मधारयाविवक्षैव युक्ता निषादस्थपत्यधिकरणसिद्धान्तानुरोधात् । 'दशैते राजमातङ्गाः तस्यैवामी तुरङ्गमाः' इत्यत्र तच्छब्दस्योपसर्जनपरामर्शित्वं प्रसिद्धम् । 'प्राज्ञवत्' इति सूत्रे प्राज्ञशब्दोपादानं परेषां विफलम् । परस्यैवौपाधिकाणुत्वस्य तत्र विवक्षितत्वे परमात्मवाचिशब्दान्तरं परित्यज्य प्राज्ञशब्दोपादानस्य निर्बीजत्वमेव स्यात् । प्राज्ञशब्दोहि प्रकृष्टज्ञानाश्रयवाची । प्रकृष्टज्ञानाश्रयस्यैव 'सत्यं ज्ञानम्' इत्यत्र ज्ञानपदार्थता तत्सूत्रभाष्यदीपसारेषु स्पष्टमुक्ता । भाष्ये 'आनन्दो ब्रह्म' इति दृष्टान्तोक्तिस्तु आनन्दस्यावस्थाविशेषापन्नज्ञानरूपत्वात् ज्ञानाद्भेदाभावेन युक्तैव । अत्र तद्वत एव ग्रहणे बीजं तु सम्यग्भाष्यएवोक्तम् । अतश्च 'तद्गुणसारत्वात्' इति सूत्रे परेषां (पं.पा) अध्यासपरत्वारोपणमभिनिवेशमूलकमिति सिद्धम् ॥ **अतः स्वप्रकाश इत्यादि** । अतः आत्मनः श्रुतिभिः चिद्रूपत्वचैतन्य-गुणकत्वयोस्साधनादित्यर्थः ॥

## श्रीभाष्यम्

**प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः दीपादिप्रकाशवत् तस्मान्नात्मा भवितुमर्हति**

## श्रुतप्रकाशिका

सम्बन्धितया प्रतीतं ज्ञानं सम्बन्धाप्रतीतौ कथं स्वज्ञानमिति व्यवह्रियते ? अतः स्वसम्बन्धः प्रतीयत एव । तत्प्रतीतिर्नतावदहमर्थाद्भवति । अहमर्थः प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो(भव(भा)ति । नह्यर्थान्तरमहमर्थो विषयीकर्तुमलमिति भवतां प्रक्रिया । अतो धर्मभूतज्ञानेनैव सम्बन्धप्रतीतिः । सम्बन्धश्च सम्बन्धिभ्यां विना न प्रतीयत इति ज्ञातृज्ञानयोरपि सम्बन्धप्रकाशकज्ञानान्तरवेद्यत्वं स्यात् । ततः स्वतोऽवभासो ज्ञानान्तरेणावभासश्चेत्यवभासद्वयाभावात् ज्ञानान्तरेणैव प्रकाश्यतया स्वप्रकाश्यत्वासिद्धेः ज्ञातुश्च ज्ञानस्य च जडत्वं स्यात् ॥

**किंच** ज्ञानान्तरेण सम्बन्धप्रतीतिरवश्यंभाविनीचेत् सम्बन्धविषयज्ञानेनसह ज्ञातृसम्बन्धस्यापि ज्ञानान्तरेण प्रतीत्यवश्यम्भावात् सम्बन्धज्ञानपरम्पराप्रसङ्गः । अवश्यंभावाभावे सर्वज्ञानेषु 'अहं जानामि' इति ज्ञानज्ञातृसम्बन्ध प्रतीतिर्नस्यात् । नैवम्—स्वयम्प्रकाशप्रत्यक्षेणैव सम्बन्धप्रतीतेः । नियतविशेषण विशेष्यभावोहि सम्बन्धः । अहमर्थो विशेष्यैकस्वभावं स्वात्मानं प्रकाशयति । धर्मभूतज्ञानं च विशेषणैकस्वभावं स्वात्मानं प्रकाशयति । विशेषणविशेष्यभावस्य परस्परप्रतियोगिकत्वं च ज्ञातृज्ञानयोस्सहावभासादेव प्रतीयते ॥

**ननु** सम्बन्धप्रतीतौ सम्बन्धिनोस्सहावभासश्च एकज्ञानगम्यतया विना नोपपद्यत इति ज्ञातृज्ञानयोः ज्ञानान्तरवेद्यत्वं स्यात् । सुरभिपुष्पमित्यादौ भिन्नसामग्रीवेद्ययोरपि गन्धपुष्पयोस्सम्बन्धप्रतीतिवेळायाम् एकज्ञानगम्यत्वंहि दृश्यत इतिचेन्न । तत्र सम्बन्धिनोस्सम्बन्धेन सहैकज्ञानगम्यत्वस्य सहावभासप्रयुक्तत्वाभावात्, सम्बन्धिनोर्जडत्वप्रयुक्तंहि तत्रैकज्ञानगम्यत्वम् । अत्र स्वप्रकाशत्वात्स्वयमेव सहावभासमानयोर्ज्ञातृज्ञानयोर्विशेषणविशेष्यैकस्वभावत्वरूपसम्बन्धग्रहो ज्ञानान्तरानपेक्ष उपपद्यते । अतस्सम्बन्धाग्रहस्वपरज्ञानविभागाभाव सम्बन्धज्ञानपरम्पराप्रसङ्गाः दूरोत्सारिताः ॥

**एवं** ज्ञातृत्वस्वयम्प्रकाशत्वोपपादनेन चिन्मात्रव्यतिरिक्तत्वादिति जडत्वसाधकहेतुर्निरस्तो भवति । ज्ञानव्यतिरिक्तत्वाज्जडत्वं वदता किं स्वयम्प्रकाशव्यतिरिक्तत्वं हेतुरुक्तः उत विषयप्रकाशकान्यत्वम्, प्रथमे साध्याविशिष्टत्वम् । द्वितीये ब्रह्मण्यनैकान्तिकम् । श्रुत्यादिबाधश्च, अथ साश्रयत्वे तर्कमाह—**प्रकाशत्वादेवेति** । प्रकाशत्वात् विषयेण

## गूढार्थसङ्ग्रहः

**प्रकाशत्वादेवेति** । अद्वैतसिद्धौ (आत्मस्वप्रकाशत्वोपपत्तौ) 'आत्मास्वयम्प्रकाशः, स्वसत्तायां प्रकाशव्यतिरेकविधुरत्वात्, प्रकाशाश्रयत्वात् प्रकाशकर्तृत्वात् प्रदीपवत्' इति विवरणानुमानविचारावसरे सजातीयप्रकाशाप्रकाश्यत्वमेव साध्यम् ज्ञानप्रभाऽनुगतं च प्रकाशत्वमावरणाभिभावकत्वम् । तच्च ज्ञानस्य चित्त्वेनान्यत्र तेजोविशेषत्वादित्यन्यदेतत् । आवरणत्वंचाज्ञानतमसोः अर्थव्यवहारप्रतिबन्धकत्वमनुगतमेव । तच्चाज्ञानस्य साक्षात् तमसः ज्ञानप्रतिबन्धद्वारेत्यन्यदेतत्' इत्युक्तम् । अत्र लघुचन्द्रिका—'अभिभावकत्वम् अभिभावकस्य स्वरूपत्वम् । ज्ञानस्य केवलचितः चित्त्वेन आवरणाभिभावकप्रमारूपायाः अविच्छिन्नाचितस्स्वरूपत्वेन' इति ॥

अत्र विवरणानुमाने अज्ञानतमोविरोधित्वं प्रकाशत्वमिति प्रकाशत्वलक्षणपरिष्करणेन अज्ञानतमोविरोधित्वरूपस्यातल्लक्षणत्वात्' (सि.सि.अं) इति भाष्यदूषणं निरवकाशम् ॥ अत्र साध्ये प्रकाशत्वस्य परिष्करणानुसारेण हेतौ—

## श्रीभाष्यम्

**संवित्। संविदनुभूतिज्ञानादिशब्दास्सम्बन्धिशब्दा इति च शब्दार्थविदः।**

## श्रुतप्रकाशिका

साक्षात्सम्बध्य साक्षात्परम्परया वा ज्ञायमानत्वेनापरोक्षव्यवहारानुगुण्यहेतुत्वादित्यर्थः। अनेन स्वरूपभूतज्ञानेन्द्रियलिङ्गादिव्यावृत्तिः। हेत्वन्तरमप्याह—**संविदनुभूतीति**॥

## गूढार्थसंग्रहः

प्रकाशाश्रयत्वं कथमुपपादितमिति विवेचनीयम्। केवलचितः प्रकाशत्वम् आवरणाभिभावकप्रमारूपत्वेन वृत्त्यवच्छिन्न चित्त्वेन' इत्युक्त्या वृत्त्यवच्छिन्नचितः शुद्धचितश्च तादात्म्यमङ्गीकृत्य प्रकाशाश्रयत्वमुपपादनीयम्॥

दृष्टान्तेतु प्रभायाः प्रकाशत्वेन तत्तादात्म्यं प्रदीपे अङ्गीकृत्य प्रकाशाश्रयत्वमिति वक्तव्यम्। वृत्त्यवच्छिन्नचितः आवरणाभिभावकत्वे वृत्तेरेवावरणाभिभावकत्वे पर्यवसानं स्यात्। वृत्तिमन्तरा आवरणाभिभवस्यानङ्गीकारात्। दीपस्य प्रभा, दीपस्य प्रकाशः, दीपः प्रभावानित्यादिव्यवहारवत् केवलचितः प्रकाशः अवच्छिन्नचित् वृत्त्यवच्छिन्नचिदिति वा, अवच्छिन्नचिदाद्याश्रया वृत्तिरिति वा नैवप्रामाणिकानां व्यवहारः। अतः सिद्धान्ते प्रभास्थानापन्नधर्मभूतज्ञानस्य प्रकाशत्वाङ्गीकारे, प्रभाद्वारा दीपस्य विषयप्रकाशकत्ववत् जीवस्य धर्मभूतज्ञानद्वारा प्रकाशकत्वं सङ्गच्छते। अतः चितः प्रकाशत्वं किञ्चित्सम्बन्धित्वेनैव वाच्यम्; इत्थं च धर्मभूतज्ञानसम्बन्धेनैव तस्य प्रकाशत्वमुपपादनीयमिति 'घटमहं जानामि' इत्यादौ संविदः स्वप्रकाशात्मत्वं न सम्भवतीति भावः॥

आत्मगतधर्मभूतज्ञानस्य प्रकाशत्वं 'घटमहं जानामि' इत्यादौ ज्ञाधात्वर्थस्य सम्बन्धिपुरस्कारेणैव व्यवहारात् सिद्ध्यतीत्याह—**संविदनुभूतीत्यादि**। 'तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते' इति पञ्चपादिकोक्तौ अनुभूतिशब्दस्य सम्बन्धिशब्दत्वं स्पष्टम्। 'परागर्थप्रमेयेषु या फलत्वेन सम्मता। संवित्' इति वार्तिकेऽपि संविच्छब्दस्य सम्बन्धिशब्दत्वं स्पष्टम्। एवं 'ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात् तस्यचात्माश्रयत्वात्' इति प्रदीपेन प्रकाशितमितिवत् मयाऽवगतमित्यनुभवात् 'आत्मैव चित्प्रकाशः' इति च विवरणेऽपि सम्बन्धिशब्दत्वं स्पष्टम्॥

एवं वदद्भिर्विवरणकारैः 'साङ्ख्यवेदान्तिनां करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानं भावव्युत्पत्त्या संवेदनम्' इत्युपक्रम्य अध्यासपरिनिष्पन्नान्तःकरणसंपिण्डितात्मनो ज्ञानाकारपरिणामात्। नच संवेदनाकारेण परिणामः तस्य नित्यसिद्धत्वात्। अतोऽन्तःकरणपरिणामश्चैतन्यस्य विषयावच्छेदोपाधिः। करणव्युत्पत्त्या ज्ञानं भावव्युत्पत्त्यातु संवेदनमेवार्थप्रकाशो— ज्ञप्तिः ज्ञानमित्युच्यते' इत्युक्तिः कथं घटते? संवेदनस्य नित्यसिद्धत्वेनापरिणामित्वं कथम्? 'संवेदनस्य भेदावभासशून्यत्वात् अनुभवाधीनसिद्धिकस्य च विषयवदनात्मत्वात् एकः स्थाय्यात्मैवानुभवइत्याह—प्रमाणजन्यश्चेदनुभवः' इति (पं.पा.वि) 'प्रमाणजन्यश्चेदनुभवः तथासति स्वगतेन विशेषेण प्रतिविषयं पृथक्पृथगवभासते, सर्वानुभवानुगतं च गोत्ववदनुभवत्वमपरमीक्ष्येत' (पं) इति 'सामान्याविशेषभेदकल्पनागौरवात् आत्मैकएवानुभव इत्याह—सर्वानुभवानुगतंचेति' इतिच पञ्चपादिकाविवरणयोः आत्मनएवानुभवत्वमुक्तमितिचेत् शुद्धस्य केवलचिदात्मनः अनुभवत्वस्यानङ्गीकारेण अन्तःकरणपरिणाममङ्गीकृत्य तैरपि अनुभव तद्भेदादेः व्यवहारोपपादनेन परिणामाभावे अनुभवव्यवहारो नास्तीति सिद्धौ आत्मनः अनुभवत्वाभ्युपगमो निरर्थकः॥

### श्रीभाष्यम्

**नहि लोकवेदयोर्जानात्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः । यच्चोक्तमजडत्वात्**

### श्रुतप्रकाशिका

**सम्बन्धिशब्दत्वं** शब्दस्वभावायत्तमित्याशङ्क्याह—**नहि लोकवेदयोरिति** । यत्रार्थस्वरूपस्य अन्यथात्वं दृश्यते तत्र शब्दस्वभावायत्तत्वमाश्रयणीयम् । यथा दारा इत्यादिषु बहुत्वादेः यत्र नान्यथात्वं तत्रार्थस्वभावायत्तत्वमेव यथा भार्येत्यादिष्वेकत्वादेः । तथा लोकवेदयोः (स)कर्मकर्तृत्वदर्शनात् अर्थस्वभावायत्तमेव सम्बन्धिशब्दत्वमित्यभिप्रायः, यद्वा—कर्मकर्तृसम्बन्धित्वं व्युत्पत्तिनिमित्तमस्तु न प्रवृत्तिनिमित्तं तत्तु ज्ञप्तिमात्रमित्यत्राह—**नहिलोकेति** । प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनं प्रयोगश्च सम्बन्धिन्येवार्थ इति नार्थान्तरकल्पना स्यात् । स्वरूपभूतज्ञानवाचिशब्दानां सम्बन्धिशब्दत्वं त्वन्मतेऽप्यनुपपन्नमितिचेन्न स्वरूपगोचराणां स्वयम्प्रकाशत्वे रूढानां ज्ञानादिशब्दानामनुभूत्यादि शब्देभ्यः शब्दान्तरत्वात् । अतः सम्बन्धिशब्दत्वोपदेशस्तु धर्मभूतज्ञाने सावकाशोऽस्मन्मते विषयाश्रयसम्बन्धिज्ञानस्यैव विषयाश्रयसम्बन्धबाधेन निराश्रयत्वनिर्विषयत्वाभ्युपगमात्त्वन्मते सम्बन्धिशब्दत्वोपदेशो निरर्थक इति भावः ॥

**अथा**जडत्वात्संविदात्मत्वसमर्थनं दूषयितुमनुवदति । **यच्चोक्तमिति** । अथाजडत्वंनाम किं स्वसत्ताप्रयुक्तप्रकाशत्वम् उत अव्यभिचरितप्रकाशसत्ताकत्वम् उत स्वस्मै प्रकाशमानत्वम् उत स्वस्मै स्वयम्प्रकाशमानत्वम् उत स्वयम्प्र-

### गूढार्थसंग्रहः

'नच ज्ञानमात्माश्रयं द्रव्यमिति युक्तं तस्यैव प्रकाशगुणत्वेनात्मनो ज्योतिष्ट्वहानात्' इति विवरणोक्तिस्त्वनुपादेया । तदुत्तरं विवरण एव 'प्रदीपादिषु द्रव्यमेव जायते न प्रकाशगुणः' इत्युक्तार्थस्यैव सिद्धान्ते अङ्गीकारेण गुणत्वव्यवहारस्यान्यथैव सिद्धान्ते उपपादनेन च प्रभाया इव ज्ञानस्य द्रव्यस्य ज्योतिष्ट्वाङ्गीकारेण प्रदीपादेरिवात्मनो ज्योतिष्ट्वहानप्रसङ्गस्यासम्भवात् । 'प्रदीपेन प्रकाशितमितिवत् मयाऽवगतमित्यनुभवादात्मैव चित्प्रकाश' इति विवरण एवोक्त्या प्रभास्थानापन्नस्य ज्ञानस्यास्मदर्थसम्बन्धित्वाभ्युपगम एव तादृशानुभवसामञ्जस्यस्य सिद्धत्वात् । प्रभायास्सङ्कोचविकासवत् ज्ञानद्रव्यस्यापि सङ्कोचविकासाभ्युपगमेन परिणामवादे परिणामिनित्यत्वस्याक्षतत्वात् द्रव्यस्यैकत्वेऽपि अवस्थाभेदानिबन्धनभेदव्यवहारवत् ज्ञानस्यैकत्वनित्यत्वयोरङ्गीकारेऽपि विषयसम्बन्धरूपपरिणामभेदेन भेदव्यवहारस्योपपत्तिसम्भवात् । ससम्बन्धिकार्थस्य जातिवदनुगतप्रतीत्या एकत्वाभ्युपगमो न युज्यते । तथा सति संयोगच्छिदादेरप्येकत्वमेव स्यादिति पूर्वमेवोक्तम् । अतः वृत्तिमन्तरा संविदनुभूत्यादिव्यवहारविरहात्प्रकाशत्वस्याप्यभावात् 'घटमहं—जानामि' इत्यादौ आश्रयविषयोपाधिसम्बद्धतया प्रतीयमानस्यैव ज्ञानस्योपाधिविनिर्मोके आत्मत्वमित्युक्तिः न घटत इति भावः ॥

ननु वृत्त्यपेक्षया संविदादिव्यवहाराङ्गीकारेऽपि वृत्तेर्जडत्वेन अस्वप्रकाशतया ज्ञानस्य स्वप्रकाशचिद्रूपतया तस्यैवात्मत्वं युक्तम् । उक्तं च लघुचन्द्रिकायां 'वृत्तेर्जडत्वेन मिथ्यात्वेन च मोक्षानन्वयित्वात् अप्रकाशमानसुखरूपमोक्षस्याप्यपुरुषार्थत्वाच्च स्वप्रकाशचिद्रूपत्वं मोक्षस्यावश्यकम् । तथा च तस्य नित्यत्वादेकत्वाच्च वृत्त्युपहितस्सएव ज्ञानम् । ज्ञानेसति जानामि न वा न जानामीति संशयविपर्यययोरनुदयेन संशयविपर्यययायोग्यत्वस्य वृत्तौ सम्भवेऽपि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वस्य (अद्वै.सि.२८०) स्वयम्प्रकाशत्वस्य चितीव वृत्तावपि कल्पने गौरवम्' इति इत्याशयेन परोक्तमनुवदति यच्चेति ॥

### श्रीभाष्यम्

**संविदेवात्मेति तत्रेदं प्रष्टव्यम्; अजडत्वमिति किमभिप्रेतम्? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्; तथासति दीपादिष्वनैकान्त्यम्। संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिर्विरोधश्च। अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु**

### श्रुतप्रकाशिका

काशत्वमिति पञ्चधा विकल्पमभिप्रेत्याह—**अजडत्वमिति**। **किमभिप्रेतमिति**। 'अहं जानामि' इति प्रत्यक्षबाधस्सर्वसाधारणं दूषणम्। प्रथमं स्वसत्ताप्रयुक्तप्रकाशत्वपक्षं दूषयितुमाह—**स्वसत्तेति**। स्वसत्ताप्रयुक्तः प्रकाशो यस्येति बहुव्रीहिः। वक्ष्यमाणासिद्धिदूषणोपयोगिभेदज्ञापनार्थं स्वसत्ताप्रयुक्तशब्दः। अनैकान्त्यमाह—**तथासतीति**। स्वपक्षे ज्ञातुरात्मत्वात् सपक्षभूते तस्मिन् विपक्षेऽनात्मनि दीपे च वृत्त्याऽनैकान्त्यं पक्षत्रयवृत्तित्वलक्षणमुक्तम्। परपक्षेत्वनियतत्वमेवानैकान्त्यम्। सपक्षाभावात् दूषणान्तरद्वयमाह—**संविदतिरिक्तेति**। संवित्प्रयोजिका प्रकाशः प्रयोज्य इति तदतिरेकेणानभ्युपगमादासिद्धिः। अभ्युपगमे निर्विशेषत्वविरोधः इमावसिद्धिविरोधौ विकल्पितसर्वशिरस्साधरणावनुसंधेयौ॥

यद्वा विरोधः पक्षविपक्षयोरेव वर्तमानत्वं पक्षभूतसंविदि विपक्षे दीपादौ च वृत्तेः। परमतमात्रपर्यालोचनयाऽयं विरोध उक्तः। अत्र स्वसत्ताप्रयुक्तप्रकाशत्वमित्यत्र प्रकाशशब्देन किं सक्षाद्वा परम्परया वा व्यवहारानुगुण्यं विवक्षितं उत परम्परयैव उत साक्षादेवेति विकल्पोऽभिप्रेतः प्रथमं शिरः स्वपरदर्शनपर्यालोचनयाऽभिहितयोरनैकान्त्यविरोधयोरन्यतरेण निरस्तं भवति। द्वितीयेत्वसिद्धिः परम्परयैव व्यवहारानुगुण्यस्य ज्ञप्तौ उभयवाद्यनभिमतत्वात्। तृतीये स(न्मात्रा)त्ता)तिरिक्तप्रकाशानभ्युपगमनिबन्धनासिद्धिर्निर्विशेषत्वविरोधश्च स्यातामित्यभिप्रायः। द्वितीयं पक्षं प्रतिक्षिपति। **अव्यभिचरितेति**। न व्यभिचरति प्रकाशो यस्य सत्तायां सोऽव्यभिचरितप्रकाशसत्ताकः। प्रयोज्यप्रयोजकत्वाभावेऽपि विद्यमानदशायां सर्वदा प्रकाशमानत्वमित्यर्थः, तस्यानात्मत्वेन सम्प्रतिपन्नेषु सुखदुःखादिषु व्यभिचार उक्तः॥

### गूढार्थसङ्ग्रहः

'नच जाड्यं स्वयम्प्रकाशत्वावगमात्' इत्युपक्रम्य 'आत्मा स्वयम्प्रकाशः स्वसत्तायां प्रकाशव्यतिरेकविधुरत्वात्।' इति विवरणोक्तानुमानपर्यालोचनायां स्वसत्ताप्रयुक्तप्रकाशत्वं स्वयम्प्रकाशत्वं प्रतीयते इत्यभिप्रेत्य **स्वसत्ताप्रयुक्तेत्युक्तम्**। स्वसत्ताप्रयुक्तत्वस्य प्रकाशे योगक्षेमसाधारणप्रयोज्यप्रयोजकभावाङ्गीकारेण कथंचिदुपपत्तावपि प्रकाशाश्रयत्वं न घटतइत्यभिप्रेत्याह—**संविदतिरिक्तेत्यादिना**॥

**अव्यभिचरितप्रकाशेत्यादि**। इदं स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वमित्यादेः उपलक्षणम्। **सुखादिष्वित्यादि**। आदिपदेनान्तःकरणवृत्तिसामान्यपरिग्रहः। सुखादेः स्वविषयकवृत्तिमन्तरैव साक्षिभास्यत्वपक्षः लघुचन्द्रिकादौ व्यवस्थापितः। अतः स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वं सुखादौ वर्तत एव। परसम्मतचित्सापेक्षत्वंतु चितएवाप्रामाणिकत्वेन न कल्पयितुं शक्यम्। प्रमाणस्वारस्यानुरोधेन वृत्तौ स्वप्रकाशत्वकल्पनस्य युक्तत्वात्। शुद्धचिति स्वप्रकाशत्व सुखत्वनित्यत्वैकत्वधर्माः चन्द्रिकाकारैः नैवाभ्युपगताः। तत्तद्धर्मोपलक्षितैव शुद्धचित् मुक्तिकाले इति अज्ञानाश्रयस्यापि मुक्तिकाले सत्ताव्यवहारः कुतो नास्ति। एवं वृत्तिविषयस्यापि अज्ञानवृत्त्युपलक्षितस्य मुक्तौ सत्त्वात्। एवं स्वप्रकाश चित् सुखं नित्यमिति व्यवहारवत्, अज्ञं वृत्तिविषयभूतं नित्यमिति व्यवहारोऽपि स्यात्। अतः स्वप्रकाशत्वादिधर्मविशि-

## श्रीभाष्यम्

**व्यभिचारान्निरस्तम् । यद्युच्येत सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिवज्जडत्वेनानात्मेति । ज्ञानं वा किं स्वस्मै प्रकाशते तदपिह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते अहं सुखीतिवज्जानाम्यहमिति । अतस्स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविद्यसिद्धम् । तस्मात्स्वात्मानंप्रति स्वसत्तयैव सिद्ध्यन्नजडोऽहमर्थएवात्मा । ज्ञानस्यापि प्रकाशता तत्सम्बन्धायत्ता । तत्कृतमेवहि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनंप्रति प्रकटत्वमितरं प्रत्यप्रकटत्वं च । अतो न ज्ञप्तिमात्रमात्मा, अपितु ज्ञातैवाहमर्थः ।**

## श्रुतप्रकाशिका

अथ तत्परिहारमुखेन स्वस्मै प्रकाशमानत्वपक्षमुपक्षिपति । **यद्युच्येतेति** । परिहरति । **ज्ञानंवेति** । कस्येत्यत्राह— **तदपीति** । परस्मै भासमानत्वमुपपादयति । **अहमिति** । तस्मादेवंरूपाजडत्वमसिद्धमित्याह— **अतइति** । अथ चतुर्थे शिरोदूषयन्नसिद्धिमाह— **तस्मादिति** । स्वयम्प्रकाशत्वपक्षेऽपि स्वयम्प्रकाशत्वंनाम किं ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वम् उत ज्ञानान्तरनिरपेक्षप्रकाशत्वमित्यभिप्रेते विकल्पे प्रथमं शिरः तस्मादिति ग्रन्थेन दूषितम् । इतरात्मव्यावृत्त्यर्थं स्वात्मानमित्युक्तम् स्वसत्तयैव सिद्ध्यन्नित्यनेन स्वयम्प्रकाशत्वमुक्तम् । स्वस्मै स्वयंभासमानत्वमहमर्थस्याधिकम् । स्वस्मै स्वयंभासमानस्य स्वयंभासमानत्वमस्तीत्यभिप्रायेण स्वात्मानंप्रति स्वसत्तयैवेत्युक्तम् । तेन ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं ज्ञातर्यप्यस्तीति तद्व्यभिचरितं स्वपक्षे अनात्मनि ज्ञातर्यपि विपक्षभूते वृत्तेरिति दर्शितम् । ज्ञानान्तरनिरपेक्षप्रकाशत्वं संविद्यसिद्धं तस्यास्स्वरूपभूतज्ञानाधीनत्वात् । अहमर्थस्यैव तदित्यभिप्रायस्सत्तयैवेत्यनेन सूचितः । तमेव विवृणोति । **ज्ञानस्यापीति** । तत्सम्बन्धायत्तत्वमुपपादयति । **तत्कृतमेवहीति** । ज्ञानस्फुरणस्याश्रयसम्बन्धोऽपि सामग्र्यन्तर्भूत इति भावः । अजडत्वात्संविदात्मत्वासिद्धिं निगमयति । **अतइति** ॥

## गूढार्थसंग्रहः

इष्टस्य मुक्तावनङ्गीकारसिद्धान्तो मुक्तौ ब्रह्मप्राप्ति, सर्वज्ञत्व, परमसाम्य स्वरूपाविर्भावश्रुत्यन्यथाऽनुपपत्त्या वृत्तिस्थानापन्नधर्मभूतज्ञानस्य तदाश्रयाहमर्थजीवस्यानभ्युपगमसिद्धान्तोऽपि शपथमात्रमेव भवति ॥

'घटमहं जानामि' इति प्रमाणस्वारस्यपरित्यागेतु माध्यमिकवत् स्वप्रकाशानभ्युपगमस्यैव युक्तत्वस्य पूर्वमेवोपपादनात् । संविदनुभूतिज्ञानादिशब्दानां सम्बन्धिशब्दत्वेन परसम्मताचितः तदर्थत्वासम्भवस्य इतःपूर्वमुक्तेश्च । सुखादेः प्रत्यक्त्वाभावान्नात्मत्वं प्रत्यक्त्वं चिद्रूपत्वम् । अवेद्यत्वेसति अपरोक्षव्यवहारयोग्यत्वं वा इति शङ्कायां निर्विशेषचिति प्रमाणाभावस्य पूर्वमेवोपपादनेन तत्सम्मतं प्रत्यक्त्वमपि न घटते ॥

'नचायमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्' इति भाष्यादिविवरणोदाहृतवार्तिका (४४५) नुसारेण अस्मदर्थस्याहमाकारवृत्तिविषयतया इदंत्वेन व्यपदेश्यपराग्व्यावृत्तं प्रत्यक्त्वमहंत्वरूपमेव । प्राक् (२१८.पु) उदाहृतपञ्चपादिकायां 'यद्यपि देहादिव्यतिरिक्तभोक्तृविषयएवाहङ्कारः' इत्युक्तेः 'आत्मा स भोक्तुः इत्यपरे' इति स्वसिद्धान्तपरभाष्यविवरणे 'योऽयमहमित्युल्लिख्यमानश्चेतनो भोक्ता स ब्रह्मेति कैश्चित्प्रतिपन्नः' (पं.पा) इत्याद्युक्तेश्च, अहंत्वरूपं प्रत्यक्त्वं यामुनमुन्युक्तमेव युक्तमित्यालोच्य सुखादिरित्याद्यनन्तरग्रन्थः प्रवृत्तः इति बोध्यम् ॥

## श्रीभाष्यम्

**अथ यदुक्तमनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते रजततयेव शुक्तिर्निरधिष्ठानभ्रमानुपपत्तेरिति, तदयुक्तम्।**

## श्रुतप्रकाशिका

**अथाहमर्थस्य** भ्रान्तिसिद्धत्वं दूषयितुमनुवदति। **अथ यदुक्तमित्यादिना**। संविदपि मिथ्या किं न स्यादित्यत्राह—**निरधिष्ठानेति**। अनुभूतिव्यतिरिक्तापारमार्थ्यसिद्धवत्कारेणायं हेतुरुक्तः। दूषयति। **तदयुक्तमित्यादिना**।

## गूढार्थसंग्रहः

'आत्मा म भोक्तुरित्यपरे' इत्येतद्भाष्यपञ्चपादिकायां 'तस्याहम्प्रत्ययसिद्धो भोक्तृत्वावभासः स मिथ्यैवानिर्वचनीयानाद्यविद्याविलसितः' इत्युक्तम्। 'तथा च लोकेऽनुभवः शुक्तिकाहि रजतवदवभासते' इत्यध्यासभाष्यविवरण पञ्चपादिकायां प्राक् (२१६.पु) उदाहृतायामहमर्थाध्यासः उपपादितः इति प्रत्यक्त्वं परसम्मतरीत्यैव निर्वचनीयमित्यभिप्रेत्य शङ्कते **अथ यदुक्तमित्यादिना**॥

**रजततयेव शुक्तिरिति**। 'अत्र शुक्तिकोदाहरणेन संप्रयुक्तस्य अनात्मा रजतमिति दर्शितम्। निरञ्जनस्य चैतन्यस्य अस्मदर्थे अनिदमंशस्यानात्मा युष्मदर्थलक्षणापन्नोऽहंकारः अध्यस्त इति प्रदर्शनार्थम्' इति पञ्चपादिकायामध्यासप्रकारः प्रदर्शितः। एतदध्यासानन्तरम् अन्तःकरणगतधर्माध्यासेन ज्ञातृत्वप्रतिभासः। अयमर्थः प्राक् (२१८.पु) सि.बिन्दौ प्रदर्शित इति निरूपितम्। **निरधिष्ठानभ्रमाऽनुपपत्तेरिति**। उक्तं च पञ्चपादिकायां 'नहि निरधिष्ठानोऽध्यासः दृष्टपूर्वः सम्भवि वा, ननु केशोण्ड्रकाद्यवभासः निरधिष्ठानो दृष्टः न तस्यापि तेजोऽवयवाद्यधिष्ठानत्वात् अपि च न क्वचिन्निरवधिको नेत्येव बाधावगमो दृष्टः। अथवा सर्वलोकसाक्षिकमेतत्। केशोण्ड्रकादावपि तद्बाधे तदनुषङ्ग एव बोधे बाध्यते न बोधः अतस्तदवधिस्सर्वस्य बाधः। तेन तन्मात्रस्य बाधाभावात् स्वतश्च विशेषानुपलब्धेः कूटस्थापरोक्षैकरसचैतन्यावधिः सर्वस्य बाधः' इति॥

'शुक्तिकाहि रजतवदभासते' इति भाष्यविवरणे (पं.पा) निरञ्जनचैतन्ये अहंकाराध्यासः तद्दृष्टान्तेन उपपादितः। 'नन्वेवंसत्यन्तरेव स्वप्नार्थप्रतिभासस्स्यात् को वा ब्रूते नान्तरिति' इति पञ्चपादिका। 'नैष दोषो—जागरणेऽपि प्रमाणज्ञानादन्यत् अन्तरपरोक्षानुभवात् न विषयस्यापरोक्षता भिद्यते एकरूपप्रकाशनात्' इति 'अतोऽन्तरपरोक्षानुभवावगुण्ठितएव जागरणेऽप्यर्थोऽनुभूयते। अन्यथा जडस्य प्रकाशानुपपत्तेः यथा तमसाऽवगुण्ठितो घटः प्रदीपप्रभाऽवगुण्ठनमन्तरेण न प्रकाशीभवत्येवम्। यःपुनर्विच्छेदावभासः स जागरेऽपि मायाविजृम्भितः' इति च।

अत्र विवरणम्। 'आकाशवत् सर्वविषयोपरक्ततया सर्वत्रावभासमानमात्मानमनादृत्य अहमित्येवात्मानमवच्छिन्नमुपादाय चोदयति नन्वेवंसत्यन्तरेव इति। आत्मैवाधिष्ठानंचेति 'इदं रजतम्' इतिवत् 'अहं नीलम्' इत्येव स्वप्नप्रपञ्चोभायादित्यर्थः। निष्कृष्टाहङ्कारं चैतन्यमात्रमात्मानमादाय चैत्यस्य च चित्सामानाधिकरण्यावभासं सर्वत्राङ्गीकृत्य परिहरति 'को वा ब्रूत इति' इति। इदानीं सर्वतो विप्रसृतचैतन्यं सर्वात्मना प्रकाशमानमात्मानं स्पष्टीकुर्वन्नाह–नैषदोषो जागरणेऽपीति। प्रतिभासिकभेदमन्तरेण प्रमाणतो न भिद्यत इत्यर्थः। ननु अहमवच्छिन्नचैतन्यान्येव विषयगतचैतन्यानि किं न स्युः इत्यत आह–अन्यथा जडस्येति। स्वयं चैतन्यहीना विषया आत्मावगा प्रकाशेनापि

## श्रीभाष्यम्

**तथासत्यनुभवसामानाधिकरण्येनानुभविताऽहमर्थःप्रतीयेत अनुभूतिरहमिति पुरोऽवस्थितभास्वरद्रव्याकारतया रजतादिरिव**

## श्रुतप्रकाशिका

अधिष्ठानसामानाधिकरण्येनाध्यस्तप्रतीतिं दृष्टान्तेनोपपादयति । **पुरोऽवस्थितेति** । पक्षे तद्विपर्ययं दर्शयति । ......

## गूढार्थसंग्रहः

न संसृज्यन्तेचेत् मयाऽवगता इति सम्बन्धावभासो न स्यादित्यर्थः । सर्वत्र चैतन्यावगुण्ठनेऽपि अहमिदमितिचात्मानात्मानौ विभक्ताविति प्रतिभासः कथमिति ? तत्राह—यःपुनरिति ' इति च ॥

अत्र प्रदीपप्रभाऽवगुण्ठनमन्तरेण न प्रकाशीभवतीत्युक्तया प्रदीपस्थानापन्नस्याहमर्थस्य सम्बन्धिना प्रभास्थानापन्नेन धर्मभूतज्ञानेनावगुण्ठितस्येदमर्थस्य मयाऽवगत इति व्यवहारस्योपपात्तिस्सिद्धान्ते समञ्जसेति एतदुपपत्त्यर्थं अन्तर्बहिश्च विद्यमानस्य निर्विशेषचैतन्यस्यैकत्वमङ्गीकृत्य विच्छेदावभासस्य मायाविजृम्भितत्वं न कल्पनीयम् । ' सर्वस्य प्रपञ्चजातस्य चैतन्यैकाश्रयत्वात् । तस्य च निरंशस्य प्रदेशभेदाभावात् । प्रपञ्चभेदेनैवहि तत्कल्पितावच्छेदं सत् अवच्छिन्नंसत् बहिरिवान्तरिव प्रकाशते ' इति । तदुत्तर (पं.पा) उक्तिरप्यनुपादेया । परसम्मतचैतन्यस्यैवाप्रामाणिकत्वात्, विच्छेदावभासः परेषामपि सम्मतः । एतदवभासस्य प्रमात्वं सम्भवत्येवेति परसम्मतार्थस्य साधकं न किंचिद्वर्तते ॥

ननु ' निरवयवसर्वगतासङ्गस्य परिणामानुपपत्तेः परिणाम्यन्तःकरणसन्निधानाच्च प्रतिभासस्यान्यथासिद्धेः '। इति विवरण एव अन्तःकरणोपरागानिमित्तं मिथ्यैवाहंकर्तृत्वमात्मनः । स्फटिकमणेरिव उपधाननिमित्तो लोहितिमा ' इति प्राक् (२१०.पु) उदाहृत पञ्चपादिकावाक्यतात्पर्यंप्रदर्शितमितिचेत् ; असङ्गश्रुतितात्पर्यंतु प्रागेव प्रदर्शितम् । ' गुणाद्वाऽऽलोकवत् ' इति सूत्रे जीवस्य सर्वगतत्वमुपपादितं । जीवस्वरूपसर्वगतत्वश्रुतिर्नास्त्येव । ' आकाशवत् सर्वगतश्च नित्यः ' इति श्रुतिस्तु परमात्मविषयिण्येवेति तात्पर्यचान्द्रिकायां (गी.भा.ता) व्यक्तम् । जीवस्य सङ्कोचविकासानर्हत्वेऽपि—प्रभास्थानापन्नधर्मभूतज्ञानस्य सङ्कोचविकासरूपपरिणामाङ्गीकारेण ज्ञानद्रव्यस्य परिणामिनित्यतासम्भवात् विषयसंयोगेन ' अहमिदं जानामि ' इति प्रतीतिरुपपद्यत इति प्रागेवोक्तम् । तत्र लौहित्यं जपाकुसुमगतं प्रसिद्ध सर्वसम्मतमिति लोहितः स्फटिक इति प्रतीतेरुपपत्तिः । अहमर्थस्य चिदचिद्ग्रन्थित्वं तु अप्रामाणिकम् । अहमर्थाध्यासासम्भवस्य पूर्वमेवोक्तेः । ' इदं रजतम् ' इत्यत्र पदद्वयं वर्तते ' अहम् ' इत्यत्र इदमनिदंरूपवस्तुद्वयबोधकपदद्वयाभावात् तद्दृष्टान्तो न घटते । प्रतिभासतः अनिदंरूपत्वं परैरपि (२११.पु) अभ्युपगतम् । चैतन्यावभासत्वेन लक्षणेन इदमर्थत्वंतु अहमर्थस्य स्वयम्प्रकाशत्वसाधनादेव न सम्भवति ॥

एवं च ' अहम् ' इत्यत्र पदद्वयाभावात् ' अहमिदं जानामि ' इत्यत्र विच्छेदावभासाच्च परोक्तरीतिर्न घटतइत्यभिप्रेत्य ' इदं रजतम् ' इत्यत्र सामानाधिकरण्यावभासवत् ' अहम् ' इत्यत्राध्यासाङ्गीकारे चेत्यस्य चित्सामाधिकरण्यावभासस्स्यादिति सिद्धान्तयति **तथासत्यनुभवसामानाधिकरण्येनेत्यादिना** । ' निष्कृष्टाहङ्कारंचैतन्यमात्रमात्मानमादाय चेत्यस्य चित्सामानाधिकरण्यावभासः सर्वत्र परैरभ्युपगतः । ' इदं रजतम् ' इत्यत्र इदमवच्छिन्नचैतन्यमेवाधिष्ठानम् । तद्वदेवानुभूतिरहमिति सामानाधिकरण्येन प्रतीतिस्स्यात् । ' अहमिदं जानामि ' इति अन्तर्बहिरवभासभेदः सर्वसम्मतो न स्यादिति भावः ॥

### श्रीभाष्यम्

**अत्रतु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि दण्डइव देवदत्तम्। तथाह्यनुभवाम्यहमिति प्रतीतिः। तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त इति प्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनःकथमिव प्रतिज्ञायेत।**

### श्रुतप्रकाशिका

**अत्रत्विति।** पृथगवभासमाना व्यधिकरणतयाऽवभासमाना तथाप्रतीतिं दर्शयति। **तथाहीति।** ततःकिमित्यत्राह— **तदेवमिति।** तदेवमुक्तप्रकारेण धर्मधर्मिभावप्रती(तेः)तौ) विशेषणतया प्रतिपन्ने तद्विशेषणविशिष्टस्याध्यासोऽनुपपन्नइत्यर्थः। तत्र न सम्बन्धमात्राध्यासः तथासति सम्बन्धिनो ज्ञातुः पारमार्थ्यप्रसङ्गात्। नच तथाऽभ्युपेतम्॥

**ननु** विशेषणे विशिष्टाध्यासो दृश्यते, यथा प्रभायां मण्यध्यास इति। इदं चोद्यं पृथगवभासमानेत्यनेन परिहृतम्। नहि तथा वैयधिकरण्येन विशेषणीभूता प्रभा। किंत्वयं मणिरिति मण्यध्यासाधिष्ठानभूता प्रभा मणिसामानाधिकरण्येनैवहि भाति। नन्वनुभवसामानाधिकरण्येन प्रतीतिप्रसञ्जनमयुक्तं दिक्षुमालिन्यं नभसि राग इति वैयधिकरण्येनाप्यध्यासदर्शनात्। नैवम्। पदद्वयप्रवृत्तिनिमित्तयोरेकाश्रयवृत्तित्वंहि सामानाधिकरण्यम्। इह दिक्त्वमालिन्ययोर्नभस्त्वारुण्ययोश्चैकाश्रयवृत्तित्वादर्थतस्सामानाधिकरण्यमस्ति। वैयधिकरण्यं तु शब्दगतम्। दिशो मलिना दिक्षु मालिन्यमित्यत्र कोऽर्थभेदः। अध्यासेषु धर्मैक्यप्रतीतिरवर्जनीया अतःसैवात्रापाद्यते अनुभूतिरहमिति प्रतीयेतेति॥

### गूढार्थसङ्ग्रहः

**अत्रतु पृथगवभासमानैवेति।** विषयावभास एवानुभूतिः बहिरवभासः अहमित्यन्तरवभासात्पृथगवभासत इति पृथगवभासः परैरप्यङ्गीकृत इति भावः॥

**दण्ड इव देवत्तमिति।** प्राक् (२१३.पु) 'देहविषयमध्यवृत्तिः दण्डायमानः वृत्तिज्ञानाख्यः क्रियेत्युच्यते' (सि.बिं) इति 'यदीयान्तःकरणवृत्त्या विषयपर्यन्तं चक्षुरादिद्वारा निःसृतया यत्प्रकाशकं चैतन्यं यत्प्रमातृचैतन्याभेदेन अभिव्यज्यते तमेव स एव जानाति नान्यं नान्यो वा। अतएवैकवृत्त्युपारूढलक्षणैकलोलीभावापन्नं प्रमातृ प्रमाण प्रमेय चैतन्यं भवति' (अ.सि) इति च परोक्तिः उदाहृता। अत्रान्तःकरणवृत्तिज्ञानाख्यक्रियायाः दण्डसादृश्यं परैरेवाभ्युपगतम्। परसम्मतचितः अप्रामाणिकत्वस्य पूर्वमेवोपपादनेनाहमर्थधर्मभूतज्ञानयोः स्वप्रकाशत्वसाधनेन च वृत्तिस्थानापन्नधर्मभूतज्ञानमेवानुभूतिः सैव दण्डसदृशी। अहमित्यन्तरवभासः परैरप्यादृतः। अतश्च देवदत्तस्थानापन्नः अहमर्थः इति 'दण्डी देवदत्तः' इतिवत् अहमेतदर्थज्ञानी, अहमिदं जानाम्यनुभवामि इति परैरप्यगत्याऽभ्युपगन्तव्यमिति भावः। अन्यथा 'अथाविक्रतिरेवासौ प्रमातेति न युज्यते' इति निर्गुणात्मवादे दिङ्नागोक्तदूषणमपरिहार्यमेव स्यादिति भावः। परमते 'अहं जानामि' इति प्रतीतिस्वारस्यं न सम्भवतीति **कथमिव प्रतिज्ञायेत** इत्युक्तम्॥

अध्यासभाष्ये 'पश्वादिभिश्चाविशेषात्' इत्यादौ अन्यत्रच परोक्तमर्थमनुवदति **यदप्युक्तमित्यादिना।** ... 'स्थूलोऽहम्' इत्यादिज्ञानं द्विविधम्। देहात्मभ्रमरूपमेकम्, अन्यच्च 'नैव स्त्री न पुमांश्चैव नचैव च नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन सयुज्यते' इत्यादिश्रुति (श्वे) तत्त्वज्ञानवतां आत्मनि अहमर्थे स्थूलशरीरसंयुक्तत्वज्ञानरूपं प्रमा

### श्रीभाष्यम्

**यदप्युक्तं स्थूलोऽहमित्यादिदेहात्माभिमानवतएव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति, तदयुक्तम् आत्मतया अभिमताया अनुभूतेरपि मिथ्यात्वं स्यात् तद्वत एव प्रतीतेः। सकलेतरोपमर्दितत्वज्ञानाबाधितत्वेनानुभूतेर्नमिथ्यात्वमितिचेत् हन्तैवंसति तदबाधादेव ज्ञातृत्वमपि न मिथ्या।**

### श्रुतप्रकाशिका

**ननु** अनुभूतिरहमिति प्रतीतिप्रसङ्गो दुर्वचः। अनुभूतित्वंह्यधिष्ठानासाधारणाकारः तदस्फुरणं भ्रमानुगुणमेव। नहि शुक्तौ रजतमिति प्रतीयत इति। एवं तर्ह्यनुभूतेर्निर्विशेषतया रूपान्तरेण स्फुरणाभावादनुभूतितया स्फुरणे विरोधाच्च * तदधिकरणाध्यासानुदयः अविरोधेन कृत्स्नाध्यासे ग्रन्थोक्तसामानाधिकरण्यप्रतीतिप्रसङ्गो दुर्वारः। एतदभिप्रायेणहि पुरोवस्थितभास्वरद्रव्याद्याकारतया रजतादिरित्युक्तम्। * नन्वध्यासानुदयो दुर्वचः विषयोपश्लिष्टानुभूतिरहं जानामीत्यत्र ज्ञात्रध्यासे प्रतीयते सातु नाधिष्ठानम्। निर्विषया निराश्रयानुभूतिरेवाधिष्ठानम्। * तदप्रकाशादध्यासोदय इति। उच्यते–तत्र * (अ)प्रतिपन्नस्याधिष्ठानत्वायोगा * द्विषयाश्रयशून्यसंविदो योग्यानुपलब्धिनिरस्तत्वात्। विषयप्रकाशकसंविद एव आत्मत्वाभ्युपगमेन त्वया स्वयम्प्रकाशत्वसमर्थनाच्च सैवाधिष्ठानमिति तदवभासे तस्याश्च शुक्तित्ववत् भ्रमविरोधित्वेऽध्यासानुदय इति॥

देहात्माभिमानवतो ज्ञातृत्वप्रतिभासात्तन्मिथ्येत्युक्तमनूद्य दूषयति। **यदप्युक्तमित्यादिना। तदबाधादेवेति।** ज्ञातृत्वस्याबाधितत्वं मुक्तावपि * ज्ञातृत्वपरश्रुतिवाक्यात्। ज्ञातृत्वस्य विक्रियात्मकत्वं निराकर्तुं तदनुवदति–

### गूढार्थसंग्रहः

इति ज्ञानिनां अहमर्थस्यात्मत्वप्रतिपत्तौ सिद्धान्ते न काऽपि क्षतिः इत्युत्तरत्र वक्ष्यमाणसिद्धान्तमभिप्रेत्याह— **तदयुक्तमित्यादिना**॥

**अनुभूतेरपि मिथ्यात्वं स्यादिति।** 'मनुष्योऽहं जानामि अनुभवामि' इति प्रतीतेः चरमदेहवियोगपर्यन्तं परमतेऽपि अवर्जनीयतया विषयानुभवस्य आत्मत्वं कथम्? 'अहं ब्रह्मास्मि' इत्यैक्यज्ञानं च, 'अहं ब्रह्मास्मि' इति ज्ञानस्योदयस्यैवासम्भवात्। तत्र अहमर्थः उपलक्षित एव विवक्षितः इत्यैक्यज्ञाने न बाधकमितिचेत् ऐक्यज्ञानेनैव अविद्याया निवृत्तौ 'मनुष्योऽहम्' इत्यादिप्रतिभासानुपपत्तिरिति भावः। अविद्यालेशेन अविद्यासंस्कारेण वा भ्रमानुवृत्तिर्नविरुध्यते। द्वैतसामान्यविरोधिज्ञानंतु प्रारब्धकर्मक्षयकाले चरमवृत्त्यैव इत्याशङ्कते **सकलेतरोपमर्दीति।** सकलेतरोपमर्दित्वं चरमवृत्तेरेवेति लघुचन्द्रिकायां व्यक्तमिति पूर्वमेव उक्तम्॥

अत्र 'बोधस्य न बाधः अपि बोधावधिरेबाधः' इत्युदाहृतपञ्चपादिकोक्तिरप्यभिप्रेता **तदबाधादेव ज्ञातृत्वमपि न मिथ्या इति।** बाधकं यत् तत्त्वज्ञानं चरमवृत्तिरूपं परसम्मतं सा वृत्तिज्ञानाख्यक्रियैव। तदा अहमर्थोऽपि विद्यते। एवं च **इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानाम्।** इति पूर्वोक्त्यनुसारेण अहमर्थाविषयकत्वं ज्ञातृत्वाविषयकत्वं च बाधकज्ञानस्य न सम्भवतीति प्रागेव (२६१.पु) उपपादितम्। अतः बाधकज्ञानं निष्प्रकारकं निस्संसर्गकं च न घटत इति तस्यैवाहमर्थगतज्ञातृत्वविषयकत्वं सम्भवतीति ज्ञातृत्वमपि न मिथ्येति भावः॥

## गूढार्थसङ्ग्रहः

'अथाविकृतिरेवासौ प्रमातेति न युज्यते' इति निर्गुणात्मवादे बौद्धोक्तप्रमातृत्वानुपपत्तिपरिहाराय आत्मनि—ज्ञातृत्वस्य सत्यत्वाङ्गीकारे 'बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता' इति सगुणात्मवादे बौद्धोक्तदूषणपरिहारो न सम्भवति। अतएव 'द्रष्टा दृशिमात्रः' इति सूत्रे (यो.सू.१.२०) दृशिमात्र इत्यनेन आत्मनि धर्मसामान्याभाव एव प्रतिपादितः॥

उक्तं च तत्सूत्रभाष्ये 'तथाचोक्तम् (पञ्चशिखसूत्रं—७) अपरिणामिनीहि भोक्तृशक्तिः अप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति। तस्याश्च प्रमातृचैतन्योपग्रहरूपायाः बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्तिविशिष्टाहि ज्ञानवृत्तिरित्याख्यायते' इति। एवं 'वृत्तिसारूप्यमितरत्र' (४) इति सूत्रभाष्ये चित्तमयस्कान्तमणिकल्पं सान्निध्यमात्रोपकारि दृश्यत्वेन स्वंभवति पुरुषस्य स्वामिनः तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिसम्बन्धो हेतुः' इति तदुत्तरसूत्रे च 'फलमविशिष्टः पौरुषेयः चित्तवृत्तिबोधः। बुद्धेः प्रतिसंवेदी पुरुष इति उपरिष्टादुपपादयिष्यामः' इति च॥

अत्र तत्ववैशारदी। 'अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारिदृश्यत्वेन' इति न पुरुषसंयुक्तं चित्तम् अपितु तत्सन्निहितं, सन्निधिश्च पुरुषस्य न देशतः कालतो वा तदसंयोगात्, किंतु योग्यतालक्षणः। अस्ति च पुरुषस्य भोक्तृशक्तिः, चित्तस्य भोग्यशक्तिः, तदुक्तं दृश्यत्वेन इति शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः। भोगश्च यद्यपि शब्दाद्याकारवृत्तिः चित्तस्य धर्मः। तथाऽपि चित्तचैतन्ययोरभेदसमारोपात् वृत्तिसारूप्यात् पुरुषस्येत्युक्तम्। तस्माच्चित्तेन असंयोगेऽपि तज्जनितोपकारभागिता पुरुषस्यापरिणामिताचेति सिद्धम्'। इति 'फलं पौरुषेयश्चित्तवृत्तिबोधः' इति 'ननु पुरुषवृत्तिबोधः कथं चित्तगतायाः वृत्तेःफलं नहि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियते इत्यतआह—अविशिष्ट इति। नहि पुरुषगतबोधो जन्यते। अपितु चैतन्यमेव बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्या तदाकरया तदाकारतामापद्यमानं फलम्' इति च॥

उक्तं च साङ्ख्यसूत्रेष्वपि 'असङ्गोऽयं पुरुषः' (अ.१.१५) 'चिदवसानो भोगः'(१.१०४) 'भोक्तृभावात्' (१४३) 'निर्गुणत्वान्नचिद्धर्मा' (१४६) 'निर्गुणत्वमात्मनोऽसङ्गश्रुतेः' (६.१०) 'निस्सङ्गेऽप्युपरागोऽविवेकात् (६. अ.२७) जपास्फटिकयोरिव नोपरागः किंत्वभिमानः (२८) अहङ्कारः कर्ता न पुरुषः (५४) चिदवसाना भुक्तिः तत्कर्मार्जितत्वात्' (५५) इति। विज्ञानभिक्षुश्च प्रकृतिपुरुषसंयोगं अभ्युपगम्य सामान्यगुणातिरिक्तस्यैव विकारजनकधर्मस्य परिणामरूपत्वं सङ्गरूपत्वंचेति नासङ्गत्वश्रुतिविरोधः इति प्रकृतिपुरुषयोः परस्परप्रतिबिम्बमिति च सिद्धान्तयति॥

उक्तं च शङ्कराचार्यैः 'नच निरवयवं विक्रियमाणं दृष्टम् अनित्यगुणाश्रयं वा नित्यम्' (बृ.३.४.,बृ.शां.भा) इति 'न निरवयवस्यानेकधर्मवत्त्वे दृष्टान्तोऽस्ति' (६.३.२४) इति 'उपलब्ध्यपेक्षंत्वेषां करणानां करणत्वं साचात्मनः नच तस्यामप्यस्य कर्तृत्वम्; नित्योपलब्धिस्वरूपत्वात्। अहङ्कारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति अहङ्कारस्याप्युपलभ्यमानत्वात्। नचैवंसति करणान्तरकल्पनाप्रसङ्गः बुद्धेः करणत्वोपगमादिति' इति च (२.३.४०.सूत्रभाष्य)॥

अत्र भामती—'अयमभिसन्धिः चैतन्यमुपलब्धिसत्यस्वभावो नित्य इति न तत्रात्मनः कर्तृत्वं, नापि बुद्धेः करणत्वं किंतु चैतन्यमेव विषयावच्छिन्नं वृत्तिरितिचोपलब्धिरितिचाख्यायते। तस्यतु तत्तद्विषयावच्छेदे वृत्तौ बुद्ध्यादीनां करणत्वमात्मनश्च तदुपधानेनाहङ्कारपूर्वकं कर्तृत्वं युज्यत इति' इति। सुरेश्वराचार्यैरप्युक्तम्—'आम्रादेःपरिणामि-

श्रीभाष्यम्

यदप्युक्तमविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न सम्भवति । अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः, अपित्वन्तःकरणरूपस्याहङ्कारस्य । कर्तृत्वादिर्हि रूपादिवद्दृश्यधर्मः कर्तृत्वेऽहम्प्रत्ययगोचरत्वेचात्मनोऽभ्युपगम्यमाने देहस्येवानात्मत्व पराक्त्वजडत्वादि प्रसङ्गश्चेति । नैतदुपपद्यते देहस्येवाचेतनत्वप्रकृतिपरिणामत्वदृश्यत्वपराक्त्वपरार्थत्वादियोगादन्तःकरणरूपस्याहङ्कारस्य, चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य । एतदुक्तं भवति । यथा देहादि-

श्रुतप्रकाशिका

यदप्युक्तमविक्रियस्येति । ज्ञानस्य धात्वर्थतया क्रियात्वम् । तत्कर्तृत्वं च विकाररूपम् अतएव जडं च । अविक्रियस्याजडस्यात्मनो न सम्भवति । विक्रियात्मकत्वाजडत्वाच्च * तादृशाहङ्कारग्रन्थिस्थमित्यर्थः सर्वाध्यासमूलत्वात् ग्रन्थित्वम् । अथ हेत्वन्तरेण च ज्ञातृत्वस्यान्तःकरणधर्मत्वमुपपादयति । कर्तृत्वादिरिति । * दृश्यत्वादित्यर्थः आत्मनो ज्ञातृत्वेऽनिष्टं प्रसञ्जयति । कर्तृत्वइति । अत्र व्यतिरेक्यनुमानान्यभिप्रेतानीति पूर्वमेवोक्तम् । परिहरति । नैतदिति । देहस्येवेत्यादिना अन्तःकरणस्य ज्ञातृत्वाभावोपपादनम् आदिशब्दादन्तवत्त्वग्रहणम् । चेतनासाधारणेत्यादिना आत्मनो ज्ञातृत्वोपपादनम् । ज्ञातृत्वाभावस्साध्योऽभिप्रेतः । अन्तःकरणं धर्मि अचेतनत्वादयो हेतवः, देहस्येवेति सपक्षो दर्शितः ज्ञातृत्वस्य चेतनासाधारणत्वकथनाद्व्यतिरेकव्याप्तिश्च कथिता । एवं परोक्तव्यतिरेकिणां प्रत्यनुमानान्युक्तानि भवन्ति । अन्तःकरणं न ज्ञातृ अचेतनत्वात् । प्रकृतिपरिणामत्वात्, दृश्यत्वात्, पराक्त्वात्, परार्थत्वात् देहवदिति ॥

नन्वचेतनत्वात् अज्ञातृत्वे साध्ये साध्याविशिष्टता नैवम् । अचेतनशब्देनानात्मत्वस्य विवक्षितत्वात् पुरुषार्थ प्रतिसम्बन्धित्वं देहंप्रति नियन्तृतया अन्तःप्रविष्टत्वं वा आत्मत्वं तदभावोऽनात्मत्वम् । प्रकृतिपरिणामत्वं प्रकृतिकार्यत्वम् । दृश्यत्वं नियमेन ज्ञानान्तराधीनसिद्धित्वम् । पराक्त्वं परस्मै भासमानत्वम् । परार्थत्वं परप्रयोजनैकफलत्वम् । जीवोपकरणत्वमित्यर्थः । आत्मनो ज्ञातृत्वे साध्ये अमी हेतवो यथासम्भवं तर्का योजनीयाः आत्मनो ज्ञातृत्वाभावे देहस्येवानात्मत्वप्रसङ्गः परार्थत्वप्रसङ्ग इति ॥

ननु यथा घटदेहयोर(चित्त्वा)चेतनत्वा)दिके तुल्येऽपि इन्द्रियाश्रयत्वादिकं देहासाधारणं भवति । तथा देहान्तःकरणयोरचेतनत्वादिके तुल्येऽपि ज्ञातृत्वमन्तःकरणासाधारणधर्मस्स्यात् । अतः इन्द्रियाश्रयत्वाभावस्येव ज्ञातृत्वाभावस्याप्यचेतनत्वादिकमप्रयोजकम् अन्तिद्विशेषत्वमेव प्रयोजकम् । तथाऽऽत्मनो ज्ञातृत्वाभावेऽपि प्रत्यक्त्वादिरुपपद्यतामित्युभयत्रापि विपक्षे बाधकाभावमाशङ्क्य परिहरति । एतदुक्तमिति । येन दृश्यत्वादिविरुद्धधर्मेण देहस्य द्रष्टृत्वाद्यनुपपत्तिः । तेनान्तःकरणस्यापि तद्द्रव्यत्वाद्द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः । ज्ञातृत्वाभावं प्रत्यचेतनत्वादिकमप्रयोजकंचेद्देहस्य ज्ञातृत्व प्रसङ्गः । ततश्च चार्वाकंप्रति देहात्मभेदस्त्वयाऽपि दुरुपपादः ॥

गूढार्थसंग्रहः

त्वात् गुणहानिर्गुणान्तरे । अविकारितु तद्ब्रह्म नहिद्रष्टुरिति श्रुतेः ॥ आगमापायिनिष्ठत्वादनित्यत्वमियाद्दृशिः । उपयन्नपयन्धर्मो विकरोतिहि धर्मिणम् ॥ ' (नै.सि.२.अ.३५) इति । तदेतत्सर्वमभिप्रेत्य परोक्तमनुवदति यदप्युक्तमित्यादिना ॥

## श्रीभाष्यम्

**दृश्यत्वपराक्त्वादिहेतुभिस्तत्प्रत्यनीकद्रष्टृत्व त्यक्त्वादेर्विविच्यते एवमन्तःकरणरूपाहङ्कारोऽपि तद्व्यत्वादेव तैरेव हेतुभिस्तस्माद्विविच्यत इति। अतो न विरोधादेव ज्ञातृत्वमहङ्कारस्य दृशित्ववत् यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते तथा ज्ञातृत्वमपि**

## श्रुतप्रकाशिका

**नच देहस्य** देहत्वादज्ञातृत्वं घटादौ देहत्वाभावेऽपि ज्ञातृत्वाभावात्। अतस्तत्राचित्त्वादिकस्य ज्ञातृत्वाभावप्रयोजकत्वमभ्युपगन्तव्यमिति * क्वचिज्ज्ञातृत्वाभावप्रयोजकस्य तस्याचित्त्वादेः क्वचिदप्रयोजकत्वमयुक्तम्। अतोऽचित्त्वादिभिर्देहस्येवान्तःकरणस्य द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः। प्रत्यक्त्वादेरित्यादिशब्दादजडत्वग्रहणम्। **विविच्यते**। प्रत्यक्त्वादि धर्मैस्सम्बन्धरहितोऽवगम्यत इत्यर्थः। **तैरेव हेतुभिस्तस्माद्विविच्यत इति**। पराक्त्वादिभिर्देहस्य ज्ञातृत्वाभाव उक्ते पराक्त्वं व्याप्यं, ज्ञातृत्वाभावो व्यापक इति सिद्ध्यति। ततश्च स्वाभावव्याप्तेषु पराक्षु निरवकाशं ज्ञातृत्वं यदि प्रत्यग्वस्तुन्यपि न स्यात् तदा निराश्रयं प्रसजेदिति * पूर्वोक्तव्याप्तिस्थापनाय विपक्षे बाधकस्तर्कोऽत्राप्यभिप्रेतः, तस्माद्विविच्यत इत्येतदुक्तमित्यन्वयः। अतोऽचेतनत्वजडत्वादिस्वभावविरोधान्नाहङ्कारस्य ज्ञातृत्वमित्याह—**अतइति**॥

* नहि वयं द्रष्टृत्वाद्यनुपपत्त्या देहात्मविवेकं ब्रूमः। सतु परमतानुसारात्कृतः वयंतु दृशित्वानुपपत्त्येति शङ्कायां * द्रष्टृत्वाभावस्याचितनत्वादिप्रयोज्यत्वे * मृषावाद्यसाधारणप्रतिबन्दीमाह–**दृशित्ववदिति**। तदेव विवृणोति। **यथेति**।

## गूढार्थसंग्रहः

**द्रष्टृत्वप्रत्यक्त्वादेर्विविच्यते इति**। 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' 'द्रष्टा दृशिमात्रः' इत्यादौ द्रष्टा प्रत्यगात्मैव विवक्षित इति योगसूत्रव्याख्यातॄणामपि सम्मतम्। द्रष्टृदृश्ययोस्संयोगो हेयहेतुः' इत्यत्र द्रष्टृदृश्ययोस्संयोगोऽपि प्रतिपादितः। द्रष्टृदृश्यसंयोगाङ्गीकारे 'द्रष्टा दृशिमात्रः' इत्यत्र दृशिव्यतिरिक्तधर्मसामान्यस्य व्यवच्छेदः कथं घटते ?... 'द्रष्टा' इत्यत्र प्रत्ययार्थबाधो वा कथम् ? दृश्यस्य परागर्थत्वं स्पष्टं योगसूत्रादिषु। तेन तत्प्रतिकोटिभूतद्रष्टुः प्रत्यक्त्वमपि स्वस्मै भासमानत्वमित्येव पर्यवस्यति तच्चाहमर्थस्यैव। प्रतिबिम्बनिबन्धनं द्रष्टृत्वमित्यत्र न किंचन गमकं पश्यामः। 'चितेरप्रतिसङ्क्रामायाः' इति सूत्रं न प्रतिबिम्बतात्पर्यकम् एतच्चानुपदं निरूपयिष्यते। 'तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात्' इत्यादिसूत्रपरिशीलनायां धर्मभूतज्ञानवत्त्वनिबन्धनमेव द्रष्टृत्वमित्यास्थेयम्। साङ्ख्ययोगयोस्समानतन्त्रत्वात् 'उभयोरापि संयोगस्तत्कृतस्सर्गः' (ई.का) इति साङ्ख्यैरप्यङ्गीकारेण निर्गुणत्वमात्मनः नैव स्थापयितुं शक्यते। विकारजनकधर्मस्य विज्ञानभिक्षुमते पारिणामत्वसङ्करूपत्वाङ्गीकारात् स्वरूपसङ्कोचविकासात्मकपरिणामस्यैव विकाररूपत्वेन अहमर्थतद्धर्मज्ञानयोर्भेदेन ज्ञातृत्वाङ्गीकारे विकारित्वस्यापि न प्रसक्तिः॥

'जडप्रकाशायोगात्प्रकाशः' (सां.सू.१.१४५) इत्यत्र 'यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्। ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु' इति विज्ञानभिक्षूदाहृतस्मृतिवचने आत्मन्शब्दः स्वभाववाची। इत्थं च दीप दृष्टान्तेन आत्मनः धर्मभूतज्ञानवत्त्वमेव तत्र विवक्षितम्। षडध्यायसाङ्ख्यसूत्राणितु शङ्कराचार्यादिप्राचीनैरनुदाहृतत्वादश्रद्धेयान्येव। यद्यात्मा निर्धर्मकः अभविष्यत् तदा सूत्रे द्रष्टृशब्दस्थाने दृशिशब्द एव निरदेक्ष्यत। नचैवं निर्दिष्टम्, अतस्सूत्रकृतो न निर्गुणात्मवादस्सम्मतः। वाचस्पतिना यद्यपि संयोगो निरस्तः, तथाऽपि द्रष्टृदृश्ययोस्संयोग

## श्रीभाष्यम्

**न तत्कर्मणोऽभ्युपगन्तव्यम्। नच ज्ञातृत्वं विक्रियात्मकं, ज्ञातृत्वंहि ज्ञानगुणाश्रयत्वम्। ज्ञानंचास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्। नित्यत्वंचात्मनो**

## श्रुतप्रकाशिका

दृश्यत्वाद्यविशेषेऽपि देहस्य घटादिविलक्षणस्येन्द्रियाश्रयत्ववदन्तःकरणस्य दृशित्वमुपपद्यताम् । अन्तःकरणस्यापि दृश्यत्वादिना देहस्येव दृशित्वं नोपपद्यत इतिचेत् तथा दृश्यस्यान्तःकरणस्य दृश्यत्वादिनैव देहस्येव द्रष्टृत्वमपि नोपपद्यते। अतो दृशित्वाभावइव द्रष्टृत्वाभावेऽप्यचेतनत्वादिकं प्रयोजकम् अन्वयव्यतिरेकयोस्तुल्यत्वादुपाध्यन्तरादर्शनाच्चेति भावः॥

अहम्प्रत्ययगोचरत्वमनात्मत्वसाधकं देहस्येवेति यदुक्तं तदयुक्तम्। बाधिताहम्प्रत्ययगोचरत्वस्य पक्षे वृत्त्यभावादबाधिताहम्प्रत्ययगोचरत्वस्य सपक्षे देहादावभावाच्च, यद्यहम्प्रत्ययगोचरत्वमात्रेणात्मन्यनात्मत्वादिप्रसङ्गः । तर्हि * रजत प्रत्ययगोचरत्वमात्रेण (अभ्रान्त)भ्रान्तवत्) सम्यग्रजतेऽप्यरजतत्वाङ्गुळीयकनिर्माणानर्हत्वप्रसङ्गस्स्यादित्यसङ्गतम्। श्रुतिभिः प्रत्यक्षेण च कालात्ययापदेशश्च अनात्मत्वादिप्रसञ्जकं कर्तृत्वं किं प्रयत्नाधारत्वम्, उत स्पन्दरूपक्रियाश्रयत्वम् उत धात्वर्थ मात्राश्रयत्वम्। प्रथमे व्याप्त्यभावः प्रयत्नाधारत्वानात्मत्वयोः क्वचित्सहदर्शनाभावात् * परमात्मन्यनात्मत्वादिप्रसङ्गश्चेत् '**कर्तारमीशं पुरुषम्**' इत्यादिना कालात्ययापदेशश्च। जीवेचेत् '**साधुकारी साधुर्भवति**' **कर्ता शास्त्रार्थवत्त्वात्**' '**यतः स्वकृतभुक्पुमान्**' इत्यादिभिः प्रत्यक्षेण च कालात्ययापदेशश्च * द्वितीये परमात्मन्यसिद्धिः जीवेतूत्क्रान्त्यादिश्रुतिभिः कालात्ययापदेशः । तृतीये भ्रमाश्रयतया स्वाभिमतात्मन्यनात्मत्वप्रसङ्गः, भेददर्शनं तदाश्रयत्वंचापारमार्थिकमितिचेत् किं परमार्थभूतधात्वर्थाश्रयत्वमनात्मत्वसाधकम् उतापरमार्थभूतधात्वर्थाश्रयत्वम् । प्रथमे घटादावपि परमार्थभूतधात्वर्थान्वयानभ्युपगमात् व्याप्त्यभावः । द्वितीयेत्वभिमतस्य भ्रमाश्रयस्याप्यात्मनोऽप्यनात्मत्वप्रसङ्गः ॥

अथ विक्रियात्मकत्वं नेत्याह—**नचेति**। तदुपपादयति। **ज्ञातृत्वंहीति**। गु(णा)णक्रिया)श्रयत्वेऽपि तत्कादाचित्कंचेत् किमाश्रयत्ववत् विक्रियात्मकं स्यादित्यत्राह—**ज्ञानंचास्येति** । धर्मस्य स्वाभाविकत्वेऽपि धर्मी अनित्यश्चेद्धर्मोऽप्यनित्यस्स्यात्। धर्मिनित्यत्वे धर्मस्सोपाधिकश्चेदुपाधिविगमे धर्मो नश्यतीत्यनित्यस्स्यात्। तदुभयव्यावृत्त्यर्थौ नित्य स्वाभाविकशब्दौ अवस्थाविशेषणकादाचित्कत्वंतु प्रामाणिकत्वादिष्टम्। अनेन पदद्वयेन '**न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादात्मनः**' इति श्रुत्यर्थ उक्तो भवति। अस्याश्श्रुतेरयमर्थः ज्ञातृसम्बन्धिविज्ञानं नित्यम्। कुतः अविनाशित्वादात्मनः। विशिष्टस्य नित्यत्वेन विशेषणभूतज्ञानस्यापि नित्यत्वात् ॥

यद्वा—धर्मिनित्यत्वेन तत्स्वाभाविकधर्मस्यापि नित्यत्वादिति, आत्मनो नित्यत्वे ज्ञानस्य तत्स्वाभाविकधर्मत्वे च प्रमाणं स्मारयन् पूर्वमेव श्रुतिवाक्योपादानात्सूत्रमुदाहरति। **नित्यत्वंचेति**। सूत्रोदाहरणेन तद्विषयभूता श्रुतिरपि ह्यर्थतो

## गूढार्थसंग्रहः

इति निर्देशात् संयोगस्सूत्रकृत्सम्मत एव। अतएव शङ्कराचार्यैः 'प्रधानपुरुषतत्संयोगा नित्यानुमेयाः' इति साङ्ख्याः मन्यन्ते इत्युक्तं (ईक्षत्यधिकरणे) सङ्गच्छते। 'अप्राप्तयोस्तु या प्राप्तिः सैव संयोगईरितः' इति पारिभाषां विभुद्वयसंयोग मभ्युपगच्छन्तः नव्य नैयायिकाएव नाद्रियन्ते । 'नाणोरणौ प्रवेशोऽस्ति निराकाशस्समश्च सः । अप्रवेशे न मिश्रत्वं अमिश्रत्वे न सङ्गतिः॥ निरंशस्य च संसर्गः कथंनामोपपद्यते। संसर्गे च निरंशत्वं यदि दृष्टं निदर्शय'।

### श्रीभाष्यम्

**'नात्मा श्रुतेः' इत्यादिषु च वक्ष्यति (शारी.२.अ.३.पा.१८) 'ज्ञोऽत एवेत्यत्र ज्ञ इति' (अ.२ ३.पा.१९) व्यपदेशेन ज्ञानाश्रयत्वं च स्वाभाविकमिति वक्ष्यति। अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रऽऽयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम्। स्वयमपरिच्छिन्नमेव ज्ञानं संकोचविकासार्हमित्युपपादयिष्यामः। अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते।**

### श्रुतप्रकाशिका

दर्शिता स्यात्। सूत्रं च पूर्वं ज्ञानगुणकत्वप्रदर्शनायोपात्तम् इदानीं नित्यत्वज्ञापनायोपात्तम्। '**ज्ञोतएव**' इत्यत्र **ज्ञ** इति व्यपदेशस्य विवरणम्। '**यावदात्मभावित्वाच्च न दोषः**' इति सूत्रम्। अतस्स्वाभाविकत्वसिद्धिरिति भावः। ज्ञानस्वरूपस्य ज्ञानाश्रयत्वं कथमित्यत्राह—**अस्येति**। ज्ञानं स्वाभाविकनित्यधर्मश्चेत्सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह—**स्वयमिति**। स्वयं स्वतः '**सम्पद्याविर्भावः**' इत्यादिसूत्रे उपपादयिष्याम इत्यर्थः, अनन्तरमेवेति वार्थः॥

तर्हीदानीमपि कदाचित्सर्वज्ञत्वं मुक्तौ च कदाचिज्ज्ञानसङ्कोचः किं न स्यात्। यदि क्षेत्रज्ञावस्थायां सङ्कोचः तर्हि सर्वेऽप्यज्ञास्युरित्यत्राह–**अतः क्षेत्रज्ञेति**। अतः सङ्कोचविकासार्हत्वात् कर्मणेति सङ्कोचकोपाधिः। **क्षेत्रज्ञावस्थयामिति**। तदानीमेव सङ्कोच इत्यर्थः, सर्वेषामज्ञत्वप्रसक्तिश्च कर्मतारतम्यात्परिहृता। तारतम्यशब्देन—

**तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते॥**

इति वचनं स्मारितं भवति। कर्मणेति पदेन तयेति पदं श्लोकस्थं व्याख्यातं भवति तया कर्मरूपाविद्ययेत्यर्थः।

**अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते। ययाक्षेत्रज्ञशक्तिस्सा वेष्टिता नृपसर्वगा॥**
**संसारतापानखिलानवाप्नोत्यतिसंततान्।** ... इतिहि प्रकृतम्॥

### गूढार्थसंग्रहः

(ब्रो.पं.९.९५.९६.श्लो) इति माध्यमिकोक्तिरप्यनुपादेया। सिद्धान्ते अप्रत्यक्षपरमाण्वनङ्गीकारात्। त्रसरेणोरेव तत्स्थानापन्नत्वेन तदुभयसंयोगस्य प्रत्यक्षसिद्धत्वाच्च। संयुक्ताविति प्रतीत्या संयोगस्य नान्तरालाभावरूपत्वम् इत्यन्यत्र स्पष्टम्॥

सिद्धान्ते च 'यद्यच्छरीरमादत्ते तेन तेन स युज्यते' इत्यादिश्रुतिबलात् आत्मनः संयोगोऽभ्युपगम्यते। अत एव 'सम्बन्धानुपपत्तेश्च' (ब्र.सू.२.२.३८) इति सूत्रे 'न तावत् संयोगलक्षणस्सम्बन्धः सम्भवति प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च। अपिचागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति। परस्यतु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतः यथा दृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्यातिशयः इति शङ्कराचार्योक्तं सङ्गच्छते। अत्र आनुमानिकजगत्कारणवादिसाङ्ख्यमते प्रधानपुरुषसंयोगनिराकरणेन तन्मते संयोगस्सम्मत इति निर्धारणेन तत्त्ववैशारद्यां संयोगानङ्गीकारोक्तिः स्वोत्प्रेक्षामूलेति सिद्धम्॥

एतेन नहि नित्यमनित्यगुणाश्रयं दृष्टमित्याद्युक्तिरपि निरवकाशा। निरवयवस्य सन्निकृष्टस्य प्रतिबिम्बस्य लोके क्वाप्यदर्शनेन अन्तःकरणवृत्तौ चित्प्रतिबिम्बकल्पनायाः असम्भवाच्च। श्रुतिषु 'एषत आत्मा अन्तर्याम्यमृतः, अदृष्टो द्रष्टा अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता' (बृ.५.७.२३) इति। 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ,

## श्रीभाष्यम्

**तच्चेन्द्रियद्वारेण व्यवस्थितम्। तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते ज्ञानप्रसरेतु कर्तृत्वमस्त्येव। तच्च न स्वाभाविकम् अपि तु कर्मकृतमित्यविक्रियस्वरूप एवात्मा।**

## श्रुतप्रकाशिका

**ज्ञानस्य** नित्यत्वेनानुत्पत्तिकत्वादिन्द्रियनैरपेक्ष्यं स्यादित्यत्राह—**तच्चेति**। यद्वा—स्थावरेष्वपि ज्ञानविकासस्स्यादित्यत्राह—**तच्चेति**। इन्द्रियद्वारकत्वं सङ्कोचविकासार्थमित्यर्थः तर्ह्युत्पत्तिविनाशव्यपदेशो न स्यादित्यत्राह—**तमिममिति**। * प्रसरान्वयव्यतिरेकावपेक्ष्योदयास्तमयव्यपदेश इत्यर्थः। यद्वा प्रसृतांशः प्रसरः तस्य प्रसरणसङ्कोचावुदयास्तमयावित्यर्थः। सङ्कोचविकासाभ्युपगमे विक्रियात्मकत्वं स्यादित्यत्राह—**ज्ञानप्रसरेत्विति**। तादृशविविक्रियात्मकं प्रामाणिकत्वादिष्टमित्यर्थः अचेतनवत्परिणामोह्यनभ्युपगत इत्येवकाराभिप्रायः॥

**अनेन** अविकारश्रुतीनां विषयो दर्शितः। * मुखान्तरेणाप्यविकारश्रुतीनां निर्वाहं दर्शयति। **तच्चेति**। स्वाभाविकविकारानिषेधपरा अविकारश्रुतय इत्यर्थः। स्वाभाविकं रूपं कथमित्यत्राह—**अविक्रियेति**। स्वरूपं स्वाभाविकरूपम्

## गूढार्थसंग्रहः

अश्रुतं श्रोतृ अमतं मन्तृ, अविज्ञातं विज्ञातृ' (बृ.५.८.११) इति च श्रूयते। अत्र आत्मनः द्रष्टृत्वादिकं स्पष्टमुक्तम्। अत्र प्रथमवाक्ये अन्तर्यामिणः द्रष्टृत्वादिकं, द्वितीये च 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इत्याद्युपक्रमात् प्रशासितुर्द्रष्टृत्वादिकं प्रतिपादितम् इदं वाक्यद्वयं यद्यपि परमात्मविषयम्। तथाऽपि जीवस्याप्यन्तर्यामित्वेन परमात्मवत् अहमर्थत्वं द्रष्टृत्वादिकं च न प्रच्यावयितुं शक्यम्। 'एषहि द्रष्टा' (मु) इत्यादिश्रुतेश्च। तदुत्तरं 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्यंतु प्रश्नगतवाक्याद्यनुसारेण सर्वद्रष्टुः परमात्मसमस्यैवान्यस्य निषेधमुखेन नियन्तुर्नियन्त्रन्तरनिषेधतात्पर्यकमिति वृत्तिकारमतं स्थापयिष्यते॥

एवं च द्रष्टृत्वादिकं तात्त्विकमेवात्मनः नैष्कर्म्यसिद्ध्युपात्ता 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतिः न पराभीष्टमर्थं साधयितुमलं, द्रष्टुरित्यादिनिर्देशस्यैव वैयर्थ्यात्। किंतु धर्मभूतज्ञानस्य निरन्वयविनाशविरहपरम्। अयमर्थः पूर्वमेव निरूपितः। धर्मस्य आगमापायित्वेऽपि धर्मिणो न नित्यत्वस्य क्षतिः। धर्मधर्मिणोर्भेदात् भेदाभेदस्य पूर्वमेव निरासात्। सङ्कोचविकासात्मकपरिणामस्यैव विकाररूपतया 'उपयन्नपयन्धर्मो विकरोतिहि धर्मिणम्' इति जीवे आगन्तुकधर्माङ्गीकारे विकारप्रसक्तिरूपदोषस्य नावसरः इति। भट्टपादास्तु 'नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते। विक्रियामात्रवाचित्वे नह्युच्छेदोऽस्य तावता॥ (श्लो.वा.आ.वा.२२.श्लो) 'स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ। नत्ववस्थान्तरप्राप्तौ लोके बाल्युवादिवत्' इत्यत्र आर्हतमत इव धर्मभूतज्ञानस्य आत्मनः परिणामरूपत्वाङ्गीकारेऽपि निरन्वयविनाशानङ्गीकारेण अनित्यत्वं नापादयितुमलमिति वदन्ति॥

**अपितु कर्मकृतमिति अविक्रियस्वरूपएवात्मेति**। एतेन दुःखिप्रेमास्पदत्वरूपेण अहमर्थस्य द्वैरूप्यं विवरणोक्तमपि निरवकाशमिति सूचितम्। धर्मभूतज्ञानस्य सङ्कोचः कर्मकृतः बन्धदशायां सर्वविषयासम्बन्धः विषयेषु प्रातिकूल्यभानमपि कर्मनिबन्धनम्। अतः दुःखित्वं कर्ममूलकधर्मभूतज्ञानपरिणामभेदनिबन्धनमौपाधिकम्। उपाधिविगमे

## श्रीभाष्यम्

**एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मनएवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसम्भवः। जडस्वरूस्याप्यहङ्कारस्य चित्सन्निधानेन तच्छायाऽऽपत्त्या**

## श्रुतप्रकाशिका

अविकारित्ववाक्यान्युपाधिविमुक्तस्वाभाविकरूपपरणित्यर्थः प्रसरणकर्तृत्वमपि विकाररूपत्वादन्तःकरणस्यैवेत्यत्राह–**एवंरूप विक्रियात्मकमिति**। स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारित्वमेवंरूपशब्देन विवक्षितम्। ज्ञानस्वरूपस्य ज्ञानमेव स्वाभाविको धर्मः यस्य सज्ञानस्वरूपः स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारस्तद्धर्मकस्यात्मनएव सम्भवति नतु जड-स्वरूपत्वादतद्धर्मकस्याहङ्कारस्येत्यर्थः॥

## गूढार्थसंग्रहः

नास्त्येव। आत्मनः ज्ञानानन्दस्वरूपत्वेन प्रेमास्पदत्वं तात्त्विकम्। एतद्रूपद्वयभानं च बन्धदशायामेव मुक्तस्य ज्ञान सुखादिप्रतिपादकश्रुतिभिः अहमर्थस्य द्वैरूप्यशङ्काया अपि नावसरः। अहमित्येतावन्मात्रे दुःखित्वप्रेमास्पदत्वयोर्भान-मपि नास्ति। अतः 'इदं रजतम्' इतिवत् पदद्वयाप्रयोगेण द्वैरूप्यं न कथंचिदप्यहमर्थे सम्भावनार्हमिति सिद्धम्॥

'चित्तमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि' इति 'तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिसम्बन्धो हेतुः' इति च योगसूत्रभाष्याद्यनुसारेण शङ्कते–**चित्सन्निधानेन तच्छायापत्त्येत्यादि**। 'चितेरप्रतिसङ्क्रमायाः तदाकारापत्तौस्वबुद्धि-संवेदनम्' (४.२२) इति सूत्रे तत्त्ववैशारद्यां 'यत्तदवोचत् वृत्तिसारूप्यमितरत्रेति तदितः समुत्थितम्। चितेः स्वबुद्धि-संवेदनं बुद्धेस्तदाकारापत्तौ चिति प्रतिबिम्बाधारतया तद्रूपतापत्तौसत्यां यथाहि चन्द्रमसः क्रियामन्तरेणाऽपि सङ्क्रान्त-चन्द्रप्रातिबिम्बममलं जलमचलं चलमिव चन्द्रमसमवभासयति, एवं विनाऽपि चितिव्यापारमुपसङ्क्रान्तचितिप्रतिबिम्बितं चित्त्वं चिति शक्तिमवभासयत्' इत्यादि वाचस्पतिनोक्तम्॥

'वृत्तिसारूप्यमितरत्र' (१.४) इति सूत्रे वार्तिकेतु 'साचार्थाकारताबुद्धौ परिणामरूपा स्वप्नादौ विषयाभावेन तत्प्रति बिम्बासम्भवात्, पुरुषे च प्रतिबिम्बरूपा, विद्यमानवृत्तिमात्रग्राहके पुंसि प्रतिबिम्बेनैवोपपत्तेरिति। न केवलं तर्कादेव चिति बुद्धेः प्रतिबिम्बं कल्प्यते। किंतु 'तास्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः। इमास्ताःप्रतिबिम्बन्ति सरसीव तटद्रुमाः॥ यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः। रञ्जकाद्युपधानेन तद्वत्परमपूरुषः॥' इत्यादि स्मृतिशतैरपीति॥

नचैवं संस्कारशेषा बुद्धिः पुरुषे प्रतिबिम्बिताभायादित्यसंप्रज्ञातयोगानुपपत्तिरिति वाच्यम्; परमाणोरिव वृत्त्य-तिरिक्तानां प्रतिबिम्बसमर्पणासामर्थ्यस्य फलबलेन कल्पनात् अनादिस्वस्वामिभावस्यैव प्रतिबिम्बानियामकतया वक्ष्यमाण-त्वात्तु न परबुद्धिवृत्तेर्भानम्। अतएव पुरुषार्थवत्येव बुद्धिः पुरुषस्य विषय इति साङ्ख्यसिद्धान्तो विवेकख्यातिविषय-भोगौ च पुरुषार्थाविति, यथा च चिति बुद्धेः प्रतिबिम्बम् एवं बुद्धावपि चित्प्रतिबिम्बं स्वीकार्यम्। अन्यथा चैतन्यस्य भानानुपपत्तेः स्वयं साक्षात्स्वदर्शने कर्मकर्तृविरोधेन बुद्ध्यारूढतयैवात्मनः घटादिवत् ज्ञेयत्वाभ्युपगमात्॥

तथाच वक्ष्यति सूत्रकारः 'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्' इति बुद्धावात्मप्रतिबिम्बमेव च तान्त्रिका बुद्धेश्चिच्छा-यापत्तिरित्यात्माकारतेति प्राहुः। 'प्रतिबिम्बोपाधौ बिम्बाकारो बुद्धेः परिणाम एव सच साक्षिभास्य इति' एतेन नीरूप-त्वात् बुद्धिपुरुषयोरन्योऽन्यं प्रतिबिम्बनं न सम्भवतीत्यपास्तम्। उभयत्रोभयाकारबुद्धिपरिणामस्यैव प्रतिबिम्बशब्देन

### श्रीभाष्यम्

**तत्सम्भव इतिचेत् * केयं चिच्छायाऽऽपत्तिः किमहङ्कारच्छायाऽऽपत्तिस्संविदः ?**

### श्रुतप्रकाशिका

**यद्वा** स्वरूपशब्दो * धर्मिपरः । ज्ञानस्वरूपस्यैव ज्ञानधर्मकत्वं सम्भवति नतु जडस्वरूपस्य यथा घटादेरिति । ज्ञानस्वरूपत्वात् ज्ञानधर्मकस्यैव स्वधर्मभूतज्ञानप्रसरकर्तृत्वरूपविकारसम्भवः, नतु जडस्वरूपत्वादतद्धर्मकस्याहंकारस्येत्यर्थः । एवं विक्रियात्मकत्वात् ज्ञातृत्वस्यात्मधर्मत्वानुपपत्तिर्निरस्ता । अथ परोक्तान् ज्ञातृत्वनिर्वाहप्रकारान् निरस्यति । ज्ञातृत्वं चिच्छायापत्तिकृतं, चित्संपर्ककृतं चिदभिव्यञ्जकत्वकृतम्, इति त्रयःपक्षाः । तत्र प्रथमं चिच्छायापत्तिपक्षमाशङ्कते । **जडेति** । दूषयति **केयमिति** । केयं दुर्निरूपेत्यर्थः । विकल्पयति । **किमिति** । चिच्छायाशब्दयोस्समासान्तर्गता

### गूढार्थसङ्ग्रहः

अत्र विवाक्षितत्वात् जलादावपि सूर्याद्याकारबुद्धिपरिणामस्यैव सूर्यादिप्रतिबिम्बितत्वाच्च, तदेवं बुद्ध्यात्मनोः परस्पर प्रतिबिम्बरूपाद्दोषादेवैकताभ्रमोऽहंकर्ता सुखी जानामीत्यादिरूप इति, तदेतत् परस्परं प्रतिबिम्बं साङ्ख्यकारिकायाम् इवशब्दाभ्यामुक्तम्। 'तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः इतिदिक्' इति॥

'चितेरप्रतिसंक्रमायाः' इति सूत्रवार्तिकेऽपि अयं भावः ज्ञातुस्संचारो न साक्षादेव ज्ञाने हेतुः किंतु अर्थाकारता हेतुः सन्निकर्षद्वारा । अन्यथा स्वप्नादौ मनस्संचाराभावेन अर्थभानायोगात् । अतो विभुत्वेनैव सर्वत्र सन्निकृष्टस्यात्मनस्संचारो नापेक्ष्यत इति । आपत्तिग्रहणं पुरुषस्य पारमार्थिकाकारप्रतिषेधार्थम् । यथाहि विषयासन्निकर्षकालेऽपि स्वप्नादौ तद्भानाय अगत्या चित्तस्य तदाकारः परिणाम इष्यते, नैवं पुरुषस्य चित्तवृत्त्यभावेऽपि तद्भानं भवति, येन पुरुषेऽपि वृत्त्याकारः परिणामइष्येत । किंतु स्फटिके सन्निकृष्टजपालौहित्यस्येव चित्तवृत्तेः प्रतिबिम्बमेव लाघवादिष्यते । उभयत्राकाराख्यपरिणामकल्पने गौरवात् । स्फटिदर्पणादेः स्वप्रतिबिम्बितवस्तुप्रकाशकत्वस्य सिद्धत्वाच्चेति । तदिदं प्रतिबिम्बमेव वृत्त्याकारापत्तिरित्युक्तं सूत्रकारेणेति ' इति ॥

नन्वयं घट इति वृत्तेर्बोधो 'घटमहं जानामि' इति रूपः तस्य च पौरुषेयत्वे पुरुषस्य स्वतन्त्राकारेण परिणामित्वापत्तिरिति ? तत्राह–अविशिष्ट इति । सच बोधश्चित्तवृत्त्या सहाविशिष्ट इति वृत्तिसारूप्यसूत्रे उपपादित इत्यर्थः, 'अयं घटः' इत्याकारा बिम्बरूपा वृत्तिः कारणं तस्या एव वृत्तेश्चैतन्ये प्रतिबिम्बनाच्चैतन्यमप्ययं घट इत्याकारमिव सद्बोधाख्यं फलं भवतीति नात्र विशेषः शब्देन वक्तुं शक्यते विवेकिभिरेव इक्षुक्षीरादिमाधुर्यस्येव स्वयं विशेषोऽनुभूयते दृग्दृश्यादिवैधर्म्यादिति भावः । पौरुषेयो बोधइत्याधाराधेयभावश्च गगने श्रोत्रमितिवत् विशिष्टाविशिष्टभेदेनोपपादनीयः करणलक्षणंचात्र फलायोगव्यवच्छिन्नकारणत्वमिति । ननु रूपादिषु चक्षुरादीनामेव करणत्वं श्रुतिस्मृत्योरवगम्यत इतिचेत् सत्यं किंतु बुद्धिवृत्त्याख्यप्रमान्तरंप्रत्येव तेषां करणत्वं नतु पौरुषेयबोधरूपां मुख्यप्रमांप्रति ' इति चोक्तम् । सन्निधानपक्षे जपाकुसुमस्फटिकयोरिव पुरुषान्तःकरणयोः सन्निधानं, सन्निधानं च संयुक्तसमीपवर्तिनोरुभयोस्साधारणं, संपर्कश्च संयोग एवेति पक्षद्वयवैलक्षण्यम् । सांख्यैकदेशिभिः अन्तःकरणचितोः परस्परप्रतिबिम्बाङ्गीकारेण तन्मतरीत्यैव संविदात्मवादिभिरपि प्रतिबिम्बवादे प्रतिबिम्बसम्भावनया विकल्पयति–**केयं चिच्छायापत्तिरित्यादिना** ॥ **किमहङ्कारच्छायापत्तिःसंविदः इति** । संविद एव चिद्रूपत्वेनात्मत्वस्य परैरभ्युपगमात् अहङ्कारे आत्मनः प्रतिबिम्बापत्तिरित्यर्थः । अहङ्कारे आत्मनः प्रतिबिम्बंतु साङ्ख्ययोगव्याख्यातॄणां सर्वेषां सम्मतम् ॥

## श्रीभाष्यम्

**उत संविच्छायाऽऽपत्तिरहङ्कारस्य। न तावत्संविदः संविदि ज्ञातृत्वानभ्युपगमात्; नाप्यहङ्कारस्य; उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात्, द्वयोरप्यचाक्षुषत्वाच्च। नह्यचाक्षुषाणां छाया दृष्टा।**

## श्रुतप्रकाशिका

विभक्तिः षष्ठी वा सप्तमीवेति भावः। अहङ्कारच्छायाऽऽपत्तिस्संविदः अहङ्कारे संविद्गतज्ञातृत्वच्छायाऽऽपत्तिरित्यर्थः। **संविच्छायाऽऽपत्तिरहङ्कारस्येति**। संविद्यहङ्कारगतज्ञातृत्वच्छायाऽऽपत्तिरित्यर्थः। प्रथमं दूषयति। **न तावदिति**। शिरोऽन्तरं व्युदस्यति। **नापीति**। पूर्वमचेतनत्वप्रकृतिपरिणामित्वादिभिरहङ्कारस्य ज्ञातृत्वव्युदासमभिप्रेत्याह—**उक्तरीत्येति**। दूषणान्तरमाह—**द्वयोरपीति**। तद्विवृणोति। **नहीति**। ...

## गूढार्थसङ्ग्रहः

**संविदि ज्ञातृत्वानभ्युपगमादिति**। अहङ्कारे चित्प्रतिबिम्बाङ्गीकारमात्रेण ज्ञातृत्वप्रतिभासस्य नोपपत्तिः। अन्तःकरणचितोरभेदारोपेण अन्तःकरणवृत्तेः प्रतिबिम्बे तद्द्वारा बिम्बे च प्रतिभासेन ज्ञातृत्वप्रतिभासः। साङ्ख्यप्रवचनविवरणे वाचस्पतिनोच्यते। तथाऽपि भामत्यां वाचस्पतिना प्रतिबिम्बवाददूषणपूर्वकं अवच्छेदवादस्यैवाङ्गीकारेण विवरणकारमतएव प्रतिबिम्बवादाभ्युपगमेन साङ्ख्यैः अन्तःकरणवृत्तौ ज्ञानत्वस्वीकारेऽपि विवरणे अन्तःकरणवृत्तौ ज्ञानत्वोपचाराङ्गीकारेण संविदि ज्ञातृत्वानभ्युपगमेन 'अहमिदं जानामि' इति प्रतीतेर्नोपपत्तिरिति भावः॥

**नाप्यहङ्कारस्येत्यादि**। आत्मनि अन्तःकरणस्य तद्वृत्तेर्वा प्रतिबिम्बाङ्गीकारेऽपि जडस्यान्तःकरणस्य ज्ञातृत्वासम्भवे संविदात्मवादे ज्ञातृत्वानुपपत्तिरित्यर्थः॥

**नह्यचाक्षुषाणां छाया दृष्टेति**। यद्यपि साभ्रनक्षत्राकाशप्रतिबिम्बस्य दर्शनेन अचाक्षुषाणामपि छाया वर्तते। इति विवरणादावुक्तम्। तथाऽपि आकाशस्य सावयवत्वस्य सिद्धान्तिसम्मतत्वेन पञ्चीकृताकाशस्य पञ्चीकरणेन रूपवत्त्वात् चाक्षुषत्वं सम्भवत्येव। नैयायिकादिमते अभ्रनक्षत्रादीनामेव प्रतिबिम्बमभ्युपगम्यते। एवमन्तःकरणस्याचाक्षुषस्य प्रतिबिम्बोपाधित्वमपि न सम्भवति। सिद्धान्तलेशसङ्ग्रहे प्रतिबिम्बपक्षः सम्यक् दूषितः। तत्रैव शब्दप्रतिबिम्बादिकं नास्तीति निरूपितम्। 'अम्बुवदग्रहणात्तु न तथात्वम्' (३.२.१९) इति सूत्र (शां) भाष्ये 'न जलसूर्यकादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात्। सूर्यादिभ्योहि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तजलं गृह्यते। तत्र युक्तस्सूर्यादि प्रतिबिम्बोदयः। नत्वात्मा मूर्तः नचास्मात्पृथग्भूताः विप्रकृष्टदेशाश्चोपाधयः' इत्याद्युक्तम्॥

एवं च 'सम्बन्धानुपपत्तेश्च' (२.२.३८) इति सूत्रभाष्ये प्रधानपुरुषसंयोगासम्भवे निरवयत्वसर्वगतत्वोभयरूपं बीजं यत्प्रदर्शितं तदेव प्रतिबिम्बासम्भवेऽपि मूलं पर्यवसन्नमिति नात्मप्रतिबिम्बसम्भवः। 'दर्शनाच्च' (३.२.२१) इति सूत्रभाष्ये 'दर्शयति च श्रुतिः परस्यैव ब्रह्मणः देहादिषूपाधिषु अन्तरनुप्रवेशम्' इत्याद्येवोक्तं नात्मप्रतिबिम्बम्। 'अत एवचोपमा सूर्यकादिवत्' इति सूत्रमपि प्रतिबिम्बतुल्यत्वेनैवोपपद्यते। एवं च श्रुतिबलादापि न प्रतिबिम्बसिद्धिः॥

एतेन विज्ञानभिक्षूदाहृतस्मृतिवचनस्य (५११.पु) प्रागुदाहृतस्य प्रामाणिकत्वे सरोवर्तित्वेन तटद्रुमाः यथा भासन्ते तद्वत् समस्तवस्तुदृष्टयोऽपि चिद्वृत्तित्वेन भासन्ते, इति तस्यार्थः। वस्तुसम्बद्धाः दृष्टयः जीवधर्मभूतज्ञानरूपा एव। वस्तूनां

## गूढार्थसंग्रहः

जीवासंयुक्तत्वेन धर्मभूतज्ञानद्वारैव वस्तूनां सम्बन्धः । धर्मभूतज्ञानस्य जीव वस्तुद्वयमध्ये विकासः प्रसरणाख्यः इति जीवदूरवर्ति वस्तुसंबद्धधर्मभूतज्ञानवत्त्वं सरोऽसंबद्धतटद्रुमवत्त्वसाम्येन प्रतिपादितं तावदेव, अत्र वस्तुद्दष्टय इत्येव वर्तते । अन्तःकरणवृत्तय एव वस्तुद्दष्टयो विवक्षिता इत्येतद्वचनतात्पर्यं तु नैव निर्णेतुं शक्यम् । 'इमास्ताःप्रतिबिम्बानि' इत्यनभिधाय 'इमास्ताःप्रतिबिम्बन्ति' इत्युक्त्या प्रतिबिम्बतुल्यत्वमेवात्र विवक्षितं, नतु प्रतिबिम्बत्वम् । कृष्ण इव आचरति कृष्णति इतिवत् प्रतिबिम्बानीवाचरन्ति प्रतिबिम्बन्ति इत्येवात्र विवक्षितम् । अतः एतत्स्मृतिवचनं तदन्तस्थत्वेन ज्ञानसाम्यात् उपपद्यते । विज्ञानभिक्षुणाऽपि प्रतिबिम्बं नाङ्गीकृतम् । उभयत्रोभयाकारबुद्धिपरिणामस्यैव तेनाभ्युपगमात् । 'चितेरप्रतिसङ्क्रमायाः' इति सूत्रे प्रतिबिम्बबोधकं न किञ्चित् पदं वर्तते । 'अप्रतिसङ्क्रमाया' इति अन्यत्र संचाररहितायाः इत्यर्थकं वर्णितं व्याख्यातृभिः । 'तदाकारतापत्ता' वित्यत्रापि न प्रतिबिम्बविवक्षानियामकं किञ्चित् । स्वबुद्धिसंवेदनमित्यत्र चित्तपरिणामस्यैव संवेदनं विवक्षितमिति नैव नियन्तुं शक्यम् । बुद्धिशब्दस्य ज्ञानार्थकत्वात् । अन्तःकरणपरिणामात्मकमेव ज्ञानं योगसूत्रेषु विवक्षितमिति निर्णयो न सम्भवति तत्साधकाभावात् । अतः 'अप्रतिसङ्क्रमायाः' इत्यत्र जीवस्य विषयदेशगमनाभावो विवक्षितः । स्वबुद्धेः स्वधर्मभूतज्ञानस्य 'द्रष्टा'—इत्यादौ प्रकृतौ विवक्षितस्य तदाकारतापत्तौ विषयसम्बन्धापत्तौ इन्द्रियादिद्वारा विषयसम्बन्धे सतीति यावत् । स्वबुद्धिसंवेदनं जीवधर्मभूतज्ञानविषयकज्ञानमिति यावत् ॥

एतेन 'वृत्तिसारूप्यमितरत्र' इत्यत्रापि प्रतिबिम्बं नैव विवक्षितम् । व्युत्थाने चित्तस्य यद्विषयिणी वृत्तिः तद्विषयकं रूपं धर्मभूतज्ञानमेव पुरुषस्य । इति तत्सूत्रे विवक्षितम् । सारूप्यं समानरूपवत्त्वम् अपरिणामित्वेन धर्मभूत ज्ञानसम्बन्धो न सम्भवतीति योगसूत्रकृतो नैव विवक्षितम् । द्रष्टृदृश्यसंयोगस्य स्वस्वामिभावसम्बन्धस्य च योगसूत्रेष्वेव स्पष्टमुक्तेः । अतः सङ्कोचविकासात्मकपरिणामशून्यत्वमात्मनो विवक्षितम् एतच्च निरूपितं भावप्रकाशे (३.सं.२६.पु) ॥

उक्तसूत्रयोगभाष्ये 'न पातालं नच विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम् । गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते ।' इति यदुदाहृतं प्रमाणं, तत्र 'शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धस्वभावस्य चिति छायामापन्नां मनोवृत्तिमेव चिति छायापन्नत्वात् चितेरप्यविशिष्टां गुहां वेदयन्ते । तस्यामेव गुहायां तद्गुह्यं ब्रह्म तदपनयनेतु स्वयंप्रकाशमनावरणमनुपसर्गं प्रद्योतते चरमदेहस्य भगवतः' इति तत्त्ववैशारद्याम् । ब्रह्मवृत्त्यविशिष्टां बुद्धिवृत्तिमेव कवयः पण्डिताः पश्यन्तीति अविशिष्टता च परस्परं प्रतिबिम्बनात् उभयोरेव विषयाकारत्वं चेतनसाम्यमित्युक्तम् इति वार्तिके च । योऽर्थ उक्तः स नात्र विवक्षितः । प्रतिबिम्बवाचकपदाभावात् तत्र प्रथमपक्षे मनोवृत्तौ चितेरप्यविशिष्टता चिच्छायाऽऽपत्तिमात्रेण कथमुपपद्यते ? प्रतिबिम्बाधारस्य जलादेः बिम्बाविशिष्टत्वादर्शनात् ॥

द्वितीयपक्षे ब्रह्मवृत्त्यविशिष्टा बुद्धिवृत्तिरित्यत्र ब्रह्मवृत्तिः का काच बुद्धिवृत्तिः, विद्यमानवृत्तिमात्रग्राहके पुंसि बुद्धेः प्रतिबिम्बं तत्पक्षे अङ्गीकृतम् । चिति बुद्धिपरिणामः चिदाकारः बुद्धौ चित्परिणामोऽपि चिदाकारः, उभयोरेकाकारपरिणामरूपत्वे अविशिष्टतोक्तिः कथम् ? वृत्त्याकारपरिणाम एकः चिदाकारपरिणामः अन्य इति कल्पने तदाऽपि अविशिष्टतोक्तिः न घटते, विभिन्नाकारत्वात् । अत्र प्रतिबिम्बवाचिशब्दाभावेऽपि बुद्धिपरिणामद्वयस्य प्रतिबिम्बद्वयरूपतामङ्गीकृत्यापि प्रमातृत्वं नैव तात्विकं साधितम् । अतः बुद्धिवृत्तिमविशिष्टामित्यत्र न विद्यते विशिष्टा यस्याः इति विग्रहः अनुत्तम इतिवत् । श्रुतिषु हृदयगुहावर्तित्वं ब्रह्मणः प्रतिपाद्यते हृदयरूपोपाध्यवच्छेदेन अणुत्वं च । ततः वैलक्षण्यं बुद्धिवृत्तिगुहायाः अत्र विवक्षितम् । 'यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र निवेशिताम

### श्रीभाष्यम्

**अथाग्निसम्पर्कादयःपिण्डौष्ण्यवच्चित्संपर्काज्ज्ञातृत्वोपलब्धिरिति (चेत्) नैतत् संविदि (वस्तुतो)वास्तव) ज्ञातृत्वानभ्युपगमादेव**

### श्रुतप्रकाशिका

चित्संपर्कपक्षं दूषयितुं शङ्कते । **अथेति** । पूर्ववद्विकल्प्य दूषयति । **नैतदिति** । इयं साधारणी प्रतिज्ञा, अहङ्कारे संवित्संपर्कात् ज्ञातृत्वं व्युदस्यति । **संविदीति** । अहङ्कारसंपर्कात्संविदि ज्ञातृत्वं दूषयति । ...

### गूढार्थसङ्ग्रहः

मनसो ब्राह्मोऽपि लोकोऽल्पकः । मुक्तिं चेतसि यस्स्थितोऽमलधियां पुंसां ददात्यन्वहं किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥ ' (वि.पु.६.८.५८) इत्यादौ हृदयगुहापेक्षया चित्तगुहायाः विशेषः स्पष्टमुक्तः । योगिनां ध्यानरूपा या चित्तवृत्तिः सैवात्र विवक्षिता । अतो मानसज्ञानत्वेव बुद्धिवृत्तिमविशिष्टामित्यत्र ध्यानरूपा मनोवृत्तिर्विवक्षिता । एवं ' कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे । यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः ॥ ' (वि.ध) इत्यादयोऽपि ब्रह्मणः मनोजन्यस्मृतिविषयत्वाभिप्रायाः अनुसंधेयाः ॥

यद्वा ' बुद्धिवृत्तिमविशिष्टाम् ' इत्यत्र अविशिष्टपदेन बुद्धिवृत्तिः असम्प्रज्ञातसमाधिरूपा विवक्षिता । असम्प्रज्ञातसमाधिः वृत्तिरूपएवेति शङ्कराचार्यादीनामपि सम्मतं, तदेव युक्तमिति च निरूपितम् । ब्रह्मविषयकवृत्तेः प्रकृतिविवेकविषयकवृत्तेश्च विरहे आनन्दस्वरूपावगाहिनी वृत्तिः असम्प्रज्ञातसमाधिः । असम्प्रज्ञातसमाधौ विशेषणान्तराविशिष्टतात्पर्यकेणाविशिष्टामित्युक्तम् । सम्प्राज्ञातापेक्षया असम्प्रज्ञातसमाधिरतिशयित इति सर्वसम्प्रतिपन्नम् । ब्रह्मणः असम्प्रज्ञातसमाधिविषयत्वदशायां असम्प्रज्ञातसमाधेः श्रेष्ठगुहात्वमविशिष्टाम् इत्यनेन बोधितम् । बुद्धिशब्दस्य धर्मभूत ज्ञानपरत्वेऽपि पूर्ववदेव अर्थेन स्वरसतो निर्वाहस्सम्भवतीति नास्य आत्मप्रतिबिम्बे प्रमाणत्वं सम्भवति ॥

एतेन ' जाग्रत्स्वप्नस्सुषुप्तं च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥ ' (भा.११. स्क.१३.२७) इति वार्तिकोदाहृतवचनेऽपि बुद्धिपदं धर्मभूतज्ञानपरम् । सुषुप्तौ तस्य विषयासम्बन्धेन स्थितिः, ' न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ' इति श्रुत्या सिद्ध्यतीति प्रागेवोक्तम् । अवस्थाविशेषापन्नधर्मभूतज्ञानमेव सुषुप्तिरिति आत्मसिद्धौ व्यक्तम् । अन्यच्च भावप्रकाशे निरूपितम् ॥

प्राक् (२०९.पु) उदाहृतविवरणे ' अयो दहति ' इतिवत् ' अहमुपलभे ' इति प्रतीत्युपपादनेन ज्ञातृत्वप्रतीत्युपपत्तिरिति शङ्कते--**अथाग्निसम्पर्कादित्यादिना** ॥ **अयःपिण्डौष्ण्यवदिति** । औष्ण्येत्युपलक्षणं दग्धृत्वस्यापि। अयः पिण्डव्यतिरेकेण वह्नेः दहनक्रियाश्रयत्वदर्शनवत् अहङ्कारव्यतिरेकेणात्मनि ज्ञानक्रियाऽदर्शनात् अहम एवात्मत्वमिति उत्तरपञ्चपादिकावतरणविवरणोक्त्या दृष्टान्तदार्ष्टान्तिकभावो न घटत इति अभिप्रेत्याह-**ज्ञातृत्वानभ्युपगमादेवेति** । अयो दहतीति प्रतीतिर्भ्रम एव । वह्निसम्बन्धविरहदशायां अयसि दाहकर्तृत्वाभावानिश्चयात् । ' अहमुपलभे ' इति अहमर्थे उपलब्धृत्वाभावस्यानिश्चयेन प्रमैवेति भावः ॥

' इदं रजतम् ' इतिवत् अहमित्येतावन्मात्रे द्वैरूप्यं नैवोपपादितम् । अहमित्येतावन्मात्रस्यैव चिदचिद्ग्रन्थिरूपता अहमित्यध्यासरूपता च ' अहमुपलभे ' इति प्रतीत्या नैवोपपादिता भवति इति नानया प्रतीत्या अहमर्थस्य द्वैरूप्यं सिद्ध्यति । एतेनापि दुःखिप्रेमास्पदत्वरूपेण अहमर्थस्य द्वैरूप्यं न घटत इति सिद्ध्यति । दुःखस्य परिणामविशेष-

### श्रीभाष्यम्

**न तत्संपर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा । अहङ्कारस्यत्वचेतनस्य ज्ञातृत्वासम्भवादेव सुतरां न तत्संपर्कात्संविदि ज्ञातृत्वं तदुपलब्धिर्वा ।**

### श्रुतप्रकाशिका

**अहङ्कारस्यत्विति । सुतरामिति ।** ज्ञानस्याजडत्वाज्ज्ञानाश्रयत्वं स्वमते न सम्भवति । अहङ्कारस्य जडत्वेन वस्तुतो ज्ञानाश्रयत्वस्य स्वपरपक्षयोरुभयोरप्यसम्भवान्नतत्संपर्कात्संविदि ज्ञातृत्वमिति भावः । रुमागतकाष्ठादीनां लवणसम्बन्धाल्लवणत्वोत्पत्तिर्दृश्यते । अयःपिण्डेऽग्निसंपर्कादुष्णत्वमुपलभ्यते । अतो ज्ञातृत्वं तदुपलब्धिर्वेति पृथगुक्तम् ॥

### गूढार्थसङ्ग्रहः

वद्धर्मभूतज्ञानरूपत्वात्, अहंत्वविशिष्टस्यैव प्रेमास्पदत्वाच्च । अहंत्वविशिष्टस्य प्रेमास्पदत्वोपपादनेन प्रेमास्पदत्वं तत्र नियतम् । दुःखस्य धर्मभूतज्ञानसङ्कोचकालिकतया सङ्कोचविकासयोग्यधर्मभूतज्ञानविकासस्य उत्तरत्र सिद्धान्तयिष्यमाणतया तत्काले द्वैरूप्यप्रतीतिशङ्काया एवासम्भवात् । अहमर्थस्य सङ्कोचविकासात्मकपरिणामानङ्गीकारेण परिणाम तदागमापाययोः अहमर्थे असम्भवेन परिणामतदागमापायद्रष्टृरूपेण विवरणे द्वैरूप्योक्तिः न घटत इति स्फुटम् । अहङ्कारविषयादिषु अनुस्यूतचैतन्यरूपेण अहमिति व्यावृत्तरूपेण द्वैरूप्योक्तिः अहमर्थस्य चिदचिद्ग्रन्थिरूपस्य सिद्धवत्कार एव सम्भवति, अहमित्यत्र चिदचितोरुभयोः प्रतीतिरेव नास्तीत्युपपादनेन तन्निबन्धनद्वैरूप्योक्तेरपि नावकाश इति भावः

'तत्रैवंभूतस्याहंकर्तुरिदमंशस्य ज्ञानसंशब्दितो व्यापारविशेषः सकर्मकत्वात् कर्मकारकाभिमुखं स्वाश्रये कञ्चिदवस्थाविशेषमादधाति । स्वाश्रयविकारहेतुत्वात् क्रियायाः सच प्राप्नोति क्रियाहितकर्तृविशेषवत् कर्मसम्बन्धो ज्ञातृज्ञेयसम्बन्ध इति गीयते । तेन विषयविशेषसम्बद्धमेवान्तःकरणं चैतन्यस्यावच्छेदकं कर्मकारकमपि प्रधानक्रियासिद्धौ स्वव्यापाराविष्टं चैतन्याविवर्तत्वात् प्रधानक्रियाऽऽहितप्रमात्रवस्थाविशेषावच्छिन्नापरोक्षतैकरूपामपरोक्षतामभिव्यनक्ति । ततश्चात्मनः अन्तःकरणावस्थाविशेषजनितो विशेषः, विषयानुभवसंस्थितो विषयस्यापरोक्षैकरसः फलम् , इति क्रियैकविषयताफलस्य युज्यते । एवं च अहं कर्ता स्वांशचैतन्यबलेन व्यापाराविष्टतया च प्रमाता । इति बुद्धिस्थमर्थं पुरुषश्चेतयते इत्युच्यते । तत्र च प्रमातुः स्वयंज्योतिषो विषयसम्बन्धसंजाता विशेषः अनुभवः अपरोक्षतया सर्वान्प्रत्यविशिष्टोऽपि कारकाणां सम्भूय प्रधानक्रियासाधनत्वात् येनसह साधनं तन्निष्ठ एव नान्यत्र । कर्मकारकमपि येनसह साधनं तस्यैवापरोक्षम् । गन्तृसम्बन्ध इव ग्रामस्य ' इति पञ्चपादिकायामुक्तम् ॥

अत्र विवरणम्—'नन्वविकारिचैतन्यैकतानस्य निष्कलङ्कस्वभावानन्दस्यासङ्गस्यात्मनो न प्रमातृत्वमुपपद्यते' इत्युपक्रम्य इतरमतेष्वपि दोषकथनानन्तरम् 'एवमणुदेहपरिणामात्मवादेऽपि तुल्यो दोषः । तस्मान्नसर्ववादिनां प्रमाणादिव्यवहारसम्भव इति ; सत्यम् अस्मत्पक्षेतु तत्सम्भवं कथंचित्संप्रदर्शयिष्यामीत्याह—तत्रैवंभूतस्याहङ्कर्तुरिति । इदमंशस्य, अन्तःकरणस्येत्यर्थः । व्यापार इति परिणामोऽभिधीयते । प्रकाशस्वभावं सावयवमन्तःकरणमदृष्टेन्द्रियादिसहकृतं ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणमते ; तेजसः शीघ्रमतिदूरगमनदर्शनात् , परिणामद्वारेण च कर्तृकर्मसम्बन्धोऽवस्थाविशेष इत्याह—सच प्राप्नोति क्रियाहित इति । स्यादन्तःकरणस्य स्वपरिणामद्वारेण विषयसम्बन्धः, आत्मनस्तु विषयविशेषावभासः कथमिति ? तदाह—तेन विषयविशेषसम्बद्धमिति । सर्वत्राविद्याऽऽवृततयाऽनभिव्यक्तस्वभावमपि चैत-

## श्रुतप्रकाशिका

ननु पूर्वोक्ते पक्षद्वयेऽपि ज्ञातृत्वस्य छायापत्तिसम्पर्कौ निरस्तौ । ज्ञानछायापत्तिसम्पर्कौ कस्मान्ननिरस्तौ वक्ष्यमाणाभिव्यक्तिपक्षान्तर्भावादिति ब्रूमः । ज्ञानस्याहङ्कारे छायापत्तिर्नाम दर्पणे मुखस्येव तदाधेयतयाऽभिव्यक्तता । संपर्कपक्षेऽप्यधिष्ठानतया संपर्को ज्ञातृत्वप्रतीत्यनुपयुक्तः । अतः आधेयतया संपर्को वक्तव्यः सच तत्स्थतयाऽभिव्यक्तावन्तर्गतः, अतस्तत्रानुपन्यासः । किंच छायापत्तिस्संविदोऽचाक्षुषत्वेनैव निरस्ता । * संपर्कश्चोपलम्भानुगुण्येन वक्तव्यत्वादपृथक्सिद्धधर्मधर्मिभावेन वक्तव्यः । सच नोपपन्नः अचेतनस्य चैतन्यस्य च तथाविधधर्मधर्मिभावायोगात् । * दण्डदेवदत्तयोरिव ज्ञानज्ञात्रोः पृथगवस्थानादर्शना * दपृथगवास्थितयोस्संपर्कश्चानुपपन्न इत्यनुसन्धेयम् ॥

## गूढार्थसंग्रहः

न्यम् अन्तःकरणं येन येनावस्थाविशेषेण विवर्तते, तेन तेनाकारेण व्यज्यते ; अयःपिण्डेनेव चतुष्कोणत्वाद्यवस्थाविशेषमापाद्यमानेन कृशानुः, इति विषयसंसृष्टान्तःकरणावच्छिन्नं चैतन्यं तदाकारमवभासत इति भावः । ननु प्रमातृरूपावच्छिन्नं चैतन्यं तद्रूपेण भासतां, कथं चैतन्यस्य विषयावच्छेद इति ? तदाह—कर्मकारकमपीति । स्वव्यापाराविष्टमिति । परिणामसंसर्गादापन्नजाड्याभिभवलक्षणयोग्यत्वमुच्यते । अन्तःकरणंहि स्वस्मिन्निव स्वसंसर्गिण्यपि चैतन्याभिव्यक्तियोग्यतामापादयतीति भावः ॥

नन्वच्छेदकभेदे चित्प्रकाशभेदात् कथं विषयावाच्छिन्नानुभवस्य प्रमातृरूपावभासस्संसर्गः ? असंसर्गे वा कथं—मयेदमवगतमिति प्रमातृप्रमेयसंसर्गावभासिसंवेदनं स्यात् ? अनुभवभेदात्, एकस्मिन्सम्बन्धावगमे पदार्थयोरवभासायोगादिति, तत्राह—प्रधानक्रियाऽऽहितप्रमात्रवस्थाविशेषावच्छिन्नापरोक्षतैकरूपामिति । एकामित्यर्थः । परिणामस्योभयसंसर्गाद्व्यञ्जकाभेदेन व्यङ्ग्यावच्छेद इति भावः । ननु उभयत्र चैतन्याभिव्यक्त्यविशेषे घटावच्छिन्नानुभवः प्रमाता ? किं वाऽन्तःकरणावच्छिन्नः ? इति न विशेषस्स्यादिति नेत्याह—ततश्चात्मनोऽन्तःकरणावस्थाविशेषोपाधिजनितो विशेष—इति । प्रमातेति वाक्यशेषः । कर्तुर्हि प्रमातृता, न कर्मणः । तत्रान्तःकरणस्य कर्तृत्वात्तदवच्छिन्नः प्रमातेत्यर्थः । ननु चैतन्यस्यैकत्वे प्रमातैव फलमिति विरुद्धमापन्नमिति, तत्राह—विषयानुभवसंशब्दितो विषयस्यापरोक्षैकरसः फलमिति । अन्तःकरणावच्छिन्नतया प्रमाता, विषयावच्छिन्नतया फलमिति भावः ॥

ननु क्रियाफलयोरन्तः करणात्मसमवायिनोर्भिन्नाश्रयत्वम् घटान्तःकरणविषयतया च भिन्नविषयत्वम्, इति क्रियाफलयोरेकाश्रयत्वैकाविषयत्वानियमविरोध इति नेत्याह—इति क्रियैकविषयताफलस्येति । विषयेत्याश्रयस्याप्युपलक्षणम् । अन्तःकरणात्मनोरैक्याध्यासेनैकाश्रयत्वं, चैतन्यस्यापि घटावच्छेदादेकविषयत्वमिति । ननु बुद्धिस्थमर्थं पुरुषश्चेतयते इति साङ्ख्याः कथं तद्विरुद्धमात्मा स्वचैतन्योपरक्तं चेतयत इति ? तत्राह—एवंचाहङ्कर्तेति । प्रथमं बुद्धिस्थमर्थं तदात्मतामापन्नः पश्चाच्चेतयत इत्यर्थः । उक्तं तावत्सर्वगतस्याप्यात्मनोऽविद्यावृतप्रकाशस्य परिच्छिन्नान्तःकरणपरिणामोपाध्यभिव्यक्त्यपेक्षया विषयविशेषंप्रति प्रमातृत्वम् । ननु केयमभिव्यक्तिः ? आवरणाभिभवएव न स्वरूपातिशयः । ननु उक्तोपाधिः किं प्रमाणकः ? उक्तं—ह्रीर्धीर्भीरित्येतत्सर्वं मनएवेति धीशब्दवाच्यज्ञानपरिणामवन्मनो विज्ञानं बुद्धिरिति । तदेवमुपाधिवशान्नियमेऽपि तदज्ञानाद्यचोदितं चैतन्यस्य सर्वविषयाविशेषित्वात् सर्वमस्य युगपदवभासेतेति तत्परिहरति—तत्र च प्रमातुः स्वयंज्योतिष इति । परिणामसंसृष्टकर्मोपाधिनियमान्नासंसृष्टेषु चैतन्याभिव्यक्तिः इति, नैकस्य प्रमातुः सर्वविषयावभास इति भावः । ननु कर्मकारकेऽपि चैतन्यमभिव्यक्तंचेत् सर्वप्रमातृसाधाणतया सर्वेषामवभासतामिति...

श्रीभाष्यम्

**यदप्युक्तमुभयत्र न वस्तुतो ज्ञातृत्वमस्ति। अहङ्कारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति आदर्शादिवदिति। तदयुक्तम्। आत्मनस्स्वयंज्योतिषोजडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात्।**

श्रुतप्रकाशिका

अथाभिव्यक्तिपक्षमनुभाषितुं छायाऽऽपत्तिसम्पर्कपक्षयोरभिव्यक्तिपक्षस्यचान्योऽन्यवैषम्यं दर्शयति। **उभयत्रेति। वस्तुत इति।** छायापत्त्यादिनाऽऽपाद्यमानादध्यासात् पूर्वमेव सिद्धत्वं विवक्षितं नतु पारमार्थिकत्वम्। अलातचक्रादेरपि प्रतिबिम्बदर्शनात् उष्णजलसम्पर्कादनुष्णेऽप्यौष्ण्योपलम्भाच्च। एकत्र पूर्वसिद्धज्ञातृत्वाध्यासादन्यत्र ज्ञातृत्वनिर्वाहः पूर्वस्मिन् पक्षद्वये। अभिव्यक्तिपक्षेतु ज्ञातृत्वस्य पूर्वसिद्धिमनपेक्ष्य ज्ञानाध्यासात् ज्ञातृत्वनिर्वाह इति वैषम्यम्॥

अभिव्यक्तिपक्षमाह—**अहङ्कारस्त्विति।** दूषयति। **तदयुक्तमिति।** कुतइत्यपेक्षायामात्मनोऽभिव्यञ्जकापेक्षा च नास्ति। अहङ्कारस्याभिञ्जकत्वशक्तिरपि नास्तीत्याह— **आत्मनइत्यादिना।** स्वोक्तार्थस्य सांप्रदायिकत्वप्रदर्शनार्थं द्रष्टा-

गूढार्थसंग्रहः

नेत्याह–कर्मकारकमपीति। एतत्प्रमातृचैतन्याभिन्नतयैवाभिव्यक्तं तद्विषयचैतन्यं न प्रमात्रन्तरचैतन्याभेदेनाभिव्यक्तम्। अतो न सर्वेषामत्रभास्यत्वमित्यर्थः' इति॥

सिद्धान्तलेशसङ्ग्रहेतु 'अत्रोक्तं विवरणे' इत्युपक्रम्य ब्रह्मचैतन्यजीवचैतन्ययोः विषयावभासकत्वमुपपाद्य 'एवं च चिदुपरागार्थत्वेन विषयचैतन्याभेदाभिव्यक्त्यर्थत्वेन आवरणाभिभवार्थत्वेन वा वृत्तिनिर्गममपेक्ष्य तत्संसृष्टविषयमात्रावभासकत्वात् जीवस्य किंचिज्ज्ञत्वमुपपद्यत इति' इति। 'विषयसन्निहितजीवचैतन्यतादात्म्यापन्नाया वृत्तेर्विषयसंयोगे तस्यापि तद्द्वारकः परम्परासम्बन्धो लभ्यत इति स एव चिदुपरागोऽभिसंहित इति केचित्' 'अन्तःकरणोपहितस्य विषयावभासकचैतन्याविषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्तिद्वारा विषयतादात्म्यस्यापादनमेव चिदुपरागोऽभिसंहितः' इत्येकदेशिनः ब्रह्मणः विषयान्तःकरणावच्छिन्नचैतन्ययोः एकीभावोऽभेदाभिव्यक्तिः' इति केचित्। बिम्बस्थानीयस्य विषयावच्छिन्नस्य प्रतिबिम्बभूतेन जीवेनैकीभावो नाभेदाभिव्यक्तिः, किंतु विषयावच्छिन्नं ब्रह्मचैतन्यं, विषयसंसृष्टाया वृत्तेरग्रभागे विषयप्रकाशकं प्रतिबिम्बमर्पयतीति तस्य प्रतिबिम्बस्य जीवेनैकीभावः' इत्यन्ये। बिम्बभूतविषयाधिष्ठानं चैतन्यमेव साक्षादाध्यासिसम्बन्धलाभाद्विषयप्रकाशकमिति तस्यैव बिम्बत्वोपलक्षितचैतन्यात्मना एकीभाव अभेदाभिव्यक्तिरित्यपरे।' इत्युक्त्वा अनन्तरम् आवरणाभिभवस्वरूपमपि मतभेदेन निरूपितम्॥

वृत्तेः चिदुपराग अभेदाभिव्यक्ति आवरणाभिभव त्रितयार्थत्वं प्राक् (४०२.पु) उदाहृतगुरुचन्द्रिकाग्रन्थेऽपि स्फुटम्। अत्र पञ्चपादिका, तद्विवरणयोः स्वमते अन्तःकरणपरिणामेन चैतन्याभिव्यक्तिमङ्गीकृत्य प्रमाणफलादिव्यवहारः कथंचित्सम्भवति न त्वन्यमत इत्युक्त्या तामेव अभिव्यक्तिनिबन्धनप्रमातृत्वोपपादनरीतिमनुवदति—**यदप्युक्तमित्यादिना॥**

**स्वात्मस्थामेवानुभूतिमभिव्यनक्ति इति।** 'एवंचाहङ्कर्ता स्वांशचैतन्यबलेन व्यापाराविष्टतया च प्रमाता' इति पञ्चपादिकाद्यर्थः अत्र विवक्षितः॥

**स्वयंज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगादिति।** यद्यपि 'सर्वत्राविद्याऽऽवृततया अनभिव्यक्तस्वभावमपि चैतन्यमन्तःकरणं येन येनावस्थाविशेषेण विवर्तते तेन तेनाकारेण व्यज्यते अयःपिण्डेनेव चतुष्कोणाद्यवस्था-

श्रीभाष्यम्

**तदुक्तम् । 'शान्ताङ्गार इवादित्यमहङ्कारोजडात्मकः । स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥' इति । (आत्मसिद्धौ २८ पु) स्वयम्प्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचिदहङ्कारोऽनुदितानस्तमितस्वरूपप्रकाशम्**

श्रुतप्रकाशिका

नेन तद्विशदीकरणार्थं चात्मसिद्धिग्रन्थमाह—**तदुक्तमिति** । शान्ताङ्गार इत्यादिकं श्लोकं विवृणोति । **स्वयमिति** । स्वयंप्रकाशशब्देनाभिव्यञ्जकापेक्षाया अभाव उक्तः । अनुभवाधीनसिद्धयइत्यनेन अहङ्कारस्याभिव्यञ्जकत्वाभाव उक्तः । अचिदहङ्कारइत्यनेन चिन्मात्रातिरेकित्वात्तदायत्तप्रकाश इति परोक्तहेतुस्सूचितः—**अनुदितानस्तमितस्वरूपप्रकाशम्** ।

गूढार्थसंग्रहः

विशेषमापाद्यमानेन कृशानुरिति । विषयसंसृष्टान्तःकरणावच्छिन्नं चैतन्यं प्रमात्राकारमवभासयति ' इति विवरणे उक्तम् । तथाऽपि अयःपिण्डस्यापि पृथगवभासः, एवं कृशानोरपि । अयःपिण्डकृशान्वोः परस्परापेक्षामन्तरा अवभासः दृष्टान्ते दार्ष्टान्तिके च अन्तःकरणपरिणामापेक्षा स्वयंज्योतिषश्चैतन्यस्य । चैतन्यापेक्षा च अन्तःकरणस्याभिव्यक्तौ वर्तत इति दृष्टान्तदार्ष्टान्तिकभावो न समञ्जसः इति तात्पर्येण ' शान्ताङ्गार इवादित्यम् ' इत्यादि यामुनसूक्तितात्पर्यविवरणमुखेन प्रागुक्तार्थं विशदयति **स्वयम्प्रकाशाधीनसिद्धयोहीत्यादिना** ॥

**अनुदितानस्तमितस्वरूपप्रकाशमिति** । एतेन अविद्यया आवरणमपि न सम्भवतीति वृत्त्या अभिव्यक्त्युक्तिः न घटत इति सूचितम् । एतच्चोत्तरत्र निरूपयिष्यते । चतुष्कोणावस्थाविशेषापन्ने अयःपिण्डे सर्वावयवावच्छेदेन कृशानोः संयोगेन कृशानौ चतुष्कोणावस्था वर्तत एव । यदातु कृशानौ चतुष्कोणावस्था तदा कृशानुगतचतुष्कोणावस्थाया एव चक्षुषा प्रत्ययः कृशानोस्तु स्वसंयुक्तवस्तुव्याप्तिस्वभावेन चतुष्कोणावस्था । अयःपिण्डव्यतिरिक्तवस्तुसंयोगः कृशानौ नास्ति इति चतुष्कोणावस्थाज्ञानं युक्तम् । अत्रतु चैतन्यस्य दृष्टान्तवत् स्वसमानसत्ताकसंयोगो नास्ति चैतन्यस्य सर्वगतत्वेन वृत्त्यतिरिक्तदेशसम्बन्धो वर्तते इति तद्दृष्टान्तेनाभिव्यक्त्युक्तिर्नघटते । अत्र तदायत्तप्रकाशइत्यनेन अयःपिण्ड वैलक्षण्यं दर्शितम् । अयःपिण्डस्य कृशान्वायत्तप्रकाशत्वाभावात् । **अशेषार्थसिद्धिहेतुभूतमित्यनेनापि** सर्वपदार्थप्रकाशकस्य सर्वगतस्य परिच्छिन्नेन एकेनाभिव्यक्तिर्न घटत इति दृष्टान्तवैषम्यं बोधितम् ॥

एतेन ' कथं पुनः सर्ववस्तुदेशाव्यवहिततया सर्वगतस्य विषयान्तरेष्वसंगितया असंसृष्टस्य अन्तःकरणसंसर्गिता सम्भवेत् । उच्यते—यथा गोत्वादयो जातिविशेषाः केसरादिमद्व्यक्त्यन्तरप्रदेशसन्निहिता अपि स्वभावविशेषात् अश्वादिव्यक्त्यसङ्गितया तैरनभिव्यक्ता अपि सास्नादिमत्पिण्डसङ्गितया अभिव्यज्यन्ते । यथा वा प्रदीपप्रभा वाय्वाकाश रस गन्धादिप्रदेशव्यापिन्यपि स्वभावविशेषात् तानि न प्रकाशयन्ती रूपसंसर्गितया तदेव प्रकाशयति, एवं चैतन्यमपि स्वभावविशेषादन्तःकरणे संसृज्यते नान्यत्रेति युक्तम् । यथा च केवलेन वह्निना न दाह्यमपि तृणादि अयःपिण्डसमारूढेन दह्यते, तथा अहङ्कारसमारूढेनात्मना केवलेनाप्रकाश्या अपि विषयाः प्रकाश्यन्त इति युक्तमहङ्कारोपाधिवर्णनम् ' इत्युक्तिरनवकाशा । जातेः यत्र प्रतीतिः तत्रैव समवायेन सत्त्वम् अन्यत्रतु अन्यसम्बन्धेनेति अनुगतप्रतीत्युपपत्तये एकत्वाभ्युपगमेन सम्बन्धभेदेन प्रतीति व्यवस्था क्रियते। चैतन्यस्यतु स्वभिन्नसर्वपदार्थेष्वाध्यासिकसम्बन्धः परैरङ्गीक्रियते ॥

## गूढार्थसंग्रहः

एवं प्रभाया अपि न सर्ववस्तुप्रकाशकत्वम् ; चक्षुरिन्द्रियजन्यप्रत्यक्षयोग्यविषयमात्रप्रकाशकत्वात् । प्रभा तत्संयुक्तयोः प्रतीतौ परस्परापेक्षाऽपि नास्ति उभयत्र स्वसमानसत्ताकसम्बन्धो वर्तत एव, असङ्गिनस्सम्बन्धः क्वापि दृष्टान्ते नाङ्गीक्रियते । चैतन्यस्यतु स्वसमानसत्ताकसम्बन्धविरहिणः असङ्गस्य सर्वप्रकाशकस्य एकया वृत्त्या अभिव्यक्तिः न दृष्टान्तानुरोधेनोपपादयितुं शक्यते । वृत्तिमन्तरा स्वस्याभिव्यक्तिविरहेण अनभिव्यक्तस्य विषयप्रकाशकत्वासम्भवात् वृत्त्यपेक्षादरे च वृत्त्यैव निर्वाहे चैतन्यस्यैव वैफल्यम् । स्वप्रकाशानभ्युपगमे जगदान्ध्यप्रसङ्गः सिद्धान्तबिन्दावुक्तः । स्वप्रकाशाभ्युपगमेऽपि वृत्तिमन्तरा तत्प्रसङ्गपरिहाराभावे स्वप्रकाशचैतन्यवैफल्यमपरित्याज्यम्, इदं च पूर्वमेव निरूपितम् ॥

सिद्धान्तेतु वृत्तिस्थानापन्नं धर्मभूतज्ञानं मुक्तावपि वर्तते तस्यैव सर्वप्रकाशकत्वं, तस्य कर्मणा बन्धदशायां सङ्कोचेन इन्द्रियाद्यपेक्षा, मुक्तौ सङ्कोचाभावेन न तदपेक्षा । अनुगतातु जातिर्नाभ्युपगम्यत एवेति नानुपपत्तिः । बिम्बप्रतिबिम्बभावेन ब्रह्मजीवयोरभेदः इत्थमुपपादितः पञ्चपादिकायाम् 'यत्पुनः दर्पणजलादिषु मुखचन्द्रादिप्रतिबिम्बोदाहरणं तदहङ्कर्तुरनिदमंशो बिम्बादिव प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरम्, किंतु तदेव तत् । पृथगवभासविपर्ययस्वरूपतामात्रं मिथ्येति दर्शयितुं कथं पुनस्तदेव तत् ? एकस्वलक्षणत्वावगमात् । तथा च यथा बहिस्स्थितो देवदत्तः यत्स्वलक्षणः प्रतिपन्नः तत्स्वलक्षण एव वेश्मान्तःप्रविष्टोऽपि प्रतीयते । तथा दर्पणतलस्थितोऽपि न तद्वस्त्वन्तरत्वे युज्यते। अपि च अर्थाद्वस्त्वन्तरत्वेसत्यादर्शे एव विम्बसन्निधावेव तदाकारगर्भितः परिणत इति वाच्यम् ; विरुद्धपरिमाणत्वात् संश्लेषाभावाच्च प्रतिमुद्रेव बिम्बलाञ्छितत्वानुपपत्तेः । तथासति बिम्बसन्निधिलब्धपरिणतिरादर्शः तदपायेऽपि तथैवावतिष्ठेत । न खलु संवेष्टितःकटो निमित्तलब्धप्रसारणपरिणतिः निमित्तापगमे तत्क्षणमेव संवेष्टते यथा तथा स्यादिति मन्तव्यम् । यताश्चिरकालसंवेष्टानाहितसंस्कारस्तत्र पुनस्संवेष्टननिमित्तम् । तथा च यावत्संस्कारक्षयं प्रसारणनिमित्तानुवृत्तौ पुनस्संवेष्टनोपजनः, एवं चिरकालसन्निहितबिम्बानिमित्त तदाकारपरिणतिरादर्शस्तथैव तदपायेऽपि यावदायुरवतिष्ठेत, नच तथोपलभ्यते यःपुनःकमलमुकुलस्य विकासपरिणतिहेतोः सावित्रस्य तेजसो दीर्घकालानुवृत्तस्यापि विगमे तत्समकालं पुनर्मुकुलीभावः, स प्रथमतरमुकुलहेतुपार्थिवाप्यावयवव्यापारनिमित्तः, तदुपरमे जीर्णस्य पुनर्मुकुलतानुपलब्धेः नादर्शे पुनस्तथा पूर्वरूपपरिणामहेतुरस्ति ॥

अत्राह भवतु न वस्त्वन्तरम्, तदेव तदितितु न क्षम्यते, शुक्तिकारजतस्य मिथ्यारूपस्यापि सत्यरजतैकरूपावभासित्व दर्शनात्, मैवम्, तत्रहि बाधदर्शनात् मिथ्याभावः नेह स बाधो दृश्यते । यत् पुनः दर्पणापगमे तदपगमः न सबाधः दर्पणेऽपि तत्प्रसङ्गात्' इति । अत्र बिम्बप्रतिबिम्बयोरैक्यं न सम्भवति, स्वदेशस्थबिम्बग्रहणमेव प्रतिबिम्बग्रहणमिति श्लोकवार्तिके शब्दनित्यत्वाधिकरणे 'अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा' इत्यादिना भट्टपादैः स्थापितत्वात् ॥

अत्राहेति पक्षःपरिगृहीतस्सुरेश्वराचार्यैः 'दर्पणाभिहता दृष्टिः पर्यावृत्त्या स्वमाननम् । व्याप्नुवन्त्यविभागेन भ्रान्तिं नोजनयेद्यथा ॥' (सु.वा बृ.३.४.६१८.श्लो) इति दर्पणप्रतिबिम्बस्थले नात्र मुखमस्तीति बाधनिश्चयः चैत्रस्य गृहस्थतादशायां बहिः नात्र चैत्रः इति बाधनिश्चयश्च वर्तते । 'मुखे देशसंसर्गमात्रस्यैव निषेधः नतु मुखस्येति' विवरणकारोक्तनिर्णयो न घटते । घटो नास्तीत्यादौ घटाभावस्य प्रतीतेः पूर्वं (३७५.पु) साधनात् । मधुसूदनसरस्वतीभिः 'वस्तुतस्तु घटप्रतियोगिकत्वेनैवाभावस्यानुभवात् नायं संयोगप्रतियोगिको भवितुमर्हति' इत्यद्वैतसिद्धौ (निषेधप्रतियोगित्वानुपपत्त्याऽनिर्वचनीयत्वसमर्थने) सिद्धान्तकरणाच्च । एवं बाधनिश्चयदशायां तदेवेदमिति प्रत्यभिज्ञा नोदेतुमर्हतीति बिम्बप्रतिबिम्बयोः प्रत्यभिज्ञायाः कथमैक्यम् ? अद्वैतविद्याकृद्भिः बिम्बप्रतिबिम्बैक्यं न सम्भवतीति (सि.ले.सं)

## गूढार्थसंग्रहः

उक्तमत एव सङ्गच्छते। दर्पणप्रतिबिम्बस्थले भट्टपादसिद्धान्त एव उत्तरत्र यथार्थख्यातिनिरूपणावसरे स्थापयिष्यते। एवं च बिम्बप्रतिबिम्बैक्यायोगेन विषयावच्छिन्नचितः अन्तःकरणावच्छिन्नचितश्च तन्न्यायेन सिद्धमैक्यं वृत्त्या अभिव्यज्यत इत्युक्तिः न घटते॥

सिद्धान्तबिन्दौ प्रतिबिम्बस्यासत्यतावादि(त्व)वार्तिककारपक्षस्याभासवादत्वोक्त्या 'आभास एव च' इतिसूत्रे आभास पदं प्रतिबिम्बवाचकमिति परमतरीत्या प्रतिबिम्बस्यासत्यत्वमेव सूत्रकृतः विवक्षितमापद्यते। 'जीवेशावाभासेन करोति' इति श्रुतिरपि जीवेशयोरविद्यान्तःकरणप्रतिबिम्बत्वबोधनपरैव स्यात्। एवमङ्गीकारएव श्रुतिस्वारस्यात्। तथाऽङ्गीकारे असत्यप्रतिबिम्बानिबन्धनव्यवहारोपपादनस्य दूषणं भास्करभाष्योक्तमेव सङ्गतम्। वार्तिककारमतं दूषयित्वा, प्रतिबिम्बस्य सत्यत्वं बिम्बप्रतिबिम्बयोरैक्यं व्यवस्थापयतां पञ्चपादिकाकृतां मतमनुसृत्य विवरणे भास्करस्य सिद्धान्तापरिज्ञानोक्तिः अयुक्तैव प्रसज्यते॥ ब्रह्मसिद्धौ 'असत्यं सत्यप्रतिपत्तेर्निमित्तं यथा रेखागवयो लिप्यक्षराणि च' इत्युपक्रम्य तथाऽसत्यात्प्रतिबिम्बाचादृष्टस्य प्रतिबिम्बहेतोः विशिष्टदेशावस्थस्यानुमानं न मृषा' इति मण्डनमिश्रेणोक्तम्॥

एवमेव वार्तिककारसुरेश्वराचार्यैरङ्गीकृतम्। अतः पञ्चपादिकायां वार्तिककारमतदूषणं न घटते। तत्र बहिःस्थितस्यान्तःस्थितस्य च चैत्रस्य कालभेदेन दर्शनेन एकस्वलक्षणवत्त्वज्ञानादभेदप्रत्ययो युक्तः। अत्रतु बिम्बप्रतिबिम्बयोर्मध्ये बिम्बस्य स्पार्शनप्रत्यक्षतादशायामेव प्रतिबिम्बस्य दर्पणादौ चाक्षुषप्रत्यक्षम्। एवं पार्श्वस्थानामुभयोरेकदैव चाक्षुषं प्रत्यक्षमिति उभयोर्भेदानिश्चयसत्त्वेनैकस्वलक्षणवत्त्वं सादृश्यमात्रमेव बोधयति नत्वभेदम्। 'दर्पणाभिहता दृष्टिः' इति प्रागुदाहृतश्लोके दृष्टेः परावृत्त्या बिम्बग्रहणं यत् सिद्धान्तितं तदेव युक्तम्॥

अत्राहेत्यादिग्रन्थे सुरेश्वरमतदूषणानन्तरम् 'अहं ब्रह्मास्मि' इत्यत्र बाधायां सामानाधिकरण्यं नैष्कर्म्यसिद्धावुक्तं मनसि निधाय 'तत्त्वमसि' इत्यत्रापि बाधायां सामानाधिकरण्यमाशङ्क्य दूषयित्वा अनन्तरं 'यस्तु मन्यते न पराक्प्रवृत्तनायनरश्मिभिः बिम्बमेव भिन्नदेशस्थं गृह्यते इति तमनुभव एव निराकरोतीति न पराक्रम्यते' इतिपञ्चपादिकायां सुरेश्वराचार्यमतदूषणमनादरणीयम्। बिम्बव्यतिरेकेण प्रतिबिम्बं सत्यमसत्यं वा न कल्पनीयमिति यथार्थख्यातिनिरूपणे विवेचयिष्यते॥

एतेन अद्वैतसिद्धौ विवरणोक्तजातिप्रभादृष्टान्तनिरूपणपरभागविवरणे (प्रतिकर्मव्यवस्थोपपत्तौ) गुरुचन्द्रिकायाम् 'तथा जीवस्यान्यत्रासङ्गस्याप्यविद्यामनआदिषु प्रतिबिम्बितत्वादिरूपस्सङ्गः श्रुतिप्रत्यक्षादिरूपमानसिद्धः। 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' (नृ.उ.ता.९.खण्ड) इति श्रुतिर्हि जीवस्याप्यविद्याप्रतिबिम्बत्वमाह— ईशस्यापि प्रतिबिम्बत्वे आभासेनेति तृतीयाया अभेदोऽर्थः। बिम्बत्वेतु ज्ञाप्यत्वमर्थः। तादात्म्येन जीवस्येवापेक्षणीयतया ईशस्यापि प्रतिबिम्बज्ञाप्यत्वात्। 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यादिश्रुतिरपि जीवस्याविद्याप्रतिबिम्बत्वमाह। यद्यपि भूतेन्द्रियादिकमपि क्षेत्रपदार्थः व्यवहाररूपाय जीवस्य प्रतिचक्षणाय यत्र बिम्बः सोऽपि वीप्सितरूपपदार्थः, क्षेत्रे आनखाग्ररूपावधिप्रतियोगिन्यपि क्षेत्राणि पूर्वश्रुत्येकवाक्यत्वानुरोधात्। तथाऽपि भूतादिषु जीवस्य प्रतिबिम्बरूपोपरागसत्त्वे सदा भानापत्तेः तदन्यक्षेत्रमविद्यादिरूपं प्रकृते गृह्यते। एवम् 'आभास एव च' 'अतएवचोपमा सूर्यकादिवत्' इत्यादिसूत्राण्यपि तथा बोधयन्ति।

## श्रीभाष्यम्

**अशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति। किंच अहङ्कारानुभवयोः स्वभावविरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च नव्यङ्क्तृव्यङ्ग्यभावः।**

## श्रुतप्रकाशिका

कदाचिदप्रकाशश्चेत्तदाऽभिव्यञ्जकापेक्षा स्यात् तदभावात्कदाचिदप्यभिव्यञ्जकापेक्षा नास्तीत्यर्थः। अशेषार्थसिद्धिहेतुभूतं त्वयापि विषयप्रकाशकत्वेनहि स्वयम्प्रकाशत्वं समर्थितमिति भावः। परिहसन्तीति। ईदृशमनुभवमीदृशमहङ्कारो अभिव्यनक्तीति त्वदीया एव त्वत्समीपस्था एव हसन्तीति भावः॥

अहङ्कारानुभवयोरभिव्यञ्जकत्वाभिव्यङ्ग्यत्वानभ्युपगमेन दूषणमुक्तम्। तयोरभिव्यञ्जकत्वमभिव्यङ्ग्यत्वंचास्तु तत्परस्परं नोपपद्यत इत्याह—**किंचेति**। स्वभावविरोधात्। अनुभवस्याशेषार्थसिद्धिहेतुत्वं तद्व्यतिरिक्तत्वेनाहङ्कारस्यास्य तदधीनसिद्धित्वं च विरोधः। यथा पितापुत्रयोरन्यंप्रति पुत्रत्वे पितृत्वे च सत्यपि परस्परं पितृपुत्रव्यत्ययो नोपपद्यते। एवमन्यापेक्षया तयोर्व्यङ्क्तृव्यङ्ग्यभावसम्भवेऽपि परस्परं नोपपद्यतइत्यर्थः। दूषणान्तरंचाह—**अनुभूतेरननुभूतित्व प्रसङ्गाच्चेति**।

## गूढार्थसंग्रहः

अज्ञोऽहं नेशस्सुखी दुःखी इत्यादिप्रत्यक्षमप्यन्यथाऽनुपपत्तिसहकृतं तद्बोधकम्। जीवस्याप्यविद्यामनआदावनुपादानस्य तादात्म्याभावेन प्रतिबिम्बरूपोपरागं विना तद्भानासम्भवात्' इत्युक्तिरनवकाशा॥

ईशस्याविद्याप्रतिबिम्बत्ववादिसंक्षेपशारीरक वार्तिक(वृ)कारमते उपाधेः प्रतिबिम्बपक्षपातित्वेन जीव एव दोषावभासः नतु ईश्वर इति विवरणकारसम्मतप्रक्रिया न घटते। एवं जीवेशयोः बिम्बप्रतिबिम्बयोरैक्यमित्युक्तिरपि। अविद्यायां बिम्बभूत ईश्वरः प्रतिबिम्बभूतो जीव इति विवरणकारमते उभयोः प्रतिबिम्बज्ञाप्यत्वोक्तिरपि न युक्ता। उभयोस्तादात्म्यस्यैवासिद्धेः। कृञ्धातुसमभिव्याहारे ज्ञाप्यत्वस्यापि झटित्यप्रतीतेः आभासशब्दस्य प्रतिबिम्बासाधारण्याभावेन अनया श्रुत्या प्रतिबिम्बसिद्ध्यसम्भवाच्च। आभासशब्दस्य प्रतिबिम्बमात्रपरत्वनिर्बन्धेतु जीवेशयोरुभयोः प्रतिबिम्बत्व एव श्रुतेः स्वारस्यमिति ईशस्य बिम्बत्वं जीवस्य प्रतिबिम्बत्वमिति पञ्चपादिकाकारमते एतच्छ्रुतियोजनमभिनिवेशमूलकमेव॥

श्रुतौ आभासशब्दः भ्रमविषयतावाची। जीवेशौ भ्रमविषयताविशिष्टौकरोतीति श्रुत्यर्थः। प्रागुदाहृत (४१२) मैत्रायणीयश्रुतौ 'अहं सः' इत्यादिभ्रमे जीवेशयोः भ्रमप्रकारविशेष्यभावः तत्र मायायाः हेतुत्वं च स्पष्टम्। 'अतएवचोपमा सूर्यकादिवत्' इति सूत्रे उपमाशब्दप्रयोगेण जीवप्रतिबिम्बस्य सूत्रकाराभिमतत्वं स्पष्टम्। किंच तत्र क्षेत्रसामान्ये प्रतिबिम्बस्य परीत्या सिद्ध्या अविद्यामनआदिप्रतिबिम्बमात्रसिद्धान्तः न ततस्सिद्ध्यीत। सर्वभूतानां सदाभानासम्भवेन अत्र चैतन्यप्रतिबिम्बविवक्षा नास्तीत्येव निर्णीयते; नत्वविद्यामनआदिप्रतिबिम्बमात्रविवक्षा, सङ्कोचकाभावात्॥ 'सएष इह प्रविष्ट आनखाग्रेभ्यः' इत्यत्रापि। तत्र अन्तस्थत्वेनोपलभ्यमानत्वमेव विवक्षितमिति (शं) उपनिषद्भाष्यादिषु व्यक्तम्। 'रूपं रूपं प्रतिरूप' (कठ) इत्यत्र 'दार्वादि दह्यभेदंप्रतीत्यर्थः। तत्र तत्र प्रतिरूपवान् दह्यभेदेन बहुविधो बभूव' (शं.भा) 'प्रतिरूपमुपाधिसादृश्यम्' (आ.गि) इत्युक्तम्। 'तदस्य रूपम्' इत्यत्र रूपशब्दस्य प्रतिबिम्बपरत्वे प्रमाणं नास्ति। अज्ञोऽहमित्यादिप्रतीतिः न परसम्मतार्थविषयिणीति उत्तरत्र भाष्य एव व्यक्तीभविष्यति॥

### श्रीभाष्यम

**यथोक्तम् । ' व्यङ्क्तृव्यङ्ग्यत्वमन्योऽन्यं नच स्यात्प्रातिकूल्यतः । व्यङ्ग्यत्वेऽननुभूतित्व-मात्मनि स्याद्यथा घटे ॥ इति (आत्मसि.पु.२८) नच रविकरनिकराणां स्वाभिव्यङ्ग्य-करतलाभिव्यङ्ग्यत्ववत् संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदस्साधीयः तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात् । करतलप्रतिहतगतयोहि रश्मयो बहुला-स्स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात् करतलस्य नाभिव्यञ्जकत्वम् । किंच अस्य संवित्स्वरूपस्यात्मनः**

### श्रुतप्रकाशिका

**अस्मिन्न**र्थेऽप्यात्मसिद्धिग्रन्थं दर्शयति **यथोक्तमिति** । प्रातिकूल्यतः पूर्वोक्तस्वभावविरोधशब्देन प्रातिकूल्यश-ब्दो व्याख्यातः । तद्व्यङ्ग्यस्यैव तद्व्यञ्जकत्वे परोक्तदृष्टान्तं दूषयिष्यन्नाह—**नचेति** । दृष्टान्तस्य साध्यविकलत्वमाह-**तत्रा-पीति** । तत्र तथात्वस्यान्यथासिद्धिं दर्शयति । **करतलेति** । नहि ब्रह्म प्रसरणस्वभावं द्रव्यम् । अतस्तद्बाहुल्यहेतुत्वम-हङ्कारस्यानुपपन्नमित्यर्थः ॥

तथाहङ्कारेणास्याभिव्यक्तिं त्रिधा विकल्प्य दूषयति । **किंचेत्यादिना** । **किंरूपा**-किंशब्दः क्षेपार्थः दुर्निरूपे-त्यर्थः कुतइत्यपेक्षायाम् अभिव्यक्तिर्नाम किमुत्पत्तिः उत प्रकाशनम् उतानुभवसाधनानुग्रह इति त्रिधा विकल्पमभिप्रेत्य

### गूढार्थसङ्ग्रहः

एवं च जीवस्य प्रतिबिम्बत्वे अन्तःकरणावच्छिन्नविषयावच्छिन्नचितोरभेदेन मानाभावेन अन्तःकरणवृत्तेः स्वयं प्रकाशानुभूत्यभिव्यञ्जकत्वं न सम्भवतीति सिद्धम् ॥

**व्यङ्ग्यत्वेऽननुभूतित्वमिति** । स्वयम्प्रकाशानभ्युपगमे जगदान्ध्यप्रसङ्गेन स्वप्रकाशानुभूतिरूपं आत्मानमभ्युप गम्य स्वप्रकाशत्वं स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं, तेन वृत्त्यपेक्षायामपि नानुपपत्तिरिति मधुसूदनसरस्वतीभिरुक्तम् । वृत्त्यपेक्षया चिद्व्यवहाराङ्गीकारे वृत्त्यैव घटादिव्यवहाराविशेषेण चिद्व्यवहारोऽप्यकामेनापि स्वीकृत इति घटादेरिवास्व-प्रकाशत्वमेव चितोऽप्यापतति । अतः अनुभूतेरहङ्काराभिव्यङ्ग्यत्वाङ्गीकारे घटादिवदस्वप्रकाशत्वेनाननुभूतित्वमेव स्यात् । आलोकादेः प्रत्यक्षतःसिद्ध्यङ्गीकारेण आलोकवन्निर्विशेषचितः प्रत्यक्षाद्यसम्भवात्, वृत्तिरेवानुभूतिःपर्यवस्यतीति भावः ॥

**रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावादिति** । रविकराणामालोकत्वेन प्रत्यक्षप्रतिबन्धकतमोनिरास-कत्वेनोपयोगः इति करतलस्य रविकरनिकराभिव्यङ्ग्यत्वं युक्तम् । रविकरनिकराभिव्यक्तौ करतलस्य न हेतुत्वं, रविकर निकराणां बाहुल्यएव सम्भवः । बाहुल्यं किन्निबन्धनमिति प्रथमं विवेचनीयम् । करतलव्यतिरिक्तस्य हेतोरत्रादर्शनात् करतलसत्त्व एव बाहुल्यदर्शनाच्च बाहुल्यएव करतलस्य हेतुत्वं, बहुलानां रविकराणां सत्त्वे आलोकप्रत्यक्ष इव करतलादेः प्रत्यक्षहेतुत्वं नाङ्गीकरणीयम् । इत्थंच यदा बाहुल्यं तदा करतलपेक्षामन्तराऽपि रविकरनिकराः अभिव्यज्यन्ते । तद्बाहुल्यंतु करतलेनैवोत्पद्यते । रविकराणां करतलप्रतिहतिदशायां बाहुल्यस्य प्रतीत्या बाहुल्योत्पत्तिप्रयोजकत्वमेवेति भावः ॥ आरम्भ-वादिनैयायिकादिमतेऽसतः उत्पत्तिः । परिणामवादि साङ्ख्यादिमते च सतः अभिव्यक्तिरिति भिदा । अभिव्यक्तिश्च प्रकाश-नमेव, व्यवहारादिदशायामेवाभिव्यक्तिप्रसिद्धेः । एवमन्धकारस्थघटादेः आलोकादिना तमोनिरसनेन अभिव्यक्तिव्यव-

## श्रीभाष्यम्

**अहङ्कारनिर्वर्त्याऽभिव्यक्तिःकिंरूपा। नतावदुत्पत्तिः स्वतस्सिद्धतयाऽनन्योत्पाद्यत्वाभ्युपगमात्। नापि तत्प्रकाशनं तस्या अनुभवान्तराननुभाव्यत्वात्। ततएव च न तदनुभव साधनानुग्रहः। सहि द्विधा ज्ञेयस्येन्द्रियसम्बन्धहेतुत्वेन वा यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसम्बन्धहेतुत्वेन। बोद्धृगतकल्मषापनयनेन वा यथा परतत्वाववोधनसाधनस्य शास्त्रस्य शमदमादिना। यथोक्तम् 'करणानामभूमि-**

## श्रुतप्रकाशिका

उत्पत्तिपक्षं दूषयति। **न तावदिति**। अनुत्पन्नस्य घटादेरभिव्यक्त्यसम्भवादुत्पादकस्यापि दण्डचक्रादेरुत्पादनद्वाराऽभिव्यक्तिहेतुत्वादुत्पत्तिरपि विकल्पशिरसि निवेशिता। * किंच व्यङ्ग्यप्रकाशोत्पादनं व्यञ्जनम्। संविदः स्वयमेव प्रकाश रूपत्वात्तदुत्पत्तिरेव तत् * प्रकाशोत्पत्तिरूपाभिव्यक्तिरिति विकल्पशिरस्युत्पत्तिनिवेशः। * **स्वतास्सिद्धतयेति**। तथाहि प्रागभावाभाव उक्तः, अनादित्वादिति वाऽर्थः। अथ द्वितीयं व्युदस्यति। **नापीति**। प्रकाशनमनुभवविषयप्रकाशोत्पत्तिः अथ तृतीयं प्रतिवक्ति। **ततइति**। तत एव प्रकाशानुपपत्तेरेव॥

नन्वनन्तरग्रन्थोत्थानमनुपपन्नम् अनुग्राहकद्वैविध्यस्य तन्निरासानुपयोगित्वात्। उत्तरत्रात्मसिद्धिग्रन्थोदाहरणं च न सङ्गतम्। इन्द्रियासम्बन्धवाचित्वेनानुग्रहद्वैविध्यानुपयोगात्। अत्रोच्यते–पूर्वं * मनुग्राह्यजन्यप्रकाशविषयानुभूतिपर्यालोचनया तदनुभवसाधनानुग्रहो दूषितः। इदानीमनुग्रहप्रकारविशेषपर्यालोचनया दूषणमाह—**सहीति**। द्विविधस्याप्यनुपपत्तिं दर्शयितुं प्रथमं द्वैविध्यमाह। **ज्ञेयस्येति**। श(दम)मादेश्शास्त्रानुग्राहकत्वोक्तिः परमतेन तद्ध्युपासनानुग्राहकम्

**ननु** सहि द्विधेति वक्तुमयुक्तम् * अनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावात्। अनुमानादेर्व्याप्तिग्रहादिरनुग्रहोह्यस्तीति। उच्यते—करणानुग्रहः कर्त्रनुग्रहश्चेति कोटिद्वयमेव। व्याप्तिग्रहणमपि करणानुग्रहान्तर्भूतम्। यद्वा दृष्टमुखेनचानुग्रहः अदृष्टमुखेनचेति द्विधा। व्याप्तिग्रहणमपि दृष्टमुखेनानुग्रहः तस्मा * दिन्द्रियसम्बन्धहेतुत्वेनेत्येतत् करणानुग्रहस्य दृष्टमुखेनानुग्रहस्यचोपलक्षणं तत्राहङ्काराभिव्यङ्ग्यायास्संविदोऽनुमानविषयत्वासम्भवादिन्द्रियसम्बन्धहेतुत्वेनेत्युक्तम्। बोद्धृगतकल्मषापनयनेनेति कर्त्रनुग्रहस्यादृष्टमुखेनानुग्रहस्यचोपलक्षणमुक्तम्। आत्मासिद्धिग्रन्थेऽप्ययमेव भावः। एवं द्वैविध्यदर्शनेन द्विधाभूतोऽप्यनुग्रहोऽहंकारस्य न सुवच * इत्यनुषङ्गेण योजना॥

कथमत्र द्विविधस्याप्यनुग्रहस्य अनुपपत्तिरिति शङ्कायामात्मसिद्धिग्रन्थमाह—**यथोक्तमिति**। **करणानामभूमित्वान्नतत्सम्बन्धहेतुता** इति (अनेन इन्द्रियसम्बन्ध) हेतुत्वलक्षणोऽनुग्रहोऽनुपपन्न इति दर्शितम् बोद्धृगतकल्मषापनयन

## गूढार्थसंग्रहः

हारोऽपि वर्तते, इत्यभिप्रेत्य अभिव्यक्तिस्वरूपं विकल्पयति—**अहङ्कारनिवर्त्याभिव्यक्तिःकिंरूपेति**॥ उत्पत्तिप्रकाशनरूपप्रथमकोटिद्वयोक्त्या आत्मसिद्धौ **न तावत्तत्सिद्धिः** इत्यत्र उत्पत्तिरेव सिद्धिपदार्थः **नापि तद्विषयज्ञानम्** इत्यत्र तत्प्रकाशनमेव ज्ञानपदार्थः। अर्थप्रकाशस्यैव ज्ञानत्वादितिदर्शितं भवति। अतएव न ज्ञानकरणानुग्रह इति आत्मासिद्ध्युक्तार्थः **न तदनुभवसाधनानुग्रहः** इति वाक्येन प्रदर्शितः॥

**यथा जातिनिजमुखादिग्रहणइति**। विवरणे 'गोत्वादयो जातिविशेषाः' इत्यादिना व्यक्तेर्जातिव्यञ्जकत्वं यदुक्तं (५१९.पु) तत्प्रकारः अत्र परिशीलितः। एवं प्रभाया अपि तत्रैव यद्व्यञ्जकत्वमुक्तं तद्धि अनुपदं विवेचयिष्यते

## श्रीभाष्यम्

**त्वान्नतत्सम्बन्धहेतुता ' इति (आत्मसिद्धौ.पु.२९) किंच अनुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहस्सुवचः । सह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्धनिरसनेन भवेत् । यथारूपादिग्रहणोत्पत्तिनिरोधिसंतमसनिरसनेन चक्षुषो दीपादिना । नचेह तथाविधं निरसनीयं सम्भाव्यते न तावत्संविदात्मगतं तज्ज्ञानोत्पत्तिनिरोधि किंचिदप्यहङ्कारापनेयमस्ति । अस्तिह्यज्ञानमितिचेन्न**

## श्रुतप्रकाशिका

लक्षणानुग्रहानुपपत्तिर्नग्रन्थस्तथा । अत्र केचिदाचार्या एवं व्याचक्षते शमादेरनुग्राहकत्वं शास्त्रसिद्धम् । न तथाऽहङ्कारस्याप्यनुग्राहकत्वं शास्त्रसिद्धमिति स्फुटत्वान्नग्रन्थे कण्ठोक्त्या निरास इति पूर्वार्धोदाहरणेन श्लोकस्योत्तरार्धे बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्द्रष्टव्येत्याचार्याः । तदिदमुत्तरार्धम् **अहमर्थस्य बोद्धृत्वान्नस तेनैव शोध्यते ।** इति एकस्यैव प्रतियोगितया शोध्यत्वं शोधकत्वंचानुपपन्नमित्यर्थः ॥

**अयंतु** भाष्याभिप्रायः अहमर्थस्य बोद्धृगतकल्मषापनयने कर्तृत्वं किं स्वरूपेण उतादृष्टाकिञ्चित्कारमुखेन प्रथमे कर्मकर्तृविरोधः । एकस्यैव स्वापेक्षया शोध्यत्वशोधकत्वानुपपत्तेः । द्वितीये निष्प्रमाणकत्वम् । नह्यन्तःकरणस्यादृष्टवशान्तःकरण(स्य)णे) शुद्धिरित्यत्र प्रमाणमस्तीति । पूर्वमिन्द्रियगोचरत्वानभ्युपगमेन दूषणमुक्तम् । अथानुभाव्यत्वाभ्युपगमेन दूषणमाह—**किंचेति** । अनुग्रहस्वरूपं शिक्षयति । **सहीति** । व्यक्तिदर्पणादावनुग्रहप्रकारान्तरे दृष्टेऽपि कथं प्रतिबन्धनिरसनरूपानुग्रहएव परिशेषितः ? उच्यते । जातिव्यक्त्योर्नियतधर्मधर्मिभावेन व्यक्तिर्जातिर्व्यञ्जिका । न तथाऽहङ्कारानुभवयोः नियतधर्मिधर्मभावोऽस्ति, सतु परेणैव निरस्तः । मूर्तद्रव्यभूतश्चाक्षुषरश्मिप्रतिहतिहेतुर्दर्पणो मूर्तद्रव्यभूतचाक्षुषरश्मिं मुखेन सम्बन्धयति । नच तथा * हङ्कारो मूर्तद्रव्यं कस्यचित्प्रतिहतिहेतुरिति वक्ष्यमाणामिहानुग्रहप्रकारान्तरानुपपत्तिमभिप्रेत्य प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः ॥

ईदृशानुग्रहे दृष्टान्तमाह—**यथा रूपादीति** । ततःकिमित्यत्राह—**नचेहेति** । तदुपपादयति । **नतावदिति** । किं प्रागभावरूपमज्ञानं किं वा भावरूपं उतान्यन्निरसनीयमुच्यत इति शिरस्त्रयमभिप्रेत्य तावच्छब्दःप्रयुक्तः । न तावदितिग्रन्थेनान्यन्निरसनीयं निरस्तम् । * यद्वा अहङ्कारस्याज्ञाननिरासकत्वमज्ञानस्य संवित्सम्बन्धित्वंचोभयमनुपपन्नमित्यभिप्रेत्य प्रथममहङ्कारापनेयत्वमज्ञानस्य प्रतिक्षिपति । **नतावदिति** । अहङ्कारापनेयमज्ञानमस्तीति शङ्कते । **अस्तिहीति ।**

## गूढार्थसंग्रहः

एतदुभयसाधारणं रूपंतु तदनुभवसाधनानुग्रह एव इत्यनेन ग्रन्थेन निष्कर्षःकृतः । अत्र प्रभायाः अभिव्यञ्जकत्वं, व्यक्तेस्तु नाभिव्यञ्जकत्वम् । एवं दर्पणस्यापीत्युत्तरत्र वक्ष्यते । सिद्धान्ते दर्पणे मुखप्रतिबिम्बं, दर्पणस्याभिव्यञ्जकत्वंचेत्युभयं नाङ्गीक्रियत इति विशेषः ॥

' आवरणाभिभवएवाभिव्यक्तिरिति ' विवरणमभिप्रेत्य शङ्कते—**अस्तिह्यज्ञानमितिचेदिति**। विवरणे आवरणाभिभवस्य एकस्याभिव्यक्तिपदार्थत्वोक्तावपि वृत्तेश्चिदुपरागार्थत्वं आवरणाभिभवार्थत्वं अभेदाभिव्यक्त्यर्थत्वं च विवरणपर्यालोचनायामेव स्पष्टम् । उत्पत्तिप्रतिकोटितया अभिव्यक्तिव्यवहारः साङ्ख्यानाम्, तन्मते प्रकाशनमेवाभिव्यक्तिः । विवरण-

## श्रीभाष्यम्

**अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात्। ज्ञानमेवह्यज्ञानस्य निवर्तकम्। नच संविदाश्रयत्वमज्ञानस्य सम्भवति ज्ञानसमानाश्रयत्वात्तत्समानविषयत्वाच्च ज्ञातृभाव विषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वं तथा ज्ञानमात्रेपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वंस्यात् संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽपि आत्मतयाऽभ्युपगतायास्तस्या ज्ञानविषत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः ज्ञानंहि स्वविषयएवाज्ञानं**

## श्रुतप्रकाशिका

दूषयति । **नेति** । अज्ञानशब्दो भावरूपस्यचाभावरूपस्य च साधारणः । दूषणमपि साधारणम् । द्विविधस्याप्यज्ञानस्याहंकारापनोद्यत्वाभावात् । किं निवर्तकमित्यत्राह-**ज्ञानमेवहीति** । प्रागभावस्यापि ज्ञानोत्पत्तिर्निवर्तिका । भावरूपस्यापि ज्ञाननिवर्त्यत्वं पराभ्युपेतम् ॥

एवमज्ञानस्य संविदाश्रयत्वेसत्यपि अहङ्कारापनोद्यत्वायोगात्तन्निरसनरूपानुग्रहो न सम्भवतीत्युक्तम् । अथाज्ञानस्य संविदाश्रयत्वंचानुपपन्नमित्याह—**नचेति** । संविदाश्रयत्वं संवित्सम्बन्धित्वमित्यर्थः । आश्रयणं सम्बन्धः । सम्बन्धश्च कर्मत्वेनाश्रयत्वेनचेत्युभयविधसम्बन्धपरः आश्रयशब्दः '**आश्रयश्चेतसो ब्रह्म**' इत्यादिप्रयोगाच्चाश्रयशब्देन विषयस्याप्युपस्थापनं युक्तम् । संविदोऽज्ञानसम्बन्धः किमाश्रयतया, उत विषयतया, उभयथाऽपि सम्बन्धोऽनुपपन्नइत्यर्थः । कुतइत्यत्राह-**ज्ञानेति** । ततःकिमित्यत्राह—**ज्ञातृभावेति** । साक्षिणि द्र(ष्टर्ये)ष्टुरे)व साक्षित्वम् । ज्ञप्तेस्तु साक्षित्वमपि व्याहतं भवतीत्यभिप्रायः भवितुमर्हतीति निर्देशेन आश्रयतया विषयतया वा सम्बन्धमात्रं विवक्षितम् । अनेन व्यतिरेकव्याप्तिर्दर्शिता भवति ॥

संविदाश्रयत्वाभावे अन्वयव्याप्तिं दर्शयति । **यथेति** । अज्ञानाश्रयत्वंहि ज्ञानप्रागभावाश्रयत्वमनिर्वचनीयाज्ञानाश्रयत्वं वा तद्घटादौ नास्तीत्यर्थः । **ज्ञानाश्रयत्वप्रसक्तीति** । ज्ञातुरप्यज्ञानाश्रयत्वं ज्ञानाश्रयत्वं च कालभेदादविरुद्धमिति भावः ज्ञानात्यन्ताभावाश्रयत्वं हि घटादेः । ज्ञानं नाज्ञानाश्रयः, नचाज्ञानविषयः । अज्ञानाश्रयत्वे तद्विषयत्वेचोपगम्यमाने ज्ञातृत्व ज्ञेयत्वप्रसङ्ग इति प्रतिकूलतर्क उक्तो भवति । एवमज्ञानाश्रयत्वानभ्युपगमेन दूषणमुक्तम् । तदभ्युपगमेन दूषणमाह-**संविदइति** । अवच्छिन्नज्ञानस्यानुभाव्यत्वेऽङ्गीकृतेऽप्यनवच्छिन्नस्यात्मभूतस्य ज्ञानस्यानुभाव्यत्वानभ्युपगमादित्यभिप्रायेणाह--**आत्मतयाऽभ्युपगतायाइति** । ज्ञानविषयस्यैवाज्ञाननिवृत्तिं सदृष्टान्तमाह-**ज्ञानंहीति** ।

## गूढार्थसङ्ग्रहः

कारमतेऽपि स्वयम्प्रकाशमानस्यैव इतरप्रकाशकत्वं, स्वयंप्रकाशमानतादशायामेव आवरणाभिभवश्च इत्येतत्सम्मतम् । व्यक्त्यादेः आवरणाभिभावकत्वं नास्ति इत्येतत्सर्वमभिप्रेत्य प्रकाशनमिति द्वितीयकोटेः तदनुभवसाधनानुग्रह इति तृतीयकोटेश्च आत्मसिद्धौ भाष्ये च प्रतिपादनम् ॥

**ज्ञानमेवह्यज्ञानस्य निवर्तकमिति** । अयमर्थः सर्वदार्शनिकसम्मतः । विवरणे अन्तःकरणवृत्तौ ज्ञानत्वोपचाराङ्गीकारेण वृत्त्या नावरणाभिभव इति भावः ॥ **ज्ञानसमानाश्रयत्वादिति** । अज्ञोऽहं जानामीति प्रतीतेरिति भावः ॥

## श्रीभाष्यम्

**निवर्तयति। यथारज्ज्वादौ। अतोनकेनापि कदाचित्संविदाश्रयमज्ञानमुच्छिद्येत। अस्यच सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते। ज्ञानप्रागभावरूपस्य-चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन नतन्निरसनेन तदज्ञानसाधनानुग्रहः। अतो नकेनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः नच स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः प्रदीपादिष्वदर्शनात्, यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्सा-धनयोरनुग्राहकस्यच। तच्च स्वतः प्रामाण्यन्यायसिद्धम्। नच दर्पणादिर्मुखादेरभिव्यञ्जकः अपितु चाक्षुषतेजः प्रतिफलनरूपदोषहेतुः। तद्दोषकृतश्च तत्रान्यथाऽवभासः, अभिव्यञ्जक-स्त्वालोकादिरेव**

## श्रुतप्रकाशिका

यद्यविषयेऽप्यज्ञानानिवृत्तिः तर्हि शुक्तिज्ञानेन स(र्प)र्वभ्रमनिवृत्तिस्स्यादित्यभिप्रायः। एवं ज्ञाननिवर्त्याज्ञानाश्रयत्वे ज्ञानवि-षयत्वप्रसङ्गइत्युक्तं भवति॥

आश्रयात्वाभ्युपगमेनोक्तदूषणं निगमयति। **अतइति**। त्वयाऽहङ्कारापोद्यत्वेनोक्तमज्ञानं किं सदसदनिर्वचनीयम्, उत ज्ञानप्रागभावरूपमिति विकल्प्याह--**अस्यचेति**। द्वितीयंप्रतिवक्ति। **ज्ञानप्रागभावेति**। विरोधिशब्देन प्रतिब-न्धकत्वं विवक्षितम्। न सहानवस्थानमात्रम्। अभिव्यक्तेर्दुर्निरूपत्वं निगमयति। **अतइति**। केनापि प्रकारेण उत्पाद कत्वेन वा प्रकाशकत्वेन वा तदनुभवसाधनानुग्राहकत्वेनवेत्यर्थः। अथ स्वात्मस्थतयाऽभिव्यक्तिं दूषयति। **नचेति**। व्यभि चारमाह-**प्रदीपादिष्विति**। हेत्वन्तरंचाह-**यथावस्थितेति**। * प्रतीतिः व्यवहारानुगुण्यं तदनुगुणाज्ज्ञानादीनां स्वभा-वादित्यर्थः। तदेवोपपादयति। **तच्चेति**॥

प्रामाण्याप्रामाण्यविषयाश्चत्वारःपक्षाः प्रामण्याप्रामाण्ये द्वेच परतः, द्वेच स्वतः, प्रामाण्यं परतोऽन्यत्स्वतः, प्रामाण्यं स्वतोऽन्यत्परतः इति प्रथममनुपपन्नं * संवित्स्वभावत्वादिप्रसङ्गात् * प्रामाण्याप्रामाण्ये अन्यत्र विद्येतेचेत् तत्सम्बन्धात् ज्ञाने तथात्वं तत्सम्बन्धाभावेऽनुभयत्वं च युक्तम्, अनुष्णाशीतवत्। अन्यत्र तयोरविद्यमानत्वात् * परतस्त्वमनुपप-न्नम्, * प्रामाण्यबुभुत्सापरम्परयाऽनवस्थाप्रसङ्गाच्च। द्वयोरपि स्वतस्त्वमनुपपन्नं, विरुद्धधर्मत्वेन व्याघातात्। नच व्यक्तिभेदाद(विरो)बा)धः इयं प्रामाण्याश्रयव्यक्तिः इयंनेति नियमकाभावात् अप्रामाण्यस्यैव स्वतस्त्वमनुपपन्नं प्रामाण्य-स्यैव भूयस्त्वात् अन्यस्याभूयस्त्वाच्च भूयसां स्वतस्त्वमल्पीयसामौपाधिकत्वं चहि युक्तम्। घटपटादिज्ञानेषु शुक्तिरजता-दिज्ञानानामिदमंशेष्वपि प्रामाण्यदर्शनात् तस्य भूयस्त्वं अतः स्वतः प्रामाण्यं परतोऽप्रामाण्यमिति॥

क्वचिदात्मस्थतयाऽभिव्यञ्जनमभ्युपेत्य व्यभिचार उक्तः अथ क्वचिदपि तन्नास्तीत्याह-**नचेति**। तर्हि मुखदर्श-नाय दर्पणादिकं नोपादीयेतेत्यत्राह-**अपित्विति**। प्रतिफलनस्य दोषत्वमन्यथाज्ञानहेतुत्वादित्याह-**तद्दोषेति**। कस्त-त्राभिव्यञ्जकइत्याह-**अभिव्यञ्जकस्त्विति**। अहङ्कारस्य मूर्तस्वच्छस्थूलद्रव्यत्वाभावात्संविदो ज्ञेयत्वाभावादचाक्षुषत्वाच्चा-

## गूढार्थसङ्ग्रहः

**ज्ञानविषयत्वाभावेनेति**। विवरणकारमते शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वाङ्गीकारेऽपि वृत्तौ ज्ञानत्वानङ्गीका-रादिति भावः। **स्वतःप्रामाण्यन्यायसिद्धमिति**। स्वतः प्रामाण्यविचारः वादिहंसाम्बुवाहाचार्यविरचिते न्यायकुलिशे

## श्रीभाष्यम्

**नचेह तथाऽहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं सम्भवति व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः नतु व्यक्ति यञ्ज्यत्वात् । अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा**

## श्रुतप्रकाशिका

ऽहङ्कारेण संविद्यविषयभूतायां तद्ग्राहकवस्तुप्रतिफलनदोषो न सम्भवतीत्याह—**नचेहेति** । व्यक्तौ जातिप्रतीतिर्नियतधर्मधर्मिभावान्नतु व्यङ्ग्यत्वादित्याह—**व्यक्तेरिति** । एतद्दर्पणव्यक्तिनिर्वाहद्वयं हृदि निधाय पूर्वं प्रतिबन्धनिरसनरूपानुग्रहो दूषितः । * धर्मधर्मिभावे वस्तुतस्तात्स्थ्येनोपलब्धिर्व्यक्तौ, दर्पणेतु प्रतिफलनरूपदोषात् ॥

एवं परपक्षे न सम्भवतीत्याह—**अतइति** । वस्तुतः कारणं धर्मधर्मिभावः दोषस्तु तात्स्थ्येनोपलब्धिकारणं * मूर्तस्वच्छस्थूलद्रव्यत्वम् । उभयमप्यहङ्कारे नास्तीत्यर्थः । वस्तुतः कारणाभावान्नज्ञातृत्वं विद्यते दोषरूपकारणाभावान्नोपलभ्यते

## गूढार्थसंग्रहः

द्रष्टव्यः । **व्यक्तेस्तु जातिराकार इति** । एतेन विवरणे व्यक्तेर्जातिव्यञ्जकत्वमभिधाय अभिव्यक्तिपदार्थः आवरणाभिभव इति अभिधानं न घटत इति बोधितम् । एतदनुगत्यर्थमेव पूर्वं **तदनुभवसाधनानुग्रहः** इत्युक्तम् ॥ वस्तुत इति साङ्ख्यमताभिप्रायेण अन्तःकरणपरिणाम एव ज्ञानम् । 'कामस्सङ्कल्पः' इत्यादिश्रुतिभिरिति सिद्धान्तो न घटत इति भावप्रकाशे निरूपितम् ॥

**दोषतोवेति** । दोषोऽविद्यारूपः प्राक् (४४७.पु) उदाहृतभाष्यादौ प्रदर्शितः । तत्र ब्रह्मज्ञानमनर्थनिबर्हणमित्यादिना योऽर्थ उक्तः स न घटत इति 'निरस्ताखिलदुःखोऽहम्' इत्यादौ निरूपितम् । एवं तत्रोपात्तं 'तद्गुणसारत्वात्' इति सूत्रं नाध्यासपरमिति प्राक् (४७१.पु) उदाहृतम् । 'अहं मनुष्य' इत्यादिज्ञानं नात्मनि शरीरादिस्वामित्वविषयम् । इति (२१४.पु) न्यायरत्नावल्युक्तिः (४४६.पु) अहं मनुष्य इति ज्ञानद्वैविध्योपपादनेन निरवकाशा इत्युक्तम् । अध्यासाभावे व्यवहारादर्शनात् व्यवहारसामान्यं दर्शिताध्यासोपपादनमन्तरेणानुपपन्नमिति (२१२.पु) विवरणोक्तिः **निरस्ताखिलदुःखोहमिति** भाष्यएव निरवकाशा इति बोधितम् ॥ असङ्गश्रुतिः न परसम्मतार्थं बोधयतीत्यपि निरूपितम् । व्यापारवद्बुद्ध्यादितादात्म्याध्यासमन्तरा व्यापारवत्त्वेन प्रमाणं नैव बोधयतीति भामत्याद्युक्तिः(२११.पु) छेत्तृदृष्टान्तेन प्रमातृत्वोपपादनपर ('नाभावउपलब्धेः') सूत्रभामत्यादिपर्यालोचनया अणोर्जीवस्य दीपप्रभादिदृष्टान्तेन प्रमारूपव्यापारवत्त्वं सम्भवतीत्युपपादनेन न घटत इति निरूपितम् । परसम्मताविद्यायास्स्वरूपमविद्यया आवरणादिकं च न घटत इति विस्तरेण भाष्य एव निरूपयिष्यते । अतोऽन्तकरणभूताहङ्कारस्थतया दोषेण संविदुपलब्धिःपरमते न घटते । एवं च (अस्मन्मतेतु) कथंचित्सम्भवं प्रदर्शयिष्यामीति विवरणोक्तार्थो न घटत इति सिद्धम् ॥

'यदि सत्यं भवेद्विश्वं सुषुप्तावुपलभ्यताम् । यन्नोपलभ्यते किंचित् अतोऽसत्स्वप्नवन्मृषा ॥' (२३५) इति विवेकचूडामणौ (शं) उक्त्या मिथ्याभूतप्रपञ्चविषयकव्यवहारसामान्यमध्यासमूलकमिति सिद्धम् । 'जाग्रत्स्वप्नकालौ अहंममाध्यासपुरस्सरप्रमातृत्वादिव्यवहारवन्तौ' इत्यादिप्राक् (४१२.पु) उदाहृतविवरणोक्तानुमानेन व्यवहारसामान्यस्याध्यासमूलकत्वं सिद्ध्यति । एवमहमर्थस्यात्मत्वे 'स्वरूपतोऽहमिति सुषुप्तेऽप्यवभासेत । भवत्येवेतिचेन्न ; तथासति स्मर्येतह्य-

श्रीभाष्यम्

**न किंचिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वा। तस्मात्स्वत एव ज्ञातृतया सिद्ध्यन्नहमर्थ एव प्रत्यगात्मा न ज्ञप्तिमात्रम्। अहम्भावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम्।**

श्रुतप्रकाशिका

चेत्यभिप्रायेणाह—**नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वेति**। ज्ञातुरात्मत्वं निगमयति। **तस्मादिति**। ज्ञप्तेरात्मत्वमयुक्तम्। अहंत्वाभावे प्रत्यक्त्वायोगादित्याह—**अहम्भाव विगमइति**। अहमिति व्यवहारानुगुणभासनविरहे स्वस्मै भासमानत्वं न स्यात्। * अतः प्रत्यक्त्वमप्यहमर्थस्यैवात्मत्वसाधकमित्यर्थः॥

**अथ** सुषुप्तावहमर्थस्फुरणमस्तीति साधयितुं वेदान्तावलम्बिभिस्सर्वैस्स्वयंज्योतिष्ट्वश्रुत्यनुसारात्सुषुप्तावात्मस्फुरणमभ्युपेत्यम्। तत्र **'नाहखल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मि'** इति श्रुत्या मामप्यहं न ज्ञातवानिति परामर्शाच्च, नाहमर्थानुभवः अतोऽनुभूतिस्फुरणमेव तदानीमिति शङ्कायामहमर्थस्याविशदस्फुरणमस्तीति सोपपत्तिकं

गूढार्थसंग्रहः

ह्यस्तनइवाहङ्कारः। अविनाशिनस्संस्काराभावान्नस्मर्यत इतिचेत् ह्यस्तनोऽपि न स्मर्येत। ननु अस्त्येव सुषुप्तेऽहमनुभवः सुखमहमस्वाप्समिति; सुषुप्तोत्थितस्य स्वापसुखानुभवपरामर्शनात्, नात्मनोऽन्यस्य तत्रानुभवस्सम्भवति, सत्यमस्ति; न तत् स्वापे सुखानुभवसंस्कारजं स्मरणम्, किं तर्हि सुखावमर्शो दुःखाभावनिमित्तः कथम्? स्वप्ने तावदस्त्येव दुःखानुभवः सुषुप्तेतु तदभावात् सुखव्यपदेशः तदभावश्च करणव्यापारोपरमात्। यदि पुनः सुप्तः सुखमिति च तद्विषयं स्मरणं स्यात्, तदा विशेषतः स्मर्येत, नच तदास्ति व्यपदेशोऽपि सुखं सुप्तः न किंचिन्मया चेतितमितिहि दृश्यते। यत्पुनः सुप्तोत्थितस्याङ्गलाघवेन्द्रियप्रसादादिना सुखानुभवोन्नयनमिति, तदसत् अनुभूतंचेत्सुखं स्मर्येत, न तत्र लिङ्गेन प्रयोजनम्। यद्येवं सुप्तोत्थितस्य कथं कस्यचिदङ्गलाघवं कस्यचिन्नेति? उच्यते— जागरणे कार्यकरणानिश्राम्यन्ति; तदपनुत्त्यै व्यापारोपरमः स्वापः। तत्र यदि सम्यग्व्यापारोपरमः तदाऽङ्गानि लघूनि, इतरथा गुरूणि' इति पञ्चपादिकायामुक्तम्॥

अत्र विवरणम्—ननु दुःखाभावो विद्यमानोऽपि नानुभवितुं शक्यते; प्रतियोगिस्मरणाभावात्, सम्भवति च मुख्य एव स्वरूपानन्दानुभवः। ननु तदपि सुखमविद्याऽऽवृतं न प्रकाशमर्हति; न अनावृतसाक्षिचैतन्यसुखांशस्य प्रकाशोपपत्तेः। जागरणे तर्हि किमिति नावभासते? भासत एव परमप्रेमास्पदत्वलक्षणं सुखम्, तीव्रवायुविक्षिप्तप्रदीपप्रभावन्मिथ्याज्ञानविक्षिप्ततया न स्पष्टमवभासते, सुषुप्तौतु तदभावादधिकं व्यज्यत इति। ननु उत्थितस्य दुःखाभावपरामर्शो विद्यते, स कथं प्रतियोगिज्ञानाभावादननुभूतःपरामृश्यते? उच्यते–अनुभूतमेव सुखमुत्थितस्यानुस्मर्यमाणं तत्र विरोधि दुःखाभावमर्थापत्त्या गमयति–अनुभूतंचेत्सुखं नास्ति दुःखमिति अतो दुःखाभावो नानुस्मर्यते, किंतु प्रतीयत इति। एवमुत्थितस्य ज्ञानाभावपरामर्शोऽपि ज्ञानविरोधिनोऽज्ञानस्याननुभूततया स्मर्यमाणस्यानुपपत्त्यैव प्रमीयते नानुस्मर्यते' इति, 'तस्मात् विशिष्टाज्ञानसुखानुभवानुपपत्तिगम्यौ ज्ञानाभाव दुःखाभावाविति मन्तव्यम्। ननु अज्ञान सुखानुभवयोः साक्षिचैतन्यस्यचाविनाशिनः संस्काराभावे कथमुत्थितस्य त्रयाणामनुस्मरणं स्यात्? उच्यते–अज्ञानगत चैतन्याभासजन्योपाधित्वादज्ञान सुख साक्षिविकल्पानुभवस्य अज्ञानावस्थाभेदेन चैतन्याभासानां भिन्नत्वात् तद्विनाश

### श्रीभाष्यम्

**तमोगुणाभिभवात्परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽप्याप्रबोधाद्हमित्येकाकारेणात्मनस्स्फुरणात्सुषुप्तावपि नाहम्भावविगमः। भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम्। नहि सुप्तोत्थितः कश्चिदहंभाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठत इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति। एवं हि**

### श्रुतप्रकाशिका

प्रतिजानीते। **तमइत्यादिना**। चस्त्वर्थश्शङ्कानिवृत्तौ। तमोगुणाभिभवहेतुकात् परागर्थानुभवाभावात् स्फुटावभसाभावः। विविक्तप्रतिभासः व्यावृत्तप्रतिभासः, अनेकविशेषणविशिष्टावभासः स्फुटावभासः। व्यावर्तकब्राह्मणत्वादिबाह्यधर्मविशिष्टत्वेन बुद्धिसुखाद्यान्तरधर्मविशिष्टत्वेन च प्रतिभासाभावात् सकलेतरव्यावृत्ततया स्फुटतया च प्रतिभासाभावः। केनाकारेण स्फुरतीत्यत्राह—**अहमित्येकाकारेण स्फुरणादिति**। अहमिति न शब्दानुकारः, अपित्वेतद्वाच्यार्थानुकारः प्रत्यक्त्वाकारेण स्फुरणादित्यर्थः। एकशब्देनाहम्भावाविगमो विवक्षितः॥

यद्वा एकाकारेण सर्वात्मसाधारणाकारेणेत्यर्थः। प्रत्यक्त्वादिकोहि सर्वात्मसाधारणः सुखदुःखादयो देवत्वादयश्च नहि सर्वात्मसाधारणाः। सुषुप्तौ भासमानआत्मन्यहम्भावस्साध्यः। तथा स्फुरणं हेतुः * विशदावभासाभावादहमर्थस्फुरणं नास्तीत्यत्राह—**भवदभिमताया अनुभूतेरपीति**। न केवलमहमर्थस्फुरणएव अवैशद्यदोषः। अनुभूतिस्फुरणेऽपि स तुल्यस्त्वया वाच्यः। अतो विशदावभासाभावान्नास्तित्वंचेत् ज्ञप्तयात्मनोऽपि तदानीं स्फुरणं न स्यात्। ज्ञातृज्ञेयोपश्लेषविरहात् स्फुटानवभासइतिहि तदभ्युपगमइत्यभिप्रायः॥

मृषावादिभिर्वाचन्तरैरपि * जागरितावस्थायामेव अविशदावभासो निर्विकल्पकेऽङ्गीकृतः ते यदि विशदावभासाभावादहमर्थास्फुरणं ब्रूयुः। तत्रापि निर्विकल्पके पृथक्पृथग्वस्तुमात्रावभासाभ्युपगमो नोपपद्यते। अविशदवस्तुमात्रावभासः परैरप्रामाणिको निर्विकल्पके स्वीकृतः। अत्रतु '**अत्रायंपुरुषस्स्वयंज्योतिर्भवति**' इत्यादिश्रुत्यनुसारादविशदावभासः प्रामाणिकस्स्वीकृत इति भिदा। अतस्सुषुप्तावात्मस्फुरणाभ्युपगमे अविशदावभासाभ्युपगमे च तुल्येऽपि मृषावादिमतादपि स्वपक्षे प्रमाणानुगुण्यं विवक्षुः परपक्षे प्रमाणाननुगुणत्वं दर्शयति। **नहीति**। अहम्भाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञातृज्ञेयादिसमस्तविशेषरहितेत्यर्थः। * प्रत्यक्त्वसिद्ध्यर्थं ज्ञप्तिरहमित्यत्राहंशब्दोपादानम्॥

स्वपक्षे परामर्शानुगुण्यमाह—**एवंहीति**। अयं परामर्शः सुषुप्तिकाले सुखरूपतयाऽनुभूतात्मगोचरः। अतीतकालसम्बन्धस्वापौतु पूर्वकालानुभूतार्थप्रत्यभिज्ञानयोग्यानुपलब्धिभ्यामनुमेयौ स्वतोऽनुकूलतयाऽवभासमानस्य अहमर्थस्यानुमानिककालस्वापवैशिष्ट्यगोचर * प्रत्यभिज्ञाविशेषोऽयं परामर्शः सुखमहमस्वाप्समिति। एवं स्वपरमतयोः परामर्शानु-

### गूढार्थसंग्रहः

संस्कारजस्मरणमज्ञानसुखसाक्षिचैतन्याकारमज्ञानविशिष्टात्माश्रयमेव सम्भाव्यते, नान्तःकरणाश्रयमिति। सर्वथाऽपि सुषुप्तेऽज्ञानसुखानुभवसम्भवात् असम्बद्धमिदं टीकाकारेणोक्तमिति, सत्यम्; परमतमाश्रित्येदमुक्तम्, न स्वमतमिति नदोषः' इति च। 'आत्मनश्चेदहंधर्मो यायान्मुक्तिसुषुप्तयोः। यतो नान्वेति तेनायमन्यदीयो भवेदयम्॥' इति (२.अ.३२) नैष्कर्म्यसिद्धौ च उक्तम्। अतः अहमर्थस्यानात्मत्वं स्पष्टमुपपादितमिति शङ्कायामाह—**तमोगुणाभिभवादिति**॥

श्रीभाष्यम्

**सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति। अनेनैव प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनस्सुखित्वं ज्ञातृत्वं च ज्ञायते।**

श्रुतप्रकाशिका

गुण्यतदभावरूपवैषम्यमुक्तम्। श्रुतिस्वारस्यंचास्मन्मते **'अत्रायंपुरुषस्स्वयंज्योतिः'** इति पुरुषशब्दश्रवणात्। पुरुष शब्दो न संविन्मात्रपरः **'एषहि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः'** इति ज्ञातुरेव पुरुषत्वश्रवणात्, लोके ज्ञातरि पुरुषशब्दप्रसिद्धेश्च। प्रत्यक्त्वसिद्धिश्चास्मन्मतएवेति वक्ष्यते॥

उक्तपरामर्शफलितमर्थमाह–**अनेनेति।** **सुखमहमस्वाप्समिति** परामर्शे सुखमित्यनेन तदानीमनुकूलतया भास (न(मानत्व)मनुसंहितं भवति। अहमित्यनेन स्वस्मै भासमानत्वरूपप्रत्यक्त्वंचानुसंहितं भवति यथा मन्दमगच्छं मधुरमगायमिति परामर्शेन पूर्वं गमनगानाभ्यां सह तदानीन्तनं मान्द्यं माधुर्यंचानुसंहितं भवति तद्वदित्यर्थः। **स्वस्मै** स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण सुखित्वमित्युक्तम्। स्वस्मै भासत इति भासनप्रतिसंम्बन्धित्वरूपप्रत्यक्त्वाभिप्रायेण ज्ञातृत्वामित्युक्तम्, नतु धर्मभूतज्ञानस्फुरणात् 'तत्तु विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव न सर्वेषां सर्वदा तथैवेति' भाष्यस्वारस्यविरुद्धम् **'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्'** इति सूत्रस्वारस्यविरुद्धं च अस्मरणानियमाद्यनुपपत्तिविरुद्धं च, संसारदशायां मनोव्यापारविरहेऽपि ज्ञानस्यात्मविषयत्वं * तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्य स्वारस्यविरुद्धं च। अन्यथैषां सूत्रभाष्यवचसां सङ्कोचस्स्यात् सच सङ्कोचकाभावादनुपपन्नः। तस्मात्तदानीमात्मा प्रत्यक्त्वेनानुकूलत्वेनानुसंहित इति परामर्शफलितार्थः॥

**सुखमहमस्वाप्समिति** सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथमात्मविशेषणत्वमुच्यत इतिचेत्–नैवम्। क्रियायास्सुखाश्रयत्वायोगेन पुरुषद्वारा क्रियाविशेषणत्वस्य युक्तत्वादिति। आत्मनस्तदानीं * न किंचिदवेदिषमित्यज्ञान साक्षित्वेन स्थितिं वदता * अज्ञानाश्रयभूताऽहमर्थानुभवोऽभ्युपगन्तव्यः। यथा प्रातश्चत्वरे गजो नास्तीति परामर्शे पूर्वं गजाभावाश्रयभूतं चत्वरमनुसंहितं भवति तद्वत्। * अस्वाप्समिति परामर्शेन मन्दमगच्छमित्यत्र गमनवत्स्वापोऽपि तदाऽनुसंहितस्स्यादितिचेन्न ; यथा प्रातश्चत्वरे गजो नास्तीत्यत्र पूर्वं गजाभावाननुसंधानेऽप्येवं परामर्शोपपत्तिः तद्वत्सकलज्ञाननिवृत्तिरूपस्वापस्य तदानीमननुसंहितत्वेऽप्येवं परामर्शोपपत्तेः। तत्रहि प्रातश्चत्वरमेवानुभूतं न गजाभावः प्रतियोगिभूतगजास्मरणात्। पश्चात्तु गजः किं स्थित इति पृष्टेन योग्यार्थाननुस्मरणलिङ्गेन अभावोऽनुमीयते। तद्वत्सकलज्ञाननिवृत्तिरूपस्वापोऽपि योग्याननुस्मरणलिङ्गेनानुमीयते॥

गूढार्थसंग्रहः

**सुखमहमस्वाप्समितीति।** 'न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः। कालाद्यव्यवधानत्वान्नह्यात्मस्थमतीतभाक्॥ न भूतकालस्पृक्प्रत्यङ् नचागामिस्पृगीक्ष्यते। स्वार्थदेशःपरार्थार्थो विकल्पस्तेन स स्मृतः॥ नहि प्रत्यक्ष विज्ञानादतीतत्वं समीक्ष्यते। नचानागततामेये मिथ्याज्ञानमतो भवेत्॥' (बृ.वा.१.४.३००,३०१) इति 'नचेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते। नावेदिषं सुषुप्तेऽहमिति धीःकिंबलाद्भवेत्॥ (१०३) बुद्ध्यादेःप्रविलीनत्वाद्देहादेश्च जडत्वतः। लोष्टादेरिव नैवस्यान्नाज्ञासिषमितीक्षणम्॥ चिदाभासैकमात्रेण तमस्सिद्धिर्नमातृतः। संवित्तन्मोहचिद्बिम्बैः प्रत्यक्षं कर्तृरूपिणः॥' (बृ.वा.३.४.१०४.१०५) इतिचोक्तम्॥

## गूढार्थसंग्रहः

अत्र आनन्दगिरिः ' स्मृतिःपरामर्शः उत्थितस्य नावेदिषमिति परामर्शः स्वापकालीनाज्ञानविषयकादाचित्कानुभवोपनायको नेत्यत्र हेतुमाह—कालादीति । आत्मनो देशकालव्यवधानाभावात्तद्गतज्ञानस्यापि न तत्सम्बन्धस्तथा च नाज्ञासिषमित्यज्ञानं पूर्वकालश्च साक्षिण्यध्यस्तौ तेनैव दृश्येते तन्नात्र संस्कारापेक्षेत्यर्थः ॥ (३००) तर्हि तयोर्विना सम्बन्धं स्थितेरद्वैतहानिर्नेत्याह–स्वार्थेति । सर्वोऽपि जडो रज्ज्वां भुजङ्गवदजडे वर्तते । अतः स शब्दज्ञानानुपाती वस्तुशून्यो वृद्धैरिष्टस्तत्र कुतोऽद्वैतहानिरित्यर्थः ' (३०१) ' कथंसौषुप्तः साक्षी मात्रादिव्यावृत्तोऽनुभूयते न तत्रानुभवो हेत्वभावादिति शङ्कते । नचेदिति । अस्ति तावदुत्थितस्य नावेदिषमिति धीः सा परामर्शत्वात्पूर्वानुभवमाकाङ्क्षत्यतः सौषुप्तनित्यानुभवानुपगमे तदसिद्धेर्मात्रादिव्यावृत्तः साक्षी सौषुप्तःसिद्धइत्याह–नेत्यादिना ।' (१०३.बृ.वा.३.४) ' अतः सौषुप्तनित्यानुभवाभावे परामर्शासिद्धिरिति फलितमाह–नैवेति ॥

अत्र सिद्धान्तबिन्दुः ' सुषुप्तौ जाग्रत्स्वप्नभोग्यपदार्थदर्शनाभावेऽपि साक्ष्याकारं सुखाकारमवस्थाज्ञानाकारं चाविद्याया वृत्तित्रयमभ्युपेयते । अहङ्काराभावाच्च नैका विशिष्टवृत्तिः, सुषुप्त्यभावप्रसङ्गाच्च । अतएव वृत्तिरूपस्योपलम्भस्याभावात् न प्रलयेऽतिव्याप्तिः । तत्र तत्कल्पनाबीजाभावात् । इह च सुखमहमस्वाप्सं न किंचिदवेदिषमिति सुप्तोत्थितस्य परामर्शात् अननुभवे च परामर्शानुपपत्तेः । अन्तःकरणोपरागकालीनानुभवजन्यत्वाभावाच्च न तत्तोल्लेखाभावेऽपि स्मरणत्वानुपपत्तिः स्मरणे तत्तोल्लेखनियमाभावाच्च जाग्रद्दशायामस्वाप्समित्यनुभवानुपपत्तेः लिङ्गाभावेनाश्रयासिद्ध्याचानुमानस्यासम्भवात् । अहङ्कारस्तूत्थानसमयएवानुभूयते, सुषुप्तौ लीनत्वेन तस्याननुभूतत्वात् स्मरणानुपपत्तेः । मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासेन रक्तं मुखमिति प्रतीतिवत्, अहङ्काराश्रयतया साक्षिचैतन्यस्य स्मरणाश्रयत्वात् अहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः, न पुनरहं सुखीतिवदाश्रयतया स्मृतिसंशयविपर्ययाणां साक्षिचैतन्याश्रयत्वानियमादहङ्कारस्य च प्रमाणजन्यज्ञानाश्रयत्वनियमात् प्रमात्वेनैव तत्कार्यतावच्छेदात् अप्रमात्वावच्छेदेन च अविद्याया एव कारणत्वात् ' इति ॥

अत्र न्यायरत्नावली—' त्रयमिति आकारत्रयोपहितरूपभेदसम्भवादित्यभिप्रायम्, समूहालम्बनैकवृत्त्या निर्वाहे वृत्तित्रयकल्पने गौरवात् । ननु मूलाज्ञानाकारवृत्त्याऽपि नावेदिषमिति स्मरणोपपत्तेः अवस्थाज्ञानविषयकवृत्तिः किमित्युक्ता ? उच्यते—न किञ्चिदवेदिषमिति अनेकपदार्थविषयकाज्ञानस्मृतेः मूलाज्ञानेनानुपपत्तेः तस्य चिन्मात्रविषयत्वात् । अतएव आत्मानमीशान्यं मनुष्यं वा नावेदिषम्, आकाशादिकं नावेदिषमिति स्मृतेरुपपत्तिः । इदंतु बोध्यम् मूलाज्ञानाकाराऽप्यविद्यावृत्तिस्सुषुप्ताववश्यं वाच्या ; प्रलयान्यकाले सर्वदैव तत्स्वीकारात् । एतावत्कालं मूढोऽहमासमिति नानाविषयाविशेषितरूपेऽप्यज्ञानस्य जागराद्यकाले तत्त्वज्ञानकाले च स्मरणात् । एवं च मनोऽवच्छिन्नाचितः स्वप्नाधिष्ठानत्वपक्षेऽप्युक्तस्मरणोपपत्तिरिति । नन्वज्ञानविशिष्टसाक्षिविषयिका सुखाभिन्नसाक्षिविषयिका च वृत्तिः कुतो नोक्ता । तत्राह नैकेति । विशिष्टवृत्तिः–अज्ञानादिविशिष्टसाक्षात्कारवृत्तिः । अहङ्काराभावादिति । तथा च संसर्गविषयकवृत्तौ अहङ्कारत्वेन हेतुता साच हेतुतानिमित्ततया कार्यसहभावेनैवेति नाहङ्कारलयोत्पत्तिकालेऽपि विशिष्टविषयकवृत्त्युत्पत्तिः । अहङ्कारत्वं च स्थूलावस्थमनस्त्वम्, अहमाकाराविद्यावृत्तित्वं वा ' इति ॥

' अहङ्काराभावेन कालदेशविशिष्टरूपेणाज्ञानादेरननुभवात्तेन रूपेण न स्मरणम्, किंतु केवलाज्ञानत्वादिविशिष्टरूपेणेति भावः । ननु सौषुप्तानुभवे यद्यज्ञानांशे देशादिवैशिष्ट्यं न भाति अहङ्काररूपकारणाभावात् तर्हि सविषयकत्वाज्ञान

## गूढार्थसंग्रहः

त्वयोरपि वैशिष्ट्यं तत्र न भायात्, इष्टापत्तौ च न किंचिदवेदिषमिति स्मृतौ तदुल्लेखानुपपत्तिः, उक्तवैशिष्ट्यांशे न स्मृतित्वं किन्त्वनुभवत्वमित्यस्याद्वैतासिद्ध्युक्तस्य स्वीकारेऽपि अवस्थाज्ञानकार्यावृत्तिरिति मूलासङ्गतिः स्मृतिकाले स्मर्यमाणस्यावस्थाज्ञानस्योच्छिन्नत्वेन तत्रोक्तवैशिष्ट्यस्य साक्षिणो भानासम्भवादितिचेन्न। यथाऽभावस्य प्रतियोग्यनुयोगिविशिष्टत्वाभावत्वरूपाभ्यामेव, ज्ञानस्य सविषयकत्वज्ञानत्वाभ्यामेव च प्रत्यक्षे भानं तथैवाज्ञानस्य सविषयकत्वाज्ञानत्वाभ्यामेव प्रत्यक्षे भानं, नतु शुद्धाज्ञानस्य तयोरिव तस्यापि निर्विकल्पकावेद्यत्वात्। किंच तदुभयरूपावीशिष्टत्वेनाज्ञानस्मृतिः तादृशीमेव स्वकारणीभूतामविद्यावृत्तिं परिकल्पयति। एवंचाज्ञानत्वादिसंसर्गान्यसंसर्गविषयकवृत्तावेवाहङ्कारस्य हेतुत्वं कल्प्यम्' इति॥

'स्मरणेति। यस्य कालादिविशिष्टरूपेणानुभवस्तस्यैव तद्रूपेण स्मृतिरिति भावः' इति, 'ननु स्मृतिरपि न सम्भवति। अहमस्वाप्समिति स्मर्यमाणाहङ्कारस्य पूर्वमननुभवात् तत्राह—अहङ्कारइत्यादि। अनुभूयते साक्षिणा विषयी क्रियते। ननु तथाऽप्यज्ञानादि स्मृत्याश्रयतयाऽहङ्कारस्य साक्षिभास्यत्वानुपपत्तिः अज्ञानाद्यनुभवानाश्रयत्वात् तत्राह—मुखेत्यादि। रक्तं मुखमिति प्रतीतिवत्। अत्र रक्तं मुखमिति प्रतीतावेकत्र दर्पणे रक्तरूपमुखयोर्भानवत्। यत्र मुखं दर्पणस्थं पूर्वमदृष्ट्वा रक्तरूपस्य दर्पणे आरोपः, तत्र मुखे न रक्तत्वारोपसम्भवः, अधिष्ठानीभूतमुखस्य पूर्वं ज्ञानाभावात्तादृशस्थलं दृष्टान्त इति भावः। आश्रयतयेति। अहङ्कारस्य स्मरणाश्रयतयेत्यर्थः, प्रतीतिरित्यनुषज्यते साक्षिचैतन्यस्याश्रयत्वात्—अविद्योपहितचिदाश्रयत्वात्' इति च॥ अद्वैतसिद्धौ च (अज्ञानप्रत्यक्षोपपत्तौ) 'सुषुप्तिविशिष्टाज्ञानांशे परामर्शत्वं केवलाज्ञानांशेतु तुल्यसामग्रीकत्वात् धारावाहिकत्वमेव। अतएव कार्योपाधिविनाशसंस्कृतमज्ञानमात्रमेव प्रलयोपमं सुषुप्तिरित्यभिप्रेत्य वार्तिककारैः सौषुप्तज्ञानस्मरणमपाकृतम्' इत्युपक्रम्य 'अभावप्रत्ययावलम्बनावृत्तिर्निद्रा' इति योगसूत्रानुसारेण तमोगुणात्मकावरणमात्रावलम्बना काचिद्वृत्तिस्सुषुप्तिरित्यादिना विवरणकाराभिप्रायमभिधाय अविद्यावृत्तेः मतद्वयसिद्धत्वमभिप्रेत्य वार्तिकविवरणयोश्च अविरोध इत्युक्तम्॥

अत्र वार्तिके नचेदनुभवव्याप्तिरित्यादौ नित्यानुभवानङ्गीकारे 'नावेदिषं सुषुप्ते' इति धियः उपपत्तिर्नसम्भवतीत्येतावन्मात्रमुक्तं नाविद्यावृत्तिरुक्ता। अविद्यावृत्त्यनङ्गीकारेऽपि अविद्योपहितचिद्रूपसाक्षिणा अज्ञानभानं सम्भवति। पक्षान्तरेतु 'वक्ष्यन्त्याचार्या एव साक्षीतु सर्वानुगतस्तुरीयः तथा एकः कूटस्थस्साक्षी' इत्यादि, इति बिन्दूपक्रमटीकोक्तपक्षेऽपि साक्षिणा अज्ञानभानं सम्भवति तदुत्तरं तत्रैव 'नचाज्ञानाकारवृत्तिं विना न अज्ञासिषमित्याकारो नोपपद्यत इति वाच्यम्; 'न किंचिदवेदिषम्' इत्यनेन अनेकविषयकाज्ञानस्यैवोल्लेखात्। तन्नाशादेव तदवच्छिन्नचिन्नाशरूपसंस्कारोत्पादेन स्मृतिसम्भवात्' इति बिन्दुटीकायामेव तदुत्तरं वार्तिककारमते अज्ञानाकारा अविद्यावृत्तिर्निराकृता। पञ्चपादिकाकृतामपि नाविद्यावृत्तिस्सम्मता। सुखमित्यस्य दुःखाभावपरत्वोक्त्या सुखाकारवृत्तिर्नाङ्गीकृता इति स्पष्टम्। एवं च विवरणकारैः तदनुयायिभिश्च सुषुप्तावविद्यावृत्त्यङ्गीकारः न घटते। अहङ्कारं प्रस्तुत्य 'समुत्खातनिखिलपरिणामायामविद्यायाम्' इति पञ्चपादिकोक्त्या 'सुषुप्तिकाले सकले विलीने' इति लघुचन्द्रिकोदाहृतकैवल्यश्रुति विरोधेन च अविद्यावृत्त्यङ्गीकारोऽनुचितः॥

तदनन्तरं 'तमोऽभिभूतस्सुखरूपमेति' इति श्रुतिवाक्ये 'तमोऽभिभूत' इत्यत्र अविद्यावृत्तिर्नविवक्षिता। तद्वाचिपदाभावात् 'सत्त्वं रजस्तमइति गुणाः' इत्युपक्रम्य गीतायां तेषां गुणानामभिभावकत्वोक्त्या तमोगुणेन सत्त्वगुणाभिभव एव विवक्षितः। तमोगुणोद्रेकेसति सत्त्वगुणपरिणामरूपा सुषुप्तिरूपा वृत्तिः 'सत्त्वात्संजायते ज्ञानम्' इति स्मृतेः

## गूढार्थसंग्रहः

इति लघुचन्द्रिकोक्तिस्तु नादरणीया। परमते अविद्यावृत्तौ ज्ञानत्वानङ्गीकारात्। श्रुतौ 'तमोऽभिभूतः' इत्येतावन्मात्रोक्तेः 'सुखरूपमेति' इत्यत्र अहमर्थनित्यसुखस्यैव विवक्षितत्वेन तस्य स्वप्रकाशतया वृत्त्यपेक्षाविरहाच्च। 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति योगसूत्रानुसरणे च योगसूत्रे चित्तवृत्तेरेवोक्त्या अविद्यावृत्तिर्नसिद्ध्यति ॥

किंच तत्सूत्रभाष्ये 'साच संप्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः कथम्? सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशदीकरोति, दुःखमहमस्वाप्सं स्त्यानं मे मनो भ्रमत्यनवस्थितम्, गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठति इति वृत्तित्रयोक्त्या वृत्तित्रयाङ्गीकारे स्वरूपसुखविषयकाविद्यावृत्तिकल्पनमेव न सम्भवति। दुःखप्रतिकोटिभूतसुखस्य अन्तःकरणपरिणामत्वात् ॥

सिद्धान्तबिन्दौ 'दुःखमहमस्वाप्सम्' इति कस्यचित्कदाचित्परामर्शात् सुषुप्तौ दुःखानुभवोऽप्यस्तु। न तदानीं दुःखसामग्रीविरहेण तदभावात्। सुखस्यचात्मस्वरूपत्वेन नित्यत्वात् शय्यादेरसमीचीनत्वेन च दुःखमित्युपचारात् दुःखमहमस्वाप्समिति प्रत्ययोपपत्तिः। अथवा अवस्थात्रयस्यापि त्रैविध्याङ्गीकारात् सुषुप्तावपि दुःखमुपपद्यते। तथाहि— प्रमाज्ञानं जाग्रत् जाग्रत् शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिः। एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत् स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः जाग्रद्दशायां कथयितुं न शक्यते स्वप्नावस्थायां च यत्किंचिदनुभूयते, तत्स्वप्नसुषुप्तिः। एवं सुषुप्त्यवस्थायामपि सात्त्विकी या सुखाकारा वृत्तिः सा सुषुप्तिजाग्रत्, तदनन्तरं सुखमहमस्वाप्समिति परामर्शः। तत्रैव या राजसी वृत्तिः सा सुषुप्तिस्वप्नः तदनन्तरमेव दुःखमहमस्वाप्समिति परामर्शोपपत्तिः। तत्रैव या तामसी वृत्तिः सा सुषुप्तिसुषुप्तिः। तदनन्तरं गाढं मूढोऽहमस्वाप्समिति परामर्शः' इत्यत्र अथवेत्यादिपक्षे दुःखमहमस्वाप्समिति प्रतीतिसमशीलायां सुखमहमस्वाप्समिति प्रतीतौ सुखमन्तःकरणपरिणामरूपमेवेषितव्यम्। एवं च योगभाष्योक्तपक्षपर्यालोचने योगसूत्रोक्तदिशा सुषुप्तावन्तःकरणवृत्तिरेवाङ्गीकरणीया नाविद्यावृत्तिः। एवमङ्गीकारएव 'जाग्रत्स्वप्नस्सुषुप्तं च गुणतो बुद्धिवृत्तयः' (श्रीभागवतं. ११स्क) इति भागवतवचनमपि सङ्गच्छते। 'सुखरूपमेति' इत्यत्र सुखत्वं विवक्षितम् एतत्तात्पर्येणैव **तमोगुणाभिभवात् परागर्थानुभवाभावाच्च** इत्यादि **सुखत्वं ज्ञायते** इति च भाष्यसूक्तिः ॥

अज्ञानस्य सविषयकत्वाज्ञानत्वाभ्यामेव प्रत्यक्षे भानम्। स्मृतिरपि तदुभयविषयिणीति तादृशीमेव मूलकारणीभूतामविद्यावृत्तिं कल्पयतीति हेतुद्वयेनाज्ञानांशे निर्विकल्पकवृत्तिर्निराकृता ब्रह्मानन्दसरस्वतीभिः। (सि.बि.टीका) एषैव रीतिस्सुखत्वांशेऽपि, सुखस्यापि प्रत्यक्षे सुखत्वेन भानस्यानुभवसिद्धत्वात्। स्मृतिरपि तादृश्येवेति सौषुप्तज्ञानमपि सुखत्व विषयकमेषितव्यम्। अहङ्काराभावाच्च नैका विशिष्टवृत्तिरित्यर्थोऽपि अज्ञानांशे विशिष्टवृत्तेरभ्युपगमात् अज्ञानत्वादि संसर्गान्यसंसर्गविषयकवृत्तावेव अहङ्कारस्य हेतुत्वकल्पनस्याप्रामाणिकत्वाच्च न युक्तः। सुषुप्तौ अहङ्काराभावेन विशिष्ट वृत्तिमनभ्युपेत्य 'सुखमहमस्वाप्सम्' इत्यादावहङ्कारः उत्थानसमय एव अनुभूयते इत्यभ्युपगमे निर्विकल्पकानुभवस्य सविकल्पकस्मृतिहेतुत्वं न सम्भवति। 'अहं जानामि, अहमज्ञासिषम्, अहं स्मरामि' इत्यादिप्रतीतीनामविशेषेण अहङ्कारस्यैवाश्रयत्वविषयकत्वेऽनुभवसिद्धे तदपलापोऽनुचितः। अहङ्कारस्य प्रमाणजन्यज्ञानाश्रयत्वं साक्षिचैतन्यस्य स्मृति संशयाद्याश्रयत्वमिति वैषम्यमेव निर्मूलम्। परसम्मतचितएवाप्रामाणिकत्वेन 'कामस्सङ्कल्पो विचिकित्सा' इत्यादि श्रुतौ परसम्मतार्थादरेऽपि विचिकित्सापदार्थसंशयस्य तदन्यज्ञानस्यचाविशेषेण मनः परिणामत्वबोधनेन एवं वैषम्यकल्पनस्य परसम्मतरीत्या असम्भवाच्च। अस्याश्श्रुतेः परसम्मतार्थो न घटत इति भावप्रकाशे द्वितीयतृतीयसंपुटयोर्निरू-

## गूढार्थसङ्ग्रहः

पितम्। अतः प्रतीत्यनुरोधेन प्रमाणजन्यज्ञानवत् स्मरणस्याप्यहमर्थाश्रयत्वमेव। चित्प्रतिबिम्बादिकल्पनस्यैवायुक्ततया रक्तं मुखमिति प्रतीतिवत् अहमस्वाप्समिति प्रतीतिरपि ततएवासिद्धा॥

अहङ्कारविषये सुषुप्तावनुभवाङ्गीकारे स्मरणं प्रसञ्जयतां पञ्चपादिकाकृताम् अस्मरणनियमेनानुभवाभावः सम्मतः प्रतीयते। दुःखाभावोऽप्यनुमानगम्य एव तन्मते। सुषुप्तौ ज्ञानाभावोऽप्यनुमानेनैव सिद्ध्यति। स्मृतियोग्यस्य अस्मण नियमोऽनुभवाभावमेव साधयतीति प्रागेव भाष्ये उक्तम्। सुषुप्तिकालाननुभवेन 'न भूतकालस्पृक् प्रत्यक्' इति वार्तिकोक्त्या अतीतकालस्य स्मरणासम्भवे तद्विशिष्टसुषुप्तेरपि सुषुप्तिकाले भानमप्रामाणिकमेवेति सुषुप्त्यंशेऽपि न स्मृतिः। 'मूढोऽहं, न किंचिदहमज्ञासिषम्' इत्यादौ ज्ञानसामान्याभाव एव विषयः। ज्ञानसामान्याभावश्चास्मरणलिङ्गकानुमानेन सिद्ध्यतीत्यादिकमविद्यावादे भाष्य एव निरूपयिष्यते॥

आत्मसिद्धौ 'यद्युच्येत मूर्छादावात्मानुभवाभ्युपगमे अर्थान्तरानुभव इव एवमहमन्वभूवमिति परस्तात्स्मृतिः प्रसज्यत इति? तन्न अवृत्तित्वात्। 'नहि मूर्छा प्रस्वापो वा बुद्धिवृत्तिविशेषः दर्शनस्पर्शनादिवत् येन स्मृतिबीजं संस्कारमादधीयाताम्। किंतु उद्भूतेन तमसोपरतव्यापारेषु करणेषु निर्वृत्तिक सांसिद्धिकबोधस्वरूपेणावस्थानमात्रमात्मनः। नच बोधस्वभावत्वादेवास्य संस्काराधायकत्वम्; अनवरतोपचीयमानसंस्कारतयाऽनिर्मोक्षप्रसङ्गात्। अनुभवे च स्वानुरूपसंस्काराधाननिरुद्धे सदृशसम्बन्धिदर्शनादि समुद्बोधितनिजबीजानुसारेण स्मरणमुपजायते। नचेहात्मस्वरूपबोधस्य जातुचिन्निरोधः जन्म वा, नित्यात्मसत्ताप्रयुक्तत्वात्। तदेवमनुवर्तमानएवानुभवे कथं स्मृतिरुदयमासादयेत्? यएवाहं पूर्वेद्युरासम् सएवाहमद्यापीति स्मृतिसंभिन्नप्रत्ययोऽपि कालावच्छिन्नस्वरूपगोचरः न स्वरूपमात्रे। अविशदश्च स्वापादौ स्वानुभवः, निर्विकल्पकश्च पटीयसा सविकल्पकेनावगमेन स्मृतिबीजमाधीयत इति कुतस्तत्प्रसङ्गः।' इत्याद्युक्तिः 'न सुषुप्तिगविज्ञानम्' इत्यादि वार्तिकक्रममनुसृत्य। अत्र निर्विकल्पकत्वं न धर्मसामान्याप्रकारकत्वम्, किंतु कदाचिद्भासमानधर्माप्रकारकत्वम्, अहंत्वादेः सर्वदा भानेन निर्विकल्पकत्वम्। सविकल्पकत्वमपि कदाचित् भासमानधर्मप्रकारकत्वम्। एतत्पक्षे॥

कथं तर्हि परामर्षे सूत्रम् 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति निरोधपरत्वात् प्रकरणस्य न वृत्तिस्वरूपे तात्पर्यं विपर्ययवत्, नहि अतस्तद्रूपप्रतिष्ठं मिथ्याज्ञानं किंचिदस्ति। सर्वसंविदामर्थाव्यभिचारात्। सचाधिकरण (न्यायतत्त्वाधिकरण)सिद्धः, साधयिष्यतेचैतदुपरिष्टात्। कैवल्यभागाच्चित्तप्रत्यनीकतया निद्रादेर्निरोध्यत्वेनोपदेशः' इत्यभिधाय 'अस्तु वा पूर्वोक्तप्रमाणादिवृत्त्यभावकारणीभूततमोगुणालम्बना वृत्तिरेव निद्रा। सन्तु च प्रबुद्धप्रत्यवमर्शाश्च स्मरणानि। तथासत्यनवरतानुवृत्तबोधतया स्थितमेव पुंसो बोधस्वभावत्वम्। आह—बोधकारणानुवृत्त्याऽपि बोधानुवृत्तिरुपपद्यत इति। कथं तथा स्वाभाव्यनिश्चयः? इत्थम् 'यतस्सतस्स्वतोबोधादृते पुंसो यथोदितम्। तमः स्वापादिकालीनं न सिद्ध्येद्धेत्वसिद्धितः॥' उपरतानिहि प्रस्वापकाले सर्वाण्येवेन्द्रियाणि सह मनसा संस्कारस्य च न स्मृतेरन्यत्र सामर्थ्यम्॥

नच स्वप्रकाशं तमः; अर्थान्तरवर्तिनोऽप्यनिशं प्रकाशप्रसङ्गात्। वलृप्तश्च सर्वार्थसाधनतया बोध इति तेनैव करणविरहिणा सता स्वभावभूतेनोद्भूतवृत्तेस्तमसोऽन्यस्य वाऽऽत्मवर्तिनो गुणस्य स्फुरणमिति बलादभ्युपगमनीयम्, नित्यप्रकाशश्चात्मा प्रमातृत्वात्। अप्रमातृत्वव्यापकव्द्धह्यनित्यप्रकाशत्वं व्यापकविरुद्धप्रमातृत्वभागिन्यात्मनि नात्मानं लभते स्वतःसिद्धप्रकाशत्वमप्यस्य ज्ञातृभावः अज्ञातृत्वेनहि व्याप्ता परायत्तप्रकाशता' इत्युक्तम्। अत्र प्रथमपक्ष एव सिद्धान्त सिद्धः योगसूत्रस्वारस्यानुरोधेन वृत्त्यङ्गीकारेण स्मरणोपपादने धर्मभूतज्ञानेनैव तदुपपत्तिस्सम्भवति। 'नचेदनुभवव्याप्तिः'

## गूढार्थसङ्ग्रहः

इत्यादिवार्तिकोक्तपरसम्मतानुभवः नैव सिद्ध्यति । तथाऽङ्गीकारे अहमस्वाप्समिति प्रतीतेः अहमर्थविषयकत्वस्य प्रागुक्तरीत्या स्वरसत उपपादनासम्भवात् । एतत्पक्षेतु सुखित्वं ज्ञातृत्वं च ज्ञायतएव इति वाक्यं यथाऽवस्थितार्थकं सम्भवतीति बोध्यम् ॥

निद्रायाः अवृत्तित्वमिति सिद्धान्ते योगभाष्योक्तप्रत्ययानामुपपत्तिस्तत्रैवेत्थं प्रदर्शिता । कथं पुनर्निद्राया अवृत्तित्वे प्रबुद्धस्य प्रत्यवमर्शाः सुखमहमस्वाप्समित्याद्याः, नह्यननुभूतगोचराः स्मृतयः सम्भवन्ति, सत्त्वसचिवसमुल्लसित तमोगुणानुभवभावितभावनायोनिः खलु सुखमहमस्वाप्सं प्रसन्नं मे मनः लघूनि मे गात्राणीति प्रत्यवमर्शः, रजस्तमस्समुद्रेकेतु दुःखमहमस्वाप्सं भ्रमत्यनवस्थितं मे चित्तमिति सत्त्वरजसीत्वभिभूय नितान्तमुद्भूते तमसि गाढं मूढं सुप्तोऽस्मि गुरूणि मे गात्राणि मुषितमिव मनोमीलितमिवेति ? सत्यमेवं, दत्तोत्तरंह्येतत् । नैवामी वासनायोनयः प्रत्ययाः, अपितु तात्कालिकशरीरेन्द्रियमनोऽवस्थाविशेषपर्यालोचननिमित्ता आनुमानिका इति, एवंरूपाहीमे यतः प्रसन्नं मे मनः सम्यगाहारपरिणामवशाल्लघूनिचाङ्गानि अतः सुखमहमस्वाप्समिति । स्वापावस्थायां चेन्द्रियोपरमतारतम्यवशादविशदतात्कालिकतत्तदनुकूलप्रतिकूलविषयानुसन्धाननिबन्धनतयाऽपि स्मरणमुपपद्यत इति न वृत्त्यन्तरत्वं निद्रायाः' इति ॥

अत्र पक्षद्वये प्रथमपक्षः '**नच वाच्यं यथेदानीं सुखंभवति**' इत्यादिना श्रीभाष्य एव दूषयिष्यते । अतः स न सम्मतः । किंतु द्वितीयपक्ष एव, द्वितीयपक्षः (५२९) पञ्चपादिकाकृतामपि सम्मतः । परंतु सुखावमर्शो दुःखाभावनिमित्त इति तत्सिद्धान्तः । नायमर्थो यामुनमुनिसम्मतः स्मरणरूपप्रतीतित्रयोपपादनस्य तत्पक्षे असम्भवात् । नन्वेवमपि स्वापावस्थायां सम्यगिन्द्रियव्यापारसत्वे सुखमहमस्वाप्समिति प्रतीतेः ; निद्राया अवृत्तित्वेन तदा धर्मभूतज्ञानप्रसराविरहात् स्वरूपसुखविषयकत्वेनैव स्मरणमुपपादनीयम् । स्मरणापलापपक्षं प्रथमतः अभिधाय अनन्तरं योगभाष्योक्तस्मरणत्रयोपपादनकरणेन यामुनमुनीनामपि स्मरणं सम्मतमिति अवश्यमेषितव्यम् ॥

ननु सर्वदा नित्यात्मानुभवसत्वेऽपि सुषुप्तिकाले सुखभान एव तदनन्तरं सुखमहमस्वाप्समिति प्रतीतिरुपपत्तिस्सम्भवति, इतिचेत् अत्र केचित् 'अस्वाप्सं सुखमित्यत्र भासते स्वापकालिकम् । स्वरूपसुखमेतच्च स्वयमेव प्रकाशते ॥ व्यवहारेऽपि तस्यैव तदंशे हेतुता मता । अतश्च तत्र संस्कारकल्पनं नोपपद्यते ॥ स्वापतत्कालयोरिष्टमनुमानमनाविलम् । श्रुतप्रकाशिकायां तदनुमानं प्रदर्शितम् ॥ आनुमानिकसंस्कारस्तदंशे जनयत्यपि । सुप्तोत्थितपरामर्शमिति किंचिन्नदुष्यति ॥ इत्थं सतिस्वरूपांशे संस्कारस्य गवेषणम् । न्यायसिद्धाञ्जनव्याख्या कृतामायासकारणम् ॥ '(३०१) इति यतीन्द्रसिद्धान्तलेशसंग्रहे उक्तम् । स्वापस्य ज्ञानाभावरूपस्य योग्याननुस्मरणलिङ्गेन अनुमितिरवश्यमभ्युपेया । तन्नाशेन संस्कारसम्भवेन तदंश एव स्मृतित्वम् । एवं कालांशेऽपि, स्वरूपसुखांशेतु अनुभवत्वमेवेति यामुनमुन्युक्तस्मरणापलापपक्षेऽपि सुखमहमस्वाप्समित्यस्य स्मृतित्वमुपपद्यते । जागरे स्वरूपसुखभानेऽपि प्रतिकूलोदासीनविषयभानकालिकतया सुषुप्तौ तादृशविषयाभानेन सुखमहमस्वाप्समिति प्रतीतिव्यवहारयोरुपपत्तिः । 'अहंभावस्य संस्कारमनुत्पादयतोऽपि नः । त्वदुक्तधीभाननयात्स्यात्परामर्शहेतुता ॥' इति तत्त्वटीकोक्तिरपि एतदभिप्रायैवेति वदन्ति ॥

वस्तुतस्तु 'मन्दमागाम्, मधुरमगायम्' इति प्रतीतिसमशीलतया सुखमहमस्वाप्समित्यस्याः, भूतकालिकसुखभानं प्रतीतिस्वारस्यसिद्धं नापह्नवमर्हतीति श्रुतप्रकाशिकान्यायसिद्धाञ्जनयोर्व्यवस्थापितम् । स्वापकालिकसुखविषयकत्वमस्याः प्रतीतेः सुखांशे स्मृतित्वमन्तरा न घटते । सुखमित्यस्य क्रियाविशेषणत्वस्य व्यासार्याचार्यपादयोस्सम्मतत्वात् स्वापांशे संस्कारेण स्मृतित्वाङ्गीकारे तद्विशेषणीभूतसुखांशेऽपि स्मृतित्वं प्रतीतिस्वारस्यसिद्धं कथं प्रत्याख्यायते ॥

## गूढार्थसङ्ग्रहः

उक्तं च स्वप्रकाशवादे न्यायकुलिशे वादिहंसाम्बुवाहार्यैः—'सुप्तोत्थितोहि सुखमहमस्वाप्समिति परामृशति। तेन परामर्शेन सुषुप्तिसमये सुखरूपस्याहमर्थस्यानुभवोऽस्तीति विज्ञायते। ननु नेदं प्रत्यभिज्ञानं स्मरणं वा, किंतु प्रबुद्धस्य तदानीन्तनमनुमानम्। अन्यथा स्वापस्यापि तदानीमनुभवप्रसङ्गादितिचेत्, यद्येवं कथं सुखस्य सतस्तदानीमननुभवः। नहि सुखमननुभूयमानमस्ति भवतामपि। स्वापेतु ज्ञानाभावात्मनि तदानीमनुभवाभावेऽपि पश्चादनुमानमेवाश्रीयताम्। तर्हि तद्विशेषणत्वं तु सुखस्य कथमुपपद्यतामितिचेन्न; अविरोधात्। नह्यनुमीयमानस्य स्मर्यमाणविशिष्टत्वे कश्चिद्विरोधः यथा गन्धाद्याश्रयस्य। अथ वा स्वापोऽपि केवलात्मावस्थानलक्षणस्स्वप्रकाशएवानुभूतः पश्चाद्विकल्प्यताम्। अभावोहि वस्तुस्वरूपात्मना पूर्वमनुभूतः, पश्चात्प्रतियोगिज्ञानानुसारेण भावि(अभाव)तया विकल्प्यत इति किं नोपपद्यते' इति॥

अत्र प्रथमपक्षे 'स्वापांशे अनुमितिः सुखांशे स्मृतिः स्मर्यमाणविशिष्टतया गन्धाश्रयप्रत्यक्षवदियमनुमितिः' इति। द्वितीयपक्षेतु स्वापरूपधर्मिणोऽपि जीवस्वरूपत्वेन अनुभवो वर्ततइति उभयांशेऽपि स्मृतिरित्युक्तं भवति। ज्ञानप्रतियोगिकाभावत्वेनाभावस्य एतत्पक्षेऽप्यनुमितिरेव। प्रथमपक्षे ज्ञानप्रतियोगिकाभावत्वेन सुषुप्तेः एकदैव भानम्। द्वितीयपक्षेतु अभावस्य तद्व्यक्तित्वेन स्मृतौ भानम्। ज्ञानप्रतियोगिकत्वाभावत्वेनतु अनुमिताविति विशेषः। अत्र प्रथमपक्ष एव व्यासार्यैरुक्तः।' 'सुखमहस्वाप्समिति सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथमात्मविशेषणत्वमुच्यत इतिचेत् नैवम्; क्रियायास्सुखाश्रयत्वायोगेन पुरुषद्वारा क्रियाविशेषणत्वस्य युक्तत्वात्' इति सकलज्ञाननिवृत्तिरूपस्वापोऽपि योग्याननुस्मरणलिङ्गेनानुमीयते। बाह्यान्तःकरणजन्यसमस्तज्ञानभावरूपत्वात्स्वापस्तदाऽनुसन्धातुं न शक्यते' इति च श्रुतप्रकाशिकायामुक्तेः। 'मन्दमगच्छम्, मधुरमगायम्' इति दृष्टान्तानुरोधेन सुखमस्वाप्समित्यत्र स्वापकालिकं सुखमेव विषयः इति पूर्वं निर्धारणेन तद्वदत्रापि क्रियाविशेषणत्वमिति व्यासार्यैरुक्तं भवति॥

'तत्प्रत्यनुपूर्वमीपलोमकूलम्' (४.४.२८.पा.सू.) इतिसूत्रे काशिकायाम् 'क्रियाविशेषणमकर्मकाणामपि कर्म भवति' इत्युक्तम्। अत्र पदमञ्जरी—'आख्यातंहि धात्वर्थस्य कर्तव्यतामाचष्टे वर्तते वर्तनं करोति सुप्यते स्वापः क्रियते, शोभनमोदनं पच्यते ओदनकर्मकःपाकः शोभनः क्रियत इति पचिधात्वर्थः कर्तव्य एव सम्बध्यमानः कर्म सम्पद्यते, तस्य यत्समानाधिकरणं विशेषणं तदपि कर्मैव भवति' इति। अत्र भट्टोजीदीक्षितः—'द्वितीयान्तादस्मात् वर्तत इत्यर्थे ठक् स्यात् क्रियाविशेषणत्वात् द्वितीया' (सि.कौ) इत्याह—अत्र नागेशः—'क्रियाविशेषणत्वादिति। अकर्मकधातुस्थलेऽपि फलव्यापारयोर्धात्वर्थत्वेन फलसामानाधिकरण्यात् द्वितीयेति भावः' इति (शब्देन्दुशेखरे) व्याचख्यौ। 'फलसामानाधिकरण्यादिति। अभेदेन फलविशेषणत्वादित्यर्थः' इति भैरवमिश्रटीका। कर्तुरीप्सिततमं कर्म' इति सूत्रेऽपि 'फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम्। अत एव तत्समानाधिकरणे 'स्तोकं पचति' इत्यादौ कर्मत्वसिद्धिः' इति, विक्लृत्तिरूपफलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् तत्त्वम्। अत एव स्तोकं पचतीत्यादौ तत्समानाधिकरणे कर्मत्वम्' इति शब्देन्दुशेखरमञ्जूषयोरुक्तम्। एतत्पर्यालोचनायां क्रियाविशेषणस्य क्रियायामभेदान्वयः स्फुटं प्रतीयते। द्वितीयपक्षे अभेदान्वयस्य सम्भवेऽपि प्रथमपक्षे अभेदान्वयःकथमितिचेत्—प्रथमपक्षेऽपि ज्ञानाभावरूपस्य स्वापस्य वस्तुतस्सुखाभेदसत्त्वान्नानुपपत्तिः। एतदभिप्रायकमेव व्यासार्यवाक्यम्। क्रियायास्सुखाश्रयत्वायोगादित्यत्र धर्मभूतसुखाश्रयत्वमेव न सम्भवतीति विवक्षितम्। पुरुषद्वारेत्यस्य पुरुषस्य सुखरूपत्वेन स्वापकर्तृत्वेन स्वापाश्रयतया प्रतीतस्य अभावरूपस्वापस्याधिकरणात्मत्वेन स्वापाभेदस्सम्भवतीति धर्मिसुखाभिन्नस्वापस्य सुखाभेदेन सुखस्य स्वापरूपाक्रियाविशेषणत्वमुपपद्यत इत्येव तत्र विवक्षितम्॥

## गूढार्थसंग्रहः

यद्वा 'स्वतइष्टत्वमनुकूलत्वम् । अनुकूलत्वमिहानन्दत्वम् । स्वतइष्टत्वं च निवर्त्यानिष्टत्वेष्टसाधनत्वानपेक्षमिष्टत्वम्' इति व्यासार्योक्त्या सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न सम्भवतीति प्रभाकरमतदूषणपर श्रीभाष्यपर्यालोचनया च स्वापस्य धर्मिभेदे सुखत्वासम्भवेऽपि 'तत्र ते न्यवसन् सुखम्' इत्यादिधर्मभूतसुखपरसकलजनसम्मतप्रयोगानुसारेण 'दुःखमहमस्वाप्सम्' इत्यादिप्रयोगैकार्थ्येन च सुखपदं सुखजनकपरम् । सुखं स्वपितीत्यादौ सुखजनक स्वापः इति बोधस्य खण्डदेवेनाप्युक्तेः ॥

'स्यादानन्दथुरानन्दः शर्मशात सुखानि च' इत्युपक्रम्य 'अथ त्रिषु द्रव्ये पाप पुण्य सुखादि च ।' इति अमरसिंहोक्त्या पापपुण्यशब्दवत् सुखशब्दोऽपि सुखजनकपरः इति निर्णयसम्भवात् । सुखस्य क्रियाविशेषणस्थले सर्वत्रापि सुखजनकाभेदः क्रियायां विवक्षितः । धर्मभूतसुखपरवाक्यप्रयोगस्थले दुःखपरवाक्यस्थलेऽपि सुखदुःखजनकत्वं क्रियायाः अविप्रतिपन्नम् । धर्मिसुखपरत्वे धर्मिसुखस्य नित्यतया तज्जनकत्वं स्वापस्य यद्यपि न सम्भवति ; तथाऽपि धर्मिसुखस्यसर्वदा भानेऽपि जागरदशायां सुखमहमस्वाप्समिति प्रतीत्यविशेषेण क्रियाविशेषणतया धर्मिभूतसुखपरतया सुखमित्यस्य प्रयोगविरहेण स्वापकालस्य धर्मिसुखव्यञ्जकत्वमवश्यमङ्गीकरणीयमिति स्वापस्य सुखभानप्रयोजकत्वेन योगक्षेमसाधारणसुखप्रयोजकत्वमक्षतमेव। खण्डदेवेन वैयाकरणमतदूषणपूर्वकं 'ततोऽन्यत्रापि दृश्यते'। इत्यनेन स्तोकं पचतीत्यादौ द्वितीये इत्युक्तं भाट्टरहस्ये। नागेशादिग्रन्थपर्यालोचनवतां तद्दूषणमल्पकमिति स्फुटम्। अकर्मकधातुस्थले व्यापारमात्रमेव धात्वर्थः अनुभवानुरोधात् इति वदतां नैयायिकादीनां मते 'कर्तुरीप्सिततमं कर्म' इति सूत्रं क्रियाविशेषणानां कर्मत्वपरं यथा भवति तथा अर्थो वर्णनीयः । कर्तुःक्रियया आप्तुमिष्टतमं (आप्तुं संबद्धं) इष्टतममित्यर्थे क्वचिद्व्यापारेण सम्बन्धः क्वचित् फलेन सम्बन्धश्चेति उभयसाधारण्येनार्थवर्णनेन 'स्तोकं पचति, तण्डुलं पचति' इत्यादौ द्वितीयायाः उपपत्तिः । अतिप्रसङ्गवारणप्रकारस्तु सुधीभिरूह्यः । एवमर्थवर्णनेन सिद्धमर्थं मनसि निधाय सारस्वतादिव्याकरणादिकमभिप्रेत्य वा क्रियाविशेषणानां कर्मत्वमित्यस्यानुशासनत्वोक्तिः व्युत्पत्तिवादे इति बोध्यम् ॥

एवं च सुखांशे स्मृतिपक्ष एव व्यासार्यादीनां सर्वेषामाचार्याणां सम्मतः । एतावताऽपि स्वरूपसुखानुभवस्य आत्मस्वरूपत्वेन नित्यतया संस्कारजनकत्वाङ्गीकारे सर्वदाऽपि स्मृतिप्रसङ्गेन अनङ्गीकारे च स्मृतिः कथमुपपद्यत इतिचेत् 'अहंभानस्य संस्कारमनुत्पादयतोऽपि नः । त्वदुक्तधीभाननयात् स्यात्परामर्शहेतुता' इति तत्त्वटीकोक्तरीत्या सुखांशे स्मृतिः सम्भवति । वार्तिककारसुरेश्वरमते सुषुप्तावविद्यावृत्त्यनङ्गीकारेऽपि बिन्दुटीकायां संस्कारोपपादनवत् अत्रापि संस्कारोपपादनसम्भवात् । स्वरूपसुखस्य सर्वदा भानेऽपि सुखमित्यादिव्यवहाराविरहेण स्वापकाल एव तद्भानेन व्यवहारसत्त्वेन स्वापकालविशिष्टस्याहमर्थस्य धर्मभूतज्ञानप्रसरशून्याहमर्थस्य वा अनुभवस्थानापन्नस्य अनित्यत्वेन तन्नाशेन संस्कारेण–स्मृतिसम्भवात् । दुःखमहमस्वाप्समिति प्रतीतिसमशीलायाः सुखमहमस्वाप्समिति धर्मभूतज्ञानविषयप्रतीतिस्तु धर्मभूतज्ञानप्रसरस्यानित्यतया संस्कारस्य अनुपपत्तिशङ्कैव नोदेति । स्वरूपसुखविषयकताद्दशप्रतीतौ धर्मभूतज्ञानप्रसरानङ्गीकारेऽपि प्रागुक्तदिशा संस्कार उपपद्यते । एवं च सुषुप्तौ निर्विशेषात्मविषयक निर्विकल्पकवृत्तिः विवरणकारादिसम्मता या सिद्धान्तबिन्दौ व्यवस्थापिता सा अप्रामाणिक्येव ॥

वार्तिककारमते 'नचेदनुभवव्याप्तिः' इति श्लोकेऽपि अविद्यावृत्तिस्सम्मतेति नैव निरूपयितुं शक्यम् । 'नावेदिषं सुषुप्तोऽहमिति धीः किंबलाद्भवेत्' इत्येतावन्मात्रोक्त्या अज्ञानांश एव परामर्शत्वस्य तत्रोक्तेः । तत्प्रकारश्च बिन्दुटीकायामुपपादितः । तदुत्तरश्लोकेष्वपि (५३१.पु) तमस्सिद्धिरेवोक्ता । एवं सुखविषयकवृत्तिरपि तत्र नैवोक्ता । सुखपदं

## गूढार्थसङ्ग्रहः

दुखाभावपरमिति पञ्चपादिकाकारमतं पूर्वमेवोक्तम् । अहङ्कारस्तूत्थानसमय एवानुभूयते, सुषुप्तावविद्यासुखसाक्ष्याकारवृत्तित्रयं, समूहालम्बनैकवृत्तिर्वा निर्विकल्पिकेति परमते सुखमहमस्वाप्समिति परामर्शे साक्ष्यभिलापकश्शब्दः कः ? सुखमस्वाप्समित्युभयोः सुख अज्ञानाभिलापकत्वात् । अहमित्यस्य तन्मते उत्थानकालिकत्वेन साक्ष्यभिलापकत्वासम्भवात् । एतदेवाभिप्रेत्य **नहि सुप्तोत्थितः कश्चिदहम्भावविद्युक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठ** इति **एवंविधां स्वापसमकालामनुभूतिं परामृशति** इति सूक्तिः ॥

एतेन—यद्यप्यहमस्वाप्समित्यादिज्ञानान्नान्यआत्मपरामर्शः । तथाऽपि अहमर्थस्य सुषुप्तिकालाननुभूतत्वेन तत्कालेऽज्ञानाश्रयत्वेन च अनुभूतात्मन्येव परामर्शत्वपर्यवसानम् । अत एव चिदस्वपीत् स्वयमस्वपीदिति परामर्शाकारताऽऽपत्तिर्निरस्ता । तत्कालानुभूतान्तःकरणसंसर्गेऽहमित्याकारोपपत्तेः । (अ.सि.अहमर्थानात्मत्वोपपत्तिः) इत्युक्तिः, 'उपपत्तेरिति । एकस्या एव वृत्तेरहमर्थांशे प्रत्यक्षत्वं साक्ष्यंशे स्मृतित्वमिति भावः' (ल.चं) इति, 'साक्ष्यंशे स्मृतिरूपा, अहमर्थांशे स्मृतित्वशून्या एकैवाविद्यावृत्तिः । सामग्रीसत्वेनाहमर्थविषयकत्वस्य प्रत्याख्यातुमशक्यत्वादित्याशयेनाह—तत्कालेति'। (गु.चं) इतिचोक्तिः निरवकाशा ॥ अहमर्थस्य सुषुप्तिकालाननुभूतत्वस्यैव स्थापनासम्भवात् । अहमर्थांशे प्रत्यक्षत्वाङ्गीकारे तत्कालेऽन्तःकरणपरिणामसत्त्वेनान्तःकरणवृत्त्यैव अन्यत्राहमर्थभानवत् अत्रापि निर्वाहेऽहमर्थांशे अविद्यावृत्तिकल्पनं—साक्ष्यंशे स्मृतित्वकल्पनंचाभिनिवेशमूलकमेव ॥

'नचेच्छादिगुणविशिष्टोऽहमर्थो गृह्यते' इत्यत्र ननः संप्रतिपत्तिरिति वाच्यम् ; गुणिग्रहणस्य गुणग्रहणव्याप्तत्वात् । अन्यथा रूपादिहीनोऽपि घटः प्रथेत । एवं च गुणाग्रहणे कथं गुणिग्रहणं ? तथा च निर्गुणएवात्मा गृह्यत इति स्वीकर्तव्यम् । अनुभवाभावे च न तस्य जागरे परामर्शः । तथा च अज्ञानाश्रयत्वेन सुषुप्तावनुभूयमानादात्मनोऽहङ्कारो भिन्नः'। इति, 'नच अहमर्थ एकत्वगुणविशिष्टतया सुषुप्तौ गृह्यते पश्चात्स्मर्यतेचेति न व्याप्तिभङ्ग इति वाच्यम् ; सुषुप्तौ विशिष्टधीस्वीकारे सुषुप्तित्वभङ्गात्, अहमर्थैकत्वग्रहस्य तार्किकादिविप्रतिपन्नत्वात्, विशेषगुणग्रहस्य गुणिग्रहव्यापकत्वभङ्गाच्च । नहि रूपाद्यविषयको घटादिग्रहो मानसिद्धः' इति, साक्ष्यंशे स्मृतिरूपा अहमर्थांशे स्मृतित्वशून्या एकैवाविद्यावृत्तिः सामग्रीसत्वेनाहमर्थविषयकत्वस्य प्रत्याख्यातुमशक्यत्वादित्याशयेनाह—तत्कालेति ।' इत्युक्तिश्च **सुखित्वं ज्ञातृत्वं च ज्ञायत** इति सूक्तिस्वारस्यानुसारेण व्यासार्यैराचार्यपादैश्च अहंत्वरूपप्रत्यक्त्वानुकूलत्वैकत्वविशिष्टतया सुषुप्तावप्यात्मभानस्य सिद्धान्तितत्वेन गुणविशिष्टतया गुणिग्रहणस्य धर्मविशिष्टतया धर्मिग्रहणस्य च सिद्धान्तेऽप्यङ्गीकारेण निरवकाशा । सुषुप्तौ विशिष्टधीस्वीकारे सुषुप्तित्वभङ्गोऽपि नापादयितुं शक्यः । करणव्यापारोपरमस्य करणव्यापारहेतुक धर्मभूतज्ञानप्रसरविरहस्य वा सुषुप्तित्वात्सुषुप्तित्वभङ्गासम्भवः । अहंत्वादिधर्माणां करणव्यापारेणाभानात् । परसम्मतसाक्ष्याकारवृत्तेः नैयायिकादिविप्रतिपन्नत्ववत् अहमर्थैकत्वग्रहस्य तद्विप्रतिपन्नत्वस्यादोषत्वात् । घटप्रत्यक्षे रूपस्य कारणत्वेन घटेन्द्रियसम्बन्धसत्वे रूपस्यापि सन्निकर्षसत्वेन रूपाविषयकघटप्रत्यक्षापादनस्यानुचितत्वात् । एतेन आत्मनोऽहंकारो भिन्न इत्युक्तिश्शपथमात्रमेवेति सिद्धम् ॥

एवं 'नच यद्यहमर्थो न परामृश्येत तर्ह्येतावन्तं कालं सुषुप्तोऽहमन्योवेति संशयःस्यात् नत्वहमेवेति निश्चय इति वाच्यम् ; सुषुप्तिकालानुभूतैकात्माध्यासादिति गृहाण' (अ.सि) इति नचैतावन्तं कालं स्वप्नं पश्यन्नासम्, जाग्रदासमित्यत्रैव अहमस्वाप्समित्यत्रा[illegible] मंशे परामर्शत्वानुभवात् कथं [illegible] पर [illegible]मर्शत्वमिति वा[illegible] ; परामृश्यमानात्मैक्या-

## श्रुतप्रकाशिका

**ननु सुखमहमस्वाप्स**मिति परामर्शस्वरूपेसति स्वापादेस्तदानीमननुभवस्सुखित्वादेरनुभवश्च कथमुच्यते ? सर्वमप्यनुभूतं स्यात् नवा स्यात् । नैतत् सुखमहमस्वाप्समित्यत्र यस्मिन्नंशे स्वप्रतीतिस्वारस्यापवादकमस्ति तद्विषयप्रतिपत्तिस्वारस्यभङ्गेऽप्यनपोदितांशविषयप्रतिपत्तिस्वारस्यभङ्गायोगात् । तत्र स्वापदशायां योऽर्थो नानुभवितुं शक्यः तद्विषयप्रतिपत्तिस्वारस्यं भज्यते । यस्तु तदानीमनुभवयोग्यः तद्विषयप्रतिपत्तिस्वारस्यं तिष्ठत्येव । बाह्यान्तःकरणजन्यसमस्तज्ञाना-

## गूढार्थसंग्रहः

रोपात् तद्भानांशे परामर्शत्वाभिमानात् । नचापरामर्शे परामर्शत्वारोपो न दृष्ट इति वाच्यम् ; तद्भिन्नत्वेनानुभूयमाने परामर्शत्वारोपदर्शनात् ' इतिचोक्तिः, ' परामर्शत्वेति—स्मृतित्वेत्यर्थः । तथाचानुभूयमानत्वविशिष्टे स्मर्यमाणाभेदारोप स्थलेऽनुभवे स्मृतित्वमारोप्य तद्विषयस्याभेदारोप इति भावः । स्वरूपतो विषयतश्चागृहीतभेदस्य ग्रहणस्मरणादिरूपज्ञानद्वयस्य भ्रमत्वमित्यख्यातिमते ग्रहणे स्मृतित्वारोपदर्शनादिति बोध्यम् ' (गु.चं) इत्युक्तिश्च सुषुप्तावहमर्थभानस्य पूर्वमेवोपपादनेनाहमर्थस्य आत्मान्यत्वस्यैवासिद्ध्या आत्मैक्याध्यासोक्तेरेवायोगात् । अनुभवे स्मृतित्वारोपस्याप्यसिद्धेः । अख्यातिमतेऽपि ग्रहणे स्मृतित्वारोपोऽपि नादरणीयः । ग्रहणे स्मृतित्वारोपाङ्गीकारे ज्ञानद्वयस्य भ्रमत्वमित्युक्तेरयोगात् । तदा ज्ञानद्वयस्यैकत्वभ्रमस्यैवावश्यकल्पनीयत्वप्रसङ्गात् । भेदाग्रहमात्रस्यैव तन्मतेऽङ्गीकारात् । अतः परमते अहमस्वाप्समिति परामर्शस्वारस्यं नैव सम्भवति ॥

सिद्धान्तेतु अहमर्थस्य नित्यतया सुषुप्तौ भानेन ' योऽहं सुखमस्वाप्सम्, सोऽहम् ' इति प्रतीतौ सुषुप्तिकालिकाहमर्थभानस्य स्फुटतया च अहमित्यस्यैव सुषुप्तिकालिकभान विषयीभूताहमर्थाभिलापकत्वं सम्भवति । जाग्रद्दशायामनुभूतार्थविषयकधर्मभूतसुखपरे सुखमासम्, इत्यादिवाक्ये अन्तःकरणवृत्तिरूपसुखपरत्वं परैरप्यभ्युपगम्यत इति तद्वाक्यवैरूप्यं च परमते सुखमहमस्वाप्समिति प्रतीतेः । सिद्धान्तेतु उभयावैलक्षण्यमनुभवसिद्धमुपपद्यते । एवं दुःखमहमस्वाप्समिति प्रतीतिसमशील योगभाष्योक्तप्रत्ययावैलक्षण्यमपि । अहमर्थस्य नित्यत्वेन सर्वत्रैकरूप्येनाहमर्थाविषयकत्वसम्भवात् । अहमर्थस्यतु अहंत्वेनैव भानमवश्यं वाच्यम् ; एवं सुखस्यापि सुखत्वेन । एतदेवाभिप्रेत्य **धर्मिभूतसुखविषयकप्रतीत्यभिप्रायकत्वे सुखित्वं ज्ञातृत्वं च ज्ञायत एव** इति सूक्तौ अनुकूलत्वप्रत्यक्त्वे विवक्षिते इति श्रुतप्रकाशिकातत्त्वटीकयोरुक्तम् । दुःखमहमस्वाप्समिति प्रतीतिसमशील प्रतीतितात्पर्यकत्वेतु यथावस्थितार्थकमेव पदद्वयम् । एतत्पक्षद्वयं मनसि निधायैव **सुखित्वं ज्ञातृत्वं च ज्ञायत एव** इति सूक्तिः ॥

अत्र पूर्वं **तमोगुणाभिभवात् परागर्थानुभवाभावाच्च** इत्यत्र अनुभवाभावमूलभूतकरणव्यापारोपरमस्य आत्मसिद्धौ पञ्चपादिकायांचोक्तस्य विवक्षितत्वेन ततएव सुषुप्तौ प्रपञ्चानुपलम्भसम्भवेन ' यदि सत्यं भवेद्विश्वम् ' (शं.५२८ पु) इत्युक्तदोषस्यापि नावसरः । सुषुप्तिप्रकरणे ' नतु तत् द्वितीयमस्ति ' (बृ) इत्यत्र तच्छब्दः करणव्यापारसम्बद्धपर इति तत्र द्वितीयाभावो न विवक्षित इति च पूर्वमेव (४८२.पु) उक्तम् । एतावता ' स्वरूपतोऽहमिति सुषुप्तेऽप्यवभासेत ' (५२८.पु पं.पा) इत्यादिकं पर्यालोचितम् ॥

' सच सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कुतस्त्यः ? ' इति पञ्चपादिका । अत्र विवरणम्—सच सुषुप्त इति । अज्ञानकार्यलिङ्गशरीरप्रविलयोहि सुषुप्तिरित्यर्थः । ननु सति प्राणे क्रियात्मनि कथमहङ्कारस्य क्रियाशक्तेः प्रविलयः उच्यते—नाहङ्कारमात्रत्वं प्राणस्योच्यते किंतु प्राणस्य पृथक्सतः पञ्चधा व्यापारहेतोरहङ्कारस्य क्रियाशक्तिरस्तीत्येतावदुच्यते

## श्रीभाष्यम्

**नच वाच्यं यथेदानीं सुखं भवति तथा तदानीमस्वप्समित्येषा प्रतिपत्तिरिति अतद्रूपत्वात्प्रतिपत्तेः । नचाहमर्थस्यात्मनोऽस्थिरत्वेन**

## श्रुतप्रकाशिका

भावरूपत्वात् स्वापस्तदानुसन्धातुं शक्यते । अनुसन्धानमस्तिचेत् स्वाप एव न स्यात् ऐन्द्रियिकसमस्तज्ञाननिवृत्त्यभावात्, नैवम् ; सुखादेः प्रतिपत्त्यनुपपत्तिरिति यथोक्तएवार्थः ॥

अथास्य परामर्शस्य * परोक्तान्यथासिद्धिमनूद्य परिहरति । **नचेत्यादिना । अतद्रूपत्वादिति ।** एवमर्थः किं प्रतिपत्तिस्वारस्यात् उतानुपपत्त्याऽभ्युपगम्यत इति विकल्प्य अतद्रूपत्वात्प्रतिपत्तेरिति प्रतिपत्तिस्वारस्यं परिहृतम् । यथा 'मन्दमगच्छम्, मधुरमगायम्' इति परामर्शवचनस्य । नहि तत्र यथेदानीं मान्द्यं माधुर्यं च भवति तथाऽगच्छमगायमित्यर्थ उपपद्यते । अपितु गतिगानसमकालत्वमेव मान्द्यमाधुर्ययोरुपपन्नम् । तद्वत्प्रत्यक्त्वसुखित्वे अपि स्वापसमकालीने इत्यर्थः अथानुपपत्तिं परिहरति । **नचेत्यादिना ।** अनुपपत्तिश्चात्मन * अस्थिरत्वमनुभवाभावो वा । अत्र परामर्शेन

## गूढार्थसंग्रहः

मनोऽधीनतादर्शनात्प्राणवृत्तेरिति । प्राणलक्षणक्रियाशक्त्यंशं वा विहाय विज्ञानशक्त्यंशस्य लयःकल्प्यताम् ; साक्षादन्तःकरणस्य, स्वप्नादिवत् दृष्टिसृष्टिमाश्रित्य वा सुषुप्तपुरुषदृष्ट्यभिप्रायेति सर्वस्य तत्र लयो दर्शितः ; सुषुप्तप्राणशरीरादि दर्शनस्य पुरुषान्तरस्य विभ्रमत्वादिति' इति । एवं च अहमर्थस्य सुषुप्तौ नाशेन सुषुप्तावहमर्थभानासम्भवेन सुखमहमस्वाप्समिति प्रतीतावहमर्थः उत्थानकालिकएवानुभूयतइत्यभिप्रेत्य शङ्कते—**अहमर्थस्यात्मनोऽस्थिरत्वेन** इति ॥

अद्वैतसिद्धावपि 'नच अथहैतत्पुरुषस्स्वपिति' इत्यारभ्य 'गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः' इत्यादिश्रुतौ मनआदीनामेवोपरमोक्तेः नाहङ्कारोपरम इति वाच्यम् ; मनस उपरमे तेनैवाहङ्कारोपरमस्यापि प्राप्तेः । अहङ्कारोह्यनुभवामीत्यात्मानुसन्धानानुभवस्य अहंकर्तेत्यचिदनुबन्धिकर्तृत्वादेश्चाश्रयः चिदचित्संवलनात्मकत्वादध्यस्तः । तस्माच्चान्तितोऽन्तःकरणस्योपरमे उपरतिः' इत्युक्तम् ॥

अत्र गुरुचन्द्रिका—आत्मानुबन्धीति । आत्माभिन्नेत्यर्थः । यद्यप्यहमर्थस्य चिदघटितत्वेऽपि घटः स्फुरतीत्यादाविवानुभवाश्रयत्वं सम्भवति, तथाऽप्यहमिति प्रत्यगेऽवच्छिन्नानुभवरूपेणाहमर्थभानात, अवच्छिन्नानुभवस्यचानवच्छिन्नात्मानुगतत्वात्, आत्मानुबन्धित्वेनात्मानुबन्ध्यनुभवावच्छेदकमनसस्तादृशानुभवाश्रयत्वेनोक्तिरिति बोध्यम् । अचिदनुबन्धीति, अचित्परिणामेत्यर्थः । तथाचाहमर्थस्यावच्छिन्नचिद्रूपेण कर्तृत्वादिपरिणामाश्रयत्वेन चानुभवाचिदचिद्घटितत्वमिति भावः' इति ॥

'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' (३.२.९) इति सूत्रे अहमर्थस्य सुषुप्तौ विनाश व्यास एव निराकरोति । अत्र (शं) भाष्यम्—यदाहि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते जलराशिरेव भवति पुनरुद्धरणे स एव जलबिन्दुर्भवतीति दुस्सम्पादम्, इति पूर्वपक्षे 'पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युश्शेषमनुतिष्ठन्दृश्यते । नचान्येन सामिकृतस्य कर्मणोऽर्थेऽन्यश्शेषक्रियायां प्रवर्तितुमर्हति । अतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणमन्यस्योत्थाने नोपपद्यते ।' इति, शब्देभ्यश्च 'पुनःप्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' (बृ.६.३.१६) 'सर्वाः प्रजाः अहरहः

### श्रीभाष्यम्

**तदानीमहमर्थस्य सुखित्वानुसंधानानुपपत्तिः यतस्सुषुप्तिदशायाः**

### श्रुतप्रकाशिका

स्थिरत्वमाह—**यतइति** । मयेदंकृतमित्यादयो मानस वाचिक कायिक त्रिविधव्यापारविषयपरामर्शपराः । अथाहमर्था-

### गूढार्थसंग्रहः

गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति ' (छा-८.३.२) ' त इह व्याघ्रो वा सिंहो वा ' (छा.६.३.९) इत्येवमाद्याश्शब्दाः स्वापप्रबोधाधिकारे पठिताः नात्मान्तरोत्थाने सामञ्जस्यमीयुः ' इति च सिद्धान्ते । अत्राहङ्कारस्य सुषुप्तौ नाशाङ्गीकारे अनुस्मरणस्याप्युपपत्तिर्नसम्भवतीति स्फुटम् ॥

यद्यपि तत्रैव ' यावदेकोपाधिगता बन्धानुवृत्तिः तावदेकजीवव्यवहारः । उपाध्यन्तरगतायांतु बन्धानुवृत्तौ जीवान्तरव्यवहारः । स एवायमुपाधिः स्वापप्रबोधयोर्बीजाङ्कुरन्यायेनेति अतस्स एव जीवः प्रतिबुध्यत इति युक्तम् । ' इत्युक्तम् ; तथाऽपि अनुस्मृत्युपपत्तिर्नसम्भवति । सुषुप्तेः पूर्वं विद्यमानस्यान्तःकरणस्य सुषुप्तौ संस्कारात्मना सूक्ष्मरूपेण—स्थितस्य प्रबोधे स्थूलरूपेणोत्पत्तिः परैरभ्युपगम्यते । सुषुप्तिपूर्वं स्थूलरूपं सुषुप्त्यनन्तरं प्रबोधे च स्थूलरूपं च भिन्नमेव । तादृशस्थूलरूपविशिष्टएवाहमर्थ इति परेषां प्रक्रिया । आर्द्रमृदा शरावादिकं निर्माय तदपमृद्य पुनः तदुत्तरक्षणएवार्द्रमृदा शरावाद्यन्तरनिर्माणे उभयोस्स्थूलरूपयोर्भेदं साक्षात्कुर्वन्पुरुषः उभयोश्शरावयोरैक्यं यथा नानुस्मरति तद्वदेव सुषुप्तिपूर्वोत्तरस्थूलरूपद्वयभेदज्ञानवान् उभयोरैक्यं नानुस्मर्तुमर्हति । लूनपुनर्जातकेशाङ्कुरादौ प्रत्यभिज्ञा यथा नैक्यसाधिका तद्वत्प्रत्यभिज्ञासामान्यमपीति बौद्धोक्तदूषणस्य एवमङ्गीकारे परिहारएव न स्यात् इत्यभिप्रेत्याह—**यतस्सुषुप्तिदशाया इत्यादि** ॥ एतेन ' योऽहं पूर्वेद्युरकार्षं सोऽहमिदानीं करोमीति प्रत्यभिज्ञाऽनुपपत्तिः ' इत्याद्याशङ्क्य ' सुषुप्तौ कारणात्मना स्थितस्यैवोत्पत्त्यङ्गीकारेण सर्वोत्पत्तेः, (अहमर्थानात्मत्वोपपत्तौ) इत्यद्वैतसिद्ध्युक्तिरपि निरवकाशा ॥

मनः प्राणयोरात्मोपाधित्वं यत् विवरणोक्तं (४३९.पु) तन्नघटतइति प्रागेव (४४१.पु) निरूपितम् । अन्तःकरणस्य ज्ञानक्रियाशक्तिद्वयं युक्तम् । आत्मनस्त्वपरिणामिनः असङ्गस्य विज्ञानक्रियाशक्त्यङ्गीकारोऽनुचितः प्रतिभासस्यान्तःकरणसन्निधानादेवोपपत्तेः ' इति विवरणोक्तिस्तु नादर्तव्या । अध्यासमूलकव्यवहारकल्पनायाएवानुचितत्वात् । व्यवहारसामान्यस्याध्यासमूलकत्वे श्रौतव्यवहारोऽप्यध्यासमूलकएवेति श्रुतेरप्रामाण्यएव पर्यवसानं स्यात् । परिणाम्यन्तःकरणमङ्गीकृत्य तत्सम्बन्धेनाध्यासमूलकतया व्यवहारोपपत्तिकल्पनात् अध्यासमन्तरैव अन्तःकरणमात्रेणैव व्यवहारोपपत्तिसम्भवे निर्विशेषचित एव प्रमाणविरहेण कल्पनस्याप्यसम्भवात् । सुषुप्त्यन्यकालत्वेन जाग्रत्स्वप्नकालयोः अध्यासमूलव्यवहार सामान्यकत्वमपि न साधयितुं शक्यम् । सुषुप्तावपि अज्ञानभानावश्यकत्वेन अहमस्वाप्समित्यादौ स्वापस्य प्रकारतयैव भानेन अज्ञानस्य प्रकारतया भानेऽज्ञानात्मनोः सम्बन्धस्य कल्पितत्वेन सौषुप्तवृत्तेरपि प्रमात्वासम्भवेन सा परमार्थदशेति कथं निश्चीयते । अज्ञानभानकाले व्यवहाराभावदशायाः परमार्थदशात्वासम्भवात् । अतः व्यवहारसामान्यस्याध्यासमूलकत्वोक्तिरनादरणीयैव । एवंचात्मन एव विज्ञानक्रियाशक्तिद्वयाङ्गीकारेण व्यवहारस्यानाध्यासमूलकत्वमेव युक्तम् ॥

एतेन ' अहङ्कारोहि आत्मानुबन्ध्यनुभवस्याहङ्कर्तेति अचिदनुबन्धिकर्तृत्वादेश्चाश्रयः चिदचित्संवलनात्मकत्वाद्ध्यस्तः । तस्यचाचितोऽन्तःकरणस्योपरमे उपरतिः । ' (अ.सि) इत्युक्तिः निरवकाशा । अनुभवाम्यहमित्यत्र चितोऽहमर्थ

## गूढार्थसंग्रहः

तयाऽनुभवरूपतया च द्विधा भानस्यानुभवविरुद्धत्वात् । परसम्मतचितएवाप्रामाणिकत्वेन वृत्तिमन्तरा व्यवहारविरहेण—वृत्त्यैव निर्वाहे चित्कल्पनादेरसम्भवेन प्रभास्थानापन्नधर्मभूतज्ञानेनानुभवामीत्यस्य धर्मभूतज्ञानपरिणामविशेषेण कर्तृत्वस्यचोपपत्तिस्सम्भवति । अहमर्थात्मनः स्वरूपपरिणामशून्यत्वेन अपरिणामित्वनित्यत्वादिकमुपपद्यत इति प्रागेव भाष्ये निर्धारणेन च अध्यासकल्पनायाः असम्भवात् । मनआदेः विषयव्याप्तिविरहमात्रेण मनस्त्वावस्थाप्रहाणविरहेण लयोक्तेरयोगात् । 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति विषयसम्बद्धज्ञानविरह एव श्रुतौ प्रतिपादितः; नतु मनस्त्वावस्थाविरहः । अतस्सुषुप्तौ अहङ्काराभावाङ्गीकारे प्रत्यभिज्ञाऽनुपपत्तिः व्यासोक्ता युक्तैव । अन्तःकरणस्य लयाङ्गीकारेण परिणामाङ्गीकारात् निरन्वयविनाशाभावेन बौद्धमतवैलक्षण्यसम्भवेऽपि जैनमत इव स्वरूपपरिणामवानात्मेत्येव सिद्ध्यति तथाऽङ्गीकारे अन्तःकरणव्यतिरिक्तात्मसिद्धिरेव न स्यात् । यावदेकोपाधिगता बन्धानुवृत्तिः तावदेकजीवव्यवहार इत्यङ्गीकारे 'तस्मान्नबध्यते नापि संसरति कश्चित् । संसरति बध्यते च नानाश्रया प्रकृतिः' इति साङ्ख्योक्तरीतिरेव स्यात् अन्तःकरणावच्छेदेन ज्ञानेन अन्तःकरणावच्छेदेनाज्ञाननिवृत्त्या चिति बन्धमोक्षव्यवहारोपपत्तिरपि (अ.सि) नादरणीया । नित्यज्ञानादिसम्बन्धस्य कल्पितत्वेन 'मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं मोक्षं प्राप्त इव' (अ.सि) इत्युक्त्या च अन्तःकरण एव बन्धमोक्षपर्यवसानं स्यात् ॥

अयमर्थः 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ' इति सूत्रे सूत्रकृतोऽसम्मत इति स्फुटं प्रतीयते । अत्र (शं) भाष्यम् 'तत्पुनस्तिरोहितं तत्परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदाविर्भवति न स्वभावत एव सर्वेषां जन्तूनाम् । कुतस्ततोहीश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः । ईश्वरस्वरूपापरिज्ञानाद्बन्धस्तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथा च श्रुतिः 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' इत्येवमाद्या, इत्यर्थस्तु न सूत्रकृत्सम्मतः । तिरोहितमित्यत्र पराभिध्यानादित्यस्यान्वयतात्पर्येण 'पराभिध्यानात्तु तिरोहितम्' इति क्रमः । अतएव तिरोहितमित्यस्य सार्थक्यम् । अविद्यया तिरोभावस्य विवक्षितत्वे तिरोभूतमित्येवालम् । ततोह्यस्य बन्धविपर्ययावित्यत्र बन्धविपर्ययोभयहेतुताऽवच्छेदकमेकमेव प्रतीयते । पराभिध्यानत्वमेकं हेतुताऽवच्छेदकं सम्भवति । एवं च यःपरः तिरोधत्ते सएव तिरोधानान्तर्गतं बन्धं तद्विपर्ययं च प्रति एकेन सङ्कल्पविशिष्टवेषेण हेतुरिति निर्मत्सराणां स्फुटम् ॥ 'संसारमोक्षस्थितिबन्धहेतुः विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणम् तिष्ठमानस्य तद्विदः' इत्यादिश्रुतयोऽत्र मूलभूताः । अत्र आविर्भवतीत्यर्थः आविर्भवतीत्यस्य सूत्रे अभावात् कथं लभ्यते ? पराभिध्यानादित्यस्य तिरोहितपदार्थे अन्वये सूत्रे स्वरसतः प्रतीयमाने तत्त्यागपूर्वकमाविर्भवतीत्यध्याहृत्य तदर्थे अभिध्यानपदार्थान्वयः सूत्रकृत्सम्मत इति नैव निश्चेतुं शक्यम् ॥

'अभिध्योपदेशाच्च' (१.४.२४) 'तदभिध्यानादेवतु तल्लिङ्गात् सः' (२.३.१४) इत्यादौ अभिध्यानशब्दस्य सङ्कल्पार्थकत्वस्य परेषामपि सम्मततया अत्रापि अभिध्यानशब्दस्य सङ्कल्पार्थकत्वमेव युक्तम्, नतु परमात्मविषयकध्यानपरत्वम् । अभिध्यानसम्बन्धित्वेनैव पूर्वं परस्योपस्थिततया तत इत्यत्र तच्छब्दस्येश्वरोपस्थापकत्वाङ्गीकारेऽपि अभिध्यानसम्बन्धित्वेनैव ईश्वरस्योपस्थितिर्वाच्या ; नतु अज्ञानज्ञानसम्बन्धित्वेन । अतः परसम्मतार्थः सूत्रकृतो न सम्मतः । एवं च यावदेकोपाधिगता बन्धानुवृत्तिरित्यादिरीत्या अर्थः 'स एवतु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यत्रापि सूत्रकृतोऽसम्मत

### श्रीभाष्यम्

**प्रागनुभूतं वस्तु सुप्तोत्थितो मयेदं कृतं मयेदमनुभूतमहमेतदवोचमिति परामृशति। एतावन्तं कालं नकिंचिदहमज्ञासिषमिति च परामृशतीतिचेत्। ततःकिं? न किंचिदिति कृत्स्न प्रतिषेध इतिचेत्? न अहमवेदिषमिति वेदितुरहमर्थस्यैवानुवृत्तेः। वेद्यविषयोहि स प्रतिषेधः। न किंचिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमताऽनुभूतिरपि प्रतिषिद्धा स्यात्। सुषुप्तिसमयेत्वनुसन्धीयमानमहमर्थमात्मानं ज्ञातारमहमिति परामृश्य न किंचिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने तस्मिन्काले निषिध्यमानाया वित्तेस्सिद्धिमनुवर्तमानस्य ज्ञातुरहमर्थस्यचासिद्धिमनेनैव नकिंचिदहमवेदिषमिति परामर्शेन साधयंस्तमिमर्थं देवानामेव साधयतु। मामप्यहं न ज्ञातवानिति अहमर्थस्यापि तदानीमननुसन्धानं प्रतीयत इतिचेत् स्वानुभव स्ववचनयोर्विरोधमपि न जानन्ति भवन्तः। अहं मां न ज्ञातवानितिह्यनुभववचने। मामिति किं निषिध्यत इतिचेत्? साधु पृष्टं भवता।**

### श्रुतप्रकाशिका

ननुभवसाधकनिषेधसामान्यविषयं परामर्शं शङ्कते। **एतावन्तमिति**। * अहमर्थस्य निषेधविषयत्वाभावाभिप्रायेणाह—ततःकिमिति। परविवक्षितं शङ्कते। **नकिंचिदिति**। परिहरति। **नेति**। वेद्यविषयः * वेद्यप्रतिभासविषयः, कृत्स्न विषयत्वेऽनिष्टमाह—**नकिंचिदिति**। नानुभूतिनिषेधस्तस्या अनुवृत्तेरित्याशङ्क्याह—**सुषुप्तिसमयेत्विति**। भवत्पक्षस्य विपरीतोऽयं परामर्शइत्यर्थः। यथा प्रातश्चत्वरे गजानुभवं पृष्टेन पश्चाद्योग्याननुस्मरणलिङ्गेन चत्वरे गजाभावं वदता पुरुषेण पूर्वकालीनचत्वरानुभवेन विना गजाभावो न वक्तुं शक्यते। तथा अज्ञानाश्रयमहमर्थं वदता स्वापवेलायामहमर्थानुभवोऽभ्युपगन्तव्यः। * अथाप्यहमर्थानिवृत्तिज्ञानानुवृत्तिकथनं * चत्वरानिवृत्तिगजावस्थानवचनतुल्यमितिभावः। **देवानामेव साधयतु**। अर्चारूपाहि देवाः। प्रतिवचनमकुर्वतामित्यर्थः। क्षमावतामिति वा, प्रतिवाद्यसन्निधाविति वा उल्लोकमुक्तमिति वाऽर्थः॥

अथ निषेधविशेषविषयं परामर्शमाह—**मामपीति**। परिहरति। **स्वानुभवेति**। स्वानुभववचनयोर्नान्योऽन्यं विरोधः किंतूभयोरप्यहमर्थानुवृत्तिनिषेधशब्देन विरोध इत्यर्थः। अनुभवैकदेशयोर्वचनैकदेशयोश्च मिथोविरोध इति वाऽर्थः। विरोधमेव दर्शयति। **अहमिति**। * अहं न ज्ञातवानित्यत्र अज्ञानसाक्षित्वेन अहमर्थानुवृत्तिस्स्वानुभवसिद्धा, वचनमपि तदनुगुणमिति अनुभववचनाभ्यामहमर्थानुवृत्तिनिषेधवाक्यविरोध इत्यर्थः। निषेधशब्दतदर्थानुभवयोर्विरोध इति वाऽर्थः। तत्र मामिति पदस्यार्थं वक्तुं परप्रश्नमनुभाषते। **मामितीति**। पूर्वं विरुद्धार्थकथनमसाधु, अर्थतत्त्वप्रश्नस्साधुरित्यभिप्रायेणाह—**साध्विति**॥

### गूढार्थसंग्रहः

एव। दृष्टिसृष्टिपक्षपर्यालोचनंतु भावप्रकाशे (द्वि.सं.३६२.पु) कृतम्। अतः अहमर्थस्य सुषुप्तौ लयस्य श्रुतिसूत्रादितात्पर्याविषयत्वेनाहमर्थस्य स्थिरत्वं युक्तमिति भावः॥

**न किंचिदिति कृत्स्नप्रतिषेध इति**। यद्यपि नकिंचिदहमज्ञासिषमित्यत्र सर्वविषयकाज्ञानमेव विषय इति परमतम्। तथाऽपि अज्ञानभानेऽर्थापत्त्या ज्ञानाभावस्य प्रतीतेः परसम्मतत्वेनेत्थमुक्तिरिति बोध्यम्॥ **मामप्यहं नज्ञातवानिति**। 'नाहखल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति' (छा.८.११.५) इत्यादिछान्दोग्यश्रुतिरप्यत्राभिप्रेता॥

## श्रीभाष्यम्

**तदुच्यते-अहमर्थस्य ज्ञातुरनुवृत्तेः न स्वरूपं निषिध्यते अपितु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य**

## श्रुतप्रकाशिका

निषेधानुवृत्त्योर्विषयविभागं दर्शयति । **तदुच्यत इत्यादिना** । अहं मामित्युभयोरपि पदयोर्विशिष्टविषयतैवोचिता रीतिः

## गूढार्थसंग्रहः

**अपितु प्रबोधसमयेऽनुसन्धीयमानस्येत्यादि** । ‘ नाह खलु ’ इत्यादिश्रुतौ अहमित्येतावन्मात्रानुक्तिक्रमयमस्मीति पदद्वयप्रयोगेण विशेषज्ञानाभावपरत्वं तस्याः श्रुतेः स्पष्टम् । एतेन ‘ नविजानात्ययमहमस्मीति सुषुप्तिविषया श्रुतिरपि तदानींतनाहमर्थाज्ञाने प्रमाणम् । ’ इत्युक्तिः (अ.सि.अहमर्थानात्मत्वोपपत्तौ) अनवकाशा । एवम् ‘ अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति ’ ‘ सति सम्पद्य न विदुः ’ इति आत्मवेदनबोधकश्रुतिविरोधेन विशेषाज्ञानपरत्वं युक्तम् । नच प्रकृते तथा विरोधाभावात् ’ इत्युक्तिरपि । अहमर्थस्य धर्मान्तरवैशिष्ट्यबोधतात्पर्येणायमिति प्रयोगः । तेनैव विशेषाज्ञानपरत्वं स्पष्टम् । ‘ सर्वाःप्रजा अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति ’ इति श्रुतौ ब्रह्मज्ञानसामान्याभाव एव विवक्षितः ; विशेषवाचिशब्दाभावात् । सुषुप्तावहमर्थज्ञानसाधकयुक्तिसत्त्वेऽपि परसम्मतात्मज्ञानसाधकश्रुतिविरहेण अस्याः विशेषाज्ञानपरत्वं नैव सम्भवति । ‘ अहरहर्गच्छन्त्यः ’ इतितु पुरीतद्देशगमनाभिप्रायकम् ॥

‘ अथ यदा सुप्तो भवति यदा न कस्यचन वेद हितानामनाड्यो द्वासप्तति सहस्राणि हृदयात्पुरीतमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृत्य पुरीततिशेते ’ (बृ.४.१.१९) इति श्रुतौ जीवस्य पुरीतति शयनोक्त्या ‘ य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते ’ इति परमात्मनि शयनं प्रासादखट्वा पर्यङ्कन्यायेनोपपादनीयमिति, ‘ तदभावो नाडीषु तच्छ्रुतेरात्मनिच ’ इति सूत्रभाष्ये निर्धारयिष्यते । अतः ब्रह्मगमनं पुरीतद्देशावच्छेदेन ब्रह्मगमनमेव ॥

एतेन ‘ ब्रह्मगमनसत्सम्पत्त्योः कार्योपाधिशून्यतया प्रकाशमानत्वरूपतयोक्तश्रुतेरात्मवेदनबोधकत्वम् ’ इति चन्द्रिकोक्तिरनुपादेया । ‘ सर्वाःप्रजा अहरहर्गच्छन्त्यः (छा.८.३.२) सर्वाःप्रजास्सति सम्पद्य नविदुः ’ (६.९.२) इत्युभयत्रापि बहुवचनान्तप्रजाशब्देन जीवानामेव ब्रह्मगमनसत्सम्पत्तिकथनेन शुद्धात्मनः प्रकाशमानत्वस्यानया श्रुत्या असिद्धेः । श्रुत्यन्तरसिद्धपुरीतद्देशसम्बन्धस्य तद्देशावच्छेदेन ब्रह्मसम्बन्धस्य च एतच्छ्रुतिसिद्धत्वस्य निर्मत्सराणां स्फुटत्वात् ॥

एतेन ‘ नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ’ इत्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात् । नच सुषुप्तौ हितानामनाड्य इति नाडीसत्त्वप्रतिपादकवाक्यविरोधः ; केन क्रमेण सुषुप्तौ भवतीत्यपेक्षायां हितानामनाड्यो हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृत्य पुरीततिशेते ’ इत्यादिना सुषुप्त्यव्यवहितकाले क्रमोक्तये नाडीसत्वं प्रतिपाद्यते, नतु सुषुप्तिकालेऽपि वाक्यान्तरविरोधात् ; प्राक् सत्त्वमात्रेण च क्रमाभिधानपर्याप्तेः ’ इत्यद्वैतसिद्ध्युक्तिः, ‘ हितानामेत्यादि । एवं च पुरीतदाधारिका सुषुप्तिरिति प्रलापो वाक्यार्थाज्ञानादेव ; पुरीतत्प्राप्त्युत्तरं मनआद्युपाधिलयेन मनआद्युपाधिकृतभेदाभावरूपब्रह्मप्राप्तेरेव सुषुप्तित्वस्य श्रुतिसिद्धत्वात् । अतएव ‘ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ’ इति सूत्रे नाडीपुरीतद्ब्रह्मणां सुषुप्तौ क्रमसमुच्चयः सिद्धान्तितः । वाक्यान्तरेति । ‘ नतु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तम् ’ इत्यादिवाक्येत्यर्थः ’ इति लघुचन्द्रिकोक्तिश्चानुपादेया ॥

## श्रीभाष्यम्

**वर्णाश्रमादिविशिष्टता । अहं मां न ज्ञातवानित्युक्ते विषयो विवेचनीयः। जागरितावस्थाऽनुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः। स्वाप्ययावस्था प्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः। अत्र सुप्तोऽहमीदृशोऽहमिति च मामपि**

## श्रुतप्रकाशिका

भेदप्रसङ्गादित्यत्राह—**अहं मामिति।** विधिनिषेधयोरेकविषयत्वे व्याघातस्स्यादिति तन्निवृत्त्यर्थं विषयविभागः कार्य इत्यर्थः। विषयविभागविपर्यासशङ्कायां विषयविभागमुचितं दर्शयति। **जागरितेति।** यत् सामग्र्यभावात्तदानीं न प्रकाशते तदेव निषेधविषयः यदनन्यापेक्षं स्वयंप्रकाशते तदेवानुवर्तत इति अप्रकाशमानस्यानुवृत्तिः प्रकाशमानस्य निषेधश्चानुपपन्नावित्यर्थः। एवं विषयविभागानुगुणमनुभवं दर्शयति। **अत्रेति।** शब्दप्रयोगो विवक्षावशात्। धीस्थं सर्वं वदति वा तदेकदेशं वदति वा नकिंचिदपि वदति वा। अतश्शब्दप्रयोगे वैवाक्षिकेऽपि अनुभवएकरूपः। स पुनरेवं विषयविभागानुगुणएवेत्यर्थः॥

## गूढार्थसङ्ग्रहः

'नतु तद्द्वितीयमस्ति' इति श्रुतौ तच्छब्दसत्त्वेन द्वितीयसामान्याभावो न विवक्षित इति प्रागेव निर्धारणात्। 'पुरीततिशेते' इत्यनन्तरं 'यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीत एवमेष एतच्छेते' इति वाक्ये अतिघ्नीमित्यस्य अतिशयेन दुःखहन्त्रीमित्यर्थः, 'तीर्णोहि तदा सर्वान् शोकान् हृदयस्य भवति' इति तत्रैव वक्ष्यमाणत्वात्। गत्वा शयीतेत्यत्र समानकर्तृकत्वमात्रं विवक्षितम्, अत्र ब्रह्मप्राप्तिः ब्रह्मानुभवरूपा न विवक्षिता 'अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति' इति गमनाभिधानपूर्वकं वेदनाभावस्य प्रतिपादनात्। आनन्दशब्दस्य जीवस्वरूपपरत्वे जीवस्वरूपानुभवविवक्षा युक्ता। जीवस्य तदात्वे दुःखविरहेण जीवस्यानन्दरूपाहमर्थस्य स्वप्रकाशतया भानेन तदा दुःखविरहेण च श्रुत्युपपत्तिः। शयनं च 'य एषोऽन्तर्हृदय आकाशस्तस्मिंच्छेते' इति परमात्मनि पूर्वं 'ताभिः प्रत्यवसृत्य पुरीततिशेते' इति पुरीततिचानन्तरमुक्तम्। शयनं गमनं च नैकं तथा तद्बोधकशब्दाभावात्। एतेन 'एतदिति पूर्ववाक्योक्तब्रह्माधारकार्थकं शयनक्रियाविशेषणम्। कीदृश शयनम्? तत्राह—यथेत्यादि शयीतेत्यन्तम्। गत्वा शयीतेति शयित्वा गच्छेदित्यर्थः। 'मुखं व्यादाय स्वपिति' इत्यादिवत्। अन्यथा शयनोत्तरमेवानन्दप्राप्तेः यथाश्रुतासङ्गतेः। तथा च यथा कुमारादिः शयित्वानन्दातिशयं गच्छति, एवं विज्ञानमयस्य शयित्वानन्दातिशयरूपब्रह्मप्राप्तिरूपं शयनमित्यस्मिन्नर्थे दृष्टान्तदार्ष्टान्तिकवाक्ययोः पर्यवसानम्।' इति लघुचान्द्रिकोक्तिरप्यनुपादेया॥ सुषुप्तौ नाडीपुरीततोस्सत्त्वप्रतिपादनार्थं त्रयाणामाधारत्वेन समुच्चय एव विवक्षितः॥

श्रुतौ च पूर्वं ब्रह्मणि पुरीततिशयनोक्त्या पुरीतति शयनकाल एव ब्रह्मणि शयनम्। 'एतच्छेते' इत्यत्र एतच्छब्दस्योभयपरत्वं युक्तम्। 'हृदयवेष्टनमांसरूप पुरीतदवस्थानकाल एव तत्समुच्चयेनैव तेन समुच्चय इति न तत्पृथगुक्तम्' इति वेदान्तसूत्रमुक्तावल्यामुक्तेः। नाडीष्ववस्थानानन्तरकालिकत्वेऽपि पुरीतद्ब्रह्मणोरवस्थानस्य पर्यङ्के शयनदशायामपि प्रासादे शेते पर्यङ्के शेते खट्वायां शेतइति व्यवहारस्य साक्षात्परम्परासाधारण्येन लोकसिद्धतया तत्तात्पर्येणैव 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इति सूत्रस्यापि प्रवृत्तेः शयनोत्तरमेवानन्दप्राप्तिरित्यपि न घटते पुरीततिशयनकाल एवानन्दप्राप्तेः अप्रत्याख्येयत्वात्। अतः व्युत्क्रमेणान्वयोऽपि न कार्यः। एवं च 'पुरीतदाधारिका सुषुप्तिरिति

### श्रीभाष्यम्

**नज्ञातवानहमित्येवखल्वनुभवप्रकारः। किंच सुषुप्तावात्माऽज्ञानसाक्षित्वेनास्त इतिहि भवदीया प्रक्रिया। साक्षित्वं च साक्षाज्ज्ञातृत्वमेव। नह्यजानतस्साक्षित्वम्। ज्ञातैवहि लोक वेदयोस्साक्षीति व्यपदिश्यते न ज्ञानमात्रम्। स्मरति च भगवान् पाणिनिः 'साक्षाद्द्रष्टरि संज्ञायाम्' (अष्टाध्यायी.५.२.९१) इति साक्षाज्ज्ञातर्येव साक्षिशब्दम्।**

### श्रुतप्रकाशिका

**अनेन 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मि'** इति श्रुतिवाक्यस्थोऽयंशब्दो व्याख्यातः। परमतेनेममर्थमुपपादयति। **किंचेत्यादिना**। साक्षित्वेनात्माऽभ्युपगम्येत ततःकिमित्यत्राह—**साक्षित्वंचेति**। साक्षाज्ज्ञातृत्वं साक्षात्काररूपज्ञानाश्रयत्वम्। असाक्षात्कर्तरि साक्षिशब्दः प्रयुक्तश्चेदौपचारिकः। उपपादयति। **नहीति**। अजानतः * अज्ञातुरित्यर्थः। कुतइत्यत्राह—**ज्ञातैवहीति**। शब्दप्रयोगनियामकं लक्षणमाह—**स्मरतीति**। साक्षिशब्दं

### गूढार्थसङ्ग्रहः

प्रलापः वाक्यार्थाज्ञानादेव' इति चन्द्रिकोक्तिरनुपादेया॥ सुषुप्तयव्यवहितकालीनक्रमोक्तये नाडीसत्त्वं प्रतिपाद्यतइत्यर्थस्यैवासिद्धेः। सुषुप्तिकालेऽपि नाडीसत्त्वविरहस्य स्थापनासम्भवात्। अतः सुषुप्तौ परसम्मतात्मवेदनं श्रुत्या नैव—सिद्ध्यति। एवं च 'ब्रह्मलोकं न विन्दन्ति' इति ब्रह्मज्ञानसामान्याभावपरमेव। 'सतिसम्पद्य नविदुः सतिसम्पद्यामह इति' इति श्रुतेः सत्सम्पत्तिज्ञानाभावपरत्वेऽपि सुषुप्तौ सदात्मज्ञानसाधकश्रुतिविरहात् सुषुप्तौ सदात्मज्ञानं वर्तत इति नैव साधयितुं शक्यम्। 'ब्रह्मलोकं न विन्दन्ति' इत्यस्य विशेषाज्ञानपरत्वं 'नविजानात्ययमहमस्मि' इत्यस्याहमर्थाज्ञानपरत्वमेव न विशेषाज्ञानपरत्वं यदुक्तमद्वैतसिद्धौ तत्प्रामाणिकानां व्युत्क्रमेण प्रतीत्यनुभवेनाभिनिवेशमूलकमेव। अतः मामप्यहं न ज्ञातवानित्यस्य विशेषज्ञानाभावपरत्वमेव युक्तमिति भावः॥

अविद्यासुखसाक्ष्याकारा निर्विकल्पकवृत्तिः सुषुप्तौ निर्विशेषचितः अनुभवसाधनार्थं विवरणे या अङ्गीकृता सा न सिद्ध्यति। साक्षिणः निर्विशेषत्वासम्भवात् इत्यभिप्रेत्याह— **किंच सुषुप्तावित्यादि। साक्षाज्ज्ञातर्येव साक्षिशब्दमिति।**

'यद्यपि यथाभिमतवक्तरि प्रमातर्येव साक्षिशब्दस्य लोके रूढिःक्लृप्ता। तथाऽपि 'साक्षीचेता' 'सर्वस्य साक्षी' इत्यादि श्रुत्या गौण्या वृत्त्या चैतन्येऽपि तत्प्रयोगः। प्रमाता रागद्वेषादिविकारवतामनेकेषां अन्येषु दुष्टादुष्टत्वव्यवहारं जनयति। चैतन्यमपि सर्वेषां विकारवतां व्यवहारं प्रमातृषु जनयतीति सादृश्यादिति भावः' इति बिन्दुटीकायामुक्तम्। अत्र साक्षिपदस्य साक्षिसदृशार्थकत्वाङ्गीकारः 'साक्षीचेता' 'सर्वस्य साक्षी' इति श्रुत्यनुरोधेनेति प्रतीयते। तच्छ्रुतिद्वयेऽपि साक्षिशब्दः साक्षाज्ज्ञातृवाचक एव सम्भवति॥

अद्वैतसिद्धौ च 'अविद्यातत्कार्यान्यतरप्रतिफलितचैतन्यस्यैव साक्षित्वात् तथा च दृग्रूपस्यापि उपाधिना द्रष्टृत्वम्' इति, 'तथाचाविद्यावृत्तिप्रतिफलितं चैतन्यं साक्षी ; सुषुप्तावप्यविद्यावृत्तिस्वीकारस्य प्रागुक्तेः। नचान्योन्यसंश्रयः ; प्रागेव निरासात् शुद्धस्य साक्षित्वाभावेन मुक्तोपप्लवापाताभावात्' (ज्ञानत्वाद्युपपत्तौ) इति चोक्तम्॥

अत्र लघुचन्द्रिका—अविद्याप्रतिबिम्बितचित् साक्षी। यद्वा अविद्योपहितस्य न साक्षित्वं, तस्य व्यवहरकाले नाशाभावेन तन्नाशरूपस्य संस्कारस्यासम्भवात्। किंत्वविद्यावृत्तिनाशात् तदुपहितस्य नाशसम्भवात् अविद्यावृत्तिप्रतिबिम्बित

## गूढार्थसंग्रहः

चिदेव साक्षीत्याशयेनाह—अविद्यातत्कार्यान्यतरेति । उपाधिनेति । वृत्तिप्रतिबिम्बितरूपेण द्रष्टृत्वपक्षे वृत्तिविषयावच्छिन्न चिद्रूपेण दर्शनत्वम् ; परोक्षस्थलेऽपि वृत्तिद्वारा विषयसम्बद्धचित एव प्रकाशकत्वात् । यद्यप्यविद्याप्रतिबिम्बिताचितः अविद्याकार्याश्रयत्वेनाविद्याकार्यावच्छिन्नचिद्रूपदर्शनाश्रयत्वेऽपि अनादिविषयावच्छिन्नचिद्रूपदर्शनाश्रयत्वे मानाभावः ; एवं वृत्तिप्रतिबिम्बितचितोऽपि अविद्याप्रतिबिम्बितचिदभेदात् ; तथाऽपि सर्वत्र वृत्तिप्रतिबिम्बितनिष्ठदर्शनसम्बन्धित्वमेव द्रष्टृत्वमव्याहतम् ' इति वृत्त्यवच्छिन्नचित एव साक्षित्वं कुतउक्तमितिचेत् अविद्यावृत्त्यभावकाले साक्षित्वाभावात् । तथाऽप्यविद्यात्वनिवेशे गौरवमितिचेन्न ; नहि साक्षात्कारत्वेन हेतुत्वादिकल्पनायामवच्छेदककोटावविद्यावृत्तेर्निवेशः येन गौरवम्, अपितु चैतन्ये अनावृतविषयसम्बन्धोऽविद्यावृत्तिदशायामेवेति तत्र सोपाधिरुच्यते । मनस्तु न सुषुप्ताविति—नोपाधिः । अथ सूक्ष्मरूपेण तत्रापि तदितिचेन्न ; सूक्ष्मरूपे मनस्त्वसत्त्वे मानाभावात् । नहि तदा मम मनइत्यनुभूयते । अथ मनस्तत्सूक्ष्मावस्थान्यतरत्वेनोपाधिताऽस्त्विति चेन्न ; साक्षिव्यवहारविषयगौरवापत्तेः । अथैवमविद्यैवोपाधिरस्त्विति चेन्न ; साक्षिनाशस्य संस्कारत्वानुपपत्तेः । अतोऽपि मनस्तत्संस्कारान्यतरत् नोपाधिः । जाग्रति घटादिज्ञानोत्तरं तदुपहितनाशानुत्पादात् वस्तुतोऽविद्योपहितचिदेव साक्षी युक्तः, लाघवात् वृत्तिनाशस्यैव संस्कारत्वसम्भवात् । नच वृत्तेः स्वविषयकत्वाभावेन तन्नाशस्य तद्विषयकत्वानुपपत्तिरिति वाच्यम् ; तन्नाशस्य तदविषयकत्वेऽपि संस्कारसामान्यस्यैव वृत्तिस्मारकत्वसम्भवात् ' इति च ॥ (ज्ञानत्वाद्युपपत्तौ)

प्रतिकर्मव्यवस्थायां च ' साक्षिचित् प्रकाशिका । तदुक्तं सिद्धान्तबिन्दौ—सर्वानुसन्धातृचैतन्यं जीवेशानुगतं साक्षीत्युच्यते ' इति । तथा च बिम्बप्रतिबिम्बचितोरीशजीवत्वपक्षे शुद्धाचिदेव तदुभयानुगता साक्षिणी जगदुपादानम् । अविद्या प्रतिबिम्बमनः प्रतिबिम्बयोरीशजीवत्वेतु अविद्याबिम्बत्वोपहिता चित् तथा । अविद्यामनोगतचिदाभासयोरीशजीवत्वेत्वीशएव तथा । तत्र आद्यःपक्षो विवरणकृतः । द्वितीयः सङ्क्षेपशारीरककृतः । तृतीयः वार्तिककृतः । वाचस्पतिमतेतु जीव एव तथा ; तस्यैवाविद्याविषयत्वोपहिते ईशे तादात्म्येनानुगतत्वात् । घटत्वद्रव्यत्वोपहितयोरिव अविद्याविषयत्वाश्रयत्वोपहितयोस्तादात्म्यसम्भवात्तयोरिव भेदस्यापि सत्वात् नेशजीवसाङ्कर्यम् । नहि द्रव्यत्वघटत्वयोरत्यन्तभेदः । ईशं प्रति दृश्यमात्रस्यानावृतत्वात् तंप्रति जीवस्य भासकत्वं न वृत्तिसापेक्षमिति दिक् ' इति ॥

प्रागुदाहृत (२२३.पु) सिद्धान्तबिन्दुटीकायां च ' यत्र यत्र समवायः प्राभाकराद्यैरुच्यते तत्र तत्र तादात्म्यमेव युक्तम् । अहं सुखीत्यादावपि तादात्म्यादिसम्बन्धः सुखादेर्वृत्तिनियामकः साक्षिप्रतिबिम्बवत्त्वात् साक्षिरूपज्ञानाधारत्वं मनस उपपन्नम् । सर्वथाऽपि साक्षिणएवज्ञानत्वात् तस्यैव मनसि प्रतिबिम्बितत्वेन मनसोऽपि ज्ञानाश्रयत्वम् । तत्र मनस्तादात्म्याध्यासेन मनोभासकत्वं च बोध्यम् ' इतिचोक्तम् ॥

सिद्धान्तबिन्दुटीकायामेवोत्तरत्र—अधिष्ठानीभूतसाक्षिण्येव मनोऽवच्छिन्नरूपेण ज्ञानत्वात् । तदुक्तमद्वैतसिद्धौ—' यत्र दृश्याध्यासस्तत्र ज्ञानत्वम् । ननु ज्ञानत्वविशिष्टेऽध्यास इति, यदि च साक्षिरूपस्य ज्ञानत्वमित्याग्रहः तादृशमनोऽवच्छिन्नचित्तादात्म्यविशिष्टसाक्ष्येव साक्षात्करोत्यर्थोऽस्तु । एवं जानात्यर्थोऽपि पूर्वोक्तरीत्या प्रतिबिम्बप्रयोजकमनोऽवच्छिन्नाचित्तादात्म्यस्साक्ष्येवोच्यताम् । एवं वृत्तेरावरणभङ्गार्थत्वपक्षे अज्ञानाविषयप्रयोजकमनोऽवच्छिन्नचिद्विशिष्टस्साक्षी । साक्षात्करोतेः असत्वापादकाज्ञानविषयत्वप्रयोजकमनोऽवच्छिन्नचिद्विशिष्टस्साक्षी जानातेरर्थः ' इतिचोक्तम् ॥

अत्र सिद्धान्तबिन्दौ साक्षिसाधनपरश्रुत्यादिकं प्रागेव (        ) पर्यालोचितम् । साक्षिरूपज्ञानाश्रयत्वं मनसः उपपादितम् । अद्वैतसिद्ध्यादौ च वृत्तिप्रतिबिम्बितचितः वृत्त्यवच्छिन्नचिद्रूपदर्शनतादात्म्येन द्रष्टृत्वमित्युक्तम् । निर्विशेष

## श्रीभाष्यम्

**सचायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत। आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोऽहमित्येवावभासत इति सिद्धम्। यत्तु मोक्षदशायामहमर्थो नानुवर्तेत इति। तदपेशलम्। तथासत्यात्मनाशएवापवर्गःप्रकारान्तरेण प्रतिज्ञातस्स्यात्। नचाहमर्थो धर्ममात्रं येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत प्रत्युत स्वरूपमेवाहमर्थ आत्मनः। ज्ञानंतु तस्य**

## श्रुतप्रकाशिका

स्मरतीत्यन्वयः। ततः किमहमर्थस्यात्मत्वइत्यत्राह—**सचेति**। अस्मिन्नर्थे अनुमानमुत्तरत्र विस्तरेण विवक्षितम्, अत्र सङ्ग्रहेणाह—**आत्मने स्वयमिति**। आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति व्याप्तिवचनं * जाग्रदात्मा सपक्षः स्वस्मै प्रकाशमानत्वादिति हेतुः। निगमयति। **स्वापादीति**। अविशदावभासस्य सर्वाभ्युपगतत्वात्, श्रुतिस्वारस्यात्, परामर्शस्वारस्यात् साक्षित्वोपपत्तेः, प्रत्यक्त्वसिद्धेः सुषुप्तावात्मा अहमिति स्फुरतीत्युक्तं भवति। अथ मुक्तावहमर्थाननुवृत्तिमनूद्य दूषयति। **यत्त्वित्यादिना**। तुरर्थगौरवविशेषे। अपेशलम् असाध्वित्यर्थः। कुतइत्याह—**तथासतीति**। सौगतान् ज्ञानसन्तत्युच्छेदं मोक्षं वदतः स्वरूपनाशस्य अपुरुषार्थत्वेन दूषयता त्वया शब्दान्तरेण स्वरूपनाशउक्तस्स्यादित्यर्थः॥

**नैयायिकाद्युक्ते** मोक्षेऽपि अपुरुषार्थत्वं तुल्यम्। दुःखनिवृत्तिस्सुखप्राप्तिश्चोभयं पुरुषार्थः। अत्रापुरुषार्थभूतदुःखाभावात्पुरुषार्थान्वयः सुखाभावादपुरुषार्थान्वयश्चेति मुक्तेः पुरुषार्थापुरुषार्थमिश्रत्वंहि स्यात्। अहमर्थोऽध्यारोपितः अतस्तद्विगमे स्वरूपनाशो न प्रसजेदित्यत्राह—**नचेति**। –

## गूढार्थसङ्ग्रहः

सिद्धवत्कृत्येत्थमुक्तिर्नघटते। निर्विशेषचिति प्रमाणाभावस्य प्रागेव प्रतिपादनात्। 'अहं जानामि' इति प्रतीतौ चितो द्वेधाभानस्यानुभवविरुद्धत्वात्। शुद्धचिद्व्यतिरिक्तस्य चिदितरसम्बद्धस्य नित्यत्वासम्भवात्। अहमर्थस्य प्रमातुः स्वरूपसङ्कोचविकासाभावेन नित्यताया उपपत्तेः। 'साक्षाद्द्रष्टरि संज्ञायाम्' इति पाणिनिना द्रष्टुस्साक्षित्वोक्त्या द्रष्टुरेवाहमर्थस्य नित्यत्वं तेनैव साक्षात्करोमीत्यादिव्यवहारश्च सम्भवतीति सूचनपूर्वकम् 'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया' इति शिक्षायां साक्षिभूतस्यात्मन एव धर्मभूतज्ञानद्वारा विषयसम्बन्धप्रतिपादनेन परसम्मतार्थः पाणिनेर्नसम्मतः, अत्र बुद्धिमनश्शब्दयोः पृथगुपादानेन बुद्धिः मनोभिन्नज्ञानरूपा विवक्षिता। 'आत्मा मनो युङ्क्ते' इत्युक्त्या मनोऽवच्छिन्नचितः अहमर्थत्वं नात्र विवक्षितम्। किंतु अहमर्थएवात्मा मनोऽघटितएव द्रष्टा विवक्षित इति स्फुटं प्रतीयते। अतः अहमर्थः द्रष्टा आत्मैव पाणिनिसम्मत इति सिद्धान्तिनोऽपि अयमेवार्थः सम्मतः इति निर्णयसम्भवात्। अतः **प्राक्** (२२२.पु) 'अहंप्रत्ययसाक्षित्वेनाहमर्थव्यतिरिक्तात्मप्रतिपादनम् अहं साक्षात्करोमि इति प्रतीतिविरोधेन न सम्भवतीति भावः॥ यामुनमुनिसूक्तिविवरणपरं 'अहमर्थो नचेदात्मा' इत्यादिपूर्वभाष्यमेव विशदयति **तदपेशलमित्यादिना**॥

अहमित्यव्ययार्थस्य गर्वस्य धर्मतया अस्मच्छब्दपरिनिष्पन्नस्य अहमित्यस्यापि अन्तःकरणरूपाहंत्वरूपधर्मसम्बद्धएवार्थः इत्यशङ्क्याह—**नचाहमर्थो धर्ममात्रमिति**। अन्तःकरणविशिष्टस्याहमर्थत्वे न किंचित्प्रमाणं पश्यामः। 'अहं जानामि' इत्यत्र चितः द्वेधाभानस्यानुभवविरुद्धताचेत्यभिप्रेत्याह—**प्रत्युत स्वरूपमेवेत्यादि**। एतेन 'मान्तदान्तत्वभेदेन अर्थभेदकल्पनमयुक्तम्। सर्वेषामेव तेषामहमिति प्रतीयमानाहङ्कारविषयत्वमेव पर्यायतयैव प्रयोगदर्शनात्। मान्त

## श्रीभाष्यम्

**धर्मः । अहं जानामीति ज्ञानं मे जातमिति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव । अपिच यःपरमार्थतो भ्रान्त्या वाऽऽध्यात्मिकादि दुःखैर्दुःखितया स्वात्मानमनुसन्धत्तेऽहं दुःखीति सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलस्स्वस्थो भवेयमित्युत्पन्नमोक्षरागस्स एव तत्साधने प्रवर्तते । स साधनानुष्ठानेन यद्यहमेव न भविष्यामीत्यवगच्छेत् अपसर्पेदेवासौ मोक्षकथाप्रस्तावात् । ततश्चाधिकारिविरहादेव सर्वमोक्षशास्त्रमप्रमाणं स्यात् । अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इतिचेत् किमनेन । मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठत इति मत्वा नहि कश्चित् बुद्धिपूर्वकारी प्रयतते । अतोऽहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम् । सच प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते स्वस्मै प्रकाशमानत्वात् योयस्स्वस्मै प्रकाशते ससर्वोऽहमित्येव प्रकाशते यथा तथाऽवभासमानत्वेनोभयवादिसम्मतस्संसार्यात्मा । यःपुनरहमिति न चकास्ति नासौ स्वस्मै प्रकाशते यथा**

## श्रुतप्रकाशिका

कुतइत्यत्राह–**अहमिति** । अहमर्थ धर्मतया ज्ञानप्रतीतेरेव पूर्वोक्तहेतोरेवेत्यर्थः । अहमर्थात्मत्वसमर्थनोपजीवनेन स्वरूपनाशप्रङ्ग उक्तः । एवं धर्मधर्मिभावेन प्रतीत्या अनुवृत्तिरुपपादिता ॥

अथ श्रुत्यर्थापत्तिमाह—**अपिचेत्यादिना** । पूर्वमहमर्थस्यात्मत्वसमर्थनाय श्रुत्यर्थापत्तिरुक्ता । इदानीमहमर्थस्य मुक्तावनुवृत्त्युपपादनाय तामेव श्रुत्यर्थापत्तिं विस्तरेणाह । यस्स्वात्मानं दुःखिनमनुसंधत्ते सएव तन्निवृत्तिसाधने प्रवर्तते सचाहमर्थएव । दुःखित्वं भ्रान्तिसिद्धमितिचेत् * यस्स्वात्मानं भ्रमवन्तमनुसंधत्ते सएव भ्रमनिवृत्तिसाधने प्रवर्तते । सचाहमर्थः द्विचन्द्रज्ञानादिभ्रान्तिमतोऽपि स्वभ्रान्तिनिवृत्तिरेवापेक्षिता नतु स्वविनाशः । अतोऽहमर्थविनाशोऽपुरुषार्थइत्यभिप्रायेण परमार्थतो भ्रान्त्यावेत्युक्तम् । अनुसंधत्त इत्यन्तेन निरस्ताखिलदुःखोऽहमित्यत्रापेक्षितं वक्तव्यमुक्तम् । निरस्तेत्यादिश्लोकं विवृणोति । **सर्वमेतदित्यादिना** । **अनाकुलस्स्वस्थो भवेयमिति** । अपुनर्भवमपोह्येत्येतत्फलमुक्तमनाकुल इति । आगामिदुःखशङ्कया मनःक्षोभआकुलत्वं तदभावोऽनाकुलत्वम् । स्वस्थः स्वस्मिन् स्थितः स्वभावे स्थितः यथाऽवस्थितस्वात्मानुभवपरः । अनन्तानन्दभागिति फलम्, सएव पूर्वदुःखितएव य उत्पन्नानिष्टनिवृत्तीष्टप्राप्त्यभिलाषः सएवेत्यर्थः । श्रवणादाविति पूर्वमुक्तत्वादिह तत्साधन इत्येतावदुक्तम् अपसर्पेदसाविति ग्रन्थेन फलितमर्थमाह—**ततश्चाधिकारीति** । श्रवणाद्यायाससाध्यस्य शास्त्रस्यापुरुषार्थपर्यवसायित्वे श्रवणाद्यधिकारिविरहात् श्रवणादिसापेक्षस्य–शास्त्रस्य प्रमितिजनकत्वलक्षणं प्रामाण्यं न स्यादित्यर्थः । मयिनष्टेऽपीत्येतद्विवृणोति । **अहमुपलक्षितमित्यादिना** । बुद्धिपूर्वकारीत्यनेन कस्यापीति पदं विवृतम् । श्रुत्यर्थापत्तिं निगमयति । **अतइति** । अहमर्थविगमे ज्ञत्वासिद्धिरप्यनुसन्धेया ॥

**अनुमानमाह–सचेति** । किंच अनुमानमप्यस्तीति चार्थः । अन्वयव्याप्तिमाह—**योयइति** । तथाऽवभासमानत्वेन स्वस्मैप्रकाशमानत्वेन । व्यतिरेकव्याप्तिं दर्शयति । **यःपुनरिति** । उपनयमाह–**स्वस्माइति** । निगमनमाह–

## गूढार्थसंग्रहः

दान्तत्वेनानिर्धारिताहंशब्दस्याहङ्कारे प्रयोगदर्शनस्य नियामकत्वात् ।' इत्यद्वैतसिद्धौ ममहि उच्चारयितृतावच्छेदकत्वेनाहङ्कारदान्तमान्ताहंपदानां स्वोच्चारयितरि ता तव दान्ताहंपदस्यैव । एवं च शुद्धात्मनोरनुच्चारयितृत्वेन लक्ष्यत्वम्' इति

### श्रीभाष्यम्

**घटादिः स्वस्मै प्रकाशते चायं मुक्तात्मा। स तस्मादहमित्येव प्रकाशते। नचाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः। मोक्षविरोधात् अज्ञत्वाद्यहेतुत्वाच्चाहम्प्रत्ययस्य। अज्ञानंनाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा। अहमित्येवात्मनस्स्वरूपमिति**

### श्रुतप्रकाशिका

**तस्मादिति**। स्वस्मै प्रकाशमानत्वं हेतुः अहमिति व्यवहारार्हत्वं साध्यमिति न साध्याविशिष्टता। अहमित्येव प्रकाशते अहमिति व्यवहारार्हं प्रकाशतइत्यर्थः। साध्यविपरीतविशेषसाधकतया विशेषविरुद्धत्वं शङ्कते। **नचेति**। आदिशब्दाद्रागद्वेषदुःखादि विवक्षितम्। ननु व्यापकंहि प्रसञ्जनीयम्। नच कार्वं कारणस्य व्यापकं सत्यम्। कारणजातीयस्यतु कदाचित्कार्यप्रसक्तिर्व्यापिका, अतोऽहंप्रत्ययेनात्मनोऽज्ञत्वादिप्रसञ्जनम्। अज्ञत्वादिप्रसक्तिःश्रुतिविरुद्धेत्याह—**मोक्षेति**। **'न पश्यो मृत्युं पश्यति नरोगं नोत दुःखताम्'** इतिहि श्रुतिः। अतो यथा सहदर्शनमात्रेण पर्वते भाण्डाप्रसक्तिः प्रत्यक्षबाधाद्बाध्यते तद्वत्कालात्ययापदेशइत्यर्थः॥

सोपाधिकत्वमाह—**अज्ञत्वादीति**। संसारित्वाहमर्थ(त्व)योस्सहदर्शनमात्रेण मुक्तावपि संसारित्वादिप्रसङ्गश्चेदनुभवस्यापि तत्सहभावदर्शनात्त्वत्पक्षेऽपि मुक्तौ संसारित्वप्रसङ्गः। तत् मोक्षग्राहिप्रमाणविरोधात्कालात्ययापदिष्टम्। संसारित्वादेरनुभवप्रयुक्तत्वाभावात्सोपाधिकत्वंचेति चेत्तदस्मत्पक्षेऽपि समानमित्यभिप्रायः। अनेनाहमिति भासनं न स्वस्मै भासमानत्वप्रयुक्तम् अपित्वज्ञत्वप्रयुक्तमिति हेतोस्सोपाधिकत्वं च श्रुतिबलेन व्याप्तेर्भग्नतया सहदर्शनमात्रमेवेति परिहृतं भवति एवं कालात्ययापदेशसोपाधिकत्वे उक्ते॥

तत्र सोपाधिकत्वमुपपादयितुमज्ञानत्वेन सम्भावितशिरांसि विकल्पयति। **अज्ञानंनामेति**। धर्मैक्येसति प्रकारान्तरारोपणेन ज्ञानमन्यथाज्ञानं यथा पीतश्शङ्ख इति। इदं रजःकार्यं, धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानं, यथा शुक्ताविदं रजतमिति इदंतमःकार्यम्।

अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी। अधर्मं धर्ममिति या मन्यते तमसावृता॥
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसी। —इति स्मृतेः।

अहम्प्रत्ययस्य स्वरूपज्ञानरूपत्वात्तत्प्रागभावान्यथाज्ञानविपरीतज्ञानानि विरोधादेवापगतानीत्याह—**अहमित्येवेति**। अह-

### गूढार्थसंग्रहः

चन्द्रिकायांचोक्तिरनुपादेया। 'अहं शुभमोर्युस्' (पा.सू.५.२.२४०) इति सूत्रे अहमिति शब्दान्तरमेवेति **काशिका** प्रतीकमुपादाय पदमञ्जर्यां 'ननु नात्र कश्चिच्छब्दःप्रकृतः' यदपेक्षं शब्दान्तरत्वं स्यात्। सत्यम्। 'त्वाहौसौ' इत्यस्मदादेशोऽहंशब्दः प्रसिद्धिवशात् बुद्धिस्थो निर्दिष्टप्रायः, तदपेक्षं शब्दान्तरत्वम्। अहङ्कारे वर्तत इत्यनेनार्थभेदमाह—'गर्वोऽभिमानोऽहंकार' इति हरदत्तोक्तिविरोधाच्च। अस्मच्छब्दपरिनिष्पन्नस्य दान्ताहमित्यस्य आत्मवाचित्वं भावप्रकाशे द्वितीयसम्पुटे निर्धारितम्॥ **नचाहमिति प्रकाशमानत्वेनेति**। अहमित्यस्य चिदचिद्ग्रन्थिरूपत्वेन अध्यासात्मकत्वमत्र शङ्काबीजम्। **अहमित्येवात्मनः स्वरूपमिति**। 'येनाहं नामृतास्याम्' (बृ.४.४.२) 'सोऽहं भगवः शोचामि, तंमाभगवान् शोकस्य पारं तारयतु' (छा.७.३.१) इत्यादिश्रुतिस्वारस्यादिति भावः॥

### श्रीभाष्यम्

**स्वरूपज्ञानरूपोऽहम्प्रत्ययो नाज्ञत्वमापादयति कुतस्संसारित्वम् । अपितु तद्विरोधित्वाज्ञाशयत्येव । ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयतेहि ' तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च**

### श्रुतप्रकाशिका

मित्येवात्मनः स्वरूपमहमिति व्यवहारबुद्ध्यर्हमेवात्मनस्स्वरूपमित्यर्थः । अहम्प्रत्ययस्याज्ञत्वादिप्रयोजकत्वदूषणेनाज्ञत्वादेरविद्यान्वयएवोपाधिरित्यर्थादुक्तं भवति ॥

अथवा कार्यकारणभावेन व्याप्तिमङ्गीकृत्य परेणाज्ञत्वादिप्रसङ्ग उक्त इति व्याप्तिप्रतिक्षेपाय कार्यकारणभावं प्रतिक्षिपति । **अज्ञत्वाद्यहेतुत्वाच्चेत्यादिना** । अज्ञत्वफलमपि नास्तीत्याह—**कुतस्संसारित्वमिति** । निवृत्ताविद्यानामपि अहमित्यात्मप्रतिपत्तिदर्शनेन अहम्प्रत्ययस्य मुक्तावनुवृत्तिमाह—**ब्रह्मात्मभावेति** । **तद्धैतत्पश्यन्निति** ब्रह्मात्मकत्वसाक्षा-

### गूढार्थसंग्रहः

**तद्धैतत्पश्यन् ऋषिर्वामदेवःप्रतिपेदे इत्यादि** । तत् ब्रह्म एतत् आत्मानमेव अहमस्मीति पश्यन् एतस्मादेव ब्रह्मणो दर्शनात् ऋषिर्वामदेवाख्यः प्रतिपेदेह प्रतिपन्नवान् किम् ' इति (शं) भाष्यम् ' तदात्मानमेवावैत् अहंब्रह्मास्मि ' इति तस्मात् ' तत्सर्वमभवदिति उपक्रमवाक्ये आत्मन्शब्दसत्वेन एतच्छब्दस्य यथोक्तएवार्थः । आत्मन्शब्दश्च तत्रैव पूर्वं ' स एष इह प्रविष्ट आनखाग्रेभ्यः ' इत्यत्र ' स वा अयं सर्वासु पूर्षु पुरिशयः । पुरःपुरुष आविशत् ' इति वक्ष्यमाणपुरुषशब्दनिर्वचनानुगुणार्थप्रतिपादनेन ' आत्मैवेदमग्रआसीत् पुरुषविधः ' इत्येतद्ब्राह्मणो(३.अ.४.ब्रा)पक्रमे पुरुषात्मशब्दयोः एकार्थकत्वबोधनेन च पुरुषशब्दसमानार्थकः । ' अन्तःप्रविष्टश्शास्ताजनानाँसर्वात्मा ' इति श्रुत्यन्तरानुरोधत्, अन्तःप्रविश्य नियन्तृवचनः आत्मशब्दः, एवं च ' तदात्मानमेवावैत् अहंब्रह्मास्मि ' इत्यत्रापि आत्मन्शब्दवैयर्थ्यान्यथाऽनुपपत्त्या अन्तर्यामिवेदनमेव विवक्षितम् । अन्तर्यामिवेदननिमित्तकमेव ' तत्सर्वमभवत् ' इत्यत्र सामानाधिकरण्यम् । एवं ' यो यो देवानां प्रत्यबुध्यत स एव तदभवत् ' इति तदनन्तरैतत्पूर्ववाक्ये अन्तर्यामिवेदनरूपप्रतिबोधएव विवक्षितः । ' स एव तदभवत् ' इत्यत्रापि अन्तर्याम्यैक्यमेव विवक्षितम् । एतद्विवरणे ' पुरःपुरुषआविशत् ' इति सर्वत्र ब्रह्मैवान्तःप्रविष्टमित्यवोचाम ' इति परैरप्युक्तम् (शं.उ.भा) ॥

एवं च **तद्धैतत्पश्यन् ऋषिर्वामदेवः** इत्यत्रापि वामदेवस्य अन्तर्यामिदर्शनमेव पश्यन्नित्यत्र विवक्षितं पूर्ववाक्यद्वयानुसारात् । ' अहं मनुः ' इत्यादिप्रतिपत्तिरपि अन्तर्यामिप्रतिपत्तिरेव विवक्षिता । अहमित्यस्य अहंत्वविशिष्टान्तर्यामिपरत्वेऽपि अहमित्यस्य शुद्धात्मपरत्वं वर्तत एव, विशेषणतया अस्मदर्थस्य विवक्षणेऽपि अस्मच्छब्दस्य सत्वेन ' अस्मदुत्तमः ' (पा.सू.१.४.१०७) इति उत्तमपुरुषस्य नानुपपत्तिः । अयमर्थः ' तत्त्वमसि ' इति वाक्यार्थविचारे निरूपयिष्यते । ' शास्त्रदृष्ट्यातूपदेशो वामदेववत् ' इति सूत्रे परस्य जीवान्तर्यामित्वप्रतिपादकशास्त्रमेव विवक्षितमिति पूर्वमेव (२२५.पु) निरूपितम् ॥

एतेन—' यच्चाहंशब्दो जीवान्तर्यामिणि मुख्यः ' ' अहं मनुरभवं सूर्यश्च ' इति अन्तर्यामिण्यहंशब्दप्रयोगादिति तन्न ' शास्त्रदृष्ट्यातूपदेशो वामदेववत् ' इति न्यायेन वामदेवजीवचैतन्यस्य वस्तुतो ब्रह्माभेदेन सूर्यादिभावतया

### श्रीभाष्यम्

**इति (बृ-३.४-ब्रा.१०) 'अहमेव च वर्तामि भविष्यामि' इत्यादि। सकलेतराज्ञानविरोधिन-स्सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव' 'हन्ताहमिमास्तिस्रोदेवताः**

### श्रुतप्रकाशिका

त्कारकथनेन निर्धूतनिरवशेषाविद्यत्वं गम्यते। ब्रह्मणोऽपि तथा प्रतिपत्तिमाह—**सकलेतरेति**। सकलेतराज्ञानविरोधिनः नहि सकलेतरविषहरणनिपुणस्य वैनतेयस्य विषवश्यत्वसम्भव इति भावः। सच्छब्दप्रत्ययमात्रभाजः, सच्छब्दस्य सदिति प्रत्ययस्य च विषयभूतस्य। मात्रचा पाश्चात्यनामरूपभाक्त्वव्यावृत्तिः। अनेनाहङ्कारसृष्टेः पूर्वमप्यहम्प्रत्ययं ज्ञापयति—अहम्प्रत्ययस्फुटीकरणाय **अहमिमाः** इति वाक्यं पूर्वमुपादत्ते। **बहुस्याम्** इति वाक्ये **अस्मद्युत्तमः** इत्युत्तमपुरुषबलात् अहमिति प्रत्ययःसिद्धः। अहमिमास्तिस्र इत्यत्र अहंशब्दः कण्ठोक्तः नह्यहङ्कारस्य नामरूपव्याकर्तृत्वमिति भावः। बहू-

### गूढार्थसंग्रहः

अन्तर्यामिपरत्वाभावात्। 'तद्यो यो देवानां प्रत्यबुध्यत, सएव तदभवत्' इति **पूर्ववाक्ये** तत्त्वबोधननिमित्तकब्रह्मभावस्य प्रकृततया 'पश्यन्प्रतिपेदे' इत्यादेरपि बोधानिमित्तकब्रह्मपरतया अन्तर्यामिपरत्वाभावात्। नच तर्हि शुद्धचित्यहमित्युत्तमपुरुषप्रयोगः भूतपूर्वगत्या सम्भवात्' (अ.सि.अहंब्रह्मास्मीत्यादिश्रुत्यर्थकथने) इत्युक्तिः निरवकाशा। अहंत्वविशिष्टार्थविवक्षणेनोत्तमपुरुषोपपत्तौ भूतपूर्वगतिकल्पनस्यानुचितत्वात्। अत्र—'भूतपूर्वगत्या—बाधितानुवृत्त्या द्वारिभूतबोधस्याहंत्वप्रकारकस्य अखंडाकारबोधस्य पूर्वं भूतत्वेनेतिवाऽर्थः' इति लघुचन्द्रिकोक्तिरप्यनुपादेया॥

**ब्रह्मात्मभावापरोक्षनिर्धूतनिरवशेषाविद्यानामपि** इति श्रीभाष्यसूक्त्या लघुसिद्धान्तनिर्धारितदिशा बाधितानुवृत्तिर्नसम्भवतीति बोधितम्। द्वारीभूतबोधानन्तरपरसम्मतबोधस्तु निर्विकल्पकसौषुप्तप्रत्यक्षासम्प्रज्ञातसमाधिषु सोऽयं देवदत्त इति बोधे च सविशेषविषयत्वस्थापनेन महावाक्यजन्यबोधकालेऽहमर्थस्य सत्वेन तद्बोधेऽहमर्थविषयकत्वं नास्तीति स्थापनासम्भवेन च शशशृङ्गतुल्यएवेति तद्बोधप्रत्याशायाअपि नावकाशः॥

**सकलेतराज्ञानविरोधिनः इत्यादि**। 'इदमभिन्नमग्रे यदासीत् तत्सदेव, एकमेवाद्वितीयम्' इत्येवमुद्देश्य विधेयभावस्य विवक्षितत्वात्, अग्रे विद्यमानमनूद्य अखण्डसदद्वितीयविधानात् अग्रकालविद्यमानत्वोपलक्षिते वस्तुनि अखण्ड सदाद्वितीयस्यैव धीः' (ए.अ.श्रु.अ.वि) इति अद्वैतत्वोपलक्षिब्रह्मनिर्विकल्पकनिश्चयः उपक्रमोक्तः व्यवस्थापितः। एवं च ब्रह्मनिर्विकल्पकस्य 'सदेव सौम्य' इति वाक्यतात्पर्यविषयत्वे तस्याज्ञानसामान्यविरोधित्वं नास्तीत्युक्तेरसम्भवात्। एकाज्ञानपक्षस्यैव सिद्धान्तसिद्धत्वात्। अवस्थाविशेषशक्तिविशेषादिकंतु अविद्यावादे पर्यालोचयिष्यते इति भावः॥

**सच्छब्दप्रत्ययमात्रभाजः इति**। अत्र मात्रपदेन उपासनव्यवच्छेदः उपासनस्यापरब्रह्मविषयकत्वेनाप्रमात्वात् ज्ञानस्य परब्रह्मविषयकत्वेन प्रमात्वेन प्रमाविषयस्यैव परब्रह्मत्वादिति भावः॥ अत्र शब्दजन्यप्रत्ययविषयत्वमात्रोक्त्या वाच्यार्थस्य तात्पर्यविषयत्वं नास्तीति सूचितम्। **हन्ताहमिमाः इत्यादि**। 'सेयं देवतैक्षत' इति तत्पूर्ववाक्यम् अत्र तच्छब्दः 'सदेव सौम्येदमग्रआसीत्' इति पूर्ववाक्यतात्पर्यविषयीभूतार्थपरामर्शी। पूर्ववाक्यतात्पर्यविषयीभूतस्यात्मनः तच्छब्देन अहमित्यनेन च निर्देशेन परमात्मनोऽपि अहमर्थत्वं सिद्ध्यति। तस्यैव **बहुस्यां प्रजायेय** इत्यत्र उत्तमपुरुषनिर्देशेन च उक्तार्थौ दृढीकृतः॥

## श्रीभाष्यम्

**(छा.६.प्र.३.ख.२) ‘ बहुस्यां प्रजायेय ’ (तै.आनं.६.अ.२) ‘ स ईक्षत लोकान्नु सृजा ’ इति (ऐतरेय.१,अनु.१.खं.१) तथा ‘ यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः । अतोऽस्मि लोके-वेदे च प्रथितःपुरुषोत्तमः ॥ ’ (गी.१५.अ.१८) ‘ अहमात्मा गुडाकेश ’ (गी.१०.अ.२०)**

## श्रुतप्रकाशिका

पनिषत्स्वहमिति निर्देशज्ञापनायोपादत्ते । **स ईक्षतेति ।** सृजा इत्युत्तमपुरुषेणाहंशब्दाकर्षसिद्धिरिति भावः । स्मृतिं दर्शयति । **तथा यस्मादिति ।** यस्मादिति वचनं क्षराक्षरातीतस्वाभाविकरूपेणाहम्प्रत्ययज्ञापनार्थमुपात्तम् । नह्यहङ्कारः क्षराक्षरातीतः, अतोऽहमस्मीत्युत्तमपुरुषेणाप्यहमर्थसिद्धिः । आत्मनोऽहंप्रत्ययं ज्ञापयति अहमात्मेति नह्यहङ्कारश्चिदचिदन्तरात्मा । स्वाभाविकनित्यरूपेऽहम्प्रत्ययं दर्शयति नत्वेवाहमिति । नह्यहङ्कारो नित्यः मृत्युविरोधिमुक्तिप्रदोऽप्यहम्प्रत्ययविषय इत्याह—तेषामिति नह्यहङ्कारो मुक्तिप्रदः एवमनेकश्रुतिस्मृतिवचनोपादानं परविवक्षितद्वित्रताद्दशवचनापनोदनार्थम्

## गूढार्थसंग्रहः

**स ईक्षत लोकान्नु सृजा इति ।** ‘ आत्मावाइदमग्रआसीत् नान्यत्किंचनमिषत् ’ इति तत्पूर्ववाक्यम् । तत्र ‘ नान्यत्किंचनमिषत् ’ इत्यत्र आत्मान्यस्य मिथ्यात्वविवक्षायाः परसम्मतत्वेन आत्मा शुद्धात्मैव विवक्षित इति ‘ सईक्षत ’ इत्यत्र तच्छब्देन तस्यैव परामर्शेन ‘ सृजा ’ इति उत्तमपुरुषेण शुद्धात्मन एवाहमर्थता सिद्ध्यति । छान्दोग्यैतरेयश्रुत्योरुभयोः एकार्थत्वं परेषामपि सम्मतम् । ‘ मिषस्पर्धायाम् ’ इति प्रसिद्ध मिषधातोः धातूनामनेकार्थत्वेन आसीदीत्यर्थकत्वं (ऐतरेयसायणीयभाष्ये) न युक्तम् । मिषधातोः स्पर्धार्थकत्वाङ्गीकारे च ‘ आत्मा वा ’ इति पूर्ववाक्ये सामानाधिकरण्येन उपादानोपादेयभावस्य प्रतीत्या उपादानकारणेन स्पर्धमानं निमित्तकारणमेव । ‘ नान्यत्किंचनमिषत् ’ इत्यत्र आत्माऽन्यनिमित्तकारणस्यैव निषेधः विवक्षितः । एतदनुरोधेन ‘ सदेव सौम्येदमग्रआसीदेकमेवाद्वितीयम् ’ इत्यत्रापि ‘ अग्रे एकमेवासीत् ’ इति योजना । ‘ अद्वितीयम् ’ इत्यत्र उपादानान्यनिमित्तकारणस्यैव निषेधः विवक्षितः । एवं च ‘ अग्रे विद्यमानमनूद्य ’ इत्यादिलघुचन्द्रिकोक्तार्थः श्रुतौ न विवक्षित इत्यपि निर्णीयते ॥

**तंत्वौपनिषदं पुरुषम्** इत्युपनिषत्तात्पर्यविषयत्वेन प्रतिपादितस्य पुरुषस्य अहमर्थत्वं गीतोपानिषदाचार्येण निर्णीतमिति तात्पर्येणाह—**यस्मात्क्षरमतीतोऽहम् इत्यादि ।** ‘ परात्परं पुरिशयं पुरुषमीक्षते ’ (प्रश्न) ‘ परात्परं पुरुषं याति विद्वान् ’ (कैवल्य) ‘ परात्परं पुरुषमुपैति ’ (मु) ‘ स उत्तमःपुरुषः ’ (छा.८.प्र) इत्यादौ य उत्तमःपुरुषः प्रतिपादितः स एव **तंत्वौपनिषदं पुरुषम्** इत्यत्रापि विवक्षितः । अत्र पूर्वं ‘ वेदैश्च सर्वैरहमेव वेद्यः ’ इत्यनेन ‘ वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ’ (कै.व.१.२२) इति श्रुत्यर्थः **तंत्वौपनिषदम्** इत्यत्र औपनिषदपदार्थश्चाभिहितः । अत्र क्षराक्षरशब्दौ न परसम्मतार्थप्रतिपादकौ, किंतु बद्धमुक्तपरावेव । ‘ अक्षरात्परतःपरः ’ इति श्रुतिरपि ‘ परतो अक्षरात् ’ इति सामानाधिकरण्येन मुक्तावधिकोत्कर्षमेव प्रतिपादयतीति च प्रागेव (२२९.पु) निर्णीतम् । अत्र ‘ वेदैरनेकैरहमेव वेद्यः ’ इति श्रुतौ अहमर्थः न जीवः अपित्वौपनिषदपुरुषएवेति गीतायां निर्धारणेन तत्पूर्वं तत्र अहमितिशब्दास्सर्वेऽपि परमात्मपराएवेति निर्णीतं भवति । तेन ‘ चिन्मात्रोऽहं सदाशिवः ’ (१८) ‘ चित्सदाहम् ’ (२१) इत्यत्र अहमर्थस्य ज्ञानस्वरूपत्वमेव विवक्षितम् । नतु जीवब्रह्माभेद इति निर्धारितं भवति ॥

## श्रीभाष्यम्

**'नत्वेवाहं जातुनासम्' (गी.२.अ.१२) 'अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा' (गी.७. अ.६) 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते' (गी.१०.अ.८) 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' (गी.१२-७) 'अहं बीजप्रदःपिता' (गी.१४.४) 'वेदाहं समतीतानि' (गी.७ २६) इत्यादिषु। यद्यहमित्येवात्मनस्स्वरूपम्।**

## श्रुतप्रकाशिका

एभिरहंशब्दैश्चिन्मात्रमुपलक्ष्यतेचेदनेकवाक्यस्थाहंशब्दलक्षणैव दोषः। **महाभूतान्यहङ्कारः**—इति क्षेत्रान्तर्भाववचनमेकम्—

**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ॥**

इति त्याज्यत्वपरं वचनं द्वितीयम् **अहङ्कारविमूढात्मा** इत्यपरम् एतत्त्रयमनुदाहृतमप्यभिप्रेतं उत्तरत्र परिहारात्। पूर्व-

## गूढार्थसङ्ग्रहः

**नत्वेवाहमित्यादि**। अत्राहमर्थस्य कालत्रयसत्त्वप्रतिपादनेन नित्यात्मरूपत्वमेव नत्वन्तःकरणादिरूपत्वमिति सिद्ध्यति ॥ **तेषामहं समुद्धर्तेति**। अहमर्थस्य जीवानां मृत्युसंसारसागरात्समुद्धर्तृत्वस्य कथनेन अहमर्थस्य परसम्मता—नित्यपदार्थरूपता निराकृता भवति। पञ्चपादिकायाम्—'अहमिदं जानामि' इत्यत्र त्रिःखःकल्पना इति बौद्धमतमुपक्षिप्य प्रभाकरभट्टमतेन समाधानमुपवर्ण्य तद्दूषयित्वा, 'तस्मात् ब्रह्मविदामेकपुण्डरीकस्य लोकानुग्रहैकनिरततया सम्यग्ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम्' इत्युपक्रम्य अहमर्थस्यानात्मत्वं—सिद्धान्तितम्। अत्र विवरणम्—'यस्मादात्मनोऽहंकारो भिद्यते, तस्मादागममूलभाष्यवचनमुपपन्नमित्याह—'तस्माद्ब्रह्मविदाम्' इति। कश्चासावागमः? 'स एवाधस्तात् स एवोपरिष्टात्' इति भूमाख्यब्रह्मणः सर्वात्मकत्वमभिधाय 'अथातोऽहङ्कारादेशः' इति तस्यापि सर्वात्मकत्वमुक्त्वा 'अथात आत्मादेशः' इत्यात्मानमहङ्काराद्भेदेन निर्दिशति ॥

ननु जीवब्रह्मणोः सार्वात्म्यव्यपदेशः यथैकत्वव्यपदेशसिद्ध्यर्थः एवमहङ्कारस्यात्मैकत्वसिद्ध्यर्थो व्यपदेशस्स्यात्। तन्न, द्वयोस्सार्वात्म्यायोगात्। तत्र युक्तं भेदेन प्रतिपन्नयोर्जीवब्रह्मणोरेकत्वसिद्ध्यर्थः तदुपदेशः, अहङ्कारस्यतु पूर्वमेवात्मैकत्वप्रतिपत्तेः पृथगुपदेशो भेदसिद्ध्यर्थ इति गम्यते। ब्रह्मणः परोक्षस्य प्रत्यक्षत्वसिद्धये अहमात्मत्वमुपदिश्य पुनस्तद्व्युदासेन मुख्यात्मत्वमुपदिशतीत्यर्थः। 'महाभूतान्यहङ्कारः' इति च स्मृतिः' इति ॥

अत्र अद्वैतसिद्धिः (अहमर्थानात्मत्वोपपत्तौ) 'नापि मध्येऽहङ्कारोपदेशवैयर्थ्यम्; ब्रह्मणः आपरोक्ष्यायाऽहङ्कारैक्योक्तेः। नच त्वन्मते प्रत्यगर्थरूपस्यात्मनएवापरोक्षैकरसत्वेन तदैक्योक्त्यैवापरोक्ष्यसिद्ध्या अहङ्कारे आविद्यमानसार्वात्म्योक्त्ययोग इति वाच्यम्। आत्मसम्बन्धेनैवाहङ्कारोऽप्यपरोक्ष इति आत्मैक्यादेवापरोक्ष्यं यद्यपि सिद्धम्; तथाऽप्यहङ्कारे आपरोक्ष्यस्य सुप्रसिद्धत्वात् अहङ्कारोक्तिर्नायुक्ता' इति ॥ अत्र पृथगुपदेशो भेदार्थ इति विवरणोक्तार्थपराद्वैतसिद्धितात्पर्यमित्थमुक्तं चन्द्रिकायाम् 'पृथगुपदेशो भेदार्थ इति। परिच्छिन्नस्याहङ्कारस्य स्वरूपेण न सार्वात्म्यम्। किंतु सर्वात्मकचिदात्मघटितत्वेनेत्येतज्ज्ञापयितुम् 'अथात आत्मादेशः' इत्यादिकमुक्तम्। नचैवम् 'अथातोऽहङ्कार' इत्यादिकमनुक्त्वा 'अथात आत्मा' इत्याद्येवोच्यतां, तावतैव ब्रह्मात्मनोरैक्यसम्भवादिति वाच्यम्; आत्मपदस्य लोकेऽहमर्थ

## गूढार्थसंग्रहः

एव प्रयोगात्, शुद्धात्मनः सार्वात्म्यबोधनासम्भवात्। अहङ्कारादेशवाक्योत्तरम् आत्मादेशवाक्योक्तौतु पौनरुक्त्यप्रतिसन्धानद्वाराऽऽत्मपदस्य शुद्धात्मपरत्वनिश्चयेन शुद्धात्मनः सार्वात्म्ये उक्ते तद्घटितत्वेनाहङ्कारस्य सार्वात्म्योक्तिरिति निश्चयसम्भवः, तथाचोक्तरीत्याऽहङ्कारातिरिक्तात्मन्यात्मपदतात्पर्यनिर्णायकत्वेन पृथगुपदेशो भेदार्थ इति भावः' इति ॥

शङ्कराचार्यैरुपनिषद्भाष्ये 'यत्र नान्यत्पश्यति' इत्यधिकरणाधिकर्तव्यतानिर्देशात् 'स एवाधस्तात्' इति च परोक्षनिर्देशात् द्रष्टुर्जीवादन्यो भूमा स्यादित्याशङ्का कस्यचिन्माभूदिति 'अथात' इत्यनन्तरमहङ्कारेणादिश्यत इत्यहङ्कारादेशः। द्रष्टुरन्यत्वदर्शनार्थं भूमैव निर्दिश्यतेऽहङ्कारेण 'अहमेवाधस्तात्' इत्यादिना। अहङ्कारेण देहादिसङ्घातोऽप्यादिश्यते अविवेकिभिरिति अतस्तदाशङ्का माभूदिति अथानन्तरमात्मादेशः आत्मनैव केवलेन सत्स्वरूपेण शुद्धेनादिश्यते' इत्युक्तम्। एतद्भाष्यपर्यालोचनायां भूम्नः अहङ्कारस्यचैक्यमेव 'अथातोऽहङ्कारादेशः' इत्यत्र विवक्षितम्। अहङ्कारस्याविवेकिनां देहाद्यभेदभ्रमेण भूमाभेदो न सम्भवतीति शङ्काविनिवर्त्य विवेकिप्रतिपत्तये अहङ्कारस्य शुद्धात्माभेदः 'अथात आत्मादेशः' इत्यत्र विवक्षित इति निर्मत्सराणां स्फुटम्। एवं स्थिते अहङ्कारात्मनोर्भेदः अनया श्रुत्या कथं सिद्ध्यति ? 'अथात आत्मादेशः' इत्यत्रापि आत्मन्शब्दलक्ष्यस्यैव शुद्धत्वम्। एवम् 'अथातोऽहङ्कारादेश' इत्यत्रापि उभयत्र लक्ष्यार्थविवक्षायां सार्वात्म्यमुपपद्यते। भेदोक्तिर्न घटते। अहङ्कारशब्दवाच्यार्थस्य शुद्धात्मभेदः विवक्षित इत्यपि न सम्भवति 'अथात आत्मादेशः' इत्यत्र वाच्यार्थविवक्षणे सार्वात्म्यं न सम्भवति। लक्ष्यार्थविवक्षणे पूर्व वाक्ये वाच्यार्थो विवक्षितः, अत्र लक्ष्यार्थो विवक्षित इत्यत्र विनिगमकमेव नास्तीति विवरणकृतां भेदसिद्ध्यर्थत्वप्रत्याशाया नावकाशः। 'अथात आत्मादेश' इत्यत्र शुद्धात्मैव लक्ष्यो विवक्षित इति (शं) भाष्ये स्फुटम् ॥

एवंचोभयत्र लक्ष्यार्थविवक्षायाः परमते अकामेनापिसिद्ध्या भूमब्रह्माभेदप्रतिपत्त्यर्थत्वं वाक्यद्वयस्य परमते सङ्गतम्; नत्वहङ्कारशुद्धात्मभेदप्रतिपत्त्यर्थत्वम्। अहङ्कारे आपरोक्ष्यस्य सुप्रसिद्धत्वेन ब्रह्मणः आपरोक्ष्यासिद्धिरित्यपि न सम्भवति। परिच्छिन्नएवापरोक्ष्यं सिद्धमिति, ततः ब्रह्मण्यापरोक्ष्यसिद्धेरसम्भवात्। सार्वात्म्यं कल्पितमिति निश्चये एतद्वाक्यसत्वेऽप्यापरोक्ष्यानिश्चयेन ब्रह्मणः आपरोक्ष्यसिद्ध्यर्थमेतद्वाक्यसाफल्यमपि न सम्भवति। परिच्छिन्नस्याहङ्कारेण स्वरूपेण न सार्वात्म्यम्, किंतु सर्वात्मकचिदात्मघटितत्वेनेत्येतज्ज्ञापयितुं 'अथात आत्मादेश' इत्युक्तमिति चन्द्रिकोक्तिरप्यनुपादेया। 'अथात आत्मादेश' इति वाक्येऽपि लक्ष्यार्थविवक्षण एव सार्वात्म्यम्, एवमेव 'अथातोऽहङ्कारादेश' इत्यत्रापीति विशेषाभावात्। अहङ्कारस्य चिदात्मघटितत्वं चिदचित्संवलनात्मकत्वंचाप्रामाणिकमेवेति प्रागेव (४४१—५०२. पु) उक्तम् ॥

एतेन 'देहादिसङ्घातेऽविवेकिप्रयोगदर्शनात्' इत्युदाहृतोपनिषद्भाष्यानुवाद (अ. सि) विवरणे अविवेकीति। अहङ्कारस्योच्चारयितृशक्तत्वेऽपि चिदचित्संवलितस्योच्चारयितुरविवेकेनैव ग्रहः। शुद्धात्मनि प्रयोगो यद्यप्युक्तार्थरूपशब्दसम्बन्धज्ञानात् तथाऽपि शुद्धात्मस्वरूपज्ञानस्य प्रमात्वान्नाविवेकाधीनत्वम्। अहमर्थस्याविद्याप्रयुक्तत्वेन ग्रहीतुरविवेकित्वमुक्तमिति बोध्यम्' इति चन्द्रिकोक्तिरप्यनादरणीया। अहमर्थस्य चिदचित्संवलितत्वाविद्याप्रयुक्तत्वयोरेव स्थापनासम्भवात्। एतेन 'प्रकृते चाभेदपरत्वे विरोधः जडाजडयोरैक्यायोगात्' इति 'अथातोऽहङ्कारादेश' इति वाक्यस्य भूमाभेदे विरोधः योऽयमद्वैतसिद्ध्युक्तः सोऽपि निरवकाशः। अहमर्थस्य जडत्वं सिद्धवत्कृत्य इत्थमुच्यते। विवरणेतु आगममूलकं भाष्यकारमतमित्युक्तम्। तत्र अहमर्थस्यानात्मत्वं आगमेनैव सिद्ध्यतीत्यभिप्रायो वाच्यः; श्रुतेस्तु अभेद एव तात्पर्यं वर्णितम्। तत्र च जडत्वादभेदो न सम्भवतीति भवद्भिरुच्यते, एवमुक्तिः विदुषां न मुदमादधाति। देहादि

## श्रीभाष्यम्

**कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते? 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेवच' (गी.१३.अ.५) इति? उच्यते—स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात्**

## श्रुतप्रकाशिका

मेतद्वचनाभिप्रायेण सुषुप्तिमुक्त्योर्नान्वेतीत्युक्तम्। इममर्थमवलम्ब्य चोदयति। **कथं तर्हीति**। परिहरति। **उच्यतइति।** अहमर्थाहङ्कारयोरभेदबुद्ध्या परेण परिचोदिते प्रकृतिप्रत्यययोरर्थविभागव्युत्पादनाय प्रकृत्यर्थभूतआत्मन्यहंबुद्धेः प्रामाणिकत्वस्थैर्यं दर्शयति। **स्वरूपोपदेशेष्विति**॥

## गूढार्थसंग्रहः

सङ्घाते अविवेकिप्रयोगोक्त्या विवेकिनां देहादिसङ्घातभिन्न एव प्रयोग इति भवद्भिरप्यभ्युपगतं भवति। 'अयमर्थः श्रूयतां चाप्यविद्यायाः स्वरूपम्' इति विष्णुपुराणविवरणपरभाष्ये स्फुटीभविष्यति॥

एवं च विवेकिनां देहादिसङ्घातभिन्नेऽहंशब्दप्रयोगः तज्जन्यज्ञानस्य प्रमात्वं च सम्प्रतिपन्नम्। तत्र परमते—सिद्धान्ते च रीतिर्भिन्ना। सिद्धान्ते वाच्यार्थः, परमते लक्ष्यार्थ, इति विशेषात्। सिद्धान्तेऽहमिति प्रतीतिविषय एवाहङ्कारादेश इत्यत्र विवक्षितः। अहमिति प्रतीतिविषयस्य परिच्छिन्नस्य जीवस्य सार्वात्म्यं नात्र विवक्षितम्। तत्तदात्मनः तत्तदीयाहमितिप्रतीतिविषयस्य परिच्छिन्नतया सार्वात्म्यायोगात्। 'अथातोऽहङ्कारादेशः' इत्यत्र अहमिति प्रतीतिविषयः परमात्मैव विवक्षित इति तेनैव निर्णीयते। औपनिषदपरमपुरुषस्याहमिति प्रतीतिविषयता 'यस्मात्क्षरमतीतोऽहम्' इति गीतावाक्ये पूर्वमेव भगवता निर्धारिता॥

'अथातोऽहङ्कारादेशः' अथात आत्मादेशः' इति वाक्यद्वयं रूपद्वयेनापि सार्वात्म्यबोधनाय। एतावता व्यत्त्यैक्यमप्रकम्प्यम्। सच्चिदानन्दशब्दप्रवृत्तिनिमित्तभेदेऽपि सच्चिदानन्दशब्दानामेकार्थबोधकत्ववत्। क्वापि शब्दतः धर्माप्रकारकबोधस्यासम्भवात् सर्वत्र धर्मप्रकारेणैव शब्दस्य अर्थबोधकत्वात्। प्रवृत्तिनिमित्तविवक्षायामैकार्थ्ये न सम्भवतीत्यादिकं तत्तद्धर्मोपलक्षितपरत्वमङ्गीकृत्य उपलक्षणधर्मस्य प्रकारत्वस्थापनेन पूर्वमेव समाहितम्। परमात्मनः अहमर्थत्वं नास्तीति भ्रमनिरासः 'अथातोऽहङ्कारादेश' इत्यत्र अहमर्थस्य भूमाभेदप्रतिपादनेन समर्थितो भवति। 'अहमेवाधस्तादहमुपरिष्टात्' इति उत्तरवाक्यानुसारेण 'अथातोऽहङ्कारादेश' इत्यत्राहङ्कारशब्दः अहमिति प्रतीतिविषयपरः नाव्यक्तपरिणामभूताहङ्कारतत्वपरः। अहमिति प्रतीतिविषयो जीव एव विवक्षितइत्यङ्गीकारेऽपि 'तदात्मानमेवावैदहंब्रह्मास्मि' इति श्रुतौ जीवान्तर्यामिणो विवक्षायाः 'औपनिषदपरमपुरुषवरणीयता' इति महासिद्धान्तोपक्रमवाक्यविवरणे निर्धारणेन 'अथात आत्मादेश' इत्युत्तरवाक्येन तद्दृढीकरणेन च जीवान्तर्याम्येव विवक्षितः। अयमर्थः भूमाधिकरण भाष्ये वक्ष्यते। एवं च 'अथातोऽहङ्कारादेशः' 'अथात आत्मादेशः' इति विवरणोदाहृतश्रुत्या आत्मनः अहमर्थान्यत्वं न सिद्ध्यति। श्रुतावहङ्कारशब्दप्रयोगेण अहमर्थस्यात्मनो भेदशङ्काऽपि न घटते, इत्यभिप्रेत्य विवरणोदाहृतगीतावचनमात्रमुपन्यस्य विवरणकारसिद्धान्तमेव शङ्कते—**कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भाव इत्यादिना**॥

**स्वरूपोपदेशेषु सर्वेष्वित्यादि**। 'तदात्मानमेवावैत् अहं ब्रह्मास्मि' इत्यादौ परेषामप्ययमर्थ एव सम्मतः। एवम् 'अथातोऽहङ्कारादेश' इत्यत्रापि अहमर्थस्य चिदचिद्ग्रन्थित्वमङ्गीकृत्य परैरात्मान्यत्वमभिधीयते। तत्स्थापनं न

## श्रीभाष्यम्

**तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनस्स्वरूपम् । अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते । सत्वनात्मनि देहेऽहम्भावकरणहेतुत्वेन अहङ्कार इत्युच्यते । अस्यत्वहङ्कारशब्दस्याभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या ।**

## श्रुतप्रकाशिका

अन्यथासिद्धिं दर्शयन् तत्राहङ्कारशब्दविवक्षितमाह---**अव्यक्तेति । अव्यक्तपरिणामभेदस्येति ।** नत्वहमर्थस्येत्यर्थः । ' अथातोऽहङ्कारादेश ' इत्यादिषु शुद्धस्वरूपस्याहङ्कारशब्देनाभिधानाभ्युपगमेऽपि न विरोधः । सत्वहङ्कारशब्दोऽहमर्थविषयपरः । यद्यहङ्कारशब्दवाच्यत्वमात्रात् प्रत्यगात्माऽपि (जड) क्षेत्रभेदस्स्यात् तर्हि हरिशब्दवाच्यत्वसाम्यात् सिंहो मण्डूकस्स्यात् । अतोऽनेकार्थाभिधायिशब्दैकत्वमर्थभेदाविरोधीति भावः । यथा आगमप्रामाण्ये---

**तथा च हरिशब्दस्य दृष्टा मण्डूकवाचिता । इति तच्छब्दवाच्यत्वात्सिंहो मण्डूक एव किम् ॥**

**तथा गाशब्दवाच्यत्वाच्छब्दश्चापि विषाणवान् । ... ... ...**

इति । अथाहङ्कारशब्दस्याव्यक्तपरिणामविशेषवाचकत्वप्रकारं दर्शयति । **सत्विति ।** * अहंभावः अहमिति बुद्धिः । भावशब्दस्य बुद्धिवाचकत्वमभिप्रायपरतया प्रयोगादवगम्यते ॥

सर्वत्राहंशब्दार्थमेकरूपमङ्गीकृत्य अहंकारशब्दस्याव्यक्तपरिणामवाचित्वं शब्दानुशासनप्रक्रिययोपपादयति । **अस्यत्विति ।** च्विप्रत्ययस्य सर्वलोपः **' कृञः करणे घञ् '** क्षेत्रान्तर्भावोपदेशस्य निर्वाहः कृतः । ' अहङ्कारं बलं दर्पम् '

## गूढार्थसंग्रहः

सम्भवतीति प्रागेवोक्तम् । निर्विशेषचितं सिद्धवत्कृत्य अहमिति तावत् प्रथमोऽध्यासइत्यादि अध्यासपरम्पराकल्पनेन व्यवहारसामान्यस्याध्यासिकत्वं प्रतिपाद्यते । ' अहमिदं जानामि ' इति सर्वेषामनुभवः, सुषुप्तौ मुक्तौ च अहमर्थसद्भावः साधितः । इत्यभिप्रेत्याह**—अहमित्येव प्रत्यगात्मनः स्वरूपमिति ॥**

**अव्यक्तपरिणामभेदस्याहङ्कारस्येति ।** अयमर्थः साङ्ख्यसम्मत इति परेषामप्यभिमतम् । ' इतरेषांचानुपलब्धेः ' (२.१.२) इति सूत्रे अहङ्कारादीनि तत्त्वानि लोके वेदेचानुपलब्ध्या न व्याससम्मतानीति परैरुक्तम् (शं) तत्सूत्रमन्यार्थकमिति भाष्यश्रुतप्रकाशिकयोर्व्यक्तम् । अहङ्कारादितत्त्वान्यपि श्रौतानीति महभारत एव व्यक्तमुक्तम् । अयमर्थः मन्वादिसम्मतः निरूपितंचैतत् हयशिरोरत्नभूषणदीधितौ ॥

**महाभूतान्यहङ्कारः** इत्येतत्पूर्वं ' भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।' इति श्लोकेऽप्यहङ्कारशब्द उपात्तः । महाभूतानि तत्र विशिष्य निर्दिष्टानि, अत्र महाभूतशब्दे पञ्चतन्मात्रा अपि विवक्षिताः । ' इन्द्रियाणि दशैकं च ' इति एकादशेन्द्रियाणि मन्वादिभिरुक्तानि अत्र प्रतिपादितानि । एवं च ' भूमिरापोऽनलो वायुः ' ' महाभूतान्यहङ्कारः ' इत्युभयत्रापि चतुर्विंशतितत्त्वानि विवक्षितान्येव, तत्त्वपरिगणनैदंपर्याभावाच्च स्फुटमनुक्तिः । ' अहङ्कारो बुद्धिरव्यक्तमेव च ' बुद्धिरेव च अहङ्कार इतीयं मे भिन्ना प्रकृतिः इति निर्देशक्रमपर्यालोचनायां अव्यक्तमहत्तत्त्वाहङ्कारतत्वानि विवक्षितानीति स्फुटं प्रतीयते । अतश्च गीतायामप्यहङ्कारः अव्यक्तपरिणामभेद एव विवक्षित इति भावः ॥

### श्रीभाष्यम्

**अयमेवत्वहङ्कारउत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते। तस्माद्बाधकापेताऽहंबुद्धिस्साक्षादात्मगोचरैव। शरीरगोचरात्वहंबुद्धिरविद्यैव। यथोक्तं भगवता पराशरेण 'श्रूयतांचाप्यविद्यायास्स्वरूपं कुलनन्दन।**

### श्रुतप्रकाशिका

इति त्याज्यतयोपदेशस्य निर्वाहः क्रियते। **अयमेवत्विति।** * अयंशब्देन प्रस्तुताहंभावो विवक्षितः नत्वहंभावकरणहेतुः गर्वापरनामेति वचनात् नहि महदहङ्कारयोरन्यतरोऽहङ्कारो गर्वापरपर्यायः। अतोऽत्राहंभावएवायंशब्दविवक्षितः। प्रशस्तदेहेऽहंबुद्धिरुत्कृष्टजनावमानहेतुः। अहङ्कारः अहंबुद्धिः मानसव्यापारवाचिनः करोतेः बुद्धिपरत्वं युज्यते। यथा—

**तदेकावयवं देवं चेतसाहि पुनर्बुधः। कुर्यादिति ...　...　...**

मनसा करणंहि वेदनम्। अतोऽहंबुद्धिरहङ्कारः च्विप्रत्ययार्थगर्भत्वात् * अनहम्यहंबुद्धिगर्भाविभावहंभावाहङ्कारशब्दौ। अत्र भावे व्युत्पत्तिः, * पूर्वत्र करणे व्युत्पत्तिः 'गर्वोऽभिमानोऽहङ्कारः' इति नैघण्टुकाः॥

ननु कथंभावे व्युत्पन्नस्याहङ्कारशब्दस्य * उपादेयगोचरतया प्रयोगः 'अथातोऽहङ्कारादेश' इति। उच्यते— सत्वहङ्कारशब्दस्साक्षादहमर्थबुद्धिवाची नत्वनात्मन्यात्मबुद्धिपरच्विप्रत्ययार्थगर्भः। हेयोपादेयरूपेण शब्दप्रतिपन्नयोरहंबुद्ध्योर्विषयविभागं निगमयति। **तस्मादिति।** आस्मिन्नर्थे प्रमाणमाह—**यथोक्तमिति।** अत्रैव पुराणे अनात्मविषयाहंबुद्धिवचनयोर्भ्रान्तत्वमात्मविषयेत्वभ्रान्तत्वं च स्पष्टम्। यथा—

### गूढार्थसङ्ग्रहः

**तस्माद्बाधकापेता अहंबुद्धिरित्यादि।** 'अहङ्कारेण देहादिसङ्घातोऽप्यादिश्यते अविवेकिभिरिति' परैरप्युक्तेः (शं.उ.भा) एतेन अहंबुद्धिस्तद्धेतुश्चाहङ्कारः, अहंबुद्धिश्च द्विधा अनहमर्थेऽहंबुद्धिः, अहमर्थेऽहंबुद्धिश्चेति तत्र द्वितीयव्युत्पत्त्या 'अथातोऽहङ्कारादेश' इत्यत्र अहङ्कारशब्दः प्रथमव्युत्पत्त्या 'महाभूतान्यहङ्कारः' इत्यत्र अहंकारशब्द इति विवेकः प्रदर्शितो भवति॥

**शरीरगोचरात्वहंबुद्धिरविद्यैवेति।** 'अनात्मन्यात्मबुद्धिर्या' इत्यनन्तरश्लोकयोः शरीर एव अहंबुद्धेः अनात्मन्यात्मबुद्धित्वस्य प्रतिपादनेन अहमित्येतावन्मत्रबुद्धिर्नाविद्या इति निर्णीतं भवति। एतेन अहमर्थस्याध्यासिकत्वं चिदचिद्ग्रन्थित्वमविद्याप्रयुक्तत्वं पराशरेण निरस्तं भवति। अत्र पराशरेण देहे अहंबुद्धेरेव अविद्यात्वकथनेन 'अहं ममेत्यविद्येयं व्यवहारस्तथाऽनया' (६.८.१००) इत्यत्र देहेऽहमिति बुद्धेरेव अविद्यात्वं पराशरस्य विवक्षितम्॥ ननु अहमिति बुद्धिमात्रस्य 'देवादिभेदेऽपध्वस्ते' (वि.पु.२.१४.३३) 'पुमान्नदेवो ननरः' (२.१३.९४) इत्यादौ 'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः' (वि.ध.१००.२१) इत्यत्र च देवमनुष्यादिशरीरभेदनिबन्धन देवमनुष्याद्यभेदज्ञानस्य भ्रमत्वोक्तेः 'अहं मम' इत्यस्योत्तरार्धे 'परमार्थस्त्वसंलाप्यः गोचरो वचसां नयः' इति शुद्धात्मनः देवमनुष्यादिशब्दाप्रतिपाद्यत्वस्य प्रतिपादनाच्च। 'अनात्मन्यात्मबुद्धिर्या' इत्यत्र देहेऽहमर्थबुद्धेः अविद्यात्वप्रतिपादकोत्तरवाक्यानुसारेण आत्मा अहमर्थएवेति अहमित्यात्मविषयकं ज्ञानं प्रमा इति च निर्धारितं भवति। 'सोऽहं सचत्वं सच सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्' (२.१६.२३) इत्यत्रापि अहम् त्वम् इत्येतच्छब्दार्थस्यात्मस्वरूपत्वं देवादिशब्दार्थस्यात्मस्वरूपत्वाभा-

## श्रीभाष्यम्

**अनात्मन्यात्मबुद्धिर्येति ॥' (वि.पु.६.अं.७.अ.१०) यदि ज्ञप्तिमात्रमेवात्मा तदाऽनात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासस्स्यात् न ज्ञातृप्रतिभासः । तस्माज्ज्ञाताऽहमर्थएवात्मा । तदुक्तम् 'अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् । अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते' (आत्मसि.२२.पु)**

## श्रुतप्रकाशिका

**आकाश वाय्वग्निजलपृथ्वीभ्यः पृथक्स्थिते । आत्मन्यात्ममयं भावं कःकरोति कलेबरे ॥**

**पञ्चभूतात्मके देहे देही मोहतमोवृतः । अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिम् ॥**

इति ॥ आदिभरतचरिते–

**आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज । अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥**

इति एतद्वचनार्थमप्यहमर्थात्मत्वहेतुत्वेनाह–**यदीति** । **अनात्मनीति** । अनात्मन्यहंप्रतीतिः कथमात्माभिमान इत्यर्थः । अहमर्थात्मत्वं निगमयति । **तस्मादिति** ॥

अस्मिन्नर्थे आत्मसिद्धिग्रन्थमुदाहरति । **तदुक्तमिति** । धर्मधर्मिभावेन प्रतीतिः प्रत्यक्षसिद्धिः स्थिरत्वास्थिरत्वादिवैषम्यं श्रुत्यर्थापत्तिश्च न्यायः । आगमोदाहृतोपानिषद्वाक्यानि अविद्यायोगो * ऽनन्तरो भ्रान्तियोगः । अहमर्थस्य अनात्मत्वे स्थूलोऽहमिति भ्रान्तेरयोग इति वार्थः । ज्ञातुरात्मत्वे संवादिग्रन्थो दर्शितः । ज्ञप्तेरनात्मत्वेचात्मसिद्धिग्रन्थ-

## गूढार्थसङ्ग्रहः

वश्च स्फुटः। अयमर्थः तत्रैव 'आत्मन्येष न दोषाय शब्दोऽहमिति' (वि.पु.२.१३.८१) 'शब्दोऽहमिति दोषाय नात्मन्येषः' (२.१३.८२) इत्यत्र तदुत्तरार्धोक्तभ्रान्तिलक्षणदोषायाहमिति शब्दः नैव प्रयुज्यत इति स्पष्टमुक्त्या अहमर्थस्याध्यासिकत्वं परसम्मतं पराशरेणैव **निरस्तम्** । अहमर्थस्याध्यासिकत्वं पराशरसम्मतं यद्यभविष्यत् अहमिति तावत्प्रथमोऽध्यास इति पराशरादयो अवक्ष्यन्नेव । नच तथा पराशरादयः कथयन्ति अतोऽहमर्थस्यानात्मत्वमुक्तमिति भावः ॥

एतेन 'अहमित्यस्य **ध्वंस**त्वेन चिदंशे कर्तृत्वादिविशिष्टान्तःकरणैक्याध्यासवत् देहेन्द्रियाद्यैक्याध्यासेन आत्मैक्यविषयत्वसम्भवात् । तथा च आत्मनि देहेन्द्रियाद्यैक्याध्यासो युज्यत एव' इत्यद्वैतसिद्धिः, चिदंशे अज्ञानोपहितचिति ननु तथाऽपि न शुद्धात्मैक्याध्यासे तत्प्रमाणं तत्राह—तथाचात्मनीति । उपहितात्मन्यैक्याध्यासे सिद्धे शुद्धस्योपाहितानुस्यूतत्वेन भानात् भासमानेऽप्यावरणस्योक्तत्वात्, उपहितनिष्ठं शुद्धतादात्म्यं देहादावारोप्यत इति भावः ।' इति गुरुचन्द्रिकाप्यनादरणीया । अहमित्यत्र भ्रान्तिलक्षणदोषो नास्तीति पराशरेणैव निर्धारणेन अहमित्यत्राध्यासस्यैवासिद्धेः । तेनाहमर्थस्य **ध्वंस**त्वमपि निरस्तम् । देहे अहमिति प्रतीतेः उपहितविषयकत्वं च तेनैव निरस्तम् ॥

**न ज्ञातृप्रतिभासइति॰** । अहमर्थप्रतिभास इति भावः । एतेन 'अविद्योपहितेऽहङ्कारोऽध्यस्यते, तदुपहिते कामादयः तद्विशिष्टे स्थूलशरीरम् इत्यादिप्राक् (२२४) उदाहृतप्रक्रिया अनुपादेयेति सिद्धम् ॥

'नचाहम्प्रत्ययो व्यामोह इति शक्यते वक्तुं बाधकप्रत्ययाभावात्' 'नच शक्यमेवमवगन्तुं यथोपलभ्यन्तेऽर्थाः न तथा भवन्तीति 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः सएवासमीचीनप्रत्ययः नान्यः' इत्यादिवदतां शबरा-

## श्रीभाष्यम्

**इति ॥ तथा च 'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः। नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखी' (आत्मसि.५.पु) इति ॥ अनन्यसाधनः स्वप्रकाशः । व्यापी अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशनस्वभावः । यदुक्तम् दोषमूलत्वेनान्यथासिद्धिसम्भावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति ।**

## श्रुतप्रकाशिका

माह—**तथाचेति** । धीभ्योऽन्य इत्येतदत्रोपयुक्तम् । साधनशब्दस्योत्पादकज्ञापकसाधारणत्वात्तद्व्याचष्टे । **अनन्येनेति** । जीवस्वरूपविभुत्वशङ्काव्युदासार्थं व्यापीति शब्दं व्याचष्टे । **अतिसूक्ष्मेति** । पुराणादिषु व्यापिशब्दप्रयोगात् स एवात्र श्लोके प्रयुक्तः । यत्र यत्र जीवस्य व्याप्तिवाचिनश्शब्दाः तत्र तत्र अयमेवार्थो द्रष्टव्य इति भावः । जीवस्य धर्मभूतज्ञानेन व्याप्तिरात्मसिद्धावेवोच्यते—व्याप्तिरपि चैतन्यमात्रेणैव न स्वरूपेणेति । अतो यथोक्तएवार्थः ॥

**अथ** शास्त्रप्रत्यक्षविरोधे शास्त्रप्राबल्यमनूद्य निरस्यति । **यदुक्तमित्यादिना** । परेण पूर्वं मूलमूलिभावपरोक्षापरोक्षरूपत्वादिर्न बाध्यबाधकभावे कारणं ज्वालाभेदानुमाने व्यभिचारात् । 'आदित्यो यूपः' इत्यादावपि यूपादित्यैक्याद्यप्रतिपादनं न दौर्बल्यात्, अपितु यूपाञ्जनविधिशेषत्वेनैक्ये तात्पर्याभावादित्युक्तम् । तत्र ज्वालाभेदानुमानाच्छास्त्रस्य त्रिधा वैषम्यमस्ति। प्रमाणान्तरेण दोषमूलत्वानिश्चयादन्योन्याश्रयः, बाध्यबाधकयोस्तुल्यदोषत्वं, मूलोच्छेदित्वं चेत्येतत् त्रयं ज्वालाभेदानुमाने नास्ति । तथाहि एकवर्तिकावर्तित्वनिबन्धनसादृश्याख्यदोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वमचिरनिर्वापितारोपितप्रदीपे दृष्टमिति चक्षुषा ज्वालैक्यप्रतिपत्तेः क्वचिद्दोषमूलत्वनिश्चयादन्यत्रैक्यप्रतिपत्तावपि दोषमूलत्वसम्भवाज्ज्वालैक्यप्रत्यक्षं शङ्कितं न निश्चयजननक्षमं परीक्षकस्य भवेत् । ज्वालायां सादृश्यरूपदोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वं प्रमाणान्तरेण न दृष्टंचेदन्योन्याश्रयस्स्यात्। अनुमानस्य प्राबल्यात्प्रत्यक्षस्यान्यथासिद्धिः तदन्यथासिद्ध्याऽनुमानस्य प्राबल्यमिति ऐक्यप्रतीतेरन्यथासिद्धिसम्भवः प्रमाणान्तरदृष्ट इति नान्योन्याश्रयः । अत्र न तथा प्रमाणान्तरेण भेदवासनाया दोषत्वं दृष्टम् ॥

**किंच** दीपे बाध्यस्य ज्वालैक्यज्ञानस्य सादृश्याख्यदोषमूलत्वेऽपि बाधकस्य ज्वालाभेदानुमानस्य न सादृश्यदोषमूलत्वं दृष्टम्। अत्रतु बाध्यस्य प्रत्यक्षस्य बाधकस्य शास्त्रस्य चोभयोः पराभ्युपेतदोषमूलत्वमविशिष्टं विद्यत इति तुल्यदोषत्वम्। किंच तत्र ज्वालाख्यधर्मिग्राहिणः प्रत्यक्षस्य (च) प्रथमवर्त्यवयवाग्निसंयोगे चरमवर्त्यवयवस्य विनाशे च उत्पत्तिविनाशयोः व्याप्तिग्राहिणः प्रत्यक्षस्य प्रत्यवयवमग्निसंयोगवर्त्यवयवविनाशाख्यलिङ्गग्राहिणः प्रत्यक्षस्य च न भेदानुमानबाध्यविषयत्वम् । ऐक्यप्रतिपत्तेरेव तत् । अत्रतु शब्दाख्यधर्मिग्राहिणः तस्य निर्दोषत्वसाधकलिङ्गग्राहिणः तल्लिङ्गव्याप्तिग्राहिणः षड्विधतात्पर्यलिङ्गग्राहिणश्च प्रत्यक्षस्य तेषां तात्पर्यलिङ्गानां च शास्त्रेणैव बाधोपगमात् मूलोच्छेदित्वमिति त्रिधा वैषम्यम् । एतद्वैषम्यत्रयमुपपादयिष्यन् पूर्वपक्षमनुवदति । **दोषमूलत्वेनेति** ॥ **सकलभेदावलम्बिप्रत्यक्षस्येति** । अत्रायंभावः

## गूढार्थसंग्रहः

दीनां मतेन 'ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा' इत्यादिशङ्का (१५७) समाधिं दूषयितुमनुवदति—**यदुक्तमित्यादिना** ॥

## श्रीभाष्यम्

**कोऽयं दोषइति वक्तव्यं यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः । अनादिभेदवासनैवहि दोषइति चेत् ; भेदवासनायास्तिमिरादिवद्यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किम(प्य)न्यत्र ज्ञातपूर्वम् ?. अनेनैव शास्त्रविरोधेन ज्ञास्यत इतिचेत् ; न अन्योन्याश्रयणात् । शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चयेसति भेदवासनाया दोषत्वनिश्चयः दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति**

## श्रुतप्रकाशिका

तत्त्वशुद्धिकारादिभिः कैश्चित्काच तिमिरादिरेव प्रत्यक्षस्य दोष उक्तः । स नोपपद्यते काच तिमिरादेः काचित्कत्वात् । * एतेन प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयतेचेत् शब्दत्वात् शास्त्रस्यापि दोषमूलत्वमनुमीयताम् । शास्त्रे दोषस्य योग्यानुपलम्भनिरासश्चेत्प्रत्यक्षेऽपि तथैव स्यात् । किंच आयुर्वेदे दोषाणां स्वरूपं तन्निवृत्त्युपायादिकं च निरूपितम् । सर्वप्रत्यक्षस्य दोषमूलत्वानुमानं तद्विरुद्धं च । किंच सर्वप्रत्यक्षस्य दोषमूलत्वे सन्मात्रग्राहिणः प्रत्यक्षस्य च दोषमूलत्वात्सन्मात्रमपि मिथ्यास्यादिति ॥

दूषयति । **कोऽयमित्यादिना । कोऽयंदोषइति वक्तव्यमिति** । कोऽयं दोषइति * अनया वचनव्यक्त्या दोषरूपं मूलं यदुक्तं तत्किमिति। पृष्टेऽयं दोषइति वक्तव्यमित्यर्थः । * यद्वा यच्छब्दसामर्थ्यात्तत्रेत्याक्षेपसिद्धम् । दोषमूलत्वेनेत्यादिना यदर्थजातमुक्तं तत्र कोऽयं दोष इति पृष्टे वक्तव्यमित्यर्थः । कुतो वक्तव्यमित्यत्राह—**यन्मूलतयेति** । नहि दोषमनुक्त्वाऽन्यथासिद्धिस्सुवचेत्यर्थः । दोषमाह—**अनादीति** । स्वरूपसंप्रतिपत्तिपर एवकारः । हिशब्देन दोषान्तरासम्भवसिद्धवत्कारः । स्वमते दोषत्वसंप्रतिपत्त्यभिमानाद्वा हिशब्दः । दोषत्वंहि विपरीतज्ञानहेतुत्वम् । अतो विपरीतज्ञान * हेतुत्वेन व्याप्तेरदृष्टतया भेदवासनास्वरूपसंप्रतिपत्तावपि दोषत्वासम्प्रतिपत्तेः पृच्छति । **भेदवासनाया इति** । तिमिरादिवदित्यादिशब्देन सादृश्यादिविवक्षितम् । तद्धि ज्वालायामैक्यभ्रमहेतुः, अन्यत्र ज्ञातपूर्वत्वस्य दुर्वचत्वाच्छङ्कते । **अनेनैवेति** । दूषयति । **नेति** । एवं प्रमाणान्तरेण दोषत्वानिश्चयेनान्योन्याश्रयणापत्तिरूपवैषम्यमुक्तम् ॥

## गूढार्थसंग्रहः

**किमन्यत्र ज्ञातपूर्वमिति** । ' यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः ' इत्यत्र दोषः प्रामाणिकसम्मत एव विवक्षितः, नतु स्वमतमात्रसिद्ध इति भावः ॥

**अनेनैव शास्त्रविरोधेनेति** । ' शक्योह्याम्नायादेव अनादिरविद्यासंस्कारो विभ्रमहेतुः प्रत्यक्षादिषु सम्भावयितुं निश्चेतुं च देहात्माभिमानइव ' इत्यादि प्राक् (१५९.पु) उदाहृतब्रह्मसिद्धिवाक्यान्यत्राभिप्रेतानि, ' तथा अनवकाशत्वमपि यदि खल्वेकमद्वयं वेदान्तार्थः । कस्तेषामन्योऽवकाश इति । नच प्रत्यक्षादीनामनन्यगतित्वादनवकाशत्वं, या खलु रजतादिविभ्रमाणां गतिस्सा तेषामपि । ' इति प्राक् (१६०.पु) उदाहृतब्रह्मसिद्ध्युक्तरीत्या एकमद्वयं वेदान्तार्थ इति निर्णयानन्तरमेव प्रत्यक्षादीनां दोषसम्भावना । इति तद्ग्रन्थपर्यालोचनायामेव स्फुटम् । तदेव न घटते इत्याशयेनाह—**शास्त्रस्य निरस्तनिखिलविशेषेत्यादि** ॥

## श्रीभाष्यम्

**किंच यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वं शास्त्रमपि तन्मूलत्वेन तथैव स्यात्। अथोच्येत–दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात्तत् प्रत्यक्षस्य बाधकमिति। तन्न दोषमूलत्वे ज्ञातेसति परत्वमकिंचित्करम्। रज्जुसर्पज्ञाननिमित्तभयेसति भ्रान्तोऽयमिति परिज्ञातेन केनचित् नायं सर्पो माभैषीरित्युक्तेऽपि भयानिवृत्तिदर्शनात्। शास्त्रस्य च दोषमूलत्वं श्रवणवेळायमेव ज्ञातम्। श्रवणावगत-**

## श्रुतप्रकाशिका

अथ तुल्यदोषत्वं बाध्यबाधकयोराह—**किंचेति**। अथ दोषमूलत्वे तुल्येऽपि परत्वाद्बाधकत्वं शङ्कते। **अथेति**। अपच्छेदादिषु, इदं रजतं नेदं रजतमित्यादिषु च परं बाधकं दृष्टम्। अतो निषेध्योपस्थापकमानापेक्षया निषेधकस्य परत्वात् बलीयस्त्वमित्यर्थः। एवं ब्रह्मप्रतिपादकशास्त्रस्यापि व्युत्पत्त्यादेः प्रत्य(क्षादि)क्ष)मूलतया तत्पूर्वकस्य तस्य प्रत्यक्षाद्यपेक्षतया परत्वात्प्रतिपाद्य निर्विशेषवस्तुसत्यत्वमपि तुल्यन्यायतया सिद्धम्। तद्दूषयति। **तन्नेति**। परत्वस्याकिंचित्करत्वमुपपादयति। **रज्जुसर्पेति**। उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयाद्भयानिवृत्तिः॥

ननु भ्रान्तत्वे ज्ञाते परत्वमकिंचित्करमस्तु अत्रतु भ्रान्तत्वज्ञानं नास्तीत्यत्राह—**शास्त्रस्यचेति**। ज्ञातत्वमुपपादयति। **श्रवणावगतेति**। शास्त्रस्य भेदवासनामूलत्वं तावत्सम्प्रतिपन्नम्। तस्याश्च दोषत्वं भेदमिथ्यात्वज्ञानादवगम्यते तन्मिथ्यात्वावगतिश्च ज्ञाननिवर्त्यत्वावगमात्। ज्ञाननिवर्त्यत्वावगमश्च ब्रह्मात्मैकत्वविज्ञानस्य निखिलभेदोपमर्दित्वावगतेः

## गूढार्थसंग्रहः

**शास्त्रमपि तन्मूलत्वेन तथैव स्यादिति**। यश्च प्रत्यक्षादिषु कल्पितो दोषः अविद्यासंस्काररूपः, सच शास्त्रेऽप्यविशिष्टः। शास्त्रस्यापि तात्विकप्रामाण्यं निहन्तीति भावः। एतेन नैसर्गिकदोषे दोषत्वानिश्चयो नास्ति, अपितु आगन्तुकएव। तत्तात्पर्येणोक्तम् 'यस्य च दुष्टं करणम्' इति शबरस्वामिना। इति प्राक् (२१२.पु) पञ्चपादिकोक्तवैषम्यमपि अनुपादेयम्। प्रत्यक्षादीनां नैसर्गिकदोषमूलत्वानिश्चयेन खलु तात्विकप्रामाण्यं निरस्यते, तादृशदोषस्य शब्दे अविशेषे शब्दस्य कथं तात्विकप्रामाण्यं वक्तुं शक्यते? अतः प्रत्यक्षादिषु अविद्यादोषमूलत्वकल्पनमेवायुक्तमिति भावः॥

अपच्छेदन्यायेन परत्वात् बाधकत्वं ब्रह्मसिद्धौ भामत्यां प्रमाणलायां (१६०) चोक्तम्। तदपि 'यस्य च दुष्टं करणम्' इति शबरोक्त्यैव न घटत इत्याह—**दोषमूलत्वे ज्ञाते इत्यादिना**। तत्र अपच्छेदस्थले परस्य दोषमूलकत्वाभावेन परस्य बाधकत्वं युक्तम्। उक्तं च भट्टपादैः निरालम्बनवादे 'दुष्टज्ञानगृहीतार्थे प्रतिषेधोहि युज्यते। गृहीतमात्रबाधेतु स्वपक्षोऽपि न सिद्ध्यति॥' इति (३४) 'स्वयं च शुद्धरूपत्वादसत्त्वाच्चान्यवस्तुनः। स्वप्नादिवदविद्यायाः प्रवृत्तिः तस्य किंकृता॥ अन्येनोपप्लवे शिष्टे द्वैतवादः प्रसज्यते। स्वाभाविकीमविद्यांतु नोच्छेत्तुं कश्चिदर्हति॥ विलक्षण्ये पपातेहि नश्येत्स्वाभाविकी क्वचित्। नत्वेकात्माऽभ्युपायानां हेतुरस्ति विलक्षणः॥' (सं.आ.परि.८५.८६) इति सम्बन्धाक्षेपपरिहारे भट्टपादैरविद्यावाददूषणेन शास्त्रस्य दोषमूलत्वज्ञानेन तदर्थस्यापि दुष्टज्ञानगृहीतार्थत्वेन तस्यापि प्रतिषेधत्वमेव। यस्यतु दोषामूलत्वाज्ञानं तस्यैव बाधकत्वम्, अतश्च शास्त्रस्याविद्यादोषमूलत्वेन बाधकत्वं न सम्भवतीति भावः

एतेन 'दुष्टज्ञानेति। शुक्तिरूप्यादेरागन्तुकदोषयुक्तधीविषयत्वात् दृश्यमात्रस्य अविद्यारूपदोषयुक्तधीविषयत्वात् प्रतिषेधो बाधो युज्यते। धीविषयस्य दोषयुक्तत्वं च दोषप्रयुक्तनिष्ठत्वम्। तेन ब्रह्मधीविषयत्वस्यापि कस्यापि कथंचि-

## श्रीभाष्यम्

**निखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः। अपिचेदं शास्त्रम्**

## श्रुतप्रकाशिका

अत ईदृशज्ञानाभ्यासरूपमननं कुर्वता शास्त्रस्य दोषमूलत्वमवगतमित्यर्थः। एवं बाध्यबाधकयोस्तुल्यदोषत्वरूपं वैषम्यमुक्तम्॥ अथ मूलोच्छेदित्वमाह—**अपिचेति**। इदं शास्त्रमिति शब्दराशिव्यावृत्तिः असम्भाव्यमानदोषमिति बौद्धा-

## गूढार्थसङ्ग्रहः

दोषयुक्तत्वेऽपि न क्षतिः, दोषप्रयुक्तस्यैव अविद्याप्रयुक्तत्वेन बाध्यतायोग्यत्वमिति भावः। गृहीतमात्रं बाध्यमिति माध्यमिकमतेतु स्वपक्षोऽपि न सिद्ध्यति स्फुरणस्वरूपस्य बाधानुपलम्भेन अविद्याप्रयुक्तत्वाकल्पनात् जन्यधीविषयरूपगृहीतमात्रस्य बाधासम्भवादिति भावः' इति गुरुचन्द्रिकायां (भा.वा.उ) स्वमतानुरोधेन भट्टपादीयश्लोकविवरणमभिनिवेशमूलकमेव। दुष्टत्वं ज्ञान एव विशेषणम्। धीविषयत्वस्य दोषयुक्तत्वं न भट्टपादश्लोके विवक्षितम्। दोषप्रयुक्तवस्तुनः बाध्यत्वस्य तत्रानुक्तेः। परसम्मतनिर्विशेषस्य भट्टपादैः 'निर्विशेषं न सामान्यम्' इत्यादौ दूषणात्। 'बुद्धिजन्मनि पुंसश्च' (२.अ.६१) इत्यादिबौद्धदिङ्नागश्लोकमुदाहृत्य 'ऊर्ध्वं गच्छति धूमे खं भिद्यतेऽस्मिन्नभिद्यते। न भिद्यतेचेत्स्यास्तुत्वं भिद्यतेचेद्भिदाऽस्य का' (६२) 'अविक्रियस्य भोक्तृत्वं स्यादहंबुद्धिविभ्रमात्। नौयानविभ्रमाद्यद्वन्नगेषु गतिकल्पनम्'॥ (६३) इति नैष्कर्म्यसिद्धौ दिङ्नागोक्तदूषणपरिहार उक्तः। अत्र प्रमातृत्वमतात्त्विकमित्येवाभिहितम्। प्राक् (३२३, ५१०.पु) उदाहृतभट्टपादश्लोकयोः दिङ्नागोक्तदूषणमन्यथैव परिहृतम्। अहम्प्रत्ययस्याभ्रान्तत्वम्, आत्मनः ज्ञातृत्वं च शबरकुमारिलाभ्यां साधितम्। असत्यात्सत्यसिद्धिः सत्यद्वयं अविद्याचेत्यादिकं सर्वं भट्टपादैर्दूषितम्। 'दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन' (श्लो.वा.१४८) इति भट्टपादवाक्यं न परमताभिप्रायकम्, अपितु अहमर्थात्मवादिस्वसिद्धान्ताभिप्रायकमिति निरूपितं भावप्रकाशे। एवंस्थिते 'दुष्टज्ञानगृहीत' इति श्लोकस्य स्वमतरीत्या गुरुचन्द्रिकायां विवरणं विदुषां विस्मयमादधाति॥

अत्र **दोषमूलत्वे ज्ञाते** इत्युक्त्या 'यस्य च दुष्टं करणम्' इति शबरभाष्यानुसारेण 'दुष्टज्ञानगृहीत' इति भट्टपादोक्तौ दुष्टत्वं ज्ञान एव विशेषणमिति बोधितम्। एतावता प्राक् (१६०.पु) उदाहृतब्रह्मसिद्ध्यादिषु उपक्रमादिषड्विधतात्पर्यलिङ्गैः निर्विशेषबोधकशास्त्रस्य प्राबल्यं परत्वं च यदुक्तं तन्नसम्भवतीति निरूपितम्। तात्पर्यलिङ्गानि बोधविषयस्य प्रमाणसिद्धत्वे तद्विषयकबोधस्य सम्प्रतिपन्नत्वे तद्बोधतात्पर्यनिर्णयमुखेन तदर्थस्योपादेयत्वं स्थापयन्ति। ननु बोधविषयस्याप्रामाणिकत्वे बोधस्यासम्प्रतिपन्नत्वेऽपि तद्बोधजननशक्तिमपूर्वामुत्पादयन्ति। इत्यभिप्रेत्य निर्विशेषस्याप्रामाणिकत्वस्थापनेन तत्र तात्पर्यं तन्मूलकप्राबल्यं च शास्त्रे न सम्भवतीत्युपपादितम्। परत्वं पूर्वापरयोरुभयोरेकविधदोषमूलकत्वे न सम्भवतीति तदपि शास्त्रस्य प्राबल्यं न प्रयोजयतीत्यनुपदमेवोक्तम्। अथ निर्दोषत्वं शास्त्रस्य, प्रत्यक्षस्य च सदोषत्वमिति यदुक्तं तत्पर्यालोचयति **अपिचेदं शास्त्रमित्यादिना**॥

प्रमाणमालायां 'नहि सुशिक्षितोऽपि प्रत्यक्षादिः(देः) अत्यन्ताबाध्यार्थपरिच्छेदलक्षणप्रामाण्यं स्वतः परतो वा विज्ञातुं क्षमते' इत्युपक्रम्य 'आगमवाक्यं पुनः अनियतकालवस्तुपरिच्छेदकत्वात् आत्यान्तिकाबाध्यत्वलक्षणमपि सत्यत्वं स्वविषयस्याध्यवस्येत्। तदवसायान्वयव्यतिरेकाभ्यां च तत्साधनत्वलक्षणं प्रामाण्यमध्यवसीयते। तथा च श्रूयते— 'सत्यं ज्ञानमनन्तं ब्रह्म' इति। तस्माददैतागमवाक्यमेव तत्त्वावेदनं प्रमाणमुपपद्यते न प्रत्यक्षादीनि इति स्थितम्' इत्यु-

## गूढार्थसङ्ग्रहः

क्तम्। अत्र सत्यं ज्ञानमनन्तम्' इति वाक्यं त्रिकालाबाध्यचिद्विषयकमिति निर्णय एव न सम्भवति इति तत्परत्वहेतु-निरासेनैव 'सत्यं ज्ञानम्' इत्यादेः परसम्मतरीत्या प्रामाण्यं नैव सम्भवतीत्युक्तप्रायम्। अतः प्रत्यक्षागमवाक्ययोः प्रामाण्यभेदकल्पनमेव न घटते ॥

एतेन न्यायमकरन्दे—'मायामयत्वसिद्धौ च प्रपञ्चस्य प्रमाणतः। प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् ॥ अद्वैतागमवाक्यंतु तत्वावेदनलक्षणम्। प्रमाणभावं भजते बाधवैधुर्यहेतुतः ॥' इत्युपक्रम्य 'मणिप्रदीपप्रभयोः' (प्र—वा) इत्यादिधर्मकीर्तिवाक्यमुदाहृत्य 'तस्मान्मायामयत्वेऽपि युक्ता ब्रह्मणि मानता। अद्वैतागमवाक्यानामिति तावद्व्यवस्थि-तम् ॥' इति प्रमाणमालाकारानन्दबोधोक्तिरपि निरवकाशा। आगमवाक्यस्य परमतरीत्या अर्थासम्भवस्योपपादनादुप-पादयिष्यमाणत्वाच्च। परसम्मतार्थस्यापि बाधः अत्रैव वक्ष्यते। यद्यपि प्रमाणवार्तिके धर्मकीर्तिना 'अर्थक्रियासमर्थं यत् तदत्र परमार्थसत्। अन्यत् संवृति सत्प्रोक्तं ते स्व सामान्यलक्षणे ॥' (प्रवा.२.३) इति सत्यद्वयचिन्तायामभिधाय सामान्यचिन्तायां 'मेयं त्वेकं स्वलक्षणम्' (५३) तस्मादर्थक्रियासिद्धेस्सदसत्ताविचारणात्। तस्य स्वपररूपाभ्यां गते-र्मेयद्वयं मतम् ॥ (अनुमानचिन्तायां.५४) अयथाऽभिनिवेशेन द्वितीया भ्रान्तिरिष्यते। गतिश्चेत्पररूपेण नच भ्रान्तेःप्रमा-णता ॥ (५५) (शङ्का) अभिप्रायाविसंवादादपि भ्रान्तेःप्रमाणता। गतिरप्यन्यथा दृष्टा पक्षश्चायं कृतोत्तरः ॥ (५६) मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः। मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियांप्रति ॥ (५७) यथा तथाऽयथार्थत्वे-ऽपि अनुमानतदाभयोः। अर्थक्रियाऽनुरोधेन प्रमाणत्वं व्यवस्थितम् ॥' (५८) इत्युक्तम् ;

तथाऽपि अत्र मणिप्रभायां मण्यभेदज्ञानं मणितत्प्रभयोर्भेदेन भ्रान्तिः, इति सर्वसम्मतम्। इदं रजतमिति ज्ञाना नन्तरं रजताहरणप्रवृत्तिवत् अत्रापि मण्याहरणे प्रवृत्तिः। मणिसमीपगमनानन्तरं प्रभा न मणिः, किंतु मणिः अन्य एवेति ज्ञानमपि सर्वेषां संप्रतिपन्नम्। प्रदीपप्रभास्थले भ्रान्तिज्ञानानन्तरं प्रवृत्तौ प्रदीपो न मणिः इति निश्चयः सर्वेषाम-नुभवसिद्धः। एवंस्थिते मणिप्रभयोः तात्त्विकसम्बन्धवत्त्वेन वास्तवमणिज्ञानेनैव प्रवृत्तिसाफल्यम्। प्रदीपप्रभायाश्च मणिना तात्त्विकसम्बन्धाभावात् प्रवृत्तिवैफल्यम् ; अयमर्थस्सर्वसम्प्रतिपन्नः ॥

एवं च भ्रान्तिज्ञानस्यैव न मण्यादिलाभसंपादकत्वं प्रवृत्तिमात्रप्रयोजकत्वमेव। एवंस्थिते स्वलक्षणस्य परमार्थस-त्यता सामान्यस्य संवृतिसत्यता इति वैलक्षण्यमङ्गीकृत्य अनुमानस्य सामान्यविषयकत्वेन भ्रान्तित्वम् अथापि मणिप्रभा दृष्टान्तेन अर्थक्रियासामर्थ्यमिति कथं दृष्टान्तदार्ष्टान्तिकसामञ्जस्यम्? मणिप्रभायां मण्यभेदज्ञानविरहेऽपि मणिज्ञानमा-त्रेणार्थक्रियानिष्पत्तिर्यथा तथैव मणिप्रभायां मण्यभेदज्ञानसत्त्वेऽपि तज्ज्ञानरूपभ्रान्तेः प्रवृत्तिमात्रप्रयोजकत्वं, नत्वर्थक्रियानि-ष्पादकत्वम्। अर्थक्रियातु मणिज्ञानादेव। अतः अर्थक्रियांप्रति विशेषः मणिप्रभा मण्यभेदज्ञानस्य योऽयमुक्तः सः न तज्ज्ञाननिबन्धनः इति भ्रान्तिस्थले अर्थक्रियोक्तिरनुपादेयैव ॥

धर्मकीर्तिकृतन्यायबिन्दौ—'तस्य विषयः स्वलक्षणम्, यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदः तत्स्वलक्षणं, तदेव परमार्थसत् अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः अन्यत् सामान्यलक्षणम्' इत्यत्र सामान्यस्यार्थक्रियासा-मर्थ्यं नास्तीति स्फुटमुक्तेः। 'अर्थक्रियासमर्थं यत् तदत्र परमार्थसत्' इत्यत्रापि सामान्यस्यार्थक्रियासमर्थत्वविरहस्यैव प्रतिपादनात्। 'तस्य विषयस्स्वलक्षणम्' (न्या.बिं.२.१२) इत्यत्र तस्य चतुर्विधप्रत्यक्षस्य विषयो बोद्धव्यः। स्वलक्षणं-स्वम् असाधारणं तत्त्वं लक्षणं स्वलक्षणम्। वस्तुनोह्यसाधारणं तत्त्वमस्ति सामान्यं च। यदसाधारणं तत्प्रत्यक्षग्राह्यम्।

### श्रीभाष्यम्

**एतच्चासम्भाव्यमानदोषम्। प्रत्यक्षं तु सम्भाव्यमानदोषमिति केनावगतं त्वया। न तावत्स्वतस्सिद्धा निर्धूतनिखिलविशेषाऽनुभूतिरिममर्थमवगमयति तस्यास्सर्वविषयविरक्तत्वात् शास्त्रपक्षपातविरहाच्च नाप्यैन्द्रियिकं प्रत्यक्षम्, दोषमूलत्वेन विपरीतार्थत्वात्। तन्मूलत्वादेव नान्यान्यपि प्रमाणानि।**

### श्रुतप्रकाशिका

गमादिव्यावृत्तिः। त्वया प्रमाणप्रमेयादिकं तात्त्विकत्वेनानभ्युपगच्छता। **नतावदिति**। स्वतस्सिद्धत्वेन निर्धूतनिखिल विशेषत्वं वा तद्विशेषणं निर्विषयत्वप्रदर्शनार्थम्। कुतो नावगम्यत इत्यत्राह— **तस्या इति**। सर्वविषयविरक्तत्वात् निर्विषयत्वादित्यर्थः। नहि विज्ञानमसम्बध्य विषयं प्रकाशयति। वस्तुतो निर्विषयाऽपि भ्रान्त्या आविद्यमानमपि शास्त्रप्राबल्यमवगमयतीत्यत्राह—**शास्त्रपक्षपातविरहाच्चेति**। असंव(द्धा(न्धा)विद्यमानत्वाविशेषात् सौगतादिशास्त्रान्तरप्रामाण्यमप्यवगमयेदित्यर्थः प्रत्यक्षादिकं नावगमयतीत्याह—**नापीति**। योगिप्रत्यक्षादेरप्यैन्द्रियिकप्रत्यक्षमूलशास्त्रजन्यज्ञानहेतुकादृष्टकार्यत्वादैन्द्रियिकप्रत्यक्ष प्रथममुपात्तम्। तन्मूलत्वात् भेदवासनामूलप्रत्यक्षमूलत्वात्॥

### गूढार्थसंग्रहः

द्विविधोहि प्रमाणस्य विषयो ग्राह्यश्च यदाकारमुत्पद्यते। प्रापणीयश्च यमध्यवस्यति ; अन्योहि ग्राह्योऽन्यश्चाध्यवसेयः। प्रत्यक्षस्यहि क्षणएकोग्राह्यः, अध्यवसेयस्तु प्रत्यक्षबलोत्पन्नेन निश्चयेन सन्तानएव। सन्तान एव च प्रत्यक्षस्य प्रापणीयः क्षणस्य प्रापयितुमशक्यत्वात्। तथाऽनुमानमपि स्वप्रतिभासेऽनर्थेऽनर्थाध्यवसायेन प्रवृत्तेरनर्थग्राहि। सपुनरारोपितोऽर्थो गृह्यमाणः स्वलक्षणत्वेनावसीयते यतस्ततस्स्वलक्षणमध्यवसितं प्रवृत्तिविषयोऽनुमानस्य। अनर्थस्तु ग्राह्यः। तदत्र प्रमाणस्य ग्राह्यं विषयं दर्शयता प्रत्यक्षस्य स्वलक्षणंविषय उक्तः ' इति धर्मोत्तराचार्यविवरणम्। एतत्पर्यालोचनायां स्वलक्षणत्वेन आरोप एवानुमाने। मणिप्रभादृष्टान्तेतु प्रागुक्तरीत्या मणिज्ञानदशायां स्वलक्षणप्रत्यक्षं सन्ताननिश्चयश्च वर्तत इति, तत्र अर्थक्रियासामर्थ्यं मणिस्वलक्षणस्यैव सम्भवति। अनुमितिस्थलेतु स्वलक्षणत्वारोपेण अर्थाक्रिया धर्मकीर्तिना दुरुपपादा। अतः स्वलक्षणसामान्यभेदेन विषयविभागाङ्गीकारे अनुमानस्थले अर्थक्रियायाः असम्भवेन विभागएवायमनुचितः॥

परमते प्रत्यक्षागमयोरुभयोरविद्यामूलकत्वेऽपि आगमावाक्यस्यार्थाविसंवादः बाधवैधुर्यंचेतिरीत्या शबराद्युक्तदिशा दूषणं नैव परिहर्तुं शक्यम्। उभयोरविद्यामूलकत्वानिश्चये अद्वैतागमस्य प्रत्यक्षबाधकत्वस्यैवासम्भवस्यानुपदमेवोपपादयिष्यमाणत्वात्। स्वप्नवत् जाग्रज्ज्ञानस्य भ्रमत्वाङ्गीकारे ' मृषात्वं यदिबुद्धेः स्याद्बाधः किं नोपलभ्यते। बाधाद्विनाऽपि तच्चेत्स्याद्व्यवस्था न प्रकल्पते॥ (निरा.वा.८७) प्रतियोगिनि दृष्टे च जाग्रद्ज्ञाने मृषा भवेत्। स्वप्नादिदृष्टिरस्माकं तव भेदोऽपि किंकृतः॥' (८८) इति भट्टपादोक्तदूषणापरिहारः। प्रत्यक्षागमयोरुभयोरविद्यामूलकत्वेन ' अतोऽवबोधकत्वेन दुष्टकारणवर्जनात्। अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुतेः॥' (सं.वा.८९२) इति श्लोकमुदाहृत्य अत्राक्षादिवदिति निदर्शनं व्यावहारिकप्रामाण्यमात्रेणेति द्रष्टव्यम्' (अ.सि.भा.ब्रा.उ) इत्युक्त्या अक्षादिवद्व्यावहारिकप्रामाण्यमेव सिद्ध्यति न तात्त्विकप्रामाण्यम्। परसम्मतशुद्धचितएवाप्रामिकत्वेन तादृशचितं सिद्धवत्कृत्य आगमवाक्यानामर्थवर्णनस्यैवासम्भवादिति भावः॥

## श्रीभाष्यम्

**अतस्स्वपक्षसाधनप्रमाणानभ्युपगमान्नस्वाभिमतार्थसिद्धिः ।**

## श्रुतप्रकाशिका

एवं प्रकृतगोचरतयोक्तं प्रमाणाभावं पराभिमतसर्वगोचरपरत्वेनोपसंहरति । **अतइति** । न स्वाभिमतार्थसिद्धिः स्वाभिमतं प्रत्यक्षदौर्बल्यशास्त्रप्राबल्यादिकम् । एतत् खण्डनकाराद्युक्तकुतर्कनिरसनोपलक्षणार्थमुक्तम् । तत्र प्रमाणव्यासयादिभङ्गःक्रियते । तत्रेदं प्रष्टव्यम् । स्वाभिमतव्यतिरिक्तार्थपरं शास्त्रान्तरमपरमार्थार्थकमित्यस्मिन्नर्थे किं तव प्रमितिस्तत्साधनं वाऽस्ति उत नास्ति, अस्तिचेन्नप्रमाणादिभङ्गः । नास्तिचेत्तत एव न प्रमाणादिभङ्गः । प्रमितितत्साधनादिकमस्त्येव तद्व्यावहारिकमितिचेत् ; किमिदं व्यावहारिकत्वं ? किं परमार्थत्वम् उतापरमार्थत्वम् । अपरमार्थभूतं प्रमाणं किंसाधकम्, उतासाधकम् । * साधकंचेदपरमार्थसंज्ञितमन्येषां च प्रमाणं तत्तत्पक्षसाधकमेव स्यात् । अथासाधकं ततो नितरां

## गूढार्थसंग्रहः

**स्वपक्षसाधनप्रमाणानभ्युपगमादिति** । प्रमाणानां सर्वेषामविद्यामूलकत्वनिश्चये कस्यापि तत्त्वावेदकत्वस्य निश्चयासम्भवात् । ' सर्वथा सदुपायानां वादमार्गः प्रवर्तते । अधिकारोऽनुपायत्वान्नवादे शून्यवादिनः ' (श्लो.वा.नि.रा. १२८) इति वेदार्थसंग्रहोदाहृतभट्टपादोक्तिरत्राप्यनुसन्धेया ॥

ननु निर्विकल्पकमेकं प्रमा सविकल्पकमप्रमा इति धर्मकीर्तिनैव सिद्धान्तितम् । एवं संवृतिसत्यपरमार्थसत्यविभागोऽपि तेनैवोक्तः । माध्यमिकैरपि ' संवृतिःपरमार्थश्च सत्यद्वयमिदं मतम् । बुद्धेरगोचरस्तत्वं बुद्धिस्संवृतिरुच्यते । ' इत्युक्तम् (बोधिचर्यावतोर) अतः सप्रकारकज्ञानसामान्यं भ्रमः, ब्रह्मनिर्विकल्पकमेकमेव प्रमा । व्यवहारश्च विकल्पमूलकएवेति व्यवहारसामान्यमध्यासमूलकमेव । ' नच व्यावहारिकसत्त्वे सर्वाविप्रतिपत्तेः तत्प्रतिपादनवैयर्थ्यम् । दशाविशेषे स्वर्गनरकादिसत्त्वप्रतिपादनेन तत्प्राप्तिपरिहारार्थं प्रवृत्तिनिवृत्त्योरेव तत्तत्प्रयोजनत्वात् । व्यावहारिकत्वं च ब्रह्मज्ञानेतराबाध्यत्वं नत्वबाध्यत्वम् मिथ्यात्वबोधकश्रुतिविरोधात् । नचैवं दृढभ्रान्तिजनकत्वात् अत्यन्ताप्रामाण्यापत्तिः स्वप्नार्थप्रतिपादनवदुपपत्तेः । एतावानेव विशेषः, तत्प्रातिभासिकम् इदंतु व्यावहारिकमिति ' इति अद्वैतसिद्धौ व्यावहारिकसत्वप्रतिपादनस्य प्रयोजनमप्युक्तम् ॥

अत्र गुरुचन्द्रिका–' दशाविशेषे इति । परलोकानङ्गीकर्तृवादिविप्रतिपत्त्या स्वर्गादौ सत्यतासन्देहदशायामित्यर्थः । यद्यपि सत्यं मिथ्यावेति सन्दिग्धमपि स्वर्गादिकं स्वप्नविषय इव भवति प्रवृत्त्युद्देश्यम् । तथाऽपि व्यावहारिकादि सत्यमलीकंवेति संदिग्धं, तन्न तथेति व्यावहारिकसत्त्वप्रतिपादनेनोक्तसंशयनिवृत्तिद्वारा प्रवृत्त्यादौ तात्पर्यमिति भावः । श्रुतिविरोधादित्युपलक्षणम् । व्यावहारिकसत्यत्वस्य प्रत्यक्षादिसिद्धस्यानुवादद्वारा उक्तप्रवृत्त्यादिपरत्वे सम्भवति अपूर्वस्य बाध्यत्वसामान्याभावस्य विधायकत्वे गौरवादित्यपि बोध्यम् । दृढभ्रान्तीति । श्रुतिजन्यभ्रान्तेर्मानान्तरबोधितार्थविषयकत्वेन संवादात् भ्रमत्वशङ्काऽनास्पदत्वं दृढत्वमिति भावः । अत्यन्ताप्रामाण्येति । उक्तदृढभ्रान्तिजनकत्वव्यवहारइत्यर्थः । स्वप्नार्थप्रतिपादनवदिति । ' सधीः स्वप्नो भूत्वेमं लोकमनुसंचरति ' इत्यादिशुद्ध त्वंपदार्थप्रतिपादनार्थानुवादरूपा । यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति, समृद्धिं तत्र जानीयात् इति स्वप्नदर्शनफलप्रतिपादनार्थाऽनुवादरूपा वा श्रुतिरित्यर्थः । व्यावहारिके विश्वसत्वेचावान्तरतात्पर्याभावं स्फुटयति एतावानिति । ' इति ॥

## श्रीभाष्यम्

**ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव। कोऽयं व्यावहारिको नाम? आपात प्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इतिचेत् किं तेन प्रयोजनं**

## श्रुतप्रकाशिका

वाद्यन्तराभ्युपगतप्रमाणादिकं साधकं भवेत्। त्वदुक्तं प्रमाणादिकं परमार्थभूतंचेत् द्वैतीविजयीस्यादिति। स्वपक्षपरपक्षभेदः किं परमार्थः, उतापरमार्थः, परमार्थश्चेन्नभेदामिथ्यात्वम्। अपरमार्थश्चेत्परपक्ष एव त्वयाऽङ्गीकृतस्स्यादिति भेदपारमार्थ्यं त्वयैवोक्तं स्यादिति। एवमादिव्याघातस्सर्वत्रानुसन्धेय इत्यभिप्रायः॥

**अथ** स्वपक्षसाधनप्रमाणाभावं प्रतिविवक्षुश्चोदयति। **नन्विति**। कोऽयमित्याक्षिपति। व्यावहारिकस्वरूपं दर्शयति। **आपातेति**। दूषयति। **किंतेनेति**। साध्यनिश्चयरूपप्रयोजनं नेत्यर्थः। ... ...

## गूढार्थसंग्रहः

'सर्वथा सदुपायानाम्' इत्यादिभट्टपादोक्तिः 'सोऽयमपूर्वः प्रमाणादिसत्त्वानभ्युपगात्मा वावस्तम्भनमन्त्रो भवताऽभ्युपहितः' इत्यादि प्राक् (३१९.पु) उदाहृतखण्डनवाक्येषु सम्यक्पर्यालोचिता। अतः स्वपक्षसाधकप्रमाणानभ्युपगमः न सम्भवतीत्याशयेनाह—**ननु व्यावहारिकप्रमाणप्रमेयेत्यादि**॥ बौद्धोक्तदिशा व्यावहारिकपारमार्थिकसत्यद्वयाङ्गीकारे 'तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः। तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना॥' (श्लो.वा.नि.वा. १०) स्वप्नादिभोगवच्चापि योपभोगत्वकल्पना। तन्निवृत्त्यर्थमेवेह परमार्थे प्रयत्यते॥ (११) परमार्थफलावाप्तिमिच्छद्भिस्तेन यत्नतः। प्रतिपत्तिर्विधातव्या युक्तिभिर्ग्राह्यवस्तुषु॥' (१३) इति भट्टपादीय बौद्धमतदूण प्रक्रिययैव परमतमपि न घटत इत्याशयेनाह—**कोऽयं व्यावहारिको नामेति**॥

**आपातप्रतीतिसिद्धइति**। व्यवहारकालबाधशून्या प्रवृत्तिप्रयोजिका च प्रतीतिरापातप्रतीतिः। **युक्तिभिर्निरूपित इति**। विश्वमिथ्यात्वसाधकानुमानानि तदनुकूलतर्कांश्च तस्य च सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गः इत्यादयः युक्त्या। **न तथाऽवस्थितइति**। व्यवहारदशायां बाधाभावमात्रेण अबाधितत्त्वेन गृहीतः बाध्यत्वसामान्याभाववत्त्वेन नैवावस्थातुमर्ह इत्यर्थः॥

**किं तेन प्रयोजनमिति**। स्वप्नवत् प्रातीतिकवैलक्षण्येन व्यावहारिकपदार्थकल्पने किंप्रयोजनमित्यर्थः। दृष्टिसृष्टिपक्षे एकजीववादे मुख्यवेदान्तपक्षत्वेन सम्मते दृश्यसामान्यस्य प्रतीतिकत्वेन स्वप्नतुल्यतया पूर्वकाण्डोक्तधर्मादिफलस्य, औपनिषदसगुणविद्याफलस्य च परमार्थत्वाभावेन तत्प्रतिपादकभागस्य सर्वस्यापि अत्यन्ताप्रामाण्यं स्यादिति भिया सृष्टि दृष्टिपक्षमवलम्ब्य प्रातीतिकव्यावहारिक पारमार्थिकसत्तात्रैविध्यमङ्गीक्रियते। ब्रह्मज्ञानेन व्यावहारिकस्य बाधे व्यवहारकालिकप्रतीतिसामान्यं भ्रमएवेति दीर्घभ्रमसम्पादकत्वमेव पूर्वकाण्डस्य स्यात्। अतश्च धर्मफलोपभोगः स्वप्नोपभोगतुल्य एव स्यात् व्यावहारिकानङ्गीकारेऽपि सत्यं मिथ्यावेति संदेहेऽपि स्वर्गादिकं स्वप्नविषय इव प्रवृत्त्युद्देश्यं भवत्येव। व्यवहारिकादि सत्यमलीकंवेति सन्देहे प्रवृत्तिर्न सम्भवतीति व्यावहारिकसत्त्वप्रतिपादनमिति गुरुचान्द्रिकोक्तिरपि व्यावहारिकस्याभावे एवं संशयस्यासम्भवेनानुपादेया। व्यवहारकाल एव प्रयोजनतदभावविचारः। व्यवहाराभावदशायां परमार्थं फलमिति परैरुच्यते व्यवहाराभावदशायां परमार्थफलानिर्णयः फलानुभवितुरभावादेव न सम्भवति। फलानुभवितुस्सत्त्वे सा व्यव-

## श्रीभाष्यम्

**प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात्**

## श्रुतप्रकाशिका

कुतइत्यत्राह—**प्रमाणतयेति**। युक्त्या बाधो यौक्तिकबाधः। धूमबुद्ध्या गृहीतबाष्पादेः साध्यनिश्चयहेतुत्वादर्शनादित्यर्थः। एवं मूलोच्छेदितं वैषम्यमुपपादितम् एवं पूर्वं परोक्तं परत्वाद्वैषम्यं दूषितम्। अथास्मात्परस्य कस्यचिद्बाधकस्या-

## गूढार्थसंग्रहः

हारदशैव, सैव परमार्थदशा। तदतिरिक्ता परमार्थफलदशात्वप्रामाणिक्येव। अतो व्यावहारिकातिरिक्तपारमार्थिकवस्तु नसिद्ध्यति। प्रत्यक्षादेः व्यवहारकालाबाध्यार्थविषयकत्वेनैव प्रामाण्यम्, नतु बाध्यत्वसामान्याभावविशिष्टविषयकत्वेनेति कल्पनाऽपि न सम्भवति। प्रमाणानामुत्पत्तौ ज्ञप्तौ च स्वतस्तस्योभयमाम्यतत्वात्। ज्ञानग्राहकस्य ज्ञानप्रामाण्यग्राहकत्वात्। घटादिप्रत्यक्षग्राहकेण तद्गतप्रामाण्यस्यापि ग्रहणात्, तद्वति तत्प्रकारकत्वरूपं प्रामाण्यं गृह्यत एव। यत्कालावच्छेदेन यत्र यस्य प्रकारतया भानं तत्कालावच्छेदेन तत्र तदभावसाधन एव मिथ्यात्वम्। घटोऽस्ति घटो नास्तीति प्रतीतिकाले यत्कालावच्छेदेन घटः सति गृह्यते तत्कालावच्छेदेनैव सति घटाभावस्य ग्रहः' इति विवरणोक्तप्रक्रिया सर्वानुभवविरुद्धत्वादनुपादेया॥

एवं च प्रामाण्यग्रहे तत्कालावच्छेदेन तदभावबोधकप्रमाणविरहेण तत्कालावच्छेदेन तदभावबोधासम्भवात् प्रत्यक्षविरोधेन श्रुत्या मिथ्यात्वं न सिद्ध्यतीति पूर्वमीमांसकोक्तं युक्तमेव। एतेन प्रत्यक्षविषयीभूतं सत्त्वं मिथ्यात्वाविरोधीति अद्वैतसिद्ध्युक्तिरप्यनुपादेया। मिथ्यार्थबोधकश्रुतीनां परसम्मतार्थाबोधकत्वस्य अनुपदमेव श्रीभाष्य एव निरूपयिष्यमाणत्वात्। किंच परमते 'सत्यं ज्ञानम्' इत्यादेः अबाध्यत्वविशिष्टविषयकत्वे तज्जन्यज्ञानस्य भ्रमत्वमेव शुद्धेऽबाध्यत्वरूपधर्मस्याप्यनङ्गीकारात्। अबाध्यत्वोपलक्षितविषयकत्वेनैव प्रमात्वं पर्वाच्यम्; अबाध्यत्वोपलक्षितवस्तुविषयकत्वे तदुपलक्षितत्वं तच्छून्यकालएवेति ज्ञानवतामुपलक्षितविषयकज्ञानस्य प्रमात्वनिश्चयोऽपि न घटते। अतः निर्विशेषस्यैव बाध्यत्वसामान्याभावः। प्रत्यक्षादेः कर्मसगुणभागस्य च व्यवहारकालाबाध्यार्थविषयकत्वमेवेति कल्पना व्यावहारिकाङ्गीकारे प्रयोजनविरहात् परसम्मतरीत्या पारमार्थिकविषयकत्वेन प्रामाण्यासम्भवाच्चानुपादेया॥

एतेन 'प्राणावै सत्यं तेषामेष सत्यम्' (बृ.४.३.६) इति श्रुतौ सत्यद्वयोक्त्या 'न सत्यद्वयकल्पना' इति भट्टपादोक्तदूषणमधिष्ठानानभ्युपगन्तृबौद्धमत एव। नतु अस्मन्मते' इति गुरुचन्द्रिकायां (असतः साधकत्वोपपत्तौ) ब्रह्मानन्दसरस्वत्युक्तिरपि निरवकाशा। एतच्च (३२१.पु) निरूपितम्। तत्र प्रथमसत्यशब्दस्य धर्मपुरस्कारेण बोधकत्वं द्वितीयशब्दस्य उपलक्षितबोधकत्वमिति प्रथममिथ्यात्वनिरूपणे (गु-चं) उक्तिः वैषम्यादभिनिवेशमूलैव। उभयत्र धर्मपुरस्कारेणैव बोधकत्वं सिद्धान्ते इत्युत्तरत्र निरूपयिष्यमाणत्वाच्च॥

स्वप्नोपभोगतुल्यत्वमेवोपपादयति—**प्रमाणतया प्रतिपन्नेपीत्यादिना**। ज्ञानानां स्वतः प्रामाण्येन भ्रमकालेऽपि प्रमात्वग्रहणे प्रवृत्तिः। उत्तरकालं यौक्तिकबाधात् प्रमाणकार्याभावः। प्रमोत्पत्त्यनन्तरं यौक्तिकबाधज्ञाने भ्रमरूपेऽत्यपि प्रमाणकार्याभावः समः, एवंस्थिते यौक्तिकबाधज्ञानं प्रमा, भ्रमो वा इति संशयविषये एकतरकोटिनिर्णयः आवश्यकः। परमतरीत्या योऽयं यौक्तिकबाधः उक्तः सः प्राक् उपदर्शितयुक्त्यादेरसम्भवात् शुद्धचितः अप्रामाणिकत्वेन तज्ज्ञानं भ्रम एवेति यौक्तिकबाधेन प्रत्यक्षादेः तत्त्वावेदकत्वं न सम्भवतीति कल्पनायाः नावकाशः॥

श्रीभाष्यम्

**अथोच्येत—शास्त्रप्रत्यक्षयोर्द्वयोर(प्य)विद्यामूलकत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते। शास्त्रविषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव**

श्रुतप्रकाशिका

भावं ब्रह्मप्रतिपादकशास्त्रस्य प्रत्यक्षाद्वैषम्यं शङ्कते। **अथोच्येतेत्यादिना**। बाधदर्शनाभावरूपं वैषम्यं शास्त्रस्य वक्तुं प्रत्यक्षविषयस्य बाधदर्शनमाह–**शास्त्रेति**। प्रत्यक्षविषयाच्छास्त्रविषयस्य वैषम्यमाह—**शास्त्रविषयस्येति**। पाश्चात्यबाधा-

**गूढार्थसङ्ग्रहः**

एतेन भाविबाधोद्धारे 'भाविबाधनिश्चयाच्चेति। यदुक्तं तदप्युपपन्नमेव प्रकारान्तरेणाबाधितस्य चन्द्रप्रादेशिकत्वप्रत्यक्षस्य यथा आगमेन बाधः तथा प्रकारान्तरेणाबाधितस्य 'सन् घटः' इत्यादिप्रत्यक्षस्य मिथ्यात्वबोधकागमेन बाध इति निर्णयात्। वस्तुतस्तु बाधशङ्कामादायापि प्रत्यक्षस्य बाधकतोद्धारः समीचीन एव। प्रत्यक्षशब्दयोः बलाबलविचारात्प्राक् किमयंशब्दः उपचरितार्थः आहोस्वित् प्रत्यक्षमप्रमाणम्, इति शङ्कायामुभयोरबाधकत्वप्राप्तौ तात्पर्यलिङ्गैः श्रूयमाणार्थपरतया निश्चितस्यागमस्य उपचरितार्थत्वशङ्काव्युदासेन लब्धावकाशत्वसम्भवात्।' इत्यद्वैतासिद्ध्युक्तिरनुपादेया। निर्विशेषचितः शशशृङ्गतुल्यतायाः पूर्वमेवोपपादनेन तात्पर्यलिङ्गैः तन्निर्णयासम्भवेन निर्विशेषचिदवलम्बनेन एवं व्यवस्थायाः असम्भवात्॥

'प्रत्यक्षादेर्दोषमूलत्वसम्भावनायां विषयदुर्निरूपतैव हेतुः' इत्युपक्रम्य भेदग्रहानुपपत्तिः भेदस्वरूपानुपपत्तिश्च यद्यपि सिद्धान्तसिद्धाञ्जने उक्ता। तथाऽपि सा **युक्तिभिर्निरूपितः न तथाऽवस्थित** इति अत्र पूर्वपक्ष एव विवक्षिता। तद्दूषणानुक्तिस्तु प्रमाणानुपपत्तिप्रमेयानुपपत्त्योः प्रागेव परिहाराभिप्रायेण। 'बाह्यार्थापह्नवे द्वैतमेकोऽर्थस्य परीक्षणात्। प्रमाणं संश्रयश्चैकः' इति बौद्धसम्मतमिदं युक्तिद्वयमिति भट्टपादैरेव निरालम्बनवादे उक्तम्। इदं युक्तिद्वयं निरस्य सत्यद्वयकल्पनां दूषयतां भट्टपादानां परमतमपि दूष्यत्वेन विवक्षितम्। निरालम्बनवादान्ते 'युक्त्याऽनुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम्। आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहंगतास्तत्र कथंचिदन्ये॥ इत्यत्रान्ये परएव भट्टपादानां विवक्षिता इति निरूपितं भावप्रकाशे। तत्र शब्दप्रामाण्यानङ्गीकर्तृबौद्धमते तत्त्वतोऽनुमानस्याप्यप्रामाण्येन प्रत्यक्षेण व्यावहारिकत्वपारमार्थिकत्वनिश्चयो न सम्भवति, किंतु युक्त्यैव। युक्तिश्च प्रागुपदर्शितरीत्या अनुमानस्य प्रामाण्यासम्भवेन व्यावहारिकपारमार्थिकविभागः प्रमाणतो यथा न सिद्ध्यति एवं शब्दप्रामाण्याङ्गीकर्तृपरमतेऽपि। शब्दस्य धर्मिसंसर्गाविषयकशाब्दबोधजनकशक्तिरेव नास्ति नापि सम्प्रतिपन्ना॥

एवं च भाविबाधशङ्कासत्वेऽपि निर्विशेषचिदवलम्बनेन भाविबाधज्ञानं व्युत्पन्नानां शब्दाधीनं न सम्भवतीति निश्चयो वर्तत एवेति प्रत्यक्षबाधकत्वं आगमस्य न सम्भवतीति व्यावहारिककल्पनस्य न किंचित्प्रयोजनम्। व्यवहारकालाबाध्यत्वनिश्चयकाले बाध्यत्वसामान्याभावनिश्चयस्यापि सम्भवात्। बाध्यत्वसामान्याभावः प्रतियोगिनिश्चयासम्भवादेव सिद्धः नास्माभिः परिकल्पनीयः। अतः बौद्धोक्तरीत्या व्यावहारिकप्रमाणप्रमेय व्यवहारकल्पनं नादर्तव्यमिति भावः॥

एतावता 'मायामयत्वसिद्धौ च प्रपञ्चस्य प्रमाणतः। प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम्॥' इति आनन्दबोधोक्तिः (न्या.म) पर्यालोचिता। अथ 'अद्वैतागमवाक्यं तु तत्त्वाविदनलक्षणम्। प्रमाणभावं भजते बाधवैधुर्यहेतुतः॥' (न्या.म) इति तदनन्तरोक्तार्थमेवानुवदति--**अथोच्येत इत्यादिना**॥ **पश्चात्तनबाधादर्शनेन** इत्यनेन

## श्रीभाष्यम्

**परमार्थ इति तदयुक्तम्। अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात्। एतदुक्तं भवति। सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकजनस्याज्ञातस्वतिमिर सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते। न तत्र बाधकप्रत्ययोस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं द्विचन्द्रत्वमपि मिथ्यैव। दोषोह्ययथार्थज्ञानहेतुः। तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणासह मिथ्यैवेति। भवन्ति चात्र प्रयोगाः। विवादाध्यासितं ब्रह्म मिथ्या अविद्यावत उत्पन्नज्ञानविषयत्वात् प्रपञ्चवत्,**

## श्रुतप्रकाशिका

दर्शनाभ्युपगमेन दूषयति। **तदयुक्तमिति**। कुतइत्यत्राह—**अबाधितस्येति**। 'यस्य च दुष्टं करणं यस्य च मिथ्येति प्रत्ययः स एवासमीचीनप्रत्ययः' इति नीतिविदः। अतो दुष्टमूलत्वबाधकप्रत्ययौ प्रत्येकं मिथ्यात्वसाधकौ। व्याहतमिदं यदबाधितस्याप्यपारमार्थ्यनिश्चय इति। अपरमार्थत्वेन निश्चयत्वंहि बाधितत्वमित्यत्राह—**एतदुक्तमिति**। अज्ञातस्वतिमिरस्येति पदं क्वचिद्दृश्यते। दोषज्ञाननिबन्धनपरोक्षबाधकज्ञानोदयव्युदासः प्रयोजनम्। ज्ञातस्वतिमिरस्येति तु पाठो * लेखकस्खलनकृतः। सहि पुरुषान्तरागोचरत्वोक्तिविरुद्धः। बाधकाभावे कथं मिथ्यात्वमित्यत्राह—**दोषोहीति**। भ्रान्तिसमानाश्रयबाधकज्ञानाभावेऽपि पुरुषान्तरज्ञानेन मिथ्यात्वनिश्चयो न व्याहत इत्यर्थः। तिरश्चां यावज्जीवं बाधोदयाभावेऽपि देहात्मधीर्मिथ्यात्वविषया तस्यास्संसर्गरूपदोषमूलत्वात्। बाह्यभ्रमेषु स्पष्टोदाहरणस्य विवक्षितत्वादेव तदनुक्तिः

**ननु** तिरश्चां देहात्मभ्रमो नास्माकं प्रत्यक्षः, कार्यानवगमात् भ्रमकारणदोषोऽपि दुरवगमः। तत्कथं दोषमूलत्वसम्भावना ज्ञानमात्रेण मिथ्यात्वनिश्चयः, उच्यते—अस्मदादेश्शास्त्रश्रवणात्पूर्वं देहात्मभ्रमदर्शनात्तेषां च शास्त्राधिकाराभावाद्देहात्मभ्रमस्तन्मूलदेहसंसर्गरूपदोषवत्त्वं चानुमीयते। दोषमूलत्वनिश्चयान्मिथ्यात्वनिश्चयः। एवं तैमिरिकजनस्य तिमिरान्वये आप्तवाक्यादिकमन्वेष्टव्यम्। ततो मिथ्यात्वनिश्चयः। एवं सपक्षे शिक्षितमर्थं दार्ष्टान्तिके निगमयति। **तथेति**। ज्ञानमिथ्यात्वं * परमताभ्युपगमादुक्तम्। पाश्चात्यबाधादर्शनमुत्तरत्र निरसिष्यते॥

शास्त्रस्यचाविद्यामूलत्वाभ्युपगमेऽनिष्टं प्रसञ्जयति। **भवन्तिचेत्यादिना**। व्याप्तिप्रदर्शनवचनत्वात्प्रयोगा इत्युक्तम्। प्रतिज्ञादृष्टान्तहेतुरूपेण कथनमनिष्टप्रसङ्ग एवमपि न्याय्य इति ज्ञापनार्थम्। **ज्ञानविषयत्वमात्रमेको हेतुः।**

## गूढार्थसंग्रहः

बाधवैधुर्यंहेतुत इत्यस्यार्थउक्तः। **दोषमूलस्यापारमार्थ्यनिश्चयादिति**। 'यस्य च दुष्टं करणम्' इत्यादि शबरोक्तेरिति भावः॥ **दोषोह्ययथार्थज्ञानहेतुरित्यादि**। यद्यपि 'प्राक्च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते' इति परैरपि अध्यासभाष्ये उक्तम्। तथाऽपि आत्मज्ञानेऽपि अविद्यारूपदोषस्य मूलतया अयथार्थज्ञानमेव पर्यवस्यतीति भावः। तदेवोपपादयति—**तथा ब्रह्मज्ञानमित्यादिना**॥

**स्वविषयेण ब्रह्मणा सह मिथ्यैवेति**। शुक्तिरजतज्ञानस्थले शुक्तिरजत तज्ज्ञानयोरुभयोः अविद्यापरिणामत्वं परैरभ्युपगम्यते। दोषमूलकायथार्थज्ञानत्वेन सर्वसम्प्रतिपन्ने शुक्तिरजतज्ञाने या रीतिः परैरादृता दृष्टिसृष्टिपक्षे प्रपञ्चसामान्यस्यापि प्रतीतिकत्वेन सैव रीतिः। साच रीतिः सत्यद्वयनिरसनेन आत्मज्ञानतद्विषयोभयमपि न जहातीति भावः॥ **अविद्यावत उत्पन्नज्ञानविषयत्वादिति**। अविद्याहेतुकज्ञानविषयत्वे पर्यवसानम्। अत्र मिथ्यात्वमबाध्य-

## श्रीभाष्यम्

**ब्रह्म मिथ्या ज्ञानविषयत्वात् प्रपञ्चवत्, ब्रह्म मिथ्या असत्यहेतुजन्यज्ञानविषयत्वात्**

## श्रुतप्रकाशिका

एको दुष्टपुरुषज्ञानविषयत्वम् एको मिथ्याभूतसामग्रीजन्यज्ञानविषयत्वमिति भिदा । पूर्वं सपक्षीभूतएवार्थोऽत्र सपक्ष इत्येवकारार्थः । नन्वसत्यजन्यहेतुधीविषयत्व * मन्यतरासिद्धिं प्रपञ्चवदिति दृष्टान्तश्च साध्यविकलः कथमेवं प्रसङ्गउच्यते ?

## गूढार्थसंग्रहः

त्वाभावः । **ज्ञानविषयत्वादिति** । प्रपञ्चाविशेषेण 'ब्रह्मवित्' इत्यादिप्रयोगेण ज्ञानवृत्तिभेदेन उभयत्र ज्ञाधात्वर्थभेद कल्पनं प्राक् (३३५.पु) उपदर्शितादिशा सम्बन्धभेदकल्पनं च अनुपादेयमिति ब्रह्मणो ज्ञानविषयत्वस्थापनावसरे व्यक्ती-भविष्यति ॥ 'सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते । न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता ॥ बाष्पादिनाप्यधूमेन मिथ्यावह्न्यादिबोधनम् ।' (श्लो.वा.नि.रा.वा.१५८.श्लो) 'तस्मादसत्यहेतोर्या परमार्थे मतिस्तव । साप्यसत्या न सत्यंहि सत्याभासेन गम्यते' (१५९) इत्यसत्यात् सत्यसिद्धिनिरसनावसरे भट्टपादैरुक्तम् । तमेव हेतुं दर्शयति— **असत्यहेतुज्ञानविषयत्वादिति** । अनन्तरं 'येऽपि रेखादयो दृष्टाः वर्णानां प्रतिपादकाः । नते स्वेनापि रूपेण परमार्थत्व वर्जिताः' (श्लो.वा.नि.वा१६०) इत्याद्युक्तम् ॥

ब्रह्मसिद्धौ च 'असत्याच्च सत्यप्रतिपत्तिर्मिथ्यैव । यथा धूम इति मिथ्यागृहीताद्बाष्पादिति ।' इति इममेव भट्टपादोक्त मर्थमाशङ्क्य 'उच्यते—नायं नियमः असत्यं कस्मैचित् कार्याय भवति । इति भवतिहि मायाप्रीतिर्भयस्य च निमित्तम् असत्यं सत्यप्रतिपत्तेः । यथा रेखागवयो लिप्यक्षराणि च, स्यादेतत् स्वरूपेणेदं सत्यं न शून्यम्, ऐकात्म्यवादिनस्तु स्वरूपेणाप्युपायानामसत्यता । उच्यते—सन्तु स्वरूपेण सत्याः, येनतु रूपेण प्रतिपादकाः, तदसत्यम् । कार्योपयोगरहिता स्वरूप सत्यता व्यर्था । अपिचाभेददर्शनोपाया अपि न स्वरूपेण मिथ्या, यतो ब्रह्मैवेषां स्वरूपं तत्र ब्रह्मैवाविद्याऽनुविद्धं, ब्रह्मप्राप्त्युपायः, यथा रेखादयः ककारोऽयं गवयोऽयं इत्यविद्यमानरूपेणैव वर्णानां बोधकाः । योऽपि मन्यते न रेखागवयो गव यत्वेन गवयान्तराणां प्रतिपत्तिहेतुः ; न रेखावर्णत्वेन, किंतु सादृश्यात्—एतत्सदृशो गवय इति, रेखाच समयात् ईदृशीं रेखां दृष्ट्वाऽयं वर्णः स्मर्तव्य इति । तस्य लोकविरोधः ; तथाहि बालाहि रेखासु वर्णत्वेनैव व्युत्पाद्यन्ते, लोके भेदेन च व्यपदेशः अयं गवयः इत्याख्यातुः, प्रतिपत्तुश्च गवयोऽयं मया दृष्ट इति । तथाऽसत्यात्प्रतिबिम्बाच्चादृष्टस्य प्रतिबिम्बहेतोर्विशिष्टदेशावस्थस्यानुमानं न मृषा ; शब्दाच्च नित्यादसत्यदीर्घादिविभागभाजोऽर्थभेदप्रतिपत्तिर्न मिथ्या । तथा मिथ्याहिदंशो मरणहेतुः ; ततश्च मरणमूर्छाद्यनुमानं न वितथम्, कालाहि भेदयुक्तात् सत्याहि दंशादिव' इति मण्डनमिश्रेण समाहितम् ॥

शङ्कराचार्यैरपि आरम्भणाधिकरणे 'कथंत्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत । नहि रज्जुसर्पेण दष्टो म्रियेत, नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियत इति । नैषदोषः । शङ्काविषादिनिमित्त मरणादिकार्योपलब्धेः । स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात् । तत्कार्यमप्यनृतमेवेतिचेद्ब्रूयात् । तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशोदकस्नानादिकार्यमनृतं, तथाऽपि तदवगतिः सत्यमेव फलम् प्रतिबुद्धस्याप्यबाध्यमानत्वात् । नहि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशोदकस्नानादिकार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येति मन्यते कश्चित् । एतेन स्वप्नदृशोऽवगत्यबाधेन देहमात्रात्मवादो दूषितो वेदितव्यः ॥

## श्रीभाष्यम्

**प्रपञ्चवदेव। नच वाच्यं स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति ; स्वाप्नज्ञानस्यासत्यत्वाभावात् तत्र हि विषयाणामेव मिथ्यात्वं तेषामेवहि बाधो दृश्यते न ज्ञानस्य। नहि मया स्वप्नवेळायामनुभूतं ज्ञानमपि न विद्यत इति कस्यचिदपि प्रत्ययो जायते। दर्शनंतु विद्यते अर्था न सन्तीतिहि बाधकप्रत्ययः। मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः तत्रापि ज्ञानस्याबाधितत्वात्।**

## श्रुतप्रकाशिका

**ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते।** इतिवत् प्रसञ्जकप्रसञ्जनीयधर्मव्याप्तिं परमतेनाभ्युपगम्य दूषणमुक्तमिति न विरोधः॥

नासत्यहेतुजन्यज्ञानविषयत्वादसत्यत्वं ब्रह्मणः। असत्यादपि सत्यप्रतिपत्तिर्दृश्यत इति शङ्कामनूद्य परिहरति। **नचेत्यादिना**। किमसत्यस्य सत्योत्पत्तिहेतुत्वानुपपत्तिः उत तज्ज्ञप्तिहेत्वानुपपत्तिरिति विकल्पमभिप्रेत्य उत्पत्तिहेतुत्वे ज्ञप्तिहेतुत्वेचोदारणानि दार्शितानि। तत्र स्वाप्नविषयाणां सत्यत्वेऽभिमतेऽपि विषयासत्यत्वमभ्युपगम्य परिहरति। **स्वाप्नेति**। ज्ञानस्य सत्यत्वमुपपादयति। **तत्रहीति**। अवधारणं कथमित्यत्राह—**तेषामेवेति**। ज्ञानस्याबाधं दर्शयति। **नहीति**। कथं जायत इत्यत्राह—**दर्शनंत्विति**। अन्यविषयो बाधो नान्यत्र संचारयितुं युक्त इत्यर्थः। अत्रानेकोदाहरणप्रदर्शनं तत्तज्ज्ञानसामग्रीविशेषाणां सत्यत्वज्ञापनार्थम्। तच्च ज्ञानसत्यत्वनिर्वहणार्थं स्वप्नकारणं पूर्वानुभवसंस्कारस्सत्यः प्रसिद्धत्वात्तदनुक्तिः॥

**मायाविनइति**। अत्र मन्त्रौषधादिप्रभवमित्यनेन कारणसत्यत्वमुक्तम्, मायामयं मिथ्याविषयमित्यर्थः विचित्र विषयं वा। **विषयेत्यादि**। विषयदोषस्सादृश्यादिः, इन्द्रियदोषःकाचादिः, आदिशब्देन देशगतदूरत्वादिदोष उच्यते।

## गूढार्थसंग्रहः

तथा च श्रुतिः 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने' (छा.५.२ ९) इत्यसत्येन स्वप्नदर्शनेन सत्यायास्समृद्धेः प्राप्तिं प्रदर्शयति। तथा प्रत्यक्षदर्शनेषु केषुचिदारिष्टेषु जातेषु 'न चिरमिव जीविष्यतीति विद्यात्' इत्युक्त्वा 'अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिना तेन तेनासत्येनैव स्वप्नदर्शनेन सत्यमरणं सूच्यत इति दर्शयति। प्रसिद्धंचेदं लोकेऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यते ईदृशेनासाध्वागम इति। तथाऽकारादिसत्यक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः' इत्युक्तम्। अतः भट्टपादसिद्धन्तमेवात्र स्थापयितुमुदाहरणानि पर्यालोचयति—**नच वाच्यं स्वाप्नस्य हस्त्यादिविज्ञानस्येत्यादिना**। तत्र शङ्कर भाष्योदाहृतदृष्टान्तमेव प्रथमत. पर्यालोचयति। उदाहृतशङ्करभाष्ये 'असत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्राप्तिं दर्शयति' इत्याद्युक्तेरिति भावः॥

**दर्शनंतु अर्था न सन्तीतिहि बाधकप्रत्यय इति**। 'तदवगतिस्सत्यमेव फलंप्रतिबुद्धस्याबाध्यमानत्वात्' इत्यादि (शं) भाष्येऽप्ययमर्थः स्फुटः। 'भवतिहि मायाप्रीतिर्भयस्य च निमित्तम्' इति ब्रह्मसिद्ध्युक्तिं पर्यालोचयति **मायाविनइति**।

## श्रीभाष्यम्

विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः, सत्यैवादष्टेऽपि

## श्रुतप्रकाशिका

दोषश्च सत्यः। सत्यैवेति। सर्पसन्निधानं कारणं सत्यं, दष्टबुद्धिश्च सत्या, शङ्काविषबुद्धावपि सामग्री सत्या। निर्विषो-

## गूढार्थसंग्रहः

मन्त्रौषधादिरेव तत्र मायेति जरदद्वैतिमतं विवरणे उपन्यस्तम्। मायायाः तत्र न प्रीतिभयहेतुत्वम् अपितु पदार्थज्ञानस्यैव, ज्ञानंतु सत्यमेवेति भावः। उभयत्रोपात्तदृष्टान्तं पर्यालोचयति **सत्यैवादष्टेऽपि** इति॥

यद्यपि भामत्याम्—'यद्यपि सांव्यवहारिकसत्यादेव भयात्सत्यं मरणमुत्पद्यते, तथाऽपि भयहेतुरहिस्तज्ज्ञानंवाऽसत्यं ततो भयं सत्यं जायत इत्यसत्यात्सत्यस्योत्पत्तिरुक्ता। यद्यपिचाहिज्ञानमपि स्वरूपेण सत् तथाऽपि न तज्ज्ञानत्वेन भयहेतुः; अपित्वनिर्वाच्याहिरूपितत्वेन। अन्यथा रज्जुज्ञानादपि भयप्रसङ्गाज्ज्ञानत्वेनाविशेषात्। तस्मादनिर्वाच्याहिरूपितं ज्ञानमनिर्वाच्यमिति सिद्धमसत्यादपि सत्यस्योपजन इति' इत्युक्तम्॥

अत्र 'असत्यादपि कार्यक्षमपदार्थोत्पत्तिमनन्तरमेव वक्ष्याम इत्यर्थः।' इति कल्पतरुव्याख्याने परिमलः—'ननु असज्ज्ञतावसतइवाहिज्ञतावहेरुपलक्षणत्वेन तादर्थ्यसम्भवात् नाहिज्ञानस्यासत्यत्वमितिचेत् न; असद्विकल्पस्यासद्विशिष्टत्वेनासत्त्वे बाधकाभावात्। नच शशशृङ्गमस्तीति ज्ञानात् भ्रान्तस्य प्रवृत्त्यभावप्रसङ्गो बाधकः, असतः साधकत्वदर्शनस्य प्रातिभासिकव्यावहारिकाणां साधकत्वोपपादने कैमुतिकन्यायेनानुकूलत्वात्। अत एव खण्डनकारैरसतः साधकत्वं यत्नेनोपपादितम्। ननु तथाऽपि व्यावहारिकत्वादिनिर्वचनेष्वपेक्षितमसत्प्रातिभासिकवैलक्षण्यं व्यावहारिकमभ्युपेत्यम्; असतः प्रातिभासिकस्य च तद्वैलक्षण्यस्यसति प्रातिभासिकेच सत्त्वेनाव्यावर्तकत्वात्, अतस्तत्रासत्प्रातिभासिकवदहेरप्युपलक्षणत्वं स्यादितिचेत् न; तत्र विशिष्टरूपेणासदपि प्रातिभासिकमपि स्वरूपेण तद्वैलक्षण्यं विशेषणमिति विवक्षया व्यावर्तकत्वोपपत्तेः, कचित्कस्यचिद्बाधकवशात् उपलक्षणत्वकल्पनेऽपि प्रकृते विशेषणत्वे सम्भवति तद्दृष्टान्तेनोपलक्ष्याकारान्तरसापेक्षोपलक्षणत्वकल्पनायोगात्, महासर्पभ्रमजन्यभये क्षुद्रसर्पजन्यभयादुत्कर्षदर्शनेन कार्योत्कर्षानुविधेयोत्कर्षस्य सर्पस्य विशेषणतया भयप्रयोजककोटिनिवेशनावश्यम्भावाच्च' इति॥

अद्वैतसिद्धौ च—'प्रतिबिम्बे बिम्बसाधकत्वं तावदस्ति। तस्य बिम्बात्मना सत्त्वेऽपि प्रतिबिम्बाकारेणासत्त्वात्परमार्थसत्त्वं न साधकत्वे प्रयोजकम्। एवं स्वप्नार्थस्यासतोऽपि भावि शुभाशुभसूचकत्वम्। यद्यपि तत्रत्यदर्शनस्यैव सूचकत्वम् 'पुरुषं कृष्णं कृष्णदन्तं पश्यति' इत्यादिश्रुतिबलात्; तथाऽपि दर्शनमात्रस्यातिप्रसक्तत्वेन विषयोऽप्यवश्यमपेक्षणीय एव। एवं स्फटिकलौहित्यस्य उपाधिसन्निधानसाधकत्वं च। नच लौहित्यं स्फटिके न मिथ्या, किंतु धर्ममात्र प्रतिबिम्ब इति न पृथगुदाहरणमिति वाच्यम्; धर्मिभूतमुखादिनैरपेक्ष्येण तद्धर्मभूतरूपादिप्रतिबिम्बादर्शनात् प्रतिबिम्बस्याव्याप्यवृत्तित्वनियमेन लौहित्यस्य स्फटिके व्याप्यवृत्तिप्रतीत्ययोगाच्च। लौहित्ये स्फटिकस्थत्वारोपे तस्य प्रतिबिम्बत्वम्, स्फटिके लौहित्यारोपेतु तस्य मिथ्यात्वमिति विवेकः। स्फटिकमणेरिवोपधाननिमित्तो लोहितिमेति लोहितिम्नो मिथ्यात्वं दर्शितं प्रतिबिम्बसत्यतावादिभिः पञ्चपादिकाकृद्भिः' इति॥

'दृष्टंहि मायाकल्पितहस्त्यादेरज्जुसर्पादेश्च भयादिहेतुत्वं सवितृसुषिरस्य च मरणसूचकत्वं शङ्काविषस्य च मरणहेतुत्वम्। ननु तत्र शङ्कैव भयमुत्पाद्य धातुव्याकुलतामुत्पादयतीति सैव मरणहेतुः नतु शङ्कितं विषमपि; एवं सवितृसुषिर

## गूढार्थसङ्ग्रहः

मायाकल्पितगजादीनामपि ज्ञानमेव तत्तदर्थक्रियाकारि नत्वर्थोऽपि, तथा च सर्वत्रोदाहृतस्थलेषु ज्ञानमेव हेतुः, तच्च स्वरूपतस्सत्यमेव अन्वयव्यतिरेकावपि ज्ञानस्यैव कारणतां ग्राहयतः। नहि सन्निहितं सर्पमजानानो बिभेति। नचार्थानवच्छिन्नस्य ज्ञानस्य हेतुत्वेऽतिप्रसङ्गादर्थावच्छिन्नमेव ज्ञानं हेतुः तथाचार्थोऽपि हेतुरेवेति वाच्यम्; अर्थावच्छिन्नस्य ज्ञानस्य हेतुत्वेऽप्यवच्छेदकस्यार्थस्य ताटस्थ्येनाहेतुत्वोपपत्तेः' इति। 'इतिचेत् अत्रोच्यते—यदुक्तं ताटस्थ्यलक्षणमुपलक्षणत्वमेव सर्वत्रावच्छेदकस्येति, तन्न; विशेषणत्वे सम्भवत्युपलक्षणत्वायोगात्। विशेषणबाधपूर्वकत्वादुपलक्षणत्वकल्पनायाः' इति 'प्रतिबिम्बादिज्ञानानां जनकत्वे च विशेषणतया प्रतिबिम्बादीनामपि जनकत्वे बाधाभावान्नोपलक्षणत्वपक्षो युज्यते' इति 'उत्कर्षानुविधानाच्च। तथाहि स्वप्ने जागरेचोत्कृष्टकलधौतदर्शनादुत्कृष्टं सुखम् उत्कृष्टसर्पादिदर्शनाच्चोत्कृष्टं भयादि दृश्यते; विषयस्याकारणत्वे तदुत्कर्षानुविधानं कार्ये न स्यात्; नह्यकारणोत्कर्षः कार्यमनुविधत्ते इति न्यायात्। नच ज्ञान प्रकर्षादेव तत्प्रकर्षः; ज्ञानेऽपि विषयगतप्रकर्षं विहायान्यस्य प्रकर्षस्याभावात्। अथ ज्ञानगता जातिरेव प्रकर्षः, न चाक्षुषत्वादिना सङ्करप्रसङ्गात् विषयप्रकर्षेणैवोपपत्तौ चाक्षुषत्वादिव्याप्यनानाजात्यङ्गीकारे गौरवान्मानाभावाच्च। किंच ज्ञानस्य भयादिजनकत्वे सर्पाद्यवच्छिन्नत्वमेव कारणताऽवच्छेदकमास्थेयम्; ज्ञानत्वेन जनकत्वेऽतिप्रसङ्गात् तथा च मिथ्या(त्वा)ऽवच्छिन्नत्वाकारेण ज्ञानस्य मिथ्यात्वात् भ्रमस्थले ज्ञानमात्रस्य जनकत्वेऽपि मिथ्याभूतस्य जनकत्वमागतमेव। जनकताऽवच्छेदकरूपेण च मिथ्यात्वे रूपान्तरेण सत्त्वमप्यसत्त्वान्नातिरिच्यते; अनुपयोगात्। तदुक्तं खण्डनकृद्भिः 'अन्यदा सत्वं तु पाटच्चरलुण्ठितवेश्मनि यामिकजागरणवृत्तान्तमनुसरति' इति। स्वरूपेणापितु भ्रमज्ञानस्य मिथ्यात्वमस्त्येव स्वरूपतो बाधाभावे विषयतोऽप्यबाधप्रसङ्गात्' इति॥

'वस्तुतस्तु दण्डतन्त्वादिसाधारणमेकं कारणत्वं नास्त्येव। यत्र तव सत्त्वमवच्छेदकं (तत्र) मम तुच्छविलक्षणत्वादिकम्; किंतु कार्यताऽवच्छेदकं घटत्वपटत्वादि, कारणताऽवच्छेदकं च दण्डतन्तुत्वादि। तद्भेदाच्च कारणत्वं भिन्नम्। यथा गोगवयसादृश्यमन्यत्, भ्रातृ भगिन्यादिसादृश्यमन्यत्, तत्र नैकमवच्छेदकम्, किंतु गवयत्वभगिनीत्वादिकमेव। तद्वदत्रापि दण्डत्वादिकमेव सत्त्वासत्त्वोदासीनमवच्छेदकं वाच्यम्; तथा च जनकत्वानुसारेण न सत्त्वासत्त्वसिद्धिः। तदुक्तं खण्डनकृद्भिः—'पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ। हेतुतत्त्व बहिर्भूत सत्त्वासत्त्वकथा वृथा॥' इति। 'अन्तर्भावितसत्त्वंचेत्कारणं तदसत्ततः। नान्तर्भावितसत्त्वंचेत्कारणं तदसत्ततः॥' इति च। नचैवं 'अन्तर्भावित सत्त्वं चेदधिष्ठानमसत्ततः। नान्तर्भावित सत्त्वंचेदधिष्ठानमसत्ततः॥' इति तवापि समानमिति वाच्यम्; भ्रमाधिष्ठाने स्वरूपत एव सत्त्वाङ्गीकारः, तवतु कारणे स्वरूपातिरिक्तसत्ताङ्गीकार इति विशेषात्' इति॥

'यत्तु सर्पज्ञानमसर्पज्ञानाद्विलक्षणम् तज्जनकविलक्षणजन्यत्वात् यवाङ्कुरात्कलमाङ्कुरवत्, तज्जन्यविलक्षणजनकत्वाद्वा यवबीजात्कलमबीजवत्। यथा च विषयमनन्तर्भाव्यैव शिलोद्धरणकृतिः माषोद्धरणकृतितः यथाचातीतादिज्ञानमसद्विषयकपरोक्षज्ञानव्यवहारौ च ज्ञानान्तरादितः एवं सर्पज्ञानमपि इति, तन्न सर्पज्ञानत्वावच्छिन्नस्यासर्पज्ञानाद्व्यावृत्तौ प्रयोजकं न तत्स्वरूपमेव सर्पज्ञानसाधारण्याभावात् किंतु अनुगतो धर्म उपाधिरूपः। सच स्वरूपसम्बन्धेनाध्यासिकसम्बन्धेन वा सम्बन्धिभूतविषयादन्यो न भवति मानाभावात्। ननु विषयस्य व्यावर्तकत्वेऽपि सर्वत्र विशेषणत्वासम्भवादुपलक्षणत्वमेव वाच्यम्; उपलक्षणेन च उपलक्ष्यगतस्वसम्बन्धव्यतिरिक्तः कश्चिद्धर्मएवोपस्थाप्यते। काकेनेव गृहसम्बन्धिना तद्गतसंस्थानविशेषः। तथा च स एव व्यावर्तक इति विषयसम्बन्धमनपेक्ष्य स्वगतेनैव धर्मेण ज्ञानस्य व्यावृत्तिरितिचेन्न;

## गूढार्थसंग्रहः

विषयस्य विशेषणत्ववदुपलक्षणत्वस्याप्यनभ्युपगमात्। येनहि स्वोपरागाद्विशेष्ये व्यावृत्तिबुद्धिर्जन्यते, तद्विशेषणं व्यावृत्तिबुद्धिकाले विशेष्योपरञ्जकमित्यर्थः ; यथा गोत्वादि । येन च स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणं, यथा काकादि । यत्तु विशेष्ये नोपरञ्जकम्, नवा धर्मान्तरोपस्थापकम्, अथ च व्यावर्तकम्, तदुपाधिः—यथा पङ्कजशब्दप्रयोगे पद्मत्वं, यथावोद्भिदादिशब्दप्रयोगे यागत्वावान्तरजातिविशेषः। अत्रहि पद्मत्वयागत्वावान्तरधर्मौ पङ्कजनिकर्तरि फलोद्भेदनकर्तरि च न धर्मान्तरमुपस्थापयतः अप्रतीतेः ; नवा स्वोपरक्तां बुद्धिं जनयतः समुदाये शक्त्यन्तरानभ्युपगमात्, अथ च कुमुदज्योतिष्टोमादिभ्यो व्यावर्तकावित्युपाधी एव । इदं च प्राभाकराणां भाट्टानां च सम्मतमुदाहरणयुगलम् । तार्किकाणांत्वाकाशशब्दप्रयोगे शब्दाश्रयत्वमुदाहरणम् । अतएवाविद्यादिकं साक्षित्वादुपाधिरिति सिद्धान्तो वेदान्तिनाम् । अतो यत्र विषयस्य विशेषणत्वं न सम्भवति तत्कालासत्वात्, तत्रोपाधित्वाभ्युपगमान्नोपलक्षणत्वनिबन्धनदोषावकाशः सन्देहेतु विशेषणत्वमेवाभ्यर्हितत्वादुपेयते। तस्माद्विषयएव सर्वत्र ज्ञाने व्यावर्तकः। एकविषयकस्मृत्यनुभवयोः परोक्षापरोक्षयोश्च विषयमनपेक्ष्य जात्या परस्परव्यावृत्तिदर्शनात् सर्वत्र विषयनिरपेक्षा जातिरेव व्यावर्तिकेति न युक्तम् ; भिन्नविषयके समानजातीये तदसम्भवात् । नच तत्रापि जातिरस्ति क्षीरादि माधुर्यवदिति वाच्यम् ; चाक्षुषत्वादिना सङ्करस्योक्तत्वात्' इत्युक्तम् ॥

अत्र लघुचन्द्रिका—अन्यदेति । अतीतानागतादेर्यदा ज्ञानं तदा सूक्ष्मावस्थारूपेण सत्ताऽवश्यं वाच्या ; अन्यथा तस्य प्रमाविषयत्वासम्भवादिति पूर्वमुक्ते कालान्तरे सत्त्वात् तस्य ज्ञानमुत्पद्यते इत्याशङ्कायामन्यदेत्यादिकं खण्डने उक्तं तस्यायमर्थः। 'पाटच्चरः चोरः। यामिकः तद्वारणाय जाग्रत्पुरुषः। प्रमायाः अतीतादिविषये विषयित्वासम्भवः ; अतीते सम्बन्धासम्भवात्, कालान्तरसत्त्वंतु एतत्कालीनज्ञानेन सम्बन्धे न प्रयोजकम् ; सम्बन्धिनोरेकक्षणवृत्तित्वस्य सम्बन्धे प्रयोजकत्वमित्यस्य संयोगादिस्थले दृष्टत्वादिति, तदिदं रूपान्तरेण सत्त्वेऽपि तुल्यं, यद्रूपोपहितस्य कारणत्वं तद्रूपोपहितस्य सत्त्वमपेक्षितम् ; अन्यथा कार्याव्यवहितपूर्वक्षणसम्बन्धस्यासत्यसम्भवेन कारणत्वासम्भवात्, त्वन्मतेहि मिथ्यात्वस्यालीकत्वरूपत्वं स्वीकृत्य मिथ्याभूतस्य न कारणत्वमुच्यत इति भावः' इति, 'पूर्वसम्बन्धनियमे अनन्यथासिद्धत्वेसति कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्यसामानाधिकरण्याश्रयस्यान्योन्याभावस्य प्रतियोगिताऽनवच्छेदकत्वे । सिद्धान्ते दण्डादिमत्यपि दण्डादेरत्यन्ताभावस्वीकारादत्यन्ताभावाप्रतियोगित्वं त्यक्त्वाऽन्योन्याभावादिकमुक्तम्। हेतुतत्वं हेतुता । तद्बहिर्भूतं तदघटकम्। तादृशे ये सत्त्वासत्त्वे तत्कथा वृथेत्यर्थः। यदि कारणस्य सत्तासम्बन्धोऽपेक्ष्यते—तदा सोऽस्त्येव कल्पितः; कल्पिते अकल्पितस्तु सम्बन्धोऽलीकः, परंतु स नापेक्षित इति कथा वृथेत्युक्तम् । कारणस्य सत्तानियमे साधकाभावमुक्त्वा बाधकमाह—अन्तरित्यादि । अन्तर्भावितसत्त्वं सत्ताविशिष्टम्, सत्ता तदाश्रयश्चेति यावत्। यदि तदुभयं कारणं, तदा सत्ताऽनाश्रयः कारणमिति सिद्धम् ॥

नहि सत्तायां सत्ताऽन्तरमास्ति । नवा सैव सत्ता ; आद्ये द्वितीयादिसत्ताया अपि स्वप्रत्यक्षादिकारणत्वसिद्धये सत्तान्तरस्वीकारादनवस्था, नानासत्तास्वीकारेण सत्ताकारानुगतधीलङ्घने जातिमात्रलोपापत्तिश्च । यदि च अन्तर्भावितसत्त्वं न कारणं, सत्ता न कारणं किंतु सत्तोपलक्षितं कारणं तथाऽपि सत्ताऽभावकाले अतीतता दशारूपे दण्डादेः कारणत्वादसत्कारणमिति सिद्धम् । अथ सत्ता कारणताश्रये न विशेषणं नाप्युपलक्षणम्, किंतु उपाधिः ; यदा यदा यत्र कारणत्वं, तदा तदाऽवश्यं तत्र सत्तेति यावत्, तथाऽपि स्वरूपादन्यत्कारणमित्यागतम् । नहि सत्तासम्बन्धि दण्डादिकं सद्रूपम् ; ब्रह्मणः सद्रूपतायाः आवश्यकत्वेन तत्सम्बन्धादेव तत्र सद्रूपताप्रत्ययसम्भवात्, श्रुत्यादिबाध्यत्वाच्च । नचैवं

## गूढार्थसंग्रहः

मित्यादि । कारणत्वस्थले अधिष्ठानत्वमादाय पूर्वोक्तदोषइत्यभिमानः । स्वरूपत इति । सद्रूपमेवावच्छिन्नानवच्छिन्नरूपेण प्रातीतिकव्यावहारिकाध्यासमात्राधिष्ठानमिति भावः । स्वरूपेति । दण्डादिकारणस्वरूपेत्यर्थः । उक्तयुक्तिभिः सद्रूपस्याकारणत्वात् सद्रूपसम्बन्धिन्येव कारणत्वं त्वया वाच्यम् ; तथा च सद्रूपं कारणं तवासिद्धमिति भावः ॥

ननु दण्डत्वादिना कारणत्वे स्वीकृते प्रातीतिकदण्डादेरपि घटाद्युपधायकत्वापत्तेः व्यावहारिकदण्डत्वादिनैव तत्स्वीकार्यं त्वया ; तथा च हेतुतत्त्वबहिर्भूतेत्याद्यसङ्गतमितिचेत् न ; तावताऽपि पारमार्थिकत्वरूपसत्त्वस्य हेतुत्वबहिर्भावानपायात् । किंच न व्यावहारिकत्वघटितरूपेण कारणत्वं क्वापि स्वीक्रियते, अथ तदुक्तापत्तिः कथं वार्यत इतिचेत् ? सामग्रीव्याप्तिमध्ये व्यावहारिकत्वविशिष्टपदार्थानामेव निवेशात् व्यावहारिकेण कारणताऽवच्छेदकेन विशिष्टं यद्व्यावहारिकं तत्समूहस्य व्यावहारिकसम्बन्धविशिष्टो यो व्यावहारिकक्षणः, तस्माद्व्यावहारिकोत्तरत्वविशिष्टो यो व्यावहारिकक्षणः स्वत्वं कार्योत्पत्तिव्याप्यमिति स्वीकारात् प्रातीतिकदण्डादेर्न घटाद्युपधायकत्वम् । नच प्रातीतिकघटादेरपि व्यावहारिकदण्डादितः उत्पत्तिस्स्यादिति वाच्यम् ; आपादकाभावात्, कार्यताऽवच्छेदकविशिष्टंप्रत्येव तादृशक्षणत्वस्य व्याप्यत्वादकार्यताऽवच्छेदकप्रातीतिकत्वरूपेण कार्यस्यापत्त्यसम्भवात् । नच दण्डादिकं विनाऽपि प्रातीतिकघटाद्युत्पत्त्या व्यभिचारइति वाच्यम् ; व्यावहारिकंप्रति मूलाविद्यायाः प्रातीतिकंप्रति पल्लवाविद्यायाः परिणामिकारणत्वेन सामग्रीभेदात् आद्यया कार्यजनने दण्डादेः द्वितीयया कार्यजनने दोषादेस्सहकारित्वात् । एवं च व्यावहारिकं साधकमित्यादि व्याख्यातं मूले । साधकस्य व्यावहारिकत्वं मूलाविद्यात्वम् । प्रातीतिकत्वं पल्लवाविद्यानङ्गीकारे तत्स्थानीयविषयावरणत्वम् ॥

नच तथाऽपि प्रातीतिकेनापि कार्यजननात् सामग्रीव्याप्तौ सर्वत्र कथमुक्तरीत्या व्यावहारिकत्वं निवेशितमिति वाच्यम् ; प्रातीतिकस्य कुत्रापि कार्ये हेतुत्वास्वीकारात् तज्ज्ञानस्यैव हेतुत्वात् । नच तद्विषयकत्वघटितरूपेण ज्ञानस्यापि प्रातीतिकत्वम्, उक्तंचाचार्यैः 'ज्ञानमिथ्यात्वं विना विषयमिथ्यात्वासम्भवः ; स्वरूपतो बाधाभावे विषयतो बाधासम्भवात्' इति, 'इदं रजतम्' इति यत् ज्ञानं जातं तन्मिथ्येति विषयविशिष्टज्ञानस्य मिथ्यात्वानुभवादिति' इति वाच्यम् ; तावता वृत्तिरूपस्य ज्ञानस्य स्वरूपतः प्रातीतिकत्वेऽपि चिद्रूपस्य तदभावात् । रजतादिप्रातीतिकविषयकत्वरूपेण न चितो हेतुत्वं, किंतु रजतत्वावच्छिन्नविषयताकत्वरूपेण । तच्च न प्रातीतिकघटितम्, अतस्तद्विशिष्टचितोऽपि न प्रातीतिकत्वम् । नच भ्रमस्थले रजतादितादात्म्यस्य शुक्त्याद्यवच्छिन्नचित्युत्पद्यमानस्य विषयतात्वेन विषयताप्रातीतिकीति वाच्यम् ; व्यावहारिक पूर्वसिद्धतादात्म्येनैव रजतादेरुत्पत्तेरिदमादितादात्म्यं रजताद्यवच्छिन्नचिति जायमानं न विषयता, सांसर्गिकविषयताश्रयत्वात् । नहि विषयिविषयतयोरभेदः परैः स्वीक्रियते । तथाचेदमादेर्विषयताऽपि भ्रमात्पूर्वसिद्धा । तथा संसर्गरूपमुक्ततादात्म्यमपि पूर्वसिद्धसांसर्गिकविषयतासम्बन्धेन जायत इति विषयतामात्रं व्यावहारिकम् । नहि ज्ञानं तद्विषयताचारोप्यत इति परैः स्वीक्रियते, किंतु विशेषणं विशेष्यविशेषणयोस्संसर्गश्च ; द्वयोरपि बाधानुभवात् तस्मात् प्रातीतिकं न कारणम् ॥

यद्वा यादृशकार्यंप्रति शक्तिर्यत्र तिष्ठति, तत्तस्य कारणम् ; शक्तेरेव कारणतारूपत्वात्, प्रातीतिके दण्डादौ च न घटादेः शक्तिः ; यस्य च शक्तिः प्रातीतिके तत्तस्माज्जायत एव । तथा च व्यावहारिकस्य उक्तरीत्या न व्याप्तौ निवेशः नचैवमपि व्यावहारिकत्वस्य कारणतास्ववच्छेदकत्वकल्पने गौरवमिति वाच्यम् ; कारणे वस्तुगत्या येन रूपेण सम्बन्धेन च यत्कार्योत्पत्तिपूर्वक्षणे कार्याधिकरणे यत्सम्बद्धं तद्रूपसम्बन्धाभ्यां तादृशसम्बद्धविशिष्टेष्वेव तच्छक्तेः स्वीकारात् विशि-

## गूढार्थसङ्ग्रहः

ष्टस्य च केवलातिरिक्तत्वेनानतिप्रसङ्गात्, व्याप्तेरिव शक्तेरवच्छिन्नत्वे स्वरूपसम्बन्धरूपे मानाभावात्। अनयोःकल्पयोर्द्वितीयस्यैव मूलानुसारित्वेऽपि प्रथमः परपराभवे प्रभुरेव' इति 'इदंचेति। अत एव शब्दमणावपि प्राभाकरमते स्थित्वा मणिकृतोक्तम्'। यथा सर्वनामत्वमहंपदेषु बुद्धिस्थत्वसंबोध्यत्वोच्चारयितृत्वानि प्रयोगोपाधयः, तेन बुद्धिस्थत्वादिकं तैर्न बोध्यते किंतु तदुपलक्षितं तस्यैव तच्छक्यत्वात्। यथा पङ्कजत्वादिकं पङ्कजादिपदेषु प्रयोगोपाधिः, तेन तत्तैः न बोध्यते, किंतु तदुपलक्षितमिति' इति (ल.चं) ॥

'तार्किकाणामिति। यद्याकाशशब्दात् आकाशनिष्ठानवच्छिन्नविषयताकशाब्दबोधः, अस्तुवा पदादपि निर्विकल्पकमिति मणावुक्तत्वात्। तदा आकाशशब्दप्रयोगे इत्यस्य आकाशपदजन्यशाब्दबोध इत्यर्थः। शाब्दबोधे शब्दाश्रयत्वस्यानुपरागात् व्यावर्तकधर्मानुपस्थापकत्वाच्चोपाधित्वमिति भावः। यदि शब्दाश्रयत्वादिना कदाचिदष्टद्रव्यान्यद्रव्यत्वादिना वा शाब्दबोधः। उक्तंहि मणौ शब्दाश्रयत्वादिना नियतोपस्थितिरेव नास्तीति। तदाऽऽकाशादिपदजन्यायां शब्दाश्रयत्वान्यरूपेण शाब्दबुद्धावित्यर्थः। अथवाऽऽकाशादिपदशक्यत्व इति तदर्थः तादृशशक्यत्वेऽनुपरक्तत्वाद्व्यावर्तकधर्मानुपस्थापकत्वात्तदाश्रयव्यावर्तकत्वाच्चोपाधित्वमिति भावः। शब्दाश्रयत्वांशेऽपि यदि शक्तिः। 'अस्तुवा तदपि शक्यं यदि तेन रूपेण नियतोपस्थितिरपी'ति पक्षान्तरस्यापि मणावुक्तत्वात्तदा शब्दाश्रयत्वं विशेषणमेव नोपाधिः। अथाशक्यस्य शब्दाश्रयत्वादेः कथं शाब्दानुभवः? स्वनिष्ठवृत्त्या शब्दोपस्थापितस्यैव तत्स्वीकारादितिचेत्तदुक्तं मणौ—यद्धर्मवत्त्वेन नियमतउपस्थिते यत्र शक्तिग्रहः तत्स्मरणजनकसंस्कारस्य तद्धर्मविषयतानियमेन तदुद्बोधकादेव तदंशेऽप्युद्बोध(क)नियमेनाशक्यस्यापि तस्य भानात् इति तदंशे शक्तिं विनाऽपि तदुपाहिते शक्तिग्रहशक्यस्मृत्योस्तेन रूपेण शाब्दानुभवे कारणत्वं सम्भवतीति भावः एषैव रीतिः पदमात्रस्येतितु नव्यतार्किकाः' इति गुरुचन्द्रिका च ॥

अद्वैतसिद्धौ च (असतः साधकत्वोपपत्तौ) 'वस्तुतस्तु ज्ञाताज्ञातसाधारणं व्यावहारिकं सत्त्वमेव साधकत्वे तन्त्रम्। तच्च ब्रह्मज्ञानेतराबाध्यत्वमेव, तच्च न मिथ्यात्वघटितम्। अत्यन्ताबाध्ये ब्रह्मज्ञानबाध्ये च तुल्यत्वात्। अत एव नेदं परमार्थसत्त्वव्याप्यम्। एवं च परमार्थसत्त्वस्य साधकतायामतन्त्रत्वेन तदभावेऽपि न साधकत्वानुपपत्तिः। यत्र च यत्साधकं व्यावहारिकं तत्र तद्व्यावहारिकं यत्रतु साधकं प्रातीतिकं तत्र फलमपि तथैव, नतु व्यावहारिकम्। इति सर्वविधिप्रतिषेधादिव्यवहारासङ्करः। अत एव लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकबाधात् भ्रान्तत्वापत्तिरिति उदयनोक्तमपि निरस्तम्। व्यावहारिकसत्त्वेन लोकमर्यादानतिक्रमात्। भट्टाचार्यवचनानि विरुद्धत्वेन भासमानानि सत्त्वत्रैविध्यनिरूपणायामविरुद्धतया व्याख्यास्यन्ते' इत्युक्तम् ॥

अत्र (गुरुचन्द्रिका) 'इदमस्मात् नियतप्राक्सदिति बुद्ध्या विशेषात्, नचातिप्रसङ्गः। यादृश्या त्रिचतुरकक्ष्याबाधानवबोधविश्रान्तया वस्तुसत्तानिश्चयस्ते तादृश्यैव कारणतानिश्चयो ममापीति, खण्डनवाक्ये व्यावहारिकसत्त्वमेव कारणताघटकमभिमतं मिथ्याभूतेऽपि तदङ्गीक्रियते बुद्धिबलात्। 'सत्यस्य सत्यम्' इति श्रुतिबलाच्चेत्याशयेन बुद्ध्या विशेषादित्युक्तम्। ननु तद्धीः कारणताघटिका गौरवादित्याशयेनाह—वस्तुतस्त्वित्यादि। व्यावहारिकसत्त्वमेवेत्येवकारेण पारमार्थिकसत्त्वमेव प्रयोजकमिति नियमो व्यवच्छिद्यते तेन प्रातीतिकसत्त्वस्यापि प्रयोजकतया वक्ष्यमाणत्वेऽपि न क्षतिः। तद्व्यावहारिकमिति। तद्व्यवहारसिद्धमित्यर्थः, तथैव व्यवहारसिद्धमेव। यादृशस्य यादृशफलं व्यवहारतः प्रमितं तादृशस्य तादृशमेवेति भावः। नतु व्यावहारिकम्। नतु व्यावहारिकसत्त्वाश्रय एव। व्यवहारासङ्करः, उक्तसङ्करस्याभावः। एतेन

## गूढार्थसंग्रहः

व्यावहारिकयोरेव साध्यसाधकभावे प्रातीतिकसवितृसुषिरादिकमप्रातीतिकानिष्टसाधकं न स्यात्, शुभाशुभस्वप्नदर्शनादेर्व्यावहारिकराज्यादिसूचकत्वं न स्यादित्यादि प्रत्युक्तम् । यथामानसिद्धस्य साध्यसाधकभावस्यैव प्रकृतग्रन्थार्थत्वात् । अत एव धूलीपटले धूमभ्रमादित्याद्युक्तम् । स्वाप्नार्थस्य शुभाशुभसूचकत्वमित्यादि वक्ष्यते च ॥

किंच मन्मते प्रपञ्चस्य मिथ्यात्वेऽपि त्वांप्रति साधकतया दृश्यत्वाद्युपन्यसितुं मया शक्यत एव ; त्वद्रीत्या त्वद्बोधनसम्भवात् । 'योऽपि तावत्परासिद्धः स्वयं सिद्धोऽभिधीयते । भवेत्तत्र प्रतीकारः स्वतोऽसिद्धेतु का क्रिया ॥' इति बौद्धंप्रति भट्टोक्तेः, परमतासिद्धः, स्वमतसिद्धः साधकत्वेनोपन्यासार्हः; तत्र साधकस्य पश्चाद्वक्तुं शक्यत्वात् । स्वमते परमते वाऽसिद्धस्तु न तथेत्यर्थकत्वादाविरोधात् । नहि शब्दप्रयोगे स्वमतसिद्धत्वमर्थस्यापेक्षितम् । अपिच पारमार्थिकसत्तासम्बन्धस्य प्रयोजकत्वेऽपि आरोपितेऽपि सोऽस्त्येवारोपितः । अनारोपितस्तु न मन्मते प्रसिद्धः । 'सत्यत्वं नच सामान्यं मृषार्थपरमार्थयोः । विरोधान्नहि सिंहत्वं सामान्यं सिंहवृक्षयोः ॥ तुल्यार्थत्वेऽपि तेनैष मिथ्यासंवृतिशब्दयोः । वञ्चनार्थमुपन्यासो लालावक्त्रासवादिवत् ॥ नास्तिक्यपरिहारार्थं संवृतिःकल्पनेति च । कल्पनाऽपि त्वभिन्नस्य नैव निर्वस्तुके भवेत्' इति बौद्धंप्रति भट्टोक्तिस्तु युक्तैव । तेनाधिष्ठानस्याबाध्यस्वरूपस्यानङ्गीकारेण तत्सम्बन्धस्य कल्पितस्यापि वक्तुमशक्यत्वात् । अतएव कल्पनापीत्यादिना तदुक्तम् ॥

अत एव च 'तस्माद्यन्नास्ति नास्त्येव यच्चास्ति परमार्थतः । तत्सत्यमन्यन्मिथ्यैव न सत्यद्वयकल्पना ॥' इति बौद्धंप्रति भट्टोक्तिरपि युक्तैव । अबाध्याधिष्ठानाङ्गीकारंविना प्रपञ्चे तद्बाध्यत्वासम्भवात्, निस्साक्षिकस्य चरमबाध्यत्वासम्भवाच । आस्तिकमते त्रिकालाबाध्यं सत्यं यत् स्वीक्रियते तद्विलक्षणं व्यवहारकालाबाध्यरूपं व्यावहारिकसत्यं मया स्वीक्रियत इति, स्वमत परमतयोः सत्यद्वयकल्पनाया माध्यमिकीयाया अयुक्तत्वात् । क्षणिकत्वेन मिथ्याविज्ञाननिष्ठस्य कल्पनाऽधिष्ठानत्वस्य तदभ्युपगतस्य पूर्वोक्तरीत्या असम्भवात् । अतएव तयोर्मतयोरेव—तत्रार्थशून्यं विज्ञानं योगाचारास्समाश्रिताः । तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥' इत्याद्युत्तरवार्तिकेन निरासः । अस्मन्मतेतु प्रपञ्चस्य खण्डनयुक्तिभिर्बाधात्, स्फुरणस्वरूपस्य ब्रह्मणस्त्वधिष्ठानत्वेन बाधानुपलम्भेन बाधसाक्षित्वेनचाबाधात्, 'सत्यस्य सत्यं प्राणावै सत्यं, तेषामेष सत्यम्' इति श्रुतिभिश्च सत्यद्वयकल्पना युक्ततमैव । विस्तरेण च सत्त्वत्रैविध्यमग्रे उपपादयिष्यत इत्यभिप्रेत्याह—भट्टेति ।' इति ॥ अत्र ब्रह्मसिद्धौ खण्डने च भट्टपादोक्तेर्दूषणं चन्द्रिकयोस्तु अद्वैतासिद्ध्यनुसारेण अन्यार्थकल्पनम्' इति भिदा । उभयथाऽपि असत्यात् सत्यसिद्धेः उपपत्तिस्सम्भवति ॥

तथाऽपि 'अधिकारोऽनुरायत्वान्नवादे शून्यवादिनः ।' (श्लो.वा) इति उक्तिः परमतमपि संगृह्णातीति वेदार्थसंग्रहे अभिधाय अत्र प्रत्यक्षविरोधेन श्रुतेः पराभिमतार्थकत्वं न सम्भवतीति मीमांसकाक्षेपे प्रत्यक्षस्य सन्मात्रग्राहित्वेन परोक्तं समाधानं 'महासामान्यमन्यैस्तु' इत्यादिना आशङ्क्य भट्टपादैरेव दूषिततया स्वयमपि तद्दूषयित्वा प्रत्यक्षस्य घटादिविषयकत्वेऽपि श्रुत्यादिना बाधात् न तात्त्विकं प्रामाण्यम्, अपितु व्यावहारिकमेवेति परोक्तं समाधानं शबरभट्टोक्तयुक्तिभिः न घटत इति स्थापयित्वा असत्यात्सत्यसिद्धिमपि भट्टपाददूषितां युक्तामिति साधयतः भगवतः भट्टपादग्रन्थदूषणं तद्ग्रन्थस्य वर्णनंचेत्युभयमपि न सम्मतमिति स्फुटं प्रतीयते ॥

अत्रायमाशयो भगवतः । सन्मात्रग्राहिप्रत्यक्षदूषणेन अहमर्थस्य ज्ञातृत्वात्मत्वसाधनेन आत्मवादे परसम्मतकूटस्थानङ्गीकारेण सत्यद्वयनिरसनेन च अधिष्ठानं परसम्मतं भट्टपादानां नैवाभिमतमिति निर्मत्सराणां स्फुटम् । एवं च

## गूढार्थसंग्रहः

चन्द्रिकोक्तः भट्टाचार्यवचनार्थः न भट्टाचार्याणामभिमतः, सत्यद्वयनिराकरणेनैव व्यावहारिकं सत्त्वं ब्रह्मज्ञानेतराबाध्यत्वं अत्यन्ताबाध्यब्रह्मज्ञानबाध्यैतदुभयसाधारणं साधकतायां तन्त्रम्' इत्युक्तिः। 'सत्यत्वं नच सामान्यं मृषार्थपरमार्थयोः।' इति वदतां भट्टपादानां नैव सम्मता। स्वीकृतं च भवताऽपि भविष्यतादिविषये विज्ञाने विशिष्टव्यवहारनिदानत्वमसतो विषयस्य। 'नच कालान्तरसम्बन्धिनी सत्ता तस्यैकत्रान्यत्र नान्यथापीति वक्तव्यम्'। इत्युपक्रम्य 'प्रयोजनानुपयुक्ते काले' इत्यादिना तद्दूषणानन्तरं 'तथाऽपि कालान्तरस्थित्या घटादिकं स्वरूपतो विशेषणतश्च व्यवच्छिन्नं तद्विज्ञानेन स्वभावबलात् स्वविशेषणत्वेनोपादीयते, नत्वेवमत्यन्तासद्भवितुमर्हति। तस्य स्वरूपतो विशेषणतश्च व्यवच्छिन्नतया अनङ्गीकारात् कुत्र स्वभावतो विज्ञानं सम्बन्धि निरूप्येत। न। उक्तमत्र असताऽपि तदेव स्वरूपं तस्य नियतस्वरूपतैव, नियतविशेषणस्यैवासत्त्वात्, अन्यथाऽतिप्रसङ्गात्। भ्रान्तिविषयेण दत्तोत्तरत्वाच्चेत्यलमतिविस्तरेण' इति खण्डनोक्तिश्च अनुपादेया। असतः असाधारणस्वरूपादेरसम्भवात् ॥

'अन्यथेति। गगनकुसुमस्य साधारणस्वरूपापत्तेः मूषकविषाणादेः व्यावृत्तव्यवहारो न स्यात्, सदसतोः साङ्कर्यं च स्यादित्यर्थः। यदुक्तमसतो निःस्वरूपत्वात् विषयविषयिसम्बन्धानुपपत्तिरिति तत्राह—भ्रान्तीति। भ्रान्तिविषयेण असता रूप्यादिना ज्ञानस्य विषयविषयिभावसम्बन्धस्य सद्वादिनाप्यङ्गीकारात् असतः सम्बन्धो नास्तीति वक्तुं शक्यत इत्यर्थः।' इति तद्व्याख्याने उक्तिरप्यनुपादेया। असतः साधारणस्वरूपत्वस्य असाधारणस्वरूपत्वस्यचानङ्गीकारात्। गगनकुसुमसूषकविषाणयोः व्यावृत्तव्यवहारः भ्रमनिबन्धनः नतु गगनकुसुमादेः असत्स्वरूपत्वानिबन्धनः। अन्यथाख्यातिवादिभिः 'एवं च नैव वक्तव्यमत्यन्ताभवनं क्वचित्। अन्यथाऽनुपपत्त्याहि सिद्धा जन्मान्तरेऽस्तिता।' (श्लो.वा.शू.वा.२०६) इत्यत्र भ्रान्तिविषयस्य अत्यन्तासत्त्वस्यानङ्गीकारात् स्मृत्यैव विषयविषयिभावोपपादनसम्भवात्। स्मृतिकाले विषयासत्त्वेऽपि अनुभवजन्यसंस्कारेण विषयस्मृत्योः सम्बन्धसम्भवात् संयोगस्थले अनुभवानुरोधेन सम्बन्धिनोरेकक्षणवृत्तित्वाङ्गीकारेऽपि अतीतानागतज्ञानानुभवानुरोधेन कालभेदेऽप्यर्थज्ञानयोस्सम्बन्धाङ्गीकारसम्भवात् ॥

एवं शब्दलिङ्गजन्यज्ञानस्थलेऽपि। अख्यातिवादेऽप्येवमेव 'पूर्वसम्बन्धनियमः' इत्यादिना असतः कारणत्वोपपादनमपि न सम्भवति 'प्राक्कालनियतत्वेन कारणं प्रमितं नवा। आद्ये तदेव तत्सत्त्वमन्यथानियमोऽपि न' इति आचार्यपादैः चतुर्थ्यां सर्वार्थसिद्धौ उक्तेः। 'यादृश्याहि धिया त्रिकचतुर कक्ष्या बाधानवरोधविश्रान्तया वस्तुसत्त्वानिश्चयस्ते तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः। केवलं ततः परास्वपि कक्ष्यासु बाधात् पूर्वपूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामह इति विशेषः। तदेतत् संवृतिसत्त्वमिति गीयते' इतिखण्डनोक्त्याऽपि असतः प्राक्कालनियतसत्वप्रमाविषयत्वं नैव सिद्ध्यति। त्रिचतुरकक्ष्याऽबाधमात्रेणाबाधसत्त्वेऽपि तदनन्तरकालबाधसम्भवात्। अर्थस्य त्वनन्तरकालं परीत्या प्रमाणेन बाधासम्भवः पूर्वमेवोक्त इति अर्थस्य संवृतिसत्यत्वनिश्चयो न सम्भवति ॥

'अन्तर्भावितसत्त्वंचेत्' इत्याद्युक्तिरपि नादर्तव्या। स्वपरनिर्वाहकसमाधिना सत्तायाः कारणतद्गतसत्त्वोभयनिर्वाहकत्वसम्भवात्। ब्रह्मगतसत्तायाः सत्स्वरूपत्वे घटादिगतसत्त्वमपि तत्तत्स्वरूपमेवेति संवित्सिद्धिशतदूषण्योरुक्तम्। गौरवं तु प्रमाणसिद्धत्वेन फलमुखत्वान्नैव दोषाय भवति। एतदेवाभिप्रेत्यात्र 'तदसत्ततः' इत्यस्य स्थाने 'सदिदं ततः' इति पाठ्यमित्युक्तम् विशेषणतया उपलक्षणतया वा सत्तासम्बन्धिनि नासत्त्वारोपश्शक्यत इति। 'सत्त्वं च सदसद्वेति विकल्प्यानिष्टकल्पने। असत्त्वं सदसद्वेति विकल्प्योत्तरमूह्यताम्' इति च ॥ सत्त्वस्य विशेषणत्वे सत्तायां सत्ताऽन्तरं नास्तीति

## गूढार्थसंग्रहः

उक्तिर्न दूषणम् । सत्तायां सत्तान्तराभावेऽपि स्वपरनिर्वाहकत्वाङ्गीकारेणानुपपत्त्यभावात् । सत्त्वोपलक्षितस्य कारण त्वाङ्गीकारेऽपि अतीततादशायां दण्डादेः कारणत्वमुपपद्यत एव । अतीतस्यापि दण्डस्य तत्कालसत्वसम्भवात् । 'अथ न सत्ता कारणकोटिनिविष्टा किंतु कारणत्वं सत्त्वं, नियतपूर्ववृत्तित्वंहि कारणतां मन्य इति मन्यसे तर्हि मत्पक्षे सैव कार णताऽस्तु' इति खण्डनोक्तिरनुपादेया ॥

सिद्धान्ते नियतपूर्वसत्त्वस्यैव कारणतारूपत्वात् । 'सत्तामसतीमभ्युपगच्छताऽपि सत्ता मया अभ्युपगतैव, अन्यथा कासावसती इति । त्वमपि किं सत्तां तत्सत्तामन्तर्भाव्य कारणत्वमिच्छसि, नत्वेवं । पूर्ववत् क्वापि सत्तात्यागो वा अनवस्थायां पर्यवसानं वा स्यात्' इति खण्डनोक्तिरप्यनुपादेया । स्वपरनिर्वाहकसमाधेः सिद्धान्ते सम्भवात् । परमते कारणतत्सत्त्वयो-रुभयोरप्यसत्वात्, एवम् 'एतत्तदुच्यते व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ इति, अनेन नियमेनोक्तम् । अनेनेति मध्यस्थावगमस्य विषयीभवितव्यमिति । नच वाच्यं ततस्तदवगमस्यापि सत्ताऽभ्युपेयेति । तस्यापि सत्ताचि-न्तायां तत्सत्ताऽवगमान्तरस्यैव शरणत्वात्, नचैवमनवस्था तदनुसरणावश्यम्भावानङ्गीकारात् । 'एवं त्रिचतुरज्ञान-जन्मनो नाधिकामतिः' इति न्यायात् । नचान्तिमासत्त्वे पूर्वपूर्वप्रवाहासत्त्वापत्तिः । तथा अवगममादायापि न निस्तार इति वाच्यम्; अस्त्वेवं तथापि त्रिचतुरज्ञानकक्ष्यागवेषणमात्रविश्रान्तेन विचारेण ततः परमनुसरणरमणीयेनैव समयं बध्वा कथायां मियः संप्रतिपत्त्या प्रवर्तनात् । अन्यथा प्रमाणादिसत्ताऽभ्युपगमेऽपि ज्ञानानवस्थायाः दुष्परिहरत्वात् ॥

नच वाच्यं मत्पक्षे स्वरूपसत्ताज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात्, नज्ञानस्य परम्परा(न)नुसरणमुचितं, नत्वेवं त्वत्पक्षे ज्ञानस्वरूपसत्ताङ्गीकारप्रसङ्गात् इति । स्वरूपसत्तामादायापि परिहरतः अनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात्, यथा च त्वत्पक्षे स्वरूपसत्त्वाविशेषेऽपि ज्ञानस्वरूपसत्तैव परं व्यवहारोपपादिका न घटादिसत्ता । एवमेवास-त्त्वाविशेषेऽपि ज्ञानमेवासद्व्यवहारोपपादकं नान्यत्' इत्याद्युक्तिरपि नादर्तव्या । 'एवं त्रिचतुर— प्रार्थ्यते तावदेवैवं स्वतः प्रामाण्यमश्नुते ।' (श्लो.वा.चोदनासूत्र.६१) इति भट्टपादैः यद्यप्युक्तम् । यथा रत्नपरीक्षायां त्रयाणां चतुर्णां वा वाक्यात् सम्यग्ज्ञाने जाते न पुनर्ज्ञानान्तरमपेक्षते, तथा अन्यत्रापि ज्ञानान्तरानुसरणस्य अनावश्यकत्वात् नानवस्थेत्यर्थः' इति खण्डनव्याख्यानोक्तिरपि युक्ता ॥

'तथाऽपि परमते व्यावहारिकीं सत्तामादाय विचारारम्भः ।' इत्युपक्रम्य 'कारणस्य कार्याव्यवहितप्राक्क्षणसत्त्वं नापे-क्षितम् असत्त्वेऽपि तत्सम्बन्धः अभ्युपगम्यत एव । त्रिचतुरकक्ष्यासु अबाधेन वादप्रवृत्तेर्नानुपपत्तिरपीति निष्कर्षः कृतः । सिद्धान्ते केषांचित्प्रमात्वेन संप्रतिपन्नानां कदाचिदपि बाधप्रमा नैव वर्तते । भ्रमत्वेनाभ्युपगतानांतु कदाचिद्बाधः प्रमा इति विशेषः । परमतेतु व्यवहारकालाबाध्यत्वमात्रेण भाविबाधेन व्यवहाराङ्गभूतानां सर्वेषां ज्ञानानां अप्रामाण्यमेवा-भ्युपगम्यत इति वादस्य नैव फलम् । माध्यमिकयुक्तिभिः खण्डनकारसम्मतस्वप्रकाशस्य वस्तुनः सिद्धिर्न सम्भवतीति स्वप्रकाशानभ्युपगमेऽप्युपपत्तिसम्भवादिति प्रागेव (३१९.पु) निरूपितम् ॥

एवं च स्वप्रकाशावलम्बनेन बाधकथाया एव नावकाशः । धर्मसंसर्गाविषयकबोधजननशक्तेः शब्दस्य क्वाप्यदर्श-नेन शब्दप्रामाण्यवादिनः कस्यापि दार्शनिकस्यासम्प्रतिपत्त्या स्वानुभवसिद्धत्वशपथस्याप्ययोगेन श्रुतिरपि परसम्मतस्व-प्रकाशे नैव प्रमाणं भवितुमर्हति स्वप्रकाशस्याप्यनङ्गीकारे लाघवमपि । 'अनवस्थायां च यस्यां यस्यां सत्तायां परापरा सत्ता या या तस्यास्तस्याः प्रमाणेन सिद्धौ नानवस्थादोषः । आत्माश्रयादिषु सर्वत्र विशेषोऽयमभिधीयते प्रमाणसिद्ध-

## गूढार्थसंग्रहः

त्वात्तत्र तत्र तथोपेयत इति ' इति तर्कखण्डनोक्तरीतिः उदयनसम्मतैव बौद्धाधिकारे शिरोमणिना प्रदर्शितेति पूर्वमेवोक्तम् । अतोऽसतः साधकत्वं माध्यमिकोक्तदिशा खण्डनकृता यदुक्तं तत् वेदप्रामाण्यवादिभिः नादर्तव्यमिति भट्टपादोक्तमेव युक्तम् ॥

असत्यात्सत्यसिद्धिसाधकतयोपन्यस्तदृष्टान्तेषु स्वप्नदर्शनदृष्टान्ते ' अनिर्वाच्यार्थविशिष्टज्ञानत्वेनैव कारणता नतु ज्ञानत्वेन, ज्ञानान्तरसाधारण्यात् ' इति ज्ञानासत्यत्वं ' तथाऽपि तदवगतिस्सत्यमेव फलम् ' इति भाष्यस्य ' यद्यपि परीक्षकाः आनिर्वाच्याहि रूषितामवगतिमनिर्वाच्यां निश्चिन्वन्ति ; तथाऽपि लौकिकाभिप्रायेणैतदुक्तम् ' इति तात्पर्यं च भामत्यां वर्णितम्। तत्रानिर्वाच्यावगतेः प्रातिभासिकत्वं विवक्षितम् आहोस्विद्व्यावहारिकत्वम्। आद्ये प्रातीतिकस्य व्यावहारिकसिद्धिहेतुत्वे ' यत्रतु साधकं प्रातीतिकं तत्र फलमपि तथैव ' (अ.सि) इत्युक्तिर्नघटते । द्वितीये असत्यान्नैव सत्यस्य सिद्धिः ॥

' यथा मानसिद्धस्य साध्यसाधकभावस्यैव प्रकृतग्रन्थार्थत्वात् । अतएव धूलीपटले धूम भ्रमादित्युक्तम् ' इति गुरुचन्द्रिकोक्तिरपि नादर्तव्या । ' धूलीपटले धूमभ्रमादपि वह्न्यनुमितिप्रमादर्शनात् । गन्धव्याप्यपृथिवीत्वप्रमातोऽपि गन्धप्रागभावावच्छिन्ने घटे पक्षे बाधास्फूर्तिदशायामनुमितिभ्रमदर्शनाच्च ' (अ.सि) इत्युक्तेरेवासम्भवात् । धूलीपटले धूमभ्रमेण जायमाना वह्न्यनुमितिः प्रमेति न केनाप्यभ्युपगम्यते । धूमस्यैवाभावेन वह्नेरसिद्धेः, गन्धप्रागभावावच्छिन्नो घटो नातिरिक्तः। विशिष्टस्यानतिरिक्ततायाः एव नैयायिकादिसिद्धान्तितत्त्वात्। घटे गन्धप्रागभावकालावच्छेदेन गन्धज्ञानमेव भ्रमः । एतत्साधकत्वंतु गन्धव्याप्यपृथिवीत्वप्रमायाः न कस्यचित्सम्मतम् । प्रातीतिकसवितृसुषिरादिस्थलेऽपि भ्रमज्ञानं सत्यमेव सत्यसाधकमिति नासत्यात्सत्यसिद्धिस्सम्भवति । ' स्वरूपेणापि भ्रमज्ञानस्य मिथ्यात्वमस्त्येव । स्वरूपतो बाधाभावे विषयतोऽप्यबाधप्रसङ्गात् । विषय इव मिथ्यात्वप्रयोजकदोषादिसमवहितसामग्र्या ज्ञानेऽप्यविशेषाच्च । ' (अ.सि) इत्युक्तिः ' ज्ञानंतु विद्यते, अर्था न सन्तीत्येवहि बाधकप्रत्ययः ' ' स्वप्नदृशोऽवगत्यबाधेन ' इति भाष्यद्वयेनैवानुभवाविरोधज्ञानेनानुपादेया। अन्यथा ख्यातिवादे ज्ञानजनकसामग्री विषयजनकसामग्री च भिन्नैव। विषयस्य तत्रासत्त्वेनैव बाधः ॥

परमते प्रातीतिकस्थले एकाऽविद्यापरिणामत्वमेव ज्ञानविषययोरङ्गीक्रियते । व्यावहारिकस्थलेतु मूलाविद्यापरिणामत्वमर्थस्य ज्ञानस्यत्वन्तःकरणपरिणामत्वमिति विशेषाङ्गीकारेण दोषादिसमवहितसामग्र्याः ज्ञानविषययोरविशेषः । एका-(तूल)पल्लव(अवस्था) विद्यापारिणामत्वस्य ज्ञानविषययोरुभयोरङ्गीकारेऽपि तदितरमतेऽनङ्गीकारेणेत्थमुक्तेरयोगात् । ' अवगत्य बाधेनेति लौकिकाभिप्रायेणोक्तमिति ' भामत्युक्त्या अवगत्य बाधस्यानुभवसिद्धत्वमवश्यमङ्गीकरणीयम् । अवगतिबाधस्य लोकानुभवसिद्धत्वाभावेऽपि उभयोरेकाविद्यापरिणामत्वमङ्गीकृत्य भवद्भिः बाधः उच्यते । बाधं निश्चित्य असत्यात्सत्यसिद्धिरुपपाद्यते । विषयबाधस्य ज्ञानाबाधस्य च लोकानुभवसिद्धतया भ्रमस्थले ज्ञानविषययोरेकाऽविद्यापरिणामत्वाभ्युपगमएवानुचितः । उभयोरेकाविद्यापरिणामत्वाभावे असत्यात्सत्यासिद्धिरपि नैव घटते । अर्थवत् भ्रमरूपज्ञानस्यापि व्यावहारिकत्वमनभ्युपगम्य प्रातीतिकत्वाङ्गीकारे यत्र यत्साधकं व्यावहारिकं तत्र तद्व्यावहारिकम्, यत्रतु यत्साधकं प्रातीतिकं तत्र फलमपि तथैव, नतु व्यावहारिकम् । अतएव लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकबाधात् भ्रान्तत्वापत्तिरिति उदयनोक्तमपि निरस्तम्। व्यावहारिसकत्त्वेन लोकमर्यादानातिक्रमात्। ' (अ.सि.असतस्साधकत्वोपपत्तौ) इत्युक्तिः स्वरूपेणापि भ्रमज्ञानस्य मिथ्यात्वाङ्गीकारे असङ्गतैवापद्यते ; लोकमर्यादातिक्रमात्। स्वमते भ्रमज्ञानस्य स्वरूपतोऽपि मिथ्यात्वे परमतसिद्धिमात्रेणासत्यात्सत्यसिद्धिर्नैव सम्भवति । एतत्तात्पर्येणैव ' स्वतोऽसिद्धेतु का क्रिया ' इति भट्टपादैरुक्तम् ॥

## गूढार्थसंग्रहः

अस्य 'स्वमते परमते (वा(च) असिद्धस्तु न तथेत्यर्थमुपवर्ण्य गुरुचन्द्रिकायामविरोधोक्तिरनादरणीया। 'स्वतोऽसिद्ध' इत्यस्य स्वमतपरमतासिद्धत्ववर्णनासम्भवात्। आरोपितस्याङ्गीकारे वस्तुतः पारमार्थिकसतः साधकत्वं नैव सिद्ध्यति। भवन्मतेऽनारोपितस्याप्रसिद्धिः जाग्रज्ज्ञानस्यापि बाधेनैवोपपादनीया। तत्र 'मृषात्वं यदि बुद्धेस्स्यात् बाधः किं नोपलभ्यते' इति भट्टपादोक्तदूषणं नैव परिहृतं भवति ; श्रुत्यादिभिर्बाधाभावस्यानुपदमेव वक्ष्यमाणत्वात्। निरालम्बनवादान्ते 'ग्राहंगताः तत्र कथंचिदन्ये' इत्यत्र पर एव भट्टपादविवक्षिता इति सत्यद्वयनिराकरणं परमतनिराकरणाभिप्रायकमपि भवति। अर्थशून्यविज्ञानस्य परमतेऽप्यङ्गीकारेण योगाचाराः इति परेषामप्युपलक्षणम्। 'कल्पनाऽपि त्वभिन्नस्य' इत्यत्र निर्वस्तुके जगति अभिन्नस्य चिन्मात्रस्य भेदकल्पनासम्भवः परमतेऽपि तुल्यः॥

'विशेषणत्वे सम्भवत्युपलक्षणत्वायोगात्। विशेषणबाधपूर्वकत्वादुपलक्षणत्वकल्पनायाः' इत्युक्तिरपि नादर्तव्या। असतिबाधके उपलक्षणत्वाङ्गीकारसम्भवात्। अत्र स्वप्नादिस्थले अर्थस्य विशेषणत्वे प्रातीतिकात् व्यावहारिकफलमङ्गीकृत्य असत्यात्सत्यसिद्ध्युपपादने लोकमर्यादाऽतिक्रमस्यैव बाधकत्वेन विशेषणत्वे बाधकसत्त्वाच्च। अर्थस्य उपलक्षणत्वेनोत्कर्षाद्यनुविधानमप्युपपद्यते। उपलक्षणत्वे धर्मान्तरोपस्थितिर्न सार्वत्रिकी। तेनोपलक्ष्याकारान्तरसापेक्षोपलक्षणत्वकल्पनाऽसम्भवादिति परिमलोक्तिरपि निरवकाशा॥ एवं 'विषयस्य विशेषणत्ववदुपलक्षणत्वस्याप्यनभ्युपगमात्। यत्तु विशेष्ये नोपरञ्जकं, नवा धर्मान्तरोपस्थापकम् अथ च व्यावर्तकं तदुपाधिः' इत्यादि प्रयासोऽपि निरर्थकः। उपलक्षणभिन्नोपाधेरेवाभावात्। यथा 'सर्वनामत्वमहंपदेषु बुद्धिस्थत्वसंबोध्यत्वोच्चारयितृत्वानि प्रयोगोपाधयः। तेन बुद्धिस्थादिकमेव तद्बोधयति। तत्रैव प्रयुज्यते च, नतु बुद्धिस्थत्वादिकं शक्यं तेन रूपेण ज्ञानाभावात्। तथा पङ्कत्वंप्रयोगोपाधिरितिचेत् न इति शब्दमणौ प्राभाकरमते उक्तम्। एवम् 'अहमादिपदे स्वरूपसदेवोच्चारयितृत्वादि धीनियामकम् स्वभावान्नियमतस्तस्यैव बोधनादिति स्वरूपसतएवोपाधित्वं, पङ्कत्वंतु न तथा कुमुदसाधारणबोधदर्शनात्' इति च। एवं शब्दमणावेव प्राभाकरमते 'यत्तु धेनुपदे गोत्वं न शक्यम्, किंतु शक्योपलक्षणतया शक्त्युपाधिः, यत्र गोत्वं तद्धानकर्म शक्यं शक्यास्तूपलक्ष्या महिष्यादिव्यावृत्ता धानकर्मव्यक्तिविशेषा एव अनुगमस्तूपलक्षणैक्यात्' इत्युक्तम्। एतद्ग्रन्थपर्यालोचनायामुपाधिरित्यस्य उपलक्षणमित्येवार्थः, स्वरूपसदित्यस्याप्युपलक्षणमित्येवार्थ इति प्रतीयते। एवं शब्दमणौ उपाधिशब्दस्योपलक्षणार्थकत्वे स्फुटं प्रतीतेऽपि उपलक्षणभिन्नोपाधिरेव शब्दमण्यनुसारेण प्राभाकराणां सम्मतइति प्रतिपादनमभिनिवेशमूलकमेव॥

गुरुचन्द्रिकायां—'यथा सर्वनामत्वमहंपदेषु तथा पङ्कत्वमपि प्रयोगोपाधिरितिचेन्न' इत्यादिना शब्दमणौ पङ्कत्वस्य प्रयोगोपाधित्वनिरसनावसरे 'एवमहमादिपदे' इत्याद्युदाहृतशब्दमण्युक्तदूषणमपास्तम्। यावदवयवशक्तिज्ञान विशिष्टशाब्दबोधे पङ्कत्वादिना हेतुत्वे बाधकाभावात्। कुमुदादौ बोधस्य लक्षणयैवोपपत्तेः। अतएव पङ्काद्यन्वयानुपपत्तिज्ञाने सत्येव कुमुदाद्यन्वयधीः।' इत्युक्तिरप्यनुपादेया। पङ्कत्वे शक्त्यनङ्गीकारे पङ्कजपदात्तद्विषयकबोधस्यानुभवसिद्धस्योपपत्त्यसम्भवात्। 'नियमतः पङ्कस्मृत्यर्थमेव रूढिः। रूढ्या च नियमतस्स्मृतं पङ्कमेवावयवैः पङ्कजनिकर्तृत्वेनानुभाव्यते। बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात्' इति, 'वस्तुतस्स्वार्थस्मृतिद्वारा अवयवानामिव समुदायस्य स्वार्थानुभावकत्वमविशेषादिति पश्चादानुभाविकाऽपि रूढिः' इति च मणिग्रन्थ एव उक्तेः। उच्चारयितृत्वादेः अहमादिपदाधीनशाब्दबोधे भानं न कस्यचित् सम्मतम्। एवं धेनुपदे गोत्वस्य प्रयोगोपाधित्वदूषणावसरे 'शक्यभिन्ननियतगोत्वोपस्थित्यभावात्' इत्यादिना गोत्वस्य प्रयोगोपाधित्वं दूषितं शब्दमणौ॥

## गूढार्थसङ्ग्रहः

एवं च तत्तत्पदजन्यशाब्दबोधाविषयीभूतधर्मस्यैव उच्चारयितृत्वादेः उपलक्षणरूपप्रयोगोपाधित्वं, नतु तत्तत्पदाधीनशाब्दबोधाविषयीभूतपद्मत्वगोत्वादेरिति निर्धारितं भवति। पद्माद्यन्वयानुपपत्तिज्ञाने सत्येव कुमुदाद्यन्वयधीः' इति गुरुचन्द्रिकोक्त्या पद्मत्वस्य शक्त्या बोधनैयत्यानङ्गीकारे अन्वयानुपपत्तिज्ञाने लक्षणोक्तिरप्यनुचिता स्यात् ॥

किंच अहमादिपदेषु उच्चारयितृत्वाद्यवच्छेदकत्वोपलक्षितधर्मावच्छिन्नेषु शक्तिर्व्यवस्थापिता गदाधरभट्टाचार्यैः शक्तिवादे इति शक्यताऽवच्छेदकधर्मानुगमकत्वमेव उपलक्षणधर्मस्य युक्तम्। नत्वतिप्रसक्तधर्माश्रयसङ्कोचकत्वमुपलक्षणधर्मस्य तथा सति सर्वेषां पदानां प्रमेयत्वाद्यतिप्रसक्तधर्माश्रयेषु शक्तिमङ्गीकृत्य घटत्वादेः प्रयोगोपाधित्वकल्पनमेव युक्तं स्यात्। तत्र घटत्वादेः शाब्दविषयत्वोपपत्त्यर्थं घटत्वादौ शक्तिरितिचेत्, प्रकृतेऽपि समम्। तत्र प्रमेयत्वादेः धर्मस्याभानात् घटत्वभानाच्च प्रमेयत्वाश्रये न शक्तिरितिचेत् प्रमेयत्वादौ शक्त्यनङ्गीकारेऽपि प्राभाकरमते अन्वयप्रयोजकरूपवत्त्वात्मकयोग्यताबलात् पदादनुपस्थितधर्मस्यापि शाब्दबोधे भानाङ्गीकारेण प्रकृते पद्मत्वोपलक्षिते शक्त्यनङ्गीकारेऽपि पद्मत्वाश्रयवृत्तिपङ्कजनिकर्तृत्वम् अर्थापत्तिवशात् योग्यताबलात् शाब्दबोधे नियमेन भासत इत्येव स्वीकार्यम्। यत्र च पद्माद्यन्वयानुपपत्तिप्रतिसंधानं तत्र कुमुदादौ प्रयोगस्तु लक्षणयैव प्राभाकरमते उपपादनीयः। नतु पद्मत्वस्य शाब्दबोधाविषयत्वं प्राभाकरसम्मतमिति। शब्दखण्डमणौतु पद्मत्वस्य शक्यत्वानङ्गीकारेऽपि उपपत्तिस्सम्भवतीत्येतावन्मात्रमेव विवक्षितं तत्र तत्र शङ्काग्रन्थे इति न शब्दमणिग्रन्थासामञ्जस्यम् ॥

एवं रीत्या प्राभाकरमतपरिष्करणे पदवृत्तिज्ञानाधीनपदार्थोपस्थितेः हेतुत्वव्यवस्थापकयुक्तिभिरेव प्राभाकरमतमसङ्गतमिति गङ्गेशगदाधरादेराशयः। 'विशेष्यतासम्बन्धेन पङ्कजेत्यवयवशक्तिज्ञानजन्यशाब्दबोधंप्रति तादात्म्येन पद्मत्वादिना हेतुत्वकल्पनात्। कुमुदादिभ्यः उक्तबोधविषयस्य व्यावर्तकादित्यर्थः। तथा च प्रयोगजन्यबोधे अनुपरक्तत्वे तद्विषयव्यावर्तकधर्मानुपस्थापकत्वे च सति तादृशबोधाविषयव्यावर्तकत्वं प्रयोगोपाधित्वम्।' इति परिष्करणेन पङ्कजपदस्य कुमुदे प्रयोगवारणेऽपि पद्मत्वेन रूपेण पङ्कजपदात् पद्मबोधस्य नोपपत्तिः। पद्मपर्यायेषु पङ्केरुहशब्दः पङ्कजशब्दश्च कोशेषु पठितः। पद्मत्वस्य पङ्कजपदजन्यशाब्दबोधाविषयत्वस्य सर्वसम्मतत्वं नास्तीति एतेनैव सिद्धम् ॥

ेगुचन्द्रिकायां—'यत्तु बुद्धिस्थत्वोपलक्षितधर्मविशिष्टे सर्वनाम्नां शक्तिज्ञानात् बुद्धघटत्वादिप्रकारेण घटादेश्शाब्दबोधः। संबोध्यताऽवच्छेदकत्वोपलक्षितधर्मविशिष्टे युष्मच्छब्दस्य उच्चारयितृताऽवच्छेदकत्वोपलक्षितधर्मविशिष्टे अस्मच्छब्दस्य शक्तिग्रहात् शुद्धचैत्रत्वादिप्रकारेण शाब्दबोधः नतु तत्र बुद्धिस्थत्वादिभानम्। तथा च दृष्टान्ताभावान्नपद्मत्वादेः प्रयोगोपाधित्वमिति यत् पक्षधरैरुक्तं तन्न। बुद्धिस्थत्वाद्युपलक्षिततत्तद्धर्मविशिष्टे शक्तिज्ञानं तत्तद्धर्मप्रकारकशाब्दबोधे हेतुरित्यवश्यं वाच्यम्। अन्यथा कदाचित् घटत्वं कदाचिदन्यत् शाब्दबोधे प्रकार इत्यत्र नियामकाभावात्। तथा च धर्मविशेषमादाय कार्यकारणभावे गौरवात् बुद्धिस्थत्वादिकं विषयताऽवच्छेदकत्वसम्बन्धेन शाब्दबोधंप्रति हेतुरिति युक्तम्। सर्वनाम तदादिपदस्य धर्मविशिष्टे शक्तिः। घटे वक्तुर्बुद्धिस्थेसति तादृशशक्तिज्ञानादिना घटत्वप्रकारकश्शाब्दबोधः। युष्मदस्मत्पदयोरात्मन्येव शक्तिः। यस्यात्मनो यदा सम्बोध्यत्वमुच्चारयितृत्वं वा, तदा तस्यात्मनि शक्तिज्ञानाच्छाब्दधीः सर्वनाम्नां पर्यायताऽऽपत्तिस्तु इष्टा। वस्तुतः उद्देश्यताऽवच्छेदकबुद्धिः सर्वपदे, प्रश्नोपक्रमबुद्धिः किंपदे, तत्पदोद्देश्यबुद्धिर्यत्पदे, अवान्तरवाक्योद्देश्यबुद्धिस्तत्पदे प्रत्यक्षबुद्धिरिदमेतत्पदयोः परोक्षबुद्धिरदःपदे नियामिका। तावता विशेषणपर्यायतावारणात्। सोऽयं नवा त्वमहं नवेति संशयस्त्विदंपदादिबोध्यत्वप्रकारक इति दिक्' इत्युक्तम् ॥

## गूढार्थसङ्ग्रहः

एवं गुरुचन्द्रिकायाम्—लघुचन्द्रिकोक्तप्रकारेण गौरवमभिधाय पर्यायत्वं नानात्वं च सर्वनाम्नस्तत्त्वाद्युक्तमेव । (सर्वनामसु त्वदुक्त) इत्युक्तम् । एतदुभयमपि नादरणीयम् । शक्तिवादे 'शक्यताऽवच्छेदकीभूत घटत्वपटत्वादावुपलक्षणीभूतबुद्धिविषयताऽवच्छेदकत्वप्रकारेण भासमाने तदादिपदजन्यबोधविषयताऽवच्छेदकत्वं भासते । एवं च बुद्धिविषयताऽवच्छेदकरूपावच्छिन्नः तत्पदात् बोद्धव्यः इत्याकारकस्य तत्पदं बुद्धिविषयताऽवच्छेदकरूपावच्छिन्नं बोधयतु इत्याकारकस्य वा संकेतस्य विषयतायाः अननुगत घटत्व पटत्वादि विषयताया अपि अनुगतबुद्धिविषयताऽवच्छेदकरूपावच्छिन्नतया शक्तरैक्यम् ।' इत्यादिना तत्पदस्य नानार्थत्वं नास्तीति व्यवस्थापितम् । सर्वनामशब्दानां सर्वेषां नानार्थत्वं पर्यायत्वं च केनापि नाभ्युपगम्यते । सर्वनाम्नां बुद्धिस्थपरामर्शित्वं, इति सामान्यवाक्यं बुद्धिविशेषणधर्मभेदेन प्रत्येकशक्त्यङ्गीकारेऽपि बुद्धेस्सर्वघटकत्वाभिप्रायकम् । तत्पदस्य घटत्वादिप्रकारकानन्तज्ञानभेदेन शक्त्यानन्त्यं नैवापादयितुं शक्यम् । बुद्धिविषयताऽवच्छेदकत्वरूपानुगतधर्मेण शक्तिज्ञानस्य कार्यकारणभावः एक एव । यदा यदा यस्य यस्य धर्मस्य बुद्धिविषयताऽवच्छेदकत्वं तदा तदा तस्य तस्य धर्मस्य तत्पदादुपस्थितिः शाब्दबोधश्चेत्यादिकं तत्रैव निरूपितम् । एवं त्वमहमादिपदानामपि । (पा.सू.१.१.२६) 'सर्वेषां यानि नामानि तानि सर्वादीनि' इति महाभाष्यविवरणे प्रदीपे 'सर्वेषां यानीति । स्वविषयापेक्षया सर्वनामत्वं बोद्धव्यम् । यथा गोत्वादेः स्वविषयापेक्षं सर्वगतत्वं नत्वेतानि सर्वादीनि परस्परं पर्यायतां यान्ति, भिन्नार्थत्वात्' इति कैयटः ॥

उद्योते नागेशश्च—'स्वविषयेति । लोकनिरूढप्रकृतिनिमित्तेन या अभिधेया व्यक्तयस्ताः स्वविषयाः । ननु सर्वादि गणपठितानां शब्दानां सर्वेषां सर्वार्थकत्वेन पर्यायत्वाद्वृथाऽयं व्याख्यानक्लेशोऽत आह—नत्विति । नन्वेवं घटादिशब्दानामपि स्वविषयापेक्षसर्वनामत्वाद्घटायेत्यादौ स्मैभावाद्यापत्तिरितिचेन्न । तद्विधायकेषु सर्वनामग्रहणसामर्थ्येन सकृद्गृहीतशक्त्यैव स्वप्रवृत्तिनिमित्ताश्रयविरुद्धानेकजातीयार्थबोधकानामेव सर्वनामपदेन ग्रहणात् । एतदेव ध्वनयितुं सर्वेषां नामानीति बहुवचनान्तपूर्वपदको विग्रहो दर्शितो भाष्ये' इति सर्वनामपदानां नानार्थकत्वं नास्तीति स्पष्टमाह ॥

मञ्जूषायां तु—'बुद्धिविषयत्वेन बुद्धिविषये तदादेश्शक्तिः । अत एव 'तस्यापत्यम्' इति सूत्रे भाष्ये सर्वनामनिर्देशे विशेषासम्प्रत्ययः सामान्यनिर्देशादिति शङ्कितम्' तस्येति निर्देशात्सामान्यवाचिनस्तच्छब्दादेव प्रत्ययस्स्यात् । नतूपग्वादेरिति शङ्कार्थं कैयटः । तत्र सामान्यवाचीत्यनेन सकलसाधारणसामान्यमेव प्रवृत्तिनिमित्तमित्युक्तम्' इति । 'यत्तु यद्यत्पदं यादृश यादृश धर्मावच्छिन्नविषयबुद्ध्या प्रयुज्यते तत्तत्पदबुद्धिविषयताऽवच्छेदकोपलक्षित तादृश तादृश धर्म विशिष्टे शक्तमिति शक्तिग्रहः । बुद्धिविषयत्वस्यापि तदुपलक्षितत्वात् कदाचित्तेन रूपेणापि बोधः । अतएव तत्पदात् कदाचिद्घटइति कदाचिज्जातिमान् घटइति कदाचिद्बुद्धिस्थ इति बोधः । तावदर्थनिरूपिता शक्तिरेकैव । हर्यादिपदशक्यताऽवच्छेदकानांतु न तेनानुगमः । तेभ्य एकस्य नानारूपेणबोधाननुभवात् । अतएव तेभ्यो न कदाचिदपि जातिमान् हरिरित्यादिक्रमेण बोधइति ; तन्न । तेषां तेषां धर्माणां विशिष्य ज्ञानाभावेन तत्तद्रूपेण शक्तिग्रहाभावात्, तथा बोधासम्भवात् । ममतु बुद्धिविषयत्वेन तदाश्रये शक्तिग्रहान्न दोषः सर्वस्यापि बुद्धिविषयत्वेनैव बोधादिति दिक्' इत्याह ॥

अत्र तच्छब्देन सर्वत्र बुद्धिस्थत्वेन बोधो नानुभवसिद्धः । अतः 'यत्तु' इत्यादिमतमेव समीचीनम् । तत्र नागेशोक्तदूषणं गदाधरोक्तदिशा घटत्वपटत्वादिनानाधर्मानुगमकबुद्धिविषयताऽवच्छेदकत्वधर्मेणोपलक्षणेन नानाधर्मज्ञानसम्भवात् परिहरणीयम् । एतेन तच्छब्दस्य नानार्थकत्वं नास्तीति स्पष्टमुक्तं भवति ॥

## गूढार्थसंग्रहः

अनन्तरं मञ्जूषायां—'इदमेतदोः प्रत्यक्षेऽदसोऽव्यवहिते शक्तिस्तदुक्तम् इदमस्तु सन्निकृष्टे समीतरवर्तिचैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्' इति । परेतु परोक्षवाच्येव तदादेः शक्यताऽवच्छेदकम् । प्रकरणादिवशाच्च तत्तद्विशेषबोधः । वक्तृश्रोतृबुद्धिस्थत्वमेवहि प्रकरणम् । एतावता सर्वनाम्नां बुद्धिस्थपरामर्शकत्वमिति प्रवादः तेषां प्रकरणज्ञानं विना सर्वथा विशिष्य बोधाजनकत्वात् । अतएव 'तस्यापत्य' सूत्रस्थ पूर्वोक्तशङ्कापरभाष्यस्थं सामान्यनिर्देशादिति प्रतीकमुपादाय तस्येति सामान्यनिर्देशात्, तच्छब्दादेव सामान्यवाचिनः प्रत्ययस्स्यादिति कैयटेनोक्तम्। अन्यथा तच्छब्दादिभ्य इति वदेदित्याहुः ।' इति सिद्धान्तयति । एतत्पक्षेऽपि सर्वनाम्नां पर्यायत्वशङ्कैव नास्ति नानार्थकत्वमपि कस्मिन्नपि पक्षे नास्ति । ततः उभयत्रेष्टापत्तिरिति' गुरुचन्द्रिकोक्तिः निरवकाशा ॥

एवं च दृष्टान्ताभावात् पद्मत्वं नैव प्रयोगोपाधिरिति पक्षधरमिश्रोक्तं युक्तमेव । पङ्कजपदात् पद्मत्वविषयकोपस्थितिशाब्दबोधयोः नियततया प्रयोगोपाधित्वकल्पनं अद्वैतसिद्ध्यादौ ऽनुपादेयमेव । प्राभाकरमतेऽपि पद्मत्वेन बोधस्योपपत्तिप्रकारः प्रागेव दर्शितः । बुद्धिस्थत्वस्याशक्यत्ववत् पद्मत्वस्यापि अशक्यत्वमेवेत्येतावानेव विशेषः प्राभाकरमते शङ्कितः मणिकृता । नहि शङ्कामात्रेण तन्मतार्थनिर्णयो युक्तः । अत एव शब्दमणौ 'अत्र मीमांसकाः—न तावत्स्मृत्यर्थं शक्तिः पङ्कजपदप्रयोगविषये नियतपद्मानुभवजनितसंस्कारस्मृतेरेवोपपत्तेः । स्मृतेस्तज्जन्यत्वनियमात् । नाप्यनुभवार्थम्, नियमतस्स्मृतं पद्ममादाय व्यक्तिवचनन्यायेनावयवैः पङ्कजनिकर्तृपद्ममित्यनुभवसम्भवात् । स्मृतिश्च रूढ्या अन्यथावेति न कश्चिद्विशेषः । शक्तिं विना नियमतः प्रयोग एव कुत इति चेन्न, पूर्वप्रयोगमपेक्ष्यावयवानामुक्तन्यायेन पद्मानुभवजनकत्वनियमात् पूर्वप्रयोगोऽपि तत्पूर्वप्रयोगमपेक्ष्येत्यनादित्वैव' इति पूर्वमुक्तं सङ्गच्छते ॥

शब्दमणौ सिद्धान्ते पूर्वपूर्वप्रयोगाभावेनातिप्रसक्तिनिराकरणक्रमं दूषयित्वा योगरूढिरेवेति साधितम् । अतश्च अद्वैतसिद्ध्याद्युक्तमुपाधित्वं प्राभाकाराणां नैव सम्मतमिति सिद्धम् । पङ्कजपदवत् मणिकारोक्तरीत्यैव उद्भिच्छब्दोऽपि योगरूढ इत्येव तन्त्ररत्ने पार्थसारथिमिश्रेण न्यायसुधायां भट्टसोमेश्वरेणचोक्तम् । उद्भिच्छब्दस्य यौगिकत्वं नतु योगरूढत्वमिति व्यवस्थापयता खण्डदेवेनापि भाट्टकौस्तुभे पद्मत्वस्य प्रसिद्धत्वात् पद्मत्वे रूढिर्युक्ता, उद्भिच्छब्दार्थस्य विजातीययागत्वस्य उद्भिच्छब्दप्रवृत्तिनिमित्तस्याप्रसिद्धत्वेन योगरूढिकल्पनानुपपत्तेः, उद्भिच्छब्दस्य न योगरूढत्वम् । धर्मस्यातिप्रसक्तत्वेऽपि प्राचीनप्रयोगाभावेनादोषात्' इत्युक्तम् ॥

तन्त्रवार्तिके च 'न । सामानाधिकरण्यावधारितविषयविशेषस्यावयवान्वाख्यानात् । नचास्य ज्योतिष्टोमादिभिः समभिव्याहारोऽस्ति । अथवाऽर्थापत्तिवशेनैतद्विशेषविषयमेवोद्भेदनम् निमित्तं नचान्यत्र तदस्तीति व्यवस्था । यथा सास्नादिमद्गत गमनविशेषनिमित्तत्वं गोशब्दस्य' इत्युक्तम् ॥

अत्र न्यायसुधा—'समुदायशक्त्यैव यागविशेषवाचित्वान्नातिप्रसङ्ग इति परिहरति नेति । सामानाधिकरण्येनैवावधारितैतद्वक्यविहित यागाख्यविषयविशेषस्योद्भिच्छब्दस्य गवादिशब्दवत् व्युत्पत्तिनिमित्तमात्रत्वेन अवयवान्वाख्यानादित्यर्थः । सम्बन्धस्याशास्त्रहेतुत्वात् वैदिकसामानाधिकरण्यमात्रेण समुदायशक्तिकल्पनाऽनुपपत्तेः न व्युत्पत्तिमात्रनिमित्तता फलोद्भेदनस्य युक्तेति अपरितोषात्परिहारान्तरमाह—अथवेति । यथा पङ्कजपदस्य विशिष्टविषयप्रयोगान्यथाऽनुपपत्त्या पद्मत्वैकार्थसमवेतपङ्कजननविशेषनिमित्तत्वावधारणात् व्यवस्था तथोद्भिच्छब्दस्याप्येतद्यागगतोद्भेदनविशेषनिमित्तावधारणात् व्यवस्थेत्यर्थः । गोशब्दस्य जातिनिमित्तस्य व्याकरणे अवयवान्वाख्यानात् दृष्टान्तत्वेनोपपादनम्' इति ॥

## गूढार्थसंग्रहः

अत्र पङ्कजशब्दस्योद्भिच्छब्दस्य च योगरूढत्वमेवोक्तम् । खण्डदेवेनतु भाट्टदीपिका कौस्तुभयोः योगार्थस्याति-प्रसक्तत्वेऽपि पूर्वपूर्वप्रयोगाभावेन अन्यत्राप्रयोगमुपपाद्य वार्तिकोक्तपक्षान्तरं सोमनाथपरिष्कृतं दोषमुद्भाव्य क्लृप्ताव-यवयोगेनाप्युपपत्तौ अतिरिक्तशक्तिकल्पनायां च सोमादिपदानामपि तदापत्तेरुपेक्षितम् इत्युक्तम् । पङ्कजपदे निरूढल-क्षणयाऽपि नियमेन पद्मबोधोपपत्तिः शम्भुभट्टेनोक्ता । एवं च केनापि भट्टेन अद्वैतसिद्ध्युक्तमुपाधित्वं नैवाभ्युपगतम् ॥

शब्दमणौ अपूर्ववादे–' शब्दोपस्थितनैव शब्दस्यान्वयबोधकत्वात् । नचैवमाकाशपदाशक्यस्य संस्कारोपस्थितस्य शब्दाश्रयत्वस्य कथं शाब्दानुभवविषयत्वमिति वाच्यम् ; नियमतो यद्धर्मवत्त्वेनोपस्थिते यत्र शक्तिग्रहः तत्स्मरणजनक-संस्कारस्य तद्धर्मविषयत्वानियमेन तदुद्बोधकादेव तदंशेऽपि उद्बोधनियमेनाकाशपदादशक्यस्यापि तस्य भानात् । अस्तु वा तदपि शक्यं यदि नियमत उपस्थितिः सहप्रयोगस्य वाच्यादिपरत्वेनाप्युपपत्तेः । वस्तुतस्तु नियतोपस्थितिरेव नास्ति । अस्तु वा पदादपि निर्विकल्पकम् ' इत्युक्तम् ॥ अत्र ' अस्तुवेति पदादपीति द्रव्यादिपदादिवाकाशादिपदादपीत्यर्थः शक्त्येति शेषः । ' निर्विकल्पकम् ' आकाशादेः शब्दाश्रयत्वाद्यप्रकारकमेव शाब्दज्ञानम् । नचैवं तत्र कःप्रकार इति वाच्यम् ; सङ्ख्यादेः पदान्तरोपस्थितस्यैव तत्र प्रकारत्वसम्भवादिति भावः ' इति मिश्रविवरणम् ॥

अस्तुवेति पक्षे शक्तिवादे गदाधरेण–' निर्विकल्पकत्वं तदंशे तत्पदोपस्थाप्याप्रकारत्वम् । नतु तदंशे सामान्यतो निष्प्रकारकत्वम् । तेन समं पदार्थान्तरस्य संसर्गानवगाहने तादृशबोधस्य शाब्दत्वासम्भवाच्चेति मिश्रोक्तदोषादन्योऽपि दोष उक्तः । अत्र च मते जात्यतिरिक्तस्य तस्य स्वरूपतः पदार्थान्तरे प्रकारत्वासम्भवात् आकाशवासीत्यादौ शाब्द-बोधानुपपत्तिः । अन्वयिताऽवच्छेदकावच्छिन्नएव पदार्थान्तरान्वय इति नियमानुपपत्तिश्चेति पदार्थवत् तत्प्रकारीभूत धर्मांशेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवादिपदवाच्यत्ववत् शब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वमावश्यकमित्यभिप्रेत्यैव दीधि-तिकृता गुणटिप्पण्यां रूपग्रन्थे ' अत्रेदं तत्त्वम् ' इत्यादिना गोत्वादिना शब्दाश्रयत्वस्य अविशेषः व्युत्पादितः ' इति गदा-धरेणेनान्तरं सिद्धान्तकरणात् ' अस्तु तदपि शक्यम् ' इति पक्ष एव मणिकारसम्मत इति स्थापितम् । एतत्पक्षे शब्दा-श्रयत्वस्य विशेषणत्वेनोपाधित्वशङ्कैव न सम्भवति । आकाशः शब्दाश्रय इति प्रयोगस्तु लक्षणयैव । मणिकारोक्तप्रथम-पक्षे पदवृत्तिज्ञानाधीनपदार्थोपस्थितेः शाब्दबोधहेतुतया सर्वत्र क्लृप्तायाः असम्भवेन पृथक्कार्यकारणभावाङ्गीकारे गौरवम् । शब्दाश्रयत्वोपलक्षिते शक्तिमङ्गीकृत्य एतत्पक्षोपपादनं प्राचीनसम्मतं शक्तिवादे गदाधरेण दूषितम् । एतत्पक्षे यद्याग्रहः तर्हि पृथक्कार्यकारणभावएवाङ्गीकरणीयः ' इति तत्रैवोक्तम् । एतत्पक्षे शब्दाश्रयत्वांशे शक्तिं विनाऽपि तदुपहिते शक्ति-ग्रहशक्यस्मृत्योः शाब्दानुभवे कारणत्वं न केनापि नैयायिकेनोक्तम् । धर्मान्तरोपस्थितिः भवतु वा मा वा । विशिष्टे शक्त्यभावमात्रेणोपलक्षणत्वमित्येकैव रीतिः । नतूपलक्षणं द्विविधम् उपाधिरूपं तद्भिन्नंचेत्येषा रीतिः नैयायिकसम्मता । ' अस्तु वा पदादपि निर्विकल्पकम् ' इति पक्षेऽपि आकाशपदस्य विशिष्टे शक्त्यभावेन शब्दाश्रयत्वस्योपलक्षणत्वमेवेति पक्षत्रयेऽपि शब्दाश्रयत्वस्य परसम्मतोपाधित्वस्य तार्किकासम्मतता सिद्धा । अतश्च स्वप्नार्थाद्युपलक्षितज्ञानस्यैव सत्यस्य सत्यप्रतिपत्तिहेतुत्वेन प्रागुक्तोदाहरणेषु असत्यात्सत्यसिद्धिर्नसम्भवतीति सुस्थम् । अयमर्थः ' हस्त्यादीनामभावेऽपि कथं तद्बुद्धयस्सत्या भवन्ति ' इत्यादिनोत्तरत्र भाष्ये स्थापयिष्यते ॥

' जलपात्रेषुचैकेन नानेकः सवितेक्ष्यते । श्लो.वा.शब्दनित्यताधिकरणे.१७८ ॥ युगपन्न च भेदस्य प्रमाणं तुल्यवेदनात् । आहैकेन निमित्तेन प्रतिपात्रं पृथक्पृथक् ॥ १७९ ॥ भिन्नानि प्रतिबिम्बानि जायन्ते युगपन्मम । अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा ॥ १८० ॥ स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्तितम् । स्वदेश एव गृह्णाति

## श्रीभाष्यम्

**स्वात्मनि सर्पसन्निधानाद्दष्टबुद्धिः ; सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता, वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः ।**

## श्रुतप्रकाशिका

उरगदंशनं वा अन्धकारे अश्मलोष्टादि निपीडनं वा सत्यंहि भवति । वस्त्विति । जलादिसत्यं तत्कृतचाक्षुषतेजःप्रतिहतिश्च सत्या ॥

## गूढार्थसङ्ग्रहः

सवितारमनेकधा ॥ १८१ ॥ भिन्नमूर्ति यथा पात्रं तदाऽस्यानेकता कुतः । ईषन्निमीलिताङ्गुल्या यथा चक्षुषि दृश्यते ॥ १८२ ॥ पृथगेकोऽपि भिन्नत्वाच्चक्षुर्वृत्तेस्तथैव नः । अन्येतु चोदयन्त्यत्र प्रतिबिम्बोदयैषिणः ॥ १८३ ॥ स एव चेत्प्रतीयेत कस्मान्नोपरिदृश्यते । कूपादिषु कुतोऽधस्तात् प्रतिबिम्बेक्षणं भवेत् ॥१८४ ॥ प्राङ्मुखो दर्पणं पश्यन् स्याच्चेत्प्रत्यङ्मुखः कथम् । तत्रैव बोधयेदर्थं बहिर्यातं यदीन्द्रियम् ॥ १८५ ॥ तत एतद्भवेदेवं शरीरे तत्तु बोधकम् । अप्सूर्यदर्शिनां नित्यं चक्षुर्द्वेधा प्रवर्तते ॥१८६ ॥ एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वांशप्रकाशितम् । अधिष्ठानानृजुस्थत्वान्नात्मा सूर्ये प्रपद्यते ॥ १८७ ॥ पारम्पर्यार्पितं सन्तमवाग्वृत्त्यातु बुद्ध्यते । उर्ध्ववृत्तेस्तदेकत्वादवागिव च मन्यते ॥ १८८ ॥ अधस्तादेव तेनार्कः सान्तरालः प्रतीयते । एवं प्राग्भूतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम् ॥ १८९ ॥ बुद्ध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति । अनेकदेशवृत्तौ वा सत्यपि प्रतिबिम्बके ॥ १९० ॥ समानबुद्धिगम्यत्वान्नानात्वं नैव विद्यते ।' इति श्लोकवार्तिकोक्तरीत्या प्रतिबिम्बस्थलेऽपि ब्रह्मसिद्ध्युक्ता नासत्यात्सत्यसिद्धिरित्याह——**वस्तुभूत एव जलादाविति** ॥

**वस्तुभूतमुखगतविशेषनिश्चयहेतुरिति ।** 'अप्सूर्यदर्शनान्नित्यं चक्षुर्द्वेधा प्रवर्तते ।' इत्युपक्रम्य 'उर्ध्ववृत्तेस्तदेकत्वादवागिव च मन्यते' इत्येकैव वृत्तिर्देशद्वयसंसर्गेण द्वेधा वर्तत इत्युक्तम् । उत्कण्ठितलम्बमानसर्पवत् द्वेधा वर्तते अधस्तादूर्ध्वं च । तत्रोर्ध्ववृत्त्या सवितृसम्बन्धः, अधोवृत्त्या जलसम्बन्धः, इति चक्षुर्वृत्तेः सवितृजलरूपवस्तुद्वय सम्बन्धेन जलगतत्वेन सवितुर्ज्ञानम् । 'एवं प्राग्भूतया वृत्त्या' इत्यत्र मुखे प्राक्प्रत्यग्देशद्वयसम्बन्धिवृत्तिद्वयमेकमेव, जलदर्पणादेः मुखस्य च सम्बन्धेन मुखं जलदर्पणादिसम्बद्धं प्रकाशयति ॥

अत्र न्यायरत्नाकरः—'एवमिति । तत्रापि प्रत्यग्वृत्तिप्रकाशितं मुखमधिष्ठानानार्जवान्नात्मा प्रतिपद्यते । किंतु प्रत्यग्वृत्तिः प्राग्वृत्त्यै समर्पयति । तथा च समर्पितः प्राग्वृत्त्या समर्प्यमाणः तदानुगुण्येन प्रत्यगिति बुद्ध्यते । नन्वत्र दर्पणस्थमेव मुखं गृह्यते, न जलपात्रेष्विवाधस्सान्तरालं, तत्कस्य हेतोः ? अत्रापि सान्तरालमेव मुखं प्रत्यग्वृत्त्या प्रकाशितं प्राग्वृत्त्यै समर्पितं तथैव गृहीतव्यम् । उच्यते—वस्तुस्वभावस्यापर्यनुयोज्यत्वाददोषः । तैजसेषुहि दर्पणेषु तद्गतमेव मुखं गृह्यते । जलंतु सान्तरालमिति किमत्र पृच्छयत इति । उपेत्यापि प्रतिबिम्बं तद्देशभेदं च नानात्वं नास्ति प्रत्यभिज्ञानादित्याह—अनेकेति' इति । अत्र अनेकदेशवृत्तिर्वेत्यादिरन्वारुह्यवादः । सिद्धान्तस्तु स्वदेशगतप्रतिबिम्बग्रहणमेवेति बोद्धव्यम् ॥

एतेन प्रतिबिम्बस्य सत्यत्वमङ्गीकृत्य बिम्बैक्यमिति प्रतिबिम्बमसत्यमेवेति च मतद्वयमपि न युक्तमिति भट्टपादसिद्धान्तः प्रतीयते । प्रत्यङ्मुखादिप्रतिभासस्योपपत्तिर्भट्टपादैरेव प्रदर्शितेति नात्रानुभवविरोधः । विच्छेदावभासदशायां

## श्रीभाष्यम्

**एषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते। हस्त्यादीनामभावेऽपि कथं तद्बुद्धयस्सत्या भवन्तीति चेत्? नैतत्। बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेवह्यालम्बनत्वेऽपेक्षितम्।**

## श्रुतप्रकाशिका

संवेदनानां सत्यत्वे निश्चितेह्युक्तोदाहरणेषु सत्यासत्यप्रतिपत्तिरित्यत्राह—**एषामिति**। उत्पत्तिमत्त्वमर्थक्रियाकारित्वं च द्वयमपि प्रत्येकं सत्यत्वसाधकम्। नहि शुक्तौ रजतमुत्पत्तिमत् नच कार्यकरम्। अथ ज्ञानसत्यत्वं विषयसत्यताव्याप्तमिति तन्निवृत्त्या ज्ञानसत्यत्वनिवृत्तिरिति शङ्कते। **हस्त्यादीनामिति**। अभावे प्रतिपन्नोपाधौ तथात्वाभावे ज्ञानसत्यत्वं सालम्बनत्वमात्रव्याप्तम् अबाधितत्वादिति परिहरति। **नैतदिति**। सालम्बनत्वमात्रशब्देन सत्यालम्बनत्वव्यावृत्तिः। मिथ्याभूतस्यालम्बनत्वं कथमित्यत्राह—**अर्थस्येति**। आलम्बनं विषयः। **प्रतिभासमानत्वमेवह्यालम्बनत्वेऽपेक्षितमिति**। प्रतिभासमानत्वमेव विषयत्वमित्यर्थः। अविद्यमानस्याप्यतीतानागतादेः प्रतिभासमानस्यालम्बनत्वदर्शनाद्विद्यमानस्याप्यप्रतिभासमानस्य तदभावाच्चेति भावः॥

## गूढार्थसंग्रहः

बिम्बप्रतिबिम्बयोरैक्यमित्युक्तिरपि न घटते। विच्छेदावभासमात्रे मायाविजृम्भितत्वं, नतु प्रतिबिम्बांश इत्युक्तिस्साहसमेव; प्रतिबिम्बांशेऽपि मायाविजृम्भितत्वसम्भवस्य सुरेश्वरसम्मतत्वात्। अत्र प्रागुदाहृत (श्री.भा.५२०.पु) पञ्चपादिकायां प्रतिबिम्बस्य परिणामत्वासम्भवः योऽयमुक्तः सः अनिर्वचनीयख्यात्यङ्गीकारे सुरेश्वरमते दूषणं स्यात्। अख्यातेश्चान्यथाख्यातेश्चाङ्गीकर्तृमते स्वदेहस्थबिम्बग्रहणस्यैवाङ्गीकारेण प्रत्यङ्मुखत्वादेः नेत्रवृत्तिद्वैविध्येन दोषवशात् भानं सम्भवतीति न काऽप्यनुपपत्तिः। अतश्च एतन्मते जलं मुखं च पारमार्थिकमेव। चक्षुषो वृत्तिद्वयेनाखण्डेन जलमुखयोर्ग्रहणं सम्भवत्येवेति बिम्बरूपमुखग्रहणमेव प्रतिबिम्बग्रहणं, तदेव मुखगताविशेषग्रहणमपि भवतीति नासत्यात्सत्यसिद्धिप्रत्याशेति भावः। पञ्चपाद्युक्तेतरदूषणानामनवकाशत्वं पूर्वमेव (५५१.पु) निरूपितम्॥

स्फटिकलौहित्यस्य पञ्चपादिकाकारमतरीत्या मिथ्याभूतस्य उपाधिसन्निधानसाधकत्वं न सम्भवतीति यथार्थख्यातिनिरूपणावसरे **जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाऽभिभूततया रक्त इति गृह्यते। जपाकुसुमप्रभा वितताऽपि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यत इति उपलब्धिव्यवस्थाप्यमिदम्**' इति भाष्य एव वक्ष्यते॥

एतेन पञ्चपादिकायां—'ननु अभिजातस्येव पद्मरागादिमणेर्जपाकुसुमादेरपि प्रभा विद्यते, तया व्याप्तत्वात्—स्फटिकोऽपि लोहित इवावभासते; तथाऽपि स्वयमलोहितो मिथ्यैव लोहित इत्यापद्येत। अथैवं प्रभैव लोहिताऽवभासते न स्फटिक इति शौक्ल्यमपि तर्हि स्फटिके प्रकाशेत। अथ प्रभयाऽपसारितं तदितिचेत्, तर्हि नीरूपःकथं चाक्षुषस्स्यात्? नच रूपिद्रव्यसंयोगात्, वायोरपि तथात्वप्रसङ्गात्। न प्रभानिमित्तं लौहित्यं तत्रोत्पन्नम्; उत्तरकालमपि तथारूपप्रसङ्गात्, अभ्युपगम्य प्रभामिदमुक्तम्। यथा पद्मरागादिप्रभा निराश्रयाऽप्युन्मुखोपलभ्यते, न तथा जपाकुसुमादेः' इति उक्तिरपि निरवकाशा। नीरूपः कथं चाक्षुषस्स्यादित्युक्तिः स्फटिके वस्तुतो रूपस्य सद्भावात् समाहिता। लौहित्यान्तरस्य तत्रोत्पत्तिरेव नाङ्गीक्रियते। यथा पद्मरागप्रभा निराश्रयाऽपि उन्मुखोपलभ्यते न तथा जपाकुसुमादेः' इत्युक्तिः

**श्रीभाष्यम्**

**प्रतिभासमानताचास्त्येव दोषवशात्। सतु बाधितोऽसत्य इत्यवसीयते। अबाधिताहि बुद्धिस्सत्यैवेत्युक्तम्।**

**श्रुतप्रकाशिका**

पक्षे प्रतिभासमानत्वमप्यस्तीत्याह--**प्रतिभासेति**। प्रतिभासमानता संविदपेक्षया प्रतिसम्बन्धित्वम्, अविद्यमानस्य विद्यमानतया भासनात्तेन रूपेणासत्यता। तथा साक्षादवभासमानो विषयोऽपि ज्ञानहेतुस्स्यात्। संप्रतिपन्न विद्यमानविषयवत् विद्यमानतया भासमानत्वाविशेषात्। तथासति असत्यात्सत्योत्पत्तिरित्यत्राह—**दोषवशादिति**। अविद्यमानस्य विद्यमानतया भासनहेतुर्दोष एव, नत्वविद्यमानो विषयः अविद्यमानो विषयो न ज्ञानस्य हेतुतयाऽपेक्षितः केवलं विषयतया, विद्यमानस्तु तथात्वेन भासमानो विषयतया हेतुतयाचापेक्षितः। अतो वस्तुतो विद्यमानत्वमेव विषयस्य ज्ञानहेतुत्वे उपाधिः। नियतपूर्वकालवर्तिनोहि हेतुत्वं दृष्टम्। तस्मादविद्यमानस्य हेतुत्वायोगाद्दोष एव हेतुरिति नासत्यात्सत्योत्पत्तिरित्यर्थ.। प्रतिभासमानत्वे द्वयोरप्यविशिष्टे कथमन्यतरस्यासत्यत्वनिश्चय इत्यत्राह—**सत्विति**। बुद्धिरप्यसत्या किं न स्यादित्यत्राह—**अबाधितेति**। विषयासद्भावेन ज्ञानस्यासत्यताकथनं कालात्ययापदिष्टमित्यर्थः॥

ननु स्वाप्नादिविषयज्ञाने किं ज्ञानमात्रं शुभाशुभप्रतिपत्तिहेतुः उत ज्ञानविशेषः, ज्ञानमात्रपक्षेऽतिप्रसङ्गः। ज्ञानविशेषश्चेत्कस्तस्यावच्छेदकः। विषयश्चेत्किं विषयउपलक्षणतयाऽवच्छेदकः उत विशेषणतया यदि विशेषणतया विशेष्येण सहकार्यान्वयि हि विशेषणम्। अतो हस्त्यादेरपि शुभाशुभप्रतिपत्तिहेतुत्वादसत्यात्स(त्योत्प)त्यप्रतिप)त्तिः। यद्युपलक्षणतया उपलक्ष्यबहिर्भूत उपलक्ष्यप्रतीत्युपायोह्युपलक्षणम्। अतो विषयस्य ज्ञानप्रतिपत्तिहेतुत्वादसत्यात्स(त्योत्प)त्यप्रतिप)त्तिः।

**गूढार्थसंग्रहः**

**जपाकुसुमप्रभाविततताऽपि स्वच्छद्रव्यसंयुक्ततया स्फुरतरमुपलभ्यते** इति भाष्येण समाहिता। स्वच्छद्रव्यसंयोगस्य स्फुटतरोपलब्धिकारणत्वमङ्गीक्रियत इति नातिप्रसक्तिरिति भावः। प्रतिबिम्बस्याव्याप्यवृत्तित्वनियमेन लौहित्यस्य स्फटिके व्याप्यवृत्तित्वप्रतीत्ययोगाच्च (अ.सि)। इत्येतत् लौहित्यप्रतिबिम्बवादिवाचस्पतिमत एव दूषणं नतु सिद्धान्ते। प्रभायाः यावत्स्फाटिकावयवसम्बन्धसम्भवेन व्याप्यवृत्तिप्रतीत्युपपत्तेः॥

लघुचन्द्रिकायाम्—'वाचस्पतिमते लौहित्यं प्रतिबिम्बः धर्मारोपस्य धर्म्यारोपव्याप्यत्वेऽपि धर्मप्रतिबिम्बस्य न धर्मिप्रतिबिम्बनियमइत्युक्तावपि न दोषः' इत्येतदनन्तरं 'लौहित्यसंसर्गस्यवारोपोक्तिसम्भवात्। कथं लौहित्यस्वरूपमिथ्यात्वसाधकत्वं पञ्चपादिकायाः इतिचेदुच्यते। संसर्गारोपमात्रेण न प्रतिबिम्बत्वम्। किंतु अन्तरैकदेशावच्छिन्न संसर्गारोपेण लौहित्यस्य स्फटिके व्याप्यवृत्तित्वात् नोक्तारोप इति न प्रतिबिम्बत्वम्, किंतु संसृष्टरूपेण मिथ्यात्वमिति भावः' इत्युक्तिरप्यनुपादेया। अधिकपरिमाणबिम्बस्य प्रतिबिम्बस्थले एकदेशावच्छेदेन संयोग इति न नियमः नाप्यव्याप्यवृत्तित्वमिति। तथा बिम्बप्रतिबिम्बोपाधिविशेषस्थले वाचस्पतिमते प्रतिबिम्बाङ्गीकारसम्भवात्। सिद्धान्तेतु जपाकुसुमप्रभाऽभिभूतस्फटिकग्रहणस्यैवाङ्गीकारेण न काऽप्यनुपपत्तिरिति बोद्धयम्। **प्रतिभासमानताचास्त्येव दोषवशादिति**। अत्र दोषवशादर्थस्य भानमात्रम् नत्वर्थोत्पत्तिरित्यङ्गीकारेण भ्रमस्थले अर्थज्ञानयोरुभयोः एकाविद्यापरिणामत्वाङ्गीकारः अनुचित इति सूचितम्। तत्र हेतुं दर्शयति—**सतु बाधितइत्यादिना सत्यैवेत्युक्तमित्यन्तेन**। दर्शनंतु विद्यतेऽर्थो न सन्तीति पूर्वभाष्ये अयमर्थः स्पष्टमुक्तः॥

श्रीभाष्यम्

**रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धिः। रेखायास्सत्यत्वात्। ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः वर्णात्मतात्वसत्या। नैवम्–वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं**

श्रुतप्रकाशिका

ज्ञानानां तत्तद्व्यवहारानुगुण्यलक्षणस्वभावविशेषैर्व्यावृत्तत्वान्नातिप्रसङ्ग इति नच वाच्यं, व्यवहारानुगुण्यमात्रस्य व्यावर्तकत्वेऽतिप्रसङ्गात् व्यवहारविशेषानुगुण्यस्य व्यावर्तकत्वे तद्विशेषश्च तत्सङ्ग्राहकविषयाधीन इति व्यवहारावच्छेदकतया अनृतस्य सत्यहेतुत्वमिति ॥

**उच्यते**–व्यावृत्तमेव ज्ञानं शुभाशुभाद्यनुमापकम्। व्यावृत्तिश्च (सा(स्वा)लम्बनेन अविद्यमानस्याप्यालम्बनत्वं दोषवशादित्युक्तम्। अन्यथाख्यातिपक्षेऽप्यालम्बनसत्यता सर्वज्ञानानामिष्यत एव विशेषणविशेष्यतत्संसर्गाणां क्वचित्सत्यत्वात्। विशेषणविशेष्ययोस्तथात्वनिर्वाहकस्संसर्गः स्वस्य तदीयत्वे संसर्गान्तरनिरपेक्षः। सतु संसर्गः पुरोवर्तिनि भ्रमाधिष्ठाने प्रतीयमानः पुरोवर्त्यपेक्षया स्वयं स्वस्य संसर्गरूपत्वनिर्वहणासामर्थ्यात् पुरोवर्तिनि नास्तीति पुरोवर्त्यपेक्षया संसर्गोऽपरमार्थः नतु स्वरूपेण। आलम्बनत्वे च सन्निहितत्वरूपमनपेक्षितम् असन्निहितस्याप्यालम्बनत्वदर्शनात्। अतस्सत्येन रूपेणालम्बनत्वमिति हस्त्यारोहणादिज्ञानान्यपि सत्यभूतहस्त्याद्यालम्बनावच्छिन्नानि परमार्थभूतया स्वप्नावस्थयाऽवच्छिन्नत्वात् जाग्रदवस्थाज्ञानविलक्षणानि शुभाशुभप्रतिपत्तिनिमित्तानि अतो नातिप्रसङ्गः। नासत्यात्सत्यप्रतिपत्तिश्च ॥

नच प्रतिबिम्बाद्बिम्बानुमितावसत्यात्सत्यप्रतिपत्तिः। प्रतिबिम्बप्रतिभासस्य सत्यस्यैवानुमापकत्वात्। परमार्थतस्तु तत्र नानुमापकानुमेयविभागः। दर्पणादिप्रतिहतैश्चाक्षुषतेजोभिर्बिम्बस्यैव दर्पणस्थतया गृह्यमाणत्वात्। अतः * क्वचिदर्थात्प्रतिपत्तिः * क्वचित्तत्प्रतिभासात्तत्तदर्थप्रतिपत्तिरिति नासत्यस्य लिङ्गत्वम्। किंच असत्यात्सत्यप्रतिपत्तिः किं भवत्पक्षेणोच्यते, उतास्मत्पक्षेण। न तावद्भवत्पक्षे सा सिद्ध्यति शुभाशुभयोरपि मिथ्यात्वेन असत्यादसत्यप्रतिपत्तिरेवहि स्यात्। नचास्मत्पक्षे यथार्थख्यात्यभ्युपगमात् सत्यादेव सत्यप्रतिपत्तेः। एषां स्वाप्नहस्त्यादिज्ञानादीनां शुभाशुभादि प्रतिपत्त्यादिहेतुभूतानां षण्णामुदाहरणज्ञानानां संस्कारादिसत्यसामग्रीकत्वं स्पष्टम्, ज्ञानानां सत्यत्वमुपपादितम्। अत उत्पत्तौ ज्ञप्तौ च हेतुसत्यत्वं सिद्धम् ॥

अथ ज्ञानव्यतिरिक्तासत्यहेतुना सत्यप्रतिपत्तौ हेतुसत्यत्वमुपपाद्यते। **रेखयेत्यादिना**। हेतोरसत्यत्वं दर्शयंश्चोदयति। **नन्विति**। परिहरति। **नैवमिति**। वर्णात्मता किं सत्तया वर्णप्रतिपत्तेरुपायः उत प्रमिततया उत प्रतीततयेति विकल्पमभिप्रेत्याह—**असत इति**। असत्यत्वात्सत्तयोपायत्वमनुपपन्नमित्यसत इति पदस्याभिप्रायः। * असतः सद्व्यति·

गूढार्थसंग्रहः

'येऽपि रेखादयः' (५६८.पु) इति भट्टपादोक्तार्थमेवाह—**रेखया वर्णप्रतिपत्तावपीत्यादिना**। 'वर्णात्मना न सत्याश्चेत्सर्वभावेष्वयं विधिः। पदार्थान्तररूपेण न सत्यं किंचिदिष्यते॥' (श्लो.वा.नि.वा.१६१) इत्युक्तमेवार्थं दर्शयति—**ननु वर्णात्मना प्रतिपन्नेत्यादिना**। 'येनतु रूपेण प्रतिपादकाः तदसत्यम्। कार्योपयोगरहिता स्वरूपसत्यता व्यर्था' इति ब्रह्मसिद्धौ अयमेवार्थस्सिद्धान्तितः॥ **असत्याया उपायत्वायोगात् इति**। अयमर्थः पूर्वमेवोपपादितः। तमेवार्थं दर्शयति—**न दृष्टमिति**। उपायत्वं कार्याव्यवहितप्राक्क्षणावच्छिन्नसत्त्वम् तदसतो न सम्भवतीति भावः।

## श्रीभाष्यम्

**न दृष्टमनुपपन्नं च। अथ तस्यां वर्णबुद्धेरुपायत्वम् एवंतर्ह्यसत्यात्सत्यबुद्धिर्नस्याद्बुद्धेस्सत्यत्वादेव। उपायोपेययोरेकत्वप्रसङ्गश्च। उभयोर्वर्णबुद्धित्वाविशेषात्। रेखायाअविद्यमान वर्णात्मनोपायत्वेचैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात् सर्ववर्णप्रतिपत्तिस्स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसङ्केतवत् चक्षुर्ग्राह्य रेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति। हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः रेखायास्सङ्केतस्य च सत्यत्वात् रेखागवयादपि सत्यगवयबुद्धिस्साहश्यनिबन्धना साहश्यं च सत्यमेव।**

## श्रुतप्रकाशिका

रिक्तस्येत्यर्थः। असत्त्वादेव प्रमिततयोपायत्वंचानुपपन्नमिति निरुपाख्यशब्दाभिप्रायः। उपाख्या प्रमितिः, तदविषयत्वं निरुपाख्यत्वम्। प्रतीतिविषयतयोपायत्वानुपपत्तिस्तु वक्ष्यते। सत्ताप्रमित्योरभावेऽपि वर्णात्मताया उपायत्वमस्तीति कल्प्यतेचेत् तदनुपपन्नं व्याप्तिविरोधात्, व्याप्त्यनुगुणं हि कल्पनं प्रवर्तत इत्यभिप्रायेणाह—**अनुपपन्नंचेति**। अथ भ्रान्तितः प्रतीतायाः वर्णात्मतायाः वर्णप्रतिपत्तिहेतुत्वपक्षेऽपि बुद्ध्यंशस्य हेतुत्वे परस्यानुपपत्तिं दर्शयितुमाह-**अथेति**। दूषयति। **एवंतर्हीति**। कुतइत्यत्राह-**बुद्धेरिति**। दूषणान्तरमाह-**उपायेति**। तदुपपादयति। **उभयोरिति**। बुद्ध्यंशस्य हेतुत्वे दूषणमुक्तं वर्णात्मतांशस्य हेतुत्वे * सिंहावलोकितकेन दूषणमाह-**रेखायाइति**। अविद्यमानवर्णात्मत्वेनेत्यर्थः। अतिप्रसङ्गपरिहारार्थं शङ्कते। **अथेति**। तत्रापि स्वमतसिद्धमाह-**हन्तेति**। तदुपपादयति। **रेखायाइति**॥ उदाहरणान्तरं परिहरति। **रेखागवयादपीति**। ...

## गूढार्थसंग्रहः

वर्णानामेव नार्थप्रत्यायकत्वमपितु वर्णबुद्धेः। वर्णानां हेतुभूतज्ञानविषयत्वमेव। उच्चारणस्थले इत्थमेव क्रमोऽनुभवसिद्धः वर्णानामर्थस्मृतिहेतुत्वम् एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति दिशा। स्मृत्यनन्तरमेव शाब्दबोधः। एवं च स्वप्नस्थल इव ज्ञानस्यैव हेतुत्वं सम्भवतीत्यभिप्रेत्याह—**अथ तस्यां वर्णबुद्धेरिति**। ज्ञानविषयस्य हेतुत्वाभ्युपगमेऽपि न निस्तार इत्याह-**रेखाया अविद्यमानवर्णात्मनेत्यादि**॥

'तथाहि बाला रेखासु वर्णत्वेनैव व्युत्पाद्यन्ते' (ब्र.सि) इति, 'आशैशवमयं ककारः अयं गकार इत्यनुभवादभेदेनैव स्मरणम्। विवेकेसत्यपि दृढतरसंस्कारवशात् नारोपनिवृत्तिः। अत एव ककारं पठति लिखतिचेति सार्वलौकिको व्यवहारः।' (अ.सि) इति। एवं च सङ्केतेनैव निर्णयस्यानुभवसिद्धतया रेखायाः अविद्यमानसर्ववर्णात्मकत्वस्य सङ्केतासिद्धतया न दोष इति शङ्कते-**अथ पिण्डविशेषे इत्यादि**। व्युत्पत्तिः सङ्केतश्चेत्यादिकं रेखाविशेषे वर्णविशेषबुद्धावेव निमित्तम्। रेखायां वर्णविशेषबुद्धिः आरोपरूपैवार्थप्रत्ययहेतुः। तत्र च रेखासङ्केतश्च हेतुस्स्यात्। एवं च त्रयाणामपि सत्यत्वमेवेति नासत्यात्सत्यसिद्धिरित्याह—**रेखायाः सङ्केतस्यचेति**। चकारः रेखायां वर्णबुद्धिसमुच्चायकः॥

ब्रह्मसिद्धौ 'योऽपि मन्यते न रेखागवयो गवयत्वेन गवयान्तराणां प्रतिपत्तिहेतुः, किंतु सादृश्यादेतत्सदृशो गवय इति। तस्य लोकविरोधः, अयं गवय इत्याख्यातुः, प्रतिपत्तुश्च गवयोऽयं मया दृष्ट इति' इत्युक्तम्। तमेवार्थं पर्यालोचयति-**रेखागवयादपीति**। **सादृश्यनिबन्धनेति**। वर्णानां श्रोत्रग्राह्याणां आकारशून्यत्वेन रेखासादृश्यासम्भवेऽपि

श्रीभाष्यम्

**नचैकरूपस्य शब्दस्य**

श्रुतप्रकाशिका

स्फोटवादावलम्बनेनोच्यमानमुदाहरणान्तरं परिहरति । **नचैकरूपस्येत्यादिना** । नादैस्फोट्यत इति व्युत्पत्त्या स्फोट एक-

गूढार्थसंग्रहः

गवयाकाररेखां दृष्ट्वा गवयस्याकारसादृश्येन प्रतिपत्तिस्सम्भवति । अयं गवय इति प्रतिपत्तिस्सादृश्यनिबन्धनैव । अयं गवय एव नत्वेतत्सदृशो गवय इति प्रतीतिसत्त्वे एवं प्रतीतिः न सादृश्यनिबन्धनेति वक्तुं शक्यते, साच प्रतीतिर्नास्ति । अत्राकारतस्सादृश्येनैवोपपत्तौ प्रकारान्तराश्रयणमनुचितम् । यदि रेखायाः वर्णत्वारोपवदध्यारोपेणैव व्यवहारइत्याग्रहः ; तदा बुद्धिरेव कारणमिति नासत्यात्सत्यसिद्धिरिति भावः ॥

वाक्यपदीये 'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥' (१) 'अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् । तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥ (४६) वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः । कारणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ॥ (४७) नादस्य क्रमजातत्वात् न पूर्वो नापरश्च सः । अक्रमः क्रमरूपेण भेदवानिव गृह्यते ॥ (४८) प्रतिबिम्बं यथाऽन्यत्र स्थितं तोयक्रियावशात् । तत्प्रवृत्तिमिवान्वेति सधर्मः स्फोटनादयोः ॥ (४९)' इति भर्तृहरिणोक्तम् ॥

अत्र विवरणम्—कारणेभ्य इति । अविक्रियाधर्मकं हि शब्दतत्त्वं ध्वनिधर्मैरनुगृह्यते दीर्घत्वकत्वादिभिरित्यर्थः । क्रमिकेध्वनौप्रतीयमानेऽप्रसङ्ख्यातवदुपलभ्यते । प्राप्तविवर्तेन नादात्मना तद्विवर्तानुरोरेणाप्राप्तविवर्तमपि विवर्तमानमिव गृह्यते इति वार्थः । (४७) नादव्यंग्यस्स्फोट एकोऽपि नित्योऽपि नादाभिव्यक्तिक्रमेण स क्रमो भेदवांश्च गृह्यते । न स्वतस्तस्य पूर्वत्वपरत्वकृतः क्रमो भेदश्च वास्तवोऽस्ति नित्यत्वैकत्वाभ्यां विरोधात् ॥ ४८ ॥ तत्र दृष्टान्तमाह—प्रतिबिम्बमिति । तत्त्वपक्षेऽन्यत्वपक्षे वा चन्द्रादिप्रतिबिम्बं यत्राधारे संसृष्टं तत्क्रियावशात् स्वतो निष्क्रियमपि क्रियावदुपलभ्यते । एवं नादस्य ह्रस्वदीर्घप्लुतत्वोदात्तत्वादिभिः द्रुतादिवृत्तिभिश्च तावानेव स्फोटः विचित्रां वृत्तिमनुविधत्त इत्यर्थः ॥' इति ॥

ब्रह्मसिद्धौ च 'आनन्दमेकममृतमजं विज्ञानमक्षरम् । असर्वं सर्वमभयं नमस्यामः प्रजापतिम् ॥' इति प्रथमश्लोके अक्षरशब्दविवरणे 'अक्षरमिति शब्दात्मतामाह—विशेषेण सामान्यस्य लक्षणात् । कथं तावच्छब्दात्मता । 'परं चापरं च ब्रह्म यदोंकारः' इति श्रुतिभ्यः । यथा 'ओमिति ब्रह्म, ओमितीदगूँसर्वम्' (तै) 'तद्यथा शङ्कुना' इत्यादि 'ओंकारएवेदं सर्वम्' (छा) इति । अत्रहि सर्वानुगतेन तदत्यागादोंकारो वाचस्तत्त्वमिति दर्शयित्वा वाग्रूपात्यागाच्च रूपप्रपञ्चस्य 'ओंकारएवेदगूँसर्वम्' इत्युपसंहरति । (ब्र.का) इति मण्डनमिश्रेणोक्तम् । अत्र शब्दाद्वैतवादः मण्डनमिश्रेणाङ्गीकृत इति प्रतिभाति । प्रतिबिम्बाच्च बिम्बप्रतिपत्तिः यथा तथैव नादैः स्फोटरूपप्रतिपत्तिरिति असत्यात्सत्यसिद्धिप्रतिपत्तौ अयमपि दृष्टान्तः सम्भवतीत्यभिप्रेत्याह—**नचैकरूपस्य शब्दस्य इत्यादि** ॥

महाभाष्ये 'अथ शब्दानुशासनम् । केषां शब्दानां ? लौकिकानां वैदिकानां च । कस्तर्हि शब्दः ? येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः ।' इत्युक्तम् । अत्र कैयटः—'वैयाकरणाः वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति, वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात् । आनर्थक्ये

## गूढार्थसङ्ग्रहः

तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात् । अभिव्यक्तिपक्षेतु क्रमेणैवाभिव्यक्त्या समुदायाभावादेकस्मृत्युपारूढानां च वाचकत्वे 'सरो' 'रस' इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात्तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्य पदीये व्यवस्थापितः । उच्चारितेन—प्रकाशितेनेत्यर्थः' इति ॥

एतद्भाष्यं स्फोटपरमेवेति स्फोटसिद्धौ मण्डनमिश्रेणापि निरूपितम् 'अर्थावसाय प्रसवनिमित्तं शब्द इष्यते । तदेतत्प्रक्रमापेक्षं भाष्यकृत्प्रत्यपीपदत् ॥ ३ ॥' 'अथ गौरित्यत्र कः शब्दः' इतिहि प्रक्रमः । तत्र च नानाजातीयार्थ मात्रोपहितोपरागां प्रख्याम् 'इति' परेण गोशब्देन निर्दिशति ; दृष्टोह्ययमिति शब्दो विज्ञानमात्रप्रयोगः यथा 'गौः' इति मेऽभवद्बुदिति । तामेव च 'इति' शब्दनिर्दिष्टां प्रख्याम् 'अत्र' इति सर्वनाम्नोऽधिकरणतया परामृशत्याधेयसु-पलक्षयितुं, तत्प्रख्या प्रतिभासि च जाति द्रव्यगुणक्रियावर्णस्फोटात्मकमनेकमाधेयम् ; ततः शब्दं निर्धारयितुमनाः पृच्छति 'कःशब्दः' इति । यथा क इह शालायां देवदत्त इति । प्रत्यय एव वा प्रत्येतव्योपलक्षणप्रवणतया निर्दिश्यते । तदु-पलक्षितं यत्तत् 'अत्र' इति निर्धारणसप्तम्या शब्दनिर्धारणाय निर्दिशति । एवंगते च प्रकृतप्रत्ययप्रतिभासिष्वेवार्थ धीहेतोः शब्दत्वमवधार्यते इति कुतोऽन्यत्र प्रसङ्गः ? नहि 'क इह शालायां कठः' ? इति, यः कुण्डली इत्यशाला-धिकरणे कुण्डलिनि सम्प्रत्ययः । उपलक्षणत्वाच्चार्थप्रत्ययस्य संविद्धैकल्यादनुपजनयन्नप्यर्थप्रत्ययं न शब्दतां जहाति, यथा विमुक्तकुण्डलः कठताम् । अन्वाख्येयशब्दलक्षणं चार्थप्रत्ययः, 'अथ शब्दानुशासनम्' इति प्रक्रमात, तस्य च निर्जि ज्ञासनात् ; एकैकवर्णेषुच्चाप्रत्यायकेषु नान्वाख्येयता ; शब्दमात्रलक्षणंत्वनुपकारकमेवेति न ते शब्दतामतिपत्स्यन्ति । यदप्युक्तम् सतोऽपि वर्णातिरेकिणोऽर्थज्ञानहेतोर्न शब्दवाच्यता, शब्दप्रसिद्ध्यभावादिति । अहो लोकशास्त्रप्रसिद्ध्योः परःपरिचयः यदिदमपि न दृष्टम् 'शब्दादर्थं प्रतिपद्यामहे' 'भावार्थाःकर्मशब्दास्तेभ्यः क्रिया प्रतीयते' इति 'भाव-माख्यातेनाचष्टे' इति च । श्रोत्रग्राह्यताऽपि च सत्त्व गुणत्व शब्दत्व वर्णत्वातिव्यापिनी न शब्दलक्षणम् ॥

तथाहि—शब्दसमवायिनः सत्त्वादयः श्रोत्रावसेयाः । नच श्रोत्रेणैवेत्यवधारणम्, वर्णानां मनसाऽप्यवधारणम् । वर्णत्वे च प्रसङ्गानतिवृत्तेः । नच सत्त्ववर्णत्वाद्यपह्नवस्साधुः सर्वसामान्यापह्नवप्रसङ्गात् ; नहि सामान्यविशेषान्तरकल्प-नेऽपि निबन्धनमस्त्यन्यदतोऽनुवृत्तावभासिनः प्रख्यानात् ; नहि शाबलेयमुपलब्धवतो बाहुलेयेऽन्यः पूर्वाकारावमर्शोऽवि-तात्रभासात्प्रकाशात् । नच ध्वनिमात्राद्व्यावृत्तः कचटतपेष्वन्वयी न विद्यते प्रख्यावभासः । वर्णाश्चार्थप्रत्ययानुभावमनुप-पन्नोऽपि यदि शब्दाः, कामम् ; अन्वाख्येयस्त्वर्थप्रत्ययेन निरूप्यत इत्यदोषः ॥

ननु च वर्णा एवाभिधेयावधिगमनिमित्तं स्वाभिधेयावधिलब्धपरिच्छेदाः पदपरिकल्पनाभाजः । नैतत् सारम्, प्रत्ये-कमप्रत्यायकत्वात्, साहित्याभावात्, नियतक्रमवर्तिनामयौगपद्येन सम्भूयकारित्वानुपपत्तेः, नानावक्तृप्रयुक्तेभ्यश्च प्रत्य-यादर्शनात् क्रमविपर्यये यौगपद्ये च । तस्मात् वर्णव्यतिरेकिवर्णेभ्योऽसम्भवन्नर्थप्रत्ययः स्वानमित्तमुपकल्पयति ॥

ननु च यं प्रकारमध्यासीनेभ्यो नार्थप्रत्ययदर्शनं वर्णेभ्यः, कामं तत्प्रकारजुषो माभूवन्वाचकाः ; समधिगतातिशया-न्तराणामुपरि परिदृश्यमानानन्तराभिधेयप्रत्ययकार्याणां को वाचकत्वस्य विरोधः ? तथाहि कार्यं कस्यचित् सद्भावेऽप्यनवाप्त-सत्ताकं पुनरापुवत्सत्ताकं तस्य भाव एव परिगृहीतातिशयान्तरस्य कारणतां सूचयति ; नत्वकारणतामेव विशेषान्तरशालिनि तस्मिन्नेव पुनर्भावात् तदभावेचाभावात् ; न खल्वङ्कुरं बीजसमवधानेऽप्यलब्धे कुसूले समवाहितक्षित्यादिसहकारि ग्रामबीज-समवधानसन्दृश्यमानमूतायेबाजकायतां प्रतियन्ति ; अपितु तदेव बीजं समवहित क्षित्यादि सहकारिग्रामस्य जनकम्, नेत-

## गूढार्थसंग्रहः

रथेति गम्यते । तथेमेऽपि माभूवन् अन्यथा वाचकाः । परिगृहीतानुपूर्व्यविशेषादिभेदास्स्वर्थप्रत्ययहेतवः ; नहि दृष्टे दृष्टप्रकारानुपातिनि सतिहेतावदृष्टपरिकल्पनावकाशोऽस्ति । तदिदमुक्तम्–' यावन्तो यादृशा येच यदर्थप्रतिपादने । वर्णाःप्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥ ' (श्लो.वा.६९) तथा ' नान्यथाऽनुपपत्तिश्च भवत्यर्थमितिंप्रति । तदेवास्यानिमित्तं स्याजायते यदनन्तरम् ॥ साच वर्णद्वयज्ञानेऽतीतेऽन्त्यज्ञानतः पुरा । भवतीतीदृगेवास्या निमित्तमवकल्पते ॥ ' (श्लो.वा. ९५,९६) इति ॥

अत्रोच्यते–' अविशिष्टादजातस्य विशिष्टाद्भाव इष्यते । सत्यं सतु विशेषोऽत्र न कश्चन निरूप्यते ॥ ४ ॥ इदं तावदयं वर्णवादी प्रष्टव्यः–' गौः, अश्वः ' इति वा केवलोच्चारणे वा को विसर्जनीयस्य भेदः, यत्कृतोऽर्थधीभेदः प्रत्ययभावाभावौ च ? नन्वेष विशेषः–क्वचिदसहायः क्वचिद्वर्णविशेषसहायः इति । क्व पुनरियं सहायता यदा न विसर्जनीयसमये वर्णान्तरोपलब्धिरस्ति ? कार्ये खलु व्यापारतः सहायता नचासतस्तदानीं व्यावृत्तिरस्ति ; स्वकालेऽपि च व्यापारतस्तदानीमेव प्रध्वंसान्नेदानीन्तनकार्योपजननिमित्तम् । एषतर्हि विशेषः वृत्ता वर्णविशेषोपलब्धिः क्वचित्, अन्यत्र न तथा । नैतत् सारम् ; नहि वृत्ता वर्णविशेषोपलब्धिर्विसर्जनीयं भेत्तुमर्हति, असत्त्वात् ; नह्यजातानन्वयप्रध्वस्तयोरतिशयः कश्चित् ॥

ननु च यथा दर्शपूर्णमासादयः क्रमवन्तोऽपि सम्भूयकारिणः अभ्यासाश्च स्वाध्यायग्रहणादिषु, गमनक्षणाश्चाभिमतदेशप्राप्तौ, यथा च तत्र कैवल्य यौगपद्ये क्रमविपर्यये कर्तृभेदे च न फलोत्पादः केवलादिभ्यश्च विशेषात फलोत्पादः, तथा वर्णेष्वपि किं नेष्यते । विषम उपन्यासः—' एकार्थकारिणो येऽपि दृश्यन्ते क्रमवर्तिनः । इष्टं विपश्चितां तत्र कार्यं स्थाय्युपकारकम् ॥ ५ ॥ दर्शादिषु तावत्क्रमवत्स्वपूर्वाणि कर्मजन्यानि स्थायीनि शक्त्यभिमतानि व्यापाराभिमतानि वोपकर्तॄणि । तत्र शक्तितो व्यापारतो वा पूर्वं परं सहायतामुपयाद्भिनत्ति, नतु केवलात्फलोपजनः । क्रमविशेषाम्नानसामर्थ्याच्च तत्रादृष्टपरिकल्पना । पूर्वकर्मोपजनितकार्यविशेषापेक्षमुत्तरस्याभिमतकार्योपजननिमित्तत्वमिति क्रमभेदे न फलोत्पादः अभ्यासाश्च पूर्वपूर्वाहितसंस्कार सहकार्युत्तरोत्तरावृत्तिजनितसंस्कारक्रमेण स्वाध्यायग्रहणलक्षणफलप्रसवहेतवः । गमनक्षणाश्चाणुपरिमाणदेशातिक्रममात्रेण समीहितदेशाधिगतये प्रभवन्ति । तथाहि—प्राचीनाभ्यासदेशप्राप्तिस्तथाविधोत्तरदेशविशेषाश्रयनिमित्तं तत्रेति कल्प्यतेऽनवाप्तयौगपद्येभ्योऽपि कार्यद्वारा एकार्थक्रिया ; नचैष कल्पो वर्णेषु सम्भवति ॥

कथं न सम्भवति ? यदा तेऽपि स्वोपलब्धिनिबन्धनसंस्कारद्वारमन्त्यवर्णप्रत्ययेन सहैकार्थक्रियामुपगन्तुं क्षमन्ते । यथोक्तम्–(शा.भा) ' पूर्ववर्ण जनितसंस्कारसहितोन्त्यो वर्णो वाचकः इत्यदोषः ' । नैतत्सारम्–संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः । विज्ञानहेतवस्तत्र ततोऽर्थेधीर्नकल्पते ॥ ६ ॥ संस्काराः खलु यद्वस्तूपलब्ध्यसम्भाविताम्मानस्तत्रैव नियत निमित्तलब्धप्रतिबोधा धियमाविर्भावयन्ति, नार्थान्तरे ; नहि जातु गवावग्रहप्रत्ययप्रभावितः संस्कारोऽश्वस्मरणमुपकल्पयति ॥

यदि मन्वीत प्रत्येकमभिमतकार्यदर्शनाभावाद्वर्णेभ्यो यौगपद्याभावाच्चावश्यकल्पनीयं तस्य किंचन बीजम् । तत्र शब्दः, अनेककल्पनादोषात् तस्य खल्वात्मा अर्थाधिगमनिमित्तभावश्चेति द्वयमुपकल्पयितव्यम् । संस्कारंतु वासनाद्वितीय नामानं पटुतरसंवेदनसमनुभूतवस्तुगोचरं सर्व एव संगिरन्ते स्मरणफलप्रसवोन्नेयमात्मानं प्रवादिनः । अर्थाधिगमनिमित्ततायां तु तस्य विवादः । तत्र च कार्यान्तर इव तद्भावे भावो निर्णयनिबन्धनम् । न खलु पुरस्तनवर्णविज्ञानोपहित संस्कारविरहे केवलात् विसर्जनीयादर्थधियमुदीयमानामुदीक्षामहे, तद्भावे च पश्यामः । यद्यपि चान्यत्रास्य कार्यान्तरोदयप्रत्ययता न प्रतीता, तथाऽपि न कार्यान्तरोपजनगोचरसामर्थ्यं प्रतिरुध्यते केनचित् । तस्मात् कार्यान्तरपरिकल्पित

## गूढार्थसङ्ग्रहः

सत्ताकस्य संस्कारस्यैव शक्त्यन्तरपरिकल्पनामात्रमस्तु, इह विषये कार्यान्तरदर्शनात् ; नतु स्फोटपरिकल्पना युक्ता, बलस सत्ताकस्य तस्यैव शक्तिमात्रकल्पनया कार्योपपत्तावर्थापत्तिपरिक्षयात् ॥

तदिदमसमञ्जसमिव लक्ष्यते । तथाहि—शक्तेः शक्त्यन्तरायोगः तत्र सत्यप्यदर्शनम् । विलक्षणस्योपजनो नाविशेषाच्च कारणात् ॥ ७ ॥ ज्ञानान्तरोपजनगोचरं सामर्थ्यमेवात्मनि प्राचीनविज्ञानाहितनिवेशं संस्कारमाचक्षते धीराः । नच सामर्थ्यानां सामर्थ्यान्तरयोगः अनवस्थाऽऽपातात् । अपि च क्रमव्यतिक्रमभावितपूर्वपूर्ववर्णसंपादितसंस्कारसद्भावेऽपि नार्थाधिगमः समीक्ष्यते । तन्नासौ तद्धेतुर्भवितुमर्हति । न खलु क्रमभेदेऽपि प्रत्येकमक्षरोपलम्भप्रभाविताः संस्काराः परस्परमतिशेरते । अपिचान्यत्रासमीक्षितैवंविधस्वभावोऽभिमतएवसंस्कारो न विशेषविकलाद्धेतोरुदेतुमुत्सहे । नच वर्णात्मनः प्रत्येकं विशेषवन्तः ; नाप्यपसमवधानमेतान्विशिनष्टि, नियतानुपूर्व्यतया असम्भवात् समवधानस्य निरुद्धागामिनोः खलु तदानीमत्यन्तासतोरनतिशयतया कार्योपजनोपयोगायोगादित्युक्तम् ॥

योऽपि मन्यते—न खलु साक्षाद्भावनानां व्यापारमभिधेयप्रत्ययविषयमुपेमः अपितु ताभ्यः स्थायित्वेन प्रतिलब्ध यौगपद्याभ्यः प्रत्यवमृष्टसकलवर्णरूपात्मा एकः प्रत्यय उदेति ; तत्र स एव वा तद्विपरीतवर्तिनो वा वर्णास्तत्र समधिगत सहभावा जनयन्त्यर्थावबोधमिति वृथा शब्दपरिकल्पनापरिश्रमः । स्मृतौ च सहभावो न प्रत्यक्ष इतिचेत्, किमत्र प्रत्यक्षवर्तिना यौगपद्येन ? सर्वथाज्ञाने नैषां तदर्थ्यते ; तच्च स्मरणज्ञानेऽस्त्येव । सचैष प्रत्ययः स्मरणप्रत्यक्षरूपाभ्यामुभयात्मा सदसद्वर्णरूपावभास्यन्त्यवर्णगोचर इष्यते कैश्चित् । अन्यैस्तु सकलवर्णोपलब्धिनिबन्धन निखिलभावनाबीजजन्मा युगपदाखिलवर्णरूपपरामर्शी चरमवर्णप्रत्यक्षोपलब्धिसमनन्तरः स्मरणैकरूपः सङ्गीर्यते । क्रमसमधिगतात्मसु न युगपदनुस्मरणमित्यपि मिथ्या । तथाहि सकलवादिनामभिमतं पौर्वापर्यालोचितेष्वपि भावेषु समुच्चयावग्राहिज्ञानम् ; तदनभ्युपगमे हि तत्प्रकारानुपातिषु शतं विंशतिरिति समुच्चयदर्शनं विरुध्यते । तस्माच्छ्रोत्रमनो जन्मभिः क्रमवतीतिरपि बुद्धिभिरवधृतेष्वपि वर्णात्मसु पुरस्तात्, परस्तादद्वयमक्रममखिलवर्णरूपावग्राहिस्मरणमवकल्पते । तत्र च प्रतिसंक्रान्तप्रतिबिम्बाइव वर्णाः समीहितकार्यप्रत्यनन्तरतां नातिक्रामन्तीति लौकिकवचनमपि समञ्जसम्—शब्दादर्थं प्रतिपद्यामहे इति शास्त्रकारवचनं च ‘ भावमाख्यातेनाचष्टे ’ इति तदिदमुक्तम्—‘ यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परम् । समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥ ’ (श्लो.वा.स्फोट.१०९) इति ॥

तस्यापि पूर्वोपलब्धिभेदेऽपि भवेदर्थस्य दर्शनम् । एकोपलब्धौ नैतेषां भेदःकश्चन लक्ष्यते ॥ ८ ॥ पूर्वोपलब्धयोऽपिहि क्रमविशेषवत्यः परिगृहीताभिमतविपरीतानुपूर्व्या अक्रमाश्चैकवक्तृप्रयुक्त वर्णविषया विपरीताश्च न पश्चाद्भाविन्यां समस्तवर्णावभाविन्यामुपलब्धावनुविपरिवर्तमानान् वर्णात्मनो भिन्दन्ति ; असम्प्राप्तनिरन्वयनिरुद्धयोर्विशेषाभावादित्युक्तम् । एकोपलब्धौतु यौगपद्यान्नानुपूर्वीको विशेषः नचेदमिह समीचीनम्—उपलभ्यगोचरमिदं यौगपद्यम् नोपलभ्यविषयम् ; उपलभ्याहि वर्णाः क्रमविशेषभाजएवैकया प्रख्यया प्रख्यायन्त इति । तथाहि स्वतो वर्णाः नित्यतया विभुतया च न देशनिबन्धनं नापि कालनिबन्धनं परापरभावमनुपतन्तीति प्रख्याननिबन्धन एष समुपाश्रीयते । तच्चेदमद्वयमक्रमम्, यद्विपरिवर्तिनस्तेऽर्थप्रत्ययहेतवः । नन्वेदं पूर्वोपलब्धिसम्बन्धिनीं परापरतां गोचरयति वर्णावलम्बितया तदुपलब्धीनामविषयीकरणेन ; नचासमीहितावध्यवधिमद्भावं पौर्वापर्यं प्रत्येतुमर्हति ; नचैकस्मिन्नानावर्णावयवात्मनि पदे भिन्नमवध्यवधिमद्भावमपेक्षितुं क्षमते ; प्रतिवर्णोपलम्भनप्रभावितानि च भावनाबीजानि कामं संहतिसमासदनादेवमनेवावलम्बिस्मरणं जनयेयुः, तावता चरितार्थेभ्यो नापरो वर्णात्मसु विशेषो लभ्यते । तथा च सति यथाकथंचित् पुरस्तादधिगत-

## गूढार्थसंग्रहः

संवेदनेभ्यः सकलसंस्कारजन्मनि चरमसमधिगमेऽतिशयविरहादर्थपरिच्छेदः स्यात् ; नचैवं दृश्यते । ततस्तदतिरिच्यमान निमित्तावाप्तजन्मायमनुमीयते इति ॥

अनेनैतदप्यपाकृतं भवति–' इत्थं क्रमगृहीतानां युगपद्याथवा परा। स्थितिः सा कारणंतु स्यान्नित्यमर्थधियंप्रति ॥ ' (श्लो.वा.१०८) इति। भेदाभावाचिरानन्तरास्तमितानुपजातानामविशेषात् ; असति तदन्वये काचित्सदा प्रतीतिप्रसङ्ग इति। नच समुच्चयज्ञानोपारोहि वर्णनिबन्धनार्थबोधाभिप्रायम्–शब्दादर्थं प्रतिपद्यामहे इति, नापि शब्दजात्यभिप्रायम्, तथाहि नेक्षिता जातिशब्दानां समुदायानुपातिता । जातिमाचक्षते तेहि व्यक्तीर्वा जातिसङ्गताः ॥ ९ ॥ न तावदिद शब्दजात्यभिप्रायम् ; न शब्दजातितोऽर्थप्रतीतिः गवाश्वादिपदेषु तदविशेषादभिधेयाविशेषप्रसङ्गात् । नचानुपाश्रितव्यावृत्तयो व्यक्तयो जात्यात्मना निर्दिश्यन्त इति साम्प्रतम्, वर्णव्यक्तिसामानाधिकरण्यदर्शनात गोशब्दादर्थं प्रतिपद्यामहे–इति । नापि शब्दव्यक्त्यभिप्रायम्, तद्भेदात् गोशब्दात् इत्येकवचनानुपपत्तेः ; नहि व्यक्तिविशेषपरास्तदभिधायि समानाधिकरणवृत्तयो जातिशब्दाः जातिसंख्यामनुरुध्यन्ते ; न जातु भवति देवदत्तयज्ञदत्तौ ब्राह्मणः इति, धवखदिरौ वृक्षः इति वा । नापि समुदायाभिप्रायकम्, जातिशब्दानामेकैकव्यक्तिसमवायेन जातेः समुदायनिवेशशून्यतया तदनुपातिसामर्थ्याभावेन तेहि जातिं तद्वतीर्वा व्यक्तीर्निमित्तरूपोपादानेनाचक्षते, न समूहम् । नहि भवति तथा–धवादीनां वनं धवादिवनम् इति वा, तथा धवादीनां वृक्षः धवादिवृक्षः इति वा ॥

ननु दृष्टः समुदायानुपाती जातिशब्दः सहकारावनम् इतिसामानाधिकरण्यदर्शनात् । न ; समूहिनीर्व्यक्तीराचक्षाणस्य समूहसमूहिनोरभेदविवक्षायां सामानाधिकरण्यम् ; तथा च बहुवचनम् ; अन्यथा तदनुपातिन एकवचनं स्यात् वनशब्दवत् । नचेह तथा समुदायशब्दाभावात्, गौः इति गकारकादीनां विभक्तैरात्मभिरुपादानात बहुवचनाभावाच्च । अत एव च न समाहारनिर्देशः ; नहि भवति धवखदिरं वृक्षमानय इति, अपितु धवखदिरं वृक्षौ इति समूह समूहिनोरभेदोपचारात् । नाप्यन्त्यवर्णाभिप्रायम्, पूर्ववर्णपरामर्शात् । तस्मान्नैकशब्दात्मानमन्तरेण लौकिकवचनोपपत्तिः ॥

स्यान्मतम्—मोपपादि, लौकिकवचनानामुभयथाऽपि दर्शनादुपपन्नार्थानामनुपपन्नार्थानां च ; नहि वचनानुपपत्तिमात्रेण प्रमाणरहितोऽर्थः शक्योऽवगन्तुमिति । तदसत् अनुपपन्नार्थत्वाप्रतीतेः ; भवतिहि जरद्गवादिवाक्येष्वनुपपन्नाऽर्थप्रतीतिः नत्विह तथा ; नहि सार्वलौकिकमविगानेन प्रयोगपथमवतरत्यनुपपत्तिरुपपत्तिमती विप्रतिपद्यमाना अपिहि शब्दैनैनं प्रयोगं नानुमन्यन्ते । नचाप्रमाणकत्वम् ; नूनमुलभन्ते प्रमाणेन शब्दात्मानमेकम् ; यतएवमपहास्तितविप्रतिपत्तयः प्रयुञ्जते । तस्मान्नपश्चात्तनज्ञानावशेषिभ्यो वर्णेभ्योऽर्थप्रत्ययः ' इत्यादिना शबरभाष्य कुमारिल श्लोकवार्तिकादिग्रन्थस्सर्वोऽपि दूषितः । एवं च असत्यात्सत्यसिद्धिस्सवैरप्येषितव्येति भावः ॥

वाक्यपदीये ' प्रतिबिम्बं यथाऽन्यत्र ' इत्यादिना प्रतिबिम्बेन बिम्बप्रतिपत्तिवत् नादेन स्फोटप्रतिपत्तिः इत्युक्तम् । अत्र स्वदेशस्थबिम्बग्रहणमेव प्रतिबिम्बग्रहणमिति (श्लो.वा) भट्टपादैस्साधनेन दृष्टान्ते असत्यात्सत्यप्रतिपत्तिरेव नास्ति । ' सत्यासत्यौतु यौ भावौ ' इत्यादिना (१८७.पु) जातेरेव सत्यत्वं व्यक्तीनामसत्यत्वं, जातिस्थानापन्नः आत्मा इति आत्मान्यस्यासत्यत्वम्, इति वाक्यपदीयोक्तप्रक्रिया ' महासामान्यमन्यैस्तु ' इत्यादिना भट्टपादैरेव अनूद्य दूषितप्राया । (ब्र.सि.तर्क काण्डे) सन्मात्रग्राहिप्रत्यक्षसाधनं न घटत इति श्रीभाष्ये निरूपितम् । अतः स्फोटरूपात्मनः सत्यस्य असत्यात्सत्यप्रतिप-

## श्रीभाष्यम्

**नादविशेषेणार्थभेद बुद्धिहेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः । नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैस्सह सम्बन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्ति हेतुत्वात् । शब्दस्यैकरूपत्वमपि न साधीयः**

## श्रुतप्रकाशिका

रूपश्शब्दः । तदभिव्यञ्जकनादविशेषा बहवः । * कत्वखत्वादिभेदो व्यञ्जकगतः * शब्दे आरोपितोऽर्थविशेषप्रतिपत्ति हेतुः तत्रासत्यात्सत्यप्रतिपत्तिरित्यपि न युक्तमित्यर्थः । कुतइत्यत्राह— **नानानादेति** । कत्वखत्वादिविशेषान्वित तत्तन्नादकृतो * ऽभिव्यक्तिविशेषस्सत्यः । तद्विशिष्टस्सत्यशब्दोऽर्थप्रतिपत्तिहेतुरित्यर्थः । यद्यपि कत्वखत्वादिवैशिष्ट्य शब्दस्यारोपितम्, तथाऽपि तज्ज्ञानं सत्यमेवार्थप्रतिपत्तिहेतुः । ज्ञानस्य च सत्येनैवालम्बनेन स्वाप्नज्ञानवद्व्याप्तिरनुसन्धेया । कत्वाद्यालम्बनाभिव्यक्तिविशिष्टरूपेण स्फोटस्यार्थप्रतिपत्तिहेतुत्वसम्भवात् कत्वादिवैशिष्ट्यस्यासत्यस्यार्थस्य नार्थप्रतिपत्ता वुपयोगः ॥ एवं शब्दस्यैकरूपत्वमभ्युपगम्य परिहृतम् । अथ तदनभ्युपगमेन परिहरति । **शब्दस्यैकरूपत्वमपीति** ।

## गूढार्थसंग्रहः

त्तिरित्यपि साधनं न सम्भवतीत्यभिप्रेत्याह—**नानानादाभिव्यक्तस्येत्यादिना** । **एकस्यैव शब्दस्य** इति अभ्युपेत्योक्तम् । **सम्बन्धग्रहणवशादिति** । शब्दार्थयोस्सम्बन्धाग्रहणे अर्थभेदबुद्धेः कस्याप्यसम्मततया स्फोटवादिभिरपि शब्दार्थसम्बन्धग्रहणमन्तरा शाब्दबोधो न जायते इत्येवाङ्गीकरणीयम् । इत्थंचार्थस्यासत्यत्वे तदर्थबोधकशब्दग्रहणः स्फोटस्यापि सत्यस्याङ्गीकारो विफलः । माध्यमिकोक्तयुक्तिभिः तस्यापि निराससम्भवादिति भावः । एतावता स्फोटाङ्गीकारेऽप्यसत्यात्सत्यसिद्धिर्नसम्भवतीत्युपपादितम् ॥

वस्तुतस्तु स्फोटाङ्गीकार एव न युक्तः । पाणिनिसूत्रेषु महाभाष्येऽपि च स्फोटस्य कुत्राप्यनुक्तेः । अयमर्थः शबर स्वामिना उपवर्षवृत्तिवाक्यमुदाहृत्य भाष्ये सिद्धान्तित इत्यभिप्रेत्याह— **शब्दस्यैकरूपत्वमपीत्यादिना** । शाबरभाष्ये 'अथ गौः इत्यत्र कः शब्दः ? गकारौकारविसर्जनीया' इति भगवानुपवर्षः श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः । तेच श्रोत्रग्रहणाः यद्येवमर्थप्रत्ययो नोपपद्यते । कथमेकैकाक्षरविज्ञाने अर्थो नोपलभ्यते, नचाक्षरव्यतिरिक्तोऽन्यः कश्चिदस्ति समुदायो नाम, यतोऽर्थप्रतिपत्तिस्स्यात् । यदा गकारः न तदा औकारविसर्जनीयौ । यदा औकार विसर्जनीयौ न तदा गकारः । अतः गकारादिव्यतिरिक्तः अन्यो गोशब्दोऽस्ति यतोऽर्थप्रतिपत्तिस्स्यात् । अन्तर्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेन्न, स्मृतेरपि क्षणिकत्वादक्षरैस्तुल्यता पूर्ववर्णजनितसंस्कारसहितो अन्त्यवर्णः प्रत्यायकइत्यदोषः ।' इति उक्तम् ॥

महाभाष्ये 'अथ गौरित्यत्र कश्शब्दः' इत्युपक्रम्य 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्द, इति सिद्धान्तितम् । अत्र 'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । मनःकायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ सोदीर्णो मूर्ध्न्यभिहितो वक्त्रमापद्य मारुतः । वर्णान् जनयते' इति पाणिनीयशिक्षोक्तदिशा उच्चारितेनेत्यत्र वर्णानां विवक्षा निर्मत्सराणां स्फुटा । 'परस्सन्निकर्षः संहिता' इति सूत्रमहाभाष्ये उच्चारितप्रध्वंसित्वाच्च वर्णानाम्, इति उच्चरितप्रध्वंसिनः खलु वर्णाः इति च वर्णानामेवोच्चरितत्वं स्पष्टमुक्तम् । तत्रैव वर्णानामुच्चरितप्रध्वंसित्वात् पौर्वापर्यं न सम्भवतीति सन्निकर्षासम्भवमाशङ्क्य एवं तर्हि 'बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्त्वन्नीतिः ।

श्रीभाष्यम्

**गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् ।**

श्रुतप्रकाशिका

कुतइत्यत्राह—गकारादेरिति । एवकारेणैकरूपश्शब्दो व्यावर्त्यते नतु दुन्दुभिशब्दादिः । * स्वनभिव्यक्तविशेषाकारो गकारादिरेव 'अथ गौरित्यत्र कश्शब्दः गकारौकारविसर्जनीया इतिहि भगवानुप(क)व(र्)र्ष' इति गकारादेरेव बोधकत्वं व्याचख्युः । ननु तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता । इति शास्त्रवशादेकरूपं शब्दमात्रमभ्युपगन्तव्यं तत्कथं तत्प्रतिक्षेपः । नैवम् । तन्मात्रावस्थसूक्ष्मभूतकारण(ग(गु)णानामिन्द्रियग्राह्यत्वायोगात् पञ्चीकृतभूत(ग)गु)णानामेव ह्यैन्द्रियिकत्वं । किंच दध्यवस्थायां दुग्धावस्थेव तन्मात्रावस्था । आकाशगुणभूतं शब्द(मा)तन्मा)त्र स्थूलाकाशसृष्टेः पश्चान्नविद्यते । यथा महाभूततृतीये तेजसि शुक्लकृष्णादिवर्णव्यतिरेकेण रूप(मा)तन्मा)त्रं किंचिदस्ति, शुक्लत्वकृष्णत्वादयश्च अभिव्यञ्जकगता एकरूपे आरोपिता इति च वक्तुमयुक्तम् । एवमिदानीमेकरूपशब्दस्य विद्यमानत्वं तत्राभिव्यञ्जकगतानां कत्वखत्वादीनामारोपितत्वं च सर्गप्रतिपादकशास्त्रानुसारिभिरभ्युपेतुमयुक्तम् ॥

गूढार्थसंग्रहः

शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम् ॥' बुद्धिविषयमेव शब्दानां पौर्वापर्यं य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति अस्मिन्नर्थे अयमर्थः प्रयोक्तव्यः, अस्मिंस्तावच्छब्दे अयं तावद्वर्णः ततोऽयं ततोऽयमिति । इति समाहितम् । पूर्वापरीभाववर्णसमुदाय एव शब्दः, पौर्वापर्यं च बुद्धिकृतमेव । अयमेवार्थः 'गकारौकारविसर्जनीया' इति भगवता उपवर्षेण प्रदर्शितः । अत्र प्रदीपः—'तत्त्वन्नीतिरिति । तननंतत् यस्यास्सा तत्त्वती सकलविषयव्यापिनी नीतिर्बुद्धिर्यस्यसः तत्त्वन्नीतिरिति ।' 'अन्येतु तन्वन्नीतिरिति पठन्ति । तन्वती विषयान् व्याप्नोति बुद्धिरिति स एवार्थ' इति । उद्योतश्च । 'चेष्टाः कण्ठताल्वाद्यभिघातव्यापारजन्यान् शब्दान् कृत्वा' इति । 'आत्मा बुद्ध्या समेत्यार्थान्' इति शिक्षायाम् 'अत्र बुद्धौ कृत्वा बुद्धौ कुर्यात्' इत्यत्र च बुद्धिशब्दा धर्मभूतज्ञानपराः । मञ्जूषायाम् 'आत्मा अन्तःकरणं, बुद्ध्या स्ववृत्त्या' इति । अत्र 'बुद्धावन्तःकरणे शब्दान् प्रतिबिम्बितान् कृत्वा' इति च नागेशविवरणमभिनिवेशमूलकम् । उभयत्र बुद्धिशब्दयोरेकार्थत्वं स्वरसतःप्रतीयते । शिक्षायाम् आत्मन्शब्दस्य कर्ता धीरः मनुष्यः, प्रेक्षापूर्वकारी, इति पदैः अर्थः भाष्ये प्रदर्शितः । शिक्षायामात्मन्शब्दस्य अन्तःकरणार्थकत्वं मनश्शब्दप्रयोगेण न घटते, मनस एवान्तःकरणत्वात् । अद्वैताभिनिवेशमूलकपारिभाषिकार्थकल्पनस्य सूत्रभाष्याप्रतीतस्याश्रद्धेयत्वात् । 'येनोच्चरितेन' इत्यादि महाभाष्यवाक्येषु वर्णानां बुद्धिनिमित्तकपौर्वापर्यवर्णनेन तावतां वर्णानामन्तिमवर्णज्ञानदशायां बुद्धिः वर्णसमुदायात्मकशब्दस्यैव अर्थप्रत्यायकत्वं च सम्भवतीति सिद्ध्या पदवाक्यस्फोटयोः कैयटनाङ्गीकारएव विफलः ॥

ननु 'तपरस्तत्कालस्य' (पा.सू.१.१.७०) इति सूत्रे 'द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसङ्ख्यानं कालभेदात्' इत्याक्षेपस्य 'सिद्धंत्ववस्थिता वर्णाः वक्तुश्चिराचिरवचनाद्वृत्तयो विशिष्यन्ते' इति समाधानवार्तिकविवरणानन्तरम् 'एवं तर्हि स्फोटश्शब्दः । ध्वनिश्शब्दगुणः । कथम्? भेर्याघातवत् तद्यथा भेर्याघातो भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति कश्चित्रिंशत् कश्चिच्चत्वारिंशत् स्फोटश्च तावानेव भवति । ध्वनिकृता वृद्धिः 'ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते । अल्पोमहांश्च केषांचित् उभयं तत्स्वभावतः ॥' इत्यत्र महाभाष्ये स्फोटः स्पष्टमुक्त इति वर्णानां शब्दत्वं न महाभाष्यकृत्सम्मतमित्याशङ्कायामाह—**गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वादिति** ॥

## श्रुतप्रकाशिका

अत्रायमभिसन्धिः। वर्णातिरिक्तएकरूपश्शब्दः किं स्फुटप्रतिपन्नत्वादभ्युपगम्यते उत कल्पनावशात्। न प्रथमः गकारादिव्यतिरिक्तस्य कस्यचिदनुपलम्भात् न द्वितीयः कल्पकाभावादिति। ननु वर्णानां वाचकत्वानुपपत्तेरेकं पदमित्यादि प्रत्ययस्य वर्णेष्वनुपपत्तेर्भिन्नेषु वर्णेषु शब्दश्शब्द इत्यनुवृत्तिबुद्धिवशाच्च वर्णातिरिक्तपदस्फोटसिद्धिः तत एव न्यायात् पद सङ्घातातिरिक्तवाक्यस्फोटसिद्धिश्चेत्यत्राह---**गकारादेरिति**। गकारादिवर्णानामिव समुदितानां वाचकत्वम्। एकं पदमेकं वाक्यमिति प्रत्ययश्च वर्णसमुदायविषयः। शब्दश्शब्द इत्यनुवृत्तिबुद्धिश्च श्रोत्रग्राह्यत्वोपाधिनिबन्धना। अतः कल्पकानामन्यथासिद्धत्वान्नैकरूपशब्दसिद्धिरित्यर्थः॥

**ननु** न कल्पकाऽन्यथासिद्धिः, तथाहि—न तावदेकैकस्य वर्णस्य वाचकत्वं वर्णान्तरवैयर्थ्यात् गो गवय गजाद्यप्रतीतेश्च। नापि वर्णसमुदायो वाचकः क्रमोच्चारितश्रुतानां वर्णानां यौगपद्याभावेन वृक्षादीनामिव समुदायभावानुपपत्तेः। नच पूर्वपूर्ववर्णश्रवणजनितसंस्कारसचिवोऽन्त्यवर्णो वाचक इति युक्तम्, वर्णानुभवजन्यसंस्काराणामनुभूतवर्णविषयस्मरण हेतुतया * ऽननुभूतार्थान्तरप्रतीतिहेतुत्वाभावेनाकिंचित्करत्वात् तत्साचिव्यविरहितान्त्यवर्णस्य चार्थप्रत्यायकत्वायोगात्। तथा वर्णानां भिन्नत्वादेकं पदमिति प्रत्ययश्च तदतिरिक्तार्थविषयो भवितुमर्हति। नच वनसेनादिप्रत्ययवत् समुदायविषयत्वमेक(त्व)प्रत्ययस्य युक्तम्, एकप्रदेशसम्बन्धित्वादिवदेकीकारनिमित्तोपाध्यभावात्॥

**एक** मृत्यारूढत्वमुपाधिरितिचेन्न द्वे पदे त्रीणि पदानि बहूनि वाक्यानीत्यनेकेषामेकप्रत्ययारूढत्वदर्शनात् न चैकार्थावच्छिन्नवर्णसमुदाय एकं पदम्। वर्णानां वाचकत्वानुपपत्तेरेवैकार्थप्रतिपादनाभावात्। किंच बहुवर्णेष्वयंशब्दोऽयं शब्द इत्यनुवृत्तश्शब्दशब्दो वर्णातिरिक्तार्थविषयो युक्तः घटकरकापवरकादिभेदेऽप्येकार्थविषयस्याकाशशब्दस्यहि घटकरकाद्यतिरिक्तार्थविषयत्वं दृष्टम्। नच श्रोत्रग्राह्यत्वोपाधिना शब्दशब्दानुवृत्तिरिति युक्तम्, श्रोत्रस्य श्रोत्रग्राह्यत्वायोगेन श्रोत्रग्राह्यताया अपि श्रोत्रेण गृहीतुमशक्यत्वात्। मानान्तरेण श्रोत्रग्राह्यताप्रतीतावविलम्बितशब्दसाक्षात्कारानुपपत्तिः। अतः कल्पकाऽन्यथासिद्ध्यभावाद्वर्णातिरिक्तश्शब्दस्फोट इति॥

अत्रोच्यते—न तावद्वर्णानां वाचकत्वानुपपत्त्या स्फोटसिद्धिः तेषां स्फोटाभिव्यञ्जकत्वेऽपि चोद्यपरिहारयोस्तुल्यत्वात् लाघवन्यायेन वर्णानामेव वाचकत्वाश्रयणस्य न्याय्यत्वात्। तथाहि नतावदेकैकवर्णः स्फोटाभिव्यञ्जकः द्वितीयवर्णवैयर्थ्यात् गकारमात्रेण गवयादिपदस्फोटाभिव्यक्तिप्रसङ्गाच्च, नापि वर्णसमुदायो व्यञ्जकः क्रमोच्चारितश्रुतानां वर्णानां यौगपद्याभावेन समुदायभावानुपपत्तेः। नच पूर्वपूर्ववर्णजनितसंस्कारसचिवोऽन्त्यवर्णो व्यञ्जकः वर्णानुभवजन्य संस्काराणामनुभूतवर्णस्मृतिमात्रहेतुतयाऽननुभूतस्फोटप्रतीतिहेतुत्वायोगेन तत्संस्कारानुपकृतस्यान्त्यवर्णस्य च तदभिव्यञ्जकत्वायोगात्॥

यद्युच्येत—पदं तावत्प्रतीयते अतस्तत्प्रतीत्यनुरूपं कारणं कल्प्यम्, क्रमभाविनामपि संस्काराणां युगपत्कार्यकरत्वं युक्तम्। क्रमदृष्टयोरपि घटयोस्तौ घटाविति स्मरणदर्शनात्। अतो युगपद्भाविपूर्ववर्णस्मरणसचिवोऽन्त्यवर्णो वा युगपत्स्मर्यमाणसर्ववर्णसमुदायो वा स्फोटाभिव्यञ्जक इति। एवं तर्हि स्फोटाभिव्यञ्जकतयाऽभ्युपेतायास्सामग्र्या अर्थाभिव्यञ्जकत्वमास्थीयतां चोद्यपरिहारयोस्तुल्यत्वात् अन्यथासिद्धस्यार्थान्तरकल्पकत्वायोगात् वर्णानामेव वाचकत्वसम्भवे तदतिरिक्तकल्पनाऽनुपपत्तेः लाघवन्यायस्य बलीयस्त्वाच्च॥

वर्णानां भिन्नत्वेऽपि युगपद्बुद्धिस्थैकविभक्त्यन्तानेकवर्णसमुदायविषयतया पदैकत्वबुद्धिरपि नार्थान्तरकल्पिका। * नचार्थैकत्वात्पदैकत्वं * पदैकत्वादर्थैकत्वमित्यन्योन्याश्रयः एकविभक्त्यन्तवर्णसमुदायस्य एकपदत्वानिश्चयात् 'सुप्तिङन्तं

## गूढार्थसङ्ग्रहः

अत्र वर्णातिरिक्तस्फोटो न विवक्षितः इति प्रदीपे स्पष्टम् । व्यक्तिस्फोटोऽत्र विवक्षितः, सच नित्यः, एतच्च येनोच्चारितेनेत्यत्र पस्पशायां विचारितमिति तत्रैव बोद्धव्यम्। शब्दगुण इति। शब्दस्य गुणउपकारकः व्यञ्जकत्वेनेत्यर्थः तद्यथा घटः पुनःपुनः दृश्यमानोऽपि न भेदमवलम्बते तथा विलम्बितायां वृत्तावाकार एव पुनःपुनः उपलभ्यत इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यत इति सर्ववृत्तिषु तत्कालत्वम् । ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्नाः भिन्नैर्ध्वनिभिर्व्यज्यन्तइति तेषां कालभेदः । भेर्याघात इति । भेरीमाहन्तीति भेर्याघातः, उपलब्धिसामान्ये दृष्टान्तः । यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते कश्चिच्चिरं कश्चिच्चिरतरं च । एवं वृत्तिषूपलब्धीनां कालभेदः, विषयस्यत्वभेद एव । स्फोटस्तावानेवेति दार्ष्टान्तिकोपन्यासः । ध्वनिः स्फोटश्चेति व्यञ्जको व्यङ्ग्यश्चेत्यर्थः । शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते । व्यङ्ग्यस्त्वभिन्नकाल एवेत्यर्थः उभयमिति व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन स्वभावतः स्वरूपेण सिद्धावित्यर्थः । केषांचिदिति । व्यक्तानामुभयं गृह्यते, अव्यक्तानांतु ध्वनिरेवेति । 'येनोच्चारितेने'त्येतत्प्रदीपे वर्णातिरिक्तः पदस्फोटः वाक्यस्फोटश्चोक्तः । नतु वर्णस्फोटः, 'परस्संनिकर्षस्संहिता' इति सूत्रभाष्ये प्रागुदाहृते वर्णानां बुद्धिकृतपौर्वापर्योपपादनेन वर्णसमुदायगतमेकत्वमेव 'येनोच्चारितेन' इत्यत्र एकवचनेन विवक्षितमिति न ततो वर्णातिरिक्तः स्फोटस्सिद्ध्यति ॥

अत्र भाष्ये वर्णनित्यत्वविचार उक्तः 'किंपुनर्नित्यः शब्दः, आहोस्वित्कार्यः ? सङ्ग्रहे एतत्प्राधान्येन परीक्षितम् 'नित्यो वा स्यात्कार्यो वा' इति तत्रोक्ता दोषाः प्रयोजनान्यप्युक्तानि । तत्रत्वेष निर्णयः 'यद्येवं नित्योऽथापि कार्यः उभयथाऽपि लक्षणं प्रवर्त्यम्' इति ॥ अत्र प्रदीपः। 'किंपुनरिति । विप्रतिपत्त्या संशयः। केचित् ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः । अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे सङ्गिरन्ते । अन्येतु ध्वनिरेव शब्दः । सच कार्यस्तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते । सङ्ग्रह इति ग्रन्थविशेषे' इति ॥

अत्र उद्योतः—'विप्रतिपत्त्येति । शब्दानां नित्यत्वे व्यर्थं व्याकरणशास्त्रमिति प्रश्नाशयः । केचित् मीमांसकाः, वर्णात्मकमिति पदवाक्ये च वर्णसमूहरूपे एवेति तदाशयः । अत्र मते 'एकं पटपदम्' इत्याद्यनुपपत्तेराह—अन्ये वैयाकरणाः । अपरे त एव मख्याः । पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात् । तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तद्भावः । अन्येत्विति । वैशेषिकादयः । ध्वनिरिति । सच वर्णावर्णात्मकत्वेन द्विविधः । एवं च कण्ठादिवत् शास्त्रमपि तस्य कारणमित्याशयः । सङ्ग्रहो व्याडिकृतो लक्षश्लोकसङ्ख्यो ग्रन्थ इति प्रसिद्धः । भाष्ये उभयथाऽपीति । एवं च निष्फलोऽयं विचार इति भावः । साधुत्वज्ञानाय उभयथाऽपि शास्त्रमावश्यकमिति तात्पर्यम्' इति

अत्र वर्णनित्यतावादिनः मीमांसका इति स्फुटम् । एवं च मीमांसकमतेऽपीदं 'स्फोटश्शब्दः' इति भाष्यं सङ्गच्छत एव । वर्णनित्यत्वानित्यत्ववादयोः एकत्र पक्षपातविरहस्य भाष्य एव प्रदर्शनेन अनित्यतावादे 'बुद्धौ कृत्वा सर्वाश्चेष्टाः' इत्युक्तदिशोपपत्तिः महाभाष्यकृत्सम्मतैव । अत्र 'बुद्धौ कृत्वा सर्वाश्चेष्टाः' इति प्राक् (५९८.पु) उदाहृत महाभाष्यार्थमभिप्रेत्य **गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्** इति भाष्ये उक्तम् । अत्र गौरित्यत्र गकारस्यैकवर्णस्य श्रोत्रग्राह्यत्वं सर्वानुभवसिद्धम् । तत्रचानुपपत्तिरपि नास्ति। अतएव कैयटेन वर्णस्फोटो वर्णातिरिक्तो नोक्तः । एवमौकारस्य विसर्जनीयस्यापि श्रोत्रग्राह्यत्वमनुभवसिद्धं न प्रत्याख्यातुमर्हति । इत्थं च श्रोत्रग्राह्यवर्णसमुदायः संप्रतिपन्नएवार्थबोधकः । स एव शब्दः अत्र वर्णानां क्रमिकत्वेन तावतां वर्णानामेकदा श्रोत्रेण ग्रहणं न सम्भवति । अथापि एकैक

## गूढार्थसंग्रहः

वर्णग्रहणदशायां कालस्य षडिन्द्रियवेद्यत्वेन तत्कालोऽपि गृह्यते। चरमवर्णप्रत्यक्षदशायां तु पूर्वापरक्षणवर्तितावद्वर्णस्मरणं सम्भवतीति इतरवर्णांशे स्मृतिरूपं चरमवर्णांशे प्रत्यक्षरूपं ज्ञानमेव वर्णसमुदायात्मकं पदज्ञानम्। एतद्ज्ञानविषयपदस्यैवार्थबोधकत्वम्। अयमर्थः 'बुद्धौ कृत्वा' इति प्राक्तन महाभाष्ये व्यक्तः। तत्र भाष्ये 'बुद्धौ कुर्यात्पौर्वापर्यम्' इत्यत्र बुद्धिः प्राक्प्रदर्शिता स्मृतिप्रत्यक्षरूपा विवक्षिता। बुद्धिविषयमित्यस्य बुद्धिस्थशब्दविषयमित्यर्थः उद्योते मञ्जूषायां चोक्तः। सच सिद्धान्तेऽपि सम्मतः। बुद्धिश्च न तावद्वर्णविषयश्रोत्रेन्द्रियजन्यप्रत्यक्षरूपा। किंतु बुद्धिविशेषरूपा 'अस्मिंस्तावच्छब्दे अयं वर्णः ततोऽयं ततोऽयम्' इत्यत्र वर्णशब्दप्रयोगेण वर्णपौर्वापर्यमेव विवक्षितमिति स्फुटम्। गौरिति शब्दघटकत्वं वर्णानां सर्वानुभवसिद्धमिति शब्दघटकवर्णा एवात्र विवक्षिताः। अयमितीदं शब्दप्रयोगोऽपि श्रोत्रग्राह्यस्य स्मृतिविषयत्वेनाप्युपपद्यते। 'इदमस्तु सन्निकृष्टम्' इत्युक्तेः। भाविनोऽपि बुद्ध्या विषयीकरणादिदंशब्दप्रयोगस्य लोके दर्शनाच्च॥

एतेन श्लोके 'पौर्वापर्यम्' इत्युपलक्षणम्। अयमितितु बुद्ध्युपारूढस्वमात्रश्रव्य सूक्ष्मोच्चारणव्यङ्ग्यशब्दपरामर्शः। अन्यथा इदमः प्रत्यक्षपरामर्शकत्वादेतदनुपपत्तिः, शब्दः प्रयोक्तव्यः परप्रत्यक्षरूपस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यङ्क्तव्यः अस्मिन्शब्दे इत्यस्य व्यञ्जनीये इति शेषः। यत्तु बुद्धिगतपौर्वापर्यस्य वर्णेष्वारोप एतद्भाष्यार्थ इति, तन्न तद्वदेव तद्बुद्धीनामप्युत्पन्नविनाशितया प्रत्यक्षपरामर्शकेदमादिपदघटिताऽभिलापाभिलप्यमानस्य पौर्वापर्यस्य तत्राप्यसम्भवात्' इति मञ्जूषायां नागेशोक्तिरप्यनुपादेया॥

अत्र भाष्ये स्वरसतः वर्णात्मकशब्दस्य प्रतीतावपि पदानामभिनिवेशेन स्वेच्छया अर्थवर्णनं विदुषां व्यक्तम्। 'किंच जातिरपि मास्तु रूपसामान्यादेव स्थूलकृशाल्पमहत् ह्रस्वदीर्घ गो घटादिषु गौरित्यादिवत् सर्वत्रैकाकारव्यवहारः अन्यथा संस्थानभेदात् अनुगतसंस्थानव्यङ्ग्यजातिरपि तत्र न स्यादित्याशयेन 'रूपसामान्यात् वा सिद्धम्,' इति तत्रैव भाष्ये उक्तम् रूपसादृश्यादिति तदर्थः' इति मञ्जूषायामेवोक्तम्। अत्र व्यञ्जकानन्त्ये व्यङ्ग्यानन्त्यमिति स्फुटमुक्तम्॥

एवं च स्फोटः वर्णाभिव्यङ्ग्यः न वर्णरूपः इत्यर्थोऽपि न सिद्ध्यति। अत्र गकारादीरीति भाष्ये 'गकारौकार विसर्जनीयाः' इति उपवर्षवाक्यं विवक्षितमिति स्फुटम्। उपवर्षस्यापि वर्णसमुदायस्य शब्दरूपत्वे या अनुपपत्तिः सा वर्णानां व्यञ्जकत्वेऽप्यपरिहार्या। स्फोटस्य ज्ञातस्यैव अर्थबोधकत्वादेः वाच्यत्वात्; तत्र च वर्णैः स्फोटज्ञानमुक्तरीत्या न सम्भवति। एतेन वर्णानां गृहीतसङ्केतानां व्यञ्जकत्वमगृहीतसङ्केतानां वा? आद्ये तैरेवोपपत्तौ किं तेन? नान्त्यः, सर्वस्यार्थबोधापत्तेः। तदुक्तं साङ्ख्यसूत्रे 'प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकश्शब्दः इति। यदि वर्णसमुदायेन तत्प्रतीतिः तदोक्तरीत्या तद्वैयर्थ्यम्। अथ न प्रतीयते तदा ज्ञानस्याप्यप्रत्यायकत्वात् व्यर्था तत्कल्पनेति तदर्थ इति साङ्ख्योक्तं तदनुसार्युपवर्षोक्तं च स्फोटखण्डनमपास्तम्।' इत्युक्तिरप्यनुपादेया। इदंशब्दप्रयोगस्योपपत्तेः पूर्वमेवोक्तेः। भाष्ये सर्वत्र वर्णानामेवोक्त्या वर्णाद्यतिरिक्तस्फोटस्य महाभाष्यकृत्सम्मतत्वकल्पनं अभिनिवेशमूलकमिति स्फुटं प्रतीतेश्च॥

एतेन स्फोटसिद्धौ मण्डनमिश्रोक्तदूषणमपि समाहितम्। गकारौकारविसर्जनीयानामज्ञाने अर्थप्रत्ययस्य कस्याप्यजननात्; तज्ज्ञानेचार्थप्रतीतिजननात्। गकारौकारविसर्जनीयसमुदाय एव गौरिति शब्दः। अवयवातिरिक्तावयव्यनङ्गीकारेण सन्निवेशेव विशेष विशिष्टावयवसमुदायगतमेव गोत्वादिकम्। प्रकृते च महाभाष्ये बुद्धौ पौर्वापर्यस्य स्फुटमुपपादनेन तत्र वर्णानामेव विषयताया उक्त्या उक्तबुद्धिविशेषविषयवर्णसमुदायस्यैव शब्दत्वमर्थप्रत्यायकत्वं च उपपद्यत एव। व्यञ्जकानन्त्ये व्यङ्ग्यानन्त्यप्रसङ्गस्यापरिहार्यतायाः 'रूपसामान्याद्वा सिद्धम्' इति महाभाष्ये विवक्षितत्वस्य मञ्जूषा-

## गूढार्थसंग्रहः

यामेवोक्त्या मण्डनमतेऽपि शब्दैक्योपपादनासम्भवात्। शब्दस्य श्रोत्रग्राह्यत्वेऽपि मानसत्वं न विरुध्यते। श्रोत्रेन्द्रियातिरिक्तबहिरिन्द्रियाग्राह्यत्वस्यैव तत्र विवक्षितत्वेन तस्य वर्णेषु सम्भवात्। अतश्च स्फोटकल्पना अप्रामाणिकी। तर्ककाण्डे अप्रामाणिकानिर्विशेषपरिकल्पनया प्रमाणसिद्धजगत्सत्यत्वापह्नववत् अप्रामाणिकस्फोटपरिकल्पनया वर्णासत्यत्ववादः वाक्यपदीये भर्तृहरिणा परिकल्पित एव मण्डनमिश्रेण महाभाष्यकृति आरोपितः। महाभाष्यवाक्येषु तादृशार्थस्य क्वाप्यप्रतीतेः

'उत त्वः पश्यन् न ददर्श वाचमुतत्वः शृण्वन् न शृणोत्येनाम्। उतोत्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥' (ऋग्वेद.मं.१०,सू.७१,मं.४) इति मन्त्रस्य अर्थः महाभाष्ये इत्थं वर्णितः—'उत त्वः' अपिखल्वेकः पश्यन्नपि न पश्यति वाचम्। अपि खल्वेकः शृण्वन्नपि न शृणोत्येनामिति अविद्वांसमाहार्धम्। 'उतोत्वस्मै तन्वं विसस्रे' तनुं विवृणुते। 'जायेव पत्य उशती सुवासाः'। तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग्वाग्विदे स्वात्मानं विवृणुते वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरणम्। 'उत त्वः' इति॥

अत्र वर्णादतिरिक्तस्फोटो नैव प्रतिपादितः। एवं प्रदीपोद्योतयोः सायणभाष्येऽपि। एवमर्थस्य सर्वसम्मतत्वे भरतमिश्रेण स्फोटसिद्धौ (आगमपरिच्छेदे) इदानीमार्षप्रत्यक्षपरेणागमेनाप्युपपादयति। तथाहि—'उत त्वः पश्यन्' इत्यादि (मन्त्र) वर्णानुसारेण वर्णातिरिक्तं पदतत्त्वमवसीयते। अयंहि तस्याञ्जसेनार्थः, त्वः कश्चित् वाचं स्वनभेदावसेयभूधरादिविवर्तात्मनाऽवस्थितां पश्यन्नपि विपर्यासवत्त्वाद्वाचं पश्यामीति नानुसन्धत्ते। अपित्वन्यदेव पश्यामीत्यभिमन्यत इति फलतो न पश्यति। यथा कश्चित् रज्जुं सर्पादिरूपविवर्तां पश्यन्नप्यन्यथाख्यातिविप्रलब्धबुद्धितया रज्जुं पश्यामीत्यननुसन्दधानोऽन्यदेव पश्यामीत्यभिमन्यमानः फलतो रज्जुं न पश्यतीत्युच्यते, तद्वत्। तथा अन्यो वाचमर्थं ब्रुवाणां पूर्वपूर्वनादप्रभावितावयक्तज्ञानजनितवासनासनाथैरुत्तरोत्तरनादैः क्रमेण स्फुटीभवन्तीमेकं पदमेकं वाक्यमेकं महावाक्यमित्यादिरूपेण शृण्वन्नपि व्यञ्जकारोपितनान्तरीयकभेदक्रमविच्छेदविप्रलब्धतया 'गकारौकारविसर्जनीया' इति भगवानुपवर्ष इति ब्रुवाणोऽपलपतीति फलतो न शृणोति। उपवर्षोहि भगवान् स्वरानुनासिक्यकालभेदवत् वृद्धतालव्यांशभेदवच्चाकल्पितभेदाश्रयत्वात् सकलस्य द्वादशलक्षणीव्यवहारस्य प्रकृतोपयोगितया व्यावहारिकमेव शब्दं दर्शितवान् न तात्त्विकं प्रकृतानुपयोगादिति तद्वचनविरोधो नाशङ्कनीयः। ऋषीणां सर्वेषामसम्भव भ्रमविप्रलम्भत्वात् परस्परविरोधस्तत्त्वतो नास्तीति विरोधाभासेष्वीदृशः कल्पनीयोऽभिप्रायः' इत्यादिना एतच्छ्रुत्यर्थवर्णनमभिनिवेशमूलकमेव। अत्र श्रवणाश्रवणादिकमर्थज्ञानतदभावनिबन्धनमिति उद्योते स्पष्टम्॥

एतेन 'शृण्वन्नपि न शृणोतीति श्रवणाश्रवणे च सविपर्यासनिर्विपर्यासवागभिप्राये उपपद्येते। अन्यस्मै तनुं विवृणुत इत्येतदपि वर्णविपर्यासातीतवाक्तत्त्वाभिप्रायमेव संभवति वर्णरूपायास्तन्वाः सर्वान्प्रति विवृतत्वात्। अविद्वांसमाहार्धमिति पूर्वार्धव्याचक्षाणानामर्थमात्रवेदनादश्रवणम्। संस्कारादिनिमित्तसमुदायार्थवेदनादश्रवणम्। संस्कारादिनिमित्तसमुदायार्थवेदनाददर्शनम्। तदुभयवेदनाच्च तनुविसारणा इत्यभिप्राये कथ्यमानेऽर्थस्य वाक्छब्दाभिधेयत्वाभावान्मुख्यार्थहानिः। अथाविद्वांसमाहार्धमिति समानाधिकरणे द्वितीयेऽर्धमिति चाविदुषोऽकथित कर्मत्वनिरासाय तत्रापि न ददर्श न शृणोतीत्येतस्मिन्नेवार्थे लौकिकमभिधानं संस्कारविशिष्टवेदनाच्च तनुविसारणमित्यभिप्रायेश्रुदृशोरनतिरिक्तार्थत्वात् पुनरुक्तप्रायता' इति स्फोटसिद्धौ आगमपरिच्छेदे महाभाष्यदूषणमपि निरस्तम्॥

'पश्यन्नददर्श, शृण्वन्नशृणोति' इति यथाश्रुतवाक्यार्थबाधः सर्वमतेऽपि तुल्यः 'वाचम्' इति सामान्यरूपेणैव निर्देशःकृतः। एवं च विवर्तात्मनाऽवस्थितदर्शनमत्र विवक्षितमिति कथं निश्चीयते? विवर्तस्य प्रमाणान्तरेण साधना-

### श्रीभाष्यम्

**अतोऽसत्याच्छास्त्रात्सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ।**

### श्रुतप्रकाशिका

पदम् ' इतिहि पदनिष्कर्षः । तस्यचोक्ताभिप्रायत्वे सत्यव्याप्तिर्न स्यात् । * एकव्युपत्तिसिद्धैकार्थप्रतीत्युपयुक्तवर्णसमुदायस्य वा पदत्वम् । बहुवर्णेष्वयंशब्दोऽयंशब्द इति प्रत्ययोऽपि श्रोत्रग्राह्यत्वोपाधिनिबन्धनत्वादन्यथासिद्ध इति नार्थान्तरासिद्धिः । नच श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहणापेक्षा । यथा चाक्षुषाणां धवलिम नीलिम पीतिम्नां चाक्षुषत्वज्ञाने न * चक्षुरपेक्षा । इदं चाक्षुषमिदं चाक्षुषमिति व्यवहारश्च चाक्षुषत्वज्ञाननिबन्धन एव । प्रमाणान्तरावगतश्चक्षुश्श्रोत्राद्यन्वयव्यतिरेकानुविधायिज्ञानगोचरत्वेन * चाक्षुषश्रावणत्वादिज्ञानम् । नहि सहसैव शब्दोऽयमिति जानन्ति । प्रथमं गकारादिरूपेणैव शब्देऽवसिते * व्युत्पन्नशब्दस्मरणपूर्वकमेव शब्द इत्यवगम्यते, अतः शब्देन स्मरणकृतविलम्बवत् श्रो-(त्रग्राह्यता)त्रा)नुमानविलम्बोऽप्यभ्यासपाटवकृताच्छैघ्र्यान्न विविच्यते । अतो वर्णसमुदाय एव पदं पदसमुदाय एव वाक्यमिति स्थितम् ॥ असत्यात्सत्यप्रतिपत्तिनिराकरणमुपसंहरति । **अतइति** । * सत्यप्रतिपत्तिहेतुषु सत्यतयाऽभिमतेषु यादृशं

### गूढार्थसंग्रहः

नन्तरं कथंचित्तस्यार्थस्यात्र विवक्षासम्भावितास्यात् । तस्यैवासिद्धौ इत्थमर्थकल्पना स्वोत्प्रेक्षामूलैवेति स्फुटम् । एवं 'न शृणोति वाचम्' इत्यत्रोपत्रर्यविवक्षाऽपि । 'पश्यार्थैश्चानालोचने' (८.१.२५) इतिसूत्रे पाणिनिनैव पश्यन्नित्यस्य मानसज्ञानार्थकत्वं प्रतिपादितमिति वाचो दर्शनासम्भवशङ्काऽपि निरवकाशा । फलतो दर्शनश्रवणयोर्निषेधः भरतमिश्रेणाप्युक्तः सामान्यवाचिनश्शब्दस्य विशेषे पर्यवसानं तेनापि वाच्यम् ; यथाश्रुतार्थे बाधपरिहारः तदुक्तरीत्यैव कर्तव्य इत्यत्र न किंचिन्नियामकम् । एवं च 'उत त्वःपश्यन्' इत्युत्तरमन्त्रसायणीयभाष्यानुसारेण अर्थवेदनविरहेणैवाश्रवणादेरुपपत्तिसम्भवे शशशृङ्गतुल्यस्फोटकल्पना न सम्भवति । एतत्तात्पर्येणैवोक्तं प्रभाकरेण बृहत्यां 'तस्माद्विडम्बनैषा विवर्ततेऽर्थभावेनेति' इति । अधिकं सुधीभिरूह्यमिति भगवत आशयः ॥

'स्फोटस्त्वं वर्णसंश्रयः इत्यत्र स्फुटीकरणशक्तौ तात्पर्यादिति' इति तत्त्वटीकायाम्, 'स्फोटस्त्वं वर्णजुष्टस्त्विति यदभिहितं भारते सापि शक्तिर्वर्णानां स्यात्तयाऽर्थः स्फुट इति घटते स्फोटशब्दोऽपि तस्याम्' इति तत्त्वमुक्ताकलापे बुद्धिसरे च (८९.श्लो) आचार्यपादोक्तमत्रानुसन्धेयमिति दिक् ॥

ब्रह्मसिद्ध्यादौ असत्यात्सत्यप्रतीत्युपपत्तिप्रकारस्य सर्वस्याप्यसम्भवस्य प्रतिपादनेन प्राक् (५७२.पु) उपात्तस्य 'सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते' इति भट्टपादवचनस्यार्थः अबाधित इत्यभिप्रेत्योपसंहरति **अतोऽसत्यादित्यादिना**

भट्टपादैः 'न दृष्टा शशशृङ्गादेः सम्यज्ज्ञानादिहेतुता' इत्युक्तम् । एतच्च दूषणं माध्यमिकमते सम्भवति न पर मते । तदुक्तं शङ्कराचार्यैः आरम्भणाधिकरणे-'प्राक्चात्मावगतेरव्याहतस्सर्वः सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम । तस्मादन्त्येन प्रमाणेन प्रतिपादितआत्मैकत्वे समस्तस्य प्राचीनस्य भेदव्यवहारस्य बाधितत्वात्, नानेकात्मक ब्रह्मकल्पनाऽवकाशोऽस्ति' इति । 'परमार्थावस्थायामीशित्रीशितव्यादि व्यवहाराभावः प्रदर्श्यते । व्यवहारावस्थायांतूक्तः श्रुतावपीश्वरादिव्यवहारः' इति च । 'सर्वव्यवहाराणामेव प्राक् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः तावत् प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्त्वबुद्धिर्नकस्यचिदुत्पद्यत'

## श्रीभाष्यम्

**ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम्। प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात्। उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य। नतदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः। यदोपायस्तदाऽस्त्येव शास्त्रम्। अस्तीति बुद्धेः। नैवम्। असति शास्त्रे अस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात्। ततः किम् इदंततः। मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्। यथा धूमबुद्ध्यागृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम्। पश्चात्तनबाधादर्शनं चासिद्धम्। शून्यमेव तत्त्वमिति वाक्येन**

## श्रुतप्रकाशिका

सत्यत्वं तादृशं सत्यत्वं शास्त्रस्याप्यस्तीत्यभिप्रायेण चोदयति। **नन्विति**। **गगनकुसुमवदिति**। युक्तिबाधोह्युक्तः नत्विदानीमेव लौकिकपुरुषैर्नास्तीति प्रतिपन्नत्वम्, अतस्तादृशमसत्यत्वं नेत्यर्थः। हेतुमाह—**सद्बुद्धिबोध्यत्वादिति**। सदिति बोध्यत्वमेव कार्यकरत्वानुगुणं न सत्यत्वमित्यर्थः। तर्हि सदद्वैतभङ्गस्स्यादित्यत्राह—**उत्पन्न इति**। तर्हि न बोधकत्वमित्यत्राह **नतदेति**। परिहरति। **नैवमिति**। नैवम्, उपायकालेऽपि सत्यत्वं नास्तीत्यर्थः। ज्ञानस्य मिथ्यात्वं मिथ्यार्थविषयत्वात्। ज्ञानस्य दोषमूलत्वाद्विषयमिथ्यात्वे निदर्शनमाह—**यथेति**। पूर्वं पश्चात्तनबाधादर्शनमभ्युपेत्य दूषणमुक्तम्। इदानीं तदेव नास्तीत्याह—**पश्चादिति**। तदुपपादयति। **शून्यमिति**॥

## गूढार्थसंग्रहः

इति च अतः शास्त्रस्य व्यावहारिकसत्यत्वाङ्गीकारेण शशशृङ्गवदसत्यत्वं नाङ्गीक्रियत इति न दोष इत्याशङ्कते—**नन्वित्यादिना**॥

शास्त्रस्य परमार्थसत्यत्वमनङ्गीकृत्य व्यावहारिकसत्यत्वाङ्गीकारे व्यावहारिकस्यापि बाधितत्वेन परमार्थसद्विलक्षणत्वेन शशशृङ्गावैलक्षण्यमेव। माध्यमिकैरपि व्यावहारिकसत्यत्वमङ्गीकृतमेव। उक्तं च बोधिचर्यावतारपञ्जिकायाम्—'संवृतिः परमार्थश्च सत्यद्वयमिदं मतम्' इत्येतद्विवरणे 'तस्मात् व्यवहारसत्य एव स्थित्वा परमार्थो देश्यते। परमार्थदेशनाऽवगमाच्च परमार्थाधिगमो भवति। तस्यास्तदुपायत्वात्। यदुक्तं शास्त्रे 'व्यवहारमनाश्रित्य परमार्थो नदेश्यते। परमार्थमनागम्य निर्वाणं नाधिगम्यते। इति' इत्याशयेनाह—**नैवमित्यादिना**॥

**असतीति**। परमार्थसद्विलक्षणइत्यर्थः। **बुद्धेर्मिथ्यात्वादिति**। 'तस्माद्यन्नास्ति नास्त्येव यत्त्वास्ति परमार्थतः। तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना॥' (निरालम्बनवादे. १०) इति भट्टपादोक्तेरिति भावः॥

'न दृष्टा शशशृङ्गादेस्सम्यग्ज्ञानादिहेतुता' इत्यत्र आदिशब्दार्थः 'बाष्पादिनाप्यधूमेन मिथ्या वह्न्यादिबोधनम्' इत्यनन्तरं भट्टपादैरेव विवृतः। अयमर्थश्शास्त्रविषयेऽपि सम्मत इत्याह—**यथा धूमबुद्ध्या गृहीतेत्यादिना**॥

'अपिचान्त्यमिदं प्रमाणमात्मैकत्वप्रतिपादकं नातःपरं किंचिदाकाङ्क्ष्यमस्ति। यथाहि लोके 'यजेत' इत्युक्ते किं केन, कथम् इत्याकाङ्क्ष्यते नैवं, 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्युक्ते किंचिदन्यमाकाङ्क्ष्यमस्ति।' इत्यारम्भणाधिकरणे शङ्कराचार्यैरुक्तम्। अत्र 'तस्मादन्त्येन प्रमाणेन' इत्यादि प्रागुदाहृतवाक्ये च अन्त्यत्वात् सर्वबाधकत्वं प्रमाणस्योक्तम्। तच्च ब्रह्मविषयकमिति न ब्रह्मणोबाधितत्वं मिथ्यात्वं च। ब्रह्मान्यसामान्यस्यैव बाधितत्वेन मिथ्यात्वमिति शङ्कायामाह—**पश्चात्तनबाधादर्शनं चासिद्धमिति**। अन्त्यप्रमाणस्यानपेक्षत्वेन प्राबल्यम्। तस्य सर्वोत्तरत्वेन तदनन्तरं न

### श्रीभाष्यम्

**तस्यापि बाधदर्शनात् । तत्तु भ्रान्तिमूलमितिचेत् एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम् । पाश्चात्यबाधादर्शनं तु तस्यैव**

### श्रुतप्रकाशिका

तद्वाक्यं तत्प्रामाण्यमिति शङ्कते । तत्त्विति । तुल्यत्वमाह—एतदपीति । पाश्चात्यबाधादर्शनस्य प्रामाण्यहेतुत्ववचनं सर्वशून्यवादिन एव साधकं ततःपरं निषेध्याभावेन निषेधानुदयादित्याह—**पाश्चात्येति** । प्रामाण्यादीनां दोषमूलत्वं द्वयोरपि तुल्यम् । पाश्चात्यबाधादर्शनं तु शून्यवादिनोऽधिकमित्यर्थः । सर्वशून्यवादिनोऽपि परो निषेधोऽस्ति । सर्वमस्तीति वचनंहि तन्निषेध इतिचेत्तर्हि प्रपञ्चमिथ्यात्ववचनस्यापि प्रपञ्चसत्यतावचनं निषेधस्स्यात् । नास्तीति वचनमेव निषेध इति चेत्तत्तु शून्यवादिन एवेति भावः । इदं च वेदाप्रामाण्यं मृषावादिनां सौगतानां च समानम् । यदाहुः—

**वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।**
**बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसंसदः ॥** इति ॥

**ननु** विषयत्वस्य रूपं शास्त्रप्रामाण्यं विद्यत इति महदि(दं)ह) वैषम्यमस्माकमितिचेन्न किं कतिपयविषयसत्यत्वं विवक्षितम् उत कृत्स्नविषयसत्यत्वम् । कतिपयविषयसत्यत्वं बुद्धागमस्याप्यस्ति संवित्स्वयम्प्रकाशत्वादेः सम्प्रतिपन्नत्वात्

### गूढार्थसंग्रहः

कोऽपि व्यवहारः इति परे वदन्ति । ब्रह्मैकमेव तत्त्वमिति च, माध्यमिकास्तु शून्यमेव तत्त्वमिति वदन्ति । निस्स्वभावत्वं शून्यत्वं, तत्र सर्वदार्शनिकपरिकल्पितस्वभावशून्यत्वं तत्सम्मतम् । स्वप्रकाशवस्तुनः अनङ्गीकारेऽपि सर्वव्यवहारोपपत्तिः सम्भवतीति तन्मते प्रागेवोपपादितम् । इत्थं च शून्यमेव तत्त्वमित्यवगतिः अन्त्या भवति तयाचावगत्या ब्रह्मणोऽपि बाधसम्भवात् । 'लब्धरूपे क्वचित् किंचित्तादृगेव निषिध्यते' इति अधिष्ठानसत्यत्वमपि नापेक्षितम् । दोषादीनामसत्यत्व इव अधिष्ठानादीनामसत्यत्वेऽपि भ्रमोत्पत्तिसम्भवात् । असत्यात्सत्यसिद्धेरुभयसम्मतत्वात् । व्यवहाराभावदशा परमार्थदशा इत्यप्युभयसम्मतम् । तत्र 'तत्त्वमसि' इत्यादिवाक्यजन्यचरमवृत्तेरनन्तरमेव व्यवहाराभावः । नतु शून्यमेव तत्त्वमिति माध्यमिकसम्मतनिर्णयानन्तरमित्यत्र न किंचिद्विनिगमकमिति भावः । आगमस्यासम्भाव्यमानदोषत्वेन निर्दोषवाक्यजन्यत्वमेव 'तत्त्वमसि' इत्यादिवाक्यजन्यचरमावगत्यनन्तरं व्यवहाराभावे विनिगमकमिति शङ्कते—**तत्तु भ्रान्तिमूलमितिचेदिति** ॥

आम्नायस्य सर्वस्यापि परमार्थसत्यत्वाभावस्य परसम्मतत्वेन असत्याच्छास्त्रादेव चरमावगत्यङ्गीकारेण शास्त्रस्य अविद्यामूलकत्वेन निर्दोषत्वमेव न सम्भवतीति उभयोरविशेष इत्यभिप्रायेणाह— **एतदपि भ्रान्तिमूलमिति** । मतद्वयाविशेषे माध्यमिकमते को विशेषइत्याशङ्कायामाह—**पाश्चात्यबाधदर्शनं तु तस्यैवेति** ॥

स्वप्रकाशवस्तुनो निवृत्तिः शून्यमेव तत्त्वमित्यवगत्या । माध्यमिकसिद्धार्थस्य तु न परसम्मतचरमवृत्त्या निवृत्तिरिति भावः ॥ येच तर्काः पैरः भेदापह्नवसाधकत्वेनोपन्यस्ताः ते बौद्धसम्मता एव । तदादरे खण्डनकारसम्मतस्वप्रकाशस्यापि अपह्नवएव स्यात् । अतः प्रमाणानां प्रत्यक्षादीनां व्यावहारिकप्रामाण्यमित्यादि बौद्धप्रक्रियापरित्यागमन्तरा आगमप्रामाण्यमेव नोपपादयितुं शक्यम् । प्रत्यक्षादिप्रामाण्ये च सत्यद्वयस्यैवाप्रसिद्धतया तात्त्विकप्रामाण्यमेवेषितव्यमिति न भेदा-

## श्रीभाष्यम्

**इत्यलमप्रतिष्ठित * कुतर्कपरिहसनेन ।**

## श्रुतप्रकाशिका

कृत्स्नविषयसत्यत्वंतु श्रुतेरपि त्वया न स्वीकृतमिति । किंच विषयसत्यत्वं दुर्वचं सत्यतयाऽभ्युपेतस्य ब्रह्मणः प्रमाणविषयत्वानभ्युपगमात् । यत्तु '**आदित्यो यूपः**' इत्यत्र यूपादित्यैक्याप्रतिपादनं तात्पर्यलिङ्गाभावात् नतु प्रत्यक्षप्राबल्यादित्युच्यते तत्र तात्पर्यलिङ्गाभावोऽभ्युपेत एव । तेन प्रत्यक्षविरुद्धार्थप्रतिपादनाक्षमत्वमवर्जनीयमापतति नहि वेदान्तिभिरर्थवादादेरन्यपरत्वात्स्वार्थे प्रामाण्यं त्यज्यते मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यस्य भवद्भिरेवोपपादितत्वात् । * अतस्स्तुतिपरत्वाद्यूपादित्यैक्याप्रतिपादनमित्यपसिद्धान्तः ॥

अर्थवादानां स्वार्थे प्रामाण्यमस्तीति कथं तद्यूपादित्यैक्याप्रतिपादनमितिचेत् उच्यते—प्रमाणाविरोधश्च तात्पर्य लिङ्गम् । उपक्रमोपसंहारादिष्वपूर्वत्वमपि तात्पर्यलिङ्गतयाह्युक्तम् । '**अभ्यासोऽपूर्वता फलम्**' इति अपूर्वं साधकबाधकप्रमाणागोचरत्वम् । यथाहुः—

**असन्निकृष्टवाचा च द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा ॥**

इति । अतः * प्रमाणान्तरगोचरत्वलक्षणं तात्पर्यलिङ्गमत्र नास्तीति यूपादित्यैक्याप्रतिपादनं नत्वर्थवादत्वेन स्वार्थे प्रामाण्याभावादिति । अतस्तात्पर्यलिङ्गाभावो नाम प्रत्यक्षादिविरोधे पर्यवसित इति शास्त्रं न तद्विरुद्धार्थप्रतिपादनक्षमम् । * शास्त्रप्राबल्यनिरसनं परिसमापयति । **अलमिति** ॥

यद्वा यत्तु प्रत्यक्षमित्यादिना न्यायमुखेन परपक्षप्रतिक्षेपमुपसंहरति । **अलमिति** । प्रमाणविरुद्धस्तर्कः कुतर्कः तत एवाप्रतिष्ठितत्वं स्वविरुद्धबौद्धमतोपयुक्तयुक्तिकथनात्परिहसनीयत्वम् ॥

## गूढार्थसंग्रहः

पह्नवसम्भवः। अतः शबरकुमारिलाद्युक्तप्रक्रियादूषणं ब्रह्मसिद्धिखण्डनादौ यत्कृतं अद्वैतसिद्ध्यादौ भट्टपादवाक्यानामन्यार्थ वर्णनं च यत्कृतं तदुभयमपि न घटत इति प्रागुपपादनेन मीमांसकोक्तप्रत्यक्षादिविरोधदूषणं दुष्परिहरमेवेत्यभिप्रेत्य उपसंहरति—**अलमप्रतिष्ठितकुतर्कपरिहसनेनेति** ॥

परैः षड्विधतात्पर्यलिङ्गोपेतत्वेन तत्परत्वात् परत्वान्निर्दोषत्वाच्च अद्वैतश्रुतेः प्रबलतया प्रत्यक्षादेः घटादिविषयकत्वाङ्गीकारेऽपि श्रुत्या बाधितत्वेन सविशेषस्यापि मिथ्यात्वेन निर्विशेषपरब्रह्मण एव औपनिषदतया प्रथमसूत्रे जिज्ञास्यत्वं विवक्षितम् । वस्तुतस्तु प्रत्यक्षादेरपि अज्ञातार्थज्ञापकत्वेन प्रामाण्यमुपपादनीयम् । जडे आवरणकृत्याभावेन अज्ञानासम्भवात् प्रत्यक्षादेर्घटादिविषयकत्वेन प्रामाण्यायोगेन सन्मात्रविषयत्वमेवाङ्गीकरणीयमिति सविशेषविषयकं किंचिदपि प्रमाणं न सम्भवतीति निर्विशेषस्यैव जिज्ञासा सूत्रकृतो विवक्षिता इति पूर्वपक्षे उपपादितम् । एतत्पक्षद्वयसाधारण्येन महासिद्धान्तारम्भे निर्विशेषे कस्यापि प्रमाणस्य प्रवृत्तेरसम्भवः प्रतिज्ञातः। सचार्थः सम्यक्साधितः। अप्रामाणिकशशशृङ्गादितुल्यार्थे षड्विधतात्पर्यलिङ्गैः निर्णयो न सम्भवति । कोटिद्वयस्यापि मानसिद्धत्वे तात्पर्यसन्देहे तात्पर्यलिङ्गैः एकतरकोटितात्पर्यनिर्धारणं सम्भवति । निष्प्रकारकनिस्संसर्गकबोधः वाक्यान्नकस्यचित्सम्मतः । तेन षड्विधतात्पर्यलिङ्गोपेतत्वेन श्रुतेः प्राबल्यं न सम्भवति । अविद्यादोषमूलत्वज्ञाने निर्दोषत्वमपि नैव सिद्ध्यति । अपच्छेदनयस्थले वाक्यस्य दोष-

## श्रीभाष्यम्

**यदुक्तं वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि 'सदेव सोम्येदमग्र आसीत्' इत्येवमादीनीति, तदयुक्तम्**

## श्रुतप्रकाशिका

**परेण** प्रत्यक्षादपि शास्त्रस्य प्राबल्यं वदता प्रबलतयाऽभिमतं शास्त्रं पुरस्कृत्य पश्चात्तर्कः प्रतिपादितः। सिद्धान्तेतु प्रबलतयाऽभिमतलौकिकप्रमाणगतिं प्रथमं निरूप्य परोक्तदुस्तर्कं निरस्य लौकिकप्रमाणविरोधे शास्त्रप्राबल्यं च प्रतिक्षिप्तम्। शास्त्रस्य लौकप्रमाणविरुद्धार्थप्रतिपादनासामर्थ्योपपादनेन शास्त्रस्य सविशेषपरत्वं सामान्यतस्सामर्थ्यात्सिद्धम्। विशेषण शब्दस्य पदवाक्यरूपेण प्रवृत्त्या सविशेषपरत्वोपपादनाच्च शास्त्रस्य सविशेषपरत्वं सामान्येन सिद्धम्। अथापि ये वाक्य विशेषाः परेण निर्विशेषपरत्वेनोदाहृताः तेषां सविशेषपरत्वं वाक्यतात्पर्यपर्यालोचनया प्रतिपादयितुमारभते। **यदुक्त-मित्यादिना**। तत्र निर्विशेषपरत्वं संग्रहेणानुवदति। **यदुक्तमित्यादि**। ज्ञानैकरसत्वेन शोधकवाक्येषु प्रतिपन्नत्वा-न्निर्विशेष(पर)त्वम्। तच्च कारणवाक्येषु प्रतिपन्नम्। वस्तुमात्रशब्देनान्यत्र सगुणब्रह्मणि तात्पर्याभावस्सूच्यते। इत्यादी-नीत्युक्ते तस्यामेवोपनिषदि पर्यवस्यतीति तद्व्यावृत्त्यर्थमित्येवमादीन्युक्तम्॥ तद्दूषयति। **तदयुक्तमिति**। कुतइत्यत्राह—

## गूढार्थसङ्ग्रहः

मूलकत्वस्य पूर्वमनिश्चयेन परत्वं व्यवस्थापकं भवति। अत्रतु दोषमूलकत्वनिश्चये परत्वं नैव व्यवस्थापकम्, इत्याद्यर्थाः प्रतिपादिताः। तेन प्रत्यक्षस्य सन्मात्रग्राहित्वं न सम्भवति प्रत्यक्षादिविरुद्धार्थबोधकत्वं श्रुतेरपि न घटते। शास्त्रीयफ-लस्य स्वप्नादिभोगतुल्यता 'असत्यात्सत्यसिद्धिः, सत्यद्वयं अहमर्थस्येदमनिदंरूपत्वम्' इत्यादिकं शबरकुमारिलादिभिः यद्दूषितं तदेव तेन दृढीकृतम्। अतस्सविशेषस्यैव जिज्ञास्यत्वं सूत्रकाराभिमतमिति सिद्धान्तितं भवति। इदानीं परेषां भेदनिषेधकत्वेन निर्विशेषस्वरूपपरत्वेन च याः श्रुतयः सम्मताः तासां सविशेषपरत्वोपपादनेन प्रथमसूत्रस्य सविशेषप-रत्वं स्थाप्यते—**यदुक्तं वेदान्तवाक्यानीत्यादिना**॥

**निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणीति**। 'सदेव सोम्येदमग्रआसीत्' इत्यादेर्निर्विशेषवस्तुनि षड्वि-धतात्पर्यलिङ्गानि प्राक् (२५९.पु) प्रदर्शितानि इहानुसंधेयानि। 'इदमभिन्नमग्रे यदासीत् तत्सदेव' इत्युद्देश्यविषयभा-वस्य विवक्षितत्वात् अग्रे विद्यमानमनूद्य अखण्डसदद्वितीयत्वविधानम्' इत्यादिना लघुचन्द्रिकोक्तार्थः 'आत्मा वा इदमग्रआसीत्' इति श्रुत्यर्थश्च प्राक् (१३२-१७९-१८०.) पुटेषु निरूपितः। **तदयुक्तमिति**। इदमभिन्नमित्या-दिना लघुचन्द्रिकोक्तः उद्देश्यविधेयभावः न विवक्षितः, किंतु वेदार्थसंग्रहोक्तार्थः 'सदेवेदमग्रएकमेवासीत्' इत्युद्देश्य विधेयभावादिरूपः 'आत्मा वा इदमेकएवाग्रआसीत्' इति श्रुत्यनुरोधेन विवक्षित इति प्राक् (३८१.पु) प्रतिपादितम्॥

'एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते। यथा सोम्येनैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति (६.१.१) एतदुक्तं भवति। एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं मृदात्मकत्वाविशेषाद्विज्ञातं भवेत्। यतो वाचाऽऽरम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते, विकारो घटश्शराव उदञ्चनंचेति। नतु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति। नामधेयमात्रंह्येतदनृतं 'मृत्तिकेत्येव सत्यम्' इत्येष ब्रह्मणो दृष्टान्त आम्नातः। तत्र श्रुताद्वाचाऽरम्भणशब्दाद्दार्ष्टान्तिके

## श्रीभाष्यम्

### एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य

### श्रुतप्रकाशिका

**एकविज्ञानेनेति** । **'येनाश्रुतम्'** इत्यादिवाक्येन एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते । अस्यायमर्थः येन श्रुतेन मतेन विज्ञातेन अश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवतीति नतु ब्रह्मणस्सत्तया सर्वं ज्ञातं भवतीति । दार्ष्टान्तिकसामर्थ्यात् मृद्दृष्टान्तसामर्थ्याच्च । नहि ब्रह्मसत्तया मृत्पिण्डसत्तया वा तत्तत्कार्यं ज्ञायते । **'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'** ति मुण्डकोपनिषदि **'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्'** इति बृहदारण्यके च श्रवणाच्च । अतो यथोक्त एव प्रतिज्ञावाक्यार्थः । नहि घटज्ञानेन पटज्ञानसम्भवइत्येकविज्ञानेन सर्वविज्ञानं न सम्भवतीति शङ्कायां कार्यकारणयोस्तद्दृष्टमित्याह---**'यथासोम्य'** इति । तत्राप्यसत्कार्यवादमुखेन एकविज्ञानेन सर्वविज्ञानानुपपत्तिशङ्कां परिहरति वाचाऽऽरम्भणमिति । वाचा वाक्शब्दोऽजहल्लक्षणया वाक्पूर्वव्यवहारपरः । वाचेति तृतीयया प्रयोजनतया हेतुत्वं विवक्षितम् । आरम्भणमिति कर्मणि ल्युट् आरभ्यते आलभ्यत इत्यारम्भणम् । **'आलम्भस्पर्शहिंसयोः'** । मृत्पिण्डेनेत्यर्थसिद्धम् । * विकारः घटत्वाद्यवस्था वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते मृत्पिण्डो नामरूपभाग्भवतीत्यर्थः । कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह---**मृत्तिकेत्येव सत्यम्** इति । * मृदयं घट इति प्रत्यभिज्ञया मृन्मयं घटादिकमपि मृद्व्यत्वेनैव प्रामाणिकमित्यर्थः । बुद्धिशब्दादिभेदाः घटपटादिषु द्रव्यभेदेऽपि दृष्टाः । आस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्येऽपि दृष्टाः । अतस्ते साधारणाः, तत्र आस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्यनियामिका या प्रत्यभिज्ञा सैवात्रापि द्रव्यैक्यनियामिकेति भावः ॥

### गूढार्थसंग्रहः

ऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते । पुनश्च तेजोऽबन्नानां ब्रह्मकार्यतामुक्त्वा तेजोऽबन्नकार्याणां तेजोऽबन्नव्यतिरेकेणाभावं ब्रवीति--'अपागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' इति शङ्कराचार्यैः आरम्भणाधिकरणे उक्तम् ॥

वेदान्तसूत्रमुक्तावल्यां--'मृदभिन्नतया तत्त्वतो ज्ञाततया च ज्ञातत्वं तथा कार्यमात्रस्य ब्रह्मणः भेदाभेदाभ्यामनिर्वाच्यस्य ब्रह्मस्वरूपाधिष्ठानज्ञानात् सर्वाज्ञाननिवृत्त्या ब्रह्माभिन्नतया तत्त्वतो ज्ञाततया च विज्ञातत्वमुच्यत इति ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादिता । नच मृत्तिकापदस्वारस्यात् कार्यमात्रस्य ब्रह्मपरिणामत्वमात्रमर्थो न मिथ्यात्वमिति वाच्यम् ; मृत्तिकेत्येवेत्यत्र मृत्तिकेति गृह्यमाणं सद्रूपं ब्रह्म सत्यं तदन्यत्सर्वं विनाशित्वेन विकाररूपं मिथ्येति । एवकारेण विकारमात्रे सत्त्वव्यवच्छेदस्य स्फुटत्वात्' इत्युक्तम् । अतः उपक्रमस्थैकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यप्रभृति अनन्तर वाक्यतात्पर्यविषयीभूतार्थान् सङ्कलन् परोक्तार्थाविवक्षामपि सूचयति---**एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेनेत्यादिना** ॥

**सच्छब्दवाच्यस्येति** । परमते निर्विशेषस्यैव लक्ष्यत्वेन अत्र सच्छब्दस्य लक्षणाङ्गीकारे विनिगमकाभावेन पर मतं नात्र विवक्षितमिति सूचितम् । शून्यवादिनोहि सृष्टिकाले सद्वस्तु नाङ्गीकुर्वन्ति इति सदित्यनेन तेषां निरासः लघुचन्द्रिकायामुक्तः । (१७९.पु) । शून्यवादिमतेऽपि सच्छब्दलक्ष्यस्य शून्यस्य सम्भवेन उक्तार्थः न घटते इत्यपि एतेन

## श्रुतप्रकाशिका

अत्र मृत्तिकामात्रस्य पारमार्थ्यं विकारासत्यत्वं च विवक्षितं चेत् इतिशब्दवैयर्थ्यं स्यादिति तदा मृत्तिकैव सत्येतिहि वाच्यम् ; विकारासत्यत्वे दृष्टान्तस्साध्यविकलः ; सत्यत्वप्रतिपत्तेः । घटपटादिसत्यत्वं व्यावहारिकमितिचेत् मृत्पिण्डस्यापि सत्यत्वं व्यावहारिकमिति न कारणसत्यत्वसिद्धिः । कारणस्य व्यावहारिकमेव सत्यत्वमभिमतंचेत् तत् घटादेरपि तुल्यं स्यात् कार्यकारणद्रव्यैक्यात् कारणविज्ञानेन कार्यविज्ञानमुपपन्नमस्तु । तथाऽपि लोके विविधकार्यवर्गस्य विविधोपादानकत्वदर्शनादेकविज्ञानेन * सर्वविज्ञानमनुपपन्नमिति शङ्कायां जगतो ब्रह्मैककारणतामाह— '**सदेव सोम्येदमग्र आसीत्**' इति। श्रुतिगतसच्छब्दार्थमभिप्रेत्यात्र सच्छब्दवाच्यस्येत्युक्तम् । सगुणब्रह्मपरमिदमित्यन्यथासिद्धिर्दुर्वचेत्यभिप्रायेण परस्य ब्रह्मण इत्युक्तम् । अग्रे सृष्टेः पूर्वमित्यर्थः अनन्तरं सृष्टेर्वक्ष्यमाणत्वात् ॥

विजातीयसजातीयस्वगतनानात्वव्यावृत्तिरत्र विवक्षिताचेदग्र इति वक्तुमयुक्तम् । नहि ब्रह्मणः कालविशेषे निर्विशेषत्वम्, वैषम्यनैर्घृण्यपरिहाराय जीवबहुत्व तत्कर्मप्रवाह तदनादित्वानामभ्युपगन्तव्यत्वाच्च । तद्बहुत्वमपारमार्थिकमितिचेत्—न ; पारमार्थिकबहुत्वस्य इदानीमप्यभावादग्रशब्दवैयर्थ्यात् नचाग्रशब्दस्य विवक्षितार्थता, अनन्तरं सृष्ट्युक्तेः। अतः कालरूपविजातीयभेद(आत्मवर्ग)श्चेतनरूपसजातीयभेदस्सार्वज्ञ्यादिसृष्ट्यनुगुणगुणरूपस्वगतभेदश्च तदानीमस्तीति विजातीयादित्रिविधभेदनिरासपरत्वं विरुद्धं कारणवाक्यत्वात् । नचेदिदं कारणवाक्यम् ईदृशानां कारणवाक्यानां सर्वशाखाप्रत्ययनयाद्विजातीयादिभेदनिरासपरत्वेन कारणपरत्वाभावात्, ब्रह्म कारणत्वमप्रमाणं स्यात् । अवधारणवाचिन एवकारस्य स्वयंव्यावर्त्यविशेषोपस्थापनासमर्थस्य समभिव्याहृतपदान्तरार्थविरोधिव्यावर्तकत्वानियमदर्शनात् सदेवेत्यवधारणमसत्कार्यवादव्युदासपरम् । न ह्ययंविद्वानेवेत्यवधारणं ब्राह्मणत्वं व्यावर्तयति, अपित्वविद्वत्त्वमेव । अतश्शब्दस्वारस्यात् सदेवेति निरसनीयमसत्त्वमेव नतु विजातीयभेदः ॥

यद्यपि सद्विजातीयमसत् तथाऽपि तस्य व्यावर्त्यत्वं न विजातीयत्वाकारेण अपितु सद्विरोधित्वरूपेण । सदेव नतु कदाचिदसदित्यर्थः * सच्छब्दोहि मानसम्बन्धयोग्यतालक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते । अयं च सच्छब्दो विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्वसामर्थ्यात्कारणत्वौपयिकगुणविशिष्टं प्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति, एकमेवेत्यविभक्तनामरूपं कारणावस्थं ब्रह्मोच्यते कारणत्वावस्थायामेकत्वावधारणस्य बहुस्यामिति वक्ष्यमाणकार्यबहुत्वप्रतियोग्येकत्वपरत्वात् '**एकेन मृत्पिण्डेन सर्वंमृन्मयम्**' इत्युक्तदृष्टान्तसामर्थ्यात् '**तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते**' इति श्रुत्यन्तरैकार्थ्याच्चायमेवार्थः । वैशेषिकादिभिर्नित्यतयोक्तानामाकाशादीनामपि संहाराभिप्राय एवकारः । एवमविभक्तनामरूपत्वाद्ब्रह्मण उपादानत्वं सिद्धम् । भाव्यवस्थाविशेषवतः प्रागवस्थायोगोह्युपादानत्वम् ॥

अद्वितीयमिति निमित्तान्तरनिषेधः उपादानस्य प्रस्तुतत्वेन निमित्तस्य बुद्धिस्थत्वात् * परतन्त्ररूपविशेषाणां विहितत्वात् । निषेधस्य च विहितव्यतिरिक्तविषयत्वात् । उपरितनवाक्यसंगतेरपेक्षितत्वाच्च । एकमेवेति शब्दस्याविभक्तनामरूपतापरत्वं बहुस्यामित्यनेनावगम्यते '**तदैक्षत तत्तेजोऽसृजत**' इत्यनेन अद्वितीपदस्य निमित्तान्तरभावपरत्वमवगम्यते । परस्य ब्रह्मणः सर्वदा सत्त्वेन सदेवेत्यवधारणमसत्कार्यवादव्युदासपरमित्युपरितनेन '**कथमसतस्सज्जायेत**' इत्यादिवाक्येनावगम्यते ॥

कथमसतइत्यादिवाक्यं * वैशेषिकमतनिरासपरं नतु क्षणिकवादिनिरासपरं न शून्यवादिनिरासपरं च । क्षणिकशून्यवादिनिरासे कृतेऽप्येकविज्ञानेन सर्वविज्ञानस्य * वैशेषिकमतनिराससापेक्षत्वात् । 'तद्धैकआहुः असदेवेदमग्रआ-

## श्रीभाष्यम्

### परस्य ब्रह्मणो जगदुपादानत्वम्

### श्रुतप्रकाशिका

सीत्' इत्यारब्धत्वाच्च, नहि क्षणिकत्वं शून्यत्वं च कालविशेषे भवति। अतोसत्कार्यवादनिरासपरं तद्धैकआहुः इत्यादिवाक्यम्। कुतस्तु खलु सोम्यैवं स्यादिति * मृदउत्पन्नस्य मृदात्मकत्ववदसतउत्पन्नस्यासदात्मकत्वप्रसङ्ग इति भावः। उत्पत्तिर्नाम द्रव्यस्यावस्थान्तरापत्तिरित्ययमर्थो वाचाऽऽरम्भणमित्यनेन शिक्षितः। तदुपजीव्योच्यते कथमसतस्सज्जायेत इति। * कथं निराश्रयावस्थासम्भवइत्यर्थः। तदैक्षतेति सर्वज्ञत्वम्, असृजतेति निमित्तत्वं बहुस्यामित्युपादानत्वं तदुभयानुगुणं सर्वशक्तित्वं, सत्यसङ्कल्पत्वं च, अनेन जीवेनात्मनाऽनुप्रविश्येति सर्वान्तरत्वंचोक्तं भवति। जीवेनात्मना जीवशरीरेण मयेत्यर्थः। '**सिंहेन भूत्वा बहवो मयात्ता व्याघ्रेण भूत्वा बहवो मयात्ता**' इतिवत्। सर्वज्ञत्वादिगुणकस्य तद्विपरीताकारजीवैक्यासम्भवात् '**यस्यात्मा शरीरम्**' इत्यादिवचनात् '**तदनुप्रविश्य**' इत्यचेतनइव जीवेऽप्यनुप्रवेशश्रवणाच्च, शरीरवाचिशब्दस्य शरीरिपर्यन्तत्व(मुख्यतायाउ)स्यमुख्यतयो)पपन्नत्वाच्चायमेवार्थः। सदायतना इत्यनेन सर्वाधारता। तत एव सर्वनियमनं च सिद्धम्। '**एतस्य वा अक्षरस्य प्रशासने गार्गिद्यावापृथिव्यौ विधृते तिष्ठत**' इति प्रशासनेन धारकत्वश्रवणात्। एवं सर्वाधारत्व सर्वनियमनत्वसर्वान्तरत्वैश्शरीरीलक्षणैर्जगच्छरीरकत्वं ब्रह्मण उक्तम्॥

### गूढार्थसंग्रहः

सूचितम्। **परस्य ब्रह्मणः** इत्यनेन वाच्यस्यापरब्रह्मत्वं लक्ष्यस्यैव परब्रह्मत्वमिति परमतं ब्रह्मशब्दवाच्योत्कर्षस्य लक्ष्येऽनङ्गीकारेणानुपादेयमिति बोधितम्। ब्रह्मशब्दवाच्यनिरतिशयोत्कर्षः गुणवत्त्वदोषशून्यत्वनिबन्धनः, अत्र जगदुपादानत्वादिगुणानां प्रतिपादनेन सगुणमेव परं ब्रह्म विवक्षितमित्यभिप्रायेण विवक्षितान् गुणान् दर्शयति—**जगदुपादानत्वमित्यादिना**। अत्रोपादानत्वं मृत्तत्कार्यदृष्टान्तेन परिणाम्युपादानत्वरूपं विवक्षितं नतु विवर्तोपादानत्वम्। अयमर्थः 'परिणामात्' इति सूत्रे विवक्षित इत्युत्तरत्र व्यक्तीभविष्यति। 'मृत्तिकेत्येव सत्यम्' इत्यत्र मृत्तिकेति गृह्यमाणं सद्रूपं ब्रह्म सत्यं तदन्यत् सर्वं विनाशित्वेन विकाररूपं मिथ्येति। एवकारेण विकारमात्रे सत्त्वव्यवच्छेदस्य स्फुटत्वात्' इत्युक्तिः (वे.सू.मु) नादर्तव्या। इति शब्दसत्वेऽपि गृह्यमाणं सद्रूपं ब्रह्मेति विवक्षायां गमकं नास्ति। यथा 'सोम्य—सत्यम्' इति श्रुतिक्रमः। एकेन मृत्पिण्डेन सर्वमृन्मयंविज्ञातं स्यादिति पूर्वमुक्तम्। एकेन मृत्पिण्डेनेत्यत्र मृत्तिकेति गृह्यमाणस्य सद्रूपब्रह्मणः प्रतीतेः स्फुटत्वे अत्रापि तादृशार्थविवक्षा युक्ता स्यात्। तत्र तादृशार्थविवक्षागमकं न किंचित्पदं वर्तते। वाचाऽऽरम्भणमित्यस्य मिथ्यार्थबोधकत्वं नैव सम्भवतीति उत्तरत्र स्फुटीभविष्यति। तत्र विकारशब्देन परिणाम्युपादानहेतुकार्थ एव विवक्षित इति स्फुटम्। एकज्ञानेन सर्वज्ञानमुपपादनीयम्। तत्रचैकपदार्थस्य सर्वपदार्थस्य च अवस्थाभेदेऽपि धर्म्यैक्यसाधनेन तज्ज्ञानमुपपादितं भवति नत्वन्यथा। अयमर्थः 'मृत्पिण्डेन मृन्मयम्' इत्युभयत्र मृच्छब्दप्रयोगेण पूर्वं सूचितः। नैयायिकोक्तभेदनियामकयुक्तिरासः 'वाचाऽऽरम्भणं विकारो नामधेयम्' इत्यनेनकृतः इदानीं मृन्मयमित्यत्र मृच्छब्दप्रयोगेण सूचितं कार्यकारणयोरभेदं प्रत्यक्षप्रमाणेन सिद्धं स्थापयति 'मृत्तिकेत्येव सत्यम्' इत्यनेन मृत्तिकेत्येव सत्यं प्रमाणप्रतिपन्नमित्यर्थः। मृद्विकारसामान्ये मृत्तिकेति प्रमाविषयत्वस्य सत्त्वात् मृत्तिकाभेदः। इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीदिति प्रामाणिकप्रत्यभिज्ञाया अपि सत्वादिति भावः॥

## गूढार्थसंग्रहः

‘परिणामात्’ (ब्र.सू.१.४.२६) इति सूत्रे इतश्च प्रकृतिः ब्रह्म यत्कारणम्। ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते। ‘सच्चत्यच्चाभवत्, निरुक्तंचानिरुक्तं च’ इति भाष्यम् (शं)। अत्र परिणामनिबन्धनाभेद एव ‘सच्चत्यच्चाभवत्’ इत्यत्र विवक्षित इति परैरप्यङ्गीकृतम्। ‘तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्चत्यच्चाभवत्’ इति श्रुतिक्रमः। अत्र अनुप्रवेश एवाभेदहेतुरिति स्फुटं प्रतीयते। ‘अन्तःप्रविष्टश्शास्ताजनानाग्ँसर्वात्मा’ इत्यादिश्रुतिभिः अन्तःप्रवेश अन्तर्यामित्वपर्यवसितः इति निश्चीयते ॥

‘तत्सृष्ट्वा तदेवानुप्राविशत्’ इत्यत्र सृष्ट्यनुप्रवेशयोरेककालिकतया मुखं व्यादाय स्वपितीतिवत् ‘तत्सृष्ट्वा’ इति वाक्यम्। ‘तदनुप्रविश्य सच्चत्यच्चाभवत्’ इत्यत्रतु हेतुहेतुमद्भाव एव विवक्षितः। ‘सर्वं समाप्नोषि ततोऽसि सर्वः’ इति गीतायामयमर्थः स्फुटः। अत्र ‘सम्’ इत्युपसर्गेण नियन्तृत्वादिकं विवक्षितम्। तस्य पूर्वं प्रस्तुतत्वात्। एतेन ‘सर्वं समाप्नोषि ततोऽसि सर्वः’ इत्यत्राधिष्ठानतया सर्वव्यापित्वस्य सर्वशब्दप्रयोगनिमित्तत्वात्। अन्यथाऽऽकाशेऽपि सर्वपदप्रयोगापत्तेः’ इति। ‘सदादिभवनस्यैव जगत्सृष्टिरूपतया तदानन्तर्यभातात्’ ‘तदनुप्रविश्य’ इत्यस्य ‘मुखं व्यादाय’ इत्यादिवदुपपत्तेः इति च (अभिन्ननिमित्तोपादानत्वे प्रमाणोपपत्तौ (अ.सि) उक्तिर्निरवकाशा ॥

एवंच ब्रह्मणः अन्तर्यामित्वरूपपरिणामनिबन्धन एव जगदभेदव्यपदेशः इतिश्रुतितात्पर्यं निर्मत्सराणां व्यक्तम्। मृदो घटशरावाद्यात्मना परिणाम इव सच्छब्दवाच्यस्य ब्रह्मणः कार्यान्तर्यामित्वरूपः परिणामः इति मृन्मयमृदोरिव उपादेयकार्यान्तर्यामिब्रह्मणोः अभेदेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपपद्यते। एवंच प्रकृत्यधिकरणभामत्याम् ‘इयंचोपादानपरिणामादिभावा न विकाराभिप्रायेणापितु यथा सर्पस्योपादानं रज्जुः, एवं ब्रह्म जगदुपादानं द्रष्टव्यम्। न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मना एकदेशेन वा परिणामः सम्भवति। नित्यत्वादनेकदेशत्वादित्युक्तम्। नच्च मृदः शरावादयो भिद्यन्ते, नचाभिन्नाः न वा भिन्नाभिन्नाः, किंत्वनिर्वचनीया एव। यथाऽऽह ‘मृत्तिकेत्येव सत्यम्’ इति तस्मादद्वैतोपक्रमादुपसंहाराच्च सर्व एव वेदान्ताः ऐकान्तिकाद्वैतपराः सन्तः साक्षादेव क्वचिदद्वैतमाहुः, क्वचिद्वैतनिषेधेन, क्वचिद्ब्रह्मोपादानत्वेन जगतः। एतावताऽपि तावद्भेदो निषिद्धो भवति। नतूपादानत्वाभिधानमात्रेण विकारग्रह आस्थेयः। नहि वाक्यैकदेशस्यार्थोऽस्तीति’ इति ॥

आरम्भणाधिकरणभामत्यां च ‘एवंहि ब्रह्मविज्ञानेन सर्वं जगत्तत्वतो ज्ञायेत यदि ब्रह्मैव तत्वं जगतो भवेत्। यथा रज्ज्वां ज्ञातायां भुजङ्गतत्वं ज्ञातं भवति। साहि तस्य तत्त्वं तत्त्वज्ञानं च ज्ञानमतोऽन्यन्मिथ्यज्ञानमज्ञानमेव। अत्र वैदिको दृष्टान्तः–‘यथा सोम्यैकेन मृत्पिण्डेन इति’ इत्युक्तिश्चाभिनिवेशमूलकैवेति सिद्धम्। श्रुतौ इत्थमाशयवर्णनं न घटते। तथा तात्पर्ये रज्जुसर्प शुक्तिरूप्यादिदृष्टान्ता एव श्रुतौ प्रतिपादिताः स्युः, नैते दृष्टान्ताः श्रुतावभिहिताः। अद्वैतोपक्रमःपरसम्मतः न सम्भवति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया एव प्राथमिकत्वात्। अत्र ‘एकवस्तुनः सर्वस्यचाभेदः प्रतिपाद्यते, अभेदश्च परमते नैवोपपादितो भवति। कार्यमात्रस्य ब्रह्मणो भेदाभेदाभ्यामनिर्वाच्यस्य ब्रह्मस्वरूपाधिष्ठानज्ञानात् सर्वाज्ञाननिवृत्त्या ब्रह्माभिन्नतया तत्त्वतो ज्ञाततया च विज्ञातत्वमुच्यत इति ब्रह्मविज्ञानेन सर्वविज्ञान प्रतिज्ञा उपपादिता’ इति (वे.सू.मु) तदनन्यत्वाधिकरणे ब्रह्मानन्दसरस्वत्युक्तिरपि नादरणीया। ब्रह्मज्ञानेन सर्वाज्ञाननिवृत्तेः सद्विद्यायामुपक्रमेऽनभिधानात् ॥

एवं तत्रैव ब्रह्माभेदस्य ‘कार्यस्य निर्वक्तुमशक्योऽपि कश्चन तादात्म्यरूपः सम्बन्धः विषयतात्वाश्रयो भासकचैतन्येन समं वाच्यः यमादाय ‘तस्य भासा सर्वमिदं विभाति’ इति श्रुतिः प्रवृत्ता। तथा च तादृशसम्बन्धावच्छिन्न-

## गूढार्थसंग्रहः

कार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वमेव विवर्तोपादानत्वम् । नच कार्योत्पत्त्यधिकरणे ब्रह्मणि तादात्म्यसम्बन्धेन तस्यासम्बद्धतया कथमुपादानत्वम् । नचात्यन्तभेदे तादात्म्यं सिद्धान्ते स्वीक्रियत इति वाच्यम् ; कार्योत्पत्त्यव्यवहितपूर्वक्षणोपहिते कार्योत्पत्त्युपलक्षिते ब्रह्मणि ब्रह्मणस्तादात्म्यसत्वात् । तत्र तत्तादात्म्याभावेऽपि तद्वृत्तिर्यः प्रतियोग्यवृत्तिभेदः तदप्रतियोगित्वेनैवोपादानत्वसम्भवाच्च । कार्योत्पत्त्यधिकरण उपहिते ब्रह्मणि शुद्धब्रणोहि सम्बन्धो विषयता तादृशसम्बन्धस्य भासकतानियामकत्वेऽपि परोक्षविषयीभूतस्यावृतत्वादेवाभानाद्बहिर्निस्सृतापरोक्षवृत्त्यैवावरणनिवृत्त्याऽनावृतसाक्षितापन्नचैतन्यस्य तादृशसम्बन्धसम्भवेन साक्षात्करोमीति धीसम्भवादाध्यासिकसम्बन्धेन चैतन्यं संबध्यावृणोति विक्षेपरूपेण परिणमते चाज्ञानं चैतन्यस्यापरिणामित्वात् । 'मायांतु प्रकृतिं विद्यां मायिनंतु महेश्वरम्' (श्वे.४.१०) 'बह्वीः प्रजाः सृजमानाः' इत्यादिश्रुत्या तस्योपादानत्वश्रुतेश्च' इत्युक्तिरप्यनुपादेया ॥

'तस्य भासा सर्वमिदं विभाति' इति श्रुतौ प्रपञ्चब्रह्मणोः भेदस्यैव प्रतीत्या सामानाधिकरण्यनिर्वाहकाभेदस्य ततः असिद्धेः । भासकचैतन्येन सर्वं कार्यस्योक्तसम्बन्धसाधनासम्भवात् । भासकस्य निमित्तत्वमेव । नतूपादानत्वम् । भासकव्यतिरेकेण भास्यं नास्तीतित्यर्थोऽपि दृष्टान्तभावान्नैव घटते । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः ब्रह्मानन्दसरस्वत्याद्युक्तार्थः अभिनिवेशमूलक इति प्रागेव (४१९.पु) निरूपितम् । मृत्तत्कार्यदृष्टान्तसाधारण्यस्योक्तसम्बन्धेऽसम्भवेन श्रुतावेतादृशविवर्तोपादानत्वविवक्षा न सम्भवति । घटाद्यनुगतमृदादिज्ञानात् घटादेर्मृज्जातीयत्वाज्ञाननिवृत्त्या मृदभिन्नतया तत्त्वतो ज्ञाततया च ज्ञातत्वं दृष्टान्ततयोक्तम् । (वे.सू.मुक्तावल्यां) । दार्ष्टान्तिके च ब्रह्मस्वरूपाधिष्ठानज्ञानात्सर्वाज्ञाननिवृत्त्या ब्रह्माभिन्नतया च तत्त्वतो ज्ञातत्वमुक्तम् । मृदि घटादेरध्यासाभावेन तत्र यथापरिणामनिबन्धनमुपादानत्वं तद्वद्दार्ष्टान्तिकेऽपि युक्तम् ; नतु हठात् स्वकल्पितार्थे श्रुतेस्तात्पर्यवर्णनम ॥

गुरुचन्द्रिकायाम् एकमेवेत्यादिश्रुत्यर्थविचारे 'वाचाऽऽरम्भणशब्दस्याहि वागालम्बनमात्रमिति भाष्यव्याख्यानेऽयंभावः । 'येनाश्रुतं श्रुतम्' इत्यादिसामानाधिकरण्यं बाधायाम्, अश्रुतमन्यत्सर्वं यदभिन्नं श्रुतस्वरूपव्यतिरेकेण नास्तीत्यर्थः । तथाचैकं सर्वस्याधिष्ठानमित्यर्थः प्रतिज्ञातः । तत्र मृत्पिण्डव्यतिरेकेण तद्विकारो यथा नास्तीत्यादिदृष्टान्ताः 'यथा सोम्यैकेन' इत्यादिना प्रतिपाद्यन्ते । मृत्पिण्डपदं च मुख्यार्थकैकपदयोगात् भूमिरूपपिण्डार्थकम् । पिण्डपदं च स्थौल्यविशेषबोधकं मृन्मयमात्रोपादानता योग्यतालाभाय । मृन्मयपदं च भूमिविकारमात्रार्थकम् । तथा च भूमिविकारः सर्वो यथा भूमिं विना नास्तीत्यर्थः । भूमिविकारत्वं च साक्षादेव वृक्षादावक्षतमिति भूमेर्विभक्तपिण्डस्य नानाविकारानुपादानत्वेऽपि न क्षतिः ॥

यद्यपि भूमिर्नाधिष्ठानं तथाऽप्यधिष्ठानावच्छेदकशुक्त्यादिव्यतिरेकेण रूप्यादि नास्तीति व्यवहारवत् भूमिविकारादिस्वरूपविचारदशायामाधारतावच्छेदकभूम्यादिव्यतिरेकेण तद्विकारो नास्तीति व्यवहाराच्छ्रुत्या तथोक्तम् । एवं च सर्वं मृन्मयं एकमृत्पिण्डमितविज्ञातस्वरूपमित्यपि बाधायां सामानाधिकरण्यम् । तत्र हेतुः 'मृत्तिकेत्येव सत्यम्' इति मृत्तिकाभूमिरिति गृह्यमाणं यत्तदेव सत्यम् । मृत्तिकास्वरूपस्य सत्यत्वाभावात्तदवच्छिन्नसद्रूपस्य दृष्टान्तधीदशायां मृदो विविच्याज्ञानाद्भूमित्वेन ज्ञायमानत्वेन सद्रूपलाभार्थमितिशब्दः ; 'मनोब्रह्मेति' इत्यादौ ज्ञायमानस्येतिशब्दार्थत्वात् । आद्यर्थको वा 'इति' शब्दः 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरात् । तथा च भूमिविकारस्वरूपस्य विचारदशायां तत्स्वरूपमिव भूमिस्वरूपविचारदशायां सापि मिथ्या । तत्कारणापञ्चीकृतभूतान्येव सत्यानि । तेषामपि स्वरूपविचारदशायां तान्यपि मिथ्या । तत्कारणमेव सत्यमित्याद्यर्थलाभः' इत्युक्तिरप्यनुपादेया ॥

## गूढार्थसङ्ग्रहः

पूर्वमध्यारोपस्यानुक्तेः अपवादप्रसङ्गस्यैवाभावात् । आनन्दमयाधिकरणे—कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातः । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्तोऽपि न घटते । मृत्पिण्डविज्ञानेनहि तद्विकारस्य ज्ञातता दर्शिता । तत्रापि विकारस्यासत्यताऽभिप्रेतेति चेत् मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय 'यथा सोम्य' इति प्रसिद्धवदुपन्यासो न युज्यते' इति भगवता वक्ष्यमाणदोषपरिहारासम्भवात् । 'अश्रुतमन्यत्सर्वं यदभिन्नं श्रुतस्वरूपव्यतिरेकेण नास्तीत्यर्थाङ्गीकारेऽपि मृत्तद्विकारयोरिवावस्थाभेदेऽपि धर्म्यभेदमात्रेणोपपत्तौ एकं सर्वस्याधिष्ठानमिति परसम्मतोऽर्थः नानेन वाक्येन सिद्ध्यति । शुक्त्यादिव्यतिरेकेण रूप्यादिर्नास्तीति व्यवहारः यादृशः तादृशो भूम्यादिव्यतिरेकेण तद्विकारो नास्तीति व्यवहारः' इत्युक्तिरपि न घटते । 'इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीत्' इति व्यवहारेणात्र विशेष्यविशेषणभावस्य व्यावहारिकतादात्म्यरूपस्यैव सिद्ध्या इदं रूप्यमित्यत्रेव प्रातीतिकतादात्म्यं नैव सिद्ध्यति । मृत्तिकास्वरूपस्य सत्यत्वाभावात्तदवच्छिन्नसद्रूपस्य दृष्टान्तत्वधीदशायां मृदो विविच्याज्ञानात् भूमित्वेन ज्ञायमानत्वेन सद्रूपलाभार्थमितिशब्द इत्युक्तिरपि नादर्तव्या । तदवच्छिन्नसतः इदानीं ज्ञानस्यैवासम्भवात् पूर्वं तदर्थस्यानुक्तेः । अन्यत्रैवमर्थस्य श्रुतिवाक्यैरसिद्धेः स्थापयिष्यमाणत्वाच्च । इतिशब्दः आदिपरः, कारणपरः इत्युक्तिरप्यनुचिता । मृत्तिकायाः कारणत्वस्य प्रसिद्ध्या आदिशब्दवैयर्थ्यात् । दार्ष्टान्तिकेऽपि परिणाम्युपादानस्यैव सत्यत्वसिद्धिप्रसङ्गाच्च । अतः सत्यमित्यस्य प्रमाविषयमित्येवार्थः मृद्विकारस्य मृत्तिकेत्येव प्रमाविषयत्वोक्त्या मृत्तद्विकारयोरुपादानोपादेययोः भेदवादिनैयायिकादिमतनिरासः सिद्ध्यति 'अपागादग्नेरग्नित्वम्' इति श्रुतेः यथा न मिथ्यार्थपरत्वं तथोपपादितमधस्तात् (४११) ॥

अत्र भामतीकल्पतरूदाहृत छान्दोग्यवाक्यानि न विवर्तोपादानत्वसाधकानीति भावप्रकाशे (२.संपु.३४८) निरूपितम् । तेन 'आत्रेयवाक्यमपि संव्यवहारमात्रम्' 'अद्वैतमेव परिरक्षति वाक्यकारः' (१२३.पु) इति सङ्क्षेपशारीरकोक्तिरपि निरवकाशा । अतः अद्वैतोपक्रमः परिणाम्युपादानत्वमेव स्थापयति । सम्बन्धानुपपत्त्या अर्थापह्नवः बौद्धसम्मतः । तस्याः एव रीतेः परैरङ्गीकारे बौद्धरीत्यैव स्वप्रकाशस्यापह्नवस्स्यात् । अनुभवानुरोधेन सम्बन्धोऽपि न्यायवार्तिकतात्पर्यटीकादौ वाचस्पतिनैवाङ्गीकृतः । तद्रीत्यङ्गीकारएव व्यावहारिकपारमार्थिकविभागमन्तरा वेदप्रामाण्यं निर्वहतीति वृत्तिकाराशयः भट्टपादादिभिर्निर्धारित एव युक्त इति प्रागेव सुस्पष्टं निरूपितम् । एतेन 'व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः, (२२३.पु) इति सङ्क्षेपशारीरकोक्तिर्निरवकाशा ॥

ननु एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिः सच्छब्दवाच्यस्य नोपादानत्वं सिद्ध्यति । उक्तंचानन्दतीर्थैः 'यथा मृत्पिण्डविज्ञानात् सादृश्यादेवमृन्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । प्राधान्याद्विष्णुविज्ञानात् विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपिहि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानात् अत्यल्पं जगदीदृशम् ॥ अनन्याधीनविज्ञानादन्याधीनं तथैव च । मृदयोलोहनाम्नांहि ज्ञानात्साङ्केतिकं यथा ॥' इत्यादि सामसंहितायां, 'स्वर्णं लोहमणिश्चैव पुरटंचाभिधीयते' इत्यादि शब्दनिर्णये 'विकारित्वविवक्षायां एकपिण्डमणिशब्दाः व्यर्थास्स्युः । मृत्तिकेति, लोहमणिरिति, कार्ष्णायसमिति इतिशब्दाः नामशब्दाश्च व्यर्थाः स्युः । अतो वाचा नाम्नामारम्भणं विकारो विविधाकारः विक्रियमाणः सत्यं नामधेयं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्यादय इत्यर्थः । सत्त्वेन कालस्ततं ज्ञायते विद्वद्भिः इति नित्यत्वेन प्रसिद्धमेव सत्यमित्यत्र विवक्षितम् । सङ्केतेन क्रियमाणानिहि अन्यानि नामानि, अतो विकाररूपाणि, नच मृत्तिकादिनामविकारः सांकेतिकं नाम प्राधान्यमेवात्र मृत्तिकादि-

## गूढार्थसङ्ग्रहः

नामवत् भगवतो विवक्षितम् ' इति छान्दोग्यभाष्ये । ' यथा सोम्यैकेन ' इति सदृशविज्ञानेन सदृशान्तरविज्ञानमुक्तम् । ' लोहमणिना ' इति मणिशब्दात् प्रधानविज्ञानेन अप्रधानं सर्वं विज्ञातं भवतीति मणिर्मुखं प्रधानं च उक्तम् अस्य वचो भवेदिति वचनात् यथा ' सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यादिति पुनरपि सदृशेन विज्ञातेन सदृशान्तरं विज्ञातं भवतीत्यभ्यासस्तात्पर्यार्थः । उपादानविवक्षायामेकत्वविवक्षायां च एकेनेति विशेषणं पिण्डेनेति एकेन मणिनेति पुनरेकेनेति च विशेणानि व्यर्थानि भवेयुः । नह्येकमृत्पिण्डविकारभूतं सर्वं मृन्मयं नच तेनैक्यं सर्वस्य विद्यते । ' वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' इत्यादिप्रधानपरिज्ञाने गुणभूतं परिज्ञातमिव भवतीत्यत्र दृष्टान्तान्तरं वाचा नाम्नामारम्भणं विकारः विविधत्वेन कर्तुं योग्यमिति विकारः । ' यथैकस्मिन् जनपदे प्रधानपुरुषेषु परिज्ञातेषु आहूतेषु आगतेषु विनाशितेषु रक्षितेषु वा सर्वो जनपदः विज्ञात आहूत आगतः विनाशितो रक्षित इत्युच्यते । यथा च राजसु नाशितेषु ' नाशिता पृथिवी सर्वा धार्तराष्ट्रेण दुर्नयैः ' इति यथा च केषांचित् रक्षणेन— ' शशास पृथिवीं सर्वां सशैलवनकाननाम् ' इति । एवं सर्वोत्तमस्य परमेश्वरस्य विज्ञानात् सर्वं विज्ञातमिव भवति इति

नच मृन्मात्रविज्ञानात् घटशरावादिसंस्थाः विज्ञाता भवन्ति मुख्यतः । तथासति दृष्टमृदः पुरुषस्य घटशरावादिजिज्ञासा न स्यात् सृष्टिकथनं च प्राधान्यार्थम् । ' त्रीणिरूपाणि सत्यम् ' इत्यपि प्राधान्यापेक्षयैव अभिमानिदेवतापेक्षया इत्यादिबृहदारण्यकभाष्ये । एवमेवानुव्याख्यानेऽपि ' वाचारब्धं तु साङ्केत्यनामस्याद्विकृतं बहु ' इत्यादि ' प्राधान्यप्रतिपत्तेश्च सृष्ट्यादेश्चैषविस्तरः ' इत्यन्तं च ॥

अत्र सुधा ' वाचारब्धमिति । वाचा वागिन्द्रियेण आरम्भणमुत्पादनं यस्येति तृतीयाया अलुक् ' टापंचापि हलन्तानां यथा वाचा निशा दिशा ' इति वचनात् वाचया आरम्भणं यस्येति बहुव्रीहिरयम् अस्यार्थकथनं वाचारब्धमिति तुशब्दो अवधरणार्थः उत्तरत्र संबध्यते । साङ्केत्येति वाचारम्भणशब्देन साङ्केतिकनामैव वाच्यं स्यात् । अवयवार्थकथनंतु वैशद्यार्थंमेव । यथा चष्टे अनेनेति चक्षुरिति निर्वचनलभ्येऽपि दर्शनकरणत्वे चक्षुषा पश्यतीति नोक्तार्थता तस्यां दशायां अवयवार्थस्याविवक्षितत्वात् । तथा वाचारम्भणशब्दोऽपि सांकेतिकपर्याय इति । विकारशब्दार्थमाह—विकृतमिति । अनेन विक्रियत इति विकार इति कर्मणि घञ् इत्युक्तं भवति । विकृतत्वोपपादकमर्थान्तरंचाह—बह्विति । विविधः कारः प्रकारो विकारः प्रकारप्रकारिणोरभेदात् बह्वित्युक्तं बहुविधमित्यर्थः, यन्मृत्तिकेत्यादिसंस्कृतं नाम तदेव नित्यमिति वैदिकमिति तदुपपादनम् । ततश्चैवं योजना वाचाऽऽरम्भणं सांकेतिकं नामधेयं विकारः उत्पत्तिमत्त्वात् । ततएवानित्यं कुतः बहुविधत्वात् । पुरुषेच्छानुसारेण अनेकविधत्वात् मृत्तिकेत्यादि नामधेयं वैदिकत्वात् नित्यमनादिचेति । प्राधान्यादिति । इदमुक्तं भवति कृतकत्वादनित्यत्वाच्च परापेक्षत्वेन सांकेतिकं नामाप्रधानम् । अनादिनित्यत्वेन परानपेक्षत्वात् संस्कृतं नामप्रधानम् । तत्र यथा प्राधान्यात् संस्कृतज्ञानमात्रेण सांकेतिकं ज्ञातं भवति तज्ज्ञानेन यत्फलं विद्वद्व्यवहारगोचरत्वादिकं तद्भवतीति यावत् । एवमनित्यत्वादिना अप्रधानस्य देवताकर्मादिमिश्रस्य सकलस्यापि जगतो ज्ञानेन यत्फलं तत्समस्तमपि नित्यत्वादिना प्रधानस्य परमात्मनो ज्ञानाल्लभ्यते । तत्फलेऽन्तर्भवतीति अत्र प्राकृताज्ञोपीत्यनेन फलापेक्षया इदमिति सूचितं भवति । एवं तर्हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानममुख्यं स्यादितिचेत् सत्यं, नहि परेणापि तन्मुख्यं व्याख्यातुं शक्यम् । तथासति दृष्टमृदः पुरुषस्य घटशरावादिसंस्थानविशेषादि जिज्ञासाऽसम्भवात् इति

अथ विकारो नामधेयं च द्वयमपि वाचाऽऽरम्भणमिति व्याख्यातम् । तथाऽपि विकारशब्देनैवाभिधेयाभिधानयोः ग्रहणसम्भवात् नामधेयमिति पुनरुक्तिरेव । ' तन्नामरूपाभ्यां व्याक्रियत ' इत्यादि श्रुतेः । परिणामवादिनोऽपि कुयोगे

## गूढार्थसङ्ग्रहः

तृतीयाया अङ्गीकृतत्वात् कर्मणि ल्युटो व्याख्यातत्वात् 'वाचाऽऽरम्भणं विकारो नामधेयम्' इत्येषामन्वयाभावेन पदा न्तराध्याहारस्येष्टत्वादश्रुतकल्पनम्। नामधेयस्याविकारग्रहणेन ग्रहणसम्भवात्पुनरुक्तिः ; इति शब्दस्य निरर्थताचेति स्फुट त्वान्नोक्तम्। ननु तेन इति शब्दः प्रकारवचन इत्युक्तं कथं निरर्थता ? उच्यते—कार्यकारणयोर्भेदशङ्कानिरासार्थमिदमु-च्यते। तत्र यत्सत्तया मृत्तिकासती तयैव मृन्मयं व्याचक्षाणेन वक्तव्यम्। केयं सत्ता विवक्षितेति स्वरूपसत्ताचेत्साध्या-विशिष्टता।' इत्यादि॥

नन्वेकेनेति परमकारणस्यैकत्वम् पिण्डेनेति तत्कार्याभिमुख्यम्, सर्वमिति कार्यनानात्वं विवक्षितम् अतः कथं वैयर्थ्यमिति ? मैवम्—दार्ष्टान्तिवाक्ये अतद्विवक्षायामत्र वैयर्थ्यापरिहारात्। अपिचाद्ययोर्दृष्टान्तयोः कार्यकारणभावमात्रमस्ति किन्त्वेकादिपदवैयर्थ्यमेव, इदंतु सर्वथा नोपपद्यते। 'यथा सोम्यैकेन नखनिकृन्तनेन' इति। नखनिकृन्तनस्या-न्त्यावयवित्वेन कार्ष्णायसान्तरंप्रति कारणत्वस्यैवासम्भवात्। नन्वस्मिन्पक्षे 'सदेव सोम्य' इत्यादेरुत्तरग्रन्थस्य सङ्गत्य भावो दोषः। अस्माकंतु कार्यकारणभावादिप्रपञ्चार्थत्वेनास्त्युपयोग इत्यत आह—प्राधान्येति। आदिपदेन प्रलये अवस्थानं त्रिवृत्करणं जीवरूपेण प्रवेशनमित्यादिकं गृह्यते। प्राधान्याद्ब्रह्मज्ञानेन सर्वज्ञानस्य फलं भवतीत्युक्ते कुतस्तस्य प्राधान्यमित्याशङ्कायां तत्प्रतिपत्त्यर्थं सृष्ट्यादेः प्रतिपादक एव ग्रन्थविस्तरः प्रवृत्तः। अतः कथमसङ्गतिरिति। चशब्दो ऽवधारणे नतूपादानादिप्रतिपत्त्यर्थमिति। नह्युपादानं प्रेक्षापूर्वं कार्यं करोति' इति॥

'सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयम्' इत्यादेरयमर्थः 'इदमग्रे अस्याग्र' इति षष्ठ्यर्थे द्वितीया एतस्य जगतोह्यग्रआसीन्नारायणः परः। एकएव श्रिया सार्धम्' इति बृहद्भाष्ये 'एको नारायणश्चासीत्प्रलये रमयासह। युक्त्या तत गुणचात्मेति श्रुतिषूदितः। इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा। अग्रा एव समस्तेशः' इत्यैतरेयभाष्ये 'एकमेवाद्वि-तीयं स्वगतभेदवर्जितं च। 'एकमेवाद्वितीयं तत् समाभ्यधिकवर्जितम्। स्वगतानां च भेदानामभावाद्ब्रह्मशाश्वतम्' इति प्रवृत्ते। 'भेदाभेदनिवृत्त्यर्थमेव शब्दोऽवधारकः। समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा। भेदाभेदोप्येकशब्दोऽयतो ऽवयविनि स्थितः। एकमेवेत्यतःप्राह नारायणमियं श्रुतिः समे द्वितीयशब्दस्स्यादाद्वितीयोऽसमत्वतः। साधिकः कुत एव स्यादित्याह परमां श्रुतिः' इति सामसंहितायाम् इतिचोक्तः॥ अतः 'एकविज्ञानप्रतिज्ञाऽऽदिकं' 'सदेव सोम्येदमग्र आसीत्' इति श्रुतिश्च न सच्छब्दवाच्यस्य परस्य ब्रह्मणः जगदुपादानत्वं बोधयितुमलमितिचेत्—

अत्रोच्यते—एक पिण्ड मणिशब्दानां वैयर्थ्यं न सम्भवतीति सुधायां यः पूर्वपक्षः स एव सिद्धान्तः। पिण्डेने-त्यस्य कार्याभिमुख्यपरत्ववत् लोहमणिनेत्यत्र मणिशब्दोऽपि कार्याभिमुख्यपर एव। यद्वा लोहश्रेष्ठ स्वर्णबोधको वास्यात् वस्तुतस्तूभयबोधकत्वं विवक्षितमित्येव युक्तम्। नव्यमते लोहमणिनेत्यत्र मणिशब्देन प्राधान्यबोधनसम्भवेऽपि नखनि-कृन्तनेति न प्राधान्यं बोधयितुमलम्। अयोबोधकशब्दान्तरं विहाय नखनिकृन्तनेति प्रयोगस्य सार्थक्यं नव्यैरपि नोप-पादयितुं शक्यम्। तेन साहश्यात्सर्वविज्ञानमत्र विवक्षितमित्यपि न सिद्ध्यति। नखनिकृन्तनस्यान्त्यावयवित्वेऽपि नख निकृन्तनशब्देन सूक्ष्मत्वमेवात्रतु बुबोधयिषितम्। तच्च कार्योन्मुखावस्थापर्यवसितम् प्रथमं मृत्पिण्डेनेत्यत्र पिण्डशब्दसूचि-तावस्थायाः उत्तरदृष्टान्तद्वयेऽपि विवक्षा युक्ता मृत्वेन साहश्यात् सर्वं मृन्मयं विज्ञातं स्यादिति नव्यमते पिण्डशब्दवैय-र्थ्यमेव पिण्डशब्देन प्राधान्यप्रतीतेरप्यसम्भवाच्च। प्रत्युत पिण्डशब्दो बाधकः। पिण्डावस्थया साहश्यासम्भवात्। अतः पिण्डशब्देन कार्योन्मुख्यावस्था प्रतिपिपादयिषितेत्येव युक्तम्॥

## गूढार्थसंग्रहः

एवं च घटशरावोदञ्चनादि स्वकार्योन्मुखावस्थापन्नायाः मृदः नानाविधावस्थापन्नानां घटशरावादीनां तत्कार्याणां अवस्थाभेदेऽपि धर्म्यैक्येन 'इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीत्' इति प्रत्यभिज्ञया उपादानोपादेययोर्भेदः अस-त्कार्यवादि नैयायिकादिसम्मतः न युक्त इत्युपपादितं भवति । अवस्थाविशेषविशिष्टस्य कार्यस्य अत्र ज्ञातत्वमविवक्षित-मिति 'दृष्टमृदः पुरुषस्य घटशरावादि संस्थानविशेषजिज्ञासाऽभावः' नैवापादयितुं शक्यः । विज्ञातफलत्वाद्युक्त्या सुधाया-मेकविज्ञानेन सर्वविज्ञानममुख्यमङ्गीकृतमेव । अतः 'एकविज्ञानेन सर्वविज्ञानम्' धर्म्यैक्यनिबन्धनमेव श्रुतितात्पर्य-विषयः । 'येनाश्रुतंश्रुतं भवत्यमतंमतमविज्ञातं विज्ञातं भवति' इति तत्पूर्ववाक्येऽपि अश्रुतश्रुतयोरभेदएवोक्तः । तेनचोपादानोपादेयधर्मिणोरभेद एवात्र विवक्षित इति निश्चीयते । 'सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयम्' 'तदैक्षत बहुस्यां प्रजायेय' इत्याद्युत्तरवाक्यसन्दर्भे दार्ष्टान्तिकेऽप्ययमर्थः स्फुटः ॥

अत्र 'आत्मा वा इदमेकएवाग्रआसीत्' इति श्रुत्यन्तरानुरोधेन 'सदेवेदमग्रे एकमेवासीत्' इत्येवोद्देश्यवि-धेयभावः भगवतैव स्थापितः । अयमेव युक्तः 'बहुस्यां प्रजायेय' इति बहुशब्दप्रतिकोटित्वादेकशब्दस्य । बहुत्वं च 'नामरूपे व्याकरवाणि' इति श्रुत्या प्रकाशयिष्यते । एवं च बहुत्वं बहुनामरूपभागित्वमेव पर्यवस्यति । एकत्वमपि नामरूपव्याकरणाभावेन बहुनामरूपभागित्वाभावात् प्रलये नामरूपविभागानर्हत्व एव पर्यवस्यति । यथा घटशरावाद्यु-त्पत्तेः पूर्वं मृदः घटशरावादिनानाविधनामरूपभागित्वाभावेनैकता तद्वत्प्रलये परस्यब्रह्मणः नानानामरूपभागित्वाभावे-नैकत्वमिति दृष्टान्तोक्तार्थः दार्ष्टान्तिके सम्यगुपपादितो भवति । नव्यमते 'बहुस्याम्' इत्यत्र नियामकरूपबहुत्वं विव-क्षितम् । 'एकम्' इत्यत्र स्वगतगुणक्रियाद्यभेदो विवक्षितः इति 'एकमेवासीत्' बहुस्याम्' इति श्रुतिद्वयपर्यालोच-नया बहुत्वप्रतिकोटिभूतमेकत्वं स्वरसतःप्रतीयमानं नैवाद्दतंभवतीत्यस्वारस्यं स्फुटं विदुषाम् ॥

'नामरूपे व्याकरवाणि' इत्युत्तरत्र द्विवचनश्रवणेन नामरूपद्वयं विवक्षितमिति स्फुटम् । तदुभयनिबन्धनमेव बहुत्वम्, तत्प्रतिकोटिभूतंचैकत्वं दार्ष्टान्तिके निश्चितमिति 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति दृष्टान्तवाक्येऽपि विकारशब्देनोत्तरत्र वक्ष्यमाणं रूपमेव विवक्षितमिति निश्चीयते, दृष्टान्तदार्ष्टान्तिकयोरैकरस्यानुरोधात् । एतेन चशब्दविरहः नैतद्विवक्षाबाधकः । 'तन्नामरूपाभ्यां व्याक्रियत' इति श्रुतावपि नामरूपव्याकरणमेव विवक्षितं, नतु नाम्नो विकृतत्वं तत्रोक्तम् । 'विकारोनामधेयम्' इत्यत्र रूपशब्दं विहाय विकारशब्दप्रयोगस्य बीजं रूपशब्द-विकारशब्दयोः उभयोःपरिणामबोधकत्वेऽपि एकरूपेण बोधकत्वाभाव एव ॥

एतेनेदं सूचितं भवति । विकारः सङ्कोचविकासात्मकःपरिणामः अनित्यताऽऽपादकः । सच मृदादि दृष्टान्ते प्रसिद्धः । रूपम् अवस्थापरिणामः इति रूपशब्देन सङ्कोचविकासात्मकपरिणाम तदन्यपरिणामयोरुभयोर्विवक्षणेन श्रुति-सिद्ध वस्तुस्वरूपानुरोधेन कार्यप्रपञ्चे सङ्कोचविकासात्मकःपरिणामः ब्रह्मणितु तत्तत्कार्यान्तर्यामित्वरूपःपरिणाम इति तत्त-त्कार्यान्तर्यामित्वरूपपरिणामस्य ब्रह्मण्यङ्गीकारेण ब्रह्मणि नित्यतायाः न क्षतिः । इति ॥

तत्तत्कार्योत्पत्त्यनन्तरमेव वा तत्समकालेवा तत्तत्कार्यान्तर्यामित्वस्याभिव्यक्तिः नवीनैरप्यङ्गीक्रियते । अतः तत्तत्का-र्योत्पत्तिकालिकतत्तत्कार्यान्तर्यामित्वनिबन्धनबहुत्वं 'बहुस्याम्' इत्यत्र विवक्षितमिति 'सदेव सोम्येदमग्रआसीदेकमेव' इत्यत्र तादृशबहुत्वप्रतिकोटिभूतैकत्वस्य विवक्षितत्वेन दृष्टान्तोक्तार्थः दार्ष्टान्तिके परिणामभेदेन उपपादितो भवति ॥

एवं च 'विकारो नामधेयम्' इति पदद्वयस्य 'नामरूपे व्याकरवाणि' इति वक्ष्यमाणश्रुत्यनुगुणार्थद्वयपरत्वं युक्तम् । 'वाचाऽऽरम्भणब्दोऽपि साङ्केतिकपर्यायः' इत्युक्तिः (सुधायां) कोशाद्यभावात् पर्यायत्वस्य सर्वसम्मतत्वाभावेन

## गूढार्थसंग्रहः

साहसमात्रमेव। चक्षुश्शब्दस्य कोशादौ रूढिःक्लृप्तेति चक्षुश्शब्दो नात्र दृष्टान्तो भवितुमर्हति वाचाऽऽरम्भणशब्दस्य साङ्केतिके रूढेरक्लृप्तेः। वाचया आरम्भणं यस्येति बहुव्रीहिरयं तस्यार्थकथनं वाचाऽऽरब्धमिति अभिधाय— वाचाऽऽरम्भणशब्दादेव विकारत्वलाभात् विकार इति पुनरुक्तता स्यात्' इति सुधोक्ता शङ्का सुधायां नैव परिहृता भवति। 'चक्षुषा पश्यति' इत्यादौ चष्टे अनेनेति चक्षुरिति निर्वचनलभ्य दर्शनकरणत्वरूपावयवार्थाविवक्षावत् वाचाऽऽरम्भणशब्दावयवार्थस्याविवक्षया शङ्कासमाधानस्य वाचाऽऽरम्भणशब्दस्य रूढेरसिद्ध्या असम्भवात्। श्वेतकेतोः नव्योक्तार्थपरिज्ञानस्यासम्भवाच्च॥

'आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणम्। कृत्यल्युटो बहुलमिति कर्मणि ल्युट्। वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः। घटेनोदकमाहर इत्यादिवाक्पूर्वको ह्युदकाहरणादिव्यवहारः तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः संस्थानविशेषः तत्प्रयुक्तं च घट इत्यादिनामधेयं स्पृश्यते। उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग्भवति' इत्यारम्भणाधिकरणे भगवता वक्ष्यते। अत्र 'अध्ययनेन वसति फलमपीह हेतुरिति' वैयाकरणोक्त्या अत्र फलस्य हेतुत्वविवक्षया तृतीया। वाक्छब्दस्य वागिन्द्रियपरत्वे अजहल्लक्षणा नदोषइत्यभ्युपेत्येत्थमुक्तम्। वाचाशब्दस्यापि सद्भावेन वाचायै आरम्भणमिति विग्रहसम्भवेऽपि वाक्छब्दस्यैव झटिति प्रतीतिरित्यभिप्रेत्य वाचेति तृतीयान्तमित्यभ्युपगमः। वाक्छब्दस्य वचश्शब्दपर्यायत्वेन सामान्यवाचिनाऽर्थविशेषस्यापि तात्पर्यानुरोधेनोपस्थितिसम्भवेन उपादानोपादेययोरभेदस्य नैयायिकमतनिरसनार्थतया अत्र विवक्षायाः निश्चयेन मृदुपादेये घटशरावादिनामधेयभेदस्य तन्मूलसन्निवेशविशेषस्यचोपपादनार्थमेतद्वाक्यप्रवृत्तिनिश्चयेन उदकाहरणाद्यर्थबोधकशब्द एवात्र विवक्षित इत्यप्युक्तिः सम्भवति। तत्रावयवार्थविवक्षणेन फलस्य हेतुत्वविवक्षया उदकाहरणाद्यवयवार्थ एव पर्यवसानमित्यपि वक्तुं शक्यते॥

एतेन श्रुतौ 'वाक्प्रातिपदिके लक्षणायाः तृतीयाविभक्तौ चतुर्थ्यर्थतायाः आरम्भणशब्दे रलयोरभेदेन आलम्बनार्थतायाः नामधेयमित्यत्र चशब्दाध्याहारस्य मृद्द्रव्येणेत्यस्याध्याहारस्यचायोगात्, मृद्द्रव्येण घटादेः स्पृश्यमानत्वोक्त्या तयो र्भेदस्यैवापाताच्च' इति चन्द्रिकोक्तदूषणं निरवकाशम्। वाचाऽऽरम्भणशब्दस्य साङ्केतिकार्थकत्वे दोषस्य पूर्वमुक्तेः। अजहत्स्वार्थलक्षणायास्तात्पर्यानुरोधेनादोषत्वात्। अध्ययनेन वसतीतिवदत्रापि तृतीयाया उपपत्तिसम्भवात्। विकारो नामधेयमित्यत्र अर्थद्वयविवक्षागमकस्य प्रागेवोक्तेः। एकेन मृत्पिण्डेनेति पूर्ववाक्यस्थ मृत्पिण्डशब्दस्यात्रानुषङ्गसम्भवेन तत्सिद्धार्थस्यैव भाष्येऽभिधानेनात्राध्याहारस्यैवाभावात् विकारशब्देन परिणामविशेषस्यैव बोधनेन घटत्वाद्यवस्थारूपपरिणामस्य मृदश्च संबन्धकथनेन मृदः परिणामविशेषस्य भेदसिद्धावपि परिणामविशेषाश्रयस्य मृदश्चाभेदस्याक्षतेः। रलयोरभेदः क्वचित्क्वचित्सर्वैरप्यङ्गीक्रियते इत्यभिप्रेत्य आलम्भनशब्दस्य स्पर्शार्थकत्वं मीमांसकैरङ्गीकृतमिति निश्चित्य भगवता तथा व्याख्यातम्। आरम्भवादः नैयायिकानां, परिणामवादः साङ्ख्यानां वेदान्तिनां च सम्मतः। कार्यस्य पूर्वमेव सत्वे विकारनामधेययोः पूर्वमपि सत्त्वाभ्युपगमावश्यकतया पूर्वं तदव्यवहारो नस्यात्, इति शङ्कायां वाचाऽऽरम्भणमिति वाक्यं वाचेत्यस्य पूर्ववदेवार्थः। विकारस्य तन्निबन्धननामधेयस्य च आरभ्यता नतु सूक्ष्मरूपावस्थापन्नकारणरूप धर्मिणः इति पूर्वं विकारनामधेययोरव्यवहारः अनन्तरं व्यवहारश्चोपपद्यत इति न दोषः॥

यद्वा आरम्भणमित्यत्र भावे ल्युट् आरम्भणमुत्पत्तिः विकारइत्यत्रान्वेति, विकाराभिन्ना उत्पत्तिरित्यर्थः। घटादेः पूर्वं सत्वे इदानीं घट उत्पद्यते घटस्योत्पत्तिः इति पूर्वं कुतो नव्यवहारः इति शङ्कावारणमनेनकृतं भवति। विकार॰

## गूढार्थसंग्रहः

एवोत्पत्तिः, सैव तदवस्थस्योत्पत्तिरिति भाष्ये वक्ष्यते । विकारांशेऽसत्कार्यवाद इष्टः द्रव्यांऽशेसत्कार्यवादस्यानभ्युपगमेऽपि अवस्थांशेऽसत्कार्यवादस्यानभ्युपगमात् । अवस्थांशेऽपि असत्कार्यवादः अभिव्यक्तिनिबन्धन एव व्यवहारः इति वदतां साङ्ख्यानां मत माभिव्यक्तिपदार्थशोधनेन उत्तरत्र दूषयिष्यते । अतश्च विकाररूपा उत्पत्तिः घटशरवादिनामधेयं च उदकाहरणादिव्यवहारसिद्ध्यर्थमिति एतद्वाक्यार्थः पर्यवसितः । अतो न चन्द्रिकोक्तदोषावसरः ॥

एतेन घट उत्पद्यते इत्यत्र घटः आद्यक्षणसम्बन्धिविकाराश्रय इत्यर्थः पर्यवस्यतीति बोधितम् । अयमर्थः सर्वार्थसिद्ध्यादावसेयः । 'लोके गौरित्ययमाहेति गोशब्दादितिकरणः प्रयुज्यमानः गोशब्दं स्वस्मात् पदार्थात् प्रच्यावयति' इति 'नवेतिविभाषा' इति सूत्रस्थमहाभाष्योक्त्या लोके सर्वत्र इतिशब्देन शब्दस्यैव प्रतीतिरिति न निश्चेतुं शक्यम् । गौरिति ज्ञानं, गौरितिपदं गौरित्यर्थः, इत्यत्र इतिशब्दप्रयोगाविशेषेऽपि सर्वत्र गोशब्दप्रतीतेः लोकानुभवविरुद्धत्वात् । आहेत्यादिपदसमभिव्याहार एव इतिशब्देन शब्दप्रतीतिः, नतु सर्वत्रेति भाष्यकृदाशयः । अत्र च न तादृशसमभिव्याहारो वर्तते । 'नामब्रह्मेत्युपासीत, आत्मेत्येवोपासीत' इत्यादौ नव्यमतेऽपि इतिशब्देन शब्दप्रतीतेरनङ्गीकारात् । मृत्तिकैव सत्यमित्युक्तौ मृत्तिकैव प्रमाविषयः नान्यः इत्यर्थस्स्यात् । इतिशब्देसति अभेदेन मृत्तिकाप्रकारेणैव प्रमाविषयत्वलाभेन तत्कार्यस्य मृत्तिकाभेदवादिनैयायिकादिमतनिरास इति इतिशब्दसार्थक्यम् ॥

एतेन 'यत्सत्तया मृत्तिका सती तयैव मृण्मयम्' इति सिद्धान्त्यनभिप्रेतार्थमाशङ्क्य 'केयं सत्ता' इत्यादि सुधोक्तिः निरवकाशा । एवं 'पुनरुक्त्यश्रुतकल्पनेतिशब्दवैयर्थ्यानि सिद्धान्तेऽपि स्फुटानी' ति सुधोक्तिरपि प्रागुपपादित दिशा एतेषां दोषाणां सर्वथाऽसम्भवेनानुपादेया ॥

सिद्धान्ते 'एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः मुख्यत्वमुपपादितम् । नव्यमते अमुख्यत्वमभ्युपगतमेव । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया उपादानोपादेयभावप्रतीत्या दार्ष्टान्तिके उपादानोपादेयभावमुपपादयितुमादेशशब्दबोधितनिमित्तकारणत्वमुपपादयितुं च 'सदेव सोम्य' इत्यादिः उत्तरग्रन्थः । उत्तरवाक्ये सृष्टेः कथनेन अग्रेइत्यनेनैव प्रलय इत्यर्थस्य सिद्ध्या इदमित्यस्य नव्यमते वैयर्थ्यमेव । 'अग्रे पूर्वं प्रलये' (रा.स्वा.ख) इत्यर्थस्य नव्यसम्मततया इदं शब्दाभावेऽपि तादृशार्थलाभसम्भवात् । षष्ठ्यर्थे द्वितीयाकल्पनमपि श्रुतिपीडनमेव । अग्रइत्यस्य ऐतरेयभाष्यानुसारेण— अग्रय इति कैश्चिन्नव्यैः विवरणं कृतम् । तत्रापि सृष्टिवाक्यपूर्ववाक्ये अग्र इत्यनेन अग्रयइत्यर्थस्य प्रतीतिरेव अनुभवविरुद्धा । एतत्पक्षेऽपि इदमित्यस्य वैयर्थ्यं दुष्परिहरमेव । इदमिति सृज्यवस्तुसामान्यपरं, समानाधिकरणनिर्देशेषु सृज्यवस्तुवाचिशब्दस्य तदन्तर्यामिपरत्वं नवीनानामपि सम्मतम् । 'सर्वं मृन्मयम्' इत्येतत्स्थाने इदमितिशब्दः मृत्पिण्डशब्दस्थाने च सच्छब्दः । अग्रे इत्यनेन सृष्टिपूर्वकालिकावस्थाबोधनेन 'इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीत्' इति वाक्यसमशीलमिदंवाक्यं सच्छब्दः कार्योन्मुखावस्थापन्नमृच्छब्दस्थानापन्नः मानसम्बन्धयोग्यत्वरूपधर्ममुखेन सूक्ष्माचिज्जीवान्तर्यामिबोधकः । सच्छब्दः प्रमाविषयतद्योग्यरूपार्थबोधकः इति वैयाकरणैः प्राभाकरैश्चाङ्गीक्रियते इति सङ्क्षेपशारीरकेऽप्युक्तेः । इदंशब्दस्य स्थूलाचिज्जीवान्तर्यामिपरतया तदर्थस्य सूक्ष्माचिज्जीवान्तर्यामिरूपसच्छब्दार्थाभेदः अत्र विवक्षितः । एकशब्दः वक्ष्यमाणबहुत्वविरोधिधर्मविशिष्टपरइति पूर्वमेवोक्तम् ॥

एतेन मृत्तत्कार्यदृष्टान्तस्थले वेदान्तव्युत्पत्तिहीनानां घटशरावादेः मृदश्चाभेदमात्रस्य प्रतिपत्तिः, वेदान्तव्युत्पत्तिमतांतु तत्प्रतिपत्तिकाल एव घटशरावाद्यन्तर्यामिणः मृदन्तर्यामिणश्च अभेदप्रतिपत्तिः निर्धारिता भवति । अद्वितीयशब्दस्य

## गूढार्थसंग्रहः

समानशून्य इत्यर्थः नवीनैरभ्याहृतः । 'सदेव सोम्येदमग्र' इत्यत्र उपादानोपादेयभावस्योक्त्या कारणत्वेनोपादानेन समं निमित्तकारणं भवतीति स्वभिन्ननिमित्तकारणशून्यपरः अद्वितीयशब्दः । अद्वितीयशब्देन आदेशशब्दबोधितनिमित्तकारणत्वं विशदीकृतं भवति । 'यथा सोम्यैकेन मृत्पिण्डेन' इति दृष्टान्तोक्तार्थस्य 'सदेव सोम्य' इति दार्ष्टान्तिके विवरणपूर्वकमुपादानत्वं बोधितम् । आदेशशब्देन राजत्वस्य सूचनेन आदेशशब्दार्थस्यैव 'सदेव सोम्य' इत्यत्र विवक्षामभिप्रेत्य यामुनमुनिभिः–'यथा चोलनृपस्सम्राडद्वितीयोऽस्ति भूतले । इति तत्तुल्यनृपतिनिवारणपरं वचः ॥ नतु तत्पुत्र तद्भृत्य तत्कलत्रनिवारणम् ।' इति संवित्सिद्धावुक्तम् । अतः उत्तरत्र सृष्टिकथनानुगुण्येन पूर्वं 'तमादेशमप्राक्ष्यः' इत्यादौ 'सदेव सोम्येदमग्र' इत्यादौ च परस्य ब्रह्मणः उपादानकारणत्वनिमित्तकारणत्वे विवक्षिते इत्येव युक्तम् । नतु प्राधान्यप्रतिपत्तिः पूर्ववाक्ये अत्र च नवीनसम्मता युक्ता, प्रागुक्तानुपपत्तेः । 'तदैक्षत बहुस्यां प्रजायेय' इत्युत्तरग्रन्थसन्दर्भे पूर्वोक्तैकत्वप्रतिकोटिभूतबहुत्वप्रतिपादनेन स्वपर्यन्तनामरूपव्याकरणप्रतिपादनेन च 'सदेव सोम्येदमग्रआसीत्' इति वाक्ये सामानाधिकरण्यमुक्तदिशैवेति व्यवस्थापनमुखेन ब्रह्मण उपादानत्वं निमित्तत्वं च दृढीक्रियते ॥ एतेन श्वेतकेतोः 'सदेव सोम्य' इत्यत्र सिद्धान्तिसम्मतार्थज्ञानमपि न सम्भवतीति शङ्काया नावकाशः । उत्तरश्रुतिसन्दर्भे श्वेतकेतोः ज्ञानसम्भव उपपादयिष्यते ॥

अत्र अद्वितीयमित्यत्र द्वितीयपदस्य स्वान्यसामान्यबोधकत्वं मुख्यवृत्त्यैव । सङ्कोचेनैव सजातीयान्यबोधकत्वोपपत्तिः । सजातीये सङ्कोचोऽपि 'यत्र किंचित्प्रकारेण बोधे स्वतन्त्रतात्पर्यम्' इत्यादिप्राक् (१८०.पु) उदाहृतचन्द्रिकोक्तरीत्यङ्गीकारेऽपि आदेशशब्दार्थस्यैव 'सदेव सोम्य' इत्यत्र विवक्षायाः सर्वैः वाच्यतया आदेशशब्दस्य प्रशासितृत्वार्थकत्वं प्राचीनैरेव व्यवस्थापितमिति यामुनमुन्युक्तरीत्या सजातीयान्यबोधकत्वमेव युक्तम् । 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किंचन मिषत्' इत्यत्र मिषदित्यस्य आसीदित्यर्थकत्वे वैयर्थ्यप्रसङ्गेन स्पर्धार्थकत्वस्यैव वाच्यतया उपादानेन स्पर्धमानं निमित्तमेव भवतीतिस्वान्यनिमित्तकारणनिषेधस्यैव तत्र विवक्षितत्वेन तदैकण्ठ्येन अद्वितीयमित्यत्रापि स्वान्यसजातीयनिमित्तकारणनिषेध एव विवक्षित इति निश्चीयते ॥

'कश्चिद्द्वितीयगामी' इत्यादौ द्वितीयशब्दस्य स्वान्यबोधकत्वस्य सम्प्रतिपन्नत्वेऽपि अद्वितीयशब्दस्य स्वान्यसामान्यशून्यबोधकत्वं लोके न क्वापि दृष्टम्, लोके अर्थासम्भवेन स्वान्यसामान्यशून्यबोधकत्वासम्भवेन सङ्कोचेनैव प्रयोगेऽपि श्रुतावसङ्कुचितार्थ एव युक्तः' इति बिन्दुटिकोक्तमप्यनादरणीयम् । अद्वितीयशब्दघटकनञः सजातीयस्वान्यशून्यबोधकत्वमेव व्युत्पन्नम्, नतु स्वान्यसामान्यशून्यबोधकत्वम् । लोके व्युत्पत्तिविरहे शास्त्रे पृथग्व्युत्पत्तिकल्पनं प्रमाणविरहेण न सम्भवति । स्वान्यसामान्याभावप्रकारकबोधः न सम्भवत्येव । स्वान्यसामान्याभावस्यापि परसम्मतस्य ब्रह्मभिन्नत्वेन ब्रह्मान्यतया तदङ्गीकारे स्वान्यसामान्याभावस्यैवासिद्धेः । तत्प्रकारकबोधानङ्गीकारे द्वैतबुद्धिविरोधित्वं नैतद्वाक्यजन्यबोधस्य सम्भवति । अवान्तरतात्पर्येण द्वारभूतधियः द्वैतबुद्धिविरोधित्वाङ्गीकारेऽपि स्वान्यसामान्याभावस्य स्वान्यत्वेन ज्ञाने द्वारभूतधियः भ्रमत्वनिश्चयेन द्वैतमेव तात्त्विकं स्यात् । एतदभावव्यतिरिक्तस्वान्यसामान्याभावविषयकत्वाङ्गीकारे संकुचितार्थ एव परैरप्यङ्गीकृतः स्यात् नत्वसङ्कुचितार्थः । अद्वितीयपदेनैव द्वितीयाभावस्यापि द्वितीयतया निषेधो बोध्यत इति अद्वैतसिद्धि चन्द्रिकाद्युक्तिः न घटत इति प्रागेव निरूपितम् ॥

'आत्मा वा इदम्' इति श्रुत्यैककण्ठ्येन वक्ष्यमाणबहुत्वाविरोध्येकत्वमेव अत्र विधेयतया विवक्षितमित्युक्तम् । एतेन प्राक् (१३२–१७९) उदाहृतचन्द्रिकोक्तप्रकारः न श्रुतौ विवक्षित इति सिद्ध्यति । अत्र सदित्यनेन

गूढार्थसंग्रहः

शून्यवादिनामद्वितीयादिपदैस्तु तार्किकाणां निरासः इत्यर्थस्य श्रुतितात्पर्यविषयता न सम्भवति, शून्यवादिभिः कार्यपदार्थप्रतीतिकालेऽपि पारमार्थिकसत्त्वानङ्गीकारात्, अग्र इत्यस्य वैयर्थ्यात्। सदेकमद्वितीयमित्यनेनैव उभयोर्निरासस्य सम्भवात्। 'सदेकमेवाद्वितीयम्' इत्युक्ते तच्छ्रवणमात्रेण मूढानां, व्युत्पन्नानां सन् घट इत्यादिप्रत्यक्षविरोधभ्रमेण व्यामोहात् तन्निरासार्थम् 'अग्रइति' इति गुरुचन्द्रिकोक्तिरपि नादर्तव्या। एतावताऽपि सन् घट इत्यादिप्रत्यक्षभ्रमस्यानिरासात्। अतः 'अग्र' इत्यस्य सार्थक्यं परमते नैव सम्भवति। एवमिदमित्यस्यापि वैयर्थ्यमेव। 'सदेकमेवाद्वितीयम्' इत्युक्त्यैव प्रतिबन्धकद्वारभूतद्वितीयाभावबुद्धेरपि सम्भवात्। इदमित्यस्याभावे मिथ्यात्वप्रतीतिर्न सम्भवति, कालभेदेन द्वितीयाभावसम्भवात्। इदमित्यस्य सत्वे उद्देश्यताऽवच्छेदकविधेययोः तात्पर्यानुरोधेन ऐककालिकत्वप्रतीत्या द्वैतावच्छेदककालावच्छेदेनद्वैताभावः सिद्ध्यतीति प्रागुदाहृतचन्द्रिकायामेवोपपादितमिति न इदमित्यस्य वैयर्थ्यमिति, इत्युक्तिरपि न घटते। 'अग्रे आसीत्' इत्यस्यैव उक्तार्थप्रतीतिविरोधित्वात्। 'इदमभिन्नमग्रे यदासीत्' इत्युक्त्या अग्रकाले द्वितीयवत्त्वमेव तद्वाक्यात् प्रतीयते। अग्रकाले द्वितीयाभावबोधने अनन्तरकाले द्वितीयसत्ता सिद्ध्यत्येव। सद्रूपे प्रतीतस्य तस्य परिच्छेदकाकाङ्क्षायां सङ्कोचकाभावादेव सर्वकालस्यैव परिच्छेदकतया कल्पनात्। एवकारस्याऽवृत्त्या द्वितीयाभावायोगव्यवच्छेदबोधकत्वेन यदायदा सद्रूपं तदातदा द्वितीयाभाव इति व्यापकत्वलाभाद्वा द्वितीयाभावस्य व्याप्यवृत्तित्वलाभेन मिथ्यात्वं गुरुचन्द्रिकायामुपपादितम्। एतत्पक्षेऽपि इदमित्यादेर्वैयर्थ्यमेव। अग्र इत्यस्य सत्त्वेनैव मिथ्यात्वं नात्र विवक्षितमिति निश्चीयते। अतः अग्र इत्यादेः वैयर्थ्यं प्राचीनैराचार्यैर्यदुक्तं तदप्रकम्प्यम्। अद्वितीयादिपदैः तार्किकाणां निरासः इत्यप्यनुपादेयम्। कार्यस्य पूर्वमसत्त्वस्य तार्किकैरङ्गीकारेण अद्वितीयादिपदाभावेऽपि तार्किकनिरासस्भवात् अग्रे विद्यमानत्वोपलक्षिते अखण्डसदद्वितीयत्वस्य अद्वैतत्वोपलक्षितस्य विधानमत्र विवक्षितमिति कथं निश्चीयते। सत्ताविशिष्टस्यैव एकत्वविधानसम्भवे तत्परित्यागेन उपलक्षितार्थविवक्षाया असम्भवात्॥

अद्वैतसिद्धौ 'सद्व्यतिरेकेण नास्तीत्यस्यैव निषेधार्थत्वात्' इत्युक्तम्। अत्र गुरुचन्द्रिका। 'घटादिकं स्वोत्पत्तिपूर्वं मृदेवासीदित्यादौ यथा घटाद्यभेदोपलक्षितमृदेवासीदित्यर्थः, तथा प्रकृतेपीदमभेदोपलक्षितं सदेवाग्रआसीदिति सदेवेत्यादेरर्थइत्याशयेनाह—सद्व्यतिरेकेणेति। सदन्यत्वरूपेणेत्यर्थः, सदन्यदिति शेषः। निषेधार्थत्वात् सदेवेत्येवकारार्थत्वादद्वितीयादिपदार्थत्वाच्च। एवं च प्रपञ्चे सत्त्वसम्बन्धो न बुध्यतएवेति नविरोधिशङ्का। विशेष्यसङ्गतैवकारस्यान्ययोगव्यवच्छेदकत्वं च युक्तमिति सदन्यसामान्ये अग्रकालसत्त्वाभावो बुध्यतइति भावः। एतत्—सदेवेत्यादिवाक्यम्। आरम्भणाधिकरण इति। 'सत्त्वाच्चापरस्य' इत्यादिसूत्रेष्विति शेषः। तत्रहि प्रागुत्पत्तेः कारणात्मनैव सत्त्वं कार्यस्य। 'सदेव सोम्येदमग्रआसीत्' इत्यादौ इदंशब्दगृहीतस्य कार्यस्य कारणे सामानाधिकरण्यादिकमुक्तम्' इति॥

एवमर्थाङ्गीकारे सिद्धान्तेऽपि न विरोधः। कार्यप्रपञ्चस्य कारणात्मना प्रलये सत्त्वाङ्गीकारात्। 'आत्मावा इदम्' इत्यादि श्रुत्यन्तरानुसारेण सदेवेत्यादावपि एकत्वस्यैव विधानमिति सिद्धान्तस्थितिः॥ अनन्तरमद्वैतसिद्धौ 'नच सद्व्यतिरेकेण असत्त्वोक्तौ सदात्मना सत्यत्वमागच्छतीति वाच्यम्; आगच्छतु नाम, कोहिनाम ब्रह्माभिन्नस्यारुत्यत्वसाधनाय प्रवृत्तो यो बिभीयात्। अद्वैतवाक्यस्य च षड्विधतात्पर्यलिङ्गवत्तया बलवत्त्वेन आविद्यकद्वैतप्रतिपादकत्वं सृष्ट्यादिवाक्यानाम्' इत्याद्युक्तम्॥ अत्र गुरुचन्द्रिका—'आविद्यकेति। फलवत्सन्निधावफलं तदङ्गमितिन्यायेन द्वैतवाक्यानामद्वैतवाक्यशेषत्वात्तदनुसारेण कारणव्यतिरेकेण कार्यं नास्तीत्यादिज्ञापनद्वारा अद्वैतब्रह्मण्येव सृष्ट्यादिवाक्यानां तात्पर्यम्' इति। फलवत्सन्निधावित्याद्यर्थस्तु प्रागुदाहृत (१२८.पु) सूत्रभाष्येऽपि स्फुटः॥

## श्रीभाष्यम्

**जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्याद्यनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां प्रतिपाद्य**

## श्रुतप्रकाशिका

आदिशब्देन सृष्ट्युपयोगिनः श्रुत्यन्तरसिद्धा गुणा गृह्यन्ते। ऐतदात्म्यमित्यनेन कृत्स्नस्य जगतः तदात्मकताचावगम्यते। तत्सत्यमिति तदात्मकत्वेनैव जगतः प्रामाणिकत्वम्। जगतस्स्वनिष्ठत्वेन प्रतीतिः भ्रान्तिरित्यर्थः। अतः कृत्स्नस्य जगतः स आत्मा। ऐतदात्म्यमिदं सर्वं स आत्मेति निर्देशः **'रामानुजं लक्ष्मणपूर्वजं च'** इतिवदन्योन्य-

## गूढार्थसङ्ग्रहः

अत्र षड्विधतात्पर्यलिङ्गोपेतत्वेन अद्वैतवाक्यस्य प्राबल्यमुक्तम्। 'सदेव' इत्यादिवाक्यमपि सृष्टिप्रकरणस्थमेव। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायां परिणाम्युपादानोपादेयभावस्य स्फुटत्वात्। 'घटादिकं स्वोत्पत्तिपूर्वं मृदेवासीदित्यादिवत् सदेवेत्यादिवाक्यमिति' चन्द्रिकायामेवोक्तेः। नैयायिकसम्मतासत्कार्यवादनिरासः एतद्वाक्ये स्फुट इति परसम्मतमद्वैतं नात्र विवक्षितम्। नानानामरूपनिबन्धनबहुत्वविरोध्येकत्वस्यात्र विधेयतया विवक्षितत्वात्। तेनच परिणाम्युपादानत्वस्यैव सिद्धेः। अद्वितीयपदस्य सजातीयस्वान्यनिषेधपरत्वेन निमित्तकारणपरत्वात्। उपलक्षितपरत्वस्य निश्चायकं नकिंचित्तात्पर्यलिङ्गमत्र वर्तते। एवमद्वितीयपदस्य परसम्मतार्थनिर्णायकमपि न तात्पर्यलिङ्गमत्र पश्यामः। निर्विशेषस्यात्र विवक्षानिश्चयेन फलवत्त्वसाधनानन्तरं फलवत्सन्निधावित्युक्तिसम्भवः। तत्साधनमेव न सम्भवति; उक्तयुक्तेः॥

किंच 'हन्ताहमिमास्तिस्रो देवताः' इत्यत्र हन्तेतिशब्देन प्रयोजनकथनेन सविशेषपरत्वं 'सदेव' इत्यादेर्निर्धारितम्। 'हन्तहर्षेऽनुकम्पायाम्' इत्यमरः। 'लोकवत्तु लीलाकैवल्यम्' इत्यत्र स्वानन्दः सृष्ट्यादेः फलम्। 'वैषम्य नैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति' इत्यत्र परानन्दः फलमिति च सूत्रकृता निर्णीतम्। राजकुमारन्यायसम्प्रदायानुसारेण ब्रह्मप्राप्तिप्रतिपादकश्रुतयस्सर्वा अपि जगन्महाराजकुमारस्य तद्राजप्राप्तिप्रतिपादनेन सविशेषविद्यायाः फलं प्रतिपादयन्त्यः 'सदेव' इत्यादेरपि सविशेषपरतां प्रतिपादयन्ति। सृष्ट्यादिवाक्यानां ब्रह्मप्राप्तिप्रतिपादकवाक्यानां च सामरस्यमेकविधप्रामाण्यमित्यादिकम् **'औपनिषदपरमपुरुष'** इति श्रीभाष्यसूक्तिविवरणावसरे सम्यगुपपादितम्। अत्र जगदुपादानत्वं जगन्निमित्तत्वमित्युपक्रम्य सर्वनियमनमित्यन्तोक्तगुणाः 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यन्ते वाक्ये विवक्षिताः, इत्युत्तरत्र श्रीभाष्ये, वेदार्थसंग्रहे श्रुतप्रकाशिकादौ च व्यक्तम्॥

**कृत्स्नस्य जगतः इत्यादि।** 'ऐतदात्म्यमिदम्' इत्यत्र सर्वशब्दः अचिज्जीवोभयपरः। 'सन्मूलाः' इत्यादिपूर्ववाक्ये प्रजाशब्दस्य जीवपरत्वात्। प्रजाशब्दस्य जनिमदचेतनमात्रपरत्वमित्यद्वैतसिद्ध्युक्तिरनुपादेया। 'सर्वाः प्रजाः सतिसम्पद्य न विदुः सति सम्पद्यामहे' इति 'सतआगम्य न विदुः सतआगच्छामहे' इति छान्दोग्ये एव उत्तरत्र प्रजाशब्दस्य बद्धजीवपरतायाः परेषां सम्मतत्वात् अत्र वैषम्यकल्पनस्य निर्युक्तिकत्वात्। 'सर्वस्यचाहं हृदि सन्निविष्टः मत्तः स्मृतिर्ज्ञानमपोहनं च। ईश्वरस्सर्वभूतानाम्' इत्यादिगीतावचनैः 'अन्तःप्रविष्टश्शास्ताजनानाम्' इति श्रुत्यादिभिश्च अत्र बद्धजीवपरतायाः श्रुत्यादिसिद्धत्वादित्याशयः॥

श्रीभाष्यम्

**एवंभूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात्प्रकरणस्य ।**

श्रुतप्रकाशिका

सम्बन्धित्वतात्पर्यातिशयकृतः । यद्वा ' सतआत्माऽन्तर्याम्यमृतः ' इतिवत्कृत्स्नजगदन्तर्यामित्वात्तवात्मा स इत्यर्थः । तस्मात्त्वंशब्दतदर्थतद्बुद्धयस्तत्पर्यन्ता इति ' तत्त्वमसि ' इत्यस्यार्थइत्याह—**एवंभूतेति** । एवंभूतशब्देन तत्पदस्य प्रकृत परामर्शित्वं सूचितम् ॥

गूढार्थसंग्रहः

' ऐतदात्म्यमिदम् ' इति सामान्येनोक्तार्थस्य ' तत्त्वमसि ' इति विशेषे उपसंहारः ' इतिउत्तरत्र वक्ष्माणार्थमभिप्रेत्याह—**एवंभूतब्रह्मात्मकस्त्वमसीतीति** । ' ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ' इति वाक्यस्यैव नवकृत्वोऽभ्यासः, नतु ' तत्त्वमसि ' इत्येतावन्मात्रस्य । तेन प्रागुक्तार्थ एवात्र विवक्षित इति प्रतीयते ' उभयव्यपदेशात्त्वहिकुण्डलवत् ' इति सूत्रे ' एषत आत्माऽन्तर्याम्यमृतः ' इति श्रुतिः (बृ) ' तत्त्वमसि ' इति श्रुतिश्चैकार्थिकेति ' (शं.भा) परैरुक्तम् । काण्वमाध्यन्दिनपाठभेदेन ' सत आत्मा, एषत आत्मा ' इति किंचिद्वैलक्षण्वम् । अस्य वाक्यस्य द्वाविंशतिवारमभ्यासः । ' अन्तरोयमयति ' इति पूर्ववाक्यम् । ' अन्तर्यामी ' इत्युत्तरवाक्यम् । इत्थं च वाक्ययोर्द्वयोरेकोऽर्थः इति स्फुटं प्रतीयते । ' त आत्मा ' इति द्वाविंशतिवारमभ्यस्तषष्ठ्या भेदः प्रतीयते । एवमन्तर्यामित्वनिबन्धनमेवात्मत्वमिति च । ' ऐतदात्म्यमिदं सर्वम् ' इति पूर्ववाक्ये एष आत्मा यस्य एतदात्मा एतदात्मनो भावः ऐतदात्म्यम् ' । इति परैः (शं.उ.भा) विवृतम् । एतद्विवरणमनुसृत्य ब्रह्मविद्याऽऽभरणे सर्वस्य एतदात्मा भेद एव विवक्षित इति प्रतिपादितम् । ' संबन्धाभिधानंत्वतलौ ' इति वैयाकरणनिष्कर्षदिशा नायमर्थो युक्तः । एतदेवाभिप्रेत्याद्वैतसिद्धौ ' ऐतदात्म्यमित्यत्र बहुव्रीह्यनन्तरं स्वार्थेष्यञ्' इत्युक्तम् । एवं च ब्रह्मान्तर्यामिकत्वनिबन्धनं ब्रह्मात्मत्वं पूर्ववाक्ये विवक्षितमिति उत्तरवाक्येऽपि स एवार्थो युक्त इति भावः ॥

**प्रकरणस्येति** । ' स्तब्धोस्युत तमादेशमप्राक्ष्यः ' इत्युपक्रमे आदेशशब्देन प्रशासिता प्रतिपादितः । तेन निमित्तकारणत्वमभिहितं भवति । तच्च ' सदेव इत्यादिवाक्ये उपादानत्वकथनपूर्वकम् ' अद्वितीयम् ' इत्यनेन व्यतिरेकेण दृढीकृतम् । ' सन्मूलास्सोम्येमाः सर्वाःप्रजाः ' इत्यत्र उक्तार्थप्रतिपादनपूर्वकं ' ऐतदात्म्यमिदं सर्वम् ' इति सर्वस्य सदन्तर्यामिकत्वेनआत्मत्वमभिधाय ' तत्त्वमसि, श्वेतकेतो ' इत्यत्र जीवस्य सदात्मकत्वप्रतिपादनेन जीवस्य परमात्मपारतन्त्र्यं प्रदर्शितं भवति । आदेशशब्देन उपक्रमे राजत्वसूचनेन राजकुमारन्यायः सृष्टिवाक्येषु विवक्षित इति प्रतीयते ' श्वेतकेतो ' इति सम्बोधनेन भवतः मत्पुत्रस्य यथा मत्पारतन्त्र्यम्, एवं सकलजगन्महाराजकुमारभूतानां जीवानां सर्वेषां तदन्तर्यामिकत्वेन तद्राजपारतन्त्र्यम् इत्युपक्रमोपसंहारादिपर्यालोचनया प्रतीयते । ' तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्ये ' इति फलवाक्येऽपि सत्संपत्तिप्रतिबन्धकविमोक्षानन्तरमेव सत्संपत्तिः प्रतिपाद्यते । तत्रहि जीवब्रह्माभेदकथैव नास्ति । प्रतिबन्धकश्च भगवन्निग्रह एव । तन्निवृत्त्यनन्तरं ' ब्रह्मविदाप्नोति परम् ' ' परंज्योतिरुपसंपद्य ' ' ब्रह्मलोकमभिसम्पद्यते ' इत्यादिश्रुत्यानुगुण्येन सत्सम्पत्तिः सद्विद्यायामेवोत्क्रान्तिप्रतिपादनेन उत्क्रान्तिगत्यनन्तरं देशविशेषे ब्रह्मप्राप्तिरूपैव विवक्षिता । ' आचार्यवान्पुरुषो वेद ' ' तद्धास्य विजज्ञौ ' इत्यत्र एतदर्थज्ञानमेव विवक्षितम् । एवमर्थस्य श्रुतौ विवक्षाऽङ्गीकारेण द्रमिडाचार्यसम्मत राजकुमारन्यायसम्प्रदायोऽपि समञ्जसो भवतीति भावः ॥

श्रुतप्रकाशिका

अस्यास्सद्विद्यायास्सविशेषवस्तुन्येव षड्विधतात्पर्यलिङ्गं विद्यते । उपक्रमे तावत्–'उततमादेशमप्राक्ष्यः' इत्यत्र आदेशशब्देन प्रशासिताऽभिधीयते । अत्र श्लोकावाचार्यपादैरुक्तौ—

छान्दोग्ये केचिदाहुर्दिशतिरुततमादेशमप्राक्ष्यइत्य-
त्राङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्तः ।
नोकर्तर्यस्तिकर्मण्यगणिघञिह सत्कर्तृशास्तौ न कर्म
स्यात्स्यात्कर्मोपदेशे तदिदमुदितमादेशवाचोपदेश्यम् ॥
अत्र ब्रूमः प्रशास्तिं वदति दिशिरसावाङ्मुखो नोपदेशं
शास्ता सोऽतिप्रसिद्धो नहि परइहचापेक्षितार्थप्रसङ्गः ।
युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवाक्षिकत्वं
शाब्दोक्तं कारणानां ननु करणतया कर्तरि स्याद्विवक्षा ॥

इति । आदेशशब्देनोदेश्यमुच्यते प्रकृत्यर्थ उपदेशः प्रत्ययार्थः कर्मत्वम् 'अकर्तरि च कारके संज्ञायाम्' इति कर्तृव्यतिरिक्तकारके घञो विहितत्वादुपदेशे ब्रह्मणः कर्मत्वोपपत्तेश्च । प्रशासनेतु ब्रह्म न कर्म अपितु कर्तृ कर्तृव्यतिरिक्तकारकेहि घञ्प्रत्ययविधिः नात्र कर्तरि कप्रत्यय उपपद्यते । 'क्ङितिच' इति गुणप्रतिषेधादादेशशब्दरूपासिद्धेः । नापि पचाद्यच्प्रत्यय उपपद्यते दिशिधातोरिगुपधत्वेन 'इगुपधात्कः' इत्यपवादसूत्रेण कप्रत्ययप्राप्तेर्गुणाभावात् । अतो घञ्प्रत्ययान्तएवायमादेशशब्दः, सच प्रत्ययः कर्तर्यविहित इति कर्मार्थस्यैव युक्तत्वादुपदेश्यमेवादेशशब्दवाच्यमिति ॥

अत्रोच्यते—प्रकृत्यर्थश्शासनं प्रसिद्धिप्राचुर्यात् । अन्यथा स्वारस्यभङ्गात् । 'आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजन वचनः । उपपूर्वस्तु नियोज्यप्रयोजनवचन' इतिहि न्यासकारः । नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचकइत्यर्थः । एवमन्यत्रापि । किंच उपदेश्यत्वं लौकिकालौकिककर्मब्रह्मभागार्थसाधारणम् । शासितृत्वंतु ब्रह्मणोऽसाधारणम् 'अन्तःप्रविष्टश्शास्ताजनानाम्' 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इत्यादिश्रुतिभिर्निरुपाधिकप्रशानस्य ब्रह्मासाधारणत्वश्रवणात् । निरुपाधिकोपदेश्यत्वं ब्रह्म(णइत्य)णो)साधार(ण्य)ण)मितिचेन्न ; इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेषु साधारण्यात् यद्यप्यपरिमितसुखप्राप्तिदुःखनिवृत्त्यादि साक्षादुपदेश्यं स्यात् तथाऽपि संसारनिवृत्तिर्ब्रह्म तदुपासनानामुपदेश्यत्वं साधारणम् प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम् । अतउपदेश्यत्वकथनवैयर्थ्यं च ॥

ननु 'येनाश्रुतं श्रुतम्' इत्यनेनैकवाक्यत्वात् स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमितिचेत्—तथाऽपि तादृशमुपदेश्यत्वं प्रतिज्ञावाक्येन प्रष्टव्यत्वोक्त्याचार्थसिद्धमित्यनपेक्षितोपदेश्यत्वकथनादपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तम् । येनाश्रुतमित्युपादानत्वे सिद्धे प्रशासितृत्वेनहि निमित्तत्वं सिध्येत् । निमित्तान्तरेसति ह्येकविज्ञानात्सर्वविज्ञानं नोपपद्यते । अतः प्रतिपिपादयिषितवस्तुनो विवक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम् । घञ्प्रत्ययस्तु करणे व्युत्पन्नत्वात् 'विवक्षातःकारकाणां प्रवृत्तिः' इति शाब्दोक्तन्यायेन कर्तर्येव (का(क)रणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते । अकर्तरीति सूत्रस्य प्रयोजनं करणत्वविवक्षया विना कर्तर्यसाधुत्वेन प्रयोगनिवृत्तिः । उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यं च । प्रशासनपक्षेतु प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यंचेति वैषम्यम् । अतः प्रशासितैवादेशशब्दाभिधेय इति स्वीकर्तुं युक्तम् ॥

### श्रीभाष्यम्

**प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे । अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते । ' अथ परा यया तदक्षरम् ' (मु.१.मुं.१.ख.५) इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिध्य नित्यत्व-विभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसार्वज्ञ्यादि कल्याणगुणयोगः**

### श्रुतप्रकाशिका

एवमुपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः । तथा जगदुपादानत्वं निमित्तत्वं तदनुगुणसार्वज्ञ्यसर्वशक्तित्वादिकं चावगतम् । उपसंहारे च ' तत्त्वमसि ' इति सामानाधिकरण्येन जीवान्तर्यामित्वं नाम गुणविशेष उक्तः अस्यैवार्थस्य बहुश आवर्तितत्वादभ्यासोऽप्यस्ति । एवं ब्रह्मणो जगत्कारणत्व जगदन्तरात्मत्वादिगुणानां प्रमाणान्तराप्रतिपन्नत्वादपूर्वता सिद्धा । एवमुपासकस्य * **' तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये '** इति शरीरपातानन्तरं मोक्षश्रव-णात्फलमपि विद्यते । पितुः पुत्रंप्रति प्रतिवचनरूपत्वादर्थवादश्च लब्धः । मृत्पिण्डादिदृष्टान्तोपपादनादुपपत्तिश्चेति ॥

अस्मिन् दृष्टान्तत्रयेऽपि विवर्तपक्षानुगुणः कोऽपि दृष्टान्तो न दृश्यते ; अपितु परिणामपक्षानुगुण एव दृश्यते । दार्ष्टान्तिकविषयवाक्येऽपि **' तत्तेजोऽसृजत '** इत्युक्तं नतु त(था(द)भ्रमदिति अतोऽस्यां श्रुतौ विवर्तपक्षप्रसङ्गोऽपि **नास्ति श्रुत्यन्तरेषु** च **' तदात्मानगँ्स्वयमकुरुत '** इत्यादिकं श्रूयते नतु व्यवर्ततेति । सूत्रं च **' परिणामादिति '** नतु विव-र्तादिति । स्मृतिषु च---

**कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् । क्षितितलपरमाणवोऽनिलान्ते--**

इत्यादिषु परिणामपक्षा एव दृश्यन्ते । अतश्श्रुतिस्मृतिसूत्रस्वारस्यात्परिणामएवाभ्युगन्तव्यः । सच परिणामस्सद्द्वारक **एव** भवितुमर्हति । निर्विकारत्वनिर्दोषत्वानुप्रवेश शरीरशरीरिभावादिविषयानेकश्रुतिस्वारस्यादन्यथा तद्विरोधप्रसङ्गाच्चेति । एक-विज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किं कथं ? तदुपपादनमित्याशङ्कायामेतद्विस्तरो वेदार्थसंग्रह इत्याह—**प्रपञ्चितइति** । अत्रा-पेक्षितार्थः कथं ज्ञास्यत इत्यत्राह—**अत्रापीति** । निपुणतरं—तस्याधिकरणस्य * एतदर्थैकविषयत्वादिति भावः ॥

**अनन्तरोदाहृताया:** परविद्यायाः सविशेषपरत्वमाह—**अथ परेत्यादिना** । अपाणिपादमित्यन्तानां पदानां **विषयमाह प्राकृतानिति** । प्राकृताः प्रकृतिसंबन्धिनः अनेन पदेन क्वचित्सिद्धस्यहि क्वचिन्निषेध इति निषेध्यानां क्वापि **सिद्धिर्द-**

### गूढार्थसङ्ग्रहः

एतावता एक एव अद्वितीयशब्दरूपावधारणत्रयसद्भावेन ' तत्त्वमसि ' इति नवकृत्वः अभ्याससत्त्वेन च सद्विद्यायां निर्विशेषप्रतीतिः स्फुटेति परसम्मतार्थः पर्यालोचितः। अथ परविद्या निर्विशेषविषयिणी, अपराविद्यैव सविशेषविषयिणी पर-विद्याफलमेव ' ब्रह्म वेद ब्रह्मैव भवति ' इति जीवब्रह्माभेदरूपमुपसंहारे विवक्षितमिति परोक्तार्थं पर्यालोचयति **अथ परा यया तदक्षरमित्यादिना । प्राकृतान् हेयगुणान् प्रतिषिध्येति** । ' यत्तदद्रेश्यम् ' इत्यादिना निषेधमुखेनोपक्रमात् । निर्वि-शेषविषयत्वमिति परे वदन्ति । अत्र अद्रेश्यमित्यादिना अपाणिपादमित्यन्तेन निषेध्यतया विवक्षिताः सर्वे धर्माः प्रकृ-तिसंबन्धनिबन्धना एवेति तन्निषेधमात्रेण निर्गुणस्यात्र प्रतीतिशङ्काऽपि नोदेतीति भावः ॥

**नित्यत्वविभुत्वेत्यादि** । ' नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । यस्सर्वज्ञस्सर्ववित् ' इत्यादौ नित्यत्वादिगुणाः स्फुटं प्रतीयन्ते ॥

### श्रीभाष्यम्

**परस्य ब्रह्मणः प्रतिपादितः । ‘ सत्यं ज्ञानमनन्तं ब्रह्म ’ (तै.आ.१) इत्यत्रापि**

### श्रुतप्रकाशिका

र्शिता भवति । प्रकृतिगताः, प्रकृतिसंसर्गप्रयुक्ताः जीवगतादोषाश्च, प्राकृताः । अद्रेश्यमग्राह्यं, प्रत्यक्षागोचरमनुमानाद्यगोचरम् । यद्वा चक्षुरगोचरमिन्द्रियान्तरागोचरम् । अगोत्रमवर्णं–प्राकृतनामरूपरहितम् । अचक्षुश्श्रोत्रम्–इन्द्रियाधीनज्ञानं न भवति अपाणिपादं इन्द्रियाधीनचेष्टं न भवति **‘ अपाणिपादो जवनो ग्रहीता ’ ‘ पश्यत्यचक्षुस्सशृणोत्यकर्णः ’** इति श्रुतेः । अनेन पदद्वयेन जीवगतहेयनिषेधः । इन्द्रियाधीनज्ञानत्वं तदधीनप्रवृत्तित्वमपि जीवगतधर्मः । सर्वगतं सुसूक्ष्ममिति पाठक्रमः तथाऽप्यर्थक्रमेण व्याख्यातं सूक्ष्मत्वसर्वगतत्वेति । सूक्ष्मतयाहि व्याप्तिः, नित्यत्वेन कालपरिच्छेदः विभुं–प्रभुम् । प्रभुत्वं नियन्तृत्वं जगच्छरीरकत्वं फलितम् । अनेन वस्त्वपरिच्छेदासिद्धिः । सर्वगतत्वेन देशापरिच्छेदः । अव्ययत्वं व्ययशब्दोपलक्षित * दोषविरोधित्वंनाम गुणइत्यभिप्रायेण कल्याणगुणैस्सह निर्देशः ॥

यद्वा अव्ययत्वम् एकरूपत्वं पूर्णत्वं वा । भूतयोनित्वं जगत्कारणत्वम् । एतत्प्रकरणस्थेन यस्सर्वज्ञस्सर्वविदित्यनेन वाक्येन सार्वज्ञ्यमुक्तम् । सर्वज्ञस्सर्ववित् सर्वं स्वरूपतो वेत्ति सर्वं प्रकारतश्च वेत्तीत्यर्थः । परस्य ब्रह्मणइत्यस्य पूर्ववदर्थः । अथ शोधकवाक्येषु सत्यज्ञानादिवाक्यस्याखण्डार्थत्वं निरस्यति । **सत्यं ज्ञानमित्यादिना** । सखल्वेवमुपन्यस्तः प्रतिपत्तिसौकर्यायाचार्यपादैः । तथाहि सत्यादिवाक्यं सत्यादिगुणविशिष्टमेव ब्रह्म प्रतिपादयति नीलमुत्पलमित्यादिषु समानाधिकरणवाक्येषु विशिष्टैकार्थपरत्वव्युत्पत्तेः । सत्यादिवाक्यस्य च समानाधिकरणत्वाच्च, तथा च सामानाधिकरण्यलक्षणं **‘ भिन्नप्रवृत्तिनिमित्तानाम् ’** इत्यादिनोक्तं शाब्दैः ॥

तत्र यदुक्तं सामानाधिकरण्यस्यैकार्थ्यपरत्वव्युत्पत्तेरैकार्थ्यस्य च पदानां विशेषणमात्रपरत्वे विशिष्टपरत्वेच्चासिद्धेः स्वरूपमात्रैक्यपरत्वं सत्यादिसमानाधिकरणपदानामास्थेयमिति तदयुक्तम् विकल्पासहत्वात् । किं सत्यादिपदानि तत्तत्पदार्थविरोधिव्यावृत्तिमात्रपराणि उत स्वरूपमात्रपराणि उत विरोधव्यावृत्त्यवच्छिन्नस्वरूपपराणीति विवेचनीयम् । न तावद्विरोधिव्यावृत्तिमात्रपराणि व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः । * व्यावर्त्यानेकत्वाद्व्यावृत्तयोह्यनेकास्स्युः । नापि स्वरूपपराणि तथासति * पदानां पर्यायत्वप्रसङ्गात् । प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिप्रसङ्गात् ए(क(के) तरपदवैयर्थ्यप्रसङ्गाच्च ॥

### गूढार्थसंग्रहः

**परस्य ब्रह्मणः प्रतिपादित इति** । परविद्याविषयःपरंब्रह्म सविशेषमिति निरूपणेन निर्विशेषमिति परसम्मतार्थो नात्र विवक्षितमिति दर्शितं भवति । अयमर्थः अत्रैव उत्तरत्र व्यक्तीभविष्यति । ‘ अदृश्यत्वादिगुणको धर्मोक्तेः ’ इत्यत्र सूत्रकृताऽपि परविद्यासु सगुणं ब्रह्मैव विषय इति व्यक्तीकृतम् । तत्पदार्थनिष्ठमखण्डार्थवाक्यमपि न परसम्मतनिर्विशेषपरमित्याह—**सत्यं ज्ञानमनन्तमित्यादि** । सत्यादिशब्दानामर्थः जन्माद्यधिकरणे वक्ष्यते । **‘ तत्पुरुषः समानाधिकरणः** कर्मधारयः ’ (पा.सू.१.२.४२) इति सूत्रे प्रदीपे ‘ भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्य एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमित्युच्यते नीलोत्पलादिश्च तत्पुरुषः ’ इति उक्तम् । अत्र उद्योतः ‘ पर्यायव्यावृत्त्यर्थं भिन्नेति । भिन्नप्रवृत्तिनिमित्तप्रकारकभिन्नोपस्थितिजनकस्येत्यर्थः ’ इति । एतेन ‘ अनेकार्थाश्रयं च सामानाधिकरण्यम् ’ इति महाभाष्यवाक्ये अर्थानामनेकत्वं प्रवृत्तिनिमित्तभेदेनैव विवक्षितमिति बोधितम् ॥

## श्रुतप्रकाशिका

नापि तदवच्छिन्नस्वरूपपराणि विकल्पासहत्वात् । किं विरोधिव्यावृत्तीनां स्वरूपावच्छेदकत्व * मुपलक्षणतया विशेषणतया वा? न तावदाद्यःकल्पः एकेनोपलक्षणेन स्वरूपं प्रतिपन्नमित्युपलक्षणान्तरवैयर्थ्यात् । * उपलक्ष्याद्बहिर्भूत उपलक्ष्यप्रतीत्युपायो धर्म उपलक्षणमितिह्युपलक्षणविदः । तथा च शाखादिषु दृश्यते । तथा च सत्ये(के(क)तरवैयर्थ्यं प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च ; कथं तर्हि भवत्पक्षे जन्मादिबहूपलक्षणत्वमेकस्यैव ब्रह्मणोऽभ्युपगम्यत इतिचेत् । उच्यते—तत्र ह्युपलक्ष्यस्य धर्मिणो ब्रह्मण एकत्वेऽपि प्रत्युपलक्षणमुपलक्ष्यधर्मभेदो जन्मास्थित्याद्यनुगुणज्ञान शक्त्यादिरूपोऽस्माभिरुपगम्यते अन्यथा तत्राप्यनेकोपलक्षणवैयर्थ्यं प्रसज्यत एव ; त्वत्पक्षेत्वनेकोपलक्षणोपलक्ष्यधर्मभेदानभ्युपगमादुक्तदोषो दुर्वारः ; तदभ्युपगमेहि ब्रह्मणस्सविशेषत्वप्रसङ्गः ॥

नापि द्वितीयः विशेषणभूतानां व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः । विशेष्यान्तर्भूतो विशेष्यप्रतीत्युपायो धर्मोहि विशेषणम् । विशेष्यान्तर्भावोनाम ज्ञाप्यान्तर्भावः । विशेषणभूतार्थभेदेऽपि विशेष्यभूतप्रधानार्थैक्यादेकार्थसिद्धिरितिचेत्—तत्सखण्डवाक्यार्थवादिनोऽपि समानम् । कस्तर्हि विशेष आवयोरितिचेत्—अयमेव विशेषो यदेकस्य मते पदानां लाक्षणिकत्वमितरस्य पक्षे तेषां मुख्यत्वमिति ॥

यच्चोक्तं विशेषणान्तरविशिष्टे वस्तुनि विशेषणान्तरान्वयाद्विशेषणानामन्योन्यसमवायप्रसङ्ग इति । तदसत् विकल्पासहत्वात्—

**पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् । न्याय संपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥**

इत्युक्तप्रक्रिययाहि वाक्यमर्थमवबोधयति । तत्र किं पदानां पदार्थ(स्मा(स्म)रणदशाया मन्योन्यसमवायप्रसङ्गः ? उत परामर्शदशायाम् आहोस्विद्वाक्यार्थाभिधानदशायां, न तावत्प्रथमःकल्पः स्मारणदशायां पृथक्पृथक्पदार्थस्मरणेन मिथोऽन्वय प्रसङ्गाभावात् । नापि द्वितीयः । एकस्मिन्वस्तुन्यविरुद्धानेकविशेषणसमवायस्य प्रत्यक्षाद्यवगतस्य यथावस्थितवस्तुपरामर्श दशायां परामृश्यमानत्वात् । नापि तृतीयः * वाक्यार्थाभिधानदशायां सर्वैःपदैः युपदनेकविशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकत्वेन क्रमाभिधानप्रयुक्तान्योन्यसमवायप्रसङ्गाभावात् । यथैवहि द्वे चक्षुषी जातिगुणाद्यनेकविशेषणविशिष्टैकवस्तुविषयामेकां धियं युगपज्जनयतः तथैवानेकपदानि युगपदेव तत्तद्विशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकानि भवन्ति । * क्रमेणाभिधानेऽपि नान्योन्यसमवायप्रसङ्गः । पदान्तरोपात्ते विशिष्टे विशेष्यांशस्यैव पदान्तरोपात्तविशेषणेन विशेष्यमाणत्वात् । तच्च यथादृष्टविषयत्वात्पदानां व्युत्पत्तेः । अन्यथा भवत्पक्षे व्यावृत्तिरूपविशेषणानामन्योन्यविशेषणविशेष्यभावः । क्रमाभिधानप्रयुक्तो दुर्वारः । अतो यथोक्त एव परिहारस्तवापि शरणम् ॥

क्रमेणाभिधानानभ्युपगमे कथमुद्देश्योपादेयविभागसिद्धिरितिचेत् । उच्यते—ज्ञाताज्ञातविभागोह्युद्देश्योपादेयविभागः । सच * युगपत्प्रतिपादनेऽपि नापैति । * एकेन वाक्येनैकवस्तुनोऽनेकविशेणान्वये युगपत्प्रतिपाद्ये तत्र विशेषणान्वयः प्रागेव ज्ञातः । विशेषणान्तरान्वयस्त्वज्ञात इति ज्ञाताज्ञातविभागपरामर्शः * परामर्शदशायांहि सम्भवत्येव । यदप्युक्तं विशिष्टैक्यप्रतिपादने विशेष्यैक्यवद्विशेषणैक्यं प्रसज्यत इति । तदपि न साधीयः । * विशेष्यमात्रैक्यपरत्वात्समानविभक्तेः । तच्च व्युत्पत्तिसिद्धम् व्युत्पत्तिश्च प्रत्यक्षमूला प्रत्यक्षं च विशेष्यैक्यमवगमयति । ननु विशेषणानामैक्यं, यथा गौरित्याद्येकपदप्रयोगेऽपि प्रातिपदिकावगतविशेषणविशेष्यैक्यं तद्गतमेकवचनं नावगमयति, किंतु विशेष्यैक्यमेवावगमयति । प्रत्यक्षमूला व्युत्पत्तिरेवहि तत्र कारणम् । तथा समानाधिकरणपदसङ्घातस्थसमानविभक्तेरपि विशेष्यैक्यमात्रपरत्वे सैव नियामिका अन्यथा भवत्पक्षेऽप्यसत्यादिप्रतियोगिव्यावृत्तिरूपाविशेषणैक्यप्रसङ्गात् ॥

## श्रुतप्रकाशिका

प्रातिपदिकानां तत्तत्प्रतियोगिव्यावृत्तिविशिष्टस्वरूपपरत्वेऽपि समानविभक्तेः प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रक्यैपरत्वव्युत्पत्त्या न विशेषणैक्यं प्रसज्यत इतिचेत् तदस्मत्पक्षेऽपि समानम् । आवयोर्विशेषस्तु प्रागेवोक्तः । यच्चोक्तं विशेषण भेदेऽपि विशेष्यभेदप्रसङ्ग इति । तदयुक्तम् । विशेषणभेदमात्रस्य विशेष्यभेदकत्वाभावात् । तच्च देवदत्तश्श्यामो युवेत्यादिषु विशेषणभेदेऽपि विशेष्यैक्यदर्शनात् । विशेषणभेदस्य स्वतःप्राप्तं * विशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इतिचेन्न * धर्मिवाचकपदैक्यात्समानविभक्तिनिर्देशाच्चैक्यप्रतीतेः । खण्डो मुण्डः पूर्णश्रृङ्गो गौरित्यत्र धर्मिवाचकपदैक्ये समानविभक्तिनिर्देशे सत्यपि विशेषणभेदाद्विशेष्यभेदः प्रतीयत इतिचेत्—मैवं यतःस्वतः प्राप्तं तयोर्विशेष्यैक्यप्रत्यायकत्वं प्रत्यक्षेण तत्रापोदितम् । परोक्षविषये खण्डो मुण्डः पूर्णश्रृङ्गो गौरित्यादिवाक्ये प्रयुक्ते खण्डत्वादिविशेषणभेदे विशेष्यभेदप्रतीतिर्दृश्यत इतिचेत् परोक्षविषयेऽपि देवदत्तश्श्यामोयुवेत्यादिवाक्ये प्रयुक्ते विशेषणभेदेऽपि विशेष्यैक्यप्रतीतिर्दृश्यत इति समानश्चर्चः ॥

को निर्णायक इतिचेत् यज्जातीयविशेषणानां नियमेन भिन्नाश्रयत्वं दृष्टं प्रत्यक्षेण तज्जातीयविशेषणानां परोक्षत्वेऽपि विशेष्यभेदापादकत्वम्, यथा खण्डत्वादीनां यज्जातीयविशेषणानां भिन्नाश्रयत्वानियमो न दृष्टः तज्जातीयविशेषणानां धर्मिवाचिपदैक्ये समानविभक्तिनिर्देशेचैकविशेष्यनिष्कर्षकत्वं युक्तं यथा नीलत्वादीनामिति । यच्चोक्तम् समानविभक्त्यवगतैक्यविरोधाद्विशेषणपरित्याग इति, तदप्ययुक्तम् । प्रातिपदिकाभिहितविशेषणान्वयविरोधादैक्यपरित्यागापत्तेः । तथाहि यदि समानविक्त्य(न्वया)वगतत्वादैक्यं न हातुं शक्यते तर्हि प्रातिपदिकावसितविशेषणान्वयः कथमिव हातुं शक्यते यथा नीलमुत्पलमित्यादौ । तत्र प्रत्यक्षसिद्धत्वादङ्गीक्रियत इतिचेत् तत्रैक्यप्रतीतिरपि तथैवेति किं न स्यात्? समानविभक्तिनिर्देशे परोक्षेप्यैक्यप्रतीतिर्दृश्यत इतिचेत् तथैव प्रयोगे परोक्षेऽपि प्रातिपदिकावगतविशेषणान्वयप्रतीतिर्दृश्यत एव । तस्मादैक्यप्रतीतिश्शाब्दीचेत् विशिष्टप्रतीतिरपि शाब्दीति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात् ॥

किंच प्रातिपदिकावगतविशेषणान्वयपरित्यागहेतुभूतसमानविभक्त्यवगतमैक्यं किं स्वरूपम् उत तदतिरिक्तम् । तदतिरिक्तपक्षे सविशेषत्वप्रसङ्गः । अनतिरिक्तपक्षे हेत्वसिद्धिः । प्रातिपदिकावगतस्वरूपातिरेकेण (समान) विभक्त्या कस्यचिदैक्यस्याप्रतिपादनात् । नहि स्वरूपमात्रविरोधात् विशेषणपरित्यागः व्यधिकरणवाक्येष्वपि तत्त्यागप्रसङ्गात् । प्रातिपदिकावगतं स्वरूपं निर्विशेषमिति प्रतिज्ञाय समानविभक्तेरैक्यावगमादित्युक्ते स्वरूपावगमादित्युक्तं स्यात् । ततश्चैक्यावगमविरोधरूपहेत्वसिद्धिः । स्वरूपंतु विशेषणान्वयाविरुद्धं व्यधिकरणवाक्येषु विशेषणान्वयावगमादित्युक्तम् ॥

किंच समानविभक्त्यवगतमैक्यं प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रस्येत्युक्तत्वात्तस्य च विशेषणभेदाविरोधित्वान्न तद्विरोधनिबन्धनविशेषणत्यागो युक्तः । अतो न निर्विशेषत्वं वस्तुनः कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तं शौक्ल्यमित्यादिषु प्रतियोगिभेदस्य तत्तद्व्यावृत्तस्वरूपस्य च शब्दोपात्तत्वान्नलक्षणाप्रसङ्गः । सत्यादिवाक्येतु न तथेति विशेषः । एवं शौक्ल्यादिदृष्टान्तवाक्यात्सत्यादिदार्ष्टान्तिकवाक्यस्य शब्दद्वारकं वैषम्यमुक्तम् । अर्थद्वारकं च वैषम्यं पूर्वोक्तं द्रष्टव्यम् । कथमितिचेत् इत्थं—शौक्ल्यादेःकस्यचिद्द्रव्यस्य द्रव्यान्तराद्व्यावर्तकधर्मतया धर्मान्तरानपेक्षत्वं युक्तम् । ब्रह्मणस्तु न तथात्वमिति स्वरूपातिरिक्तव्यावर्तकधर्मा(न्तरा)ऽपेक्षाऽस्त्येव । नहि परनिर्वाहकत्वानभ्युपगमे स्वनिर्वाहकत्वसम्भवः ॥

किंच शौक्ल्यादिस्वरूपस्फुरणेसति न कार्ष्ण्याध्यासप्रसङ्गः । अतस्तत्र स्वरूपमेव व्यावृत्तिरिति युक्तमभ्युपगन्तुम् । ब्रह्मस्वरूपस्फुरणेऽपि तदितराध्यासाभ्युपगमाद्रजतादिव्यावर्तकाधिष्ठानस्वरूपातिरिक्तशुक्तित्वादिवत् सर्वाध्यासाधिष्ठान ब्रह्म-

### श्रीभाष्यम्

**सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः । प्रवृत्तिनिमित्तभेदेन**

### श्रुतप्रकाशिका

स्वरूपातिरिक्तसकलेतरव्यावृत्तिरूपधर्मोऽवश्याभ्युपगमनीयः । यच्चोक्तं वाच्ये प्रधानांशस्य प्रतिपादनान्नलक्षणेति । तदप्यसत् विशेषणद्वारेण विशेष्यपर्यवसायिनश्शब्दस्य द्वारानभिधाने द्वार्यभिधानासिद्धेः । * अलाक्षणिकत्वेऽपि विशिष्टाभिधानस्वरसस्य शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यहानिरवर्जनीया सा च न विरोधाभावे युक्ता ॥

यच्च 'विषं भुङ्क्ष्वे' त्यादिषु सर्वपदलक्षणा दृष्टेति । तच्च विधिप्रत्ययांशस्य मुख्यार्थत्वादयुक्तं तत्र विधिप्रत्ययव्यतिरिक्तशब्दलक्षणा च मुख्यार्थत्वे प्रमाणान्तरविरोधात् स्वीक्रियते, प्रस्तुतेतु विरोधाभावान्न सा युक्ता । * विमतं वाक्यमखण्डार्थं समानाधिकरणवाक्यत्वात् सम्प्रतिपन्नवदितीदृश्यनुमानोक्तिरनुपपन्ना वाक्यमखण्डार्थमिति पदयोरर्थभेदोऽस्ति वा नवा । अस्तिचेत्प्रतिज्ञावाक्यएव हेतोरनैकान्त्यम् । नचेदखण्डार्थत्वं प्रतिज्ञातमेव न स्यात् दृष्टान्तस्य साध्यवैकल्यमवर्जनीयम् । प्रकृतिप्रत्ययात्मकपदपुञ्जरूपत्वात्सर्ववाक्यानां यदि भावरूपखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञा तर्हि साध्यधर्मवचनान्तर्गतयोस्समानाधिकरणयोर्भावरूपखण्डशब्दयोरनैकान्त्यम्, तस्मात्सत्यादिवाक्यं सत्यत्वादिविशिष्टमेव ब्रह्म प्रतिपादयतीति सिद्धम् । तदिदमुच्यते— **सत्यं ज्ञानमित्यादिना** ॥

तत्र निर्विशेषपरत्वाभावं सोपपत्तिकं प्रतिजानीते । **सत्यं ज्ञानमिति** । सामानाधिकरण्यलक्षणप्रत्यभिज्ञापकैश्शब्दैः हेत्वंशं विवृणोति । **प्रवृत्तीति** । ततः किमित्यपेक्षायामन्वयमुखेन व्यावृत्तिमुखेन वा प्रवृत्तिनिमित्तभेदस्यावश्याश्रयणी-

### गूढार्थसंग्रहः

उक्तं च शङ्कराचार्यैः तत्त्वोपदेशे 'सामानाधिकरण्यंहि पदयोः तत्त्वमोर्द्वयोः । सम्बन्धस्तेन वेदान्ते ब्रह्मैक्यं प्रतिपाद्यते ॥ (२६) भिन्नप्रवृत्तिहेतुत्वे पदयोरेकवस्तुनि । वृत्तित्वं यत्तथैवैक्यं विभक्त्यन्तकयोस्तयोः ॥ (२९) सामानाधिकरण्यं तत् सम्प्रदायिभिरीरितम् ।' इति । इत्यभिप्रेत्याह— **प्रवृत्तिनिमित्तभेदेनेत्यादि** । समानार्थ इत्यादिशब्दान्तरं विहाय समानाधिकरणमिति अधिकरणशब्दघटितं निर्दिशतः पाणिनेरयमाशयः । समानं अधिकरणं ययोस्ते समानाधिकरणे इति विग्रहे ययोरिति षष्ठ्यां बोध्यबोधकभावसम्बन्ध एव विवक्षितः । यत्पदद्वयबोध्यमधिकरणमेकं ते पदे समानाधिकरणे । अत्र अधिकरणशब्दनिर्देशेन यत्किंचिद्धर्माधिकरणमेकमत्र ग्राह्यम् इति । अत्र अधिकरणे एकत्वोक्त्या धर्मौ भिन्नौ विवक्षिताविति प्रतीयते । एतदेवाभिप्रेत्य 'भिन्नप्रवृत्तिनिमित्त' इत्यादिकैयटोक्तिः ॥

यद्यपि उद्योते 'वस्तुतः पर्यायाणामपि कोशे सामानाधिकरण्यस्येष्टतया 'नामन्त्रिते समानाधिकरणे' इति सूत्रे ध्वनितत्वेन इदं चिन्त्यम्' इति अत्र सूत्रे 'नामन्त्रिते समानाधिकरणे' (पा.सू.८.१.७९) इति सूत्रेऽपि समानार्थत्वं सामानाधिकरण्यं तच्च पर्यायशब्दानां सुतरामस्तीति भावः । भिन्नप्रवृत्तिनिमित्तंतु भाष्यकृता तल्लक्षणे नाश्रितमिति तात्पर्यम् । अतएव 'पट्वी मृद्वी' इत्यत्र युगपदधिकरणतावचनपक्षे पुंवद्भावः शङ्कितः 'चार्थे द्वन्द्वः' इति सूत्रभाष्ये इत्युक्तम् । 'नामन्त्रिते' इत्यादिसूत्रे इह कस्मान्नभवति अघ्निये देवि सरस्वति इडे काव्ये विहव्ये एतानिते अघ्निये नामानि योगविभागःकरिष्यते। नामन्त्रिते समानाधिकरणे सामान्यवचनम् । ततो विभाषितं विशेषवचनमिति' इति महा

## गूढार्थसंग्रहः

भाष्यम् । अत्र प्रदीपः । इहेति । 'नामन्त्रिते समानाधिकरणे' इति सूत्रं पठितम् । ततः सामान्यवचनं विभाषितं विशेषवचने इति द्वितीयम् । ततश्च पर्यायशब्दानामपि सामानाधिकरण्यात् अविद्यमानवत्त्वनिषेधात् निघातप्रसङ्गः । योगविभाग इति । पर्यायत्वाच्च सामान्यवचनत्वाभावः । सामान्यस्य विशेषाक्षेपत्वात् एवंचामन्त्रिताद्युदात्तत्वं सर्वेषामेतेषां भवति' इति अत्र पर्यायशब्दानामपि सामानाधिकरण्यस्य स्फुटमुक्त्या भिन्नप्रवृत्तिनिमित्तकत्वं सामानाधिकरण्य शरीरे नैव निवेशनीयमिति नागेशोक्तमेव युक्तमिति प्रतीयते ॥

तथाऽपि मञ्जूषायां—'विष्णुर्नारायणःकृष्णः' इत्यादौ कोशे कृष्णादिशब्दाः अर्थपराः, शक्तिग्रहस्तु पदत्वहेतुकानुमानेन सामान्यत एव पदप्रकारकः । एवं च विष्णुपदार्थाभिन्नः कृष्णपदार्थ इत्यादिक्रमेण बोधः । अतएव तृतीयाध्याये (पा.३) शङ्करभगवत्पादैः 'सामानाधिकरण्यं चतुर्धा अध्यासेन अपवादेन एकत्वेन विशेषणत्वेन च । एकत्वेन यथा 'द्विजोत्तमो ब्राह्मणो भूदेवः' इत्युक्तम् नेदं लौकिकं वाक्यं लोकव्यवहारे एकेनैव विवक्षितार्थसमर्पणात् । अन्यस्यानर्थक्येन पर्यायाणां सहप्रयोगाभावात् तस्मात्कोशरूपमेतत् । एतेन कोशस्थपदानां पदपरत्वमित्यपास्तम् । अतएव 'नाम न्त्रिते समानाधिकरणे' इति सूत्रे 'अघ्निये देवि सरस्वति इडे काव्ये विहव्ये एतानि ते अघ्निये नामानि' इत्यत्र समानाधिकरणपरत्वप्रयुक्तमविद्यमानवत्त्वनिषेधमाशङ्क्य सामान्यविशेषवचनत्वाभावमाश्रित्य समाहितम् । अन्यथा एकार्थ बोधकत्वरूपसामानाधिकरण्यस्याप्यभावात् तदसङ्गतिः स्पष्टैवेति नागेशेनैवोक्तम् ॥

एतत्पर्यालोचनायामेकत्वे सामानाधिकरण्यस्य (शं) भाष्योक्तस्य साधनार्थं नागेशस्य प्रवृत्तिः प्रतीयते । कोशे 'विष्णुर्नारायणःकृष्ण' इत्यादौ विष्णुपदार्थाभिन्नः कृष्ण इति बोधउक्तः । 'द्विजोत्तमो ब्राह्मणो भूदेवः' इति भाष्यो(शं)क्तोदाहरणेऽपि कोशरूपत्वात् द्विजोत्तमपदार्थाभिन्नः भूदेवपदार्थ इति बोधः इत्यङ्गीकरणीयम् ॥ अन्यथा पर्यायाणां सहप्रयोगाभावरूपाक्षेपस्य तदुक्तस्यापरिहारस्स्यात् । एवं च तत्तत्पदार्थत्वेनैव पदेनार्थस्य बोधे विषय तया परसम्मतमखण्डार्थत्वं नैव साधितं भवति । एवं 'अघ्निये देविसरस्वति' इत्यादौ अर्थस्य अघ्न्यादिपदबोध्यत्वेन विषयत्वाविवक्षणे नागेशोक्तदूषणापरिहारेण तद्धर्मपुरस्कारेण बोध एवाभ्युपगन्तव्यः । अभ्युपगमे च एतद्वाक्यजन्यबोधे प्रवृत्तिनिमित्तभेदो वर्तत एवेति सामानाधिकरण्यं निर्व्यूढम् । पर्यायशब्दानामपीत्यादिकैयटोक्तिः अघ्न्यादिशब्दानां ते नामानीत्युक्त्या संज्ञाशब्दत्वेन वस्तुतः प्रवृत्तिनिमित्तभेदाभावाभिप्रायेण उपपद्यते । सहस्रनामभाष्ये (शं) योगार्थ स्यापि प्रदर्शनेन 'अघ्निये देवि सरस्वति' इत्यत्रापि योगार्थविवक्षायां प्रवृत्तिनिमित्तभेदः सम्भवतीति नानुपपत्तिः ॥

'चार्थे द्वन्द्वः' इति सूत्रे 'युगपदधिकरणवचने द्वन्द्वो भवतीति वक्तव्यम्' तत्र पुंवद्भावप्रतिषेधः तत्रैतल्लक्षणे पुंवद्भावस्य प्रतिषेधो वक्तव्यः । पट्वी मृद्व्यौ, समानाधिकरणलक्षणः पुंवद्भावः प्राप्नोति' इति भाष्यम् । युगपदेकैकेन शब्देन अधिकरणमभिधेयं द्वन्द्ववाच्यं समुदायरूपं यदोच्यते तदा द्वन्द्वः । 'गामश्वम्' इत्यादौतु परस्परनिरपेक्षा स्वतन्त्रा गवादयो भिन्नैरेव शब्दैः पृथक्प्रत्याय्यन्त इति युगपद्वाचित्वाभावात् द्वन्द्वाभावः । 'पट्वी मृद्व्यौ' इत्येकैकेन शब्देन अर्थद्वयस्याभिधानात् सामानाधिकरण्यमस्ति इति प्रदीपः ॥ तत्र प्रदीपएवोत्तरत्र पट्व्यौ च मृद्व्यौचेति अलौकिकप्रक्रियावाक्ये सामानाधिकरण्यमत्र विवक्षितमिति स्पष्टम् । एवं च 'पट्वी मृद्व्यौ' इत्यत्र पटुत्वेन रूपेणार्थद्वयं समुदायान्वितं पट्वीशब्देन मृदुत्वेन रूपेणार्थद्वयं समुदायान्वितं मृद्वीशब्देनोपस्थाप्यत इति प्रवृत्तिनिमित्तभेदेनैकार्थबोधकत्वरूपं सामानाधिकरण्यमत्र सम्भवत्येवेति पुंवद्भावपरभाष्यं सङ्गच्छत एव । एवं च 'नामन्त्रिते' इति सूत्रभाष्यस्योक्तरीत्या साम-

## श्रीभाष्यम्

**एकार्थवृत्तित्वंहि सामानाधिकरण्यम्। तत्र सत्यज्ञानादिपदमुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वैकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः। इयांस्तु विशेषः। एकस्मिन्पक्षे पदानां मुख्यार्थता। अपरस्मिंश्च तेषां लक्षणा। नचाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव। एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्**

## श्रुतप्रकाशिका

यत्वमाह—**तत्रेति**। तर्हि को विशेषइत्यत्राह—**इयानिति**। अवश्याश्रयणीय इत्यत्राभिप्रेतं व्यावृत्तीनां स्वरूपमात्रत्वे दूषणमाह–**नचेति**। सामानाधिकरण्यासिद्धिमुपपादयति। **एकस्मिन्निति**। पर्यायत्वदूषणं स्पष्टमिति तन्न कण्ठोक्तं विशेषण

## गूढार्थसंग्रहः

ऽसम्भवेन अखण्डार्थसामानाधिकरण्यप्रत्याशया सामानाधिकरण्यशरीरे भिन्नप्रवृत्तिनिमित्तत्वपरित्यागः नागेशस्य अभिनिवेशमूलएवेति सिद्धम्॥

**मुख्यार्थतेति**। 'मुख्यार्थबाधे तद्योगे' (काव्यप्रकाशिका) इत्यादौ शक्यार्थस्यैव मुख्यार्थत्वेन व्यवहारेण शक्यार्थस्यैव मुख्यार्थत्वमस्यैव तात्पर्यविषयत्वं च। अद्वैतसिद्धौ (आगमबाध्यत्वविचारे) 'तात्पर्यविषयीभूतार्थबोधकत्वं हि मुख्यार्थत्वम्; न शक्यार्थमात्रबोधकत्वम्। अन्यार्थतात्पर्यकत्वाच्चामुख्यार्थत्वं न लाक्षणिकत्वमात्रम्। तथाचाद्वैतागमस्य स्वतात्पर्यविषयीभूतार्थबोधकत्वनिर्वाहाय लक्षणाश्रयणेऽपि मुख्यार्थत्वमुपपन्नमित्यवोचाम।' इत्यत्र तात्पर्यविषयस्यैव मुख्यार्थत्वं नतु शक्यार्थस्येत्यभ्युपेत्य लक्ष्यार्थस्यैव मुख्यार्थत्वं प्रतिपादितम्। भगवतातु शक्यार्थस्य तात्पर्यविषयत्वसम्भवेन निर्विशेषस्याप्रामाणिकतया तत्र तात्पर्यसम्भवेन च शक्यार्थस्यैव मुख्यार्थत्वमभिहितम्॥

**लक्षणेति**। लक्षणा च परैरभ्युपगतैव। उपनिषद्भाष्ये (शं) सत्यं ज्ञानमिति वाक्यस्य अवाच्यार्थविषयकबोधजनकत्वस्य प्रतिपादनात् 'सामानाधिकरण्यमत्रे'त्यादिसंक्षेपशारीरकविवरणे शक्यार्थबाधप्रतिसंधानानन्तरं लक्ष्यार्थविषयकबोधस्य, शुद्धविशेष्यकशाब्दबोधापेक्षयातु उपहितान्वयधीः विशिष्टान्वयधीश्च मुख्या, तादृशधीद्वयं लक्षणेति पक्षस्तु युक्तः, इत्यर्थस्य च (सि.बिं.टी) ब्रह्मानन्दसरस्वतीभिरभिधानात्। सत्यत्वादेः प्रकारतया भानेऽपि सिद्धान्ते विशिष्टान्वयबोधानभ्युपगमेपि, नतूपलक्षितान्वयेबाधः। उपलक्षणस्य प्रकारतया भानं च स्वीक्रियते। परमते उपलक्षणस्यात्र न प्रकारतया भानम् एतच्च कस्याप्यसम्मतमिति प्रागेव (३३१.पु) निरूपितम्॥

**पदान्तरप्रयोगवैयर्थ्यात् इति**। अज्ञातार्थज्ञापकत्वेनैव शास्त्रस्य प्रामाण्यम्। धर्मस्य प्रकारतया अभाने शुद्धस्य एकेनैव पदेन प्रतिपन्नतया पदान्तरस्य अज्ञातार्थज्ञापकत्वासम्भवादिति भावः। यद्यपि 'सिद्धंतु निवर्तकत्वात्' इति इष्टसिद्धिस्थवाक्यमुदाहृत्य विवरणे भ्रमसंशयनिवर्तकत्वेन 'तत्त्वमसि' इति महावाक्यघटकपदानां सार्थक्यमभिहितम्। न्यायरत्नावल्यामपि 'उक्त ज्ञानंविना हि ब्राह्मणो असत्यत्वशङ्कया वाक्यार्थज्ञानेऽपि असत्यविषयकत्वरूपाप्रामाण्यशङ्का स्यात्। एवं ब्रह्मणः स्वप्रकाशज्ञानानन्दानन्तादिभिन्नत्वशङ्कयाऽन्यपुरुषार्थविनाशित्वादिशङ्कासम्भवात् मोक्षे परमपुरुषार्थान्यत्र शङ्कया स्वर्गादित्यागपूर्वकमोक्षेच्छादिना श्रवणादौ प्रवृत्तिर्नस्यात्। निष्प्रयोजनत्वशङ्कया ब्रह्मणः श्रुतितात्पर्याभावशङ्काऽपि स्यात्। तस्मात्तत्तच्छङ्कानिवर्तनार्थं सत्यज्ञानानन्दानन्तादिपदानामावश्यकता। किंच सत्यत्वाद्युपलक्षितब्रह्मैक्यापन्न

## गूढार्थसङ्ग्रहः

जीवस्वरूपाज्ञानस्य तादृशैक्यज्ञानं विना निवृत्त्यसम्भवात् तादृशज्ञानस्य च तादृशब्रह्मविषयकावान्तरवाक्यार्थज्ञानमन्तरेणासम्भवात् तदर्थकतया सत्यादिपदान्यावश्यकानि । अत एव 'अस्थूलमनण्वह्रस्वम्' इत्यादि वाक्यगतानि अस्थूलादिपदान्यपि आवश्यकानि । अस्थूलत्वाद्युपलक्षितब्रह्मैक्यज्ञानार्थकत्वात् अज्ञानस्य तादृशजीवस्वरूपविषयकत्वंतु सत्यत्वादि विशिष्टब्रह्मधीपूर्वकसत्यत्वाद्युपलक्षितं ब्रह्म न जानामीति व्यवहारविषयत्वम्' इति ॥

तत्त्वं पदवाच्यार्थसमर्पकश्रुतिविचारे 'जन्मादिहेतुत्वानां जाग्रदाद्यवस्थानां च एकैकमात्रस्योक्तौ महावाक्यस्थ तत्त्वं पदाभ्यां एकैकमात्रोपलक्षितस्वरूपयोरैक्यं बोध्येत । तथा च तयोरेव भेदभ्रमो निवर्तेत । ननु हेतुतात्रयोपलक्षितेशस्वरूपादवस्थात्रयोपलक्षितजीवस्वरूपस्य भेदभ्रमो निर्वेत नहि 'छत्री कुण्डली वासस्वीयः स श्यामः स्थूलश्चैत्रो न' इति भ्रमः छत्री श्याम इति वाक्यजन्यज्ञानेन निवर्तते । निवर्ततेतु चैत्र इत्यन्तोक्तवाक्यजन्यज्ञानेन तादृशज्ञानयोस्तद्व्यक्तिमात्रविषयत्वात् । अविशेषेऽपि सामग्रीविशेषजन्यज्ञानस्यैव उक्तभ्रमनिवर्तकत्वेन सर्वानुभाविकत्वात् । तस्मात् त्रितयोपलक्षितस्वरूपयोरैक्यविषयकस्य मूलाज्ञानस्य तादृशैक्यज्ञानं विना उच्छेदासम्भवात् तंविना च तादृशाज्ञानमूलक भ्रमोच्छेदासम्भवात्तादृशज्ञानमावश्यकम् । तच्च त्रितयविशिष्टोपस्थितिपूर्वकशुद्धोपस्थितिजन्यमेवेति तादृशोपस्थित्यर्थमेकस्मिन्नेव वाक्ये त्रितयोक्तिरावश्यकीति बोध्यम्' इतिचोक्तम् ॥

तथाऽपि 'उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्तः' (संक्षेपशारीरके. २९७) इति श्लाघनीयमहावाक्यमेव निर्विशेषे प्रमाणं तत्र तत्पद वाच्यार्थसमर्पकश्रुतिः 'यतो वा इमानि भूतानि' इत्यादिका । लक्ष्यार्थसमर्पिका 'सत्यं ज्ञानम्' इत्यादिकेति परसिद्धान्ते निर्विशेषस्यात्र विवक्षायां पदान्तरवैयर्थ्याशङ्कायामुपलक्षितभेदसंशयभ्रमनिवर्तकत्वेन पदान्तरसार्थक्यकथनं न घटते । 'नीलो घटः' इत्यादौ नीलघटयोस्तादात्म्यसम्बन्धो भवति, सोऽयमित्यादौतु अखण्डार्थकत्वमित्यत्र किं नियामकमितिचेत् ; अत्रोच्यते 'चतुर्धा सामानाधिकरण्यम्' इत्युपक्रम्य 'सोऽयमित्यादौतु तत्तेदंतयोरेककालावृत्तित्वेन तदुपहितयोस्तादात्म्यासम्भवेन तदुपाहितयोरखण्डव्यक्तिमात्ररूपैक्यं भाति । तथा च यत्र तादात्म्यं न सम्भवति तत्राखण्डार्थत्वात् जीवत्वेशत्वोपाहितयोस्तादात्म्याखण्डार्थत्वम्' इत्यादि लघुचन्द्रिकायां (सत्यादिवाक्याखण्डार्थत्वोपपत्तौ) उक्तम् ॥

एतेन नीलमुत्पलमित्यादिविलक्षणबोधः यः प्राचीनैः शङ्कराचार्यसुरेश्वराचार्यादिभिरुक्तः तत्तात्पर्यं विशदीकृतं भवति । लघुचन्द्रिकायां तादात्म्यासम्भवेनैवाखण्डार्थत्वमित्यभिधानेन मुख्यं सामानाधिकरण्यं नीलमुत्पलमित्यादावेवेत्यङ्गीकृतं भवति । सामानाधिकरण्यानिर्वाहायैव प्रथमं वाच्यार्थाभेदज्ञानं सङ्क्षेपशारीरकानुसारेण सिद्धान्तबिन्दावुक्तम् । तत्र बाधशङ्कया निर्विशेषपरत्वं वाक्यस्योच्यते । निर्विशेषसमर्पकत्वं 'सत्यं ज्ञानम्' इति श्रुतेरभिधीयते । एवमुपलक्षणधर्मस्याखण्डार्थत्वेनाप्रकारत्वं च । उपलक्षणस्याप्रकारत्वं नकस्यापि दार्शनिकस्य सम्मतम्। शब्दात्किंचिदप्रकारकबोधस्य कस्यापि दार्शनिकस्यासम्मतत्वात् । उपलक्षितान्वयबोधः विशिष्टान्वयबोध इति वैलक्षण्यं उपलक्षणस्य प्राकारत्वं च नैयायिकैरङ्गीक्रियते । सोऽयमित्यादौतु तत्तेदं तयोरपि प्रकारत्वोपपादनपूर्वकं लघुचन्द्रिकायामुपलक्षणत्वपरिष्करणमप्यभिनिवेशमूलकमेवेति (३२९.पु) प्रागेव निरूपितम् । उपलक्षणं विशेषणमिति प्रकारद्वयमेव नतूपाधिरिति तृतीयः प्रकारः । स्वविशेष्यान्वयिन्यप्यन्वये विशिष्टान्वयबोधः अन्यथातूपलक्षितान्वयबोध इत्येव भिदा सामानाधिकरण्यमेकविधमेव । नीलमुत्पलमित्यादौ या रीतिः सैव सर्वत्र । नीलमुत्पलमित्यादौ नीलत्वोपलक्षितान्वयबोध एव । उत्पलत्वनीलत्वयोरनन्वयात् ।

### श्रीभाष्यम्

**तथासति सामानाधिकरण्यासिद्धिश्च। एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात्। नच एकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकण्यविरोधि। एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात्**

### श्रुतप्रकाशिका

भेदेनानेकार्थत्वात् सामानाधिकरण्यलक्षणहानिं निरस्यति। **नचैकस्येति**। विशिष्टताभेदात् तत्तद्विशेषणान्वयभेदात्।

### गूढार्थसंग्रहः

विशिष्टान्वयोपलक्षितान्वयबोधवैलक्षण्यमात्रेण प्रवृत्तिनिमित्तधर्माप्रकारकबोधः समानाधिकरणवाक्याज्जायत इति केनापि नाङ्गीक्रियते। एवं च समानाधिकरणवाक्यबलात् निर्विशेषसिद्धिं वदतां मते सामानाधिकरण्यमेव न सम्भवतीति निर्विशेषं न सिद्ध्यति। नापि भ्रमसंशयानिवर्तकत्वेन पदान्तरसार्थक्यम्॥

नहि 'छत्री कुण्डली वासस्वी यः स श्यामस्स्थूलश्चैत्रः न' इति भ्रमः, छत्री श्याम इति वाक्यजन्यज्ञानेन निवर्तते, किंतूक्तवाक्यजन्यज्ञानादेवेति युक्तम्। प्रतिबध्यज्ञाने उद्देश्यताऽवच्छेदकतया, प्रकारताऽवच्छेदकतया वा धर्मस्य भाने प्रतिबन्धकज्ञानेऽपि विरोधिप्रतियोगिताऽवच्छेदकतया, उद्देश्यताऽवच्छेदकतया च धर्माणां भान एव प्रतिबन्धकता। न त्वन्यदा। अतश्च 'छत्री कुण्डली' इत्यादि दृष्टान्ते प्रतिबन्ध्यप्रतिबन्धकभावव्यवस्था सर्वसम्मता। दार्ष्टान्तिकेऽपि धर्मस्य उद्देश्यताऽवच्छेदकतया विरोध्यभावप्रतियोगिताऽवच्छेदकतया च भान एव प्रतिबन्ध्यप्रतिबन्धकभावः सम्भवति, न त्वन्यथा। शब्दात् परसम्मतोपलक्षितविषयकबोधस्यैवाप्रामाणिकत्वे तद्विषयकाज्ञानस्य ज्ञानेन तन्निवृत्तेश्च कल्पनया पदान्तरसार्थक्योपपादनं न कथंचिदपि सम्भवति। सिद्धान्तबिन्दुटीकायां विशेषणविभक्त्युपस्थापितभेदाभावस्य विशेष्यतया भेदाभावत्वं धर्मिताऽवच्छेदकं विवक्षितम्। एवं च बोधस्य निर्धर्मिताऽवच्छेदकत्वाभानेन प्रतिबन्धकत्वं सम्भवतीत्युक्तिः न घटत इति प्रागेव (२६८.पु) निरूपितम्। उपलक्षितविषयकज्ञानस्य धर्माप्रकारकत्वेन निवर्तकत्वं न सम्भवति इति पदान्तरप्रयोगवैयर्थ्यं दुष्परिहरमित्यभिप्रेत्याह—**तथासति सामानाधिकरण्यासिद्धिश्चेति इत्यादिना**। च इति भ्रमसंशयानिवृत्त्यसिद्धिं समुच्चिनोति। समानाधिकरणवाक्यतात्पर्यविषयीभूते बोधे भ्रमसंशयनिवर्तकत्वेन सम्मते च प्रवृत्तिनिमित्तधर्मस्य प्रकारतया भानानङ्गीकारः एकएव हेतुरित्याह—**एकस्मिन्वस्तुनीत्यादिना**॥ प्रथमं धर्मप्रकारकबोधमङ्गीकृत्य पश्चात् धर्माप्रकारकोपलक्षितविषयकबोधाङ्गीकारः न घटते। अनन्तरबोधस्यैवाप्रामाणिकत्वात्। धर्माप्रकारकबोधस्य सर्वसम्मतत्वे खलु इयं कल्पना साधीयसी स्यात्। नच तत्र सर्वसम्मतिरस्ति। अतो बिन्दुटीकाद्युपपादितादिशा पदान्तरप्रयोगसार्थक्यं न सम्भवतीति भावः॥

प्राक् (१७१.पु) 'अविरुद्धविशेषणद्वय' इत्यादि संक्षेपशारीरकाद्युक्तदिशा विशिष्टपदार्थविवक्षा 'सत्यं ज्ञानम्' इत्यत्र न सम्भवतीति पूर्वपक्षोक्तार्थमाशङ्क्य समाधत्ते—**नचैकस्यैवार्थस्य इत्यादिना**॥

**अनेकविशेषणविशिष्टताप्रतिपादनपरत्वादिति**। अनेकधर्मप्रकारकबोधपरत्वादित्यर्थः। 'दण्डी कुण्डली' इत्यादौ विशिष्टान्वयबोधो नाङ्गीक्रियते। दण्डकुण्डलयोः परस्परमन्वयाभावात्। किंतूपलक्षितान्वयबोधः। उपलक्षणभूतयोः दण्डकुण्डलयोः प्रकारत्वं वर्तत एव। धर्मान्तरोपस्थापकस्यैवोपलक्षणत्वमिति नियमोऽपि नास्तीति प्रागेवोक्तम्।

## श्रीभाष्यम्

**सामानाधिकरण्यस्य ‘भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति हि शाब्दिकाः’ (कैयट वृद्धयाह्निके)**

## श्रुतप्रकाशिका

तथाविधमनेकार्थत्वं न विरोधि प्रत्युतानुकूलमेवेत्यर्थः । कुतइत्यत्राह—**भिन्नप्रवृत्तीति** । विशेषणतो भिन्नार्थत्वे विशेष्यतश्चैकार्थत्वेसति हि सामानाधिकरण्यलक्षणसाद्गुण्यमित्यर्थः ॥

## गूढार्थसङ्ग्रहः

परसम्मतोपहितान्वयबोधस्तु न नैयायिकादिसम्मतः । विशिष्टविषयकबोध इति व्यवहारस्तु तद्धर्मप्रकारकबोधतात्पर्येण नतु विशिष्टान्वयबोधतात्पर्येण । विशिष्टान्वयोपलक्षितान्वयबोधस्थलद्वयेऽपि धर्मधर्मिणोरुभयोः पदार्थयोः शक्त्यैव शाब्द बोधे भानेन नैव लक्षणा । ‘इदानीमयं दण्डी न भवति’ इति प्रत्यये दण्ड्यतिरिक्तस्य केवलस्य नैव भानम् । प्राक् दण्ड्येवायमिति प्रत्यभिज्ञया अभेदप्रतीतेः विरोधित्वात् । भेदबुद्ध्यनुरोधेन प्रत्यभिज्ञाया एव तज्जातीयविषयकत्वमित्युक्तिरनादरणीया । पूर्वक्षणे दण्डसम्बन्धे तदुत्तरं दण्डविगमे कालद्वयेऽपि दण्डैक्यं पुरुषैक्यं प्रत्यक्षसिद्धं नापह्नोतुं शक्यम् तेन प्राक् दण्ड्येवायमिति प्रत्यभिज्ञायामपि धर्म्यैक्यमेव विषयः नतु तज्जातीयैक्यम् ; अनुभवविरुद्धत्वात् । इदानीमयं दण्डी न भवतीत्यत्र एतत्कालावच्छिन्नदण्डसम्बन्धवद्भेदः प्रतीयते । पूर्वकालावच्छिन्नदण्डसम्बन्धवति एतत्कालावच्छिन्नदण्डसंयोगवद्भेदस्सम्भवत्येव वस्तुन ऐक्येऽपि संयोगभेदाङ्गीकारे बाधकाभावात् । प्राग्दण्ड्येवायमिति प्रत्यभिज्ञाऽनुरोधेन ‘सविशेषणे विधिप्रतिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे’ इत्युक्तदिशैव विशेषणाभावविषयकत्वं वा इदानीमयं दण्डी न भवति’ इति प्रतीतिरङ्गीक्रियताम् । घटः पटो न भवतीत्यादावनुपपत्तिविरहेण भेदविषयकत्वमेव प्रतीतेः । विशिष्टशुद्धयोर्भेदे क्षणभेदेनानन्तपदार्थकल्पनाप्रसङ्गः गदाधराद्युक्तः अपरिहार्य एव स्यात् । अतः अविरुद्धविशेषण’ इति श्लोकविवरणे मधुसूदनसरस्वत्युक्तिरनादरणीयएवेति भावः ॥

‘एवं तावदखण्डवस्तुविषयः’ ‘भिन्नाभिन्नरवौ’ ‘भेदो भिन्नश्चातिरेकोऽतिरिक्तः’ इति प्राक् (१२७,.१७२, १७३पु) उदाहृतपञ्चपादिकाऽनुसारिसङ्क्षेपशारीरकोक्तरीत्या लक्षणामन्तराऽपि ‘सत्यं ज्ञानम्’ इत्यादिश्रुतौ किंचिद्धर्मप्रकारकबोधः उपपादयितुं शक्यत इत्याशङ्कायामाह—**भिन्नप्रवृत्तिनिमित्तनामित्यादि** । अत्र च भाष्यकैयटादिमूलं प्रागेव दर्शितम् । पञ्चपादिकानुसारेण सङ्क्षेपशारीरके ‘प्रातिपदिकार्थमात्रे प्रथमा’ इत्यत्र धर्मिमात्रमेव विवक्षितं, न धर्मः इत्युक्तसिद्धान्तस्य चन्द्रिकाऽऽदौ साधनप्रकारस्सर्वोऽपि न घटत इति **प्रकृतिप्रत्यययोरर्थभेदेन** इति पूर्वश्रीभाष्यसूक्तिविवरणावसेर सम्यगुपपादितम् । अत्र सामानाधिकरण्यनिर्वाहासम्भवेनापि ‘सत्यं ज्ञानम्’ इत्यादौ धर्मप्रकारकबोधः अवश्यमभ्युपेय इत्यखण्डार्थत्वं न सम्भवतीति भगवता दर्शितम् ॥

एतेन प्रथमं वाच्यार्थभेदबुद्धिः, ततो विरोधज्ञानम्, अथ लक्ष्यार्थविषयकधर्माप्रकारकबोध इति पक्षः प्रथममेव निर्विकल्पकबोधश्शब्दात् इति पक्षश्चोभावपि न घटेते इति बोधितम् । द्वितीयपक्षेऽनुपपत्तिः स्फुटैव । प्रथमपक्षेऽपि लक्षणयाऽपि शब्दाद्धर्माप्रकारकबोधः उक्तयुक्तिद्वयेन न घटते । बोधस्यैवाप्रसिद्धौ तात्पर्यं नैव व्यवस्थापकमिति प्रागेवोक्तम्

अत्र ‘भिन्नाभिन्नरवौ’ इति श्लोकस्य मधुसूदनसरस्वतीविवरणम्—‘भिन्नाभिन्नेति, रवौ शब्दौ, भिन्नो घटइत्यभिन्नो घट इति घटादिपदेन सहोच्चारितौ भिन्नाभिन्नशब्दौ घटादिपदस्य यावान्विषयस्तावत्येव तव मते प्रवृत्तौ तावन्मात्र-

गूढार्थसंग्रहः

विषयाविति यावत् । परपक्षे हि भेदः स्वरूपमेव वस्तुन इति वक्तव्यम् । एवं च भिन्नघटशब्दयोरेकार्थत्वाल्लक्षणां विनैव तावेकप्रतिपादकार्थनिष्ठाविति तद्वाक्यमखण्डार्थम् । एवमभिन्नो घट इति वाक्यमपि । ननु भिन्न इति घटादिविशेषण-तया प्रतीयमानो भेदः कथं घटादिस्वरूपं स्यादिति चेत्, सत्यमस्ति तवेयमनुपपत्तिः, तथाऽपि स्वरूपातिरिक्तो भेदस्त्व-न्मते न सिद्ध्यतीत्याशयेनैवमुक्तम् । नन्वतिरिक्त एव भेदोऽभेदोवाऽस्तु तथा च तद्विशिष्टाभेद एव घटादिर्वाक्यार्थ इति कुतोऽखण्डार्थतेत्याशङ्क्याम–नोचेदिति' इति ॥

एवं 'भेदोभिन्नश्च' इति श्लोकविवरणम्–'पूर्वं भिन्नोऽभिन्नो वा घटइत्याद्युदाहरणेन मुख्यवृत्त्याऽखण्डार्थतायां परसम्मतिरुक्ता, तत्र धर्मभेदवादिनोऽसम्प्रतिपत्तिं मत्वा तत्सम्मतोदाहरणेन तामाह–'भेदोभिन्नः' इत्यादिना । एक-देशिनं प्रत्याह–अतिरेकोऽतिरिक्त इति । जीवब्रह्मणोर्भेदाभेदसम्पादकः कश्चिद्धर्मोऽतिरेकः । प्राभाकरं प्रत्याह–संविदः स्वप्रकाशा इति । इत्येतस्मिन्नीदृशेऽस्मिन्वाक्यइत्यर्थः । येषां मते भेदो घटादेर्भिद्यते तेषामपि भेदस्य भेदाद्भेदानङ्गीका-रात्तत्स्वरूपमेवेति मुख्यार्थयोरपि पदयोरेकार्थत्वम् । एवमतिरेकाद्युदाहरणेऽपि द्रष्टव्यम्' इति ॥

अत्र स्वरूपधर्मपक्षद्वयेऽपि अखण्डार्थबोधः अवश्यमङ्गीकरणीय इति साधितम् । सिद्धान्ते तु नोक्तदोषावसरः । गो घटादिषु अश्वघटादिभेदः गोत्वघटत्वादिरूपः । गोत्वघटत्वादौ तद्भेदः धर्मिभेदश्च स्वरूपमेवेति स्वपरनिर्वाहकसमा-धिना भगवता साधितम् । घटत्वादेः पटादिभेदस्वरूपत्वेऽपि घटत्वं भिन्नमिति पदयोः नैकार्थत्वं, भिन्नमित्यस्य भेदप्र-तियोगी–भेदानुयोगी इति वाऽर्थः । घटत्वशब्दस्य तु न तथेति प्रवृत्तिनिमित्तभेदेन सामानाधिकरण्यस्य नानुपपत्तिः । भेदत्वं घटत्वं च परस्परं भिन्नमेव । भेदत्वेन भेदस्योपस्थित्यङ्गीकारेऽपि भिन्न इति पदेन भेदानुयोगिनः प्रतियोगिनो वा उपस्थित्या पदद्वयस्यार्थभेदो वर्तत एव । स्वस्मिन्स्वभेदस्याव्यवहरेण तत्र स्वातिरिक्तभिन्नत्वेनैव व्यवहार एषितव्यः । इत्थं च स्वातिरिक्तपदार्थप्रतियोगित्वेनैव भिन्न इति पदात् भेदस्योपस्थितिः । अतः सर्वत्र प्रवृत्तिनिमित्तभेद एव सामा-नाधिकरण्यं न त्वन्यथा । एतेन 'विशेषणविशेष्यभावात्मकं गौणमपि सामानाधिकरण्यं विहाय एकस्मिन् निरंशे 'तत्त्वमसि' इति समन्वयो मुख्यः प्रदर्शितः' इति प्राक् (१२७.पु) उदाहृतपञ्चपादिकाद्युक्तिः निरवकाशा ॥

'तत्तु समन्वयात्' इत्यत्र 'अहंब्रह्मास्मि' इति अखण्डार्थसामानाधिकरण्यं नैव विवक्षितम्; तथासति राज-कुमारनयस्सम्प्रदायसिद्धः असङ्गतस्स्यात् । 'स यथाऽग्नेः क्षुद्रा विष्फुलिङ्गाः व्युचरन्ति' (बृ.४.अ) इति श्रुतिविव-रणे राजकुमारन्यायः सम्प्रदायसिद्धः परैरुक्तः । जगत्कारणभूतस्य राज्ञः नित्यत्वेन अहमेव राजा संवृत्त इति परोक्तार्थः न घटते, किंतु व्याधगृहे वसतः राजकुमारस्य स्वजनकराजज्ञानानन्तरं राजसमीपगमनवत् अत्रापि देशविशेषे जीवस्य परब्रह्मप्राप्तिरेव मुक्तिः इति सम्प्रदायनिष्कर्षणेन 'तत्तु समन्वयात्' इति सूत्रार्थः श्रीभाष्ये निरूपयिष्यते । अतः पर-सम्मताखण्डार्थत्वं 'तत्तु समन्वयात्' इत्यत्र न विवक्षितम् । एतेनोपक्रमोपसंहारयोर्निर्विशेषपरत्वोक्तिरपि सम्प्रदायविरु-द्धैव । निर्विशेषचितएवाप्रामाणिकत्वे उपक्रमोपसंहारयोस्तत्परत्वं नैव साधयितुं शक्यम् । यत्र तादात्म्यं न सम्भवति तत्राखण्डार्थत्वस्य' (ल.चं.अखण्डार्थत्वोपपत्तिः) ब्रह्मानन्दसरस्वतीभिः स्थापनेनाखण्डार्थत्वे सामाधिकरण्यस्य मुख्यत्वं नास्तीत्यङ्गीकृतं भवत्येव ॥

एतेन 'नीलमुत्पलमित्यादौ गौणं सामानाधिकरण्यमिमि' (पं.पा.सं.शा) उक्तिरनुपादेयेति सिद्धम् । तदेतत्सर्व-मभिप्रेत्योक्तं भगवद्यामुनमुनिभिः संवित्सिद्धौ—'तत्त्वं पदद्वयं जीवपरतादात्म्यगोचरम् । तन्मुख्यवृत्तितादात्म्यमपि वस्तु द्वयात्मकम् ॥ नीलमुत्पलमेवेदमिति साक्षाच्चकास्ति नः । तद्वत्तादात्म्यसम्बन्धे श्रुतिप्रत्यक्षमूलके ॥' इत्यादि 'तत्त्व-

## श्रीभाष्यम्

**यदुक्तम् ‘एकमेवाद्वितीयम्’ इत्यत्राद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते । अतस्सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम् । कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते ‘सत्यं ज्ञानमनन्तं ब्रह्म’ इति**

## श्रुतप्रकाशिका

समानाधिकरणं वाक्यं किं विशेषणविशेष्यसम्बन्धपरम् उत विशेष्यैक्यपरम् उत उभयपरम् । प्रथमे विशेष्यैक्ये प्रमाणं न स्यात् । द्वितीये विशेषणान्वयो निष्प्रमाणकस्स्यात् । तृतीये सम्बन्धद्वयस्यैकवाक्येन बोधयितुमशक्यत्वात् वाक्यभेदप्रसङ्ग इति केचिच्चोदयन्ति तन्न । * प्रातिपदिकेनैव विशेषणान्वयस्य बोध्यतया समानविभक्तिनिर्देशेन विशेष्यैक्यप्रतिपादने वाक्यभेदप्रसङ्गाभावात् । एवं सामानाधिकरण्यस्यान्यथैवोपपत्त्या सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वं निरस्तम् ॥

अथ कारणवाक्यैकार्थ्यान्निर्विशेषपरत्वं निराकर्तुं तदनुवदति । **यदुक्तमित्यादिना ।** सदेवैकमेवेति विजातीयसजातीयभेदव्यावर्तकावधारणद्वयसमभिव्याहृतमद्वितीयपदं पारिशेष्यात् स्वगतभेदाभावपरमिति गुणतोऽपि सद्वितीयतां न सहत इत्यर्थः **‘यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयंतपः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते’** इत्यादिसगुणविषयकारणवाक्यैकार्थ्यमस्त्वित्यत्राह–**अतइति ।** सर्वशाखाप्रत्ययन्यायात् निर्गुणकारणवाक्येषु सगुणत्वं सगुणकारणवाक्येषु निर्गुणत्वंचोक्तं स्यात् । तत्रापच्छेदन्यायेन निर्गुणवाक्यप्राबल्यात्सर्वकारणवाक्यानि निर्गुणपराणीत्यर्थः । कारणवाक्यैकार्थ्यं कुतोपेक्षितमित्यत्राह–**कारणतयोपलक्षितस्येति ।** जगत्कारणत्वं तटस्थलक्षणं, नतु स्वरूपलक्षणमित्यभिप्रायेण उपलक्षितस्येत्युक्तम् । कारणत्वशङ्कितदोषव्यावर्तकत्वादैकार्थ्यमवर्जनीयमित्यर्थः ॥

## गूढार्थसंग्रहः

मसि’ इत्यत्र ‘सत्यं ज्ञानमनन्तम्’ इत्यत्राप्येक एव नयः सङ्क्षेपशारीरके उक्त इति, ‘सत्यं ज्ञानमनन्तम्’ इत्यत्रापि प्रवृत्तिनिमित्तभेदेनैव सामानाधिकरण्यमिति यामुनमुनेराशयः ॥ ‘नीलमुत्पलम्’ इत्यत्र यथा विशेष्यैक्यं प्रवृत्तिनिमित्तभेदः तद्वत् ‘तत्त्वमसि’ इत्यत्रापीति अत्रैवोत्तरत्र श्रीभाष्ये सम्यक् साधयिष्यते । अतः नीलमुत्पलमित्यादौ सर्वत्रैकविधमेव सामानाधिकरण्यमिति भावः ॥

अद्वैतसिद्धौ ‘अद्वैतश्रुतिर्हि षड्विधतात्पर्यलिङ्गोपेता । उपक्रमोपसंहारयोरैकरूप्यमभ्यासः अर्थवादश्चेति लिङ्गत्रयेतावन्नविवादः । सर्वासामेवोपनिषदां एवं प्रवृत्तत्वात् मानान्तरासिद्धतया मोक्षहेतुज्ञानविषयतया च अज्ञातत्वं सप्रयोजनत्वं च निर्विवादमेव । अबाधितत्वमात्रं संदिग्धम् । तच्चान्यथाऽनुपपत्तिगतिसामान्याभ्यां च निर्णीयते । नहि सर्वप्रपञ्चनिषेधरूपमद्वैतं व्यावहारिकम्’ इत्यादि (आगमबाधोद्धारे) उक्तम् ॥

‘एकमेवाद्वितीयम्’ इति अवधारणत्रयगर्भत्वेनास्याः श्रुतेः प्राबल्यं प्रागेव (१३१.पु) उक्तम् । अद्वितीयपदेन द्वितीयसामान्याभावबोधतात्पर्यग्राहकम् ‘एकम् एव’ इति मधुसूदनसरस्वतीभिरुक्तम् । अद्वितीयशब्दस्यासङ्कोचेन द्वितीयसामान्याभावपरत्वम् ‘आत्मा वा इदम्’ इत्यादिश्रुत्यैकरस्यं च चन्द्रिकायामुपपादितम् । (श्री.भा.१८०.पु) एवं च अद्वितीयपदेन सर्वप्रपञ्चनिषेधेन शुद्धचितएवोपनिषत्तात्पर्यविषयत्वम् । अत एव ‘निर्गुणः’ ‘निरञ्जनम्’ इत्युपक्रमोपसंहाराभ्यां निर्गुणस्य श्रुतितात्पर्यविषयत्वप्रतिपादनं सङ्गच्छत इति पूर्वपक्षोक्तमाशङ्कते—**यदुक्तमित्यादिना ॥**

### श्रीभाष्यम्

**अतो लिलक्षयिषितं ब्रह्म निर्गुणमेव। अन्यथा 'निर्गुणः' (श्वे.६.११) 'निरञ्जनम्' (१९) इत्यादिभिर्विरोधश्चेति। तदनुपपन्नं जगदुपादानस्य ब्रह्मणस्स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य। तथैव विचित्रशक्तियोगमेवाव-गमयति 'तदैक्षत बहुस्यां प्रजायेय' इति (छा.६.३.प्र.ख.३) 'तत्तेजोऽसृजत' इत्यादि। अविशेषेणाद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इतिचेत् सिसृक्षोर्ब्रह्मण-उपादानकारणत्वं 'सदेव सोम्येदमग्र असीदेकमेव' (छा,६.प्र.२.ख.१) इति प्रतिपादितम्**

### श्रुतप्रकाशिका

**अथ** शोधकवाक्यान्तरैकार्थ्यान्निर्विशेषपरत्वोपपादनं निराचिकीर्षुरनुवदति। **अन्यथेति**। अनूदितमर्थं दूषयति। **तदनुपपन्नमित्यादिना**। तत्र प्रथमं कारणवाक्यैकार्थ्यं सविशेषविषयत्वे सतीत्याह–**जगदिति**। **तथैवेति**। अद्वितीय पदं यथाऽधिष्ठात्रन्तरनिवारणपरमेव भवति, तथैवेत्यर्थः। **विचित्रशक्तियोगमेवेति**। उत्तरवाक्यमुपादानभूतस्यैव ब्रह्मणोऽधिष्ठातृत्वशक्तियोगमेवावगमयति नतु निर्गुणत्वमित्यर्थः। शङ्कते **अविशेषेणेति**। सर्वनिषेधस्य निमित्तान्तर-निषेधस्य च साधारणमद्वितीयपदं निरुपपदत्वात्। किंच उपक्रमे सदेवैकमेवेति सजातीयविजातीयभेदयोर्निषिद्धत्वादे-कविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्सजातीयविजातीयभेदमात्रमिथ्यात्वेऽनुपपन्नत्वाच्च॥

अद्वितीयपदमुपक्रमानुगुण्येन स्वगतभेदनिषेधपरं स्यात् नतूत्तरवाक्यानुगुणं स्यात् उपक्रमप्राबल्यादिति साक्षा-त्पूर्वपक्षिचोद्यम्। निमित्तत्वोपादानत्वे उभे अप्युत्तरत्र श्रूयेते। तत्रोपादानान्तरमद्वितीयपदेन निषेध्येत, नतु निमित्ता-न्तरमिति पार्श्वस्थचोद्यम्। तत्राह—**सिसृक्षोरिति**। * अनेन शङ्काद्वयं परिहृतं भवति 'तदैक्षत' इत्यनन्तरोक्तत्वा-

### गूढार्थसंग्रहः

**तदनुपपन्नमिति**। चन्द्रिकायां द्वितीयसामान्याभावरूपोऽपि धर्मः शुद्धे नाङ्गीक्रियते इति सिद्धान्तः प्रागेव (३१३ पु) अभिहितः। 'शुद्धेऽपि ब्रह्मणि न धर्मः, अपितु द्वितीयाभावत्वविशिष्टतादात्म्यमेवेत्यत्र न काऽपि युक्तिः। द्विती-याभावस्यापि निषेधोऽत्र विवक्षित इति अद्वैतसिद्ध्याद्युक्तिः न घटत इति प्रागेव (३३८.पु) उक्तम्। द्वितीयाभावोपल-क्षितमत्र विवक्षितमित्यपि न सम्भवति। द्वितियाभावस्यापि द्वितीयत्वेन अविद्याद्युपलक्षितादस्य विशेषाभावेन श्रुतेरित्थ-माशयवर्णनासम्भवात्। अतः 'उत तमादेशं अप्राक्ष्य' इत्यत्रादेशशब्देन शासितुः प्रतिपादनेन 'सदेव सोम्येदम्' इत्यत्रापि तस्यैव विवक्षितत्वेन द्वितीयसामान्याभावस्यात्रासिद्ध्या निर्विशेषचिद्विषयकबोधस्याप्रामाणिकत्वेन च 'यथा सोम्यैकेन मृत्पिण्डेन' इत्यनुरोधेन 'सदेव सोम्येदमग्रआसीदेकमेव' इत्यत्र 'आत्मा वा इदमेक एव' इति श्रुत्यन्तरा-नुरोधेन च ब्रह्मणः उपादानत्वस्य विवक्षितत्वेन 'नान्यत्किंचन मिषत्' इति श्रुत्यन्तरैकरस्येन 'अद्वितीयम्' इत्यस्य स्वव्यतिरिक्तनिमित्तकारणनिषेधपरत्वमेव युक्तमित्यभिप्रेत्याह—**जगदुपादानस्येत्यादिना**॥

**विचित्रशक्तियोगेति**। 'आत्मनि चैवं विचित्रश्चहि' इति सूत्रे विचित्रशक्तियोगः सूत्रकृता प्रतिपादितः। **तदैक्षत बहुस्यामित्यादि**। 'तत्तु समन्वयात्' इत्यत्र श्रीभाष्ये वक्ष्यमाणार्थस्य सूत्रकृदभिप्रेतत्वादेव 'ईक्षतेर्नाशब्दम्' इति तदुत्तरसूत्रे 'तदैक्षत बहुस्याम्' इतीक्षणोक्तिस्सङ्गच्छत इति भावः॥ **प्रतिपादितमिति। परस्य ब्रह्मणो जग-दुपादानत्वं** इत्येतत्सूक्तिविवरणे अयमर्थस्सम्यगुपपादितः॥

### श्रीभाष्यम्

**कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिध्यत इत्यवगम्यते। सर्वनिषेधे हि स्वाभ्युपगतास्सिषाधयिषिता नित्यत्वादयश्च निषिद्धास्स्युः। सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात्।**

### श्रुतप्रकाशिका

दस्य वाक्यस्य कारणपरत्वं नापलपनीयमित्यभिप्रायेण सिसृक्षोरित्युक्तम्। कारणपरत्वेच्चसति अग्रशब्देन विजातीयकालसद्भावसिद्धेर्जीवानादित्वश्रुतेः अकृताभ्यागमकृतविप्राणाशादिश्रुत्यर्थापत्त्या वैषम्यनैर्घृण्यपरिहाराय जीवानां (कर्म) सूक्ष्मभेदस्य प्रलयदशायामभ्युपगमादेकत्वावधारणस्य जीवसूक्ष्मभेदसहत्वस्य परैरभ्युपगन्तव्यत्वात् सार्वज्ञ्यसर्वशक्तित्वादीनां सर्गौपयिकत्वाच्च विजातीयसजातीयस्वगतभेदाभावस्य दुर्वचत्वात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्चोक्तार्थाविरोधेन निर्वाह्यत्वात् परतन्त्रभेदस्य विहितत्वात्। निषेधस्य च विहितव्यतिरिक्तविषयत्वात्, स्वतन्त्ररूपभेदविशेषस्य— **'न तत्समश्चाभ्यधिकश्च दृश्यते'** इत्यादिभिर्निषिद्धत्वात् सामान्यनिषेधस्य च तत्पर्यवसानस्य न्याय्यत्वाच्च, अद्वितीयपदस्य स्वतन्त्रभेदनिषेधपरत्वे प्राप्तेसति अविभक्तनामरूपताप्रतिपादकेनैकमिति पदेनोपादानत्वस्य सिद्धत्वान्निमित्तान्तरस्य बुद्धिस्थत्वाच्च निमित्तान्तररूप * स्वतन्त्रवस्तुनिषेधपरमद्वितीयपदमित्यर्थः॥

सर्वनिषेधेऽनिष्टमाह—**सर्वेति**। सर्वशाखाप्रत्ययन्यायस्य निर्विशेषत्ववादे विपरीतत्वमाह—**सर्वशाखेति**। अत्र निर्गुणवादे। अत्र भवत इत्युपालम्भो वा; सर्वशाखाप्रत्ययन्यायोऽनुक्तगुणस्वीकारफलः नतूक्तगुणत्यागफल इति त्वत्पक्ष

### गूढार्थसङ्ग्रहः

**नित्यत्वादयश्च निषिद्धास्स्युरिति**। 'कालपरिच्छेदाभावो नित्यत्वम्' इत्यद्वैतसिद्धौ द्वितीयमिथ्यात्वविचारे परिष्करणेऽपि कालपरिच्छेदाभावत्वेन रूपेण तत्प्रतीतिरावश्यकी। अभावस्याधिकरणात्मकत्वाङ्गीकारेऽपि अभावत्वविशिष्टस्य मिथ्यात्वेन तस्यापि निषेधे नित्यत्वं परब्रह्मणि नैव सिद्ध्यति। ज्ञानत्वाद्युपपत्तौ उपलक्षितपरत्वं (अ.सि) अङ्गीकृतम्। कालपरिच्छेदोपलक्षितस्य कालपरिच्छेदाभावोपलक्षितस्य च न किंचिद्विशेषं पश्यामः प्रतियोगितदभावयोरुभयोर्मिथ्यात्वादिति भावः॥

**सर्वज्ञत्वादीनां गुणानामित्यादि**। 'तथाऽक्षरात्संभवतीह विश्वम्' (मु.१.७) इत्येतदुत्तरं 'यस्सर्वज्ञस्सर्ववित्, यस्य ज्ञानमयं तपः' (मु.१.९) इति श्रूयते। अत्र (शं) भाष्यम्। 'यः उक्ताक्षराख्यस्सर्वज्ञः—सामान्येन सर्वं जानातीति सर्वज्ञः—विशेषेण सर्वं वेत्तीति सर्ववित्। यस्य ज्ञानमयं ज्ञानविकारमेव सर्वज्ञत्वलक्षणं तपः नायासलक्षणम्' इति 'सर्वज्ञ' इत्यत्र 'आतोऽनुपसर्गे कः' (३.२.३) इति कर्तरि कः। ननु 'घञर्थे कविधानम्'—इति (३.३.५८) वार्तिकेन भावेकः। एतद्वार्तिकमुपादाय महाभाष्ये 'स्थास्नापाव्यधिहनियुद्ध्यर्थम्' इत्येतावन्मात्रोक्तेः। अन्यत्र (६.१.१२) द्विर्वचन प्रकरणे 'कृञादीनां के उपसङ्ख्यानं कर्तव्यम्। चक्रं चिक्रिदं चिक्लिसम्' इति द्विवचन प्रकरणे 'कृञादीनां के' इति वार्तिकार्थोक्तेः। अत्र महाभाष्ये वार्तिकोक्तलक्ष्यमात्रप्रदर्शनेन वार्तिकोक्तव्यतिरिक्तलक्ष्ये घञर्थे कस्यानभिधानं स्फुटम्॥

एतेन स्वरूपज्ञानेनैव स्वसंसृष्टसर्वावभासकत्वात्सर्वज्ञत्वम्। सर्वविषयकज्ञानात्मकमेव ब्रह्मेति कौमुदीकारोक्तिर्निरवकाशा। एवं च सर्वविषयकज्ञानकर्तृत्वेनैव सर्वज्ञत्वमिति सिद्धम्। अतः तैत्तरीय (शं) भाष्ये प्राक् (१७९.पु) उदा

## श्रीभाष्यम्

**अतः कारणवाक्यस्वभावादपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते। नच निर्गुणवाक्यविरोधः प्राकृतहेयगुणविषयत्वात्तेषां 'निर्गुणः' (श्वे.६.११**

## श्रुतप्रकाशिका

विपरीत(फल)इत्यर्थः। सविशेषपरत्वे कारणवाक्यैकार्थ्यं निगमयति। **अतइति**। न केवलं सामानाधिकरण्यान्यथानुपपत्त्या कारणवाक्यैकार्थ्याच्च सविशेषपर(त्व)मित्यपिशब्दस्य भावः। अथ शोधकवाक्यान्तरैकार्थ्यं निर्विशेषपरत्वहेतुं निरस्यति। **नचेति**। परेणापच्छेदन्यायेन हि निर्गुणसगुणवाक्यविरोधः परिहृतः। अत्र भिन्नविषयत्वाद्विरोध एव नास्तीत्याह—**प्राकृतेति**। निर्गुणमिति गुणसामान्यनिषेधः। निष्कळमिति शरीरसामान्यनिषेधः। निष्क्रियमिति क्रियासा-

## गूढार्थसङ्ग्रहः

द्दते 'नहि सत्यता अनन्तता च ज्ञानकर्तृत्वेसत्युपपद्यते। ज्ञानकर्तृत्वेहि विक्रियमाणं कथं सत्यं भवेत्' इति दोषमभिधाय 'ज्ञानं ज्ञप्तिः भावप्रधानो ज्ञानशब्दः' इत्युक्तिर्न घटते। एतदेवाभिप्रेत्योक्तम् आत्मसिद्धौ भगवद्यामुनमुनिभिः 'सत्यं ज्ञानम्' इत्यत्रापि ब्रह्मलक्षणनिर्देशे ज्ञानशब्दो न ज्ञानमात्रवचनः। अपितु तद्वद्वचनः। तद्वचनत्वे 'लिती' इति आद्युदात्तत्त्वप्रसक्तेः। अन्तोदात्तश्चायं ज्ञानशब्दः। मत्वर्थीयाच्प्रत्ययान्तत्वे तथात्वं घटते नान्यथेत्येतत् परमात्मनिरूपणे अतिनिपुणमुपपादयिष्यामः' इति ज्ञानशब्दस्य भावसाधनत्वे बहुळग्रहणादेव स्वरस्योपपत्तिर्वाच्या इति अस्वारस्यं व्यक्तमिति यामुनमुनेराशयः। नहि ज्ञानक्रियाकर्तृत्वं विक्रियारूपमिति भाष्य एव साधितम्। एवं च कारणभूतवस्तुनस्सर्वज्ञत्वादेः प्रतिपादनात् निर्विशेषस्य कारणत्वे सर्वज्ञत्वं नैव सम्भवतीति निर्विशेषविवक्षा न घटत इति भावः॥

**कारणवाक्यस्वभावादपीत्यादि**। प्राक् उदाहृत (शं) भाष्ये सत्यं ब्रह्मेति विकारान्निवर्तयति। कारणत्वं प्राप्तं ब्रह्मणः कारणस्य तु कारकत्वं वस्तुत्वात्। मृद्वदचिद्रूपता च प्राप्ता, अत इदमुच्यते ज्ञानं ब्रह्मेति' इति परैरुक्तेः अत्र ज्ञानमित्यनेन ज्ञानाश्रयबोधकेन मृद्वत् सङ्कोचविकासात्मकस्वरूपपरिणामनिषेधेन ज्ञानावस्थाविशेषान्तर्यामिन्वरूपधर्मपरिणामो बोधितः अतस्सविशेषमेव प्रतिपाद्यत इत्याशयः॥

'एको देवः—केवलो निर्गुणश्च' इत्युक्तनिर्गुणमेव 'यतो वा इमानि भूतानि जायन्ते' इत्यादिकारणवाक्येषु एकवचननिर्देशेन विवक्षितम्।' उक्तं च पञ्चपादिकायां 'यतो वा इमानि' इति कारणस्यैकवचननिर्देशात् तदर्थमात्रस्यैव विधित्सितत्वात् अर्थात् सर्वज्ञं सर्वशक्तिजगत्कारणमिति कारणविशेषो वाक्यादवगम्यते' इति। अत्र विवरणम् 'जगत्कारणानुवादेनैकं ब्रह्म विधीयते' इति। एवं रत्नप्रभा च—अत्र येनेत्येकत्वं विवक्षितं, नानात्वे ब्रह्मत्वविधानायोगात्। यज्जगत्कारणं तदेकमित्यवान्तरवाक्यम्। यदेकं कारणं तद्ब्रह्मेति वा, यत्कारणं तदेकं ब्रह्मेति वा महावाक्यमितिभेदः' इति। अत्र कारणस्यैकत्वविधानेन स्वान्यसामान्यशून्यत्वबोधनात् निर्गुणश्रुतिविवक्षितं निर्विशेषमेव कारणवाक्यतात्पर्यविषयः इत्याशङ्क्य समाधत्ते–**नच निर्गुणवाक्य इत्यादिना**॥

**प्राकृतहेयगुणविषयत्वात्तेषामित्यादि**। अयमाशयः। 'ज्ञःकालकालो गुणी सर्वविद्यः' (६.२) 'स कारणं करणाधिपाधिपः' (९) इति निर्गुणश्रुतेः पूर्वम् 'एको वशी निष्क्रियाणां बहूनाम् एकबीजं बहुधा यःकरोति। तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम्' (१२) नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति

## गूढार्थसंग्रहः

कामान् तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ' (१३) ' सविश्वकृद्विश्वविदात्मयोनिः ज्ञःकालकालो गुणी सर्वविद्यः प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः । (१६) सतन्मयोह्यमृतईशसंस्थः ज्ञस्सर्वगो भुवनस्यास्य गोप्ता । यईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ' (१७) इति परत्र च श्रूयते । अत्र जगत्कारणत्वम् अचेतनजीवस्वामित्वं, स्वामित्वस्याविद्याद्यहेतुकत्वं तज्ज्ञानस्य मोक्षसाधनत्वं च स्फुटं प्रतिपादितम् । ' तमात्मस्थम् ' इत्यत्र जीवस्थत्वम् ' एको बहूनां यो विदधाति कामान् ' इत्यत्र सकलेष्टप्रदत्वम् ' संसारमोक्षस्थितिबन्धहेतुः ' इत्यत्र मोक्षहेतुत्वं च स्फुटं प्रतिपादितम् । तेन यः कारणभूतः पिता—स्वामी स एव मोक्षपर्यन्तफलप्रदाता । तज्ज्ञानं मोक्षसाधनमिति निर्णीतं भवति । एतेन सृष्टिमोक्षकारणवाक्यानामैकरस्यं परसम्मतात्मव्यतिरिक्तवस्त्वभावबोधतात्पर्यकत्वं च निर्णीतं भवति। एवं ' ज्ञःकालकालो गुणी सर्वविद्यः ' इति (६.२) पूर्वं परत्र च (१६) सर्वज्ञत्वादिगुणानां सृष्टिमोक्षोभयोपयोगित्वमुक्तम् । अत्र राजकुमारनयोऽनुसंधेयः । चिरकालं व्याधगृहे वसतः राजपुत्रस्य राजपुत्रत्वज्ञानानन्तरं राजशासनानुसारेण निष्कृतिपूर्वकं नित्यराजपितृप्राप्तिस्त्ववत् जीवस्य प्रकृतिबद्धस्य प्रकृतिनिबन्धनदोषवतः परमात्माधीनशरीरज्ञानविकासादिमत्त्वेन परमात्मपुत्रत्वज्ञानानन्तरं तच्छाशनानुसारेण उपासनादिनिष्कृतिपूर्वकं गुणवत्कारणपरमात्मपितृप्राप्तिः ' इति राजकुमारन्यायस्सम्यक् निर्णीतो भवति ॥

एतेन परसम्मतमेकत्वं कारणवाक्येषु न विवक्षितम् । एवं सृष्टिरज्ञानमूलेत्यपीति सिद्धम् । ' निष्कळं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ' इति अन्ते ' निष्कळम् ' इति निरवयवमित्यर्थकम् । अवयवाः प्राकृताहेयाः, तन्मूलकक्रियाशून्यत्वं ' निष्क्रियम् ' त्यत्र विवक्षितम् । ' निरवद्यम् ' इत्यत्र अज्ञानशून्यत्वं ' निरञ्जनम् ' इत्यत्र तत्सम्बन्धशून्यत्वं च विवक्षितम् । ' अमृतस्य परं सेतुम् ' इति तदनन्तरं मोक्षहेतुत्वं, ' तपःप्रसादात् देवप्रसादाच्च ब्रह्मह श्वेताश्वतरोऽथ विद्वान् ' (२१) इत्यत्र जीवस्य परमात्मानुग्रहमूलज्ञानवत्त्वं ' यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाश्यन्ते महात्मनः ॥ ' (२३) इति उपनिषदामन्ते सृष्ट्यादिक्रीडावति परमात्मनि परभक्तिमतः तत्प्रसादात् मुक्तिपर्यन्तार्थप्रकाशवत्त्वं च प्रतिपादितम् । अत्र च ' प्रकृतैतावत्त्वं च प्रतिषेधति ततोऽब्रवीति च भूयः ' (सू. ३३५) इति न्यायः वेदार्थसंग्रहे प्रतिपादितः । एतदर्थः उत्तरत्र विवेचयिष्यते । ' एको देवः ' इत्यत्र ' सर्वभूतेषु गूढः ' ' कर्माध्यक्षः ' इत्यादौ जीवस्य प्रकृतिकर्मनिबन्धनहेयगुणानां सूचनेन भूतसम्बन्धेन हेयगुणाः प्रसक्ताः । एवमुपनिषदुपक्रमे ' देवात्मशक्तिं स्वगुणैर्निरूढाम् ' इति प्रकृतिनिष्ठसत्त्वरजस्तमोगुणानां, प्रतिपादनेन तेऽपि भूतसम्बन्धेन प्रसक्ताः । तेषां विरह एव निर्गुण इत्यत्र विवक्षितः ॥

' ज्ञःकाल्कालो गुणी सर्वविद्यः ' इति श्रुतौ ' गुणी ' इत्यत्र प्रशंसायामतिशायने वा इनिर्विवक्षितः । एतदेवाभिप्रेत्य ' ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः ॥ ' (वि.पु.६.५.७९) इति पराशरेणोक्तम् । इदंच पुराणघट्टे उदाहरिष्यते । एवं वदतः पराशरस्य ' पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' इति (श्वे) श्रुतिरत्र विवक्षितेति प्रतीयते । अत्र चकारः ज्ञानादिगुणषट्केऽनुक्तगुणसमुच्चायकः । परत्व स्वाभाविकत्व विविधत्वानि ' गुणी ' इत्यत्रेनिप्रत्ययार्थतया विवक्षितानि । एवं च अप्रशस्तगुणा एव ' निर्गुण ' इत्यत्र निषिध्यन्ते इति तात्पर्येण ' विनाहेयैर्गुणादिभिः ' इत्युक्तम् । तदेतत्सर्वमभिप्रेत्य आत्मसिद्धौ स्वाभाविकनिरवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृतिसकलकल्याणगुणमहार्णवम् ' इति गीताभाष्ये ' स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्ति

## श्रीभाष्यम्

**'निष्कळं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (१९) इत्यादीनाम् । ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयः ब्रह्मणो ज्ञानस्वरूपतामभिदधति । न तावता निर्विशेषज्ञानमात्रमेव तत्त्वं—ज्ञातुरेव ज्ञानस्वरूपत्वात् ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिदीपादिवद्युक्तमेवेत्युक्तम् । ज्ञातृत्वमेव हि सर्वाश्श्रुतयो वदन्ति । 'यस्सर्वज्ञस्सर्ववित्' (मुं.१.१.९)**

## श्रुतप्रकाशिका

मान्यनिषेधः । न गुणनिषेधस्सङ्कोचयितव्यः आर्थगुणनिषेधबलेन सर्वगुणविरहावगमात् ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनात् ब्रह्मणो ज्ञानमात्रत्वप्रतिपादनेन निर्गुणत्वं हि फलितमिति शङ्कायामार्थगुणनिषेधं परिहर्तुं श्रुतिप्रतिपन्नमर्थमनुभाषते । **ज्ञानमात्रेति** । ततःकिमित्यत्राह—**न तावतेति** । कुतइत्यपेक्षायां किं ज्ञानत्वात् ज्ञानानाश्रयत्वमुच्यते । किमेकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्तेरिति विकल्पे प्रथमं प्रतिवक्ति । **ज्ञातुरेव ज्ञानस्वरूपत्वादिति** ॥

**अयमर्थः** ज्ञानस्य ज्ञानादिगुणाश्रयत्वाभावः किं व्याप्तया कथ्यते उत श्रुतिबलात् । व्याप्तयाचेत् ज्ञानाश्रयभूतं विषयप्रकाशकं ज्ञानं कस्यचिद्धर्मभूतमेव दृष्टमिति धर्मत्वेनाङ्गीक्रियतां यदि श्रुतिबलात् स्वतन्त्रत्वेनाङ्गीक्रियते तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियतामिति । ज्ञानानाश्रयत्वं धर्मभूतज्ञानत्वप्रयुक्तं नतु ज्ञानत्वमात्रप्रयुक्तमिति सोपाधिकत्वम् अतो व्याप्तिविरोधश्च नास्ति । यद्वा जडस्य घटादेरिव ज्ञातृत्वायोगात् ज्ञातृत्वेनैव ज्ञानस्वरूपत्वमर्थसिद्धम् ॥

द्वितीयंप्रतिवक्ति । **ज्ञानस्वरूपस्येति** । एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यतइत्यर्थः । श्रुत्या ज्ञानाश्रयत्वे सिद्धेहि तथाऽभ्युगम इत्यत्राह—* **ज्ञातृत्वमेवहीति** । यद्वा—**ज्ञातुरेव ज्ञानस्वरूपत्वादिति** । ज्ञातुर्ज्ञानस्वरूपत्वाविरोधादित्यर्थः । एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्त्या विरोधं परिहरति । **ज्ञानस्वरूपस्यैवेति** । ज्ञानत्वाज्ज्ञानानाश्रयत्वं परिहरति । **ज्ञातृत्वमेवहीति** । * पूर्ववदभिप्रायः । * ज्ञातृत्वं यथा फलितं भवति तादृशगुणपराश्रज्ञातृत्वकण्ठोक्तिमत्यश्च श्रुतयस्सर्वशब्दविवक्षिताः (बहुवचनेन) बहूपनिषद्वाक्यानि वा विवक्षितानि। एवकारेण ज्ञातृत्वस्यान्यथासिद्धिरभिप्रेता हिशब्दो हेतौ ज्ञातृत्वस्य श्रुतिसिद्धत्वान्नकाचिदप्यनुपपत्तिरित्यर्थः काः पुनश्श्रुतय इत्यपेक्षायां आर्थगुणनिषेधपरिहारार्थं निर्गुणश्रुतिसङ्कोचसिध्यर्थं सगुणश्रुतीनामाविद्यकगुणविषयत्वशङ्काऽपनोदनार्थं च श्रुतीर्दर्शयंस्ताभिरेतत्प्रयोजनत्रयासिद्धिं च दर्शयति । **यस्सर्वज्ञइत्यादिना** ॥

## गूढार्थसंग्रहः

तेजःप्रभृत्यसङ्ख्येयकल्याणगुणमहोदधिः' इति श्रीभाष्ये 'ब्रह्मशब्देन च स्वभावतो निरस्तानिखिलदोषः अनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते' इतिचोक्तम् ॥

ज्ञानस्वरूपस्य स्वप्रकाशतया अस्वप्रकाशगुणाश्रयत्वं न सम्भवतीति परेषामाशङ्कां परिहरति **ज्ञानमात्रस्वरूपवादिन्योऽपीत्यादिना** । ज्ञानं न ज्ञानाश्रयः ज्ञानत्वात् इत्याद्यनुमानानि 'प्रकाशो न प्रकाशाश्रयः प्रकाशत्वात्' इत्यनुमानतुल्यानीत्याभिप्रेत्याह—**मणिद्युमणिदीपादिवद्युक्तमेवेत्युक्तमिति** । श्रुतिविरुद्धंचेदनुमानमित्यभिप्रेत्याह—**ज्ञातृत्वमेव हि सर्वाश्श्रुतयोवदन्तीत्यादिना** ॥

## श्रीभाष्यम्

**'तदैक्षत' (छा.६.प्र.२.ख.३) 'सेयं देवतैक्षत' छा.६.३.२) 'सईक्षत लोकान्नु सृजा इति' (ऐतरेय.१.१) 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (कठ.२**

## श्रुतप्रकाशिका

यस्सर्वज्ञस्सर्ववित् सर्वं स्वरूपतः प्रकारतश्च जानातीत्यर्थः। * ज्ञानस्य सर्वविषयत्वं तस्य समष्टिव्यष्टिसृष्ट्युपयोगित्वं आत्मसम्बन्धित्वं च दर्शयति। **तदैक्षतेत्यादित्रयेण। नित्यो नित्यानाम्** इत्यत्र चेतनबहुत्वमुक्तम्, * कामप्रदत्वं च। **ज्ञाज्ञौ द्वौ** इत्यत्र ज्ञातृत्वमीश्वरत्वं च। **तमीश्वराणाम्** इत्यत्र ईश्वरत्वदेवतात्वपतित्वानि। ईश्वरत्वं–नियन्तृत्वम् नियाम्यविषयज्ञानवत एव नियन्तृत्वात् नियमनस्य ज्ञानविशेषरूपत्वाच, नियन्तृत्वेन ज्ञातृत्वसिद्धिः। देवतात्वं—

## गूढार्थसंग्रहः

**तदैक्षतेति।** तच्छब्देन 'सदेव सोम्य' इत्यत्र सच्छब्दस्यार्थ एव परामृश्यते। 'सदेव' इत्यत्र निर्विशेषस्य विवक्षितत्वे तत्रेक्षणाश्रयत्वं न सम्भवति। 'कामः सङ्कल्पः–एतत्सर्वं मन एव' (बृ) इति श्रुत्या कामादीनामन्तःकरण धर्मत्वस्यैव परैरभिधानेन अन्तःकरणसृष्टेः पूर्वं ईक्षणमन्तःकरणपरिणाम इति वक्तुं न शक्यते। ईक्षणं प्रकृतिपरिणाम इति बोधयन्ती श्रुतिर्न क्वापि वर्तते। नापि परैरुदाहृता। ईक्षणं मायापरिणामः, कामादयोऽन्तःकरणपरिणामाः इति परे वदन्ति। तत्र च मूलं मृग्यम्। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यत्र मायिनमित्यस्य मायास्वामिनमित्यर्थः। अतः 'तदैक्षत' इत्यादौ प्रळयानन्तरं ईक्षणाश्रयत्वेनोक्तं सविशेषमेवेति भावः॥

**नित्यो नित्यानामिति।** इयं निर्गुणश्रुत्यनन्तरश्रुतिः। '**नित्यानां बहूनां** य एको नित्यश्चेतनः स कामान् विदधाति' इत्यर्थः गीताभाष्ये उक्तः। **नित्यो नित्यानाम्** इति न निर्धारणे षष्ठी। **एको बहूनाम्** इत्यत्र तदयोगात् सम्भवति सामानाधिकरण्ये वैयधिकरण्येनान्वयस्यायुक्तत्वाच। अत्र यच्छब्दसत्त्वेन अनुवादरूपताप्रतीतावपि अप्राप्तत्वाद्विशिष्टविधिः नित्यैकचेतनस्य नित्यबहुचेतनकामविधातृत्वं विधीयते। जीवेषु नित्यत्वबहुत्वयोरप्यप्राप्तेः 'यदाग्नेयः' इत्यादिवत्। 'तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे नचेदन्येन शिष्टास्युः' (जै.सू.१.४.९) इति सूत्रकृता 'यदाग्नेयः' इत्यादौ विशिष्टविधित्वस्थापनात्। 'नित्यः अनित्यानामिति छेदः' (शं.उ.भा) चेतनश्चेतनानामित्यादिवैरूप्यान्नघटते। इदमालोच्यैव सिद्धान्तसिद्धाञ्जने 'नहि निर्धारणे षष्ठी नित्यो नित्यानामिति एको बहुनामिति समभिव्याहृतवैरूप्यापत्तेः। किन्त्वपेक्षायाम्। तथाचाचित्संसृष्टानामेव भिन्नानां जीवानामापवर्गिकज्ञानात्यन्तदौर्लभ्यात् औत्सर्गिकनित्यत्ववादोपपत्तिः तत्प्रायेहि तद्वादा भवन्ति। यथाऽनन्तं नभ इति आकाशवत्सर्वगतश्च नित्य इत्युपमीयते। ब्रह्मणश्चानवधिकं नित्यत्वम्। 'सत्यस्य सत्यम् प्राणावै सत्यम्' इत्यैकार्थ्योपपत्तेश्च' इत्युक्तम्। अत्र ब्रह्मातिरिक्तनित्यत्वापेक्षया ब्रह्मनित्यत्वमनवधिकमित्युक्तं भवति। एवं च 'एको बहूनाम्' इति समभिव्याहृतवैरूप्यं नैव परिहृतम्॥

एतेन प्राणावै सत्यं तेषामेष सत्यम्' 'नित्यो नित्यानां चेतनश्चेतानाम्' अणोरणीयन्महतो महीयान्' इत्यादिभिश्श्रुतिभिः व्यवहारकालाबाध्यत्वरूपप्रपञ्चसत्यत्वापेक्षया अबाध्यत्वाद्युपलक्षितस्वरूपात्मकत्वेन ब्रह्म सत्वादेरुत्कर्षोक्तेः' इति (प्रथममिथ्यात्वानिरूपणे) गुरुचन्द्रिकोक्तिरप्यनुपादेया। अबाध्यत्वोपलक्षितस्वरूपस्य 'नित्यो नित्यानामित्यत्र विवक्षितत्वे तस्य कामविधातृत्वानुपपत्तेः। 'प्राणावै सत्यम्' इत्यत्र सत्यत्वविशिष्टप्रतीतिवत् 'तेषामेष सत्यम्' इत्यत्र

## श्रीभाष्यम्

५.१३) 'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वे.१-अ.९)

## श्रुतप्रकाशिका

कर्माराध्यत्वं * पतित्वं शेषित्वम्। न तस्येति कार्यं शरीरं करणमिन्द्रियादि 'कार्यकारणकर्तृत्व' इति प्रयोगात्, समाभ्यधिकनिषेधश्चात्र श्रूयते तेनाद्वितीयमिति सामान्यनिषेधस्य 'छागो वा मन्त्रवर्णात्' इति न्यायादीश्वररूप * द्वितीयविशेषपर्यवसायित्वं सूचितम्। पराऽस्येति ज्ञानशक्त्यादीनां स्वाभाविकत्वमुक्तम्। क्रिया नियमनम् 'एष आत्मा' इति विशेषविधानं विशेषनिषेधश्च। आर्थगुणनिषेधस्य परिहर्तव्यतामभिप्रेत्य ज्ञानस्वरूपस्यैवेत्युक्तम्। आविद्यकत्वनिराकरणाय स्वाभाविकानीत्युक्तम्। समस्तहेयरहिततांचेत्यनेनाप्याविद्यकत्वशङ्का अर्थात्परिहृता ॥

## गूढार्थसंग्रहः

सत्यत्वविशिष्टस्यैव पदादुपस्थित्या उपलक्षितविवक्षायां गमकाभावात्। सत्यत्वविशिष्टस्य च मिथ्यात्वमेव। एवं 'नित्यानाम्' इत्यत्र नित्यत्वविशिष्टस्यैव नित्य इत्यस्य स्वरसतः उपस्थित्या 'नित्यः' उपलक्षितोपस्थापकत्वे प्रमाणाभावः। नित्यत्वविशिष्टस्य च परमते न नित्यत्वम्। मिथ्यात्वेन ज्ञाननिवर्त्यावश्यम्भावात्। उदाहृतनिर्गुणश्रुतिसमनन्तरश्रुतौ निर्विशेषं न विवक्षितम्। अत एव 'तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम्' इति बहूनां जीवानां मोक्षफलोक्तिः सङ्गच्छते ॥

एतेन 'नित्यानां परमनित्यः, चेतनानां परमचेतनः' इति नवीनविवरणमपि 'एको बहूनाम्' इति वैरूप्यान्नघटते। एवं 'नित्यानां नित्यत्वप्रदः, चेतनानां चैतन्यप्रदः' इति नवीनयोजनायां नित्यपदचेतनपदयोः लक्षणाकल्पनमपि दोषः। अतो भाष्योक्तार्थ एव युक्तः। अतएव 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' इति उत्तरश्रुतिरपि सङ्गच्छते। एतेन निर्गुणश्रुतौ परसम्मतार्थो न विवक्षित इत्यपि सिद्ध्यति। व्यावहारिकभेद एवात्र विवक्षित इति (अ.सि) कल्पनाऽपि उत्तरार्धे बहूनां मुक्तिरूपशाश्वतसुखोक्त्या निरवकाशा ॥

ब्रह्मणः अविद्योपाधिको व्यावहारिको भेदः निर्विशेषमेव उपनिषत्तात्पर्यविषयः, नतु ज्ञातृत्वमित्ययमर्थः श्रुतिविरुद्धः इत्यभिप्रेत्य तामेव श्रुतिमुदाहरति **ज्ञाज्ञौ द्वावजाविति**। 'अजाह्येका भोक्तृभोगार्थयुक्ता। अनन्तश्चात्मा विश्वरूपोह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्' (१—९) इति श्रुतिः। अत्र सर्वज्ञेशः अज्ञजीव प्रकृतिरूपपदार्थत्रयमभिधाय यदा पदार्थत्रयमस्ति तदा एतद्ब्रह्म विन्दते अज्ञो जीव इति प्रकरणात्सिद्ध्यति। पदार्थत्रयसत्त्व एव प्रकृतिसंबन्धमूलकाज्ञानाश्रयस्य जीवस्य 'अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति पूर्वोक्तपरब्रह्मज्ञानमूलकत्वब्रह्मप्राप्तिप्रतिबन्धकविमोकानन्तरं ब्रह्म प्राप्नोतीत्यर्थः। अत्र पदार्थत्रयसत्त्व एव ब्रह्मप्राप्तिरिति प्रतिपादनेन— 'ज्ञाज्ञौ द्वौ' इत्यत्र व्यावहारिकभेद एव विषयः वस्तुतो भेदवाचिपदं नास्त्येव द्वावित्येव वर्तते' इत्यद्वैतसिद्धिकृदुत्प्रेक्षाया नावकाशः। अत्र अनीशत्वविशिष्टस्यैवाज्ञानाश्रयत्वोक्त्या निर्विशेषे चिति अज्ञानमूलकः ज्ञातृत्वादिव्यवहारइत्युक्तिर्न घटते। 'ज्ञाज्ञौ' इत्यत्र ज्ञशब्देनासङ्कोचात् '**यः सर्वज्ञस्सर्ववित्**' इति श्रुत्यन्तरोक्तसर्वज्ञ एव विवक्षितः। अज्ञ इत्यत्राज्ञानाश्रयत्वमेव प्रतीयते। तेन 'मायांतु प्रकृतिं विद्यान्मायिनंतु महेश्वरम्' (श्वे.४.१०) इति श्रुत्या अज्ञानं शुद्धचिन्निष्ठमेव। अत्रानीशे अज्ञानकार्ययोगित्वेन अज्ञत्वव्यपदेशः इति (अज्ञानस्य चिन्मात्राश्रयत्वोपपत्तौ) मधुसूदनसरस्वत्युक्तिरनुपादेया ॥

## श्रीभाष्यम्

**'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्।' (श्वे.६-अ.१) 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते' (६—७) 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'**

## गूढार्थसंग्रहः

'मायिनम्' इत्यत्र 'अत इनिठनौ' इति (पा.सू.५.१.११५) मत्वर्थीयेनिप्रत्ययः। धनी इत्यादाविव मायिनं मायास्वामिनमित्येवार्थः। एवं 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' (श्वे.४.९) इत्यत्रापि मायी मायास्वामी इत्येवार्थः। 'अन्य' इत्यत्रोपाधेरनिर्देशेन माययेत्यस्य सन्निरुद्धइत्यत्रैवान्वयात् मायिनः स्वाभाविकभेदवतएव मायया सन्निरुद्धत्वं विवक्षितम्। सन्निरुद्धत्वं च भ्रमादिमत्त्वेन जीवस्यैव। 'अन्य' इत्यत्रोपाध्यनिर्देशेन जीवब्रह्मभेदः स्वाभाविक इति प्रतीयते। अत्र अन्यस्यैव मायासन्निरुद्धत्वोक्त्या ब्रह्मणः मायाश्रयत्वे नेदं प्रमाणं भवितुमर्हति॥

एतेन इमां श्रुतिमुदाहृत्य 'नहि कुठारायुक्ते कुठारेण छिनत्तीति प्रयोगः। नवा निगलशून्ये निगलेन बद्धइति भावः' इति चन्द्रिकाद्वये उपपादनं 'तस्मिंश्चान्य' इति श्रुतिखण्डापर्यालोचनमूलकम्। ब्रह्मणः स्वभावतो भिन्ने जीवे अज्ञानयोगसाधन एव विश्राम्यति। एतेन 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यत्र ज्ञपदस्य जीवव्यावृत्तसर्वज्ञत्वरूपेण बोधकत्वात्। अज्ञपदस्य असर्वज्ञत्वरूपेणैव बोधकत्वमित्यपि बोध्यम्। इति चन्द्रिकाद्वये जीवस्याज्ञानाश्रयत्वं 'ज्ञाज्ञौ द्वावजौ' इत्यत्र न विवक्षितमिति प्रयासोऽपि विफलः। 'तस्मिंश्चान्यो मायया सन्निरुद्धः' इति श्रुत्यन्तरेण जीवस्याज्ञानाश्रयत्वसिद्धौ 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यत्र ज्ञपदस्यासङ्कोचेन ज्ञानाश्रयबोधकत्वमेव युक्तम्। 'मायिनंतु महेश्वरम्' इत्यत्र मायाश्रयत्वप्रतीत्यङ्गीकारेऽपि महेश्वरत्वविशिष्टस्यैव मायित्वं प्रतिपाद्यत इति शुद्धचितः मायावत्त्वं नैव सिद्ध्यति। उभयोर्भेदाभावात्तत्सिद्धिरितिचेत्; जीवस्यापि भेदाभावेनाज्ञानाश्रयत्वनिवारणासम्भवात्। शुद्धचितएवाप्रामाणिकत्वे इत्थं कल्पनाया असम्भवात्। वस्तुतः 'मायिनंतु महेश्वरम्' इत्यत्र मायाश्रयत्वविवक्षणमनुचितमेव। 'अस्मान्मायी सृजते विश्वमेतस्मिंश्चान्यो मायया सन्निरुद्धः' (४.९) 'मायांतु प्रकृतिं विद्यान्मायिनंतु महेश्वरम्' इति श्रुतिक्रमः। अत्र पूर्वश्रुतावन्यस्यैव मायया सन्निरुद्धत्वोक्त्या 'मायी' इत्यत्र मायास्वामित्वमेव विवक्षितमित्यकामेनापि स्वीकार्यम्। एवंच पूर्वश्रुत्यनुरोधेनोत्तरत्र मायिनं—मायास्वामिनमित्येवार्थः। पूर्वश्रुत्युक्तमायिमायापदविवरणपरा उत्तरश्रुतिः

एतेन 'प्रकृतिं मायां मिथ्याभूताम्' इति चन्द्रिकायां विवरणमपि निरवकाशम्। 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यत्र ईशभिन्नस्याज्ञत्वम् ईशस्य सर्वज्ञत्वम्। 'मायांतु प्रकृतिं विद्यान्मायिनंतु महेश्वरम्' इत्येतत्पूर्वश्रुतौ मायिव्यतिरिक्तस्य मायया सन्निरुद्धत्वमुक्त्वा उत्तरत्र महेश्वरस्य मायित्वमुक्तम्। इत्थं च मायिनः ईश्वरत्वप्रतिपादने पूर्वश्रुतावपि ईशव्यतिरिक्तस्यैव मायया सन्निरुद्धत्वमभिहितं भवति। एतच्छ्रुतिद्वय (ज्ञाज्ञौ—मायिनंतु महेश्वरम्) पर्यालोचनायां अज्ञानाश्रयत्वं सर्वज्ञत्वं च विरुद्धमिति सिद्ध्यति। तेन मायावृत्तिनिबन्धनसर्वज्ञत्ववादः न श्रौत इति बोध्यम्॥

'एतद्वै सत्यकामपरंचापरं च ब्रह्म' (प्रश्न.५.२) 'परं पुरुषमभिध्यायीत' (५.५) 'परात्परं पुरुशयं पुरुषमीक्षते' (५—५) इत्यत्र परंब्रह्म निर्विशेषम् अपरं ब्रह्म सविशेषमिति परे वदन्ति। अयमर्थः श्रुतौ न विवक्षितः। 'तमीश्वराणाम्' इत्यादौ ईश्वरादिपदार्थस्य परमत्वमभिधाय तत्समतदन्यानिषेधपूर्वकं तस्यैव गुणषट्कप्रतिपादनादित्यभिप्रेत्य तच्छ्रुतिद्वयमुपादत्ते—तमीश्वराणामित्यादि। अत्रेश्वराधिकवस्तुनिषेधेन ईश्वरत्वविशिष्टस्यापारमार्थ्ये शुद्धचितः पारमार्थ्यं च

## श्रीभाष्यम्

**'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' (छा.८.१.५) इत्याद्याश्श्रुतयः**

## गूढार्थसंग्रहः

ये वदन्ति तन्मते परमार्थत्वेनेश्वरादधिकस्य निर्विशेषत्वसम्भवेन तदपि प्रतिषिद्धं भवति। प्रतिषेधानन्तरं 'पराऽस्य शक्तिः' इति श्रुतौ अस्येत्यत्रेतच्छब्देन प्रागुक्तसर्वेश्वर एव परामृश्यते। शक्तिशब्दोऽपि न परसम्मताविद्याबोधकः। परैरपीश्वरे अविद्याया अनङ्गीकारात् परसम्मतनिर्विशेषचितः पूर्वमप्रस्तुततया एतच्छब्देन परामर्शो न घटते। 'देवात्मशक्तिं स्वगुणैर्निरूढाम्' (श्वे.१-३) इत्युपक्रमे स्वगुणैर्निरूढाम् इति विशेषणेन शक्तिशब्दस्य प्रकृतिवाचित्वेऽपि अत्र ज्ञानबलक्रियासमभिव्याहारेण शक्तिः ज्ञानादितुल्यैव विवक्षिता। अन्यथाऽविद्यायाः अविद्याकार्यभूतज्ञानादेश्च परमतरीत्या विवक्षणे समुच्चयस्य स्वाभाविकत्वस्य च विरोधः। नहि परमतेऽविद्या स्वाभाविकी। तथासति 'स्वाभाविकीमविद्यां च कस्समुच्छेत्तुमर्हति' इति कुमारिलोक्तदूषणपरिहार एव न स्यात्। अयमर्थः अविद्यावादे निरूपयिष्यते। नापि परमते ज्ञानबलादिकं स्वाभाविकम्॥

एतेन अस्मदादाविव भौतिकोपाधिकत्वाभावेन योगिष्विव योगार्जितत्वाभावेन स्वाभाविकत्वोक्तेः। नच सङ्कोचकाभावः; निर्गुणवाक्यस्यैव सङ्कोचकत्वात्। नच स्वाभाविकज्ञानसमभिव्याहारविरोधः सार्वज्ञ्यादिरूपाविद्यापरिणामस्यैव ज्ञानपदेन विवक्षितत्वात्। बाधकसत्त्वासत्त्वाभ्यां समभिव्याहारेति वैरूप्याङ्गीकरणात्। 'पावको ब्राह्मण इतिवत्' इति 'भौतिकोपाधिकत्वेति। भूतपरिणामोपाधिकृतत्वेत्यर्थः। अस्मदादेर्ज्ञानेच्छादिकं भौतिकमनः परिणामः नेशस्येति भावः' (ल.चं) इति च (अ.सि.ब्रह्म निर्गुणत्वोपपत्तौ) उक्तिर्निरवकाशा। ईशज्ञानादेः अविद्यापरिणामत्वं प्रमाणतः यदि निश्चितं स्यात् तदा 'स्वाभाविकी' इत्यस्येत्थमर्थवर्णना सम्भाविता। नच तथाविधं प्रमाणमस्ति येनैवमुत्प्रेक्षा स्यात्। नच निर्गुणवाक्यविरोधः। अत्र 'परा' स्वाभाविकी' 'विविधा' इति पदत्रयस्य निर्गुणश्रुत्युत्तरं 'ज्ञःकालकालो गुणी' इत्यत्र प्रशंसायामिनिप्रत्ययस्यच तात्पर्यपर्यालोचनेन निर्गुणश्रुतेः परसम्मतार्थासम्भवस्य प्रागेव उपपादनात्। परमार्थतः ईश्वरादाधिकस्य निर्विशेषस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यत्र निषेधेन 'निर्गुण' इत्यत्र परसम्मतनिर्गुणत्वविवक्षाया असम्भवाच्च। अत्र 'परा' इत्यादिविशेषणत्रयं शक्तौ ज्ञानादौ च विवक्षितम्, इति शक्त्यादेस्स्वाभाविकत्वं परत्वं विविधत्वं च बोधितं भवति। अयमर्थः 'ज्ञानशक्ति' इत्यादिप्रागुदाहृतपराशरवचनेऽभिप्रेतः॥

एवं च 'सच भगवान् ज्ञानैश्वर्यबलशक्तिवीर्यतेजोभिः सदा सम्पन्नः' इति गीताऽवतरण (शं) भाष्ये 'सदा सम्पन्न' इत्युक्त्या एतच्छ्रुतौ स्वाभाविकत्वं सर्वत्रान्वेतीति विवक्षितमिति प्रतीयते। 'ज्ञानशक्ति' इत्यादिपराशरव्यवस्थाश्वेताश्वतरश्रुतिपूर्वापर परामर्शनिबन्धनेति निरूपितम्। एतेन सगुणत्वे साधकाभावात्' इति (अ.सि.ब्रह्मनिर्गुणत्वोपपत्तौ) उक्तिः निरवकाशा॥

अथ 'अपहतपाप्मा' इत्यादिश्रुत्यन्तरानुसारेणापि उक्तव्यवस्थैव युक्ता। व्याकरणाधिकरणे भट्टपादानामप्ययमेवार्थः विवक्षित इत्यभिप्रेत्याह—**एष आत्मा अपहतपाप्मेत्यादि**। 'एष आत्मा अपहतपाप्मा' इत्यादिदहरविद्यावाक्यम्। 'य आत्माऽपहतपाप्मा—सत्यकामस्सत्यसङ्कल्प इति प्रजापतिविद्यावाक्यम्। दहरविद्या सगुणविद्या प्रजापतिविद्या निर्गुणविद्येति परेषां मतम्। अत्र सिद्धान्तलेशसंग्रहे प्रतिबिम्बस्य बिम्बैक्यानन्तरं बिम्बनाश एव परममुक्तिः,

## गूढार्थसङ्ग्रहः

तत्र बिम्बभूतस्येश्वरस्य सत्यकामत्व सत्यसङ्कल्पत्वाभिप्रायेण 'सत्यकामस्सत्यसङ्कल्पः' इत्युक्तेर्न विरोध इत्युक्तम्। अयं पक्षो न साधुरिति तद्व्याख्यान एव स्पष्टम् ॥

यद्यपि 'पूषाद्यनुमन्त्रणमन्त्रवत्प्रकरणादुत्कृष्टत्वस्य द्वादशोपसत्तावाक्यवत् स्तावकत्वस्य वा सम्भवात्' (अ. सि.७३२.पृ) इति मधुसूदसरस्वतीभिरुक्तम्। अत्र 'पूषाद्यनुमन्त्रणेति। पूषादिमन्त्रस्य दर्शपूर्णमासादिप्रकरणे पठितस्य दर्शादौ पूषादिदेवताविरहेण यथा पूषादिदेवताककर्मणि लिङ्गेन विनियोगः, तथा सत्यकामत्वादेर्ज्ञेयब्रह्मप्रकरणपठितस्य ज्ञानान्वयासम्भवेन सगुणोपासनायामन्वय इत्यर्थः। स्वप्रकरण एव स्तावकत्वेनान्वयसम्भवे उत्कर्षो न युक्तः, प्रतीतैकवाक्यताया भङ्गापत्तेरित्याशयेनाह—द्वादशेति। 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति वाक्ये अहर्गणरूपाहीनगतोपसदां द्वादशत्वेनानुष्ठानगौरवद्वारा निन्दया साह्नगतोपसत्त्रयस्य विधेयस्य यथा तदभावेन स्तुतिः सगुणब्रह्मणस्सत्यकामत्वादिना विधेयस्य निर्गुणात्मनः स्तुतिरिति भावः' (ल.चं.७३२.पृ) इति विवरणं, तथाऽपि पूषादिमन्त्रस्य दर्शपूर्णमासादिप्रकरणपठितत्वं दर्शादौ पूषादिदेवताशून्यत्वं च सर्वसम्मतम्। सत्यकामत्वादेरनुपास्यज्ञेयब्रह्मप्रकरणपठितत्वं, उपासनातिरिक्तज्ञानान्वयासम्भवश्चेत्येतदुभयं न सम्प्रतिपन्नमिति न तद्दृष्टान्तसम्भवः। 'अथ यो वेदेदं जिघ्राणीति स आत्मा' (छा.८.१२.४) इत्यादिनोपसंहारे सगुणात्मनः स्फुटं प्रतिपादनात्। 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.उ.८.१२.२) 'जक्षत्क्रीडन् रममाणः' (छा८.१२.३) इत्यादौ शरीरादुत्थानपूर्वकस्वरूपाविर्भावव्यापाराणां प्रतिपादनाच्च प्रजापतिविद्याया निर्गुणविषयत्वस्यैवासिद्धेः। उत्तरत्र 'अथ यो वेद' (छा.८.१२.५) इत्यत्र 'य आत्माऽपहतपाप्मा' (छा.८.७.१) इत्यत्र च प्रागुक्तं धर्मभूतज्ञानं सत्यकामत्वान्तं च रूपं 'स्वेन रूपेण' (छा.८.१२.२) इत्यत्र विवक्षितम्। कामानां सत्यत्वादेवान्ते—मनसैतान् कामान् पश्यन् रमते' (छा.८.१२.५) इत्युक्तिस्सङ्गच्छते। दहरविद्यायां 'एष आत्माऽपहतपाप्मा' (छा.८.१.५) इत्यादावपहतपाप्मत्वादिगुणाष्टकं परस्य श्रूयते। अत्र तु जीवस्य। अत एव 'निरञ्जनःपरमं साम्यमुपैति' (मुण्ड.१-३) इति श्रुतेः स्वरूपाविर्भावश्रुतेः 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' (ब्र.सू.४.४.५) इति सूत्रस्य च सामरस्यम्। अयमेव वृत्तिकारसिद्धान्तः तदुक्तं दहराधिकरणे शङ्कराचार्यैः 'अपरेतु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्तेऽस्मदीयाश्च केचित्' इति। 'मतान्तरमाह—अपरेतु वादिनः' इति तत्र भामती। 'पारमार्थिकजीवब्रह्मविभागमतमाह—मतान्तरमिति' इति कल्पतरुः ॥

एवं 'तिस्र एव साह्नस्य' इत्यादिवाक्ये साह्नगतोपसत्त्रयवत्परसम्मतनिर्गुणात्मविधानं नैव दृश्यते। 'आत्मा अपहतपाप्मा' (छा.८.७.१) इत्येकवाक्य एव निषेधविध्योरुभयोर्दर्शनेन दृष्टान्तवैषम्येण परसम्मतार्थविवक्षाया अत्रासम्भवेन निर्गुणश्रुतिविषयविवेचनपरत्वमेवास्याश्श्रुतेर्युक्तम्। अत एव व्याकरणाधिकरणे (जै.सू.१.३.२५) तन्त्रवार्तिके

सर्वत्रैवहि विज्ञानं संस्कारत्वेन गम्यते। पराङ्गंचात्मविज्ञानादन्यत्रेत्यवधारणात् ॥

आत्मज्ञानं हि संयोगपृथक्त्वात् क्रत्वर्थं पुरुषार्थत्वेन ज्ञायते, तेनविना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसम्भवात्। तथा 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोन्वेष्टव्यस्स विजिज्ञासितव्यः' (छा.८.७.१) तथा 'मन्तव्यो बोद्धव्यः' (बृ.२.४.५) तथा आत्मानमुपासीत' (बृ.१.४.१५) इति कामवादलोकवादवचनविशेषैर्जिज्ञासामननसहितात्मज्ञानात्केवलावबोधपर्यन्तस्पष्टात्मतत्त्वज्ञानविधानापेक्षितवाक्यान्तरोपात्त-द्विविधाभ्युदयनिश्श्रेयसरूपफलसम्बन्धः। 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' (छा.८.७.१) तरति शोकमात्म

## गूढार्थसंग्रहः

वित् (छा.७.३.१) तथा 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुपतिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते' (छा.८.२.१) इत्यादिना योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि वर्णितानि। तथा 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छा.८.१५.१) इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनम्' इति भट्टपादोक्तिस्सङ्गच्छते। 'सर्वत्रैव हि' इति श्लोको बृहदारण्यकवार्तिके (१.अ.४.ब्रा.१२५४.श्लो) उदाहृतः। अत्र 'अपहतपाप्मादिशास्त्रेण मोक्षहेतुं तज्ज्ञानमाचक्षाणेन तद्वर्जयित्वा ज्ञानानन्तरमेव परार्थमित्यवधारणात् तत् स्वतन्त्रमेव मुक्तिफलमित्यर्थः' इत्यानन्दगिरिविवरणम्॥

'दृढत्वमेतद्विषयःप्रबोधः प्रयाति वेदान्तनिषेवणेन' इति प्रागुक्तार्थं स्थापयितुं पूर्वोपपादितदिशा अत्रोपनिषदि सगुणात्मैव विवक्षित इति प्रतिपादनाय 'य आत्माऽपहतपाप्मा' (छा.८.७.१) इत्यादिश्रुतेः प्रथमत उपन्यासः। तत्र पाप्मशब्दः 'न सुकृतं दुष्कृतं सर्वे पाप्मनोऽतो निवर्तन्ते' (छा.८.४.१) इति छान्दोग्यश्रुत्यनुसारेण पुण्यमपि बोधयति। विशोक इत्यत्र दुःखमिश्रसुखराहित्यमपि विवक्षितम्। निर्गुणविद्यात्वेन परसम्मतप्रजापतिविद्यायां 'अथ यो वेदेदं जिघ्राणि' (छा.८.१२.४) इत्यादिना ज्ञातृत्वेन निर्धारित आत्मा 'य आत्मा' (८.७.१) इत्युपक्रमे विवक्षित इति शबरस्वामिसिद्धान्तितज्ञानाश्रयाहमर्थात्मज्ञानदार्ढ्यं एतद्वेदान्तवाक्यनिषेवणेन भवति। यद्यपि प्रजापतिविद्या सगुणविद्या जीवविद्यैव परमात्मोपासनरूपदहरविद्याङ्गमिति पुरुषार्थत्वं कथमिति शङ्क्येतेति, तथाऽपि 'पराङ्गं च' (जै सू.१०३.२५.तन्त्रवा) इति वार्तिकवाक्ये उत्तरत्र क्रत्वर्थत्वोक्त्या क्रत्वङ्गत्वमेव विवक्षितं, नोपासनाङ्गत्वम्। दहरोपासनाफलस्यापि स्वरूपाविर्भावस्य प्रजापतिविद्यायां प्रतिपादनेन प्रजापतिविद्याफलत्वमपि विवक्षितम्। 'व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्' (ब्र.सू.३.३.५२) इति सूत्रे 'अस्यात्मनस्संसारदशाया मोक्षदशाया यो व्यतिरेकस्सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः' तद्भावभावित्वात्तद्रूपापत्तेः। 'यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा ३.१४.१) इत्यादिश्रुतेः' इति अपहतपाप्मत्वादिगुणाविर्भावस्यापहतपाप्मत्वादिगुणानुसन्धानफलत्वस्य सिद्धान्तितत्वेन 'य आत्मा' (८.७.१) इत्यादिश्रुतिवाक्यस्याप्यपहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनपर्यवसायित्वविवक्षया तदुपपादनसम्भवात्। 'शारीरके वक्ष्यामः' इति वृत्तिकारोपवर्षवाक्यमेतच्छ्रुतिसूत्राभिप्रायकमित्याशयः॥

एवं 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' (छा.७.२६.२) इत्युपसंहारे मुक्तौ सर्वविषयकसाक्षात्कारे क्वापि दुःखतादर्शनं नास्तीत्युक्त्या 'तरति शोकमात्मवित्' (७.१.३) इत्युपक्रमोक्तार्थो विशदीकृतः। एतेन विशोकत्वाविर्भावो विशदीकृतो भवति। एवं सर्वसाक्षात्कारोक्त्या सत्यकामत्वादिव्यक्तिरपि दृढीकृता। श्रुतिद्वयेन नित्यसुखाभिव्यक्तिस्सम्यक् स्थापिता भवति। 'सर्वं ह पश्यः' (छा.७.२६.२) इत्यनन्तरं 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (७.२६.२) इति श्रुत्या अपहतपाप्मत्वादिकं संगृहीतम्। धर्मभूतज्ञाननित्यता भट्टपादसम्मतेति नित्यसुखाभिव्यक्तिर्मुक्तिस्तन्मते इति च वार्तिकव्याख्यातृभिस्सुचरितमिश्रैस्सिद्धान्तितमित्यहमर्थ आत्मा सगुण एव 'तरति शोकमात्मवित्' (छा.७.१.३) इत्यत्र विवक्षित इति भट्टपादानामाशयः। अपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थायाः 'ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते' (छा.८.१५.१) इति श्रुतिप्रतिपाद्याया गृहस्थस्यापि सम्भवन्त्याः प्रतिपादनेन गतिद्वारकं फलमिदमिति परेषामपि (शं.उ.भा) सम्मतत्वेन तत्रापि सगुणात्मैव विवक्षितः। 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.८.१२.२) इति श्रुतावुत्क्रान्त्यनन्तरमेव परमात्मप्राप्तिः अपहतपाप्मत्वादिस्वरूपस्याविर्भावश्च स्फुटं प्रतिपाद्यते। एतेन गतिद्वारकब्रह्मप्राप्तिमन्तरा

## गूढार्थसंग्रहः

अपहतपाप्मत्वादिविशिष्टस्वरूपाविर्भावो न घटत इति परमात्मप्राप्तिकाल एव स्वरूपाविर्भाव इति सिद्धम् । अयमर्थः उत्क्रान्तिगतिपादानन्तरपादे 'सम्पद्याविर्भावः स्वेन शब्दात्' (ब्र.सू.४.४.२२) 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' (ब्र.सू.४.४.१) इत्युपक्रमोपसंहारसूत्राभ्यां व्यासेन स्फुटीकृतः । अतः परमात्मप्राप्त्यपहतपाप्मत्वादिविशिष्टस्वरूपप्राप्ती-मुक्तिकालिक्यावेवेति भट्टपादानामाशयः । 'य आत्माऽपहतपाप्मा' (छा.८.७.१) इति श्रुतिमुपक्रम्य अन्ते 'ब्रह्मलो-कमभिसंपद्यते' (८.१५.१) इति श्रुत्युपादानेन श्रुतिद्वयैकार्थ्यं भट्टपादैर्बोधितम् । 'तरति शोकमात्मवित्' (छा.७.१ ३) इत्याद्युपसंहारे 'सर्वं ह पश्यः पश्यति' (७.२६.२) इत्युक्त्या मुक्तावात्मविदो वेदान्तिनः सर्ववस्तुसाक्षात्कारकथ-नेन—अतीतेऽनागते चार्थे सूक्ष्मे व्यवहितेऽपि च । प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥ इति प्रत्यक्षसूत्रे-(१.१.४.जै.सू.श्लो.वा.२६.श्लो) केचित् वेदान्तिन एवेति भट्टपादविवक्षितमिति सिद्धम् ॥

अपूर्वाधिकरणे च 'चैतन्यात्मकत्वाविभागाच्चोपनिषत्स्वैकात्म्य व्यवहारः' इति भट्टपादैर्वक्ष्यते । संबन्धाक्षेपप-रिहारे च (जै.सू.१.१.५. श्लो.वा.८४—८६.श्लो) एकात्मवादिसम्मतोऽविद्यावादो दूषितः । तद्व्याख्याने च पार्थ सारथिमिश्रैः 'निरस्तश्चायं पक्षो निरालम्बनवादेन' इत्युक्तम् । निरालम्बनवादान्ते 'ग्राहं गतास्तत्र कथंचिदन्ये' (जै.सू.१.१.५.श्लो.वा.नि.वा.२०१.श्लो) इत्यत्रैकात्मवादिनो विवक्षिता इति पार्थसारथिमिश्राशयः । श्लोकस्यास्यार्थः भावप्रकाशे निरूपितः । 'बाह्यार्थापह्नवे द्वैतम्' (जै.सू.१.१.५.श्लो.वा.नि.वा.१७.श्लो) इत्याद्युक्तयुक्तीनां परेषामपि सम्मतत्वात् । तदुक्तं 'नैतद्बुद्धेन भाषितम्' (माण्डूक्यकारिका) इति माण्डूक्यकारिकाशाङ्करभाष्ये 'यद्यपि बाह्यार्थनि-राकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम् । इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः' इति । अत्र बाह्यार्थनिराकरणमुभयसम्मतमिति स्फुटम् । अत एकात्मवादिसम्मतो निर्गुणवादो न भट्टपादसम्मतः । परमात्मस्वरूपं च 'एकत्वयुक्तमेकस्य श्रुतिसंयोगात्' (जै.सू.३.१.१३) इति सूत्रतन्त्रवार्तिके निरूपितम् । तत्र हि—'दशापवित्रेण ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहैकत्वविवक्षाविचारोऽयुक्त इति—

प्रतीतिव्यतिरेकेण विवक्षाऽन्या न विद्यते । नित्यत्वाद्वेदवाक्यानां श्रुतोऽतो नाविवक्षितः ॥ इत्यादिना आक्षिप्य
तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः । इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥
शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते । तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥
अनादिनिधनेऽप्येवं वेदे वेदार्थगोचरे । व्याख्यानं मुख्यवृत्त्याऽपि स्याद्विक्षाविवक्षयोः ॥
ततश्चैतद्ग्रहैकत्वं किं वेदेन विवक्षितम् । किं नेति न्यायमार्गेण विचार्य स्थापयिष्यति ॥

इति समाहितम् । अत्र न्यायसुधा—'कस्याश्श्रुतेर्व्योमशरीरता श्रुतेत्यपेक्षायां 'खं ब्रह्म' (छा.४.१०.५) इति श्रुत्या व्योमशरीरतयोदित इत्युक्तम् । 'य आकाशे तिष्ठन्नाकाशमन्तरो यमयति य आकाशं वेत्ति यमाकाशं न वेद यस्याका-शश्शरीरमेष त आत्मा सर्वान्तर्याम्यमृतः' (बृ.उ.३.७.१२) इति श्रुत्यन्तरसूचनार्थश्चकारः । नित्यस्यापि नियम्यात्व-लक्षणयोग्यत्वाद्देहत्वोपपत्तिसूचनार्था नित्यतोक्तिः । शब्दब्रह्मवादस्य च चेतनाचेतनयोर्ब्रह्मशब्दयोस्तादात्म्यानुपपत्तेः शब्दो ब्रह्माधिष्ठानमित्येवं व्याख्येयत्वात् शब्दात्मकानामपि वेदानां देहतां ब्रह्माख्यस्य च परमात्मनोऽपि देहाधिष्ठातृतां सूचयि-तुमाह—शब्देति । यद्वेदाख्यं शास्त्रं शब्दब्रह्मेत्युच्यते तत्परमात्मनाऽधिष्ठितमिति योज्यम्' इति । उक्तं च खण्डदेवे-नापि भाट्टरहस्ये—'जीवातिरिक्तेश्वरे नित्येच्छाङ्गीकारवद्वैदिके शब्देऽपि नित्येच्छाङ्गीकारे बाधकाभावात् । यादिलिच्छा-त्वस्यात्मनिष्ठत्वमेवेत्याग्रहस्तदा लिङादिवैदिकशब्दे श्रौतात्मशब्दप्रयोगाभावेनेश्वर इच्छात्मत्वाङ्गीकारे मानाभावात् ।

## गूढार्थसंग्रहः

उपनिषदादिप्रमाणगम्यमीश्वरमप्यङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङ्गाद्यर्थस्तात्पर्यरूपा च ' इति । अत्रेश्वरस्यो-पनिषदादिगम्यत्वे ' तं त्वौपनिषदं पुरुषम् ' (बृ.३.९.२६) इति बृहदारण्यकश्रुतिर्मूलम् । पुरुषशब्दश्च ' स यत्पूर्वो-ऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत् । तस्मात्पुरुषः ' (बृ.१.४.१) ' स वा अयं सर्वासु पूर्षु पुरिशयः ' (२.५.१८) इति तत्रैव निरुक्तः । औपनिषदपुरुष एव ' विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं, तिष्ठमानस्य तद्विद इति ' (बृ.३ ९.२७) इति तत्रत्यान्त्यश्रुतिप्रतिपाद्यं ब्रह्म । स एव परमात्मा प्रापकतया प्राप्यतया च विवक्षितः । अत्र निरुक्तित्रय-पर्यालोचनायां जगत्कारणस्यान्तर्यामिणस्सर्वपापदाहकत्वस्य सिद्ध्या जगत्कारणस्यैव मुक्तिप्रदत्वमिति सिद्ध्यति । अन्ते तस्यैव प्राप्यत्वोक्त्या सृष्टिवाक्यानां राजकुमारन्यायेन परमात्मप्राप्तिफलपर्यवसायित्वं सिद्धम् । एतदेव विवक्षितं ' पर-मात्मप्राप्त्यवस्था ' (जै.सू.१.३.२५.तन्त्रवा) इत्यत्र तन्त्रवार्तिके भट्टपादानाम् । एतेन ' प्राप्तिसाधनमात्मज्ञानमपि परमात्मज्ञानमेव विवक्षितम् । अप्रकरणगतत्वेनानैकान्तिकक्रतुसम्बन्धाच्च नाञ्जनखादिरस्रुववाक्यादिफलश्रुतिवदर्थवाद-त्वम् ' (जै.सू.१.३.२५.व्याकरणाधिकरणतन्त्रवार्तिके) इत्येतदनन्तरभट्टपादोक्त्या ' एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेणोप-निषदां नैराकाङ्क्ष्यं व्याख्यातम् ' (जै.सू.२.१.१.भावार्थाधिकरणे तन्त्रवार्तिके) इति प्राक्स्वोक्तौ तात्पर्यं नास्तीति बोधि-तम् । उपनिषदां कर्मकर्तृजीवभिन्नपरमात्मपरत्वात् । एतेन सम्बन्धाक्षेपपरिहारे (जै.सू.१.१.१.श्लो.वा) सृष्ट्यादिदूषण-मपि प्रागुक्तपक्षाभिप्रायकम् । तत्रापि न स्वसम्मतिरिति सिद्धम् । परमात्मप्राप्त्यवस्थेत्यत्रावस्थापदोपादानेन—

नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते । विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता ॥
स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ । न त्ववस्थान्तरप्राप्तौ लोके बाल्ययुवादिवत् ॥
अवस्थान्तरभाव्ये तत्फलं मम शुभाशुभम् । इति ज्ञात्वाऽनुतिष्ठंश्च विजहच्चेष्टते जनः ॥
अनवस्थान्तरप्राप्तिर्दृश्यते न च कस्यचित् । (जै.सू.१.१.५.आत्मवादे.२२.२५.श्लो.वा)

इत्यात्मवादे बुद्धिजन्मविचारे आत्मनः परसम्मतकूटस्थत्वानभ्युपगमेन नित्यत्वोपपादानाच्च सगुणात्मवादः स्वाभीष्टः स्थापितो भवति ॥ एतेन न्यायसुधायां सगुणनिर्गुणात्मद्वयं व्याकरणाधिकरणे भट्टपादविवक्षितमित्यभिप्रायेण ग्रन्थविवरणं खण्ड-देवेन तस्यानुसरणंचाभिनिवेशमूलकमेव । एवं न्यायसुधायां ग्रहैकत्वविवक्षाविचारावसरे ' अनादिनिधनेऽप्येवं ' (जै. सू.३.१.१३.तन्त्रवा) इति श्लोके ' मुख्यवृत्त्याऽपीत्यपिशब्दो मुख्यवृत्तिव्याख्यानस्याभ्युच्चयसूचनार्थः ' इत्याद्युक्तिरपि तथैवेति बोद्धव्यम्, व्याकरणाधिकरणात्मवादादिविरोधात्, निर्गुणात्मनः क्वापि भट्टपादैरनिरूपणात् । (श्लो.वा) आत्म वादे परसम्मतकूटस्थतां निराकृत्य अन्ते—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयःप्रबोधः प्रयाति वेदान्तनिषेवणेन ॥ (आ.वा.१४८.श्लो.वा)

इत्यत्र भाष्योदिताहमर्थसगुणात्मप्रबोधस्यैव व्याकरणाधिकरणसम्मार्गाधिकरणोदाहरिष्यमाणवेदान्तनिषेवणेन दृढत्वस्य स्फुट-मभिधानात् । प्रत्यक्षसूत्रे ' कैश्चिन्मुक्तात्मनामपि ' इत्यत्र सुचरितमिश्रकारिकोक्तदिशा वेदान्तिनां मुक्तानां सर्ववस्तुसा-क्षात्कारस्य भट्टपादानामपि सम्मतत्वाच्च । अतः ' अपहतपाप्मा ' (छा.८.७.१) इत्यादिश्रुतौ सत्यकामत्वादिकमात्मनो विवक्षितमेव । मधुसूदनोक्तरीत्या उत्कर्षः स्तुतिर्वा न घटत इत्येव भट्टपादानामाशयः ॥

एवं च निर्गुणोक्त्यनन्तरं गुणोक्तिरेव ब्रह्मणस्सगुणत्वसाधिकेत्यर्थसिद्धः ॥ अत्र च ' प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ' इति न्यायः वेदार्थसंग्रहे प्रतिपादितः । तदर्थश्च इत्थम् । ' अथात आदेशो नेति नेति '

## गूढार्थसङ्ग्रहः

इत्यत्र नञ्द्वयेन 'द्वे वा ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्च तस्यहैतस्य पुरुषस्य रूपम्' इति प्रागुक्तरूपाणां न निषेधः, किंतु पूर्वोक्तरूपाण्येव ब्रह्मण इति ब्रह्मगतरूपाणां या इयत्ता प्राप्ता सैव निषिध्यते । ब्रह्मणि रूपाणामपरिच्छिन्नतया ब्रह्मणः परिच्छिन्नरूपवत्त्वं प्रतिषिध्यत इति यावत् । 'प्रकृतैतावत्त्वम्' इत्यत्र 'एतावत्त्वम्' इतिशब्दप्रयोगेणेयत्ताया एव निषेधः सूत्रकृतो विवक्षितः । ननु मूर्तामूर्तप्रपञ्चस्येति स्फुटं प्रतीयते । यदि मूर्तामूर्तप्रपञ्चस्यैव प्रतिषेधो विवक्षितस्स्यात् तदा प्रकृत इति वा रूपे रूपाणीति वा प्रतिषेधतीत्यादिनिर्देशेनैव तल्लाभसम्भवेन 'एतावत्त्वम्' इति पदस्यैव वैयर्थ्यं स्यात् । द्विरवधारणे इयत्ताया एव प्रतिषेधो न रूपाणामिति । नेतिनेतीति द्विरुक्त्या इयत्ता प्रतिषेधे अभ्यासरूपतात्पर्यलिङ्गं दर्शितं भवति । नेति नेतीति वीप्सया प्रकारसामान्यनिषेधः सूत्रकृतो न विवक्षितः । तथात्वे प्रकृतशब्दोपादानं विरुध्यते रूपाणि प्रतिषेधतीत्येव सूत्रविन्यासः यदिस्यात्तदैवेत्थं श्रुतितात्पर्यकल्पनं घटेत । नच तथा विन्यासः । अत इयत्ताप्रतिषेध एवात्र विवक्षितः । ननु प्रकृतप्रकारप्रतिषेधः । पूर्वोक्तरूपापेक्षयाऽतिरिक्तरूपस्य ब्रह्मण्यङ्गीकारेऽपि प्रकृतरूपनिषेधसम्भवेन परसम्मतनिर्विशेषसिद्ध्यसम्भवात् । एतत्परिमाणमस्य एतावत् एतावतो भाव एतावत्त्वमित्यर्थः । अत्र एतच्छब्दं विहायैतावत्त्वमिति परिमाणार्थकप्रत्ययान्तैतावच्छब्दोत्तरभावप्रत्ययेन परिमाणवत्त्वं निषेध्यतया बुबोधयिषितमिति प्रतीयते । 'द्वे वा ब्रह्मणो रूपे' इति प्राक् द्विशब्देन परिमाणं प्रकृतम् । तदेव निषेध्यमिति एवं विन्यासेन बोधितम् । 'प्रकृतैतावत्त्वम्' इत्यत्र कर्मधारयाश्रयणेऽपि उक्तार्थ एव बुबोधयिषित इति सिद्ध्यति

श्रुतौ निर्विशेषस्य विवक्षा नैव सम्भवति । नह्येतस्मादिति नेत्यन्यत्परमस्ति । अथ नामधेयं सत्यस्य सत्यम्' इत्यादि ददनन्तरश्रुतौ धर्मप्रतिपादनायोगात् । तदेवाह—'ततोऽब्रवीति च भूयः' इति । अत्र चोहेतौ । ततः तदनन्तरं प्रतिषेधती' त्यत्र पूर्ववाक्यं कर्तृ, 'ब्रवीति' इत्यत्रानन्तरवाक्यं कर्तृ । 'भूयश्च भूरि च' इत्यमरकोशेन भूयश्शब्दो बह्वर्थको द्वितीयान्तः । 'एतावत्त्वम्' इति पूर्वपरिमाणवत्त्वस्यैव निषेध्यत्वेऽनन्तरबहूक्तिस्साधिका । 'नह्येतस्मादिति नेत्यन्यत्परमस्ति' इति श्रुतौ 'इतिनेति' एतस्माद्ब्रह्मण अन्यत् परं नह्यस्तीत्येव एकावाक्यतया अर्थो विवक्षितः । एवमर्थविवक्षायामेव 'इति नेति' वाक्यस्यार्थनिर्णयस्सम्भवति । इतिशब्दस्य प्रकारवचनतया द्वयोः प्रकारयोरेव पूर्वशब्दत उपस्थित्या द्विप्रकारमात्रप्रतीत्या अनन्तरं बहुकथनेन द्विप्रकारमात्रनिषेधः प्रकारेयत्तानिषेधपर्यवसित इति प्रतीयते । इति नेत्युक्ताद्ब्रह्मणः परमुत्कृष्टं नास्तीत्युक्त्या ब्रह्मशब्दस्य 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' इति श्रुतौ 'बृहत्वाद्ब्रह्मणत्वाच्च तद्ब्रह्मेत्यभिधीयते' इति स्मृतौ 'ब्रह्म परिवृढं सर्वतः' इति व्यासनिरुक्तौ चोक्तप्रवृत्तिनिमित्तस्य गुणत उत्कर्षमन्तराऽसम्भवेन ब्रह्मणोऽन्यद्गुणत उत्कृष्टं नास्तीत्येवास्यां श्रुतावर्थस्यभिप्रेतत्वेन ब्रह्मण्यनन्तगुण्यङ्गीकार एवतस्सम्भवात् ब्रह्मणि बहुगुणानामत्र विवक्षाया उपपन्नत्वात् । 'महत्त्वं ब्रह्मशब्दार्थः' इति पञ्चपादिकाविवरणावसरे 'दोषहीनं गुणभूयिष्ठं महान्तं कथयन्ति' इत्युक्त्या गुणैर्महत्वस्य परसम्मततया श्रुतौ परशब्दर्थमहत्वमपि गुणैरेवोपपादनीयमिति ब्रह्म सर्वापेक्षया महत् इत्यन्वयमुखेनाभिधानापेक्षया ब्रह्मान्यत् परं नास्तीति व्यतिरेकमुखेनोक्तावेव ब्रह्ममहत्त्वदृढीकरणमिति श्रुतौ व्यतिरेकमुखेनोक्तिः । श्रुतौ परशब्दतात्पर्यानुरोधेन सूत्रे भूयः पदमपि बह्वर्थकं द्वितीयान्तमित्येवोक्तम् ॥

'अथ नामधेयं सत्यस्य सत्यम्' इति वाक्ये नामधेयशब्दस्य शक्त्या बोधकपर्यायतया ब्रह्मशब्दवत् 'सत्यस्य सत्यम्' इत्यपि शक्त्याऽर्थबोधकं नामधेयमिति । तदनन्तरं 'प्राणावै सत्यं तेषामेष सत्यम्' इति तदर्थनिर्णयः क्रियते । अत्र प्राणशब्दार्थापेक्षया ब्रह्मण उत्कर्ष एव विवक्षितः, सोऽपि सत्यशब्दार्थपर्यालोचनायां निर्दोषत्वेन तदाक्षिप्ताधिक-

## गूढार्थसंग्रहः

गुणवत्त्वेनन्नेति स्फुटं प्रतीयते । अतश्च 'नेति नेति' इत्यनन्तरं बहुगुणकथनेन पूर्वं प्रकारद्वयोक्त्या या इयत्ता सैव 'नेति नेति' इत्यत्र निषेध्यतया विवक्षिता । नतु प्रकाराविति निर्णीतं भवति ॥

यद्यपि 'प्रकृतं यदेतावदियत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति । यद्वा पूर्वप्रतिषेधः भूतराशिं प्रतिषेधति उत्तरो वासनाराशिं । अथ वा 'नेति नेति' इति वीप्सेयम् इति यावत्किंचिदुत्प्रेक्ष्यते—तत्सर्वं न भवतीत्यर्थः । इतश्चैष एव निर्णयः यतस्ततः प्रतिषेधाद्भूयो ब्रवीति अन्यत्परमस्तीति तत्रैषाऽक्षरयोजना । 'नेति नेतीति' ब्रह्मादिश्य तमेवादेशं पुनर्वक्ति । नेति नेती' त्यस्य कोऽर्थः ? नह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेति नेतीत्युच्यते परमप्रतिषिद्धं ब्रह्मास्तीति । यदा पुनरेवमक्षराणि योज्यन्ते 'नह्येतस्मादिति नेति नेतीति' नहि प्रपञ्चप्रतिषेधरूपादेशनादन्यत्परमादेशनं ब्रह्मणोऽस्तीति, तदा 'ततोब्रवीति च भूयः' इति नामधेयविषयं योजयितव्यम्' इति (शं) भाष्यम् ॥

'ततोऽन्यद्ब्रवीतीति नेति नेतीति प्रतिषेधादन्यद्भूयो ब्रवीतीति तन्निर्वचनम् । नह्येतस्मादित्यस्य यदा 'नेति नेति' इत्यादिष्टाद्ब्रह्मणोऽन्यत्परमस्तीति व्याख्यानं तदा प्रपञ्चप्रतिषेधादन्यद्ब्रह्मैव ब्रवीतीति व्याख्येयम् । यदा तु नह्येतस्मादिति सर्वनाम्ना प्रतिषेधे ब्रह्मण आदेशः परामृश्यते, तदाऽपि प्रपञ्चप्रतिषेधमात्रं न प्रतिपत्तव्यम् । अपि तु तेन प्रतिषेधेन भावरूपं ब्रह्मोपलक्ष्यते । कस्मादित्यत्राह—'ततोऽब्रवीति च भूयः' इति । यस्मात् प्रतिषेधस्य परस्तादपि ब्रवीति 'प्राणावै सत्यम्' इति माहारजनाद्युपहितं लिङ्गमुपलक्षयति । तत् खलु सत्यमितरापेक्षया । तस्यापि परं सत्यं ब्रह्म । तदेवं पूर्वस्मिन्व्याख्याने निर्वचनं ब्रवीतीति व्याख्यातम् । अस्मिंस्तु 'सत्यस्य सत्यम्' इति ब्रवीतीति व्याख्येयम्' इति भामती ॥

सूत्रे ततश्शब्दादुपरि अन्यदित्यध्याहरति—ततोऽन्यति । इतरथा तु ब्रवीतीत्युक्ते किं ब्रवीतीति न ज्ञायेतेति। ततश्शब्दार्थमाह- नेति नेतीति प्रतिषेधादिति । प्रतिषेधादन्यद्भावरूपं ब्रवीतीत्यर्थः इति कल्पतरुः ॥ 'भूयः पुनः' इति रत्नप्रभा । 'नह्येतस्मादित्यादिवाक्यस्य यदा एतस्मादथात इति प्रस्तुतादन्यज्जडजातं नह्यस्तीति कृत्वा नेतीत्यादेशः ; परं तु ब्रह्मास्तीति योजना । तदा ततो ब्रवीतीति सूत्रशेषः नह्येतस्मादिति वाक्यविषयः । तदा तु 'नह्येतस्मादिति' वाक्यस्य एतस्मादिति नेत्येवंरूपादादेशादन्यत् परमादेशनं नास्तीति योजना । तदा ततो ब्रवीतीति सूत्रशेषः 'अथ नामधेयम्' इत्यादिश्रुतिवाक्यशेषविषयो द्रष्टव्य इति व्यवस्था' इति ब्रह्मविद्याऽभरणम् ॥

प्रकृतं मूर्तञ्चामूर्तमित्यादिना विशेष्यतया निर्दिष्टं यदेतावत्त्वं मूर्तादि तदेव प्रकृतवाक्यं निषेधति नतु ब्रह्मापि । षष्ठ्यन्तेन विशेषणतया निर्दिष्टत्वात् । विशेषणतया प्रक्रान्तस्यापि निषेधे न बाधकम् । अतो हेत्वन्तरमाह—तत इति । ननु ब्रह्मैव तद्भिन्नचोहेतौ । यस्मात्ततस्तद्ब्रह्मरूपमाधारमादायैव निषेधोऽन्यथा निराधारस्य सर्वनिषेधस्यासम्भवात् । पूर्ववाक्यस्य तात्पर्यं वक्तुं भूयो निषेधानन्तरं नेतिति यन्निषेधः तदेतमाधारीकृत्य निषिध्यतां तत्राह—ब्रवीतीति । 'पूर्ववाक्यस्य तात्पर्यं वक्तुं भूयो निषेधानन्तरं नेतिति यन्निषेधः तदेतस्माद्ब्रह्मणोऽन्यन्नहीत्येवं रूपम् । परं यदाधारभूतं ब्रह्म तत्त्वस्त्येवेत्यर्थकं नह्येतस्मादिति नेत्यन्यत्परमस्तीति वाक्यं ब्रवीति । तथा 'प्राणावै सत्यं तेषामेष सत्यम्' इति ब्रह्मणः अबाध्यत्वं ब्रवीति' इति वेदान्तसूत्रमुक्तावलिः ॥

एतत्पर्यालोचनायां ब्रह्मव्यतिरिक्तसामान्यनिषेधः ब्रह्मैकमेव सत्यमिति श्रुतिसूत्रविवक्षितमिति प्रतीयते । तथाऽपि सूत्रे भूय इत्यस्य पुनरित्यर्थकत्वे ब्रवीतीत्यत्र कर्माकाङ्क्षाया अनिवृत्तेः कर्मवाच्यन्यशब्दोऽध्याहर्तव्यः । ततोऽपि भूय-

## गूढार्थसंग्रहः

शब्दस्य द्वितीयान्तस्य कर्मवाचकत्वाश्रयणमेव युक्तम् । एतावत्त्वमित्यत्र परिमाणवाचि वतुप्प्रत्ययस्य तदुत्तरभावप्रत्ययस्य च वैयर्थ्यं दुर्वारम् । नेति नेतीति वीप्सया सर्वप्रतिषेधविवक्षायां प्रकृतशब्दस्यापि वैयर्थ्यमेव । तथात्वे रूपाणि प्रतिषेधतीत्येव ब्रूयात्सूत्रकारः । हीत्यस्यावधारणार्थकतया रूपसामान्यनिषेधविवक्षा न कथञ्चिदपि सिद्ध्यति ॥

एतेन (वे.सू.मु) ब्रह्मानन्दविवरणे अन्यपदाध्याहाराभावेऽपि भूयः पुनः ब्रवीतीत्युक्तमर्थं ब्रवीतीति कर्मणो लाभाङ्गीकारेऽपि एवमर्थस्य सूत्रकृद्विवक्षितत्वे 'प्रकृतैतावत्त्वम्' इति विन्यासो निर्बीजएवापद्यते । प्रकृते रूपाणीति वा ब्रह्मणोऽन्यदित्यादि वा निर्देशः स्यात् । नच तथा निर्दिशति सूत्रकारः । अतस्सूत्रे इयत्ताप्रतिषेध एव विवक्षितः । भूयश्शब्दो बह्वर्थको द्वितीयान्त इत्येव युक्तम् ॥

(शं.भा) प्रथमयोजनायां 'नेति नेतीदिष्टाद्ब्रह्मणोऽन्यत्परमस्ति' इति श्रुतेः 'ततोऽन्यद्ब्रवीती' ति सूत्रस्यचार्थवर्णनेन श्रुतिसूत्रयोरैकरस्येऽपि सूत्रेऽन्यशब्दाध्याहारो न युक्तः । 'नेति नेती' ति प्रतिषेधादन्यद्भूयो ब्रवीतीति सूत्रार्थवर्णनेन प्रतिषेधादन्यस्य सूत्रे पूर्वमनुक्तया पुनः ब्रवीतीत्युक्तिश्च न घटते । रूपसम्बन्धित्वेन श्रुतावुक्तस्य पुनरुक्तिविवक्षायामपि 'प्रकृतैतावत्त्वंहि प्रतिषेधति' इत्यत्र एतावत्त्वमित्यस्य वैयर्थ्यं दुर्वारम् ॥ एतद्दोषपरिहाराय (वे.सू) मुक्तावल्युक्तयोजनाऽपि न श्रुतिसूत्रयोर्विवक्षिता । प्रकृतशब्दस्य विशेष्यमात्रपरत्वस्य निर्णयासम्भवात् । एतावत्त्वशब्दवैयर्थ्याच्च । 'च ततः इत्यनयोः यस्मात्ततः तद्ब्रह्मरूपमाधारमादायैव निषेधः' इत्यर्थस्य शब्दस्वारस्यविरोधेन कथंचिदप्यसम्भवात् । तत इत्यत्र तच्छब्दस्य 'प्रकृतैतावत्त्वंहि प्रतिषेधति' इति पूर्ववाक्ये शब्दादनुपाश्थितार्थपरामर्शकत्वस्यासम्भवात् । तत इत्यत्र हेतौ पञ्चम्यर्थस्यान्वययोग्यविशेष्यस्यैवोपस्थापकदाभावात् लोके क्वापि 'च ततः' इति समभिव्याहारे एवमर्थप्रतीतिरदर्शनाच्च ॥

नह्येतस्मादिति नेत्यन्यत्परमस्तीत्यत्र अन्यदित्यस्य इतीत्यतःपूर्वं सत्त्वे नेतीति निषेधः । एतस्माद्ब्रह्मणोऽन्यन्नहीत्येवंरूपः इत्यर्थस्सम्भावितः । नच तथा वर्तते । अतः इतीत्यस्मादुत्तरं अन्यदित्यस्य सत्त्वेनेत्थमर्थश्श्रुतौ नविवक्षितः परमस्तीति भिन्नवाक्यं स्फुटं न प्रतीयते । नञ्समभिव्याहारे व्यवधानेन अस्तीत्यस्य प्रयोगेऽपि नञ अस्तीत्यनेन सम्बन्धेन एकवाक्यतया बोधविवक्षा प्रामाणिकसम्मता, तथैव व्युत्पत्तेः । अतः प्रतीतैकवाक्यताभङ्गेन वाक्यद्वयं कल्पनीयम् । 'द्वे वाव ब्रह्मणो रूपे' इत्यत्र ब्रह्मणि रूपे इति वाक्यसत्त्वे नेतीत्यत्र ब्रह्मणि रूपाभावप्रतीत्या ब्रह्मणो निषेधाधिकरणत्वप्रतिपत्तिस्स्यात् । नच तथा वर्तते । 'द्वे वाव ब्रह्मणो रूपे' इत्यत्र ब्रह्मण इति षष्ठ्याः सम्बन्धसामान्यवाचितया स्वस्वामिभावसम्बन्धादिपरत्वसम्भवेन ब्रह्मणः निषेधाधिकरणत्वविवक्षागमकमपि किंचिन्नास्ति । तथासति ब्रह्मशब्दं विहाय परशब्दप्रयोगस्य निर्बीजत्वापत्तेः । परशब्दोह्युत्कृष्टार्थकः । सच निर्दोषत्वगुणवत्त्वाभ्यां एतदर्थविवक्षासत्त्व एव परशब्दस्सार्थकः । प्रथमं कतिपयरूपाणि ब्रह्मसम्बन्धितयाऽभिधाय नेति नेतीत्युक्त्यनन्तरं नेति नेतीत्यस्य ब्रह्मान्यसामान्यनिषेधो ब्रह्माधिकरणको यः तत्तात्पर्यकत्ववर्णनं कुतः ? ब्रह्माधिकरणब्रह्मान्यसामान्यनिषेधस्य श्रुतितात्पर्यविषयत्वे प्रथमतो ब्रह्मणो नानारूपाणि प्रतिपाद्य तन्निषेध एव वक्तव्यस्स्यात् । नच तथात्रोक्तम् । अतः कतिपयरूपवत्त्वमात्रमभिधायानन्तरप्रवृत्तस्य नेति नेतीत्यस्येयत्ता निषेधपरत्वमेव । तदनन्तरं तस्मद्ब्रह्मण उत्कृष्टवस्तुनिषेधेन तद्दृढीकरणमेवात्र विवक्षितमिति युक्तम् । ब्रह्मण उत्कृष्टवस्तुनिषेधश्चान्यत्र स्फुटमुक्तः ॥

श्वेताश्वतरोपनिषदि 'तमीश्वराणां परमं महेश्वरम्' इत्युपक्रम्य 'नतत्समश्चाभ्यधिकश्च दृश्यते' इत्यभिधाय 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति परस्वाभाविकशक्त्यादिविविधगुणवत्त्वं प्रतिपाद्य 'न तस्य कश्चित्पतिरस्ति लोके नचेशिता

## गूढार्थसङ्ग्रहः

नैव च तस्य लिङ्गम् । सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः ॥' इत्यधिकविशेषनिषेधः प्रतिपादितः। अत्राधिकनिषेधानन्तरं पर विविध स्वाभाविकशक्तिज्ञानबलादिगुणप्रतिपादनेन ब्रह्मण ईश्वरस्य अधिकत्वं गुणनिबन्धनमिति स्फुटम् ॥

अत्र विविधशब्देन सङ्ख्याशून्यत्वं विवक्षितम् । यथोक्तम् 'सङ्ख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः । आनन्त्यात्प्रथमो राशिरभावात्पश्चिमो मतः' इति । एवं 'तस्माद्धान्यन्न परः किंचनास' 'मत्तःपरतरं नान्यत्किंचिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥' (गी.७.७) इत्यपि ब्रह्मान्यस्य गुणत उत्कृष्टस्य निषेधकमेव । अत्र सूत्रे मणिगणा इवेत्यनेन समानसत्ताकाधारत्वमेव विवक्षितम् । अत्र पूर्वं 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्' इति प्रकृत्यपेक्षया जीवस्य परत्वमभिधायान्वयमुखेन प्रतिपादनापेक्षया व्यतिरेकमुखेनाभिधान एव परत्वदृढीकरणमिति तथैवोक्तम् । एवंच 'न तत्समश्च' इत्यादिश्रुत्यर्थ एव 'नह्येतस्मा' दित्यादौ विवक्षितः। अतः प्रथम योजना न सूत्रकृत्सम्मता ॥

एवं प्रथमयोजनायां परशब्दस्वारस्यभङ्गादिकं पर्यालोच्य द्वितीययोजनाऽभिहिता । तत्र एतच्छब्दस्य सर्वनामतया आदेशपरामर्शित्वमस्तु अथापि 'अथात आदेशो नेति नेति' इत्यनन्तरं 'इति नेत्यन्यत्परमस्ति' इत्येतावन्मात्रेणैव तत्सम्मतार्थबोधस्सम्भवति । इति नेति आदेशस्यैव पूर्वमभिधानेन इति नेतीत्येतावन्मात्रेणैव आदेशोपस्थितिस्सम्भवति, इति एतस्मादित्यस्य नैव साफल्यं सम्भवति । अस्यां योजनायां परशब्दस्योत्कृष्टवाचकत्वमेव वाच्यम् ; तथात्वे 'तत्त्वमसि' इत्यादिमहावाक्यानामेवोत्कृष्टतया तन्मते तदादेशस्यैव उत्कृष्टादेशत्वम् । 'सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद्वाचकः वेदश्चायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः' (सं.शा) इति सर्वज्ञात्ममुन्याद्युक्तदिशाऽभ्युपगन्तव्यमिति— 'नेति नेति' इत्यादेशादन्यस्य परस्यादेशस्य सत्त्वेनार्थबाधश्च । एवमेतद्योजनायां ब्रह्मान्यसामान्यनिषेधस्य 'नेति नेति' इत्यत्र अनेन वाक्येन साधनं न सम्भवति । वीप्सया तदसिद्धिः पूर्वमेवोक्ता ॥

'ततोब्रवीति च भूयः' इति सूत्रखण्डस्यानन्तरवाक्यं विहाय 'अथ नामधेयम्' इत्यादि तदनन्तरवाक्यविषयकत्वकल्पनंचास्वरसम् । 'सत्यस्य सत्यम्' इतिहि नाम्ना ब्रह्मणि प्रकारसामान्यनिषेधस्य 'नेति नेति' इत्यत्र साधनासम्भवेन 'ततो ब्रवीति च भूयः' इति सूत्रखण्डार्थस्य पूर्वखण्डार्थोपपादकत्वासम्भवश्च । 'सत्यस्य सत्यम्' इत्यस्य स्थूलशरीरापेक्षया लिङ्गशरीरस्य नित्यत्वं तदपेक्षया ब्रह्मणो नित्यत्वमित्यर्थाङ्गीकारे ब्रह्मणि रूपसामान्याभावसिद्धिः कथम् ? ननु अजातशत्रुब्राह्मणान्ते 'एवमेतस्मादात्मनः सर्वेप्राणास्सर्वे लोकाः सर्वे देवास्सर्वाणि भूतानि (सर्व एत आत्मान इति माध्यन्दिने) व्युचरन्ति' तस्योपनिषत्सत्यस्य सत्यम्' इत्युपनिषद्भाष्ये (शं) 'सर्वे प्राणा वागादयः सर्वे लोकास्सर्वाणि कर्माणि सर्वे देवाः प्राणलोकाधिष्ठातारोऽग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि प्राणिजातानि सर्व एत आत्मान इति पाठे उपाधिसंपर्कजनितप्रबुध्यमानविशेषा आत्मान इत्यर्थः । तस्यास्यात्मनो ब्रह्मण उपनिषत् उप समीपं निगमयतीति अभिधायकश्शब्दः उपनिषदित्युच्यते । 'प्राणावै सत्यं तेषामेष सत्यम्' इति एतस्यैव व्याख्यानायोत्तरं ब्राह्मणद्वयं भविष्यति । उत्पत्त्यादिश्रुतय आत्मैकत्वप्रतिपादनपराः एकत्वप्रत्ययदार्ढ्याय सुवर्णमणि लोहाग्निविस्फुलिङ्गादिभेदा दृष्टान्ताः नोत्पत्त्यादिभेदप्रतिपादनपराः' इत्युक्त्वा मूर्तामूर्तब्राह्मणान्ते एवं निरवशेषं स्वरूपमभिधाय सत्यस्य सत्यमवोचाम । तस्यैव स्वरूपावधारणार्थं ब्रह्मण इदमारभ्यते । अथानन्तरं सत्यस्वरूपनिर्देशानन्तरं 'यत्सत्यस्य सत्यम्' तदेवावशिष्यते । यस्मात् 'नेति नेती' त्यादेशो निर्देशः । ननु कथमाभ्यां नेति नेतीति शब्दाभ्यां सत्यस्य सत्यं निर्दिदिक्षितमिति । उच्यते—सर्वोपाधिविशेषायोहेन इत्याद्युक्तं शङ्कराचार्यैः ॥

## गूढार्थसंग्रहः

गुरुचन्द्रिकायां च–‘ तस्योपनिषत् सत्यस्य सत्यं प्राणावै सत्यं तेषामेष सत्यः । अथ नामधेयं सत्यस्य सत्यमिति तेषामेष सत्य ’ इति बृहदारण्यकोक्तिभ्यां ब्रह्म सत्ताऽतोपकृष्टत्वेन प्रपञ्चसत्ताप्रतीत्याऽपि प्रपञ्चो मिथ्या ’ इति ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तौ अस्यां श्रुतौ ब्रह्म सत्तात अपकृष्टत्वेन प्रपञ्चसत्ताप्रतीत्याऽपि प्रपञ्चो मिथ्या ’ इति असतस्साधकत्वोपपत्तौ ‘ प्राणावै सत्यं तेषामेष सत्यः, नित्यो नित्यानां चेतनश्चेतनानाम् ’ ‘ अणोरणीयान्महतो महीयान् ’ इत्यादिभिश्श्रुतिभिः व्यवहारकालबाध्यप्रपञ्चसत्यत्वापेक्षयाऽबाध्यत्वाद्युपलक्षितस्वरूपात्मकत्वेन ब्रह्मसत्त्वादेरुत्कर्षोक्तेः इति प्रपञ्चमिथ्यात्वनिरूपणे च ब्रह्मानन्दसरस्वतीभिरभिहितम् । एवञ्चास्यां श्रुतौ कालत्रयाबाध्यत्वस्य ब्रह्मणि व्यवहारकालमात्राबाध्यत्वस्य प्रपञ्चे च विवक्षिततया नेतिनेतीत्यत्र ब्रह्मणि ब्रह्मान्यरूपसामान्यनिषेधविवक्षोपपादकत्वमस्याश्श्रुतेस्सम्भवतीतिचेत्–

उच्यते–‘ प्राणावै सत्यम् ’ इत्यादिश्रुतिः ब्राह्मणद्वया–(अजातशत्रुमूर्तामूर्तब्राह्मणम्)न्ते पठिता, इदं च श्रुतिद्वयमेकार्थकमिति परेषामपि सम्मतम् । अत्र निर्विशेषस्य विवक्षितत्वे प्राणादीनां कतिपयानामुत्पत्तिप्रतिपादनं कुतः ? एकत्र प्राणशब्दस्य पूर्ववाक्यानुसारेण वागादिन्द्रियपरत्व मुत्तरत्र मूर्तामूर्तपरत्वंचेत्यर्थभेदाश्रयणेऽपि तन्मात्रस्य व्यावहारिकसत्यत्वोक्तिर्वा कुतः ? उपनिषच्छब्दस्याभिधायकशब्दार्थकत्वेन निर्विशेषस्य लक्ष्यत्वेन तदुपनिषत्त्वं ‘ सत्यस्य सत्यम् ’ इत्यस्य कथम् ? एवं नामधेयत्वमपि । उपनिषद्वाक्यानामात्मैक्यत्वप्रतिपत्तिपरत्वे संप्रदायविदुक्तराजकुमारन्यायस्य राजैवाहमिति प्रतीतिपर्यवसानं न घटते । पूर्वं ‘ स यथा महाराजो जानपदान्गृहीत्वा ’ इत्यादौ महाराजदृष्टान्तेन सुषुप्तेः प्राक् प्राणशब्दार्थेन्द्रियपरिग्रहमभिधाय प्रबोधे सर्वभूतव्युच्चरणाविशेषेण प्राणानां व्युच्चरणमभिहितम् । मधुब्राह्मणे च (५.अ) ‘ स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौचारास्सर्वे समर्पिताः एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे लोकास्सर्वे देवाः सर्वे प्राणा सर्व एत आत्मानस्समर्पिताः ’ इत्यभिधाय ‘ इन्द्रो मायाभिः पुरुरूप ईयते ’ ‘ युक्ताह्यस्य हरयश्शतादश ’ ‘ अयमात्मा ब्रह्म सर्वानुभूः ’ इति परमात्मस्वरूपं प्रतिपादितम् । एतदुभयपर्यालोचनायां जीवस्य महाराजत्वं कतिपयांशे यदुक्तं तत्सर्वमहाराजस्य सङ्कल्पाधीनम् । तस्यैवानन्तरूपस्यान्तर्यामिरूपेण ज्ञानादिप्रदानेन सर्वैरनुभाव्यत्वमिति श्रुतितात्पर्यप्रतीत्या जीवब्रह्मणोर्भेद एव । नित्यस्य सर्वमहाराजस्य जनकस्य देशविशेषप्राप्तयर्थता उत्पत्त्यादिवाक्यानां प्रतीयते । अत एतदनुरोधेनैव श्रुत्यर्थो वर्णनीयः । अयमर्थः **‘ औपनिषदपरम पुरुष ’** इति महासिद्धान्तारम्भसूक्तिविवरणे उपपादितः ॥

तत्रचाजातशत्रुब्राह्मणान्तवाक्यस्य ‘ अन्यार्थंतु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ’ (ब्र.सू.१२९) इति सूत्रे ‘ अपिचैवमेके ’ इति खण्डे कौषीतकीवाक्यवत् एतत्प्रबन्धकस्यापि (शं) जीवातिरिक्तब्रह्मप्रतिपत्त्यर्थत्वमुक्तम् । एवं ‘ अतः प्रबोधोऽस्मात् ’ (ब्र.सू.३.२.८) इत्यत्र एतत्पूर्ववाक्यार्थ उक्तः । यस्माचात्मैव सुप्तिस्थानं अतएव च कारणान्नित्यवदेवास्मादात्मनः प्रबोधः स्वापादिकाले शिष्यते । ‘ कुत एतदागात् ’ इत्यस्य प्रश्नस्य प्रतिवचनावसरे ‘ यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेतस्मादात्मनः सर्वे प्राणा ’ इति (शं.भा) तत्पूर्वं ‘ सहोवाचाजातशत्रुर्यत्रैषसुप्तोऽभूद्यएष विज्ञानमयः पुरुषः तदैषां प्राणानां विज्ञानेन विज्ञानमादाय अथ यदा सुषुप्तो भवति यदि न कस्यचन वेद एवमेष एतत् शेते ’ इत्यादिसुषुप्तिप्रक्रिया प्रदर्शिता । एतत्पर्यालोचनायां अत्र जीवस्येन्द्रियवशीकरणेनेन्द्रियाणां विषयसम्बन्धविरहेणेन्द्रियजन्यज्ञानविरहः सुषुप्तौ प्रदर्शितः । प्रबोधे च सुषुप्तिप्रतिकोटितया इन्द्रियाणां विषयसम्बन्धेनेन्द्रियजन्यज्ञानसम्पत्तिरेव प्रतिपादयितव्या । ‘ स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतो विष्फुलिङ्गा विप्रतिष्ठेरन्नेवमेतस्मादात्मनस्सर्वे प्राणा यथाऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ’ (कौ) इत्यत्र सोऽर्थःस्पष्टमुक्तः । अत्र प्राणा जीवा विवक्षिताः । जीवा-

## गूढार्थसंग्रहः

नामेव बृहदारण्यके साक्षात्परमात्मनि संश्लेषस्योक्तेः तेषामेव प्रथमत उद्गमनस्य वक्तव्यत्वात्। छान्दोग्ये ‘सर्वाःप्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे (६—९) सत आगम्य न विदुः’ (१०) इत्यादावपि तथैवोक्तेः। ‘एष संप्रसादोऽस्माच्छरीरात्समुत्थाय (छा.८.१२.३) ‘स यथा प्रयोग्य आचरणे युक्तः एवमस्मिंश्छरीरे प्राणो युक्तः’ (छा.८) इत्यत्र छान्दोग्ये प्राणशब्दस्य जीवपरत्वेन परैरपि (शं.उ.भा) विवरणात्। प्राणेभ्यो देवा इन्द्रियाणि देवेभ्यो इन्द्रियेभ्यः लोकाः लोकनानि ज्ञानानि इत्यर्थस्य विवक्षायां सुषुप्तिप्रतिकोटिता प्रबोधस्य सम्यगुपपादिता भवति। ‘एवमेतस्मादात्मनस्सर्वे प्राणास्सर्वेलोकास्सर्वे देवास्सर्वाणि भूतानि व्युचरन्ति’ इति बृहदारण्यकवाक्येऽपि कौषीतक्यनुसारेणैवार्थः। क्रमभेदस्तु नार्थभेदनियामकः। सुषुप्तिप्रतिकोटितायाः प्रबोधेऽत्राप्यवश्यं प्रतिपिपादयिषितत्वात्। बृहदारण्यके सर्वभूतोद्गमनोक्तिस्तु कुतएतदागादिति सर्वभूतोद्गमनस्याप्रष्टतया सुषुप्त्यनन्तरकासाभिप्राया न विवक्षिता। किंतु प्रलयानन्तरकालिकसृष्टि सुषुप्त्यनन्तरकालिकप्रबोधयोरेकजातीयत्वबोधनाभिप्रायेण। अतएव छान्दोग्ये–‘स्वप्नान्तं मे सोम्य विजानीहि’ इति सुषुप्तिं प्रक्रम्य ‘तम्मूलास्सोम्येमाः प्रजाः’ इत्यत्र ‘तदैक्षत बहुस्यां प्रजायेय’ इति पूर्वोक्तसृष्टिस्संगृहीता एतदभिप्राया सङ्गच्छते। एवंच प्रलय इन्द्रियजन्यज्ञानविरहेण सुखविरहो यथा तथा सुषुप्तावपीन्द्रियजन्यज्ञानविरहेण धर्मभूतसुखविरहः सृष्टौ ज्ञानसुखयोस्सम्पत्तिः, तत्तुल्या प्रबोधे ज्ञानसुखयोस्सम्पत्तिरिति दर्शितं भवति॥

एवमर्थस्य विवक्षया जीवानां नित्यानामपि प्रलये धर्मभूतज्ञानस्य संकुचितत्वेन सृष्टौ तद्विकासेन ब्रह्मकार्यत्वं सम्यगुपपादितं भवति। अत्र सुषुप्तेः प्रागिन्द्रियाणां विषयसम्बन्धनिवृत्तिपूर्वकेन्द्रियवशीकरणेन विषयानां सत्यत्वेऽपीन्द्रियजन्यज्ञानविरहस्य प्रबोध इन्द्रियाणां विषयसम्बन्धेन ज्ञानस्य च प्रतिपादनेन सुषुप्तौ विषयाणां सत्यत्वं स्थापितं भवति। एवं च ‘यदि सत्यं भवेद्विश्वं सुषुप्तावुपलभ्यताम्। यन्नोपलभ्यते किंचिदतोऽसत्स्वप्नवन्मृषा’ इति (वि.२३६ विवेकचूडामणौ परोक्तिर्निरवकाशा। एवं सुषुप्तौ विषयसत्यत्वाभिप्रायेण सुषुप्त्यनन्तरकालिकप्रबोध इव परमात्मसृष्टानां सर्वेषां पदार्थानां सत्यत्वमत्र सर्वभूतव्युच्चरणोक्त्या प्रतिष्ठापितं भवति॥

एवं पूर्ववाक्यार्थानुरोधेन ‘प्राणावै सत्यम्’ इति वाक्यस्यार्थो वर्णनीयः सुषुप्तौ जीवनाशविरहस्य ‘स एवतु कर्मानुस्मृतिशब्दविधिभ्यः’ (ब्र.सू.३२३) सूत्रे निर्धारणेन सुषुप्तिप्रबोधयोर्जीवस्वमेकं सिद्धम्। जीवानां सुषुप्तौ ज्ञानविरहः प्रबोधे च ज्ञानमित्ययमंशः श्रुतिसूत्रसिद्धः। जीवधर्मभूतज्ञानस्यापि ‘यद्वै तन्नपश्यति’ इत्यादिप्रघट्टके नित्यत्वं सङ्कोचविकासावित्यंशस्य च विवक्षा सर्वार्थसिद्धि भावप्रकाशे निर्धारिता। अतश्च जीवस्वरूपस्याचेतनवस्स्वरूपसङ्कोचविकासशून्यत्वरूपनित्यत्वमेव सत्यत्वं ‘प्राणावै सत्यम्’ इत्यत्र विवक्षितम्। परब्रह्मणस्तु ज्ञानस्येन्द्रियद्वारकत्वेन कदाऽपि सङ्कोचविकासौ न स्तः इति सङ्कोचविकासवज्ज्ञानाश्रयजीवापेक्षया ज्ञानसङ्कोचविकासशून्यत्वेन नित्यत्वरूपं सत्यत्वं ‘तेषामेष सत्यम्’ इत्यत्र विवक्षितमित्येव पूर्ववाक्यतात्पर्याद्यानुगुण्येन ‘प्राज्ञेनात्मनो संपरिष्वक्तो न बाह्यं किंच न वेद नान्तरम्’ इत्यादिश्रुत्यनुसारेणच एतच्छ्रुतिविवक्षितोऽर्थ इति युक्तम्॥

प्राणशब्देन जीवनिर्देशश्चैजंतु ‘एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमःपुरुषः’ ‘स यथा प्रयोग्य आचरणे युक्तः एवमस्मिन् शरीरे प्राणो युक्तः’ इति छान्दोग्ये व्यञ्जितम्। ‘य आत्माऽपहतपाप्मा’ इत्युपक्रम्य ‘अथ योवेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्’ इत्युत्तरवाक्यस्य च पर्यालोचनायां जीवस्य ज्ञानमिन्द्रियव्यापारैर्जन्यत इति मतं न युक्तम्। किंतु ज्ञानस्य विषयसम्बन्धसम्पादकमेवेन्द्रियम्। जीवस्तु

## गूढार्थसंग्रहः

व्याप्तियोग्यधर्मभूतज्ञानाश्रयः । 'यश्चायं सन्तत' इति निर्देशं विहाय 'यच्चास्य सन्ततो भावः' इति स्मार्तनिर्वचननिर्देशेन 'अतसातत्यगमने' इति धातोः 'सातिभ्याममनिन्मणिनौ' इत्यौणादिकप्रत्यये आत्मशब्दो निष्पन्नः । धर्मभूतज्ञानघटितव्यापकताश्रयवचन इत्यर्थः प्रतीयते । 'एष संप्रसाद' इत्यत्र संप्रसादशब्दप्रयोगेण सुषुप्त्युत्क्रान्त्योरविशेषः प्रतीयते । सुषुप्तौ 'तीर्णोहि तदा सर्वान् शोकान् हृदयस्य भवति ।' इत्युक्तदिशा शोकविरहवदुत्क्रान्तावपि भोगप्रयोजककर्मणां क्षयेण दुःखविरहः, अथापि सुषुप्तौ यथा ज्ञानविकासविरहः तद्वदुत्क्रान्तौ । ज्ञानविकासप्रतिबन्धककर्मविरहेऽपि 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यत्र पुण्यपापयोरिव वासनाप्रकृतिसंबन्धयोरपि वेदनसाम्यप्रतिबन्धकत्वेन प्रतिबन्धकसामान्यविगमनानन्तरमेव वेदनसाम्यस्य स्पष्टमुक्त्या कर्मवासनया प्राणसम्बन्धेन च 'स्वेन रूपेणाभिनिष्पद्यत' इत्यत्रापहतपाप्मत्वादेरिव 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इति श्रुत्यभिप्रेतज्ञानस्याविर्भावस्य विवक्षिततया स्वरूपाविर्भावरूपज्ञानविकासस्य विरह इति तात्पर्येण संप्रसादशब्दः प्राणशब्दश्च प्रयुक्तः । उत्क्रमणानन्तरं गतिमध्ये सूक्ष्मशरीरत्यागेन प्राणसम्बन्धविरहात्तदुत्तरमेव वेदनसम्यस्वरूपाविर्भावशब्दितधर्मभूतज्ञानपूर्णविकासः । सद्विद्यायां 'अस्य सोम्यपुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते' इत्यादिनोत्क्रान्तेरभिधानेन सद्विद्यानिष्ठस्यापीयमुत्क्रान्तिर्विवक्षितेति 'अन्येतु' इति परोक्त (शं.उ.भा) मतस्य युक्ततया 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्ये' इत्यत्र पञ्चम्यन्तावधिविशेषवाचकपदाश्रवणेन संपत्तिप्रतिबन्धकप्रागुक्तवासनाप्रकृतिसंबन्धविमोक्षयोरप्यभिप्रेतत्वेन तदनन्तरमेव संपत्तिर्विवक्षितेत्येतच्छ्रुत्यनुरोधेनार्थविवक्षायाः 'भोगेनत्वितरे क्षपयित्वाऽथ संपत्स्यते' (ब्र.सू.४.१.१९) इत्यनन्तरमुत्क्रान्तिगती निरूप्य 'सम्पद्याविर्भावः स्वेन शब्दात्' इति संपत्तेः स्वरूपाविर्भावस्य च व्यासेन निर्धारणात् ॥

एवं च 'सुषुप्त्युत्क्रान्त्योर्दुःखाभावज्ञानविकासभावाविशेषस्य सुषुप्तिवदुत्क्रान्तावपि प्राणसम्बन्धसत्त्वेन नानाविकासविरहस्य च बोधनपूर्वकं सुषुप्तौ यथा जीवब्रह्मणोर्नैक्यं, किंतु नीरन्ध्रसंश्लेषः 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंच न वेद नान्तरम्' इति श्रुतिसिद्धः । तद्वत् 'प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् यातीत्युत्क्रान्तावपि' इत्यर्थोऽत्रापि निर्धारितो भवति ॥

एतेन 'स उत्तमःपुरुष' इत्यत्र मुक्तप्राप्यः पुरुषएवेत्यर्थो विवक्षित इति सिद्धम् । एवं तत्रैव 'य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरभिसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्येतत्सच्छायश्रुत्यनन्तरं 'एष आत्मेतिहोवाचैतदमृतमेतदभयमेतद्ब्रह्म' इति 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' तानि ह वा एतानि त्रीण्यक्षराणि सत ति यमिति । तद्यत्सत्तदमृतं अथ यत्ति तन्मर्त्यं अथ यद्यं तेनोभौ यच्छति' (८.३.४) इति ब्रह्मनामसत्यशब्दस्य मुक्तामुक्तनियन्त्रर्थकत्वस्य प्रतिपादनेन उपसम्पत्तव्यमेव ब्रह्मेति निर्धारणेनोत्तमपुरुषः सएवेति सिद्धम् ॥

उक्तं च न्यायरक्षामणौ–'सत्यपदंहि नित्यानित्यात्मकचेतनाचेतनरूपनियन्तृत्वपरं ब्रह्मनामेति अत्रैव ब्राह्मणे वर्णितम् । तस्य ह वा एतस्य ब्रह्मणो नाम उभे यच्छति इति' इति । 'ब्रह्मणो नाम सत्यम्' इत्यत्र 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' इति श्रुत्याद्युक्तदिशा ब्रह्मशब्देन बृंहणत्वमपि विवक्षितम् । बृंहणत्वमचेतनगतस्थूलपरिणामचेतनज्ञानविकासहेतुसङ्कल्पवत्त्वमिति मुक्तिहेतुसङ्कल्पवत्त्वमप्यत्र विवक्षितमिति ब्रह्मशब्दार्थः सत्यशब्दनिर्वचनेन दृढीकृतो भवति । अयमर्थस्सर्वोऽपि 'भूमा संप्रसादादध्युपदेशात्' इति सूत्रे सूत्रकृतो विवक्षितः । अत्र प्राणाद्भूम्नआधिक्यं विवक्षितम् । तत्र च 'एषतु वा अतिवदति' इतिश्रुत्युपदेश एव हेतुः । तत्र च सत्यशब्दार्थो ब्रह्मेति परेषामपि सम्मतम् ॥

## गूढार्थसंग्रहः

एवं चात्रैकार्थकसम्प्रसादप्राणशब्दघटितश्रुतिविवक्षयैव सूत्रे संप्रसादशब्दःप्रयुक्तः। ननु संप्रसादशब्दमात्रघटित श्रुत्यादिविवक्षया। तथासति विषयवाक्यघटकप्राणशब्दार्थस्य संप्रसादशब्दप्रतिपाद्यता कथम्? एवं संप्रसादशब्दापेक्षया सत्यशब्दार्थस्योत्कर्षप्रतिपादनपरा चात्र श्रुतिर्विवक्षितेत्ययमंशो निर्मत्सरैरङ्गीकरणीयः। तच्च श्रुतित्रयं छान्दोग्य एवाष्टमप्रपाठके वर्तते। एवं च सप्तमप्रपाठकस्थभूमविद्यावक्यस्याष्टमप्रपाठकस्थवाक्यावलम्बनेनार्थनिर्धारणमेव सूत्रकृतो विवक्षितम्। तदेतदभिप्रेत्याह वृत्तिकारः–'भूमात्वेवेति भूमा ब्रह्म नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्' इति अत्रात्मन्शब्देन 'य आत्माऽपहतपाप्मा' इति श्रुतिप्रसिद्धपरिशुद्धात्मस्वरूपं प्राणशब्दार्थ इति दर्शितम्। प्राणशब्देन रूढिपूर्वकलक्षणया प्राणसहचरी प्रत्यगात्मा प्रतिपाद्यते। प्रकर्षेणानितीति योगाश्रयणेनतु परिशुद्धात्मस्वरूमित्याशयः। उदाहृताष्टमप्रपाठकवाक्येष्वपि 'य आत्माऽपहतपाप्मा' 'अथ यो वेदेदं जिघ्राणीति स आत्मा' 'एष संप्रसादः' 'प्राणो युक्तः' इत्येतत्पर्यालोचनायां योगार्थोऽपि विवक्षित इति स्फुटं प्रतीयते। सच फलदशाभावी। योगार्थस्यापि विवक्षाऽङ्गीकार एव प्रागुक्तसत्यशब्दनिर्वचनानुरोधेन सूत्रतात्पर्यवर्णनं सङ्गच्छते॥

भूमविद्यायाम्–आत्मतः प्राण इति प्राणस्यैव प्रथमत उत्पत्त्यभिधानेन प्राणापेक्षया ब्रह्मण उत्कर्षप्रतिपादनेन च तदैककण्ठ्येनाजातशत्रुब्राह्मणेऽपि प्राणानां जीवानामेवोत्पत्तिः प्राणशब्दार्थजीवापेक्षयैव परस्योत्कर्षश्चेत्युभयं विवक्षितं इति सूत्रकाराशयानुरोधेनैवार्थौ विवक्षितः। भूमविद्यायां 'आत्मतः प्राण' इत्यनन्तरं 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इत्यत्र 'एषतु वा अतिवदति यस्सत्येनातिवदति' इत्यत्र सत्यशब्दस्य प्रागुक्तार्थपर्यालोचनया परमात्मसङ्कल्पेनैव सर्ववस्तुसाक्षात्कारइत्ययमंशः सिद्ध्यति। 'आत्मतः प्राण' इत्यत्र परमात्मनस्सृष्टिसङ्कल्पस्य प्रतीत्या सृष्टिहेतोरेव परस्य सर्वसाक्षात्काररूपज्ञानपूर्णविकासात्मकमुक्तिहेतुत्वमिति सिद्धम्। एतेन सृष्टेर्मुक्तिरूपफलार्थत्वमपि सिद्ध्यति। एवं चाजातशत्रुब्राह्मणं प्रलयानन्तरकालिकसृष्टि सुषुप्त्यनन्तरकालिकप्रबोधयोरविशेषस्य प्रतिपिपादयिषितत्वेन जीवानां मुक्तौ धर्मभूतज्ञानविकासस्य प्रतीत्या तदा ज्ञानसङ्कोचाभावेऽपि तेषामेव जीवानां प्राणसाहचर्यदशायां ज्ञानसङ्कोचसत्वेन सर्वदाऽसंकुचितज्ञानवतः परमात्मन एव जीवापेक्षया सत्यत्वमिति बोधयितुं 'प्राणावै सत्यं तेषामेष सत्यम्' इति वाक्यं प्रवृत्तमिति प्रतीयते॥

मूर्तामूर्तब्राह्मणान्तेऽपि 'नह्येतस्मादिति नेत्यन्यत्परमस्ति' इत्यत्र पूर्वं व्यतिरेकेण ब्रह्मणः परत्वस्यैव निर्धारणेन 'प्राणावै सत्यम्' इत्यादिब्रह्मनामधेयनिर्वचनवाक्येऽपि प्रागुक्तदिशा प्राणशब्दार्थजीवापेक्षया परब्रह्मण एवोत्कर्षो विवक्षितः। अत एव छान्दोग्ये 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्' इति इत्यादिसत्यनामनिर्वचनैकरस्यं सङ्गच्छते तदेतत्सर्वमभिप्रेत्योक्तं भगवता वेदार्थसंग्रहे। 'प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति च भूयः' इति सूत्रे 'नेति नेति' इत्यादिश्रुतेरियत्ता निषेधपरत्वं 'नह्येतस्मात्' इत्यादेः ब्रह्मान्योत्कृष्टनिषेधपरत्वं 'प्राणावै सत्यम्' इत्यस्य जीवापेक्षया ब्रह्मण उत्कर्षपरत्वं च। श्रीभाष्येऽपि वक्ष्यते। अत्र सूत्रे प्रकृतशब्दे पूर्ववाक्यप्रमितत्वं रूपाणां विवाक्षितम्। रूपाणां ब्रह्मसम्बन्धस्य प्रमाणान्तरानवगतत्वेनापूर्वतया 'नेति नेति' इत्यत्र निषेधासम्भवतात्पर्यकः प्रकृतशब्द इत्युत्तरत्र व्यक्तीभविष्यति। यद्यप्यत्र 'जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान्' इति (जर्तिलाः कृष्णतिलाः। गवीधुकास्तणतण्डुलाः इति (भ.भा) जर्तिलाः अरण्यतिलाः गवीधुकाः वनगोधूमाः इतिकेचित्) सार्थवादमपूर्वार्थस्यैव 'अजक्षीरेण जुहोति' (आ.शा) इति विधिप्रतिपत्त्यर्थतया 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इत्यपवादायैवाध्यारोपदर्शनादिहापि तथा भविष्यति। एवं 'संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्' इत्याद्यपूर्वा-

## गूढार्थसङ्ग्रहः

र्थारोपणमन्यार्थमुदाहार्यम् ' इति सिद्धान्तसिद्धाञ्जने कृष्णानन्दसरस्वतीभिः, ' सगुणप्रकरणस्थाया उपास्तिविधिविषयविशेषेणसमर्पकत्वेन तत्परत्वाभावात् । नचापूर्वत्वात्सत्यकामादौ विशेषणे तात्पर्यम् । अपूर्वत्वेऽप्यतत्परत्वस्यान्यत्र दर्शनात् । यथाहि ' जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा ' इत्यादौ जर्तिलयवाग्वादेर्होमसाधनत्वस्य ' अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च ' इति निन्दायाः ' अजक्षीरेण जुहोति ' इति विध्येकवाक्यतयाऽतत्परत्वं तथैवात्राप्युपपत्तेः । निर्गुणप्रकरणस्थायास्त्वद्वितीयब्रह्मप्रतिपत्त्यनुकूल निषेधापेक्षितविषयसमर्पकत्वेनान्यथासिद्धेः । ' इत्यद्वैतसिद्धौ ' भेदश्रुतिस्त्वन्यपरा समस्ता समस्तवेदेषु न तत्परासौ । अतत्परातत्परवेदवाक्यैः विरुध्यमाना गुणवाद एव ॥ ' (सं.शा.३.-२८४) ब्रह्मणो जगत्कारणत्वानियन्तृत्वादिप्रतिपादकभेदश्रुतिविरोधाद्वैपरीत्यं किं न स्यादित्याशङ्क्य तद्दौर्बल्यहेतुं तावदाह भेदश्रुतीति । ' अरूपवदेवहि तत्प्रधानत्वादि ' ति सूत्रकारेणैव ब्रह्मणो निर्विशेषत्वस्याभेदश्रुतीनां तत्परत्वस्य च निर्धारितत्वात् भेदस्यान्यतस्सिद्धत्वादपुरुषार्थत्वान्निन्दितत्वात्तत्रोपक्रमादितात्पर्यलिङ्गाभावाच्च तच्छ्रुतिरतत्परेत्यर्थः । कल्पितत्वमाह तत्परेति । न विधौ परश्शब्दार्थ इति न्यायेन तत्परश्रुतेरन्यथानयनायोगेन तद्विरुद्धातत्परतया दुर्बला भेदश्रुतिरेव लक्षणया ब्रह्मप्रशंसापरा कल्पनीयेत्यर्थः ' इति ॥

' यथाह्यजक्षीरविधेस्समीपे यज्जर्तिलादेःपरिकीर्तनं सत् । प्रधानसङ्कोचभयादपास्य स्वमर्थमासीद्गुणवाद एव ॥' (३.२८६) एवं सतीहापि विरुध्यमानं वचो यदद्वैतपरैर्वचोभिः । तदस्तु गौणं यदि वा परस्य मायाप्रसूतद्वयवादिमुख्यम् भेदश्रुतिःकल्पितमेव भेदमालम्ब्य मुख्यार्थवती भवित्री । अतत्परातत्परवाक्यभङ्गस्त्वितोऽन्यथा याति विना निमित्तम् ॥' (सं.शा.३.२८८) इति संक्षेपशारीरकम् ॥

एवं सतीति । गौणं गुणकीर्तनं स्तावकमिति यावत् । प्रकारान्तरेण तदविरोधमाह–यदिवेति । परस्य मायातत्प्रसूतद्वयवादिसन् मुख्यमस्त्वित्यर्थः । सृष्ट्यादिवाक्यं हि ' इन्द्रो मायाभिः पुरुरूपईयते ' इत्यादिना समभिव्याहारान्मायिकं सृष्ट्यादिबोधयन्निषेधसमर्पणेन निषेधवाक्यशेषभूतमिति तदीयमुख्यार्थस्वीकारेऽपि न वास्तवाद्वैतविरोधिता तस्येति चतुर्थचरणार्थमेव विशदयति–भेदश्रुतिरिति । सृष्ट्यादिवाक्यस्य मायिकद्वैतविषयत्वे कथं तत्त्वावेदनरूपं प्रामाण्यं तदभावे वा कथं तत्त्वावेदकब्रह्मवाक्येनैकवाक्यतेत्याशङ्क्य तस्य निष्प्रयोजने स्वार्थे तात्पर्याभावान्निषेध्यसमर्पणेन निषेधवाक्यैकताद्वारेण तात्त्विकाद्वयब्रह्मपरत्वात्तत्र तत्त्वावेदनप्रामण्योपपत्तिरित्याशयेनाह—अतत्परेति । किमित्येवं प्रणाड्या सृष्ट्यादिवाक्यस्याद्वितीयब्रह्मणि तात्पर्यं कल्प्यते, साक्षात्स्वार्थ एव तत्किं न स्यादित्याशङ्क्य तथासति शेषिविरोधस्स्यात्, सचान्याय्यः ' न प्रधानाद्गुणो यतः ' इति स्थितेरित्यभिप्रेत्याह–तत्परवाक्येति । आयाति–आपतेत् । भेदश्रुतेरभेदश्रुतिवदुपक्रमोपसंहारैकरूप्यादिलिङ्गाभावात्तस्यास्तत्परत्वं निर्निमित्तम् । अतत्परश्रुतिविरोधात्तत्परश्रुतिभङ्गोऽपि निर्निमित्त इत्याशयेन विना निमित्तमित्युक्तम् ' इति संक्षेपशारीरकव्याख्याने च मधुसूदनसरस्वतीभिश्चोक्तम् ॥

तथाऽपि ' प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति च भूयः ' इति सूत्रे पूर्वप्रकृतार्थतात्पर्यानुकूलत्वं निषेधोत्तरवाक्यस्य यत्र प्रतीयते तत्र प्रागुक्तार्थस्यापूर्वत्वे तस्यान्यार्थता न युक्तेति ' ततो ब्रवीति च भूयः ' (ब्र.सू.३३५) इति खण्डेन बोधितम् । एतेन जर्तिलयवाग्वधिकरणन्यायः एतादृशस्थले न सञ्चारमर्हतीति सिद्ध्यति । तत्र ' पयसा जुहोति ' इति वाक्यानन्तरं जर्तिलयवागू गवीधुकयवागूहोमतात्पर्यकं न किंचन वाक्यं वर्तत इति ' पयसा जुहोति ' इत्यत्र प्रतिपादिताहोमस्यैव प्राधान्यमिति जर्तिलयवाग्वेत्यर्थवाद इति ' नचेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादस्स्यात् आनर्थक्यात्परसामर्थ्याच्च ' (जै.सू.१०.८.७) इति सूत्रे निर्धारितम् । अत्र पूर्वपक्षे ' जर्तिलयवाग्वा वा जुहुयात् ' इत्यादौ विधिः ।

## गूढार्थसंग्रहः

'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति निन्दया 'नातिरात्रे षोडशिनं गृह्णाति' इतिवदत्र स्वतन्त्रनिषेधस्योन्नयनं तेन च 'पयसा जुहोति' इति विहितपयोहोमेन विकल्प इत्याशयः तद्व्याख्यातृभिः प्रदर्शितः। अत्र पूर्वपक्षे 'जर्तिलयवाग्वावा' इत्यादेरर्थवादत्वं नैव विवक्षितम्। निन्दया निषेधोन्नयनस्यैव तदभिप्रेतत्वात्। अत्र निषेधपक्षे पूर्ववाक्यस्योत्तरवाक्यतुल्यप्रामाण्यमेवादृतम्। एतेन प्रतिषेधस्थले क्वापि एकस्याप्रामाण्यपर्यवसितं व्यावहारिकप्रामाण्यमन्यस्य तात्त्विकप्रामाण्यमिति कल्पनाऽयुक्तेत्येव प्रतीयते ॥

'नचेदन्यं प्रकल्पयेत्' इत्याद्युक्त्या उभयत्र विध्यङ्गीकार एकवाक्यताभङ्ग इत्युक्तं भवति। सिद्धान्ते स्वतन्त्रनिषेधमन्तरा व्रीहियवन्यायेन पयोविधिबलेनैव विकल्पस्य सम्भवान्निषेधोन्नयनं न सम्भवतीति 'आनर्थक्यात्' इति सूत्रखण्डार्थ उक्तः। अत्रापि निषेधस्थले तुल्यमेव प्रामाण्यम्। एतेनात्राध्यारोपापवादन्यायो वाक्यद्वयतुल्यप्रामाण्यभञ्जकः सिद्धान्तसिद्धाञ्जनकृत्सम्मतः जर्तिलयवाग्वधिकरणेनैव विवक्षित इति प्रतीयते। एवं सूत्रे 'परसामर्थ्याच्च' इत्यनेन 'पयसा जुहोति' इति वाक्यसामर्थ्यं प्रदर्शयिता जैमिनिना तदुत्तरं जर्तिलयवाग्वादिहोमतात्पर्यनिर्णायकाभावः स्पष्टीकृत इति प्रकृतैतावत्त्वधिकरणन्यायविषये अपूर्वार्थतात्पर्यविरहो न जैमिनिसूत्रेण निर्णेतुं शक्यत इति व्यासाशयः स्फुटः

एवं सिद्धान्ते अर्थवादत्वनिर्णयेन पयोहोमस्तावकत्वं 'जर्तिलयवाग्वा वा जुहुयात्' इत्यादिपूर्वभागस्य दर्शितम्। नन्वर्थवादत्वाभ्युपगम उभयत्र विध्यङ्गीकारे प्रधानसङ्कोचभयम्। तथा पूर्वपक्षस्याभावादिति सङ्क्षेपशारीरकतद्व्याख्यानप्रदर्शितरीतिः तत्सूत्रव्याख्यातृभिर्मीमांसकैर्नादृता। किंतु 'जर्तिलयवाग्वा वा जुहुयात्' इत्यस्यार्थवादत्वं 'न ग्राम्यान् पशून् हिनस्ति नारण्यान्' इत्यनेन जर्तिलयवागूहोमस्य पशुहोमापेक्षया प्राशस्त्यबोधनेन सूचितम्। 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति निन्दा पयोविधिस्तुत्यर्था पयोनिधिप्राशस्त्यपरेति निषेधमन्तरैव स्तुतिपरत्वमप्युपपादितं जैमिनिसूत्रव्याख्यातृभिः ॥

एवंचापवादायाध्यारोपस्य जर्तिलयवाग्वधिकरणे सिद्धान्तसिद्धाञ्जनकृता विवक्षितत्वोक्तिर्निरवकाशा। 'संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्। एषावै संवत्सरस्य यदेकाष्टका' इत्युपक्रमवाक्यम्। अनन्तरं 'अतिवा एते संवत्सरायाभिदीक्षन्ते' इत्यादिना तत्र दोषा अभिहिताः। अनन्तरं 'चित्रापूर्णमासे दीक्षेरन्' इत्याद्यभिधाय 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्तेषामेकाष्टकायां क्रयस्सम्पद्यते तेनैकाष्टकां न छम्बट्कुर्वन्ति तेषाम्' इत्युपसंहारवाक्यम्। अत्रोपक्रमोपसंहारयोरुभयत्र विध्यङ्गीकारे एकवाक्यताभङ्गः। अतः 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्' इत्यत्रैव विधिः पूर्वपक्षे सिद्धान्ते च सम्मतः। तत्र पूर्वपक्षे 'पौर्णमास्यामनियमोऽविशेषात्' (६.५·३०) 'आनन्तर्यात्तु चैत्री स्यात्' (३१) इति पौर्णमासी चित्रापौर्णमासीति। सिद्धान्तेतु 'माघीवैकाष्टका श्रुतेः' 'अन्या अपीति चेत्' 'न भक्तित्वादेशाहि लोके' (३२.३३–३४) इति एकाष्टकापदस्य माघी कृष्णाष्टमीपरत्वनिर्धारणेन तदनुरोधेन माघीपौर्णमासीति निर्धारितम्। 'दीक्षापराधेचानुग्रहात्' (३५) इत्यत्र एकाष्टकायां दीक्षाया अभावेऽपि माघपूर्णमासीतःपूर्वं चतुरहे दीक्षाविधौ द्वादशदीक्षादिनोत्तरं त्रयोदशादिने माघ्यामष्टम्यां क्रयसम्पत्तिस्सम्भवतीति संवत्सरपत्नीत्वेन प्रशस्तैकाष्टका क्रयसंपत्तिपर्यवसितदीक्षैवोपक्रमे विवक्षितेति उपक्रमोपसंहारयोरैकरस्यं स्थापितम्। 'उत्थानेचानुग्रहात्' (३६) अस्यां च सर्वलिङ्गानीति एकाष्टका माघ्यष्टम्येवेति निर्धारितम्। चित्रापूर्णमास्यां 'तत्र न काचन निर्या भवति' इति आर्तादि दोषाभावमात्रेण प्राशस्त्येऽपि एकाष्टकायाः संवत्सरपत्नीत्वादिरूपप्राशस्त्यसद्भावेन तत्र क्रयसंपत्तिफलकदीक्षायाः प्रशस्ततर-

## गूढार्थसंग्रहः

त्वमत्र विवक्षितमिति सूत्रव्याख्यातृभिर्वर्णितम्। नात्र काप्यारोप उक्तः। गुणदोषाविचारमात्रमेव कृतमित्यध्यारोपः परसम्मतो नात्र विवक्षितः। 'गुणवादस्तु' इति सूत्रं (२.२.२०) प्रणेतुर्जैमिनेः वेदे काप्यारोपो न सम्मतः। तत्सिद्धिपेटिकायां 'सिंहो देवदत्त' इत्यत्रारोपं निराकर्तुर्वार्तिककृतोऽप्ययमेव सिद्धान्त इत्यन्यत्र (भा.प्र.३.सं) निरूपितम्। गुणवादसूत्रे 'प्रजापतिस्स आत्मनो वपामुदखिदत्' इत्यत्र वार्तिके स्तुतित्वात्यागेनार्थसत्यतां प्रथममभिधाय, 'मन्त्रार्थवादेतिहासप्रामाण्यात् सृष्टिप्रलयाविष्येते' इत्यादिना प्रतिपाद्यार्थस्य सर्वस्य सत्यत्वं सिद्धान्तितं वार्तिककृता॥

एवं च जैमिनेराशय एव 'नासतास्तुतिरुपपद्यते' इति द्रमिडभाष्यकारसिद्धान्तितो वृत्तिकारसम्मत एव युक्तः। अत एव वार्तिककृतः वेदे आरोपनिराकरणस्य 'प्रसरं न लभन्तेहि यावत्क्वचन मर्कटाः। नाभिद्रवन्ति ते तावत्पिशाचावा स्वगोचरे' (तं.वा.१.३.१.अ) इति वार्तिकानुसारेण वेदप्रामाण्यसंरक्षणार्थत्वं सोमनाथाप्पयदीक्षिताभ्यामुक्तं सङ्गच्छते। अतो गुणवादेनैवार्थवादानां स्तावकत्वं नारोपेणेत्येवाभ्युपगन्तव्यम्। अतो 'द्वेवा ब्रह्मणो रूपे' इत्यत्र ब्रह्मणः प्रमाणान्तराप्रज्ञातरूपवत्त्वप्रतिपादनपूर्वकं 'नेति नेति' इति निषेधानन्तरं 'नह्येतस्मात्' इत्यादिना व्यतिरेकमुखेन ब्रह्मशब्दार्थगुणकृतोत्कर्षदृढीकरणेन प्रतिपाद्यतया ब्रह्मवृत्तिरूपस्य नामधेयस्य ब्रह्मशब्दार्थविवरणरूपस्य जीवापेक्षयोत्कर्षस्य च छान्दोग्यगतसत्यब्रह्मनिर्वचनानुरोधेन प्रतिपादनेन च 'नेतिनेति' इतिनिषेधः रूपेयत्तानिषेधएव नतु रूपसामान्यनिषेध इत्येव सूत्रकाराशयः उत्तरत्र श्रीभाष्ये वक्ष्यमाणो युक्तः॥

'अरूपवदेवहि तत्प्रधानत्वात्' (३२८) इति पूर्वसूत्रं न परसम्मतसामान्याभावतात्पर्येण प्रयुक्तम्। तत्सूत्रे परोदाहृतविषयवाक्यैः तादृशार्थालाभात्। तत्र च 'अस्थूलमनण्वह्रस्वदीर्घम्' (बृ.५.८.८) 'अशब्दस्पर्शमरूपमव्ययम्' (क३.२५) 'आकाशो हवै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा.३.२८.२) 'दिव्योह्यमूर्तःपुरुषस्सबाह्याभ्यन्तरोह्यजः' (मु.२.१.२) 'तदेतद्ब्रह्मापूर्वमनपरमबाह्यमयमात्माब्रह्मसर्वानुभूः' (बृ४.५.२९) इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मकत्वप्रधानानि नार्थात्मकत्वप्रधानानीत्येतत्प्रतिष्ठितमित्येतदुक्तं 'तत्तु समन्वयात्' इत्यत्र इत्युक्तं परैः (सू.शं) अत्र अस्थूलं तत् स्थूलादन्यत्' एवं तर्ह्यणु, अनणु। अस्तु तर्हि ह्रस्वं, अह्रस्वम्। एवं तर्हि दीर्घं नापि दीर्घम्। अस्तु तर्हि लोहितो गुणः ततोऽप्यन्यत् अलोहितम्। अस्तु तर्हि सङ्गात्मकं जतुवत् असङ्गम्। अस्तु तर्हि छिद्रवत् अन्तरवत् अनन्तरं नास्यान्तरमस्ति। सम्भवेत्तर्हि बहिस्तस्याबाह्यम्' इत्यर्थ उक्तः उपनिषद्भाष्ये (शं)॥ अत्र स्थूलादन्यदस्थूलमित्यादिशङ्कराचार्यविवरणेन 'न विद्यते स्थूलं यत्र तदस्थूलम्' इत्यादिक्रमेण व्याख्यानमद्वैतरत्नरक्षणे मधुसूदनसरस्वतीनां न युक्तमिति बोधितम्। अस्थूलादिपदानां चतुर्णां स्थूलभिन्नबोधकत्वमेव व्युत्पत्तिसिद्धम्। परिमाणवाचिपदासमभिव्यहृतस्थूलादिपदेभ्यः परिमाणवतएव बोधस्यानुभवसिद्धतया अस्थूलमित्यादावपि स्थूलभिन्नस्यैव झटिति प्रतीतिरनुभवसिद्धा। पदान्तरसमभिव्याहारमन्तरा धर्माबोधकविशेष्यवाचिपदसमभिव्याहृतनञो धर्मवाचकविशेष्यपदसमभिव्याहृतनञ इव स्वरसतो नात्यन्ताभावबोधकता। किन्त्वन्योन्याभावबोधकतेत्यनुभवसिद्धमेतत्। एतदुत्तरं 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना धारणादिकमुक्तम्। इदं च धारणं 'अथ य आत्मा ससेतुर्विधृतिरेषां लोकानामसंभेदाय' इति दहरविद्यावाक्येऽप्युक्तम्। 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' (ब्र.सू. २.२.२६) इति धारणं महिमत्वेनोक्तम्॥

एतेन 'अक्षरमम्बरान्तधृतेः, साच प्रशासनात्' (ब्र.सू.७४–७५) इत्युक्तधारणमपि महिमैवेति बोधितम्। अत एव 'यस्सर्वज्ञस्सर्ववित् यस्यैष महिमा भुवि' (मु.२.२.७) इति श्रुतिभाष्ये 'यस्यैषः प्रसिद्धो महिमा–विभूतिः।

## गूढार्थसंग्रहः

कोऽसौ महिमा यस्येमे द्यावापृथिवी शासने विधृते तिष्ठत' इत्यादिना 'एतस्य वा अक्षरस्य प्रशासने' इत्यादिश्रुत्यर्थमभिधाय 'स एष महिमा भुवि लोके यस्य स एष सर्वतः' इति परोक्तिस्सङ्गच्छते। एतेन तदुत्तरं 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मु.३.१.२) इत्यत्र 'यदाह्यस्मिन्काले पश्यति ध्यायमानः। अन्यमीशं विभूतिं महिमानं च जगद्रूपं यदैवं द्रष्टा तदा वीतशोको भवति। सर्वस्माच्छोकसागराद्विप्रमुच्यते इति अत्र परै(शं)रप्यर्थवर्णनेन महिमदर्शनस्य मुक्तिहेतुत्वमपि विवक्षितमिति सिद्ध्यति॥

अत्र 'द्वासुपर्णा' इति पूर्वश्रुतिं जीवेशपरतया व्याख्याय 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यस्य जीवेशाभेदपरतया परेषां विवरणमभिनिवेशमेव दर्शयति। पूर्वश्रुतौ 'तयोरन्यः' इत्युत्तरार्धे जीवेशभेदस्यैव वाच्यतया अत्रापि जीवेशभेदविवक्षाया आवश्यकत्वात्। पूर्वश्रुतेः 'इयदामनागात्'(३८८) इति सूत्रेऽपि जीवेशभेदपरतयैव विवरणं कृतं परैः। 'द्वासुपर्णा' 'ऋतं पिबन्तौ' इति मन्त्रद्वयं प्रस्तुत्य उभावप्येतौ मन्त्रौ जीवद्वितीयं ब्रह्म प्रतिपादयतो नार्थान्तरम्' इत्यारभ्य वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' इति तद्भाष्ये विवरणात्। एवमेतत्सूत्रसिद्धान्तविरोधेन पैंगिब्राह्मणानुरोधेन 'द्वासुपर्णा' इत्येतद्विवरणं नादरणीयम्। पैंगिब्राह्मणंनास्ति इति कृत्वाचिन्तयेदमधिकरणम्' इति ब्रह्मविद्याभरणोक्तिरप्याग्रहमूलैव। अत्र जुष्टपदेन महिमपदेन च साक्षात्कारस्य प्रसादद्वारकमुक्तिहेतुत्वं बोध्यते। अस्य मन्त्रस्य श्वेताश्वतरोपनिषद्यपि पाठेन तत्र 'संसारमोक्षस्थितिबन्धहेतुः' इत्यादौ परमात्मनो मोक्षहेतुत्वस्य प्रतिपादनात्॥

एतेन 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' (श्वे.तै.कठ) इत्यत्राप्युक्तादिशैव महिमज्ञानस्य मुक्तिहेतुता विवक्षितेति सिद्ध्यति। 'देवस्यैष महिमातु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' (श्वे.६.१) इत्युपक्रम्य 'यस्य देवे परा भक्तिः' इत्याद्युपसंहारात्। 'यस्य देवे परा भक्तिः' इत्यत्र मोक्षरूपार्थप्रकाशोऽपि विवक्षित इत्यन्यत्र निरूपितम्। 'यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि' इत्यत्र 'एतस्य अक्षरस्य प्रशासने गार्गि' इत्याद्युक्तमहिमा विवक्षित इति वदद्भिरेव 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' इत्यत्र सूत्रे 'एतस्य वा अक्षरस्य प्रशासने' इत्यादिवाक्यमपि परैरुदाहृतम्। पूर्ववाक्ये द्वैतसामान्यनिषेधः पराभिप्रेतो न विवक्षित इति सूत्रकारएव निर्धारयति। धार्याभावे धारणाभावस्यैवासम्भवात्। अतोऽत्र भेदज्ञानस्यैवाभिप्रेतत्वेन सकलद्वैतात्यन्ताभाववद्वस्तुप्रतिपादनेन सजातीयविजातीय स्वगतभेदशून्यं वस्तुतत्त्वं प्रतिपादितं भवतीत्युक्तिः कथं घटते। अत्र सजातीयजीवभेदंस्वगतगुणभेदशून्यताप्रतिपादकं न किंचिदपि पश्यामः। अत्र चेतनभेदः प्रतीयते। नतु ब्रह्मण्यचित्सामान्यात्यन्ताभावः॥

'अशब्दमस्पर्शमरूपमव्ययम्' इत्यत्र शब्दस्पर्शाद्यभाव एवोक्तः। तेनचाचेतनवदनित्यत्वं नास्तीति नित्यत्वमेवेति साधितम्। अत एव महतः परमिति महत्तत्त्वापेक्षयोत्कर्षोक्तिरपि सङ्गच्छते। एवं 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इत्यत्र तत्साक्षात्कारेण जीवमुक्तिप्रतिपादनेन बद्धमुक्तव्यवस्थया जीवेश्वरभेदोऽपि सिद्ध्यति। उत्कृष्टवस्तुज्ञानस्य मुक्तिहेतुत्वकथनेन द्वैतज्ञानस्यैव मुक्तिहेतुत्वं विवक्षितमिति प्रतीयते। उत्तरत्र 'एको वशी' इत्यत्र अन्तर्यामिज्ञानस्यैव मुक्तिहेतुत्वं 'नित्यो नित्यानाम्' इति तदुत्तश्रुतौ सर्वफलप्रदसाक्षात्कारस्यैव मुक्तिहेतुत्वं प्रतिपाद्यते। अतो द्वैतज्ञानेन परमात्मसङ्कल्पान्मुक्तिः श्वेताश्वतरनिर्गुणश्रुतिसमनन्तरश्रुतिष्विव कठोपनिषद्यपि विवक्षितेति प्रतीयते॥

'आकाशो वै' इत्यादिब्रह्मणो लक्षणनिर्देशार्थं 'आध्यानाय' इति इति, 'आकाशो वै नाम' इति श्रुतितात्पर्यमुक्तं परैः (उ.भा)। अत्रानन्दगिरिः 'दहरोऽस्मिन्नन्तर आकाशः' इत्युक्तस्य लक्षणनिर्देशस्य प्रकृतोपयोगं विशदयति

## गूढार्थसंग्रहः

'आध्यानाय इति' इति । इत्थं च दहरविद्याशेषत्वं 'आकाशो हवै नाम' इत्यस्य प्रतिपादितं भवति । वैनामेति निपातसमुदायो नामरूपनिर्वचननिर्वोढृत्वरूपविधेयत्वेन प्रसिद्धिद्योतकः । तथैव व्युत्पत्तेः इति न्यायरक्षामणिः । (१. ३.४२) एतेनात्र 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिश्रुतिप्रसिद्धं नामरूपव्याकर्तृत्वं विवक्षितमिति प्रतीयते । ते नामरूपे यदन्तरा यस्य ब्रह्मणो मध्ये वर्तेते तयोर्वा नामरूपयोरन्तरे यत् नामरूपाभ्यामस्पृष्टम्' इति (उप.भाष्ये) परैर्व्याख्यातम् ॥

अत्र प्रथमपक्षे 'ते' इति प्रथमाद्विवचनान्तम् । यदन्तरा इति समस्तं पदम् । द्वितीयपक्षे 'ते' इति द्वितीयाद्विवचनान्तम् । यदिति व्यस्तं प्रथमान्तमिति विभागः । अत्र ब्रह्मणो नामरूपमध्यस्थत्वोक्त्या नामरूतनिबन्धनदोषविरहः प्रतिपादितो भवति । प्रथमं 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिश्रुतिप्रसिद्धधर्माभिधानेन जीव तन्नामरूपसम्बन्धस्य परस्मिन् प्रसक्तिस्सम्भवति । अत्र 'स्वपर्यन्तनामरूपव्याकरणमेव विवाक्षितम् । अनुप्रवेशस्य श्रवणेन मातापितृ कुलालादिनिर्वर्त्य देवदत्तघटादिनामरूपव्याकरणतो व्यावृत्तत्वावगमात् । 'बहुस्याम्' इत्युपक्रम एव स्वपर्यन्तनामरूपभाक्त्वसङ्कल्पात् । तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियतेति नामरूपयोर्ब्रह्मपर्यन्तश्रवणात् । 'तदनु प्रविश्य, सच्चत्यच्चाभवत्' इति श्रवणात् इति (वेदार्थसंग्रह त्व तात्पर्यदी) व्यासार्यैरुक्तम् । 'सर्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वाऽभिवदन् यदास्ते' इत्यत्र नाम्नां स्वाभिमुख्येनोक्तिर्विवक्षिता । स्वाभिमुख्यं च स्वपर्यन्तत्वमेव । रूपस्य स्वपर्यन्तत्वंच तदन्तर्यामित्वेन । नाम्नः स्वपर्यन्तत्वमन्तर्यामित्वनिबन्धनतच्छब्दवाच्यत्वमेव । एवं च चैत्रमैत्रादेः तत्तच्छरीरान्तर्वर्तित्वेन तत्तच्छब्दवाच्यत्वं यथा तद्वत्परमात्मनोऽपीति सिद्ध्यति । अत्र 'नामरूपे व्याकरवाणि इत्यनभिधाय व्याकरवाणि इत्युक्त्या नामरूपविस्तारकरणं विवक्षितमिति प्रतीयते । अत्र 'आङ्' इत्युपसर्गेणैव विस्ताकरणलाभे 'वि' इत्यनेन तत्रापि विशेषःप्रतीयते । एवंचोपसर्गद्वयानिर्देशेन चेतनपर्यन्तविस्तारो विवक्षित इति प्रतीयते । अतः जीवस्येव परस्यापि तत्तद्रूपसम्बन्धेन तत्तन्नामवाच्यत्वं 'नामरूपयोर्निर्वहिता' इत्यत्रापि विवाक्षितमिति सिद्ध्यतीति रूपसम्बन्धेन जीवस्येव परस्यापि दोषसम्बन्धोऽवर्जनीयः ॥

नच 'तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति' (मु.१-१) इति श्रुत्या अकर्मवश्यत्वेन प्रतिपन्नस्य परस्य न दोषस्सम्भवतीति वाच्यम् ; तदुत्तरं 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यत्र पुण्यपापविधूननव्यतिरिक्तस्य शरीरसम्बन्धविरहस्यापि वेदनसाम्यप्रयोजकत्वप्रतिपादनेन सूक्ष्मशरीरसम्बन्धस्यापि जीवज्ञानविकासप्रतिबन्धकत्वसिद्ध्या जीवस्येव परस्याप्यकर्मवश्यस्य ज्ञानसङ्कोचस्याकामेनापि स्वीकारावश्यकत्वात् ॥

अत्रैव पूर्वं 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय—स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिद्वये (दहरप्रजापतिविद्ययोः) सूक्ष्मशरीरपर्यन्तोत्थानस्यैव सम्यगुत्थानरूपतया सूक्ष्मशरीरविगमसमनन्तरमेव जीवज्ञानाविर्भावस्यात्रापि विवक्षितत्वात् । एतदव्यवहितपूर्ववाक्ये 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' इत्यत्र 'धूत्वा शरीरम्' इत्यत्र पूर्वश्रुत्युक्तार्थस्य विवक्षितत्वेनात्र 'ब्रह्मलोकमभिसंभवानि' इत्यत्र प्राप्तव्यब्रह्मण एवकाशशब्दार्थत्वस्योत्तरत्र 'तद्ब्रह्म' इत्यत्र विवक्षिततया शरीरसम्बन्धस्य जीवज्ञानविकासप्रयोजकस्यात्रापि बुद्धिस्थत्वेनाकर्मवश्यस्य परस्यापुरुषार्थसंबन्धशङ्का पूर्वोक्तनामरूपनिर्वोढृत्वज्ञानानन्तरमवर्जनीया । एतच्छङ्काऽपनोदनार्थमेव 'ते यदन्तरा तद्ब्रह्म' इत्युक्तम् । अत्र 'ते यत्र नस्तस्तद्ब्रह्म' इति निर्देशं विहाय 'ते यदन्तरा तद्ब्रह्म' इति निर्देशेन स्वपर्यन्तव्याकर्तृत्वरूपनामरूपनिर्वोढृत्वस्य पूर्वमुक्त्या नामरूपशून्यत्वं न सम्भवतीति नामरूपमध्यस्थत्वमेवात्र विवाक्षितम् । मध्यस्थस्य नामरूपसम्बन्धसत्वेऽपि नाम-

## गूढार्थसंग्रहः

रूपशून्यस्यैव नामरूपसम्बन्धनिबन्धन दोषविरहः परस्येत्यनेन निर्धारितं भवति । एतत्तात्पर्येणैव ' अरूपमेव तत् ' इति निर्देशं विहाय ' अरूपवदेवहि तत् ' इत्यसूत्रयद्व्यासः । सूत्रेचात्र रूपशब्दघटिता श्रुतिरेकैव विषयवाक्यतया विवक्षिता । ' नामरूपयोर्निर्वहिता ' इति यदन्तरा इत्यत्र हेतुः । एतद्विषयवाक्यगतहेतुरेव ' अरूपवत् ' इति सूत्रे हेतुत्वेन विवक्षितः । स एव ' प्रधानत्वात् ' इत्यत्र विवक्षित इति सूत्रकारसम्मतार्थः भगवता सिद्धान्तितः । उभयलिङ्गाधिकरण-पूर्वपक्षयुक्तिनिरसनमत्र सूत्रे विवक्षितमिति सूत्रकाराशयः ॥

एतेन आधुनिकानां श्रीभाष्योक्तार्थाक्षेपः (ब्रह्मसूत्रानुगुण्यसिद्धिः अद्वैतमार्तण्डः) सूत्रभाष्याद्याशयापरिज्ञानमूल इति भाव्यः । ' दिव्योह्यमूर्तःपुरुषः ' इति न रूपसामान्याभावं बोधयति । ' तदेतन्मूर्तम् ' इत्यत्र (बृ.४.३.२) मूर्छितावयवं इतरेतरप्रविष्टावयवम् । घनं संहतमित्यर्थः । ' इति (शं) विवरणानुसारेणात्राप्यमूर्त इत्यत्र मूर्तशब्दार्थः । ' मूर्तं स्यात्त्रिषु मूर्छाले कठिने मूर्तिमत्यपि ' इति विश्वमेदिनीकोशयोः मूर्तशब्दस्य नानार्थकत्वप्रतिपादनेन नैयायिकादिभिः क्रियावत्परि-च्छिन्नपरिमाणवद्बोधकत्वकथनेनात्र अमूर्तशब्दस्य रूपसामान्यवद्भिन्नबोधकता नैव निश्चेतुं शक्यते ॥

अत्र ' अमूर्तः—सर्वमूर्तविवर्जित ' इति (शं.उ.भा) विवरणेन न रूपसामान्याभावस्सिद्ध्यति । ' पुरुषः पूर्णः पुरिशयो वा ' इति तैरेव विवरणात् । तदविरोधेन अमूर्तशब्दस्य कर्मकृतमूर्तिवर्जित इति वा शरीरसम्बन्धनिबन्धन दोषवर्जित इति वा अर्थस्य तत्पक्षेऽपि वक्तव्यत्वात् । ' स वा अयं सर्वासु पूर्षु पुरिशयः ' इति बृहदाण्यकनिर्वचनानुरोधेन पुरुषशब्दस्य सर्वशरीरिबोधकत्वात् । एवं ' स यःपूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मनऔषत् ' इति तत्रैव निर्वचनानु-सारेणात्र पूर्वश्रुतौ तथाऽक्षराद्विविधास्सोम्यभावाः प्रजायन्ते इति जगत्कारणत्वप्रतिपादनेन च पुरुषः—जगत्कारणमि-त्यर्थः ' पुण्यपापे विधूय ' ' तरति शोकं तरति पाप्मानम् ' इत्यत्रैव फलदशायां सर्वपापनिवृत्तिप्रतिपादनेन पुरुषः सर्व-पापदाहकः ' इत्यप्यर्थः । एवं च पुरुषशब्दस्य सर्वजगत्कारण सर्वशरीरि सर्वपापदाहकार्थकतया ' तं त्वौपनिषदं पुरुषं पृच्छामि ' इति तत्रैव पुरुषपदार्थस्योपनिषदेकगम्यत्वोक्तेः । ' स बाह्याभ्यन्तर ' इत्यनेन अन्तर्यामिब्राह्मणार्थस्य ' अन्तः प्रविश्य तत्सर्वं व्याप्य ' इत्यादि श्रुत्यर्थस्य च प्रतिपादनात् । ' अप्राणोह्यमाना ' इत्यपि ' मनोमयः प्राणशरीरनेता ' इति वक्ष्यमाणाविरुद्धार्थकमेव । ' अक्षरात्परतःपरः ' इतिहि यथा ' सुदीप्तात् ' इति पूर्वश्रुत्यनुसारेण ' नामरूपाद्वि-मुक्तः परात्परम् ' इति श्रुत्यनुसारेणच मुक्तजीवापेक्षयाऽपि परमात्मन उत्कर्षमभिप्रैति इत्यन्यत्र (स.भाव) निर्णीतम् ॥

एवं च यथा ' सुदीप्तात् ' इत्यत्र जगत्सृष्टिमुपक्रम्य, ' दिव्योह्यमूर्तःपुरुष ' ' अक्षरात्परतः परः ' ' विद्वान्नाम-रूपाद्विमुक्तः परात्परम् ' इति एतच्छ्रुतितात्पर्यपर्यालोचनायां प्रागुक्तपुरुषशब्दार्थस्यैव मुक्तौ प्राप्यत्वं प्रतीयते । अत्र जग-त्कारणस्य सर्वपापदाहकस्यैव प्राप्यत्वोक्त्या राजकुमारस्य व्याधगृहे वर्धितस्य प्रायश्चित्तानन्तरं शुद्ध्या राजप्राप्तिवत् सृष्टि-वाक्यपर्यालोचनायां परमात्मपुत्रत्वेन प्रतीतस्य जीवस्य प्रकृतिसम्बन्धनिबन्धनदोषदूषितस्य प्रायश्चित्तरूपविद्यया सर्वपाप-निवृत्त्यनन्तरं पितुः परमात्मनः प्राप्तिरित्याशयः प्रतीयते ॥

अतएव ' तं त्वौपनिषदं पुरुषम् ' इत्यत्रोक्तपुरुषस्य अन्ते ' विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः ' इति परायणत्वोक्तिस्सङ्गच्छते । सूत्रकारोऽपि ' अदृश्यत्वादिगुणको धर्मोक्तेः ' इत्यत्र परविद्याविषयस्य सगुणत्वं ' मुक्तोपसृप्यव्यपदेशाच्च ' इत्यत्र सगुणस्यैव मुक्तप्राप्यत्वं मुण्डकश्रुत्यभिप्रेतं निरणैषीत् । ' तदेतद्ब्रह्मापूर्वमनपरम् ' इत्या-दिश्रुतिरपि न ब्रह्मणो रूपसामान्यविरहं बोधयति । तद्बोधकपदाभावात् । इदं मधुब्राह्मणान्तवाक्यम् । मधुब्राह्मणं च

## श्रुतप्रकाशिका

किंच ज्ञातृत्वप्रमुखान् कल्याणगुणान् समस्तहेयरहिततांचेत्यनेन निर्गुणवाक्यस्य संकुचितवृत्तित्वं चोपपादितं भवति तथाहि कल्याणगुणानित्यस्यायमभिप्रायः । गुणविशेषविधानं गुणसामान्यनिषेधो न बाधितुं प्रभवति, अपितु तद्व्यतिरिक्तविषय एव भवति । अन्यथा '**न हिंस्यात्सर्वाभूतानि**' इति सामान्यनिषेधेन '**अग्नीषोमीयं पशुमालभेत**' इति हिंसाविशेषविधानबाधप्रसङ्गादिति । समस्तहेयरहिततांचेत्यस्यायमर्थः । यथा '**पशुना यजेत**' '**छागस्य वपायाः**' इत्यादिषु '**छागो वा मन्त्रवर्णात्**' इति सूत्रोक्तन्यायात् सामान्यशब्दो विशेषदर्शनेसति तत्र पर्यवस्यति । तथा गुणसामान्यनिषेधो विशेषगुणनिषेधे पर्यवस्यतीति ॥

## गूढार्थसङ्ग्रहः

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इति मैत्रेयीब्राह्मणस्यस्य 'एवमेतस्मादात्मनस्सर्वे प्राणाः' इत्यजातशत्रुब्राह्मणस्यस्य च विवरणरूपम् । अत्र 'स योऽयमात्मा इदममृतमिदं ब्रह्म इदं सर्वम्' इत्यभिधाय 'स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा' इत्यारभ्य 'सर्वे प्राणा लोका देवाः सर्वाणि भूतानि सर्व एत आत्मनः समर्पिताः इत्युक्तम् । अत्राजातशत्रुब्राह्मणे व्युच्चरणकर्तृत्वेनोक्तानां प्राणादीनां सर्वेषां परमात्मनि समर्पितत्वोक्त्या तदैकार्थ्यं स्फुटम् । अत्र सर्वभूतराजत्वोक्त्या पूर्वं सुषुप्तेः प्रागिन्द्रियवशीकरणेन जीवस्य कतिपयमहारजत्वं यदुक्तं तत् सर्वमहाराजाधीनामित्येतेन दर्शितम् ॥

अत्र 'अयमात्मा ब्रह्म' इत्यत्र 'स वा अयमात्मा' इति पूर्वं राजत्वेनोक्तो य आत्मा स एव ब्रह्मेति विवक्षितम् । बृहदारण्यके एव तृतीये पूर्वं 'आत्मैवेदमग्रआसीत्पुरुषविधः' इत्युक्तम् । एवं च पुरुषात्मशब्दावेकार्थकावेवेति तेन प्रतीयते । अत्रैव पूर्वं 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरस्सपक्षी भूत्वा पुरःपुरुष आविशत्' इति 'स वा अयं सर्वासु पूर्षु पुरिशयः' इत्यादिना सृष्टसकलपदार्थानामन्तर्बहिश्च व्यापकत्वेन नियन्तृत्वेन च सर्वशरीरत्वरूपं पुरुषत्वं प्रदर्शितम् । तेन च आत्मन शब्दस्यापि व्यापकचेतनवाचित्वेन पुरुषशब्दैकार्थ्यं बोधितम् । अजातशत्रुब्राह्मणे अत्रापि सर्वभूतसृष्ट्यादिकथनेन राजकुमारन्यायः प्रदर्शितो भवति । इत्थंचोक्तार्थोपपादनायैवेदमन्तिमं वाक्यम् । अत्र अपूर्वमिति पूर्वावधिशून्यार्थकं तेन सर्वकारणस्यास्य कारणान्तरनिषेधः । अनपरमिति अन्तशून्यार्थकम् । अनपरमित्यस्योत्तरावधिशून्यार्थकत्वात् । एतेन सर्वकारणस्य नित्यत्वमुक्तम् । तेन सर्वजगन्महाराजस्य पितुः नित्यत्वेन तस्यैव प्राप्यत्वं युक्तमिति दर्शितम् । अनन्तरमबाह्यमिति पूर्वं सर्वेषामन्तर्बहिश्च व्याप्तिः प्रदर्शितेति अस्याप्यन्तर्बहिरवयवशङ्कायां अन्तर्बहिरवयवशून्यमित्यर्थबोधनेन तच्छङ्कानिवर्तकम् । 'ब्रह्म सर्वानुभूः' इति सर्वेषामनुभवस्य विषयः सर्वाननुभवतिचेत्यर्थकम् ॥

एतेन 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यत्रोक्तबहुरूपपरिग्रहस्य प्रयोजनमभिहितम् । जगत्स्रष्टुः परस्य जीवसजातीय अनेकरूपपरिग्रहेण सौलभ्यसौशील्यादिप्रदर्शनं विना सर्वेषां जीवानां ब्रह्मानुभवो न सम्भवतीति सर्वेषामनुभवार्थमेव विचित्रशक्तिभिरनेकरूपपरिग्रहः इत्येतेन दर्शितं भवति । मायाशब्दस्य यथा न मिथ्यार्थकत्वं तथा यथाऽवसरं निरूपयिष्यते । एवं च 'अरूपवदेवहि तत्प्रधानत्वात्' इति सूत्रभाष्ये (शं) उदाहृतश्रुतिभिः रूपसामान्यविरहः नैव सिद्ध्यतीति सिद्धम् । सृष्टिवाक्यानां 'लोकवत्तु लीलाकैवल्यम्' 'वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति' इति सूत्रद्वयेन परजीवप्रयोजनद्वयाभिधानेन निष्प्रयोजनत्वोक्तिर्निरवकाशा । निर्विशेषे श्रुतीनां तात्पर्यं न सम्भवतीति

## श्रीभाष्यम्

**ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणस्स्वाभाविकान्वदन्ति । समस्तहेयरहिततांच । निर्गुणवाक्यानां सगुणवाक्यानांच विषयम् 'अपहतपाप्मे' त्याद्य 'पिपास' इत्यन्तेन हेयगुणान्प्रतिषिध्य 'सत्यकामस्सत्यसङ्कल्प' इति ब्रह्मणः कल्याणगुणान्विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावात् ।**

## श्रुतप्रकाशिका

किञ्च सामान्यशब्दानां विशेषपर्यवसायित्वं व्युत्पत्तिसिद्धम् । यथा 'गामानय, गां बधान' इत्यादिषु सामान्यशब्दो विशेषकटाक्षेण प्रयोजकवृद्धेन प्रयुज्यते । तत एवहि तत्र प्रयोज्यवृद्धश्च न सर्वा गोव्यक्तीरानयति किंतु विवक्षितव्यक्तिविशेषमेवानयति तथैवहि तत्र व्युत्पत्तिः, एवं ज्ञातृत्वप्रमुखान् कल्याणगुणानित्यनेन समस्तहेयरहिततांचेत्यनेन च उत्सर्गापवादन्यायस्सामान्यविशेषन्यायश्चाभिप्रेतः । उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय सङ्कोच उत्सर्गापवादन्यायः अविरोधेऽपि * वैर्थ्यपरिहाराय संङ्कोचश्चेद्ब्राह्मणोपलीवर्दन्यायः । * उपात्तविशेषविषये तस्य सङ्कोचस्सामान्याविशेषन्याय इति भिदा ॥

किञ्च अध्यात्मशास्त्रेषु गुणशब्दस्सत्त्वरजस्तमस्सु प्रसिद्धः—

**नहि तस्य गुणास्सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्वाद्यैरखिलैर्गुणैः ॥**

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निर्गुणस्याप्रमेयस्य— ... ...**

**'गुणागुणेषु वर्तन्ते, कारणं गुणसङ्गोऽस्य, निर्गुणं गुणभोक्तृ च, नान्यं गुणेभ्यःकर्तारम्, दैवीह्येषा गुणमयी मम माया दुरत्यया । विना हेयैर्गुणादिभिः, गुणादिदोषांश्च मुनेव्यतीतः, गुणकलुषस्य सदातनेन तेन'** इत्यादिषु । एवं केवलगुणशब्दस्य सत्त्वादिपरत्वेन प्रसिद्धिप्राचुर्यान्निर्गुणशब्दास्सत्त्वादिनिषेधपराः ॥

अयं विषयविभागो न केवलमस्माभिर्भिन्नोपनिषद्वाक्येषु गुणविशेषविधान गुणविशेषनिषेधदर्शनान्निश्चीयते । एकस्मिन्नेव वाक्ये विषयविभागो दृष्ट इत्याह—**निर्गुणेति** । गुणसामान्यनिषेधवत् गुणसामान्यविधानमात्राभ्युपगमेन निर्गुणवाक्यानां सगुणवाक्यानां चेत्युक्तम् । नहि श्रुतिषु गुणसामान्यविधानं क्वचिद्दृश्यते गुणविशेषा एवहि श्रूयन्ते । * दोषसमभिव्याहृतगुणशब्दस्तूपादेयतमगुणपरः * **'वर्षायुतैर्यस्य गुणा न शक्याः' 'सते गुणानामयुतैकदेशम्' 'नान्तं गुणानां गच्छन्ती'** इत्यादि * स्मृतिवचनाभिप्रायेण वा सगुणवाक्यानामित्युक्तम् । तत्र गुणब्दः * दोषप्रतिपक्षवचनः लोके तथा प्रसिद्धेः * प्रकरणवशाच्छागपशुन्यायेन कल्याणगुणरूपविशेषपर्यवसानस्य न्याय्यत्वाच्च ॥

उक्तन्यायद्वयेन विरोधाभावादपच्छेदन्यायस्याविषयत्वमाह— इति **सगुणनिर्गुणवाक्ययोरिति** । इति शब्देन पूर्वोक्तसर्वहेतवो विवक्षिताः उत्सर्गापवादन्यायात्, सामान्यविशेषन्यायात् अध्यात्मशास्त्रेषु गुणशब्दस्य सत्त्वादिषु प्रसिद्धिप्राचुर्याच्चेत्यर्थः । **सगुणनिर्गुणवाक्ययोरिति** । अत्रतु विषयविभागान्नविरोध इति नापच्छेदनयः प्रवर्तत इति भावः ।

## गूढार्थसङ्ग्रहः

प्रागेवोपपादितम् । निर्गुणश्रुतिसमनन्तरं गुणानामभिधानेन 'अपहतपाप्मा' इत्यादिश्रुतौ सत्यकामत्वसत्यसङ्कल्पत्वयोरन्ते प्रतिपादनेन च 'प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति च भूयः' इति नयेन पराभिमतरीत्या जर्तिलयवाग्वधि-

### श्रीभाष्यम्

**अन्यतरस्य मिथ्याविषयताऽश्रयणमपि नाशङ्कनीयम् ।**

### श्रुतप्रकाशिका

**अन्यतरस्य मिथ्याविषयताऽऽश्रयणमपि नाशङ्कनीयमिति ।** सगुणवाक्यस्येति न ह्युक्तं, किंतु अन्यतरस्येत्युक्तम् । सगुणेन निर्गुणवाक्यस्य वा निर्गुणेन सगुणवाक्यस्य वा बाधाऽश्रयणमनुपपन्नमित्यर्थः ॥

अत्रायमभिप्रायः पूर्वं विरोधो नास्तीति परिहृतम् । इदानीं विरोधाभ्युपगमेऽपि नायमपच्छेदन्यायविषयः अपितु विरोधाधिकरणन्यायविषयएवेति । तथाहि अपच्छेदन्यायोह्यनियतविरोधपौर्वापर्यविषयः । उद्गातृप्रतिहर्त्रो * रुभयोरपच्छेदानियमो नास्ति । तत्रापि क्रमेणापच्छेदोऽप्यनियतः । तन्नियमेसति सर्वस्वदक्षिणाकत्वादक्षिणाकत्वविरोधानियमः । उभयोरप्यपच्छेदे तस्य क्रमभावित्वे उद्गात्रपच्छेदःपूर्वभावी इतरस्तु चरमभावीति वा विपर्ययेणेति वा नियमो नास्ति । अतोऽपच्छेदन्यायविषयः * प्रयोगावांधकविरोधः । सगुणानिर्गुणवाक्याविरोधस्तु स्वरूपप्रयुक्तः । विधिनिषेधरूपतया नियत पौर्वापर्यश्च । अतो विरोधाभ्युपगमेऽप्य * नियतविरोधपौर्वापर्यविषयोऽपच्छेदनयो नात्र प्रवर्तते ॥

**अपितु** विरोधाधिकरणन्याय एव प्रवर्तते । तद्विषयेहि पौर्वापर्यनियमो विरोधानियमश्च विद्यते । तथाहि 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिः 'औदुम्बरी सर्वावेष्टयितव्या' इति स्मृतिः । तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति निरपेक्षप्रमाणत्वात् । स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः । अतस्तत्र पौर्वापर्यं नियतम् औदुम्बरीस्पर्शतद्वेष्टनयोर्विरोधश्च नियतः । तत्र पूर्वमेव प्रमित्यां जातायां तद्विरुद्धार्थः कालात्ययापदिष्टस्स्यात् । अतो विलम्बितधीहेतोश्शीघ्रधीहेतुर्बलीयानिति न्यायात् पूर्वस्याश्श्रुतेर्बलीयस्त्वमित्युत्तरशास्त्रानुदय एव ॥

**नन्व**त्राधीतमेवह्युत्तरशास्त्रमितिचेत् । ततः किं प्रमित्यनुदयोह्यनुदयः ननु शब्दानुदयः 'आदित्यो यूप' इतिवत् । ननु तत्र श्रुतित्वस्मृतित्वे बाध्यबाधकभावप्रयोजके, नैवम् । श्रुतित्वस्मृतित्वयोः पौर्वापर्यहेतुत्वात्तेन सिद्धं पौर्वापर्यमेव बाध्य बाधकभावहेतुरिति न्यायसाम्यात्सगुणवाक्यबलीयस्त्वमिति । * यद्वा माभूद्विरोधाधिकरणनयः । अत्रो * पक्रमाधिकरण न्याय एव प्रवर्तते विरोधपौर्वापर्यनियमात् । अतस्सगुणवाक्यप्रतिबद्धत्वान्निर्गुणशास्त्रानुदय एवेति ॥

### गूढार्थसंग्रहः

करणन्यायस्य अत्र प्रवृत्तिः न सम्भवतीति निर्धारितं भवति । एवमपच्छेदाधिकरणन्यायोऽपि 'प्रकृतैतावत्त्वं' इति नयविषये न प्रवर्तते । निर्गुणोक्त्यनन्तरं गुणप्रतिपादनेन निर्गुणत्वस्य परत्वासम्भवात् । गुणान् तटस्थीकृत्य स्वरूपे तात्पर्यं परत्र गुणोक्तेरिति (अ.सि) उक्तिरनुपादेया । गुणगुणाभावयोरुभयोरपि शुद्धेऽनङ्गीकारेण गुणगुणाभावयोरविशेषेण इत्थं कल्पनाया असम्भवात् । परसम्मतस्वरूपस्य प्रमाणतः सिद्ध्यसम्भवस्य प्रागेवोपपादनाच्चेति भावः ॥

**मिथ्याविषयताऽश्रयणमपि नाशङ्कनीयमिति ।** सगुणावाक्यानां व्यावहारिकप्रामाण्यं व्यावहारिकविषयत्वेन सावकाशत्वमिति परोक्तिरनुपादेया । एवं व्यवस्थायाः वैदिकेन केनापि क्वाप्यनङ्गीकारात् । 'नास्ति, नासीत्, न भविष्यति' इति कालत्रयबाधाङ्गीकारे प्रतियोगिज्ञानदशायामपि प्रतियोगिनः बाधेन तद्वाक्यानामप्रामाण्यमेव स्यात् । एवं बाधग्राहकं च न किंचित्प्रमाणं पश्यामः । अतः सगुणवाक्यानां मिथ्यार्थबोधकत्वसाधनं न सम्भवति ॥

## श्रुतप्रकाशिका

**ननु** प्रथमप्रवृत्तं विलम्बितस्योत्पत्तिप्रतिबन्धकंचेत् नेदं रजतमिति ज्ञानोदयमिदंरजतमिति धीः प्रतिबध्ना(ती(त्वि) तिचेत् न * सत्तया ज्ञायमानतया च ज्ञापकयोरत्यन्तवैषम्यात् । सत्तया ज्ञापकंहि प्रमाणं पूर्वापरपरामर्शनिरपेक्षं ज्ञानं जनयति । तत्रोत्पन्नं ज्ञानं '**पूर्वाबाधेन नोत्पत्तिरुत्तरस्यहि सिद्धयति**' इति न्यायात् पूर्वं बाधित्वैवोदेति । ज्ञायमानतया ज्ञापकंतु योग्यतापरामर्शादिसापेक्षं प्रमितिं जनयति । तत्र परामर्शदशायां पूर्वप्रमाणेन विरुद्धार्थप्रमितिश्चेत्—सा प्रमितिरुत्तरोत्पत्तिं प्रतिबध्नातीति वैषम्यमिति ॥

एवं तर्हि नेदं रजतमिति ज्ञानस्य * इदं रजतमिति परामर्शसापेक्षत्वात्पूर्वज्ञानेन प्रतिबद्धस्य नेदं रजतमिति ज्ञानस्यानुदयप्रसङ्ग इतिचेन्न, इन्द्रियस्य प्रत्यभिज्ञेतरज्ञानजनने पूर्वपरामर्शनिरपेक्षत्वात् । इहापि शुक्तिरियमिति * शुक्तित्वाविषयाह्युत्तरप्रमितिः शुक्तित्वप्रतीतेश्च न रजतप्रतिपत्तिसापेक्षत्वम् । शुक्तित्वे गृहीतेसति तद्ग्रहणफलभूतो नेदंरजतमिति व्यवहारो नञुल्लिखितत्वात् प्रतियोगिसापेक्षः प्रवर्तते तत्सापेक्षत्वं च शब्दस्वभावाधीनम् । अतश्शुक्तिज्ञानं रजतज्ञाननिरपेक्षमुदयमानं पूर्वं बाधित्वैवोदेति । अतो नियतविरोधपौर्वापर्यविषय(उपक्रमाधिकरणन्यायएवात्र प्रवर्ततेचेत्) विरोधाधिकरणन्यायएवात्र प्रवर्तते नत्वपच्छेदनयः सचेद्दशस्थले यदि प्रवर्तते) पश्चालम्भनमकर्तव्यं स्यात् चरमभाविनो न हिंस्यादिति निषेधस्य प्रबलत्वात् । ततश्चानुष्ठानविरोधः । सगुणनिर्गुणवाक्ययोर्विरोधपौर्वापर्यानियमः परैरेवोक्तः । अतो (पि) विरोधाधिकरणन्यायविषयत्वेनात्र अपच्छेदन्यायानवकाशात् सगुणवाक्यानां बलीयस्त्वं सिद्धमिति । एतदभिप्रायेणान्यतरस्येत्युक्तम् ॥

उपाध्यनुक्तिपूर्वकश्रुत्युक्तानां गुणानां निरुपाधिकत्वस्य स्वतः प्राप्तत्वात्, स्वाभाविकत्वश्रुतेः 'नान्यो हेतुर्विद्यतईशनाय' इति (ईश्वरत्वस्याहेतुक)ईशनस्य हे)त्वश्रवणेन तदौपयिगुणानामपि निरुपाधिकत्वसिद्धेः ज्ञानशक्त्यादितारतम्यो-

## गूढार्थसंग्रहः

एतेन 'शास्त्रयोःप्रामाण्ये समानकक्ष्यतया एकतरस्यात्यन्तिकबाधायोगात् सङ्कोचेन विकल्पेन वा पाक्षिकप्रामाण्यमाश्रितम्, इह तु एकतरस्य तत्परतया प्रबलत्वात् इतरस्यातत्परत्वेन च दुर्बलतया वैषम्यात्' इति (अ.सि) उक्तिः, 'तत्परतयेति । पश्चात्प्रवृत्तत्वादेरप्युपलक्षणमिदम् । अपच्छेदाधिकरणादौ पश्चात् प्रवृत्तत्वादेः बलवत्ताबीजस्योक्तत्वादिति भावः' (ल.चं) इत्युक्तिश्च निरवकाशा । निर्गुणश्रुतेः तत्परत्वस्यैवाभावात् । उपक्रमादितात्पर्यलिङ्गानां सगुणश्रुतावेव सत्त्वात् ब्रह्मणि गुणसामान्याभावस्यापि परैरनङ्गीकारेण गुणतदभावयोरुभयोर्मिथ्यात्वाविशेषेण निर्गुणइत्यत्र परसम्मतार्थसिद्धेरसम्भवाच्च । 'प्राभाकररीत्या द्वितीयाभावस्याधिकरणानतिरिक्तत्वेन प्रामाणिकत्वेऽपि सद्वितीयत्वाभावात्' इति (अ.सि.ज्ञानत्वाद्युपपत्तौ) उक्तदिशा गुणाभावस्य अधिकरणरूपत्वे नानुपपत्तिरित्यपि न सम्भवति । निर्गुणशब्देन गुणाभावत्वविशिष्टस्यैव बोधनेन गुणाभावत्वविशिष्टस्य मिथ्यात्वेन गुणतुल्यत्वेनोभयोरविशेषस्यावर्जनीयत्वात् । गुणाभावत्वधर्माविवक्षाऽत्र नास्तीत्यत्र न किंचिन्नियामकम् । पश्चात्प्रवृत्तत्वमपि सगुणवाक्यस्यैव वर्तते । 'ज्ञःकालकारो गुणी सर्वविद्यः' इति श्रुतेः निर्गुणश्रुतेःपूर्वत्रैव परत्रापि सत्त्वात् । 'निरवद्यं निरञ्जनम्' इत्यनन्तरमपि 'अमृतस्य परं सेतुम्' इत्यादिना गुणानामभिधानात् । निरवद्यमित्यत्र अविद्यारूपावद्यस्यापि निषेधेन गुणानामविद्यामूलकत्वेन व्यावहारिकत्व मिथ्यात्वकल्पनस्य सगुणवाक्येष्वसम्भवाच्च ॥

## श्रुतप्रकाशिका

पाधिभूतकर्मसम्बन्धनिषेधपूर्वकसत्यकामत्वाद्युक्तेः 'त इमे सत्याः कामाः' इति स्वरूपवत्सत्यत्वश्रुतेः 'पराऽस्य-शक्तिः' 'ते ये शतम्' इत्यादिभिर्गुणानामपरिच्छिन्नत्वप्रतिपादनेन कर्मसम्बन्धव्यापकपरिच्छेदानिवृत्त्या व्याप्यकर्मसम्बन्ध निवृत्तेरर्थसिद्धत्वात्, स्वाभाविकत्वकण्ठोक्तिरहितगुणपरवाक्येष्वपि सर्वशाखाप्रत्ययन्यायेन गुणानां स्वाभाविकत्वसिद्धेः। 'आनन्दं ब्रह्मणः' इत्यादितात्पर्यलिङ्गप्राचुर्यात्। उत्सर्गापवादन्यायसामान्यविशेषन्यायाभ्यां विषयविभागादेकस्यां श्रुतावेव विषयविभागस्य दृष्टतया विरोधाभावादपच्छेदन्यायाविषयत्वात्॥

विरोधेसत्यपि विरोधाधिकरणन्यायेन गुणवाक्यप्राबल्यात्। 'यस्सर्वज्ञ' इत्यादिषु उपासनविधिरहितेषु वाक्येषु स्वरूपवत् प्रतिपन्नत्वात् मानान्तरागोचरतयाऽनुवादविषयत्वासम्भवेन निषेद्धुमशक्यत्वात् 'आत्मा वा अरे द्रष्टव्यः' 'सत्यं ज्ञानमनन्तं ब्रह्म, योवेद' 'आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति क्वचिदुपास्यत्वश्रवणस्य स्वरूपेऽपि तुल्यत्वात् अध्यात्मशास्त्रेषु सत्त्वादिषु गुणशब्दस्य प्रसिद्धिप्राचुर्याच्च निर्गुणवाक्यविषयत्वाभावात् बाह्यतर्काणां कालात्ययापदिष्टत्वा, दवधारणद्वयसहिताद्वितीयत्वश्रुतिज्ञानानन्दस्वरूपत्ववाङ्मनसानिवृत्तिज्ञेयत्वनिषेधरूपार्थगुणनिषेधानां-परिहृतत्वाच्च। निरुपाधिका ब्रह्मगुणा इत्युक्तवक्ष्यमाणार्थसंग्रहः प्रवृत्तिसौकर्याय दर्शितः॥

'सत्यं ज्ञानम्' इति ज्ञानपदेन सिध्यन्नार्थगुणनिषेधः पूर्वं परिहृतः। अथैतदनुवाकोपसंहारे च 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इति वाङ्मनसनिवृत्त्यभिधानात् निर्गुणत्वं फलितम्। अतस्तदैकार्थ्याच्च सत्यज्ञानादि

## गूढार्थसंग्रहः

'निरवद्यम्' इति 'अविद्यायाः चिति कार्यकरत्वाभावपरम्' इति मधुसूदनोक्तिरनुपादेया। निर्गुणमित्यत्र सङ्कोचः अनुचितः इति मते निरवद्यमित्यत्र सङ्कोचाङ्गीकारः कथं सङ्गतस्स्यात्? निरवद्यमित्यत्र सङ्कोचे नियामकमपि नास्ति। अतः 'निरवद्यम्' इति श्रुतिः 'निरवद्यो निरानिष्टः' (नृ.उ.ता) इति श्रुत्यन्तरमहिता गुणानामाविद्यकत्वं निरस्य सगुणवाक्यानां व्यावहारिकप्रामाण्यविषयकत्वमपि निषिध्य निर्गुणश्रुतेः सिद्धान्तिसम्मतार्थं व्यवस्थापयति। अप-च्छेदनयेन गुणनिषेधवादिमते गुणानां शुद्धचिति प्रसक्तानां तत्रैव निषेधः उपहिते निषेधासम्भवात् शुद्ध एव निषेधः। शुद्धे च गुणाः आविद्यकाः इत्येव तैरङ्गीकार्यम्। इयं च रीतिः निरवद्यमित्यनेन निरस्ता। गुणानामुपासनपरत्वमि-त्युक्तिरपि न घटते। निर्गुणवाक्यात्पूर्वं परत्र च गुणानामुक्त्या अस्मिन्प्रकरणे निर्गुणविद्यायाः अङ्गीकारासम्भवात्। 'अपहत-पाप्मा, सत्यकामः सत्यसङ्कल्पः' इति निर्गुणविद्यात्वेन परसम्मतायां प्रजापतिविद्यायां गुणश्रुतेश्च। ज्ञानं प्रमा ध्यानमप्रमा उपासनमप्रमा' इत्याद्युक्तिः लघुसिद्धान्त एव निरवकाशेति साधितम्। अतः सगुणवाक्यानां व्यावहारिकविषयकत्वक-ल्पनापेक्षया निर्गुणवाक्यस्य हेयगुणनिषेधविषयकत्वाङ्गीकारएव युक्तः। अयमर्थः श्रुतिस्मृतिसम्मत इति प्रागेव निरूपि-तम्। व्यावहारिकविषयकत्वाङ्गीकारश्श्रुतिषु अध्यासे सामानाधिकरण्यमूलकः। अध्यासे सामानाधिकरण्यं च भट्टपा-दासम्मतमिति प्राङ्निरूपितम्॥

उक्तं च विरोधाधिकरणे भट्टपादैः 'प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः। नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे॥' इति। इममर्थमभिप्रेत्यैव व्यासार्यैः अत्र विरोधाधिकरणन्याय उक्तः। सत्यद्वयकल्पनादेः भट्टपादास-म्मतायाः प्रागेव साधनेन व्यावहारिकप्रामाण्यकल्पनायां बौद्धमत इव वेदस्य प्रामाण्यमेवोच्छिद्येतेति व्यासार्याणामाशयः॥

## श्रीभाष्यम्

**'भीषाऽस्माद्वातःपवते' (तै.आन.८.अ.१-२) इत्यादिना ब्रह्मगुणानारभ्य 'तेयेशतम्' इत्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा**

## श्रुतप्रकाशिका

वाक्यस्य निर्विशेषपरत्वमिति शङ्कायामार्थगुणनिषेधपरतया परोक्तस्यास्य वाक्यस्योक्तार्थानुगुण्यमुपपादयति । **भीषाऽस्मादित्यादिना** । भीषाऽस्मादित्यनेन आज्ञापयितृत्वमुच्यते । **क्षेत्रज्ञानन्दातिशयमुक्त्वेति** । अत्र निर्विशेषत्वं प्रतिपिपादयिषितंचेत् गुणानां क्रमेण न्यूनतां प्रतिपाद्य सर्वाभावे पर्यवसितुं युक्तम् । अत्रतु क्रमेण गुणानामाधिक्यमुक्त्वा वाङ्मनसनिवृत्त्यभिधानमानन्त्यादेवेत्यभिप्रायः । यथा—

**सङ्ख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः । आनन्त्यात्प्रथमो राशिरभावादेव पश्चिमः ॥** इति ॥

## गूढार्थसंग्रहः

अत्र 'प्रकृतैतावत्त्वम्' इत्यादि न्यायेन परब्रह्मणः सगुणत्वं साधयता भगवता गुणानामप्राप्तत्वेन तात्पर्यसत्वात् विधिविषयत्वमपि समर्थितं भवति । तेन उत्सर्गापवादनयोऽप्यत्र सम्भवतीति सूचितम् । 'एको देवः निर्गुणः' इत्यत्र एकवाक्यतासत्वेन उपक्रमाधिकरणनयोऽपि सम्भवति । न्यायानां विषयविवेचनादिकं तत्त्वमार्ताण्डकारैः श्रीनिवासार्यैः विरचिते हरिगुणदर्पणे द्रष्टव्यम् ॥

अत्र 'द्वितीयाद्वै भयं भवति' 'नतु तद्द्वितीयमास्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यादिश्रुत्यनुसारेण 'एकमेवाद्वितीयम्' इत्यत्रापि द्वितीयसामान्याभाव एव विवक्षितः। अतएव 'यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते' इति श्रुतिः भेदज्ञानवतः भयप्रतिपादिका सङ्गच्छते । अतः निगुणत्वमिति शङ्का सम्भवति, तत्र 'आनन्दं ब्रह्मणो विद्वान् न बिभेति' इति श्रुत्यनुसारेण 'द्वितीयाद्वै भयं भवति' इत्यादेः परसम्मतादर्थादन्यएवार्थो विवक्षित इत्यङ्गीकरणीयम् अन्यथा 'आनन्दं ब्रह्म विद्वान्' इति निर्देशं विहाय 'आनन्दं ब्रह्मणो विद्वान्' इति निर्देशे बीजमेव न स्यात् । 'भीषाऽस्माद्वातःपवत' इत्युपक्रमानुसारेणापि यस्माद्भयं तज्ज्ञानेन तस्मादेव भयनिवृत्तिः, इत्यर्थप्रतीत्या उपसंहारे— 'आनन्दं ब्रह्मणो विद्वान्' इत्यस्य तात्पर्यं निर्धार्यम् । उक्तं च 'भयकृद्भयनाशन' इति असन्मार्गवर्तिनां भयंकरोति इति भयकृदित्यस्यार्थः परैरुक्तः । एवं च सन्मार्गवर्तिनां भयं नाशयतीत्येवार्थो युक्तः । भक्तानां भयं कृन्तति कृणोति इति वा भयकृत् वर्णाश्रमाचारवतां भयं नाशयतीति भयनाशनः इति योजनायां भयकृदिति शब्दात् झटिति न भयनाशरूपार्थः प्रतीयते । भयनाशनपदसमभिव्याहारे च नतराम् । एकपदेनैव भक्तानां वर्णाश्रमाचारवतां च भयनाशकत्वप्रतीतौ पदान्तरस्य नातीव प्रयोजनम् । 'संसारमोक्षस्थितिबन्धहेतुः' इत्यादिश्रुतिषु बन्धहेतोरेव मोक्षहेतुत्वप्रतिपादनेन तच्छ्रुत्यनुसारेण भयकारकः भयनाशक इत्येव पदद्वयार्थः युक्तः ॥

उक्तं च भट्टार्यैः 'स्वशासनातिवर्तिनि अनतिवर्तिनि यथासङ्ख्यं भयकृत् भयनाशनः 'भयाभयकरःकृष्णः' इति इति, अतएव 'यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । यदाह्येवैष—अथसो भयंगतो भवति' इति अत्रैव पूर्वानुवाके भयाभयोभयप्रतिपादनेन 'एषह्येवानन्दयाति' इति आनन्दायितृत्वश्रुत्या च इत्थम् 'आनन्दं ब्रह्मणः' इत्यादिश्रुतितात्पर्यं प्रतीयते । अतः श्रुतौ षष्ठ्या आनन्दब्रह्मणोः भेदप्रतिपादनेन ब्रह्मनिश्गुणज्ञानं मोक्षहेतुरित्यर्थ एव युक्त इत्यभिप्रेत्याह—**भीषास्माद्वातःपवते इत्यादि** ॥

## श्रीभाष्यम्

**'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्' (तै.आन.९.अ.१)**

## श्रुतप्रकाशिका

प्रथमं मनुष्यानन्दमारभ्य क्रमेणातिशयो दर्शितः । **'साधु युवाऽध्यायकः'** साधु यथाविधि सम्यक्सम्प्रदायसिद्धतया स्वरवर्णादिभ्रंशरहितं वा युवशब्देन प्रत्यग्रत्वं विवक्षितम् । अविस्मरणा*न्नित्यनवं यथा भवति तथाऽध्ययनवानित्यर्थः । यद्वा स्वसमवयस्कानां सर्वेषामध्या(य)प(क)ः तदधिकज्ञान इत्यर्थः । **आशिष्ठः** आशुतरक्रियः, यद्वा—* अशनक्षमः अरोग इत्यर्थः । यद्वा आशीर्वादविषयभूतः सर्वानुरञ्जक इत्यर्थः । **'सर्वान् देवान्नमस्यन्ति'** इतिवत् **बलिष्ठः** मनोबलवान् दृढिष्ठ इति शारीरबलस्योक्तत्वात् । यद्वा **दृढिष्ठः** दृढतरः नत्वव्यवस्थितस्वभाव इत्यर्थः । बलिष्ठः इति शारीरमानससर्वविधबलवान् वित्तस्य पूर्णा वित्तेन पूर्णा **'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन'** इति * षष्ठ्यनुज्ञानात् । **'स एको मानुष आनन्दः'** एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा स एको मानुष आनन्द इति श्रुत्या स्वरसतस्तस्यैवानन्दत्वमुक्तम् ॥

## गूढार्थसङ्ग्रहः

अत्र भाष्यं (शं) 'भीषा—भयेन अस्माद्वातःपवते यस्मात् तेषां नियमेन वर्तनं, तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म यतस्ते भृत्या इव राज्ञः तस्माद्ब्रह्मणो भयेन प्रवर्तन्ते । तच्च भयकारणमानन्दं ब्रह्म तस्यास्य ब्रह्मणः आनन्दः सैषा मीमांसा विचारणा भवति' इत्यादि । अत्र यद्यपि प्रशासितृत्वरूपगुण एव प्रतिपादितः । तथाऽपि भीषा इत्यस्याभावेऽपि 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.५.८.९) इति श्रुत्यन्तरवत् प्रशासितृत्वरूपगुणस्य लाभः सम्भवति । वातसूर्यादीनां महतामेव परमात्मनो भयस्य सत्वे अभक्तानां परमात्मनो भयं कैमुतिकन्यायेन सिद्ध्यति । भक्तिश्च गुणज्ञानमन्तरा न सम्भवतीति ब्रह्मगुणज्ञानवान् भक्त एव 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र विवक्षित इति प्रतीयते । 'एषह्येवानन्दयाति' इति प्रागानन्दयितृत्वेनोक्तस्य परस्य ब्रह्मण एवात्र प्रशासितृत्वकथनेन प्रशासितृ आनन्दयितृ परं ब्रह्मैव 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र विवक्षितमिति प्रतीयते । इत्थं च शासनातिवर्तिन एव भयं शासनानुवर्तिनः अभयमित्यर्थस्सिद्ध्यति । एतदेवाभिप्रेत्योक्तं द्रमिडाचार्यैः 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात्स भगवान् वर्धयेत विद्वान् कर्मदक्षः' इति (वे.सं) ॥

द्रमिडाचार्योक्तः राजकुमारनयः शङ्कराचार्यसम्मतश्श्रुतिषु विवक्षितः, ब्रह्मणः सद्वितीयत्वज्ञान एव सम्भवतीति (२३०) 'द्वितीयाद्वै भयं भवति' इत्यादौ परसम्मतार्थो न विवक्षितः, किंतु सिद्धान्तिसम्मत एव पूर्वापरवाक्यपर्यालोचनया 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिश्रुत्यनुसारेण च श्रुतौ विवक्षित इति च पूर्वमेव (२३५.पु) निरूपितम् । अतः 'भीषास्माद्वातःपवते' इत्युपक्रमानुसारेण 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र सगुणमेव ब्रह्म विवक्षितम् ॥

'ब्रह्मविदाप्नोति परम्' इत्युपक्रमे ब्रह्मशब्दः श्रूयते । ब्रह्मशब्दप्रवृत्तिनिमित्तं निरवग्रहमहत्त्वं दोषशून्यत्वगुणभूयिष्ठत्वाभ्याम्' इति परेषामपि (पं.पा.वि) सम्मतम् । एवं 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म', इति 'बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते' इति श्रुतिस्मृतिभ्यां बृंहणत्वमपि ब्रह्मशब्दप्रवृत्तिनिमित्तं प्रतिपाद्यते । तच्च प्रशासितुः आनन्दयितुः परस्य ब्रह्मण एवेति परं ब्रह्म सगुणमेव । ननु परमतरीत्या ब्रह्मशब्दावाच्यं तच्छब्दलक्ष्यं निर्विशेषम् । इत्यमुमर्थं साधयिष्यन्नाह—**यतो वाचो निवर्तन्ते इत्यादिना** ॥

## श्रीभाष्यम्

### इति ब्रह्मणः कल्याणगुणानन्त्यम्

## श्रुतप्रकाशिका

**अनुकूलत्वं** ह्यानन्दत्वं निवर्त्यानिष्टत्वेष्टसाधनत्वानपेक्षमिष्टत्वमनुकूलत्वम् । उक्तलक्षणयोगात् गुणविभूत्योरानन्दत्वमुपपद्यते । तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वकृतमित्यन्वयव्यतिरेकसिद्धम् । एवं चसति श्रुतिस्वारस्यं च सिद्ध्यति । गुणविभूति प्रकर्षमुक्त्वा स आनन्द इतिह्युक्तम्, नतु तद्विषयज्ञानमिति । युवताद्यनेकगुणान् विभूतिमप्युक्त्वा तत्समुदायमानन्दशब्देन निर्दिश्य तस्यानन्दस्य निरतिशयत्वप्रतिपादनात्सर्वगुणानां विभूतेश्चानवधिकातिशयत्वं प्रतिपादितं भवति । अनुकूलज्ञानत्वमेवानन्दत्वमिति गुणविभूतिविषयानन्दत्वेऽपि तस्यानन्दस्य निरवधिकातिशयत्वोक्त्या गुणविभूत्योरप्यनवधिकातिशयत्वमर्थादुक्तं भवति तदानन्त्यस्य गुणविभूत्यानन्त्यनिबन्धनत्वादिति—**आरभ्येति** । उपक्रमानुगुणमुप(रितन)संहार)वाक्यं नेयमिति भावः ॥

**श्रोत्रियस्यचाकामहतस्य** इति वाक्यैर्मुक्तानन्दस्य भगवदानन्दसाम्यमुक्तं भवति बद्धदशायां निरतिशयानन्दासम्भवात् । श्रोत्रियः ब्रह्मनिष्ठः अकामहतः निवृत्ताविद्यत्वात्समस्तसांसारिकभोगानुपहतः **'स एकःप्रजापतेरानन्दः'** इत्यन्तेन क्षेत्रज्ञानन्दातिशय उक्तः, **'स एको ब्रह्मण आनन्द'** इति भगवदानन्द उच्यते चतुर्मुखानन्दपरत्वे ब्रह्मश(ब्दस्वारस्यहानिः)ब्दास्वारस्यात्) **'परं जैमिनिर्मुख्यत्वात्' 'स्याच्चैकस्य ब्रह्मशब्दवत्'** इति ब्रह्मशब्दस्य तत्रैव मुख्यवृत्तत्वस्य सूत्रितत्वात्, भाष्ये प्रथमसूत्रस्थब्रह्मशब्दव्याख्यानावसरे प्रपञ्चितत्वाच्च **'ब्रह्मविदाप्नोतिपरम्, ब्रह्मणा विपश्चिता, (अनन्तं ब्रह्म) आनन्दं ब्रह्मणः, असद्ब्रह्मेति वेद चेत्, अस्तिब्रह्मेति चेद्वेद'** इति प्रकरणस्थब्रह्मशब्दानां ब्रह्मपरत्वात्प्रकरणविरोधश्च । 'आनन्दं ब्रह्मणो विद्वान्' इति पूर्वत्रोत्तरत्र च आनन्दप्रतियोगिषष्ठ्यन्तब्रह्मशब्दस्वारस्यविरोधश्च **'सैषानन्दस्य'** इति प्रक्रान्तानन्दस्य चतुर्मुखानन्देनोपसंहारानुपपत्तिश्च **'तदप्येषश्लोको भवति'** इति ब्रह्मानन्दं प्रकृत्य वक्ष्यमाणस्य श्लोकस्य उक्तविषयत्वविरोधश्च **'स एकःप्रजापतेः'** इति निरुपपदैकवचनान्तप्रजापतिशब्दस्वारस्यभङ्गश्च ॥

**नच** तज्जात्येकवचनं बहुत्वैकत्वविवक्षायां बहुवचनैकवचननिर्देशप्रकरणत्वात् । देवानां देवगन्धर्वाणां मनुष्यगन्धर्वाणामिन्द्रस्य बृहस्पतेः प्रजापतेरितिहि निर्दिश्यते । अतः प्रजापतिशब्दश्चतुर्मुखपरः । स एको ब्रह्मण इत्यत्र ब्रह्मशब्दो भगवत्परः **'ते ये शतम्, स एकः'** इति भगवदानन्दस्य कथं परिच्छिन्नत्वमितिचेत् न परिच्छिन्नत्वमेकक्षणार्धे बहूनि योजनानि गच्छतो रवेः क्षिप्तेषुरिव सर्पतीतीषुसाम्यकथनं यथा गतिमान्द्यनिवृत्तिपरं नतु परिच्छिन्नत्वपरम् । तद्वत् **ते ये शतं स एक** इति निर्देशोऽपि * चतुर्मुखानन्दाधिक्याभिप्रायः नतु परिच्छेदपरइति ॥

**यद्वा** ते ये शतं स एक इत्यस्य निर्देशस्य सङ्ख्याविशेषपरत्वेऽप्यानन्दस्यापरिच्छिन्नत्वं फलितम् । –

**अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटि कोटिशतानि च ॥**

**रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्तिते । ... ... ...**

इत्यादिवचनैरण्डानामनन्तत्वेन तत्रतत्र चतुर्मुखानामप्यानन्त्यात्कालत्रयवर्तिसमस्तब्रह्माण्डगतचतुर्मुखानन्दापेक्षया शतगुणत्वात् —**मेरोरिवाणुर्यस्यैतद्ब्रह्माण्डमखिलं मुने ।** इत्युक्त * त्रिपाद्विभूतिमत्तया च भगवदानन्दस्यात्यन्तमानन्त्यसिद्धेरिति । **कल्याणगुणानन्त्यमिति ।** नहि क्रमेण गुणापकर्ष उक्तः, किंतु गुणानां प्रकर्ष एवोक्तः ; अतो गुण-

## श्रीभाष्यम्

**अत्यादरेण वदतीयं श्रुतिः। ‘सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति’ (तै.आन १.अ.२) ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति। विपश्चिता ब्रह्मणा सह**

## श्रुतप्रकाशिका

प्रकर्षस्य निरतिशयत्वाद्वाङ्मनसनिवृत्तिरिति भावः। **अत्यादरेणेति।** ब्रह्मस्वरूपादपि तद्गुणेष्वादरातिशय उक्तः।— **‘आनन्दं ब्रह्मणो विद्वान्’** इतिहि श्रुतिः नत्वानन्दान्वितं ब्रह्म विद्वानितीति भावः। **इयं श्रुतिरिति।** निर्गुणपरत्वेन त्वयोक्तैतत्प्रकरणस्था श्रुतिरप्यस्मदुक्तार्थानुगुणैवेति भावः॥

एवमार्थगुणनिषेधनिरासद्वारा प्रकरणगतवाक्यान्तरेण **गुणानन्त्यपरेणैकार्थ्यात्** सत्यज्ञानादिवाक्यस्य सविशेषविषयत्वमुक्तम्। अथ स्ववाक्येनैकदेशेनापि सविशेषपरत्वमुपपादयति। **सोऽश्नुत इत्यादिना। फलमवगमयद्वाक्यमिति। ‘ब्रह्मविदाप्नोति परम्’** इति ब्राह्मणे ब्रह्म तद्वेदनं प्राप्तिः प्राप्यंचेति चतुष्टयमुक्तम्। एतद्विवरणं ‘सत्यं ज्ञानम्’ इत्यादिमन्त्रेण क्रियत इति श्रुतिरेवाह—**‘तदेषाऽभ्युक्ता’** इति तदेव ब्रह्माभिमुखीकृत्य ऋगेषाध्येतृभिरुक्तेत्यर्थः। मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनात्। उपक्रमाधिकरणविषयवाक्ययोरिव आपातविरोधप्रतीत्यभावान्मन्त्रब्राह्मणयोर्निस्स निर्दोषत्वाविशेषाच्च मन्त्रापेक्षया ब्राह्मणप्राबल्यवादोऽनुपपन्नः। स्फुटप्रतिपत्तिहेतुत्वतदभावावेव प्राबल्यदौर्बल्यशब्दविवक्षितौ चेन्नविरोधः **‘सत्यं ज्ञानमनन्तं ब्रह्म’** इति ब्रह्मशब्दो विवृतः **‘यो वेद निहितं गुहायाम्’** इति विच्छन्दः **‘परमे व्योमन् सोऽश्नुत’** इति प्राप्तिः **‘सर्वान्कामान्’** इत्यादिना प्राप्यम्। तत्र परशब्दार्थविवरणमेतदिति दर्शयितुं परस्य विपश्चितो ब्रह्मण इत्युक्तम्। विपश्चित्त्वमपि भोग्यगुणत्वेनोक्तम्॥

वाक्यस्यार्थं वक्तुं पदानामन्वयं दर्शयति। **विपश्चितेति।** किमत्र **गुणवाचिपदमिति** शङ्कायां—
**यदा सर्वे प्रमुच्यन्ते कामयेऽस्य हृदि स्थिताः। ... ...**

## गूढार्थसंग्रहः

‘ब्रह्मविदाप्नोति परम्’ इत्युपक्रमे सगुणमेव ब्रह्म विवक्षितमिति तदनन्तरं तद्वेदनफलप्रतिपादकवाक्यादेव प्रतीयत इत्याह—**सोऽश्नुते सर्वान्कामान्सह इत्यादिना॥**

**विपश्चिता ब्रह्मणा सहेति।** यद्यपि ‘सोऽश्नुते सर्वान्कामान्सह’ इति वाक्यानन्तरं ‘ब्रह्मणा विपश्चिता’ इति वाक्यं वर्तते इति सहेत्यस्य श्रवणसमनन्तरं तद्वाक्ये तृतीयान्तपदाभावेन साहित्यरूपार्थस्य झटिति प्रतीतिर्नास्तीति सह युगपदिति सहशब्दस्य अर्थान्तरमेव युक्तमिति परैर्व्याख्यातम्। (तै.उ.भा.वनमालाव्याख्या) तथाऽपि ‘ब्रह्मविदाप्नोतिपरम्’ इत्यनन्तरं ‘तदेषाऽभ्युक्ता’ इति श्रूयते। तत्र ‘एषा ऋगभ्युक्ता’ इति भाष्यं (शं) ‘तेषां ऋक् यत्रार्थवशेन पादव्यवस्था’ (जै.सू.२.१ ) इति जैमिनिसूत्रानुसारेण पादचतुष्टयार्थानुसंधानानन्तरमेव ‘तदेषाभ्युक्ता’ इति श्रुत्यर्थनिर्णयः। उक्तं च वार्तिकेऽपि ‘ब्रह्मवित् ब्रह्म वेत्तीति यस्स आप्नोति तत्परम्। सत्यादिलक्षणं ब्रह्म वक्ष्यते तदृचा स्फुटम्॥ (व.व.३०) फलोक्तिःपरमाप्नोति इत्यासा ब्रह्मविदुच्यते। सामर्थ्याद्ब्रह्मविद्यातु परस्यावाप्तिसाधनम्॥ (३१) स्वर्गं यथाऽग्निहोत्रेण यजमानः प्रसाधयेत्। परावाप्तिं तथा कुर्यात् ब्रह्मविद्ब्रह्मविद्यया॥’ (३२) इति। एतेन

## गूढार्थसंग्रहः

'ब्रह्मविदाप्नोति परम्' इत्यत्र या परावाप्तिरुक्ता सा 'सोऽश्नुते सर्वान्कामान् सह, ब्रह्मणा विपश्चिता' इत्यत्र विशदीकृता इत्युक्तं भवति। एवं च वाक्यद्वयेन फलविवरणमिति परेषामपि सम्मतम्। अतः वाक्यद्वयानुसंधाने एव प्रागुक्तार्थपरिसमाप्तिः॥

एवं च सहशब्दस्य प्रसिद्धिप्राचुर्यात्साहित्यार्थकत्वमेव युक्तम्। 'ब्रह्मविदाप्नोति परम्' इत्यत्र परं ब्रह्म 'सत्यं ज्ञानमनन्तम्' इत्यत्रोक्तम्। पूर्ववाक्ये कर्मतयैव परब्रह्मणः प्रतिपादनेन 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रापि द्वितीयान्तपदैः कर्मतयैव ब्रह्म प्रतिपादितम्। सत्यादिपदानां प्रथमान्तत्वे उक्तार्थविशदीकरणरूपत्वं स्वरसतः न सम्भवति। अत्र अनन्तपदं 'गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः। नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्यः' इति (शं) सहस्रनामभाष्योदाहृतविष्णुपुराणवचनानुसारेण गुणभूयिष्ठं प्रतिपादयति। एवमङ्गीकारे ब्रह्मशब्दार्थनिरवग्रहमहत्त्वं सम्भवति नान्यथा। वस्तुपरिच्छेदराहित्यमपि एतदेव 'स्वरूपेण गुणैश्चानन्त्य' मिति जन्माद्यधिकरणे वक्ष्यते। 'परस्य विपश्चितो ब्रह्मणः गुणानन्त्यं ब्रवीति' इति अत्रत्यपूर्ववाक्येन 'सोऽश्नुत' इति वाक्यं 'सत्यं ज्ञानमनन्तम्' इत्यत्र अनन्तशब्दे गुणानन्त्यं विवक्षितमिति निर्धारयतीति सूचितम्। सगुणस्यैव ब्रह्मणः सर्वशरीरित्वं वस्तुपरिच्छेदराहित्यरूपमपि सम्भवतीत्युत्तरत्र श्रीभाष्ये व्यक्तीभविष्यति। 'तं त्वौपनिदं पुरुषम्' इत्यत्र पुरुषशब्दस्य 'स वा अयं सर्वासु पूर्षु पुरिशयः' इति तत्रत्यनिरुक्त्यनुसारेण अयमप्यर्थो युक्तः॥

एवं च 'सत्यं ज्ञानमनन्तम्' इति श्रुतेः आप्तुः आप्यस्य च भेदाङ्गीकारेऽपि उपपन्नतया 'दशमोऽस्मीत्यतो ज्ञानात् अज्ञानध्वस्तिवर्त्मना। दशमाप्तिवदाप्तिःस्यात् ब्रह्मणोऽज्ञानहानतः॥' (३६) 'सोऽश्नुते निखिलान्कामान्—कर्तृत्वे तदसम्भवम्। आशङ्क्य युगपत्स्यात्सहेति च। (११६) प्रतीचि न स्यात् तद्ब्रह्म भेदार्थाचेत्सहार्थता। सम्भाव्यते पराग्भूतं नापि सत्यादिमत्परम्॥ नापि नोत्सहते वक्तुं निपातत्वात्सहार्थताम्। तस्माद्युगपदर्थस्य वाचकं स्यात्सहेति यत्' इति तैत्तरीयवार्तिकोक्तिः निरवकाशा। निपातानामनेकार्थत्वेन सहशब्दस्य युगपदर्थत्वे अस्वारस्यं परैरभ्युपगतमेव। एवं ब्रह्मणेत्यत्र सहशब्दसमभिव्याहारेण तृतीयायाः झटिति प्रतीतावपि अप्रकृतायाः 'प्रकृत्यादिभ्यः उपसङ्ख्यानम्' इति सूत्रेण तृतीयायाः कल्पनमपि न स्वरसम्। 'इत्थंभावे तृतीयेयम्' इति वनमालोक्तिरपि नादर्तव्या। परसम्मते अभेदे इत्थंभावे तृतीयायाः अप्रयोगात्। एवं 'आप्नोति, सोऽश्नुते' इत्यत्र प्रतिपादितप्राप्तेः अस्वारस्येन नयनमपि परमते। जीवब्रह्माभेदवाक्यं यद्यत्र अवर्तिष्यत तदा इत्थमर्थकल्पना सम्भाविता अभविष्यत्। नचात्रोपक्रमे अभेदप्रतिपादकवाक्यं वर्तते। विपश्चिता—मेधाविना सर्वज्ञेन—तद्धि वैपश्चित्यं यत् सर्वज्ञत्वम्। (शं.उ.भा) इति परैरुक्त्या विपश्चिच्छब्दस्य सगुणपरतया सहशब्दयोगेन तृतीयायाः युक्ततया सगुणपरत्वमेव एतद्वाक्यस्येति स्फुटं प्रतीयते। अन्यथा तृतीयान्तनिर्देशं विहाय प्रथमान्तनिर्देश एव युक्तस्स्यात्॥

एतेन 'विपश्चिद्व्यतिरेकेण ज्ञेयत्वाद्यपनुत्तये। सामानाधिकरण्येन ब्रह्मणाह विपश्चिता' (२१.तै.वा) एकयाऽक्रमवर्तिन्या व्याप्नोति क्रमवर्तिनः। अवगत्याखिलान् कामान्योऽकाम इति च श्रुतिः॥' (२२) इत्युक्तिरपि निरवकाशा। विपश्चिता ब्रह्मणा इत्यत्र जीवब्रह्माभेदबोधतात्पर्यनिर्णायकाभावात्। ब्रह्मरूपेण नतूपाधिकृतेन स्वरूपेण इत्यर्थविवक्षागमकमपि न किंचिद्वर्ततेऽत्र। परसम्मतार्थस्य श्रुतौ विवक्षितत्वे विपश्चित् ब्रह्म इति निर्देश एव श्रुतौ स्यात्। नचात्र तथा निर्देशो वर्तते। परमते 'सर्वान्कामानश्नुतेसह' इत्यस्य वैयर्थ्यमेव, सिद्धान्तेतु 'ब्रह्मविदाप्नोतिपरम्' इत्यत्र परस्य प्राप्यत्वमुक्तम्। अत्र परप्राप्तिविवरणं क्रियते। 'ब्रह्मणा सह सर्वान्कामानश्नुतेसह' इत्यत्र क्षीरेण सह ओदनं भुङ्क्ते

## श्रीभाष्यम्

**सर्वान् कामान् समश्नुते। काम्यन्त इति कामाः कल्याणगुणाः। ब्रह्मणा सह तद्गुणान् सर्वानश्नुतइत्यर्थः। दहरविद्यायां 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छा-८.प्र.१.ख.१) इतिवत् गुणप्राधान्यं वक्तुं सहशब्दः। फलोपासनयोःप्रकारैक्यं**

## श्रुतप्रकाशिका

इति त्याज्यतयोक्तकामव्यावृत्त्यर्थमवयवशक्त्या व्याचष्टे। काम्यन्त इति। ब्रह्मवेदनफलतया मुक्तानुभाव्यत्वादिह त्याज्यकामपरत्वानुपपत्तेः काम्यत्वस्य ब्रह्मस्वरूपेऽपि सम्भवे सत्यपि व्यतिरेकानिर्देशात्। बहुवचनान्तत्वादवयवशक्तेस्तदुक्तभोग्यत्वस्य च गुणेषु सम्भवात् '**स वा एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके**' '**य इहात्मानमनुप्रविद्य व्रजन्त्येतांश्च सत्यान् कामान्**' '**त इमे सत्याः कामाः**' इति श्रुत्यन्तरैकार्थ्याच्च कामशब्दवाच्याः कल्याणगुणा इत्यर्थः॥

कस्येमे गुणाः सहभावश्च ब्रह्मणः? 'पुत्रेण सहौदनं भुङ्क्ते' इत्यत्र पुत्रस्येव किं भोक्तृतया, उत क्षीरेण सहौदनं भुङ्क्ते इत्यत्र क्षीरस्येव भोग्यतयेति शङ्कां च परिहरन् वाक्यार्थमाह—**ब्रह्मणेति**। अस्य वाक्यस्य प्राप्यवाचिपरशब्दविवरणरूपत्वात् सर्वान् कामान् सहब्रह्मणेति भोग्यवाचिपदेनाव्यवहितप्रयोगस्वारस्याच्च सहशब्दो भोग्यसाहित्यपरः। सन्निहितं ब्रह्मैव च गुणानामाश्रयः। अतोऽनन्तगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः '**सहयुक्तेऽप्रधान**' इति शब्दानुशासनवशात् सहशब्देनाप्राधान्यं ब्रह्मण आशङ्क्य तत्परिहाराय सहशब्दप्रयोजनमाह—**दहरेति**। योवेदेति विहिते वेदने गुणानां प्राधान्यसूचकस्सहशब्दः। दहरविद्यायामुपासनेहि गुणप्राधान्यमुक्तम्। तथाऽत्राप्युपासने गुणप्राधान्यं वक्तुं सहशब्दइत्यर्थः। फलदशायां गुणप्राधान्यश्रवणात् उपासने गुणप्राधान्यं कथं सिद्ध्यतीत्यत्राह—**फलोपासनयोरिति**। फलोपासनयोरुभयोरपि (स)गुणत्वं गुणप्राधान्यं च तुल्यप्रकारमित्यर्थः गुणप्राधान्यं वक्तुमित्यनेनापि सहशब्दस्य भोग्य-

## गूढार्थसंग्रहः

इत्यादाविव भोग्यसाहित्यस्यैव विवक्षिततया ब्रह्मणा साकं तद्गुणानामपि प्राप्यत्वकथनेन गुणाभावे ब्रह्मणः प्राप्यत्वमेव न सम्भवतीत्यर्थप्रदर्शनार्थं सहशब्द इति निर्धारणेन प्राप्तिः विवृता भवति। परमते परस्य प्राप्यत्वं प्रागुक्तम्, कामानां प्राप्तिरत्र प्रतिपाद्यते इति। उक्तार्थविवरणरूपत्वमस्य वाक्यस्य न सम्भवति। 'योऽकामः' इत्यादौ कामनायाः दोषताप्रतिपादनेऽपि तदुत्तरं 'आत्मकाम' इत्युक्त्या मोक्षेच्छायास्सर्वमतेऽपि आवश्यकतया ब्रह्मप्राप्तेः मोक्षतया ब्रह्मप्राप्तिकामना युक्तैव। गुणवियुक्तब्रह्मप्राप्तिकामना न युक्ता, किंतु अनन्तगुणयुक्तब्रह्मप्राप्तिकामनैव। गुणकामनाधीनैव विशेष्यब्रह्मकामना, इति तात्पर्येण गुणानां कामनाविषयत्वमुक्तं गुणानां कामनाविषयत्वकथनमनन्तगुणवद्ब्रह्मप्राप्तिकामनायां पर्यवस्यति। इति 'ब्रह्मविदाप्नोतिपरम्' इत्युपक्रमोक्तार्थस्य विवरणरूपत्वं 'सोऽश्नुते' इत्यादेरुपपन्नम्। एतदर्थबोधनार्थं सहशब्दः। अतोऽपि सहशब्दो यथोक्तार्थक एव। 'ब्रह्मविदाप्नोति परम्' इत्यत्र अद्वैतसिद्ध्युक्तार्थश्च भावप्रकाशस्य तृतीयसम्पुटे. पर्यालोचितः। तामिमंमर्थमभिप्रेत्याह—**ब्रह्मणासह सर्वान्कामान् समश्नुते इत्यर्थ इति**॥

**तस्मिन् यदन्तस्तदन्वेष्टव्यमिति**। एतदर्थस्तु दहराधिकरणे विशदीभविष्यति। 'ब्रह्मविदाप्नोति परम्' इत्यत्र वेदनमुपासनरूपमिति लघुसिद्धान्त एव साधितम्। अतश्च गुणवद्ब्रह्मोपासनमेव तत्क्रतुन्यायेन 'ब्रह्मविदाप्नोति परम्' इत्यत्र विवक्षितमित्याह—**फलोपासनयोः प्रकारैक्यमित्यादि इति**॥

## श्रीभाष्यम्

**'यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतःप्रेत्य भवति' (छा.३.प्र.१४.ख.१) इतिश्रुत्यैव सि-द्धम्। 'यस्यामतं तस्य मतम्' 'अविज्ञातं विजानताम्' (केन.२.ख.३) इति ब्रह्मणो ज्ञाना**

## श्रुतप्रकाशिका

साहित्यपरत्वं सिद्धम्। अन्यथा भोक्तृप्राधान्यंहि सिद्ध्येत् नतु भोग्यगुणप्राधान्यमिति। श्रुत्यैवेत्येवकारेण उक्तन्यायस्य पुरुषबुद्ध्युत्प्रेक्षानिरपेक्षं श्रुत्या कण्ठोक्तत्वमभिप्रेतम्॥

अथ सगुणानामेव ज्ञेयत्वं दृष्टमिति ज्ञेयत्वनिषेधेन निर्गुणत्वं फलितमिति ज्ञेयत्वानिषेधपरत्वेन परोक्तं वाक्यमुपादत्ते यस्येति। किं ज्ञानमात्राविषयत्वं उतोपासनात्मकज्ञानाविषयत्वम् उत सगुणोपासनाविषयत्वं विवक्षितमिति विकल्पत्रय-

## गूढार्थसंग्रहः

**श्रुत्यैव सिद्धमिति।** अत्र भवतीति आप्नोतीत्यर्थकम्। 'योहि क्रतुः स ब्राह्मैश्वर्यमासीदेत्' इति एतछ्रुत्यर्थस्य (१.२.१.शं.भा) उक्तेः तत्क्रतुश्च (४.३.१५सू) (शं.भा.र.प्र) यो यत् ध्यायति स तत् प्राप्नोति इति हि तत्क्रतुन्यायः श्रुतिमूलइत्युक्तेश्च। 'एतमितःप्रेत्याभिसंभविताऽस्मि' इति यथाक्रतुः इति श्रुत्युत्तरश्रुतौ अभिसंभविताऽस्मि— इति प्राप्ताऽस्मीत्यर्थः (१.२.शं.भा) इति विवरणाच्च। अत्र यथा तथा इत्यत्र थाल्प्रत्ययस्य प्रकारवाचितया उपासनप्राप्तिप्रकारैक्यं सिद्ध्यति। अन्यत् भावप्रकाशे (तृतीयसंपुटे) द्रष्टव्यम्। 'विपश्चिद्व्यतिरेकेण ज्ञेयत्वाद्यपनुत्तये' इति वार्तिकोक्तार्थः विपश्चिता ब्रह्मणेति सामानाधिकरण्येन न सिद्ध्यति, विपश्चिच्छब्दस्य ज्ञानकर्त्रर्थकतायाः **विविधं पश्यचित्वंहि विपश्चित्वम्** इत्युत्तरत्र वक्ष्यमाणत्वात्। विपश्चिच्छब्दस्य ब्रह्मपरत्वेन ब्रह्मणः सर्वसाक्षात्कर्तृत्वमेतच्छब्देन प्रतिपादितम्। 'सोऽश्नुत' इत्यत्रोपक्रमोक्तपरप्राप्तेरेव विवक्षिततया प्राप्तेरनुभवरूपतया कामनाविषयगुणप्रभृति यावद्धर्मविशिष्टब्रह्मानुभवस्य 'सोऽश्नुत' इत्यत्र विवक्षितत्वेन विपश्चिच्छब्दोक्त सर्वसाक्षात्कर्तृत्वं जीवस्यापि प्रतिपादितं भवति तेन मुक्तब्रह्मणोः सर्वसाक्षात्कर्तृत्वेन 'निरञ्जनः परमं साम्यमुपैति' इति श्रुत्युक्तं परमसाम्यमपि दर्शितं भवति॥

एवं च छान्दोग्ये उपासनाफलत्वं प्राप्तेरेवोक्तम्। अत्र 'ब्रह्मविदाप्नोति परम्' इत्यत्रापि प्राप्तिरूपमेव फलमुक्तम् 'ब्रह्मवित्' 'यो वेद' इत्यादौ ज्ञानसामान्यवाचिनः विदिधातोः ज्ञानविशेषे विश्रान्तेःसर्वैरपि वाच्यतया उपासनात्मकज्ञानविशेषे विश्रान्तिर्लघुसिद्धान्त एव साधितेति ब्रह्मविदित्यत्रापि सगुणब्रह्मज्ञानमेव विवक्षितम्। अतो वेद्यत्वप्राप्यत्वकथनेन ब्रह्म सविशेषमेवात्र विवक्षितमिति निश्चीयते। 'सत्यं ज्ञानम्' इत्यत्रापि परसम्मतोपलक्षितविवक्षागमकं न किंचिदपि वर्तत इति उपक्रमे सविशेषमेव ब्रह्म श्रुतितात्पर्यविषयः। सविशेषप्राप्तेरेव फलस्य प्रतिपादनात् ब्रह्मशब्दपर्यालोचनयाऽपि ब्रह्म सविशेषमेव विवक्षितमिति प्रागेव निरूपितम्। अत्र उपक्रमः फलंचेति तात्पर्यनिर्णायक लिङ्गद्वयं स्फुटम्। अपूर्वत्वमपि अनन्तगुणवद्ब्रह्मणः वर्तत एव॥

अथ सामानाधिकरण्येन निर्विशेषस्य ज्ञेयत्वं नास्तीति वदतो वार्तिककृतः श्रुत्यापि ज्ञेयत्वविरहः सिद्ध्यतीति सम्मतम्। एवमन्येषामद्वैतिनामपि। एवं च ज्ञेयत्वादिनिषेधपरश्रुतिपर्यालोचनामन्तरा ब्रह्मणः ज्ञेयत्वप्राप्यत्वयोः सिद्धिर्न सम्भवतीति परसम्मत प्राक् (१३३.पु) उदाहृतज्ञेयत्वनिषेधश्रुत्यर्थनिर्धारणार्थं परसम्मतं तच्छ्रुत्यर्थं शङ्कते—**यस्यामतं तस्य मतमित्यादिना।** इयं च श्रुतिः 'अविद्याकल्पितवेद्यवेदितृवेदनादिभावमपनुदति' इति (शं.भा.१.१.४) उक्तम्

## श्रीभाष्यम्

**विषयत्वमुक्तंचेत्—' ब्रह्मविदाप्नोति परम् ' (तै.१.अ.१) ' ब्रह्म वेद ब्रह्मैव भवति ' (मु.३.मुं. २.खं.९) इति ज्ञानान्मोक्षोपदेशो न स्यात् ' असन्नेवसभवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति ' इति ब्रह्मविषयज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्मसत्तां च वदति । अतो ब्रह्मविषयवेदनमेवापव(र्गोपायं)र्गाय) सर्वाश्श्रुतयो विदधति ज्ञानंचोपासनात्मकम् ।**

## श्रुतप्रकाशिका

मभिप्रेत्य प्रथमं ज्ञानमात्राविषयत्वं दूषयति । **ब्रह्मविदिति** । ब्रह्मणो वेद्यत्वे श्रुतेरादरातिशयं दर्शयति । **असन्नेवेति ।** न ब्रह्मवेदनमपवर्गोपायः अपितु प्रपञ्चमिथ्यात्वज्ञानमेव तदुपाय इति परैरुच्यते—**' विद्ययाऽमृतमश्नुते '** ' तदा विद्वान्नामरूपाद्विमुक्तः ' ' ततो ज्ञानं प्रवर्तते ' ' ज्ञानाग्निस्सर्वकर्माणि ' इत्यादिष्वनिर्दिष्टविशेषविषयेषु वाक्येष्वपवर्गोपायतया श्रूयमाणस्य ज्ञानस्य ब्रह्मविषयत्वप्रपञ्चमिथ्यात्वविषयतासाधारण्यात् । तदाशङ्क्याह—**अतइति** । अतः केषुचिद्वाक्येष्वपवर्गोपायज्ञानस्य ब्रह्मविषयत्वदर्शनात् । सर्वाश्श्रुतयः अनिर्दिष्टविषयविशेषाः ' विद्ययाऽमृतमश्नुते ' इत्यादिकाश्श्रुतयोऽपि सर्वशाखाप्रत्ययन्यायेन ब्रह्मविषयमेव वेदनमपवर्गोपायतया विदधतीत्यर्थः ॥

**यद्वा** केषुचिद्ब्रह्मविषयत्वे श्रुते ज्ञानमात्रोपायपराश्श्रुतयश्च सामान्यविशेषन्यायात्तत्रैव पर्यवस्यन्तीत्यभिप्रायः । अथोपासनात्मकज्ञानाविषयत्वपक्षं दूषयति । **ज्ञानंचेति** । **' तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते '** इति श्रुतिरुपासना-

## गूढार्थसङ्ग्रहः

**ज्ञानान्मोक्षोपदेशो न स्यादिति** । अत्र निर्गुणविद्याया एव परसम्मततया सगुणविद्यावत् कल्पितत्वोक्तिः न सम्भवतीति भावः ॥ **ब्रह्मविषयज्ञानासद्भावसद्भावाभ्यामिति** । असद्भावः अभाव एव ' असद्ब्रह्मेति वेदचेत् ' इत्यत्र अकारः ' अमानोनाः प्रतिषेधे ' ' अभावेन ह्यनोनापि ' इत्यानुशासनानुरोधेन नञ्शब्दसमानार्थकः । सद्ब्रह्मेति न वेद चेदिति योजना विवक्षिता । ' इह चेदवेदीत् अथ सत्यमस्ति नचेदिहावेदीत् महती विनष्टिः ' (के.उ.२.ख. १३) ' इहैव सन्तोऽथ विद्मः तद्वयं नचेदिहावेदर्महतीविनष्टिः ' (बृ.६.४.१४) इति श्रुत्यन्तरेऽप्ययमर्थः स्फुटः । ' ब्रह्मविदाप्नोति परम् ' इत्यत्र ब्रह्मज्ञानस्य मोक्षप्रयोजनकथनेन अन्वय उक्तः । अत्रतु ब्रह्मज्ञानाभावे दोषस्यापि कथनेन अन्वयव्यतिरेकावुक्तौ । एवं च ब्रह्मज्ञानस्यान्वयव्यतिरेकाभ्यां फलवत्ताप्रदर्शनेन श्रुतेः ब्रह्मज्ञाने तात्पर्यलिङ्गं प्रदर्शितं भवति । **' यस्यामतं तस्य मतम् '** इति श्रुत्यनन्तरं ' प्रतिबोधविदितं मतममृतत्वंहि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ' इति ब्रह्मविद्यायाः मुक्तिसाधनत्वमपि प्रतिपादितम् । तदनु ' इहचेदवेदी ' दिति श्रुतिः उपनिषदन्ते च ' ब्राह्मीं वाव त उपनिषदमब्रूम ' इति श्रूयते । ' योसावुपनिषत्स्वेवाधिगतः ' इति प्राक् (२२२.पु) उदाहृतभाष्य (शं) भामती पञ्चपादिकादौ उपनिषद्वेद्यत्वं ब्रह्मणः स्फुटम् । एवं च ' यस्यामतम् ' इति श्रुत्यनन्तरं ब्रह्मज्ञानस्य मुक्तिफलप्रतिपादनेन ब्रह्मणः ज्ञानाविषयत्वोक्तिः न घटत इति भावः ॥ वेदनस्य विधानासम्भवं परिहरति । **ज्ञानंचोपासनात्मकमिति** । अयमर्थः लघुसिद्धान्ते स्थापितः । समन्वयाधिकरणे ' तदेव—यदिदमुपासत ' इति श्रुत्यर्थः विवेचयिष्यते ॥

प्राक् (१३४.पु) उदाहृतविवरणे ' अविज्ञातं विजानताम् ' इति श्रुतिसहभावेन ' यतो वाचो निवर्तन्ते ' इति श्रुतिरप्युपात्ता । अनन्तरं च ' मनसैवानुद्रष्टव्यम् ' ' तंत्वौपनिषदम् ' इति ज्ञानक्रियाकर्मत्वमपि श्रूयत इत्याक्षि

## श्रीभाष्यम्

**उपास्यं च ब्रह्म सगुणमित्युक्तम् 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' (तै.आ.९. अनु.१) इति ब्रह्मणोऽनन्तस्यापरिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्व**

## श्रुतप्रकाशिका

त्मकज्ञानाविषयत्वशङ्काबीजं । वाक्यार्थज्ञानस्योपायत्वानुपपत्त्युपपादनात्परिहृतमित्यर्थः ; '**नेदं यदिदमुपासते**' इत्यस्यायमर्थः–यदिदं प्रतीकमुपासते तन्न तदेव परं ब्रह्म त्वमुपास्वेति । अथ सगुणोपासनाविषयत्वपक्षं प्रतिक्षिपति । **उपास्यं चेति** । निर्गुणपरत्वेन परोक्तायास्सद्विद्याया एव सगुणविषयत्वोपपदनादिति भावः ॥

**यद्वा–ज्ञानंचोपासनात्मकमिति** । ज्ञानविशेषविषयत्वकण्ठोक्त्या ज्ञेयत्वमात्रनिषेधो दूरनिरस्त इति भावः । **उपास्यंचेति** । ज्ञेयत्वनिवृत्त्या सिषाधयिषिता गुणनिवृत्तिर्गुणविधानबाधिता । ततश्चाज्ञेयत्वं बाधित्वाज्ञेयत्वमाक्षिपतीति भावः । तर्ह्यविज्ञातत्वामतत्वश्रुत्योः कोऽर्थइत्यत्राह—**यतो वाचइति** । अनन्तशब्देन 'सत्यं ज्ञानम्' इत्यादिवाक्यं

## गूढार्थसंग्रहः

वेदान्तजनितापरोक्षज्ञानस्य आकारसमर्पकतया व्यावर्तकत्वं शास्त्रप्रमेयत्वं नाम ज्ञानजन्यप्रकाशशून्यत्वमविषयतानामेति व्यवस्था प्रदर्शिता, इयं च व्यवस्था नैव घटते । उपनिषद्वाक्येषु एतदर्थतात्पर्यकस्य कस्यापि पदस्याभावात् इत्यभिप्रेत्याह–**यतो वाचो निवर्तन्ते इत्यादि** ॥

**ब्रह्मणोऽनन्तस्यापरिच्छिन्नगुणस्येत्यादि** । 'ब्रह्मविदाप्नोति परम्' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति यत् ब्रह्मप्रतिपादितं तदेव 'आनन्दं ब्रह्मण' इत्यत्र ब्रह्म इति सर्वसम्मतम् । दोषशून्यत्वगुणभूयिष्ठत्वाभ्यां निरवग्रहमहत्वं ब्रह्मशब्दार्थ इत्यपि पर (पं.पा.वि)सम्मतम् । 'नान्तं गुणानाम्' इत्याद्युदाहृतविष्णुपुराणवचनासिद्धप्रवृत्तिनिमित्तं वस्तुपरिच्छेदरूपराहित्यमेव नतु ततोऽन्यत् इति 'स्वरूपेण गुणैश्चानन्त्य' मिति जन्माद्यधिकरणभाष्यादौ वक्ष्यते । गुणवद्ब्रह्मैव वस्तु, गुणानां परिच्छिन्नत्वं वस्तुपरिच्छेदरूपमेव भवति इत्यपरिच्छिन्नगुणवत्त्वं वस्तुपरिच्छेदराहित्य एव पर्यवस्यति इति स्वरूपेण गुणैश्चानन्त्यमिति सूक्तौ विवक्षितम् । एवं च अपरिच्छिन्नगुणकब्रह्मणि तदानन्दे प्रथमं मनोवाचोः प्रवृत्तिः किंचिद्विषयसम्बन्धसम्भवेन युक्ता । अनन्तरं च गुणानामपरिच्छिन्नत्वेन यावद्गुणानां सम्बन्धासम्भवेन निवृत्तिरिति निर्मत्सराणां विदुषां श्रुत्यर्थस्स्फुटं प्रतीयते। शक्यार्थे निवृत्तिः लक्ष्यार्थे प्रवृत्तिः इति कल्पनायां न किंचिदत्र गमकम् । वाचस्पतिमते ब्रह्मणः वेदान्तजन्यवृत्तिविषयत्वस्याप्यनङ्गीकारेण वाचःप्रवृत्त्यसम्भवेऽपि मानसापरोक्षविषयत्वाङ्गीकारेण मनसोऽप्रवृत्तिर्न घटते । 'वृत्तिव्याप्यत्वलक्षणं विषयत्वं ब्रह्मणोऽभ्युपेत्य 'मनसैवानुद्रष्टव्यम्' 'तंत्वौपनिषदम्'— इत्यादिश्रुतयः फलव्याप्यत्वाभावलक्षणमविषयत्वमभ्युपेत्य 'अविज्ञातम्' 'यतो वाचो निवर्तन्ते' इति श्रुतयः इति प्राक् (१३४.पु) विवरणतात्पर्यकल्पनाऽपि निर्मूला ॥

'वृत्तिप्रतिबिम्बितचिज्जन्यातिशययोगित्वं वृत्त्या तत्फलितचिता वा अभिव्यक्ताधिष्ठानचिद्विषयत्वं वा फलव्याप्यम् चिज्जन्यातिशयश्च नावरणभङ्गः, नापि व्यवहारो विवक्षितः । किंतु भग्नावरणचित्सम्बन्धः । सच घटादावस्ति नात्मनि सम्बन्धस्य भेदगर्भत्वात् । एवमुक्ताचिद्विषयत्वमपि भेदघटितं घटादावस्ति नात्मनि' इति (अ.सि.स्व.प्र.उ) ॥ वृत्तेर्विषयत्वमाकारः अस्तीत्यादिताद्विषयकव्यवहारप्रतिबन्धकाज्ञाननिवर्तनयोग्यत्वम् । तत्सन्निकृष्टकरणजन्यत्वं वा तदाकारत्वम्

## श्रीभाष्यम्

**श्रवणेन ब्रह्म एतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम् । अपरिच्छिन्नत्वाद्ब्रह्मणः । अन्यथा ' यस्यामतं तस्य मतम्–विज्ञातमविजानताम् ' (केन.२.ख.३) इति मतत्वविज्ञातत्ववचनं तत्रैवविरुध्यते । यत्तु**

## श्रुतप्रकाशिका

सारितम् । अनन्तस्येति स्वरूपानन्त्यमुक्तम् अपरिच्छिन्नगुणस्येति गुणानन्त्यम् अस्मिन्नर्थे–

**नहि तस्य गुणास्सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥**

**' नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते ' । ' तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । ' ' वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः । ' ' महात्मनश्शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य । '**

**चतुर्मुखायुर्यदिकोटिवक्त्रो भवेन्नरःक्वापि विशुद्धचेताः । स ते गुणानामयुतैकदेशं वदेन्नवादेववर प्रसीद ॥**

**यथा रत्नानि जलधेरसङ्ख्येयानि पुत्रक । तथा गुणाह्यनन्तस्य असङ्ख्येया माहात्मनः ॥**

**इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥**

इत्यादि द्रष्टव्यम् ॥

परिच्छिन्नत्वज्ञाने कथं धर्मिणो ब्रह्मणोऽज्ञातत्वमित्यत्राह–**अपरिच्छिन्नत्वाद्ब्रह्मण इति** । ब्रह्मशब्दवाच्यस्य स्वरूपतो गुणतश्चापरिच्छिन्नत्वादित्यर्थः । न केवलं श्रुत्यन्तराविरोधार्थमेवमर्थउक्तः इतरथा स्ववाक्यव्याहतिप्रसङ्गाच्चेत्याह–**अन्यथेति** । तत्रैव स्ववाक्य एव । ज्ञेयत्वनिषेधे परिहृते ज्ञातृत्वनिषेधं परिहरति । **यत्त्वित्यादिना** । ' दृष्टेर्मते ' रिति

## गूढार्थसंग्रहः

(प्र.क.व्य) इति परैरुक्तम् । अन्तःकरणवृत्तिमन्तरा चिदस्तीति व्यवहारस्य परसम्मतस्य (ल.चं) कस्याप्यनभिमतत्वेन वृत्त्यैव निर्वाहः सम्भवतीति निर्विशेषचित्कल्पनमप्रामाणिकमिति पूर्वमेव निरूपणेन विवरणकारव्यवस्थाया असम्भवात्। ब्रह्मणो ज्ञानाविषयत्वमात्रप्रतिपादकश्रुतेरभावाच्च । ' ब्रह्म, अमतम् अविज्ञातम् ' इत्यत्रैव मतत्वविज्ञातत्वयोरप्युक्तेः । अतो ' यतो वाचो निवर्तन्ते ' इति श्रुतेः पूर्ववक्यपर्यालोचनया सिद्धान्तिसम्मतस्यैवार्थस्य युक्तत्वे तदनुसारेण ' अविज्ञातममतम् ' इत्यस्यार्थ उचित इति प्रतिपादयति । **ब्रह्म परिच्छेदज्ञानवतामित्यादि** । अयमेवार्थो युक्त इति तत्पूर्ववाक्येनापि प्रतीयते । ' अन्यदेव तद्विदितादथो अविदिताधि ' (के.१.४) इत्यत्र ब्रह्मणः विदितादन्यत्वमविदितादन्यत्वंचोक्तम् । तदनन्तरं ' यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ' इत्यत्र अभीत्युपर्गेण अभितः वाचा ज्ञेयत्वमेव नास्तीत्युक्त्या किंचित् ज्ञेयत्वमभ्युपगतं भवति । ' यन्मनसा न मनुते ' इत्यत्रापि पूर्वश्रुत्यनुसारेणैवार्थो विवक्षितः । उत्तरश्रुतिष्वपि तथैवार्थस्य प्रतिपादनाच्च । तदुत्तरं ' यदि मन्यसे सुवेदेति–दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् ' (केन. २.१) इत्यत्र दभ्रमित्यस्य ' स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु ' इति कोशानुसारेण ' दभ्रम् ' अल्पमेवापि नूनं त्वं वेत्थ ' इति भाष्ये (शं) विवरणेन च ब्रह्मवेदनमल्पवेदनमेव न सुवेदनमिति प्रतिपादितम् । तदनन्तरं ' नाहं मन्ये सुवेदेति नो न वेदेति वेद च ' इत्यत्र सुष्ठु वेदनाभावएव प्रतिपादितः । अत्र सर्वत्र अपरिच्छिन्नगुणकब्रह्मणः सुष्ठु वेदनं न सम्भवति किंत्वल्पवेदनमेवेत्यर्थस्य स्फुटं प्रतीत्या यावन्तो गुणाः तावद्गुणविशिष्टब्रह्मज्ञानं न सम्भवति अपरिच्छिन्नगुणकत्वात् ब्रह्मण इत्येव विवक्षित इति स्फुटम् ॥

## श्रीभाष्यम्

**न दृष्टेर्द्रष्टारं न मतेर्मन्तारम्' (बृ.५.अ.४.ब्रा.२) इति श्रुतिर्दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधतीति। तदागन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा न तथाऽऽत्मानं पश्येर्न मन्वीथाः, अपितु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव**

## श्रुतप्रकाशिका

पञ्चम्यन्तत्वाभिप्रायेण व्यतिरिक्तपदाध्याहारेण किं योजना ? उत षष्ठ्यन्ततया व्यतिरिक्तपदानध्याहारेण योजना त्वया क्रियत इति विकल्पमभिप्रेत्य प्रथममध्याहारपक्षमनुवदति। **न दृष्टेरिति**। परिहरति। **तदिति**। प्रसक्तस्यहि प्रतिषेध इति शङ्कायां प्रसङ्गं दर्शयति। **कुतर्कसिद्धामिति**। कुतर्कः कथमुपन्यस्त इत्यपेक्षायां स्वरूपजडत्वे परोक्तं हेतुद्वयं संग्रहेणोपपादयति। **आगन्तुकचैतन्यगुणयोगितयेति**। आगन्तुकत्वाद्गुणत्वाच्चेति हेतुद्वयम्। आगन्तुकत्वात्—अनित्यत्वात् ज्ञानं नित्यस्यात्मनो न स्वरूपं भवितुमर्हति। गुणत्वाच्च न स्वरूपमिति॥

यद्वा चैतन्यं नाम विषयप्रकाशः। तन्नित्यं स्वरूपंचेत् सर्वदा विषयप्रकाशप्रसङ्ग इति भावः। दृष्टिश्रुतिमतिनिदिध्यासनानां ज्ञानविशेषाणां कर्तुरात्मनस्स्वरूपस्य दृष्ट्यादिरूपत्वे विधीयमाने आत्मस्वरूपस्य न ज्ञानावान्तरभेदश्शङ्कनीयः। तेषां ज्ञानविशे(षा)षरूपा)णां स्वयंप्रकाशत्वलक्षणं ज्ञानत्वमविशिष्टमिति तावन्मात्रमेव स्वरूपस्य विवक्षितं

## गूढार्थसंग्रहः

**न दृष्टेर्द्रष्टारमित्यादि**। 'दृष्टेः इति पञ्चम्यन्तम्। दृष्टेर्जडस्वभावायाः परार्थायाः स्वतश्चितिम्। न पश्येः प्रत्यगात्मानं द्रष्टारं दृश्ययाऽनया' (बृ.३.४.१५८) इत्युपक्रम्य 'येन चक्षुरिदं दृष्टं चक्षुषा यन्नपश्यति। मनसा मनुते यन्न येनचाहं मनो मतम्॥ इत्येवमादि वाक्यानि यथोक्तार्थसमर्थने। श्रौतानि शतशस्सन्ति दृगमेयत्वसिद्धये॥'—(१६५) इति वार्तिके उक्तम्। 'दृष्टिरिति द्विविधा भवति लौकिकी पारमार्थिकीचेति' दृष्टिद्वैविध्यमुक्त्वा पारमार्थिकदृष्टौ 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतिः प्रमाणतयोदाहृता (शं.भाष्ये)। एवं 'द्रष्टारम्' इत्यत्र दृष्टिरूप आत्मैव परमते विवक्षितः। 'दृष्टेः' इत्यत्राप्यभिन्नदृष्टिस्त्वविवक्षिता। एवं च दृष्टिव्यतिरिक्तः द्रष्टा नात्र विवक्षित इति परसिद्धान्तानुसारेण पर्यवसितमर्थमभिप्रेत्याह- **दृष्टेर्मतेर्व्यतिरिक्तमित्यादि**॥

'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' (बृ.६.३.२३) इति श्रुतिभाष्ये 'नैष दोषः आदित्यादिप्रकाशकत्ववत् दर्शनोपपत्तेः आदित्यादीनां प्रकाशकत्वं नित्येनैव स्वाभाविकेन प्रकाशेन' इत्युक्तम्। 'अत्र कूटस्थदृष्टिरेव द्रष्टृशब्दार्थः न दृष्टिकर्ता' इत्यानन्दगिरिविवरणम्। एवमङ्गीकारे 'द्रष्टारम्' इत्यत्र प्रत्ययार्थत्याग एव स्यात्। 'प्रकाशयिता'—इत्यादावपि प्रकाशकर्ता इत्येवार्थः, नतु प्रकाशस्वरूप इति, इति सर्वसम्मतम्। अतः ज्ञानमनित्यं आत्मा च जडस्वरूपः इति नैयायिकमतनिरसनाभिप्रायकं 'न दृष्टेर्द्रष्टारम्' इति वाक्यम्। द्रष्टारमित्यत्र दृष्टिकर्तैव विवक्षितः। तद्वत ज्ञानमपि नित्यमेव दृष्टिमतिरूपम्। 'दृष्टेः' इत्यत्र नैयायिकसम्मतैव दृष्टिर्विवक्षिता। अनित्यदृष्ट्या द्रष्टारं न पश्येदित्यर्थः। 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यत्र धर्मभूतज्ञाननित्यत्वमेव विवक्षितमिति सिद्धान्तानुसारेणार्थः। ननु पराभिप्रेतोऽर्थः! दृष्टिमतिरूपमेवेत्यत्र दृष्टिमतेः रूपमिव रूपं यस्य, दृष्टिमतिः रूपं यस्य इति वा विग्रहः अयमाशयः परैः 'अहं पश्यामि' इति प्रतीतौ स्वप्रकाशनिर्विशेषचिदेव सोपाधिका विषयइत्यङ्गीक्रियते। इति दृष्टेः स्वप्रकाशत्वं—तत्सम्मतम्। दृष्टिकर्तुरन्वर्थस्य जडत्वमेव, नैयायिकमतेऽपि उभयोरपि जडत्वम्। सिद्धान्ते आत्मनः दृष्ट्यादिरूपत्वं न

### श्रीभाष्यम्

**पश्येरित्यभिदधातीति परिहृतम् । अथवा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः । अन्यथा**

### श्रुतप्रकाशिका

भवति । अयं परिहारः परपक्षेऽपि समानः । साक्षाद्योजनामाह–**अथवेति** । दृष्टिश्रुतिमतिनिदिध्यासनानां कर्तारं जीवात्मानं प्रतिषिध्य परमात्मानमेवोपास्स्वेत्ययमर्थ उक्त इत्यर्थः ॥

यद्वा अभिदधातीत्यनुषङ्गः, जीवात्मानं प्रतिषिध्य परमात्मानमुपास्स्वेत्यभिदधाति श्रुतिरिति वाक्यार्थ इति वाक्यान्तरम् । यद्वा प्रतिषिध्य, परित्यज्येत्यर्थः । अतस्समानकर्तृकत्वोपपत्तिः **‘ यःप्राणेन प्राणिति योऽपानेनापानिति एष आत्मा सर्वान्तरः ’** इति प्रस्तुतत्वात् प्राणेन प्राणितृत्वादि जीवात्मनस्सम्भवतीति तदुपास्यत्वशङ्काव्यावृत्त्यर्थं **‘ न दृष्टेर्द्रष्टारं पश्येः ’** इत्याद्युच्यत इत्ययमेवार्थः । अन्यथा श्रुत्यन्तरविरोधमाह—**अन्यथेति** । गुणत्वमसिद्धं ज्ञानस्य स्वरूपत्वेन श्रुतिप्रतिपन्नत्वात् । ज्ञानंचेदागन्तुकमिति न वाच्यम् ; ईश्वरज्ञाने व्यभिचारात् । अस्मदादिज्ञानस्याप्यागन्तुकत्वं कालात्ययापादिष्टम् **‘ न विज्ञातुर्विज्ञातेर्विपरि लोपो विद्यते ’** इति श्रुतेः इति हेतुद्वयपरिहारः ॥

### गूढार्थसंग्रहः

सम्भवतीति पूर्वमेव निरूपितम् । उभयोस्स्वप्रकाशत्वं प्रागेव स्थापितम् । इति द्रष्टुः नित्यदृष्ट्याश्रयत्वमेवात्र विवक्षितम् अस्मिन्नर्थे परमात्मप्रकरणे जीवात्मसाधारण्येन अर्थकल्पनमनुचितमित्यभिप्रेत्य अन्तरत्वाधिकरणसिद्धान्तानुगुणमर्थमाह— **अथवा इत्यादि** । अन्तरत्वाधिकरणे पूर्वप्रतिवचनं जीवात्मविषयं परप्रतिवचनं परमात्मविषयमिति एतच्छ्रुतिसन्दर्भे शङ्कायां सिद्धान्तः प्रतिपिपादयिषित इति श्रीभाष्ये वक्ष्यते। ‘ इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः, तस्य सुषुप्तिं मूर्छाऽऽदौ प्राणनादेरकर्तृत्वात् । ‘ कोह्येवान्यात्कःप्राण्यात् । यदेष आकाश आनन्दो न स्यात् ’ इति परमात्मन एव प्राणनकर्तृत्वमन्यत्र श्रुतम् ’ इति भाष्येण ‘ यःप्राणेन प्राणिति सत आत्मा सर्वान्तरः ’ इति श्रुतितात्पर्यं निर्धारितम् ॥

अत्र ‘ कतमो याज्ञवल्क्य सर्वान्तर इति पुनःप्रश्नस्य ‘ न दृष्टेर्द्रष्टारं पश्येः ’ इत्यादिप्रतिवचनम् । इदं वाक्यं न प्रतिषेधमात्रतात्पर्यकम् । उषस्तकहोलप्रश्नद्वयप्रतिवचनयोः एकैव विद्येत्यन्तरत्वाधिकरणे साधयिष्यते । तत्र कहोलप्रतिवचने विद्यासहाकारिविधिरिति सहाकार्यन्तरविध्यधिकरणे वक्ष्यते । बाल्यपाण्डित्यमौनशब्दाः श्रवणमनननिदिध्यासनार्थका इति परेषां सम्मतम् । तत्र मौनं आलम्बनसंशीलनरूपमिति श्रीभाष्ये निरूपयिष्यते । धारणायाः योगाङ्गत्वेन मौनं धारणारूपमेवेति साराबल्यामाचार्यपादैः स्थापितम् । ध्यानमेव समाधिरिति सप्रमाणं लघुसिद्धान्ते उपपादितम् । समाधौ दर्शसमानाकारत्वं प्रतिपादितम् । एवं च समाधिपर्यवसितं ध्यानमेव ब्रह्मविद्येति सिद्धान्तः । कहोलप्रतिवचने विद्याङ्गानामेव विधिरिति न तत्राङ्गिविधिः, पूर्वत्रैव अङ्गिविधिः श्रुतौ विवक्षित इति प्रतीयते, अतः ‘ न दृष्टेर्द्रष्टारं पश्येः ’ इत्यत्र सर्वान्तरब्रह्म पश्येरिति विधौ तात्पर्यमिति अभिप्रेत्य सर्वभूतान्तरात्मानं परमात्मानमुपास्वेति वाक्यार्थ इत्युक्तम् । समाधिपर्यवसितध्यानस्यानुध्यानशब्देन वेदार्थसंग्रहे व्यवहारेण समाधौ दर्शसमानाकारत्वविवक्षया ‘ पश्येः ’ इत्यत्र समाधिपर्यवसितध्यानमेव विवक्षितमिति प्रतीयते ॥

## श्रीभाष्यम्

**‘ विज्ञातारमरे केन विजानीयात् ’ (बृ.४.अ.४.ब्रा.१४) इति ज्ञातृत्वश्रुतिविरोधश्च। ‘ आनन्दो-ब्रह्मे ’ ति (तै.भृगु.६.अनु.१) आनन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तम् तत् ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वदतीति परिहृतम्। ज्ञानमेवह्यनुकूलमानन्द इत्युच्यते ‘ विज्ञानमानन्दं ब्रह्म ’ (बृ.५.अ.९.ब्रा.२८) इत्यानन्दरूपमेव ज्ञानं ब्रह्मेत्यर्थः, अतएव भवता-मेकरसता। अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम्। तद्वदेव ‘ स एको ब्रह्मण आनन्दः ’ (तै.आ.८.अनु.४) ‘ आनन्दं ब्रह्मणो विद्वान् ’ (९.१) इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म अपित्वानन्दि ज्ञातृत्वमेव ह्यानन्दित्वम्।**

## श्रुतप्रकाशिका

विषयप्रवणत्वं धर्मभूतज्ञानस्यैव। सर्वसाधारणं ज्ञानत्वं स्वप्रकाशत्वं अतो न सर्वदा विषयप्रकाशप्रसङ्गश्च। ज्ञेयत्वनिषेधपरिहारानन्तरं बुद्धिस्थत्वात् ज्ञातृत्वनिषेधः परिहृतः। अथार्थगुणनिषेधान्तरं परिह्रियते। **आनन्दइत्यादिना**। पूर्वोक्तं परिहारमत्रातिदिशति। **तद्ज्ञानाश्रयस्येति**। कथं तेनेदं परिहृतमित्यत्राह ? **ज्ञानमेवहीति**। तर्हि श्रुतिषु विज्ञानानन्दशब्दयोस्समभिव्याहारो नोपपद्यत इत्यत्राह—**विज्ञानमिति**। स्वयंप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदादुपपद्यत इति भावः। तथैव भवद्भिरभ्युगतमित्यत्राह–**अतएवेति**। अतएव ज्ञानानन्दशब्दयोरेकविषयत्वादेवेत्यर्थः॥

आनन्दस्य आनन्दाश्रयत्वा(नभ्युपगमः)भावः किं श्रुत्या ? उत व्याप्तया ? व्याप्तयाचेत्कस्यचिद्धर्मस्स्यात्। श्रुतिबलात्स्वतन्त्र इतिचेत् ततएवानन्दाश्रयत्वमभ्युपगम्यताम्; धर्मभूतानन्दस्यहि आनन्दाश्रयत्वाभावो दृष्टः। अतो व्याप्तिविरोधश्च नास्ति। अतस्स्वतन्त्रत्ववत् गुणाश्रयत्वमपि श्रुतिसिद्धत्वात्स्वीकार्यमिति भावः। उभयत्र प्रमाणेसतिहि न्यायसंचारइत्याशङ्कायां दृष्टान्तभूमौ प्रमाणस्य दर्शितत्वमाह—**अस्येति**। दार्ष्टान्तिकेऽपि कण्ठोक्तिं दर्शयति। **तद्वदिति**। ज्ञातृत्ववदानन्दित्वमपि कण्ठोक्तमित्यर्थः। ज्ञातृत्वश्रुतिरप्यानन्दित्वे प्रमाणमित्यभिप्रेत्याह–**ज्ञातृत्वमेवह्यानन्दित्वमिति**।

## गूढार्थसंग्रहः

**श्रुतिविरोधश्चेति**। ‘ यत्रहि द्वैतमिव भवति–तत्केन किं पश्येत् तत्केन किं विजानीयात् ’ इत्येतदनन्तरं—‘ येनेदं सर्वं विजानाति तं केन विजानीयात् ’ ‘ विज्ञातारमरेकेन विजानीयात् ’ इति श्रुतिक्रमः। अत्र भाष्यम् (शं) ‘ यदा तु पुनः परमार्थविवेकिनो ब्रह्मविदः विज्ञातैव केवलो द्वयो वर्तते ’ ‘ तं विज्ञातारमरेकेन विजानीयात् ’ इति इति। ‘ विज्ञातारम् ’ इत्यादिवाक्यस्यार्थं प्रपञ्चयति ‘ यदातु इति ’ इत्यानन्दगिरिविवरणम्। अत्र परमते भेदनिषेधानन्तरं ‘ विज्ञातारम् ’ इत्युक्त्या निर्विशेषाचितः विज्ञातृत्वं न सम्भवतीति पूर्ववाक्येऽपि परमम्मतार्थो न विवक्षितः। सच प्राक् (४५५.पु) पर्यालोचितः। किंतु श्रीभाष्ये वक्ष्यमाणएवार्थः। भूतपूर्वगत्या विज्ञातृत्वोक्तिरिति (१.४.२२.शं.भा) तु नियामकाभावान्नघटते। एवंच ‘ यस्सर्वज्ञ ’ इत्यादिश्रुतिसिद्धार्थ एव ‘ वि ’ इत्युपसर्गबलात् सर्वज्ञत्वरूपः ‘ विज्ञातारम् ’ इत्यत्र प्रतिपादितः। विज्ञातृशब्दः ज्ञानाश्रयपर एव॥

**ज्ञातृत्वमेव ह्यानन्दित्वमिति**। ‘ यस्सर्वज्ञस्सर्ववित् ’ इत्यत्र सर्वविषयकज्ञानकर्तृत्वमेव विवक्षितमिति प्राक् (६३८.पु) निरूपितम्। ‘ सत्यं ज्ञानमनन्तम् ’ इत्यत्रापि अन्तोदात्तस्वरानुपपत्त्या ‘ ज्ञान ’ मित्यत्र ‘ अर्श आदित्वादच् ’

## श्रीभाष्यम्

**यदिदमुक्तम् 'यत्रहि द्वैतमिव भवति' (बृ.४.अ.४ब्रा.१४) 'नेहनानास्ति किंचन' (बृ.६.अ ४.१९) 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' 'यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन किं पश्येत्' (बृ.४.अ४.१४) इति भेदनिषेधो बहुधा दृश्यत इति ॥**

## श्रुतप्रकाशिका

ज्ञातृत्वातिरिक्तानान्दित्वव्युदसनपर एवकारः हिशब्दस्तदुपपत्तिसूचकः । अनुकूलज्ञानाश्रयत्वमेवह्यानन्दित्वमित्यर्थः । ज्ञातृत्वश्रुतिः ज्ञानाश्रयत्वनिषेधस्य आनन्दाश्रयत्वनिषेधस्य च विरोधिनीति भावः ॥

अथ भेदनिषेधपरत्वेन परोक्ताश्श्रुतीर्योजयितुमनुवदति । **यदिदमिति** । यत्रहीत्यादिवाक्याभ्यां भेदनिषेधःकृतः भेदप्रतिपत्तावनर्थं दर्शयति । **मृत्योरिति** । 'तमसो वा एष तमःप्रविशति' इतिवत् । नित्यानुवृत्तस्य भेदस्य कथं भ्रान्तिसिद्धत्वमित्यत्राह—**यत्रत्विति** । उक्तवाक्येषु वचनभङ्गीवैविध्याभिप्रायेण बहुधेत्युक्तं बहुश इतिपाठे निषेधक्रियाऽऽवृत्तिरित्यर्थः परिहरति । **तदिति** । तच्छब्दस्य परिहृतमित्यत्रान्वयः । समस्तहेयप्रत्यनीकत्वेन समस्तकल्याणगुणात्मकत्वेन च श्रुत्यन्तरप्रसिद्धस्य ब्रह्मणो विकारास्पदक्लेशकर्मादिहेयपरवशजगदैक्यं व्याहतत्वात् श्रुतिर्न प्रतिपादयति । नव्याहतिः हेयानामपारमार्थिकत्वादितिचेत् अपारमार्थिकत्वे तन्निरसनीयं नवा नचेत् तन्निवृत्त्यर्थं शास्त्रमनर्थकं स्यात्—निरसनीयंचेन्निरसनीयसम्बन्ध एव हेयसम्बन्ध इति तत्प्रत्यनीकस्य तत्सम्बन्धित्वं व्याहतम् ॥

किंच 'बहुस्याम्' इति सङ्कल्पपूर्वकं बहुभवनं श्रूयते । सर्वज्ञस्य स्वेच्छया स्वस्मिन् हे(यापाद)योपादा)नमनन्वितमिति तत्प्रतिपादनमशक्यम् । '**असर्वज्ञत्वे**' '**पश्यत्यचक्षुस्सश्शृणोत्यकर्णः**' '**स्वाभाविकी ज्ञानबलक्रिया च**'

## गूढार्थसंग्रहः

अवश्यमभ्युपेयः । अभ्युपगमे च 'चितोऽन्त उदात्त' इत्युपपद्यते इति साधितमात्मसिद्धौ भगवद्यामुनमुनिभिः । **ज्ञातृत्वमेव हि सर्वाश्श्रुतयो वदन्ति** इति प्राक्तन (६४१.पु) भाष्ये ब्रह्मणः स्वाभाविकज्ञानवत्वं साधितम् । ज्ञानवत्वाङ्गीकारे ज्ञानस्वरूपस्यैवानन्दस्वरूपत्ववत् आनन्दवत्त्वमप्यवश्यमेषितव्यम् । आनन्दत्वमनुकूलत्वं, तच्च स्वतः इष्टत्वं, तच्चान्येच्छानधीनेच्छाविषयत्वम् । ब्रह्मानुभवार्थं लोके मुमुक्षुः प्रवर्तत इति ब्रह्मानुभवस्यापि स्वतः इष्टत्वं सम्भवति सर्वानुभवितृत्वं ब्रह्मणो वर्तत इति ब्रह्मज्ञानमपि आनन्दरूपमेव । एवं च ज्ञातृत्वरूपमेवानन्दित्वमिति 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशेन ब्रह्मसम्बन्धितया आनन्दस्य प्रतीत्या सम्बन्धस्य भेदमन्तरा अयोगेन ब्रह्मणः आनन्दित्वं श्रुतिसिद्धं न प्रत्याख्यानमर्हतीति भावः ॥

'आनन्दं ब्रह्मण' इति व्यतिरेकनिर्देशेन ब्रह्मानन्दयोर्भेदः नैव सिद्ध्यति । निर्गुणत्वमपि श्रुतौ न सिद्धान्तिसम्मतं विवक्षितम् । भेदसामान्यानिषेधेन गुणानामपि निषेधात्, एतन्निषेधबलादेवाद्वितीयत्वमपि द्वितीयसामान्याभावरूपम् । 'एकमेवाद्वितीयम्' इत्यत्र अद्वितीयपदं द्वितीयमिव द्वितीयसामान्याभावमपि निषेधति, भेदनिषेधश्रुत्यनुसारात् । एवं 'द्वितीयाद्वै भयं भवति' इति श्रुतावप्यात्मभिन्नसामान्यं भयहेतुरित्येवार्थो युक्तः । एतेन 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादौ धर्मविवक्षाऽसम्भवात् अखण्डार्थसामानाधिकरण्यमेव अगत्या स्वीकार्यम् । एतेनैव षड्विधतात्पर्यलिङ्गानि अद्वयानिर्विशेषस्यैव साधकानि इत्यभिप्रेत्याह—**यदिदमुक्तमित्यादि** । **भेदनिषेधो बहुधा दृश्यत इति** । 'नात्र काचन भिदा' (नृ.उ.ता) इत्यादिश्रुतयोऽपि विवक्षिताः ॥

## श्रुतप्रकाशिका

**'यस्सर्वज्ञ'** इत्यादिश्रुतिविरोधः। हेयस्यापारमार्थ्येऽपि स्वसङ्कल्पेन स्वस्यानन्तापुरुषार्थभ्रमापादनं सर्वज्ञस्य नोपपद्यते, सार्वज्ञ्यस्याविद्यापरिकल्पितत्वाभ्युपगमात् अविद्यापूर्वकमेव बहुभवनभ्रमरूपं सार्वज्ञ्यमिति न वाच्यम्। 'स्वाभाविकी' इति श्रुतेः **'त इमे सत्याःकामाः'** इति सत्यत्वश्रुतेश्च स्वसार्वज्ञ्यमाविद्यकत्वेन मिथ्येति न जानातीतिचेत् सार्वज्ञ्यं नस्यात् जानातीतिचेत् तेनैव ज्ञानेन बाधितत्वात् सार्वज्ञ्यं न स्यात्। ततश्च पूर्वजगदाकारपर्यालोचनेन स्वसङ्कल्पपूर्वकं जीवकर्मानुगुणसृष्टिर्नोपपद्यते, अतस्सार्वज्ञ्यस्याविद्यिकत्वमनुपपन्नमिति सर्वज्ञस्य स्वगतहे(यापाद)योपादा)नं न घटते ॥

**किंच** हेयं स्वगतत्वेन जानतस्सर्वशक्तेस्तस्य सत्यसङ्कल्पस्य सहसैव स्वगतहेयानिरासकत्वमपि नोपपद्यते। अशक्तत्वे **'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी'** इत्यादिश्रुतिविरोधः। ईदृशविरोधो नास्ति श्रुतिबलादविरुद्धत्वस्याभ्युगन्तव्यत्वादितिचेत् तर्हि **'विज्ञानघनएवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति'** **'न जायते म्रियते वा विपश्चित्'** **'वायुश्चान्तरिक्षं चैतदमृतमभयम्'** **'आत्मनआकाशस्सम्भूतः'** **'न नभो न भूमिर्नेमे द्यावापृथिवी'** **'अन्तवदेवास्य तद्भवति'** **'नास्येष्टापूर्ते क्षीयेते'** इत्यादिश्रुत्युक्तस्यात्मादीनां नित्यत्वानित्यत्वादेरपि श्रुतिप्रतिपन्नतया विरोधाभावादुभयम(भ्यु)प्यु)पगन्तव्यम्। ततश्च सर्वत्र यथा प्रतिपन्नस्वीकारेहि मीमांसाऽऽरम्भवैयर्थ्यं स्यात् ॥

**प्रस्तुत**भेदाभेदश्रुत्योरपि पारमार्थिकापारमार्थिकविषयत्वेन सोपाधिकनिरुपाधिकविषयत्वेन वा विभागकल्पनमनुपपन्नं तस्य विरोधपरिहारार्थत्वात् विरोधस्यचाभावात्। ततश्च भेदपारमार्थ्यसिद्धिः। अतो विरोधोऽभ्युपगन्तव्यः इह च विरोधोऽवगम्यते **'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति'** इति भेदप्रतिपत्तेस्संसारहेतुत्वं श्रूयते **'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'** **'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः'** इति भेदज्ञानस्य मोक्षोपायत्वं श्रूयते **'द्वैतिनोऽतथ्यदर्शिनः'** इत्यादिस्मृतिविरुद्धं **'द्वाविमौ पुरुषौ'** **'आविश्य बिभर्त्यव्यय ईश्वरः'** **'यस्मात्क्षरमतीतोऽहम्'** इत्यारभ्य **'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्'** इति भेदज्ञानवतोऽसंमूढत्वं स्मर्यते। एवमादिवचनप्रतिपन्नस्य भेदस्य लोकसिद्धत्वाभावात् निषेधार्थं भेदोऽनूद्यत इति वादोऽनुपपन्नः ॥

**किंच** यदि भेदमात्रस्य लोकसिद्धत्वादप्राप्तेहि शास्त्रमर्थवदिति न्यायादभेद एव शास्त्रवेद्य इत्युच्यते, तर्हि सोऽयं देवदत्त इत्यादावभेदमात्रस्य च लोकसिद्धत्वादप्राप्ते शास्त्रस्यार्थवत्त्वाच्च, शास्त्रेणाभेदप्रतिपादनमयुक्तम्। देवदत्ताद्यैक्यं हि लोकसिद्धं न जीवपरयोः, अतस्तयोरभेदश्शास्त्र(प्रतिपा)वे)द्य इतिचेत् तर्हि घटपटादिभेद एव लोकसिद्धः नतु जीवपरयोः नियाम्यत्वानियन्तृत्व धार्यत्व धारकत्वशेषत्व शेषित्वव्याप्यत्वव्यापकत्वादिलक्षणभेदो लोकसिद्ध इति सभेदश्शास्त्रप्रतिपाद्य एव। यथोक्तमाचार्यपादैः—

**न द्वैतं प्रतिपादयन्त्युपनिषद्वाचःप्रसिद्धं हि तत् किन्त्वद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम्।**
**अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थः प्रयासो यतः प्रख्यातादपरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवत् ॥**

इति अयंचार्थोऽनन्तरमेव भाष्ये वक्ष्यते। अतोऽनुवाद इति निर्वाहो नोपपद्यते भेदश्रुतिरुपासनार्था नतु तत्त्वपरा— इत्युपासनवाचिपदश्रवणादितिचेत् तथाऽपि— **'पृथगात्मानं प्रेरितारं च मत्वा'** **'जुष्टं यदा पश्यत्यन्यमीशम्'** तात्त्विक एव भेदः तज्ज्ञानस्य मोक्षोपायत्वोक्तेः। तत्त्वज्ञानेनहि मोक्षः ॥

### श्रीभाष्यम्

**तत् कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् ।**

### श्रुतप्रकाशिका

नच फलविशेषायोपासनार्थत्वात् भेदश्रुतीनां भेदस्याताात्त्विकत्वं वाच्यम् ; ऐक्यस्यचोपासनार्थत्वादसत्यत्वप्रसङ्गात् । श्रूयतेह्यभेदस्योपासनार्थत्वम् **'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद'** **'आत्मेत्येवोपासीत'** इति । ऐक्यस्योपासनार्थत्वं भेदस्य च तात्त्विकत्वं युक्तम् वैनतेयध्यानेह्यैक्यमारोपितं दृष्टम् भेद एव नरेन्द्रवैनतेययोस्तात्त्विकः । विधिशेषभूतव्यतिरिक्तेष्वपि वाक्येष्वभेदः प्रतीयत इति तस्य तात्त्विकत्वमितिचेत् **'क्षरं प्रधानममृताक्षरं हरः'** **'प्रधानक्षेत्रज्ञपतिर्गुणेशः'** **'ज्ञाज्ञौ द्वौ'** **'ऋतं पिबन्तौ'** **द्वासुपर्णा'** **'नित्यो नित्यानाम्'** इत्याद्यविधिशेषभूतवाक्यावगतत्वाद्भेदस्यापि तात्त्विकत्वमवर्जनीयम् उपास्तिफलभूतमुक्तिदशायामभेदा(द्भेदा)दभेद) पारमार्थ्यंचेत् मुक्तिदशायां भेदश्रवणात् भेदतात्त्विकत्वसिद्धिः । अत उपासनार्थत्वादपमार्थविषयत्वेन भेदश्रुतिनिर्वाहो नोपपद्यते । भेदाभेदयोर्नियतपौर्वापर्यविरोधवत्त्वादपच्छेदन्यायविषयत्वं सगुणत्वानिर्गुणत्वयोरिव न सम्भवतीति विरोधनयादुपक्रमनयाद्वा परभूतभेदनिषेधोत्पत्तिप्रतिबन्ध एव स्यात् इदं च पूर्वमेव प्रपञ्चितम् ॥

एवं न्यायानुगृहीतश्रुत्यन्तरविरोधस्यावर्जनीयत्वमेषां निर्वाहाणामनुपपन्नत्वं च प्रदेशान्तरोक्तमिहाभिप्रेत्य समीचीननिर्वाहं दर्शयति । **तदिति** । जगत इति पदं ब्रह्मपर्यन्तं । तस्य ब्रह्मकार्यतयेति पदेन ऐक्यादितिपदेनचान्वयः । तदन्तर्यामिकतयेत्यत्र सामर्थ्याज्जगतइत्यध्याहारः, तेन सकृत्प्रयुक्तस्य च जगच्छब्दस्य निष्कर्षकत्वानिष्कर्षकत्वविरोधपरिहारः । **'सर्वं खल्विदं ब्रह्म तज्जलान्'** इत्युक्तं जगतस्तज्जत्वं तल्लत्वंचोपजीव्याह— **ब्रह्मकार्यतयेति** । ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः । तदनत्वमुपजीव्याह— **तदन्तर्यामिकतयेति** । तच्छब्दो विशेष्यपरामर्शी विशिष्टे प्रकृते विशेष्यांशस्यापि प्रकृतत्वात् । यथा **'सन्मूलास्सदायतनाः'** इत्यत्र सच्छब्दस्य विशिष्टपरत्वं विशेष्यपरत्वं च तद्वत् । तत् ब्रह्म अन्तर्यामि यस्य तत् तदन्तर्यामिकं तद्भावेनेत्यर्थः ॥

### गूढार्थसङ्ग्रहः

**ब्रह्मकार्यतयेति** । ब्रह्मोपादेयतयेत्यर्थः । 'मृद्घट' इत्यादिवत् उपादानोपादेयभावनिबन्धनं 'तत्त्वमसि'— इत्यादिसामानाधिकरण्यमिति एतेन दर्शितम् । 'देवः, मनुष्यः, पुमान्, स्त्री च, जानाति' इत्यादौ यथा सामानाधिकरण्यं तथेत्यभिप्रेत्य **तदन्तर्यामिकतया इत्युक्तम्** । **तदात्मकत्वेनैक्यादिति**। 'यत्रत्वस्य सर्वमात्मैवाभूत्' इति श्रुतावपि ऐक्यमेतेनोपपादितं भवति ॥

'आप्नोतीति ह्यात्मा स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिः तस्यैव सम्भवति' इतिद्युभ्वाद्यधिकरणे वक्ष्यते । 'तवैव व्याप्तिरैश्वर्यगुणसंसूचिका प्रभो' (वि.पु.१.१९.७२) इत्यत्र व्याप्तेः नियमनार्थत्वं स्पष्टम्। एतेन 'अन्तःप्रविष्टश्शास्ताजनानाँ्सर्वात्मा' (तै.आ) इत्यत्रापि शासनार्थत्वमेव अन्तःप्रवेशस्य विवक्षितमिति सिद्ध्यति । 'सर्वस्यचाहं हृदि संनिविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च' इतिहि गीता। सर्वात्मत्वं सर्वेषामन्तःप्रविश्य नियन्तृत्वेनेति श्रुतौ विवक्षितम् । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीतायामुक्तेः अत्र समित्युपसर्गेण नियमनपर्यन्तत्वस्य लाभात् । उपदेशसाहस्र्यां 'अन्तःप्रविष्टश्शास्ता जनानाम्' 'एषत आत्मा' 'समआत्मेति विद्यात्' 'अहं ब्रह्माऽस्मि' 'तत्त्वमसि' इत्यादिश्रुतयः समानार्थकत्वेनोपात्ताः । परमते निर्विशेषं विवक्षितम् । अयमर्थः सूत्रकृतो न सम्मतः । 'शब्दविशेषात्'

## श्रुतप्रकाशिका

कथं तदनत्वेन तदन्तर्यामिकत्वसिद्धिः, उच्यते—अननं स्थितिः ब्रह्मणो जगत्स्थितिहेतुत्वंचान्तःप्रविश्य प्रशास-नेन धारकत्वम् ' **सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः** ' इत्यत्र सन्मूलास्सत्प्रतिष्ठा इति पदद्वयं सच्छ-ब्दवाच्यब्रह्माधीनोत्पत्तिलयपरम् । प्रतिष्ठा–निष्ठा पर्यवसानं–लयः । नतु सदाधारत्वं सदायतना इति पुनरुक्तिप्रसङ्गात् । एवं ब्रह्मण उत्पत्तिलयहेतुत्ववाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना सदायतना इति पदेन धारकत्वसिद्धेः ' **एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः** ' इत्यत्र तिष्ठतिधातूक्तस्थितेः प्रशासनेन धारणाधीन-त्वावगमात् ' **अन्तःप्रविष्टश्शास्ता जनानाम्** ' इति धारणहेतुभूतप्रशासनस्यान्तःप्रविश्य क्रियमाणत्वश्रवणात् ' **तद्य-था अरेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः** ' ' **मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव** ' इति श्रुतिस्मृतिभ्यामरनाभिमणिगणसूत्रदृष्टान्ताभ्यां अन्तस्थितस्य धारक-त्वावगमात् । ' **तत्सृष्ट्वा तदेवानुप्राविशत्** ' इत्युक्तानुप्रवेशस्य सृष्ट्यनन्तरभावित्वादुदाहृतश्रुत्यैकार्थ्याच्च स्थित्यर्थत्वात् ' **सप्तप्राणाःप्रभवन्ति** ' इत्यादिवाक्योक्तप्रक्रियया सृष्टस्य जगतः ' **तेनेदं पूर्णं पुरुषेण सर्वम्** ' इति वाक्येन स्थिति-वेलायां व्यापकेन परमपुरुषेण पूर्णत्वावगमात् सर्वशाखाप्रत्ययन्यायेन व्यापननियमनधारणेष्वन्यतमोक्तावन्यतमयोस्सिद्ध-त्वाच्च अनुप्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमितिह्यवगम्यते ॥

**एवं तज्जलानिति** वाक्यमुपजीव्योक्तं जगतो ब्रह्मकार्यतया तदन्तर्यामिकतयाचेति तदन्तर्यामिकत्वमुभयलिङ्गकस्य ब्रह्मणः परमार्थजगदुपादानत्वान्यथानुपपत्तिसिद्धं घटकश्रुतिसिद्धं च। चशब्दस्योत्तरत्रान्वयः, तदन्तर्यामिकतया तदात्म-कत्वेनचेति । स आत्मा यस्य तत्तदात्मकं तदन्तर्यामिकत्वरूपेण तदात्मकत्वेनेत्यर्थः । अन्तःप्रविश्य नियन्ताह्यात्मा ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वेनचेत्युक्ते हेतुत्रयशङ्का स्यादिति तद्व्युदासार्थं चशब्दस्य प्राक्प्रयोगः एवमुभय-विधैक्यस्य विहितत्वादित्यर्थः ॥

**नन्वैक्यस्य** कार्यकारणनिबन्धनत्वे कार्यावस्थजगद्विशिष्टस्य कारणावस्थचिदचिद्विशिष्टब्रह्मणा स्वरूपैक्यं युक्तम् तद-न्तर्यामिकत्वनिबन्धनत्वेतु न ब्रह्मणा जगत ऐक्यम् । किंतु प्रकारिणो ब्रह्मण एकत्वसङ्ख्यान्वयएवेत्यैक्यशब्दस्यार्थभेद-स्स्यात् ततश्च जगतस्तदात्मकत्वेनैक्यादिति वक्तुमयुक्तं प्रकारप्राकारिणोर्जगद्ब्रह्मणोर्भिन्नत्वात् । नैवम् । जगद्ब्रह्मणोर्भिन्नत्वे-ऽप्यत्र जगच्छब्दो जगद्विशिष्टब्रह्मपर इत्युक्तत्वात् ऐक्यशब्दस्य च नार्थभेदः उभयथाऽपि विशिष्टैक्यपरत्वात् । तथाहि कार्यकारणभावनिबन्धनमैक्यंनामावस्थाद्वयापन्नाचिदचिद्विशिष्टवस्त्वेकत्वम् । यथा रूपस्पर्शादिविशिष्टघटस्य तादृशमृद्द्रव्ये-णैक्यं चिदचिदात्मकजगद्विशिष्टस्य स्वरूपेण गुणैश्च निरतिशयबृहत्वविशिष्टस्यचैक्यं प्रकार्यैक्यम् । यथा नैल्यविशिष्टस्यो-त्पलत्वविशिष्टस्यचैक्यम् । नच विशेषणांशैक्याभावाद्वस्त्वैक्यहानिः मृद्घटादावपि (स्वरूपस्य) रूपस्पर्शादीनां कार्यत्वकार-णत्वावस्थयोश्चैकत्वाभावात् ॥

**इयान्** विशेषः कार्यकारणभावे भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्म्यैक्यम् । यथा स एवायं तरुणोऽ-भूदिति । अन्यत्र समकालसम्बन्ध्यद्वारकानेकविशेषणाश्रयधर्म्यैक्यम् । यथा अयं वेदविद्ब्राह्मण इति । बाल्ययौवने भिन्न कालि(नै)न)सद्वारकावस्थे वेदनं ब्राह्मणशरीरं च समकालवर्त्यद्वारकाविशेषणम् । एवमुभयविधविशेषणविशिष्टधर्म्येकत्वमैक्य-शब्दार्थः । अतो जगच्छब्दवाच्यधर्म्यैक्याजगत ऐक्यादिति निर्देश उपपन्नः । यद्वा कृत्स्नस्य जगत इति निष्कर्षकश्शब्दः ब्रह्मशब्दोऽपि विशेष्यमात्रपरः कार्यावस्थां प्रत्याधारत्वात् । आधारत्वं च साक्षाद्वा परम्परया वा मुख्यमेव । अतो ब्रह्म कार्यं जगत् तदन्तर्यामिकशब्दो व्याख्यातः ॥

## श्रीभाष्यम्

### तत्प्रत्यनीकनानात्वं प्रतिषिध्यते

### श्रुतप्रकाशिका

**एवं** ब्रह्मकार्यतया तदन्तर्यामिकतया च जगत्तदात्मकम् । तदात्मकत्वं नाम जगतस्तत्प्रकार(रै)रतै)कस्वभावतया पृथगवस्थानाभावात्तदन्तर्गतत्वम् । तेन प्रकारेणैक्यं नतु स्वरूपैक्यं विशिष्टान्तर्भाव एव ऐक्यमित्यर्थः । **तत्प्रत्यनीकनानात्वमिति** । विहितोभयविधैक्यप्रत्यनीकनानात्वं निषिध्यत इत्यर्थः । कार्यकारणभेदः कुतर्कमूलभ्रान्तिविषयः

### गूढार्थसंग्रहः

इति (१.२.५) सूत्रे 'एष म आत्माऽन्तर्हृदये' (छा) इति श्रुतौ षष्ठ्या जीवब्रह्मणोर्भेदसिद्धेरुक्तेः । 'स म आत्मेति विद्यात्' (कौ.ब्रा) 'एष त आत्मा' (बृ) इत्यादावपि तथैवार्थसिद्धेः सूत्रकृत्तात्पर्यविषयत्वेन निर्धारणात् । 'स म आत्मेति विद्यात्' इत्युपसंहारवाक्येन 'मामेव विजानीहि' इत्युपक्रमवाक्येऽपि इन्द्रान्तर्यामिण एव विवक्षायाः निर्णयसम्भवात् । एवं च ब्रह्मणः सर्वान्तर्यामित्वमेव सर्वाभेदनियामकमिति सिद्धम् । 'येनेदं सर्वं विजानाति, तंकेन विजानीयात्' 'विज्ञातारमरेकेन विजानीयात्' इत्यनन्तरवाक्यानुसारेणापि पूर्ववाक्यस्य प्रागुक्त एवार्थः । 'येनेदं सर्वं विजानाति' इत्यत्र 'मत्तस्स्मृतिर्ज्ञानमपोहनं च' इति गीतानुसारेण आत्मा अन्तर्याम्येव विवक्षितः । 'तं केन विजानीयात्' इत्यत्र परमात्मप्रसादमन्तरा ज्ञानमशक्यमिति विवक्षितम् ॥

एतेन उपक्रमे 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इत्यत्र सर्वान्तर्यामिवेदनमेव विवक्षितमिति सिद्धम् । तदनन्तरं 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्मवेद—सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' 'इदं सर्वं यदयमात्मा' इत्यत्रापि अन्यत्रेत्यत्र त्रल्प्रत्ययार्थस्याविवक्षितत्वे ब्रह्मादिशब्दाः अन्तर्यामिपराः । त्रल्प्रत्ययार्थविवक्षायां ब्रह्मादिपदानि निष्कर्षकत्वेन आत्मव्यतिरिक्तपराणीति विवेकः, इदं सर्वं यदयमात्मा' इत्यत्र सर्वशब्दः सर्वान्तर्यामिपर इति बोध्यम् ॥

**तत्प्रत्यनीकनानात्वं प्रतिषिध्यत इति** । 'यत्रहि द्वैतमिव भवति' इति श्रुतौ परसम्मतार्थो न विवक्षितः, किंतु अन्यएवेति प्राक् (४५५.पु) निरूपितम् । 'यत्र शुद्धे ब्रह्मणि द्विधाभावः प्रकारद्वयसत्ता न विद्यते तदद्वैतम्' इति ब्रह्मानन्दोक्तार्थे अधिष्ठानसंसर्गघटाद्यारोप्यद्वयस्य विवक्षायां गमकाभावेन प्रकारद्वयसत्तासामान्यनिषेधस्यैव न्याय्यतया तथा निषेधे एकप्रकारसत्तायामेव पर्यवसानं स्यात् । 'एकधैवानुद्रष्टव्यम्' इति श्रुत्यन्तरबलाच्चायमेवार्थो युक्तो भवेत् न परसम्मतार्थः । सिद्धान्तिसम्मतार्थ एव युक्त इति तत्रैव निरूपितम् । 'नेह नानास्ति किंचन' इति श्रुतेः सिद्धान्तिसम्मतार्थः प्रागेव (३०१.पु) प्रदर्शितः । 'नात्र काचन भिदाऽस्ति' इत्यस्यार्थोऽपि प्राक् (३५८.पु) निरूपितः; 'नेह नानाऽस्ति' इत्यादौ परसम्मतार्थो न सम्भवतीति तत्र तत्र (३७९,–३८१.पु) उपपादितम् ॥

'यस्तु सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनुपश्यतः' (ई.वा.३) इति श्रुत्यनुसारेण 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिकमेव श्रुतौ सिद्धान्तः नतु 'यत्रहि द्वैतमिव भवति' इत्यादिकमित्यभिप्रेत्य सविशेषैक्यं भगवता निरणायि । एतेन 'यत्रहि द्वैतमिव भवति' इत्यादिकमेव सिद्धान्तः । 'यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन किं पश्येत्' इत्यादिना निन्दोक्तेः' इति नवीनोक्तिर्निरवकाशा । 'यस्मिन् सर्वाणि भूतानि आत्मैवाभूत्' यत्रत्वस्य सर्वमात्मैवाभूत्' इत्युभयोरप्यविशेषात् । 'यस्मिन् सर्वाणि भूतानि स आत्मा' इति तच्छ-

## श्रुतप्रकाशिका

स्वनिष्ठभेदो लौकिकप्रतीतिमूलभ्रान्तिविषयः। अतो भ्रान्ति(सिद्ध)मूलत्वाविशेषाद्विहितैक्यप्रत्यनीकत्वाविशेषाच्च तेनाकारेणोभयविधं भेदं नानाशब्देन परामृश्य निषिध्यत इति न वाक्यभेदः। तत्प्रत्यनीकेति ऐक्यविधिशेषभूतो भेदनिषेधः अन्वयमुखेनोक्तार्थस्थिरीकरणार्थत्वाद्व्यतिरेकोक्तेः। ऐक्यविधिश्च ' नेह नानास्ति ' इति प्रकरणे श्रूयते **' एकधैवानुद्रष्टव्यम् '** इति। एकधा एकतया परमात्मशरीरतयैकप्रकारेणेत्यर्थः। तथा **' अहमेकःप्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः ' ' आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किंचन मिषत् '** तथा **' परमार्थस्त्वमेवैको नान्योऽस्ति जगतःपते ' ' अहं हरिस्सर्वमिदं जनार्दनो नान्यत्ततःकारणकार्यजातम्। तदच्युतो नास्ति परं ततोऽन्यत् '** इत्यादिषुचैक्यविधिशेषतया भेदनिषेधो दृश्यते॥

शेषत्वं च विहितैकत्वस्थिरीकरणलक्षणकिंचित्कारेण भ(ग)वति यादृशमैक्यं विहितं निषेधस्य तादृशैक्यविरोधिभेद विषयत्वेसति तत्स्थिरीकरणार्थत्वं सिध्येत् नत्वविरोध्यर्थान्तरनिषेधस्तदुपयुक्तः। नहि मृदेव घट इत्युक्ते घटद्वित्वनिषेधो

## गूढार्थसंग्रहः

न्दाध्याहारेण अर्थवर्णने ' यत्रत्वस्य सर्वं आत्मैवाभूत् ' इत्यत्रापि योजना सम्भवत्येव। तदिति सामान्ये नपुंसकम्। ' यस्मिन् सर्वम् ' इत्युक्तौ यदधीनसत्ताकं सर्वमित्यर्थः। इत्थं च परमात्माधीनसत्ताकत्वं सर्वस्य फलितम्। परमात्मैवान्यानधीनसत्ताक इत्यर्थः ' केन कं पश्येत् ' इत्यत्र स्वाधीनसत्ताकेनेत्यर्थः॥

अस्तु वा ' यत्रहि द्वैतमिव भवति ' इत्यत्र एवमर्थासम्भवेन यदा तदेत्यर्थस्यैव वर्णनीयतया ' यत्रत्वस्य सर्वम् ' इत्यत्रापि तथैवार्थः। तथाऽपि ' यत्रत्वस्य सर्वमात्मैवाभूत् ' इत्यत्र आत्मव्यतिरेकेण नाभूदिति बाधायां सामानाधिकरण्यमभ्युपेत्यार्थ एव विवक्षित इति कथं निर्णीयते ? बाधायां सामानाधिकरण्यस्य झटिति तद्वाक्यादप्रतीतेः। लक्षणाङ्गीकारे नियामकाभावात्। विद्वद्रूढिमहायोगाभ्यां सर्वशब्दानां परमात्मवाचकत्वमते मुक्तस्य ज्ञानित्वेन ' यत्रत्वस्य सर्वम् ' इत्यत्रापि सर्वशब्दस्य सर्वान्तर्याम्यर्थकत्वसम्भवेन एतदर्थविवक्षा कथं वार्यते। ' यत्रहि द्वैतमिव भवति ' इति वाक्ये भिन्नमिवेत्यनभिधाय द्वैतमिवेत्युक्तिः किं निबन्धनेति विवेचनीयम्। भिन्नमिवेत्यनेनैव तादृशार्थस्य विवक्षासम्भवात्, भिन्नशब्दं परित्यज्य द्वैतशब्दोपादानेन भिन्नमित्यर्थो नात्र विवक्षितः। द्वित्वेन प्रतीतिः विभक्तयोरेव, अविभक्तयोस्तु द्वित्वेन प्रतीतिर्लोके सर्वसाधारण्येन नास्ति। अतः द्वैतमिवेत्यत्र द्वैतं विभक्तं स्वतन्त्रमित्यर्थः। इवशब्दः सम्भावनायां सुषुप्तिप्रकरणे। ' नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ' (बृ. ६) इत्यत्र ' नतु तद्द्वितीयमास्ति ' इति सुषुप्तिविषयं वाक्यम्। तदित्यस्य इन्द्रियसम्बन्धवदित्यर्थः, इन्द्रियसम्बन्धविशिष्टद्वितीयाभावः द्वितीयनिष्ठेन्द्रियसम्बन्धाभावे पर्यवस्यति। ततोऽन्यविभक्तदर्शनं जागरकालिकं विवक्षितम्। एवं च ' यत्रहि द्वैतमिव भवति ' इति वाक्ये अज्ञो विवक्षितः। परमार्थविभक्तत्वेन स्वतन्त्रत्वेन वस्तुनः ज्ञानमज्ञानमेवेति ' तदितर इतरं पश्यति ' इत्यत्राज्ञ एव विवक्षितः। ' यत्रत्वस्य सर्वमात्मैवाभूत् ' इत्यत्र ज्ञानी। तत्केन कं पश्येत् ' इत्यत्र स्वतन्त्रेण साधनेन स्वतन्त्रदर्शनस्यैव निषेध इत्येव युक्तम्॥

एवं च ' यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ' इति श्रुतिरप्याज्ञस्येनोपपद्यते ' यस्मिन् सर्वाणि— भूतानि ' इत्युक्त्या सर्वभूतानां परमात्माधीनसत्ताकत्वं प्रतीयते। तत्र उत्तरार्धे एकत्वमपि अन्तर्याम्येकत्वमेव विवक्षितम्। स इत्यस्याध्याहारो मास्तु। एतत्पक्षे यस्मिन् इत्यस्य कालपरत्वं, ' सर्वाणि भूतानि आत्मैवाभू ' दिति परमतेऽपि बाधायां

### श्रीभाष्यम्

**न पुनर्बहुस्यां प्रजायेयेति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यते**

### श्रुतप्रकाशिका

मृद्धटैकत्वोपकारकः घटद्वित्वस्य मृद्धटैकत्वाविरोधित्वात् । नाप्येको घट इत्युक्ते घटगतरूपपरिमाणादिभेदनिषेधो घटाख्य धर्म्यैक्यविधेरुपकारकः रूपपरिमाणादिभेदस्य घटव्यक्त्यैक्याविरोधित्वात् । विधेयविरोध्यर्थनिषेधएवहि विध्युपकारकः । किंच न केवलमुपकाराभावः ऐक्यविधिविरुद्धं च कृत्स्नभेदनिषेधपरत्वं, समानाधिकरणवाक्येनैक्यविधानात् भिन्नविशेषणाभिधायिशब्दानामेकविशेष्यवृत्तित्वंहि सामानाधिकरण्यम् । नच प्रकारभेदे तिष्ठति कृत्स्नभेदनिषेध उपपद्यते । अतो भेदनिषेधस्यैक्याविधिशेषत्वात्कार्यकारणभेदः स्वनिष्ठभेदश्च निषिध्यत इत्यभिप्रायः । किंच '**नचास्य कश्चिज्जनिता नचाधिपः**' '**न तत्समश्चाभ्यधिकश्च दृश्यते**' '**तेनार्हति ब्रह्मणा स्पर्धितुं कः**' '**नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव**' इत्यादिभिस्स्वतन्त्ररूपवस्तुविशेषविषयनिषेधदर्शनात्सामान्येनावगतो भेदनिषेधस्तत्रच्छागपशुन्यायेन पर्यवस्यतीत्यर्थसिद्धम् । तत्प्रत्यनीकनानात्वमित्युक्तत्वात् केषुचिद्वाक्येषु तस्य कण्ठोक्तत्वाच्च ॥

अथोत्सर्गापवादनयमभिप्रयन्नाह—**नपुनरिति** । ब्रह्मणः कार्यरूपेण नानात्वविषयश्रुतिवाक्योदाहरणं प्रकारनानात्वविषयवाक्यानामपि प्रदर्शनार्थम् '**एकस्सन् बहुधाविचारः**' '**एको देवो बहुधा निविष्टः**' '**त्वमेकोऽसि**

### गूढार्थसङ्ग्रहः

सामानाधिकरण्यं न सम्भवति । 'यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति सर्वभूतेषु चात्मानं ततो न विजुगुप्सते' इति पूर्वश्रुतिविरोधात् । तत्र आत्मनि इत्येतेन आत्मवृत्तित्वस्य सर्वभूतेषु प्रतीत्या आत्माधीनसत्ताकत्वं प्रतिपादितं भवति 'सर्वभूतेषु चात्मानम्' इत्यत्र परस्य सर्वभूताधीनसत्ताकत्वं बाधितत्वात् न विवक्षितम् । किंतु 'व्याप्य नारायणस्थितः' (तै) इति श्रुत्यन्तरानुसारेण परस्य सर्वभूतव्यापकत्वमेव विवक्षितम् । एवं च व्यापकत्वेसति धारकत्वेन तच्छरीरित्वं प्रतिपादितं भवति । पूर्वश्रुतौ सर्वशरीरित्वं परस्य प्रतिपाद्य तदेव सामानाधिकरण्येन उत्तरश्रुतौ दृढीक्रियते इति सिद्धान्ते श्रुत्यर्थस्सङ्गतः । 'आत्मन्येवानुपश्यति' आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः, सर्वभूतेषु च तेष्वेवचात्मानं तेषामपि भूतानां स्वमात्मानमात्मत्वेन' इति पर (शं.उ.भा) सम्मतार्थः श्रुतौ न विवक्षितः ॥

'आत्मन्येवानुपश्यति' इत्यतः आत्मव्यतिरिक्तानि न पश्यतीत्यर्थस्य कथंचिदप्यलाभात् । एवं च चन्द्रिकायद्वये 'यस्तु सर्वाणि भूतानि' इति श्रुत्यन्तरानुसारेण 'इदं सर्वं यदयमात्मा' इत्यत्र स्वाभीष्टसाधनार्थप्रयत्नो विफलः । अतः श्रुतीनां प्रागुक्तार्थ एव युक्त इति सुष्ठूक्तं **तत्प्रत्यनीकनानात्वं प्रतिषिध्यते** इत्यन्तम् ॥

**बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वमित्यादि** । 'सदेव सोम्येदमग्र आसीत्' इत्यत्रोक्तैकत्वप्रतिकोटिभूतं बहुत्वं 'तदैक्षत बहुस्याम्' इत्यत्र विवक्षितम् । इदं च बहुत्वं नामरूपव्याकरणश्रुत्या विशदीक्रियते । अत्र ईक्षणं मायावृत्तिरिति परे वदन्ति । 'कामस्सङ्कल्पः-एतत्सर्वं मन एव' इत्यादिश्रुतिभिः कामादीनामन्तःकरणधर्मत्वं साधयतां परेषां मते ईक्षणस्य मायावृत्तित्वसाधकश्रुत्यादिविरहेण ईक्षणस्य मायावृत्तित्वं न सम्भवतीति सच्छब्दार्थनिष्ठमेव ईक्षणं श्रुतौ विवक्षितम् । एवं च परसङ्कल्पाधीनं नानात्वमिति नानात्वस्य प्रत्यक्षसिद्धत्वेऽपि परसङ्कल्पाधीनत्वस्य श्रुत्यैव निर्णयेन तत्रैव तात्पर्यमेषितव्यमिति तस्य श्रुतितात्पर्यविषयत्वेन प्रतिषेधो न सम्भवतीति भावः ॥

### श्रीभाष्यम्

**इति परिहृतम्। नानात्वनिषेधादियमपरमार्थविषयेतिचेत् न ; प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम्**

### श्रुतप्रकाशिका

बहूननुप्रविष्टः ' ' योऽव्यक्तमन्तरे संचरन् यस्याव्यक्तं शरीरम् ' ' योऽक्षरमन्तरे संचरन् यस्याक्षरं शरीरम् ' योमृत्युमन्तरे संचरन् यस्य मृत्युश्शरीरं एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ' इति प्रकारनानात्वं प्रकार्येकत्वं च हि स्पष्टं श्रूयते ॥

यद्वा छान्दोग्ये तैत्तरीये च ' बहुस्याम् ' इति प्रकरणे ' **अनेन जीवेनात्मनाऽनुप्रविश्य** ' ' **तदनुप्रविश्य सच्चत्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च** ' इति चिदाचिदनुप्रवेशपूर्वकनामरूपभाक्त्वश्रवणात्, उभयलिङ्गस्या(प्य)व्यवधानेन जगदुपादानत्वानुपपत्तेश्च, ' **बहुस्याम्** ' इत्यत्रापि ब्रह्मणो बहुनामरूपभाक्त्वस्य सद्वारकत्वसिद्धेः शरीरतया प्रकारभूतचिदचिन्नानात्वमर्थसिद्धमित्यभिप्रायेण ' **बहुस्याम्** ' इति वाक्यमुदाहृतम्। एवं कार्यनानात्वस्य प्रकारनानात्वस्य च विहितत्वात् सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वाच्च। कुतर्कसिद्धकार्यकारणभेदविषयाः लौकिकप्रतीतिसिद्धस्वनिष्ठभेदविषयाश्च भेदनिषेधश्रुतय इत्यर्थः नानात्वनिषेधादपरमार्थविषयत्वं शङ्कते। **नानात्वेति**। इयं श्रुतिः भेदस्तु निषेधार्थमनूद्यत इति भावः। परिहरति **नेति**। अप्राप्तस्यानुवादायोगा(द्वि)दतो वि)षयविभागादविरोध एव न्याय्यः ॥ एतदुक्तमाचार्यपादैः—

### गूढार्थसंग्रहः

स्वप्ने सृष्टिरपि परमात्मकर्तृकैवेति सिद्धान्तः, तत्र स्वाप्निकानां जागरदशायां बाधः अनुभवसिद्धः। तद्वत् श्रुत्या नानात्वप्रतिषेधे नानात्वमपरमार्थ इत्येवाङ्गीकरणीयम्। तत्र सृष्टिवाक्यानि दृष्टिसृष्टिपक्षे एकजीववादे मुख्यवेदान्तपक्षत्वेन सम्मते स्वप्नवाक्यतुल्यानि प्रातीतिकविषयाणि। सृष्टिदृष्टिपक्षेतु व्यावहारिकविषयाणि। तत्वतस्तु कारणव्यतिरेकेण कार्यशून्यपराणि इत्यभिप्रेत्याशङ्कते—**नानात्वनिषेधादित्यादि** ॥

**तदेव बाध्यत इत्युपहास्यमिति**। अयमाशयः स्वाप्निकानामप्यर्थानां ज्ञानबाध्यत्वं नास्त्येव। जागरे बाधदर्शनं तु अल्पकालिकत्वेन जागरणकालासत्वाविषयत्वेनोपपद्यते। स्वाप्निकार्थज्ञानयोरुभयोरेकाविद्यापरिणामत्ववादिपरमते ज्ञानस्याबाधः अर्थस्य बाधश्चेति कथमुपपद्यते ? विवेचयिष्यतेचेदमुपरिष्टात्। किंच ' याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ' (ई.वा) इति श्रुत्या परमात्मसृष्टानां पदार्थानां सत्यत्वं सिद्ध्यति। अत्र तथ्यत इत्यनेनैवोपपत्तौ याथेत्यस्य वैयर्थ्यपरिहाराय यथातथाभावः याथातथ्यं विवक्षितम्। ' धाता यथापूर्वमकल्पयत् ' इति श्रुत्यर्थ एवात्र प्रतिपाद्यते' इति चन्द्रिकोक्तिः (ल.गु.चं) अनुपादेया ॥

' योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थः ' (सि.कौ.अ.प्र) इति वैयाकरणोक्त्या याथातथ्यतः इत्यत्र यथाशब्दः अनतिवृत्तिपरः, तथ्यमनतिक्रम्य यथातथ्यं यथातथ्यमेव याथातथ्यम् प्रज्ञादित्वात्स्वार्थेऽण् वस्तुतस्तु यथातथ्यशब्दात् ' तस्येदम् ' इत्यणि याथातथ्यम्। याथातथ्यात् याथातथ्यतः तथ्यानतिवृत्तिसम्बन्धिन इत्यर्थः तथ्यानतिवृत्तिसम्बन्धिवस्तु प्रकृतिरेव, प्रकृतेरेवाचित्पदार्थानां सर्वेषां सृष्टिरिति श्रुतिषु स्फुटम्। तत्र तथ्यत इत्युक्तौ दृष्टिसृष्टिपक्षे कार्यसामान्यस्यापि प्रातीतिकत्वेन तद्व्युदाससम्भवेऽपि अविद्यांशे दृष्टिसृष्टेरनङ्गीकारेण अविद्यायाः व्यावहारिकसत्यत्वाङ्गीकारेण तद्व्युदासो न भवति ॥

## श्रुतप्रकाशिका

यद्ब्रह्मणो गुणशरीरविकारभेदकर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योऽन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्नविधयः प्रतिषेधबाध्याः ॥

## गूढार्थसंग्रहः

अतः तथ्यानतिक्रमणरूपार्थतात्पर्येण याथातथ्यत इत्युक्तमिति याथेत्यस्य सार्थक्यम् । एवमुक्त्या प्रकृत्यादीनां सर्वेषां सृष्टानां व्यावहारिकत्वमेव ज्ञानबाध्यत्वं वर्तत एव । कालत्रयाबाध्यत्वरूपं पारमार्थ्यं निर्विशेषस्यैव इति मतेऽपि तथ्यातिक्रमणस्यापि सत्वेन मतद्वयानुपादेयत्वबोधनार्थं तथ्यत इत्यनभिधाय याथातथ्यत इत्युक्तम् । याथातथ्यत इत्यनेन मूलप्रकृतेः ज्ञानाबाध्यत्वसिद्धौ तन्निष्पन्नपदार्थानामपि ज्ञानाबाध्यत्वं सिद्ध्यति । 'धाता यथापूर्वमकल्पयत्' इति श्रुत्यर्थस्यात्र विवक्षितत्वे यथापूर्वमर्थान् व्यदधात्' इत्येव श्रुतिक्रमस्स्यात् नतु 'याथातथ्यतोऽर्थान् व्यदधात्' इति । अतः इयं श्रुतिः अर्थानामपारमार्थ्यं व्युदस्यति । तदेतत्सर्वमभिप्रेत्योक्तमाचार्यपादैः—याथातथ्यतो व्यदधात् न पुनरैन्द्रजालिकवत् केवलं प्रकाशितवानिति' (ई.उ.भाष्यम्) इति ॥

एतेन वस्तुतो न प्रत्ययः स्वार्थः वैयर्थ्यात् किंतु यथातथशब्दस्य यादृशतादृशार्थकतया तद्भावार्थकः 'पञ्चम्यर्थस्तासिश्च ल्यब्लोपे' तथा च यादृशतादृशभावं प्रतिसंधाय व्यदधादित्यर्थः' इति चन्द्रिकाद्वयोक्तिः (आ.बा.उ) अनुपादेया । यथा तथाशब्दयोः यादृश तादृशार्थकत्वस्यैवासिद्धेः । यथातथेत्यत्र 'प्रकारवचने थाल्' (अष्टाध्यायी.५.३.२३) इति सूत्रविहितथाल्प्रत्ययः प्रकारार्थक इति यथातथाशब्दौ धर्मपरौ । थाल्प्रत्ययार्थस्य समभिव्याहृतपदार्थे भेदेनान्वयस्सम्भवति । यादृशतादृशेत्यत्र 'त्यदादिषु दृशो अनालोचने कञ् च' (३.२.६०) इति सूत्रेण कञ् 'कर्मकर्ताऽयं तमिवेमं पश्यन्ति जनाः सोऽयं स इव दृश्यमानः तमिवात्मानं पश्यतीति तादृक्' इति तत्सूत्रस्थमहाभाष्यासुसारेण स इव पश्यति ज्ञानविषयो भवतीति विग्रहेण यादृशतादृशशब्दौ धर्मिपराविति यथातथा इत्येतत्समानार्थकत्वं यादृशतादृशशब्दयोरसिद्धमेव । एवं 'ल्यब्लोपे पञ्चमी' इति पञ्चम्याश्रयणमपि अस्वरसम् ॥

गुरुचन्द्रिकायां 'किंच यथाशब्दस्य योग्यता वीप्सा सादृश्यपदार्थानतिवृत्त्यर्थकत्वेन शाब्दिकोक्तत्वात् प्रकृते च अनतिक्रमरूपपदार्थानतिवृत्त्यर्थकत्वसम्भवात् त्वन्मतरीत्या तादात्म्येन तथाऽनतिक्रमोक्तौ 'तथ्यतोऽर्थान्' इत्यनेनैव विवक्षितार्थसिद्ध्या यथेत्यस्य वैयर्थ्यात् । उपादानतया तथ्यानतिक्रमोक्त्या सत्योपादानकान् सर्वानर्थान् व्यदधादित्यर्थलाभेन उपादानसत्यत्वात् जगत्सत्यं भाति नतु वस्तुतस्सत्यमिति श्रुतितात्पर्यलाभात् त्वन्मतविरुद्धमेवेदं वाक्यमित्याशयेनाह—न जगत्सत्यत्वमिति । (अ.सि) नच त्वन्मतेऽपि तथ्यत इत्यनेनैव तथ्यहेतुलाभसम्भवेन याथेति व्यर्थमिति वाच्यम् ; निमित्तहेतुमात्रभ्रान्तिनिरासाय कार्यतादात्म्याश्रयहेतुलाभार्थकत्वेन तदवैयर्थ्यात्' इत्युक्तिरप्यनुपादेया । कार्यतादात्म्याश्रयहेतुलाभेऽपि व्यदधादित्यत्र यः कर्ता स एव कार्यतादात्म्याश्रयहेतुः याथातथ्यत इत्यत्र विवक्षित इति न किंचिद्गमकम् । कार्यस्य सङ्कोचविकासात्मकपरिणामवत्त्वस्य प्रत्यक्षसिद्धतया तत्समानसत्ताकपरिणामाश्रयः हेतुरेव याथातथ्यत इत्यत्र विवक्षितस्स्यात् तस्य तथ्यानतिक्रमः ज्ञानबाध्यत्वाभाव एव घटते नतु ज्ञानबाध्यत्वे । एवं च याथातथ्यत इत्युक्त्या गुरुचन्द्रिकाकारमतविरोधः श्रुतौ पर्यवसितो भवति । तथ्यत इत्युक्तौ व्यावहारिकसत्यत्वमादायापि तदुपपत्तिस्स्यात् अतो याथातथ्यत इत्युक्तम् । तथा शब्दस्य सत्यार्थकत्वमिति गुरुचन्द्रिकोक्तरीत्यादरेऽपि भावार्थकष्यञ्प्रत्ययेन अर्थनिष्ठयाथातथ्यमेव विवक्षितम् । तथ्यतोऽर्थानित्युक्तौ कार्यभूतानां प्रातीतिकव्युदासमात्रेण तच्छन्दसार्थ-

## श्रीभाष्यम्

**'यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तम् ।**

## श्रुतप्रकाशिका

इति । समस्तहेयरहितस्य हेयाकारवस्त्वैक्यासम्भवात्, हेयस्यापारमार्थ्येऽपि तस्य निरसनीयतया हेयत्वस्यावर्जनीयत्वात् तत्प्रतिभटतयोक्तस्य तत्सम्बन्धार्हवस्त्वैक्यव्याघातात्सर्वज्ञस्य ब्रह्मणः स्वसङ्कल्पेन स्वगतहेय(स्य)तद्विषयभ्र)मस्यवा)मा)पाद-नायोगादसर्वज्ञत्वे सार्वज्ञ्यश्रुतिविरोधात्, सर्वशक्तेस्स्वगतहेयानिवारकत्वायोगादशक्तत्वे सर्वशक्ति(योग)श्रुतिविरोधात् । श्रुतिबलादीदृशाविरोधाभावे **'तान्येवानुविनश्यति' 'न जायते म्रियते वा'** इत्यादिवाक्यप्रतिपन्ननित्यत्वानित्यत्व-निर्गुणत्वसगुणत्वादेश्श्रुतिबलाद्विरोधाभावेन क्वचिदपि न्यायसंचारानपेक्षतया मीमांसानैरर्थक्यात्, भिन्नत्वाभिन्नत्वयोश्च विरोधाभावेन पारमार्थिकापारमार्थिकत्वेन विभागस्यानभ्युपगन्तव्यत्वात् **'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तत-स्तेनामृतत्वमेति' 'जुष्टं यदा पश्यत्यन्यमीशम्'** इति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रवणात् । **'यस्मात्क्षरमती-तोऽहम्'** इत्यादिना भेदज्ञानवतोऽसम्मूढत्वश्रवणात् जीवपरयोर्नियन्तृत्वनियाम्यत्वादिलक्षणभेदस्य घटपटभेदवत्प्रमा-णान्तरागोचरत्वेनानुवादासम्भवाद्विहितस्य निषेधायोगादुपासनार्थत्वाश्रयणस्य **'अथ योऽन्यां देवताम्'** इत्यादिवाक्य-प्रतिपन्नैक्येऽपि प्रसङ्गादैक्यस्याविधिशेषवाक्यप्रतिपन्नत्वे भेदस्य च तुल्यत्वान्नियतपौर्वापर्यविरोधतयाऽपच्छेदन्यायाविषय-त्वाद्विरोधाधिकरणन्यायेन भेदश्रुतेः परभूतानिषेधोत्पत्तिप्रतिबन्धकत्वात् ऐक्यविधिशेषस्य भेदनिषेधस्य विहितैक्यविरोधि-भेदनिषेधकत्वोपपत्तेः अन्यथा समानाधिकरणवाक्यप्रतिपन्नस्वशेषिभूतैक्यविरोधित्वप्रसङ्गात् उत्सर्गापवादन्यायेन निषेधस्य विहितभेदव्यतिरिक्तविषयत्वाच्छागपशुन्यायेन सामान्येन भेदनिषेधस्य स्वतन्त्रभेदविशेषनिषेधपर्यवसायित्वाच्च भेदनिषेध-श्रुतयोऽब्रह्मात्मकनानात्वनिषेधपराः नतु भेदमात्रनिषेधपरा इति संग्रहः ॥

**यत्रहीत्यादिवाक्यानामयमर्थः** यत्र यदा द्वैतमिव भवति स्वनिष्ठभेद इव भवति इवशब्दः स्वनिष्ठभेदस्यातात्त्वि-कत्वद्योतकः कथमिवेतिवद्वाक्यभङ्गीरीत्याऽविवक्षितार्थो वा । तदा तत् इतर इतरमितरेण पश्यति केनेति वक्ष्यमाणत्वा-दितरेणेत्यध्याहारः, इतर—स्वनिष्ठो द्रष्टा इतरं स्वनिष्ठं द्रष्टव्यं स्वनिष्ठदर्शनसाधनेन पश्यति । यत्र (तु) यदा अस्य उपा-सकस्य सर्वमात्मैवाभूत् परमात्मसामानाधिकरण्येन सर्वं साक्षात्कृतं नहि पूर्वमनात्मभूतमिदानीं सर्वमात्मा भवति । अत-स्साक्षात्काराभिप्रायोऽभूदिति निर्देशः अस्येत्युक्तेः । क इत्यध्याहारः इतर इत्युक्तत्वात् तत् तदा स्वनिष्ठः को द्रष्टा स्वनि-ष्ठेन केन दर्शनसाधनेन स्वनिष्ठं कं द्रष्टव्यमर्थं पश्येत् । ज्ञातृज्ञेयज्ञानसाधनेषु स्वनिष्ठं किंचिदपि नास्तीत्यर्थः । प्रमित निषेधायोगा दापातप्रतीतिसिद्धस्यैव निषेध्यत्वाल्लौकिकप्रतीतेश्च स्वनिष्ठताविषयत्वात्तेन रूपेणैव निषेधविषयत्वोपपत्तेः ॥

## गूढार्थसंग्रहः

क्यमिति स्यात् । अनतिक्रमरूपार्थविवक्षायांतु कार्यपदार्थानामभेदेन तथ्यानतिक्रमस्य कदाचित् तथ्यत्वाभावेऽसिद्धया अनतिक्रमरूपार्थो बाधितो भवेत् । एवं च कार्यपदार्थानां साक्षादेव ज्ञानाबाध्यत्वलाभार्थं याथातथ्यत इत्यत्र याथे त्यस्य सार्थक्यमेतत्पक्षेऽपि सम्भवति । अतो नानात्वस्य बाधो न घटत इति भावः ॥ **यदुक्तमिति** । परसम्मत एतच्छ्रुत्यर्थः प्रागेव (१३९.पु) प्रदर्शितः ।

श्रीभाष्यम्

**तदसत् 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छा.३.प्र.१४.ख.१) इति तन्नानात्वानुसन्धानस्य**

श्रुतप्रकाशिका

**यदि** द्रष्टृदृश्यादिमात्रं निषिध्यते। तदानीं **'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च'** इति परमात्मसाक्षात्कारदशायामहमिति द्रष्टुरात्मनो मनुसूर्यादिदृश्यपदार्थानां च साक्षात्कारश्रवणं विरुध्यते। तस्माल्लौकिकप्रतीतौ द्रष्टृदृश्यादिकं प्रकारिभूतपरमात्माप्रतिपत्तेस्तत्सामानाधिकरण्यमन्तरेण स्वनिष्ठतया भाति। योगदशायां तु प्रकारिणः परमात्मनः प्रतीयमानत्वादहंशब्दवाच्यपरमात्मसामानाधिकरण्येन प्रकाशत इति वैषम्यम् नतु द्रष्टृदृश्या(दिनिवृत्तिरि)दीनि प्रतिषिध्यन्तइ)त्यभ्युपगन्तव्यम् अन्यथा वामदेवादिदर्शनस्य भ्रान्तित्वप्रसङ्गात्। नेहनानेति। इह प्रपञ्चे लोकदृष्टप्रकारेण नानाभूतं स्वनिष्ठतया भिन्नं किंचिदपि नास्तीत्यर्थः स्वनिष्ठदर्शनेन प्रत्यवायमाह—मृत्योरिति **'तमसो वा एष तमःप्रविशति'** इतिवन्निर्देशः। नानेव स्वनिष्ठमिव अज्ञानादज्ञानमाप्नोतीत्यर्थः। देहातिरिक्तविषयज्ञानं प्रागेव सिद्धम्। ततोऽप्यतिशयितमज्ञानं स्वनिष्ठतया तद्वस्तुदर्शनमित्यभिप्रायः॥

**'यदाह्येवैषः'** इत्यादिश्रुतिमुपादाय तत्र ब्रह्मणीत्यादिना पूर्वपक्षिणोक्तमर्थमनूद्य दूषयति। **तदसदिति**। तदसत् भयप्राप्तिहेतुत्वं नेत्यर्थः। कुतइत्यत्राह--**सर्वमिति**। ब्रह्मणः कार्यजगद्रूपेण नानात्वानुसंधानं मुक्तिहेतुरिति

गूढार्थसंग्रहः

**तन्नानात्वानुसन्धानस्येति**। **'सर्वं खल्विदं ब्रह्म'** इति श्रुतेः परैरित्थमर्थ उक्तः। 'ब्रह्मणोऽनन्तगुणवतो अनन्तशक्तेरनेकभेदोपास्यस्य विशिष्टगुणशक्तिमत्त्वेनोपासनं विधित्सन्नाह–सर्वं समस्तं इदं जगन्नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्म कारणं वृद्धतमत्वाद्ब्रह्म कथं सर्वस्य ब्रह्मत्वमित्यत आह–**तज्जलानिति**। तस्माद्ब्रह्मणो जातं तेजोन्नादिक्रमेण सर्वम् अतस्तज्जं तस्मिन्नेव ब्रह्मणि लीयते तदात्मतया श्लिष्यत इति तल्लम्। तथा तस्मिन्नेव स्थितिकाले अनिति प्राणिति चेष्टत इति। एवं ब्रह्मात्मतया त्रिषु कालेषु अविशिष्टं तद्व्यतिरेकेणाग्रहणात्, अतस्तदेवेदं जगत्। यथाचेदं तदेवैकमद्वितीयं तथा षष्ठे विस्तरेण वक्ष्यामः। यस्माच्च सर्वमिदं ब्रह्म अतः शान्तः रागद्वेषादिदोषरहितः सम्मतस्सन् यत्तत् सर्वं ब्रह्म तद्वक्ष्यमाणगुणैरुपासीत' इति (शं.उ.भाष्यम्॥

अत्र सिद्धान्तसिद्धाञ्जनकारः 'सर्वं ब्रह्मेत्यादिसामानाधिकरण्यस्य विवर्तबाधेन वस्तुस्वरूपाभेदपरत्वात् ब्रह्मणः स्वरूपेणापरिणामित्वात् कार्यकारणावस्थाविशिष्टाभेदायोगाच्च, कार्यकारणरूपभेदाभावे च तावन्मात्रे सर्वमिदं ब्रह्मेति सहप्रयोगायोगात्, तद्रूपबाधेन वस्तुस्वरूपाभेदपरे च सामानाधिकरण्ये अभेददर्शनेनैव शान्तिर्विधित्स्येत। नचैवं स क्रतुं कुर्वीत मनोमयः' इत्युपासनाविधिविरोधः। विमृष्टमात्रेऽपि विशेषबाधे यावन्निर्विचिकित्सनिर्विशेषापरोक्षं प्रतीतिविशेषोपादानेन विध्युपपत्तेः' इत्याह। इममर्थं नानुमन्वाते ब्रह्मविद्याभरणरत्नप्रभाकारौ। **'सर्वं खलु'** इति वाक्येहि इदं शब्दो न सर्वपदार्थविशेषणं व्यर्थत्वात्, अपितु ब्रह्मविशेषणम् तस्य सर्वनामतया प्रकृतपरामर्शिताऽवश्यम्भावात्। गायत्रीवाक्यनिर्दिष्टस्य ब्रह्मणः इहानुवृत्तिस्सम्पादिता भवतीति प्रयत्नेन ब्रह्मानुवृत्तिसम्पादनं ब्रह्मप्राधान्यद्योतनायां' इति (ब्र.वि.आ) अत्रेदंशब्दः प्रकृतब्रह्मपरामर्शार्थः। ननु जगत्परामर्शार्थः। जगद्विशेषणे प्रयोजनाभावात्। अत्र प्रयोजनाभावेऽपि यत्र प्रयोजनं तत्र भवत्येव जगद्विशेषणम्। यथा 'आत्मैवेदं सर्वम्' अत्र बाधायां सामानाधिकरण्यदा-

## श्रीभाष्यम्

**शान्तिहेतुत्वोपदेशात् तथा हि सर्वस्य जगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसन्धानेनात्र शान्तिर्विधीयते ; अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगत् ब्रह्मात्मकमित्यनुसन्धानस्य शान्तिहेतुतया अभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः।**

## श्रुतप्रकाशिका

सिद्धान्तार्थः। इदानीं परोक्तं शान्तिहेतुत्वमभ्युपगम्योक्तम्। कथं तत्र नानात्वानुसन्धानप्रतीतिः ? कथं वा तस्य भयप्राप्तिहेतुताविरोधित्वमिति शङ्कायामेतद्विवृणोति। **तथाहीति**। नानात्वानुसन्धानप्रतीतिं दर्शयति। **सर्वस्येति**। नहि केवलं ब्रह्मेत्युक्तम् अपितु इदं सर्वं ब्रह्मेतिह्युक्तम्। सर्वशब्दश्च विविधभेदप्रपञ्चपरः। अतो नानात्वविशिष्टब्रह्मानुसन्धानं प्रतीतमित्यर्थः। ततःकिमित्यत्राह–**अतइति**। नानात्वानुसन्धानस्य शान्तिहेतुत्वद्वारा समस्तभयनिवृत्तिरूपमोक्षोपायत्वात् भेदबुद्धेर्भयप्राप्तिहेतुत्वोक्तिस्तद्विरुद्धेत्यर्थः ॥

## गूढार्थसंग्रहः

र्थ्यार्थं विशेषणमावश्यकं तद्वाक्यस्य ज्ञेयब्रह्मविषयत्वात् अत्रतूपासनायां बाधानावश्यकत्वात् विषयाभेदेन ब्रह्मण उपास्यत्वात् ' इति च (र.प्र.भा) ॥

अत्र उपनिषद्भाष्ये शङ्कराचार्यैः ' इदमित्यस्य जगद्विशेषणत्वमेवाङ्गीकृतं नतु ब्रह्मविशेषणत्वम्। इदंशब्देन झटिति प्रत्यक्षविषयीभूतार्थस्यैवोपस्थितेः सर्वपदार्थ एवान्वयस्य युक्तत्वात्। इदंशब्दार्थे ब्रह्मशब्दार्थान्वयस्य कल्पनं न सम्भवति, इदंशब्देन ब्रह्मान्वय्यर्थस्य झटित्यप्रतीतेः। अयमेवार्थः सूत्रभाष्यभामत्यादावङ्गीकृतः ; इदमित्यस्य प्रत्यक्षविषयवैचित्र्यबोधनेन परिणामिबोधकतया सार्थक्यसम्भवात्। परमते विवर्तोपादानत्वं तेन सिद्ध्यति। वाक्यस्य परमते सविशेषपरत्वेन सिद्धान्तसिद्धाञ्जनकारोक्तं बाधायां सामानाधिकरण्यं नैव घटते। ' स क्रतुं कुर्वीत मनोमयः ' इत्युपासनविधिविरोधात्। ' इति यस्य स्यादद्धा न विचिकित्साऽस्ति ' इत्युत्तरत्र निर्विचिकित्ससविशेषज्ञानस्य प्रतिपादनेन पूर्वं बाधज्ञाने शब्दत उदिते शब्दात् सविशेषज्ञानस्यासम्भवात् अपरोक्षज्ञानविरहस्याप्रयोजकत्वात्। अतः विवर्तोपादानत्वेन अधिष्ठानाधिष्ठेययोरभेदः अत्र विवक्षित इति परैर्वाच्यम् ; अयमर्थोऽपि श्रुतौ न विवक्षितः। परिणामिद्रव्यस्य कार्यस्य शब्देन बोधदशायां तद्विसजातीयकारणप्रतीतेरत्र नियामकाभावेनासम्भवात्। अतः परिणामिकारणमेव तज्जलानित्यत्र विवक्षितं, सविशेषप्रकरणाच्च। ब्रह्मशब्दोऽपि सगुणपर एवेति प्रागेव निरूपितम् ॥

एवं च ' तज्जलान् ' इत्यत्र जंच लंच अन्च जलान् तस्य जलान् तज्जलान् इति विग्रहः। अत्र जनिलयोक्त्या उपादानत्वं प्राणनोक्त्या निमित्तत्वं च सिद्ध्यति। सृष्टिकाले अनुप्रवेशस्य श्रुत्यन्तरसिद्धतया तन्निबन्धनमेव प्राणनमत्र विवक्षितमिति सर्वस्मिन् तदन्तर्यामिकत्वमपि अत्र बुबोधयिषितम्। ' एष म आत्माऽन्तर्हृदये ' इत्यत्रैव त्रेधा अभ्यस्तवाक्ये ' सर्वस्यचाहं हृदि सन्निविष्टः मत्तस्मृतिर्ज्ञानमपोहनं च ' इति गीतानुसारेण ' स्मृतेश्च ' इति इत्येतदाधिकरणसूत्रे— ' ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। ' इति गीतोक्तार्थस्य परेषामपि सम्मततया च ' शब्दविशेषात् ' इत्यत्रैव सूत्रे ब्रह्मणो जीवान्तर्यामित्वनिबन्धनजीवब्रह्मभेदविवक्षायाः प्रत्याख्यानासम्भवाच्च। एवं च ब्रह्मोपादेयतया ब्रह्मान्तर्यामिकतया च ब्रह्मात्मकत्वेनैक्यमत्र ' सर्वं खलु ' इति वाक्ये विवक्षितमिति एतज्ज्ञानस्य शमहेतुत्वोक्त्या सर्वशब्दस्य यावदर्थकतया नानात्वानुसन्धानमेव शमहेतुरत्र प्रतिपादित इति नानात्वानुसन्धानस्य भयहेतुत्वं ' उदरमन्तरं कुरुत ' इत्यत्र नैव विवक्षितमित्याशयवानाह- **तन्नानात्वानुसन्धानस्य शान्तिहेतुत्वादित्यादि**—**न भयहेतुत्वप्रसङ्गइत्यन्तम्।**

## श्रीभाष्यम्

**एवंतर्हि 'अथ तस्य भयं भवती'ति किमुच्यते? इदमुच्यते 'यदाह्येवैष एतस्मिन्नदृश्येऽना-त्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयंगतो भवति' (तै.आ.७.अनु.२)**

## श्रुतप्रकाशिका

**ननु** मणिकृपाणदर्पणादिगतप्रतिबिम्बेष्विव दे(हि)हे)षु रागद्वेषादिनिवृत्त्यर्थं सर्वस्य ब्रह्मण्यध्यस्तताऽनुसन्धान-विधिः किं न स्यात्? नैवम्। प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं सामानाधिकरण्यमित्युपपादितत्वात् बाधार्थत्वस्य वक्ष्य-माणदूषणोपहतत्वाच्च। अथ चोद्यपूर्वकमेव तच्छुत्यर्थमाह—**इदमुच्यतइति**। अदृश्य इत्यचिद्व्यावृत्तिः। अनात्म्य इति बद्धव्यावृत्तिः सहि परमात्मना व्याप्यः। यद्वा आत्म्यं व्याप्यं कर्मकृतशरीरम्। तद्रहितोऽनात्म्यः अनिरुक्त इति

## गूढार्थसङ्ग्रहः

'ब्रह्मविदाप्नोति परम्, यो वेद, सोऽश्नुते सर्वान्कामान् सहब्रह्मणा विपश्चिता' इति उपक्रमे ब्रह्मज्ञानस्य ब्रह्मप्रा-तिसाधनत्वमुक्तम्। तत्र 'सह' इत्यनेन ब्रह्मणः अप्राधान्यबोधनेन गुणानां प्राधान्यं बोधितम्। मनोमयपर्याये— 'आनन्दं ब्रह्मणो विद्वान् न बिभेति' इत्युक्तम्। अत्र ब्रह्मणः आनन्दमिति निर्देशेन वेदनेऽपि गुणानां प्राधान्यबोध-नेन प्रागुक्तार्थो दृढीकृतः। मनोमयपर्याये 'आनन्दं ब्रह्मणो विद्वान्' इत्युक्तिः, 'मनसैवानुद्रष्टव्यम्' (बृ.६.४.१९) इति मानसज्ञानतात्पर्येण। अत्र अनुशब्दप्रयोगेण ध्यानानन्तरकालिकदर्शनं विवक्षितम्। तच्च समाधिपर्यवसितमेव। अत्रपूर्वे 'रसगुँह्येवायं लब्ध्वाऽऽनन्दी भवति—एषह्येवानन्दयाति' इत्यत्र परमात्मसङ्कल्पेन जीवस्यानन्दः प्रतिपादितः। भावि-दुःखोपनिपातशङ्कया दुःखं भयम्' इति गीताभाष्यनिर्णीतदिशा 'आनन्दं ब्रह्मणो विद्वान् न बिभेति' इत्यत्र वेदनस्य दुःखाभावः फलमित्युक्तं भवति। दुःखाभावश्च भावान्तराभावनयेन आनन्दरूप एव। ब्रह्मप्राप्तिरपि सैव। एतावता ब्रह्मज्ञानस्य परमात्मसङ्कल्पद्वारा आनन्दफलवत्त्वमभिहितं भवति। एवं च मनोमयपर्याये अभयहेतुब्रह्मज्ञानस्य मानस-ध्यानरूपत्वं यत्सूचितं तदेव 'यदाह्येवैष एतस्मिन्' इत्यादिना स्थापयिष्यते। इत्यभिप्रेत्याह—**इदमुच्यतइत्यादिना**॥

'यदाह्येवैष एतस्मिन्नदृश्ये' इत्यत्र अदृश्य इति पदं चक्षुरिन्द्रियजन्यज्ञानाविषयपरम्। 'यत्तदद्रेश्यमग्राह्यम्' इत्युपक्रमे अद्रेश्यत्वेनोक्तस्यैव 'ओमित्येवात्मानं ध्यायथ' 'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपम्', 'तस्मिन् दृष्टे परावरे' इत्युत्तरत्र दर्शनविषयत्वस्य प्रतिपादनात् 'एतस्मिन्' इति पूर्वोक्तज्ञानविषयपरं ज्ञानविषये प्रतिष्ठा प्रकर्षेण स्थितिः। ज्ञानविषये प्रकर्षेण स्थितिर्नाम ज्ञानस्य कालकृतप्रकर्ष एव अविच्छिन्नज्ञानपर्यवसितः अविच्छिन्न-ज्ञानवतः अभयप्राप्तिः 'अथसोऽभयंगतो भवति' इत्यत्र प्रतिपादिता भवति। एवमन्वयमुक्त्वा व्यतिरेके अनिष्ट-मभिधीयते 'यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इति। 'यदाह्येवैष उदरमन्तरं कुरुत' इत्युक्त्याऽपि पूर्ववाक्यस्यैतस्मिन्नित्यस्यानुषङ्गेण अर्थबोधसम्भवे पुनः एतस्मिन्निति पदं पूर्वं प्रतिष्ठासम्बन्धित्वेन बुद्धिस्थ-ज्ञानविषयपरम्। अविच्छिन्नज्ञानविषये ब्रह्मणि अन्तरं प्रकृष्टज्ञानान्तर एव पर्यवस्यति। एवं च अविच्छिन्नज्ञान-विषये ब्रह्मणि विच्छेदकरणं ज्ञानविच्छेदकरणमेव भवति इत्यभिप्रेत्य ब्रह्मणि या प्रतिष्ठा अभिहिता तस्या विच्छेदे भयं भवति इत्युक्तम्। ब्रह्मणि या प्रतिष्ठा इत्यत्र ज्ञानविषये ब्रह्मणि प्रकर्षेण स्थितिरेव विवक्षिता। अयं च पर्यवसितार्थः नतु प्रतिष्ठाया इति अध्याहाराभिप्रायकः अध्याहाराभावेऽप्युपपत्तिसम्भवात्। 'असन्नेवसभवति, असद्ब्रह्मेति वेद चेत्

## श्रीभाष्यम्

**इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाऽभिहिता। तस्याः विच्छेदे भयं भवतीति। यथोक्तं महर्षिभिः ' यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्ति-**

## श्रुतप्रकाशिका

मुक्तव्यावृत्तिः। सहि बद्धावस्थायां देवादिशब्दैर्निरुक्तः। अनिलयन इति नित्यमुक्तव्यावृत्तिः तेषांहि भगवानाधारः। स्वोक्तार्थविषयमुपबृंहणं दर्शयति। **यथोक्तमिति**। हानिः इष्टहानिः, छिद्रं अनिष्टप्राप्तिरन्ध्रं, भ्रान्तिः तत्कृतचित्तस्खलनं, विक्रिया तेनाज्ञानामवशादयथायथव्यापारः।

**एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते। दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्॥**
**वरं हुतवहज्वाला पञ्जरान्तर्व्यवस्थितिः। न शौरिचिन्ताविमुखजनसंवासवैशसम्॥**

इत्यादिवचनान्यादिशब्दविवक्षितानि॥

भेदवाचिनोऽन्तरशब्दस्य विच्छेदार्थकत्वं कथमित्यत्राह–**ब्रह्मणीति**। अविच्छिन्नंहि ध्यानं निरन्तरमित्युच्यते। अतोऽन्तरं विच्छेद एव। कस्येत्यपेक्षायां प्रतिष्ठायाः प्रकृतत्वात्तस्याविच्छेदः प्रकृतब्रह्मविषये **तदप्येष** इत्युदाहृते **भीषास्मात्** इत्यनन्तरश्लोके वायुसूर्यादिसर्वचेतनप्रशासितृत्वादन्तरशब्दस्योपासनविच्छेदपरत्वमेव युक्तम्। नतु भेदपरत्वम्। अतोऽयमर्थःपूर्वापर(वाक्य)श्रुत्यन्तरवाक्यानुगुण उपबृंहणानुगुणश्च परोक्तस्तु तदुभयविरुद्ध इति भावः॥

## गूढार्थसंग्रहः

अस्तिब्रह्मेतिचेद्वेद सन्तमेनं ततो विदुरिति ' पूर्ववाक्ययोः ज्ञानान्वयव्यतिरेकाभ्यां इष्टानिष्टरूपफलद्वयं प्रतिपादितम्। अत्र वाक्यद्वये ध्यानान्वयव्यतिरेकाभ्यां फलद्वयमिष्टानिष्टरूपं प्रतिपाद्यते। अत्र अभयप्राप्तिरेव मोक्षः, भयप्राप्तिस्संसारः ' असन्नेवसभवति ' इत्यत्रतु मोक्षव्यतिरिक्तमेव ब्रह्मज्ञानफलमिति भिदा। एतेनात्र सिद्धान्तसिद्धाञ्जनोक्तदूषणानि अलग्नकानीति विदुषां स्फुटं भवति॥

' अन्तरं–भेददर्शनं कुरुते ' (शं.उ.भा) ' भेदं कुरुते जानातिचेत् ' (ल.चं) इति परसम्मतार्थः अन्तरशब्दात् कुरुते इत्यतश्चोक्तार्थस्य शब्दशक्त्या अलाभात् श्रुतौ न विवक्षितः। एतच्छ्रुतेः पूर्वं क्वापि भेदसामान्यनिषेधस्य अप्रतिपादने अन्तरशब्दस्य नानार्थकस्य भेदतात्पर्यनिर्णायकं न किंचित्पश्यामः। आ.ती.उपनिषद्भाष्यानुसारेण अन्तरशब्दस्य भेदार्थकत्वमङ्गीकृत्य उदरं–उत् उत्कृष्टः अः अकारवाच्यो विष्णुः येभ्यो जीवेभ्यः ते उदाः जीवाः विष्णुतो नीचा इत्यर्थः। ' मयूरव्यंसकादय ' श्चेति समासः तेषु जीवेषु रमते इति उदरं जीवेषु परस्परं विद्यमानं अन्तरं भेदमेतस्मिन्विष्णौ एष ज्ञानी अज्ञो वा कुरुते मन्यते भगवद्रूपाणामन्योन्यं मूलरूपस्य च भेदं जानीते, अथ अनन्तरमेव तस्य भयं भवति ' (रा.उ.खं) इति नवीनसम्मतार्थोऽपि उदरमित्यर्थः क्लिष्टकल्पनया उक्तार्थस्य अतिविलम्बितत्वेन कुरुते इत्यस्य मन्यत इत्यर्थवर्णनेन च श्रुतौ न विवक्षितः। किंच पूर्ववाक्ये ' अभयं प्रतिष्ठां विन्दते ' इत्यत्र (रा.उ.खं) ध्यानरूपां प्रतिष्ठामित्यर्थस्याभिधानेन अभयप्रतिकोटिभयप्रतिपादकोत्तरवाक्येऽपि पूर्वोक्तार्थप्रतिद्वन्द्विभूतार्थस्य सम्भवतः परित्यागपूर्वकं विलम्बितार्थप्रतिपादनस्य विदुषामसम्मतत्वाच्च। अत्र ध्याने मोक्षः तद्व्यतिरेके च संसार इत्यर्थ एव विवक्षितः। मुमुक्षोः व्युत्थानदशायां ब्रह्मचिन्ताविरहे इष्टहानिमनिष्टफलं च प्रतिपादयद्भिर्महर्षिवचनैः कैमुतिकन्यायेन मोक्षफलकत्वं ध्यानस्य सिद्ध्यतीत्यभिप्रेत्य–**यथोक्तंमहर्षिभिरित्याद्युक्तम्॥**

## श्रीभाष्यम्

**रसा च विक्रिया' इत्यादि ॥ ब्रह्मणि प्रतिष्ठाया अन्तरमवकाशो विच्छेद एव। यदुक्तम् 'न स्थानतोऽपि' (शारी.३.अ.२.पा.११) इति सर्वविशेषरहितं ब्रह्मेति च वक्ष्यतीति। तन्न सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति**

## श्रुतप्रकाशिका

**ननु यदाह्येवैष** इत्यत्र प्रतिष्ठाविच्छेदोऽर्थश्चेदेतस्यामिति स्त्रीलिङ्गता स्यात्। **अदितिःपाशान्** इतिन्यायाद्विभक्त्यवगतनपुंसकत्वाविवक्षेतिचेत् त(था)दाऽप्यस्वारस्यमवर्जनीयम्। तच्च स्वरसार्थे सम्भवति नोपपद्यते सप्तमीचास्वरसा तस्याविच्छेद इतिह्युक्तिःस्वरसा ननु तस्यां विच्छेद इति। प्रातिपदिकास्वारस्यं च प्रतिष्ठापरत्वे स्यात् पूर्ववाक्ये यदाह्येवैष **एतस्मिन्नदृश्येऽनात्म्य** इति ब्रह्मपरतया प्रयुक्तस्य एतस्मिन्निति पदस्यानन्तरवाक्येऽपि बुद्धौ विपरिवृत्तेः ॥

उच्यते न तावल्लिङ्गसप्तम्योः प्रातिपदिकस्यचास्वारस्यं ब्रह्मपरामर्शित्वादेतच्छब्दस्य। अन्तरशब्दश्चावकाशपरः निरन्तरं सान्तरमिति प्रयोगात् अन्तरं च देशतः कालतश्च भवति कालकृतं चान्तरं विच्छेद एव। नन्वेवंसति कस्य विच्छेद इत्यपेक्षायां प्रतिष्ठाया अन्तरमित्यध्याहारस्स्यात्। तच्चायुक्तम्। अनध्याहारेण निर्वाहसम्भवादितिचेन्न 'सन्निधिलब्धस्यार्थस्याध्याहारनिरपेक्षत्वात्। अथाप्यस्वारस्यमितिचेत्तद्वरं पक्षान्तरे बहुस्वारस्यसम्भवात्। तथाहि भयहेतुरभयहेतुप्रतियोगित्वादभयहेतुपरप्रतिष्ठापदस्यैक्यवाचित्वाभावात्। वाक्यवृत्तेरसामञ्जस्यम्। तत्सामञ्जस्याय प्रतिष्ठाशब्दस्यैक्यपरत्वे मुख्यार्थहानिः दृढसम्बन्धोहि प्रतिष्ठा यथा राज्ये प्रतिष्ठित इति प्रथमप्रतिपन्नप्रतिष्ठापदस्य अर्थभङ्गश्चानुपपन्नः। पूर्वसिद्धैक्यावगतिपरत्वात् विन्दति धात्वर्थस्यास्वारस्यं च। सप्तमीचास्वरसा भेदप्रतियोगित्वावधित्वसम्बन्धविवक्षायां तृतीया पञ्चमी षष्ठीनामेव स्वारस्यात्। करोतेः प्रतिपत्त्यर्थत्वात् अस्वारस्यं च। मनसि कुरुत इति योजनायामध्याहारः **एषह्येवानन्दयाति** इति पूर्ववाक्यप्रतिपन्नभेदविरोधश्च। अनन्तरं च भीषाऽस्मादिति प्रशासितृत्वेन भेद उच्यते। अतो मध्ये भेदनिषेधश्चानुपपन्नः **'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन, कदाचन'** इति पूर्वापरवाक्ये गुणविशिष्टवेदनस्याभयहेतुत्वोक्तेः ब्रह्मणि भेदनिषेधस्याभयहेतुत्वकथनं च विरुद्धम्। ब्रह्मविदाप्नोतीति विध्युपक्रमत्वाच्च ब्रह्मणि प्रतिष्ठाया वेदनरूपत्वमेव युक्तं नत्वैक्यरूपत्वम्। नह्यैक्यतद्बुध्योरुभयस्य च प्रतिष्ठाशब्दवाच्यत्वं दृढसम्बन्धवाचिनः प्रतिष्ठाशब्दस्य तूपास्यं ब्रह्मप्रति उपासकतया सम्बन्धे पर्यवसानं युक्तम् ॥ ब्रह्मणो निर्विशेषत्वे व्यतिरिक्तमिथ्यात्वे च परोक्तं सूत्रद्वयं परिहरति। **यदुक्तमिति।**

## गूढार्थसंग्रहः

**यदुक्तमित्यादि। 'न स्थानतोऽपि'** इति सूत्रस्य परसम्मतार्थः प्रागेव (१३९.पु) निरूपितः ॥ **सविशेषं ब्रह्मेत्येवहि तत्र वक्ष्यत इति।** अत्र सूत्रे पर शब्दः परब्रह्मपर इत्युभयसम्मतम्। परं ब्रह्म निर्विशेषं परमते, सिद्धान्ते सविशेष इत्येव भिदा। 'परात्तु तच्छ्रुतेः' 'पराभिध्यानात्तु' इति सूत्रस्थपरशब्दस्य योऽर्थः स एवात्रापि सूत्रकृतो विवक्षितः। तत्र 'परात्तु तच्छ्रुतेः' इत्यत्र भाष्यम् (शं) 'परस्मादात्मनः कर्माध्यक्षात्सर्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात् तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः। तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति। कुतः? 'तच्छ्रुतेः' इत्यादि 'यः आत्मनि तिष्ठन्नात्मनोऽन्तरः---यमयति' इतिचैवं जातीयका' इत्यन्तम्। अत्र पर शब्दः अन्तर्यामिपर इति स्फुटम्। 'पराभिध्यानात्-' इति सूत्रे ज्ञानैश्वर्यादिकं प्रस्तुत्य 'तत्पुनस्तिरोहितं सत्परमे-

## गूढार्थसंग्रहः

श्वरमभिध्यायतो यतमानस्य जन्तोः विधूतस्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिः औषधवीर्यात् ईश्वरप्रसादात्कस्यचित्संसिद्धस्याविर्भवति । कुतः ? ततोहीश्वराद्धेतोः अस्य जीवस्य बन्धमोक्षौ भवतः । ईश्वरस्वरूपापरिज्ञानाद्बन्धः । तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथा च श्रुतिः 'ज्ञात्वा देवं सर्वपाशापहानिः' 'तस्याभिध्यानात्तु तृतीयमित्यादिका' इति परेषां भाष्यम् । एतत्सूत्रपर्यालोचनायां बन्धमोक्षोभयहेतुः परो विवक्षित इति स्फुटं प्रतीयते ॥

अत्र 'तिरोहितं पराभिध्यानात्' इति सूत्रविन्यासाभावेन 'पराभिध्यानात्' इति तिरोहितमित्यत्रैवान्वेतीति प्रतीयते । 'अभिध्योपदेशाच्च' (१.४.२४) 'तदभिध्यानादेवतु तल्लिङ्गात्' (२.३.१३) इति सूत्रयोः परकर्तृकाभिध्यानस्य विवक्षाया उभयसम्मततया 'पराभिध्यानात्' इत्यत्रापि परकर्तृकाभिध्यानमेव विवक्षितमिति सूत्रकाराशयः स्फुटं प्रतीयते । तिरोहितं परामभिध्यायतः आविर्भवतीत्यर्थे तिरोभावहेतुरनिर्दिष्टस्स्यात्, तिरोभावहेतुमनभिधाय आविर्भावमात्रहेतूक्तिरपि सूत्रे न युक्ता । 'ततोह्यस्य बन्धविपर्ययौ' इत्यत्र बन्धतद्विपर्ययोः एकहेतुरत्र प्रदर्शितः । जविस्वरूपतिरोभावो बन्धान्तर्गतः, जीवस्वरूपाविर्भाव एव मोक्षः । अतः पराभिध्यानं तिरोधान एव हेतुरिति सूत्रे विवक्षितम् । अत्र आविर्भवतीति पदं सूत्रे नास्तीति जीवकर्तृकपराभिध्यानादाविर्भावः नात्र सूत्रे विवक्षितः । आविर्भावरूपार्थस्य परसम्मतस्यात्र विवक्षितत्वे आविर्भावप्रतिकोटिभूतस्तिरोभाव एवात्र सूत्रे वक्तव्य आपद्यते । तिरोभूतामित्यनभिधाय तिरोहितमिति वदतः सूत्रकृतः हेतुततयैवात्र विवक्षितम् । पूर्वसूत्रोक्तानभिव्यक्तस्वरूपत्वं जीवस्य पराभिध्यानहेतुकमिति एतेन दार्शितं भवति । परमते स्वप्नस्वरूपाभिव्यक्तेः पूर्वमुक्त्या तत्प्रतिकोट्यर्थकल्पना न सम्भवति । तथा स्वरूपाविर्भावाङ्गीकारेऽपि तद्वतः स्वाप्नपदार्थस्रष्टृत्वं सम्भवतीति शङ्कानिवृत्तिर्न स्यात् । किंच ज्ञानैश्वर्यशक्तितिरोभावाविर्भावौ परमते सगुणाविद्याविषयावेव । 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' 'सम्पद्याविर्भावः स्वेन शब्दात्' इति श्रुतिसूत्रविवक्षितः आविर्भावः निर्गुणविद्याविषयः इति । सूत्रे वक्ष्यमाणाविर्भावविलक्षणाविर्भावस्य सूत्रकृत्तात्पर्यविषयत्वं न सम्भवति । सिद्धान्तेतु जीवस्यानभिव्यक्तस्वरूपत्वोपपादनमावश्यकम् । तदुपपादनं च पराभिध्यानेन तिरोधानोक्त्यैव 'ततोह्यस्य बन्धविपर्ययौ' इत्यनेन तिरोधाननिवृत्तेः बन्धविपर्ययरूपत्वेन तस्य पराभिध्यानहेतुकत्वोक्त्यैव आविर्भावः उक्तप्राय एव इति 'पराभिध्यानात्तु तिरोहितम्' इत्यत्राविर्भावोक्तिः अत्रानपेक्षिता । अत्र तिरोधाननिवृत्तेः पराभिध्यानहेतुकत्वमुक्तम् । उत्तरत्र मोक्षस्य विद्याफलत्वमभिधाय उत्क्रान्तिगत्यनन्तरमेव तत्फलमिति निर्णयार्थं 'सम्पद्याविर्भावः' इति सूत्रप्रवृत्तिरिति सामञ्जस्यम् ॥

एवं च 'ततोह्यस्य बन्धविपर्ययौ' इत्यत्रापि बन्धान्तर्गततिरोधानहेतुरभिध्यानमेव तद्विपर्ययहेतुरित्यर्थ एव विवक्षितः । एवं विवक्षायामेव बन्धविपर्ययैतदुभयहेतुः पराभिध्यानमेकमेव । हेतुताऽवच्छेदकधर्मोऽप्येकः इति ततः इत्यस्य स्वारस्यम् । परमते 'यदज्ञानात् बन्धः यज्ज्ञानाच्च तन्निवृत्तिः' इत्येवार्थस्य विवक्षितत्वेन 'पराभिध्यानात्' इत्यत्र श्रुतिच्छिन्नस्य परस्य तच्छब्देन परामर्शाङ्गीकारेऽपि परस्य ज्ञानाज्ञानसम्बन्धित्वेन पूर्वमनुपस्थित्या तच्छब्देन ज्ञानाज्ञानसम्बन्धित्वेन परस्य परामर्शो न घटते । अतः तत इत्यत्रापि परसम्मतार्थो न विवक्षितः । निर्गुणश्रुतिसमनन्तरं 'संसारमोक्षस्थितिबन्धहेतुः' इति श्वेताश्वतरश्रुत्यैकरस्यं च सिद्धान्ते ॥

एतेन सूत्रद्वयेन ब्रह्मशब्दार्थबृंहणमपि विशदीकृतम् । 'पराभिध्यानात्तु' इति सूत्रानुसारेण 'फलमत उपपत्तेः' इत्येतत्पादान्तिमाधिकरणसूत्रे मोक्षफलमपि विवक्षितमिति निर्णीयते । एवं च पराभिध्यानादित्यत्र अभिध्यानसम्बन्धिनः 'परात्तु तच्छ्रुतेः' इत्यत्र नियमनकर्तुश्च परस्य विवक्षिततया 'न स्थानतोऽपि परस्य' इति सूत्रेऽपि परशब्दस्सविशेष-

## श्रीभाष्यम

**मायामात्रंत्विति च स्वाप्नानामप्यर्थानां जागरितावस्थाऽनुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थाऽनुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति॥ स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थोऽन्यदपारमार्थिकमिति प्रतीयते**

## श्रुतप्रकाशिका

अथ स्मृतिपुराणयोस्सविशेषपरत्वमुपपादयति । **स्मृतिपुराणयोरिति** । स्मृतीत्यादिना सामान्येन प्रमाणस्य तदवान्तररूपस्य शब्दस्य च सविशेषवस्तुपरत्वोपपादनाच्छास्त्रस्य प्रत्यक्षविरुद्धार्थप्रतिपादनासामर्थ्योपपादनाद्विशेषेण वेदान्तवाक्यानां सविशेषपरत्वोपपादनेन स्मृतिपुराणयोश्श्रुतिविरुद्धार्थे प्रामाण्यासम्भवाच्च तयोस्सविशेषपरत्वं सिद्धम् । इदानीं

## गूढार्थसङ्ग्रहः

पर एवेति निर्णीयते । तृतीये प्रथमपादे जीवस्य गतेरभिधानेन उत्क्रान्ति स्वप्न सुषुप्तिमूर्च्छाऽवस्थाः जीवस्य पूर्वं प्रदर्शिताः प्रथमपादस्य वैराग्यसम्पादनार्थतया तत्र जीवदोषाः स्फुटं प्रतिपादिताः भवन्ति स्वप्नमूर्च्छयोरपि दोषा अनुभवसिद्धाः सुषुप्तौ दुःखाभावेऽपि बाह्यान्तरपदार्थानां परस्य च ज्ञानाभावेन परानुभवविरहरूपदोषस्स्फुटः । एवं च अवस्थाचतुष्टये जीवस्य दोषा अवर्जनीयास्सम्पन्नाः अवस्थाचतुष्टये परस्य जीवान्तर्यामितया स्थितेः जीवगतदोषाशङ्का युक्ता। अन्तर्यामितया स्थितिः परस्य स्वेच्छानिबन्धना, जीवस्यतु कर्मनिबन्धना, इति वैषम्यसत्वेऽपि पूयशोणितादिनिमज्जनस्य स्वेच्छाकृतस्यापि अपुरुषार्थत्वेन परस्यापुरुषार्थाशङ्का युक्ता । परशब्दप्रयोगेण ब्रह्मत्वमस्यैवेति सूचितम् । ब्रह्मशब्दप्रवृत्तिनिमित्तं निरवग्रहमहत्त्वं निर्दोषत्वगुणभूयिष्ठत्वाभ्याम्' इति (पं.पा) विवरणे प्रोक्तम् ॥

एवं च परस्य निर्दोषत्वस्यासम्भवे जीववत् गुणभूयिष्ठत्वमपि न सम्भवतीति परस्य ब्रह्मशब्दार्थत्वं न सम्भवति परशब्दार्थोऽपि निरवग्रहमहत्वमेव । निरवग्रहमहत्वं च गुणभूयिष्ठत्वदोषशून्यत्वोभयलिङ्गरूपम् । एवं च परस्य सदोषत्वे ब्रह्मशब्दार्थत्वं न सम्भवतीति शङ्कापर्यावसानम् । ब्रह्मशब्दार्थः उभयलिङ्गरूप इति 'ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषः अनवधिकातिशयासङ्ख्येयकल्याणगुणः पुरुषोत्तमोऽभिधीयते' इति भाष्यसूक्तावेव स्फुटः । परमते उभयलिङ्गं निर्विशेषत्वसविशेषत्वरूपं विवक्षितमित्यत्र न किंचिन्नियामकं पश्यामः, अतः उभयलिङ्गं प्रागुक्तरूपमेव विवक्षितम् । अत्र सूत्रे अन्तर्यामिणः परशब्दार्थत्वसिद्धौ तत्तच्छरीरसम्बन्धावस्थाभेदेन दोषशङ्कायां अन्तर्यामिब्राह्मणे प्रतिपर्यायं 'अमन्तर्याम्यमृतः' इत्युक्त्वा दोषाभाववचनेन न दोषसम्भव इति उत्तरसूत्रे प्रतिपाद्यते। अत्र सूत्रे अवस्थाभेदेन दोषवत्त्वशङ्कायां 'अप्रत्येकमतद्वचनात्' इत्यस्यापि स्वरसतः प्रतीयमानएवार्थो वक्ष्यते । 'अरूपवदेवहि तत्प्रधानत्वात्' (३.२.५.१४) 'प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति च भूयः' इति सूत्रद्वये परसम्मतार्थः न विवक्षितः इति प्रागेव (६६०–६५२.पु) निरूपितम् । अवशिष्टसूत्रेषु परसम्मतार्थो न विवक्षित इत्युत्तरत्र विवेचयिष्यते ॥

**मायामात्रंत्वितिचेत्यादि** । अत्र मायाशब्दः न मिथ्यावचनः तद्ग्राहकप्रमाणविरहात् मायाऽविद्याविभागवादिजरदद्वैतिभिः मायाशब्दस्य न मिथ्यार्थकत्वम् सत्येष्वेव मायाशब्दप्रयोगादित्युक्तम्, मन्त्रौषधादिरेव माया इत्यभ्युपगम्यत इति विवरण एव स्पष्टमुक्त्या मायाशब्दस्य मिथ्यार्थकत्वे संप्रतिपत्तिविरहाच्च । अस्मिन्नेवाधिकरणे मायाशब्दविचारपरभाष्यसूक्तिविचारावसरे गुरुचन्द्रिकादिपर्यालोचनया मायाशब्दस्य न मिथ्यार्थकत्वमिति स्थापयिष्यते । 'सन्ध्ये

### श्रीभाष्यम्

**इति यदभिहितम्। तदसत् 'योमामजमनादिं च वेत्ति लोकमहेश्वरम्।' (गी.१०.अ.३) 'मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः। नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥ भूतभृन्नच भूतस्थो ममात्मा भूतभावनः।' (९.अ.४.५)**

### श्रुतप्रकाशिका

स्मृतिपुराणयोरपि परोदाहृतवचनानां पूर्वापरपर्यालोचनया सविशेषपरत्वमुपपाद्यते। यथा लौकिकप्रमाणश्रुतिविरुद्धानर्थान्नेदं शास्त्रं प्रतिपादयति एवमेव पूर्वापरवाक्यविरुद्धमप्यर्थं न स्मृतिपुराणानि प्रतिपादयितुं शक्नुवन्तीति भावः॥

परेण सर्वस्याप्याविद्यिकत्वाविशेषेण स्वाभाविकवक्तृवैषम्यानभ्युपगमादद्वैतस्पष्टताभ्रमाच्च पूर्वं पुराणवचनान्युपन्यस्य पश्चाद्भगवद्गीतावचनान्युदाहृतानि। अत्रतु स्वाभाविकवक्तृवैषम्याभ्युपगमादनन्तगुणविभूतिमत्त्वस्य स्पष्टतया च भगवद्गीतावचनानि पूर्वमुपन्यस्य पश्चात्पुराणवचनानि प्रदर्श्यन्ते। अतस्स्मृतिपुराणयोरित्युक्तम्। परेण स्वोदाहृतवचनप्रतिपाद्यतया योऽर्थोऽभिहितः तद्विपरीतार्थपरत्वेन स्पष्टतमानि वचनानि प्रथमं प्रदर्श्यन्ते पश्चात्तदविरोधेन परोक्तवचनानामर्थप्रतिपादनार्थम्। **योमामिति**। अत्राजमिति पदेनाचित्संसृष्टचेतनव्यावृत्तिः, अनादिमिति मुक्तव्यावृत्तिः, तस्याजत्वेऽप्यादिमत्, लोकमहेश्वरमिति नित्यमुक्तव्यावृत्तिः। लोक्यत इति लोकः प्रमाणसिद्धत्रिविधचेतनाचेतनवर्गः। अत्रोत्तरा(र्धा)र्धोऽप्यनुसन्धेयतयाऽभिप्रेतः असम्मूढस्समर्त्येष्विति चेतनाचेतनविलक्षणत्वेन जानन्नसम्मूढ इति कथनात्। सर्ववैलक्षण्यं तात्त्विकमित्युक्तं भवतीत्यभिप्रायः धारकत्वादिभिर्वैलक्षण्यं वैशद्यार्थमुपादत्ते मत्स्थानीति॥

### गूढार्थसंग्रहः

सृष्टिराहहि' इति पूर्वपक्षसूत्रे 'तदन्तरप्रतिपत्तौ रंहति' इत्यादिषु 'योनेश्शरीरं' इत्यन्तेषु सूत्रेषु जीवस्य प्रस्तुततया सृष्टेर्जीवकर्तृकत्वमेव विवाक्षितम्। 'मायामात्रंतु' इति सिद्धान्तसूत्रे 'पराभिध्यानात्तु' इति उत्तरसूत्रात् पराभिध्यानादित्याकृष्यते। तुशब्दः जीवकर्तृत्वव्यावृत्त्यर्थः, तत्र अनभिव्यक्तस्वरूपत्वं हेतुः मायामात्रमिति हेतुगर्भविशेषणम् सन्ध्ये सृष्टिः पराभिध्यानान्मायामात्रत्वात् आश्चर्यरूपत्वादित्यर्थः। यथा जाग्रत्कालिकप्रपञ्चसृष्टिः आश्चर्यरूपत्वात् परमपुरुषकर्तृका, तथैव स्वाप्नार्थसृष्टिरप्याश्चर्यरूपत्वात्परमपुरुषकर्तृकेत्यर्थः। आश्चर्यरूपतामेव प्रतिपादयति 'न तत्र रथा न रथयोगा' इत्यादिश्रुतिः अयमर्थः वेदान्तदीपे स्फुटं वक्ष्यते। अतः स्वाप्नार्थानां पारमार्थिकत्वमेवात्र विवक्षितमिति भावः॥

'अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्' (म.भा.आ.प.२७९) इति पञ्चमवेदौपनिषत्त्वेन प्रसिद्धिं साक्षाद्भगवद्दतारकृष्णोपदेशरूपत्वं च अभिप्रेत्य पुराणवचनेभ्यः प्राक् गीतावचनमुपादत्ते **योमामजमनादिंचेत्यादि**। 'असम्मूढस्समर्त्येषु सर्वपापैःप्रमुच्यते' इत्येतदुत्तरार्धे अमूढः इति शब्दं विहाय असम्मूढ इति शब्दप्रयोगः अर्थविशेषमभिप्रेत्य। समित्येकीकारे जीवब्रह्माभेदज्ञानविरहः अत्र विवक्षितः। **नच मत्स्थानि भूतानि इत्यादि**। परैः सर्वभूतानि तत्त्वतः न मत्स्थानि इत्यर्थस्यात्र विवक्षितत्वेन भूतानां मिथ्यात्वमत्र अभिप्रेतमिति गीतातात्पर्यं निर्णीयते। नायमर्थो गीताचार्याभिप्रेतइत्याशयेन—**पश्य मे योगमैश्वरम्** इत्याद्यनन्तरवाक्योपादानम्॥

**भूतभृदिति**। अत्र 'मत्स्थानि सर्वभूतानि' इत्यत्र उक्तं सर्वाधारत्वं सर्वाधारकत्वरूपमिति 'भूतभृत्' इत्यनेन प्रतिपादितम्। एतेन 'नच मत्स्थानि भूतानि' इत्यत्र भूतानां भगवद्वृत्तित्वस्य न निषेधः। अनन्तरं भूतभृ-

## श्रीभाष्यम्

**‘ अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा । मत्तःपतरं नान्यत्किंचिदस्ति धनञ्जय ॥ मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।’** (७.अ.६.७) **‘ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।’** (१०.अ.४२) **‘ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**

## श्रुतप्रकाशिका

**अत्र** शरीरलक्षणं सूचितं भवति । सर्वभूतानि मदायत्तस्थितीनि नाहं तदायत्तस्थितिरित्यर्थः । लोकदृष्टप्रकारेण नाहमाधारः अपितु सङ्कल्पमात्रादित्याह- नचेति । निषेधस्य विहितव्यतिरिक्तविषयत्वादयमेवार्थः । **योगमैश्वरम्** ईश्वरासाधारणं सर्वशक्तियोगमित्यर्थः । **नच मत्स्थानि** इति धारकत्वपारमार्थ्यनिषेधश्चेद्योगमैश्वरं पश्येति विरुद्धं, मम भ्रान्तिं पश्येतिहि तदा वक्तव्यम् । योगमैश्वरमित्येतद्विवृण्वन् इममेवार्थमाह— **भूतभृदिति** । **ममात्मा** मम सङ्कल्प इत्यर्थः । आत्मशब्दोहि मतिवाची **‘ यत्नेऽर्केऽग्नौ मतावात्मा ’** इति अतोऽत्र आत्मशब्दस्सङ्कल्परूपज्ञानवाची **ममात्मा भूतभावन** इत्यनेन **नच मत्स्थानि** भूतानि इत्यस्यार्थः स्पष्टीकृतः भूतभावनः भूतानां सत्ताऽनुवर्तकः ॥

अर्वाचीनस्येश्वरस्यहि सगुणत्वमिति शङ्कायां कारणातिरिक्तवस्तुनिषेधप्रदर्शनार्थं लक्षणप्रदर्शनार्थं च जगत्कारणत्वमाह–**अहमिति** । प्रभवः प्रळयश्चोक्तः स्थितिस्तु धारकत्वकथनेन सिद्ध्यतीति धारकत्वं विशिनष्टि **मयीति** । विष्टभ्याहमित्यनेन नियन्तृत्वमुक्तं विष्टभ्य–अधिष्ठाय एकांशेन सङ्कल्पैकदेशेन त(च शरीरि)च्छरीर)त्वलक्षणम् । **योमामज**मित्यादिनाऽभिप्रेताचिदाचिद्वैलक्षण्यकण्ठोक्तिं दर्शयति **उत्तमइति** । पूर्वस्मिन्वचने क्षराक्षरशब्दोक्तौ बन्धमुक्तौ । कूटस्थः निर्विकारः ज्ञानसङ्कोचरूपविकाराभावान्मुक्तस्य कूटस्थशब्दः साधारणवाची वा सर्वेषु लोकेषु कामचारो भवतीति मुक्ता-

## गूढार्थसङ्ग्रहः

दिति सङ्कल्पेन भूतधारकत्वोक्त्या ‘ प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति च भूयः ’ इति न्यायेन निषेधासम्भवात् । किंतु सङ्कल्पमन्तरा धारकत्वं भूतलादौ घटादिधारकत्वतुल्यतया बुद्धिस्थं यत् तस्यैव निषेधः । एतदनन्तरं ‘ यथाकाशस्थितो नित्यं वायुस्सर्वत्रगो महान् । तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ’ इत्यत्र सङ्कल्पमन्तराऽपि धारकदृष्टान्तो यद्यपि प्रदर्शितः तथाऽपि नियतधारकत्वतात्पर्येण तदुक्तिः तेन च नियतधारकत्वमेव भगवतः न अनियतधारकत्वमित्यर्थः प्रतिपादितः । तत्पर्यालोचनायां सङ्कल्पमन्तरा अनियतधारकत्वस्यापि ‘ नच मत्स्थानि भूतानि ’ इत्यत्र निषेधस्सम्भवतीति भावः ॥

**मत्तःपरतरं नान्यदिति** । अत्र अन्यपरतरशब्दद्वयप्रयोगेण आत्मव्यतिरिक्तस्य वस्तुसामान्यस्य न निषेधः इति स्फुटम् । परतरं परमार्थसत्यं ‘ नच मत्स्थानि ’ परमार्थतो नैव सन्ति इति मधुसूदनविवरणं न गीताचार्याभिमतम् । पूर्वं ‘ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां ’–इत्यत्र परशब्दस्य उत्कृष्टार्थकतया परतरशब्दस्यापि उत्कृष्टार्थकत्वस्यैव युक्तत्वात् । अनन्तरं ‘ मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ’ इत्यत्र ‘ यथाकाशस्थितो नित्यम् ’ इत्यत्र च दृष्टान्तानुसारेण स्वसमानसत्ताकवस्तुधारकत्वस्यैव प्रतिपादनेन तद्विरोधाच्च । **विष्टभ्याहम्** इत्यत्र सङ्कल्पेन धारकत्वं स्पष्टमुक्तम् । त्रयोदशे **क्षेत्रज्ञं चापि मां विद्धि** इत्यत्र जीवब्रह्माभेदो न विवक्षितः । पञ्चदशे तद्भेदस्य स्फुटमुक्तेरित्याह—**उत्तमःपुरुषस्त्वन्यः इत्यादिना** ॥

श्रीभाष्यम्

**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।**

श्रुतप्रकाशिका

त्मन उभयविभूतिसाधारणत्वात् कूटस्थत्वम् । परमात्मेत्युदाहृत इत्यनेन **'परमात्मा व्यवस्थितः'** इत्येतद्वाक्यान्वितो नारायणानुवाकस्स्मारितः ॥

**अक्षरादपिचोत्तमः** इत्यनेन च तत्रैवहि **'सोऽक्षरःपरमस्स्वराट्'** इत्युक्तम्, ज्ञानसङ्कोचरूपक्षरणाभावादक्षरो मुक्तः । स्वराट् स्वतन्त्रः अकर्मवश्यः परमः जीवगतावस्था स्वतःपरमुत्कृष्टावस्थान्तराभावात्पारम्यं सर्वाणीति पदं ब्रह्मशिवाद्यभिप्रायम् । तस्मिन्ननुवाकेहि **'सब्रह्मा सशिवस्सेन्द्रस्सोऽक्षरःपरमस्स्वराट्'** इति बद्धमुक्तजीववाचिपदैस्समानाधिकृतैर्भगवानुक्तः । तत्र **'विश्वमेवेदं पुरुषः'** इति च सामानाधिकरण्यं श्रूयते । सामानाधिकरण्यहेतुश्च तस्मिन्ननुवाके स्पष्टः **'तद्विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरम्' 'व्याप्य नारायणस्स्थितः'** इति च वाक्यजाते धार्यत्व धारकत्वानियन्तृत्व नियाम्यत्व शेषित्वशेषत्व व्याप्यत्वव्यापकत्वादिकमेव सामानाधिकरण्यनिबन्धनं नतु (द्रव्यै)तदै)क्यमिति स्पष्टम् ॥ तदत्राप्युच्यते—आविश्येति व्याप्य नारायणस्स्थितः इत्यस्यार्थ उक्तः । पतिं विश्वस्येत्यस्यार्थः ईश्वरशब्देनोक्तः ईश्वरशब्दोहि शेषिवाचकः अतएवहि **'पतिं विश्वस्यात्मेश्वरम्'** इत्यत्र पत्यन्तरराहित्यविवक्षायामात्मेश्वरमित्युक्तम् । **'तद्विश्वमुपजीवति'** इत्यस्यार्थो बिभर्तीत्युक्तः । तथा **'व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः ।'** इति ॥— **'योमामेवमसम्मूढः'** इति कृत्स्नवैलक्षण्यज्ञानवतोऽसम्मूढत्वमुक्तम् । **'इति गुह्यतमं शास्त्रम्'** इति तस्यार्थस्य गुह्यतमत्वमुक्तम् । अतोऽस्मिन्नर्थे तात्पर्यमिति स्पष्टम् ॥

पुरुषोत्तमशब्दस्य समासासाधुत्वमाशङ्कनीयम् **नागोत्तमादि च सिद्धं भवतीति** महाभाष्यवचनात् पाणिनिवत्पुरुषोत्तमशब्दनिर्वाहकृतामृषीणामाप्ततमत्वाच्च, **पुरुषोत्तम** इति च पञ्चमीसमासो वा **अक्षरादपि चोत्तम** इति ह्युक्तम् पूर्वनिपातस्तु सामानाधिकरण्यविवक्षायामेव नतु तदविवक्षायामपीति नानुशासनविरोधशङ्काप्रसङ्गः । एवमेभिर्वचनैः चिदचिद्वैलक्षण्यस्य प्रतिपादितत्वात् **क्षेत्रज्ञंचापि मां विद्धि** इत्यादेः तदविरोधेनार्थो वर्णनीयः । **यो लोकत्रयमाविश्य बिभर्ति** इत्यादिना कृत्स्नस्य भगवच्छेषत्व धार्यत्व नियाम्यत्व व्याप्यत्व शरीरत्वादेर्विहितत्वात्, तस्य च निषेद्धुमयुक्तत्वात् **न तदस्ति विना यत्स्यात्** इत्यादिना अतदात्मकस्य नास्तित्वमुच्यते । अविनाभावशब्दस्य मिथ्यात्वपरत्वेन प्रसिद्ध्यभावाच्च तथाऽभ्युपेत्यमित्यभिप्रायः । विनाशब्दोहि सम्बन्धविरहपरः अविनाभावशब्दस्य सम्बन्धनियमवाचित्वात्

गूढार्थसंग्रहः

'वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूपम्' (गी. ११.३८) इत्यत्र व्याप्तिः अपृथक्सिद्धिपर्यवसिता सामानाधिकरण्यमूलमित्युक्तम् । अत्रैव पूर्वार्धे 'देवेश' इत्यादौ नियन्तृत्वादेः प्रतिपादनेन नियन्तृत्वादिसंवलिताऽपि सा शरीरशरीरिभावादि पर्यवसिता सामानाधिकरण्यनिदानमित्यपि विवक्षितम् । अयमेवार्थः 'सर्वं समाप्नोषि ततोऽसि सर्वः' (११.४०) इत्यत्र समित्युपसर्गेण नियमनाद्यर्थस्यापि प्रतीत्या सामानाधिकरण्यमूलतया विवक्षित इति प्रतीयते । प्राक् सामानाधिकरण्यनिमित्तत्वेनोक्तमेव 'क्षेत्रज्ञंचापि मां विद्धि' इत्यत्रापि सामानाधिकरण्यनिमित्तत्वेन गीताचार्यस्य विवक्षितम्। जीवपरमात्मभेदे जीवपरमात्माभेदवाक्यानां अर्थबाधशङ्कायां प्रागुक्तमेवाभेदनिर्देशनिदानं सूचयन् जीवपरमात्मभेदं स्थापयति **यो लोकत्रयमाविश्येत्यादिना ।**

## श्रीभाष्यम्

**यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।' (गी.१५.अ.१७.१८) 'ससर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः। अतीतसर्वावणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराळे।**

## श्रुतप्रकाशिका

अथ पुराणवचनान्युपन्यस्यन्ते तत्र '**प्रत्यस्तमितभेदम्**' इत्यस्य वचनस्यार्थं व्याचिख्यासुस्तदुपयोगित्वेन तदुपक्रमोपसंहारयोः सविशेषपरत्वं दर्शयिष्यन् उपक्रमवाक्यान्युपादत्ते। **ससर्वेति**। तत्र प्रथमग्रन्थो हेयप्रत्यनीकत्वपरः सर्वभूतिप्रकृतिं प्रधानं विकारान् महदादीन् गुणादिदोषान् सत्त्वरजस्तमोहेतुकान् दोषान् ते दोषाः क्लेशादयः। व्यतीतः विशेषेणातीतः नियमेन (अ)तत्परवशतया सम्बन्धानर्ह इत्यर्थः। अतीतसर्वावरणः आवरणं प्रकृतिसम्बन्धकर्मवासनादिकं तत्सर्वमतीतं येन स इत्यर्थः॥

यद्वा सर्वविषयज्ञानावरणं सर्वावरणम्। सर्वविषयज्ञानसङ्कोचातीत इत्यर्थः। ज्ञानगुणशक्त्यादिसर्वगुणसङ्कोचकातीत इति वाऽर्थः अखिलात्मत्वं विवृणोति **तेनेति** नतु मृदात्मको घट इतिवदित्यर्थः **भुवनान्तराळे** उभयविभूत्यन्तरे

## गूढार्थसंग्रहः

**यस्मात्क्षरमतीतोऽहमित्यादि**। अत्र 'अक्षरादपिचोत्तमः' इत्यत्र 'अक्षरात्परतःपरः' इति श्रुतौ च अक्षरशब्दः मुक्तजीवपरः गीतायां 'कूटस्थोऽक्षरः' इत्युक्तेः। 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्युत्तरश्रुतौ परादित्यत्र नामरूपाद्विमुक्त एव विवक्षित इति 'अक्षरात्परतःपरः' इत्यत्रापि परतोऽक्षरादिति योजनया स एवार्थो विवक्षित इति गीताचार्यस्याशयः। विस्तरस्तु भावप्रकाशे तृतीयसम्पुटे द्रष्टव्यः॥

**पुरुषोत्तम इति**। 'उत्तमःपुरुषः' 'अक्षरादपिचोत्तमः' इति पूर्ववाक्यद्वयानुसारेण पुरुषोत्तमशब्दः अत्र यौगिकः। अयमर्थः गीताभाष्ये (शं) गीताविवरणे (मधुसूदनकृते) च स्फुटः विष्णुसहस्रनामभाष्ये (शं) 'अक्षरादपिचोत्तमः' इति गीताऽनुसारेण पञ्चमीसमासो विवक्षित इति पुरुषोत्तमनामविवरणे व्यक्तम्। अत्र अक्षरशब्दस्य मुक्तपरत्वेन मुक्तवैलक्षण्यं परब्रह्मणि विवक्षितमिति भगवत आशयः। एतदनन्तरं 'यो मामेवमसंमूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारत' इति श्लोके 'असंमूढ' इत्यत्र जीवब्रह्माभेदमोहरहित इत्यर्थः पूर्ववाक्यानुसारात्। शङ्कराचार्यैः सूत्रभाष्यादौ विष्णुपुराणवचनानामनुपादानेऽपि सनत्सुजातीयसहस्रनामभाष्ययोः एतत्पुराणवचनान्युदाहृतानि। एवं (पं.पा) विवरणकारैः 'विभेदजनके ज्ञाने' इत्यादिवचनोदाहरणेन विष्णुपुराणे स्वसम्मताद्वैतमेव विवक्षितमिति साधितम् विष्णुपुराणे निर्विशेषाद्वैतसाधकवाक्यानि बहूनि वर्तन्ते इति शङ्कायां तत्पुराणस्य सविशेषपरब्रह्मविषयत्वं साधयितुं तद्वचनान्युपादत्ते **स सर्वभूतिप्रकृतिं विकारानित्यादिना**॥

द्वादशाक्षरप्रतिपाद्यवासुदेवस्वरूपादिनिरूपणपरे विष्णुपुराणे षष्ठांशे भगवच्छब्दवासुदेवशब्दनिरूपणानन्तरं निर्दोषकल्याणगुणाकरवस्तुज्ञानस्यैव ज्ञानत्वं अन्यज्ञानस्याज्ञानत्वं प्रतिपादयतां वाक्यानां प्रथमत उपादानम्। **स इति**। भगवच्छब्दवाच्योऽर्थः परं ब्रह्म वासुदेवरूपं पूर्वमुक्तमिति तस्यैव तच्छब्देन परामर्शः। **समस्तकल्याणगुणात्मक** इति वक्ष्यमाणानुसारेण गुणादीत्यत्र सत्त्वरजस्तमोगुणा एव विवक्षिताः। **तेनास्तृतमिति**। 'स्तृञ् आच्छादने' इतिधातुः

### श्रीभाष्यम्

**'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः । इच्छागृहीताभिमतोरुदेहस्सं-साधिताशेषजगद्धितोऽसौ ॥ तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे ॥' (वि.पु.६.अं.५.अ.८३-८४-८५)**

### श्रुतप्रकाशिका

अथ दिव्यात्मस्वरूपस्य मङ्गलैकतानत्वमाह—**समस्तेति समस्तकल्याणगुणात्मक** इति कल्याणगुणवत्त्वमुच्यतेचेत् तदा आत्मशब्दस्स्वभाववाचीस्यात् । एवं सङ्क्षिप्तार्थस्य तेजोबलैश्वर्येत्यादिना विस्तरःक्रियत इति (विभागः)निर्वाहः) अस्मादपि निर्वाहात् दिव्यात्मस्वरूपपरत्वं युक्तम् अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायात् । तदा कल्याणशब्दो भावप्रधानः समस्तकल्याणत्वं गुणस्वभावो यस्य स समस्तकल्याणगुणः । यथा '**द्व्येकयोर्द्विवचनैकवचने**' इति सूत्रस्थद्व्येकयोरिति पदं द्वित्वैकत्वपरं व्याख्यातम् । अन्यथा द्व्येकेष्विति वाच्यम् ; नतु द्व्येकयोरिति तच्च भावप्रधान-निर्देशस्य साधुत्वज्ञापनाय कृतं तत एवाहि '**गुणास्सत्यज्ञानप्रभृतयः**' इत्यभियुक्तैरुक्तं समस्तकल्याणगुण आत्मा धर्मिस्वरूपं यस्य सः समस्तकल्याणगुणात्मकः । बहुव्रीहिरौपचारिकशिलापुत्रकस्य शरीरमिति निर्देशवत् ॥

दिव्यात्मस्वरूपमेव स्तौति स्वशक्तीति स्वांशलेशाद्धृतभूतसर्गः । यद्वा शक्तिः सामर्थ्यं स्वगुणलवधृतभूतजात इत्यर्थः । भूतसर्गः भूतसमूहः । यद्वा सृजतइति सर्गः, कार्यवस्तुजातमित्यर्थः । अभिप्रायविशेषेण षाड्गुण्यं पश्चाद्वक्ष्यन् प्रथमं दिव्यविग्रहवत्त्वमाह—इच्छेति ; अभिमतत्वं अभिमत्यर्हत्वं स्वानुरूपत्वमिति यावत् । अर्हार्थे निष्ठा यथा—

### गूढार्थसंग्रहः

'छादयामि जगत्सर्वम्' (मोक्षधर्म. ३५०-४१) इति वासुदेवशब्दनिर्वचनानुसारेण 'वस आच्छादने' इति धातुनिष्पन्नवासुदेवशब्दार्थः एतेन दर्शितः । **समस्तकल्याणगुणात्मक इति ॥**

एतावता '**ज्ञानशक्तिबलैश्वर्य**' इत्यादिना प्रागुक्तभगवच्छब्दवाच्यार्थ उक्तः । 'समस्तकल्याणगुणात्मक'—इत्यत्र कल्याणशब्दोपादानेन 'विनाहेयैर्गुणादिभि' रिति पूर्वमुक्त्या च सगुणनिर्गुणश्रुत्योः विषयविभागः प्रदर्शितो—भवति । निर्गुणश्रुतेः पूर्वं परत्र च 'ज्ञःकालकालो गुणी सर्वविद्यः' इत्यत्र गुणी प्रशस्तगुणवानित्यर्थः इति इनिन्प्रत्ययार्थप्राशस्त्यमपि कल्याणत्वरूपमिति बोधितम् । 'इच्छागृहीताभिमतोरुदेहः' इत्यनेन शरीरनिषेधकश्रुतीनां कर्मकृतशरीरनिषेधपरत्वं बोधितं भवति ॥

**संसाधिताशेषजगद्धित इति ।** गीताभाष्ये च अस्मदादीनामपि समाश्रयणीयत्वायावतीर्योर्व्यां सकलमनुजनयनविषयतां गतः परावरनिखिलजनमनोनयनहारिदिव्यचेष्टितानि कुर्वन् अनवधिकदयासौहार्दानुरागगर्भावलोकनालापामृतैः विश्वमाप्याययन् निरतिशयसौन्दर्यसौशील्यादिगुणगणाविष्कारेण अक्रूरमालाकारादीन् परमभागवतान् कृत्वा' इत्यादौ 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥' इति गीतोक्तप्रयोजनप्रदर्शनपूर्वकं 'मांहि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥' इति गीतोक्तसमाश्रयणं इच्छागृहीताभिमतदिव्यविग्रहाभावे न घटते तत्सत्व एव सम्भवतीति निरूपितम् । परवासुदेवासाधारणान् तद्दिव्यविग्रहव्यञ्जयान् 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिविवक्षितान् गुणान् दर्शयति **तेजो बलैश्वर्येत्यादिना ॥**

### श्रीभाष्यम्

**स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तरूपः प्रकटस्वरूपः। सर्वेश्वरः सर्वदृक्सर्ववेत्ता समस्त शक्तिःपरमेश्वराख्यः॥ संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम्। सन्दृश्यते वाऽप्यधिगम्यते वा तत् ज्ञानमज्ञानमतोऽन्यदुक्तम्॥' (वि.पु.६.५.८६-८७)**

### श्रुतप्रकाशिका

'**अदृष्टो द्रष्टा अश्रुतः श्रोता**' इति तत्र ह्यर्हार्थीयः क्तः। अद्रेश्यमग्राह्यमित्याद्यैकार्थ्यात्। अभिमतस्याननुरूपत्वमनुरूपस्यानभिमतत्वं च लोके दृश्यते तद्व्यावृत्त्यर्थमिच्छागृहीताभिमतशब्दौ। निरुपपदेच्छाशब्दो नित्येच्छाया अवतारसमयजन्येच्छायाश्च साधारणः असङ्कोचात्॥

अथावतारद्वारेण साध्यं विग्रहप्रयोजनमाह— **संसाधितेति**; अथ षाड्गुण्यवत्तामाह—**तेज इति**; नात्र क्रमविवक्षा महाशब्दसुशब्दौ सर्वगुणसाधारणौ महत्त्वमपरिच्छिन्नत्वम्। यथा '**महोत्साहो महाबलः। महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः॥**' इति यथा '**प्रकृष्टं विज्ञानं बलमतुलम्**' इत्यादि। सुशब्देन तेषां मङ्गलत्वच्यते। एवं स्वरूपतो विग्रहतो गुणतश्च पर इत्याह—**परइति**। गुणादिदोषानित्यत्र दोषशब्दार्थं विवृणोति **न यत्रेति**। **क्लेशादयः**, क्लेशकर्मविपाकाशयाः अविद्यास्मिता रागद्वेषाभिनिवेशाः क्लेशाः कर्म पुण्यापुण्यात्मकं जात्यायुर्भोगाविपाकाः, आशयः वासना संस्कारः '**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः**' इति योगसूत्रं स्मारयति **स ईश्वरइति**। योगशास्त्रादपि वेदान्तार्थस्य वैषम्यमाह—**व्यष्टीति**॥

पूर्वं भेदश्रुत्यर्थ उक्तः अथैक्यश्रुतिनिर्वाहार्थं घटकश्रुत्यर्थ उच्यते व्यष्टीति व्यष्टिसमष्टिशब्दाभ्यां कार्यकार(णा(णभावा)वस्थचेतनवर्ग उच्यते रूपं शरीरं स्वरूपं स्वासाधारणं शरीरम्। शरीरलक्षणं सूचयति **सर्वेश्वरइति**। ईश्वरः—नियन्ता अनेन नियाम्यत्वं शरीरत्वं सिद्धम्। नियाम्यविशेषोहि शरीरं सर्वदृक्सर्ववेत्ता स्वरूपतः प्रकारतश्च सर्वं जानातीत्यर्थः। यद्वा '**विश्वतश्चक्षुः**' इत्यादिश्रुतिप्रक्रियया सर्वतोदृग्भवन् सर्वं वेत्तीत्यर्थः। यद्वा सर्वेषां दृक् सर्ववेत्ता च '**चक्षुर्देवानामुतमर्त्यानाम्**' इति श्रुतेः चक्षुः ज्ञानप्रदः। सर्वं विन्दतीति वा सर्ववेत्ता अवाप्तसमस्तकाम इत्यर्थः। समस्तशक्तिः शक्तिः कार्योपयोग्यपृथक्सिद्धविशेषणम् उक्तप्रकारेण सर्वशरीरकत्वात् अस्य सर्वमपृथक्सिद्धविशेषणमित्यर्थः। **परमेश्वराख्यइति** परमशब्देन (अनन्येश्वरत्वं सिद्धं)अन्येश्वरत्वं निषिद्धं) परोमा यस्येतिहि परमः॥

एवंविधेश्वरविषयज्ञानस्यैवापवर्गोपायवेदनत्वमाह—**संज्ञायतइति**। स ज्ञायत इति पाठे अस्तदोषमित्यादि ब्रह्मविशेषणं येन शास्त्रजन्यज्ञानेन विज्ञायते। येनोपासनात्मकेन संदृश्यते। येन परभक्तिरूपेणानुभवरूपेण प्राप्यते अनुभूयत इत्यर्थः।

### गूढार्थसङ्ग्रहः

**संज्ञायते (सञ्ज्ञायत) इत्यादि**। अत्र ज्ञायते संदृश्यते अधिगम्यते इति पदैः 'येनाक्षरं पुरुषं वेद', 'ओमित्येवात्मानं ध्यायथ' 'तद्विज्ञानेन परिपश्यन्ति' 'अथ परा यया तदक्षरमधिगम्यते' इति **श्रुत्यर्थ** उक्तः। 'द्वे विद्ये वेदितव्ये' यया तदक्षरमधिगम्यते' इत्यादिमुण्डकश्रुत्यर्थस्य षष्ठांशे एव विशदतरमुपपादनात्। एतेन 'अथ परा यया तदक्षरम्' इत्यत्रापि 'प्राकृतान् हेयगुणान् प्रतिषिध्य नित्यत्व विभुत्व सूक्ष्मत्व सर्वगतत्वाव्ययत्वभूतयोनित्वसार्वज्ञ्यादि—कल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादित इति प्रागुक्तार्थः विष्णुपुराणैतद्वचनोपबृंहणानुरोधेन स्थापितो भवति॥

श्रीभाष्यम्

**'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय भगवच्छब्दस्सर्वकारणकारणे॥ (६.अं ५.अ.७२) संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः। नेता गमयिता स्रष्टा गकारार्थस्तथा**

श्रुतप्रकाशिका

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप॥**

इति वचनात्। स ज्ञायत इति पाठे अस्तदोषमित्यादिब्रह्मज्ञानविशेषणं **'अर्थेनैव विशेषोहि निराकारतया धियाम्'** इति (न्याया)वचना)त्। ज्ञानस्यास्तदोषत्वादिकं विषयद्वारा अस्तदोषमिति दोषास्पदाचिद्विषयज्ञानाद्व्यावृत्तिः। **शुद्ध-मिति 'अशुद्धास्ते समस्तास्तु'** इत्याद्युक्त कर्मवश्याशुद्धबद्धजीवविषयज्ञानाद्व्यावृत्तिः। परं निर्मलं अत्यन्तनिर्मलम्। अनेन कदाचित्कर्मसम्बन्धार्हतारूपमलान्वितमुक्तविषयज्ञानाद्व्यावृत्तिः। **एकरूपमिति** नित्यमुक्तविषयानेकरूपज्ञानाद्व्या-वृत्तिः। अनया दिशा ब्रह्मविशेषणत्वेऽपि व्यावृत्तिर्द्रष्टव्या। ब्रह्मविशेषणत्वे एकरूपमित्याश्रयणीयत्वोपयोगिविशेषणं च भवति; स्थिरस्वभावं आश्रितसंरक्षणादिप्रतिज्ञायां दृढतरमित्यर्थः। अज्ञानं मोक्षोपायज्ञानादन्यत्तद्विरोधि वा **'सा विद्या या विमुक्तये'** इति वचनात्। यद्वा अज्ञानं ज्ञानाभावः ब्रह्मपर्यन्तत्वाभावेन अयथावस्थितवस्तुविषयत्वात्। ब्रह्मविशेषणत्वे एकवाक्यं ज्ञानविशेषणत्वे वाक्यद्वयं **'प्रत्यस्तमित'** इत्यादिश्लोके प्रत्यस्तमितभेदं हृदि निधाय सविशे-षत्वे वचनानि दर्शितानि अथागोचरं वचसामित्येतद्व्याचिख्यासया शब्दगोचरत्वे वचनानि दर्शयति **शुद्धइत्यादिना**॥

तत्र **'अशब्दगोचरस्य'** इत्यादिके पूर्वश्लोके मुक्तात्मनि भगवच्छब्द औपचारिक इत्युक्तम्, तत्कथमित्यपेक्षायां मुक्तात्मव्यावर्तकं भगवच्छब्दप्रवृत्तिनिमित्तमाह—**शुद्धइति** यत्र प्रवृत्तिनिमित्तपौष्कल्यं तत्रैवहि मुख्यत्वं नान्यत्रेति भावः। शुद्धे **'सिद्धे शब्दार्थसम्बन्धः'** इत्यत्र सिद्धशब्दवत् शुद्धशब्दोऽवधारणगर्भः शुद्ध एव नित्यशुद्धइत्यर्थः— **'अब्भक्षो वायुभक्षः'** इतिवत् सिद्धशब्दस्यावधरणगर्भत्वात् सिद्धशब्दो नित्यपरत्वेन व्याख्यातः तद्वत्। अनेन नित्यशुद्धत्वेन सकलचेतनव्यावृत्तिः नित्यसिद्धानामपि नित्यशुद्धत्वस्य भगवन्नित्येच्छायत्तत्वात् महाविभूत्याख्ये विभूति भूतस्य महाविभूतित्वायोगात् उभयविभूतिशेषित्वं समस्तचेतनव्यावर्तकम्। परे ब्रह्मणीत्यनेन च चेतनव्यावृत्तिस्सिद्धा अपरात्माहि केवलब्रह्मशब्देनोक्तः **'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज'** इति। उत्तरत्रतु **'परब्रह्मभूतस्य'** इतिहि परमात्मा वक्ष्यते। प्रदेशान्तरेऽपि परब्रह्मशब्दः परमात्मपर एव दृश्यते। अतो परमात्मव्यावृत्त्यर्थं महाविभूत्याख्ये परे ब्रह्मणीत्युक्तम्। सर्वकारणकारणत्वं च भगवत एव जगद्व्यापारविरहितोहि मुक्तात्मा। एवमुक्तप्रवृत्तिनिमित्तपौष्क-ल्यात्सर्वेश्वरे एव भगवच्छब्दो मुख्यवृत्तः नान्यत्रेत्यर्थः॥

गूढार्थसंग्रहः

एतावता निर्दोषत्वकल्याणगुणाकरत्वाभ्यां निरवग्रहमहान् ज्ञानादिषड्गुणोपेतः परवासुदेव एव ज्ञेयः इति निर्णीतं भवति। अथ गुणशून्यस्य लक्ष्यस्य च न परब्रह्मत्वं किंतु भगवच्छब्दवाच्यस्य ज्ञानादिषड्गुणवत एव परब्रह्मत्वमिति तत्पूर्ववचनैः साधयति **शुद्धे महाविभूत्याख्ये इत्यादिना। 'महाविभूत्याख्ये'** इत्यत्र महती विभूतिः यस्य सः महाविभूतिः महाविभूतिरिति आख्या वाचकः शब्दः यस्य तत् महाविभूत्याख्यं महाविभूतिशब्दवाच्यमित्यर्थः। परे ब्रह्मणि इत्यनेन महाविभूतिशब्दवाच्यस्यैव परब्रह्मत्वं प्रतिपादितम्। तच्च सर्वकारणकारणमेव, अत्र 'सर्वव्यापी स

## श्रीभाष्यम्

**मुने। ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भगइतीरणा। वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि॥ सच भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः।**

## श्रुतप्रकाशिका

इममर्थं विवृण्वन् अक्षरशस्समुदायतश्च भगवच्छब्दार्थमाह—**संभर्तेत्यादिना**। शुद्धत्वं विनाहेयैरिति विवृतम्। भोग्यसम्पद्वाचकेनैश्वर्यस्य समग्रस्येति श्लोकस्थश्रीशब्देन भोगविभूतेः, सम्भरणाद्युक्त्या लीलाविभूतेश्चात्र दर्शितत्वान्महाविभूतित्वं विवृतम्। सर्वकारणकारणत्वंचोपरि स्पष्टम्। अत एव ज्ञानशक्त्यादिभिश्च निरतिशयबृहत्वात्परब्रह्मत्वं स्फुटम्। अतः उत्तरग्रन्थानां शुद्धइत्यादिश्लोकविवरणरूपत्वं युक्तम्। भश्च गश्च (भगश्च) वश्चेति विभज्यार्थ उच्यते। एतेषां पदानां तत्तद्धातुषु '**अन्येष्वपि दृश्यते**' इति डप्रत्यये टिलोपे च कृते एवं रूपं भवतीति भार्थमाह—**समित्यर्धेन**। संभर्ता संभरणं उपकरणसंविधानं प्रकृतिपुरुषकालान् कार्योत्पत्तियोग्यान् करोतीत्यर्थः। महदादिसृष्टिरण्डरूपकार्योत्पत्युपयुक्ता संभरणमिति वा विवक्षिता। भर्ता स्वामी धारणस्य वकारवाच्यत्वात्। पोषकत्वस्य गकारवाच्यनेतृत्वान्तर्भावात् अपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च स्वामित्वमिह विवक्षितम्॥

यद्यपि प्रत्ययविशेषयुक्तस्य भरतेस्स्वामिनि रूढत्वम्। तथाऽपि पूर्वोक्तयुक्तिसचिवार्षवचनबलाद्धातुमात्रस्य स्वामिवाचित्वं निश्चीयते इतिकरणेन संभर्तृत्वभर्तृत्वे प्रवृत्तिनिमित्ते निष्कृष्योच्यते। अतएवार्थद्वयान्वित इत्युक्तम्। उत्तरत्र तु प्रवृत्तिनिमित्तत्रयेसत्यपि इतिकरणेन तेषामनिष्कृष्टत्वात्प्रवृत्तिनिमित्तत्रयविशिष्टो धर्म्येक एवार्थ उक्तः। गकारार्थमाह—**नेतेति** उपसर्गस्फुटीकृतानामर्थानां धातुलीनत्वादुद्गमयिता सङ्गमयितेत्येवंरूपपदानामर्थमाह—**नेतेति**। स्रष्टेत्यनेनोद्गमयितृशब्दार्थ उक्तः। नेतेति गमयितृशब्दार्थ उक्तः, स्थितिकर्तेत्यर्थः। गमयितृशब्देन संगमयितृशब्दार्थ उक्तः। सच संहारः यथा '**यस्मिन्निदग्ँसंच विचैति सर्वम्**' इत्यत्र व्येति समेतीति सर्गसंहारावुच्येते तद्वत् यद्वा कारणभूतं स्वात्मानं गमयिता स्वस्मिन् कार्यवर्गस्य लयकर्तेत्यर्थः। उपसर्गाप्रयोगेऽप्यर्थानां धातुलीनत्वादेवं व्याख्यातं भगवता पराशरेण। अथ वकारव्याख्यानात्पूर्वमेव भकारगकारसमुदायस्यार्थमाह—**ऐश्वर्यस्येति**। समग्रशब्दस्सर्वत्रान्वेति। परिच्छिन्नचतुर्मुखाद्यैश्वर्यादिव्यावृत्त्यर्थस्समग्रशब्दः। यशः गुणवत्ताप्रथा; श्रीः भोग्यसम्पत् वैराग्यं विरक्तिः परिपूर्णत्वादनादरतेत्यर्थः। यथा '**अवाक्यनादर**' इति मतुप्प्रत्ययस्य प्रसिद्धार्थत्वात् न तद्व्याख्यातम्। अथ वकारार्थमाह—**वसन्तीति**। '**अन्येष्वपि दृश्यते**' इति डप्रत्ययस्यानेकार्थत्वात् अधिकरणे कर्तरि च व्युत्पत्तिः। भूतात्मनि भूतानामा-

## गूढार्थसंग्रहः

भगवान्' (श्वे.३.४) 'क्षरन्त्वविद्याह्यमृतं तु विद्या विद्या विद्ये ईशते यस्तु सोऽन्यः' (श्वे.५.१) एकैकं जालं बहुधा विकुर्वन्नस्मिन्क्षेत्रे संहरत्येषदेवः। भूयस्सृष्ट्वा पतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा। (५.३) सर्वादिशउर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते यद्वनड्वान्। एवं स देवो भगवान् वरेण्यः योनिस्वभावानधितिष्ठत्येकः' (५.४) तद्वेद गुह्योपनिषत्सु गूढं तद्ब्रह्मावेदयते ब्रह्मयोनिम्। ये पूर्वं देवा ऋषयश्च तद्विदुः ते तन्मया अमृता वै बभूवुः पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (६.८) इत्यादि श्वेताश्वतरश्रुत्यर्थो विशदीक्रियते॥

**सच भूतेष्वशेषेष्विति**। 'व्याप्य नारायणस्थितः' इति श्रुत्युक्तदिशा 'सर्वव्यापी स भगवान्' इति श्रुत्युक्तसर्वव्यापित्वमत्र विवक्षितम्। 'एवं स देवो भगवान्' इत्यत्र देवशब्दश्श्रूयते, अतश्च वासुदेवः श्रुतौ विवक्षितः।

## श्रीभाष्यम्

**ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः। एवमेष महाशब्दो मैत्रेय भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः॥' (वि.पु.६.अं.५.अ.७३-७४-७५-७६-७९) 'तत्र पूज्यपदार्थोक्ति परिभाषासमन्वितः। शब्दोऽयं नोपचारेण**

## श्रुतप्रकाशिका

त्मनि अखिलशरीरके यद्वा—भूतशब्देन कार्यजातमुच्यते, तस्यात्मनि अखिलात्मनि, कार्यानन्तर्भूतानां नित्यमुक्तानां आत्मनीत्यर्थः॥

अथ समुदायशक्तिविषयमर्थमाह—**ज्ञानशक्तीति**। पाठक्रमेतु '**एवमेष**' इत्यादिश्लोकद्वयानन्तरं '**ज्ञानशक्तिबलैश्वर्य**' इत्यादिश्लोकः पठ्यते ; तथाऽपि प्रवृत्तिनिमित्तवाचित्वसङ्गतिवशात् '**एवमेष**' इत्यादिश्लोकद्वयात्पूर्वं '**ज्ञानशक्ति**' इत्यादिश्लोक इह उपात्तः। '**उत्पत्तिं प्रलयं चैव**' इत्यादिश्लोकस्य प्रस्तुतानुपयुक्तत्वाच्चैवमुपादानं कृतम्। भगवच्छब्दवाच्यानि प्रवृत्तिनिमित्तत्वेन वाच्यानीत्यर्थः। अशेषतः न प्रत्येकं (प्रवृत्तिनिमित्तानि) अपितु समुचितेत्यर्थः। अशेषशब्देन षाड्गुण्यावान्तरभिदा रूपं शीलादिगुणजातं च क्रोडीकृतम्। यद्यप्यैश्वर्यवीर्यज्ञानानि पूर्वं कण्ठोक्तानि। तथाऽपि कतिपयसमुदाय्यावापोद्वापप्रयुक्तसमुदायभेदादपुनरुक्तिः नचात्र समुदायशक्तिः कल्प्यते येनानुक्तगुणमात्रगोचरता स्यात्। वचनबलादेव शक्तिस्वीकारः पूर्वमक्षरार्थकथनेन भकारगकारवकाराव्याख्याताः। अथ अन् इत्यस्यार्थमाह-**विनेति**। '**कश्यपः पश्यको भवति**' इति अन् इत्यनेन नेत्युक्तं भवति, निषेध्यंच हेयमित्यर्थः

**एवं** प्रवृत्तिनिमित्तपौष्कल्यात् भगवत्येव मुख्यवृत्तत्वमाह-**एवमिति**। महार्थगर्भत्वान्महाशब्दत्वम् ; मुक्तात्मव्यावृत्त्यर्थं परमब्रह्मेत्युक्तम्। कथं तत्रैव मुख्यवृत्तत्वं अन्यत्रापि तत्प्रयोगो दृश्यत इत्यत्राह—**तत्रेति**। (पूज्यपदार्थानां यौगिकानामुक्त्या योगशक्त्या परिभाषया रूढिशक्त्या च समन्वितः) (पूज्यपदार्थोक्तिः पूज्यानामवयवार्थानामुक्तिः परि-

## गूढार्थसंग्रहः

**ज्ञानशक्तिबलैश्वर्येति**। 'पराऽस्य शक्तिः' इत्यादिश्रुत्यर्थः॥ **विनाहेयैर्गुणादिभीरीत**। निर्गुणश्रुतेः पूर्वं परत्र च 'ज्ञःकालकालो गुणी सर्वविद्यः' इति श्रुतौ गुणी इत्यत्र मतुबर्थप्राशस्त्यविवक्षाया इत्थमुक्तिः॥

**परमब्रह्मभूतस्य वासुदेवस्येति**। 'सर्वव्यापी स भगवान् एवं स देवो भगवान्' इत्यादिश्रुतिषु वासुदेवस्यैव भगवच्छब्दार्थत्वोक्तेः 'यमन्तस्समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः। यतःप्रसूता जगतःप्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्' इत्यादौ 'तदेव ब्रह्म परमं कवीनाम्' इत्यन्ते जगत्कारणस्यैव परब्रह्मत्वोक्तेश्च। 'ये पूर्वे देवा ऋषयश्च तद्विदुः' (श्वे) 'कवयो वयन्ति, तदेव ब्रह्म परमं कवीनाम्' (तैत्त) इत्यत्र ऋषिकविशब्दप्रयोगेण पराशरादीनामेतदर्थनिष्कर्षः वर्तत इति प्रतीयते। अत्र 'द्वे विद्ये वेदितव्ये' इति चाथर्वणी श्रुतिः। 'परयात्वक्षप्राप्तिः' (वि.पु.६.५६५) 'यत्तदद्रेश्यमजरं' 'विभुं सर्वगतं नित्यं भूतयोनिं' 'तद्ब्रह्म तत् परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः। तदेव भगवद्वाच्यं स्वरूपं परमात्मनः॥ वाचको भगवच्छब्दः तस्याद्यस्याक्षयात्मनः।' (६.५.६९) 'एवं निगदितार्थस्य तत्त्वं तत्त्वस्य तत्त्वतः। ज्ञायते येन तज्ज्ञानं परमन्यत् त्रयीमयम्' इत्युपक्रमे भगवच्छब्दवाच्यार्थज्ञानमेव परज्ञानमित्युक्तम्॥ अनन्तरं **शुद्धे महाविभूत्याख्ये** इत्यादिना **परमब्रह्मभूतस्य वासुदेवस्य नान्यगः**। इत्यन्तेन भगवच्छब्दवाच्यत्वं परब्रह्मण इत्यभिधाय **तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्** इति वाच्यार्थज्ञानस्यैव ज्ञानत्वमुपक्रमोक्तमुपसंहृतम्।

### श्रीभाष्यम्

**ह्यन्यत्र ह्युपचारतः ॥ समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।**

### श्रुतप्रकाशिका

भाषा रूढिः ताभ्यां समन्वितः योगरूढिभ्यां विशिष्टः) अतएव नोपचारेण मुख्यवृत्तइत्यर्थः । अन्यत्रामुख्यत्वमुक्तमित्याह–**अन्यत्रहीति** । मुक्तात्मन्यौपचारिकत्वोक्त्या अर्थान्तरप्रयोगेष्वप्यौपचारिकत्वमर्थाद्दर्शितमितिहिशब्दाभिप्रायः भगवच्छब्दप्रयोगविषयेषु सर्वेषु प्रयोगेऽन्यथासिद्धेऽपि नहि शक्तिभेदकल्पनं युक्तम् । यत्र ज्ञानादयो निरंकुशाः स एव मुख्यार्थः । गुणलेशयोगादपि प्रयोगसम्भवात् अन्यत्र वृत्तिरौपचारिकीत्यर्थः ॥ अथ तस्मिन्नेव योगप्रकरणे उपसंहारेऽपि संविशेषपरवाक्यानि दर्शयन् दिव्यविग्रहवत्त्वंचाह—**समस्ता इति** । बद्धो मुक्तः कर्मरूपाऽविद्या च शक्तयः तत्तदभि-

### गूढार्थसंग्रहः

**ज्ञानशक्तिबलैश्वर्य** इत्यादिना भगवच्छब्दवाच्यगुणषट्कमपि प्रदर्शितम् । अयं च परवासुदेवः परब्रह्मभूतः ज्ञानादिगुणषट्कवान् मुण्डकश्रुतिप्रतिपाद्यः इत्येतेन स्थापितं भवति । एवं वदतः पराशरस्य 'येनाक्षरं पुरुषं वेद सत्यम्' 'परात्परं पुरुषमुपैति दिव्यम्' इत्युपक्रमोपसंहारयोः पुरुषशब्दः परवासुदेवपरऐवेत्याशयः प्रतीयते । पुरुषशब्दस्य वासुदेवपरत्वं पाद्मपुराणे व्यक्तम् । 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने ॥' (६.ख२५४.अ.६६) इति ॥

**अन्यत्र ह्युपचारत इति** । 'उत्पत्तिं प्रलयंचैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' (६.५.७८) इत्यनन्तरश्लोके औपचारिकार्थ उक्तः । अत्र अन्यत्रेत्यस्य **शुद्धे महाविभूत्याख्ये** इत्यतः पूर्वं 'ज्ञायते येन तज्ज्ञानम्' इत्यतोऽनन्तरं 'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज । पूजार्थां भगवच्छब्दः क्रियते ह्युपचारतः ॥' (६.५.७१) इत्यत्रार्थो स्पष्टमुक्तः । मुक्तस्य 'नामरूपाद्विमुक्तः' इति श्रुत्या देवादिशब्दावाच्यत्वस्य प्रतिपादनेन मुक्तेरप्यौपचारिकःप्रयोग इत्यर्थः । व्यासोऽपि भगवतो वासुदेवस्य परब्रह्मत्वं स्पष्टमाह–'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः । सहि सत्यमृतंचैव पवित्रं पुण्यमेव च ॥' (महाभा.आदि.१.२८२) शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिस्सनातनम् ।' इति अत्र ध्रुवत्वं 'नित्यंहि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥' (भा.शा.प.३४८.८५) इत्यत्र प्रलयासंस्पर्शित्वेन विशदीकृतम् ॥

अत्र ज्योतिश्शब्देन 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा.३.१३.७) इति श्रुत्यर्थः उक्तः । एतत्पूर्वं 'पादोऽस्य सर्वा भूतानि । त्रिपादस्यामृतं दिवि' इति श्रूयते । एतच्छ्रुत्यर्थः विष्णुधर्मोत्तरे एतत्समानार्थकपुरुषसूक्तश्रुतिविवरणेन प्रदर्शितः । 'भगवान् वासुदेवस्तुदेवस्सङ्कर्षणस्ततः । प्रद्युम्नश्चानिरुद्धश्च प्रभायोऽयमुदाहृतः' (वि.ध.उ.१.६६.३४) 'चत्वार एते धर्मज्ञ वासुदेवाःप्रकीर्तिताः । भगवच्छब्दवाच्यास्तु सर्वभूतभवोद्भवाः ॥ (३७) तदेतत्पठ्यते सूक्ते पौरुषे द्विजसत्तम । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥' (४०.उ.६३) इति वैकुण्ठसंहितायां च 'अण्डेभ्यः परतो नित्यं त्रिपादेन विराजते । जगत्सृष्ट्यादिकर्माणि कर्तुकामः स्वलीलया ॥' इत्युक्तम् । एवं च 'पादोऽस्य विश्वा भूतानि' इति । पूर्वश्रुतौ वासुदेवस्य विवक्षितत्वेन 'अथ यदतःपरो दिवो ज्योतिः' इत्यत्र परवासुदेव एव दिव्यमङ्गलविग्रहविशिष्टतया ज्योतिश्शब्दवाच्यः' इति व्यासाशयः । दिव्यमङ्गलविग्रहपरवचनमुपादत्ते **समस्ताश्शक्त इति** ॥

### श्रीभाष्यम्

**तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्। समस्तशक्तिरूपाणि तत्करोति जनेश्वर। देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया। जगतामुपकाराय न सा कर्मनिमित्तजा।**

### श्रुतप्रकाशिका

मानिदेवताद्वारेण तत्र तासां प्रतिष्ठितत्वं यत्रेत्यनुवादस्य पुरोवादसापेक्षत्वा दस्त्रभूषणाध्याये यथोक्तप्रकारेण पुरोवादाच्च, तद्विश्वरूपवैरूप्यमिति सन्निवेशवैलक्षण्यमुक्तम्। अन्यदिति द्रव्यान्तरत्वमुक्तम्। महदित्यपरिच्छेद्यत्वम्। विलक्षणसन्निवेशस्य सकलेतरविसजातीयस्य कथं चिन्तयितुं शक्यत्वमित्यत्राह—**समस्तेति**। केन हेतुनेत्यत्राह—**स्वलीलयेति**। लीलायाः प्रयोजनत्वात्तदभिसंधिर्हेतुः नतु कर्मणेत्यर्थः। किं प्रयोजनमित्यत्राह **जगतामिति**। नतु (स्व)कर्मफलभोगायेत्यर्थः। एतद्विवृणोति। **नसेति**। व्यापिनी देशनियमरहिता यथा वैदिकपुत्रानयनादिषु व्यापनशक्तत्वेऽपि प्रतिबन्धस्सम्भवतीत्यत्राह—**अव्याहतात्मिका** न तस्याः प्रतिहतिरस्तीत्यर्थः॥

### गूढार्थसंग्रहः

अत्र विष्णुचित्तार्याः 'अथ उक्तशक्तित्रयस्य अस्त्रभूषणादिरूपेण नित्याश्रयभूतं जगदेककारणतयोक्तं भगवद्रूपं तस्य शुभाश्रयत्वं वक्तुमाह—**समस्ता** इति। विश्वरूपवैरूप्यं उक्तविश्वरूपविलक्षणं, रूपं शरीरमन्यत् द्रव्यान्तरं 'आदित्यवर्णं तमसःपरस्तात्' 'अमृतो हिरण्मयः' (तै) 'विद्युतःपुरुषादधि' (तै) ''माहारजनं वासः' (बृ) 'पुण्डरीके इव अक्षिणी' (छा) 'रुक्मवर्णं कर्तारमीशं' (मु) 'रुक्माभम्' (मनुस्मृति) इत्यादिवचनसिद्धम्। महत् स्थूलं गुणतोऽपि महत्त्वं विवक्षितम्। एवं विधं रूपमन्यत्' इति व्याचख्युः॥

'विष्णुशक्तिःपरा प्रोक्ता' इति उदाहरिष्यमाणैतत्पूर्ववचने शक्तित्रयं स्पष्टम्। 'आत्मानमस्य जगतो निर्लेपमगुणामलम्। बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः॥' (१.अं.२८.अ.६८) श्रीवत्ससंस्थानमयमनन्तेन समाश्रितम्। प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे॥ ६९॥ भूतादिमिन्द्रियादिं च द्विधाऽहङ्कारमीश्वरः। बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम्॥ ७०॥ चलस्वरूपमत्यन्तं जवेनान्तरितानिलम्। चक्रस्वरूपं च मनो धत्ते विष्णुःकरे स्थितम्॥ ७१॥ पञ्चरूपातु या माला वैजयन्ती गदाभृतः। सा भूतहेतुसङ्घातो भूतमाला च वै द्विज॥ ७२॥ यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै। शररूपाण्यशेषाणि तानि धत्ते जनार्दनः॥ ७३॥ बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम्। विद्यामयंतु तज्ज्ञानमविद्याचर्मसंस्थितम्॥ ७४॥ इत्थं पुमान् प्रधानं च बुद्ध्यहङ्कारमेव च। भूतानि च हृषीकेशे मनस्सर्वेन्द्रियाणि च॥ ७५॥ विद्याविद्ये च मैत्रेय सर्वमेतत्समाश्रितम्। अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितः॥ ७६॥ बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः।' इत्यत्र शक्तित्रयाभिमान्यस्त्रभूषणादिविशिष्टविग्रहः परब्रह्मणः प्रदर्शितः॥

**समस्तशक्तिरूपाणीत्यादि**। अत्र विष्णुचित्तार्याः—' उक्तसमस्तशक्त्याश्रयं तद्रूपं भगवानेव जगदुपकाराय स्वलीलया देवतिर्यङ्मनुष्याख्यचेष्टावन्ति देवाद्यवताररूपाणि करोतीत्याह—**समस्तेति द्वयेन** समस्तशक्तीतिपदच्छेदः। समस्ताश्शक्तयो यस्मिंस्तथोक्तम्। मन्वन्तरेष्वशेषेषु देवत्वेनातिष्ठति। प्रतिकल्पं चतुर्दश देवावताराः त्रिमूर्तिमध्यगतं विष्णवादयश्च। मत्स्यादयस्तिर्यगवतारा:, रामादयो मनुष्यावताराः। **जगतामिति**। जगदुपकाराय न कर्मण उपभोगाय, स्वलीलया। नतु प्रयोजनान्तरेण, सा—जन्मादिरूपा चेष्टा। तत्र ज देवमनुष्यादिसर्वजातिव्यापिनी। यथाऽऽह—' बहुधा-

## श्रीभाष्यम्

**चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका । एवंप्रकारममलं नित्यं व्यापकमक्षयम् ॥**

## श्रुतप्रकाशिका

**यद्वा** व्यापिनी सर्वावतारानुगुणा अव्याहता देशकालवस्तुकृतप्रतिबन्धरहिता एवं प्रत्यस्तमितेति श्लोकस्य परमात्मपरत्वाभ्युपगमेऽपि निर्विशेषपरत्वनिराचिकीर्षया उपक्रमोपसंहारयोस्तस्मिन्नेव प्रकरणे सविशेषपरत्वं दर्शितम् । अथास्य श्लोकस्य परिशुद्धजीवात्मस्वरूपविषयत्वं प्रत्यस्तमितभेदादिपदानां कतिपयविषयत्वं च विवक्षुस्तदर्थं परमात्मविषयभेदनिषेधादीनां कतिपयविषयत्वाभिधायीनि वाक्यानि दर्शयिष्यन् परमात्मविषयकतिपयभेदनिषेधपरवचनोदाहरणेन मुक्तात्मविषये किमायातमिति शङ्कायां मुक्तस्य परमात्मसाम्यप्रतिपत्तये मुक्तगुणान् परमात्मन्यतिदिशन्तं श्लोकं दर्शयति । **एवंप्रकारमिति** । एतच्छ्लोकोदाहरणेन **प्रत्यस्तमित**त्यादिश्लोकानन्तरं पूर्वपक्षे पठितस्य **ज्ञानस्वरूपम्** इत्यादेः प्रथमांशोपक्रमश्लोकस्य चतुश्श्लोक्याश्च सविशेषपरत्वप्रतिपादनाय प्रथमांशोपसंहारेऽपि सविशेषपरत्वं दर्शितं भवति ॥

## गूढार्थसङ्ग्रहः

वैजायते ' इति । कर्मरूपा—बृन्दावनगोकुलकालियह्रदादिव्यापिनी । अव्याहतात्मिका रावणशिशुपाल बाण शक्र शर्वादिभिरप्रतिहता । न सा कर्मनिमित्तजे ' त्यनेन त्रिभावनाऽतीतत्वादवताराणामपि शुभाश्रयत्वं दर्शितम् ' इति व्याचख्युः ॥

एतावता परब्रह्मणः अविद्यादिदोषविरहज्ञानादिगुणदिव्यमङ्गलविग्रहयोगश्च दर्शितो भवति । ' श्रेयसे प्राणिनां हरिः ' (१.अं) ' जगतामुपकाराय ' (६.अं) इत्युभयत्र भगवतः विग्रहसम्बन्धः परसुखप्रयोजनायेत्युक्त्या ' भक्तानुग्रहविग्रहम् ' (वि.ध.उ) इत्युक्त्या च विग्रहस्य मिथ्यात्वं प्रतिषिद्धम् । अतएव ' पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ' इति गीता (शं) भाष्ये ' दिव्यान्यप्राकृतानि ' इति विवरणं सङ्गच्छते । ' बिभर्ति मायारूप ' इत्यतःपूर्वं ' अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जित ' इत्यत्र ' रूपवर्जित ' इति ' अशब्दमस्पर्शमरूपम्' इति श्रुत्युक्तरूपशून्यपरम् । नतु विग्रहवर्जितपरम् । ' भारूपः सत्यसङ्कल्पः ' (छा) ' यत्ते रूपं कल्याणमयं तत्ते पश्यामि' (ईशा) इति श्रुतिविरोधात् ॥

अत्र इन्द्रो मायाभिःपुरुरूप ईयते युक्ताह्यस्य हरयश्शता दश ' तदेतद्ब्रह्मापूर्वमनपरम् ' ' अयमात्मा ब्रह्म सर्वानुभूः इत्यनुशासनम् । ' (बृ.४.५.१९) इति बृहदारण्यकश्रुतिर्मूलम् । अत्र ' सर्वमनुभवतीति सर्वानुभूः ' इति परेषां भाष्यम् । ' सर्वैरनुभूयते, सर्वाननुभावयति ' इति विवरणमेतद्वचनानुगुणम् । एतत्पूर्वं ' रूपं रूपं प्रतिरूपो बभूव ' इति श्रुतौ प्रतिरूपः अनुरूपो वा यादृक्संस्थानौ मातापितरौ तत्संस्थानस्तदनुरूप एव पुत्रो जायते । नहि चतुष्पदो द्विपाज्जायते द्विपदो वा चतुष्पात् ' ' तदस्य रूपं प्रतिचक्षणाय ' इत्यत्र आत्मनो रूपं प्रतिचक्षणाय **प्रतिख्यानाय** ' इति परैर्व्याख्यातम् । स एवार्थस्सिद्धान्ते, इममर्थमभिप्रेत्य ' पश्य मे पार्थ रूपाणि ' इति गीताभाष्यतात्पर्यचन्द्रिकायां— ' रूपं रूपं प्रतिरूपो बभूव ' इति श्रुत्या अयमप्यर्थो विवक्षित इति **केचित्** इत्युक्तम् । ' इन्द्रो मायाभिः ' इत्यत्र मायाशब्दस्य विचित्रशक्तिपरत्वं भगवतैव स्थापयिष्यते ॥

परब्रह्मणः ज्ञानादिगुणविग्रहवत्त्वाङ्गीकारे अद्वैतवाक्यविरोध इति शङ्कायां मुक्तब्रह्मणोः परमसाम्यप्रतिपादकश्रुत्यनुसारेण जीवाद्वैतपरवाक्यानन्तरं परमात्मनो मुक्तधर्मवत्त्वप्रतिपादकमस्त्रभूषणसंस्थानस्वरूपप्रतिपादकवचनेभ्यः पूर्वं प्रथमांशान्तिमाध्यायस्थवचनमुदाहरति—**एवं प्रकारममलमिति** ॥

## गूढार्थसंग्रहः

अत्र विष्णुचित्तविवरणानुसारि श्रीधरीयम् । 'एवं तावद्भगवतो रूपद्वयमुक्तम् । इदानीं तत्स्वरूपमाह—एवमिति । मुक्तस्योक्तनिर्व्यापारत्वाद्यतिदिश्यते । 'निरञ्जनःपरमं साम्यमुपैति' इत्यादिश्रुतेः । अस्य नित्यशुद्धत्व सर्वात्मत्वपूर्वत्व पूर्णत्व हेयराहित्यानि प्रकृतिसम्बन्धान्मुक्तेभ्यो विशेषः' इति । अत्र पूर्वं 'निर्व्यापारमनाख्येयं व्याप्तिमात्रमनौपमम् । आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥ (वि.पु.२२.५०) विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं परमं पदम् ।' (५१) इत्युक्तम् । अत्र 'निर्व्यापारमनाख्येयम्' इति वचनं 'प्रत्यस्तमितभेदं' इत्यादिवचनसजातीयम् । अत्र विष्णुचित्तार्याः 'आत्मस्वरूपं दर्शयति निर्व्यापारमित्यादिना । निर्व्यापारं साधनानुष्ठानरहितं, अनाख्येयं रूपवर्णादीनामगोचरस्वरूपम् । व्याप्तिमात्रंमात्रशब्दोऽवधारणे, व्याप्तमेव असङ्कुचितमित्यर्थः । अनौपमं अनुपममेव अनौपमम् । आत्मसम्बोधविषयं स्वज्ञानगम्यम् । सत्तामात्रं अपक्षयादिरहितं सत्त्वैकगुणकं अलक्षणं स्त्रीत्वादिरहितं लिङ्गजन्यज्ञानागम्यमिति वा । प्रशान्तमशनायादिषड्भिरहितम् । शुद्धं कर्मरहितं अविभाव्यं अरूपादिमत्त्वात् अतर्क्यमिति वा, विष्णो रूपं ब्रह्म संज्ञितं तज्ज्ञानमेव मुक्तम्' इति व्याचख्युः । एवमेव प्रथमं श्रीधराचार्यविवरणम् ॥

अत्र पूर्वं 'तच्च ज्ञानमयं व्यापि स्वसंवेद्यमनौपमम् । चतुष्प्रकारं तदपि स्वरूपं परमात्मनः ॥ (वि.पु.१.२२.४२) **मैत्रेयः**—चतुष्प्रकारतां तस्य ब्रह्मभूतस्य हेमुने । त्वमाचक्ष्व यथा न्यायं यदुक्तं परमं पदम् ॥ ४३ ॥ **पराशरः**—मैत्रेयकारणं प्रोक्तं साधनं सर्ववस्तुषु । साध्यं च वस्त्वभिगतं यत्साधयितुयात्मनः ॥ ४४ ॥ योगिनो मुक्तिकामस्य प्राणायामादिसाधनम् । साध्यं च परमं ब्रह्म पुनर्नावर्तते यतः ॥ ४५ ॥ साधनालम्बनं ज्ञानं मुक्तये योगिनां हि यत् । स भेदः प्रथमस्तस्य ज्ञानभूतस्य वैमुने ॥ ४६ ॥ युञ्जतः क्लेशमुक्त्यर्थं साध्यं यद्ब्रह्मयोगिनः । तदालम्बनविज्ञानं द्वितीयांशे महामुने ॥ ४७ ॥ उभयोस्त्वविभागेन साध्यसाधनयोर्हि यत् । विज्ञानमद्वैतमयं तद्भागोऽन्यो मयोदितः ॥ ४८ ॥ ज्ञानत्रयस्यचैतस्य विशेषो यो महामुने । तन्निराकरणद्वारदर्शितात्मस्वरूपवत् ॥ ४९ ॥' इत्युक्तम् ॥

अत्र विष्णुचित्तविवरणम् । 'ज्ञानमयं ज्ञानप्रचुरं व्यापि ज्ञानेन स्वसंवेद्यं स्वयंप्रकाशम् । एवम्भूतं यत्पदं पद्यते इति पदं मुक्तस्वरूपं, तच्च चतुष्प्रकारम् । तदपि तस्य परमात्मनस्स्वरूपमित्यन्वयः, अत्र स्वरूपशब्दो रूपवचनः स्वरूपंहि स्वस्य रूपं, योगिन इति परंब्रह्म मुक्तस्वरूपं, 'सर्वब्रह्ममयो हरिः' इति वचनात् प्रकृतिपुरुषयोरापि ब्रह्मत्वं, तदपेक्षया मुक्त स्वरूपस्य परब्रह्मत्वम् । साधनालम्बनं ज्ञानं योगशास्त्रजन्यं प्राणायामादिसाधनविषयं ज्ञानं, स प्रथमो भेदः युञ्जत इति तदालंबनविज्ञानं साङ्ख्यजन्यं प्रकृतिविविक्तात्मविषयं विशिष्टज्ञानं उभयोरित्यादि । अविभागेन संयोगेन साध्यसाधनभावसंबन्धेन (अद्वैतमयं देवमनुष्यादिद्वैतरहितात्मविषयतया तत्प्रचुरं विज्ञानं ध्यानं ज्ञानत्रयस्येति । उक्तस्य ज्ञानत्रयस्य साधनज्ञानत्वादिरूपो योग)विशेषः तस्य निराकारणमपरामर्शः, यस्य द्वारं दर्शितात्मस्वरूपवत् तदात्मावलोकनविषयमिति' इत्थमेव श्रीधराचार्यविवरणमपि ॥

यद्यपि श्रीधराचार्यै निर्व्यापारमित्यादेः विष्णुचित्ताचार्यविवरणमेव प्रदर्श्य 'केचित्तु साधनं देहात्मविवेकित्वंपदार्थ शुद्धिः तदालम्बनं शुद्धत्वंपदार्थविषयं यत् ज्ञानं स एष चतुर्भेदज्ञानभूतस्य ब्रह्मणःप्रथमो भेदः । क्लेशमुक्त्यर्थं युञ्जतः योगिनः यत् साध्यं ब्रह्म तदालम्बनविज्ञानं तद्विषयं सच्चिदानन्दं ब्रह्मेति तत्पदलक्ष्यार्थज्ञानं द्वितीयोंऽशः उभयोस्त्वविभागेन परस्परैक्येन ब्रह्मैवाहं अहमेव ब्रह्मेति विशिष्टं यत् ज्ञानं सोऽन्यः तृतीयो भागः । एतस्य त्वंपदार्थ तत्पदार्थ तदैक्यरूपाविभागाविषयस्य यो विशेषः देहादिविलक्षणोऽहमिति, सच्चिदानन्दरूपं ब्रह्मेति, ब्रह्माहमिति च यः तत्र विशे-

## गूढार्थसङ्ग्रहः

षांशः तस्य निराकरणं परित्यागः तद्द्वारेण दर्शितं यन्निर्विशेषं आत्मस्वरूपं तद्वत्, तदेकाकारं समाध्यवस्थं विष्णोः ज्ञानमस्य परमपदाख्यं ज्ञानं चतुर्थमुक्तं इत्यन्वयमित्याहुः ' इति व्याख्यातम् ॥

तथा सिद्धान्तसिद्धाञ्जने ' सर्गस्थित्यन्तकालेषु त्रिधैवं सम्प्रवर्तते । गुणप्रवृत्त्या ' (वि.पु.अं.१.अ.२२.श्लो.४०) इति ब्रह्मादिरूपेण सर्गादिहेतुत्वं गुणोपाधिकमभिधाय, ' परमं पदं तस्यानुगुणं महत् । तच्च ज्ञानमयं व्यापि स्वसंवेद्यमनूपमम् ॥ ' (१.२२.४१) इति निर्विशेषप्रकाशज्ञानमात्रं ब्रह्मस्वरूपमुक्त्वा, ' चतुःप्रकारं तदपि स्वरूपं परमात्मनः । ' इति प्रतिज्ञाय, ' साधनालम्बनज्ञानं मुक्तये योगिनांहि यत् । स भेदः प्रथमस्तस्य ज्ञानभूतस्य वै मुने ॥ युञ्जतःक्लेशमुक्त्यर्थं साध्यं यद्ब्रह्मयोगिनः । तदालम्बनविज्ञानं द्वितीयोंऽशो महामुने ॥ उभयोस्त्वविभागेन साध्यसाधनयोर्हि यत् । विज्ञानमद्वैतमयं तद्भागोऽन्यो मयोदितः ॥ (वि.पु.१.२२.४५—४७) इति साध्यसाधनगोचरवृत्तिद्वयोपधाननिमित्त व्यावृत्तानुवृत्तरूपत्रयमुक्त्वा, त्रिरूपातीतमनुपाधिकमविशेषं तुरीयं रूपमुच्यते ' ज्ञानत्रयस्य ' इत्यादिना । अन्येतु साध्य साधनगोचरे तत्त्वम्पदार्थविज्ञाने तयोरविभागेन ज्ञानं वाक्यार्थज्ञानम् । तत्र च विशेषाः पारोक्ष्यपरिच्छेदतदुभयपरामर्शा इति व्याचक्षते ॥

' ज्ञानत्रयस्यैतस्य विशेषो यो महामुने । तन्निराकरणद्वारं दर्शितात्मस्वरूपवत् ॥ निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् । आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥ प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रयम् । विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं परमं पदम् ॥ ' (वि.पु.१.२२.४८.५०) तन्निराकरणद्वारं व्यावृत्त्यनुवृत्तिरूपविशेषनिराकरणेन लक्षणीयमव्यावृत्तानुगतम् । तत् तर्हि शून्यम् । न दर्शितात्मस्वरूपवत् । नात्रोपलब्धुः स्वप्रकाशगुणेन स्वात्मानं दर्शयति संविदिति विवक्षितम् । परमपदशब्दितब्रह्मात्मसामानाधिकरण्यात् । न च स्वात्मन एव स्वात्मदर्शनं तस्यैव तद्विषयत्वविरोधात् । तद्यदि णिजर्थोऽवश्यं विवक्षणीयः, तदौपाधिकजीवरूपं बोद्धारमपेक्ष्यैव । न च दर्शनमपि स्वगुणेन, किंतु प्रकाशात्मनैव, संविदस्तावन्मात्रत्वात् । तदाह- निर्व्यापारमिति । प्रकाशगुणद्वारा चात्मनोऽन्यस्य वा भाने निर्व्यापारत्व विरोधात् । हन्त तर्हि प्रकाशमानमिदं तदित्युच्यताम् । न, अनाख्येयं सर्वविधशब्दप्रवृत्तिनिमित्तविशेषाभावात् । अथ ज्ञातृज्ञेयसम्बन्धेन ख्यायेत मधुमाधुर्यादिवत् । न व्याप्तिमात्रम् । अविद्याविषयेहि ज्ञातृज्ञानज्ञेयभेदाध्यासाज्ज्ञाता ज्ञेयं ज्ञानेन व्याप्नोतीव । ' प्रज्ञया चक्षुः समारुह्य सर्वाणि रूपाण्याप्नोति इति श्रुतेः । विद्याविषये च भेदविलयाद्व्याप्तिमात्रम् ' यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन किं पश्येत् ' इति श्रुतेः । तर्हि गुणादिभिराख्यायेत । न अनूपमम् । गुणादिसामान्यंह्युपमा, ' सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यवर्ति सादृश्यमुच्यते ॥ ' इत्यभियुक्तोक्तेः तर्हि जात्या, न सत्तामात्रम् । तर्हि सतोऽयं धर्मः । न (अ)लक्षणं, न कस्यचिद्धर्मः । कुतः, प्रशान्तं, प्रपञ्चोपशमात्मकम् । अतएव अभयम् । ' द्वितीयाद्वै भयं भयति ' । ननु ' प्रपञ्चोपशम शिवोऽद्वैतः ' आत्मा अभयः श्रूयते । सत्यम् । इदमेव तदात्मसम्बोधविषयम् । पाठक्रमाग्रहे तु नन्वनूपम आत्मा ' न तस्य प्रतिमाऽस्ति ', ' न तत्समश्चाभ्यधिकश्च दृश्यते ' इति । सत्यम् । इदमेव तदात्मसम्बोधविषयमिति व्याख्येयम् । कथं विषयाश्रयरूषितस्वभावप्रकाशमात्रमुत्पादविनाशदूषितं ज्ञानमात्मा । न शुद्धमसंश्रयम् । प्रकाशैकरसस्यैव ज्ञानस्य निर्विषयाश्रयभावोपपत्तिरग्रे वक्ष्यते । एवं तर्ह्युपदेशानर्थक्यम् । न दुर्विभाव्यं, सर्वप्रकारासंस्पर्शात् । असंशयमितिपाठे तर्हि प्राप्तसंशयविरोधि(व ? वि)शेषवदुपदेश्यम् न असंशयं, प्रकाशमात्रेहि न संशयः । तदेव च सर्वविशेषबाधेनोपदिश्यत इति ज्ञानमयस्य ज्ञानमिति पुरुषस्य चैतन्यमितिवत् व्यपदेशमात्रम् ॥

## गूढार्थसंग्रहः

अथ ज्ञानमयस्य परमात्मनः शरीरतया सम्बन्धिज्ञानं प्रत्यगात्मतत्त्वमुच्यताम्। अनन्तरमेव 'एवं प्रकारममलं नित्यं व्यापकमक्षयम्। समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥ (वि.पु.अं.१.अ.२२.श्लो.५२) इति मुक्तात्मप्रकारातिदेशात्। 'विष्णोः परमं पदं', विष्ण्वाख्यं परमं पदं', इति निर्देशभेदाच्च। मैवम्। प्रक्रमभङ्गप्रसङ्गात्। अब्रह्मात्मकत्वज्ञानेन च 'तन्त्रान्यज्ञानरोधेन योगिनो यान्ति ये लयम्। संसारकर्षणोप्तौ ते यान्ति नि(र्बी)जतां द्विज ॥' (वि.पु.१.२२.५१) इति क्लेशकर्माशयरूपसंसारबीजात्ययवचनायोगात्। 'तमेव विदित्वाऽतिमृत्युमेति', 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिश्रुतेः। अनुपमत्वशुद्धत्वाभयत्वादिविशेषणानांऽस्य प्रसङ्गाच्च। न च एवंप्रकारमिति जीवसाम्यमतिदिश्यते। निरङ्कुशसाम्यानिषेधश्रुत्यादिविरोधात्। 'परमं साम्यमुपैति' इत्यादि च व्याख्यातम्। तस्मान्निर्व्यापारमित्यादिनिर्देशभेदापेक्षया एवम्प्रकारमित्युक्तरूपमनुकृष्य शुद्धमित्युपक्षितमर्थम् अमलं नित्यमिति व्यक्तीकृत्य, व्यापकमक्षयमिति विषयोपाधिकोपचयापचयौ वारयति। समस्तहेयरहितमिति च न सद्गुणपरिशेषपरम्। सर्वस्यैव विशेषस्य परिच्छेददोषावहतया हेयत्वात्। किंतु परिगणनादन्यो विशेषो मानुज्ञायीत्युक्तानुक्तसर्वविशेषनिषेधसङ्ग्रहपरम्। एवं निर्विशेषप्रकाशमात्रमात्मतत्त्वं 'विष्ण्वाख्यं परमं पदम्' इति षष्ठीनिर्देशप्रसक्तभेदशङ्कामपोह्य, 'तद्ब्रह्म परमं योगी यतो नावर्तते पुनः' (वि.पु.१.२२.५३) इत्युक्तमेवार्थमुपसंहरति तस्यैव ब्रह्मणो निष्पन्नयोगिध्येयरूपभेद विवक्षयेति युक्तम् ॥

'द्वे रूपे ब्रह्मणस्तस्य' इति प्रक्रम्य, 'मूर्तं यद्योगिभिः पूर्वं योगारम्भेषु चिन्त्यते।' (१.२२.६०) इति ह्यनन्तरमुच्यत इति। 'आत्मा शुद्धोऽक्षरश्शान्तो निर्गुणः प्रकृतेः परः। प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु ॥' (अं.२.अ.१३.श्लो.६७) 'यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिव सत्तम। तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥' (२.१३.८६) पर इति प्रकृत्यादिविविक्त उच्यते। अथवा अन्य इति प्रकारतः, पर इति स्वरूपतश्च भेद आक्षिप्यते। अन्यथा द्वैरुक्त्यात्। 'यदा समस्तभूतेषु पुमानेको व्यवस्थितः। तदाहि को भवान् सोऽहमित्येतद्विफलं वचः ॥' (२.१३.८७) एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः। जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥ परज्ञानमयो-(य)ऽस)द्भिर्नाम जात्यादिभिर्विभुः। न योगवान्न युक्तोऽभूत्नैव योक्ष्यति पार्थिव ॥ तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत्। विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥' (वि.पु.अं.२.अ.१४.श्लो.२९—३१) आत्मपरदेहेष्विति व्यवहारदशा, ऐकात्म्यस्य प्रस्तुतत्वात्। एकमयमिति च तत्रैव, सहौपाधिकभेदेनानुगताशेषस्वरूपावभासप्राधान्यात्। सतो विज्ञानमिति पुरुषचैतन्यवदेव, न त्व(आ)भेदालम्बनतया। तन्मयं तद्विषयमौपदेशिकविज्ञानम्। मुक्तिसाधनस्य तस्य पारमार्थ्यायोगात् 'परमार्थो न साधनम्' इत्युक्तम् ॥

तथाऽपि 'नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः। अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासम्भवात्। यथोक्तं 'परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यैतदन्यद्द्रव्यंहि नैति तद्द्रव्यतां यतः' इति अत्रैवोत्तरवचनं जीवब्रह्मैक्यप्रतिक्षेपकमिति वक्ष्यते। अत्र केषांचित् (वि.पु) वचनानामर्थः भावप्रकाशे पर्यालोचितः। केषांचिदर्थः श्रीभाष्ये पर्यालोचयिष्यते। 'विष्णोस्सकाशादुद्भूतं—जगच्च सः' (वि.पु.१.१.३२) इत्युपक्रमस्थश्लोकार्थः उत्तरत्र भाष्य एव विवेचयिष्यते। तेन च जगत्कारण एव श्रुतीनां तात्पर्यस्य 'जन्माद्यस्य यतः' इति सूत्रेण व्यासेन निर्धारणेन तदनुसारेण पराशरस्याप्याशयः स्थापयिष्यते ॥

'अविकाराय शुद्धाय' इति नमस्कारश्लोकत्रयार्थः उत्तरत्र वक्ष्यते। तत्र च 'नमो हिरण्यगर्भाय हरये शङ्कराय च। वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥ एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः। अव्यक्तव्यक्तरूपाय विष्णवे

## गूढार्थसंग्रहः

मुक्तिहेतवे ॥ ' इति ' अविकाराय शुद्धाय ' इति श्लोकानन्तरश्लोकद्वयम् । ' अविकाराय ' इति श्लोकस्य परोक्तार्थपर्यालोचनपूर्वकं सिद्धान्तार्थः स्थापयिष्यते । तत्रात्र च प्रथमश्लोके अकारोकारमकारार्धमात्रार्थाः विवक्षिता इति परोक्तार्थस्सम्मत एव । तत्र ' चतुष्पादिदमक्षरम् ' इत्याद्यथर्वशिखावाक्ये प्रणवाद्यर्थनिरूपणपरे विष्णोरर्धमात्रार्थस्य वासुदेवस्य चैक्यं विवक्षितमिति हयशिरोरत्नभूषणे तद्दीधितौ च स्थापितम् । तारशब्दस्य ' यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारभयात्तारयति तस्मादुच्चार्यते तार इति ' ' तारयति त्रायते तस्मादुच्यते तारमिति ' इति अथर्वशिर उपनिषदुक्तार्थः सिद्धान्तिसम्मत एव परेणोक्तः । तेन ' ताराय सर्गस्थित्यन्तकारिणे ' इति पदद्वयेन सृष्टिवाक्यानां मुक्तिवाक्यानांचैकरस्यं बोधितम् । ऐकरस्यं च ' **औपनिषदपरमपुरुष** ' इति महासिद्धान्तारम्भसूक्तिविवरणे प्रपञ्चितम् । निर्गुणश्रुत्यनन्तरं ' प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ' इति (श्वे) श्रुतिः । एवं च य उत्पादकः स एव मुक्तिप्रदः वासुदेव इति सिद्धम् ॥

' विष्णवे मुक्तिहेतवे ' इति उपक्रमोक्तार्थः ' विष्णुर्मुक्तिफलप्रदः ' (६.४.४२) ' मुक्तिं चेतसि यःस्थितोऽमलधियां पुंसां ददात्यव्ययं किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते । ' (६.८.५८) इति उपसंहारेऽपि वक्ष्यते । अत्र ' वासुदेवाय ' ' विष्णवे ' इति पदद्वयेन ' यज्ञैरिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः । वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्म्यहम् ॥ ' (वि.पु.५.१७.१५) इति वक्ष्यमाणरीत्या वेदान्तिसम्मतः सात्वतसम्मतश्चार्थ एकएवेति तात्पर्यमाविष्कृतं भवति । अयमर्थः ' सर्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः । सर्वभूतकृतावासो वासुदेवेतिचोच्यते ॥ ' इति मोक्षधर्मे हयशिरउपाख्याने (३५७.९२.शा.प) व्यासेनापि प्रकाशितः । वासुदेवस्य कारणत्वमभिधाय तस्यैव परब्रह्मत्वं प्रथमषष्ठांशयोः षष्ठे ' पराऽस्य शक्तिः ' इति श्वेताश्वतरश्रुतिविवक्षितगुणषट्कं दिव्यमङ्गलविग्रहयोगं च प्रतिपादयता पराशरेण सात्वतप्रसिद्धद्वादशाक्षरमन्त्रप्रतिपाद्य परवासुदेवः अर्धमात्रार्थः श्रुतितात्पर्यविषयश्चेति निर्धारितं भवति । एतेन ' निर्विशेषं ब्रह्मतत्त्वं कारणत्वेनोपलक्ष्यते । वासुदेवाय ताराय ' इत्यादिना ' विष्णवे मुक्तिहेतवे ' इति वेदानभिज्ञस्य पौराणिकनाम्ना विशेष्यनिर्देशः ' इत्युक्तिः (सि.सि.अ) अभिनिवेशमूलेति सिद्धम् ॥

' रूपं महत्तेऽच्युत यत्र विश्वं ततश्च सूक्ष्मं जगदेतदीश । रूपाणि सूक्ष्माणि च भूतभेदास्तेन्तरात्माऽऽख्यमतीव सूक्ष्मम् ॥ तस्माच्च सूक्ष्मादिविशेषणानां अगोचरे यत्परमार्थरूपम् । किमप्यचिन्त्यं तव रूपमस्ति तस्मै नमस्ते पुरुषोत्तमाय ॥ ' (वि.पु.१.१९.७४—७५) इति श्लोकद्वयमुदाहृत्य ' कारणातीतं ब्रह्म पुराणेऽप्यनुस्मर्यते ' इत्युक्तंतु नादरणीयम् । दिव्यात्मस्वरूपमाह—तस्मादिति । तस्मात्परमिति शेषः । परमार्थरूपं—परमप्रयोजनरूपम् । परमात्मरूपमिति च पाठः । रूपं—स्वरूपम् । इति, ' मूर्तं यद्योगिनो रूपं योगारम्भेषु चिन्त्यते ॥ (१.२२.६१) सालम्बनो महायोगस्सबीजो यत्र संस्थितः । मनस्यव्याहते सम्यक् युञ्जतां जायते मुने ॥ (६२) सपरस्सर्वशक्तीनां ब्रह्मणस्समनन्तरः । मूर्तं ब्रह्म महाभाग सर्वब्रह्ममयो हरिः ॥ ' (६३) इत्युक्तसालम्बनयोगरूपं ध्यानं षष्ठे ' तद्रूपप्रत्ययेचैका ' इति श्लोकेनाभिधाय ' तस्यैव कल्पनाहीनं ' इति समाधिनिरूपणपरश्लोकविवरणे ' एवं सोपानक्रमेणारूढदिव्यमङ्गलविग्रहविषयमिदं ध्यानम् । पूर्वं ' तस्यचालम्बनवतः ' (६.७.४२) इति प्रस्तुतस्सयोगः । अस्त्रभूषणाध्यायेहि ' अस्त्रभूषणमयशक्त्याश्रयदिव्यविग्रहः सबीजयोगविषय इति स्पष्टमुक्तम् । ' सालम्बनो महायोगस्सबीज ' इत्यादिना । अथ ध्यानपर्यन्तसप्ताङ्गजन्यं निर्बीजयोगाख्यं भगवत्स्वरूपविषयं समाधिमाह—तस्यैवेति । तस्यैव विग्रहादिविशिष्टतया ध्यानस्यैव कल्पनायाः रूपवर्णपक्षविनाशादयः । अयं समाधिः पूर्वाध्याये परविद्येत्युक्तम् । विवेकजं ज्ञानं—इदं च अस्त्रभूषणादिविशिष्टदिव्यविग्रह-

## गूढार्थसङ्ग्रहः

वत एव भगवतोऽस्त्रभूषणाध्यायेषु 'बिभर्ति पुण्डरीकाक्षस्तथैव परमेश्वरः। कलामुहूर्तादिमयश्च कालः' इत्यादेः प्रतिपादितत्वात्। अस्त्रादीनां राहित्येनोत्तरोत्तरध्यानस्य वचनमन्यथाशक्यत्वात्। नतु त्याज्यत्वात्। तेषामस्त्रादिविशिष्टविग्रहवत एव प्राप्यत्वात्। तत्क्रतुन्यायेन तेषामपि दृढं ध्येयत्ववचनाच्च' इति विष्णुचित्तार्यैरुक्तम्॥

'तस्मै नमस्ते पुरुषोत्तमाय' इत्यनन्तरं 'सर्वभूतेषु भूतात्मन् या शक्तिरपरा तव। गुणाश्रया नमस्तस्यै शाश्वतायै परेश्वर॥ याऽतीतगोचरा वाचां मनसांचाविशेषणा। ज्ञानिज्ञानपरिच्छेद्या तां वन्दे चेश्वरां पराम्॥ (वि.पु.१९ ७५–७६) 'ओं नमो वासुदेवाय तस्मै भगवते सदा। व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः॥' इति बद्धमुक्तरूपद्वयं वासुदेवश्चेति त्रितयमुक्तम्। अत्र 'व्यतिरिक्तं न यस्यास्ति' इत्येतदर्थः 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः।' इत्युत्तरत्र व्याप्तिनिबन्धनोऽभेद इति प्रदर्शनेन स्पष्टीकृतः। तत्पूर्वं योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम्।' इति व्याप्तिसहभावेन नियमनमपि प्रदर्शितम्। तत्रैव पूर्वं 'मय्यन्यत्र तथाऽशेषभूतेषु भुवनेषु च। तवैव व्याप्तिरैश्वर्यं गुणसंसूचिका प्रभो।' इत्युक्तम्। व्याप्तेः ऐश्वर्यगुणसूचकत्वस्य स्पष्टमुक्त्या 'तवैष महिमा येन व्याप्तमेतच्चराचरम्।' इति तत्पूर्वमुक्त्या च 'व्याप्यव्यापकता मिथ्या सर्वात्मेति च शासनात्। इति ज्ञाते परे तत्वे भेदस्यावसरः कुतः॥' (शं.अ.अनु.४६.श्लो) इत्युक्तिरनवकाशा। 'योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम्। (वि.पु. ८१) नमोऽस्तु विष्णवे तस्मै यस्याभिन्नमिदं जगत्॥' (८२) इत्यत्र 'अन्तःप्रविष्टश्शास्ता जनानाँसर्वात्मा' इति श्रुत्यर्थकथनेन सर्वात्मेति शासनमनुकूलमेवेति स्पष्टम्॥

'देवस्य वैष महिमा तु लोके येनैष भ्राम्यते ब्रह्मचक्रम्' (श्वे.उ.६) इति श्रुत्युक्तमहिम्नः 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति भ्रामयन् सर्वभूतानि, तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्।' इति गीतायां प्रयोजनमपि प्रदर्शितम्। 'हार्दानुगृहीतः शताधिकया' इति व्यासोऽपि तत्प्रयोजनं द्रढयति। जीवब्रह्माभेदपरश्रुतीनां तात्पर्यमप्येतेन दर्शितं भवति। अतः 'चतुष्प्रकारं तदपि' इत्यादौ परसम्मतनिर्विशेषस्य जीवब्रह्माभेदैक्यस्य च पराशरानभिप्रेतत्वं सिद्धम्। 'साधनालम्बनं ज्ञानम्' इत्यत्र साधनविषयकज्ञानमेव विवक्षितम्। तच्च योगशास्त्रजन्यज्ञानं युक्तमेव क्लेशमुक्त्यर्थं साध्यं आलम्बनविज्ञानं प्रकृतिविविक्तात्मविषयकज्ञानमेव प्रकृतिविविक्तात्मकयोगेन आत्मस्वरूपसाक्षात्कारेण क्लेशविमुक्तेः योगसूत्रेष्वेव प्रतिपादनात्। प्रकृतिवियुक्तात्मनिरूपणेन साङ्ख्यमिति विष्णुचित्तार्यैरुक्तम्।

'उभयोस्त्वविभागेन' इत्यत्र अविभागशब्दः नैक्यपरः। संयोगप्रतिद्वन्द्वी विभागः सम्बन्धविरहरूपः अविभागः सम्बन्धः, सच साध्यसाधनभावसम्बन्ध इति विष्णुचित्तार्योक्तं युक्तम्। 'निर्व्यापारमनाख्येयम्' इत्यत्र पूर्वं साध्यसाधनयोरेव प्रस्तुतत्वेन साधनानुष्ठानरहितमित्यर्थोऽपि सङ्गतः। 'अनाख्येयम्' इत्यस्य 'रूपवर्णादिनिर्देशविशेषणविवर्जितम्।' इति प्रागुक्तरूपादिशून्य इत्येवार्थो युक्तः। 'सत्तामात्रम्' इत्यत्रैवोत्तरत्रोक्तेः। 'सत्तामत्राम्–सन्मात्रमित्येवार्थः। 'यस्सदाऽस्तीति केवलम्' इति पूर्वमुक्तेः। 'तच्च ज्ञानमयं व्यापि स्वसंवेद्यम्' इत्युपक्रमोक्त्या तत्र ज्ञानमयमिति पदसमभिव्याहारेण ज्ञानेन व्याप्तमेव विवक्षितम्। व्याप्तिमात्रं व्याप्तमात्रमित्यर्थः। परमतेऽपि व्याप्यव्यापकभावस्य मिथ्यात्वेन व्याप्तिमात्रमिति न घटत एव। बद्धजीवेषु एतत्सदृशवस्त्वभावात् 'अनौपमम्' इति। विष्णोः विष्णुसम्बन्धि। 'ओं नमो वासुदेवाय–व्यतिरिक्तोऽखिलस्य यः (२९.अ.७८) इत्येतदनन्तरं जीवब्रह्माभेदस्य व्याप्ति अन्तर्यामित्वमूलकत्वस्य प्रागुक्त्या जीवब्रह्माभेदस्य अत्र तात्पर्यविषयत्ववर्णनासम्भवात्॥

### श्रीभाष्यम्

**समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् । (वि.पु.१.२२.५३) परःपराणां परमः परमा·**

### श्रुतप्रकाशिका

उपसंहारवचनोपादानमुपसंहारस्य बुद्धिस्थत्वात्क्रियते । एवं प्रकारं मुक्तात्मानंप्रति **‘ निर्व्यापारमनाख्येयम् ’** इत्यादिना यः प्रकार उक्तः तदुपेतमित्यर्थः, एवं (च) भगवति मुक्तगुणातिदेशः कृतः भेदराहित्यस्य सत्तामात्रत्वस्य वचसामगोचरत्वस्य च मुक्तगुणस्य निर्व्यापारमित्यादिना उक्तस्य भगवत्यतिदिष्टत्वात्, भगवति च तेषां निषेधानां कतिपयविषयत्वस्य प्रामाणिकत्वाच्च ते निषेधा मुक्तात्मन्यपि तथाविधा इति कतिपयविषयत्वं सिद्धमिति भावः ॥

अथ परमात्मनोऽधिकान् गुणानाह—**अमलं** मलप्रतिभटं सोपाधिकहेयविरोधिनमित्यर्थः । नित्यं उक्ताकारेण नित्यं मलप्रतिभटत्वं नित्यमित्यर्थः । व्यापकं स्वरूपेण व्यापकम् । अक्षयं स्वतएव धर्मतोऽपि विकाररहितम् । मुक्तस्यहि पूर्वावस्थायां ज्ञानसङ्कोचविकासरूपविकारो विद्यते नित्यसिद्धानामपि तथात्वं (तदा)परा)यत्तमिति तद्व्यवच्छेदः । **समस्तहेय रहितं** पूर्वं हेयप्रत्यनीकत्वमुक्तम् अत्र हेयराहित्यमुक्तम् । स्वतो हेयाभावोऽपि मुक्तस्य नास्ति परमात्मप्रसादाधीनत्वात्तस्यापद्यत इति पदं दिव्यात्मस्वरूपम् । परमपदशब्दस्य दिव्यलोके मुक्तात्मनि च प्रयोगात्तद्व्यावृत्त्यर्थं **विष्णवाख्यमित्युक्तम्**

अथ प्रथमांशोपक्रमेऽपि सविशेषपरत्वं दर्शयति **परःपराणामिति** । अनेन शास्त्रोपक्रमस्यापि सविशेषपरत्वमुक्तं भवति अनेन **प्रत्यस्तमितभेद**मित्यादिपदानां कतिपयभेदनिषेधपरत्वं च सिद्धमिति त्रिविधं प्रयोजनम् । अनेन **‘ परःपराणाम् ’** इत्यादिग्रन्थजातस्य **‘ अविकाराय ’** इत्यादिसङ्ग्रहश्लोकविवरणरूपत्वात् **‘ ज्ञानस्वरूपम् ’** इत्यादिश्लोकप्रत्युपक्रमत्वमर्थक्रमेण सिद्धमिति तस्यापि सविशेषपरत्वसिद्धिः । यद्वा प्रथमांशोपक्रमोपसंहारयोस्सविशेषपरत्वादुपक्रमोपक्रमभूतस्यापि **ज्ञानस्वरूपम्** इति श्लोकस्य महावाक्यस्वारस्यविरोधो न न्याय्य इति तस्यापि सविशेषपरत्वं सिद्ध्यति । यद्वा नमस्कारश्लोकस्य शास्त्रोपक्रमशेषभूतत्वात् तच्छेषभूतस्तदनुगुणार्थो वर्णनीय इति सिद्ध्यति । उपक्रमोपक्रमभूतनमस्कारश्लोकार्थानुगुणम् **‘ परःपराणाम् ’** इत्यादेरर्थो वर्णनीय इतिचेत् न तस्याप्युपक्रमभूतप्रश्नोत्तरवरलाभकथनश्लोकानुगुणं तदर्थस्य वाच्यत्वादित्यभिप्रायः ॥

अत्र ब्रह्मणः कृत्स्नजगत्कारणत्वसिद्ध्यर्थं वेदान्तेषु **‘ सत्यं ज्ञानमनन्तं ब्रह्म ’** इत्यादिवाक्यैरानन्त्यमुक्तम् । तच्च त्रिविधपरिच्छेदराहित्यं नहि देशकालादिभिः परिच्छिन्नानां घटादीनां कृत्स्नस्य सर्वविधकारणत्वं दृष्टम् । कालत्रयवर्तिकार्यजातकारणत्वे सर्वदेशगतकार्यकारणत्वे च देशतःकालतोऽप्यपरिच्छेदावपेक्षितौ उपादानत्वसिद्ध्यै वस्त्वपरिच्छेदोऽपेक्षितः नहि वस्तुतः परिच्छिन्नः कुलाल उपादानं भवति मृत्पिण्डकुलालयोस्सामानाधिकरण्यासम्भवात् । अतः कृत्स्नका-

### गूढार्थसंग्रहः

‘ एवं प्रकारम् ’ इत्युत्तरश्लोके पूर्वोक्तप्रकारवदित्यर्थः । एतेन मुक्तब्रह्मणोरुभयोस्साम्यं ‘ निरञ्जनः परमं साम्यमुपैति ’ इति श्रुत्युक्तं दर्शितं भवति । **विष्णवाख्यं परमं पदमिति ।** मुक्तस्य स्थानस्य विष्णोश्च परमपदत्वस्य विष्णुपुराणे व्यवहारः भगवता वेदार्थसंग्रहे प्रदर्शितः । तत्र च प्राधान्यं विष्णोरेवेति निर्णयः । ‘ एवं प्रकारम् ’ इति श्लोकार्थनिष्कर्षणार्थं उपसंहारवदुपक्रमेऽपि वासुदेवस्य परब्रह्मत्वं साधितमिति उपक्रमोपसंहाराभ्यां वासुदेवस्य परब्रह्मत्व निश्चय इत्याशयेन पुराणोपक्रमवचनान्युदाहरति—**परःपराणामित्यादिना** ॥

### श्रीभाष्यम्

**त्मा॒ऽऽत्मसंस्थितः। (१.२.१०) रूपवर्णादिनिर्देशविशेषणविवर्जितः। अपक्षयविनशाभ्यां परिणामर्धिजन्मभिः॥ वर्जितश्शक्यते वक्तुं यस्सदाऽस्तीति केवलम्।**

### श्रुतप्रकाशिका

रणत्वसिद्ध्यर्थं त्रिविधपरिच्छेदराहित्यं विवक्षुः **परःपराणामित्यर्धेन** तत्सङ्ग्रहेण प्रतिजानीते। **परःपराणां परम** इति अनेन कालानवच्छेदःसिद्धः अधिककालवर्तित्वस्य परशब्दवाच्यत्वात् परमात्मेति देशापरिच्छेद उक्तः आप्नोतीति ह्यात्मशब्दव्युत्पत्तिः। आत्मसंस्थितः सर्वेषामात्मत्वेन सर्ववस्तुभिर्विशिष्टः॥

यद्वा आत्मत्वेन संस्थिततया सर्वशरीरकत्वात् स्वस्मिन् पर्यवस्थितः स्वनिष्ठः अन्यत्सर्वं तन्निष्ठं शरीरतया विशेषणत्वात्। अतस्सर्वपर्यवसानभूमिः स्वनिष्ठ इति वस्त्वपरिच्छेद उक्तः सर्ववस्तुसामानाधिकरण्यार्हत्वमिह वस्त्वपरिच्छेदः इदमिदं न भवतीतिहि वस्तुपरिच्छेदः, यद्वा नित्यत्वविभुत्वव्यतिरिक्तगुणैस्समाभ्यधिकरहितत्वं वस्त्वपरिच्छेदः स्वनिष्ठं परमात्मानमपेक्ष्य तन्निष्ठानामन्येषां समत्वाभ्यधिकत्वासम्भदात्मसंस्थित इत्यनेन वस्त्वपरिच्छेदसिद्धिः। एवं संक्षिप्तमर्थमुपपादयति **रूपेत्यादिना** तत्र कालपरिच्छेदं प्रथमं विवक्षुः कालपरिच्छिन्नेषु वर्तमानं पञ्चकल्पनान्वितत्वं ब्रह्मणि नास्तीत्याह—**रूपेति**। रूपशब्देन जातिरुच्यते जातिगुणौ च रूपिणां रूपे इतिहि नीतिविदः। वर्णशब्दो रूपाख्यगुणविशेषपरः, आदिशब्देन गन्धरसादिः, आसनशयनादिक्रिया विषाणाद्यवयवत्वं च विवक्षितम्। रूपवर्गादीति पाठे रूपशब्दो नीलपीतत्वादिगुणपरः वर्गशब्दो देवमनुष्यादिवर्गपरः जातिपरइत्यर्थः तन्निन्धनस्तद्विषयो निर्देशश्शब्दः। शब्दवाच्यास्तएव विशेषणानि तैर्विवर्जितः॥

यद्वा रूपवर्णादितद्वाचिशब्दरूपैर्विशेषणैर्विवर्जितः। एवमनित्यत्वव्यापकं कर्मकृतं रूपादिमत्त्वं ब्रह्मणि नास्तीति कर्मकृतरूपादिनिवृत्त्या तद्व्याप्यकालपरिच्छेदनिवृत्तिरित्यर्थः। यद्वा अनित्यत्वव्याप्यकर्मकृतरूपाद्यभावान्नानित्यत्वं ब्रह्मण्यनुमातुं शक्यमित्यर्थः। अनेन **प्रस्तत्यमितभेदम्** इत्यस्य पद्यस्य विषयो दर्शितः। अथानित्यव्यापकत्वाद्विकाराणामनित्यत्वनिवृत्त्यये तद्व्यापकविकारराहित्यमाह—**अपक्षयेति** जायते अस्तीत्यवस्थाद्वयं जन्मशब्देन विवक्षितम्। उत्पत्तिस्थितिनाशानामेकैकत्र विधाद्वयेन विकारषट्कसिद्धिः। तद्वर्जितत्वात् **सदाऽस्तीति** वक्तुं शक्यते। सदाशब्देन कादाचित्कास्तित्वनिवृत्तिः नतूत्पद्यत इत्यादिशब्दैरिति केवलशब्दाभिप्रायः। अनेन सत्तामात्रमित्यस्य विषयो दर्शितः अगोचरं वचसामित्यस्य च विषयो दर्शितो भवति। रूपवर्णादिप्रवृत्तिनिमित्ताभावादुत्पत्यादिप्रवृत्तिनिमित्ताभावाच्च कल्पनाविकारवाचिशब्दैर्न वक्तुं शक्यत इति तस्य पदस्यार्थ इत्यभिप्रायः। अगोचरं वचसामिति सर्वशब्दागोचरत्वमुच्यतेचेत् वचसामगोचरं सत्तामात्रमित्यपि वक्तुं न शक्यते॥

### गूढार्थसङ्ग्रहः

**सदाऽस्तीति केवलमिति**। 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा। अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते।' (कठ.६.१.१२) 'अस्तीत्येवोपलब्धव्यस्तत्त्वभावेनचोभयोः। अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति' इति श्रुत्यर्थः एतेन प्रदर्शितः। अत्र पूर्वं 'अव्यक्तात्तु परः पुरुषः व्यापको लिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुः अमृतत्वं च गच्छति। (६.८) इति प्रागुक्तव्यापकपरपुरुष एव 'अस्तीत्येवोपलब्धव्यः' इत्यत्र विवक्षितः। एवं

### श्रीभाष्यम्

**सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते। तद्ब्रह्म परमं नित्यमजमक्ष(र)य)मव्ययम्। एकस्वरूपं च सदा हेयाभावाच्च निर्मलम्। तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत्। तथा पुरुषरूपेण कालरूपेण च स्थितम्। (वि.पु.१.**

### श्रुतप्रकाशिका

अथ देशापरिच्छेदं नामनिर्वचनमुखेनाह—**सर्वत्रेति** ब्रह्मण ईश्वरातिरिक्तत्वनिषेधार्थं देवतान्तरव्युदासार्थं च नामनिर्वचनमुखेन तदुक्तिः औणादिकप्रत्ययस्यानेकार्थत्वादधिकरणे कर्तरि च व्युत्पत्तिर्वासुदेवशब्दस्योच्यते। **सर्वत्रेति**। वेदान्तेषु परब्रह्मणोहि निर्विकारत्वादिकमुक्तम्। तत्कथं? वासुदेवस्योच्यत इत्यत्राह—**तद्ब्रह्मेति** ‘**शैत्यंहि यत्सा प्रकृतिर्जलस्य**’ इतिवत्तदिति निर्देशः। निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इतिहि शाब्दाः। **नित्यमिति**। कार्यमात्रव्यावृत्तिः **अजमक्ष(य)र)मव्ययम् एकस्वरूपमिति** सविकारनित्यप्रधानव्यावृत्तिः एकस्वरूपशब्देन वृद्धिपरिणामराहित्यं विवक्षितम्। हेयाभावाच्च निर्मलमिति बद्धव्यावृत्तिः सदेति मुक्तव्यावृत्तिः परममिति नित्यसिद्धव्यावृत्तिः॥

यद्वा एकस्वरूपमिति बद्धव्यावृत्तिः सदेत्यादिना मुक्तव्यावृत्तिरिति, एवं स्वव्यतिरिक्तसमस्तवस्तुविलक्षणत्वेनोपनिषत्सूक्तं ब्रह्म वासुदेव एवेत्यर्थः त्रिविधा परिच्छेदवाचिनी श्रुतिरपि देवताविशेषं निरचिनोदनन्तमिति अनन्तशब्दो योगरूढः। अतो नारायणादिशब्दपर्यायस्त्रिविधानन्त्ययोगिनि भगवति मुख्यो वर्तते। **सत्यज्ञानादिवाक्येऽनन्तमिति**-पदं पुल्लिङ्गं द्वितीयान्तं ‘**यो वेद**’ ति वेदनशब्देनान्वयात् प्रथमान्तत्वे तद्योवेदेति तत्पदाध्याहारस्स्यात्, वाक्यभेदश्च स्यात्। अतस्तत्र यथोक्तएवार्थः। तस्मात्तदनुसारेण अत्राप्यपरिच्छेदकथनसमये देवताविशेषो निर्णीतः वस्त्वपरिच्छेदमाह—**तदेवेति**। **सर्वमेवैतदिति**। व्यक्ताव्यक्तपुरुषकालसमुदाय उच्यते। व्यक्ताव्यक्तस्वरूपमेतत्सर्वं तद्ब्रह्मेत्यर्थः। अनेन

### गूढार्थसंग्रहः

च ‘तत्त्वभावेनचोभयोः’ इत्यत्र व्याप्यव्यापकयोरुभयोस्तत्त्वभावः विवक्षितः। व्याप्तेः भगवन्महिमरूपतायाः विष्णुपुराण एवोक्त्या मिथ्यात्ववर्णनासम्भवात्। एतमर्थं द्रढयन् व्यापकवासुदेवस्य परब्रह्मत्वं स्थापयति। **सर्वत्रासौ समस्तंचे-त्यादिना**। ‘सर्वभूताधिवासं च यद्भूतेषु वसत्यपि। सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः तदस्म्यहं वासुदेवः’ इति ब्रह्मबिन्दूपनिषदन्ते श्रूयते। अत्र उपक्रमे ‘स्वरेण संधयेद्योगम्’ इति प्रणवकरणयोगस्याभिधानेन प्रणवघटकनादार्थ एव वासुदेवः परंब्रह्मेति विवक्षितम्। ‘यद्भूतेषु वसत्यपि’ इत्येतदर्थः **सर्वत्रासौ** इत्यनेन ‘सर्वभूताधिवासं च’ इत्यस्यार्थः **समस्तं च वसत्यसौ** इत्यनेनचोक्तः। ‘यद्भूतेषु वसत्यपि’ इत्यत्र वासः ‘व्याप्य नारायणस्थितः’ इति श्रुत्यनुसारेण व्याप्तौ पर्यवस्यति। इत्थं च सर्वस्य व्यापको धारकः वासुशब्दार्थः प्रदर्शितः। अत्र व्याप्तेर्धारणार्थत्वं स्पष्टं व्याप्तेर्नियमनार्थत्वं चान्यत्रोक्तम्। इत्थं च नियमनधारणादिसंवलितव्याप्तिरेव समानाधिकरणतया निर्देशे मूलमित्यभिप्रेत्य ‘तदस्म्यहं वासुदेवः’ इत्युक्तिः सर्वानुग्राहकत्वेनेत्युक्त्या व्याप्तेः प्रयोजनकथनेन मिथ्यात्वं प्रतिक्षिप्तम्। एतेन व्याप्तेरैश्वर्यगुणसूचकत्वमहिमरूपत्वयोः विष्णुपुराणोक्तयोः श्रुतिमूलकत्वं सिद्धम्॥

**तदेव सर्वमेवैतदिति**। अत्र च ‘सर्वभूताधिवासम्’ इत्युपनिषदुक्तरीत्या उपनिषदुक्तमेव सामानाधिकरण्यनिदानम्। एतत्तात्पर्येणैव ‘सर्वगत्वादनन्तस्य स एवाहमवस्थितः’ ‘सर्वं समाप्नोषि ततोऽसि सर्वः’ इति प्रह्लादार्जु-

श्रीभाष्यम्

**२.१०-११-१२-१३-१४) प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। (६.४.३९) परमात्मा च सर्वेषामाधारः परमेश्वरः। विष्णुनामा स वेदेषु वेदान्तेषु च गीयते। (६.४.४०)**

श्रुतप्रकाशिका

वस्त्वपरिच्छेद उक्तः। सर्ववस्तुसामानाधिकरण्यार्हत्वंहि वस्त्वपरिच्छेदः। सर्ववस्तुसामानाधिकरण्यार्हत्वेनैव चिदचिच्छरीरकत्वहेतुभूतव्यापनभरणादिगुणतः समाभ्यधिकराहित्यसिद्धेश्च वस्त्वपरिच्छेदसिद्धिः। नहि ब्रह्मव्यतिरिक्तस्य कस्यचित्समस्तचिदचिच्छरीरकत्वम्भवः, एवं शास्त्रोपक्रमे वासुदेवाख्यमुभयलिङ्गकं वस्तुप्रतिपाद्यमुक्तम् ॥

**शास्त्रो**पसंहारे च तथोक्तमिति दर्शयति। **प्रकृतिर्येति**। परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनात्तद्व्यावृत्त्यर्थं साक्षात्परमात्मलक्षणं जगत्कारणत्वमुक्तं लीयेते **परमात्मनीति**। सचेश्वरानतिरिक्त इति ज्ञापनार्थः परमेश्वरशब्दः ईश्वरश्च न देवतान्तरमिति ज्ञापनाय **विष्णुनामे**त्युक्तम्। अत्र परमात्मा आधारः परमेश्वर इतिपदैश्शरीरलक्षणं स्पष्टम् ॥

**एवं** शास्त्रस्योपक्रमोपसंहारयोः अवान्तरप्रकरणोपक्रमोपसंहारयोश्च हेयप्रत्यनीककल्याणगुणास्पदं नारायण एव परं ब्रह्मेति प्रतिपाद्यत इति दर्शितम्। अथाविद्यासम्बन्धादयश्च ब्रह्मण एवहि प्रतिपाद्यन्ते तत्कथं? यथोक्तस्वरूपस्य ब्रह्मण उपपद्यत इति शङ्कायां '**काठिन्यवान् यो बिभर्ति**' इतिवत् द्वारद्वारिभावेनोपपद्यत इति वक्तुं परमात्मनो जीवात्मनां

गूढार्थसंग्रहः

**न**योरुक्तिः॥ प्रकृतिजीवयोरुभयोः लयकारणत्वोक्त्या उपादानोपादेयभावसिद्ध्या तन्निबन्धनमपि सामानाधिकरण्यं सम्भवतीत्यभिप्रेत्य प्रकृतिजीवलयपरवचनमुदाहरति—**प्रकृतिर्या मया ख्यातेति** ॥

**विष्णुनामा स वेदेषु इत्यादि**। ऐतरेयब्राह्मणोपक्रमे 'अग्निर्वै देवानामवमः विष्णुःपरमः। तदन्तरेण सर्वा अन्या देवताः' इति शतपथब्राह्मणे 'अग्निर्वा अवरार्ध्यो यज्ञस्य विष्णुःपरार्ध्यः' इति ऋक्संहितायां च 'विष्णोर्नुकं वीर्याणि प्रवोचत्' 'प्रवःपान्थमन्धसः' इति 'भवामित्रो न शेव्यः' इति सूक्तत्रयं 'अतो देवा' इति वर्गः 'तद्विष्णोःपरमं पदम्' इति सर्ववेदपठितश्रुतिश्च विष्णोः परत्वे प्रमाणम्। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति श्रुत्यर्थः 'एकान्तिनः सदा ब्रह्मध्यायिनो योगिनोहि ये। तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः॥' इति विष्णुपुराण एव प्रदर्शितः। 'इन्द्रं मित्रं वरुणमग्निमाहुः अथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः' इति वामनसूक्ततया बह्वृचसमाख्यया प्रसिद्धे 'अस्य वामस्य' इत्यादिसूक्ते कृष्णविष्णुशब्दघटिते 'एकं सद्विप्रा बहुधा वदन्ति' इत्यत्र एकः कृष्णः विष्णुरेवेति स्फुटम्। एतच्छ्रुतीनां प्रमाणत्वोपपादनं हयशिरोरत्नभूषणदीधितौ व्यक्तम् ॥

'भारभृत्कथितो योगी' इत्यत्र सहस्रनामभाष्ये (शं) कथितशब्दस्य वेदादिभिरयमेव परत्वेन कथितः। सर्वैः वेदैः कथितइति वा कथितः 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' 'वेदे रामायणे पुण्ये भारते भरतर्षभ। आदौ मध्ये तथाचान्ते विष्णुस्सर्वत्र गीयते॥' इति श्रुतिस्मृत्यादिवचनेभ्यः। 'सोऽध्वनः पारमाप्नोति तद्विष्णोःपरमं पदम्' इत्युक्तम्, इत्युपक्रम्य 'पुरुषान्नपरं किंचित् सा काष्ठा सा परा गतिः' इत्यन्तेन यः कथितः सक-

### श्रीभाष्यम्

**द्वे रूपे ब्रह्मणस्तस्य मूर्तंचामूर्तमेव च। क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते। अक्षरं तत् परं ब्रह्म क्षरं सर्वमिदं जगत्।**

### श्रुतप्रकाशिका

प्रथमं जीवब्रह्मणोश्शरीरशरीरिभावरूपसम्बन्धं दर्शयति च आत्मशरीरभावेन सम्बन्धं तेषामविद्यासम्बन्धादिकं च वक्ष्यन् **द्वे रूपे इत्यादिना। मूर्तंचामूर्तमेवचेति** बद्धश्च मुक्तश्चेत्यर्थः। एतद्विवृणोति **क्षराक्षरस्वरूपेइति**। ज्ञानसङ्कोचात्मक-क्षरणवदसङ्कुचितज्ञानंचेत्यर्थः **सर्वभूतेषु च स्थिते** अर्हार्थे क्तः सर्वभूतस्थित्यर्हे सूक्ष्मतरतया व्यापनक्षमे इत्यर्थः॥

यद्वा बद्धस्य स्वरूपेण सर्वभूतस्थितिः मुक्तस्यतु धर्मभूतविभुज्ञानद्वारेणेति **अक्षरं तत्परंब्रह्मेति** तन्मुक्तस्वरूपम-क्षरम्। **क्षरं सर्वमिदं जगत्** इदं बद्ध(स्य)स्व)रूपं क्षरमित्यर्थः। रूपत्वं विशिनष्टि **एकदेशेति**। शक्तिः अपृथग्भूतं

### गूढार्थसंग्रहः

थितइति च इति। उपनिषद्भाष्ये 'सोऽध्वनः पारमाप्नोति' इत्यत्र तद्विष्णोः व्यापनशीलस्य ब्रह्मणः परमात्मनो वासु-देवाख्यस्य परमं प्रकृष्टस्थानम् इति॥

'यः पृथिव्यां तिष्ठन्—स त आत्मा अन्तर्याम्यमृतः' (बृ.५.७.३) इति श्रुतिविवरणावसरे 'य ईदृगीश्वरो नारा-यणाख्यः' इति वार्तिके 'कृष्णद्वैपायनो व्यासः वेदात्मा ध्वान्तहानिकृत्। प्राहेममेव बहुशः प्राणिनां हितकाम्यया॥ नारायणःपरोऽव्यक्तात् अण्डमव्यक्तसम्भवम्। अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी॥ वेदविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यते' इति। तद्विवरणे 'एतमेवेति। 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवं, विश्वं नारायणं देवमक्षरं परमं पदम्' इत्यादिर्मन्त्रः वेदार्थविद्भिरन्तर्यामिणमुद्दिश्य विनियुक्त' इतिचोक्तम्। सृष्टिकर्तुरेवान्तर्यामितया लयकारणत्वमपि तस्यैवेति एतेन निश्चितं भवति। 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति गीताविवरणे 'स उत्तमःपुरुष इति वेदउदाहृत एव' इत्यादिकं मधुसूदनसरस्वतीभिरुक्तम्। अत्र सर्वत्र 'वेदान्तेषु च गीयते' इति वाक्यतात्पर्यं व्यक्तीकृतम्। विस्तरस्तु अन्यत्र द्रष्टव्यः॥

अत्र परमात्मा विष्णुनामेति लयहेतुत्वस्य विष्णौ प्रतिपादनेन 'विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः' इत्युपक्रमोक्तसृष्ट्यादिकारणत्वस्यापि विवक्षा प्रतीयते। एकस्यैव सृष्टिलयकारण-त्वस्य श्रुतिषु प्रतिपादनात्। उपक्रमे तदुत्तरं 'वासुदेवाय ताराय' 'विष्णवे मुक्तिहेतवे' इति, 'परःपराणां परमः परमात्मा' 'ततस्स वासुदेवेति विद्वद्भिःपरिपठ्यते' 'तद्ब्रह्म परमं नित्यम्' इत्युक्तार्थस्सर्वोऽपि वेदवेदान्तप्रतिपाद्य इत्यभिप्रेतमिति प्रतीयते। **समस्ताश्शक्तयश्चैताः** इति पूर्वं वासुदेवस्य शक्तित्रयाश्रयादिव्यमङ्गलविग्रहः प्रतिपादितः। शक्तित्रयनिरू-पणेन विष्णोर्वासुदेवस्य परत्वमपि दर्शितं भवतीत्यभिप्रेत्य प्रथमषष्ठांशगततद्वचनानि क्रमेणोदाहरति **द्वे रूपे ब्रह्मणस्त-स्येति**। अत्र रूपशब्दः शरीरपरः। एतदध्यायान्ते 'यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित्। सन्ति वै वस्तु-जातानि तानि सर्वाणि तद्वपुः' (६.अ) इति वक्ष्यमाणत्वात्॥

**अक्षरं तत्परं ब्रह्मेति**। 'आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः। भूपमूर्तममूर्तं च परंचापरमेव च॥' (६. ७,४७) इत्युपक्रम्य 'मूर्तमेतद्धरे रूपं भावना त्रितयात्मकम्।' (४९) इति हिरण्यगर्भादीनां मूर्तरूपता षष्ठे वक्ष्यते।

### श्रीभाष्यम्

**एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत्। (वि.पु.१.२२.५५-५६-५७) विष्णुशक्तिः पराप्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा। अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥ (६.७.६१)**

### श्रुतप्रकाशिका

कार्योपयोगिविशेषम्। एकदेशस्थितस्य विस्तारिणीति पदद्वयेन असङ्कीर्णस्वभावत्वमुक्तम्। अस्मिन् श्लोके अखिलं जगदिति चिदचिदात्मकं जगदुच्यते तुल्यन्यायत्वादक्षरस्यापि शक्तित्वसिद्धिः। यद्वा अखिलजगच्छब्देनाक्षरस्यापि क्रोडीकारः त्रिपाद्विभूतेरपि लोकशब्दवाच्यत्वात् तत्समानार्थत्वात् जगच्छब्दस्य अखिलशब्दस्य सङ्कोचकाभावाच्च क्षरं सर्वमित्यत्र क्षरसामानाधिकरण्यमपवादः, इह तदभावादक्षरस्याप्यभिधानमुपपद्यते इदंशब्दस्य प्रकृतवाचित्वात् क्षराक्षरपरत्वं युज्यते॥ नन्वत्र क्षराक्षरशब्दौ कार्यकारणरूपेणावस्थितपरब्रह्मपरौ परब्रह्मशब्दमुख्यार्थसिद्धेः, अन्यथा ब्रह्मशब्दानामेकप्रकरणस्थानामर्थवैरूप्यं च स्यात्। जगतो ज्योत्स्नास्थानीयत्वंचोपपद्यते प्रभायाश्शीर्णावयवत्वेनाग्निकार्यत्वोपपत्तेः। नैवम् ब्रह्मणो रूपे इति व्यतिरेकनिर्देशस्वारस्यभङ्गप्रसङ्गात् सच कार्यकारणयोर्ब्रह्मव्यतिरिक्तत्वाभावात्। यदि षष्ठीस्वारस्याय मूर्तत्वामूर्तत्वे विवक्षिते तदा मूर्तामूर्तशब्दस्वारस्यभङ्गः। भावप्रधानत्वाविवक्षायां रूपशब्दसामानाधिकरण्यायोगः। यद्यु-

### गूढार्थसंग्रहः

अतः अमूर्तं मुक्तजीव एव। 'क्षरं प्रधानममृताक्षरं हरः' इत्यत्र अक्षरपदार्थः आत्मा इति सिद्ध्यति। 'अक्षरात्परतःपरः' 'नामरूपाद्विमुक्तः परात्परं पुरुषम्' इति मुण्डकश्रुतिद्वयपर्यालोचनायां परमक्षरं नामरूपविनिर्मुक्तो मुक्तजीव एवेति स्फुटं प्रतीयते। 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते।' इति गीतायां (१३.अ) कूटस्थशब्दप्रयोगेण 'येत्वक्षरमनिर्देश्यं' 'कूटस्थमचलं ध्रुवम्' इत्यत्रेव अक्षरशब्दार्थः न बद्धजीवः किंतु परिशुद्धो मुक्तजीव एव। 'क्षरस्सर्वाणि भूतानि' इत्यत्र सर्वभूतशब्दः 'एतद्योनीनि भूतानि सर्वाणीत्युपधारय' इति सप्तमे प्रकृतिजीवस्वरूपनिरूपणानन्तरवाक्ये प्रकृतिजीवोभययोनित्वस्य सर्वभूतेष्वभिधानेन बद्धजीवपरः। अनेनापि हेतुना 'कूटस्थोऽक्षरउच्यते' इत्यत्र अक्षरशब्दार्थो मुक्तजीव एव विवक्षितः। एवं च श्रुतिगीतैकरस्यात् 'अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत्' इत्यत्र क्षराक्षरशब्दौ बद्धमुक्तजीवपरौ। अत्र ब्रह्मशब्दः 'सर्वब्रह्ममयो हरिः' (१.२२.६३) इति अत्रैवोत्तरत्र वक्ष्यमाणतया युज्यत एवेति 'अक्षरं तत् परंब्रह्म' इत्यत्र अक्षरशब्दः मुक्तजीवपरएवेति निश्चीयते॥

**परस्य ब्रह्मणः शक्तिरिति।** अत्र परत्वं 'द्वे रूपे ब्रह्मण' इति पूर्वमुक्तरूपद्वयवत्त्वनिबन्धनं विवक्षितम्। तेन 'तथेदमखिलं जगत्' इत्यत्र क्षराक्षररूपद्वयं विवक्षितम्। 'तथेदमखिलं जगत्' इत्यत्र क्षरशब्दाप्रयोगात् प्रागुक्तक्षरमात्रस्य न विवक्षेति स्फुटम्। 'परस्य ब्रह्मणश्शक्तिः' इत्यत्र 'अक्षरं तत् परंब्रह्म' इत्यत्रोक्तपरब्रह्मणोविवक्षितत्वे— 'तथेदमखिलं जगत्' इत्यत्र क्षरमात्रशङ्काया उदयः स्यात् रूपशक्तिशब्दयोः एकार्थकत्वेन 'द्वे रूपे ब्रह्मणः' इत्यत्रोक्तब्रह्मण एव 'परस्य ब्रह्मण' इत्यत्र विवक्षायाः उचितत्वेन 'तथेदमखिलं जगत्' इत्यत्र क्षराक्षररूपद्वयं विवक्षितमिति निश्चीयते॥ अत्र षष्ठवचनमुदाहरति **विष्णुशक्तिःपरा प्रोक्तेति।** 'मूर्तमेतद्धरे रूपं भावना त्रितयान्वितम्' इत्येतदुत्तरं 'विष्णुशक्तिः परा प्रोक्ता' इति श्लोकः। 'भूप मूर्तममूर्तं च परंचापरमेव च।' इत्यत्र विभक्तममूर्तरूपं पररूपंचैक-

## श्रीभाष्यम्

यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा। संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥ तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥ (वि.पु.६. ६२.६३) प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महाबुद्धे वृतौ संश्रय-

## श्रुतप्रकाशिका

च्येत ब्रह्मणो द्वे रूपे ब्रह्महि मूर्तममूर्तंचेति तदा प्रथमान्तब्रह्मशब्दाध्याहारदोषस्स्यात् षष्ठ्यन्तब्रह्मशब्दस्य मूर्तामूर्तशब्द-सामानाधिकरण्यायोगात् ॥

किंच सर्वभूतेषु च स्थिते इति चानुपपन्नम् । सर्वभूतशब्दस्य कार्यवाचितया तत्र कार्यास्थितावुच्यमानायां स्वस्मिन् स्ववृत्तिप्रसङ्गात्, कारणस्यापि कार्यादनन्यतया स्ववृत्तिप्रसङ्गाच्च, अवस्थाद्वयस्य सर्वभूतास्थितिरिति च न वाच्यम् ; धर्मिपर्यन्तक्षराक्षरशब्दसामानाधिकरण्यायोगा, त्तयोरप्यवस्थापरत्वे स्वारस्यभङ्गात् अवस्थावद्वाचिजगच्छब्दब्रह्मशब्दसा-मानाधिकरण्यायोगाच्च। तस्मिन् सोढेऽपि कारणावस्थायाः कार्ये विद्यमानत्वायोगाच्च । शक्तिशब्दस्य कार्यवाचित्वायोगाच्च श्लोकस्य नायमर्थः । उपचारतोऽपि कार्योपयोगिविशेषणंहि शक्तिशब्देन व्यपदेशमर्हति कार्योपयोगिविशेषणत्वस्य सामान्यात् । शक्तिर्हि शक्तं प्रत्यपृथग्भूतं कार्योपयोगिविशेषणम् । कार्यंतु न कारणस्यापृथग्भूतं विशेषणं कार्योपयोगि च भवति कार्यकारणयोरनन्यत्वात् स्वस्य स्वयमेव विशेषणत्वायोगात् । कार्यत्वंहि विशेषणमितिचेत्सत्यं, तथाऽपि धर्मिवा-चिनो जगच्छब्दस्य कार्यतावाचित्वाभावात् शक्तिशब्दसामानाधिकरण्यमुपचारतोऽपि नोपपद्यते । कार्योपयोग्यपृथग्भूत-विशेषणं शक्तिरिति मुख्यत्वमस्मन्मते सम्भवेत् क्षरशब्दस्य कार्यपरत्वे दृष्टान्तवैघट्यं च स्यात् तच्च ज्योत्स्नाया विशीर्णा-वयवत्वाभावेनाग्निकार्यत्वाभावात् ॥

नच **'क्षरं प्रधानममृताक्षरं हरः'** इति प्रयोगानुसारेण चेतनाचेतनपरत्वं युक्तम् अचिदंशस्य स्वस्मिन् स्ववृत्ति प्रसङ्गेन सर्वभूतस्थित्युक्त्यनुपपत्तेः चिदचित्सङ्घातरूपेषु भूतेषु द्वयोरवस्थानमुपपन्नमितिचेन्न, समुदायिनोस्समुदायनिष्ठ-त्वानुपपत्तेः, समुदायोहि समुदायिनिष्ठः। उपरितनग्रन्थवैरूप्यं च स्यात्। उत्तरत्रहि 'भूपमूर्तममूर्तंचे'ति मूर्तामूर्तशब्दाभ्यां

## गूढार्थसङ्ग्रहः

मेव भावनात्रयान्वितस्य मूर्तरूपत्वोक्तौ भावनात्रयशून्यमेव पररूपमित्युक्तं भवति । तद्धि मुक्तरूपमेवेति भावः । एतदु-त्तरं 'एतान्यशेषरूपाणि तस्य रूपाणि पार्थिव । यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ॥ द्वितीयं विष्णुसंज्ञस्य योगि-ध्येयं महामते । अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः ॥ समस्ताश्शक्तयश्चैता ' इति श्लोकक्रमः । एतत्पर्यालोचनायां 'समस्ताश्शक्तयश्चैता' इत्यत्र बद्धमुक्तकर्मरूपशक्तित्रयं विवक्षितमिति स्फुटं प्रतीयते ॥

'द्वे रूपे ब्रह्मणस्तस्य मूर्तंचामूर्तमेव च ।' 'भूपमूर्तममूर्तं च परंचापरमेव च ।' इति प्रथमषष्ठांशद्वये अमूर्तं अक्षरं परं च रूपं मुक्तरूपमेव विवक्षितमिति द्वितीयांशे विष्णुशक्तेः बन्धमोक्षहेतुत्वप्रतिपादनेनापि सिद्ध्यतीत्यभिप्रेत्य तद्व-चनान्युदाहरति **प्रधानं च पुमांश्चेति** । एतत्पूर्वं ब्रह्माण्डं तद्बहिरावरणादिकं च सर्वं निरूप्य 'दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि । प्रधानेऽवस्थितो व्यापी चेतनात्माऽऽत्मवेदनः ।' इति जीवस्य प्रकृतिसम्बन्धोऽभिहितः । अत्र व्यापी चेतनात्मा ' इत्यत्र अग्नेः स्वप्रकाशस्य दारुणि स्वप्रभाद्वारा व्याप्तिः तथा स्वापृथक्सिद्धचैतन्यद्वारा व्याप्तिर्जीवस्य विव-क्षिता । अत्र दुर्विवेचप्रकृतिसम्बन्धः जीवस्य विवक्षितः, अयमेव उत्तरवचने संश्रयशब्दार्थः 'पृथग्भावः प्रकृतेः पृथ-

श्रीभाष्यम्

**धर्मिणौ। तयोस्सैव पृथग्भावकारणं संश्रयस्य च। यथा सक्तं जले वातो बिभर्ति कणिकाशतम्। शक्तिः साऽपि तथा विष्णोः प्रधानपुरुषात्मनः। (२.७.२९-३०)**

श्रुतप्रकाशिका

रूपद्वयं प्रस्तुत्य हिरण्यगर्भादीन् निर्दिश्य '**मूर्तमेतद्धरे रूपं भावनात्रितयान्वितम्।**' इति मूर्तशब्दवाच्यरूपस्य भावनात्रयान्वयकथनात्। नह्यचेतनस्य कर्मब्रह्मभावनान्वयः '**सोऽक्षरःपरमस्स्वराट्**' इत्यत्रहीन्द्रादिबद्धविलक्षणवाचित्वात् '**स स्वराड्भवति**' इतिवन्मुक्तवाचिस्वराट्छब्दसामानाधिकरण्या, च अक्षरशब्दो मुक्तात्मपरः, अतस्तदनुरोधेनाक्षरशब्दोऽत्रापि मुक्तात्मपरः ब्रह्मशब्दार्थवैरूप्यंतु '**तपसा चीयते ब्रह्म**' '**तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते**' इति श्रुताविवानेकोपपत्तिबलाद्युज्यते। अतो यथोक्तएवार्थः॥

ब्रह्मणोऽविद्यासम्बन्धद्वारभूते जीवात्मन्यविद्यान्वयं दर्शयति **विष्णुशक्तिरित्यादिना** सर्वगा चतुर्मुखादिपिपीलकान्तसर्वशरीरस्था, जातावेकवचनम्। यद्वा धर्मभूतज्ञानेन स्वतस्सर्वं व्याप्तुं क्षमा। वेष्टिता कर्मणा सङ्कुचितज्ञानेत्यर्थः। तर्हि सर्वे अज्ञास्स्युरित्यत्राह—**तयेति**। कर्मतारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः। सर्वेषां ज्ञाननित्यत्वस्य मुक्तौ सर्वविषयकत्वस्य च प्रामाणिकत्वाद्बद्धावस्थायां सङ्कोचविकासौ सिद्धौ तत्तारतम्यं च '**पुंसश्शक्त्युपलक्षितः**' '**तच्छक्त्या पशवोऽधिकाः**' इति स्पष्टीकृतम्। जातीनामप्यपृथक्सिद्धधर्मत्वेन रूपशब्दवाच्यत्वाच्च तद्व्यावृत्त्यर्थं प्रस्तुतं—रूपत्वं नियाम्यत्वलक्षणमित्याह—**प्रधानंचेति**। चिदचितोः परमात्मनियाम्यत्व धार्यत्व व्याप्यत्व नित्यत्वादेः प्रमाणान्तरागोचरतया विहितत्वान्निषेध्यत्वमयुक्तमिति नियाम्यत्वादिधर्माणां पारमार्थ्येन तदाश्रयभूतयोश्चिदचितोश्च पारमार्थ्यान्नित्यत्वोक्त्या च तयोर्भ्रमविषयत्वासम्भवश्च दर्शितो भवति। नहि धर्मिसत्यत्वेन विना धर्मसत्यत्वं युक्तम्। नापि बाध्यस्य नित्यत्वं युक्तम्। सर्वभूतात्मभूतया सर्वभूतव्यापिकयेत्यर्थः, विष्णुशक्त्या, विष्णोर्नियमनशक्त्या अन्यथा '**शक्तिस्सापि तथा विष्णो**' इत्यनन्तरोक्तिविरोधात् तयाऽऽवृतौ व्याप्तौ नियमनं च धारणं श्रुतिसिद्धम्। '**एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः**' इतिहि श्रूयते, अतो **बिभर्ती**त्युत्तरश्लोकसामञ्जस्यम्॥

**संश्रयधर्मिणौ** भगवदपृथक्स्थितिधर्मकौ। पृथग्भावः उपकरणोपकरणित्वलक्षणसम्बन्धविशेषराहित्यं संहारः। तत्रहि करणकळेबरं नास्ति संश्रयः करणकरणित्वेन सम्बन्धः सृष्टिरित्यर्थः। यद्वा संश्रयः तयोस्सम्बन्धस्संसारः। पृथग्भावो

गूढार्थसङ्ग्रहः

ग्भावः, सच अण्डतदावरणेभ्योऽपि पृथग्भावः, देहपृथग्भावोऽपि। एवं च पृथग्भावो मोक्ष एव भवति। '**यद्विमुक्तिप्रदो विष्णुः**' इति षष्ठे वक्ष्यमाणतया मोक्षरूपपृथग्भावकारणत्वमेव विष्णुशक्तेः अत्र विवक्षितमिति निश्चीयते। '**तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः**' इत्यत्रैवोक्त्या '**प्रकृतिर्या मया ख्याता**' इत्यादौ अव्यक्तव्यक्तयोः परमात्मनि लयोक्त्या च सृष्टिलयकर्मभूतब्रह्माण्डबहिरावरणादिभिन्नदेश एव मुक्तिदेश इति पराशरतात्पर्यनिर्णयसम्भवेनापि अत्र मोक्षरूपपृथग्भावहेतुत्वमेव विष्णुशक्तेर्विवक्षितमिति पराशराशयः अप्रकम्प्यः॥

प्रकृतिपुरुषयोरुभयोर्दुर्विवेचसम्बन्धः अत्राभिहितः, अयं च प्रकृतिसंबद्धजीवः बद्धः, प्रकृतेः पृथग्भूतः मुक्तः बद्धमुक्तयोरुभयोः परमात्मरूपत्वं यदभिहितं तद्धि सार्वदिकमेव। तेन बद्धमुक्तव्यवस्थासिद्ध्यर्थं आत्मैक्यं नाभ्युपगन्तुं शक्य

### श्रीभाष्यम्

**तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ (१. २२.६०) इत्यादिना परंब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य कृत्स्नस्य चिदचिद्वस्तुनस्स-र्वाऽवस्थाऽवस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणश्शरीरतया रूपत्वं**

### श्रुतप्रकाशिका

मोक्षः तत्सर्वं भगवन्नियमनाधीनमित्यर्थः । अत्र दृष्टान्तमाह—यथेति कारणात्कार्यस्य विभागे दृष्टान्तः जलस्य कणिका-स्तस्माद्भेदेन बिभर्ति वायुः संयोजकत्ववियोजकत्वयोर्वा दृष्टान्तः परस्परं संकलिता असंकलिताश्च बिभर्ति वायुः । यद्वा— प्रकृतिपुरुषगतदोषलेशराहित्ये दृष्टान्तः वायुर्हि कणिकाशतं तत्स्वभावास्पृष्टो बिभर्ति **प्रधानपुरुषात्मनः** प्रधानपुरुषयोरा-त्मनः । समस्तचिदचिद्वस्तुजातमिति कर्माध्याहर्तव्यम् ॥

यद्वा प्रधानशब्दानन्तरपुरुषशब्दो बद्धपरः आत्मशब्दः प्रकृतिसंसर्गरहितमुक्तात्मपरः । तान् बिभर्तीति एवं विधस्य जगतः परमार्थत्वमाह- **तदेतदिति** । मिथ्याहि बाध्यत्वेनानित्यम् । पारमार्थ्येसतिहि नित्यत्वसम्भवः । उदाहृत वचनार्थान् सङ्क्षेपेणाह—**इत्यादिनेति** । निरस्तनिखिलदोषत्वं कल्याणगुणात्मकत्वं च '**ससर्वभूतप्रकृतिं**' '**समस्त-**

### गूढार्थसंग्रहः

इत्यर्थः सिद्ध्यति । तत्र सर्वेषां मुक्त्यनन्तरं बद्धमुक्तव्यवहारस्य सर्वमतेषु विरह एवाभ्युपेतव्यः । एवं च बद्धमुक्तव्य-वस्था नात्मैक्यसाधिकेति इष्टसिद्धावुक्तम् अयमर्थो न घटते प्रकृत्युच्छेदस्यैवाभावात् प्रकृतेर्नित्यत्वादिति तान्नित्यतापरं वचनमुपादत्ते—**तदेतदक्षयमिति** । एतेन ज्ञानबाध्यत्वमपि न सम्भवतीति द्योतितम् ॥

विष्णुपुराणे उपक्रमोपसंहारयोः वासुदेवादिशब्दार्थनिर्वचनपर्यालोचनायां वासुदेवस्य सृष्ट्यादिकर्तृत्वे मुक्तिप्रदत्वे— सर्वकल्याणगुणाकरत्वे व्याप्त्यादेर्महिमरूपत्वसामानाधिकरण्यनिदानत्वयोः जगतः उच्छेदासम्भवे च श्रुतितात्पर्यविषयभूते पराशरतात्पर्यविषयत्वं एतावता निर्धारितं भवति। एतेन निर्विशेषस्य श्रुतितात्पर्याविषयत्वे सिद्धे सविशेषस्यैव श्रुतितात्पर्य-विषयत्वं पराशरोक्तमकामेनापि स्वीकर्तव्यमित्यभिप्रेत्याह—**परंब्रह्मेति** । **अन्तःप्रवेशनियमनादिलीलमिति** । अत्र नियमनार्थत्वमन्तःप्रवेशस्याविवक्षितम्। 'अन्तःप्रविष्टश्शास्ताजनानाम्' (तै.आ) इति श्रुतौ शासनार्थत्वमन्तःप्रवेशस्याभिप्रेतम् मैत्रायणीये 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्' इत्यारभ्य 'सोऽमन्यत एतासां प्रतिबोधनाय आभ्यन्तरं विविशानीति' (२. १) इत्युक्तेः । अयं च प्रवेशः विष्णुशब्दार्थः, उक्तं च सहस्रनामभाष्ये (शं) वेवेष्टि व्याप्नोतीति विष्णुः विषेः व्या-प्त्यभिधायिनः नुक्प्रत्ययान्तस्य रूपम्। देशकालवस्तुपरिच्छेदशून्यइत्यर्थः । 'अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणस्थितः' इत्यादि श्रुतेः । विशतेर्वा नुकप्रत्ययस्य रूपं विष्णुरिति । 'यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः । तस्माद्विष्णुरिति ख्यातो विशेर्धातोः प्रवेशनात् ॥' इति विष्णुपुराणे' इति तस्य शक्त्या इत्यत्र नियमनशक्तिर्विवक्षिता । अत्र वस्तुपरि-च्छेदशून्यत्वं सर्ववस्तुसामानाधिकरण्यार्हत्वं तत्र व्याप्तिर्हेतुः 'यद्भूतेषु बसत्यसौ सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः' इति ब्रह्मबिन्द्वाद्युक्तः। अन्तःप्रवेशस्य सृष्टिकालिकस्य नियमनार्थत्वेनैव 'सर्गस्थित्यन्तकारिणे' 'विष्णवे मुक्तिहेतवे' (वि पु.१.२) 'विष्णुर्मुक्तिफलप्रदः' इति प्रथमषष्ठांशयोरुक्तिः सङ्गच्छते । नियमनादिलीलमिति स्वानन्दस्य प्राधान्याभिप्रा येण सर्वानुग्राहकत्वेनेति (ब्र.बिं) परानन्दस्याप्युक्तेः । अयमर्थो भावप्रकाशे तृतीयसम्पुटे सप्रमाणं निरूपितः ॥

## श्रीभाष्यम्

**शरीररूपतन्वंश शक्तिविभूत्यादिशब्दैस्तत्तच्छब्दसामानाधिकरण्येनचाभिधाय तद्विभूतिभूतस्य चिद्वस्तुनस्स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिंचोक्त्वा क्षेत्रज्ञावस्थायां पुण्यपापात्मक कर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसन्धानमचिद्रू(पतद्)पा)र्थाकारतयाऽनुसंधानं च प्रतिपादितमिति परंब्रह्म सविशेषं, तद्विभूतिभूतं**

## श्रुतप्रकाशिका

**कल्याणे**'त्यादिश्लोकार्थः। जगदुत्पत्त्यादिलीलत्वं भगवच्छब्दनिर्वचनसिद्धं अन्तःप्रवेशनियमनादीत्यादिशब्देन अध्यक्षत्वानुमन्तृत्वे उच्येते—इत्यादिनेत्यादिशब्देन क्रीडतो बालकस्येवेत्यादिवचनं विवक्षितम्; तदर्थो लीलाशब्देन विवक्षितः सर्वाऽवस्थावस्थितस्य कार्यकारणावस्थितस्य बद्धमुक्तावस्थितस्यचेत्यर्थः॥

प्रमाणान्तरगोचरस्यार्थस्यहि निषेधार्थं भ्रान्तिसिद्धत्वेनानुवादसम्भवः। परमात्मनियाम्यत्वादिकंतु प्रमाणान्तरागोचरत्वाद्विधित्सितमेवेति विहितस्य निषेधोऽनुपपन्नइत्यभिप्रायेण पारमार्थिकस्यैवेत्युक्तम्। नियन्तृत्वनियाम्यत्वादिप्रतिपादनसिद्धोऽर्थः शरीरतया रूपत्वं '**तदेव सर्वमेवैतत्**' इत्यत्रैतच्छब्दसामानाधिकरण्यं '**द्वे रूपे ब्रह्मणस्तस्य**' इत्यादिनोक्तमर्थमाह—**शरीररूपतन्वंशेति**। **प्रतिपादितमितीति**। एवं शास्त्रोपक्रमोपसंहारेष्ववान्तरप्रकरणोपक्रमोपसंहारेषु

## गूढार्थसङ्ग्रहः

परमार्थिकस्यैव तद्विभूतिभूतस्य इति पदद्वयेन भगवद्विभूतित्वाज्जगतो ज्ञानबाध्यत्वरूपमिथ्यात्वं न सम्भवतीति सूचितम्। उक्तं च भगवद्यामुनमुनिभिः—'अतश्चोपनिषज्जातब्रह्माद्वैतधिया जगत्। न बाध्यते विभूतित्वात् ब्रह्मणश्चेत्यवस्थितम्॥' (सं.सि) इति 'ब्रह्मा दक्षादयःकालः तथैवाखिलजन्तवः। विभूतयो हरेरेते जगतस्सृष्टिहेतवः॥ (१.२२.३१) रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्धा प्रलयायैते जनार्दनविभूतयः॥ (३३) यत्किंचित्सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सत्त्वस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः॥ (३८) हन्ति यावत्कचित्किंचिद्भूतं स्थावरजङ्गमम्। जनार्दनस्य तद्रौद्रं मैत्रेयान्तकरं वपुः॥' (३९) इत्यत्र सर्वस्य विष्णोर्विभूतित्वं शरीरत्वंचोक्तम्। 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः। सोऽविकम्प्येन योगेन युज्यते नात्र संशयः॥' इति (गी.१०.७) भगवद्गीतायां विभूतेः परमार्थत्वेन वेदनस्यैव प्रयोजनमुक्तम्। अतएव 'भक्त्या मामभिजानाति यावन् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥' (१८.५५) इति वचने 'यावा' नित्यत्र विभूतिरेव विवक्षितेति विभूतेः परमार्थत्वेन ज्ञानस्य मुक्तिहेतुत्वमुक्तं सङ्गच्छते॥

एतेन 'एतां विभूतिं योगं च' इत्यत्र अविकम्पयोगः 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥' (गी.१०.१०) इत्युत्तरत्र ब्रह्मप्राप्तिसाधनत्वेन वक्ष्यमाणयोग एव विवक्षित इति सिद्धम्। एवं च तत्त्वतः इत्यनेन विभूतेःपरमार्थत्वज्ञानसत्त्व एव ब्रह्मप्राप्तिसाधनयोगद्वारा ब्रह्मप्राप्तिस्सिद्ध्यति नत्वन्यथा इत्युक्तं भवति। प्राप्तुःप्राप्यस्य च भेदज्ञानस्य परमार्थत्व एव ब्रह्मप्राप्तिः नत्वन्यथा इति स्फुटम्। अतो भगवद्विभूतित्वात् ज्ञानबाध्यत्वं न सम्भवति। 'तत्त्वमसि' इत्यादिवाक्यजन्यज्ञानबाध्यत्वमेव विभूतेः परैर्वक्तव्यम्। एतच्च न सम्भवति तनु शरीरादिशब्दघटितव्यधिकरणवाक्यानामिव समानाधिकरणवाक्यानामपि भगवद्विभूतिपरत्वादित्यभिप्रेत्य **तच्छब्दवाक्यसामानाधिकरण्येनचाभिधाय इति** उक्तिः। एतेन 'मैत्रेयान्तकरं वपुः' इत्यनन्तरं 'परमं पदं तस्यागुणं महत्। तच्च ज्ञानमयं व्यापि' इत्यत्र निर्विशेषं विवक्षितमिति सिद्धान्तसिद्धाञ्जनोक्तिर्निरवकाशा॥

## श्रीभाष्यम्

**जगदपि पारमार्थिकमेवेति ज्ञायते। प्रत्यस्तमितभेदमित्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनस्स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानस-**

## श्रुतप्रकाशिका

च प्रतिपादितत्वादित्यर्थः। ज्ञायत इत्यन्तेनोक्तवचनार्थसङ्ग्रहः कृतः। उदाहृतवचनैर्वस्तुनस्सविशेषत्वं जगतस्सत्यत्वं च स्थितम्॥ अथ परोदाहृतवचनानि पूर्वोदाहृतवचनार्थानुगुण्येन व्याचिख्यासुः प्रथमं प्रत्यस्तमितभेदमित्यादिश्लोकं व्याचष्टे। **प्रत्यस्तमितेति।** ‘**दुःखाज्ञानमलाधर्माः प्रकृतेस्तेनचात्मनः।**’

**पुमान्न देवो न नरो न पशुर्न च पादपः। शरीराकृतिभेदास्तु भूपैते कर्मयोनयः॥**

इत्यादिषु प्रकृतिर्देवादिशरीरंचोपाधित्वेन प्रतीयतइत्युभयविधवचनार्थं सङ्ग्रहयितुं देवमनुष्यादिप्रकृतिपरिणामविशेषेत्युक्तम्। प्रकृतेरित्यत्र प्रकृतिशब्दनिर्देशः शरीरस्य प्रकृतिपरिणामरूपत्वादित्यभिप्रायः। देवमनुष्यादिशब्देन प्रतिषेध्यभेदस्य शरीरे विद्यमानता दर्शिता॥

**ननु** मुक्तानामुपास्यत्वाभावा, दुपासकस्वरूपस्य अचित्संसृष्टतया प्रत्यस्तमितभेदत्वायोगाच्च, तादृक्त्वोपदेशायोगादस्य श्लोकस्य परिशुद्धात्मस्वरूपविषयत्वानुपपत्तेः परमात्मविषयत्वं स्यादिति शङ्कापरिहारायचोक्तं देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्यापीति इदानीं संसरतोऽपि स्वाभाविकाकारस्य तिरोहितस्य विद्यमानत्वादाविर्भविष्यतस्तस्य तथाऽ(त्वा)नुसंधानाय उपदेश इति भावः। ‘**तस्यात्मपरदेहेषु सतोऽपि**’ इत्येतत्स्मारयितुं संसृष्टस्यापीत्युक्तम्। अपिर्विरोधे पातकिसंसर्गात्पातकित्वं भवति रूमासंसर्गात्पदार्थानां लवणत्वंभवति। अतो (न) विरोधः तद्गतभेदरहितत्वेन भेदो रूपवर्णादिः अनेन प्रत्यस्तमितभेदशब्दो व्याख्यातः; प्रत्यस्तमितभेदशब्देन भेदस्यापुनरुदयविनाशोऽभिप्रेतः। ततश्च प्रळयकालव्यावृत्तिः। **तद्भेदवाचिदेवादिशब्दागोचरमित्यनेन अगोचरं वचसामितिपदं** व्याख्यातम्। **ज्ञानसत्तैकलक्षणमिति।** ज्ञानपदं सत्तामात्रमिति च पदं व्याख्यातम्। सत्तैकलक्षणमित्यत्र एकशब्देन सत्तामात्रमिति पदगतमात्रजर्थे

## गूढार्थसङ्ग्रहः

**तद्भेदवाचिदेवादिशब्दागोचरमिति।** ‘प्रत्यस्तमितभेदम्’ इत्यतःपूर्वं ‘त्रिविधा भावना भूप विश्वमेतन्निबोधत। ब्रह्माख्या कर्मसंज्ञा च तथाचैवोभयात्मिका॥ (६.७.४८) कर्मभावात्मिका ह्येका ब्रह्मभावात्मिका परा। उभयात्मिका तथैवान्या त्रिविधा भावभावना॥ ४९॥ बोधाधिकारयुक्तेषु विद्यते भावभावना। अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु। विश्वमेतत्’ इत्यत्र बद्धजीवसामान्यं कर्मक्षयशून्यमुक्तम्। तदनन्तरं च परंचान्यद्भेदभिन्नदृशां नृणां। प्रत्यस्तमितभेदं यत्’ इति श्लोकक्रमः। द्वितीयांशे जडभरतोपाख्याने ‘पुमांस्त्री गौरियं वाजी कुञ्जरो विहगस्तरुः। देहेषु लोकसंज्ञेयं विज्ञेयाकर्महेतुषु॥ २.१३.९३॥ पुमान्न देवो न नरो न पशुर्न च पादपः। शरीराकृतिभेदास्तु भूपैते कर्मयोनयः॥’ इत्यत्र देवादिशब्दवाच्यत्वं न परिशुद्धजीवस्य, किंतु देहवाचिदेवादिशब्दबोध्यत्वं देहबद्धस्यैवेति स्फुटम्

‘प्राणाधिपस्सञ्चरति स्वकर्मभिः’ ‘नैव स्त्री न पुमांश्चैव नचैवच नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स युज्यते।’ (श्वे.५.१०) इत्यादिश्रुतयोऽत्र मूलभूताः ‘तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्’ (मु) इति। अत्र ‘तदा विद्वान्पुण्यपापे विधूय’ इति पूर्वश्रुत्यनुसारेण कर्मक्षयानन्तरमेव नामरूपविनिर्मोकोऽभिप्रेतः।

श्रीभाष्यम्

**तैकलक्षणम् स्वसंवेद्यं योगयुङ्मनसो नगोचरइत्युच्यत इति अनेन न प्रपञ्चापलापः। कथ मिदमवगम्यत इतिचेत् तदुच्यते-अस्मिन्प्रकरणे संसारैकभेषजतया योगमभिधाय**

श्रुतप्रकाशिका

विवृण्वता जायतेऽस्तीत्यादिविकारा व्यावृत्ताः सत्तामात्रमित्युक्ते केनाकारेण सत्तेत्यपेक्षायां ज्ञानसत्तैकलक्षणमित्युक्तम्; ज्ञानत्वाकारेण सत्तेत्यर्थः। वचसामगोचरत्वे सत्ताव्याघातपरिहारार्थं न्यायवैशेषिकोक्तजडस्वरूपताव्युदासार्थं चात्मसंवेद्यमिति पदस्यार्थमाह—**स्वसंवेद्यमिति**॥ यद्वा अगोचरं वचसामित्यन्तैः पदैः कल्पनाविकाराराहित्ये तद्वाचिशब्दागोचरत्वेचोक्तभेदकधर्माभावात् कथं? स्वव्यावृत्तिग्रहणमिति शङ्कायामाह—आत्मसंवेद्यमिति प्रत्यक्त्वेन भासमानत्वं स्वव्यावर्तकम्। अन्येहीदंतया भासन्तइत्यर्थः ज्ञानपदं धर्मधर्मिणोरविशेषेणाजडत्वमाह—धर्मभूतज्ञानस्य बृहत्तया परिशुद्धात्मस्वरूपस्य ब्रह्मशब्दवाच्यत्वं '**ब्रह्मणोहि प्रतिष्ठाऽहम्**' इत्यादिष्विवोपपद्यते॥

योगयुक् प्रक्रान्तयोगः '**एवं प्रकारममलम्**' इति वचनेन परमात्मनि मुक्तस्वभावस्यातिदिष्टत्वेन मुक्तस्य परमात्मसाम्यप्रतिपत्तेः, परमात्मनश्च '**अपक्षयविनाशाभ्यां**' '**रूपवर्णादिनिर्देश**' इत्यादिवचनैः कतिपयभेदराहित्यस्य षड्भावविकारराहित्यस्य च स्पष्टत्वात्तदानुगुण्येन अनतिविस्तरं श्लोको व्याख्यातः अस्य श्लोकस्य मुक्तात्मविषयत्वं तस्य च प्रक्रान्तयोगस्यागोचरत्वं कथं ज्ञायत इत्यभिप्रायेणाह—**कथमिदमिति**। प्रकरणादेवावगम्यत इति परिहरति। **तदुच्यतइत्यादिना**॥ अस्मिन् प्रकरणे नह्ययं मुक्तकश्श्लोकः अपितु प्रबन्धस्थः '**अतः पूर्वापरापरामृष्टशब्दोऽन्यां कुरुते मतिम्**' इति तत्परिहाराय पूर्वापरपरामर्शेनैवार्थो वर्णनीय इति भावः। **संसारैकभेषजतया योगमभिधायेति**। एक शब्देन '**क्लेशानां च क्षयकरं योगादन्यन्न विद्यते**' इत्यस्यार्थोऽभिप्रेतः। वाक्यार्थज्ञानमात्रस्यापवर्गोपायत्वनिरासश्च (स्मा)स्फो)रितः। **योगावयवान् प्रत्याहारपर्यन्तानिति**।

**गूढार्थसंग्रहः**

एवं च कर्मक्षयानन्तरं देवादिशब्दागोचरं परं रूपमेव 'परंचान्यत्' इत्यत्र विवक्षितम्। 'अथ पराख्यंह्यमूर्तं रूपमाह—'परंचान्यत्' इति 'परमात्मन' इत्यन्तेन। 'भेदभिन्नदशाम्' इति पञ्चम्यर्थे षष्ठी। ये पूर्वश्लोके अक्षीणसमस्तविशेषज्ञानकर्माण उक्ताः तेभ्यो भेदाभिन्नदृग्भ्यः ब्रह्मसनकादिभ्यः अन्यत्पराख्यम्' इति विष्णुचित्तविवरणम्। 'तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम्। विश्वस्वरूपवैरूप्यं लक्षणं परमात्मनः॥' इति 'प्रत्यस्तमितभेदम्' इत्यस्यानन्तरश्लोकः 'विश्वस्वरूपवैरूप्यं' प्रागुक्तबद्धजीववैलक्षण्यमेव 'अरूपाख्य' मित्यस्य अमूर्तमित्यर्थः। 'भूपमूर्तममूर्तं च परं चापरमेव च' इत्युपक्रमात्। जडभरतोपाख्यान एव 'एकस्वरूपभेदश्च बाह्यकर्मप्रवृत्तिप्रजः। देवादिभेदेऽपध्वस्ते नास्त्येवावरणोहि सः॥' (२.१४.३३) इत्यत्रैवोदाहरिष्यमाणवचने कर्मक्षयानन्तरं देवादिशब्दावाच्यत्वं जीवस्योक्तम्। अतो यथोक्त एवार्थः॥

**संसारैकभेषजतया योगमभिधायेति**। 'इति संसारदुःखार्तितापतपितचेतसां। विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम्॥ (६.५.५७) तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः। गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः॥ (६.५८) निरस्तातिशयाह्लादसुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता॥ (५९) तस्मात्तत्प्राप्तये यत्नःकर्तव्यः'' 'द्वे विद्ये वेदितव्ये' इतिचाथर्वणी श्रुतिः 'परयात्वक्षरप्राप्तिः ऋग्वेदादिमयाऽपरा। (६५) यत्तदद्रेश्यमजरं' 'यद्वै

श्रीभाष्यम्

**योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोश्शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य तृतीयशक्तिरूपकर्माख्याऽविद्यावेष्टितं अचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा द्वितीयस्य कर्माख्याविद्याविरहिणो चिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसोऽनालम्बनतया**

श्रुतप्रकाशिका

**प्राणायामेन पवने प्रत्याहारेणचेन्द्रिये । वशीकृते ततःकुर्यात् स्थितं चेतश्शुभाश्रये ॥**

इत्यादिवचनार्थस्संक्षिप्तः। **परस्य ब्रह्मणोविष्णोश्शक्तिशब्दाभिधेयमिति।** ' **विष्णुशक्तिः परा प्रोक्ता** ' इत्यत्र विष्णुरेव शक्तिर्ब्रह्मण इति केचिद्वदन्ति । तद्व्यावृत्तये विष्णोरिति व्यासःकृतः ' **परस्य ब्रह्मणश्शक्तिः** ' ' **परमब्रह्मभूतस्य वासुदेवस्य** ' ' **ततस्सवासुदेवेति** ' ' **तद्ब्रह्म परमं नित्यं** ' ' **परमात्मा च सर्वेषां** '

**विष्णुनामा स वेदेषु वेदान्तेषु च गीयते । परब्रह्मस्वरूपस्य विष्णोश्शक्तिसमन्वितम् ॥**

' **शक्तिस्साऽपि तथा विष्णोः** ' इत्यादिभिर्विष्णोरेव परब्रह्मत्वं जगतस्तच्छक्तित्वं तच्छक्तिनियाम्यत्वंचोक्तमिति तत्प्रतिपादकतत्तद्वचनविरोधात्तदयुक्तमित्यभिप्रायः । शक्तिशब्दाभिधेयं अपृथक्सिद्धविशेषणंहि शक्तिः । ब्रह्म च न कस्यचिद्विशेषणम् । अतो विष्णेरेव शक्तिः सहि ब्रह्मशब्दवाच्य इत्यभिप्रायः । अत्र ' **नारायणःपरं ब्रह्म** ' ' **विष्णुस्तदासीद्धरिरेव निष्कळः** ' ' **पतिं विश्वस्यात्मेश्वरम्** ' ' **न तस्येशे कश्चन** ' ' **न तत्समश्चाभ्यधिकश्च दृश्यते** ' ' **यस्मात्परं नापरमस्तिकिंचित्** ' ' **न त्वत्समोऽस्त्यभ्यधिकःकुतोऽन्यो लोकत्रये** ' इत्यादिश्रुतिस्स्मृतयोऽनुसंधेयाः ॥

शक्तित्रयाश्रयो दिव्यविग्रह उपास्यत्वेनोच्यते । विष्णुरेव शक्तिश्चेत्कथंविष्णोर्विग्रहैकदेशो विष्णोरेवाश्रयः तदाश्रयभूतो विग्रहो नहि ब्रह्मणोस्तीतीदं च दूषणं फलितम् । **शक्तिशब्दाभिधेयं रूपद्वयमिति** । परापरसंज्ञस्यास्य रूपद्वयस्योत्तरत्र परापरशब्दसमानाधिकरणशक्तिशब्देन परामर्शात् परसंज्ञरूपगोचरशक्तिशब्दो न परमात्मविषय इत्यभिप्रायः । ' **तच्च विष्णोःपरं रूपं** ' ' **विष्णुशक्तिः परा प्रोक्ता** ' इति ह्युच्यते ' **भूपमूर्तममूर्तं च** ' इति वचनार्थमभिप्रेत्याह— **मूर्तामूर्तविभागेनेति** । ' **अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।** ' इत्यस्यार्थमाह–**तृतीयेति** । मूर्तामूर्तविभागेनेत्युक्तत्वात् मूर्ताख्यविभागमिति विभज्य निर्देशः कृतः । **निष्पन्नयोगिध्येयतयेति** । न विध्यर्थे कृत्यप्रत्ययः । अपितु

गूढार्थसंग्रहः

पश्यन्तिसूरयः। तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः ' इति ' ओमित्येवात्मानं ध्यायथ ' इत्येतदन्तमुण्डकश्रुतिवाक्यार्थमभिधाय ' क्लेशानां च क्षयकरं योगादन्यं न विद्यते। **(७.२५)** विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि। प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ' इत्यत्र ' क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावरे ' इति श्रुत्यर्थमप्युक्त्वा योगावयवा निरूपिताः

**शुभाश्रयं वक्तुमिति** । शुभत्वं हेयनिवर्तकत्वम्, आश्रयत्वं ध्यानालम्बनत्वम् प्रत्याहारानन्तरं ' ततः कुर्यात् शुभे चेतश्शुभाश्रये ' (वि.पु.६.७.४५) इत्युपक्रम्य ' आश्रयश्चेतसो ब्रह्म द्विधा ' इत्यादिना मूर्तामूर्तपरापरभेदभिन्नं रूपद्वयमभिधाय ' समस्ताश्शक्तयश्चैता ' इति दिव्यमङ्गलविग्रहं प्रस्तुत्य ' तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप । चिन्त्यमात्म-

### श्रीभाष्यम्

**स्वतश्शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य परशक्तिरूपमिदममूर्तमपरशक्तिरूपं क्षेत्रज्ञाख्यमूर्तं च परशक्तिरूपस्यात्मनः क्षेत्रज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम् 'आदित्यवर्ण' मित्यादिवेदान्तसिद्धं मूर्तं रूपं शुभाश्रय इत्युक्तम्। अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुं प्रत्यस्तमितभेदं यदित्युच्यते। तथा हि 'नतद्योगयुजा शक्यं नृप चिन्तयितुं यतः। द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम्॥ समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्।'**

### श्रुतप्रकाशिका

शक्यत्वाभिप्रायः, योगिध्येयं परंपदमित्यत्रापि स एवार्थः। निष्पन्नयोगिध्येयतया प्रक्रान्तयोगस्य ध्यातुमशक्यत्वं फलितम्। **स्वतश्शुद्धिविरहादिति**। अत्र न शुद्धेरस्वाभाविकत्वमुच्यते अपित्वौपाधिकदोषनिरासे स्वयमशक्तत्वेन भगवत्प्रसादापेक्षत्वं विवक्षितम्। **शुभाश्रयत्वं प्रतिषिध्येति**। स्वतश्शुद्धिविरहादित्यनेन शुभत्वं प्रतिषिद्धम् **अनालम्बनतयेत्य**नेनाश्रयत्वं प्रतिषिद्धमिति शुभाश्रयत्वप्रतिषेधः। शुभत्वं हेयविरोधित्वं नतु हेयराहित्यमात्रं '**चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम्**' इत्युक्तत्वात्। शक्तित्रयाश्रयत्वकथनाय शक्तित्रयमनुवदति। **परेति**। अत्र '**समस्ताश्शक्तयश्चैता**' इति वचनार्थो विवक्षितः। एताश्शक्तय इति बहुवचनेसत्यपि समस्तपदं बहुव्यक्तिक्रोडीकारार्थं परशक्तिरेव परमात्मनो रूपमिति परशक्तिरूपं परशक्त्यात्मकं वा एवमुत्तरत्रापि भगवदसाधारणमिति चतुर्मुखादिशरीरव्यावृत्तिः भगवदधिष्ठितत्वेऽपि तत्तज्जीवविशेषाभिमानविषयत्वात् तेषां शरीराणां श्रुतिमूलतां दर्शयति। **आदित्येति**। मूर्तं रूपमित्यनेन '**मूर्तं भगवतो रूपे**' इति वचनार्थ उक्तः। उक्तेष्वर्थेष्वयं श्लोकः किंविषय इत्यत्राह—**अत्रेति**। शुभाश्रयताऽनर्हत्वकथनार्थमुच्यतेचेदन्यत्रास्यानर्हत्वकथनं वस्त्वन्तरस्य तदर्हत्वकथनं च द्रष्टव्यमित्यत्राह—**तथाहीति**। अस्मिन्नर्थद्वये वचनद्वयमुपादत्ते। **नतदिति**। योगयुजा प्रक्रान्तयोगेन अनालम्बनत्वमनेन ग्रन्थेनोक्तम् स्वतश्शुद्धिविरहश्च प्रकरणसिद्धइ(हा)त्य)भिप्रेतः—

### गूढार्थसंग्रहः

विशुद्ध्यर्थं सर्वकिल्बिषनाशनम्॥' (७३) इति तस्य शुभत्वमभिधाय 'तस्मात् समस्तशक्तीनामाधारे तस्य चेतसः। कुर्वीत संस्थितिं सातु विज्ञेया शुद्धधारणा॥७५॥ शुद्धाश्रयस्य चित्तस्य सर्वगस्याचलात्मनः। त्रिभेदभावनाऽतीतो मुक्तये योगिनो नृप॥ अन्ये च पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः। अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः॥७७॥ मूर्तं भगवतो रूपं सर्वापाश्रयनिस्पृहम्। एषावै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते॥' इति विष्णुपुराणे षष्ठे उक्तम्। प्रथमे 'सपरः सर्वशक्तीनां ब्रह्मणः समनन्तरम्। मूर्तं ब्रह्म महाभाग सर्वब्रह्ममयो हरिः॥' इत्यभिधाय अस्त्रभूषणसंस्थानस्वरूपं सम्यगभिहितम्॥ **एतच्छक्तित्रयाश्रयो भगवदसाधारणमित्यादि**। 'आत्मानमस्य जगतो निर्लेपमगुणामलम्' इत्यादिप्रागु(७०९.पु) दाहृनास्त्रभूषणसंस्थानवचनान्यत्र विवक्षितानि। अत्र प्राकृतपदार्थतत्संबन्धित्वस्वत्वाभिमानित्वस्य अस्त्रभूषणयोः प्रतिपादनेन तदनुभवदशायां प्राकृतवस्तुनः अनुभवोऽपि वर्तते उभयविभूतिविशिष्टसगुणब्रह्मणः 'भेषजं भगवत्प्राप्तिः' इत्यत्र विवक्षितत्वात्। एवं च अविद्या माया–प्रकृतिः, तत्कार्यंचेत्येतत्सर्वं ज्ञानेन बाध्यत इति 'तथा विद्वान्नामरूपाद्विमुक्तः' इति श्रुतौ विवक्षितमिति जगतो ज्ञानबाध्यत्वरूपमिथ्यात्वोक्तिः परेषां निरवकाशा। 'नामरूपाद्विमुक्तः परात्परं

श्रीभाष्यम्

इति च वदति। ‘ तथा चतुर्मुखसनकसनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयताऽनर्हतामुक्त्वा बद्धानामेव पश्चाद्योगेन उद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतश्शुद्धिविरहात् भगवता शौनकेन शुभाश्रयता निषिद्धा। ‘ आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः। यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः। नैसर्गिको न वै बोधः तेषामप्यन्यतो यतः। तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत्॥ ’ इत्यादिना परस्य ब्रह्मणो विष्णोस्स्वरूपं स्वासाधारणमेव शुभाश्रयइत्युक्तम्। अतोऽत्र न भेदापलापः प्रतीयते।

श्रुतप्रकाशिका

अन्येतु पुरुषव्याघ्र चेतसो(यउ)ये व्य)पाश्रयाः। अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः॥

इत्यादिना भगवद्विग्रहव्यतिरिक्तानांहि शुद्धिविरह उक्तः अन्यस्य रूपस्यार्हताकथनं चास्यरूपस्यानर्हत्वविवक्षासूचकमिति चशब्दार्थः। अन्येत्विति ग्रन्थेन कर्मसम्बन्धलक्षणाशुद्धिकथनात्कर्मसम्बन्धविनिर्मुक्तानामपि स्वतश्शुद्धिविरहस्सूचितः। तेषामपि शुभाश्रयपदस्थशुभशब्देन व्यवच्छेद्यत्वं स्पष्टयितुमाह—तथेति। पश्चादुद्भूतबोधाश्चेत्येतद्व्याख्यातं स्वस्वरूपापन्नानामिति पदेन। आब्रह्मस्तम्बपर्यन्ता इत्यत्राऽऽङभिविधौ स्तम्बसमभिव्याहारात् स्तम्बोहि कर्मवश्यः ‘ पुमान्नदेव ’ इत्यारभ्य ‘ भूपैते कर्मयोनय ’ इत्युक्तेः ‘ तेषामप्यन्यतो यत ’ इत्येवमन्तस्य ग्रन्थस्यार्थः पूर्वमुक्तः॥

अथ ‘ तस्मात्तदमलं ब्रह्म ’ इत्यादेरर्थमाह—परस्येति। स्वासाधारणमित्यस्य पूर्ववदर्थः। प्रत्यस्तमितेत्यादिश्लोकस्य भेदनिषेधपरत्वाभावं निगमयति। अतइति। अथ ज्ञानस्वरूपमित्यादिश्लोकस्य भेदमिथ्यात्वपरत्वाभावमाह—

गूढार्थसंग्रहः

पुरुषमुपैति दिव्यम् ’ इति तत्रैव नामरूपाद्विमुक्तस्य दिव्यस्य परात्परस्य पुरुषस्यप्राप्तेरभिधानेन तद्विरोधात्। दिव्यमित्यत्र ‘ एकान्तिनस्सदा ब्रह्म ध्यायिनो योगिनोहि ये। तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः॥ गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः। अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः॥ ’ (वि.पु.१.६.३८,.३९) इत्युक्तस्थानविशेषसम्बन्धीत्यर्थः ‘ नामरूपाद्विमुक्त ’ इत्यस्य पूर्वार्धोक्तसमुद्रनदीदृष्टान्तानुसारेण ‘ भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते ’ इति श्रुत्यन्तरानुसारेण च बन्धकालिकदेवमनुष्यादिनामारूपविनिर्मोक एव विवक्षितः॥

अत्र ‘ आदित्यवर्ण ’ मित्यत्र वर्णशब्दप्रयोगेण दिव्यमङ्गलविग्रहो विवक्षितः। यद्यपि ‘ यदा पश्यःपश्यते रुक्मवर्णम् ’ इति श्रुतौ रुक्मवर्णशब्देनापि विग्रहस्सिद्ध्यति, तथाऽपि अत्र ‘ तमसःपरस्ता ’ दित्यत्र अस्तातिप्रत्ययेन प्रकृतिमण्डलादूर्ध्वस्थानस्य सिद्ध्या तत्र दिव्यमङ्गलविग्रहस्य मुक्तिदशायामनुभाव्यस्य सिद्धिः पुरुषसूक्तवाक्यतः सम्भवतीति ‘ आदित्यवर्ण ’ मिति वाक्योपादानम्। ‘ पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि ’ इति श्रुतौ ‘ दिवि ’ इत्यत्रापि प्रकृतिमण्डलादूर्ध्वस्थानमेव विवक्षितम्। एवं एतत्सच्छायछान्दोग्यवाक्येपीति प्रागेव (७०४.पु) निरूपितम्। एवं च ‘ नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ’ इत्यत्र दिव्यमित्यस्य प्रकृतिमण्डलादूर्ध्वस्थानसम्बन्धीत्यर्थः। अतः तस्यैव प्राप्यत्वं विवक्षितमिति सुस्थमिति भावः॥

अतोऽत्र न भेदापलापःप्रतीयते इति। ‘ भेषजं भगवत्प्राप्तिः ’ इत्युपक्रम्य ‘ परयात्वक्षरप्राप्तिः ’ ‘ श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोःपरमं पदम्॥ तदेव भगवद्वाच्यं स्वरूपं परमात्मनः। वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः॥

श्रीभाष्यम्

**ज्ञानस्वरूपमित्यत्रापि ज्ञानव्यतिरिक्तस्यार्थजातस्य-कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरिति एतावन्मात्रवचनात् । नहि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति। जगद्ब्रह्मणोस्सामानाधिकरण्येनैक्यप्रतीतेः। ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्तेसत्यर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादितिचेत् तदसत्-अस्मिञ्छास्त्रेपरस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिप**

श्रुतप्रकाशिका

**ज्ञानस्वरूपमिति** । अपिस्समुच्चये, कृत्स्नामिथ्यात्वप्रतिपादनाभावमुपपादयति । **ज्ञानेति** । ज्ञानस्वरूपस्यार्थाकारतयाऽवभासे भ्रमेसत्यर्थाकारस्य तथात्वेनावभासो न भ्रमो भवतीत्यर्थः । तमेव दृष्टान्तेनोपपादयति । **नहीति** । दृष्टान्ताद्वैषम्यमुखेन चोद्यं शङ्कते । **जगद्ब्रह्मणोरिति** । तत्रहि सर्वं रजतजातं न शुक्तिकाशकलेन समानाधिकरणं दृष्टं अपितु व्यधिकरणत्वेन प्रमाणप्रतिपन्नम्, अतो न कृत्स्नस्य रजतजातस्य शुक्तित्वेन विरोधः अपितु समानाधिकरणरजतस्यैव विरोधः तत्र विरोधात्समानाधिकृतरजतस्य मिथ्यात्वम् अविरुद्धस्यासमानाधिकृतरजतस्य अमिथ्यात्वं च । अत्रतु ब्रह्मव्यतिरिक्तं कृत्स्नं ब्रह्मसमानाधिकरणं प्रतीयते । अतो ज्ञानाकारस्य अर्थाकारस्य च विरोधे कृत्स्नस्यार्थजातस्य मिथ्यात्वं फलितमिति । एतत्परिहरति । **तदसदिति** । तत्र प्रथमं परोक्तार्थस्य प्रबन्धवाक्यार्थविरोधमाह—**अस्मिन्निति** । ब्रह्मणो-

गूढार्थसंग्रहः

(६.५.६९) एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ (वि.६.५.७६) विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव। प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः। (७.८.३) इत्युपक्रमोपसंहारयोः परविद्याफलभूतभगवत्प्राप्तेः 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ।' इति श्रुतिविवक्षितायाः पराशरेण स्थापनेन भेदापलापः न पराशराभिप्रेतः। 'परात्परं पुरुषम्' इत्यत्र सर्वोत्कर्षसर्वकारणत्व सर्वान्तर्यामित्वादिकमनुभाव्यत्वेन विवक्षितमितिभावः

**परस्य ब्रह्मणो विष्णोरित्यादि** । 'ज्ञानस्वरूप' मित्यस्मात्पूर्वं 'आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् । प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥' इति श्लोकः । अत्र 'आधारभूतं विश्वस्य, सर्वभूतस्थम्' इति पदद्वयेन सर्वभूतधारकत्वव्यापकत्वे प्रतिपादिते 'पुरुषोत्तम' मित्यत्र दिव्योह्यमूर्तःपुरुषः, अक्षरात् परतःपरः, नामरूपाद्विमुक्तः परात्परं पुरुषम्' इत्यत्रोक्तः जीवापेक्षया उत्तमःपुरुषः 'सवा एष सर्वासु पूर्षु पुरिशयः' इत्यादिबृहदारण्यकादिनिर्वचनसिद्धप्रवृत्तिनिमित्तकः पुरुष एव विवक्षितः ॥ एतेन जीवब्रह्माभेदकथाया अपि नावकाशः । पूर्वं सर्वभूतसम्बन्धोक्त्या औपाधिकमलशङ्कायां 'अत्यन्तनिर्मलं परमार्थतः' इत्युक्तम् । ये च 'सर्वं खलु' इति वाक्यापातप्रतीतार्थमवलम्बमानाः ब्रह्मणः स्वरूपपरिणामवादिनः तेषां अर्थाभेदज्ञानं भ्रान्तिरिति तात्पर्येण भ्रान्तिदर्शनतस्स्थिताइत्युक्तम् ॥

यद्वा—ज्ञानस्वरूपस्य परमात्मनः ज्ञानस्वरूपत्वमनभ्युपगच्छन्तः ज्ञानविषयत्वमेव ये अभ्युपगच्छन्ति नैयायिकादयः तेषां भ्रान्तिरिति तात्पर्येण अर्थस्वरूपेण 'भ्रान्तिदर्शनतः स्थिता' इत्युक्तम् । अर्थस्य ज्ञानविषयस्य घटादेः स्वरूपं ज्ञानस्वरूपत्वाभावरूपं अर्थस्वरूपेणेत्यत्र विवक्षितमित्याशयः । ज्ञानस्वरूपमित्यतःपूर्वश्लोकेषु वेदोपबृंहणभूते विष्णुपुराण उपक्रमे जगदुत्पत्तिस्थितिलयकारणप्रश्नप्रतिवचने दृश्येते । ततः जगत्कारण एव वेदान्तानां तात्पर्यं, नतु जगत्कारणत्वोपल-

### श्रीभाष्यम्

**त्वतया तस्य भ्रान्तिदर्शनासम्भवात्। सामानाधिकरण्येनैक्यप्रतिपादनं च बाधासहम· विरुद्धं चेत्यनन्तरमेवोपपादयिष्यते। अतोऽयमपि श्लोको नार्थस्वरूपस्य बाधकः। तथा हि**

### श्रुतप्रकाशिका

ऽविद्यान्वयो जगतो मिथ्यात्वं चात्र विरुद्धम्। '**समस्तहेयरहितं विष्णवाख्यं परमं पदम्।**' '**ततस्स वासुदेवेति**' '**तद्ब्रह्म परमं नित्यम्**' '**हेयाभावाच्च निर्मलम्**' '**तानि सर्वाणि तद्वपुः**' '**विभूतयो हरेरेता**' इत्यादिवचनादित्यर्थः '**भ्रान्तिदर्शनतास्स्थितम्**' '**विष्णुं ग्रसिष्णुम्**' इति विष्णोस्सगुणस्य भ्रमाश्रयत्वमुच्यते। अतस्तद्युक्तम्। परं ब्रह्महि निर्दोषमिति शङ्काव्यावृत्त्यर्थं परस्य ब्रह्मणो विष्णोरित्युक्तम् ॥

**निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्येत्याभ्यां पदाभ्यामविद्यान्वयानुपपत्तिरुक्ता** अविद्यासम्बन्धेसति निरस्तसमस्तहेयत्वं समस्तकल्याणगुणात्मकत्वमपि ह्यनुपपन्नं स्यात्। महाविभूतेरिति जगन्मिथ्यात्वानुपपत्तिरुक्ता। जगतो भगवद्विभूतित्वं हि न प्रमाणान्तरासिद्धं येन निषेधार्थमनुवादस्स्यात्। अतो विधीयत एव विधिस्तु न भ्रमं जनयति तथासति निषेधवचनस्यापि सतो भेदस्यासत्त्वविषयबुद्धिरूपभ्रमपरत्वस्यानिवार्यत्वात्। प्रामाण्यं हि वाक्यद्वयस्य समानं तस्माद्विहितोऽर्थः परमार्थ एवेति न जगन्मिथ्यात्वमित्यर्थः ॥

सामाधिकरण्येनैक्यप्रतीतौ सत्यां ज्ञानाकारार्थाकारयोर्विरोधादन्यतरमिथ्यात्वं **स्यात्—यथा** शुक्तिरेव रजतमित्यत्रेति शङ्कायामाह—**सामानाधिकरण्येनेति**। बाधासहं, न केवलमाकारद्वये अन्यतरबाधनिरपेक्षमपि सामानाधिकरण्यं सम्भवतीति किंतु बाधं न सहते आकारद्वयासिद्धौ सामानाधिकरण्यलक्षणासिद्धेरित्यर्थः। तर्ह्येकस्मिन्वस्तुन्याकाद्वयविरोधःकथं परिहृत इत्यत्राह—**अविरुद्धंचेतीति**। आकारद्वयाङ्गीकारेऽप्यैक्यप्रतिपादनमविरुद्धम्। सद्वारकत्वादिति भावः, अन्तरमेव नत्वधिशरणान्तइत्यर्थः प्रथमश्चशब्दश्शङ्कानिवृत्तिपरः, द्वितीयस्समुच्चयपरः ; मिथ्यात्वपरत्वाभावं निगमयति। **अतोऽयमिति**। एवं ज्ञानस्वरूपमितिश्लोकस्य प्रपञ्चमिथ्यात्वपरत्वमनुपपत्त्युद्धाटनेन निरस्तम् ॥ अथ श्लोकं स्वपक्षे व्याख्यातुमुपक्रमते। **तथाहीति**। अत्र किमर्थं प्रश्नश्लोकव्याख्यानम् उच्यते—ज्ञानस्वरूपमिति श्लोके द्वितीयान्तपदानां विशेष्यो

### गूढार्थसंग्रहः

क्षिते निर्विशेषे, द्रमिडाचार्यसंप्रदायोऽप्यत एवोपपद्यते। अतः उपक्रमविरोधेन 'ज्ञानस्वरूप' मित्यत्र न परसम्मतापातप्रतीतार्थः पराशराभिप्रेतः। अतएव 'ज्ञानस्वरूप' मित्यनन्तरं 'विष्णुं ग्रसिष्णुं विश्वस्य सर्गास्थित्यन्तकारिणम्। प्रणम्य जगतामीशमजमक्षरमव्ययम् ॥' (१.२.७) यस्मादिदं जगदजायत यत्र तिष्ठत्यन्ते समस्तमिदमस्तमुपैति यत्र। तस्मै नमस्सदसदादिविकल्पशून्यचैतन्यमात्रवपुषे पुरुषोत्तामाय ॥' (१.२.८) इत्युक्तिस्सङ्गच्छते ॥

अत्र 'सदसदादिविकल्पशून्यचैतन्यमात्रवपुषे' इत्यत्र निर्विशेषं न विवक्षितम्। तथासति 'चैतन्यमात्र' इत्यनेन सद्रूपत्वानन्दरूपत्वयोरापि व्यवच्छेदप्रसङ्गात्। उत्तरत्र 'नासदासीत्' इति श्रुतिविवरणभाष्ये सदसच्छब्दयोः च्चिदचिद्व्यष्टिपरतायाः स्थापयिष्यमाणतया स एव सदसच्छब्दयोरर्थः। चैतन्यं स्वरूपनिरूपकमिति तात्पर्येण चैतन्यमात्रेत्युक्तम्। 'सत्यं ज्ञान' मित्यस्य स्वरूपनिरूपकधर्मपरतायाः उत्तरत्र भाष्य एव स्थापयिष्यमाणत्वात्। अतएव 'पुरुषोत्तमाय' इत्युपपद्यते। अत्र पुरुषशब्दः '**औपनिषदपरमपुरुष**' इति सूक्तिविवरणावसरोक्तयावदर्थपरः। इममर्थमभिप्रेत्य भूमिकामारचति—**तथाहीत्यादिना** ॥

श्रीभाष्यम्

**' यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्मेति ' जगज्जन्मादिकारणं ब्रह्मेत्यवसितेसति ' इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ ' इति शास्त्रेणार्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति विज्ञायते। उपबृंहणं नाम विदितसकलवेदतदर्थानां**

श्रुतप्रकाशिका

विष्णुरिति न प्रतीयते। तेषां प्रणम्येति पदेनान्वयश्च न ज्ञायते। श्लोकस्य विशिष्टार्थपरत्वं च प्रकरणस्य विशिष्टपरत्वेन विना नावगम्यते। अतो नमस्कारश्लोका व्याख्यातव्याः तेषु व्याख्यातव्येषु द्वितीयाध्यायारम्भे नमस्कारकरणं किं निबन्धनं ? प्रथमत एवहि तत्कर्तव्यमिति शङ्का जायते। शास्त्रस्य प्रश्नप्रतिवचनरूपेणावतीर्णत्वात् प्रथमं प्रश्नानां सङ्क्षेपेण प्रतिवचनं कृत्वा वि(स्त)स्ता)रविवक्षायां द्वितीयाध्यायारम्भे नमस्कारःकृतः। अन्यथा प्रश्नानन्तरमेव नमस्यायां क्रियमाणायां अस्मत्प्रश्नस्य किमुच्यत इति शिष्यबुद्धेः व्याकुलता स्यादिति पूर्वोक्तशङ्कानिरसनमुखेन नमस्कारश्लोकसङ्गतिप्रदर्शनार्थं प्रश्नश्लोका व्याख्याताः ॥

ज्ञानस्वरूपमित्यस्मिन्नुपक्रमग्रन्थे निर्विशेषवस्तुव्यतिरिक्तस्य भ्रान्तिसिद्धत्वदर्शनात्तदनुगुणएवार्थ उत्तरत्र वर्णनीय इति शङ्कापरिहारायोपक्रमोपक्रमभूतैः प्रश्नोत्तरवरलाभश्लोकैः शास्त्रप्रतिपाद्यस्सविभूतिकदेवताविशेषः नतु ज्ञप्तिमात्रमिति शास्त्रतात्पर्यज्ञापनार्थं च प्रश्नश्लोकव्याख्यानम्। व्याचिख्यासितश्लोकोक्तभ्रान्त्यन्वयस्य सद्वारकत्वसिद्धये सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति यन्मयमिति मयट्प्रत्ययेन ज्ञापनार्थं च प्रश्नश्लोकाः व्याख्यायन्ते। तत्र किमयं श्रुतवेदान्तप्रश्नः उताश्रुतवेदान्तप्रश्न इति विकल्पे अश्रुतवेदान्तस्य विशेषप्रश्नानुपपत्तिः। श्रुतवेदान्तस्य श्रोतव्याभावात्प्रश्नानुपपत्तिरिति शङ्कायां श्रुतवेदान्तप्रश्नइत्याह—**यतो वा इमानीत्यादिना**। अवसिते सतीत्यनेन ब्रह्ममीमांसाश्रवणं कृतमित्युक्तम् श्रुतवेदान्तस्य कथं प्रश्नोपपत्तिरिति शङ्कायां श्रुतवेदान्तस्येतिहासपुराणश्रवणविधिं दर्शयति। **इतिहासेति।** इतिहासेत्यादिश्लोके वेदशब्दो वेदान्तपरः। वेदोपबृंहणभूतेषु धर्मशास्त्रेतिहासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहणानि। इतिहासपुराणान्युपरितनभागोपबृंहणपराणीति विभागः, सच स्मृत्यधिकरणे व्यक्तीभविष्यति ॥

**तत्र** धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणां तदाराधनरूपत्वज्ञापनार्थम्। इतिहासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपासनाङ्गत्वप्रतिपादनार्थम्। इतिहासस्य पुराणेभ्योऽभ्यर्हितत्वं विशेषः **' अल्पाच्तर '**मिति पुराणशब्दस्य पूर्वनिपाते प्राप्ते **' अभ्यर्हितं पूर्वं प्रयोक्तव्यम् '** इति पूर्वनिपातितस्येतिहासस्याभ्यर्हितत्वप्रतीतेः। अस्य श्लोकस्य प्रथमार्धं व्याचष्टे। **उपबृंहणंनामेति**। षष्ठ्यन्तविशेषणद्वयेनागमोत्थं विवेकजं च ज्ञानमस्तीत्युक्तम्। तत्त्वार्थानामिति बहुवचनं कपिलमतादपीतिहासादीनां प्राबल्यद्योतनार्थं व्यक्तीकरणं अज्ञातविशेषैस्सह स्वावगतार्थनिष्कर्षः, यथा वेदेन कर्तव्यतया विहितस्य सन्ध्योपासनादेः शरीरशुद्धिप्रकारदन्तधावनस्नानादिविशेषैस्सह निष्कर्षः एवमुपनिषद्भागेऽप्यर्थनिष्कर्षः संपाद्यः। उपनिषदर्थनिष्कर्षो ब्रह्मविचारसिद्ध इति नोपबृंणापेक्षेति शङ्कायामुत्तरार्धं व्याचष्टे। **सकलेति**। पूर्वार्धविहितोपबृंहणकार्यतोपपादकमुत्तरार्धम्। उपबृंहणंनामानधीतशाखान्तरार्थैस्सहाधीतशाखार्थनिष्कर्षः। अतो नोपबृंहणविचारनैरपेक्ष्यमित्यर्थः

**ननु** यथा आपातप्रतीत्या फलवदर्थावगमात् कर्मविचारे तदनन्तरं ब्रह्मविचारे च रागतःप्रवृत्तिः तथाऽधीयमान शाखान्तर्गतेन **' अनन्ता वै वेदाः '** इति वाक्येन वेदानामानन्त्यावगमा,दधीतशाखानवगतानां तदविरुद्धानां विरु-

## श्रीभाष्यम्

**स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैस्स्वावगतवेदवाक्यार्थव्यक्तीकरणम्। सकल शाखा(नु)गतस्य वाक्यार्थस्याल्पभागश्रवणाद्दुरवगमत्वेन तेनविना निश्चयायोगादुपबृंहणं हि कार्यमेव।**

## श्रुतप्रकाशिका

ज्ञानांचार्थानां सम्भवात् **'स्मृतेश्च' 'अपिस्मर्यते'** इत्यादिसूत्रेषु वेदान्तार्थनिर्णयस्योपबृंहणसापेक्षत्वदर्शनाच्चोपबृंहणश्रवणे रागतः प्रवृत्तिरुपपद्यते। तत्र पूर्वभागोपबृंहणेषु धर्मशास्त्रेषु श्रुतेषूपनिषद्भागोपबृंहणरूपेतिहासपुराणेष्वपि रागात्प्रवृत्तिरिति विधिवैयर्थ्यम् अप्राप्तेहि शास्त्रस्यार्थवत्त्वम् ॥

**नच** गुरोरेव श्रोतव्यमिति नियमविधिः अस्मिन्वचने तद्वाचिशब्दाभावात्। इतिहासपुराणयोः श्रवणप्रवृत्तस्यैतद्वचनार्थज्ञानम्, तस्मादितिहासपुराणश्रवणे प्रवृत्तिरित्यन्योन्याश्रयश्च। अत उपबृंहयेदिति विधिरनुपपन्नइति। सत्यम्। भारतादिप्रबन्धविशेषश्रवणाय तन्मध्यगतेनानेन वचनेन न्यायसिद्धं सामान्यत उपबृंहणस्यापेक्षितत्वमनूद्यते। उपबृंहणं कार्यमिति ज्ञायत इत्यस्यायमर्थः न्यायसिद्धमुपबृंहणस्य करणीयत्वमनेन वचनेनापि ज्ञायत इति। **उपबृंहणं नामे**त्यादिभाष्येण न्यायप्राप्तिरेव प्रदर्श्यते ॥

**यद्वा** समन्वयविरोधपरिहारलक्षणाभ्यामेव तत्त्वस्थितेर्निश्चितत्वाद्वस्तुनि विरुद्धाकारासम्भवादधीयमानश्रुतिनिर्णीतविरुद्धार्थप्रतिपादकप्रदेशान्तरसम्भवे वेदस्य भ्रान्तजल्पितायमानत्वप्रसङ्गाच्च। निर्णीततत्त्वविरुद्धार्थप्रतिपादकप्र(देशा) सङ्गा)सम्भवात् ब्रह्मण्यवगतगुणविभूतिविशेषसद्भावेऽप्युपबृंहणरुहस्यैरपि तदियत्ताप्रतिपादनायोगात्, अवगतकतिपयगुण विशेषोपासनेष्वन्यतमेनैव पुरुषार्थसिद्ध्युपपत्ते,श्चोपबृंहणश्रवणनिरपेक्षंप्रति उपबृंहयेदिति विधानं युज्यते ॥

* **नन्वेवं** तर्हि न्यायानुगृहीतवाक्यावगतेष्वर्थेषूपबृंहणानिष्कृष्टव्याभावान्निष्कृष्टव्यांशस्य सूत्रोदाहृतवचनैरेव निष्कृष्टत्वाच्च उपबृंहणविधिरदृष्टार्थस्स्यात्। नच दृष्टे सम्भवत्यदृष्टकल्पनं न्याय्यम्। दृष्टार्थत्वं च वचनं दर्शयति **'मामयं प्रतरिष्यति'** इति। वेदस्य प्रतारणं नाम तदभिप्रेतविपरीतार्थवर्णनमेव। अतस्तन्निवृत्तिरूपं दृष्टफलं वाचानिकं तस्मिन् सत्यदृष्टिकल्पनमयुक्तम्। तर्हि तदेव दृष्टं फलमितिचेत्तदप्ययुक्तम्। तत्त्वविपर्यासप्रतिपादनासम्भवस्य त्वयैवोक्तत्वात्—साकल्येन ब्रह्मगुणविभूत्यनवगमस्य समस्त तदवान्तरविशेषानवगमस्य च वेदप्रतारणरूपत्वाभावेन तन्निवृत्तेः फलत्वायोगाच्च। उच्यते—यद्यपि परतत्त्वतदुपासनप्रतिपादनेषु विपर्यासासम्भवः। तथाऽपि **'किंते कृण्वन्ति कीटकेषु गावो नाशीरं दुह्रे न तपन्ति घर्मम्। आनो भर प्रमगन्दस्य वेदो नैवाशाखं मघवन् रन्धयान ॥'** इत्यादिवाक्यप्रतिपन्नप्रमगन्दादिवृत्तान्तस्येव परमात्मसृज्यसुरनरतिर्यगादिविशेषतदुत्पत्तितद्वृत्तविशेषाणां श्रुतिसामान्यप्रतीतत्वेन वाक्याविवक्षितत्वं मन्यमानोऽहल्याजारादिवाक्यानां पण्डितमानिभिरितरैरुक्तमर्थमिव वेदपूर्वभागोपनिषद्भागगतानां मन्त्रार्थवादानामन्यथार्थत्वं मन्यतेचेदश्रुतोपबृंहणतया वेदं प्रतारयत्येवायमिति तत्परिहारायोपबृंणविधिरुपपद्यत इति। नचान्यो-

## गूढार्थसङ्ग्रहः

**स्वयोगमहिमसाक्षात्कृतेत्यादि उपबृंहणंहि कार्यमेव** इत्यन्तम्। स्मृत्यनवकाशदोषप्रसङ्गइति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गादित्यत्र परब्रह्मणः जगदुपादाननिमित्तकारणत्वे वेदान्तनां तात्पर्यमिति मनुव्यासापस्तम्बादीनां उपबृंहणानुसारेण निर्णीयत इत्ययमर्थः स्फुटीभविष्यति ॥

श्रुतप्रकाशिका

न्याश्रयः। स्वाध्यायविधिवाक्यस्य स्वाध्यायान्तर्भावेऽप्यध्ययनाद्विध्यवगमः विध्यवगमादध्ययनमिति यथा नान्योन्याश्रयः तद्वत्। तत्रहि विध्यभिज्ञपुरुषप्रेरणात्तदनुष्ठानदर्शनाद्वा माणवकप्रवृत्तिः। एवमुपबृंहणविध्यभिज्ञशिष्टजनवादप्रसिद्ध्या वा तदभिज्ञस्वगुरुवचनेन वा तेनोपबृंहणाधिगमप्रवृत्तपुरुषान्तरदर्शनाद्वा उपबृंहणज्ञानस्य संपाद्यताज्ञानाच्छिष्यस्य प्रश्न उपपद्यते अत उपबृंहणविधिरुपपन्नः तत्र स्वगुरोःपराशरस्य सार्वज्ञ्यप्रसिद्धेः। तेनैव सर्वविद्यास्थलेषु स्वस्य कृतशिक्षत्वाच्च मैत्रेयस्य तत्प्रणीतपुराणश्रवणप्रवृत्त्युपपत्तिः॥

पुराणान्तरेभ्योऽस्य पुराणस्य वैषम्यं वदन् प्रश्नानवतारयति **तत्रेति**। अस्य तावत्पुराणरत्नस्य प्राच्योदीच्यादिसर्वविद्वज्जनविदितस्य पुराणान्तरेभ्योऽपि प्रसिद्धिप्राचुर्यात् धर्मशास्त्रे मानवस्येव व्याकरणेषु पाणिनीयस्येव च सजातीयप्रबन्धेभ्यः प्रकर्षातिशयो नापह्नोतुं शक्यते। तत एव प्रसिद्धिप्राचुर्यात् कौर्मादेरिव नष्टकोशत्वशङ्का दूरोत्सारिता। अनतिविस्तरत्वाच्च प्रक्षेपशङ्का नावतरति अन्यपरोक्तिप्रसिद्धपरिग्रहातिशयं चेदं '**पठय पराशरेदम्**' इति

*** अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकी(र्तितं)र्त्यते)। राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥**
**सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम्॥**
**यस्मिन् कल्पेतु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्यतु माहात्म्यं तत्स्वरूपेण वर्ण्यते॥**

इति सम्यज्ज्ञाननिष्पादकसत्त्वमूलत्वाद * न्यथाज्ञानविपरीतज्ञानहेतुभूतरजस्तमोमूलत्वाभावाद्दुष्टकारणपुराणान्तरसाम्यं न सम्भावनीयम् सत्त्वस्य यथार्थज्ञानहेतुत्वं, रजस्तमसोश्चान्यथाज्ञानविपरीतज्ञानहेतुत्वं '**सत्त्वात्सञ्जायते ज्ञानम्**'

**अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी। सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसी॥**

इति च वचनात्सिद्धम्। '**सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलं च रजः। गुरुवरणकमेव तमः**' इति '**सर्वास्तानिष्फलाःप्रेत्य तमो निष्ठाहितास्स्मृताः।**' इति च प्रसिद्धम्॥

**ननु** चतुर्मुखशिवादिप्रतिपादकपुराणानां रजस्तमोमूलत्वपरवचनस्य रजस्तमोमूलत्वेन प्रामाण्याभावात्सात्त्विकपुराणप्राबल्यासिद्धिः। अस्य वचनस्य सत्त्वमूलत्वे प्रमाणं नास्ति। अतएव तद्वचनमात्रस्याप्रामाण्यं वक्तुं युक्तम्। न बहूनां पुराणानां भूयसां बलीयस्त्वात्। उच्यते–न तावदस्य वचनस्य प्रामाण्ये विमतिर्न्याय्या बाधकादर्शनात्स्वतस्सिद्धप्रामाण्यस्यानपोदितत्वात् '**योह खलु वा अस्य राजसोंशः सोऽसौ ब्रह्मचारिणो योऽयं ब्रह्मा। योह खलु वा अस्य सात्त्विकोंशस्सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः। योह खलु वा अस्य तामसोंशस्सोऽसौ ब्रह्मचारिणो योऽयं रुद्रः**' इति '**महान्प्रभुर्वै पुरुषस्सत्वस्यैषप्रवर्तकः**' इति च श्रुत्यानुगुण्येन तत्तद्गुणमयत्वेनावगतस्य तत्तत्त्वस्य तत्तत्कल्पे तत्तद्गुणमयेन ब्रह्मणा तेषु तेषु पुराणेषु प्रतिपादितत्वपरस्य वचनस्योपपन्नार्थत्वाच्च। सकलशास्त्रार्थव्यवस्थापके महाभारते च मोक्षधर्मे—

**जायमानंहि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्सतु विज्ञेयस्स वै मोक्षार्थ)चिन्तक)निश्चयः॥**

इत्यादिना भगवत्कटाक्षेण सत्त्वगुणमूलसम्यज्ज्ञाननिश्चयमुक्त्वा—

**पश्यत्येनं जायमानं ब्रह्मारुद्रोऽथ वा पुनः। रजसा तमसा चास्य मानसं समभिप्लुतम्॥**

इति चतुर्मुखशिवयोःकटाक्षेण रजस्तमोमूलकालुष्यप्रतिपादनाच्च, चतुर्मुखशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमुपपद्यते अस्य वचनस्य रजस्तमोमूलपुराणस्थत्वेऽपि न अप्रामाण्यं शङ्कनीयं ब्रह्मशिवादिप्रतिपादनाभिनिविष्टस्य प्रबन्धस्य भगव-

## श्रुतप्रकाशिका

त्प्रकर्षोक्त्यावाग्रहासम्भवेनास्य वचनस्य तत्त्वपरत्वोपपत्तेः स्वप्रतिपाद्यदेवतायामेवहि वक्तुराग्रहसम्भवः नत्वन्यत्र * तस्मान्नास्य वचनस्य कारणदोषसम्भवः । यदुक्तमनेकपुराणाप्रामाण्यादेतद्वचनमात्राप्रामाण्यं युक्तं भूयसां बलीयस्त्वादिति तदयुक्तं साक्षादर्थविरोधाभावात् । नहि विधिशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वं नेति तेषु पुराणेष्ववगम्यते ॥

तत्तत्प्रबन्धेष्वेव प्रमाणतया प्रतिपन्नानां तेषां प्रामाण्यं रजस्तमोमूलत्वं च विरुद्धमिति परम्परया विरोधः फलितः तत्र भूयसां बलीयस्त्वमितिचेत् । यदि केवलमेतद्ववचनमात्रविरोधेन तेषामप्रामाण्यं तदा स्यादयं दोषः । पुराणानां परस्परविरोधेन सर्वेषामविशेषेण प्रामाण्येऽनुपपन्ने सर्वाप्रामाण्यादपि कतिपयप्रामाण्यसिद्ध्यनुगुणनिर्वाहे न्याय्ये सति कस्याप्रामाण्यं कस्य च प्रामाण्यमित्यपेक्षायां विषयव्यवस्थामात्रपरत्वादस्य वचनस्य । अतोऽनेन सत्त्वादिमूलत्वे ज्ञापितेसत्यदुष्टमूलैः प्रबन्धैः दुष्टमूलप्रबन्धबाधः । अतो न भूयसां बलीयस्त्वनयेनैतद्वचनबाधः । भगवत्प्रतिपादकपुराणेभ्यो विधिशिवप्रतिपादकपुराणबाहुल्यात्तत्प्रामाण्यमितिचेत्—इदंतावद्वचनमबाधितम् । इह भूयसां बलीयस्त्वनयानवतारात् । एवं बाधकरहितेना * नेन वचनेन सत्त्वादिमूलत्वे पुराणानामवगतेसति दुष्टमूलपुराणबाहुळ्यमदुष्टमूलमेकमपि पुराणं न बाधितुं प्रभवति । नहि भ्रान्तपुरुषसहस्रवचनैरेकस्याभ्रान्तस्य वचनं बाध्यते । अतो भगवत्प्रतिपादकत्वेन सत्त्वमूलत्वान्नकारणदोषः । तथा पुराणान्तराणामिवास्य बाधकप्रत्ययो न दृश्यते नारायणस्यैव परमकारणत्वप्रतिपादनात् । प्रत्यक्षश्रुतिषुहि नारायणस्यैव सामान्यशब्दाविशेषशब्दाभ्यां कारणत्वमुक्त्वा '**नचास्य कश्चिज्जनिता नचाधिपः**' '**न तत्समश्चाभ्यधिकश्च दृश्यते**' '* **नह्येतस्मादिति नेत्यन्यत्परमस्ति**' '**यस्मात्परं नापरमस्ति किंचित्**' इति कारणभूतात्तस्मादन्यस्य परत्वं च निषिध्यते '**न ब्रह्मा नेशानः**' '**तत्र ब्रह्मा चतुर्मुखोऽजायत**' '**त्र्यक्षश्शूलपाणिःपुरुषोऽजायत**' '**ततो जज्ञ उग्रस्त्वेषनृम्णः**' '**विरूपाक्षाय ब्रह्मणः पुत्राय**' '**अजस्य नाभावध्येमर्पितम्**' '**स प्रजापतिरेकः पुष्करपर्णे समभवत्**' '**यन्नाभिपद्मादभवन्महात्मा प्रजापतिः**' इति ब्रह्मशिवयोश्च नारयणादुत्पत्तिः श्रूयते लैङ्गेतु ब्रह्मविष्णुंप्रति '**युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ**' इति रुद्रोक्त्या रुद्राद्धरिचतुर्मुखयोरुत्पत्त्यवगमात् पुराणान्तराणां श्रुतिविरोधस्फुटतरः ॥

यद्यपि कैश्चित्त्रयाणां देवानां साम्यमैक्यंचाभ्युपगतम् । तथाऽप्ययंविरोधो दुष्परिहारः तुल्यानामेकीभूतानामपि तेषामुत्पत्तिप्रतिपादने भगवतश्चतुर्मुखशिवयोरुत्पत्तिश्रवणाद्रुद्रादितरयोरुत्पत्तेः क्वचिदपि वाक्ये श्रवणाभावाच्च । * कारणवाचिशिवादिशब्दानां आकाशादिशब्दानामिव कार्यतयाऽवगतप्रसिद्धरुद्रादिपरत्वाभावाच्च

**सर्वे विष्णुमया(देवाः)वेदाः सर्वे विष्णुमयागुणाः । नहि विष्णुसमा काचिद्गतिरन्या विधीयते ॥**

**इत्येवं सततं वेदा गायन्ते नात्र संशयः । .... ... ... ...**

इति लैङ्गादावपि वेदानां भगवत्परत्वप्रतिपादकत्वाभ्युपगमाच्च । अतो नारायणस्यैव परमकारणत्वपराभिः प्रत्यक्षश्रुतिभिः बाधकप्रत्ययवद्भ्यः पुराणान्तरेभ्यो वैलक्षण्यं स्फुटम् । तथा नारायणमेव परमकारणं प्रतिपादयद्भिर्मानवादिधर्मशास्त्रैरप्यैकार्थ्यं स्पष्टम् '**आपो नारा इति प्रोक्ताः**' '**तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यते ।**' '**विद्यात्तु पुरुषं परम्**' '**नारायणःपरोऽव्यक्तात्**' इत्यादिभिर्नारायणस्यैवहि कारणत्वं तेषूच्यते । पुराणान्तराणितु धर्मशास्त्रविरुद्धानि च तथा वक्तृवैलक्षण्यं च प्रत्यक्षश्रुतिसिद्धम् '**सहोवाच व्यासःपाराशर्यः**' इति अत्र पराशरात्मजत्वेनहि व्यासोत्कर्ष उच्यते । तथा लैङ्गेऽपि पराशरवैलक्षण्यं प्रतीयते । यथा तत्र द्वितीयेऽध्याये—

**पराशरस्यावतारो व्यासस्य च शुकस्य च । विनाशं राक्षसानांतु कृतं वै शक्तिसूनुना ॥**

## श्रुतप्रकाशिका

इति । अत्र पराशरस्यावतार इत्युक्तिर्हि प्रकर्षातिशयार्था अन्यथा 'पराशरस्यचोत्पत्तिर्व्यासस्य च शुकस्यचे' त्यपि हि वक्तुं शक्यते । पुलस्त्यवसिष्ठ वरदानलब्धदेवतापारमार्थ्यज्ञानवत्त्वं च महद्वैलक्षण्यं वर(लाभे)दाने)सत्येतत्पुराणप्रामाण्यं तत्प्रामाण्येसति तत्प्रतिपन्नवरलाभसत्यत्वमित्यन्योन्याश्रय इति न वाच्यम् ; वरलाभवचनस्य पराशरो न लब्धवर इति बाधकप्रत्ययाभावेन स्वतस्सिद्धप्रामाण्यस्य अनपोदितत्वात् । लैङ्गे च देवतापारमार्थ्यज्ञानलाभः पराशरस्यावगम्यते । यथा तत्र द्वितीयेऽध्याये—**देवता पारमार्थ्यं च विज्ञानं च प्रसादतः । पुराणकरणंचैव पुलस्त्यस्याज्ञया गुरोः ॥**

इति तत्रैव त्रिषष्टितमे–**अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः । प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः ॥**

इति च, तदनन्तरं च–**षट्प्रकारं समस्तार्थसाधकज्ञानसंश्रयम् । दशसाहस्रममितं सर्ववेदार्थसंयुतम् ॥**

इत्यनेनास्य पुराणरत्नस्य सर्ववेदार्थसंयुतत्वं अत एव समस्तपुरुषार्थसाधकज्ञानप्रसाधकत्वं चोच्यते । अतो वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं च पुराणान्तरसिद्धमिति तदुरपह्नवम् । इदंचापरं सुमहद्वैलक्षण्यं यत्सामान्यप्रश्नपूर्वकविशेषनिष्ठप्रतिवचनरूपत्वम्—**सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग भविष्यति ॥**

**यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ।** ... ... ...

इत्यादिना सामान्येन पृष्टे '**विष्णोस्सकाशादुद्भूतम्**' इति विशेषनिष्ठं प्रतिवचनंह्यवगम्यते । विशेषे पृष्टेसति प्रतिवचनस्य पृष्टविशेषपक्षपातेन तदुत्कर्षकथनं प्रशंसामात्रं नत्वपरमिति शङ्कनीयं स्यात् सामान्येन पृष्टेसति प्रतिवचनमर्थवशाद्विशेषपर्यवसितमिति तत्त्वपरत्वमेव स्यात् । अतश्च—

**तस्माद्भवन्तं पृच्छामः सूत पौराणिकाद्य तु । पुराणं संहितां पुण्यां लिङ्गमाहात्म्यसंयुताम् ॥**

इति विशेषनिष्ठप्रश्नोपक्रमतत्प्रतिवचनरूपपुराणान्तरेभ्यः प्रकर्षातिशयस्स्पष्टतमः । एतत्पुराणार्थश्च लैङ्गादिषु क्वचित्क्वचिदङ्गीक्रियते, यथा लैङ्गे द्वितीये पुराणार्थानुक्रमणे—

**सर्वावर्तेषु विष्णोश्च जननं लीलयैव तु । विष्णोःप्रसादाज्जिष्णोश्च विष्णोश्चैव तु सम्भवः ॥**

तत्र, **लीलयाचैव कृष्णेन स्वकुलस्य च संहृतिः । जरकाख्यच्छलेनैव गमनं स्वेच्छयैव तु ॥**

इति भगवदवतारस्य भूलोकपरित्यागस्य च लीलामात्रनिबन्धनत्वंहि तत्रोच्यते । अतएवैतत्पुराणार्थस्यान्यत्राभ्युपगतत्वादप्रकम्प्यत्वमवगम्यते ॥

तर्हीतदैकार्थ्यात्तान्यपि पुराणानि प्रमाणानि स्युरितिचेन्न–कार्त्स्न्येनाविरुद्धत्वाभावात् । भगवदुत्कर्षप्रतिपादकांशस्तु तास्मिन्नंशे आग्रहासम्भवादादरणीय इति पूर्वमेवोक्तम्। अस्य च पुराणरत्नस्य कार्त्स्न्येनानाग्रहमूलत्वं चोपक्रमगतप्रश्नस्वाभाव्यादवगतमितिचोक्तम् । अतोऽन्यत्र बद्धाग्रहैरप्यादरणीयस्वोक्तार्थत्वमप्रकम्प्यताहेतुः ॥

किंच पुराणान्तरेष्विवास्य पुराणस्य न स्वव्याहतार्थप्रतिपादकत्वं दृश्यते कार्त्स्न्येन भगवत्प्रकर्षस्यैवावगमात् पुराणान्तरेषु व्याघातः प्रतीयते । यथा लैङ्गे—

**युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः ॥**

**वामपार्श्वे च मे विष्णुः विश्वात्मा हृदयोद्भवः ।** ... ...

तत्र, **ततःप्रहृष्टस्सुमनाः प्रणिपत्य महेश्वरम् । प्राह नारायणो देवस्सलिङ्गं लिङ्गवर्जितम् ॥**

**यदि प्रीतिस्समुत्पन्ना यदि देयो वरश्च नौ । भक्तिर्भवतु नौ नित्यं त्वयिचाव्यभिचारिणी ॥**

श्रीभाष्यम्

**तत्र पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतो भगवतःपराशरात्स्वावगतवेदार्थोपबृंहणमिच्छन्मैत्रेयः परिपप्रच्छ–'सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत्। बभूव**

श्रुतप्रकाशिका

इति हरिविरञ्चयोश्शिवादुत्पत्तिस्तदाराधनवरवरणादिकमुक्तम् । तत्र क्वचित्—

त्वत्कोपसम्भवो रुद्रस्तमसा च समावृतः । त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥

इति चतुर्मुखशिवयोर्भगवत्प्रसादकोपसम्भवत्वमुक्तमिति स्वव्याघातः । नच वसुदेवादेरुत्पत्तिवत् कैलासयात्रादिवच्च रुद्रादुत्पत्तितदाराधनरूपलीलोक्तिरित्यविरोधः, पुराणरत्नभारतादौ—

मनसैव जगत्सृष्टिं संहारं च करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥
तथाऽपि यो मनुष्याणां धर्मस्तदनुवर्तनम् । कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ ॥
सामचोपप्रदानं च तथा भेदप्रदर्शनम् । करोति दण्डपातं च क्वचिदेव पलायनम् ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते । लीलाजगत्पतेस्तस्य छन्दतस्सम्प्रवर्तते ॥
ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः । कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥
तेन वञ्चयते लोकान् मायायोगेन केशवः। ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥

इत्यादिभिरिव तत्र तत्र प्रसक्तापकर्षपरिहारपरग्रन्थादर्शना, द्भारतादिषु दशरथवसुदेवादीनां रामकृष्णाद्यपेक्षया परत्वस्य जगत्कारणत्वादिमुखेन प्रतिपादनाभावादिह च भगवदपेक्षया रुद्रपरत्वस्य प्रतिपादनाच्च । अतः स्वव्याघातो दुष्परिहारः । नच तथाऽत्र स्वव्याहतिः प्रतीयत इतीदं च महद्वैलक्षण्यम् उक्तलक्षणप्रकर्षवतो वैष्णवपुराणस्य कारणदोषबाधकस्वव्याहतिमत्प्रबन्धान्तरस्य च विरोधेसति पुराणरत्नस्य प्राबल्यमन्येषां दौर्बल्यं च सुस्पष्टम् ॥

एवं प्रसिद्ध्यतिशयलब्धसजातीयप्रबन्धप्रकर्षवत्त्वात्तत एव नष्टकोशत्वाभावादनतिविस्तृततया प्रक्षेपशङ्कारहितत्वादन्यपरोक्तिसिद्धपरिग्रहातिशयवत्त्वात्सामान्यप्रश्नपूर्वं प्रतिवचनरूपत्वेन अनाग्रहमूलत्वात् अत एवेदृशवैलक्षण्यरहितकारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तराणामेतद्विरोधेसति दौर्बल्यस्यावर्जनीयत्वाच्च, श्रीमद्वैष्णवमिदं पुराणं प्रमाणतमम् । एतत्सर्वं हेतुजातमभिप्रेत्य प्रधानभूतयुक्तिं कण्ठोक्त्या प्रदर्शयन् तन्मुखेन प्रबन्धवैलक्षण्यं वदन् प्रश्नानवतारयति **तत्रेति** ।

गूढार्थसंग्रहः

'इतिहासपुराणाभ्याम्' इति आदिपर्ववचने 'अल्पश्रुतात्' इत्यनेन सर्वेषां सकलशाखागतवेदवाक्यार्थज्ञानं नास्तीतिप्रतीयते । इतिहासपुराणकर्तॄणां तु महर्षीणामितरापेक्षया वैलक्षण्यं सुप्रसिद्धमेव । तेषां सर्वशाखाज्ञानं वर्तते इत्यपि तन्त्रवार्तिकादौ व्यक्तम् । उक्तं च खण्डदेवेन 'मन्वादीनां तु सम्भवति विदितसकलवेदार्थतत्त्वानां न्यायनिर्णायकत्वमिति अस्मदाद्यनुग्रहार्थं स्मृतिप्रणयनम्' इति (मी.कौ.३.१.१) एतेन इतरानधीतशाखान्तरवाक्यैः महर्षिस्मृतैः वेदवाक्यार्थ व्यक्तीकरणमुपबृंहणम्' इति पूर्वमीमांसकसम्मतमेव । अतएव विरोधाधिकरणवार्तिके श्रुतिस्मृत्योर्विरोधे स्मृतेः अप्रमापकत्वं न सम्भवति, किंतु अननुष्ठापकत्वमेव मूलश्रुत्युपलम्भपर्यन्तम् । तदनन्तरं च विकल्पेनानुष्ठापकत्वमिति व्यवस्था सङ्गच्छते । देवतापारमार्थ्यंचेति । अत्र देवता धर्माराध्या मुक्तिफलदा विवक्षिता 'यैः स्वधर्मपरैर्नाथ नरैराराधितो भवान् । ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥' (वि.पु.५.३०.१६) 'विष्णुर्मुक्तिफलप्रदः' (६.४.४२) इति

श्रीभाष्यम्

**भूयश्च यथा महाभाग भविष्यति ॥ यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् । लीनमासी-द्यथा यत्र लयमेष्यति यत्र च ॥' इत्यादिना ।**

श्रुतप्रकाशिका

**पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवत** इत्यत्र देवतापारमार्थ्यशब्देन तमःकार्यं धर्म्यन्तरत्वेन धर्म्य-न्तरस्य प्रतीतिरूपं विपरीतज्ञानं व्यावर्तितम् । अनेन देवतापारमार्थ्यचेति वच(नं स्मा)रस्फो)रितम् । प्रशंसार्थेन मतुप्प्रत्य-येन रजःकार्यं प्रकारान्तरोपेतस्य तद्विरुद्धप्रकारान्तरविशिष्टताप्रतीतिरूपमन्यथाज्ञानं व्यावर्तितम् । अनेन यथावदित्य-स्यार्थः सूचितो भवति देवताशब्देन कर्मणा उपासनेन आराध्यत्वं फलप्रदत्वं च विवक्षितम् । अनेन सविशेषत्वसिद्धिः यथावदिति प्रकारकथनेनापि सविशेषत्वसिद्धिरिति वरलाभकथनं सविशेषत्वोपपादकमित्यभिप्रायः । भगवच्छब्देन ज्ञान-वत्त्वमुक्तम्, वरलाभात्तदतिशयसिद्धिः **सोऽहमित्यादि** । सोऽहं त्वयैव सर्वविद्यासु शिक्षितपूर्वोऽहमिति भावः । **धर्मज्ञ ' विशेषोऽस्ति न सतां शिष्यपुत्रयोः '** इत्येवंरूपधर्मज्ञ । यद्वा **' आनृशंस्यं परो धर्मः '** इति धर्मज्ञ आनृशंस्यं आश्रितसंरक्षणपरत्व * **' आश्रितेत्यानृशंस्यतः '** इति वचनात् । महाभाग परिपूर्णकृत्यंहि परसंरक्षणं किंचित्कारमप्यन-पेक्ष्य रक्षकत्वमेवेति भावः ॥

यथा यतो बभूव ब्रह्मरुद्रादिषु कः कारणमिति ज्ञातुं यत इति प्रश्नः किं विवर्ताधिष्ठानत्वं ? कारणत्वं उत परिणा-मित्वं तत्रापि किं सद्वारकपरिणामित्वं ? उताद्वारकपरिणामित्वमिति प्रकारभेदजिज्ञासया यथेति प्रश्नः कल्पभेदेन सृष्टिवै-षम्यशङ्कया भविष्यतीति प्रश्नः । वृश्चिकस्य गोमय वृश्चिकोपादानकत्वदर्शनात्कल्पभेदेनोपादानादिभेदशङ्काह्युपपद्यते । * तत्रापि यतो यथेति पदयोः पूर्ववदर्थः । यतो यथा बभूवेति एकप्रश्नत्वशङ्का यन्मयमिति प्रश्नान्तरव्यवधानेन निरस्यते यथा कारणं ज्ञातव्यं तथा सृष्टिप्रकारोऽपि पृथग्ज्ञातव्य इति ज्ञापनार्थम् ; ज्ञातव्यत्वेऽपि प्राधान्यद्योतनाय प्रकारप्रश्नः पूर्वमेव कृतः। यत इति हेतौ पञ्चमी, अतो निमित्तोपादानयोस्तन्त्रेण प्रश्नः अन्तस्थित्याद्युपयुक्तात्मशरीरभावप्रश्नः। यन्म-यमिति मयट्प्रत्ययः प्राचुर्यार्थः अनेन व्याप्तिर्दर्शिता । व्याप्याद्व्यापकप्राचुर्यंहि घटाकाशादौ दृष्टम् । आत्मतयांहि व्याप्तिः आत्मत्वं च धारकत्वम् अतोऽन्तर्यामिकृतसत्ताऽनुवृत्तिलक्षणस्थितिप्रश्नः फलितः । यन्मयं येनान्तर्यामिणा धारकेण प्रचुरं जगत्स्थितमित्यर्थ उक्तो भवति । अन्तःप्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति प्रागेव विशदीकृतं चशब्दाद्बहि-र्भूतपोषकादिकृता पोषणादिलक्षणा स्थितिः मातापित्रादिभिः कार्या इष्टप्रापणानिष्टनिवारणलक्षणा स्थितिश्च पृष्टा भवति यत इत्युपादानस्यापि पृष्टत्वान्मयट्प्राचुर्यार्थ एव ॥

गूढार्थसङ्ग्रहः

विष्णुपुराणएवोत्तरत्र अस्यार्थस्य स्फुटं वक्ष्यमाणत्वात् । परविद्यारूपयोगस्यापि विष्ण्वाराधनत्वेन धर्मत्वस्य स्वधर्मपरै-रित्यत्र विवक्षितत्वात् । एतेन सविशेषज्ञानमेव मुक्तिहेतुः आत्मविमुक्त्यर्थं मायातरणस्य अत्र प्रतिपादनादिति सिद्धम्॥

' पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ ' (ब्र.सू.३.२.४) इत्यादौ सूत्रकृतो विवक्षितमिति पूर्वमेवो-क्तम्। वेदार्थसंग्रहे सर्वशिष्टैः सर्वधर्मसर्वतत्त्वव्यवस्थायां इदमेव पर्याप्तमित्यविगानपरिगृहीतं वैष्णवं च पुराणम्। **' जन्मा-द्यस्य यतः '** इति जगज्जन्मादिकारणं ब्रह्मेत्यवगम्यते । तज्जन्मादिकारणं किमिति प्रश्नपूर्वकं **' विष्णोस्सकाशादुद्भूतम् '** इत्यादिना ब्रह्मस्वरूपविशेषप्रतिपादनैकपरतया प्रवृत्तमिति सर्वसम्मतम् । तथा तत्रैव ' प्रकृतिर्या—वेदान्तेषु च गीयते '

## श्रीभाष्यम्

**अत्र ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकारतदाराधनस्वरूपफलविशेषाश्च पृष्टाः । ब्रह्मस्वरूपविशेषप्रश्नेषु 'यतश्चैतच्चराचर' मिति निमित्तोपादानयोः पृष्टत्वात् । यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत् किमात्मकमिति पृष्टम् ।**

## श्रुतप्रकाशिका

**नच** गोबलीवर्दन्यायेन यत इति पञ्चम्यर्थः सङ्कोचयितव्यः । बलीवर्दशब्दवन्मयटोऽनन्यथासिद्धत्वाभावात्सङ्कोचककत्वानुपपत्तेः । पदान्तरवैयर्थ्यपरिजिहीर्षया पदान्तरार्थसङ्कोचः गोबलीवर्दनय इतिहि न्यायविदः । अत्रतु मयटोऽर्थान्तरसम्भवान्नायं सङ्कोचकः यत इति पदं निमित्तमुपादानं च बोधयितुं शक्तम् । स्थितिप्रश्नोऽपेक्षितश्च, अतोऽपेक्षिताविधेरनपेक्षितविधानं दुर्बलम् **'यतो वा इमानि'** इत्यादिश्रुतावपि यत इति पदेनैव निमित्तोपादानयोरुक्तत्वाच्छ्रुतिच्छायानुविधानाच्च, यत इति तन्त्रेण प्रश्न इति यन्मयमिति स्थितिप्रश्न एव क्रियते । अर्थान्तरस्वीकारे अपेक्षितावचनमनपेक्षितवचनं च स्यात् । नापि स्वार्थिको मयट् प्रत्ययस्यार्थवत्त्वे सम्भवति तत्परित्यागस्यान्याय्यत्वात् अतो यथोक्तएवार्थः । * लयस्थानप्रश्नो लयप्रकारप्रश्नश्च अनधीतशाखान्तरेषु स्थानभेदशङ्कया कृतः । देवतान्तरस्य लयस्थानत्वं तत्रापि * सद्वारकत्वाद्वारकत्वकार्यभ्रमनिवृत्तिरूपताख्यप्रकारभेदश्चहि शङ्काऽऽस्पदं भवति, भूतभविष्यत्प्रश्नश्च कल्पभेदेन लयस्थानप्रकारभेदशङ्कया कृतः चकाराल्लयकर्तृप्रश्नश्च सूचितः । * सच कर्तृभेदशङ्कानिबन्धनः । स्वरूपप्रश्नश्लोकद्वयं व्याचिख्यासितश्लोकापेक्षितत्वेनोदाहृत्य आदिशब्देन प्रश्नान्तरपरश्लोकाः क्रोडीकृताः ॥

**'विष्णोस्सकाशात्'** इति श्लोकस्यार्थान्तरप्रश्नोत्तररूपत्वशङ्काव्युदासार्थं तेषां श्लोकानामर्थं सङ्ग्रहेणाह—**अत्रेति ब्रह्मस्वरूपेति** । स्वरूपशब्दो विभूत्यादिव्यावर्तकः स्वरूपविशेषशब्दो ब्रह्मादिव्यावर्तकः विभूतिभेदानां प्रकारो विभूतिभेदप्रकारः । सच ज्योतिश्चक्रभुवनकोशादिप्रश्नेऽन्तर्गतः । वर्णाश्रमधर्मादिप्रश्नेन तदाराधनस्वरूपं पृष्टम्, प्रतिवचने फल विशेषोक्तिदर्शनात् प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायत इति नीत्या फलविशेषश्चात्र पृष्टो भवतीति पूर्वोक्तेषु प्रश्नेष्वन्तर्भावित इत्यभिप्रायेण फलविशेषाश्च पृष्टा इत्युक्तम् । सप्रयोजनमाराधनं पृष्टमिति तत्र तदन्तर्भावः । अयमेवार्थस्सकलश्रुतीतिहासपुराणानां प्रतिपाद्यइति भावः । ततः किं प्रस्तुतश्लोकार्थस्येत्यपेक्षायां यन्मयमिति पदस्यार्थं सोपपत्तिकमाह—**ब्रह्मस्वरूपेति** । सृष्टिस्थितिलयकर्मभूतमिति पदं सृष्टिप्रळययोरुक्तत्वेन स्थितिकथनस्यापेक्षितत्वज्ञापनार्थं * स्थितिलयशब्दाभ्यां रक्षासंहारौ विवक्षितौ स्थितिलययोः प्रयोज्यव्यापारत्वेन तदाश्रयत्वेन कर्मत्वाभावाज्जगतः सृष्टिस्थितिलयकर्मभूतं

## गूढार्थसङ्ग्रहः

इति सर्ववेदवेदान्तेषु सर्वैश्शब्दैःपरमकारणतया अयमेव गीयत इत्यर्थः, इत्युक्तम् । एवं 'यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैः । वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्म्यहम् ॥' (वि.पु.५.१७.१५) इति तत्रैवोक्तसात्त्वतसम्मतवासुदेवद्वादशाक्षरोत्कीर्तनपूर्वकं 'गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥ एकान्तिनः सदा ब्रह्म ध्यायिनो योगिनोहि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥' 'भेषजं भगवत्प्राप्तिः' इत्यादिना परविद्याफलं वासुदेवप्राप्तिः सच ज्ञानादिषड्गुणोपेतः प्रकृतिमण्डलान्तःपातिसर्वतत्त्वाभिमानिभूतभूषणास्त्रविशिष्टदिव्यमङ्गलविग्रहवानेव प्राप्यभूतः इति 'ज्ञानशक्तिबलैश्वर्य' 'आत्मानमस्य जगतः' 'अस्त्रभूषणसंस्थानस्वरूप',

श्रीभाष्यम्

**तस्यचोत्तरं 'जगच्च स' इति । इदं च तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतं नतु व्याप्यव्यापकयोर्वस्त्वैक्यकृतं यन्मयमिति प्रश्नस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य। यन्मयमिति मयडत्र न विकारार्थः पृथक् प्रश्नवैयर्थ्यात्। नापि प्राणमयादिवत् स्वार्थिकः जगच्च स इत्युत्तरानुपपत्तेः। तदा हि विष्णुरेवेत्युत्तरमभविष्यत्। अतः प्राचुर्यार्थ एव तत्प्रकृतवचने मयडिति मयट्।**

श्रुतप्रकाशिका

जगत्स्थित्यर्थं किमात्मकं भवतीति प्रश्नार्थः। ततः किमित्यत्राह—**तस्यचेति**। जगच्च सइति सामानाधिकरण्यप्रतिपन्नं तादात्म्यं स्वरूपैक्यलक्षणमाशङ्क्य परिहरति। **इदंचेति**। * इदं सामानाधिकरण्यप्रतिपन्नमित्यर्थः। गगनादौ *व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति तद्व्यावृत्त्यर्थमात्मत्वं विवृणोति। **अन्तर्यामिरूपेणेति**। अन्तःप्रविश्य नियन्तृत्वं ह्यात्मत्वम्। **व्याप्यव्यापकयोरिति**। जगद्ब्रह्मणोर्व्याप्यत्वेन व्यापकत्वेन च * श्रुतिसिद्धत्वादिति भावः। नतु वस्त्वैक्यकृतमिति प्रतिज्ञामुपपादयति, **यन्मयमिति**। विकारार्थत्वमाशङ्क्य परिहरति। **यन्मयमिति मयडिति**। कुतइत्यत्राह-**पृथगिति**। विकारार्थत्वे उपादानं पृष्टं स्यात्। नच तत्प्रष्टव्यं यत इति पञ्चम्यन्तपदेनोपादानस्यापि पृष्टत्वात् अतः पृथक् प्रश्नवैयर्थ्यं नच गोबलीवर्दनयः, अर्थान्तरसम्भवादिति। अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायश्चाभिप्रेतः॥

ब्रह्माज्ञानवादिनोऽभिमतं स्वार्थिक(त्व)पक्षं दूषयति। **नापीति**। ननु भेदाभेदपक्षाभ्युपगतं तत्तु दूषयिष्यते। नह्यर्थे सम्भवति निरर्थकत्वाश्रयणमुपपन्नमिति भावः। * श्रुतार्थस्वीकारेणाश्रुतकल्पनं ह्युचितं नतु श्रुतपरित्यागः। ब्रह्माज्ञानवादिनाऽभ्युपगतस्य स्वार्थिकत्वस्या * साधारणं दूषणमाह—**जगदिति**। * स्वार्थिकत्वपक्षे यदिदं जगत् तत्किमित्युक्तंस्यात् यदिदं जगत्तत्किमित्युक्ते ज्ञातस्य जगद्रूपमात्रस्य प्रष्टव्यत्वायोगात् प्रश्नावैयर्थ्याय तत्किं सत्यं उत मिथ्येति पृष्टं भवतीत्यभ्युपेतव्यम्। तत्र मिथ्येत्युत्तरं वक्तव्यं तत्रा * न्यतराकारोपस्थापके आकारान्तरनिषेधके च शब्दे वक्तव्ये आकारद्वयोपस्थापकं सामानाधिकरण्यमनुपपन्नमित्यर्थः। बाधा(यां)र्थे सामानाधिकरण्यमितिचेत्तन्नास्ति 'माता मे वन्ध्ये' तिवत् सामानाधिकरण्यं बाधार्थमिति व्याहतत्वादिति भावः॥

तर्हि कथमुत्तरं स्यादित्यत्राह—**तदाहीति**। विष्णुरित्यन्यतराकारोपस्थापकश्शब्दः। आकारान्तरनिषेधकशब्दएवकारः। साक्षादर्थमाह-**अतइति**। अतः स्वार्थिकत्वविकारार्थत्वयोरनुपपन्नत्वादित्यर्थः। शब्दानुशासनानुमतिं दर्शयति। **तदिति**। प्रकृतं-प्रकर्षेण कृतं प्रभूतं-प्रचुरमित्यर्थः। **'अन्नमयो यज्ञः' 'शकटमयी यात्रा'** इतिहि तस्योदाहरणम्

गूढार्थसङ्ग्रहः

समस्ताश्शक्तयश्चैताः' इति स्थलेषु साधनेन तदनन्तरमेव अपुनरावृत्तिः इति स्थापनेन उपक्रमोपसंहारयोः नादार्थतुरीयपरवासुदेवस्यैव परब्रह्मत्वसाधनेन च श्रुति पञ्चरात्रयोरैकरस्यमपि व्यवस्थापितम्॥

**तत्प्रकृतवचने मयडिति**। अत्र काशिका 'तदिति प्रथमा समर्थविभक्तिः, प्राचुर्येण प्रस्तुतं प्रकृतं, प्रथमा समर्थात् प्रकृतोपाधिकार्थे वर्तमानात् स्वार्थे मयट्प्रत्ययो भवति। अपरे पुनरेवं सूत्रार्थमाहुः प्रकृतमित्युच्यतेऽस्मिन्निति प्रकृतवचनम् तदिति प्रथमासमर्थात् प्रकृतवचनेऽभिधेये मयट्प्रत्ययो भवति, द्वयमपि प्रमाणम् उभयथा सूत्रप्रणयनात्' इति॥

### श्रीभाष्यम्

**कृत्स्नं च जगत्तच्छरीरतया तत्प्रचुरमेव। तस्माद्यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोश्शरीरात्मभावनिबन्धनमिति निश्चीयते।**

### श्रुतप्रकाशिका

किमत्र प्राचुर्यमस्तीत्यत्राह–कृत्स्नंचेति। 'अन्तर्बहिश्च–व्याप्य' इत्यादिश्रुतेस्तदुपपन्नमिति भावः। सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं प्रतिपिपादयिषितमुपसंहरति। तस्मादिति। * यन्मयमित्यस्य प्राचुर्यार्थत्वेन तस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं तेन स्वार्थिकत्वनिवृत्त्या यन्मयमिति मयट्प्रत्ययस्य प्राचुर्यार्थत्वमित्यन्योन्याश्रयइतिचेत्, नैवम्। मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तेः प्राचुर्यार्थत्वनिर्णयस्य च सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वानपेक्षत्वात्। स्वार्थिकत्वं तावत् अर्थवत्त्वे सम्भवति निरर्थकत्वस्वीकारायोगादपास्तम्। जगच्च स इति सामानाधिकरण्येनचापास्तम्। स्वार्थिकत्वेसति आकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वायोगात्। * ननु तस्य शरीरात्मभावनिबन्धनत्वायोगात्॥

**नच** सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभूताकारद्वयोपस्थापकत्वं मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिसापेक्षं सामानाधिकरण्यस्य लक्षणस्वभावादेव तस्याकारद्वयोपस्थापकत्वसिद्धेः। अतो मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिस्सामानाधिकरण्यस्याकारद्वयोपस्थापकत्वादित्यत्र नान्योन्याश्रयः। एवं स्वार्थिकत्वे व्युदस्ते पृथक्प्रश्नवैयर्थ्येन विकारार्थत्वेऽनुपपन्ने परिशेषाच्च स्थितेः प्रष्टव्यत्वेसति स्थितिस्वाभाव्यादनुशासनानुरोधाच्च मयट्प्रत्ययस्य प्राचुर्यरूपार्थविशेषपरत्वसिद्धिः। ततो जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावरूपप्रवृत्तिनिमित्तविशेषप्रसिद्धिरिति नान्योन्याश्रयः॥

### गूढार्थसंग्रहः

अत्र पदमञ्जरी–यद्यपि प्रस्तुतमात्रवचनः प्रकृतशब्दः। तथाऽपि इह वचनग्रहणादयं विशेषो लभ्यते। वचनग्रहणंहि यादृशस्य प्रकृतस्य लोके मयटावचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थम्। प्रत्ययस्तावत् स्वार्थिकः प्राचुर्यं च तस्य द्योत्यम् तच्च प्रकृत्यर्थगमित्येतावदत्र सामर्थ्यम्, अपरे पुनरित्यादि। अत्र प्रकृत्यर्थादर्थान्तर एव प्रत्ययः तत्पुनरर्थान्तरं ल्युटा प्रतिपादितं सप्तम्यर्थ उच्यमानतया प्रकृततया च प्रकृत्यर्थविशेषणम्। अत्र प्रथमे व्याख्याने तदिति विस्पष्टार्थं 'देवात्तल्' इत्यादिवत् समर्थविभक्तेः सिद्धत्वा'दिति॥ इममेवार्थं भट्टोजीदीक्षितनागेशादयः अङ्गयकार्षुः। ज्ञानरत्नप्रकाशिकाकृत्तु 'तच्छब्दः प्रकृत्यर्थवाची प्रशब्दस्य प्राचुर्यं कृतमित्यस्य च आधेयत्वमर्थः वचनशब्दो अधिकरणल्युडन्तः तथाचासमर्थः प्रकृत्यर्थगतप्राचुर्यावच्छिन्नाधेयतानिरूपिताधिकरणताभिधायको मयडिति' इत्याहुः॥

नागेशेन स्वार्थिकप्रकरणे पाठस्तु आद्यपक्षे चरितार्थः। वस्तुतः 'अथ स्वार्थिका' इत्यस्य प्रायेणेत्यादिः प्रकारवचने जात्यन्ताच्छबन्धुनि देवतान्तात्तादर्थ्ये यत्' इत्यादौ वाचकतायाएव प्रतीतेरिति बोध्यम्।' (श.शे) इत्युक्त्या प्रत्ययस्य वाचकतापक्षोऽपि एतत्सम्मतो युक्तः 'अन्नमयो यज्ञः' इत्यादौ अधिकरणे मयटः वैयाकरणसम्मततया 'यन्मय' मित्यत्रापि अधिकरण एव मयट्। अनन्तराध्याये 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः।' इत्यत्र वासो वक्ष्यते। 'व्याप्यनारायणास्स्थितः' इति श्रुत्यनुसारेण सर्वव्यापकत्वेन स्थितिरेव वासः। व्याप्तिश्च नियमनार्था जगति प्राचुर्येण स्थितिः अन्तर्यामितया 'अन्तर्बहिश्च तत्सर्वम्' इति श्रुत्युक्तप्रकारा स्थितिः सा च जगद्ब्रह्मणोश्शरीरशरीरिभाव एव पर्यवस्यतीत्यभिप्रेत्य **कृत्स्नं च जगत्तच्छरीरतया तत्प्रचुरमेवेत्युक्तम्**॥

श्रीभाष्यम्

**अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न सङ्गच्छन्ते। तद्विवरणरूपं कृत्स्नं च शास्त्रं न सङ्गच्छते। तथा हि सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवं रूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवं रूपमेकमेवोत्तरं स्यात्। जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत, सर्वाशुभास्पदं च ब्रह्म भवेत्। आत्मशरीरभावएवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते।**

श्रुतप्रकाशिका

एवं सामानाधिकरण्यस्य मृषावाद्यभिमतैक्यपरत्वे मयडानर्थक्यं सामानाधिकरण्यानुपपत्तिश्चेति दूषणद्वयं स्वरूपैक्यपरत्वे * ऽर्थविरोधः * यन्मयमित्युक्तप्रश्नस्योत्तरत्वानुपपत्तिश्चेति दूषणद्वयं च दर्शितं भवति स्वोक्तार्थपरत्वानभ्युपगमे दूषणमाह-**अन्यथेति**। अन्यथा कथं प्रश्नप्रतिवचने स्यातामित्यत्राह—**तथाहिसतीति**। सामानाधिकरण्यस्य भेदाभेदवाद्यभ्युपगतैकद्रव्यतापरत्वं दूषयति। **जगदिति**। अस्मिन्नपि पक्षे जगद्यन्मयं जगद्यद्द्रव्यमिति पृष्टं स्यात्। तदानीं मयड्वैयर्थ्यमस्तीति द्रष्टव्यं, * यत इत्युपादानस्य पृष्टत्वात्। अधिकं दूषणमाह—**सत्येत्यादिना**। * सत्यसङ्कल्पेत्यादिना जीवगतदोषस्सर्वाशुभेत्यादिना प्रकृतिगतदोषश्च ब्रह्मणि प्रसज्यत इत्युक्तम्॥

यद्वा उभयलिङ्गकत्वहानिर्विपरीताकारप्राप्तिश्चेत्यर्थः शरीरवाचिपदस्य शरीरिपरत्वे मुख्यत्वं न स्यादित्यत्राह— **आत्मशरीरेति**। स्थाप्यते स्थापयिष्यतइत्यर्थः। * अनन्तरभावित्वात् स्थाप्यत इत्युक्तम्। एवं प्रकृतश्लोकव्याख्यानौपयिकार्थः प्रपञ्चितः॥

**अथ** शास्त्रार्थसङ्ग्रहानन्तरं विस्तरोपक्रमे * सप्तश्लोकीं नमस्कारविषयामवतार्य व्याख्येयश्लोकस्य नमस्कारश्लोकान्तरैस्सङ्गतिं दर्शयितुं 'अविकाराये' त्यादीनां षण्णां वाक्यार्थमाह—**अतइति**। अतः प्रश्नप्रतिवचनादिभिः शास्त्रस्य सविभूतिकसगुणवस्तुपरत्वावगमात्सामानाधिकरण्यस्य विशिष्टवस्तुनि मुख्यवृत्तत्वाच्चेति भावः। अत इत्यस्य व्यष्टिरूपेणावस्थितं च नमस्करोतीत्यनेनान्वयः, यद्वा शास्त्रवाक्यार्थस्यैवंरूपत्वात् **'विष्णोस्सकाशात्'** इत्यस्य सङ्ग्रहरूपत्वं **'परः पराणाम्'** इत्यादीनां विस्ताररूपत्वं च सिद्धमित्यर्थः। **'विष्णोस्सकाशा'** दित्यत्र सकाशादिति पदं षष्ठ्याः पञ्चम्यर्थत्वसम्पादनार्थम्। यथा अस्य कृते इत्युक्ते कृते इतिशब्दस्य चतुर्थ्यर्थत्वसम्पादनपरत्वं तद्वत्। यद्वा सकाशात् ससङ्कल्पात् काशनं प्रकाशनं सङ्कल्परूपज्ञानं तद्वत इत्यर्थः अनेन निमित्तत्वसिद्धिः। यद्वा सकाशशब्दः पार्श्ववचनः तेन शरीरमुपलक्षितं **'सोऽभिध्याय शरीरात्स्वात्'** इत्यर्थः। तत्रैव च स्थितमिति लयस्थानप्रश्नोत्तरं तत्र स्थितमिति स्थितं निष्ठां गतम्। अनेन जगतो नित्यत्वमवस्थानामागमापायित्वं च सूचितम् लयस्थानप्रश्नोत्तरमुक्तम्॥

**गूढार्थसंग्रहः**

**आत्मशरीरभावेत्यादि—मुख्यवृत्तमिति स्थाप्यते** इत्यन्तम्। अखण्डार्थसामानाधिकरण्यमेव मुख्यम्। 'नीलमुत्पलम्' इत्यादौ विशेषणविशेष्यभावे सामानाधिकरण्यं गौणम् इति परेषामुक्तयः। परसम्मताखण्डार्थे सामानाधिकरण्यस्यैव शशशृङ्गसहोदरतया सर्वत्र विशेषणविशेष्यभावे सामानाधिकरण्यमेकमेव सर्वदार्शनिकसम्मतमिति वेदपूर्वभागविचारपरसूत्रकृज्जैमिनिसम्मतं यत् तदेव व्यासस्यापि तात्पर्यविषय इति स्थाप्यते इति भावः॥

श्रीभाष्यम्

अतो ,' विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥ ' इति संग्रहेणोक्तमर्थं ' परःपराणाम् ' इत्यारभ्य विस्तरेणवक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव स्वरूपेणावस्थितमविकारायेति श्लोकेन प्रथमं प्रणम्य तस्यैव हिरण्यगर्भस्वावतारशङ्कररूपत्रिमूर्तिप्रधानकालक्षेत्रज्ञसमष्टिव्यष्टिरूपेणावस्थितं च नमस्करोति ।

श्रुतप्रकाशिका

अथ लयकर्तृप्रश्नस्य * बाह्यस्थितिप्रश्नस्यचोत्तरमाह–स्थितीति । जगच्च स इति यन्मयमिति फलितस्य कृत्स्नान्तर्यामिरूपकृतसत्ताऽनुवृत्तिलक्षणस्थितिप्रश्नस्योत्तरम् । यद्वा यन्मयमिति फलितस्थितिप्रश्नस्यापि स्थितिसंयमकर्तेत्येवोत्तरम् । जगच्च स इतितु यन्मयमिति * कण्ठोक्तस्यार्थस्योत्तरम् इदं सामानाधिकरण्यमात्मतया व्याप्तिनिबन्धनमिति पूर्वमेवोपपादितम् । ननु निष्कर्षकशब्दानां शौक्ल्यादीनां धर्मिपर्यन्तत्वं न दृष्टम् । यन्मयं जगदित्यनेन जगच्छब्दस्य निष्कर्षकशब्दत्वं दृष्टमिति धर्मिपर्यन्ताभिधायित्वाभावाज्जगच्च सइति सामानाधिकरण्यमनुपपन्नमितिचेत् । उच्यते निष्कर्षशब्दाहि द्विविधाः नियतनिष्कर्षका वैवक्षिकनिष्कर्षकाश्च, तत्र शौक्ल्यादिशब्दा नियतनिष्कर्षकाः मनुष्यशुक्लादिशब्दा वैवाक्षिकनिष्कर्षकाः प्रयोगस्य नियामकत्वात् । अन्यथा निष्कर्षकानिष्कर्षकविभागोऽपि नोपपद्यते । तथा जगच्छब्दोऽपि वैवाक्षिकनिष्कर्षक इति । अतएव यन्मयमिति वैयधिकरण्येन प्रश्नस्य जगच्च सइति सामानाधिकरण्येनोत्तरमर्थभेदाभावादुपपन्नं शुक्लगुणस्याश्रयः क इति प्रश्नस्य शुक्लःपट इत्युत्तरवत् ॥

गूढार्थसङ्ग्रहः

**परब्रह्मभूतं भगवन्तमिति** । ' एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ' इति वक्ष्यमाणार्थमभिप्रेत्येदमुक्तम् ॥

**हिरण्यगर्भस्वावतारशङ्कररूपत्रिमूर्तीति** । ' नमो हिरण्यगर्भाय हरये शङ्कराय च । ' इत्येतद्वाक्यार्थः अत्र कथितः, अत्र त्रिमूर्तीनामविशेषेण प्रतीतावपि ' वासुदेवाय ताराय ' इत्यत्र नादार्थस्योक्त्या पूर्वं अकारोकारमकारार्था एव त्रिमूर्तयो विवक्षिता इति स्फुटम् । अथर्वशिखायां ' ओमित्येतदक्षरम् ' इति प्रक्रम्य ' चतुष्पादेतदक्षरं परं ब्रह्म प्रथमा रक्तपीता ब्राह्मी ब्रह्मदेवत्या, द्वितीया शुभा शुक्ला रौद्री रुद्रदेवत्या, तृतीया कृष्णा विद्युमती विष्णुदेवत्या, चतुर्थी विद्युमती सर्ववर्णा पुरुषदेवत्या इत्युक्तौ विद्युमतीति शब्दस्य विष्णुदेवत्यायां पुरुषदेवत्यायां च प्रयोगेण पुरुषशब्दार्थस्य वासुदेवस्य विष्णोश्चैकव्यक्तित्वं प्रतीयते । विशेषेण द्योतमानलक्ष्मीसंबन्ध एव विद्युमतीत्यत्र विवक्षितः । एतन्मूलकमेव हिरण्यगर्भरुद्रयोः गौणप्रादुर्भावत्वं, विष्णोः मुख्यप्रादुर्भावत्वं च संहितासूक्तम् । अत्र ' वासुदेवाय ताराय ' इति निर्देशेन पराशरस्यापि अयमेवार्थोऽभिप्रेत इति निर्णीयते ॥

' यज्वभिर्यज्ञपुरुषः ' इति प्रागुदाहृतवचनानुसारेण अत्र ' वासुदेवाय ताराय-–विष्णवे मुक्तिहेतवे ' इत्यत्र सात्वतसंहितार्थस्य प्रदर्शनेन सात्वतोक्तार्थस्य वेदान्ततात्पर्यविषयस्य स्वसम्मतत्वबोधनात् । तेन ' विष्णोस्सकाशादुद्भूतम् ' इति त्रिमूर्तिमध्यगतविष्णोः सृष्टिस्थितिलयकर्तृत्वं ' ब्रह्मा दक्षादयःकालः ' इत्यादौ ब्रह्मरुद्रादीनां विष्णुविभूतित्वं वक्ष्यमाणं च अनुपपन्नमिति शङ्काया नावकाशः ; विष्णोरेव वासुदेवरूपेण सृष्टिस्थितिलयकर्तृत्वसम्भवात् । ' नमो हिरण्यगर्भाय हरये शङ्कराय च । ' इत्यत्र विष्णुशब्दं विहाय हरिशब्दप्रयोगेणापि अयमर्थस्सूच्यते । ' किंच ब्रह्मा च

## श्रुतप्रकाशिका

एवं सङ्क्षेपेणोक्तस्य वक्ष्यमाणमहाविस्तरस्यार्थस्यैषद्विस्तररूपेण श्लोकैर्नमस्कारः क्रियतइति नमस्कारश्लोकसङ्गतिः। स्वेनैव रूपेणावस्थितं ननु प्रकृत्यादिविशिष्टमित्यर्थः। परब्रह्मणोहि हेयसम्बन्धाभावः ननु विष्णोरिति शङ्कायां 'विष्णुनामा स वेदेषु' 'समस्तहेयरहितं विष्णवाख्यं परमं पदम्।' इत्यादिवचनात् ब्रह्मण एव विष्णुशब्दवाच्यत्वा-

## गूढार्थसंग्रहः

रुद्रश्च शक्रश्च बलभित्प्रभुः। प्रलयं न विजानन्ति आत्मनः परनिर्मितम्॥' (भा.मो.ध.३४९.१०) 'ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च। प्रसह्य हरते यस्मात् तस्माद्धरिरिहोच्यते॥' इति निर्वचनानुसारेण हरिशब्दस्य ब्रह्मरुद्रादिसंहर्ता इत्यर्थः। वासुदेवस्यैव समष्टिसृष्टिसंहारकर्तृत्वं ब्रह्मरुद्रयोस्तु ब्रह्माण्डान्तर्गतपदार्थसृष्टिसंहारकर्तृत्वमेव' इति संहितोक्तार्थः अत्र विवक्षितः। 'सृष्टिस्थित्यन्तकरणात् ब्रह्मविष्णुशिवात्मिकाम्। स संज्ञां याति भगवानेक एव जनार्दनः' (वि.पु.१.२.६७) 'ब्रह्मा दक्षादयःकाल' इत्याद्यनन्तरम्, 'एवमेको जगत्स्रष्टा जगत्पाता तथा जगत् (पुनः) जगद्भक्षयिता देवः समस्तस्य जनार्दनः।' (१.२२.४०) इत्याद्युक्तिः त्रिमूर्तीनां वासुदेव गौणमुख्यप्रादुर्भावतया उपपद्यत इति भावः॥

अत्र उभयत्रापि जनार्दनशब्दप्रयोगः समष्टिसंहारकर्तृवासुदेवतात्पर्यकः। एतत्तात्पर्येणैव 'रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्धा प्रलयायैते जनार्दनविभूतयः॥' (१.२२.२३) इत्यत्र विष्णुशब्दं विहाय जनार्दनशब्द प्रयोगः। 'नमो हिरण्यगर्भाय' इत्यादिश्लोकाः 'ज्ञानस्वरूपमित्यतःपूर्वं नमस्कारश्लोकाः। एतेन देवतापारमार्थ्यं सम्यक्प्रकाशितम्। अत्र 'विष्णवे मुक्तिहेतवे' इत्युक्तस्यार्थस्य 'परयात्वक्षरप्राप्तिः' 'विज्ञानं प्रापकम्' 'यद्विमुक्तिप्रदो योगः' 'क्लेशानां च क्षयकरं योगादन्यन्न विद्यते।' इत्युत्तरत्र योगस्यापि मुक्तिहेतुत्वप्रतिपादनेऽपि 'विष्णुर्मुक्तिफल प्रदः। यैः स्वधर्मपरैर्नाथ' इत्यत्र धर्माराधितस्य विष्णोः मुक्तिफलप्रदत्वकथनेन परविद्यासामान्यस्यापि भगवत्प्रीतिद्वारा मुक्तिहेतुत्वं भगवतः अव्यवधानेन मुक्तिहेतुत्वंचाभिधाय स्थिरीकरणात्, 'क्षेत्रज्ञःकरणी ज्ञानं करणम्' इत्यत्र ज्ञानस्य करणत्वं व्यापाद्वारेति स्पष्टमुक्तं भवति। एतेन 'अथ परा यया तदक्षरमधिगम्यते' इति श्रुतौ तृतीयया करणत्वं व्यापारवत्कारणत्वमेवेत्युक्तं भवति॥

एवं च पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ' इत्युपक्रमानुसारेण 'फलमत उपपत्तेः' इत्यत्र मोक्षरूपं फलं विवक्षितमिति सिद्ध्यति। 'संसारमोक्षस्थितिबन्धहेतुः' (श्वे) इत्यत्र मोक्षतदितरफलसाधनत्वं 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं तिष्ठमानस्य तद्विदः' (बृ) इत्यत्र एकेन परायणशब्देन कर्मविद्याफलसाधनत्वं च प्रतिपादितं सर्वफलेषु एकरूप्य एव स्वरसतः सङ्गच्छते। कर्मफलं भगवत्प्रीतिद्वारकं, मुक्तिफलं च न तथेति, ये वदन्ति तन्मते एतदस्वारस्यं स्फुटम्। अतएव 'तंत्वौपनिषदं पुरुषम्' इति श्रुतिः प्राक् निर्णीतदिशा सङ्गच्छते। एवं च 'देवतापारमार्थ्यं च' इत्युपक्रम्य अत्र 'हरये शङ्कराय च' इत्यत्र हरिशब्दप्रयोगस्य 'विष्णवे मुक्तिहेतवे' इत्याद्युक्तेः 'गृहस्थो ब्रह्मचारी च वानप्रस्थश्च भिक्षुकः। य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः॥' इत्युपक्रम्य 'तं देवा ऋषयश्चैव नानातनुसमाश्रितम्। भक्त्या संपूजयन्त्यद्य गतिंचैषां ददाति सः॥ येतु तद्भाविता लोके ह्येकान्तित्वं समास्थिताः। एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत॥' इत्युक्तेः 'अयंहि दुरनुष्ठेयो मोक्षधर्मस्सनातनः। यं हित्वा देवतास्सर्वाः हव्यकव्यभुजोऽभवन्॥ किंच ब्रह्मा च रुद्रश्च शक्रश्च बलभित्प्रभुः। प्रळयं न विजानन्ति आत्मनः परनिर्मितम्॥' इत्याद्युक्तेश्च मोक्षधर्मनारायणाख्यानस्थायाः ऐकरस्यं सिद्धम्॥

## श्रुतप्रकाशिका

द्विष्णोरेव भगवच्छब्दवाच्यत्वाच्च विष्णोर्हेयसम्बन्धोऽनुपपन्न इत्यभिप्रायेण परब्रह्मभूतमित्यादि विशेषणमुक्तम् । **अविकाराय** विकारशब्दो धर्मिपरो धर्मपरश्च '**षोडशकश्च विकारः**' इत्यादिप्रयोगात् स्वयं कस्यचिद्विकारभूतः कार्यभूतो न भवतीत्यविकारः अनेन कार्याचिद्व्यावृत्तिः ॥

यद्वा विकारः-अवस्था महत्त्वाहङ्कारत्वादिः । नित्यं तत्सम्बन्धविरहादविकारः अतो विकारवती प्रकृतिरविकारपदेन व्यावर्त्यते । एवं (च) तत्पुरुषबहुव्रीहिभ्यामविकारायेति पदेन कार्यकारणरूपोभयावस्थाऽचिद्व्यावृत्तिः । शुद्धायेति बद्धव्यावृत्तिः । नित्याय-शुद्धत्वेन नित्याय अन्यथा अविकारायेत्यनेन पुनरुक्तिस्स्यात् । नित्यपदं नित्यशुद्धिं विशिंषदेव शुद्धिमद्वस्तुविशेषणं यथा-महोदार इत्यत्र महच्छब्द औदार्यं विशिंषन्नेव दातुर्विशेषणं तद्वत् । अतो मुक्तव्यावृत्तिः । परमात्मन इति नित्यमुक्तव्यावृत्तिः । तेहि परवन्तः नतु परमाः '**प्रधानपुरुषव्यक्तकालानां परमम्**' इति वक्ष्यमाणत्वात् । अविकारायेत्यादिना पदचतुष्टयेन प्रधानपुरुषव्यक्तकालव्यावृत्तिरिति केचित् । निमेषाद्यवस्थकालस्य व्यक्तस्याप्यविकारपदव्यावर्तितत्वात् पुरुषत्रैविध्यस्य प्रामाणिकत्वात् विशेषणानां तद्व्यावर्तनसमर्थत्वाच्च, यथोक्तानामेवार्थानां व्यावर्तितत्वमुचितम् । विलक्षणविग्रहवत्तयाऽपि समस्तवैलक्षण्यमाह-**सदैकरूपरूपायेति** । प्रथमो रूपशब्दः स्वभाववाची एकस्वभाव(मि)इ)त्यर्थः । परव्यूहविभवादिसर्वावस्थासु सकलहेयप्रत्यनीकत्वमङ्गळास्पदत्वध्येयत्वादिस्वभावोऽप्रच्युत इत्यर्थः

यद्वा एकरूपं दिव्यात्मस्वरूपेण समानस्वभावम् । तेनापि हेयप्रत्यनीकत्वादिसिद्धिः । एभिःपदैरीक्षत्यानन्दमयाधिकरणान्तरादित्यविद्यार्था विवक्षिताः । पूर्वोक्तमात्मत्वं न मृदात्मको घट इतिवद्भवतीति तद्वैशद्यमवयवशक्त्या क्रियते, विष्णुशब्देन सर्वजिष्णवइति पदेन च, पदद्वयेन * नृपनभो व्यावृत्तिः अन्तःप्रविश्य नियन्तृत्वंहि शरीरित्वम् अतएवमात्मत्वं विवृतं भवति । विष्णुशब्दस्य रूढत्वाद्देवताविशेषानिर्णयश्च सिद्धः । * यद्वा विष्णुशब्देनैव नियमनपर्यन्तव्याप्तिरुक्ता व्याप्तिकृततद्गतदोषस्पर्शशङ्कां व्युदस्यति । **सर्वजिष्णवइति** । * कथं विष्णोः कारणत्वम् ? हिरण्यगर्भादीनां हि सृष्ट्यादिकारणत्वमवगम्यत इत्यत्राह-**नमइति** । तत्तच्छरीरको विष्णुरेव सृष्ट्यादिकं करोतीत्यर्थः '**रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्** ।' इत्युक्त * विष्ण्वाख्यावतारविग्रहद्वारा भगवत्पर्यन्तो हरिशब्दः ; हिरण्यगर्भशङ्करशब्दौ जीवद्वारा भगवत्पर्यन्ताविति—

**ब्रह्माद्यास्सकला देवाः मनुष्याःपशवस्तथा । विष्णुमायामहावर्तमोहान्धतमसाऽऽवृताः ॥**

इति '**हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ।**' इति '**हिरण्यगर्भो भगवान्**' इत्यारभ्य

**मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम् । अशुद्धास्ते समस्तास्तु देवाद्याःकर्मयोनयः ॥**

इत्याद्येतत्प्रबन्ध(वचनशता)स्थश्लोकतात्पर्यानुरोधात् ।

**एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥**

**तवान्तरात्मा मम च येचान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥**

इति भारतादिवचनैकार्थ्याच्च निश्चीयते । हिरण्यगर्भादिसामानाधिकरण्यं व्याप्तिकृतमिति सूचयति । **वासुदेवायेति** । ब्रह्मशिवमध्यस्थोऽप्यच्युतस्वभाव इत्याह-**तारायेति** । यद्वा तेषु त्रिष्वप्ययमेव मोक्षप्रद इत्यर्थः '**अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारमहाभयात्तारयति तस्मादुच्यते तारम्**' इति श्रुतेः '**ब्रह्म विष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः**' इत्यादिभिः विष्णोः परं तत्त्वम्, विष्णोश्चतुर्मुखादिसाम्यं च नाशङ्कनीयम् ।

## श्रीभाष्यम्

**तत्र ज्ञानस्वरूपमित्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनस्स्वभावमाह- तस्मान्नात्र निर्विशेषवस्तुप्रतीतिः ।**

## श्रुतप्रकाशिका

शक्तिरपृथक्सिद्धविशेषणम् तत्र धर्मिण्यसमानविभक्तिनिर्दिष्टे धर्मिपर्यन्तस्यापि शब्दस्य धर्ममात्रपरत्वं दृष्टं पटस्य शुक्ल इत्यादिषु। तथा विष्णुशब्दो विशेषणभूतविग्रहमात्रपरः। असमानविभक्तिना ब्रह्मशब्देन धर्मिणः पृथङ्निर्दिष्टत्वात्। ब्रह्मणश्शक्तयोहि ब्रह्मशक्तयः अतोऽसमानविभक्तिनिर्दिष्टत्वमिति। यद्वा भगवतो * देवमनुष्यादिशब्दव्यपदेशवत् शक्ति विभूत्यादिशब्दव्यपदेशोऽपि विभूतिसाजात्यात्। यथाऽऽहुश्श्रीवत्साङ्कमिश्राः–'**सजातीयस्तेषामितितु विभवाख्यामपि भजन्**' इति। अतो यथोक्तएवार्थः॥

अथ केवलप्रकृतिकारणव्यावृत्त्यर्थं प्रकृतिविशिष्टं परमात्मानं नमस्करोति **एकानेकेति**। कारणावस्थायामेकः कार्यावस्थायामनेकः अथ धीस्थां कार्यावस्थामाह–**स्थूलेति**। तथा बुद्धिस्थां कारणावस्थामाह–**अव्यक्तेति**। तत्राप्यप्रच्युतस्वस्वभावत्वमाह–**मुक्तिहेतवइति**। अथ कालविशिष्टमाह–**सर्गेति**। कालस्य वक्ष्यमाणविशेषणोपपत्तेः, प्रकरणस्य विशिष्टपरत्वात् विशेषणान्तरविशिष्टतायाः प्रतिपादितत्वेन कालविशिष्टताकथनं पारिशेष्यात्। तदप्रतिपादने अपेक्षित विध्यभावप्रसङ्गात्, केवलं ब्रह्मस्वरूपकारणपरत्वे *अण्डान्तर्गतसर्गादेरुक्तत्वा *दण्डबहिर्भूततत्त्वसर्गादेर्वक्ष्यमाणत्वाच्च, पौनरुक्त्यप्रसङ्गात्। विस्तरे च '**प्रधानपुरुषव्यक्तकालानाम्**' '**व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च।**' '**तथा पुरुषरूपेण कालरूपेण च स्थितम्।**' '**ब्रह्मा दक्षादयःकालः**' इत्यादिभिर्व्यक्ताव्यक्तादिभिस्सह वक्ष्यमाणत्वादयं श्लोकः कालपरएव। अचिद्विशिष्टवाचिश्लोकानन्तर्यादस्य श्लोकस्य कालपरत्वमुचितम्। *उत्तरश्लोकस्समष्टिजीवपरः व्यष्टिजीवपरश्लोकसाहचर्यात्। कालस्य सर्गस्थितिविनाशमूलभूतत्वं '**ब्रह्मा दक्षादयःकालः**' '**विष्णुर्मन्वादयः कालः**' '**रुद्रःकालोऽन्तकश्च**' इत्यादिषु सिद्धम्। जगन्मयः अवच्छेदकतयाऽवच्छेद्यतया च जगत्प्रचुरः अथ क्षेत्रज्ञसमष्ट्यात्मनावऽस्थितं नमस्यति **आधारभूतमिति**। अचेतनस्य चेतनः स्वरूपेणाधारभूतः '**एवमेवैताभूतमात्राः प्रज्ञामात्रास्वर्पिताः**' '**जीवभूतां महाबाहो ययेदं धार्यते जगत्।**' इति वचनात् अणीयस्त्वं प्रकृतेरपि व्यापनयोग्यसूक्ष्मत्वम्॥

यद्वा '**विकासाणुस्वरूपैश्च**' इत्युक्तप्रकारेण सर्गदशायामिव ज्ञानविकासाभावादणीयस्त्वमेवेत्यर्थः। सर्वभूतस्थं * भवतीति भूतं पृथिव्यन्तेषु सर्वतत्त्वेष्ववस्थितम्। अनन्तरं * क्षेत्रज्ञव्यष्टिविशिष्टं नमस्करोति **ज्ञानेति** '**हिरण्यगर्भे**' त्यादिभाष्ये निर्दिष्टेष्वर्थेष्वयं श्लोकः किं विशिष्टपरमात्मपर इति शङ्कायां सामासान्तर्गतं प्रस्तुतश्लोकार्थं विविच्य दर्शयति। **तत्रेति**। परमात्मनस्सद्वारक एव अमान्वय इत्यर्थः। ततःकिमित्यत्राह–**तस्मादिति**। निर्विशेषज्ञानपरत्वे प्रश्नोत्तरवरलाभकथनानुपपत्तिमुखेनोपक्रमविरोध उक्तः॥

## गूढार्थसंग्रहः

अत्र कारणवाक्यानां मुक्तिवाक्यानां च सामरस्येन जगत्सृष्टेः मुक्तिपर्यन्तफलदानतात्पर्यकत्वस्य उपनिषदि विवक्षिततायाः पराशरेण निर्धारणेन 'ज्ञानस्वरूपम्' इत्यत्रापि परसम्मतनिर्विशेषस्य न तात्पर्यविषयत्वमित्याह—**तत्र ज्ञानस्वरूपमित्ययं श्लोकइत्यादिना॥ क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्येति**। अत्र विष्णुचित्ताचार्याः—वस्तुवृत्त्या परि-

## श्रीभाष्यम्

**यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रं तर्हि 'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥' इति चोद्यं 'शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥ भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता।' इति परिहारश्च न घटते।**

## श्रुतप्रकाशिका

अथोपरितनाध्यायगतचोद्यपरिहारानुगुणत्वमुच्यते। **यदीति**। * यद्वा शास्त्रारम्भोपयोगिप्रश्नोत्तरानुपपत्तिरुक्ता। इदानीमेतत्प्रश्नोत्तरविशेषानुपपत्तिरुच्यते **यदीति**। पूर्वाध्याये '**जुषन् रजोगुणम्**' इत्यादिना गुणान्वये कथितेऽपि निर्गुणस्येति चोदयतोऽयमभिप्रायः गुणान्वयस्य सद्वारकत्वात्स्वयं निर्गुण इति। निर्विशेषपक्षे अप्रमेयस्येत्यादिपदवैयर्थ्यं निर्गुणस्येति पदेनैव निर्विशेषत्वसिद्धेः परिपूर्णत्वादिगुणानभ्युपगमाच्च। अप्रमेयादिपदान्तरसमभिव्याहारएव निर्गुणपदोपस्थापितनिषेधस्य सङ्कुचितविषयत्वसाधकः। **न घटत इति**। सर्गाद्या भावशक्तय इति सर्वशक्तियोगेन चोद्यस्य परिहारान्निर्विशेषपक्षाननुगुणत्वमिति भावः॥

## गूढार्थसंग्रहः

च्छिन्नानुकूलज्ञानैकस्वरूपं सर्वथा मलरूपज्ञानदुःखादिरहितं तमेव भ्रान्तिदर्शनतः अनात्मन्यात्मविज्ञानात् अर्थस्वरूपेण स्थितं, यद्वा देवमनुष्यादितत्तदाकारविशिष्टपिण्डमात्रतया प्रतिभासमानम्' इति व्याचक्रुः। अत्र भ्रान्तिः विशेषणगता विशेष्यपरमात्मनः नमस्कार्यत्वं भ्रान्तिदर्शनाश्रयत्वं ज्ञानस्वरूपस्यैव विशेषणद्वारा उपपादितं भवति। साक्षात्परमात्मपरत्वाङ्गीकारेऽपि नात्र निर्विशेषं विवक्षितम् अपितु सविशेषमेवेति प्रागेव (७३१.पु) निरूपितम्॥

द्वितीयाध्यायोपक्रमे नमस्कारश्लोकानुरोधेन 'ज्ञानस्वरूप' मित्यनन्तरश्लोकानुसारेण प्रथमाध्यायवचनानुसारेण च 'ज्ञानस्वरूप' मित्यस्य न परसम्मतार्थइत्युपपादितम्। अथ 'विष्णोस्सकाशादुद्भूतम्' इति उपनिषदनुरोधेन जगत्सृष्ट्यादिकारणे तात्पर्यं यदुक्तं तत् सृष्ट्यादिकर्तृत्वानुपपत्तिशङ्कापरिहाराभ्यां तृतीये द्रढीक्रियते। परमतरीत्या निर्विशेषपरत्वे तृतीये 'निर्गुणस्य' इत्यादिना आक्षेपपरिहारौ न घटेते इत्याह—**यदि निर्विशेषज्ञानरूपमित्यादिना**॥

**निर्गुणस्येत्यादि**। 'जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः। ब्रह्मा भूत्वाऽस्य जगतो विसृष्टौ संप्रवर्तते॥' इत्युपक्रम्य 'सत्त्वभृद्भगवान्विष्णुः, तमोद्रेकाच्च कल्पान्ते रुद्ररूपी जनार्दनः। सृष्टिस्थित्यन्तकरणादेक एव जनार्दनः' इति द्वितीयाध्यायान्ते नमस्कारश्लोकेषु 'वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे।' इति पूर्वाध्यायोपसंहारेचोक्तम्॥

तत्र विष्णुजनार्दनवासुदेवशब्दानां एकव्यक्तिपरत्वमपि पूर्वमभिप्रेतमिति निरूपितम्। गुणत्रयमूलकमेव सृष्ट्यादिकमिति पूर्वमुपपादितम्। तत्र वासुदेवः गुणत्रयाधिष्ठानशून्यत्वेन निर्गुणः इति सिद्धान्तमभिप्रेत्यात्र शङ्का वासुदेवस्य निर्गुणत्वे विष्णोरपि निर्गुणत्वं स्यात्, विष्णोस्सत्त्वगुणसम्बन्धानङ्गीकारे स्थितिकर्तृत्वानुपपत्तिः। तदङ्गीकारे च वासुदेवस्य निर्गुणत्वं न सम्भवति 'साक्षी चेता केवलो निर्गुणश्च' इतिहि श्रुतिः, तदनन्तरश्रुतिषु तस्यकारणत्वमपि स्पष्टमुक्तम्। एवं च निर्गुणस्य वासुदेवजनार्दनादिशब्दैः प्रागुक्तस्य नादार्थस्य सर्गादिकर्तृत्वं न घटत इति शङ्कितुराशयः॥

**शक्तयस्सर्वभावानामित्यादि**—'ज्ञानशक्ति—विनाहेयैर्गुणादिभिः' इति निर्गुणश्रुत्यर्थ उक्तः। अत्र 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे) इति श्रुतिः ब्रह्मणश्शक्तिसत्त्वे मानम्। विविधा इत्येतदर्थः

## श्रीभाष्यम्

**तथाहिसति निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वं ? न ब्रह्मणः पारमार्थिकःसर्गः अपितु भ्रान्तिपरिकल्पित इति चोद्यपरिहारौ स्याताम्। उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्ता परिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसम्बन्धानर्हस्य कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति चोद्यम् दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्व-**

## श्रुतप्रकाशिका

तर्हि कथं चोद्यपरिहारौ स्यातामित्यत्राह—**तथाहिसतीति**। निर्गुणस्य ब्रह्मण इत्यनेन पदान्तरवैयर्थ्यमभिप्रेतम् निर्विशेषस्य कर्तृत्वानुपपत्तिचोद्ये कृते कर्तृत्वस्य पारमार्थ्येसतिहि तदनुपपत्तिः अपरमार्थत्वाहुर्घटत्वमेव (दू)भू)षणमिति परिहारो वक्तव्य इत्यर्थः। किमर्थाविमौ चोद्यपरिहारौ यद्ययमर्थो न प्रतिपाद्यत इति शङ्कायां स्वयमेव तच्चोद्यपरिहार शरीरमाह—**उत्पत्त्यादीति**। निर्गुणस्येत्यादिविशेषणानां विपरीताकारैः कर्तृत्वस्य व्याप्तिं कथमित्यनेनाभिप्रेतां दर्शयति। **सत्त्वादिगुणयुक्तेत्यादिना**। सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्यत्वानि निर्गुणत्वादीनां यथाक्रमं विपरीताकाराः अमलात्मन इत्यस्य विपरीताकारोऽपि कर्मवश्येत्यनेनार्थसिद्धः। अमलात्मत्वं अमलस्वभावत्वं कर्मसम्बन्धानर्हत्वम्। तद्विपरीताकारः कर्मसम्बन्धार्हत्वम्। तच्च कर्मवश्यशब्देनार्थसिद्धम् कर्मसम्बन्धार्हत्वकार्यंहि कर्मवश्यत्वम्। निर्गुणस्येत्यादि पदानां यथाक्रममर्थमाह—**सत्त्वादिगुणरहितस्येत्यादिपदैः**। कर्मसम्बन्धानर्हस्येत्यनेनामलात्मन इति पदं व्याख्यातं भवति * अकर्मवश्यत्वं मुक्तस्यापि विद्यते। स पूर्वावस्थायां कर्मसम्बन्धित्वात्तदर्हः। अतस्तद्व्यावर्तकं कर्मसम्बन्धानर्हत्वममलात्मत्वम्। अकर्मवश्यत्वं कर्मकृतसुखदुःखभाक्त्वाभावः। कर्मवश्यविसजातीयत्वं कर्मसम्बन्धानर्हत्वम्। सर्गादिकर्तृत्वे गुणत्रयवश्यत्वसापेक्षत्व कर्माधीनफलभाक्त्वकर्मसम्बन्धार्हत्वप्रसङ्ग इति विशेषविरोधप्रसञ्जनेन चोद्यम्। अग्नेर्द्रव्यत्वे ऽनुष्णत्वप्रसङ्ग इतिवदयं तर्को धर्मिग्राहकप्रमाणबाधितः। अतो विसजातीयधर्मिणो विसजातीयधर्मवत्त्वं युक्तम्। अग्नित्वेसत्यपि वैद्युताग्नेर्जलनिर्वाप्यत्वाभाववत्। अतस्सर्वविसजातीयस्य ब्रह्मणस्सर्वशक्तियोग उपपद्यत इति परिहार इत्यर्थः। **'शक्तयस्सर्वभावानाम्'** इत्यस्य ग्रन्थस्यायमक्षरार्थः आचिन्त्यज्ञानगोचराः अतर्क्यप्रमितिसिद्धाः। सर्गाद्याः सर्गादिगोचराः भावशक्तयः (ब्रह्म)वस्तुशक्तयः ब्रह्मणो वस्तुशक्तय इति निर्देशो * ब्रह्म तादात्म्यमितिवत्। यद्वा ब्रह्मणो भावशक्तयः वस्तुशक्तयः ब्रह्मणो वस्तुत्वप्रयुक्तास्सत्ताप्रयुक्तानिरुपाधिकाश्शक्तय इत्यर्थः। यद्वा भावशब्दः स्वभावपरः स्वाभाविक्यश्शक्तयइत्यर्थः॥

## गूढार्थसंग्रहः

'सर्गाद्या भावशक्तय' इति बहुवचननिर्देशेन प्रतिपादितः 'भावशक्तय' इत्यत्र भावपदेन 'स्वाभाविकी' इत्यस्यार्थःप्रदर्शितः। एतच्छ्रुतिविवक्षितं ज्ञानादिगुणषट्कं देवशब्दार्थवासुदेवस्यैव। सङ्कर्षणप्रद्युम्नानिरुद्धानांतु षट्सु प्रत्येकं गुणद्वयमेव सङ्कर्षणादिद्वारभूताः ब्रह्मविष्णुरुद्राः' इति संहितासु महाभारते च व्यक्तम्। अयमर्थः हयशिरोरत्नभूषण तद्दीधित्योर्निरूपितः

एवं च वासुदेवस्य गुणत्रयाधिष्ठानशून्यत्वेऽपि द्वारभूतानां गुणत्रयाधिष्ठानसत्वेन सङ्कर्षणादीनामिव विष्णोरपि वासुदेवैक्यमात्रेण न सृष्ट्यादिकर्तृत्वानुपपत्तिः। श्रुतौ 'देवात्मशक्तिं स्वगुणैर्निरूढाम्' इत्युपक्रमे 'स्वगुणैर्निरूढा'मित्यनेन सत्त्वादिगुणवत्त्वप्रतिपादनेन प्रकृतिर्विवक्षितेति स्फुटं प्रतीयते। 'पराऽस्य शक्तिः' इत्यत्रतु ज्ञानबलादिसहभावेन समुच्चयेन ब्रह्मसम्बन्धस्य शक्तौ प्रतिपादनेन विविधत्वस्वाभाविकत्वकथनेन च शक्तिः न प्रकृतिः ज्ञानशक्तिबलैश्वर्यवीर्य-

## श्रीभाष्यम्

**भावस्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत्सर्वशक्तियोगो न विरुध्यत इति परिहारः। ‘ परमार्थस्त्वमेवैकः ’ इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति अपितु कृत्स्नस्य तदात्मतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यम् । तदेवोपपादयति ‘ तवैष महिमा येन व्याप्तमेतच्चराचरम् ’ इति येन त्वयेदं चराचरं व्याप्तं अतस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यःकोऽपि नास्ति । अतस्सर्वात्मतया त्वमेवैकःपरमार्थः । अतइदमुच्यते तवैष महिमा या सर्वव्याप्तिरिति । अन्यथा तवैषा भ्रान्तिरिति वक्तव्यम् । जगतःपते त्वमित्यादीनां**

## श्रुतप्रकाशिका

**अथ** चतुश्श्लोकीं व्याचष्टे । **परमार्थइति** । कृत्स्नस्य ब्रह्मपर्यन्तत्वेन तच्छरीरत्वात्कृत्स्नशरीरं ब्रह्मैव परमार्थः अतत्पर्यन्तो मिथ्येत्यर्थः । जगतःपते इत्याकाशव्यावृत्तिः, येन व्याप्तमिति नृपव्यावृत्तिः । अनेन जगतश्शरीरलक्षणं दर्शितं भवति नियाम्यत्व धार्यत्व शेषत्वेष्वन्यतमं * व्याप्यत्वसहचरंहि * शरीरलक्षणद्योतकम् । जगच्छरीरक त्वदन्यो मिथ्येत्युक्ते * अतत्पर्यन्तस्वतन्त्रवस्त्वन्तरस्यैव मिथ्यात्वं स्यात् नतु जगतस्तच्छरीरभूतस्य यथा हे भूपते त्वदन्यो नास्तीत्युक्ते न भूमिथ्या भवति तत्तुल्यराजान्तरस्यैवतु मिथ्यात्वं तद्वत् । * यद्वा एकशब्दः प्राधान्यपरः **‘ एकादाकिनिश्चासहाय ’** इत्यत्र*सहायपदव्यवच्छेद्यंहि प्राधान्यम् । ब्रह्मणश्च प्राधान्यं जगत्प्रतिविशेष्यत्वरूपम् । तदानीं नान्योऽस्तीति प्रधानभूतोऽन्यो निषिध्यते नत्वप्रधानमर्थान्तरम् उक्तार्थस्योपपादकं व्याप्यत्वप्रतिपादकमुत्तरार्धमित्याह—**तदेवेति** । तत्र फलितमर्थमाह—**येनेति** । येन यस्मादित्यर्थः, * त्वदन्यः अत्वदात्मकः त्वयाऽत्मतया व्याप्तत्वात् सर्वं त्वदात्मकं त्वच्छरीरमिति त्वदन्यः अत्वदात्मको नास्ति । तस्मात्सर्वशरीरस्त्वमेव परमार्थ इत्यर्थः ॥

‘ तवैष महिमा ’ इति श्लोकार्थैकदेशश्चोक्तार्थोपपादक इत्याह—**अतइति** । * महिम्नो व्याप्तिरूपत्वात् या सर्वव्याप्तिरित्युक्तं नतु व्याप्तौ तात्पर्यात् व्याप्तेर्महिमत्व एव तात्पर्यम् । यद्वा * व्याप्तिरुक्तार्थोपपादकत्वं महिमसमभिव्याहारादित्याह—**अतइदमुच्यतइति** । तस्य परप्रातिकूल्यं दर्शयति । **अन्यथेति** । व्याप्यव्याप्त्यादेर्मिथ्यात्वे सर्वव्याप्तिस्तव महिमेति न वाच्यम् । अपितु भ्रान्तिरिति वक्तव्यमित्यर्थः । कृत्स्नापारमार्थ्यपरत्वे दूषणान्तरद्वयमाह—**जगतःपतइति** ।

## गूढार्थसंग्रहः

तेजोरूपवक्ष्यमाण (६.अ) षड्गुणान्तर्गतशक्तेरेव पराशरसम्मतत्वेन षड्गुणस्य निर्गुणस्य गुणवद्द्वारा सृष्ट्यादिरिति न निर्विशेषप्रतीतिः ॥ **परमार्थस्त्वमेवैकः इति** । (१.४.३८) एतदादिवचनचतुष्टयं मुनिकृतमहावराहस्तुतिप्रकरणस्थम् । तत्पूर्वं भूदेवीकृतस्तुतौ ‘ भवतो यत्परं रूपं तन्न जानाति कश्चन । अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः ॥ (वि.पु.१.४.-१७) त्वामाराध्य परं ब्रह्म याता मुक्तिं मुमुक्षवः । वासुदेवमनाराध्य को मोक्षं समवाप्नुयात् ॥ ’ इत्युक्तम् । अत्र त्वामाराध्यत्यस्य ‘ यैः स्वधर्मपरैर्नाथ नरैराराधितो भवान् । ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥ ’ (वि.पु.५.३०.१६) इति वक्ष्यमाणादितिकृतकृष्णस्तुतिवचनसमानार्थत्वं स्पष्टम् । अत्र मायाशब्दः न परसम्मताविद्यापरः । ‘ मायातवेयमज्ञातपरमार्थाऽतिमोहिनी । अनात्मन्यात्मविज्ञानं यया मूढो विमुह्यति ॥ (१४) अस्वे स्वमिति भावोऽत्र यत्पुंसामुपजायते ’ (१५) इति पूर्वं तत्रैवोक्तेः । ‘ श्रूयतांचाप्यविद्यायास्स्वरूपं कुलनन्दन । अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ’ इति षष्ठे वक्ष्यते । अत्र ‘ माया तवेयम् ’ इत्यत्र ‘ अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः ’ इति

श्रीभाष्यम्

**पदानां लक्षणा च स्यात्। लीलया महीमुद्धरतो भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च, यतः कृत्स्नं जगत् ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव मूर्तं तस्मात्त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत् केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह**

श्रुतप्रकाशिका

लक्षणा अधिष्ठानलक्षणा अब्रह्मात्मकत्वेन स्वतन्त्रतायाः प्रत्यक्षसिद्धत्वात्तद्विरुद्धं ब्रह्मपर्यन्तत्वं न शास्त्रं प्रतिपादयति– 'आदित्यो यूपः' इतिवदिति शङ्कायां अन्यथासिद्धाया अपरोक्षरूपायाअपि स्वातन्त्र्यप्रतिपत्तेः परोक्षरूपाऽप्यनन्यथासिद्धापारतन्त्र्यप्रतिपत्तिर्बलीयसीत्यभिप्रायेण द्वितीयश्लोकमवतारयति । **यतइति**। पारतन्त्र्यप्रतिपत्तिः परमात्मप्रतिपत्तिसापेक्षा तदभावात्तत्प्रतिपत्त्यभाव इत्यन्यथासिद्धा स्वातन्त्र्यप्रतिपत्तिरित्यर्थः। **केवलदेवमनुष्यादिरूपमिति**। परमात्मशरीरत्वरहितजगद्रूपमात्रमित्यर्थः। अयमर्थः यथा देहात्मभ्रमोऽपरोक्षोऽपि परोक्षशास्त्रज्ञानेन बाध्यते, तथा स्वातन्त्र्यभ्रमोऽ-

गूढार्थसंग्रहः

श्रुत्यर्थःप्रदर्शितः। 'तस्मिंश्चान्य' इत्यत्र उपाध्यनिर्देशेन अनुपाधिकब्रह्मभेदवान् जीवः विवक्षितः। मायापदार्थः 'मायांतु प्रकृतिं विद्यात्' इति श्रुत्युक्ता प्रकृतिः 'आत्मविमुक्तये मायां तरन्ति' इत्युक्त्या अतिक्रमणयोग्यैव माया नतु ज्ञानबाध्या इति प्रतीयते। 'दैवीह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥' इति गीतायामपि मायातरणमेवोक्तम्। एवं च परविद्या भगवदाराधनरूपा आराधितो भगवान् मुक्तिप्रदः इत्येव श्रौतसिद्धान्तःप्रदर्शितो भवति। 'त्वामाराध्य परं ब्रह्म' इत्यत्र परब्रह्मणः वासुदेवस्यैवाराधनं मुक्तिहेतुरिति प्रतिपादनेन पञ्चमप्रथमांशवचनयोरेक एवार्थ इति प्रतीयते। एतेन 'परमार्थ' इत्यत्र वासुदेवस्यैव 'नित्यंहि नास्ति' इत्युक्तदिशाऽविनाशित्वं विवक्षितमित्यपि ज्ञायते ॥

प्रह्लादकृतविष्णुस्तुतौ च–'ओं नमो वासुदेवाय तस्मै भगवते सदा। व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः' इति वक्ष्यते। तत्र 'व्यतिरिक्तं न यस्यास्ति' 'परमार्थ' इति श्लोके 'नान्योऽस्ति' इत्युभयोरेकार्थत्वं स्फुटम्। तत्र 'तवेयं व्याप्तिरैश्वर्यगुणसंसूचिका प्रभो।' इति तत्रत्यवचनस्योपादानपूर्वकमर्थः प्राक् (७१५.पु) निरूपितः। एवं च तत्प्रघट्टकवचनसमानार्थके 'परमार्थस्त्वमेवैकः' इत्यत्र सर्वव्यापकः एकएवेत्यर्थो विवक्षित इति स्फुटमित्यभिप्रेत्य अतस्सर्वात्मतया त्वमेवैकःपरमार्थ इत्यर्थः प्रदर्शितः। 'व्याप्तमेतच्चराचरम्' इत्युत्तरार्धानुसारेण 'नान्योऽस्ति' इत्यत्र व्याप्तिशून्यवस्तुन एव निषेधः। इत्थमेवार्थ इति 'व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः।' इति प्रह्लादकृतविष्णुस्तुतौ 'व्यतिरिक्तोऽखिलस्य यः' इत्यनेन निर्णीयते इतिभावः ॥

**आत्मतया व्याप्तत्वेन तव मूर्तमिति**। 'तवैष महिमा येन व्याप्तमेतच्चराचरम्' इति पूर्वश्लोके व्याप्तेः प्रतिपादनेन व्यापकस्यैव युष्मच्छब्दार्थत्वम्। व्याप्तिश्च, 'व्याप्तिरैश्वर्य गुणसंसूचिका' इति वक्ष्यमाणानुसारेण नियमनार्था, तेन मूर्तस्य भगवच्छरीरत्वमत्र विवक्षितम्। एतदंशान्ते 'द्वे रूपे ब्रह्मणस्तस्य मूर्तंचामूर्तमेव च।' इत्युपक्रम्य 'यानि मूर्तान्यमूर्तानि—तानि सर्वाणि तद्वपुः' इत्युत्तरत्र वक्ष्यमाणत्वाच्च। 'येतु ज्ञानविदः शुद्धचेतसः' इत्युत्तरत्र शुद्धचेतस इति वक्ष्यते तदनुसारेण 'भ्रान्तिज्ञानेन पश्यन्ति' इत्यत्र अशुद्धचेतस एव विवक्षिता इत्यभिप्रेत्य **त्वदात्मकत्वानुभवसाधनयोगविरहिणः** इत्युक्तम्। जगद्रूपमित्यत्र पूर्वश्लोकोक्तव्याप्तिरहितजगद्रूपमेव विवक्षितं तेनैव भ्रान्तिज्ञानेनेति सङ्गच्छते, नत्वन्यथा इत्यभिप्रेत्य केवलदेवमनुष्यादीत्युक्तम् ॥

## श्रीभाष्यम्

**यदेतद्दृश्यतइति न केवलं वस्तुतस्त्वदात्मकं जगद्देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रमइत्याह 'ज्ञानस्वरूपमखिलम्' इति ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदस्सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगच्छरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीत्याह 'ये तु ज्ञानविद' इति। अन्यथा श्लोकानां**

## श्रुतप्रकाशिका

पीति। देहातिरिक्तं स्वात्मानमप्यजानतः परमात्मपारतन्त्र्याप्रतिपत्तिः किं पुनर्न्यायसिद्धेति च दर्शयितुं तृतीयश्लोकारम्भः। तं व्याचष्टे **न केवलमिति**। चिदचिदात्मके जगति चेतनरूपं जगद्विवक्षितं, **ज्ञानस्वरूपमखिलं जगदिति** जगच्छब्देन यथा—

**त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥**

इति अत्र ज्ञानस्वरूपस्य जडरूपार्थस्वरूपत्वबुद्धिर्भ्रम इत्युक्ते अर्थस्वरूपस्यार्थस्वरूपत्वबुद्धिर्भ्रमस्स्यादिति च सिद्धम्। * देहात्मभ्रमस्संसर्गकृतः 'जलमुष्ण'मितिवत् आत्मासाधारणधर्मज्ञानस्फुरणेऽपि तस्यासाधारणत्वाज्ञानाद्भ्रमोपपत्तिः। चतुर्थं व्याचष्टे **ये पुनरिति**। विज्ञानंचाविज्ञानंचेति विज्ञानशब्दस्यात्मवाचित्वात् ज्ञानस्वरूपात्मविद इत्युक्तम्। अबुद्धय इति पूर्वश्लोकोक्तार्थप्रतियोगित्वेन ज्ञानविद इत्युक्तमिति स्मारयति। **बुद्धिमन्तइति**। अयोगिन इत्यस्य प्रतियोगित्वेन शुद्धचेतसइत्युक्तमिति सूचयति। **योगयोग्यपरिशुद्धमनसइति**। योगयोग्यत्वे हेतुः परिशुद्धत्वं मनसातु विशुद्धेनहि भगवत्साक्षात्काररूपोपासननिष्पत्तिश्श्रूयते। मनोविशुद्धिश्च कर्मयोगेन * योगेन योग्यतापरिशुद्धिरिति वाऽर्थः। पूर्वश्लोके अखिलजगच्छब्देन चेतनरूपं जगद्विवक्षितम्। अस्मिन् श्लोके * अखिलजगच्छब्देनाचिद्रूपं जगद्विवक्षितम्। कृत्स्नापारमार्थ्यं विवक्षितमिति पक्षे * प्रथमश्लोकसङ्क्षिप्तदूषणमनुक्तदूषणेन सहविस्तरेण सर्वश्लोकसाधारणमाह—**अन्यथेति**। स्वातन्त्र्यभ्रमो देहात्मभ्रमश्चेति विभागाभावे पौनरुक्त्यमित्यर्थः। लक्षणा—परमेश्वर जगतःपते तव महिमा त्वं इत्यादिशब्दानां लक्षणा। त्वंशब्दोहि स्वाभिमुखाहमर्थान्तरवाची अतस्तस्य लाक्षणिकत्वम्। अर्थविरोधः प्रत्यक्षादिभिरबाध्यत्वेन सिध्यतोऽसत्यत्वे प्रमाणविरोधः। तिरोधानानुपपत्त्यादिस्तर्कविरोधः उभयलिङ्गकत्वविरोधश्च प्रकरणविरोधः स्तुतिविरोधः। '**रोमान्तस्था मुनयस्तुवन्ती**' इतिहि प्रकृतम्। स्तोतॄणामद्वैतज्ञानवत्त्वे स्तुत्यनुपपत्तिः तदभावे च नितरां

## गूढार्थसंग्रहः

**ज्ञानस्वरूपमखिलं** जगदित्यत्र चिदचित्सामान्यस्य ज्ञानस्वरूपत्वासम्भवात् चेतनमात्रमेव विवक्षितमित्यभिप्रेत्याह—**ज्ञानाकाराणामात्मनामिति**। 'पुमान्न देवो न नरः' इति वक्ष्यमाणानुसारेण 'अर्थस्वरूपं पश्यन्तः' इत्यत्र देवमनुष्याद्याकारार्थदर्शनमेव विवक्षितमित्यभिप्रेत्य **देवमनुष्याद्यर्थाकारत्वदर्शनमपीत्युक्तम्**। एतेन श्लोकद्वये भ्रमद्वैविध्यं विवक्षितमिति न पौनरुक्त्यमिति बोधितम्॥

'येतु ज्ञानविदश्शुद्धचेतसः' इत्यत्र पूर्वश्लोकद्वयोक्ता शुद्धेभ्यो वैलक्षण्यं दर्शितम्। तेन तद्भ्रमविरोधिज्ञानद्वयमेव एतच्छ्लोके विवक्षितम्। अतश्च 'ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर' इत्यत्र चकाराभावेऽपि ज्ञानात्मकत्व त्वच्छरीरस्वरूप त्वद्रूपत्वप्रकारद्वयावगाहिज्ञानद्वैविध्यमेव विवक्षितमित्यभिप्रेत्याह—**ज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीति**

श्रीभाष्यम्

**पौनरुक्त्यं, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधश्शास्त्रतात्पर्यविरोधश्च । 'तस्यात्म परदेहेषु सतोऽप्येकमयम्' इत्यत्र सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते । पिण्डगतमात्मगतमपि द्वैतं नप्रतिषिध्यते । देवमनुष्यादिविविधविचित्रपिण्डेषु**

श्रुतप्रकाशिका

शास्त्रतात्पर्यविरोधः—उपक्रमोपसंहारा * वान्तरप्रकरणोपक्रमोपसंहारादिविरोधः । अथादिभरतचतुश्श्लोकीं परस्परव्यवहितां व्याचष्टे । **तस्येत्यादिना** । ब्रह्माद्वैतं जीवाद्वैतंचेत्यद्वैतंद्विविधं शास्त्रप्रतिपाद्यम् । तत्र ब्रह्माद्वैतं प्रकार्यद्वैतं, जीवाद्वैतं प्रकाराद्वैतम् कोऽत्र नियामक इतिचेदुच्यते ब्रह्मप्रकरणेषु सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात्, सामानाधिकरण्यस्य च प्रकारभेदविशिष्टप्रकार्यैकत्वपरत्वात् **'एकस्सन् बहुधा विचारः'** इति प्रकारबहुत्वस्य कण्ठोक्तत्वात् । ऐक्यविधिशेषस्य **'नेह नानाऽस्ति'** इत्यादिभेदनिषेधस्य विहितैक्यविरोधिभेदविषयत्वात् । सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वेन प्रकारिबहुत्वानिषेधपरत्वात् **'न तत्समश्चाभ्यधिकश्च दृश्यते'** इति ब्रह्मतुल्यप्रकार्यन्तरनिषेधकण्ठोक्त्या च प्रकार्यद्वैतमेव ब्रह्माद्वैतम् जीवात्मबहुत्वस्य श्रुतिसिद्धत्वादन्यथा बद्धमुक्तव्यवस्थाऽनुपपत्तेः उपदेशानुपपत्तेः, सुखादिव्यवस्थाऽनुपपत्तेः **'पुमान्न देवो न नरो न पशुर्न च पादपः ।' 'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः । देवादिभेदेऽपध्वस्त'** इत्यादिभिर्भेदविशेषनिषेधस्य कण्ठोक्तत्वान्मुक्तानां साम्यवचनात् **'अहं त्वं च तथाऽन्ये च' 'तत्रत्वमहमप्यत्र' 'तन्मनस्समता लम्बी'** इत्यादिप्राकरणिकवचनानुरोधादेको व्रीहिरितिवदेकशब्दस्य एकजातीयपरत्वोपपत्तेर्वक्ष्यमाणश्लोकस्य शब्दस्वभावाच्च जीवाद्वैतं * प्रकाराद्वैतमेव **'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'** इत्यस्य वाक्यस्य कामविधानपरत्वान्न नित्यत्वबहुत्वयोस्तात्पर्यमस्ति अस्तिचेद्वाक्यभेदप्रसङ्गादितिचेत् न **'यदाग्नेयोऽष्टाकपाल'** इत्यत्राष्टाकपालत्वविशिष्टाग्नेय * पुरोडाशविधिवद्विशिष्टविधिपरत्वाद्वाक्यस्य । नित्यबहुचेतनविशिष्टकामप्रदानाविधिपरंहीदं प्रतीयते । अनित्यानामल्पानां कामप्रदानामपि नित्यानां बहूनां कामप्रदाने

गूढार्थसङ्ग्रहः

**शास्त्रतात्पर्यविरोधश्चेति** । जगत्सृष्टिमुक्तिहेतुत्वयोः शास्त्रोपक्रमोपसंहारयोरभिधानेन निर्विशेषविवक्षाऽङ्गीकारे तद्विरोधेन सविशेषस्यैव शास्त्रतात्पर्यविषयतया तदनुसारेण प्रागुक्तार्थाङ्गीकार एव शास्त्रतात्पर्यं सङ्गच्छते, नत्वन्यथेति भावः । एवं प्रथमांशे नमस्कारस्तुतिश्लोकानां तात्पर्यमुक्तम् । अत्र 'एवं प्रकारममलं विष्ण्वाख्यं परमं पदम्' इति प्राक् (७१०.पु) उदाहृतश्लोकार्थस्थापनार्थं द्वितीयांशगतानां श्लोकानामर्थो निर्णीयते । 'एवं प्रकारम्' इत्यतः प्राक् 'विज्ञानमद्वैतमयम्' इत्युक्तम् । एवमेव द्वितीयांशे रहूगणंप्रति भरतोक्तौ अद्वैतान्तर्गतां कथां 'उपदेशेन तेनाद्वैतपरोऽभवत्' इत्युक्त्यनन्तरं 'सोऽहं सचत्वं सच सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम्' इत्युपसंहारः, तदनुसारेण 'विज्ञान परमोऽर्थोऽसौ' इत्यत्र निर्विशेषमेव विवक्षितमित्येतदनुसारेण 'यद्यन्योऽस्ति परः कोऽपि' 'वेणुरन्ध्रविभेदेन' इत्यत्रापि एकात्मैव विवक्षितः । अतश्च 'एवम्प्रकारम्' इत्यतःपूर्वश्लोकेऽपि 'विज्ञानमद्वैतमयम्' इत्यत्र स एवार्थो ग्राह्य इति 'एवम्प्रकारम्' इति श्लोकस्य प्रागुक्तार्थोऽसङ्गतः । एवं 'ज्ञानस्वरूपम्' इति श्लोकस्यानुपदमुक्तार्थोऽपि इति शङ्कानिराकरणाय द्वितीयांशगतानां श्लोकानामर्थं निर्णेतुमुपक्रमते— **तस्यात्मपरदेहेष्वित्यादिना** ॥

## श्रीभाष्यम्

**वर्तमानं सर्वमात्मवस्तुसममित्यर्थः ।**

## श्रुतप्रकाशिका

कथितेहि कामप्रदानस्यातिशयो भवति । जीवबहुत्वस्य लोकसिद्धत्वान्न तत्र शास्त्रस्य तात्पर्यं अप्राप्तेहि शास्त्रमर्थवदिति-चेन्न ; संसृष्टस्यहि बहुत्वप्रतीतिर्लोकसिद्धा परिशुद्धात्मस्वरूपबहुत्वस्य लोकसिद्धत्वाभावात्तत्रहि शास्त्रतात्पर्यं सम्भवति । औपाधिकाकारस्यानित्यत्वान्निष्कृष्टस्वरूपस्य नित्यत्वान्नित्यत्वसमानाधिकरणबहुत्वेऽभिहिते परिशुद्धात्मस्वरूपबहुत्वं ह्युक्तं भवति । उपदेशोऽपि न सम्भवति गुरुर्भ्रान्तश्चेन्नोपदेशः अभ्रान्तश्चेद्द्वैतप्रतीत्यभावान्नितराम् । द्वैतप्रतीतावपि दर्पणस्थं स्वात्मनः प्रतिबिम्बंप्रति विवक्षितस्य नोपदेशस्सम्भवतीति सुखदुःखादिव्यवस्थयाचात्मभेदसिद्धिः ॥

**ननु** सुखदुःखव्यवस्थानाम किं सुखदुःखव्यक्तिबहुत्वं उत तदाश्रयबहुत्वम् ? । एकस्यैवानेकसुखदुःखव्यक्तिदर्शनात्सुखादिस्वरूपबहुत्वं नात्मैक्यविरोधीति न व्यवस्था । आश्रयभेदश्चेत्साध्याविशिष्टो हेतुरितिचेन्न ; त्वदुक्तोभयप्रकारविलक्षणत्वाद्व्यवस्थायाः संप्रतिपन्नैकाश्रयेषु सुखदुःखादिषु प्रतिसंधानं दृष्टम् । * प्रतिबन्धकाभावे सत्येकाश्रयत्वेन सुखदुःखप्रतिसंधानाभावोऽव्यवस्थेति परिहारः । * एकमयमित्यत्र मयट् स्वार्थिकः, * यद्वा एकशब्दो भावप्रधानः ऐक्यं तत्प्रचुरमेकमयं शुद्धावस्थस्यात्मनोह्यैक्यप्राचुर्यं नतु संसृष्टस्य तस्य बुद्धिसुखदुःखाद्यान्तरभेदेन देवत्वादिबाह्यभेदेनचैक्यप्राचुर्याभावात् एकशब्दस्समानवाची '**एको व्रीहिस्सुनिष्पन्नस्सुपुष्टाःकुरुते प्रजाः**' इत्यादिषु तथा प्रयोगदर्शनात् । देवमनुष्यादिप्रकृतिपरिणामविशेषरूपेत्यनेन '**दुःखाज्ञानमला धर्माः प्रकृतेस्ते नचात्मनः ।**'

**पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥**

इति वचनयो*रैकार्थ्यं दर्शितम् '**पिण्डःपृथगयतः पुंसाश्शिरःपाण्यादिलक्षणः**' इति प्राकरणिकवचनं स्मारयति पिण्डशब्दः एकमयमित्यात्मन्येकत्वं विधाय निषिध्यमाने आत्मस्वरूपभेद एव निषेध्यस्यादितिचेत्—स्यादेवं यदि विधीयमानमेकत्वं व्यक्त्यैक्यं स्यात् तत्तु प्रकारैक्यम् । अतो भेदनिषेधो वैजात्यनिषेध एवेति भावः । '**द्वैतिनोऽतथ्यदर्शिनः**' इति सामान्येनोक्तेः कथं देवादिद्वैतनिषेधइत्युच्यत इतिचेत् कथं सामान्येन द्वैतनिषेधे प्रतीते आत्मद्वैतनिषेध

## गूढार्थसंग्रहः

**सर्वमात्मवस्तुसममित्यर्थइति** । 'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।' इत्यनन्तरं 'परमार्थस्तु भूपाल सङ्क्षेपाच्छ्रूयतां मम । एको व्यापी समश्शुद्धः निर्गुणःप्रकृतेः परः । जन्मवृद्ध्यादिरहितः आत्मा सर्वगतोऽव्ययः । परज्ञानमयोऽसद्भिः नाम जात्यादिर्विभुः । न योगवान्नयुक्तोऽभूत् नैव पार्थिव योक्ष्यते ॥' (वि.पु.२.१४.३०) इति '**तस्यात्मपरदेहेषु**' इत्येतत्पूर्वग्रन्थः । ततोऽपि पूर्वं 'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैतिवै । परिणामादिसंभूतां तद्वस्तु नृपतच्च किम् ।' इति प्रश्नः (२.१३.९६) अत्र परिणामः 'पुमान् स्त्री गौरियं वाजी कुञ्जरो विहगस्तरुः । देहेषु लोकसंज्ञेयं विज्ञेया कर्मयोनिषु ।' (२.१३.९४) 'पुमान्न देवो ननरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः' इत्युक्त्या अत्र परिणामादिनिबन्धनसंज्ञा शरीराकृतिभेदसंबन्धनिबन्धनसंज्ञैवेति स्पष्टम् । वस्तुपरमार्थशब्दावेकार्थकाविति सर्वसम्मतम् । एवं च 'अनाशी परमार्थः' इत्यत्र नाशः सङ्कोचविकासात्मकपरिणामभेद एव, सच शरीरगतः विवक्षित इति स्फुटं प्रतीयते । एवं च 'अनाशी परमार्थ' इत्यत्र परमार्थशब्दविवरणमेव अनाशी' इति ॥

## गूढार्थसङ्ग्रहः

'यत्तु कालान्तरेणापि–तद्वस्तु' इति पूर्वाध्यायोक्त्यनुसारात् । अत्रापि 'भूप पृच्छसि किं श्रेयः परमार्थं नु पृच्छसि । श्रेयांस्यपरमार्थानि अशेषाण्येव भूपते ॥ श्रेयांस्येवमनेकानि शतशोऽथ सहस्रशः । सन्त्यत्र परमार्थस्तु तत्परः श्रूयतां च मे । धर्माय त्यजते किंनु परमार्थो धनं यदि । व्ययश्च क्रियते यस्मात् कामप्राप्त्युपलक्षणः ॥ पुत्रश्चेत्परमार्थः स्यात् सोऽप्यन्यस्य नरेश्वर । परमार्थभूतः सोऽन्यस्य परमार्थोहि तत्पिता । एवं न परमार्थोऽस्ति जगत्यत्र नराधिप । परमार्थोहि कार्याणि कारणानामशेषतः । राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि । परमार्था भवन्त्यत्र न भवन्ति च वै ततः । ऋग्यजुस्सामनिष्पाद्यं यज्ञकर्ममतं तव । परमार्थभूतं तत्रापि श्रूयतां गदतो मम । यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया । तत्कारणानुगमनात् ज्ञायते नृप मृण्मयम् । एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः । निष्पाद्यते क्रिया यातु सा भवित्री विनाशिनी । अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम् । तदेवाफलदं कर्म परमार्थो मतस्तव । मुक्तिसाधनभूतत्वात् परमार्थो न साधनम् । ध्यानंचैवात्मनो भूप परमार्थार्थशब्दितम् । भेदकारि परेभ्यस्तत् परमार्थो न भेदवान् । परमात्माऽऽत्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यंहि नैति तद्द्रव्यतां यतः । तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः । परमार्थस्तु भूपाल सङ्क्षेपाच्छ्रूयतां मम । एको व्यापी' इत्याद्युक्तम् । 'एको व्यापी समश्शुद्धः' इति श्लोके समशब्द उपात्तः । एवं च देवादिदेहपरिणामभेदेऽपि विज्ञानरूपवस्तुनस्समत्वेन परिणामभेदाभावादेकत्वेन परिणामभेदानिबन्धनसंज्ञाभेदः तन्निबन्धननाशविरहश्च वर्तत इति तस्य परमार्थत्वं 'विज्ञानं परमार्थः' इत्यत्र पराशराभिप्रेतमिति स्फुटं निर्मत्सराणां विदुषाम् ॥

'द्वैतिनोऽत(त्त्व)थ्यदर्शिनः' इत्यत्रापि शरीरपरिणामभेदानिबन्धनद्वैतदर्शनवन्तएव विवक्षिता इति पूर्वश्लोकपरामर्शेन स्फुटम् । एतदुत्तरं 'देवादिभेदेऽपध्वस्ते नास्त्येवावरणोहि सः ।' (वि.पु.२.१६.२३) इत्युक्त्यनुसाराच्च जडभरतोपाख्यानात्पूर्वं 'वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्यथात्वं द्विज याति भूयो न तत्तथा' 'महीघटत्वं घटतः कपालिका' इत्यत्र स्वरूपसङ्कोचविकासात्मकपरिणामवतः अवस्तुत्वं तच्छून्यस्यैव वस्तुत्वं प्रतिपादितमित्यत्रापि वस्तुशब्दस्य परमार्थशब्दस्य च यथोक्त एवार्थः ॥

यद्यपि गुरुचन्द्रिकायां 'तद्वस्तु' इत्यत्र तदेववस्तु इत्यर्थात् वस्तुत्वस्य अपरिणामित्वव्याप्यतालाभेन व्यापकापरिणामित्वाभावेन अवस्तुत्वस्य लाभेऽपि वस्तुत्वस्यापरिणामित्वस्वरूपस्यालाभात् । 'परमार्थंनु पृच्छसि, परमार्थो न भेदवान्, परमार्थोऽविनाशी' इत्यादि 'विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः' इत्यन्तेन अद्वैतचिन्मात्ररूपपरमार्थनिरूपणस्यैव प्रकृतत्वेन प्राधान्येनापरिणाम्युक्तेरनुपयोगात् । 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्यादिना ब्रह्मणः सार्वात्म्यमुक्त्वा 'ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिः नतु वस्तुभूतः' इत्यत्र ज्ञानरूपत्वेन तदन्यरूपस्यावस्तुत्वोक्तेः नहि परिणामिस्वरूपावस्तुत्वे उक्तहेतुसम्भवः, तस्मान्न विज्ञानमृतेऽस्ति किंचित्' इत्युपसंहाराच्च । 'परमार्थोऽविनाशी' इत्यत्रापि परमार्थमुद्दिश्य अनाशित्वविधिः नत्वनाश्युद्देशेन परमार्थसंज्ञाविधिः । 'परमार्थस्तु भूपाल' इत्यादिना पश्चादेव परमार्थप्रतिपादनप्रतिज्ञानेन पूर्वं नाशित्वाद्यभावप्रतिपादनमात्रस्य परमार्थे कृतत्वात् 'परमार्थसारभूतं यत्तदद्वैतमशेषतः, 'तत्त्याजभेदं परमार्थदृष्टिः' इत्युपसंहारे परमार्थस्याद्वैतत्वेनोक्तेः, परमार्थसारेत्यस्य कर्मधारयत्वात् अन्यपरमार्थशङ्काविरहात्' इत्युक्तम् ॥

तथाऽपि व्यापकापरिणामित्वाभावेन अवस्तुत्वमात्रप्रतिपादनाङ्गीकारमात्रेण अवस्तुशब्दस्य भवत्संमतज्ञानबाध्यस्वरूपमिथ्यार्थकत्वं पराशरस्याभिप्रेतमिति कथं सिद्ध्यति । अहमर्थस्यात्मत्वं पूर्वं प्रतिज्ञाय अहमर्थस्य वस्तुत्वप्रतिपाद-

## श्रुतप्रकाशिका

इत्युच्यते न पिण्डात्मनोर्भेदनिषेधः। पिण्डात्मनोर्भेदस्य प्रामाणिकत्वादितिचेत् आत्मभेदस्यापि प्रामाणिकत्वान्नतद्भेद-निषेधः अपितु देवादिभेदनिषेध इति भावः। आत्मगतद्वैतमप्रतिषिद्धंचेत् 'आत्मा शुद्धोऽक्षरश्शान्तः' 'विज्ञानं यज्ञं तनुते' * इत्येकवचनं नोपपद्यते जातावेकवचनंचेद्देहशब्देऽप्येकवचनं स्यादिति शङ्का च देवमनुष्यादिपदेन परि-हृता। देवादिष्ववान्तरभेदविवक्षया विविधशब्दः तत्राप्यनेकविधत्वविवक्षया विचित्रशब्दः। आत्मसु जात्येकत्वादेक-

## गूढार्थसङ्ग्रहः

नार्थमयं ग्रन्थः उपक्रान्तः। स्त्रीत्व पुंस्त्व देवत्वमनुष्यत्वादिशरीरगतपरिणामभेदनिबन्धनसंज्ञाभेदः जीवस्य काममस्तु तावता देवत्व स्त्रीत्व पुंस्त्वादेः अवस्तुत्वं सिद्ध्यति, नत्वहमर्थात्मनोऽवस्तुत्वम्। अहमर्थात्मन एव विज्ञानस्वरूपत्वम्। इति न काप्यनुपपत्तिः। अत्र 'आत्मा शुद्धोऽक्षरश्शान्तः निर्गुणःप्रकृतेःपरः। प्रवृद्ध्युपचयौ नस्तः एकस्याखिलज-न्तुषु ॥ (वि.पु.२.१३.६७) यदा नोपचयस्तस्य नचैवापचयो नृप। तदा पीवानसीतीदं कया युक्त्या त्वयोदितम्। इति 'त्वं पीवासि निरीक्ष्यसे' इति रहूगणप्रश्नस्य भरतप्रतिवचनप्रक्रमः। अनन्तरं 'आत्मन्येष न दोषाय शब्दोऽहम्' इति 'शब्दोहमिति दोषाय नात्मन्येष तथैव तत्।' इत्यादिकमुक्तम् एतत्पर्यालोचनायां शरीरगतोपचयाचययोः अह-मर्थजीवेऽभावेन अहमर्थस्यैवात्मत्वं 'आत्मा शुद्धोऽक्षरश्शान्तः' इत्युपक्रमे विवक्षितमिति स्फुटम्। 'पुमान् स्त्री' 'यत्तु कालान्तरेणापि' इत्यादेरुत्तरं 'निशम्य तस्येति वचः परमार्थसमन्वितम्। प्रश्रयावनतो भूत्वा तमाह नृपतिर्द्विजम् ॥ राजोवाच—भगवन् यत्त्वया प्रोक्तं परमार्थमयं वचः। श्रुते तस्मिन् भ्रमन्तीव भ्रमतो मम वृत्तयः। (१४.२) तन्मह्यं प्रणताय त्वं यच्छ्रेयः परमं द्विज। तद्वदाखिलविज्ञानजलवीच्युदधिर्भवान् ॥' (१४.११) इति रहूगणप्रश्नः अत्र प्रश्ने देहभिन्नाहमर्थात्मैव परमार्थशब्दार्थ इति स्फुटं निर्मत्सराणां विदुषाम् ॥

अत्र परमश्रेयसप्रश्नः तदनन्तरं 'भूप पृच्छसि किं श्रेयः परमार्थं नु पृच्छसि।' इति प्रतिवचनारम्भः अत्र आत्मनः आत्मव्यतिरिक्तश्रेयसश्च विकल्पः धनादियोगान्तं श्रेयस्सप्तकं दर्शयित्वा तस्याहमर्थात्माभिन्नस्य विनाशित्वमुप-पाद्य अनाशिन एव परमार्थत्वं नाशिनो न परमार्थत्वमित्यभिधाय 'परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम। एको व्यापी समश्शुद्धः' 'जन्मवृद्ध्यादिरहितः' इत्युक्त्या 'आत्मा शुद्धोऽक्षरश्शान्तः' इत्युपक्रमे उपचयापचयरहितः योऽयमह-मर्थआत्मा उक्तः स एवोपसंहारेऽप्यभिधीयते। अतः परमार्थत्वं ज्ञानाबाध्यत्वं तदेव वस्तुत्वं ज्ञानबाध्यमपरमार्थमवस्तु' इति गुरुचन्द्रिकाकल्पना उपक्रमोपसंहारविरुद्धा पराशरस्यानभिमतैव, अहमर्थस्य यथा वा सर्वजीवेषु स्वतः अहंस्वरूपप्रत्यक्त्वेन साम्यं तथा ज्ञानस्वरूपत्वेनापि साम्यं वर्तत इति 'तस्यात्मपरदेहेषु' इत्यत्र 'विज्ञानं परमार्थ' इति निर्देश इत्येव युक्तमिति निर्मत्सरैर्विभावनीयम्। अत्र परमार्थशब्दः परमप्रयोजनपरः अनाशित्वमेव परमत्वं परमश्रेयसः रहूगणेन पृष्टतया श्रेयस्सामान्यं विवक्षितम् आहोस्वित् परमश्रेयः परमप्रयोजनम् इति 'किं श्रेयःपरमार्थं नु पृच्छसि' इति भर-तस्याशय इति प्रतीयते। अतएव ध्यानस्य न परमार्थत्वं साधनस्य न परमार्थत्वं तरतमभावापन्नावस्थाभेदवतोऽपि न परमार्थत्वं इत्याद्युक्तिस्सङ्गच्छते। अतः जडभरतोपाख्याने अहमर्थात्मत्वसाधनपरं सनत्सुजातीयभाष्योदाहृतवचनानां परसम्मतार्थः न पराशराभिप्रेत इत्यत्र निरूपितम्। 'ज्ञानस्वरूपो भगवान् यतोऽसौ' इत्यादिवचनानि सनत्सुजातीय-भाष्ये एतद्वचनसहभावेनोदाहृतान्यपि महापूर्वपक्षे पृथक्कृत्य उदाहृतानीति महासिद्धान्तेऽपि विवरणोक्तभावरूपाज्ञानसाध-नप्रकारपर्यालोचनदशायां (सप्तविधानुपपत्तिघट्टे) पर्यालोचयिष्यते। एतेन रामानुजभाष्यभञ्जन्युक्तिरपि (त.चं) निरवकाशा ॥

## श्रीभाष्यम्

**यथोक्तं भगवता 'शुनिचैव श्वपाके च पण्डितास्समदर्शिनः।' 'निर्दोषंहि समं ब्रह्म' इत्यादिषु 'तस्यात्मपरदेहेषु सतोऽपि' इति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात् 'यद्यन्योऽस्ति परः कोऽपि' इत्यत्रापि नात्मैक्यं प्रतीयते, यदि मत्तःपरः कोऽप्यन्यः इत्येकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात्, तत्र परशब्दःस्वव्यतिरिक्तात्मवचनः अन्यशब्दस्तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः। एतदुक्तं भवति यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारोऽस्ति। तदाऽहमेवमाकारः अयंचान्यादृशाकार इति शक्यते व्यपदेष्टुम्। नचैवमस्ति**

## श्रुतप्रकाशिका

वचनं पिण्डेष्ववान्तरजातिबहुत्वाद्बहुवचनमित्यभिप्रायः। साम्ये प्रमाणमाह—**यथोक्तमिति**। बहुत्वस्य विहितत्वात्साम्य प्रतिपादनाच्चात्मव्यक्तिभेदनिषेधोऽनुपपन्न इत्यर्थः। हेत्वन्तरंचाह— **तस्येति**। अन्यथार्थश्चेदेतच्छ्लोकस्थपदानां व्याघातस्स्यादित्यर्थः। **उक्तत्वादिति**। सममित्यर्थ इत्यन्वयः, एकवचनोक्तौहि जातावेकवचनमिति निर्वाहः अन्यनिषेधपरस्य वचनस्यान्यथा निर्वाहायोगात् आत्मैकत्वसिद्धिरिति शङ्कायां यद्यन्योऽस्तीत्यादेः श्लोकस्यार्थमाह-**यदीति**। एकस्मिन्नर्थे द्वौ द्वौ शब्दौ प्रयुक्तौ * स्थानत्रये तेनान्यतरशब्दस्याकारपरत्वान्नात्मनिषेध इति परिह्रियते। तत्र द्वयोश्शब्दयोः कोऽर्थ इत्यत्राह-**तत्रेति**। परशब्देन धर्मिणमनूद्य तस्य शब्दान्तरोपस्थापिताकारान्तरान्वयो निषिध्यत इत्यर्थः एषोऽहमयंचान्य इति वक्तुमशक्यत्वं कथं? प्रत्यक्त्वपराक्त्वे भेदकधर्मौहि विद्येते इतिचेन्नैवं, प्रत्यक्त्वपराक्त्वयोः स्वपरापेक्षया सर्वात्मना साधारणतया व्यावर्तकत्वाभावात्। पूर्वं देवादिष्वन्यतमोऽयमित्यभिप्रायेण तद्विशेषबुभुत्सयाहि सौवीरराजेनादिभरतःपृष्टः। अतो देवाद्याकारनिषेधपरा इमे (श्लोका) शब्दा इति भावः॥

एवं पदार्थेसति श्लोकेन किमुक्तं भवतीति शङ्कायां वाक्यार्थं योजयति। **एतदुक्तमिति**। एष इति शब्दस्यार्थमाह-**एवमाकारइति**। अन्यशब्दार्थमाह-**अन्यादृशाकारइति**। अकारैक्यंनामाऽऽकाराणां सौसादृश्यमित्यभिप्रायेण एवमाकारो*ऽन्यादृशाऽऽकार इत्युक्तम्। अन्यथा स्वरूपमात्रप्रतिपत्तिरेकेनैव पदेन सिद्धेति पदान्तरवैयर्थ्यप्रसङ्गात्। पदान्तरमाकारपरमित्यर्थः। अस्यार्थस्य विपर्यये पर्यवसानमुत्तरश्लोकोक्तम्। सोऽनुदाहृतः तदर्थमाह—**नचैवमिति**। अयंहि स श्लोकः—

**यदा समस्तभूतेषु पुमानेको व्यवस्थितः। तदा हि को भवान् सोऽहमित्येतद्विफलं वचः॥**

इति। अत्रैकशब्द आकारैक्यपरः स्वयंप्रकाशत्व नित्यत्वाणुत्वादिस्सर्वात्मसाधारणः। व्यावर्तकदेवाद्याकारस्तु नात्मन्यास्ति।

## गूढार्थसङ्ग्रहः

**न आत्मैक्यं प्रतीयते इति**। 'यद्यन्योऽस्ति' इत्यतःपूर्वं 'आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज। शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत्॥' (वि.पु.२.१६.१८) 'अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः' (८२) 'पिण्डःपृथग्यतः पुंसश्शिरःपाण्यादिलक्षणः। ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहम्॥' (८५) इत्युक्तम्। अत्र परिणामभेदनिबन्धनसंज्ञाभेदवस्तु अहमिति ज्ञानं भ्रमः अतादृशे आत्मनि अहमिति न भ्रम इति स्पष्टमुक्तम्। 'यद्यन्योस्ति' इत्यनन्तरं 'यदा समस्तदेहेषु पुमानेको व्यवस्थितः। तदाहि को भवान् सोऽहमित्येतद्विफलं वचः

## श्रीभाष्यम्

सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति। 'वेणुरन्ध्रविभेदेन' इत्यत्राप्याकारवैषम्यमात्मनां न स्वरूपकृतम् अपितु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते। नात्मैक्यम्। दृष्टान्तेचानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम् अपित्वाकारसाम्यमेव। तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः एवमात्मनां देवादिसंज्ञाभेदः। यथा तैजसाप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव न स्वरूपैक्यम्। तथा वाय-

## श्रुतप्रकाशिका

व्यावर्तकाभावात् तद्वाचिशब्देन निर्देशोऽनुपपन्नः। प्रत्यक्त्वपराक्त्वपरोक्षत्वापरोक्षत्वादीनि न व्यावर्तकानीति को भवानिति प्रश्नस्तदतिरिक्ताकाराभिप्रायः॥

नहि भवानिति प्रश्नः; भवच्छब्दो धर्मिमात्रपरः। किंशब्दो व्यावर्तकदेवाद्याकारपरः। तस्मात्तदतिरिक्ताकाराभावेन न तद्वाचिशब्देन निर्देश उपपद्यत इत्यर्थः। **ज्ञानैकाकारत्वेन समानत्वादेवेति**। पूर्वोक्तादेवेति भावः। उक्तनिर्वाहागोचरं दृष्टान्तमुखेनाद्वैतपरत्वेन परोक्तस्य श्लोकस्यार्थमाह- **वेणुरन्ध्रे**ति। स्वतएकाकाराणामुपाधिवशादवान्तरभेदसद्भावमात्रे दृष्टान्तोपन्यासः। अन्यथा * सर्वथा साधर्म्याभ्युपगमेऽहि आत्मनोऽचित्त्वाकाशकार्यत्वादिकमपि स्यात्। तद्धि प्रमाणान्तरविरोधात्त्यज्यते तथा दृष्टान्तगतमाकारान्तरमपीति भावः। तथाऽसौ परमात्मन इत्युक्ते षड्जादिसंज्ञाभेदो माऽभूदित्यभिप्रायेणाह—**एवमात्मनां देवादिसंज्ञाभेद इति**। भेदष्षड्जादिसंज्ञितइति पाठेसत्यपि षड्जादिसंज्ञाभेद इति व्याख्यातम्। दुरवगमषड्जादिरूपभेदप्रतिपत्तिसौकर्यस्य संज्ञाभेदाधीनत्वादिति भावः। * दार्ष्टान्तिकेऽपि तथैव दृष्टान्ते व्यक्तिबहुत्वं किमस्तीति शङ्कायां वाय्वंशानामनेकत्वं तर्केण साधयति। **तैजसेति**। स्पर्शवद्द्रव्यत्वादिति भावः। * यत्रत्वाकाशदृष्टान्त उक्तः तत्राप्येकस्यात्मनो दृष्टान्तत्वेनाकाशमुक्त्वा आत्मान्तरे तथात्वमिति मन्तव्यम्।

**सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तदृष्टिभिरात्माऽपि तथैकस्सन् पृथक्पृथक्॥**

इति नभसः सितनीलादिभेदश्शरत्प्रावृट्सन्ध्यासमयेषु मेघोपश्लिष्टस्य तस्य यथाक्रमभावी। तथैकस्यात्मनोऽपि देहादिभेदः क्रमभावीति। यद्वा तत्रापि प्रदेशभेदाङ्गीकारेण सर्वात्मदृष्टान्तस्स्यात् आकाशस्य प्रदेशभेदानभ्युपगमे घटादेर्विभुत्वमाकाशस्याल्पत्वं वा प्रसजेत्। किं घटादेः कृत्स्नाकाशेन सम्बन्धः उत प्रदेशभेदेन पूर्वस्मिन् पक्षे घटादेर्विभुत्वमाकाशस्याल्पपरिमाणत्वं वा। द्वितीये प्रदेशभेदाङ्गीकारइति। * वेदान्तिभिर्नभसो निरवयवत्ववादोऽपसिद्धान्तः वेदान्तेषु तस्यांशभेदेन पञ्चीकरणोपदेशादेकांशेन वायुत्वेन परिणामवादादुत्पत्तिलयदर्शनाच्चेति। अतएव

## गूढार्थसंग्रहः

(८७) इति वक्ष्यते। अत्र 'पुमानेको व्यवस्थितः' इत्यत्र 'पुमान्न देवो न नर' इति वक्ष्यमाणानुसारेण पुंस्त्वविशिष्टस्य नैक्यं विवक्षितम्। किंतु प्रत्यक्त्वेन ज्ञानत्वेन वा। पूर्वोत्तरग्रन्थानुसारात्। एवं च 'यद्यन्योऽस्ति परःकोऽपि' इत्यत्रापि परिणामभेदनिबन्धन भेदएव आत्मसु नास्तीत्युच्यते। पूर्वं परत्र च परिणामभेदनिबन्धनभेदस्यैव प्रतिपादनात्। अतश्च परिणामभेदानिबन्धनभेदशून्येष्वात्मसु अहमिति शब्दवत् विज्ञानशब्दोऽपि युक्त इत्यत्र वचनतात्पर्यविश्रम इति भावः॥ **वेणुरन्ध्रविभेदेनेत्यत्रापीति**। 'तस्यात्मपरदेहेषु' इति श्लोकानन्तरश्लोकोऽयम्। अतः ज्ञानाकारेण साम्यमेवात्र विवक्षितमिति भावः॥

## श्रीभाष्यम्

वीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः। 'सोऽहं सचत्वम्' इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं तच्छब्देन परामृश्य तत्सामानाधिकरण्येनाहं त्वमित्यादीनामर्थानां ज्ञानमेवाकारइत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह। अन्यथा देहातिरिक्तात्मोपदेश्यस्वरूपे अहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो नघटते। अहंत्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न

## श्रुतप्रकाशिका

घटध्वंसे घटाकाशो न भिन्नो नभसा यथा। ब्रह्मणा हेयविध्वंसे विष्णवाख्येन तथा पुमान्॥

इति शौनकवचनमपि * नभस्यंशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैधर्म्यविरहे दृष्टान्तसमर्पणपरं वेदितव्यम्। 'यथाऽग्निरग्नौ सङ्क्षिप्तस्समानत्वमनुव्रजेत्' इति * तत्रैव साम्यदृष्टान्ताभिधानात्। अथादिभरतनिगमनश्लोकमाह—सोऽहमिति। पूर्वोक्तं * अध्यायचतुष्टयोक्तम्। स इति पदस्य ज्ञानाकारविशिष्टवस्तुवाचित्वेऽपि विशेषणांशे तात्पर्यं दर्शयितुं सर्वात्मनां ज्ञानाकारत्वमिति विशेषणांशस्य निष्कृष्य निर्देशः। अन्यथा तत्सामानाधिकरण्येनेत्यनन्तरोक्तिविरोधात्। ज्ञानमेवाकारइत्युपसंहरन्निति। सोऽहमित्यादिश्लोकानन्तरपूर्वश्लोके 'एकस्समस्तं यदिहास्ति किंचित् तदच्युतो नास्ति परं ततोऽन्यत्' इत्यर्धेन सर्वात्मनां भगवच्छरीरत्वस्योक्तत्वात् सोऽहमित्यादिश्लोकस्य भगवदात्मकत्व निगमनपरत्वशङ्का स्यात्। तच्चायुक्तम् प्रकरणस्य शरीरात्मविवेकपरत्वात्, तन्निगमनस्यचापेक्षितत्वात्तन्निगमनपरश्लोकान्तराभावादपेक्षितविधेरनपेक्षितविधानायोगाच्च, आत्मनां देहव्यावर्त(कज्ञानै)कैकाकारत्वनिगमनपरोऽयं श्लोक इत्यभिप्रायः। त्यज भेदमोहमित्यंशस्यार्थमाह—देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेति। देवादिशब्दो भेदशब्दविवरणरूपः। देहगतदेवत्वाद्याकारभेदआत्मनिभेदमोहहेतुः * तं भेदमोहं परित्यजेत्यर्थः॥

कृत्स्नभेदनिषेधपरत्वेऽनिष्टमाह—अन्यथेति। नचाहंत्वमादिशब्दा देहपराः नहि तच्छब्देनात्मानं परामृश्य तेनात्मना देहानामैक्यमुपदिश्यते नाप्यन्तःकरणपराः नह्यन्तःकरणानां परमात्मनैक्यं परस्परैक्यं वोपादिश्यते। नापि देहविशिष्टान्तःकरणपराः, नहि देहविशिष्टानामन्तःकरणानामैक्यमुपदिश्यते। अतोऽहंत्वमादिशब्दा देहातिरिक्तात्मपरा इत्यभिप्रायेण देहातिरिक्तेत्युक्तम्। अहंत्वमित्यादिपदानामुपलक्षणत्वादुपलक्ष्ये वस्तुनि न भेद इत्याशङ्क्य परिहरति अहमिति। अहं त्वमादीत्यादिशब्देन सर्वशब्दो विवक्षितः। उपलक्ष्येणेत्यौपचारिकनिर्देशः उपलक्ष्यवाचिपदेनेत्यर्थः। सर्वमेतदात्मस्वरूपमित्यनेनेति। * अहं त्वं सर्वमिति त्रयाणामपि पदानां आत्मस्वरूपशब्देन सामानाधिकरण्यं फलितं तेष्वन्य-

## गूढार्थसंग्रहः

सोऽहं सच त्वमित्यादि। एतत्पूर्वं 'तथात्वमपि धर्मज्ञ तुल्यात्मरिपुबान्धवः। भव सर्वगतं जानन्नात्मानमवनीपते॥' (वि.पु.२.१६.२१) इत्युक्तम्। अत्र 'तुल्यात्मरिपुबान्धव' इत्युक्त्या ज्ञानाकारसाम्यमेव स्फुटीकृतं तेनैव सर्वगतत्वम्। एवं च 'सोऽहं सचत्वम्' इत्यत्र तच्छब्दस्यापि 'विज्ञानं परमार्थोहि' इत्यत्रोक्तविज्ञानाकारएवार्थः। 'सर्वमेत' दिति उक्तान्यजीवपरमिति सिद्धान्तसिद्धाञ्जनेऽप्युक्तम्। 'नत्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः। नचैव न भविष्यामः सर्वे वयमतःपरम्॥' इति गीतायां 'नेमे जनाधिपा' इति अहं त्वं इत्युक्तात्मभिन्नात्मनिर्देशवत्। 'सर्वमेतत्' इति गीतायां 'सर्वे वयम्' इति निर्देशेन सर्वेषामप्यहमर्थत्वं नित्यत्वं च प्रदर्शितम्। अत्रतु ज्ञानाका-

## श्रीभाष्यम्

**सङ्गच्छते । सोऽपि यथोपदेशमकरोदित्याह तत्त्याजभेदं परमार्थदृष्टिरिति । कुतश्चैष निर्णय इतिचेत् देहात्मविवेकविषयत्वादुपदेशस्य । तच्च 'पिण्डः पृथग्यतः पुंसश्शिरःपाण्यादिलक्षण इति प्रक्रमात् । 'विभेदजनकेऽज्ञान' इति च**

## श्रुतप्रकाशिका

तमेनाहंत्वमर्थसजातीयार्थवाचिना सर्वमेतदिति पदेनात्मस्वरूपशब्दस्य सामानाधिकरण्यनिर्देशादिति ज्ञापनार्थं सर्वमेतदात्मस्वरूपमित्युपादानं कृतं भाष्ये श्लोके सर्वमेतदात्मस्वरूपमिति प्रदर्शनार्थमुक्तम् । अतोहंत्वमादिशब्दानामुपलक्ष्यवाचकाभिमतात्मस्वरूपशब्देन सामानाधिकरण्यादहंत्वमादिशब्दवाच्यानामर्थानामुपलक्षणत्वमसङ्गतम् । नहि चन्द्रश्शाखा, सारसः केदारः, इत्युपलक्षणोपलक्ष्यवाचिशब्दानां सामानाधिकरण्यं मुख्यतया दृष्टमित्यर्थः । लक्षणयास्त्वितिचेत् लक्षणैव दोषइति भावः ॥

* यद्वा अनेनेति पदमुपलक्ष्य विशेषणम् । सर्वमेतदात्मस्वरूपमित्यात्मशब्दनिर्दिष्टेनानेनोपलक्ष्येणाहंत्वमादिशब्दानां सामानाधिकरण्यादुपलक्षणत्वमसङ्गतमित्यर्थः । अस्यां योजनायामहंत्वमादिसजातीयार्थवाचि सर्वपदसामानाधिकरण्यनिर्देशस्य हेतुत्वमर्थसिद्धम् । * यद्यहंत्वमादिशब्दा उपलक्ष्यपर्यन्तवृत्तयस्तदानीमिवमर्थतयोपलक्ष्यवाचिनाम स्वरूपमिति पदेन स इति पृथक्सामानाधिकरण्यदर्शनादुपलक्षणवाचकाहंत्वमादिसामानाधिकरण्यवैयर्थ्यमिति । * अहंशब्दस्यापेक्षिकप्रत्यक्त्वं प्रवृत्तिनिमित्तं, त्वंशब्दस्य च चेतनत्वे सत्यभिमुखत्वं, आत्मशब्दस्य च व्यापनक्षमत्वं, स इति पदस्य * प्रकृतज्ञानाकारः । ननु सच सर्वमेतदात्मस्वरूपमित्यत्र कथमात्मस्वरूपाविशेषणस्य तच्छब्दस्य पुल्लिङ्गत्वमुच्यते— 'आत्मा शुद्धोऽक्षरश्शान्तः' इत्यादिषु परज्ञानमयत्वेन * प्रकृत आत्माहि तच्छब्देन परामृश्यते अतो न विरोध इति अचित्संसृष्टं देवादिरूपेण प्रतीयमानं सर्वमेतदात्मस्वरूपं ज्ञानैकाकारस्स आत्मेत्यर्थः । चतुर्थपादं व्याचष्टे **सोऽपीति** । न जीवब्रह्माद्वैतपरमिदं प्रकरणं नचात्मस्वरूपबहुत्वनिषेधपरं (आ)प्र)कारैक्यपरमिति कथं ज्ञायत इत्यभिप्रायेणाह—**कुतश्चेति** । परिहरति **देहात्मेति** । तदपि कुतइत्याह—**तच्चेति** । देहात्मविवेकपरत्वोपपादनेन जीवपरैक्यपरत्वमात्मबहुत्वनिषेधपरत्वं च दत्तोत्तरमेव ॥

अथ शास्त्रोपसंहारगतस्य 'विभेदजनक' इत्यादिश्लोकस्यार्थं वक्ष्यन् अर्थान्तरपरत्वं व्युदस्यति । **विभेदेत्यादिना** । * प्रथमं किमात्मस्वरूपैक्यपरं उत जीवपरैक्यपरमिति विकल्प्य दूष्यते । अत्र चशब्दाभावादात्मब्रह्मशब्दयोः

## गूढार्थसंग्रहः

त्वमहंत्वमाद्यर्थानां आत्मस्वरूपत्वं च बुबोधयिषितम् । 'भेदमोहम्' इत्युक्तभेदः 'देहादिभेदे' इति पूर्वोक्तभेद एव विवक्षितः नत्वन्यः । 'तत्त्याजभेदं परमार्थदृष्टिः' इत्यत्र 'विज्ञानं परमार्थोहि' इति प्रागुक्तज्ञानात्मदृष्टिः देवादिभेदमोहं तत्त्याजेत्यर्थः । इत्युपसंहारश्लोकस्यास्य प्रागुक्तानुसारेणार्थ एव पराशरस्याभिप्रेत इति भावः ॥

**तच्च पिण्डः पृथग्यतः पुंसश्शिरःपाण्यादिलक्षण इति प्रक्रमादिति ।** एतत्प्रघट्टकार्थः (भावप्रकाशे द्वितीयसम्पुटे. ११) विस्तरेण निरूपितस्तत्रैवानुसन्धेयः ॥

**विभेदजनकेऽज्ञाने इत्यादि ।** पञ्चपादिकायां 'अनादिसिद्धाविद्यावच्छिन्नानन्तजीवनिर्भासास्पदं एकरसं ब्रह्मेति श्रुतिस्मृतिन्यायकोविदैरभ्युपगन्तव्यम्' इत्युक्तिविवरणे 'विभेदजनकेऽज्ञाने' इत्यादिस्मृतिरित्युक्तम् । अत्र 'विभेदजनके-

### श्रीभाष्यम्

**नात्मस्वरूपैक्यपरम् नापि जीवपरयोः। आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम्। जीवपरयो-रपि स्वरूपैक्यं देहात्मनोरिव नसम्भवति। तथा च श्रुतिः**

### श्रुतप्रकाशिका

सामानाधिकरण्यं सम्भावितम्। तथासति ब्रह्मशब्दः शुद्धावस्थपरस्स्यात्। एवं शुद्धावस्थाजीवस्य भेदो नास्तीति जीव-स्वरूपैक्यं स्यात् अतश्शङ्काऽऽस्पदीभूतमात्मैक्यपरत्वं दूषयति। **आत्मेति**। उक्तरीत्या श्रुतिस्मृत्यर्थापत्तिलौकिकार्थापत्त्या-दिभिरित्यर्थः। द्वितीयं पक्षं दूषयति। **जीवेति**। **देहात्मनोरिवेति**। विरुद्धधर्मत्वादित्यर्थः। प्रत्यक्त्वपराक्त्वजडत्वा-जडत्वनित्यत्वपरिणामादिभिर्विरुद्धधर्मैर्यथा देहात्मनोर्भेदः, तथा जीवपरयोरपि हेयार्हत्वोभयलिङ्गत्वनियाम्यत्वनियन्तृत्वादि-विरुद्धधर्मैरैक्यंहि नोपपद्यते। विरुद्धधर्मत्वे प्रमाणमाह—**तथाचेति**। तथा विरुद्धधर्मत्वइत्यर्थः चोह्यर्थः हेतुवाची। वक्ष्य-

### गूढार्थसंग्रहः

ऽज्ञाने' इति श्लोके आत्मस्वरूपभेदः जीवपरभेदश्च भावरूपाज्ञाननिबन्धनः, तत्त्वतो भेदाभावात् इत्यर्थोऽभिमतःपरा-शरस्येति पराभिप्रायमाशङ्क्याह—**नात्मस्वरूपैक्यपरमित्यादि**॥

'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन।' (वि.पु.६.७.१०) इत्यादौ देहेऽहमिति भ्रमः गृहक्षेत्रादौ ममेति भ्रमश्च पूर्वमुक्तः 'विभेदजनके' इत्येतदुत्तरं 'अहं ममेत्यविद्येयं व्यवहारस्तथाऽनया।' इति वक्ष्यते, अत्रापि 'श्रूय-तांचाप्यविद्यायाः' इत्यत्रोक्तभ्रमद्वयमेव विवक्षितमिति स्फुटमिति 'विभेदजनकेऽज्ञाने' इत्यत्र पूर्वं परत्रचोक्तभ्रमरू-पज्ञानविवक्षैवाङ्गीकार्या नतु भावरूपाज्ञानविवक्षा तदङ्गीकारेच न पराभीष्टसिद्धिः। 'अहं ह्यविद्यया मृत्युं तर्तुकामःकरोमि वै। राज्यं यागांश्च विविधान्' (४.७.९) इत्यत्र 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते।' (६.७.६१) इति वक्ष्यमाणकर्मैव विवक्षितमिति स्फुटम्। तद्विवक्षायामेव एतच्छ्लोकसङ्गतिः। 'देहादिभेदेऽपध्वस्ते' 'पुमान्न देवो न नरः' 'भूपैते कर्मयोनयः' इत्यत्र देवादिभेदस्य कर्ममूलकत्वं स्पष्टं विष्णुपुराणएवोक्तमिति देवादिभेदहेतुत्वं कर्म-शब्दिताज्ञानस्य पराशराभिप्रेतमेव, तदेवात्र विवक्षितमित्युत्तरत्र निर्णेष्यते॥

**आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धमिति**। विष्णुपुराणे प्रागुक्तरीत्येत्यर्थः, 'सोऽहं सन्चत्वं सच सर्वमेतदात्म स्वरूपम्' इत्यत्र अस्मद्युष्मच्छब्दार्थस्य परिशुद्धस्यैवात्मस्वरूपत्वकथनात्। 'आत्मन्येष न दोषाय शब्दोऽहम्' इति उक्तार्थस्य स्थापनात्। 'यैः स्वधर्मपरैर्नाथ नरैराराधितो भवान्। ते तरन्त्यखिलामेतां मायामात्मविमुक्तये॥' इत्यत्र बहूनां जीवानां परविद्याऽऽराधनेन आत्मविमुक्त्यर्थं मायातरणस्य प्रतिपादनेन धर्मभूतज्ञानघटितव्यापकताश्रयजीवानां धर्म-भूतज्ञानसङ्कोचविमुक्त्यर्थं मायातरणमेव श्रुतौ विवक्षितं न परमतरीत्या अधिष्ठानतत्त्वज्ञानेन मिथ्याभूतभावरूपाज्ञान-निवृत्तिरिति स्फुटं प्रतिपादनेन विष्णोर्मुक्तिहेतुत्वस्य 'विष्णवे मुक्तिहेतवे' 'विष्णुर्मुक्तिफलप्रदः' इत्युपक्रमोपसंहारो-क्तस्य स्थापनाच्च आत्मस्वरूपैक्यं न सम्भवतीति भावः॥

**देहात्मनोरिति**। देहात्मनोरविभागेन यथा ऐक्यभ्रमः तथा जीवपरयोरपि अविभागेनैक्यभ्रमः। देवादि-शब्दानां शरीरवाचिनां शरीरसंयुक्तजीवे व्युत्पत्तिमतां यथा नैक्यप्रतीतिः तथा जीववाचिशब्दानां परमात्मनि वेदान्त-व्युत्पत्तिमतां नैक्यभ्रमः उभयत्राविभागएवार्थैक्ये मूलमिति 'अर्थैक्यमविभागात्' इति जैमिनिनैव स्थापितमिति भावः

श्रीभाष्यम्

**'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'**

श्रुतप्रकाशिका

माणहेतूनां पञ्चमी प्रयुक्ता तत्स्थानीयोऽयं चशब्दः समानं वृक्षं शरीरं पिप्पलं कर्मफलं अभिचाकशीति स्वयमनश्नत्वादशयितृत्वाच्च भृशं भातीत्यर्थः॥

**ननु** कथमस्य मन्त्रस्य जीवपरमात्मभेदपरत्वम्? अन्तःकरणजीवपरोह्ययं मन्त्रः पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य तथाव्याख्यातत्वात। यथा '**तयोरन्यःपिप्पलं स्वाद्वत्ति**' इति सत्त्वम्, **अनश्नन्नन्यो अभिचाकशीति** इतिज्ञः, तावेतौसत्त्वक्षेत्रज्ञाविति। स्वाद्वत्तीत्यन्तेन सत्त्वमुक्तम् अभिचाकशीत्यन्तेन वाक्येनानश्नन्नन्यो ज्ञइति क्षेत्रज्ञोऽभिपश्यतीत्युक्तमितिव्याख्यातत्वमवगम्यते। नच सत्त्वशब्दो जीवपरः, क्षेत्रज्ञशब्दः परमात्मपरइति वाच्यम्; सत्त्वक्षेत्रज्ञशब्दयोरन्तःक

गूढार्थसंग्रहः

उक्तार्थ एव श्रुतौ विवक्षित इत्यभिप्रेत्य श्रुतिद्वयमुदाहरति—**द्वासुपर्णा सयुजा सखाया इत्यादि**। इदं च श्रुतिद्वयं परैरपि 'इयदामननात्' इति सूत्रे विभिन्नजीवेश्वरपरतयैव व्याख्यातम्। एवमुपनिषद्भाष्येऽपि (श) अत्रच श्रुतिद्वये शरीरान्तर्वर्तित्वं जीवेशयोः स्फुटम्। तेनचोभयोरविभागस्सिद्धः, तेन च भ्रमनिमित्तमपि सूचितम्। एवं शरीरवाचित्वेन लोके प्रसिद्धशब्दानां शरीरिपर्यन्ततया अभेदनिर्देशे मूलमप्यत्रैव विवक्षितम्। अत्र श्रुतिद्वये 'द्वासुपर्णा' इत्यस्य श्वेताश्वतरमुण्डकोपनिषद्गतत्वेन ऋगथर्ववेदद्वयसंहितागतत्वेन श्वेताश्वतरोपनिषदि सिद्धान्तिसम्मतार्थस्य पूर्वश्रुतिबलादपि निष्कर्षसम्भवाभिप्रायेण च प्रथमतः उपादानम्। इयं च श्रुतिः चतुर्थे (६) पठिता, तत्र च 'य एकोऽवर्णो बहुधा शक्तियोगात् वर्णाननेकान्विहितार्थो दधाति। विचैति चान्ते विश्वमादौ स देवः' इति उपक्रमे श्रूयते। अत्र 'तद्वोभयंवै प्रणवेन देहे' (१.१३) इति प्रणवघटकाकारार्थत्वेन 'क्षरात्मानावीशते देवएकः' इति प्रथमेऽभिहितः जीवस्येश्वरभूतः परमात्मा विवक्षितः। अनन्तरं 'तदेवाग्निस्तद्वायुः' इत्याद्यभेदनिर्देशः प्रथमाभिहित परमात्मतदितरसम्बन्धविशेषनिबन्धनः प्रतिपत्तव्यः। 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (४.५) इत्येतत्पूर्वश्रुतिः। 'अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'ज्ञाज्ञौ द्वावजावीशनीशौ अजाह्येका भोक्तृभोगार्थयुक्ता' 'अनन्तश्चात्मा विश्वरूपोह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्' इति (१.९) श्रुतिद्वयप्रतीतार्थः चतुर्थश्रुतिद्वये विवक्षित इतिप्रतीयते। 'अनीशश्चात्मा बध्यते भोक्तृभावात्' 'अजाह्येका भोक्तृभोगार्थयुक्ता' 'तयोरन्यःपिप्पलं स्वाद्वत्ति' 'अजोह्येको जुषमाणोऽनुशेते' इति श्रुतिभागद्वयमेकार्थकमिति स्फुटम्। 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'द्वासुपर्णा सयुजा सखाया' इत्यनयोरप्येकार्थत्वम्। 'ज्ञाज्ञौ' इत्यत्रोक्तमज्ञत्वं जीवस्य 'द्वासुपर्णा' इत्यनन्तरं 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' इत्यत्र स्फुटम्॥

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति तदुत्तरार्धे 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः, त्रयं यदा विन्दते ब्रह्ममेतत्' इति प्रथमश्रुत्यर्थानुगुणार्थकम्। 'द्वासुपर्णा' इत्यत्र 'सुपर्णा' विति द्विवचनेनैव द्वित्वलाभे द्विशब्दप्रयोगेण जीवपरभेदसाधकं द्वित्वं सार्वदिकमिति

### श्रुतप्रकाशिका

रणजीवपरतया प्रसिद्धत्वात् 'तदेतत्सत्त्वं येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ' इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरत्वेन तत्रैव व्याख्यातत्वाच्च, येन पश्यतीति करणत्वप्रतीतेः सत्त्वंह्यन्तःकरणं स्वप्नद्रष्टृत्वादितरः क्षेत्रज्ञोहि जीवः। अतो द्वासुपर्णा इति मन्त्रोऽयमन्तःकरणजीवपरः नतु जीवपरमात्मपरइति। उच्यते—न तावज्जीवपरमात्मपरत्वमस्य मन्त्रस्यापवदितु शक्यते, अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने 'समाने वृक्षे पुरुषो निमग्न' इत्यनन्तरमन्त्रे जीवपरमात्मनोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैकार्थ्याच्च 'समानं वृक्षं परिषस्वजाते' 'समाने वृक्षे पुरुषो निमग्न' इति तयोरैकार्थ्यंहि प्रतीयते, 'समाने वृक्ष' इति मन्त्रे च पुरुषो जीवः अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात् 'शोचति मुह्यमानः' 'पश्यति वीतशोकः' इति पदानामस्वारस्य-

### गूढार्थसंग्रहः

बोधितम्। जीवस्याज्ञत्वं ईश्वरस्य सर्वज्ञत्वमभिधाय देवज्ञानानन्तरमज्ञत्वनिवृत्तिकथनेन देवस्य क्षराक्षरनियामकस्य प्रथमे एकत्वकथनेन च जीवस्य बद्धमुक्तभेदेन द्वैविध्यं परमात्मनो न कदाऽपि बन्ध इत्यादिकं सिद्ध्यति। 'अनीशया शोचति मुह्यमानः' इत्यत्र 'मोहप्रयुक्तनानीशया ईशत्वस्य विरोधिना ईशभेदेन शोचति संसरति' इत्यज्ञानश्रुत्युपपत्तौ श्रुत्यर्थमभिधाय तदुपष्टम्भकतया 'विभेदजनकेऽज्ञाने' इत्यस्य चन्द्रिकाद्वये उपादानं, 'समाने वृक्षे' इत्युपनिषद्भाष्ये 'पुरुषः भोक्ता जीवः अनीशया न कस्यचित्समर्थोऽहं पुत्रो मम विनष्टः, मृता मे भार्या किं मे जीवितेनेत्येवं दीनभावः अनीशा तया शोचति' इत्युक्तेः, 'न कस्यचित्समर्थोऽहं दीन इति सम्भावना अनीशा' इत्यत्र-धिकरणभामतीकल्पतरूक्तेश्च विरुद्धत्वात्, 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्येतत्पूर्वं 'ज्ञाज्ञौ द्वावजावीशनीशौ अजाह्येका' इत्यत्र अनीशत्वेन प्रतिपन्नप्रकृतेः जीवबन्धकत्वोक्त्या तत्समानार्थकायामस्यां श्रुतौ तस्यैवार्थस्य युक्तत्वेन श्रुत्यक्षरस्वारस्येन च अनुपादेयम्। अतश्च 'ज्ञाज्ञौ द्वौ' इत्यत्रोक्ताज्ञत्वमेव जीवस्य 'अनीशया शोचति मुह्यमानः' इत्यत्र विवृतं भवति॥

एतेन 'द्वासुपर्णा' (ऋ.१.१६४.२०) इति श्रुतिविवरणसायणीये 'समाने वृक्षे' इत्यस्यायमर्थः। एक एव शरीरे पूर्णःपरमात्मा निमग्नः निगूढस्सन् ईश्वरोऽप्यनीशत्वबुद्ध्या मुह्यमानो मूढस्सन् शोचति। यदातु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतं ईशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति। तदा वीतशोकः देहाद्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयस्सन्, अस्य महिमानमिति। निरस्तसमस्तोपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्य सर्वज्ञत्वादिमहिमानं इति—एति प्राप्नोति नच तद्भावनाऽऽसौ तन्महिमा प्राप्यते अतस्तद्रूपो भवतीत्यर्थः' इति विवरणमभिनिवेशमूलकमेव। अत्र पुरुषशब्दस्य जीवार्थकत्वस्यैव शङ्करभाष्ये उक्तेः॥ 'ज्ञाज्ञौ द्वौ' इत्येतत्समानार्थकतया श्वताश्वतरोपानषद्वाक्यस्य तत्र जीवत्वस्याज्ञत्वस्य 'अनीशया शोचति मुह्यमान' इति विवरणेन पुरुषपदार्थो जीव एवेति निर्धारणात्। 'अनीशया' इत्यस्य 'अनीशत्वबुद्ध्या'त्यर्थवर्णनमपि स्वोत्प्रेक्षानिबन्धनमेव। 'अजाह्येका भोक्तृभोगार्थयुक्ता' इत्यादिश्रुत्यनुसारेण अजायाःप्रकृतेरेव अनीशशब्दार्थत्वस्य स्फुटं प्रतीतेः॥ एतदुत्तरं (श्वे) 'अस्मान्मायीसृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्यत्र प्रकृतेरेव मोहहेतुत्वप्रतिपादनाच्च। अत्र 'अन्य' इत्यत्रोपाध्यनिर्देशेन ईशजीवभेदस्तात्विकएवेति प्रतीत्या जीवपरभेदः काल्पनिकइत्युक्तिरयुक्तेति सूचितम्। एवं च सायणीयाद्युक्तोऽर्थो न घटते॥

'जुष्टं यदा पश्यति' इत्यत्र मुह्यमानस्यैव दर्शनकर्तृत्वेन मुह्यमानान्यत्वमेव ईशे विवक्षितमिति स्फुटं प्रतीत्या 'पश्यति' इत्यत्र स्वानन्यतया साक्षात्करोतीत्यर्थस्य स्वोत्प्रेक्षामात्रनिबन्धनत्वात्। 'अस्य' इत्यत्र ईशएव विवक्षितः।

## श्रुतप्रकाशिका

प्रसङ्गाच्च । अन्यश्च परमात्मा ईशशब्दवाच्यत्वात् स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च । न केवलमुत्तरमन्त्रैकार्थ्याद्वा-सुपर्णेति मन्त्रस्य जीवपरमात्मपरत्वं किंतु तस्मिन्नेव स्वाद्वत्ति अनश्नन्नन्य इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च, तदवसीयते—चक्षुश्श्रोत्रादीनां द्रष्टत्वश्रोतृत्वादिवत् अन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं न सम्भवति । जीवस्य च वृक्षशब्दोक्त-देहपरिष्वङ्गदाशायामेवानश्नत्त्वमपि नोपपद्यते तर्हि पैङ्गिरहस्यब्राह्मणस्य कोऽर्थः । उच्यते सत्त्वं बद्धजीवः 'द्रव्यासु व्यवसायेषु सत्त्वमस्त्रीतु जन्तुषु ।' इति नैघण्टुकपाठात् जन्तुपरत्वावगतेः जन्तुः चेतनः 'प्राणीतु चेतनो जन्मी जन्तुजन्यशरीरिणः ।' इति पाठात्

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्यात्त्रिभिर्गुणैः ॥

## गूढार्थसंग्रहः

ननु परमतसिद्धनिरस्तसमस्तविशेषोपाधिकः निर्विशेषरूपः । तद्बोधकशब्दस्य पूर्वमभावात् । महिमन्शब्दस्य 'देवस्यैष महिमातु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' इति षष्ठे वक्ष्यमाणार्थस्यैव युक्तत्वेन सार्वात्म्यरूपार्थस्य तदवलम्बनेन तद्रूपो भवतीत्यर्थस्यचात्र प्रतीतिरसम्भवात् । 'महिमानं विभूतिम्' इति (शं) भाष्ये उक्तेश्च । अत्र प्राप्तिरनुभवरूपेति मुक्तस्य विभूत्यनुभव एवात्र विवक्षितः ॥

एवं च कर्ममूलबन्धस्य मोक्षस्य च भागित्वं जीवस्य इति स्वभिन्नेशज्ञानं मुक्तिहेतुरिति च प्रतिपादनेन जीवेश-भेदस्तात्त्विक इति सिद्धयति । जीवब्रह्माभेदबोधकपदस्य कस्यचिदप्यत्राभावेन अभेदज्ञानविवक्षाया असम्भवात् । ऋक्सं-हितायां 'द्वासुपर्णा' इति श्रुत्यनन्तरं 'यत्रासुपर्णाऽमृतस्य भागमनिमेषं विदथाभिस्वरान्ति । इनो विश्वस्य भुवनस्य गोपाः समाधीरः पाकमत्राविवेश । यस्मिन् वृक्षे मध्वदस्सुपर्णा निविशन्ते सुवतेचाधिविश्वे । तस्येदाहुःपिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद' (म.१.सू.१६४.म.२१,.२२) इति श्रुतिद्वयं श्रूयते । एतच्छ्रुतित्रयं 'अस्य वामस्य' इति सूक्तघटकम् । 'अस्य वामस्य सूक्तंतु जपेच्चान्यत्र वा जले । ब्रह्महत्यादिकं दग्ध्वा विष्णुलोकं च गच्छति ।' इति ऋग्विधाने शौनकेनास्य सूक्तस्य विनियोग उक्तः वृद्धहारीतेनतु स्मृतौ कृष्णार्चने इति भिदा । सूक्ते 'कृष्णं नियानं' (४७) 'विष्णोस्तिष्ठान्ति' (३६) इति श्रुतिद्वये कृष्णविष्णुशब्दद्वयमत्र मूलम् । अत्र एतत्सूक्ते 'एकं सद्विप्रा बहुधा वदान्ति' (४६) इत्यत्र एकः विष्णुरित्येतेन सिध्यति । एतत्सूक्तान्ते 'यज्ञेन यज्ञमयजन्त' इत्यादिश्रुतेर्विवरणे 'यज्ञेन ज्ञानादियज्ञेन, यज्ञं विष्णुमयजन्त । ते नाकं विष्णुलोकं महानुभावाः सचन्ते सङ्गच्छन्ते । यत्र पूर्वे साध्यादयः देवाः सान्तिं तत् स्थानम्' इति सायणीये उक्तम । एतेन परमात्मपरत्वमस्य सूक्तस्य निश्चीयते ॥

एवं च 'द्वासुपर्णा' इत्यादौ विष्णवाराधनभूतमुक्तिहेतुज्ञानं प्रतिपिपादयिषितमिति स्फुटम् । उपनिषदि 'द्वा सु-पर्णा' इत्यनन्तरं 'समाने वृक्षे' इति श्रुताविवात्रापि 'यत्रासुपर्णा' 'यस्मिन् वृक्षे' इति श्रुतिद्वये जीवस्य मोक्षे बन्धश्च प्रतिपिपादयिषितः । अत्र 'सुपर्णा' इति बहुवचनेन पूर्वश्रुत्युक्तसुपर्णपदार्थजीवा एव विवक्षिताः । 'यत्र सः' इत्यत्र परमात्मा यत्तच्छब्दार्थः । 'अमृतस्य भागम्' इत्यत्र भागशब्देन पुत्राणां लोके दायभागवत् जगतः पितुः परमा-त्मनः पुत्राणां जीवानां मोक्षो भागः इति सूचितम् । 'विदथा वेदनेन अभिस्वरन्ति, अभिप्रयान्ति' इति सायणीय उक्तोऽर्थ एव ग्राह्यः 'अनिमेषम्' इत्यनेन ज्ञानस्य ध्यानरूपत्वं बोधितम् । सः—परमात्मा विश्वस्य इनः स्वामी भुवनस्य गोपाः जगतः गोपायिता रक्षकः । धिया—रमत इति धीरः सर्वज्ञः । पाकं—'पोतःपाकोऽर्भको डिम्भः' इति कोशात् पाके

श्रीभाष्यम्

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायाऽऽतपौ ब्रह्मविदो वदन्ति

श्रुतप्रकाशिका

इति प्रयोगात् 'वन्यान्विनेष्यन्निव दुष्टसत्त्वान्' इत्यर्वाचीनप्रयोगाच्च। क्षेत्रज्ञशब्दश्चात्र परमात्मपरः अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः। 'विष्णोर्नामसहस्रं मे' इत्युपक्रम्य 'क्षेत्रज्ञोऽक्षरएव च' इति प्रयोगात्। क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च। मोक्षधर्मे--

ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा। प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः। ... ... ... ...
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः। एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥
क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे। तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥

इति प्रयोगात्

योऽस्याऽऽत्मनःकारयिता तं क्षेत्रज्ञं प्रचक्षते। यःकरोति च कर्माणि स भूतात्मेति चोच्यते ॥

इति प्रयोगाच्च। येन स्वप्नं पश्यतीत्यत्र येनेतीत्थं भावे तृतीया येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते, ततश्च---

गूढार्थसङ्ग्रहः

पुत्रं, मा माम् अत्र मुक्तिप्राप्तिदेशे आसमन्ताद्विवेश प्राप। अत्र पुत्रस्य पितृप्राप्तिदशायां परमात्मनोऽपि पुत्रप्राप्तिः विवक्षिता। एतेन राजकुमारनयस्सूचितः। राज्ञः पुत्रप्राप्तीच्छा पुत्रस्य राजप्राप्तीच्छा च यथा तथा जीवस्य परमात्मप्राप्त्यिच्छा परमात्मनोजीवप्राप्तीच्छा च वर्तत इति उभयोस्सङ्गतिः। समन्वयाधिकरणभाष्येचायमर्थो वक्ष्यते। 'तावुभौ तत्र सङ्गच्छेते' इति व्याधगृहस्थराजपुत्रस्य राज्ञः पुत्रोऽहमिति गुरुमुखात् ज्ञानाद्यनन्तरमिव जगत्पितृपरमात्मज्ञानानन्तरं तत्पुत्रजीवस्य परमात्मप्राप्तिरत्र प्रतिपादिता ॥

यश्चैतादृशज्ञानशून्यः तस्य बन्धं दर्शयति 'यस्मिन् वृक्ष' इति। 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्' इति कठश्रुतिभाष्ये (शं) 'मध्वदं कर्मफलभुजं जीवम्' इतिविवरणेऽत्रापि मध्वदःकर्मफलभुजः सुपर्णाः जीवा विवक्षिताः। 'निविशन्ते प्रविशन्ति सुवते च उद्यन्ते स्वस्वविषयान् लभन्ते' इति सायणीयानुसारेण आत्मव्यतिरिक्तविषयान् प्राप्नुवन्तीत्यर्थः। 'तस्येदाहुः पिप्पलं स्वाद्वग्रे' इत्यत्र तयोरन्यःपिप्पलं स्वाद्वत्ति' इति श्रुत्यर्थ एवोक्तः। तस्य पूर्वश्रुत्युक्तपितृप्राप्त्यभावे हेतुमाह--'तन्नोऽन्नशद्यः पितरं न वेद'इति 'न उत् नशत् इति छेदः। नशतिर्गतिकर्म तत्फलं न प्राप्नोति' इति सायणीयानुसारेण पितृज्ञानाभावएव तत्प्राप्त्यभावे हेतुरित्यर्थः। एतेन राजकुमारन्यायस्य द्रमिडाचार्योक्तस्य 'औपानिषदपरमपुरुष' इति सूक्तिविवरणावसरे प्रदर्शितस्य अत्र सम्यग्विवक्षितत्वस्य स्फुटतया जीवब्रह्माभेदे तदयोगेन जीवब्रह्मभेद एव 'द्वासुपर्णा' इति मन्त्रे तात्त्विकः विवक्षित इति सिद्धम्। अथर्वसंहितायां 'यस्मिन् वृक्षे' इति प्रथमं, अनन्तरं 'यत्रासुपर्णा' इति पाठक्रमः 'अमृतस्य भक्षं तस्य यदाहुः' इत्येव पाठविशेषः अन्यत्सर्वं सममिति तत्राप्युक्तार्थ एव विवक्षित इति बोध्यम् ॥ ऋतंपिबन्ताविति। 'गुहां प्रविष्टावात्मानौहि' इत्यधिकरणे श्रुतिद्वयं परैरप्युदाहृतम्। सूत्रे 'गुहांप्रविष्टौ' इतिनिर्देशेनास्य विषयवाक्यत्वं स्फुटं प्रतीयते। 'आत्मानौ' इत्यु

श्रीभाष्यम्

**पञ्चाग्नयो ये च त्रिणाचिकेताः ॥' 'अन्तःप्रविष्टश्शास्ता जनानाँसर्वात्मा'**

श्रुतप्रकाशिका

'काठिन्यवान्यो बिभर्ति' इति पृथिवीद्वारा काठिन्यवत् स्वप्रद्रष्टृत्वं जीवात्मद्वारा परमात्मविशेषणं भवतीति नविरोधः शारीरशब्दश्च 'तस्यैष एव शारीरआत्मा' इतिवत् स्वव्यतिरिक्तसमस्तचिदचिद्वस्तुशरीरके परमात्मन्युपपद्यते । उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च सर्वज्ञस्य तस्यैवोपपद्यते । अतो 'द्वासुपर्णा' इति मन्त्रो जीवपरमात्मपरः । 'ऋतं पिबन्तौ' इति पानक्रियायां जीवपरयोः प्रयोज्यप्रयोजकभावेनान्वयः । पिबन्ताविति शतृप्रत्ययः कर्मकर्तृमात्रपरः नतु कर्तृविशेषपरः तेन प्रयोज्यप्रयोजकौ द्वावपि कर्तृविशेषाविति तावविशेषेण क्रोडीकृतौ भवतः । अन्यथा अनश्नन्नित्यादिविरोधस्स्यात् ॥

यद्वा 'छत्रिणो गच्छन्ती'तिवद् जहल्लक्षणा । सुकृतस्य ऋतं फलं । यद्वा सुकृतस्य लोक इत्यन्वयः । तदा ऋतं सुकृतं तत्फलमुच्यते लक्षणया । '**एवं पुण्यस्य कर्मणो दूरादन्धो वाति**' इत्यत्र '**एवमनृतादात्मानं जुगुप्सेत्**' इति पुण्यप्रतियोगित्वेनानृतशब्दप्रयोगात् । गुहां, हृदयगुहाम् । परमे परार्ध्ये इति लोकविशेषणम् जीवपरविशेषणं वा । छान्दसत्वाल्लिङ्गव्यत्ययः । छायाऽऽतपौ अज्ञसर्वज्ञौ '**ज्ञाज्ञौ द्वावजावीशनीशौ**' इत्यनेनैकार्थ्यात् । ब्रह्मविद् अध्यात्मविदः पञ्चाग्नयस्त्रिणाचिकेताश्च कर्मविशेषनिष्ठाः ते वदन्ति । यथा—

**येच वेदविदो विप्राः ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥**

इति '**ऋतं पिबन्तौ**' इत्येतद्वैशद्यायाह—**अन्तःप्रविष्टइति** । इत्याद्या श्रुतिरित्यन्वयः । न केवलं श्रुतिस्वारस्यात्—

गूढार्थसङ्ग्रहः

त्तया एतस्यां श्रुतौ जीवपरमात्मानावेवविवक्षिताविति सूत्रकृता स्पष्टीकृतम् । 'तत्रापि परमाकाशे परार्ध्ये—परार्ध सङ्ख्याया उत्तरावधिः तदर्हतीति परार्ध्यम्' उत्कृष्ट इत्यर्थः तादृशे हार्दाकाशे वर्तमानौ छायाऽऽतपशब्दाभ्यां ज्ञाज्ञौ लक्ष्येते' इति (शां) उपनिषद्भाष्यविवरणम् । अयमर्थस्सूत्रकृतो विवक्षित इति श्रुत्यन्तरैककण्ठ्यादपि प्रतीयते । 'परमे परार्ध्ये सर्वोत्कृष्टाद्वितीयपूर्णानन्दरूपे अभिन्नतया प्रविष्टौ' (वे.सू.मु) इति ब्रह्मानन्दविवरणंतु अभिनिवेशमूलकमेव । अभेदबोधकपदस्य कस्याप्यभावात् । 'ज्ञाज्ञौद्वावजौ' इति श्रुत्यन्तरोक्तार्थस्यात्र विवक्षितत्वेन अभेदप्रतीतेस्तद्विरुद्धत्वाच्च ॥

'तत्त्वमसि' इत्यादिसमानाधिकरणश्रुतिविरोधेन नेदं श्रुतिद्वयं जीवब्रह्मणोस्तात्त्विकभेदपरम । किंतु व्यावहारिकभेदपरमिति शङ्कायां श्रुत्यन्तरमुपादत्ते— **अन्तःप्रविष्ट इत्यादि** । शङ्कराचार्यैः उपदेशसाहस्र्यां गद्यग्रन्थे 'सर्वाणि रूपाणि विचित्यधीरः नामानि कृत्वाऽभिवदन् यदास्ते' इति । अस्मिन्नर्थे श्रुतयस्सहस्रशः । 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अन्तःप्रविष्टश्शास्ता जनानाम्' 'स एष इह प्रविष्टः' (बृ) 'एषत आत्मा' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐत) 'एष सर्वेषु भूतेषु गूढोऽऽत्मा' 'सेयं देवतैक्षत' 'हन्ताहमिमास्तिस्रो देवताः' इति एकत्र (२३.वाक्ये) 'न परस्मादात्मनो विलक्षणत्वमिति प्रत्यक्षादिविरोधाभावात् युक्तं परएवात्मेति प्रतिपत्तुम् । 'तदात्मानमेवावेदहंब्रह्मास्मीति ।' 'एकधैवानुद्रष्टव्यम्' 'अहमेवाधस्तादात्मैवाधस्तात्' 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी' 'समआत्मेति विद्यात्' 'अहं मनुरभवं सूर्यश्च' 'अन्तःप्रविष्टश्शास्ताजनानाम्' 'तदेव सोम्य' 'तत्सत्यं स आत्मा' इत्यादिश्रुतिभ्यः' इत्यन्यत्र च (३७.वाक्ये) उक्तम् ॥

श्रीभाष्यम्

इत्याद्या । अस्मिन्नपि शास्त्रे 'ससर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले। समस्तकल्याणगुणात्मकोऽसौ ' ' परः-पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे।' अविद्या कर्मसंज्ञान्या तृतीयाशक्तिरिष्यते। यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा॥' इति भेदव्यपदेशात्। 'उभयेऽपि हि भेदेनैनमधीयते'

श्रुतप्रकाशिका

अस्मिन्नपि प्रबन्धे दृश्यत इत्याह—अस्मिन्नपीति। ससर्वभूतेत्यादिना हेयप्रत्यनीकत्व कल्याणगुणाकरत्वे कथिते जीवस्य हेयास्पदत्वमविद्येत्यादिनोक्तम्। सर्वगेति भेदव्यपदेशादिति पूर्वेण सम्बन्धः नतु सूत्रोपादानम् उपर्यस्य सूत्रस्य विषयवा-

गूढार्थसंग्रहः

इत्याद्याइति। आद्यपदेन उदाहृतश्रुतयो विवक्षिताः। तत्र 'सर्वाणि रूपाणि विचित्य धीरः' इति श्रुति 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रे परैरप्युदाहृता। तत्र 'अभि' इत्यस्य स्वाभिमुख्यमित्यर्थः। तेन स्वपर्यन्तत्वं नाम-रूपयोस्सिद्धम्। रूपस्य स्वपर्यन्तत्वमन्तर्यामित्वेन। तद्धि प्रवेशबोधकश्रुतिभिर्निर्णीयते। नाम्नः स्वपर्यन्तत्वं तच्छब्दबोध्य-त्वेन। 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतिः 'परिणामात्' इति सूत्रे परैरप्युदाहृता। तत्र 'सच्चत्यच्चाभवत् विज्ञानंचाविज्ञानं च' इति वक्ष्यमाणभेदनिबन्धनत्वं प्रवेशस्य स्पष्टम्। 'स एष इह प्रविष्टः' इति प्रवेशोत्त्यनन्तरं 'तदात्मानमेवावेदहंब्रह्मास्मि' इति श्रुतिसत्त्वेन तत्रात्मनशब्दस्य वैयर्थ्यानुपपत्त्या 'अन्तःप्रविष्टश्शास्ता' इति श्रुत्य-नुसारेणचात्मनशब्दः अन्तःप्रविश्य नियन्तृपरः 'एष त आत्माऽन्तर्याम्यमृतः' इति द्वाविंशतिवारमभ्यस्ता श्रुतिः इय-मपि आत्मनशब्दस्य अन्तर्यामिपरत्वमभिप्रैति। 'सम आत्मेति विद्यात्' (कौ) इति श्रुतिः 'न वक्तुरात्मोपदेशात्' इत्यत्र इन्द्रप्राणाधिकरणे विषयवाक्यत्वेन परेषामपिसम्मता। तया श्रुत्या 'मामेव विजानीहि' इत्युपक्रमोक्तसामानाधिक-रण्यमन्तर्यामित्वनिबन्धनमेव विवक्षितम्। सर्वत्र प्रसिद्ध्याधिकरणे 'शब्दविशेषात्' इति सूत्रे 'एष म आत्माऽन्त-र्हृदये' इति त्रिवारमभ्यस्ता सगुणविद्यात्वेन परसम्मतशाण्डिल्यविद्याघटकजीवब्रह्मभेदबोधिका इति परेषामपि सम्मतम्। एवं च 'एष त आत्मा' इति श्रुतिरपि द्वाविंशतिवारमभ्यस्ता जीवान्तर्यामिपरैव। अयमर्थः 'औपनिषदपरमपुरुष' इति भाष्यश्रीसूक्तिविवरणावसरे सम्यगुपपादितः। 'हन्ताहमिमास्तिस्रो देवताः' इत्यादौ हन्त इत्यनेन सृष्ट्यनुप्रवे-शयोः स्वपरप्रयोजनद्वयाभिधानेन स्वपर्यन्तनामरूपव्याकरणस्यैव विवक्षा प्रागेव प्रदर्शिता। अतश्च 'ऐतदात्म्यमिदंसर्वम्' इत्यस्यापि नवकृत्वः अभ्यासेन सर्वशब्दार्थासङ्कोचेन अचिज्जीवयोरुभयोरपि तत्र विवक्षितत्वेन अन्तर्यामित्वनिबन्धन-मेव 'तत्त्वमसि' इत्यत्र सामानाधिकरण्यमिति 'तत्त्वमसि' इति श्रुतिरुपपद्यत इति 'द्वासुपर्णा' विति श्रुतिद्वयं न जीवपरयोः व्यावहारिकभेदपरमिति भावः॥

'एको देवस्सर्वभूतेषु गूढः' इत्यत्र निर्गुणत्वं पराशरेणैव हेयगुणराहित्यपरत्वेन व्यवस्थापितम्। आविद्यका गुणाः न परब्रह्मणः निरवद्यश्रुतिविरोधात्। कर्मरूपाविद्यायाः जीव एव दोषसम्पादकत्वात् इति पराशरोक्तावेव स्पष्टमित्यभिप्रेत्य तान्येव वचनान्युदाहरति—ससर्वभूतप्रकृतिमित्यादिना। सूत्रेष्वपि परसम्मतजीवब्रह्माभेदः न कुत्राप्यभिहितः। किंतु जीवब्रह्मभेदएवेति सूत्राण्युपादत्ते—उभयेऽपिहि भेदेनैनमधीयत इत्यादि। अत्र सूत्रे 'य आत्मनि तिष्ठन्' 'यो-

## श्रीभाष्यम्

'भेदव्यपदेशाच्चान्यः' 'अधिकं तु भेदनिर्देशात्' इत्यादिसूत्रेषु च 'य आत्मनि तिष्ठन्नात्मनोऽन्तरोयमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरोयमयति' 'प्राज्ञेनात्मना

## श्रुतप्रकाशिका

क्यानुपादानात्। उदाहृतपुराणवचनानां हेतुत्वकथनसापेक्षत्वाच्च, श्रुतिवाक्यस्य हेतुर्वेहि चशब्देनोक्तम्. उभयेऽपीत्याद्युपात्तसूत्रद्वयस्य विषयवाक्यम्। यआत्मनीति। 'अधिकंतु' इत्यादिसूत्रस्य विषयवाक्यं प्राज्ञेनेति सूत्रैश्चाभिः श्रुतिभिरेवमर्थानिर्णयादित्यर्थः एवमुपनिषत्पुराणवचनसूत्रैर्जीवपरयोर्विरुद्धधर्मत्वमुपपादितम् ॥

## गूढार्थसङ्ग्रहः

विज्ञाने तिष्ठन्' इति वाक्यद्वयमुदाहृत्य जीवब्रह्मभेदस्सूत्रार्थतया परैरपि (शं.भा) वर्णितः। एतेन 'स त आत्माऽन्तर्याम्यमृतः' 'एष त आत्माऽन्तर्याम्यमृतः' इति तद्वाक्यान्तवाक्यद्वयेऽपि द्वाविंशतिवारमभ्यस्ते जीवब्रह्मभेद एव विवक्षित इति निश्चीयते। अनन्तरं तत्सूत्रभाष्ये (शं) 'एकस्मिन्शरीरे द्वावात्मानौ न घटेते नान्योऽतोऽस्ति द्रष्टा' इति श्रुतिविरोधात्' इत्युक्तिः 'भिन्नमेनमधीयत' इत्यनुक्त्वा 'भेदेनैनमधीयत' इत्युक्त्या भेदस्योपलक्षणत्वं बोध्यत इत्युक्तिश्च प्रागेव (२४६.पुटे) पर्यालोचिता ॥

अत्र 'द्वासुपर्णा सयुजा' इति श्रुतिद्वयमुदाहृत्य एकस्मिञ्छरीरे द्वयोरात्मनोः स्थितिः 'गुहां प्रविष्टावात्मानौहि तद्दर्शनात्' इति सूत्रे सूत्रकृद्विवक्षितेति साधयित्वा 'उभयेऽपिहि' इत्यादिसूत्रोपादानेन एकस्मिञ्छरीरे द्वयोरात्मनोः स्थितिः दृढीकृता भवति। एतदर्थमेवेतत्सूत्रस्य प्रथमत उपन्यासः। भेदव्यपदेशाच्चान्य इति। अत्र 'य आदित्ये तिष्ठन्' इति (बृ) श्रुतिमुदाहृत्य जीवब्रह्मभेदः परैरपि साधितः। एवमेव न्यायरक्षामणौ सूत्रार्थवर्णनेन 'भेदव्यपदेशाच्च' इति सूत्रे शङ्कराचार्यैः शब्दस्वरससिद्धार्थस्योक्तावपि वृत्तिकारमते सूत्राणां स्वारस्यं वर्तत इति प्रतीतिभिया 'भेदविरोधी अपदेशः भेदव्यपदेशः' इत्यादिन्यायरक्षामणिविवरणं न सूत्रकृदभिमतं किंत्वभिनिवेशमूलकमेव ॥

अधिकंतु भेदनिर्देशादिति। अत्रापि जीवब्रह्मभेदः परेषामपि सम्मतः। इत्यादिसूत्रेष्विति अत्रादिपदेन 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रपरिग्रहः। सूत्रेषु जीवब्रह्मभेदसाधकत्वेन परैरुपन्यस्तश्रुतिभिरेव जीवब्रह्मणोर्भेदास्सिद्ध्यतीति ताः श्रुतीरुदाहरतिय आत्मनि तिष्ठन्नित्यादि। 'सुषुप्त्युत्क्रान्त्योर्भेदेने' ति सूत्रे परैरपि जीवब्रह्मभेदसाधकत्वेनोपन्यस्तश्रुतिद्वयमुदाहरति-प्राज्ञेनात्मनेत्यादि। 'प्राज्ञेनात्मनाऽन्वारूढः' इति श्रुतिः 'अधिकंतु भेदनिर्देशात्' इति सूत्रेऽपि परैरुदाहृता। अत्र 'प्राज्ञेनात्मना संपरिष्वक्तः' इति श्रुतिः 'सलिल एको द्रष्टा अद्वैतो भवति' इत्यतःपूर्वम् 'प्राज्ञेनात्मनाऽन्वारूढः' इत्यतः परं च श्रूयते। श्रुतिद्वयोपादानेन 'सलिल एको द्रष्टा अद्वैतो भवति' इति श्रुतिरपि न जीवब्रह्मभेदं विघटयति, किंतु तदविरुद्धार्थकैवेति बोधितम् ॥

'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रे जीवपरयोर्भेदस्य सूत्रकृता व्यवस्थापनेन परैरपि तथा अर्थवर्णनेन उपनिषद्भाष्ये 'प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनात्मना परेण ज्योतिषा संपरिष्वक्तः एकीभूतः' इति प्राक् (४८१.पु) उपन्यस्तः परोक्तश्रुत्यर्थः न श्रुतितात्पर्यविषय इति सूत्रकृतैव निर्धारितं भवति। तत्प्रकारश्च तत्रैव (४८१.पु) द्रष्टव्यः। अत्र 'द्वासुपर्णा' इति श्रुतिद्वयमुपन्यस्य सूत्रोपादानानन्तरं एतच्छ्रुतिद्वयोदाहरणेन द्वयोरात्मनोः शरीरे स्थितेः सम्प्रये-

## गूढार्थसंग्रहः

जनत्वमपि सूचितम् । 'औपनिषदपरमपुरुष' इति भाष्यसूक्तिविवरणावसरे सृष्टेर्दयामूलकत्वं प्रलयानन्तरसृष्टेः सुषुप्त्यनन्तरप्रबोधसादृश्यं सुषुप्तौ जीवस्य ज्ञानसङ्कोचेन परमात्मनि संबन्धवत् प्रलयेऽपि तथा संबन्धश्चेत्यादिकं सम्यगुपपादितम् । 'एष स आत्माऽन्तर्हृदये' इति त्रिवारमभ्यस्तशाण्डिल्यविद्यावाक्येऽपि जीवज्ञानसम्पादनार्थमेव दयया हृदये स्थितिः इत्याद्यर्थाः सम्यङ्निरूपिताः । अत्रापि संपरिष्वक्तशब्देन पुरीतद्देशावच्छेदेन परमात्मना नीरन्ध्रसंश्लेषः जीवस्याभिहितः । 'तीर्णोहि शोकान् हृदयस्य भवति' इति हृदयसम्बन्धोहि दयासूचकः सुषुप्तेः विश्रान्तिकालरूपत्वेन इन्द्रियव्यापारोपरतेरावश्यकत्वेन बाह्यान्तरज्ञानविरहस्योक्तावपि उत्तरप्रबोधकालिकज्ञानविकासस्य सृष्टिकालिकप्रवेशद्वारकदयामूलकज्ञानविकासतुल्यतायाः एतत्प्रघट्टके सिद्धतया दयामूलकत्वं सिद्धम् । अयमर्थः 'परात्तु तच्छ्रुतेः' इत्यादौ सूत्रकृतोऽपि विवक्षितः एवमुत्क्रान्तिः 'हार्दानुगृहीतः शताधिकया' इतिसूत्रे दयामूलकेति तेनैव स्पष्टमुक्तम् । अयमर्थः 'दहरकुहरे देवास्तिष्ठन्निषद्वरदीर्घिका निपतितनिजापत्यादित्साऽवतीर्णपितृक्रमात् । धमनिमिहनस्तस्मिंःकाले स एव शताधिकां अकृतकपुरप्रस्थानार्थं प्रवेशयति प्रभुः । इति आचार्यपादैः सम्यक्प्रदर्शितः (र.त्र.सा) ॥

एतेन राजकुमारन्यायः एतच्छ्रुतौ द्रमिडाचार्यसम्मतस्सूचितो भवति । एवं पूर्वोत्तरश्रुतिद्वयोपादानेन 'सलिल एकोद्रष्टाऽद्वैतो भवति' (बृ.६.३.३२) इति मध्यस्थश्रुतेः परसम्मतार्थः पूर्वोत्तरश्रुतिविरुद्ध इति सूचितम् । अत्र परभाष्यं (शं) 'यत्र पुनः सा अविद्या सुषुप्ते वस्त्वन्तरप्रत्युपस्थापिका शान्ता तेन अविद्यात्वाविभक्तस्य वस्तुनोऽभावात्' इत्युपक्रम्य सलिलवत् स्वच्छीभूतः सलिल इव सलिलः एको द्वितीयस्याभावात् अविद्ययाहि द्वितीयः प्रविभज्यते सा च शान्ताऽत्र । अत एकः द्रष्टा दृष्टेरविपरिलुप्तत्वात् आत्मज्योतिस्स्वभावायाः अद्वैतः द्रष्टव्यस्य द्वितीयस्याभावात्' इत्यादिकम्

'नकपित्थादिवत्तत्त्वं स्वतोऽनेकस्वभावकम् । उक्त्वा सलिलवत्तस्मात् एक इत्यब्रवीच्छ्रुतिः ॥ सजातीयनिषेधो वा ह्येकशब्देन भण्यते । सलिलोक्त्या विजातीय सम्बन्धोहि निवारितः । अद्वितीयार्थतैवातो द्वितीयार्थनिषेधतः । स द्वेत्यादिना चास्य तथा सत्यविरुद्धता ॥ द्विधेतं द्वीतमित्याहुः तद्भावो द्वैतमुच्यते । तन्निषेधेनचाद्वैतं प्रत्यग्वस्त्वभिधीयते ।' इत्यादिवार्तिकं च । अत्र 'यद्वै तन्नपश्यति' इत्यादिपूर्ववाक्यसन्दर्भे 'नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यत्र द्वितीयसामान्याभावो न विवक्षितः, तदित्यस्य वैयर्थ्यात् किंतु तत् बाह्येन्द्रियसम्बद्धं द्वितीयं नास्तीत्युक्तौ बाह्येन्द्रियसम्बन्धविशिष्टद्वितीयाभावः द्वितीयनिष्ठबाह्येन्द्रियसम्बन्धाभावनिबन्धन एवात्र विवक्षित इति पूर्वमेव निरूपितम् । 'प्राज्ञेनात्मना–नान्तरम्' इत्यत्र पूर्वं सुषुप्तौ इन्द्रियाणां विषयसम्बन्धविनिवर्तनस्याभिधानेन संपरिष्वक्त इत्यत्र पुरीतद्देशावच्छेदेन जीवस्य संबन्धाभिधानेन च बाह्यान्तरवस्तुज्ञानाभावस्य प्रतिपादनात् पदार्थनाशस्यात्र प्रसक्तेरेवाभावात् । अविद्यापरिणामसामान्यनाशे उच्छ्वासनिश्वासरूपप्राणवायुसंचारदर्शनविरोधाच्च । अतः द्वितीय सामान्याभावः 'सलिल एको द्रष्टा' इत्यत्र न विवक्षितः । अत्र आत्मैक्यमपि अविद्यया प्रतीयत इति पूर्वमेव 'अविद्यया मन्यते अथ यत्र देव इव राजेव अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः' इत्यत्र स्पष्टमुक्तमिति अत्र ऐक्यं विवक्षितमित्युक्तिरपि न घटते ॥

'यत्र हि द्वैतमिव भवति' इत्यत्र द्वैतशब्दस्य भिन्नमित्यर्थः' (शं.उ.भा) द्वैतभिन्नशब्दयोः पर्यायत्वाभावेन न घटते । 'द्विधेतम्' इत्याद्युक्तदिशा प्रकारद्वयसत्ता यत्र न विद्यते तदद्वैतमित्यर्थप्रतीतावपि एकप्रकारविशिष्टवस्तुन एव अद्वैतशब्देनात्र बोधनं स्यात् नतु निर्विशेषप्रत्यग्वस्तुनः 'ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यत्र विभक्तशब्दप्रयोगेण

## श्रीभाष्यम्

**संपरिष्वक्तः' (बृ.६.३.२१) 'प्राज्ञेनात्मनाऽन्वारूढः' (बृ.६,३.३५) इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात्। नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासम्भवात्। यथोक्तम्**

## श्रुतप्रकाशिका

अथ 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिवाक्यानि हृदि निधायास्यान्यथासिद्धिं शङ्कते। **नापीति**। तद्दूषयति **अविद्याश्रयत्वेति**। अविद्याश्रयत्वयोग्यत्वं अविद्याशब्दस्समस्तहेयप्रदर्शनार्थः। आश्रयत्वशब्दस्सम्बन्धपरः हेयसम्बन्धात्यन्ताभावानधिकरणत्वं तद्योग्यत्वम्। हेयसम्बन्धात्यन्ताभावाधिकरणत्वम् **'अनश्नन्न्य'** इति श्रुत्या परमात्मनस्तदनर्हत्वं सिद्धम्। देशकालसन्निकर्षेसत्यपि तदस्पर्शोहि स्वभावसन्निकर्षाभावात् स्वभावसन्निकर्षाभाव एव ह्ययोग्यत्वम् **यथा नभसः क्लेदनदहनाद्यनर्हत्वम्** अतो हेयार्हतदनर्हयोर्हेयापगमेऽपि न स्वरूपैक्यं सम्भवति निग्राह्यस्य पश्चादनुगृहीतस्याहि निग्राह्यत्वापगमेऽपि निग्रहानुग्रहकर्त्रा पुरुषेण नैकत्वसम्भव इत्यर्थः। कारागृहविनिर्मुक्तस्य नियन्त्रा नरपतिना स्वरूपैक्यं न सम्भवतीत्यर्थः। अस्मिन्नर्थे पुराणवचनमाह—**यथोक्तमिति**। योगशब्द ऐक्यपरः अन्यथा अन्यद्द्रव्यंहि तद्द्रव्यतां नैतीति प्रतिक्षेपानुपहतेः॥

ननु मिथ्यैतदित्युत्तरत्रान्वयः परमात्मात्मनोर्योगः परमार्थः अन्यद्द्रव्यं तद्द्रव्यतां नैतीत्येतन्मिथ्येत्यर्थ इतिचेत्—नैवम् अन्यस्यान्यद्रव्यतानापत्तेस्सत्यत्वात्। इतरथा जडाजडयोस्तादात्म्यप्रसङ्गः **'ऋग्यजुस्सामनिष्पाद्यं यज्ञकर्म मतं (त(न)व**' इतिवत् इष्यत इत्यनेन पूर्वार्घोक्तार्थस्य परमतत्वद्योतनात् अन्यथा इष्यत इति पदवैयर्थ्यात्। किंच **परमार्थस्तु भूपाल सङ्क्षेपाच्छ्रूयताम्** इति वक्ष्यमाणपक्षव्यतिरिक्तपक्षाणां निराकरणपरत्वाच्च प्रकरणस्य एतच्छ्लोकपूर्वार्धोक्तैक्यसमर्थनपरत्वमुत्तरार्धस्य नोपपद्यते **'धर्माय त्यजते'** इत्यादिग्रन्थैस्तत्तदर्थानां परमार्थत्वंहि निरस्यते स्वतःप्रकृतार्थे स्वरसस्यैतच्छब्दस्य प्रकृतार्थेसत्यपि वक्ष्यमाणपरत्वाश्रयणमप्ययुक्तम्॥

किं च अन्यद्द्रव्यं तद्द्रव्यतां नैतीति यत् एतन्मिथ्येतिहि तदानीमर्थः, तथासति यतश्शब्दस्वारस्यभङ्गः यतश्शब्दस्याहि हेतुपरत्वं स्वरससिद्धम्, नतु यच्छब्दवत् प्रकृतार्थशरीरमात्रपरामर्शित्वम्। अन्यद्द्रव्यं तद्द्रव्यतां नैतीत्येतन्मिथ्येति यतः तत ऐक्यं परमार्थं इत्यन्वये इति शब्दद्वयाध्याहारप्रसङ्गः। सचानध्याहारेण निर्वाहेसति नोपपद्यते यद्युच्येत पूर्वं पृथग्भूतयोःपरमात्मनोरैक्यं परमार्थइतीष्यत इतिचेन्मिथ्यैतत् अन्यद्द्रव्यंहि तद्द्रव्यतां नैतीति यतः तस्मात्पूर्व

## गूढार्थसंग्रहः

'प्राज्ञेनात्मना संपरिष्वक्तः' इत्यत्र 'सम्' इत्युपसर्गनिर्देशेन 'सलिल एको द्रष्टा' इत्यत्र द्रष्टेति धर्मवत्त्वाभिधानेन नीरन्ध्रसंश्लेषदशायां प्रकारद्वयसत्तायाः स्फुटं सर्वेषामप्रतीत्या च 'सलिल एकोद्रष्टाऽद्वैतो भवति' इत्यत्र जीवस्य परमात्माविभाग एव विवक्षितः॥

एतेन सुषुप्तौ पुरीतद्देशावच्छेदेन परमात्मनि शयनोक्त्यैकरस्य च सङ्गच्छते। इन्द्रियाणां व्यापाराविनिवर्तनेन विश्रमकाले जीवस्य दुःखाभावस्य पूर्वं प्रतिपादनेन अत्र ज्ञानाभावोक्त्या दुःखाभावस्य सिद्ध्या च सर्वेषामविशेषेण सुषुप्तौ पुरीतद्देशावच्छेदेन परमात्मनि सम्बन्ध एव तत्र मूलमिति इदमप्यविषमफलं सर्वेषां जीवानां पुत्राणां पितुः परमात्मनः अनुग्रहमूलमिति ज्ञापनेन राजकुमारनयोऽप्येतेन दृढीकृतो भवति॥

### श्रीभाष्यम्

**‘ परमात्मात्पनोर्योगः परमार्थइतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥ ’ (वि. पु.२.१४.२७) इति । मुक्तस्यतु तद्धर्मताऽपत्तिरेवेति भगवद्गीतासूक्तम् ।**

### श्रुतप्रकाशिका

मपि परमात्मनोर्भेदो नास्तीति । नैवम् पूर्वं भ्रान्त्या पृथग्भूतयोरित्यस्याश्रुतत्वेन अध्याहारप्रसङ्गात् सचानध्याहारेण निर्वाहे सम्भवति नोपपद्यते । किं च तस्मात्पूर्वमपि भेदो नास्तीति अश्रुतवाक्यान्तराध्याहारेण वाक्यस्य पूरणीयत्वं स्यात् तच्च तन्निरपेक्षनिर्वाहे सम्भवति नोपपद्यते तस्मात्प्रागपि भेदो नास्तीति वाक्यं नाध्याहर्तव्यम् । पूर्वं भिन्नयोः परमात्मनोः पश्चादभेद इति पक्षनिराकरणमात्रपरत्वाद्ग्रन्थस्येतिचेत्—किं तेन प्रयोजनं ? पूर्वमप्यैक्यसिद्धिरितिचेत् न पूर्वं पृथग्भूतयोः पश्चादैक्यायोगेऽभिहितेसति पश्चादपि भेदसिद्धेः । अतस्स्वरससिद्ध एवार्थःस्वीकार्यः ॥

अथ ‘ **ब्रह्म वेद ब्रह्मैव भवति** ’ इत्यादि वाक्यनिर्वाहं बहुश्रुत्यन्तराविरोधेन वक्ष्यन्मुक्तस्य साम्यापत्तिमाह— **मुक्तस्येति** । तत्रैक्यश्रुतेः प्रतिकूलार्था साम्यश्रुतिर्दर्शयिष्यत इति मत्वा व्याख्येयतया प्रकृतस्योपबृंहणवचनस्य सजातीयं

### गूढार्थसंग्रहः

‘ प्राज्ञेनात्मना—न बाह्यं किंचन वेद ’ इति वेदनसामान्यविरहोक्त्या ज्ञानपरिणामविशेषरूपदुःखाभावः ‘ तीर्णोहि तदा सर्वान् शोकान् ’ इत्यत्रोक्तः अर्थसिद्धः । सुषुप्तौ प्रासादखट्वा पर्यङ्कनयेन नाडी पुरीतत्परमात्मसम्बन्धस्य जीवे प्रतिपादनेन देशविशेषावच्छेदेन परमात्मसम्बन्धेन दुःखाद्यभावः सर्वेषां जीवानां पितृस्थानीयपरमात्मप्रसादमूलकः सुषुप्तौ परमात्मज्ञानाभावस्य ‘ सति सम्पद्य न विदुः ’ इत्यादावुक्त्या उक्तदुःखाभावस्य उत्तरावधिरहितस्य न लाभः । परमात्म ज्ञानपूर्वकं मुक्त्युपायानुष्ठानपूर्तिसमन्तरं दुःखाद्यभावस्य सार्वदिकस्य निरतिशयसुखस्य च लाभः भवति । एतत्पूर्वकालिकपरमात्मविश्वाससंपादिकाऽवस्था सुषुप्तौ प्रदर्शिता भवति । अतः परमात्मानुग्रह एवानेन प्रदर्शितः । उत्तरावस्था च ‘ प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति ’ इति श्रुतौ प्रक्रान्ता । अत्र परमात्मानुग्रहो मूलमिति‘ —हार्दानुगृहीतश्शताधिकया ’ इति सूत्रकृतैव वक्ष्यते ॥

अत्र भाष्ये ‘ अधिकंतु भेदनिर्देशात् ’ इति सूत्रमुदाहृत्य तत्सूत्रोदाहृतश्रुतीनामुदाहरणेन जीवब्रह्मभेदस्यौपाधिकत्वशङ्काऽपि परिहृता भवति । ‘ अधिकंतु भेदनिर्देशात् ’ इत्यतःपूर्वं सूत्रे जीवब्रह्मभेदस्य प्रतिपादनपूर्वकं ‘ अवस्थितेरिति काशकृत्स्नः ’ इत्यत्र समानाधिकरणनिर्देशस्योपपादनेऽपि ‘ तदनन्यत्वम् ’—इत्यत्र प्रकृत्यधिकरणे दृष्टान्तानुसारि परिणामवादस्य ब्रह्मणि प्रक्रान्तस्य सम्यग्व्यवस्थापनानन्तरं दृष्टान्तानुगुणपरिणाम एव जीवभावेन ब्रह्मणः अङ्गीकरणीय इति तयोरनुपाधिकभेदो न सिध्यतीत्याक्षेपः ‘ अधिकंतु भेदनिर्देशात् ’ इत्यत्र परिह्रियते । सूत्रे अधिकशब्दोपादानेन (श्वे) ‘ स कारणं करणाधिपाधिपः ’ ‘ न तत्समश्चाभ्यधिकश्च दृश्यते ’ ‘ प्रधानक्षेत्रज्ञपतिर्गुणेशः ’ ‘ संसारमोक्षस्थितिबन्धहेतुः ’ इति निर्गुणश्रुतेः पूर्वापरश्रुतीनामभिप्रेतत्वेन निर्विशेषस्यैवाप्रामाणिकतया तत्रैव ‘ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ’ ‘ तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतम् ’ ‘ संसारमोक्षस्थितिबन्धहेतुः ’ इत्यत्र परमात्मनो मोक्षहेतुत्वस्य ‘ पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ’ इति प्रथमे मुक्तेर्भगवदनुग्रहमूलकत्वस्य च प्रतिपादनेन एतादृशं परब्रह्मणोऽधिकत्वं जीवब्रह्मभेदस्यौपाधिकत्वे न घटते किंतु स्वाभाविकत्व एवेति सिद्धान्तः ‘ अधिकंतु भेदनिर्देशात् ’ इत्यत्र सूत्रकृता स्थापित इति बोधितम् ॥

### श्रीभाष्यम्

**'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥' (गी १४.२) इति। इहापि 'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने। विकार्यमात्मनश्शक्त्या**

### श्रुतप्रकाशिका

पराभिमतार्थप्रतिकूलार्थं स्मृतिवचनं दर्शयति। **इदमिति।** मुक्तपरत्ववैशद्यायोपादानं **सर्गेपीति।** न केवलं शास्त्रान्तरे अत्रापि मुक्तस्य भेदप्रतिपत्तिरस्तीत्याह—**इहापीति।** इह योगप्रकरणे सङ्क्षेपकथनारम्भ इत्यर्थः 'सङ्क्षेपविस्तराभ्यां तु किमन्यत्क्रियतां तव' इति ह्युक्तम्। आत्मनः शक्त्या विकार्यं अवस्थान्तरं नेयं, ध्यायिनमेनं तद्ब्रह्म आत्मभावं नयति

### गूढार्थसंग्रहः

तदनन्तरं 'अश्मादिवच्च तदनुपपत्तिः' इति सूत्रे अश्मशब्दोपादानेन 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्—ब्रह्मीःप्रजा असृजत ता अश्मेवाप्रबुद्धाः अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत्, स नारमत सोऽमन्यत एतासां प्रतिबोधनायाभ्यन्तरं विविशानि' इति मैत्रायणीय (१.१) श्रुतेर्विवक्षितत्वेन तत्र अनुप्रवेशस्य दयामूलकत्वस्याभिप्रेतत्वेन 'आत्मस्थं प्रभुं कारयितारं नापश्यत् गुणौघैरूह्यमानः—अहंसो ममेदमित्येवं मन्यमानः निबध्नात्यात्मनाऽत्मानम्' (मै.३.प्र) इत्यत्र सविशेषनिर्विशेषजीवब्रह्माद्वैतज्ञानस्य पारिणामविवर्ताद्वैतिनोस्सम्मतस्य बन्धकत्वोक्त्या एतदर्थस्य तत्सूत्रेऽभिप्रेतत्वेन जीवब्रह्माभेदः उभयोस्सम्मतः न घटत इति सिद्धान्तः सम्यक्प्रतिष्ठापितः। एवं च 'द्वासुपर्णा' इत्यादिश्रुतिद्वये शरीरे जीवपरयोरवस्थानस्य सप्रयोजनत्वं सूचितं भवति॥

**इदं ज्ञानमुपाश्रित्येति।** 'साधर्म्यम्' इत्यत्र समानो धर्मः यस्य सः सधर्मा सधर्मणो भावस्साधर्म्यमिति विग्रहः एतेन 'निरञ्जनःपरमं साम्यमुपैति' इति श्रुतौ साम्यशब्दार्थः विवृतो भवति। 'साधर्म्योपमाभेदे' इति काव्यप्रकाश वाक्ये 'नह्यभेदे सादृश्यात्मकं साधर्म्यम्, तथाप्यारोपितसाधर्म्यनिबन्धनानन्वयव्यवच्छेदाय भेदे' इति प्रदीपे विवरणेन सादृश्यमुभयोर्भेद एव नाभेदे इति सिद्धान्तितं भवति 'नह्यभेद' इति ताद्भिन्नत्वेसति तद्गतभूयो धर्मवत्त्वस्यैव सादृश्यत्वात् इत्युद्योते नागेशेनाप्युक्तम्। 'तेन तुल्यं क्रियाचेद्वतिः' इति सूत्रे कैयटे (५.१.११५) 'नाप्येकजातीयानाम् शयितव्येन तुल्यं शयितव्यमिति। यथा गौरिव गौरिति, येनैव हेतुना उक्तो गौः तेनैवापरोपीति क उपमानोपमेयभावः इत्युक्तम्। अत्र उद्योतः—येनैव हेतुनेति गोत्वादिनेत्यर्थः। एवं च तेन रूपेणाभेद एव न केनापि भेदइति नोपमानोपमेयभाव इति' इति॥

तद्व्यपदेशाधिकरणवार्तिके 'रामरावणयोर्युद्धं रामरावणयोरिव।' इत्यत्र काल्पनिकावस्थाभेदमाश्रित्य सादृश्यं भट्टपादैरुपपादितम्। दहराधिकरणे 'अगतिकाचेयं गतिः यत्काल्पनिकभेदाश्रयणम्' इति (शं) भाष्यविवरणे 'तेन तस्योपमानत्वं रामरावणयुद्धवत्। अगत्या भेदमारोप्य गतौ सत्यां न युज्यते' इति भामत्यामप्युक्तम्। लघुचन्द्रिकायामपि प्रत्यक्षस्यागमबाध्यत्वविचारे 'तत्सिद्धिजातिसारूप्य' इति सूत्रे मीमांसकसम्मतस्सिद्धिसारूप्यवैलक्षण्यं दूषयित्वा सादृश्यस्यातिरिक्तपदार्थत्वं मीमांसकमते तदेव सारूप्यम्। सादृश्यस्य तत्तदसाधारणरूपत्वेऽपि आदित्यादिभेदविशिष्टस्य तेजस्वित्वादेरेव सादृश्यसारूप्यपदार्थत्वात्' इत्युक्तम्। अलङ्कारकौस्तुभे भेदगर्भसादृश्यमेव रूपकशरीरत्वेन सर्वसम्मतमिति' विश्वेश्वरपण्डितेनाप्युक्तम्। एतत्पर्यालोचनायां सादृश्यमुभयोर्भेद एव स्वरसमिति सिद्ध्यति। 'तत्स्वाभाव्यापत्तिः' (३ १.) इति सूत्रे तत्स्वाभाव्यपदेन तत्सादृश्यं बोधयन् व्यासोऽपि सादृश्यं साधर्म्यमित्येव सिद्धान्तयति। साभाव्यापत्तिरिति

## श्रीभाष्यम्

**लोहमाकर्षको यथा ॥ ' (वि.पु.६.७.३०) इति । आत्मभावं आत्मनस्स्वभावम् । नह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य । वक्ष्यति च ' जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ' (ब्र.सू.४.४.१७) ' भोगमात्रसाम्यलिङ्गाच्च ' (४.४.२१) ' मुक्तोपसृप्य व्यपदेशाच्च ' इति ।**

## श्रुतप्रकाशिका

आत्मनश्शक्त्या विकार्ये लोहमाकर्षको यथा इत्यन्वयः । आकर्षको वह्निः दोषमाकर्षतीति व्युत्पत्त्या

**यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥**

इति ह्युत्तरत्र वक्ष्यते । विष्णुधर्मे च **' यथाऽग्निसङ्गात्कनकमपदोषं प्रजायते । '** इति सोऽग्निः आत्मभावं, आत्मनः स्वभावं निर्दोषत्वं लोहं नयति तथेत्यर्थः, अयं सम्यगर्थः ॥

## गूढार्थसंग्रहः

पाठेऽपि साभाव्यं सादृश्यमिति विवरणेन उक्तएवार्थः। एवं च साधर्म्यमिति पदोपादानेन जीवब्रह्मणोर्भेद एव गीताचार्येण सिद्धान्तितो भवति । अतः ' साधर्म्यं मद्रूपतां अत्यन्ताभेदेनागताः प्राप्ताः ' इति मधुसूदनसरस्वतीकृतगीताविवरणमपि मदैक्यादिशब्दं विहाय साधर्म्यपदोपादानस्य निरर्थकत्वापत्त्या अनुपादेयम् ॥

' मम साधर्म्यमागताः ' इत्युपक्रमानुसारेण ' गुणेभ्यश्च परंवेति, मद्भावं सोधिगच्छति । ' ' सगुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ' इत्युपसंहारे ब्रह्मनिष्ठधर्मः जीवगत एव विवक्षितः । परमते निर्विशेषचिति धर्मानङ्गीकारेण ' मद्भावं सोऽधिगच्छति ' ' ब्रह्म भूयाय कल्पते ' इत्यस्योपपत्तिरेव न सम्भवति। ' ब्रह्मैव भवति ' इत्यादिनिर्देशस्योपसंहारेऽपि विरहेण परसम्मतार्थः गीतायां न विवक्षित इति निश्चीयते ॥ **जगद्व्यापारवर्जमित्यादि** । एतत्सूत्रद्वयस्य सगुणविद्यानिष्ठपुरुषविषयकत्वेन परैर्विवरणेन मुक्तौ जीवब्रह्मभेद एव तत्सूत्रे विवक्षित इति भावः। निर्गुणविद्यानिष्ठस्य ब्रह्माभेद एव परैस्सिद्धान्तित इत्याशयेन सूत्रान्तरमुपादत्ते—**मुक्तोपसृप्यव्यपदेशाच्चेति** । इदं च द्युभ्वाद्यधिकरणगुणसूत्रम् । तत्र ' यस्मिन्द्यौः ' इत्यादि उपनिषद्वाक्यप्रतिपाद्य निर्गुणविद्याविवक्षितेति परेषां मतम् । अत्र सूत्रे ' तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् । ' इति श्रुतिरेव साक्षाद्विषयवाक्यम् । श्रुतौ च उपपूर्वकः ' इण्गतौ ' इति धातुःप्रयुक्तः । सूत्रे उपपूर्वकः ' सृप्लृगतौ ' इति धातुः ' सृप्लृगता ' विति धातोः ' ऋदुपधाच्चाक्लृपिचृतेः ' (३.१.११०) इति सूत्रेण ' क्यप् ' उपपूर्वकोऽयं धातुः समीपगमनवचनः तेन जीवब्रह्मणोर्भेद एव प्रतीयते। एतेन एतदनन्तरं ' सयो हवै तत्परमं ब्रह्म वेद ब्रह्मैव भवति ' इत्यत्र भूधातुः प्राप्त्यर्थक इति निश्चीयते । एतदुत्तरं ' भेदव्यपदेशात् ' (१.२.४) इत्यत्र जीवब्रह्मणोर्भेदः स्पष्टमुक्तः । एवमदृश्यत्वादिगुणकाधिकरणे पूर्वं ' विशेषणभेदव्यपदेशाभ्यां च नेतरौ ' इत्यत्र भेदव्यपदेशेनापि जीवभेदः अक्षरपदार्थस्य साधितः । द्युभ्वाद्यधिकरणे ' भेदव्यपदेशात् ' इत्यनन्तरं ' स्थित्यदनाभ्यां च ' इति सूत्रे ' गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ' इत्यत्राधिकरणे पूर्वं योऽयमर्थ उक्तः ससम्यक्प्रतिष्ठापितः

एतेन जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न सम्भवति । तथा च श्रुतिः ' द्वासुपर्णा ' ' ऋतंपिबन्तौ ' इति पूर्वं (७६१) श्रीभाष्यसूक्त्यर्थः द्युभ्वाद्यधिकरणसूत्रत्रयेण श्रुतितात्पर्यविषय इति सिद्धम् । अतः ' स्थित्यदनाभ्यां च ' इति सूत्रे जीवानुवादेनाज्ञाते तदीयब्रह्मस्वरूपे तात्पर्यमिति भावः ' (वे.सू.मु) इत्युक्तिर्निरवकाशा । भेदव्यपदेशस्य सर्वत्र सूत्रेषु ऐकरूप्यैणैव सूत्रकृता जीवब्रह्मभेदसाधकत्वेनोक्त्या परसम्मतार्थस्य सूत्रकृत्तात्पर्यविषयत्वासम्भवात् । एवं च

### श्रीभाष्यम्

**(१.३.२) वृत्तिरपि 'जगद्व्यापारवर्जं समानो ज्योतिषेति' (बो.वृ) द्रमिडभाष्यकारश्च**

### श्रुतप्रकाशिका

**यद्वा** आत्मशब्दः स्ववाचीसन्नन्ययोगव्यतिरेकपरः यथाऽग्निर्लोहमात्मभावं स्वभावं स्वतस्सिद्धरूपं नयति तद्वदित्यर्थः, यद्वा आकर्षकः अयस्कान्तः लोहमात्मभावं नयति स्वव्यापारं लोहं कारयति स्वमनुकारयति '**स्थितस्स्थितामुच्चलितःप्रयाताम्**' इतिवदयस्कान्तास्तिष्ठतिचेल्लोहस्तिष्ठति धावतिचेत्तमनुधावति एवं '**कामान्नी कामरूप्यनुसंचरन्**' '**सर्वेषु लोकेषु कामचारो भवति**' इत्यादिश्रुत्यनुगुणं परमात्मा उपासकं स्वचेष्टामनुकारयति समानचेष्टितं करोतीत्यर्थः। यद्वा आत्मशब्दस्स्ववाची निष्कृष्टस्वरूपपरः। उपासकं परमात्मा आत्मभावं नयति प्रकृतिसम्बन्धराहित्येन शुद्धां नयति। केवलतां नयति यथा अयस्कान्तो दारुनिमग्नं लोहं तस्माद्दारुण उद्धृत्य केवलतां नयति तद्वदित्यर्थः

**यद्वा** '**भूप्राप्तावात्मनेपदि**' इति वचनात् भावशब्दः प्राप्तिवचनः। आत्मप्राप्तिं नयति यथा लोहमयस्कान्तः स्वप्राप्तिं नयतीत्यर्थः। प्राप्तिं नयतीति निर्देश ओदनपाकं पचतीतिवत्, जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तं जीवस्य बन्धमोक्षयोः ज्ञानसङ्कोचविकासरूपविकारार्हत्वात्। अत्र श्लोके तादात्म्यप्रतिपत्त्यभावं दर्शयति। **नहीति।** आकर्षकस्वरूपापत्तिराकृष्यमाणस्येति निर्देशः उक्तसर्वार्थसाधारणः अग्निसुवर्णदृष्टान्तविवक्षायामाकृष्यमाणशब्दो विकार्यपरः। **समानो ज्योतिषेति।** ज्योतिः परंब्रह्म '**परंज्योतिरुपसम्पद्य**' '**अथ यदतः परो दिवो ज्योतिर्दीप्यते**'

### गूढार्थसंग्रहः

मुण्डकगतविद्याविषयनिरूपणपराधिकरणद्वयेन जीवपरयोर्भेदसाधनपूर्वकं मुक्तप्राप्यत्वमदृश्यत्वादिगुणकपरब्रह्मणिरूढान्वितमिति सिद्धम्। अतः परसम्मतनिर्गुणविद्यायामपि जीवब्रह्मणोरभेदः न सूत्रकाराभिमत इति भावः॥

**जगद्व्यापारवर्ज**मित्यादावपि परमतरीत्या सगुणविद्यामात्रं न विषयः। किंतु मुक्त्युपायविद्यासामान्यम्, इति वृत्तिकारसिद्धान्तं स्थापयितुं वृत्तिवाक्यमुपादत्ते–**जगद्व्यापारवर्जं समानो ज्योतिषेति**। अत्र ज्योतिश्शब्दोपादानेन 'संपद्याविर्भावस्स्वेन शब्दात्' इति तत्पादप्रथमसूत्रे यद्विद्याफलमुक्तं तद्विद्यानिष्ठस्यैव फलं जगद्व्यापारवर्जमिति तत्पादान्तिमाधिकरणप्रथमसूत्रेऽपि विवक्षितमिति सूचितम्। अयमाशयः 'अस्माच्छरीरात्समुत्थाय परं ज्योरुतिपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यं 'संपद्याविर्भाव' इति सूत्रे विवक्षितमिति परेषामपि सम्मतम्। इदं च वाक्यं दहरविद्यायां प्रजापतिविद्यायां च वर्तते। तत्र च दहरविद्यासगुणोपासनमपरब्रह्मविषयकमप्रमात्मकं अर्चिरादिद्वाराऽपरमुक्तिफलकम्। प्रजापतिविद्यानिर्गुणविद्यापरब्रह्मविषयिणी प्रमात्मकज्ञानरूपा परमुक्तिफलाचेति परेषां मतम्। अस्माच्छरीरात्समुत्थाय' इत्यत्रासनादुत्थानवत् नात्रोत्थानं विवक्षितम् किन्त्वात्मनश्शरीराद्विवेकज्ञानमेवेति च। अयमर्थः न सूत्रकृत्सम्मतः। 'भोगेनत्वितरे क्षपयित्वाऽथ सम्पद्यते' इति चतुर्थप्रथपादान्तिमसूत्रे 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्ये' इति श्रुत्युक्तं निर्गुणविद्यात्वेन परसम्मतायास्सद्विद्यायाः फलं प्रदर्शितम्। अनन्तरमुत्क्रान्तिपादे छान्दोग्यषष्ठगतसद्विद्यायामेवोत्क्रान्तिनिरूपणेन अथशब्दार्थानन्तर्ये व्यवधानसहमिति निरूप्य तत्रैव अष्टमप्रपाठके दहरविद्यायां 'य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य' इत्यत्रोत्क्रान्त्यादिकं संग्रहेणाभिधाय 'अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वाहोद्वामीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति एतद्वै

### श्रीभाष्यम्

'देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिस्स्या' दित्याह। श्रुतयश्च 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छा.८.१.६)

### श्रुतप्रकाशिका

इति श्रुतेः द्रमिडेति। अशरीरः मुक्तः कर्मकृतशरीराभावात्। सिद्धिः अनुभवः मुक्तौ जीवपरयोर्भेदश्रुतीर्दर्शयति। श्रुतयश्चेति। आप्नोति परमनुभवतीत्यर्थः॥

### गूढार्थसंग्रहः

खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्' (छा.८.६.५) इत्यत्र 'अस्माच्छरीरात्समुत्थाय' इत्यत्रोत्क्रान्तिरेव विवक्षितेति विशदीकृत्य प्राक् छान्दोग्ये उपकोसलविद्योक्तार्चिरादिगतिः ब्रह्मप्राप्तिफलिका संग्रहेण प्रदर्शिता॥

एतेन प्रजापतिविद्यायां 'अस्माच्छरीरात्समुत्थाय' इत्यत्र उत्क्रान्तिगत्यादिकं दहरविद्यावाक्यानुसारेणापि विवक्षितमिति स्फुटं निर्मत्सराणां विदुषाम्। 'सम्पद्याविर्भावस्स्वेन शब्दात्' इति प्रथमाधिकरणविवक्षितविद्यानिष्ठस्य 'जगद्व्यापारवर्जम्' इत्यन्तिमाधिकरणप्रथमसूत्रे विवक्षितत्वादेव 'अनावृत्तिश्शब्दात्' इति तदन्त्यसूत्रे उक्तविद्यानिष्ठस्य 'अप्रतीकालम्बनान्नयतीति बादरायणः उभयथा च दोषात्तत्क्रतुश्च' इति चतुर्थतृतीयान्तिमाधिकरणसूत्रोक्त अर्चिरादिगतिद्वारकब्रह्मप्राप्त्यनन्तरमनावृत्तेश्श्रुत्युक्तायाः सिद्धान्तकरणं सङ्गच्छते। एवं च दहरविद्याफलमेव गत्यनन्तरकालिकस्वरूपाविर्भावरूपं 'सम्पद्याविर्भावस्स्वेन शब्दात्' इत्यत्रोक्तम् इति वृत्तिकृता निर्धारितं भवति। 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्रे 'परंज्योतिरुपसंपद्य' इति श्रुतौ ज्योतिश्शब्दार्थेन साम्यमेव विवक्षितमिति तात्पर्येण 'समानो ज्योतिषा' इत्युक्तम्। श्रुतिभिः परसम्मतविद्याविभागो न घटत इति साधयति **श्रुतयश्चेति**॥

**य इहात्मानमनुविद्य इत्यादि**। एतत्पूर्वं 'एष आत्माऽपहतपाप्मा—सत्यकामस्सत्यसङ्कल्पः' यदाह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनं यं यमन्तमभिकामा भवन्ति—तं तमेवोपजीवन्ति' इति वाक्यम्। 'य इहात्मानमनुविद्य व्रजन्ति' इति (शं) उपनिषद्भाष्ये 'सत्यसङ्कल्पत्वकार्यांश्च स्वात्मस्थान्' 'तेषां सर्वेषु कामचारो भवति' 'राज्ञ इव सार्वभौमस्य' इत्याद्युक्तम्। अत्र पूर्ववाक्ये यथाऽनुशासनमित्युक्त्या राज्ञ इव राजशासनानुवर्तिनां सत्यसङ्कल्पकार्यसर्वलोककामचारः प्रतिपिपादयिषित इति प्रतीयते। दहरविद्यायामिव प्रजापतिविद्यायामपि सत्यकामस्सत्यसङ्कल्प इत्यादिकं श्रूयते। प्रजापतिविद्या जीवविद्येति प्रागेव (४८५.पु) निरूपितम्। अतः अपहतपाप्मत्वादिकं जीवधर्म एव 'य आत्मा अपहतपाप्मा' इत्यत्र विवक्षितः। प्रजापतिविद्यायाः दहरविद्याऽङ्गतया अङ्गिनः प्रागुक्तं फलमेवाङ्गस्येति बोधयितुं 'परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तम्। परजीवयोरुभयोरपहतपाप्मत्वादिधर्मप्रतिपादनपूर्वकं स्वरूपाविर्भावकथनेन अपहतपाप्मत्वादिना जीवस्य परसाम्यं, स्वरूपाविर्भावोऽपि भोगसाम्यमिति प्रतीयते॥

अत्र 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इति जीवधर्मभूतज्ञानस्यापि कथनेन धर्मभूतज्ञानाविर्भावोऽपि स्वरूपाविर्भाव इति निश्चीयते। एतदेवाभिप्रेत्य 'आत्मप्रकरणात्' (४.१.३) इति सूत्रे अपहतपाप्मत्वादेः ज्ञानादेश्चाविर्भावः भाष्ये स्थापयिष्यते। 'मुक्तःप्रतिज्ञानात्' इत्यनन्तरं 'आत्मा प्रकरणात्' इत्यत्र स्वरूपाविर्भावकथनेन 'मुक्तोपसृप्य व्यपदेशाच्च' इत्यत्र मुक्तस्य ब्रह्मप्राप्तिः मुक्तस्वरूपाविर्भावश्चैकपदार्थ एव पर्यवस्यतीति प्रतीयते। प्रजापतिविद्याऽन्ते 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' इत्युपसंहारेण सर्वलोककामचार-

श्रीभाष्यम्

**‘ब्रह्मविदाप्नोति परम्’ ‘सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता’ ‘एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्’**

श्रुतप्रकाशिका

एतद्विवरणरूपं वाक्यं दर्शयति । **सोऽश्नुतइति । अनुसंचरन्नित्यनेन** भेदो दर्शितः,

गूढार्थसंग्रहः

स्सगुणविद्याफलमेव नतु निर्गुणविद्याफलमिति परसम्मतार्थो न घटत इति बोधितम् । ब्रह्मप्राप्तिसाम्यादीनां सर्वलोककामचारसाहित्यं सगुणविद्याफलत्वं च स्थापयितुं ब्रह्मप्राप्त्यादि प्रतिपादिकाः श्रुतीरुदाहरति—**ब्रह्मविदाप्नोति परमित्यादिना सोऽश्नुते सर्वान्कामान्सह ब्रह्मणाविपश्चिता इत्यन्तेन** । प्राक् (६७२.पु) एतच्छ्रुत्यर्थः स्पष्टमभिहितः ॥

अत्र ‘ब्रह्मविद्याप्नोति परम्’ इत्यादिवाक्यप्रतिपाद्या निर्गुणविद्येति परेषां मतम् । पूर्वमेवैतद्वाक्यस्य सगुणपरत्वसाधनेन सगुणविद्यानिष्ठ एव तत्र विवक्षितः । आनन्दमयस्य न ब्रह्मत्वं ‘ब्रह्मपुच्छं प्रतिष्ठा’ इत्यत्रैव ब्रह्मत्वं विवक्षितम् । तच्चानन्दरूपमेवेति निर्विशेषमेव । तदपि शब्दवाच्यं न, किंतु लक्ष्यमेवेति ‘यतो वाचो निवर्तन्ते’ इत्यादिभिरेतदर्थसिद्धिरिति परे वदन्ति । नायमर्थः श्रुतौ विवक्षितः । ‘आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन, कदाचन’ इति वाक्यद्वये ब्रह्मनिष्ठानन्दस्यैव भयनिवृत्तिहेतुत्वप्रतिपादनेन सगुणस्यैव तत्र विवक्षितत्वस्य पूर्वमेवोक्तेः । आनन्दानन्दमयशब्दयोरेकार्थत्वस्य आनन्दमयस्यैव ब्रह्मत्वस्य च वृत्तिकारसम्मतस्य श्रुतिसूत्रतात्पर्यविषयत्वस्यानन्दमयाधिकरणे स्थापयिष्यमाणत्वाच्चेत्याशयेन **एतमानन्दमयमात्मानमुपसङ्क्रम्य** इति वाक्योपादानेन प्राप्तिसर्वलोकसंचारयोस्साहित्यप्रतिपादकं वाक्यमुपादत्ते **एतमानन्दमयमात्मानमुपसङ्क्रम्येत्यादिना—कामरूप्यनुसंचरन् इत्यन्तेन** । अत्र ‘प्राप्तेऽस्मिन् प्राप्तिरूपा परविद उपसङ्क्रान्तिरानन्दसिन्धौ’ (अ.सा) इत्याचार्यपादोक्तदिशा उपसङ्क्रान्तिः ‘ब्रह्मविदाप्नोति परम्’ इत्युपक्रमोक्तब्रह्मप्राप्तिरेवेति प्रतीयते । ‘सोऽश्नुते सर्वान्कामान् सहब्रह्मणाविपश्चिता’ इत्यत्रोपक्रमे सर्वकामाशनं यदुक्तं तस्यैव ‘कामान्नी कामरूप्यनुसञ्चरन्’ इत्यत्र ‘कामान्नी’ इत्यनेन प्रतिपादनेन वाक्यद्वयस्यैकपुरुषविषयत्वस्य स्फुटं प्रतीतेः ॥

परैरपि ‘ब्रह्मणा सहेति । ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्वान् कामान् समश्नुते’ नित्यब्रह्मात्मस्वरूपेण धर्मादिनिमित्तानपेक्षान् चक्षुरादिकरणानपेक्षांश्च सर्वान्कामान् सहाश्नुते इत्युपक्रमे, उपसंहारे च ‘सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता’ इति फलवचनस्यार्थविस्तारो नोक्तः । के ते किं विषया वा सर्वे कामाः कथं वा ब्रह्मणा सहसमश्नुते इत्येतद्व्यक्तव्यमितीदानीमारभ्यते’ इत्युपक्रम्य ‘एकत्वे पुनःकामकामित्वानुपपत्तिः भेदजातस्य सर्वस्यात्मभूतत्वात् तत्र कथं युगपद्ब्रह्मस्वरूपेण सर्वान्कामानेवंवित्समश्नुत इति । उच्यते सर्वात्मत्वापत्तेः’ इति (शं.उ) भाष्ये उक्तम् । अत्रानन्दगिरिविवरणम् । ‘अविद्यालेशवशेन द्वैतावभासमनुभवन् विद्वान् सर्वस्यात्माऽहमिति मन्यमानः अणिमाद्यैश्वर्यभुजां योगिनां यत्कामान्नत्वं कामरूपत्वं च ममैवेति पश्यन् युगपत्सर्वान् विषयानन्दानश्नुत इत्युपचर्यत इत्याह- सर्वात्मत्वापत्तेरिति’ इति । अत्र ‘सोऽश्नुते सर्वान्कामान्’ इति वाक्यस्य अर्थस्वारस्यं परित्यक्तमिति स्फुटं विदुषाम् । सहशब्दस्य प्रसिद्धार्थपरित्यागः प्रागेवोक्तः । एवं विपश्चिच्छब्दस्यापि । उपक्रमे ‘सोऽश्नुते सर्वान्कामान्’ इत्युक्तोऽर्थः उपसंहारे ‘सय एवंवित् अस्माल्लोकात्प्रेत्य, एतमानन्दमयमात्मानमुपसङ्क्रम्य’ इत्यादिना उत्क्रान्त्याद्यनन्तरमेवेति निर्धारणेन ‘ब्रह्मविदाप्नोति परम्’ इत्यत्रोक्ता विद्या सगुणविद्यैव नतु निर्गुणविद्येति स्थापितम् ॥

### श्रीभाष्यम्

**' स तत्र पर्येति ' (छां.८.१२.३) ' रसो वै सः रसगँ्ह्येवायं लब्ध्वाऽऽनन्दी भवति ' (तै. (आन.७.१,१२) ' यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय तथा विद्वा-**

### श्रुतप्रकाशिका

**' रसो वै स '** इत्यनेन साम्यमानन्दित्वाकारेणेत्युक्तं भवति । परसाम्योपयोगिनीं वैधर्म्यनिवृत्तिं दर्शयति । **यथानद्य-**

### गूढार्थसङ्ग्रहः

प्रजापतिविद्यायामपि स्वरूपाविर्भावानन्तरं मुक्तस्य संचारप्रतिपादिकां श्रुतिमुपादत्ते—**स तत्र पर्येतीति** । ब्रह्मप्राप्त्यनन्तरं संचरणादेः प्रतिपादनात् ब्रह्मप्राप्तिः स्वरूपाविर्भावश्च निर्विशेषब्रह्मवादिमते न घटते । अथ आनन्दानन्दमयशब्दयोः आनन्दवल्ल्यादौ भिन्नार्थकत्वकथनं परेषामनुपादेयम् । तत्रैवानन्दस्य धर्मवत्त्वप्रतिपादनात् । ' ब्रह्मविदाप्नोति परम् ' इत्युपक्रमोक्त ब्रह्मप्राप्त्यनन्तरं ब्रह्मप्राप्तस्यानन्दवत्त्वप्रतिपादनात् ब्रह्मवल्ल्याः निर्विशेषविषयत्वस्यैवासम्भवात् इत्यभिप्रेत्य श्रुतिवाक्यमुपादत्ते—**रसो वै सः रसगँ्ह्येवायं लब्ध्वानन्दी भवतीति** ॥

अत्र परेषां भाष्यम् ' ये निरीषणा ब्राह्मणाः ब्राह्मरसलाभादिव सानन्दा दृश्यन्ते विद्वाँसः नूनं ब्रह्मैव रसस्तेषाम् ' इत्यादि । वार्तिकमपि ' रसस्सारोऽमृतं ब्रह्मानन्दोऽह्लाद उच्यते । अपविद्धैषणास्तद्वद्ग्राह्योपादानवर्जिताः । निस्संबोधं परानन्दं प्राप्तास्सन्यासिनोऽमलाः ' इति (२२,२७) ' कोह्येवान्यात्कःप्राण्यात् यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति ' इत्येतदुत्तरवाक्यम् । अत्रानन्दशब्दोऽपि आकाशशब्दसमानाधिकरणः प्रागुक्तरसपदार्थब्रह्मणएव वाचकः । अनेन वाक्येन ' रसगँ्ह्येवायं लब्ध्वाऽऽनन्दी भवति ' इति पूर्ववाक्योक्तमुक्तानन्दः परमात्मसङ्कल्पाधीन इत्युक्तं भवति । अत्र ' एषह्येवानन्दयाति ' इत्यनेन ' कःप्राण्यात् ' इत्यत्र प्रकर्षेण अननं मुक्तिदशायामानन्दत्वेन विवक्षितमिति प्रतीयते । एतेन ब्रह्मशब्दार्थभूतबृंहणत्वं विशदीकृतमिति भावः ॥

' ब्रह्मविदाप्नोतिपरम् ' इत्यादेः निर्विशेषविषयत्वं न सम्भवति, किंतु सविशेषविषयत्वमेवेति उपक्रमादिवाक्यैः निर्णयेन परेषां निर्विशेषविषयत्वेन सम्मतश्रुत्यन्तरस्यापि सविशेषविषयकत्वमेवेत्याशयेन तां श्रुतिमुपादत्ते—**यथा नद्यस्स्यन्दमानाः इत्यादिना** । एतच्छुत्यर्थश्च शङ्करभाष्ये एवमुपवर्णितः । ' यथा लोके नद्यस्स्वाश्रयमेव नामरूपंविहाय समुद्रमुपयान्ति, एवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैति ' इतिहि तत्रार्थः प्रतीयते ' दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै ' इति (ब्र.सू.१.४.२१) स एव युक्तः नतु ब्रह्मवेदनसाध्यः नामरूपसामान्यविनिर्मोकोऽत्र विवक्षितः । ' सयथेमाः नद्यस्स्यन्दमानाः—भिद्येते तासां नामरूपे समुद्रः इत्येवं प्रोच्यते ' (प्र.उ.६.४) इति दृष्टान्ते, ' एवमेवास्य परिद्रष्टुः—भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते ' इति दार्ष्टान्तिके च नामसंबन्धप्रतिपादनेन तद्विरोधात् । नामसंबन्ध प्रतिपादनेन रूपसम्बन्धोऽपि वर्तत इति प्रतीयते । पूर्वरूपसम्बन्धविगमेऽपि रूपान्तरसम्बन्धसम्भवात् । एवं बन्धदशायां कालसम्बन्धानिबन्धनरूपस्य देवमनुष्यादिनाम्नश्च संबन्धस्य मुक्तिदशायां विगमेऽपि नामान्तरस्याविरोधवत् रूपान्तरस्यापि विरोधो नास्तीति प्रतीयते । नामरूपसम्बन्धप्रयोजकीभूतं कर्मैव । ' नैव स्त्री न पुमानेष नचैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते ' इति (श्वे.५.१०) ' कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंपद्यते ' इत्याद्युक्तेः । एवं च कर्मसम्बन्धानिबन्धननामरूपप्रहाणमेवात्र विवक्षितमित्येतच्छ्रुत्यर्थानिर्णयार्थं ' परात्परं पुरुषमुपैतिदिव्यम् '

श्रीभाष्यम्

न्नारूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु.३.२.८) 'तदा विद्वान् पुण्यपापे विधूय

श्रुतप्रकाशिका

**इति** । नदीनां नदीत्वाकारप्रहाणेन समुद्रसंसर्गाद्वैधर्म्यप्रहाणेन संसर्गो दृष्टान्ते उपजीव्यः प्राकृतनामरूपप्रहाणपूर्विका हि परमात्मप्राप्तिः नच तावता भेदनिवृत्तिः, '**पुरुषमुपैति**' इति कर्मकर्तृभावावगमात् । साम्यापत्तिं दर्शयति । **तथेति** ॥

**ननु** परमं साम्यमुपैतीत्यैक्यापत्तिरुच्यते समशब्दस्य समानशब्दपर्यायत्वात्समानशब्दवदैक्ये प्रयोगाच्च । समशब्दस्यैक्ये प्रयोगो दृश्यते समकालवर्तीत्यादिषु तथा समशब्दपर्यायतयाऽवगत * समानशब्दोऽप्यैक्ये प्रयुज्यते '**समानं वृक्षं परिषस्वजाते**' इति '**एकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्**' इति च । ऐकाधिकरण्यंहि सामानाधिकरण्यम् । एकस्मिन्नर्थ इत्युक्तेः । तत्पर्यायश्च समशब्दः । यद्यपि सादृश्यस्यापि समशब्दो वाचकः तथाऽपि मुक्तिवाक्यस्थसाम्यशब्दऐक्यपरः '**ब्रह्म वेद ब्रह्मैव भवति**' इत्यादिश्रुत्यन्तरैकार्थ्यात् लयसायुज्यशब्दश्रवणात् नदीसमुद्रघटाकाशमहाकाशादि दृष्टान्तश्रवणाच्च । '**साधर्म्यमागताः**' इति स्मृतिस्तु सगुणप्राप्तिविषया अन्यथा प्रत्यक्षश्रुतिविरोधे स्वरूपैक्यविषयबहुस्मृतिविरोधे च तद्दौर्बल्यात् । अतऐक्यापत्तिरेवानेन वाक्येन प्रतिपादिता ऐक्यस्य च पारम्यंनाम पुनर्भेदभ्रमप्ररोहविरहितत्वमिति । अत्रोच्यते अत्र साम्यशब्दः सादृश्यमेवाभिधत्ते नत्वैक्यं ऐक्यस्य * मुख्यार्थत्वेऽभ्युपगतेऽपि स्वारस्याभावात् । सादृश्य एव हि समशब्दस्य प्रसिद्धिप्राचुर्यम् तस्यचापवादाभावे सत्यस्वरसार्थस्वीकारोऽनुपपन्नः अपवादहेतवश्च त्वदुक्ता अनन्तरमेव परिह्रियन्ते नच समादिशब्दानामैक्यं मुख्यार्थः एकत्वविवक्षायामेको घट इत्यादौ समो घट इत्यादि प्रयोगाभावात् । मुख्यत्वेह्येकशब्दस्येव प्रतियोगिनिरपेक्षप्रयोगः प्राप्नोति । यत्तु सामानाधिकरण्यं समकालवर्ती इत्यादिषु समादिशब्दप्रयोगः * सतु साधारण्यार्थः नत्वैक्यार्थः साधारण्येऽपि प्रयोगो न मुख्यः, प्रयोगेऽन्यथासिद्धे शक्तिकल्पनानुपपत्तेः ॥

* **तथाहि** अनेकप्रतियोगिकैकरूपसंबन्धवत्त्वं साधारण्यम् । यथा धनं देवदत्तयज्ञदत्तौ प्रति शेषत्वेन सम्बन्धितया साधारणं तयोश्च धनं प्रतिशेषितया स्ते सादृश्यं * ताभ्यां सम्बन्धि धनम् । * तथा नीलत्वोत्पलत्वे अपेक्ष्याधारतया सम्बन्धिद्रव्यं साधारणं तयोश्च द्रव्यंप्रत्याधेयतयास्ते सादृश्यं ताभ्यां सम्बन्धिद्रव्यम् । तथा * द्वाभ्यां संयोगित्वेनावच्छेद्यावच्छेदकभावेन वा संबन्धी कालस्तयोस्साधारणः तत्कालसंबन्धित्वाकारेण तयोरपि सादृश्यमस्ति ताभ्यां संबन्धी कालः । अतो मिथस्सदृशपदार्थसंबन्धितया * द्रव्यकालादिषु समसमानादिशब्दा लक्षणया वर्तन्त इति न मुख्याः, अत ऐक्ये प्रयोगाभावात् समशब्दस्यैक्यं न मुख्यार्थः । मुख्यार्थे सम्भवति लाक्षणिकार्थस्वीकारो नोपपद्यते अतस्साम्यशब्दसादृश्यमेवाभिधत्ते मुक्ता(वा)त्मगोचरसामानाधिकरण्योपपत्तिश्चानन्तरमेव भाष्ये वक्ष्यते । यदुक्तम् सायुज्यशब्देन मुक्तावभेद इति तदयुक्तम्, सायुज्यशब्दस्य समानगुणयोगवाचित्वात् । * युज्यत इति युक्छब्दो गुणपरः धर्मिणिहि गुणस्सं-

गूढार्थसङ्ग्रहः

इत्यत्रोक्तपुरुषप्राप्तेः स्वरूपाविर्भावरूपत्वेन अनुभवरूपत्वव्यक्तीकरणार्थं च श्रुत्यन्तरमुपादत्ते—**तदा विद्वान् पुण्यपापे विधूयेति** ॥ 'निरञ्जनः' प्रकृतिसंबन्धकर्मवासनाशून्यः पुण्यपापविधूननमुपासकस्य चरमशरीरवियोगकाले प्रकृतिसंबन्धवासनाविरहश्च गतिमध्ये इति तृतीयचतुर्थयोः व्यक्तीभविष्यति ॥

## श्रुतप्रकाशिका

बध्यते । समानगुणकस्सयुक् तस्य भावस्सायुज्यमितिहि व्युत्पत्तिः । प्रयोगविरोधाच्च नैक्यं सायुज्यम् 'एतासामेव देवतानाꣳसायुज्यं सार्ष्टिताꣳसमानलोकतामाप्नोति' इति बह्वीभिर्देवताभिरेकस्य सायुज्यापत्तिश्श्रूयते । नह्येकस्य निरवयवस्याच्छेद्यस्यात्मनो बह्वीभिर्देवताभिरैक्यं सम्भवति । क्रमभावित्वादविरोध इतिचेत्—

तर्ह्यग्निनैकीभूतस्य वरुणसायुज्यापत्तौ अग्नित्वोपाधेः प्रहाणादग्नेर्देवताया अभावस्स्यात् अग्नित्वोपाधौ स्थिते वरुणैक्यापत्तिरनुपपत्तिः । औपाधिकभेदप्रहाणं ह्यैक्यापत्तिः नतु पूर्वमविद्यमानमैक्यमुत्पद्यते अग्नौ स्थित एव ततःपृथग्भूतस्य वरुणसायुज्यमितिचेदेकीभूतस्य पृथग्भावोह्युपाधितस्स्यात् उपाधिश्च देहान्तःकरणादिः तत्संबन्धस्याहेतुकत्वेऽतिप्रसङ्गाद्धेतुर्वाच्यः ; कर्मैव हेतुरितिचेत् अग्निसायुज्यापत्तिदशायां तत्कर्म नष्टं नवा नष्टंचेत्पुनरुपाध्यनुदयेनाग्नितः पृथग्भावा-

## गूढार्थसङ्ग्रहः

अत्र पूर्वार्धे 'यदा पश्यः' इत्यत्र उपात्तपश्यशब्देनैवोत्तरार्धार्थोपपत्तौ 'विद्वान्' इत्यस्य वैयर्थ्यपरिहाराय ज्ञाननिबन्धनमेव साम्यं विवक्षितम् । परमशब्दश्च कस्मिंश्चिदपि विषये न्यूनता नास्तीति बोधनाय । एवं च सर्वविषयकज्ञानवत्वेन साम्यमेवास्यां श्रुतौ विवक्षितम् । 'एषहि द्रष्टा' इति प्राक् (४८९.पु) उदाहृतश्रुत्युक्तजीवस्य 'सपरे अक्षरे आत्मनि संप्रतिष्ठते' (प्र.४.९) 'स योहवै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वो भवति (४.१०) तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञस्सर्वमेवाविवेश' (४.११) इत्यत्र जीवस्य ब्रह्मज्ञानेन सर्वज्ञत्वस्य स्पष्टमुक्तेः । स्वरूपाविर्भावस्य धर्मभूतज्ञानाविर्भावरूपतया धर्मभूतज्ञानपूर्णविकासरूपसर्वज्ञत्व एव पर्यवस्यति । 'ब्रह्मविदाप्नोतिपरम्' इति श्रुत्युक्तब्रह्मप्राप्तेः 'सोऽश्नुते सर्वान्कामान्' इत्युत्तरवाक्येन सर्वानुभवरूपता बोध्यते । 'ब्रह्मविदाप्नोतिपरम्' इत्यत्रापि ब्रह्मवित्तदाप्नोतीत्यनभिधाय परमाप्नोतीत्युक्त्या उत्कर्षविशिष्टब्रह्मप्राप्तिः अनुभवरूपा बोधिता स्वेतरसर्वावधिकोत्कर्षविशिष्टानुभवः स्वेतरसर्वानुभवमन्तरा न घटत इति सर्वविशिष्टब्रह्मानुभव एवात्र विवक्षितः ॥

अत्र 'परात्परं पुरुषमुपैति दिव्यम्' इत्यत्र नामरूपविमुक्तात् परत्वविशिष्टपुरुषानुभव एव विवक्षित इति मुक्तजीवावधिकोत्कर्षविशिष्टब्रह्मानुभवः अत्र प्रतिपाद्यत इति विशेषः । 'परयात्वक्षरप्राप्तिः' (वि.पु) इत्यादिवचनोपबृंहितायां 'अथ परा यया' इत्युपक्रमस्थश्रुतौ उक्ता ब्रह्मप्राप्तिः 'परात्परम्' इत्यनेन विशदीकृता भवति ॥

अत्र पुरुषशब्दस्य **'औपनिषदपरमपुरुष'** इति महासिद्धान्तारम्भभाष्यसूक्तिविवरणावसरे उपपादितबृहदारण्यकनिर्वचनत्रयानुरोधेन जगत्कारणत्व ब्रह्मप्राप्तिप्रतिबन्धकपापनिवर्तकत्व अन्तर्यामित्वरूपार्थत्रयबोधनेनात्र सृष्टेः अन्तर्यामित्वस्य मुक्तेश्च दयामूलकत्वेन मुक्तिपर्यन्तफलदानेच्छया सृष्टिरित्यर्थसिद्ध्या राजकुमारनयेन पुत्रस्य स्वप्राप्तये दयया पितुः प्रवृत्तिवत् प्रळयकालेऽचित्कल्पानां जीवानां स्वस्वसंपादनार्थमेव सृष्ट्यादिकमित्यर्थस्य सिद्ध्या सृष्टिवाक्यानां मुक्तिवाक्यानां च सामरस्यं बोधितम् । अत्र पुरुषप्राप्तेः परसाम्यप्राप्तेश्च प्रतिपादनेन ब्रह्मणः अन्तर्यामित्वरूपेण परिणामस्य जीवधर्मभूतज्ञानविकासपरम्परासम्पादकत्वेन उपादानत्वेन ब्रह्मणः पितृत्वं जीवस्य पुत्रत्वं च सूचयित्वा ब्रह्मणो जीवस्य च परिणामयोस्सम्यक् प्रयोजनं दर्शितं भवति । एतेन 'नहि परिणामिज्ञानस्य किंचित्प्रयोजनं अपितु फलवत्सन्निधौ अफलं तदङ्गम्' इति आत्मैक्यप्रतिपत्त्यर्थत्वं सृष्टिवाक्यानामिति प्राक् (१२८.पु) परप्रदर्शितार्थः न श्रुतितात्पर्यविषय इति सिद्धम् ॥

एवं 'अथ परा यया तदक्षरमधिगम्यते' 'परात्परं पुरुषमुपैति' इत्युपक्रमोपसंहाराभ्यां 'ब्रह्म वेद ब्रह्मैव भवति इत्यत्रापि भूधातोः प्राप्त्यर्थकत्वनिर्णयेन सद्विद्यायामुत्क्रान्तिनिरूपणानन्तरं 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ

### श्रीभाष्यम्

**निरञ्जनः परमं साम्यमुपैति ' (मु.३.१.३) इत्याद्याः ।**

### श्रुतप्रकाशिका

योगा * दग्नित्वोपाधेश्चाप्रहाणात् पूर्वोपाधिप्रहाणरूपवरुणसायुज्यापत्तिः क्रमेणापि नोपपद्यते । अनष्टंचेत्तत्कृतोपाधेरनष्टत्वान्नाग्निनैक्यापत्तिसम्भवः औपाधिकभेदस्य तत्प्रहाणरूपैक्यापत्तिविरोधित्वात् । अनष्टमपि तत्कर्माग्निसायुज्यापत्तिदशायां ततो भेदकमुपाधिं न जनयति कर्मणां कार्य(कर)कारि)त्वस्य कालविशेषनियतत्वादितिचेत् तथाऽपि व्यवस्थितकर्मविशेष परिष्वक्तस्य जीवस्य तत्कर्मापरिष्वक्तादग्नितस्तदेव कर्म भेदकमिति नाग्निनैक्यापत्तिरुपपन्ना ॥

**किंच** पृथिव्यैकीभूतपृथग्भूतघटस्येव अग्निनैकीभूतपृथग्भूतजीवस्याजत्वनित्यत्वानुपपत्तिश्च । अतो भेदे स्थितएवाग्नयादिसायुज्यम् समानलोकतासाहचर्याच्च नैक्यं सायुज्यम् । नह्येकस्य स्वेन समानलोकत्वसम्भवः, अतस्समानलोकत्वभेदे सिद्ध एव सायुज्यं भवति समानलोकताप्राप्त्यनन्तरं सायुज्यापत्तिः नतु युगपदेव अतस्तयोरविरोध इतिचेत्— न '**सायुज्यगँ् सार्ष्टितागँ्समानलोकताम्**' इति सायुज्यं पूर्वश्रुतत्वात् । अर्थक्रमेण पाठक्रमबाध इतिचेत् न अवयवशक्त्युपस्थापितार्थस्य पाठक्रमानुगुणत्वादर्थान्तरकल्पनस्याहेतुकत्वाच्च । यदि पाठक्रमबाधार्थं सायुज्यशब्दऐक्यापत्तिलक्षणार्थविषया रूढिशक्तिः कल्प्यते तदाऽन्योन्याश्रयस्यात् सायुज्यस्यैक्यापत्तिलक्षणत्वानिश्चये पाठक्रमबाधः पाठक्रमबाधे सति सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चय इति । '**तेषामेव सलोकतागँ्सायुज्यमश्नुते**' इति वाक्यात्पूर्वोदाहृतवाक्यस्थक्रमबाध इतिचेत् न विरुद्धार्थविषयाया रूढिशक्तेरक्लृप्ततया विरोधास्फुरणात् ॥

**किंच 'अग्नेर्वा एतानि नामधेया, अग्नेरेव सायुज्यगँ्सलोतामाप्नोति, वायोरेवेन्द्रस्यैव बृहस्पतेरेव प्रजापतेरेव ब्रह्मण एव सायुज्यगँ्सलोकतामाप्नोति**' इति भूयसां वाक्यानां बलीयस्त्वात्त्वदुक्तक्रम एव बाध्यः । किंच '**एतेषामेव सलोकतागँ्सायुज्यमश्नुते**' '**अग्नेरेव सायुज्यनँ्सलोकतामाप्नोति**' इत्यादिवक्यानि कर्मविधिशेषार्थवादरूपाणि । कर्मफलत्वाच्चाग्नयादित्यादिदेवतासायुज्यमनित्यम् । अतः कर्मफलावसानेऽग्नयादिभ्यस्तत्सायुज्यं प्राप्तानां

### गूढार्थसंग्रहः

संपत्स्ये ' इत्यत्रोक्तसत्संपत्तेरपि ब्रह्मप्राप्तिरूपतया श्रुतिद्वयैकार्थ्येन सर्वत्रोपनिषत्सु ब्रह्मप्राप्तिरूपफलमुपक्रमादिषड्विधतात्पर्यलिङ्गेषु अन्यतमं प्रधानं श्रुतीनां निर्विशेषपरत्वं विघटयन् सविशेषपरत्वं स्थापयति । निर्विशेषस्याप्रामाणिकत्वं परमतरीत्या 'तत्त्वमसि' इत्यादौ अपूर्वत्वाभावश्चेत्यादिकं प्रागेव निरूपितम् ॥ **परमं साम्यमुपैति इत्याद्याः** इत्यत्राद्यपदेन 'तादृगेव भवति' (कठ.४.१५) इत्यादीनां सङ्ग्रहः । एतच्छ्रुत्यर्थः भावप्रकाशे द्वितीयसम्पुटे (४३०.पु) परेषां प्रतिकूल इति निरूपितम् ॥

एतावता निर्गुणविद्यात्वेन परसंमतविद्यास्वेव निर्गुणविद्याविरुद्धफलं प्रतिपादितमिति तस्या निर्गुणविद्यात्वं न सम्भवति, अपितु सगुणविद्यात्वमेवेति निरूपितम् । निर्गुणस्य प्रामाणिकत्वे निर्गुणविद्यात्वेन परसंमतायां विरुद्धफलस्य यत्र क्व वा प्रतीतिविरहे सर्वसंप्रतिपन्ने वा निर्गुणविद्यासिद्धिः सम्भावनामर्हति । अद्वैतसिद्ध्युक्तरीत्या विरुद्धफलस्योत्कर्षेण वा स्तुत्या वा अविरोधसम्भावनाऽपि स्यात् । नचैवं निर्गुणस्य प्रामाणिकत्वं, निर्गुणविद्यात्वेन परसम्मतायां विरुद्धफलविरहश्च वर्तते । अतः (अ) सिद्ध्युपपादनप्रक्रिया न घटते । श्रुत्यादिभिः लघुचन्द्रिकायां निर्गुणविद्यासाधनप्रकारः न घटत इति भावप्रकाशे तृतीयसंपुटे उपपादितम् ॥

### श्रीभाष्यम्

## परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम्,

### श्रुतप्रकाशिका

पृथग्भावस्यावर्जनीयत्वादामोक्षाज्जीवभेदस्थितेर्भवतामपीष्टत्वादग्न्यादिसायुज्यदशायामपि भेदस्थितिरवर्जनीया, अग्न्यादिसायुज्यगतानां ततः पृथग्भावः पुनरप्युपाधित इतिचेत् दत्तमुत्तरम्। नचाग्न्यादिसायुज्योक्तिरर्थवादत्वादनादरणीयेति वाच्यम्; वेदान्तिभिरर्थवादानां प्रतीयमानार्थे प्रामाण्याभ्युपगमात्। अतो न सायुज्यमैक्यम् अपितु समानगुणयोग एव लयोऽपि न स्वरूपैक्यं लयशब्दस्य तदर्थत्वाभावात्। प्रयोगानुगुणं शब्दार्थव्यवस्थापनं कार्यमिति नित्यनैमित्तिकमहाप्रळयेष्वपि लयशब्दःप्रयुज्यते न तत्र स्वरूपैक्यापत्तिः। न तावन्नित्यप्रळये, स्वर्गनरकादिगमनागमनशास्त्रात्। नापि नैमित्तिके, पूर्वकल्पप्रलीनानां नारदादीनां प्राग्जन्मप्रत्यभिज्ञानवतामेव पुनरुत्पत्त्यवगमात् नारदेन पूर्वकल्पे स्वजन्मवृत्तादिकमिहकल्पेऽभिहितमिति पुराणेष्ववगम्यते। नापि महाप्रळये; वैषम्यनैर्घृण्यपरिहाराय जीवनित्यत्वबहुत्वकर्मवासनानां तदानीं विद्यमानताया अभ्युपगन्तव्यत्वात्। तथा-

प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि॥

इति वदता भगवता पराशरेणैव

हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते॥
प्रधानकारणीभूता यतो वै सृज्यशक्तयः। ... ... ...
तेषां ये यानि कर्माणि प्राक् सृष्ट्याः प्रतिपेदिरे। ... ... ...

इत्यादिभिस्तदानीं सवासनकर्मान्वितजीवबहुत्वं च दर्शितम्। अत एव भेदप्रहाणं च न लयशब्दार्थः। नच तत्र प्राकृतप्रतिसंचरमोक्षविषयप्रळयशब्दयोरर्थवैरूप्यं वक्तुमुचितम्; शक्तिभेदकल्पनामुख्यत्वयोरन्यतरप्रसङ्गात्॥

नच तत्रापि महाप्रळयादिषु लयशब्दस्य अमुख्यत्वं वाच्यम्; बहुष्वर्थेष्वमुख्यत्वाश्रयणादपि मुक्तिमात्रविषयप्रळयशब्दस्यैवामुख्यत्वाश्रयणोपपत्तेः। अतस्सर्वप्रयोगानुगुणोऽर्थः स्वीकार्यः, अतो विसदृशावस्थाप्रहाणेन कारणत्वधर्मिणा द्रव्येण विभागस्यापादानभूतेन संश्लेषो लयः तस्मादैक्यं न लयशब्दार्थः। घटाकाशादिदृष्टान्तोपन्यासश्चौपाधिकवैषम्याभावनिबन्धनः आकाशादितत्त्वानामपि सांशत्वात्तेषां पञ्चीकरणवचनेन प्रदेशभेदवत्ताहि वेदान्तिभिरभ्युपेता अतो मोक्षविषयासु श्रुतिषु स्वरूपैक्यं क्वचिदपि हि नावगम्यते, निर्गुणप्राप्तिविषया श्रुतिः काचिदपि नास्तीत्ययमर्थः अनन्तरमेवोपपाद्यते। अतः साधर्म्यस्मरणस्य सगुणप्राप्तिविषयत्वान्नपरममोक्षविषयत्वम्। अन्यथा निर्गुणप्राप्तिविषयश्रुतिविरोधे स्मृतेर्दौर्बल्यप्रसङ्गादपि दुरुक्तम्। तस्मात् 'यदा पश्यः' इति वाक्ये साम्यशब्दस्सादृश्यपरः। येनाकारेण साम्यं तस्याकारस्य निरवधित्वं परमशब्दाभिप्रेतम्, अत इदं वाक्यं परब्रह्मप्राप्तिरूपं परममोक्षं तत्साम्यापत्तिलक्षणमेव प्रतिपादयति॥

अथ सगुणोपासकस्य सगुणब्रह्मप्राप्तिं वदन्त्येताश्श्रुतयः ननु परब्रह्मविदः ब्रह्मप्राप्तिमिति शङ्कायामाह— **परविद्यास्विति**। ब्रह्मविद्यास्वित्यर्थः। सर्वासु परेण सगुणविषयत्वेन निर्गुणविषयत्वेनचोक्तासु दहरविद्या सद्विद्याऽक्षरविद्यादि-

### गूढार्थसङ्ग्रहः

एवं च परविद्यासामान्यं सगुणविषयकमुपासनरूपं तरतमभावानापन्नफलसाधनमित्येव श्रौतसिद्धान्त इत्याह—**परविद्यासु सर्वासु इत्यादिना**। 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति सूत्रे आदिपदेन भूतयोनित्वादिभावधर्माणामपि

## श्रीभाष्यम्

**फलंचैकरूपमेव अतोविद्याविकल्प इतिसूत्रकारेणैव 'आनन्दादयःप्रधानस्य'**

## गूढार्थसंग्रहः

संग्रहेण 'धर्मोक्तेः' इत्यत्र धर्मशब्दनिर्देशेन च 'अथ परा यया तदक्षरमधिगम्यते— यद्भूतयोनिं परिपश्यन्ति धीराः' (मु.१.१.५) इत्यादिश्रुतितात्पर्यस्य व्यासेन निर्धारणात् सगुणमेव ब्रह्मोपास्यमिति भावः। 'ओमित्येवात्मानं ध्यायथ' (मु.२.२.६) इति श्रुत्यनुसारेण परविद्यासामान्यं समाधिपर्यवसितध्यानरूपमेव विवक्षितमिति तात्पर्येण उपास्यमित्युक्तम् ॥

**फलंचैकरूपमेवेति**। प्रागुदाहृतश्रुतिषु ब्रह्मप्राप्तिः फलमिति स्फुटम्। शाण्डिल्यविद्यायां सगुणविद्यात्वेन परसम्मतायामपि 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतःप्रेत्य भवति' इत्याद्युत्तरं 'एतमितःप्रेत्याभिसम्भवितास्मि' इति फलवाक्ये ब्रह्मप्राप्तिरूपफलमेव प्रतिपादितम्। तत्र 'अभि' इत्युपसर्गेण उपासनविषयातिरिक्तगुणानां विभूत्यादीनां च प्राप्यत्वप्रतिपादनेन राजकुमारनयेन पुत्राणां दायभागवत् ब्रह्मप्राप्तिरूपफले वैषम्यकल्पनायोगेन च परनवीनसम्मतरीत्या उपासनस्य तरतमभावापन्नफलसाधनत्वं न घटत इति भावः ॥

**आनन्दादयःप्रधानस्येति**। अत्र परभाष्यम् 'आनन्दादयःप्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः। कस्मात् सर्वाभेदादेव सर्वत्रहि तदेवैकं प्रधानं ब्रह्म न भिद्यते। तस्मात्सार्वत्रिकत्वं ब्रह्मधर्माणां तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन' इति। 'नहि देवदत्तः शौर्यादिगुणवत्त्वेन स्वदेशे प्रसिद्धः देशान्तरं गतः तद्देश्यैरविभावितशौर्यादिगुणोऽप्यतद्गुणो भवति' इति निदर्शनं पूर्वमुक्तम्। अत्रोपक्रमे 'ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु आनन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मत्वमिति एवंजातीयका ब्रह्मणो धर्माः क्वचित्केचिच्छ्रूयन्ते' इति भाष्ये उक्तम्। भामत्यां—'एवमानन्दविज्ञानत्वादयः विभुत्व नित्यत्वादिभिर्गुणैः प्रदेशान्तरोक्तैः' इत्याद्युक्तम्। अत्र 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इति परविद्यावाक्यमेव विषय इति स्फुटं प्रतीयते। परविद्यायाः ब्रह्मस्वरूपविषयकत्वमिति परेषां सिद्धान्तः। एवं च निर्गुणविद्यात्वेन परसम्मतायां विद्यायां श्रुतिषु प्रतिपादिताः आनन्दत्वादयः गुणा इत्येव सूत्रे विवक्षितमिति परव्याख्यायां स्फुटं प्रतीयते। 'आनन्दादयःप्रधानस्य' इति सूत्रं परविद्याविषयनिरूपणपरमिति तत्सम्मतम्। सूत्रे 'आनन्दादयः' इत्यनेन ब्रह्मगुणा एव निर्दिष्टा इति परविद्यासामान्यविषयनिरूपणपरसूत्रे गुणानामेव विवक्षायाः परसम्मतत्वसिद्ध्या परविद्यासामान्यस्यापि सगुणब्रह्मविषयकत्वमिति सूत्रकृत्तात्पर्यमिति परैरप्यकामेनापि स्वीकार्यम्। सूत्रे आनन्दादीनां ब्रह्माभिन्नत्वबोधकश्शब्दः न कोऽपि वर्तते। प्रधानस्य विशेष्यस्येत्युक्त्या (शं.भा) ब्रह्मणः आनन्दादीनां च विशेष्यविशेषणभाव एव स्फुटं प्रतीयते। अतः एतत्सूत्रं परेषां सिद्धान्तं सूत्रकारासम्मतमिति स्थापयति ॥

एवं प्राचीनव्याख्याने स्वसिद्धान्त प्रातिकूल्यं मन्वानैर्ब्रह्मानन्दसरस्वतीभिः 'अनानन्दत्वजडत्व मिथ्यात्वभ्रमनिवृत्तये अनानन्दादिव्यावृत्त्युपलक्षितब्रह्मलक्षणया तात्पर्यविषयीभूतशुद्धब्रह्मबोधः आनन्दज्ञानसत्यपदैर्जन्यते तादृशस्य च बोधस्य अनानन्दत्वादिभ्रमनिवर्तकत्वमानुभाविकम्। यथा 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिस्थलीयशुद्धचन्द्रादिव्यक्तिबोधस्याप्रकृतप्रकाशत्वादिभ्रमनिवर्तकत्वम्। तस्मात्प्रधानस्य महावाक्यार्थबोधस्य उक्तरीत्योपकारका इति अन्यत्राप्यानन्दत्वादयो गुणा उपसंहर्तव्या एव' इति (वे.सू.) व्याख्यातम्। अत्र प्रधानस्येत्यस्य महावाक्यार्थबोधस्येत्यर्थे विनिगमकं दुर्लभम्। 'आनन्दादयः' इत्यत्र गुणानामेव विवक्षितत्वस्यैतद्व्याख्यातृसम्मततया गुणवाचिपदसमभिव्याहृतप्रधान-

## श्रीभाष्यम्

**(ब्र.सू.३.३-११) ' विकल्पोऽविशिष्टफलत्वात् ' (ब्र.सू.३.३.१५) इत्यादिषूक्तम् ।**

## गूढार्थसंग्रहः

शब्दस्य विशेष्यगुणिपरत्वस्य व्युत्पत्तिसिद्धत्वात्, (वे.सू) इत्युक्तार्थस्यौत्प्रेक्षिकत्वात् । सत्यज्ञानादिवाक्यस्योपलक्षितपरत्वादिकं परसम्मतं सर्वं न घटत इति प्रागेव निरूपितम् । एवंचानेन सूत्रेण परविद्यासामान्यस्य सगुणविषयकत्वं सूत्रकाराभिप्रेतमित्ययमर्थः अप्रकम्प्य इति भावः ॥

फलंचैकरूपमित्युक्तार्थपरं सूत्रमुपादत्ते—**विकल्पोऽविशिष्टफलत्वादिति** । अत्र परैः ' अविशिष्टफलत्वत् ' अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणम् । साक्षात्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः । ' यस्यस्यादद्धानविचिकित्साऽस्ति ' इति सूत्रभाष्ये व्याख्यातम् । ' एतमितःप्रेत्याभिसम्भविताऽस्मि ' इति एतत्पूर्ववाक्यम् उपनिषद्भाष्ये च (शं) ' अस्माच्छरीरात्प्रेत्याभिसम्भविताऽस्मि ' इत्युक्तम् । यथाक्रतुरूपस्यात्मनः प्रतिपत्ताऽस्मीति यस्यैवं विदस्स्यात् । भवेदद्धा—सत्यम् एवं स्यामहंप्रेत्य एवं न स्यामिति नच विचिकित्साऽस्तीत्येतस्मिन्नर्थे क्रतुफलसम्बन्धे ' इत्युक्तम् । अत्रानन्दगिरिविवरणम् ' अध्यवसायानुरूपस्य सगुणस्य परमात्मनः अहं प्रतिपत्ताऽस्मीत्येवंविदः यस्यस्यादद्धा निश्चयः ' इत्यादि । अत्रोपनिषद्वाक्ये साक्षात्काररूपं फलं न श्रुतम् । ' तत्त्वेत्वद्धाऽञ्जसाद्वयम् ' इति कोशेऽपि ' अद्धा ' शब्दस्य तत्त्वार्थकत्वमेवोक्तम् ॥

एतेन ' अद्धा साक्षात्कृतं यथोपास्यं स्यात् ' (वे.सू.मु) इति विवरणमनुपादेयम् । ' अद्धा ' शब्दस्य कोशे सत्यार्थकत्वानुरोधेन (शं) उपनिषद्भाष्येऽपि तथैवोक्तेः । उपनिषदि प्रतीयमानं फलंच ब्रह्मप्राप्तिरूपमेव । इदमेव ' अविशिष्टफलत्वात् ' इत्यत्र सूत्रे सूत्रकृतो विवक्षितम् । ' एवं मुक्तिफलानियमस्तदवस्थाऽवधृतेस्तदवस्थाऽवधृतेः ' (३.४.) ' आवृत्तिरसकृदुपदेशात् ' (४.१.११) इति सूत्रद्वयपर्यालोचनायां मुक्तिफलकमेवोपासनं तत्र विवक्षितमिति स्फुटं प्रतीयते । तत्सूत्रानुसारेणात्रापि सूत्रे ब्रह्मप्राप्तिरूपमेव फलं विवक्षितमिति निश्चीयते । उपनिषदि ' यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतःप्रेत्य भवति ' इत्युक्रमस्य ' एतमितःप्रेत्याभिसम्भविताऽस्मि ' इत्याद्युपसंहारस्यचैकरूप्यं ब्रह्मप्राप्तिरुपासनफलत्व एव स्वरसतस्सम्भवति । अत्रोपनिषद्वाक्ये उपासनसामान्यस्य ब्रह्मप्राप्तिफलमेकरूपमेव विवक्षितमित्येव तात्पर्यमिति भावप्रकाशे तृतीयसंपुटे निरूपितम् । एवं च उपनिषदुक्तं सूत्रे विवक्षितं च ब्रह्मप्राप्तिरूपं फलमेकमेवेति सूत्रकृत्सिद्धान्त इति भावः ॥

सगुणोपासनमदृष्टद्वारा मुक्तिहेतुरिति वृत्तिकारमतम् । अयमर्थो न वाक्यकारसम्मतः, तदुक्तं सङ्क्षेपशारीरके ' अन्तर्गुणा भगवती परदेततेति प्रत्यग्गुणेति भगवानपि भाष्यकारः । आह स्म यत्तदिह निर्गुणवस्तुवादे सङ्गच्छते ननु पुनस्सगुणप्रवादे ॥ ' (सं.शा.२२१) इत्यत्र मधुसूदनविवरणम् । ' अन्तर्गुणे ' ति ' सेयं देवतैक्षते ' ति श्रुतिमनुसृत्य परदेवतेति ब्रह्मैवोच्यते । अन्तर्गुणेत्युक्तं विशदयति प्रत्यग्गुणेति । गुणशब्दः स्वरूपपरः अन्या देवताः पराग्रूपाः, परदेवतातु प्रत्यगात्मरूपा अपरोक्षचिदेकरसेत्यर्थः । निर्गुणवस्तुवादे विकारादिसमस्तविशेषरहितं परमार्थतः आत्मवस्तु इति मते ' इति ॥

एतच्छ्लोकात्पूर्वं ' आत्रेयवाक्यमपि संव्यवहारमात्रं कार्यं समस्तमिति नः कथयांबभूव ।
सत्कार्यवादविषयो नहि दोषराशिः मायामये भवितुमुत्सहते विरोधात् ॥ २१७ ॥
काणाददर्शनसमाश्रयदोषराशिः दूरान्निरस्त इह संव्यवहारमात्रे ।

## श्रीभाष्यम्

**वाक्यकारेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः 'युक्तं तद्गुणकोपासनात्' इति। (छां.वाक्यम्) भाष्यकृता व्याख्यातं च 'यद्यपि सच्चित्त' इत्यादिना (द्रमिडभाष्य-**

## श्रुतप्रकाशिका

त्वित्यर्थः 'अदृश्यत्वादिगुणक' इति परविद्यावाक्यविषयसूत्रस्वारस्यात्तस्यास्सगुणविषयत्वं प्रतीयते । **'आनन्दादयः प्रधानस्य'** इतिसूत्रमुपास्यस्य सगुणत्वायोदाहृतम् । **विकल्पोऽविशिष्टफलत्वादिति** सूत्रं * प्राप्यस्य सगुणत्वायोपात्तं अयमर्थः परेण निर्गुणविषयत्वेनाभिमतानां **'सत्यं ज्ञानम्, आनन्दो ब्रह्म'** इत्यादिवाक्यानामानन्दादिगुणविशिष्टविषयत्वं तेषां च गुणानां सर्वविद्यानुयायित्वं चोक्त्वा तास्वेकैव विद्याफलायालमिति विद्याविकल्पश्चोक्तः । अतः परेण निर्गुणसगुणविषयत्वेनाभिमतासु सद्विद्यादहरविद्यादिषूपास्यं फलं च सगुणमिति सगुणप्राप्तव्यतिरेकेण निर्गुणप्राप्तिः प्रमाणशून्या । अतो मुक्तौ भेदपराणां श्रुतीनामन्यथा सिद्धिर्नोपपद्यते प्राप्यवैषम्याभावादिति । सूत्रकाराभिप्रायविदामुक्तिं दर्शयति **वाक्येति । युक्तं तद्गुणकोपासनादिति** । युक्तं गुणयुक्तमेव प्राप्यम्, कुतः तद्गुणोपासनादित्यर्थः । * विद्यावि-

## गूढार्थसंग्रहः

वेदान्तभूमिकुशलो मुनिरत्रिवंश्यः, तेनाह कार्यमिह संव्यवहारमात्रम् ॥ २१८ ॥
षष्ठप्रपाठकनिबद्धमुदीरितं यत्, तत्सत्यमेव खलु सत्यसमाश्रयत्वात् ।
तत्रैव यत्पुनरुवाच समुद्रफेनदृष्टान्तपूर्वकमदो व्यवहारदृष्ट्या ॥ २१९ ॥
पूर्वं विकारमुपवर्ण्य शनैश्शनैस्तद्दृष्टिं विसृज्य निकटं परिगृह्य तस्मात् ।
सर्वं विकारमथ संव्यवहारमात्रमद्वैतमेव परिरक्षति वाक्यकारः ॥

इत्युक्तम् । एवं च उपासनस्य मोक्षसाधनत्वं वाक्यकारसम्मतमिति लघुसिद्धान्ते साधनमनुचितमिति शङ्कायामाह—**वाक्यकारेणचेत्यादि । यद्यपि सच्चित्त इत्यादिनेत्यादि** । वेदार्थसंग्रहे 'यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत् तथाऽप्यन्तर्गुणामेव देवतां भजते' इति तत्रापि सगुणैव देवता प्राप्यते इति' इत्यन्तभाष्यग्रन्थ उदाहृतः । सच्चित्तः सद्विद्यानिष्ठः । 'न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत्'—अपहतपाप्मत्वादिकल्याणगुणगणं दैवताद्विभक्तम्, यद्यपि दहरविद्यानिष्ठ एव सच्चित्तो न स्मरेत् । तथाऽप्यन्तर्गुणामेव देवतां भजते देवतास्वरूपानुबन्धित्वात् सकलकल्याणगुणगणस्य केनचित् परदेवतासाधारणेन निखिलजगत्कारणत्वादिना गुणेनोपास्यमानाऽपि देवतावस्तुतस्स्वरूपानुबन्धिसर्वकल्याणगुणगणविशिष्टैवोपास्यते । अतः सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सिद्धया दहरविद्ययोर्विकल्पः' इति विवरणमपि कृतम् । अयमाशयः । भोक्त्रापत्त्यधिकरणे व्यवहारदृष्ट्या परिणामवादः इत्यर्थः वाक्यकृतो ब्रह्मनन्दिनो न सम्मतः 'परिणामस्तु स्याद्दध्यादिवत्' इति भास्करभाष्योदाहृतवाक्यविरोधात् । अत्र दध्यादिवदिति 'उपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धि' इति आरम्भणाधिकरणोत्तरसूत्रे 'क्षीरवद्धि' इत्येतत्तात्पर्यप्रकाशनार्थमुपात्तम् ॥

एतेन आरम्भणाधिकरणे विवर्तवादः तत्पूर्वाधिकरणे व्यवहारदृष्ट्या परिणामवादस्सम्मत इति कल्पनमनुचितम् । तदुत्तरं 'क्षीरवद्धि' इत्यनेन परिणामवादस्यैव सिद्धान्तकरणात् । कृत्स्नप्रसक्त्यधिकरणे परिणामवाद एव पूर्वपक्षमुद्भाव्य समाधानकरणाच्च । बौद्धमतरीत्या व्यवहारपरमार्थविभागः विवर्तवादिसम्मतः न वाक्यकाराभिप्रेतः । एतत्तात्पर्येणैव 'न संव्यवहारमात्रत्वात्' इति वाक्ये व्यवहारमात्रत्वादित्यनभिधाय संव्यवहारमात्रत्वादित्युक्तम् । 'इन्द्रियैरुपलब्धं

## गूढार्थसंग्रहः

यत्तत्त्वेन प्रदर्श्यते । जातास्तत्त्वविदो बालाः तत्त्वज्ञानस्य किं फलम्' (नागार्जुनकारिका) इति वदतः बौद्धस्य व्यावहारिकस्यातात्त्विकत्वोक्तिः अनुचितेति तात्पर्येण (जैन)परीक्षामुखसूत्रेषु मुख्यं सांव्यवहारिकंचेति प्रत्यक्षविभागःप्रदर्शितः । 'संव्यवहारः अबाधितो व्यवहारः' इति प्रभाचन्द्रेण प्रमेयकमलमार्ताण्डे निरूपितम्। अयमेवार्थः 'संव्यवहारमात्रत्वात्' इत्यत्र ब्रह्मनन्दिनोऽपि विवक्षितः । जगदुपादानकारणत्वं ब्रह्मलक्षणं 'जन्माद्यस्य यत' इत्यत्राभिधाय प्रकृत्यधिकरणमारभ्य कृत्स्नप्रसक्त्यधिकरणपर्यन्तं प्रतिष्ठापयतस्सूत्रकृतः परिणामवादमेव तत्र तत्र प्रदर्शयतोऽप्ययमेवार्थोऽभिप्रेतः । 'यतो वा इमानि भूतानि' इति श्रुतौ 'इमानी' त्यस्यार्थमभिसंधाय 'जन्माद्यस्य यत' इत्यत्र 'अस्य' इति पदमुपात्तम् । प्रत्यक्षविषयबाधः नोक्तः । अबाधितार्थविषयमेव प्रत्यक्षमिति व्याससिद्धान्तः। भोक्त्रापत्त्यधिकरणंतु न परमताभिप्रायेण प्रवृत्तं किंत्वन्यार्थतात्पर्येण प्रवृत्तमित्यर्थः तदधिकरणे द्रमिडभाष्यवाक्योपन्यासेन निरूपयिष्यते। 'अन्तर्गुणामेव देवतां भजेत' इत्यत्र गुणशब्दस्य स्वरूपार्थकत्वमनुचितं तदर्थे क्वापि प्रयोगविरहात् । द्रमिडभाष्यवाक्यमनुदाहृत्य अन्तर्गुणा देवतेति शब्दद्वयमात्रावलम्बनेन स्वोत्प्रेक्षामात्रेण भाष्यार्थवर्णनं 'सगुणैव देवता प्राप्यते' इति द्रमिडभाष्यविरोधेन 'नतु पुनस्सगुणप्रवादे' इति प्रतिज्ञाकरणंचाभिनिवेशमूलकमेव । अतः वाक्यकारस्य सविशेषात्मवादः सविशेषोपासनमदृष्टद्वारा परममुक्तिसाधनं मुक्तिरूपैकफलसाधनत्वेन परविद्यासामान्यस्य विकल्पइत्येव सिद्धान्त इति द्रमिडभाष्यकृता स्थापितं भवतीति सिद्धम् । 'न संव्यवहारमात्रत्वात्' इति सिद्धान्तवाक्यस्य पूर्वपक्षवाक्यद्वयार्थवर्णनपूर्वकमर्थः भावप्रकाशे द्वितीयसम्पुटे (३४८.पु) सम्यङ्निरूपितः ॥

'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्र भूधातोः प्राप्त्यर्थकत्वं न युक्तम्, तदर्थे प्रसिद्धिविरहात् अपशूद्राधिकरणे न्यायरक्षामणौ 'यत्र योगार्थस्य पूर्वं बुद्धिस्थता तत्र रूढ्यपेक्षया योगार्थस्य न दौर्बल्यम्, विलम्बोपस्थितिकत्वाभावात्'। इत्युक्तरीत्या प्राप्तेः प्रथममेव बुद्धिस्थत्वेन विलम्बोपस्थितिकत्वं यद्यपि नास्ति । तथाऽपि भूधातोः प्राप्त्यर्थत्वाङ्गीकारे 'सयोह वै तत्परमं ब्रह्म वेद तदेव भवति' इत्युपपत्तौ ब्रह्मशब्दवैयर्थ्यात् । ब्रह्मशब्दनिर्देशोहि 'ब्रह्मैव सन्ब्रह्माप्येति' इति वाक्यान्तरार्थपरिग्रहार्थः तत्र प्राप्तेः ब्रह्माभेदस्य च पृथगुक्त्या अत्रापि पृथङ्निर्देशेन 'ब्रह्मैव भवति' इत्यत्रापि 'ब्रह्मैव सन्' इति वाक्यान्तरोक्तार्थ एव परिग्राह्यः । यद्यपि नवीनैः परमं ब्रह्मेत्यत्र परमशब्दनिर्देशेनात्र परमशब्दं विहाय ब्रह्मैव भवतीत्युक्त्या ब्रह्मशब्दस्य बृहजातिजीवादिषु रूढेः विवरणाद्युक्तायाः अङ्गीकारेण जीवार्थकत्वमेव । ब्रह्मैव भवति जीव एव भवति इति वाक्यार्थः, एवकारेण ब्रह्माभेदव्यवच्छेदइत्युक्तम् । ब्रह्मशब्दस्य जीवार्थकत्वाङ्गीकारे जीवशब्दं विहाय ब्रह्मशब्दनिर्देशः व्यर्थ एव स्यात् । अतः ब्रह्मैव सन्निति श्रुत्यन्तरोक्तार्थ एवात्र परिग्राह्यः तत्र 'ब्रह्मैव सन्ब्रह्माप्येति' इत्यत्र परमशब्दाभावात् ब्रह्मशब्दद्वये एकस्य परब्रह्मार्थकत्वं अपरस्य जीवार्थकत्वं चायुक्तम् । अतः उभयोः परब्रह्मार्थकत्ववत् ब्रह्मैव भवति इत्यत्रापि ब्रह्मशब्दः परब्रह्मार्थक एव युक्तः ॥

सङ्क्षेपशारीरके च प्रथमाध्याये–

ब्रह्मैव सन्निति वचःप्रथमश्रुतत्वादप्येतिशब्दमुपसंहरणश्रमुच्चैः ।
प्रच्यावयन्स्वविषयादुचिताद्बलीयो ब्रह्मात्मनोरनतिरेकमसाध्यमाह ॥ ३०७ ॥
आग्नेय इत्याद्यपि ताद्धितान्तमष्टाकपालादिसमन्वितं सत् ।
आख्यातशब्दस्य धुरं बिभर्ति भव्यार्थसंवित्तिनिबन्धनत्वात् ॥
आख्यातमेव सदिदं भवतीति नाम भव्येतरार्थमपि जन्मनिबन्धनत्वात् ।
अप्येति शब्दमपि तद्वदिमं प्रतीमो भव्येतरार्थगतबुद्धिनिबन्धनत्वात् ॥ ३०९ ॥

### श्रीभाष्यम्

**कारीयम्) 'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्रापि (मु.३.२.९) 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु.८) 'निरञ्जनः परमं साम्यमुपैति' (मु.३.१.३) 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.८.१२.२) इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां**

### श्रुतप्रकाशिका

कल्पश्च तत्रैव द्रष्टव्यः, साचितः सद्विद्यानिष्ठः तर्हि मुक्तात्मभेदश्रुतेः कोऽर्थ इत्यतआह—**ब्रह्मेति**। '**स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति**' इति प्रकृतस्य वेदितुः ब्रह्मपर्यन्तस्वरूपाविर्भावपरमिदं वाक्यमिति यथा सेत्स्यति तथा वक्ष्यते इहत्वर्थान्तरमुच्यते। प्राकृतनामरूपप्रहाणज्ञापनाय '**नामरूपाद्विमुक्त**' इति श्रुतिरुदाहृता। साम्यप्रतिपत्त्यर्थं '**निरञ्जन**' इति वाक्यमुपात्तम्। तस्यैव साम्यस्य स्वाभाविकत्वज्ञापकम् '**परंज्योतिः**' इति वाक्यम्॥

### गूढार्थसंग्रहः

ब्रह्मैव सन्निति गिरंप्रतिशेषितायै नाप्येतिगीरियमलं कथितोपपत्तेः।
आख्यातमेव खलु नामपदस्य शेषि नाख्यातमेतदनृतत्वनिवेदकत्वात्॥ ३९०॥
ब्रह्मैव सन्निति ततः प्रथमश्रुतं तदप्येति शब्दमपसारयति स्ववाच्यात्।
अस्याङ्गभावविरहादमुनासहातो ब्रह्मात्मनोरनतिरेकमुशन्ति धीराः॥ ३९१॥
भव्याय भूतमिति किंच विधिप्रधाने काण्डे नयोऽयमिह तद्विपरीतमाहुः।
भूताय भव्यमिति भूतपरंहि सर्वं वेदावसानमिति सूत्रकृदाचचक्षे॥ ३९२॥
ब्रह्मैव सन्निति ततोऽपि बलिष्ठमेतदप्येति शब्दमवसानगतं व्यपेक्ष्य।
तस्मादमुष्य परपीडकमेतदेव ब्रह्मैव सन्निति पदं गुणकल्पनायै॥ ३९३॥
निश्श्रेयसं न खलु साध्यमतः क्रियाभिः ज्ञानेन वा द्वयसमुच्चयवर्त्मना वा।
उत्पत्तिराप्तिविकृती नच संस्कृतिश्च यस्मान्नसम्भवति वर्णितवर्त्मनेह॥ ३९४॥

इत्यत्र सर्वज्ञात्ममुनिना 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुत्यर्थो निर्धारित इति शङ्कायामाह—**ब्रह्म वेद ब्रह्मैव भवतीत्यत्रापीति। इत्यादिभिरैकार्थ्यादिति।** आदिपदेन 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतिपरिग्रहः। अयमाशयः 'अथ परा यया तदक्षरमधिगम्यते' इत्यत्र परविद्यासामान्यस्य अक्षरप्राप्तिरूपं यत्फलमुक्तं तदेव 'परात्परं पुरुषमुपैति दिव्यम्' इति उपसंहारेऽप्युक्तम्। इदं च वाक्यं 'ब्रह्म वेद' इत्यादिवाक्यतःपूर्वमिति सङ्क्षेपशारीरकोक्तदिशा उपक्रमस्थत्वेन 'अथ परा यया तदक्षरम्' इति वाक्यपर्यालोचनायां उपक्रमोपसंहारैकरूप्येण च प्रबलमिति 'ब्रह्म वेद' इत्यतः आपाततः प्रतीयमानार्थं प्रच्याव्यान्यार्थे तात्पर्यं व्यवस्थापयति। एवमुपक्रमस्थसाम्यश्रुतिविरोधेनापि ब्रह्मवेदेत्यादेर्नयथाश्रुतार्थकत्वम्। 'सम्पद्याविर्भावः' इति सूत्रवाक्ये 'परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र स्वस्वरूपाविर्भावः ब्रह्मविद्याफलमिति सूत्रकृता व्यवस्थापितम्। तत्र रूपेणेत्यस्य वैयर्थ्यान्यथाऽनुपपत्त्या धर्मिमात्राविर्भावः न विवक्षितः, अपितु ज्ञानानन्दापहतपाप्मत्वादीनामाविर्भावो विवक्षित इत्युत्तरत्र साधयिष्यते॥

एतेन साम्यश्रुतिरपि एतद्धर्मवत्त्वेन साम्यपरा ब्रह्मप्राप्तिरपि 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा' इत्यत्रोक्तस्यार्थस्य 'परात्परं पुरुषमुपैति दिव्यम्' इत्यत्र परात्परशब्दसमभिव्याहारेणात्रापि विवक्षिता इत्यनुभवरूपैव ब्रह्म-

## श्रीभाष्यम्

**विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते। प्रकारैक्ये च तत्त्व व्यवहारो मुख्य एव यथा सेयं गौरिति। अत्रापि**

## श्रुतप्रकाशिका

तर्ह्यमुख्यत्वं स्यादित्यत्राह--प्रकारैक्येचेति। * सोऽयं व्रीहिरित्यादेरुपलक्षणमिदमुदाहरणम्।

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानितान्येव तथा भावा युगादिषु॥

इत्यादिप्रयोगा भारतादिषु द्रष्टव्याः। दृष्टान्ते प्रकारैक्येऽपि तत्ताव्यवहारो मुख्योऽप्यस्वरसः पूर्वदृष्टे गवि व्यक्त्यं(न्तर) श)प्रहाणादस्वारस्यम्, जात्यंशस्य सौसादृश्यलक्षणैक्यान्मुख्यत्वम्। दार्ष्टान्तिकेतु 'गङ्गायां घोषः' इति गङ्गापदवत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात्परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावा,च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटिरित्यभिप्रायेण मुख्यएवेत्युक्तम्। लाक्षणिकगङ्गापदवन्नात्यन्तामुख्य इत्यर्थः। * नहि मुक्तस्यापरिच्छिन्नज्ञानानन्द(मय)त्वेऽपि जगत्कारणत्वानुगुणगुणबृहत्वं स्वरूपबृहत्वं वाऽस्ति ; आकारैक्येऽपि तत्ताव्यवहारस्यान्तामुख्यत्वाभावे सेयं गौरिति दृष्टान्तः। न केवलं योगसंग्रहारम्भे विस्तरेऽप्यव्यवहितेषु पूर्वश्लोकेषु भेदप्रतिपत्तिरस्तीत्याह— **अत्रापीति**। न केवलं मुक्तविषयप्रकरणान्तरेषु अस्मिन् प्रकरणेऽपीति वाऽर्थः। * अस्मिन् श्लोके तथैवेति ब्रह्मसाधर्म्योप-

## गूढार्थसंग्रहः

न्नासिः, अतः श्रुतित्रयोक्तार्थः एक एव संपन्नः। एवंचाविर्भावस्य भव्यतया 'भूतं भव्याय कल्पते' इति न्यायेन 'ब्रह्मैव भवति' इत्यत्रोक्तस्य एतच्छेषत्वमेव 'सयो हवै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतौ परमशब्दं तदेव भवतीति क्रमं, च विहाय 'परमं ब्रह्म वेद ब्रह्मैव भवति' इति निर्देशेन अत्र ब्रह्मशब्दः परब्रह्मासाधारणधर्मविशिष्टवाचकतया न विवक्षित इति निर्णीयते। एतेनैव श्रुतौ जीवब्रह्माभेदो न विवक्षित इत्यपि सिद्ध्यति। एवं निर्देशेन 'ब्रह्म वेद ब्रह्मैव भवति' इति वाक्ये ब्रह्मशब्दः बृहत्वविशिष्टपरः बृहत्वविशिष्टो भवतीति शब्दार्थः 'बुद्धेर्गुणेनात्मगुणेनचैव' इत्युत्तरं 'सचानन्त्याय कल्पते' इति श्रुतौ धर्मभूतज्ञानतः आनन्त्यमेव विवक्षितमित्यन्यत्र साधितम्। बृंहणत्वमपि ब्रह्मशब्दार्थः तच्चाचेतनगतस्थूलावस्था चेतनधर्मभूतज्ञानविकासावस्था,चेत्येतदुभयानुगुणसङ्कल्पवत्त्वमिति व्यासार्यैर्निर्धारितम्। 'सयो हवै तत्परमं ब्रह्म वेद' इत्यत्र ब्रह्मशब्दे बृंहणत्वमपि विवक्षितम्। एवं च 'ब्रह्मैव भवति' इत्यत्र ब्रह्मशब्दार्थभूतं बृहत्वं धर्मभूतज्ञानपूर्णविकासरूपम्। 'यस्सर्वज्ञस्सर्ववित्' इत्यत्र परमात्मधर्मत्वेन पूर्वमुक्तम्, 'तदा विद्वान्—परमं साम्यमुपैति' इति सर्वज्ञत्वेन साम्यमपि प्रतिपादितम्। 'नामरूपाद्विमुक्तः' इति श्रुतौ पुण्यपापप्रयोज्यनामरूपसम्बन्धविगमोऽप्यभिहितः। 'ब्रह्मैव भवति' इत्यत्र पुण्यपापप्रयोज्यधर्मभूतज्ञानसङ्कोचस्य मुक्तौ निवृत्त्या असङ्कुचितधर्मभूतज्ञानाश्रयत्वं प्रतिपादितम्। एवमर्थाङ्गीकार एव पूर्वश्रुत्यैकरस्यमिति भावः॥

ननु समानाधिकरणनिर्देशे धर्म्यैक्यमेव प्रतीयत इति तद्बाधाङ्गीकारेण असुख्यत्वशङ्कायामाह—**सेयं गौरिति**। सेयं गौरिति प्रत्यक्षं द्विविधम्, पूर्वापरदेशकालसम्बन्धावगाहि एकं, पूर्वमेकव्यक्तौ दृष्टजातेः व्यक्त्यन्तरे सम्बन्धावगाहित्वान्यत्। 'सोऽयम् द्विज इति वाक्यं' 'तद्वत् तत्त्वमसीति' प्राक् (१२७.पु) उदाहृत(स्वात्मनिरूपणं ३.६) श्लोकद्वयानुसारेण 'सोऽयम्' इत्यादिवाक्यस्थपदानामिव 'तत्त्वमसि' इत्यादिवाक्यस्थपदानां समन्वयः समन्वयाधिकरणे पञ्चपा-

श्रीभाष्यम्

'विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव। प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥' (वि.पु.६.७.९३) इति परब्रह्मध्यानादात्मा परब्रह्मवत् प्रक्षीणाशेषभावनः कर्मभावना ब्रह्म-भावनोभयभावनेति भावनात्रयरहितः प्रापणीय इत्यभिधाय 'क्षेत्रज्ञःकरणी ज्ञानं

श्रुतप्रकाशिका

देश उपयुज्यते तथैवेत्येतद्व्याख्यानं परब्रह्मवदित्यादि प्रक्षीणाशेषभावनशब्दं व्याचष्टे। कर्मभावनेति। परब्रह्मवत्प्रक्षी-णाशेषकर्मभावन इति पाठे कर्मशब्दो यागादिक्रियोपासनसाधारणानुष्ठेयमात्रपरः। तदा कर्मशब्देन 'त्रिविधा भाव-भावना' इत्यत्र भावशब्दो व्याख्यातो भवति। अत्रायमर्थः प्राप्यपरब्रह्मविषयज्ञानस्य प्रापकत्वात् शुद्धस्वस्वरूपमपि प्राप्यमिति तदनुसन्धेयमिति, अयं च 'व्यतिरेकस्तद्भावभावित्वात्' इत्यधिकरणार्थः। तत्र बद्धस्वरूपं चिन्त्यमिति पूर्व-पक्षीकृत्य मुक्तस्वरूपं चिन्त्यमितिहि सिद्धान्तितम्। अस्य श्लोकस्यैकप्रकरणत्वज्ञापनायानन्तरश्लोकोऽपि व्याख्यायते। क्षेत्रज्ञइति। यावत्क्षेत्रज्ञावस्थस्तावत्करणी उपासकः। तस्य करणं ज्ञानं करणभूतं ज्ञानं मुक्तिकार्यं निष्पाद्य निवर्तयेत्

गूढार्थसंग्रहः

दिकायामभिहितः। तत्र विवरणे प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति इति क्षणिकत्वपरिहाराय प्रत्यभिज्ञाप्रा-माण्यं वक्तव्यमित्यादिचोक्तम्। क्षणिकवादिभिः लूनपुनर्जातकेशाङ्कुरादावपि प्रत्यभिज्ञासत्वेन तत्र प्रत्यभिज्ञायाः भ्रमत्वे सर्वत्रापि प्रत्यभिज्ञा भ्रमएवेत्याक्षेपः क्रियते। क्वचिद्व्यक्तिः प्रत्यभिज्ञायां क्वचिच्च जातिरिति, सर्वत्र प्रत्यभिज्ञाया एकविषयत्वं सम्भवत्येव। यत्रतु व्यक्तेर्बाधः तत्रोभयानुगतजातिविषयकत्वेन प्रत्यभिज्ञायाः प्रमात्वं साधयन्ति स्थैर्यवादिनः सर्वेऽपि दार्शनिकाः ॥

प्राक् निर्विकल्पकसविकल्पकनिरूपणावसरे (२७८.पु) निर्विकल्पके गृहीतजातेः अनुवृत्त्यवगाहिज्ञानं सविकल्पक-मिति मीमांसकसिद्धान्तस्य प्रतिपादनेन एकव्यक्तौ गृहीतजातेः भिन्नव्यक्तिसम्बन्धावगाहिज्ञानं प्रत्यभिज्ञा सविकल्पकमि-त्युपपादनेन 'सेयं गौः' इतिवत् 'ब्रह्म वेद ब्रह्मैव भवति' इति वाक्यमिति युक्तम। परैः 'सोऽयं देवदत्तः' इति एकविधप्रत्यभिज्ञासमशीलत्वं 'तत्त्वमसी' त्यादेरुपपादितम्। तत्र च दृष्टान्तदार्ष्टान्तिकयोरुपलक्षितविषयकत्वं उपलक्षणधर्मस्य तद्वाक्यजन्यबोधे अप्रकारत्वं च तत्सम्मतम्, उपलक्षणस्याप्रकारत्वं न नैयायिकादिसम्मतं, नापि तत्र युक्तिः। उपलक्षण-लक्षणमपि अप्रकारत्वघटितं न युक्तमित्यादि च प्रागेव तत्र तत्र निरूपितम्। परैः एकविधप्रत्यभिज्ञावाक्यसाजात्यं 'तत्त्व मसि' इति वाक्यस्य यदुपपादितं तत्प्रकारो न घटत इत्युत्तरत्र श्रीभाष्ये निरूपयिष्यते। सच प्रकारः 'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्रापि न घटत इति अन्यविधसविकल्पक मीमांसकादिसम्मतप्रत्यक्षतौल्येन 'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्र अभेदानिर्देशोपपादनमेव युक्तम्। अत्र भवतीत्यपि परेषां प्रतिकूलमेव, शुद्धस्य निर्धर्मतया कर्तरि लकारस्यानु-पपत्तेः। 'अस्ति ब्रह्मेतिचेद्वेद' इत्यत्र लकारः साधुत्वार्थ इति मधुसूदनादिकल्पनं न घटत इति पूर्वमेव निरूपितम्। अतश्च उक्तरीतिरेव साधीयसी, 'सोऽयं देवदत्त इत्यत्र ऐक्यव्यवहारस्य तात्पर्यविषयत्वेन मुख्यत्वं अद्वैत सिद्ध्यादौ यदुक्तं तद्रीत्या अत्र पूर्वश्रुत्यनुसारेण परसम्मतरीत्ययोगेन च प्रकारैक्ये तत्त्वव्यवहारस्यैव तात्पर्यविषयत्वेन मुख्यत्वमिति भावः ॥

क्षेत्रज्ञःकरणी इत्यादि। 'करणं तस्य तेन तत्' 'निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तते' इति (वि.पु.मु. को)पाठः। अत्र विष्णुचित्तविवरणम्। 'क्षेत्रज्ञः, अनादिकालक्षेत्ररूपगुणमायातिरोहितस्वस्वरूपः करणी करणवान् समाधि-

श्रीभाष्यम्

करणं तस्य वै द्विज। निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तयेत्॥'(९४) इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनाद्यावत्सिद्ध्यनुष्ठेयमित्युक्त्वा 'तद्भावभावमापन्नस्तदाऽसौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥' (वि·पु.६.७.९५) इति मुक्तस्य स्वरूपमाह। तद्भावः ब्रह्मणो भावः स्वभावः न तु स्वरूपैक्यम्। 'तद्भावभावमापन्नः' इति द्वितीयभावशब्दानन्वयात् पूर्वोक्तार्थविरोधाच्च। यद्ब्रह्मणः प्रक्षीणाशेषभावनत्वं तदापत्तिस्तद्भावभावापत्तिः। यदैवमापन्नस्तदाऽसौ परमात्मना अभेदी भवति भेदरहितो भवति। ज्ञानैकाकारतया

श्रुतप्रकाशिका

न तु मुक्तेः पूर्वमेव निवर्तयेदित्यर्थः। नहि मुक्तस्योपासननिवृत्तिर्विधेया अतो यावन्मोक्षमनुष्ठेयत्वमुक्तमिति भावः। तद्भावभावशब्देन ब्रह्मसाम्यापत्तिज्ञानार्थं 'विभेदजनकेऽज्ञाने' इत्यत्र ज्ञाने इति पदच्छेदशङ्काव्युदासार्थं च तद्भावमिति श्लोको व्याख्यायते। * तद्भावेति श्लोके तद्भाव इत्युपमानबहुव्रीहिः तद्भाव इति पदान्तर्गतौ तच्छब्दभावशब्दौ व्याख्यातुमाह—तद्भावइति। भाष्यस्थतद्भावशब्दो न बहुव्रीहिः किंतु तत्पुरुषः * समासे व्याचिख्यासिते सतिहि बहुव्रीहिविशिष्टरूपेण पदोपादानं तच्छब्दभावशब्दमात्रस्य व्याचिख्यासितत्वात् बहुव्रीहिविशिष्टरूपेण पदस्यानुपादानं तच्छब्देन ब्रह्मोच्यते, प्रथमभावशब्देन स्वभावउच्यत इत्यर्थः।

भावो लीलाक्रिया चेष्टा भूत्यभिप्रायजन्तुषु। पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः॥

इति नैघण्टुकाः। * यद्वा भाष्यस्थस्तद्भावशब्दोऽपि बहुव्रीहिविशिष्टः। तद्भावो ब्रह्मणो भावस्स्वभावइति। * तद्भाव इति पदे तच्छब्दवाच्यब्रह्मसम्बन्धितया प्रतिपन्नो भावः स्वभाव इत्यर्थः। अथवा श्लोकेऽपि तद्भावशब्दस्तत्पुरुषः। * द्वितीयभावशब्दस्सत्तावाची व्यावर्त्यमाह—नत्विति। कुतइत्यत्राह—तद्भावेति। हेत्वन्तरमाह—पूर्वोक्तार्थविरोधाच्चेति। हेयप्रत्यनीकत्वहेयार्हत्वादिविरोधोऽर्थविरोधः, एवं शब्दपर्यालोचनया अर्थपर्यालोचनया च भावशब्दस्य स्वभाववाचित्वमुपपादितम्। स्वभावशब्दवाच्यं च पूर्वश्लोकोक्तं प्रक्षीणाशेषभावनत्वमित्याह—यदिति। तच्छब्दसामर्थ्यात् यद्वृत्तमाक्षिप्य व्याचष्टे यदैवमिति। अभेदीत्यत्र भेदशब्दव्याख्यानार्थं भेदशब्दं नञ्प्रत्ययाभ्यां विभज्य निर्दिशति। भेदरहितो भवतीति॥

* यद्वा भेदरहितो भवति न तादात्म्यवानिति भावः। अन्यथा 'भेदश्च तस्याज्ञानकृतः' इत्यनन्तरनिर्देशो न घटते। * देवादिभेदाभावः कथमिति शङ्कायां भेदश्च तस्येत्यादि व्याचष्टे। ज्ञानैकाकारतयेति। 'परमात्मना

गूढार्थसंग्रहः

रूपं ज्ञानं करणं, तत् ज्ञानं, तेन करणत्वेन, तस्य क्षेत्रज्ञस्य, मुक्तिकार्यं निष्पाद्य कृतकृत्यं निवर्तते मुक्तिं कृत्वा निवर्तते इत्यर्थः' इति। अत्र करणत्वेन निवृत्त्युक्त्या समाधिरूपज्ञानस्य भक्तिरूपस्य स्वरूपतो मुक्तौ न निवृत्तिरिति प्रतीयते। प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्।' इति गीताविवरणे भाष्ये 'अव्ययं मत्प्राप्तिं साधयित्वाऽपि स्वयं न क्षीयते' इति भक्तिस्वरूपस्य अक्षयत्वप्रतिपादनं विष्णुचित्तविवरणानुसारेण विष्णुपुराणस्याप्यनुगुणमिति प्रतीयते। यावत्सिद्ध्यनुष्ठेयम् इति भाष्योक्तिस्तु करणत्वविशिष्टभानेन न भक्तिमात्रभावेन इति बोध्यम्। करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेष-

### श्रीभाष्यम्

परमात्मनैक(स्वभाव)प्रकार)स्यास्य तस्मात् भेदो देवादिरूपः, तदन्वयोऽस्य कर्मरूपाज्ञानमूलः न स्वरूपकृतः। स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्तत इत्यभेदी भवति। यथोक्तम् 'एकस्वरूपभेदस्तु बाह्यकर्मवृत्तिप्रजः। देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः॥' (वि.पु.२.१४.३३) इति। एतदेव विवृणोति 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥' (वि पु.६.७.९६) इति। विभेदः, विविधो भेदः देवतिर्यङ्मनुष्यस्थावरात्मकः। यथोक्तं शौनकेनापि 'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः।' (विष्णुधर्म.१००.१२) इति

### श्रुतप्रकाशिका

**भवत्यभेदी**' इति परमात्मनः प्रस्तुतत्वादात्मनो ब्रह्मण इत्यत्रापि पञ्चमीविवक्षया च तस्माद्भेद इत्युक्तम्। ब्रह्मणो मुक्तात्मनश्चाकारान्तरेण भेदस्य प्रमाणसिद्धत्वान्निरसनीयभेदविशेषस्य वचनान्तरसिद्धत्वाच्च भेदो देवादिरूप इत्युक्तम्। कर्मरूपशब्देनाज्ञानशब्दो व्याख्यातः ज्ञानविरोधीति व्युत्पत्तिरित्यर्थः, '**अविद्यया मृत्युं तीर्त्वा**' इतिहि श्रुतिः अत्रापि '**अविद्या कर्मसंज्ञाऽन्या**' इति हि पठ्यते। ततः किं भेदराहित्यस्येति शङ्कायां भेदश्च तस्याज्ञानकृतो भवेदित्यनेनार्थसिद्धमभिप्रेतं कारणाभावं विशदयन् कार्याभावमुपपादयति। **सत्विति**। भेदस्य देवादिरूपत्वे अज्ञानशब्दस्य च कर्मपरत्वे प्रमाणमाह–**यथोक्तमिति**। आदिभरतचरितेऽयं श्लोकः, तत्र पूर्वं देहेन्द्रियादि(बाह्य)भेदरहितत्वमात्मन उक्तम्। '**सितनीलादि**' इत्यादिना अस्मिन् श्लोके बुद्धिसुखदुःखेच्छाद्यान्तरभेदोऽपि नास्तीत्युच्यते, **एकस्वरूपेति**। कर्मैव वृतिः कर्मवृतिः, बाह्यमान्तरं च कर्म द्विविधम् आन्तरमात्मप्रावण्यहेतुःकर्म बाह्यं बहिर्विषयप्रावण्यहेतुः कर्म। यद्वा बाह्यमस्वाभाविकं कर्म तदेव वृतिः तया प्रकर्षेण जातः एकस्वरूपभेदः बाह्यकर्मशरीरद्वारकं एकस्वरूपस्यात्मन आन्तरं भेदं करोतीत्यर्थः। द्वारभूतदेवादिशरीरभेदे नष्टे सति आन्तरो भेदो नास्ति। कथं वा देवादिभेदे नष्टे कर्मवृतिहेतुकान्तरभेदनाश इत्यत्राह–अनावरणोहि स इति सः निवृत्तदेवादिभेद आत्मा कर्मावरणरहितोहीत्यर्थः॥

यद्वा कर्मवृतिः कर्मजन्या वृतिः देवादिशरीरं तत्सम्बन्धजः आन्तरभेदः '**देवादिभेदेऽपध्वस्ते**' स नास्ति कथं कर्मजन्यवृतिहेतुकान्तरभेदो देवादिभेदापध्वंसे नास्तीत्यत्राह–**आवरणोहि स इति**। कर्मजन्यवृतिर्देवादिशरीरभेदरूपेत्यर्थः। एतदेव '**भेदश्च तस्याज्ञानकृतो भवेत्**' इत्युक्तमेवार्थं विवृणोतीत्यर्थः। '**विभेदजनक**' इत्यादिश्लोकेन '**अनावृत्तिश्शब्दात्**' इत्यधिकरणार्थं उच्यते। परस्माद्ब्रह्मण आत्मनो देवादिभेदस्य प्रणष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यते। विभेदशब्दं व्याचष्टे। **विभेदो विविधो भेदइति**। भेदस्य देवादिरूपत्वे प्रमाणान्तरमाह–**यथोक्तमिति** मिथ्याज्ञाननिबन्धनः मिथ्याज्ञानं आत्मविषयभ्रान्तिज्ञानं तत्कर्मद्वारा उत्तरोत्तरदेवादिभेदहेतुरित्यर्थः। अस्योत्तरार्धं—

... ... ... **देवतिर्यङ्मनुष्याख्यस्तथैव नृपनारकः॥**

### गूढार्थसंग्रहः

भावनात्मस्वरूपप्राप्तया कृतकृत्यत्वेन निवृत्तिवचनात्' इति भाष्यसूक्तौ करणस्येत्यस्य करणत्वविशिष्टस्येत्यर्थकतया करणत्वविशिष्टस्यैव निवृत्तेर्विवक्षितत्वात्। अतएव 'भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा। आविमुक्तेर्विधिर्नित्यं स्वतएव ततःपरम्॥' इति आनन्दतीर्थैः उदाहृतवचनं सङ्गच्छते॥

### श्रीभाष्यम्

**आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूत कर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गतेसति हेत्वभावादसन्तं परस्मात् ब्रह्मण आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः**

### श्रुतप्रकाशिका

इति व्याख्येयश्लोकस्य वाक्यार्थमह—आत्मनीति। ब्रह्मण इति पदस्य पञ्चम्यन्तत्वसूचनाय परस्मादित्युक्तम्। उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तं चशब्दाभावात् अनन्तरपूर्वश्लोके 'परमात्मना भवत्यभेदी' इति परमात्मनः प्रतियोगितया निर्देशाच्च, अतएव समानाधिकरणषष्ठ्यन्तत्वमप्ययुक्तं पूर्वप्रपञ्चितादर्थविरोधाच्च। पञ्चम्यन्तत्वं षष्ठ्यन्तत्वं च विपर्ययेण स्यादितिचेन्न (तदा) परब्रह्मणोऽपि * हेयार्हत्वापत्तेस्स्वाभाविकत्वप्रसङ्गात्। अतः परस्माद्ब्रह्मण इत्यु-

### गूढार्थसङ्ग्रहः

**आत्मनो देवादिरूपभेदमित्यादि**। अत्र यद्यपि सिद्धान्तसिद्धाञ्जने 'तद्भावेत्यादिनैकात्म्योपसंहाराच्च। नच प्रक्षीणाशेषभावनस्य मुक्तस्य प्राप्ये ब्रह्मणि प्रापणीयतयाऽभिधानात् जीवपर इति वाच्यम्; अविद्याविलयस्य ब्रह्मभावमात्रत्वोपगमात् प्राप्यप्राप्तृभावनिर्देशस्य चावस्थाभेदापेक्षत्वात्। परस्यापि शुद्धात्मविशिष्टब्रह्मणः प्राप्यत्वोपगमेन तथैव वाच्यत्वात् नच तथाशब्दः साम्यपरः, तदनुपपत्तेरुक्तत्वात् 'भवत्यभेदी' इति च समानाकारत्वे गौणत्वकल्पनागौरवात्। नचैवं द्वितीयभाववैयर्थ्यं तत्पदस्य ध्येयसविशेषरूपपरतया तस्य भावः वास्तवं निर्विशेषसत्तैकरसस्वरूपं तद्भूयं गत इत्यर्थविशेषोपपत्तेः। एतेन 'आत्मभावं नयत्येनं' इति व्याख्यातम्। ध्येयंहि सगुणं ब्रह्म परमेश्वरशब्दितम्। ध्यायिनामाकर्षको लोहमिव दारुसम्बन्धात् प्रकृतितादात्म्यान्निष्कृष्य त्रिभावभावनातीतस्वात्मकैवल्यं नयति। उपासनापरिपाके स्वात्मतत्त्वसाक्षात्कारोपपत्तेः, नचाकर्षकादिवत् निष्कृष्टलोहस्य निर्मुक्तस्यापि ब्रह्मणो भेदस्सम्भावनीयः। दृष्टान्त स्वारस्यमात्रेण शास्त्रार्थतादात्म्यभङ्गायोगात्॥

एवं च 'भेदश्च तस्याज्ञानकृतो भवेत्' 'विभेदजनकेऽज्ञाने' इति च भिन्नानामेव ज्ञानैकाकाराणां कर्मनिमित्तो देवाद्याकारभेद इत्येवंपरं न व्याख्येयम् भेदसामान्यशब्दस्य विशेषवृत्तिकल्पनागौरवात्। नच 'एकस्य रूपभेदोऽयं बाह्यकर्मवृत्तिप्रजः' इत्युक्तमिति वाच्यम् नह्यत्रैकस्येति एकाकारत्वमुच्यते शब्दवृत्तिव्यवधानात् नापि पर्यायेणानेकशरीरानुयाय्येको जीवः, 'समस्तभूतेषु पुमानेको व्यवस्थितः' इत्यभिधानात् किंत्वद्वितीयात्मैव। तस्य यद्यपि रूपभेदःकर्मणैव। तथाऽपि कर्मसंबन्धार्हरूपभेदएवानाद्यनिर्वचनीयस्वरूपाज्ञानाधीन इति तत्राक्षेपलभ्यमज्ञानमिह स्वशब्देनोच्यते। नचाकर्मण्यज्ञानशब्दाव्युत्पत्तिः। 'श्रूयतांचाप्यविद्यायाः स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या' इत्यादिना कर्मान्याविद्यारूपाभिधानात्। यद्यप्यत्र भ्रान्तिरविद्येत्युक्तं न सैद्धान्तिकमनाद्यज्ञानं, तथाऽपि मोहतमोवृतः अहं ममेति मतिं कुरुते इत्यनन्तरोक्तेः भ्रान्तिहेतुतयाऽवारकमोहतमश्शब्दितमज्ञानमुपेयते। 'माया तवेयमज्ञातपरमार्थातिमोहिनी। अनात्मन्यात्मविज्ञानं यया मूढोऽधिरोहति॥ अस्वे स्वमिति भावोऽत्र यत्पुंसामुपजायते। संसारमातुर्मायायाः तवैतन्नाथ चेष्टितम्॥' इत्यादिदर्शनाच्च। तन्निबन्धनो ब्रह्मान्यभावः जीवस्य नानात्वमाचिदभेदश्चेत्युच्यते 'भेदश्च तस्याज्ञानकृतः' 'विभेदजनकेऽज्ञाने' इतिचेत्युक्तम्॥

तथाऽपि नायमर्थः पराशराभिमतः। तथाहि 'तद्भावभावम्' इति श्लोकात् पूर्वं 'विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव। प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः॥' इति श्लोकः। अयं च 'अथ परा यया तदक्षरमधिगम्यते'

## गूढार्थसङ्ग्रहः

इति श्रुत्यर्थस्य 'परयात्वक्षरप्राप्तिः' इत्युपक्रमे उक्त्या 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति' इति श्रुत्यर्थविशदीकर-
णरूपः । अत्र परब्रह्मणः प्राप्यत्वं 'परात्परं पुरुषमुपैति' इत्यत्र विवक्षितमिति स्फुटं प्रतीयते । 'तथैवात्मा प्रक्षीणा
शेषभावनः' इति तु दहरविद्याङ्गत्वस्य प्रजापतिविद्यायाः छान्दोग्ये व्यक्ततया तदर्थविशदीकरणरूपः । तत्रचापहतपाप्म-
त्वादिकं परब्रह्मणि शुद्धात्मनि च श्रूयते । अत्र 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति मुण्डकश्रुतिः
अपहतपाप्मत्वादिनाऽपि साम्यपरा । साम्यं च स्वरूपसत्तामात्रेण प्रतिपाद्यतया न विवक्षितम् किंतु अनुभाव्यतयाऽपि
तेनापहतपाप्मत्वादिविशिष्टस्वस्वरूपानुभवोऽपि मुक्तौ सिद्ध्यति । अत्रैव श्लोके 'तथैवात्मे' त्यत्र तथैवेति निर्देशेन
'प्रक्षीणाशेषभावन' इत्यनेन पुण्यपापविधूननस्य अपहतपाप्मत्वादेश्च प्रतिपादनेन यथा अपहतपाप्मत्वादिविशिष्टं
परब्रह्म प्राप्यं तथा तद्गुणाविशिष्टशुद्धजीवस्वरूपमपीति मुण्डकश्रुतेरपि तात्पर्यं व्यक्तीकृतम् ॥

एतेन पूर्वार्धे परब्रह्मप्राप्तिः उत्तरार्धे परब्रह्मसदृशमुक्तरूपप्राप्तिश्चात्र प्रतिपादितेति स्फुटं निर्मत्सराणां विदुषाम् ।
उभयोःप्राप्यत्वस्य स्पष्टमुक्तेः जीवब्रह्मभेदः स्फुटं प्रतीयते । अत्र प्रक्षीणाशेषभावनस्य प्राप्यत्वमुक्तम्, नतु परसम्मताविद्याविलयस्य । अनन्तरं 'क्षेत्रज्ञःकरणीज्ञानं करणं तस्य वै द्विज ।' इति श्लोकेऽपि जीवब्रह्मभेदः स्पष्टमुक्तः ॥

'तद्भावभावमापन्नः' इत्यत्र तच्छब्दः 'विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि' इति पूर्वप्रस्तुतपरब्रह्मपरः । परब्रह्म च
अपहतपाप्मत्वादिगुणविशिष्टमेव परमते निर्विशेषस्यैव परब्रह्मतया तस्यैव तच्छब्देन परामर्शस्य वक्तव्यतया भावशब्दार्थश्चा-
धादिः स्फुटः 'परमात्मना भवत्यभेदी' इत्यनेन 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुत्यर्थः प्रतिपादितः 'विज्ञानं प्रापकं'
'तथैवात्मा प्रापणीयः' 'परमात्मना भवत्यभेदी' इत्यत्र 'परात्परं पुरुषमुपैति दिव्यम्' 'निरञ्जनः परमं साम्यमुपैति'
'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतित्रयार्थः प्रदर्शितः । अत्र 'प्रापणीयस्तथैवात्मा' 'तद्भावभावम्' इत्यनेन 'मम
साधर्म्यमागताः' इत्यादि गीतैकार्थ्यमपि सूच्यते । अत्र 'तथैवात्मा प्रक्षीणाशेषभावनः' इत्यत्र अपहतपाप्मत्वादिना
साम्यं स्फुटम् । 'सयो हवै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यत्र 'तदा विद्वान्—परमं साम्यमुपैति' इति श्रुतौ
प्रतीयमानं धर्मभूतज्ञानवत्त्वेन साम्यं विवक्षितमितितात्पर्येण ज्ञानैकाकारतया इत्यादिभाष्यविवरणम् । 'भेदश्च तस्या-
ज्ञानकृतो भवेत्' इति 'पुण्यपापे विधूय' 'नामरूपाद्विमुक्तः' इति श्रुतिखण्डद्वयतात्पर्यप्रदर्शनम् । एवमेव 'एकस्व-
रूपभेदस्तु बाह्यकर्मवृतिप्रजः' इत्येतदपि एतदर्थविशदीकरणरूपमेव अत्र 'एकस्वरूपभेदस्तु' इत्येव पाठः परसम्मता-
ज्ञानं च विष्णुपुराणे क्वापि न प्रदर्शितम्। श्रूयतांचाप्यविद्यास्वरूपमित्यत्र देहात्मादिभ्रमएवोक्तः । 'अविद्या कर्मसंज्ञान्या
'अहं ह्यविद्यया मृत्युं तर्तुकामः (वि.पु.६.७.९) तर्तुंमृत्युमविद्यया' (६.६.१२) इत्यत्र कर्मोक्तम् । 'मायातवेयम्'
इत्यादौ 'यैः स्वधर्मपरैर्नाथ नरैराराधितो भवान् ते तरन्त्यखिलामेतां मायामात्मविमुक्तये' (वि.पु.५.३०.१६) इत्युत्तरव-
चनानुसारेण परसम्मतभावरूपाज्ञानभिन्नातिक्रमणयोग्यप्रकृतिर्विवक्षिता । प्रकृत्यतिक्रमणानन्तरमेव जीवानां विमुक्तिरि-
त्युक्त्या गतिद्वारकमेव फलं तत्र दर्शितम् । 'परमात्मात्मनोर्योगः' इति पूर्वोदाहृतवचने जीवब्रह्माभेदः न पराशरसम्मत
इति स्पष्टम् । अतः 'पुण्यपापे विधूय, नामरूपाद्विमुक्तः' इति श्रुतिपर्यालोजनायां पुण्यपापनिबन्धने एव जीवानां
नामरूपे इत्येव युक्तम् । नतु परसम्मताज्ञाननिबन्धने इति । अतश्च 'भेदश्च तस्याज्ञानकृतो भवेत्' इत्यत्र
यथोक्त एवार्थो युक्तः । एवं च 'विभेदजनकेऽज्ञाने' इत्यत्रापि प्राक् विष्णुपुराणोक्तः देवादिभेद एव । अज्ञानं च
कर्मैव इत्यर्थ एव पराशरसम्मतः ॥

## श्रीभाष्यम्

**'अविद्या कर्मसंज्ञाऽन्या' (वि.पु.६.७.६१) इतिह्यत्रैवोक्तम्। 'क्षेत्रज्ञंचापि मां विद्धि' (गी. १३.२) इत्यादिनाऽन्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधानम् अन्यथा 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमःपुरुषस्त्वन्यः' गी.१५.;१६ इत्यादिभिर्विरोधः। अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम्। 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।' १८.६१ 'सर्वस्यचाहं हृदि सन्निविष्टः' १५.अ.१५ इति च**

## श्रुतप्रकाशिका

**क्तम्**। असन्तं, सच्छब्दः परमार्थपर्यायः '**अनाशी परमार्थश्च**' इत्यत्रैव ह्युक्तम् अनित्यमित्यर्थः तेन स्वाभाविकनित्यभेदव्यावृत्तिः। अनित्यत्वं (का)कादा)चित्कत्वम्। अनित्यत्वाद्धेत्वपेक्षो देवादिभेदः। तं कःकरिष्यति न कश्चिदपि। हेत्वभावात् कर्मरूपहेत्वभावादित्यर्थः। न केवलमेकार्थविषये '**बाह्यकर्मवृतिप्रजः**' '**अज्ञानकृतो भवेत्**' इत्यज्ञान-कर्मशब्दयोः प्रयोगादज्ञानशब्दस्य कर्मार्थत्वं अस्मिन्प्रकरणे च कण्ठोक्तमित्याह—**अविद्याकर्मसंज्ञान्येतिह्यत्रैवोक्तमिति** आत्मन औपाधिकभेद * उपाध्यपगमे नश्यतीति श्लोकार्थः * उपाध्यभावादविद्यमानं भेद क उत्पादयेदिति वाऽर्थः। अयं श्लोकः मृषावादिनामत्यन्तास्वरसः। तथाहि 'विभेदजनक' इत्यत्र जनकशब्द उत्पादके स्वरसः नत्वध्यासहेतौ अज्ञानशब्दस्यानिर्वचनीयपरत्वं लोकतश्शास्त्रतश्च न व्युत्पन्नं कर्मवाचित्वव्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता। नाशशब्दस्य बाधवाचित्वममुख्यम् असन्तमिति पदं च * व्यवच्छेद्याभावादफलं सतो भेदस्यानभ्युपगमात्, तदभ्युपगमेहि तत्साफल्यम्। करिष्यतीति पदमप्यस्वरसं अध्यासवाचित्वाभावात्॥

अथाद्वैतपरत्वेन परोक्तं गीतावचनं व्याचष्टे। **क्षेत्रज्ञंचापीति**। पराभिमतार्थस्य पूर्वापरविरोधं दर्शयति। **अन्यथेति**। न केवलं '**उत्तमःपुरुषस्त्वन्यः**' इति भेदप्रतिपादनात्तद्विरोधेन स्वरूपैक्यपरत्वाभावः सामानाधिकरण्योपपादकमन्तर्यामित्वं कण्ठोक्तमपीत्याह—**अन्तर्यामीति**॥

**ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।** ... ... ...

इत्यत्र भूतशब्दस्यात्मपर्यन्तदेहपरत्वम् '**भ्रामयन् सर्वभूतानि**' इत्यस्योत्तरार्धेनावगम्यते '**न हिंस्यात्सर्वभूतानि**' इत्यादिप्रयोगाच्च। '**सर्वस्यचाहं हृदि सन्निविष्टः**' इत्यत्रापि सर्वशब्दस्यात्मपर्यन्तत्वं '**मत्तस्स्मृतिर्ज्ञानमपोहनं च**'

## गूढार्थसङ्ग्रहः

'ध्येयस्य सगुणब्रह्मत्वं, ज्ञेयस्य निर्गुणब्रह्मत्वं, ध्यानमप्रमा, ज्ञानं प्रमा, सगुणोपासनं क्रममुक्तये उपयुज्यते' इत्यादिपरसम्मतार्थः न श्रुत्यादितात्पर्यविषय इति लघुसिद्धान्ताद्युक्तार्थः भावप्रकाशे तृतीयसम्पुटे प्रतिष्ठापितः। अतः '**आत्मभावं नयत्येनम्**' इत्यादिश्लोकस्यापि प्रागुक्त एवार्थो युक्तः। एवं च विष्णुपुराणवचनानां श्रीभाष्योक्तार्थ एव **सुस्थः**

**अन्तर्यामिरूपेणेत्यादि**। 'सर्वं समाप्नोषि ततोऽसि सर्वः' 'अहमात्मा गुडाकेश' इत्यादिना प्रागेव निरूपणादिति भावः। **क्षरस्सर्वाणि भूतानि इत्यादि**। अत्र परसम्मतार्थो न विवक्षित इति प्रागेव निरूपितम्। **ईश्वरस्सर्वभूतानामित्यादि**। सर्वत्रप्रसिद्धव्यधिकरणे जीवब्रह्मभेदपरतयेदं वचनं परभाष्येऽप्युदाहृतम्। एवं च **सर्वस्यचाहं** इति एतत्पूर्वश्लोकस्य तदैकार्थ्येन **क्षरस्सर्वाणि भूतानि** इत्यत्रापि **ईश्वरस्सर्वभूताना**मित्यत्रोक्तार्थ एव विवक्षित इत्यभिप्रायेण उपादत्ते—**सर्वस्यचाहं हृदि सन्निविष्ट** इति॥

### श्रीभाष्यम्

**'अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।' (गी.१०.२०) इति च तदेवोच्यते । भूतशब्दो ह्यात्मपर्यन्तदेहवचनः यतस्सर्वेषामयमात्मा तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते 'न तदस्ति विना यत्स्यात्' (गी.१०.३९) इति। भगवद्विभूत्युपसंहारश्चायमिति तथैवाभ्युपगन्तव्यम् । तत इदमुच्यते 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोऽशसंभवम्॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।' (गी १०-४१-४२) इति । अतश्शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति ।**

### श्रुतप्रकाशिका

इत्यनेनावगम्यते । हृद्देशे—हृद्देशस्थ आत्मनीत्यर्थः '**सर्वस्यचाहं हृदि**' इत्यपि तथा । तथा '**अहमात्मा गुडाकेश**' इत्यत्राप्यन्तर्यामित्वपरतामाह—**अहमिति** । कुतइत्यत्राह—**भूतशब्दोहीति** । पूर्वदर्शितसर्वशब्दैकार्थ्याच्चेति भावः अन्वय रूपेणोक्तस्य सर्वेषां भगवदात्मकत्वस्य शेषभूतोऽयं '**न तदास्ति**' इति व्यतिरेकानिर्देशस्तदनुगुणएवेत्यभिप्रायेणाह—**यतस्सर्वेषामिति** । अविनाभावशब्दस्य सम्बन्धनियमवाचित्वादिति भावः । हेत्वन्तरंचाह— **भगवदिति** । '**एतां विभूतिं योगं च**' इति प्रक्रमाद्विभूतिपरत्वमवगम्यते, अत उपक्रमानुगुण एवोपसंहार इत्यर्थः ॥

**नाहि** विभूतित्वं विधाय तदेव निषेद्धुं शक्यमिति भावः । प्रकरणस्य विभूतिपरत्वं दर्शयति । **यद्यदिति** । विभूतिमत् नियाम्यवत्, श्रीमत् भोग्यसमृद्धिमत्, ऊर्जितं बलवत् कल्याणगुणारम्भेषूद्युक्तम् । तेजः पराभिभवनसामर्थ्यं प्रशासनम् तेजोंऽशसम्भवं नियमनशक्तिमदाज्ञालवाधीनमित्यर्थः । शास्त्रस्य परोक्तार्थपरत्वाभावमुपसंहरति । **अत इति** । अतः श्रुतियोजनाप्रभृतिप्रतिपादितैर्न्यायैरित्यर्थः भ्रान्तत्वं भ्रान्तिसिद्धत्वम् । * जगद्ब्रह्मणोरेकद्रव्यत्वपक्षे ब्रह्मणस-

### गूढार्थसंग्रहः

महापूर्वपक्षारम्भे निर्विशेषं परं ब्रह्मैव परमार्थः । ईशेशितव्यादि ब्रह्मभिन्नं सर्वं अनाद्यविद्यारूपदोषपरिकल्पितत्वेन मिथ्याभूतमिति प्रतिज्ञातार्थद्वयं निर्विशेषस्याप्रामाणिकत्वं श्रुत्यादीनां सर्वथा तत्र प्रमाणत्वासम्भवः ईशेशितव्यादेः अकल्पितत्वं इत्याद्यर्थस्थापनेन न घटत इत्येतावता उपपादितम् । अतः श्रुत्यादिषु परसम्मतार्थो न विवक्षित इति प्रागुक्तमर्थं निगमयति—**अतश्शास्त्रेषु इत्यादिना** ॥

### अविद्यावादः

एतावता महापूर्वपक्षारम्भोक्तार्थद्वयपर्यालोचनं यत्कृतं तत् ईशेशितव्यादिभेदकल्पकाविद्यादोषपर्यालोचनमन्तरा न सुस्थं भवतीति अविद्यामेव पर्यालोचयति— **यदप्युच्यतइत्यादिना** । सूत्रभाष्यादिषु द्विरूपं ब्रह्म, अविद्याकृतनामरूपोपाधिकमपरं सगुणं ब्रह्म । तच्छून्यं निर्विशेषं परं ब्रह्म, अपरब्रह्मोपासनाविषया गतिः तत्फलं च तरतमभवापन्नम् परब्रह्मज्ञानमेव प्रमा परमुक्तिहेतुरित्याद्यर्थं शङ्कराचार्याः बहुत्र सिद्धान्तयन्ति । श्लोकवार्तिके '**स्वयं च शुद्धरूपत्वात्** असत्त्वाच्चान्यवस्तुनः । **स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ॥**' (सं.आ.परि.८४) **अन्येनोपप्लवेऽभीष्टे द्वैतवादः** प्रसज्यते । स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥ विलक्षणोपपातेहि नश्येत्स्वाभाविकी क्वचित् । नत्वेकात्माऽभ्युपायानां हेतुरस्ति विलक्षणः ॥' इति भट्टपादैरविद्यावादो दूषितः ॥

अत्र न्यायरत्नाकरः 'निरस्तश्चायं पक्षो निरालम्बनवादेन' इति। मण्डनमिश्रेण ब्रह्मसिद्धौ भट्टपादग्रन्थो दूषितः । अनादौ विभ्रमे हेत्वन्वेषणमसांप्रतमिव । तथा च '**स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ।**' इति प्रत्युक्तम्। **ननु**

## श्रीभाष्यम्

**नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्। नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः।**

## श्रुतप्रकाशिका

विशेषत्वं जगत्सत्यत्वंचोपपन्नमिति शङ्कायां तद्व्युदासार्थमाह--**नापीति**। चेतनेष्वचिद्धर्मबुद्धिः परतन्त्रेषु स्वतन्त्रबुद्धिश्च भ्रमः न तु स्वरूपभेदधीरित्यभिप्रायेण न स्वरूपभेदनिषेध इत्युक्तम्। अथवा * मृषावादिनमेवोद्दिश्य जीवपरयोः स्वरूपभेदनिषेधाभावमाह–**नापीति**। अचिदुपादानं दृष्टान्ततया।

## गूढार्थसङ्ग्रहः

स्वाभाविक्यनादिरविद्या निर्हेतुः सा कथमुच्छिद्येत सर्वशास्त्राण्येव तावत् नैसर्गिक्या अविद्याया उच्छेदाय प्रस्थितानि। अपि च पार्थिवानामणूनां श्यामताडनादिः पाकजेन वर्णेन निवर्त्यते। ननु स्वाभाविकमपि किंचिद्विलक्षणप्रत्ययोपनिपातान्निवर्तताम्। ऐकात्म्यवादिनस्तु अनागन्तुकार्थस्य तदभावात् कुतो निवृत्तिः न खल्वात्मस्वभाव एव विद्या अविद्यानिवर्तिका अविद्यायास्तया सह वृत्तेरविरोधात्, विरोधे वा नित्यनिवृत्तेः नित्यमुक्तं जगत्स्यात्। नच विद्यान्तरमागन्तुकं विरोधिनिवर्तकं ऐकात्म्यवादे व्यतिरिक्तस्य तस्यायोगात्। आगन्तुकस्य ब्रह्मस्वभावत्वानुपपत्तेश्च। तदुक्तम्–'स्वाभाविकीमविद्यांतु नोच्छेत्तुं कश्चिदर्हति। विलक्षणोपपातेहि नश्येत्स्वाभाविकं क्वचित्॥ नत्वैकात्म्याभ्युपायानां हेतुरस्ति विलक्षणः'

अत्रोच्यते। उक्तमेतत्–जीवानामविद्याकलुषितत्वं, न ब्रह्मणः तद्धि सदा विशुद्धनित्यप्रकाशमनागन्तुककार्यम्। अन्यथा ब्रह्मभूयंगतस्यापि नाविद्या निवर्तेत, तत्रानिर्मोक्षः। अथ ब्रह्मैव संसरति ब्रह्मैव मुच्यते, एकमुक्तौ सर्वमुक्तिप्रसङ्गः। यतो भेददर्शनेन ब्रह्मैव संसरति अभेददर्शनेन च मुच्यते। तत्र सर्वे विभागप्रत्यस्तमये युगपत् सर्वमोक्षप्रसङ्गः। तस्मादविद्यया जीवाः संसारिणः विद्यया मुच्यन्ते तेषां च निसर्गजाविद्याकलुषाणां विलक्षणप्रत्ययविद्योदयेन उपपद्यतेऽविद्यानिवृत्तिः। नहि जीवेषु निसर्गजाऽविद्यास्ति, अविद्यैवहि नैसर्गिकी तस्या आगन्तव्या अविद्याप्रलयः' इति॥

अत्र 'ब्रह्मैव संसरति मुच्यते' इति बृहदारण्यकभाष्ये शङ्कराचार्यसिद्धान्तोऽपि मण्डनमिश्रेण प्रत्युक्तः। एतद्दूषणमसहमानाः विमुक्तात्मयतयः इष्टसिद्धौ एतन्मतमनूद्य दूषयन्ति। (६.अ) 'अविद्याश्रयः पुमान्।' (१.अ.१३८ श्लो) इत्युक्तम्। तस्य निर्भेदत्वं ब्रह्मत्वंचासकृदुक्तम्। तच्चायुक्तम्। यतः–'ब्रह्मैवाविद्ययैकंचेद्बध्यते मुच्यते धिया। एकमुक्तौ जगन्मुक्तेः न मुक्तान्यव्यवस्थितिः॥ (१) अतोऽविद्याऽस्तु जीवानां कल्पितास्तेऽप्यविद्यया। नान्योन्याश्रयतादिश्च दोषोऽस्यां सहि वस्तुनि॥ (२) तेषां भेदाच्च मूढोऽन्यबद्धमुक्तव्यवस्थितिः। गुरुशिष्यौ च तेन स्तां नशौ नाशौ च तौ यतः॥ अत्रोच्यते–जाड्यान्न कल्पितस्येष्टा विद्या प्रागुक्तहेतुभिः। नाजडं कल्प्यते सिद्धः नात एव जडाजडे॥ इतश्च–न स्याद्ब्रह्मण्यविद्या सा नेष्टाचेद्ब्रह्मणस्तदा। न ब्रह्म धीर्न सा मुक्तिः तन्मोहान्नहि संसृतिः॥' 'स्वप्नविद्येव ते विद्या नाविद्यां हन्ति सा यतः। अतोऽविद्याक्षतिं वाञ्छन् धियाऽज्ञं परमिच्छतु॥' (१८) इत्यादिना विस्तरेण मण्डनमतनिरसनपूर्वकं 'अतोऽविद्याकृतं बन्धं विद्यया हन्तुमिच्छता। एष्टव्या ब्रह्मणोऽविद्या न तया कल्पितस्य सा॥' (२७) इति सिद्धान्तं न्यरूपयन्॥

सङ्क्षेपशारीके–'कृपणमध्यमपक्वधियां नृणां मतिविलासविधा त्रितयंक्रमात्। परिणतिर्बहुजीवतमस्विता परमपुंसितमः परिकल्पना॥' (३–२४०) इत्यादौ मण्डनविमुक्तात्मसम्मतपक्षद्वयं विभिन्नपुरुषविषयकमिति सर्वज्ञात्ममुनयो व्यवस्थापयतनि

## श्रीभाष्यम्

### अविद्यावादः

यदप्युच्यते निर्विशेषे स्वयम्प्रकाशे वस्तुनि दोषपरिकल्पितमीशेशितव्याद्यनन्तविकल्पं सर्वं जगत् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या । साचावश्याभ्युपगमनीया 'अनृतेनहि प्रत्यूढा' (छा.८.३.२) इत्यादिभिश्श्रुतिभिः ब्रह्मणस्तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च सा तु न सती भ्रान्तिबाधयोरयोगात् । नाप्यसती ख्यातिबाधयोश्चायोगात् अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति । तदयुक्तम्

## श्रुतप्रकाशिका

### अविद्यावादः

अथाविद्यां दूषयितुं तद्विषये परोक्तमर्थमनुवदति । **यदपीति** । निर्विशेषस्य * कथं भ्रमसम्भव इत्यत्राह–**दोषेति** । ब्रह्मव्यतिरिक्तदोषोऽस्तिचेदद्वैतहानिरित्यत्राह–**दोषश्चेति** । अस्मिन्नर्थे परोक्ताः **श्रुतिस्मृत्यर्थापत्तीर्दर्शयति** । **अनृतेनेति** । सदसद्विलक्षणत्वमुपपादयति । **सात्विति** । भ्रान्तिबाधयोरयोगात् * भ्रान्तिविषयत्वबाधविषयत्वयोरयोगात् । * प्रमिति भ्रान्तिबाधान्यथाऽनुपपत्त्या सदसदनिर्वचनीयत्वमित्यर्थः । * '**सद्भाव एवं भवतो मयोक्तः**' इतिवन्नपरमतमिति दर्शयितुं तत्त्वविद इत्युक्तम् । दूषयति **तदयुक्तमिति** ।

## गूढार्थसंग्रहः

वाचस्पतिस्तु प्रायो मण्डनमिश्रमतावलम्बी भामत्यां जीवाविद्यापक्षमेवाङ्गीचकार । शङ्कराचार्यशिष्यौ पद्मपादसुरेश्वराचार्यौ ब्रह्माविद्यापक्षमेवास्थापयताम् । तत्र बहुजनसम्मतत्वेन ब्रह्माविद्यापक्ष एवात्र प्राधान्येन पर्यालोचयिष्यते । आरम्भणाधिकरणे मण्डनविमुक्तात्ममतद्वयं पर्यालोचयिष्यते । तत्र सर्वपक्षसाधारण्येन परमतमनुवदति–**निर्विशेषइत्यादिना** । **ईशेशितव्याद्यनन्तविकल्पमिति** । एतेन महापूर्वपक्षारम्भे 'तदतिरेकिनानाविधज्ञातृज्ञेयतत्कृज्ञानभेदादि' इत्यत्र आदिपदार्थः प्रदर्शितः । एवमुक्त्या ब्रह्मशब्दार्थनिरूपणावसरे 'सच सर्वेश्वर एवे' त्युक्तिः न युक्तेति सूचितम् **जीवैक्यानुपपत्त्येति** । सगुणात्मवादे जीवब्रह्मणोः परस्परविरुद्धधर्मवत्त्वेन ऐक्यस्य बाधः, जीवब्रह्मभेदस्यौपाधिकत्वे निर्विशेषचितः 'तत्त्वमसि' इति वाक्यजन्यबोधविषयत्वे अखण्डार्थसामानाधिकरण्यं निर्वहतीति भावः ॥

**भ्रान्तिबाधयोरयोगादिति** । 'सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत' इति परैरुक्त्या तावन्मात्रमेव सदसद्विलक्षणत्वोपपादकं, तथाऽपि भ्रान्त्ययोगोऽपि तदुपपादकइत्यभिप्रेत्य एवमुक्तम् । 'इदं रजतमि' ति भ्रमस्य अनिर्वचनीयं विनाऽसम्भवः उत्तरत्र निरूपयिष्यते । तत्र रजतं रजतज्ञानं च एकाविद्यापरिणाम एवेति एषितव्यमित्युत्तरत्र व्यक्ती भविष्यति । अतश्चाविद्यानङ्गीकारे भ्रान्त्यसम्भवोऽपि सिद्धः । इष्टसिद्धावप्युक्तम् । 'सच्चेद्भाति कथं बाधो भातिचेत् तदसत्कथम् । सदसद्भ्यामतोऽवाच्यं शुक्तौ रूप्यमिति स्थितम् ॥ (१.१७) अतोऽविद्यां विना भ्रान्तेरयोगादभ्युपेयताम् मायामात्रंतु शुक्त्यादौ रजतादीति वादिभिः ॥' इति ॥

**ख्यातिबाधयोश्चायोगादिति** । 'असच्चेन्न प्रतीयेत' इति असत्ख्यातेः परैर्निराकरणेन ख्यात्ययोगमात्रेणासद्वैलक्षण्यसिद्धावप्यसतोऽपि बाधासम्भवेन अविद्याबाधस्य श्रुत्यादिसिद्धस्यान्यथाऽनुपपत्त्याऽपि असद्वैलक्षण्यं सिद्ध्यतीत्यभिप्रेत्येत्थमुक्तम् । **कोटिद्वयविनिर्मुक्तेति** । सदसद्विलक्षणेत्यर्थः । **तत्त्वविदइति** । 'अस्तीत्येवोपलब्धः तत्त्वभावेन चोभयोः' इति श्रुतौ उभयोरिति निर्धारणेन षष्ठी । तेन ब्रह्मण एकस्यैव तत्त्वभावः तच्छ्रुतौ विवक्षित इति भावः ॥

### श्रीभाष्यम्

**साहि किमाश्रित्य भ्रमं जनयति। न तावज्जीवमाश्रित्य, अविद्यापरिकल्पितत्वाज्जीवभावस्य। नापि ब्रह्माश्रित्य, तस्य स्व(यं)प्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात्। साहि**

### श्रुतप्रकाशिका

आश्रयानुपपत्तितिरोधानानुपपत्तिस्वरूपानुपपत्त्यनिर्वचनीयत्वानुपपत्ति प्रमाणानुपपत्तिनिवर्तकानुपपत्तिनिवृत्त्यनुपपत्तिर्भिर्दूषयिष्यन् प्रथममाश्रयानुपपत्तिमाह–**साहीति**। किमाश्रित्य न किंचिदपीत्यर्थः, किं जीवमाश्रित्य उत ब्रह्मेति विकल्पाभिप्रायेणाह–**न तावदिति**। जीवे सिद्धे अविद्यासिद्धिः अविद्यासिद्धौ जीवसिद्धिरित्यन्योन्याश्रय इत्यर्थः। जीवाज्ञानवादनिरासः उत्तरत्र विस्तरेण वक्ष्यत इत्यत्र सङ्क्षेपः। अथ * ब्रह्माश्रयत्वपक्षं दूषयति। **नापीति**। विरोधित्वं कथमित्यत्राह—**साहीति**। ब्रह्मविषयाज्ञानस्य तत्प्रकाशबाध्यत्वाद्विरोधः॥

### गूढार्थसंग्रहः

**अविद्यापरिकल्पितत्वाज्जीवभावस्येति**। यद्यपि नापि जीवानां कल्पनायाः प्राक् तदभावात् इतरेतराश्रयप्रसङ्गात् कल्पनाधीनो जीवविभागः जीवाश्रया कल्पनेति। अत्र केचिदाहुः, नहि मायायां काचिदनुपपत्तिः, अनुपपद्यमानार्थ एवहि माया। अन्येतु उभयोरविद्याजीवयोरनादित्वात् बीजाङ्कुरसन्तानयोरिव नेतरेतराश्रयत्वप्रवलप्तिमावहतीति वर्णयन्ति' इति ब्रह्मसिद्धावुक्तम्। तथाऽपि कल्पनाधीनत्वे जीवभावस्य विद्यया अविद्यायाः दाहे जीवस्यापि दाहस्स्यात् बद्धमुक्तव्यवस्थासिद्ध्यर्थंहि जीवाज्ञानवादारम्भः। एवमपि यस्य बन्धः तस्य मुक्तत्वं नोपपादितं भवति इत्यादिदूषणमारम्भणाधिकरणे व्यक्तीभविष्यति। 'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥' (सं.शा.१.३१९) इति ब्रह्माज्ञानवादसिद्धान्तोऽपि न घटत इत्याह—**नापि ब्रह्माश्रित्येति**॥

**तस्य स्वप्रकाशज्ञानस्वरूपत्वेन अविद्याविरोधित्वादिति**। यद्यपि 'अज्ञानविरोधिज्ञानंहि न चैतन्यमात्रं किंतु वृत्तिप्रतिबिम्बितं, तच्च नाविद्याश्रयः यश्च अविद्याश्रयः तच्च नाज्ञानविरोधि, नच तर्हि शुद्धचितोऽज्ञानविरोधित्वाभावे घटादिवदप्रकाशत्वापत्तिः। वृत्त्यवच्छेदेन तस्या एव अज्ञानविरोधित्वात् स्वतस्तृणतूलादिभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्ववत् स्वतोऽविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वात्' इत्यद्वैतसिद्धौ 'अज्ञानंप्रति ज्ञाने विरोधित्वं नाशकत्वं तच्च न चिन्मात्रे तथा अननुभवात्। किंतु प्रमाणवृत्तिप्रतिबिम्बितच्चितीति नोक्तदोष इत्याह–नाज्ञानेति।' इति गुरुचन्द्रिकायांचोक्तम्। तथाऽपि वृत्त्यवच्छेदेन शुद्धचितः अज्ञानविरोधित्वोपपादनेऽपि वृत्त्यनवच्छेदे तस्याप्रकाशत्वमेवायास्यति। नहि शुद्धचितः किंचिदवच्छेदेन प्रकाशमानत्वं किंचिदवच्छेदेन नेति युक्तम्। तथासति वृत्त्यधीनप्रकाशत्वेन स्वयंप्रकाशत्वस्यैव भङ्गप्रसङ्गात्। ब्रह्मणः स्वयंप्रकाशत्वस्याताद्दशत्वात् एतदेवाभिप्रेत्योक्तं 'तस्य स्वकाशज्ञानस्वरूपत्वेनेति सौरालोकदृष्टान्तोऽपि अविद्यानाशकत्वेनोपयुज्यते सौरालोकस्य तृणादिनाशकत्वेऽपि पाषाणादिनाशकत्वादर्शनात् भास्यसामान्यनाशकत्वं दृष्टान्ते नास्ति। अत्र शुद्धचितः ज्ञानविरोधित्वं नाशकत्वं, अज्ञानतत्कार्यभासकत्वेन ज्ञानत्वंचाभ्युपेयते। एतच्च न सम्भवति, वृत्त्यवच्छेदेन भास्यसामान्यनाशकत्वे भवदुक्तदृष्टान्तासम्भवात्। अतः अगत्या वृत्तावेव अज्ञाननाशकत्वाभ्युपगमो युक्तः, नतु शुद्धचितः। अतो ब्रह्मणः अज्ञानाविरोधिज्ञानरूपत्वेन अज्ञानाश्रयत्वं न सम्भवतीति सुस्थम॥

## श्रीभाष्यम्

**ज्ञानबाध्याभिमता ‘ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् । अज्ञानंचेत्तिरस्कुर्यात्कः प्रभुस्तन्निवर्त (ने) कः ॥ ज्ञानं ब्रह्मेतिचेत् ज्ञानमज्ञानस्य निवर्तकम् । ब्रह्मवत्तत्प्रकाशत्वात्तदपिह्यनिवर्तकम् ॥ ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता । ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते ॥’ (नाथमुनिभिरुक्ता इमे श्लोकाः) ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकं न स्वरूपभूतं ज्ञानमितिचेत्–न ; उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सत्यन्यतरस्याविद्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात् । एतदुक्तं भवति**

## श्रुतप्रकाशिका

अत्र नाथमुनिभिरुक्तान् श्लोकानाह— **ज्ञानरूपमिति** । * स्वप्रकाशत्वं विवक्षितम् । ज्ञाननिवर्त्यत्वे हेतुमाह— **मृषात्मकमिति** । नहि स्वरूपज्ञानमज्ञानविरोधि, प्रमाणज्ञानमेवेति पक्षमनूद्य दूषयति । **ज्ञानमिति** । ब्रह्मवत् प्रकाशत्वात् स्वरूपानतिरिक्तप्रकाशत्वादित्यर्थः । नहि भास्वरद्रव्ये गृहीते आप्तवाक्यादिभिः शुक्लभास्वरं द्रव्यमित्येतावति शतशः प्रतिपन्नेऽपि भ्रमनिवृत्तिः । दूषणान्तरंचाह— **ज्ञानमिति** । ततःकिंमित्यत्राह- **ब्रह्मणइति** । एषु श्लोकेषु प्रथमश्लोकस्यार्थः पूर्वं ज्ञानबाध्याभिमतेत्यन्तेन भाष्येणोक्तः । द्वितीयश्लोकं व्याचष्टे । **ज्ञानस्वरूपमिति** । ब्रह्मस्वरूपप्रकाशत्वे सति * स्वरूपविविषयज्ञानत्वेसतीत्यर्थः विशेषानवगमात् * विषयवैषम्याभावादित्यर्थः । कथं विशेषानवगमः । प्रमाण जन्यत्वं विशेषोऽस्तीतिचेत्किं तेन, विषयवैषम्यंहि न विद्यते ? किं स्वरूपभूतज्ञानान्निवर्तकज्ञानस्य विषयवैषम्यमस्ति वा न वा ? अस्तिचेत्सविशेषत्वं नोचेत्स्वरूपमेव निवर्तकं स्यात् । प्रमाणजन्यज्ञानमनिवर्तकं वा स्यात् पुरोऽवस्थितभास्वरवस्तुविषयज्ञानवत् प्रमाणजन्यज्ञानत्वं न निवर्तकत्वे प्रयोजकम् । इदं शुक्लभास्वरद्रव्यमिति वाक्यजन्यस्य ज्ञानस्य निवर्तकत्वाभावात् तस्माद्भ्रमसहाकारादतिरिक्ताकारविषयत्वं निवर्तकत्वे प्रयोजकम् ॥

**ननु** विषयवैषम्याभावेऽपि कस्यचिज्ज्ञानस्य भ्रमाविरोधित्वं कस्यचिद्भ्रमविरोधित्वं च दृष्टमभिज्ञाप्रत्यभिज्ञयोः । * अयमेको देवदत्त इत्यभिज्ञाया ऐक्यविषयत्वेऽपि पूर्वदृष्टादयमन्य इति पुरुषद्वित्वभ्रमो दृष्टः । प्रत्यभिज्ञायास्तु सोऽयमेको देवदत्त इति देवदत्तैक्यविषयत्वेऽपि द्वित्वविरोधित्वं दृष्टमिति विषयवैषम्याभावेऽपि प्रमाणज्ञानस्य भ्रमनिवर्तकत्वं युक्तमिति शङ्कायामाह—**एतदुक्तमिति** । सत्यत्वज्ञानत्वस्वभावोऽस्तीतिचेत् सच स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्दः । अनेनाभिज्ञाप्रत्यभिज्ञयोरपि विषयवैषम्यमुक्तं भवति अभिज्ञायामेकस्य धर्मिण एकदेशकालसम्बन्धित्वं प्रतिपन्नं

## गूढार्थसङ्ग्रहः

नाथमुनिभिरेवायमर्थः स्पष्टमुक्त इति तच्छ्लोकत्रयमुपादत्ते— **ज्ञानरूपं परं ब्रह्मेति** । अयमाशयः परमते परं ब्रह्म निर्विशेषं तदेव ज्ञानपदमुख्यार्थः वृत्तौ ज्ञानशब्दः औपचारिकः ज्ञानस्यैवाज्ञाननिवर्तकत्वं सर्वसम्मतम् । अतः परैरपि निर्विशेषचित एवाज्ञाननिवर्तकत्वं वाच्यम् ; आलोकस्य तमोनिवर्तकत्ववत् ज्ञानस्याज्ञाननिवर्तकत्वम् । लोके निवर्त्यनिवर्तकयोस्समानसत्ताकत्वम्, अत्रतु निवर्त्यं मृषात्मकं अज्ञानं च परब्रह्मावारकम् । अनादिना मृषात्मकेनाज्ञानेनावृतं ज्ञानं निर्विशेषचिद्रूपमज्ञानं नैव निवर्तयितुमलम् । आलोकस्य तमोनिवर्तकत्वशक्तिः स्वाभाविकी, नत्वितरसापेक्षा निर्विशेषस्य शक्तिशून्यत्वेन निवर्तकत्वमपि न सम्भवति तदनुगुणो दृष्टान्तश्च दुर्लभः । वृत्त्यपेक्षाऽङ्गीकारे स्वतोऽनिवर्तकत्वेन वृत्तावेव निवर्तकत्वपर्यवसानं स्यात् ॥ **ज्ञानं ब्रह्मेति** । वृत्तिरूपज्ञानस्यैवाज्ञाननिवर्तकत्वं, नतु स्वप्रकाशनिर्विशेषचितः

## श्रीभाष्यम्

**ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यःस्वभावोऽवगम्यते। सः ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशत इत्यविद्याविरोधित्वे न कश्चिद्विशेषस्स्वरूपतद्विषयज्ञानयोरिति। किं च अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति। अतो ज्ञानमज्ञानविरोधिचेत् स्वयमेवविरोधि भवतीति नास्या ब्रह्माश्रयत्वसम्भवः। शुक्त्याद-यस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थास्स्वाज्ञानाविरोधिनस्तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव। तत एव निवर्तकान्तरं च नापे-**

## श्रुतप्रकाशिका

ननु * कालद्वयदेशद्वयसम्बन्धित्वं तत्तु प्रत्यभिज्ञायां प्रतिपन्नम्। एकदेशकालसम्बन्धित्वप्रतीतिर्न द्वित्वविरोधिनी। एकस्य धर्मिणः कालद्वयदेशद्वयसम्बन्धित्वेऽप्यैक्यं तत्तु द्वित्वविरोधीति तत्प्रतिपत्तिर्द्वित्वभ्रमं निवर्तयति। अतस्तत्रापि विषयवैष म्यमस्तीति फलितम् ॥

अथ तृतीयश्लोकार्थस्य विपर्यये पर्यवसानमाह—**किंचेति**। प्रमाणज्ञानत्वं निवर्तकत्वव्यापकम्। अतोऽधिष्ठान-भूतब्रह्मस्वरूपस्य प्रमाणज्ञानत्वाभावात् न भ्रमनिवर्तकत्वं * अधिष्ठानत्वाच्छुक्त्यादिवत् ब्रह्मस्वरूपं न भ्रमविरोधीति प्र-माणान्तरज्ञानमपेक्षत इति शङ्कायामाह—**शुक्त्यादयस्त्विति**। * अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वं व्यापकम्। अतो व्यापकनिवृत्त्याऽ*धिष्ठानत्वनिवृत्तिरिति ; अधिष्ठानत्वादेव ब्रह्मस्वरूपस्फुरणेऽपि प्रामाणान्तरमपेक्षेत। नैवम्। जडत्वा-

## गूढार्थसंग्रहः

इत्यङ्गीकारे जडस्यैवाज्ञाननिवर्तकत्वं स्यात् तत्र मुख्यज्ञानत्वाङ्गीकारे स्वसंप्रदायविरोधः। स्वप्रकाशज्ञानस्य न निवर्तक-त्वम्, वृत्तेर्निवर्तकत्वमित्यत्र विनिगमकं दुर्लभं वृत्तिप्रतिबिम्बितचित एव निवर्तकत्वमित्यङ्गीकारेऽपि प्रतिबिंबितत्वविशि-ष्टचितो निवर्तकत्वं तदुपलक्षितचितो निर्वर्तकत्वं वा विशिष्टचितो मिथ्यात्वेन जडत्वमेव। उपलक्षितचित्तु प्रतिबिंबवि-गमानन्तरमेव सम्भवतीति शुद्धचिद्विशेषेण तस्य निवर्तकत्वासम्भवः ॥

किंच 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तत्त्वमसि' इत्यादिवाक्यजन्यज्ञानविषयत्वस्य ब्रह्मण्यङ्गीकारे ब्रह्मणः प्रमावि-षयत्वेनानुभूतेरनुभाव्यत्वेऽननुभूतित्वप्रसङ्ग इति यो दोष उक्तः स एव दोषः। ज्ञानविषयत्वं ज्ञानतादात्म्यरूपं च्चित्तादात्म्यपर्यवसितम्। अत्यन्ताभेदे तादात्म्यानङ्गीकारेण चितः चित्तादात्म्यरूपविषयत्वं नास्तीति तदेवाननुभूतित्व-प्रयोजकं वृत्तेरावरणभङ्गार्थत्वेन निर्विशेषचितः वृत्तिविषयत्वमेवाङ्गीक्रियते अतो नानुपपत्तिः इत्यपि न वेदान्तेषु 'ब्रह्म-वित्, ब्रह्म वेद' इत्यादौ विदिधातोः वृत्त्यर्थकत्वमेत्यत्र स्वेच्छामन्तरा न किंचिद्विनिगमकं पश्यामः। घटादौ ब्रह्मणि च सर्वत्र वृत्तिविषयत्वेन वृत्तौ मुख्यज्ञानत्वाङ्गीकारेण सर्वसामञ्जस्ये 'घटमहं जानामि' इत्यादौ चितः ज्ञाधात्वर्थघटकत्वं अहमर्थघटकत्वंचाभ्युपगम्य द्वेधा भानस्यानुभवविरुद्धस्य कल्पनाद्यङ्गीकारः अनुपादेय इत्येतत्सर्वं भावप्रकाशे द्वितीयसंपुटे निरूपितम्। निर्विशेषचिद्गतमज्ञानं निर्विशेषचिद्विषयकम् तस्यैव विक्षेपः प्रपञ्चः। निर्विशेषचिद्विषयकमज्ञानं सविशे-षचितः ज्ञानमेव। चिति विशेषाभावज्ञानं सविशेषचितः ज्ञानरूपाज्ञाननाशकम्। इदं च सप्रकारकत्वेन नाशकमिति सर्वै-रङ्गीकरणीयम्। एवं च निर्विशेषचिति परब्रह्मण्यज्ञानं सम्भवत्येव महातात्पर्यं तु निर्विशेषचित्येव वेदान्तवाक्यानाम् ॥

## श्रीभाष्यम्

**क्षते। अथोच्येत-ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधीति। न। इदं ब्रह्मव्यतिरिक्त मिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम्। न तावत् ब्रह्म याथात्म्याज्ञानविरोधि अतद्विषयत्वात् ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः। प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव। ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव तत्तु तद्व्यतिरिक्तस्य मियाथ्त्वज्ञानेन निवृत्तं स्वरूपं तु स्वानुभवसिद्धमितिचेत्। न। ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम्**

## श्रुतप्रकाशिका

देवहि शुक्त्यादेः स्वरूपस्फुरणेऽपि प्रमाणान्तरापेक्षा नाधिष्ठानत्वात्। अतोऽधिष्ठानत्वं सोपाधिकम्। अत्रत्वजडत्वात्स्वरूपस्फुरणे प्रमाणान्तरापेक्षा नास्तीतिचेत् तर्हि जडत्वादेव भ्रमनिवृत्तौ शुक्त्यादेर्ज्ञानान्तरापेक्षा नाधिष्ठानत्वात् अतस्तत्सोपाधिकम् तस्मादजडेतु प्रमाणान्तरापेक्षा भ्रमनिवृत्तौ च न स्यादित्यभिप्रायः। शुक्त्यादयस्त्वित्यत्र तुशब्दो ब्रह्मणः शुक्त्यादिव्यावृत्तिपरः। द्वयीह्यद्वैतिनां गतिः ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्तकं प्रपञ्चमिथ्यात्वविषयकज्ञानं भ्रमनिवर्तकमिति च तत्र * प्रथमपक्षो दूषितः। अथ द्वितीयपक्षं दूषयितुं शङ्कते। **अथोच्येतेति**। दूषयति **नेत्यादिना**। **इदमिति**

**ननु** कथं प्रपञ्चसत्यत्वमज्ञानमित्युच्यते ? * अज्ञानंहि ज्ञानप्रतिबन्धकं नहि प्रपञ्चसत्यत्वं कस्यचिज्ज्ञानं प्रतिबध्नाति। सत्यम् आच्छादकाज्ञानमेवंभूतम् प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानमिति * पराभ्युपगमादेवमुक्तम्। प्रथमं शिरो दूषयति। **अतदिति**। कथमतद्विषयत्वाद्ब्रह्मस्वरूपाज्ञानाविरोधित्वमित्यत्राह—**ज्ञानाज्ञानयोरिति**। विरोधेहि निवृत्तिरित्यर्थः। द्वितीयं शिरो दूषयति **प्रपञ्चेति**। प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञाननिवृत्तेः फलितत्वमाशङ्कते। **ब्रह्मस्वरूपेति**। सद्वितीयत्वं सद्वितीयत्वज्ञानमित्यर्थः। * नहि सत्तया सद्वितीयत्वं ब्रह्मस्वरूपाज्ञानं भवति अपारमार्थ्यात् * सद्वितीयत्वविशिष्टब्रह्मगोचरज्ञाने निवृत्ते विशेष्यांशगोचरमपि ज्ञानं निवृत्तमिति स्वरूपासिद्धिः कथमित्यत्राह—**स्वरूपंत्विति**। दूषयति **नेति**। अद्वितीयत्वं किं स्वरूपं उत धर्म इति विकल्पाभिप्रायेण प्रथमं स्वरूपपक्षं दूषयति। **नेति**।

## गूढार्थसंग्रहः

'एकमेवाद्वितीयम्' इति **श्रुतेः** द्वितीयाभावोपलक्षितचिति महातात्पर्यं, द्वितीयाभावे अवान्तरतात्पर्यम्। तेन आत्माऽन्यस्य मिथ्यात्वं ब्रह्मणस्सद्वितीयत्वरूपाज्ञाननिवृत्तिश्चेत्यादिकं सिद्ध्यति। अयमर्थः मिथ्यात्वसिद्ध्युपपत्तौ अद्वैत सिद्धौ स्फुटः इत्यभिप्रेत्य शङ्कते—**अथोच्येतेत्यादि**। आशयानभिव्यक्त्या दूषणं **इदं ब्रह्मव्यतिरिक्तेत्यादिना**। शङ्कितुरभिप्रायंप्रकाशयति **ब्रह्मस्वरूपाज्ञानमित्यादिना**। अद्वितीयत्वं द्वितीयाभावः सच ब्रह्मरूप एव। तदतिरिक्तत्वेऽपि द्वितीयस्येव द्वितीयाभावस्यापि द्वितीयत्वेन **श्रुत्या** निषेध इति पक्षद्वयं पूर्वमुपन्यस्तम्। तत्र प्रथमपक्षाभिप्रायेणाह—**अद्वितीयत्वं स्वरूपमिति**। द्वितीयपक्षाभिप्रायेण शङ्कते **अद्वितीयत्वं धर्म इतिचेदिति** ॥

**अनुभाव्य धर्मविरहस्येति**। अद्वितीयत्व**श्रुत्या** द्वितीयाभावस्य ब्रह्मभिन्नत्वेऽपि द्वितीयत्वादेव निषेध इतिवदतां मते द्वितीयाभावस्यापि ब्रह्मण्यभावज्ञानावश्यकतया तद्ज्ञानदशायां तस्य सद्वितीयत्वज्ञानबाधकत्वं न सम्भवति। द्वितीयाभावज्ञानेनैव द्वितीयभ्रमस्य निवृत्तिः प्रथपक्षाभ्युपगमे उक्त एव दोष इति भावः ॥

### श्रीभाष्यम्

**अद्वितीयत्वं धर्म इतिचेत्। न। अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात्। अतो ज्ञानरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम्। किंच अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तस्स्यात्। प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो विद्यमानस्य विनाशो वा प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव ॥**

### श्रुतप्रकाशिका

धर्मपक्षे अपसिद्धान्तमाह—**अद्वितीयत्वमिति**। आश्रयानुपपत्तिं निगमयति। **अतइति**। **विरोधादेव**—पूर्वोक्तादेवेत्यर्थः। एवमाश्रयानुपपत्तिरुक्ता। अथ तिरोधानानुपपत्तिमाह—**किंचेति** ॥

**ननु** भवत्पक्षेऽपि क्षेत्रज्ञानां नित्यं स्फुरणमस्ति। तथाऽपि तेषां स्वरूपतिरोधानेन विना न देहात्मभ्रम इति तुल्याऽनुपपत्तिः। सत्यम्। स्वरूपस्फुरणमस्त्येव न तस्य तिरोधानमभ्युपगम्यते। नच स्वरूपस्फुरणं भ्रमविरोधि किंतु नित्यत्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि तान्यागमगम्यानि। तेषां तिरोधिः तद्विषयज्ञानप्रसराभावरूपस्सङ्कोचः। अतस्स्वरूपातिरिक्ताकारान्तरतिरोधानाभ्युपगमान्नात्मनो नाशप्रसङ्गः। ज्ञानस्यात्मासाधारणाकारस्य स्फुरणाद्भ्रमानुपपत्ति-

### गूढार्थसंग्रहः

**तिरोहितमितीति**। 'प्रत्यगात्मनितु चितिस्वभावत्वात् स्वयंप्रकाशमाने ब्रह्मस्वरूपानवभासस्यानन्यनिमित्तत्वात् तद्गतनिसर्गसिद्धाविद्याशक्तिप्रतिबन्धादेव तस्यानवभासः। अतस्सा प्रत्यक् चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति अहङ्काराद्यतद्रूपप्रतिभासनिमित्तं च भवति' इति पञ्चपादिका। अत्र (पं.पा) विवरणम् 'नन्वेवमप्यात्मन्यप्यज्ञाननिमित्तमावरणकृत्यं नास्ति, कथं? नतावदावरणं प्रकाशविलोपः स्वरूपस्यानपायात्। नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः। ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात्। तस्मात् नैवात्मन्यपि भावरूपमज्ञानमनुपयोगादिति तत्राह 'प्रत्यगात्मनितु चितिस्वभावत्वात् स्वयंप्रकाशमाने' इत्यादिना 'तस्यानवभासः' इत्यन्तेन ग्रन्थेन। अयमर्थः 'अस्ति, प्रकाशते' इत्याद्यभिज्ञादिव्यवहारं प्रतिपुष्कलकारणेसति 'नास्ति न प्रकाशते च' इति योऽयमात्मालम्बनो व्यवहारः स भावरूपेण केनचिदात्मन्यावरणमन्तरेण नोपपद्यते। सति पुष्कलकारणे असतिचावरणे सन्निहिते घटे 'प्रकाशते' इत्यादिव्यवहारदर्शनात् अतो 'नास्ति ब्रह्म न प्रकाशते च' इति व्यवहारोऽन्यथाऽनुपपत्त्या भावरूपमज्ञानं गमयतीत्यर्थापत्तिः अनुमानं वा समुदायार्थः। तत्सिद्ध्यर्थं 'आत्मनि प्रकाशते' इत्यादिव्यवहारं प्रतिपुष्कलकारणतां दर्शयति 'चितिस्वभावत्वा' दिति। किं तर्ह्यावरणमिति। तत्राह—ब्रह्मस्वरूपानवभासस्येति 'नास्ति न प्रकाशते' इति व्यवहारालम्बनयोग्यत्वस्य व्यवहारकार्यदर्शनादेव कल्प्यमानस्येत्यर्थः। नचाधिष्ठानप्रतिबन्धमन्तरेण तत्र विपर्ययकार्यमुपपद्यते अविद्यासम्बन्धत्वादेवावरणस्यानिरूपिताकारता च युक्तेति भावः। ननु प्रमाणवैकल्यादेवात्राप्यग्रहणमिति नेत्याह—अनन्यनिमित्तत्वादिति। अतोऽनवभासात्पुष्कलकारणेसति परिशेषादिदमायातमित्याह—तद्गतनिसर्गसिद्धाऽविद्याशक्तिप्रतिबन्धादेव तस्यानवभास इति मूर्तद्रव्यान्तरस्यासम्भवादिति भावः। अतः कार्यदर्शनोन्नेयमावरणकृत्यं विपर्ययंचात्मनि कुर्वाणमज्ञानं भावरूपमेवान्यथाऽनुपपत्त्या कल्प्यते इत्याह—अतस्सा प्रत्यक्चितीति। अत्र पञ्चपादिकाविवरणोक्तार्थोऽभिप्रेतः। **स्वरूपनाशएवोक्तस्स्यादित्यादि—प्रकाशतिरोधानं प्रकाशनाशएवेत्यन्तम्** ॥

### श्रीभाष्यम्

**अपि च निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिस्स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र**

### श्रुतप्रकाशिका

रितिचेन्न * तस्यासाधारणत्वास्फुरणात् । असाधारणतया स्फुरतोहि धर्मस्य भ्रमविरोधित्वं दृष्टम् । यथा शुक्तित्वादेः शुक्तित्वंहि शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चाद्भ्रमं निवर्तयति । न तावज्ज्ञानं देहातिरिक्तात्मासाधारणधर्मत्वेन क्वचिद्दृष्टचरम् अतो भ्रमस्सम्भवति । आत्मासाधारणधर्मत्वादर्शनादध्यासः अध्यासादसाधारणधर्मत्वाग्रहणमित्यन्योन्याश्रयोऽनादितया परिहृतः । धर्मभूतज्ञानस्य नित्यत्वं तिरोधानं च भवद्भिरभ्युपगम्यते तदा ज्ञाननाशप्रसङ्ग इतिचेन्न ज्ञानंहि द्रव्यं तस्य स्वरूपातिरेकेण सङ्कोचविकासात्मकमवस्थाद्वयमभ्युपेतव्यम् । अतस्तत्तिरोधानं कर्मणा तत्सङ्कोचः तन्निवृत्तिस्तु प्रसरः स एव प्रकाशः सचानित्यः तस्यानित्यत्वेऽपि नित्यस्य ज्ञानद्रव्यस्य प्रकाशत्ववादः स्वप्रकाशनरूपप्रसरणार्हत्वनिबन्धनः । अतोऽवस्थाद्वयस्यागमापायित्वाद्द्रव्यं नित्यमेव । * अस्मदवस्थास्थानीयोहि भवतः प्रकाशः, स एव स्वरूपम् तस्मात्तिरोधानं तन्निवृत्तिरेव । इतीममर्थमभिप्रेत्य प्रकाशैकस्वरूपं ब्रह्मेत्युक्तम् । अतः स्वरूपातिरेकिप्रकाशतिरोधानाख्यावस्थाद्वयानभ्युपगमात् * स्वरूपनाश एव तिरोधानं स्यादित्यर्थः ॥

अथ स्वरूपानुपपत्तिमाह—**अपिचेति** । * ज्ञातृत्वादीनामपरमार्थतयाहि दोषान्तरापेक्षा तद्वदिहापीति दृष्टान्ततया वक्ष्यमाणानवस्थोपयोगित्वेन निर्विषयेत्यादिपरिपाटीप्रकटनं कृतम् । यद्वा विषयाश्रयभेदाना * मसत्त्वप्रतिभासयोरुक्तिर्दो-

### गूढार्थसंग्रहः

प्राक् उदाहृते (१९८.पु) स्वप्रकाशनुमाने (पं.पा.वि) प्रदीपदृष्टान्त उक्तः तदालोक एव पर्यस्यति । अद्वैतसिद्धौ–' ज्ञानप्रभाऽनुगतप्रकाशत्वं आवरणाभिभावकत्वम् ' इत्यादि (२०४.पु) उदाहृतग्रन्थे आवरणत्वस्यार्थव्यवहारप्रतिबन्धकत्वमनुगतमङ्गीकृतम् । अतः लोके प्रकाशतिरोधानानुसारेणैवार्थनिर्णयः । एवं च प्रदीपस्थले तमसः आवरणदशायां यथा प्रकाशनाशः तद्वदत्रापि प्रकाशनाशाङ्गीकार एव दृष्टान्तानुसारेणावरणं युक्तं नत्वन्यथा । किंच ' सुखमहमस्वाप्सम् ' इति व्यवहारस्य सुषुप्तौ अविद्यासुखसाक्ष्याकाराविद्यावृत्तिमङ्गीकृत्य तज्जन्यसंस्कारादुपपत्तिर्विवरणे प्रतिपादिता । सुषुप्त्यन्यकाल एव व्यवहारस्सर्वसंमतः । एवं स्मृतिमूलोऽपि व्यवहारः विषयज्ञानदशायामेव व्यवहारः, तदात्वे तु प्रमाणजन्यज्ञानं स्मृतिश्च वर्तत एव । वृत्तिमन्तरा व्यवहारः न सर्वसम्मतः । एवंस्थिते वृत्त्यपेक्षामन्तरा ' अस्ति प्रकाशते ' इति व्यवहारस्यैवासम्भवे अन्यानिरपेक्षत्वेन व्यवहारविरहः प्रतिबन्धकनिबन्धन इति कथं निर्णीयते । अपि च सदंशे चिदंशे आनन्दांशे नावरणं अपितु पूर्णानन्दांशएवेति विवरणसिद्धान्तः । एवं च अस्ति–प्रकाशत इति व्यवहारः प्रतिबन्धकनिबन्धनइत्युपपादनमेव न घटते ॥

किंच नास्ति न प्रकाशत इति व्यवहारः अहङ्काराद्यतद्रूपार्थप्रतिभासश्चैककालिक एव । एवंस्थिते अस्ति प्रकाशत इति व्यवहारस्य चिद्व्यतिरिक्तार्थानपेक्षत्वं अहङ्काराद्यतद्रूपार्थप्रतिभासस्य चिद्व्यतिरिक्तसापेक्षत्वकल्पनमिति कल्पनमपि न घटते । अतो दृष्टान्तानुसारेण प्रभानाशवत् दार्ष्टान्तिके स्वरूपातिरिक्तप्रकाशानङ्गीकारेण स्वरूपनाश एव स्यादिति । ' अहङ्काराद्यतद्रूपप्रतिभासनिमित्तं च भवति ' इति पञ्चपादिकोक्तार्थं पर्यालोचयति–**अपिचेत्यादिना** ॥

### श्रीभाष्यम्

**किमयं स्वाश्रयदोषः परमार्थभूतः उतापरमार्थभूत इति विवेचनीयम्, न तावत्परमार्थः अनभ्युपगमात्। नाप्यपरमार्थः, तथासति हि द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेनवाऽभ्युपगमनीयः न तावद्दृशिः दृशिस्वरूपभेदानभ्युपगमात् भ्रमाधिष्ठानभूतायास्तु साक्षादृशेर्माध्यमिकपक्ष (संभवे) प्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात्। अथैतत्परिजिहीर्षया परमार्थ-**

### श्रुतप्रकाशिका

घकल्पनाकारणत्वेन कृता। **अनभ्युपगमादिति**। परमार्थत्वेद्यद्वैतहानिप्रसङ्ग इति भावः। अपरमार्थपक्षं दूषयितुं कोटित्रयमेव सम्भावितमित्याह—**तथासतीति**। अपरमार्थत्वान्मूलदोषान्तरापेक्षयाऽनवस्थेति दूषणं कोटित्रयस्यापि साधारणम्। दृशित्वपक्षेऽधिकं दूषणमस्तीति दर्शयति। **न तावदिति**। किमनवच्छिन्ना दृशिः उतावच्छिन्ना दृशेरनवच्छिन्नत्वे किं स्वरूपातिरिक्ता उत स्वरूपमेवेति विकल्पमभिप्रेत्यानवच्छिन्नपक्षे स्वरूपव्यतिरिक्तपक्षं दूषयति। **दृशिस्वरूपभेदानभ्युपगमादिति**। * अनवच्छिन्नदृशिद्वयानभ्युपगमादित्यर्थः। अनवच्छिन्नपक्षे स्वरूपदृशिपक्षं दूषयति। **भ्रमेति**। अवच्छिन्नदृशिदूषणत्वेन वक्ष्यमाणानवस्था अनवच्छिन्नपक्षेऽपि समाना अत्राधिकदूषणद्वयसद्भावात्सा नोक्ता। अवच्छिन्नदृशित्वेन द्रष्टृत्वेन दृश्यत्वेन चाभ्युपगमं दूषयति। **द्रष्टृदृश्ययोरिति**। काल्पनिकत्वेन * अपरमार्थत्वेनेत्यर्थः। दोषान्तरापेक्षाहेतुरिदं काल्पनिकत्वम्। अवच्छिन्नदृशिपक्षेऽपि स्वरूपतद्व्यतिरिक्तविकल्पे स्वरूपपक्षेऽपि तुल्यम् अनभ्युपगमरूपदूषणं ब्रह्मस्वरूपस्यावच्छिन्नत्वापारमार्थ्यानभ्युपगमात्। अतोऽ(न)वच्छिन्नपक्षे न विकल्पितं स्वरूपातिरिक्तपक्षेऽनवस्थोक्ता। **अथैतदिति**। अपरमार्थत्वेऽनवस्था परमार्थत्वेऽद्वैतहानिरित्येतद्दोषपरिजिहीर्षयेत्यर्थः॥

### गूढार्थसंग्रहः

**किमयं स्वाश्रयदोषःपरमार्थ इत्यादि**। लोके स्वसमानसत्ताकदोषेणैवेत्थमनुभवः दार्शनिकसम्मत इत्यभिप्रेत्यैवं विकल्पो युक्तः। **नाप्यपरमार्थइति**। परमार्थेऽपरमार्थदोषो न सम्भवति स्वसमानसत्ताकत्वाभावादित्यप्यत्र विवक्षितम्। **द्रष्टृत्वेनवेत्यादि**। सकर्मकधात्वर्थस्थले कर्तृकर्मक्रियाभेदस्य दार्शनिकसम्मतत्वेन परमते आत्माऽनुभूत्योरेकत्वेनानुपहितानुभवस्यात्मत्वस्य पञ्चपादिकादावुक्तरीत्या पूर्वपक्षे उपपादनेऽपि प्रमेयभेदेनोपधीयमानस्यैवानुभवत्वेन व्यवहारस्य पञ्चपादिकादावप्यङ्गीकारेण सोपाधिकस्यापरमार्थत्वेन द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेनवेति रूपत्रयाभिधानम्॥

**मूलदोषान्तरापेक्षयाऽनवस्था स्यादिति**। अविद्यायाः अवस्तुत्वेनानवस्थादिः न दोष इति ब्रह्मसिद्ध्याद्युक्तिः न घटते। एवमङ्गीकारे स्वप्रकाशानभ्युपगमेऽपि प्रकाशान्तरापेक्षायामपि अनवस्थाऽऽदिदोषस्य विरहः अवस्तुत्वेनैव माध्यमिकैस्सूपपाद इति माध्यमिकमतनिरसनासम्भवेन स्वप्रकाशनित्यचिद्रताविद्यादोषकल्पनमेव न स्यादिति भावः। अविद्यया आवरणमङ्गीकृत्य विक्षेपकल्पनाऽपेक्षया ब्रह्मणस्स्वभावादेव विक्षेपः उपपद्यते। अविद्याङ्गीकारेऽपि अविद्यासम्बन्धः ब्रह्मणि कल्पितोऽङ्गीकरणीयः। तदनङ्गीकारेऽपि प्रपञ्चसम्बन्धस्यैव कल्पितस्याङ्गीकारस्सम्भवति इति मनसि निधाय **अथेत्यादि—किं प्रपञ्चतुल्याविद्यान्तरकल्पनेनेत्यन्तग्रन्थः**। यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगम इत्यादि। अधिष्ठानमात्रपारमार्थ्येन भ्रान्त्युपपादनं न घटते। लोके दोषादेरपारमार्थ्येऽपि भ्रमस्यानुभवविरहात्। एवंस्थिते अधिष्ठानांशे लोकानुसारः दोषांशे तदननुसारश्च अनुचित इति भावः॥

## श्रीभाष्यम्

**सत्यनुभूतिरेव ब्रह्मरूपा दोषइतिचेत्। ब्रह्मैवचेद्दोषः प्रपञ्चदर्शनस्यैव तन्मूलं स्यात् किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन। ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात् अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युगमः न तावद्भ्रान्तिरुपपादिता भवति।**

## श्रुतप्रकाशिका

* अनुभूतेरेव दोषत्वान्नाद्वैतहानिः तस्याःपारमार्थ्यान्नानवस्थेति च भावः। एतद्दूषयति। ब्रह्मैवेति। अपारमार्थ्याद्दोषान्तरसापेक्षत्वसाम्यमभिप्रेत्य प्रपञ्चतुल्यशब्द उक्तः। अतः प्रतिशिरोभिहितैर्दूषणैरित्यर्थः। अनिर्मोक्षप्रसङ्गपरिहाराय ब्रह्मव्यतिरिक्तत्वमनवस्थापरिहाराय पारमार्थिकत्वम्। परैरनवस्था त्रिधा परिहृता ; जीवाज्ञानवादिना बीजाङ्कुरन्याया*त्प्रवाहानादित्वेन परिहृता, अविद्यया जीवः जीवादविद्येतिहि तन्मतम्। ब्रह्माज्ञानवादिना स्वरूपानादित्वेन परिहृता, उभाभ्यां च दुर्घटत्वेन परिहृता। दुर्घटत्वमविद्याया भूषणं नतु दूषणमिति। परमार्थस्य ह्युपपत्त्यपेक्षा प्रासादनिगरणादिष्वल्पास्येन विपुलप्रासादनिगरणमनुपपन्नमिति युक्तिर्न प्रवर्तते। अत उपपत्तिनिरपेक्षत्वं अपारमार्थ्यसाधकम्। * दोषस्य स्वपरनिर्वाहकत्वेन दोषान्तरनैरपेक्ष्याच्च नानवस्थेति। अत्रोच्यते—प्रवाहानादित्वं ब्रह्माज्ञानवादिनैव दत्तोत्तरं जीवनित्यत्वश्रुतिभिरकृताभ्यागमकृतविप्रणाशादिरूपश्रुत्यर्थापत्त्या च आमोक्षाज्जीवस्य स्थायित्वमिष्टं हीयेतेति। अपारमार्थ्ये स्वरूपानादित्वमपि नानवस्थापरिहारः तथासति माध्यमिकपक्षविजयप्रसङ्गात्। तत्राधिष्ठानस्य भ्रान्तिसिद्धत्वे तस्याः भ्रान्तेरधिष्ठानान्तरापेक्षा स्यात् तस्यापि भ्रान्तिसिद्धत्वेऽनवस्था स्यादित्यनवस्थयाह्यधिष्ठानपारमार्थ्यं साधितम्। माध्यमिकेन अपरमार्थाधिष्ठानस्य स्वरूपानादित्वे स्वीकृतेऽनवस्थापरिहृतेत्यधिष्ठानापरमार्थ्यमेव स्यात्॥

किंच स्वरूपानादित्वेऽपि मूलदोषापेक्षाऽस्त्येव जीवस्यानादित्वेऽप्यविद्यापरिकल्पितत्वस्य भवद्भिरङ्गीकृतत्वात्। दुर्घटत्वंचानुपपन्नं दुर्घटत्वंनामोपपत्तिनिरपेक्षत्वम्। तदपारमार्थ्यसाधकंचेदपरमार्थस्य प्रपञ्चस्य दुर्घटत्वेनोपपत्तिनिरपेक्षत्वान्मूलदोषापेक्षा च न स्यात्। निवर्तकज्ञानेसत्यपि साऽवतिष्ठेत। विरोधान्न तिष्ठतीतिचेत् तर्ह्युपपत्त्यनुवर्तिन्यविद्यास्यादिति। परमार्थत्वप्रयुक्तोपपत्तिरपमार्थत्वप्रयुक्तोपपत्तिरिति द्विविधोपपत्तिः तत्र दुर्घटत्वं नाम * परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वं * अपरमार्थत्वप्रयुक्तोपपत्तिर्हि दोषापेक्षा अतः प्रपञ्चस्य मूलदोषपरिकल्पनं युक्तमितिचेत् तर्ह्यपरमार्थत्वप्रयुक्तोपपत्तिरूपदोषापेक्षा अपरमार्थभूतदोषस्यापि स्यात् ततोऽनवस्था तदवस्थैव दुर्घटत्वमनवस्थापरिहारश्चेत् अधिष्ठानापारमार्थ्येऽनवस्था परिहृता स्यात्। तत्रापारमार्थ्यप्रयुक्तोपपत्तिरवर्जनीयेत्यधिष्ठानापेक्षा स्यादेवेत्यनवस्थितिरिति वक्तव्यम्। तदत्र दोषेऽपि तुल्यमित्यनवस्था दुष्परिहरा प्रवाहानादित्वपक्षेऽप्यधिष्ठानापारमार्थ्येऽप्यनवस्था सुपरिहरा पितृपुत्रादिपरम्परावदधिष्ठानपरम्परानादित्वाभ्युपगमात्। जीवाज्ञानवादिनंप्रति ब्रह्माज्ञानवादिना यद्दुर्घटत्वे दूषणमुक्तं तद्ब्रह्माज्ञानवादेऽपि तुल्यम्। यथा अविद्याया दुर्घटत्वंचेन्मुक्तान् परब्रह्मचाश्रयेदविद्या। शुद्धस्वरूपं ह्यत्र अशुद्धस्वरूपाऽविद्याविरोधान्नाश्रयतीतिचेत्तर्ह्युपपत्तिमत्यविद्या तस्मादुक्तान्योन्याश्रयणादिदूषणान्यापतेयुरितिह्युक्तम्। तत्तवापि तुल्यम् मोक्षेऽपि ब्रह्माश्रयेदविद्या नहि बाधकज्ञाने सत्यपरमार्थभूता अविद्या तिष्ठतीतिचेत् बाधकसन्निधौ न बाध्यसिद्धिरित्येवंरूपोपपत्तिमत्येवाविद्येत्यस्मदुक्तान्यनवस्थादिदूषणान्यापतेयुरितिहि वक्तुं शक्यते। दोषस्य स्वपरनिर्वाहकत्वे अधिष्ठानमपि तथा स्यात्। परंप्रत्यधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वमितिचेत् परंप्रति दोषत्वेसिद्धे हि स्वनिर्वाहकत्वं तदेव नास्तीति तुल्यं स्यात्। अधिष्ठानारोप्ययोर्भेदो दृष्टः तत्राधिष्ठानस्य स्वपरानिर्वाहकत्वे*ऽधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग इतिचेत्। दोषतत्कार्ययोरपि

### श्रीभाष्यम्

**अनिर्वचनीयत्वं च किमभिप्रेतं सदसद्विलक्षणत्वमितिचेत् तथाविधस्य वस्तुनः प्रमाण शून्यत्वेनानिर्वचनीयतैव स्यात् । एतदुक्तं भवति सर्वंहि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिस्सदसदाकारा सदसदाकारायास्तु प्रतीतेस्सदसद्विलक्षणं विषयः**

### श्रुतप्रकाशिका

तिमिरं चन्द्रद्वित्वयोर्भेदो दृष्टः दोषस्य स्वपरनिर्वाहकत्वे दोषाध्यस्तयोरैक्यप्रसङ्गइति तुल्यमिति । एतदभिप्रायेण याव-द्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमो न तावद्भ्रान्तिरुपपादिताभवतीत्युक्तम् । यथोक्तमाचार्यपादैः–

स्वरूपानादित्वस्वपरघटने दुर्घट(तया)नता)प्रवाहानादित्वं पुनरिति चतस्रोहि गतयः ।

अवस्याविद्यायागदितुमनवस्थापरिहृतौ मतास्त्वेतास्तुल्या स्फुटमसदधिष्ठानसरणौ ।। इति

अथानिर्वचनीयत्वानुपपत्तिमाह—**अनिर्वचनीयत्वंचेति** । अनिर्वचनीयता विद्वत्सन्निधौ दुरुपपादत्वम् । कथं प्रमाणशून्यत्वमित्यत्राह—**एतदुक्तमिति** । … … …

### गूढार्थसङ्ग्रहः

'मिथ्याऽज्ञाननिमित्तः' इत्यध्यासभाष्यपञ्चपादिकायां मिथ्याशब्दो द्व्यर्थः, अपह्नववचनः अनिर्वचनीयतावचनश्च' इत्याद्यनन्तरं 'मिथ्या च तत् अज्ञानं च मिथ्याऽज्ञानं मिथ्येति अनिर्वचनीयतोच्यते अज्ञानमिति च जडात्मिका शक्तिः इति, इत्युक्तम् इममर्थं मनसि निधायाह—**अनिर्वचनीयत्वंचेति** । जन्माद्यधिकरणविवरणे 'नासदासीन्नोसदासीत्' इति श्रुतेः उदाहरणपूर्वकं सदसद्विलक्षणानिर्वचनीयप्रकृतित्वस्य प्रतिपादनेन अनिर्वचनीयत्वं सदसद्विलक्षणत्वमिति सिद्ध्यति । इष्टसिद्धौ 'सच्चेद्भाति कथं बाधो भातिचेत्तदसत्कथम् । सदसद्भ्यामतोऽवाच्यम्' इत्यत्राप्ययमर्थः स्फुट इत्यभिप्रेत्याह **सदसद्विलक्षणत्वमिति** ।।

**तथाविधस्य वस्तुनःप्रमाणशून्यत्वेनेति** । इत्युक्तार्थः **सर्वा च प्रतीतिस्सदसदाकारा सदसदाकारायास्तु प्रतीतेस्सदसद्विलक्षणं विषयः** इत्यादिना विशदीकृतः । यद्यपि सिद्धान्तसिद्धाञ्जने–'बाधायोग्यस्वरूपत्वं सत्त्वम् असत्त्वं च निस्स्वरूत्वम् । तद्वैलक्षण्यं चानिर्वचनीयत्वमस्ति नास्तिबोधौ न विरुन्धः । ब्रह्मणश्च बाधायोग्यत्वलक्षणं सत्त्वं 'सत्यं ज्ञानमनन्तं ब्रह्म' 'अस्तीत्येवोपलब्धव्यः' 'सत्तामात्रमगोचरम्' इत्यादिना गम्यते । निस्स्वरूपत्वरूपंचासत्त्वं खपुष्पादेः निरुपाख्यत्वात्' इत्युक्तम् । तथाऽपि बाधायोग्यस्वरूपत्वं ब्रह्मणएवेति निर्णयः कथम्? घटोऽस्तीति प्रतीतौ बाधाभावो न विषयः 'अस्ति ब्रह्मेति' प्रतीतौ बाधाभावो विषय इत्यत्र नियामकाभावात् । सङ्क्षेपशारीरके–मान-सम्बन्धतद्योग्यस्वरूपास्तित्वं वैयाकरणप्राभाकरसम्मतमित्युक्त्या अस्तित्वस्य प्रमाविषयत्वरूपत्वेन उभयोस्तत्सम्भवात् । कठोपनिदि—एतत्पूर्वं 'अव्यक्तात्तु परःपुरुषो व्यापकोऽलिङ्ग एव च । यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ।।' इत्यत्र व्यापकपुरुषज्ञानस्यैव मुक्तिहेतुत्वप्रतिपादनेन 'अस्तीत्येवोपलब्धव्यस्तत्वभावेनचोभयोः ।' इत्यत्र व्याप्यव्याप-कयोरुभयोरेकविधतत्वभावेन 'अस्तीत्येवोपलब्धव्य' इत्यर्थस्य स्फुटतया ब्रह्मण एव बाधायोग्यस्वरूपत्वं नतु तदन्यस्येति कल्पनायाः औत्प्रेक्षिकतायाः तत एव सिद्धेः ।।

एतेन 'सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयविवक्षायां दोषाभावात् । तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं सदसद्विलक्षणत्वं पर्यवसितम्' इत्यद्वैतसिद्ध्युक्तिरपि निरवकाशा । सदस-

## श्रीभाष्यम्

**इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयस्स्यादिति ।**

## श्रुतप्रकाशिका

**सर्वं सर्वप्रतीतेर्विषयस्स्यादिति ।** सदसद्विलक्षणमिति या प्रतीतिस्तत्रापि सदसदेव विषयस्स्यादित्यर्थः । प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते तस्मात्सदसदाकारायाः प्रतीतेस्सदसदाकार एव विषयः, न सदसद्विलक्षणः । यथा ख्याति विवेके '**नह्यन्यदवभास्यमन्यो विषयः, अवभासनव्यवस्थाप्यत्वाद्विषयस्य**' इति एकस्य विषयस्य सदसदाकारत्व-मनुपपन्नं व्याप्तिविरोधादितिचेत् सदसद्विलक्षणत्वं च व्याप्तिविरोधादनुपपन्नं, सतोऽसद्विलक्षणत्वमसतस्सद्विलक्षणत्वं च हि दृष्टं नत्वेकस्य उभयवैलक्षण्यं दृष्टमिति व्याप्तिविरोधः । अयं विशेषः सदसद्विलक्षणत्वं क्वचिदपि न दृष्टं, * सदसदा-त्मकत्वं दृष्टमिति, यथा संवित्सिद्धौ—

**नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत् । प्रतीतेरेव सत्किं न बाधान्नासत्कुतो जगत् ॥**

इति । अर्थस्थितौ सत्त्वमसत्त्वं वा स्यान्नतद्विलक्षणत्वं सतो घटादे*स्सद्विलक्षणत्वं दृष्टमितिचेन्न तथासति ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्गात् । अन्यतरत्वसहं सदसद्विलक्षणत्वमिष्टमेवेति चेत्तुल्यम् । ईदृशं सदसद्वैलक्षण्यं वदता शब्दान्त-रेण सत्त्वमेवाङ्गीकृतं भवति । अतस्त्वदभिमतं सदसद्विलक्षणत्वं विरोधादपास्तम् । अस्तीति प्रतिपन्नत्वं सत्त्वं नास्तीति धीविषयत्वं बाधितत्वमित्येकस्यैव सत्त्वासत्त्वविरोधस्सदसद्विलक्षणत्वकल्पकश्चेत् सर्वत्र पूर्वपक्षसिद्धान्तप्रतीत्योः परस्परवि-रुद्धाकारविषयत्वादुभयाकारविलक्षण एवार्थस्साध्य इति सिद्धान्तसमर्थनवैयर्थ्यं स्यात् । ततश्च भेदस्सुनिरूप इति पूर्वपक्षी-कृत्य दुर्निरूप इति त्वया सिद्धान्तिते प्रतीतिद्वयविरोधात्सुनिरूपदुर्निरूपविलक्षणस्स्यात् ॥

एवं संवित्सत्यत्वमिथ्यात्व जडत्वाजडत्वनित्यत्वानित्यत्वादिवादेषु पूर्वपक्षितसिद्धान्तिताकारविलक्षणत्वं संविदःस्यात् तच्चानभिमतम् । अतः परस्परविरुद्धाकारप्रतीत्योः प्रतिपन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति न सदसद्वैलक्षण्यसिद्धिः तर्हि ख्यातिबाधान्यथाऽनुपपत्तेः, कःपरिहार उक्त इतिचेदन्यथैवोपपत्तिरुक्ता भवति सत्त्वेसत्य*न्यथाख्यानादिभिस्तत्त-द्वाद्यभिमतैरेव ख्यातिबाधोपपत्तेः सतः कथं बाधः, अन्यत्र ख्यातत्वात् ॥

नन्वन्यत्र सच्चेन्नबाधः न सच्चेदसत् ख्यातिप्रसङ्ग इतिचेन्न, अन्यत्र सत्त्वात् अन्यत्र सतोऽन्यत्र ख्यातत्वं ह्यन्यथा ख्यातत्वम् अन्यत्र सतोऽन्यत्र ख्यातिर्दोषवशात् । दोषस्यान्यत्र ख्यातिहेतुत्वं न दृष्टमितिचेत् दोषस्यानिर्वचनी(यता) ता)वभासहेतुत्वं च न क्वचिद्विमतिपदादन्यत्र दृष्टमिति तुल्यम् । मिथोविरुद्धप्रतिपन्नाकारद्वयवैलक्षण्यमेकस्याविरुद्धमित्ये-तत्तवाधिकम् । अख्यातिपक्षे * सत्त्वेसति * भेदाग्रहेण ख्यातिबाधोपपत्तिः । * सतएवागृहीतभेदतया ख्यातिः भेदग्रहश्च बाधः बाध्यत्वं च प्रवृत्तेः । यथार्थख्यातिपक्षेतु शुक्तिरजतस्वाप्नार्थादौ सत्त्वात् प्राचुर्याभावास्थिरत्वतदेकानुभाव्य(त्व)त्वा) ग्रहाच्च ख्यातिबाधोपपत्तिः पुरोवर्तिनि सत एव रजतस्य ख्यातिः शुक्तिप्राचुर्यग्रहो बाधः तेन प्रवृत्तिर्बाध्या, तद्बाधश्च प्रवृत्त्यनुत्पत्तिः । अलातचक्रादौत्वख्यातिपक्ष इव तदुपपत्तिः । अतोऽन्यथैवोपपत्तिस्सिद्धेत्यनिर्वचनीयत्वकल्पनमयुक्तम् ॥ एवमाश्रयतिरोधानस्वरूपानिर्वचनीयत्वानुपपत्तय उक्ताः ॥

## गूढार्थसंग्रहः

द्विलक्षणशब्दस्य पारिभाषिकार्थाङ्गीकारेऽपि ब्रह्मान्यस्य त्रिकालाबाध्यविलक्षणत्वस्य निर्णयासम्भवात् । अन्यत्सर्वं प्रागेव (३२५.पु) तत्र तत्र निरूपितम् ॥

## श्रीभाष्यम्

**अथ स्यात्–वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनी-**

## श्रुतप्रकाशिका

अथ नहि दृष्टेऽनुपपन्नं नामेतिन्यायात् प्रमाणसिद्धार्थस्य तर्केण बाधो न युक्त इत्यभिप्रायवता परेण प्रमाणप्रतिज्ञा शङ्क्यते । **अथ स्यादिति** । पूर्वदूषिताकारान् साधयितुमाह–**वस्तुस्वरूपेति** । अनेन तिरोधानमुक्तम् । आन्तरबाह्येति

## गूढार्थसंग्रहः

अध्यासभाष्यविवरणे 'ननु क्लृप्तं विषयेन्द्रियादिदोषः कारणमिति ? सत्यं निमित्तं तु तत् । उपादानापेक्षायामज्ञानमनुप्रविशति । सर्वं च कार्यं सोपादानं कार्यत्वात् घटादिकार्यवत् इत्यनुमानात् ।' इत्यादिप्रथममुक्तम् । अनन्तरं 'कथं पुनर्नैमित्तिकव्यवहारस्य नैसर्गिकत्वम् ? अत्रोच्यते—अवश्यमेषाऽविद्याशक्तिः बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्तामात्रानुबन्धिन्यभ्युपगन्तव्या । सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति प्रमाणवैकल्यादेव तदग्रहणसिद्धेः' इत्यादिपञ्चपादिकव्याख्यानावसरे 'अवश्यमिति' 'एषे' ति च प्रमाणद्वयवत्तामाह–प्रत्यक्षं तावत् 'अहमज्ञः' 'मामन्यंच न जानामि' इत्यपरोक्षावभासदर्शनात् । ननु ज्ञानाभावविषयोऽयमवभासः, न ; अपरोक्षावभासत्वादहंसुखीतिवत् अभावस्य च षष्ठप्रमाणगोचरत्वात् प्रत्यक्षाभाववादिनोऽपि नात्मनि विज्ञानाभावावगमस्सम्भवति ; मयि ज्ञानं नास्तीति प्रतिपत्तौ आत्मनि धर्मिणि प्रतियोगिनि चार्थेऽवगते तत्र ज्ञानसद्भावात् ज्ञानाभावप्रतिपत्त्ययोगात्, अनवगतेऽपि धर्म्यादौ सुतरामभावानवगमात् षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेयेऽपि ज्ञानाभावे आत्मादाववगतेऽनवगतेऽप्यात्मनि ज्ञानाभावप्रतिपत्त्ययोगात् । इह च 'त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामि' इति विषयव्यावृत्तमज्ञानमनुभूय तच्छ्रवणादौ प्रवर्तते । भावरूपाज्ञानप्रत्यक्षवादे तु सत्याश्रयप्रतियोगिज्ञाने ज्ञानाभावस्येव भावान्तरस्यापि नानुपपत्तिर्नियन्तुं शक्यते । नचाश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यं भावान्तरस्याज्ञानस्य निवर्तकम् ; तस्याज्ञानविषयप्रतिभासत्वात् । नहि स्वज्ञानेनैव स्वयं निवर्तते । ननु अज्ञानस्य व्यावर्तको विषयः कथं साक्षिचैतन्येनावभास्यते ? प्रमाणायत्तत्वाद्विषयसिद्धेरिति, उच्यते ; सर्ववस्तु ज्ञाततया वाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव । तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते, अन्यस्तु सामान्याकारेण विशेषाकारेण वाऽज्ञानव्यावर्तकतया सदा भासत इत्युपपत्तिसहितमज्ञानप्रत्यक्षं भावरूपमेवात्मन्यज्ञानं गमयतीति सिद्धम् ॥

अनुमानमपि विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त स्वविषयावरण स्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धम् शक्तिरित्यात्मपरतन्त्रतयाऽऽत्मनः सर्वकार्योपादानत्वस्य निर्वोढृत्वमाह–तत्स्वरूपमात्मतत्त्वं तत्सत्तामात्रानुबन्धिनीत्यर्थः । किंचार्थापत्तिरपि भावरूपाज्ञानसद्भावे प्रमाणमित्याह–अन्यथा मिथ्यार्थावभासानुपपत्तेरिति । विशुद्धब्रह्मात्मनि शुक्तिकायांचाहङ्काररजताध्यासस्यार्थज्ञानात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किंचिदुपादानमन्वेषणीयम् । सत्योपादानत्वे कार्यस्य कारणस्वभावतयाऽध्यासस्यापि सत्यत्वप्रसङ्गात् । तस्यापि मिथ्योपादानस्य सादित्वे तथाविधोपादानान्तरकल्पनाप्रसङ्गाद्यनाद्येव तन्मिथ्योपादानमिति कल्पनीयम् । यच्चानादि स्वयंमिथ्या मिथ्योपादानमात्मसम्बन्धि च तदज्ञानमिति मिथ्याध्यास एव तथाऽविधाज्ञानोपादानं कारणमन्तरेणानुपपद्यमानस्तत्कल्पयतीत्युक्तम् ।' इति इममर्थमनुवदति–**अथ स्यादित्यादिना** ॥

## श्रीभाष्यम्

**यमविद्याऽज्ञानादिपदवाच्यं वस्तुयथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किंचिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते। तदुपहितब्रह्मोपादानश्चाविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मन्यहङ्कारज्ञानज्ञेयविभागरूपोऽध्यासः तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तुतत्तज्ज्ञानरूपाध्यासोऽपि जायते। कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते। कारणाज्ञानविषयं प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासः। अयं तु न ज्ञानप्रागभावविषयः; * स हि षष्ठप्रमाणगोचरः अयं तु अहं सुखीतिवदपरोक्षः। अभावस्य प्रत्यक्षत्वाभ्युपगमेऽप्ययमनुभवो**

## श्रुतप्रकाशिका

स्वरूपमुक्तम्; अध्यासोपादानत्वेनहि मिथ्यात्वं फलितम्। सदसदित्यनिर्वचनीयत्वमुक्तम्, शास्त्रेष्वेतत्प्रतिपादकशब्दप्रत्यभिज्ञानार्थं अविद्याज्ञानादिपदवाच्यमित्युक्तम्। सिद्धान्तिना दूषयिष्यमाणमाकारान्तरमपि साध्यत्वेनाह—**वस्तुयाथात्म्यज्ञानेति**। तदुपहितेत्याश्रयश्च आन्तराध्यासः कः बाह्यः कः कथंचाविद्योपादानत्वे ब्रह्मण उपादानत्वमित्यत्राह—**तदुपहितेति**। निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिं सूचयति। **अविकारेस्वप्रकाशेत्यादिना**। अविकारत्वात् स्वप्रकाशत्वात्, प्रत्यक्त्वाच्च विकारास्पदजडपराग्रूपपरिणामो नोपपद्यत इत्यर्थः। स्वप्रकाशस्य कथमध्याससम्भवइत्यत्राह—**तिरोहितस्वरूपइति**। तिरोधायकं किमित्यत्राह—**तेनैवेति**। तेनैव अध्यासहेतुनैवेत्यर्थः। अहङ्कारो ज्ञानंचान्तराध्यासः अध्यासरूपे अध्यस्तरूपे कर्मणि घञ् तस्यैव दोषस्यैव अवस्थाविशेषेण कादाचित्कावस्थाविशेषेण रज्जुसर्पाद्यध्यासः॥

एवं निष्कृष्टब्रह्मणउपादानत्वानुपपत्तिरुक्ता, दोषस्योपादानत्वे(उ)नु)पपत्तिमाह—**कृत्स्नस्येति**। सुवर्णजातीयस्य भूषणस्य स्वर्णमेव ह्युपादानं दृष्टं, तद्वदिति भावः। हेतुबलात् कार्यकारणयोस्सजातीयत्वदर्शनलक्षणात्। अथ प्रत्यक्षमाह **कारणेति**। अहमज्ञ इत्यस्य विवरणं मामन्यं च न जानामीति। अहमज्ञ इत्यज्ञानस्वरूपकीर्तनं तस्य मामन्यं च नजानामीति आच्छादनरूपकार्यकथनं कारणाज्ञानशब्देन * कार्यरूपाज्ञानव्यावृत्तिः। तस्मा*त्सौषुप्तिकमज्ञानं विवक्षितम्। * जागरिताद्यवस्थायां घटाद्यवच्छिन्नमज्ञानं प्रतीयते सविकल्पकप्रत्यक्षेण सुषुप्तौत्वनवच्छिन्नकारणाज्ञानप्रतीतिरिति तत्त्वशुद्धिकारादिभिरुक्तम्। * जागरिताद्यवस्थायामेव अज्ञानानुभवोऽयमिति संप्रदायः अन्यं च न जानामीत्युक्तेः नहि स्वापेऽन्यपरामर्शः, न जानामीत्याच्छादकतया प्रतीयमानस्याज्ञानस्य कारणत्वात् कारणाज्ञानविषयमित्युक्तम्। अपरोक्षावभास इति परोक्षरूपानुमानादिप्रमाणव्यावृत्त्यर्थमुक्तम्। ज्ञानप्रागभावविषयत्वमाशङ्क्य परिहरति। **अयंत्विति**। भवत्वयमपि षष्ठप्रमाणविषयत्वमाशङ्क्याह **अयंस्विति**। परोक्षप्रमाणानि प्रत्यक्षव्यतिरिक्तानि तस्मात् परोक्षप्रमाणविषयः प्रागभावो नापरोक्षप्रमाणविषयभूतमज्ञानं भवितुमर्हतीत्यर्थः। भावग्राहिप्रमाणेन अभावस्य वेद्यत्वेऽपि दूषणमाह—**अभावस्येति**। हेतुमाह **अनुभवेति**। अभावस्यानुभववेळायां ज्ञानं विद्यते नवा विद्यतेचेत् ग्राह्याभावान्नावप्रतीतिः नचेत्

## गूढार्थसंग्रहः

**तस्यैवावस्थाविशेषेणेति**। इदमेवावस्थाज्ञानं आधुनिकैः मूलाज्ञानं पल्लवाज्ञानमिति च व्यवह्रियते। मूलाज्ञानकार्यत्वे शुक्तिरजतादेः ज्ञानेन तन्निवृत्त्यसम्भवाद्बाधो न सम्भवतीति अवस्थाज्ञानकार्यत्वमाक्षिप्तम्। अयमर्थः प्राक् (१४४ पु) उदाहृतविवरण एव स्फुटः॥

श्रीभाष्यम्

**नात्मज्ञानविषयः अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात्, अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च। एतदुक्तं भवति अहमज्ञइत्यस्मिन्ननुभवे अहमित्यात्मनोऽभावधर्मितया ज्ञानस्य च प्रतियोगितयाऽवगतिरस्ति वा न वा? अस्तिचेद्विरोधादेव न ज्ञानाभावानुभवसम्भवः, नोचेद्धर्मिप्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवस्सुतरां न सम्भवति। ज्ञानाभावस्यानुमेयत्वे अभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिस्समाना। अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवो भावरूपाज्ञानविषय एवाभ्युपगन्तव्य इति। ननु च भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते। मैवम्। साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम् अपितु अज्ञानविषयम् अन्यथा**

श्रुतप्रकाशिका

ग्राहकाभावान्न तदभावप्रतीतिरित्यर्थः भावाभावयोरेकविषयत्वेहि विरोधः। अत्र विरोधो नास्ति अभावविषयकज्ञानस्य विद्यमानस्य ग्राहकत्वात्। इतरविषयज्ञानस्याभावप्रतियोगित्वेनाविद्यमानत्वादिति शङ्कां परिहरन् अनुभववेलायां ज्ञानस्य विद्यमानत्वं अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तिम् भावरूपत्वे विरोधाभावं च विवृणोति। एतदुक्तं भवतीति। * ज्ञानप्रागभावस्य ग्राह्यत्वे अनिच्छयाऽपि भावाभावयोरेकविषयत्वमापतितमित्यभिप्रायेणाह—**अहमिति**। ज्ञानस्यचेति ज्ञानशब्द आत्मविषयघटादिविषयज्ञानसाधारणः इह भूतले घटो नास्तीत्यादिषु अभावग्रहणे प्रतियोगिधर्मिणोर्ज्ञानापेक्षा दृष्टा। तस्मादत्राप्य*भावधर्मितया आत्मनो ज्ञानमस्तीति वक्तव्यम् अभावव्यतिरिक्तोह्यात्मा अतस्तद्विषयज्ञाने सत्यपि अभावव्यतिरिक्तविषयज्ञानमभावप्रतियोगीति वचनं व्याहतं स्यात्। अभावधर्मिप्रतियोगिरूपत्रितयव्यतिरिक्तविषयज्ञानमभावप्रतियोगीतिचेत् तदानीमभावप्रतियोगितया ज्ञानस्यापि प्रतीतिरस्तीति वक्तव्यं प्रतीयमानं ज्ञानं स्वविषयावच्छिन्नं प्रतीयत इति विषयाणामपि प्रतीतिरस्ति एवमभावप्रतियोगिज्ञानावच्छेदकतया विषयेषु ज्ञायमानेषु तद्विषयज्ञानाभावोऽनुपपन्नइति भावः॥

अभावस्य प्रमाणान्तरविषयत्वेऽप्युक्तदूषणमतिदिशति। **ज्ञानाभावस्येति**। प्रमाणान्तराणां विद्यमानविषयत्वानियमाभावेऽपि विद्यमानतया दर्शयितुमशक्यमिति भावः, अहमज्ञ इति वर्तमानतयाह्यज्ञानं प्रतीयते। * अस्मिन्पक्षे अधिकं दूषणान्तरं पूर्वमुक्तम्। अपरोक्षस्य परोक्षरूपप्रमाणविषयत्वानुपपत्तिरूपमर्थसिद्धम्। भावरूपत्वे उक्तदूषणं नास्तीत्याह—**अस्येति**। धर्मिप्रतियोगिविषयज्ञानं धर्मिप्रतियोगिज्ञानम्, न तेन भावरूपाज्ञानस्य विरोधः। * घटाच्छादकमज्ञानं घटज्ञानेनहि विरुध्यते नतु घटज्ञानविषयज्ञानेन धर्मिज्ञानेनचेत्यर्थः। * वस्तुयाथात्म्यज्ञाननिवर्त्यमज्ञानं वस्तुयथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यत इति चोदयति। **ननुचेति**। परिहरति। **मैवमिति**। याथात्म्यशब्देन निष्कृष्टमद्वितीयत्वलक्षणं स्वरूपं विवक्षितम्॥

प्रपञ्चमिथ्यात्वसिद्धवत्कारेण हेतुमाह—**अन्यथेति**। अन्यथा स्वसाक्षिस्वरूपप्रकाशमात्रस्यैव वस्तुयाथात्म्यविषयत्व इत्यर्थः * अज्ञानविषयत्वमस्तु ततःकिमित्यत्राह—

गूढार्थसङ्ग्रहः

**रजतादिवस्तुतद्ज्ञानरूपेति**। शुक्तिरजतस्य तद्ज्ञानस्यचोभयोरेकावस्थाज्ञानपरिणामत्वमित्यर्थः। **साक्षिचैतन्येन विरुध्यतइति**। अविद्यावृत्तिप्रतिबिंबितचित् ईश्वरसाक्षी, अन्तःकरणप्रतिबिंबितचित् जीवसाक्षी, इत्यादिमतभेदेन विभागः

## श्रीभाष्यम्

**मिथ्यार्थावभासानुपपत्तेः। नह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्त्येत इति विरोधः। ननुचेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति स विषयः प्रमाणानधीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते। नैषदोषः सर्वमेव वस्तुजातं ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषयभूतं**

## श्रुतप्रकाशिका

**नहीति**। * नहि रजतविषयज्ञानेन रजतं निवर्त्यमित्यर्थः। दृश्यविशेषणस्य रूपादेरपि दृश्यत्वं दृष्टं दृश्याज्ञानावच्छेदकस्यास्मदर्थस्य दृश्यत्वानभ्युपगमात् अस्मदर्थावच्छिन्नमज्ञानं न विषयीक्रियत इत्यभिप्रायेण पुनश्चोदयति **ननुचेदमिति**। विषयविशेषः अवच्छेदकविशेषः स इति स एव परामृश्यते। परिहरति। **नैषदोषइति**। अस्मदर्थोऽपि सर्वशब्दवाच्यान्तर्भूतः ज्ञाततया अज्ञाततया वा ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा साक्षिचैतन्यस्य विषयभूतं साक्षिचैतन्येन प्रतिभातीत्यर्थः। अस्मदर्थस्य साक्षिचैतन्यविषयत्वमौपचारिकं स्वयंप्रकाशस्य स्वस्य विषयत्वायोगात्। जडस्य स्वयंप्रकाशत्वायोगात् प्रमाणाधीनसिद्धिसत् दृश्यविशेषणं भवति अस्मदर्थस्तु स्वयंप्रकाशतया स्वयमेव सिध्यन् अज्ञानावच्छेदक इत्यर्थः

## गूढार्थसङ्ग्रहः

**विषयविशेषव्यावृत्तमेवेति**। घटमहं जानामि मामन्यं च न जानामि, ब्रह्म न जानामि इत्येव प्रतीतिः नतु न जानामीत्येतावन्मात्रमिति भावः॥

**अज्ञाततया वा साक्षिचैतन्यस्य विषयभूतमिति**। एतावत्पर्यन्तं विवरणोक्तादविशिष्टमेव। अनन्तरं सिद्धान्ते ‘जडस्य ज्ञाततया सिध्यतः प्रमाणव्यवधानापेक्षा अजडस्यतु नेति’ विशेषः भाष्ये प्रदर्शितः। विवरणेतु ‘अज्ञातत्वेन सामान्याकारेण अज्ञातव्यक्तिविशेषत्वेन विशेषाकारेण वा जडाजडविभागमन्तरा अज्ञातत्वेन सिद्धिः प्रमाणानपेक्षा इत्येवोक्तम्। अद्वैतसिद्धिचन्द्रिकयोरयमेवार्थः सिद्धान्तितः। अत्र च लघुचन्द्रिकायाम्—‘ननु प्रमाणवृत्त्यभावेऽपि घटादेरज्ञाततया भानस्वीकारे तदा तत्र भातीति व्यवहारस्स्यादिदितिचेत्? अज्ञाततया भातीति स्यादेव; घटादेरनुमित्यादि काले अनुमितत्वादिना घटो भातीतिवत्, घटो भातीति व्यवहारस्यतु नापत्तिः; अज्ञातत्वज्ञातत्वाभ्यामुपहितस्यैव घटादेः तदनावृतसाक्षितादात्म्यस्वीकारात्। अत एवोक्तं विवरणे ‘अज्ञाततया ज्ञाततया च सर्वं साक्षिभास्यमितीति भावः’ (अनुकूलतर्कनिरूपणे) इत्युक्तम्॥

गुरुचन्द्रिकायां च ‘यदपि घटादेरज्ञाततया साक्षिभास्यत्वे सदा सर्वस्य सर्वं भायात्। किंचाज्ञातताकालेऽपि घटादिकं योगिना प्रमीयत इति न तदा तस्य भानासिद्धत्वेनासत्त्वमिति साक्षिज्ञानं व्यर्थमिति तदपि न; अज्ञाततया सर्वस्याज्ञातभानस्येष्टत्वात्। उक्तंहि विवरणे ‘ज्ञाततया अज्ञाततया च सर्वं साक्षिभास्यमिति। नचैवं घटो भाति अज्ञात घटो भातीत्यादिव्यवहारस्स्यादिति वाच्यम्। यथाह्यज्ञातेऽपि घटादावनुमितित्वादिना भातीति व्यवहारस्तथा अज्ञातत्वेन भातीति व्यवहार इष्ट एव। अथानुमितित्वादिना भातीत्यपलप्यते अपलप्यतां तर्हि सः। तथाऽपि यथा तार्किकादिमते मानसज्ञानस्य ज्ञानादौ लौकिकविषयत्वस्य तद्भिन्ने घटादौ तदन्यविषयत्वस्य च स्वीकारः; तथा मन्मतेऽप्यज्ञानज्ञानयोरनावृतस्य अज्ञातपरोक्षज्ञानविषययोरावृतस्य साक्षितादात्म्यस्य स्वीकारः तन्मते तादृशविषयताया इव मन्मते तादृशतादात्म्यस्य कार्यकारणभावादिग्रहप्रयोजकत्वस्य सम्भवः। घटो भातीति व्यवहारस्यतु नापत्तिः शुद्धघटस्य तादृश

## श्रीभाष्यम्

**तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा अजडस्य तु प्रत्यग्वस्तुनस्स्वयं-सिध्यतो न प्रमाणव्यवधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनावभासो युज्यते। तस्मा-न्न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते। तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति। विवादाध्यासितं**

## श्रुतप्रकाशिका

द्दश्यावच्छेदकत्वाद्दृश्यमितिचोद्यं तज्जडत्वप्रयुक्तमिति सोपाधिकमिति परिहारः तस्मात् अभावरूपत्वपक्षे उक्तविरोधाद्भाव-रूपत्वपक्षे तदभावाच्चेत्यर्थः। **न्यायोपबृंहितेनेति**। पक्षद्वयेऽपि विरोधतदभावरूपन्यायानुगृहीतेनेत्यर्थः॥

एवं प्रत्यक्षेण न्यायानुगृहीतेन अज्ञानस्य भावरूपत्वं न जानामीत्यनेनात्माऽश्रयत्वं च सिद्धं, शास्त्रेष्वज्ञानशब्द-वाच्यतया पराभिमतकर्मव्यावृत्तिः प्रत्यक्षतया सिद्धा, अस्य च शास्त्रेष्वज्ञानादिशब्दवाच्यत्वं ज्ञानविरोधित्वादहमज्ञ इति प्रतिपन्नतया च सिद्धम्॥

**अथ** स्वविषयावरणत्वस्वनिवर्त्यत्वाभ्यां * सहोपपादिताकारविशिष्टंचाज्ञानमनुमानेनापि साध्यते। **विवादाध्या-सितमित्यादिना**। ज्ञानमित्युक्ते ब्रह्मस्वरूपस्य वस्त्वन्तरपूर्वकत्वासम्भवात्तद्व्यावृत्त्यर्थं प्रमाणज्ञानमित्युक्तम्। तथाऽपि

## गूढार्थसङ्ग्रहः

तादात्म्यानङ्गीकारात्, घटं न जानामीत्यनुभवकालोत्तरं तार्किकादिभिरपि घटज्ञानकार्यमङ्गीक्रियत एव, अभावः परं तत्र विषय उच्यते। नच त्वन्मते घटाज्ञानकालसामान्ये तथाऽनुभवसत्त्वात् घटज्ञानकार्यं स्यात्, तन्मते तु न तत्सामान्ये स इति न तदापत्तिरिति वाच्यम्; मन्मतेऽपि सर्वमज्ञानं सर्वदा नावृणोतीति स्वीकारेणाज्ञानसम्बन्धस्य तन्निवर्तकप्रमि-त्यव्यवहितपूर्वमेव स्वीकारात्। योगिनां कारणत्वग्रहादावुपयुज्यत इत्ययोगिनं प्रत्यसत्त्वं ते न दुर्वारम्। किंच योगिनामः ज्ञातकारणत्वादिग्रहेऽज्ञाताभिव्यक्त्यर्थं प्रवृत्तौ वा साक्ष्येव शरणमिति दिक्' इत्युक्तम्। एवं च जडाजडविषयविभाग-कल्पनं न परसम्मतमितिचेत्—

अत्रायमाशयो भगवतः। 'साच न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति प्रमाणवैकल्यादेव तदग्रहणसिद्धेः' इत्युदाहृतपञ्चपादिकाविवरणे 'नच स्वयमेव प्रकाशहीनस्य जडस्यावरणार्थोऽपि सम्भवति। तस्मादतिशयाभावान्नाज्ञान विषयः अनात्मेति। तत्राह 'साच न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाती' ति इत्युक्त्या अनात्मन्यज्ञानविषयत्व रूपमज्ञातत्वं न सम्भवतीति परेषामपि सम्मतम्। एवं ज्ञात इति व्यवहारे ज्ञानविषयत्ववत् अज्ञात इति व्यवहारोऽपि अज्ञानविषयत्वेनैव वक्तव्यः। अज्ञानविषयत्वंतु आत्मन्येव नत्वात्मव्यतिरिक्ते। घटादावज्ञातचित्तादात्म्यमेव अज्ञातो घट इति व्यवहारे विषयः' इत्यादि प्रागुक्त (३३५.पु) रीतिः ज्ञातो घट इति व्यवहारवैलक्षण्येनानुपादेया उभयोर्व्यवहारयो रेकरूपत्वाभावात्। अतः ज्ञातइति व्यवहारसमशीलत्वमज्ञात इति व्यवहारस्य अज्ञानविषयत्वेनैवोपपादनीयम् तच्चात्मन्ये-वेति अज्ञातत्वं अजडे प्रत्यग्वस्तुन्युपपादितम्॥

**विवादाध्यासितमिति**। अत्र विवरणतत्त्वदीपनम्—अवश्यपदसूचितमनुमानमाह—अनुमानमपीति। साध्य-विशेषोपादानेन सिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तं द्रष्टव्यम्। वस्तुपूर्वकमित्युक्तौ आत्मवस्तुपूर्वक तयाऽर्थान्तरत्वम्, तदर्थं वस्त्वन्तरेति। चक्षुरादिव्यावृत्त्यर्थं स्वदेशगतेति। अदृष्टादिकं व्यावर्तयति, स्वनिवर्त्येति।

## गूढार्थसंग्रहः

उत्तरज्ञाननिवर्त्ये पूर्वज्ञाननिवृत्त्यर्थं स्वविषयावरणेति। प्रागभावव्यावृत्त्यर्थं स्वप्रागभावेति। स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता तदर्थं स्वविषयावरणेति स्वविषयावरणान्धकारव्यावृत्त्यर्थं स्वनिवर्त्येति। विषयगताज्ञातताव्यावृत्त्यर्थं स्वदेशगतेति। मिथ्याज्ञानं व्यावर्तयति वस्त्वन्तरेति। धारावाहिकद्वितीयादिज्ञाने व्यभिचारव्यावृत्त्यर्थं अप्रकाशितेति। अर्थपदंतु स्पष्टीकरणार्थम्। मध्यवर्तिप्रदीपप्रभायां साध्यसाधनवैधुर्यपरिहाराय प्रथमेति विशेषणम्। सवितृकिरणव्याप्तप्रदेशस्थप्रदीपप्रभाव्यावृत्त्यर्थं अन्धकारेति। किमनात्मज्ञानं धर्मि उतात्मज्ञानं धर्मि नाद्यः अनात्मावारकस्याज्ञानस्यानङ्गीकारात् तत्साधने बाधापातात्। न द्वितीयः अनात्मज्ञाने व्यभिचारात्। अप्रकाशितार्थप्रकाशकत्वं च किमप्रकाशितार्थप्रकाशकर्तृत्वं? उत करणत्वम् नाद्यः असिद्धेः साधनवैकल्यप्रसङ्गात् न द्वितीयः अतएव। ततो यत्किंचिदेतदिति केचित्। प्रतिपन्नस्यात्मज्ञानस्यानात्मज्ञानस्य च न धर्मित्वमिति ब्रूमः। नच बाधापत्तिः घटाद्यवच्छिन्नचैतन्यं प्रत्यक्षादिविषयत्वेनोपेयते। तच्चानावृतमिति कथं बाधः। नच हेतोर्दुर्निरूपत्वम्। प्रकाशशब्देन तज्जन्यो व्यवहारो लक्ष्यते ततश्चाप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः। तस्यचोभयत्रानुगतत्वान्नासिद्ध्यादिरिति अनुमाननिगमनार्थ इतिशब्दः' इति। ऋजुविवरणे प्रतिलोमानुलोमव्यावृत्तिपूर्वकं विशेषणप्रयोजनान्युपवर्णितानि ॥

अद्वैतसिद्धौतु 'अत्र प्रमाणपदं प्रमाणवृत्तेरेव पक्षत्वे सुखादिप्रमायां साक्षिचैतन्यरूपायामज्ञानानिवर्तकायां बाधवारणाय। धर्म्यंशप्रमाणवृत्तेरिदमित्याकारायाः अज्ञानानिवर्तिकायाः पक्षबहिर्भावाय विवादपदमिति विशेषणम्। विशेषाकारप्रमाणवृत्तिरिति फलितोऽर्थः परोक्षप्रमायाअप्यसत्त्वावरणरूपप्रमातृगताज्ञाननिवर्तकत्वान्नतदंशेऽपि बाधः। धारावाहिकबुद्धीनां च तत्तत्कालावच्छिन्नार्थविषयकत्वेनाज्ञातज्ञापकत्वमस्त्येव। कालस्य सर्वप्रमाणवेद्यत्वाभ्युपगमात्। अनात्माकारप्रमाणवृत्तीनां च तत्तदवच्छिन्नचैतन्यविषयत्वेन स्वविषयावरणनिवर्तकत्वमस्त्येव। साध्येचाद्यं विशेषणं प्रतियोग्यतिरिक्ता प्रागभावनिवृत्तिरिति मते प्रागभावेनार्थान्तरवारणाय। तदुदीच्यध्वंसादिकमादाय नार्थान्तरप्रसक्तिः। किंतु पूर्ववृत्त्यभावमादायेति वस्तुगतिमनुरुध्य प्राक्पदम्। नच स्वविषयावरणपदेनैव तद्व्युदासः। अस्ति प्रकाशत इति व्यवहारविरोधित्वरूपस्य आवरणस्य भावाभावसाधारणत्वात्। वृत्तिजनकादृष्टेनार्थान्तरवारणायतु विशेषणमिदम्। नचावरणपदेनैव तद्व्युदासे स्वविषयेति व्यर्थम्। यददृष्टं स्वविषयज्ञानजनकं विषयान्तरज्ञानप्रतिबन्धकतया तदावारकं तादृशादृष्टपूर्वकत्वेनार्थान्तरवारकत्वात्। स्वनिवर्त्येति च विशेषणं वृत्तिप्रतिबन्धकादृष्टेनार्थान्तरवारणाय अन्धकारेणार्थान्तरवारणार्थमिदमिति केचित् तन्न। स्वदेशगतेत्यनेनैव तद्व्युदासात्। यथा च वृत्तिप्रतिबिंबतचैतन्यस्य स्वविषयावच्छिन्नचैतन्येन सहैकलोलीभावादज्ञाननिवर्तकत्वं तथोक्तं प्राक्। स्वदेशगतेति च विशेषणं विषयगताज्ञातत्वेनार्थान्तरवारणाय। यद्यप्यविद्याविषयस्वरूपमज्ञातत्वमसिद्धं, ज्ञातत्वाभावरूपंतु प्रथमविशेषणेनैव परास्तम्। तथाऽपि प्रथमेन प्रागभावव्युदासात् अत्यन्ताभावव्युदासाय चतुर्थमिति द्रष्टव्यम् ॥

एवं च भावाभावसाधारणमावरणमिति मतेन साध्यमुपपादितम्। अभावो नावारकइति सिद्धान्तेतु साध्यद्वये स्वप्रागभावव्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकम्। स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वमित्यपरमिति न किंचिदसमञ्जसम्। हेतौ च प्रकाशकत्वं प्रकाशपदवाच्यत्वम् अप्रकाशविरोधित्वं वा ज्ञानालोकयोस्साधारणम्। यद्यपि प्रकाशपदवाच्यत्वं नामकरणवशात्कस्मिंश्चित्पुरुषेऽप्यस्ति। तथाऽपि प्रकाशशब्देन शास्त्रे सर्वदेशकालयोः वा व्यवह्रियमाणत्वं तद्विवक्षितम्। अथवा अस्तु साधारणं अप्रकाशितार्थगोचरेति विशेषणाद्व्यभिचारव्युदासः। अप्रकाशितत्वं च न प्रकाशत इति व्यवहारगोचरत्वम्। तच्च स्वप्रकाशचैतन्येऽप्यस्तीत्युपपादितम् ॥

## गूढार्थसंग्रहः

एवं निरुक्ताप्रकाशविरोधित्वमपि ज्ञानालोकयोः प्रत्यक्षसिद्धम्। उक्तं च विवरणे—'ज्ञानप्रकाश्यत्वादज्ञानविरोधित्वादन्यदेव आलोकप्रकाश्यत्वं तमोविरोधित्वंनामेति, अत उभयोरेव साक्षादप्रकाशविरोधित्वसम्भवात् नेन्द्रियसन्निकर्षादौ व्यभिचारः। एवंचाप्रकाशितार्थगोचरत्वेसति प्रकाशपदवाच्यत्वात् अप्रकाशविरोधिप्रकाशत्वादिति वा हेतुः पर्यवसितः। विपर्ययविषयस्तु नाज्ञातः। विपर्ययान्यकालसत्त्वेन तस्यानिर्वचनीयस्य मानगोचरत्वाभावेन प्रकाशप्राक्कालसत्वघटिताप्रकाशत्वासम्भवात्, अतएव स नाप्रकाशविरोधी; स्वविषये अप्रकाशाभावात्। अधिष्ठानप्रकाशस्तु तस्य जनकएव। स्मरणे च व्यभिचाराभावस्स्पष्टः। अनुकूलतर्कश्च त्वदुक्तमर्थं न जानामीति प्रतीत्यन्यथाऽनुपपत्त्यादिरूपः प्रागुक्त एव॥

एतेन गोशब्दवाच्यत्वेन पृथिव्या अपि शृङ्गित्वानुमानापातोऽपास्तः। तत्रानुकूलतर्काभावात्। अज्ञानस्य स्वरूपेणाज्ञानाविषयत्वेऽपि तद्भावत्वादिकमज्ञानविषयो भवत्येव। तस्याज्ञानग्राहकसाक्ष्यग्राह्यत्वात् अन्यथा तत्र विवादो नस्यात् एवं प्रमायाः स्वविषयावरणभावपूर्वकत्वमपि न प्रमास्वरूपग्राहकसाक्षिग्राह्यम्। तथा च तद्ग्राहिकाया एतस्या अनुमितेः साध्यसाधनोभयाधिकरणत्वान्नकोऽपि दोषः। दृष्टान्तेचान्धकाराव्यवहितोत्पत्तिकत्वं विशेषणम्; तेन न प्रथमपदवैयर्थ्यं, नवा द्वितीयादिप्रमायां साध्यसाधनवैकल्यम्' इत्युक्तम्॥

अत्र गुरुचन्द्रिका—'विशेषाकारप्रमाणेनेति। इदंत्वान्यप्रमेत्यर्थः। प्रमात्वंचेन्द्रियादिजन्यवृत्तिनिष्ठा जातिः। कालावच्छिन्नेति, कालविशिष्टेत्यर्थः। नच तत्तत्क्षणानामतीन्द्रियत्वात् स्थूलकालस्य च प्रथमज्ञानेन गृहीतत्वेन द्वितीयादिज्ञानानां तद्विषयकाज्ञाननिवर्तकत्वासम्भव इति वाच्यम्; स्वोत्पत्तिकालोत्पन्नस्थूलकालस्यैव तत्तज्ज्ञानग्राह्यत्वात्। क्षणानामतीन्द्रियत्वे मानाभावाच्च। नच परोक्षापरोक्षयोः घटादिज्ञानयोस्तुल्यविषयकत्वानुभवात् अपरोक्षे कालो न विषय इति वाच्यम्; परोक्षस्यापि तद्विषयकत्वस्य परिच्छिन्नत्वहेतूपपादनेऽस्माभिरुपपादितत्वात्। धारास्थले वृत्त्यैक्यस्वीकारे तु नोक्तशङ्काऽपि, अवैयर्थ्यमिति सम्भवप्राचुर्येणेदम्। साध्ये व्यर्थविशेषणत्वस्यादोषत्वात्। दोषत्वेऽपि प्रागभावस्याखण्डोपाधेः प्रकृते निवेशेनाभावत्वानिवेशात्। शरीराजन्यत्वादाविव वैयर्थ्यशङ्काविरहादिति ध्येयम्॥

तद्व्युदासादिति। स्वदेशगतत्वं स्वाश्रयताऽवच्छेदकान्यदेशानवच्छिन्नाश्रयताकत्वं वाच्यम्। अन्यथा स्वाश्रयगतत्वमात्रेण विषयगताज्ञातत्ववारणस्य वक्ष्यमाणस्यासम्भवात्। स्वाश्रयत्वगतत्वेहि तादात्म्यसम्बन्धेन निवेश्ये तादात्म्येनैवालोकतमसोर्वृत्त्यज्ञानयोश्चैकचिति सत्वात्। तथा च विषयगतो ज्ञातत्वाभावोऽपि वृत्तितादात्म्ये च विषयचिति तादात्म्येनैव संबद्धः। एवं च तमसो वृत्तितादात्म्यापन्नचित्तादात्म्येऽपि वृत्त्याश्रयताऽनवच्छेदकदेशावच्छिन्नत्वेन व्युदासः। नहि तमोवृत्त्यवच्छेदकदेशैनैवावच्छिद्यते, मानाभावात्। अज्ञानंतु वृत्तिनाश्यत्वानुरोधात्तथाभूतस्यैव वृत्तिनाश्यत्वात्। नच तथाभूतोऽवयवः सम्भवतीति वाच्यम्; तमसः सावयवत्वे मानाभावात्। स्वल्पदेशस्थालोकेन च बहुदेशस्थ तमसो नावयवनाशः। किंतु तस्यैव नाशेसति आलोकासंयुक्तदेशे तमोऽन्तरोत्पत्तिः। दृष्टान्तस्तु स्वन्यूनवृत्तितमोनाशकालोक इति न साध्यवैकल्यम्। विषयगतोऽज्ञातत्वाभावस्तु वृत्त्यवच्छेदकदेशेनाप्यवच्छिद्यत इति तद्वारणमिति भावः॥

तथोक्तमिति। तथा च विषयचिद्गताज्ञानमपि प्रमाऽश्रयचिदाश्रितमिति भावः। अपरमिति। साध्यद्वयेऽपि वस्त्वन्तरपदं प्रमामात्रस्य भ्रमपूर्वकत्वसिद्धिमादायार्थान्तरस्य वारणाय स्वानिवर्त्यजन्यभ्रमान्यार्थकम्। यद्यपि द्वितीयसाध्ये स्वदेशगतत्वं न विषयगताज्ञातवारणाय प्रागभावस्येवात्यन्ताभावस्यापि ज्ञानीयस्य स्वविषयावरणपदेनैव वारणात्। तथाऽपि जीवेशविभागपूर्वकत्वेन ब्रह्मप्रमायां सिद्धसाधनवारणाय तत्। पक्षताऽवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽपि प्रमामा-

## गूढार्थसंग्रहः

त्रमेवैकैकं जीवेशविभागं निवर्तयति, तस्यैव क्लृप्तजातीयस्य स्वविषयावरणत्वमप्यास्ताम्। नास्तांचावारकस्य तस्याभावत्वेन सौषुप्तनिर्विकल्पकविषयत्वं नावेदिषमित्यस्यानुभवत्वसम्भवादित्यर्थान्तरात् ॥

नचैवं विषयगताज्ञातत्वस्य सिद्धान्ते आवरणत्वानङ्गीकारेऽपि क्लृप्तस्य तस्यैवोक्तस्वविषयावरणत्वमास्तामिति परेण वक्तुं शक्यत्वात्तदादायार्थान्तरसम्भवादेकमेव साध्यं कुतो न कृतमिति वाच्यम्; परमतेहि ज्ञानमात्रमस्तित्वं प्रत्यक्षं च भानं वाच्यम्; तथा च कारणाभावतयोक्तव्यवहारस्यानुत्पादे विषयगताज्ञातत्वस्योक्तप्रयोजकत्वेऽपि कारणगतशक्तिविघटनद्वारोक्तप्रयोजकत्वरूपप्रतिबन्धकत्वस्य निवेशेऽर्थान्तरासम्भवः। जीवेशभेदादेस्तु मन्मतरीत्योक्तप्रतिबन्धकमादायार्थान्तरं परेण वक्तुं शक्यते। एकसाध्यवादिनां प्राचां तु उक्तद्वारनिवेशस्य विषयाज्ञातत्ववारणमेव प्रयोजनम्। तच्च स्वदेशगत्वप्रागभावान्यत्वाभ्यामेव सिध्यतीति स व्यर्थ इत्याशय इति ध्येयम् ॥

सर्वदेशकालयोरिति। सर्वदेशेषु व्यवह्रियमाणत्वं व्यवहारयोग्यत्वम्। प्रकाशपदस्यानादिसङ्केतवत्त्वमिति यावत्। विशेषणादिति। अप्रकाशितार्थगोचरत्वं अप्रकाशितार्थे प्रकाशते इति व्यवहारस्य प्रयोजकत्वम्। तच्चाज्ञाननाशद्वारा ज्ञाने तमोनाशाधीनचाक्षुषद्वारा आलोके च बोध्यम्। तेनालोकस्य विषयरूपगोचराप्रसिद्ध्या न साधनवैकल्यम् ॥

चैतन्येपीति। न प्रकाशत इति व्यवहारः प्रकाशविरोध्याश्रयविषयकः तादृशाश्रयत्वं च यद्यपि तमोऽज्ञानयुक्ततयाऽऽलोकज्ञानयोः तथाऽपि तदवच्छेदकत्वाद्घटादावपि न प्रकाशत इति व्यवहारइति भावः। निरुक्तेति। न प्रकाशत इति व्यवहारगोचररूपेत्यर्थः। तादृशोऽप्रकाशस्तद्विरोधित्वमित्यर्थः। ज्ञानप्रकाश्यत्वात् ज्ञानप्रयुक्तनाशवत्त्वात्। अज्ञान विरोधित्वात् अज्ञानस्य नाश्यत्वरूपविरोधित्वघटिताज्ञानप्रयुक्ताज्ञाननाशवत्त्वपर्यवसितादिति यावत्। तमोविरोधित्वं— तमसो नाशत्वेन घटितमालोकप्रयुक्ततमोनाशवत्त्वपर्यवसितमिति यावत्। वाच्यत्वात्—अनादिसङ्केतविषयत्वात्। उक्तगोचरत्वस्याधुनिकप्रकाशपदसङ्केतविषयत्वस्य सन्निकर्षादौ च व्यभिचारित्वेनोक्तवाच्यत्वमेवोपसंहृतम्। प्रकाशत्वादिति। यद्यपि विरोधित्वान्त एव हेतुः तथाऽपि विरोधित्वं नाशकताऽवच्छेदकरूपम्; तच्च प्रमात्वमालोकत्वंचोक्तावच्छेदकत्वेनानुगतं हेतुः। ज्ञानत्वमालोकत्वं च प्रकाशपदवाच्यताऽवच्छेदकत्वेनाद्यहेतौ प्रविष्टमिति ज्ञापयितुं प्रकाशत्वादित्युक्तम्। तावता च पक्षीभूतप्रमादृष्टान्तीभूतालोकयोरन्यतरत्वं वा हेतुरित्यपि सूचितम्। सत्यन्तव्यावर्त्यमाह—विपर्ययेत्यादि। नाज्ञातः नोक्तप्रकाशितः। घटितेति व्याप्तेत्यर्थः। अतएवेत्यादि। तथा च सत्यन्तं द्वितीयहेतौ न देयमिति भावः। जनकएवेति न नाश्य इति शेषः। स्पष्टः द्वितीयहेतौ स्पष्टः प्रमात्वस्य विरोधिताऽवच्छेदकस्य स्मरणावृत्तित्वात्प्रथमहेतावपि प्रत्यक्षादिगृहीतार्थकशब्दादिवृत्तौ व्यभिचारवारणाय न प्रकाशत इति व्यवहारगोचरस्य नाशं द्वारीकृत्य प्रकाशत इति व्यवहारप्रयोजकत्वस्य सत्यन्तेन वाच्यत्वादव्यभिचारः। विशेष्यदळंतु सन्निकर्षादिवारणायेति बोध्यम्। नचासिद्धिः; न प्रकाशतइति व्यवहारगोचरत्वेन पराभ्युपगतस्य प्रकाशप्रागभावस्य प्रकाशनिवर्त्यत्वेन प्रकाशत इति व्यवहारप्रयोजके तन्नाशे प्रयोजकत्वस्य सत्यन्तपर्यवसितार्थस्य पक्षे सत्त्वात्। नचोक्तनाशो नोक्तव्यवहारप्रयोजकः, किंतु प्रकाशएवेति वाच्यम्; कालादिविधयोक्तनाशे व्यधिकरणप्रकाशस्यापि प्रयोजकत्वेनासाधारणस्य नाशप्रयोजकत्वस्य लाभायैवाद्य प्रयोजकान्तस्योक्तत्वेन हेतावनिवेशात्। अन्यथा वैयर्थ्यात्। अतएव तमसो द्रव्यत्वानङ्गीकारमते न साध्यसाधनवैकल्यम्। आलोकप्रागभावस्यालोकनिवर्त्यत्वादिसत्त्वात्। अतएव द्वितीयहेतुरपि नासिद्ध इति ध्येयम् ॥

तद्ग्राहिकायाः—अज्ञाने भावत्वादिप्रमायामुक्तपूर्वकत्वं च गृह्णन्त्याः। साध्येति। भावत्वाद्यज्ञाननाशकत्वेत्यादिः। दोषः प्रसिद्धिबाधौ। अन्धकारेत्यादि। स्वसमानाधिकरणतमःकालवृत्तित्वमित्यर्थः। तेनोत्पत्त्यादेर्व्यर्थत्वेऽपि न क्षतिः।

## श्रीभाष्यम्

**प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्य स्वदेशगतवस्त्वन्तरपूर्वकं अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे**

## श्रुतप्रकाशिका

धारावाहिज्ञाने उत्तरोत्तरविज्ञानानां सिषाधयिषितवस्त्वन्तरपूर्वकत्वाभावात्तद्व्यावृत्त्यर्थं विवादाध्यासितमित्युक्तम्, तज्ज्ञानं किमित्यपेक्षायां व्यक्त्यर्थं प्रमाणज्ञानमित्युक्तम्। अयं धर्मी दर्शितः॥

अथ साध्यधर्ममाह—**स्वप्रागभावेति**। वस्त्वन्तरपूर्वकमित्युक्ते घटादिस्वविषयपूर्वकत्वेन सिद्धसाधनं स्यादिति तद्व्यावृत्त्यर्थमाह—**स्वदेशगतेति**। स्वाश्रयगतेत्युक्ते दृष्टान्तस्य साध्यवैकल्यं स्यात्, * नहि तमो दीपगतं अतः स्वदेशगतेत्युक्तिः। धर्माधर्मव्यावृत्त्यर्थमाह—**स्वनिवर्त्येति**। ननु कथं स्वनिवर्त्यशब्देन धर्माधर्मव्यावृत्तिः ज्ञानोत्पत्तिहेतुभूतमदृष्टं ज्ञानोत्पत्त्याहि नश्यति। नैवम्। सर्वेषां धर्माधर्माणां ज्ञानफलकत्वाभावात्। ज्ञानोत्पादकव्यतिरिक्तधर्मादीनां पूर्वक्षणे स्वदेशे विद्यमानत्वाच्च। यद्वा स्वनिवर्त्यपदेन संस्कारव्यावृत्तिः नहि संस्कारो ज्ञानेन निवर्त्यः। भयादिव्यावृत्त्यर्थमाह—**स्वविषयावरणेति**। प्रागभावस्यैवंविधत्वात्तद्व्यावृत्त्यर्थमाह—**स्वप्रागभावव्यतिरिक्तेति**। इयं प्रतिलोमव्यावृत्तिः वस्त्वन्तरपूर्वकमित्युक्ते अभावस्यापि पदार्थत्वेन वस्तुवाच्यत्वात्तद्व्यावृत्त्यर्थमाह—**स्वप्रागभावव्यतिरिक्तेति**। घटादिस्वविषयव्यावृत्त्यर्थमाह—**स्वविषयावरणेति**। कुड्यादिव्यावृत्त्यर्थमाह—**स्वनिवर्त्येति**। * वेद्यगतचित्याभिव्यक्तिप्रागभावव्यावृत्त्यर्थमाह—**स्वदेशगतेति**। प्रमाणज्ञानेनाज्ञाने निरस्ते वेद्यगतचैतन्यमभिव्यक्तं भवतीतिहि तत्परिपाटी। अभिव्यक्तिप्रागभावस्य विषयावरणत्वं प्रकाशविरोधित्वं ननु तत्प्रतिबन्धकत्वम् इत्यनुलोमव्यावृत्तिः। हेतुमाह—**अप्रकाशितेति**। साक्षाद्वा परम्परया वा अबाध्यव्यवहारानुगुण्यहेतुत्वं प्रकाशकत्वमिह विवक्षितम्। साक्षाद्वा परम्परयावेत्युक्तेहि दीपप्रभायां ज्ञाने च हेत्वनुगमसिद्धिः। इदं रजतमिति ज्ञानेऽतिव्याप्तिपरिहाराय अबाध्यव्यवहारानुगुण्यहेतुत्वमित्युक्तम्॥

प्रकाशकत्वादित्युक्ते धारावाहिकज्ञाने उत्तरोत्तरज्ञानानां प्रकाशकत्वेऽपि सिषाधयिषितधर्माभावाद्धेतोरनैकान्तिकत्वं स्यादिति तद्व्यावृत्त्यर्थमाह—**अप्रकाशितार्थप्रकाशकत्वादिति**। इन्द्रियेष्वनैकान्तिकत्वव्यावृत्त्यर्थं भासमानत्वेसतीति हेतुर्विशेष्यत इति मन्तव्यम्। दृष्टान्तमाह—**अन्धकारइति**। प्रदीपप्रभावदित्युक्ते उत्तरोत्तरप्रभाणामप्रकाशितार्थप्रकाशक-

## गूढार्थसंग्रहः

वैयर्थ्यं—अर्थशून्यत्वम्। अन्धकारेत्यादिकमेव प्रथमपदार्थ इति भावः। उक्तविशेषणव्यावर्त्यमाह—नवेति। वैकल्यमिति। साध्यवैकल्यं नेत्यपि बोध्यम्। साध्यसाधनयोरप्रकाशनाशोपधानं प्रविष्टम्। अन्यथोक्तपक्षताऽवच्छेदकावच्छेदेन तदसिद्ध्याऽर्थान्तरापत्तेः। तथाचोक्तविशेषणाभावे दोष इति भावः॥

आश्रमस्वामिनस्तु—जन्यसविकल्पकाजन्या घटचाक्षुषप्रमा स्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्विकेत्येकम्। स्वविषयावरणत्वं स्वजननायोग्यत्वम्। स्वनिवर्त्यत्वं स्वजन्यनाशप्रतियोगित्वम्। वस्त्वन्तरं स्वभिन्नम्। तच्च स्वकालपूर्वकालवृत्तित्वमादायार्थान्तरादुक्तम्। इच्छाप्रागभावादिनाऽर्थान्तरात्स्वनिवर्त्येति। प्रतियोग्यन्या प्रागभावस्य निवृत्तिरिति मते इच्छाप्रागभावो न ज्ञाननिवर्त्यः, किंत्विच्छानिवर्त्यः। स्वप्रागभावमादायार्थान्तरात्स्वविषयावरणेति। स्वप्रागभावान्यस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्यपरं साध्यम्। स्वसमानाधिकरणप्रागभावान्यार्थकमाद्यामिच्छाभ्रान्तिप्रागभावादिनाऽर्थान्तरस्य वारणाय। अत्मत्वादिनाऽर्थान्तराद्द्वितीयम्। स्वजनकादृष्टादिनाऽर्थान्तरात्तृतीयं स्वसमानाधिकरणयोग्यार्थ-

## श्रीभाष्यम्

**प्रथमोत्पन्नप्रदीपप्रभावदिति। आलोकाभावमात्रं वा रूपदर्शनाभावमात्रं वा तमो न(द्र)व्यं) व्यान्तरं तत्कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत इतिचेत्। उच्यते-बहुलत्व विरळत्वाद्यवस्थायोगेन रूपवत्तयाचोपलब्धेर्द्रव्यान्तरमेव तम**

## श्रुतप्रकाशिका

स्वनिवर्त्य वस्त्वन्तरपूर्वकत्वाभावात्साध्यविकलता च स्यादिति तद्व्युदासार्थं प्रथमोत्पन्नत्वाभावात्साधनविकलता स्यात्। स्वनिवर्त्य वस्त्वन्तरपूर्वकत्वाभावात्साध्यविकलता च स्यादिति तद्व्युदासार्थं प्रथमोत्पन्न- प्रदीपप्रभावदित्युक्तम्। तथाऽपि दिवा दीपप्रभायाः तथाविधत्वादर्शनात् तद्व्यावृत्त्यर्थमन्धकार इत्युक्तम्। दृष्टान्तस्य साध्यविकलतामाशङ्क्य परिहरति। **आलोकेत्यादिना**। आलोकेसत्युलूकादीनामन्धकारसम्भवादनुयायिनमाकारमाह— **रूपदर्शनाभावमात्रंवेति**॥

यद्वा निमीलिताक्षस्य तमःप्रतिपत्तिनिर्वाहार्थमाह–**रूपदर्शनेति**। अत्र नैयायिकादिभिरुक्तं दूषणमनुसन्धीयते तत्र उत्पादकज्ञापकानुपपत्त्या द्रव्यान्तरत्वं दूषितम्। रूपवत्त्वेऽपि परमाणूनामेव अनुत्पाद्यत्वं तमसस्तु रूपवत्त्वात् बृहत्त्वाचो- त्पाद्यत्वं स्यात्, तत्र रूपवत्त्वात्तद्रहितानि वाय्वाकाशादीनि नोत्पादकानि भवन्ति स्पर्शरसगन्धविरहान्नान्यान्यपि द्रव्याणि कारणगुणप्रक्रमेणहि कार्ये वैशेषिकगुणारम्भः। * इयमुत्पत्त्यनुपपत्तिः। आलोकानुगृहीतत्वाच्चक्षुर्नग्राहकं आलोकसन्निधा- वनवस्थानान्नास्य ग्राह्यत्वं रूपवत्त्वप्रतीतिस्तु भ्रान्तिरेव। * निमीलने नीलप्रतिभासवदिति ज्ञप्त्यनुपपत्तिः। अत्र परि- हारो वार्तिककारैरुक्तः—

**तमःखलु चलं नीलं परापरविभागवत्। प्रसिद्ध(द्रव्य)धर्म) वैधर्म्यान्नवभ्यो भेत्तुमर्हति॥**

इति, स एवात्रोच्यते, **उच्यतइत्यादिना** तत्र परापरशब्दार्थो बहुळत्वविरळत्वशब्देनोक्तः। आदिशब्देन चलत्वम् रूपवत्तयेति नीलशब्दार्थ उक्तः द्रव्यान्तरशब्देन दशमद्रव्यत्वमुक्तम्। न द्रव्यस्वीकारोहि तेषां पृथिव्यादीनां द्रव्याणामन्योन्यवैधर्म्यात्स्वी- क्रियते अन्यथा पृथिव्येव द्रव्यं नान्यत् गन्धवत्वाभावादिति वक्तुं शक्यते एवं द्वे द्रव्ये इत्यादि। तच्चानभिमतं द्रव्याणां परस्परवैधर्म्यात्। एवं नवद्रव्यवैधर्म्याद्दशममङ्गीकार्यमिति वार्तिकार्थः; निमीलने * नीलप्रतिभानं बाधितविषयं इदं

## गूढार्थसंग्रहः

क्रम्। अथवा एकमेव साध्यम् स्वदेशगतत्वं—स्वाश्रये वर्तमानत्वम्; तेनोपादानप्रत्यक्षविषया संयोगादेः पक्षीकृतप्र- माजन्यत्वेन संयोगादिप्रागभावस्य स्वनिवर्त्यत्वादर्थान्तरस्य वारणमित्याहुः॥

तत्र यद्यपि यथाश्रुते घटचाक्षुषोत्तरघटचाक्षुषप्रमायां सिद्धसाधनम्; भिन्नविषयकानुमित्यादिसामग्रीकालीनघटचा- क्षुषेच्छाजन्यत्वे तस्याःपटविषयकत्वेन पटसविकल्पाजन्यत्वेन पक्षत्वसम्भवात्, तथाऽपि योग्यात्मगुणाव्यवहितोत्तरान्यस्य सविकल्पकाजन्यपदेनोक्तत्वान्नदोषः। परमते निर्विकल्पकाव्यवहितोत्तरत्वस्य पक्षे सत्वाद्योग्येति। सविकल्पकधीसुखादेर्यो- ग्यगुणत्वान्नतेन सिद्धसाधनम्। अतएव स्वप्रागभावपदं स्वप्रागभावार्थकं, स्वविषये संशयादिजनकं स्वविषयावरणं स्वस- त्ताक्षणनियतध्वंसप्रतियोग्येव स्वनिवर्त्यम्। तथा च प्रागभावोऽपि परमते विशेषादर्शनतया संशयादि जनकः। तथा च स्वप्रागभावस्वजनकादृष्टमनस्संयोगतमसां वारणाय क्रमेण स्वप्रागभावेत्यादिचतुष्टयमिति आश्रमोक्तव्याख्यानान्तरपक्षेऽपि घटसंशयपूर्वकत्वमादाय न सिद्धसाधनम्; धर्मिज्ञानविषया घटसंशयस्य घटसंशयान्तरजनकत्वेन विषयावरणत्वेऽपि तत्पूर्व कचाक्षुषत्वस्यापक्षत्वात्। नच मूलोक्तेः आश्रमोक्ते च साध्ये तमोनाशकत्वमुपाधिरिति वाच्यम्; आश्रमोक्तसाध्यस्य

श्रीभाष्यम्

**इति निरवद्यमिति। अत्रोच्यते-' अहमज्ञो मामन्यं च न जानामि ' इत्यत्रोपपत्तिसहितेन**

श्रुतप्रकाशिका

त्वबाधितत्वान्न तथा भवितुमर्हति। तथाऽपि रूपोपलब्धिवेळायां अनुपलब्धेर्निमीलनवदपि सम्भवतीति शङ्कितं प्रत्यक्षमितिचेत् (न)उलूकादीनामस्मदादिरूपोपलब्धिवेळायां रूपानुलब्धौ तद्रूपोपलब्धेरपि शङ्कितत्वापातात्, उलूकादिरूपोपलब्धिवेळायां अस्मदादेः रूपानुपलब्ध्या अस्मदादिरूपोपलब्धेरपि शङ्कितत्वप्रसङ्गात्, आगमस्वारस्याच्च शङ्कायाः निरस्तत्वात् तमसो दशमद्रव्यत्वमवसीयते। '**तमस्ससर्ज भगवान्**' '**नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभूर्नचान्यत्।**' '**यस्य तेजश्शरीरम्। यस्य तमश्शरीरम्**' इति सृज्यत्व संहार्यत्वशरीरत्वादीनिहि श्रूयन्ते। आलोकनैरपेक्ष्यं यथा ज्ञातृविशेषप्रयुक्तं दृश्यते, तथा ज्ञेयविशेषप्रयुक्तमपि उपपद्यते। यथा लोकेहि कार्यं प्रतीतं तथा कारणकल्पनायां प्रमाणं न पुनः स्फुटावधारितं कार्यं, कारणनिरूपणायापह्नवमर्हतीति न्यायात् अबाधितप्रतीतिसिद्धस्य तमस उत्पादकं कल्प्यमिति नोत्पादकानुपपत्तिः ज्ञापकानुपपत्तिर्वा। यथा—

**तमो नाम द्रव्यं बहुळविरळं मेचक(रुचि)चलं प्रती(मः(तं)केनापि कचिदपि न बाधश्च ददृशे।**
**अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालोकं चक्षुःप्रथयतिहि तद्दर्शनवशात्॥**

तमोद्रव्यमित्येव भाष्यकारमतं सिद्धान्ते तस्यादूषितत्वात् सृज्यत्व संहार्यत्व शरीरत्वश्रवणाच्च * स्वच्छद्रव्यत्वादाकाशकार्यं तमः रूपवत्त्वं पञ्चीकरणादुपपद्यते। यद्वा तेजःकार्यं तमः रूपवत्त्वात् स्पर्शानुपलम्भः * स्वच्छद्रव्यत्वादिति। **इतिनिरवद्यमिति।** प्रमाणसिद्धत्वेन तर्कबाधानुपपत्त्या निरवद्यमित्यर्थः॥

**अथ सिद्धान्तं वक्तुमुपक्रमते। अत्रोच्यतइति।** केवलेन च प्रत्यक्षेणेति दृष्टान्ततयोक्तं उपपत्तिदूषणे कृते केवलप्रत्यक्षं न साधकमित्यर्थः। उपपत्तिर्हि ज्ञानप्रागभावविषयत्वे विरोधः स भावरूपत्वेऽपि तुल्य इत्याह—

गूढार्थसङ्ग्रहः

**सविकल्पकाद्युत्तरचाक्षुषे** उक्तसंशयोत्तरचाक्षुषे च सत्वेन साध्याव्यापकत्वात्। मूलोक्तसाध्यस्यापि सौषुप्तसुखाकाराविद्यावृत्त्यादौ तत्सुखावारकस्वाप्नबुद्ध्यादिनिवर्तके सत्वेन तदव्यापकत्वात्। नचोक्तवृत्त्यादेरस्ति भातीति व्यवहाराप्रयोजकत्वेन स्वविषये स्वप्रयुक्तोक्तव्यवहारप्रतिबन्धकत्वरूपस्वविषयावरणत्वस्य स्वनिवर्त्यजन्यभ्रमान्यत्वरूपवस्त्वन्तरत्वस्य च स्वाप्नबुद्ध्यादावभाव इति वाच्यम्; सुखमस्वाप्समिति स्मृतिद्वारा सौषुप्तसुखमस्तीत्यादिव्यवहारे उक्तवृत्त्यादेः प्रयोजकत्वात् स्वाप्नसुखादिबुद्धेर्भ्रमान्यत्वेनोक्तवस्त्वन्तरत्वात् अविद्यावृत्तित्वेन तस्याः स्वावच्छेदकान्यदेशावच्छिन्नत्वरूपं स्वदेशगतत्वमप्युन्नेयम्। अनुकूलतर्केण साध्यव्याप्यतया गृहीतहेतोरव्यापकत्वेनोक्तोपाधेः साध्यव्यापकत्वग्रहाच्च' इत्युक्तम्॥

**इष्टसिद्धिविवरणयोः** भावरूपाज्ञानाङ्गीकारेऽपि ब्रह्मसिद्धौ मण्डनमिश्रेण भामत्यां मण्डनानुयायिना वाचस्पतिना च भावरूपाज्ञानं नाभ्युपगम्यते। अतो विवरणोक्तप्रक्रिया न घटत इत्यभिप्रेत्याह—**अत्रोच्यतइति। उपपत्तिसहितेनेति।** अहमज्ञ इत्यत्राहमर्थ एवाज्ञानं भासते। **शुद्धचिति** अज्ञानवादिनां परेषां मते अहमज्ञ इति प्रत्यक्षस्य नाज्ञानसाधकत्वम्। घटो नास्ति अघटं भूतलं मयि ज्ञानं नास्त्यहमज्ञ इति प्रतीत्योर्द्वयोरविशेषेण अहमज्ञ इत्यस्य ज्ञानाभावविषयकत्वमेवेत्युक्तम्। इति शङ्कायां 'अज्ञानाश्रयीभूतचैतन्ये अन्तःकरणतादात्म्याध्यासेनैकाश्रयत्वसंबन्धेनोपपत्तेः' इति, धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानसामान्याभावस्य व्याहतत्वेन मयि ज्ञानं नास्तीत्यस्यापि भावरूपाज्ञानविषयत्वेन विषय-

### श्रीभाष्यम्

**केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते । यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः सहि भावरूपाज्ञानेऽपि तुल्यः। विषयत्वेनाश्रयत्वेनचाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वाऽप्रतिपन्नो वा। प्रतिपन्नश्चेत्तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव**

### श्रुतप्रकाशिका

**यस्त्विति** । तुल्यत्वमुपपादयति । **विषयत्वेनेति** । प्रतिपन्नशब्देन भासनमुच्यते । **तत्स्वरूपज्ञाननिवर्त्यमिति** । स्वरूपज्ञानं स्वरूपावभासः स्वतो वा प्रमाणान्तरेण वा स्वरूपावभासनिवर्त्यमित्यर्थः । इदं रजतमित्यत्र इदं शुक्लभास्वरमित्येवंरूपप्रमाणज्ञानशते जातेऽपि भ्रमानिवृत्तिदर्शनात् प्रमाणज्ञानत्वमप्रयोजकमिति सिद्धवत्कारेण तत्स्वरूपज्ञाननिवर्त्यमित्युक्तम् । व्यावर्तकाश्रयविषयज्ञानशून्यम् । आश्रयतया विषयतया च व्यावर्तकः प्रत्यगर्थः तदवभासशून्यम् । **विषयत्वेने-**

### गूढार्थसंग्रहः

भेदाप्रतीतेर्युक्तत्वात् ।' इत्युपक्रम्य तथा च 'क्लृप्ताभावप्रतीतिवैलक्षण्येऽवश्यकल्प्ये लाघवाद्विषयस्यैवाभाववैलक्षण्यं कल्पयितुमुचितम् ; विषयावैलक्षण्ये प्रतीतिवैलक्षण्यायोगात्' इति च अद्वैतसिद्धावुक्तम् ॥

अत्र गुरुचन्द्रिका–उपपत्तेरिति । शुद्धचितोऽज्ञानाश्रयत्वाविषयकप्रत्ययान्तराभावादयं प्रत्ययोऽहमर्थेऽज्ञानवत्त्वाप्रकारकत्वेन न निर्णेतुं शक्यत इति न युक्तम् । 'पूर्वसिद्धतमसोहि पश्चिमो नाश्रय' इत्यादियुक्तेरज्ञानाश्रयकोटौ चिदन्यनिवेशे गौरवाच्च तथा निर्णयात् सौषुप्तस्य तादृशप्रत्ययान्तरस्य सत्वाच्च' इति, 'लाघवादिति । अहमर्थान्यांशे ज्ञानाभाववत्ताबुद्धित्वेन ज्ञानवत्ता धीप्रतिबध्यत्वं त्वयाऽवश्यं वाच्यम् ; अन्यथा घटो ज्ञानाभाववानिति बुद्धेरपि घटो ज्ञानवानिति धीविरोधित्वं न स्यात् ; तथा च लाघवाद्धर्मिताऽवच्छेदकत्वसम्बन्धेन ज्ञानतदभाववत्ताबुद्ध्योः प्रतिबध्यप्रतिबन्धकभावकल्पनात् जानामीति धीकालीनायां न जानामीति बुद्धेः भ्रमत्वस्य दोषजन्यत्वस्य च कल्पनागौरवाच्च तस्यां ज्ञानाभाववत्त्वं न प्रकारः । किंत्वहमर्थसमानाधिकरणाज्ञानांशे ज्ञानविरोधित्वमिति स्वीकृत्याभावाविषयकत्वं कल्प्यताम् । नच घटो जानाति न जानामीति प्रतीत्योर्वैरूप्यं दोष इति वाच्यम् ; इदमसुरं बलिरसुर इति बुद्ध्योरिव तस्यादोषत्वादिति भावः ।' इति च, अत्र विवरणोक्तार्थसाधकोपपत्तिः प्रदर्शिता एवमन्या अप्युपपत्तयः अत्र प्रदर्शिताः । एतास्सर्वा अप्युपपत्तयः '**उपपत्तिसहितेन**' इति भाष्ये उपपत्तिशब्देन विवक्षिताः ॥

**न भावरूमज्ञानं प्रतीयतइति** । 'अहं न गच्छामि, अहमसुखः, अहमदुःखः इत्यादिप्रतीतितुल्यायामस्यां प्रतीतौ अहमर्थेऽज्ञानानङ्गीकारेण अज्ञानविषयकत्वं न सम्भवति शुद्धाचितः अज्ञानाश्रयत्वाविषयकप्रत्ययान्तराभावेन एतत्प्रत्ययेनैव तदुपपादनं नैव सम्भवति भावरूपाज्ञानस्य विवादविषयस्य प्रत्यक्षेण साधनदशायां चैतन्येऽन्तःकरणतादात्म्याध्यासेनैकाश्रयत्वोपपादनस्यासम्भवात् 'पूर्वसिद्धतमसोहि पश्चिमो नाश्रय' इति युक्तिस्तु न सम्भवति । साच युक्तिः अहमर्थस्यानात्मतावादिब्रह्मसिद्धिकारादिमते साधकत्वेन सम्भावनामर्हति नतु सिद्धान्ते, अहमर्थस्यैवात्मत्वाङ्गीकारेणाविद्यापरिणामत्वस्यैवाभावात् । शुद्धचितोऽज्ञानाश्रयत्वे साधकाभावे प्रत्यक्षेणैवाहमर्थस्याज्ञानाश्रयत्वं सिद्ध्यति । सौषुप्तस्य तादृशप्रत्ययान्तरस्य यथाऽहमर्थविषयकत्वं तथा भाष्य एव पूर्वमुपपादितम्। भावप्रकाशेऽपि (२.सं) सोऽर्थस्सम्यक्साधितः अत्रास्याज्ञानमिति प्रतीतौ आश्रयविषययोः भेदसिद्धौ अज्ञानाश्रयत्वं विषयत्वं चैकस्यैवेति कल्पनाऽपि नसम्भवतीतिबोध्यम्

चैतन्येऽन्तःकरणतादात्म्याध्यासाङ्गीकारेऽपि भावरूपाज्ञानप्रत्यक्षमुपपादयितुं न शक्यत इत्याह–**विषयत्वेनाश्रयत्वेनचेत्यादिना—अज्ञानं कथमनुभूयत**इत्यन्तेन ॥

## श्रीभाष्यम्

**तिष्ठति । अप्रतिपन्नश्चेद्व्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत ? अथ विशद स्वरूपावभासोऽज्ञानविरोधी, अविशदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञा-नानुभवविरोध इति। हन्त तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः। आश्रयप्रतियोगि-ज्ञानं त्वविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात् ।**

## श्रुतप्रकाशिका

**त्यादिना** भाष्येण स्वात्मविषयाज्ञानप्रतिपत्तौ विरोधतुल्यत्वं दर्शितम् । घटादिविषयाज्ञानप्रतीतावपि अज्ञानस्य विषयत्वेन व्यावर्तकतया घटः प्रतिपन्नो न वा प्रतिपन्नश्चेद्घटस्वरूपज्ञाननिवर्त्यं घटाज्ञानं तस्मिन् घटे प्रतिपन्ने कथमिव तिष्ठति घटोऽप्र-तिपन्नश्चेत् व्यावर्तकविषयज्ञानशून्यमज्ञानं कथमनुभूयेतेत्यर्थसिद्धो विरोधो द्रष्टव्यः । एवं परेण भावाभावयोर्विरोधे दर्शिते तत्प्रतिबन्दीत्वेन निवर्त्यनिवर्तकविरोध उक्तः ॥

**अथ** विशदाविशदविभागादविरोधं शङ्कते । **अथेति** । प्रत्यगर्थस्य प्रमाणज्ञानेनावभासो विशदावभासः । स स्व-पक्षेऽपि तुल्य इत्याह—**हन्ततर्हीति** । विशदस्वरूपमवच्छेदकं यस्य सविशदस्वरूपविषयः विशदस्वरूपस्य प्रागभावावच्छे-दकत्वं स्वविषयज्ञानद्वारा स्वविषयप्रागभावोऽपि विशदस्वरूपज्ञानावच्छिन्न इत्यर्थः । ज्ञानस्य चाभावावच्छेदकत्वं प्रतियो-गितया विशदस्वरूपज्ञानं प्रागभावप्रतियोगीति यावत् । अविरोधसिद्धये विद्यमानज्ञानस्य ततोऽर्थान्तरत्वमाह—**आश्र-येति** । आश्रयप्रतियोगिनोर्ज्ञानमाश्रयप्रतियोगिज्ञानम् । **अविशदस्वरूपविषयमिति** । आश्रयज्ञानस्याविशदस्वरूप-विषयत्वं अविशदप्रत्यगर्थविषयत्वम् । प्रतियोगिज्ञानस्याविशदस्वरूपविषयत्वम् अभावप्रतियोगिभूताविशदज्ञानविषयत्वम् । सविषयं निवर्तकज्ञानं अभावप्रतियोगित्वेनेदानीं ज्ञानमवलम्ब्यते तत्र निवर्तकज्ञानविषयस्य प्रत्यगर्थस्येदानीमविशदत्वा-न्निवर्तकज्ञानस्येदानीमविद्यमानत्वाच्च, प्रतियोगिनोज्ञानस्याविशदत्वम् । विद्यमानंहि साश्रयं ज्ञानमपरोक्षावभासरूपं अत-स्तस्याविशदत्वमविद्यमानतया भवति ॥

एवमाश्रयतया भासमानं स्वरूपमविशदं प्रतियोगितया स्मर्यमाणं ज्ञानमिदानीमविशदविषयत्वादविद्यमानत्वाच्चा-विशदमिति तदुभयविषयं ज्ञानं अविशदस्वरूपविषयं तच्च विद्यते विशदज्ञानंत्वविद्यमानं अभावप्रतियोगीति न विरोध **इत्यर्थः** । अयमर्थः अज्ञाननिवर्तकाभिमतप्रमाणज्ञानाभावस्तावत्त्वयाऽभ्युपगन्तव्यः । अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानानु-

## गूढार्थसंग्रहः

प्रमाणवृत्तिनिवर्त्यस्यापि भावरूपाज्ञानस्य साक्षिवेद्यस्य अज्ञानव्यावर्तकविषयग्राहकेण साक्षिणा तत्साधकेन तदना-शात् व्याहत्यनुपपत्तेः अज्ञानग्रहे विषयगोचरप्रमाऽपेक्षायां व्याहतिस्स्यादेव । तदुक्तं विवरणे—' सर्वं वस्तुज्ञाततयाऽज्ञा-ततया वा साक्षिचैतन्यस्य विषयएवेति ' इति अद्वैतसिद्ध्युक्तमेवार्थं शङ्कते—**अथ विशदस्वरूपावभास इत्यादिना** विशदस्वरूपावभासः—प्रमाणवृत्तिरूपः । **अविशदस्वरूपंतु प्रतीयतइति** । साक्षिणेति भावः । **ज्ञानप्रागभावोऽपि विशदस्वरूपविषयइति** । प्रत्यक्षप्रमाप्रागभवाविषय इत्यर्थः । अभावस्य भावातिरिक्तत्वानङ्गीकारेण प्रतियोगिज्ञानदशायां नास्तीति विलक्षणप्रतीतेरुपपत्त्याऽनुपलब्धेः प्रमाणान्तरस्यैवाभावादिति भावः ॥

**आश्रयप्रतियोगिज्ञानंत्वविशदस्वरूपविषयमिति** । प्रतियोगिज्ञानं स्मृतिरूपं, आश्रयज्ञानं स्वप्रकाशप्रत्यक्षरूप-मिति प्रमाणवृत्तिविषयत्वं न कस्यापीति सिद्धान्ते नानुपपत्तिः । परमते ज्ञानाभावविषयकत्वाङ्गीकारेऽपि विषयादिज्ञानं

## श्रुतप्रकाशिका

भवासम्भवात् । ततश्च त्वदभ्युपगतः प्रमाणज्ञानाभाव एव अहमज्ञ इति प्रतिपत्तेर्विषयो भवितुमर्हतीति नाभावग्रहणानुपपत्त्या भावरूपत्वं कल्प्यमिति । पूर्वपक्षोक्तविरोधः कथं परिहृतो भवतीतिचेत् । इत्थम् ; तत्र हि यदर्थावच्छिन्नं ज्ञानमभावप्रतियोगितयोच्यते अभावप्रतियोगिज्ञानावच्छेदकतदर्थप्रतिपत्तौ सत्यां तज्ज्ञानाभावोऽनुपपन्न इति हि विरोधः तत्रायं परिहारः । अभावप्रतियोगिज्ञानं स्मृत्यारूढं प्रतिषिध्यते यथा घटसाक्षात्कारो नास्तीति निषेधे घटसाक्षात्कारःस्मर्यते स्मर्यमाणस्य स्मृतिसमकालवर्तित्वानियमाभावान्निषेधवेलायां स्मर्यमाणस्य नाभावप्रतियोगित्वविरोधः त्वया च स्मृत्यारूढस्य निवर्तकज्ञानस्य स्मृतिसमकालवर्तित्वाभावादज्ञानावच्छेदकया प्रतिपत्तावपि स्मृत्यारूढनिवर्तकज्ञानं नाज्ञानविरोधीति वक्तव्यम् । तस्मादात्मविषयं घटादिविषयकं च प्रमाणज्ञानं स्वविषयेणात्मना घटादिभिश्च सह स्मृत्यारूढमविशद

## गूढार्थसंग्रहः

साक्षिरूपम्। न जानामीति धीस्तु प्रमाणवृत्त्यभावविषयेति वक्तुं शक्यते । ' भावरूपाज्ञानस्य साक्षात्साक्षिवेद्यत्वेन तदवच्छेदकविषयादेः तद्द्वारा साक्षिवेद्यत्वस्य सम्भवेऽपि अभावस्यानुपलब्धिगम्यत्वेन साक्षात्साक्षिवेद्यत्वाभावात् न तद्द्वारा तदवच्छेदकविषयादेस्साक्षिवेद्यत्वमिति वैषम्यात् । यद्यपि ज्ञानं साक्षिवेद्यं, तद्द्वारा तदवच्छेदको विषयश्च साक्षिवेद्यः तथाऽपि, ज्ञानाभावो न साक्षिवेद्यः ; तस्यानुपलब्धत्वात् । उत्पन्नं च ज्ञानं साक्षात्साक्षिवेद्यम् । तस्मिंश्चोत्पन्ने तद्विषयोऽपि स्फुरतीति कुतो ज्ञानाभावोऽपि ? अज्ञानविशेषणतया त्वनुत्पन्नमपि ज्ञानं साक्षिवेद्यमिति न दोषसाम्यम् । ' इत्यद्वैतसिद्धयुक्तिस्तु नादर्तव्या । नैयायिकैः अनुपलब्धेः प्रमाणान्तरत्वानङ्गीकारेण येनेन्द्रियेण याव्यक्तिर्गृह्यते तेनेन्द्रियेणैव तदभावस्यापि ग्रहणाङ्गीकारेण तन्न्यायेन प्रमायाः साक्षिवेद्यत्वे प्रमाभावस्यापि साक्षिवेद्यत्वस्यैव युक्तत्वात् । प्रमाऽभावसत्त्वे प्रमाया असत्त्वेन प्रमारूपप्रतियोगिनः स्मृतिसम्भवेन प्रमाऽभावप्रत्यक्षस्य नैयायिकादिमते उपपत्तिसम्भवात् ॥

वायौ रूपं नास्ति मयि ज्ञानं नास्ति इत्यादिप्रतीतीनां विषयावैलक्षण्यस्य प्रामाणिकत्वेन मयि ज्ञानं नास्तीति प्रतीतौ भावरूपाज्ञानस्य विषयत्वकल्पनं कथं घटते ? अत्यन्ताभावस्य असत्प्रतियोगिकत्वनिराकरणावसरे ' संविदेवहि शरणं वस्तूपगमे ' (३७५.पु) इति वदद्भिः मयि ज्ञानं नास्तीति प्रतीतौ ज्ञानप्रतियोगिकत्वेनाभावस्य प्रतीतेरपलापपूर्वकं भावरूपाज्ञानप्रत्यक्षोपपादनस्यासम्भवात् । ' न जानामि, मयि ज्ञानं नास्ति ' इत्यभिलापकशब्दः भावरूपाज्ञानप्रत्यक्षवादे न घटते । वाक्यजन्यबोधे भावरूपाज्ञानस्य विषयत्वं न सम्भवति । नञः अत्यन्ताभावबोधकत्वेन ज्ञानाभावस्यैव विषयतायाः सर्वैरप्यङ्गीकरणीयत्वात् । अधर्मादिशब्दैः पापाभिलापवत् अयमभिलाप इति चन्द्रिकोक्तिरनुपादेया । पापादिशब्दैः भावरूपत्वेन प्रतीतस्य बोधतात्पर्येण क्वचिदधर्मशब्दप्रयोगेऽपि न धर्म इत्यादौ पापप्रतीतेः कस्याप्यसम्मतत्वात् । परैः नञ्घटितव्यस्तवाक्याभिलापस्थल एव भावरूपाज्ञानप्रत्यक्षसाधनं नघटते । पुण्यपापशब्दयोः प्रतिद्वन्द्वितया लोके प्रयोगानुरोधेन पापस्य भावरूपस्य सिद्धया अधर्मशब्देन तथा व्यवहारेऽपि ज्ञानाज्ञानयोरेव प्रतिद्वन्द्वितया लोके व्यवहारेण ज्ञानसामानाश्रयत्वमज्ञानस्य ये नाङ्गीकुर्वन्ति तन्मते भावरूपाज्ञानसाधनासम्भवात् । घटो न जानातीत्यादौ परैरपि ज्ञानाभावस्यैव प्रतीतेरवश्यं वाच्यतया तत्तुल्यतया अहं न जानामीत्यत्रापि ज्ञानाभावप्रतीत्यङ्गीकारस्यैव युक्तत्वात् । इदमसुरं बलिरसुर इत्यादौ इदं नगरं सुरशून्यमिति ' इदमसुर ' मित्यत्र प्रतीतिः, ' बलिरसुर ' इत्यत्र राक्षसप्रतीतिः, यथा तथैव घटो न जानातीत्यत्राप्यविरोधः ' इति चन्द्रिकोक्तिरप्यनुपादेया । राक्षसजातेरन्यतस्सिद्धया नञ्घटितशब्दैर्बहुभिः राक्षस व्यवहारस्य दर्शनेन ' बलिरसुर ' इत्यत्र राक्षसप्रतीतिसम्भवेऽपि बलिर्नसुर इति व्यस्तवाक्ये राक्षसप्रतीतेः कस्याप्यभावेन च ' अहं न जानामि ' इत्यत्रापि भावरूपाज्ञानविषयकप्रतीत्यसम्भवाच्च ॥

## श्रीभाष्यम्

**भावरूपस्याज्ञानस्यापि ह्यज्ञानमिति सिध्यतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव । तथा हि अज्ञानमिति ज्ञानाभावस्तदन्यस्तद्विरोधी वा त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रयणीया । यद्यपि तमस्स्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते । तथाऽपि प्रकाशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव ; भवदभिमताज्ञानं न कदाचित्स्वरूपेण सिध्यति अपित्वज्ञानमित्येव । तथासति ज्ञानाभाववत्तदपेक्षत्वं समानम्**

## श्रुतप्रकाशिका

तया प्रतिपन्नमभावप्रतियोगि भवतीत्युपपन्नतरमिति । अनुभूतस्यहि स्मरणसम्भवः, प्रमाणज्ञानं केनानुभूतमितिचेत् भवतो वा निवर्तकज्ञानं केनानुभूतं, आगमादितिचेत् अस्माकमप्यात्मसाक्षात्कारः तद्विधायकवाक्यावगतः घटादिसाक्षात्कारस्तु प्रत्यक्षादिषु येन केनाप्यनुभूतः। * मेरुसाक्षात्कारः कथं निषिध्यते सहि न केनापि मानेन पूर्वमनुभूतः। उच्यते— * इह अदृष्टचरद्विरदेन पुरुषेण कथमिह चत्वरे गजो नास्तीत्युच्यते, संसर्गाननुभवेऽपि संसर्गिणोरनुभवमात्रेणान्यत्रान्यतरनिषेध उपपद्यत इतिचेत्। एवं तर्हि सुमेरुसाक्षात्कारसंसर्गाननुभवेऽपि मेरुसाक्षात्कारयोः केनाप्यवगमात्तत्संसर्गानिषेध उपपद्यते । प्रमाणज्ञानानामभावप्रतियोगित्वादभावस्य तदानीं ग्राहकं नास्तीति यदुक्तं तत्सर्वप्रमाणज्ञानाभावानां युगपदनुभवासम्भवात् । कतिपयमानज्ञानाभावस्य मानान्तरेण ग्रहणोपपत्तेश्च परिहृतम् । एवं भावरूपपक्षे विरोधपरिहारसाम्यं दर्शितम्

**ननु** विरोधसाम्यं वक्तुमशक्यं अज्ञानस्य नञर्थप्रतियोग्यवच्छिन्नतयैवावगन्तव्यत्वे सतिहि नञर्थप्रतियोगिनस्तस्य ज्ञानस्य स्वविषयाश्रयभूतप्रत्यगर्थावच्छिन्नत्वेन भातत्वात् विषयाश्रयभूतप्रत्यगर्थज्ञाने सति तन्निवर्त्याज्ञानस्थितिविरोधः नहि भावरूपस्याज्ञानस्य ज्ञानप्रतिपत्त्यपेक्षा स्वरूपेणैव प्रतिपत्तिसम्भवात् । नहि भावरूपस्य घटस्य आश्रयप्रतियोगि ज्ञानसापेक्षत्वं दृष्टमित्यत्राह—**भावरूपस्येति** । कथं सापेक्षत्वमित्यत्राह—**तथाहीति** । * अभावस्य नञर्थत्वसम्भवात्तदुक्तिः प्रमाणज्ञानादन्यत् प्रमाणज्ञानविरोधीति वा ? तत्प्रतिपत्तिः तदा तस्य ज्ञानस्य स्वविषयावच्छिन्नत्वेन प्रतिपन्नत्वात् प्रत्यगर्थस्य घटादेर्वा ज्ञानेसति तन्निवर्त्यमज्ञानं न गृह्येतेत्यर्थः ॥

यथा प्रकाशविरोधित्वेऽपि तमसः तत्प्रतिपत्तौ न प्रकाशापेक्षा तद्वदिहापीत्यत्राह—**यद्यपीति** । भावरूपमज्ञानमपि स्वरूपेण सिद्ध्यतीत्यत्राह—**भवदभिमतेति** । मुग्धोऽस्मि मूढोऽस्मीति स्वरूपेण सिद्धिरितिचेत् न कस्यचित्पुरुषस्य कस्मिंश्चिद्विषयेहि मोहः '**स विमलमतिरेति नात्ममोहम्**' '**दिङ्मोहालातचक्रादि भ्रान्तयश्च कथं पुनः**' इत्यादिषु विषयाश्रयावच्छिन्नत्वेनहि मोह उपलभ्यते । मुग्धोऽस्मीत्यनेन आश्रयावच्छिन्नत्वं प्रतीयते विषयोऽप्यर्थवशात्सिद्धः । इदं दूषणं संवित्सिद्ध्यति वा नवेत्यत्र उक्तया दिशा फलितम् । ततश्च स्वात्मविषयमज्ञानं विषयाश्रयभूतप्रत्यगर्थप्रतिपत्तिसद्भावहतं घटाद्यज्ञानंतु विषयभूतघटाद्यवगमविरुद्धम् । मायाशब्दादिभिः अज्ञानप्रतिपत्तौ विषयाश्रयापेक्षा नेतिचेन्न । मायादिशब्दानामपि व्युत्पत्तिनैरपेक्ष्येण बोधकत्वासम्भवात् । अज्ञानादिपदपर्यायत्वेन च व्युत्पन्नत्वात् स्वरूपेण सिद्धिर्दुर्वचेत्यभिप्रायेण न कदाचित्स्वरूपेण सिद्ध्यतीत्युक्तम् ॥

## गूढार्थसंग्रहः

**ज्ञानाभाववत्तदपेक्षत्वं समानमिति** । उक्तंचाद्वैतसिद्धौ पूर्वपक्षे 'उक्तं च विवरणे अज्ञानमिति द्वयसापेक्षज्ञानपर्युदासेनाभिधानादिति' अन्यथाज्ञानस्याज्ञानविरोधित्वमप्रामाणिकं स्यात्। तथा च विरोधानिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यां तवापि कथं न व्याघात' इति ॥ (अज्ञानप्रत्यक्षोपपत्तौ)

## श्रीभाष्यम्

### ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते

## श्रुतप्रकाशिका

नतु स्वरूपावच्छिन्नाज्ञानप्रतीतौ नञर्थप्रतियोगिज्ञानावच्छिन्नतया सिद्धावपि न निवर्त्यनिवर्तकविरोधः * स्वरूप-
भूतज्ञानादन्यतया तत्सिद्धेः स्वरूपज्ञानंहि नाविद्यानिवर्तकं किंतु प्रमाणज्ञानमेव अतो न विरोध इति । नैवम् । मामन्यं
च न जानामीति विषयाश्रयसम्बन्धिज्ञानावच्छिन्नतया प्रतीतेः * नहि स्वरूपभूतज्ञानं साश्रयं सविषयं च तव मतम् ।
* स्वरूपं किमाश्रयतयैवाज्ञानस्यावच्छेदकं उत विषयतयाऽपि आद्ये न त्वदभिमतसिद्धिः तदानीं प्रत्यगर्थस्य * स्वसा-
दन्येन केनापि विशिष्टत्वमेवहि सिद्धयति, विषयतयाऽवच्छेदकत्वे प्रत्यगर्थस्याज्ञानमावरणं स्यात् आवरणत्वं च तद्वि-
षयकज्ञानप्रतिबन्धकत्वं अतस्तद्विषय*प्रमाणज्ञानप्रतीत्यवश्यंभावादुक्तविरोधोऽनतिवृत्तः । अतः स्वरूपभूतज्ञानावच्छिन्न-
प्रतीत्यभ्युपगमोऽनुपपन्नः । उभयत्र साधनदूषणयोस्तुल्यत्वात् भावरूपमज्ञानं परिगृह्यतामित्याशङ्क्य लाघवन्यायेन परिहरति
**ज्ञानप्रागभावस्त्विति**। अभ्युपगम्यते अहमज्ञ इति प्रतिपन्नस्य अभावरूपत्वेहि विप्रतिपत्तिः नत्वभावानभ्युपगमः अन्य थ

## गूढार्थसङ्ग्रहः

अत्र गुरुचन्द्रिका—'द्वयेत्यादि । आश्रयविषयरूपद्वयसापेक्षं यज्ज्ञानं तत्पर्युदासेनाज्ञानमित्यभिधानादित्यर्थः । तथापीति । प्रमाणवृत्त्यभावकाले न जानामीति धीर्वाच्या ; अन्यथाऽविद्यावृत्त्यादिकाले सा न स्यात् । तथा च प्रमाण-वृत्तिसामान्यविरोधित्वेनोक्ताज्ञानविषयकधीकालेऽज्ञानाकारायाः प्रमाणवृत्तेरावश्यकत्वात् तादृशस्मृतेस्सर्वत्रासम्भवात् , संभवेऽपि तस्याविशेषणधीविधया हेतुत्वेऽपि ज्ञानविरोधित्वप्रकारकप्रमाणवृत्तेरवश्यं वाच्यत्वात्, अन्यथा अज्ञानमात्रस्यां साक्षिभास्यत्वेन ज्ञानविरोधित्वेन भानासम्भवाद्व्याघात इति भावः । ननु—ज्ञानविरोधित्वेनाप्यज्ञानं साक्षिणा भास्यत तत्राह—अन्यथा ज्ञानस्येति । अज्ञाने ज्ञानविरोधित्वप्रकारकवृत्तिं विना तत्र तदसिद्धेः साऽवश्यं वाच्या, तस्याः सत्वे च तद्घटितज्ञानसामान्यविरोधित्वं न सम्भवतीति भावः' इति ॥ यद्यपि गुरुचन्द्रिकायां—'अज्ञानत्वमखण्डधर्म एव विषयः इति ज्ञानविरोधित्वाभावेऽपि न क्षतिः । विवरणोक्तिस्तु सम्भवप्राचुर्येणाज्ञानाकारप्रमाणवृत्तिसत्त्वे अत्रास्याज्ञानं स्थितमिति बुद्धिमादाय बोध्या । अत्रास्याज्ञानमित्यत्रतु अस्येति निरूपितत्वं षष्ठ्या निर्दिश्यते । तत्पुरुषीयज्ञाननिवर्त्यत्वनियामकस्य तत्पुरुषनिरूपितत्वस्याज्ञानेऽवश्यं वाच्यत्वात् तथा च न ज्ञानविरोधित्वं न जानामीति धीविषयः' इत्युक्तम् ॥

तथाऽपि अत्रास्यज्ञानं नास्ति अत्रास्याज्ञानमिति वाक्ययोः एकार्थप्रतीतिरनुभवसिद्धतया अत्रास्यज्ञानं नास्तीत्यत्र नञा ज्ञानाभावस्य वा ज्ञानविरोधित्वस्य वा प्रतीतेस्सर्वैः वाच्यतया तत्रैवमुक्तेरयोगेन अत्रास्याज्ञानमित्यत्र चन्द्रिकाकल्पनाया असम्भवात् । ज्ञानाभावस्याद्वैतसिद्धौ सिद्धान्ते साक्षिवेद्यता न सम्भवति इत्युक्तावपि ज्ञानविरोधित्वस्यापि साक्षिभास्यत्वासम्भवेन ज्ञानविरोधित्वेनाज्ञानप्रत्यक्षोपपादनासम्भवात् । तदङ्गीकारे ज्ञानाभावसाक्षिवेद्यत्वस्यापि युक्तत्वात् अन्यथा सर्वप्रतीत्यस्वारस्यस्य दुर्वारत्वात् । मामप्यह न ज्ञातवान् इत्यादौ प्राक् भाष्योपपादितरीत्या मामप्यहं न ज्ञातवान् नाकिंचिदहमवेदिषम् इत्यादिप्रतीतीनामुपपत्तिः । मामप्यहं न ज्ञातवान् इत्यत्र अहमर्थस्य स्वप्रकाशात्मकप्रत्यक्षेण सर्वदा भानेन प्रत्यक्षादिप्रमाणवृत्त्यभावविषयकत्वस्य पूर्वमुपपादिततया तन्न्यायेन न जानामीत्यादावपि प्रतियोगिस्मृत्याश्रयस्वप्रकाशात्मकप्रत्यक्षस्य सत्वेऽपि प्रमाणवृत्त्यभावस्य प्रतीतेरविरोधेन गुरुचन्द्रिकोपदर्शितलाघवस्यापि नावसर इति दिक् ॥

**ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यतइति** । भट्टपादैः अभावचातुर्विध्यमङ्गीकृत्य तत्रानुपलब्धेः प्रमाणान्तरत्वाङ्गीकारेण व्यवहारे भट्टनय इति परैरपि अनुपलब्धेः प्रमाणत्वाङ्गीकारेण प्रागभावोऽपि तत्सम्मत एव । अभावस्यानुप-

## गूढार्थसंग्रहः

लब्ध्या प्रतीतिः भट्टतदनुयायिमते । नैयायिकादिमतेतु प्रत्यक्षमित्येव भिदा। प्रतीतिःपरं सर्वसम्मता । प्रमोत्पत्तेःपूर्वं प्रमाप्रागभावसत्वे तत्प्रतीतिर्नास्तीति वक्तुं न शक्यते । एवं च इहेदानीं घटो नास्तीति घटोपादानगततत्प्रागभावविषयाप्रतीतिरिव मयि ज्ञानं नास्तीति प्रतीतिरपि प्रमातृगततत्प्रागभावविषयेत्यभ्युपगन्तुं शक्यत एव । अत्यन्ताभावविषयकप्रतीतेः विलक्षणवै प्रागभावविषयिणी प्रतीतिः । यद्यप्यद्वैतसिद्धौ 'घटो भविष्यती' ति प्रतीतेः धात्वर्थभविष्यत्ताविषयत्वेन प्रागभावाविषयत्वात्। अन्यथा दिनान्तरोत्पत्स्यमानघटे एतद्दिनवृत्तिप्रागभावप्रतियोगित्वेन अद्य घटो भविष्यतीति धीप्रसङ्गः। भविष्यत्वं च प्रतियोगितद्ध्वंसानाधारकालसम्बन्धित्वम्। अतःप्रागभावमङ्गीकुर्वतोऽपि तत्प्रत्यक्षत्वं दुर्लभं तमनङ्गीकुर्वतस्तु न काऽपि हानिः । इहेदानीं घटो नास्तीति प्रतीतिस्तु सामान्यधर्मावच्छिन्नप्रयोगिताक तत्कालावच्छिन्नयावद्विशेषाभावविषया समयविशेषस्यापि अभावावच्छेदकत्वात् अन्यथा आद्यक्षणे घटो नीरूपः इत्यादिप्रतीतिर्न स्यादित्युक्तम् ॥

तथाऽपि अनुपलब्धिप्रमाणवादिभिः भट्टपादैः अस्तीति प्रतीतौ नास्तीति प्रतीतिवैलक्षण्येन प्रमाणवैलक्षण्यमङ्गीकरणीयमिति वदद्भिः 'क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते' इत्युक्त्या इहेदानीं घटो नास्तीत्यादिप्रतीतिरपि प्रागभावविषयिण्येवेति तत्सम्मतम्। एवं च प्रमाणवृत्तेः पूर्वक्षण एव अज्ञानप्रत्यक्षमिति गुरुचन्द्रिकायामुक्त्या मयि ज्ञानं नास्तीत्यादिप्रतीरपि प्रागभावविषयिण्येवेति युक्तम्। 'आद्यक्षणे घटो नीरूप' इत्यत्र रूपप्रागभावस्य विषयत्वे रूपवत्यपि भाविरूपप्रागभावमादाय नीरूप इति प्रतीत्यापत्तिः चन्द्रिकोक्ताऽनुपादेया । रूपवति रूपान्तरस्यानुत्पत्त्या रूपनाशानन्तरमेव तत्सम्भवः रूपनाशदशायां च तत्प्रतीतिरिष्टैव । यदा प्रागभावप्रतीतिः प्रामाणिकी तदा तत्कालस्य सहकारित्वेन वा तत्कालमवगाह्यैव वा प्रागभावप्रतीतिरिति न काप्यनुपपत्तिः । एतेन दिनान्तरोत्पत्स्यमानघटे एतद्दिनवृत्तिप्रागभावप्रतियोगित्वेन अद्य घटो भविष्यतीति प्रतीतेरापादनमपि न सम्भवति । तत्कालस्य सहकारित्वादेः अकल्पनात् प्रागभावाङ्गीकारे भविष्यत्वं प्रागभावप्रतियोगित्वमेव लाघवात्। उत्तरक्षणे घटोत्पत्तिप्रतीतेः अनुभवसिद्धत्वाच्च । अतएवाद्वैतपरिभाषायां घटो भविष्यतीति प्रतीतेः प्रागभावविषयत्वमेवाङ्गीकृतम्। प्रागभावस्य मतभेदेनानुपलब्धिप्रत्यक्षविषयत्ववैलक्षण्येऽपि सम्बन्धाक्षेपपरिहारे अविद्यावादं निराकुर्वतां नास्तीति विलक्षणप्रतीत्या भावातिरिक्तमभावं तत्प्रतीतिसाधनभूतमनुपलब्धिप्रमाणं च अभ्युपगच्छतां भट्टपादानां मते नास्तीति प्रतीतिविषयत्वं भावस्य नास्तीति व्यस्तनञ्पदघटितवाक्याभिलप्यप्रतीतेः भावरूपाज्ञानविषयकत्वं अनुभवविरुद्धत्वादनुपादेयमित्येव पर्यवस्यति । अभावं भावातिरिक्तमभ्युपगच्छद्भिः अभावप्रभेदेन प्रागभावेनैव मयि ज्ञानं नास्तीत्यादि नास्तीतिपदघटितवाक्याभिलप्यप्रतीतेरुपपत्तौ नास्तीति शब्दाभिलप्यबहुप्रतीतिषु कस्याप्यसम्मतस्य अनुभवविरुद्धस्य भावरूपाज्ञानविषयकत्वोक्तिः अभिनिवेशमूलेत्येव पर्यवस्यति

एवं अज्ञातघटो भातीति प्रतीतिः परसम्मता कस्यापि दार्शनिकस्य न सम्मता । भातीति प्रतीतिः प्रत्यक्षविषय एवेति परेषां सिद्धान्तः, परोक्षविषये अस्तीत्येव प्रतीतिः नतु भातीति । एवंस्थिते अनुमितत्वेन भातीति व्यवहारः न नैयायिकसम्मतः । अज्ञातघटो भातीति व्यवहारस्तु घटस्येन्द्रियजन्यप्रत्यक्षदशायां तत्पूर्वं घटस्येन्द्रियजन्यप्रत्यक्षाविषयत्वे तत्तात्पर्येण सर्वैरप्यभ्युपगम्यते घटं न जानामीति प्रतीतिस्तु घटज्ञानोत्पत्तेः पूर्वं प्रागभावविषयत्वेनोपपद्यते 'घटं नजानामि, ब्रह्म न जानामि' इति प्रतीत्योरविशेषे उभयत्र ज्ञानप्रागभावविषयकत्वेन प्रतीतिसामञ्जस्ये भावरूपाज्ञानं किंचित् कल्पयित्वा जडे आवरणकृत्याभावात् नावरणं ब्रह्मणितु आवरणकृत्यसद्भावात् आवरणमित्यादिकल्पना अप्रामाणिकयेव । उभयत्र ज्ञानसामग्र्यभावादेव अनवभासस्य सर्वानुभवसिद्धत्वात् ब्रह्मणि अज्ञानविषयतामङ्गीकृत्य घटादौ तदवच्छेदकत्वं

## श्रीभाष्यम्

**प्रतीयतेचेत्युभयाभ्युपेतो ज्ञानप्रागभाव एव, अहमज्ञो मामन्यं च न जानामीत्यनुभूयत इत्यभ्युपगन्तव्यम्। नित्यमुक्तस्वप्रकाशचैतन्यैकरूपस्य**

## श्रुतप्रकाशिका

प्रमाणज्ञानस्य प्रागभावाभावादनादित्वेन तन्निरसनीयभावरूपाज्ञानानुदयप्रसङ्गात् अतो ज्ञानप्रागभावस्त्वयाऽभ्युपगतइत्यर्थः। प्रतीयते च लोके तत्तज्ज्ञानाभावविवक्षया ज्ञानं नास्तीति व्यवहारदर्शनात् अप्रतिपन्ने च विवक्षाऽनुपपत्तेः ज्ञानाभावप्रतीतिरस्त्येवेत्यर्थः। अतः संप्रतिपन्नेन ज्ञानाभावेनैवाहमज्ञ इति प्रतीत्युपपत्तेरिति कल्पने हेत्वभावाल्लाघवेन स एव अहमज्ञ इति प्रतीतेर्विषयतयाऽभ्युपगन्तव्य इत्यर्थः॥

ननूभयाभ्युपगतोऽभावो नाम कश्चिन्नास्ति भावान्तरमभावः स्वमते, परमते तु भावातिरिक्तः तत्कथमुभयाभ्युपगतेनाहमज्ञ इति प्रतीत्युपपत्तिः। उच्यते—नह्युभयाभ्युपगतइत्युक्तं किंतु भवताऽभ्युपगम्यत इत्युक्तम्, अभावशब्दवाच्यत्वेन कश्चिदर्थ उभयाभ्युपगतः। सच भावरूपस्तदतिरिक्त इतीयदेव विमतम् अत्र भावत्वेन यः स्वाभिमतः, यश्च तदतिरिक्तत्वेन अभावशब्दवाच्यतया पराभिमतः तयोरन्यतरेणाहमज्ञ इति प्रतीत्युपपत्तेस्तदुभयातिरिक्तार्थकल्पनमनुपपन्नमित्युक्तं भवतीति न विरोधः। ननु भावान्तरमभावमिच्छता त्वया ज्ञानप्रागभावशब्देन भावरूपाज्ञानमङ्गीकृतं स्यात्। नैवम् सिद्धान्तद्वयानभिज्ञानकृतंहीदं चोद्यम्। स्वयंप्रकाशस्यैव ज्ञानस्य सङ्कोचरूपमवस्थान्तरं प्रागभावशब्दवाच्यतयाऽस्मदभिमतं स्वप्रकाशज्ञानव्यतिरेकेण भावरूपमज्ञानं पराभिमतम् अतस्तयोःकथमैक्यं? तर्हि ज्ञानसङ्कोचरूपावस्थां परित्यज्याज्ञानशब्दवाच्यत्वेन परोक्तं भावरूपमज्ञानं स्वीक्रियतां भावरूपत्वाविशेषादितिचेत्; प्रामाणिकं परित्यज्याप्रामाणिकं स्वीक्रियतामितीदमनुपपन्नम् **'न विज्ञातुर्विपरिलोपो विद्यते' 'सर्वंह पश्यःपश्यति'**

**तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते॥**

**'अप्राणिमत्सु स्वल्पासे'** त्यारभ्य **'हिरण्यगर्भोऽतितरां पुंसश्शक्त्युपलक्षितः।'** इति श्रुतिस्मृतिसिद्धत्वात् ज्ञाननित्यत्वं तत्सङ्कोचादिकं च प्रामाणिकं कथं त्यज्येत, भावरूपाज्ञानंतु कल्प्यं कल्पकंचान्यथासिद्धमिति तदप्रामाणिकं कथं स्वीक्रियते। कल्पनायांहि लाघवन्यायश्च प्रवर्तते, नतु प्रमाणप्रतिपन्नेऽर्थे। अतोऽहमज्ञ इति ज्ञानप्रागभाव एव प्रतीयते। एवमहमज्ञ इति प्रत्यक्षस्य भावरूपाज्ञानविषयत्वे भावरूपपक्षोपपत्त्यभावरूपपक्षानुपपत्तिरूपानुकूलतर्काभाव उक्तः॥

अथ प्रतिकूलतर्कपराहतिरुच्यते। **नित्येति**। नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्येति पदं हेतुगर्भं नित्यमुक्तत्वं परमार्थतो दोषासंस्पृष्टत्वं, अतः परमार्थदोषो न सम्भवति स्वानुभवस्वरूपत्वादपरमार्थपरानुभवो न सम्भवतीत्यर्थः।

## गूढार्थसंग्रहः

चाभ्युपेत्य भावरूपाज्ञानं सिद्धवत्कृत्य ब्रह्म न जानामि, घटं न जानामीत्यादौ द्वितीयार्थभेदकल्पनमपि अभिनिवेशमूलकमेव। घटे अज्ञानविषयत्वानङ्गीकारे लाघवमिति ब्रह्मानन्दसरस्वत्युक्तिः न घटत इति पूर्वमेव (३३५.पु) निरूपितम्॥

परसम्मताज्ञानप्रत्यक्षस्य ज्ञानप्रागभावविषयकत्वसाधनेन अविद्याऽनुमाने अनुकूलतर्कोऽपि न सम्भवतीत्युक्तं भवति अज्ञानस्य साक्षिणा भानं न सम्भवति निर्विशेषे शुद्धएवाज्ञानाङ्गीकारेण स्वप्रकाशस्य तस्याज्ञानसम्बन्धस्यैवासम्भवात्। अविद्यावृत्तिप्रतिबिंबितत्वस्य चिति असम्भवेन तेन भानस्यायोगात्। अज्ञाने किं प्रमाणम्? इति प्रश्ने अज्ञ.नवृत्तिप्रतिबिंबित चिदेव प्रमाणमित्युक्तेः विद्वद्भिरङ्गीकारायोगात् इत्यभिप्रेत्य स्वप्रकाशत्वतिरोधानाज्ञानभानादिकं न सम्भवतीति विस्तरेण निरूपयति **नित्यमुक्तेत्यादिना**॥

श्रीभाष्यम्

**ब्रह्मणोऽज्ञानानुभवश्च न सम्भवति स्वानुभवस्वरूपत्वात्। स्वानुभवस्वरूपमपि तिरोहितस्वस्वरूपमज्ञानमनुभवतीति चेत्। किमिदं तिरोहितस्वरूपत्वम्? अप्रकाशितस्वरूपत्वमिति चेत्–स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वं स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्व(मा(मुप)पद्यत इतिचेत्। एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतस्स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम्। किंच ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सद्ब्रह्म तिरस्करोति ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम्। अनुभूतमेव तिरस्करोतीति चेत्। यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभवति तदा तिरोधानकल्पना निष्प्रयोजना स्यात् अज्ञानस्वरूपकल्पनाच। ब्रह्मणोऽज्ञानदर्शनवत् अज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि सम्भवात्। किंच ब्रह्मणोऽज्ञानानुभवः किं स्वतोऽन्यतो वा? स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षस्स्यात् अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवन्निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा।**

श्रुतप्रकाशिका

अन्यानुभवरूपप्रदेशभेदाभावाच्चेत्येकशब्दाभिप्रायः। एकशब्देन ज्ञेयत्वाभावश्च विवक्षितः; अभिप्रेतं हेतुगर्भत्वं विवृणोति। **स्वानुभवस्वरूपत्वादिति**। अविद्यानिवृत्तिदशायां अनुवर्तमानमविद्यावभासप्रत्यनीकं स्वानुभवैकस्वभावत्वं हेतुतया विवक्षितम् * नतु भ्रमवेळायामपि विद्यमानं स्वयम्प्रकाशत्वमात्रम्। अतः स्वानुभवैकस्वभावत्वस्य प्रागपि विद्यमानत्वादित्यर्थः। स्वानुभवस्वरूपस्यापि तिरोधानादज्ञानानुभवस्सम्भवतीति शङ्कते। **स्वानुभवेति**। अभिप्रेतं विवरीतुं तिरोधानशब्दस्यार्थान्तरं नास्तीति ज्ञापनार्थं प्रश्नपूर्वकं तिरोधानशब्दार्थमाह—**किमिदं तिरोहितस्वरूपत्वं अप्रकाशितस्वरूपत्वमितिचेदिति**। स्वानुभवस्वरूपस्य अप्रकाशितत्वं व्याहतमिति बुद्ध्या दूषयति। **स्वानुभवेति**। अन्यत इति परिहारं शङ्कते। **स्वानुभवेति**। अन्यतोऽप्रकाशितस्वरूपत्वे पूर्वोक्तदूषणमतिदिशति। **एवंतर्हीति**। दूषणान्तरमाह—**किंचेति**। अपरमार्थत्वान्नसत्तया तिरस्कारकम्। अपितु प्रतीयमानतया तिरस्कारकमित्यनुभवपूर्वकस्तिरस्कारः तिरस्कारपूर्वकोऽनुभवः अतिरस्कृतस्य स्वानुभवस्वरूपस्य ब्रह्मणोऽज्ञानानुभवासम्भवादित्यन्योन्याश्रयणमित्यर्थः। एतत्परिजिहीर्षयाऽनुभवपूर्वकं तिरस्कारं शङ्कते। **अनुभूतमेवेति**। तत्र दूषणमाह—**यदीति**। अतिरोहितस्याप्यज्ञानानुभवसम्भवात्तदर्थतिरोधानकल्पना तदर्थमाच्छादकाविद्याकल्पना च निष्फलेत्यर्थः। तदुपपादयति। **ब्रह्मणइति**। यथाऽतिरोहितस्वरूपस्याप्यपरमार्थभूताज्ञानानुभवसम्भवः तथा अपरमार्थभूतप्रपञ्चानुभवोऽप्यतिरोहितस्य सम्भवतीति तदर्था तिरोधानकल्पना तदर्थाऽऽच्छादकाविद्याकल्पना च निष्फलेत्यर्थः॥

अनुभवपूर्वकतिरस्कारपक्ष एव विकल्पमुखेन दूषणमाह—**किंचेति**। स्वतःपक्षे दूषणद्वयं अनिर्मोक्षो ब्रह्मस्वरूपनिवृत्तिश्च। रजतानुभवस्यापीत्यपिशब्देन रजतस्य च निवृत्तिस्सूचिता। अन्यतःपक्षेऽनवस्था, तिरस्कारपूर्वकानुभवपक्षं शङ्कते **ब्रह्मेति**। तिरस्कृत्यानुभवविषयइत्युक्ते सत्तया तिरस्कारकमित्युक्तं स्यात् नतु प्रतीयमानतया तदानीं काचादि-

गूढार्थसङ्ग्रहः

**किंच ब्रह्मणोऽज्ञानानुभवइति**। ब्रह्मेत्यत्र निर्विशेषचित् स्वप्रकाशं शुद्धं विवक्षितम्।

## श्रीभाष्यम्

**अन्यतश्चेत् किं तदन्यत् ? अज्ञानान्तरमितिचेत् अनवस्था स्यात्। ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्। तथासतीदमज्ञानं काचादिवत् स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वमज्ञानस्य न स्यात्। अथेदमज्ञानं स्वयमनादि ब्रह्मणस्स्वसाक्षित्वं, ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति अतो नानवस्थादयो दोषा इति। नैतत्। स्वानुभवस्वरूपस्य ब्रह्मणस्स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात्। हेत्वन्तरेण तिरस्कृतमिति चेत् तर्ह्यस्यानादित्वमपास्तम्। अनवस्था च पूर्वोक्ता। अतिस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात्। अपि च अविद्यया ब्रह्मणि तिरोहिते तद्ब्रह्म न किंचिदपि प्रकाशते उत किंचित्प्रकाशते। पूर्वस्मिन्कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छताऽऽपत्तिरसकृदुक्ता। उत्तरस्मिन् कल्पे सच्चिदानन्दैकरसे ब्रह्मणि**

## श्रुतप्रकाशिका

वत्परमार्थत्वेन ज्ञाननिवर्त्यत्वं न सिध्यतीत्यर्थः ; अथ तिरस्कारानुभवयोर्यौगपद्यं शङ्कते-**अथेदमिति**। * नैतदित्यादिना दूषयति। **स्वानुभवस्वरूपस्येति** हेतुगर्भविशेषणम्। स्वानुभवस्वरूपत्वं स्वाभाविकमिति परानुभवो हेतुना विना नोपपद्यत इत्यर्थः ॥

हेत्वन्तरेण तिरस्कृतिमाशङ्क्य दूषयति। **हेत्विति**। * यौगपद्यपक्षे पूर्वोक्तपक्षद्वयदूषणमप्यापततीत्यभिप्रायेणाह–**अनवस्था च पूर्वोक्तेति**। * ज्ञानानिवर्त्यत्वदूषणस्याप्युपलक्षणमियमनवस्था अनन्तरपूर्वोक्तेः। स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनेऽनिष्टमाह—**अतिरस्कृतेति**। पूर्वं विशदाविशदावभासमभ्युपगम्य दूषणमुक्तम्। इदानीं तु तमेव दूषयितुमुपक्रमते। **अपिचेति**। विकल्पयति। **अविद्ययेति**। पूर्वोक्तं दूषणमतिदिशति। **पूर्वस्मिन्निति**। **उत्तरस्मिन्निति**। किंशब्दः क्षेपे अनुपपन्नमित्यर्थः। सच्चिदानन्दादिशब्दानामपि स्वरूपमात्रपरत्वेनाभ्युपगमात्तिरस्कृतातिरस्कृतविभागो-

## गूढार्थसंग्रहः

राहुवदविद्या स्वावृतप्रकाशप्रकाश्या इति परसम्मतार्थमभिप्रेत्य शङ्कते—**अथेदमज्ञानमित्यादिना**। सूर्यस्य राहोश्च सावयवत्वेन समानसत्ताकत्वेन सादित्वेन उभयोः पृथक्प्रमाणतः सिद्धया च तत्र राहोः स्वावृतप्रकाशप्रकाश्यत्वं युक्तम्। अत्रतु अज्ञानसद्भावे प्रमाणविचारावसरे साक्षिप्रत्यक्षमेव प्रमाणमित्युच्यते। साक्षिणः सिद्धिस्तु अज्ञानसिद्ध्यनन्तरमेव अज्ञानशुद्धयोरनादित्वमेव। शुद्धं निरवयवम् एवंस्थिते राहुदृष्टान्तो न घटत इत्यभिप्रेत्याह—**नैतत् स्वानुभवस्वरूपस्येत्यादिना** ॥ पञ्चपादिकायां 'ननु बहिरर्थे कारणदोषोऽर्थगतः सादृश्यादिः इन्द्रियगतश्च तिमिरादिरुपलभ्यते। तन्निमित्तश्चार्थस्य सांशत्वात् अंशान्तरावग्रहेऽप्यंशान्तरप्रतिबन्धो युज्येत। नत्विह कारणान्तरायत्तासिद्धिः, येन तद्दोषादनवभासोऽपि स्यात्, निरंशस्य चैतन्यस्य स्वयंज्योतिष्ट्वस्तदयोगात्। ननु ब्रह्मस्वरूपमनभासमानमस्त्येव। न तदनवभासनाजीवेऽनवभासविपर्यासौ भवतः। नहि शुक्तेरग्रहणात् स्थाणावग्रहणं विपर्यासो वा। ननु न ब्रह्मणोऽन्यो जीवः 'अनेन जीवेनात्मना' इति श्रुतेः। अतः तदग्रहणमात्मनएव तत्, एवं तर्हि सुतरामाविद्यायास्तत्रासम्भवः, तस्य विद्यात्मकत्वात् 'तस्यभासा सर्वमिदं विभाति' इति तच्चैतन्येनैव सर्वस्य भासमानत्वात्, उच्यते। विद्यतएवात्राप्यग्रहणाविद्यात्मको दोषः प्रकाशस्याच्छादकः। कथं गम्यते ? श्रुतेस्तदर्थापत्तेश्च' इत्युक्तम्। अत्र समाधाने आच्छादकत्वमात्रोक्त्या पूर्वपक्षस्य समाधानमेव नोक्तं भवतीत्याह—**अविद्यया ब्रह्मणि तिरोहिते इत्यादिना** ॥

## श्रीभाष्यम्

**कोऽयमंशस्तिरस्क्रियते को वा प्रकाशते ? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वया-सम्भवेन तिरस्कारः प्रकाशश्च युगपन्नसङ्गच्छेते। अथ सच्चिदानन्दैकरसं ब्रह्माविद्यया तिरोहितस्वरूपमविशदमिव लक्ष्यत इति। प्रकाशमात्रस्वरूपस्य विशदताऽविशदता वा किं रूपा। एतदुक्तं भवति यस्सांशस्सविशेषः प्रकाशविषयः तस्य सकलावभासो विशदा-वभासः कतिपयविशेषरहितावभासश्चाविशदावभासः। तत्र य आकारोऽप्रतिपन्नस्तस्मि-न्नंशे प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यते यश्चांशः प्रतिपन्नस्तस्मिन्नंशे तद्विषयप्रकाशो विशद एव। अतस्सर्वत्र प्रकाशांशे अवैशद्यं न सम्भवति। विषयेऽपि स्वरूपे प्रतीय-माने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम्। तस्मादविषये निर्विशेषे प्रकाशमात्रे**

## श्रुतप्रकाशिका

ऽनुपपन्न इति भावः। **कोऽयमंशस्तिरस्क्रियते को वा प्रकाशतइति**। को वा विशेषस्तिरस्क्रियते को वा प्रकाशतइत्य-स्याप्युपलक्षणार्थमिदम्। निरंशे निर्विशेष इत्यनन्तरोक्तेः। **कोऽयमंशइति**। अंशभेदो वक्तुमशक्य इत्यभिप्रायः। तदु-पपादयति **निरंशइति**। **प्रकाचमात्रे** मात्रचा, अविषयत्वं विवक्षितम् अविषयभूतइत्यर्थः। **युगपन्नसङ्गच्छेते इति**। नहि त्वया कालभेदेन प्रकाशतिरस्कारावुच्येते। अपितु तदानीमंशभेदाभावादाकारभेदाभावाच्च तौ न सङ्गच्छेते इति भावः॥

एवं प्रकाशतिरस्कारयोः यौगपद्यानुपपत्तौ सत्यामप्यविशदशब्देन प्रत्यवतिष्ठते। **अथेति**। अथशब्दो*ऽनुमति-प्रदाने (मतप्रदर्शने) वर्तते। दूषयति **प्रकाशेति**। **किं रूपा** अनुपपन्नेत्यर्थः ; कथमनुपपत्तिरिति शङ्कायां वैशद्यावैशद्य-स्वरूपं शिक्षयितुं अत्र तदनुपपत्तिं च दर्शयितुमाह—**एतदुक्तमिति**। वैशद्यावैशद्यस्वरूपं शिक्षयति। **यस्सांश इत्या-दिना**। ज्ञाने तदनुपपत्तिमाह–**तत्रेति**। **प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यतइति**। धर्म्यभावाद्धर्माभावइत्यर्थः ज्ञेयेऽपि ज्ञातांशस्य विशदत्वादज्ञातांशस्याज्ञातत्वाच्च क्वचिदप्यवैशद्यं न सम्भवतीत्याह—**विषयेऽपीति**। एकस्मिन्वस्तुनि कतिपयांशस्य कतिपयाकारस्य वाऽनवभासस्समुदितरूपस्यावैशद्यं नतु तत्रापि प्रकाशमानांशस्येत्यर्थः। **तस्मादिति**।

## गूढार्थसङ्ग्रहः

**निर्विशेषे प्रकाशमात्रे इत्यादि**। एतेन पूर्णानन्दांशे एवावरणमिति प्राक् (३२६.पु) चन्द्रिकाद्युक्तरीति-रपि न घटत इति बोधितम्। सिद्धान्तलेशसङ्ग्रहे राहुवत् 'स्वावृतप्रकाशप्रकाश्या' इत्याद्यद्वैतसिद्ध्याद्युक्तपक्षे अविद्या-मात्रभानोपपत्तावपि दृष्टान्ते आवाराकातिरिक्तप्रकाशादर्शनेन अहङ्कारतद्धर्मादीनां साक्षिभास्यत्वं नोपपादयितुं शक्यमिति साक्षिचैतन्यं विहायैव चैतन्यमावृणोतीति पक्षान्तरं यदुक्तं तदपि न सम्भवतीति एतेन बोधितम्। कल्पितभेदेन तिरो-धानप्रकाशयोरुपपत्तिः अविद्यासिद्ध्यनन्तरमेव वाच्या। स्वप्रकाशे अविद्या न सम्भवतीत्याक्षेपदशायां अविद्याकल्पित-भेदेन प्रकाशतिरोधानादेरुपपत्तेरयोगात्। विवरणे 'भासत एव परमप्रेमास्पदत्वलक्षणं सुखम्। परंतु महावातमध्यगतदीपवत् न सम्यक्प्रकाशः' इत्युक्तमाशङ्कते—**अथ सच्चिदानन्दैकरसमित्यादिना**॥ अयमेव पक्षः पूर्णानन्दांशे आवरणं पूर्णानन्दो न भाति इति व्यवहार इत्यद्वैतसिद्धिचन्द्रिकयोरुपन्यस्तः। अनवच्छिन्नानन्दः, अवच्छिन्नानन्दइत्यानन्दभेदो नास्ति। अतः एतत्पक्षेऽपि पूर्ववदेव दोष इत्यभिप्रेत्याह—**एतदुक्तं भवतीत्यादिना**। साक्षिचैतन्यस्य अनावृतत्वाङ्गीकारेण अहङ्कारादिप्रकाश इति पक्षान्तरेऽपि कल्पितभेदाभावे तदसम्भवेन अविद्यायां विवाददशायामित्थमुक्तेरसम्भवात्॥

## श्रीभाष्यम्

**ब्रह्मणि स्वरूपे प्रकाशमाने तद्गतकतिपयविशेषाप्रतीतिरूपावैशद्यं नामाज्ञानकार्यं न सम्भवति। अपि च इदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयान्निवर्तते न वा। अनिवृत्तावपवर्गाभावः निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम्। विशदस्वरूपमिति चेत् तद्विशदस्वरूपं प्रागस्ति न वा? अस्तिचेदविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। नोचेन्मोक्षस्य कार्यतया अनित्यता स्यात्। अस्याज्ञानस्याश्रयानिरूपणादेवासम्भवः पूर्वमेवोक्तः। अपि च अपरमार्थदोष मूलभ्रमवादिना**

## श्रुतप्रकाशिका

स्वरूपे प्रकाशमान इत्यस्य न ब्रह्मणीति पूर्वत्रान्वयः अपितूत्तरत्र स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्तिरूपमवैशद्यं ब्रह्मणि न स सम्भवतीत्यर्थः। कतिपयविशेषाप्रतिपत्तिशब्दः कतिपयांशाप्रतिपत्तेरुपलक्षणार्थः। मुखान्तरेण दूषणमाह– **अपिचेति। अविद्याकार्यं तन्निवृत्तिश्च न स्यातामिति।** विशदस्वरूपस्याविद्याविरोधित्वादिति भावः॥

**मोक्षस्य कार्यतयेति।** मोक्षस्य * मुक्तस्वरूपस्य भावरूपत्वेसति कार्यंह्यनित्यं, वैशद्यं च भावरूपम् अतः परमते त्वयोक्तदूषणं तवैवापततीत्यर्थः। प्रागसतः पश्चादुत्पन्नस्य वैशद्यस्यानित्यत्वप्रसङ्गः कालात्ययापदिष्टः शास्त्रेण तस्य नित्यतया प्रतिपादितत्वादितिचेत् तदा ब्रह्मणस्सविशेषत्वं स्यादित्यभिप्रायः। पूर्वोक्तामाश्रयानुपपत्तिं परोक्तप्रत्यक्षप्रमाणस्य प्रतिकूलतर्कत्वेनाह–**अस्येति।** स्वरूपानादित्वादिमुखेन परिहाराणां प्रतिबन्दीत्वं हृदि निधाय दूषणान्तरमाह–**अपिचेति।**

## गूढार्थसंग्रहः

**अविद्याकार्यमवैशद्यमित्यादि।** निवृत्त्यनुपपत्तिनिरूपणावसरे एतदर्थः विशदीभविष्यति। **अस्याज्ञानस्याश्रयानिरूपणादित्यादि।** 'स्वयं च शुद्धरूपत्वादसत्त्वाच्चान्यवस्तुनः। स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता॥ अन्येनोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते।' इति सम्बन्धाक्षेपपरिहारे (८४.श्लो) भट्टपादोक्तदूषणमप्यत्र विवक्षितं भवति। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।' (श्वे.६.१९) इत्यत्र निरवद्यपदेन शुद्धस्य अविद्यारूपावद्यसम्बन्धस्यापि प्रतिषेधात् न तस्याज्ञानाश्रयत्वमिति भावः॥

**अपरमार्थदोषमूलभ्रमवादिनेति।** अपरमार्थेत्यनेन 'यस्यच दुष्टं करणं, यत्रच मिथ्येति प्रत्ययः स एवासमीचीनप्रत्ययः नान्यः इति' इति शाबरभाष्यं अनैसर्गिकदोषाभिप्रायकमिति प्राक् (२१२.पु) उदाहृतपञ्चपादिकायां कल्पनमपि न सम्भवति इति बोधितम्। शाबरभाष्ये परमार्थदोषस्यैव विवक्षितत्वात् 'प्रयत्नेनान्विच्छन्तः नचेद्दोषमवगच्छेमहि प्रमाणाभावाददुष्टमिति मन्येमहि' इति तत्रोक्तार्थस्य 'नचाहंप्रत्ययो व्यामोह इति शक्यते वक्तुं बाधकप्रत्ययाभावात्' इत्युत्तरत्रापि (आत्मवादे) विवक्षितत्वात् अहंप्रत्ययस्य असंभिन्नेदंरूपतायाः शबरसम्मतत्वस्य प्राक् (१५५.पु) उपपादनेनाहमर्थस्य आविद्यकत्वेन 'अहमिति तावत्प्रथमोऽध्यासः' इति पञ्चपादिकोक्तार्थस्य शबराद्यसम्मतत्वस्य स्फुटत्वात्। लोके परमार्थदोषमूलकत्वेन मिथ्यात्वस्य प्रतीतेरहंप्रत्ययस्य तदयोगात्। अविद्यायाः अविद्यान्तरमूलकत्वाभावाद्दोषमूलकत्वाभावेन भ्रमस्याविद्यावृत्तिरूपत्वासम्भवाच्च। दोषस्य निमित्तकारणत्व एव भ्रमस्य सर्वसम्प्रतिपन्नतया परैरविद्यायाः उपादानत्वाङ्गीकारेऽपि निमित्तत्वानङ्गीकारेण अविद्यावृत्तेः भ्रमरूपत्वासम्भवाच्च। प्राक् (२१२.पु) पञ्चपादिकोक्तदृष्टान्तेऽपि दोषस्य समानसत्ताकत्वेन परमार्थत्वमेव इति अपरमार्थदोषे न तद्दृष्टान्तसम्भवः। तत्र क्षुत्पिपासोपजनितसं-

## श्रीभाष्यम्

**निरधिष्ठानभ्रमासम्भवोऽपि दुरुपपादः भ्रमहेतुभूतदोषदोषाश्रयत्ववदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च**

## श्रुतप्रकाशिका

यथा दोषदोषाश्रयत्वादेरपारमार्थ्येऽपि भ्रमसम्भवः तद्वदधिष्ठानापारमार्थ्येऽपि भ्रमस्संभवति। अधिष्ठानापारमार्थ्ये तस्यापि प्रपञ्चवदपारमार्थ्येन अधिष्ठानान्तरापेक्षयाऽनवस्था स्यादितिचेत् तर्हि दोषस्यापि प्रपञ्चवदपारमार्थ्येन दोषान्तरापेक्षयाऽनवस्था स्यात्। दोषस्यापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेतिचेत् तर्हि अधिष्ठानापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेति। प्रवाहानादित्वेन दुर्घटत्वेन च परिहारोऽपि तुल्यः। दोषः प्रपञ्चदर्शनस्य स्वदर्शनस्य च स्वयमेव निर्वाहक इति न दोषान्तरापेक्षायाऽनवस्थेतिचेन्न, अपरमार्थस्यास्य स्वपरनिर्वाहकत्वासम्भवात् नहि स्वप्ने द्विचन्द्रज्ञानहेतुभूतोऽङ्गुल्यवष्टम्भः स्वकल्पने दोषनिरपेक्षः। अपरमार्थस्य स्वपरनिर्वाहकत्वं संभवतु, तथासत्यधिष्ठानापारमार्थ्येऽपि स्वपरनिर्वाहकत्वादनवस्था न स्यात्। अपरमार्थस्यपरंप्रत्यधिष्ठायत्वे सिद्धे हि स्वनिर्वाहकत्वसिद्धिरितिचेत् अपरमार्थस्य परंप्रति दोषत्वेसिद्धेहि स्वनिर्वाहकत्वमिति तुल्यम्। मिथ्याभूतजगदवभासाद्दोषत्वं सिद्धमितिचेत् तर्हि ततएवाधिष्ठानत्वमपि सिद्धमिति स्वपरनिर्वाहकत्वमधिष्ठानस्य सिद्ध्यति। अधिष्ठानापारमार्थ्ये भ्रमो न दृष्ट इतिचेत् दोषदोषाश्रयत्वापारमार्थ्येऽपि भ्रमो न दृष्ट इति तुल्यचर्चं इत्यभिप्रायः। ततः किमित्यत्राह—ततश्चेति॥

एवमहमज्ञो मामन्यं च न जानामीति प्रत्यक्षस्य प्रतिकूलतर्कपराहतिरुक्ता। अत्र केचिदाहुः— सुप्तोत्थितस्य न किंचिदवेदिषमिति परामर्शान्यथाऽनुपपत्तिः भावरूपाज्ञाने प्रमाणम्। कथमन्यथाऽनुपपत्तिः? इत्थम्। न किंचिदवेदिषमिति परामर्शो न ज्ञानाभावविषयः स्वापे ज्ञानाभावस्याननुभूतत्वात् ज्ञानाभावानुभवेहि प्रतियोगिभूतज्ञानस्य विषयावच्छिन्नस्यावभासोऽभ्युपगन्तव्यः तदभ्युपगमे सुषुप्तिव्याघातः। नचास्मरणलिङ्गजन्यं ज्ञानाभावविषयमनुमितिरूपज्ञानमिति वाच्यम्; अस्मरणस्याननुभवव्याप्यत्वाभावात् पथि गच्छता स्पृष्टंहि तृणादिकं न स्मर्यते। अतस्सुषुप्तावनुभूतं भावरूपमज्ञानं स्मर्यते न किंचिदवेदिषमिति। अतस्तदन्यथाऽनुपपत्त्या भावरूपाज्ञानसिद्धिरिति, नैतदुपपद्यते भावरूपत्वेऽप्यज्ञानस्य प्रतियोग्यपेक्षत्वोपपादनात् प्रतियोगिनश्च सुषुप्तावनवभासात्। अज्ञानानुभवाभावेन तत्स्मरणानुपपत्तेः। प्रतियोग्यवभासे सुषुप्तिव्याघातस्त्वयैवोक्तः। नच तदन्यवाचिनञर्थप्रतियोगिस्वरूपभूतं ज्ञानं तदानीमवभातमिति वाच्यम्

## गूढार्थसंग्रहः

तापादौ देहसम्बन्धानिबन्धनत्वेन देहस्य कर्ममूलत्वेन तत्र दोषबुद्धिरेव नोदेति। मुमुक्षोस्तु कर्मनिवृत्तीच्छोः तत्र दोषत्वबुद्धिः वर्तत एव इति तत्र कस्यापि दोषताबुद्धिः नास्तीति नैव वक्तुं शक्यते। अविद्यायाः दोषत्वेन तन्मूलकाहङ्कारादिसर्वसृष्टिवादिनां मते दोषस्यापरमार्थत्वेन शुद्धरूपे वस्तुनि दोषासम्भवस्य भट्टपादैः स्पष्टमुक्तया अविद्यायाः नैसर्गिकत्वे 'स्वाभाविकीमविद्यां च नोच्छेत्तुं कश्चिदर्हति' (सम्बन्धाक्षेपपरिहारः.८५) इति भट्टपादोक्तदूषणोद्धारासम्भवेन च 'यस्य च दुष्टं करणम्' इति शाबरभाष्यं परेषां प्रतिकूलमेव भवति। इति **अपरमार्थेत्यनेन** बोधितम्॥

**निरधिष्ठानभ्रमासम्भवोऽपि दुरुपपादइति**। दोषापारमार्थ्यवादिना माध्यमिकेन अधिष्ठानापारमार्थ्येऽपि भ्रमः अङ्गीकृत एव। येचाधिष्ठानापारमार्थ्ये भ्रमं नेच्छन्ति प्रत्यक्षादितात्विकप्रमाण्यवादिनः ते दोषस्य मिथ्यात्वेऽपि भ्रमं नाभ्युपगच्छान्ति। अतः दोषस्यापारमार्थ्येऽपि अधिष्ठानस्य पारमार्थ्ये एव भ्रमः इत्युक्तिस्तु अभिनिवेशमूलैव। अधिष्ठानस्वप्रकाशानभ्युगमेऽपि जगदान्ध्यादिदोषाः न सम्भवन्तीति पूर्वमेव निरूपितम्॥

श्रीभाष्यम्

**सर्वशून्यत्वमेव स्यात् ।**

श्रुतप्रकाशिका

न किंचिदवेदिषं मामन्यं च न जानामि इति विषयावच्छिन्नज्ञानस्य प्रतियोगित्वावगमात् अतश्च तदनवभासे अज्ञानानुभवायोगात् तत्स्मरणानुपपत्तिः ॥

किंच सुषुप्तौ निर्विकल्पकेन वा सविकल्पकेन मनोव्यापारेण वा भावरूपाज्ञानानुभवः । प्रथमे स्वाभिमतनिर्विकल्पकस्य साक्षिचैतन्यावभासरूपस्य संस्काराधायकत्वानभ्युपगमात् प्रतिसंधानमनुपपन्नम् । न द्वितीयः सुषुप्तिविरोधेन तदा मनोव्यापारासम्भवात् । अतो न किंचिदवेदिषमिति ज्ञानं न स्मरणं किंन्त्वस्मरणलिङ्गकं ज्ञानाभावविषयमनुमितिरूपम् । नच पथि गच्छता स्पृष्टतृणाद्यस्मरणेन व्यभिचारः अन्यव्यासङ्गादिसंस्कारविरोध्यभावविशेषितस्यास्मरणस्य व्यभिचाराभावात् ।

तदन्यधीरतात्पर्यं पटुत्वविरहो धियः । दुःखादितीव्रमुन्मादोऽनभ्यासो दीर्घकालता ॥
एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु । एतेष्वसत्स्वस्मरणात् ज्ञानाभावोऽनुमीयते ॥

पथि गच्छता स्पृष्टतृणादिकं पटुतरसंस्कारोदयविरोधिसद्भावान्न स्मर्यते पथि गच्छन् हि गन्तव्यदेशकार्यचिन्तादिव्यासक्तो भवति । तृणादावादरश्च नास्ति प्रयोजनाभावात् । तदभावेऽपि गजादिदर्शनस्येव न पटुतरत्वं तृणादिज्ञानस्य विषयवैपुल्यवैचित्र्याद्यभावात् । जन्मान्तरानुभवजसंस्कारस्तु प्रायणनरकप्रसूतिजन्यतीव्रदुःखाभिभवादनुद्बुद्धः उन्मादश्च संस्कारोद्बोधविरोधी, अनभ्यासश्च तथा तस्य विस्मरणहेतुत्वदर्शनात् । कालदैर्घ्यमपि तत्प्रमोषकं दृष्टम् बाल्येऽनुभूतानां वृद्धावस्थायामस्मरणात् । नचैते हेतवस्सुषुप्तौ सन्ति । नच किमप्यदृष्टं संस्कारोद्बोधविरोधि कल्प्यम् । कल्पकाभावेन सौषुप्तिकज्ञानस्य तद्विषयार्थस्मरणविरोध्यदृष्टस्य च कल्पनायोगात् । यदि किंचित्कल्पकतयोत्प्रेक्ष्येत तदाप्यक्लृप्तया निर्वाहे सम्भवति न कल्पनमुपपद्यते एवमन्यपरत्वादिसंस्कारनिरोधकहेतुविरहविशेषितास्मरणलिङ्गेन ज्ञानाभावानुमितिरूपमिदं न किंचिदवेदिषमिति ज्ञानं, त्वयाऽपि ज्ञानाभावस्सुषुप्तावभ्युपगतः सचोक्तलिङ्गानुमेयएवेत्यभ्युपगन्तव्यम् । तदस्माकमपि तुल्यम् । अतः स्मृतित्वानुपपत्तेरनुमितिरूपत्वोपपादनाच्च न किंचिदवेदिषमिति ज्ञानमन्यथैवोपपन्नमिति न ततो भावरूपाज्ञानसिद्धिरिति । ईदृशदुर्वादानामनुपपन्नत्वं भावरूपाज्ञानविषयप्रत्यक्षप्रतिक्षेपतस्सिद्धम् ॥

गूढार्थसंग्रहः

**सर्वशून्यत्वमेव स्यादिति ।** अयमाशयः अविद्यायां भावरूपायां 'अहमज्ञो मामन्यं च न जानामि एतावन्तं कालं न किंचिदहमवेदिषम्, सुखमहमस्वाप्सम् त्वदुक्तमर्थं न जानामि' इत्यादि प्रत्यक्षं प्रमाणं यत् परैरुपन्यस्तं तत्सर्वमहमर्थविषयकमेव । सुषुप्तौ 'सच समुत्खातनिखिलपरिणामायमाविद्यायां कुतस्त्यः' (पं.पा) इति अहमर्थस्य अविद्यापरिणामत्वं सिद्धवत्कृत्य सुषुप्तौ माध्यमिकव्यतिरिक्तस्य कस्यापि दार्शनिकस्य असम्मतमहमर्थस्य लयं कल्पयित्वा 'पूर्वसिद्धतमसोहि पश्चिमो नाश्रयो भवति' (सं.शा) इति युक्त्या शुद्धचिदैक्याध्यासेनाहमर्थविषयकत्वं सम्भवतीत्युपपादनमेव निर्मूलम् । अहमर्थस्य सुषुप्तौ लयस्य माध्यमिकव्यतिरिक्तेन केनापि दार्शनिकेन अनङ्गीकारात् । अहमर्थस्य सुषुप्तौ लये 'पूर्वस्मिन्दिने योऽहमिमं घटादिकमपश्यं, सोऽहमिदानीं पश्यामि' इत्यहमर्थैक्यावगाहि प्रत्यभिज्ञा लूनपुनर्जातकेशाङ्कुरादिप्रत्यभिज्ञावत् अमुख्यार्थैव स्यात् घटादिविषयैक्यवत् अहमर्थैक्यं सर्वानुभवसिद्धम् । अतः माध्यमिक एव

### श्रीभाष्यम्

**यदुक्तमनुमानेनापि भावरूपमज्ञानं सिद्ध्यतीति, तदयुक्तम् ; अनुमानासम्भवात् । ननूक्त-मनुमानम् , सत्यमुक्तं दुरुक्तं तु तत् । अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन**

### श्रुतप्रकाशिका

अथानुमानं दूषयति । **यदुक्तमित्यादिना । अनुमानासम्भवादिति ।** त्वदुक्तमनुमानमाभास इति भावः । कथं दुरुक्तत्वमित्यत्राह— **अज्ञानेऽपीति** कथमज्ञानान्तरसाधनमवश्यंभावि तस्य कथमनभिमतत्वमित्याशङ्कायां तदवश्यं-

### गूढार्थसंग्रहः

सुषुप्तावहमर्थनाशमभ्युपैतीति स एव सखा परेषाम् । खण्डनोपक्रमे 'सर्वथा सदुपायानां वादमार्गः प्रवर्तते ।' इति भट्टपादमतं दूषयितुमुपक्रम्य कार्यकारणभावस्यातात्त्विकत्वं माध्यमिकसम्मतं स्थापयित्वा माध्यमिक एव सुहृत्त्वेन खण्डनकृता अभ्युपगतः । माध्यमिकैरपि 'द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मचोदना । लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥' (माध्यमिकवृत्तिः) 'संवृतिःपरमार्थश्च सत्यद्वयमिदं स्मृतम् । (बो.अ) संवृतिः, अविद्या, मोहः, विपर्यासः' इति पर्यायाः । अविद्याहि असत्यपदार्थस्वरूपारोपिका स्वभावदर्शनावरणात्मिका च सती संवृतिरुपपद्यते । परमार्थतोऽवाच्यमपि परमार्थतत्वं दृष्टान्तद्वारेण संवृतिमुपादाय कथञ्चित्कथितम् । तस्मात् व्यवहारेऽसत्य एव स्थित्वा परमार्थोदेश्यते ।' इत्यादिकं बोधिचर्यावतारपञ्चिकादावुक्तम् । तद्रीतिमनुसृत्यैव परैरपि उपनिषदर्थ निर्णयः क्रियते । 'नैतद्बुद्धेन भाषितम्' इति गौडपादोक्तमेव स्वप्रकाशचिन्मात्रवैलक्षण्यं परमते स्वप्रकाशस्य प्रागुक्तयुक्त्या अनभ्युपगमेऽप्युपपत्तौ सर्वशून्यत्व एव पर्यवसानं स्यात् ॥

किंच सुषुप्तौ अविद्यापरिणामसामान्यविगमे उछ्वासादिदर्शनानुपपत्तिमाशङ्क्य दृष्टिसृष्टिपक्षावलम्बनेन अविद्यापरिणामसामान्यशून्यत्वं विवरणे साधितम् । दृष्टिसृष्टिपक्षे एव एकजीववादः स एव मुख्यवेदान्तपक्षः, अन्यस्तु मन्दाधिकारिविषय इति सिद्धान्तबिन्दौ (अ.सि) दृष्टिसृष्ट्युपपत्तौ च मधुसूदनसरस्वतीभिरुक्तम् । एतत्पक्षे स्वर्गाद्यर्थे वैदिककर्मसु प्रवृत्तिः स्वप्ने पुरुषप्रवृत्तिवत् इति तत्रैवोक्तम् । दृष्टिसृष्टिपक्षे पदार्थसामान्यस्यापि प्रातीतिकत्वेन व्यावहारिकपदार्थाभावेन प्रत्यक्षादीनां व्यावहारिकप्रामाण्येनाप्युपपत्तिर्न सम्भवतीति स्वप्रकाशतयैव निर्विशेषस्य सिद्धिर्वक्तव्या । स्वप्रकाशवस्तुनः अभावेऽप्युपपत्तौ वेदान्तवाक्यव्यवहारस्य स्वाप्निकव्यवहारतुल्यत्वेऽपि महावाक्यस्य विषयाबाधेन वैलक्षण्यमपि न वक्तुं शक्यते, एवं दोषामूलकत्वेनापि । अविद्यारूपदोषमूलकत्वस्य सर्वत्राविशिष्टत्वात् । एवं च पूर्वकाण्डोक्तकर्मसु पुरुषप्रवृत्तिवत् वेदान्तवाक्यविचारादौ प्रवृत्तिरपि स्वप्नप्रवृत्तितुल्यशीलैव । 'अहमेवेदं सर्वोऽस्मि' (बृ.६.३.२०) इति स्वप्नप्रकरणस्थश्रुत्युक्तदिशा 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इति श्रुत्युक्तप्रकारोऽपि पर्यवस्यति । अतश्चशब्दाप्रामाण्यवादिमाध्यमिकमते इव परमतेऽपि 'तंत्वौपनिषदं पुरुषम्' 'विज्ञानमानन्दं ब्रह्म, रातिर्दातुःपरायणम्, तिष्ठमानस्य तद्विदः, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादयस्सर्वा अपि श्रुतयः पीडिताः स्युः । एवं च 'तत्त्वमसी' त्याद्यैक्योपदेशवैयर्थ्यपरिहाराय जीवस्य ब्रह्मस्वरूपानवभासमूलत्वेन आवरणाद्यर्थं अविद्यासाधनप्रयासः पञ्चपादिकाकृतां विफलएवेति ॥

**अनुमानासम्भवादिति ।** अज्ञानप्रत्यक्षस्य भावरूपाज्ञानाङ्गीकारे उपपत्त्यसम्भवएवानुकूलतर्कः, इति परोक्तप्रयोगस्य पूर्वमुपपादनेन उत्तरत्र प्रतिकूलतर्ककथनात् प्रतिपक्षानुमानैः सत्प्रतिपक्षतायाः उपपादयिष्यमाणत्वाच्चेति भावः ॥

### श्रीभाष्यम्

**विरुद्धत्वाद्धेतोः । तत्राज्ञानान्तरासाधनेन * हेतोरनैकान्त्यम् । साधने च तदज्ञानमज्ञान-साक्षित्वं निवारयति । ततश्चाज्ञानकल्पना निष्फला स्यात् ,**

### श्रुतप्रकाशिका

भावमुपपादयति । **तत्रेति** । अज्ञानस्यानभिमतत्वमुपपादयति । **साधनेचेति** । ततःकिमित्यत्राह—**ततश्चेति** । अस्य प्रमाणज्ञानस्याप्रकाशितार्थप्रकाशकत्वात् स्वविषयावरणाज्ञानान्तरसाधकत्वेसति तदज्ञानं ब्रह्मस्वरूपाच्छादकं सिषाधयिषितमज्ञानमावृणोति तेनावृतत्वात्तदज्ञानं ब्रह्मणा न साक्षात्क्रियते अपरमार्थस्याप्रतीयमानस्य कार्यकरत्वायोगात् अज्ञानकल्पना निष्फला तिरोधानरूपकार्यार्थंहि तत्कल्पना । यद्यसाक्षात्कृतमेव कार्यकरं तदा सत्तया कार्यकरमिति काचादिवत्सत्त्वात् ज्ञाननिवर्त्यं न स्यात् । एवमज्ञानस्य ज्ञानानिवर्त्यत्व, निष्फलत्वे, कारणतयाऽनभिमताज्ञानान्तरसाधकत्वम् । तद साधनेचैवानैकान्त्यमुक्तम् ॥

**ननूक्तहेतुजन्यज्ञानं सम्यङ्निश्चयरूपंचेत् * तद्विरोधादेव न हेतोरनैकान्त्यम्** । यदि न सम्यक् तथाऽपि न हेत्वनैकान्त्यं अप्रकाशितार्थप्रकाशकत्वहेतो*स्तत्र वृत्त्यभावात् । उच्यते—हेत्वनैकान्त्यपरिहारस्साध्यविषयज्ञानस्य प्रमितिरूपत्वं प्रतिक्षिपति, ज्ञानसम्यक्त्वंतु हेत्वनैकान्त्यपरिहारं प्रतिक्षिपति । अतो ज्ञानस्य सम्यक्त्वे तस्योक्तहेतुजन्यत्वं व्याहतम् , हेतोरनैकान्त्यात् , नहि सम्यज्ज्ञानं दुष्टहेतुजन्यम् । उक्तहेतोरनैकान्त्यं नचेत् तस्यासम्यङ्निश्चयरूपज्ञानजनकत्वं व्याहतम् , अदुष्टहेतोरसम्यज्ज्ञानजनकत्वायोगात् । एवं हेत्वनैकान्त्यपरिहारज्ञानसौष्ठवयोः परस्परविरोधेन तयोरिह समुचित्यासिद्धे*रन्यतराभावेऽपि साध्यसिद्ध्यभावादनुमानमसमञ्जसमित्यभिप्राय इति ॥

### गूढार्थसंग्रहः

**विरुद्धत्वाद्धेतोरिति** । स्वानभीप्सितार्थसाधकत्वादित्यर्थः । यद्यपि प्रमायाः स्वविषयावरणभावपूर्वकत्वं गृह्णन्त्याः एतस्या अनुमितेः भावत्वाद्यज्ञाननाशकत्वेन साध्यसाधनोभयाधिकरणत्वमद्वैतसिद्धिचन्द्रिकयोरुक्तम् । तथाऽपि एतदनुमितिनाश्यभावत्वाद्यज्ञानं एतदनुमानेन साधनीयाज्ञानापेक्षया अतिरिक्तमेव वाच्यम् ; अन्यथा स्वविषयावरणाद्ययोगात् ॥

प्राक् उदाहृतपञ्चपादिकाविवरणपर्यालोचनायां मूलाविद्यासाधकत्वमेवास्यानुमानस्य वाच्यम् ; मूलाविद्याऽऽवारकमज्ञानान्तरं नास्त्येव । स्वरूपतः अज्ञानस्य साक्षिभास्यत्वेऽपि तद्गतभावत्वादेः एतदनुमितिगतस्वविषयावरणपूर्वकत्वादेश्च साक्षिभास्यत्वाभावेन तदावारकाज्ञानान्तरकल्पने न दोष इतिचेत्—एवमपि उभयोरज्ञानयोः केन भानम्? साक्षिणैवेतिचेत् अज्ञानपरम्पराकल्पनया अनवस्था स्यात् । **अनैकान्त्यमिति** । इदं बाधस्याप्युपलक्षणम् । **साधने च तदज्ञानमज्ञानसाक्षित्वं निवारयतीति** । अविद्यावृत्तिप्रतिबिंबितचिता अविद्यायाः भानं, अविद्याविषयकाज्ञानान्तरसत्तादशायां तु न भानम् इति अज्ञाने साक्षिप्रत्यक्षासम्भव इत्यर्थः ॥ यद्वा अज्ञानान्तरसाधनेन बाधस्यानैकान्त्यस्य परिहारेऽपि भावत्वविशिष्टाज्ञानस्य एतदनुमानेनैव सिद्धेः अज्ञानस्य साक्षिप्रत्यक्षेण सिद्धिरित्युक्तिरपि न घटते । अनुमितिमन्तरा साक्षिप्रत्यक्षेण भावरूपाज्ञानसिद्धिसम्भव एव साक्षिप्रत्यक्षस्य तत्र प्रमाणता सम्भवति नत्वन्यथेत्यर्थः ॥

**ततश्चाज्ञानकल्पना निष्फला स्यादिति** । अज्ञानविषयकाज्ञानान्तरसत्त्वे मूलाविद्यया ब्रह्मणः आवरणासम्भवेन जीवस्य ब्रह्मस्वरूपताऽनवभासार्थं ब्रह्मस्वरूपावरणोपपत्तये अज्ञानकल्पना निष्फलेत्यर्थः ॥

## श्रीभाष्यम्

**दृष्टान्तश्च साधनविकलः दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात्। सर्वत्र ज्ञानस्यैवहि प्रकाशकत्वं * सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात्। * इन्द्रियाणामपि ज्ञनोत्पत्तिहेतुत्वमेव न प्रकाशकत्वम्। प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव। प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः। नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता। अपितु ज्ञानस्यैव स्वविषयावरणनिरसनपूर्वकप्रकाशकत्वमङ्गीकृत्येति चेत् न। नहि विरोधिनिरसनमात्रं प्रकाशकत्वं अपित्वर्थपरिच्छेदः व्यवहारयोग्यतापादनमिति यावत् तत्तु ज्ञानस्यैव। यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशक-**

## श्रुतप्रकाशिका

**ननु** न हेत्वनैकान्त्यं साध्यविषयज्ञाने हेतोरवृत्तेः नह्यप्रकाशितमज्ञानमनेन प्रकाश्यते किं तर्हि साक्षिचैतन्यसिद्धस्यैवाज्ञानस्या*भावाद्विवेचनमात्रं क्रियते, नैवम्। * अहमर्थधर्मभूतप्रकाशोत्तीर्णेन स्वरूपचैतन्येन * अज्ञानसिद्धावनुमानप्रामाण्यं तत्प्रामाण्येन * भावरूपाज्ञानसिद्धिः तात्सिद्धौ * ज्ञातुरापि तत्कल्पितत्वा*त्तदुत्तीर्णसाक्षिचैतन्येन अज्ञानानुभवसिद्धिरिति चक्रकापत्तेर्दुस्तरत्वात्। दूषणान्तरमाह—**दृष्टान्तश्चेत्यादिना**। तत्र किं साक्षात्प्रकाशकत्वं ? उत परम्परया उत साक्षाद्वा परम्परया वा प्रकाशकत्वमात्रं उत स्वविषयावरणनिरासकत्वं प्रकाशकत्वमिति चत्वारः कल्पाः। तत्र प्रथमे कल्पे दृष्टान्तस्साधनविकलः। द्वितीयेतु पक्षे आसिद्धिः। तृतीये त्विन्द्रियेष्वनैकान्त्यम्। तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्। साक्षाद्वा परम्परया वा प्रकाशकयोरन्यतरत्वात्तेषामिन्द्रियाण्यपि पक्षीकृत्य तेषामपि तथाविधवस्त्वन्तरपूर्वकस्वकल्पनमयुक्तम्। आहङ्कारिकाणामिन्द्रियाणामुत्पत्तेः स्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकत्वाभावात्। आलोक एवहि तादृशः। चतुर्थपक्षेतु साध्याविशिष्टतेत्यभिप्रेत्य प्रथमे कल्पे दूषणमाह—**दृष्टान्तश्च साधनविकलइति**। कथं ज्ञानस्यैव साक्षात्प्रकाशकत्वमिति शङ्कायां तदुपपादयति। **सत्यपीति**। ज्ञानस्यैव प्रकाशकत्वमित्यनेन द्वितीयकल्पे हेतोः पक्षे * आसिद्धिः फलिता। * इन्द्रियाणामित्यनेन तृतीयपक्षे इन्द्रियेष्वनैकान्त्यं विवक्षितम्। दीपप्रभायाः परम्परयाऽपि प्रकाशकत्वं दूरत इत्याह—**प्रदीपेति**। प्रकाशकत्वव्यवहारः कथमित्यत्राह—**प्रकाशकेति**। चतुर्थपक्षं शङ्कते **नास्माभिरिति। निरसनपूर्वकेति**। निरसनद्वारकेत्यर्थः। साध्याविशिष्टत्वमाह—**नहीति**। ज्ञानस्य विषयावरणनिरसनपूर्वकं प्रकाशकत्वं नह्यस्ति, ताद्धि साध्यं न संप्रतिपन्नमित्यर्थः। * मात्रचाऽर्थपरिच्छेदव्युदासः। हिशब्देन विषयावरणनिरासकत्वस्य साध्यत्वं फलितम्। तत्र संप्रतिपन्नप्रकाशकत्वमाह—**अपित्विति**। परिच्छेदशब्दस्य परिमितिपरत्वशङ्काव्यावृत्त्यर्थमाह—**व्यवहारेति**। व्यवहारयोग्यता व्यवहारप्रतिसंबन्धित्वम्,

## गूढार्थसंग्रहः

**अपित्वर्थपरिच्छेदइति**। 'अर्थप्रकाशो ज्ञप्तिस्संवेदनम्' इति विवरणोक्तेः। (अ सि.ज्ञानत्वाद्युपपत्तौ) अर्थप्रकाशत्वं ज्ञानत्वमित्येवाभिधानात्। अप्रकाशितत्वं च न प्रकाशत इति व्यवहारगोचरत्वम्। तच्च स्वप्रकाशचैतन्येऽप्यस्तीति' इत्यद्वैतसिद्धिविवरणे 'न प्रकाशत इति व्यवहारः प्रकाशविरोध्याश्रयविषयकः तादृशाश्रयत्वं च यद्यपि तमोऽज्ञानयुक्ततयाऽऽलोकज्ञानयोः तथाऽपि तदवच्छेदकत्वाद्घटादावपि न प्रकाशतइति व्यवहार इति भावः।' इत्यत्र अप्रकाशितत्वं

## श्रीभाष्यम्

**त्वमङ्गीकृतम्। तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्,तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावाद्धेतोरनैकान्त्यमित्यलमनेन। प्रतिप्रयोगाश्च**

## श्रुतप्रकाशिका

**ननु** न साध्याविशिष्टत्वं हेतोः स्वप्रागभावनिरासकत्वं स्वविषयावरणनिरसनशब्देन विवक्षितम्। तेन भावरूपनिरसनीयपूर्वकत्वं साध्यमिति, न स्वप्रागभावनिरासकत्वस्य हेतोरिन्द्रियसंयोगे अनैकान्तिकत्वात्। भासमानत्वेसति अप्रकाशितार्थप्रकाशकत्वादिति हेतौ विशेषितेऽपि पूर्ववद्विकल्पस्स्यात्। तत्र साक्षात्पक्षे दृष्टान्तस्साधनविकलः प्रणाड्येति पक्षे हेत्वसिद्धिः, तृतीये लिङ्गादौ व्यभिचारः, चतुर्थे साध्याविशिष्टता भासमानत्वाविशेषितस्य विषयावरणनिरासकत्वस्याप्रतिपत्तेः। अथास्यानुमानस्य प्रतिकूलतर्कपराहतिमाह--**प्रतिप्रयोगाश्चेति**। * तर्कस्यापि व्याप्तिमूलत्वात् प्रयोगासंप्रतिपत्तेः।

## गूढार्थसङ्ग्रहः

घटादेः न मुख्यमिति स्पष्टम्। 'अप्रकाशितार्थगोचरेति विशेषणात् व्यभिचारव्युदासः' (अ.सि) इत्येतद्विवरणे 'अप्रकाशितार्थगोचरत्वं अप्रकाशितार्थे प्रकाशत इति व्यवहारस्य प्रयोजकत्वम्। तच्चाज्ञाननाशद्वारा ज्ञाने तमोनाशाधीनचाक्षुषद्वाराऽऽलोके च बोध्यम्। तेनालोकस्य विषयरूपगोचराप्रसिध्या न साधनवैकल्यम्' इत्यत्र (गु.चं) दृष्टान्ते चाक्षुषस्यैव प्रकाशकत्वं दार्ष्टान्तिके ज्ञानस्यैवेति निर्णयेन परम्परयोपयोगित्वेनैवालोकस्य प्रकाशकत्वमुक्तम्॥

एतेन दृष्टान्ते दार्ष्टान्तिके च ज्ञानस्यैव प्रकाशकत्वं परैरप्यङ्गीकृतं भवति। एवं 'अथोभयोरेव साक्षादप्रकाशविरोधित्वसम्भवात् नेन्द्रियसन्निकर्षादौ व्यभिचारः' इत्यद्वैतसिद्धौ साक्षादप्रकाशविरोधित्वमुभयोरुक्त्वा, एवंचाप्रकाशितार्थगोचरत्वेसति प्रकाशशब्दवाच्यत्वात्, अप्रकाशविरोधित्वादिति वा हेतुः पर्यवसितः।' इत्युक्तिविवरणे 'वाच्यत्वात्–अनादिसङ्केतविषयत्वात् उक्तगोचरत्वस्याधुनिकप्रकाशपदसङ्केतविषयत्वस्य च सन्निकर्षादौ व्यभिचारित्वेनोक्तवाच्यत्वमेवोपसंहृतम्॥ प्रकाशत्वादिति। यद्यपि विरोधित्वान्त एव हेतुः, तथाऽपि विरोधित्वं नाशकताऽवच्छेदकरूपम्; तच्च प्रमात्वमालोकत्वं चोक्तावच्छेदकत्वेनानुगतं हेतुः। ज्ञानत्वमालोकत्वं च प्रकाशपदवाच्यताऽवच्छेदकत्वेनाद्य हेतौ प्रविष्टमिति ज्ञापयितुं प्रकाशत्वादित्युक्तम्। तावता च पक्षीभूतप्रमादृष्टान्तीभूतालोकयोरन्यतरत्वं वा हेतुरित्यपि सूचितम्' इत्यत्रापि प्रकाशत्वं ज्ञानसमशीलं नालोके उपपादितम्; अपितु गौणमेव। अतः तम आलोकयोः भावाभावरूपत्वेनैव विरोधवत् ज्ञानाज्ञानयोः भावाभावरूपत्वेनैव विरोधः इति नैयायिकमते तमसः द्रव्यत्वपक्षेऽपि तम आलोकयोरेव विरोधः। तत्तुल्यतैव ज्ञानाज्ञानयोः प्रकाशकत्वंतु ज्ञानस्यैवेति इति अप्रकाशितार्थप्रकाशकत्वरूपहेतुना उक्तसाध्यसाधनं न सम्भवति। प्रमाऽऽलोकान्यतरत्वस्य हेतुत्वे अप्रयोजकत्वमेव। न प्रकाशते इति व्यवहारस्य ब्रह्मतदितरघटादिसाधारण्ये ब्रह्मण्येव भावरूपमज्ञानं तदवच्छेदकत्वमेव विषयादेः। नास्ति न प्रकाशत इति व्यवहारस्य ब्रह्मतदितरसाधारण्येऽपि जडे आवरणकृत्यं नास्ति ब्रह्मण्येवावरणकृत्यमित्यादिकल्पना अज्ञानसिद्ध्यनन्तरकाल एव। अनुमानेनाज्ञानसाधनदशायां प्रागुक्तमर्थं सिद्धवत्कृत्य साधनं कथम्? प्रागुक्तसाक्षिप्रत्यक्षस्य ज्ञानप्रागभावविषयकत्वे अनुपपत्तिरेवात्र अनुकूलतर्कः इत्युक्तिरपि न घटते। व्यस्तनञ्पदास्मच्छब्दोभयघटितशब्दाभिलप्यत्वात् अस्मच्छब्देनाहमर्थस्यैवाश्रयत्वं नञाचाभावस्यैव विषयत्वं स्फुटं प्रतीयते। तत्र प्रागभावस्थले एव विशेषपरिकल्पनेनोपपत्तौ भावरूपाज्ञानकल्पनस्य कोऽवसरः। तम आलोकादिदृष्टान्तेऽपि तमसो द्रव्यत्ववादिभिरपि आलोको नास्ति 'इहेदानीमालोको भविष्यति' इत्यादि

### श्रीभाष्यम्

**विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम् अज्ञानत्वात् शुक्तिकाद्यज्ञानवत्, ज्ञात्राश्रयं हि तत्। विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मावरणं अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्, विषयावरणं हि तत् विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यं ज्ञानविषयानावरणत्वात् यत्**

### श्रुतप्रकाशिका

इत्युक्तम्, स्वदेशगत्व स्वविषयावरणत्व स्वनिवर्त्यत्वानां प्रतिकूलं * यथाक्रममनुमानत्रयं अज्ञानं पक्षीकृत्योच्यते। विवादाध्यासितं ब्रह्माश्रयमतदाश्रयमिति विवादाध्यासितमित्यर्थः। ततश्च शुक्त्याद्यज्ञानव्यावृत्तिः, तद्धि जीवाश्रयम्। अप्रामाणिकमपि भावरूपमज्ञानं ज्ञानमात्रं ब्रह्मचाभ्युपगम्य प्रतिकूलतर्का उच्यन्ते। शुक्त्याद्यज्ञानस्य ज्ञानाश्रयत्वं कथमित्यत्राह—**ज्ञानाश्रयमिति**। एवं व्याप्तिर्दर्शिता अज्ञानत्वे ज्ञानाश्रयत्वप्रसङ्ग इत्युक्तं भवति। प्रतिकूलतर्कान्तरमाह—**विवादेति**। व्याप्तिं दर्शयति। **विषयावरणमिति**। अज्ञानत्वे ज्ञानानावरणत्वप्रसङ्ग इत्यर्थः। तृतीयेऽपि प्रयोगे ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्वप्रसङ्ग इत्यर्थः॥

### गूढार्थसंग्रहः

प्रतीतौ आलोकाभाव एव विषय इत्यङ्गीक्रियते, परैरपि तत्र न विवादः कर्तुं शक्यते। एवंस्थिते दृष्टान्तसमशीलतया दार्ष्टान्तिकप्रयोगेषु कस्याप्यसम्मतस्य साधकान्तररहितस्य भावरूपाज्ञानस्य कल्पना, तस्य ब्रह्मणि स्थितिः आवरणंचेत्यादिकल्पनया 'तत्त्वमसि' इत्यादौ अप्रामाणिकनिर्विशेषचिद्बोधार्थे इदानीं जीवब्रह्मैक्यानवभासः इत्यादिकल्पना सर्वोऽपि न प्रमाणपदवीमनुसरतीति भावः॥

**ज्ञात्राश्रयंहि तदिति**। अहमर्थाश्रितमित्यर्थः। 'एतावन्तं कालं न किंचिदहमजानन् इदानीं घटादिकं जानामि' इत्यादिप्रतीतिषु अहमर्थे एव अज्ञानं, अहमर्थे एव ज्ञानं च भासत इति स्फुटम्। तत्र परमते अजानन्नित्यत्राज्ञानं शुद्धचैतन्यैक्याध्यासेनाहमर्थे भासते। 'जानामि' इत्यत्र ज्ञानंतु 'अध्यासपरिनिष्पन्नान्तःकरणसंपिण्डितस्यात्मनः ज्ञानाकारपरिणामात्' इति विवरणोक्त्या अन्तःकरणसंपिण्डितात्मगतमिति 'अहं जानामि' इत्यत्र वैलक्षण्यम्। अज्ञानं तु शुद्धचिद्गतमेव उपहिते ऐक्याध्यासेन भासते इति प्रतीतिस्वारस्यं नास्तीति व्यक्तम्। शुक्तिकाद्यज्ञानं अवस्था(तूला)-ज्ञानमेव मूलाविद्यारूपत्वे बाधस्यासम्भवात् बाधमन्तरा शुक्तिरजतनिवृत्तिमात्राङ्गीकारे एतद्दृष्टान्तेन प्रपञ्चस्य बाधितत्वकल्पनायोगात्। अवस्थाज्ञानं च शुक्त्यवच्छिन्नचैतन्यगतं, नतु शुद्धचैतन्यगतम्। अतः शुक्त्यज्ञानवत् विवादाध्यासिताज्ञानमपि न निर्विशेषचिद्गतमिति भावः॥

**विषयावरणंहि तदिति**। विवरणोक्ताज्ञानसाधकानुमाने प्रभादृष्टान्ते तमसः ज्ञानविषयावरणत्वमेव, शुक्तिकाद्यज्ञानमपि शुक्त्यावरणमित्येवोक्तदृष्टान्तानुसारेणाङ्गीकर्तव्यम्। एवं च स्वप्रकाशनिर्विशेषचितः वृत्तिविषयत्वेऽपि ज्ञानाविषयत्वेन तदावरणत्वमज्ञानस्य न सम्भवतीति भावः। एतेन जडे आवरणकृत्याभावात् नावरणं प्रकाशकसामग्र्यभावादेवाप्रकाशोपपत्तेः स्वप्रकाशेतु सर्वदा प्रकाशमानत्वेन अप्रकाशानुपपत्त्या आवरणं कल्पनीयमित्युक्तिः न घटते। सच्चिदानन्दरूपब्रह्मणः स्वप्रकाशत्वे निरवयवत्वेन निर्धर्मकत्वात् अवयवधर्मभेदेन प्रकाशाप्रकाशयोरुपपत्त्ययोगेन आवरणस्यैवासम्भवात्। पूर्णानन्दो न प्रकाशत इत्यादिप्रतीत्या आवरणं सम्भवतीत्यपि न घटते, पूर्णत्वरूपधर्मस्य शुद्धचित्यभावात्। अनवच्छिन्नत्वरूपत्वाङ्गीकारेऽपि अभावरूपस्यापि शुद्धचित्यनङ्गीकारेण आवरणायोगात्। नास्ति, न प्रकाशत इ

## श्रीभाष्यम्

**ज्ञाननिवर्त्यमज्ञानं तत् ज्ञानविषयावरणं यथा शुक्तिकाद्यज्ञानम् । ब्रह्म नाज्ञानास्पदं ज्ञातृत्वविरहात् घटादिवत् । ब्रह्म नाज्ञानावरणं ज्ञानाविषयत्वात् यदज्ञानावरणं तज्ज्ञानविषयभूतं यथा शुक्तिकादि । ब्रह्म न ज्ञाननिवर्त्याज्ञानं ज्ञानाविषयत्वात् यज्ज्ञाननिवर्त्याज्ञानं तज्ज्ञानविषयभूतं यथा शुक्तिकादि । विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति प्रमाणज्ञानत्वात् भवदभिमताज्ञानसाधनप्रमाणज्ञानवत् । ज्ञानं न वस्तुनो विनाशकं शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात् यद्वस्तुनो विनाशकं तच्छक्तिविशेषोपबृंहितं ज्ञान,मज्ञानं च दृष्टम् । यथेश्वरयोगिप्रभृतिज्ञानं यथा च मुद्गरादि । भावरूपमज्ञानं**

## श्रुतप्रकाशिका

अथ ब्रह्म पक्षीकृत्य प्रतिकूलतर्कत्रयमुच्यते । **ब्रह्मेत्यादिना** । अज्ञानाश्रयत्वे ब्रह्मणो ज्ञातृत्वप्रसङ्ग इत्यर्थः । द्वितीयेऽपि प्रयोगे ब्रह्मणोऽज्ञानावरणत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । तृतीयेऽपि ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः ॥ अथ प्रमाणज्ञानं पक्षीकृत्य प्रागभावव्यतिरिक्तत्वस्य प्रतितर्कमाह— **विवादाध्यासितमिति** । प्रमाणज्ञानत्वे प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावप्रसङ्ग इत्यर्थः ॥

यद्वा अनुमानमेवेदं धारावाहिकज्ञानेषु प्रथमस्य पक्षत्व*मुत्तरोत्तरज्ञानानां सपक्षत्वमपिह्युपपद्यते । **ज्ञानं न वस्तुनो विनाशकमित्यादिना** व्यतिरेक्यनुमानमुक्तम् । * व्यतिरेकव्याप्तिं द्विधा दर्शयति । **यद्वस्तुन इति** । शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वादिति विशिष्टोहि हेतुः । तत्र शक्तिविशेषानुपबृंहितज्ञानव्यतिरिक्तत्वाविशेषात् शक्तिविशेषोपबृंहितं ज्ञानं शक्तिविशेषानुपबृंहितमज्ञानं च द्वयमपि व्यतिरेकव्याप्तिभूमिरित्युभयत्र व्याप्तिर्दर्शिता । भावरूपमज्ञानं पक्षीकृत्याह— **भावरूपमिति** । भावरूपत्वे ज्ञानमात्रनिवर्त्यत्वं न स्यादित्यर्थः । भावरूपत्वज्ञाननिवर्त्यत्वयोर्न व्याप्तिः भयादेर्भावरूपस्य

## गूढार्थसंग्रहः

व्यवहारस्य जडेऽपि सर्वसम्मतत्वेन जडेऽप्यावरणं सम्भवति । 'ब्रह्मवित्' इत्यादिश्रुतिषु विद्यादिधातोः गौणार्थकल्पने बीजाभावेन स्वप्रकाशस्यापि ज्ञानविषयत्वेन प्रकाशकसामग्र्यभावस्योभयत्र विशेषेण ज्ञानविषय एव सर्वत्रावरणमितिसिद्धम्

**भवदभिमताज्ञानसाधनप्रमाणज्ञानवदिति** । अस्य स्वप्रागभावातिरिक्ताज्ञानपूर्वकत्वे दोषः पूर्वमेवाभिहितः । **शक्तिविशेषोपबृंहणविरहेसतिज्ञानत्वादिति** । अत्र विशेषणाभावविशेष्याभावनिबन्धनः शक्तिविशेषोपबृंहणविरहविशिष्टज्ञानत्वाभावः इत्यभिप्रेत्य शक्तिविशेषोपबृंहितं ज्ञानं इत्यादि दृष्टान्तत्रयं व्यतिरेकव्याप्तौ प्रदर्शितम् । ईश्वरे योगिप्रभृतिज्ञाने च विशेषणाभावनिबन्धनः, अज्ञाने मुद्गरादौ विशेष्याभावनिबन्धनः, इति विभागः । योगिप्रभृतिज्ञानस्य वस्तुविनाशकत्वं पुराणेषु प्रसिद्धम् । ईश्वरसङ्कल्पेन संहारः श्रुत्यादावेव प्रसिद्धः । एतेन 'तत्त्वमसि' इत्यादिवाक्यजन्यज्ञानेन प्रपञ्चस्य मूलाविद्यारूपोपादानसहितस्य नाशो बाधः इत्युक्तिरप्यनुपादेया । ईश्वरसङ्कल्पेनैव लयप्रतिपादकशास्त्रानुसारेण तद्व्यतिरिक्तज्ञानस्य प्रपञ्चबाधकत्वासम्भवात् जीवेशभेदादिर्नाविद्यकः, इति 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः,' (श्वे.१.१०) 'य ईशोऽस्य जगतो नित्यमेव नान्योहेतुर्विद्यत ईशनाय' (श्वे.६.१७) इत्यादिश्रुतिभिः तथाऽवगमादित्युत्तरत्र निरूपयिष्यते । ईश्वरज्ञानस्य सर्वविषयकत्वेन–प्रमाणाधीनपदार्थसामान्यविगमकालेऽपि साक्षिणा अज्ञातत्वेन घटभानानङ्गीकारे पदार्थसत्त्वैव न स्यादिति साक्षिसाधनप्रयासोऽप्यनुपादेय इति सिद्धम् ॥

### श्रीभाष्यम्

**न ज्ञानविनाश्यं भावरूपत्वात् घटादिवदिति। अथोच्येत—बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यत इति। नैवम्। नहि ज्ञानेन तेषां विनाशः क्षणिकत्वेन तेषां स्वय मेव विनाशात्। कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिका-रणसन्निधान एवोपलब्धेः अन्यथाऽनुपलब्धेश्चावगम्यते। अक्षणिकत्वे च भयादीनां भया-दिहेतुभूतज्ञानसन्तताववि शेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्र-**

### श्रुतप्रकाशिका

ज्ञाननिवर्त्यत्वदर्शनादिति व्याप्तिभङ्गमाशङ्कते। **अथोच्येतेति**। **पूर्वज्ञानोत्पन्नानां** * पूर्वभ्रान्तिज्ञानोत्पन्नानामित्यर्थः। बाधकज्ञानोदयात्प्राग्भयानुवृत्तेस्तदुत्पत्तेः पश्चाद्भयादिनिवृत्तेश्चेति भावः। परिहरति। **नैवमिति**। फलविनाश्यानिहि स्वाश्रयविनाशाधीननश्वरव्यतिरिक्तक्षणिकानि, * उक्तविशेषणेन ज्वालाव्यावृत्तिः * तथा भयाद्यपि कम्पादिकार्यं जन-यित्वा स्वयं नश्यतीत्यर्थः। न भयादेः क्षणिकत्वं, चिरोपलब्धेरितिचेन्न कारणभूतभ्रान्तिज्ञानाद्यनुवृत्त्या भयादिसन्तत्यु-त्पत्तेर्हि चिरोपलब्धिः॥

तर्हि सदा भयसन्ततिरुपलभ्येतेतिचेत् अत्राह—**कारणनिवृत्त्या च पश्चादनुत्पत्तेरिति**। कारणभूतभ्रान्तिज्ञा नादिनिवृत्त्या कार्यभूतभयादिसन्तत्यनुत्पत्तेः न सदोपलब्धिरित्यर्थः। **पश्चादनुत्पत्तेरिति** पञ्चम्याः क्षणिकत्वेनेति पूर्व-त्रान्वयः। कारणानिवृत्त्या च पश्चादनुत्पत्तेः सिद्धेन क्षणिकत्वेन स्वयमेव विनाशादित्यर्थः। यद्वा न क्षणिकत्वमिति शङ्कायां उपपन्नं क्षणिकत्वमित्यर्थवशादाकृष्टेन वाक्येनान्वयः। एवं क्षणिकत्वानुबन्धिचोद्यपरिहारः कृतः॥

यद्वा नैवमिति दूषणप्रतिज्ञामुपपादयितुं यावद्बाधं भयस्वरूपानुवृत्तेरसिद्धिमाह—**क्षणिकत्वेनेति**। बाधकज्ञाना-* नन्तरानिवृत्तेरन्यथासिद्धिमाह—**कारणनिवृत्त्याचेति**। तत्क्षणिकत्वं कुतस्सिद्धमिति शङ्कायां तदुपपादयति। **क्षणि कत्वंचेति**। स्थायिनो घटादयो दण्डचक्रादिकारणनिवृत्तावप्युपलभ्यन्ते, न तथा ज्ञानदीपज्वालादिः, तथा भयादेरपि कारणसान्निधानतान्निवृत्त्यनुविधायिसद्भावासद्भावतया क्षणिकत्वं निश्चितमित्यर्थः। विपक्षे बाधमाह-**अक्षणिकत्वेचेति**। स्थायिनोहि घटादयः प्रतिक्षणमुत्पाद्यमाना बहवो युगपदुपलभ्यन्ते तथाऽत्रापि प्रसजेदिति भावः। अतो न भयादिकं ज्ञाननिवर्त्यं स्वयमेव क्षणिकतया नश्यति। भयसन्तत्युच्छेदो भ्रान्तिज्ञानपरम्परारूपकारणनिवृत्त्या तन्निवृत्तिश्च दोषनि-वृत्त्या * नायं सर्पो रज्जुरेषेति ज्ञानं स्वविषयव्यवहारहेतुः नतु साक्षाद्भयादिनिवृत्तिहेतुः। रज्जुत्वंहि सर्पव्यावृत्तिः, अतस्सर्प-व्यावृत्तिरूपरज्जुत्वज्ञानाभावेन सर्पबुद्ध्यनुवृत्त्या पाश्चात्यभयानुवृत्तिः, सर्पव्यावृत्तिरूपरज्जुत्वज्ञानेन सर्पपारमार्थ्याभिमान-निवृत्त्या भयनिवृत्तिरिति सर्वाभ्युपगतप्रकारेण दूषणमुक्तम्। स्वपक्षेतु ज्ञानविशेष एव भयादिः क्षणिकतया स्वयं

### गूढार्थसङ्ग्रहः

**भावरूपत्वादिति**। अभावविलक्षणत्वादित्यर्थः। 'एतेन अनादिभावत्वस्य निवर्त्यावृत्तित्वेऽपि अविद्यायाः भावविलक्षणायाः निवर्त्यत्वोपपत्तेः' इत्यद्वैतसिद्ध्युक्तिरनुपादेया। अभावविलक्षणत्वस्य विवरण एव साधनेन तस्यैव अद्वैतसिद्धावपि व्यवस्थापनेन ज्ञानप्रागभावस्य ज्ञानविनाश्यत्वेऽपि तद्व्यतिरिक्तस्य ज्ञानाविनाश्यत्वात्॥

**क्षणिकत्वेन तेषां स्वत एव विनाशादिति**। आगामिदुःखहेतुदर्शनजदुःखस्यैव भयरूपत्वेन तस्य अवस्थान्त-रापन्नधर्मभूतज्ञानरूपत्वात् ज्ञानातिरिक्तवस्तुत्वमेव भयस्य वस्तुतो नास्ति इत्यप्यत्र विवक्षितम्॥

### श्रीभाष्यम्

**सङ्गाच्च । स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलताचाविष्कृता । अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिः । श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते । मिथ्यार्थस्य हि मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि न विलक्षणत्वादित्यधिकरणन्यायेन परिहृियते ।**

### श्रुतप्रकाशिका

नश्यति भयादिरूपज्ञानानुवृत्तिस्तु दोषात् सर्पादिभ्रमानुवृत्तिमूला तन्निवृत्त्या च तत्सन्ततिनिवृत्तिरिति परिहारः एवमर्थदूषणमुक्तम् ॥

अथ प्रयोगदूषणमाह–**स्वप्रागभावेति** । स्वशब्दः प्राक्छब्दोऽभावव्यतिरिक्तशब्दोऽन्तरशब्दश्च निरर्थकाः वस्तुशब्दोहि भाववाची । अनुमानेन भावरूपाज्ञानासिद्धिं निगमयति । **अतइति** । श्रुत्यर्थापत्तिभ्यां तात्सिद्धिमाशङ्क्याह—

### गूढार्थसंग्रहः

**अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिरिति** । स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकत्वविशेषणसार्थक्याय (अ.सि) अनुमानद्वयतात्पर्यनिरूपणेऽपि तत्र अनुकूलतर्काभावात् प्रागभावविषयकत्वेनोपपत्तिनिरूपणात् प्रतिपक्षानुमानैश्च न भावरूपाज्ञानं सेत्स्यति । 'देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः । अनादेः ध्वंसिनी मात्वात् यज्ञदत्तप्रमा यथा' इति तत्त्वप्रदीपे चित्सुखोक्तमनुमानमपि अनुकूलतर्काभावात् प्रतिपक्षानुमानैश्च न घटते । एवं नव्यास्तु इत्यादिना अ. सिद्ध्युक्तानुमानान्यपि एतेनैव न सम्भवन्ति । न जानामीत्यनुभवो न ज्ञानाभावविषयक इत्युक्तम् । रूप्यादेश्च शुक्त्यादिनिष्ठतया प्रतीयमानस्य शुक्त्यादिनिष्ठमेव परिणामि वाच्यम्; तच्च लाघवात् अनादि ज्ञानेन अज्ञानं नष्टमिति अनुभवादुपादाननाशंविना उपादेयनाशासम्भवाच्च ज्ञाननिवर्त्यमित्यस्मदुक्तानुमानमेव सतर्कम्' इति चन्द्रिकोक्तिरप्यनुपादेया । न जानामीति प्रतीतेः परेषां प्रतिकूलता प्रागेव दर्शिता । रूप्यादेः शुक्त्यादिनिष्ठतया प्रतीतिरपि नास्ति । शुक्तिरेव रजततया प्रतीयते । अज्ञानं च शुक्त्यवच्छिन्नचिन्निष्ठमेव परमते, शुक्त्यवच्छिन्नचिति रूप्यस्य प्रतीतिरपि नास्ति । ज्ञानेनाज्ञानं नष्टमित्यनुभवस्तु प्रागाभावविषयकत्वेनाप्युपपद्यते । ईश्वरज्ञानइव प्रमायामपि वस्तुनाशकशक्तिस्वीकारेण ज्ञानं न वस्तुनो विनाशकमित्याद्यनुमानं न बाधकमितितु नाशङ्कनीयम् । ईश्वरयोगिप्रभृतिज्ञानव्यतिरिक्ते यत्र कुत्र वा ज्ञानस्य वस्तुनाशकत्वं प्रामाणिकत्वेन सर्वसंप्रतिपन्नं यदि स्यात् तदा प्रमायामपि तादृशशक्तिकल्पना सम्भावनार्हा । सर्वसंप्रतिपन्नदृष्टान्तश्च नास्त्येवेति भावः । दृष्टार्थापत्तिपर्यालोचनानन्तरं विस्तरेण श्रुतिश्रुतार्थपर्यालोचनं करिष्यन्नाह— **श्रुतितदर्थापत्तिभ्यामित्यादि । वक्ष्यते इति** । विस्तरेणेति शेषः । अतएव अन्ते श्रुतितदर्थापत्तिपर्यालोचनम् ॥

**मिथ्यार्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्यादि** । 'अन्यथा मिथ्यार्थावभासानुपपत्तेः' इति पञ्चपादिकाविवरणे 'किंचार्थापत्तिरपि भावरूपाज्ञानसद्भावे प्रमाणमित्याह–अन्यथा मिथ्यार्थावभासानुपपत्तेः' इति विशुद्धब्रह्मात्मनि शुक्तिकायां चाहङ्काररजताध्यासस्य अर्थज्ञानात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किंचिदन्वेषणीयम् ।' इत्यत्र (८०७.पु) उक्तएवायमर्थः। इयं च दृष्टार्थापत्तिः ॥

**न विलक्षणत्वादित्यधिकरणन्यायेन परिहृियते इति** । तत्र चाधिकरणे 'दृश्यतेतु' इति सूत्रे गोमयवृश्चिक पुरुषकेशनखादिदृष्टान्तः परैरप्युपन्यस्तः । तत्र चेतनस्याचेतनं प्रतिसालक्षण्याभावादुपादानत्वं न सम्भवति । अपि

## श्रीभाष्यम्

**अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति। प्रतीतिभ्रान्तिबाधैरपि न तथाऽभ्युपगमनीयम्। प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः । आभिःप्रतीतिभिः प्रतीत्यन्तरेणचाप्युपलब्धमासां विषय इति न युज्यते कल्पयितुम्। शुक्त्यादिषु रजतादिप्रतीतेः, प्रतीतिकालेऽपि तन्नास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च**

## श्रुतप्रकाशिका

**श्रुतीति**। अनिर्वचनीयत्वे परोक्तहेतुं विस्तरेण दूषयति। प्रतीतीति। प्रतीतिः भ्रान्त्यभ्रान्तिसाधारणरूपा, भ्रान्तिः विद्यमानभेदाग्रहणपूर्वकसाधारणाकारग्रहणजन्या *स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता। बाधः आरोपितविरुद्धाधिष्ठानाकारावगाहिनी बुद्धिः। न तथाऽभ्युपगमनीयं नानिर्वचनीयत्वेनाभ्युपगमनीयमित्यर्थः। प्रतीतिभ्रान्तिबाधानां * स्वविषयोल्लेखमात्रेण वा अन्यथाऽनुपपत्त्या वाऽनिर्वचनीयसिद्धिरिति विकल्पमभिप्रेत्य प्रथमं दूषयति। **प्रतीयमानमिति**। प्रतीयमानं * प्रतीत्युल्लिख्यमानम्। नहि नीलोल्लेखः पीतोल्लेखतयाऽङ्गीकार्यः। तथासति सर्वोपप्लवप्रसङ्गादिति भावः। द्वितीयं दूषयति। **आभिरिति**। आभिः प्रतीतिभ्रान्तिबाधशब्दोपात्ताभिः प्रत्यक्षप्रतीतिभिः प्रतीत्यन्तरेण प्रमाणान्तरजन्येन। यद्वा आभिः लौकिकप्रतीतिभिः प्रतीत्यन्तरेण आगमजन्येन। यद्वा आभिः प्रतीतिभिः एकाधिष्ठाने सर्पभूदलनाम्बुधारादिबहुत्वाभिप्रायं बहुवचनं प्रतीत्यन्तरेण बाध(क)ज्ञानेन सङ्क्षिप्तस्य दूषणस्य * विस्तरार्थं परमतमनुवदति। **शुक्त्यादिष्विति**। **अन्यस्यान्यथाभानायोगाच्चेति**॥

**ननु** कथमन्यथाभानायोगः। उच्यते—न तावद्धर्मधर्मिणोर्मिथस्तादात्म्यभानं अन्यथाख्यानं पुरोऽवस्थितशुक्लभास्वरशकलं न रजतत्वजातितया प्रतीयते रजतत्वं च न भास्वरशकलतया प्रतीयते, शकलं च शकलत्वेन जातिश्च जातित्वेन प्रतीयते तस्माज्ज्ञानयोरन्यतरस्य तदितरत्वभानमिति। नापि धर्म्यन्तरस्य धर्म्यन्तरतादात्म्यं अन्यथात्वम्। तत्किं विषयगतं उत ज्ञानगतम्। विषये तदन्यथात्व*मस्तिचेत् यथार्थैव प्रतीतिः, नास्तिचेदसत्ख्यातिप्रसङ्गः। यदि ज्ञानगतं * विषयोऽन्यः ज्ञानमप्यन्यदेवेति नोपपद्यते। नहि घटज्ञानस्य पटज्ञानत्वसम्भवः। आत्मख्यातिप्रसङ्गश्च ज्ञानाकारत्वाद्रजतादेः स्वस्मिन्नसता आकारेण ख्यानमन्यथाख्यानमितिचेन्न असत्ख्यातिप्रसङ्गात्। अन्यत्र सतोऽन्यत्र ख्यानं ख्यानस्यान्यथात्वमितिचेन्न, खण्डे दृष्टस्य गोत्वस्य मुण्डे दर्शनस्यापि भ्रमत्वापातात्। अन्यत्रैव सतोऽन्यत्र ख्यानमन्यथात्वमितिचेत्

## गूढार्थसंग्रहः

जडस्यैवेति शङ्कायामेतद्दृष्टान्तबलात् चेतनस्याचेतनं प्रत्युपादानत्वं समर्थितम्। तत्र ब्रह्मणः उपादानत्वविचारः ब्रह्म न परिणाम्युपादानं, किंतु विवर्तोपादानमेव अविद्यापरिणाम्युपादनमिति नात्र तन्न्यायप्रवृत्तिः इतिचेत्—'दृश्यतेतु' इति सूत्रोक्तदृष्टान्ते विवर्तोपादानस्यासम्भवात्। प्रकृत्यधिकरणारम्भणाधिकरणयोरपि मृत्तत्कार्यदृष्टान्ता एवोपन्यस्ताः इति तत्रापि परिणाम्युपादानत्वमेव। विवर्तोपादाने दार्शनिकसम्मतदृष्टान्त एव नास्तीत्यादिकमुत्तरत्र निरूपयिष्यत इतिभावः॥

प्रागुदाहृतपञ्चपादिकोक्ताज्ञानसाधकासम्भवं निगमयति—**अतोऽनिर्वचनीयेति**। शुक्तिरूप्यप्रतीतेः अनिर्वचनीयमन्तराऽनुपपत्त्या अविद्यासिद्धिरिति इष्टसिद्ध्यादावप्युक्तम्। तत्र ख्यातिबाधान्यथाऽनुपपत्त्या दृष्टार्थापत्तिरूपया अविद्यासिद्धिरपि न सम्भवतीत्याह—**प्रतीतिभ्रान्तिबाधैरपीति**। **प्रतीयमानमेवहीति**। परसम्मतभावरूपाज्ञानविषयकप्रतीतेरेवाभावात् प्रतीतिभ्रान्तिबाधैः न भावरूपाज्ञानस्यानिर्वचनीयत्वं सिद्ध्यतीति भावः॥

## श्रीभाष्यम्

**सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात् प्रतीयत इति कल्पनीयमितिचेत् न**

## श्रुतप्रकाशिका

अन्यत्रैव सत्त्वं कथं निश्चीयते। इह बाधादितिचेन्न भ्रान्तिज्ञानबाधितस्य सत्यरजतस्याप्यत्रासत्त्वनिश्चयप्रसङ्गात्। प्रवृत्तिबाधादन्यत्रैव सत्त्वनिश्चय इतिचेन्न मन्त्रौषधादिप्रतिबद्धस्य अग्नेरपि स्फोटजननादिप्रवृत्तिबाधेन मिथ्यात्वनिश्चयप्रसङ्गात्; दुष्टकारणजन्यज्ञानविषयत्वादिह बाध्यत इतिचेत् कथं दुष्टकारणजन्यत्वनिश्चयः बाधकज्ञानोदयादितिचेत् पूर्वज्ञानमेव बाधकं स्यात् परत्वस्याकिंचित्करत्वंहि दर्शितम्। पूर्वज्ञानस्य दुष्टकारणजन्यत्वे निश्चिते पाश्चात्यज्ञानस्य बाधकत्वनिश्चयः तस्य बाधकत्वे निश्चिते पूर्वस्य दुष्टकारणजन्यत्वनिश्चय इत्यन्योन्याश्रयश्च स्यात्॥

किंच यत्तावद्रजतं पुरोवर्तिनि भातं तस्यैवान्यत्र सत्त्वे किं प्रमाणम्? न तावत्पूर्वज्ञानं अत्र सत्त्वेनहि तदवगमयति। न बाधकज्ञानं च तद्धि पुरोवर्तिन्यसत्त्वमवगमयति, नापि रजतग्राहकप्रमाणं तत्खल्वापणे रजतसत्तामवगमयति नतु तस्य पुरतः ख्यातस्यैक्यम्। कचिदप्यसतः ख्यानायोगात् अन्यत्र सत एव ख्यातत्वं निश्चीयत इतिचेन्न असतः ख्यानायोगस्य सम्बन्धे परित्यक्तत्वात् * नहि पुरोवर्तिनि रजतधर्मिसम्बन्धो रजतत्वजातिसम्बन्धो वाऽन्यत्र विद्यते। * नन्वन्यत्र संबन्धमात्रमस्ति तदिह प्रकाशत इत्यन्यत्र सत एवान्यत्र ख्यानमितिचेन्न * संबन्धद्वयानवभासात् अन्यत्र सतस्सम्बन्धस्यान्यत्र ख्याने संबन्धिन इव संबन्धान्तरमपेक्षितम्। संबन्धान्तरावभासे च अन्यत्र सतः ख्यानं न स्यात् द्वितीयसम्बन्धस्य क्वाचिदप्यसत्त्वात्। * सम्बन्धस्य सम्बन्धान्तरानपेक्षत्वात् सम्बन्धान्तराभावेऽपि पुरोवर्तिनि भानं युक्तमितिचेत् एवं तर्हि सम्बन्ध्यन्तरसम्बन्धः पुरोवर्तिनि च * निरन्तरं भातमिति यथार्थख्यातिरेवोक्ता स्यात्। ख्यातांशस्य सत्त्वात् असतः कस्यचित्ख्यातत्वाभावाच्च॥

किंच शुक्तिशकलस्यैव रजतज्ञानविषयत्वं रजतोपायान्यत्वेसति रजतार्थिप्रवृत्तिविषयत्वादिति साधयितुमप्ययुक्तम्। तथाहि इदमर्थस्य रजतत्वजातिविशिष्टताज्ञानविषयत्वंहि साध्यं तदबाधितप्रवृत्तिविषयत्वप्रयुक्तमिति हेतोस्सोपाधिकत्वम्। शुक्तिर्न रजततया भाति शुक्तित्वात्सम्प्रतिपन्नवदिति बाधः; एवमादिदूषणाभिप्रायेणान्यस्यान्यथाभानायोगाच्चेत्युक्तम्॥

दूषयति। **नेति**। अन्यत्रैव सता आकारेण पुरोवर्तिनो विशिष्टताज्ञानं अन्यथाभानम्। प्रतिपन्नाकारस्य पुरोवर्तिन्यभावनिश्चयश्च प्रवृत्तिबाधसचिवान्नास्तीति प्रत्ययात्। * प्रतिबद्धाग्नेरग्नित्वं नास्तीति प्रत्यय इति प्रसिद्धम्। कथं

## गूढार्थसंग्रहः

शुक्तिरूपभ्रमान्यथाऽनुपपत्त्या अज्ञानं सिद्ध्यतीति तस्य अनिर्वचनीयत्वमित्यभिप्रेत्य शुक्तिरूप्यसाधनप्रकारमाह—शुक्त्यादिष्वित्यादिना। **अपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति**। शुक्तिरूप्यस्य अपूर्वस्य साधनप्रकारः विवरणे इत्थमुक्तः। 'इदमासंप्रयोगात् अन्तःकरणपरिणामज्ञानमेकमुत्पद्यते न तद्रजतं तत्संसर्गं वा विषयीकर्तुमीष्टे। मिथ्यावस्तुनि देशान्तरादिगते वा संप्रयोगानुपपत्तेः चक्षुरुन्मीलनान्वयव्यतिरेकयोरधिष्ठानज्ञानोपक्षयादन्यथासिद्धेः। नापि संस्काराद्रजतांशावगमः स्मृत्यनभ्युपगमात् नापि दोषः स्वयमेव कस्यचिज्ज्ञानस्य हेतुर्दृष्टः, ज्ञानकारणानामेव कार्यविशेषनिमित्तत्वात्। अतो न रजततत्संभिन्नशुक्तिविषयमेकं ज्ञानं सम्भवति, किंतु अविद्यैव बाह्यदोषनिमित्तकारणापेक्षया रजताकारेण साक्षिचैतन्यस्य रजतावच्छेदज्ञानाभासाकारेण च परिणममाना स्वकार्येणसह साक्षिचैतन्यस्य विषयभावं प्रतिपद्यत इति' आपणस्थरजतभाने प्रत्यक्षप्रयोजकसर्वसंमतसन्निकर्षाभावेन अन्यथाख्यातिर्न सम्भवतीति भावः॥

### श्रीभाष्यम्

**तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात्, अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात्, कल्प्यमानंहीदम निर्वचनीयं न तावदनिर्वचनीयमिति प्रतीयते अपितु परमार्थरजतमित्येव। अनिर्वचनीयमित्येव प्रतीतंचेत्, भ्रान्तिबाधयोः प्रवृत्तेरप्यसम्भवः। अतोऽन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः**

### श्रुतप्रकाशिका

तत्कल्पनायामप्यन्यथाभानस्यावर्जनीयत्वमित्यपेक्षायामाह—कल्प्यमानंहीति। अनिर्वचनीयमित्येव प्रतीत्यभ्युपगमे प्रतीतेर्भ्रमरूपत्वं बाधः प्रवृत्तिश्च न स्युः, अनिर्वचनीयं निर्वचनीयत्वेन प्रतीतंचेदन्यस्यान्यथाऽवभासोऽवर्जनीयस्स्यादित्यर्थः।

### गूढार्थसङ्ग्रहः

**अन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेरिति।** परमार्थरजतप्रतीत्यभावे प्रवृत्त्यनुपपत्तिः परमार्थरजतमिति ज्ञात्वा रजताहरणार्थं प्रवर्तते, प्रातीतिकरजतज्ञाने तदसम्भवः। एवं प्रातीतिकरजतस्य प्रतीतिकाले तत्र सत्त्वाङ्गीकारेण तत्काले प्रातीतिकरजताभावप्रमाया असम्भवः बाधितार्थविषयकत्वेनैव भ्रमत्वं वाच्यम्। परमार्थरजतस्य तत्राभाने बाधितार्थविषयकत्वं भ्रमस्य न सम्भवति प्रातीतिकस्याबाधात् यद्यपि लौकिकपरमार्थस्यैव तत्र त्रैकालिकनिषेधः, नचान्यथाख्यातिभिया तस्याप्रसक्तौ कथं तन्निषेधः ? अपरोक्षत्वाभावेऽपि स्मृतिरूपतत्प्रसक्तेस्सम्भवात्' इति (अ.सि,.आविद्यकरजतोत्पत्तौ) उक्तम्। तथाऽपि शुक्तिरजतभ्रमः यदा तत्काले अपरोक्षविषयभूतं रजतं नास्तीति बाधप्रतीतेः प्रामाणिकत्वेन अपरोक्षविषयरजतस्य परमते प्रातीतिकत्वेन तस्य बाधानुपपत्तिर्दुर्वारैव। तत्काले अपरोक्षरजतनिषेधप्रतीतौ तत्कालावच्छिन्नापरोक्षविषयरजतत्वावच्छिन्नप्रतियोगिताकाभाव एव विषयः एतत्प्रतीतेःपूर्वं प्रतियोगिताऽवच्छेदकतापर्याप्त्यधिकरणप्रतीतिरप्यावश्यकी। इयं च प्रतीतिः आपणस्थरजतस्यापरोक्षत्वानङ्गीकारे न घटते।

तत्काले रजतसामान्यानिषेधप्रतीतिवत् अपरोक्षविषयरजतसामान्यनिषेधप्रतीतिरपि इदं रजतमिति प्रतीतिबाधिकेति सर्वसम्मतम्। तत्कालावच्छिन्नापरोक्षविषयरजतत्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगिताऽवच्छेदकता पर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणतया विरुध्यते। ननु प्रतियोगिताऽवच्छेदकाश्रयाधिकरणतया महानसीयवह्न्यभावस्य वह्नित्वावच्छिन्नाधिकरणतया विरोधाभावात्। प्रतियोगिताऽवच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणतया विरोधाङ्गीकारे तत्काले अपरोक्षविषयरजतादिकं नास्तीति प्रतीतौ प्रातीतिकप्रतियोगिकाभाव एव विषयः ननु आपणस्थरजतप्रतियोगिकः, वह्नित्वेन महानसीयवह्निर्नास्तीति प्रतीतिविषयाभावे पर्वतीयवह्निप्रतियोगिकत्वाभावस्य सर्वसम्मतत्वेनात्रापि आपणस्थ रजतप्रतियोगिकत्वाभावस्य सर्वसंप्रतिपत्तेः। लौकिकपरमार्थरजतस्यैव तत्र त्रैकालिकनिषेधः' इति अ.सिद्धयुक्तरीतिरत्र न सम्भवति। किंच प्रातीतिकव्यावहारिकोभयसाधारणरजतत्वमङ्गीकृत्य तादृशरजतत्वेन लौकिकपरमार्थरजतस्यैव निषेध इति अ.सिद्धयुक्तिरपि न घटते। रजतं नास्तीति प्रतीतौ रजतत्वावच्छिन्नप्रतियोगिताकाभाव एव विषयः, सच प्रतियोगिताऽवच्छेदकाश्रयैकव्यक्त्यधिकरणे न सम्भवति। व्यावहारिकरजतमात्रनिषेधे रजतं नास्तीति प्रतीतिसिद्धे तथैव सर्वसम्मतेः। अद्वैतासिद्धिरीत्यङ्गीकारस्य सर्वदार्शनिकासम्प्रतिपन्नत्वात्॥ शुक्तिरूप्यबाधकरजतनिषेधस्थले अतिरिक्तसामग्री-

## गूढार्थसङ्ग्रहः

कल्पने गौरवम् । शुक्तिरूप्यसाधनदशायां सामग्र्यन्तरकल्पनमपि न घटते । शुक्तिरूप्यं नास्तीति निषेधबुद्धौ उभ-
यसाधारणरूप्यत्वप्रकारकज्ञानाङ्गीकारेण आपणस्थरजतनिषेधाभ्युपगमे एतद्दृष्टान्तेन ब्रह्मणि प्रपञ्चनिषेधप्रतीतिर्न सम्भवति।
दृष्टान्ते प्रतियोग्यधिकसत्ताक प्रतियोग्येतदुभयवृत्तिधर्माभावे निषेधप्रतीत्यनुपपत्तिः यथा, तथा प्रपञ्चरूपप्रतियोगि,तद-
धिकसत्ताकपदार्थैतदुभयवृत्तिधर्माभावे निर्विशेषचिति प्रपञ्चनिषेधस्याप्यसम्भवः । प्रपञ्चस्य व्यावहारिकत्वेन तदपेक्षया
अधिकसत्ताकपदार्थस्य परमतेऽनङ्गीकारात् । अतः अपरोक्षविषयत्वं यस्य तस्यैव बाधोऽभ्युपेयः । सच्चान्यथाख्यात्यन-
भ्युपगमे न घटते । अन्यथाख्यातिवादे ज्ञानलक्षणाप्रत्यासत्या आपणस्थरजतस्यैव प्रतीत्यङ्गीकारेण बाधउपपद्यते ॥

एतेन सन्निकर्षाभावेन तत्प्रतीत्यनुपपत्तिरिति शङ्काया अपि नावकाशः । अनुभवानुरोधेन ज्ञानलक्षणाप्रत्यासत्तेः अलौकिकसन्निकर्षस्य कल्पनं युक्तम् । ननु भावरूपं अज्ञानमकारणकं कल्पयित्वा तत्परिणामभूतप्रातीतिकवस्त्वन्तरस्य कल्पनं तद्ध्वंसस्य च । एवं भ्रमस्थले अनन्तपदार्थकल्पना तदङ्गीकारेऽपि आपणस्थसत्यरजतादेरेव निषेधः अवश्यमभ्युपेयः शुक्तिरजतज्ञानस्य एकज्ञानत्वप्रतीत्यनुपपत्तिश्च । ‘ विषयावच्छिन्नंहि फलमवभासते न ज्ञानावच्छिन्नं, विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मकतया एकतामापन्नः तेनैकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञानद्वयमपि एकमित्युपचर्यते ’ इति (पं.पा.) विवरणे एकत्वममुख्यमेवोपपादितम् ॥

अद्वैतसिद्धौ ‘ वृत्तिभेदेऽपि इदंरूप्ययोः इदमंशावच्छिन्नचैतन्यप्रकाश्यत्वेन फलैक्याद्ज्ञानैक्यधीः ’ इति, गुरुचन्द्रिकायां च ‘ फलैक्यादिति । आवरणनाशरूपफलविशिष्टत्वेन इदमंशावच्छिन्नचिदेव फलं नतु रूप्यावच्छिन्ना । तथाचोक्तफलस्यैक्यात् तदवच्छिन्नयोः वृत्तिज्ञानयोः ऐक्यव्यवहार इति भावः । ’ इत्युक्तिश्चानुपादेया । उत्तरत्र ‘ अविद्यावृत्तिस्तावन्नाज्ञाननाशिका । किन्त्वन्तःकरणवृत्तिरिदमाकारा । तथा च तदभिव्यक्तचैतन्यमेव रूप्यमभिव्यनक्तीति फलैक्यसम्भवात् । नह्यवच्छेदकभेदेन फलभेदः, किंतु व्यञ्जकभेदेन । ’ इत्यद्वैतसिद्धौ वक्ष्यते । तदनुसारेणात्र गुरुचन्द्रिकायां फलैक्यमुक्तम् । इयं च प्रक्रिया न घटते । इदं रजतमिति ज्ञानवत् इदमित्येकं ज्ञानं अन्यच्च रजतमिति इति ज्ञानद्वयमपि नैव वर्तत इति शपथः कर्तुं न शक्यते । तदृशज्ञानद्वयसत्त्वे एकं ज्ञानमिति न व्यवहारः । इदं रजतमिति ज्ञानसत्त्वेतु एकं ज्ञानमिति व्यवहारस्संप्रतिपन्नः । ज्ञानद्वयस्थलेऽपि उक्तरीतिसम्भवेनैकज्ञानत्वव्यवहारापत्तिः । ज्ञानद्वयस्थल इव इदंरूप्यमिति ज्ञानकालेऽपि इदमंशेऽन्तःकरणवृत्तेर्नाज्ञाननाशकत्वमित्यन्यवृत्तिमादायैवाज्ञाननाशकत्वं वाच्यमित्युभयत्र साम्यमेवेति अविद्यावृत्तिसम्बद्धाचित एव रूप्यप्रकाशत्वाद्यङ्गीकरणीयम् । तदङ्गीकारे च फलभेदस्तदवस्थ एव, फलंचावरणनाश एव । आवरणनाशस्तु नेदानीम् । इदानीमावरणनाशविशिष्टचितोऽभावात् आवरणनाशविरहकालेऽपि चितः फलत्वमङ्गीकरणीयम् । इदं रूप्यमिति प्रतीतिदशायां या इदमंशेऽन्तःकरणवृत्तिः सा नाज्ञानाशिका । अज्ञाननाशकं ज्ञानमिति प्रागेवाद्वैतसिद्धावुक्तमिति अन्तःकरणवृत्तिभेदेनोक्तप्रक्रियया रूप्यस्य इदमंशावच्छिन्नचित्प्रकाश्यत्वोपपादनमपि न स्वरसम् । इदमर्थविषयकं रूप्यविषयकं च ज्ञानमेकमिति व्यवहारस्य अयं घट इति ज्ञानमेकमिति व्यवहारसमशीलस्य अन्यथाख्यातिमनङ्गीकृत्य इदंरूप्याकरावृत्तिद्वयाङ्गीकर्तृ परमते स्वरसतः उपपादनं न सम्भवति ॥

किंच शुक्तिरज्ज्वोः चक्षुस्सन्निकर्षदशायां इदं रजतं अयं च सर्प इति समूहालम्बनमेकं ज्ञानं इमौ रजतसर्पाविति वा ज्ञानमुदितं तत्र उक्तप्रक्रियया एकज्ञानत्वं नैवोपपादयितुं शक्यम् । तत्र इदमर्थयोर्द्वयोर्भिन्नत्वात् शुक्त्यज्ञान,रज्ज्वज्ञानयोरपि भेदेन इदमंशावच्छिन्नचितोरपि भेदात् फलैक्यासम्भवात् । अन्यथाख्यात्यभ्युपगमेऽप्येकज्ञानं निर्वहति ॥

## श्रीभाष्यम्

**तस्यापरिहार्यत्वाच्च, शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताऽभ्युपगन्तव्यम्। ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यथाऽवभासोऽवश्याश्रयणीयः। असत्ख्यातिपक्षे**

## श्रुतप्रकाशिका

**तस्यापरिहार्यत्वाच्चेति**। तस्य अन्यथाभानस्य। अयमभिप्रायः नान्यस्यान्यथाभानं विद्यमानस्यैव प्रतीतेः, अलौकिकं सल्लौकिकं सच्चेति द्विविधंसत् अनिर्वचनीयेचालौकिकं सत्त्वमस्ति, अत्र तदलौकिकं सद्रजतं प्रतीयत इतिचेत् किमलौकिकं सदलौकिकसत्त्वेन प्रतीयते ? उत लौकिकसत्त्वेन, प्रथमे भ्रमत्वबाधप्रवृत्त्यसम्भवः। अलौकिकं लौकिकं सदिति प्रतीतंचेत् अन्यस्यान्यथा(भा(ख्या)नं स्यात् ; अलौकिकसतो लौकिकसता भेदाग्रहात् प्रवृत्त्यादिसम्भव इतिचेत् तर्हि तत्रानिर्वचनीयं वस्तु कल्पयित्वा तत्र भेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादनादपि प्रथमत एव संप्रतिपन्नरजताच्छुक्तित्वरूपभेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादने कल्पनालाघवादनिर्वचनीयं वस्तु अनुपपन्नमित्यादिपदक(बाधक)परम्परामभिप्रेत्य तस्यापरिहार्यत्वाच्चेत्युक्तम् ॥

यथार्थख्यातिव्यतिरिक्तपक्षेषु अन्यथाख्यातिपक्षः प्रबल इत्यभिप्रायेणाह—**ख्यात्यन्तरेति**। सुदूरमपि गत्वा पदकपरम्परामुक्त्वापीत्यर्थः तदुपपादयति। **असदिति**। अयं माध्यमिकपक्षः किमसदित्येव प्रतीयते उत सदिति। असदितिचेत् भ्रमत्वबाधप्रवृत्त्यसम्भवः, सदितीतिचेत् अन्यस्यान्यथाभानं स्यादित्यर्थः। **आत्मेति**। अयं योगाचारपक्षः आत्मशब्दो ज्ञानपरः। किं ज्ञान इत्येव प्रतीतम् ? उतार्थइति। प्रथमे प्रवृत्तिबाधभ्रमत्वासम्भवः। द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः। **अख्यातिपक्षइति**। इदं रजतमिति किमेकज्ञानं उत ज्ञानद्वयमिति विकल्पमभिप्रेत्य एकज्ञानमिति पक्षेऽज्ञेयेऽ-

## गूढार्थसंग्रहः

एवं ' परोक्षभ्रमेऽपि अपरोक्षैकरसचैतन्यरूपफलैक्याभावात् फलैक्यमप्युपचर्य ज्ञानैक्योपचार इति ' इत्यद्वैतसिद्धाव्युक्त्या तत्राप्येकज्ञानत्वानुभवस्य स्वरसतः उपपादनं न सम्भवतीत्येवोक्तं भवति। अतः अन्यथाख्यात्यङ्गीकारः अपरिहार्य इत्यभिप्रेत्याह—**तस्यापरिहार्यत्वाच्चेति** ॥

**शुक्त्यादिरेव रजताद्याकारेणावभासतइति**। आपणस्थरजताकारेणावभासत इत्यर्थः। आपणस्थरजतप्रत्यक्षानन्तरं यथा रजताहरणादौ प्रवृत्तिः, तथा भ्रमस्थलेऽपीति निर्विवादम्। एवंस्थिते भ्रमात्मकप्रत्यक्षप्रतीतौ प्रातीतिकमेव विषयः बाधबुद्धौतु आपणस्थरजतप्रतियोगिकाभाव एव विषय इति कल्पना न सम्भवति। सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगिताऽवच्छेदकाश्रयैकव्यक्त्यधिकरणेऽप्यसम्भवात् प्रातीतिकाङ्गीकारे तदयोगात्। समानसत्ताकप्रतियोग्यभावयोरेव तथा नियम इत्यपि न सम्भवति। प्रातीतिकरजतोत्पत्तिसमर्थनावसरे एवं कल्पनाया एवासम्भवात् तथाङ्गीकारे प्रातीतिकरजतोत्पत्तितद्ध्वंसकल्पनवत् एतत्कल्पनेनापि गौरवमेव। एवंबाधबुद्धौ रजतत्वेनापणस्थरजतप्रतियोगिकाभावस्य विषयत्वे व्यावहारिकस्थले निषेधप्रतीतौ प्रतिबध्यज्ञानविषयप्रतियोगिकाभावस्य विषयतायाः सर्वानुभवसिद्धायाः प्रातीतिकस्थले क्वाप्यनङ्गीकारेऽनुभवविरोधः अवर्जनीय एव इत्यादिकमिह भाव्यम् ॥

इष्टसिद्धिविवरणादौ ख्यात्यन्तराणि दूषयित्वा अनिर्वचनीयख्यातिस्साधिता इत्यभिप्रेत्य ख्यात्यन्तरवादिपक्षेऽप्यन्यथाख्यातिरवर्जनीयेत्याह—**ख्यात्यन्तरवादिनांचेति**। **असत्ख्यातिपक्षइति**। नवीना अपि असदेवेदमिति प्रतीत्या असत्ख्यातिरिति वदन्ति ॥

## श्रीभाष्यम्

**सदात्मना आत्मख्यातिपक्षेऽर्थात्मना अख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेन, ज्ञान द्वयमेकत्वेन च * विषयासद्भावपक्षेऽपि विद्यमानत्वेन। किंच अनिर्वचनीयमपूर्वरजत· मत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम्। नतावत्प्रतीतिः तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभा(गतकार्य)योगात् निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम्। अथेन्द्रियादिगतो दोषः तन्न। तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्यो त्पादकत्वायोगात्। नापीन्द्रियाणि, तेषां ज्ञानकारणत्वात्। नापि दुष्टानीन्द्रियाणि, तेषा मपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम्। अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव**

## श्रुतप्रकाशिका

न्यथाख्यातिं प्रसञ्जयति। **अन्यविशेषणमन्यविशेषणत्वेनेति**। इदं रजतमित्येकत्वेन संप्रतिपन्नसम्यग्रजतवदा*रोप्यलिङ्गानुविधायिप्रयोगानुगुणसामानाधिकरण्येन प्रतीतत्वादन्यविशेषणमन्यविशेषणत्वेन प्रतीयत इत्यापादितम्। ननु तत्पक्ष-उपन्यस्तः, ज्ञानद्वयमिति पक्षे ज्ञानेऽन्यथाख्यातिं प्रसञ्जयति। **ज्ञानेति**। ज्ञानद्वयं किं ज्ञानद्वयमित्येव प्रतीतं उतैकमितीति विकल्पे पूर्ववद्दूषणं **विषयासद्भावेति**। किमविद्यमानत्वेन प्रतीयते, उत विद्यमानत्वेन प्रतीयते ? प्रथमे प्रवृत्त्याद्य-सम्भवः द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः ॥

**अथ** अकारणत्वमुपपादयति। **किंचेति**। तस्याः प्रत्यक्षप्रतीतेः तद्विषयत्वेन (विद्यमानविषयत्वेन) विद्यमानविषय कारणकत्वेन कारणंहि नियतपूर्वभावीति भावः। **महतामिदमुपपादनमिति**। तस्य ब्रत्तिज्ञानस्य विषयरहितावस्थास्वीकारेण कारणत्वाभ्युपगमे अपसिद्धान्तापातात्। निर्विषयख्यातिवादिनामिव तत्प्रभावेन प्रवृत्त्यादिसिद्धावनिर्वचनीयक्लृप्ति वैयर्थ्यात्। विषयरूपकारणेन विनोत्पत्तिवचना*द्विरम्यव्यापारवचनाच्च अत्यन्तमनुपपन्नमित्यर्थः। **अथेन्द्रियादीति**। आदिशब्देन विषयगतदोषः पुरुषस्यानवधानं वा गृह्यते। **तस्य पुरुषाश्रयत्वेनेति**। दूरत्वादिदोषस्य विषयगतत्वेऽपि *पुरुषगतत्वस्यापि सम्भवा*दुभयत्र कार्यमुत्पाद्य न विषयमात्रे नियामकाभावात् अतः पुरुष इव विषयेऽपि न सम्भवतीत्यभिप्रायः। ननु चक्षुषः पुरुषाश्रयत्वेऽपि चाक्षुषरश्मेः प्रसृतस्य विषयसम्बद्धस्य तत्र कार्यकरत्वं दृष्टम्। न तत्कार्यस्य ज्ञानस्य पुरुषाश्रितत्वात् *दोषांशस्याकार्यकरत्वात्। ननु विषयमात्रगतास्सादृश्यादयो दोषास्सन्ति तेषां तत्रैव कार्यकरत्वमुपपद्यते, मैवम्। सादृश्यादेर्यावद्द्रव्यभाविनस्सदोत्पादकत्वप्रसङ्गात्। आगन्तोरन्यस्य तत्रादृष्टेः, * इन्द्रियसंयोगस्य पुरुषगतज्ञानातिरिक्तहेतुत्वासिद्धेः। * दृष्टिविषादिन्यायस्यात्रासम्भवात्, सम्भवेऽपि सर्वैरुपलंभप्रसङ्गाच्च ॥

**नन्विन्द्रियाणि** यथापुरुषविशेषसम्बन्धा*त्तत्रैव कार्यविशेषमुत्पादयन्ति एवं विषयविशेषसम्बन्धात्तत्रैव किंचिज्जनयन्तु तत्राह—**नापीन्द्रियाणीति**। पुरुषगतज्ञानाख्यकार्यकरत्वमन्वयव्यतिरेकावसितम्। विषयेत्विन्द्रियजन्यं कार्यांतरं न दृष्टं तत्क्लृप्तिरन्यथैवोपपत्त्या निरस्तेति भावः। तथाऽपि दुष्टपुरुषसन्निधानाद्यथा देशादिषु दोषाःप्रादुष्ष्युः, तथा दुष्टेन्द्रियसन्निधानाद्विषये कार्यविशेषस्स्यादित्यत्राह— **नापिदुष्टानीति**। अन्वयव्यतिरेकादिकमतिलङ्घ्य दृष्टान्तमात्रेण न किंचित्साधयितुं शक्यमिति भावः। किमत्र हेत्वन्तरगवेषणया अनादिभावरूपाज्ञानमेव विश्वोपादानभूतं शुक्तिरजताद्यपि विचित्रकार्यं जनयेदित्यत्राह—**अनादीति**। तस्य स्वरूपानादित्वात्तत्कार्यमपि प्रागेव स्यात्, सहकारित्वेन शङ्कनीयमिन्द्रियादिकं तु निरस्तम्, मिथ्याभूतस्य चार्थक्रियाकारित्वमयुक्तम् आश्रयानुपपत्त्यादयश्च पूर्वमेवोक्ता इति भावः ॥

## श्रीभाष्यम्

**निरस्तम् ॥ किंच अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजादिबुद्धिशब्दाभ्यां कथमिव विषयी क्रियते न घटादिबुद्धिशब्दाभ्याम्? रजतादिसादृश्यादिति चेत् तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम् रजतादिजातियोगादितिचेत् । सा किं परमार्थभूता अपरमार्थभूता वा? न तावत्परमार्थभूता तस्या अपरमार्थान्वयायोगात् । नाप्यपरमार्थभूता परमार्थान्वयायोगात् । अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलम्**

## श्रुतप्रकाशिका

एवमनिर्वचनीयस्य रजतादेरुत्पादकानुपपत्तिमुक्त्वा तदुत्पत्तावपि रजतादिबुद्धिशब्दान्वयनियमानुपपत्तिमाह—**किंचेति** । तद्व्यवस्थापकं शङ्कते । **रजतादीति** । प्रातिभासिकस्य रजतादेः अर्थक्रियाकारिव्यावहारिकरजतादिसादृश्यादित्यर्थः । उक्तस्य व्यवस्थापकत्वाभावमभिप्रेत्य सादृश्यस्य यथादर्शनं साध्यान्तरमाह—**तर्हीति** । यदि तत्सदृशे तद्बुद्धिः तदा गवये गोबुद्धिवदन्यथाख्यातिस्स्यादित्येवकाराभिप्रायः । सादृश्यस्यानिर्वाहकत्वेऽपि तज्जातियोगस्य तद्बुद्धिनिर्वाहकत्वं दृष्टमिति शङ्कते । **रजतादीति** । सा रजतादिजातिः, **अपरमार्थान्वयायोगात्** अपरमार्थव्यक्त्यन्वयायोगादित्यर्थः । * व्यक्तिबाधेऽपि जातेरबाधितत्वप्रसङ्ग इति भावः । जातिरपिहि बाध्यते नहि व्यक्तिर्नास्ति जातिस्त्वस्तीति प्रतीतिः जातिरपि नास्तीत्येवहि प्रतिपत्तिः ॥

नच प्राक्प्रतिपन्नाया अपि जातेः पश्चादप्रतीतिरभिव्यञ्जकव्यक्त्यभावात् नतु जात्यभावादिति वाच्यम् ; अभिव्यञ्जकवति पूर्वकाले प्रतिपन्नाया अपि जातेः तत्कालसंबन्धितयैव नास्तितागोचरत्वाद्बाधकप्रत्ययस्य प्रतिपन्नोपाधौ नास्तीति प्रत्ययोहि बाधः । अपरमार्थपक्षं दूषयति । **नापीति** । **परमार्थान्वयायोगात्** * आपणस्थरजतव्यक्त्यन्वयायोगादित्यर्थः । व्यक्त्यवस्थानेऽपि जातेः * कदाचिद्बाधितत्वप्रसङ्ग इति भावः । नहि कदाचिदप्यापणस्थरजते रजतत्वं बाध्यते । परमार्थव्यक्त्यनन्वये बाधकमाह—**अपरमार्थइति** । परमार्थबुद्धिशब्दयोः परमार्थविषयबुद्धिशब्दयोः । परमार्थव्यक्तौ जातिरनन्विताचेत् तस्याः * क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनात् भ्रान्तिस्थलेऽपि परमार्थबुद्धिशब्दनिर्वाहकत्वं न स्यादित्यर्थः । यद्वा जात्यपारमार्थ्य एव दूषणान्तरं बुद्धिशब्दान्वयानुपपत्तिमाह—**अपरमार्थइति** । तदानीं परमार्थे बुद्धिशब्दयोः परमार्थभूतबुद्धिशब्दयोरित्यर्थः । असत्यात्सत्योत्पत्तिनिरासमुपजीव्य इदं दूषणमुच्यते । व्यक्तेस्तन्निर्वाहकत्वायोगं दर्शयितुं अपरमार्थ इत्युक्तिः । अपरमार्थ(भूत)जातेः परमार्थभूतबुद्धिशब्दनिर्वाहकत्वायोगाज्जात्यपारमार्थ्यमयुक्तमित्यर्थः । बुद्धिशब्दयोश्च पारमार्थ्यं तद्बाधकादर्शनादेव सिद्धम् ॥

## गूढार्थसंग्रहः

**अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेति** । रजतत्वं प्रातीतिकव्यावहारिकोभयवृत्तीति परैरङ्गीक्रियते । तस्य च शुक्तिरूप्ये प्रातीतिके आपणस्थरूप्यगत सामान्यस्याभावे तदर्थिप्रवृत्त्यनुपपत्त्या तदुभयसामान्यस्यैकस्यावश्यकत्वात् ' इति युक्तिः अद्वैतसिद्धौ प्रदर्शिता । आविद्यकप्रातीतिकरजतस्य अङ्गीकारो न सम्भवति, प्रवृत्त्यनुपपत्तेः इत्याक्षेपदशायां आक्षेपकर्तारंप्रति नेयं युक्तिस्सम्भवति । अपरमार्थे परमार्थजात्यङ्गीकारस्यासम्भवेन तदर्थिप्रवृत्तिर्न सम्भवतीति तदाशयेन क्वापि परमार्थधर्मस्य अपरमार्थे संबन्धस्येतरासंमतस्य कल्पनेन प्रवृत्त्युपपत्तिकथनस्यानुचितत्वात् । तथासति प्रातीतिकपदार्थोत्पादितद्ध्वंसकल्पनवत् तत्र व्यावहारिकरजतत्वादिजातिसंबन्धकल्पनयाऽपि गौरवमेवेति प्राती-

## श्रीभाष्यम्

**अपरिणतकुतर्कनिरसनेन । अथवा यथार्थं सर्वविज्ञानमिति वेदविदां मतम् । श्रुतिस्मृतिभ्यस्सर्वस्य सर्वात्मत्वप्रतीतितः ॥ 'बहुस्यामिति सङ्कल्प पूर्वसृष्ट्याद्युपक्रमे । तासां त्रिवृत**

## श्रुतप्रकाशिका

अथ वक्ष्यमाणाया यथार्थख्यातेः स्वसिद्धान्तत्वं दर्शयति । **अथवेति** । तस्यास्साम्प्रदायिकत्वं दर्शयन् तां प्रतिजानीते । **यथार्थमिति** । वेदविदां भगवद्बोधायननाथमुनिमिश्रादीनामित्यर्थः । कुतइत्यत्राह— **श्रुतिस्मृतिभ्यइति** । श्रुतिं दर्शयति । **बहुस्यामिति** । आदिशब्देन नामरूपव्याकरणमुच्यते, यद्वा सन्मूला इत्यादिवाक्योक्तं स्थितिप्रळयादिकं गृह्यते । सृष्ट्यादिरुपक्रमो यस्य प्रकरणस्य तस्मिन् सृष्ट्याद्युपक्रमे । इदं श्लोकार्धं किमर्थमितिचेत्, उच्यते—*पाठक्रमेणाण्डसृष्टेः पश्चात्त्रिवृत्करणमिति ज्ञायते । अण्डसृष्टेः प्रागपि त्रिवृत्करणमस्ति अण्डसृष्ट्यर्थत्वात्त्रिवृत्करणस्य त्रिवृत्करणमुपायः अण्डसृष्टिःफलम् । उत्पत्तौ पश्चात्फलं भवति * सङ्कल्पेतु पूर्वभावि, उपायस्तूत्पत्तौ पूर्वभावी सङ्कल्पे पश्चाद्भावीति लोकसिद्धं, * किं केन कथमित्यादौ । अतो **'नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि'** इत्यस्मिन् व्यष्टिसृष्टिसङ्कल्पवाक्ये पश्चान्निर्दिष्टमण्डसृष्ट्युपायभूतं त्रिवृत्करणम् । **'नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्'** इति उत्पत्तिवाक्ये पूर्वनिर्दिष्टस्यापि नामव्याकरणस्य फलभूतत्वात्; त्रिवृत्करणस्य फलरूपसृष्टेः पूर्वभावो निश्चीयते, अर्थक्रमेण पाठक्रमबाधस्य न्याय्यत्वात् **'अग्निहोत्रं जुहोति यवागूं पचति'** इतिवत् अस्मिन्नर्थे निदर्शनं उपक्रमे **'बहुस्यां प्रजायेय'** इति वाक्यम् । अत्र बहुस्यामिति फलसङ्कल्पः प्रजायेयेति तदुपायसङ्कल्पः । अनेन न केवलं * किं केन कथमित्यादिलोकप्रसिद्ध्या अत्र त्रिवृत्करणस्य फलभूतसृष्टेः पूर्वभावित्वनिश्चयः उपक्रमभूतसङ्कल्पवाक्यानुगुण्याच्चेति ज्ञापितम् ॥

## गूढार्थसङ्ग्रहः

तिकरजतोत्पत्तिसाधनस्यैव भङ्गात् । अन्यथाख्यात्यङ्गीकारे ज्ञानलक्षणायाः प्रत्यासत्तित्वमात्रकल्पनमिति लाघवम् । नेदं रजतमिति ज्ञानस्य इदं रजतमिति ज्ञानविषयापणस्थरजतप्रतियोगिकाभावविषयकत्वेन व्यावहारिकस्थले प्रतिबध्यज्ञानविषयप्रतियोगिकाभावविषयकत्वं बाधज्ञाने यथा तथैव नेदं रजतमिति ज्ञानेऽपि सम्भवतीति प्रामाणिकानुभवस्य अन्यथाख्यातिवादे उपपत्तिः, आविद्यकरजतोत्पत्तिवादे तदसम्भवः । बहुपदार्थकल्पनया व्युत्पत्त्यन्तरकल्पनया च गौरवमिति भावः । **अपरिणतकुतर्केति** । वेदप्रामाण्यवादिबौद्धमतकटाक्षेणेदमुक्तम् । अन्यथाख्यातिश्च वेदप्रामाण्यवादिभाट्टसंमतेत्याशयः ॥

एतावता अन्यथाख्यातौ स्वारस्येन तत्पक्षएव युक्त इत्युक्तम् । एतत्पक्षे प्रत्यासत्यन्तरकल्पनं रजतस्मृतिसमनन्तरं इदं रजतमिति ज्ञानोत्पत्त्यङ्गीकारेण क्षणविलम्बोऽपीत्यभिप्रेत्य प्रभाकरसम्मताख्यातिवाद एव लाघवात् ज्यायान् तत्र च इदं रजतमिति ज्ञानदशायां रजतं साक्षात्करोमीति प्रतीत्यनुपपत्तिरिति पर्यालोच्य अर्चिद्विषये पूर्वोत्तरकाण्डगतवेदवाक्यविचारपर्यालोचनया प्रभाकरसम्मतयथार्थख्यातिपक्षमेव परिष्कृत्य सिद्धान्तयति— **अथवेति** । प्रकरणपञ्चिकायां नयवीथौ 'यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये । प्रभाकरगुरोर्भावः समीचीनःप्रकाश्यते ॥' इत्यादिभिः श्लोकैरख्यातिपक्षं व्यवस्थाप्य 'विषयाव्यभिचारित्वं साधयितुं सर्वसंविदामेषा । निरमीयत नीतिविदा शालिकनाथेन नयवीथी ॥' (७६) इत्युपसंहृतम्, इति श्लोकैरेव ज्ञानयाथार्थ्यं साधयति— **यथार्थं सर्वविज्ञानमिति वेदविदां मतमित्यादिना** । वेदविदामित्यत्र पूर्वोत्तरवेदभागयोः एकविधप्रामाण्यवेदिनः वृत्तिकाराः तदनुयायि नाथयामुनादयश्च विवक्षिताः ॥

श्रीभाष्यम्

**मेकैकामिति श्रुत्यैव (दर्शि)चोदि)तम्॥ त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते । यदग्ने रोहितं रूपं तेजसस्तदपामपि॥ शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता॥ श्रुत्यैव दर्शिता तस्मात्सर्वे सर्वत्र सङ्गताः। पुराणेचैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे। 'नानावीर्याः पृथग्भूता स्ततस्ते संहतिं विना। नाशक्नुवन् प्रजास्स्रष्टुमसमागम्य कृत्स्नशः॥ * समेत्यान्योन्य-संयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमित्यादिना ततः॥ सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत्।' (वि.पु.१.२.५२--५३-५४) 'त्र्यात्मकत्वात्तु भूयस्त्वा-दिति तेनाभिधाभिदा। सोमाभावे च पूतीकग्रहणं श्रुति(दर्शि)चोदि)तम्।**

श्रुतप्रकाशिका

एवं त्रिवृत्करणस्याण्डसृष्टेः प्राक् सद्भावं ज्ञापयितुं उपक्रमगतसङ्कल्पवाक्यस्य तदनुगुणज्ञापनाय बहुस्यामित्याद्यर्ध-मुपात्तम्। अण्डान्तर्वर्त्यग्न्यादिषु त्रिवृत्करणस्य प्रदर्शनात् अण्डसृष्टेःपश्चात्त्रिवृत्करणमिति शङ्कायां श्रुतेरर्थमाह—**एवंहि प्रत्यक्षेणोपलभ्यतइति**। अग्न्यादिषु कतिपयव्यक्तिषु त्रिरूपत्वप्रदर्शनं नेयत्ताबुद्ध्या, अपित्वण्डान्तर्भूतस्यैव प्रत्यक्ष-यितुं योग्यत्वात् पूर्वोक्तत्रिवृत्करणसम्भावनाप्रदर्शनार्थमिति भावः। अण्डसृष्टेः प्रागेव त्रिवृत्करणमस्तीति स्पष्टं ज्ञापयति। **पुराणेचेति**। * अस्यामुपनिषदि भूतत्रयसृष्टेरुक्तत्वात्सृष्टतयोक्तानां मिश्रणमुक्तं इदं तत्त्वान्तरसृष्टिप्रतिपादनप्रकरणेषु तेषामपि मिश्रणस्य प्रदर्शनार्थमिति ज्ञापनाय पुराणवचनोदाहरणम्। वैष्णव इत्यनेन सात्त्विकत्वात्प्रामाण्यं सूचितम्।

सात्त्विकेषु च सर्वेषु विष्णोर्माहात्म्यमिष्यते। ... ... ...

इति वचनात् संहतत्वं समागतत्वंचेति * अवस्थाद्वयमस्ति संहतत्वं नाम पृथक्स्थित्यर्हसंयोगमात्रं समागतत्वं पृथक्स्थि-त्यनर्हसंश्लेषविशेषः। एतद्द्वयाभावात्स्रष्टुं नाशक्नुवन्नित्याह—**नानावीर्याइति**। एतदुभयप्राप्तयाऽसृजन्नित्याह—**समेत्येति** एकैकस्मिन् भूते सर्वभूतानि सन्तिचेत् सर्वे शब्दाः सर्वत्र प्रयुज्येरन्नित्यत्राह—**परस्परसमाश्रयाइति**। अन्येषां भूतानां समाश्रितानां एकं भूतं समाश्रयः आश्रिताश्रयभावश्च न्यूनाधिकभावनिबन्धनः तत्कृता शब्दव्यवस्थेति भावः। * उपा-त्तवचनानन्तरं '**संप्राप्यैक्यमशेषत**' इति कृत्स्नशः समागतत्वमुक्तम्। महदादय इतिपाठे सत्यपि वृत्तभङ्गपरिहा-राय स्वसन्दर्भे महदाद्या इत्युक्तं भाष्यकारैः। अयमेव श्रुत्यभिप्राय इति स्थापयितुं सूत्रकारोक्तिं दर्शयति। **सूत्रेति**। ततस्सूत्रकारोऽप्यवददित्यन्वयः। ततः अस्यार्थस्य श्रुतिस्मृतिसिद्धत्वादित्यर्थः॥

एवं प्रथमं भूते भूतान्तरसद्भाव उक्तः वक्ष्यमाणस्यसदृशे सदृशान्तरसद्भावस्योपयोगित्वात् तेनाभिधाभिदा भूय-स्त्वेनाभिधानव्यवस्थेत्यर्थः। सदृशे सदृशान्तरसद्भावमाह—**सोमेति**। न्यायविदः—परीक्षकाः '**सोमाभावे पूतीका-**

गूढार्थसंग्रहः

एतेन एतत्पक्षस्य साम्प्रदायिकत्वं दर्शितम्। एतच्च श्रुतप्रकाशिकायां 'नाथैरुक्ता यथार्था विमतमतिरपि न्याय तत्त्वे तदेतत् भाष्येऽनूक्तं तदत्र व्यवहृतिरुभयी बाधिताबाधिताख्या।' इति तत्त्वमुक्ताकालापविवरणसर्वार्थसिद्धौ 'सा न्यायतत्त्वे भ्रान्त्यधिकरणसिद्धान्ते षष्ठीचेयं ख्यातिः यथार्थख्यातिः' इत्यादिना निरधार्यत इत्यत्र च स्पष्टम् '**श्रुति-स्मृतिभ्यः**' इत्यादिना रजतसन्निकर्ष उपपादितो भवति। **सोमाभावे च पूतीकग्रहणमिति**। यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति श्रुतिः 'क्वचिद्विधानाच्च' (६.३.१४) इति सूत्रशाबरभाष्ये उदाहृता। 'नियमार्थःक्वचि-

## श्रीभाष्यम्

## सोमावयवसद्भावादिति

## गूढार्थसंग्रहः

द्विधिः ' (१६) इति सूत्रे ' अथ यदुक्तं कचिद्विधानादिति, उच्यते नियमार्थः कचिद्विधिः सोमाभावे बहुषु सदृशेषु प्राप्तेषु नियमः क्रियते पूतीका एवाभिषोतव्या इति । तस्मात्प्रतिनिधिमुपादाय प्रयोगः कर्तव्य इति ' इति, ' तन्नित्यं तच्चिकीर्षा हि ' (१७) इति तदनन्तरसूत्रे ' कथं पुनरिदमवगम्यते नियमार्थमेव तद्वचनमिति ? उच्यते—यतःप्राप्ताः पूतीकाः कथं च ते प्राप्ताः ? तच्चिकीर्षाहि तत् सादृश्यं चिकीर्षेत्येतद्वक्ष्यामः । तच्चिकीर्षया च प्राप्ताः पूतीकाः तस्मात्तन्नित्यम् । वचनमेतन्नियमाय नित्यमिति गम्यते ' इति च शाबरभाष्ये उक्तम् ॥

**सोमावयवसद्भावादिति** । ' सामान्यं तच्चिकीर्षाहि ' (६.३.२७) इति सूत्रे सामान्यं यत्र गृह्यते तदुपादातव्यम् । सदृशमिति । यस्मिंश्च सदृशे गृह्यमाणे तेषां विशेषाणां केचित्संगृहीता भवन्ति स तत्र लाभो लभ्यत इति तत्स दृशं द्रव्यमुपादातव्यं भवति, तस्माद्व्रीहीणामपचारे नीवाराः प्रतिनिधेयाः ' इति शाबरभाष्ये उक्तम् ॥

शास्त्रदीपिकायाम्—' अवयवा एव ह्येकद्रव्यतामापन्नाः अवयविशब्दाभिधेयाः जात्या परिच्छिद्यन्ते नात्यन्तमर्थान्तरम् । अतस्तैरवयवैर्जात्याश्रयभूतैः कर्म साधनीयम् । तत्र यदि सदृशमुपादीयते ततस्तेषामवयवानां कतिपया लभ्यन्ते जातिमात्रमवयवान्तरमात्रं च परित्यक्तं भवति विसदृशोपादाने पुनः समस्तपरित्यागस्स्यात् । अतो व्रीहिशास्त्रमपि यथा सम्भवमुपपादयितुं सदृशोपादानम् । एवं च सुसदृशलाभे मन्दसदृशं नोपादेयं, किंतु सुसदृशमेव, तत्र बह्ववयवानुग्रहात् ' इति, भाट्टदीपिकायां च–' व्रीहिशास्त्रेण व्रीहित्वजातेस्साधनत्वे प्रमिते अमूर्तायास्तस्यास्साधनत्वासम्भवात् अर्थात्तत्परिच्छिन्नस्यावयविनः साधनत्वमवगम्यते । तस्यापिचावयवोपादानव्यतिरेकेण साधनत्वासम्भवात् तदवयवानामपि साधनत्वमर्थादेवावगम्यते । तज्जातीयावयवानामेव च कतिपयानां विजातीयावयवान्तरोपेतानां नीवारारम्भकत्वमिति यथाशक्तिप्रयोगे जातेरवयविनो अवयवान्तराणां च साधनत्वासम्भवेऽपि कतिपयावयवानामेव तत्सम्पत्त्यर्थमवर्जनीयतया नीवारविजातीयतदवयवोपादानमिति सदृशप्रतिनिधिनियमसिद्धिः । अतएव सादृश्यं समानजातीयाऽवयवारब्धत्वेनैव नियामकम्, नतु समानजातीयधर्मान्तरेण तस्य व्रीहिशास्त्राविषयत्वात् । एवं च व्रीह्याद्यभावे सुसदृशं तदभावे मन्दसदृशमित्यादिक्रमेण बोध्यम् ' इति पार्थसारथि खण्डदेवाभ्यामुक्तम् ॥

एवं च अन्यथाख्यातिवादिभट्टपादानामपि प्रतिनिधिस्थले अवयवैक्यस्य सम्मतत्वेन इदं रजतमिति भ्रमस्थलेऽपि तन्न्यायेनावयवैक्येन शुक्ति चक्षुस्सन्निकर्ष एव रजतसन्निकर्षोऽपि भवतीति अन्यथाख्यात्यनङ्गीकारेऽपि इदं रजतमिति प्रत्यक्षमुपपद्यते । आरम्भवादिभिर्नैयायिकैः अतिरिक्तावयव्यङ्गीकारेऽपि परिणामवादिसिद्धान्ते अतिरिक्तावयव्यनङ्गीकारेण अवयवेन्द्रियसन्निकर्षस्यैव सर्वत्र प्रत्यक्षनियामकत्वात् । इन्द्रियसन्निकर्षसमनन्तरं उत्पन्नव्यवसायेन विशेषणबुद्धिरूपेण प्रत्यक्षविषयकमानससाक्षात्कारः अनुव्यवसायः उत्पद्यत इति नैयायिकाः । सन्निकर्षजन्यज्ञानानन्तरं ज्ञाततालिङ्गेन ज्ञानानुमितिः, विषयज्ञानयोर्नैकदा भानम् आत्मातु मानसप्रत्यक्षविषय इति भट्टपादानुयायिनः प्राभाकरास्तु—मितिमातृमेयविषयकमेकमेव प्रत्यक्षं, अर्थवित्तिवेद्यत्वमेवात्मनः इति वदन्ति । सिद्धान्ते अहमर्थात्मनः स्वप्रकाशप्रत्यक्षविषयत्वेन विषयज्ञानदशायां तद्भाने बाधकाभावेन ज्ञानस्यापि स्वप्रकाशतया मितिमातृमेयानामेकदैव भानमिति निर्णीयते । एवंचास्मिन्विषये प्रभाकरमतसमशीलतैव सिद्धान्तेऽपि । तत्र ' अहमिदं जानामि ' इति प्रतीतौ ज्ञानात्मनोः

## श्रीभाष्यम्

**न्यायविदो विदुः ॥ व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः । तदेव सदृशं तस्य य(द्य(त्त) द्रव्यैकदेशभाक् ॥ शुक्त्यादौ रजतादेश्च भावश्श्रुत्यैवबोधितः । रूप्यशुक्त्यादिनिर्दे(श्यः) श) भेदो भूयस्त्वहेतुकः ॥ रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते । अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ॥ कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः । रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ॥ दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते । अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ॥ बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते । शुक्तिभूयस्त्ववैकल्य साकल्य-ग्रहरूपतः ॥ नातो मिथ्यार्थसत्यार्थ विषयत्वनिबन्धनः । एवं**

## श्रुतप्रकाशिका

**नभिषुणुयात्'** *इत्ययंविधिर्नियमार्थः सोमाभावे तत्सदृशद्रव्यान्तरेषु स्वतःप्रवृत्तेः । एतत्तुल्यन्यायसिद्धार्थमाह—**व्रीहीति** व्रीहिभावतः-व्रीह्यवयवसद्भावतः । ततः कथं सदृशे सदृशान्तरसद्भाव इत्यत्राह—**तदेवेति** । अनेन शुक्त्यादौ रजता द्यवयवसद्भावः फलितइत्याह-**शुक्त्यादाविति** । **श्रुत्यैव बोधितः** * प्रतिनिधिश्रुत्यैवाभिमतत्वेन फलितः । * यद्वा त्रिवृत्करणश्रुत्यैव बोधितत्वं फलितं तेजःप्रचुररूप्यांशशुक्तौ त्रिवृत्करणात्सिद्ध्यतीत्यर्थः । कथं शब्दव्यवस्थेत्यत्राह-**रूप्येति** । शुक्तिरूप्ययोस्साद्दृश्येसतिहि शुक्तौ रूप्यसद्भावसिद्धिः । शब्दव्यवस्थाया भूयस्त्वहेतुकत्वसिद्धि,श्चेत्यत्राह—**रूप्यादीति** ॥

यद्वा शुक्तौ रजतैकदेशसद्भावे प्रमाणान्तरमाह—**रूप्यादीति** । ततः किमित्यत्राह-**अतइति** । प्रतीतेः, रूप्यसदृशतया प्रतीतेः शुक्त्यादौ रजताद्यवयवसद्भावश्चेत्सदा गृह्येत । प्रवृत्तिश्च सदा स्यात्, बाधश्च नोपपद्येत, इत्यत्राह—**कदाचिदिति** । दोषः शुक्त्यंशाग्रहहेतुः प्रचुरग्रहणाभिभूतत्वाभावात् अदृष्टवशाच्च रजतग्रहणम् । अदृष्टवशाच्च अम्बुनो ग्रहणादितिहि वक्ष्यते उदारणान्तरेष्वप्यु*पजीव्यत्वायहि तत्र तदुक्तिः । **भूयस्त्वेन बाध्यबाधकभावइति** । **शुक्तिभूयस्त्वेन** तज्ज्ञानस्य बाधकत्वम् । ततएव रजताल्पत्वं सिद्धं तेन रजतज्ञानस्य बाध्यत्वमित्यर्थः भूयस्त्वेनेत्युक्ते भ्रान्तिज्ञानस्य रजत भूयस्त्वात्तेन शुक्तिज्ञानस्य बाध्यत्वशङ्काव्यावृत्त्यर्थं भूयस्त्वेन बाध्यबाधकत्वमुपपादयति । **शुक्तीति** ॥

**ननु** साकल्ये सत्यपि वैकल्यं गृहीतंचेत् अन्यथाख्यातिरिति ; नैवम् नहि वैकल्यस्य ग्रहो वैकल्यग्रहः किंतु शुक्तिभूयस्त्ववैकल्येन ग्रहः तद्विरहेण ग्रहः तदग्रह इति फलितम् भूयस्त्वसाकल्येन ग्रहः तत्सहिततया ग्रहः । तयोर्ग्रहयोः रूपात् स्वभावात् तथाविधग्रहणात्मकत्वादित्यर्थः बहुव्रीहिर्वा भावप्रधानो निर्देशः * पूर्वोत्तरज्ञानयोस्तथारूपत्वात् बाध्यबाधकभाव इत्यर्थः । ज्ञानस्य बाध्यत्वं न स्वरूपतः, नच विषयतः किंतु बाध्यप्रवृत्तिकत्वम् उत्तरज्ञानस्य च बाधकत्वं पूर्वज्ञान जन्यप्रवृत्तिनिवारकत्वं अन्यथाख्यातिवादेऽपि ज्ञानस्य स्वरूपेण बाध्यत्वमनभिमतम् । किंतु विषयबाध्यत्वमेवाभिमतम् । अस्माकंतु ज्ञानफलभूतप्रवृत्तेः बाध्यत्वमिति भिदा । प्रवृत्तेश्च बाधितत्वं प्रतिबद्धोत्पत्तिकत्वं विफलत्वं वा । **नातइति** । मिथ्यार्थसत्यार्थशब्दाभ्यां पराभिमतमिथ्यात्वसत्यत्वे विवक्षिते । **एवमिति** । सर्वस्य सर्वत्वेऽपि व्यवहारव्यवस्थितिः हानोपादाननियमः । एवं भूयस्त्वसाकल्यवैकल्याभ्यामित्यर्थः । साधारणाकारग्रहणभेदाग्रहदोषादृष्टानि सर्ववादिभिरभ्युपेतव्यानि तावता प्रवृत्त्यादिसम्भवेऽप्यधिककल्पनायामन्येषां गौरवं स्यात् । तत्रेष्टरूपरूपिनिरन्तरभानात्प्रवृत्तिः, द्विष्टरूपरूपिनिरन्तरभानान्निवृत्तिः । रूपरूपिणो*र्धर्म्यन्तरनिष्ठत्वविरोधिधर्मान्तराश्रितत्वभानविरहेण भानं निरन्तरभानम् । अतएव भेदाग्रहात्प्रवृत्तिश्चेद्रज्जुसर्पभेदाग्रहे निवृत्तिर्नस्यादित्यादीनि चोद्यानि नावकाशं लभन्ते ॥

## श्रुतप्रकाशिका

यःपरमते ख्यात्यन्तरहेतुरभ्युपेतः स एवास्माकं प्रवृत्त्यादिहेतुः । प्राभाकरैर्मन्त्रार्थवादार्थतात्पर्यानभ्युपगमात्केवल भेदाग्रहेणैव निर्वाहःकृतः । * अत्रतु, मन्त्रार्थवादयोः प्रतीयमानार्थे प्रामाण्याभ्युपगमादुपनिषद्भागावगतं त्रिवृत्करणं, तत्प्रदर्शितं पञ्चीकरणं, ईश्वरकर्तृकं सर्गविशेषं तथा प्रतिनिधिन्यायं भेदाग्रह,मप्युपजीव्य निर्वाहःकृत इति वैषम्यम् । तत्र भूते भूतान्तरभ्रमस्य त्रिवृत्करणेन निर्वाहः स्फुटतरः । सदृशे सदृशान्तरभ्रमस्यतु प्रतिनिधिन्यायेनैव निर्वाहः नतु त्रिवृत्करणेनोपयोग इति केचिदाचार्याः । त्रिवृत्करणमपि विजातीयभूतारब्धे सदृशे विजातीयभूतारब्धसदृशान्तरभ्रमनिर्वाहौपयिकमिति च संप्रदायः, श्रुतिस्मृतिभ्यस्सर्वस्येत्यादिग्रन्थानां स्वारस्यात्तथाऽवगम्यते । अतस्त्रिवृत्करणश्रवणपञ्चीकरणस्मरणाभ्यां प्रतिनिधिन्यायाच्च सदृशे सदृशान्तरबुद्धियाथार्थ्यं निरूप्यते ॥

ननु कथं सदृशे सदृशान्तरभ्रमस्य त्रिवृत्करणेनोपयोगः नहि त्रिवृत्करणात्पूर्वं रजताद्यवयवास्सन्ति, तथासतिहि त्रिवृत्करणनिबन्धनं शुक्तौ रजतादिसंमिश्रणं स्यात् नच तदस्ति त्रिवृत्करणस्या*ण्डसृष्टेः पूर्वभावित्वात् । उच्यते *पाञ्चभौतिकेष्वपि पदार्थेषु किंचित्कार्यं केनचित् प्रचुरेण भूतेन परिणामविशेषवता आरब्धं तत्र यादृशपरिणामयुक्तयद्भूतप्रचुरं यत्कार्यं तस्य तादृशपरिणामवतो भूतस्य कार्यान्तरेष्वपि विद्यमानत्वात्तेषु तथाविधतद्भूतप्रचुरतत्कार्यविषयबुद्धिरुपपद्यते ॥

यद्यप्यवान्तराकारविशेषः त्रिवृत्करणदशायां नास्ति । तथाऽपि त्रिवृत्करणेन कार्यानुप्रविष्टस्य तस्य भूतस्य कार्यान्तरावयवसमानपरिणामसम्भवात् । भौतिकान्तरे भौतिकान्तरबुद्धेर्याथार्थ्यं घटते, तथा त्रिवृत्करणेन शुक्त्यन्तर्गतस्य तेजोंशस्य शुक्लभास्वररूपेण परिणामवतो रजतसौसादृश्याद्रजतावयवत्वमुपपन्नम्, तादृशाकारयुक्ततद्भूतविशेषवन्त एव हि सम्यग्रजतादयो निरीक्ष्यन्ते, अतश्शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यते ॥

ननु कथं शुक्त्यादिषु प्रतीयमानानामवयवानां रजताद्यवयवत्वं नहि ते रजतादिभ्य आनीय निवेशिताः । उच्यते संप्रतिपन्नरजताद्यवयवसुसदृशाकारत्वमेव तेषां रजताद्यवयवत्वं नतु रजतादिभ्य आनीय निवेशितत्वं, यथा संप्रतिपन्नरजताद्यवयवानां नह्यापणस्थरजताद्यवयवाः कुतश्चिद्रजतान्तरादेरानीय निवेशिताः एवमेव पूतीकादिषु प्रतीयमानानां सोमलताद्यवयवानामपि सोमाद्यवयवत्वं नाम संप्रतिपन्नसोमलताद्यवयवसुसदृशत्वमेव । तच्च स्फुटतरप्रतीतिसिद्धमबाधितं च नहि शुक्तिशकलपूतीकादिषु रजतसोमलतादिसादृश्यं नास्तीति बाधकप्रत्यय उदेति । तेषामवयवानां विजातीयावयवप्राचुर्यादकार्यकरत्वं प्रचुरक्षीरानिविष्टाल्पसलिलस्येव प्रचुरकनकसंसृष्टाल्परजतस्येव च सम्भवति ॥

## गूढार्थसङ्ग्रहः

स्वप्रकाशतया भानं विषयस्य सन्निकर्षेण। अत्र नैयायिकमते मितिमातृमेयविषयकं एकं ज्ञानमिति व्यवहारस्स्वरसत उपपद्यते। सिद्धान्ते मातृविषयकं ज्ञानं भिन्नं तद्धर्मभूतज्ञानं मेयविषयकंचान्यत्। अथाप्येकज्ञानत्वेन व्यवहारः ज्ञानद्वयविषयतयोः निरूप्य निरूपकभावाङ्गीकारेण उपपादनीय इति अन्यथाख्यात्यनङ्गीकारेऽपि भ्रमस्थले यास्मिन् विषये एकज्ञानासम्भवः तत्रापि ज्ञानद्वयविषयतयोर्निरूप्य निरूपकभावाङ्गीकारेण एकज्ञानव्यवहार उपपादनीय इति प्राभाकरमते ज्ञानद्वयविषयतयोर्निरूप्यनिपकभावाङ्गीकारेण रजतत्वावच्छिन्नप्रकारतानिरूपितशुक्तित्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन प्रवृत्त्यादिहेतुत्वाङ्गीकारेण उपपत्तिः प्रामाण्यवादे गदाधरेण प्रदर्शिता । प्रत्यभिज्ञाया एकज्ञानत्वेन व्यवहारोऽपीत्थमेवोपपादनीयः एकांशस्य संस्कारेण अपरांशस्य सन्निकर्षेण भानेन तत्रापि ज्ञानद्वयस्यैवाङ्गीकार्यत्वात् । एवं सुरभिः चन्दनखण्ड इत्यादावपि बोध्यम् । अतएवेदं रजतं जानामीति ज्ञानस्यैक्यं निर्वहति । सिद्धान्ते इदं रजतमिति ज्ञानानन्तरं इदं रजतं

### श्रीभाष्यम्

सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥ ' (इमे भाष्यकारीयाश्श्लोकाः)

### श्रुतप्रकाशिका

नन्वेवं शुक्तितयाऽभिमतपुञ्जस्य शुक्तित्वमपुष्कलं स्यात् विजातीयावयवसंसर्गात् पुरुषमृगे पुरुषत्ववत् पुरुषमृगत्वं नाम पुरुषत्वमृगत्वाविलक्षणं जात्यन्तरं नतु विकलं पुरुषत्वं मृगत्वंचेतिचेत् । तर्हि शुक्तितयाऽभिमतपुञ्जस्यापि शुक्तित्वरजतत्वाविलक्षणजात्यन्तरवत्त्वं स्यात् । ततश्च पुरुषमृगे पुरुषव्यवहारवत् शुक्तिव्यवहारो न मुख्यस्स्यात् विजातीयसं-

### गूढार्थसंग्रहः

जानामीति नैयायिकसंमतप्रक्रिया नाभ्युपगम्यत एव । नैयायिकमत इव ज्ञानस्य मानसप्रत्यक्षविषयत्वाभावेन स्वप्रकाशतयैव भानात् । एवं च इदं रजतं जानामीति ज्ञानमेव प्रथमं तस्य ज्ञानान्मोभयाविषयकत्वमेकत्वं च उक्तदिशैव ॥

अन्यथाख्यातिवादिभिर्भट्टपादैरपि ' यत्र्यध्यासेन वक्तृणां गौणी वृत्तिः प्रकल्प्यते। वेदे सा न कथंचित्स्यात् अध्यारोपयितुर्विना ' इति निर्णयपूर्वकं ' सिंहो देवदत्त ' इत्यत्रापि आरोपो निराकृतः। एतच्च वेदप्रामाण्यरक्षणार्थमिति सोमनाथेन तात्सिद्धिपेटिकायां अप्पय्यदीक्षितैः ' व्यासेश्च समञ्जसम् ' इति सूत्रपरिमलेचोक्तम् । ' गुणवादस्तु ' इति सूत्रप्रणेतुः जैमिनेरप्याशयः अयमेव, तत्र सर्वत्र सदृशाभेद एव विवक्षित इति निर्णयात् । ' अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ' इति स्वसिद्धान्तस्थापनाभिनिवेशेन अप्पयदीक्षितैः परिमले सोमनाथेन तात्सिद्धिपेटिकायां खण्डदेवेन भाट्टकौस्तुभे च निरारोपसारोपगौणीविभागेन वेदे क्वचिदारोपः क्वचिन्नारोप इतिविभागकथनपूर्वकं ' येषा वा गौतमाग्निः ' इत्यत्र आरोपस्वीकरणमनुचितम् तत्रापि सदृशाभेदस्यैव भट्टपादसम्मतत्वात् ' गुणवादस्तु ' इति सूत्रे जैमिनिना ' यजमानः प्रस्तरः ' इत्यादौ सदृशाभेदवर्णनमप्यनुचितं, तत्राप्यारोपस्यैव युक्तत्वादिति परिमले दीक्षितोक्तिस्सर्वाऽपि न घटते । तदुदाहृतार्थवादवाक्येषु सदृशाभेदस्यैव प्रतीतिसंभवात् । अयमर्थः सम्यङ्निरूपितः भावप्रकाशे तृतीयसम्पुटे ॥

वेदवाक्येषु दृष्टिविधिस्थलेषु सिद्धान्ते अख्यातिपक्ष एवादर्तव्यः तदुक्तमाचार्यपादैः—' अन्यस्मिन्नन्यदृष्टेर्विधिरिह घटतामन्यथाख्यातिपक्षे, याथार्थ्ये सर्वबोधानुगतमिति मते युज्यते नान्यदृष्टिः । तन्नात्राद्येहि न स्यात् विमतिरविमता भ्रान्तिनीतिःपरस्मिन् तादृग्भेदाग्रहोपक्लृतमतियुगलस्थापनायां नियोगात् ॥ (अ.सा.४५२) इति ' ज्ञानद्वयाङ्गीकारेऽपि ज्ञानद्वयविषयतयोः निरूप्यनिरूपकभावाङ्गीरेण प्रवृत्त्याद्युपपत्तिः प्रागुक्तैव । इदं रजतमित्यत्र एकज्ञानत्वेन व्यवहारः स्वरसत एव भाष्य उपपादितः । यत्रतु त्रिवृत्करणप्रतिनिधिन्यायोरसंभवः तत्रापि प्रत्यभिज्ञादिवत् उपपत्तिरिति प्रागेवोक्तम् । अन्यविशेषणमन्यविशेषणत्वेनेति प्रागुक्तदूषणस्य परिहारः सर्वार्थसिद्धौ आचार्यपादैः सम्यक्प्रदर्शितः । ननुचाख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेन ' इति भाष्ये कथं चोदितं किमिति वा तच्चाप्रदिष्टोत्तरम् ? इत्यं तदुच्यते—सर्पभूदलनाम्बुधारादिभ्रमेषु, अयं सर्पः, इदं भूदळनं, इयमम्बुधारेति सर्पादिविशेष्यलिङ्गभाञ्जि विशेषणानि भवन्ति इदं च समानाधिकरणत्वाभिमानात्, अतोऽन्यथाख्यातिरवर्जनीयेति चोद्याभिप्रायः । परिहारानुक्तिस्तु तद्भेदाग्रहनिबन्धनवाचकव्यवहारविशेषमात्रमिति स्वयमूहक्षमशिष्यशिक्षार्थेति ' इति ॥

व्यवहारव्यवस्थिरिति । अवयवभूयस्त्वे सफलप्रवृत्तिः, अवयवन्यूनत्वे विफलप्रवृत्तिरित्यर्थः । एतेन सफलप्रवृत्तिजनकं ज्ञानं प्रमा । विफलप्रवृत्तिजनकं ज्ञानं भ्रमः इति भ्रमप्रमाविभागस्सूचितः । क्वचित्प्रवृत्तेरभावेऽपि सफल-

## श्रीभाष्यम्

**स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्याः**

## श्रुतप्रकाशिका

स्यायाः भ्रमाधिष्ठानभूतायाश्शुक्तेः पुरुषेण पुरुषमृगस्येव शुक्त्यन्तरेण सौसादृश्यस्याभावात् सौसादृश्येसतिहि तत्ताव्यवहारस्य मुख्यत्वं तदभावाद्धि 'सिंहो देवदत्त' इत्यस्यामुख्यत्वं शुक्त्यवयवप्राचुर्याच्छुक्तित्वं पुष्कलं तत एव तद्व्यवहारश्च मुख्य इतिचेत् । तर्हि रजतांशस्याप्रचुरत्वादेव रजतत्वं नास्तीति रजतबुद्धेर्याथार्थ्यं न स्यात् । उच्यते–पुरुषत्ववत् शुक्तित्वस्यावयवसंघातविशेषवृत्तित्वाभावात् अणुमात्रेऽपि शुक्तित्वं पुष्कलम् । पुरुषत्वस्यतु सङ्घातविशेषवृत्तितया सङ्घातवैकल्यात्तदपौष्कल्यं जात्यन्तरं वा तत्र स्यात् । शुक्तित्वंतु न तथेत्युक्तम् अतः शुक्त्यवयवेषु शुक्तित्वतद्व्यवहारावुपपन्नौ तत्र विरुद्धजात्यन्वयाभावात् । शुक्तितयाऽभिमतसङ्घातेतु शुक्त्यवयवप्राचुर्यादर्थक्रियाव्यवस्था शब्दव्यवस्थाचोपपद्यते प्रचुरशुक्त्यभिभूतत्वेन रजतांशस्याग्रहीतत्वात् ग्रहीतशुक्तिविवक्षया तद्विषयत्वेन प्रयुक्तशब्दो मुख्य इत्युपपन्नम् ॥

**नच** भ्रमाधिष्ठानभूतायाश्शुक्तेर्विजातीयावयवयोगितया शुक्त्यन्तरसौसादृश्यहानिः । शुक्त्यन्तरस्याप्यल्परजतांशमिश्रत्वाद्रजतांशाभिभवेन शुक्त्यन्तरसौसादृश्यप्रतीतिरुपपद्यते । शुक्त्यवयवानांतु परस्परसौसादृश्यमुपपन्नतरं, उक्तरीत्या रजतांशस्य च रजतत्वं मुख्यं, तस्मिन्नंशे विरुद्धजात्यन्वयाभावात् रजतान्तरावयवसौसादृश्यं च । भ्रमदशायां गृह्यमाणस्य तस्य प्रचुरशुक्तिग्रहणाभिभूतत्वाभावाद्रजतान्तरावयवसौसादृश्यप्रतीतिरुपपद्यते अतएव रजतव्यवहारश्च मुख्यः । अतश्शुक्त्यादौ रजतादिबुद्धेर्याथार्थ्यमुपपन्नम्, अल्पस्य रजतस्य प्रचुरतया ग्रहणे अन्यथाख्यातिप्रसङ्ग इतिचेन्न प्राचुर्यग्रहणाभावात् अल्पत्वाग्रहणमेवहि तत्र विद्यते प्राचुर्यस्य प्रतियोग्यपेक्षत्वात्प्रतियोगिभूतशुक्त्यग्रहणात्तद्ग्रहणे प्रवृत्त्यसम्भवाच्च शुक्त्यपेक्षया रजतांशस्य प्राचुर्यं न ग्रहीतमिति नान्यथाख्यातिः ॥

**नन्व**ल्पत्वाग्रहणं नाम प्रचुरत्वग्रहणं स्यात्, भवन्मतेहि भावान्तरमभावः अतोऽन्यथाख्यातत्वमितिचेन्न अल्पत्वाग्रहणं नाम न प्राचुर्यग्रहणं अपित्वल्पत्वविषयज्ञानसङ्कोच इत्यन्यथाग्रहाभावात् ! नेदं रजतमित्यत्र नञर्थः क इतिचेत् शुक्तित्वमेवेति ब्रूमः यदाकारग्रहणेन पूर्वज्ञानोत्पन्नायाः प्रवृत्तेर्निवृत्तेर्वा निवारणं स एवाकारो नञर्थः, स्वाकारःप्रतियोगिसापेक्षैः नेदं रजतमित्यादिशब्दैः तदनपेक्षैश्शुक्त्यादिशब्दैश्च व्यवह्रियते । एवंभूते भूतान्तरसद्भावात्सदृशे सदृशान्तरसद्भावाच्च शुक्त्यादिरूप्यादिबुद्धेर्याथार्थ्यमुपपादितम् ॥

**नहि** स्वप्नार्थानां सदृशे सदृशान्तरसद्भावो भूते भूतान्तरसद्भावो वा वक्तुं शक्यत इत्यत्राह—**स्वप्नेचेति** । कथं केचित्सुखरूपाः केचिद्दुःखरूपा इत्यत्राह–**पुण्यपापानुगुणमिति** । भगवतैव जगत्स्रष्ट्रैव, तर्ह्यन्यैरप्युपलभ्येत, सदाचोप-

## गूढार्थसंग्रहः

प्रवृत्तिजननयोग्यत्वतदभावाभ्यां वैषम्यम् । योग्यत्वं च भूयोवयवविषयकत्वेनैवेति न विवरणोक्तानुपपत्तिः । शुक्तिरूप्यवत् प्रपञ्चस्य आविद्यकत्वं मिथ्यात्वंचेति परोक्तिः प्रातीतिकशुक्तिरूप्यानङ्गीकारेऽपि भ्रमोपपत्त्या निरवकाशेति एतावता उक्तं भवति ॥

अथ स्वप्नसृष्टिवत् प्रपञ्चसृष्टिः उपनिषद्वाक्यान्यपि तथैव योजनीयानीति परसिद्धान्तं पर्यालोचयति **स्वप्ने च प्राणिनामित्यादिना** । 'न तत्र रथाः' इत्यादिश्रुतौ 'अथ रथान् रथयोगान् पथस्सृजते' इत्यत्र सृष्टिकर्मत्वेनोक्तानां

### श्रीभाष्यम्

**तत्तत्कालावसानाः तथाभूताश्चार्थास्सृज्यन्ते। तथाहि श्रुतिस्स्वप्नविषया 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान्पथस्सृजते। न तत्रानन्दामुदःप्रमुदो भवन्ति। अथानन्दान्मुदःप्रमुदः सृजते। न तत्र वे(श)शा)न्ताः पुष्करिण्यस्स्रवन्त्यो भवन्ति। अथ वे(श)शा)न्तान् पुष्करिण्यस्स्रवन्त्यस्सृजते। सहि कर्ता' (बृ.६.३.१०) इति। यद्यपि सकलेतरपुरुषमात्रानुभाव्यतया तदानीं न भवन्ति, तथाऽपि तत्तत्पुरुषानुभाव्यतया तथाविधानर्थानीश्वरस्सृजति सहि कर्ता तस्य सत्यसङ्कल्पस्याश्चर्यशक्तेस्तथाविधं**

### श्रुतप्रकाशिका

लभ्यतेत्यत्राह- तत्तदिति। कथं दृष्टविसजातीया इत्यत्राह-**तथाभूताइति**। श्रुतिं दर्शयति। **तथाहीति**। स्वप्नविषयत्वमस्य वाक्यस्य कथमिति शङ्कायां * स्वप्नं पश्यतीति पूर्ववाक्यं स्मारयति। **स्वप्नविषयेति**। रथयोगाः अश्वादयः न भवन्ति दृष्टसजातीया न भवन्तीत्यर्थः। **आनन्दामुदःप्रमुदइति**। साधारणभोग्यदर्शनजा प्रीतिर्मुत्, असाधारणभोग्यत्व ज्ञानजा प्रीतिः प्रमुत् विनियोगजा प्रीतिरानन्दः। यद्वा विलक्षणविषयदर्शनजा प्रीतिर्मुत् तस्य स्वविनियोगार्ह वज्ञानजन्या प्रीतिः प्रमुत् विनियोगजा प्रीतिरानन्द इति। एतैश्शब्दैर्विषया लक्ष्यन्ते * मुख्यार्थत्वे दृष्टविसजातीयत्वायोगात् वेशान्ताः गृहाः, यद्वा वेशान्ताः पल्वलानीत्यर्थः। कथमुपपद्यत इत्यत्राह-**सहिकर्तेति**। सर्वशक्तिर्हि कर्ता किमनुपपन्नमितिभावः। तच्छब्दो न प्रकृतजीवपरः, अपितु प्रसिद्धपरमात्मपरः॥

* व्याघातपौनरुक्त्यशङ्कापरिहारार्थमस्याश्श्रुतेरर्थमाह--**यद्यपि सकलेति**। सृजत इति पदविरोधपरिहाराय न भवन्तीति निषेधस्य सङ्कोचोह्युत्सर्गापवादन्यायेन कृतः। अतः कालान्तरस्थायित्व पुरुषान्तरानुभाव्यत्वाकारविषयो निषेधः। नतु तत्कालतत्पुरुषमात्रानुभाव्यतया स्वरूपनिषेधः। अतो जाग्रदवस्थाऽनुभूतवस्तुसजातीया अनेकपुरुषानुभाव्याः कालान्तरस्थायिनश्च न भवन्तीत्यर्थः। सहिकर्तेत्येतत्खण्डमुक्तार्थोपपादकत्वेन व्याचष्टे। **तस्येति**। स्वाप्नार्थसृष्टेरीश्वरकर्तृकत्वस्फुटी-

### गूढार्थसंग्रहः

रथादीनां न निषेधो विवक्षितः। तथासति इत्थं श्रुतिविन्यासः निर्बीजस्स्यात्। निषेधानन्तरं सृष्टिवाक्यं विरुद्धम्। निषेधानन्तरं सृष्टिप्रतिपादनेन सृष्टपदार्थानामभावप्रतीतेः सुतरामसम्भवात्। अतः सृष्टेःपूर्वं पदार्था नावर्तन्त इत्येतद्वाक्यतात्पर्यं प्रतीयते। सृष्टेःपूर्वं सत्त्वे सकलेतरपुरुषानुभाव्यत्वं स्यात्। तदभावेन सकलेतरपुरुषानुभाव्यपदार्थानामभावप्रतिपादने पर्यवसानम्। सृष्टपदार्थानां स्वप्नद्रष्टृपुरुषमात्रानुभाव्यत्वस्यानुभवसिद्धतया स्वप्नद्रष्टृपुरुषमात्रानुभाव्यपदार्थसृष्टावेव तात्पर्यं पर्यवसन्नम्। इममेवार्थमभिप्रेत्याह-**यद्यपि सकलेतरपुरुषानुभाव्यतयेत्यादि**। सृष्टेः पूर्वं सत्त्वे जागरित पदार्थवत् सकलेतरपुरुषानुभाव्यत्वं स्यात्। सृष्टेःपूर्वमभावेन सकलेतरपुरुषानुभाव्यत्वविरहात् प्राक् (६९८.पु) उक्तं जागरिताऽवस्थानुभूतवैधर्म्यं एतेन स्पष्टीकृतम्। एतेन आश्चर्यरूपत्वमपि विवृतं भवति॥

**तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थानीश्वरस्सृजतीति**। तथाविधाश्चार्थाः स्वदेहेनैव देशान्तरगमनराज्याभिषेकशिरश्छेदादयः अनुपदमेव वक्ष्यन्ते। एतेनाप्याश्चर्यरूपत्वं स्पष्टीकृतम्। आश्चर्यरूपत्वेनैव परमपुरुषकर्तृकत्वं **स्वप्नसृष्टेः** 'सहि कर्ता' इत्यत्र विवक्षितम्। 'स' इत्यत्र तच्छब्दः प्रसिद्धार्थकः एतादृशपदार्थसृष्टिप्रयोजकज्ञानशक्त्यादिमत्परः इत्यभिप्रेत्याह—**तस्य सत्यसङ्कल्पस्याश्चर्यशक्तेरित्यादि**। स्वाप्नार्थस्रष्टुः ब्रह्मत्वं श्रुत्यन्तरे उक्तमिति एतत्प्रसिद्धिरपि 'सहि कर्ता' इत्यत्र विवक्षितेत्यभिप्रेत्य **य एष सुप्तेषु जागर्ति** इति श्रुत्युदाहरणम्॥

## श्रीभाष्यम्

**कर्तृत्वं सम्भवतीत्यर्थः । 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन ।' (कठ.२.५.८) इति च । सूत्रकारोऽपि 'सन्ध्ये सृष्टिराह हि' (शारी.३.२.१) 'निर्मातारंचैके पुत्रादयश्च' (२) इति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' (३) इत्यादिना न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमुपपद्यते जीवस्य स्वाभाविकसत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात् ईश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियं 'तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन' (कठ) इति परमात्मैव तत्र स्रष्टेत्यवगम्यत इति परिहरति । अपवरकादिषु शयानस्य स्वप्नदृशस्स्वदेहेनैव देशान्तरगमनराज्याभिषेक शिरश्छेदादयश्च**

## श्रुतप्रकाशिका

करणार्थं श्रुत्यन्तरमाह—**यएषु सुप्तेष्विति** । स्वाप्नार्थानां पारमार्थ्यं पूर्वपक्षीकृत्यापारमार्थ्यं सूत्रकारेण सिद्धान्तितमिति व्याख्यातृमतभेदेनास्याश्श्रुतेर्नायमर्थ इति शङ्काव्युदासार्थमुक्तार्थस्य सूत्रकाराभिमतत्वमाह—**सूत्रेति** । सूत्रार्थमाह—**स्वाप्नेष्विति** । जीवस्यापि स्वप्नदशायां सत्यसङ्कल्पत्वाद्याविर्भावः, कल्प्यत इत्यत्राह—**तस्मिंल्लोका इति** । अनन्यथासिद्धस्यैवहि कल्पकत्वं परमात्मलिङ्गश्रवणेन स्वाप्नार्थसृष्टेः परमात्मनैवोपपन्नत्वान्नजीवस्य स्वरूपाविर्भावः कल्प्य इत्यर्थः ॥ कथमपवरके शयानस्य देशान्तरगमनादेः पारमार्थ्यमुपपद्यत इत्यत्राह—**अपवरकादिष्विति** । स्वयमेव स्वदुःखा-

## गूढार्थसङ्ग्रहः

**सन्ध्ये सृष्टिराहहि इत्यादि** । एतत्सूत्रद्वयार्थः प्राक् (६९९.पु) निरूपितः । परैः किं प्रबोधइव स्वप्नेऽपि पारमार्थिकी सृष्टिः ; आहोस्विन्मायामयीति ?' इत्यादिभाष्ये सूत्रद्वयेन परमात्मकर्तृकत्वं पूर्वपक्षयित्वा अनन्तरसूत्रैः जीवकर्तृकत्वं अपारमार्थिकत्वं च स्वाप्नार्थानां सिद्धान्तितम् । प्रबोधकालिकानामप्यर्थानां मायारूपत्वस्य परैरेव बहुषु स्थलेषु स्थापनेन परेषां मायाशब्दः प्रतिकूलएव । व्यावहारिकत्वं निराकृत्य प्रातीतिकत्वं स्वाप्नानामर्थानामत्र स्थाप्यत इत्येव परमतनिष्कर्षो वाच्यः ; अयमर्थः मायाशब्दस्य प्रातीतिकमात्रबोधकत्वे सङ्गच्छते । नच तथा परैरप्यभ्युपगम्यते । परमात्मकर्तृकत्वं न मायात्वं, जीवकर्तृत्वे मायात्वमिति न सिद्धान्तयितुं शक्यते, जीवेशभेदस्य मायामयत्वात् । सिद्धान्ते तु —जीवप्रकरणेन जीवकर्तृकत्वपूर्वपक्षः । श्रुत्यन्तरे प्राज्ञप्रकरणे परमात्मकर्तृकत्वस्य स्पष्टमुक्तया 'सहि कर्ता' इत्यत्र तच्छब्दस्य प्रसिद्धार्थकतया परमात्मकर्तृकत्वम् । 'न तत्र रथाः' इति श्रुतिः, तत्र पदार्थानामभावेऽपि पदार्थानां सृष्टिप्रतिपादनेन सृष्टपदार्थानां न प्रतिषेधपरा, किंतु आश्चर्यरूपत्वेन जागरितपदार्थवैलक्षण्यपरा ते च पदार्थाः आश्चर्यभूताः इति 'मायामात्रम्' इति सूत्रभाष्ये (शं) अत्र च प्रदर्शिताः । प्रबोधकाले क्वापि संभावनानर्हाः स्वप्नद्रष्टृपुरुषानुभाव्याः जागरितपदार्थापेक्षयाऽत्याश्चर्यभूताः इति तत्र विचित्रशक्तिमत्त्वादिना प्रसिद्धस्य परमात्मन एव कर्तृत्वं सम्भवति नतु जीवस्येति सिद्धान्तः । प्रबोधकालिकानां मायारूपत्वस्य सिद्धान्तिसम्मतत्वेऽपि ततोऽप्याश्चर्यरूपत्वात् स्वाप्नानामप्यर्थानां परमात्मकर्तृत्वमेव । एवं च सूत्रे न कस्यचिदंशस्य विरोधः, श्रुतिरपीममेवार्थमभिप्रैति इति । विस्तरस्तु सन्ध्याधिकरण एव भविष्यति । **शिरश्छेदादयइति** । आदिपदेन शङ्करभाष्योक्तदृष्टान्तपरिग्रहः ॥

## श्रीभाष्यम्

**पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते। पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसंभिन्ना नायनरश्मयश्शङ्खादिभिसंयुज्यन्ते। तत्र पित्तगतपीतिमाभिभूतश्शङ्खगतशुक्लिमा न गृह्यते अतस्सुवर्णानुलिप्तशङ्खवत् पीतश्शङ्ख इति प्रतीयते पित्तद्रव्यं तद्गतपीतिमाचातिसौक्ष्म्यात्पार्श्वस्थैर्न गृह्यते पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात् सूक्ष्ममपि गृह्यते तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते। जपाकुसुमसमीपवर्तिस्फटिकमणिरपि**

## श्रुतप्रकाशिका

वहवस्तुसृष्ट्यनुपपत्तेश्च न तदा जीवस्य स्वरूपाविर्भावः कल्प्य इतिचार्थसिद्धम् * शिरश्छेदादय इत्युक्तत्वात् सरूपे देहान्तरे शयानदेहव्यवहारो भेदाग्रहकृतः, नत्वन्यथाख्यातिकृतः ॥

एवं स्वाप्नार्थेषु तत्तदेकपुरुषानुभाव्यत्व तत्तत्कालावसायित्व रूपभेदाग्रहात्प्रवृत्त्यादिर्भवति पीतशङ्खादावीश्वरसृष्टत्वश्रुतिर्दर्शयितुं न शक्यत इत्यत्राह—**पीतेति**। पीतिमवछलौक्यमपि प्रतीयेतेत्यत्राह—**तत्रेति**। तर्हि पार्श्वस्थैरपि पित्तद्रव्यं ग्राह्यमित्यत्राह—**पित्तेति**। तर्हि सूक्ष्मत्वात्तेनापि न पित्तं ग्राह्यमित्यत्राह—**पित्तोपहतेनत्विति**। दूरस्थशङ्खस्यातिसामीप्याभावात्कथं तत्रस्थं पित्तद्रव्यं गृह्यतइत्यत्राह—**तद्ग्रहणेति**। यथा अतिदूरमुत्पतितः पतगो न द्रष्टुं शक्यते तथाऽपि सन्निकर्षोत्पतनकालादारभ्य निरन्तरमवेक्ष्यमाणस्तज्जनित संस्कारवद्भ्यां चक्षुर्भ्यां दूरेऽपि गृह्यते तद्वदित्यर्थः। प्राभा-

## गूढार्थसंग्रहः

**शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्तइति**। नहि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च तत्र सामर्थ्यं संभाव्यते। क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति कुरुष्वहमद्य शयानो निद्रयाऽभिप्लुतः स्वप्ने पाञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्चेति। देहाच्चेदपेयात्पञ्चालेषु प्रतिबुद्ध्येत तानसावभिगतइति कुरुष्वेवेति तु प्रतिबुध्यते। येनचायं देहेन देशान्तरमश्नुवानो मन्यते तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति यथाभूतानिचायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति। 'कालविसंवादोऽपि च स्वप्ने भवति रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्बहुवर्षपूगानतिवाहयति। निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणेवोचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारुणि वा' इति शङ्करभाष्योपात्तोदाहरेणेषु **शयानदेहसरूपसंस्थानदेहान्तरादिसृष्ट्या** सामञ्जस्यं एतत्सूक्त्या दर्शितं भवति **उभयोर्देहयोर्भेदाग्रहस्य** अख्यातिवादिसंमतस्यात्राङ्गीकारेण अख्यातिसंवलितयथार्थख्यातिरेव वेदवित्सिद्धान्त इति एतेन दर्शितं भवति ॥

प्रकरणपञ्चिकायां पीतशङ्खोदाहरणस्य उपात्ततया तत्रोपपत्तिं दर्शयति **पीतशङ्खादावित्यादिना**। पञ्चपादिकायां 'मिथ्यैवाहङ्कर्तृत्वमात्मनः स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा' इत्यारभ्य 'ननु अभिजातस्यैव पद्मरागादिमणेः जपाकुसुमादेरपि प्रभा विद्यते तया व्याप्तत्वात् स्फटिकोऽपि लोहित इवाभासते' इत्यख्यातिवादिनो मतमुपक्षिप्य 'तथाऽपि स्वयमलोहितो मिथ्यैव लोहित इत्यापद्येत' इत्युक्तम्। तद्दूषणपरिहारार्थं तदुदाहरणमुपादत्ते—**जपाकुसुमसमीपवर्तिस्फटिकमणिरपीति** ॥

## श्रीभाष्यम्

**तत्प्रभाभिभूततया रक्त इति गृह्यते जपाकुसुमप्रभा वितताऽपि स्वच्छद्रव्यसंयुक्ततया स्फुट तरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम्। मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद्यथार्थत्वम् अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तराळाग्रहणात्तथा**

## श्रुतप्रकाशिका

करैः पित्तपीतिमा शङ्खद्रव्यं निरन्तरं गृह्यते इत्युक्तम्। अत्रतु रूपवद्द्रव्ये चक्षुष्सामर्थ्यात्पित्तद्रव्यं गृह्यत इत्युक्तमिति विशेषः। सुवर्णानुलिप्तशङ्खवदिति * दृष्टान्तेचायंभावः ॥

ननु यदि पित्तद्रव्यशङ्खयोर्भेदाग्रहात्पीतशङ्खव्यवहारः तर्हि पटे पीतव्यवहारः कथं न स्यात्। अन्यथाख्यातौ वा कथं पटे पीतव्यवहाराभावः ? भ्रमेसति तन्मूलनिरूपणा कार्या नतु सर्वत्र भ्रमेण भवितव्यमितिचेत् तुल्यम्! जपाकुसुमस्फटिकादौ * चाक्षुषदोषसंसर्गो दुर्वचइत्यत्राह—**जपेति**। जपाकुसुमस्फटिक, मरीचिकाजल, अलातचक्र दिङ्मोहेषु द्रव्यान्तरेण संबन्धाद्यथार्था प्रतीतिरिति निर्वाहः। जपाकुसुमप्रभासंबन्धाद्रक्तप्रतीतिश्चेत्तत्सम्बन्धात्पाषाणादिष्वपि तथा स्यादित्यत्राह—**स्वच्छेति**। **मरीचिकेति**। * अदृष्टस्य नियामकत्वं सर्वैरपि ख्यात्यन्तरवादिभिरभ्युपेतव्यम्। अन्यथा सर्वेषां सर्वदा सर्वत्र सर्वविषयभ्रमप्रसङ्गात्; कदाचिदपि भ्रमाभावप्रसङ्गाच्च। **अलातेति**। अन्तराळाग्रहणात् पूर्वो-

## गूढार्थसङ्ग्रहः

**तत्प्रभाभिभूतया रक्तइति गृह्यत इति**। एतेन शुक्लरूपाग्रहणे बीजं दर्शितम्। सुवर्णानुलिप्तशङ्खवदिति पूर्वमनुपदमेवोक्त्या तत्रेवात्रापि अभिभवस्योपपत्तिः। ' स्वयमलोहितोऽपि मिथ्यैव लोहितइत्यापद्येत ' इति दूषणस्यापि नावसरः। सुवर्णानुलिप्तशङ्खे सुवर्णस्य यथा अनिर्वचनीयत्वं नास्ति तद्वत् जपाकुसुमप्रभालौहित्यस्यानिर्वचनीयत्वविरहेण तदाश्रयसंयोगवत्त्वेनात्र मिथ्यात्वापादनासम्भवात्। अभ्युपगम्य प्रभामिदमुक्तम्, यथा पद्मरागादिप्रभा निराश्रयाऽप्युन्मुखोपलभ्यते न तथा जपाकुसुमादेः ' इति पञ्चपादिकोक्तदूषणपरिहारमभिप्रेत्याह—**जपाकुसुमप्रभावितताप्यीत्यादिना**। प्रभायाः मध्यदेशे सत्त्वेऽपि स्वच्छद्रव्यसंयोगस्य तदुपलब्धिसहकारिकारणत्वाङ्गीकारेण मध्यदेशे लोहितप्रतीत्यापत्तेर्नावसरः

**उपलब्धिव्यवस्थाप्यमिदमिति**। पद्मरागप्रभावत् स्फटिकमणिसंयोगदशायां जपाकुसुमप्रभायाः उपलब्ध्या जपाकुसुमप्रभाऽप्यङ्गीकरणीयैव। अन्यथा जपाकुसुमादिविरहदशायामपि लोहित इति प्रतीतेः परिहारासंभवात् ' इति। एतेन ' स्फटिकोदाहरणेनैव अनात्मन्यात्माध्यासास्सिद्धः ' इति विवरणे अहमित्यत्र अध्यास इत्युक्तिर्निरवकाशेति सिद्धम्। पञ्चपादिकायां ' यत् पुनः दर्पणजलादिषु मुखचन्द्रादिप्रतिबिंबोदाहरणं तदहङ्कर्तुरनिदमंशः बिंबादिव प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरं, किंतु तदेव तत् पृथगवभासविपर्ययस्वरूपतामात्रं मिथ्येति दर्शयितुम्। कथं पुनस्तदेव तत्? एकस्वलक्षणत्वावगमात् ' इत्युपक्रम्य ' अत्राह—भवतु न वस्त्वन्तरं तदेव तदितितु न क्षम्यते। शुक्तिकारजतस्य मिथ्यारूपस्यापि सत्यरजतैकरूपावभासित्वदर्शनात् इति प्रतिबिंबस्य स्वरूपतोऽसत्यत्वादितिसुरेश्वरमतमुपन्यस्य मैवं तत्रहि बाधदर्शनात् मिथ्याभावः, नेह स बाधो दृश्यते। यत्पुनर्दर्पणावगमे तदवगमो न स बाधः, दर्पणेऽपि तत्प्रसङ्गात् ' इत्यादिना तन्मतं दूषयित्वा यस्तु मन्यते ' न पराक्प्रवणप्रवृत्तनायनरश्मिभिः बिंबमेव भिन्नदेशस्थं गृह्यते किंतु दर्पणप्रतिस्फालितैः प्रत्यङ्मुखैः स्वदेशस्थमेव बिंबं गृह्यते ' इति तमनुभवएव निराकरोति इति न पराक्रम्यते इति मीमांसकमतमपि दूषितम् ॥

## श्रीभाष्यम्

**प्रतीतिरुपपद्यते। चक्रप्रतीतावप्यन्तराळाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। क्वचिदन्तराळाभावादन्तराळाग्रहणं क्वचिच्छैघ्र्यादग्रहणमिति विशेषः। अतस्तदपि यथार्थम् दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति तत्राप्यतिशैघ्र्यादन्तराळाग्रहणात्तथा प्रतीतिः।**

## श्रुतप्रकाशिका

त्तरकालभाविनोस्तत्तत्प्रदेशविशेषालातसंयोगयोरन्तराळाग्रहणात् क्रमाग्रहणादित्यर्थः। आन्तराळाग्रहणेसति कथं याथार्थ्यमित्यत्राह–**चक्रेति**। चक्रप्रतीतिः सम्यक्चक्रप्रतीतिः। कोविशेषइत्यत्राह–**क्वचिदिति**। **दर्पणादिष्विति**। सव्यदाक्षिण-

## गूढार्थसङ्ग्रहः

अत्र विवरणम्। 'अख्यातिवादी न बिंबादन्यत्वेन प्रतिबिम्बं नाम दर्पणगतमवभासते। किंतु बिंबमेव दर्पणादविविक्तं प्रकाशत इति वदति, तदनुवदति 'यस्तु मन्यते'। इति स्पष्टप्रत्यङ्मुखावभासं दर्पणान्तरानुप्रविष्टमिव स्वमात्मानं पुरुषान्तरवन्निरीक्ष्यमाणमिवेदं यादृक्दृश्यमानं मुखंतथा नावभासत इति वदन् कथमात्तस्यादित्याह–तमनुभवएवेति' इति। एवं दूषितामपि मीमांसकमतप्रक्रियां साधयति–**दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्थेति**। स्वदेशस्थस्य बिंबस्य ग्रहणमेव प्रतिबिंबग्रहणमिति पक्षः श्लोकवार्तिके शब्दनित्यत्वाधिकरणे—'अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा। स्फुरता चाक्षुषं तेजः प्रतिस्रोतःप्रवर्तितम् ॥ (१८०) स्वदेश एव गृह्णाति सवितारमनेकधा। भिन्नमूर्ति यदा पात्रं तदाऽस्यानेकता कुतः। ईषन्निमीलिताङ्गुल्या यथा चक्षुषि दृश्यते ॥ पृथगेकोऽपि भिन्नत्वात् चक्षुर्वृत्तेस्तथैव नः। अन्येतु चोदयन्त्यत्र प्रतिबिंबोदयैषिणः ॥ स एव चेत्प्रतीयेत कस्मान्नो परिदृश्यते। कूपादिषु कुतोऽधस्तात् प्रतिबिंबेक्षणं भवेत् ॥ प्राङ्मुखो दर्पणं पश्यन् स्याचेत्प्रत्यङ्मुखः कथम्। तत्रैव बोधयेदर्थं बहिर्यातं यदिन्द्रियम् ॥ तत एतद्भवेदेवं शरीरे तत्तु बोधकम्। अप्सूर्यदर्शिनां नित्यं चक्षुर्द्वेधा प्रवर्तते ॥ एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वांशप्रकाशितम्। अधिष्ठानानृजुस्थत्वात् नात्मा सूर्यं प्रपद्यते ॥ पारंपर्यार्पितं सन्तमवाग्वृत्त्यातु बुध्यते। ऊर्ध्ववृत्तेस्तदेकत्वात् अवागिव च मन्यते ॥ अधस्तादेव तेनार्कः सान्तरालःप्रतीयते। एवं प्राग्भूतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम्। बुध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति ॥' इत्यत्र स्थापितः। भट्टपादमते अन्यथाख्यातिः, प्राभाकरमते अख्यातिरित्येतावानेव भेदः। अनुभवस्यापि नानुपपत्तिः। तत्र दर्पणदेशमुखयोः नायनरश्मिसम्बन्धः शीघ्रं भवतीति शैघ्र्येणान्तराळाज्ञानात् दर्पणस्थत्वेन मुखज्ञानं दर्पणस्थस्य वस्तुनः प्रत्यक्षदशायां दर्पणतद्वस्तुनोरुभयोः नायनरश्मिसम्बन्धेन दर्पणस्थत्वेन वस्तुज्ञानवत् अत्रापि शैघ्र्येण अन्तराळाज्ञानात् नायनरश्मिसम्बन्धस्य एककालिकत्वेन दर्पणस्थत्वेनानुभवस्य न विरोधः। पञ्चपादिकाकारमते बिंबप्रतिबिंबयोरैक्यकल्पनमपि न युक्तम् विच्छिन्नदेशद्वये भानविरोधात्। 'न वयं विच्छेदावभासं पारमार्थिकं ब्रूमः, किंत्वेकत्वं विच्छेदस्तु मायाविजृंभितः, नहि मायायामसम्भावनीयं नाम असम्भावनीयावभासप्रचुराहि सा' इत्युक्तिरपि नादर्तव्या ॥

एकस्य विच्छेदावभासस्य मायाविजृम्भितत्वे ऐक्यस्यापि मायाविजृम्भितत्वसम्भवात्। शुक्तिकारजतस्य मिथ्यारूपस्यापि सत्यरजतैकत्वावभासित्वदर्शनात्, तत्रहि बाधदर्शनादित्यादिसमाधानंतु न घटते। यत्पुरुषमुखस्य प्रतिबिंब स एव पुरुषः यदा साक्षात्करोति तदा नेदं मुखमिति स्वरूपेण तत्पुरुषस्य न बाधः। पार्श्वस्थेन नेदं मुखमपितु प्रतिमुखमिति ज्ञायत एवेति नेदं मुखमिति बाधो नास्तीति विवरणोक्तिर्न घटते ॥

## श्रीभाष्यम्

दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते अतो दिगन्तरप्रतीतिर्यथार्थैव। द्विचन्द्रज्ञानादावपि अङ्गुल्यवष्टम्भ तिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति, द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति अतस्सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावा, द्वौ चन्द्राविति भवति प्रतीतिविशेषः। देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य अगृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति। तत्र सामग्रीद्वित्वं पारमार्थिकं तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकं ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम्। तत्र विशेषणद्वयविशिष्टचन्द्रग्रहण-

## श्रुतप्रकाशिका

विपर्यासः कथमितिचेदुच्यते * आपेक्षिकोहि सव्यदक्षिणभावः। तत्र स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य मुखस्यचान्तरालाग्रहणमेव विपर्यासो दर्पणदेशगतः तेनाग्रहीतान्तरालं मुखमिति अभिमुखस्य दर्पणस्य मुखस्यचान्तरालाग्रहणादाभिमुख्यप्रतीतेर्याथार्थ्यम्। एवं मलिनत्वाल्पत्वादिश्च। **दिङ्मोहेऽपीति**। सर्वदिक्सद्भावेऽपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षया। तत्र दिगन्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभानम् अतो यथार्थविषयत्वमिति। दिशां बहुत्वं च **'पद्भ्यां भूमिर्दिशश्श्रोत्रात्'** इत्यवगम्यते। **द्विचन्द्रेति**। ततःकिमित्यत्राह—**तत्रैकेति**। स्वतः ऋजुप्रसारिणोऽपि चाक्षुषतेजसो वक्रत्वं सम्भवति दर्पणादिना तद्दर्शनात्। इहाप्यङ्गुल्यवष्टम्भाद्दृष्टादिना तदुपपत्तिः॥

ततःकिमित्यत्राह—**अतइति**। चन्द्रदेशौ द्वाविति प्रतीत्यभावहेतुश्चन्द्रैकत्वाग्रहणम्। देशान्तरगतस्य तद्विशेषणत्वं कथमित्यत्राह—**देशेति**। ततःकिं प्रतीतेर्याथार्थ्यस्येत्यत्राह-**तत्र सामग्रीति**। **तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकमिति**। ग्रहणद्वयमतिशैघ्र्याद ग्रहीतक्रमम्। अतएवाग्रहीतपरस्परभेदंचेति भावः। विशेषणद्वयविशिष्टविषयग्रहणद्वयेऽपि विशेष्यैक्यं कथं न प्रतीयत इत्यत्राह-**तत्रेति**। नहि केवलं चक्षुरैक्यप्रतिपत्तिसमर्थं दृष्टं देव-

## गूढार्थसंग्रहः

किंच विच्छेदावभासेन ग्रीवास्थमुखस्य स्वाचप्रत्यक्षदशायां प्रतिबिंबोपाधेः समीपे सत्वे देहावयवपादादीनां चाक्षुषदशायां च बिंबप्रतिबिंबभेदः स्फुटं निश्चीयते। नयनगोलकादेः स्वचाक्षुषविरहमात्रेण हस्तपादादिप्रतिबिंबस्य मुखप्रतिबिंबस्य च वैलक्षण्यकल्पनस्यानुचितत्वात्। अद्वैतविद्याक्वाद्भिः विवरणकारसम्मतबिम्बप्रतिबिंबैक्यं दूषयित्वा सुरेश्वरसम्मतप्रतिबिंबासत्यत्वमेव सिद्धान्तितम्। अयमर्थः सिद्धान्तलेशसङ्ग्रहे व्यक्तः। प्रतिबिंबैक्यपक्षेऽपि दर्पणप्रतिहतनयनरश्मीनां परावृत्त्या बिंबभूतस्वमुखसमीपगमनं 'दर्पणाभिहता दृष्टिः परागृत्या स्वमाननम्। व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्॥' इति सुरेश्वरोक्तमङ्गीकृतमेव। तत्र च मूले उदाहृतश्श्लोकवार्तिकग्रन्थः। अतश्च अख्यातिवादे (ज्ञानयाथार्थ्यवादे)ऽपि उदाहृतस्थले उपपत्तिस्संभवतीति भावः। अन्यत् भावप्रकाशे (२.संपुटे) द्रष्टव्यम्॥

**द्विचन्द्रज्ञानादावपीति**। अत्र शुक्तिरजतोदाहरणमुपक्रम्य द्विचन्द्रोदाहरणोपसंहारेण अध्यासभाष्ये (शां) 'शुक्तिकाहि रजतवदवभासते एकश्चन्द्रः स द्वितीयवत्' इति वाक्यं पर्यालोचितं भवति॥

### श्रीभाष्यम्

**द्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञानवत् केवलचक्षुषस्सामर्थ्याभावाच्चाक्षुषज्ञानं तथैवावतिष्ठते। द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजस्सामग्रीद्वयं भवतीति कार्यकल्प्यम्। अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वादेकश्चन्द्र इति भवति प्रत्ययः दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वंचेति निरवद्यम्।**

### श्रुतप्रकाशिका

दत्तादिषु, अपितु संस्कारसंस्कृतमेव समर्थं दृष्टम् संस्कारस्य विलम्बितत्वाविरत्वान्न तदानीमैक्यप्रतिपत्तिरित्यर्थः। **चाक्षुषज्ञानं तथैवावतिष्ठतइति**। अगृहीतैकत्वचन्द्रमात्रविषयमवतिष्ठत इत्यर्थः। तस्यैवेति पाठे चन्द्रमात्रस्यैव ग्राहकतया तिष्ठतीत्यर्थः। एकसामग्रीभूतयोश्चक्षुषोः कथं द्विसामग्रीत्वमित्यत्राह—**द्वयोश्चक्षुषोरिति**। स्वतो निर्दोषस्येन्द्रियस्य सदोषत्वंहि कार्यकल्प्यम् तथा सामग्रीद्वित्वमपीति भावः॥

तर्हि सदैवं चन्द्रद्वित्वं गृह्येतेत्यत्राह—**अपगतेत्विति**। कथं दोषापगमे ऐक्यप्रतिपत्तिरिति शङ्कायां द्वित्वप्रतिपत्तेरौपाधिकत्वमाह—**दोषकृतमिति**। **ग्राह्याकारद्वित्वमिति**। स्वदेशविशिष्टत्वमेक आकारः अगृहीतान्तराले प्रदेशान्तरमेक आकारः तस्याकारत्वं विशेषणत्वम्। नचानाकारस्याकारत्वेनान्यथाख्यानम्। अगृहीतान्तरळत्वेसत्यप्रधानतया भातस्यैव विशेषणत्वात् नेत्रवृत्तिर्वित्तिगतद्वित्वं चन्द्रंचागृहीतभेदं गृह्णातीति प्राभाकराः यथा संवित्सिद्धौ प्राभाकरमतोपन्यासे

### गूढार्थसंग्रहः

**निरवद्यमिति**। एतेन शुक्तिकोदाहरणेन संप्रयुक्तस्य अनात्मा रजतमिति दर्शितम्। निरञ्जनचैतन्यस्य अस्मदर्थे अनिदमंशस्यानात्मा तदवभास्यत्वेन युष्मदर्थलक्षणापन्नः अध्यस्त इति प्रदर्शनार्थं द्विचन्द्रोदाहरणेन जीवेश्वरयोर्जीवानां च अनात्मरूपो भेदावभास इति दर्शितम्।' इति पञ्चपादिकोक्तप्रक्रिया अनुपादेयेति सूचितम्॥

अत्र सुधाकाराः 'यानि तावत् शुक्तिकारजतादिषु रजतादिसद्भावे श्रुतिपुराणसूत्राणि पठितानि, तानि तेजोऽबन्नादीनां मिश्रतामभिदधति, न पुनः रजतादीनां शुक्तिकादौ सद्भावम्, नहि कारणसद्भावे कार्यसद्भावो नियतः। येन उपपत्त्यापीममर्थं प्रतीमः। तथात्वे शुक्तौ रजतवत् सर्वस्यापि प्रतीतिः प्रसज्येत। अदृष्टवशान्नैवमितिचेन्न कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनायाः। श्रुतार्थापत्तिस्त्वत्यन्तायुक्ता। तथाहि पूतीकादौ सोमाद्यवयवाः भूयांसः कल्प्यन्ते उतसमाः उत अल्पीयांसः? आद्ये सोम एवासौ कथं तदनुकल्पस्स्यात्? न द्वितीयः उभयदर्शनप्रसङ्गात्। तृतीयेतु कथं सोमकार्यं कुर्यात्? अन्यथा शुक्तिकाऽपि कुतो रजतार्थक्रियां न कुर्यात्? श्रुतिप्रामाण्यात् तदर्थक्रियाकारिता अवगम्यतइति चेत् किं तर्हि सोमावयवकल्पनया? श्रुतिप्रामाण्यादत्यन्तविविक्तानामेव वस्तूनां अर्थक्रियासाम्यमुपगम्यताम्। सादृश्यं च सामान्यं वा धर्मान्तरं वा नान्योन्यावयवसंयोग इति वक्ष्यामः। किंच घृततैलयोः अन्योन्यसदृशयोः अन्योन्यावयवसंयोगात् अन्योन्यार्थक्रियया भाव्यम् न भाव्यं च विसदृशयोः द्रव्ययोः। किंच मातृ मातङ्गमदिरादिसादृश्यं भार्यादिष्वप्यस्तीति तदुपभोगे प्रत्यवायस्स्यात् अल्पावयवसंयोगान्नैवमितिचेत्, कथं तर्हि नीवाराः व्रीहिकार्यं कुर्युः श्रुतिप्रामाण्यादिति वदतो दत्तमुत्तरम्। अपरावयवसंयोग एव सादृश्यंचेत्, कथं ककारखकारयोः सादृश्यमिति चिन्त्यम्। रजतार्थिनः शुक्तिकायां प्रवर्तकं च किं भूयसां शुक्त्यवयवानामदर्शनं उताल्पीयसां रजतावयवानां दर्शनं उतोभयं वा?

## गूढार्थसंग्रहः

नाद्यः सुप्तस्यापि प्रवृत्तिप्रसङ्गात् । द्वितीयेऽपि किं तेषामल्पीयस्त्वज्ञानं उत भूयस्त्वज्ञानं अथवा ज्ञानमात्रं, अत्र आद्ये तस्यारजतत्वमेव विदितमिति कथं ततःप्रवृत्तिः ? द्वितीये अन्यथाख्यातिप्रसङ्गः, तृतीये सदृशमात्रे प्रवृत्तिप्रसक्तिः, न तृतीयः किमपि तत्रास्ति इति ज्ञानादपि प्रवृत्तिप्रसङ्गात् । कथंचास्य ज्ञानस्य भ्रान्तित्वम् ? अल्पांशग्रहणादितिचेत् नूनं ब्रह्मज्ञानमपि महाभ्रान्तिरापन्ना । अतएव न बाधस्य बाधकत्वमपि पित्तगतपीतिमाऽनुलिप्तश्चेत् शङ्खः कथं तर्हि न तथा पार्श्वस्थेन गृह्यते ? सूक्ष्मत्वादितिचेत् किमिदं सूक्ष्मत्वं ? अतीन्द्रियत्वंचेत् न तर्हि भ्रान्तेनापि दृश्येत । अन्यचेत् किमनेन । पित्तोपहतेनतु सामीप्यात् दृश्यत इतिचेत् किमिदं सामीप्यं नाम ? इन्द्रियसन्निकर्षश्चेत् स तद्वुभयोस्समानः । सामीप्यं चेत्तदनुपयुक्तम् । अन्यथा परशरीरसमीपस्थानां दण्डकुण्डलादीनामदर्शनप्रसङ्गात् । पीतश्शङ्खः प्रतीयत इति कोऽर्थः किं पीतरूपवत्तयेति, उत पीतरूपद्रव्यसंयुक्ततयेति ? नाद्यः अन्यथाख्यातिप्रसङ्गात् द्वितीये अनुभवविरोधः । एवमुदाहरणान्तराणि विप्रतिपन्नानि निरसनीयानीत्यलमपहसनीयप्रक्रियानिराक्रियाविस्तरेण ' इति प्राहुः ॥

अत्र परिमलः—भार्यादिष्विति । भार्यायां मातृसादृश्यं पितृगुरुप्रभृतिषु मातङ्गशब्दितचण्डालसादृश्यं घृतक्षीरादौ मदिरशब्दितमद्यसादृश्यमस्तीति प्रसङ्गः । एवमिति । स्वप्नस्फटिकलौहित्यादिप्रागुक्तोदाहरणान्तराणीत्यर्थः । तथाहि 'अथ रथान् ' इत्यादिश्रुतेः स्वाप्नार्थानामपि ईश्वरसृष्टत्वात् तद्धीः सर्वा यथार्थेत्ययुक्तम् । स्वप्नएवायं न जाग्रत् इति बाधविरोधात् स्फटिके रक्तकुसुमप्रभोपलम्भात् तल्लौहित्यधीर्यथार्थेत्यपि न । रक्तकुसुमसमीपवस्त्वन्तरेऽपि तथोपलब्धिप्रसङ्गात् मरीचिकासु जलावयवसत्त्वात् तद्धीरेव तत्रेतितु शुक्तिरूप्यप्रक्रियानिरासेन निरस्तम् । अलातचक्रेतु अलातस्य सर्वदेशसंयोग एव न भ्रान्तिरिति, तन्न । फल्गुपामराणां चक्रताबुद्धेः भ्रान्तित्वानिवारणात् । नायनरश्मयो दर्पणप्रतिहताः ग्रीवास्थमुखमेव गृह्णन्तीति तद्धीरपि यथार्थेत्यपि न ' अतएव चोपमा ' इत्यत्र निरसिष्यमाणत्वात्, दिगन्तरे दिगन्तरावयवसत्त्वात् शुक्तौ रूप्यधीरिव तद्धीरपि यथार्थेत्यपि शुक्तिरूप्यप्रक्रियानिरासेन निरस्तम् । यातु द्विचन्द्रप्रक्रिया नयनस्याङ्गुल्यवष्टम्भेहि नायनरश्मयो द्वेधा बहिर्गच्छन्ति, ऋजुतया वक्रतया च । तत्र ये ऋजवः ते स्वदेशस्थं समीपस्थं गृह्णन्ति । येतु वक्राः तेतु दूरदेशं व्याप्य तमेव चन्द्रं विप्रकृष्टदेशस्थं गृह्णन्तीति द्वित्वधीर्यथार्थेति । सातु धीमात्रयाथार्थ्यसिद्ध्युत्तरकालीनैषाऽत्यन्ताप्रामाणिककल्पना, सैव न सिद्धेत्यादिरूपेण निरसनीयेत्यर्थः ' इति । एतत्सर्वं भाष्यसूक्त्यैव समाहितम् ॥

एवं ' सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ' इत्यतःपूर्वं ' कदाचिच्चक्षुरादेस्तु दोषात् शुक्त्यंशवर्जितः । रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ॥ ' इति सूक्त्या रजतवत् सर्वस्यापि प्रतीतिः प्रसज्येत इत्यस्यापि नावकाशः । पूतीकादौ सोमावयवसद्भावविषये ' न्यायविदो विदुः ' इत्युक्त्या ' सामान्यं तच्चिकीर्षाहि ' इति सूत्रे सदृशवस्तूनामेव प्रतिनिधितया ग्रहणस्य मीमांसकैः स्पष्टमुक्तिपूर्वकं सदृशप्रतिनिधिग्रहणस्यैव तैस्सिद्धान्तितत्वेन तत्सम्मतेयं प्रक्रिया इति भगवतैव एतदर्थनिर्धारणेन प्रतिनिधिस्थले सुधोक्तिः निरवकाशा सर्वस्य सर्वत्वे दोषदशायामेव भूयोऽवयवानामग्रहणमल्पावयवानांग्रहणमित्युक्त्या भार्यादिष्वपीत्युक्तिर्निरवकाशा । इति । ' पीतशङ्खादौतु नयनवर्तिपित्तद्रव्यसंभिन्नाः नायनरश्मयः शङ्खादिभिस्संयुज्यन्ते ' इति भगवदुक्त्या पार्श्वस्थपुरुषाणां पीतिम्नः अग्रहणे निदानं दर्शितम् । यत्पुरुषनयनगतपित्तद्रव्यसंभिन्ना नायनरश्मयः तत्पुरुषस्यैव नायनरश्मयः पीतिमानं गृह्णन्ति नत्वन्यपुरुषस्य । एतेन पित्तगतपीतिमानुलिप्तश्चेत् शङ्खःकथं तर्हि न तथा पार्श्वस्थेन गृह्यते ' इत्यादिदूषणस्य नावकाशः ॥

' स्वप्न एव न जाग्रत् ' इति बाधस्य न कथंचिदपि विरोधः, स्वप्नजाग्रत्पदार्थयोर्भेदात्, स्वप्ने दृष्टाः पदार्थाः इदानीं न सन्ति इति जाग्रत्काले प्रतीतिः स्वप्नदृष्टानामल्पकालिकत्वेन अनया प्रतीत्या अत्यन्तासत्त्वं नैव सिद्ध्यति ।

## गूढार्थसंग्रहः

अनया प्रतीत्या स्वप्नेऽपि नासन्निति नैव निश्चयस्सम्भवति, अत्यल्पकालिकाः ये केचित् पदार्थाः एकेन पुरुषेण यदा दृष्टाः तदन्यकाले अन्येन पुरुषेण तत्र गमनदशायां मयाऽत्र केचन पदार्थाः दृष्टाः इदानीं न सन्तीत्यन्यपुरुषप्रयुक्तौ अन्यपुरुषेण ते पदार्थाः नैवासन् इति असत्त्वेन यथा निश्चेतुं न शक्यते तद्वत्। स्फटिकस्य स्वच्छद्रव्यतया तत्संयोग एव जपाकुसुमप्रभायाः प्रत्यक्षमिति पूर्वमेवोपपादनेन अन्यत्रापि तत्प्रत्यक्षं स्यादित्यापादनं निरवकाशम्। अलातचक्रेतु अन्तरालाग्रहणात् सर्वदेशसंयुक्ततया चक्रताग्रहणमिति न विरोधः। नेत्रवृत्तिद्वैविध्यस्यान्यत्र भट्टपादैरुक्तया सर्वेषामनुभवसिद्धत्वेन च नेत्रवृत्तिभेदेनैव द्विचन्द्रप्रतीतिरप्युपपद्यत इति न कश्चिद्दोषः ॥

नवीनास्तु—'असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेवहि। तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥ अन्यथात्वमसत्त्वस्मात् भ्रान्तावेव प्रतीयते। सत्त्वस्यासत एवंहि स्वीकार्यैव प्रतीतता ॥' (अनुव्याख्यान.१.१.१) असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वात्। असदेव रजतं प्रत्यभात् इत्युत्तरकालीनानुभवात् शुक्तिरेवात्यन्तासद्रजतात्मना प्रतिभातीत्याचार्याः' (प्रमाणपद्धतिः) इति इदं रजतमित्यत्र अभिनवान्यथाख्यातिं सिद्धान्तयन्ति। 'असदेवं रजतं प्रत्यभात्' इति प्रतीत्या इदं रजतमित्यत्र अत्यन्तासद्रजतमेव प्रतीयते इति कथं निश्चीयते। देशविशेषं कालविशेषं वा अन्तर्भाव्य बाधनिश्चयानन्तरं अत्र तदा असदेवेदं प्रत्यभात् इति प्रतीतिः अनुभवसिद्धा नापलपितुं शक्या। तत्र च देशान्तरे कालान्तरे च प्रतीतस्य वस्तुनः सत्त्वं सर्वसम्मतम्। एवं च तद्वदत्रापि अन्यत्र सतएव प्रतीतिविषयत्वसिद्धौ नानया प्रतीत्या अत्यन्तासतः ख्यातिविषयत्वं सिद्ध्यति। असति इन्द्रियसन्निकर्षाभावाच्च, पुरोवर्तिनि सन्निकर्ष एव दोषसहकृतः अत्यन्तासतोऽपि प्रतीतत्वं साधयतीतितु न सम्भवति। प्रत्यक्षे यस्य सन्निकर्षः तस्यैव भानमित्यन्यत्र योऽयं नियमः तद्भङ्गेन पुरोवर्तिसन्निकर्षस्य असद्विषयकत्वसाधकत्वासम्भवात्। विवादविषयव्यतिरिक्तस्थले यत्र क्व वा तद्वस्तुसन्निकर्षाभावेऽपि तद्वस्तु साक्षात्करोमीति प्रतीतिः यद्यनुभवसिद्धा तदैवैवं कल्पना समञ्जसा स्यात्। दोषोऽपि सन्निकर्षाभावेऽपि साक्षात्कारं जनयितुं नैव शक्नोति। अतएवान्यथाख्यातिवादिभिः नैयायिकैरलौकिकसन्निकर्षेण रजतस्य भानमङ्गीक्रियते। सिद्धान्तेतु सन्निकर्ष उपपादित एव ॥

अख्यातिवादेऽपि असत् सत्त्वेन साक्षात्करोमि, शुक्तिकामेव रजतत्वेन प्रतिपन्नोऽस्मि इत्यादिकं भेदाग्रहण असंसर्गाग्रहेण च उपपद्यते। असदित्यस्याः प्रतीतेः देशकालान्तरासद्विषयकत्वे असद्विलक्षणमिति प्रतीतिरुपपद्यते। भट्टपादैः 'सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम्। जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा। तद्देशे वाऽन्यदेशे वा स्वप्नज्ञानस्य गोचरः। अलातचक्रेऽलातं स्यात् शीघ्रभ्रमणसंस्कृतम्। गन्धर्वनगरेऽभ्राणि पूर्वदृष्टं गृहादि च। पूर्वानुभूततोयं च रश्मितप्तोऽवरं तथा। मृगतोयस्य विज्ञाने कारणत्वेन कल्प्यते ॥' (नि.वा) इत्यादौ भ्रमप्रत्यक्षस्य सद्विषयकत्वमेवोक्तम्। विस्तरस्तु सर्वार्थसिद्ध्यादौ द्रष्टव्यः ॥

(सि.सि.अं) 'सोमाभावे पूतीकानभिषुणुयात्' इति प्रतिनिधिनियमशास्त्रमेव सदृशे सदृशान्तरासमावेशं दर्शयति। रजतावयवो रजतमिव सोमावयवोऽपिहि सोम एव स्यात् अन्यथा पूतीकेष्वेव सोमसत्त्वे सोमाभाव इति न सम्बध्येत। सदृशान्तरावयवसुसदृशा एव हि सदृशान्तरे तदवयवा उपगम्यन्ते परेण। अन्यथा अरजते रजतबुद्धिरन्यथाख्यातिस्यादिति। नच सोमाभाव इति विशेषे लाक्षणिकं युक्तं, सामान्यविषयत्वसम्भवात्। कथं तर्हि व्रीह्यभावे नीवारा एव प्रतिनिधीयेरन्, न श्यामाकादयः। कथं वा नीवारेषु व्रीहित्वावच्छेद्या व्रीहय एव प्रतिनिधीयेरन्। प्रक्रान्ते च प्रयोगे तैर

## गूढार्थसंग्रहः

वान्तरा व्रीहिलाभे त्यजेरन् । अतदवयवसाङ्कर्यस्येतरत्रेतरत्र चाविशेषात् । कथं तर्हि सादृश्यात् प्रतिनिधीयन्ते । शास्त्रादेव, नतु तदवयवसत्त्वन्यायात् ॥

कथं तर्हि शिष्टाभावे सादृश्यात् प्रतिनिधिः । 'सामान्यं तच्चिकीर्षाहि' (जै.६.३.२७) इति षष्ठाधिकरणे हि श्रुतद्रव्यापचारे प्रतिनिधायावश्यकर्तव्ये यागे यत्किंचिदेव द्रव्यमपर्युदस्तं प्रतिनिधेयमविशेषादिति प्राप्ते यत्र सामान्यं तत् प्रतिनिधेयं कुतः, श्रुतचिकीर्षाहि वर्तते । सदृशप्रतिनिधाने च तदेव कृतं भवति । कथं 'व्रीहिभिर्यजेत' इति । उच्यते नच तदभिधेया व्रीह्याकृतिरेव यागक्रियायां साक्षादङ्गं भवति । नच तदवच्छेद्या व्यक्तिरपि पेषणादिविधानात् । किंत्ववयवाः । न चाव्याप्रियमाणेष्ववयवेषु सतोऽपि खदिरादेरवयविनो व्यापारः सम्भवति । अतो व्रीह्याकृतिव्यक्त्यवयवा व्रीहिशब्दोपात्ता इति तदाकृतिव्यक्त्यभावेऽपि नीवारेषु प्रतिनिधीयमानेषु त एव कतिपयेऽपि व्रीह्यवयवास्सङ्गृहीता भवन्तीत्यतः सदृशा एव प्रतिनिधेया इति स्थितमिति ॥

अत्रोच्यते–न सादृश्यात् प्रतिनिधिः किन्तु शास्त्रादेव । न खलु व्रीहिशास्त्रमनुष्ठातुं प्रतिनिधिरिष्यते । किं तर्हि प्रधानशास्त्रमेव । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादिचोदनायां हि यागक्रियाऽवश्यकार्या वाक्यार्थः । प्रधानं काम्यचोदनायामप्यारब्धमवश्यसमापनीयमिति शिष्टाचारानुमितश्रुत्यनुग्रहेणावश्यकार्यत्वावगमात् । तत्र चोदनाऽवश्यकार्यतांशेनार्थतो यत्किंचिद्द्रव्यमविशेषेण क्रियासाधनमुपादापयन्ती व्रीहिभिरिति साधनद्रव्यविशेषसमर्पकेणैकवाक्यताङ्गता तत एवोपपादितार्थतया द्रव्यान्तराक्षेपा निवर्तते । प्राक्तु तदेकवाक्यतायाः साधनद्रव्यतया व्रीहिरपि सम्भवत्प्राप्ति पुनः श्रुतिरूपं व्रीहिशास्त्रं द्रव्यान्तराक्षेपनिरोधितयाऽर्थतो नियमविधिरुच्यते । श्रुताभावे पुनरार्थिकतन्नियमत्यागेन स एव यत्किञ्चिद्द्रव्यविशेषाक्षेपोऽवतिष्ठत इति यत्किंचिदेव द्रव्यमपर्युदस्तं प्रतिनिधेयमिष्यते । अयं पक्षः 'आगमो वा चोदनार्थाविशेषात्' (जै.६.३.१५) इति सूत्रविवरणे टुप्टीकायां दर्शितः । या प्रधानचोदना यत्किंचिद्द्रव्यमर्थादाकाङ्क्षति, सा व्रीहिभिर्विद्यमानैरेकवाक्यतां प्रतिपद्यमानार्थप्राप्तिं द्रव्यान्तराणां बाधते । श्रुतद्रव्याभावेतु या द्रव्यान्तराणामर्थप्राप्तिः सा केन वार्यते । तस्माद्द्रव्यान्तरागमः कर्तव्य इति । आख्यातं वा यागक्रियांशेनाकाङ्क्षितं साधनद्रव्यमविशेषेणोपादापयद्व्रीहिभिरिति तृतीयया साधनद्रव्यसमर्पिकयैकवाक्यतां गतं प्रशान्ताकाङ्क्षं चोदनयाऽन्वेति । तत्र केवलविभक्तेरप्रयोज्यतया कस्मिंश्चिदवश्यप्रयोज्ये प्रातिपदिके व्रीहित्वमतन्त्रमित्यतो नियमेन सर्वमेव साधनद्रव्यं शाब्दमेव ॥

यद्येवं कथं तर्हि 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इतिशास्त्रद्वयमर्थवत् स्यात् । विभक्त्यैवाकाङ्क्षितसमर्पणेन प्रातिपदिकमवर्जनीयायतिकमनर्थकीकृतम् । कथं च प्रतिनिधिः, सर्वमेवहि साधनद्रव्यं शाब्दमिति वैकल्पिकमेव स्यात् उच्यते—सत्यम्, न प्रतीतितोऽर्थवदनाकाङ्क्षितत्वात् । किंतु प्रवर्तिकाहि चोदना क्रियाप्रवृत्तौ विशेषमपेक्षमाणाऽन्यार्थोपस्थितमपि विशेषणमुपादाय चरितार्था भवतीति प्रवृत्तितो नियमनेन विकल्पेन च शास्त्रद्वयमर्थवत् स्यात् । अतएव च श्रुतप्रवृत्तिसौकर्यापेक्षयैव श्रुताभावे द्रव्यान्तरमुपादीयमानं प्रतिनिधिरुच्यते । यजिप्रकृतिर्वा देवतोद्देशेन द्रव्यत्यागात्मक यागांशेन द्रव्यमुपाददाना निर्विशेषसामान्यायोगेन विशेषमुपपादयन्ती व्रीहिपदेन विशेषसमर्पकेणैकवाक्यतां गता विशेषान्तराक्षेपान्निवर्तते । तत्र शब्दोपात्तद्रव्यत्वस्य नीवारादौ श्रुतव्रीहिभिरेकार्थसमवायित्वासम्भवादार्थिको विशेषान्तरानियम इति तदभावे तन्नियमत्यागेन तदेव सामान्यद्वारं विशेषान्तरमुपादीयमानं प्रतिनिधिरुच्यते । सर्व एते पक्षा वाक्यपदीयादौ परिश्रमशालिनां सुगमाः । तदेवं सर्वथाऽपि सादृश्यमनपेक्ष्य शास्त्रादेव प्रतिनिधिरिति ॥

## गूढार्थसंग्रहः

उक्तं तावत् सदृशेषु नेतरत्रेतरावयवाः सम्भवन्ति, इतरेतरावयवान्तरितानन्तरितादिविकल्पदोषग्रस्तत्वात् । 'सोमाभावे पूतीकानि' ति पूतीकेषु सोमाभावदर्शनाद्लिङ्गाच्चेति । ततो न व्रीहय इत्येव नीवाराः प्रतिनिधेयाः । नचान्तरेण शास्त्रमिच्छया नीवारान् प्रतिनिधाय शास्त्रार्थकारी भवति । तस्मादवश्यं प्रतिनिधौ शास्त्रमन्वेषणीयम् । तच्च क्रियाचोदनैवेत्युक्तम् । नच श्रुताभावे शास्त्रं प्रतिनिधिमुपादापयति येनानित्यः सन्नित्यसमानविधानता स्यात् । किंतु क्रियाचोदनयार्थसामर्थ्यप्रस्ताव उत्सृष्टो बाधकाभावे तथैवावतिष्ठत इति ह्युपपादतम् । तदेवं शास्त्रादविशेषेण प्रतिनिधिप्राप्तौ सदृशप्रतिनिधयः शिष्टाचारात्, सदृशोपस्थितिप्राशुभावाद् लोके विरहाविनोदाय सदृशप्रतिनिधिदर्शनाच्चेत्युपपन्नम् । तथा च 'सामान्यं तच्चिकीर्षाहि' (जै.३.२७) इति सूत्रं यत्र सामान्यं तत् प्रतिनिधेयं, मुख्याभावे तत्समानाचिकीर्षाहि शिष्टाचारे दृष्टा लोके वा विरहिविनोदादाविति व्याख्येयम् । अथवा 'सोमाभावे पूतीकानभिषुणुयात्' इति शास्त्रमेव सोमे सदृशविशेषणं नियच्छदर्थतो विहितद्रव्याभावे सर्वत्र सदृशप्रतिनिधानं विधत्त इति गम्यते । कथं पूतीकशास्त्रे सदृशविशेषनियमोऽवगम्यते । प्राप्तेषुहि सदृशेषु तन्नियमो भवति । तन्नियमाच्च सदृशविधिमुन्नयतः प्राप्तमितरेतराश्रयत्वम् । न । अभावे विधौ गौरवं नियमे लाघवमिति तर्किते नियमे तदुपपादकतया तत एव सामर्थ्यात् सामान्यतः सदृशप्रतिनिधौ सम्भाविते तर्कितविधिलाघवसामर्थ्यादेव युगपदुभयनिर्धारणोपपत्तेः । अतएव न श्रुतेन प्रतिनिधेर्विकल्पः प्रत्यक्षानुमानयोरतुल्यबलत्वात् । अथाभावे विधौ पूतीकानामभिषवादावसमानविधानत्वमाशङ्क्य समाहितं सूत्रकृता 'नियमार्था पुनश्श्रुतिः' (जै.सू.३.६.४०) इति । तत्र शास्त्रलक्षणश्चेत् प्रतिनिधिः श्रुताभावे विहितःस्यात् , 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः परिसङ्ख्याय यजेरन्' इत्यादिवत् । ततश्च फलचमसवन्नैमित्तिकत्वादसामानविध्यं स्यात् । अतएव समानविधानत्वे शास्त्रलक्षणत्वं बाधकमभिप्रेत्य 'अशास्त्रलक्षणत्वाच्च' (जै.३.६.३९) इति सूत्रितम् । भाष्यकारश्च 'अर्थाद्धि प्रतिनिधिःक्रियते । नचार्थेनैतदवगन्तुं शक्यते व्रीहित्वस्य स्थाने नीवारत्वं भवति' इति । एवं वदन् सदृशन्यायसिद्धावेव प्रतिनिधेः सामानविध्यं स्यादित्यभिप्रैति । तस्माच्छास्त्रलक्षणत्वे प्रतिनिधेर्धर्मेषु समानविधानत्वानुपपत्तिरितिचेत् । उच्यते । इष्यते तावद्व्रीहियवयोः शास्त्रलक्षणयोरेव धर्मेषु समानविधानत्वम् । एवं प्रतिनिधावपि भविष्यति । नच श्रुताभावे निमित्ते प्रतिनिधिः । किंतु श्रुतद्रव्याभावेन प्रधानोत्सर्गे प्राप्ते तदावश्यकत्वचोदनया तस्यामेव द्रव्यसामान्यप्राप्तौ स्थितायां पूतीकविधिं पर्यालोचयतोऽर्थतः सदृशप्रतिनिधिनियमविधिमात्रप्रतिभानात् । यद्यपि पूतीकविधौ सादृश्यं नोपात्तं, तथाऽपि सोमसादृश्यं पूतीके प्रतिसन्दधतः प्रतिपत्तिप्राशुभावादौचित्याद्वा सदृशप्रतिनिधिनियमउन्नीयताम् । नारिकाहि विरहिविनोदाय प्रतिनिधीयते । तस्य च यागसाधनतानिवेशेन फलचवैलक्षण्याद्यववत् प्रोक्षणादिधर्मेषु समानविधानत्वं 'व्रीहीणां मेधे' इत्याद्यनूहश्च सिद्धो भवति । तथा च 'अशास्त्रलक्षणत्वात्–' (जै.३.६.३९) इति सूत्रमभावे तद्विधिलक्षणत्वाभावादिति व्याख्येयम् । 'सामान्यं तच्चिकीर्षाहि' (जै.६.३.२७) इति च शास्त्रादपि सदृशमेव प्रतिनिधेयम् । तदभावे तत्समानचिकीर्षाहि लोके दृष्टा विरहिविनोदनादावित्यभिप्रायम् । 'अर्थाद्धि प्रतिनिधीयते' इति भाष्यं च सदृशप्रतिनिधिशास्त्रस्यैवोदितन्यायानुसन्धानसापेक्षतां दर्शयति, नतु नीवारेषु व्रीहिलक्ष्यव्रीव्यक्तिसत्त्वसामर्थ्यात् प्रतिनिधानमिति न्याय्यम् । अन्यथा यदि व्रीहिशास्त्रमेवानुष्ठातुं नीवारेषु व्रीहिव्यक्तय एव साधनतयोपदीयेरन्, तर्हि नीवारेषु चतुर्मुष्टिपरिमितेषु निरुप्तेषु व्रीहिव्यक्तीनामल्पत्वेन प्रधाननिर्वृत्त्यक्षमत्वशङ्कया प्रतिनिध्यनुपादानप्रसङ्गः । तथा च सूत्रम्–'अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिद्रव्याणामर्थशेषत्वात्' (जै.६.३.३९) इति । द्रव्यमुपादीयमानं स्वार्थं निर्वर्तयितुमक्षममित्यर्थद्रव्यविरोधे अर्थ एवादर्तव्यः । अतो

## गूढार्थसङ्ग्रहः

द्रव्याभावे तदुत्पत्तिः प्रतिनिध्युत्पत्तिः। कुतः, द्रव्याणामर्थशेषत्वादित्यर्थः। नच नीवारैरपि तदर्थनिर्वृत्तिः। अशब्दंहि कृतं स्यात्। अपिचैवं मुष्टिमात्रव्रीहिलाभे शेषं नीवारैरभिपूर्येत। नतु तत्त्यागः स्यात्। 'खादिरं वीर्यकामस्य' इत्यादि गुणकामाश्च कदरप्रातिनिधावपि प्रसज्येरन्। तत्रापि खदिरलक्ष्यखदिरव्यक्तीनामेव यागसाधनत्वोपगमात्। अतएव च मौद्गश्यामाकादिचरौ मुद्गाद्यपचारे तत्सदृशमाषा वरकाः कोद्रवाश्च प्रतिनिधेया इति प्राप्ते 'अयज्ञिया वै माषा वरकाः कोद्रवाः' इति प्रतिषिद्धाः प्रतिनिधीयमाना यज्ञाङ्गतामापादितास्स्युः। तस्मान्न प्रतिनिधेया इत्युक्तं 'प्रतिषिद्धंचाविशेषेणहि तच्छ्रुतिः' (जै.६.३.२०) इति। 'न देवताग्निशब्दाक्रियमन्यार्थसंयोगात्' (जै.६.३.१८) इति पूर्वसूत्रान्नेत्यनुवर्तते। प्रतिषिद्धं न प्रतिनिधेयम्, अविशेषेणहि निषेधश्रुतिरित्यर्थः। तत्र यदि मुद्गावयवाः श्यामाकावयवाश्च मुद्गादिरूपावच्छेद्या उपादीयेरन् तदा माषाद्यवयवानां मुद्गादिष्विवावर्जनीयायातिकानामप्यङ्ग(त्याऽत्वा)प्राप्तेः प्रतिषिद्धं न प्रतिनिधेयमित्यनारभ्यमेव स्यात्। शास्त्रादेवतु सदृशप्रतिनिधिप्राप्तौ प्रतिषिद्धं न प्रतिनिधेयमित्यारम्भः स्यादर्थवान्। तस्मात्प्रतिनिधिमात्रे सदृशप्रतिनिधिनियमो वा शास्त्रादेव। अतएवैतन्निरस्तं शास्त्रादेवचेत् प्रतिनिधिः व्रीह्यपचारे यवाः कस्मान्न प्रतिनिधीयन्त इति सदृशे बुद्धिप्राशुभावाल्लोकदर्शनात् सदृशनियमाद्वेति दर्शितम्॥

किं पुनः सादृश्यं, क्वचिदवयवसन्निवेशविशेषः। क्वचिद्गुणभेदः। क्वचिदन्यदित्यनियमः। विहितक्रियान्वयाभ्यर्हिततया तु सन्निवेशसदृशाः प्रतिनिधीयन्ते नीवारादयः। एवमपि प्रकृतापूर्वसाधननिवेशेन यथाविहितधर्माणामतिदेशानपेक्षया सामानविध्योपपत्तेः। फलचमसेतु नैमित्तिके स्यादसामानविध्यमभिषवादेः। क्रतौ नित्योपकारस्य नित्यद्वारसम्बन्धानपवादेनानित्यद्वारसम्बन्धविधानासम्भवात्। एवं 'व्रीहीणां मेध' इति मन्त्रानूहश्च स्यात्। तत्स्थानतया नीवाराणां सादृश्यात् ताच्छब्द्योपपत्तेः। एवं च यत् प्रत्यक्षं शुक्तौ रूप्यसारूप्यं तच्चाकचक्यं गुणभेद एव, नतु रूप्यावयवः॥' इति सिद्धान्तसिद्धाञ्जने शबरादिसिद्धान्तो दूषितः। सूत्राणामन्यथार्थश्च कल्पितः॥

एतत्सर्वं प्रतिनिधिस्थले मुख्यद्रव्यावयवाङ्गीकारे शुक्तिरजतस्थलेऽपि सादृश्येन शुक्त्यवयवसद्भावसिद्ध्या सन्निकर्षसंभवेन प्रत्यक्षोपपत्त्या इदं रजतमित्यत्राध्यासासिद्धौ अहमित्यत्र स्वसिद्धान्तसिद्धाध्यासभङ्गाभिप्रायेण यत्कृतं तत्सर्वं अहमित्यत्राध्यासं सर्वथा असहमानस्य जैमिनेरसम्मतमिति शबराद्युक्तरीत्यैव प्रतिनिधिस्थले सूत्राणामर्थवर्णनं युक्तम्। अध्यासाङ्गीकारे वेदपूर्वभागवाक्यानां व्यावहारिकप्रामाण्यमेव स्यात्। वेदवाक्यानामेकविधप्रामाण्यं च विवर्तवादिव्यतिरिक्तानां सर्वेषां सम्मतम्। अतः इदं रजतमित्यत्राध्यासस्थापनाय प्रतिनिधिस्थले मुख्यावयवानां निरसनं न युक्तम्। तथाहि 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इति श्रुतिः शाबरभाष्यादावुदाहृता। सिद्धान्तसिद्धाञ्जनेतु 'सोमाभावे पूतीकानभिषुणुयात्' इति श्रुतिरुदाहृता। इयं च आ, श्रौतसूत्रोदाहृता श्रुतिः 'सोमाभावे' इति वचने पूतीकेषु सोमसत्त्वे सोमाभावे इति न संबध्येत इत्युक्तिः 'मुख्याधिगमे मुख्यमागमोहि तदभावात्' इति सूत्रेणैव अधिकावयवघटितस्य मुख्यत्वं व्यवस्थापयतीति 'यदि सोमं न विन्देत' इति वचने मुख्यस्यैव सोमपदार्थतयाऽयुक्ता॥

एवं 'यदि व्रीहिशास्त्रमेवानुष्ठातुं नीवारेषु व्रीहिव्यक्तय एव साधनतया उपादीयेरन् तर्हि नीवारेषु चतुर्मुष्टिपरिमितेषु निरुप्तेषु व्रीहिव्यक्तीनामल्पत्वेन प्रधाननिर्वृत्त्यक्षमत्वशङ्कया प्रतिनिध्यनुपादानप्रसङ्गः' इत्युक्तिरप्यनुपादेया। व्रीह्यवयसत्वेन नीवाराणां प्रतिनिधित्वेन प्राप्तौ 'चतुरो मुष्टीन्निर्वपति' इति वाक्यानुरोधेन चतुस्सङ्ख्याकमुष्टिपरिमितद्रव्यस्यैव यज्ञाङ्गत्वेन प्राप्तेः चतुस्सङ्ख्याकमुष्टिपरिमितद्रव्यत्वं नीवारेष्वपि वर्तत इति न काप्यनुपपत्तिः। 'व्रीहिभिर्यजेत' इति वाक्येन अवयवद्वारा व्रीहीणां यागसाधनत्वावगमेन बहूनामल्पानां वा व्रीह्यवयवानां यागसाधनत्वं शास्त्रादेव लब्धं

## गूढार्थसंग्रहः

वह्नवयवसत्त्वे तस्यैव मुख्यत्वेन तेषामेव चतुर्मुष्टिपरिमितानां निर्वापः, तदभावे न्यूनावयवानामेवान्यावयवसहितानां चतुर्मुष्टिपरिमितानां निर्वापः अन्यावयवसहितत्वादेवामुख्यत्वं, तत एव च प्रतिनिधित्वं इतिन संकटं किंचित्। अत्र 'अर्थ-द्रव्यविरोधे' इति सूत्रं 'मुख्याधिगम' इति सूत्रघटिताधिकरणोत्तराधिकरणस्थम्, तत्र द्रव्यपदं मुख्यद्रव्यपरम्। अत्र प्रयोजनोपयोगिमुख्यद्रव्याभावे प्रतिनिध्युपत्तिरेव सूत्रार्थः। ततः अत्र नीवारैः प्रतिनिधिभूतैः चतुर्मुष्टिपरिमितैः कार्यस्य सम्भवे न कोऽपि विरोधः! अतः 'अर्थद्रव्यविरोधे' इति सूत्रमुपादाय अपिचैवं मुष्टिमात्रव्रीहिलाभे शेषं नीवारैरभिपूर्येत' इति दूषणोक्तिः परिहसनीया, 'अर्थद्रव्यविरोधे' इति सूत्रे मुख्यानां प्रयोजनाक्षमत्वे त्यागस्यैव सिद्धान्तितत्वात्॥

कदरेऽपि खादिरगुणकामानां प्रवृत्तिः स्यादिति दूषणमप्यलग्नकम्। यथा प्रधानस्य प्रतिनिधिस्वीकारेणानुष्ठाने न फलजनकत्वं तद्वत् गुणकामेष्वपि सम्भवात्। उक्तं च वार्तिके 'यथातु काम्यानां प्रतिनिधिभिः प्रक्रमो नास्ति तथा गुणकामैः न प्रवर्तितव्यम्।' इति। नित्यस्थलेतु यथाशक्तिन्यायेन अनुष्ठानेन शास्त्रार्थपूर्तिः भवत्येव। 'प्रतिषिद्धं चाविशेषेणाहि तच्छ्रुतिः' इत्यधिकरणमनारम्भणीयमितियदूषणोक्तिरपि 'अविशेषेणहि तच्छ्रुतिः' इति सूत्रखण्डापर्यालोचन-मूलैव 'अयज्ञियावै माषाः' इत्यत्र माषेषु यज्ञसम्बन्धसामान्यनिषेधः क्रियते। माषेषु यया कयाचनविधया यज्ञसम्बन्ध-प्राप्तावपि निषेधार्थमेव तद्वचनम्। तत्र माषेषु मुद्गावयवसत्वेन प्राप्तिः स्यान्नाम माषावयवत्वेनैव प्राप्ताविव 'अयज्ञिया वै माषाः' इति निषेध इति नियन्तुं न शक्यते। मुद्गावयवसत्त्वेऽपि माषव्यपदेशाक्षतेः, मुद्गावयवसत्त्वेन माषाणां प्राप्तावपि माषत्वेन व्यपदेशस्याबाधात् प्रतिषेधशास्त्रमारम्भ्यमेव। अत्र प्रतिनिधौ मुख्यद्रव्यावयवसद्भावः शबरादिभिः यः सिद्धान्तितः, सः वेदान्तेषु त्रिवृत्करणश्रुत्युपष्टम्भनेन भगवता समर्थितः। तत्र शुक्तावपि तेजोऽशसद्भावस्य श्रुति-सिद्धतया तदवयवास्तत्र वर्तन्त एव। समुदितानामवयवानां परिणामेऽप्युभयत्र समुदितस्य प्रत्येकानतिरिक्ततया प्रत्येकप-रिणामोऽपि नैव निरसितुं शक्यते। एवंच शुक्तौ तेजोऽवयवानां रजते तेजोऽवयवानांचैक्यं यत् शबरादिभिः सिद्धान्तितं तत्सङ्गतमेव। अतः 'त्र्यात्मकत्वात्तु भूयस्त्वात्' 'वैशेष्यात्तु तद्वादस्तद्वादः' इति सूत्रोक्तनयेन सोमशब्दप्रयोग-सम्भवेन 'सोमाभावे' इति वाक्यप्रवृत्तेर्न विरोध इति प्रतिनिधौ मुख्यावयवसद्भावे एतद्वाक्यं बाधकमित्युक्तिर्न संभवति

'सोमाभावे पूतीकानभिषुणुयात्' इति सामान्यतः मुख्यद्रव्याभावे सदृशप्रतिनिधिद्रव्यनियमपर इति न वक्तुं शक्यते। सोमपूतीकशब्दयोः लक्षणाकल्पने प्रमाणाभावात्। 'सोमाभावे पूतीकानभिषुणुयात्' इति वाजसेनयवाक्य-मिति श्रौतसूत्रे स्फुटम्। तदुत्तरं 'पूतीकाभावे आदारान् फाल्गुनानि च यानि श्वेतमूलानि स्युः। तदभावे याः काश्चिदौ-षधीः क्षीरिणीः अरुणदूर्वाः कुशान् वा हरितानिति वाजसनेयकम्।' (आ.श्रौ.सू.१४.२४.१२) 'अप्यन्ततो व्रीहि-यवान्' (१३) इति। (बहूनां) एकैकाभावे तदितरबोधकवाक्यानि बहूनि, तत्रापि मुख्यद्रव्याभावे इति सामान्यतः न घटते। अतः ताद्रूप्येण तत्तद्द्रव्याभाव इत्येवार्थो वाच्यः। एवं च प्रथमवाक्ये अन्यथाऽर्थकल्पनं प्रतिनिधावयवा-नङ्गीकारे सदृशप्रतिनिधिव्यवस्थायाः असम्भवमूलकमेव, तत्र अर्थतः सिद्धयङ्गीकारे वाच्यार्थस्तथैवाङ्गीक्रियते वा सदृशत्वे-नेतरपदार्थस्य प्रापकं किम्? प्रकारान्तरेण सर्वथाऽर्थवर्णनासम्भवे खलु सा रीतिरास्थेया। विरहिविनोदननारिकाकल्पनं भवदीयकल्पना विदुषां विनोदायैव स्यात्। शबरादि-अकामुकानां पूर्वकाण्डोक्तकर्मानुष्ठातॄणां कथं सम्भवति। अतः भवदीयकल्पना विदुषां विनोदायैव स्यात्। 'आगमो वा चोदनार्थाविशेषात्' इति सर्वेषां द्रव्याणां प्राप्तिः सिद्धान्तेतु मुख्यद्रव्यविधायकशास्त्रमेव प्रतिनिधिप्रापकम्। प्रतिनिधिस्थलेतु मुख्यद्रव्यशास्त्रमेव प्रापकम् कामं स्यान्नाम, तत्र मुख्यद्रव्यशास्त्रेण इतरद्रव्यबाधपूर्वकं मुख्यद्रव्यस्य लाभः, इत्येतेषां त्रयाणां साधनत्वेऽवगते तत्र द्वयोर-तत्र मुख्यद्रव्यवाचकपदप्रवृत्तिनिमित्तं (जातिः) तदाश्रयावयवी, तदवयवाः,

## श्रुतप्रकाशिका

**नेत्रवृत्तिर्द्विधा भूता द्वेतु वित्ती वितन्वती । द्वित्वं चन्द्रं च युगपन्निर्भासयति तत्र नः ॥**

इति । देशगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति ततोऽत्र वैषम्यम् । चाक्षुषतेजोगतिभेदरूपसामग्रीद्वयजन्यमतिशैघ्र्या-दगृहीतक्रममगृहीतभेदं च ज्ञानद्वयमगृहीतैकत्वं चन्द्रमगृहीतान्तरालं देशान्तरं च निरन्तरं गृह्णाति, ततो द्विचन्द्रव्यवहार इत्यर्थः । इति **निरवद्यं** यथार्थख्यातिसमर्थनमित्यर्थः ॥

## गूढार्थसङ्ग्रहः

भावेऽपि अवयवानां प्रतिनिधौ सद्भावात् सदृशप्रतिनिधेः प्राप्तिः अवयवसद्भावेनैव सदृशेत्युच्यते । न तु सादृश्यज्ञाने-नावयवाः कल्प्यन्ते, अवयवाङ्गीकारस्तु उपनिषदुक्तत्रिवृत्करणानुसारी भवति । अतः सामान्यतः अवयवातिरिक्तधर्म-पुरस्कारेण प्रतिनिधिकल्पना स्वसिद्धान्तस्थापनाभिनिवेशमूलैव ॥

एवं च 'व्रीहिभिर्यजेत' इत्यादौ नीवाराणां प्रतिनिधित्वं व्रीहिविधायकशास्त्रेणैव प्राप्तम् । अवयवाङ्गीकारे एव 'अशास्त्रलक्षणत्वाच्च' इति सूत्रं सङ्गतं भवति । नीवारत्वेन नीवाराणां शास्त्रप्राप्तत्वाभावादित्यर्थः । दूषकमतेतु अभावे विधायकशास्त्रप्राप्तत्वाभावादित्यर्थः । सच्च जैमिन्याशयविरुद्धः प्रमाणाभावे अविशेषणांहि तच्छ्रुतिः' इति न्यायबाधा-ङ्गीकारस्यानुचितत्वाच्च । 'गुणाद्वाऽप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात्' (३.२.४) 'न प्रकृतेरशास्त्रनिष्पत्तेः' (३.३.२३) इत्यादाविव शास्त्रपदस्य सामान्यपरत्वस्यैव युक्तत्वात् ॥

'सामान्यं तच्चिकीर्षाहि' इति सूत्रस्य प्राक् (८४८.पु) उदाहृतभाष्ये 'यस्मिंश्च सदृशे गृह्यमाणे तेषां विशेषाणां केचित्संगृहीता भवन्ति' इति वाक्येन तच्चिकीर्षेत्यत्र तत्पदार्थः मुख्यद्रव्यावयवपरः इति स्फुटं निर्मत्सराणाम् । तदनुरो-धेन सोमनाथीये 'यस्मात् व्रीह्यादिमुख्यशास्त्रार्थचिकीर्षेति तच्चिकीर्षेत्यस्य अर्थो वर्णितः । एवं च अत्र सूत्रे 'तदभावे तत्समानचिकीर्षाहि लोके दृष्टा विरहिविनोदनादावित्यभिप्राय'मिति दूषकविवरणमौत्प्रेक्षिकमेव । अत्र लोकदृष्टान्तस्य सूत्रकृदभिप्रेतत्वनिर्धारणासम्भवात् । वेदान्तप्रतिपाद्यत्रिवृत्करणन्यायावलम्बनेन मुख्यद्रव्यावयवसद्भावस्य जैमिन्यभिप्रेत-त्वात् । एतेन प्रतिनिधीनां मुख्यद्रव्यविधायकशास्त्रेणैव प्राप्तिः । अतः प्रधानचोदनयैव प्रतिनिधिद्रव्याणां प्राप्तिरित्युक्ति-रपि न सूत्रकृत्सम्मतेति सिद्धम् । अतएव च 'नियमार्था गुणश्रुतिः' इति सूत्रे 'अन्यस्मिन् प्रतिनिधातव्ये अन्यत्प्रतिनिधी-यते श्रुतस्य स्थाने, न यागद्रव्यत्वेन' इति भाष्यम् । 'सोमनाशेहि प्रतिनिध्यपेक्षायां सत्यां पूतीकाः विधीयन्ते न यागसाधनापेक्षायाम्' इति तन्त्रवार्तिकं च सङ्गच्छते । एतद्भाष्यवार्तिकाभ्यां द्रव्यविधायकशास्त्रमेव प्रतिनिधिप्रापक-मिति सिद्धम् । एवमङ्गीकार एव प्रतिनिधितया स्वीकृतानां नीवाराणां प्रयोगे 'व्रीहीणां मेध' इति मन्त्रस्य अलोपस्स-म्भवति, तत्स्थानापन्नत्वेन अलोप इति दूषकोक्तिस्तु अनुपादेया । तत्स्थानापन्नत्वेन मन्त्रप्राप्तेः क्वाप्यनुक्तेः, व्रीहिपदे धर्मान्तरेण व्रीहिसदृशनीवारलक्षणायां प्रमाणाभावात् एवमङ्गीकारे सर्वत्रापि ऊहस्थले येन केनचिद्धर्मेण सादृश्येन प्रकृतिदृष्टपदस्यैव प्रयोगस्य सम्भवेन ऊहस्यैव उच्छेदापत्तेः ॥

'आगमो वा चोदनार्थाविशेषात्' इति सूत्रभाष्ये 'यजति चोदना चोदितोह्यर्थः न विशिष्यते व्रीहिभिर्नी-वारैर्वा क्रियमाणः' इत्यत्र द्रव्यविधायकशास्त्रमेव प्रतिनिधिप्रापकमिति स्फुटं प्रतीयते । अतश्च शाबरभाष्यादिनिर्णीतार्थ विरुद्धतया जैमिनिसूत्राणां दूषकपरिकल्पितार्थस्सर्वोऽपि स्वसिद्धान्ताभिनिवेशमूलक इति सिद्धम् । अधिकमन्यत्र विवे-चयिष्यते ॥

## श्रीभाष्यम्

**अतस्सर्वं विज्ञानजातं यथार्थमिति सिद्धम्। ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते। अथवा किमनेन बहुनोपपादनप्रकारेण। प्रत्यक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति किं नोपपद्यते, भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणंतद्भोग्यत्वायाखिलं जगत्सृजता सुखदुःखोपेक्षा फलानुभवानुभाव्याः पदार्थास्सर्वसाधारणानुभवविषयाः, केचन तत्तत्पुरुषमात्रानुभवविषयास्तत्तत्कालावसानास्तथातथाऽनुभाव्या,स्सृज्यन्ते। तत्र बाध्यबाधकभावस्सर्वानुभवविषयतया तद्रहिततयाचोपपद्यत इति सर्वं समञ्जसम्। यत्पुनस्सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति तदसत् 'अनृतेनहि प्रत्यूढाः**

## श्रुतप्रकाशिका

ख्यात्यन्तरदूषणानामन्योन्यमुक्तानां स्वाभिमतत्वात्तत्र यत्नाभावादाह—**ख्यातीति**। अथवा किमनेनेत्यादि बहुषु कोशेषु दृश्यते। व्याख्यातृभिर्व्याख्यातश्च, तत्र परागर्थविषयापरोक्षभ्रमेष्वेकेनैवोत्तरेण परिहारः कृतो भवति। किं न सेत्स्यतीत्यनेनन प्रमाणेऽस्तित्वमुक्तम् किं नोपपद्यत इत्यनेनोपपत्तिरुक्ता ?। किं प्रमाण कथमुपपत्तिरित्यत्राह—**भगवताहीति**। अखिलं जगत्सृजतेत्यनेनास्यार्थस्य श्रुतिमूलत्वं सूचितं कृत्स्नकार्यकारणत्वाद्ब्रह्मणः 'इदं सर्वमसृजत' इतिहि श्रुतिः प्रतीयमानत्वाविशेषादिदमपि तत्सृष्टमित्यर्थः। तर्हि बाध्यबाधकभावव्यवस्था कथमित्यत्राह—**तत्रेति**। तत्तदेकपुरुषानुभाव्यानां तत्तत्कालावसायिनां च सुखादीनां मिथ्यात्वमिति भावः ॥

## गूढार्थसंग्रहः

'यथार्थं सर्वविज्ञानम्' इत्युपक्रमे प्रतिज्ञातमर्थं उपसंहरति—**अतस्सर्वं वि-**
एकज्ञान,ज्ञानद्वयोभयसाधारण्येन
**ज्ञानजातं यथार्थमितीति**। असतिप्रतिबन्धके प्रवृत्तस्य पुंसः प्रवृत्तिवैफल्यमेव बाध इति भावः ॥
**न तत्र यत्नःक्रियत इति**। न्यायकुलिशे सर्वार्थसिद्धौ च ख्यत्यन्तरदूषणप्रपञ्चोऽवसेयः। भ्रमविषयपदार्थो-
त्पत्तिरवश्यमङ्गीकरणीयेत्याग्रहेऽपि अनिर्वचनीयपदार्थाः न सिद्ध्यन्ति। स्वाप्निकपदार्थानां भगवता सृष्टेः प्रतिपादि-
कायाः श्रुतेः भ्रमविषयपदार्थसामान्यसृष्ट्युपलक्षणतया तेषामपि भगवतैव सृष्टेरुपपत्तेः इत्यभिप्रेत्य पक्षान्तरं दर्शयति—
**अथवेति**। अथवेत्यादिपाठोऽपि बहुषु कोशेषु दृश्यत इति श्रुतप्रकाशिकायां न्यायपरिशुद्धौ च व्यक्तम् ॥
**सर्वं समञ्जसमिति**। स्वाप्नपदार्थसृष्टिप्रतिपादकश्रुतिसद्भावेन तेषां भगवत्सृष्टत्वाङ्गीकारस्य युक्तत्वेऽपि अन्यत्र
तथा श्रुतिविरहात् नैतास्मिन्पक्षे भगवतो भाष्यकृतो नैर्भर्यम्। किंतु 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इत्य-
त्रैवेति संप्रदायः। अयमर्थस्सर्वार्थसिद्ध्यादौ व्यक्तः ॥ उक्तंचाचार्यपादैः—

अख्यातिस्त्वन्यथाधीर्विषयरहितधीश्चानधिष्ठानबुद्धिः बाह्यार्थाकारयोगस्सदसदितरधीश्शून्यधीरात्मधीश्च ।
भ्रान्तौ सर्वत्र तत्तत्परमतकथकैरादृताः पक्षभेदाः प्रायो बुद्धिर्यथार्था श्रुतिविदभिमता क्वापि भेदाग्रहादि ॥ २०१ ॥

इति। अत्र प्राक् (८५१.पु) उदाहृतश्लोके 'तादृग्भेदाग्रहोपप्लुतमतियुगळस्थापानायां नियोगात्।' इत्युक्त्यनुसारेणादिश-
ब्दस्य मतियुगलमेवार्थ इति बोध्यम् ॥

## श्रीभाष्यम्

**(छा.८.३.२) इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात् ऋतेतरविषयोह्यनृतशब्दः ऋतमिति कर्मवाचि 'ऋतं पिबन्तौ' (कठ.१.३.१) इति वचनात्। ऋतं कर्म फलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम्।**

## श्रुतप्रकाशिका

अथ श्रुतिस्मृत्यर्थापत्तिभ्यामनिर्वचनीयसिद्धिं दूषयितुं प्रथमं श्रुतिवाक्यानि योजयति। यत्पुनरिति। अनृतेनेत्यादिश्रुतिं व्याचष्टे। **अनृतेनेति**। पूर्वनिरस्तप्रकारेणानिर्वचनीयस्याप्रामाणिकत्वात्तत्र व्युत्पत्तिर्नास्तीति भावः। अनृतशब्दं व्याचष्टे। **ऋतेतरविषयोह्यनृतशब्दइति**। हिशब्देन ऋतेतरविषयत्वसंप्रतिपत्तिस्सूचिता * ऋताभावस्य ऋतविरोधिनश्च ऋतभूतब्रह्माश्रयत्वानुपपत्त्या तदन्य एव नञर्थस्त्वयाऽपि वक्तव्य इति भावः। अनृतशब्दार्थं निष्कष्टुं ऋतशब्दार्थमाह—**ऋतमितीति**। कर्मवाचि पुण्यकर्मवाचीत्यर्थः, नतु सत्यवाचीति भावः। कुतइत्यत्राह— **ऋतंपिबन्ताविति**। अस्मिन्वाक्ये सुकृतस्य लोके इति ह्युक्तमिति भावः। एवंविधवाक्यान्तरेषु प्रसिद्धिश्चाभिप्रेता, '**यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धोवात्येवं पुण्यस्य कर्मणो दूराद्गन्धोवाति**' इत्युक्त्वा '**एवमनृतादात्मानं जुगुप्सेत्**' इति पुण्यप्रतियोगिन्यनृतशब्दः प्रयुक्तः, तस्मादृतशब्दः पुण्यवाची। * पुण्यमपिहि मोक्षविरोधि तत्कथमनृतशब्दोक्तपापमात्रप्रत्यूढत्वमिति शङ्कायां मोक्षप्रकरणोक्तं पुण्यं विविनक्ति। **ऋतंकर्मेति**। मुमुक्षोस्सुकृतं दुष्कृतमुभयंहि विरोधीत्यतस्तद्द्वयं पापम्। अतो नञ्समासान्तर्गतऋतशब्दोऽनभिसंहितफलकर्मपर इत्यर्थः। परमपुरुषाराधनवेषं तत्प्राप्तिफलमित्यनेन **स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।** ... ... ...

## गूढार्थसङ्ग्रहः

**अनृतशब्दस्यानिर्वचनीयानभिधायित्वादिति**। यद्यप्यद्वैतसिद्धौ–'य आत्मा अपहतपाप्मा' इत्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन दुष्कर्मप्रत्यूढत्वविरोधात्। सुषुप्तौ कर्ममात्रनाशे दुष्कर्मणोऽप्यभावात् कारणात्मनावस्थानेचाज्ञानस्यावश्यकत्वात् कर्मआवरकत्वापत्तेश्च। ब्रह्मवेदनप्रतिबन्धकतयाहि अनादिब्रह्मावरकं ज्ञाननिवर्त्यं वाच्यम्; अथापि कर्मैव प्रधानमपि नानृतपदाभिधेयम्। 'तयोर्ज्ञानानिवर्त्यत्वात्' इत्युक्तम्॥

अत्र गुरुचन्द्रिका—'अपहतपाप्मत्वेति। पापशून्यस्वभावत्वेत्यर्थः। कादाचित्कपापसत्त्वे तच्छून्यस्वभावत्वमात्मनोऽनुपपन्नम्। नच मिथ्याभूतं पापं प्रतिबन्धकमास्तामिति वाच्यम्; अविद्यां विना तत्परिणामरूपस्य तस्यासम्भवादिति भावः। कारणात्मना कारणगतसंस्काररूपेण। अनादीति। नच पापानां प्रवाहरूपेणानादित्वात्पापत्वेन प्रतिबन्धकत्वं सम्भवतीति वाच्यम्; पापस्य पुण्यस्य मिथ्याज्ञानजन्यसंस्कारस्य वा 'अस्ति, भाति' इति व्यवहारे प्रतिबन्धकत्वमित्यत्र विनिगमकाभावात् अनादिपापादिभिन्नं प्रतिबन्धकत्वेन कल्प्यत इत्यस्यैवोचितत्वात्। नचानृतशब्दस्य पापे मुख्यवृत्तिसम्भव एव विनिगमक इति वाच्यम्; ऋतशब्दस्य सत्यवाचकस्य सत्यब्रह्मप्रापकत्वेन पुण्येहि गौणार्थः न मुख्यार्थः। तथा च सत्यब्रह्मविरोधित्वेन पुण्यवासनयोरप्यनृतशब्दगौणार्थता सम्भवत्येव। नचास्तु तथा श्रुत्यैव तेषां प्रतिबन्धकत्वोक्त्या नानादेरज्ञानस्य प्रतिबन्धकताया युक्त्या कल्पनमिति वाच्यम्; पापादीनां श्रुत्यैव मिथ्यात्वोक्तिस्तन्निर्वाहार्थमनाद्यज्ञानस्यावश्यकत्वादिति भावः। नचानादिप्रधानमस्तु प्रतिबन्धकम्; पापादिकंतु नैकं प्रतिबन्धकं सम्भवतीति विनिगमकाभावः' इति॥

### श्रीभाष्यम्

**अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्म अनृतं ब्रह्मप्राप्तिविरोधि 'एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः' (छा.८.३.२) इति वचनात् 'नासदासीन्नोसदासीत्' (यजु.अ.२.प्र.-८.अनु.९) इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ उत्पत्तिवेलायां सत्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकाले अचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि**

### श्रुतप्रकाशिका

इत्येतत्सूचितम् । अनृतशब्दस्य ब्रह्मप्राप्तिविरोधिपरत्वे सति ऋतशब्दस्य बन्धकेतरकर्मवाचित्वसिद्धिरिति तदर्थं तत्पूर्ववाक्येनोपपादयति । एवमिति । ऋतानृतशब्दयोः '**एवमनृतादात्मानं मुगुप्सेत्**' इत्यादिषु श्रुतिषु पुण्यपापपरत्वेन प्रसिद्धत्वात् '**न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते**' '**क्षीयन्ते चास्य कर्माणि**' इत्यादिषु सुकृतदुष्कृतयोरुभयोरपि मोक्षविरोधित्वश्रवणान्मोक्षप्रकरणेषु मुमुक्षोस्संसाराख्यानिष्टफलप्रदत्वेनोभयोरपि पापशब्दाभिधेयत्वा,दस्यानृतशब्दस्यास्मिन् वाक्य एव ब्रह्मप्राप्तिविरोधित्वश्रवणात् '**तस्यान्तरायो मैत्रेयः**' इत्यादिषु पुण्यपापकर्मणोः मोक्षविरोधिफलत्वश्रवणा,दनृतशब्दस्यानिर्वचनीयवाचित्वेन व्युत्पत्त्यभावा,च्चानृतशब्दस्तदन्यव्युत्पत्त्या मोक्षविरोधि कर्मपरइत्यर्थः । **नासदासीत्यादि** । अत्र '**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते**।' इति ब्रह्मशब्दवाच्यशुद्धात्मस्वरूपविषयस्सदसच्छब्दप्रयोगः प्रतिबन्दीत्वेनानुसन्धेयः ॥

### गूढार्थसंग्रहः

'एतं ब्रह्मलोकं न विन्दन्ति' 'अनृतेनहि प्रत्यूढाः' इति श्रुतिः इयं दहरविद्याख्या । इयं च
तथाऽपि अत्र सगुणविद्यैव । अतः दहराकाशस्य सविशेषब्रह्मत्वमेव इति 'अहरहर्गच्छन्त्यः' इत्यत्र सविशेषब्रह्मगमनमेव विवक्षितम्।
'क्षीयन्तेचास्य कर्माणि तस्मिन् दृष्टे परावरे।' इत्यादिश्रुतिषु ज्ञानात् कर्मक्षयस्यैवोक्तेः, कर्मक्षयानन्तरमेव ब्रह्मप्राप्तेः
बहुश्रुतिसिद्धत्वात् । कर्मणश्च परसम्मतानाद्यविद्यामूलकत्वे न किंचित्प्रमाणं पश्यामः । जीवस्य शरीरसम्बन्धस्य 'प्राणाधिपस्संचरति स्वकर्मभिः' 'साधुकारी साधुर्भवति, पापकारी पापो भवति' इत्यादिश्रुतिभिः कर्ममूलकत्वं स्फुटं प्रतिपाद्यते । 'अपहतपाप्मा विजरो विमृत्युः' इति श्रुतिः प्रजापतिविद्याख्या प्रजापतिविद्या परिशुद्धजीवस्वरूपपरा बन्धदशायां कर्मसम्बन्धं नैव निरोद्धुमीष्टे । 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण' इत्यादिभिर्ज्ञानप्रतिबन्धकत्वं कर्मणां सिद्ध्यति । सुषुप्तौ न कर्मसामान्यविरहः, तथासति प्रबोधानन्तरं जीवस्य शरीरान्तरसम्बन्ध एव स्यात् । किंतु बाह्यपदार्थानुभवसुखप्रतिबन्धककर्ममात्रविरहः। सुषुप्तौ 'अनन्वागतं पापेन'त्यादावपि तदेव कर्म विवक्षितम्। एवं च ब्रह्मप्राप्तिप्रतिबन्धकत्वेन श्रुत्या प्रमितस्य कर्मणः **अनृतेनहि प्रत्यूढाः** इत्यत्र विवक्षा युक्तेत्यभिप्रेत्याह—**सांसारिकफलं कर्मानृतमित्यादि** ॥

**इतिवचनादिति** । अत्र श्रुतौ **अनृतेनहि प्रत्यूढा** इत्यत्र बहुवचनेन बहूनां जीवानामुक्त्या बहवः जीवास्तात्त्विकाः इति प्रतीयते । 'न कर्माविभागादितिचेन्नानादित्वात्' इति सूत्रे सृष्टेःकर्ममूलकत्वस्यैव सूत्रकृत्तात्पर्यविषयत्वेन जीवानां शरीरसम्बन्धः कर्ममूलक एव, न परसम्मताविद्यालक इति स्फुटं प्रतीयते श्रौतसिद्धान्तः ॥

**नासदासीदित्यादि–सदसतोःकालविशेषे असद्भावमात्रवचनात्** इत्यन्तम्। अस्यामेव श्रुतौ 'कस्य शर्मन्' इत्येतद्विवरणावसरे 'जीवानां उपभोगार्थाहि सृष्टिः' इति सायणीयेऽप्युक्त्या व्यष्टिसृष्टावेव जीवानां सुखस्य सम्भवेन

श्रीभाष्यम्

**प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य । नात्र कस्यचित्सदसदनिर्वचनीयतोच्यते सदसतोः कालविशेषे असद्भावमात्रवचनात् ।**

श्रुतप्रकाशिका

सदसच्छब्दयोश्चिदचिद्व्यष्टिविषयत्वमुपपादयति । उत्पत्तीति । उत्पन्नस्यहि प्रळयः उत्पत्तिश्च चिदचिद्व्यष्ट्योः श्रुतिसिद्धा । अतस्तयोरत्र प्रळय उच्यत इत्यर्थः । सत्त्यच्छब्दाभ्यां **'सच्चत्यच्चाभवत्'** इति वाक्यं स्मारितं, कार्यावस्थचेतनस्य सच्छब्दोक्तत्वादिह सच्छब्देन, तदन्यवाचकासच्छब्देन च, कार्यावस्थचेतनाचेतननिषेधः कृतः वाक्यान्तरैकार्थ्यादित्यर्थः । **'तम आसीत्तमसा गूढम्'** इति तदनन्तरवाक्याभिप्रायेणाचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनीत्युक्तम् । हेत्वन्तरञ्चाह—**सदसतोरिति** । नहि कालविशेषे अनिर्वचनीयमभ्युपगम्यते । अचित्समष्टेस्तमश्शब्दवा-

गूढार्थसंग्रहः

प्रलये तादृशसुखनिषेधानुगुण्येन सदसच्छब्दयोरपि चिदचिद्व्यष्टिपरत्वमभ्युपगम्य **नासदासीन्नोसदासीत्** इति तन्निषेधस्य विवक्षायाः स्वरसतः प्रतीतेः । एतेन भोग्यप्रपञ्चवद्भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति इति 'कस्य-शर्मन्' इत्यत्र भोक्तृप्रपञ्चनिषेधविवक्षाऽपेक्षयाऽत्रैव तद्विवक्षा उचिता 'रेतोधा आसन् महिमानआसन्' इत्यत्र सायणीये भोक्तृभोग्यसृष्टेः सहभावेनैव वक्ष्यमाणतयाऽत्रापि सहभावेनैव प्रलयाभिधानस्योचितत्वात् । 'सतो बन्धुमसतिनिरविन्दन्' इत्युत्तरत्र असच्छब्दस्याव्याकृतार्थकतया 'सतो बन्धु' मित्यत्र बन्धुशब्दस्य बन्धककर्मार्थकतायाः वक्ष्यमाणतयाऽत्र सच्छब्दस्य जीवार्थकत्वाङ्गीकार एव कर्मणो बन्धकत्वं सङ्गच्छत इति सच्छब्दस्य जीवपरत्वमकामेनापि स्वीकार्यम्। 'सलिलमा इदम्' इति व्यष्टिसृष्टिमुपक्रम्य 'सतो बन्धुमसति' इत्याद्युक्त्या तत्र सदसच्छब्दयोः चिदचिद्व्यष्टिपरत्वनिश्चयेन तदनुरोधेनात्रापि सदसच्छब्दयोः चेतनाचेतनव्यष्टितात्पर्याङ्गीकारस्यैव युक्तत्वात् ॥

**नोसदासी**दित्यत्र परमार्थसतो निषेधमाशङ्क्य 'आनीदवातम्' इति तस्य सत्त्वमग्रे वक्ष्यत इति परिशेषात् मायाया एवात्र सत्त्वं निषिध्यत इति सायणीये परिहार उक्तः । तदुत्तरश्रुतौ 'तम आसीत्' इति तमश्शब्दवाच्यमायाया अपि सत्त्वं वक्ष्यत इति तस्याः सत्त्वनिषेधः कथं घटते ? **'नोसदासी'**दित्यत्र असत्पदस्य शशविषाणादितुच्छार्थकत्वमभिप्रेत्य तद्वैलक्षण्यस्यात्र तमसि विवक्षितत्वाङ्गीकारे 'तमसा गूढम्' इति तुच्छविलक्षण तम आच्छादितत्वस्य बोधकमित्यास्थेयम् । एवमर्थविवक्षाङ्गीकारे 'तुच्छेनाभ्वपिहितम्' इत्युत्तरार्धे तुच्छाच्छादितत्वोक्तिर्विरुध्येत । तत्र तुच्छेनेत्यस्य ऋग्वेदभाष्ये सदसद्विलक्षणेन भावरूपाज्ञानेनेत्यर्थोऽपि न श्रुतितात्पर्यविषयः । तुच्छशब्दस्यैवमर्थकतायाः अप्रामाणिकत्वात् । असच्छब्दतुच्छशब्दयोः लोके एकार्थकताया एव प्रसिद्धेः ॥

किंच 'आसीदिदं तमोभूतम्' इति मनुस्मृतेर्वचनस्य उपबृंहणतया सायणीये उपादानेन तद्वचनोत्तरं 'यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।' इत्यव्यक्तस्य सदसदात्मकत्वकथनेन तद्विरोधेनात्र तमश्शब्दार्थस्य सदसद्विलक्षणत्वतात्पर्यकल्पनं न घटते । मनुस्मृतौ च तमोऽव्यक्तशब्दयोः प्रयोगेण 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इति सुबालोपनिषदर्थविवक्षायाः व्यासार्यैः स्मृत्यधिकरणटीकायां स्थापनेन 'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥' इति विष्णुपुराणानुगुण्येन सुबाले जीवानामप्यक्षरशब्दार्थान्तर्भावस्यावश्यकतया मनुस्मृतावक्षरशब्दार्थः जीव एव । तत्र ब्रह्माण्डे चतुर्मुखसृष्टिमभिधाय सदसदात्मकत्वोक्त्या श्रुतौ सदसच्छब्दौ चिदचिद्व्यष्टिविषयाविव ॥

## श्रीभाष्यम्

अत्र तमश्शब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' (सुबा.२) इति। सत्यम्। तमश्शब्देनाचित्समष्टिरूपायाः प्रकृतेस्सूक्ष्मा-
वस्थोच्यते तस्यास्तु 'मायां तु प्रकृतिं विद्यात्' (श्वे.४.अ.१०.९) इति मायाशब्देनाभि-
धानादनिर्वचनीयत्वमितिचेत् नैतदेवम् मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति।
मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयवाचित्वमितिचेत् तदपि नास्ति नहि सर्वत्र
मायाशब्दो मिथ्याविषयः आसुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात्; यथो-
क्तम् तेन मायासहस्रं तच्छम्बरस्याशुगामिना। बालस्य रक्षता देहमैकैकश्येनसूदितम्॥'
(वि.पु.१.१९.२०) इति। अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी। प्रकृतेश्च

## श्रुतप्रकाशिका

च्यत्वमुपपादयति। अत्रेति। 'तम आसीत्' 'मायांतु प्रकृतिम्' इत्यनयोर्वाक्ययोः पूर्वं * क्रमेणोपादानवि-
वक्षां चोद्यरूपेण दर्शयति। सत्यमिति। प्रकृतिशब्दवाच्या मायेत्यभिप्रायः। परिहरति नैतदेवमिति। कुतइत्यत्राह—
मायेति। इतिहेतौ मायाशब्दवाच्या प्रकृतिरित्यभिप्रायः, ऐन्द्रजालिकादिषु मायावित्वप्रयोगदर्शनात् मायामिथ्याश
ब्दयोः पर्यायत्वादनिर्वाच्यत्वस्य च मिथ्यात्वाच्च मायाशब्दवाच्यत्वमित्यभिप्रायेण शङ्कते। मायेति। परिहरति तदपि
नास्तीति। मायाशब्दस्य मिथ्यापर्यायत्वमेव नास्ति तथाऽभ्युपगमेऽप्यन्यथाख्यातिभेदाग्रहयोरन्यतरेणैवोपपन्नत्वान्न तद्वि-
षयत्वं युक्तमित्यनिर्वचनीयत्वाचित्वं नास्तीति भावः। तदुपपादयति। नहीति। मायाशब्दप्रयोगविषयेषु सर्वेषु मिथ्या-
त्वाननुवृत्तेरित्यर्थः। सत्येषु मायाशब्दप्रयोगं दर्शयति। यथोक्तमिति। नहि ज्ञानबाध्यानामेकैकशः शस्त्रच्छेद्यत्व-
मस्ति तस्मादेकैकशो मायानां छेद्यत्ववचनान्मायाशब्दस्य सत्यपरत्वमिति। अनुयायिन एव प्रवृत्तिनिमित्तत्वान्मायाशब्द-
प्रयोगविषयेषु सर्वेष्वनुगतमाश्चर्यत्वमेव मायाशब्दप्रवृत्तिनिमित्तमित्याह—अतइति। आश्चर्यत्वं विस्मयनीयत्वं तच्च
विचित्रार्थसर्गकरत्वात्। विचित्रशब्दो नानाविधवाची नानाविधकार्यकरत्वात्प्रकृतेर्विस्मयनीयत्वम्। मायाशब्दोह्याश्चर्य-
वाचीति वक्ष्यते तस्मादाश्चर्यत्वमेव प्रवृत्तिनिमित्तम्। असत्येषु सत्येष्वपि मायाशब्दप्रयोगविषयेष्वाश्चर्यत्वं विद्यते प्रकृतेरा-
श्चर्यत्वमेव मायाशब्दाभिधेयत्वानिबन्धनमित्याह—प्रकृतेरिति।

## गूढार्थसङ्ग्रहः

एतेन 'सत्यालीकयोस्तु शास्त्रीया लौकिकी च प्रसिद्धिः, अतस्तयोर्बलवत्त्वम् अतएव माधवीयभाष्ये व्याख्यातम्'
इति लघुचन्द्रिकायां सदसच्छब्दयोः सत्यालीकपरत्वेन प्रलये तन्निषेधेन तमसः सदसद्विलक्षणत्वतात्पर्यवर्णनमपि निरव-
काशम्। असच्छब्दस्य शशविषाणाद्यलीकाङ्गीकर्तृमते तत्र प्रसिद्धेस्सम्भवेऽपि अनङ्गीकर्तृ नैयायिकादिमते तत्प्रसिद्धिर्न
वक्तुं शक्यते सच्छब्दस्यापि 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' 'सन् सुधीः कोविदो बुधः' इत्यादिको-
शेष्वन्यार्थेऽपि प्रसिद्धिर्वर्तते। लोकेऽपि तथा प्रयोगः। 'असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेण—' इति सूत्रे सदसच्छब्द-
योरन्यार्थकतायाः परमतेऽपि सम्मतत्वात्। अतश्शास्त्रलोकप्रसिद्धिद्वयं श्रुतौ न परसम्मतसदसद्विलक्षणत्वतात्पर्यग्राहकं
भवतीति मनोराशयः। एवंचोपबृंहणानुरोधेनापि तत्र सच्छब्दः सङ्कोचविकासात्मकस्वरूपपरिणामशून्यत्वेन ज्ञानानन्दैक-
स्वरूपजीवपरः। असच्छब्दः सङ्कोचविकासात्मकपरिणामाश्रयाचित्पर इत्येव न्याय्यम्॥ अत्रैवोत्तरत्र 'रेतोधा आसन्
महिमान आसन्' (ऋ) इत्यत्र 'कर्तारो भोक्तारश्च जीवाः महान्तो वेदादयो भोग्या आसन्' इति विवरणकरणपूर्वकं

## गूढार्थसंग्रहः

अयमेवार्थस्तैत्तरीयके 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यारभ्य प्रतिपाद्यत इति सायणीयोक्त्या भोक्तृभोग्यविभागस्तैत्तरीयकेऽपि विवक्षित इति प्रतीयते ॥

तत्र यद्यपि 'विज्ञानं चाविज्ञानं च' इत्यत्र चेतनाचेतनयोर्विवक्षायाः शङ्करभाष्यादौ सर्वत्रोक्तावपि 'सच्च त्यच्चाभवत्' इत्यत्र चेतनाचेतनविवक्षा नोक्ता। तथाऽपि सच्छब्दस्य सत्यार्थकत्वेन 'यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्। यद्रूपेण यन्निश्चितं तद्रूपं व्यभिचरत् तदनृतमित्युच्यते। अतो विकारोऽनृत' मिति 'सत्यं ज्ञानम्' इति श्रुतौ (शं) सत्यशब्दार्थविवरणेन सच्छब्देनाविकारि असच्छब्देन विकारो बोध्यत इतिहि तेषामपि सम्मतमिति प्रतीयते। त्यच्छब्दश्च प्राक्तनरूपत्यागिपरः। एवं च सङ्कोचविकासात्मकविकारशून्यं सच्छब्दार्थः। सच जीव एव। त्यच्छब्दार्थोऽपि विकार्यं चेतनमेवेति युक्तम्। अतएव छान्दोग्ये 'तानि हवा एतानि त्रीण्यक्षराणि सत् ति यमिति, तद्यत्सत्तदमृतं तेनोभौ यच्छति' (८.३.५) इत्यादिसत्यनामनिर्वचने सच्छब्दार्थश्चेतनएवेति उक्तिरपि सङ्गच्छते। विकारस्यानृतत्वं वेदार्थसङ्ग्रहादौ परिशीलितम्। अतस्सदसच्छब्दौ श्रीभाष्योक्तार्थकावेव ॥ सदसद्विलक्षणत्वस्य तमसि परमते सार्वदिकत्वेन तदानीमिति कालविशेषनिर्देशो न घटत इत्यभिप्रेत्य भगवता 'सदसतोःकालविशेषेऽसद्भावमात्रवचनात्' इत्यभिहितम्। 'तदानीमिति कालवाचिशब्द उपचारात्' इति सायणीयोक्तिरपि न श्रुतितात्पर्यानुगुणा। 'प्र[illegible]यावस्था निरूप्यते' इत्युपक्रमे सायणीयोक्त्या प्रलये काललयस्य क्वाऽप्यनुक्तेः। 'आनीदवातगँस्वधया तदेकम्' इत्युत्तरत्र कर्तृत्वेनेदानींतनेनोपलक्षितं यन्निरुपाधिकं परंब्रह्म तस्यैव भूतकालिकसत्ताभिधीयेते इति स्वोक्तिविरोधाच्च। एवं 'तमआसीत्' इत्यत्र भूतकालवाचिप्रत्ययविरोधोऽपि ॥

एतेन 'नासीद्रजो नो व्योम' इत्यत्र रजोनिषेधादावेव तदानीमित्यस्यान्वय इति अद्वैतसिद्ध्युक्तिरप्यनादरणीया। पूर्वपादे तदानीमित्यस्य सत्वेन तत्रैवान्वयमङ्गीकृत्य सङ्गतार्थकथनसम्भवे द्वितीयपादे तदन्वयस्य विवक्षाया अयुक्तत्वात् ॥ श्रीभाष्ये **चिदचिद्व्यष्टिविषयौ** इत्युक्त्या तदानीमित्यस्य प्रळयकालपरतयोत्तरत्र 'रेतोधा आसन् महिमान आसन्' इत्यादौ चिदचिद्व्यष्ट्योर्वक्ष्यमाणतया वक्ष्यमाणरूपविशिष्टयोरेव सदसतोरत्र निषेधः। नतु तदतिरिक्त रूपविशिष्टयोः। 'तम आसीत्' इत्युक्तिविरोधात्। एतेन नञः पर्युदासार्थकत्वास्वीकारेतु 'सन्नासीत्' इत्यत्र बाधः सत आत्मनस्सदासत्त्वात् इति दोषमभिधाय वस्तुतो 'नसदासीन्नोसदासीत्' इत्यस्य सदसद्भिन्नमासीदित्यर्थः। तस्य च वाक्यस्य 'तम आसीत्' इत्यनेनैकवाक्यतया सदसद्भिन्नं तम आसीदित्यर्थपर्यवसानसम्भवात्तदेकवाक्यतार्थमेव 'नासदासीदित्यादौ' तदानीमित्यन्वय आवश्यकः' इति लघुचन्द्रिकायां पर्युदासस्थापनमपि निरवकाशम् ॥

'नासदासीन्नो सदासीत्तदानीम्' 'कुहकस्य शर्मन्' 'तम आसीत्' इति वाक्यपर्यालोचनायां सच्छब्दार्थजीवानां प्रळयकाले करणकलेबरादिविरहेण परमात्मज्ञानवैधुर्येण सुखविरहस्य स्फुटतया व्यष्टिसृष्टौ 'सतो बन्धुमसतिनिरविन्दन्' इत्युत्तरत्र प्रकृतिमण्डल एव जीवानां ज्ञानस्य तन्मूलसुखस्य च स्फुटतयोत्तरसदसच्छब्दार्थानुगुण्येनोपक्रमस्थ सदसच्छब्दार्थनिर्णये प्रामाणिकानां हृदयङ्गमेऽपि पर्युदासेनान्यार्थकल्पनस्यानादरणीयत्वात्। सर्वत्र समासाघटकस्य क्रियासमभिव्याहृतस्य (असमस्त) नञः प्रसज्य प्रतिषेधार्थकतायास्स्फुटतया सर्वानुभवसिद्धत्वेन उपक्रमेऽपि तदर्थस्य स्फुटप्रतीतावपि अन्यार्थकल्पनस्याभिनिवेशमूलकत्वात्। तदानीमित्यस्याधिकरणपरतया नञ अत्यन्ताभावबोधे व्युत्पत्तिस्सुगमा। अनुयोगिवाचकपदविरहेणान्योन्याभावबोधकत्वे व्युत्पत्तिः प्रकारान्तरेणोपस्थितिसंपादनेन क्लेशेनोपपादनीया। एतत्तात्पर्येणैव प्रतिषेधे दोषसत्त्व एव पर्युदासो जैमिनीयैरङ्गीकृतः। पर्युदासाङ्गीकारो न युज्यत इत्यभिप्रेत्यैव सायणीये

### श्रीभाष्यम्

## मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव

### गूढार्थसंग्रहः

प्रसज्यप्रतिषेध एवादृतः । सच्छब्दस्य परमार्थार्थकत्वेनात्मनस्सार्वदिकत्वेन प्रतिषेधो न घटत इति लघुचन्द्रिकोक्तदूषणं तूत्तरवाक्यपर्यालोचनेन सायणीये परिहृतम् । अतः कस्यशर्मन् ' सलिलमा इदगूँसर्वं तुच्छेनाभ्वपिहितम् ' ' सतो बन्धुमसति निरविन्दन् ' ' कामस्तदग्रे समवर्तताधि ' इत्यादिवाक्यपर्यालोचनया उपबृंहणानुगुण्येन च सदसच्छब्दयोः प्रागुक्तार्थ एव युक्त इत्यप्रकम्प्यमेव । अधिकं सूत्रविवरणे द्रष्टव्यम् ॥

**विचित्रार्थसर्गकरत्वादेवेति** । विचित्रकार्यकारिणि मायाशब्दस्य रूढ्यैव सर्वप्रयोगोपपत्तौ मृषात्वविशिष्टे मायाप दशक्यं दुर्घटकारिणि निरूढलक्षणेति (चं) अङ्गीकारे मानाभावः ' मायां तु प्रकृतिम् ' इत्यत्रापि न मायाशब्दो मिथ्या- र्थकः, मिथ्यार्थे कोशादिविरहात् श्रुत्यादिनिर्वचनविरहात् । विवरणोपन्यस्तजरदद्वैतिभिः (श्री.भा.१४७) मन्त्रौषधादि सत्यवस्त्वेव नानिर्वचनीया ' इत्युक्तेश्च ' मायांतु प्रकृतिम् ' इति श्रुतौ मायाशब्दस्य प्राथम्येन उद्देश्यसमर्पकत्वमेव । ' अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः ' इति पूर्ववाक्यम् । तत्र मायीति धनीतिवत् मायास्वा- म्यर्थकं, नतु परमतरीत्या मायाऽऽच्छादित इति । इनिप्रत्ययेन आच्छादनरूपार्थालाभात् । ' तस्मिंश्चान्य ' इत्यत्रोपा- ध्यनुक्त्या अन्यत्वमनौपाधिकमेव विवक्षितम् । मायास्वामिभिन्न इत्यर्थः, मायास्वामिभिन्नस्य जीवस्य मायया निरोधप्र- कारः मायापदार्थविवरणमुखेनोच्यते ' मायांतु प्रकृतिं विद्यात् ' इत्यादिना । अत्र ' क्षरं प्रधानम् ' इत्यादिवत् प्रधान- शब्दानिर्देशं विहाय प्रकृतिशब्दनिर्देशेन प्रकृतिशब्दयोगार्थोऽपि विवक्षित इति प्रतीयते । प्रकरोतीतिहि प्रकृतिः प्रश- ब्दार्थोत्कर्षश्च वैचित्र्यम् । एवं च विचित्रार्थकारित्वं मायाशब्दप्रवृत्तिनिमित्तमित्यपि विवक्षितम् । प्रकृतिशब्दरूढ्या विचित्रार्थकारि प्रधानमित्यर्थद्वयमप्यत्र विवक्षितम् । ' तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् । ' इत्युत्तरार्धे विचित्र- कार्यकारित्वं विशदीकृतम् । एवं च देहेन्द्रियादिविचित्रार्थकारिण्या मायया स्वकार्यमुखेन निरोधः पूर्वत्र विवक्षितः । ' मायिनंतु महेश्वरम् ' इति नियामकस्य स्वामिन एव मायिशब्दार्थत्वकथनेन परमतरीत्या मायाऽऽच्छादितत्वं नात्र विवक्षितमिति स्फुटं प्रतीयते । इदं च मायास्वामित्वं परमात्मनः प्रागप्युक्तम् । ' क्षरं प्रधानममृताक्षरं हरः क्षरात्मा- नावीशते देव एकः ' (श्वे.१) इति । तदुत्तरार्धे च जीवस्य मायानिरोधस्य निवृत्तिक्रमोऽपि प्रतिपादितः । तस्याभिध्यानाद्योज- नात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः ' इति । अत्र च तच्छब्दः प्रधानजीवेशपर इति स्फुटं प्रतीयते । अभि- ध्यानशब्दोऽपि प्रधानजीवसम्बन्धपुरस्कारेणैव तस्य ध्यानमभिधत्ते अभीत्युपसर्गात् । अन्ते इति प्रधानावसाने इत्यर्थः तन्निवृत्तिश्च तत्त्वभावादित्यत्राभिप्रायवाचकेन भावपदेन प्रधानजीवेशानुग्रहमूलक इत्यर्थोऽपि स्फुटतया प्रतीयते ॥

' मायामेतां तरन्ति ते ' इत्युपबृंहणानुसारेण अत्रार्चिरादिगतिद्वारा प्रकृतिदेशादतिक्रमणमेव विवक्षितम् । कंचि- द्ग्राममतिक्रम्य ग्रामान्तरगमनदशायां अतिक्रान्तग्रामे निवृत्तिव्यवहारदर्शनात् । एवं च प्रधानजीवस्वामी यः स्रष्टा स एव सृष्टिसमनन्तरं बन्धमनुभवतो जीवस्य स्वध्यानजन्यानुग्रहेण प्रकृतिदेशातिक्रमणानन्तरं स्वप्राप्तिरूपां मुक्तिं ददा तीति प्रघट्टकद्वयतात्पर्यं निर्मत्सराणां विदुषां स्फुटम् । अतएव ' संसारमोक्षस्थितिबन्धहेतुः ' ' अमृतस्य परं सेतुम् ' (श्वे.६) इत्यादिवक्ष्यमाणश्रुतयोऽपि सङ्गच्छन्ते, एवं ' यैस्स्वधर्मपरैर्नाथ नरैराराधितो भवान् । ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥ ' (वि.पु.५.६) इति वचनमपि । एवं च प्रसादद्वारकमायानिवृत्तेरत्र विवक्षितत्वेन अद्वैतसि- द्धयाद्युक्तदिशा मायाया अनिर्वचनीयत्वं नात्र विवक्षितम् ॥

## गूढार्थसंग्रहः

एतेन सङ्क्षेपशारीरकविवरणे 'तस्य हरशब्दोदितब्रह्मणः आभिमुख्येन अहं ब्रह्मास्मि' इत्येवंरूपात् ध्यानात् दीर्घकालचिन्तनात् ध्यानपरिपाकसाक्षात्कारात्। योजनात् तत्त्वभावात् अनावृतपूर्णब्रह्मात्मकत्वस्वभावात्' इत्यादि (८.८.६) अद्वैतसिद्धिकारवाक्यं न श्रुतितात्पर्यानुगुणम्। 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्। अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्युत्तरश्रुतिविरोधात्। अत्र सर्वतत्त्वैर्विशुद्धमित्यनेन राज्ञो विभूतिवियोगे यथाऽशुद्धिः तद्वत् ब्रह्मतत्त्वस्यापि सर्ववस्तुशून्यत्वे अशुद्धिरिति बोधनपूर्वकं सर्वतत्त्वसंबद्धब्रह्मतत्त्वज्ञानस्यैव मुक्तिहेतुत्वप्रतिपादनात्। पूर्वं जीवब्रह्मणोरभेदस्य क्वाप्यप्रतिपादनेन एवमर्थवर्णनस्यौत्प्रेक्षिकत्वनिश्चयाच्च। अतः 'मायां तु प्रकृतिं विद्यात्' इति श्रुतिः विचित्रार्थकरणमुखेन जीवस्य मायानिरोधप्रकारं बोधयन्ती मायाशब्दो विचित्रार्थकारित्वपरो न मिथ्यात्वपर इति बोधयतीत्येव युक्तम्। गीतायामपि 'भूमिरापोऽनलो वायुः' इत्यादिना जीवस्य चतुर्विंशतितत्त्वात्मकप्रकृतेरुत्कर्षं अचिज्जीवधारकत्वकारणत्वादिभिः ततोऽपि परमात्मन उत्कर्षं प्रतिपाद्य 'त्रिभिर्गुणमयैर्भावैः एभिस्सर्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥' इति मायानिरोधप्रकारः 'मायामेतां तरन्ति ते' इत्यन्तेन मायातरणप्रकारश्चाभिहितः॥

नृसिंहोत्तरतापनीये च—'अथैषो अकार आप्ततमार्थः आत्मन्येव नृसिंहे ब्रह्मणि वर्तते। एषह्येवाप्ततमः एषहि साक्षी एष ईश्वरः अतस्सर्वगतः नहीदं सर्वं एषहि व्याप्ततमः इदं सर्वं यदयमात्मा मायामात्रं एष एवाग्र एषहि व्याप्ततमः' (५) इत्युक्तम्। अत्र आत्मन्शब्दस्य 'यच्चाप्नोति' इति स्मार्तनिर्वचनसिद्धार्थस्य अकारार्थत्वमभिधाय नियन्तृतया सर्वगतत्वेन तदर्थं विशदीकृत्य आत्मनः सर्वस्य चाभेदं प्रतिषिध्य मायामात्रस्य एवंस्य व्याप्ततमत्वेन आत्मन्शब्दार्थपर्यालोचनया सर्वाभेदो नियन्तृत्वविशिष्टव्यापकत्वेनोपपादित इति स्फुटं प्रतीयते। अत्र मायाशब्दस्यानिर्वाच्यबोधकत्वशङ्कैव नावतरति। उत्तरत्र 'सर्वंह्ययमात्मा अयंहि सर्वान्तरः नहीदं सर्वं निरात्मकमात्मैवेदं सर्वम्' इति पूर्वोक्तार्थ एव विशदीकृतः। तदुत्तरत्रापि 'अस्मिन्हि सर्वं अयंहि सर्वात्मा अयंहि सर्वं नैव अतोऽद्वयः' इत्युक्तम्। अत्र 'यदादत्ते' इति स्मृत्यनुसारेण धारणार्थमादत्त इत्यात्मन्शब्दव्युत्पत्त्या धारकधार्ययोरभेदाभिप्रायेण सर्वाभेदः सर्वाधारकत्वेन अद्वयत्वं नात्मव्यतिरिक्तवस्तुशून्यत्वेनेत्यर्थः स्फुटः॥

एतेन 'नात्र काचन भिदाऽस्ति अत्र भिदामिव मन्यमानश्शतधा सहस्रधा भिन्नः मृत्योर्मृत्युमाप्नोति तदेतदद्वयम्' इत्यत्र परसम्मतभेदनिषेधो न विवक्षितः। सर्वव्यापकत्वधारकत्वाभ्यां प्राक् सर्वाभेदस्योपपादितत्वेन तदविरोधेनात्रापि भेदनिषेधस्य विवक्षितत्वावश्यंभावादिति सिद्ध्यति॥

एतेन नवमोपक्रमे—'सर्वत्र नह्यस्ति द्वैतसिद्धिः आत्मैव सिद्धोऽद्वितीयो माययाह्यन्यदिव सवा एष पर एव एष हि सर्वम्' इत्यत्र मायाभिन्नस्य अचेतनस्य प्रागुक्तप्रकारेण व्यापकधारकस्यैवात्मन्शब्दार्थतया तदविरोधेनैवाद्वितीयत्वं अव्याप्यवस्तुशून्यत्वमिति विवक्षितम्। अयं च आत्मा परमात्मैव न जीव इति च। द्वैतद्वितीयशब्दतात्पर्यविषयः अव्याप्यवस्त्वेव। 'मायया ह्यन्यदिव' इत्यत्रापि तदेव विवक्षितम्। अनन्तरं 'तथाहि प्राज्ञे सैषाऽविद्या' इत्यत्र प्राज्ञविषयकविद्याविरोधित्वं मायाया अभिधाय 'जगत्सर्वमात्मा परमात्मैव' इत्यनेन पूर्ववद्व्यापकत्वादिनाऽभेदमभिधाय 'स्वप्रकाशोऽप्यविषयज्ञानत्वाजानन्नेवह्यत्र' न विजानाति अनुभूतेर्माया च तमोरूपानुभूतेः तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूपम्' इत्यत्र जीवस्य स्वप्रकाशस्यापि धर्मभूतज्ञानसत्त्वेऽपि सुषुप्त्यादौ विषयज्ञानस्यैवाभावेन प्राज्ञविषयकज्ञानं अनुभूतेर्धर्मभूतज्ञानान्नैव सम्भवति। ज्ञानविरोधिनी च 'माया च तमोरूपानुभूतेः' इत्यत्र मायेति 'तदेतज्जडं मोहा-

## गूढार्थसंग्रहः

त्मकमनन्तं तुच्छमिदं रूपम्' इत्यत्र मोहात्मकमित्यनेन ज्ञानविरोधित्वम् 'तुच्छम्' इत्यनेन धर्मभूतज्ञानपरिणामसुख-
विरोधित्वंचोक्तम्। 'तुच्छन्त्वसुखशून्ययोः' (वैज.ताना.३६) इति कोशेन तुच्छपदस्य सुखविरोधीत्येवार्थः ॥

'यदचरस्तन्वा वावृधानो बलानिन्द्र प्रब्रुवाणो जनेषु। मायेत् सा ते यानि युद्धान्याहुः नाद्यशत्रुं ननु पुरा विवित्से'
(मण्ड.१०.सू.५४,म.२) इत्यत्र मायाशब्दस्य मिथ्यार्थकत्वं नैव विवक्षितम्। अत्र सायणीये 'अचर इति यत्संचारं
कृतवानिति यदस्ति, सा गतिः मायेत् मायैव' इति योजना परं संमता। मृषेत्यर्थस्तु पूर्वापरविरोधेनानुपादेयः।
'तां सु ते कीर्तिं मघवन् महित्वा यत्त्वा भीते अह्वयेताम्। प्रावो देवाँ आतिरोदासमोजः प्रजायै त्वस्यै यदशिक्ष इन्द्र।'
इति पूर्वश्रुतिः। तत्र महत्त्वेन अवगतां कीर्तिं सुष्ठु कीर्तयामीति शेषः।' इति सायणीये विवरणपूर्वकं देवरक्षणासुरह-
ननादेः ततो द्यावापृथिव्योः भीतिपरिहारस्य च कीर्तेः कीर्तनस्य तच्छ्रुतौ सायणीय एव प्रतिपादनात् ॥

'क उनु ते महिमानस्समस्यास्मत्पूर्व ऋषयोऽन्तमापुः। यन्मातरं पितरं च साकमजनयथाः तन्वस्स्वायाः' इति
तदुत्तरश्रुतिः। अत्र अस्मत्पूर्वं ऋषयः इन्द्रमहिम्नः पारं नापुः। यत् द्यावापृथिव्यौ इन्द्रस्सह इवाजनयत् अतो नापुः
इति सायणीय एव विवरणेन इन्द्रमहिम्नएवोत्कर्षः प्रतिपादितः। एवं पूर्वोत्तरश्रुतिद्वये महिमप्रतिपादनपरेसति मध्यम
श्रुतौ मायाशब्दस्य मृषार्थकत्वं नैव सम्मतमिति स्फुटम्। विचित्रकार्यकारिणि मायाशब्दरूढौ विचित्रकार्येऽपि माया-
शब्दप्रयोगो युक्तः। पूर्वं शत्रुलाभेऽपि इदानीं शत्रुलाभो नास्तीति 'नाद्य शत्रुं ननु पुरा विवित्से' इत्यत्रोक्त्या विचित्र
कार्यस्य सर्वदाऽसम्भवेन कार्यस्य वैचित्र्यमेव प्रतिपादितं भवति। 'ऋतेऽर्थं यत्प्रतीयेत' इति वचनं न मायाश-
ब्दस्य मिथ्यात्वतात्पर्यकम्। अत्रेत्थं वचनक्रमः। 'यावानहं यथाभावो यद्रूपगुणकर्मकः। तथैव तत्त्वविज्ञानमस्तुते
मदनुग्रहात् ॥ (३१) अहमेवासमेवाग्रे नान्यद्यत् सदसत्परम्। पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ (३२)
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि। तद्विद्यादात्मनो मायां यथाभासो यथा तमः ॥ ३३ ॥ यथा महान्ति
भूतानि भूतेषुच्चावचेष्वनु। प्रविष्टान्यप्रविष्टानि तथा तेषु नतेष्वहम् ॥ ३४' (श्रीमद्भागवतं.२.स्कन्ध.९.अ) इति ॥

अत्र पूर्वं अष्टमोपाक्षिप्तप्रश्नानां नवमे प्रतिवचनानि वक्ष्यन्ते। तत्र 'यदधातुमतो ब्रह्मन् देहारम्भोऽस्य धातुभिः
यदृच्छया हेतुना वा भवन्तो जानते यथा ॥ (८.६) आसीद्यदुदरात्पद्मं लोकसंस्थानरक्षणम्।' इति प्रश्नोपक्रमः अत्र
प्रश्नेषु 'सचापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः। मुक्त्वात्ममायां मायेशः शेते सर्वगुहाशयः ॥' (८.अ.९.श्लो) इत्ये-
कःप्रश्नः। तस्यचोत्तरं नवमे 'तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास परं न यत्परम। व्यपेत संक्लेशविमोह-
साध्वसं स्वदृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ (९.अ.९) प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं नच कालविक्रमः। न यत्र
माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ (९.१०) इत्यादिना अभिधीयते। अत्र मायाशब्दः न मिथ्यार्थकः
किंतु रजस्तमोमयविचित्रार्थकारिप्रकृतिपर इति स्पष्टम् ॥

अत्र नवमोपक्रमे–'आत्ममायामृते राजन् परस्यानुभवात्मनः। नघटेतार्थसंबन्धः स्वप्नद्रष्टुरिवाञ्जसा ॥ बहुरूप
इवाभाति मायया बहुरूपया। रममाणो गुणेष्वस्या ममाहमिति मन्यते ॥ यर्हि वाव महिम्नि स्वे परस्मिन् कालमाययोः
रमेत गतसम्मोहस्त्यक्त्वोदास्ते तदोभयम् ॥' इति प्रतिवचनारम्भः। अत्र 'अथधातुभिर्देहारंभो भगवतः कथम्? तेन
मुक्त्वाऽऽत्ममायां यत्र शेते तं च देशं कथयस्वेति प्रश्नत्रयस्योत्तरं नवमाध्यायेनोच्यते। तस्य त्रिपा-
द्विभूतिविशिष्टस्य भगवतः कालमायावश्यत्वाभावं वक्तुं संसारिचेतनानां कालमायावश्यत्वमाह—आत्मेति। परस्य देहा
परिच्छिन्नस्स्यात्। 
दिभ्यः परस्य। यद्वा परस्यानुभवात्मनः 'सोऽश्नुते सर्वान् कामान्' 'अहमन्नादः, रसँ ह्येवायं लब्ध्वा' इत्यादिप्रका-

## गूढार्थसङ्ग्रहः

रेण भगवदनुभवप्रकारस्य जीवस्यार्थसंबन्धः शब्दादिभोग्यविषयेषु भोक्तृतया सम्बन्धः। आत्ममायां भगवन्मायामृते न घटते। यथा स्वप्नद्रष्टुः 'न तत्र रथा रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथस्सृजते' 'कामं कामं पुरुषो निर्मिमाणः' इति श्रुत्युक्त रथादिपदार्थसंबन्धस्तु तदर्थभगवन्मायामृते नोपपद्यते तद्वदित्यर्थः। प्रकृतितिरोहित-स्वरूपत्वात् प्राकृतेषु भोग्येषु बुद्धिरित्युक्तं भवति। उक्तं विवृणोति बह्विति। बहुरूपया विचित्रपरिणामिन्या मायया सहितः ज्ञानानन्दस्वरूपो जीवः मनुष्याद्याकारमात्मन्यारोप्य बहुरूप इवभूत्वा भातीत्यर्थः। गुणेषु—शब्दादिषु ममाह-मिति अहङ्कारममकारवानित्यर्थः। स्वरूपसाक्षात्कारेसति शब्दादिप्रावण्यनिवृत्तिरित्याह—यर्हीति। यर्हि यदा स्वे स्वाभा-विके महिम्नि अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणाष्टकलक्षणे। गतसम्मोहः गताहङ्कारममकारः उभयं त्यक्त्वा प्रकृ-तिकालवश्यत्वं हित्वा। उदास्ते शब्दादिभोग्यसिद्ध्यर्थं प्रवृत्तिशून्यो भवतीत्यर्थः' इति शुकपक्षीये व्यासार्यैरनुगृहीतम्॥

एवं 'यावानहम्' इति चतुश्श्लोकीशुकपक्षीये 'यावान् यादृक्परिमाणोऽहम्—अपरिच्छिन्न इत्यर्थः। यथा भावः यादृक्स्वभावः। 'स्वाभाविकी ज्ञानबलक्रियाच' इत्युक्त सार्वज्ञ्यादिगुणकः। यद्रूपगुणकर्मकः रूपं चिदचिद्वस्तुनी तयोर्गुणः सच सद्वारको भगवद्गुणः। 'काठिन्यवान् यो बिभर्ति' इतिवत् कर्म जगद्व्यापारः, प्रधानतया ज्ञातव्यं परशब्दोक्तं भग-वत्स्वरूपमाह- अहमिति। सदसत्परं चेतनाचेतनविलक्षणं यद्वस्तु तदहमेवासं नान्यत्। अन्यत्सर्वं चिदचिदन्तर्गतम्। अहमेव तद्विलक्षण इत्यर्थः। अग्रे सृष्टेः प्राक्, पश्चात्सृष्टिकाले जातस्त्वम्। एतत्कार्यजातंचाहं, मद्रूपं कार्यचिदचिद्रूपश्चाह-मित्यर्थः। पुनस्संहारकाले योऽवशिष्येत न संह्रियेत सचाहमित्यर्थः। एवं चिदचिद्विलक्षणस्वरूपमुक्तम्। अथावरश-ब्दोक्तमङ्गतया ज्ञातव्यं चिदचिद्रूपमाह—ऋतेऽर्थमिति। अर्थः निरतिशयपुरुषार्थभूतं चित्तत्वं विना यद्वस्तु प्रतीयते प्रकृत्यनुसन्धानवेलायामात्मस्वरूपं न यथावत्प्रकाशत इत्यर्थः। न प्रतीयेत चात्मनि चेतनस्वरूपे प्रतीयमाने 'सा निशा पश्यतो मुनेः' इति न्यायेन यदचेतनं न प्रतीयेत तां मायां विद्यादित्यर्थः। अन्यतरस्य प्रकाशनेनान्यतरस्य प्रकाशनं विरुद्धाकारत्वादित्यभिप्रेत्य दृष्टान्तमाह—'यथाभासो यथा तम' इति। भासो भासनं भाश्शब्दो बहुवचनान्तो वा नहि तेजसि तमो भाति। न तमसि तेजो भाति तद्वदित्यर्थः। स्थूलत्व सूक्ष्मत्व नित्यत्वानित्यत्व जडत्वाजडत्वादिविरुद्धा-कारोऽभिप्रेतः' एवं चिदचित्स्वरूपमुक्तम् तयोः स्वस्यानुप्रवेशमाह—यथेति। महान्ति भूतानि आकाशवायुतेजांसि घटा-दिषु प्रविष्टान्यप्रविष्टानि च घटादिगतछेदनभेदनाद्यस्पृष्टत्वात् तथाऽहमपि तेषु प्रविष्टः तद्गतदोषस्पृष्ट इत्यर्थः। यथा अप्रविष्टानि बहिरपि सन्ति तथा 'अन्तर्बहिश्च तत्सर्वं व्याप्य' इति प्रकारेण तेषु प्रविष्टोऽहं नतेष्वेव—बहिरपि व्याप्त इत्यर्थः' इत्युक्तम्॥

अत्र 'यावनहं यथाभावः' इत्यत्र स्वरूपगुणादीनां परमार्थभूतानां विज्ञानमेव प्रथमतः अभिहितमिति तच्छ्लो-कार्थाविरोधेनैव 'ऋतेऽर्थं यत्प्रतीयेत' इति श्लोकार्थो वाच्यः; अतः प्रतीतिविषयसामान्यशून्यत्वस्य विवक्षितत्वे पूर्वोक्तिविरोधः। किंच अष्टमोक्तप्रश्नप्रतिवचनरूपे नवमे मायायाः अभावेऽपि भगवतो दिव्यमङ्गळविग्रहभूषणादीनां प्रतिपादनेन तद्विरोधेनात्र परसम्मतार्थो न विवक्षितः। अत अर्थशब्दः ज्ञानानन्दस्वरूपजीवपरः, जीवस्यानन्दरूपत्वेन पुरुषार्थत्वादर्थशब्देन निर्देशः। मायया जडस्य देहस्यैव भोग्यत्वेन प्रतीत्या जीवे भोग्यताबुद्धिर्नोदेति। देहस्य भोग्यत्व यदि तात्त्विकं स्यात् तदा आनन्दरूपजीवप्रतीतावपि तत्प्रतीतिस्स्यात्। देहप्रतीतिमन्तरा ज्ञानानन्दजीवप्रतीतिदशाया-मेव पुरुषार्थो वास्तवः। देहभोगदशायांतु प्रकृतिनिबन्धनः औपाधिकः इत्येवार्थोऽत्र युक्त इति पूर्वसन्दर्भपर्यालोचनायां

### श्रीभाष्यम्

**'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' (श्वे.४--९) इति माया-शब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति। परमपुरुषस्य च तद्वत्तामात्रेण मायि-त्वमुच्यते नाज्ञत्वेन। जीवस्यैव हि मायया निरोधश्श्रूयते 'तस्मिंश्चान्यो मायया सन्नि-रुद्धः' (श्वे.४.९) इति। 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' (माण्डूक्यकारिका २.ख.२१) इति च। 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ.४.अ.५.ब्रा.१९) इत्यत्रापि विचित्रा-श्शक्तयोऽभिधीयन्ते। अत एव हि**

### श्रुतप्रकाशिका

विचित्रकार्यकरत्वात्प्रकृतेराश्चर्यरूपत्वमिति न मायामात्रसूत्रविषयभाष्यविरोधः। एवं तदुपपादयति। **अस्मादिति**। मायाशब्दार्थ उक्तः॥

अथ भगवतो मायासम्बन्धश्रवणात् तद्वश्यत्वशङ्काव्युदासाय मायीति पदगत मत्वर्थीयप्रत्ययार्थमाह—**परमपुरुषस्येति**। मायीति पदोक्तो मायासम्बन्धो न तत्तिरोभाव्यत्वं अपितु तच्छेषित्वं जीवस्यैवतु तत्तिरोधेयत्वं तस्यैव तथाव श्रवणादित्यर्थः। मायाभिभवो जीवस्यैवेत्यस्मिन्नर्थे परोक्तमेव वचनमाह--**अनादीति**। **'इन्द्रो मायाभिः'** इत्यत्र

### गूढार्थसंग्रहः

अतः मायाशब्दस्य मिथ्यात्वं प्रवृत्तिनिमित्तमित्यर्थः 'ऋतेऽर्थम्' इत्यत्र व्यासार्योक्तार्थ एवात्र भागवते विवक्षितः। नैव सिद्ध्यति॥

एवं च 'ऋतेऽर्थं यत्प्रतीयेत' इति वचनस्य 'एकमेवाद्वितीयम्' इति श्रुत्यर्थविचारावसरे गुरुचन्द्रिकोक्तवि-वरणमनुपादेयम्। तत्पूर्वश्लोके 'अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्।' इति सृष्टेःपूर्वमेव कार्यजातनिषेधोक्तिरत एव सङ्गच्छते। 'आत्मायामृते—न घटेतार्थसम्बन्धः' इति नवमारम्भे उक्त्या अत्र सृष्टिपूर्वकाले निषेधस्यानुचितत्वात्। पदार्थानां परसम्मतमायामयत्वस्यात्र विवक्षितत्वे सर्वदाऽपि तन्निषेधस्यावश्यवक्तव्यत्वेन सृष्टेःपूर्वं तन्निषेधोक्तेरसाङ्गत्यमेव स्यात्। 'बहुरूप इवाभाति मायया बहुरूपया।' इति नवमोपक्रमे उक्त्या अत्रापि कार्यजातनिषेध एव विवक्षित इति स्फुटम्। 'मयश्च शंबरश्चैव महामायाधरावुभौ। पर्जन्यवारुणीमाये व्यधत्ताम्' इति हरिवंशवचने मन्त्रविशेषविशि-ष्टपर्जन्यवारुणास्त्रयोः सत्यभूतयोरेव मायाशब्दप्रयोगः 'मायास्याच्छांबरीबुध्योः मायः पीतांबरेऽसुरे' इति मेदिन्यां शांबर्यां विद्यायां सत्यायामेव मायाशब्दप्रयोगश्च सङ्गच्छते। मायायाः अस्त्रनाश्यत्वकथनेन ज्ञाननिवर्त्यत्वरूपमिथ्या-त्वाभावस्य सिद्धेश्च। 'मायाह्येषा मया सृष्टा' इत्यादिनारायणाख्यानवचनं न परसम्मतार्थबोधकमिति हयशिरोरत्नभूषण दीधितौ व्यक्तम्। गौतमसूत्रादिकं न गुरुचन्द्रिकोक्तार्थमित्यत्रैव प्राक् (४११.पु) निरूपितम्। अतएव 'बुद्ध्या विवि-च्यमानानाम्' इत्यादिलङ्कावतारवचनस्य प्राक् (३१९.पु) खण्डने उदाहृतत्वोक्त्या 'बुद्ध्या विवेचनात्तु भावानाम्' (न्या.सू.४.२.२६) इत्यादिप्राक् (४१०.पु) उदाहृतन्यायसूत्रस्य पूर्वपक्षसूत्रत्वप्रख्यापनं सङ्गच्छते। अतः 'मायांतु प्रकृतिं विद्यात्' इति श्रुतिः विचित्रार्थकारित्वमेव मायाशब्दप्रवृत्तिनिमित्तमभिप्रैतीति सिद्धम्॥

**विचित्राश्शक्तयोऽभिधीयन्त इत्यादि**। 'दासानामिन्द्रो मायया' (ऋ.म.४.सू.३०.मन्त्र.२१) इत्यत्र सायणीये 'मायया—स्वकीयया शक्त्या' इति विवृतम्। 'अस्तभ्नान्मायया द्यामवस्रसः' (ऋ.२.म.१७.सू.५.मन्त्र)

## श्रीभाष्यम्

**' भूरित्वष्टेव राजति ' इत्युच्यते नहि मिथ्याभिभूतःकश्चिद्विराजते । ' मम माया दुरत्यया ' (गी.७.१३) इत्यत्रापि गुणमयीति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिस्सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ।**

## श्रुतप्रकाशिका

अनेकविचित्रशक्त्यभिधायित्वं * बहुवचनादवगम्यते । ममेति । स्पष्टम्, निगमयति । इतीति । मायाशब्दस्य मिथ्या भूतविषयेषु प्रयोगो दृश्यतेचेत्तत्र लाक्षणिकस्स्यात् अर्थस्य सत्यत्वाभावेन तस्याश्चर्यत्वाभावात् * प्रतिभासस्तु द्वित्वादिविषयत्वादाश्चर्यरूपः मन्त्रौषधादिश्चाश्चर्यरूप इति तत्सम्बन्धाल्लाक्षणिकत्वम् ॥

## गूढार्थसंग्रहः

इत्यत्र ' मायया–प्रज्ञया उपायेन ' इति, ' इन्द्रो मायाभिः ' (ऋ.६.४७.१८) ' मायाभिः–ज्ञानैः ' इति च सायणीये विवरणम् । ' इन्द्रो मायाभिः ' (बृ) इत्येतच्छङ्करभाष्ये ' मायाभिः—प्रज्ञाभिः ' इति प्रथमं विवरणं कृतम् । मायाशब्दस्य विचित्रकार्यकारित्वरूपप्रवृत्तिनिमित्तेन शक्तिपरत्वमित्यभिप्रेत्य ' विचित्राः ' इत्युक्तम् । ' इन्द्रःपरमेश्वरः ' इति(शं) भाष्ये विवरणेन ' इदि परमैश्वर्ये ' इति धातुना निष्पन्नः इन्द्रशब्दः । एतेन ' सवा अयमात्मा सर्वेषां भूतानामधिपतिस्सर्वेषां राजा ' (४.५.१५) इति पूर्वश्रुत्युक्तराजत्वं दर्शितं भवति । ' इन्द्रो राजा जगतो य ईशे ' ' एक इद्राजा जगतो बभूव ' इति तै.आरण्यके हिरण्यगर्भसूक्ते च उक्तेः । बहुरूपाणां विचित्रशक्तिमूलकत्वेन मिथ्यात्वाभावेनैव ' तदेतद्ब्रह्म–सर्वानुभूः ' इति श्रुतौ वक्ष्यमाणं फलं सङ्गच्छते ' इति प्रागेव (२३३, २३४.पु) निरूपितम् । इममेवार्थमभिप्रेत्य— **नहि मिथ्याभितभूतःकश्चिद्विराजते** इत्युक्तम् ॥

**न श्रुतिभिस्सदसदनिर्वचनीयाज्ञानप्रतिपादनमिति ।** ' अनृतेनहि प्रत्यूढाः ' ' अनीशया शोचति मुह्यमानः ' ' इत्येवमाद्या ' इति पञ्चपादिकायां अविद्यायां ' अनृतेनहि प्रत्यूढाः ' इति श्रुतिः प्रथममुपात्ता इति सा श्रुतिः आद्यपदेन ब्रह्मसिद्धयाद्युपात्ता ' इन्द्रो मायाभिःपुरुरूप ईयते ' ' मायांतु प्रकृतिं विद्यात् ' इति श्रुतिश्च न परमतसाधिकेत्युपपादितम् । ' अनीशया शोचति मुह्यमानः ' इति श्रुतौ ' स्वभावसिद्धेश्वरस्य अनीश्वरत्वं तद्भावाप्रतिपत्तिरेव वस्तुनोऽनपायात् । ततश्च ईश्वरभावाप्रतिपत्तेश्शोकस्य च निमित्तं मोहं दर्शयति ' इति विवरणोक्तार्थस्तु अत्र सर्वथा न घटत इति एतच्छ्रुतिरुपेक्षिता । अयमर्थः एतच्छ्रुतौ न विवक्षित इति प्राक् (७६३.पु) चन्द्रिकाद्युक्तार्थपर्यालोचनावसरे निरूपितम् । एवं–आदिशब्दात् ' न तं विदाथ यइमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्याचासुतृप उक्थशासश्चरन्ति ' इति । नीहारं तमोऽज्ञानमित्यनर्थान्तरम् । तेन प्रावृतत्वमेव जीवानां ब्रह्मापरिज्ञाने जल्प्यत्वाद्यध्यासे च निमित्तं दर्शयति । तथा ' अविद्यायामन्तरे वर्तमानाः नान्यच्छ्रेयो वेदयन्ते ' इति श्रेयोरूपब्रह्मापरिज्ञाने क्रियाकारकाद्यध्यासे च निमित्तभूतामविद्यां दर्शयन्तीत्याद्याः ' अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ' इत्याद्यास्स्मृतयोऽपि द्रष्टव्याः ' इति विवरणोक्तिः ॥

एवं ' स आशिषा द्रविणमिच्छमानः परमच्छदो वर आविवेश ' इति कामेन भूतभौतिकप्रपञ्चं रिसृक्षतो ब्रह्मणः परममाच्छादकं श्रूयमाणमावरणविक्षेपशक्तिमदस्मदभिमताज्ञानमेव युक्तम् । त्वदभिमतप्रकृतेः परमात्मानं प्रत्यावरकत्वानुपगमात् जीवंप्रति च कर्मण एव तथात्वोपगमात् । सृष्टिप्रवेशानुपयोगिनः प्रकृतेऽनभिधेयत्वाच्च । तव जीवंप्रत्यनावृतस्य तत्साक्षात्कृतस्यापि ब्रह्मणः स्रष्ट्रादित्वापगमात् ' इति (सि.सि.अं) उक्तिश्चानुपादेया ॥

### श्रीभाष्यम्

**नाप्यैक्योपदेशानुपपत्त्या, नहि 'तत्त्वमसि' (छा.६.८.७) इति जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते । ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः**

### श्रुतप्रकाशिका

अथ श्रुत्यर्थापत्त्या अनिर्वचनीयसिद्धिं दूषयति । **नापीति** । प्रतिज्ञातमुपपादयति । **नहीति** । अज्ञानापरिकल्पने अनुपपत्तिर्नास्ति तत्कल्पन एवानुपपत्तिः विरुद्धधर्मश्रवणादित्यभिप्रायेण तच्छब्दावगतविशेषणान्युक्तानि । समानविभक्तिश्रुतिसिद्धतयाह्यैक्यापरित्यागः तथाश्रुतहानस्यान्याय्यत्वात्तच्छब्दावगतविशेषास्स्वीकार्या इति भावः । ऐक्योपदेशानुपपत्तिरितिचेत्तत्राह—**ऐक्येति** । जीवपरयोर्हेयसम्बन्धतदनर्हत्वाभ्यां ह्यैक्यविरोधः जीवशरीरकस्य परमात्मन ऐक्या-

### गूढार्थसङ्ग्रहः

'नीहारेण प्रावृता' इत्यत्र 'नीहारं तमोऽज्ञानम् इत्यनर्थान्तरम्' इति विवरणोक्तिस्तु नीहारशब्दस्याज्ञानवाचकत्वे कोशादिविरहेण 'नीहारसदृशेनाज्ञानेन' इति सायणीयोक्त्या नीहारशब्दस्य तमसि शक्तिविरहाच्चानादरणीया । एतच्छ्रुतेः 'तमिद्गर्भं प्रथमं दध्र आपः' इति ऋगनन्तरत्वेन एतत्प्रघट्टकोपबृंहणभूत पाद्म, मात्स्य पुराणवचनेषु 'तस्यैवैकार्णवजले नीहारेण वृतान्तरे' (५.३६.१०६) (२६६.३२) इत्याद्युक्त्या नीहारशब्दस्याज्ञानार्थकत्वविरहस्य स्फुटत्वाच्च । नीहारशब्दस्य विवरणोक्तार्थः न प्रामाणिकसम्मत इति महापूर्वपक्षेऽपि इयं श्रुतिः नोपात्ता । विस्तरेण एतच्छ्रुत्यर्थः सूक्तविवरणे द्रष्टव्यः । 'अविद्यायामन्तरे वर्तमाना' इत्यत्र अविद्याशब्दस्य कर्मार्थकत्वस्य पूर्वमेव भाष्ये उपपादनेन इयं श्रुतिः न परसम्मतार्थबोधनक्षमेति भगवतैवोक्तप्रायम् ॥

'स आशिषा द्रविणमिच्छमानः परमच्छदो वर आविवेश' इत्यत्र परममज्ञानम् इति विवरणं परमशब्दस्य तदर्थे शक्त्यभावादनुपादेयम् । 'परमच्छदः' इति तैत्तिरीयपाठः 'प्रथमच्छदवराँ आविवेश' इति ऋग्वेद शुक्लयजुर्वेदयोःपाठः तत्र प्रथमशब्दस्याज्ञानार्थकत्वासम्भवादपि सि.सि.अं. व्याख्यानमनुचितम् । 'परमच्छदः–परमं स्वकीयरूपमेवाद्वितीयं परमार्थरूपमावृण्वन्' (तै) 'प्रथमच्छत्–प्रथमं मुख्यं निष्प्रपञ्चं पारमार्थिकं रूपमावृण्वन्' (ऋ.सायणीयम्) इति विवरणमप्यनुपादेयम् । अज्ञानस्यैव परमते आवरणकर्तृत्वेन आवेशकर्तृत्वस्य तत्रासम्भवेनासङ्गतेः । अतः 'स आशिषा' इत्यत्र 'स्त्रीत्वाशीर्हिताशंसाऽहिदंष्ट्रयोः' इति कोशेन आशीश्शब्दः हिताशंसार्थकः । 'अवराणां जीवानां हिताशंसया जीवानां घनस्थानापन्नं ज्ञानमिच्छमानः परादिरूपेषु प्रथमं वासुदेवरूपमावृण्वन् अप्रकाशयन् अवरान् जीवान् अन्तर्यामितया आविवेशेति अन्तर्यामिरूपं प्रदर्शितं भवति । जीवानां ज्ञानसंपादनार्थमावेश इति 'स एवासां प्रतिबोधनायाभ्यन्तरं विविशानि' इति मैत्रायणीयोपनिषदि व्यक्तम् । अधिकं सूक्तविवरणे द्रष्टव्यम् । अतः परोक्तिस्सर्वाऽप्यभिनिवेशमूलैव । 'अज्ञानेनावृतं ज्ञानम्' इत्यत्राप्यज्ञानशब्दस्य कर्मार्थकत्वमन्यत्र द्रष्टव्यम् ॥

पञ्चपादिकायां—'तदर्थापत्तिरपि' इत्युपक्रम्य 'अन्यथा परमार्थतस्तत्स्वरूपत्वे तदवबोधोऽपि नित्यसिद्धस्स्यात्, तदा तादात्म्योपदेशो व्यर्थस्स्यादिति जीवे ब्रह्मस्वरूपप्रकाशाच्छादिकाऽविद्या कल्प्यते' इत्युक्तमर्थं पर्यालोचयति **नाप्यैक्योपदेशानुपपत्त्या इत्यादिना** ॥

### श्रीभाष्यम्

**'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.६.प्र.३.ख.२) इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम्। अतो न ब्रह्माज्ञानपरिकल्पनम्। इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते॥**

### श्रुतप्रकाशिका

भिधाने हेयसम्बन्धस्य जीवद्वारकतया विरोधः परिहृत इत्यर्थः। उपपन्नतरः मुख्यतयोपपन्न इति भावः। जीववाचिशब्देन तच्छरीकपरब्रह्माभिधानममुख्यमिति चेत्तत्राह—**अनेनेति**। श्रुत्यर्थापत्त्यसिद्धिं निगमयति। **अतइति**। इति-

### गूढार्थसंग्रहः

**अनेन जीवेनात्मनाऽनुप्रविश्येत्यादि**। इयं च श्रुतिः जीवब्रह्माभेदबोधकतया सर्वैरपि परैरुदाहृता। उपक्रमस्थैतच्छ्रुत्यनुसारेण 'तत्त्वमसि' इति नवकृत्वः अभ्यस्तवाक्ये उपसंहारस्थे जीवब्रह्माभेदो विवक्षित इति परे वदन्ति नायमर्थः श्रुतौ विवक्षितः। अनुप्रवेशनामरूपव्याकरणोक्त्यननुगुणत्वात्। तैत्तरीयके 'तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्चत्यच्चाभवत्' इति वाक्यं 'परिणामात्' इति सूत्रभाष्ये(शं)उदाहरिष्यते। 'वाचाऽऽरम्भणं विकारो नामधेयं इति श्रुत्यर्थः नामरूपव्याकरणवाक्येन विशदीकरिष्यते। अत्र दृष्टान्ते मृदो घटशरावाद्यवस्थाः रूपव्याकरणम्। नामव्याकरणम्, मृत्तिकाधर्मिणः घटशरावादिपदबोध्यत्वम्। 'तदैक्षत बहुस्याम्' इत्यत्र सच्छब्दार्थस्य विवक्षितत्वेन 'सेयं देवतेत्यत्रापि स एव सूक्ष्मावस्थस्य स्थूलावस्थापरिणामेन रूपव्याकरणम्। स्थूलसूक्ष्मावस्थाद्वयं विशेषणगतम्। अत्र प्रवेशहेतुकत्वं नामरूपव्याकरणस्य प्रतिपाद्यते। नित्यविभोः परस्य ब्रह्मणः सृष्टिसमकालमेव प्रवेशः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यत्रापि पौर्वापर्यं न विवक्षितम्। नित्यविभोः परस्य ब्रह्मणः प्रवेशः तत्तत्पदार्थविलक्षणसंयोग एव वैलक्षण्यं च संयोगे 'अन्तर्बहिश्च तत्सर्वं व्याप्य' इत्यादिश्रुत्युक्तम्। 'उत तमादेशमप्राक्ष्य' इत्यत्र प्रशासितुर्विवक्षितत्वेन तस्यैवोत्तरत्र सदादिशब्देष्वप्यभिप्रेतत्वेन प्रशासिता अत्रोपस्थाप्यते। तेन अन्तःप्रविश्य शासितृत्वमेवात्र प्रवेशःपर्यवसितः। पूर्वं 'बहुस्याम्' इत्युक्त्या 'सर्वाणि' इत्यादौ 'अभिवदन्' इत्यत्र स्वाभिमुख्येनोक्तेरभिप्रेतत्वेन च अत्र स्वपर्यन्तनामरूपव्याकरणमेव विवक्षितम्। स्थूलावस्थचिदचितोरन्तःप्रविश्य नियन्तृत्वेन रूपव्याकरणं परस्य। स्थूलावस्थचिदचित्पदवाच्यत्वेन नामव्याकरणम्। एवं च प्रवेशः अन्तर्बहिस्संसृज्य शासितृत्वरूप इति तद्धेतुक एव 'जीवेनात्मने' त्यभेदनिर्देशः उभयोरेकदोक्तावपि तैत्तरीयकवदेवार्थः॥

'तिस्रो देवताः' इति अचिदन्तःप्रवेशस्यात्र कथनेऽपि श्रुत्यन्तरे 'सोऽकामयत' इत्यादावुभयान्तर्यामित्वस्य स्फुटतया चिदन्तर्यामित्वमपि सिद्ध्यतीति जीवान्तर्यामित्वेनैव 'अनेन जीवेनात्मना' इति निर्देशः। अयमर्थः अत्र विवक्षित इति आत्मन्शब्दनिर्देशेन सिद्ध्यति। 'अन्तःप्रविष्टश्शास्ता जनानाꣳ सर्वात्मा' इति श्रुत्यन्तरे सर्वस्यात्मत्वमन्तःप्रविश्य शासितृत्वनिबन्धनं प्रतिपादितमिति अत्रापि सर्वव्यापकशासितृचेतनस्यैवात्मन्शब्दार्थतया जीवस्यान्तःप्रविश्य शासितुः जीवाभेदासम्भवेन जीवस्यान्तःप्रविश्य शासितैव जीवशब्दार्थ इति सिद्ध्यति। एवं च नामरूपव्याकरणं दृढं भवति। अतश्च 'अनेन जीवेनात्मना' इति निर्देशस्यान्याभिप्रायकत्वेन उपसंहारे 'तत्त्वमसि, श्वेतकेतो' इत्यत्र श्वेतकेतुशब्दस्यापि नवकृत्वः अभ्यासेन श्वेतकेतुशब्दस्य तच्छरीरान्तर्यामिजीवबोधकत्वं श्वेतकेतोः पूर्वमेव वर्तत इति सूचनेन उपक्रमे इत्थमुपदेशेन च श्वेतकेतोः उक्तार्थनिर्णयस्सम्भवत्येव। अतश्च परसम्मतैक्यस्य सद्विद्यायामविवक्षितत्वेन ऐक्योपदेशानुपपत्त्या ब्रह्माज्ञानकल्पना न सम्भवतीति भावः॥

## श्रीभाष्यम्

ननु 'ज्योतींषि विष्णुः' (वि.पु.२.१२.३८) इति ब्रह्मैकमेव तत्वमिति प्रतिज्ञाय 'ज्ञानस्वरूपो भगवान् यतोऽसौ' (३९) इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय 'यदातु शुद्धं निजरूपि' (४०) इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेळायां वस्तुभेदाभावदर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य 'वस्त्वस्ति किम्' 'महीघटत्वम्' (४१,-४२) इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य 'तस्मान्न विज्ञानमृते' (वि.पु.२.१२.४३) इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य 'विज्ञानमेकम्' (४४) इति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य 'ज्ञानं विशुद्धम्' (४५) इति ज्ञानस्वरूपस्य

## श्रुतप्रकाशिका

हासपुराणयोर्ब्रह्माज्ञानपरत्वाभावं प्रतिजानीते। इतिहासेति। नन्वित्यादि। ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञायेति। जडाजडयोः स्वरूपैक्यायोगेन सामानाधिकरण्यस्य बाधार्थत्वात्। उत्तरश्लोकेषु तद्व्यतिरिक्तस्य मिथ्यात्वकथनाच्चेत्यभिप्रायः। विज्ञानविजृम्भितानि * विविधं ज्ञायते येन—विपरीतं ज्ञायते येनेति वा करणे व्युत्पत्तिः। विज्ञानमविद्या * 'यदातु शुद्धम्' इत्यादिना * तस्यहि व्यतिरेको वक्ष्यते। * विज्ञानेन विजृंभितानीति योजनात्वयुक्ता अस्वारस्यात्। विजृंभितानीति नपुंसकान्तपदस्य * पुल्लिङ्गभेदशब्दविशेषणत्वायोगेन विजृंभितशब्दस्य भावार्थप्रत्ययान्तत्वस्य युक्तत्वेन षष्ठीसमासस्य युक्तत्वाच्च, ब्रह्मव्यतिरिक्तस्याविद्यापरिकल्पितत्वं व्यतिरेकमुखेन स्थिरीकरोतीत्याह—**यदात्विति।** शुद्धं—अविद्यारहितं, निजरूपि—तत्कृतभेददर्शनरहितम् अपास्तदोषं रागादिदोषरहितं सङ्कल्पतरोः—समन्तात्कल्प्यतेनेनेति सङ्कल्पः, दोषः वस्तुषु वस्तुभेदा इत्यत्र वस्तुष्विति *बहुवचने न तात्पर्यं * जडोपलक्षिते वस्तुनि *जडगतभेदा न सम्भवन्तीत्यर्थः ॥

*यद्वा एको वस्तुशब्द आकारपरः, जडगताकारभेदा न भवन्तीत्यर्थः। **'वस्त्वस्ति किम्?' 'महीघटत्वम्'** इति श्लोकद्वये प्रथमेनार्थस्वभाव उक्तः, द्वितीयेनोदाहरणं दर्शितमिति भिदा। तत्र कुतोहि तत्त्वं एवंसति कुतः परमार्थ इत्यर्थः। कृत्स्नमपरमार्थत्वेनोपलब्धं चेत्कथं तत्र प्रामाण्यमिति शङ्कायामुच्यते स्वकर्मस्तिमितात्मनिश्चयैरिति तत्त्वार्थनिश्चयविरोधिकर्मवशादित्यर्थः। * यद्वा न केवलमात्मविद्भिरेव असत्यत्वमुपलभ्यते अपित्वज्ञैरपीति भावः। न केवलं शास्त्रप्रमाणेन लौकिकजडग्राहिप्रमाणेनापि तस्य मिथ्यात्वं सिद्ध्यतीत्युक्तं भवति! **'तस्मान्न विज्ञानमृते'** इति श्लोकार्धमनात्मभूतविजातीयभेदनिषेधमुपसंहरतीत्याह—**तस्मादिति।** विज्ञानमेकमित्यर्धं सजातीयरूपात्मभेदानिषेधपरम्। **भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेतीति।** भेददर्शनं सजातीयभेददर्शनम्। * तदुत्तरोत्तरभाविकार्याज्ञानहेतुः * तस्यापि पूर्वकर्मैवेत्यर्थः। यो देवादिशरीरभेदहेतुः, सएवेत्येवकाराभिप्रायः ॥

## गूढार्थसंग्रहः

सनत्सुजातीयभाष्ये शङ्कराचार्यैः 'भगवान् परमगुरुः पराशरः आत्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं दर्शयति' इति प्रतिज्ञाय 'ज्ञानस्वरूपो भगवान्' इत्यादिश्लोकानां कतिपयानामुपादानमात्रं कृतम्। नतूपपादनप्रकारः। अथापि तदभिप्रेतमेव एतैश्श्लोकैः मिथ्यात्वसाधनप्रकारं विशदीकृत्य दर्शयति **ननु ज्योतींषि विष्णुः इत्यादिना ॥**

## श्रीभाष्यम्

**ब्रह्मणस्स्वरूपं विशोध्य 'सद्भाव एवं भवतो मयोक्तः' इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वम्, नान्यस्य अन्यस्यचासत्यत्वमेव तस्य भुवनादेस्सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टमिति ह्युपदेशो दृश्यते। नैतदेवम्। अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा**

## श्रुतप्रकाशिका

* यद्वा देवादिशरीरभेदप्रतीतिहेतुकाज्ञानमात्मनि देवत्वाद्याकारारोपणरूपं तस्य हेतुःकर्मैवेत्यर्थः। अनात्मन्यात्मबुद्धेरप्यज्ञानशब्दवाच्यत्वं युक्तं तस्या अपि मूलाज्ञानकार्यत्वात्।

**श्रूयतांचाप्यविद्यायायास्स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या—** ...

इति तस्या अज्ञानपर्यायाविद्याशब्दवाच्यत्वाच। '**ज्ञानं विशुद्धम्**' इति स्वगतभेदनिषेधः विशुद्धं विमलमिति अविद्यातत्कृतभेददर्शनराहितमित्यर्थः। तत्कृतशोकादिरहितमित्याह—विशोकमिति। एकं सदैकमिति सजातीयविजातीयभेदविरहानुवादः। यद्वा एकमिति सजातीयभेदनिषेधानुवादः सदैकमित्युक्तप्रकारेण * स्वगतभेदराहित्यमुच्यते, परमपरेशादिशब्दवाच्यं चिन्मात्रमेवेत्याह—**परमइति**। नेदं परमतं तत्त्वमेवोक्तमित्याह—**सद्भावइति**। संव्यवहारभूतं समन्ताद्व्यवहारार्हभेदं, भुवनाश्रितं भुवनेनाधिष्ठानतयाऽऽश्रितमेवैतद्वर्तते। तत्रापि हेतुरज्ञानमेवोक्तमित्यर्थः। यद्वा भुवनाश्रितं भुवनमाश्रितं संव्यवहारभूतं व्यावहारिकं एतत् लोकसिद्धं सत्यत्वं यत् तत्रापि कारणमविद्येत्युक्तमित्यर्थः। एतदभिप्रायेणहि तस्य भुवनादेस्सत्यत्वं व्यावहारिकमितीत्युक्तम्॥

**इतिह्युपदेशो दृश्यतइति**। तस्मादितिहासपुराणयोर्ब्रह्माज्ञानवादो न दृश्यत इति वक्तुं न शक्यमित्यर्थः। एतत्प्रतिक्षिपति। **नैतदेवमित्यादिना**। नैतत् चिन्मात्रब्रह्मणोऽविद्यासम्बन्धित्वं अविद्याकल्पितत्वेन प्रपञ्चस्य मिथ्यात्वं च यदुक्तं नतत्प्रामाणिकमित्यर्थः। तथासत्यर्थविरोधात्प्रकरणविरोधाच्छास्त्रतात्पर्यविरोधादशेषमूर्तिर्भगवानित्यादिपदानां लाक्षणिकत्वात्। प्रपञ्चधर्मिग्राहकप्रमाणविरोधाच्छ्रुतेस्सविशेषवस्तुपरत्वोपपादनेन स्मृतेस्तद्विरुद्धार्थपरत्वापातात्पूर्वोक्ततर्कविरोधाच्च तदभावः। अत्रार्थविरोधो नाम सर्वज्ञत्वादिगुणकस्याज्ञानादिप्रसक्तिविरोधः। अविद्याया आश्रयतिरोधानाद्यनुपपत्तिश्च प्रपञ्चस्य विस्तरेण प्रतिपादनवैयर्थ्यं प्रकरणविरोधः। अन्यत्तु स्पष्टम्। दशश्लोक्यामस्ति नास्ति सत्यासत्य ज्ञानाज्ञानादिशब्दा आत्मानात्मविषया इति * नात्र विगानम्। तत्र नास्त्यसत्यशब्दयोः किं ज्ञानबाध्यत्वं प्रवृत्तिनिमित्तम्? उत परिणामित्वमिति विचारे परिणामित्वपक्षे स्वारस्यमस्ति '**महीघटत्वम्**' इत्युपपादनात् अज्ञानशब्दस्य च नानिर्वचनीयपरत्वं * अपितु कर्मपरत्वमेव '**यज्ञःपशुः**' इत्यादिस्वारस्यात्। अन्यत्र '**शरीराकृतिभेदास्तु भूपैते कर्मयोनयः।**' '**अविद्या कर्मसंज्ञान्या**' '**बाह्यकर्मवृतिप्रजः**' इत्यादिवचनाच्च। चिदचिद्विवेकोऽत्र क्रियत इत्यभिप्रेत्य तदनुगुणसङ्गतिमाह—**अत्रेति**। अत्र द्वितीयांशे, विस्तीर्णमिति स्वरूपविशेषणम्। विस्तीर्णशब्देन स्थौल्यं विवक्षितम्। संसृष्टस्थूलरूपमुक्त्वा * वियुक्तं सूक्ष्मरूपमुच्यत इति भावः॥

## गूढार्थसङ्ग्रहः

**अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वेत्यादि**। 'श्रोतुमिच्छाम्यहं त्वत्तस्सकलं मण्डलं भुवः।' (वि. पु. २.२.१) इति मैत्रेयप्रश्नस्य 'मैत्रेय श्रूयतामेतत्सङ्क्षेपाद्गदतो मम। नास्य वर्षशतेनापि वक्तुं शक्नोमि विस्तरम्॥' (४) इत्यादिना विस्तीर्णं स्वरूपं संक्षेपेणैवोक्तम्। अतोऽत्र 'तेषां स्वरूपमाख्यातं संक्षेपश्श्रूयतां पुनः।' (२.१२.३६) इत्यादिना अनुक्तरूपसंक्षेप इति भावः॥

## श्रीभाष्यम्

**पूर्वमनुक्तं रूपान्तरं संक्षेपतः श्रूयतामित्यारभ्याभिधीयते। चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतया अस्पृष्टप्राकृतभेदोऽविनाशित्वेनास्ति शब्दवाच्यः अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणात्राभिहितम्। तथा हि 'यदम्बु वैष्णवः कायः ततो विप्र वसुन्धरा। पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता' (वि.पु.२.१२.३७) इत्यम्बुनो विष्णोश्शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोःकायः**

## श्रुतप्रकाशिका

यद्वा विस्तीर्णमिति क्रियाविशेषणम्, उत्तरत्र मिथ्यात्वं विवक्षितंचेत्पूर्वं विस्तरेण कथनमनुपपन्नं नहि पूर्वमेव भ्रान्तस्य भ्रमान्तरापादनं कार्यं तस्मात्पूर्वं विस्तरेण भुवनकोशस्य कथितत्वान्न मिथ्यात्वं वक्ष्यत इति भावः; वक्ष्यमाण*मादिभरतचरितं ह्रस्वं विस्तररूपं तत्संक्षेपश्चायम्, वक्ष्यमाणसंक्षेप उक्तसंक्षेपश्च दृश्यते अतः उक्तसंक्षेपशङ्काव्यावृत्त्यर्थमाह—**अनुक्तमिति**। अनुक्तं संसृष्टरूपान्तरं कथ्यत इति शङ्काव्यावृत्त्यर्थमाह—**रूपान्तरमिति**। वियुक्तमित्यर्थः। मिथ्यात्वव्यतिरेकेण वक्तव्यं सकलमुक्तं तस्मादनुक्तं वक्तव्यं रूपान्तरं नाम मिथ्यात्वम् नान्यदिति शङ्कायां मिथ्यात्वं विनाऽनुक्तं रूपान्तरमाह—**चिदचिन्मिश्रइति**। चिदचिन्मिश्रे जगतीत्यनेन '**सङ्क्षेपश्श्रूयतां पुनः**' इत्यत्र पुनश्शब्दो व्याख्यातो भवति चिदचिदात्मके जगति स्थूलरूपमुक्तम् तत्रैव जगति इदमपि रूपान्तरं पुनरुच्यत इति तस्यार्थः। '**सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यम्**' इत्यादिवाक्योक्तं विशेषणमाह–**चिदंशो वाङ्मनसेति**॥

'**द्वैतिनोऽतथ्यदर्शिनः**' इत्यादिवाक्यानां भेदनिषेधपराणामर्थं हृदि निधायाह—**अस्पृष्टेति**। यदि चिदंशस्य ज्ञानैकाकारत्वमाचिदंशस्य परिणामास्पदत्वं च विवक्षितम्। तर्ह्यस्ति नास्ति सत्यासत्यादिशब्दप्रवृत्तिनिमित्तत्वेन किमर्थमुच्यत इतिचेत् उच्यते शाखाविशेषेषु '**सच्चत्यच्चाभवत्, विज्ञानंचाविज्ञानं च सत्यंचानृतं च सत्यमभवत्**' इत्यादिवाक्येष्वास्ति नास्ति सत्यासत्यादिशब्दानां श्रूयमाणानामनधीतशाखागतानां च किं ज्ञानबाध्यत्वाबाध्यत्वे प्रवृत्तिनिमित्तभूते उत परिणामित्वापरिणामित्वे ? इति शङ्कां निराकर्तुं परिणामित्वापरिणामित्वे एव नास्त्यस्त्यादिशब्दार्थः। ननु ज्ञानबाध्यत्वाबाध्यत्वे इत्यधी*तानधीतशाखार्थज्ञापनार्थमिति। पृथिव्यादितत्त्वानां सङ्घातविशेषावस्थायामेव जीवं प्रति शरीरत्वं दृष्टं, नत्वेकैकस्य। मनुष्यादिशरीराणामपि तादृशपिण्डावस्थायामेव शरीरत्वं दृष्टं न भस्माद्यवस्थायामिति चिदचितोः प्रत्येकमवस्थाविशेषेषु भगवच्छरीरत्वाभावशङ्काव्यावृत्त्यर्थमाह–**उभयमिति**। चिदचिद्रूपमन्योन्यसंसृष्टं निष्कृष्टं न भगवच्छरीरमित्यर्थः। निष्कृष्टस्य भगवच्छरीरत्वप्रतिपादनाद्भगवन्तं प्रति शरीरत्वस्य निरुपाधिकतया स्वरूपप्रयुक्तत्वं फलितमिति मुक्तावस्थायामपि जीवस्य भगवच्छरीरत्वसिद्धिः। एतद्रूपम्, अयमाकार इत्यर्थः। एतदुपपादयति **तथाहीत्यादिना**। दशश्लोक्यां न भगवदात्मकत्वमसाधारणं प्रतिपाद्यम्। तत्तु सर्वप्रकरणसाधारणम्। असाधारणप्रतिपाद्यंतु प्रकृतिपुरुषविवेकएव॥

शास्त्रस्योपनिषदर्थोपबृंहणपरत्वात्साङ्ख्यादिमतव्यावृत्त्यर्थं सर्वप्रकरणेषु भगवदात्मकत्वमुच्यते, अत्र साधारणप्रतिपाद्यः प्रकृतिपुरुषविवेक एवेत्यभिप्रायेणहि पूर्वमनुक्तं रूपान्तरमित्युक्तम्। भगवदात्मकत्वस्य सर्वप्रकरणसाधारण्यंहि पूर्वमप्येतदसकृदुक्तमित्युत्तरत्र च वक्ष्यते। दशश्लोकीस्थसामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति ज्ञापयितुं पूर्वश्लोकमुपादत्ते। **यदम्बिति**। ऋषिणाऽभिप्रेतं फलितमर्थमाह—**अम्बुनो विष्णोरिति**। नहि बाल्यावस्थायां शरीरभूतस्य

## श्रीभाष्यम्

**तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य 'ज्योतींषि विष्णुः' (३८) इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह अस्मिन्शास्त्रे पूर्वमप्येतदसकृदुक्तम्। 'तानि सर्वाणि तद्वपुः' 'तत्सर्वं वै हरेस्तनुः' (वि पु.१.२२.८६-३८) 'स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' (१.२.६९) इति तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते। 'ज्योतींषि विष्णुः' इति। अत्रास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोःकायतया विष्ण्वात्मकमित्युक्तम् इदमस्त्यात्मकं इदं नास्त्यात्मकम् अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह-**

## श्रुतप्रकाशिका

वस्तुनोऽवस्थान्तरे चेतनेन स्वरूपैक्यमस्ति, अपितु सर्वावस्थमपि तद्वस्तु शरीरमेवेति भावः। **तस्य च विष्णुरात्मेतीति**। अभिप्रेत्येत्यर्थः। एवं*रूपशरीरात्मभाव इतिवाऽर्थः। **सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येति**। *अनधीतशाखास्वपि * तादात्म्योपदेशोऽस्ति तस्यायमेवार्थ इति ज्ञापनं तादात्म्योपदेशस्योपबृंहणम्। यद्वा प्रत्यक्षश्रुतिगततादात्म्योपदेशोपबृंहणं नाम अनधीतशाखासु तद्विरुद्धार्थप्रतिपादनं नास्तीति ज्ञापनम्॥

अत्र इतिशब्दत्रयस्य अनेन श्लोकेन भगवानिममर्थमभिप्रेत्य अयमर्थ इत्याहेत्यन्वयप्रकारः। नकेवलमत्र समष्टिसृष्टिश्लोकगतव्याधिकरणनिर्देशेन व्यष्टिश्लोकगतसामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति विज्ञायते, अपितु प्रदेशान्तरेषु व्यष्ट्यवस्थानां भगवन्तंप्रति शरीरत्वम् सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं चासकृत्कण्ठोक्तमित्याह—**अस्मिन्निति**। शरीरात्मभावस्य सामानाधिकरण्यहेतुत्वं कण्ठोक्तम्, **'विश्वरूपो यतो व्ययः'** इति। तथाऽन्यत्रापि **'सर्वगत्वादनन्तस्य सएवाहम्' 'सर्वं समाप्नोषि ततोऽसि सर्वः'** इत्यादि द्रष्टव्यम्। **तदिदमित्यादिना ज्योतींषीत्यादिश्लोके** * पादत्रयस्यार्थ उच्यते। संसृष्टस्य भगवदात्मकत्वमुक्तमित्यर्थः। **'प्रधानादिविशेषान्तं चेतनाचेतनात्मकम्'** इत्युक्तत्वात् ज्योतिरित्यादिशब्दाः संसृष्टजीववाचिनः॥

अथ उत्तरश्लोकसङ्गत्यर्थं * विशिष्टवाक्यार्थानुवादेन चतुर्थपादार्थं दर्शयति। **अत्रास्त्यात्मकमिति**। **यदम्बि**त्यादिश्लोकेन वैयधिकरण्येन समष्ट्यवस्थचिदचितोर्भगवदात्मकत्वमुक्तं, व्यष्ट्यवस्थयोरसंसृष्टयोस्संसृष्टयोरपि तयोस्सामानाधिकरण्येन भगवदात्मकत्वमुच्यते ज्योतींषीत्यादिश्लोकेन। तत्र पादत्रयेण व्यष्ट्यवस्थयोस्संसृष्टयोस्तदात्मकत्वमुक्तम्। चतुर्थपादेनतु निष्कृष्टयोरपि तदात्मकत्वमुक्तमित्यर्थः। अनन्तरश्लोकमवतारयति। **इदमिति**। अचिदंशस्य नास्त्यात्मकत्वनिबन्धनमेव तात्पर्यविषयः। अचिदंशस्यहि मिथ्यात्वशङ्काव्युदसनीया अतस्तस्य परिणामित्वान्नास्त्यात्मकत्व एव तात्पर्यं चिदंशस्यत्वपरिणामित्वादस्त्यात्मकत्वं फलितं स्यादित्यभिप्रायेण अस्य च * नास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तम्॥

## गूढार्थसंग्रहः

**तानि सर्वाणि तद्वपुरित्यादि**। यद्यपि 'यत्किंचित्सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सत्त्वस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः' इति (वि.पु.१.२२.३८) श्लोकःप्रथमः 'यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित्। सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः' (१.२२.८६) इति श्लोकः अध्यायान्तस्थ इति **'तत्सर्ववै हरेस्तनुः' इत्यस्य** प्रथमत उपादानं युक्तम्। तथाऽपि क्षराक्षरस्वरूप मूर्तामूर्तवस्तुसामान्यस्यापि भगवच्छरीरत्वमन्ते प्रतिपाद्य 'अहं हरि-

## श्रीभाष्यम्

**'ज्ञानस्वरूपो भगवान् यतोऽसौ' (वि.पु.२.१२.३९) इति। अशेषक्षेत्रज्ञात्मनाऽवस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपं, न देवमनुष्यादिवस्तुरूपम्। यतएवं तत एवाचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूलाः देवाद्याकारानुसन्धानमूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदं ततस्तन्नास्तिशब्दाभिधेयं इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति। तदेव विवृणोति 'यदा तु शुद्धं निजरूपि' (२.१२.४०) इति यदेतत् ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूलसर्वकर्मक्षयान्निर्दोषं परि-**

## श्रुतप्रकाशिका

व्याख्येय*प्रतीकमुपादत्ते। **ज्ञानस्वरूपइति**। अत्र **ज्ञानस्वरूपो भगवानिति** सामानाधिकरण्यस्य शरीरशरीरि
भावनिबन्धनत्वं न केवलं पूर्वश्लोके **'यदम्बु वैष्णवःकायः'** इत्युक्तत्वादवगम्यते। अस्मिन्नपि श्लोके अशेषमूर्तिरि-
त्यनेनापि ज्ञायत इत्यभिप्रायेण व्याचष्टे। **अशेषेति**। * अशेषशब्देन अचितोऽपि विवक्षितत्वे भगवन्तंप्रति तस्य
मूर्तित्वं विहितं स्यात् अप्राप्तत्वात् ततश्च न वस्तुभूत इति देवमनुष्यशैलाब्धिधरादि*वस्तुभावनिषेधोऽनुपपन्नः अतोऽशेष
शब्दः क्षेत्रज्ञविषय इत्यभिप्रायेणाशेषक्षेत्रज्ञात्मनेत्युक्तम्। अत्र ज्ञानस्वरूपादिशब्दानां परमविशेष्यपर्यन्ताभिधायित्वेऽपि
विशेषणाविशेषणे वाक्यस्य तात्पर्यं अतो ज्ञानस्वरूपत्वं विशेषणभूतजीवस्यैव विधीयते यथा **'लोहितोष्णीषा ऋत्वि-
जःप्रचरन्ति'** इत्यत्र विशेषणगतं लौहित्यमेव विधेयं परंपरया ऋत्विक्प्रचारकर्मविशेषणम्, तद्वत् **'काठिन्यवान् यो
बिभर्ति' 'नृसिंहमूर्तिर्भगवाञ्छ्वेतः'** इत्याद्युदाहरणं द्रष्टव्यम्। ज्ञानस्वरूपइत्यत्र दिव्यात्मस्वरूपस्य ज्ञानस्वरूपत्व-
मुच्यत इति न शङ्कनीयम्। **'सर्वकर्मक्षये ज्ञानमपास्तदोषम्'** इति विवरणानुपपत्तेः नहि दिव्यात्मस्वरूपस्य कर्म-
तत्कृतरागद्वेषादिहेयसम्बन्धप्रसङ्गः। नतु वस्तुभूतइत्यस्यार्थमाह–**न देवमनुष्यादीति**। शैलादिस्थावरोक्तिस्सर्वशरी-
राणामुपलक्षणमिति ज्ञापनार्थो देवमनुष्यादिशब्दः॥

उत्तरार्धं व्याचष्टे **यतएवमिति**। शैलाब्धिधरादिभेदान् विज्ञानविजृम्भितानि जानीहीत्यनेन फलितं हेतुहेतुम-
द्भावं विवृणोति। **तद्विज्ञानेत्यादिना**। विज्ञानशब्दं व्याचष्टे **तस्येति**। विज्ञानं विविधज्ञानं, कथं शैलाब्धिधरादिभे-
दस्य वैविध्यानुसन्धनमूलत्वं निजकर्मभेदाविभिन्नाचित्तैः **'सर्वकर्मक्षये'** इति कर्ममूलत्वेन वक्ष्यमाणत्वात् कर्मैवहि मूल-
मित्यत्राह—**देवादीति**। वैविध्यानुसन्धानस्य * देवादिभेदहेतुत्वं सद्वारकं उपरितनग्रन्थैकार्थ्यात्। **'अविद्यासंचितं
कर्म' 'बाह्यकर्मवृतिप्रजः' भूपैते कर्मयोनयः'** इत्यादिवचनान्तराच्चेत्यर्थः। पूर्वमिदमस्त्यात्मकमित्यादिनोक्तश्लो-
कवाक्यार्थः कथं घटत इत्यत्राह—**यतश्चेति**। ज्ञानस्वरूपः, विज्ञानविजृंभितानीत्यनेन फलितमित्यर्थः। **तदेवेति**।
*पूर्वपक्षयोजनायामुक्तेष्वर्थेष्वपेक्षितांशोपजीवनेन सिद्धान्तयोजना क्रियते विज्ञानविजृंभितत्वमेव व्यतिरेकमुखेन विवृ-
णोतीत्यर्थः। पूर्वश्लोके देवादिभेदानां स्वात्मवैविध्यानुसन्धानमूलत्वं सद्वारकमिति व्याख्यानमनन्तरश्लोके व्यतिरेकमुखेन
विवरणे कर्महेतुत्वश्रवणानिबन्धनमिति स्पष्टयन्नाह—**देवाद्याकारेणेति**। * निर्दोषमित्यादिपदानामर्थविभागो **'ज्ञानं**

## गूढार्थसङ्ग्रहः

स्सर्वमिदं जनार्दनः' इत्यनन्तरश्लोके समानाधिकरणनिर्देशेन सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वमन्ते
बोधितमित्यभिप्रेत्य एतद्विशेषतात्पर्येण 'तानि सर्वाणि तद्वपुः' इत्यध्यायान्तस्थश्लोकस्य प्रथमत उपादानमिति बोध्यम्।

### श्रीभाष्यम्

शुद्धं निजरूपि भवति तदा देवाद्याकारेणैकीकृत्यात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्था वस्तुषु वस्तुभेदा न भवन्ति। ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादिवस्तुभेदाः ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम् इतरस्य सर्वदा निजसिद्धज्ञानैकाकारत्वेनास्तिशब्दाभिधेयत्वमित्यर्थः। प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह 'वस्त्वस्ति किम्' (२.१२.४१) इति। अस्तिशब्दाभिधेयोह्यादिमध्यपर्यन्तहीनस्सततैकरूपः पदार्थः तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् अचिद्वस्तु किंचित् क्वचिदपि तथाभूतं न दृष्टचरम्। ततःकिमित्यत्राह–यच्चान्यथात्वमिति। यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्तया

### श्रुतप्रकाशिका

**विशुद्धम्**' इत्यादिश्लोकव्याख्याने विशदयिष्यत इति ग्रन्थलाघवार्थमत्र न विस्तृतः। निर्दोषम् शरीरसम्बन्धराहितं परिशुद्धम् तत्कृतरागद्वेषसुखदुःखादिराहितं निजरूपि आविर्भूतस्वरूपम्। सङ्कल्पशब्दं व्याचष्टे। **एकीकृत्यात्मकल्पनाशब्देन। समित्येकीकार** इतीहि शब्दाः। पूर्ववत्सद्वारकमिति व्याचष्टे। * **आत्मकल्पनामूलकर्मफलभूताइति**। देहात्मनोरेकीकृत्यानुसन्धानफलं देवाद्याकारेण स्वात्मवैविध्यानुसन्धानं तयोरैकैकं विज्ञानशब्दे * सङ्कल्पशब्देऽप्यर्थसिद्धम्। सुखदुःखेहि कर्मफलं तत्कथं वस्तुभेदस्य कर्मफलत्वमिति शङ्कायां तद्भोगार्था इत्युक्तम्। सुखादिभोगद्वारभूतत्वाद्देवादिभेदाः कर्मफलमित्यर्थः। '**भोक्ता भोग्यं प्रेरितारं च मत्वा**' इत्यादिषु * भोग्यशब्दार्थः स्पष्टीकृतो भवति, तद्भोगार्था इत्यनेन भोगस्थानभोगोपकरणानां * भोगसिद्धिप्रयोजकत्वमेव भोग्यत्वमित्यर्थः सप्तम्यन्तवस्तुशब्दो जीवपर्यन्तदेहपरः द्वितीयवस्तुशब्दो देवादिशरीरमात्रपरः। वस्तुभेदाः देवादिशरीरभेदाः अत्र वस्तुभेदशब्देन भेदस्य वस्तुरूपत्वात्पारमार्थ्यमपि फलितम्॥

अत्रान्वितेषु पदेषु * व्याख्येयपदव्याख्यानार्थमाह—**येदेवादिष्विति। देवादिषु वस्तुष्वात्मतयाऽभितेषु**। प्रथमवस्तुशब्दो जीवपर्यन्तदेहपरएवेत्यभिप्रायः संसृष्टाकारेह्यात्माभिमानः। तद्भोगार्था इति पूर्वोक्तस्य पदस्य * व्याख्येयं पदमुदाहरति। **भोग्यभूताइति**। भोग्यभूताइत्यनेन वस्तुभेदा इति पदस्याचिदंशमात्रपरत्वमुक्तम्॥

**ननु वस्तुभूत**इत्युक्तत्वात् पूर्वश्लोकोक्तभेदा एवात्र विवक्षिता इत्याह—**देवमनुष्येति**। कारणाभावात्कार्याभावोहि व्यतिरेकः। तं स्पष्टयति **तन्मूलभूतेति**। परमप्रकृतार्थस्य फलितत्वमाह–**इत्यचिद्वस्तुनइति**। पूर्वश्लोकफलितार्थकथने आत्मनोऽस्तिशब्दवाच्यत्वे *हेतुरनुक्तः अत्रतु तस्यापि फलितत्वमाह— **इतरस्येति**। जगदुपलब्धिप्रकारेणापि वस्तुभेदानां परिणामित्वमुपपाद्यते श्लोकद्वयेन, तत्र प्रथमस्य वाक्यार्थमाह— **प्रतिक्षणमिति**। श्लोकस्य नास्तिशब्दाभिधेयतापरत्वं '**यदस्ति यन्नास्ति**' इत्युपक्रमावगतम्। अस्मिन्श्लोके प्रयोजकशिक्षा **वस्त्वस्ति** किमित्यर्थयोजनौपयिकतया*त्राभिधेयं यदस्ति यन्नास्तीत्युपक्रमवशात्सिद्धमर्थमाह—**अस्तिशब्देति**। सततैकरूपतयाऽस्तिशब्दवाच्यत्वे सतिहि पूर्वार्धोक्तस्य तदभावस्य नास्तिशब्दाभिधेयताहेतुत्वसिद्धिः। पूर्वार्धं व्याचष्टे **अचिद्वस्त्विति**। किमनेन नास्तिशब्दाभिधेयत्वस्येति शङ्कायामुत्तरार्धमवतारयति। **ततःकिमित्यत्राहेति**। यातीति वर्तमाननिर्देशस्याभिप्रायमाह—**प्रतिक्षणमिति**। भूयो न तत्तथेत्यस्यार्थमाह —**तदिति**। उत्तरोत्तरावस्थाप्राप्त्येति भूयश्शब्दार्थः। न तत्तथेत्यस्यार्थ-

श्रीभाष्यम्

**पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसन्धानमस्ति अतस्सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव, तथाह्युपलभ्यत इत्याह-'महीघटत्वम्' (२.१२.४२) इति स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यभूतमालक्ष्यते अनुभूयत इत्यर्थः। एवंसति किमप्यचिद्वस्त्वस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैकरूपमालक्षितमस्ति किं नह्यस्तीत्यभिप्रायः। यस्मादेवं तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तुकदाचित्क्वचित्केवलास्तिशब्दवाच्यं न भवतीत्याह-'तस्मान्न विज्ञान-**

श्रुतप्रकाशिका

माह-**पूर्वपूर्वावस्थां जहातीति**। तत्रेत्यस्यार्थमाह-**पूर्वावस्थस्योत्तरावस्थायामिति**। कुतस्तत्त्वमित्यस्यार्थमाह—**न प्रतिसंधानमिति**। तत्त्वं तस्य भावः, तदिदमिति प्रतिसंधानानर्हत्वं फलितमित्यर्थः॥

**ननु** तत्त्वं कुतः पूर्वावस्थत्वं कुतइत्युक्ते कथं प्रतिसंधाननिषेधः ? उच्यते, कुतश्शब्दःप्रमाणप्रतिक्षेपपरः पर्वतोऽग्निमानित्युक्ते कुतइति प्रमाणाकाङ्क्षाहि द्योत्यते। अतः प्रतिक्षेपपरः कुतश्शब्दोऽपि प्रमाणप्रतिक्षेपपरः। कुतः प्रमाणादित्यर्थः। पूर्वावस्थस्य भूयस्तथात्वे प्रमाणं च प्रत्यभिज्ञा अतः प्रमाणे प्रतिक्षिप्ते प्रतिसंधानं निषिद्धं भवतीति भावः। अन्यथा न तत्तथेत्यनेन पौनरुक्त्यं स्यात्, हिशब्देन फलितमर्थमाह-**अतइति**। नास्ति शब्दवाच्यत्वे * प्रयोजकशिक्षा कृता। शिक्षितमर्थमुदाहरणेन दर्शयत्यनन्तरश्लोक इत्यभिप्रायेणाह-**तथाहीति**। **'महीघटत्वम्'** इति श्लोकं व्याचष्टे **स्वकर्मणेत्यादिना**। महीघटत्वमित्यत्र यातीति पूर्वश्लोकादनुषङ्गः कर्मण आत्मनिश्चयविरोधित्वं सद्वारकमित्याह-**देवमनुष्यादिभावेनेति**। देवादिदेहसंसर्गेणेत्यर्थः। स्तिमितं प्रतिबद्धं * अस्थिरे भोग्यत्वबुद्धिः स्थिरतरसुखरूपात्मनिश्चयस्तैमित्यादिति भावः॥

यद्वा आत्मज्ञानरहितैरप्यचिद्वस्तुनोऽस्थिरत्वमालक्ष्यत **इत्याह—तथाहीति**। आलक्ष्यतइति * चाक्षुषज्ञाने प्रयोगप्राचुर्यात्तद्व्यावृत्त्यर्थमनुभूयत इत्युक्तम्। श्लोकव्याख्यानपरिसमाप्तिं द्योतयति। **इत्यर्थइति**। **ब्रूहीत्यादेरर्थमाह-एवंसतीति**। अनेन अत्रेति पदं व्याख्यातम्। अचिद्वस्त्विति पदेन श्लोकस्थवस्तुशब्दो व्याख्यातः। अस्तिशब्दार्हमित्यादि विशेषणं सामर्थ्यसिद्धतयोक्तम्। अथवा श्लोकद्वयाभिप्रायमाह-**एवंसतीति**। **'ननु वस्तुभूतः'** इति पुराणग्रन्थे किमप्यचिद्वस्तु अचिद्वस्तु किंचिदिति भाष्येचाचिद्विषयवस्तुशब्दप्रयोगात् **'तद्वस्तु नृपतञ्च किम्'** इति ग्रन्थवस्तुशब्दतुल्यत्वं न शङ्कनीयम्। अस्ति किमित्यनेन श्लोकस्थस्यास्तिशब्दस्य भवत्यर्थत्वमुक्तम्। अतएव यदस्तीत्यस्तिशब्दवन्नामस्वरूपपरत्वं शङ्कनीयम्। फलितमाह-**नहीति**। आस्ति किं नह्यस्तीति भाष्यस्वारस्येन श्लोकद्वयोपक्रमगतस्यास्ति किमिति वाक्यस्य प्रत्यभिज्ञातस्य भवत्यर्थतया व्याख्यातत्वं प्रतीयते ; यद्वा अस्तिशब्दाभिधेयइत्यनेन वस्त्वस्ति किमित्यत्रास्तिशब्दो व्याख्यातः **'यदास्ति' 'तस्मान्नविज्ञानमृतेऽस्ति'** इत्यादिनैकरूप्यात्॥

**एवं वस्त्वस्ति किम्। महीघटत्वम्'** इति श्लोकद्वयस्य प्रत्येकमुक्तो वाक्यार्थः * पूर्वपक्षयोजनायामुपजीव्यः। उत्तरश्लोकस्य प्रथमार्धं व्याचष्टे। **यस्मादिति, यस्मादेवं तस्मात्**। परिणामित्वादेव नतु ज्ञानबाध्यत्वादित्यर्थः, अचिद्वस्तुशब्देन वस्तुजातशब्दार्थ उक्तः 'जातशब्दशिरस्को वस्तुशब्दो न नित्यवाचीति भावः। **केवलास्तिशब्दवाच्यमिति**। एतच्छ्लोकस्थास्तिशब्दो न भवत्यर्थः ज्ञानव्यतिरिक्तस्य **'तदेतदक्षयं नित्यम्'** इत्यादिना नित्यत्वेनोक्तस्य निषेध्यत्वायोगात् यदस्तीत्याद्युपक्रान्तस्योपसंहारौचित्याच्चेति भावः। प्रागभावप्रध्वंसाभाववतोऽचिद्वस्तुनः नास्ति-

श्रीभाष्यम्

**मृते' इति। आत्मातु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीर प्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह विज्ञानमेकमिति। आत्मस्वरूपंतु कर्मरहितं तत एव मलरूपप्रकृतिस्पर्शरहितम्। ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणासङ्गि उपचयापचयानर्हतयैकं ततएव सदैकरूपं तच्च वासुदेवशरीरमिति तदात्मकं अतदात्मकस्य कस्यचिदप्यभावादित्याह**

श्रुतप्रकाशिका

शब्दाभिधेयत्व*मवच्छिन्नास्तिशब्दवाच्यत्वंचेति तद्व्यावृत्त्यर्थं केवलशब्दः। एवमात्मव्यतिरिक्तवस्तुनो नास्तिशब्दाभिधेत्वमुपसंहृतम् ॥ विज्ञानमित्यादिव्याचष्टे। **आत्मात्विति**। तुशब्दोऽचिद्वैषम्यपरः। सर्वत्र सर्वशरीरेषु एकशब्दं व्याचष्टे **ज्ञानैकाकारतयेति**।

**एको व्रीहिस्सुनिष्पन्नस्सुपुष्टं कुरुते प्रजाः। ... ... ...**

इतिवदयमेकशब्द आकारैक्यपरः सचाकारो विज्ञानशब्दोक्तं ज्ञानत्वमित्यभिप्रायेणोक्तं ज्ञानैकाकारतयेति। भावप्रधानो निर्देशः ज्ञानत्वैकाकारतयेत्यर्थः स्वरूपतो धर्मतश्चाविशेषेण ज्ञानत्वं सद्वारकमद्वारकंचाकारोहि भवति ज्ञानैकाकारतयेत्यत्रैकशब्देन सङ्कोचविकासदुःखरूपत्वादिव्युदासश्च **देवादिभेदप्रत्यनीकस्वरूपोऽपीति**। एकरूपत्वाद्भेदप्रत्यनीकत्वम्। निजकर्मादिपदं व्याचष्टे **देवादीति**। भेदशब्दार्थमाह—**विविधेति**। बुद्धिशब्देन चित्तशब्दार्थ उक्तः, बुद्धेर्भेदश्च आत्मन्यारोप्यमाणदेवाद्याकाररूपविषयभेदात्। बहुधा देवत्वादिबहुप्रकारविशिष्टतया अभ्युपेतामित्यर्थः। बहुधाशब्देन एकशब्द*स्याकारैक्यपरत्वं स्पष्टम्। फलितमर्थमाह—**नात्मस्वरूपप्रयुक्तमिति**। *औपाधिकमित्यर्थः ॥

उपाधिविमोक्षे कीदृशं स्वरूपमित्यपेक्षायामनन्तरश्लोकं व्याचष्टे। **आत्मेति**। विशुद्धपदं व्याचष्टे **कर्मरहितमिति**। विमलपदं व्याचष्टे। **ततएवेति**। विमलपदव्याख्यानमिति स्पष्टीकर्तुं मलरूपशब्दः। मलरूपप्रकृतिस्पर्शरहितामित्यनेन '**सर्वकर्मक्षये ज्ञानमपास्तदोषम्**' इत्यस्यार्थोऽवगतः * कर्मक्षयवाचिपदानन्तरपदस्य * शरीरसम्बन्धरहितपरत्वेन व्याख्यातत्वात् ॥

तथा च श्रुतिः—'**अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि**' इति। अत्रहि पापं विधूयेत्युक्त्वा धूत्वा शरीरमित्युक्तम्। उपरितनपदानि व्याचष्टे **ततश्चेति**। ततएवेत्यर्थः, हेतोर्नैरपेक्ष्यसूचकश्चशब्दः। निरस्ताशेषलोभादिसङ्गमित्यर्थः। एकमिति पदं व्याचष्टे **उपचयापचयानर्हतयैकमिति**। उपचयापचयौ वृद्धिक्षयौ तदर्हत्वं सावयवत्वं, सावयवत्वाभावादेव एकशब्दवाच्यत्वं निरवयवत्वमेकत्वमित्यर्थः। **ततएव सदैकरूपमिति**। निरवयवत्वात्सावयवप्रयुक्तवृद्धिक्षयरहितमित्यर्थः। सामानाधिकरण्यं व्याचष्टे। **तच्चेति**। '**यदम्बु वैष्णवः कायः**' '**अशेषमूर्तिः**' इत्युक्तत्वादयमेवार्थः। न यतोऽन्यदस्तीत्येतद्व्याचष्टे **अतदिति**। यतः यस्माद्वासुदेवात् अन्यत् स्वपर्यवसितं वस्तु नास्तीत्यर्थः। यद्वा वासुदेवादिति पदमध्याहृत्य योजना वासुदेवादन्यन्नास्तीति यतः ततइत्यर्थः। अस्यां योजनायां तच्छब्दः प्रसिद्धपरमर्शी। अतोऽपि पूर्वयोजना साधीयसी तद्वृत्तस्य यद्वृत्तप्रतिनिर्देशरूपत्वस्वारस्यात्पञ्चम्यन्ताध्याहारानपेक्षत्वाच्च '**ज्ञानस्वरूपो, यदातु**' इति श्लोकौ

### श्रीभाष्यम्

**'ज्ञानं विशुद्धम्' (२.१२.४४) इति। चिदंशस्सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः अचिदंशस्तु क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः एवंरूपचिदचिदात्मकं जगद्वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह 'सद्भाव एवम्' इति। अत्र 'सत्यमसत्यमिति'। 'यदस्ति यन्नास्ति' इति प्रक्रान्तस्योपसंहारः। एतत् ज्ञानैकाकारतया सममशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादि रूपेण सम्यग्व्यवहारार्हभेदं यत् वर्तते तत्र हेतुःकर्मैवेत्याह एतत्तु यदिति। तदेव विवृणोति 'यज्ञःपशुः' इति। जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह 'यच्चैतत्' इति। अत्र निर्विशेषे परे ब्रह्मणि, तदाश्रये सदसदनिर्वचनीयेचाज्ञाने जगतस्तत्कल्पितत्वेवाऽनुगुणं किंचिदपि पदंन दृश्यते। अस्ति नास्ति शब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्**

### श्रुतप्रकाशिका

चिदचित्साधारणौ वस्त्वस्तीत्यादिसार्धश्लोकद्वयमचिदसाधारणं विज्ञानमित्यादिसार्धश्लोकश्चिदसाधारण इति विभागः न
परमतमुक्तं तत्त्वमेवोक्तमित्यभिप्रायेण सद्भाव इत्याद्यर्धमुक्तम्। तत्र यथाशब्दार्थमाह— **चिदंशइति**। यथा येन प्रका-
रेण परिणामित्वापरिणामित्वरूपेण न ज्ञानबाध्यत्वाबाध्यत्वरूपेणेत्यर्थः। **एवंरूपेति**। शरीरशरीरिभावरूपेण येन प्रका-
रेण भगवदात्मकत्वं नतु स्वरूपैक्येनेत्यर्थः। श्लोके यथाशब्दप्रतियोग्येवंशब्दः सत्यंज्ञानं असत्यमन्यच्च यथाऽवस्थित-
मेवं सद्भाव उक्त इत्यन्वयोऽभिप्रेतः। अतस्सत्यासत्यशब्दवाच्यत्वनिर्वाहकापरिणामित्वपरिणामित्वे भगवदात्मकत्वं च
यथाशब्दविवक्षितं भवति। अन्यदुपक्रान्तमन्यदुपसंहृतं भवति अस्ति नास्तिशब्देनोपक्रम्य सत्यासत्यशब्देनोपसंहारा-
दित्यत्राह- **अत्रेति**। उपक्रमोपसंहारयोश्शब्दान्तरानिर्देशस्य अयमभिप्रायः अन्येष्वपि शब्देषु क्वचिदेवं श्रुतेषु तेषामपि
प्रवृत्तिनिमित्तमिदमेवेति। उत्तरार्धस्यार्थमाह- **एतदिति**। **'प्रत्यस्तमितभेदम्' 'अगोचरं वचसाम्'** इत्यनयो
रर्थमभिप्रेत्याह- **ज्ञानैकाकारतया सममशब्दगोचरस्वरूपभेदमिति**। एवकारेण विरोधस्सूचितः॥
भुवनाश्रितत्वस्य घटकं पदमाह— **अचिन्मिश्रमिति**। भुवनाश्रितं अण्डान्तर्गतं भोगस्थानगतमित्यर्थः। संव्य-
वहारशब्दं व्याचष्टे। **सम्यग्व्यवहारार्हभेदमिति**। सम्यक्छब्दः स्पष्टत्वपरः, तत्कर्म किमित्याकाङ्क्षायामुत्तरश्लोकस्य
ताद्विवरणपरत्वमाह- **तदेव विवृणोतीति**। स्वर्गमयश्च कामः स्वर्गविषयेच्छेत्यर्थः। *फलस्य वक्ष्यमाणत्वा*द्देवतायाः
फलस्य च यष्टव्यत्वेन साध्यत्वेन च कर्मान्तर्भावः। इत्यादिशब्देन दानहोमादिकं च पापंचोक्तं भवति ; भूरादिशब्देन
पापफलमप्युक्तं भवति पश्वादिपरिकरयुक्तो यज्ञ एकं कर्म एवंविधयज्ञात्मकं दानहोमाद्यात्मकं च कर्म तत्र हेतुः। आश्रित

### गूढार्थसङ्ग्रहः

'तानि सर्वाणि तद्वपुः' इति उपसंहारानुरोधेन 'द्वे रूपे ब्रह्मणस्तस्य मूर्तंचामूर्तमेव च।' इत्युपक्रमे रूपशब्दस्यापि
शरीरार्थत्वसिद्ध्या 'स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' इत्यत्र विश्वरूपत्वं विश्वशरीरित्वमेवेति निर्णयस्स-
म्भवति नतु पूर्वमित्यभिप्रेत्य 'स एव-विश्वरूपो यतोऽव्ययः' (१.२.७०) इत्यस्यानन्तरमुपादानम्। अत्र विश्वशरी-
रित्वं सर्वभूतात्मकत्वे हेतुरिति यत इत्यनेन बोधितम्। 'स एव सृज्यः स च सर्वकर्ता'—ब्रह्माद्यवस्थाभिरशेषमूर्तिः
विष्णुः' इति तदनन्तरश्लोके उक्त्याऽपि अयमर्थः सिद्ध्यतीति भावः॥

श्रीभाष्यम्

परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकं ज्ञानैकाकारस्यात्मनो देवादि विविधाकारानुभवेऽचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात्, अस्ति नास्ति सत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च । नास्त्यसत्यशब्दावस्ति सत्यशब्दविरोधिनौ अतश्च ताभ्यामसत्त्वंहि प्रतीयते नानिर्वचनीयत्वं अत्रचाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ अपितु विनाशित्वपरौ ' वस्त्वस्तिकिम्, महीघटत्वम् ' (२.१२.४१-४२) इत्यत्रापि विनाशित्वमेवह्युपपादितम् न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा एकेनाकारेणैकस्मिन्कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् । तुच्छत्वं हि प्रमाणसम्बन्धानर्हत्वम् । बाधोऽपि यद्देशकालादिसम्बन्धितया यदस्तीत्युपलब्धं तस्य तद्देशकालादिसम्बन्धितयानास्तीत्युपलब्धिः । नतु कालान्तरे अनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः कालभेदेन विरोधाभावात् ।

श्रुतप्रकाशिका

मार्गदृष्टं तैस्तैराश्रितमार्गावर्णाश्रमाः तेषु दृष्टमित्यर्थः । अनन्तरश्लोकार्धमाह—**जगदिति** । कर्मवश्यस्सर्वत्र व्रजतिहि यद्वा कर्मवश्योहि * सर्वत्र व्रजति तस्मादेवं कुर्यादित्यर्थः । निगळित एवहि सर्वत्र कारागेहे चरति अतस्तन्मोचनाय यतेतेति भावः । * ध्रुवमचलं सदैकरूपं स्वरूपतो गुणतश्चैकरूपमित्यर्थः । * यद्वा स्वरूपतो गुणतो रूपतश्चैकरूपमित्यर्थः तस्मान्नैतदेवमिति पूर्वेणान्वयः ॥

एवं श्लोकानां स्वोक्तार्थानुगुण्यमुपपाद्य परोक्तार्थाननुगुणत्वमुपपादयति । **अत्रेत्यादिना** । किंचिदपि पदं नदृश्यत इति न वाच्यम् ; नास्त्यादिशब्दास्सामानाधिकरण्यमज्ञानवाचिपदजातं चानुगुणमितिचेत्तत्राह—**अस्तीति** । **परमस्येत्यादि** । परमपरेशादिशब्दानां भवत्पक्षे मुख्यार्थासिद्धिरिति भावः ; हेत्वन्तरंचाह—**अस्तिनास्ति सत्यासत्येति** । प्रथमश्चस्त्वर्थः स्वोक्तयोजनायामनुगुणस्य शब्दस्य परपक्षाननुगुणत्वरूपं वैषम्यमस्तीति भावः । अस्ति सत्यशब्दौ दृष्टान्तार्थौ यथा अस्ति सत्यशब्दौ न सद्विलक्षणपरौ, तथा नास्त्यसत्यशब्दावपि * नासद्विलक्षणपराविल्यर्थः । कथमनिर्वचनीयवस्त्वभिधानासामर्थ्यमित्यत्राह—**नास्तीति** । * अर्थद्वारको विरोधः । ततःकिमित्यत्राह—**अतश्चेति** । यद्वा अनिर्वचनीयवस्त्वभिधानासामर्थ्यादिति व्युत्पत्त्यभाव उक्तः परस्परविरुद्धार्थत्वमत्र हेत्वन्तरतयोक्तम् । चस्समुच्चये ॥

तथाऽपि सत्त्वाभावात्तुच्छत्वं मिथ्यात्वं वोक्तं भवतीति चेत्तत्राह—**अत्रेति** । कथं विनाशित्वपराविल्यत्राह—**वस्त्विति** । * विनाशित्वमेवहि मिथ्यात्वमिति शङ्कायां * विनाशित्वस्वरूपं शोधयति । **एकेनेति** । एकेनाकारेण कालान्तरेऽनुभूतस्य कालान्तरे आकारान्तरेणोपलब्धिरस्तु ततःकथं ? विनाशित्वं तुच्छत्वमिथ्यात्वव्यावृत्तमिति शङ्कायां तुच्छत्वादिस्वरूपं शोधयति । **तुच्छत्वंहीति** । **परिणामादिनेति** । परिणामशब्दः परिणामसामान्यपरः तद्विशेषपरश्च । यथा वादशब्दस्सर्वकथासाधारणो वीतरागकथामात्रपरश्च तद्वत् अत्रायं परिणामशब्दो वर्धमानावस्थावाची ' **परिणामर्धिजन्मभिः** ' इति प्रयोगात्

**यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूताम्** ... ...

इति वक्ष्यमाणवचनकटाक्षेणैवमुक्तम् । परिणामशब्दस्य विकारमात्रपरत्वे आदिशब्दः प्रदेशान्तरगमनपरः । कालान्तरानुभूतस्य कालान्तरे नास्तीत्युपब्धिः कथं न बाध इत्यत्राह—**कालभेदेनेति** । विरोधोहि बाधः बाध्यत्वंहि मिथ्यात्वमि-

### श्रीभाष्यम्

**अतो न मिथ्यात्वम्। एतदुक्तं भवति ज्ञानस्वरूपमात्मवस्तु आदिमध्यपर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदाऽस्तिशब्दवाच्यम्; अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुण परिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयमिति। यथोक्तम् 'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्॥ अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नास्ति न संदेहो नाशिद्रव्योपपादितम्॥' इति। देशकालकर्मविशेषापेक्षया अस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इत्युक्तम्, आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम्। श्रोतुश्च मैत्रेयस्य 'विष्ण्वाधारं यथाचैतत्त्रैलोक्यं समवस्थितम्। परमार्थश्च मे प्रोक्तो**

### श्रुतप्रकाशिका

त्यभिप्रायेणाह—**अतइति**। परिणामित्वापरिणामित्वयोरर्थयोर्नहि नास्त्यस्त्यादिशब्दाः पारिभाषिकाः तत्कथं तदभिधानप्रकारः। परिणामास्पदस्यापि वस्तुनो नित्यत्वान्नास्तिशब्दाभिधेयत्वं चानुपपन्नमित्यत्राह—**एतदुक्तंभवतीति**। सततैकरूपत्वमास्तिशब्दप्रवृत्तिनिमित्तं विनाशगर्भत्वं नास्तिशब्दप्रवृत्तिनिमित्तमित्यर्थः। घटावस्थायां पिण्डो नास्ति कपालावस्थायां घटो नास्ति चूर्णावस्थायां न कपालसत्तेति सदा नाशगर्भत्वं उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः, तदवस्थस्य सैवोत्पत्तिः। तस्मान्नास्तिशब्दाभिधेयत्वमचिद्वस्तुनः चिद्वस्तुनस्त्ववस्थान्तरापत्त्यवस्थान्तरप्रहाणाभावेनैकरूपत्वान्नविनाशगर्भत्वम्। अतस्तदस्तिशब्दवाच्यमेव। यत्सदाऽस्त्येव तदस्तिशब्दवाच्यं सिद्धेशब्दार्थसम्बन्ध इत्यत्र सिद्धशब्दवदवधारणगर्भोऽयंशब्दः। तत्रहि सिद्धएवेति व्याख्यातं, अब्भक्षो वायुभक्ष इत्यादिदृष्टान्तीकृत्य तथाऽत्रापीत्यर्थः। अस्ति नास्तीति शब्दानां प्रवृत्तिनिमित्तमिदमेवेत्यस्मिन्नर्थे प्रमाणमाह—**यथोक्तमिति**। असदसत्यसत्सत्यादिशब्दानां मिथ्यात्वामिथ्यात्वयोः प्रसिद्धिस्वारस्यमस्तीतिशङ्कायां मिथ्यागर्भत्वमपि दर्शयति। **देशेति**। **कर्मविशेषापेक्षयेति**। पालनरञ्जनादिसद्भावासद्भावाभ्यां राजत्वपितृत्वादिरूपेण अस्तित्वं नास्तित्वं च कर्मापेक्षम्। औपाधिकास्तित्वयोगिनि वस्तुनि स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वं न परमार्थ इत्यर्थः। अपरमार्थत्वगर्भोऽस्त्यर्थोपेतत्वादचितो नास्त्यसत्यादिशब्दवाच्यत्वमित्युक्तम्॥

आत्मनस्स्वाभाविकास्तित्वयोगात्तत्र तद्धीविषयत्वं परमार्थ इत्याह—**आत्मनएवेति**। पदशो दशश्लोक्यामुक्तमर्थं प्राधान्यं श्रोतुरनुवादप्रकारेण द्रढयति **श्रोतुश्चेति**। प्रधानतः **ह्येकयोरि**तिवद्भावप्रधानो निर्देशः, प्राधान्येनेत्यर्थः।

### गूढार्थसंग्रहः

**अतो न मिथ्यात्वमित्यादि—आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थइत्यन्तम्**। अत्र 'अनाशी परमार्थश्च' इत्यादेः गुरुचन्द्रिकोक्तार्थः न पराशराभिमत इति 'एकमेवाद्वितीयम्' इति श्रुत्यर्थविचारे प्रागेव (७५६.पु) निरूपितम्। एवं च **यत्तु कालान्तरेणापि** इत्यादिना वस्तुशब्दपरमार्थशब्दयोरर्थः पराशरेण उत्तरत्र यः वक्ष्यते **वस्त्वस्ति किम्** इत्यादावपि स एवार्थो विवक्षितः। 'तत्त्वम्' इत्यत्रापि अवस्थाभेदेन तदेवेदमिति प्रत्यभिज्ञा स्वरूपपरिणामिनि न सम्भवति। स्वरूपपरिणामशून्येतु उपपद्यते। तेनात्र परिणामवाद एव पराशरसम्मत इत्येतद्वाक्येन प्रकटीकृतं न मिथ्यात्वमिति भावः॥

## श्रीभाष्यम्

**यथा ज्ञानं प्रधानतः ॥' (वि.पु.२.१३.२) इत्यनुभाषणाच्च । 'ज्योतींषि विष्णुः' (२.१२.३८) इत्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनं चिदचिद्वस्तुनोश्चास्ति नास्तिशब्दप्रयोगनिबन्धनं। ज्ञानस्याकर्मनिमित्तस्वाभाविकरूपत्वेन प्राधान्यं, अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते । यदुक्तं निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति । तदसत् 'वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णं तमसःपरस्तात् तमेवं विद्वानमृतइह भवति, नान्यःपन्था विद्यतेऽयनाय' (तैत्तरीयारण्यके ब्रह्ममेधे पुं. सूक्तम्.२०) 'सर्वे निमेषा जज्ञिरे विद्युतःपुरुषादधि । न तस्येशे कश्चन तस्यनाममहद्यशः यएनं विदुरमृतास्ते भवन्ति' (तै.आर.प्र.६.अनु.१.वा.८-९-१०) इत्याद्यनेकवाक्यविरोधात्**

## श्रुतप्रकाशिका

उत्कर्षः अनुभाषणश्लोकपूर्वार्धफलितमर्थमाह—**ज्योतींषीति** । तदेकधार्यद्रव्यत्वंहि शरीरलक्षणम् अतो विष्ण्वाधारमित्यनेनात्मशरीरभावास्सिद्धः । उत्तरार्धफलितमर्थमाह-**चिदचिदिति** । ज्ञानप्राधान्यं कण्ठोक्तं तेनाचिद्वस्तुनोऽप्राधान्यस्यार्थसिद्धत्वादाह-**अचिद्वस्तुनश्चेति** । प्राधान्याप्राधान्ये उत्कर्षापकर्षौ । तौचापरिणामित्वपरिणामित्वलक्षणौ नामिथ्यात्वमिथ्यात्वलक्षणौ धर्मिणिसतिहि प्राधान्याप्राधान्ये प्रतीतिमात्रसिद्धंहि मिथ्या अतो न तत्राप्राधान्यशब्दः स्वरसइत्यभिप्रायः ॥

अथ निर्विशेषब्रह्मात्मैक्यज्ञानस्य निवर्तकत्वपरत्वेन परोक्तश्रुतीनामतदर्थत्वं वक्तुं परोक्तमनुवदति । **यदुक्तमिति** परिहरति **तदसदिति** । तत्र ज्ञानस्य निर्विशेषवस्तुविषयत्वं तेनात्मैक्यविषयत्वं च परिहरिष्यन् प्रथमं निर्विशेषवस्तुविषयत्वं व्युदसितुमुपादत्ते । **वेदाहमिति** । अनेन विग्रहादिविशिष्टविषयज्ञानमेवोपायः नान्य इत्युक्तम् । एतत्समानार्थत्वादाह-**सर्वे निमेषाइति** । तत्रहि '**अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ**' इति प्रतीकोपादानं कृतम् । अनेन विशेषणेन विद्युच्छब्दश्च व्याख्यातो भवति । विद्युतः विद्युद्वर्णादित्यर्थः । '**आदित्यवर्णम्**' इत्यनेनैकार्थ्यात् '**न तस्येशे क**' इत्यनेन उपायभूतं ज्ञानान्तरं नास्तीति फलितम् अधिकज्ञेयान्तराभावात् । उक्ताकारविशिष्टपुरुषवेदनस्य उपायत्वं दर्शयति । **यएनंविदुरिति** । एषामन्येषामप्यादिशब्दगृहीतानां च वाक्यानामुपादानमनेकवाक्यविरोधप्रदर्शनाय

**ननु 'सदेवैकमेव'** इत्यादिकारणवाक्येषु निर्विशेषस्य प्रतिपन्नत्वात्तज्ज्ञानमेव साक्षान्मोक्षोपाय इति सगुणज्ञानस्योपायत्वं तद्व्यवधानेन स्यात्, यद्वा सगुणज्ञानोपायत्वपरवाक्येऽपि न सगुणत्वे तात्पर्यं वस्तुमात्रमेव लक्ष्यत इतिचेत्-

## गूढार्थसंग्रहः

'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्रैवकारेण 'एकधैवानुद्रष्टव्यम्' इति श्रुत्या 'ततो यदुत्तरतरं तदरूपमनामयम् । यएतद्विदुरमृतास्ते भवन्ति' इति श्रुत्या च निर्धर्मकैकवस्तुज्ञानस्यैव मुक्तिहेतुत्वं सिद्ध्यतीति परमतमनुवदति—**यदुक्तमित्यादिना । वेदाहमित्यादि** । सर्ववेदपठिते पुरुषसूक्ते 'तमेव विदित्वा' इति स्थाने 'तमेवं विद्वान्', इत्युक्त्या 'तमेव विदित्वा' इत्यत्रापि तच्छब्देन प्रकारतयोपस्थापितानां धर्माणामेवकारेण व्यवच्छेदासम्भवेन 'एकधैवानुद्रष्टव्यम्' इत्यत्र प्रकारार्थकधाप्रत्ययसत्त्वेन 'ततो यदुत्तरतरम्' इत्यादेः पराधिकरणे अर्थस्य निर्धारयिष्यमाणतया च सप्रकारकज्ञानमेव मुक्तिहेतुरिति भावः ॥ **इत्याद्यनेकवाक्यविरोधादिति** । विरोधस्य सम्यगुपपादनपूर्वकं निर्गुणविद्यायाः लघुचन्द्रिकाविचारितायाः श्रुतितात्पर्यविषयत्वं न सम्भवतीति भावप्रकाशे तृतीयसम्पुटे निरूपितम् ॥

## श्रीभाष्यम्

**ब्रह्मणस्सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति। शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम्। तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरं, तत्त्वंपदयोस्सविशेषब्रह्माभिधायित्वात्। तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशति 'तदैक्षत बहुस्याम्' (छा.६.२.३) इत्यादिषु**

## श्रुतप्रकाशिका

त्राह—**ब्रह्मणइति**। सद्विद्यादिष्वपि सगुणविषयत्वोपपादनाद्यथावस्थितस्वरूपविषयज्ञानस्यैव मोक्षोपायत्वात्तान्यपि सवि-
शेषज्ञानोपायत्वपराणीत्यर्थः। तर्हि शोधकवाक्यैर्विरोध इत्यत्राह—**शोधकेति**। एवं ज्ञानस्य निर्विशेषविषयत्वं तद्विरुद्ध-
वचनोदाहरणेन प्रतिक्षिप्तम् ॥

**अथ** तत्त्वमस्यादिसामानाधिकरण्यान्यथाऽनुपपत्त्या निर्विशेषज्ञानमेवोपाय इति शङ्कायां तस्य जीवपरैक्यवि-
षयत्वं व्युदस्यति। **तत्त्वमस्यादीति**। शोधकवाक्येषु सामानाधिकरण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरं **तत्त्वमस्या-**
दिषु जीवब्रह्मणोस्सामानाधिकरण्यमन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्। आचिद्ब्रह्मणोस्तु **'सर्वं खल्विदं ब्रह्म'** इत्या-
दावतात्त्विकरूपारोपणेन सामानाधिकरण्यम्। **'ज्योतींषि विष्णुः'** इत्यादौ बाधार्थमिति चतुर्धाहि परैस्सामानाधिक-
रण्यं तत्र तत्राभ्युपेतम्। तत्र **तत्त्वमस्या**दिवाक्येऽन्वयमुखेन वस्तुमात्रपरत्वं गत्यभावे बाधार्थत्वंचाशङ्क्य निराक्रियते।
तत्र प्रथमं वस्त्वैक्यपरत्वं दूषयितुमाह—**न निर्विशेषवस्त्वैक्यपरमिति**। कुतइत्यत्राह—**तत्त्वमिति**। तच्च कथमित्य-
त्राह—**तत्पदंहीति**। हिर्हेतौ सर्वज्ञत्वादिगुणकप्रतिपादनं कथमित्यत्राह—**तदैक्षतेति**। तच्छब्दस्य प्रकृतसर्वाकारविशिष्ट
वस्तुपरामार्शित्वं व्युत्पत्तिसिद्धम्। यथा शुक्ला शोभनाक्षी मदीया पूर्णश्रृङ्गाघटोघ्नी गौस्तामानयेति ॥

**ननु** गौस्तिष्ठति तामानयेत्यादौ आनयनादिक्रियानर्हास्थित्यादिविशेषणविधुरवस्तुपरामर्शित्वं दृश्यते तच्च मुख्यम्,
नैवम्। आनयनसमकालान्वयायोग्येनापि स्थित्यादिविशेषणेन पूर्वकालवैशिष्ट्यस्य विवक्षितत्वात् अन्यथा धावतोऽपि
गोपिण्डस्यानयनप्रसङ्गः। विशेषणं विशेष्यवस्तुनि यथाऽन्वयार्हं तथाऽन्वितस्य तस्यापरित्यागोहि विवक्षितत्वं प्रकृत-

## गूढार्थसंग्रहः

एतावता अहमित्यध्यासः सत्यद्वयकल्पना 'असत्यात्सत्यसिद्धिः, आत्मव्यतिरिक्तस्याविद्यकत्वेनापारमार्थ्यं श्रुति-
तदर्थापत्त्यादिभिः अविद्यासाधनंचेत्यादयः बहवः अर्थाः जैमिनि शबरकुमारिलाद्यसम्मताः' इति संविसिद्धौ यामुनमु-
निभिः पूर्वोक्तार्थपर्यालोचनप्रकारमनुसृत्य कुमारिलोक्तप्रकार एव साधीयानिति निरूपितम्। अथ पूर्वमीमांसकसम्मतं विशे-
ष्यविशेषणभावे सामानाधिकरण्यं गौणं चतुर्विधसामानाधिकरण्येषु अखण्डार्थसामानाधिकरण्यमेव मुख्यमिति प्राक्—
(१२६, १२७.पु) परोक्तार्थं पर्यालोचयन् विशेष्यविशेषणभावे सामानाधिकरण्यमेकमेव सर्वत्र। तदेव मुख्यम्। परस-
म्मताखण्डार्थसामानाधिकरण्यंतु न कस्यचिद्दार्शनिकस्य सम्मतम्, नापि तत्र युक्तिः नवा श्रुत्यादिकमिति। संवि-
त्सिद्धौ 'तत्वं पदद्वयं जीवपरतादात्म्यगोचरम्। तन्मुख्यवृत्तितादात्म्यमपि वस्तुद्वयाश्रयम् ॥ नीले नीलमतिर्यातु उत्पले
नीलधीर्हिसा। नीलमुत्पलमेवेदमिति साक्षाच्चकास्ति नः ॥ तद्वत्तादात्म्यसम्बन्धे श्रुतिप्रत्यक्षमूलके। श्रुतिदण्डेन दुस्तर्क-
विकल्पभ्रमवारणम् ॥ निर्दोषाच्चापौरुषेयी च श्रुतिरत्यर्थमादरात्। असकृत्तत्त्वमित्याह तादात्म्यं ब्रह्मजीवयोः ॥' इति
योऽर्थ उक्तः तमेवार्थं साधयितुमुपक्रमते—**तत्त्वमस्यादिवाक्येष्वित्यादिना** ॥

## श्रीभाष्यम्

**तस्यैव प्रकृतत्वात् । तत्समानाधिकरणं त्वंपदं च अचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति प्रकारद्वयावस्थितैकवस्तुपरत्वात्सामानाधिकरण्यस्य । प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासम्भवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्, द्वयोःपदयोर्लक्षणा च । सोऽयं देवदत्त इत्यत्रापि न लक्षणा भूतवर्तमानकालसम्बन्धितयैक्यप्रतीत्यविरोधात् । देशभेदविरोधश्च कालभेदेन परिहृतः । 'तदैक्षत बहुस्याम्' (छा.६.२.३) इत्युपक्रमविरोधश्च ।**

## श्रुतप्रकाशिका

सर्वविशेषणेषु एकस्यापि परित्यागे प्रकृतत्वमेव हीयेत शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौस्तामानयेत्युक्ते शौक्ल्येतरसमस्तविशेषणान्वितव्यक्त्यानयनेऽपि प्रकृतव्यक्तेरानीतत्वाभावात् । अतस्सविशेषे प्रकृते निर्विशेषस्य प्रकृतत्वं दूरोत्सारितम् । नच प्रकृतसर्वविशेषणपरित्यागेऽपि धर्मैक्येन प्रकृतत्वसिद्धिः । सर्वाकारप्रहाणे प्रतिसंधानानर्हत्वात् । नह्यपवरके घटोऽस्ति तमानयेत्युक्ते घटत्वाविवक्षायां मृन्मात्रस्य सिद्धिः प्रकृत्वसिद्धिः । कथमेकाकारपरित्यागेऽप्यसम्भवत्प्रकृतत्वं सर्वाकारपरित्यागे सम्भवति । अङ्गुलीयकत्वप्रहाणेऽपि कनकं प्रतिसंधीयत इतिचेत् सत्यम् प्रत्यक्षेण । तच्छब्दस्तु प्रकृताकारप्रहाणे प्रतिसंधानमेव जनयितुं न शक्नोति । अतएवहि यदङ्गुळीयकं तदानयेत्युक्ते कनकमात्रं नानीयते । अतः प्रकृतसर्वाकारप्रहाणे प्रतिसन्धानानर्हस्य वस्तुनः प्रकृतत्वमेव नास्तीति तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यात् । तत्पदोपस्थापितसार्वज्ञ्यादीनां त्वम्पदोपस्थापिताज्ञत्वादीनां च विरोधान्निर्विशेषपरत्वमितिचेत् तत्राह–**तत्समानाधिकरणमिति** । घटस्य शुक्ल इत्यादिव्यधिकरणवाक्येषु धर्मवाचिपदस्य धर्मिपर्यन्तत्वाभावात्तद्व्यावृत्त्यर्थं तत्समानाधिकरणमित्युक्तम् । **अचिद्विशिष्टजीवशरीरकमिति** । अज्ञत्वादिगुणानां सर्वज्ञत्वादिगुणके परमात्मनि विरोधस्सद्वारकतया परिहृत इत्यर्थः ; त्वम्पदप्रवृत्तिनिमित्तसम्बोधनीयार्थत्वरूपाभिमुख्यविशेषप्रयोजकोपलक्षणाभिप्रायेण अचिद्विशिष्टजीवेत्युक्तम् । समानाधिकरणत्वेसति कथं त्वम्पदं जीवविशिष्टब्रह्मपरमित्यत्राह–**प्रकारद्वयेति** । प्रकारद्वयावस्थितं प्रकारद्वयविशिष्टम् । प्रकृततत्त्वंपदप्रवृत्तिनिमित्तपरः प्रकारद्वयशब्दो न्यूनत्वनिवर्तकः नतु प्रकारात्रित्वादिव्यवच्छेदपरः । तदुपपादयति **प्रकारद्वयपरित्यागइति** । दूषणान्तरमाह–**द्वयोरिति** । अविरोधेन मुख्यतया निर्वाहे सम्भवत्येकस्यापि पदस्य लक्षणा न युक्ता, विरोधेसत्यप्येकपदलक्षणयैवाविरोधस्सिद्ध्यतीति पदद्वयलक्षणाऽनुपपन्नेत्यर्थः ॥

**ननु** पदद्वयलक्षणा न दूषणं सोऽयं देवदत्त इत्यादिषु दृष्टत्वात् तत्रहि देशकालविशिष्टाकारे देशकालान्तरान्वयविरोधाल्लाक्षणिकमेव पदद्वयं तत्राह—**सोऽयमिति** । किमेकस्य देशद्वयसम्बन्धे विरोधः ? उत कालद्वयसंबन्ध इति विकल्पमभिप्रेत्याह–**भूतेति** । नहि विशिष्टाकारे विशेषणान्तरान्वयः अपितु विशेष्यमात्रे अतः कालद्वयसम्बन्धो नविरुद्धः यदि विरुद्धः तर्हि बौद्धोक्तं क्षणिकत्वमेवापद्येत अनेककालसाध्य(क)ध)र्मविधानं) फलप्राप्तिश्च नोपपद्येयातामिति भावः । **देशभेदेति** । यद्येकस्य देशद्वयसम्बन्धविरोधः तर्हि विष्णुक्रमणतीर्थस्नानादिविधिर्नोपपद्यते, प्रत्यभिज्ञाविरोधश्चेति भावः

## गूढार्थसंग्रहः

**कालभेदेन परिहृतइति** । सोऽयं देवदत्त इति दृष्टान्तस्य सिद्धान्ते सामञ्जस्यं अद्वैतसिद्धिलघुचन्द्रिकाद्युक्तेर्निरवकाशत्वं उपलक्षणबोधेऽप्युपलक्षणस्य प्रकारतयैव भानमित्यादिकं (३२९.पु) निरूपितम् । **उपक्रमविरोधश्चेति** । **तदैक्षतेत्यत्र** प्रयुक्तएव तच्छब्दः 'तत्त्वमसि' इत्यत्र प्रयुक्तः । बहुभवनं तद्विषयकेक्षणं च परमते मिथ्याभूतम् ।

### श्रीभाष्यम्

**एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानं तत्कार्यानन्तापुरुषार्थाश्रयत्वं च भवति।**

### श्रुतप्रकाशिका

यौगपद्यं कथं सम्भवतीति चेदुच्यते देशद्वयसम्बन्धस्य कालद्वयसम्बन्धस्य वा न युगपद्भावः तत्प्रतिपत्तेरेवहि यौगपद्यप्रतिपत्तिस्तु देशद्वयकालद्वयसम्बन्धं क्रमभाविनमेव दर्शयति, अतो न विरोधः अन्यथा अतीतानागतविषयज्ञानेष्वतीतानागतविषययोर्वर्तमानत्वं ज्ञानस्यातीतानागतत्वं वा प्रसज्येतेति। दूषणान्तरमप्याह—**तदैक्षतेति**। उपक्रमाधिकरणे ह्युपक्रमप्राबल्यमुक्तमिति भावः ॥

उपक्रमोपक्रमे ऐक्यस्य प्रतिपन्नत्वान्नोपक्रमाविरोधः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यंहि **'तदैक्षत बहुस्यां'** इति वाक्यात्पूर्वमित्यत्राह—**एकविज्ञानेनेति**। तत्र निमित्तत्वोपादानत्वतदनुगुणसार्वज्ञ्यसर्वशक्त्यादिगुणसिद्धेरित्यर्थः। विशिष्टमेव कारणं तदेव स्थूलावस्थं कार्यमिति द्रव्यान्तरत्वाभावात्कारणज्ञानेन कार्यज्ञानमुपपद्यते। मृषावादिनस्तु कारणज्ञाने कार्यस्य विषयतयाऽन्तर्भावोऽभिमतश्चेद्विरोधः। सत्यविषयज्ञाने मिथ्यार्थस्य विषयत्वायोगात् मिथ्यात्वेनेत्यध्याहारश्च स्यात्। अनन्तर्भावेत्वज्ञाते ज्ञातत्वव्यवहारो न मुख्यस्स्यात्। अतोऽस्मत्पक्ष एव प्रतिज्ञावाक्यं स्वरसम्। श्रुत्यन्तरविरोधमाह—**ज्ञानस्वरूपस्येति**। ज्ञानस्वरूपस्य सर्वज्ञस्येत्यनेन धर्मिधर्मभूतज्ञाने विवक्षिते। सर्वज्ञस्याज्ञत्वं निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य अनन्तापुरुषार्थाश्रयत्वमिति विरोधः। ज्ञानस्वरूपस्येत्यनेन तिरोधानानुपपत्तिश्च सूचिता। इत्थं सामानाधिकरण्यस्य निर्विशेषवस्त्वैक्यपरत्वं दूषितम् ॥

### गूढार्थसंग्रहः

'सन्मूलाः सोम्येमास्सर्वाः प्रजाः' इति 'तत्त्वमसि' इत्येतत्पूर्ववाक्यं उपक्रमोक्तार्थकथनानन्तरं 'तत्त्वमसि' इति वाक्यम्। एतद्वाक्यस्य सत्यार्थपरत्वं परमते, इति उपक्रमविरुद्धएवोपसंहार इति भावः ॥

उपक्रमोपक्रमविरोधोऽपि परमत इत्याह—**एकविज्ञानेनेति**। सिद्धान्ते एकविज्ञाने सर्वप्रतिज्ञादौ अवस्थाभेदेऽप्युभयोः पदयोस्सामानाधिकरण्यं यथा तद्वदेव 'तत्त्वमसि' इत्यत्रेति उपक्रमोपसंहारयोरैकरस्यम्। परमतेतु विभिन्नसामानाधिकरण्याभ्युपगमात्तन्न घटत इति भावः ॥

'अहं धर्मस्त्वभिन्नश्चेदहंब्रह्मेति वाक्यतः। गौरोऽहमित्यनेकान्तो वाक्यं तद्धापनेतु तत् ॥' कथं वाक्यं तद्धापनेतुतादित्युच्यते। 'योऽयं स्थाणुःपुमानेष पुंधिया स्थाणुधीरिव। ब्रह्मास्मीति धियाऽशेषामहंबुद्धिं निवर्तयेत् ॥' (२.अ. २८.२९) इति नैष्कर्म्यसिद्धावुक्तम्। अत्र ज्ञानोत्तममिश्रविवरणम्। 'अहं ब्रह्मास्मि इतितु सामानाधिकरण्ये बाधायां न पुनस्तदेकत्वविवक्षया' इति। एवं नैष्कर्म्यसिद्धौ यदा नातत्त्वमस्यादेः ब्रह्मास्मीत्यवगच्छति। प्रध्वस्ताहं ममो नैति तदा गीर्मनसोस्स्मृतिम् ॥' (अ.३.१) कस्मात्पुनःकारणात्तदर्थोऽद्वितीयलक्षणः त्वमर्थेन प्रत्यगात्मनाऽपृथगर्थस्सन् अविद्योत्थं सद्वितीयत्वं निहन्तीत्युच्यते, विरोधात्तदुच्यते। 'संसारिताऽद्वितीयेन पारोक्ष्यंचात्मनासह। प्रासङ्गिकं विरुद्धत्वात्तत्त्वंभ्यां बाधनं तयोः ॥ (३.६९) अज्ञातपुरुषार्थत्वाच्छ्रौतत्वात्तत्त्वमर्थयोः। स्वमर्थमपरित्यज्य बाधकौ स्तां विरुद्धयोः ॥' (१०) इत्युक्तम्। 'स्वमर्थमन्योन्यविशेष्यविशेषणभावलक्षणम्।' इति ज्ञानोत्तममिश्रव्याख्या। एतद-

## श्रीभाष्यम्

**बाधार्थत्वे च सामानाधिकरण्यस्य त्वं तत्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणाचेति लक्षणादयस्त एव दोषाः। इयांस्तु विशेषः नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम्। तत्पदेनाधिष्ठानातिरेकि धर्मानुपस्थापनेन बाधानुपपत्तिश्च।**

## श्रुतप्रकाशिका

अथ बाधार्थत्वं दूषयति। **बाधार्थत्वेचेति**। रज्जुसर्प इत्येवंरूपबाधार्थे सामानाधिकरण्यमेव नास्ति सामानाधिकरण्यस्य एकस्मिन्विशेष्ये प्रकारद्वयोपस्थापकतया बाधार्थत्वविरोधात् अतः पदद्वयमुख्यार्थत्वेऽभिमते बाधार्थे सामानाधिकरण्यं न सिद्ध्येत्। सर्पशब्देन नञर्थं लक्षयित्वा असर्पो रज्जुरिति निर्वाहं दृष्टान्तवाक्यस्याशङ्क्य दार्ष्टान्तिकवाक्यस्य अतोऽप्यधिकं दूषणमाह—**बाधार्थत्वेचेति**। त्वन्तत्पदयोरित्यत्र न क्रमविवक्षा तत्पदमधिष्ठानमात्रं लक्षयति त्वम्पदं जीवभावनिवृत्तिं लक्षयति। यद्वा त्वम्पदेनाधिष्ठानलक्षणा, तत्पदेन निवृत्तिलक्षणा आदिशब्देन सामानाधिकरण्यलक्षणहानिरुपक्रमविरोधः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽनुपपत्तिः, श्रुत्यन्तरविरोधश्चेति दूषणानि विवक्षितानि। उक्तदृष्टान्तादुपलक्ष्य सामानाधिकरण्याच्च दूषणमत्राधिकमित्याह—**इयांस्तु विशेषइति**। बाधार्थत्वे विशेषो न पूर्वोक्तदूषणहानिः। अपितु तैस्सह वक्ष्यमाणाधिकदूषणद्वयापातएव विशेषइत्यर्थः। अधिकं दूषणमाह—**नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनमिति**। शुक्तिरेव रजतमित्यत्र प्रामाणान्तरेण नेदं रजतमिति बाधस्य प्रतिपन्नत्वाद्बाधकल्पनम्। अत्र बाधस्य अप्रतिपन्नत्वेऽप्यगत्या बाधकल्पनमित्यर्थः। **तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्चेति**। शुक्तिरेव रजतमित्यत्र शुक्तित्वरूपं विरुद्धधर्मं शब्दएवोपस्थापयति अतस्तत्र बाधकल्पनम्। अत्र त्वधिष्ठानमात्रं लक्षयता तत्पदेन शुक्तित्ववद्विरुद्धधर्मानुपस्थापनाद्बाधकल्पनमनुपपन्नमित्यर्थः। विरोधपरिहारार्थं लक्षणाचेदन्यतरपदलक्षणैव विरोधपरिहारायालं तदा सविशेषत्वप्रसङ्ग इति चार्थसिद्धम्। प्रमाणान्तरेण बाधस्य प्रतिपन्नत्वाच्छब्देन विरुद्धधर्मोपस्थापनाच्च बाधकल्पनं अत्रतूभयाभावात्तदनुपपन्नमित्युक्तम्। तत्र विरुद्धाकारोपस्थापनं शङ्कते **अधिष्ठानंत्विति**। तदधिष्ठानमतिरोहितस्वरूपं यथा भवति तथोपस्थाप्यत इति क्रियाविशेषणम्। अप्रकाशितविरोधिप्रका-

## गूढार्थसङ्ग्रहः

वलम्बनेन 'तत्त्वमसि' इत्यत्र बाधायां सामानाधिकरण्यमिति ये वदन्ति तान्प्रत्याह—**बाधार्थत्वे च सामानाधिकरण्यस्येति**। सुरेश्वरमते प्रतिबिंबस्य स्वरूपेण मिथ्यात्वेन बिंबप्रतिबिंबयोरैक्यस्यासम्भव एव बाधार्थत्वोक्तौ मूलम्। प्रतिबिंबस्य स्वरूपतस्सत्यत्वं प्रतिबिंबत्वेनासत्यत्वं, तेन बिंबप्रतिबिंबयोरैक्यमिति सिद्धान्तयद्भिः पद्मपादाचार्यैः प्रतिबिंबासत्यत्ववादिसुरेश्वरमतदूषणानन्तरं ननु 'तत्त्वमसि' इति वाक्याद्बाधो दृश्यते' इति पञ्चपादिकायामाशङ्कितम्। अत्र विवरणम्—'तत्त्वमसि' वाक्यं त्वंपदार्थबाधनिमित्तम्। संसारिणो विनाशमन्तरेण मोक्षानुपपत्तेरिति चोदयति ननु तत्त्वमसि वाक्यादिति।' इति। अत्र 'अयमेवहि नोऽनर्थो यत्संसार्यात्मदर्शनम्' इति सुरेश्वरवाक्यं विवक्षितम्। उक्तं च एतद्वाक्यमुपादायैव सिद्धान्तबिन्दौ 'तेन शुद्धचैतन्यस्याभास एव बन्धः तन्निवृत्तिश्च मोक्ष इति' इति। अनन्तरं पञ्चपादिकायां 'मैवम्। तत्र तत्त्वमिति बिंबस्थानीयब्रह्मस्वरूपताप्रतिबिंबस्थानीयस्य जीवस्योपदिश्यते अन्यथा न तत्त्वमसि इति स्यात्। किंतु 'न तत्त्वमसि' इति भवेत् नरजतमस्तीतिवत्' इत्युक्तम्। तद्रीत्यैवाह—**नेदं रजतमितिवदित्यादि**॥

## श्रीभाष्यम्

**अधिष्ठानंतु प्राक्तिरोहितमतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इतिचेन्न प्रागधिष्ठानप्रकाशे तदाश्रयभ्रमबाधयोरसम्भवात् भ्रमाश्रयमधिष्ठानमतिरोहितमितिचेत् तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ। अतोऽधिष्ठानातिरेकि पारमार्थिक धर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ।**

## श्रुतप्रकाशिका

शनंहि बाधकल्पनं नतु धर्मोपस्थापनमेव बाधकल्पनमिति नियमोऽस्ति अतस्तत्पदेन प्रागप्राकाशितविरोध्यधिष्ठानस्वरूप-
प्रकाशनाद्बाधकल्पनमित्यर्थः। अत्राह–**नेति**। किं विरोधिरूपमधिष्ठानं प्रकाशते ? उत नेति विकल्प्य अप्रकाशपक्षे दूष-
णमाह–**अधिष्ठानेति**। तदाश्रयेत्याश्रयशब्दो विषयपरः। यद्वा तदधिष्ठानकभ्रमबाधयोरित्यर्थः। प्रकाशपक्षं शङ्कते।
**भ्रमेति**। भ्रमाश्रयमधिष्ठानमित्यत्र * पाठो निरीक्षणीयः। आश्रयशब्दो विषयपरः, भ्रमाश्रयमित्यत्र भ्रमस्याश्रयणं
विषयीकरणं यत्रेति वैयधिकरण्येन वा, भ्रमआश्रय आश्रयणीयस्संबन्धनीयो येनेति सामानाधिकरण्येन वा कथंचिद्बहुव्री-
हित्वमपि निर्वोढुं शक्यम्। * आरोप्याकाराधिकरणभूतमधिष्ठानमिति वाऽर्थः। भ्रमाश्रयत्वाया तिरोहितामितिचेदि-
त्यर्थः। दूषयति **तदेवेति**। किमिदमधिष्ठानं विरोधिरूपम् ? उताविरोधीति विकल्पाभिप्रायेण विरोधीतिपक्षे दूषणमुक्तम्
अविरोधित्वपक्षे बाधकल्पनानुपपत्तिः भ्रमानुच्छेदश्चेति दूषणं स्पष्टमिति न तदुक्तम्। **अतइति**। पारमार्थिकशब्द-
स्यायमभिप्रायः भ्रमविरोध्याकारस्य अपारमार्थिकत्वे अध्यस्तरूपमेव सत्यं स्यात्। यथा शुक्तित्वापारमार्थ्ये रजतत्वं सत्यं
भवतीति ॥

यदिदं चोद्यं विरोध्याकारस्यापारमार्थ्येऽपि भ्रमनिवृत्तिरुपपद्यते * यथा पलाशपुष्पविषयदावभ्रमवतो भ्रमरस्य
वृन्तविषयभ्रमरभ्रमेण पलाशपुष्पं श्लिष्यतः पलाशपुष्पविषयादावभ्रमो वृन्तविषयभ्रमरभ्रमश्च निवृत्तइति। यथाऽऽहुः–
'**भ्रमरी भ्रमरभ्रमेण वृन्ते यददावभ्रममाश्लिषत्पलाशम्**।' इति। तदयुक्तम्। तत्रापि परमार्थविरोध्याकारेणैव *
भ्रमविषयनिवृत्तेः दावत्वविरोधिपलाशपुष्पत्वाकारः परमार्थः भ्रमरत्वविरोधिवृन्तत्वाकारश्च परमार्थः अपरमार्थत्वे दावत्वं
भ्रमरत्वं च सत्यं स्यात् शुक्तित्वे अपरमार्थे रजतत्वमिव। वृन्तविषय*भ्रमरभ्रमेण दावत्वभ्रमनिवृत्तिरितिचेत्। ततःकिम् ?
दावत्वबुद्धिनिवृत्तिः भ्रमरत्वस्य सत्यत्वप्रतिपत्तिकृता ! ततश्चा*सत्ये सत्यत्वविषयभ्रामान्तरं तिष्ठति तन्निवृत्तिरप्यसत्यवि-
षयसत्यत्वभ्रमान्तरेणेति भ्रमपरम्परया * निश्शेषाविद्यानिवृत्त्यनुपपत्तिः ॥

किंच दावत्वविषयधीनिवृत्तावपि दावत्वनिवृत्तिर्न भ्रमरभ्रमेण, अपितु परमार्थपुष्पत्वाकारेणैव अन्यथा परमार्थ
रजते अपरमार्थशुक्तित्वबुद्धया रजतधीनिवृत्त्या रजतस्यापि शुक्तित्वप्रसङ्गात्। भ्रमान्तरेण भ्रमान्तरनिवृत्तावनवस्था च
स्यात् निवर्तकभ्रमान्तरस्यापि निवर्तकान्तरापेक्षत्वात्। यथा रज्जुविषय सर्पभूदळनाम्बुधाराभ्रमपरम्परायाः। * किंच भ्रमर-
भ्रमनिवृत्त्यनन्तरं निवर्तकापारमार्थ्यज्ञानादापतद्दावभ्रमः * परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्तः। अतो निश्शे-
षाविद्यानिवृत्तिलक्षणमोक्षवादिना भ्रमपरम्परापर्यवसानार्थमन्ततो गत्वा परमार्थाकारोऽभ्युपगन्तव्यः रज्जुत्ववत्। चरम-
भ्रमस्स्वयमेव * न स्यादितिचेन्न, स्वयं स्वबाधकर्मत्वे कर्मकर्तृविरोधप्रसङ्गात्। किंच बाधकस्य सत्यात्मकत्वाद्बाध्यस्य
मिथ्यात्वादेकस्यैव निवर्त्यनिवर्तकत्वाभ्युपगमे तस्यैव मिथ्यात्वं सत्यत्वंचेति विरोधस्स्यात् ॥

किंच प्रपञ्चोऽपि बाधकानपेक्षस्स्वयमेव स्वात्मानं निवर्तयेत्। * स्वयंनाशे विनाशस्यावस्थान्तररूपत्वादविद्यासूक्ष्म-
रूपेण स्थिता स्यात् नाशकल्पकाविद्यान्तरं च स्यात् परमार्थविरुद्धधर्मतत्तिरोधानाभावे भ्रमबाधासम्भवं दृष्टान्तेनोप-

## श्रीभाष्यम्

**अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहितेसत्येव व्याधत्वभ्रमः। राजत्वोपदेशेन च तन्निवृत्तिर्भवति नाधिष्ठानमात्रोपदेशेन तस्य प्रकाशमानत्वेनानुपदेश्यत्वात्, भ्रमानुपमर्दित्वाच्च। जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम्। प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम्।**

## श्रुतप्रकाशिका

पादयति। **अधिष्ठानेहीति**। अत्र राजकुमारसमाधिर्भगवतो भाष्यकारस्य। एवं बाधार्थत्वं दूषितम्। अथ स्वपक्षे इमानि दूषणानि न सन्तीत्याह—**जीवशरीरकेति**। मुख्यवृत्तमित्यनेन लक्षणाहानिरुक्ता। **प्रकारद्वयेति**। अनेन सामा-

## गूढार्थसंग्रहः

**अधिष्ठानेहि पुरुषमात्राकारे इत्यादि**। उक्तं च सम्बन्धवार्तिके सुरेश्वराचार्यैः—'तज्ज्ञानं यस्य संजातं जातमेवास्य नान्यथा। कुक्षिस्थस्यापिहि सतो वामदेवस्य तद्यथा॥ (२३२) तच्चाविद्यातिनिरास्येव व्याधभावनयाऽञ्चितः। राजसूनोस्स्मृतिप्राप्तौ व्याधभावो निवर्तते॥ (२३३) यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः। लब्धैकात्म्यस्मृतिर्व्येति सर्वाऽविद्या सकार्यका॥ (२३४) यत एवमतो नात्र विधिःकल्प्यः कथं चन। अनर्थकः कल्पितोऽपि तस्येहानुपयोगतः॥' (२३५) इति। अत्र 'व्याधभावो निवर्तते' इत्युक्त्या भ्रमनिवृत्तिदशायां भ्रमविषयनिवृत्तिवादिनां मतेऽपि व्याधभावप्रतिकोटिभूतराजत्वज्ञानेनैव तन्निवृत्तिरिति स्फुटम्। एवं दार्ष्टान्तिकेऽपि वाच्यमिति भावः। एतावता विशेष्यविशेषणभावे सामानाधिकरण्यमङ्गीकृत्य बाधायां सामानाधिकरण्योपपादनं न घटत इत्युपपादितम्। अथ प्राक् अन्यत्रैव नचाप्यत्र वाक्यार्थो भेदलक्षणः।' इत्यादि 'तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम्॥' इत्यन्तोदाहृत (१२७.पु) वार्तिकोक्तरीत्या सुरेश्वराचार्याणामपि बिंबप्रतिबिम्बैक्यानङ्गीकारेऽपि अखण्डार्थसामानाधिकरण्यमेव संमतम्॥

एवं पञ्चपादसर्वज्ञात्ममुन्यादीनामपि, इत्याक्षेपस्य विशेष्यविशेषणभावे सामानाधिकरण्यस्य स्थापनमन्तरा परिहारो न घटते, विशेष्यविशेषणभावे सामानाधिकरण्यमेव वृत्तिवार्तिककारादिसंमतम्। लघुसिद्धान्त एव मोक्षसाधनज्ञानस्य उपासनात्मकस्य विधेयत्वस्थापनात् राजकुमारनयोऽपि विधिव्यापारमन्तरा नोपपद्यते। राजसूनोः राजसूनुत्वेनैव ज्ञानं राज्ञः स्थितिदशायां अहमेव राजा अस्मि इति निश्चयः न कथञ्चिदपि तस्य सम्भवति। राजसूनुत्वनिश्चयानन्तरं व्याधगृहवासादिदोषनिरासाय प्रायश्चित्तमपेक्षितम्। तद्वत् बद्धजीवस्य उपासनारूपप्रायाश्चित्तेनैव देशविशेषस्थितस्य राज्ञः समीपगमनादिकं, इत्येव राजकुमारनयः उपपादनीयः। 'गर्भेऽनुसन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।' इत्युपक्रम्य 'गर्भ एवैतच्छयानो वामदेव एवमुवाच।' स एवंविद्वानस्माच्छरीरभेदात् ऊर्ध्वं उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान्कामानप्त्वाऽमृतस्समभवत्समभवत्' इत्यैतरेयोपनिषद्युक्तम्। अत्र वामदेवस्य उत्क्रान्तिसर्वकामावाप्तिप्रतिपादनेन सगुणविद्यानिष्ठत्वमेवेति स्फुटम्। उपासनं च सगुणब्रह्मविषयकमिति परेषामपि सम्मतम्। अतः सविशेषब्रह्मविषयकान्येव महावाक्यानि। नीलमुत्पलमित्यत्रेवात्रापि विशेषणविशेष्यभाव एव सामानाधिकरण्यं तदेव मुख्यम्। अत एव चतुर्धा सामानाधिकरण्यं प्रस्तुत्य 'तथा च यत्र तादात्म्यं न सम्भवति तत्र अखण्डार्थत्वात् जीवत्वेशत्वोपहितयोस्तादात्म्यसम्भवादखण्डार्थत्वम्। नीलो घट इत्यादौ तादात्म्यं सम्भवति, गुणाक्रियाद्रव्यरूपकार्याणां सामान्यविशेषयोश्च अकार्ययोः तादात्म्यस्वीकारात्' इत्यखण्डार्थत्वोपपत्तौ (ल.चं) ब्रह्मानन्दसरस्वत्युक्तिस्सङ्गच्छते। अतः वृत्तिकारादिसिद्धान्त एव युक्त इत्याह—**जीवशरीरकेत्यादिना**॥

## श्रीभाष्यम्

**निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति, उपक्रमानुकूलता च एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च, सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणस्स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात्। 'तमीश्वराणां परमं महेश्वरम्' (श्वे.६.७) 'पराऽस्य शक्तिर्विविधैव श्रूयते' (८) 'अपहतपाप्मा' (छा.८.७.इ) 'सत्यकामस्सत्यसङ्कल्पः' (छा.६.८.७) इत्यादिश्रुत्यन्तराविरोधश्च। 'तत्त्वमसि' इत्यत्रोद्देश्योपादेयविभागः कथमिति चेत् नात्र किंचिदुद्दिश्य किमपि विधीयते। 'ऐतदात्म्यमिदं सर्वम्' (छा.६.८.७-६) इत्यनेनैव प्राप्तत्वात् अप्राप्ते हि शास्त्रमर्थवत्।**

## श्रुतप्रकाशिका

नाधिकरण्यसिद्धिः। **निरस्तनिखिलदोषस्ये**त्यादिना तत्पदोक्तगुणाविरोधः। **उपक्रमानुकूलताचे**ति। **'तदेव सोम्येदम्' 'तदैक्षत'** इत्युपक्रमाविरोध उक्तः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः कथमित्यत्राह— **सूक्ष्मेति**। विशिष्टं कारणं तदेव कार्यमिति प्रतिज्ञोपपत्तिरित्यर्थः; श्रुत्यन्तराविरोधमाह—**तमीश्वराणामिति** ॥

वाक्यंचेदुद्देश्योपादेयविभागवत्। उद्देश्यंह्यवगतं उपादेयं विधेयमनवगतम्। अत्र तत्पदं नोद्देश्यसमर्पणपरं *
स्यादिति गुणकत्वस्य प्रत्यक्षाद्यगोचरत्वात्। त्वंशब्दस्यचान्तर्यामिपरत्वे सत्युद्देश्यसमर्पकत्वमनुपपन्नं * अन्तर्यामिणः
प्रत्यक्षाद्यविषयत्वात्। तस्मात्त्वंशब्देन जीवमात्रमुद्दिश्य तस्य तत्पदेन ब्रह्मभावो विधीयत इत्यभ्युपगन्तव्यम्। तत्र
विरोधान्निर्विशेषवस्त्वैक्यपरं सामानाधिकरण्यं भवतीत्यभिप्रायेण चोदयति। **तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः
कथमितिचेदिति**। परिहरति। **नात्रेति**। प्रमाणान्तरागोचरार्थस्य कथमविधानमित्यपेक्षायां न केवलं प्रत्यक्षा-
द्यवगतार्थविषयमेव वाक्यमनुवादकम् अपितु वाक्यान्तरप्रतिपन्नार्थविषयमप्यनुवादकमित्यभिप्रायेण वाक्यान्तरप्राप्तिं दर्श-
यति। **ऐतदात्म्यमिति**। * अस्मिन्नेव प्रकरणे प्रथमप्रतिपन्ननामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकश-
ब्दानां परमात्मपर्यन्ताभिधायित्वं च ज्ञातमिति भावः। ततः किंमित्यत्राह—**अप्राप्तेहीति**। अप्रतिपन्नार्थविषयं शास्त्रम-
ज्ञातज्ञानरूपप्रयोजनवदित्यर्थः। अतस्तदेवो*द्देश्योपादेयविभागवत् नतु प्रकृतनिगमनरूपं वाक्यम्। अतोऽस्य निगम
नवाक्यस्य प्रतिपन्नार्थविषयत्वान्नोद्देश्योपादेयविभागवत्त्वमिति भावः ॥

**ननु** निगमनवाक्यस्याप्युद्देश्योपादेयविभागवत्त्वं प्रतीयते। यथा तस्माच्छब्दोऽनित्यः, तस्मादयमग्निमानिति अत्र
शब्दपर्वताद्युद्देशेन अनित्यत्वाग्निमत्त्वादिकंहि विधेयतया प्रतीयते। नैतद्युक्तम्। प्रतिपादितार्थविषयस्य निगमनवाक्य-
स्याप्रतिपन्नार्थविषयत्वव्याघातात्। प्रतीतिस्तु विधायकवाक्यस्थोद्देश्योपादेयसमर्पकपदप्रत्यभिज्ञानान्निर्देशे प्रथमचरमभा-
वादिसारूप्याच्चोद्देश्योपादेयविभागवत्त्वभ्रान्तिरेव। **'यद्वृत्तयोगः प्राथम्यम्'** इत्याद्युद्देश्यलक्षणमितिहि नीतिविदः ॥

**ननु** सर्वत्रोद्देश्यानुगुणा तिङ्विभक्तिः अतएवहि युष्मदस्मदोः पदान्तरसामानाधिकरण्येन परस्परसामानाधिक-
रण्येन च प्रयोगेषूद्देश्यानुगुणा मध्यमोत्तमपुरुषव्यवस्था दृश्यते **'त्वं भूतानामधिपतिरसि' 'अहमस्मि प्रथमजा-
ऋतस्य'** तथा **'यदग्ने स्यामहं त्वं वाऽस्या अहं स्युष्टे सत्या इहाशिषः'** इत्यादिषु। अग्ने अहं त्वं यदिस्यां त्वमिव
देवता स्यां त्वमहं यदि स्याः अहमिवार्थी स्याः तदा ते तवाशिषस्सत्यास्स्युरित्यर्थः। तस्मात्तत्त्वमसीत्यत्रापि मध्यमपदप्रयो
गात् त्वंपदस्योद्देश्यसमर्पकत्वं तत्पदस्यचोपादेयसमर्पकत्वमकामेनापि स्वीकार्यम्। नैवम्। पदद्वयावगतार्थस्य पूर्ववाक्यप्रा-
प्तत्वादेव। तर्हि मध्यमनिर्देशः कथमितिचेत् उच्यते तत्त्वंपदयोरुभयोरपि प्रयुक्तत्वादुद्देश्योपादेयविभागाभावाच्च।

## श्रीभाष्यम्

**इदं सर्वमिति सजीवं जगन्निर्दिश्यैतदात्म्यमिति तस्यैष आत्मेति तत्र प्रतिपादितम्। तत्र च हेतुरुक्तः 'सन्मूलास्सोम्येमास्सर्वाःप्रजास्सदायतनास्सत्प्रतिष्ठाः' (छा.६.८.६) 'सर्वं खल्विदंब्रह्म तज्जलानिति शान्तः' इतिवत्।**

## श्रुतप्रकाशिका

प्रथममध्यमपुरुषयोरविशेषेण प्राप्तौ निगमनवाक्यस्य प्रापकवाक्यानुरोधित्वस्य न्याय्यत्वात्तत्रेदं सर्वमिति निर्दिष्ट जगदन्तर्गत(चिद)चिद्विशेषविशिष्टपरमात्मवाचिनः त्वंपदस्य प्रापकवाक्यस्थोद्देश्यवाचिपदवाच्यैकदेशविषयत्वात् तदनुरोधेन मध्यमनिर्देश इति ॥

ननु **'ऐतदात्म्यमिदं सर्वम्'** इति अचेतने ब्रह्मानुप्रवेशमुक्त्वा **'तत्त्वमसि'** इति जीवब्रह्मणोः स्वरूपैक्यमुच्यत इति शङ्कायामाह—**इदं सर्वमिति सजीवं जगन्निर्दिश्येति**। सर्वशब्दो नाचेतनमात्रपरः सङ्कोचकाभावेऽपि स्वारस्यभङ्गायोगात् **'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः'** इति पूर्ववाक्ये सर्वशब्देन प्रजानां विशेषितत्वात् **'इदं सर्वमसृजत'** इत्यादिवाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतस्सर्वशब्देन निर्देशाच्चेति भावः। ऐतदात्म्यमिति पदं व्याचष्टे। **तस्यैष आत्मेति**। इदं सर्वमिति पदद्वयं उद्देश्यसमर्पकम्। ऐतदात्म्यं एतदात्मकत्वं विधेयम्। विशिष्टस्य ब्रह्मणः कारणतया प्रकृतत्वेऽपि एतच्छब्दः चिदचिद्विलक्षणविशेष्यांशपरः अर्थवशात् तदात्मकत्वं मृदात्मको घट इतिवत्स्वरूपैक्यकृतं स्यादित्यत्राह—**तत्र च हेतुरुक्तइति**। * **'सदायतना'** इत्यनेनाधाराधेयभाव उक्तः। अनेन शरीरशरीरिभावस्सिद्धः चेतनेन यावदात्मभावितया धार्यद्रव्यंहि शरीरम्। अस्मिन्वाक्ये हेतुत्वमप्रकटमिति तद्वैशद्यायाह-**सर्वखल्विति**। अत्रापि प्राणनेन सदायतनत्वं फलितम्। * **'सन्मूला'** इत्यादिवाक्यैकार्थ्यात्। तत्र सन्मूला इति तज्जत्वं सत्प्रतिष्ठा इति तल्लत्वं, सदायतना इति तदनत्वं, चोच्यते। तच्चान्तःप्रविश्य प्रशासनेन धारकतया स्थितिहेतुत्वम्। **'अन्तःप्रविष्टश्शास्ताजनानाम्' 'एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं विधृतं तिष्ठति'** इत्यादिश्रुतेः॥

एवं निष्कृष्टब्रह्मस्वरूपस्योपादानत्वलयस्थानत्वायोगात् सर्वस्य तदनत्वोक्त्या च चिदचिच्छरीरकत्वं सिद्धम्। अतस्सर्वशब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः। ब्रह्मशब्दस्यासङ्कोचेन स्वरूपरूपगुणैर्निरवधिकबृहत्ववाचित्वान्निष्कृष्ट-

## गूढार्थसंग्रहः

**इदंसर्वमिति सजीवं जगन्निर्दिश्येत्यादि**। 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः' इत्यत्र प्रजाशब्दस्य जीवार्थकत्वेन 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र जीवस्य विवक्षितत्वं प्रागेव (२४३, २४४.पु) निरूपितम्। 'सर्वं खल्विदं ब्रह्मतज्जलानिति शान्त उपासीत' (छा.३.१४.१) इति छान्दोग्य एव पूर्वं 'तज्जलानि' ति हेतुना सर्वस्य ब्रह्माभेदः अभिहितः जं.लं.च अन् च जलान् तस्य जलान् तज्जलान् तस्येति शेषषष्ठी। जनिलयादिसंबन्ध्यकाङ्क्षाऽनुरोधेन जन्याद्यनुगुणसंबन्धसामान्यपरा। तदनुसारेणात्रापि 'सन्मूलास्सोम्य' इति पूर्ववाक्यं 'ऐतदात्म्यमिदं सर्वम्' इत्यादि वक्ष्यमाणार्थे हेतुपरमित्यभिप्रेत्याह—**तत्र च हेतुरुक्त इत्यादिना**। तत्र च 'सर्वखल्विदं ब्रह्म' इत्याद्युक्तशाण्डिल्यविद्या सगुणविद्या सद्विद्यातु निर्गुणविद्येति परेषां मतम्। उभयत्रापि सविशेषमेव प्रतिपिपादयिषितमिति सिद्धान्तः। अयं च सिद्धान्तः 'अनेन जीवेनात्मना' 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र आत्मन्शब्दनिर्देशेन श्रुतौ विवक्षित इति आत्मन्शब्दनिर्णयार्थं श्रुत्यन्तराण्युपादत्ते—**तथा च श्रुत्यन्तराणि**॥

### श्रीभाष्यम्

**तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति 'अन्तःप्रविष्टश्शास्ता जनानाꣳसर्वात्मा' (आरण्यकं.३.११.२०) 'यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरोयं पृथिवी न वेद यस्य पृथिवी शरीरं यःपृथिवीमन्तरोयमयति सत आत्माऽन्तर्याम्यमृतः' (बृ.५.७.३)**

### श्रुतप्रकाशिका

ब्रह्मणः कारणत्वानुपपत्तिरूपार्थसामर्थ्याच्च, ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः । एवमुभयावस्थचिदचित्प्रकारिणो ब्रह्मण एकत्वं सामानाधिकरण्यप्रतिपाद्यमिति कार्यकारणावस्थप्रकार्येकत्वमस्य वाक्यस्यार्थः । चिदचित्प्रकारित्वं प्रातिपदिकबोध्यं अवस्थाद्वयविशिष्टवस्त्वेकत्वं सामानाधिकरण्यबोध्यमिति न वाक्यभेदः । अतो यथोक्त एवार्थः ॥

अथ '**सर्वं खलु**' इति वाक्यप्रतिपन्नस्य तादात्म्यस्य शरीरशरीरिभावनिबन्धनत्वं नियन्तृत्वनियाम्यत्वादिना शरीरशब्देन च विशदयितुं श्रुतिवाक्यानि दर्शयति । **तथेति** । '**अन्तःप्रविष्टश्शास्ता**' इत्येतत्सर्वात्मशब्दव्याख्यानरूपम् । अनेन शरीरात्मभावउक्तः अन्तःप्रविश्य नियाम्यत्वंहि शरीरत्वम् । तत्स्पष्टीकरणार्थमुदाहरति । **यःपृथिव्या-मिति** । '**यःपृथिव्याम्**' '**य आत्मनि**' इतिपर्यायद्वयेन चेतनाचेतनयोर्भगवन्तं प्रतिशरीरत्वमुक्तम् । आत्मनि तिष्ठ

### गूढार्थसंग्रहः

**अन्तःप्रविष्ट इत्यादिना** । (शि.अ.२३.प्र) उपदेशसहस्र्यां 'तत्सृष्ट्वा, तदेवानुप्राविशत्' 'अन्तःप्रविष्टश्शास्ता'
'स एष इह प्रविष्टः' 'एषत आत्मा' 'सेयं देवतैक्षत, हन्ताहमिमास्तिस्रो देवताः' इति इत्याद्याश्श्रुतयः 'नामरूपे व्याकु-
र्वन् सृष्ट्वेदं शरीरं नामरूपे इह प्रविष्टः, सर्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वाऽभिवदन् यदास्ते' इत्युक्तार्थे
प्रमाणतया उदाहृताः । एवं तत्रैव 'रूपादिसंस्काराद्यशुद्धिसम्बन्धाभावात् न परस्मादात्मनो विलक्षणत्वम्' इत्युपक्रम्य
'तत्सृष्ट्वा तदेवानुप्राविशत्' 'सम आत्मेति विद्यात्' 'अहं मनुरभवं सूर्यश्च' अन्तःप्रविष्टश्शास्ता जनानाम्' 'तदेव
सोम्य तत्सत्यं, स आत्मा, तत्त्वमसि' इत्यादिश्रुतिभ्यः । स्मृतिभ्यश्च 'पूःप्राणिनः सर्व एव गुहाशयस्य' इत्यादिभ्य-
इतिचोक्तम् । अत्र परसम्मतार्थो न विवक्षित इत्यभिप्रेत्य तच्छ्रुत्यर्थो निरूप्यते ॥

'अन्तःप्रविष्टः' इत्यतःपूर्वं 'समानसीन आत्मा जनानाम्' इति वाक्यम् । एवमुत्तरत्रापि इदं वाक्यं वर्तते ।
तत्र 'जनानामात्मा' इत्यत्रात्मन्शब्दार्थः 'अन्तप्रविष्टश्शास्ता' इत्यनेनोक्तः । अत्र जनशब्दः जीवपरः । 'सर्वा-
प्रजा यत्रैकं भवन्ति' इत्यव्यवहितोत्तरवाक्यम् । तत्रापि प्रजाशब्दः जीवपरः । प्राक् (२३१.पु) उदाहृतप्रजाशब्द-
घटितमैत्रायणीयश्रुतौ जीवानां ज्ञानसंपादनार्थं प्रवेशस्याभिधानेन 'अन्तःप्रविष्टश्शास्ता' इत्यत्र 'यमात्मनोऽन्तरोयम-
यति' इत्यन्तर्यामिब्राह्मणोक्तार्थस्य 'शास्ता' इत्यनेन स्पष्टमुक्तेश्च । अतएव एतच्छ्रुतिसायणीयभाष्ये 'ईश्वरस्सर्वभू-
तानाम्' इत्यादि (१८.अ) गीतावचनमुदाहृतम् । 'स्मृतेश्च' इति सूत्र(शं)भाष्ये 'ईश्वरस्सर्वभूतानाम्' इति गीतावचनं
जीवपरमात्मभेदपरत्वेनोदाहृतम् । अतो जीवान्तर्यामित्वमेवात्र विवक्षितम् । 'यच्चाप्नोति' इति स्मृत्युक्तव्याप्तेः 'अन्त-
र्बहिश्च तत्सर्वं व्याप्य' इति श्रुत्यानुगुण्येन 'अन्तःप्रविष्ट' इत्यत्र विवक्षितत्वेन ज्ञाननियमनार्थःप्रवेशः आत्मन्शब्दे विव-
क्षितः । एवं च सर्वेषामन्तःप्रविश्य नियन्तृत्वेन सर्वात्मत्वमेतच्छ्रुतौ प्रतिपिपादयिषितमिति सिद्धम् । अतश्च इयं श्रुतिः
न जीवब्रह्माभेदपरेति स्फुटं विदुषाम् ॥

### श्रीभाष्यम्

'य आत्मनि तिष्ठन्नात्मनोऽन्तरोयमात्मा,

### श्रुतप्रकाशिका

क्षित्युक्ते नैयामिनिक्ति इति तिले तैलं तिष्ठतीतिवद्बहिरबहिस्स्थितिसाधारण्यात् । तद्वैशद्यार्थमाह—आत्मनोऽन्तरइति ।

### गूढार्थसङ्ग्रहः

य आत्मनि तिष्ठन्नित्यादि । 'यो विज्ञाने तिष्ठन्' इत्यस्य स्थाने 'य आत्मनि तिष्ठन्' इति पाठः । अन्तर्यामिब्राह्मणे च 'यःप्राणे तिष्ठन्' 'यो मनसि तिष्ठन्' इति पृथग्वाक्यसत्त्वेन 'यो विज्ञाने तिष्ठन्' इत्यत्र विज्ञानशब्दः ज्ञानस्वरूपजीवपरः । एवं 'य आत्मनि तिष्ठन्' इत्यत्रात्मन्शब्दोऽपि । अंशाधिकरणे 'य आत्मनि तिष्ठन्—यमयति' इत्यन्तवाक्यं जीवपरमेदपरतया परैरुदाहृतम् । उभयव्यपदेशाधिकरणेतु 'एष त आत्माऽन्तर्याम्यमृतः' इति काण्वपाठवाक्यं 'तत्त्वमसि' इति वाक्यसहभावेन जीवब्रह्माभेदपरतयोदाहृतम् । 'एष त आत्माऽन्तर्याम्यमृतः' इत्यन्तं जीवब्रह्मभेदपरमेव 'अन्तःप्रविष्टश्शास्ता जनानाम्' इति श्रुत्यनुसारात् । शाण्डिल्यविद्यायां 'एष म आत्मा' इत्यत्र षष्ठ्याः संबन्धार्थप्रत्यायकत्वात् इति उपनिषद्भाष्ये 'षष्ठीश्रुतिवशात्' इति आनन्दगिरिटीकायांचोक्त्या 'शब्दविशेषात्' इति सूत्रे षष्ठीश्रुतिवशात् जीवब्रह्मभेदः सूत्रकृतो विवक्षित इति न्यायरक्षामणावप्युक्त्या 'एषत आत्मा इति द्वाविंशवारमभ्यस्तषष्ठीश्रुतेः प्रबलतया तत्राभेदस्य विवक्षोक्तेरसम्भवाच्च । 'उभयेऽपिहि भेदेनैनमधीयते' इति सूत्रे च षष्ठीश्रुत्याऽपि जीवब्रह्मभेदो विवक्षितः । 'न वक्तुरात्मोपदेशादितिचेदध्यात्मसम्बन्धभूमाह्यस्मिन्' (१.१.३०) इत्यत्र 'सम आत्मेति विद्यात्, इति कौषीतकीवाक्ये षष्ठ्याः जीवब्रह्मभेदः विवक्षित इति सूत्रकारस्याप्यभिप्रेतमिति प्रागेव (२४५.पु) निरूपितम् ॥

इन्द्रप्राणाधिकरणे 'न वक्तुः' इत्येतदुत्तरं 'जीवमुख्य' इत्यादिसूत्रे शङ्कराचार्यैरपि अथवेत्यादिना पक्षान्तरमनुसृत्य विवरणं कृतम् । सच्च पक्षः वृत्तिकाराणामिति भामत्यादौ व्यक्तम् । एवं च 'सम आत्मेति विद्यात्' इत्यत्र जीवब्रह्मभेदएव वृत्तिकाराणां विवक्षित इति निर्णयस्सम्भवति, अयमर्थः तत्सूत्रविवरणे स्फुटीभविष्यति । एवं च 'सत आत्माऽन्तर्याम्यमृतः' इति माध्यन्दिनपाठेऽपि षष्ठ्या जीवब्रह्मभेद एव प्रतिपिपादयिषितः । अतश्च 'ऐतदात्म्यमिदम्' इत्यत्र बहुव्रीहेस्सर्वसम्मतत्वेनात्रापि जीवब्रह्मभेद एव विवक्षितः, एतदनुसारेणैव 'तत्त्वमसि' इत्यत्रार्थो वाच्यः । एतत्तात्पर्येणैव 'ऐतदात्म्य'मिति वाक्यपूर्वकमेव 'तत्त्वमसि' इत्यत्र नवकृत्वोऽभ्यासः । इत्थं च 'सर्वं खल्विदं ब्रह्म तज्जलानिति' 'एष म आत्माऽन्तर्हृदये' इति शाण्डिल्यविद्यावाक्यवदेव 'सन्मूलाः, ऐतदात्म्यमिदम्' 'तत्त्वमसि' इत्यत्रापि जीवब्रह्मभेदापरित्यागेनैव समानाधिकरणवाक्यस्यार्थवर्णनं युक्तम् ॥

यद्यपि ब्रह्मविद्याभरणे 'तस्मात् उपक्रमे तावदुपदेशैकगम्यं निष्प्रपञ्चमात्मतत्त्वं सोपपत्तिप्रतिपादितम् । मध्येऽपि जीवब्रह्मणोरभेदः परामृश्यते 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति । यद्यपि च परमात्मनः 'यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः' इत्यन्तर्यामिणोऽनुवेशोऽस्ति । तथाऽपि स नेह विवक्षितः । जीवेनेति विशेषणात् एवमुपसंहारोऽप्युपक्रमानुगुणएवोपलभ्यते 'ऐतदात्म्यमिदं सर्वम्, तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति । 'ऐतदात्म्यमिदं सर्वम्' इतिहि 'इदंसर्वं यदयमात्मा' इति श्रुत्यन्तरानुसारात् 'सदेव सोम्येदमग्रआसीत्' इत्युपक्रमानुसाराच्च । एष आत्मा यस्येति बहुव्रीहिं कृत्वा ततो भावप्रत्यये कृते भावप्रत्ययस्य प्रकारीभूतप्रकृ-

## गूढार्थसङ्ग्रहः

त्यर्थपरत्वात् बहुव्रीह्यर्थविशेषणीभूतात्मपरामर्शकत्वेन एष आत्मा इदं सर्वमिति प्रतिपादयति । ‘ एष आत्मा इदं सर्वम् ’ इत्येव वक्तव्ये सामानाधिकरण्यमात्मात्मीयभावेनौपचारिकमिति शङ्का माभूदिति द्योतनाय बहुव्रीहिभावप्रत्यययोरुपादानम् । तथासति बहुव्रीहिणैव मुख्यया वृत्याऽऽत्मात्मीयभावे लब्धे पुनर्भावप्रत्ययरूपयत्नान्तरकरणं व्यर्थं स्यादिति तर्केण सा शङ्काऽपोदिता भविष्यतीति । तच्च सामानाधिकरण्यं मृद्घट इति परिणामाभिप्रायेण रजतं शुक्तिरित्यारोपितबाधाभिप्रायेणेति द्वेधाऽपि सम्भवतीति तन्निवारणार्थं ‘ तत्सत्यम् ’ इति वाक्यम् । तत्रहि तच्छब्दः प्रकृतमात्मानं परामृशति । तस्यैव तात्पर्यविषयतया अस्मिन् सन्दर्भे प्राधान्यात् ‘ स आत्मा ’ इति वाक्ये तस्यैव परामर्शेन तदैकार्थ्यानुसाराच्च । ततश्च तच्छब्देनात्मानं परामृश्य तस्य विशिष्य सत्यताप्रतिपादनमनात्मनोऽनृततां बोधयत् पूर्वोपक्षिप्तं सामानाधिकरण्यं बाधायामेव व्यवस्थापयति । ततश्च ‘ तत्त्वमसि ’ इति वाक्यं स्वस्वारस्यानुसारेणोपक्रमस्वारस्यानुसारेण च यथाश्रुतमेव । ननु विभक्तिलोपादिना क्लेशेन व्याख्येयम् ॥

अपि च स्वस्वारस्यपरित्यागेन विभक्तिलोपाद्याश्रयणे व्यामोह एव शङ्काऽवसरप्रदर्शितवचनव्यक्तिभिः । नहीयमेव वचनव्यक्तिरस्वीकर्तव्या, नेयमिति किंचिन्नियामकमस्ति । ननु शरीरशरीरिभावेन योजनापरित्यागे स्वारस्यापरित्यागात् सैव स्वीकर्तव्येति भेदपक्षेऽपि निर्धारणं लभ्यत इतिचेन्न—शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वस्य प्रागेव निराकृतत्वात् । अपि च शरीरवाचकानां शरीरिपर्यन्तत्वस्वीकारेऽपि न ‘ तत्त्वमसि ’ इति वाक्यं यथाश्रुतार्थं सम्भवति । नह्यत्र त्वंशब्दस्येश्वरशरीरभूतजीववाचकस्येश्वरे वृत्तिरभ्युपेयते । त्वंशब्दार्थस्य तच्छब्दार्थे विशेषणत्वाभावात् । किंतु तच्छब्दस्यैव प्रकृतपरमात्मपरामर्शकस्य त्वंशब्दार्थे अभेदसंबन्धेन विशेषणसमर्पकता । अन्यथा असीति मध्यमपुरुषो न स्यात् । त्वंशब्दार्थस्येतरविशेषणत्वे आकाङ्क्षाऽभावेनाख्यातसामानाधिकरण्यायोगात् । युष्मच्छब्दस्याख्यातसामानाधिकरण्य एव ‘ युष्मद्युपपदे समानाधिकरणे स्थानिन्यापि मध्यमः ’ इति सूत्रेण मध्यमपुरुषो विधीयते । अतस्त्वंशब्दार्थस्य
विशेष्यत्वमभ्युपेतव्यम् । तत्र च परमात्मपरस्य तच्छब्दस्य वृत्तिः शरीरवाचकानां शरीरिपर्यन्तत्वाभ्युपगमेऽपि न सम्भ-
वति । ईश्वरस्य जीवंप्रति शरीरत्वाभावात् । अतो मध्यमपुरुषोपपत्तये त्वंशब्दार्थविशेष्यकमेव सामानाधिकरण्यमुपेयम् ॥

एवं ‘ अहंब्रह्मास्मि ’ इति सामानाधिकरण्यमप्युत्तमपुरुषोपपत्तये जीवविशेष्यकमेव स्वीकर्तव्यम् । दृश्यतेहि
त्वमहंशब्दार्थयोर्विशेषणविशेष्यभावव्यत्यासे मध्यमोत्तमपुरुषयोर्व्यत्यासः ‘ त्वं वा अहमास्मि भगवो देवते अहंवै त्वमसि ’
इति व्यतिहारवाक्ये । तथाऽन्यत्रापि ‘ यदग्नेस्यामहं त्वं स्या अहं स्युष्टे सत्या इहाशिषः ’ इति । ततश्च ‘ असि ’ इति
पदानुसारेण त्वंशब्दार्थविशेष्यके सामानाधिकरण्ये स्थिते शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वमिति व्युत्पत्त्यभ्युपगमे-
ऽपि स्वारस्यहानेरवर्जनीयतया शङ्काऽवसरप्रदर्शितवचनव्यक्तिभिर्व्यामोह एव प्राप्नोतीति जीवब्रह्मणोस्स्वरूपाभेदमुपेत्यैव
यथाश्रुतार्थोऽभ्युपेतव्यः । ननु सिद्धान्तेऽप्येकधर्मिपर्यवसिततया त्रयाणां पदानामखण्डार्थत्वाभ्युपगमेन मध्यमपुरुषस्वारस्यं
परित्यक्तमेव सर्वेषां पदानां लक्षणोपगमादितिचेत्, नह्येतावता मध्यमपुरुषप्रयोगोऽसाधुर्भवति । आलम्बनीभूते-
वाच्यार्थे अभेदसंसर्गेण तत्पदार्थप्रकारक त्वंपदार्थविशेष्यकबोधाभ्युपगमेन मध्यमपुरुषोपपादनसम्भवात् । इत्थमेव हि
स्तुतिपर्यवसितेष्वर्थवादेषु मध्यमादिपुरुषाणां गतिः ॥

ननु च तव कथमभेदेन वाक्यार्थवर्णनं कर्तुं शक्यम् ? विरुद्धधर्माक्रान्तयोः नाहं सर्वज्ञ इति भेदेनावगतयोश्च
अभेदबोधनासम्भवात् । यदि च विरुद्धधर्माणां भेदस्य च मिथ्यात्वेन पारमार्थिकाभेदबोधने विरोधो नास्तीत्युच्येत तदा
वाच्यार्थपर्यवसानमस्तु किमखण्डवस्तुलक्षकत्वेनेतिचेत् ; नहि वयं वाक्यार्थान्वयानुपपत्त्या अखण्डे वस्तुनि लक्षणां स्वीकुर्मः ।

## गूढार्थसंग्रहः

किंतु ब्रह्मप्रकरणे सर्वत्र भेदप्रपञ्चनिषेधनिन्दावाक्यैरद्वितीयवस्तुमात्रे वाक्यतात्पर्यस्य पर्यवसिततया तदुपपादनाय। ततश्चालम्बनीभूतेऽर्थे पदस्वारस्यं न परित्यक्तमेव पर्यवसितस्तु वाक्यार्थस्तात्पर्यानुसार्येव ग्राह्य इति तदपरित्यागात् न कुत्रापि स्वारस्यहानम्। महावाक्यार्थवर्णनस्य तात्पर्यानुसारेणैव स्वारसिकत्वात्। दर्शपूर्णमासमहावाक्यार्थस्य श्रुतिलिङ्गाद्यनेकप्रमाणानुसारेण तत्तत्पदलक्षणाध्याहारादिभिः वर्ण्यमानस्यापि न स्वारसिकताऽपगता भवति। तत्कस्य हेतोः ? तात्पर्यानुसारित्वात्। तथा प्रकृतेऽपि भविष्यति। ततश्चोपक्रमोपसंहारपरामर्शैर्मतिसामान्येन च सद्विद्यायाः निष्प्रपञ्चप्रत्यगभिन्नब्रह्मपरत्वे स्थिते मध्ये यानि सृष्ट्याद्युपयोगि गुणप्रतिपादकानि वाक्यानि तानि 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इतिन्यायमनुसृत्य तदुपयोगितयैव व्याख्येयानि। 'सन्मूला' इति वाक्यं च न मूलमूलिभावादिना भेदप्रतिपादनपरम् अपितु 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इत्युपक्रमानुसारेण अस्ति सर्वप्रजानामुत्पत्तिस्थितिलयेष्वाधारभूतं सद्वस्त्वित्येतावन्मात्रपरम्। तस्य च सद्वस्तुनः 'एकमेवाद्वितीयम्' इति प्रागेव स्वरूपं निर्णीतमिति तदनुसारेणान्यपरात् वाक्यात्प्रतीयमानो भेदः व्यावहारिको भविष्यतीति न किंचिदेतत्। 'तत्त्वमसि' इत्यादौ संबोध्यसंबोधकभावेनार्थात् प्रतीयमानो भेदो न शास्त्रार्थः' इत्युक्तम्॥

तथाऽपि नायमर्थः श्रुतौ विवक्षितः। उपक्रमे निष्प्रपञ्चात्मतत्वतात्पर्यवर्णनस्यैवासंभवात्, 'एकमेवाद्वितीयम्' इत्यस्य प्रपञ्चसामान्यानिषेधतात्पर्यकत्वासम्भवस्य पूर्वमेव (६२०.पु) उपपादनात्। तदुपक्रमे 'उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति' इत्यादौ अश्रुतसर्वाभेदस्य प्रतिपादनेन सर्वस्याभावे सर्वाभेदोक्तेरयोगात्। दृष्टान्ते अवस्थाभेदभिन्नेषु विकारवस्तुषु मृदभेदोपपादनेन दार्ष्टान्तिकेऽपि तथैव कार्यवस्त्वभेदस्य विवक्षायाः स्फुटत्वात् 'वाचाऽऽरम्भणम्' इत्यादेस्तदुपपादकतायाः पूर्वमेव वर्णनात्। ब्रह्मणः तत्तदन्तर्यामित्वपरिणामेनाभेदसम्भवात्, मृदयं घट इत्यादौ प्रवृत्तिनिमित्तभेदेऽपि धर्म्यैक्येन मृच्छब्दवाच्यत्वस्य घटादिष्विव कारणान्तर्यामिणः कार्यवस्त्वन्तर्यामित्वेन धर्मभेदेऽपि तच्छब्दवाच्यत्वं संभवत्येव। 'विकारो नामधेयम्' इत्यत्र पूर्वप्रस्तुतनामविकारयोः 'नामरूपे व्याकरवाणि' इत्यत्र विवक्षायाः सर्वसम्मतत्वात्। मृदः रूपबहुत्वेन नामबहुत्ववत् आदेशशब्दार्थस्यापि रूपबहुत्वेन नामबहुत्वस्यात्र विवक्षितत्वात्। आदेशशब्दस्य प्रशासित्रर्थकतया प्रशासितुरेव 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यत्र प्रवेशो विवक्षितः। प्रवेशश्च जीवज्ञानसंपादनार्थ इति मैत्रायणीयश्रुतौ 'सर्वस्यचाहं हृदिसन्निविष्टः' 'ईश्वरस्सर्वभूतानाम्' इति स्मृतौ च विवक्षित इति प्रागेवोपपादनात्॥

एवं चान्तर्यामिब्राह्मणे नियमनार्थाऽन्तःस्थितिरेव विवक्षितेति निश्चीयते। अतश्च जीवज्ञाननियमनार्थान्तःप्रवेशः नामरूपव्याकरणनिमित्तमिति निश्चितं भवति। तेन प्रागुक्तप्रकारेण नामबहुत्वं सिद्ध्यति। 'सेयं देवतैक्षत' इत्यत्र तच्छब्देन प्रागादेशशब्दोक्तशासितुरेव विवक्षिततया आत्मशब्दस्यात्र सत्वेन प्रवेशोक्त्या च आत्मन्शब्देन असङ्कोचेन सर्वमन्तःप्रविश्य शासितुरेवोपस्थापनेन जीवशब्दस्यापि तच्छब्दसामानाधिकरण्यमुपपद्यत एव॥

'आदित्यो ब्रह्मेत्यादेशः' 'उभयमादिष्टं भवति अध्यात्मं चाधिदैवं च' 'अथात आदेशः गुह्याएवादेशा मधुकृतः' इत्यादौ उपदेशेऽपि प्रचुरतरः प्रयोगो वर्तत इत्युक्तिरपि नादर्तव्या। आङ्पूर्वकदिशिधातुप्रयोगे झटिति शासनरूपार्थस्यैव प्रतीतेः अनुभवसिद्धाया अपलापासम्भवात्। उपदेशस्य शासनरूपत्वेन बोधनयैवोक्तस्थलेष्वादेशशब्दप्रयोगस्योपपत्तिसम्भवात्। अप्राक्ष्य इत्यनेनैवोपदेश्यत्वलाभेन तदुक्तेरनपेक्षितत्वात्। 'तंत्वौपनिषदं पुरुषं पृच्छामि' इत्यत्र पुरुषशब्दार्थप्रश्नवत् अयमपि प्रश्नः। पुरुषशब्दश्च 'पुरः पुरुष आविशत्' 'सवा अयं सर्वासु पूर्षु

### श्रीभाष्यम्

**न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' (बृ.५.७.**

### श्रुतप्रकाशिका

अन्तरो यमयतीत्यनेन शरीरलक्षणमुक्तम् । तस्मात्तन्नियाम्यं तच्छरीरमित्यर्थः । नच शिलापुत्रकस्य शरीरमितिवदयं

### गूढार्थसंग्रहः

पुरिशयः' (बृ.४.) इत्यत्र सर्वप्रवेशेन सर्वशरीरिबोधकः । अत्राप्यादेशशब्दार्थस्यैव उत्तरत्र प्रवेशस्य वक्ष्यमाणतया प्रवेशस्य ज्ञाननियमनार्थतायाः प्रागेवोपपादनेन आदेशशब्देऽपि शासनं विवक्षितमिति निर्धारणसम्भवाच्च । एवं च प्रकृत्यर्थस्वारस्येन श्रुत्यन्तरैकरस्येन च 'विवक्षातः कारकाणि भवन्ति' इति वैयाकरणोक्तदिशा कर्तुः करणत्वविवक्षया घञ्प्रत्ययस्योपपत्तिः प्राचीनैरेवोक्ता युक्ता । अतश्च 'उत तमादेशमप्राक्ष्यः' 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यादेर्यथोक्त एवार्थः । उपक्रमे सृष्टिकाल एव प्रवेशनामरूपव्याकरणयोरभिधानेन मृत्तत्कार्यदृष्टान्तानुसारेण अवस्थाभेदेऽपि उपादानोपादेययोः अभेदस्य विवक्षिततया उपसंहारेऽपि तदनुगुणएवार्थो वर्णनीयः । तदर्थमेव 'सन्मूलास्सोम्येमास्सर्वाः- प्रजाः' इति सृष्टिकथनानन्तरं 'ऐतदात्म्यमिदं सर्वम्' इत्यादिना नवकृत्वः अभ्यासेन दार्ष्टान्तिके स एवार्थो निर्धार्यते । 'ऐतदात्म्यमिदम्' इत्यत्र बहुव्रीह्यनन्तरं भावप्रत्ययः अङ्गीक्रियताम् । अथापि बहुव्रीह्यनन्तरभावप्रत्ययेन एतदात्मा इत्यर्थः न सिद्ध्यति । एतत् आत्मा यस्य तदिति बहुव्रीहौ यस्य सर्वस्य संबन्धी एष आत्मा इति विग्रहवाक्यार्थे एतदात्मसंबद्धस्यैव बहुव्रीहिणा बोधो वाच्यः । तदुत्तरभावप्रत्ययेन एतदात्मसम्बन्धस्यैवोपस्थितिः । नन्वेतदात्मन इति वैयाकरणैर्निर्धारितम् । युक्तंचेदमिति एतदात्मनः बहुव्रीह्युत्तरभावप्रत्ययेन विवक्षा नैव सम्भवति ॥

'तत्सत्यम्' इत्यत्र सर्वस्यैव सत्यत्वं विवक्षितं, परमात्मनः सत्यत्वं नात्र विवक्षितम् । 'ससत्य आत्मा इति वा स आत्मा सत्य इतिवा उक्त्यैव आत्मनः सत्यत्वलाभे नपुंसकपुंलिङ्गतच्छब्दद्वयोपादानवैयर्थ्यात् । अतः नपुंसकतच्छब्देनाव्यवहितपूर्वसर्वशब्दार्थस्यैव परामर्शः । तथाऽप्यात्मनोऽर्थतः प्राधान्यं कदाऽपि नापैति, 'ऐतदात्म्यमिदम्' इत्यत्रार्थतः प्राधान्यस्य प्रागेव बोधनात् । मृद्विकारसामान्यस्य 'मृत्तिकेत्येव सत्यम्' इत्यत्र सत्यशब्देन निर्देशवत् सदुपादेयसामान्यस्य सत्य शब्देन निर्देशो युक्तः । 'मृत्तिकेत्येव सत्यम्' इत्यत्र इतिशब्दस्य वैयर्थ्येन मृद्विकारस्यासत्यत्वं नैव विवक्षितम् । 'तत्सत्यम्' इत्यनेन सदुपादेयत्वेन सत्परतन्त्रतयैव सत्यत्वं नान्यथा इति 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इत्यनेन सर्वस्यापि परमात्मपारतन्त्र्यं स्थापितम् । स आत्मा इतितु आदरातिशयात् द्विरुक्तिरिति प्राचीनैरेवोक्तम् । स—अन्तःप्रविश्य नियन्तेत्यर्थः । एतेनाभ्यासरूपतात्पर्यलिङ्गं दर्शितं भवति । एवं सर्वस्य परमात्मपारतन्त्र्यमभिधाय सर्वान्तर्गतश्वेतकेतावपि पारतन्त्र्यबोधनाय उक्तार्थस्य 'तत्त्वमसि, श्वेतकेतो' इति वाक्यविशेषे उपसंहारः । एवम्भूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुंप्रत्युपदेशाय प्रवृत्तत्वात्प्रकरणस्य इति श्रुतिषट्कोपक्रमे उक्त्या जीवविशेष्यकबोधः दर्शितो भवतीति मध्यम पुरुषस्य नानुपपत्तिः । सच पक्षः उपनिषद्भाष्यकारादिभिस्सिद्धान्तितः । जीवशरीकपरमात्मनः विशेष्यतया भानाङ्गीकारेऽपि न मध्यमपुरुषाद्यनुपपत्तिरिति गुरुसामानाधिकरण्यवादे अनन्तयैर्निरूपितम् । एवं च पक्षद्वयेऽपि अवस्थाभेदेऽपि धर्म्यैक्येन दृष्टान्तवत् दार्ष्टान्तिकेऽपि समानाधिकरणनिर्देशः । दृष्टान्ते कारणपरतन्त्रत्वस्य तत्कार्ये लाभवत् दार्ष्टान्तिकेऽपि ज्ञानविकासनियमनादिमुखेन परमात्मकार्यभूते जीवे परमात्मपारतन्त्र्यप्रतिपात्तिस्संभवति । एवमङ्गीकार एव सृष्टिवाक्येषु राजकुमारनयः द्रमिडाचार्यैः यः प्रदर्शितः सः रक्षितो भवतीति बोध्यम् ॥

## श्रीभाष्यम्

**२२) 'यःपृथिवीमन्तरे संचरन्' (सुबा.७.ख) इत्यारभ्य 'यस्य मृत्युश्शरीरम् यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (आनन्दवल्ली.६.२) 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवत्' इत्यादीनि। अत्रापि 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा६.३.२) इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम्। 'तदनुप्रविश्य सच्चत्यच्चाभवत्' इत्यनेनैकार्थ्याज्जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते।**

## श्रुतप्रकाशिका

निर्देशः अपवादकाभावे व्यतिरेकानिर्देशस्वारस्यभङ्गायोगात् **'यस्य पृथिवी शरीरम्'** इति व्यतिरेकानिर्देशस्वारस्यभङ्गाभावस्य प्रकरणसिद्धत्वात्तदपवा(दका)दाभावे तत्राप्यौपचारिकत्वाश्रयणायोगात्, * अधिकरणाधिकर्तव्यभाव व्याप्य व्यापकभावाज्ञप्राज्ञभाव नियाम्यनियन्तृभावरूपविरुद्धधर्मैः स्वारस्यभङ्गस्यात्यर्थमपोदितत्वाच्च । **यं पृथिवी न वेदेति** दृष्टान्तार्थम्। यथा अचेतनं न वेत्ति तथा चेतनोऽपीति भावः। **य आत्मनी**ति पर्यायेण परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते नक्षत्रचन्द्रादित्यादीनामचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात् **'यस्सर्वेषु भूतेषु तिष्ठन्'** इत्यनुक्तानामपि संसृष्टजीवानां परमात्मशरीरत्वस्य पृथगुक्तत्वाच्च ॥

**नच** भूतशब्दः पृथिव्याद्यचिन्मात्रपरः **'यस्य पृथिवी शरीरम्' 'यस्यापश्शरीरम्'** इत्यादिना * पृथिव्यादीनां भूतानां पृथगुक्तत्वात्। यमात्मा न वेदेति इयत्तया वेदननिषेधः भगवत्प्रसादनविना तज्ज्ञानस्य शक्यत्वनिषेधो वा क्रियते * कारणावस्थमपि भगवतश्शरीरं शरीरी च नारायणाख्यो देवताविशेष इति ज्ञापयितुमाह— **यःपृथिवीमन्तरे संचरन्निति**। मृत्युः तमश्शब्दवाच्या प्रकृतिः तत्रैव तमश्शब्दस्थाने मृत्युशब्दपाठात्। शरीरशरीरिभावस्तत्तन्नामभाक्त्वनिर्वाहक इत्याह—**तत्सृष्ट्वेति**। न केवलं श्रुत्यन्तरानुरोधादैतदात्म्यशब्दार्थो निश्चीयते स्वप्रकरणवाक्यादपीत्याह—**अत्रापीति**। अनेन जीववाचिशब्दस्य परमात्मपर्यन्तत्वमपि श्वेतकेतुनाऽवगतमिति सिद्धम्। जीवेनात्मना जीवशरीरकेण मया **'व्याघ्रेण भूत्वा बहवो मयाऽत्ता'** इतिवत्। नामरूपे इति पदं व्याचष्टे—**वस्तुत्वं शब्दवाच्यत्वंचेति**। तत्तद्देवादिवस्तुत्वं देवादिशब्दवाच्यत्वंचेत्यर्थः। अचिद्ब्रह्मणोः तादात्म्यमनुप्रवेशकृतमस्तु जीवब्रह्मणोस्तु स्वरूपैक्यकृतमेव स्यात् जीवेन मयेति श्रवणादित्यत्राह—* **तदनुप्रविश्येति** ॥

**ननु** जीयमनुप्रविष्टस्यापि ब्रह्मणो नामवाच्यत्वं न व्याकरणात्सिद्ध्यति नामरूपव्याकरणश्रुतेर्नामवाच्यत्वप्रतिपादनपरत्वाभावात्। यथा रूपव्याकरणं रूपनिष्पादनमात्रं नतु स्वस्य तद्बोध्यत्वापादनम्। एवं नामव्याकरणमपि शब्दसृष्टिरेव नतु तद्बोध्यत्वापादनमिति, नैवम्। **'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत'** इति समानवाक्ये इदं शब्दवाच्यजगदात्मब्रह्मणः प्रळयदशायामुपसंहृतनामरूपस्य सृष्टिदशायां नामरूपाभ्यां व्याकृतत्वश्रवणात्। * नामरूपाभ्यामितीत्थंभावे तृतीया, नामरूपाभ्यां विशिष्टमक्रियतेत्यर्थः। नच नामकर्तृत्वमेव नामविशिष्टत्वं नतु नामवाच्यत्वमिति वक्तुं युक्तम्। * संज्ञासंज्ञिसम्बन्धव्युत्पादके नामोच्चारयितरि च पुरुषे घटादिनामविशिष्टत्वाप्रसिद्धेः। नामवाच्यस्यैवहि नामविशिष्टत्वप्रसिद्धिः। उच्चारयितुश्शब्दोपादानत्वाभावान्नामविशिष्टत्वाप्रसिद्धिः कुम्भोपादानस्य तु ब्रह्मणश्शब्दोपादनत्वयोगाद्रूपविशिष्टत्ववन्नामविशिष्टत्वोपपत्तिरितिचेन्न नभसि घटादिनामविशिष्टत्वाप्रसिद्धेः। नहि घटादि

## श्रीभाष्यम्

**अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेत्यवगम्यते। तस्मात् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोऽपि शब्दस्त-त्पर्यन्तमेव स्वार्थमभिदधाति। अतस्सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्ट-**

## श्रुतप्रकाशिका

नामविशिष्टत्वे कथिते नभसो नामित्वं स्वरसतः प्रतीयते वाच्यत्वेन शब्दसंबन्धिन्येवहि नामित्वप्रतीतिस्वारस्यम्। नच
लक्षणादिवृत्त्याऽपि तत्तन्नामबोध्यत्वं ब्रह्मणस्सम्भवतीति वाच्यम्; लक्षणागौणवृत्तिगोचरयोः कूलमाणवकयोर्गङ्गापदा-
ग्निपदापेक्षया नामित्वाप्रसिद्धेः॥

**ननु** श्येनशब्दस्य यागविशेषं प्रति गौणनामत्वं निर्णीतम्। सत्यम्। तदगत्याऽऽश्रितं प्राणहारित्वगुणसाम्यात्प्रयो-
गान्यथासिद्धेः, '**यथा वै श्येनो निपत्यादत्ते**' इतिहि श्रुतिः। मुख्यस्यैवहि शब्दस्य नामत्वप्रतीतिस्स्वतः प्राप्ता
अत्रतु स्वतःप्राप्तस्य मुख्यत्वस्यापवा(दका)दा)भावान्नतत्प्रहाणं युक्तम्। अतोऽनेन वाक्येन नामवाच्यत्वं शब्दस्वारस्या-
दवगम्यते। एतदैकार्थ्यात् '**नामरूपे व्याकरवाणि**' इत्यत्रापि ब्रह्मपर्यन्तं नामरूपव्याकरणमेव विवक्षितम्॥

**किंच** न तावद्वर्णसृष्टिप्रतिपादनशङ्काऽपि भवितुमर्हति नामशब्दस्य वर्णमात्रपर्यायत्वाभावात्। ब्रह्मव्यतिरिक्तस-
मस्ततत्पदार्थस्वरूपनिष्पादनस्य रूपव्याकरणोक्तिसिद्धत्वेन गगनासाधारणरूपशब्दनिष्पादनस्यापि रूपव्याकरणोक्त्यैव सिद्ध
त्वात्तत्प्रतिपादनवैयर्थ्यं च स्यात्। नच रूपशब्दस्य गोबलीवर्दन्यायेन सङ्कोचः; सङ्कोचकस्य नामरूपव्याकरणनिर्देश-
स्यान्यथासिद्धत्वात् अतो * निष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेव नामव्याकरणं स्यात्। तत्र '**बहुस्याम्**' इत्य-
नेन स्रक्ष्यमाणबहुत्वस्य ब्रह्मविशेषणत्वावगमात्। अस्मिन्वाक्येऽपि व्याकरणस्यानुवेशपूर्वकत्वप्रतिपादनाच्च व्याक्रिय-
माणरूपस्य ब्रह्मविशेषणत्वमवगम्यते। अतो ब्रह्मविशेषणरूपसमभिव्याहारान्नाम्नोऽपि ब्रह्मविशेषणत्वमवगम्यते नाम्नो
विशेषणत्वं वाचकतयैवेत्युपपादितम्। कृत्स्नस्य रूपस्य ब्रह्मविशेषणत्वावगमात् तत्तद्रूपप्रवृत्तिनिमित्तकत्वाच्च नाम्नां ब्रह्म
विशेषणत्वं वाचकतयैवेत्यवगम्यते। स्रक्ष्यमाणबहुत्वविषयस्य बहुशब्दस्योपक्रमे ब्रह्मपर्यन्तत्वेन प्रयोगदर्शनादुपक्रमोक्तब-
हुत्वावान्तरभिदा रूपतत्तद्रूपवाचिनां च नाम्नां ब्रह्मवाचकतया तद्विशेषणत्वमवगम्यते। '**तत्तेज ऐक्षत**' '**ता आप
ऐक्षन्त**' इति प्रकरणे तेजःप्रभृतिशब्दानां परमात्मविषयतया प्रयोगदर्शनाच्च नाम्नां ब्रह्मविशेषणत्वं तद्वाचकतयेत्यवग-
म्यते '**वचसां वाच्यमुत्तमम्**' '**हरिरखिलाभिरुदीर्यते तथैकः**' '**नतास्स सर्ववचसां प्रतिष्ठा यत्र शाश्वती**'
इत्यादिस्मृतिस्वारस्याच्च नामवाच्यत्वमवगम्यते। ततश्च '**नामरूपे व्याकरवाणि**' इति श्रुतिः चिदचिद्विशिष्टस्य ब्रह्म-
णस्तन्नामवाच्यत्वमेव प्रतिपादयतीति सिद्धम्। ऐतदात्म्यशब्दार्थव्याख्यानं निगमयति। **अतइति**। शरीरवाचिशब्दानां
शरीरिपर्यन्तत्वं निगमयति। **तस्मादिति**। तस्मात् उदाहृतवाक्यैश्शरीरशरीरिभावप्रतिपादनात्तस्य तत्तन्नामभात्त्वनि-
र्वाहकत्वाच्चेत्यर्थः॥

**ननु** न तत्पर्यन्ताभिधानमुपपद्यते लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नतया व्युत्पत्तिभङ्गप्रसङ्गात्। ब्रह्मणएक-
त्वेन द्वित्वबहुत्वानुपपत्तेश्चेत्यत्राह—**अतस्सर्वशब्दानामिति**। लोकव्युत्पत्तिशब्दस्यायंभावः नात्र व्युत्पत्तिविरोधः व्युत्प-
न्नार्थापरित्यागात् ब्रह्मणो लौकिकप्रमाणागोचरतया तत्पर्यन्तव्युत्पत्त्यभावः। नत्ववाचकतयेति सोऽन्यथासिद्धः। यथा—
लिङादेरपूर्ववाचित्वं वेदव्युत्पत्त्याऽवगम्य * लोकतो व्युत्पभावपरिहारः कार्यवाक्यार्थवादिभिरुच्यते तद्वत्। तत्तत्पदार्थ-
विशिष्टशब्देन ब्रह्मणोऽपि द्वित्वबहुत्वादिकं सद्वारकमुपपन्नमित्युक्तं भवति॥

### श्रीभाष्यम्

**ब्रह्माभिधायित्वं सिद्धम् 'ऐतदात्म्यमिदं सर्वम्' इति प्रतिज्ञातार्थस्य 'तत्त्वमसि' इति सामानाधिकरण्येन विशेषे उपसंहारः ।**

### श्रुतप्रकाशिका

**तत्त्वमसीत्यस्योपसंहारवाक्यतामाह—इत्यैतदात्म्यमिति । सामानाधिकरण्येन विशेषे उपसंहारइति ।** वैयधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येनोपसंहारः सामान्येन प्रतिज्ञातस्य विशेष उपसंहार इत्यर्थः 'तदैक्षत' इत्यादिना तच्छब्दार्थः प्रतिपन्नः, 'ऐतदात्म्यम्' इत्यादिना जीवस्य ब्रह्मात्मकत्वं प्रतिपन्नम् । 'अनेन जीवेन' इत्यादिना जीववाचिशब्दानां ब्रह्मपर्यन्तत्वं च प्रतिपन्नमिति नात्रोद्देश्योपादेयविभागः । अयंह्यप्राप्तार्थप्रतिपादकवाक्यानां *नतु निगमनवाक्यानां तेषां प्राप्तविषयत्वात्, निगमनंचोक्तार्थप्रतिष्ठार्थत्वादपेक्षितं दृश्यते । तस्मान्निगमनवाक्येऽस्मिन्नुद्देश्योपादेयविभागमुखेन चोद्यस्य नावकाश इति परिहार उक्तो भवति । यत्रत्वप्राप्तार्थपरवाक्ये जगद्ब्रह्मणोस्सामानाधिकरण्यं तत्र ब्रह्मणस्तद्रूपनामभाक्त्वं विधेयं ज्ञातव्यम् ॥

### गूढार्थसङ्ग्रहः

**तत्त्वमसीति सामानाधिकरण्येन विशेषे उपसंहारइति ।** निष्प्रकारकभेदभ्रमायोगेन अपूर्वार्थबोधकत्वं न सम्भवतीति प्रागेव (३३१.पु) उपपादितम् । सत्यादिवाक्यात् तत्पदाच्च ज्ञातार्थज्ञापकत्वेऽपि 'तत्त्वमसि' इत्यस्य 'सिद्धंतु निवर्तकत्वात्' इति न्यायेन प्रामाण्यस्य (पं.पा) विवरणे उक्त्या परैरपि ज्ञातार्थज्ञापकत्वमङ्गीकृतमेव । 'सिद्धंतु निवर्तकत्वात्' इति न्यायः अद्वैतसिद्धिचन्द्रिकयोरुक्तः यः प्राक् (३४१.पु) उपपादितः स न घटत इति पूर्वमेव (३४३.पु) उपपादितम् । तेन परमते प्राक् (३३०.पु) उक्तानुवादत्वमप्रकम्प्यम् ॥

श्वेतकेतुसुवर्चलोपाख्यानेऽपि (२०२.अ.शा.प) (२२४.अ.शा.प) ब्रह्मविद्याऽऽभरणोक्तार्थः न विवक्षितः । इदं चोपाख्यानं आन्ध्रदेवनागरमुद्रितकोशेषु लिखितेषुच्च बहुषु नोपलभ्यते, नीलकण्ठेनापि न व्याख्यातम् । मुद्रितकोशद्वये उपलभ्यते । सुवर्चला सुकृतवशात् कांश्चिदर्थान् विज्ञाय अन्धायानन्धाय च देहीति पितरं देवलं पप्रच्छ । स देवलः मुनिपुत्रान् बहून् आनाय्य सुवर्चलां पृच्छेत्युवाच । ततस्सुवर्चला 'यद्यस्ति समितौ विप्रो ह्यन्धोऽनन्धस्समे वरः ।' इत्यपृच्छत् । मुनिपुत्राः उत्तरं दातुमशक्ताः यथाऽऽगतं ययुः । एतद्वृत्तान्तं श्रुत्वा समागतश्श्वेतकेतुः 'अन्धोऽहमत्र तत्त्वंहि तथा मन्ये च सर्वदा । विशालनयनं विद्धि तथा मां हीनसंशयम् ।' इत्युपक्रम्य विषयसंबद्धचक्षुराद्यभावात् अन्धत्वमुपपाद्य 'लोकदृष्ट्या करोमीह नित्यनैमित्तिकादिकम् । आत्मदृष्ट्या च तत्सर्वं विलिप्यामि च नित्यशः ॥ अविद्यया तरन्मृत्युं विद्यया तं तथाऽमृतम् ॥' इत्यभिधाय ततो विवाहानन्तरं 'यानि चोक्तानि वेदेषु तत्सर्वं कुरुशोभने । मया सह यथा न्यायं सह धर्मचरी मम ॥ अहमित्येव भावेन स्थितोऽहं त्वं तथैव च । तस्मात्कर्माणि कुर्वीथाः कुर्यान्ते च ततःपरम् ॥ न ममेति च भावेन ज्ञानाग्निनिलयेन च । अनन्तरं तथा कुर्यात्तानि कर्माणि भस्मसात् ॥' इत्यवादीत् । अत्र नममेति च भावेन इत्यनेन 'आत्मदृष्ट्या च भावेन विलिप्यामि च नित्यशः' इति प्रागुक्तार्थो विशदीकृतः । तेन 'अविद्ययातरन्मृत्युम्' इति पूर्वमुक्तौ मूलभूतायां 'अविद्यया मृत्युं तीर्त्वा' इति श्रुतौ अविद्याशब्दार्थः गीतोक्तफलसङ्गत्यागपूर्वककर्मैवेति निर्धारितं भवति । उपसंहारे च 'परमात्मनि गोविन्दे वासुदेवे महात्मनि । समाधाय च कर्माणि तन्मयत्वेन भावितः ॥ कालेन महता राजन् प्राप्नोति परमां गतिम् । एतत्ते कथितं राजन् यस्मात्वं परिपृच्छसि ॥ गार्हस्थ्यं च समास्थाय गतौ जायापती परम् ।' इत्यत्र 'तत्कुरुष्व मदर्पणम्' इति गीतोक्तार्थो वक्ष्यते ॥

## गूढार्थसङ्ग्रहः

'ततःकदाचिद्भर्तारं श्वेतकेतुं सुवर्चला। पप्रच्छ कोभवानत्र ब्रूहिमे तद्द्विजोत्तम ॥ द्विजोत्तमेति मामुक्त्वा पुनः कमनुपृच्छसि।' भीष्मः—'सा तमाह महात्मानं पृच्छामि हृदिशायिनम्। तच्छ्रुत्वा प्रत्युवाचैनां सन वक्ष्यति भामिनि नामगोत्रसमायुक्तमात्मानं मन्यसे यदि। तन्मिथ्यागोत्रसद्भावे वर्तते देहबन्धनम् ॥ अहमित्येव भावोऽत्र त्वयिचापि समाहितः। त्वमप्यहमहं सर्वमहमित्येव वर्तते ॥ नात्र तत्परमार्थं वै किमर्थमनुपृच्छसि।' इत्युक्तम्। अत्र द्विजोत्तम शब्दः नामगोत्रसमायुक्तपरः। सचात्मनि देहसम्बन्धनिबन्धनः अहमित्येवात्मभावः त्वमप्यहमहमप्यहं सर्वमहमेव अहं-शब्दार्थस्य परिशुद्धात्मस्वरूपस्य नामगोत्रसम्बन्धस्य कर्ममूलतया सार्वदिकत्वाभावेन अपरिणामित्वरूपं पारमार्थ्यं न सम्भवतीति विवक्षितम् ॥

अत्र 'मनसैव समायुक्तमात्मानं मन्यसे यदि।' इति परसम्मतपाठ एव नास्ति। अतः 'अहंशब्दो मनश्शबलितात्मस्वरूपे प्रवर्तते। मनश्शबलितात्मस्वरूपं च मिथ्या ब्राह्मणकुलोत्पन्ने देहोपाधिके आत्मनि ब्राह्मण्यमिव' इति द्विजोत्तमशब्दार्थं दृष्टान्तीकृत्य परोक्तार्थः न घटते। द्विजोत्तमशब्दार्थस्यैवेदानीं निर्णेयत्वात्। एतेन चिदचिद्ग्रन्थिरहङ्कार इति परसम्मतार्थो नात्र विवक्षितः ॥

एवं नामरूपसमायुक्तस्याहंशब्दार्थत्वाभावे ज्ञाननाशस्स्यादिति सुवर्चलाप्रश्ने 'कर्माकरणे वर्णसङ्करो भवति। श्रेष्ठजनानुसारित्वाल्लोकस्य' इत्युपक्रम्य 'तदनिष्टं हरेर्भद्रे धातुरस्य महात्मनः। परमेश्वरसङ्क्रीडा लोकसृष्टिरियं शुभे ॥ यावत्पांसव उद्दिष्टाः तावत्योऽस्य विभूतयः। तावत्यश्चैव मायास्तु तावत्योऽस्याश्च शक्तयः ॥ एवं सुगह्वरे युक्तो यत्र मे तद्भवाभवम्। छित्वा ज्ञानासिना गच्छेत् स विद्वान् सच मे प्रियः ॥ सोऽहमेव न सन्देहः प्रतिज्ञा इति तस्यवै। येमूढास्ते दुरात्मानो धर्मसङ्करकारकाः। मर्यादाभेदका नीचा नरके यान्ति जन्तवः ॥' इति श्वेतकेतुना प्रतिवचनमुक्तम्। अत्र सृष्टेः क्रीडार्थत्ववर्णनेन 'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमितिचापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥' इति वचनं गौडपादकारिकारूपमेव न माण्डूक्यश्रुतिरूपमिति निर्णीयते। क्रीडा च क्रियाकालिकानन्दः 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रं लीलात्वक्रीडात्वग्राहकानि बहूनि महर्षिवचनानि च अतएव सङ्गच्छन्ते। लीलात्वग्राहकप्रमाणानां बहूनां सत्त्वेन स्वभावत्वग्राहकमहर्षिवचनानामभावेन 'स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः। देवस्यैष महिमातु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥' इति सृष्टेस्स्वभावत्वप्रतिक्षेपपरसर्वसम्मत श्वेताश्वतरश्रुतिसद्भावेन च इत्थमेवार्थनिर्णयः ॥

एतेन सृष्टिरविद्यामूलेति पक्षः नात्र संमतइति सिद्धम्। अतएव 'न कर्माविभागादितिचेन्नानादित्वादुपपद्यतेचाप्युपलभ्यते च' इति सूत्रमपि सङ्गतम्। सृष्टेः कर्ममूलकत्वेन परसंमताविद्यामूलकत्वाभावात्। अत्र 'तावत्योऽस्य विभूतयः' इत्यनेन 'देवस्यैष महिमा' इति श्रुतौ महिमशब्दार्थ उक्तः। एतेन स्रष्टुः राजत्वं दर्शितं भवति। अत्र 'शक्तय' इत्यनेन 'इन्द्रो मायाभिः' इति श्रुतौ मायाशब्दार्थोऽप्यभिहितो भवति। हरिशब्दप्रयोगेण हरिशब्दघटित तत्प्रकरणविवरणरूपत्वं सूचितम्। अत्र 'गार्हस्थ्यं च समास्थाय गतौ जायापती परम्।' इत्यत्र गृहस्थस्यैव मोक्षकथनेन निर्विशेषविद्याधिकारभूतसन्यासाभावेन परसंमतनिर्विशेषं सद्विद्यायां न विवक्षितमिति निर्धारणं सम्भवत्येव ॥

अनन्तरं शब्दार्थसम्बन्धप्रश्ने शब्दार्थयोर्वाच्यवाचकभाव एव संबन्ध इत्यभिधाय अहंशब्दस्य द्विजोत्तमशब्दार्थ-नामगोत्रसमायुक्तवाचकत्वं नास्ति। आकाशजगतोस्संयोगसत्त्वेऽपि यथा न वाच्यवाचकभावः तद्वत् शरीरसम्बन्धस्य जीवे सत्त्वेऽपि परिशुद्धजीवस्य द्विजोत्तमादिशब्दवाच्यत्वं न सम्भवतीत्युत्तरमभिहितम् ॥ अनन्तरं सदाऽहङ्कारशब्दोऽयं

## श्रीभाष्यम्

**अतो निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः केवलभेदवादिनश्च वैयधिकरण्येन सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशास्सर्वे परित्यक्तास्स्युः ।**

## श्रुतप्रकाशिका

एवं * भेदश्रुतिघटकश्रुत्यविरोधार्थं तत्त्वमसीति सामानाधिकरण्यं शरीरशरीरिभावेनोपपादितम् । शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधानं जातिगुणपदयोर्व्यक्तिगुणिपर्यन्ताभिधानवत्सम्भवतीत्याकृत्यधिकरणन्यायेनोपपिपादयिषुः शरीरवाचिशब्दानामाकृत्यधिकरणन्यायविषयतानिरूपणरूपस्य 'अंशो नानाव्यपदेशात्' इत्यधिकरणस्य पूर्वपक्षभूतेष्वर्थेषु दूषणमाह—**अतइति** । अतः जगद्ब्रह्मणोश्श्रुतिभिश्शरीरशरीरिभावप्रतिपादनात्तस्य च तत्तन्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः ।

भेदाभेदवादिशब्देनौपाधिकस्वाभाविकभेदाभेदवादिनोर्द्वयोरपि * तन्त्रेणोक्तिः । केवलभेदशब्देन स्वपर्यवसितभेदो विवक्षितः । तद्वादिनश्च वैशेषिकादयः । वैयधिकरण्यंचास्यैष आत्मेत्येवंरूपत्वादुपदेशस्य ब्रह्मात्मभावोपदेशपरित्यागः

## गूढार्थसङ्ग्रहः

व्यक्तमात्मनि संश्रितः । न वाचस्तत्र वर्तन्त इति मिथ्या भविष्यति ॥ अहंशब्दोह्यहंभावो नात्मभावे शुभव्रते । नवर्तन्ते परेऽचिन्त्ये वाचस्सगुणलक्षणाः ॥ अहं गात्रैकतश्श्यामा भवानपि तथैव च । तन्मे ब्रूहि यथान्यायमेवं चेन्मुनिसत्तम ॥ मृण्मयेहि घटे भावः तादृग्भाव इहेष्यते । अयंभावःपरेऽचिन्त्ये ह्यात्मभावो यथा च तत् ॥ अहंत्वयेतदित्येव परे सङ्कल्पना मया । तस्माद्वाचो न वर्तन्त इति नैव विरुद्ध्यते ॥ यथाऽऽकाशगतं विश्वं संसक्तमिव लक्ष्यते । संसर्गेसतिसम्बन्धात्तद्विकारं भविष्यति ॥ आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् । तदर्थे कल्पिताह्येते तत्सत्यो विष्णुरेव च । एतत्प्रपञ्चमखिलं तस्मिन्सर्वं प्रतिष्ठितम् ॥ नच स्त्री न पुमांश्चैव तथैव न नपुंसकः । केवलज्ञानमात्रं तत् तस्मिन्सर्वं प्रतिष्ठितम् ॥' इत्याद्युक्तम् । अत्र 'अहं गात्रैकतश्श्यामा' 'नच स्त्री न पुमांश्चैव' इत्युत्तरवाक्यानुसारेण द्विजोत्तमादिशब्दसमानाधिकरणाहमितिशब्दस्यैव विचार इति स्फुटम् । नामरूपविनिर्मुक्तस्यापि 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते' (प्र.उ.६.५) इत्यादिश्रुत्यनुसारेण शब्दवाच्यत्वं नैव वर्तत इति न नियन्तुं शक्यम् ॥

एवं च 'प्रत्यस्तमितभेदम्' इत्यादौ 'ब्रह्मसंज्ञितम्' इतिशब्दोऽपि सङ्गच्छते । अतः परिशुद्धजीवस्य द्विजोत्तमादिशब्दवाच्यत्वं नैव वर्तते इत्येव तात्पर्यम् । 'अहंशब्दोह्यहंभावे' इत्यत्र शरीरसंयुक्तजीवे 'द्विजोत्तमोऽहम्' इत्यादिप्रतीत्या विशेषणसम्बन्धेन प्रयुज्यते नतु परिशुद्धजीवतात्पर्येण इत्येव पूर्वापरानुसारेणार्थः । 'मृन्मयेहि घटे भाव' इत्येव पाठः । मृद्विकारे घटे विकारभेदेऽपि धर्म्यभेदेन यथा शब्दः तद्वत् तत्तच्छरीरसंयोगादिभेदेऽपि धर्म्यैक्येन शब्दः नामरूपविनिर्मुक्तस्यतु नैवं शब्दः प्रवर्तते । आकाशे स्थितस्यापि जगतः आकाशविकारत्वं नास्ति आकाशमात्रे प्रपञ्चस्य न स्थितिः आकाशस्याधारभूते परमात्मन्येव । अतः आकाशमात्रे स्थितिः कल्पितैवेत्युत्तरग्रन्थार्थः । विष्णुरेवाधारभूतस्सत्यः आकाशस्यापि साक्षात्सत्तासम्पादकत्वं नास्ति परमात्मन एव साक्षात्सत्तासम्पादकत्वमित्येवोत्तरग्रन्थार्थः न प्रपञ्चस्य मिथ्यात्वम् । घटाभास इति पाठस्यैवाभावात् । 'नच स्त्री न पुमांश्चैव' इत्यत्र 'नैव स्त्री न पुमानेष नचैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥' (श्वे.४) इति श्रुतिःप्रत्यभिज्ञापिता । 'प्राणाधिपस्सञ्चरति स्वकर्मभिः' इति तत्पूर्वश्रुत्या कर्ममूल एव देहसम्बन्धः कर्मफलभोगार्थः नतु परसंमताविद्यामूलक इति स्फुटम् । अतः अनेकलिखितमुद्रितकोशानुपलब्धकतिपयकोशमात्रोपलब्धश्वेतकेतुसुवर्चलोपाख्यानपर्यालोचनायामपि न ब्रह्मविद्याऽऽभरणोक्तार्थः श्रुतौ विवक्षित इति सिद्धम् ॥

श्रीभाष्यम्

**एकस्मिन्वस्तुनि कस्य तादात्म्यमुपदिश्यते तस्यैवेतिचेत् तत्स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेयमस्ति किंचित्। कल्पितभेदनिरसनमितिचेत् तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तम्। सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत्। भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्ता जीवगतदोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परि-**

श्रुतप्रकाशिका

कथमितिशङ्कायां मृषावादिपक्षे तदनुपपत्तिं वक्तुमाह—**एकस्मिन्निति**। शङ्कते। **तस्यैवेति**। प्रतिवक्ति। **तदिति**। * स्ववाक्येन 'सत्यंज्ञानम्' इत्यादिना स्ववाक्येन स्वरूपपरवाक्येन प्रतिपन्नादधिकार्थप्रतिपत्तिरस्ति नवा प्रथमे सविशेषत्वं द्वितीये तादात्म्योपदेशवैयर्थ्यमिति भावः। पुनश्शङ्कते। **कल्पितेति**। दूषयति **तदिति**। प्रकारद्वयोपस्थापकत्वादिति भावः॥

**सामानाधिकरण्यतादात्म्येति**। सामानाधिकरण्येन तादात्म्योपदेशावसेयामित्यर्थः। न केवलमसाधकत्वं विरुद्धमपीत्याह—**सामानाधिकरण्यंत्विति**। औपाधिकभेदाभेदवादे तदनुपपत्तिमाह—**भेदाभेदेति**। क्लेशकर्माद्यस्पृष्टस्सार्वज्ञ्यादिगुणकोहीश्वरः अतः ईश्वरस्य निर्दोषस्य तदनर्हानीश्वरतादात्म्यव्याघातादीश्वरतादात्म्योपदेशो विरुद्धइत्यर्थः। परित्यक्तास्स्युः * परित्यागः फलित इत्यर्थः। स्वाभाविकभेदाभेदपक्षे तदनुपपत्तिमाह—**स्वाभाविकेति**। **गुणवद्दोषाश्च स्वाभाविका भवेयुरिति**। ब्रह्मण ईश्वरांशेन सार्वज्ञ्यादिगुणा इव जीवांशेन दोषाश्च स्वाभाविका भवेयुः—

**अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते। अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः॥**

इति संसारप्रवाहानन्त्येन दोषा नित्यास्स्युरित्यर्थः॥ * यद्वा तत्तद्दोषसंबन्धार्हत्वं स्वाभाविकं स्यादित्यर्थः। ततःकिमित्यत्राह—**इतिनिर्दोषेति**। * सद्ब्रह्मात्मादिशब्दानां नारायण(शब्द)पर्यवसायित्वेनेश्वरातिरिक्तवस्तुनिषेधादिभिरीश्वरस्यैव ब्रह्मत्वं सिद्धं कृत्वा '**निरवद्यं निरञ्जनम्**' इत्यादिश्रुत्युक्तं ब्रह्मणो निर्दोषत्वंचाभिप्रेत्य निर्दोषब्रह्मतादात्म्योपदेशविरोध उक्तः। * निर्दोषश्रुतिविरोधःफलितः। तर्हि निर्दोषश्रुतिविरोध इति वक्तव्ये किमर्थं निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध इत्यु-

**गूढार्थसंग्रहः**

अपृथक्सिद्धप्रकारवाचकत्वेन लोके संमतानां प्रकारिपर्यन्तत्वं ब्राह्मणादिशब्दानामपि तादृशत्वं च अनुपदमेव निरूपयिष्यते। **तत्स्ववाक्येनैवावगतमिति**। सत्यादिवाक्येन तत्पदेनचेत्यर्थः। विवरणोक्तप्रयोजनं शङ्कते— **कल्पितभेदेनेति**। **तत्तु नसामानाधिकरण्यतादात्म्योपदेशावसेयमित्यादि**। विवरणोक्तार्थस्य अद्वैतसिद्ध्यादौ साधनप्रकारः प्राक् (३४१.पु) उपन्यस्तः न घटत इति प्रागेव (३४३.पु) निरूपितम्॥

**विरोधमेवावहेदिति**। सोऽयं देवदत्त इत्यत्रापि धर्मप्रकारकबोध एव नतु धर्मांप्रकारकबोध इति प्रागेव—(३३०.पु) निरूपितम्। अतश्च निष्प्रकारकबोधस्य समानाधिकरणवाक्येषु क्वापि साधनासम्भवेन जडे आवरणकृत्याभावात् निर्विशेषे स्वयंप्रकाश एवावरणमिति अज्ञातनिर्विशेषबोधकत्वेनैव वेदस्योपनिषदश्च प्रामाण्यमेषितव्यम्, इति 'उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्तः।' 'सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद्वाचकः वेदश्चायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः' (सं.शा) इति उद्घोषो निरवकाश इति भावः॥

श्रीभाष्यम्

त्यक्तास्स्युः । स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणस्स्वत एव जीवभावाभ्युपगमात् गुणवद्दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव केवलभेदवादिनांचात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशा न सम्भवन्तीति सर्व वेदान्तपरित्यागस्स्यात् । निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मात्मभावोपदेशास्सर्वे सम्यगुपपादिता भवन्ति । जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन गौरश्वो मनुष्यो देवोजातःपुरुषः कर्मभिरिति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम् ।

श्रुतप्रकाशिका

क्तम् । उच्यते–हेयार्नर्हतादात्म्यंहि पुरुषार्थः स्वरूपैक्यं च ब्रह्मणो हेयार्हत्वाद्धेयार्हब्रह्मतादात्म्यधीर्न*हेयापहा । तत्तादात्म्यानुभवोऽप्यपुरुषार्थश्चेत्युपायत्वप्राप्यत्वविरोधात्तादात्म्योपदेशपरवाक्यस्य प्रयोजनपर्यवसानं न स्यात् । नह्यसिना च्छिद्यमानस्य कालाग्निना दह्यमानस्य च पुरुषस्योपासनं उपासकानर्थं परिहरति नच तत्तादात्म्यधीः कस्यचित्पुरुषार्थः तद्वदिति ज्ञापनाय तादात्म्योपदेशो विरुद्ध इत्युक्तम् । स्वनिष्ठभेदपक्षं दूषयति । केवलेति । अत्यन्तभिन्नयोः प्रकारप्रकारिभावरहितयोरित्यर्थः । केनापि प्रकारेण विशेष्यांशतोऽप्यैक्यासिद्धिरित्यर्थः ॥

एवं पूर्वपक्षचतुष्टयेऽप्यनुपपत्तिमुक्त्वा स्वपक्षे वैषम्यमाह–**निखिलेति** । सम्यक्छब्देन मुख्यत्वं विवक्षितम् । कथं मुख्यत्वमित्यत्राह—**जातिगुणयोरिति** । * दण्डादिव्यावृत्त्यर्थमाह–**शरीरभावेन विशेषणत्वेनेति** । कथं मुख्यमेव दृष्टचरमित्युच्यते अमुख्यत्वेऽपिहि प्रयोगस्सम्भवति अमुख्यत्वं च शरीरस्य द्रव्यत्वात् नहि दण्डकुण्डलादिशब्दानां

गूढार्थसंग्रहः

स्वरूपपरिणामवादिमतं पर्यालोचयति—**स्वाभाविकभेदाभेदवादेऽपीति** । **लोकवेदयोर्मुख्यमेव दृष्टचरमिति** अत्र 'गौरश्वो मनुष्यो देवो जातः' इत्युपक्रम्य 'मनुष्यःपुरुषष्षण्डो योषिदात्मा जातः इति सामानाधिकरण्यम्' इति उत्तरवाक्ये 'पुरुषष्षण्डो योषित्' इति शब्दत्रयप्रयोगेण 'प्राणाधिपस्सञ्चरति स्वकर्मभिः' 'नैव स्त्री नपुमानेष नचैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥' इति वाक्यमत्र विवक्षितमिति प्रतीयते । 'पुमान्न देवो न नरो न पशुर्नच पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥' इत्यादि (वि.पु) वचनानि अत्रावसेयानि । 'तद्य इह रमणीयचरणाः रमणीयां योऽनिमापद्येरन्' 'कृतात्ययेऽनुशयवान्' इति श्रुतिसूत्रादिकमिह भाव्यम् । अत्र जीवस्य शरीरसंबन्धः कर्ममूलक इति निरूपणेन मनुष्यादिशब्दाः अध्यासनिबन्धनाः इत्यर्थो न प्रमाणानुगुण इति सिद्ध्यति ॥

अत्र 'शरीराकृतिभेदास्तु' इत्यत्र आकृतिशब्दप्रयोगेण 'पुमान् देवः' इत्यादिशब्दाः आकृत्यधिकरणनयेन जीवपरा इति सूच्यते एतत्तात्पर्येण **जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन** इत्युक्तिः । तत्र जातिगुणयोः तदाश्रययोश्च भेदाभेद एव कुमारिलादिसम्मतः । जाताविव गवादिपदानां शक्तिरिति सिद्धान्तः पूर्वमीमांसकानां सर्वेषां संमतः । जातिमात्रे शक्तावपि व्यक्तेर्जात्यभेदसत्त्वेन भेदाभेदस्य कुमारिलसम्मतत्वेन अभेदमादाय 'अयं गौः' 'अयं शुक्लः' इत्यादिप्रयोगः लक्षणां विनैव मुख्यवृत्त्या न्यायसुधायामुपपादितः । एतत्पक्षे दोषकथनपूर्वकं भाट्टकौस्तुभे खण्डदेवेन लक्षणयैव व्यक्तिबोध उपपादितः । प्राक् (१५४.पु) उदाहृतवार्तिक एव शरीरशरीरिणोः उभ-

### श्रीभाष्यम्

**जातिगुणयोरपि द्रव्यप्रकारत्वमेव खण्डो गौःशुक्लःपट इति सामानाधिकरण्यनिबन्ध-
नम्। मनुष्यत्वादिविशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वात् मनुष्यःपुरुषष्षण्डो
योषिदात्मा जात इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकर-
ण्यनिबन्धनं न परस्परव्यावृत्ता जात्यादयः। स्वनिष्ठानामेवहि द्रव्याणां कादाचित् क्वचि-
द्द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः दण्डी कुण्डलीतिवत्। नपृथक्प्रतिपत्तिस्थित्यन-
र्हाणां द्रव्याणाम्। तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव। यदि गौरश्वो मनुष्यो
देवःपुरुषो योषित् षण्डआत्मा कर्मभिर्जात इत्यत्र खडो मुण्डो गौः, शुक्लः पटः कृष्णःपट
इति जातिगुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते तर्हि जातिव्यक्त्योरिवप्रकारप्र-
कारिणोश्शरीरात्मनोरपि नियमेन सहप्रतिपत्तिस्स्यात्। नचैवं दृश्यते। नहि नियमेन गोत्वा
दिवदात्माश्रयतयैवात्मनासह मनुष्यादिशरीरं पश्यन्ति। अतो मनुष्य आत्मेति सामाना-
धिकरण्यं लाक्षणिकमेव। नैतदेवम्-**

### श्रुतप्रकाशिका

विशेषणत्वं वा मत्वर्थीयप्रत्यय- जातिगुणयोरन्यतरत्वेसति विशेषणत्वं तस्माद‍द्रव्यत्वेसति
विशेष्यपर्यन्ताभिधानं दृष्टम्। तस्माददद्रव्यत्वेसति विशेषणत्वं जातिगुणयोरन्यतरत्वेसति विशेषणत्वं वा मत्वर्थीयप्रत्यय-
निरपेक्षसामानाधिकरण्ये प्रयोजकमिति शरीरवाचिशब्दस्य विशेष्यपर्यन्ताभिधानममुख्यमित्यत्राह—**जातिगुणयोरपीति**।
एवकारेण जातिगुणयोरन्यतरत्वादेः प्रयोजकत्वव्युदासः। ततःकिमित्यत्राह—**मनुष्यत्वादीति**। अत्र प्रकारशब्दो विशे-
षणमात्रपरः। एवकारेण दण्डकुण्डलादिव्यावृत्तिरभिप्रेता। **सामानाधिकरण्यमनुगतमितीति**। सामानाधिकरण्यस्यानु-
गतत्वादनुगतमेव तत्प्रयोजकं वाच्यमित्यर्थः॥

जातित्वगुणत्वादेः प्रयोजकत्वं किं न स्यादित्यत आह—**न परस्परेति**। परस्परव्यावृत्ताः परस्परानुयायिनः जात्या-
दयः जातित्वादयः। अयमभिप्रायः गङ्गायां घोष इत्यादिषु प्रवाहकूलयोर्गङ्गापदप्रवृत्तिनिमित्तभूतस्यानुयायिनः आकार-
स्यादर्शनात्तत्र लाक्षणिकत्वं युक्तम्। अत्रतु यत्र यत्र विशेष्यपर्यन्ताभिधायित्वेन प्रयोगो दृष्टचरः * तत्र तत्र प्रयोगे-
ष्वनुवृत्ताकारदर्शनादनुगताकारप्रयोजकत्वाश्रयणेन क्वचिल्लाक्षणिकत्वं वक्तुमयुक्तम्। अन्यथा अद्रव्यत्वेसति विशेष-
णत्वं विशेष्यपर्यन्ताभिधाने प्रयोजकमित्यपि न वक्तव्यम्; जातित्वं गुणत्वं वा प्रयोजकमस्तु अन्यल्लाक्षणिकं स्यात्। नच
तथा भवदभिमतम्; जातिगुणवाचिनामुभयेषामपिहि शब्दानां विशेष्यपर्यवसायित्वेन प्रयोगदर्शनात्, तस्माच्छरीरवाचिश-
ब्दानामपि विशेष्यपर्यन्ताभिधायित्वेन प्रयोगदर्शनात्प्रयोगेषु सर्वेष्वनुवृत्तैकाकारदर्शनाच्चाननुवृत्ताकारान्तरस्य प्रयोजकत्व
कल्पनेनान्यतरस्य अमुख्यत्वकल्पनाया अयुक्तत्वादिदमपि सामानाधिकरण्यं जातिगुणवाचिशब्दानामिव मुख्यमेवेति॥

**ननु** प्रकारभूतद्रव्यवाचिपदानां मत्वर्थीयप्रत्ययनिरपेक्षविशेष्यपर्यन्ताभिधायित्वं दण्डादिशब्दानां तथात्वादर्श-
नादनुपपन्नमिति शङ्कायां प्रकारतयैवेति पूर्वमभितं विवृणोति। **स्वनिष्ठानामेवहीति**। अपृथक्सिद्धप्रकारवाचित्वमेव
मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकमित्यर्थः। यत्र यत्र नियतप्रकारत्वं तत्र तत्र सहोपलम्भनियमो दृष्टः।
शरीरेतु सहोपलम्भनियमाभावादपृथक्सिद्धविशेषणत्वमुनुपपन्नम्। तस्मात्सामानाधिकरण्यं लाक्षणिकमित्यभिप्रायेण चोद-
यति **यदि गौरश्वइति**। पक्षे व्यापकविपर्ययं दर्शयति। **नचैवमिति**। तद्विवृणोति। **नहीति**। ततःकिमित्यत्राह—
**अतइति**। परिहरति **नैतदेवमिति**। सहोपलम्भनियमस्य नियतप्रकारत्वप्रयोजकत्वे दूषणं वक्ष्यन् प्रथमं शरीरस्यापृथ-

## श्रीभाष्यम्

**मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वं तत्प्रकारत्वं च जात्यादितुल्यम् । आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते । आत्मैकप्रयोजनत्वं च तत्कर्मफलभोगार्थतयैव सद्भावात् । तत्प्रकारत्वमपि देवो मनुष्य इत्यात्मविशेषणतयैव प्रतीतेः । एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः एतत्स्वभावविरहादेव दण्डकुण्डलादीनां विशेषणत्वे दण्डी कुण्डलीति मत्वर्थीयप्रत्ययः । देवमनुष्यादिपिण्डानामात्मैकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावाद्देवो मनुष्यआत्मेति लोकवेदयोस्सामानाधिकरण्येन व्यवहारः । जातिव्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात् आत्मनस्त्वचाक्षुषत्वाच्चक्षुषा शरीरग्रहणवेळायामात्मा न गृह्यते पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मावोचः * जात्यादिवत्तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैश्शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात्**

## श्रुतप्रकाशिका

ग्विशेषणत्वं संप्रतिपन्नमिति दर्शयति । **मनुष्यादीति** । आत्मैकाश्रयत्वतदेकार्थत्वयो*रन्यतरान्वितं प्रकारत्वमपृथक्सिद्ध विशेषणत्वमित्यर्थः ॥

*यद्वा प्रकारत्वशब्देन प्रकारतयैव प्रतीतिर्विवक्षिता, उत्तरत्र प्रकारत्वविवरणे आत्मविशेषणतयैव प्रतीतेरिति वक्ष्यमाणत्वात् तेन विशेष्यप्रतिपत्तिसम्भवे दण्डकुण्डलादिवत्पृथगवस्थितत्वेन प्रतिपन्नत्वाभावः फलितः । तदेकाश्रयत्वं तदेकप्रयोजनत्वं विशेष्यप्रतीतिसम्भवे पृथक्स्थितत्वेनाप्रतीतत्वं चापृथक्सिद्धविशेषणत्वे प्रयोजकमित्यर्थः । तेषु त्रिष्वात्मैकाश्रयत्वं पक्षे दर्शयति । **आत्मैकाश्रयत्वमिति** । तदेकप्रयोजनत्वं दर्शयति । **आत्मैकेति** । नच दुःखैकफलनारकशरीरेष्वव्याप्तिः दुःखस्याप्रयोजनत्वेऽपि तेषां पापक्षयरूपप्रयोजनहेतुत्वात् । नच पत्यादिप्रीतिहेतुषु * भृत्यादिदेहेषु तदेकप्रयोजनत्वादतिव्याप्तिश्शङ्कनीया तत्प्रयोजनसाधनत्वेन विना स्थित्यभावस्य विवक्षितत्वात् क्रयविक्रयाद्यर्हस्य तदेकप्रयोजनत्वंहि न सिद्ध्यति तत्कर्मफलभोगार्थतयैव सद्भावादितिह्युक्तम् । अतस्तदेव प्रयोजनशब्दस्याप्ययमेवार्थः ॥

अथ तत्प्रकारत्वं दर्शयति । **तत्प्रकारत्वमपीति** । विशेष्यप्रतीतिसिद्धौ तत्पृथक्सिद्धत्वेन प्रतीत्यभावस्तत्प्रकारत्व शब्देन विवक्षित इत्यर्थः । * पञ्चमीनिर्देश औपचारिकः यद्वा तत एव तत्प्रकारत्वेनोक्तमित्यर्थः । अथवा पृथक्स्थितत्वप्रतीत्यभावे प्रतीतिविशेषो हेतुतयोदाह्रियते । एतत्तदेकाश्रयत्वादित्रितयं सपक्षेऽपि दर्शयति । **एतदेवहीति** । विपक्ष व्यावृत्तत्वं दर्शयति । **एतत्स्वभावेति** । ईदृशप्रकारत्वमेव पक्षे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुरित्याह—**देवमनुष्यादीति** । सहोपलम्भनियमस्य अन्यथासिद्धिमाह—**जातिव्यक्त्योरिति** । सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वप्रयुक्तः नत्वपृथक्सिद्धविशेषणत्वप्रयुक्त इत्यर्थः चाक्षुषत्वं प्रदर्शनार्थं उपाधेरपक्षत्वं दर्शयति । **आत्मनस्त्विति** । एकसामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति तदभावान्नापृथक्सिद्धविशेषणत्वमित्याशङ्कयाह—**पृथग्ग्रहणेति** । स्वरूपं धर्मः प्रकारत्वमेव धर्मो यस्य तत्प्रकारतैकस्वरूपम् । एकशब्देन कदाचिदप्रारत्वस्य व्युदासः ततश्च दण्डकुण्डलादिवैषम्यम् । किमपृथक्सिद्धविशेषणत्वे * प्रयोजकान्तराभावादेकसामग्रीवेद्यत्वं प्रयोजकमुच्यते उतास्यानुयायित्वादिदमपि प्रयोजकमुच्यत इति विकल्पमभिप्रेत्य प्रथमं शिरःप्रतिवदति । **जात्यादीति** । प्रकारतैकस्वभावत्वावगमादित्यत्र स्वभावशब्देनैव प्रकारत्वनियमे सिद्धेऽप्येकशब्दप्रयोग*एकसामग्रीवेद्यतास्वभावत्वव्यावृत्त्यर्थः । यदि तदेकाश्रयत्वादिरेवापृथग्विशेषणत्वे

## श्रीभाष्यम्

*** सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम्। यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारैकस्वभावमपि न तथा गृह्यते आत्मग्रहणे चक्षुषस्सामर्थ्याभावात्। नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः। तत्प्रकारतैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम्।**

## श्रुतप्रकाशिका

कथं तर्हि जात्यादौ सहोपलम्भनियम इत्यत्राह—**सहोपलम्भेति**। अनेन पूर्वं चाक्षुषत्वोक्तिरेकसामग्रीवेद्यत्व प्रयोजकः प्रदर्शनार्थेति स्पष्टम् ॥

अथ पूर्वोक्त*विकल्पे द्वितीयाशिरसिचापृथग्विशेषणत्वप्रयोजकतयोच्यमानमिदं किं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोगविषयेषु सर्वेष्वनुयायि उत भवदभिमतजातिगुणेष्वेवानुयायीति विकल्पोऽभिप्रेतः। तत्र न प्रथमः देहात्मनोरेकसामग्रीवेद्यत्वाभावात्। ततश्चा*नुगतप्रयोजकसद्भावादपृथग्विशेषणत्वस्याप्यनुगतत्वेन सामानाधिकरण्यप्रयोगाणां सर्वेषां मुख्यत्वे सम्भवत्यप्यननुगतमाकारं प्रयोजकत्वेनाङ्गीकृत्य अपृथग्विशेषणत्वमपि सङ्कुचितं कृत्वा तद्द्वारा सामानाधिकरण्यप्रयोगाणाममुख्यत्वाश्रयणमनुपपन्नमित्यर्थसिद्धम्। प्रकारतैकस्वभावत्वावगमादित्यत्रैकशब्देन एकसामग्रीवेद्यतास्वभावत्वस्य व्युदस्तत्वात् ॥

अथ पराभिमतस्थलानुयायित्वरूपे * द्वितीयशिरसि गन्धादौ व्यभिचारेण दूषणं वदन्नेकसामग्रीवेद्यत्वस्यापृथग्विशेषणत्वाव्यापकत्वमाह—**यथेति**। नह्यचाक्षुषस्यापि गन्धस्य पृथिवीनियतप्रकारत्वहानिः। एवंशब्दो यथाशब्दप्रतिनिर्देशरूपः। कस्मादग्रहणमित्यत्राह—**आत्मग्रहणइति**। व्यापकत्वाभावफलमाह—**नैतावतेति**। एतावता चक्षुषा ग्रहणाभावमात्रात् न तत्प्रकारत्वस्वभावहानिः एकसामग्रीवेद्यत्वस्य अपृथग्विशेषणताव्यापकत्वाभावात्तदेकाश्रयत्वादिप्रयोजकान्तरसद्भावाच्चेति भावः। ततःकिमित्यत्राह—**तत्प्रकारतेति**। * एकशब्दएकसामग्रीवेद्यतास्वभावत्वव्युदासपरः। एव-

## गूढार्थसङ्ग्रहः

प्रागेव भेदाभेदयोर्निरसनपूर्वकं गुणयोरपि आकृत्यधिकरणनयेन बोधोपपादनं स्पष्टम्। तत्र लक्षणापक्ष एव स्पष्टमुक्तः। आकृत्यधिकरणं जातिगुणिनोर्भेदस्य व्याससिद्धान्तत्वस्थापनेन आकृत्यधिकरणेऽपि गुणगुणिनोर्भेदाभेदौ न विवक्षितौ। आकृत्यधिकरणं व्यक्तिशक्तिनिरूपणपरमेवेति अनुपदमेव गुणोभयशक्तिनिरूपणपरमिति पूर्वमीमांसकानामपि सम्मतम्। आकृत्यधिकरणे विवक्षेति 'अर्थैकत्वमविभाजैमिनेराशयः निरूपयिष्यते। एवं च जातिगुणयोरपृथक्सिद्धप्रकारत्वेनैव तस्मिन्नधिकरणे विवक्षेति 'अर्थैकत्वमविभागात्' इत्यत्र अविभागपदेन सूच्यते। मनुष्यादिशरीराणामपि जीवापृथक्सिद्धत्वमेव ; जीवविश्लेषे शरीरनाशस्योत्तरत्र स्थापयिष्यमाणत्वात्। अतश्च मनुष्यादिशब्दानामपि जातिगुणशब्दन्यायेन प्रकारिजीवबोधकत्वमिति। अयमेवार्थः अनन्तरग्रन्थेन साधयिष्यते। **तत्प्रकारतैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनमिति** ॥

'अर्थैकत्वमविभागात्' 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यात्' इति आकृत्यधिकरणारुणाधिकरणसूत्रद्वयपर्यालोचने अपृथक्सिद्धप्रकारवाचिशुक्लादिगुणशब्दानां सामानाधिकरण्यं शक्त्यैव न लक्षणया इति प्रतीयते। अयमर्थः वादनक्षत्रमालायां अप्पय्यदीक्षितैस्साधितः। एवं तत्र 'एवं गुणे गुणिनि च क्रमाच्छक्तिप्रसाधनम्। जीवान्तर्यामिपर्यन्तं तेषां शक्तिप्रसिद्धये ॥' इत्युपक्रम्य 'गौरोऽहम्' इति प्रतीतिः 'इदं रजतम्' इति प्रतीतिवत् इति पक्षे निरस्य शरीरवा-

## श्रीभाष्यम्

**आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दस्सहैव प्रकारतया प्रतिपादयति ॥**

**ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति नात्मपर्यन्तता शरीरशब्दस्य । नैवम् ।**

## श्रुतप्रकाशिका

कारस्सहोपलम्भनियमव्युदासार्थः । अपृथग्विशेषणत्वेसति शरीरस्य केनापि प्रमाणस्य तत्तथोपलभ्येतेत्यत्राह–**आत्मेति** । शब्दोऽपि न शरीरिपर्यन्ताभिधायीति चोदयति । **ननुचेति** । परिहरति । **नैवमिति** । इमौ चोद्यपरिहारावाकृत्यधिकरणेऽपि

## गूढार्थसंग्रहः

चिनां गुणवचनब्राह्मणादिशब्दानां अन्तर्यामिपर्यन्तत्वं साधितम् । तत्र च गुणगुण्येकशक्तिपक्षज्यायस्त्वादिसिद्धान्तं सम्यक्पर्यालोच्य जैमिनितात्पर्यं अरुणाधिकरणसरणिविवरिण्यां प्रकाशितं तत्त्वमार्ताण्डकारैः श्रीनिवासाचार्यैः ॥

आकृत्यधिकरणे न्यायसुधायां गुणगुणिनोर्भेदाभेदसंबन्धेन अभेदांशमादाय शुक्लःपट इति प्रयोगोपपादनेऽपि तदवलंबनेन रूपं नीलिमा इत्यादिशब्दानां तथा प्रयोगः नैवापादनमर्हति । लोके प्रामाणिकप्रयोगोपपत्त्यर्थंखलु उपपादनप्रक्रियास्सर्वाःप्रवृत्ताः । एवंस्थिते रूपवानित्येव सर्वत्र प्रामाणिकप्रयोगसत्वे रूपशब्दस्यापि द्रव्यशब्दसामानाधिकरण्येन प्रयोगः नैवापादयितुं योग्यः । नीलिमेत्यत्र नीलशब्दएवाकृत्यधिकरणनयेन व्यक्तिपर्यन्तत्वे लब्धे पुनः भावार्थेमनिच्प्रत्ययेनानन्तरं तन्न्यायस्याप्रवृत्तिः । किंच गुणे गुणिनि च पृथक्शक्तिकल्पनसिद्धान्ते क्वचिद्गुणे शक्तिः क्वचिद्गुणिनीति न काऽप्यनुपपत्तिः प्रामाणिकप्रयोगानुसारेण व्यवस्था । एतेन उक्तस्थले ब्रह्मविद्याऽऽभरणे दोषापादनमलग्नकम् ॥

अध्यासभाष्ये 'शास्त्रीयेतु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियते' इत्यत्र 'ब्राह्मणो यजेत' इत्यादिवाक्येषु ब्राह्मणादिशब्दाः आत्मवाचिन इति विवक्षितमिति प्रतीयते । यद्यपि यागादिकर्तॄणां अशनायाद्यतीतात्मस्वरूपप्रतिपत्तिरनपेक्षिता प्रत्युत बाधिका च । तावता ब्राह्मणादिशब्दाः शरीरात्मतादात्म्याध्यासनिबन्धना इति नैव वक्तुं शक्यम् । 'मनुष्योऽहम्' 'ब्राह्मणोऽहम्' इति प्रतीतिः परलोकार्थकर्मकर्तृ तदितरपुरुषभेदेन द्विविधा परलोकार्थकर्मकर्तॄणां शरीरविविक्तात्मविषयिणी तदितरेषांतु शरीरविषयिणी । तत्र देहे अहंमतेः भ्रमत्वेऽपि तदितरेषां प्रत्ययस्य भ्रमत्वं नैव साधयितुमलम् । अहमर्थस्य चिदचिद्ग्रन्थिरूपतादेरयोगस्य प्रागेवोपपादनात् । अशनायादेः कर्ममूलकत्वेन कर्मसम्बन्धनिवृत्तिदशायां अपहतपाप्मत्वाद्याविर्भावस्य सूत्रकृतैव साधयिष्यमाणतया इदानीं यागादिकर्तॄणां तत्स्वरूपप्रतिपत्तेरनपेक्षितत्वेऽपि ब्राह्मणादिशब्दानामध्यासनिबन्धनत्वस्य स्थापनासंभवात् । जीवस्य शरीरसंबन्धः कर्ममूलक इति श्रुतिस्मृतिसूत्रेषु व्यक्तमेवेति पूर्वमेवोक्तम् । स्वमाहात्म्यानुगुणलीलाप्रवृत्तेन भगवता स्वेच्छाऽऽनुगुण्येन कर्मादिव्यवस्था विरचितेति द्रमिडभाष्यकारसिद्धान्त इति रचनानुपपत्त्याधिकरणभाष्यादौ वक्ष्यते । आत्मनो निर्विशेषत्वस्य अविद्यायाश्च प्रागेवासंभवस्य साधनात् । वेदपूर्वभागवाक्यानां उपनिषदि सगुणवाक्यानां आविद्यकार्थनिरूपणपरत्वे सर्वस्यापि वेदस्य तथैव प्रसङ्गात् । व्यावहारिकपारमार्थिकविभागः बौद्धैरेवादृतः, न तदितरैर्दार्शनिकैः । तत्परिग्रहे निर्विशेषचितोऽपि नैव सिद्धिरिति पूर्वमेवोपपादितम् । एवं च व्यावहारिकतात्त्विकप्रामाण्यभेदकल्पनाऽपि निरवकाशा । अतश्च 'ब्राह्मणो यजेत' इत्यादीनां न भ्रमसिद्धार्थानुवादित्वं ब्रह्मविद्याऽऽभरणोक्तं युक्तम् । **ननु च शाब्देपीति** ॥

## श्रीभाष्यम्

**आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणान्निष्कर्षकशब्दोऽयम्। यथा गोत्वं शुक्लत्वमाकृतिर्गुण इत्यादिशब्दाः। अतो गवादिशब्दवद्देवमनुष्यादिशब्दा**

## श्रुतप्रकाशिका

समानावित्यभिप्रायेणाह—**यथागोत्वमिति**। निष्कर्षकशब्दानां विशेष्यपर्यन्ताभिधायित्वाभावे चेतनाचेतनवाचिनश्शब्दा न ब्रह्मपर्यन्ताभिधायिनो भवन्ति '**यस्यात्मा शरीरम्**' '**यस्य पृथिवी शरीरम्**' इत्यादिष्वात्मादिशब्दानां निष्कर्षकशब्दत्वावगमादितिचेत् उच्यते- निष्कर्षकशब्दो द्विविधः * वैवक्षिकनिष्कर्षको नियतनिष्कर्षकश्चेति। तत्र शरीरादिशब्दा नियतनिष्कर्षकाः आत्मादिशब्दा वैवक्षिकनिष्कर्षकाः गोत्वादिशब्दवच्छुक्लादिशब्दवच्च प्रयोगस्य व्यवस्थापकत्वात्। निष्कर्षकानिष्कर्षकविभागोऽपिहि प्रयोगाधीनः तद्वदयमपि विभागस्तन्मूलः॥

**ननु** शुक्लादिशब्दा नियतनिष्कर्षका एव गुणिपर्यन्तताtु '**गुणवचनेभ्यो मतुपो लुग्वक्तव्यः**' इति स्मरणात्। मैवम्। * जातिवाचिशब्दवदपृथक्सिद्धविशेषणवाचित्वाविशेषाच्छुक्लादिशब्दानां। प्रत्ययस्तु द्विशब्दस्थद्विवचनवत्प्रकृत्यनतिरिक्तार्थः * त्रिलिङ्गतया शब्दसाधुत्वाय स्वरविशेषाय च भवति। तत एवहि '**गुणे शुक्लादयःपुंसि गुणि लिङ्गास्तु तद्वति**' इति नैघण्टुकाः। यतस्स्वतो गुणिपर्यन्तानामेव गुणवाचिपदानां * लिङ्गस्वरार्थं मतुब्लोपस्मरणं नतु गुण्यभिधानशक्तिविरहिणां गुण्यभिधानार्थं, * अत एवहि रागपदस्य रक्तपदतुल्यतया प्रयोगाभावः; अतश्शुक्लादिशब्दा वैवक्षिकनिष्कर्षकाः नियतनिष्कर्षकाणामपि तथात्वं प्रतियोगिविशेषसापेक्षं नतु सार्वत्रिकम्। '**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः**' '**पुण्यो गन्धःपृथिव्यां च**' इति गन्धादिशब्दानामपि परमात्मपर्यन्ततया प्रयोगात्। अतः * पृथिव्याद्यपेक्षयैव गन्धादिशब्दानां नियतनिष्कर्षकत्वं, शरीरवाचिशब्दानां शरीरिपर्यन्ततां निगमयति। **अतो गवादीति**। आत्मपर्यन्ताः आत्मपर्यन्तशक्तयः। शरीरवाचिशब्दैरात्मबोधनं शक्तिनिबन्धनतया मुख्यमित्यर्थः॥

**ननु** यद्यपि शरीरवाचिशब्दा आकृतिनयगोचराः तथाऽपि तैश्शरीरिबोधनं लाक्षणिकं गवादिशब्दैरपि व्यक्तिबोधनस्य लाक्षणिकत्वात्। संबन्धानुपपत्तिभ्यांहि लक्षणा जातिमात्रस्यानयनाद्यनर्हत्वाद्व्यक्तिसंबन्धाच्च गवादिशब्दैर्व्यक्तिर्लक्षणया बोध्यते प्रयोगेऽन्यथासिद्धे शक्तिकल्पनानुपपत्तेः। नैवम् * अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वात्। अन्यथा * जात्यादिशब्दानामपि संबन्धानुपपत्त्याविशेषेण क्वचिद्व्यक्तिपर्यन्तप्रयोगप्रसङ्गः। * आकृति-

## गूढार्थसंग्रहः

नामरूपव्याकरणश्रुतेः स्वपर्यन्तनामरूपव्याकरणपरत्वेन जीववाचिशब्दानां परमात्मबोधकत्वं न युक्तम्। शरीरशब्दस्य '**यस्य पृथिवी शरीरम्**' इत्यादिश्रुतिपठितस्य शरीरिपर्यन्तत्वादर्शनादित्याशयः। **आत्मप्रकारभूतस्यैव शरीरस्येत्यादि**। शरीरविषयरूपव्याकरणमभ्युपगतमेवं। 'तद्वाचिदेवादिशब्देषु स्वपर्यन्तनामरूपव्याकरणं वर्तत एव। शरीरशब्देतु लोकव्युत्पत्त्यवगतशक्तिमात्रेणैव व्यवहारः विवेकप्रदर्शनार्थं इति परमात्मपर्यन्तत्वाभावेऽपि नानुपपत्तिरिति भावः आधिकमुत्तरत्र निरूपयिष्यते॥

**अतोगवादिशब्दवदिति**। अरुणाधिकरणसरणिविवारिण्यां जातिमात्रशक्तिवादे दूषणकथनपूर्वकं व्यक्तिशक्तौ लाघवमपि प्रदर्शितम्। तत्राकृत्यधिकरणसूत्राणा खण्डदेवाद्युक्त दूषणान्यपि न घटन्त इतिनिरूप्य जातिविशिष्टशक्तिवादे

## श्रुतप्रकाशिका

रेव शब्दशक्तिविषयः व्यक्तिबोधस्त्वर्थसामर्थ्यात् प्रत्यभिज्ञायां संस्कारसचिवेन्द्रियवदर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टबोधसामग्रीत्यपि न युक्तम् । जात्यादिशब्दश्रवणेऽपि विशिष्टबोधप्रसङ्गादेव नहि सत्यां सामग्र्यां कार्यानुदय उपपद्यते ॥

**ननु** गवादिशब्दाः जातेर्व्यक्तिपरतन्त्रतारूपमभिदधति अतस्तैर्व्यक्तिपर्यन्तबोधः । जात्यादिशब्दास्तु जातिस्वरूपमात्रम् अतस्तैर्व्यक्तिपर्यन्तबोधाभावः । नैवम् । जात्यादिशब्दैर्द्रव्यपारतन्त्र्याप्रतिपत्तौ द्रव्यविलक्षणतया जातिप्रतीत्यनुपपत्तेः ननु न जातेर्द्रव्यप्रकारतैकस्वभावत्वरूप*पारतन्त्र्याबोधनं विवक्षितम्, * किंतु विशेषणान्तरान्वयकारकभावानर्हरूपत्वपारतन्त्र्याबोधनमिति । उच्यते—गवादिशब्दैस्तादृक्त्वबोधनमेकपदेन विशेष्याभिधाननिबन्धनम् । नहि कुण्डलीत्युक्ते कुण्डलस्य रुचिरत्वादिविशेषणान्वयः, कुण्डलेन भूषितइतिवत्कारकभावश्च भवति । एवं च सति पारतन्त्र्याबोधनाद्व्यक्त्यबोधनेऽभ्युपगम्यमाने अन्योन्याश्रयस्स्यात् पारतन्त्र्याबोधनाद्विशेष्याबोधनं तदबोधनात्पारतन्त्र्याबोधनमिति ॥

**किंच** गवादिशब्दानां विशेष्यबोधनशक्तिविरहे जात्यादिशब्दानामिव पारतन्त्र्यबोधनासामर्थ्यप्रसङ्गः । धर्मिबोधनासामर्थ्यव्यापकतया जात्यादिशब्देषु दृष्टं पारतन्त्र्यबोधनासामर्थ्यं गवादिशब्देभ्यो निवर्तमानं स्वव्याप्यं धर्मिबोधनासामर्थ्यं कथं न निवर्तयेत् । द्रव्यांशे शक्तिर्माभूत् जातेर्व्यक्तिपारतन्त्र्यमपि गवादिशब्दा बोधयेयुरिति न वाच्यम् ; द्रव्यांशे शक्तिविरहितैर्जात्यादिशब्दैरपि द्रव्यपारतन्त्र्यबोधनप्रसङ्गात् । अतश्शब्दशक्तिनिबन्धनैव गवादिशब्दैर्द्रव्यप्रतीतिः

**किंच** यदि जातिमात्रमेव मुख्यार्थः तर्ह्यमुख्यभूतद्रव्यपर्यन्तप्रयोगादपि जातिमात्रे गवादिशब्दानां प्रचुरप्रयोगप्रसङ्गः * मुख्यार्थगुणसम्बन्धिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगदर्शनात् । गङ्गाऽग्निसिंहादिशब्दानां कूलमाणववविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगो दृष्टः ननु व्यक्तिनिष्ठागौः व्यक्तिनिष्ठो महिष इति प्रयोगः जातिरेव मुख्यार्थश्चेद्गवादिशब्दानां जातिमात्रविषयप्रयोगे त्वतलादिनैरपेक्ष्यं च स्यात् नहि गङ्गादिशब्दाः प्रवाहादिविषयप्रयोगे भावप्रत्ययान्ताःप्रयुज्यन्ते । प्रचुरप्रयोगाभावो भावप्रत्ययापेक्षत्वं च गवादिशब्दानां व्यक्तौ निरूढलक्षणायोगादितिचेन्न प्रचुरप्रयोगानुगतिर्हि लक्षणाया निरूढिः । ततश्च प्रचुरप्रयोगाभावात्प्रचुरप्रयोगाभाव इति परिहारो न घटते प्रसङ्गस्य प्रसञ्जनीयाभावपरिहार्यत्वाभावात् । नह्यग्निमत्त्वप्रसङ्गोऽग्न्यभावात्परिह्रियते ॥

भावप्रत्ययानपेक्षत्वप्रसङ्गश्च दुष्परिहरः शुक्लादिशब्दानां गुणिबोधने निरूढलक्षणाभ्युपगमेऽपि पटस्य शुक्ल इति गुणमात्रपरप्रयोगे * भावप्रत्ययानपेक्षत्वदर्शनात् * शुक्लादिशब्दनांहि लुप्तमतुबर्थलक्षणा परैरभ्युपगता, यथा समासेषु प्रातिपदिकेनाप्रयुक्तविभक्त्यर्थलक्षणेष्यते । लक्षणाया * निरूढिर्नाम सर्वप्रयोगानुगतिरितिचेन्न गोशब्दे तदभावप्रसङ्गात् । * अनुवृत्तो गोव्यवहार इति गोत्वमात्रेऽपिहि गोशब्दः क्वापि प्रयुज्यते । किंच सर्वप्रयोगानुगता वृत्तिर्लक्षणैव न स्यात् आकृतिविषयवृत्तिवत् । नन्वनन्यथासिद्धा वृत्तिर्मुख्या । सत्यम् । अनन्यथासिद्धिश्च दर्शिता अयुतसिद्धविशेषणवाचिशब्दानां विशेष्यलक्षणासामर्थ्याभावस्योपपादितत्वात् ॥

**ननु** त्वत्पक्षे धर्मिवाचिपदानां भावप्रधाननिर्देशेषु मुख्यैकदेशे लक्षणाऽभिमता, अस्माकंतु गवादिशब्दानां व्यक्तौ लक्षणा तत्र शक्तेर्विशेषणविशेष्यगोचरत्वकल्पने * भवतां गौरवं स्यात् । स्यादेव सतु नात्र दोषः लाघवेन निर्वाहायोग्यस्थले गौरवस्य दोषत्वाभावात् । लक्षणाऽऽश्रयणानुपपत्तिर्हि दर्शिता । किंच गामानयेत्यादिषु व्यक्तिप्रतीतिरर्थसामर्थ्याद्भवतिचेत् तर्हि विवक्षिताया जातेः * प्रतिसंबन्धिभूतं द्रव्यमुपसर्जनतया प्रतीयेत । ततश्च * पुत्रः पितेतिवत् खण्डो गौरयमिति सामानाधिकरण्यं न स्यात् । पुत्रमानयेत्यत्र ममेत्यनुक्तेऽपि अर्थवशा*द्विवक्षितपुत्रप्रतिसंबन्धिपितृत्वेन प्रती

## श्रुतप्रकाशिका

यमानो देवदत्तः पुत्रंप्रति गुणतया प्रतीयते नतु विशेष्यत्वेन * प्रधानतया * तदवच्छेदार्थत्वात्तस्य। गवादिशब्देषुतु द्रव्यमेव प्रधानतया प्रतीयते ।. गङ्गायां घोष इत्यत्र प्रवाहस्याविवक्षितत्वात्कूलस्य तदुपसर्जनतया प्रतीत्यभावः । छत्रिणो गच्छन्तीत्यत्रतु अच्छत्रिणां छत्रिप्रतिसंबन्धितया प्रतीयमानत्वाभावाच्छत्रिगुणभावेन प्रतीत्यभावः । अतो विवक्षितार्थप्रतिसंबन्धितया प्रतीयमानत्वेऽपि प्रधानतया प्रतीयमानं द्रव्यं शब्दशक्त्यैव प्रतीयते, अयं पुत्रीत्यत्र पुत्रिशब्देन प्रतीयमानपुत्रवत् । किंच विशेष्यांशे शक्तिमता रूपिशब्देन रूपप्रतिपत्तिदर्शनात् तद्रहितेन रूपशब्देन विशेष्यप्रतिपत्तिदर्शनाभावाच, * शब्दविशेषोपश्लिष्टविशेष्यप्रतीतिरन्वयव्यतिरेकाभ्यां शब्दशक्तिनिबन्धनेत्यध्यवसीयते । अतो गवादिशब्दानां विशेष्यबोधकत्वं शक्तिनिबन्धनम् । ननु व्यक्तीनामानन्त्यात्ताभिस्संबन्धग्रहोऽनुपपन्नः । एकस्यां व्यक्तौ शब्दवाच्यताव्युत्पत्तिश्चेद्व्यक्त्यन्तरस्य गोशब्दवाच्यत्वं न स्यात् । नैवम् । यत्र जातिस्तत्रायं शब्द इत्येवं रूपत्वाद्व्युत्पत्तेः । अतो वाच्यतानिमित्तस्यैकत्वात्प्रत्येकव्युत्पत्त्यनपेक्षा, युगपत्सर्वव्यक्तीनां वाच्यताव्युत्पत्तिरेकैकव्यक्तौ वाच्यतानिमित्तस्य पुष्कलत्वादेकैकव्यक्तेर्वाच्यत्वसिद्धिश्च घटते । कथमनन्तानां व्यक्तीनां बुद्धावारोपणं शक्यमितिचेत् व्यक्तीनां शब्दवाच्यत्वं प्रतिषेधता त्वया व्यक्तयःप्रतिपन्नाः नवा ? नचेत् तासु शब्दवाच्यत्वनिषेधोऽनुपपन्नः '**लब्धरूपे क्वचित्किंचित्तादृगेव निषिध्यते ।**' प्रतिपन्नाश्चेत् किं कतिपयव्यक्तयः प्रतिपन्नाः उत सर्वाः ? प्रथमे सर्वव्यक्तीनां शब्दवाच्यत्वनिषेधायोगः, द्वितीये त्वमिव सर्वे सर्वा व्यक्तीः प्रतिपद्येरन् व्युत्पद्येरंश्च । अतो गवादिशब्दाः स्वशक्त्यैव व्यक्तिबोधकाः तद्वच्छरीरवाचिशब्दानामपि स्वशक्त्यैव शरीरिपर्यन्तबोधकत्वं सिद्धम् ॥

## गूढार्थसङ्ग्रहः

भाष्यवार्तिकयोः जातिविशिष्टव्यक्तिशक्तिपक्षोऽपि पूर्वपक्षे उपक्षिप्तः । जातिमात्रशक्तिपक्षश्च सिद्धान्ते । वस्तुतस्तु आकृत्यधिकरणे पूर्वपक्षे जातिमात्रशक्तिः । सिद्धान्ते जातिविशिष्टव्यक्तावित्येव युक्तं सूत्रस्वारस्यात् । तथाहि 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्' १.३.३० इति लोकवेदाधिकरणे सिद्धान्तसूत्रम् । आकृत्यधिकरणे शबरादिमते पूर्वपक्षसूत्रम् । वस्तुतस्तु आकृत्यधिकरणेऽपीदं सिद्धान्तसूत्रम् । प्रयोगचोदनाभावात्—जातिमात्रशक्तौ 'व्रीहीन्प्रोक्षति' इत्यादिप्रोक्षणाद्यनुष्ठानविधिरसम्भवात् इत्यर्थः पूर्वमीमांसकानां शबरादीनामपि संमतः । व्यक्तौ शक्तिपक्षे कथंतर्हि आकृतिप्रतीतिरित्येतदाह—अविभागादिति । वार्तिके 'यतस्तु नित्यमेव व्यक्त्याकृत्योरविभागः तस्मात् व्यक्तिरभिहितासती शक्नोत्येवाकृतिं गमयितुम्' इति । भाष्यकारस्तु 'कथं सामान्यावगतिरित्युपन्यस्य आकृतिश्चिह्नभूता भविष्यतीत्युत्तरं ददाति' इत्युपक्रम्य 'यद्वा कथं सामान्यावगतिरित्युपन्यस्ते पूर्वपक्षवादी सामान्यावगतिमपह्नोतुमशक्नुवन् आकृतिविशिष्टव्यक्त्यभिधानपक्षं परिगृह्णात्याकृतिश्चिह्नभूता विशेषणभूताऽभिधेया भविष्यति । अतश्च तत्प्रतीतिरचोद्या । तेन केवला विशिष्टा वा व्यक्तिश्शब्दार्थ' इतिचोक्तम् । अत्र वार्तिकवाक्यद्वयपर्यालोचनायां जातिविशिष्टव्यक्तावपि शक्तिः 'अर्थैकत्वमविभागात्' इत्यत्र विवक्षितेति प्रतीयते । अत्र च विशेषणतया जातेः अभिधेयत्वस्य विवक्षणेन जातिव्यक्त्योरुभयोश्शक्तिकल्पने गौरवरूपदोषो नास्तीति विवक्षितम् । अत्राविभागशब्देन उभयोर्नियमेन सहप्रतीतिः शक्तौ मूलमिति सूच्यते ॥

'अविभागात्'—जातिव्यक्त्योर्विभज्य स्थित्यनर्हसंबन्धात् अर्थैकत्वं विशिष्टवस्तुनः एकत्वमित्यर्थः । एकशक्तिग्रहविषयत्वेन विशिष्टे एकैव शक्तिरिति यावत् । एतेन 'विशिष्टवाचित्वपक्षे अर्थैकत्वमित्येकपदमनर्थकमेव स्यात्' इति भाट्टकौस्तुभोक्तदूषणस्य नावसरः । विशिष्टशक्तिपक्षे गौरवस्य यथा नावसरः तथा अरुणाधिकरणसरणिविवरण्यां निरूपितम् ॥

## गूढार्थसंग्रहः

उक्तं च 'जात्याख्यायां एकस्मिन् बहुवचनमन्यतरस्याम्' (१.२.५८ पा सू.) इति सूत्रमहाभाष्ये 'अशिष्यो वा बहुवद्भावः' इत्युपक्रम्य जातिशब्देनहि द्रव्यमप्यभिधीयते जातिरपि। कथं पुनर्ज्ञायते जातिशब्देन द्रव्यमभिधीयत इति? एवंहि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति अस्त्यत्र कांचिद्गां पश्यसीति। स पश्यति पश्यतिचायं गाः। पृच्छति च कांचिद्गां पश्यसीति। नूनमस्य द्रव्यं विवक्षितमिति। तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति। यदा सामान्याभिधानं तदा एकवचनं भविष्यतीति'। अत्र 'जातिप्रकारकव्यक्तिविशेष्यक एव शक्तिग्रहः गौर्गोपदशक्या इति जातिव्यक्त्युभयविषयकबोधे कारणम्' इत्यादिः उद्योतः॥

मञ्जूषायां—'जात्यवच्छिन्नविषयकशक्तिमान् जातिशब्दः गुणाद्यवच्छिन्नशक्तिमान् गुणशब्दादिरिति व्यवस्था। अत्र विशेष्यविशेषणयोरुभयोरपि शक्तिः। शक्यताऽवच्छेदकत्वं च शक्यैकदेशे प्रकारत्वं' इत्याद्युक्तम्। 'कुत्सिते' (५.३.७४) इति सूत्रे 'अथवा—स्वार्थमभिधाय शब्दो निरपेक्षं द्रव्यमाह समवेतम्। समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च' इत्यादि महाभाष्यम्। 'अत्रत्त्वोऽनुपपत्तिः। नहि प्रातिपदिकमात्रात् प्रक्रियादशायामपि प्रवृत्तिनिमित्ततदाश्रययोः क्रमेण बोधो भवति। तस्मात् स्वार्थं जात्यादिकं शब्दः तद्विषयकाभिधाविषयो भूत्वा निरपेक्षः तच्छक्तिग्रहेतरानपेक्षः संबद्धं द्रव्यमाहेत्यर्थः। तस्यैव शक्तिग्रहविषयकत्वेन तत्रैव स्वार्थव्यवहार इति' इति उद्योतः॥

यद्यपि 'द्रव्याभिधानं व्याडिः' इतिपक्षे जातिरुपलक्षणमिति जातौ शक्तिः नैवाभ्युपगम्यते। एवं दीधितिकारेण शक्यताऽवच्छेदके शक्त्यनङ्गीकारेऽपि शक्तिग्रहविशेष्यताऽवच्छेदकतया भानं सम्भवतीति साधितम्। तथाऽपि शक्तिज्ञानाधुनिकसङ्केतज्ञानयोः एकरूपेण हेतुत्वाद्यसम्भवात् दीधितिकारमतं न युक्तमिति प्रवृत्तिनिमित्तस्यापि वाच्यत्वम् 'अतएव जात्याकृतिव्यक्तयस्तु पदार्थः' इति सूत्रंचोपपद्यत इति शक्तिवादे गदाधरभट्टाचार्यैरुक्तम्। विस्तरस्तु अन्यत्रावसेयः। अतः 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्' इति सूत्रस्य जातिविशिष्टव्यक्तिपरत्वमेव। इदमेव सिद्धान्त सूत्रमिति सिद्धम्॥ 'अद्रव्यशब्दत्वात्' (मी.सू १.३.९.३१) जातिमात्रे शक्त्यङ्गीकारे द्रव्ये शक्त्यनङ्गीकारेण गोत्वादि शब्दवत् गवादिशब्दानां जातिशब्दत्वमेव स्यात्। नतु द्रव्यशब्दत्वम्। जातिविशिष्टद्रव्ये शक्त्यङ्गीकारेतु द्रव्यशब्दत्वं सम्भवति, द्रव्यशब्दत्वाभावात्। नह्याकृतिः षडादिभिस्संख्याभिर्युज्यते अतश्च षड्देया द्वादशदेयाश्चतुर्विंशतिर्देया इति प्रयोगानुपपत्तिः। सामानाधिकरण्यानुपपत्तिश्च॥

'अन्यदर्शनाच्च' (३२) 'यदि पशुरुपाकृतःपलायेत अन्यं तद्वर्णं तद्वयसमालभेत इति। यद्याकृतिवचनश्शब्दो भवेदन्यस्यालम्भो नोपपद्येत। अन्यस्यापि पशुद्रव्यस्य सैवाकृतिः। तस्माद्विशिष्टवचनः इति।' 'आकृतिस्तु क्रियार्थत्वात्' (मी.सू.१.३.९.३३) तर्हि व्यक्तिमात्रे शक्त्यङ्गीकारेण सूत्रद्वयोक्तानुपपत्तिपरिहारे आकृतेश्शब्दार्थत्वं मास्त्विति शङ्कायामिदंसूत्रं तुशब्दश्शङ्का निवृत्त्यर्थः व्यक्त्याकृत्योरविभागेन अर्थैकत्वेनाकृतिश्शब्दार्थ इतितु क्रियार्थत्वात् 'श्येनचितं चिन्वीत' (तै.सं.५.४.११.१) इत्यत्र श्येनचिच्छब्दस्य क्रियार्थत्वात्॥

'कर्मण्यग्न्याख्यायां' (पा.सू.३.२.९२) इत्यत्र 'कर्मणि हनः' (३.२.७६पा.सू.) इति एतत्सूत्रगतकर्मोपपदानुवृत्तौ क्विप् प्रत्ययविधानेन श्येनचिच्छब्दस्य कर्मवाचके श्येनपदरूपे उपपदेसति अग्न्याख्यस्थण्डिलसंज्ञायां कर्तव्यायां चिनोतेर्धातोः चितमिति कर्मणि वाच्ये क्विप्प्रत्यय इत्यर्थावगमेन सादृश्यलक्षणया श्येनसदृशं चीयमानं चयनेन संपादयेदित्येवं चोदनार्थस्संपद्येत। व्यक्तिमात्रवचनत्वे व्यक्त्या सादृश्यं नोपपद्यते। तद्धि एकव्यक्तिसादृश्यं वा स्यात् सर्वव्यक्तिसादृश्यं वा। आद्ये अनिर्धारितरूपव्यक्त्यन्तराविलक्षणैकव्यक्तिसादृश्यस्य इष्टकाभिः अशक्यं संपादनम्। सकल-

## गूढार्थसङ्ग्रहः

व्यक्तिसादृश्यंतु तासां परस्परवैलक्षण्यात् अतीतानागतानांचाग्रहणेन तत्सादृश्यस्य ग्रहणं न सम्भवति । अतः आकृत्यैव सादृश्यं संपादयेदित्यर्थावगमात् अवश्यमाकृतिरपि श्येनपदात् प्रतीयत इत्यभ्युपगन्तव्यम् । व्यक्तिप्रतीत्यर्थं च व्यक्तिः अतः आकृतिविशिष्टव्यक्तौ शक्तिरिति नानुपपत्तिः ॥

अत्र जातिपदं विहाय आकृतिपदोपादानं नित्यैका जातिर्न सर्वसम्मतेत्यभिप्रायेण । एवं 'सरूप' सूत्रे (पा.सू.१. २.६४) महाभाष्ये द्रव्याभिधानं व्याडिरिति पक्षप्रतिकोटितया उपन्यस्ते 'आकृत्यभिधानाद्वा एकंविभक्तौ वाजप्यायनः' इत्यत्रापि आकृतिशब्दः उक्ताभिप्रायेणैव प्रयुक्तः । आकृतिशब्दः न नित्यैकजातिमात्रे प्रयुज्यते । 'जातेरस्त्रीविषयादयो- पधात्' (४.१.६४) इति सूत्रमहाभाष्ये 'जातेरित्युच्यते का जातिर्नाम ? आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैस्सह ॥' इत्युक्तम् । अत्र प्रदीपः—आकृतिग्रहणा अवयवसन्निवेशविशेषव्यङ्ग्येत्यर्थः' इति ॥ 'अइउण्' सूत्रे 'रूपसामान्याद्वा सिद्धम्' इति महाभाष्ये अतिरिक्तजातिर्नविवक्षिता सादृश्येनैव सर्वोपपत्तेः इति प्रदीपे उद्योते च स्फुटमिति प्रागेव (३५१.पु) उपपादितम् ॥

'नक्रियास्यादितिचेदर्थान्तरविधानं न द्रव्यमितिचेत्' (१.३.३४) 'आकृतिस्तु' इति सूत्रे आकृतेश्शब्दार्थत्व वर्णनेन प्रागुक्तदोषद्वयशङ्कापरमिदं सूत्रम् । 'प्रोक्षणादिरूपा जातौ क्रिया नस्यादितिचेत् यदि पशुरुपाकृतस्स्यादित्यर्थान्तरे उपाकरणविधिर्न स्यात् । 'एका देया' इत्यादौ लिङ्गसङ्ख्याऽन्वययोग्यं द्रव्यं च न स्यात्' इति सूत्रार्थः । 'तदर्थत्वा- त्प्रयोगस्याविभागः' (१.३.३५) 'प्रयोगस्य व्रीहीन् प्रोक्षति इत्यादिप्रयोगस्य आकृतिविशिष्टद्रव्यरूपशक्यैकदेशद्रव्यार्थ त्वात्' जातिविशिष्टव्यक्तौ शक्त्यङ्गीकारेण 'श्येनचितं चिन्वीत' 'व्रीहीन्प्रोक्षति' इत्यादिसर्ववाक्यार्थोपपत्तेः शक्या- र्थयोरविभागस्सिद्धः ॥

'अत्र प्रयोगचोदनाभावादर्थैकत्वमविभागात्' 'तदर्थत्वात्प्रयोगस्याविभागः' इत्युपक्रमोपसंहारसूत्रद्वयपर्यालो- चनायां जातिविशिष्टव्यक्ताविव शक्तिरिति जैमिन्याशयः प्रतीयते । उपक्रमे जातिमात्रशक्तौ दोष एव सर्वसंमतः । उप- क्रमोक्तप्रयोगोपपत्तिरेवोपसंहारे । साच द्रव्यप्रतीत्यैव निर्वाह्या । तत्र जातौ शक्तिः व्यक्तौ लक्षणेत्येतदर्थसूचकं न किंचि- त्पदं पश्यामः । 'यत्रतु नियमेन युगपदर्थद्वयोपस्थितिः तत्र शक्तिद्वयाङ्गीकारे न दोष इति' यववराहाधिकरणे खण्ड- देवेनोक्तम् । पुष्पवन्तादिशब्देष्वपि एकैव शक्तिः गदाधरभट्टाचार्यैरुक्ता । गवादिशब्देषु युगपदर्थद्वयस्यैव प्रतीतिः सर्वा नुभवसिद्धा उभयोरविभागोऽपि विशेषः । समभिव्याहृतपदार्थान्तरान्वयप्रतीतिः व्यक्ताविवेति सर्वसंमतम् । एवंस्थिते जातिविशिष्टव्यक्तौ शक्तिं गौरवेण परित्यज्य जातिमात्रे शक्तिरेवाकृत्यधिकरणसिद्धान्त इति खण्डदेवादीनामुक्तिः अनुभव विरोधात् सूत्रस्वारस्याविरोधाचानुपादेयेति बोध्यम् ॥

देवमनुष्यादिशब्दाः शरीरशरीरिणोरुभयोरविभागसत्त्वेन श्रुतिस्मृत्यनुसारेण आकृत्यधिकरणनयेन शरीरसंयुक्तजीव- पराः। अयमर्थः 'अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्' (२.३.४८) 'देहयोगाद्वा सोऽपि' (३.२.६) इत्यादौ सूत्र- कृतो व्यासस्य विवक्षितः॥ अत्र विधिनिषेधशास्त्रयोरनुज्ञापरिहारौ देहसम्बन्धनिबन्धनावित्युक्तम् । देहसम्बन्धः कर्ममूलक इति कृतात्ययाधिकरणे 'तद्यइह रमणीयचरणाः' इत्यादिश्रुत्या व्यवस्थाप्यते । तत्र सुकृतमूलकः ब्राह्मणक्षत्रियवैश्यदेह- सम्बन्ध इति निर्धारणेन परसम्मताविद्यामूलकत्वं नास्तीति सिद्धम्। पञ्चाग्निविद्यायां (छा.५.१०) दशमखण्डोपक्रमे 'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धातप इत्युपासते' इत्यादिना अर्चिरादिगत्यादिकमभिधाय 'अथ य इमे ग्रामे इष्टापूर्ते दत्त- मित्युपासते ते धूममभिसंभवन्ति' इत्यादिना धूमादिमार्गं प्रस्तुत्य 'तस्मिन्यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निव-

## गूढार्थसङ्ग्रहः

वर्तन्ते ' इत्याद्यनन्तरं ' तद्य इह रमणीयचरणाः ' इत्यादिवाक्यम् । ' तद्देवानामन्नं तं देवा भक्षयन्ति ' इति ' तास्मिन् यावत्संपातमुषित्वा ' इत्यतःपूर्ववाक्यम् । ' तद्य इत्थं विदुः ' इत्युक्तविद्यानिष्ठयोः अर्चिरादिगतिप्रतिपादनेन धूमादिमार्गविचारदशायां ' तद्देवानामन्नं तं देवा भक्षयन्ति ' (छा.१५.१०.३) इति वाक्यघटकपदार्थनिर्धारणपरे ' भाक्तंवाऽऽनात्मवित्त्वात्तथाहि दर्शयति ' इति सूत्रे ' तद्य इत्थंविदुः ' इत्युक्तब्रह्मविद्यानिष्ठयोः अनात्मवित्त्वं नास्तीत्येवेषितव्यम् पञ्चाग्निविदः तादितरोपासकसामान्यस्य सगुणविद्यानिष्ठस्यच अर्चिरादिगतिद्वारा ब्रह्मप्राप्तेश्श्रुतत्वेन तेषामनात्मवित्त्वं परव्याख्यानरीत्याऽपि न सूत्रकाराभिमतमिति सिद्ध्यति ॥

' आत्मेत्येवोपासीत ' इत्यत्रोक्तोपासकस्यापि ' तद्यइत्थंविदुः ' इत्युक्तोपासकान्तर्भूतत्वेन ' अथ योन्यां देवतामुपास्ते—यथा पशुरेवं सदेवानाम् ' इति शङ्करभाष्योदाहृतवाक्येऽपि ' तद्यइत्थंविदुः ' इत्युक्तोपासकः नैव विवक्षितइति निर्णीयते । अयमर्थः अनुपदमेव स्फुटीभविष्यति । उपासकसामान्यस्यापि कर्मानुष्ठानं परेषामपि संमतम् । एते सर्वे च परमते न सम्यग्दर्शिनः, अविद्यावन्त एव । इत्थं च कर्मानुष्ठानस्याविद्यामूलकत्वे एतत्सर्वं विरुद्ध्यते । अतश्च जीवानां सुकृतमूलकब्राह्मणादिशरीरसंबन्धस्य श्रुतौ सुस्पष्टं प्रतिपादनेन ' तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ' इत्यादौ ब्राह्मणादिशब्दा अपि कर्ममूलकब्राह्मणादिदेहसम्बन्धवद्वाचका एव नतु पररीत्या देहात्माभिमानवद्वाचकाः ' इति सूत्रकारतात्पर्यं सिद्धम् । एतेनैव ' देहयोगाद्वा सोऽपि ' इत्यत्र देहसम्बन्धोऽपि कर्ममूलक एव विवक्षित इति निश्चीयते । अतएव वेदवाक्यसामान्यस्यैकविधं प्रामाण्यं निर्वहति ॥

एतेन ' अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ' इति सूत्रभाष्ये (शं) शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमितिचेत्—न ; तत्संहतत्वाभिमानात् ' इत्याद्युक्तिः ' भाक्तंवाऽनात्मवित्त्वात् ' इति सूत्रे अर्चिरादिगतिप्रापकविद्यानिष्ठानां आत्मवित्त्वस्यैव प्रतिपादनेन ' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ' इत्युक्ताधिकारिणामात्मवित्त्वेन संहतत्वाभिमानायोगेन विद्यानिष्ठसामान्येऽपि कर्ममूलकदेहसम्बन्धनिबन्धनानुज्ञापरिहारयोः प्रत्याख्यानासम्भवात् ॥

एतेन ' अनुज्ञापरिहारौ ' इति सूत्रे ' सम्यग्दर्शिनो द्विविधाः देहातिरिक्तात्मदर्शिनः केचित् । तेषां कर्मस्वधिकारो न वार्यते । अन्येतु असङ्गब्रह्मात्मतादर्शिनः । तेतु सम्यग्दर्शिनो नाधिक्रियन्त ' इति, अध्यासभाष्यविवरणे च ' द्विविधाहि विवेकिनः केचिद्देहातिरिक्तात्ममात्रपर्यवसितविवेकाः केचिदशनायाद्यतीतात्ममात्रपर्यसितविवेकाः तत्राद्यो विवेकः कर्तृत्वादिभ्रमविरोधी न भवत्येव । ततश्च न तस्य ज्योतिष्टोमादिप्रवृत्तिविरोधित्वम् । तेन च शरीरतादात्म्याध्यासस्यानपोदितत्वात् ' इति ब्रह्मविद्याऽऽभरणे उक्तिः सूत्रकाराशयविरुद्धत्वादनुपादेयेति सिद्धम् । एवं च गवादिशब्दवत् आकृत्यधिकरणनयेन देवमनुष्यादिशब्दाः आत्मपर्यन्ता एव इति अप्रकम्प्यमेवेति ॥

' संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ' (२.४.१७) इति सूत्रे ' सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' इति श्रुतौ नामरूपपदार्थयोः संज्ञामूर्तिशब्दाभ्यां निर्देशः कृतः । अत्र रूपं मूर्तिः नाम संज्ञा इति पदद्वयेन तदर्थबोधनेचेदमेव बीजम् देवादिशब्दोक्तदिशा सर्वरूपवाचकशब्दानां परमात्मपरत्वतात्पर्यसूचनमुखेन सर्वश्रुत्यविरोधबोधनमेव । संज्ञाच परमात्मनाम योगेन यथार्थज्ञानजनकश्शब्दः इत्यर्थद्वयं प्रतिपाद्यते । एतेन स्वपर्यन्तनामरूपव्याकरणं तस्यां श्रुतौ विवक्षितमिति निर्णीतं भवति । एवं ' सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते ' इति श्रुतौ अभिवदन्नित्यत्र अभीत्युपसर्गेण स्वाभिमुख्येनैवोक्तिर्विवक्षितेति अत्रापि स्वपर्यन्तनामोक्तिः विवक्षिता इत्यपि सूचितम् । तृतीयाध्यायोपक्रमसूत्रे ' तदन्तरप्रतिपत्तौ ' इत्यत्र तच्छब्देन

## गूढार्थसंग्रहः

एतत्सूत्रोक्तमूर्तेरेव परामर्शेन देहान्तरप्रतिपत्तौ इत्यर्थो विवक्षित इति सर्वैरप्यङ्गीकरणीयम् । पञ्चाग्निविद्यायां देहाद्देहा
न्तरप्राप्तिः धूमादिमार्गगन्तॄणां प्रतिपाद्यते । तत्र 'तद्देवानामन्नं तं देवा भक्षयन्ति' इति भक्ष्यत्ववचनं भाक्तम् धूमा
दिमार्गगन्तुरनात्मवित्त्वात् इति 'भाक्तंवाऽनात्मवित्त्वात्' इति सूत्रे विवक्षितमिति परेषामपि संमतम् ॥

एतेन 'तदात्मानमेवावेदहंब्रह्मास्मि इति' इत्यत्र आत्मन्शब्दार्थवेदनं 'तद्यइत्थं विदुर्येचेमेऽरण्ये श्रद्धातपइत्यु
पासते' इत्युक्ताधिकारिणाम् ; नतु 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इत्युक्ताधिकारि
णामिति सूत्रेण निर्धारितं भवति । आत्मन्शब्दश्च 'स एष इहप्रविष्टः' इत्यादितत्पूर्ववाक्यपर्यालोचनया 'अन्तःप्र
विष्टश्शास्ता जनानाꣳसर्वात्मा' इति श्रुत्यनुसारेण अन्तःप्रविश्य शासितृपरः अन्तःप्रविश्य शासितृत्वमेव शरीरित्वम् ।
अयमेवार्थः 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यत्र विवक्षित इति पूर्वमेवोक्तम् । अतश्च परमात्मनः जगच्छरीरित्व-
ज्ञानवन्तएवात्मविदः' इति संज्ञामूर्तिक्लृप्तिः 'भाक्तंवाऽनात्मवित्त्वात्' इति सूत्रद्वयेन सूत्रकृता निश्चितं भवति । समा
नाधिकरणनिर्देशेन जीवाभिन्नब्रह्मज्ञानमेवात्मज्ञानमितितु नात्र विवक्षितम् । तत्रैव धूमादिमार्गे पुनरावृत्त्यवरोहनिरूप-
णावसरे-(तत्त्वा) 'साभाव्यापत्तिरुपपत्तेः' इत्यत्र 'वायुर्भूत्वा धूमो भवति' इति निर्देशस्य सादृश्यनिबन्धनत्वस्यैव
स्थापनात् । समानाधिकरणनिर्देशस्यान्यथैवोपपत्त्या ब्रह्मणि जीवाभेदस्यासिद्धेः । कृतात्ययाधिकरणे कर्ममूलकब्राह्मणा-
दिशरीरसम्बन्धवद्वाचका एव ब्राह्मणादिशब्दा इति विवक्षितमिति पूर्वमेवोपपादितम् । सर्वस्यार्थस्य पर्यालोचने ब्राह्मणादि-
शब्दानां ब्राह्मणादिशरीरसम्बन्धिबोधकत्ववत् 'नामरूपे व्याकरवाणि' इति श्रुतौ नामसामान्यस्य तत्तदवस्थशरीरसम्ब-
न्धिपरमात्मवाचकत्वमिति सूत्रकारसिद्धान्तः सिद्धो भवति ॥

एवं 'अविभागेन दृष्टत्वात्' (४.४.४) इति सूत्रे मुक्तब्रह्मणोरविभागः विवक्षित इति परेषामपि संमतम् ।
अत्र ऐक्याभेदादिशब्दं विहाय अविभागशब्दं प्रयोक्तुस्सूत्रकृतः जीवब्रह्मणोनैक्यं, किंतु विभज्य स्थित्यनर्हसंबन्धः विव-
क्षित इति स्फुटम् । अयमेव संबन्धः समानाधिकरणनिर्देशे मूलम् । एतत्सम्बन्धनिबन्धनएवैक्यव्यवहारः । 'प्रयोगचोदना-
भावादर्थैकत्वमविभागात्' इत्याकृत्यधिकरणे जातिगुणयोर्व्यक्तिगुणिनोश्च अविभागेन अर्थैकत्वप्रतिपादनेन तद्वज्जीवब्रह्मणोर-
विभागेनार्थैक्यमिति सूत्रकाराशयः । 'सलिल एको द्रष्टाऽद्वैतो भवति' (६.३.३२) इति सुषुप्तौ जीवब्रह्माद्वैतं प्रतिपादितम् ।
सुषुप्तौ च अविद्यायाः अन्तःकरणसंस्कारस्य च सत्त्वेन जीवब्रह्मणोरद्वैतं परमतेऽपि न सम्भवति । तत्प्रकरणे 'यद्वै तन्न
पश्यति' इत्यादौ 'नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रूयते । अत्र द्वितीयसामान्यस्य न निषेधः तादित्यस्य
वैयर्थ्यात् तादित्यस्य इन्द्रियसम्बद्धमित्यर्थः । इन्द्रियसम्बन्धविशिष्टवस्तुनोऽभावः इन्द्रियसम्बन्धरूपविशेषणाभावनिबन्धनः
अतश्चात्र द्वैतमिथ्यात्वं अद्वैतसिद्धिकारादिसंमतं न सिद्ध्यतीति प्रागेवोक्तम् । 'ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यत्र विभ-
क्तवस्तुदर्शनमेव न सम्भवतीत्युक्तम् ; नतु अन्यवस्तुसामान्यदर्शनं न सम्भवतीति । अत्र विभक्तशब्दप्रयोगेण परमात्मनो
ऽन्यत् ततोऽविभक्तमित्यर्थस्सूच्यते सुषुप्तौ परब्रह्मणोऽन्यस्य जीवस्य परमात्माविभागसत्त्वे मुक्तावप्यविभागइत्याशयेन सूत्रे
अविभागशब्दः प्रयुक्तः । 'यस्सर्वेषु भूतेषु तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्यत्र बद्धमुक्तयोः परशरीरत्वस्योक्तेः । एते-
नाकृत्यधिकरणनयेन जीववाचिशब्दानां परमात्मपरत्वमित्यर्थः सूत्रकृतो विवक्षित इति निर्णीयते ॥

अतश्च 'नीलमुत्पलम्' इत्यादौ विशेष्यविशेषणभावे सामानाधिकरण्यम्, तद्वदेव 'तत्त्वमसि' इत्यादौ सामा-
नाधिकरण्यम् एकविधेनैव सामानाधिकरण्येन सर्वत्रोपपत्तिसम्भवात् इति निर्धारितं भवति । एतदर्थसूचनायैव प्रकारवा-
चिनश्शब्दाः प्रकारिबोधका इत्युक्तम् । तेन विशेष्यविशेषणभाव एव सामानाधिकरण्यमिति बोधितं भवति । येषामप्र-

## गूढार्थसंग्रहः

थक्सिद्धप्रकारवाचिनां मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्येनैव प्रयोगः तेषामेव प्रकारिपर्यन्तता नान्येषाम् , तेषां निष्कर्षशब्दत्वात् ' इति भाष्ये प्रागेव स्फुटमुक्तम् । एतेन (ब्रह्मविद्याऽऽभरणसिद्धान्तसिद्धाञ्जनयोः) परोक्तदोषाः नैव लगन्तीति सिद्धम् । ' य आत्मनि तिष्ठन्नात्मनोऽन्तरः ' इत्यत्र व्याप्तिः नियमनहेतुभूतैव विवक्षिता ' स एतासां प्रतिबोधनायाभ्यन्तरं विविशानि ' इति मैत्रायणीयश्रुत्यनुसारात् । एतेन पृथिव्याद्यवेदनवत् ' यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरः ' इत्युक्तार्थोऽपि न नियमने हेतुः ' इति (सि.सि.अं) उक्तिर्निरवकाशा । यद्यपि एतस्य वा अक्षरस्य प्रशासने ' इति श्रुतौ प्रशासनेन धारकत्वमुक्तं न प्रवेश उक्तः तथाऽपि '**परमकारुण्येनास्मदुज्जिजीविषया अस्मद्धृदये सन्निहित** ' मिति सौलभ्यानुसन्धानं प्रवेशोक्त्यैव सिद्ध्यतीति सर्वत्रप्रसिद्ध्यधिकरणभाष्य एव स्फुटम् ॥

एतेन नियमनार्थव्याप्तया शरीरत्वमन्तर्यामिब्राह्मणे स्थापितं भवति । ' नैव स्त्री न पुमान् ' इत्यादौ शरीरसम्बन्धेनैव स्त्र्यादिशब्दाः जीवे वर्तन्ते । शरीरसम्बन्धश्च ' प्राणाधिपस्सञ्चरति स्वकर्मभिः ' इति प्रागुक्तश्रुत्या कर्मसंबन्धनिबन्धनः ' तद्य इह रमणीयचरणाः ' इति श्रुत्याचेति प्रागेवोपपादितम् । परमात्मनः सशरीरत्वेऽपि ' द्वासुपर्णा सयुजासखाया ' इत्यादिश्रुतिषु परमात्मनः कर्मसंबन्धविरहप्रतिपादनेन स्वेच्छामूलक एव शरीरसंबन्ध इति नाशरीरकवाक्यविरोधः । ' द्वासुपर्णा ' इति श्रुत्यर्थः प्रागेव (७६२.पु) निरूपितः ॥

' अन्तर्यामिब्राह्मणोक्तदिशा अत्र प्रवेशस्य नियमनार्थता न सम्भवति, ' अनेन जीवेनात्मना ' इति विरोधात् ' इति (ब्र.वि.आ) उक्तिरनुपादेया । तत्र ' जीवेनात्मना ' इत्येतावन्मात्रोक्त्यैवोपपत्तौ ' अनेन ' इत्यस्य सत्त्वेन परसम्मतार्थस्यासिद्धेः । अत्र (छा) भाष्यम्–' अनेन जीवेनेति । स्वबुद्धिस्थं पूर्वसृष्ट्यनुभूतं प्राणधारिणमात्मानमेव स्मरन्त्याह— अनेन जीवेनात्मनेति । प्राणधारणकर्त्रा आत्मनेति वचनात् स्वात्मनो व्यतिरिक्तेन चैतन्यस्वरूपतयाऽविशिष्टेनेत्येतद्दर्शयति । ' इति ' जीवोहिनाम देवताया आभासमात्रं बुद्ध्यादिभूतमात्रासंसर्गजनितः आदर्श इव प्रविष्टः पुरुषप्रतिबिम्बः जलादिष्विव सूर्यादीनाम् ' इति च ॥

अत्र ' चैतन्यस्वरूपतयाऽविशिष्टेन ' इत्यर्थविवक्षागमकं न किंचिद्वर्तते । सूर्यस्य विप्रकृष्टत्वेन सावयवत्वेन च प्रतिबिंबसम्भवेऽपि चैतन्यस्य निरवयवत्वेन सन्निकृष्टत्वेन च प्रतिबिंबो न सम्भवत्येव । ' तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम् ' इति एतत्पूर्वश्रुतिवाक्यम् । तत्र जीवशब्दस्य योऽर्थः सएवार्थोऽत्रापि स्वरसतःप्रतीयते । अत्र ' तेषां जीवाविष्टानां खल्वेषां पक्ष्यादीनां भूतानाम् ' इति भाष्यम् (शं) । अत्र आनन्दगिरिः— ' महाभूतानामचेतनानां ब्रह्मकार्यतोक्ता । सम्प्रति जीवाविष्टानां भौतिकानामपि परम्परया ब्रह्मकार्यतैवेति वक्तुं तान्यनुवदति तेषामिति । पूर्वाध्याये येषां गत्यागती दर्शिते तृतीयं च स्थानमुक्तं तानि तच्छब्देन परामृश्यन्ते, तेषां प्रसिद्धत्वद्योतनार्थं खल्वित्युक्तम् । ' इति, ' जीवानां भूतानां सत्कार्यत्वं प्रकरणप्रामाण्यादुक्तम् इदानीं जीवानां विशिष्टरूपत्वेन ब्रह्मकार्यत्वेऽपि न स्वरूपेण तत्कार्यत्वम् । ब्रह्मैवोपाधिप्रविष्टं जीवव्यवहारास्पदमित्यङ्गीकारात् । तथा च ब्रह्मणि विज्ञाते जीवविज्ञानं सेत्स्यति । ' इति च । एतत्पर्यालोचनायां पञ्चाग्निविद्यायां गत्यागती ययोः उक्ता तयोरेवात्र विवक्षेति स्फुटं प्रतीयते । ' तृतीयशब्दावरोधस्संशोकजस्य ' (३.१.२१) इति (शं) सूत्रभाष्ये इयं श्रुतिरुपात्ता तेनोक्तोऽर्थः परेषामपि संमत इति सिद्धम् । सद्विद्यायामपि उत्तरत्र उत्क्रान्तिः वक्ष्यते । अतः विद्याद्वयमपि एकविषयमेवेत्यङ्गीकरणीयम् । परमते सद्विद्या निर्गुणविद्या, पञ्चाग्निविद्यातु नेति वैलक्षण्यम् । अनेन श्रुतिवाक्येन तद्वैलक्षण्यं निरवकाशमिति बोध्यम् । ' तेषां खल्वेषां भूतानाम् ' इति वाक्ये तच्छब्दोपादानेन प्रथमाध्याये धूमादिमार्गे पुनर्निवृत्तिकाले जीवानां

## गूढार्थसङ्ग्रहः

यादृश्यवस्था तादृशावस्था वतामेवात्र ग्रहणमिति बोधितं भवति । भूतसूक्ष्मसंपरिष्वक्तस्य जीवस्य पुरुषस्त्रीदेहावयवद्वारा
शरीरसंबन्धस्तत्र प्रतिपादितः । 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यत्र पुरुषशब्देन शरीरसंयुक्तवाचिनाऽ-
यमर्थो बोधितः । एवं च शरीरप्रवेशप्राक्कालिकावस्थापन्नस्य पूर्ववाक्ये जीवशब्देन बोधनेन अस्यैव शरीरसंयोगदशायां
मनुष्यादिशब्दवाच्यत्वस्य प्रतिपत्तिस्सम्पन्ना ॥

जीवेनात्मना प्रविश्येत्यनभिधाय 'अनु' शब्दप्रयोगेण जीवात्मप्रवेशकाल एव जीवात्मानमनुसृत्य परमात्मप्र-
वेशः । प्रवेशस्य नियमनार्थतायाः अन्यत्र श्रुतावुक्त्या 'सेयम्' इत्यत्र तच्छब्दस्य आदेशशब्दार्थप्रशासितृपरामर्शकत्वेन
च अत्रापि नियमनार्थप्रवेश एव विवक्षितः । नामरूपव्याकरणमपि मनुष्यादिनामरूपव्याकरणमेव, तच्च स्वपर्यन्तमेव ।
'बहुस्यां प्रजायेय' इति पूर्वमुक्तेः । जीवात्मनः परमात्मशरीरत्वप्रतिपादकश्रुत्यन्तरानुसारेण परमात्मशरीरत्वसिद्ध्या शरी-
रान्तःप्रवेशनिबन्धनमनुष्यादिशब्दबोध्यत्ववत् जीवशब्दोऽपि जीवशरीरकवाची इत्यर्थः ज्ञातुं शक्यते । सिंहेन भूत्वा
बहवो मयाऽत्ताः व्याघ्रेण भूत्वा बहवो मयाऽत्ताः इति वाक्यसमशीलत्वादस्यवाक्यस्य । जीवशरीरकस्यानुप्रवेशकथनेन
मनुष्यादिशब्दानां मनुष्यादिशरीरसंयुक्तजीवशरीरिपरमात्मबोधकत्वं निर्णीतं भवति । नामरूपव्याकरणं च व्यष्टिसृष्टौ ।
समष्टिसृष्टौ च त्रिवृत्करणादेरभावेन जीवस्य शरीरसंबन्धस्यैवासम्भवात् । चतुर्मुखशरीरकस्यैव व्यष्टिसृष्टिः । अतः भूत-
सृष्ट्यनन्तरं नामरूपव्याकरणोक्तिर्युक्ता । 'तत्तेज ऐक्षत' इत्यादौ तेजआदिशब्दानां तेजश्शरीरकपरमात्मपर्यन्तत्वं 'यस्य
तेजश्शरीरम्' इत्यन्तर्यामिब्राह्मणादित एव सिद्ध्यति । अन्तर्यामिब्राह्मणे 'यं पृथिवी न वेद' इत्युक्तिमात्रेण पृथिव्या-
दिशब्दानामभिमानिदेवतापरत्वं न सिद्ध्यति तथासति पृथिव्यादिभूतान्तर्यामित्वप्रतिपत्तिर्न स्यात् ॥

'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इति प्रश्नवाक्ये सर्वान्तर्यामिण एव प्रश्नस्य
प्रतीत्या देवतान्तर्यामित्वमात्रेण प्रतिवचनपूर्त्यसम्भवात् । 'य आदित्ये तिष्ठन्' 'यस्सर्वेषु भूतेषु तिष्ठन्' 'यआत्मनि
तिष्ठन्' इत्यादौ देवतान्तर्यामित्वस्यापि लाभस्सम्भवति । 'यं पृथिवी न वेद' इतितु 'नान्तरिक्षे न दिवि' इतिवत्
दृष्टान्तार्थः । 'तेषां खल्वेषां भूतानाम्' इति वाक्येनापि पूर्वं भूतसृष्टिरेव प्रतिपादितेति प्रतीयते । अतः 'तत्तेज
ऐक्षत' इत्यादौ तेजआदिशब्दानां तेजआदिभूतशरीरकपरमात्मपरत्वमन्तर्यामिब्राह्मणेनैव सिद्ध्यति । 'अनेन जीवेना-
त्मना' इत्यादौ मनुष्यादिशब्दानां स्वपर्यन्तनामरूपव्याकरणेन मनुष्यादिशरीरसंयुक्तजीवशरीरकपरमात्मपर्यन्तताप्रतिपत्तौ
'तत्त्वमसि श्वेतकेतो' इति वाक्यार्थः सम्यङ्निर्णीतो भवति । अत्र श्वेतकेतुशब्दस्य श्वेतकेतुशरीरकजीवपरत्वं
पूर्वमेव श्वेतकेतुः जानाति । नामरूपव्याकरणश्रुत्यर्थज्ञानानन्तरं त्वंशब्दस्य श्वेतकेतुशरीरकपरमात्मपर्यन्तत्वज्ञानं सुलभम् ।
एवं नामरूपव्याकरणश्रुत्यर्थज्ञाने यथा मनुष्यादिशब्दाः मनुष्यशरीरसंयुक्तजीववाचिनः तथैव तज्जीवशरीरकपरमात्मवा-
चिनोऽपि इत्येवंप्रतिपत्तिस्संभवति । एवं 'तत्त्वमसि श्वेतकेतो' इति वाक्यार्थनिर्णयोऽपि । परमते श्वेतकेतुशब्दस्य
नवकृत्वोऽभ्यासो विफल एव स्यात् । सिद्धान्तेतु साफल्यम् ॥

एवं 'तेषां खल्वेषाम्' इति वाक्यानन्तरं 'अनेन जीवेन' इति वाक्यप्रवृत्तेस्साफल्यम् परमते एतदपि न
सम्भवति । एवं च 'अनेन जीवेनात्मना' इत्यत्र अनेनेत्यनेन पूर्ववाक्यप्रतिपन्नार्थस्य जीवशब्दार्थे बोधनेनात्रापि
प्रवेशस्य नियमनार्थत्वं सिद्ध्यतीति न 'अनेन जीवेन' इत्युक्तेः बाधकत्वोक्तिः(ब्र.वि आ)संभवः ॥
एवं 'अनेन' इत्यनेन उक्तार्थबोधनेन जीवेन इत्यस्य नव्यसम्मतानिरुद्धार्थकत्वमपि नात्र विवक्षितमिति सि-
द्ध्यति । 'तेषां खल्वेषाम्' इति वाक्ये पूर्वाध्याये धूमादिमार्गात्पुनर्निवृत्तिकालिकावस्थाबोधनेन जीवस्य शरीरसम्ब-

## गूढार्थसंग्रहः

न्धस्य कर्मकृतत्वप्रतीत्याच 'अनेन जीवेन' इत्यत्रोभयोश्शरीरसंबन्धज्ञाने 'द्वासुपर्णा सयुजा सखाया' इत्यादिश्रुत्यन्तरोक्त दिशा परमात्मनः कर्मसम्बन्धविरहज्ञानेन अशरीरत्वप्रतिपादकश्रुतिवाक्यानि कर्ममूलकशरीरसम्बन्धनिषेधपराणीति प्रतीतिस्सम्भवति । अथवा आण्डजं जीवजमुद्भिज्जंचेति पूर्वविभक्तशरीरसम्बद्धसर्वजीवानामपि जीवशब्देन ग्रहणम् ॥

जीवशब्देन संसारिविवक्षायां 'तत्तेज ऐक्षत' इत्यादिना तेषामेव चेतनत्वावगतेः जीवान्तरानुप्रवेशोऽनपेक्षितः इति दोषः नवीनैः (छान्दोग्यभाष्ये) यद्यप्युक्तः । तथाऽपि 'तत्तेज ऐक्षत' इत्यादौ तेजआदिशब्दानां तेजश्शरीरकपरमात्मपरत्वेन तदतिरिक्तचेतनपरत्वाभावात् । 'अहमिमास्तिस्रो देवता' इत्यत्र देवताशब्दस्यापि तेजआद्यभिमानिदेवतापरत्वेन तस्या अपि देवतायाः परमात्मत्वेन परमात्माभिमन्यमानतेजोऽन्नानामेव तत्र विवक्षा । त्रिवृत्करणंतु भूतानामेव, नतु भूतातिरिक्तचेतनानां भूतेषु त्रिवृत्करणेनाण्डोत्पत्तेः प्रमाणसिद्धत्वात् । 'तत्तेजोऽसृजत' इत्यादौ अण्डोत्पत्तेःपूर्वकाले तेज आदिसृष्टिः प्रतिपाद्यते । नामरूपव्याकरणं च अण्डोत्पत्त्यनन्तरकालिकम् । 'तेषां खल्वेषां भूतानाम्' इति वाक्ये सृष्टपदार्थानां मूलमूलिभावप्रदर्शनेन समष्टिव्यष्ट्योः पूर्वोत्तरकालिकत्वं बोधितम् । अतः 'अनेन जीवेनात्मना' इत्यत्र 'तेषां खल्वेषां भूतानाम्' इतिवाक्यप्रस्तुतजीवपरत्वमेव युक्तम् । 'इदमस्तु सन्निकृष्टम्' इति महाभाष्यानुसारेण शीघ्रोपस्थितिकतया च तत्परामर्शस्यैव युक्तत्वात् । जीवस्य परमात्मशरीरत्वप्रतिपादकान्तर्यामिब्राह्मणादिना आत्मन्शब्दसमभिव्याहारेण च जीवशब्दस्य जीवशरीरकपरत्वनिश्चयसम्भवात् । अतश्च न पूर्ववाक्यविरोधः । 'पुमान्नदेवः—शरीराकृतिभेदास्तु' इति पराशरवचने देवादिशब्दे आकृत्यधिकरणनयसूचनेन शरीरवाचिनां शब्दानां शरीरिणि परमात्मन्यपि शक्तिस्समर्थिता । आकृत्यधिकरणजैमिनितात्पर्यं प्रागेव निरूपितम् । अतो भट्टादिमतवत् व्यक्ताविव ब्रह्मणि लक्षणेति विवक्षायामुक्तश्रुत्यादिविरोधः चन्द्रिकोक्तः न घटते । सर्वशब्दानां परमात्मबोधकत्वं योगपौष्कल्येन शरीरिणि वृत्त्या वा साध्यते । तत्र च विषयव्यवस्था श्रुतप्रकाशिका (वै.अ) न्यायसिद्धाञ्जनयोः स्फुटा ॥

एतेन आकाशशब्दे योगेन ब्रह्मप्रतीत्यङ्गीकारेण शरीरिणि व्युत्पत्तिर्न घटत इति चन्द्रिकोक्तिः निरवकाशा । श्रुतिषु ब्रह्मणि कार्यत्वनिषेधेन कारणत्वोक्तिः वियदादिवत् सङ्कोचविकासरूपोत्पत्त्यभावाभिप्राया । नतु घटाद्यन्तर्यामित्वेन कार्यत्वं न सम्भवतीत्येतत्परा । मृत् घटस्य कारणमित्यत्र वेदान्तव्युत्पत्तिमतां मृदन्तर्यामी घटान्तर्यामिणः कारणमितिधीः । एतद्व्युत्पत्तिशून्यानांतु यथाश्रुतार्थधीः इति लोकव्यवहारस्य नानुपपत्तिः । नवीनैरपि मृद्घटशब्दयोः तत्तदन्तर्यामिविषयकत्वमभ्युपगम्यत एव । सर्वत्र शब्दानां शरीरिपरतायाः अनभिधानेन 'अहंब्रह्मास्मि' इत्यत्र अहमित्यस्य शरीरिबोधकत्वाविरहेण (त्वं) अनुपपत्तिः निरवकाशा । अन्यत्सर्वं प्राचीनग्रन्थेष्वेव समाहितम् । अतः 'अनेन जीवेन' इत्यत्र अनेन इत्यनेन परसम्मतार्थः नव्यसम्मतार्थश्च न विवक्षित इति सिद्धम् ॥

देवादिशब्दे अज्ञानां शरीरमात्रे प्रयोगसत्त्वेऽपि शरीरव्यतिरिक्तात्मज्ञानिनां शरीरे प्रयोगो माऽस्तुनाम । शुक्लादिशब्दानां गुणे गुणिनि च विभिन्नशक्त्या प्रयोगवत् तेजआदिशब्दानामुभयत्र प्रयोगोपपत्तौ शरीरवाचिनां शब्दानां शरीरिणि प्रयोगाङ्गीकारे नकिंचिद्बाधकम् । नवीनैरपि विद्वद्रूढिमहायोगाभ्यां सर्वशब्दानां परमात्मनि परममुख्यत्वमन्यत्र मुख्यत्वं च व्यवस्थाप्यते । 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तः तद्भावभावित्वात्' इत्यत्र भाष्यादावुभयत्र प्रयोगोपपत्तिरुपपादिता । निष्कर्षकानिष्कर्षकभेदेन प्रयोगव्यवस्था अत्रैवोक्ता ॥

एवं च तेजआदिशब्दानां शरीरे शरीरिणि च प्रयोगेण देवादिशब्दवैषम्येन शरीरिणि शक्तिर्न सिद्ध्यतीति चन्द्रिकोक्तिर्निरवकाशा सर्वेषां शब्दानां तत्तदन्तर्यामिणि परममुख्यता नवीनैरपि स्वीक्रियते । तदन्तर्यामी तच्छरीरैवेति उभयोरविशेष एव पर्यवसानम् । 'तंत्वौपनिषदं पुरुषम्' इति श्रुतिस्वारस्यं च सिद्धान्ते ।

## श्रीभाष्यम्

**आत्मपर्यन्ताः। एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वाज्जीवात्मवाचिनश्शब्दाः परमात्मपर्यन्ताः अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः। अयमर्थः वेदार्थसंग्रहे समर्थितः इदमेव शरीरात्मभावलक्षणं तादात्म्यम् 'आत्मेतितूपगच्छन्ति ग्राहयन्तिच' (४.१.३) इति वक्ष्यति 'आत्मेत्येवतु गृह्णीयात्' (वाक्यं) इति च वाक्यकारः।**

## श्रुतप्रकाशिका

एवं शरीरवाचिशब्दाः शरीरिपर्यन्तास्स्युः ततः किं परमात्मचिदचिद्वाचिशब्दानां सामानाधिकरण्यस्येत्यत्राह— **एवमिति**। प्रयोजकाकारं वदन्निगमयति। **अतइति**। एवं 'तत्त्वमसी' ति वाक्येन चिदचिच्छरीरकस्य कारणावस्थस्य कार्यावस्थस्य च ब्रह्मण एकत्वं प्रतिपादितम्। नच * प्रकारैक्यं कार्यकारणैक्यं चेत्यर्थभेदा*द्वाक्यभेदश्शङ्कनीयः प्रकारित्वस्य पदावगम्यत्वात्। तत्पदं हि प्रकृतवाचकं प्रकृतं हि सार्वज्ञ्यादिगुणकं जगच्छरीरकं कारणम् **'तदैक्षत' 'एकमेव' 'बहुस्याम्' 'तत्तेजोऽसृजत' 'अनुप्रविश्य नामरूपे व्याकरवाणि' 'सदायतनास्सत्प्रतिष्ठाः'** इत्यादिभिरीक्षितृत्वैकत्वानुप्रवेशपूर्वकनामरूपव्याकरणधारणश्रवणात्। अतस्तत्पदं सार्वज्ञ्यादिगुणकजगच्छरीरकब्रह्मपरम्। त्वंपदं च कार्याचित्संसृष्टजीवविशेषविशिष्टब्रह्मपरम्। अत उभयावस्थस्य ब्रह्मणः चिदचित्प्रकारवत्त्वं पदावगतम्। पदद्वयस्थ समानविभक्त्या कारणावस्थस्य कार्यावस्थस्य च ब्रह्मण एकत्वमवगम्यते। अतो न वाक्यभेदः। अतः कार्यकारणावस्थप्रकार्यैकत्वं 'तत्त्वमसि' इति वाक्येन प्रतिपादितम्॥

परमात्मानंप्रति जगतश्शरीरत्वं कथम्? अस्मिन्नसिद्धे शरीरत्वप्रयुक्ता दोषास्स्युः उक्तस्यानुग्राहकस्य न्यायस्य किमनुग्राह्यं प्रमाणं कथं व्युत्पत्तिविरोधपरिहार इत्यादिशङ्कायामाह— **अयमर्थइति**। परेण स्वरूपैक्यपरत्वेनोदाहृतं सूत्रं वाक्यकारवचनं च व्याचष्टे। **इदमेवेत्यादिना**॥

अत्रायमर्थस्संकलय्यानुसंधेयः मृषावादिभिस्सामानाधिकरण्यानिर्वाहो बहुधा कृतः। तत्र सामानाधिकरण्यस्य तद्व्यावृत्तिमुखेन वस्तुमात्रपरत्वं सत्यादिवाक्यनिरूपणेन निरस्तम्। व्यावृत्तीनामुपलक्षणतापक्षे पदान्तरवैयर्थ्यात्। * विशेषणत्वाभ्युपगमे मुख्ये संभवति लाक्षणिकार्थस्वीकारायोगाच्च, 'तत्त्वमसि' इति वाक्येचान्वयमुखेन स्वरूपमात्रपरत्वे तत्पदस्य प्रकृतपरामर्शित्वभङ्गः। पदद्वयलक्षणा, प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकरण्यलक्षणहानिरुपलक्षणरूपप्रवृत्तिनिमित्ताश्रयणे पदान्तरवैयर्थ्यं **'तदैक्षत'** इत्याद्युपक्रमविरोधः, उपक्रमोपक्रमविरोधः, श्रुत्यन्तरविरोधः, तिरोधानाद्यनुपपत्तिरूपतर्कविरोधश्चेति दूषणान्युक्तानि॥

बाधार्थत्वे च स्वरूपलक्षणा नञर्थलक्षणादयो दोषाः। प्रत्यक्षेण बाधादर्शनाद्बाधपरत्वानुपपत्तिः पदान्तरेण विरोधिधर्मानुपस्थानेन विरोधाभावात् बाधकल्पनानुपपत्तिरित्यधिकं दूषणद्वयंचोक्तम्। तथा **'सर्वं खल्विदं ब्रह्म'** इत्यत्र

## गूढार्थसङ्ग्रहः

एतत्सर्वमभिप्रेत्याह— **एवं देवमनुष्यादिपिण्डविशिष्टानामित्यादि। आत्मेतितूपगच्छन्ति ग्राहयन्तिचेति वक्ष्यतीति**। 'तदात्मानमेवावेदहंब्रह्मास्मि' (बृ) इत्यत्र 'आत्मन्' शब्दं मनसि निधाय **'आत्मेतितूपगच्छन्ति'**

## श्रुतप्रकाशिका

सामानाधिकरण्यस्यचातदाकारारोपणनिबन्धनत्वमयुक्तम् । सर्वत्वब्रह्मत्वयोरेकाश्रयत्वाभावेन सामानाधिकरण्यलक्षणाभावात्परमार्थतऐकाधिकरण्ये सम्भवति अपरमार्थैक्यविषयत्वाश्रयणानुपपत्तेश्च । ऐक्यापारमार्थ्येहि सामानाधिकरण्यवाक्यप्रामाण्यं हीयते प्रतिपिपादयिषितस्यैक्यस्य मिथ्यात्वात् । एवमचिद्ब्रह्मणोस्सामानाधिकरण्यं सत्यानृतयोरैक्याभावादयुक्तम् । अन्तःकरणचिन्मात्रयोरैक्याभावात्, **'ब्रह्माहमस्मि'** इति सामानाधिकरण्यं न घटते । अहंशब्दस्यान्तःकरणोपहितज्ञप्तिवाचित्वात्तदुपपत्तिरितिचेन्न अहंशब्दस्यान्तःकरणोपहितज्ञप्तिवाचित्वाभावात् । * यथा 'अहमिच्छामि द्वेष्मि' इतीच्छादेरहमर्थविशेषणतया व्यवहारात् अहंशब्दस्य नान्तःकरणोपहितेच्छादिवाचित्वम् ॥

एवमहंजानामीति प्रयोगात्तदुपहितज्ञप्तिवाचित्वमप्यहंशब्दस्यानुपपन्नम् । * नहि ज्ञप्तिरेव ज्ञप्तया विशेष्यते । ज्ञातृज्ञेयतदवच्छिन्नज्ञानातिरिक्तस्य कस्यचिज्ज्ञानस्य शशविषाणायमानस्य लौकिकबुद्ध्यगोचरत्वान्नतद्विवक्षयाऽहंशब्दप्रयोगोपपत्तिः । अतोऽहंब्रह्मास्मीति सामानाधिकरण्यमयुक्तम् । अन्तःकरणद्वयैक्याभावादहमादिशब्दानां पूर्वोक्तन्यायेन तदुपहितज्ञप्तिवाचित्वाभावाच्च, **'अहमनुरभवम्'** इत्यादिसामानाधिकरण्यंचानुपपन्नं प्राणाद्यचेतनजीवयोरैक्याभावात्— **'प्राणोऽस्मि प्रज्ञात्मा' 'अहमेवेदं सर्वम्' 'मत्तस्सर्वमहं सर्वम्'** इत्यादिचायुक्तम् । **'अहं हरिस्सर्वमिदं जनार्दनः'** इति जीवेश्वरवाचिनोरचिदीश्वरवाचिनोश्च शब्दयोस्सामानाधिकरण्यमयुक्तम् । जीवेश्वरयोःपृथिव्यादीनां च चिन्मात्रे कल्पितत्वात् । नहि रज्जुकल्पितसर्पभूदळनाम्बुधारावाचिनां शब्दानां मिथस्सामानाधिकरण्यम् । **अहं हरिस्सर्वमि**त्यादिशब्दानां अध्यस्तवाचिनामधिष्ठानभूतपरब्रह्मपरत्वादेकार्थवृत्तित्वमितिचेन्न आकृतिवाचिनां व्यक्तिपर्यन्ततयेव अध्यस्तवाचिनां शब्दानामधिष्ठानवाचित्वेन व्युत्पत्त्यभावात् । नहि रजतशब्दस्य शुक्तित्वाश्रयद्रव्यवाचित्वेन व्युत्पत्तिः तदभावश्च शुक्तिशकलादौ रजतादिशब्दप्रवृत्तिनिमित्तभूतरजतत्वादेरभावात् ॥

**ननु** अध्यस्तवाचिनश्शब्दा अधिष्ठाने मुख्यवृत्ताः इदं रजतमिति वृद्धव्यवहारमूलव्युत्पत्तिसद्भावादितिचेत् । उच्यते—* यदर्थविवक्षया शब्दप्रयोगोऽनन्यथासिद्धः तस्य तद्वाचित्वनिश्चयः । तत्रेदं वक्तव्यम् । अध्यस्तवाचिनश्शब्दस्याधिष्ठानपर्यन्तत्वे किं भ्रान्तप्रयोगो मूलम् ? उत प्रबुद्धप्रयोगः । न प्रथमः रजतपुरोवर्तिनोरनध्यस्तत्वानधिष्ठानत्वबुद्ध्यैव तत्र रजतशब्दप्रयोग इति तस्याध्यस्तवाचिनोऽधिष्ठानपर्यन्तत्वासाधकत्वात् । नह्यदेवदत्तत्वाज्ञानाद्देवदत्तशब्दप्रयोगो देवदत्तशब्दस्य * यज्ञदत्तवाचित्वे मूलं भवति । द्वितीये च रज्जुस्सर्पइति प्रयोग*स्सर्पशब्दस्य प्रागनारोपितबुद्धिमूलप्रयोगानुवादरूपत्वा*दारोपितविषयशक्तिकल्पेन मूलं न स्यात् ॥

नन्वपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यन्तत्वमिष्टं अध्यस्तंचाधिष्ठानस्यापृथग्विशेषणं तस्मिन्सत्यवभासात्तेनविना तदनवभासाच्चेतिचेन्न, अन्यत्र सतोविशेषणस्य पुरोऽवस्थितं प्रत्यपृथक्सिद्ध्यभावात् । अख्यातिपक्षेचाध्यस्तत्वाधिष्ठानत्वयोरेवाभावान्मृषावादिपक्षे मृद्विवर्तस्य घटादेः कनकंप्रतीवाविद्याख्यदोषविवर्तस्य रजतस्य पुरोऽवस्थितं प्रत्यपृथग्विशेषणत्वायोगाच्चेति, अतो जीवेश्वरसामानाधिकरण्यमयुक्तम् ॥

**किंच** तत्त्वमस्यादिवाक्येषु ब्रह्मवाचकपदसमभिव्याहृतं त्वमादिजीववाचिपदं किं मुख्यार्थाप्रहाणेन समानाधिकरणं उत तत्प्रहाणेन ? प्रथमे वस्तुनस्सविशेषत्वं दोषार्हतदनर्हयोरैक्यानुपपत्तिश्च, * द्वितीये जीवब्रह्मणोरैक्यं न सिद्ध्येज्जीवभावस्य मिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च न सिद्ध्येत् प्रकृत्यंशविवक्षितार्थैकत्वपरायास्समानविभक्तेस्तदविवक्षितार्थकत्वप्रतिपादनासामर्थ्यात्तदविवक्षितविशेषणमिथ्यात्वप्रतिपादनासामर्थ्याच्च । * नहि प्रहृष्टोजनपदः अग्निर्माणवक इत्यत्र जनपदप्रहर्षवतोरग्निमाणवकयोश्चैकत्वं, जनपदत्वाग्नित्वयोर्मिथ्यात्वेन तदधिष्ठानमात्रपारमार्थ्यं च सिद्ध्यति । जनपदशब्देन

### श्रुतप्रकाशिका

वाच्यबहिर्भूतो लक्ष्यते त्वंशब्देनतु वाच्यैकदेशो लक्ष्यत इति * तस्य तत्ताविधानेऽधिष्ठानैक्यं विरोधाज्जीवभावमिथ्यात्वं च सिद्ध्यतीतिचेन्न त्वमादिशब्दानां ज्ञातृपदसमानाधिकरणानां ज्ञप्तिवैयधिकरण्येन ज्ञप्तिवाचित्वासिद्ध्या वाच्यैकदेशलक्षणाया दुर्वचत्वात् तत्सिद्धावपि नाधिष्ठानैक्यमितराकारमिथ्यात्वं च सिध्येत्, नहि दूरस्थस्य पर्वतस्य अग्रे ज्वलन्तमग्निं दृष्ट्वा पर्वतो ज्वलित इत्युक्ते पर्वताग्न्योरेकत्वं, सान्वादिप्रदेशान्तरमिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च सिद्ध्यति। अतो विवक्षितैकत्वजीवभावमिथ्यात्वासिद्धिः। अतस्सर्वं सामानाधिकरण्यं मृषावादिनां विरुद्धम् ॥

औपाधिकभेदाभेदपक्षेऽपि मुख्यया वृत्त्या सामानाधिकरण्यमनुपपन्नम्। तथाहि ईश्वरएवहि ब्रह्म तन्मते जीवेश्वरयोरचिदीश्वरयोश्च क्लेशकर्माद्यर्हत्व तदनर्हत्व परिणामित्वापरिणामित्वलक्षणविरुद्धस्वभावयोगात्तद्वाचिशब्दानां घटपटादिशब्दानामिव न सामानाधिकरण्यम्। भेदवदभेदस्यापि विद्यमानत्वात्तदुपपत्तिरितिचेन्न; सत्यपि * केनाप्याकारेणैक्ये प्रवृत्ति निमित्तभावाभावलक्षणे विशेष्यांशभेदे प्रतीयमाने समानविभक्तेरेकत्वप्रतिपादनासामर्थ्यात्। यतः प्रथमपदप्रतिपन्नविशेष्यात् पदान्तरविशेष्यस्यांशतोऽपि भेदासहमभिन्नत्वमेव सामानाधिकरण्यावबोध्यम् ततएवहि खण्डमुण्डयोर्व्यक्तिजात्यात्मना घटशरावयोः * कार्यकारणरूपेण गोपुच्छयोरेकदेशैकदेशिभावेन * भिन्नत्ववदभिन्नत्वेऽभ्युपगम्यमानेऽपि खण्डो मुण्डो घटश्शरावो गौःपुच्छमिति सामानाधिकरण्याभावः ॥

ननु चिदचितोः ब्रह्मैकदेशत्वाच्छुक्लः कृष्णो रक्तश्चायं पटइतिवत् '**व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषःकाल एव च।**' इत्यादिसामानाधिकरण्यमुपपद्यते। नैवम्। एकदेशैकदेशिभावेसत्यपि अङ्गुलिःपुरुष इति सामानाधिकरण्यादर्शनात्। ननु शुक्लादिशब्दतुल्यत्वं किं न स्यात्? उच्यते—*पटस्यांशभेदे शुक्लादिशब्दानां पटशब्दश्रवणात्प्राक् मिथस्सामानाधिकरण्याभावे च सत्यपि शौक्ल्यादीनामपृथक्सिद्धविशेषणतया शुक्लादिशब्दैर्विशेष्यपर्यन्तैस्संहत्य चित्रशब्देनवाभिहिताद्विशेष्या*त्पटशब्दाभिहितविशेष्यस्यांशतोऽप्यनतिरेकात्सामानाधिकरण्यम्। हस्तादीनामेकदेशानां छेदनाद्यर्हाणां एकदेशिनंप्रत्यपृथक्सिद्धविशेषणत्वं नास्ति * छेदनादावपीन्द्रियाणामविनाशित्वात्तत्तद्गोळकस्याप्रच्युतस्वरूपत्वाच्च ॥

एवं च सति छिन्नहस्तादिवन्मृतशरीरस्यापि अप्रच्युतस्वरूपोपलम्भादात्मानंप्रति तस्य नापृथक्सिद्धिस्स्यादितिचेन्न शरीराख्यसङ्घातशैथिल्यानन्तरमेव आत्मोत्क्रमणात्, पश्चाच्छरीरबुद्धेर्दग्धपटे पटबुद्धिन्यायेन भ्रान्तिरूपत्वात्, हस्तादीनां तु छेदनदशायां अशिथिलस्वांशानां पश्चाच्छैथिल्यमिति विशेषः। अतस्तद्वाचिशब्दानां हस्तादिमात्रवाचित्वाद्धस्ताद्यवयवसङ्घातात्मकस्यैकदेशिनो हस्तादिमात्रातिरेकादनतिरेकलक्षणमेकत्वं प्रमाणविरुद्धतया समानविभक्तिर्न प्रतिपादयितुं शक्नोति। ननु हस्तत्वादयो धर्माश्शौक्ल्यादिवदपृथक्सिद्धाः घटस्येव शरीरादेरेकदेशे वर्तन्ते। अतश्शुक्लःकृष्णः पट इति वद्धस्तः पादो मनुष्य इति युक्तं वक्तुम् युक्त्यनभिज्ञत्वाल्लोको नप्रयुङ्क्ते उच्यते—युक्त्यनभिज्ञो विज्ञोऽपि लोकश्शुक्लादिशब्दान्विशेष्यपर्यन्तान् प्रयुङ्क्ते, नतु हस्तादिशब्दानेकदेशिपर्यन्तान् अतोऽभिज्ञानभिज्ञप्रयोगानुगुणव्यवस्थापकं वक्तव्यम्। तद्ब्रूमः ॥

केचिदपृथक्सिद्धधर्माः कस्यचिदेकदेश एव नियमेन वर्तन्ते, एकदेशे वाऽन्यत्र वा केचिदनियमेन वर्तन्ते। तत्र नियतैकदेशवृत्तिधर्मवाचिनश्शब्दाः तत्तदेकदेशभूतद्रव्यमात्रे वर्तन्ते एकदेशत्वप्रतीत्युत्पादननियमात्। एकदेशतयैव हि हस्तादयःप्रतीयन्ते एकदेशवृत्तिनियमरहितधर्मवाचिनश्शब्दा एकदेशत्वप्रतीतिनियमममपहाय विशेष्ये वर्तन्ते अतश्शुक्लादिशब्दैरेकदेशत्वं हित्वा तदाश्रयमात्रोपस्थापनात्तदुपस्थापिताश्रयात्पटत्वाश्रयस्यानतिरेकात्पटशब्दस्य सामानाधिकरण्यं

## श्रुतप्रकाशिका

युक्तम् । एकदेशमात्रोपस्थापकैर्हस्तादिशब्दैरेकदेशिनोऽनुपस्थापितत्वेन हस्तादिप्रातिपदिकप्रतिपन्नविशेष्यातिरेकात्सामानाधिकरण्यमयुक्तम् । यदि क्वचित्सामानाधिकरण्यं विद्यते । तत्र हस्तादिशब्दस्य तद्वति लक्षणया वा मनुष्यादिशब्दस्य तदेकदेशलक्षणया वा प्राधान्याद्यभिप्रायेणोपचारेण वा स्यात् । छिद्रमाकाश इत्यत्रत्वाकाशत्वस्य समुदायवृत्तित्वाभावेन छिद्रे पुष्कलतया नैकदेशलक्षणा । जीवत्वाचित्त्वादिधर्माश्च त्वन्मते ब्रह्मणो नियतैकदेशवृत्तय इति न तद्वाचिशब्दैरीश्वरवाचिशब्दानां मुख्यया वृत्त्या सामानाधिकरण्यम् । ननु शिरःपाणिरुदरं पादश्च शरीरमिति दृश्यते प्रयोगः । सत्यम् प्रभूतकृत्स्नावयवोपादानेऽवयविनस्तदनतिरेकात्सामानाधिकरण्यसंभवः प्रत्येकं सामानाधिकरण्यंत्वेकदेशलक्षणाप्रसङ्गादमुख्यमेव । एवं चिदचिद्विशेषवाचिशब्देष्वेकैकस्येश्वरवाचिपदसामानाधिकरण्यमयुक्तं स्यात् । एकदेशवाचिशब्दानां एकदेशिनि शक्त्यभावात् **'व्यक्तं विष्णुस्तथाऽव्यक्तम्'** **'ज्योतींषि विष्णुर्भुवनानि विष्णुः'** **'भूतानि विष्णुर्भुवनानि विष्णुः'** इतिहि प्रत्येकं सामानाधिकरण्यम् **'अहं सर्वम्'** इत्यत्रिज्जीववाचिपदयोरपि तद्वदेव सामानाधिकरण्यमयुक्तम् सर्वत्रामुख्यया वृत्त्या ब्रह्मोपस्थापनेन सामानाधिकरण्ये स एव दोषः मुख्यसामानाधिकरण्ये संभवत्यमुख्यवृत्त्याश्रयणस्यान्याय्यत्वात् ॥

स्वाभाविकभेदाभेदपक्षेऽपि भोक्तृभोग्यनियन्तॄणां त्रयाणामपि ब्रह्मांशत्वाभ्युपगमादचिज्जीवयोरचिदीश्वरयोर्जीवेश्वरयोश्च * सामानाधिकरण्यं घटश्शरावइतिवदनुपपन्नमित्येतदवस्थितम् । अंशतोऽपि विशेष्यभेदासहस्यैवाभेदस्य सामानाधिकरण्यबोध्यत्वात्तेषां ब्रह्मसामानाधिकरण्यमपि चिन्त्यम् । ब्रह्मवाचिपदानां सत्त्वद्रव्यत्वादिः साधारणाकारः प्रवृत्तिनिमित्तं चेत् **'तत्त्वमसि'** इत्युक्ते सदसि द्रव्यमसीत्युक्तं स्यात् तदानीमुपदेशवैयर्थ्यम् । नहि कश्चिदहमसदहमद्रव्यमिति मन्यते । सदन्तरैकत्वमुपदेष्टव्यमितिचेन्न तस्य सामानाधिकरण्यबोध्यत्वाभावात् । सामानाधिकरण्यंहि पूर्वनिर्दिष्टस्य विशेष्यस्य पदान्तरोपस्थापितविशेषणान्वयमवगमयति नतु तद्विशेषणान्वितवस्त्वन्तरैक्यम् । नहि ब्राह्मणस्त्वमसीत्युक्ते त्वंशब्दनिर्दिष्टस्य ब्राह्मणान्तरैक्यं प्रतिपादितं भवति । किंतु तस्य ब्राह्मणत्वविशेषणवैशिष्ट्यमेव । अतो *विवक्षितैकत्वासिद्धेरुपदेशवैयर्थ्यमेव * यद्यंशविशेषसाधारणाकारः प्रवृत्तिनिमित्तम् । तदा ब्रह्मादिशब्दानां * तदितरांशवाचिपदसामानाधि-

## गूढार्थसंग्रहः

इत्युक्तम् । तत्रात्मन्शब्दोऽन्तर्यामिपरः अन्यथा तच्छब्दवैयर्थ्यात् । 'न वक्तुरात्मोपदेशादितिचेदध्यात्मसम्बन्धभूमा ह्यस्मिन्' (१.१ ३०) इतिसूत्रे 'स म आत्मेतिविद्यात्' (कौषीतकी) इत्यत्र जीवब्रह्माभेदो न विवक्षितः । संबन्धबहुत्वस्य सिद्धान्तेऽभिधानात् । एतेन 'शास्त्रदृष्ट्यातूपदेशो वामदेववत्' इत्युत्तरसूत्रेऽपि तथैव विवक्षा निश्चीयते इति प्रागेव (२४५.पु) निरूपितम् । प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च त्रिविधमुपासनं 'जीवमुख्यप्राण–' इति सूत्रे 'उपासात्रैविध्यात्' इत्यत्र विवक्षितमिति वृत्तिकारमतं परैरपि तत्सूत्रे उपन्यस्तम् । एतदनुसारेण **'आत्मेतितूपगच्छान्ति ग्राहयन्ति च'** इत्यत्रापि जीवब्रह्माभेदो न विवक्षितइति वृत्तिकारसिद्धान्तः । 'भाक्तंवाऽनात्मवित्त्वात्तथाहि दर्शयति' इति सूत्रे 'तद्य इत्थंविदुर्येचेमेऽरण्ये श्रद्धातपइत्युपासते' इत्युक्ताधिकारिसाधारणमेवात्मवित्त्वं विवक्षितमिति पूर्वमेवोपपादितम् । अत्रोक्ताधिकारिणां निर्विशेषविद्यानिष्ठत्वं परे नाभ्युपगच्छन्ति । अतश्च सविशेषविद्यानिष्ठ एव आत्मवित् इतितत्सूत्रे विवक्षितमिति निर्णीयते । एतदनुसारेणैव **'आत्मेतितूपगच्छन्ति'** इत्यत्रापि सूत्रकारसिद्धान्तो वाच्यः । अयमेवार्थः तत्सूत्रभाष्ये स्थापयिष्यत इति भावः ॥

श्रीभाष्यम्

**अत्रेदं तत्त्वम्। अचिद्वस्तुनः चिद्वस्तुनः परस्य ब्रह्मणो भोग्यत्वेन भोक्तृत्वेनचेशितृत्वेन स्वरूपविवेकमाहुः काश्चन श्रुतयः 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया**

श्रुतप्रकाशिका

करण्ये विरोधस्स्यात्। यदा निरतिशयबृहत्त्वं प्रवृत्तिनिमित्तं तदा '**तत्त्वमसि**' इत्युक्ते निरतिशयबृहदसीत्युक्तं स्यात् ततश्चाणोर्जीवस्य निरतिशयबृहत्त्वविरोधः। त्वं निरतिशयबृहद्वस्तुनोंऽश इत्यर्थश्चेदेकदेशलक्षणा नहि ब्रह्मशब्दस्य बृहदेकदेशो मुख्यार्थः। एव*मसाधारणाकारान्तरस्य प्रवृत्तिनिमित्तत्वेऽप्यनुपपत्तिर्द्रष्टव्या॥

अतः कुदृष्टित्रयप्रत्यनीकं सामानाधिकरण्यं भाष्यकारपक्ष एव मुख्यम्। व्याख्यान्तरोक्त निर्वाहात् भवदुक्तनिर्वाहस्य किं वैषम्यम्? किंचात्मभेदे सिद्धेहि शरीरशरीरिभावः? सएव नास्ति कालविशेषऐक्यप्रतिपादनात् '**पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि**' '**सकाशादात्मनस्तद्वदात्मनःप्रभवन्तिहि**' इत्यादिभिश्चिदचितोरुत्पत्तिप्रळयप्रतिपादनात्। कार्यकारणयोरेकद्रव्यत्वाच्च, नह्येकमेव वस्तु शरीरं शरीरि च भवति तस्मात्स्वरूपपरिणामपक्षेणैव निर्वाहोवरमिति शङ्कापरिहारार्थं सकलश्रुतीनां मुख्यार्थत्वज्ञापनार्थं तेषु तेषु प्रदेशेषु विप्रकीर्णमुक्तानामर्थानां सङ्कलय्य प्रदर्शनेन सुग्रहत्वापादनार्थंचारभते। **अत्रेदं तत्त्वमिति। भोग्यत्वेन भोक्तृत्वेन**चेति च शब्दईशितव्यत्वेन तयोरेककोटिनिवेशात्। '**अस्मान्मायी**' इत्यत्र मायाशब्दार्थं निष्कृष्टुमुपादत्ते

गूढार्थसंग्रहः

एवं जीवेश्वरभेदपक्षेण वृत्तिकारमतानुसारेण सूत्रकाराशयवर्णनमनुचितम्। उपनिषत्सु कूटस्थनिर्धर्मकपुरुषस्यैव वेदान्ततात्पर्यविषयत्वानिर्धारणेन तद्विरोधेन सूत्रकाराशयवर्णनस्यानुचितत्वात्। तदुक्तं शङ्कराचार्यैः—'यथाचायमर्थस्सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः' इति अध्यासभाष्ये 'तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च न परमार्थतो विद्ययाऽपास्तसर्वोपाधिस्वरूप आत्मनीशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते' इत्युपक्रम्य परमार्थावस्थायां ईशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते। व्यवहारावस्थायां तूक्तः श्रुतावपीश्वरादिव्यवहारः 'एष सर्वेश्वरः एष भूताधिपतिरेषभूतपाल एष सेतुर्विधरणः एषां लोकानामसम्भेदाय' इति आरम्भणाधिकरणेचेति उपक्रमे प्रथमसूत्रे ब्रह्मशब्दार्थं प्रस्तुत्य 'सच सर्वेश्वर एव' इत्यभिधाय तदनुसारेण कर्मणां ध्यानोपकारकत्वेन कर्मविचारस्य पूर्ववृत्तित्वसाधनमनुचितम्। ईशेशितव्यभावस्यैवाविद्यानिबन्धनत्वेन उपनिषत्सु वृत्तिकारसिद्धान्तो न विवक्षित इति शङ्कायां वृत्तिकारसिद्धान्तस्योपनिषत्तात्पर्यविषयत्वं साधयितुमुपक्रमते—**अत्रेदं तत्त्वमित्यादिना। अचिद्वस्तुनः चिद्वस्तुन** इत्यत्र चिद्वस्तु ईशितव्यं विवक्षितम्॥

'**भोग्यत्वेन भोक्तृत्वेन ईशितृत्वेन**' इति सूक्तौ भोक्तृभोग्ययोरीशितव्यत्वप्रतीतिरस्फुटा तेन पदार्थो द्विविधः ईशः ईशितव्यश्चेति विभागस्सूच्यते। एतेन परस्य ब्रह्मणोऽपि चित्त्वेन एवं विभागोऽनुचित इति शङ्काया नावकाशः। ईशेशितव्यभावस्य अविद्यानिबन्धनत्वमुपनिषत्सु न विवक्षितमिति प्रथमतः साधयन् उक्तविभागस्य श्रुतितात्पर्यविषयत्वं साधयति—**काश्चन श्रुतयइति**॥

**अस्मान्मायी इत्यादि**। मायी मायास्वामी इत्यर्थः। एतेन '**अस्मान्**' इत्यत्र प्रतिपाद्यमायायाः परब्रह्माधीनत्वं बोधितम्। 'एतद्विश्वं सृजते' इत्यत्र विश्वपदस्य अचिज्जीवसामान्यमर्थः। 'छन्दांसि यज्ञाः' इत्याद्येतत्पूर्वार्धम् पूर्वं 'अजामेकाम्' इत्यादिश्रुतित्रये जीवःप्रस्तुतः। 'द्वासुपर्णा' इति पूर्वमुपात्ता। श्रुतिद्वयं च उदाहरिष्यते।

## श्रीभाष्यम्

**सन्निरुद्धः' (श्वे.४.९) 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (१०) 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे.१.१०) 'अमृताक्षरं हर,' इति भोक्ता निर्दिश्यते प्रधानमात्मनो भोग्यत्वेन हरतीति हरः**

## श्रुतप्रकाशिका

**मायांतु प्रकृतिमिति।** अन्यशब्दवाच्यआत्मेति स्पष्टयितुमाह—**क्षरं प्रधानमिति।** अर्थान्तरभ्रमहेतुत्वात् हरशब्दं व्याचष्टे। प्रधानमिति। अत्र '**व्यक्ताव्यक्तं भरते विश्वमीशः**' इति पूर्ववाक्ये श्रवणाद्धार्यत्व धारकत्वलक्षणभेदो-

## गूढार्थसंग्रहः

अत्र पूर्वार्धोक्तयज्ञादीनां परमात्मनियाम्यत्वोक्त्या यज्ञानां मायास्वामि मायेश्वरज्ञानोपकारकत्वमपि सूच्यते। 'तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्यत्र 'सन्निरुद्ध' इत्यत्रैव माययेत्यस्यान्वयेन अन्यपदार्थः अनौपाधिक एव निर्दिष्टः। सच जीव एव। सन्निरोधप्रकारः 'तयोरन्यःपिप्पलं स्वाद्वत्ति' 'अनीशया शोचति मुह्यमानः' 'अजोह्येको जुषमाणोऽनुशेते' इति पूर्वश्रुतित्रये अभिहितः। मायास्वाम्येव मायाया ईशिता मायाशब्दो न मिथ्यार्थकः इत्यर्थद्वयं तदुत्तरश्रुत्यैव साधयितुमुत्तरश्रुतिमुदाहरति—**मायांतु प्रकृतिं विद्यादिति॥ मायिनंतु महेश्वरम्** इत्यत्र महच्छब्देन मायाया अपीश्वर इत्यर्थः बोधितः। तेनाचित्सामान्यस्य परब्रह्मेशितव्यत्वं सिद्धम्। अवशिष्टः श्रुत्यर्थः पूर्वमेव (८७३—८७७.पु) निरूपितः। तेनोक्तार्थद्वयमत्र निर्धारितं भवति। शब्दत एव मायाया जीवस्य च ईशितृत्वं प्रतिपादयन्तीं प्रथमाध्यायस्थां श्रुतिमुदाहरति-**क्षरं प्रधानमिति॥**

एतदुत्तरार्धे 'तस्याभिध्यानात्—विश्वमायानिवृत्तिः' इत्यत्र मायाशब्दः पठितः। 'मायां तु प्रकृतिं विद्यात्' इत्यत्र मायाशब्दः प्रकृत्यर्थकः। प्रकृतिप्रधानशब्दयोरेकार्थकत्वं लोके प्रसिद्धम्। मायायाः जीववस्यचाविशेषणानया श्रुत्या परस्य ब्रह्मणः ईशितृत्वप्रतिपादनेनोभयोरीशेशितव्यभावः न मायिकः, अपि तु तात्त्विक इति सिद्ध्यति। एतेन 'उपक्रमे देवात्मशक्तिं स्वगुणैर्नि(रू)गू)ढाम्' इत्यत्र उक्तायाः सत्त्वादिगुणत्रयाश्रयशक्तिशब्दवाच्यप्रकृतेः ईशितृत्वस्य देवशब्दार्थे प्रतिपादनेन 'देवात्मशक्तिम्' इत्यत्रापि देवेशितव्याप्रकृतिरेव विवक्षितेति निर्धारितं भवति। 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इति निर्गुणश्रुत्युत्तरषष्ठश्रुतिः उत्तरत्रोदाहरिष्यते। 'स्वामीत्वीश्वरः पतिरीशिता' इति कोशेन पतिशब्दः ईश्वरपर्यायः। उभयोरीशत्वस्य परस्मिन् तात्त्विकत्वादेव संसारमोक्षस्थितिबन्धहेतुत्वमुपपद्यते नान्यथा। एतत्तात्पर्येणैव पूर्वापरभावेनार्थद्वयस्य श्रुतौ निर्देशः। 'य ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' (६.१७) इत्येतदनन्तरश्रुतौ ईशनस्याविद्यादिमूलकत्वं नास्तीति स्पष्टमुक्तम् अतः 'क्षरात्मानावीशते देव एकः' इत्यत्रोक्तार्थः अप्रकम्प्यः। एतेन 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यत्राध्यासिकदेवतादात्म्यापन्नप्रकृतिर्विवक्षिता 'किं कारणं ब्रह्म' इत्यत्र कारणत्वं कल्पितम् इति परसम्मतार्थः निरवकाशः॥

अत्र पूर्वश्रुतिषु एकैकपादान्ते वाक्यार्थपरिसमाप्तेः तद्वत् अत्रापि '**अमृताक्षरं हरः**' इत्यत्रार्थोन्वाय्यः। एतत्पूर्वश्रुतौ 'अजाह्येका भोक्तृभोगार्थयुक्ता' इत्यत्र भोक्तृभोगार्थत्वमुक्तं बुद्धिस्थम्। अतो हरशब्दो यौगिकः न रूढः '**ज्ञाज्ञौ द्वावजावीशनीशौ**' इत्येतत्पूर्वश्रुतौ ईशशब्दःप्रयुक्तः। ईशशब्दयोगार्थः '**क्षरात्मानावीशते देवएकः**' इत्यत्र व्यक्तः। पूर्वश्रुत्युक्तेशशब्दार्थप्रदर्शनवत् प्रधानस्य भोक्तृभोगार्थयुक्तत्वप्रदर्शनमप्यावश्यकम्। अतः भोक्तृभोगार्थयुक्तत्वं हरशब्दे विवक्षितम्। पूर्वश्रुतावीशशब्दवत् अत्रापि हरशब्दो न रूढः इत्यभिप्रेत्याह—**प्रधानमात्मनो**

## श्रीभाष्यम्

**'सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः' (श्वे.६.९) 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (६.१६) 'पतिं विश्वस्यात्मेश्वरगँ शाश्वतगँशिवमच्युतम्' (तै.ना.११.अनु)**

## श्रुतप्रकाशिका

ऽपि सिद्धः। ईश्वरेशितव्यतारूपभेदं दर्शयति **सकारणमिति**। करणाधिपाधिपशब्दव्याख्यानार्थमाह–**प्रधानेति**। गुणेशः सत्त्वरजस्तमसां नियन्ता। अनन्येश्वरत्वं दर्शयति। **पतिमिति**। अनेन शेषशेषित्वलक्षणभेदोऽपि सिद्धः॥

## गूढार्थसङ्ग्रहः

**भोग्यत्वेनेति**। अधिकं तात्पर्यचन्द्रिकायां वेदान्तकौस्तुभादौ च द्रष्टव्यम्। अयमर्थः षष्ठे निर्गुणश्रुतेः पूर्वं परत्रचोक्त-इति निर्गुणश्रुतेः पूर्वोत्तरश्रुतिद्वयमुदाहरति—**सकारणमित्यादि**॥

अत्र षष्ठोपक्रमे 'देवस्यैष महिमातु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' (६.१) 'तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्यपूर्वम्' (६.५.) इत्युक्तम्। अत्र देवस्य माहात्म्यं प्रस्तुत्य तस्य विश्वरूपत्वमप्युक्तम्। अनन्तरं 'तमीश्वराणां परमं—विदाम देवं भुवनेशमीड्यम्' इत्यत्र सर्वदेवापेक्षया उत्कृष्टदैवतत्वं प्रसिद्धेश्वरनियामकत्वेनोत्कृष्टेश्वरत्वं चोक्तम्। अनन्तरं 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादि श्रूयते। अत्र समनिषेधेनैवाधिकनिषेधस्यार्थसिद्धत्वे अधिकनिषेधेन निर्विशेषमपि निषिद्धं भवति। 'पराऽस्य शक्तिः' इति श्रुत्यर्थः प्राक् (६४५.७४८.पु) हयशिरोरत्नभूषणदीधितौ (११७–११८) च स्फुटः

अनन्तरं 'न तस्य कश्चित्पतिरस्ति लोके नचेशिता नैवच तस्य लिङ्गम्' इति 'सकारणम्' इत्येतत्पूर्वार्धम्। अत्र ईश्वरस्य ईशितुः पत्युश्च निषेधेन अधिकनिषेधः दृढीकृतो भवति। **सकारणं करणाधिपाधिपः** इत्यत्र जीवेशितृत्वं 'नचास्य कश्चिज्जनिता नचाधिपः' इत्यत्र ईश्वरस्यापि कारणस्य ईशितुः अन्यस्य निषेधश्च क्रियते। निर्गुणश्रुत्युत्तरं **प्रधानक्षेत्रज्ञपतिर्गुणेशः** इत्येतत्पूर्वं 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रूयते। 'सविश्वकृद्विश्वविदात्मयोनिः ज्ञःकालकालो गुणी सर्वविद्यः' इति एतत्पूर्वार्धम्। अत्र 'गुणी' इत्यत्रेनिप्रत्ययार्थप्राशस्त्यमेव 'पराऽस्य शक्तिः' इति श्रुतौ परत्वस्वाभाविकत्वविविधत्वरूपं प्रतिपादितम्। एतेन सामान्यतो विशेषतश्च गुणवत्त्वप्रतिपादकश्रुतिमध्यपतितनिर्गुणश्रुतेः अपरत्वाविविधत्वास्वाभाविकत्वरूपाप्राशस्त्यविशिष्टगुणानां 'स्वगुणैर्निगूढम्' 'गुणेशः' इति श्रुत्युक्तसत्त्वादीनां च निषेधपरत्वमेवेति सिद्धम्॥

'निष्कलं निष्क्रियं—निरञ्जनम्' इति श्रुतौ 'निरवद्यम्' इत्यत्रासङ्कोचेनाविद्यासम्बन्धस्यापि व्युदासेन गुणानामाविद्यकत्वोत्प्रेक्षणस्यासम्भवात्। 'निरवद्यम्' इत्यत्र मधुसूदनोक्तार्थः न घटत इति प्रागेव (६४८.पु) निरूपितम्। एतेन 'पराऽस्य शक्तिः' इति श्रुतौ शक्तिपदस्याविद्यापरत्व परसम्मतं न विवक्षितमिति सिद्ध्यति। अतश्च 'ज्ञः कालकालो गुणी सर्वविद्यः' इति पूर्वं परत्र च विद्यमानश्रुतिः निर्गुणश्रुतेरुक्तविषयव्यवस्थां करोतीति सिद्धम्। पूर्वार्धे इत्थं निर्गुणश्रुतिव्यवस्थाकरणपूर्वकं 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' इत्यत्र प्रधानजीवनियामकस्य संसारमोक्षादिहेतुत्वं प्रतिपादितम्। एतेन प्रधानजीवेशितृत्वं नाविद्यकमपितु तात्त्विकमेवेति निर्धारितं भवति॥

अत्र श्वेताश्वतरश्रुतौ सर्वेश्वरस्येशित्रन्तरनिषेधेन तैत्तरीयश्रुतावपि स एवार्थो विवक्षित इत्यभिप्रेत्य तां श्रुतिमुदाहरति–**पतिं विश्वस्येति**। पतिं विश्वस्येत्यत्र श्वेताश्वतरोपनिषदि बहुधाऽभ्यस्त एवार्थ उक्तः। 'नचेशिता इत्यत्रोक्तार्थ एव 'आत्मेश्वर'मित्यत्र विवक्षितः। आत्मैव ईश्वरो यस्य तेन स्वान्यः स्वस्येश्वरो नास्तीत्यर्थः। आत्मनामीश्वर इत्-

### श्रीभाष्यम्

**‘ज्ञाज्ञौ द्वावजावीशनीशौ’** (श्वे.१.९)

### श्रुतप्रकाशिका

**नच ‘पा रक्षण’** इति धातोर्निष्पन्नत्वात्पतिशब्दो रक्षकवाची नतु शेषिवाचीति वाच्यम्; शेषिणि रूढत्वात् अन्यथा **‘गमेर्डो’** इति डोप्रत्ययान्तगामधातोर्निष्पन्नत्वाद्गोशब्दस्य मनुष्यादिवाचकत्वप्रसङ्गः। गतिमत्सु सर्वेषु प्रयोगाभावात् तिष्ठत्यपि गवि प्रयोगात् तत्र रूढिशक्त्याश्रय इतिचेत्, एवं–

**वृद्धौ च मातापितरौ साध्वी भार्या सुतश्शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्॥**

इति न्यायेन पितृसंरक्षके पुत्रे पित्राद्यपेक्षया पतिशब्दाप्रयोगात् गृहाद्यरक्षकेऽपि स्वामिनि * पतिशब्दप्रयोगाच्च शेषिणि पतिशब्दो रूढः। तथा—**‘दासभूतास्स्वतस्सर्वे ह्यात्मानःपरमात्मनः।’** तथा–

**नन्तव्यःपरमश्शेषी शेषानन्तार ईरिताः। नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः॥**

इति दासशेषशेषिशब्दप्रयोगो भगवच्छास्त्रेषु दृश्यते। पत्यादिशब्दाभावेऽपि **‘व्रीहीन्प्रोक्षति’** इत्यादौ * द्वितीया श्रुत्या प्रोक्षणादेर्व्रीह्यादिशेषत्ववत्, यस्यात्मा शरीरम् इत्यादिना जगतः परमात्मशरीरत्वावगमात्। शरीरपारार्थ्यस्य च * **‘सङ्घातःपारार्थत्वात्’** इत्यादिभिःप्रसिद्धत्वाच्च जगद्ब्रह्मणोश्शेषशेषिभावसिद्धः। अतो यथोक्त एवार्थः॥ मुखान्तरेणापि भेदसिद्धिं दर्शयति। **ज्ञाज्ञाविति।**

### गूढार्थसंग्रहः

र्थस्तु नात्र विवक्षितः। **पतिं विश्वस्य** इत्यनेनैव तत्सिद्धेः। ‘शाश्वतं शिवमच्युतम्’ इत्यनेन श्वेताश्वतरश्रुतिघटकशिव शब्दः कोशानुसारेण शुभत्वप्रवृत्तिनिमित्तेन नारायणपर इति बोधितम्॥

**ज्ञाज्ञौ द्वौ** (श्वे.१.६) इत्यत्र व्यावहारिकभेद एव विषयः वस्तुतो भेदवाचिपदं नास्त्येव द्वावित्येव वर्तते। इति परोक्तार्थः (अ.सि) न युक्त इत्यभिप्रेत्य तां श्रुतिमुदाहरति–**ज्ञाज्ञौ द्वाविति।** एतत्पूर्वं ‘संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः’ (श्वे.१.८) इति श्रूयते। चतुर्थे ‘अनीशया शोचति मुह्यमानः’ इत्यपि ‘ज्ञाज्ञौ द्वौ’ इत्येतदनन्तरं ‘क्षरात्मानावीशते देव एकः’ इति। अत्र ‘क्षरात्मानौ’ इत्यत्र जीवप्रधानयोः देवेशितव्यत्वाभिधानेन अनीशत्वं स्पष्टम्। एवं च ‘अनीशया शोचति मुह्यमानः’ इत्यत्रापि अनीशशब्दार्थः अविद्येति परसम्मतार्थः न विवक्षितः। एवम् ‘अनीशश्चात्मा बध्यते भोक्तृभावात्’ इत्यत्रापि देवेन ईशितव्यः जीवः तादृश्या प्रकृत्या भोक्तृभावेन बध्यते इत्येवार्थः। तेन ‘ज्ञाज्ञौ द्वावजावीशनीशौ अजाह्येका भोक्तृभोगार्थयुक्ता।’ इत्यत्र स्वभावतः देवेनेशितव्यत्वेन ईशभिन्नः जीवः तादृश्या प्रकृत्या अज्ञानाश्रयः विवक्षित इत्यर्थः निर्मत्सराणां स्फुटः। एवंस्थिते परसम्मताविद्यामूलकत्वस्य जीवेश्वरभेदे अस्यां श्रुतौ तात्पर्यवर्णनस्यैवासम्भवेन व्यावहारिकभेदोत्प्रेक्षणमपि सर्वथा न सम्भवतीति भावः। अधिकं प्रागेव (६४३.पु) निरूपितम्॥

अत्र ‘अनीशश्चात्मा बध्यते भोक्तृभावात्’ इत्यत्र जीवस्य बन्ध उक्तः। पञ्चमे ‘प्राणाधिपस्सञ्चरति स्वकर्मभिः’ इत्यत्र कर्ममूलकशरीरसंबन्धः प्रतिपादितः। षष्ठे ‘प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः’ इति निर्गुणश्रुत्युत्तरश्रुतौ प्रकृतिजीवेशितृत्वकथनपूर्वकं संसारादिहेतुत्वं परब्रह्मण उक्तम्। प्रकृतिनिबन्धनबन्धस्य तन्मोक्षस्य च

### श्रीभाष्यम्

**'नित्यो नित्यानां चेतनश्चेतनानामेकोबहूनां यो विदधाति कामान्' (श्वे.६.१३)क.२.५.१३)**
**'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वे.१.१२)**

### श्रुतप्रकाशिका

उत्पत्तिप्रळयाभावप्रतिपादनं दर्शयति । **नित्यो नित्यानामिति** । आकारान्तरेणापि भेदमाह—**भोक्तेति** ।

### गूढार्थसङ्ग्रहः

प्रकृतेरीश्वर एव हेतुः नान्यः इत्येतेनाभिहितं भवति । तेन 'अनीशश्चात्मा बध्यते भोक्तृभावात्' इति श्रुत्यनन्तरं 'ज्ञाज्ञौ' इति श्रुतेरुत्तरार्धावसाने 'त्रयं यदा विन्दते ब्रह्ममेतत्' इत्यत्र ईशजीवप्रकृतित्रयं यदा अस्ति तदा एतद्ब्रह्म विन्दते इति प्रागुक्तार्थस्सङ्गतो भवति । अन्यथा प्रकृतिजीवेशितृत्वकथनपूर्वकं परस्मिन् बन्धमोक्षहेतुत्वप्रतिपादनमसङ्गतमेव स्यात् । अतः तत्त्वत्रयसत्त्व एव ब्रह्मप्राप्तिः घटते नत्वन्यथा इति 'ज्ञाज्ञौ' इति श्रुत्युत्तरार्धावसाने 'त्रय यदा विन्दते ब्रह्ममेतत्' इति श्रुतेरर्थनिष्कर्षस्सिद्धः । एतेन जीवेश्वरभेदकल्पनास्तु पुरुषबुद्धिप्रभवाः शास्त्रेणानूद्यन्ते' इति मधुसूदनसरस्वत्युक्तिरभिनिवेशमूलेति सिद्धम् ॥

निर्गुणश्रुतिसमनन्तरश्रुत्यापि जीवेशभेदस्याविद्यकत्वं न घटत इति तामुपादत्ते—**नित्यो नित्यानामिति** । अस्यां श्वेताश्वतरश्रुतौ परसम्मतार्थो न विवक्षित इति भावप्रकाशे (द्वितीयसं.३१५—३१६.पु) प्राक् (६४२.पु) अत्रापि निरूपितम् । 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यःकरोति । तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम्' इति (श्वेताश्वतरोपनिषदि) 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यःकरोति । तमात्मस्थं येऽनुपश्यन्तिधीराः तेषां सुखं शाश्वतं नेतरेषाम्' इति (कठोपनिषदिच) पाठक्रमः । अत्र 'वशी' इत्यनेन उभयोरीशिता प्रेरितैव विवक्षितः 'आत्मस्थम्' इत्यत्र 'व्याप्य नारायणस्थितः' इत्युक्तरीत्या जीवे स्थितिर्विवक्षिता । अतश्च जीवेशितृदर्शनवतामेव शाश्वतसुखं मोक्षरूपम् । तद्दर्शनशून्यानांतु नेति अत्र प्रतिपादितम् । एतेन प्रागुक्तरीत्या परब्रह्मणः मोक्षहेतुत्वप्रतिपादकश्रुत्यैकरस्यं 'तेषां सुखम्' इति बहुवचनेनापि जीवब्रह्माभेदः श्रुतिषु न विवक्षित इति सिद्ध्यति ॥

एतेन जीवेश्वरभेदस्य तात्त्विकत्वमीश्वरस्यैव मोक्षहेतुत्वंचेत्यर्थनिष्कर्षेणेन तत्त्वत्रयाङ्गीकार एव ब्रह्मप्राप्त्युपपत्तिः नान्यथा इत्यर्थस्य उपनिषत्तात्पर्यविषयत्वं साधितम् । एतेन 'अपिचैवमेके' (३.२.१३) इति सूत्रे **भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं विविधं ब्रह्ममेतत्'** (श्वे.१.१२) इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकत्वस्वभावतामधीयते' इति शङ्करभाष्योक्तिर्न घटत इत्यभिप्रेत्य तां श्रुतिमुदाहरति— **भोक्ता भोग्यमित्यादिना** ॥

'एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातःपरं वेदितव्यंहि किंचित्' इत्येतच्छ्रुतिपूर्वार्धम् । इयंच श्रुतिः 'क्षरं प्रधानम्' इति श्रुत्युत्तरं पठिता । वेदार्थसंग्रहे 'भोक्ता भोग्यं प्रेरितारं च मत्वा' इति भोग्यभूतस्य वस्तुनः अचेतनत्वमपरमार्थत्वं सततविकारास्पदत्वम् इत्यादयस्स्वभावाः भोक्तुः जीवात्मनश्च अमलापरिच्छिन्नज्ञानानन्दस्वभावस्यैव अनादिकर्मरूपाविद्याकृतनानाविधज्ञानसङ्कोचविकासौ भोग्यभूताचिद्वस्तुसंसर्गश्च परमात्मोपासनान्मोक्षश्च इत्यादयस्स्वभावाः एवंभूतभोक्तृभोग्ययोरन्तर्यामिस्वरूपेणावस्थानम्, स्वरूपेणचापरिमितगुणाद्याश्रयत्वेनावस्थानमिति परस्य ब्रह्मणः त्रिविधावस्थानं ज्ञातव्यमित्यर्थः' इत्युक्तम् ॥

अत्र तात्पर्यदीपिका—'सद्वारकमद्वारकमाकारत्रयमस्तीति त्रिविधं ब्रह्मेत्यस्याश्श्रुतेरर्थं विवक्षुः द्वारभूतयोश्चिदचितोः स्वभावं दर्शयन् अचित्स्वभावं दर्शयति—भोग्येति । जीवस्वभावमाह—भोक्तुरिति । सद्वारकमाकारद्वयं अद्वारकरूक

## गूढार्थसङ्ग्रहः

आकारश्चेति ब्रह्म त्रिविधं जीवान्तर्यामितयाऽवस्थानम् अचिदन्तर्यामितयाऽवस्थानं स्वरूपेणचावस्थानमिति त्रिविधं ब्रह्मेत्यर्थः ' इति ॥

अत्र ' ज्ञातव्यमित्यर्थः ' इति सूक्त्या ' एतज्ज्ञेयम् ' इति ज्ञेयशब्दस्यात्राप्यनुषङ्ग इति प्रतीयते । एतत् पूर्वश्रुत्युक्ताचित्तत्त्वं जीवतत्त्वं च ' आत्मसंस्थम् ' इत्यत्रात्मन्शब्दः ' देवात्मशक्तिम् ' इत्युपक्रमे देवरूप आत्मैव । सएव ' क्षरात्मानावीशते देव एकः ' इत्यत्रापि विवक्षितः । तस्मिन् सम्यकृतिष्ठतीति संस्थम् । ईशितव्यतया स्थितमित्यर्थः । ' नित्यम् ' इत्यनेन ईशेशितव्यभावस्याविद्यामूलकत्वं व्युदस्तम् । ' य ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ' इति षष्ठेऽपि वक्ष्यमाणत्वात् । इयं च व्यवहारदशा परमार्थदशायां वेदितव्यमन्यदस्तीति शङ्कां व्युदस्यति— नातःपरमित्यादि । अतश्च ब्रह्मप्राधान्येन सिद्धमर्थं दर्शयति- भोक्तेत्यादिना । भोक्तेति द्वितीयार्थे प्रथमा भोक्तारं भोग्यं प्रेरितारं च मत्वा वेदान्तज्ञानिभिः प्रोक्तं ब्रह्म त्रिविधं ज्ञेयमित्यर्थः । अत्र ईशशब्दप्रयोगेण ' नित्यमेवात्मसंस्थम् ' इत्युक्त्या च अचिज्जीवयोः ब्रह्माभेदो न विवक्षितः । तत्तदन्तर्यामितयाऽवस्थानमिति ' नित्यमेवात्मसंस्थम् ' इत्यात्मशब्दपर्यालोचनयोक्तम् । एतेन ' त्रयं यदा विन्दते ब्रह्ममेतत् ' इति श्रुत्यर्थो विशदीकृतः ॥

पूर्वं ' ज्ञाज्ञौ द्वावजावीशनीशावजाह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्वरूपोह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ' इति श्रुतौ विश्वरूपशब्देनात्मन्शब्देनापि उक्तार्थलाभः । अत्र भोक्तृभोग्यशब्दतात्पर्यानुसारेण अचिज्जीवगता धर्माः प्रतिपादिताः । भोग्यभूतवस्तुनस्स्वभावः लोकतश्च ज्ञायते ' परमार्थत्वम् ' इत्युक्तिः ' वाचाऽऽरम्भणं विकारो नामधेयम् इति श्रुतौ मिथ्यात्वं न विवक्षितमित्यभिप्रायेण ' आरम्भणम् ' इत्यत्र परैः आलम्बनमित्यर्थाङ्गीकारेण आरभ्यत इत्यादिना सिद्धान्ते अर्थवर्णनेन भकारसत्त्वेन परसम्मतार्थः श्रुतौ न विवक्षितः । वस्तुतस्तु आरम्भणमिति भावे ल्युट् । उत्पत्तिरित्यर्थः, विकारएवोत्पत्तिः इति सर्वेषामक्षराणां स्वारस्यं प्रागेव वर्णितम् । अतश्च मिथ्यात्वशङ्कायाएव नावकाशः एतेन ' वाचाऽऽरम्भणम् ' इत्यस्य मिथ्येत्यर्थवर्णनं निरवकाशम् । ' तदनन्यत्वमारम्भणशब्दादिभ्यः ' इत्यत्र आरम्भणशब्दस्यैव प्राधान्येन निर्देशेन उत्पत्तिरवस्थेति सूचनमुखेन श्रुतौ मिथ्यात्वं न विवक्षितमिति द्योतितम् । जीवस्वभावश्च ' तेषां खल्वेषांभूतानां त्रीण्येव बीजानि भवन्ति ' ' अनेन जीवेनात्मना ' इति श्रुत्यर्थस्य प्राङ्निर्धारणदिशा ज्ञायते । एवं श्वेताश्वतरोपनिषदि–' अङ्गुष्ठमात्रो रवितुल्यरूप ' इत्यत्र रवितुल्यरूपशब्देन सूर्यप्रभासदृशधर्मभूतज्ञानवत्त्वं प्रभाया इव धर्मभूतज्ञानस्य सङ्कोचश्च उक्तः ॥

' आराग्रमात्रोह्यवरोऽपि दृष्टः ' ' बुद्धेर्गुणेनात्मगुणेनचैव ' ' बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवस्सविज्ञेयस्सचानन्त्याय कल्पते ' इत्यत्र मुक्तिकाले धर्मभूतज्ञानानन्त्यसत्त्वेन बन्धकाले तदभावेऽपि आनन्त्यार्हत्वं वर्तत इति प्रतिपादनेन जीवस्वभावो निरूपितः । अत्र पदार्थत्रयगतावस्थानां निरूपणेन दृष्टान्तेऽवस्थाभेदेऽपि धर्म्यैक्येन अनन्यत्वं यथा तथा दार्ष्टान्तिके अन्तर्यामिस्वरूपावस्थावत एव परमात्मनः तदनन्यत्वं प्राक् श्रुत्यर्थोपपादनदिशा सूत्रे विवक्षितमिति निर्णीतं भवति । एतेन भोक्तृभोग्यप्रेरितविभागः ' भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ' इति सूत्रे विवक्षितः । ' तदनन्यत्वमारम्भणशब्दादिभ्यः ' इत्यत्र एतदनुगुणार्थस्यैव सूत्रकृदभिप्रेतत्वात् । तेन सूत्रद्वयमेकार्थतात्पर्यकमेव, नतु विरुद्धार्थतात्पर्यकमिति बोधितम् ॥

एतेन ' अभ्युपगम्यचेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः । नत्वयंविभागः परमार्थतोऽस्ति यस्मात्तयोःकार्यकारणयोरनन्यत्वमवगम्यते ' इत्यारम्भणाधिकरणावतारिकाभाष्ये परोक्तिर्निरवकाशेति

### श्रीभाष्यम्

**'तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' (मु.३.१.१) 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे.१.६) 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीँसरूपाम्। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (तै.४. प्रश्न.ना.१०.५) 'समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः। जुष्टं यदा**

### श्रुतप्रकाशिका

भगवतोऽस्पृष्टदोषत्वं दर्शयति। **तयोरिति**। भेदज्ञानस्य मोक्षहेतुत्वमाह–**पृथगिति**। * मुक्तौ भेदमाह–**अजामिति**। जीवेश्वरयोः स्वतो भेदं सविशेषत्वं च स्पष्टयितुमाह—**समानइति**। पृथक्त्वज्ञानस्य मोक्षोपायत्वपरस्य वाक्यद्वयस्य मध्ये

### गूढार्थसंग्रहः

वेदार्थसंग्रहसूक्त्या प्रदर्शितं भवति। एवं विभागस्य तात्त्विकत्वादेव 'जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यात्' (१.१.३२) इति सूत्रे 'अथवा' इत्यादिना 'त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च' इति (श्री) भाष्योक्तवृत्तिकारसम्मतार्थ एव श्रुतिसूत्रतात्पर्यविषय इति निर्णीयते॥

तत्पूर्वं 'न वक्तुरात्मोपदेशादितिचेदध्यात्मसम्बन्धभूमाह्यस्मिन्' (२९) इति सूत्रे अध्यात्मसम्बन्धभूमेत्यनेन 'असङ्गोह्ययं पुरुष इत्यसङ्गश्रुतिः न परसम्मतार्थिका किंतु प्राक् (२४१.पु) उक्तार्थिका इत्यपि बोधितम्। सूत्रार्थश्च '**औपनिषदपरमपुरुष**' पदविवरणदशायां निरूपितः॥

एवं प्रथमाध्यायघटकश्रुत्यर्थः चतुर्थे 'द्वासुपर्णा' इति श्रुतौ **तयोरन्यःपिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति** इति जीवपरस्वभावनिरूपणेन दृढीकृतः। 'द्वासुपर्णा' इति श्रुतेः' '**समाने वृक्षे**' इति श्रुतेश्च परसम्मतार्थौ न विवक्षित इति प्रागेव (७६३.पु) निरूपितम्। अत्र प्रेरितृशब्देन **पृथगात्मानं प्रेरितारं च मत्वा** इति श्रुतिज्ञापनेन तत्र मोक्षस्य परानुग्रहमूलकत्वप्रतिपादनेन **क्षरं प्रधानम्** इत्येतदुत्तरार्धे 'तस्याभिध्यानात्' इत्यादौ मोक्षस्योपासनसाध्यत्वोक्त्या च वेदार्थसंग्रहोक्तौ 'परमात्मोपासनान्मोक्षश्च' इत्यर्थः 'अपरिमितगुणौघाश्रयत्वेनावस्थानम्' इत्यत्र मोक्षहेत्वनुग्रहरूपगुणस्य च प्रतिपत्तिर्भवतीति सूचयन्नाह—**पृथगात्मानं प्रेरितारं च मत्वेति**। अस्यां श्रुतौ परसम्मतार्थो न विवक्षितः किंतु वेदार्थसंग्रहोक्तार्थ एव इति भावप्रकाशे द्वितीयसम्पुटे (३१८.पु) निरूपितम्। उक्तार्थः चतुर्थश्रुतिद्वयेन दृढीक्रियत इत्यभिप्रेत्य श्रुतिद्वयमुदाहरति—**अजामेकामिति**। चमसाधिकरणे इमां श्रुतिं प्रस्तुत्य 'ज्योतिरुपक्रमात्तु तथाह्यधीयत एके' इति सूत्रे 'ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः' इति विवरणपूर्वकं प्रकृतेः ब्रह्मकार्यत्वं स्थापयिष्यते। अत्र प्रथमोपक्रमे 'किं कारणं ब्रह्म कुतस्सजाताः जीवाम केन क्व च संप्रतिष्ठाः' इति प्रश्नप्रतिवचने 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्' इति श्रूयते। अत्र ब्रह्मणः स्वरूपपरिणामशून्यत्वेन कारणत्वं न सम्भवति। 'कुतस्स जाता' इति जीवानां स्वरूपेण जनेर्निषिद्धतया 'सवा अयं जायमानश्शरीरमभिसंपद्यमानः' इत्यादिश्रुतिभिः शरीरादिसम्बन्धमूलैव जनिर्वाच्या। ब्रह्मणस्स्वरूपपरिणामशून्यत्वेन शरीराकारेण परिणामोऽपि न सम्भवति। अतः तत्र शरीरस्य प्राकृततया प्रकृतिपरिणामरूपत्वेन तदर्थं द्वारभूता प्रकृतिरपेक्षिता, एवमचित्सृष्ट्यर्थमपि इति प्रश्नस्य प्रतिवचने 'देवात्मशक्तिम्' इत्यत्र प्रकृतिर्विवक्षिता स्वगुणैर्निगूढामित्युक्तेश्च। सत्त्वरजस्तमोगुणैरित्यर्थः

## श्रीभाष्यम्

पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (श्वे.४.७) इत्याद्याः ॥

## श्रुतप्रकाशिका

'अजामेकाम्' इत्यादिवाक्यमुपात्तम् 'समाने वृक्षे' 'अजामेकाम्' इति * प्रधानप्रसङ्गोपेतत्वसाम्यात् जुष्टं

## गूढार्थसंग्रहः

सत्त्वादीनां समत्वे प्रळयः, विषमत्वे सृष्टिरिति विभागः । देवशब्दः वासुदेवपरः देवशब्दानां वासुशब्दार्थस्य च अस्यामुपनिषदि बहुत्राभ्यासात् 'सर्वभूताधिवासं च यद्भूतेषु वसत्यपि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः' इति ब्रह्मबिन्दूपनिषदुक्तार्थस्यात्र प्रतीतेः । 'उद्गीतमेतत्परमं तु ब्रह्म तस्मिंस्त्रयम्' इत्यत्र सङ्कर्षणादिरूपत्रयं विवक्षितम्। तस्यामुपनिषदि 'न निरोधो नचोत्पत्तिः' इत्यादिश्रुतिरपि तत्परा एतेऽर्थाः औपनिषदमणिहारे श्वेताश्वतरसरे, भावप्रकाशे (२.सं), हयशिरोरत्नभूषणदीधितौ च निरूपिताः ॥

स्मृत्यधिकरण(शं)भाष्ये 'यत्तत्सूक्ष्ममविज्ञेयम्' (मोक्षधर्मे नारायणाख्याने ३४२.३०) इति परंब्रह्म प्रकृत्य 'सह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते' (३१) इतिचोक्त्वा 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' (३२) इत्याह। तथाऽन्यत्रापि 'अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते' इत्याह, (२४७.३२) इत्युक्तम् । 'अव्यक्तम्' इत्यतः पूर्वं 'द्विर्द्वादशेभ्यस्तत्वेभ्यः ख्यातो यःपञ्चविंशकः' (२४) 'स वासुदेवो विज्ञेयः परमात्मा सनातनः ।' इत्युपक्रम्य प्रलयो-निरूपितः । तदनन्तरं 'नित्यंहि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥ सर्व-भूतात्मभूतोहि वासुदेवो महाबलः ।' (३२) इत्यादिना सृष्टिनिरूपणावसरे 'यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणा-त्मकः । ज्ञेयस्स एव राजेन्द्र जीवस्सङ्कर्षणःप्रभुः ।' इत्याद्युक्तम् । उत्तरत्र 'सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः' (३५४.१८) इतिचोक्तम् । अतश्च 'सह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।' इत्यत्र वासुदेव एव त्रिगुणजनको विवक्षितः । अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते' इत्यत्र त्रिगुणलयकारणं वासुदेव एवेति स्पष्टम् । एवं च प्रकृत्यु-त्पत्तिलयकारणं वासुदेव एवेति स्मृत्यधिकरणपरोदाहृतवचनैरेव सिद्धम् ॥

प्रकृतेः अविभक्तविभक्ततमोऽवस्थाद्वयम् अक्षरावस्था अव्यक्तावस्थाचेति अवस्थाचतुष्टयं 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमःपरे देव एकीभवति' इति सुबालोपनिषत्प्रसिद्धम् । अतः अव्यक्तोत्पत्तिप्रळयौ श्रुतिसिद्धावेव

भीष्मपर्वणि—'सर्वगुह्यमयश्शिवः । वासुदेव इतिज्ञेयः' इति वचनेन श्वेताश्वतरोपनिषदि शिवशब्दाः वासुदेव-पराः इति च निर्णीतमिति हयशिरोरत्नभूषणदीधितौ निरूपितम् । एवं नादार्थो वासुदेव इत्यपि । देवश्चासा-वात्मा च देवात्मा तस्य शक्तिरिति विग्रहः 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'अनन्तश्चात्मा विश्वरूपोह्यकर्ता' 'क्षरा-त्मानावीशते देव एकः' 'एतज्ज्ञेयं नित्यमेवात्मसंस्थम्' इत्यादावुत्तरत्र शब्दद्वयप्रयोगात् । कार्योपयोग्यपृथक्सिद्ध विशेषणंहि शक्तिः । एतत्तात्पर्येणैव प्रकृतौ शक्तिशब्दः प्रयुक्तः । एतेन पारतन्त्र्यं बोधितम् । प्रकृतेः ईशित्व्यत्वाद्युक्त्या प्रागुदाहृतश्रुतिभिः पारतन्त्र्यं दृढीकरिष्यते । 'स्वगुणैर्निगूढाम्' इत्यनेन प्रळयसृष्टिकालिकावस्थाद्वय प्रकृतेरसूचितम् । इदंचावस्थाद्वय चतुर्थे 'अजामेकाम्' इति श्रुत्युत्तरं 'अस्मान्मायी सृजते विश्वमेतत्' 'तस्यावयवभूतैस्तु व्याप्तं सर्व-मिदं जगत्' इत्यत्र स्फुटं वक्ष्यते । 'ज्ञाज्ञौ द्वावजावीशनीशावजाह्येका भोक्तृभोगार्थयुक्ता' इत्यत्र अजाशब्देन प्रकृ-

श्रीभाष्यम्

स्मृतावपि 'अहङ्कारइतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्॥ जीवभूतां महाबाहो ययेदं धार्यते जगत्।' (गी.७.अ.४-५) सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः। भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥' (गी.९अ.७-८) 'मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते॥ (गी.९.१०) 'प्रकृतिं पुरुषंचैव विद्ध्यनादी उभावपि।' (१३.१९) 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्। सम्भवस्सर्वभूतानां ततो भवति भारत॥' (गी.१४.अ.३श्लो) इति। जगद्योनिभूतं महत् ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु यत् तस्मिश्चेतनाख्यं गर्भं यतस्संयोजयामि ततो मत्कृताच्चिदचित्संसर्गाद्देवादिस्थावरान्तानामचिन्मिश्राणां

श्रुतप्रकाशिका

ध्रियमाणम्। स्मृतावपीति। अष्टधा भिन्ना प्रकृति*र्ममेत्यनेन कारणावस्थायामपि भेदसिद्धिः। मामिकां प्रकृतिं कल्पक्षये यान्तीत्यत्रापि तथा प्रकृतिं स्वामवष्टभ्य विसृजामि इत्यत्रापि तत्सिद्धिः॥

मयाध्यक्षेणेत्यत्रतु * स्वभावासङ्करः कारणावस्थायां भेदश्च सिध्यतः प्रकृतिमित्यत्रानादित्वकण्ठोक्तिः। ममेत्यत्रापि कारणावस्थायां भेदसिद्धिः। उदाहृतस्मृतिवचनेषु व्याख्येयांशं व्याचष्टे। जगद्योनीति। जगद्योनिशब्देन त्रिगुणं तज्जगद्योनिः इतिवचनं स्मार्यते। कार्यावस्थव्यावृत्त्यर्थं भूतसूक्ष्ममित्युक्तम्। एवं चिदचिदीश्वरभेदेसति कथमेकत्वाव-

गूढार्थसङ्ग्रहः

तिर्निर्दिष्टा। प्रथमोक्तार्थ एव चतुर्थे 'द्वासुपर्णा' इत्यत्र दृढीकृत इति प्रागेव निरूपितम्। चतुर्थे 'अजामेकां लोहितकृष्णरूपाम्' इति पदद्वयेन कारणावस्था कार्यावस्था च प्रदर्शिता अधिकं चमसाधिकरणे विवेचयिष्यते॥

उक्तश्रुत्यर्थ एव गीतायां विवक्षित इति दर्शयति-स्मृतावपीत्यादि। अत्र 'प्रकृतिं विद्धि मे परां जीवभूताम्' इत्यत्र जीवस्य परमात्मस्वामिकत्वमुक्तम्। एतदनन्तरं 'एतद्योनीनि भूतानि सर्वाणीत्युपधारय' इत्यत्र भूतशब्दप्रयोगेण 'कृष्णएवहि लोकानामुत्पत्तिरपिचाव्ययः। कृष्णस्यहि कृतेभूतमिदं विश्वं चराचरम्॥' (४१.अ.२३) इति वचने जीवस्यापि कृष्णार्थत्वं विवक्षितमिति सिद्ध्यति। गीताविस्तरपञ्चरात्रसंहिताऽध्ययनतदुक्तपाञ्चकालिकार्चनेनिष्ठस्य व्यासमातामहस्य उपरिचरवसोरनुसन्धानम् 'आत्मा राज्यं धनंचैव कलत्रं वाहनानि च। एतद्भगवते सर्वमिति तत्प्रेक्षितं सदा॥' इत्युक्तदिशा पूर्वोक्तरीत्यैवेति व्यक्तम्। अत्र प्रकृतिपुरुषयोः भगवत्स्वामिकत्वभगवदर्थत्वप्रतिपादनेन श्रुत्युक्तः ईशेशितव्यभावः अभिहितो भवति। प्रकृतिं यान्ति मामिकाम् मत्स्वामिकामित्यर्थः। एवं 'प्रकृतिं स्वाम्' इत्यत्रापि। प्रकृतिं पुरुषंचैव विद्ध्यनादी उभावपि इति उभयोस्तुल्यतयाऽनादित्वाभिधानेन प्रकृत्युपाधिनिबन्धनो जीवभावः' इति पक्षः व्यवच्छिद्यते। एतेन प्रकृतिजीवयोस्तुल्यतया ईशितव्यत्वाभिधानेनाविद्यकजीवभावपक्षव्यवच्छेद एवात्र प्रकारान्तरेणोक्तो भवति। एतेन 'देवात्मशक्तिम्' इत्यत्राध्यासेन देवतादात्म्यापन्नेत्यर्थः (ब्र.वि.आ) श्रुत्यादिविरुद्धइसिद्धम्॥

एतावता जीवब्रह्मभेदस्याविद्यकत्व परसम्मतं न प्रामाणिकमिति निरूपितम्। अतश्च स्वाभाविक एव प्रकृतिजीवयोःपरब्रह्मणश्चेशेशितव्यभाव इति सिद्धम्। एतेनैव शरीरशरीरिभावोऽपि प्रामाणिकस्स्वाभाविकएवेति सिद्ध्यतीति

## श्रीभाष्यम्

सर्वभूतानां सम्भवो भवतीत्यर्थः । एवं भोक्तृभोग्यरूपेणावस्थितयोस्सर्वावस्थाऽवस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्यचात्मत्वमाहुः काश्चन श्रुतयः 'यःपृथिव्यांतिष्ठन् पृथिव्या अन्तरोयं पृथिवी न वेद यस्य पृथिवी शरीरं यःपृथिवीमन्तरो यमयति' (बृ.५.७.३) इत्यारभ्य 'य आत्मनि तिष्ठन्नात्मनोऽन्तरोयमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' (बृ.५.७.२२) इति तथा 'यःपृथिवीमन्तरे संचरन्यस्य पृथिवी शरीरं यं पृथिवी न वेद' (सुबा.७.ख) इत्यारभ्य 'योक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन्यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा-७) अत्र मृत्युशब्देन तमश्शब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते अस्यामेवोपनिषदि 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' (सुबा.२) इति वचनात् 'अन्तःप्रविष्टःशास्ताजनानाँसर्वात्मा' (आरण्यकं.३.११.२१) इति च । एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारःपरमपुरुष एव

## श्रुतप्रकाशिका

धारणमुपपद्यत इतिशङ्कायां घटकश्रुतीरवतारयति । **एवमिति** । '**यःपृथिवीमन्तरे संचरन्**' इति सुबालोपनिषदि श्रूयते । मरणयमादिव्यावृत्त्यर्थं मृत्युशब्दं व्याचष्टे । **अत्रेति** । लीयत इति वचनात् क्रमप्रत्यभिज्ञानादित्यर्थः '**यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम्**' इति क्रमोहि '**अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते**' इति क्रमेण सङ्गच्छते। * तमस एकीभावमात्रं श्रुतं न लयः तमस्त्वप्रहाणाभावात् । * कार्यानुपयुक्ततमश्शरीरके देवे कार्योपयुक्तस्य तस्यैकीभावः मृत्युसंज्ञस्य तमसश्शरीरत्वश्रवणात् विशेषणभूततमसा तमस एकीभावो युक्तः । सर्वात्मत्वविवरणायाह—**अन्तःप्रविष्ट इति** । अनेनापि शरीरात्मभावःफलितः अन्तःप्रविश्य नियाम्यत्वंहि शरीरत्वम् । अन्तःप्रवेशशास्तिभ्यां नृपगगनव्यावृत्तिरिति एतदपि शरीरलक्षणं भाष्यकाराभिप्रेतम् ॥

## गूढार्थसंग्रहः

साधयति–**एवं भोक्तृभोग्यरूपेणेत्यादिना** । एवं भोक्त्रापत्त्यधिकरणविवक्षितमर्थमभिधाय आरम्भणाधिकरणेऽपि तदनुगुणएवार्थः नतु परमतरीत्या तद्विरुद्धइत्यभिप्रेत्य आरम्भणाधिकरणाभिप्रेतमर्थं दर्शयति—**एवं सर्वावस्थाऽवस्थितचिदचिद्वस्तुशरीरतयेत्यादि** । शरीरलक्षणे 'न विलक्षणत्वात्' इत्यधिकरणे परोक्तसर्वाक्षेपाः पर्यालोचयिष्यन्ते । अन्तर्बहिर्व्याप्तिमात्रेण न शरीरशरीरिभावः किंतु ईशेशितव्यभावयोगेन । तस्य स्वाभाविकत्वेन आत्मनशब्दस्य व्यापकचेतनार्थकत्वेन 'व्याप्नोति' इति व्युत्पत्त्या नियमनार्थव्याप्तेस्सिद्धया शरीरत्वसिद्धिः। अन्तःप्रविश्य नियन्तृत्वमेवात्मत्वम्। अन्तर्यामिब्राह्मणेऽपि 'एषत आत्मा अन्तर्याम्यमृतः' 'सत आत्मा अन्तर्याम्यमृतः' इति वाक्येऽप्ययमर्थो विवक्षितः । 'यच्छरीरमादत्ते' इति श्वेताश्वतरश्रुतिपर्यालोचनायां 'यदादत्त' इति निर्वचनेऽपि शरीरादानकर्ता आत्मेत्यर्थास्सिद्धः । अतश्चेशेशितव्यभावस्य तात्त्विकत्वेन प्रकृतिजीवयोः शरीरशरीरिभावोऽपि प्रामाणिकस्तात्त्विक इति सिद्ध्यति । एवं च 'पूर्वं सच्छब्दवाच्यस्य जगदुपादानत्व' इति सूक्तिविवरणावसरे मृद्दृष्टान्ते कार्यकारणावस्थाभेदेऽपि

### श्रीभाष्यम्

कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत् स एवेत्याहुः 'सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयम्। तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत' (छा.६.२.१) 'सन्मूलास्सोम्येमास्सर्वाःप्रजाःसदायतनास्सत्प्रतिष्ठाः। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा.६.८.६) इति। तथा 'सोऽकामयत बहुस्यां प्रजायेयेति। सतपोऽतप्यत, सतपस्तप्त्वा इदगुँसर्वमसृजत, इत्यारभ्य 'सत्यंचानृतं च सत्यमभवत्' (तै.आन.६अनु) इत्याद्याः। अत्रापि श्रुत्यन्तरसिद्धश्चिदचितोः परमपुरुषस्य च स्वरूपविवेकस्स्मारितः। 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.६.३.२) इति 'तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्चत्यच्चाभवत्। विज्ञानंचाविज्ञानं च। सत्यंचानृतं च सत्यमभवत्' इति च 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा.६.३.२) इति जीवस्य ब्रह्मात्मकत्वं 'तदनुप्रविश्य सच्चत्यच्चाभवत् विज्ञानंचाविज्ञानं च' इत्यनेनैकार्थ्यात् आत्मशरीरभावनिबन्धनमिति विज्ञायते। एवंभूतमेव नामरूपव्याकरणं 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' (बृ.३.४.०) इत्यत्राप्युक्तम्।

### श्रुतप्रकाशिका

भेदश्रुतिघटकश्रुत्यविरोधेनैक्यवाक्यानामर्थमाह—**एवमिति**। घटकतयोपात्तं सन्मूला इति। **अत्रापीति**। छान्दोग्यप्रकरणे तैत्तिरीयप्रकरणेचेत्यर्थः। **हन्ताहमित्यादिछान्दोग्ये**। **तत्सृष्ट्वेत्यादितैत्तिरीये**। जीवनाम्नेत्यस्य व्याख्यानार्थमाह—**अनेनेति**। * अनुप्रवेशश्रवणाभावेऽपि सामान्येनोक्तं नामरूपव्याकरणमनुप्रवेशपूर्वनामरूपव्याकरणे पर्यवस्यति सामान्यविशेषन्यायादित्याह—**एवंभूतमेवेति**॥

### गूढार्थसङ्ग्रहः

धर्म्यैक्येन सामानाधिकरण्यं यथा, तथा ब्रह्मणि विकारानङ्गीकारेऽपि 'विकारो नामधेयम्' इत्युक्तविकारशब्दं विहाय 'नामरूपे व्याकरवाणि' इत्यत्रान्तर्यामित्वसंग्रहार्थं रूपशब्दनिर्देशेन सूक्ष्मान्तर्यामिरूपकारणावस्थः स्थूलान्तर्यामित्वरूपकार्यावस्थश्च एकएवेति श्रुत्यर्थस्सिद्ध्यतीति भावः॥

**ऐतदात्म्यमिदं सर्वमित्यादि**। एतदर्थः पूर्वमेवोपपादितः। (२४४,९०५) चेतनाचेतनयोःपरब्रह्मणश्चानुप्रवेशनिबन्धनः अभेदव्यपदेशः स्फुटइत्यभिप्रेत्य तैत्तरीयश्रुतिमुपादत्ते—**सोऽकामयतेत्यादिना**। अनुप्रवेशप्रतिपादकछान्दोग्य तैत्तरीयश्रुत्योरैकार्थ्येन छान्दोग्येऽप्यनुप्रवेशनिबन्धनोऽभेदस्सिद्ध्यतीत्यभिप्रेत्याह—**अत्रापीत्यादि**। प्रवेशस्य बृहदारण्यकेऽप्यभिधानेन स्वपर्यन्तनामरूपव्याकरणं तत्रापि विवक्षितमित्यभिप्रेत्याह—**एवंभूतनामरूपव्याकरणमित्यादि**॥ **तद्धेदंतर्हीति**। 'समाकर्षात्' (१.४.१५) इति सूत्र (शं) भाष्ये 'तद्धेदं तर्ह्यव्याकृतं' इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते 'स एष इहप्रविष्ट आनखाग्रेभ्यः' इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात्। निरध्यक्षे व्याकरणाभ्युपगमेह्यनन्तरेण कृतावलम्बिना स इत्यनेन सर्वनाम्ना कःकार्यानुप्रवेशित्वेन समाकृष्येत। चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते। प्रविष्टस्य चेतनत्वश्रवणात् 'पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः' इति। अपि च यादृगिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत्साध्यक्षं व्याक्रियत एवमादिसर्गेपीति गम्यते। दृष्टविपरीतकल्पनानुपपत्तेः।

## गूढार्थसंग्रहः

श्रुत्यन्तरमपि 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति साध्यक्षामेव जगतो व्याक्रियां दर्शयति । व्याक्रियत इति कर्मकर्तरि लकारः सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्यद्रष्टव्यः । यथा लूयते केदारः स्वयमेवेति सत्येव पूर्णके लवितरि । यद्वा कर्मण्येवैष लकारोऽर्थाक्षिप्तं कर्तारमपेक्ष्य द्रष्टव्यः । यथा गम्यते ग्रामइति' इत्युक्तम् ॥

भगवतातु 'अव्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते 'स एष इह प्रविष्टआनखाग्रेभ्यः पश्यंश्चक्षुश्शृण्वन् श्रोत्रं मन्वानो मन आत्मेत्येवोपासीत' इत्यत्र 'सएष' इति तच्छब्दे अव्याकृतशब्दनिर्दिष्टस्य अन्तःप्रविश्य नियन्तृत्वेनानुकर्षात् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति स्रष्टुस्सर्वज्ञस्य परस्य ब्रह्मणः कार्यानुप्रवेशनामरूपव्याकरणयोः प्रसिद्धेश्च । 'अन्तःप्रविष्टश्शास्ताजनानाँसर्वात्मा' इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवंरूपानुप्रवेशो न सम्भवति । अतः अव्याकृतं अव्याकृतशरीरं ब्रह्म तन्नामरूपाभ्यां व्याक्रियतेति तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियतेत्युच्यते । एवं च सतीक्षणादयो मुख्या एव भवन्ति ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथंचिदुपपद्येते । अतो ब्रह्मैककारणकं जगदिति स्थितम्' इत्युक्तम् ॥

अत्र चतुर्थोपक्रमे 'आत्मैवेदमग्रआसीत्पुरुषविधः' इति वाक्ये 'सदेव सोम्येदमग्र आसीत्' इति वाक्यसच्छायतया परिदृश्यमाने परमात्मैव विवक्षित इति सर्वव्याख्यानाधिकरणे व्यासार्योक्तार्थः **औपनिषदपरमपुरुष** इत्यत्र निरूपितः । एवमेव **तद्धेदं तर्हि** इत्यादिवाक्येऽपि । अत्र तर्हीत्यस्य प्रळयार्थकत्वं सर्वसम्मतम् । तादिदंशब्दयोः जगत्परत्वं परे मन्यन्ते । द्वितीयपक्षे 'तन्नामरूपाभ्यां व्याक्रियते' इत्यत्र कर्तुरध्याहारं परे वदन्ति । वस्तुतस्तु तादित्यस्य प्रसिद्धार्थकतया ब्रह्मपरत्वम् । इदमित्यस्य प्रपञ्चपरत्वम् 'सदेव सोम्य' इत्यादिवत् । अव्याकृतमित्यस्य अव्याकृतशरीरकमित्यर्थवर्णनं अव्याकृतशब्दस्य प्रधाने प्रसिद्धया स्वतन्त्रप्रधानपरत्वमिति पूर्वपक्षसंमतार्थमनुसृत्य । वस्तुतस्तु 'तन्नामरूपाभ्यां व्याक्रियते' इत्यत्र व्याकृतशब्दयोगार्थस्यैव प्रतीत्या अव्याकृतशब्दो यौगिकः । परं ब्रह्म प्रलये नामरूपव्याकरणशून्यमासीदविभक्तनामरूपमासीदिति 'सदेव—एकमेव' इत्यत्र एकशब्दार्थः स्फुटीकृतः । ब्रह्मकर्तृकमेव नामरूपाभ्यां व्याकरणं 'तन्नामरूपाभ्यां व्याक्रियते' इत्यत्राभिधीयते । इदमित्यत्र प्रपञ्चस्य निर्दिष्टतया प्रपञ्चशरीरकपरमात्मनः नामरूपव्याकरणोक्तौ प्रपञ्चस्य नामरूपव्यकरणमप्यत्र सिद्धयति । एतेन 'अनेन—व्याकरवाणि' इत्यत्र स्वपर्यन्तनामरूपव्याकरणं स्थापितं भवतीत्युभयोश्श्रुत्योरैकरस्यं सम्भवति ॥

अत्र 'सएष इहप्रविष्टः' इत्यत्र नियमनार्थप्रवेश एव विवक्षितः श्रुत्यन्तरैकरस्यात् तेनात्मन्शब्दार्थोऽभिहितो भवति । एतेन 'तदात्मानमेवावेदहंब्रह्मास्मि' इत्युत्तरवाक्यार्थोऽपि निर्णीतो भवति । तत्र आत्मन्शब्दावैयर्थ्याय आत्मन्शब्दार्थान्तर्याम्येव 'अहंब्रह्मास्मीत्यवेत्' इत्यत्र विवक्षितः । अन्तर्यामिणः ब्रह्मणश्चैक्येन वेदनस्योपपत्तिः । 'तस्मात्तत्सर्वमभवत् तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहंमनुरभवं सूर्यश्च' इत्यत्र सर्वमन्वादिशब्दाः तत्तदन्तर्यामिपराः इति निर्धारणं संभवति । स्वपर्यन्तनामरूपव्याकरणेन इत्थमर्थनिश्चयः । अयमेवार्थः 'शास्त्रदृष्ट्यातूपदेशो वामदेववत्' इत्यत्र विवक्षितः । पूर्वसूत्रे 'अध्यात्मसम्बन्धभूमाह्यस्मिन्' इत्यत्र संबन्धबहुत्वाभिधानेन प्रतर्दनविद्यावाक्ये परसम्मतनिर्विशेषव्यवच्छेदेनोत्तरसूत्रेऽपि तदनुगुणार्थविवक्षायाः युक्तत्वनिश्चयसम्भवात् ॥

एवं 'अवस्थितेरिति काशकृत्स्नः' (१.४.२२) इति सूत्र (शं) भाष्ये 'सर्वाणि रूपाणि विचित्य धीरः' इत्यादिश्रुतिरुदाहृता तत्र 'अभिवदन्' इत्यत्र 'स्वाभिमुख्येन वदन्' इत्यर्थे स्वपर्यन्तनामरूपव्याकरणमेव विवक्षितम् । एवं च तत्सूत्रेऽपि

## श्रीभाष्यम्

**अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परपुरुषएवेति कारणात्का**

## श्रुतप्रकाशिका

* यद्वा सर्वशाखाप्रत्ययन्यायेन क्वचिदनुक्तस्यान्यतोग्राह्यत्वात्क्वचिज्ज्ञातोऽनुप्रवेशः कार्योपयोगितयाऽपेक्षितत्वादन्यत्रापि स्वीकार्य इत्याह—**एवमिति**। एवंभूतशब्दोनुप्रवेशपूर्वकत्वपरः। अनेन नामरूपव्याकरणश्रुत्युपादानेन जीवानामुत्पत्तिप्रळयौ नामरूपव्याकरणतदभावौ नतु स्वरूपनिष्पत्तिविनाशावित्युक्तं भवति। अनेन पूर्वोक्तशङ्का च परिहृता कालविशेषोक्तमैक्यं नामरूपव्याकरणाभावमात्रं नतु स्वरूपैक्यमित्यवगमात्॥

**अथ** सर्वश्रुतीनामस्मिन्नर्थे मुख्यत्वं दर्शयन् प्रथममेकविज्ञानेन सर्वविज्ञानं परमतेऽनुपपन्नमिति प्रागुक्तं स्वमत उपपन्नमित्याह—**अतइति**। कार्यकारणयोरैक्यप्रतिपादनादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्सामानाधिकरण्याच्चेति त्रिधा-ह्यद्वैतप्रतीतिः अत्र पूर्वोक्तद्वयमस्मदुक्तप्रकारेणोत्पन्नमिति अतइत्यादिभाष्येणोक्तं भवति। विशिष्टं कारणं तदेव कार्यमिति कारणात्कार्यस्यानन्यत्वम्। अतः कार्यकारणयोरैक्यपराणां श्रुतीनां तयोरेकद्रव्यत्वमेव प्रतिपाद्यं नतु विशिष्टत्वनिषेधः तस्य विहितत्वात्॥

## गूढार्थसंग्रहः

अनया श्रुत्या जीववाचिशब्दानां जीवान्तर्यामिपरमात्मपरत्वेन समानाधिकरणवाक्यानामर्थनिर्णय एव सूत्रकृदभिप्रेतइति सिद्ध्यति। अत्र श्रीभाष्ये ईशेशितव्यभावस्य तात्त्विकत्वस्थापनपूर्वकं 'तत्त्वमसि' इति समानाधिकरणनिर्देशस्य नामरूपव्याकरणश्रुत्या स्वपर्यन्तनामरूपव्याकरणेन जीववाचितया लोके प्रसिद्धानां शब्दानां जीवान्तर्यामिपरमात्मपरत्वस्थापनेन अंशाधिकरणे 'अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके' (२.३.४३) इति सूत्र (शं) भाष्ये 'स्वामिभृत्यप्रकारैष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव संबन्ध' इति पूर्वपक्ष एव श्रौतसिद्धान्त इतिसाधितंभवति

अयं च भामत्याम्—प्रमेयापूर्वत्वलक्षणतात्पर्यलिङ्गाभावात् उपक्रमोपसंहाराभ्यासादीनामभावाच्च एतद्भेदानुवादेन अभेदप्रतिपादने वाक्यतात्पर्यनिश्चयेन ईशेशितव्यप्रतिपादकवाक्यान्यनुवादरूपाणि' इत्युक्तम्। 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.गार्गि.ब्रा) इत्येतद्भाष्य (शं) वार्त्तिकयोः नियन्तृनियाम्यभावस्य अनुमानगम्यत्वमप्युक्तम्। एवमेव सङ्क्षेपशारीरकादावपि। तथाऽपि 'नानाव्यपदेशात्' इत्यत्र 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः—यमयति' इत्यन्तर्यामिब्राह्मणवाक्यमुदाहृतम्। अत्र प्रतिपाद्यमानं नियमनमन्तर्बहिश्च स्थितिपूर्वकनियमनमेव। नेदमनुमानगम्यम्। 'अन्यथाचापि' इतिसूत्रखण्डविषयतया (शं) 'सर्वाणि रूपाणि विचित्य धीरः' इति वाक्यमुपात्तम्। इदंचाभेदनिर्देशौपयिकनामरूव्याकरणं प्रकाशयतीति पूर्वमेवोक्तम्। तेनचाभेदनिर्देशः उपपन्नः। जीववाचितया प्रसिद्धानां शब्दानां जीवशरीरकपरमात्मपरत्वे जीवस्य पदार्थैकदेशतयांशत्वमपि भवति इति भेदाभेदव्यपदेशाभ्यामेवांशत्वं स्थापितं भवतीति सूत्रतात्पर्यं स्फुटम्। 'अंशो नानाव्यपदेशादन्यथाचापि' इत्येव सूत्रानुपूर्वी। अत्र 'अन्यथा च' इत्यत्र अनंश इत्यर्थः आधुनिकोत्प्रेक्षितः (अ.कृ) न सूत्रे विवक्षितः। 'अंशोऽन्यथा च' इति सूत्रानुपूर्वीसत्त्वे तादृशार्थप्रतीतिसम्भवः। 'अंशो नानाव्यपदेशात्' इति सूत्रानुपूर्व्यांतु नानाव्यपदेशप्रतिकोटिभूतार्थः नानाव्यपदेशस्यैवान्यत्वप्रतिकोटितयोपस्थित्या व्युत्पत्तिसिद्धतया प्रामाणिकः। नतु अंशत्वप्रतिकोटिभूतानंशत्वरूपार्थः; एतादृशवाक्येषु तथा व्युत्पत्तिविरहात्. एतत्तात्पर्येणैव शङ्कराचार्यादिभिः प्राचीनैरेवमर्थोत्प्रेक्षणं न कृतम्॥

श्रीभाष्यम्

यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरम्। 'अहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.६.२३) इति 'तिस्रो देवता' इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाश्शब्दा अचि(र्जी)द्विशिष्टजी)वविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनश्शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम्। अतस्स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कारणं कार्यंचेति ब्रह्मोपादानं जगत्। सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि सङ्घातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः। यथा, शुक्लकृष्णरक्ततन्तुसङ्घातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसम्बन्ध इति कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः। तथा चिदचिदीश्वरसङ्घातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः। तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारणत्वं कार्यत्वं च। इहतु चिदचितोस्सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात्तत्प्रकारः परमपुरुषस्सर्वदा सर्वशब्दवाच्य इति विशेषः। स्वभावभेदस्तदसङ्करश्च तत्रचात्र च तुल्यः। एवं च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम्। स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाऽवस्थानात्कार्यत्वमप्युपपन्नतरम्। अवस्थान्तरा-

श्रुतप्रकाशिका

एकविज्ञानेन सर्वविज्ञानमप्येवमेव, यथा मृत्पिण्डेन तत्कार्यज्ञानेऽपि पिण्डगतरूपादिनिषेधो न कृतस्स्यात् तद्वत् उपपन्नतरमिति तरप्प्रत्ययेन मुख्यत्वं सर्वत्रापि विवक्षितम्। एवं सद्विद्योपक्रमगतस्यैकविज्ञानेन सर्वविज्ञानस्य मुख्यत्वमुक्तम्। अथ तदुपसंहारस्य तत्त्वमसीति सामानाधिकरण्यस्य मुख्यत्वमाह—**अहमिमाइति**। उपादानत्वस्वभावासङ्करौ कथमुपपद्येते इत्यत्राह- **अतस्स्थूलेति**। भाव्यवस्थाविशेषवतः प्रागवस्थायोगोह्युपादानत्वं अतोऽवस्थाविशेषौ स्थूलसूक्ष्मशब्दाभ्यां दर्शितौ अनेन कालविशेषावच्छिन्नैकत्वावधारणं नामरूपविभागाभावाभिप्रायमिति फलितम्। उपादानत्वेऽपि स्वभावासङ्करमाह—**सूक्ष्मेति**। दृष्टान्तेनेममर्थमुपपादयति। **यथेति**॥

ननु शुक्लकृष्णादितन्तवः कारणावस्थायामपि भिन्नाः नच तेष्वन्यतमं प्रत्यन्यतमस्य कारणत्वं अतस्तत्र स्वभावासङ्करः। अत्रतु विश्वस्य सङ्घातोपादानत्वेऽपि कारणावस्थायां परमात्मैक एव स्वशब्देन श्रूयते नतु चेतनाचेतनौ, किंच परमात्मनः प्रागेकत्वं तस्मादितरयोर्द्वयोरुत्पत्त्यादिकं च श्रूयते अतो न स्वभावासङ्करइत्यत्राह—**तन्तूनामिति**। नहि तन्तुष्वन्योन्यगुणप्रधानभावोऽस्तीति न तत्रान्यतमवाचिशब्देन समुदाय उच्यते, अत्रतु सर्वप्रकारस्य भगवतः सर्वशब्दवाच्यत्वमुपपन्नमिति अन्यतमवाचिशब्देनापि विशिष्टमेवोच्यत इति विशिष्टस्यैव कारणत्वात् प्रागपि भेदोऽस्तीति स्वभावासङ्कर उपपन्नइत्यर्थः। केनाकारेण साधर्म्यमित्यत्राह—**स्वभावेति**। समागतेतरपदार्थानां लवणत्वापत्तिवत् ब्रह्मणोऽन्यथाभावमाशङ्क्याह—**एवंचेति**। तर्ह्युपादानत्वमेवानुपपन्नमित्यत्राह—**स्थूलावस्थस्येति**॥

आत्मतयाऽवस्थानात्कथं कार्यत्वमित्यत्राह—**अवस्थेति**। अविकारश्रुतीनां प्रकृतिगतस्वरूपान्यथाभावरूपविकारो ब्रह्मणि नास्तीत्यर्थः। कार्यावस्थचिदचिन्नियमनरूपावस्थान्तरापत्तिर्ब्रह्मणः कार्यत्वमिति कार्यत्ववादिनीनां श्रुतीनामर्थः

श्रीभाष्यम्

**पत्तिरेवहि कार्यता। निर्गुणवादाश्च परस्य ब्रह्मणो हेयगुणासम्बन्धादुपपद्यन्ते 'अपहतपप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः' (छा.८.७.१) इति हेयगुणान्प्रतिषिध्य 'सत्यकामस्सत्यसङ्कल्पः' (छा.८.७.१) इति कल्याणगुणान्विदधतीयं श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति।**

श्रुतप्रकाशिका

नहि कारणावस्थनियमनं कार्यावस्थनियमनं भवति, तत्तदवस्थचिदचिन्नियमनरूपविशेषा एव ब्रह्मणोऽद्वारकावस्थाः स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपविकारास्तु सद्वारकावस्था इत्यर्थः। * यथा ग्राहकग्रहणेन सन्निधिसमाम्नातेषु वस्तुषु परमापूर्वशेषतयाऽवगतेषु यागव्रीह्यादेरद्वारकशेषत्वं प्रोक्षणादेस्सद्वारकशेषत्वं च मुख्यमेवावगम्यते। तथा * बहुस्यामिति ग्राहकग्रहणेन सर्वावस्थासु परमात्मीयतयाऽवगतासु स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपसद्वारकावस्थायाः तत्तन्नियमनरूपाद्वारकावस्थायाश्च परमात्मीयत्वं मुख्यमेवेति भावः। **निर्गुणेति**। अपहतपाप्मेत्यादि*चात्र किंचिद्विवृतम्। **श्रुतिरेवेति** मतान्तरोक्तनिर्वाहेषु श्रुतहानिरश्रुतकल्पनंचास्ति अत्रतु निर्वाहश्श्रौत एव श्रुतानुगुणश्चेति वैषम्यमिति भावः॥

**गूढार्थसंग्रहः**

एवं 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इति सूत्रभाष्यादौ (शं) 'तत्त्वमसि इति वाक्यसहभावेन 'सत आत्माऽन्तर्याम्यमृतः' 'एषत आत्माऽन्तर्याम्यमृतः' इति वाक्यमुपात्तम्। एवं 'अन्तःप्रविष्टश्शास्ता जनानाम्' इति श्रुतिः उपदेशसहस्त्र्यां 'तत्त्वमसि' इति श्रुतिसहभावेनोपात्ता। तत्र 'सत आत्मा' इत्यादौ द्वाविंशतिवारमभ्यस्ता षष्ठी। सर्वत्रप्रसिद्धयधिकरणे 'एष म आत्माऽन्तर्हृदये' इति त्रिवारमभ्यस्तषष्ठ्या (शं) उपनिषद्भाष्यटीकासम्मतया भेद एव प्रतीयते। एवं 'अन्तःप्रविष्टश्शास्ताजनानाम्' इत्यत्रापि। 'अन्तः—जनानाम्' 'सत—अमृतः' इत्युभत्रान्तःप्रविश्य नियन्तृत्वेनात्मत्वोपपादनेनाभेदनिर्देशस्योपपत्तिः प्रागेव निरूपिता। 'ब्रह्म दाशा ब्रह्म दासा' इति श्रुतेरप्युपपत्तिः। एवं च स्वाभाविकतात्त्विकेशेशितव्यभावस्याङ्गीकारेऽपि प्रमेयापूर्वत्वं सम्यग्रक्षितं भवति। सर्वत्र परब्रह्मलक्ष्यमिति सिद्धान्ते उपक्रमादौ लक्ष्यार्थविवक्षासाधकाभावेन उपक्रमाद्यैकरूप्यमपि न सम्भवति। एवं ब्रह्मप्राप्तिरपि कण्ठगतचामीकरन्यायेनाज्ञाननिमित्तकाप्राप्तप्राप्तिपरिहारेण प्राप्तप्राप्तिरेवोपपाद्यते परैः। सिद्धान्ते मुख्यमिदं प्रयोजनं— भवति। सर्वत्र शक्यार्थप्रतीत्यङ्गीकारेण उपक्रमाद्यैकरूप्यमपि। '**तंत्वौपनिषदम्**' इति श्रुतिः न परेषामनुकूलेति प्रागेव निरूपितम्। अतश्च नामरूपव्याकरणश्रुत्या स्वपर्यन्तनामरूपव्याकरणप्रतिपादनेन 'तत्त्वमसि' इति नवकृत्वः अभ्यासस्था श्रुतिरुपपद्यते। तत्र 'ऐतदात्म्यमिदं सर्वम्' इत्यस्यापि नवकृत्वोऽभ्यासः वर्तते। तत्र 'सत आत्माऽन्तर्याम्यमृतः' 'एषत आत्माऽन्तर्याम्यमृतः' इति द्वाविंशतिवारमभ्यस्त वाक्यैकार्थ्येन शरीरशरीरिभावसूचनेन 'तत्त्वमसि' तान्निबन्धनमेव इत्यत्र सामानाधिकरण्यमिति बोधितं भवति। 'ऐतदात्म्यमिदम्' इत्यत्र ब्रह्मविद्याऽऽभरणोक्तार्थः न सम्मत इति प्रागेव (९०४,९०५) निरूपितम्॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र तत्पदार्थस्वरूपज्ञानं तदविरोधेन 'तत्त्वमसि' इति वाक्यार्थनिर्णयः। ज्ञानस्वरूपत्वेन ब्रह्मणः स्वप्रकाशत्वेन 'स्वयंज्योतिष्ट्वसिद्धिश्च—' इत्यादिवार्तिके स्वप्रकाशस्य कामाद्याश्रयत्वं न सम्भवतीति स्थापनेन तत्र निर्विशेषस्वरूपस्यैव विवक्षिततया 'तत्त्वमसि' इति वाक्येऽपि स एव सिद्धान्तोऽभिप्रेत इति शङ्काया-

श्रीभाष्यम्

**ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मण-स्स्वरूपं ज्ञानैकनिरूपणीयं स्वयंप्रकाशतया ज्ञानस्वरूपंचेत्यभ्युपगमादुपपन्नतरः। 'यस्स-र्वज्ञस्सर्ववित्' (मु.१.१.९) 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच' (श्वे.६.८) 'विज्ञातारमरे केन विजानीयात्' (बृ.६.५.१५) इत्यादिकाः ज्ञातृत्वमावेदयन्ति 'सत्यं ज्ञानम्' (तै.आन.१.अ) इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञान-स्वरूपताम्। 'सोऽकामयत बहुस्याम्' (तै.आनन्दवल्लि.६.अ) 'तदैक्षत बहुस्याम्' (छा. ६.२.३) 'तन्नामरूपाभ्यां व्याक्रियत' (बृ.३.४.७) इति ब्रह्मैव स्वसङ्कल्पाद्विचित्रस्थिरत्र-सरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वमिति तत्प्र-तिषिध्यते। 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' (कठ,४.१०) 'नेह नानाऽस्ति किंचन' (बृ.४.४.१४) 'यत्रहि द्वैतमिव भवति तदिर इतरं पश्यति। यत्रत्वस्य सर्वमात्मै-वाभूत्तत्केन कं पश्येत् तत्केन कं विजानीयात्' (बृ.४.४.१) इत्यादिना। न पुनः 'बहुस्यां प्रजायेय' इत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्व-मपि निषिध्यते। 'यत्रत्वस्य सर्वमात्मैवाभूत्' (बृ.४.४.१४) इत्यादिनिषेधवाक्यादौ च तत्स्थापितम्। 'सर्वं परादाद्योन्यत्रात्मनस्सर्वं वेद' (बृ.४.४.६)**

श्रुतप्रकाशिका

अथार्थगुणनिषेधपरत्वेन पराभिमतानां श्रुतीनामर्थमाह—**ज्ञानस्वरूपमिति**। सर्वज्ञस्येत्यादिपदानि मङ्गळगुण-विशेषविधायिवाक्यस्मरणार्थानि। **'तद्गुणसारत्वात्'** इत्यादिसूत्रसिद्धमेवात्र निर्वाहद्वयमुक्तम्। ईश्वरस्य ज्ञातृत्वात् ज्ञानैकनिरूपणीयत्वमुक्तम्। ज्ञातुर्हि ज्ञानं निरूपकं तरपो मुख्यत्वमर्थः॥ ज्ञानस्वरूपत्वज्ञानगुणकत्वपराः श्रुतीर्दर्शयति। **यस्सर्वज्ञइति**। ज्ञानस्वरूपतां * उभयथाऽपि ज्ञानव्यपदेशयोग्यताम्। ज्ञानगुणकत्वस्य ज्ञानस्वरूपत्वस्य च विहितत्वा-*दुभयमप्युपपन्नमित्यर्थः ज्ञानस्य ज्ञानश्रयत्वानुपपत्तिचोद्यपरिहारः पूर्वमेव कृतः। भेदनिषेधश्रुतीनामर्थमाह—**सोऽकामय-तेति। विचित्रस्थिरत्रसरूपतया** विचित्र*स्थिरत्रसशरीरतया। **अब्रह्मात्मकेति** ब्रह्मान्तर्यामिकत्वरहितत्वमुक्तम्। विहित-व्यतिरिक्तस्वनिष्ठवस्तुनानात्वमित्यर्थः॥

* यद्वा स्थिरत्रसरूपतया स्थिरत्रसात्मकत्वात्। **अब्रह्मात्मकेति**। अब्रह्मभूतमित्यर्थः। तथासति कार्यकारण भेदनिषेधःकृतस्स्यात्। ऐक्यश्रुतीनां प्रकार्यैक्यपरत्वादैक्यश्रुतिशेषभूतभेदनिषेधोऽपि तदनुरोधेन प्रकारिभेदनिषेध एव भवितुमर्हतीत्यर्थः। निषेधसामान्यंहि विशेषविधाने दृष्टे तद्व्यतिरिक्तविषयं दृष्टं **'न हिंस्यात्'** इत्यादिषु। विशेषविधानं सामान्यनिषेधो बाधतेचेत् वैधहिंसाया अधर्मत्वप्रसङ्गइत्यभिप्रायेणाह—**नपुनरिति**। उक्तमर्थमुपक्रमेणैवोपपादयति। **यत्र त्वस्येति। योऽन्यत्रात्मनइति**। अन्यत्रेत्यव्ययं विनाशब्दपर्यायम्। ब्रह्मणःपृथग्भूतं तदविनाभावरहितं नास्तीत्यर्थः भेदविशेषनिषेधदर्शनात् सामान्येन भेदनिषेधोऽपि तत्रैव पर्यवस्यति **'छागो वा मन्त्रवर्णात्'** इति न्यायादितिभावः॥

गूढार्थसङ्ग्रहः

माह—**ज्ञानस्वरूपं ब्रह्मेति वादश्चेति। सर्वज्ञस्य सर्वशक्तेरिति**। यथा परंब्रह्म ज्ञानस्वरूपमिति श्रुत्या प्रतिपन्नं तथा 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'यस्सर्वज्ञस्सर्ववित्' इत्यादिश्रुतिभिः परंब्रह्म ज्ञान

श्रीभाष्यम्

'तस्यहवा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः' (सुबा.२.ख) इत्यादिना ॥

एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां, कार्यकारणभावं कार्यकारणयोरनन्यत्वं च वदन्तीनां सर्वासां श्रुतीनामविरोधः चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं, शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिं कार्यदशायां च तदर्हस्थूलदशापत्तिं, वदन्तीभिश्श्रुतिभिरेव ज्ञायत इति ब्रह्माज्ञानवादस्यौपाधिकब्रह्मभेदवादस्यान्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य नकथंचिदप्यवकाशो दृश्यते। चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्तरेण कार्यकारणभावप्रतिपादनं कार्यकारणयोरैक्यप्रतिपादनं च ह्यविरुद्धम्। यथा आग्नेयादीन् षड्यागानुत्पत्तिवाक्यैः पृथगुत्पन्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् 'दर्शपूर्णमासाभ्याम्' (कात्यायन.श्रौ.सू.४.३.४७) इत्यधिकारवाक्यं कामिनःकर्तव्यतया विदधाति। तथा चिदचिदीश्वरान्विविक्तस्वरूपस्वभावान् 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे.१.१०) 'पतिं विश्वस्यात्मेश्वरम् आत्मा नारायणःपरः' (तै.ना.अनु.११) इत्यादिवाक्यैः पृथक्प्रतिपाद्य 'यस्य पृथिवी शरीरम्' (बृ.५.७.३) 'यस्यात्मा शरीरम्' (५.७.२२) 'यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.७.ख) इत्यादिभिर्वाक्यैश्चिदचितोस्सर्वावस्थाऽवस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मतां च, प्रतिपाद्य शरीरिभूतपरमात्माभिधायिभिस्सद्ब्रह्मात्मादिशब्दैः कारणावस्थःका-

श्रुतप्रकाशिका

इतरव्याख्यातृभिर्भवद्भिरपि निर्वाहप्रकाराःकृताः तत्र कोविशेषइत्यत्राह— एवमिति। अस्मदुक्तनिर्वाहः श्रुतिभिरेवोक्तः श्रुत्यनुगुणश्च तत्कृतनिर्वाहः श्रुतिविरुद्धः अश्रुतस्तर्काभासमूलश्चेत्यर्थः। अपन्यायमूलस्य सकलश्रुतिविरुद्धस्येति सर्वत्रान्वेति। अन्यस्येति स्वाभाविकभेदाभेदं स्वनिष्ठभेदंचाह—इममर्थं वैदिकदृष्टान्तेनोपपादयति। चिदचिदीश्वराणामिति। आग्नेयः अग्नीषोमीयोपांशुयाजौ ऐन्द्रौ द्वौ * ऐन्द्राग्नश्चेति षड्यागाः। * उत्पत्तिवाक्यमिति प्रथमप्रतिपत्तिजनकं वाक्यम्। पृथगुत्पन्नान् पृथक्प्रतिपादितान् उत्पत्तिवाक्यैः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यांचाच्युतोभवति' इत्येवमादिभिः। समुदायानुवादिवाक्यद्वयेन 'य एवं विद्वान्पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इत्येताभ्यां 'दर्शपूर्णमासाभ्याम्' * इति स्वर्गसाधनाकारेणैकीकृत्य तत्कर्तव्यतया विदधातीत्यर्थः॥

तथात्रार्थप्रतिपादनं दर्शयति। तथेति। शरीरिभूतेति। * कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति वचनभङ्ग्याऽपृथक्प्रतिपन्नं वस्तुत्रयं प्रतिपादयतीत्यर्थः। आग्नेयादिसमुदायेऽन्यतमवाचिशब्दैस्समुदायाभिधानं न दृष्टम् अत्र

गूढार्थसंग्रहः

शक्त्यादिगुणवदित्यपि बोध्यते। 'सत्यं ज्ञानम्' इत्यत्र ज्ञानशब्दे अन्तोदात्तस्वरः 'उणादयो बहुलम्' इति बहुलग्रहणादेवोपपादनीयः। एवम् 'अर्श आदिभ्योऽच्' 'चितोन्त उदात्तः' इति वा। तत्र विनिगमकाभावादुभावप्यर्थावुपादेयौ। 'अर्श आद्यचा' 'चितोऽन्त उदात्तः' इति अन्तोदात्तस्वरोपपत्तिः यामुनमुनिभिरुक्ता। आचार्यपादैः 'ज्ञानत्वं

## श्रीभाष्यम्

**यदवस्थश्च परमात्मैक एवेति पृथक्प्रतिपन्नं वस्तुत्रितयम् 'सदेवसोम्येदमग्र आसीत्' (छा ६.२.१) 'ऐतदात्म्यमिदं सर्वम्' (छा.६.८.६) 'सर्वं खल्विदं ब्रह्म' (छा.३.१४.१) इत्यादिवाक्यं प्रतिपादयति चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः यथा मनुष्यपिण्डशरीरकस्यात्मविशेषस्यायमात्मा सुखीत्यात्मशब्देनाभिधाने इत्यलमतिविस्तरेण। यत्पुनरिदमुक्तं ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति तदयुक्तम् बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात्। पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेश तत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम्। एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमेवोक्तम्। भवदभिमतस्यैक्यज्ञानस्य यथाऽवस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव**

## श्रुतप्रकाशिका

तु परमात्मवाचिशब्देन समुदायाभिधानं कथमित्यत्राह—**चिदचिद्वस्त्विति**। दृष्टान्तमाह—**यथेति**। तत्रान्योन्यं प्रकारप्रकारिभावाभावादन्यतमवाचिशब्देन न समुदायाभिधानम् अत्रतु तथाभावादुपपन्नम्। कथं उच्यते—अर्थसामर्थ्यात् शब्दसामर्थ्याच्च चिदचितोरपृथक्सिद्धप्रकारत्वान्निष्कृष्टब्रह्मणः कारणत्वानुपपत्त्या च प्रकारिवाचिशब्देन विशिष्टोपस्थापनसिद्धिः * सद्ब्रह्मशब्दौ विशिष्टस्य सत्त्वबृहत्त्वयोगाद्विशिष्टोपस्थापनसमर्थौ आत्मशब्दश्च व्याप्तिरूपप्रवृत्तिनिमित्तस्य व्याप्यसापेक्षत्वाद्विशिष्टोपस्थापक इति। * यद्वा '**अक्षरात्सम्भवतीह विश्वम्**'

**यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते॥**

'**आत्मन आकाशस्सम्भूतः**' इत्यादिषु परमात्मवाचिशब्दैः कारणमुच्यते तेषां विशेषणभूतचिदचिदभिधाने शक्तिर्नास्ति लक्षणायां सएव दोषः। अतस्सर्वत्र स्वरूपपरिणाम एव स्वरसप्राप्त इत्यत्राह—**चिदचिदिति**। श्रुत्यन्तरबलेन स्वरूपविकारासम्भवात्कार्योपयुक्तमनुक्तमपि विशेषणं * पृषदाज्यनयादर्थस्वभावेन सन्निधापितमनुसन्धेयमिति भावः॥ तदेव लोकप्रयोगेणापि द्रढयति। **यथेति**। अयमात्मा सुखीत्यात्मविशेषस्य सुखित्वविधाने शरीररहितस्यात्मनो-वैषयिकसुखासम्भवात्तादृशसुखोपयुक्तमनुष्यादिपिण्डविशिष्टत्वमर्थतस्सिध्यति तद्वदिति भावः। निवृत्त्यनुपपत्तिं वक्तुमनुवदति। **यत्पुनरिति**। दूषयति। **तदयुक्तमित्यादिना**। प्रपञ्चस्य ज्ञानबाध्यत्वं ज्ञानस्यैक्यविषयत्वं उभयमपि पराभिमतम् तत्र प्रथमं ज्ञानबाध्यत्वानुपपत्तिमाह—**बन्धस्येति**। सर्वप्रमाणानुगुणं पारमार्थ्यमुपपादयति। **पुण्यापुण्येति**। प्रतीतिमात्रसिद्धस्य हेतुहेतुमद्भावनियमोऽनुपपन्नः परमार्थस्यैवार्थक्रियाकारित्वात् उत्पत्तिमत्त्वाच्च। असत्यस्य हेतुत्वासम्भवमुत्पत्त्यसम्भवं च प्रागुपपादितमुपजीव्योक्तम्। नहि प्रतीतिमात्रसिद्धमन्यत्र विद्यमानं वस्त्विह किमप्युत्पादयति नापि स्वयमिदानीमुत्पाद्यते॥

किंच अपरमार्थस्य भ्रान्तिज्ञानसामग्रीव्यतिरिक्त*हेतुसापेक्षत्वं च न दृष्टम्। * नचाङ्कुरादिसामग्र्येव भ्रमसामग्री गिरिशिखरगतमृत्सलिलबीजसम्बन्धेन अपवरकगतस्याङ्कुरभ्रमप्रसङ्गात्। नच पदार्थानामर्थक्रियाकारित्वं उत्पत्तित्वं च मिथ्येति वाच्यं ज्ञानबाध्यत्वाभावात्। किंच मिथ्यात्वे पापकरणेऽपि न प्रायश्चित्तापेक्षा मिथ्येति बुद्धिरेवालमिति भावः। भवताऽपि ज्ञाननिवर्त्यत्वमविद्यायाः वक्तव्यं तच्च सत्यत्वे कथमुपपद्यत इत्यत्राह—**एवंरूपेति**। परमार्थस्य ज्ञाननिवर्त्यत्वं दृष्टद्वारा नोपपद्यते अपित्वदृष्टद्वारा। यथा सत्यसर्पदष्टविषस्योपासनप्रीतगरुडप्रसादान्निवृत्तिः नतु मिथ्येति ज्ञानात् तथेत्यर्थः

## श्रीभाष्यम्

**फलं भवति। 'मिथ्यैतदन्यद्द्रव्यंहि नैति तद्द्रव्यतां यतः।' (वि.पु.२.१४.२७) इति शास्त्रात् 'उत्तमःपुरुषस्त्वन्यः' (गी.१५.१७) 'पृथगात्मानं प्रेरितारंच मत्वा' (श्वे.१.६) इति जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणोज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च**

**अपि च भवदभिमतस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वात्तस्य निवर्तकान्तरं मृग्यम्**

**निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातं निवर्त्य क्षणिकत्वात् स्वयमेव नश्यतीति चेत् न तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेन विनाशतत्कल्पनाकल्पकरूपाविद्यायाः**

## श्रुतप्रकाशिका

प्रपञ्चस्य ज्ञानानिवर्त्यत्वमुक्तम्। ऐक्यज्ञानस्योपायत्वानुपपत्तिमाह— **भवदभिमतस्येति**। तत्त्वज्ञानंहि मोक्षोपायः * भिन्नविषयस्याभेदज्ञानस्यातत्त्वज्ञानरूपत्वात् विपरीतफलत्वमित्यर्थः। अद्वैतस्यातथ्यत्वे प्रमाणमाह– **मिथ्यैतदिति**। ऐक्यस्यातात्त्विकत्वकण्ठोक्तिर्दर्शिता। ऐक्यस्यासत्यत्वं यथा फलति तथा भेदज्ञानस्यैव मोक्षहेतुत्वमाह— **उत्तमइति**। * स्मृतिवचसोऽसङ्कल्यर्थं श्रुतेः पश्चादुपादानम्॥

ऐक्यज्ञानस्य निवर्तकत्वे प्रमाणविरोध उक्तः। अथ तर्कविरोधमाह– **अपिचेति**। * दावानलविषनाशकविषदृष्टान्ताभिप्रायेण शङ्कते। **निवर्तकज्ञानमिति**। * निवर्तकज्ञानं तद्विनाशश्च किम्? ब्रह्मव्यतिरिक्तं उत स्वरूपमिति विकल्पमभिप्रेत्याह– **नेति**। ब्रह्मव्यतिरिक्तत्वाद्घटादेरिव विनाशस्य काल्पनिकत्वं यथा स्वप्नपदार्थस्वरूपतदुत्पत्तिस्थितीनां काल्पनिकत्वान्नाशश्च काल्पनिकस्तथेति भावः। **विनाशतत्कल्पनाकल्पकरूपाविद्याया इति**। विनाशःकल्प्यः तद्विषयभ्रमबुद्धिः कल्पना कल्पको भ्रमाश्रयादिः, * एवंरूपाविद्याया इत्यर्थः॥

## गूढार्थसङ्ग्रहः

ज्ञातृभावात्स्वरबहुळतया स्वप्रकाशत्वतश्च' (३३५.श्लो) इत्यर्थद्वयमधिकरणसारावल्यामुपपादितम्। व्याख्यातारस्तु ब्रह्मत्वविशिष्टे ज्ञानाभेदतात्पर्येण विशेषणविशेष्ययोरुभयोः ज्ञानाभेदसिद्धावर्थद्वयं सिद्ध्यति' इति जन्माद्यधिकरणे निरूपयन्ति। तेन 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिरप्युपपादिता भवतीत्याशयः। चरमवृत्तिरेवाविद्यानिवर्तिकेति परेषांसिद्धान्तः तस्या अप्याविद्यकत्वेन तन्निवर्तकानुपपत्तिरित्याह— **अपिचेत्यादिना**॥

**निवर्तकज्ञानमित्यादि**। 'निवर्तकज्ञानं स्वेतरसमस्तभेदं निवर्त्य क्षणिकत्वादेव स्वयमेव नश्यति, दावानलविषनाशनविषान्तरवत् इतिचेत्, न; निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तत्वेन तत्स्वरूपतदुत्पत्तिविनाशानां मिथ्यारूपत्वात् तद्विनाशरूपाऽविद्या तिष्ठत्येवेति तद्विनाशदर्शनस्य निवर्तकं वक्तव्यमेव दावाग्न्यादीनामपि पूर्वावस्थाविरोधि परिणामपरम्परा अवर्जनीयैव' इति वेदार्थसङ्ग्रहे दृष्टान्तार्थः पर्यालोचितः॥ एवं तत्रैव 'निवृत्तिश्च अनिर्वचनीयप्रत्यनीकाकारा इतिचेत् अनिर्वचनीयप्रत्यनीकं, निर्वचनीयम्। तच्च सद्वा असद्वा? कोऽप्यन्तरं न विद्यते' इत्युक्तम्। अविद्यानिवृत्तेः पञ्चमप्रकारत्वं न्यायमकरन्दकाराः वदन्ति तत्पक्षोऽयम्॥

यथोक्तं न्यायमकरन्दे—'न सन्नासन्नसदसन्नानिर्वाच्योऽपि तत्क्षयः। यक्षानुरूपोहि बलिरित्याचार्या व्यचीचरन् अस्ति तावदविद्याव्यावृत्तिर्लोकप्रसिद्धा। न तस्या विकल्पपांशुभिः स्वरूपमेवावकरितुं युक्तम्। तथा च नचेत्प्रागुक्तप्रकारसम्भवः परिशेषतः प्रकारान्तरमेवास्तु। यथा खलु शुक्तिशकला(रजता)देः स्वरूपे प्रसिद्धे प्रकारान्तरानिरूपणाच्च परिशेषतोऽनि-

## गूढार्थसंग्रहः

र्वाच्यता तथाऽविद्यानिवृत्तिरपि प्रसिद्धिपरिशेषाभ्यां प्रकारान्तरशालिनीति युक्तम् । नचैवं सदद्वैतव्याहतिरनिर्मोक्षो वा । तस्याः सद्रूपताऽनङ्गीकारात् अनिर्वाच्यताऽभावाचानविद्योपादानत्वात् । अथ कथमनिर्वाच्यताऽभावः सदसद्वैलक्षण्यादेवानिर्वाच्यत्वम् तल्लक्षणादेवानिर्वाच्यतायाः । अतोऽनिर्वाच्या वाऽविद्याव्यावृत्तिः । अतिव्यापकंचानिर्वाच्यलक्षणमिति अत्र केचित्परिहारालोचनकातरान्तःकरणाः परमात्मैवाविद्यानिवृत्तिरित्याहुः । उदाहरन्तिचाचार्यवचनम्—आत्मैवाज्ञानहानिर्वेति न तेषां प्रागुक्तदोषान्निर्मोक्षः । नचात्मैवाज्ञानहानिर्वेति वैदिकं वचनं येन तन्मात्रादर्थसिद्धिः । अनास्थावादस्त्वयम् आचार्यस्यापि स्खलितमेव वा को दोषः ' इति ॥

एवं तत्रैव पक्षान्तरमुपन्यस्तम्—' अपरे पुनराहुः—अस्तुनामानिर्वाच्यता अविद्यानिवृत्तेः कानो हानिः । अथैवैव हानिरनिर्वाच्यतायामविद्यातद्विलासयोरन्यतरभावापत्तेः । उभयथाऽप्यविद्यावस्थानादनिर्मोक्ष इति । मैवम्—निवृत्तिमदुपाधित्वेनापि तदुपपत्तेरनिर्वाच्यतायाः स्वाभाविकप्रतिबन्धानिरूपणात् निवृत्तेस्तु निवृत्त्यन्तरानङ्गीकारात्, अपरथाऽनवस्थापातात् अपुनरावृत्तिश्रुतिव्याकोपाच्च । कथमनिर्वाच्यस्यानिर्वाच्या व्यावृत्तिरितिचेदित्थमेव यथोपपादितम् । अथापि स्यात् अन्तरेण वैलक्षण्यं कथं निवृत्तिस्तद्भाव इति । तत् किमिदानीं मात्रयाऽपि सालक्षण्येन न भाव्यम् । माभूत् घटतद्ध्वंसयोरपि तद्भावः । ज्ञेयत्वाभिधेयत्वादिसालक्षण्योपलम्भात् अनिर्वाच्यत्वादेवत्वविद्याव्यावृत्तितां प्रसाधयतः प्रागुक्तएवोपाधिः । नचानिर्वाच्यायां निवृत्तौ अनिवृत्तिरेव तात्त्विकी स्यात् आत्मवत् इति सांप्रतम् । आत्मनोऽप्यनिवृत्तेस्सत्त्वोपाधिकत्वात् अतएवोक्तं ' मिथ्याभावेन भूतं किं मिथ्यानाशान्न नङ्क्ष्यती' ति । तदेवं सदसद्वैलक्षण्येऽप्यनिर्वाच्यलक्षणेऽपि न काचनानुपपत्तिः । यदातु बाध्यतैवानिर्वाच्यलक्षणमिति स्थितिः तदाऽनिर्वाच्यविलक्षणैव । अविद्यानिवृत्तेरबाध्यत्वात् नचैवमनिर्वाच्यलक्षणमप्यतिव्यापकमिति सकलमनाविलम् ' इत्युक्तम् ॥ अत्र द्वितीयःपक्षः इष्टसिद्धौ अष्टमेऽध्याये ' उच्यते यादृगज्ञानभावोऽभावोऽपि तादृशः । मिथ्याभावेन भूतं किं मिथ्यानाशान्न नङ्क्ष्यति ॥ ' इत्यादिना निरूपितः ॥

वेदान्तकल्पलतिकायामपि मधुसूदनसरस्वतीभिः प्रथमपक्ष उक्तः । ' यत्तु अविद्यानिवृत्तेर्दुर्निरूपत्वमुक्तं, तन्न । पञ्चमप्रकारत्वाभ्युपमात् । यथाहि सत्त्वमसत्त्वं सदसत्त्वं वाऽविद्यातत्कार्ययोर्न सम्भवतीति चतुर्थी कोटिरनिर्वाच्यत्वमेवाश्रिता, तथाऽनिर्वाच्यस्याविद्यातादात्म्यनियमान्निवृत्तितत्प्रतियोगिनोश्च तादात्म्यायोगादनिर्वचनीयविलक्षणत्वमपि अविद्यानिवृत्तेस्सिद्ध्यति । अन्यथाऽनुपपत्तेः सर्वतो बलवत्त्वात् । अद्वैतश्रुतेश्च सदद्वैतमात्रविषयत्वान्नविरोधः । एवंसति अस्थूलादिवाक्यमप्यनुगृहीतं भवति । स्थूलत्वाद्यभावानामात्मनि प्रमेयत्वात्, अद्वितीयशब्देन द्वितीयाभावबोधनाच्च । अन्यथा केवलात्मबोधेन सजातीयविजातीयभेदाभावाप्रतीतौ किमद्वैतश्रुत्या विरुध्येत । तस्मादभावाभ्युपगमोऽद्वितीयत्वसाधकएवेति न काप्यनुपपत्तिरिति इष्टसिद्धिकारादयः ' इति । अत्र इष्टसिद्धिकारादय इतिपाठः प्रामादिकः । इष्टसिद्धावेतत्पक्षस्यानुक्तेः । अविद्यानिवृत्तेः अनिर्वाच्यत्व आत्मस्वरूपत्व तद्ज्ञप्तिरूपत्वपक्षा एव तत्रोपन्यस्ताः । ' यादृगज्ञानभावः ' इति श्लोकोऽपि पक्षद्वयानुरोधेन व्याख्यातः । अतो न्यायमकरन्दकारादयः इत्येव पाठः । अयमर्थः न्यायमकरन्दव्याख्याकारचित्सुखाचार्यकृततत्त्वप्रदीपिकावाक्यपरिशीलनेनापि स्फुटीभविष्यति । वेदार्थसङ्ग्रहे ' तच्च सद्वाऽसद्वा द्विरूपं वा कोप्यन्तरं न विद्यते ' इत्युक्तम् । अत्र सदसद्विलक्षणकोटेवाप्रामाणिकत्वे काकथा पञ्चमप्रकारस्येति भावः । तत्त्वप्रदीपिकायामेव ' नेह नानाऽस्ति किंचन ' इति प्रतिपन्नोपाधौ निषेधात्मबाधः अज्ञाननिवृत्तेरपि तुल्यः ' इत्यनिर्वाच्यतापक्षो दूषितः । अद्वैतसिद्धौ—' येतु पञ्चमप्रकारपक्षादिः तेऽपि मन्दबुद्धिव्युत्पादनार्थाइति न तत्समर्थनमर्थयामः ' इति वेदान्तकल्पलतिकाकारैः मधुसूदनसरस्वतीभिरेव अविद्यानिवृत्तिनिरूपणे उक्तम् ॥

## श्रीभाष्यम्

**निवर्तकान्तरमन्वेषणीयम्। तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्। तथाहिसति निवर्तकज्ञानोत्पत्तिरेव न स्यात् तद्विनाशे तिष्ठति तदुत्पत्त्यसम्भवात्॥**

## श्रुतप्रकाशिका

स्वरूपपक्षं दूषयति। **तथासतीति**। पूर्वस्मिन्पक्षे दूषणं प्रकारान्तरेणाप्युक्तं वेदार्थसङ्ग्रहे भावरूपस्य नाशोहि उत्तरावस्थाप्राप्तिः साचात्रानुपपन्ना। ब्रह्मव्यतिरिक्तस्यावस्थावतोऽन्यस्य स्थित्यभ्युपगमे अद्वैतहानिप्रसङ्गादिति। भावान्तरं ह्यभावः घटस्य प्रागभावः पिण्डत्वादिपूर्वावस्था। प्रध्वंसः कपालत्वाद्युत्तरावस्था। इतरेतराभावोऽप्यश्वस्य गोत्वाभावः अश्वत्वं गोरप्यश्वत्वाभावः गोत्वम्। संसर्गाभावे कथं भावरूपत्वं यदि महीमात्रमेव तर्हि घटसंसर्गेसत्यपि संसर्गाभावस्स्यात्। यद्यतिरिक्तस्तर्ह्यभावोऽङ्गीकृत इति। उच्यते—भवत्पक्षे अभावाश्रयस्य यद्वैलक्षण्यं तदेव संसर्गाभावः। यदि महीमात्रमेव अभावाश्रयः तर्हि भावाश्रयभूतलेऽप्यभावाश्रयत्वप्रसङ्गः। तत्रापि महीमात्रसद्भावात्। यदि केनचिद्विशेषेण विशिष्टं भूतलमभावाश्रयः स एव विशेषस्संसर्गाभाव इति। कालविशेषाविशिष्टत्वेसति देशविशेषत्वमेव सच विशेषः।

## गूढार्थसङ्ग्रहः

अत्र लघुचन्द्रिका—'मन्दबुद्धिव्युत्पादनार्था इति। आत्मान्यत्वे दृश्यत्वस्यावश्यकत्वेन दृग्दृश्यसम्बन्धानुपपत्त्यादियुक्तिभिः मिथ्यात्वावश्यकत्वेन न पञ्चमप्रकारत्वम्। सत्यध्वंसरूपत्वे अद्वैतश्रुतिविरोधः। नहि तस्याः भावाद्वैतं मुख्यार्थः मिथ्याभूतात्मान्याविनाशिध्वंसरूपत्वेऽप्यतोऽन्यदार्तम्' इत्यादिश्रुतिविरोधः। विनाशिध्वंसानां धारात्वे तु गौरवं व्यर्थताच; अन्त्यमनोवृत्तेर्मुक्तित्वसम्भवात्' इति॥

वेदान्तकल्पलतिकायामपि—'वस्तुतस्तु अभावस्य चैतन्यात्मकत्वात् स्वप्रकाशचैतन्यसम्बन्धेनैव भानमभ्युपेयम्, कूटस्थासङ्गस्वभावस्य वास्तवसम्बन्धायोगात् काल्पनिकत्वेऽवश्यं वाच्ये सर्वस्या अपि कल्पनायाः अविद्यामूलत्वादभावकल्पनाऽप्यविद्यामूलेति नानिर्वचनीयवैलक्षण्यम्। तदुक्तं वार्तिककृद्भिः—'नान्यदज्ञानतोऽस्तित्वं द्वितीयस्यात्मनो यथा। निवृत्तिस्तावदेवास्य नावगत्यात्मनोपरा॥' इति अस्थूलादिवाक्यानां च स्थूलादिविलक्षणात्मस्वरूपमात्रबोधकत्वम्, न तदभावबोधकत्वम् कल्पितपदार्थभावाभावयोः अधिष्ठानस्वरूपमात्रत्वात्। यथाऽज्ञातं शुक्तिद्रव्यमेव रजतभावात्मकं तदेव ज्ञातं रजताभावात्मकं तदसाधारणस्वरूपस्यैव रजताभावात्मकत्वात्। एवमत्राप्यज्ञातआत्मा सर्वद्वैतभावात्मकः, ज्ञातश्च तदभावात्मकः तदसाधारणस्वरूपस्यैव द्वैताभावरूपत्वात्। तदुक्तं 'स्थूलापह्नुतिरत्र स्यात् वस्तु यत्पारमार्थिकम्' इत्याद्युक्तम् अतःपञ्चमप्रकारपक्षस्य अद्वैतिनामेव बहूनामसम्मतत्वेन असमर्थनेन च तत्पक्षमनुपन्यस्य अविद्यानिवृत्तिरात्मस्वरूपैवेति इष्टसिद्ध्यादावुक्तःपक्षः ब्रह्मैव चेन्निवृत्तिरित्यादिना वेदार्थसङ्ग्रहे प्रदर्शितः। तमेवपक्षमाह—**तद्विनाशो ब्रह्मस्वरूपमेवेतिचेदिति**। उक्तंचेष्टसिद्धौ—'भावाभावविभागस्याविद्याऽऽश्रयत्वात् तन्नाशोऽतद्रूपोन्यायः। सचात्मैव, तदुक्तम् 'स्वयमेवात्ववस्तुत्वात् अविद्यायाः परात्मधीः। मृतमारणाद्विलज्जन्ती साभावमपि निर्दहेत्॥ भावाभावविभागं सा नेति नेत्यात्मवह्निना। प्रुष्ट्वाऽपास्त तमस्तजविकल्पात्माऽनलंविशेत्' इति वार्तिककारैः। उक्तं श्रीवेदव्यासभट्टारकेणापि 'अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते' इति। अतोऽज्ञानस्यानुरूपो नाशः सत्य आत्मैव; नतु मिथ्या अनात्मा, यस्य तदात्मत्वात्। नातोऽद्वैतहानिरज्ञानानाशश्च' इति॥

## गूढार्थसंग्रहः

अत्र 'अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते' इति वचनं स्मृत्यधिकरणशङ्करभाष्योदाहृतं (९३८.पु) 'पृथिव्यप्सु प्रलीयते' इत्यारभ्य चतुर्विंशतितत्त्वानां सृष्टिप्रतिकोटिभूतसंहारनिरूपणप्रकरणे उपन्यस्तं वेदव्यासेन। अनन्तरं च सृष्टिः, अत्र पुरुषशब्दः वासुदेवपरः। **तंत्वौपनिषदं पुरुषम्** इति श्रुत्या सर्वशरीरिपरः। अनेन वचनेन परसंमताविद्यादाहः आत्मस्वरूपइति न कथञ्चन सिद्ध्यति। अत्र वेदार्थसंग्रहे—'ब्रह्मैवचेन्निवृत्तिः तत्प्रागप्यविशिष्टमिति वेदान्तज्ञानात्पूर्वमेव निवृत्तिस्स्यात्। ऐक्यज्ञानं निवर्तकं तदभावात्स संसारः' इति भवदुक्तं विहन्यते इत्युक्तम्। यद्यप्येतन्मतं 'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः। उपलक्षणनाशेऽपि स्यान्मुक्तिःपाचकादिवत्॥' इत्यादिना परिष्कृतं न्यायमकरन्दविवरणकारैः चित्सुखाचार्यैः तत्त्वप्रदीपिकायाम्। तत्र अविद्यानिवृत्तेः न्यायमकरन्दकारसम्मतपञ्चमप्रकारत्वपक्षमुपपाद्य तत्र दोषमुद्भाव्य 'ज्ञातोऽर्थस्तद्ज्ञप्तिर्वा अज्ञानहानिरिति इष्टसिद्धिकारैरभिधानात्। 'विद्यैवचाद्वया शान्ता तदस्तमय उच्यते।' इति ब्रह्मसिद्धिकारैरप्युक्तत्वात्'। इत्यादिना अविद्यानिवृत्तेः ब्रह्मज्ञानरूपत्वपक्षस्य सांप्रदायिकत्वाभिधानपूर्वकं 'निवृत्तिरात्ममोहस्य' इति श्लोकेन एतत्पक्षपरिष्कारकरणेन 'आचार्यस्य स्खलितमेव वा' इति न्यायमकरन्दे इष्टसिद्धिकृतः विमुक्तकाचार्यस्य स्खालित्यवचनस्यालग्नकत्वमपि सम्यङ्निरूपितम्॥

अयं च पक्षः अद्वैतसिद्धावप्युपन्यस्तः। तत्र 'उपलक्षणत्वं तन्नाशानन्तरमेव नतु ततःपूर्वम्' इत्यप्युक्तम्। वेदान्तज्ञानात्पूर्वमेव निवृत्तिरितत्पक्षे नापादयितुं शक्यते। 'निवर्तकज्ञानोत्पत्तिरेव नस्यात् तद्विनाशे तिष्ठति तदुत्पत्त्यसम्भवात्' इति अत्र उक्तदोषोऽपि परिहृत इति प्रतिभाति। तथाऽपि 'ऐक्यज्ञानं निवर्तकम्' इत्युक्तार्थस्य अत्र निवर्तकज्ञानशब्दाभिप्रेतत्वेन एतद्दोषपरिहारो न सम्भवति। उपलक्षणं चरमवृत्तिरेव सैवाविद्यानिवृत्तिहेतुभूता इति सिद्धान्तः। चरमवृत्तेरेव ऐक्यज्ञानरूपतया तस्याः अविद्यानिवृत्तिहेतुत्वासम्भवेन 'तत्त्वमसि' इत्यादिमहावाक्यजन्यचरमवृत्तेरविद्यानिवर्तकत्वं बहुषु ग्रन्थेषु परैरुक्तं न घटते॥

एतेन वेदान्तकल्पलतिकायां—'ज्ञातत्वोपलक्षित आत्मा अज्ञाननिवृत्तिरिति पक्षं निरूप्य 'कीदृशं पुनर्ज्ञानमज्ञाननिवर्तकमभ्युपेयते' इत्यादिना पूर्वपक्षमुपन्यस्य अन्ते अविद्यानिवर्तकज्ञानानिरूपणात् अविद्यानिवृत्त्युपलक्षित आत्मेति न क्षोदक्षमं पश्यामः। इत्यनुपासितगुरवः मन्दबुद्धयः स्वयं संदिहाना एव पूर्वपक्षयन्ति। ते व्युत्पत्तिप्रकारप्रदर्शनेनानुकम्पनीयाः कारुणिकैः' इत्यभिधाय 'चैतन्येऽद्वयेप्रमाणजन्यापरोक्षान्तःकरणवृत्तेरेवाज्ञाननाशकत्वाङ्गीकारेऽपि न दोष' इति 'ब्रह्माज्ञाननिवृत्तित्वेन ब्रह्मप्रमात्वेनैव कार्यकारणभावोपपत्तौ न ब्रह्मप्रकारकेति विशेषणमुपादेयम्, गौरवादनुपयोगात् विरोधाच्च' इति 'काश्चिच्छ्रुतीरुदाहृत्य ज्ञानादज्ञाननिवृत्तिं गमयतीति' इति तस्मादविद्यायाअपि रज्जुभुजङ्गवदात्मन्यारोपितत्वात् आत्मस्वरूपज्ञानेन तन्निवृत्तिरुपपद्यते' इति 'वेदान्तवाक्येन जनिता अखण्डवाक्यार्थविषया या वृत्तिः सर्वदोषरहितत्वादप्रतिबद्धा स्वतःप्रामाण्यादेव कृत्स्नमज्ञानतत्कार्यं निवर्तयति ततःपरं न शङ्का नचोत्तरम्' इति, 'तात्सिद्धमात्मैवाविद्यानिवृत्त्युपलक्षितो मोक्षः तत्साधनं च वेदान्तवाक्यकारणकः अन्यानुपरक्तब्रह्मात्मैक्यसाक्षात्कार एव श्रवणाद्यपनीतप्रतिबन्धस्सन्निति सर्वं समञ्जसम्' इति च ग्रन्थान्ते उपसंहृतम्॥

अद्वैतसिद्धौ च 'वृत्त्युपारूढचितो वा वृत्तेर्वा निवर्तकत्वात्।' इति निवर्तकनिरूपणे 'प्राप्तप्राप्तिरूपतया फलत्वात् आनन्दप्रकाशस्य स्वरूपतोऽसाध्यत्वेऽपि तत्तिरोधायकाज्ञाननिवर्तकवृत्तेस्साध्यत्वमात्रेण साध्यत्वोपपत्तेः। कण्ठगतचामीकरादौ तथा दर्शनात्। तस्मादज्ञानहानिरात्मस्वरूपम्' इत्युक्तम्। अत्र लघुचन्द्रिका—'प्राप्तप्राप्तीति। आनन्दप्रकाशस्य फलत्वं न जन्यत्वम् किंतु व्यङ्ग्यत्वम्, तच्च जन्यस्यावरणनाशस्याश्रयत्वम्। तत्र नाशो यद्युक्तात्मरूपः

## गूढार्थसङ्ग्रहः

तदोपलक्षणस्य जन्यत्वाजन्यत्वम् ' इति । अत्र अज्ञाननिवर्तकवृत्तिः केति विचारणीयम् । अज्ञाननिवृत्त्युपलक्षित आत्मा फलं, तत्र फलत्वं व्यङ्ग्यत्वरूपमेवास्ताम् । जन्यस्य आवरणनाशस्याश्रयत्वमित्यप्यास्ताम् । अथापि ज्ञानमज्ञाननिवर्तकं तच्च ज्ञानं चरमवृत्तिरूपं तदेवोपलक्षणम् । तस्य स्वजन्यत्वमेवाभ्युपेयं भवतीति चरमवृत्तेः ब्रह्मात्मैक्यज्ञानरूपस्य अविद्यानिवर्तकत्वं कथं रक्षितं भवति ? स्वस्य स्वजन्यत्वासम्भवात् इति ज्ञात आत्मेति इष्टसिद्ध्युक्तपक्षस्य तत्त्वप्रदीपिकायां परिष्कारेऽपि न स्वसिद्धान्त उपपन्नः । एवं ब्रह्मसिद्धौ नियोगकाण्डे 'अस्य ज्ञानस्य मोक्षसाधनत्वाद्विधानम्, विद्यासाध्योहि मोक्षश्श्रूयते ।' इति पूर्वपक्षे 'नच मोक्षः फलं तस्य साध्यो मोक्षस्तथाऽपरः । अविद्याऽस्तमयो मोक्षस्सासंसार उदाहृता ॥ १०४ ॥ विद्यैवचाद्वया शान्ता तदस्तमय उच्यते ।' अविद्यासंसारः विद्यैवचाविद्यानिवृत्तिः । यतो भाव एवाभावव्यावृत्तिः । अथ विपर्यासः तथाऽपि विरोधित्वज्ञानोदय एव तन्निवृत्तिः । नहि शुक्तिकाज्ञानोत्पादादन्या रजतज्ञाननिवृत्तिः । नन्वेकत्वे तुल्यकालताऽप्यनुपपन्ना न ; एकस्यापि वस्तुनः भावाभावरूपेण व्यपदेशात् । यदा घटः नश्यति तदा कपालानि जायन्त ' इति सिद्धान्त उक्तः ॥

एवं वार्तिकेऽपि 'नान्यदज्ञानतोऽस्तित्वं द्वितीयस्यात्मनो यथा । निवृत्तिस्तद्वदेवास्य नावगत्यात्मनोऽपरा ॥' इति एतदनुसारेणैव तद्ज्ञप्तिर्वा इति पक्षः इष्टसिद्धावुक्तः । अद्वैतसिद्धावपि—'अविद्यानिवृत्तेर्वृत्तिरूपतया न निवर्तकखण्डनावकाशः । वृत्तिनिवृत्तेरात्मरूपतया न तज्जनकखण्डनावकाशोऽपि ' इत्युक्तम् । एतत्पक्षेऽपि ऐक्यज्ञानं निवर्तकमिति सिद्धान्तः कथं रक्षितः ? ऐक्यज्ञानं निवृत्तिरूपमेव जातम् । तद्धेतुभूतमैक्यज्ञानं नास्त्येव । वृत्तिनिवृत्तेरात्मरूपत्वमस्तु । वृत्तेर्मिथ्यात्वेन ज्ञाननिवर्त्यत्वं कथमिति प्रश्नस्य नोत्तरम् ॥

अत्र लघुचन्द्रिका—'स्वेतरसर्वद्वैताविरोधिनी वृत्तिरन्त्या' । 'अत्रेदं बोध्यम् । चरमवृत्तेस्सर्वद्वैतविरोधित्वं न सर्वद्वैतनाशजनकत्वम् ; तज्जन्यनाशानभ्युपगमात्, अन्यथा उक्तनाशस्यापि नाश्यत्वे नाशान्तराणामपि स्वीकार्यत्वेनानवस्थाऽऽपत्तेः, अनाश्यत्वे सत्यत्वापत्तेः अद्वैतश्रुतिविरोधापत्तेः । नापि द्वैताधिकरणकालपूर्वत्वानाधिकरणक्षणवृत्तित्वम्, तस्यास्तद्वत्वे नियामकाभावेन मानाभावात् । एवं च तत्त्वज्ञानस्य वैयर्थ्यापत्तिः । एतावत्कालमनुवृत्तद्वैतं तत्वविज्ञानोत्तरं क गतमिति पर्यनुयोगश्च स्यात् ॥ अत्रोच्यते—एवंसति कपालादिदेशावच्छेदेन दण्डादिकारणकूटवान् यः क्षणः तदव्यवहितोत्तरक्षणस्य घटादिकार्यवत्त्वेऽपि नियामकाभावात् दण्डादेर्घटादिहेतुत्वस्वीकारोऽपि व्यर्थस्स्यात् । एतावत्कालमसतो घटादेः कथमुत्तरक्षणे सत्वमिति पर्यनुयोगश्च । अथ स न व्यर्थः, उत्तरक्षणे घटादिसत्वव्याप्यत्वस्य प्रामाणिकत्वात्तस्यैव तद्व्याप्यतारूपतन्नियामकतावत्त्वात् पूर्वमसतोऽपि घटादेरुक्तक्षणे सत्वसम्भवइति नोक्तपर्यनुयोग इति ब्रूषे, तर्हि या यद्विषयक प्रमा सा स्वसमानविषयकाज्ञानतत्प्रयुक्ताधिकरणकालपूर्वत्वानधिकरणक्षणवृत्तिरिति व्याप्तेः । शुक्त्यादिप्रमास्थले दृष्टत्वादात्मप्रमाऽपि तथेति प्रमात्वस्यैवोक्तव्याप्यतारूपनियामकतावत्त्वात् तत्त्वज्ञानस्योक्तविरोधित्वसिद्ध्या नोक्तपर्यनुयोगः ॥

अथ एवमपि मुमुक्षुप्रवृत्त्यनुपपत्तिः ; फलाभावात् । तथाहि न तावन्मुक्तिःफलम् ; तस्या नित्यात्मरूपत्वात् । नापि वेदान्तवाक्यजन्यवृत्तिज्ञानम्; तस्य असुखरूपत्वेन स्वतःपुरुषार्थत्वाभावात् । नापि वृत्तिविषयत्वोपहित आत्मा । तस्य लोके पुरुषार्थत्वेनावक्लृप्तत्वात् वृत्तेरास्थिरत्वेन तद्विषयत्वोपहितात्मनोऽप्यस्थिरत्वादितिचेत् न स्वाज्ञानविरोध्युपहितस्यात्मरूपस्य सुखस्यैव फलत्वात् । लोकेऽपिहि सुखमात्मैव, चन्दनादियोगजमनोवृत्तेस्तत्र व्यञ्जकमात्रत्वात्, 'मानभूवं भूयासम्' इत्याकारिकायाः अन्येच्छाऽनधीनेच्छायाः 'एष परमानन्द' इत्यादिश्रुतेश्चान्यथाऽनुपपत्तेश्च । स्वाज्ञानविरोधित्वं च

## गूढार्थसंग्रहः

स्वाज्ञानाधिकरणकालपूर्वत्वशून्यक्षणवृत्तित्वम् । एतावांस्तु विशेषः यच्चन्दनादियोगजमनोवृत्तेः यत्किंचिदज्ञानविरोधित्वम् तन्नाशोत्तरमज्ञानान्तरेणात्मसुखस्यावरणात् । वेदान्तजन्यवृत्तेस्त्वज्ञानसामान्यविरोधित्वम् तन्नाशोत्तरमज्ञानान्तरेणावरणात् । स्वाव्यवहितपूर्वक्षणे सुखावारकयत्किंचिदज्ञानविरोधित्वंतु द्वयोरपि तुल्यम् ॥

नच एकदैकमेवाज्ञानमावृणोतीति सिद्धान्तात् स्वाव्यवहितपूर्वक्षणे सुखावरकाज्ञानसामान्यविरोधित्वमपि द्वयोस्तुल्यमिति यत्किंचित्पदं व्यर्थमिति वाच्यम् ; चन्दनादियोगजवृत्तेः पूर्णानन्दावरकमूलाज्ञानाविरोधित्वात् पल्लवाज्ञानं साक्ष्यानन्दावारकंप्रत्येव तस्याः विरोधित्वात् । नच वृत्तेरेव सुखत्वसम्भवेन नात्मा सुखरूप इति वाच्यम् ; सुषुप्तौ निष्कामत्वकाले जागरे च भासमानसुखस्य वृत्तित्वासम्भवात् तदाऽनन्तवृत्तिकल्पने गौरवात् । एकरूपेऽपि साक्ष्यानन्देऽनुभूयमाने तारतम्यस्य व्यञ्जकवृत्तितारतम्यगतत्वात् नानुपपत्तिः, तथा च यत्किंचिदज्ञानविरोध्युपहितात्मनः स्वतःपुरुषार्थत्वमात्रसत्वेऽप्यज्ञानसामान्यविरोध्युपहितात्मनः परमपुरुषार्थत्वादस्थिरत्वमकिंचित्करम् । तदुत्तरं सुखानवरणादितिसूक्ष्मधीवेद्यमेतत् ' इति। एवं कर्तृत्वाध्यासोपपत्तौ च–' वस्तुतस्तु मोक्षो न शास्त्रफलं, यत्फलसाधनत्वं शास्त्रतात्पर्यं तदेव हितम् ज्ञाने मोक्षसाधनत्वंतु लोकसिद्धमित्यादि बोध्यम् ' इति च ॥

अत्र द्रव्यविषये नैयायिकदसत्कार्यवादानभ्युपगमेऽपि अवस्थाविषये अनुभवानुरोधेन तदभ्युपगमेन परिणामवादस्स्थाप्यते । अवस्थांप्रति दण्डादीनां कारणत्वेन दृष्टान्तसङ्गतिः । तात्त्विककार्यकारणभावाङ्गीकारेण सर्वमुपपद्यते । परमते कार्यकारणभावासम्भवेनानुपपत्तिर्दुर्वारैव । एवं ' निरस्ताखिलदुःखोऽहम् ' इत्यादिसंदर्भे प्रवृत्त्यनुपपत्तिः प्रागेव (४४८ .पु) भगवता उक्ता । तद्विवरणावसरे पञ्चपादिका लघुचन्द्रिकाद्युक्तिः पर्यालोचिता । ब्रह्मज्ञानस्य ब्रह्मप्राप्तिरूपफलसाधनत्वं शास्त्रत एव सिद्धम्, नतु लोकसिद्धम् । ' अथ परा यया तदक्षरमधिगम्यते ' इति श्रुतिः ' परयात्वक्षरप्राप्तिः ' ' क्षेत्रज्ञःकरणी ज्ञानं करणम् ' इत्युपक्रमोपसंहाराभ्यां पराशरेणोपबृंहिता । ' तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ' इति श्रुत्युक्तप्राप्त्यर्थकत्वमेव ' ब्रह्म वेद ब्रह्मैव भवति ' इत्यत्र भूधातुना प्राप्त्यर्थकेन स्पष्टीकृतम् । ' तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ' इति तदनन्तरवाक्ये गुहाग्रन्थिभ्य इति बहुवचनेन ' भिद्यते हृदयग्रन्थिः ' इत्यत्र परसंमताविद्या नैव विवक्षिता, अपितु रागद्वेषादय एवेति विवक्षितमिति बोधितम् । तेन ' क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावरे । ' इत्यत्र विद्यायाः प्रायश्चित्तरूपत्वं दर्शितं भवति । तेन विद्यायाः मोक्षसाधनत्वेन प्रायश्चित्तरूपत्वं संभवत्येव । ' एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम ' (३.२.४) इति मुण्डकश्रुतितात्पर्यं ' तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः । गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥ (वि.पु.६.५ ५८) निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिः—तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ॥ ' (५९) इत्यनन्तरं ' द्वेविद्ये वेदितव्ये इतिचाथर्वणी श्रुतिः । परयात्वक्षरप्राप्तिः ' इति पराशरेणोक्तम् ' एतत्पर्यालोचनया ब्रह्मप्राप्तिरूपमोक्षकरण ब्रह्मविद्यासाधनार्थं चेतनानां प्रवृत्तिरिति स्फुटं प्रतीयते । ब्रह्मानन्दपरिष्कृतलघुचन्द्रिकोक्तरीतौ एतन्नघटत इति स्फुटम् ॥ अविद्यातत्कार्योच्छेदस्य ब्रह्मरूपत्वेन तस्य फलत्वं न सम्भवतीति प्रागुक्तदोषानतिवृत्तिः । विरोध्युपहितात्मनः फलत्वे तस्यानित्यत्वेनास्थिरत्वात् नित्यफलेच्छया पूर्वकाण्डोक्तं कर्मविहाय ब्रह्मज्ञाने प्रवृत्तिरेव न स्यात् । ' **अथातो ब्रह्मजिज्ञासा** ' इति प्रथमसूत्रभाष्याद्यसङ्गतिश्च । ब्रह्मज्ञानस्याविद्यानाशकत्वानङ्गीकारः अद्वैतश्रुतिविरोधादिना न सम्भवतीति यदुक्तं अनेनैव हेतुना निर्विशेषज्ञानादविद्यानिवृत्तिरिति भवत्सिद्धान्तः नघटत इत्येव पर्यवसितम्

श्रीभाष्यम्

अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता अध्यासरूप इतिचेत्। न तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः। ब्रह्मस्वरूपमिति चेत्, ब्रह्मणो निवर्तकज्ञानंप्रति ज्ञातृत्वं किं स्वरूपम् उताध्यस्तम्? अध्यस्तंचेदयमध्यासस्तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव। निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वात् ज्ञात्रपेक्षयाऽनवस्था स्यात् * ब्रह्मस्वरूपस्यैव ज्ञातृत्वेऽस्मदीय एव पक्षः परिगृहीतस्स्यात्।

श्रुतप्रकाशिका

तदानीमेव घटसहितप्रदेशान्तरव्यावृत्त्यर्थं देशविशेषत्वमित्युक्तम्। तत्रैव देशस्य कालान्तरे घटसहितस्य व्यावृत्त्यर्थं कालविशेषविशिष्टत्वे सतीत्युक्तम्। यथाऽऽहुः—

संसर्गाभावमेवं विदुरिह सुधियो भावमेवत्वभावं मन्वानाः कुम्भवद्भूतलतइतरभूभागभेदस्त्वभावः।
यस्तत्त*त्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः कुम्भाभावाश्रयोन्यैरगणिस इहनः काधिकस्योपलम्भः

इति, नाशस्यावस्थान्तरत्वात्कर्मनाशं वदतस्तवापि चोद्यं तुल्यमितिचेन्न कर्मह्यस्मत्पक्षे भगवत्प्रीत्यप्रीतिरूपम्। तत्र यस्संसारफलानुगुणस्सङ्कल्पः तद्विनाशं कर्म यस्तु मोक्षानुगुणस्सङ्कल्पस्सएव पूर्वस्य नाश इति उपपन्नमेव '**धातुःप्रसादान्महिमानमीशम्**' इत्यादिभिः॥

अथ निवर्तकज्ञानस्य ज्ञात्रनुपपत्तिमाह—**अपिचेति**। नहि स्वरूपभूतज्ञानस्य ज्ञात्रन्तरापेक्षा अतस्तद्व्यावृत्त्यर्थं कृत्स्ननिषेधविषयज्ञानस्येत्युक्तम्। प्रमाणजन्यज्ञानंहि साश्रयमेव दृष्टम्। ज्ञाता किं ब्रह्मव्यतिक्तः? उतनातिरिक्त इति * विकल्पाभिप्रायेणाह—**चिन्मात्रेति**। * प्रथमं धार्मिप्रश्नः **कोऽयमिति**। ब्रह्मव्यतिरिक्तत्वपक्षे दूषणमाह—**नेति**। कर्मकर्तृत्वविरोधादिति भावः। निवर्त्यत्वेसतिहि कर्मकर्तृविरोधः। अतस्तत्परिहारार्थं स्वरूपपक्षं शङ्कते **ब्रह्मेति**। ज्ञातृत्वधर्मविकल्पोऽयं किं स्वरूपमिति स्वरूपं * स्वाभाविकमित्यर्थः। पाश्चात्यत्वेन बुद्धिस्थतया अध्यस्तपक्षं दूषयति। **अध्यस्तंचेति**। **निवर्तकज्ञानाविषयतया तिष्ठत्येवेति**। ज्ञातृत्वाध्यासस्य तन्मूलविद्यान्तरस्य च निवृत्तौ निवर्तकान्तरसापेक्षत्वान्निवर्तकान्तरस्य च भवद्भिरनभ्युपगमात्तदुभयं तिष्ठत्येवेति निश्शेषाविद्यानिवृत्तिर्न स्यादित्यर्थः॥

गूढार्थसंग्रहः

एवं च निवर्तकानुत्पत्तौ निवृत्यनुपपत्तिप्रदर्शनेन तत्तद्ज्ञानस्य निवर्तकत्वानुरोधेन निवृत्त्युपपत्तावेव घटते नत्वन्यथा। उभयोरुपपत्तिस्तु परमते न संभवतीति बोधनार्थमेव॥

किंच मायातरणमेव 'मायामेतां तरन्ति ते' इति गीताद्युपबृंहणे प्रतिपाद्यते। 'यैः स्वधर्मपरैर्नाथ नरैराराधितो भवान्। ते तरन्त्यखिलामेतां मायामात्मविमुक्तये॥' (वि.पु.५.३०.१६) इति पराशरवचनेन मायानिवृत्तिः मायातरणरूपा साच न विमुक्तिः, विमुक्तिरन्यैति स्फुटं प्रतिपादितम्। एवंस्थिते अविद्यातत्कार्योच्छेद एव मुक्तिरिति सिद्धान्त एव नप्रमाण मूल इति प्रतीयते॥ मोक्षकरणभूतब्रह्मविद्यायां मोक्षार्थिनःप्रवृत्तिः जीवस्य तात्त्विकमोक्षसाधनज्ञानाश्रयत्व एव संभवति नत्वन्यथा। परमते ज्ञातुर्ज्ञेयस्य च मिथ्यात्वेन तदसम्भवादित्यभिप्रेत्याह—**अपि च चिन्मात्रब्रह्मव्यतिरिक्तेति**॥

## श्रीभाष्यम्

**निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनं भूतलव्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नमित्यस्यामेव छेदनक्रियायामस्य छेत्तुरस्याश्छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवदुपहास्यम्। अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति स्वनाशस्यापुरुषार्थत्वात्। * तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यादित्यलमनेन दिष्टहतमुद्गराभिघातेन। तस्मात्**

## श्रुतप्रकाशिका

निवर्तकज्ञानान्तराभ्युपगमे तस्यापि कस्यचित्कश्चित्प्रतिसिद्धिरूपतया ज्ञात्रपेक्षयाऽनवस्था स्यादित्याह—**निवर्तकेति**। आद्यं शिरो दूषयति। **ब्रह्मस्वरूपस्येति**। निरुपाधिकस्यैव ब्रह्मस्वरूपस्याभ्युपगम्यमानं ज्ञातृत्वं स्वाभाविकमिति भवतामपि सिद्धान्तस्स्यादित्यर्थः। ब्रह्मव्यतिक्तस्य ज्ञातुर्निवर्तकज्ञानस्य च ब्रह्मव्यतिरिक्तत्वरूपोपाधिकोडीकारबलेन प्रपञ्चतन्मूलाविद्यानिवर्तकज्ञानेनैव निवृत्तिर्भविष्यतीत्याशङ्क्य व्याघातेन दूषयति। **निवर्तकज्ञानस्वरूपमिति**। ज्ञातुरपि निवर्तकज्ञाननिवर्त्यत्वे निवर्तकज्ञानार्थं श्रवणादौ प्रवृत्तिश्च न स्यादित्याह—**अध्यस्तो ज्ञातेति**। ज्ञातृनाशस्य परमपुरुषार्थरूपब्रह्मस्वरूपत्वान्नापुरुषार्थतेत्याशङ्क्याह—**तन्नाशस्येति**। पूर्वपक्षनिराकरणमुपसंहरति **इतीति**। एवं ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वनिराकरणेन बन्धस्य सत्यत्वसिद्धेस्तन्निवृत्तिः कर्मसापेक्षोपासनात्मकज्ञानादेवेति कर्मविचारपूर्ववृत्तत्वं युक्तमित्याह—**तस्मादिति**। * तस्मात् साधनचतुष्टयस्य ब्रह्मविचारंप्रति पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः, तच्च निर्विशेषब्रह्माध्यस्तप्रपञ्चस्य कर्मनिरपेक्षज्ञाननिवर्त्यत्वं तच्चानुपपन्नमित्युपपादनेन वस्तुसामर्थ्यासिद्धेरित्यर्थः। स्वरूपानादित्वव्यावृत्त्यर्थं प्रवाहशब्दः, अनिर्वचनीयव्यावृत्त्यर्थः कर्मशब्दः॥

## गूढार्थसङ्ग्रहः

**उपहास्यमिति**। अत्र वृत्त्युपहितात्मत्वेनात्मनो नाशकत्वम्। वृत्त्युपलक्षितात्मनः अविद्यानाशस्वरूपत्वेऽपि कारणताऽवच्छेदकीभूतवृत्तेः कार्याव्यवहितप्राक्कालवृत्तित्वावश्यकत्वेन वृत्त्युपहितत्वेनैव नाशकत्वं पर्यवस्यति ' इत्युपलक्षितस्य अविद्यानिवृत्तिरूपत्वे उपपत्तिः। वृत्तिरूपत्वे अविद्यानिवृत्तेः वृत्तिरूपतया न निवर्तकखण्डनावकाशः। वृत्तिनिवृत्तेरात्मरूपतया न तज्जनकखण्डनावकाशोऽपि ' इति सर्वमवदातम्, इत्येतद्विवरणे ' स्वेतरसर्वद्वैतविरोधिनी वृत्तिरन्त्या ' तदुत्तरं न किंचिज्जायते तस्याश्चाग्रकालस्यैवाभावेन सुतरां न तत्र तदनुवृत्त्यापादनम्। नच तस्या नाशानुत्पादे सा क्व गतेत्यादिप्रश्नावकाशः। नाशोत्पादेऽपि तत्संभवात् विवेचितंशेदं पूर्वम्। तथा च तस्याः नाशोऽग्रे न जायते अग्रकालस्यैवालीकत्वात्। नचैवमात्मैव तन्नाशइत्यङ्गीकारो व्यर्थ इति वाच्यम्; अन्त्यवृत्तिः क्षणमात्रं स्थित्वा नश्यतीति संसार दशायामात्मनि नाशत्वकल्पनया तथाऽङ्गीकारात् ' इत्यादिलघुचन्द्रिकावचनमप्युपहास्यमेवेति भावः। अद्वैतश्रुतेस्स्वाभिप्रेतार्थकत्वकल्पने प्रपञ्चस्य मिथ्यात्वेन अधिष्ठानज्ञानेनाध्यस्तनिवृत्तिवत् निर्विशेषे अध्यस्तस्य प्रपञ्चस्य उपादानेन साकं मुक्तौ निवृत्तिः इत्यर्थः निर्मत्सराणां विदुषामग्रे नैवोपपादयितुमर्हः इत्येव पर्यसानात्॥

**तन्मूलाविद्यादीनां कल्पनमेव न स्यादिति**। अयमर्थः अनुपदमेव भाष्ये उपपादितः। भ्रम तत्संस्कारादिव्यतिरिक्तभावरूपाज्ञानं मूलभूतं मण्डनमिश्रस्य ब्रह्मसिद्धिकृतोऽसंमतमेव। ब्रह्मसिद्धिखण्डकेन विमुक्तात्मना इष्टसिद्धौ तत्साधनोपक्रमः। विस्तरस्तु (पं.पा) विवरणे। वाचस्पतिनाऽपि मण्डनमतमेवादृतम्। कल्पतरुकारादयस्तु स्वसंस्कारानुरोधेन भामतीग्रन्थमन्यथयन्ति। मञ्जूषायां नागेशोऽपि शङ्कराचार्याणामपि भावरूपाज्ञानं (विवरणसंमतं) अनभिमत-

### श्रीभाष्यम्

**अनादिकर्मप्रवाहरूपाज्ञानमूलत्वाद्बन्धस्य तन्निबर्हणमुक्तलक्षणज्ञानादेव। तदुत्पत्तिश्चाहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृत वर्णाश्रमोचितकर्मलभ्या तत्र केवलकर्मणामल्पास्थिरफलत्वं, अनभिसंहितफलपरमपुरुषाराधनवेषाणां कर्मणामुपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानादृते न ज्ञायते। केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न सम्भवतीति कर्मविचारानन्तरं तत एव हेतोः ब्रह्मविचारःकर्तव्य इत्यथातइत्युक्तम्।**

### श्रुतप्रकाशिका

उक्तलक्षणज्ञानादेव उपासनात्मकादेव। तदुत्पत्तिर्वर्णाश्रमोचितकर्मलभ्याऽस्तु, ततःकिमुपासनादिस्वरूपज्ञानंप्रति वस्तुतः कर्मविचारपूर्ववृत्तत्वस्येत्यत्राह— **तत्रेति**। कर्मविचारादेव तस्याल्पास्थिरफलत्वज्ञानं फलितमितिभावः। **अनभिसंहितफलेति**। **'यज्ञेन दानेन'** इत्यादिकर्मविनियोजकवाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात् पदार्थभूतकर्मस्वरूपाख्यविशेष्यज्ञानादृते उपासनद्वाराऽनन्तस्थिरफलत्वरूपं विशेषणं च न ज्ञायत इतिभावः। ततःकिमित्यत्राह—**केवलेति**। केवलाकारः आत्मयाथात्म्यबुद्धिसंस्कारशून्याकारः। हानार्थमुपादानार्थं चहि कस्यचिज्ज्ञानं तत्र फलद्वारा कर्म त्याज्यं स्वरूपेणोपादेयं उभयार्थं ज्ञानं कर्मविचारादृते न सिद्ध्यति। तस्मात्तत्कर्मविचारनिवृत्तौ तज्ज्ञानफलं हानमुपादानं च न सम्भवतीत्यर्थः॥ अथातश्शब्दार्थं निगमयति। **इतिकर्मविचारानन्तरमिति**। ब्रह्मविचारःकर्तव्य इत्यनेन ब्रह्मजिज्ञासाशब्दार्थ उक्तः। विचारस्य कर्तव्यतायां नातीव विवादः शाब्द आर्थ इत्येतावदेवहि वैषम्यम्। अथातश्शब्दार्थ एवह्यतीव विवादः अतोऽथातइत्येतावदुपात्तम्। एवं सूत्रस्याक्षरयोजना कृता॥

### गूढार्थसंग्रहः

मिति कथयति। एतत्सर्वमारम्भणाधिकरणे ब्रह्मसिद्धीष्टसिद्ध्यादिग्रन्थार्थपर्यालोचनदशायां विवेचयिष्यते। निर्विशेषस्योपनिषत्तात्पर्यविषयत्वं **'तंत्वौपनिषदं पुरुषम्'** इति श्रुत्यादिविरुद्धं कल्पयित्वा तस्याप्रामाणिकाविद्यायाऽऽवरणतन्नाशादिकल्पनमप्रामाणिकमेव उपपादनासम्भवात्। माध्यमिकेनेव व्यावहारिकपारमार्थिकविभागेन श्रुतिप्रामाण्यकल्पनादिकमप्रामाणिकमेव। एवं विभागाङ्गीकारे स्वप्रकाशानङ्गीकारेऽप्युपपत्तिसम्भवेन आत्माङ्गीकारो व्यर्थः वेदाप्रामाण्यं च स्यात् अतः एवं विभागमनङ्गीकृत्य प्रमाणानां तात्त्विकप्रामाण्याभ्युपगन्तॄणां प्रामाणिक्याः अनवस्थायाः अदोषत्वेनानवस्थायाः अप्रामाणिकपदार्थकल्पनाधाराविश्रान्तिराहित्यरूपतायाः प्रागेवोपपादनेन वेदवाक्यानां सर्वेषां सविशेषे तात्त्विकप्रामाण्योपपादनप्रकार एव 'तंत्वौपनिषदं पुरुषम्' इत्यादिश्रुतितात्पर्यविषयः वृत्तिकारसंमतः समञ्जस इति सिद्धम्। तदेवाह— **अनादिकर्मप्रवाहेत्यादिना**—अथात इत्युक्तमित्यन्तेन॥ लघुसिद्धान्तमहासिद्धान्ताभ्यां वृत्तिकारसंमत 'अथ अतः' इति पदद्वयार्थे परैरुक्तानामाक्षेपाणां सर्वेषां परिहारादथातश्शब्दयोः वृत्तिकारसंमतार्थः अप्रकम्प्य इति सिद्धम्॥ अत्र केवलकर्मणामित्यनेन प्रतिबन्धकनिवृत्त्यर्थं कर्मविचारस्य उपयोगःप्रदर्शितः। **अनभिसंहितफलेत्या**दिना धर्मविचारोपक्रमे साङ्गब्रह्मज्ञानविशेष्यैकानन्तास्थिरफलसाधनत्वप्रकारकापातप्रतीतिः या जाता सा संगृहीता। एवं चातश्शब्दे कर्मविशेष्यकाल्पास्थिरफलसाधनत्वप्रकारकनिर्णयपूर्वकसाङ्गब्रह्मज्ञानविशेष्यकानन्तास्थिरफलसाधनत्वप्रकारकसंभावितप्रामाण्यापात—प्रतीतिः विवक्षितेति सिद्धम्॥

## श्रीभाष्यम्

### तत्र पूर्वपक्षवादी मन्यते

## श्रुतप्रकाशिका

**अथ** तात्पर्यार्थं उच्यते **तत्रे**त्यादिना । अक्षरयोजनायां परेणान्यथोक्तोऽक्षरार्थश्च निरस्तः । तन्निरसनसमय एव परेणान्यथोक्तस्तात्पर्यार्थोऽपि निरस्तः । परेणहि प्रपञ्चस्य सत्यत्वेन ज्ञाननिवर्त्यत्वाभावाज्ज्ञानाय ब्रह्मविचारोऽनारम्भणीय इति पूर्वपक्षं कृत्वा प्रपञ्चस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वात् ज्ञानाय स आरम्भणीय इति सिद्धान्तितं, तच्च पूर्वं निरस्तम् ॥

**अथ** सूत्रकाराभिप्रेत निरसनीयशङ्कामुपन्यस्य तदभिप्रेतं तत्परिहारं च वक्तुमारभते **तत्रेत्यादिना** । कर्मविचारानन्तरं ततएवहेतोः ब्रह्मविचारःकर्तव्य इत्युक्त्वा सिद्धवस्तुनि शब्दव्युत्पत्तिसम्भवात् । ब्रह्मविचारः कर्तव्य इति वचनं व्याहतमिति परिचोदनं पूर्वमीमांसानभिज्ञत्वकृतम् । * '**अथातो धर्मजिज्ञासा**' इत्यत्र अध्ययनानन्तरं ततएव हेतोर्धर्मविचारः कर्तव्य इत्युक्त्वा * प्राभाकरैरध्ययनस्याचार्यकाधिकारकत्वान्न धर्मविचारः कर्तव्य इति पूर्वपक्षं कृत्वा अर्थबोधाधिकारत्वात्तत्कर्तव्य इति सिद्धान्तितम् ॥

**भाट्टै**स्त्वध्ययनस्य स्वर्गार्थत्वान्न धर्मविचारः कर्तव्य इति पूर्वपक्षं कृत्वा अर्थज्ञानार्थत्वात्स कर्तव्य इति सिद्धान्तितं तच्च व्याहतं भवत्पक्षे । तत्रहि सूत्राक्षराणि योजयित्वा तात्पर्यार्थ उक्तः । अत्राप्यक्षरार्थमुक्त्वा तात्पर्यार्थ उच्यत इत्युपपन्नम् । * अक्षरयोजनायां ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः कर्मणोऽल्पास्थिरफलत्वनिर्णयविशिष्टानन्तास्थिरफलापातप्रतीति अनन्तास्थिरफलापातप्रतीतिर्नास्तिचेत् अल्पास्थिरफल एव तृप्तस्स्यात् । अल्पास्थिरफलत्वनिर्णयो नास्तिचेन्न निर्वेदस्स्यादिति विशिष्टो हेतुः । अत्रापातप्रतीतिस्संभावितप्रामाण्या विवक्षिता तादृशीहि सा प्रवृत्तिहेतुः । तत्र ब्रह्मज्ञानस्यानन्तस्थिरफलापातप्रतीतेः * प्रामाण्यसम्भावनांऽनुपपन्ना, सिद्धवस्तुनि शब्दस्य बोधकत्वनिश्चयाभावादिति विशिष्टहेतौ विशेष्यांशासिद्धिमाशङ्क्य सिद्धवस्तुनि व्युत्पत्तिसम्भवात् अनन्तस्थिरफलापातप्रतीतिरस्तीति परिह्रियते ॥

**अत्र** पूर्वपक्षवादी प्राभाकरः——सूत्रकारैर्भविष्यद्दर्शनवेदित्वात्कैश्चिदनुक्तत्वेऽपि संभाव्यमानानां प्रतिकूलपक्षाणामाशङ्क्य निरसनीयत्वाच्चैवं पूर्वपक्षीकरणं युक्तम् । यद्वा जैमिनिमतंहीदं * चोदनालक्षणार्थ एव वेदप्रतिपाद्य इति चोदनाच क्रियायां प्रवर्तकं वचनं तमाशङ्क्य सिद्धवस्त्वपि वेदप्रतिपाद्यमिति सूत्रकारैस्साधयितुं युज्यते । * अक्षरयोजनायां ब्रह्मविचारःकर्तव्य इत्युक्तत्वात्, ब्रह्मविचारारम्भो न युक्त इति पूर्वपक्षसमाप्तावुक्तत्वात् । ब्रह्मविचारारम्भो युक्त इति स्थितमिति सिद्धान्तस्योपसंहृतत्वाच्च ॥

**दीपे** कण्ठोक्तौ विषयस्संशयश्चेहार्थसिद्धौ ब्रह्मविचारइत्युक्तत्वात् ब्रह्ममीमांसाविषय इति सिद्धम् । आरम्भो न युक्तः, युक्त इतिचोक्तत्वात्संशयसिद्धिः । ब्रह्ममीमांसा किमारम्भणीया उतानारम्भणीयेति । तदर्थं चिन्त्यते किं वेदान्ता ब्रह्मणि प्रमाणं उत नेति तदर्थं परीक्ष्यते, शब्दस्य सिद्धवस्तुबोधनसामर्थ्यावधारणं सम्भवति, नेति तदर्थं विचार्यते किं

## गूढार्थसङ्ग्रहः

अत्र '**तद्विजिज्ञासस्व**' इत्यादिश्रुत्यनुसारेण '**अथातो ब्रह्मजिज्ञासा**' इत्यत्रापि ब्रह्मण इच्छाविषयत्वं विवक्षितम्, तन्निबन्धनमेव विचारात्मकज्ञानस्येच्छाविषयत्वमिति 'इच्छाया इष्यमाणप्रधानत्वात्' इति सूक्तौ ब्रह्मणः प्रधानत्वं 'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते' इति प्रभाकरमतप्रतिकोटिभूतं विवक्षितमिति प्रागेव (२०.पु) उक्तम् । तेन उपनिषदां विचारः कर्मविचारानन्तरं ब्रह्मविचाररूपः कर्तव्य इत्यर्थः सिद्ध्यति । तत्र कार्यरूपएव वेदार्थः वेदोपरा वेदान्ताः ततश्च कर्मविचारानन्तरं ब्रह्मविचारो न कर्तव्य इति पूर्वपक्षोऽपि सूचितो भवति । तमेव पूर्वपक्षं दर्शयति –**तत्र पूर्वपक्षवादीमन्यते** इत्यादि ॥

### श्रीभाष्यम्

**वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात्, व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्यार्थ एव शब्दस्य प्रामाण्यमिति कार्यरूप एव वेदार्थः।**

### श्रुतप्रकाशिका

वृद्धव्यवहारादन्यत्र शब्दार्थसंबन्धावधारणं संभवति, नेति वृद्धव्यवहारे च शब्दस्य सिद्धवस्तुबोधकत्वावधारणं संभवति नेति च न सम्भवतीति पूर्वःपक्षः संभवतीति सिद्धान्तः। यदा व्यवहारादन्यत्र न व्युत्पत्तिः, व्यवहारे च शब्दस्य सिद्धरूपार्थबोधकत्वावधारणं न संभवति तदा शब्दस्य सिद्धवस्तुबोधनसामर्थ्याद्वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्याभावनिश्चयवतः पुरुषस्यानन्तस्थिरफलापातप्रतीतेः प्रामाण्यसम्भावनाया असिद्धेर्विशिष्टहेत्वभावादनारम्भणीयेति पूर्वपक्षे फलफलिभावः। राद्धान्तेतु यदा व्यवहारादन्यत्र व्युत्पत्तिः व्यवहारे सिद्धवस्तुपरत्वावधारणं च संभवति तदा शब्दस्य सिद्धरूपार्थे सामर्थ्याद्वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्यात् प्रामाण्याभावनिश्चयराहितपुरुषस्यानन्तास्थिरफलरूपब्रह्मविषयापातप्रतीतिप्रामाण्यसम्भावनासिद्धेः विशिष्टहेतुसिद्ध्या ब्रह्ममीमांसाऽऽरम्भणीयेति विचाराणां फलफलिभावः॥

**पूर्वपक्षमुपक्षिपति तत्रेति।** पूर्वं मृषावाद्युक्तं सूत्रतात्पर्यं व्युदस्तम्। तद्व्यावृत्तिं सूचयति तत्रशब्देन। तत्र प्रपञ्चसत्यत्वे * स्थितेसतीत्यर्थः, पूर्वपक्षमुपपादयति। **वृद्धव्यवहारादिति।** वृद्धः व्युत्पन्नः प्रयोज्यः, प्रयोजकश्च, तयोर्व्यवहारः वाचिकः कायिकश्च, व्यवहारादन्यत्र शक्त्यवधारणं माभूत्, ततः किमित्यत्राह—**व्यवहारस्यचेति।** कार्यबुद्धिपूर्वकत्वफलमाह—**कार्यार्थ एवेति।** ततःफलितमाह—**कार्यरूपइति।** वेदस्य शब्दात्मकत्वाच्छब्दस्य च व्युत्पत्त्य-

### गूढार्थसंग्रहः

**शब्दस्य बोधकत्वशक्त्यवधारणासम्भवादिति।** एतेन शाब्दबुद्धौ पदस्यैव करणत्वं प्रभाकरसम्मतमिति सूचितम्। भट्टमतेतु पदैरभिहिताः पदार्थाःकरणम् 'पदार्थानांतु मूलत्वं युक्तं तद्भावभावतः' इति वार्तिकोक्तेः॥

**कार्यार्थ एव शब्दस्य प्रामाण्यमिति।** व्यवहारेणैव व्युत्पित्सूनां शक्तिग्रहः, तत्र च लिङादिघटित तव व्यवहारः लिङादीनां च कार्यमेवार्थः। इत्थं च कार्याविषयकबोध प्रमात्मकः तत्करणत्वमेव पदानामिति **कार्यरूप एव वेदार्थ इति।** कार्याविषयकसिद्धविषयकशाब्दबोधस्य क्वाप्यनुदयेन सिद्धस्य न वेदार्थता अपितु कार्यस्यैवेति। उक्तं च प्रकरणपञ्चिकायां 'तच्च कृतेः प्रधानं यदधिकृत्य कृतिः प्रवर्तते' इत्यादि 'तथाचासाधनस्यापि सुखस्यैवास्ति कार्यता सुखंहि सर्वःकार्यतयाऽवैति न तस्य फलसाधनतामपेक्षते। तेन साधनतोत्तीर्णकार्यताऽवगमेन मे प्रवृत्तिरिति निश्चित्य व्युत्पित्समानः चैत्रं प्रवर्तमानं दृष्ट्वा अनुमिनोति चैत्रोऽपि कार्यबोधात् प्रवर्तते इति। चैत्रस्य प्रवृत्तिर्धर्मिणी कार्यबोधपूर्विकेति साध्यो धर्मः बुद्धिपूर्वकत्वेसति प्रवृत्तित्वात् मदीयप्रवृत्तिवदिति। लिङादयश्च प्रवृत्तिहेतुभूतार्थाभिधायिनः कार्यमेवाभिदधते, तस्यैवावगमस्य प्रवृत्त्यनन्तकारणत्वात्' इत्यन्तम्। कृतिसाध्यं प्रधानं यत् तत्कार्यमवसीयते। तच्च मानान्तरेणापि वेद्यमोदनपाकवत्। कृतौ सत्यां च भावादसत्यां चाभावात् अनुमानतःकृतिसाध्यताचावगम्यते, यदधिकृत्य कृतिःप्रवर्तते तत्कृतिप्रधानं प्रयत्नश्च कृतिः सच्च मानसप्रत्यक्षवेद्य इति विशिष्टे प्रयोजनताऽपि प्रयत्नस्य प्रत्यक्षवेद्यैव। तेन प्रत्यक्षानुमानाभ्यामवगम्यते। यथा च ओदनःपाकस्येति न किंचिदनुपपन्नमिति॥

ननु यागादिक्रियादेवताराधनोपायभूतासती सैव कार्यतया उच्यतां, नैतदेवं यागादीनां देवताराधनहेतुत्वे प्रमाणाभावात्। ननु देवतापूजार्थ एवहि याजिः स्मर्यते, उच्यते न स्मृतिःप्रमाणम् स्मृतित्वादेव। प्रमाणान्तरापेक्षया च

### श्रीभाष्यम्

**अतो न वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि प्रमाणभावमनुभवितुमर्हन्ति। नच पुत्रजन्मादि सिद्धवस्तुविषयवाक्येषु हर्षहेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात् सुलग्न(जन्म)सुखप्रवादिहर्षहेत्वर्थान्तरोपनिपातसम्भावनया च प्रियार्थप्रतिपत्तिनिमित्तमुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः।**

### श्रुतप्रकाशिका

पेक्षत्वादिति भावः। ततःकिमित्यत्राह—**अतइति**। अतः वेदार्थस्य कार्यरूपत्वादित्यर्थः न प्रमाणाभावमनुभवितुमर्हन्ति प्रामाण्यसम्भावना नास्ति अयोग्यत्वादित्यर्थः। प्रथमव्युत्पत्तिः वृद्धव्यवहारादन्यत्र न संभवति। नहि घटोऽस्तीत्युक्ते प्रवृत्त्यभावेसति सत्यबोधकत्वं ज्ञायते, गामानयेत्यादिशब्दप्रयोगानन्तरं प्रयोज्यप्रवृत्तिं दृष्ट्वा प्रवृत्तेः कार्यबुद्धिपूर्वकत्वं जानन्व्युत्पित्सुः अयं शब्दः कार्यरूपार्थबोधक इति निश्चिनोति। तत्र बहुप्रयोगेष्वनुवृत्तशब्दस्यानुवृत्तार्थेन संबन्धं व्यावृत्तशब्दस्य व्यावृत्तार्थेन * संबन्धं गृहीत्वा आवापोद्वापमुखेन अर्थविशेषैश्शब्दविशेषसंबन्धं निश्चिनोतीति प्रथमं व्युत्पत्तिः कार्यार्थ एव, नहि प्रथमत एवास्य शब्दस्यायमर्थ इत्युक्ते अस्य शब्दस्यायमर्थ इत्येतद्वाक्यस्थपादानामर्थप्रतीतिः। एवं कार्यार्थ एव व्युत्पत्तिं कृतवतः पुरुषस्य अस्य शब्दस्यायमर्थ इति पश्चात् शिक्षितेऽपि, प्रथमं कार्यार्थपरतया व्युत्पन्नकतिपयपदसमभिव्याहारदर्शनात् प्रथमव्युत्पत्त्याविरोधेन तत्तच्छब्दार्थसम्बन्धग्रहणात् सर्वे शब्दाः कार्यार्थपरा एवेति गृह्यन्ते। अतो **य एव लौकिकास्त एव वैदिकाः** इति न्यायाद्वेदान्तास्सिद्धवस्तुनि न बोधका भवन्तीत्यर्थः॥

वेदान्तानां संस्कृतशब्दत्वाद्भाषान्तरेण प्रथमं व्युत्पन्नस्य पुरुषस्य संस्कृते शब्देऽस्य शब्दस्यायमर्थ इति व्युत्पाद्यमाने प्रथममेव सिद्धवस्तुनि व्युत्पत्तिः कृता स्यादेतिचेन्न, कार्यार्थपरत्वेन प्रथमं व्युत्पन्नभाषान्तरशब्दानां पर्यायत्वेन व्युत्पाद्यमानत्वात् संस्कृतशब्दाअपि कार्यार्थपरत्वेनैवहि व्युत्पन्नास्स्युः। सिद्धवस्तुनि व्युत्पत्तेः भाट्टैरुक्तमुदाहरणं व्युदस्यति। **नचेति**। कालत्रयवर्तिनामिति * पञ्चिकायामुक्तं तदत्राभिप्रेतम्। देशकालयोग्यतादिभिः पुत्रजन्म जानातीत्यत्राह—**सुलग्नेति**। सुलग्नसुखप्रवादिनाऽन्यथासिद्धिर्नयविवेकोक्ता ; आदिशब्देन पित्राद्यरिष्टाभावो भाविसमृद्ध्यादिकंच विवक्षितम्। * व्युत्पत्तिर्नाम शब्दस्यार्थविशेषैस्सह संबन्धग्रहणं नत्वर्थमात्रेणेत्येवं दूषणमुक्तम्॥

### गूढार्थसंग्रहः

स्मृतीनामर्थवर्णनम् तदनुवर्तित्वात्तासां देवताधिकरणे च प्रपञ्चेनायमर्थो निरस्तइति नातीव यतितव्यम् इति॥

'तस्मान्मानान्तरावेद्यं कार्यमर्थान्तरान्वितम्। वेदवाक्यं ब्रवीतीति संक्षेपोऽयमुदाहृतः॥' इति वाक्यार्थमतृकायां, एवंचापूर्वफलयोरेकैव भावना एकत्वात्पुरुषप्रयत्नस्य एकमेव कारणं, तद्भावनाव्याप्यत्वात् एकैव भाव्यतेति। अत एव साध्यविवृद्धिरिति प्राभाकराः' इति विषयकरणीयप्रकरणे)

**अतो न वेदान्ता इत्यादि**। परब्रह्मणः आनन्दरूपत्वेऽपि कृतिसाध्यत्वेन प्राधान्याभावात् तत्र वेदान्तानां प्रामाण्यं न सम्भवतीति भावः। प्रकरणपञ्चिकोक्तदिशा प्रकारान्तरेण सिद्धे व्युत्पत्तिस्सम्भवतीति वदतां मतान्याशङ्क्य दूषयितुं तत्रैकप्रकारेण सिद्धार्थे व्युत्पत्तिसमर्थनं न सम्भवतीत्याह—**नच पुत्रजन्मादि इत्यादिना**। अत्र प्रकरणपञ्चिका—ननु सिद्धोऽपि ब्रह्मात्मको वेदान्तानामर्थःप्रतीयते। उच्यते—व्युत्पत्त्यपेक्षः शब्दोऽर्थमवबोधयति। व्युत्पत्तिश्च वृद्धव्यवहारे व्यवहारश्च कार्यप्रतीतिनिबन्धनः कार्यप्रतिपादकतयैव शब्दव्युत्पत्तिः तत्रापि कश्चिच्छब्दः साक्षादेव कार्यप्रति

## गूढार्थसंग्रहः

पादकतया व्युत्पद्यते कश्चिच कार्यान्वितस्वार्थपरतया ॥ ननु विनापि व्यवहारं सिद्धार्थप्रतिपत्तिपरादपि लौकिकवचनात्सम्भवत्येव व्युत्पत्तिः । यथा पुत्रस्ते जात इति । अत्रहिमुखप्रसादादिभिर्लिङ्गैर्लोकैः श्रोतुर्हर्षोत्पत्तिरनुमीयते । हर्षोत्पत्तिश्च हर्षहेतुमन्तरेण न सम्भवति प्रियार्थप्रतीतिश्च हर्षहेतुरिति स्वात्मनि प्रतीतम् तेन पुत्रस्ते जात इति वाक्येन प्रियोऽर्थो बोधित इति कल्प्यते । पुत्रजन्मैवास्य प्रियमुत्पन्नमिति प्रमाणान्तरावगतमिति तदभिधायकत्वमेव कल्प्यते । प्रतिपदमावापोद्धाराभ्यां व्यवहार इव स्वार्थविशेषसंबन्धाध्यवसायः । तदा व्युत्पन्नेतरपदविभक्त्यर्थाः काष्ठैःपचतीति वर्तमानोपदेशेऽपि यत्पाके कारणं तत्काष्ठशब्देन प्रतिपाद्यत इत्यवगम्य प्रत्यक्षेण काष्ठानां करणभावमवगच्छन्तः काष्ठशब्दे व्युत्पद्यन्ते । किंचास्य शब्दस्यायमर्थ इत्यपि व्युत्पत्तिर्दृश्यते । न तत्रशक्यते वक्तुं कार्यान्वय्येव शब्दस्यार्थ इति । अपि च येन नामाकार्याभिधायित्वं तावता च कार्यान्विताभिधानस्याप्युपपत्तेर्नशक्यते 'विशेषान्विताभिधानशक्तिः कल्पयितुम् । लोके च सिद्धार्थान्येव प्रायशो वाक्यानि प्रश्नोत्तराणि दृश्यन्ते । कुशलं ते कुशलं ममेत्यादीनि ॥

अत्रोच्यते सर्वपुरुषाणां तावद्वृद्धव्यवहारएव प्रथमं व्युत्पत्तिरङ्गीकरणीया । न खलु व्यवहारमन्तरेण सिद्धान्वाख्याने व्युत्पत्तिरवकल्पते । यद्यपि मुखप्रसादादिभिर्हर्षोत्पत्तिरनुमीयते, हर्षोत्पत्त्या च हर्षहेत्ववगमस्तन्निमित्तताच शब्दस्य तथाऽपि पुत्रस्ते जात इति वाक्यस्य पुत्रजन्माख्यहर्षहेतुप्रतिपादकता हर्षहेतूनामानन्त्यात् दुरनुमाना । नच पारिशेष्येण तत्प्रतिपादकत्वाध्यवसायः, भूतभविष्यद्वर्तमानानां सन्निहितव्यवहितानां पारिशेष्यावधारणाया अत्यन्तदुष्करत्वात् । व्यवहारः पुनः प्रत्यक्षविशिष्टार्थविषयउपलभ्यमानस्तद्बुद्ध्यनुसारेण तद्गतामेव शब्दस्य वाचकतामनायासेनापादयन् व्युत्पत्तावुपायतां गन्तुमलम् व्यवहारश्चेद्व्युत्पत्त्युपायः कः कार्यान्विताभिधानं शब्दानामपहरेत् । नहि कार्यावगमंविना व्यवहारोऽवकल्पत इत्युक्तं वाक्यार्थमातृकायाम ॥

एवं लोके यः सिद्धार्थपरतया पदानां प्रयोगः स लाक्षणिको भविष्यति । कार्यान्वयोहि परस्परपदार्थान्वयव्यभिचारीत्यविवक्षित्वाकार्यान्वयं परस्परपदार्थान्वयविवक्षयाऽपि लोकाः शब्दं प्रयुञ्जते । विवक्षाबलेन च लक्षणया तत्परताऽपि तत्र निर्वहति वेदेतु लक्षणानिबन्धनं किंचिन्नास्तीति स्वाभाविककार्यपरत्वं नापहर्तुं शक्यते । एवं सिद्धपरेऽपि वाक्ये या व्युत्पत्तिः साऽपि कार्यपरतां न विहन्ति । सर्वपदानामेवहि स्वाभाविकी वृद्धव्यवहारसिद्धा कार्यपरता । लाक्षणिकी च सिद्धपरेति । सर्वव्यवहारेषु कार्यान्वयाव्यभिचारात् तदन्विताभिधायिता न शक्यते हातुमिति न सामान्येनार्थान्तरमात्रान्विताभिधानं शक्याश्रयणम् । अतश्च वेदान्तानामप्यात्मा ज्ञातव्य इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयम् । अथ सिद्धार्थप्रतिपत्तिपरत्वेन व्युत्पत्तेरभावाद्वृद्धव्यवहारावगतायाः पदानामन्विताभिधायिताया एवाव्युत्पत्तेः कार्यपरत्वे च प्रमाणान्तरावगतात्मस्वरूपानुवादेनैव वर्णनं कर्तव्यम् । अपि च सिद्धार्थपरत्वेऽपि शब्दस्य न वेदान्तानां परमानन्दादिरूपत्वे ब्रह्मणः प्रामाण्यमवकल्पते । तत्रहि ब्रह्मस्वरूपानुवादेनानन्दादिरूपंविधिरास्थेयः । ब्रह्मस्वरूपं च प्रमाणान्तरसिद्धमेवाश्रयणीयम् । ब्रह्मशब्दस्य च लोके प्रमाणान्तरसिद्धात्मवाचित्वेन सिद्धेर्वेदेऽपि स एवार्थः । तथा चसति नित्यप्रकाशपरमानन्दरूपविधिः सकलप्रतिपत्तिविरुद्धः सर्वप्रतिपत्तिषुहि प्रमाणस्मृतिभूतास्वात्मा प्रकाशते । नच तत्र परमानन्दः संवेद्यते । नच सांसारिकदुःखाभिभूतत्वात्तस्याप्रकाशः, अभिभवानुपपत्तेः । अवच्छिन्नंहि दुःखमनवच्छिन्नश्चानन्द इति नाल्पीयसा महतोऽभिभवः सम्भवति । स्वप्रकाशस्यचाभिभवावरणानभिव्यक्तीनामसंभव एव । अभिन्नात्मतत्वप्रतिपादनमपि प्रमाणान्तराविरुद्धमेवेत्युक्तं तत्त्वालोके । सकलविकारशून्यताऽपि विज्ञानादिविकारोत्पत्तेः प्रमाणान्तरविरुद्धैवेति परस्परान्वयायोग्यतया नानन्दादिपरत्वम् । अजरामरत्वयोस्तु प्रमाणान्तरप्रसिद्धेरेवानुवादत्वादप्रामाण्यमिति ' इति ॥

## श्रीभाष्यम्

**नापि व्युत्पन्नेतरविभक्त्यर्थस्य * पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन वा शब्दस्य सिद्धवस्तुन्यभिधानशक्तिनिश्चयः ज्ञातकार्याभिधायिपदसमुदायस्य तदंशविशेषनिश्चय-**

## श्रुतप्रकाशिका

नैयायिकादिभिरुक्तमुदाहरणं व्युदस्यति । **नापीति** । * व्युत्पन्नेतरपदस्यपदान्तरार्थनिश्चयोदाहरणमिदम् । कः- कूजतीति प्रश्नस्य पिकःकूजतीति केनचिदुक्ते*व्युत्पन्नकूजतिशब्देन व्युत्पित्सुना पिकशब्दार्थो ज्ञायते व्युत्पन्नेतरपदविभक्त्यर्थस्य प्रकृत्यर्थनिश्चयोदाहरणमिदं काष्ठैः स्थाल्यामोदनं पचतीत्युक्ते व्युत्पन्नविभक्तिपचतिशब्दार्थेन व्युत्पित्सुना काष्ठादि प्रकृत्यर्थो ज्ञायत इति । **ज्ञातेति** । तदानीं श्रुतेऽस्मिन्वाक्ये पूर्वं कार्यपरतया * व्युत्पन्नवाक्यस्थकतिपयपददर्शनादय मपि पदसमुदायः कार्याभिधायीति ज्ञायत इत्यभिप्रायेण ज्ञातकार्याभिधायिपदसमुदायस्येत्युक्तम् । तदंशविशेषः कार्यांशविशेषः कार्यंह्यनेककारकविशिष्टं तस्य कार्यस्य विशेषणांशनिश्चयरूपत्वात् । तस्य पदान्तरार्थनिश्चयस्य प्रकृत्यर्थनिश्चयस्यचेत्यर्थः ॥

## गूढार्थसंग्रहः

बृहत्यां प्रभाकरसिद्धान्तितार्थः ऋजुविमलायां बृहतीव्याख्यायां शालिकानाथेन यः स्थापितः सः प्रकरणपञ्चिकायां पूर्वपक्ष निरसनमुखेन सम्यक्प्रतिष्ठापित इति, अयमेवार्थः अधिकरणपूर्वपक्षे भगवता अनूदितः । 'हर्षहेतुरर्थः पुत्रजन्मैव प्रतीतः तेन हर्षः इति निश्चेतुं न शक्यते । हर्षहेतूनामर्थानां कालत्रयवर्तिनामानन्त्यात् । पुत्रादिशब्दानामर्थएव केनचिन्नज्ञायते, तस्यापि पुत्रस्ते जात इति वाक्यश्रवणानन्तरं हर्षहेत्वन्तरोपनिपातेसति हर्षो जायत इत्यनुभवः न प्रत्याख्यातुं शक्यते । व्युत्पत्तिर्नाम शब्दस्यार्थविशेषैस्साकं संबन्धग्रहणम्, नत्वर्थमात्रेणेति नयाविवेकाशयः व्यासार्यैरेव विवृतः । अन्यप्रकारेणापि सिद्धे व्युत्पत्तिसमर्थनं न सम्भवतीत्याह—**नापि व्युत्पन्नेतरेत्यादिना** ॥

अत्रोक्तं न्यायरत्नमालायां—' सर्वेषामेव पदानां कार्यं तदन्वितंवाऽभिधेयम् । लिङादीनां कार्यमन्येषांतु तदन्वितम् यस्तु लोके कूतूहलप्रश्नप्रतिवचनरूपः सिद्धार्थविषयः शब्दप्रयोगः कार्यशून्यो दृश्यते, यथा कोऽयं गच्छति भूमिपो गच्छ तीत्यादिः कवीनांवाऽर्थविशेषवर्णनरूपः यथा—' नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः । रामाः कौशेयसंवीताः कादम्बा इव शोभनाः ॥ ' इत्यादिः स लाक्षणिक इति भवतां समयः, तत्रापिचान्वितसंविदस्त्येव, नचासौ पदैरुदेतुमर्हति तेषामतदभिधायकत्वात् । नहि भूमिपशब्दस्य कार्यान्वितस्वार्थानभिधायित्वात् आकाङ्क्षादित्रयशालिनाऽपि गच्छत्यर्थेनान्वितः स्वार्थोऽभिधेयः । तथा गच्छतेरपि तदन्वितोऽनभिधेयएवेति न पदनिमित्तान्वयप्रतीतिर्भवेत् । तेनावश्यं पदस्मारितानिमित्तभूतार्थस्वरूपाभ्यामेवाकाङ्क्षायोग्यत्वैकवाक्यत्वसनाथाभ्यामियमन्वितसंविदुदयमासादयतीत्यकामेनाप्यनुज्ञातव्यम्। ततश्च सर्वत्रैव तथाऽस्तु किमन्विताभिधानकल्पनया इत्यादि । न्यायरत्नमालायामुदाहरणमप्यत्र विवक्षितम् । तत्रापि ज्ञानकार्याभिधायिपदसमुदायस्य तदंशविशेषनिश्चय एव प्रभाकरसंमतः ॥

ब्रह्मसिद्धौ नियोगकाण्डे—' ज्ञानस्य पुरुषार्थत्वसिद्धये विधिरिष्यते । सर्वत्र पुरुषार्थत्वंविधेरित्यप्यपेशलम् ॥ ' विध्यधीनः पुरुषार्थसाधनताऽवबोधः तच्छब्दतो लब्धजन्मनोऽप्यात्मतत्त्वावबोधस्य पुरुषार्थसाधनत्वावगमो विधेरित्येतदपि न शोभनम् ' इत्युक्तार्थः प्रकरणपञ्चिकायां यद्यपि दूषितः ; तथाऽपि ' ननु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्पः '

श्रीभाष्यम्

**रूपत्वात्तस्य। नच सर्पाद्भीतस्य नायं सर्पो रज्जुरेषेति शब्दश्रवणसमनन्तरं भयनिवृत्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः अत्रापि निश्चेष्टं निर्विषमचेतनमिदं**

श्रुतप्रकाशिका

* यद्वा तदंशविशेषः कार्याभिधायिपदसमुदायांशविशेषः मृषावादिभिरुक्तमुदाहरणं दूषयति। **नचेति**। वाचस्पतिनोक्तमर्थमाशङ्क्य परिहरति। **कार्येति**। तेन खल्वेवं सिद्धवस्तुनि प्रामाण्यमुपपादितम्। सर्वशब्दानामर्थोऽनुयायी

गूढार्थसंग्रहः

इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टम्, तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्।' इति समन्वयाधिकरण (शं)भाष्योक्तरीत्या सिद्धपरवस्तुप्रामाण्यं संभवतीत्याशङ्क्यते–**नच सर्पाद्भीतस्येत्यादिना**॥

(शं) भाष्ये 'स्यादेतदेवम्; यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत नतु निवर्तते श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात् 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात्। तस्मात्प्रतिपत्तिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति' इति परिहारस्य पूर्वपक्षे उक्तावपि प्रकरणपञ्चिकोक्तपरिहाररीतिरेवात्रापि संभवतीत्यभिप्रेत्याह–**अत्रापि निश्चेष्टं निर्विषमित्यादिना**। अत्र पूर्वपक्ष्याशयं प्रकाश्य सिद्धान्ते एतद्दूषणावसरे कर्मब्रह्मविद्याफलवैलक्षण्यमुपक्रम्य 'ब्रह्मात्मभावस्यैव फलत्वं मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलम्' इति समन्वयाधिकरणे द्वितीयवर्णके वृत्तिकारमतदूषणावसरे परैरुक्तम्। एवं प्रथमवर्णके–'नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात्। यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति, नैषदोषः। हेयोपादेयशून्यब्रह्मात्मताऽवगमादेव सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः' इति। एवमनारब्धकार्याधिकरणेऽपि 'अकर्त्रात्मबोधोऽपिहि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति। बाधितमपितु मिथ्याज्ञानं द्विचन्द्रज्ञानवत्संस्कारवशात्किंचित्कालमनुवर्तत एव। अपि च नैवात्र विवादितव्यं ब्रह्मविदा किंचित्कालं शरीरं ध्रियते नवा ध्रियते इति कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणंचापरेण प्रतिक्षेप्तुं शक्येत ? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेन चैतदेव निरुच्यते' इति च (शं) भाष्ये उक्तम्॥

अत्र भामती—'यत्तु आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' इत्युपासनवाक्यगतदेवतादिप्रतिपादनेनोपासनपरत्वं वेदान्तानामुक्तम् तद्दूषयति। देवतादिप्रतिपादनस्यतु आत्मेत्येतावन्मात्रस्य स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः। यदि न विरोधः सन्तु तर्हि वेदान्ता देवताप्रतिपादनद्वारेणोपासना विधिपरा एवेति अत आह–नतु तथा ब्रह्मण इति। उपास्योपासकोपासनाभेदसिद्ध्यधीनोपासना न निरस्तसमस्तभेदप्रपञ्चे वेदान्तवेद्ये ब्रह्मणि संभवति, इति नोपासनाविधिविशेषत्वम्; वेदान्तानां तद्विरोधित्वादित्यर्थः॥

स्यादेतत् यदि विधिविरहेऽपि वेदान्तानां प्रमाण्यम्, हन्ततर्हि 'सोरोदीत्' इत्यादीनामप्यस्तु स्वतन्त्राणामेवोपेक्षणीयार्थानां प्रामाण्यम्। नहि हानोपादानबुद्धी एव प्रमाणस्य फले उपेक्षाबुद्धेरपि तत्फलत्वेन प्रामाणिकैरभ्युपगमात्, इति कृतं 'बर्हिषि रजतं न देयम्' इत्यादिनिषेधविधिपरत्वेनैतेषामिति अत आह–यद्यपीति। स्वाध्यायविध्यधीनग्रहाणतयाहि सर्वो वेदराशिः पुरुषार्थतन्त्रइत्यवगतम्। तत्रचैकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तम्, किंपुनरियता 'सोरोदीत्' इत्यादिना पदप्रबन्धेन। नच वेदान्तेभ्य इव तदर्थावगममात्रादेव काश्चित्पुरुषार्थ उपलभ्यते। तेनैषपदस-

## गूढार्थसंग्रहः

न्दर्भः साकांक्ष एवास्ते पुरुषार्थमुदीक्षमाणः ' बर्हिषि रजतं न देयम् ' इत्ययमपि निषेधविधिः स्वनिषेधस्य निन्दामपेक्षते तेनह्यन्यथा ततश्चेतनः शक्यो न निवारयितुम् । तद्यदि दूरतोऽपि न निन्दामवाप्स्यत् ततो निषेधविधिरेव रजतनिषेधे च निन्दायां च दर्विहोमवत् सामर्थ्यद्वयमकल्पयिष्यत् । तदेवमुक्तस्तयोः ' सोरोदीत् ' इति च ' बर्हिषि रजतं न देयम् ' इति च पदसन्दर्भयोर्लक्ष्यमाणनिन्दाद्वारेण नष्टाश्वदग्धरथवत् परस्परं समन्वयः नत्वेवं वेदान्तेषु पुरुषार्थापेक्षा तदर्थावगमादेवानपेक्षत्वात् परमपुरुषार्थलाभादित्युक्तम् ॥

ननु विध्यसंस्पर्शिनो वेदस्यान्यस्य प्रामाण्यं न दृष्टम् इति कथं वेदान्तानां तदस्पृशां तद्भविष्यतीति—अतआह—नचानुमानगम्यमिति । अबाधितानधिगतासन्दिग्धबोधजनकत्वंहि प्रमाणत्वं प्रमाणानां, तच्च स्वत इत्युपपादितम् । यद्यपि चैषामीदृग्बोधजनकत्वं कार्यार्थापत्तिसमधिगम्यम् ; तथाऽपि तद्बोधोपजनने मानान्तरं नापेक्षन्ते नापीमामेवार्थापत्तिम् ; परस्पराश्रयप्रसङ्गादिति स्वत इत्युक्तम् । ईदृग्बोधजनकत्वं च कार्ये इव विधीनां वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं तेषां ब्रह्मणि प्रामाण्यं सिद्धं भवति । अन्यथा नेन्द्रियान्तराणां रूपप्रकाशनं दृष्टम्, इति चक्षुरपि न रूपं प्रकाशयेदिति प्रकृतमुपसंहरति—तस्मादिति ' इति ॥

अत्र पञ्चपादिका—' आह युक्तं प्रत्यक्षादीनां तावत् प्रामाण्यं ; अपेक्षान्तराभावात् आम्नायस्य स्वध्ययनविधिनोपादापितस्य न पुनः पुरुषार्थमप्राप्य पर्यवसानं लभ्यते ; विधानानर्थक्यप्रसङ्गात् । तस्मादैकात्म्यवाक्यानां स्वार्थमात्रनिष्ठता न युक्ता उच्यते पुरुषोह्येतावदपेक्षते इष्टंमे स्यात् अनिष्टंमे माभूदिति नत्वियमन्यथावेति । नचास्य स्वयमीष्टे। द्विविधं चेष्टं प्रेप्स्यति किंचित्प्राप्यं, यथा ग्रामादि । किंचित्प्राप्तमपि ; यथा भ्रान्त्या हस्तगतमेव विस्मृतसुवर्णादि । अनिष्टमपि द्विविधं परिजिहीर्षति किंचित्परिहृतमपि यथा भ्रान्त्या रज्ज्वादिसर्पादिबुद्धिगृहीतम् । तत्र प्राप्यपरिहार्ययोः साधनज्ञानायत्तत्वात्पुरुषार्थस्य विधिप्रतिषेधावर्थवन्तौ । इतरयोस्तावद्भ्रान्तिमात्रव्यवहितत्वान्नतदपनयनादन्यत् पुरुषार्थमनुमन्यत एव पुरुषः सुतरांचाभिनन्दति । साधनायत्तोह्यायासाल्लभ्येत ज्ञानायत्त्वायासोऽपि परिह्रियते । तेनानेकानर्थकलुषितमिवात्मानं मन्यमानस्य भ्रान्तस्य सर्वानर्थशून्यात्मतत्वप्रतिपादनादेव पुरुषार्थसिद्धेरैकात्म्यवाक्यानां स्वार्थमात्रनिष्ठत्वेऽपि न विध्यानर्थक्यप्रसङ्गः । तस्मात् सिद्धं ब्रह्मणश्शास्त्रप्रमाणत्वम् ' इति ॥

अत्र न्यायरक्षामणिः—' यत्तु कण्ठगतचामीकरोपदेशस्य न प्राप्तचामीकरप्राप्तिः फलम्, किंतु तत्प्राप्तिज्ञानजन्यसुखस्य वस्तुनः प्रागप्राप्तस्य प्राप्तिः प्राप्तचामीकराप्राप्तिभ्रमजन्यस्य दुःखस्य वस्तुतः प्रागनुवृत्तस्य निवृत्तिर्वा । नचेह तथा प्रागप्राप्तं सुखदुःखप्राप्तिनिवृत्त्योरन्यतरत्प्राप्यमस्तीति दृष्टान्तवैषम्योद्घाटनम् । तत्तुच्छं, सिद्धवस्तुबोधनस्य पुरुषार्थपर्यवसायित्वमात्रेहि स दृष्टान्तो नतु बोध्यमानस्यैव स्वतःपुरुषार्थत्वे । तत्र प्रागनभिव्यक्तं चामीकरमुपदेशेनाभिव्यक्तमपि न स्वतःपुरुषार्थ इति पुरुषार्थान्तरपर्यवसानान्वेषणम् । इहतु ' तत्त्वमसि ' इत्युपदेशेन ' राजसूनोस्स्मृतिप्राप्तौ व्याधभावो निवर्तते । यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥ ' इति वार्तिकोक्तन्यायेनाध्यस्तसर्वानर्थमूलहृदयग्रन्थिनिवृत्तिपूर्वकनिरतिशयानन्दरूपब्रह्मात्मभावाभिव्यक्तौ तावतैव कृतार्थतेति न पुरुषार्थान्तरपर्यवसानान्वेषणमिति विशेषः अयं तु विशेषः परंपरया पुरुषार्थपर्यवसायिनोऽपि सप्रयोजनत्वे साक्षादेव पुरुषार्थपर्यवसायिनः सप्रयोजनत्वं किंमु वक्तव्यमिति कैमुत्यन्यायहेतुतयाऽलंकार एव न बाधकः ' इति ॥

अत्र ' तत्त्वालोके अत्यन्तमसन्तं प्रपञ्चं कथमिवाविद्याप्रकाशयितुमलम् । न खल्वसत्ख्यातिरविद्या, किंत्वग्रहण रूपैवेति नयवीथ्यांच साधितम् । ' अतो नाविद्याऽस्तमयो मोक्ष ' इत्यनेन सन्मात्रग्राहिप्रत्यक्षवादिब्रह्मसिद्धिकारमते प्रपञ्च-

### श्रीभाष्यम्

**वस्त्वित्याद्यर्थबोधेषु बहुषु भयनिवृत्तिहेतुषु सत्सु विशेषनिश्चयायोगात्। कार्यबुद्धिप्रवृत्तिव्याप्तिबलेन**

### श्रुतप्रकाशिका

वक्तव्यः किं कार्यरूपार्थाभिधायित्वमनुयायि। उत कार्यान्वितस्वार्थाभिधायित्वं, उत कारकान्वितस्वार्थाभिधायित्वम्। प्रथमे कारकपदेषु व्यभिचारः तेषां कार्याभिधायित्वाभावात्। द्वितीये लिङादिषु व्यभिचारः तेषां कार्यान्वितस्वार्थाभिधायित्वाभावात्। * तृतीयेतु कारकपदेषु व्यभिचारः तेषां कारकान्वितस्वार्थाभिधायित्वाभावात्। तस्मादन्यान्वितस्वार्थाभिधायित्वंपदानामनुयायीति वक्तव्यमन्विताभिधायित्ववादिना। अन्यान्वितत्वं सिद्धवस्तुनोऽपि स्यादिति कार्यरूपार्थ एव व्युत्पत्तिरिति निर्बन्धोऽनुपपन्न इति इमां शङ्कामभिप्रेत्य परिहरति। **कार्यबुद्धीति**। **कार्यबुद्धिप्रवृत्तिव्याप्तिबलेनेति**। उत्तरत्र सर्वपदानां कार्यपरत्वेनेत्यनेनान्वयः। शब्दप्रयोगानन्तरं प्रवृत्तिदर्शनाच्छब्दस्य प्रवर्तकार्थावबोधकत्वात् कार्यबुद्धेः

### गूढार्थसङ्ग्रहः

स्यासत्वमेवायातमित्यभिप्रेत्य मोक्षस्वरूपं दूषितम्। न्यायमकरन्दे न खल्वत्यन्तमसन्तं प्रपञ्चमविद्यादर्शयतीति ब्रूमः। येनायमुपालम्भः किन्त्वनिर्वाच्याकारप्रपञ्चमवभासयत्यविद्येति असकृदभिहितम्' इत्येतद्ग्रन्थदूषणंतु तत्त्वालोकतात्पर्यानवधारणमूलकम्। सन्मात्रग्राहिप्रत्यक्षवादे प्रमाणतः प्रपञ्चस्य सत्वस्यासिद्धितात्पर्येण शुक्तिरजतस्वाप्निकपदार्थतुल्यत्वमेवायातमिति स्वप्नोपभोगतुल्यत्वमेव वेदपूर्वकाण्डोक्तकर्मफलानुभवस्यापि स्यात्। 'तस्मायन्नास्ति नास्त्येव—न सत्यद्वयकल्पना' इति भट्टपादोक्तार्थस्य ब्रह्मसिद्धावपर्यालोचनेन 'निर्विशेषं न सामान्यं भवेच्छशविषाणवत्' इति भट्टपादोक्तौ प्रमाणाधीनः परस्परसंसृष्टार्थविषयकएव बोधः नत्वसंसृष्टार्थविषयकबोधः क्वापीत्यभिप्रायेण वाक्यात्संसृष्टार्थविषयकबोधस्य मण्डनेनाङ्गीकारेपि तत्सम्मतनिर्विशेषवस्तुनः प्रमाणतोऽसिद्ध्या पारमार्थिकत्वकल्पनाऽसम्भवेन अविद्याकल्पनादेरसंभवेन च 'स्वाभाविकीमविद्यां च कस्समुच्छेत्तुमर्हति' इत्यनिवर्तकानुपपत्तिपरिहारोऽपि न संभवति इत्यभिप्रायकत्वात्तत्त्वालोकग्रन्थस्य। व्यावहारिकसत्यत्ववादिमताभिप्रायेण तत्त्वालोकग्रन्थस्याप्रवृत्तेः॥

किंच तदधिगमाधिकरणप्रभृतिकर्मक्षयस्यैव सूत्रकृतोक्त्या कर्मविलक्षणाविद्याऽस्तमयः न सूत्रकृत्सम्मतः। द्विचन्द्रज्ञानवैधर्म्यंतु प्रागेव भगवता निरूपितम्। प्राप्तप्राप्त्यङ्गीकारेऽपि न्यायरक्षामण्युक्ताक्षेपपरिहारोऽपि न संभवति। अनन्तरं सुखदुःखनिवृत्त्योस्सत्त्वेन तदर्थमेव प्रवृत्तिर्दृष्टान्त इति तयोरेव प्रयोजनत्वं दार्ष्टान्तिकेतु न तथा। किंच भोगेनत्वितरे क्षपयित्वा अथ संपत्स्यते' इति 'संपद्याविर्भावः' इति चतुर्थे प्रथमान्त्यतुरीयाद्यधिकरणयोः संपूर्वकपदधातुप्रयोगेण मध्ये उत्क्रान्तिगतिपादद्वयविन्यासेन हार्दानुगृहीतश्शताधिकया इत्युक्त्या पूर्वं कर्मक्षयस्यफलत्वप्रतिपादनेन च ब्रह्मविद्यायाः प्रायश्चित्तरूपायाः न दृष्टद्वारकं फलमपित्वदृष्टद्वारकमेवेति सूत्रकारसिद्धान्तः स्पष्टः निर्मत्सराणाम्। अतश्च परमते सिद्धे प्रामाण्योपपादनं न घटत इति सिद्धम्॥

प्रभाकरमते कार्यस्य क्रियाव्यतिरिक्ततया गामानयेत्यादौ कार्याविषयकबोधस्यानुभवसिद्धतया कार्यान्वितस्वार्थे पदानां शक्त्यङ्गीकारे तदुपपत्तिर्न सम्भवतीति तत्साधारण्येनान्यान्वितस्वार्थे पदशक्तिरित्येव वक्तव्यम्। नतु कार्यान्वितस्वार्थे इति शङ्कायामाह—**कार्यबुद्धिप्रवृत्तिव्याप्तिबलेनेत्यादिना**। अयमर्थः 'अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात्'

## गूढार्थसंग्रहः

इत्यादि, 'क्रियाकार्यप्रतिपादनं लाक्षणिकमेव' इत्यन्त पूर्व(१८३.पु) भाष्यसूक्तौ स्फुटः ॥ अत्र मूलभूतप्रकरणपञ्चिका (वाक्यार्थमातृका) श्लोकेषु प्रागुदाहृतेष्वपि अयमर्थः व्यक्तः। अत्रापि प्रागुदाहृतप्रकरणपञ्चिकायां 'लोके यस्सिद्धार्थपरतया पदानां प्रयोगः स लाक्षणिको भविष्यति' इत्यादौ सर्वव्यवहारेषु कार्यान्वयाव्यभिचारात् तदन्विताभिधायिता न शक्यते हातुमिति न सामान्येनार्थान्तरमात्रान्विताभिधानं शक्याश्रयणम्' इत्यन्ते (प्र.पा) ग्रन्थे अयमर्थो व्यक्तः। एवमुक्त्या अन्याऽपि शङ्का परिहृता भवति ॥

वाक्याधिकरणशाबरभाष्ये—'अपिचान्तरेणापि पदोच्चारणं यश्शौक्ल्यमवगच्छति, अवगच्छत्येवासौ शुक्लगुणकं द्रव्यम्' इत्युक्तम्। अत्र वार्तिकम्—'पश्यतश्श्वेतमारूपं हेषाशब्दं च शृण्वतः। खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥ दृष्टावाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ॥' इत्यादि। एतदनुसारेण पदाभावेऽपि बोधस्य दर्शनेन न पदस्य करणत्वमपितु पदार्थानामेवेति शङ्कास्वरूपम्। एतद्भाष्यमुपादाय बृहत्यां प्रभाकरेणेत्थमुक्तं—'एवंतर्हि पदार्थेभ्यो वाक्यार्थ प्रत्ययः इति कथमयं व्यतिरेकः एवमयं व्यतिरेकः अन्वितेभ्योऽन्वयप्रत्यय इति। अपिचान्तरेणापि पदोच्चारणं यश्शौक्ल्यमवगच्छति अवगच्छत्येवासौ शुक्लगुणकं द्रव्यम्' इति। किमन्वयव्यतिरेकभाष्यशेषमेवैतत् ? ओमित्युच्यते। तत्र च पदार्थस्य व्यतिरेकदर्शनं, इहचान्वयस्य। सत्यमेवम् नत्वेतावन्मात्रमेव, किमतिरिच्यते इदमतिरिच्यते यदिहि व्युत्पत्तौ पदानां पदार्थमात्रएव व्युत्पत्तिः तदा अनन्वितपदार्थदर्शने तत्स्मरणानुपपत्तिः स्मर्यते च। अतः सिद्धमन्विताभिधानम्' इति

अत्र ऋजुविमला—'राद्धान्तैकदेशी वदति ओमित्युच्यते सएवाह—तत्रहि भाष्ये पदार्थव्यतिरेकदर्शनं पदार्थस्य व्यतिरेके वाक्यार्थस्य व्यतिरेक इत्युक्तम्। इह पदार्थान्वयस्य दर्शनं पदार्थेसति वाक्यार्थो भवतीति राद्धान्ती ब्रूते सत्यमेवम्' नत्वेतावन्मात्रमेव न पदार्थान्वयमात्रमेवात्र दर्शितम्। एकदेशी पृच्छति—किमतिरिच्यते राद्धान्ती कथयति इदमतिरिच्यते। यदिहि व्युत्पत्तौ पदानां पदार्थमात्र एव व्युत्पत्तिः, तदाऽनन्वितपदार्थदर्शने तत्स्मरणानुपपत्तिः स्मर्यते च अतस्सिद्धमन्विताभिधानम्। अस्यार्थः यदिहि व्युत्पत्तौ व्युत्पत्तिसमये पदानामनन्वित एव पदार्थमात्रे व्युत्पत्तिस्स्यात् तदा अनन्वितस्य पदार्थस्य प्रत्यक्षादिभिर्दर्शने तस्यान्वितस्य पदार्थस्य पदानुविद्धं स्मरणं न स्यात्, स्मर्यते च। अन्वितोऽर्थः पदाभिधेयतया शुक्लो गुणो गुण्यान्वितः शुक्लपदाभिधेयोऽयम् इतिस्मर्यते। अतस्सिद्धमन्विताभिधानम्' इति ॥

एवंपूर्वं बृहत्यां—'पदार्थास्तावन्नाव्यतिषक्ताः क्वचिदुपलभ्यन्ते अन्ततोऽस्त्यर्थेन। ततः किम् ? इदं ततः। तत्प्रतिपत्तयेहि शब्दार्थव्यवहारः। व्यवहारे च यथाव्यतिषङ्गमेवाऽऽवापोद्धारौ। तस्मान्नव्यतिषङ्गाभिधानम् व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य। किमेवं भविष्यति ? नानन्विताभिधायी शब्द उक्तो भविष्यति। ततश्च कार्याभिधायिता लोके नियोगस्यावगता। आचार्यचोदितः करोमीतिहि दर्शितम्' इत्युक्तम् ॥

तत्रापि ऋजुविमला—'व्यतिषङ्गोऽन्योन्यसंबन्धः, तद्वन्तोऽन्योन्यसंबद्धाः सर्वावस्थासु पदार्था उपलभ्यन्ते। यत्राप्यर्थान्तरं नास्ति, तत्राप्यन्ततोऽस्त्यर्थेन व्यतिषक्तः। यदि वस्तुस्वभावतः पदार्थान्तरव्यतिषक्ताः, ततः किम् ? नहि तावता शब्देन व्यतिषक्ता एवाभिधातव्या इतिभावः। उत्तरम् इदं ततः व्यतिषक्ता एवाभिधेया इति। कुतः ? तत्प्रतिपत्तयेहि शब्दार्थव्यवहारः। यतः तथाऽवस्थितमेव वस्तुशब्देन वाच्यम्; न पुनरन्यथाभूतं, अतोऽन्विता एवाभिधेयाः स्वभावतोऽन्वितत्वात् ॥

ननु च न वस्तुस्वभावोऽन्विताभिधानं, किं तर्हि ? व्यवहारे आवापोद्धाराभ्यां। तौ च स्वरूपमात्रएव संभवतः न पुनर्व्यतिषक्ते व्यतिषक्तान्तरव्यभिचारेण तद्व्यतिषङ्गव्यभिचारात्। अपि च व्यतिषक्ताभिधानेऽङ्गीक्रियमाणे शक्तिकल्प-

## गूढार्थसंग्रहः

नागौरवम् । किंच किं सामान्येन व्यतिषक्तमभिधीयते विशेषेण वा ? आद्ये कल्पे वृथाऽभिधानमिदम् ; अर्थसामर्थ्येनापि तात्सिद्धेः । द्वितीयेतु विशेषाणामानन्त्येन संबन्धग्रहणाशक्तिः । अगृहीतसंबन्धस्य वाचकत्वे प्रथमश्रवणेऽपि यत्किंचिदर्थप्रतीतिप्रसङ्गः ॥

किञ्च किमभिहितेन विशेषेण तद्व्यतिषक्तमभिधीयते, अनभिहितेन वा ? अभिहितपक्षे इतरेतराश्रयम् , द्वितीयमपि पदमभिहितार्थान्तरव्यतिषक्ताभिधायकतया इतरपदाभिधानमाश्रयतीति प्रसक्तं दुरुत्तरमितरेतराश्रयम् । अनभिहितपक्षे पदान्तरप्रयोगवैयर्थ्यम् । अतएव केचिदभिहितानां पदार्थानामेवान्योन्यान्वयबोधकतामभ्युपगच्छान्ति । तेहि मन्यन्ते आवापोद्धाराभ्यां वृद्धव्यवहारे पदानि स्वरूपमात्रेणार्थानभिदधते ; तेऽर्थाः परस्परमपेक्षासन्निधियोग्यताभिरुपसंस्कृता अदृष्टमेवान्योन्यान्वयमवगमयन्ति । नच तत्र संबन्धग्रहणाशक्तिपर्यनुयोगः, गृहीतसंबन्धपदप्रतिपादितानामगृहीतसम्बन्धानामेव पदार्थानामन्वयावबोधकत्वदर्शनात् अभिनवकविराचितेषु, वैदिकेषु च वाक्येषु प्रतीतिंप्रति विवादाभावादिति ॥

तत्राह—व्यवहारे च यथाव्यतिषङ्गमेवावापोद्धारौ । अस्यार्थः वृद्धव्यवहारे च यथाव्यतिषङ्गं व्यतिषङ्गमनतिक्रम्य आवापोद्धारौ । तथाहि 'गामानय' इत्यानयत्यन्वितस्यैव गोरावापः 'महिषमानय' इति च तदन्वितस्यैवोद्धारः ; तेनान्वित एव शब्दस्य सामर्थ्यमवसीयते । तच्च द्विधा संभवति—साक्षाद्वाऽभिधानेन, पदार्थप्रतिपत्त्यवान्तरव्यवधानेनवेति संप्रधारणीयम् । न तत्र साक्षात्सम्भवे प्रणाडीसमाश्रयणमुचितमित्यन्विताभिधानमेव निर्णीयते । नच संबन्धग्रहणाशक्तिः, उपाधिविशेषाश्रयणेन सुकरत्वात् ; आकाङ्क्षासन्निधानोपस्थापितान्वययोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदानीति व्युत्पत्तिपरिग्रहे न किंचिदनुपपन्नम् । योऽपिचाभिहितान्वयवादी, सोऽपि पदार्थेषु न विधिमिममतिवर्तते । नच शक्तिकल्पनागौरवम्, पदार्थेष्वप्यपरिहार्यत्वाच्छक्तिकल्पनायाः ॥

ननु च दृष्टेयं पदार्थानां शक्तिः । तथाहि अव्यक्तगुणविशेषं श्वेतिमानं चक्षुषा परिच्छिन्दन् हेषया चाश्वत्वमनुमिमानः खुरविक्षेपशब्देन च गन्तारं परिकल्पयन् 'श्वेतोऽश्वो गच्छति' इति प्रतिपद्यते । तत्र 'श्वेतिमा' 'अश्वः' 'गन्ता' इति पदार्थत्रयमन्योन्यान्वयमवगमयतीति ॥

तदनुपपन्नम् ; अनुमानतोहि हेषयाऽश्वत्वमनुमीयमानं हेषमाणपुरोवर्तिद्रव्यगतमेवानुमीयते, न स्वतन्त्रम् । यत्रैवहि लिङ्गं तत्रैव लिङ्गिनमनुमापयति । यस्य पुनरपादानदेशविभ्रमो हेषायाः असावश्वत्वं प्रतिपद्यमानोऽपि न विशेषमवधारति । योऽपि पारिशेष्याद्विशेषमवगच्छति, सोऽप्यर्थापत्तेर्विशेषमवगच्छतीति न पदार्थमात्रस्य क्वचिदन्वयबोधकत्वम् अपि च यदि श्वेतिमादयः प्रमाणान्तरपारिच्छिन्नाः ; परस्परान्वयबोधिनः तदा प्रमाणान्तरापातः, तस्याशाब्दत्वात् ; शब्दप्रतिपादितपदार्थपूर्वकं वाक्यार्थज्ञानं शाब्दं, नाशब्दपूर्वकमपीति । अपि च प्रथमोपनिपातिनि शब्द एव शक्तिः कल्प्यताम्, किमिति तं परित्यज्य पदार्थे यावत् गम्यते ?

किञ्च पदस्याभिधानशक्तिस्तावदविवादैव ; तत्रैवातिरेकः कल्पयितुं युक्तः ; न पुनःपदार्थेषु शक्तिकल्पना, धर्मिकल्पनातो धर्मकल्पनाया लाघवात् । यच्चेदमिह इतरेतराश्रयत्वं चोदितं तदप्येवं निरसनीयम् । न पदमात्रात् केवलादेवार्थावगमः, किंतु यावन्ति पदानि वाक्ये तावन्ति श्रुत्वा न्यायानुसारेण वचनव्यक्तिविशेषमवसायार्थोऽवगम्यते ! तत्र पदेषु प्रथमश्रुतेषु पदार्थाः अन्विता एव स्मर्यन्ते यथा पदार्थदर्शने पदम् । अन्वितेऽपि ह्यभिधीयमाने स्वरूपं नापैत्येव ; तेन शक्नोति तया प्रत्यासत्त्या तत्स्वरूपमात्रं पदं स्मारयितुम् । तत्र स्मृतिसन्निहितपदार्थान्वितस्वार्थं पदमभिधत्तइति नेतरेतराश्रयत्वम् । स्मरणेहि निरपेक्षत्वात् पदार्था अपि स्मृता एवान्योन्यान्वयमवगमयन्ति । तदाहुः—'तेऽपि नैवास्मृता

## गूढार्थसंग्रहः

यस्माद्वाक्यार्थं गमयन्ति नः । तस्मात्तत्स्मरणेष्वेव संहतेषु प्रमाणता ॥ ' इति । तदिदं सर्वमुक्तमस्माभिर्वाक्यार्थमातृकायामेव । यतो यथाव्यतिषङ्गमेवावापोद्धारौ, तस्माद्व्यतिषक्ताभिधानमेवेदं पदम् ॥

नन्वेवं व्यतिषङ्गमपि किमिति नाभिधत्ते तत्राह—न व्यतिषङ्गाभिधानं व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य । व्यतिषक्तोहि व्यतिषङ्गमप्रतिपद्यमानेन न शक्यते प्रतिपत्तुम् , यथा व्यक्तिमाकृतिरिति व्यतिषक्ततो व्यतिषङ्गावगतेर्न व्यतिषङ्गाभिधानं पदम् ।

ननु यदि व्यतिषक्ताभिधानं पदम्, किमेवं भविष्यति ? नानन्विताभिधायी शब्द उक्तो भवति । न भवत्वनन्विताभिधायी तथाऽपि किमित्याह—ततश्च कार्याभिधायिता लोके नियोगस्यावगता । अस्यार्थः आचार्यादिवाक्येषु ' देवदत्त समिधमाहर ' इत्यादिषु प्रवर्तमाने देवदत्ते पार्श्वस्थ एवमधारयति बुद्धिपूर्विकेयमस्य प्रवृत्तिः ; यच्चाहं बुद्ध्वा प्रवृत्तः तदयमपि मदविशेषात् ; अहं च न क्रियामात्रावगमात्, प्रवृत्तः नापि फलमात्रावगमात् नापि फलसाधनत्वावगमात्, किंतु कार्यावगमात् ; स्तनपानादिकाऽपि क्रिया यावन्मया कार्यतया नावगता तावदहं न प्रवृत्तः ; नच या श्रेयस्साधनता सैव कार्यता ; श्रेयःप्रति साधनत्वमन्यत्, अन्यच्चकृतिं पुरुषप्रयत्नंप्रति प्राधान्यं साध्यत्वलक्षणं कार्यत्वम् ; क्लेशात्मनस्तु कर्मणः फलसाधनत्वानुविधायिनी कार्यतेति मन्दा न भेदं प्रतिपन्नवन्तः, तथा सुखस्य फलसाधनतांविना कार्यताऽवगतिरस्ति ; अतः फलसाधनतातिरिक्तकार्यत्वबोधात्प्रवृत्तिर्ममेति' देवदत्तोऽपि तदवगमादेव प्रवर्तते इति कल्पयति ' इति । ' ननु न लोके कार्याभिधायिता लिङादेरस्तीत्याह—आचार्यचोदितः करोमीतिहि दर्शितम् । चोदितः प्रवर्तितः कार्यमवबोधित इत्युच्यते । नान्यथा चेतनः प्रवर्तयितुं शक्यते यतः ' इति च ॥

' पश्यतश्श्वेतमारूपम् ' इत्यत्र न्यायरत्नाकरेऽपि ' श्वेतं कञ्चित्पदार्थमव्यक्तं गवाश्वादिरूपं दूरादुपलभमानस्तस्मिन्नेव प्रदेशे हेषया खुरशब्देन चाश्वजातिं गतिंचानुमिमानोऽनुपलब्ध्या च तस्मिन्प्रदेशे वस्त्वन्तराणामभावमवगच्छन् गुणजातिक्रियाणामर्थान्तरान्वयमपेक्षमाणानां योग्यानामर्थापत्त्या परस्परं संसर्गं बुध्यते श्वेतोऽश्वो धावतीति, तदिह क्लृप्तं तावत्पदार्थानामाकाङ्क्षासन्निधियोग्यतावशेन सामान्यतोऽन्वयबोधनं, तद्विशेषनियमस्त्वर्थापत्त्या ' गामानय ' इत्यादौ त्वेकवाक्यतयैव तन्नियम इत्येतावत्कल्प्यं, वाक्यंत्वत्यन्ताऽक्लृप्तमेव सर्वं कल्प्यमिति वाक्याग्रहणं नोत्तरमिति ' इत्यत्र शाब्दबोधो नैवाभ्युपगतः । तद्दृष्टान्तेन वाक्यश्रवणसमनन्तरं शाब्दबोधेऽपि पदार्थानामाकाङ्क्षाऽऽदिवशेन सामान्यतोऽन्वयबोधनमेवाङ्गीकृतम् । एतन्मूलभूतशाबरभाष्ये अन्विताभिधानसिद्ध्या कार्यान्विताभिधानं सिद्ध्यतीति बृहत्यामुक्तम् । अत्राभिहितान्वय वादो युक्तः अन्विताभिधानं युक्तं वा इति विचारेणार्थनिष्कर्षःकार्यः ॥

नवीनानामपि—' शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते । अतोऽन्विताभिधायित्वं गौरवं कल्प्यतेऽन्यथा ॥ ' इत्यनुव्याख्यानोक्त्या अन्विताभिताभिधानपक्ष एव संमतः । अत्र च अन्विते प्राथमिकी व्युत्पत्तिः अन्वयस्यानभिधाने तस्य शाब्दत्वानुपपत्तिः, अन्वयांशे शक्त्यभावे अन्वयस्य शक्तेनसह प्रत्यासत्त्यनुपपत्तिः व्यक्तिप्रतिबन्दी अन्वयसामान्ये शक्त्यभावे विशेषे जिज्ञासानुपपत्तिः अन्यत्रान्विते शक्तेः क्लृप्तत्वम् ' इति युक्तिषट्केन अन्विताभिधानं तर्कताण्डवे साधितम् । अत्र वृद्धव्यवहारमूलकप्राथमिकव्युत्पत्तिरेवान्विते शक्तिसाधिकेति स्फुटम् ॥

यद्यपि ' यत्र तावदेकं पदमेकश्च पदार्थः तत्रान्विताभिधानपक्षे पदस्य द्वे शक्ती कल्प्ये अभिहितान्वयपक्षेऽपि पदस्यैका पदार्थस्यचैकेति द्वे एवेति तुल्यम् । यत्राप्येकशब्दस्यानेकेऽर्था वाच्याः यथाऽक्षशब्दस्य विदेवनादित्रयं तत्राप्यन्विताभिधायित्वम् । प्रत्यर्थं शब्दस्य शक्तिद्वयकल्पनात् षट्शक्तयः अभिहितान्वयेऽपि शब्दस्य प्रत्यर्थमेकैकशक्तिकल्पनात्तिस्रः

## गूढार्थसंग्रहः

पदार्थानां च त्रयाणां तिस्र इति षडेवेति तुल्यमेव। यत्रतु बहवश्शब्दा एकस्यार्थस्य वाचका यथा पाणिकरहस्तशब्दास्तत्रान्विताभिधानपक्षे प्रतिशब्दं शक्तिद्वयकल्पनात् षट्शक्तयः स्युः अभिहितान्वयपक्षेतु त्रयाणां शब्दानामर्थस्य चैकैकशक्तिकल्पनाच्चतस्र इति लाघवम्। एवं चतुःपंचषडादिषु शक्त्युपचयो दर्शयितव्यः। चतुर्षु त्र्याधिक्यं पञ्चसु चतुष्काधिक्यं षट्सु पञ्चकाधिक्यमित्यूहनीयम्। शक्तिकल्पनातुल्यत्वेऽपि चानन्तर्यात्पदार्थानामेव वाक्यार्थनिमित्तत्वं युक्तं न पदानामित्युक्तम्। तस्मादभिहितान्वय एव ज्यायान्। तथा च सूत्रकारः अर्थस्य तन्निमित्तत्वादिति व्यक्तमेव पदार्थनिमित्तकत्वं वाक्यार्थस्य दर्शयति। भाष्यकारोऽपिहि अमूनि पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीं पदार्थाअभिहितास्सन्तः वाक्यार्थमवबोधयन्तीत्याह—यत्त्वस्य व्याख्यानं क्रियते व्यतिषक्ताभिधायिपदं न व्यतिषङ्गाभिधायि व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्येति। तस्य तावदयमर्थः यथैवाकृत्या शब्देनाभिधीयमानयासह प्रतीयमाना व्यक्तिः शब्दजप्रतीतिगोचराऽप्याकृतिगम्येत्युच्यते, तत्र आकृतिप्रत्ययोहि व्यक्तिप्रत्ययस्य निमित्तमिति नहि आकृतिमात्रं शब्देनावगम्यते तथा व्यक्तिरपीति युक्तम्। केवलाया जातेः प्रत्येतुमशक्यत्वात्। स्वभावः खल्वेषावाकृतेर्यदसौ नान्तरेण व्यक्तिं प्रतीतिमारोढुं क्षमते रूपंहि सा व्यक्तेः नच रूपिशून्या रूप बुद्धिरस्ति, यदि स्यात् रूपितैव न स्यात्। तस्मात्सहव्यक्त्यैव जातिः प्रतीयते अथचाकृतिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युच्यते तत्कस्य हेतोः शब्दोहि स्वशक्त्या जातिमेवाभिधत्ते तस्यास्तु व्यक्तिमन्तरेण प्रत्याययितुमशक्यत्वाद्व्यक्तिमपि प्रत्याययति। तेन स्वाभाविकं शब्दस्याकृतिप्रत्यायकत्वं तन्निमित्तंतु व्यक्तिप्रत्यायकत्वमिति आकृतिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युच्यते नतु शब्देन प्रथममवगताऽऽकृतिः पश्चाद्व्यक्तिमवबोधयतीति। तथाऽन्विताभिधायिना शब्देनान्वयमन्तरेणान्वितस्य बोधयितुमशक्यत्वात् अन्वयोऽवबोध्यमानः पदार्थनिमित्तक इत्युच्यते। भाष्ये च पदार्थशब्देनान्वित इत्युच्यते वाक्यार्थशब्देनान्वयः पदार्था वाक्यार्थमवबोधयन्ति अन्विता अन्वयमवबोधयन्तीत्यर्थः। अन्वितप्रतिपादकत्वनिमित्तमन्वयप्रतिपादकत्वमिति यावदिति। 'सेयं क्लिष्टेन मार्गेण ग्रन्थव्याख्या न शोभते। पदार्थानांहि वाक्यार्थे स्पष्टोक्ताऽत्र निमित्तता॥ यद्यन्विताभिधायित्वं पदानां युक्तिभिर्दृढम्। क्लिष्टेनापि प्रकारेण ग्रन्थव्याख्या ततो भवेत्॥ पदैरभिहितास्स्वार्था वाक्यार्थस्यावबोधकाः। प्रसाधिता यदा युक्त्या तदा नैषोपपद्यते॥ अन्वितप्रतिपत्तेश्च निमित्तं पूर्वपक्षिणा। आक्षिप्तं तेन तन्मूलं भाष्येणानेन कथ्यते॥ अभ्युपेत्यान्विते मूलं यदि स्यात्पूर्वपक्षिणा। आक्षिप्तमन्वये मूलं समाधीयेत तत्त्वतः॥ नत्वेतदस्ति तेनेदं व्यख्यानं नोपपद्यते। यत्तु व्यक्तिवदित्युक्तं तदयुक्तं न शब्दतः॥ व्यक्तिप्रतीतिरस्माकं जातिरेवतु शब्दतः। प्रथमावगता पश्चाद्व्यक्तिं यां काञ्चिदाक्षिपेत्॥' इति। 'ननु यथा जातिर्न क्वचिदपि व्यक्तिविकलाऽवगता तथा पदार्था अपि न व्यतिषङ्गविकलाः क्वचिदप्युपलभ्यन्ते अन्ततोऽस्त्यर्थेनापि सर्वत्र सर्वपदार्थानामन्वितत्वम्। तस्याप्यपर्यवसानादेव सिद्धेर्नाभिधेयत्वमिति। सत्यम्; अन्वयमात्रमपर्यवसानाद्गम्येत तद्विशेषस्तु नान्तरेणाभिधानं शाब्दीं प्रतीतिमारोहति तस्मादन्विताभिधायित्वे शब्दस्य शक्तिकल्पनागौरवात्स्वरूपमात्रमभिधेयम्। कथं तर्हि भाष्यकारेण प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहेति प्रत्ययस्यान्विताभिधायित्वमुच्यते। भवन्मते वा कथं सर्वशब्दानामन्विताभिधायित्वेसति विशेषेण तत्प्रत्ययस्य कथ्यते तेन ग्रन्थानुगुण्याच्छब्दान्तराणां स्वरूपमात्राभिधायित्वं प्रत्ययस्य त्वन्विताभिधायित्वमिति व्यवस्थाप्यम्।' इति च न्यायरत्नमालायामुक्तम्॥

तथाऽपि 'तद्भूतानाम्' इत्यादिसूत्रभाष्यतात्पर्यं श्लोकवार्तिके—'अवाचकत्वं वाक्यस्य तद्भूतानामितीरितम्। हेतुस्यात्तन्निमित्तत्वं मूलं वाऽर्थस्य कल्प्यते। पदार्थमूलकोह्येष न भ्रान्तिरिति गम्यताम्॥ (अधि.७.श्लो.३४१) साक्षा

## गूढार्थसंग्रहः

यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथाऽपि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥ (३४२) वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥ (३४३) प्रयोजनतयाचैषामर्थमिच्छन्ति भावनाम् । क्रियार्थेनेति तेनाह समाम्नायप्रयोजनम् ॥ ' इत्युक्तम् ॥

अत्र न्यायरत्नाकरः–' सूत्रमिदानीं व्याचष्टे अवाचकत्वमिति । येहि वाक्यमेव सभागं निर्भागं वा वाक्यार्थस्य वाचकमिति मन्यन्ते, येच निर्मूलमेव वाक्यार्थज्ञानं, तेषामुभयेषामपीदंसूत्रेण निराकरणम् । तत्र प्रथमं तावद्वाक्यस्य वाचकत्वनिराकरणं व्याचष्टे, लोकसिद्धेषु पदार्थेषु वर्तमानानां पदानामेव वाक्यार्थज्ञानोपायत्वान्न वाक्यस्य वाचकत्वमिति । अर्थस्य तन्निमित्तत्वादिति च तत्रैव हेतुरित्याह–हेतुरिति । पदार्थानामेव निमित्तत्वोपपत्तेः निष्प्रमाणं वाक्यवाचकत्वमिति । व्याख्यानान्तरमाह–मूलमिति । एतदेव विवृणोति पदार्थेति ।ननु यदि पदार्थेषु पदानि वर्तन्ते पदार्थाश्च वाक्यार्थस्य क्रियाया विशिष्टभावनाया निमित्तं, ततः कथं पदानां क्रियार्थेन समाम्नायः अतआह–साक्षादितिद्वयेन । पदार्थरूपस्य प्रमाणान्तरप्रतिपन्नत्वात् तन्मात्रप्रतिपादनं निष्फलम् । अतः पदार्थावसिताभिधाव्यपाराणामपि पदानां तत्रानवसिततात्पर्याणां वाक्यार्थावगतावेव तात्पर्यमिति युक्तं तेषां क्रियार्थेन समाम्नाय इति । ' नन्वेवमप्यनभिधेया भावना कथं वाक्यार्थ इत्युच्यते अतआह–प्रयोजनतयेति ' इति ॥

एवं ' न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानिनः । तन्मात्रावसितेष्वेषु पदार्थेभ्यस्स गम्यते ॥ २२९ ॥ अशाब्देऽपि वाक्यार्थे न पदार्थेष्वशाब्दता । वाक्यार्थस्येव नैतेषां निमित्तान्तरसम्भवः ॥ ' (२३०) इति श्लोकवार्तिकव्याख्यायां न्यायरत्नाकरे च ' माभून्निर्भागमेव वाक्यं सभागमेवतु भागप्रतिपादितपदार्थसंवित्सहायं तदन्वयरूपस्य वाक्यार्थस्य वाचकमस्त्वितिचेत्तत्राह–न विमुञ्चन्तीति । पदानामेव वाक्यार्थे सामर्थ्यान्न वाक्यस्य सामर्थ्यं कल्प्यमिति । कथमित्यत्राह–तन्मात्रेति । नास्ति पदानामेव सामर्थ्यमिति ' ' नन्वेवमवसितव्यापारेषु पदेषु पश्चात्पदार्थेभ्यो गम्यमानो वाक्यार्थोऽशाब्दः स्यादत आह–अशाब्दे इति । कथमित्याह–वाक्यार्थस्येति । सतितेषां शाब्दत्वेन द्वारेणास्ति वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वम् । तथा च तत्परत्वाच्च शब्दानां शाब्दत्वं सिद्ध्यति, वाक्यार्थेहि पदानां तात्पर्यं न पदार्थेषु तेषां प्रमाणान्तरसिद्धत्वात् । अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितः, तथाऽपि तात्पर्यव्यापृतेरपर्यवसितायाः वाक्यार्थपर्यन्तत्वात्तात्पर्ये शब्दस्य प्रामाण्यात् सिद्ध्यति शब्दे प्रमेयतया वाक्यार्थस्य शाब्दत्वमिति ' इत्युक्तम् ॥ अत्र पदानां पदार्थोपस्थितिद्वारा कारणत्वं, अस्य ' तद्भूतानाम् ' इति सूत्रतात्पर्यविषयत्वं च स्पष्टम् । अयमर्थः बृहत्यामौत्पत्तिकसूत्रे तद्व्याख्यायां ऋजुविमलायां च स्पष्टः । तद्भूताधिकरणभाष्ये ' सिद्धवदुपदेशात् यदि संबन्धुरभावात् नियोगतो नार्थाउपलभ्येरन् ततोऽर्थापत्त्यां संबन्धारमवगच्छामः । अस्तित्वन्यःप्रकारः वृद्धानां स्वार्थेन संव्यवहारमाणानां उपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते । तेऽपि वृद्धा यदा बाला आसन् तदा अन्येभ्यो वृद्धेभ्यस्तेऽप्यन्येभ्य इति नास्त्यादिरित्येवं वा भवेत् । अथवा न कश्चिदेकोऽपि शब्दस्यार्थेन संबन्ध आसीत् अथ केनचित्सम्बन्धाःप्रवर्तिता इति । अत्र वृद्धव्यवहारेसति नार्थादापद्यते संबन्धस्य कर्ता, अपिच व्यवहारवादिनः प्रत्यक्षमुपदिशन्ति कल्पयन्ति इतरे संबन्धारं नचप्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी तस्मात्संबन्धुरभावः इत्युक्तम् ॥

अत्र वार्तिके– पदार्थप्रतिपत्तिद्वारा पदानां वाक्यार्थबोधजनकत्वं तद्भूताधिकरणे विवक्षितमिति स्फुटम् । औत्पात्तिकसूत्रे बृहत्यां तथाऽयं ग्रन्थो वर्णनीयः । सतु तद्भूताधिकरणे स्वयमेव भाष्यकारैः वर्ण्यत इत्युपरम्यते ' इत्युक्तम् । अत्र ऋजुविमला–' संबन्धस्य औत्पत्तिकतासाधनं वृद्धव्यवहारस्यानादिता, सतु तद्भूताधिकरणे स्वयमेव भाष्यकारैर्वर्णितः पदा

## श्रीभाष्यम्

**शब्दस्य प्रवर्तकार्थावबोधित्वमवगतमिति सर्वपदानां कार्यपरत्वेन सर्वैःपदैः कार्यस्यैव विशिष्टस्य प्रतिपादनान्नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः। इष्टसाधनताबुद्धिस्तु**

## श्रुतप्रकाशिका

प्रवृत्तेश्च व्याप्तिबलेन प्रवर्तकस्य च कार्यरूपत्वात्सर्वैः पदैः कार्यमेव विशिष्टं प्रतिपाद्यते। तस्मान्नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः अपितु विशिष्टकार्यांशविशेषे पदशक्तिनिश्चय इत्यर्थः॥ **ननु** कार्यमेव प्रवर्तकंचेत् प्रवर्तकस्य शब्दार्थत्वात्सर्वशब्दानां कार्यपरत्वं स्यात्। तन्न; इष्टसाधनताबुद्धेः प्रवर्तकत्वादिति भाट्टोक्तमर्थमाशङ्क्याह— **इष्टसाधनतेति**।

## गूढार्थसंग्रहः

र्थप्रतिपादनद्वारेणैव पदानां वाक्यार्थप्रतिपत्तिहेतुत्वमिति वदता' इति। अस्मिन्नर्थे भट्टप्रभाकरयोरेकएवाभिप्रायः। 'तद्भूतानां क्रियार्थेन समाम्नायः अर्थस्य तन्निमित्तत्वात्' इति सूत्रम्। अत्र वार्तिके 'प्रयोजनतयाचैषामर्थमिच्छन्ति भावनाम्। क्रियार्थेनेति तेनाह समाम्नायप्रयोजनम्॥' इति भावनाप्रयोजनमित्युक्तम्। बृहत्यांतु 'व्यवहारक्रियैवेयं क्रियेति मत्वा शाम्यतु भवान् अतस्सिद्धमर्थस्य तन्निमित्तत्वात् इति वैदिकानां सनिमित्तत्वम्' इति तेष्वेव पदार्थेष्विति अन्वितेष्वित्यर्थः अर्थस्य तन्निमित्तत्वादिति अन्विताभिधानेन कथितोऽस्यार्थः अर्थापत्तिर्नास्तीति। अत्र ऋजुविमला—'अर्थस्य तन्निमित्तत्वात् पदार्थस्यान्वितस्यान्वयनिमित्तत्वात् इत्यभिधानेन वर्णितोऽस्य ग्रन्थस्यार्थः अर्थापत्तिर्नास्तीत्येवंरूपः' इति

एवमर्थवर्णने औत्पत्तिकसूत्रे वृद्धव्यवहारेण संबन्धनिरूपणपरशाबरभाष्यमेव मूलम्। प्राथमिकव्युत्पत्तिर्यदा व्यवहारेण तदा अन्वित एव व्युत्पत्तिः। तेन 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः' इत्युक्तप्रकारेण शक्तिग्रहोऽपि प्राथमिकव्युत्पत्त्यनुसारेणान्वितएवेति तर्कताण्डवे व्यासतीर्थैरप्यङ्गीकृतम्। एतेन अन्विते शक्तिकल्पने मूलमिदमेवेति सिद्धम्। भावनया सप्रयोजनत्वोक्तिरपि न संभवति भावनायाः फलत्वानङ्गीकारात्, किंतु व्यवहारेणान्विते शक्त्या कार्यान्वितशक्तौ पर्यवसानेन कार्यस्य सुखरूपतया फलत्वं संभवतीति प्रभाकरस्याशयः। कार्यस्य सुखरूपत्वेन फलत्वं संभवतीत्याशयेनैवात्र **नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चय** इत्युक्तम्। अत्र मात्रशब्देनोक्ताभिप्रायस्सूचितः॥

(प्र.पं) वाक्यार्थमातृकायां 'पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यःप्रवर्तकः। प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम्॥ कर्तुरिष्टाभ्युपायेहि कर्तव्यमिति लोकधीः। विपरीतं(विपरीते)त्वकर्तव्यं इतितद्विषये ततः।' इति इष्टसाधनत्वस्य विध्यर्थत्ववादिमण्डनमिश्रकारिकाद्वयं विधिविवेकस्थमुदाहृत्य तत्र तावदिदमेव वक्तव्यम्। अतीतस्य वर्तमानस्यचेष्टसाधनताऽस्ति। नच तत्कार्यतयाऽवसीयते तेनान्या कार्यता अन्याचेष्टसाधनतेति। तथा च प्रवृत्तिरपि तन्मात्रावगमायत्ता न भवतीति। उपेक्ष्यैव तावत्तं फलसाधनताकार्यतयोर्भेदं विनिर्दिशति। फलसाधनता नाम यासा नैवच कार्यता' इत्युपक्रम्य 'अतः कर्मसु कार्यत्वावगमः फलसाधनताऽवगमनिबन्धन इति ज्ञापककोटिनिविष्टां फलसाधनतां कार्यताऽनुरुध्यते नत्वसौ तदात्मैव। तथाचासाधनस्यापि सुखस्यैवास्ति कार्यता। सुखंहि सर्वःकार्यतयाऽवैति। न तस्य फलसाधनतामपेक्षते। तेन साधनतोत्तीर्णकार्यताऽवगमेन मे प्रवृत्तिरिति निश्चित्य व्युत्पित्समानश्चैत्रं प्रवर्तमानं दृष्ट्वाऽनुमिनोति, चैत्रोऽपि कार्यबोधात्प्रवर्तत' इत्युक्तम्। तमिममर्थमभिप्रेत्याह—**इष्टसाधनताबुद्धिस्त्वित्यादिना**। मण्डनमतं पर्यालोचयिष्यते॥

## श्रीभाष्यम्

**कार्यबुद्धिद्वारेण प्रवृत्तिहेतुः, न स्वरूपेण ; अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्यनुपलब्धेः। इष्टोपायोहि मत्प्रयत्नादृते न सिद्ध्यति, अतो मत्कृतिसाध्य इति बुद्धिर्यावन्न जायते तावन्नप्रवर्तते। अतः कार्यबुद्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाच्यतया कार्यस्यैव वेदवेद्यत्वात् परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलाप्रतिपत्तेः 'अक्षय्यगँह्वै चातुर्मास्ययाजिनस्सुकृतं भवति' (आ.श्रौ.सू.८.अ) इत्यादिभिः कर्मणामेव स्थिरफलप्रतिपादनाच्च कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारम्भो न युक्त इति।**

## श्रुतप्रकाशिका

स्वप्रयोजनोपायः परेण साध्यतेचेत्तत्रापि न प्रवृत्तिरिति वर्तमानाया अपीष्टोपायताबुद्धेरप्रवर्तकत्वं दृष्टम्, अतः कार्यबुद्धिः प्रवृत्तिव्याप्येत्यर्थः। ननु कार्यबुद्धिरपि प्रवृत्तिं व्यभिचरति निर्धनस्य द्विजस्य यागकर्तव्यताबुद्धिसत्वेऽपि प्रवृत्त्यभावात्। नैवम्। मयैवाद्य साधयितुं शक्यमिति बुद्धिर्हि कार्यबुद्धिः न तस्याः प्रवृत्तिव्यभिचारः। निर्धनस्यीह नैवंविधा प्रवृत्तिः किंतु यागः कदाचित्कर्तव्यः अर्थादिलाभादनुष्ठानेसति फलप्राप्तिरस्तीति, अतो न दोषः॥

ततः किमित्यपेक्षायामुपपादितहेतुशरीरं वदन् शङ्काऽन्तरं च परिहरन् पूर्वपक्षं निगमयति। **अतइत्यादिना**। ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः। तत्र विशेष्यांशस्यानन्तस्थिरफलापातप्रतीतिरूपस्यासिद्धिरुक्ता, अत्र चोद्यमापादितं मन्त्रार्थवादेषूपासनाविधिशेषभूतेषु अनन्तास्थिरफलापातप्रतीतिसिद्धेः न विशेष्यांशासिद्धिरिति विशिष्टहेतुरिति। एतदाशङ्क्याह— **अक्षय्यंह्वा अयमिति**। अयमर्थः यदि मन्त्रार्थवादेषु अनन्तास्थिरफलप्रतीत्या ब्रह्मविचारारम्भः तर्हि पूर्वभागेऽपि— **'अक्षय्यगँह्वै चातुर्मास्ययाजिनस्सुकृतं भवति'** इत्यादिभिरनन्तस्थिरफलप्रतीत्याऽल्पास्थिरफलत्वनिर्णयरूपविशेषणांशासिद्धेर्ब्रह्मविचारारम्भो न युक्त इति। विशिष्टहेतौ विशेषणविशेष्ययो*रन्यतरांशासिद्ध्यभिप्रायेण कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुक इत्युक्तम्॥

## गूढार्थसङ्ग्रहः

'आत्मा ज्ञातव्य' इत्यत्र विधिर्न संभवति, अविद्यानिवृत्तेर्वृत्तिरूपतया तत्र ब्रह्मज्ञानस्य हेतुताया असम्भवेन प्रायश्चित्ततयाऽपि विधानासम्भवात् इति ब्रह्मसिद्ध्यादावेव मण्डनमिश्रेणोक्तम्। अथापि 'सर्वप्रत्ययवेद्येच ब्रह्मरूपे व्यवस्थिते' इति सिद्धिकाण्डे मण्डनमिश्रोक्तं न घटते। सर्वप्रत्ययेषु परमानन्दसंवेदनाभावात् ब्रह्मणः आनन्दरूपत्वस्यैवासिद्धेः। अतः प्राथमिकव्युत्पत्त्यनुसारेण सुखात्मककार्यपरत्वमेव सर्वेषां वेदवाक्यानामङ्गीकरणीयमिति प्रकरणपञ्चिकोक्तमेव युक्तमित्याशयः॥

**ब्रह्मविचारारम्भो न युक्तइति**। धर्माय जिज्ञासेतिवत् ब्रह्मणे जिज्ञासा इति विग्रहस्याविवक्षितत्वेऽपि प्रागुक्तदिशा ब्रह्मणः इच्छाविषयत्वेन फलत्वबोधनेन कार्यप्रतिकोटिभूतं ब्रह्मेति सिद्ध्या पुरुषार्थपर्यवसायित्वं संभवति, तेन प्रभाकरः पूर्वपक्षीति सूचितमिति प्रागुक्तम्। अत्र प्रभाकराभिप्रेतार्थौ द्वौ प्राथमिकव्युत्पत्त्यनुसारेण अन्विते शक्तिसिद्धौ कार्यान्वित एव शक्तिस्सिद्ध्यतीति वेदस्य कार्यपरत्वम् ; नतु सिद्धपरत्वम्। लोके सिद्धपरवाक्ये पदानां लाक्षणिकत्वमित्येकोऽर्थः। ब्रह्मणः आनन्दरूपत्वासम्भवेन विधिवाक्याधीनकार्यप्रतिपत्तेः कार्यस्य सुखरूपत्वेन पुरुषार्थत्वसिद्धिरिति अन्योऽर्थः। तत्र सिद्धे व्युत्पत्त्यभावे विषयाभावेन पुरुषार्थविचारस्यैवानवसरः। अतः व्युत्पत्तिसाधनमेव प्रथमतःकर्त-

## गूढार्थसंग्रहः

व्यम् । व्युत्पत्तिसाधनेन वेदान्तानां सिद्धपरत्वसिद्धौ अनन्तरं पुरुषार्थपर्यवसायित्वसाधनं युक्तम् । विधिवाक्याधीन-फलस्य कर्मवाक्येषु प्रतीतस्य नित्यत्वं स्फुटं प्रतिपादितमिति उपनिषदां कर्मकर्तृस्तावकत्वेन कर्मविचारान्तःपातित्वमेव ब्रह्मविचारस्य युक्तमिति कर्मविचारानन्तरं पृथक् सिद्धब्रह्मविचारो न कर्तव्य इति पूर्वपक्षः सिद्धान्तश्च प्रथमसूत्रे विवक्षितः ॥

परेतु इत्थं वदन्ति । विषयप्रयोजनयोरभावाच्छास्त्रमनारम्भणीयम इति पूर्वपक्षः । तत्र ब्रह्मात्मैक्यमेव विषयःप्रयोजनं च । स्थूलोऽहं कर्ता इत्यादिप्रत्यक्षसिद्धस्य जीवस्य ब्रह्मैक्यं प्रत्यक्षविरोधेन श्रुतिभिः नैव बोधयितुं शक्यमिति जीवस्य ब्रह्मैक्यासम्भवात् । अहमित्यस्याध्यासरूपतया तत्प्रत्यक्षे श्रुतिबाधासम्भवात् भेदनिषेधकश्रुतिभिः ब्रह्मनिर्विशेषत्वसिद्धौ जीवब्रह्मैक्यं संभवत्येवेति सिद्धान्त इति । अत्र सूत्रघटकपदैः इमौ पूर्वपक्षसिद्धान्तौ नप्रतीयेते । ब्रह्मशब्देन निरवग्रह-महद्वाचिना दोषशून्यगुणभूयिष्ठबोधनेन अनन्तत्वगुणघटकवस्तुपरिच्छेदराहित्यस्य जीवब्रह्मभेदे सम्भवेन तद्लाभइति विवरणाद्युक्तिर्नघटत इति पूर्वमेव निरूपितम् । अहमित्यस्याध्यासरूपता शबरादिभिरेव निरस्तेति प्राङ्निरूपितम् भावप्रकाशे द्वितीयसंपुटे च एतद्विस्तरोऽवगन्तव्यः । अतः अहमर्थस्य शुद्धजीवत्वेन कर्तृत्वभोक्तृत्वादेस्तात्विकत्वेन प्रत्यक्षविरोधादिभिः जीवब्रह्मैक्यं न सम्भवतीत्यपि पूर्वमेव निरूपितम् । एवं च कूटस्थस्य नित्यत्वं तदितरस्यानित्यत्वमिति नित्यानित्यवस्तुविवेकाद्यानन्तर्यपरत्वमथशब्दस्य न संभवति तथा श्रुत्यादितोऽप्रतिपत्तेः । 'ब्रह्मविदाप्नोति परम्' इत्यादिभिः ब्रह्मज्ञानस्य ब्रह्मप्राप्तिफलकत्वप्रतिपादनेऽपि परसम्मतब्रह्मज्ञानस्य नित्यफलकत्वमपि न संभवति । परसम्मतफलस्य नित्यत्वासंभवस्य प्रागेवाविदनात् । एवं प्राक्तनग्रन्थैनैव पूर्वपक्षसिद्धान्तौ न घटेते अत्रानुक्त्वा चतुर्थेऽधिकरणे सिद्धे व्युत्पत्तिसमर्थनोक्तिरपि न मनोहरा ॥

नवीनास्तु अद्वैतिमतप्रतिकोटितया पूर्वपक्षं रचयन्ति । जीवस्य स्वप्रकाशत्वेन ब्रह्माभिन्नत्वेन सन्देहाभावेन तत्र प्रमाणैः ब्रह्मभेदासंभवात् इत्यादिःपूर्वपक्षः । 'बृहन्तोह्यस्मिन्गुणाः' इति गुणपूर्त्यभिधायिना ब्रह्मशब्देनाल्पगुणत्वेन प्रमिते जीवे ब्रह्माभेदासंभवेन जीवभिन्नब्रह्मरूपविषयस्सिद्धयति । अथेत्यस्य योग्यानन्तर्यमेवार्थः । तच्चाधिकारानन्तर्यम् । अधिकारश्च शमदमादिः, अत इत्यस्य आत् विष्णोः विष्णुप्रसादाद्वा इत्यर्थः । विचारस्य परम्परया फलभूतमोक्षस्य ब्रह्मप्रसादाधीनत्वेन तेनापि जीवभेदस्य ब्रह्मणि सिद्धया ब्रह्मविचारःकर्तव्य इति सिद्धान्तः । अत्र वेदोत्तरभागोपनिषनिषदारम्भे 'एष पन्था एतत्कर्म एतद्ब्रह्म' इत्यत्र वेदपूर्वोत्तरभागप्रतिपाद्यार्थयोरेव विवक्षा उचिता । ब्रह्मणः सर्ववेदार्थत्वं पूर्वभागप्रतिपाद्यकर्माराध्यतयाऽपि निर्वहतीति पूर्वभागस्थवाक्यघटकसर्वपदानां ब्रह्मार्थकत्वप्रयासोऽनपेक्षितः । तेन कर्मशब्दस्य पूर्वभागभूत 'अथातो धर्मजिज्ञासा' इति सूत्रविवक्षितधर्मपरत्वमेव युक्तम् । नतु नवीनविवक्षितं ब्रह्मपरत्वम् । एवं च तच्छ्रुत्यनुसारेण पूर्वोत्तरमीमांसाऽऽरम्भसूत्रयोः अप्रधानप्रधानार्थपरयोः शिष्यगुरुकर्तृकयोः तात्पर्य पर्यालोचने 'अथातो ब्रह्मजिज्ञासा' इत्यत्र अथशब्दस्य पूर्वभागप्रतिपाद्यकर्मविचारानन्तर्यपरत्वमेव युक्तम । एवमतश्शब्दस्यापि प्रागुपपादितदिशा कस्यापि पदस्य वैयर्थ्यविरहेण प्राग्भाष्योक्तार्थ एव युक्तः । सूत्रेषु अतश्शब्दानां बहूनां सत्त्वेन तेषु विष्णुवाचकत्वस्य कुत्राप्यभावेन अत्र विष्णुवाचकत्वमस्वरसम् । विष्णुप्रसादस्याप्येतच्छब्देन परामर्शो न स्वरसः । जन्माद्यधिकरणे मोक्षदत्वस्य विवक्षाऽङ्गीकारेऽपि तत्रान्येषामप्यर्थानां विवक्षितत्वेन मोक्षदत्वमात्रपरामर्शोऽपि न स्वरसः । अद्वैतिमते शुद्धचित एव स्वप्रकाशत्वेन सुषुप्तौ तस्यैव भानाभ्युपगमेन जीवस्य स्वप्रकाशत्वादेरनङ्गीकारेण जीवब्रह्मणोरभेदवादिमतेन जीवब्रह्माभेदेन जीवान्यब्रह्मसिद्धिर्न घटत इति पूर्वपक्षो न युज्यते । जीवब्रह्माभेदस्य परिणा-

## श्रीभाष्यम्

**अत्राभिधीयते निखिललोकविदितशब्दार्थसम्बन्धावधारणप्रकारमपनुद्य सर्वशब्दानामलौकिकैकार्थावबोधित्वावधारणं प्रामाणिकाः न बहुमन्यते। एवंकिल बालाश्शब्दार्थसम्बन्धमवधारयन्ति मातापितृप्रभृतिभिरम्बातातमातुलादीन् शशिपशुनरमृगपक्षिसर्पादींश्चैनमवेहि, इमंचावधारयेत्यभिप्रायेणाङ्गुल्यानिर्दिश्य निर्दिश्य तैस्तैश्शब्दैस्तेषुतेष्वर्थेषु बहुशश्शिक्षिताश्शनैश्शनैस्तैस्तैरेव शब्दैस्तेषुतेष्वर्थेषु स्वात्मनां बुध्युत्पत्तिं दृष्ट्वा**

## श्रुतप्रकाशिका

**अत्राभिधीयतइति**। अस्मिन्पूर्वपक्षे सूत्रकारैः परिहारोभिधीयत इत्यर्थः। **निखिलेति**। अन्यथा वदता भवताऽपि वक्ष्यमाणप्रकारेणैव शब्दव्युत्पत्तिः कृतेति निखिललोकशब्दस्य भावः। प्रामाणिकाः * प्रमाणेनार्थं स्वीकुर्वन्त इत्यर्थः। कथं संबन्धावधारणमित्यत्राह—**एवंकिलेति**। **मातापितृप्रभृतिभिरिति**। अयंभावः यद्वा स्वयमेव बालो व्युत्पत्तिक्षमो भवति तदानीमप्येनं वृद्धैरुपाध्यायादिभिः व्युत्पादयितुं श्रद्धाना मातापित्रादयो नहि व्युत्पत्त्यक्षमदशायामुपेक्षन्ते, किंतु अक्षराशिक्षाद्युपयोगिनीश्शिक्षाः प्रथमत एव स्वबुद्धिपूर्वकं कुर्वन्तीति। अम्बा तातप्रभृतिस्सप्रतियोगिकश्शब्दगणः शशि पशुप्रभृतिरप्रतियोगिकश्शब्दगण इति विभागः। असम्बन्धिशब्दव्युत्पत्तेः पूर्वमेव अम्बाऽऽदिशब्दव्युत्पत्तिर्दृश्यते सा च त्वदभिमतशब्दार्थसम्बन्धग्रहणेतु नोपपद्यते। नहि कश्चित्प्रति पिताऽन्यस्यापि पिता भवति। तस्माद्व्युत्पित्सोर्मातापित्रादिषु अन्यैस्तत्तच्छब्दप्रयोगासंभवात् प्रथमममम्बादिशब्दार्थव्युत्पत्तिः त्वन्मते न संभवति अतो बुद्धिपूर्विकैव प्रथमव्युत्पत्तिरिति ज्ञापनार्थं कोटिद्वयं शब्देषु दर्शितम्। यादृच्छिकवृद्धव्यवहारेणानन्तशब्दव्युत्पत्त्यनुपपत्तिश्च। सर्वलोकसंप्रतिपन्नव्युत्पत्तिप्रकारापह्नवश्च। **एनमवेहि इमंचावधारयेति**। * एनं बोधकशब्दमिमं बोध्यमर्थं चावेहीत्यर्थः। **बहुशइति**। यावदङ्गुलिनिर्देशशब्दप्रयोगसाहचर्यदर्शनजनितवासनाभूयस्त्वोदयेन स्वयमेव तत्तदर्थेषु तत्तच्छब्दान् प्रयोक्तुमर्थ-

## गूढार्थसंग्रहः

मविवर्ताद्वैत्युभयसम्मतत्वेन परिणामाद्वैतिमते विजातीयस्वगतभेदनिषेधाभावेन तद्व्यावृत्तिरपि क्लिष्टा। अतः 'कार्यता च न काचित्स्यादिष्टसाधनतां विना' इत्यादिना अनुव्याख्याने विधिविवेके मण्डनोक्तरीत्यैव लिङाद्यर्थस्य निरूपणेन प्राभाकरमतनिरसनेन कार्यार्थ एव व्युत्पत्तिः, नतु सिद्धार्थे इति प्रथमसूत्रतात्पर्यस्य वर्णनेन तदनुसारेण अतश्शब्दस्य सुधायां सिद्धे व्युत्पत्तिसमर्थनात्मकत्वस्याङ्गीकृतत्वेन तद्रीत्या अधिकरणपूर्वपक्षसिद्धान्ताविव संभावनामर्हतः। कार्यपरत्वाङ्गीकारेऽपि जीवान्यब्रह्मासिद्धिः प्रकरणपञ्चिकायामेवोक्ता। एवं पूर्वपक्षस्य 'अतः' 'ब्रह्म' इतिशब्दव्यावर्त्यत्वमपि संभवति। इत्थमेवाशङ्क्य चन्द्रिकाप्रकाशे 'एवंतर्हि जीवस्य देहादिभिन्नत्वेन विचार्यत्वासम्भवेन शास्त्रानारम्भासिद्धेश्चोक्तत्वात्' इति समाधानं कथं घटते ? जीवान्यब्रह्मविचारःखलु सूत्रे विवक्षितः, नतु जीवविचारः। तत्राप्यथशब्दस्याधिकारानन्तर्यार्थकत्वे अतश्शब्देन सिद्धे व्युत्पत्तिपरामर्शोऽपि न संभवति। सिद्धान्तेतूपपत्तिः पूर्वमेव निरूपिता। अतश्शब्दे ब्रह्मज्ञानविषयकानन्तास्थिरफलसाधनत्वप्रकारकापातप्रतीतेः संभावितप्रामाण्यायाः विवक्षितत्वेन साङ्गाध्ययनानन्तरं ब्रह्मणस्सिद्धत्वस्य प्रतिपन्नतया न सूत्रघटकपदद्वयेन पूर्वपक्षसिद्धान्तसूचनमेव युक्तमिति भगवदुक्तरीत्या पूर्वपक्षएवयुक्तः॥

व्यवहारानुरोधेन प्राथमिकव्युत्पत्तिरिति प्रभाकरोक्तमङ्गीकृत्य व्यवहारानुरोधेन सिद्धे व्युत्पत्तिस्सिद्ध्यतीत्याह— **निखिललोकविदितशब्दार्थसम्बन्धइति**॥

श्रीभाष्यम्

**शब्दार्थयोस्सम्बन्धान्तरादर्शनात् संकेतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति। पुनश्च व्युत्पन्नेतरशब्देष्वस्य शब्दस्यायमर्थ इति**

श्रुतप्रकाशिका

मात्रदर्शनेन शब्दं स्मर्तुं शब्दमात्रस्मरणेन अर्थं स्मर्तुं च क्षमा भवन्ति तावदित्यर्थः। शिक्षिताः तैस्तैश्शब्दैस्तेषु तेष्वर्थेषूत्पादितज्ञानाः ॥

एवं तर्ह्यङ्गुळ्यानिर्दिष्टेष्वर्थेषु * अमी शब्दास्सङ्केतिता इति मन्येरन्निति चेत्। यद्वा लिङ्गवज्जन्यजनकभावादिसंबन्धान्तराद्बोधका इति मन्येरन्निति चेत्तत्राह— **सम्बन्धान्तरादर्शनात्सङ्केतयितृपुरुषाज्ञानाच्चेति**। अयमर्थः याहच्छिकव्युत्पत्तावपि तुल्यञ्चोद्यम्। शब्दप्रयोगानन्तरं प्रयोज्यप्रवृत्तिं दृष्टवतो व्युत्पित्सोरियं शङ्का भवति एतच्छब्दप्रयोगानन्तरमस्य प्रवृत्तिः किं जन्यजनकभावादिसंबन्धात् उत सङ्केतिकादिति? तत्र संबन्धान्तरशङ्कात्वदर्शनादेव न जायतइति चेत् बुद्धिपूर्वकव्युत्पत्तावप्ययं परिहारस्समानः। सङ्केतबुध्युत्पत्तिश्च नोपपद्यते। किमेतेऽस्मन्मातापित्रादयस्सङ्केतयन्ति उत पूर्वमेव कश्चित्सङ्केतितवानिति। न तावत्प्रथमपक्षः अनेकैः पुरुषैस्तेष्वेवार्थेषु एकरूपशब्दप्रयोगदर्शनात्। नापि द्वितीयः अनेन पूर्वं सङ्केतिताश्शब्दा इति सङ्केतयितुः पुरुषस्याज्ञानादिति परिहारस्त्वयाऽपि वक्तव्यः। सोऽस्माकमपि समानः। सर्वप्रमाणानां बोधकत्वे अविशिष्टेऽपि प्रत्यक्षस्य वैषम्यं सत्तया ज्ञानजनकत्वम्। अनुमानागमौतु ज्ञाततया ज्ञापकौ तत्रानुमानं जन्यजनकभावादिसंबन्धान्तरज्ञानेन बोध्यविषयबोधजनकं शब्दस्तु बोध्यबोधकभावरूपसम्बन्धज्ञानादेव बोध्यं बोधयति

एवं संबन्धान्तरशङ्का सङ्केतितत्वशङ्का च निरस्ता। **सम्बन्धान्तराभावात्सङ्केतयितृपुरुषाज्ञानाच्च** बोध्यबोधकभावएव संबन्ध इति बालैर्ज्ञातुं न शक्यमिति चेत् तत्त्वापि तुल्यम्। किंच शब्दोच्चारणानन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा प्रवृत्तेश्च कार्यबुद्धिपूर्वकत्वमनुमाय यदनन्तरं यद्भवति तत्तस्य कारणमिति न्यायाच्छब्दोच्चारणेन कार्यबुद्धिरस्य जातेति कार्यरूपश्शब्दार्थ इति बोद्धुं बालैरतीव न शक्यते, अशक्यत्वं दृश्यते च। नहि बाला उक्तप्रकारेण कार्यार्थपरत्वं शब्दस्य निश्चिन्वन्ति। अतो बालैर्दुरवगमत्वचोद्यं भवत्पक्ष एवातीव प्रसजति। कालपरिपाकात् ज्ञायत इति चेत् अयं परिहारोऽस्मत्पक्षे सुसङ्गत इति ॥

**पुनश्चेति**। अस्य शब्दस्यायमर्थ इति व्युत्पत्तिश्चेद*न्विताभिधानभङ्गप्रसङ्ग इति चेन्न * प्रातिस्विकव्युत्पत्तेरस्समुदायज्ञानार्थत्वात्। नहि काव्यादितः वाक्यार्थज्ञानोपयोगित्वेन संपाद्यमानं पदार्थज्ञानं वाक्यार्थज्ञानविरोधि, नह्यक्षराशिक्षाच्च पदार्थज्ञानविरोधिनी एवं तैस्तैःपदैःपरस्परान्वितस्वार्थाभिधानव्युत्पत्तेः प्रतिपदमर्थव्युत्पत्तिर्न विरोधिनी अपितूपयुक्तैव। यथा भवत्पक्षे आवापोद्वापरूपेण प्रतिपदार्थव्युत्पत्तिर्वाक्यार्थज्ञानोपयोगित्वान्नविरोधिनी तद्वत्। भवत्पक्षेतु प्रातिस्विकव्युत्पत्तिःपश्चाद्भाविनी * अत्रतु पूर्वभाविनीति विशेषः, वाक्यार्थज्ञानोपयोगित्वं समानम्। शब्देनान्वयपर्यन्ताभिधानं ह्यन्विताभिधानम् प्रातिस्विकव्युत्पत्तावपि तत्रैव व्युत्पत्तिः क्रियत इति न विरोधः ॥

**अभिहितान्वयपक्षे** अर्थानां परस्परान्वयबोधनयोग्यत्वं शब्दानां स्वार्थबोधनशक्तिः शब्दैरपि परस्परान्वययोग्यत्वेनार्थाभिधानमिति त्रयमपि कल्पनीयम् अन्विताभिधानपक्षेतु शब्दानां स्वार्थबोधनशक्तेरेवान्वयपर्यन्तत्वाभ्युपगमात्कल्पनालाघवमस्तीति स एवात्र स्वीकृतः। अन्विताभिधानभङ्गप्रसङ्गश्च परिहृतः। अस्य शब्दस्यायमर्थ इत्यत्रापि अयमर्थइति * बुध्यस्वेति ह्युक्तं भवति तस्मात्कार्यार्थ एव व्युत्पत्तिरिति चेत्–एवंतर्हि याहच्छिकव्युत्पत्तावपि सिद्धवस्तुन्येव व्युत्पत्तिस्स्यात् प्रयोज्यवृद्धस्य कार्यबुद्धिर्जातेतिहि व्युत्पित्सुर्जानाति। शब्दबोध्यत्वं कार्यस्यैव न बुद्धेः बुद्धिर्हि शब्दजन्या नतु

### श्रीभाष्यम्

**पूर्ववृद्धैश्शिक्षितास्सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते। प्रकारान्तरेणापि शब्दार्थसम्बन्धावधारणं सुशकम्। केनचित्पुरुषेण हस्तचेष्टादिना पिता ते सुखमास्त इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित् तज्ज्ञापने प्रवृत्तः पिता ते सुखमास्त इति शब्दं प्रयुङ्क्ते पार्श्वस्थोऽन्योव्युत्पित्सुर्मूकवच्चेष्टाविशेषज्ञस्तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वाऽनुगतस्तज्ज्ञापनाय प्रयुक्तमिमंशब्दं श्रुत्वाऽयंशब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोतीति कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः।**

### श्रुतप्रकाशिका

शब्दवाच्येतिचेदत्रापि शब्दबोध्यत्वं तत्तत्पदार्थस्यैव न बुद्धेः। नहि घटबुद्धिः घटशब्दवाच्या अपितु तज्जन्या वाच्यस्तु घटएवेति तुल्यः परिहार इत्यभिप्रेत्य एनमवेहि इमंचावधारयेत्यभिप्रायेणाङ्गुल्यानिर्देश्येत्युक्तम् ॥

**तत्तदर्थावबोधिवाक्यजातंप्रयुञ्जतइति**। यादृच्छिकव्युत्पत्तौ कतिपयशब्दानां कार्यार्थपरत्वेन व्युत्पत्तिदर्शनात् व्युत्पादकाःपुरुषा अपि कार्यार्थ एव व्युत्पत्तिं कृतवन्तो गामानयेत्यादिवाक्यं प्रयुञ्जत इतिचेत् अनेकशब्दानां सिद्धवस्तुपरत्वेन व्युत्पत्तिदर्शनात् व्युत्पादकाः पुरुषाऽपि तथैव व्युत्पत्तिं कृत्वा तत्तदर्थविवक्षया शब्दान् प्रयुञ्जते व्युत्पत्तिदर्शनं प्रयोगदर्शनमपि ह्युभयत्राविशिष्टमितिभावः। एवं बुद्धिपूर्वकव्युत्पत्त्या शब्दानां सिद्धवस्तुपरत्वमुक्तं यादृच्छिकव्युत्पत्तावपि सिद्धार्थेऽपि व्युत्पत्तिरस्तीत्याह--**प्रकारान्तरेणापीति**। शब्दनिरपेक्षं तत्तदर्थज्ञानं चेष्टादिना संभवतीति दर्शयति। **मूकवदिति**। परोक्तयादृच्छिकव्युत्पत्तौ व्युत्पित्सुव्यतिरेकेण पुरुषद्वयापेक्षा गवाद्यपेक्षा च अस्यां तु व्युत्पित्सुव्यतिरेकेण पुरुषत्रयापेक्षेति वैषम्यम् ॥

किंच पुत्रस्ते जात इत्यादिवाक्यस्य गामानयेत्यादिवाक्यस्य च वैषम्यं दुरुपपादम्; कालत्रयवर्तिहर्षहेतुबाहुल्य संभवनयाहि पुत्रजन्मवाक्ये व्युत्पत्तेरशक्यत्वमुक्तम्। नन्न—सन्निहितं पुत्रजन्म दृष्ट्वा तज्ज्ञापनाय प्रवृत्ते पुरुषे ज्ञाते पश्चाच्च जातकर्मादौ दृष्टे ततःपूर्वमनुल्लसितमुखत्वादसम्भावितपुत्रजन्मविज्ञानस्य पुरुषस्यैतद्वाक्यश्रवणानन्तरभाविनो मुखविकासस्य अतीतागामिहर्षहेत्वन्तरश्रवणमूलत्वाशङ्काऽनुदयात्। नहि सन्निहितहेतुपरित्यागेन अदृष्टहेतुशङ्का धियमधिरोहति। सुलग्नसुखप्रसवादिहेत्वन्तरशङ्का स्यादितिचेत्, नैवम्। सुलग्नादिमात्रस्य हर्षहेतुत्वायोगात्। न खल्वन्यदीयपुत्रजन्माद्यनुबन्धिसुलग्नत्वादीनां हर्षहेतुत्वम्। अतः स्वपुत्रजन्मविशेषणीभूतानां सुलग्नत्वादीनामेव हर्षहेतुत्वम्, स्वपुत्रजन्मन्यज्ञाते सुलग्नत्वादीनां हर्षहेतुत्वायोगादस्य वाक्यस्य स्वपुत्रजन्मज्ञापकत्वमवश्यं विदितं स्यात् ॥ प्रागेव पुत्रजन्मज्ञानसंभवादस्य वाक्यस्य सुलग्नत्वादिपरत्वशङ्का स्यादितिचेन्नैवम्। ततःपूर्वं मुखविकासविरहेण प्रागेव पुत्रजन्मज्ञानशङ्काऽनुदयात्। अतः पुत्रजन्मनस्सन्निहितत्वात्पूर्वं मुखविकासाभावाच्च प्राथमिकमुखविकासहेतोरस्य वाक्यस्य पुत्रजन्मज्ञापकत्वं व्युत्पित्सुर्मन्यते। तत्रैवं शङ्का संभवति किं पुत्रजन्मादिमात्रज्ञापकमिदं वाक्यं उत सुलग्नत्वादिविशिष्टपुत्रजन्मादिज्ञापकमिति ईदृशशङ्काग्रस्तत्वं गामानयेत्यादिवाक्यस्यापि तुल्यम्, किमिदं वाक्यं गवानयनप्रतिपादकं उत पुरोवर्तिनि

### गूढार्थसंग्रहः

**कार्यार्थ एवव्युत्पत्तिरिति निर्बन्धो निर्निबन्धन इति**। अत्र कार्यार्थ एवेत्येकारेण अन्विते व्युत्पत्तिमात्रं युक्तमिति सूच्यते। उक्तं च आगमप्रामाण्ये—'अन्यान्विताभिधानेऽपि व्यवहारोपपत्तितः। अवश्याश्रयणीयेयमन्वितार्था-

## गूढार्थसंग्रहः

भिधायिता ॥' इत्यारभ्य 'तस्मादाकाङ्क्षितासन्नयोग्यार्थान्तरसङ्गते। स्वार्थे पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः ॥' इति। तत्त्वरत्नाकरेऽपि—'अवश्याश्रयणीयेयमन्वितार्थाभिधायिता। इत्याहुर्यामुनाचार्याः पदैरेवान्विताभिधाम् ॥' इत्यारभ्य प्रपञ्चेनोपपाद्योपसंहृतम्—'षड्भिः प्रतीतिप्रमुखोपपत्तिभिर्निर्धूतचोद्याभिरिहान्विताभिधा। सिद्धा पदैर्नाभिहितान्वयस्थितिर्विपर्ययादित्यखिलं समञ्जसम् ॥' इति। प्रज्ञापरित्राणन्यायसुदर्शनयोश्च बहुश उक्तम्—'अन्वितार्थाभिधायित्वं शब्दशक्तिनिबन्धनम्। व्युत्पत्त्यवगतं पुंसां दोषतोऽस्य विपर्ययः ॥' इत्यादिना' इति न्यायपरिशुद्धावप्युक्तम्। तत्पूर्वं तत्रैव 'एतास्सर्वा अपि वृत्तयः अन्विताभिधानवृत्त्यन्तर्भूताः। पृथक्पदानां स्मारकत्वमेव। अभिहितान्वयेहि पदानां पदार्थे पदार्थानां वाक्यार्थे पदानां च तत्रेति शक्तित्रयकल्पनागौरवं स्यात्, वाक्यार्थस्याशाब्दत्वप्रसङ्गो वा। पदार्थे लक्षणसमाप्तेः प्रमाणप्रसङ्गश्च। नचान्विताभिधानेऽन्योन्याश्रयणम्, मिथः स्मरणमात्रोपजीवनात्। यथाऽऽहुः—'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्। न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥' इति। नापि पौनरुक्त्यादिदोषः; तत्तदंशप्रतिनियतशक्तित्वात्। नापि वाक्यभेदः, एकप्रधानतया स्वार्थाभिधानात्। 'पदार्थ एव वाक्यार्थः संसृष्टोह्यभिधीयते' इत्युक्तम्। तथा '**नानाशब्दादिभेदात्**' इत्यधिकरणे, 'यद्यपि वेद उपासीत इत्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः, प्रत्ययाश्च ब्रह्मैकविषयाः; तथाऽपि तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः प्रत्ययावृत्तिरूपा विद्या भिन्दन्ति' इति। वेदार्थसंग्रहेऽपि—'शोधकेष्वपि 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्म' इत्यादिषु सामानाधिकरण्यव्युत्पत्तिसिद्धानेकगुणविशिष्टैकार्थाभिधानमविरुद्धमिति सर्वविशिष्टं ब्रह्मैवाभिधीयते इति। अत्रैवापूर्वभङ्गे समभिव्याहृतपदान्तरवाच्यान्वययोग्यमेवेतरपदप्रतिपाद्यमित्यन्विताभिधायिपदसङ्घातरूपवाक्यश्रवणसमनन्तरमेव प्रतीयते। तच्च स्वर्गसाधनत्वरूपम्। अतः क्रियावदनन्यार्थता विरोधादेव परित्यक्ता इति। एषां स्वारस्यमन्विताभिधाने नचात्र पराभ्युपगमेनोक्तमिति ज्ञापकमस्ति। वरदविष्णुमिश्रैरपि—'सत्यज्ञानादिपदानामखण्डैकरसार्थत्वे अन्विताभिधानानुपपत्तेश्च' इत्यादिषु बहुषु प्रदेशेषु अन्विताभिधानमेव मायावादिनं प्रत्युक्तम्।' इत्युक्तम्। अत्र भट्टमते पदानां वाक्यार्थबोधजनकत्वानङ्गीकारे वाक्यार्थस्याशाब्दत्वप्रसङ्गः' इत्याद्युक्त्या 'अशाब्देचापि वाक्यार्थे न पदार्थेष्वशाब्दता' इति वार्तिकं पर्यालोचितं भवति। वाक्यार्थस्य शाब्दत्वनिर्वाहाय पदानां पदार्थस्मृतिद्वारा वाक्यार्थबोधजनकत्वं तद्भूताधिकरणे प्रागुपपादितदिशा वार्तिककारमतेऽप्यङ्गीकरणीयम्। शब्दशक्त्यैव निर्वाहे तात्पर्यस्य वृत्तित्वं परिकल्प्य वृत्त्यधीन बोधोपपादनमपि न हृद्यम्। एवमङ्गीकारे भट्टसम्मतप्रमाणेषु षट्सु शब्दस्य प्रमाणत्वभङ्गः शब्दार्थस्य प्रमाणत्वस्वीकारश्च स्यात्। अतः पदानां पदार्थस्मृतिद्वारा व्यापारवत्कारणत्वरूपकरणत्वं वाक्यार्थबोधे अङ्गीकरणीयम्। अव्यवहितोपायत्वं पदार्थस्मृतेस्स्यान्नाम, तावतापि न क्षतिः। एतेन (न्या.र.मा) पार्थसारथ्युक्तलाघवस्यापि नावसरः ॥

न्यायपरिशुद्धौ अनन्तरं—'नन्वभिहितान्वयद्योतकान्यपि वाक्यानि विद्यन्ते। वेदार्थसङ्ग्रहे तावत् 'एवं बोधकानां पदसङ्घातानां संसर्गविशेषबोधनेन वाक्यशब्दाभिधेयानामुच्चारणक्रमो यत्र पुरुषबुद्धिपूर्वकः' इत्याद्युक्तम्। तथा तत्रैव 'प्रकृतिप्रत्ययरूपेण पदस्यैवानेकविशेषणगर्भत्वात्, अनेकपदार्थसंसर्गबोधकत्वाच्च वाक्यस्य इति। भाष्येऽपि 'शब्दस्तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यं पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्यययोगेनहि पदत्वम्; प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः। पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन' इत्याद्युक्तम्। एवं व्युत्पत्तिनिरूपणे वेदार्थसङ्ग्रहे 'सिद्धवस्तुषु शब्दस्य बोधकत्वशक्तिग्रहणमत्यन्तसुकरम् इत्युपक्रम्य, अपवरके दण्डः स्थितः इति वाक्ये याहच्छिकव्युत्पत्तिप्रकारमुपपाद्य, तथा बालः तातोऽयम्,

## गूढार्थसंग्रहः

अम्बैषा इत्यादिना बुद्धिपूर्वव्युत्पादनेन तत्तत्पदानां तत्तत्पदार्थेष्वेव बोधकत्वशक्तिग्रहणमुपपाद्य, पुनरपि अस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षित इत्यादिचोक्त्वा, एवमेव सर्वपदानां स्वार्थाभिधायित्वं सङ्घातविशेषाणां च यथाऽवस्थितसंसर्गविशेषवाचित्वं च जानाति ' इत्याद्युक्तम्। भाष्येऽपि प्रथमसूत्रपूर्वपक्षनिराकरणे—' एवंकिल लौकिकाः शब्दार्थसंबन्धमवधारयन्ति ; मातापितृप्रभृतिभिः अम्बातात मातुलादीन् ' इत्यादिना पदव्युत्पत्तिः पूर्वमुपपादिता। ' तत्रच तेषु तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति' इत्याद्युक्तम्। पुनश्च ' व्युत्पन्नेतरशब्देष्वस्य शब्दस्यामर्थ इति पूर्ववृद्धैशिक्षिताः' इत्यादि। यदि नामान्विताभिधानमभिमतं, तदा कथमिव पदमात्रे व्युत्पत्तिस्स्यात्? यदि च सा स्यात् कथमन्वितमभिधेयम्? व्युत्पत्तिवैपरीत्यप्रसङ्गात्। तस्मान्नान्विताभिधानमेव सिद्धान्त इति निर्णेतुं शक्यमिति केचित् ॥

अन्येतु ' बोधकानाम् इत्यादिवाक्यमन्विते संसर्गविशेषसिद्धेरुपपद्यते। पदवाक्यभेदाभिधानमपि तत्तद्विशेषवैशिष्ट्यप्रदर्शनमात्रार्थं, पराभ्युपगमद्योतनार्थं वा। प्रत्येकपदव्युत्पत्त्यभिधानमप्यन्वितार्थबोधनोपयुक्तासाधारणद्वारप्रकाशनमात्रम्। पदार्थं स्मारयित्वैवहि पदानि वाक्यार्थं बोधन्तीत्युक्तम्। स्मृतेश्च स्वानुभूतिमूलत्वान्न शक्त्यन्तरक्लृप्तिः। व्याख्यातं च भाष्यादिकमन्वितपरया विवरणे श्रीराममिश्रैः। तथा षडर्थसंक्षेपेऽपि ' शब्दश्च स्वतः शक्यमन्विततया बोधयति, असम्भवेऽर्थान्तरम्' इतिहि व्युत्पत्तिः इत्याद्युक्तम्। अतोऽन्विताभिधानं सिद्धान्त इति। एवमन्विताभिधानसामर्थ्याद्विशिष्टप्रतिपत्त्यन्यथाऽनुपपत्तेश्च पदानामपि विशिष्टार्थाभिधायित्वं सिद्धम्। अतएव विशिष्टार्थाभिधायित्वेऽपि विशेषणमात्रे शक्तिरित्यपि निरस्तम् ; अभिधायित्वातिरिक्तशक्त्यन्तराभावात्। अपर्यवसानवचनमपि विशिष्टबोधनशक्तस्य विशेषणमात्रे स्थातुमशक्तत्वात्। विशिष्टानुप्रविष्टंहि विशेषणं परोपरञ्जकवेषमेवेति तादृगाकारो विशेष्यग्रहणमन्तरेण दुर्ग्रहः। तावता च तदर्थं विशेष्यग्रहणमिति व्यर्थं वचः। यथाप्रतीतिव्यवस्थापनस्यैव युक्तत्वात् ' इत्याद्युक्तम् ॥

अत्र अन्विताभिधानमुपक्रम्य व्यक्तौ शक्तिनिगमनेन व्यक्तेः अन्वयस्य च एककारणाधीनवाक्यार्थबोधविषयत्वमेव युक्तमिति सूचितम्। तेन व्यक्तौ लक्षणा अन्वयांशे शक्तिरिति प्रभाकरपक्षः, अन्वयांशः आकाङ्क्षाऽऽदिबलाद्भासत इति भट्टपक्षश्चानुपादेय इति बोधितम्। तत्र प्रभाकरमते जातिव्यक्त्योस्सम्बन्धः शक्त्या भासते, व्यक्तिस्तु लक्षणया प्रत्ययान्तपदद्वयार्थसंबन्धोऽपि शक्त्या। भट्टमते व्यक्तिवत् जातिव्यक्त्योस्संबन्धोऽपि लक्षणया प्रकृतिप्रत्यय प्रत्ययापदद्वयार्थसंबन्धः आकांक्षाऽऽदिवशादिति वैषम्यम्। एवं वैषम्यमन्तरा जातिव्यक्तिसंबन्धस्य पदद्वयार्थसंबन्धस्य च शक्त्या भानपक्ष एव प्रागुपपादितदिशा आकृत्यधिकरणजैमिनिसूत्रार्थनिष्कर्षणेन ' तद्भूतानाम् ' इति सूत्रार्थपर्यालोचनया च युक्तः ' तद्भूतानाम् ' इतिसूत्रभाष्ये शुक्लरूपज्ञाने शुक्लगुणकद्रव्यज्ञानस्य प्रतिपादनेन पदानामन्वितार्थबोधकत्वं प्रतिपादितंभवति अतः जातिव्यक्तिसम्बन्धस्य तदितरसंबन्धस्य च एकविधवृत्त्या भानपक्ष एव युक्तः। भट्टमते व्यक्तौ तत्संबन्धे च लक्षणावत् सर्वत्रान्वयांशेऽपि लक्षणाङ्गीकारः। प्रभाकरमते सर्वत्रान्विताभिधानाङ्गीकारवत् व्यक्तेस्तत्संबन्धस्य च तथैव रीत्या शक्त्या भानाभ्युपगमश्च युक्तः। नच तथा उभाभ्यामङ्गीक्रियत इति पक्षद्वयेऽप्यस्वारस्यमाचार्यपादैस्सूचितं भवति। ' तद्भूतानाम् ' इति सूत्रस्य प्रभाकरोक्तरीत्याऽर्थः सिद्धान्तेऽपि न विरुध्यते। वस्तुतस्तु सेश्वरमीमांसायां आचार्यपादैरुक्तार्थ एव युक्तः, एवंहि तत्रत्यसूत्रार्थः—' तद्भूतानाम् ' तस्मिन्नर्थे भूतानां सङ्केतासम्भवाद्बोधकतयैव लब्धसत्ताकानां क्रियार्थेन अलौकिकचतुर्वर्गरूपश्रेयस्साधनक्रियार्थेन समाम्नायः समुच्चारणं सपरिकरक्रियारूपार्थबोधनार्थमेव समुच्चारणम्। उच्चार्यमाणाहि वैदिकाश्शब्दाः अलौकिकचतुर्वर्गरूपश्रेयस्साधनरूपाक्रियावचना उपलभ्यन्ते। अर्थस्य तन्निमित्तत्वात्—विलक्षणस्य वाक्यार्थस्य शब्दैकनिमित्तत्वात् व्याप्तिपरामर्शादिनिरपेक्षत्वादित्यर्थः ' इति ॥

## गूढार्थसङ्ग्रहः

'तद्भूतानां क्रियार्थेन समाम्नायः' इत्यनन्तरं 'अर्थस्य तन्निमित्तत्वात्' इत्यत्र अर्थशब्दः नैव पदार्थपरः । क्रियार्थेन समाम्नायः इत्यत्र सर्वं वाक्यं क्रियायां पर्यवस्यति इत्युक्तदिशा वाक्यार्थ एव बुद्धिस्थः। पदानां सर्वेषां क्रियार्थेन समाम्नायोक्त्या वाक्यार्थे एव पर्यवसानमुक्तं भवति। अत: वाक्यार्थस्य शब्दैकसमधिगम्यत्वमेवाभिप्रेतम् । अतएव शाब्द बोधे शब्दस्य करणत्वेन प्रमाणत्वं सङ्गतं भवति क्रियार्थेनेत्यत्र क्रियाशब्दः धात्वर्थ एव प्रसिद्धः नतु भावनायां, तत्र सप्रयोजनत्वं फलसाधनक्रियाविवक्षया सम्भवत्येव । पदसमुदायस्य वाक्यस्य वाचकत्वशङ्काऽपि पदस्य निमित्तत्वप्रतिपादनेन निरस्ता भवति । अन्विते शक्तिं वर्णयतः प्रभाकरस्य शाब्दबोधविषयीभूतवाक्यार्थघटकानां सर्वेषामर्थानांशक्त्या उपस्थितेरनङ्गीकारेण सूत्रास्वारस्यमवर्जनीयम् । पदैः शक्त्या पदार्थानामुपस्थित्या वाक्यलक्षणया वाक्यार्थबोध इति न्याय रत्नमालोक्तरीत्या भट्टसिद्धान्ताङ्गीकारे शाब्दबोधविषयीभूतार्थसामान्येऽपि लक्षणा अङ्गीकृतैवेत्येकवृत्त्यैव सर्वेषां भानमिति प्रागुक्तदोषस्य यद्यपि नावसरः, तथाऽपि पदानां शक्त्या पदार्थोपस्थापकत्वेन शक्त्यधीनतत्तत्पदार्थोपस्थितिः लाक्षणिकवाक्यार्थ बोधे निमित्तमिति पर्यवसानेन निमित्तनैमित्तिकभावस्य न साधीयस्त्वमिति सूत्रास्वारस्यं दुर्वारमेवेत्याचार्यपादानामाशयः ॥

नन्वेवमपि भाष्योक्तः शक्तिग्रहः कथं घटते । बोधकशब्दस्य श्रवणं बोध्यार्थस्य प्रत्यक्षमिति नैकं ज्ञानं जातमितिचेत् अत्रोक्तमाचार्यपादैः—

'संसारेऽनादिसिद्धे मुहुरनुभवतः संचितास्संस्क्रियास्स्युः संस्कारोद्बोधकाश्च स्वयमुपनिपतन्त्यप्रकम्प्यात्प्रवाहात् ।
तत्तज्जातीयभेदग्रहणसमुचिता वृत्तयस्तन्निदानाः तद्वत्स्याच्छिक्षकादिव्यवहृतिषु शिशोरैदमर्थ्यादिबोधः ॥
दक्षैराधोरणाद्यैरनुमितविविधस्वप्रयासोपयोगैः शिक्षाभेदाविचित्रा गजविहगमुखान्ग्राहयद्भिः प्रयुक्ताः ।
तस्मात्सार्थो मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः कल्पो भाष्योदितोऽयं नयदि कथमसौ कल्पतेऽन्योऽपिमार्गः'

इति । अत्र अङ्गुलीनिर्देशपूर्वकाम्बाऽऽदिशब्दप्रयोगः शब्दवाच्यार्थबोधतात्पर्येणेति बालाः प्रतियन्ति। बोध्यार्थज्ञानपूर्वकं बोधकशब्दप्रयोगः संस्कारोद्बोधकः । तेनोद्बुद्धसंस्कारः जन्मान्तरीयानुभवजन्यः अम्बाशब्दबोध्या इयं व्यक्तिरित्यवधारयन्ति इति स्मृतिरूपमेव शक्तिज्ञानम् । 'एनमवेहि इमं चावधारय इत्यभिप्रायेणाङ्गुल्यानिर्दिश्य' इति भाष्ये बोधकबोध्यार्थयोः द्वयोर्मध्ये बोधकशब्दस्य प्रयोगेण ज्ञानं बोध्यार्थस्याङ्गुळीनिर्देशेन ज्ञानमिति विभागः ॥

अत्र **श्रुतप्रकाशिकायां**—'यावदङ्गुलिनिर्देशशब्दप्रयोगसाहचर्यजनितवासनाभूयस्त्वोदयेन स्वयमेव तत्तदर्थेषु तत्तच्छब्दान्प्रयोक्तुमर्थमात्रदर्शनेन शब्दं स्मर्तुं शब्दमात्रश्रवणेन अर्थं स्मर्तुं च क्षमा भवन्ति तावदित्यर्थः' इति बहुशश्शिक्षिताः' इति भाष्ये 'बहुश' इत्यस्य विवरणं कृतम्। अत्र वासनासंस्कारभूयस्त्वेन शब्दार्थयोश्शक्तिरूपसम्बन्धिनोः एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति दिशा स्मृत्युपपादनेन शक्तिज्ञानं स्मृतिरूपमेव व्यासार्याणामभिमतमिति प्रतीयते ॥

यद्यप्यनन्तार्यैः शास्त्रारम्भसमर्थने 'शाब्दबोधोहि द्विविधः पदवृत्त्युपस्थापितपदार्थानां संसर्गावगाही प्रत्यक्षादिप्रमाणान्तरोपस्थापितानामर्थानां संसर्गावगाहीचेति । तत्र प्रथमबोधस्सर्वमते प्रसिद्धः, द्वितीयस्तु भट्टमते स्वीक्रियते । उक्तं च वाक्याधिकरणे भट्टैः' इत्युपक्रम्य 'पश्यतश्श्वेतमारूपम्' इत्यादि वार्तिक,भाष्य,न्यायरत्नाकरवाक्यान्युदाहृत्य श्रीभाष्येऽपि **शब्दार्थयोस्सम्बन्धान्तरादर्शनात्** इत्यनुपपत्तिज्ञानमुक्तम्। संबन्धान्तरानुपपत्तिज्ञानादित्यर्थः । तथा च श्रावणप्रत्यक्षोपस्थितांबाऽऽदिशब्द चाक्षुषप्रत्यक्षोपस्थितपुरोवर्तिपदार्थयोः संबन्धावगाहिवाक्यजन्यबोधरूप शक्तिज्ञानं प्रथमतो जायत इति श्रीभाष्ये अनुपपत्तिज्ञानोक्त्या प्रात्यक्षिकोपस्थितिजन्यबोधरूपं शक्तिज्ञानमिति सूच्यते । श्रुतप्रकाशिकायामपि भट्टोदाहृतस्य पुत्रजन्मवाक्ये शक्तिग्रहस्य पूर्वपक्षिणा दूषितस्य सिद्धान्ते व्यवस्थापनात् भट्टाभिमतबोधरूपं इयमम्बेत्यादिशक्ति-

श्रीभाष्यम्

**अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म तदुपासनंचापरिमितफलं बोधन्तीति तन्निर्णयफलो**

श्रुतप्रकाशिका

पिण्डे ये शुक्लादिविशेषा दृश्यन्ते तैर्विशिष्टगवानयनप्रतिपादकमिति शङ्कोपपत्तेः। प्रयोगभेदेनावापोद्वापमुखेन शङ्काऽपाकरणमुभयत्र तुल्यम्। पुत्रजन्मवाक्यादपि गवानयनादिवाक्यस्यानेकार्थान्तरशङ्काग्रस्तत्वं सुतरां दृश्यत इति अर्थविशेषावधारणमतीव कर्तुमशक्यम्। गामानयेति शब्दप्रयोगानन्तरं व्यापारान्तरविधुरं गवि समानीतायामपि गां सन्दर्शय गां पुरस्स्थापय गां देहि गां विक्रीणीहीत्याद्यनेकार्थशङ्काहेतुत्वात्प्रयोज्यवृद्धप्रवृत्तेः॥

किंच गामानयेत्यादि शब्दप्रयोगानन्तरं समानयनात्पूर्वमेवोत्थानोपरिवासआच्छादन दण्डग्रहणयादृच्छिकजनसम्भाषणगमनाद्यवान्तरव्यापाराश्च बहवो यस्य पुरुषस्याव्युत्पत्तावुपलभ्यन्ते तस्य तेष्वन्यतमार्थवाचकत्वशङ्का गामानयेत्यादिवाक्यस्य जायते। पश्चाद्गवानयनमपि यादृच्छिकं कृतं स्यात्। नतु वाक्यप्रेरितत्वादिति च शङ्का संभवति। अतो नार्थविशेषसंबन्धावधारणसम्भव इति। बहुभिः प्रयोगैरर्थविशेषनिश्चयोऽन्वयव्यतिरेकाभ्यामितिचेत्, एवमेव पुत्रस्ते जात इत्यादिवाक्यस्यार्थविशेषनिश्चयस्सुतरां संभवति॥

एवं सिद्धवस्तुनि शब्दव्युत्पत्त्युपपत्त्युपपादनेन वेदान्तानां परब्रह्मपरत्वमुपपन्नमित्याह—**अतो वेदान्ताइति**।

गूढार्थसङ्ग्रहः

ज्ञानमवगम्यते' इत्युक्तम्; तथाऽपि—नायमर्थः पूर्वमीमांसकसंमतः। तथाहि पदार्थानामन्वयधीहेतुत्वं, नतु वाक्यस्य इति 'तद्भूतानाम्' इति सूत्रार्थनिर्णयार्थं 'अवाचकत्वंवाक्यस्य तद्भूतानामितीरितम्।' इत्यादिवार्तिकप्रवृत्तिरिति पूर्वमेवोक्तम्। भाष्येऽपि अन्वयधीरित्येव उक्तम्, नतु शाब्दधीरिति। पदार्थानामन्वयधीहेतुत्वे दृष्टान्ततया 'पश्यतश्श्वेतमारूपम्' इत्याद्युपन्यासः इति च पूर्वमेव निरूपितम्। विश्वजिदादौ पदकल्पनमेव सूत्रभाष्यवार्तिककारसंमतम्। एवं श्रुतार्थापत्तिरपीत्यनुपदमेव निरूपयिष्यते। अतो नायमर्थः भट्टसम्मतः। श्रीभाष्ये बोधकत्वस्य शक्तित्वोपपादनाय बोधकत्वातिरिक्तपदार्थसंबन्धाभावहेतुतया संबन्धान्तरादर्शनात्' इत्युक्तम्। सङ्केतस्य संबन्धत्वमिति नैयायिकमतव्युदासाय 'सङ्केतयितृ पुरुषाज्ञानाच्च' इत्युक्तिः। श्रुतप्रकाशिकायां श्रीभाष्योक्तप्रकारेण सिद्धे व्युत्पत्तिसाधनानन्तरं पुत्रजन्म वाक्यादिनोऽपि सिद्धे व्युत्पत्तिस्सम्भवतीति साधनमात्रेण उक्तस्थले व्यासार्याणां शाब्दबोधाभ्युपगमोऽपि नैव सिद्ध्यति

बिन्दुटीकायां—'पश्यतश्श्वेतमारूपम्' इत्याद्यर्थविचारावसरे—'तस्माद्यस्माद्गवाश्वादिमत्त्वेन संभावितदेशे श्वेतं दृश्यते। तत्रैव पदानि कल्पयित्वा तदेकवाक्यताज्ञानाच्छाब्दधीः स्वीक्रियते। तदभावेतु तत्र न भवत्येव सा' इत्युक्त्या पदकल्पनाभावे शाब्दबोधः नैव भट्टसम्मतः। अतश्च शक्तिज्ञानं स्मृतिरूपमिति आचार्यपादादिसिद्धान्त एव युक्तः॥

सिद्धे व्युत्पत्तेः कृतिसाध्यरूपकार्ये व्युत्पत्तेश्च व्यवहारतः सिध्या कृतिसाध्यप्रधानरूपसर्वासंमत **कार्यार्थएव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धन इत्युक्तम्। अतइत्यादि**। सिद्धे एवं साध्ये च व्युत्पत्तेस्साधनादित्यर्थः, परिनिष्पन्नं सिद्धमित्यर्थः कृतिसाध्येऽपि व्युत्पत्त्या ब्रह्मोपासनमित्युक्तम्। कार्यपरत्वानङ्गीकारे प्रयोजनपरत्वं न सिद्ध्यतीति (प्र.पं) शङ्कावारणायापरिमितफलमित्युक्तम्। 'आत्मा ज्ञातव्यः' इत्यादेः कार्यपरत्वमभिधाय 'अपि च सिद्धार्थपरत्वेऽपिशब्दस्य न वेदान्तानां परमानन्दादिरूपत्वे ब्रह्मणः प्रामाण्यमवकल्पते' इति पूर्वोदाहृत (९६१.पु) प्रकरणपञ्चिकार्थमभिप्रेत्य वेदान्तेषूपासनविध्यङ्गीकारे प्रभाकरसम्मतकार्यस्य प्रसक्तिरेव नास्ति, किंतु आनन्दरूप ब्रह्मणएव फलत्वं संभवतीति

## श्रीभाष्यम्

**ब्रह्मविचारःकर्तव्यः। कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारःकर्तव्य एव कथं 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.४.४.५) 'सोऽन्वेष्टव्यस्सविजिज्ञासितव्यः' (छा.८.७.१) 'विज्ञाय प्रज्ञां कुर्वीत' (बृ.६.४.२१) 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छा.८.१.१) 'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' (तै.ना.१०.अनु) इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन 'ब्रह्मविदाप्नोति परम्' (तै.आ.१.अनु) इत्यादिभिर्ब्रह्मप्राप्तिश्श्रूयत इति ब्रह्मस्वरूप तद्विशेषणानां दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवत्**

## श्रुतप्रकाशिका

अथ कार्यार्थपरत्वमभ्युपगम्य ब्रह्मविचारस्य कर्तव्यतामाह--**कार्यार्थत्वेऽपीति**। कार्यार्थत्वाभ्युपगमेऽपि स्तावकत्वसिद्धिहेतुत्वेन फलसाधनत्वेन च प्रकारद्वयेन सिद्धवस्तुनि तात्पर्यमुक्तत्तरत्रोपपादयिष्यते, अत्रतु प्रकारान्तरेणोपपाद्यते अनन्तस्थिरफलापातप्रतीतिस्सिसाधयिषितत्वात् फलत्वेन तात्पर्यकथनमत्रोचितमिति फलतया सिद्धिरत्रोच्यते। अनेकवाक्योपादानमुपासने तात्पर्यातिशयज्ञापनार्थम्। उपसर्गविशेषसन्प्रत्यययोगायोगेऽप्यर्थभेदो नास्तीति ज्ञापनार्थं च। **उपासनविषयकार्याधिकृतेति**। * उपासनावच्छिन्नकृतिसाध्यापूर्वाधिकृतस्य विशिंषन्नुहि विषय उच्यते **ब्रह्मस्वरूपतद्विशेषणानामिति**। विशेषणानि गुणाः विभूतयश्च। विधिवाक्योक्तस्य फलस्यार्थवादोक्तविशेषणे तात्पर्यमस्तीति ज्ञापनार्थं **दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवदि**त्युक्तम्। **'यस्मिन्नोष्णं न शीतं नारतिः'** इतिहि श्रुतिः। स्वर्गाख्यफलं

## गूढार्थसंग्रहः

साधयति—**कार्यार्थत्वेऽपीत्यादिना**। परसंमतनिर्गुणविद्यावाक्येष्वपि उपासनविधिर्वर्तत इति मण्डनादिभिः वेदान्तेषु ज्ञानविधिदूषणप्रक्रिया न साधीयसीति बोधनाय **'आत्मावा अरे' 'सोऽन्वेष्टव्यः' 'विज्ञाय प्रज्ञां कुर्वीत'** इति वाक्यत्रयोपादानम्। परसंमतनिर्गुणविद्यावत् तत्संमतसगुणविद्यायामुपासनविधिं दर्शयति—**दहरोऽस्मिन्नित्यादिना** ॥ **ब्रह्मविदाप्नोति परमित्यादिभिः इति**। 'अथ परा यया तदक्षरमधिगम्यते' 'परात्परं पुरुषमुपैति दिव्यम्' इत्यादिरादिशब्दार्थः—**दुःखासम्भिन्नदेशविशेषस्वर्गादिवदिति** ॥

प्रकरणपञ्चिकायां च अयमर्थोऽभ्युपगतः। तथाहि प्रमाणपारायणे—'यद्यपि जीवनमन्तरङ्गं नित्यं च। तथाऽपि तस्मिन्नियोज्यविशेषणे समाश्रीयमाणे विधेरपरमनुष्ठानाक्षेपकत्वं कल्पनीयम्। काम्यत्वधिकारिविशेषणे तदर्थितयैव प्रधाने प्रवृत्तेः विधेरनुष्ठानाक्षेपकत्वकल्पना नकर्तव्या। यद्यपि चोपात्तदुरितक्षयोऽपि पुरुषैरिष्यते, तथाऽपि तस्योपात्तदुरितक्षयसत्तासापेक्षत्वाद्गौरवम्। तस्मात्सकलपुरुषाभिलषणीयं सकलदुःखसंभेदरहितं सुखं स्वर्गपदाभिधेयं नियोज्य विशेषणं कल्प्यते। कथं पुनस्तादृशसुखवाचकता स्वर्गशब्दस्यावसीयते। उच्यते—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादिसमाम्नायं सकलदुःखसंभेदरहिताभिलाषोपनीतदीर्घतरसुखसाधनत्वेनार्थवादैः स्तूयमानं कर्म दृश्यते। स्वर्गशब्दोऽपि लोके कस्मिंश्चिदर्थे श्रौत्या वृत्त्या प्रयुज्यमानो दृश्यते। योऽप्यस्य चन्दनादौ प्रयोगः सोऽपि प्रीत्यपगमे तत्रैवाप्रयोगात्प्रीतिसाधनवाचकत्वकल्पनेऽपि प्रीतेरपि वाच्यत्वाश्रयणात् प्रीतिमात्रवाचकस्य तत्साधने लक्षणयाऽपि प्रयोगोपपत्तेः लाक्षाणिक

## श्रीभाष्यम्

### रात्रिसत्रप्रतिष्ठावत्

### गूढार्थसङ्ग्रहः

एव यदि विध्युद्देशगतस्स्वर्गशब्दः तथा सुखे वर्तते ततोऽर्थवादानां मुख्यैव वृत्तिः स्तुतावपि स्यादिति तादृशसुखवाचकता स्वर्गपदस्याश्रीयते। चन्दनादिष्वपि यो लाक्षणिकः प्रयोगः सोऽपि प्रशंसाऽर्थः सुतरां ततः तद्विधसुखसाधनत्वापादनेनैवोपपद्यते। तथा च यावत् तावत्सुखसाधने स्वर्गशब्दं न प्रयुङ्क्ते, किंतु सातिशयप्रतीतिजनके। स्वर्गपदाभिधेय सुखसम्भवे च उक्तेन न्यायेनाम्नाय एव प्रमाणम्। तदन्यथाऽनुपपत्त्या च तदुपभोगयोग्यदेहदेशसद्भावोऽपि नानुपपन्न इत्युक्तम्॥

अत्र पूर्वं 'पिण्डपितृयज्ञादौहि नियोज्यवाचिपदाश्रवणात् अपरिपूर्णं वाक्यम्' इत्यारभ्य पिण्डपितृयज्ञादौ नियोज्यासमर्पणेन अपरिपूर्णत्वं निरूप्य तादृशस्थले निराकाङ्क्षतया बोधजननार्थं नियोज्याध्याहारस्समाश्रितः। उक्तं च अतो लोके अपरिपूर्णवाक्यपरिपूरकतया अवधारितोऽध्याहारः वेदेऽप्याश्रीयते इति। अध्याहारस्वरूपं च निरूपितम्। कः पुनरध्याहारो नाम? अधिकस्य बुद्धौ निवेशनम् बुद्धौ सन्निहिते श्रूयमाणश्शब्दः स्वार्थमन्वितमभिधत्ते तस्यतु विशेषावगतौ योग्यत्वं च लाघवं च कारणमिति। एतेन 'विश्वजिता यजेत' इत्यादावपि अश्रुतनियोज्यस्थले स्वर्गकामएव नियोज्य इति परिकल्पनीयं भवतीत्यप्यावेदितम्॥

उक्तं च ऋजुविमलायां श्रुतार्थापत्तिनिरूपणावसरे 'येतु शब्दएव विश्वजिदादिष्वपरिपूर्णत्वादनुपपन्न इति मन्यन्ते तेन तदुपपादकः परिपूरकश्शब्द एव कल्प्यते इति वदन्ति, तेन स्वमनीषिका कल्पनया विक्लवं भाषमाणा उपेक्षामर्हन्तोऽपि बालैरादृता इति बालजनपरिबोधनाय किंचिदुच्यते—का तावदिह शब्दस्यानुपपत्तिः अर्थानुपपत्त्यतिरेकिणी? अपरिपूर्णताचेत्—का पुनश्शब्दस्यापरिपूर्णता? अर्थ एवहि केनचित् अर्थभागेनविना अर्थपरिपूर्णो भवति। अर्थापरिपूर्तेश्शब्दोऽप्यपरिपूर्ण इतिचेत् भवत्वेवम्। यन्निबन्धनाहि तस्यानुपपत्तिः, तस्यैव तर्ह्युपपत्तिरङ्गीकरणीया। अन्यथा तदवस्थैव शब्दस्यापरिपूर्णता स्यात् तस्मादपरिपूर्णत्वेऽपि शब्दस्य अर्थ एव कल्पनीयः नचार्थानुपपत्तौ शब्दस्यापरिपूर्तिः भिन्नत्वाच्छब्दार्थयोः' इति॥

वस्तुतस्तु विश्वजितिशब्दकल्पनैव युक्ता। 'चोदनायां फलाश्रुतेःकर्ममात्रं विधीयेत नह्यशब्दं प्रतीयते' (४.३.१०) अपि वा आम्नानसामर्थ्याच्चोदनार्थेन गम्यते अर्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते अर्थतोह्यसमर्थानामानन्तर्येऽप्यसंबन्धः तस्माच्छ्रुत्येकदेशस्थः' इति पूर्वपक्षसिद्धान्तसूत्रद्वयपर्यालोचनायां स्वर्गकामपदमध्याहार्यमित्येवार्थः प्रतीयते 'नह्यशब्दं प्रतीयते' इत्यत्र शब्देन अबोध्यस्स्वर्गः न प्रतीयत इति स्फुटम्। 'तस्माच्छ्रुत्येकदेशस्सः' इति सिद्धान्त सूत्रैकदेशेऽपि स्वर्गकामशब्दस्य श्रुत्येकदेशत्वमेव स्फुटम्। शाब्दीह्याकाङ्क्षाशब्देनैव प्रपूर्यते इति न्यायः, अतश्चार्थाध्याहारपक्षोऽत्र न सूत्रभाष्यकारादिसंमतः। तदुक्तं भाष्ये 'तस्माच्छ्रुत्येकदेशस्सः' फलकामपदं दूरेऽपिसत् तस्य वाक्यस्यैकदेशभूतमित्यर्थः इति। 'सस्वर्गस्स्यात्' इति सूत्रोक्तस्स्वर्गः निरतिशया प्रीतिः इति टुप्टीकायां 'योगसिद्धिर्वा' इति सूत्रे उक्तम्। स्वर्गोऽनतिशयप्रीतिरूपो दुःखविवर्जितः इति 'स स्वर्गस्स्यात्' इत्यत्र शास्त्रदीपिकायामर्थानुवादःकृतः। सोमनाथीये (शास्त्रदीपिकाव्याख्याने) भाट्टदीपिकायांच 'यन्नदुःखेन संभिन्नम्' इति वाक्यमेवोदाहृतम्॥

**रात्रिसत्रप्रतिष्ठावदिति**। 'क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः' (जै.सू.४.३.१७) 'फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्' (१८) इति पूर्वपक्षसिद्धान्तसूत्रद्वयम्। 'रात्रीः प्रकृत्य श्रूयते प्रतितिष्ठन्ति हवा य एता रात्री-

## श्रीभाष्यम्

### अपगोरणशतयातनासाध्यसाधनभाववच्च

## श्रुतप्रकाशिका

विधिगतं विशेषणमन्यत्र फलस्य विधिवाक्यगतत्वाभावेऽपि अन्यपरार्थवादोक्तफले विद्ध्यपेक्षिते तात्पर्यमस्तीति **रात्रिसत्रप्रतिष्ठावदि**त्युक्तम् । '**रात्रीरुपेयात् प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति**' इतिहि श्रुतिः । प्रतिष्ठाकाम उपेयादिति वचनाभावेऽप्यर्थवादोक्तफले तात्पर्यमङ्गीकृतमित्यर्थः * विधेयोपकारके विरोधिफलेऽपि तात्पर्यमस्तीति ज्ञापनार्थं * **अपगोरणशतयातनासाध्यसाधनभाववच्च** इत्युक्तम् । '**तस्माद्ब्राह्मणाय नापगुरेत, योऽपगुरातै(गुरुते) शतेनयातयात्**' इतिहि श्रुतिः । अनेन मोक्षोपायविरोधिफलेऽपि तात्पर्यं सिद्धयतीत्यभिप्रायः अनुयायिहेतुः * कार्योपयोगितयैव सिद्धेरित्युक्तः । उपासनविषयकार्योपयोगित्वात् फलभूतब्रह्मस्वरूपे तद्विशेषणगुणादौ विधिविरोधिनि फले संसारहेयत्वादौ च विवक्षा कार्येत्यर्थः ॥

## गूढार्थसंग्रहः

रुपयन्ति, ब्रह्मवर्चस्विनोऽन्नादा भवन्ति य एता उपयन्ति' इत्येतद्विषयवाक्यम् । अत्र रात्रिशब्देन 'ज्योतिर्गौरायुः' इत्यादिवाक्योत्पादितानि सौत्यानि कर्माण्युच्यन्ते' (शा.दी) अत्र टुप्टीका–'रात्रीणां विधीयमानानामर्थवादोऽयम् भवितव्यं च कर्मणःफलेन तस्मात्स्वर्गःफलमिति' इति कामशब्दाभावः साध्यसाधनसम्बन्धाभावः अत्र हेतुरुक्तः' इति । अयं प्रथमसूत्रार्थः । एवं द्वितीयसूत्रेऽपि टुप्टीका–'कर्मणःफलेन भविष्यत् । तत्र किं स्वर्गपदमध्याहृत्य तेन सहैकवाक्यता, उत प्रतिष्ठापदैकदेशं विपरिणम्य प्रतिष्ठादेः फलत्वम् । सन्निधानस्य क्लृप्तत्वात्प्रतिष्ठादेरेवैकवाक्यता कल्प्या । स्वर्गाध्याहारेहि सान्निधानमेकवाक्यताचेत्युभयं कल्प्यं, तत्र गौरवम्' । 'यत्साध्यसाधनसम्बन्धं समर्थं कर्तुं तत्सहैव धातुनाऽध्याहरिष्यामः–उपेयुरिति । अथवा रात्रीणां य उत्पत्तिप्रयोगवचनः स यथा इति कर्तव्यतासम्बन्धमपेक्षते, स एव साध्यसाधनसंबन्धं करिष्यति । अथवाऽर्थवादोऽविनाभावाद्विधिं लक्षयति । स लक्षितः साध्यसाधनभावसम्बन्धं प्रतिपादयिष्यति । तस्मादर्थवादेभ्यो विधिः विपरिवर्तमानाश्च त एव फलतां प्रतिपत्स्यन्ते । तस्मात्स स्वर्गः स्यात् इत्यस्यायमपवादः' इति अत्र शबरभष्योक्तयोजनात्रयं सम्यग्विशदीकृतम् ॥

अत्र शास्त्रदीपिका–'फलत्वसिद्ध्यर्थं सन्नन्ततया विपरिणाममात्रं लघीयः । तदयमर्थः ये प्रतितिष्ठासन्ति त एता-रात्रीरुपेयुरिति' इति भाट्टदीपिकायां च 'तिप्प्रत्ययस्य ल्युडर्थे कल्पयित्वा भविष्यत्कालवृत्तित्वेन साध्यत्वावगतौ प्रतिष्ठाऽऽदिस्वाभाव्यादीप्सितत्वसिद्ध्या भाव्यत्वम्' इत्यप्युक्तम् ॥

**अपगोरणशतयातनासाध्यसाधनभाववदिति ।** 'शंयौ च सर्वपरिदानात्' (जै.सू.४.३.२३) इतिसूत्रेचायमर्थः स्फुटः । अत्र 'देवावै शंयु बार्हस्पत्यमब्रुवन् हव्यं नो वह' इति प्रकृत्य 'किंमे प्रजायाइति । तेऽब्रुवन् योब्राह्मणायापगुरेत् तं शतेन यातयात् योनिहनत् तंसहस्रेण यातयात् यो लोहितं करवद्यावतःप्रस्कद्य पाँसून्त्संगृह्णात् तावतस्संवत्सरान्पितृलोकं न प्रजानीयात् इति तस्माद्ब्राह्मणाय नापगुरेत् न निहन्यान्नलोहितं कुर्यादिति' इति विषयवाक्यं भाष्ये उपात्तम् । अत्र तन्त्रवार्तिकम्—'वाक्येन सर्वसंयोगात्सर्वेभ्यो वरदानतः । फलस्याकल्पितत्वाच्च नेष्टःप्रकरणग्रहः ॥' यच्छब्दस्तावच्छ्रुत्यैव पुरुषमुपादत्ते । नच प्रकरणयुक्तपुरुषधर्मः । नह्येषकश्चित्संस्कारः, किंतर्हि, नरकपरिहारार्थोऽयंप्रतिषेधः, सच पुरुषगतएव । नरकपातस्संकीर्तितो नतु क्रतुगतः । यस्यच प्रत्यवायस्तस्य तत्परिहारार्थःप्रतिषेधः । शतेन

## श्रीभाष्यम्

### कार्योपयोगितयैव सिद्धेः

### गूढार्थसंग्रहः

यातयात्सहस्रेण यातयात्' इति शतगुणं सहस्रगुणमनुभवेदित्यर्थः । अथवाऽसङ्ख्येयान्तरानुपादानादुपरि संवत्सरग्रहणादिहापि संवत्सरशतेन यातनां निस्तरेत्सहस्रेणेत्येवं संबध्यते' इति 'सोऽब्रवीत्किंमे प्रजायाइति' प्रजामात्रानुग्रह एव शंयुना प्रार्थितः । देवैश्च यत्कामयस इत्युक्ते शंयुना ब्राह्मणमात्रमेव तेभ्यः परिसं परिपालनायोपक्षिप्तम् । तैश्च ब्राह्मणमात्रमेवोद्दिश्यानुग्रहः प्रत्तइति वाक्यशेषस्समर्थितो भविष्यतीति' इति च ॥

(अत्र 'शंयौ च शं यूपक्रमके वाक्ये योऽयमपगोरणादिप्रतिषेधः स प्रकरणादपकृष्येतेत्यनुषज्ञ्जयः। कुतः सर्वपरिदानात् सर्वावस्थस्य दर्शपूर्णमासकर्तृत्वावस्थानपेक्षस्य पुंसः परि नरकपरिहारार्थं दानात् अपगोरणादीनां खण्डनात् । निषेधादिति यावत् एवं भाष्यकारः । वार्तिककारास्तु सर्वपरिदानात् सर्वेभ्यो ऋत्विग्भ्योऽनृत्विग्भ्यश्च ब्राह्मणेभ्यः परिपालनाख्यवरदानादित्येवं सूत्रं व्याख्यास्यन्ति')। अत्रापगोरणं दण्डोद्यमनादिरूपताडनोद्योगः। अत्र भाट्टदीपिका-- 'अत्राशिषि लिङ् । प्रवर्तनाया बाधात् । आख्यातार्थोऽपि लक्षणया भोगरूपानुभवो निस्तारो वा । तमिति द्वितीयार्थो विषयत्वम् । तथा चावगोरणकर्तृविषये शतगुणं यातनानुभवः शतसंवत्सरेण वा तन्निस्तारो भवत्वित्यर्थः । वस्तुतस्तु आख्यातार्थोऽनुभावनाऽदिः लिङर्थोनुकूलव्यापार एव । तथा च तंप्रति भवान् शंयुरनुभावयेदित्यर्थः । अत्रच लिङ्गपादानेन पूर्ववद्वर्तमानत्वाप्रतीतेः यातनायास्साध्यत्वावगमात् निषेध्यफलं कामपदाद्यभावेऽपि बलसम् । अतश्शुद्धपुरुषधर्मः इति' इत्युक्तम् ॥

वेदार्थसंग्रहे च--'प्रवर्तकवाक्यव्यवहारएव शब्दानामर्थबोधकत्वशक्त्यवधारणं कर्तव्यमिति किंमियं राजाज्ञा? सिद्धवस्तुषु शब्दस्य बोधकत्वशक्तिग्रहणमत्यन्तसुकरम् ।' इत्याद्यभिधाय कार्यार्थ एव व्युत्पत्तिप्रतिपादनावसरे 'ब्रह्मविदाप्नोति परम्' इति श्रुतिमुदाहृत्य 'परप्राप्तिकामो ब्रह्मविद्यात्' अत्र प्राप्यतया प्रतीयमानब्रह्मस्वरूपं तद्विशेषणं च सर्वं कार्योपयोगितयैव सिद्धंभवति । तदन्तर्गतमेव जगतस्स्रष्टृत्वं संहर्तृत्वमाधारत्वमन्तरात्मत्वमित्याद्युक्तमनुक्तं च सर्वमिति न किंचिदनुपपन्नम् । एवं च सति मन्त्रार्थवादगताह्यविरुद्धाः अपूर्वाश्चार्थास्सर्वे विधिशेषतयैव सिद्धा भवन्ति । यथोक्तं द्रमिडभाष्ये-'ऋणवा जायते' इति श्रुतेः इत्युपक्रम्य यद्यप्यवदानस्तुतिपरं वाक्यं, तथाऽपि नासता स्तुतिरुपपद्यते' इति। एतदुक्तं भवति सर्वोह्यर्थवादभागः देवताराधनभूतयागादेः साङ्गस्य आराध्यदेवतायाश्च अदृष्टरूपान्गुणान् सहस्रशो वदन् कर्मणि प्राशस्त्यबुद्धिमुत्पादयति । तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यात् इति कर्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयतीति । अनयैव दिशा सर्वमन्त्रार्थवादगताह्यर्थास्सिद्धाः' इति विशेष उक्तः ॥ अत्र 'एकादशावदानान्यवद्यति दशवै पशोःप्राणा आत्मैकादशो यावानेव पशुस्तस्यावद्यति हृदयस्याग्रेवद्यत्यथजिह्वाया अथ वक्षसः' इत्युपक्रम्य 'जायमानोवै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यःप्रजया पितृभ्य एष वा अनृणो यःपुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवावदयते तदवदानानामवदानत्वम्' (यजु.सं.६.का.३.प्र.१०.अनु) इति श्रुतिसन्दर्भो द्रमिडवाक्येऽनुसंधेयः ॥

एतावता वेदान्तेषु उपासनविधेः कार्यपरत्वं ब्रह्मणः आनन्दरूपत्वस्यासिद्ध्या पुरुषार्थपरत्वं न संभवतीति बृहतीव्याख्यायां ऋजुविमलायां प्रकरणपञ्चिकायां च शालिकानाथेनोक्तं पर्यालोचितम् । अथ कार्यस्य प्रामाणिकत्वे वेदान्तेषु कार्यपरत्वं कुतो न स्यादिति प्राभाकराक्षेपस्सम्भावित इति निर्विशेषस्याप्रामाणिकत्ववत् कार्यस्यापि प्रभाकरसंमतस्याप्रामा-

### श्रीभाष्यम्

**गामानयेत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः भवदभिमतकार्यस्य दुर्निरूपत्वात् । कृतिभावभाविकृत्युद्देश्यंहि भवतः कार्यम् । कृत्युद्देश्यत्वं च कृतिकर्मत्वम् । कृतिकर्मत्वं च कृत्या प्राप्तुमिष्टतमत्वम् । इष्टतमं च , सुखं वर्तमानदुःखस्य तन्निवृत्तिर्वा । तत्रेष्टसुखादिना पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः प्रतीता ततः प्रयत्नेच्छुः प्रवर्तते पुरुष इति न क्वचिदपीच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण कृत्युद्देश्यत्वंनाम किंचिदप्युपलभ्यते ।**

### श्रुतप्रकाशिका

प्रवर्तकवाक्येऽपि नत्वदभिमतासिद्धिरित्याह—**गामिति** । **कार्यार्थे** प्राधान्येन त्वदभिमते कृत्युद्देश्यलक्षणकार्यार्थे कुतइत्यत्राह—**भवदभिमतेति** । स्वेदश्रमादावपि कृतिसाध्यत्वात्तद्व्यावृत्त्यर्थं क्रियाकार्येऽप्युद्देश्यत्वमङ्गीकार्यम् त्वदुक्तोद्देश्यत्वस्य दुर्निरूपतया तल्लक्षणकार्यस्य दुर्निरूपत्वादित्यर्थः । दुर्निरूपत्वं कथमित्यत्राह-**कृतीति** । कृतिभावभावि कृतिः आन्तरप्रयत्नः तत्सद्भावानन्तरभावि । कृतिसाध्यत्वं भावार्थादिष्वप्यस्तीति तद्व्यावृत्त्यर्थं कृत्युद्देश्यमित्युक्तं कृत्युद्देश्यत्वं कृतिप्रधानत्वमित्यर्थः । कार्यस्य कृतिसाध्यत्वमिष्टत्वं कृत्युद्देश्यत्वमिति त्रयमपि तन्मतेऽभ्युपगतम् । इष्टत्वकृतिसाध्यत्वे फलभावार्थसाधारणे कृतिप्रधानत्वं ह्याकारद्वयविलक्षणं फलभावार्थव्यावर्तकं वर्ण्यते । यथा **टीकायामुक्तम् कार्यमर्थं प्रतिपादयतो वेदस्य प्रामाण्यम्** इति । अत्रार्थशब्देन प्राधान्यं विवक्षितम् । पञ्चिकायां **कार्यमर्थं प्रधानतया प्रतिपादयतो वेदस्य प्रामाण्यं तत्रैव प्रामण्यशब्दव्युत्पत्तेः व्युत्पत्त्यायत्तत्वात्तस्य** इति । प्रकरणशालिकायां **कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते** इति ॥

तत्र तृतीयाकारतयाऽभिमतं कृत्युद्देशत्वं कृतिसाध्यत्वेष्टत्वाकारयोरन्यतराकारे पर्यवस्यतीत्यभिप्रायेण दूषयितुमाह—**कृत्युद्देश्यत्वंचेति** । पाणिन्युक्तप्रकारेण कर्मत्वं विवृणोति । **कृतिकर्मत्वंचेति** । इष्टतमत्वं च कार्ये नास्तीत्याह—**इष्टतमं चेति** । * कृतिकर्मत्वंनाम प्रवर्तकत्वमित्यत्राह—**तत्रेति** । तदपीष्टस्य स्वप्रयत्नसाध्यत्वमेवेत्यर्थः । आदिशब्देन दुःखनिवृत्तिरुच्यते । स्वप्रयत्नादृते यदीत्यादेरयंभावः कृतिसाध्यत्वातिरेकि कृतिकर्मत्वं नामेष्टतमत्वे पर्यवस्यतीति । **प्रयत्नेच्छुः** चिकीर्षुः प्रवर्तते, आन्तरप्रयत्नमिच्छन् सतमुत्पादयतीत्यर्थः । इष्टतमस्यैव रूपद्वयमस्ति इच्छाविषयत्वं प्रेरकत्वंचेति ॥

### गूढार्थसंग्रहः

णिकत्वेन तत्परत्वं क्वापि वेदवाक्ये न संभवतीत्युपपादयितुमुपक्रमते—**भवदभिमतस्य कार्यस्य दुर्निरूपत्वादित्यादिना** ॥ **कृतिभावभावि कृत्युद्देश्यंहीति** । 'किंतु स्वयं क्लेशरूपं कर्म यत् कार्यतां व्रजेत् । फलसाधनता तत्र कारणं तेन कार्यता ॥ तद्भावभाविनी नित्यं तदात्वेन प्रतीयते । इति कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते कृतौ सत्यां च भावादसत्यां चाभावात्अनुमानतःकृतिसाध्यता तावदवगम्यते । यदधिकृत्य कृतिःप्रवर्तते तत्कृतिप्रधानम्' इति च प्रकरणपञ्चिका ॥ **कृत्युद्देश्यत्वंनाम किंचिदप्युपलभ्यते इति** । इच्छाविषयत्वरूपेष्टत्वमेवोद्देश्यत्वम् । प्राक् (९८१.पु) उदाहृत प्रकरणपञ्चिकावाक्येषु सुखस्य स्वर्गशब्दवाच्यत्वप्रतिपादनेनेच्छाविषयत्वरूपोद्देश्यत्वं स्वर्गस्याकामेनापि स्वीकर्तव्यम्, तस्य कृत्यधीनसिद्धित्वं वा स्यात् । एतद्विलक्षणं कृत्युद्देश्यत्वंतु नैव संभवतीति भावः ॥

'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' इति शाबरभाष्यपर्यालोचनया कार्यस्य बृहत्यां प्रवर्तकत्वोक्त्या प्रेरकत्वमपि कार्यस्योक्तं भवति । उक्तं च प्रकरणपञ्चिकायामपि 'कार्यत्वेन नियोज्यं चस्वात्मनि प्रेरयन्नसौ । नियोग इति

## श्रीभाष्यम्

**इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव तत एव प्रवृत्तेः। नच पुरुषानुकूलत्वं कृत्युद्देश्यत्वं, यतस्सुखमेव पुरुषानुकूलम्। नच दुःखनिवृत्तेः पुरुषानुकूलत्वम्। पुरुषानुकूलं सुखं तत्प्रतिकूलं दुःखमितिहि सुखदुःखयोस्स्वरूपविवेकः। दुःखस्य प्रतिकूलतया तन्निवृत्तिरिष्टा भवति नानुकूलतया। अनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः। अतस्सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न सम्भवति। न सुखार्थतया तस्याप्यनुकूलत्वं दुःखात्मकत्वात्तस्य। सुखार्थतयाऽपि तदुपादानेच्छामात्रमेव भवति। नच कृतिंप्रति शेषित्वं कृत्युद्देश्यत्वं भवत्पक्षे शेषित्वस्यानिरूपणात्। नच परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसंबन्धी शेषीत्यवगम्यते। तथासति कृतेरशेषत्वेन**

## श्रुतप्रकाशिका

* तत्र प्रेरकत्वं कृत्युद्देश्यत्वमित्यत्राह—**इच्छाविषयस्येति**। कुतइत्यत्राह—**ततएवेति**। पुरुषानुकूलत्वं कृत्युद्देश्यत्वमित्यत्राह—**नचेति**। सुखमेव पुरुषानुकूलमिति न वाच्यम्; सुखव्यतिरिक्तस्याप्यनुकूलत्वदर्शनादित्यत्राह—**नच दुःखनिवृत्तेः पुरुषानुकूलत्वमिति**। * नहि दुःखनिवृत्तिस्सुखं भवतीत्यर्थः। एतदुपपादयति। **पुरुषानुकूलमिति** तर्हि दुःखनिवृत्तेरिच्छाविषयत्वं कथमित्यत्राह—**दुःखस्येति**। स्वतइष्टत्वमनुकूलत्वं नत्विष्टान्तरहेतुतया * अनिष्टनिवृत्तिरूपतयावेष्टत्वम्। एवं स्वतोऽनिष्टत्वं प्रतिकूलत्वं, नत्वनिष्टान्तरहेतुतया इष्टनिवृत्तिरूपतयावाऽनिष्टत्वम्। अतो दुःखनिवृत्तेरिष्टत्वं दुखस्य प्रतिकूलत्वात् नानुकूलतयेत्यर्थः॥

**दुःख**निवृत्तेरनुकूलत्वाभावमुपपादयति। **अनुकूलप्रतिकूलेति**। * स्वरूपेणावस्थितिः सुखनिवृत्तिरूपा दुःखनिवृत्तिरूपा च अनुकूलप्रतिकूलान्वयविरहरूपायां स्वरूपेणावस्थितौ दुःखनिवृत्त्यंशस्य सामानाधिकरण्येन व्यपदेशः दुःखनिवृत्तिरेव सुखंचेद्दुःखनिवृत्तौ सुखनिवृत्तिर्नस्यात् तदा सुषुप्तावपि सुखान्वयप्रसङ्गः। अन्यतरनिवृत्तिरन्यतरसंयोगश्चेत् स्वापेऽपि सुखदुःखान्वयः प्रसजेदिति भावः। अपूर्वस्यानुकूलत्वासम्भवे * दृष्टान्ताभिप्रायेण क्रियाद्युपादानम्। क्रियादेरित्यादिशब्देन प्रयत्नो विवक्षितः। सुखसाधनत्वादनुकूलत्वमित्यत्राह—**नेति**। कुतइत्यत्राह—**दुःखात्मकत्वादिति**। तस्य क्रियादेः प्रतिकूलतया भासमानं वा तद्विषयज्ञानंवा दुःखं, न तद्व्यतिरिक्तमात्मगुणान्तरमित्यभिप्रेत्य दुःखात्मकत्वादित्ययं हेतुरुक्तः। **सुखार्थतयेति**। नहि दण्डचक्रादिर्घटो भवतीत्यर्थः; असुखार्थात्सुखार्थस्य किं वैषम्यमित्यत्राह—* **सुखार्थतयापीति**। कृतिशेषित्वं कृत्युद्देश्यत्वमिति पक्षं दूषयति। **नचेति**। **अनिरूपणात्** दुर्निरूपत्वादित्यर्थः॥

**परो**द्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति पक्षमनूद्य दूषयति। **नच परोद्देशप्रवृत्तेत्यादिना। नच परोद्देशप्रवृत्त्यर्हताया इति**। उत्पत्तिश्च प्रवृत्तिमद्व्यापारः अतः प्रवृत्त्यर्हत्वमुत्पत्त्यर्हत्वम्। परोद्देशप्रवृत्त्यर्हतायाश्शेषत्वरूपतये-

## गूढार्थसंग्रहः

मीमांसानिष्णातैरभिधीयते॥' इति इत्युक्तमर्थमभिप्रेत्याह—**इच्छाविषयस्येति**। इष्टत्वकृतिसाध्यत्वाभ्यामतिरिक्तं रूपं नास्तीति भावः॥ इष्टत्वात्कृतिसाध्यत्वाच्च भिन्नं पुरुषानुकूलत्वमुद्देश्यत्वं संभवतीत्याशङ्क्य निराकरोति—**यतस्सुखमेव पुरुषानुकूलमित्यादि**। अयमर्थः प्रकरणपञ्चिकायामपि व्यक्तः। कार्यस्य सुखत्वमुपपाद्य प्रयोजनत्वस्येष्टसाधनताविद्व्यर्थनिराकरणावसरे उक्तेः। तच्चेष्टत्वेऽनुकूलत्वे च विश्राम्यति॥ **तथासति कृतेरशेषत्वेनेति**। कृतौ शेषत्वव्यव-

श्रीभाष्यम्

**तांप्रति तत्साध्यस्य शेषित्वाभावात्। नच परोद्देशप्रवृत्त्यर्हतायाश्शेषत्वेन परश्शेषी ; उद्देश्यत्वस्यैव निरूप्यमाणत्वात्। प्रधानस्यापि भृत्योद्देशेन प्रवृत्त्यर्हत्वदर्शनाच्च। प्रधानस्तु भृत्यपोषणेऽपि स्वोद्देशेन प्रवर्तत इतिचेन्न, भृत्योपिहि प्रधानपोषणे स्वोद्देशेनैव प्रवर्तते। कार्यस्वरूपस्यैवानिरूपणात् कार्यप्रतिसम्बन्धी शेषः तत्प्रतिसम्बन्धी शेषीत्यप्यसङ्गतम्।**

श्रुतप्रकाशिका

त्यर्थः। **उद्देश्यत्वस्यैव निरूप्यमाणत्वादिति**। अयमर्थः कृत्युद्देश्यत्वं कृतिशेषित्वम्, शेषित्वं शेषप्रतिसंबन्धित्वम्। शेषत्वं परोद्देशप्रवृत्त्यर्हत्वमित्युक्ते सत्युद्देश्यत्वं नामोद्देश्यत्वमित्युक्तं भवतीत्यात्माश्रयः उद्देश्यनिरूपणोपयुक्तस्य शेषत्व निरूपणस्य उद्देश्यनिरूपणसापेक्षत्वादिति। किं परोद्देशप्रवृत्त्ययोगव्यवच्छेदो विवक्षितः उतान्ययोगव्यवच्छेदइति विकल्पे प्रथमे शिरसि राजन्यतिव्याप्तिमाह—**प्रधानस्यापीति**। अत्रोद्देश्यशब्देन प्रयोजनभावाभिसन्धिर्विवक्षितः। तत्परिहारमुखेन द्वितीयं शिरश्शङ्कते—**प्रधानस्त्विति**। परोद्देशेन प्रवृत्त्यन्ययोग*व्यवच्छेदो विवक्षितः नतु प्रधानस्य नास्ति स्वोद्देशेनापि तस्य प्रवृत्तेः। अतो नातिव्याप्तिरित्यर्थः। परिहरति **नेति**। भृत्येष्वव्याप्तिमाह—**भृत्योपिहीति**॥ कार्यप्रतिसंबन्धित्वं शेषत्वमिति पक्षं दूषयति। **कार्यस्वरूपस्येति**। कार्यस्वरूपे निरूप्यमाणे फलभावार्थविलक्षणाकारेण तन्निरूपणार्थं कार्यत्वं कृत्युद्देश्यत्वमित्युक्तम्। उद्देश्यत्वं शेषत्वं शेषित्वं शेषप्रतिसंबन्धित्वम्, शेषत्वं च कार्यप्रतिसंबन्धित्वमित्युक्तेसत्यात्माश्रयस्स्यात् कार्यनिरूपणोपयुक्तशेषत्वनिरूपणस्य कार्यनिरूपणसापेक्षत्वादित्यर्थः॥

भाष्यकाराभिमतं शेषत्वलक्षणं स्वीकृत्य कृत्युद्देश्यत्वसमर्थनमपि दुश्शकम्। तथाहि **'परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः। परश्च शेषी'** इति भगवान्भाष्यकारः वेदार्थसंग्रहे शेषिलक्षणमभाषिष्ट। **'शेषः परार्थत्वात्'** इति शेषशेषिभावलक्षणपरस्य जैमिनीयसूत्रस्य परैरन्यथाव्याख्यातत्वात्तद्व्यावृत्त्यर्थं तस्य सूत्रस्यार्थोऽनेन लक्षणग्रन्थेन * यथावत्प्रदर्श्यते। * अस्यार्थ उच्यते अन्यस्य प्रयोजनमेव यस्य परमप्रयोजनं स शेषः अन्यश्शेषीतिवाक्यार्थः। अत्र परशब्दोऽन्यपर्यायः। परातिशयशब्दयोः कर्मधारयशङ्कानिवृत्त्यर्थो गतशब्दः। तेन स्वगतातिशयाधायके शेषिण्यातिव्याप्तिव्युदासः। अतिशयशब्दः प्रतिकूलेतराकारपरः, निकृष्टेतराकारपरोवा ; तेन परगतविनाशाधायकश्स्त्राग्नि कण्टकादीनां विनाश्यंप्रति शेषत्वव्युदासः॥

गूढार्थसंग्रहः

हारो भाक्त इत्येव भाट्टदीपिकादावुक्तम्। उद्देश्यत्वस्यैवेति। इष्टत्वसाध्यत्वव्यतिरिक्तोद्देश्यत्वस्य प्रभाकरसम्मतत्वेन उद्देश्यत्वानिरूपणमन्तरा तदयोग इति भावः॥

**भृत्योहि प्रधानपोषणे इति**। यश्चपुरुषधौरेयःप्रधानः स्वप्रयोजनमनभिसंधायैव भृत्योद्देशेन प्रवर्तते तत्र दोष उक्तः तत्रापि प्रधानस्य स्वोद्देशेन प्रवृत्त्यङ्गीकारे भृत्यस्य स्वभावत एव स्वोद्देशेनैव प्रधानपोषणे प्रवृत्त्या तत्राव्याप्तिरिति भावः। स्वामिभृत्यभावेष्वेव ईशेशितव्यव्यवहारस्य लोके दर्शनात् तद्विध एव संबन्धो भवितुमर्हतीति अंशाधिकरणभाष्ये (शं) पूर्वपक्षे परैरुक्तया स्वस्वामिभावरूपः ईशेशितव्यभावः शेषशेषिभावमन्तरा न घटते। उभयोस्सामान्यविशेषरूपत्वादिति भावः॥

## श्रुतप्रकाशिका

नच दुःखहेतुषु यातनाशरीरेष्वव्याप्तिः तेषामपि दुःखजननद्वारा पापक्षयलक्षणातिशयहेतुत्वात् । नचानुत्पन्नेऽपूर्वे व्रीह्यादिभिरतिशयाधानायोगात् तेष्वव्याप्तिः सत्तालाभस्यातिशयरूपत्वात् निकर्षात्मकधर्मेतराकारोह्यतिशयः । ननु मान-संबन्धार्हं व्यवहारार्हंवा यत्स्वरूपं तदेव सदितिहि भवन्मतम् । सत्ताजात्यभावात् तत्कथं स्वरूपमेवाकार इत्युच्यते? न स्वरूपस्यैव सत्तारूपत्वेऽपि तल्लाभस्याकारत्वोपपत्तेः । * सत्तालाभोह्यतिशय इत्युक्तम् । सत्तालक्षणस्वरूपस्य च लाभो नाम प्रथमक्षणसंबन्धः । * स्वरूपस्याविद्यमानत्वेऽपि धीस्थतया परातिशयाधानव्यवहारउपपन्नः । इच्छयेतिपदेन पर गतातिशयस्येच्छाविषयतया प्रयोजनत्वमवगम्यते । इच्छापदस्य च निरुपपदत्वात् साक्षादेवेच्छाविषयत्वमभिप्रेतम् । साक्षादिच्छाविषयश्च परमप्रयोजनम् अवान्तरप्रयोजनस्यहि तदर्थतयेष्टत्वमिति न साक्षादिच्छाविषयत्वम् । अतः परम-प्रयोजनज्ञापकेनेच्छयेतिपदेन परार्थत्वादित्यर्थशब्दो व्याख्यातो भवति । अर्थ्यत इतिह्यर्थः इष्यतइति यावत् । निरुपप-दश्चार्थशब्दः स्वतःपरमप्रयोजनपरः । अनेन स्वातिशयाधायके भृत्यादौ लक्षणस्याव्याप्तिशङ्काव्युदासः भृत्योहि स्वाल-ङ्कारादिकमपि स्वाम्यतिशयाय भवतीतिहि स्वबुद्ध्या स्वातिशयमाधत्ते, अतो भृत्येन स्वातिशयाधानस्य * परातिशयः परमप्रयोजनमिति नाव्याप्तिः । उपादेयत्वं स्वीकार्यत्वं व्यवहर्तव्यत्वमिति यावत् इच्छास्वीकारौ यथायोग्यं सभवतः । शेषशेषिणोरुभयोरन्यतरस्मिन्वा संभवतश्चेदिच्छास्वीकारौ तद्गतौ स्तः, यथा राजभृत्यराजतद्भवनादौ, उभयमचेतनंचे-दुभयव्यतिरिक्तचेतनगताविच्छास्वीकारौ, यथा प्रभा प्रभावद्यागतदङ्गादिके । उपादेयत्वमुपादातुमर्हत्वम् । तेनाकिंचित्कार-दशायामव्याप्तिपरिहारः । एवकारेण कदाचित्स्वार्थनिरपेक्षपरप्रयोजनसाधकेषु प्रकृष्टकृपास्नेहान्वितेष्वतिव्याप्तिव्युदासः ॥

* अथवा केनचिदाकारेणोपहितस्य शेषत्वेसति तदनुपहितस्य शेषत्वव्यावृत्त्यर्थ एवकारः अनुपहितस्य प्रयोजना न्तरसाधकत्वेन परातिशयैकप्रयोजनत्वाभावात् स्वरूपं—स्वं रूपं असाधारणधर्मः निरूपकधर्म इत्यर्थः । नच निरूपकश-ब्दस्य व्युत्पादनार्थत्वाद्व्यावर्त्यधर्मापेक्षा, परातिशय एव परमप्रयोजनं यस्य सपरं प्रति शेष इति लक्षणमुक्तं भवति । यतः परातिशयस्यैव परमप्रयोजनस्याधायकत्वं लक्षणम् । अतएव परगतातिशयधानायोगान्ययोगव्यवच्छेदविकल्पेन राजन्य-भृत्ययोरतिव्याप्त्यव्याप्तिप्रसञ्जनमस्मत्पक्षे नावतरति परातिशयमात्राधायकत्वस्य लक्षणत्वाभावात् ॥

नच द्वारशेषिगतातिशयस्य परमशेषिगतातिशयंप्रति प्रयोजकत्वेसत्यपि तस्य परमप्रयोजनत्वाभावाद्द्वारशेषिणंप्रति शेषभूतवस्तुनि लक्षणस्याव्याप्तिरशङ्कनीया, शेषभूतवस्तुगतातिशयापेक्षया शेषिगतातिशयस्य पारम्यमात्रस्य विवक्षिततया परमशेषिगतातिशयरूपपरमप्रयोजनत्वस्य व्युदसनीयत्वाभावात् । ततश्च द्वारशेषिगतातिशयस्य * शेषभूतवस्तुगतातिश-यान्तराधायकत्वेन प्रयोजनत्वं परमशब्दव्युदसनीयम् ॥

ननु 'पुरुषश्च कर्मार्थत्वात्' इति पुरुषस्य कर्मशेषत्वं कर्ममीमांसायां राद्धान्तितम् । पुरुषश्च स्वर्गकाम इति तस्य परातिशयनिष्पादनमेव परमप्रयोजनं न भवतीत्यव्याप्तिरितिचेन्न तस्य कर्तृत्वोपहितवेषेण शेषत्वादुपहितस्य कर्मनि-ष्पादनैकप्रयोजनत्वाच, कर्मशेषतोपपत्तेः । नन्वेतल्लक्षणमसम्भवहतम् । नखलु चेतयमानः कश्चित्परगतातिशयं स्वस्य परमप्रयोजनं मत्वा प्रवर्तते किंतु परप्रयोजनमपि स्वप्रयोजनार्थं मत्वाहि प्रवर्तते? उच्यते । नैवमसंभवः अचेतनेषु पराति-शयैकप्रयोजनत्वदर्शनात् । यद्यपि चेतनस्स्वारस्येन स्वप्रयोजनमेव परमप्रयोजनं मन्यते तथाऽपि न लक्षणस्य हानिः, जन्मक्रियाद्यभिज्ञैर्मध्यस्थैः परातिशयनिष्पादनैकप्रयोजनतया प्रतिपत्तुं शक्यत्वात् । इच्छास्वीकारौ यथा संभवमितिह्यु-क्तम् । तथा प्रतिपत्तियोग्यत्वमनिष्टमप्यवर्जनीयं स्वयमपि भृत्यो जानाति, अपि च परातिशयस्य परमप्रयोजनत्वावगति-स्स्वरसतश्चेतनस्यापि संभवति प्रकृष्टकृपास्नेहान्वितेषु तद्दर्शनात्, दयाहि स्वार्थनिरपेक्षा परदुःखासहिष्णुता, अत्रानुकूले-

## श्रुतप्रकाशिका

तरजनः परइति विवक्षितः। अर्थादिकामनया परदुःखं शिशमयिषोस्तद्दुःखानुवृत्तिरनिष्टा स्यादिति तद्व्युदासाय स्वार्थानपेक्षशब्दः॥

यद्यपि कृपया पररक्षणस्य शास्त्रसिद्धमदृष्टम् तथाऽप्यदृष्टाभिसन्धिविरहितस्यैव परदुःखदर्शनानन्तरमश्रुपातादिमत्त्वदर्शनात्, तद्रक्षणदशायामप्यदृष्टाभिसन्धिराहित्यदर्शनाच्च, स्वार्थानपेक्षता युक्ता परदुःखदर्शनजनित तादात्विकस्वदुःखनिवृत्तिरूपफलात्तत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमितिचेत् ईदृशं स्वार्थत्वं शेषस्याप्यस्ति तद्धि स्वार्थानपेक्षत्वं न विहन्ति।किंतु तदनुकूलमेव परदुःखज्ञानरूपदुःखनिवृत्तिं पराभ्युदयज्ञानरूपप्रीतिमत्त्वंच विना स्वार्थानपेक्षत्वस्य विवक्षितत्वात्। तथा मित्रादिषु स्नेहप्रकर्षाच्च स्वार्थानपेक्षाप्रवृत्तिः, बन्धुद्रविणयशो धर्महानिकरी प्राणव्ययकरी च दृश्यते * संबन्धविशेषाभिव्यक्तेषु प्रीतिः स्नेहः यस्य विपाकाः अस्थानभयशङ्कित्वं दोषानवभासो, दोषेऽपि गुणबुद्धिरित्यादयः। स्निग्धश्च स्वसत्तामनपेक्ष्य पुत्रादिदुःखनिवृत्त्यर्थं प्रवर्तमानो दृश्यते। तच्च तद्गतदुःखासहत्वकृतम्; यस्य दुःखातिशयदर्शनं स्वसत्तानपेक्षतामापादयत् सच्च निरतिशयप्रीतिविषयः परानर्थनिमित्ताप्रीतितारतम्यस्य तद्विषयप्रीतितारतम्यनिबन्धनत्वात्। यश्च निरतिशय प्रियः तदभ्युदयोऽपि निरतिशयप्रियः तत्प्रीतितारतम्यस्य तत्संबन्धिप्रीतितारतम्यहेतुत्वात्। तदभ्युदयश्च परमप्रयोजनं भवति। स्वप्रीतिहेतुभूतस्वगतार्थान्तरसाधनत्वनैरपेक्ष्येण स्वेच्छाविषयत्वात्। अतः कृपया स्नेहेन वा परदुःखासहिष्णुत्वदर्शनात् परप्रयोजनस्य परमप्रयोजनत्वं सिद्धमिति न शेषलक्षणस्यासम्भवः॥

**नच** परमप्रयोजनपरातिशयाधायकत्वस्य मित्रादिष्वपि संभवात् लक्षणस्यातिव्याप्तिश्शङ्कनीया तेषां परातिशयैकप्रयोजनत्वनियमाभावात् तद्धि तेषामाकारविशेषोपहितरूपेण वा यावज्जीवं वा * पुरुषविशेषंप्रति न नियतं पुरुषभेदेनाप्यनियतं च, भृत्येषुतु तन्नियतं शेषिविशेषनियमाभावेऽपि यंकंचित्प्रतिपाराध्यें भृत्यादेर्यावदात्मभावीति। यर्दादृक्तत्वं न दृश्यते तेषां न भृत्यत्वम्। * यद्वा यदि गर्भदासादयस्त्वेषां परार्थैकप्रयोजनत्वमजानन्तश्शेषिण्यतिशयाधानमपि स्वार्थं मन्यन्ते, तथाऽपि स्थूलोऽहमित्यात्मनो देहाद्यभिन्नत्वबुद्धिवत् सा भ्रान्तिरिति न लक्षणाव्याप्तिः स्वार्थत्वबुद्धेरात्मस्थूलत्वधिय इव प्रमाणबाधितत्वात्। नच स्वार्थत्वभ्रान्तिमात्रेण पारार्थ्यहानिः नह्यात्मनस्थूलोऽहमिति भ्रान्त्या देहवैलक्षण्यहानिः। एवं चिदचितोरपि स्वातन्त्र्यबुद्धेश्श्रुतिबाधितत्वान्न लक्षणाव्याप्तिः। न खलु व्रीह्यादीनां यागीयत्वाज्ञानेऽपि यागशेषत्वहानिः॥

स्वातन्त्र्याभिमानवतः परमप्रयोजनरूपं परगतातिशयं नियमेनाऽनादधतः कथं लक्षणवत्त्वमितिचेन्न एतद्बुद्ध्या तथात्वानवगमेऽपि वस्तुतः परमात्मलीलोपकरणतया परमात्मनि लीलारसरूपातिशयस्य नियमेन सिद्धेः तत्त्वज्ञैरीश्वरपरिकरत्वेन नियमेन * ज्ञायमानत्वं चास्य किंचित्कारः। तेनैतत्परिकरवत्तया ज्ञायमानत्वरूपातिशयः परस्य सिध्येत, तदुक्तं नीतिविद्भिः–'**मनागुपकारिता सर्वस्यास्त्येव तत्परिकरत्वेन ज्ञायमानत्वात्**' इति। शेषभूतवस्त्वाहितलीलारसाद्यतिशयभाक्त्वं न परमात्मनोऽवाप्तसमस्तकामत्वविरोधि इच्छायां सत्यामभिमतविनियोगानुगुणपरिकरसंपत्तिर्ह्यवाप्तसमस्तकामत्वम्। यथाऽऽह भगवान्भाष्यकारो वेदान्तसारे–'**अस्यात्मतृप्तस्यावाप्तसमस्तकामत्वंहि सदाऽभिमतसकलभोगोपकरणसद्भावः**' इति। अतो यथोक्तशेषलक्षणमुपपन्नम्॥ एवमस्मदुक्तं शेषलक्षणमङ्गीकृत्य कृतिंप्रति शेषित्वं कृत्युद्देश्यत्वमिति परैर्वक्तुं न शक्यते विकल्पासहत्वात्। किं त्वया द्वारशेषित्वं कृत्युद्देश्यत्वमभिमतं, उत परमशेषित्वम्? प्रथमे भावार्थस्यापि कृतिशेषित्वं स्यात् तस्य कृतिसाध्यत्वात्। द्वितीये स्वर्गस्य कृतिंप्रति शेषित्वं स्यात् कृतिसाध्यापूर्वस्यापि स्वर्गसाधनत्वात्। अतः कृतिशेषित्वरूपं कृत्युद्देश्यत्वं फलभावार्थविलक्षणाकारेण न सिद्ध्यति॥

### श्रीभाष्यम्

**नापि कृतिप्रयोजनत्वं कृत्युद्देश्यत्वं पुरुषस्य कृत्यारम्भप्रयोजनमेवहि कृतिप्रयोजनम् सचेच्छाविषयः। तस्मादिष्टत्वातिरेकि कृत्युद्देश्यत्वानिरूपणात् कृतिसाध्यताकृतिप्रधानत्वरूपं कार्यं दुर्निरूपमेव। नियोगस्यापि साक्षादिषिविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वात्तत्साधनतयैवेष्टत्वं कृतिसाध्यत्वं च। अत एवहि तस्य क्रियातिरिक्तता, अन्यथा क्रियैव कार्यं स्यात् स्वर्गकामपदसमभिव्याहारानुगुण्येन लिङादिवाच्यं कार्यं स्वर्गसाधनमेवेति क्षणभङ्गिकर्मातिरेकि स्थिरं स्वर्गसाधनमपूर्वमेव कार्यमिति स्वर्गसाधनतोल्लेखेनैवह्यपूर्वव्युत्पत्तिः। अतः**

### श्रुतप्रकाशिका

**अथ** कृतिप्रयोजनत्वं कृत्युद्देश्यत्वमिति पक्षं दूषयति **नापीति**। नहि कृतिर्नाम चेतयमाना काचित्प्रयोजनवती तस्मात्कृतिप्रयोजनं नाम कृतिमत्पुरुषप्रयोजनमित्यर्थः। ततःकिमित्यपेक्षायां तच्चेष्टत्वे पर्यवस्यतीत्याह—**सचेति**। **कृतिसाध्यताकृतिप्रधानत्वरूपं दुर्निरूपमेवेति**। कृतिप्रधानत्वशब्देन स्वेदादिव्यावृत्तिः। कृतिसाध्यताशब्देनात्मव्यावृत्तिः तस्यहि कृतिशेषित्वमस्ति। विशिष्टस्य लक्षणत्वात्तत्र विशेष्ये दुर्निरूपेसति विशिष्टमेवासिद्धमित्यर्थः। एवं तृतीयाकाररूपं प्रयोजनत्वं दूषितम्॥

**अथ** स्वतइष्टत्वरूपं प्रयोजनत्वं तत्प्रयुक्तकृतिसाध्यत्वं च दूषयति **नियोगस्यापीति**। इषिः इच्छा अत्रेच्छाविषयभूतार्थान्तरसाधनत्वविरहेणेष्टत्वं स्वतइष्टत्वं विवक्षितम्। तत् सुखस्य दुःखनिवृत्तेश्च समानम्। स्वतइष्टत्वं स्वतइष्टत्वप्रयुक्तकृतिसाध्यत्वं च तयोरेव। तस्मात्स्वतइष्टत्वतत्प्रयुक्तकृतिसाध्यत्वे तत्साधनतयेष्टस्य नियोगस्य न सिध्यत इत्यर्थः। साधनतयेष्टत्वमुपपादयति। **अतएवहीति**। साधनत्वेन सिद्धयनङ्गीकारे धात्वर्थ एव कार्यं स्यादित्याह— **अन्यथेति**। तद्विवृणोति **स्वर्गकामेति**। **अतइति**। स्वर्गकामपदान्वयात्पूर्वं धात्वर्थमात्रस्यैव कार्यताप्रतिपत्तेस्तदन्वये तत्साधनतयैव प्रति

### गूढार्थसंग्रहः

प्रकरणपञ्चिकायां—'स्वर्गकामादयः कार्ये नियोज्यत्वेन सङ्गताः। स्वर्गकामादयः शब्दैर्वक्तव्या इत्यवस्थितम्। नियोज्यः सर्वकार्ये यः स्वकीयत्वेन बुद्ध्यते। स्वर्गादिःकामयोगाच्च साध्यत्वेनैव गम्यते॥ तेन साध्यत्वपर्यन्तस्वर्गादीच्छाविशेषितः। तदेव शक्नुयात्कार्यं बोद्धुं यत्काम्यसाधनम्॥ स्वर्गादिकं कामयमानस्य तदेव कार्यतया बोद्धुमवकल्पते। यदेव काम्यमानस्य सिद्ध्यनुगुणम् अन्यथाहि तत्कामिना सता तत्कार्यतयाऽनवबुद्धं स्यात्। अपरित्यक्ततत्कामनासंबन्धोहि तत्साधनं कार्यतयाऽवबुद्ध्यते। तस्मात् यत्कामिनो यत्कार्यतयोपादिश्यते तत्तत्काम्यस्य साधकमिति नियोज्य कार्यान्वयानुपपत्त्यैव गम्यते। एवंसति किं फलमित्याह—'लिङादिस्तत्र कार्यंचेत् क्रियामेवावबोधयेत्। समन्वयो नियोज्येन तदानीमेव हीयते॥ क्रियाहि क्षणिकत्वेन न कालान्तरभाविनः। स्वर्गादेस्साध्यमानस्य न शक्ता जननप्रति इष्टस्याजनिका सा च नियोज्येन फलार्थिना। कार्यत्वेन न संबन्धमर्हति क्षणभङ्गिनी॥ तस्मान्नियोज्य संबन्धसमर्थं विधिवाचिभिः। कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते॥ तद्धि कालान्तरस्थानाच्छक्तं स्वर्गादिसिद्धये। संबन्धोऽप्युपपद्येत नियोज्येनास्य कामिना॥ क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत्। अतो मानान्तरापूर्वमपूर्वमिति गीयते॥ कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ। नियोग इति मीमांसानिष्णातैरभिधीयते' इत्युक्तं नियोगं पर्यालोचयति—**नियोगस्येति**॥

श्रीभाष्यम्

**प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेवपश्चात्स्वर्गसाधनं भवतीति उपहास्यम्। स्वर्गकामपदान्वितकर्याभिधायिपदेन प्रथममप्यनन्यार्थतानभिधानात् सुखदुःखनिवृत्तितत्साधनेभ्योन्यस्यानन्यार्थस्य कृतिसाध्यताप्रतीत्यनुपपत्तेश्च।**

श्रुतप्रकाशिका

पत्तेश्चेत्यर्थः। प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात्स्वर्गसाधनं भवतीति॥

अयमर्थः यथा स्वप्राधान्यनिर्वहणायानुजीविनामभिमतं प्रभुः प्रददाति तद्वदपूर्वमपि स्वय प्रधानतया प्रतिपन्नं स्वप्राधान्यनिर्वहणाय स्वं साधयतः पुरुषस्य स्वर्गं ददातीति। यथा पाञ्चिकायां—

**आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये। कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः॥**

इति। उपहास्यं समीक्षैरपि हास्यम्। अत इत्युक्तमर्थं विवृणोति। **स्वर्गकामेति**। प्राधान्येन कार्यप्रतिपत्तिः किमेकपदश्रवणवेळायां उत स्वर्गकामपदान्वितवेळायामिति विकल्पमभिप्रेत्य प्रथमे कल्पे दूषणमन्यथाक्रियैव कार्यं स्यादित्यनेनोक्तंभवति। तास्मिन्नेव पक्षेऽभ्युपगमेन दूषणान्तरं च * एकपदेन कार्यमनन्यार्थं प्रतिपन्नमस्तु तथाऽप्यान्विताभिधानदशायां प्रतिपन्न एवार्थस्सम्यगर्थः अतो नानन्यार्थत्वमिति। द्वितीये कल्पे दूषणमुच्यते। **स्वर्गकामपदान्वितेति**। स्वर्गकामपदान्वितलिङादिना तत्साधनतयैवाभिधानात्प्रथममनन्यार्थतया प्रतिपन्नमिति न वक्तुं युक्तमित्यर्थः। व्युत्पत्तिदशायामपूर्वस्य साधनतया व्युत्पत्तिः, अभिधानदशायांतु अनन्यार्थं स्थायिकार्यमित्येव प्रतीयत इति शङ्कायां अपूर्वव्युत्पत्तिमतोऽपि पुरुषस्य एकपदश्रवणवेळायामनन्यार्थत्वप्रतीत्यनुपपत्तिमाह—**सुखेति**। न निर्विशेषं सामान्यमितिन्यायात् साध्यमिति सामान्येनाभिधीयमानमपि विशेषनिष्ठतया प्रतीयते। सुखं दुःखनिवृत्तिस्तत्साधनं वा त्रीण्येव कृतिसाध्यानि तस्मादेषु त्रिष्वन्यतमेन साध्येन भवितव्यम्। तत्र सुखत्वदुःखनिवृत्तित्वायोगात्तत्साधनतयैव साध्यमिति प्रतीयते। कृतिर्हि त्रिष्वन्यतममेव गोचरयति। तथा दर्शनात् दर्शनानुरोधेनचाभ्युपगन्तव्यम्। * कृतेःक्रियातिरिक्तगोचरत्वादर्शनेनाहि कृत्यपूर्वयोर्घटकत्वेन भावार्थौ निवेशितः। तस्मात्त्रिष्वन्यतमत्वाभावे साध्यमिति प्रतीतिरेव न स्यादित्यर्थः॥

किंच अन्विताभिधानवादिना स्वर्गकामपदान्वित एव लिङादिः कार्यमभिदधातीति वक्तव्यम्। तदानीं तत्सन्निधानबलेन तत्साधनतयैव प्रतीतिस्स्यादिति नानन्यार्थतया प्रतिपत्तिरिति * सुखेत्यादेरेवंवार्थः सुखदुःखनिवृत्त्यन्यत्वात् स्वतइष्टतया कृतिसाध्यत्वमयुक्तम्। तत्साधनादन्यतया परंपरयेष्टत्वेन कृतिसाध्यत्वमप्ययुक्तमिति। पूर्वं तृतीयाकाररूपं प्रयोजनत्वं निरस्तम्। अथ स्वतइष्टत्वरूपं प्रयोजनत्वं च सुखदुःखनिवृत्त्यन्यत्वान्निरस्तम्। इदानीं स्वतइष्टत्वसिद्धये

गूढार्थसंग्रहः

**उपहास्यमिति**। 'नचापि फलमात्रकरम्। न क्रियाफलसम्बन्धमात्रं वा। क्रियाफलयोः साध्यसाधनवाऽवगमेऽपि न प्रवृत्तिरुपपद्यते। तृप्तिहेतोर्भोजनेऽतीते वर्तमानेवाऽप्रवृत्तिर्भविष्यत्यपि तत्साधने सामुद्रविदाख्यातइवानुष्ठानाभावात्। पुरुषाशयाकगमस्तु प्रवृत्तिहेतुतया नाशङ्कितोऽपि स्वतन्त्रप्रवृत्तौ व्युत्पित्सोर्दूरोत्सारितत्वात्। किंतु कार्यतां बुद्ध्वा प्रवृत्तो ममेदं कार्यमिति प्रतीत्याऽहं सर्वत्र प्रवृत्तः।' इत्यादिप्रकरणपञ्चिकोक्तमप्युपहास्यमेव॥ कार्यस्य सुखरूपस्य सिद्धेरेवाभावदशायां तत्र स्वर्गकामस्य नियोज्यत्वान्यथाऽनुपपत्त्या स्वर्गसाधनत्वसिद्ध्युक्तेरसङ्गतत्वात्। तदेवाह—**स्वर्गकामपदान्वितेत्यादिना**। नियोगस्य सुखरूपत्वाद्यभावेन सुखरूपत्वस्य प्रमाणतोऽसिद्ध्या नियोगस्य प्रयोजनत्वं न संभवतीति

## श्रीभाष्यम्

अपिच किमिदं नियोगस्य प्रयोजनत्वम्? सुखवन्नियोगस्याप्यनुकूलत्वमेवेतिचेत् । किं नियोगस्सुखं सुखमेव ह्यनुकूलम् । सुखविशेषवन्नियोगापरपर्यायं विलक्षणं सुखान्तरमितिचेत् किं तत्र प्रमाणमिति वक्तव्यम् । स्वानुभवश्चेन्न; विषयविशेषानुभवसुखवन्नियोगानुभवसुखमिदमिति भवताऽपि नानुभूयते । शास्त्रेण नियोगस्य पुरुषार्थतया प्रतिपादनात् पश्चात्तु भोक्ष्यत इतिचेत् । किं तन्नियोगस्य पुरुषार्थत्ववाचिशास्त्रम् । न तावल्लौकिकं वाक्यम् तस्य दुःखात्मकक्रियाविषयत्वात्, तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात् । नापि वैदिकम् । तेनापि स्वर्गादिसाधनतयैव कार्यस्य प्रतिपादनात् । नापि नित्यनैमित्तिकशास्त्रम्, तस्यापि तदभिधायित्वं स्वर्गकामवाक्यस्यापूर्वव्युत्पत्तिपूर्वकमित्युक्तरीत्या तेनापि सुखादिसाधनकार्याभिधानमवर्जनीयम् । नियतैहिकफलस्य कर्मणोऽनुष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्यरोगतादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलब्धेश्च नियोगस्सुखमित्यत्र नकिंचनप्रमाणमुपलभामहे । अर्थवादादिष्वपि

## श्रुतप्रकाशिका

अनन्यार्थत्वद्राढिम्ने च संभावनीयं सुखरूपप्रयोजनत्वं दूषयितुमुपक्रमते । अपिचेति । किमिदं नियोगस्य प्रयोजनत्वमिति । किं क्षेपे शङ्कते—सुखवदिति ॥

अनुकूलत्वं सुखेतरस्यानुपपन्नं मन्यमानः पृच्छति किमिति । अभिप्रेतं विवृणोति । सुखमेवहीति । पुनश्शङ्कते सुखविशेषवदिति । नियोगापरपर्यायं * पर्यायबाहुळ्यसम्भवादपरशब्दः । सुखान्तरमिति । यथा भौमसुखाद्विलक्षणं स्वर्गादिसुखं संभाव्यते तथा ततोऽपि विलक्षणं सुखान्तरमिदमित्यर्थः । प्रमाणाभावं वक्तुमाह- किंतत्रेति । चन्दनादिसुखंहि स्वानुभवसिद्धम्, अतस्स्वानुभवो लौकिकवाक्यं वेदे च काम्यविधिवाक्यं नित्यनैमित्तिकवाक्यमर्थवादाश्च यथाक्रमं नियोगस्य सुखरूपतांप्रति प्रमाणानि न भवन्तीत्युच्यते स्वानुभवश्चेत्यादिना । तस्य दुःखात्मकक्रियाविषयत्वात्तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनादिति । दुःखात्मकस्य सुखादिसाधनभूतधात्वर्थमात्रस्य कर्तव्यताप्रतिपादनादित्यर्थः । नियतैहिकफलस्येत्यादिना । योग्यानुपलब्धिरुच्येत । नियतैहिकफलस्य कर्मणः * अप्रस्तुतप्रतिबन्धस्य कर्मण इत्यर्थः । अनेना*न्त्येष्टिसापेक्षपरमापूर्वव्यावृत्तिः ॥

## गूढार्थसङ्ग्रहः

साधयति—किमिदं नियोगस्य प्रयोजनत्वमित्यादिना ॥ स्वर्गस्य सुखरूपत्वं प्रयोजनत्वं च अर्थवादसिद्धं सर्वसंमतंचेति न तथा नियोगस्येति निगमयति—अर्थवादादिष्वपीत्यादिना । 'यन्नदुःखेन संभिन्नम्' इत्यादिवाक्येन स्वर्गस्य सुखरूपत्वं सिद्ध्यतीति प्रकरणपञ्चिकोक्त प्रागेव (९८१.पु) निरूपितम् ॥ स्ववेश्मनि निधिरस्तीति वाक्यश्रवणसमनन्तरं कार्यावगममन्तराऽपि प्रवृत्तिर्वर्तत इति समन्वयाधिकरणे वक्ष्यते। तेन 'निधिमानेष भूभागः' 'प्रतिरोधकवानयमध्वा' इति विनाऽपि कार्यान्वयं प्रवृत्तिनिवृत्तिकरवाक्यमुपलभ्यत इत्याक्षेपस्याध्याहारेणात्रापि कार्यावगमनिबंधः ऋजुविमलोक्त अनुपादेय इति सिद्धम् । 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः एवमिमाःप्रजा अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्त्यनृतेनहि प्रत्यूढाः' (छा.८.३.२) इति श्रुतौ आनन्दरूपस्य ब्रह्मणः निधिसादृश्योक्त्या निधिवाक्यस्येव सिद्धब्रह्मपरवाक्यस्यापि प्रामाण्यं सूचितम् ॥

## श्रीभाष्यम्

**स्वर्गादिसुखप्रकारकीर्तनवन्नियोगरूपसुखप्रकारकीर्तनं भवताऽ(म)पि न दृष्टचरम् । अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादे-**

## श्रुतप्रकाशिका

अथ कृतिसाध्यत्वं दूषयति । **अतो विधिवाक्येष्वपीति**। किं व्युत्पत्तिसिद्धत्वाद्धात्वर्थातिरिक्तार्थःस्वीक्रियते, उत पुरुषार्थतासिद्ध्यर्थं, उत सुखसाधनत्वलक्षणव्यवहितपुरुषार्थत्वसिद्ध्यर्थमिति विकल्पं हृदि निधाय प्रथमद्वितीयकल्पयोरुत्तरमाह—**अतइति** । अयमर्थः उक्तप्रकारेण धात्वर्थातिरिक्ते व्युत्पत्त्यभावात् तथाविधस्य स्वतःपुरुषार्थत्वाभावाच्चेति । कर्तृव्यापारः प्रयत्नः। शब्दशास्त्रस्वारस्यमप्यस्मत्पक्षे विद्यत इत्याह—**शब्दानुशासनसिद्धमेवेति** । साधनत्व-

## गूढार्थसंग्रहः

एतेन 'अत्रापरेऽपरि पक्वविद्याऽवलेपोद्रेकतिरस्कृतविवेकाः परिचोदयन्ति, कथं पुनःकार्यरूपो वेदार्थः ? यावता वेदान्तानां सिद्ध एवार्थः 'विज्ञानमानन्दं ब्रह्म' इति प्रतीयते इत्यादिना आशङ्क्य 'तदेतद्बालिशभाषितं बालेष्वेवादरणीयतां लभते' इति ऋजुविमलोक्तिः कार्यस्याप्रामाणिकत्वादनादरणीया । एवं च वृत्तिकारमतखण्डकविवर्ताद्वैतिसम्मतनिर्विशेषस्येव वृत्तिकारसिद्धान्तपूर्वपक्षिप्रभाकरसंमतकार्यस्याप्यप्रामाणिकत्वमप्रकम्प्यमिति सिद्धम् ॥

**कर्तृव्यापारसाध्यतामात्रमिति**। अत्र मात्रपदेन 'कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते' इत्यत्रोक्तप्राधान्यस्य व्यवच्छेदः । एवं 'पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यःप्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम्'॥ (विधिविवेकः) इति मण्डनोक्तेष्टसाधनत्वस्यापि व्यवच्छेदः । अयमर्थः आचार्यपादैः स्थापितः 'न स्यात्पुंसः प्रवृत्त्यै विदितमपि गिरा स्वेष्टहेतुत्वमात्रं दुस्साध्यादावयोगादथ सहकुरुते साध्यतैकार्थ्ययोगः । इत्थं शक्तिर्द्वयेस्यात् गरिमहतमिदं किञ्चिदत्रार्थतश्चेदिष्टोपायत्वमर्थादुचितमिह ततः खण्डिता मण्डनोक्तिः ॥' (त.मु.क.अ.स.९३-श्लो) इति ॥

एवं न्यायपरिशुद्धावपि—'नचेष्टसाधनत्वमात्रं लिङादिबोध्यम्। तवेष्टसाधनमिदमतःकुरु' इति सहप्रयोगदर्शनात् नचादरादिनिबन्धना पुनरुक्तिरियं प्रतीतेरतथात्वात्, हेतुनिर्देशायोगाच्च इति। एतेन मण्डनेन 'कर्तुरिष्टाभ्युपायेहि कर्तव्यमिति लोकधीः । विपरीतेत्वकर्तव्यमिति तद्विषये ततः ॥' इत्युपक्रम्य 'तस्मात्कर्तव्यताऽपि नान्या कर्तुस्समीहितोपायतायाः यथोक्तं 'कर्तव्यस्य सुखं फलमिति' इति मण्डनोक्तिरपि निरवकाशा। 'सहप्रयोगदर्शनात्' इत्युक्त्या अर्थद्वये भेदस्य स्फुटं प्रतीतेः। अन्वयव्यतिरेकाभ्यामैक्यं न सिध्यति, दुस्साध्ये फलसाधनत्वे ज्ञातेऽपि अकर्तव्यत्वप्रतीतेरानुभाविकत्वात् । अतः एकस्यार्थसिद्धत्वमेव वाच्यम् ; इष्टसाधनप्रत्ययानन्तरमकर्तव्यत्वज्ञाने प्रवृत्त्यभावे इष्टसाधनत्वं कर्तव्यत्वप्राक्कालिकमेवोपयुज्यते। नतु प्रवृत्त्यव्यवहितपूर्ववृत्तितया, अतः कृतिसाध्यत्वस्यैव वाच्यत्वमिष्टसाधनत्वस्यार्थत्वमेव न्याय्यम्। अयमर्थः पूर्वपक्षिणः प्रभाकरस्यापि संमत इति भाष्य एव व्यक्तम्, अयमेवार्थः भगवतस्संमतः । सिद्धान्ते तद्विचाराकरणात् । भाट्टैरपीष्टसाधनत्वमानुमानिकमित्येवाङ्गीक्रियते । भाट्टरहस्ये 'तथा च प्रवृत्तिविषये यागादौ इष्टसाधनत्वादेरनुमानेनैव बोधोपपत्तेः न पुनर्वाच्यत्वकल्पनावसरः' इति खण्डदेवेनोक्तेः । यद्यपि कृतिसाध्यत्वमपि न लिङर्थ इतिभाट्टरहस्यएवोक्तम् यथा—'नापि कृतिसाध्यत्वम्; तस्य भवन्मते पाकानुकूलत्वस्य कृतौ भाने समानसंवित्संवेद्यतया पाकेऽपि कृतिसाध्यत्वस्य भानोपपत्तेरन्यलभ्यतया लिङो वाच्यत्वानुपपत्तेः । अस्मन्मतेऽपि प्रवर्तनाक्षेपादेवेष्टसाधनत्वादिवद्भानोपपत्तेरन्यलभ्यत्वम्' इति । तथाऽपि पचेदिति पदं पाकपूर्वकाल एव प्रयुज्यते, पचति इतितु पाकवर्तमानतादशायाम-

### श्रीभाष्यम्

**वाच्यमित्यध्यवसीयते । धात्वर्थस्य च यागादेरग्न्यादिदेवताऽन्तर्यामिपरमपुरुषसमाराधनरूपता समाराधितात्परमपुरुषात्फलसिद्धिश्चेति फलमत उपपत्तेरित्यत्र प्रतिपादयि-**

### श्रुतप्रकाशिका

सिद्ध्यर्थं क्रियातिरिक्तार्थस्वीकार इत्यत्राह–धात्वर्थस्येति । 'यज देवपूजायां' इतिहि धातुरिति भावः । प्रकृत-ब्रह्मविचारारम्भहेतुस्सिद्ध इत्याह–अतइति । सिद्धवस्तुनि बुद्धिपूर्वकं यदृच्छयाचाप्युत्पत्तिसम्भवात्, अन्यथाऽपि विधिशेषतया सिद्धेश्चेत्यर्थः ॥

### गूढार्थसंग्रहः

वेति पाकजनकत्वस्य कृतौ भाने पाके कृतिजन्यत्वं भासत इति युक्तम् । कृतिसाध्यत्वं कृत्या साधयितुं योग्यत्वं एतज्ज्ञानानन्तरमेव पाके प्रवृत्तिः, पाकप्रवृत्तेःपूर्वं यज्ज्ञातव्यं कृतिसाध्यत्वं तत् वर्तमानकालिककृतिजन्यताविलक्षणमिति पूर्वकाले एतदर्थज्ञानसंपादनार्थं लिङर्थत्वं युक्तमेव । उक्तं च वेदार्थसंग्रहे–'कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसंबन्धप्रकारोहि वाच्यः । भूतवर्तमानतादिमन्ये वदन्ति, लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्ति ' इति । एतेन कर्तृव्यापारसाध्यत्वस्य लिङर्थत्वाङ्गीकारे विधिविवेके नित्यनैमित्तिकादौ फलं प्रसाध्य फलसाधनत्वप्रतीत्युपपादनक्लेशस्यापि नावसरः ॥

एतावता 'कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते' इति अपूर्वस्य भाट्टासम्मतं प्राधान्यं तस्यैव पुरुषार्थत्वं च प्राभाकरसंमतं पर्यालोचितम् । एतावताऽपि ब्रह्मणः प्रधानत्वस्य फलत्वस्योपनिषत्सु प्रतीतस्य प्रतिपिपादयिषया ब्रह्मविचारस्य कर्मविचारानन्तरकालकर्तव्यता नैव सिध्यति । श्लोकवार्तिकादौ सर्वज्ञनिराकरणेन व्याकरणाधिकरणसमार्गाधिकरणयोः सर्वज्ञाङ्गीकारः भट्टपादानां नैव सिद्ध्यति । 'कुड्यादिभ्योऽपि देशनाः' इति बौद्धमतनिरसनाय बुद्धस्य सर्वज्ञत्वासंभवबोधनाय सर्वज्ञनिराकरणे बौद्धयुक्तिभिः प्रमाणवार्तिकाद्युक्ताभिः औपनिषदसर्वज्ञपुरुषोऽपि न सिध्येत् । एवंसति कर्मणामपूर्वद्वारा फलजनकत्वस्यैव वेदतात्पर्यविषयत्वे उपनिषदां कर्मकर्तृस्तावकत्वेन नैराकांक्ष्यं यत्तन्त्रवार्तिके उक्तं तदेव सङ्गतमापद्यते । तथा च ब्रह्मविचारस्य कर्मविचारानन्तरकालकर्तव्यत्वमयुक्तमेव । एवं प्रभाकरोक्तस्य देवताप्रीतिद्वारा फलजनकत्वे प्रमाणविरहस्य निराकरणाभावे कर्मणामपूर्वद्वारा फलजनकत्वमप्रकम्प्यमेव स्यात् इतिशङ्कायां जैमिनिसूत्रेषु शब्दतः अनिरूपणमात्रेण प्रवृत्तौ भट्टप्रभाकरासिद्धान्तौ न घटेते इति फलाधिकरणे व्याससिद्धान्त एव निरूपयिष्यमाणः एतत्समाधानं भवतीत्याह—**धात्वर्थस्य च यागादेरित्यादिना** । वेदार्थसंग्रहे च कार्यवाक्यार्थविचारदशायामेवायं सिद्धान्तः सप्रमाणं निरूपितः उत्तरत्र सूत्रेष्वेव निरूपयिष्यमाणतया अत्रैवमुक्तिः । 'फलमत' इत्यादि 'पुरुषार्थोऽत' इत्यस्याप्युपलक्षणम् ॥

भट्टमतेतु आख्यातस्य कृतिरर्थः लिङश्शब्दभावना । सा च लोके वक्तुरभिप्रायः, वेदेतु वक्तुरभावात् शब्दनिष्ठा-इत्यभ्युपेयते । समार्गाधिकरणे 'आकाशशरीरं ब्रह्म' इत्यादिश्रुत्युदाहरणपूर्वकं वेदेऽपि पुरुषनिष्ठेच्छैव तन्त्रवार्तिकेऽभ्युपगता । वेदार्थसंग्रहे 'चोदितान्यनुतिष्ठतः' इत्युपक्रम्य 'भीषास्माद्वातःपवते' 'एतस्य वा अक्षरस्य प्रशासने' इत्यादिश्रुतीरुदाहृत्य तदर्थनिरूपणपरं 'तस्याज्ञया धावति वायुः' इत्यादि 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात्सभगवान् वर्धयेत विद्वान्कर्मदक्षः' इत्यन्तद्रमिडभाष्यमुपात्तम् । 'स्वशासनावबोधिशास्त्रं प्रदर्श्य' इत्यादि श्रीभाष्य एव वक्ष्यते । एतत्पर्यालोचनायां विद्ध्यर्थश्शासनमित्येव सिद्धान्तः प्रतीयते । अयमर्थोऽप्युक्तः न्यायपरिशुद्धावाचार्यपादैः । नारायणा-

श्रीभाष्यम्

ष्यते । अतो वेदान्ताः परिनिष्पन्नं परंब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वं च सिद्धम् । चातुर्मास्यादिकर्मस्वपि केवलस्य कर्मणः क्षयिफलत्वोपदेशादक्षयफलश्रवणं 'वायुश्चान्तरिक्षंचैतदमृतम्' इत्यादिवदापेक्षिकं मन्तव्यम् । अतः केवलानां कर्मणामल्पास्थिरफलत्वात् । ब्रह्मज्ञानस्यानन्तस्थिरफलत्वात्तन्निर्णयफलो ब्रह्मविचारारम्भो युक्त इति स्थितम् ॥

इति जिज्ञासाधिकरणम्



श्रुतप्रकाशिका

अथ विशेषणांशासिद्धिं परिहरति चातुर्मास्यादीत्यादिना । कर्मणामावृत्तिविधानाच्च क्षयिफलत्वमवगतमिति सिद्धमित्यनुसंधेयम् 'तद्यथेह कर्मचितो लोकः क्षीयते' इत्यादिवाक्यमभिप्रेत्याह—क्षयिफलत्वोपदेशादिति । अक्षयफलश्रवणानिर्वाहमाह—वायुश्चेति । नहि चातुर्मास्यादिवाक्येषु अक्षयफलश्रवणम*र्थवादोक्तत्वात्त्यज्यते अपितु कर्मणामावृत्तिविधानात् क्षयिफलत्वोपदेशाच्च । तस्मात्कर्मणां क्षयिफलत्वनिर्णयसिद्धिः, अतो हेतौ विशेषणांशस्सिद्धः ॥

अधिकरणार्थमुपसंहरति अतइति । अस्याधिकरणस्य ब्रह्ममीमांसाविषयः । सा किमारम्भणीया उत नेतिसंशयः सिद्धवस्तुनि शब्दव्युत्पत्ति*र्नास्तीति विचारः, अस्तीति निश्चयः । आरंभः प्रयोजनमित्यधिकरणाङ्गपञ्चकम् । यथाऽऽहुः

विषयस्संशयश्चैव विचारो निर्णयस्तथा । प्रयोजनेन सहितमेतत्स्यादित्यङ्गपञ्चकम् ॥

इति । * 'परीक्ष्य लोकान्' इत्यादिवाक्यं प्रथमसूत्रस्थन्यायसिद्धानुवादपूर्वकं गुरूपसदनानियमविधिपरम् । 'गुरुमेवाभिगच्छेदि'त्युक्तत्वात् रागतःप्रवृत्तौ सत्यां विधेयाभावादस्य सूत्रस्य वाक्यत्वं न घटते । * उद्देश्योपादेयविभागवद्धि वाक्यं * विधेयं ह्युपायमिति न वाच्यम् अज्ञातज्ञापकत्वात् प्रागज्ञातं वाक्यज्ञाप्यं ह्युपादेयम् । रागतो ब्रह्मविचारे प्रवृत्तस्यापि सिद्धवस्तुनि * व्युत्पत्तिर्नास्तीति वाक्येन अनारम्भणीयत्वं ज्ञायते तंप्रति सिद्धवस्तुनि व्युत्पत्तिसम्भवादारम्भणीयत्वज्ञापनमज्ञातज्ञापनमेवेत्युद्देश्योपादेयविभागवत्त्वं सूत्रस्य । * अत्रहि रागतःप्रवृत्तिमतः पूर्वपक्षहेतुना निवृत्तौ प्रसक्तायामप्रतिपन्नस्तत्परिहारो विधीयते ॥

इति जिज्ञासाधिकरणम्



गूढार्थसंग्रहः

यैस्त्वेवमुक्तम्—'आप्तस्य हितकामस्य नियोगं केचिदूचिरे । भाष्यकारोऽपि भगवानेतदेवान्वमन्यत' इति । अत्र च 'स्वशासनाववोधिशास्त्रं प्रदर्श्य' इति भाष्यमभिसंहितम् । इदं च विधिनिषेधानुवर्तनातिवर्तनप्रयुक्तनिग्रहानुग्रहव-

## गूढार्थसङ्ग्रहः

चनबलात् सिद्धम् । 'श्रुतिस्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः' इति विधिःप्रेरणम् इति च व्याकारि वैयाकरणैः प्रेरणं च शासनमेव तत्त्वरत्नाकरकारैश्चैवमुक्तम्—

क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुरप्रसादो वा कर्तुःफलद इति रङ्गेशकुदृशः ।
त्वदर्चेष्टापूर्ते फलमपि भवत्प्रीतिजमिति त्रयीवृद्धास्तत्तद्विधिरपि भवत्प्रेरणमिति ॥

नित्यनैमित्तिकादिविधिभेदेषु च प्रशासितुरभिप्रायविशेषा व्यञ्जिताः—

आज्ञा ते स निमित्तनित्यविषयः स्वर्गादि काम्यद्विधिः सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः ।
सर्वो यस्य समस्तशासितुरहो श्रीरङ्ग सर्वस्व ते रक्षाकूतनिवेदिनी श्रुतिरसौ त्वन्नित्यशास्तिस्ततः ॥ इति ॥

अपि च वेदार्थसंग्रहेऽप्युपात्तं द्रमिडभाष्यं 'स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात्स्वभावाच्च स भगवान् वर्धयेत विद्वान् कर्मदक्षः' इत्यनन्तरंचायमेवार्थो भगवद्गीतायामपि दर्शितः । 'येमे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनुसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥' इति स्वाज्ञानुवर्तिनःप्रशस्य विपरीतान् विनिन्दन् पुनरपि स्वाज्ञानुपालनमकुर्वतामासुरप्रकृत्यन्तर्भावमभिधायाधमागतिश्चोक्तेति ईदृश एव विधिशब्दार्थः वेदान्तिभिः स्वीकृत इति' इति । अधिकं फलाधिकरणादौ विवेचयिष्यते ॥

### इति जिज्ञासाधिकरणम्

श्रीमते रामानुजाय नमः

# अथ वेदान्तसारः

समस्तचिदचिद्वस्तु शरीरायाखिलात्मने । श्रीमते निर्मलानन्दोदन्वते विष्णवे नमः ॥

परमपुरुषप्रसादात् वेदान्तसार उद्ध्रियते—

## ॐ अथातो ब्रह्मजिज्ञासा (१.१.१)

अत्रायमथशब्दः आनन्तर्ये वर्तते ; अतश्शब्दशिरस्कत्वात् । अतश्शब्दश्च पूर्ववृत्तस्य हेतुभावे । पूर्ववृत्तञ्च कर्मज्ञानमिति विज्ञायते । आरिप्सितस्य ब्रह्मज्ञानस्य वेदार्थविचारैकदेशत्वात् । अधीतवेदस्यहि पुरुषस्य कर्मप्रतिपादनोपक्रमत्वात् वेदानां कर्मविचारः प्रथमं कार्य इति "अथातो धर्मजिज्ञासा" (पू.मी.१.१.१) इत्युक्तम् । कर्मणांच प्रकृतिविकृतिरूपाणां धर्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः, 'प्रभुत्वादार्त्विज्यम्' (पू.मी.१२.४) इत्यन्तेन सूत्रकलापेन सङ्कर्षणेन कृतः। एवं वेदस्यार्थपरत्वे कर्मणांच तदर्थत्वे तेषांच केवलानां त्रिवर्गफलत्वे निश्चितेसति वेदैकदेशभूतवेदान्तभागे केवलकर्मणामल्पास्थिरफलत्वं ब्रह्मज्ञानस्यच अनन्तस्थिरफलत्वमापाततो दृष्ट्वा, अनन्तरं मुमुक्षोरवधारितपारीनिष्पन्नवस्तुबोधजननशब्दशक्तेः पुरुषस्य ब्रह्मबुभुत्सा जायते इति "अथातो ब्रह्मजिज्ञासा" इति कर्मविचारानन्तरं ततएव हेतोः ब्रह्मविचारः कर्तव्य इत्युक्तं भवति । तदिदमाह श्रुतिः—'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतःकृतेन, तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै सविद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।

येनाक्षरं पुरुषं वेद सत्यम् प्रोवाचतां तत्त्वतो ब्रह्मविद्याम् ' इति । ब्राह्मणः वेदाभ्यासरतः, कर्मचितान् कर्मणा संपादितान्, लोकान् आराध्यक्षयिष्णुत्वेन क्षयस्वभावान्, कर्ममीमांसया परीक्ष्य, अकृतः नित्यः परमपुरुषः कृतेन कर्मणा न संपाद्य इति यो निर्वेदमायात् सः तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्, समित्पाणिः श्रोत्रियं वेदान्तवेदिनम्, ब्रह्मनिष्ठम् साक्षात्कृतपरमपुरुषस्वरूपम्, सः गुरुः सम्यगुपसन्नाय तस्मै येन विद्याविशेषेण अक्षरं सत्यं परमपुरुषं विद्यात्, तां ब्रह्मविद्यां प्रोवाच प्रब्रूयादित्यर्थः ; ' सगुरुमेवाभिगच्छेत्, तस्मै स विद्वान् प्रोवाच ' इत्यन्वयात् अप्राप्तत्वाच्च, विधावपि लिटो विधानात् ' छन्दसि लुङ्लङ्लिटः ' (अष्टाध्या.३.४.६) इति ॥

इति वेदान्तसारे जिज्ञासाधिकरणम् ॥ १ ॥

——:÷÷÷:——

श्रीमते रामानुजाय नमः

# अ थ वे दा न्त दी पः



श्रियःकान्तोऽनन्तो वरगुणगणैकास्पदवपुः हताशेषावद्यः परमखपदो वाङ्मनसयोः ।
अभूमिर्भूमिर्यो नतजनदृशामादिपुरुषो मनस्तत्पादाब्जे परिचरणसक्तं भवतु मे ॥
प्रणम्य शिरसाऽऽचार्यांस्तदादिष्टेन वर्त्मना । ब्रह्मसूत्रपदान्तस्थवेदान्तार्थः प्रकाश्यते ॥

अत्रेयमेवहि वेदविदां प्रक्रिया—आचिद्वस्तुनः स्वरूपतः स्वभावतश्चात्यन्तविलक्षणः तदात्मभूतः चेतनः प्रत्यगात्मा । तस्माद्बद्धान्मुक्तान्नित्याच्च निखिलहेयप्रत्यनीकतया, कल्याणगुणैकतानतया च, सर्वावस्थचिदचिद्व्यापकतया, धारकतया, नियन्तृतया, शेषितया च अत्यन्तविलक्षणः परमात्मा । यथोक्तं भगवता–' द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ' (गी.१५.अ. १६,१७,१८.श्लो) इति । श्रुतिश्च—' प्रधानक्षेत्रज्ञपतिर्गुणेशः ' (श्वे.६ १६) ' पतिं विश्वस्यात्मेश्वरम् ' (तै.नारायणीये. १६.अनु) ' अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः ' (तै.नारायणीये.११) इत्यादिका । कूटस्थः—मुक्तस्वरूपम्, ' येत्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ' (गी.१२.३) इत्यादिव्यपदेशात् । सूत्रकारैश्चैवमेव वदति–' नेतरोऽनुपपत्तेः ' (शारी.१.१.१७) ' भेदव्यपदेशात् ' (१.३.४) ' अनुपपत्तेस्तु न शारीरः ' (१.२.३) ' कर्मकर्तृव्यपदेशाच्च ' (१.२.४) ' शब्दविशेषात् ' (१.२.५) ' संभोगप्राप्तिरितिचेन्नवैशेष्यात् ' (१.२.८) ' नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च ' (१.२.२०) ' उभयेऽपिहि भेदेनैनमधीयते ' (१.२.२१) ' विशेषणभेदव्यपदेशाभ्यां च नेतरौ ' (१.२.२३) ' मुक्तोपसृप्य व्यपदेशाच्च ' (१.३.२) ' स्थित्यदनाभ्यां च ' ( १.३.६) ' इतरपरामर्शात्स इतिचेन्नासम्भवात् ' (१.३.१७) ' उत्तराच्चेदाविर्भूतस्वरूपस्तु ' (१.३.१८) ' सुषुप्त्युत्क्रान्त्योर्भेदेन ' (१.३. ४३) ' पत्यादिशब्देभ्यः ' (१.३.४४) ' अधिकंतु भेदनिर्देशात् ' (१.१.२२) ' अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ' (३.४.८) ' जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ' (४.४.१७) ' भोगमात्रसाम्यलिङ्गाच्च ' (४.४.२१)

इत्यादिभिः । नचाविद्याकृतमुपाधिकृतं वा भेदमाश्रित्यैते निर्देशाः; 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' (गी.१४.२) 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु. ३.१.३) 'मुक्तोपसृप्य व्यपदेशाच्च' (शारी.१.३.२) 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' 'संपद्याविर्भावस्स्वेन शब्दात्' (शारी.४.४.१) 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' 'भोगमात्रसाम्यलिङ्गाच्च' इति सर्वाविद्योपाधिविनिर्मुक्तमधिकृत्यैव भेदोपपदनात् । श्रुतिस्मृतिसूत्रेषु सर्वत्र भेदे निर्दिष्टे चिदचिदीश्वरस्वरूपभेदः स्वाभाविको विवक्षित इति निश्चीयते । 'सर्वंखल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छा.३.१४.१) 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा.६.१.४) 'सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयम्, तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत' (छा.६.२.१, ३) सन्मूलास्सोम्येमास्सर्वाः सदायतनास्सत्प्रतिष्ठाः' (६.८.६) 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (६.८.७) 'क्षेत्रज्ञंचापि मां विद्धि' (गी.१३.२) 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (शारी.२.१. १५) इति परस्य ब्रह्मणः कारणत्वम्, कृत्स्नस्य चिदचिदात्मकप्रपञ्चस्य कार्यत्वम्, कारणात्कार्यस्यानन्यत्वं चोच्यमानमेवमेवोपपद्यते । सर्वावस्थस्य चिदचिद्वस्तुनः परमात्मशरीरत्वं परमात्मनश्चाऽऽत्मत्वम्, 'यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरम्' (बृ.५.३.७) 'य आत्मनि तिष्ठन् यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' (बृ.५.७.२२) 'यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम्, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.७.ख तुरीयातीतावधूतोप.१.च) 'अन्तःप्रविष्टश्शास्ता जनानाँ सर्वात्मा' (यजुरारण्यके.३.प्र.११.अनु) इत्यादिश्रुत्यैवोपदिष्टमिति सूक्ष्मचिदचिद्वस्तुशरीरः परमात्मा कारणम्, स एव परमात्मा स्थूलचिदचिद्वस्तुशरीरः कार्यमिति कारणावस्थायां कार्यावस्थायांच चिदचिद्वस्तुशरीरकतया तत्प्रकारः परमात्मैव सर्वशब्दवाच्यइति परमात्मशब्देन सर्वशब्दसामानाधिकरण्यं मुख्यमेवोपपन्नतरम् । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.६.३.२) तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् ।' (तै.आ.६.२) इत्यादिश्रुतिरेवेममर्थमुपपादयति । सर्वमात्मतयाऽनुप्रविश्य तच्छरीरत्वेन सर्वप्रकारतया स एव सर्वशब्दवाच्यो भवतीत्यर्थः । 'बहुस्याम्' (तै.आ.६.२—छा.६.२.३) इति बहुभवनसङ्कल्पोऽपि नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरतयैकधाऽवस्थितस्य विभक्तनामरूपचिदचिच्छरीरकतया बहुप्रकारताविषय इति (वेदवित्प्रक्रिया) ॥

ये पुनः—निर्विशेषकूटस्थस्वप्रकाशनित्यचैतन्यमात्रं ब्रह्म ज्ञातव्यतयोक्तम् इति वदन्ति । तेषां **'जन्माद्यस्य यतः'** (शारी.१.१.२) **'शास्त्रयोनित्वात्'** (१.१.३) **'तत्तु समन्वयात्'** (१.१.४) **'ईक्षतेर्नाशब्दम्'** (१. १.५) **'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च'** (शारीर.४.४.१७) **'भोगमात्रसाम्यलिङ्गाच्च'** (४.४.२१) **'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्'** (४.४.२२) इत्यन्तस्य सूत्रगणस्य च ब्रह्मणो जगत्कारणत्वबहुभवनसङ्कल्परूपेक्षणाद्यनन्तविशेषप्रतिपादनपरत्वात्सर्वं सूत्रजातम्, सूत्रकारोदाहृताः—'यतो वा इमानि भूतानि जायन्ते' (तै.भृ.१ १) 'तदैक्षत बहुस्यां प्रजायेयेति' (छा.६.२.३) इत्याद्यास्सर्वश्श्रुतयश्च न सङ्गच्छन्ते । अथोच्येत—'येनाश्रुतं श्रुतम्' (छा.६.१.३) इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'यथा सोम्यैकेन मृत्पिंडेन' (६.१.४) इत्येकमृत्पिंडघटशरावादीनां तन्मृत्पिण्डानन्यद्रव्यतया तज्ज्ञानेन तेषां ज्ञाततैव, ब्रह्मज्ञानेन तदारब्धस्य कृत्स्नस्य चिदचिदात्मकस्य जगतस्तस्मादनतिरिक्तवस्तुतया ज्ञातता सम्भवतीत्युपपाद्य 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६.२.१) इतीदंशब्दवाच्यस्य चिदचिदात्मकप्रपञ्चस्य सृष्टेः प्राङ्निखिलभेदप्रहाणेन सच्छब्दवाच्येनैकतापत्तिं घटशरावाद्युत्पत्तेः प्रागुत्पादकमृत्पिण्डैकतापत्तिवदभिधाय, 'तदैक्षत बहुस्याम्' (छा.६.२.३) इति तदेव सच्छब्दवाच्यं ब्रह्म चिदचिदात्मकप्रपञ्च-

